# निर्णयसागरविक्रय्यमुद्रितग्रन्थाः ।

**अष्टाङ्गहृदयम्**—मूलमात्रम् । वाग्भटविरचितं पारिभाषिककोष-पाठान्तरैरुपबृंहितम् ।

मूल्यम् रू. १॥। प्रे. व्य. रू. ।॥।

**अष्टाङ्गहृदयम्**—अरुणदत्तकृतसर्वाङ्गसुन्दरया, हेमाद्रिविरचितया ह्यायुर्वेदरसायनाख्ययेति टीकाद्वयेन प्राच्यार्वाचीनवाग्भटविमर्शनैश्च विभूषितोऽयं ग्रन्थः प्रथमत एवोपाह्रियते त्वगदंकारेभ्यः ।

मूल्यम् रू. १० प्रे. व्य. रू. १।।

**चरकसंहिता**—मूलमात्रा । मूल्यम् रू. ३ प्रे. व्य. रू. ।॥।

**द्रव्यगुणसंग्रहः**—अत्र नानाविधौषधीनां गुणागुणविवेचनं सम्यक्कृतमस्ति ।

मूल्यम् १२ आणकाः । प्रे. व्य. रू. ।।

**माधवनिदानम्**—श्रीमन्माधवकरविरचितम् । निदानस्यैव चिकित्साप्रधानाङ्गत्वेनायुर्वेदे परिगणनात् 'निदाने माधवः प्रोक्तः' इति सर्वसंमतत्वाच्च ग्रन्थोऽयं सुप्रसिद्ध एवास्ति । अस्मिन् प्रायः सर्वेषां रोगाणां निदान-पूर्वरूप-रूप-उपशय-संप्राप्ति-उपद्रव-साध्यासाध्यविचारादिविषयजातं यथावत् प्रतिपादितमस्ति ।

मूल्यम् रू. २।। प्रे. व्य. रू. ।॥।

**योगरत्नाकरः**—ग्रन्थोऽयं नात्यर्वाचीनोऽखिलभिषग्गणमान्योऽप्यस्ति । अत्र सर्वेषां रोगाणां निदानपूर्विका चिकित्सा सप्रमाणा प्रतिपादिताऽस्ति । तथा विविध-रसायन-कषायाऽऽसवा-ऽरिष्टा-ऽवलेह-गुटिका-पाकादीनां प्रक्रिया-प्रमाणाऽनुपानादिप्रपञ्चोऽपि कृतोऽस्तीत्ययं ग्रन्थ आयुर्वेदीयानामतीवोपयोगीत्यवश्यं संग्राह्यः । मूल्यम् रू. २॥। प्रे. व्य. रू. ।॥।

**शार्ङ्गधरसंहिता**—मूलमात्रा, अञ्जननिदानसहिता । मूल्यम् रू. १ प्रे. व्य. रू. ।।

**शार्ङ्गधरसंहिता**—श्रीमत्पण्डितदामोदरसूनु-शार्ङ्गधराचार्यविरचिता, भिषग्वर-आढमल्लविरचित-दीपिका-पण्डितकाशिरामवैद्यविरचितगूढार्थदीपिकाभ्यां टीकाभ्यां संवलिता च ।

मूल्यम् रू. ५ प्रे. व्य. रू. ।॥।

**सुश्रुतसंहिता**—श्रीमहर्षिसुश्रुतप्रणीता वैद्यवर-श्रीडल्हणाचार्यविरचितया निबन्धसङ्ग्रहाख्यव्याख्यया निदानस्थानस्य श्रीगयदासविरचितया न्यायचन्द्रिकाख्यपञ्जिकाव्याख्यया च समुल्लसिता । अयं ग्रन्थो भगवतो धन्वन्तरेरुपदेशानुगुणं महर्षिश्रीसुश्रुतप्रणीतोऽखिलायुर्वेदनिबन्धेषु मूर्धन्यमणित्वेन वरीवर्ति । निबन्धकृद्धार्दप्रकाशनाय वैद्यवर-श्रीडल्हणाचार्यरचिता व्याख्याऽपि सर्वाङ्गसुन्दरत्वेन विराजते । परं च संप्रति निदानस्थानस्य गयदासप्रणीतपञ्जिकाव्याख्यया च समलङ्कृतत्वात् सर्वाङ्गसुन्दरोऽयं ग्रन्थः पिपठिषूणां त्वतीव सुखावबोधकः स्यात् । मूल्यम् रू. १० प्रे. व्य. रू. १॥।

शिखिगोनर्देत्यादिना रक्तवस्तिसंग्रहं करोति । संग्रहार्थश्च पूर्वमेव व्याहृतः । एवेनत्रिंशदित्येते इति प्रत्येकं निर्दिष्टा वस्तयः स्नेहैः सममेकोनत्रिंशद्भवन्तीत्यर्थः । समाहारसंख्यामाह—द्वे शते षोडशोत्तरे इति । तच्च यथाऽस्माभिर्व्याख्यातं तथा व्यक्तमेव पूर्यते । अतिवृषमिति शुक्रोपचयवन्तम् । स्तम्भिताश्चेति मधुना स्तम्भिताः ॥ २४–२८ ॥—

**मृदुत्वान्न निवर्तन्ते यस्य त्वेते प्रयोजिताः ॥ २९ ॥**
**समूत्रैर्वस्तिभिस्तीक्ष्णैराश्वास्थाप्यः क्षिप्रमेव सः ।**

यापनावस्त्यप्रवृत्तौ कर्तव्यमाह—मृदुत्वादित्यादि ॥२९॥—

**शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्तिकाः ॥ ३० ॥**
**स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवनात् ।**

यापनावस्त्यतिप्रयोगे दोषमाह—शोफेत्यादि ॥ ३० ॥—

**अरिष्टक्षीरसीध्वाद्या तत्रेष्टा दीपनी क्रिया ॥ ३१ ॥**
**युक्त्या तस्मान्निषेवेत यापनान्न प्रसङ्गतः ।**
**इत्युच्चैर्भाष्यपूर्वाणां व्यापदः सचिकित्सिताः ॥३२॥**
**विस्तरेण पृथक् प्रोक्तास्तेभ्यो रक्षेन्नरं सदा ।**

एतच्छोफादिषु चिकित्सामाह—अरिष्टेत्यादि । तस्मादिति यापनात्यर्थप्रयोगे शोथादिदर्शनात् । न प्रसङ्गत इति न अभ्यासतः सेवेत । तेभ्यो रक्षेदिति उच्चैर्भाष्यादिजन्यव्यापद्भ्यो रक्षेत् ॥ ३१ ॥ ३२ ॥—

**कर्मणां वमनादीनामसम्यक्करणापदाम् ॥ ३३ ॥**
**यत्रोक्तं साधनं स्थाने सिद्धिस्थानं तदुच्यते ।**

संप्रति सिद्धिस्थानशब्दस्य निरुक्तिं दर्शयन् सिद्धिस्थानाभिधेयं वाक्यार्थं संगृह्णन्नाह—कर्मणामित्यादि । असम्यक्करणापदामिति वमनादीनामसम्यक्प्रयोगे जनितानामापदां; वमनादिव्यापत्प्रतिकारश्च सिद्धिस्थानार्थः प्रधानतयोपदर्शितः; तेन वमनादिकल्पनाद्यभिधानमपि अनागतवमनादिव्यापन्निषेधप्रयोजनकं सिद्धिस्थाने युक्तमेव ॥ ३३ ॥—

**इत्यध्यायशतं विंशमात्रेयमुनिवाङ्मयम् ॥ ३४ ॥**
**हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता ।**

सिद्धिस्थानं समाप्य कृत्स्नं तन्त्रमुपसंहरति—इत्यध्यायेत्यादि । आत्रेयमुनिवाङ्मयमिति अनुकृतात्रेयवचनमयम् ॥ ३४ ॥—

**दीर्घमायुर्यशः स्वास्थ्यं त्रिवर्गं चापि पुष्कलम् ॥३५॥**
**सिद्धिं चानुत्तमां लोके प्राप्नोति विधिना पठन् ।**

एतत्तन्त्राध्ययने फलमाह—दीर्घमायुरित्यादि । त्रिवर्गमिति धर्मार्थकामान् । पुष्कलमिति मोक्षं; किंवा पुष्कलमिति त्रिवर्गविशेषणम् । सिद्धिमिति चिकित्साप्रयोगसाध्यनिष्पादकत्वम् । विधिना पठन्निति रोगभिषग्जितीयोक्तेन पाठविधिना । एतत्सविंशमध्यायशतं पठतः दीर्घायुर्लाभादयश्च एवंभूतपाठजनितधर्मवशादेव तथा पाठजनितशास्त्रावबोधपूर्वकशास्त्रानुष्ठानाच्च भवन्ति ॥ ३५ ॥—

**विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् ॥ ३६ ॥**
**संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ।**
**अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना ॥ ३७ ॥**
**संस्कृतं तत्त्वसंपूर्णं त्रिभागेनोपलक्ष्यते ।**
**तच्छङ्करं भूतपतिं संप्रसाद्य समापयत् ॥ ३८ ॥**
**अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे ।**
**कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषोञ्छशिलोच्चयम् ॥३९॥**
**सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् ।**
**इदमन्यूनशब्दार्थं तन्त्रदोषविवर्जितम् ॥ ४० ॥**
**षड्विंशता विचित्राभिर्भूषितं तन्त्रयुक्तिभिः ।**

एतच्छास्त्रसंस्कारोपपत्त्युपदर्शनपूर्वकं शास्त्रस्य संस्कारकौ चरकदृढबलौ दर्शयन्नाह दृढबलः—विस्तारयतीत्यादि । यस्माच्छास्त्रे प्रथममतिविस्तारतया क्वचिल्लेशोक्त्या च प्रतिपादितेषु न सम्यगर्थावगमः, तेन तदतिविस्तरलेशोक्तदोषनिरासार्थं संस्कर्ता युज्यते, अतः तन्त्रोत्तममिदं चरकेण संस्कृतम् । पूर्वग्रन्थस्य चातीव विस्तरत्वादिना तन्त्राभिधानं पूर्वश्रोतृजनाभिप्रायादेव बोद्धव्यम्; इदानींतनश्रोतृपुरुषाभिप्रायेण तु संस्कर्तुः संस्कारो ज्ञेयः । उक्तं च—"संक्षेपोक्तमतिहन्ति विस्तरोक्तं न गृह्यते । संक्षेपविस्तरौ हित्वा संस्कुर्याच्छास्त्रमादितः" इति । पुराणं च पुनर्नवमिति विस्तारसंक्षेपादिना पुनर्नवं कुरुते । चरकसंस्कारापूर्णतां दर्शयन् दृढबल आह—तत्त्वेत्यादि । तृतीयो भागस्त्रिभागः । त्रिभागासंपूर्णता चेयमदूरान्तरतयोक्ता, तेन दृढबलप्रतिपादितैकचत्वारिंशदध्यायानां न सविंशाध्यायशतत्रिभागता युज्यते इति नोद्भावनीयम् । आत्मनः पञ्चनदपुरभवत्वेन श्रेष्ठप्रदेशभवत्वं दर्शयति । आत्मनः संस्कारे तन्त्रान्तरानीतार्थेन संस्कारं दर्शयन्नाह—कृत्वा बहुभ्य इत्यादि । तन्त्रेभ्यः सुश्रुतविदेहादितन्त्रेभ्यः । विशेषस्य चरकोक्तार्थादतिरिक्तरूपस्य उञ्छशिलरूप उच्चयो विशेषोञ्छशिलोच्चयः; तमन्यतन्त्रेभ्यः कृत्वा सप्तदशौषधाध्यायसिद्धिकल्पैरिदमन्यूनशब्दार्थं तन्त्रदोषविवर्जितं षड्विंशतन्त्रयुक्तिभिर्भूषितमपूरयद्दृढबल इति योजना । तत्र भूमिपतितानामणूनां धान्यादिबीजानां शोधन्या संहरणमुञ्छः; प्रविरलस्य तु कणिशादिरूपतया पतितस्य चयनं शिलः । एतेन तन्त्रेषु यत्सारभूतं तच्चरकाचार्यैः संगृहीतं; मया तु उद्धरितं परिशिष्टं कृत्वा पूरितमिति दर्शयति । अन्यूनशब्दमन्यूनार्थं चेति अन्यूनशब्दार्थम् । तन्त्रदोषाश्चतुर्दश "पुनरुक्तं दुष्प्रणीतसूत्रसंग्रहमक्रमं" (वि. अ. ८) इत्यादिना रोगभिषग्जितीयोक्तास्तैर्वर्जितम् ।

१ 'प्रज्ञामारोग्यं' इति पा० ।

१ तन्त्रदोषास्तु यद्यपि रोगभिषग्जितीये साक्षान्नोक्ताः, परं 'अपुनरुक्तदोषं' इत्यादिना तृतीये सूत्रे ये चतुर्दश तन्त्रगुणा उक्तास्तद्विपर्ययेण पुनरुक्तादयश्चतुर्दश तन्त्रदोषा ज्ञेयाः ।

तन्त्रयुक्तिभिरिति वक्ष्यमाणतन्त्रयुक्तिभिः । विचित्राभिरिति विचित्रार्थन्याययुक्ताभिस्तन्त्रयुक्तिभिः ॥ ३६-४० ॥—

**तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥ ४१ ॥**
**प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ।**
**उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥ ४२ ॥**
**प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ।**
**पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥ ४३ ॥**
**अतीतानागतावेक्षास्वसंज्ञोह्यसमुच्चयाः ।**
**निदर्शनं निर्वचनं संनियोगो विकल्पनम् ॥ ४४ ॥**
**प्रत्युत्सारस्तथोद्धारः संभवस्तन्त्रयुक्तयः ।**

तन्त्रयुक्तीरेवाह—तत्रेत्यादि । अधिकरणं नाम यमर्थमधिकृत्य प्रवर्तते कर्ता; यथा—"विघ्नभूता यदा रोगा" (सू. अ. १) इत्यादि । अत्र रोगादिकमधिकृत्यायुर्वेदो महर्षिभिः कृत इति 'रोगाः' इत्यधिकरणम् । योगो नाम योजना व्यस्तानां पदानामेकीकरणम् । उदाहरणं तावद्यथा-प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि; तत्र प्रतिज्ञा—मातृजश्चायं गर्भः, हेतुः—मातरमन्तरेण गर्भानुपपत्तेः, दृष्टान्तः—कूटागारः, उपनयः—यथा नानाद्रव्यसमुदायात् कूटागारस्तथा गर्भनिर्वर्तनं, तस्मान्मातृजश्चायमित्येषां प्रतिज्ञायोगः; एवमन्येऽपि योगार्था व्याख्येयाः । हेत्वर्थो नाम यदन्यत्राभिहितमन्यत्रोपपद्यते; यथा—"समानगुणाभ्यासो हि धातूनां वृद्धिकारणम्" (सू. अ. १२) इति वातमधिकृत्योक्तं, तत्र वातस्येति वक्तव्ये यदयं समानशब्दं धातूनामिति करोति, तेन यथा वायोस्तथा रसादीनामपि समानगुणाभ्यासो वृद्धिकारणमिति गम्यते । पदार्थो नाम पदस्य पदयोः पदानां वाऽर्थः पदार्थः । तत्र द्रव्यमितिपदेन खादयश्चेतनाषष्ठा उच्यन्ते; पदयोरर्थो नाम यथा—'आयुषो वेद' इति पदयोरायुर्बोधकं तन्त्रमित्यर्थः; एवं पदानामप्यर्थं उदाहार्यः । प्रदेशो नाम यद्बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यमेकदेशेनाभिधीयते; यथा—"अनुपानैकदेशोऽयमुक्तः प्रायोपयोगिकः" (सू. अ. २७) इत्यादि । उद्देशो नाम संक्षेपाभिधानं; यथा—"हेतुलिङ्गौषधज्ञानं" (सू. अ. १), अनेन सर्वायुर्वेदाभिधेयोद्देशः । निर्देशो नाम संख्येयोक्तस्य विवरणं; यथा—हेतुलिङ्गौषधस्य पुनः प्रपञ्चनं "सर्वदा सर्वभावानां" इत्यादिना "इत्युक्तं कारणं" (सू. अ. १) इत्यन्तेन कारणप्रपञ्चनमित्यादि । वाक्यशेषो नाम यल्लाघवार्थमाचार्येण वाक्येषु पदमकृतं गम्यमानतया पूर्यते; यथा "प्रवृत्तिर्हेतुभावानां" (सू. अ. १६) इत्यत्र 'अस्ति' इति पदं पूर्यते, तथा "जाङ्गलजै रसैः" इत्यत्र मांसशब्दः पूर्यते । वाक्येषु येन एव पदाः शेषाः क्रियन्ते, येऽनिवेशिता अपि प्रतीयन्ते । प्रयोजनं नाम यदर्थं कामयमानः प्रवर्तते; यथा—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" (सू. अ. १) । उपदेशो नामाप्तानुशासनं; यथा—"स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्" (सू. अ. १३) इत्यादि । अपदेशो नाम यत्प्रतिज्ञातार्थसाधनाय हेतुवचनं; यथा—"वाताजलं जलाद्देशं देशात् कालं स्वभावतः । विद्याद्दुष्परिहार्यत्वात्" (वि. अ. ३) इत्यादि, तत्र प्रतिज्ञातार्थस्य हेतुवचनं-दुष्परिहार्यत्वादिति । अतिदेशो नाम यत्किंचिदेव प्रकाश्यार्थमनुक्तार्थसाधनायैव एवमन्यदपि प्रत्येतव्यमिति परिभाष्यते; यथा—"यच्चान्यदपि किंचित् स्यादनुक्तमिह पूजितम् । वृत्तं तदपि चात्रेयः सदैवाभ्यनुमन्यते" (सू. अ. ८) इति । अर्थापत्तिर्नाम यदकीर्तितमर्थादापद्यते साऽर्थापत्तिः; यथा—नक्तं दधिभोजननिषेधः, अर्थाद्दिवा भुञ्जीतेत्यापद्यते । निर्णयो नाम विचारितस्यार्थस्य व्यवस्थापनं; यथा—चतुष्पदभेषजत्वादि विचारं कृत्वाऽभिधीयते—"यदुक्तं षोडशकलं पूर्वाध्याये भेषजं तद्युक्तियुक्तमलमारोग्याय" (सू. अ. १०) इति । प्रसंगो नाम पूर्वाभिहितस्यार्थस्य प्रकरणागतत्वादिना पुनरभिधानं; यथा—"तत्रातिप्रभावतां दृश्यानातिमात्रदर्शनमतियोगः" (सू. अ. ११) एवमाद्यभिधाय, पुनः "अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्वशो न च" (शा. अ. १) इत्यादिना पूर्वोक्त एवार्थोऽभिधीयते । एकान्तो नाम यदवधारणेनोच्यते; यथा—निजः शरीरदोषोत्थः, त्रिवृद्विरेचयतीत्यादि । अनैकान्तो नाम अन्यतरपक्षानवधारणं; यथा—"ये ह्यातुराः केवलाद्भेपजादृते म्रियन्ते, न च ते सर्वे एव भेषजोपपन्नाः समुत्तिष्ठेरन्" (सू. अ. १०) इत्यादि । अपवर्गो नाम साकल्येनोद्दिष्टस्यैकदेशापकर्षणं; यथा—"न पर्युषिताचमाददीतान्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः" (सू. अ. ८) इति । अत्र हि सामान्येन पर्युषितभक्षणनिषेधं कृत्वा मांसादेः पर्युषितस्यापि भक्षणमपकृष्य विधीयते । विपर्ययो नाम अपकृष्टात् प्रतीपोदाहरणं; यथा—"निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरते" (नि. अ. ३) इति । पूर्वपक्षो नाम प्रतिज्ञातार्थसंदूषकं वाक्यं; यथा—"मत्स्यान्न पयसाऽभ्यवहरेत्" इति प्रतिज्ञातस्यार्थस्य "सर्वानेव मत्स्यान्न पयसाऽभ्यवहरेदन्यत्र चिलिचिमात्" (सू. अ. २६) इति । विधानं नाम सूत्रकारश्च विधाय वर्णयति; यथा—"मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः" इत्यत्र दुष्टिशब्देन मलानां हीनत्वमधिकत्वमाचार्यगृहीतमाचार्यो वर्णयति—"मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम् । मलायनानां बुध्येत संगोत्सर्गादतीव च" (सू. अ. ७) इति; केचित्तु प्रकरणानुपूर्व्योऽर्थाभिधानं विधानमाहुः, यथा—रसरुधिरमांसमेदोस्थिमज्जशुक्राणामुत्पादक्रमानुरोधेनाभिधानम् । अनुमतं नाम एकीयमतस्यानिवारणेनानुमननं; यथा—"गर्भशल्यस्य जरायुःप्रपातनं कर्म संशमनमित्येके" (शा. अ. ८.) इत्याद्येकीयमतं प्रतिपाद्याप्रतिषेधादनुमन्यते । व्याख्यानं नाम यत् सर्वबुद्ध्यविषयं व्याक्रियते, यथा—"प्रथमे मासि संमूर्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः" (शा. अ. ४) इत्यादिनाऽस्मदाद्यविदितार्थव्याकरणम् । संशयो नाम विशेषाकांक्षानिर्धारितोभयविपक्षज्ञानं;

यथा—"मातरं पितरं चैके मन्यन्ते जन्मकारणम्। स्वभावं परनिर्माणं यदृच्छां चापरे जनाः" (सू. अ. ११) इत्यादिनोक्तः संशयः। अतीतावेक्षणं नाम यदतीतमेवोच्यते; यथा—"सा कुटी तच्च शयनं ज्वरं संशमयत्यपि" (चि. अ. ३) इत्यत्र स्वेदाध्यायविहितकुट्यादिकमतीतमवेक्षते। अनागतावेक्षणं नाम यदनागतं विधिं प्रमाणीकृत्यार्थसाधनं; यथा—"अथवा तिक्तसर्पिषः" इत्याद्यनागतावेक्षणेनोच्यते। स्वसंज्ञा नाम या तन्त्रकारैर्व्यवहारार्थं संज्ञा क्रियते; यथा—जेन्ताकहोलाकादिका संज्ञा। ऊह्यं नाम यदनिबद्धं ग्रन्थे प्रज्ञया तर्क्यत्वेनोपदिश्यते; यथा—"परिसंख्यातमपि यद्यद्द्रव्यमयौगिकं मन्येत तत्तदपकर्षयेत्" (वि. अ. ८) इति। समुच्चयो नाम यदिदं चेदं चेति कृत्वा विधीयते; यथा—"वर्णश्च स्वरश्च" (इं. अ. १) इत्यादि। निदर्शनं नाम—मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः; यथा—"विज्ञातममृतं यथा" (सू. अ. १) इत्यादि। निर्वचनं नाम पण्डितबुद्धिगम्यो दृष्टान्तः; यथा—"ज्ञायते नित्यगस्येव कालस्यात्ययकारणम्" (सू. अ. १६) इति। निदर्शननिर्वचनयोरयं विशेषः—यन्निदर्शनं मूर्खविदुषां बुद्धिसामान्यविषयं, निर्वचनं तु पण्डितबुद्धिवेद्यमेव; किंवा निर्वचनं निरुक्तिः—यथा—"विविधं सर्पति यतो विसर्पस्तेन संज्ञितः" (चि. अ. २१) इत्यादि। नियोगो नाम अवश्यानुष्ठेयतया विधानं; यथा—"न त्वया खेदमूर्च्छापरीतेनापि पिण्डिकैषा विमोक्तव्या" (सू. अ. १४) इत्यादि। विकल्पः पाक्षिकाभिधानं; यथा—"सारोदकं वाऽथ कुशोदकं वा" (चि. अ. ६) इत्यादि। प्रत्युत्सारो नाम उपपत्त्या परमतनिवारणं; यथा वार्योविदः प्राह—"रसजानि तु भूतानि रजसा व्याधयः स्मृताः" (सू. अ. २५) इत्यादि, हिरण्याक्षो निषेधयति—"न ह्यात्मा रजसः स्मृतः" इत्यादि। उद्धारो नाम परपक्षदूषणं कृत्वा स्वपक्षोद्धरणं; यथा—"येषामेव हि भावानां संपत् संजनयेन्नरम्। तेषामेव हि भावानां विपद्व्याधीनुदीरयेत्" (सू. अ. २५) इत्यादिना स्वपक्षोद्धरणम्। संभवो नाम यद्यस्मिन्नुपपद्यते स तस्य संभवः; यथा—मुखे पिडुव्यङ्गनीलिकादयः संभवन्तीत्यादि। इत्येताः षट्त्रिंशत्तन्त्रयुक्तयो व्याहृताः। भट्टारहरिचन्द्रेण त्वन्याश्चतस्रस्तन्त्रयुक्तयः परिप्रश्न-व्याकरण-व्युत्क्रान्ताभिधान-हेत्वाख्या व्याहृताः; ताश्च तन्त्रेऽपठितत्वादेतास्वेवान्तर्भावनीयाः। तत्र परिप्रश्न उद्देशेऽन्तर्भवति, व्याकरणं तु व्याख्याने, व्युत्क्रान्ताभिधानं निर्देशप्रभेदः, हेतुशब्देन यानि प्रत्यक्षादीनि प्रमाणान्युक्तानि तानि हेतावन्तर्भवन्ति। व्याख्या पञ्चदशप्रकारा, सप्तविधा कल्पना, एकविंशतिरर्थाश्रयाः, सप्तदश ताच्छील्यानि, चतुर्दश च तन्त्रदोषा भवन्ति, तदुत्तरतन्त्रे प्रतिपादितत्वाचेह विलिखिता आचार्येण (?) ॥ ४१-४४ ॥

**तन्त्रे समासव्यासोक्ते भवन्त्येता हि कृत्स्नशः ॥४५॥**
**एकदेशेन दृश्यन्ते समासाभिहिते तथा।**

संप्रति तन्त्रयुक्तीरुद्दिश्य तासां तन्त्रे एवानुसरणमाह—तन्त्रे समासव्यासोक्ते इत्यादि। समासाभिहिते इत्यनेन अतिसंक्षिप्ते तन्त्रे नावश्यं सर्वास्तन्त्रयुक्तयो भवन्तीति दर्शयति; किंवा समासाभिहिते एकदेशेन दृश्यन्ते इति संबन्धः ॥ ४५ ॥—

**यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ॥ ४६ ॥**
**प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः।**

तन्त्रयुक्तीनां कार्यं दृष्टान्तेन दर्शयन्नाह—यथेत्यादि। यथाऽम्बुजवनस्य संकुचितस्य विस्तारकोऽर्कस्तथा तन्त्रे संकुचितस्यार्थप्रदेशस्य विस्तारकास्तन्त्रयुक्तयः; प्रबोधनाद्विस्तारका भवन्तीत्यर्कदृष्टान्तेन दर्शयति; दीपदृष्टान्तेन तु यथा दीपः संतमेव तमसा पिहितं प्रकाशयति तथा हेत्वादिकास्तन्त्रयुक्तयः संतमर्थं गूढं प्रकाशयन्तीति दर्शयति। एतदेवार्थद्वयं तन्त्रयुक्तीनां संपाद्यमभिप्रेत्योक्तं—प्रबोधनप्रकाशार्था इति ॥ ४६ ॥—

**एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः ॥४७॥**
**स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात् प्रबुध्यते।**
**अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विना भिषक्**
**नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा ४८**

सम्यक्शास्त्राभ्यासफलमाह—एकस्मिन्नपीत्यादि ॥४७॥४८॥

**दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम्।**
**सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रं च रक्षति ॥ ४९ ॥**
**(तस्मादेताः प्रवक्ष्यन्ते विस्तरेणोत्तरे पुनः।**
**तत्त्वज्ञानार्थमस्यैव तन्त्रस्य गुणदोषतः) ॥ ५० ॥**

शास्त्रे दुर्ज्ञानसम्यक्ज्ञानयोर्दोषगुणानाह—दुर्गृहीतमित्यादि। दुर्गृहीतं शस्त्रं यथाऽऽत्मन एव करच्छेदादिकमापादयति, तथा दुर्गृहीतं शास्त्रं मिथ्याभेषजप्रयोगादात्मनोऽपि व्यापदमावहति; यथा वा शस्त्रं सुगृहीतं तस्करादिभ्यो रक्षां करोति, तथा सुगृहीतं शास्त्रमात्मन आतुरस्य च रक्षामापादयतीति। तस्मादेता इत्यादिकं श्लोकमुत्तरे तन्त्रे तन्त्रयुक्तिव्याकरणे प्रतिपादकं पठन्ति, तं चानार्षं वृद्धा वदन्ति, अग्निवेशतन्त्रे उत्तरतन्त्रस्यैवानार्षत्वात् ॥ ४९ ॥ ५० ॥

**इदमखिलमधीत्य सम्यगर्थान्**
**विमृशति योऽविमनाः प्रयोगनित्यः।**
**स मनुजसुखजीवितप्रदाता**
**भवति धृतिस्मृतिबुद्धिधर्मवृद्धः ॥ ५१ ॥**

तन्त्राध्ययनफलमाह—इदमखिलमित्यादि। अविमना इति तन्त्रार्थाविचलितमनाः। प्रयोगनित्य इति नित्यं चिकित्सा कर्तव्यतया यस्य सः। सुखस्य जीवितस्य च प्रदाता; किंवा सुखरूपस्य जीवितस्य प्रदाता सुखजीवितप्रदाता। धृत्यादीति उपचिता धृतिस्मृतिबुद्धिधर्मा यस्य स धृतिस्मृतिबुद्धिधर्मवृद्धः ॥ ५१ ॥

१ तन्त्रयुक्तीनां विशेषविवरणं तु सुश्रुतसंहिताया उत्तरे तन्त्रे ६५ तमेऽध्याये, अष्टाङ्गसंग्रहस्योत्तरतन्त्रे ५० तमेऽध्याये, भट्टारहरिचन्द्रविरचितचरकन्यासस्यारम्भे, कालामेघभिषजा विरचिते तन्त्रयुक्तिविचारे च द्रष्टव्यम्।

१ 'तन्त्रयुक्त्यविचक्षणः' इति पा०।

( यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता ।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः ॥५२॥
रोगांस्तेषां चिकित्सां च स किमर्थं न बुध्यते ।
चिकित्सा वह्निवेशस्य सुस्थातुरहितं प्रति ॥ ५३ ॥
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ॥ ५४ ॥
सिद्धिस्थानेऽष्टमे प्राप्ते तस्मिन् दृढबलेन तु ।
सिद्धिस्थानं स्वसिद्ध्यर्थं समासेन समापितम्॥५५॥)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने उत्तरवस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

यस्य द्वादशसाहस्रीत्यादिश्लोकत्रयं केचित् पठन्ति; तच्चाप्रस्तुतमिति ॥ ५२-५५ ॥

गौडाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात् ।
भानोरनु प्रथितलोध्रवलीकुलीनः
श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने उत्तरवस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

समाप्तमिदं चरकतन्त्रम् ।

( यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता ।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः ॥५२॥
रोगांस्तेषां चिकित्सां च स किमर्थं न बुध्यते ।
चिकित्सा वह्निवेशस्य सुस्थातुरहितं प्रति ॥ ५३ ॥
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ॥ ५४ ॥
सिद्धिस्थानेऽष्टमे प्राप्ते तस्मिन् दृढबलेन तु ।
सिद्धिस्थानं स्वसिद्धयर्थं समासेन समापितम् ॥५५॥)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने उत्तरबस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

यस्य द्वादशसाहस्रीत्यादिश्लोकत्रयं केचित् पठन्ति; तच्चाप्रस्तुतमिति ॥ ५२-५५ ॥

गौडाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात् ।
भानोरनु प्रथितलोध्रवलीकुलीनः
श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने उत्तरबस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

समाप्तमिदं चरकतन्त्रम् ।

THE

# CHARAKASAṂHITĀ

BY

## AGNIVES'A

REVISED BY

## CHARAKA AND DṚIDHABALA

With the Āyurveda-Dīpikā Commentary

OF

## CHAKRAPĀṆIDATTA.



EDITED

BY

## VAIDYA JĀDAVAJI TRIKAMJI ĀCHĀRYA.

---

**Third Edition.**

---

PUBLISHED

BY

SATYABHĀMĀBĀI PĀNDURANG,

FOR THE NIRṆAYA SĀGAR PRESS,

BOMBAY.

1941.

*Price 8 Rupees.*



महर्षिणा पुनर्वसुनोपदिष्टा, तच्छिष्येणाग्निवेशेन प्रणीता,
चरकदृढबलाभ्यां प्रतिसंस्कृता

# चरकसंहिता ।



श्रीचक्रपाणिदत्तविरचितया आयुर्वेददीपिकाव्याख्यया संवलिता ।



आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा संशोधिता ।

---

( तृतीयावृत्तिः )

---

मुम्बय्यां
सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः
निर्णयसागरमुद्रणालयस्य कृते तत्रैव मुद्रापयित्वा प्रसिद्धिं नीता ।

---

शकाब्दः १८६३, खिस्ताब्दः १९४१.

---

मूल्यं ८ रूप्यकाः ।



# चरकसंहितायास्तृतीयावृत्तेरुपोद्धातः ।

भूमण्डले इतरदेशेभ्यः पूर्वमेव भारतवर्षे चिकित्साशास्त्रमासीत् समुन्नतिपथारूढमितीतिहासविदां मतम् । अतिप्राचीनेषु वेदेष्वपि समुपलभ्यन्ते बहवश्चिकित्साशास्त्रविषयाः । कायचिकित्सा-शल्य-शालाक्य-कौमारभृत्यागदतन्त्र-भूतविद्या-रसायन-वाजीकरणाख्यैरष्टभिः प्रधानाङ्गैः प्रविभज्यायुर्वेदं बहूनि तन्त्राणि विरचितान्यासन् परोपकारैकव्रतैराप्ततमैर्महर्षिभिः । आयुर्वेदस्याष्टस्वप्यङ्गेषु एकैकाङ्गे विशेषज्ञा (Specialists) आसंश्चिकित्सका इति समुपलभ्यमानायुर्वेदग्रन्थेभ्यः, तथा भारतवर्षे यवन-चीनदेशादिभ्य आगतैर्यात्रिकैः स्वस्वग्रन्थे लिखिताद्भारतवृत्तान्ताच्च प्रतीयते । संप्रति समुपलभ्यमानेषु भारतवर्षे महम्मदीयानां राज्यारम्भकालात् पूर्वं विरचितेषु डल्हणचक्रपाणिदत्तप्रभृतीनां व्याख्याग्रन्थेषु समुपलभ्यन्ते प्रमाणतयोपन्यस्तानां बहूनां तन्त्राणां तन्त्रकर्तॄणां च नामानि । परमस्माकं दैवदुर्विपाकवशात्तानि तन्त्राणि संप्रति नाममात्रशेषाणि संवृत्तानि । तेभ्यः कायचिकित्साप्रधानं **चरकतन्त्रं**, शल्यचिकित्साप्रधानं **सुश्रुततन्त्रं** चेति तन्त्रद्वयमेव संप्रति संपूर्णं समुपलभ्यते । **भेल(ड)**तन्त्रमप्यधुना समुपलभ्यते कलकत्ताविश्वविद्यालयद्वारा प्रसिद्धीभूतं, परं तद्बहुषु स्थलेषु खण्डितं मुद्रणदोषबहुलं च । संप्रति कौमारभृत्ये भगवता **कश्यपेनोपदिष्टं**, तच्छिष्येण **वृद्धजीवकेन** विरचितं, तद्वंश्येन **वात्स्येन** प्रतिसंस्कृतं **वृद्धजीवकीयं** तन्त्रं समुपलब्धं नेपालदेशात् नेपालराजगुरूणां पण्डितवर्याणां **श्रीहेमराजशर्मणां** ग्रन्थसंग्रहात् । इदमपि तन्त्रमर्धाधिकं खण्डितमेव । तथाऽपि तस्य यावान् भाग उपलब्धस्तावानेव मुद्रितः प्रसिद्धीभूतश्च **नेपालसंस्कृतग्रन्थमालायाः** प्रथमस्तबकरूपेण ।

वाग्भटसमये उपलभ्यमानेष्वपि बहुष्वायुर्वेदतन्त्रेषु पठनपाठनयोश्चरकसुश्रुतयोरेवासीद्विशेषतः प्रचार इति

"ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ।
भेडा(ला)द्याः किं न पठ्यन्ते तस्माद्ग्राह्यं सुभाषितम् ॥"

इत्यस्माद् वाग्भटवचनादुन्नीयते । **श्रीहर्षकवि**रपि स्वविरचिते नैषधचरिताख्ये महाकाव्ये

"कन्यान्तःपुरबाधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदङ्कारश्च तावूचतुः ।
देवाकर्णय **सुश्रुतेन चरकस्यो**क्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥"

(नै. च. स. ४, श्लो० ११६)

इत्यस्मिन् पद्येऽधीतचरकसुश्रुतयोरेवागदङ्कारत्वं (सुवैद्यत्वं) कथयन् चरकसुश्रुतयोरेव स्वसमये पठनपाठनप्रचाराधिक्यं ख्यापयति ।

---

१ विस्तरस्तु नेपालराजगुरुपण्डितवर्यश्री**हेमराजशर्म**लिखिते काश्यपसंहिताया उपोद्धाते ७-१२ पृष्ठेषु द्रष्टव्यः ।

२ आसंश्चाप्रधानान्यन्यान्यप्युपाङ्गानि; यथा **चरके** गुल्मचिकित्सिते—"क्षारप्रयोगे भिषजां **क्षारतन्त्रविदां** बलम्" (च० चि० स्था० अ० ५) इति ।

३ चरकसमयेऽपि बहून्यायुर्वेदतन्त्राणि प्रचलितान्यासन् भारतवर्षे; यदुक्तं **चरके** विमानस्थाने रोगभिषग्जितीयाध्याये "विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके" (च० वि० स्था० अ० ८) इति ।

४ तानि नामानि चरकसंहिताया अस्मिन्नेव संस्करणे उपोद्धातस्यानन्तरं, मत्संपादिते सुश्रुतसंहितायास्तृतीये संस्करणे तथा मधुकोशव्याख्यासमेतमाधवनिदाने, महामहोपाध्यायकविराजश्री**गणनाथसेन**विरचितप्रत्यक्षशारीरोपोद्धाते, वैद्यवर्यश्री**हरिशास्त्रिपराडकर**लिखिते अष्टाङ्गहृदयोपोद्धाते, कविराजश्री**विरजाचरणगुप्त**विरचितवनौषधिदर्पणस्य वङ्गभाषालिखितोपोद्धाते च द्रष्टव्यानि ।

अधुना चरकतन्त्रस्य निर्माणकालादिकमधिकृत्य किंचिल्लिख्यते। चरकतन्त्रं चैतद्भगवता **आत्रेयेण पुनर्वसुनोपदिष्टं**, तच्छिष्येणाग्निवेशेन प्रणीतं, **चरकदृढबलाभ्यां** प्रतिसंस्कृतमिति मूलग्रन्थत एवोपलभ्यते। आत्रेयश्चायं महर्षेर्भरद्वाजस्य शिष्यः, अग्निवेशभेलादीनां गुरुरिति दीर्घञ्जीवितीयोक्तादायुर्वेदावतरणग्रन्थात्...

१ "**आत्रेयः**—"इन्द्र ऋषिभ्यश्चतुर्भ्यः कश्यपवसिष्ठात्रिभृगुभ्यः, ते पुत्रेभ्यः शिष्येभ्यश्च प्रददुर्हितार्थम्" इति (पृ. ४२) काश्यपसंहितायां पूर्वसंप्रदायोल्लेखेन आयुर्वेदविद्यायामत्रेरप्यन्यतमः संप्रदायः प्रवृत्तोऽवगम्यते। यत्र गोत्रनाम्ना आत्रेयाख्या भिक्षुरात्रेयः, कृष्णात्रेयः, पुनर्वसुरात्रेयश्च आचार्या अवगम्यन्ते। अन्येऽप्यनेके अत्रिपरम्परागता आचार्या भवेयुः। यथा कश्यपपरम्परायां मारीचशब्देन विशेषितः कश्यपः कौमारभृत्यसंहितायाम्, एवमेवात्रेयपरम्परायां पुनर्वसुनाम्ना विशेषित आत्रेयः अग्निवेशादीनामुपदेशकश्चरकसंहितामूलोपदेशक आचार्यः। स एवायं पुनर्वसुरात्रेयश्चन्द्रभागाया मातुर्नाम्ना चरके "यथाप्रश्नं भगवता व्याहृतं **चान्द्रभागिना**" (सू. अ. १३) इति, भेडसंहितायां "सुश्रोता नाम मेधावी **चान्द्रभाग**मुवाच ह" (पृ. ३९) इति चान्द्रभागः चान्द्रभागिः पुनर्वसुरित्यपि व्यवहृतो दृश्यते। चरके "त्रित्वेनाष्टौ समुद्दिष्टाः **कृष्णात्रेयेण** धीमता" (सूत्र. अ. ११) इति एकदेशस्थाने, भेडसंहितायामपि "**कृष्णात्रेयं** पुरस्कृत्य कथाश्चक्रुर्महर्षयः" इति क्वचन **कृष्णात्रेय**नाम्ना व्यवहारस्य दर्शनेन पुनर्वसुरात्रेय एव **कृष्णात्रेय**शब्देनापि व्यवह्रियते इत्यपि केषाञ्चिन्मतम्। अपरे तु श्रीकण्ठदत्तशिवदासादिभिः **कृष्णात्रेय**नाम्ना शालाक्यविषयकवचनान्तराणामुल्लेखेन **आत्रेयपुनर्वसो**रन्य एव **कृष्णात्रेय** इत्यपि वदन्ति। चरकसंहितायामादितोऽन्तपर्यन्तमात्रेयनाम्नाऽऽत्रेयपुनर्वसुनाम्ना वा प्रायो व्यवहरणेन, भेडसंहितायामपि पुनर्वसुनाम्नाऽऽत्रेयस्य व्यवहरणस्य प्रायिकतया, आत्रेयपरम्परायां वर्तमानस्य कृष्णात्रेयनाम्न आचार्यान्तरस्यापि मतमुपादाय क्वचन तन्निर्देशनस्य चरकभेडसंहितयोः सम्भवितया, कृष्णात्रेयपुनर्वस्वात्रेयशब्दयोरेकत्र सहप्रयोगस्यानुपलम्भेन च **कृष्णात्रेयः पुनर्वसुरात्रेयश्च** विभिन्नावाचार्यौ इत्यपि वक्तुं शक्यते॥" (का. उ. पृ. ७७)।

२ "अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः। शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया॥ अग्निवेशश्च भेल(ड)श्च जतूकर्णः पराशरः। हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः॥ बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः। तन्त्रस्य कर्ता प्रथमम**ग्निवेशो** यतोऽभवत्॥" (च० सू० स्था० अ० १)।

३ "अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च। नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते॥ तानेतान् कापिलबलिः शेषान् **दृढबलो**ऽकरोत्। तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम्॥" (च० चि० स्था० अ० ३०)। तथा—"विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्। संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्॥ अतस्तन्त्रोत्तममिदं **चरकेणा**तिबुद्धिना। संस्कृतं तत्त्वसंपूर्णं त्रिभागेनोपलक्ष्यते॥ तच्छङ्करं भूतपतिं संप्रसाद्य समापयत्। अखण्डार्थं **दृढबलो** जातः पञ्चनदे **पुरे**॥ कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषोञ्छशिलोच्चयम्। सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत्" (च० सि० स्था० अ० १२) इति॥

चरकसंहितायाः प्रतिसंस्कारविषये नेपालराजगुरुभिः पण्डितवर्यैः **श्रीहेमराजशर्मभिः** काश्यपसंहिताया उपोद्घाते १०४ तमपृष्ठादारभ्य १११ तमपृष्ठपर्यन्तं यद्विस्तरेण लिखितमस्ति ततः साररूपमत्र किञ्चिदुद्ध्रियते—

"तत्रात्रेयसंहितादीनुपादाय निबद्धानामग्निवेशतन्त्रादीनां चरकाचार्यादिभिः किंरूपं संस्करणं व्यधायीति विमर्शे चरकस्य संस्करणे दृढबलेन संस्करणक्रिया एवमुपवर्णिता दृश्यते—

"विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्।
संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्॥" इति।

अनेन संक्षिप्तस्य विस्तारः, विस्तृतस्य संक्षेपश्च चरकीयनिबन्धनस्य प्रक्रियाद्वयं समीक्ष्यते। तच्च संक्षिप्तस्य पूर्वग्रन्थस्य स्थाने विस्तृतलेखान्तरस्य, विस्तृतस्य पूर्वग्रन्थस्य स्थाने संक्षिप्तलेखान्तरस्य यथौचित्यं रचनमिति आवापोद्वापप्रक्रिययाऽपि सम्भवति। किं वा पूर्वग्रन्थस्य संक्षिप्तस्य नातिविशदतया तदुत्तरं पुनस्तस्य विशदीकरणेन विस्तृतलेखान्तरं, पूर्वग्रन्थस्य विस्तृतस्य ग्रहणधारणयोः सौकर्याय सारांशमादाय सङ्ग्रहणेन संक्षिप्तलेखान्तरमपीति सङ्ग्रहविग्रहप्रक्रियया पौनरुक्त्यप्रक्रियया वाऽपि संभवति। अनयोः प्रक्रिययोः प्रथमा आवापोद्वापप्रक्रिया यदि गृहीताऽभविष्यत्, तदा आत्रेयसंहिताऽग्निवेशतन्त्ररूपस्य मूलग्रन्थस्य स्वरूपं बहुनांऽशेन विपर्यासमापत्स्यत्। तथात्वे नवमेव विरचनमुपजातमिति चरकसंहितायां ग्रन्थाभ्यन्तरे आत्रेयाग्निवेशप्रतिवचनप्रश्नाद्युपन्यासस्यापि किं वा प्रयोजनं स्यात्? तद्विषये वक्तव्यं सामान्यविशेषात्मना शृङ्खलीकृत्यानुक्त्वा संक्षेपविस्ताररूपेण वाक्यभेदेन च पुनः पुनः कथनं चरकसंहितायामुपलभ्यमानं किंहेतुकं स्यात्, इति मूलसंहितायाः केवलमावापोद्वापप्रक्रियया संस्करणेन नवनिबन्धनात्मकत्वं न चरकसंहितायाः, अपि तु मूलग्रन्थे क्वचन संक्षिप्योक्तस्य विषयस्य विशदीकरणात्मना विस्तृतलेखस्य क्वचन विस्तरेणोक्तस्य विषयस्य लघुनोपायेन तदर्थग्रहणधारणोपयोगिनः संक्षिप्तलेखस्यापि विन्यासेन पौनरुक्त्यप्रक्रिययाऽपि संस्करणं चरकाचार्येण विहितं संभाव्यते॥"

तरणवृत्तान्तादेव ज्ञायते। स चाय-मात्रेय[1]-पुनर्वसु[2]-कृष्णात्रेय[3]-चान्द्रभागी[4]-चान्द्रभागनामभिरुल्लिखितो

"चरकसंहिताविषये चरकनाम्ना प्रसिद्धेयं संहिता चरकाचार्यस्य कृतिरिति, लघुरूपस्य पूर्वतन्त्रस्य सर्वांशतः परिवर्तन-परिवर्धनादिना चरकाचार्येण नवमेव निबन्धनं कृतमिति, आयुर्वेदविदां महर्षीणां समवाये तत्र तत्रोपजातान् विमर्षानाकर्ण्य सङ्गृह्य चरकाचार्येणेयं चरकसंहिता न्यबध्यतेति च नानाविधा विचारवितर्का दृश्यन्ते। परं पूर्वोक्तदिशा मूलभूताया आत्रेयसंहितायास्तन्मूलकस्याग्निवेशतन्त्रस्य च पूर्वसत्त्वस्य स्पष्टावगमेन "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते" इति स्पष्टया चरकोक्त्या च तन्त्रनिबन्धाऽग्निवेश एव, चरकस्तु तन्त्रान्तरेभ्यः समुच्चितैः स्वविचारारूढैश्च विषयान्तरैः समुपबृंह्य अन्यानपि संस्कारोचितविधीन् विधाय अग्निवेशतन्त्रस्य प्रतिसंस्कर्तैव। चरक एवास्य रचयिता यद्यभविष्यत्, तदा किमिति स आचार्यः स्वं नाम कथं तथारूपेण नोदलेखिष्यत्। अग्निवेशस्य नामानि ग्रन्थाभ्यन्तरे सम्बोधनादिरूपेण बहुशो लभ्यन्ते, नैवं चरकस्य नाम 'चरकप्रतिसंस्कृते' इत्युल्लेखवर्जं क्वापि ग्रन्थान्तरुपलभ्यते। उत्तरग्रन्थपूरको दृढबलोऽपि—

"अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना।
संस्कृतं तत्त्वसंपूर्णं त्रिभागेनोपलक्ष्यते॥
यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता।
चिकित्सा वह्निवेशस्य स्वस्थातुरहितं प्रति॥"

इति वदँश्चरकस्य केवलं संस्कर्तृत्वं, द्वादशसाहस्रसंहिताया अग्निवेशीयत्वं च स्पष्टं निर्दिशति। चरकस्य विशेषनिबन्धृभावे तदुत्तरस्तदुपजीवी तदीयग्रन्थपूरको दृढबलोऽपि कथमेवमग्निवेशं कर्तृतयोल्लिख्य चरकं संस्कृतत्वेनैव लिखेत्। सर्वतः सञ्चरणशीलतयाऽन्वर्थां चरकसंज्ञां वहताऽऽचार्येण सर्वतोऽस्य ग्रन्थस्य संस्करणेन प्रचारणेन प्रवचनेन प्रयोगकौशलेन उपकार-पथस्य प्रवर्तनेन च चरकसंहितेति तन्नाम्ना प्रसिद्धिः प्रवृत्ता स्यात्। सेयं प्रसिद्धिश्चरकाचार्यस्य कर्तृत्वभ्रान्त्यैऽजायतेति मन्ये॥

तेन पूर्वोपदर्शितदृढबलीयसंस्करणपरिभाषोक्तरीत्या क्वचन पदविशेषा वाक्यविशेषाः सन्दर्भविशेषा वा संस्कर्तुश्चरका-चार्यस्य लेखनीतो निर्गलाग्नुप्रविष्टा भवेयुः। सामान्यतोऽनुसन्धाने केचनेदृशा विषयाश्चरकाचार्यस्य लेखनीसम्बन्धमिवावभास-यन्ति—चरकसंहितायां निर्दिष्टे वादन्यायविषये दृश्यमानस्य पश्चात्तनविषयविकासस्य चरकसामयिकत्वसम्भावना पूर्वं प्रदर्शितैव॥"

"अग्निवेशनाम्ना चक्रपाणिशिवदासादिभिरुद्धृतानां वचनानां दर्शनेन तावत्समयपर्यन्तमग्निवेशतन्त्रस्योपलब्धिरासीत् किलेत्यपि सम्भावयितुं शक्यते। परं तथात्वे दृढबलसमयेऽपि तदवस्थितिसम्भवेन अग्निवेशतन्त्रस्यैव शेषभागयोजनेन पूरणमुपेक्ष्य शिलोञ्छवृत्त्या बहुभ्यस्तन्त्रान्तरेभ्यो विषयान् समुच्चित्य चिकित्सास्थानान्तसप्तदशाध्यायान् सिद्धिकल्पस्थाने च निबद्ध्य पूरणे दृढबलः किमिति प्रवर्तेत। अग्निवेशतन्त्रतः पूरणमनुल्लिख्य तन्त्रान्तरेभ्यः पूरणं स स्वमुखेन वर्णयति। उपसहस्रवर्षपूर्वलिखितपुस्तकोपलम्भेन ततोऽपि प्राचीनतयाऽवगते **ज्वरसमुच्चये** चरकस्य वचनोद्धारे सत्यप्यग्निवेशवचनो-द्धाराभावेन, वाग्भटादिभिरपि चरकस्यैवोल्लेखेन, हारुन् रसीदनृपसमयेऽप्यस्या एव चरकसंहिताया अनुवादेन च वाग्भटदृढ-बलादिसमयात् पूर्वमेवाग्निवेशतन्त्रस्य विलुप्तिरनुमीयते। चक्रपाणिशिवदासादिपर्यन्तमप्यग्निवेशतन्त्रोपलम्भेऽग्निवेशस्य चरकस्य च तत्र तत्र विषये साम्ये वैषम्ये च बहुशः प्रदर्शयितव्ये कतिपयानामेवाग्निवेशवचनानामुद्धारदर्शनं प्राचीननिबन्धेषु टीकासु विहितेभ्य उद्धारेभ्यस्तदुपलम्भं द्योतयति॥"

१ "वृत्तं तदपि **चात्रेयः** सदैवाभ्यनुमन्यते" (च॰ सू॰ स्था॰ अ॰ ८)। "तत्र मेल **आत्रेयमिदमुवाच**" (मेलसं॰ पृ॰ ८१)। "त्रिगुणः परिहारः, चतुर्गुणं ब्रह्मचर्यमित्याह भगवा**नात्रेयः**" (नावनीतकं, भागः २, पत्रं २२)।

२ "तच्छ्रुत्वा काप्यवचो भगवान् **पुनर्वसुरात्रेय** उवाच" (च॰ सू॰ अ॰ १२, सू॰ १३)। "एतेषां दन्तधवनं श्रेष्ठमाह **पुनर्वसुः**" (मेलसं॰ पृ॰ ६)। "अल्पान्तरत्वादित्याह तमात्रेयः **पुनर्वसुः**" इति **वृद्धजीवकीये तन्त्रे** राजपुत्रीयायां सिद्धौ।

३ "त्रित्वेनाष्टौ समुद्दिष्टाः **कृष्णात्रेयेण** धीमता" (च॰ सू॰ स्था॰ अ॰ ११)। "**कृष्णात्रेयं** पुरस्कृत्य कथाश्च-क्रुर्महर्षयः" (मेलसं॰ पृ॰ २८); "अशीतिकं नरं विद्यात् **कृष्णात्रेयवचो** यथा" (मेल॰ पृ॰ ९८)। केचित्तु श्रीकण्ठ-दत्त-शिवदाससेनादिभिः शालाक्यविषये उद्धृतेभ्यः कृष्णात्रेयवचनेभ्यः कृष्णात्रेयपुनर्वस्वोर्भेदं मन्यन्ते; अस्तु शालाक्यतन्त्र-प्रणेता कृष्णात्रेयोऽन्यः, परं पुनर्वसोरपि आसीत् '**कृष्णात्रेय**' इति नामेत्यत्र नास्ति संदेहलेशोऽपि, चरकप्रतिसंस्कारे मेलतन्त्रे च तस्य **कृष्णात्रेयनाम्नो**ल्लेखात्।

४ "यथाप्रश्नं भगवता व्याहृतं **चान्द्रभागिना**" (च॰ सू॰ स्था॰ अ॰ १३)।

५ "सुश्रोता नाम मेधावी **चान्द्रभागमुवाच** ह" (मेलसं॰ पृ॰ ३९)। चन्द्रभागाया अपत्यं **चान्द्रभागिः**, **चान्द्रभागो** वा, इति व्युत्पत्त्या पुनर्वसोर्मातुर्नाम '**चन्द्रभागा**' आसीदिति ज्ञायते। बाह्वादेराकृतिगणत्वात् 'बाह्वादि-भ्यश्च' (पा॰ अ॰ ४।१।९६) इत्यपत्यार्थे इञा चान्द्रभागिः, शिवादेराकृतिगणत्वात् 'शिवादिभ्योऽण्' (पा॰ ४।८।११२) इत्यपत्यार्थे अणा चान्द्रभाग इति च रूपसिद्धिः।

मेल-चरक-वृद्धजीवकीय-नावनीतकेषु प्राचीनायुर्वेदतन्त्रेषु। भगवता **व्यासेनापि** आयुर्वेदप्रवर्तकतया निर्दिष्टोऽयं महर्षिर्महाभारते शान्तिपर्वणि २१० तमेऽध्याये; यथा–

"गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम्। देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम्" इति॥

का जन्मभूमिर्भगवत आत्रेयस्येति यद्यपि निश्चयेन वक्तुं न शक्यते तथाऽपि–

"गान्धारदेशे राजर्षिर्नग्नजित्[1] स्वर्णमार्गदः। संगृह्य पादौ पप्रच्छ चान्द्रभागं **पुनर्वसुम्**॥
न च स्त्रीभ्यो न चास्त्रीभ्यो न भृत्येभ्योऽस्ति मे भयम्। अन्यत्र विषयोगेभ्यः सोऽत्र मे शरणं भवान्॥
एवमुक्तस्तथा तस्मै महर्षिः पार्थिवर्षये। विषयोगेषु विज्ञानं प्रोवाच वदतां वरः॥" इति
(भेलसं० पृ० ३०)।

अस्माद्भेलवचनाद् **गान्धारदेशस्तस्य** महर्षेर्जन्मभूमिर्निवासभूमिर्वा आसीत्, तथा भगवान् **पुनर्वसुः** गान्धारदेशाधिपते राजर्षेर्**नग्नजितो**[2] राजवैद्य आसीदिति वक्तुं शक्यते। गान्धारदेशवास्तव्योऽपि भगवान् पुनर्वसुः सहान्तेवासिभिः **पञ्चालक्षेत्र[3]-चैत्ररथवन[4]-पञ्चगङ्ग[5]-धनेशायतन[6]-कैलास[7]-हिमवदुत्तरपार्श्व[8]-त्रिविष्टपादिषु[9]** परोपकारार्थमायुर्वेदप्रचारार्थं वनौषधिज्ञानार्थं च विहरति स्म।

स चायं पुनर्वसुरात्रेयः कस्मिन् समये समजनीत्येतद्विषये किंचिद्विचार्यते। बौद्धग्रन्थेषु समुपलभ्यते यत्–भगवतो बुद्धस्य जन्मसमये तत्पूर्वं चासीद्भारतवर्षे विद्यापीठद्वयं, यत्र प्रायेण सर्वाण्यपि शास्त्राण्यध्याप्यन्ते स्म। तत्रैकः पूर्वभारते **काश्याम्**, अपरश्च पश्चिमभारते **तक्षशिलायामासीत्**। तत्र तक्षशिलाविद्यापीठे बुद्धजन्मसमये ततः किंचित्पूर्वं वा आसीदात्रेयनामा महर्षिरायुर्वेदप्रधानाध्यापक इति। स एव

---

१ भेलसंहितायां मुद्रिते पुस्तके 'मग्नजित् स्वर्गमार्गगः' इति पाठो मुद्रितोऽस्ति, परं स न समीचीनः, मया ताञ्जोरपुस्तकालयात् प्रतिलिपीकृत्यासादिते पुस्तके 'नग्नजित् स्वर्णमार्गदः' इत्येव पाठ उपलभ्यते।.

२ राजर्षिणा **नग्नजिता** आयुर्वेदे कश्चिद्ग्रन्थोऽपि विरचित आसीदिति **अरुणदत्तेन** अष्टाङ्गहृदयव्याख्यायामुद्धृतात्तद्वचनाज्ज्ञायते। तथा हि अष्टाङ्गहृदये शारीरस्थाने तृतीयेऽध्याये "रसाद्रक्तं ततो मांसं" (श्लो० ६२) इत्यादिश्लोकव्याख्यायामरुणदत्तः–"**नग्नजिद**प्याह–तत्राहाररसात् पूर्वं रसधातुर्विवर्धते। रक्तधातू रसाच्चैव रक्ताख्यान्मांसमेव च॥ मेदोधातुस्ततो मांसादस्थ्याख्यो मेदसस्तथा। मज्जधातुस्ततोऽस्थ्याख्यान्मज्ज्ञः शुक्राख्य एव च॥ शुक्रात् परं च गर्भस्य संभवः परिकीर्तितः" इति। **अष्टाङ्गसंग्रहे** उत्तरस्थाने चत्वारिंशत्तमेऽध्याये नग्नजितो मतं प्रमाणतयोपन्यस्तम्। यथा–"दुष्यति प्रथमे रक्तं द्वितीये श्वयथूद्भवः। तृतीयेऽङ्गे चिमिचिमा चतुर्थे ज्वरमूर्च्छना॥ पञ्चमे पाण्डुजिह्वाऽस्यशोषः षष्ठे हृदि व्यथा॥ सप्तमे मरणं वेग इति नग्नजितो मतम्" इति। "नग्नजितो दारुवाहिनोऽप्यत्र 'दुष्यति प्रथमे रक्तं' इत्यादिक्रमेण सप्त वेगा इति मतम्" इति तद्व्याख्यायामिन्दुः।

३ "जनपदमण्डले **पञ्चालक्षेत्रे** द्विजातिवराध्युषितायां **काम्पिल्य**राजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे **गङ्गातीरे** वनविचारमनुविचरन् शिष्यमग्निवेशमब्रवीत्" (च० वि० स्था० अ० ३. सूत्र ३) इति।

४ यदुक्तमात्रेयभद्रकाप्यीये–"आत्रेयो भद्रकाप्यश्च" इत्यारभ्य "**वने चैत्ररथे** रम्ये समीयुर्विजिहीर्षवः" (च० सू० अ० २६) इति।

५ "विहरन्तं जितात्मानं **पञ्चगङ्गे** पुनर्वसुम्" (च० चि० अ० ४) इति।

६ "कृतक्षणं शैलवरस्य रम्ये स्थितं **धनेशायतनस्य पार्श्वे**" (च० सि० अ० ३) इति।

७ यदुक्तं विसर्पचिकित्सितारम्भे "**कैलासे** किन्नराकीर्णे" इत्यारभ्य "विहरन्तं जितात्मानमात्रेयमृषिवन्दितम्" (च० चि० अ० २१) इति।

८ अतिसारचिकित्सिते "भगवन्तं खल्वात्रेयं कृताह्निकं हुताग्निहोत्रमासीनमृषिगणपरिवृतमु**त्तरे हिमवतः पार्श्वे**" (च० चि० अ० १९) इति।

९ यदुक्तं **नावनीतके** (The Bower manuscript) "देवर्षिसिद्धगणकिन्नरनागयक्षविद्याधराध्युषितसानुरन्तरत्नः। पुण्यस्त्रिविष्टपतलोद्धृतदेवरम्यः" इत्यारभ्य "आत्रेयहारितपराशरभेलगार्ग्यशाम्बव्यसुश्रुतवशिष्ठकरालकाप्याः। सर्वौषधीरसगुणाकृतिवीर्यनामजिज्ञासवः समुदिताः शतशः प्रचेरुः" (भा. १, प. १) इति।

अग्निवेशादीनां गुरुरिति डॉ. हॅर्नलेप्रभृतीनां पौश्चात्यविदुषां मतम्। अन्ये तु नायमात्रेयः तक्षशिला-विद्यापीठायुर्वेदप्रधानाध्यापकः, परं चरकतन्त्रे पुनर्वसुसमकालीनतया वर्णितो भिक्षुरात्रेयः स्यात् तक्षशिला-विद्यापीठे आयुर्वेदाध्यापक इति वँदन्ति। महाभारते "कृष्णात्रेयश्चिकित्सितम्" इत्युक्तत्वात् महाभारतरच-नाकालादात्रेयस्य पूर्वभवत्वे नास्ति संदेहलेशोऽपि। सौतेर्महाभारतरचनाकालस्तु खिष्टाब्दात् २५० वत्सर-पूर्वतन इति भारताचार्याणां श्रीमतां 'चिंतामणराव विनायक वैद्य' इत्येतेषां मतं, तथैतदेव मतमन्येषां पाश्चात्यविदुषामपि। पूर्वोद्धृते भेलवचने गान्धाराधिपते राजर्षेर्नग्नजितः समकालत्वमात्रेयस्य पुनर्वसोरुप-

१ Studies in the Medicins and Ancical India Part 1 by pages 7-8.

२ "तिब्वतीयोपकथायां तक्षशिलास्थितादात्रेयाज्जीवकस्याध्ययनोल्लेखोपलम्भेन बुद्धकालीनजीवकस्य गुरुरात्रेय एव पुनर्वसुरात्रेय इति मत्वा चरकसंहितामूलाचार्यस्य पुनर्वसोरात्रेयस्य स एव बुद्धकालीनः समय इति बहुभिर्विवेचकैर्विपश्चिद्भिः सन्धार्यते। परं जीवकस्य विषये तिब्वतदेशीया इव सिंहलदेशीया ब्रह्मदेशीया अपि उपकथा दृश्यन्ते। मिथः कथांशेष्वनै-कात्म्यमासु दृश्यते। जीवकस्याध्ययनोपवर्णने महावग्गलेखतस्तक्षशिलायां कस्माचिदेव दिशाप्रमुखादाचार्याज्जीवकस्याध्ययन-मायाति, न तु तद्गुरोरात्रेयत्वं ततः परिच्छेत्तुं शक्यते। चुल्लकसेट्ठिजातकेऽपि तक्षशिलायां पञ्चशतमाणवकाचार्यस्य दिक्प्रमुखस्य वोधिसत्त्वस्य निर्देशः, तत्कथायां पापकस्य जीवकस्य च नामनिर्देशोऽप्यस्ति। सिंहलोपकथायां तु शक्रेण विशेषमहिमानं प्रापितात् कपलक्ष्य(कपिलाक्ष?)गुरोर्जीवकस्याध्ययनमुल्लिख्यते। ब्रह्मदेशीयोपकथायां तु न तक्षशिलायाम्, अपि तु वाराणस्यां गत्वा जीवकस्याध्ययनं निर्दिश्यते। इत्येवमुपकथानां मिथो विरोधेन कस्या उपकथायाः प्रमाणविधयाऽङ्गीकरणं विधीयेत। विरोध्युपकथान्तरैः सहं विवदमानायास्तिब्वतीयकथायाः केवलमुक्तिमुपादाय आत्रेयस्यार्वागवतारणमर्वाग्भाव-साधनवद्धपरिकरेभ्य एव रोचताम्। ईदृशदुर्बलप्रमाणमुपादाय चरकसंहितामूलाचार्यस्यात्रेयपुनर्वसोः समयनिर्धारणं दुःसाहसं मन्ये। आत्रेयस्य जीवकगुरुत्वे जीवकेन स्वीयतन्त्रे आत्रेयस्य गुरुभावेन निर्देशनं किमिति न विधीयेत॥"

"किञ्च–आत्रेयपुनर्वसुनाऽग्निवेशस्योपदेशनस्थानं "जनपदमण्डले पाञ्चालक्षेत्रे काम्पिल्यराजधान्याम्" इति निर्देशेन काम्पिल्यप्रदेश इति स्पष्टमेव। यदि नाम बुद्धसामयिकजीवकीयेतिवृत्ते तिब्वतीयकथाजातकादिषु तक्षशिलायामात्रेयादध्ययनो-ल्लेखेन तक्षशिलाध्यापक आत्रेयोऽग्निवेशस्योपदेशकः स्यात्तदा तक्षशिलाया उल्लेखोऽग्निवेशसंहितायां कथं न दृश्येत। तक्षशिलाप्रदेशे भूगर्भनिर्गतप्राचीननगरत्रये दक्षिणभागस्थो विर्माउण्डसंज्ञको भागः पूर्वकालिकः B. C. १०००–१२०० समयात् प्रसिद्ध आसीदिति ऐतिहासिका वदन्ति। पाणिनिनाऽपि तक्षशिलायाः सूत्रे निर्देशः क्रियते। बुद्धसमयादपि पूर्वसमये तक्षशिलायां विद्याप्रचार आसीदिति ऐतिहासिकैरप्युपवर्ण्यते। मागधस्य जीवकस्य काशीराजब्रह्मदत्तस्यापि तक्षशिलायां वैद्यशास्त्राध्ययनायोपगमनोल्लेखेन तदात्वे तक्षशिला विद्यान्तराणामिव आयुर्वेदविद्याया अपि प्रधानं विद्यापीठमासीदिति महावग्गजातकादिलेखेभ्योऽपि व्यक्तमेव। पुनर्वसोरात्रेयस्य तदन्तेवासिनोऽग्निवेशस्य च तत्सामयिकत्वे आत्रेयसंहिताकर्त्रा अग्निवेशसंहिताकर्त्रा वा तादृश्याः प्रसिद्धविद्यापीठरूपायास्तक्षशिलाया नामोपादानं किमिति न क्रियेत। तस्यामग्निवेसंहिताया-मात्रेयपुनर्वसोरुपदेशस्थानानि यावन्ति कीर्तितानि तत्र नैकत्रापि तक्षशिलाऽनुस्मर्यते। एवंरूपां तक्षशिलामनुपादाय काम्पिल्यादावुपदेशनस्योल्लेखेन तक्षशिलायास्तत्समये प्रसिद्धिरेव नासीत्। तस्या विद्यापीठभावसमयात् पूर्वमेव काम्पिल्ये आत्रेयपुनर्वसुनाऽग्निवेशस्योपदेशनं प्रतीयते। काम्पिल्यदेशो हि वेदसमयात् प्रभृति प्रसिद्धः। शुक्लयजुर्वेदतैत्तिरीयमैत्रायणीय-काठकसंहितासु च काम्पिल्यशब्दो लभ्यते। पाञ्चालशब्दोऽपि वेदेषु ब्राह्मणेषु उपनिषत्स्वपि दृश्यते। नैवं तक्षशिलाया वेदेषु ब्राह्मणेषु उपनिषत्सु वा प्राचीनग्रन्थेषु उल्लेखोऽस्ति ×××। बुद्धसामयिकजीवकाचार्यः केवलमात्रेयशब्देन तक्षशिलागतत्वेन च निर्दिश्यते। चरकीयात्रेयाचार्यो हि आत्रेयपुनर्वसुशब्देन काम्पिल्यस्थानीयत्वेन निर्दिश्यते इति स्पष्टो विशेषः। एकस्यैवात्रेयस्यान्तेवासिनौ एतौ जीवकाग्निवेशौ यद्यभविष्यतां तदा जीवककथायां तादृशप्रधानसतीर्थ्यस्याग्निवेशस्य नाम, अग्नि-वेशलेखे वा तादृशविशिष्टबुद्धिमत्तया प्रसिद्धस्य जीवकस्य नाम किमिति न निरदेक्ष्यत।......एवं दर्शनेन तक्षशिलाभ्युत्थानात् पूर्वतनोऽयं काश्यपात्रेयाग्निवेशभेडदिवोदासादीनामायुर्वेदविद्योपदेशनग्रहणधारणसमय इति कथं वक्तुं न शक्यते।"

"एवं च तिब्वतीयोपकथायाः प्रामाण्याभ्युपगमेन तदाचार्यस्यात्रेयत्वाभ्युपगमेऽपि गोत्रबोधकेनात्रेयशब्देन नानाव्यक्तीनां व्यवहारस्य दर्शनेन, गोत्रवाचकात्रेयशब्दमात्रमुपादाय सोऽयमेवात्रेयपुनर्वसुरिति न निश्चेतुं शक्यते। किन्तु बौद्धग्रन्थोक्त-जीवकाध्ययनस्थानत्वेन निर्दिष्टायास्तक्षशिलाया अध्यापकत्वेन तिब्वतीयकथातोऽवगम्यमान आत्रेयः आत्रेयपुनर्वसोः पश्चाद्भवो बुद्धकालिकोऽन्य एव गोत्रनाम्ना व्यवहृत आत्रेयः कोऽपि स्यादिति सम्भाव्यते।" (का. उ. पृ. ७९–८२)॥

३ वनौषधिदर्पणस्योपोद्धाते ३ पृष्ठे॥

वर्णितम् । गान्धारदेशवासिनो नग्नजितो नाम दृश्यते शतपथब्राह्मणे, ऐतरेयब्राह्मणे च । शतपथब्राह्मण-रचनाकालस्तु खिष्टाब्दात्त्रिसहस्रवत्सरपूर्वतन ( 3000 B. C. ) इति श्रीशङ्करबालकृष्णदीक्षितैर्भारतीय-ज्योतिषशास्त्रेतिहासनाम्नि ग्रन्थे १२८ तमे पृष्ठे गणितरीत्या निर्णीतः । अतो नग्नजितः तत्समकालवर्तिनः पुनर्वसोरात्रेयस्य च पञ्चसहस्रवत्सरेभ्यः पूर्वं प्रादुर्भावकाल इति प्रतीयते । प्रतीच्यविद्वद्भिस्तु ऐतरेय-शतपथब्राह्मणयो रचनाकालः खिष्टाब्दादष्टशतवत्सरपूर्वतन इति निर्णीतम् । तेषां मतेऽपि पुनर्वसोराविर्भाव-कालस्त्रिसहस्रवत्सरादर्वाङ्नायाति । आत्रेयशिष्येणाग्निवेशेनाग्निवेशतन्त्रं रचितमिति तस्यापि स एव समयः ।

---

१ "अथ ह स्माह स्वर्जिन्नाग्नजितः नग्नजिद्वा गान्धारः—प्राणो वै समञ्चनप्रसारणं, यस्मिन् वाऽङ्गे प्राणो भवति तत् सं चाञ्चति प्र च सारयति,···तदुवाच राजन्यबन्धुरिव त्वेव तदुवाच" शतपथब्राह्मणे ८–१–४–१० ।

२ "तमेवमेतं भक्षं प्रोवाच रामो भार्गवेयो विश्वन्तराय सौषद्मनाय,······एतमुहैव प्रोवाच तुरः कावषेयो जनमेजयाय पारीक्षिताय······नग्नजिते गान्धाराय······ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा, सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियं प्रतिष्ठितास्तपन्ति सर्वदिग्भ्यो बलिमावहन्तः,······उग्रं हास्य राष्ट्रमव्यथं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः" (ए. बा. ७–३५) ।

३ "अष्टाङ्गसङ्ग्रहस्योत्तरस्थाने विषवेगविषये पुनर्वसुनग्नजिद्विदेहालम्बायनधन्वन्तरिमतविशेषोल्लेखदर्शनेन नग्नजिन्नाम-कोऽपि वैद्याचार्योऽवगम्यते । तदीयेन्दुव्याख्यायां "नग्नजितो दारुवाहिनः" इति नग्नजिद्दारुवाहिशब्दौ सामानाधिकरण्येनोपात्तौ । अत्रैकान्तशब्देनोपादानेऽपि चरकचक्रपाणिव्याख्यायां दारुवाहनाम्ना वचनोद्धारस्य दर्शनेन काश्यपीयायामपि दारुवाहनाम्ना मतोल्लेखेन चान्त्यवर्णमात्रविभिन्ना एकैवेयं व्यक्तिः प्रतिभाति । अन्यत्र क्वचन निर्दिष्टो दारुकोऽपि नामैकदेशन्यायेनायमेव दारुवाहः किमु ? । दारुवाहेन सहैक्यमनुसन्धाय नग्नजितोऽनुसन्धाने भेडसंहिताया मुद्रितपुस्तके—

'गान्धारभूमौ राजर्षिर्नग्नजित् स्वर्गमार्गदः ।
सङ्गृह्य पादौ पप्रच्छ चान्द्रभागं पुनर्वसुम् ॥
एवमुक्तस्तथा तस्मै महर्षिः पार्थिवर्षये ।
विषयोगेषु विज्ञानं प्रोवाच वदतां वरः ॥ (पृ. ३०)

इति राजर्षिमग्नजिदित्येवं पाठदर्शनेऽपि श्रीमद्भिर्यादवजीमहाभागैस्तञ्जोरपुस्तकालयगतपुस्तकात् "राजर्षिर्नग्नजित्स्वर्णमार्गदः" इति पाठस्योपलम्भेन, पूर्वापरवाक्यानुसारतः प्रथमान्तराजर्षिशब्दपाठस्यैवौचित्येन च तत्पाठानुसारेण नग्नजिन्नाम भेडसम-कालिकः कोऽपि गान्धारपार्थिवः चन्द्रभागाया मातुःसम्बन्धमादाय किल चान्द्रभागसंज्ञितस्य पूर्वापरसन्दर्भसिद्धस्य पुनर्वसो-रात्रेयस्य सकाशे विषविषयकं प्रश्नं चकारेति ज्ञायते । अष्टाङ्गहृदये "रसादकं" इत्यस्यारुणदत्तव्याख्यायां नग्नजितो वचनोद्धारस्य दर्शनेन, अष्टाङ्गसङ्ग्रहे विषविषये "इति नग्नजितो मतम्" इत्युल्लेखेन, भेडेऽपि विषविषये एतत्प्रश्नस्य दर्शनेन च सोऽयमेवेति संवादो दृढीभवति । दारुवाहस्य नग्नजितश्च पार्थिवत्वेनोपलम्भात्, इन्दुलेखतो द्वयोः सामानाधिकरण्याच्चानयोर्विषये तत्तन्नाम्नोप-लभ्यमाना विशेषा गुणोपसंहारन्यायेन समन्वयं प्राप्नुवन्तोऽस्य गान्धारराजर्षेर्न केवलं विषविषय एव, अपितु वैद्यविद्यायामाचार्य-भावमवगमयन्ति । पूर्वनिर्दिष्टे (पृ. २३) शालिहोत्रोक्ताश्वशास्त्रेऽप्यायुर्वेदकर्तॄणां मध्ये विनग्नजिनो नाम दृश्यते, सोऽप्ययमेव स्यात् । मात्स्ये वास्तुशास्त्रोपदेशकत्वेनापि नग्नजित उल्लेखोऽस्ति, स नग्नजित् गान्धारो राजा वाऽन्यो वेति न ततोऽवधार्यते ॥

किञ्च—ऐतरेयब्राह्मणे क्षत्रिययज्वानां फलचमसभक्षणस्य साम्प्रदायिकत्वप्रदर्शने नग्नजितो गान्धारस्योल्लेखोऽस्ति । ततः सर्वदिग्विजयराष्ट्रसम्पदादेः फलस्य क्षत्रिययजमानत्वस्य चोल्लेखेन नग्नजिन्नाम क्षत्रियो गान्धारमहाराजः फलचमसभक्षणेन प्रतिष्ठितश्रीकः सर्वशत्रुविजयी चासीदिति लभ्यते । एवमत्र निर्दिष्टो गान्धारमहाराजो नग्नजिदेव देशनामादिसाम्येन भेडेन ससंमानं राजर्षितया निर्दिष्टो गान्धारराजो नग्नजिद्भवितुमर्हति । शतपथब्राह्मणेऽपि चित्यां प्राणभृदुपधाने नाग्नजितः (नग्नजित्पुत्रस्य) स्वर्जितः, गान्धारस्य नग्नजितश्चोल्लेखोऽस्ति । तत्र प्राणमहिमवक्तृत्वस्य राजन्यबन्धुत्वस्य च निर्देशेन शारीरविद्याचार्यो गान्धारराजर्षिर्नग्नजिदेवानेनापि निर्दिष्टः प्रतीयते । अत्र तदीयपुत्रस्य स्वर्जिन्नाम्नोल्लेखो भेडलेखे स्वर्गमार्गद इति नग्नजितो विशेषणं च कञ्चन तदीयविजयवृत्तान्तं साम्येन सूचयति किमु ? । एवं संवादेन नग्नजित ऐतरेयशतपथकाला-दनर्वाचीनत्वेऽनुसन्धीयमाने 'नग्नजितो दारुवाहिनोऽप्यत्र' इति इन्दुलेखे अपिशब्दसत्तया व्यक्तिद्वयकल्पनेऽपि औपदेशिकेन सम्बन्धेन नग्नजित्सम्बन्धस्य पुनर्वसोरात्रेयस्य तदन्तेवासिनो भेडाचार्यस्यापि ऐतरेयशतपथब्राह्मणकालादनर्वाग्भाव आयाति ।" इति काश्यपसंहिताया उपोद्धाते (पृ. ९९–१००) नेपालराजगुरवः पण्डितवर्याः **श्रीहेमराजशर्माणः** ।

४ **अग्निवेशः**—चरकसंहितायामात्रेयपुनर्वसोः प्रधानान्तेवासितया निर्दिष्टोऽग्निवेशः, तत्सतीर्थ्या भेडादयश्च तत्सामयिका एव भवितुमर्हन्ति । अग्निवेशसंहितायां तक्षशिलाया अनुल्लेखेन पाणिनीयसूत्रे तक्षशिलाया उल्लेखेन, पाणिनिना गर्गादिगणे जतू-

अग्निवेशतन्त्रस्य स्थूलकालनिर्णयेऽन्यदप्यस्ति साधनम् । भारतवर्षे रवि-सोम-भौमादिवारगणनाप्रवृत्ति-कालात् पूर्वमग्निवेशसंहिताया रचनाकाल इति वक्तुं शक्यते । यतोऽस्मिँस्तन्त्रे यथा तिथि-नक्षत्र-करणादिगतं शुभाशुभमुपवर्णितं न तथा वारगतम् । यथा सूत्रस्थाने पञ्चदशेऽध्याये—"इष्टे तिथिकरणमुहूर्तनक्षत्रे" इति, तथा विमानस्थानेऽष्टमेऽध्याये—"उदगयने शुक्लपक्षे प्रशस्तेऽहनि तिष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्ते" इति, तथा इन्द्रियस्थाने द्वादशेऽध्याये—"अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च । विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम् ॥ मध्याह्नमर्धरात्रं च भूकम्पं राहुदर्शनम् ।........दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ।" इत्यादौ तिथिनक्षत्रादय एवोपवर्णिता न तु वाराः । यदि वारगणनाप्रचारस्तत्समये स्यात् तदा अर्वाचीनग्रन्थेषु यथा "न वैद्यो बुधसोमयोः" इत्यादौ वारगतं शुभाशुभत्वमुपवर्णितं, तथाऽग्निवेशतन्त्रे ( तत्प्रतिसंस्काररूपे चरके वा ) अवश्यमेवोपवर्णितं स्यात् । भारतवर्षे वारगणनाप्रवृत्तिस्तु शकारम्भकालात् सहस्रवत्सरेभ्यः पूर्वं संजातेति **भारतीयज्योतिःशास्त्रेतिहासनाम्नि ग्रन्थे** ( १३९ तमे पृष्ठे ) **श्रीशङ्कर बालकृष्ण दीक्षितः** । वारगतं-शुभाशुभवर्णनाभावोऽपि अग्निवेशतन्त्रस्य त्रिसहस्रवत्सरात् पूर्वभवत्वमेव ख्यापयति ।

कोऽयं चरकः ? इति विमर्शे नेपालराजगुरुभिः पण्डितवर्यैः **श्रीहेमराजशर्मभिः** काश्यपसंहिताया उपोद्घाते (८७ तमे पृष्ठे) सुनिरूपितमेवात्रोद्ध्रियते—

"तेन गोत्रनाम्नाऽऽत्रेयस्येव शाखानाम्नाऽप्यस्य चरक इति प्रसिद्धिरपि सम्भवति । किंवा तद्व्यक्तेश्चरकः इति रूढमेव संकेतनाम स्यात् । अथवा पश्चिमविभागे पूर्वं नागजातीनामितिवृत्तोपलम्भेन तज्जातीयो विद्वान् सन् भावप्रकाशोक्तरीत्या शेषावतारश्चरकः कीर्तितः किल ? । बृहज्जातकव्याख्याकृतो रुद्रस्य लेखानुसारेण वैद्यविद्याया विशेषविद्वानसौ लोकोपकारदृशा भिक्षुवृत्त्या ग्रामे ग्रामे चरित्वा वैद्यविद्याया उपदेशेन भैषज्येन च लोकोपकारं विदधान आसीत्; अतः किल सञ्चरणशीलभिक्षुरूपार्थमादाय चरकनाम्ना प्रसिद्धः स्यादित्यपि बहुशः सम्भवति । अस्तु नाम यथातथाऽपि अस्य चरकनाम्ना ख्यातिः, सोऽयं चरकाचार्य आत्रेयसंहितोपदेशमुपादायाग्निवेशनिबद्धस्य तन्त्रस्य प्रतिसंस्कृत्य प्रकाशनेन आयुर्वेदीय-भैषज्यविद्यायामतिनिष्णाततया पूर्वसमयादेवाचार्यकुक्षौ संमानित आसीदित्यवगम्यते, येन वाग्भटादयोऽपि चरकाचार्यं विशेषतः कीर्तयन्ति । **जयन्तभट्टोऽपि न्यायमञ्जर्याम्**—'प्रत्यक्षीकृतदेशकालपुरुषदशाभेदानुसारी-

---

कर्णपराशराग्निवेशशब्दानामुल्लेखेन च अग्निवेशस्य पाणिनितोऽपि पूर्वः समयः प्रतीयते । यद्यपि पाणिनीयेषु तेषु तेषु गणेषु समानवर्गीया एव शब्दा उद्दिश्यन्ते इति न नियमः, तथाऽपि भाषाप्रगतिदृशा प्राय एकजातीयेषु शब्देषु प्रत्ययार्थैकरूप्येन शब्दानां प्रायिकी एकाकारता दृश्यते । येन पाणिनीयगणेषु ऋषिदेशनदीनगरप्राण्यादिवर्गीयाः शब्दाः सह गृहीताः प्रायशो दृश्यन्ते । अस्मिन् गर्गादिगणे जतूकर्णपराशरभिषजचिकित्सितशब्दानां पाठेन सन्निधिपाठमवाप्तः पराशरशब्दो वैद्याचार्यस्य पराशरस्य बोधकः स्यात् । तस्मिन् गणे प्रविष्टोऽग्निवेशशब्दोऽपि समानन्यायेन आत्रेयशिष्यस्य वैद्याचार्यस्याग्नि-वेशस्य बोधको बहुशः सम्भवति । तथात्वेऽग्निवेशस्य पाणिनेरपि प्राक्तनत्वमायाति ॥"

"पूर्वं ऋषयो वेदवेदाङ्गविषयेष्विव केचन आयुर्वेदविषयेष्वपि ज्ञानवन्त आसन्निति तत्र तत्र गतैर्विषयैरवगम्यते ।" (का. उ. पृ. ८२) ।

"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्, आप्तप्रामाण्यात्" (न्यायदर्शन अ. २, आ. १, सू. ६८) इत्यस्य भाष्ये "य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्" इति वात्स्यायनः । संपादकः ।

१ वराहमिहिरेण बृहज्जातके (१५-१) प्रव्रज्यायोगवर्णने "शाक्या जीविकभिक्षुवृद्धचरका निर्ग्रन्थवन्याशनाः" इत्युपात्तस्य चरकशब्दस्य भट्टोत्पलेन "चरकश्चक्रधरः" इति, रुद्रेण "चरका योगाभ्यासकुशला मुद्राधारिणश्चिकित्सानिपुणाः पाखण्डभेदाः" इति व्याख्यानं विहितमस्ति ।

समस्तव्यस्तपदार्थशक्तिनिश्चयाश्चरकादयः' इति सबहुमानमेनमाचार्यमनुस्मरति ॥ इति ।

"कठचरकाल्लुक् (४–३–१०९)" इति पाणिनिना चरकशब्दस्य निर्देशाच्चरकाचार्यस्य पाणिनेरपि प्राक्तनत्वमिति कैश्चन विद्वद्भिः प्रतिपादितम् । परमस्मिन् सूत्रे निर्दिष्टश्चरकः कठसाहचर्याच्चरणव्यूहोक्तिसंवादाच्च संहितादृष्टा, किंवा तत्सांप्रदायिकोऽन्य एव प्राचीनो महर्षिरिति निश्चीयते । चरकशाखासंहिताऽप्यद्यत्वे मुद्रितोपलभ्यते । "माणवकचरकाभ्यां खञ्" इति सूत्रान्तरे (५–१–१४) उपात्तश्चरकशब्दोऽपि ञित्वस्य स्वरार्थतया निर्देशेन स्वरस्य विशेषतो वैदिक्यां प्रक्रियायामुपयोगाच्च लौकिकैकचरकव्यक्तिपरत्वकल्पनापेक्षया चरकशाखीयपर एव कल्पयितुमुचितः प्रतिभाति ॥

याज्ञवल्क्यस्मृतिव्याख्यायां विश्वरूपाचार्येण "तथा च चरकाः पठन्ति" इत्युद्धृते वाक्ये अश्विनोर्भैषज्योपदेशदर्शनेन आपाततो वैद्यविषयत्वप्रतिभासेऽपि मधुन आपदि ब्रह्मचर्यप्रतिघातकत्वे साधकतया निर्दिष्टत्वेन एतत्समश्रेण्या वाजसनेयिनामपि वचनोद्धारेण तत्साहचर्याच्च चरका इति चरकशाखीया एव निर्दिष्टा इति स्पष्टमवबुध्यते । काशिकावृत्तेर्लेखानुसारेण वैशम्पायनान्तेवासिनश्चरकत्वेन व्यवहारोऽपि चरकशाखाप्रवर्तकत्वेनैव दृश्यते" ॥

कः कालश्चरकस्य? अत्रैके भगवान् **पतञ्जलिरेव चरक** इति प्राचां प्रवादमवलम्ब्य पतञ्जलिचरकयोरैक्यं मन्यमाना य एव कालः पतञ्जलेः स एव चरकस्येति विनिश्चिन्वन्ति । पतञ्जलेः प्रादुर्भावसमयस्तु यवनराजस्य **मिलिन्द(मिनेन्डर)**स्य तथा आर्यराजस्य **पुष्यमित्र**स्य च राज्यशासनकाले शताधिकद्विसहस्रवत्सरात् पूर्वमासीदितीतिहासविदां मतम् । परं पतञ्जलिचरकयोरैक्यं संदेहास्पदमेव । चरके प्रत्य-

१ खिष्टीयाष्टमे शतके (७०५–७६२ वत्सरयोरन्तरे) संभूतेन बौद्धाचार्येण **शान्तिरक्षितेन** युक्त्याख्यप्रमाणविचारे चरकमतमुपस्थापितं; यथा—

"अस्मिन् सति भवत्येव न भवत्यसतीति च ।
तस्मादतो भवत्येव युक्तिरेषाऽभिधीयते ।
प्रमाणान्तरमेवेयमित्याह **चरको** मुनिः ।
नानुमानमियं यस्माद्दृष्टान्तोऽत्र न विद्यते ॥" इति ।

(तत्त्वसंग्रहे १६९२–१६९३ तमे कारिके)

२ "तथाच **चरकाः** पठन्ति—श्वेतकेतुं ह्यारुणेयं ब्रह्मचर्यं किलासो जग्राह । तमश्विनावूचतुः—मधुमांसौ किल ते भैषज्यमिति । सहोवाच-ब्रह्मचर्यमानी कथं मध्वश्नीयामिति । तौ होचतुः—यदा चात्मना पुरुषो जीवति अथान्यत्सुकृतं करोमीत्यात्मनं सर्वतो गोपायेत् । अथ खल्वाहुर्वाजसनेयिनः...इत्यादि" (याज्ञवल्क्यटीका बालक्रीडा १–२–३२) ॥

३ **चरक** इति वैशम्पायनस्याख्या, तत्संबन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते ॥ (काशिकावृत्तिः ४–३–१०४)

४ पतञ्जलिचरकयोरैक्यसाधकानि प्राचां वचनानि यथा—"पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः । मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः" इति चरकसंहिताया आयुर्वेददीपिकाव्याख्यायाः प्रारम्भे **चक्रपाणिः** । "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इति योगवार्तिकारम्भे **विज्ञानभिक्षुः** । "सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः । कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम्" (सर्गः ५, श्लो. २५) इति पतञ्जलिचरिते **रामभद्रदीक्षितः** । "यदा मत्स्यावतारेण हरिणा वेद उद्धृतः । तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥ अथर्वान्तर्गतं सम्यगायुर्वेदं स लब्धवान् । एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥ तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान् । स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥ तांस्तु दृष्ट्वा दयायुक्तस्तेषां दुःखेन दुःखितः । अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥ संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह । प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥ यतश्चर इवायातो न ज्ञातः केनचिद्यतः । तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले ॥ स भाति चरकाचार्यो देवाचार्यो यथा दिवि ॥ सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः । आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ॥ मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् । तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ॥ चरकेणात्मनो नाम्ना ग्रन्थोऽयं **चरकः** कृतः । (भावप्रकाशः १ अ.) ॥

५ महामहोपाध्याय पं. **श्रीगौरीशंकरजी ओझा**कृत राजपूतानेका इतिहास, भाग १, पृष्ठ ९९ ।

ध्यायमध्यायसमाप्तिवाक्ये 'इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते' इत्येव पठ्यते, न तु क्वापि 'पतञ्जलिप्रतिसंस्कृते' इति। दृढवलेनापि चिकित्सास्थानान्ते "अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च। नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते" इत्यत्र, तथा सिद्धिस्थानान्ते "अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना। संस्कृतं तत्त्वसंपूर्णं त्रिभागेनोपलक्ष्यते" इत्यत्र च चरकनाम्नैव प्रतिसंस्कर्तुर्निर्देशः कृतः, न तु पतञ्जलिनाम्ना। चरकसंहिताया उपलभ्यमानासु व्याख्यासु भट्टारहरिचन्द्रस्य व्याख्यैव सर्वाभ्यः प्राचीनेत्यत्र नास्ति कस्यापि विप्रतिपत्तिः। भट्टारहरिचन्द्रेणापि चरकव्याख्यारम्भे "लोकोपकार(मतये) कविसत्तमाय भक्त्या प्रणम्य महते चरकाय तस्मै" इत्यत्र चरकस्यैव नामोपात्तं न तु पतञ्जलेः। वाग्भटेनापि "ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ" (वा. उ. अ. ४०) इत्यत्र चरकनाम्नैव तन्त्रनिर्देशः कृतः, न तु पतञ्जलिनाम्ना। यदि दृढवल-भट्टारहरिचन्द्र-वाग्भटानां काले चरकस्य पतञ्जलिनाम्ना प्रसिद्धिः स्यात्, पतञ्जलिप्रतिसंस्कृतत्वं च चरकतन्त्रस्य, तदा तैरवश्यमेव क्वचिदपि तथा लिखितं स्यात्। अतोऽग्निवेशतन्त्रप्रतिसंस्कर्ता चरकोऽयं पतञ्जलेर्भिन्न एव। व्याकरणमहाभाष्यप्रणेता पतञ्जलिः योगसूत्रप्रणेतुः पतञ्जलेः चरकाच्च भिन्न एवेति अन्येषामपि विदुषां मतम्। तथाहि निरुक्तालोचने श्रीसत्यव्रतसामश्रमीभट्टाचार्यः—"अयमेव पतञ्जलिः वैद्यशास्त्रप्रणेताऽपि, योगशास्त्रप्रणेताऽपि, इत्येवं प्रवादः सुप्रचलितः श्रूयत एव। परमस्य नामैक्यमेव वीजमनुगच्छामो नान्यत् किंचनेत्यग्राह्य एवैष प्रवादः" इति। "पातञ्जल-महाभाष्य-चरकप्रतिसंस्कृतैः। मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः" इति पद्यस्य, तथा "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन" इत्यादिवचनानां च इदमेव तात्पर्यं ज्ञायते यत्—एक एव भगवान् शेषः अवतारभेदेन व्याकरणमहाभाष्यं, योगसूत्राणि, चरकप्रतिसंस्कारं च चकारेति। भावमिश्रोपवर्णिते चरकाविर्भावेऽपि चरकस्य शेषावतारत्वमेवोपवर्णितं, न तु पतञ्जलित्वमित्यप्यवश्यं द्रष्टव्यमेव। महाभाष्यकर्तुः पतञ्जलेरपि शेषावतारत्वमुपवर्णितं काश्मीरकराजानकमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ सप्तविंशे शब्दशास्त्रावतारे—

"अनया कथया किंवा प्रसङ्गोदितया मया।
ऐन्द्रं व्याकरणं हित्वा पाणिनीयं व्यधाच्छिवः॥
ततः प्रभृति निःशेषशब्दज्ञानप्रकाशकम्।
दिव्यं व्याकरणं भूमौ पाणिनीयं प्रसिध्यति॥
पाणिनिर्भगवानेव स्वयं चन्द्रार्धशेखरः।
................................।
कालान्तरेण सर्वज्ञस्याज्ञया भुजगेश्वरः।
स्वजिह्वाः सफलीचक्रे वह्वीर्भाष्योपदेशतः॥" इति।

पातञ्जलमहाभाष्य-योगसूत्र-चरकतन्त्रप्रणेतॄणां त्रयाणां शेषांशत्वेऽपि ऐतिहासिकमेकत्वं न साधयितुं शक्यम्। तेषामेकत्वाभ्युपगमे भगवतः श्रीकृष्णस्य ज्येष्ठभ्रातुः श्रीवलरामस्यापि भागवतपुराणादिषु शेषांशत्वेनोपवर्णितत्वात् पतञ्जलित्वं समापद्येत। अतः सत्यपि शेषांशत्वे योगसूत्रप्रणेता पतञ्जलिः, व्याकरणमहाभाष्यरचयिता पतञ्जलिः, चरकश्चेति त्रयोऽपि भिन्ना एव। महाभाष्यप्रणेतुः पतञ्जलेर्योगसूत्रप्रणेतुश्च पतञ्जलेः कथञ्चित्सिद्धेऽप्यैक्ये पतञ्जलिचरकयोरैक्यं दुःसाधमेव।

अन्ये तु वर्णयन्ति यत्—चरकाचार्यः कुशानवंशीयस्य महाराजस्य कनिष्कस्य प्रसिद्धो राजवैद्य आसीत्, अश्वघोषनागार्जुनावपि महाराजस्य कनिष्कस्य राजपण्डिताविति, लिखितं चैतच्चीनदेशे समुपलब्धे संयुक्त-

१ पतञ्जलिचरकयोरनैक्यसाधकप्रमाणविस्तरस्तु काश्यपसंहिताया उपोद्घाते ८६–९६ पृष्ठेषु द्रष्टव्यः।

रत्नपिटकसूत्राख्ये तथा श्रीधर्मपिटकसंप्रदायनिदानाख्ये च बौद्धग्रन्थे[२]। महाराजस्य कनिष्कस्य राज्यशासनकालस्तु ख्रिस्तीय८३तमाब्दादारभ्य ११९ तमाब्दपर्यन्तः।

चरके ज्वरचिकित्सिते "विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम्। स्तुवन्नामसहस्रेण ज्वरान् सर्वानपोहति" इत्यनेन ज्वरस्य दैवव्यपाश्रया चिकित्साऽभिहिताऽस्ति। अत्र 'स्तुवन्नामसहस्रेण' इत्यनेन महाभारतोक्तं विष्णुसहस्रनामस्तोत्रमेवाभिप्रेतम्। अतश्चरकप्रतिसंस्कारस्य महाभारतपरकालभवत्वे नास्ति संदेहलेशोऽपि। महाभारतरचनाकालस्त्वत्रैव पूर्वमुक्तः।

एवं ये पतञ्जलिमेव अग्निवेशतन्त्रप्रतिसंस्कर्तारं मन्यन्ते तन्मते चरकप्रतिसंस्कारः २१००वत्सरात् पूर्वमासीदिति, ये तु कनिष्कराजवैद्यं चरकमग्निवेशतन्त्रप्रतिसंस्कर्तारं मन्यन्ते तन्मते १८५०वत्सरात् पूर्वमासीच्चरकप्रतिसंस्कार इति समायाति।

अस्मन्मते तु वैदिकसाहित्ये बौद्धसाहित्ये वा यावत्पर्यन्तमन्यस्य चरकनाम्नः प्रसिद्धस्य भिषजोऽवगमो न भवेत्, तावत्पर्यन्तं बौद्धेतिहासप्रसिद्धः कनिष्कराजवैद्यश्चरक एव अग्निवेशतन्त्रप्रतिसंस्कर्तेति निर्णये न काऽपि विप्रतिपत्तिर्दृश्यते[३]।

चरकप्रतिसंस्कारपूरयिता दृढबलः कस्मिन् देशे कस्मिंश्च समये समजनीत्येतद्विषये किंचिद्विचार्यते। दृढबलोऽयं कपिलबलस्य पुत्रः, पञ्चनदपुरजातश्चेति तेनैवोक्तात् "तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत्" (च० चि० अ० ३०) इत्यस्मात्, तथा "अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे" (च० सि० अ० १२) इत्येतस्माच्च वचनाज्ज्ञायते। पञ्चनदपुरं तु कश्मीरदेशे आसीदिति श्रीकल्हणविरचितराजतरङ्गिणीतो ज्ञायते। तथा हि राजतरङ्गिण्याश्चतुर्थे तरङ्गे—

---

१ Notes on the Indo-Scythians by Sylvian Levi, Indian Antiquary, vol XXXIII, pages 281-389.

२ महामहोपाध्याय पण्डित श्रीगौरीशंकर हीराचंद ओझाविरचित राजपूतानेका इतिहास भाग १, पृ. १११॥ कनिष्कराज्यकालस्तु ख्रिष्टाब्दात् शतवर्षपूर्वतन इति पं. भगवद्दत्तमहोदयानां मतम्। (भारतवर्षका इतिहास पृ. ३२९, ३३०)।

३ "बौद्धत्रिपिटकस्य चीनभाषानुवादे कनिष्कनृपते राजकुलवैद्यश्चरको नाम राज्ञ्या दुश्चिकित्स्यं रोगं न्यवारयदिति वर्णनोपलम्भेन चरकाचार्यस्य कनिष्कसामयिकत्वलाभादुपप्रथमशताब्दीभवश्चरकाचार्य इति पाश्चात्यपण्डितसिलवान्लेव्हीमहाशयानामभ्युपगमः। तदात्वे दार्शनिकार्यनागार्जुनस्यैतिहासिकोपलम्भेन नागार्जुनीये उपायहृदये इव चरकीयलेखेऽपि विगृह्यसंभाषीयविषयोपन्यासेन च आर्यनागार्जुनचरकाचार्ययोः कनिष्कसामयिकत्वं संवदति। परं शिलालेखेतिवृत्तादिभिः कनिष्कनृपतेर्बौद्धत्वस्य, नागार्जुनाचार्ये कनिष्कसामयिकत्वस्य च बहुशः सिद्धावपि तन्त्रप्रतिसंस्कर्तुश्चरकस्यैव कनिष्कराजकुलवैद्यत्वोल्लेखे प्रामाण्यविषये मतविभेदोऽस्ति। श्रीयुतकीथ्महाशयस्यापि तथैव मतं वर्तते। चरकस्य कनिष्कसामयिकत्वे तदियराजकुलवैद्यत्वे च कथं नैतदीयलेखे क्वापि बौद्धसंप्रदायच्छायानुवेधो दृश्यते, कथं वा वैदिकमन्त्रादीन्निर्दिश्य श्रौतप्रक्रिययैव व्यवहरणं चरकसंहितायां संगच्छेत, इत्यपि व्याघातकं निर्दिशन्ति। आत्रेयाग्निवेशग्रन्थस्य चरकाचार्येण केवलं प्रतिसंस्करणोक्त्या पूर्वाचार्यलेखे सांख्यदर्शनस्य श्रौतप्रक्रियायाश्च विद्यमानतया चरकीयतत्संस्करणेऽपि न बौद्धच्छायानुप्रवेशः, नैतावता प्रतिसंस्कर्तुश्चरकस्यातिप्राचीनत्वं साधयितुं शक्यते, इत्यपि केचन वदन्ति। केचन क्वचित्स्वभाववादाद्युल्लेखस्थले 'बौद्धमतमाह' इति टीकाकृता चक्रपाणिना व्याख्यानादत्र बौद्धमतस्याप्यंशतः प्रवेशोऽस्तीत्यपि वदन्ति। केचित्तु स्वभाववादो हि न बौद्धानामेव, ततः प्राक्कालादपि प्रवृत्त इति नैतावता बौद्धमतानुप्रवेश इति वक्तुं शक्यते इत्यपि प्रतिवदन्ति॥

चरकस्य कनिष्कवैद्यत्वे उपायहृदये भैषज्यविषयप्रसङ्गेन सुश्रुतमनुस्मरन्नार्यनागार्जुनः स्वसामयिकबौद्धनरपतेः कनिष्कस्य राजकुलवैद्यं तादृशं प्रसिद्धविद्वांसं चरकाचार्यं किमिति नाम्नोल्लिखितुं विस्मृतवान् स्यादित्यपि व्याघट्टयति चेतः॥" (का. उ. पृ. ९६)॥

"तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः ।
चङ्कुणो नाम भुःखार[1]देशानीतो गुणोन्नतः ॥
स रसेन समातन्वन् कोशे बहुसुवर्णताम् ।
पद्माकर इवाब्जस्य भूभृतोऽभूच्छुभावहः ॥
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः ।
तटे स्तम्भितसैन्योऽभूद्राजा चिन्तापरः क्षणम् ॥
ततोऽम्बुतरणोपायं तस्मिन् पृच्छति मन्त्रिणः ।
अगाधेऽम्भसि रोधस्थश्चङ्कुणो मणिमक्षिपत् ॥
तत्प्रभावाद्द्विधाभूतं सरिन्नीरं ससैनिकः ।
उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत्" ॥ ( श्लो० २४६–२५० ) इति ।

अत्रोक्तं **पञ्चनदपुरं** वितस्ता-सिन्धुसरितोः सङ्गमसमीपस्थं संप्रति **पञ्ज्यनोर**(पञ्चनीर)इति नाम्ना प्रसिद्धं स्थानमिति राजतरङ्गिण्या आङ्ग्लभाषानुवादे डॉ. स्टीन[2]महोदयः । अतो **दृढवलोऽयं काश्मीर-देशसमुत्पन्न** इति वक्तुं शक्यते ।

दृढवलस्य कालनिर्णये यद्यपि न किञ्चिद्बलवत्तरं प्रमाणमुपलभ्यते, तथाऽपि वाग्भट-जेज्जटाभ्यामयं पूर्वभव इति वक्तुं शक्यते । यतो वाग्भटेन वहवो विषया दृढवलप्रतिसंस्काराद्गृहीताः, जेज्जटेन दृढवल-संस्कारोपर्यपि कृता **निरन्तरपदव्याख्यानाम्नी** चरकटीका; सा च संप्रति समुपलब्धा मद्रासनगरस्थराजकीय-प्राच्यपुस्तकागारात् । वाग्भटसमयस्तु खिस्टस्य चतुर्थी शताब्दी, जेज्जटस्य वाग्भटशिष्यत्वात्तस्यापि स एव काल इति अग्रे प्रतिपादयिष्यामः । अतोऽयं खिस्टस्य तृतीयायां शताब्द्यां प्रादुर्वभूवेत्यनुमीयते ।

सांप्रतं समुपलभ्यमाने चरकतन्त्रे चिकित्सास्थाने सप्तदशाध्यायाः कल्पस्थानं सिद्धिस्थानं च दृढवलप्रति-संस्कृतमिति दृढवलेनैव चिकित्सास्थानान्ते सिद्धिस्थानान्ते च लिखितम् । तत्र चिकित्सास्थाने के त्रयोदशा-ध्यायाश्चरकाचार्यप्रतिसंस्कृताः, के च सप्तदशाध्याया दृढवलप्रतिसंस्कृता इत्यत्र दृश्यन्ते टीकाकाराणां विप्र-तिपत्तयः, उपलभ्यमानेषु हस्तलिखितमुद्रितपुस्तकेषु अध्यायक्रमभेदश्च । तथाहि—"अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च" इति श्लोकस्य व्याख्यायां 'अस्मिन् चिकित्सितस्थाने, सप्तदशाध्यायाः शेषाः' इति **जल्पकल्पतरुव्याख्याने गङ्गाधरकविराजः** । अतो गङ्गाधरमते तदुक्तक्रमानुसारेण प्रारम्भतस्त्रयोदशा-ध्याया रसायन[1]-वाजीकरण[2]-ज्वर[3]-रक्तपित्त[4]-गुल्म[5]-प्रमेह[6]-कुष्ठ[7]-राजयक्ष्म[8]ोन्माद[9]ापस्मार[10]-क्षतक्षीण[11]-श्वयथु[12]ूदर[13]-चिकित्सि-ताख्याश्चरकप्रतिसंस्कृताः; शेषास्तु अर्शो[14]-ग्रहणी[15]-पाण्डुरोग[16]-हिक्काश्वास[17]-कासा[18]तिसार[19]-च्छर्दि[20]-विसर्प[21]-तृष्णा[22]-विष[23]-मदात्यय[24]-द्विव्रणीय[25]-त्रिमर्मीयो[26]रुस्तम्भ[27]-वातव्याधि[28]-वातरक्त[29]-योनिव्यापच्चिकित्सि[30]ताख्या दृढवलप्रतिसंस्कृता ज्ञेयाः । **चक्रपाणिदत्तस्तु आयुर्वेददीपिकायां** योनिव्यापच्चिकित्सिते 'अस्मिन् सप्तदशाध्याया इति चिकित्सास्थाने सप्तदशाध्यायाः, ते च यक्ष्मचिकित्सितान्तानष्टावध्यायान् तथा अर्शोऽतीसार-विसर्प-मदात्यय-द्विव्रणीयोक्तान् विहाय ज्ञेयाः' इति, तथा उन्मादचिकित्सितारम्भे च 'इदानीमुपोद्घातितं राजयक्ष्मचिकित्सितमभिधाय क्रमप्राप्तमुन्मादचिकित्सितं ब्रूते, अयं च क्रमश्चरकप्रतिसंस्कृतां पञ्चाध्यायीमर्शोऽतीसारवीसर्पमदात्ययद्विव्रणी-यरूपां परित्यज्य ज्ञेयः' इति लिखति । चिकित्सास्थानाध्यायक्रमस्तु चक्रपाणिमतेऽपि गङ्गाधरतुल्य एव ।

---

१ अत्र भुःखारशब्देन संप्रति 'बुखारा' इति प्रसिद्धो देशः कल्हणस्याभिमतो भवेत् ।

2 Vol 2 Caps 329, 418, 419. । "संप्रति '**पञ्ज्यनोर**' इति प्रसिद्धं पञ्चनदपुरं कश्मीरराजधानी-श्रीनगरादुत्तरतः सार्धत्रिक्रोशोपरि **त्रिगाम-वितस्ता(जिल्हम)-सिन्ध-क्षीरभवानी-आञ्चार**-इति ख्यातानां पञ्च-नदीनां सङ्गमतो नातिदूरस्थितम्" इति श्रीनगर(कश्मीर)निवासिनो वैद्यवर्याः पं. **श्रीजीयालालशर्माणः** ।

3 चरक०

अतश्चक्रपाणिदत्तमते चिकित्सास्थाने आरम्भतोऽष्टावध्याया अग्रे च १४-१९-२१-२४-२५ तमा अध्यायाश्चरकप्रतिसंस्कृताः, शेषास्तु दृढबलप्रतिसंस्कृता ज्ञेयाः ।

पूर्वं कलकत्तानगरे श्रीजीवानन्दविद्यासागरमुद्रापिते चरकमूलपुस्तके तथा मया अहमदाबादनगरात् स्व. वा. वैद्य रणछोडलाल मोतीलाल वोधा इत्येतेषां सकाशादासादिते हस्तलिखितपुस्तके च दृश्यतेऽन्य एव अध्यायक्रमश्चिकित्सास्थाने; यथा—रसायन-वाजीकरण-ज्वर-रक्तपित्त-गुल्म-प्रमेह-कुष्ठ-राजयक्ष्मार्शोऽतीसार-विसर्प-मदात्यय-द्विव्रणीयोन्मादापस्मार-क्षतक्षीण-शोथोदर-ग्रहणी-पाण्डुरोग-हिक्काश्वास-कास-च्छर्दि-तृष्णा-विष-त्रिमर्मीयोरुस्तम्भ-वातव्याधि-वातरक्त-योनिव्यापच्चिकित्सितानीति । अनयोरुभयोरपि क्रमयोरारम्भतो राजयक्ष्मचिकित्सितान्ता अष्टावध्यायाः, अन्ते च त्रिमर्मीयोरुस्तम्भ-वातव्याधि-वातरक्त-योनिव्यापच्चिकित्सिताख्याः पञ्चाध्यायाः समाना एव । राजयक्ष्मानन्तरं चक्रपाणिदत्तेन या पञ्चाध्यायी अर्शोतीसारविसर्पमदात्ययद्विव्रणीयरूपा १४-१९-२१-२४-२५ तमाध्यायत्वेन पठिता, सैव जीवानन्दमुद्रापिते मूलपुस्तके तथा अहमदाबादनगराल्लब्धे हस्तलिखितपुस्तके च ९-१०-११-१२-१३ तमाध्यायत्वेन पठिता । तत्र जेज्झटाचार्यप्रणीतायाश्चरकसंहिताया निरन्तरपदव्याख्याख्यटीकायाः समालोचनेन चक्रपाणिदत्तस्वीकृतः क्रम एव वृद्धपरंपराप्राप्ततया सम्यगिति प्रतीयते । तथाहि मदात्ययचिकित्सितारम्भे "विषचिकित्सितानन्तरं मदात्ययचिकित्सितस्य संबन्धः" इत्यारम्य "चरकाचार्यसंस्कृतश्चायमध्यायो भट्टारहरिचन्द्रेणैव सुविवृतः" इति, तथा द्विव्रणीयचिकित्साध्यायान्ते च "आचार्यप्रणीतश्चायमध्यायः" इति जेज्झटेन लिखितं दृश्यते । यदि मदात्यय-द्विव्रणीयचिकित्सिताध्यायौ प्रारम्भतो द्वादशत्रयोदशौ स्यातां, तदा जेज्झटस्य तद्विषये 'चरकाचार्यसंस्कृतश्चायमध्यायः', 'आचार्यप्रणीतश्चायमध्याय' इति लेखने न किंचिदपि प्रयोजनं प्रतिभाति । पूर्वोक्तजेज्झटचक्रपाणिदत्तव्याख्यापर्यालोचनया भट्टारहरिचन्द्रजेज्झटचक्रपाणिदत्तानां समये अर्शोऽतीसारविसर्पमदात्ययद्विव्रणीयाध्यायरूपा चरकाचार्यसंस्कृता पञ्चाध्यायी १४-१९-२१-२४-२५ तमाध्यायरूपा, न तु ९-१०-११-१२-१३ अध्यायरूपेति आसीत् परंपराप्राप्तो निर्णयः । तदनन्तरं चक्रपाणिदत्तेन चरकप्रतिसंस्कर्तृत्वेनोक्तानर्शोऽतीसारविसर्पमदात्ययद्विव्रणीयचिकित्सिताख्यान् पञ्चाध्यायान् क्रमविच्छेदेनान्तराऽन्तरा पतितान् दृष्ट्वा केनचित्संशोधकंमन्येनैतेऽध्याया ९-१०-११-१२-१३ त्वेन पठिताः, परिवर्तितश्च तथा पाठस्तेन सूत्रस्थानस्यान्तिमेऽध्यायेऽध्यायानुक्रमणिकायामपि । गङ्गाधरेण तु चक्रपाणिदत्तोक्तमध्यायक्रमं स्वीकृत्यापि उन्मादापस्मारक्षतक्षीणश्वयथूदरचिकित्सिताख्याः पञ्चाध्यायाश्चरकप्रतिसंस्कृतत्वेन स्वीकृता इति तु वृद्धवैद्यपरंपराऽज्ञानमूलको भ्रम एव । पूर्वोक्तसंदर्भादेतदपि निश्चेतुं सुशकं यत्—चरकाचार्येण संपूर्णमेवाग्निवेशतन्त्रं प्रतिसंस्कृतं, दृढबलेन स्वसमये ततः कालवशाल्लुप्ता एव पूर्वोक्ता अध्यायाः संपूर्णतां नीता इति । अत एव दृढबलेन 'नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते' इत्यत्र 'नासाद्यन्ते' (अधुना न प्राप्यन्ते) इत्येवोक्तं, न तु चरकेण न प्रतिसंस्कृता इति । मया तु निर्णयसागरयन्त्रालयार्थं संपादिते चरकमूलपुस्तके अस्मिंश्च सटीके पुस्तके चक्रपाणिदत्तस्वीकृत एवाध्यायक्रमोऽङ्गीकृतः ।

चरकतन्त्रस्य प्राचीनव्याख्यासु सांप्रतमधोलिखिता व्याख्याः ( संपूर्णा अपूर्णा वा ) समुपलभ्यन्ते ।

१ भट्टारहरिचन्द्रविरचिता चरकन्यासनाम्नी व्याख्या । अस्या एकं पुस्तकमारम्भतः सूत्रस्थानस्याध्यायत्रयपर्यन्तं मद्रासनगरस्थे राजकीयप्राच्यपुस्तकागारे समुपलभ्यते । पुस्तकं चेदं सांप्रतं मुद्राप्यते रावलपिण्डी( पंजाव )नगरस्थैरस्मन्मित्रैः पं. मस्तरामशास्त्री आयुर्वेदाचार्य इत्येतैः ।

२ जेज्झटाचार्यविरचिता निरन्तरपदव्याख्यानाम्नी टीका । अस्या एकं पुस्तकं चिकित्सास्थानादारभ्य सिद्धिस्थानपर्यन्तमन्तराऽन्तरा त्रुटितांशप्रचुरं समुपलब्धं मद्रासनगरस्थराजकीयप्राच्यपुस्तकागारात् ।

३ चक्रपाणिदत्तविरचिता आयुर्वेददीपिकाख्या व्याख्या ।

४ शिवदाससेनविरचिता तत्त्वचन्द्रिकाख्या व्याख्या । अस्या व्याख्याया एकं पुस्तकमारम्भात् सूत्रस्थानस्य सप्तविंशतितमाध्यायपर्यन्तं समुपलब्धं मुंबईनगरस्थ रॉयल एशियाटिकसोसायटीपुस्तकालयात् । करिष्यमाणे यत्ने इयं व्याख्या संपूर्णाऽप्युपलब्धुं शक्येतेति मे विश्वासः ।

समुपलब्धानां पूर्वोक्तव्याख्याग्रन्थानां निर्माणकालविषये किंचिदुक्तिर्नास्थाने भविष्यतीति मत्वा किंचिन्निवेद्यते ।

भट्टारहरिचन्द्रस्य नामोल्लेखो दृश्यतेऽधोलिखितेषु ग्रन्थेषु—

यथा महाकविश्रीबाणभट्टविरचिते हर्षचरिते—

"पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः । भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥"

(हर्षचरितं, प्रथमोच्छ्वासः; श्लो० १२)।

तथा वाक्पतिविरचिते गौडवहाख्ये प्राकृतकाव्ये च्छायायां—

"भासे ज्वलनमित्रे कुन्तिदेवे च यस्य रघुकारे । सौबन्धवे च बन्धे हारीचन्द्रे च आनन्दः ॥"

तथैव तीसटाचार्यविरचितचिकित्साकलिकाव्याख्यारम्भे तत्सूनुश्चन्द्रटः—

"व्याख्यातरि हरिश्चन्द्रे श्रीजेज्जटनाम्नि सति सुधीरे च । अन्यस्यायुर्वेदे व्याख्या धार्ष्ट्यं समावहति ॥"

तथैव विश्वप्रकाशकोषारम्भे भट्टारहरिचन्द्रान्वयो महेश्वरः—

"श्रीसाहसाङ्कनृपतेरनवद्यवैद्य-विद्यातरङ्गपदमद्वयमेव बिभ्रत् ।
यश्चन्द्रचारुचरितो हरिचन्द्रनामा स्वव्याख्यया चरकतन्त्रमलञ्चकार ॥"

(विश्वप्रकाशकोषः, प्रथमः कान्तवर्गः, ५ श्लोकः) ।

अत्रोक्तः श्रीसाहसाङ्कनृपतिः विक्रमापरपर्यायो द्वितीयश्चन्द्रगुप्त इतीतिहासविदां मतम् । तस्य राज्यकालस्तु ख्रीस्टीय३७५तमाद्वर्षादारभ्य ४१३तमवत्सरपर्यन्तमासीदिति विन्सेन्टस्मिथमहोदस्य मतम् । अतो भट्टारहरिचन्द्रस्यापि स एव कालः । भट्टारहरिचन्द्रश्चायं वाग्भटात् पूर्वभव इति वाग्भटपौत्रेण तीसटसूनुना चन्द्रटेन कृतायाः सुश्रुतपाठशुद्धेरनुमीयते । तत्र ग्रन्थान्ते

"सौश्रुते चन्द्रटेनेह भिषक्तीसटसूनुना । पाठशुद्धिः कृता तन्त्रे टीकामालोक्य जैज्जटीम् ॥"

इति लिखितं दृश्यते । तीसटश्च वाग्भटसूनुरिति 'कॅटलोगस् कॅटलोगोरम्' नाम्नि ग्रन्थे डॉ० ऑफ्रेक्ट महोदयः । अस्मात् प्रमाणात् तथा मद्रासनगरस्थराजकीयप्राच्यपुस्तकागारादन्मयालब्धे चरकस्य

---

१ लाहोरनगरस्थैः पं० भगवद्दत्तमहोदयैः श्रीसाहसाङ्कनृपतेः समयः ख्रीष्टाब्दात् ५७ वत्सरपूर्वतन इति बहुभिः प्रमाणैर्निर्णितम् ('भारतवर्षका इतिहास पृ. ३४०) ॥

२ "भाण्डारकरप्राच्यसंशोधनमन्दिरे चिकित्साकलिकाख्यस्य ग्रन्थस्य हस्तलिखितं (१८८३-८४ / २१४) इत्यङ्कितमेकं पुस्तकं संगृहीतं वर्तते । ग्रन्थस्यास्यावसाने 'इति वाग्भटसूनुना तीसटदेवेन रचितं चिकित्साशास्त्रम्' इति लिखितमस्ति । एतदाधारेणैव "वाग्भटस्य तीसटो नाम पुत्र आसीत्, तेन च चिकित्साकालिकाख्यो ग्रन्थो निर्ममे" इति डॉक्टर ऑफ्रेच-महोदयैर्ग्रन्थकारसूच्यां लिखितम् ॥

किन्तु कियान् खलु सत्यांशोऽत्र भवेदिति विषये महान् संशयो वर्ततेऽस्माकम् । मन्यामहे वयं यद्-यदि नाम वाग्भटस्तीसटस्य पिताऽभविष्यत्, तीसटो निजग्रन्थे पितुर्वाग्भटस्य स्पष्टतया नाम निरदेक्ष्यत् । तत्तु तेन कृतं नावलोक्यते । स्वोपनिबद्धायाश्चिकित्साकलिकाया आरम्भे तीसटो लिखति—

"सूर्याश्विधन्वन्तरिसुश्रुतादीन् भक्त्या नमस्कृत्य पितुश्च पादान् ।
कृता चिकित्साकलिकेति योगैर्माला सरोजैरिव तीसटेन ॥" इति श्लो. १ ।

अस्याश्चिकित्साकलिकायाश्चन्द्रटेन कृता व्याख्या वर्तते । तस्यां व्याख्यायामस्यैव श्लोकस्य व्याख्यानावसरे 'पितुश्च पादान्' इत्यंशं व्याकुर्वंश्चन्द्रटो लिखति—"तद्वत् आयुर्वेदाब्धिप्रतरणपोतपात्राणां पितुः पादानां नमस्कृतिरित्यनेन क्रमेण नमस्कारं कृत्वा" इति । एवं न चायं चन्द्रटोऽपि तीसटसूनुः वाग्भटं नाम्ना निर्दिशति । तथा च चिकित्साकलिकायां—

जेज्जटकृते व्याख्याने चिकित्सास्थानस्य प्रथमाध्यायान्ते (अन्यत्र च) "इति वाग्भटशिष्यस्य जेज्जटस्य कृतौ निरन्तरपदव्याख्यायां चिकित्सितस्थाने रसायनाध्यायः समाप्तिमगमत्" इत्यस्माद्वाक्याच्च जेज्जटस्य वाग्भट-समकालीनत्वं सिध्यति। जेज्जटेन निरन्तरपदव्याख्याख्यायां चरकटीकायां मदात्ययचिकित्सितारम्भे "आचार्यप्रणीतश्चायमध्यायो भट्टारहरिचन्द्रेणैव सुविवृतः" इत्युक्तत्वाद् भट्टारहरिचन्द्रस्य वाग्भटसमकालीन-जेज्जटपूर्वभवत्वं सिद्धमेव। आसीच्च चक्रपाणिदत्तसमयेऽपि परंपराप्राप्तेयं ख्यातिः यत्—भट्टारहरिचन्द्रो वाग्भटपूर्वभव इति। तथाहि—आयुर्वेददीपिकायां सूत्रस्थाने सप्तमेऽध्याये "माधवप्रथमे मासि" इत्यादि-श्लोकव्याख्यायां चक्रपाणिः—"हरिचन्द्रेण तु 'सहशब्दोऽयमकारान्तो मार्गशीर्षवचनः, तस्य सहस्य प्रथमे कार्तिके' इति व्याख्यातम्। तन्मतानुसारिणा वाग्भटेन चोक्तं—"श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात्" (वा. सू. अ. १३) इत्यादि।

भट्टारहरिचन्द्रेण खरनादसंहितायाः प्रतिसंस्कारः कृत इत्यासीत् परंपराप्राप्ता जनश्रुतिरष्टाङ्ग-संग्रहव्याख्यातुरिन्दोः समये। तथाहि अष्टाङ्गसंग्रहव्याख्याने कल्पस्थानेऽष्टमेऽध्याये "निर्यूहे भेषजपल-मुदकार्धप्रस्थेऽधिश्रित्य पादशेषितमवतारयेत्" इत्यस्य व्याख्याने इन्दुः—"या च खरनादसंहिता भट्टार-हरिचन्द्रकृता (प्रतिसंस्कृता) श्रूयते, सा च चरकप्रतिबिम्बरूपैव लक्ष्यते, तत्रापि पठितं—"कषायात् षट्पलं पिबेत्" इति। खरनादसंहिता चेयमष्टाङ्गहृदयव्याख्यातुररुणदत्तस्य हेमाद्रेश्च समये आसीत् समुपलब्धेति ताभ्यामुद्धृतैः खरनादसंहितायाः शतशो वचनैरनुमीयते।

जेज्जटस्तु भट्टारहरिचन्द्रादर्वाचीन इति मदात्ययचिकित्सिते "चरकाचार्यप्रणीतश्चायमध्यायो भट्टार-हरिचन्द्रेणैव सुविवृतः" इत्यत्र भट्टारहरिचन्द्रस्य नामग्रहणादेव प्रतीयते। वाग्भटस्य चायं समकालीन इत्युपरि प्रदर्शितमेव। अतो यः कालो वाग्भटस्य स एव जेज्जटस्येति वक्तुं पार्यते। जेज्जटेन सुश्रुततन्त्रो-पर्यपि व्याख्या विरचितेति डल्हणमधुकोशकाराद्युद्धृतैः शतशस्तद्वचनैर्ज्ञायते।

प्रसङ्गवशाद् वाग्भटसमयादिविषयेऽपि किंचिल्लिख्यते। अष्टाङ्गसंग्रहः, अष्टाङ्गहृदयं चेति ग्रन्थद्वयं वाग्भटविरचितत्वेन प्रसिद्धं समुपलभ्यते। तत्रैके अष्टाङ्गसंग्रहकारमष्टाङ्गहृदयकर्तारं च वाग्भटं भिन्नमेव मन्यन्ते। अस्मन्मते तु अष्टाङ्गसंग्रहकर्ता अष्टाङ्गहृदयकर्ता च वाग्भट एक एव। स च पूर्वं नानातन्त्रेभ्यो वचनानि संगृह्य अष्टाङ्गसंग्रहं निर्ममे, तदनन्तरं तत एव सारमादाय अष्टाङ्गहृदयं चकार। एतच्च स्पष्टमेवोक्तं वाग्भटेनैवाष्टाङ्गहृदयस्यान्ते—

"अष्टाङ्गवैद्यकमहोदधिमन्थनेन योऽष्टाङ्गसंग्रहमहामृतराशिराप्तः।
तस्मादनल्पफलमल्पसमुद्यमानां प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम्॥"
(उ. तं. अ. ४०, श्लो. ८०) इति॥

सुललितपदैर्नानाविधवृत्तेषु ग्रन्थविरचनसमर्थो वाग्भटः, येन चरकसुश्रुतपद्यान्यपि प्रायः परिवर्त्यैव गृहीतानि हृदये, स अविकलान्येव शतशः पद्यानि समुद्धरेदष्टाङ्गसंग्रहात् स्वग्रन्थे इति कल्पयितुमप्यश-

---

हारीतसुश्रुतपराशरभोजभेलभृग्वग्निवेशचरकादिचिकित्सकोक्तैः। एभिर्गणैश्च गुणवद्भिरतिप्रसिद्धैर्धन्वन्तरीयरचनारुचिरप्रपञ्चैः" (श्लो. २) इति श्लोके सुप्रसिद्धभिषगाचार्याणां हारीतसुश्रुतादीनां नामानि संकीर्तयन् नासौ तीसटो वाग्भटमुल्लेखयति। चन्द्र-टोऽपि पद्येऽस्मिन् विद्यमानस्य आदिपदस्य व्याख्याने "आदिग्रहणाद् वैतरणौरभ्रपुष्कलावतक्षारपाणिजतूकर्णचक्षुष्येणविदेह-निमिप्रभृतयो गृह्यन्ते" इति वैतरणौरभ्रादीन् संगृह्णन्नपि वाग्भटमतिचारयति। अष्टाङ्गसंग्रहाष्टाङ्गहृदयव्याख्यातृभ्यां वाग्भटशिष्या-भ्यामिन्दुजेज्जटाभ्यामपि वाग्भटपुत्रस्तीसटो न कुत्रापि निर्दिष्टो दृश्यते। तस्मात् प्रत्ययजनकप्रमाणाभावान्नैतन्निर्णेतुं सुशकं-तीसटो वाग्भटपुत्रो वा नवेति" इति निर्णयसागरमुद्रणयन्त्रालये मुद्रितस्याष्टाङ्गहृदयषष्ठसंस्करणस्योपोद्घाते वैद्यवर्यश्रीहरि-शास्त्रिपराडकरमहोदयाः।

क्यमेव । अष्टाङ्गसंग्रहस्य अष्टाङ्गहृदयस्य च प्रणेता एक एव वाग्भट इति अष्टाङ्गसंग्रहटीकाकारस्येन्दोः, अष्टाङ्गहृदयटीकाकारस्यारुणदत्तस्यापि च मतम्[१] ।

वाग्भटोऽयं सिन्धुदेशोद्भव इति तेनैव लिखितमष्टाङ्गसंग्रहस्यान्ते—

"भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य ।
सुतोऽभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु लब्धजन्मा ॥[२]
समधिगम्य गुरोरवलोकितेश्वराद्गुरुतराच्च पितुः प्रतिभां मया ।
सुबहुभेषजशास्त्रविलोचनात् सुविहितोऽङ्गविभागविनिर्णयः ॥" इति ।

अतः परं वाग्भटस्य समयविषयेऽपि किंचिद्विचारः क्रियते । अष्टाङ्गसंग्रहे उत्तरतन्त्रस्य ४९ तमेऽध्याये पलाण्डुरसायनप्रकरणेऽधोलिखितं पद्यद्वयं दृश्यते—

"रसोनानन्तरं वायोः पलाण्डुः परमौषधम् ।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम् ॥
यस्योपयोगेन शकाङ्गनानां लावण्यसारादिव निर्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को रसातलं गच्छति निर्विदेव ॥" इति ।

एतच्च वर्णनं वाग्भटस्य भारतवर्षे शकराज्यशासनकालभवत्वं ततः किञ्चिदनन्तरवर्तित्वं वा सूचयति । भारतवर्षे शकानां राज्यकालस्तु खिस्टस्य द्वितीयशताब्दीमारभ्य चतुर्थशताब्दीपर्यन्तमासीत् । खिस्टस्य चतुर्थशताब्द्या अन्ते पञ्चमशताब्द्याः प्रारम्भे वा संभूताद् भट्टारहरिचन्द्राद् वाग्भटस्य परकालभवत्वात्, खिस्टस्य सप्तमशताब्द्यां समायातेन इत्सिंगनाम्ना चीनदेशीयपरिव्राजकेन स्वीयभारतभ्रमणवृत्तान्ते अष्टाङ्गसंग्रहस्य स्वसमये भारतवर्षे सर्वत्र पठनपाठनप्रचारस्योक्तत्वात्, खिस्टस्य सप्तमशताब्द्यां संभूतेन माधवकरेण[३] वाग्भटपाठोद्धाराच्च ततोऽयं प्राचीनः खिस्टस्य चतुर्थशताब्द्या अन्ते पञ्चमशताब्द्याः प्रारम्भे वा बभूवेत्यनुमीयते[४] ।

श्रीचक्रपाणिदत्तो गौडदेशे वैद्यजातौ लोध्रवलीसंज्ञकदत्तकुले समुत्पन्नः, गौडाधिपतेः श्रीनयपालदेवस्य रसवत्य(महानसा)धिकारिणो मन्त्रिणश्च श्रीनारायणदत्तस्य तनयः, गौडाधिपतितो नयपालदेवालब्धान्तरङ्गपदवीकस्य श्रीभानुदत्तस्य कनिष्ठो बन्धुः, श्रीनरदत्तस्य[५] च शिष्य आसीदिति तद्वचनादेव प्रतीयते । तथा च आयुर्वेददीपिकायास्तथा चिकित्सासंग्रहस्य चान्ते तेनैवोक्तं—

"गौडाधिनाथरसवत्यधिकारिपात्रनारायणस्य तनयः सुनयोऽन्तरङ्गात् ।
भानोरनु प्रथितलोध्रवलीकुलीनः श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥" इति ॥

---

१ प्रमाणविस्तरस्तु निर्णयसागरयन्त्रालयमुद्रितेऽष्टाङ्गहृदयस्य षष्ठे संस्करणे उपोद्घाते २ पृष्ठे द्रष्टव्यः ।

२ श्रीनीलमेघभिषग्विरचिते तन्त्रयुक्तिविचारे ग्रन्थारम्भश्लोके वाग्भटपितुर्नाम 'सङ्घगुप्त' इति, वाग्भटस्य च 'रामगुप्त' इति नाम प्रदत्तं; यथा—"आत्तबुद्धिरवलोकितेश्वरात् सङ्घगुप्तकुलसिन्धुचन्द्रमाः । रामगुप्त इति वाह(ग्भ)टाख्यया ख्यातिमात् स भिषगाविरस्तु नः" इति ।

३ प्रमाणविस्तरस्तु महामहोपाध्यायश्रीगणनाथसेनविरचितप्रत्यक्षशारीरोपोद्घाते माधवकरकालनिर्णये द्रष्टव्यः ।

४ प्रमाणविस्तरस्तु निर्णयसागरयन्त्रे मुद्रितस्य अष्टाङ्गहृदयस्य षष्ठे संस्करणे श्रीहरिशास्त्रिपराडकरमहोदयलिखिते उपोद्घाते १०—१५ पृष्ठेषु द्रष्टव्यः ।

५ एतच्च चक्रपाणिदत्तेनैवोक्तं चरकव्याख्याया आरम्भे—"नरदत्तगुरुदिष्टनरकार्थानुगामिनी । क्रियते चक्रदत्तेन टीकाऽऽयुर्वेददीपिका" इति ।

व्याख्यातं चैतत्पद्यं चिकित्सासंग्रहव्याख्यायां **शिवदाससेनेन;** यथा—"गौडाधिनाथो **नयपालदेवः**, तस्य रसवती महानसं, तस्या अधिकारी; तथा पात्रमिति मन्त्री, ईदृशो यो **नारायणस्तस्य** तनयः; सुनयः नीतिमान् । अन्तरङ्गादिति लब्धान्तरङ्गपदवीकात् **भानोरनु नारायणस्य** तनय इति योज्यं, तेन **भानोरनुज** इत्यर्थः । विद्याकुलसंपन्नो हि भिषक् 'अन्तरङ्ग' इत्युच्यते । लोध्रवलीकुलीन इति **लोध्रवलीसंज्ञकदत्तकुलोत्पन्नः**" इति । **श्रीनयपालदेवराज्यशासनकालस्तु** ख्रिस्टीयैकादशशताब्देर्मध्यभाग इतीतिहासविदां मतम् । चक्रपाणिदत्तविरचिताः **चरकसंहिताया आयुर्वेददीपिकाव्याख्या, सुश्रुतसंहिताया भानुमत्याख्या**[1] व्याख्या, **चक्रदत्तसंग्रहापरपर्यायश्चिकित्सासंग्रहः**, तथा **द्रव्यगुणसंग्रहश्चेति** चत्वारो ग्रन्थाः समुपलभ्यन्ते ।

श्रीशिवदाससेनस्तु वैद्यजातौ समुत्पन्नः **गौड(वङ्ग)देशान्तर्गतमालञ्चिकाग्रामनिवासी**,[2] **अनन्तसेनस्य** तनयः, वार्वकशाहाख्यस्य गौडावनिपतेः समाश्रित इति तेनैव **चक्रदत्तयोगसंग्रहव्याख्याया** द्रव्यगुणसंग्रहव्याख्यायाश्चान्ते लिखितादात्मवृत्तान्तात् प्रतीयते; तथाहि—

"आसीत् सभायां **शिखरेश्वरस्य** लब्धप्रतिष्ठः किल **साहिसेनः** ।
वाणीविलासं कविसार्वभौमं विजित्य यः प्राप यशो दुरापम् ॥
**काकुत्स्थसेनस्तनयस्ततोऽभूत्तस्यापि लक्ष्मीधरसेननामा** ।
तस्मादभूदुद्धरणस्तनूजस्तस्याप्यनन्तस्तनयोऽथ जज्ञे ॥
मालञ्चिकाग्रामनिवासभूमेर्गौडावनीपालभिषग्वरस्य ।
अनन्तसेनस्य सुतो विधत्ते टीकामिमां **श्रीशिवदाससेनः** ॥"

**शिवदाससेनविरचितद्रव्यगुणसंग्रहव्याख्यायां** तु

"योऽन्तरङ्गपदवीं दुरवापां छत्रमप्यतुलकीर्तिरवाप ।
गौडभूमिपतिवार्वकसाहात् तत्सुतस्य सुकृतिनः कृतिरेषा ॥"

इति पद्यमधिकं पठ्यते । अत्रोक्तो **वार्वकशाहः** १४५७ तमात् ख्रीस्टाब्दादारभ्य १४७४ तमाब्दपर्यन्तं वङ्गदेशं शशासेति **'हिस्टरी ऑफ बेंगाल'** नाम्नि ग्रन्थे **स्टुअर्टमहोदयः** । शिवदासपितोरनन्तसेनस्य वार्वकशाहस्य राजवैद्यत्वात् शिवदाससेनस्यापि स एव काल इति प्रतीयते । शिवदाससेनविरचिताः **चरकसंहितायास्तत्त्वप्रदीपिकाव्याख्या**, चक्रपाणिदत्तकृतचिकित्सासंग्रहोपरि विरचिता **तत्त्वचन्द्रिकाव्याख्या**, चक्रपाणिदत्तविरचितद्रव्यगुणसंग्रहोपरि कृता **द्रव्यगुणसंग्रहव्याख्या**, अष्टाङ्गहृदयोत्तरतन्त्रस्य **अष्टाङ्गहृदयतत्त्ववोधाख्या**[3] व्याख्या चेति चत्वारो ग्रन्थाः समुपलभ्यन्ते ।

---

१ सुश्रुतसंहितायाः सूत्रस्थानस्य भानुमतीव्याख्या ख० वा० **स्वामीश्रीलक्ष्मीरामनिधिग्रन्थमालायाः** प्रथमस्तवकरूपेण मुद्रिता प्रसिद्धिभूता च ।

२ **"मालञ्चिकाग्रामः वारेन्द्रभूमौ पवनामण्डलान्तर्गतः** । चक्रदत्तसंग्रहस्य शिवदाससेनव्याख्यायां मण्डूकपर्ण्याः 'मानामानी' इति नाम दत्तं; **राढे वङ्गे** च या 'थूल्कुडि' वा 'थानकुनि' इति ख्याता, सैव **कोचविहार-रंगपुर-राजशाही**प्रदेशेषु 'मानामानि' इति प्रसिद्धा । अतोऽपि शिवदाससेनस्य वारेन्द्रभूमिनिवासित्वं प्रमाणीभवति" इति वनौषधिदर्पणस्य वङ्गभाषया लिखिते उपोद्घाते **कविराजश्रीविरजाचरणगुप्ताः** ।

३ कलकत्तानगरवास्तव्यैर्विद्वद्वर्यैः **कविराजश्रीज्योतिषचन्द्रसरस्वतीमहोदयैरष्टाङ्गहृदयस्य** उत्तरतन्त्रोपरि शिवदाससेनविरचिता **अष्टाङ्गहृयतत्त्ववोधाख्या** ताडपत्रोपरि १४४८ तमे शकाब्दे लिखिता व्याख्या संप्राप्ता । व्याख्येयमधुना ख० वा० **स्वामिश्रीलक्ष्मीरामनिधिग्रन्थमालाया** द्वितीयस्तवकरूपेण मुद्रापयितुमारब्धा एकवत्सराभ्यन्तरमेव प्रसिद्धिमेत्स्यति

आयुर्वेददीपिकाव्याख्यासंवलितायाश्चरकसंहिताया द्वितीयावृत्तेः संशोधनावसरे अधोलिखितानामादर्शपुस्तकानां साहाय्यमवलम्बितम् ।

१ आयुर्वेददीपिकाव्याख्यायाः सूत्र-निदान-विमानस्थानात्मकं हस्तलिखितपुस्तकं स्वर्गवासिनामस्मत्सुहृदां वैद्य जयशङ्कर हरजीवन नाथद्वारावाळा इत्येतेषां सकाशात् प्राप्तम् ।

२–१ शारीरस्थानम्, आयुर्वेददीपिकाव्याख्यासमेतं हस्तलिखितं प्रायः शुद्धम् ।

२ आयुर्वेददीपिकाव्याख्यायाश्चिकित्सास्थानस्य सप्तमाध्यायादारभ्य पञ्चदशाध्यायपर्यन्तं हस्तलिखितपुस्तकं ३५ पत्रात्मकम्, अन्तराखण्डितपत्रमशुद्धिबहुलं च ।

३ मूलस्य काश्मीरपाठानुयायि संपूर्णं हस्तलिखितपुस्तकं प्रायः शुद्धम् ।

एतत्पुस्तकत्रयं लाहोरनगरस्थश्रीदयानन्दएङ्ग्लोवैदिकमहाविद्यालयस्थितश्रीलालचन्दपुस्तकालयात् श्रीदयानन्दायुर्वेदमहाविद्यालयप्रधानाध्यापककविराजश्रीसुरेन्द्रमोहन बी.ए. महोदयद्वारा प्राप्तम् ।

३ जर्मनदेशस्थितटिबिंजनयुनिवर्सिटीपुस्तकालयात् प्राप्तमायुर्वेददीपिकाव्याख्यायाः संपूर्णं हस्तलिखितपुस्तकमशुद्धिबहुलम् । (चिकित्सास्थाने आरम्भतः सार्धद्व्याध्यायपर्यन्तमेव ।) अस्य पुस्तकस्य इन्द्रियकल्प-सिद्धिस्थानव्याख्यायाः संशोधने उपयोगो जातः ।

४ बीकानेरराजप्रासादपुस्तकालयादायुर्वेददीपिकाया हस्तलिखितं पुस्तकं चिकित्सास्थान-( आरम्भतोऽध्यायचतुष्टयं, शेषे च कासचिकित्सितादारभ्य समाप्तिपर्यन्तं )कल्पस्थान-सिद्धिस्थानात्मकं बीकानेरनगरस्थैः भिषग्रत्न श्रीकेवलरामस्वामिमहोदयैर्लेखयित्वा प्रेषितम् ।

५–१ आयुर्वेददीपिकाव्याख्यासहितं प्रारम्भत इन्द्रियस्थानपर्यन्तं कलकत्तानगरस्थैः स्वर्गवासिभिः कविराजश्रीहरिनाथविशारदमहोदयैः संपादयित्वा प्रसिद्धीकृतं मदीयपुस्तकालयस्थम् ।

२ उपर्युक्तपुस्तकस्यैव चिकित्सास्थानस्यारम्भतोऽध्यायत्रयं, कल्पस्थानं संपूर्णं, सिद्धिस्थानस्यारम्भतो दशमाध्यायपर्यन्तं नागपुरनगरस्थानामस्मत्सुहृदां वैद्यभूषण पं. गोवर्धनशर्मा छांगाणी इत्येतेषां सकाशाल्लब्धम् ।

६ आयुर्वेददीपिकाव्याख्यासमेतं संपूर्णं निर्णयसागरयन्त्रालये मुद्रितं, नासिकक्षेत्रस्थैरस्मत्सुहृद्भिः वैद्यभूषण पं. श्रीवामनशास्त्री दातार इत्येतैः संपादितम् ।

७ स्वर्गवासिभिः कविराजश्रीगङ्गाधरकविरत्नमहोदयैर्विरचितया जल्पकल्पतरुव्याख्यया तथा श्रीचक्रपाणिदत्तविरचितायुर्वेददीपिकाव्याख्यया च समेतं संपूर्णं कलकत्तानगरवास्तव्याभ्यां कविराजश्रीनरेन्द्रनाथसेनगुप्त-बलाईचन्द्रसेनगुप्ताभ्यां मुद्रापयित्वा प्रसिद्धीकृतम् ।

८ स्वर्गवासिभिः वैद्यरत्नकविराजश्रीयोगीन्द्रनाथसेनमहोदयैर्विरचितया चरकोपस्कारव्याख्यया समेतं प्रारम्भतश्चिकित्सास्थानस्य त्रयोदशाध्यायपर्यन्तम् ।

९ मूलमात्रं हस्तलिखितं प्रारम्भतः कल्पस्थानपर्यन्तम्, अहमदाबादनगरवास्तव्यानां स्वर्गवासिनामस्मत्सुहृदां वैद्य रणछोडलाल मोतीलाल बोधा इत्येतेषां पुस्तकसंग्रहात् प्राप्तम् ।

१० मूलमात्रं हस्तलिखितं चिकित्साकल्पसिद्धिस्थानात्मकं वाराणसेयानामस्मत्सुहृदां पं. रामशङ्करशर्मा आयुर्वेदशास्त्राचार्य इत्येतेषां पुस्तकसंग्रहात् प्राप्तम् ।

११ श्रीशिवदाससेनविरचिततत्त्वप्रदीपिकाव्याख्याया हस्तलिखितं पुस्तकं प्रारम्भतः सूत्रस्थानस्य सप्तविंशतितमाध्यायपर्यन्तं मुंबईनगरस्थरॉयल एशियाटिक सोसायटी पुस्तकालयात् प्राप्तम् ।

यैरुपरिनिर्दिष्टैर्महोदयैरादर्शपुस्तकप्रदानेन बहूपकृतमस्मिन् कार्ये तेषां तं महान्तमुपकारं स्मारं स्मारं परः शतैर्धन्यवादैरभिनन्दयामि तान् ।

पूर्वोक्तानामादर्शपुस्तकानां साहाय्येन संदेहस्थले च तन्त्रान्तराणां व्याख्यानान्तराणां च साहाय्येन पुस्तकस्यास्य संशोधने यथामति कृतो यत्नः । तथाऽपि चरकतन्त्रस्यातिगहनत्वात् आयुर्वेददीपिकायाः समुपलब्धानामादर्शपुस्तकानामशुद्धिबाहुल्यात् चिकित्साकार्यव्यापृतस्य ममैतत्कार्ये यथेष्टसमयालाभात् भ्रमप्रमादादिदोषाच्च जातानि स्खलनानि गुणैकपक्षपातिभिः सुधीभिः क्षन्तव्यानि, सफलयितव्यश्च ममायं प्रयासो ग्रन्थास्यास्य पठनपाठनादिनेत्यभ्यर्थ्यते—

डॉ. विगास स्ट्रीट,
मुंबई, स. १९४१

भिषजामनुग्राह्यो
**यादवशर्मा ।**

# चरकसंहितायाः विषयानुक्रमणिका ।


विषयः पृष्ठाङ्कः

## १ सूत्रस्थानम् ।

### १ दीर्घञ्जीवितीयोऽध्यायः ।

१–२ दीर्घञ्जीवितीयाध्यायोपक्रमः १–३
३–२२ आयुर्वेदाध्ययनार्थं भरद्वाजस्येन्द्रसकाशे गमनम् ... ४–६
२३–२६ इन्द्रेण भरद्वाजाय आयुर्वेदस्य प्रवचनम् ... ... ६–७
२७–४० आयुर्वेदस्य भूतले प्रवर्तनम् ... ... ... ७–८
४१ आयुर्वेदस्य लक्षणम् ... ८
४२ आयुषो लक्षणं पर्यायाश्च ,,
४३ अन्यवेदेभ्य आयुर्वेदस्य प्रकर्षः ,,
४४–४५ सामान्यविशेषयोर्लक्षणम् ... ... ... ९–१०
४६–४७ आयुर्वेदस्याधिकरणम् ११
४८ द्रव्यसंग्रहः ... ... ,,
४८ चेतनाचेतनभेदेन द्रव्यस्य द्वैविध्यम् ... ... ,,
४९ गुणाः कर्माणि च ... १२
५० समवायस्य लक्षणम् ... ,,
५१ द्रव्यस्य ,, १३
५१ गुणस्य ,, ,,
५२ कर्मणः ,, ,,
५३ आयुर्वेदस्य कार्यं (प्रयोजनं) १४
५४ व्याधीनां त्रिविधो हेतुसंग्रहः ,,
५५ व्याधीनां द्विविध आश्रयः १५
५५ आरोग्यस्य हेतुः ... ,,
५६ आत्मनो लक्षणम् ... ,,
५७ त्रिविधः शारीरदोषसंग्रहः १६
५७ द्विविधो मानसदोषसंग्रहः ,,
५८ दोषाणां प्रशमनोपायाः... ,,
५९ वायोर्गुणास्तत्प्रशमनानि च ,,
६० पित्तस्य गुणास्तत्प्रशमनानि च ,,
६१ श्लेष्मणो गुणास्तत्प्रशमनानि च १७
६२–६३ विकाराणां विनिवर्तने उपायाः ... ... ... ,,
६४ रसस्य लक्षणं, विशेषे प्रत्ययाश्च १८
६५ रसानां संग्रहः ... ... ,,
६६ दोषाणां प्रशमनाः प्रकोपकाश्च रसाः ... ... ... १८
६७ प्रभावभेदेन द्रव्यभेदः ... १९
६८ उत्पत्तिभेदेन ,, ... २०
६८–६९ जाङ्गमद्रव्यसंग्रहः... ,,
७० पार्थिवद्रव्यसंग्रहः ... ,,
७१–७२ चतुर्विधमौद्भिदद्रव्यम् ,,
७३ औद्भिदद्रव्यसंग्रहः ... ,,
७४–७६ जङ्गमादिषु प्रशस्तानां द्रव्याणां संग्रहः ... ... ,,
७७–७९ षोडशमूलिनीनां नामकर्मणी ,,
८०–८५ एकोनविंशतिफलिनीनां,, २१
८६–८७ चतुर्विधमहास्नेहानां ,, ,,
८८–९१ पञ्चविधलवणानां ,, ,,
९२–१०४ अष्टविधमूत्राणां ,, ,,
१०५–११३ अष्टविधक्षीराणां ,, २२
११४–११५ क्षीराश्रयास्त्रयो वृक्षास्तेषां कर्म च... २२
११६–११९ त्वगाश्रयास्त्रयो वृक्षास्तेषां कर्म च ... ,,
१२०–१२३ ओषधीनां नामरूपयोगज्ञाने गुणाः ,,
१२४–१३२ औषधानां नामरूपयोगाज्ञाने दोषाः २३
१३३ भिषग्बुभूषोः कर्तव्यम् ,,
१३४ युक्तस्य भैषज्यस्य लक्षणम् ,,
१३५ भिषक्तमस्य लक्षणम् ... ,,
१३६–१४० अध्यायार्थसंग्रहः ,,

### २ अपामार्गतण्डुलीयोऽध्यायः ।

१–२अपामार्गतण्डुलीयाध्यायोपक्रमः२४
३–६ शिरोविरेचनद्रव्याणि ... ,,
७–८ वमनद्रव्याणि ... ... ,,
९–१० विरेचनद्रव्याणि ... ,,
११–१३ आस्थापनद्रव्याणि... २५
१४ अनुवासनद्रव्याणामास्थापनद्रव्येष्वतिदेशः ... ,,
१५ पञ्चकर्मतः प्राक्कर्तव्यम् ... ,,
१६ युक्तिज्ञानस्य गुणाः ... ,,
१७–३३ अष्टाविंशतिर्यवाग्वः २५–२६
३४–३५ अध्यायार्थसंग्रहः ... २७
३६ चिकित्सार्हो वैद्यः ... ,,

### ३ आरग्वधीयोऽध्यायः ।

१–२ आरग्वधीयाध्यायोपक्रमः २७
३–१७ पञ्चदश कुष्ठहराः प्रदेहाः २७–२८
१८–२० वातहराः पञ्च ,, २८
२१–२२ वातरक्तहरास्त्रयः ,, २८–२९
२३–२४ शिरोरुजाहरौ द्वौ प्रदेहौ २९
२५ पार्श्वरुजाहर एकः प्रदेहः ,,
२६–२७ निर्वापणौ द्वौ प्रदेहौ ,,
२८ शीतहर एकः प्रदेहः... ,,
२८ एको विषहरः ,, ... ,,
२९ त्वग्दोषसंस्वेदहरः ,, ... ,,
२९ शरीरदौर्गन्ध्यहरः ,, ... ,,
३० अध्यायार्थसंग्रहः ... ,,

### ४ षड्विरेचनशतीयोऽध्यायः ।

१–२ षड्विरेचनशतीयाध्यायोपक्रमः २९
३ षड्विरेचनशतादीनां संग्रहेण कथनम् ... ... ,,
४ षड् विरेचनशतानि ... ३०
५ षड् विरेचनाश्रयाः ... ,,
६ पञ्च कषाययोनयः ... ,,
७ पञ्चविधं कषायकल्पनम् ३१
७(१–३) स्वरसादीनां लक्षणानि ,,
७ स्वरसादीनां बलतारतम्यम् ,,
८ पञ्चाशन्महाकषायाणां संग्रहेण विवरणम् ... ,,
८ पंचकषायशतानां विवरणम् ,,
९ जीवनीयो दशको महाकषायः ३२
९ बृंहणीयो ,, ,, ,,
९ लेखनीयो ,, ,, ,,
९ भेदनीयो ,, ,, ,,
९ सन्धानीयो ,, ,, ,,
९ दीपनीयो ,, ,, ,,
१० बल्यो ,, ,, ,,

विषयः पृष्ठाङ्कः

२३-२४ अध्यायार्थसंग्रहः ... ६७

## ११ तिस्रैषणीयोऽध्यायः।

१-२ तिस्रैषणीयाध्यायोपक्रमः ६७
३ तिस्र एषणाः ... ... „
४ प्रथमा प्राणैषणा ... ६८
५ द्वितीया धनैषणा ... „
६ तृतीया परलोकैषणा ... „
७-१६ आत्मपरलोकास्तित्वप्रतिपादनं ... ... ६९,७०
१७ परीक्षायाश्चातुर्विध्यम् ... ७०
१८-१९ आप्तस्य लक्षणम् ... „
२० प्रत्यक्षस्य „ ... ७१
२१-२२ अनुमानस्य „ ... „
२३-२५ युक्तेर्लक्षणम् ... ७१,७२
२६ प्रमाणप्रकरणोपसंहारः... ७२
२७-२९ आप्तवाक्यद्वारा पुनर्भवस्य प्रतिपादनम् „
३० प्रत्यक्षेण „ „ ... ७३
३१ अनुमानेन „ „ ... „
३२ युक्त्या „ „ ... „
३३ सिद्धे पुनर्भवे धर्माचरणमवश्यं कर्तव्यं ... ... „
३४ सप्त त्रिकाणि ... ... ७४
३५ त्रय उपस्तम्भाः ... „
३६ त्रिविधं बलं ... ... „
३७ त्रीण्यायतनानि रोगस्य ... „
३८ असात्म्येन्द्रियार्थसंयोगस्यैकरूपत्वे युक्तिः ... ७५
३९-४१ अयोगातियोगमिथ्यायोगयुक्तस्य कर्मणो लक्षणम् ७६
४२ „ कालस्य „ „
४३ रोगायतनोपसंहारः ... „
४४ सर्वेषामेव वस्तूनां भावाभावौ योगाद्यपेक्षिणौ ... „
४५ त्रयो रोगाः ... ... „
४६-४७ मानसव्याधेः प्रतिकारः ७७
४८-४९ त्रयो रोगमार्गाः ... „
५०-५३ त्रिविधा भिषजः ... „
५४-५५ त्रिविधमौषधम् ... ७७,७८
५६-६३ प्राणाभिसरोगिणोर्लक्षणम् ७८

विषयः पृष्ठाङ्कः

६४-६५ अध्यायार्थसंग्रहः... ७८

## १२ वातकलाकलीयोऽध्यायः।

१-२ वातकलाकलीयाध्यायोपक्रमः ७८
३ वायुमधिकृत्य महर्षीणां परस्परं प्रश्नाः ... „
४ वायोर्गुणाः ... ... ७९
५ वायोः प्रकोपणानि ... „
६ वायोः प्रशमनानि ... „
७ प्रकोपणप्रशमनानि कथं वायुं प्रकोपयन्ति प्रशमयन्ति च „
८ शरीरचरस्याकुपितस्य वायोः कर्माणि ... ... „
८ शरीरचरस्य कुपितवायोः कर्माणि ... ... „
८ प्रकृतिभूतस्य लोकेषु चरतो वायोः कर्माणि ... ... „
८ लोकेषु चरतः कुपितवायोः कर्माणि ... ... „
८ वायोः प्रभावः ... ...७९-८०
९ अत्र मरीचिकृता विप्रतिपत्तिः ८०
१० वार्योविदकृतं तत्र समाधानं „
११ शरीरान्तर्गतस्य कुपिताकुपितस्य पित्तस्य शुभाशुभकरत्वम् ... ... „
१२ शरीरान्तर्गतस्य कुपिताकुपितस्य श्लेष्मणः शुभाशुभकरत्वम् ... ... „
१३-१५ सर्वेषामेव वातपित्तश्लेष्मणां प्रभुत्वमिति आत्रेयकृतं समाधानम् ... ... ८०,८१
१६-१७ अध्यायार्थसंग्रहः ... ८१
इति निर्देशचतुष्कः।

## १३ स्नेहाध्यायः।

१-२ स्नेहाध्यायोपक्रमः ... ८१
३-८ स्नेहमधिकृत्याग्निवेशस्य प्रश्नाः „
९ स्नेहस्य द्विविधा योनिः „
१० स्थावरस्नेहस्याशयाः ... „
११ जङ्गमस्नेहस्याशयाः ... ८२
१२ तिलतैलस्य गुणाः ... „
(१२) एरण्डतैलस्य „ ... „

विषयः पृष्ठाङ्कः

१३ सर्पिषः सर्वस्नेहोत्तमत्वं ८२
१४ घृतस्य गुणाः ... ... „
१५ तैलस्य „ ... ... „
१६ वसायाः „ ... ... „
१७ मज्जायाः „ ... ... „
१८ सर्पिरादीनां पानकालाः... „
१९ स्नेहपाने कालभेदोऽधिकारिभेदश्च ... ... „
२०-२१ तन्नियमापालने दोषाः ८३
२२ स्नेहस्यानुपानम् ... ... „
२३-२८ स्नेहस्य चतुर्विंशतिः प्रविचारणाः ... ... „
२९-३० स्नेहस्य त्रिविधा मात्राः „
३१-३२ उत्तमस्नेहमात्रार्हाः पुरुषाः „
३३-३४ उत्तमस्नेहमात्राया गुणाः „
३५-३६ मध्यमस्नेहमात्रार्हाः पुरुषाः ८४
३७ मध्यमस्नेहमात्राया गुणाः... „
३८-३९ ह्रस्वस्नेहमात्रार्हाः पुरुषाः „
४० ह्रस्वस्नेहमात्राया गुणाः ... „
४१-४३ घृतपानार्हाः ... „
४४-४६ तैलपानार्हाः ... „
४७-४९ वसापानार्हाः ... „
५० मज्जपानार्हाः ... ... „
५१ स्नेहनस्य प्रकर्षः... ... „
५२ के स्नेह्याः ... ... „
५३-५६ के न स्नेह्याः ...८४-८५
५७ अस्निग्धस्य लक्षणम् ... ८५
५८ स्निग्धस्य „ ... „
५९ अतिस्निग्धस्य „ ... „
६० स्नेहपाने पूर्वकर्म ... „
६१ संशोधनसंशमनस्नेहयोः पानकालः ... ... „
६२-६४ स्नेहपीते हिताहितम् „
६५-६९ मृदुक्रूरकोष्ठयोर्लक्षणम् „
७०-७३ स्नेहपाने तृष्णोपद्रवचिकित्सा . ... ... ८५,८६
७४-७६ स्नेहविभ्रमजा दोषाः ८६
७७-७८ तत्र चिकित्सा ... „
७९ स्नेहव्यापत्तौ हेतवः ... „
८० संशोधने स्नेहे वृत्तिः ... „
८१ संशमने स्नेहे वृत्तिः ... „
८२ स्नेहविचारणाया विषयाः „
८३-९० स्नेहानां प्रविचारणाविधिः „

विषयः पृष्ठाङ्कः

९१ कुष्ठ्यादीनां स्नेहने वर्जनीयद्रव्याणि ... ... ८७
९२–९५ कुष्ठ्यादीनां स्नेहनप्रकारः „
९६–९७ अतिमात्रया त्वरया च स्नेहसेवने दोषाः ... „
९८ लवणोपहितस्नेहगुणाः ... „
९९ स्नेहस्वेदादीनां क्रमः ... „
१०० अध्यायार्थसंग्रहः ... „

१४ स्वेदाध्यायः ।

१–२ स्वेदाध्यायोपक्रमः ... „
३–५ स्वेदगुणाः ... ... „
६ स्वेदो यथा कार्यकरः ... ८८
७–१० रोगाद्यपेक्षिणी स्वेदकल्पना „
११–१२ हृदयवंक्षणादीनां स्वेदे रक्षणविधिः ... ... „
१३ सम्यक्स्विन्नस्य लक्षणम् „
१४ अतिस्विन्नस्य „ ... „
१५ अतिस्विन्नस्य चिकित्सा ... „
१६–१९ अस्वेद्याः ... ... „
२०–२४ स्वेदसाध्या विकाराः ८९
२५–२६ पिण्डस्वेदस्य द्रव्याणि „
२७ प्रस्तरस्वेदस्य „ „
२८ भूकुटीजेन्ताकस्वेदानां „ „
२९–३३ नाडीस्वेदस्य „ „
३४ अवगाहपरिषेकस्वेदयोः „ „
३५–३६ उपनाहस्वेदस्य „
३७ उपनाहस्वेदे वन्धनद्रव्याणि „
३८ „ वन्धमोक्षविधिः „
३९–४० त्रयोदश स्वेदाः ... „
४१ संकरस्वेदस्य कल्पना ... „
४२ प्रस्तरस्वेदस्य „ ... „
४३ नाडीस्वेदस्य „ ... „
४४ परिषेकस्वेदस्य „ ... „
४५ अवगाहस्वेदस्य „ ... „
४६ जेन्ताकस्वेदस्य „ ... ९०,९१
४७–४९ अश्मघनस्वेदस्य „ ... ९१
५०–५१ कर्षूस्वेदस्य „ ... „
५२–५४ कुटीस्वेदस्य „ ... „
५५ भूस्वेदस्य „ ... „
५६–५८ कुम्भीस्वेदस्य „ ... „
५९–६० कूपस्वेदस्य „ ... „

विषयः पृष्ठाङ्कः

६१–६३ होलकस्वेदस्य कल्पना ९२
६४ निरग्निस्वेदो दशविधः ... „
६५–६६ प्रकारान्तरेण षड्विधः स्वेदः „
६७ स्विन्नेन यत् कार्यं ... „
६८–७१ अध्यायार्थसंग्रहः ... „

१५ उपकल्पनीयोऽध्यायः ।

१–२ उपकल्पनीयाध्यायोपक्रमः ९२
३–५ वमनादिकर्मणः प्राक् संभारोपकल्पनस्य प्रयोजनम् ९२,९३
६–७ उपकल्पनीयाः संभाराः ९३
८ वमनस्य पूर्वकर्म ... ९४
९ वमनविधिः ... „
१० संशोधन(वमन)स्य मात्रा „
११,१२ पीते वमनौषधे कर्तव्यं „
१३ वमनस्यायोगसम्यग्योगातियोगलक्षणानि ... „
१३ वमनायोगातियोगजा उपद्रवाः ... ... ९५
१४–१५ वमनस्य योगे पश्चात्कर्म ... ... „
१६ वमितस्यान्नसंसर्जनक्रमः „
१७–१८ विरेचनविधिः ...९५–९६
१९–२१ संभारोपकल्पनाऽसमर्थानां संशोधनप्रकारः ... ९६
२२ संशोधनकरणे गुणाः ... „
२३–२५ अध्यायार्थसंग्रहः ... „

१६ चिकित्साप्राभृतीयोऽध्यायः ।

१–२ चिकित्साप्राभृतीयाध्यायोपक्रमः ... ... ९६
३ विज्ञभिषक्प्रयुक्ते विरेचने गुणाः „
४ अज्ञप्रयुक्ते विरेचने दोषाः
५–६ विरेचनस्य सम्यग्योगलक्षणम् „
७–८ विरेचनस्यायोगलक्षणम् ९६–९७
९–१० विरेचनस्यातियोगलक्षणं ९७
११–१२ वमनस्यातियोगलक्षणानि „
१३–१५ संशोधनयोग्याः पुरुषाः „
१६–१९ संशोधनस्य गुणाः „
२०–२१ संशमनापेक्षया संशोधनस्य ज्यायस्त्वे युक्तिः ... „
२२–२३ संशोधनानन्तरं पथ्यम् „
२४–२५ संशोधनस्यातियोगायोगयोः प्रतिकारः ... ९७

विषयः पृष्ठाङ्कः

२६ स्नेहादिकर्मस्वविधिना विहितेषु साधनम् ... „
२७–२८ भावानां स्वभावोपरमेऽपि चिकित्सायाः प्रयोजनं ९७
२९–३० चिकित्सायाः प्रयोजनविषये अग्निवेशस्य प्रश्नाः ९८
३१–३३ आत्रेयकृतं तत्समाधानं „
३४ चिकित्साया लक्षणम् ... ९८
३५–३६ चिकित्सायाः प्रयोजनं „
३७–३८ चिकित्साप्राभृतस्य गुणाः „
३९–४१ अध्यायार्थसंग्रहः ... ९९
इति कल्पनाचतुष्कः ।

१७ कियन्तःशिरसीयोऽध्यायः ।

१–२ कियन्तःशिरसीयाध्यायोपक्रमः ९९
३–४ शिरोरोगादिविषये अग्निवेशस्य प्रश्नाः ... ... „
५–७ आत्रेयस्य उत्तरम् ... „
८–११ शिरोरोगाणां निदानं संप्राप्तिश्च ... ... „
१२ अङ्गेषु शिरसः प्राधान्यम् „
१३–१४ शिरोरोगाणां नामानि ... ९९–१००
१५–२१ वातजशिरोरोगस्य निदानलक्षणे १००
२२–२३ पित्तजशिरोरोगस्य „ „
२४–२५ कफजशिरोरोगस्य „ „
२६ त्रिदोषजशिरोरोगस्य „ „
२७–२९ क्रिमिजशिरोरोगस्य „ „
३०–३१ वातजहृद्रोगस्य „ „
३२–३३ पित्तजहृद्रोगस्य „ „
३४–३५ कफजहृद्रोगस्य „ „
३६ संनिपातजहृद्रोगस्य „ „
३७–४० क्रिमिजहृद्रोगस्य „ „
४१–४४ दोषमानविकल्पजा द्विषष्टिभेदाः ... १००,१०१
४५–६१ दोषाणां वृद्धिक्षयकृतविकल्पलक्षणानि १०१,१०२
६२ दोषाणां वृद्धिक्षयसाम्यलक्षणानि ... ... १०२
६३ अष्टादशक्षयाणां गणना „
६४–६९ रसादिधातूनां क्षयलक्षणानि १०३

विषयः पृष्ठाङ्कः

७०–७२ पुरीषादिमलानां क्षयलक्षणानि १०३
७३ ओजःक्षयलक्षणम् ... „
७४–७५ ओजसो लक्षणम् ... „
७६–७७ सामान्येन क्षयाणां हेतवः „
७८–८० मधुमेहस्य निदानं संप्राप्तिश्च ... ... „
८१ मधुमेहस्य लक्षणम् ... „
८२ मधुमेहस्य उपेक्षणे पिडकानां समुद्भवः ... ... „
८३ सप्तपिडकानां नामानि ... १०४
८४ शराविकाया लक्षणम् „
८५ कच्छपिकाया „ ... „
८६ जालिन्या „ ... „
८७ सर्षप्या „ ... „
८८ अलज्या „ ... „
८९ विनताया „ ... „
९० बाह्याभ्यन्तरभेदेन विद्रधि-द्विविधा ... „
९१–९२ विद्रध्या निदानम् ... „
९३ „ संप्राप्तिः ... „
९४ „ स्थानानि ... „
९५ „ निरुक्तिः ... „
९६–९७ वातजादिभेदेनान्तर्विद्रधि-लक्षणानि ... „
९८ विदाहं प्राप्ताया विद्रध्या लक्षणं ... ... ... „
९९–१०० विद्रधीनां स्रावलक्षणम् „
१०१–१०२ अन्तर्विद्रधीनां स्थान-विशेषकृतं लक्षणम् ... „
१०३ अन्तर्विद्रधीनां साध्यत्वासाध्य-त्वनिर्देशः क्रियाक्रमश्च „
१०४–१०५ प्रमेहं विनाऽपि पिड-कानां संभवः ... „
१०६–१०७ पिडकानां सौध्यत्वा-साध्यत्वनिर्देशः ... १०५
१०८–११० उक्ताभ्योऽन्याः पिडकाः ... ... „
१११ पिडकानामुपद्रवाः ... „
११२–११३ दोषाणां त्रिविधा गतिः „
११४ दोषाणां चयप्रकोपप्रशमकालाः ( कालकृता गतिः ) ... „

विषयः पृष्ठाङ्कः

११५–११९ दोषाणां प्राकृती वैकृती च गतिः ... ... १०५
१२०–१२१ अध्यायार्थसंग्रहः „


## १८ त्रिशोथीयोऽध्यायः।


१–२ त्रिशोथीयाध्यायोपक्रमः १०६
३ शोथानां भेदाः ... „
४ आगन्तोः शोथस्य निदानम् „
५ आगन्तुशोथस्य प्रतिकारः „
६ निजस्य शोथस्य सामान्य-निदानम् ... ... „
७(१) वातजशोथस्य निदानं लक्षणं च „
७(२) पित्तजशोथस्य „ „ „
७(३) कफजशोथस्य „ „ „
७ द्वन्द्वजसंनिपातजशोथानां निदानं लक्षणं च ... „
८ शोथानां पृथक्पृथक्प्रका-रेण भेदाः ... ... „
९–१५ वातजादिशोथलक्षणानां श्लोकेन पुनरभिधानम्... १०७
१६–१७ शोथानां स्थानविशेषकृतम-साध्यत्वम् ... ... „
१८ शोथस्योपद्रवाः ... ... „
१९ उपजिह्विकायाः संप्राप्तिः लक्षणं च „
२० गलशुण्डिकायाः „ „ „
२१ गलगण्डस्य „ „ „
२२ गलग्रहस्य „ „ „
२३ विसर्पस्य „ „ „
२४ पिडकायाः „ „ „
२५ तिलकादीनां „ „ „
२६ शङ्खकस्य „ „ „
२७ कर्णमूलशोथस्य „ „ „
२८ प्लीहाभिवृद्धेः „ „ „
२९ गुल्मस्य „ „ „
३० वृद्धेः „ „ „
३१ उदरस्य „ „ „
३२ आनाहस्य „ „ „
३३ अधिमांसार्बुदादीनामपि शोथेऽन्तर्भावः ... „
३४–३५ रोहिण्याः संप्राप्तिः १०७,१०८

विषयः पृष्ठाङ्कः

३६ रोहिण्याः साध्यत्वासाध्य-त्वनिर्देशः ... ... १०८
३७ कृच्छ्रसाध्यस्य लक्षणं ... „
३८ सुखसाध्यस्य „ ... „
३९ याप्यस्य „ ... „
४० प्रत्याख्येयस्य „ ... „
४१ रोगाणां साध्यादिभेदाः... „
४२–४३ रुजादिभेदाद्रोगाणाम-नेकत्वेऽप्यत्र यथास्थूलं संग्रहः „
४४–४७ कुपितस्यैकस्यैव दोषस्य विविधरोगकरत्वे रोगाणामपरि-संख्येयत्वे च तेषां चिकित्सिते सामान्योपदेशः ... „
४८ विकृताः प्रकृतिस्था वा दोषा अवश्यं ज्ञेयाः ... १०९
४९–५१ प्रकृतिस्थानां वाता-दीनां कर्म ... ... „
५२ वातादीनां क्षयलक्षणम्... „
५३ „ वृद्धिलक्षणम् „
५४–५५ अध्यायार्थसंग्रहः ... „


## १९ अष्टोदरीयोऽध्यायः।


१–२ अष्टोदरीयाध्यायोपक्रमः १०९
३ उदरादिरोगाणां संख्यानां निर्देशः ... १०९–११०
४(१) अष्टौ उदराणि ... ११०
४(१) „ मूत्राघाताः ... „
४(१) „ क्षीरदोषाः ... „
४(१) „ रेतोदोषाः ... „
४(२) सप्त कुष्ठानि ... „
४(२) „ पिडकाः ... „
४(२) „ विसर्पाः ... ... „
४(३) षडतीसाराः ... ... „
४(३) षडुदावर्ताः ... ... „
४(४) पञ्च गुल्माः ... ... „
४(४) „ कासाः ... ... „
४(४) „ श्वासाः ... ... „
४(४) „ हिक्काः ... ... „
४(४) „ तृष्णाः ... ... „
४(४) „ छर्दयः ... ... „
४(४) „ भक्तस्यानशनस्थानानि ( अरुचयः ) ... „
४(४) „ शिरोरोगाः ... „
४(४) „ हृद्रोगाः ... ... „

विषयः पृष्ठाङ्कः
४(४) पञ्च पाण्डुरोगाः ... ११०
४(४) ,, उन्मादाः ... ,,
४(४) चत्वारोऽपस्माराः ... ,,
४(५) चत्वारोऽक्षिरोगाः ... ,,
४(५) चत्वारः कर्णरोगाः ... ,,
४(५) ,, प्रतिश्यायाः ... ,,
४(५) ,, मुखरोगाः ... ,,
४(५) ,, ग्रहणीदोषाः ... ,,
४(५) ,, मदाः ... ,,
४(५) ,, मूर्च्छायाः ... ,,
४(५) ,, शोषाः ... ,,
४(५) चत्वारि क्लैब्यानि ... ,,
४(६) त्रयः शोथाः ... ,,
४(६) त्रीणि किलासानि ... ,,
४(६) त्रिविधं रक्तपित्तम् ... ,,
४(७) द्विविधो ज्वरः ... ,,
४(७) ,, व्रणः ... ,,
४(७) द्विविध आयामः ... ,,
४(७) द्विविधा गृध्रसी ... ,,
४(७) ,, कामला ... ,,
४(७) द्विविधमामम् ... ,,
४(७) द्विविधं वातरक्तम् ... ,,
४(७) द्विविध अर्शोरोगः ... ,,
४(८) एकः ऊरुस्तम्भः ... ,,
४(८) ,, संन्यासः ... ,,
४(८) ,, महागदः ... ,,
४(८) विंशतिः क्रिमिजातयः ,,
४(९) ,, प्रमेहाः ... ,,
४(९) विंशतिर्योनिव्यापदः ११०–१११
५–६ सर्वेषामेव विकाराणां वातादिजत्वनिर्देशः ... १११
७ निजागन्त्वोः परस्परानुबन्धित्वं ११२
८–९ अध्यायार्थसंग्रहः ... ,,

---

## २० महारोगाध्यायः।

१–२ महारोगाध्यायोपक्रमः... ११२
३ चत्वारो रोगाः ... ,,
३ रुक्सामान्यात्तेषामेकत्वम् ,,
३ आगन्तुनिजविभागाद्द्वैविध्यम् ,,
३ द्विविधं रोगाणामधिष्ठानम् ,,
३ रोगाणामपरिसंख्येयत्वम् ,,
४ आगन्तुविकारस्य कारणानि ,,
४ निजविकारस्य ,, ,,

विषयः पृष्ठाङ्कः
५ सर्वेषामपि विकाराणां प्रेरणम् ( प्रयोजकनिमित्तम् ) ११२
६ सर्वे रोगाः परस्परमनुबन्धिनः ... ... ११३
७ आगन्तुनिजयोर्लक्षणतो भेदः ... ... ... ,,
८ शरीरे दोषाणां स्थानविभागः ,,
९ वातपित्तश्लेष्मणां प्रकृतिभूतानां विकृतानां च कर्म ,,
१० सामान्यजा नानात्मजाश्च विकाराः ... ... ,,
११ अशीतेर्वातविकाराणां गणना ,,
१२ वायोरात्मरूपस्वलक्षणकर्माणि ... ... ११४
१३ कुपितस्य वायोरुपक्रमः... ,,
१४ चत्वारिंशतः पित्तविकाराणां गणना ... ... ,,
१५ पित्तस्यात्मरूपस्वलक्षणकर्माणि ... ११४–११५
१६ कुपितस्य पित्तस्योपक्रमः ११५
१७ विंशतेः श्लेष्मविकाराणां गणना ,,
१८ श्लेष्मण आत्मरूपस्वलक्षणकर्माणि ... ... ,,
१९ कुपितस्य श्लेष्मण उपक्रमः ,,
२०–२२ चिकित्सायां रोगभेषजादिज्ञानस्योपयोगिता ... ,,
२३–२५ अध्यायार्थसंग्रहः ११५,११६

इति रोगचतुष्कः।

---

## २१ अष्टौनिन्दितीयोऽध्यायः।

१–२ अष्टौनिन्दितीयाध्यायोपक्रमः ... ... ११६
३ अष्टौ निन्दिताः पुरुषाः ,,
४ अतिस्थूलस्य दोषाः ... ,,
५–८ तेषामेव पुनराख्यानं श्लोकेन ,,
९ अतिस्थूलस्य लक्षणम् ... ११७
१०–१२ अतिकार्श्यस्य निदानम् ,,
१३–१४ अतिकृशस्य दोषाः ,,
१५ अतिकृशस्य लक्षणम् ... ,,
१६ अतिस्थूलातिकृशयोश्चिकित्साक्रमः ... ... ,,
१७ स्थूलकृशयोः कृशस्य प्राधान्ये युक्तिः ... ... ,,

विषयः पृष्ठाङ्कः
१८–१९ सममांसप्रमाणस्य प्रशस्तता ... ... ११७
२० स्थूलकृशयोः कर्शनबृंहणे यथा कार्ये ... ... ,,
२१–२८ अतिस्थौल्यस्योपक्रमः ,,
२९–३३ अतिकार्श्ये प्रतिकारः ११८
३४ संक्षेपेण स्थौल्यकरा भावाः ,,
३५ निद्रायाः कारणम् ... ,,
३६ ,, फलम् ... ,,
३७–३८ अकालेऽतिप्रसङ्गाच्च सेविताया निद्राया दोषाः ... ,,
३९–४३ येषां दिवानिद्रा हिता ,,
४४ ग्रीष्मेतरेषु ऋतुषु दिवानिद्रायाः प्रतिषेधः ... ,,
४५ केषां दिवानिद्रा सर्वदा अहिता ,,
४६–४९ अहितदिवानिद्राया दोषाः ,,
५० रात्रिजागरणदिवास्वप्नासीनप्रचलायितानां गुणाः ११८
५१ स्थौल्यकार्श्ययोः स्वप्नाहारहेतुत्वम् ... ... ,,
५२–५४ निद्रानाशे प्रतिकारः ,,
५५–५६ अतिनिद्रायां ,, ,,
५७ निद्रानाशस्य हेतुः ... ,,
५८–५९ निद्राया भेदाः ... ,,
६०–६२ अध्यायार्थसंग्रहः ११९,१२०

---

## २२ लङ्घनबृंहणीयोऽध्यायः।

१–२ लङ्घनबृंहणीयाध्यायोपक्रमः १२०
३–४ लङ्घनबृंहणादयः षडुपक्रमाः ... ,,
५–८ लङ्घनादीन्यधिकृत्य अग्निवेशस्य प्रश्नाः ... ,,
९ लङ्घनस्य लक्षणम् ... ,,
१० बृंहणस्य ,, ... ,,
१० रूक्षणस्य ,, ... ,,
११ स्नेहनस्य ,, ... ,,
११ स्वेदनस्य ,, ... ,,
१२ स्तम्भनस्य ,, ... ,,
१२–१३ लङ्घनद्रव्याणि ... ,,
१३–१४ बृंहणद्रव्याणि ... ,,
१४–१५ रूक्षणद्रव्याणि ... ,,
१५ स्नेहनद्रव्याणि ... ,,
१६ स्वेदनद्रव्याणि ... ,,

विषयः पृष्ठाङ्कः

१७ स्तम्भनद्रव्याणि ... १२०
१९ लङ्घनस्य प्रकारभेदाः ... १२१
१९–२४ भिन्नप्रकारस्य लङ्घनस्याधिकारिणः ... ,,
२५ बृंहणं मांसम् ... ... ,,
२६–२८ बृंहणीयाः बृंहणीयानि च ,,
२८–३० रूक्षणीयाः रूक्षणीयानि च,,
३१ स्नेहाः स्नेहनीयाश्च ... ,,
३१ स्वेदाः स्वेदनीयाश्च ... ,,
३२–३३ स्तम्भनद्रव्याणि स्तम्भनीयाश्च,,
३४–३७ लङ्घनस्य कृतातिकृतलक्षणम् ... ,,
३८–३९ बृंहणस्य ,, ... ,,
३९ रूक्षणस्य ,, ... ,,
३९–४० स्तम्भनस्य ,, ... १२२
४१ लङ्घनादीनां षण्णामकृतानां लक्षणस्य समासेनोपदेशः ,,
४२ षडुपक्रमोपसंहारः ... ,,
४३ असंख्येयत्वेऽप्युपक्रमाणां षट्त्वे युक्तिः ... ... ,,
४४ अध्यायार्थसंग्रहः ... ,,


## २३ संतर्पणीयोऽध्यायः।


१–२ संतर्पणीयाध्यायोपक्रमः १२२
३–४ संतर्पणनिमित्तानि ... ,,
५–७ संतर्पणजा रोगाः ... ,,
८–२५ तत्र प्रतिकारः १२२,१२३
२६–२९ अपतर्पणजा रोगाः १२३
३० तत्र प्रतिकारः ... ... ,,
३१ सद्यःक्षीणस्य चिकित्साक्रमः ,,
३१–३३ चिरदुर्बलस्य ,, ,,
३४–३९ केचित्तर्पणयोगाः १२३–१२४
४० अध्यायार्थसंग्रहः ... १२४


## २४ विधिशोणितीयोऽध्यायः।


१–२ विधिशोणितीयाध्यायोपक्रमः ... १२४
३ विधिना जातं शोणितं शुद्धं भवति ... ... ,,
४ शुद्धस्य शोणितस्य फलम् ,,
५–१० शोणितदुष्टिनिदानम् ,,
११–१६ शोणितजानां रोगाणां निर्देशः ... ... ,,

विषयः पृष्ठाङ्कः

१७ अनुक्तानां शोणितजानां रोगाणां संग्रहः ... १२५
१८–१९ शोणितरोगेषु क्रियाक्रमः ,,
२०–२१ वातादिदुष्टशोणितस्य लक्षणम् ... ... ,,
२२ विशुद्धस्य शोणितस्य लक्षणम् ... ... ,,
२३ स्रुतरक्तस्यान्नपानविधिः... ,,
२४ विशुद्धरक्तस्य पुरुषस्य लक्षणम् ... ... ,,
२५–२९ मदमूर्च्छायसंन्यासानां संप्राप्तिः ... ... ,,
३०–३३ वातजादिभेदेन मदस्य लक्षणम् ... ... १२६
३४ शोणितमद्यविषजानामपि मदानां वातादिजेष्वन्तर्भावः ,,
३५–४१ वातजादिभेदेन मूर्च्छायस्य लक्षणम् ... ... ,,
४२ संन्यासान्मदमूर्च्छाययोर्भेदः ... ... ,,
४३ संन्यासस्य संप्राप्तिः ... ,,
४४ ,, लक्षणम् ... ,,
४५–५३ संन्यासस्योपक्रमः... ,,
५४–५८ मदमूर्च्छाययोरुपक्रमः ... १२६,१२७
५९–६० अध्यायार्थसंग्रहः ... १२७
इति योजनाचतुष्कः।


## २५ यज्जःपुरुषीयोऽध्यायः।


१–२ यज्जःपुरुषीयाध्यायोपक्रमः १२७
३–२५ पुरुषमामयं चाधिकृत्य समेतानां महर्षीणां विवादाः ... १२७–१२९
२६–२९ तत्र पुनर्वसुकृतं समाधानम् ... ... १२९
३०–३४ हिताहिताहारजातस्य लक्षणम् ... १२९,१३०
३५–३७ आहारविधिविशेषाणां लक्षणतोऽवयवतश्च व्याख्यानम् १३०
३८ प्रकृत्यैव हिततमानामाहारद्रव्याणां निर्देशः १३०,१३१
३९ प्रकृत्यैवाहितमानामाहारद्रव्याणां निर्देशः ... १३१

विषयः पृष्ठाङ्कः

४० अग्र्याणां संग्रहः १३१,१३२
४१–४४ तेषां चिकित्सायामुपयोगः ... ... १३३
४५ पथ्यापथ्ययोर्लक्षणम् ... ,,
४६–४७ द्रव्याणां मात्रादिज्ञानस्य प्रयोजनं ,,
४८–४९ धान्यादयो नव आसवयोनयः... ... ... १३४
४९ पथ्यतमानामासवानां चतुरशीतिनिर्देशः ... ,,
४९ आसवशब्दस्य निरुक्तिः ,,
४९ आसवानां बहुविधो विकल्पः संस्कारश्च ... ... ,,
४९ यथास्वं संयोगसंस्कारसंस्कृतानामासवानां स्वकर्मकरत्वम् ,,
५० आसवानां साधारणगुणाः १३५
५१ अध्यायार्थसंग्रहः ... ,,


## २६ आत्रेयभद्रकाप्यीयोऽध्यायः।


१–२ आत्रेयभद्रकाप्यीयाध्यायोपक्रमः ... ... १३५
३–८ महर्षीणां समितौ रसाहारविनिश्चये कथा ... ,,
९ षडेव रसा इति आत्रेयकृतो निश्चयः ... १३६
१० सर्वद्रव्यं पाञ्चभौतिकं ... १३८
१० तच्चेतनावदचेतनं चेति द्विविधम् ... ... ,,
१० द्रव्याणां गुणाः कर्म च ... ,,
११ पार्थिवादिभेदेन द्रव्याणां लक्षणं गुणाश्च ... ,,
१२ सर्वेषामेव द्रव्याणामौषधत्वे युक्तिः ... ... ... ,,
१३ द्रव्यकर्मवीर्याधिकरणकालोपायफलानां लक्षणम् ... ,,
१४–२२ द्रव्याणां रसद्वारेण त्रिषष्टिविधो भेदः ... १३९,१४०
२३ रसानुरसकल्पनया द्रव्याणां भेदोऽसंख्येयः ... ... १४०
२४ रसभेदासंख्येयत्वेऽपि चिकित्सार्थं त्रिषष्टिभेदकल्पना ... ,,
२५–२६ रसविकल्पयोगे युक्तिः ,,
२७ रसविकल्पज्ञानस्य प्रयोजनम् ,,

| विषयः | पृष्ठाङ्कः |
|---|---|
| ३०२ ज्वरे पेया-कषाय-क्षीर-सर्पिर्विरेचनानां कालः ... | ६४६ |
| ३०३ भेषजग्रहणयोग्यः कालः | ,, |
| ३०४-३०८ ऋत्वाद्यपेक्षः कालविचारः | ६४६-६४७ |
| ३०९-३१० कस्मिन् काले कस्य दोषस्य प्रकोपः | ६४७ |
| ३११ ,, वयसि ,, ,, ,, | ,, |
| ३१२ आहारपाकापेक्षो दोषप्रकोपः | ,, |
| ३१३-३१४ चिकित्सायां मात्राविचारः | ६४८ |
| ३१५-३१९ ,, देशसात्म्यविचारः | ६४८ |
| ३२० देशादिपरीक्षाव्यतिरेकेण केवलं योगैरेव चिकित्सां कुर्वतो दोषः | ,, |
| ३२१-३२५ दोषाणां कदाचिद्विरुद्धाभिमताऽपि क्रिया कार्या भवति | ,, |
| ३२६ दोषौषधादीनि परीक्ष्यैव चिकित्सा विधेया ... | ६४९ |
| ३२७-३३० निवृत्तेऽपि व्याधौ दोषशेषापनुत्त्यर्थमनपायिप्रयोगस्य सेवनं विधेयं | ,, |
| ३३१ द्वेष्यमपि पथ्यं कल्पनाविधिभिः प्रियत्वं गमयेत् ... | ,, |
| ३३२-३३३ मनोऽर्थानामानुकूल्यस्य फलं ... | ६५० |
| ३३४-३४० अध्यायोक्तविषयाः | ,, |


---

## ७ कल्पस्थानम् ।

### १ मदनकल्पः ।


| विषयः | पृष्ठाङ्कः |
|---|---|
| १-२ मदनकल्पोपक्रमः ... | ६५१ |
| ३ कल्पस्थानस्य विषयः ... | ,, |
| ४ शरीरमलविरेचनभेदाः ... | ,, |
| ५ वमनं विरेचनं च द्रव्यं कथं वामयति विरेचयति च | ,, |
| ६ अपरिसंख्येयसंयोगानामपि विरेचनद्रव्याणां षट्सु शतेष्वन्तर्भावं कृत्वोपदेशः ... | ६५२ |
| ७ विरेचनद्रव्याणि कथं क्रियासमर्थतमानि भवन्ति ... | ,, |
| ८ देशभेदाः | ६५२-६५३ |
| ९ कथंभूते देशे जातानि द्रव्याण्युपादेयानि ... | ६५३ |
| १० औषधद्रव्याहरणविधिः ... | ,, |
| ११ औषधद्रव्याणि कथं स्थाप्यानि | ६५३ |
| १२ वमनविरेचनद्रव्याणां भावनार्थं मालोडनार्थं च द्रव्याणि | ,, |
| १३ वमनद्रव्याणां मदनफलस्य श्रेष्ठत्वं | ,, |
| १३ मदनफलानां ग्रहणस्थापनविधिः | ६५३-६५४ |
| १४ वमनौषधपानविधिः ... | ६५४ |
| १४ वमनायोगे कर्तव्यं ... | ,, |
| १५ सर्वेषु वमनयोगेष्वनुक्तमपि मधुसैन्धवं देयं ... | ,, |
| १५ छर्दनयोगयुक्तस्य मधुन उष्णाविरोधित्वं ... | ,, |
| १६ मदनफलानामष्टौ मात्रायोगाः | ६५५ |
| १७-१८ मदनफलानां पञ्च पयोमुखा योगाः ... | ,, |
| १९ मदनफलानामेको ग्रेययोगः | ,, |
| २० मदनफलानामेकः फाणितयोगः | ,, |
| २१ मदलफलानां षड्वर्तियोगाः | ,, |
| २२ ,, विंशतिर्लेहयोगाः | ,, |
| २३ ,, विंशतिरुत्कारिकायोगाः | ६५५-६५६ |
| २३ ,, विंशतिर्मोदकयोगाः | ६५६ |
| २४-२५ ,, षोडश शष्कुली-पूपयोगाः | |
| २६ ,, दश षाडवादियोगाः | ,, |
| २७ मदनफलपर्यायाः ... | ,, |
| २८-३० अध्यायोक्तार्थसंग्रहः ... | ,, |


### २ जीमूतककल्पः ।


| विषयः | पृष्ठाङ्कः |
|---|---|
| १-२ जीमूतककल्पोपक्रमः ... | ६५६ |
| ३ जीमूतकपर्यायाः ... | ,, |
| ४ जीमूतकगुणाः ... | ,, |
| ५-७ जीमूतकानां षट् क्षीरयोगाः | ,, |
| ८ ,, एकः सुरामण्डयोगः | ६५७ |
| ९-१० ,, एकोनविंशतिः कषाययोगाः | ,, |
| ११ ,, अष्टौ मात्रायोगाः | ,, |
| १२ ,, चत्वारः स्वरसयोगाः | ,, |
| १३ ,, एको घृतयोगः | ,, |
| १४-१५ अध्यायोक्तार्थसंग्रहः | ,, |


### ३ इक्ष्वाकुकल्पः ।


| विषयः | पृष्ठाङ्कः |
|---|---|
| १-२ इक्ष्वाकुकल्पोपक्रमः ... | ,, |
| ३ इक्ष्वाकोः पर्यायाः ... | ,, |
| ४ ,, गुणाः ... | ,, |
| ५-९ ,, पयोमुखा अष्टौ एकश्च सुरामण्डयोगः | ,, |
| १० इक्ष्वाकोः मस्तौ एको योगः | ६५७ |
| ११ ,, तक्रे ,, | ,, |
| ११ ,, एको ग्रेययोगः ... | ६५८ |
| १२ ,, एकः पललयोगः | ,, |
| १३ ,, ,, तैलयोगः ... | ,, |
| १३ ,, ,, घृतयोगः ... | ,, |
| १३ इक्ष्वाकुबीजस्यैको वर्धमानयोगः ... | ,, |
| १४ इक्ष्वाकोः कषायेषु पञ्चदशयोगाः | ,, |
| १५ ,, अष्टौ वर्तियोगाः ... | ,, |
| १५-१८ ,, पञ्च लेहयोगाः ... | ,, |
| १९ ,, एको मन्थयोगः ... | ,, |
| २० ,, ,, मांसरसयोगः | ,, |
| २१-२३ अध्यायोक्तार्थसंग्रहः | ६५८-६५९ |


### ४ धामार्गवकल्पः ।


| विषयः | पृष्ठाङ्कः |
|---|---|
| १-२ धामार्गवकल्पोपक्रमः ... | ६५९ |
| ३ धामार्गवपर्यायाः ... | ,, |
| ४-५ धामार्गवगुणाः ... | ,, |
| ६ धामार्गवस्य पल्लवानां नवयोगाः ... | ,, |
| ७ ,, चत्वारः क्षीरयोगाः ... | ,, |
| ७ ,, एकः सुरायोगः | ,, |
| ७-८ ,, नव कषाययोगाः | ,, |
| ९ ,, एकोऽन्नयोगः | ,, |
| १० ,, एको ग्रेययोगः | ,, |
| ११-१२ ,, द्वादश शकृद्रसयोगाः | ,, |
| १३-१४ ,, दश लेहयोगाः | ,, |
| १५ ,, एकः कल्कयोगः | ६६० |
| १६-१७ ,, अन्ये एकादश कषाययोगाः ... | ,, |
| १८ ,, एको घृतयोगः | ,, |
| १९-२० अध्यायोक्तार्थसंग्रहः | ,, |


### ५ वत्सककल्पः ।


| विषयः | पृष्ठाङ्कः |
|---|---|
| १-२ वत्सककल्पोपक्रमः ... | ६६० |
| ३-४ वत्सकस्य पर्यायाः ... | ,, |
| ५ ,, भेदौ ... | ,, |
| ६ ,, गुणाः ... | ,, |
| ७-९ ,, नव कषाययोगाः | ,, |
| ९-१० ,, पञ्च चूर्णयोगाः | ,, |
| ११ ,, त्रयः सलिलयोगाः | ,, |
| ११ ,, एकः कृशरायोगः | ,, |
| १२ अध्यायोक्तार्थसंग्रहः ... | ,, |

विषयः पृष्ठाङ्कः

## ६ कृतवेधनकल्पः ।

१–२ कृतवेधनकल्पोपक्रमः ... ६६१
३ कृतवेधनस्य पर्यायाः ... „
४ „ गुणाः ... „
५ „ चत्वारः क्षीरयोगाः „
५ „ एकः सुरायोगः ... „
५–७ „ द्वाविंशतिः कषाययोगाः „
८ „ दश पिच्छायोगाः „
८ „ षड्वर्तियोगाः ... „
८ „ एको घृतयोगः ... „
९–१० „ अष्टौ लेह्ययोगाः ... „
११–१२ „ सप्त मांसरसयोगाः „
१२ „ एक इक्षुरसयोगः „
१३–१४ अध्यायोक्तविषयाः ... „

## ७ श्यामात्रिवृत्कल्पः ।

१–२ श्यामात्रिवृत्कल्पोपक्रमः ६६२
३ विरेचने त्रिवृन्मूलस्य श्रेष्ठत्वं „
४ त्रिवृतायाः पर्यायाः ... „
५–६ „ गुणाः ... „
७ „ भेदाः ... „
८–९ येषामरुणा येषां च श्यामा हिता ... „
१०–११ श्यामात्रिवृतयोः उद्धरणविधिः ... „
१२–१३ „ अम्लादिभिर्नव-कल्कयोगाः ... „
१४ „ सैन्धवादिभिर्द्वादश चूर्णयोगाः ... „
१५–१६ „ गोमूत्रेण सहाष्टा-दश योगाः ... ६६३
१७ „ मधुकेनैको योगः „
१८–१९ „ जीवकादिभिश्चतु-र्दश योगाः ... „
२० „ क्षीरादिभिः सप्तयोगाः „
२१–३२ „ अष्टौ लेह्ययोगाः „
३३ „ पानकादिषु पञ्च योगाः „
३४–३५ „ प्रथमस्तर्पणयोगः „
३६–५५ „ पञ्च मोदक-योगाः ६६३–६६४
५६–६० „ षट्सु ऋतुषु षड्योगाः ... ६६४
६१–६४ „ द्वौ चूर्णयोगौ ... „
६५–६६ श्यामात्रिवृतयोः द्वौ तर्पण-योगौ ६६५
६६–६७ „ „ घृतयोगौ ... „
६८ „ „ क्षीरयोगौ ... „
६९–७१ „ „ मद्ययोगौ ... „
७२–७३ „ „ काञ्जिकयोगौ „
७४ „ षाडवादिभिर्दश-योगाः ... „
७५–७६ विरेचनयोगानां वान्ति-निरासार्थमुपायाः ... „
७७–८० अध्यायोक्तविषयाः ... „

## ८ चतुरङ्गुलकल्पः ।

१–२ चतुरङ्गुलकल्पोपक्रमः ... „
३ आरग्वधस्य पर्यायाः ... „
४–५ „ गुणाः ... ६६६
६–७ „ उपयोगविधिः ... „
८–९ „ द्राक्षारसेन एको योगः „
९ „ सुरामण्डेन „ „ „
९ „ सीधुना „ „ „
१० „ दधिमण्डेन „ „ „
१० „ आमलकरसेन „ „ „
१० „ सौवीरकेण „ „ „
११ „ त्रिवृत्कषायेण „ „ „
११ „ बिल्वकषायेण „ „ „
१२ „ एको लेह्ययोगः ... „
१३–१४ „ द्वौ घृतयोगौ ... „
१५ „ एकोऽरिष्टयोगः ... „
१६ „ अनुक्तविरेचन-योगोपदेशः ... „
१७–१८ „ अध्यायोक्तविषयाः „

## ९ तिल्वककल्पः ।

१–२ तिल्वककल्पोपक्रमः ... ६६६
३ तिल्वकस्य पर्यायाः ... „
३–५ „ उपयोगविधिः ६६६–६६७
६ „ दध्यादिभिः पञ्च योगाः ६६७
७ „ एकः सौवीरकयोगः „
८ „ सुरायोगः ... „
९–१० „ „ अरिष्टयोगः ... „
१०–११ „ कम्पिल्लकेन एको योगः „
११–१३ „ त्रयो लेह्ययोगाः ... „
१४–१६ „ चत्वारो घृतयोगाः „
१७–१८ „ अध्यायोक्तार्थसंग्रहः „

## १० सुधाकल्पः ।

१–२ सुधाकल्पोपक्रमः ... ६६७
३ सुधागुणाः „
४ सुधाप्रयोगानर्हा नराः ... „
५–७ सुधाप्रयोगार्हा नराः ... ६६८
७–८ सुधाभेदाः ... „
९ सुधाया उपयोगविधिः ... „
१०–१२ „ सौवीरकादिभिः सप्तयोगाः ... „
१३ „ सर्पिषा मांसरसेन चैकैको योगः ... „
१४ „ एकः पानकयोगः „
१५–१७ „ „ प्रेययोगः ... „
१८ „ „ लेह्ययोगः ... „
१९ „ यूषादिभिस्त्रयो योगाः „
१९ „ शुष्कमत्स्येन एको योगः „
१९ „ मांसेन „ „ „
२० „ एकः सुरायोगः ... „
२० „ द्वौ घृतयोगौ ... „
२१–२२ „ अध्यायोक्तार्थ-संग्रहः ६६८–६६९

## ११ सप्तलाशङ्खिनीकल्पः ।

१–२ सप्तलाशङ्खिनीकल्पोपक्रमः ६६९
३ सप्तलाशङ्खिन्योः पर्यायाः ... „
४ „ गुणाः ... „
५ „ प्राह्यमङ्गं ... „
६–८ „ षोडश कल्कयोगाः „
९–११ „ षट् तैलयोगाः ... „
१२–१६ „ अष्टौ घृतयोगाः ... „
१६ „ त्रयो लेह्ययोगाः ... „
१६ „ कम्पिल्लकेनैको योगः „
१७ „ पञ्च संधानयोगाः „
१८–१९ „ अध्यायोक्तविषयाः ६७०

## १२ दन्तीद्रवन्तीकल्पः ।

१–२ दन्तीद्रवन्तीकल्पोपक्रमः ६७०
३ दन्तीद्रवन्त्योः पर्यायाः ... „
४ „ प्राह्यमङ्गं ... „
५ „ प्रयोगविधिः ... „
६ „ गुणाः ... „
७ „ सप्त कल्कयोगाः ... „
८ „ मांसरसैस्त्रयो योगाः „
९–१० „ त्रयः लेह्ययोगाः „
११–१५ „ षड् लेह्ययोगाः „
१६ „ एकश्चूर्णयोगः ... „

विषयः — पृष्ठाङ्कः

१७ दन्तीद्रवन्त्योः इक्षुणैको योगः ६७०
१८ „ मुद्गादिभिस्त्रयो रसयोगाः ... ६७१
१९ „ त्रयो यवाग्वादियोगाः „
२० „ एक उत्कारिकायोगः „
२१ „ एको मोदकयोगः „
२१ „ „ मद्ययोगः „
२२ „ „ भक्ष्ययोगः „
२३–२६ „ एकोऽपरश्चूर्णयोगः „
२७–२९ „ एको मोदकयोगः „
३० „ „ कषाययोगः „
३१ „ „ कल्कयोगः „
३२–३४ „ पञ्चासवयोगाः „
३५ „ एकैकः सौवीरक-तुषोदकसुरा-कम्पिल्लकयोगः „
३६–४० अध्यायोक्तार्थ-संग्रहः ६७१–६७२
४१–४२ पञ्चदशद्रव्याण्याश्रित्य वमने विरेचने च यावन्तो योगा उक्तास्तन्निर्देशः ६७२
४३ योगसंज्ञा कथं भवति „
४४ गुणभूतानां सुरादीनां फला-दिप्रधानद्रव्यानुवर्तित्वं ... „
४५ तेषां विरुद्धवीर्यत्वेऽप्यबाधकत्वं „
४६ विरुद्धवीर्याणां प्रयोगे हेतुः „
४७–४८ द्रव्याणां बलाधानार्थं स्वर-समावना कार्या ... „
४८ तुल्यातुल्यवीर्यसंयोगादिकार्यं „
४९–५० अत्रोक्तबीजेनान्ययोगा-नामपि कल्पना कार्या „
५१–५३ तीक्ष्णस्य विरेचनस्य लक्षणं ६७२–६७३
५३–५६ कथं भेषजं तीक्ष्णत्वं मध्यत्वं मन्दत्वं च याति ६७३
५७–५८ तीक्ष्णादीनि भेषजानि केषु योज्यानि ... „
५९ आपित्तदर्शनाद्वमनार्थं भेषजं प्रयोज्यं ... „
६० दोषादिबलमवेक्ष्य „ „ „
६१ अन्यद्भेषजं कदा प्रयोज्यं „
६२ वमने पाकप्रतीक्षा किमर्थं न कार्या ... „
६३–६४ कदा पुनः संशोधनौषधं देयं „
६५ यो दुर्बलो बहुदोषश्च दोषपाकेन स्वयमेव विरिच्यते तत्र कर्तव्यं ६७४
६६ दोषशेषशमनोपायः ... „
६७–६९ केषां मृद्वौषधं प्रयोज्यं „
७० यस्य विरेचनमूर्ध्वं याति तस्य चिकित्सा ... „
७१–७२ दोषाप्रवृत्तौ कर्तव्यं ... „
७३ दोषातिप्रवृत्तौ „ „
७४–७५ विरेचनस्यातिक्रमत्वे हेतुः, तच्चिकित्सा च „
७६ जीर्यत्यौषधे यदि तृण्मोह-मूर्च्छाः स्युस्तदा कर्तव्यं „
७७ कफावृते भेषजे यदा लाला-दयः स्युस्तदा चिकित्सा „
७८ सुस्निग्धे क्रूरकोष्ठे च कर्तव्यं „
७९–८० येषामविरिच्यैव भेषजं जीर्यति तेषां चिकित्सा ६७५
८१–८२ येषां संशोधनं विनैव कर्मवातातपाग्निभिर्दोषाः क्षयं यान्ति तेषां कर्तव्यं „
८३ केषां स्निग्धं केषां च रूक्षं विरेचनं प्रयोज्यं ... „
८४–८५ विधिपूर्वकं संशोधनं प्रयोज्यं ... „
८६ अत्रोक्तमात्राविचारः ... „
८७–९७ मानपरिभाषा ... „
९८–९९ द्रव्याणां सद्य उद्धृतानां द्रवाणां च द्विगुणं मानं ग्राह्यं ... ६७६
१००–१०४ स्नेहपाकपरिभाषा „
१०५ मानस्य द्वैविध्यम् ... „
१०६–१०७ कल्पस्थानोक्तार्थसंग्रहः „


## ८ सिद्धिस्थानम्।

### १ कल्पनासिद्धिः।


१–२ कल्पनासिद्ध्युपक्रमः ... ६७७
३–६ पञ्चकर्मकल्पनाविषयेऽग्निवेशस्य कतिपये प्रश्नाः ... „
६–७ स्नेहकर्मणः कालावधिः ... „
७–८ स्नेहस्वेदयोर्गुणाः ... „
८–९ वमने विरेचने च दोषोत्क्लेशन-विधिः ... „
१० वमनविरेचनयोः प्रतिलोमग-मने हेतुः ... „
१०–११ वमनविरेचनयोः कर्तव्यः क्रमः ६७८
११–१३ संशोधनानन्तरं कर्तव्यो-ऽन्नसंसर्जनक्रमः ६७८–६७९
१३–१४ हीनमध्यप्रवरयोर्वमनविरे-चनयोर्लक्षणानि ... ६७९
१५–२० वमनविरेचनयोः सम-हीनातियोगलक्षणानि ६८०
२०–२६ निरूहानुवासन-विधानं ६८०–६८२
२७–४० वस्तेर्गुणाः ६८२–६८३
४०–४६ वस्तेः समहीनातियोग-लक्षणानि ... ६८३
४६–४७ उचितस्नेहप्रत्यागमनकालः „
४७–५० कर्मवस्ति-कालवस्ति-योग-वस्तीनां विवरणं ६८४–६८५
५०–५१ शिरोविरेचनस्य विधिः ६८५
५१–५२ „ समहीनातियोग-लक्षणानि ... „
५३ तेषु चिकित्सा ... „
५४ वस्त्यादिषु परिहारकालः ... „
५४–५५ „ परिहरणीयानि ... ६८६
५५–५६ प्रणीयमानो वस्तिर्यैर्हेतु-भिर्न याति „
५६–५७ „ वस्तिर्यैर्हेतुभिः शीघ्रं सुचिराच्च याति „
५७–६० येषु साध्येष्वपि रोगेषु कर्म न सिद्धिमेति ... „
६० अध्यायोक्तार्थसंग्रहः ... „


### २ पञ्चकर्मीयसिद्धिः।


१–३ पञ्चकर्मीयसिद्ध्युपक्रमः ... ६८७
४–७ सामान्यतः पञ्चकर्मानर्हाः „
८ अच्छर्दनीयाः ... „
९ अच्छर्दनीयानां वमनाद्या व्यापदो भवन्ति ... „
९ तत्रापवादः ... „
१० वमनार्हाः ६८७–६८८
११ अविरेच्याः ... ६८८
१२ तेषां विरेचनाद्या व्यापदो भवन्ति ... „
१३ विरेचनार्हाः ... „
१४ अनास्थाप्याः ... „
१५ तेषामास्थापनाद्या व्यापदो भवन्ति ६८८–६८९
१६ आस्थापनार्हाः ६८९
१७ अनुवासनानर्हाः ... „

| विषयः | पृष्ठाङ्कः |
|---|---|
| १८ तेषामनुवासनाद्या व्यापदो भवन्ति | ... ६८९ |
| १९ अनुवासनार्हाः | ... ,, |
| २० अशिरोविरेचनार्हाः | ... ,, |
| २१ तेषां शिरोविरेचनाद्या व्यापदो भवन्ति | ६८९–६९० |
| २२ शिरोविरेचनार्हाः | ... ६९० |
| २३ कस्मिन्नृतौ कदा नावनं विधेयं | ,, |
| २४ अध्यायोक्तविषयाः | ... ,, |
| २५–२८ उक्तेषु विधिनिषेधेषु वैद्येन स्वयमप्यूहो विधेयः | ,, |

३ वस्तिसूत्रीया सिद्धिः ।

| विषयः | पृष्ठाङ्कः |
|---|---|
| १–२ वस्तिसूत्रीयसिद्ध्युपक्रमः | ६९१ |
| ३–५ वस्तिविषयेऽग्निवेशस्य कतिपयप्रश्नाः | ... ,, |
| ६ किमपेक्ष्य दत्तो वस्तिः सम्यक् सिद्धिमेति | ... ,, |
| ७ यैर्द्रव्यैर्वस्तिनेत्रं विधेयं | ... ,, |
| ८–१० वस्तिनेत्रप्रमाणं वस्तिनेत्राकृतिश्च | ... ,, |
| १०–११ वस्तियन्त्रनिर्माणविधिः | ६९२ |
| १२ वस्त्यलाभेऽनुकल्पविधिः | ... ,, |
| १२–२० वस्तिप्रयोगविधिः | ... ,, |
| २०–२३ असम्यक्प्रणीते वस्तौ व्यापदः | ... ६९३ |
| २३ वस्तौ द्रव्यनिक्षेपक्रमः | ... ,, |
| २४ सव्यंशयानस्य वस्तिदाने हेतुः | ,, |
| २५ वस्तिदानसमये आवस्थिकं कर्म | ,, |
| २६ प्रथमद्वितीयतृतीयवस्तीनां फलं | ,, |
| २७ प्रत्यागते वस्तौ पश्चात्कर्म | ... ६९४ |
| २८–२९ निरूहानन्तरमनुवासनं देयं | ,, |
| ३० निरूहे कषायस्नेहयोर्मात्रा | ,, |
| ३१–३२ वयोभेदेन निरूहमात्राः | ६९५ |
| ३३ वस्तिदानसमये प्रशस्तं शयनं | ,, |
| ३४ वस्तिदानानन्तरं देयं भोजनं | ,, |
| ३५–६८ कतिपये निरूहयोगाः | ६९५–६९८ |
| ६९ दोषापेक्षिणी निरूहकल्पना | ६९८ |
| ७० निरूहे प्रतिभोजनं | ... ,, |
| ७१ अध्यायोक्तविषयाः | ... ,, |

४ स्नेहव्यापदिकी सिद्धिः ।

| विषयः | पृष्ठाङ्कः |
|---|---|
| १–३ स्नेहवस्तिव्यापत्सिद्ध्युपक्रमः | ... ६९८ |
| ४–२४ कतिपयेऽनुवासनस्नेहयोगाः | ६९८–६९९ |
| २५ स्नेहवस्तेः षडापदः | ... ६९९ |
| २६–२७ षड्व्यापदां हेतुः | ,, |
| २८–३० वातावृतस्नेहस्य लक्षणं चिकित्सा च | ६९९–७०० |
| ३१ पित्तावृतस्नेहस्य ,, ,, | ७०० |
| ३२–३३ कफावृतस्नेहस्य,, ,, | ,, |
| ३४–३५ अत्यशनावृतस्नेहस्य ,, ,, | ,, |
| ३६–३७ विडावृतस्नेहस्य,, ,, | ,, |
| ३८–४० ऊर्ध्वं गच्छतः स्नेहस्य लक्षणं चिकित्सा च | ... ,, |
| ४१ रौक्ष्यादनागतः स्नेह उपेक्ष्यः | ,, |
| ४२ अनुवासनात् पूर्वं कीदृशं भोजनं देयं | ... ,, |
| ४३–४५ अनुवासितायोष्णं जलं देयं, तद्गुणाश्च | ... ,, |
| ४६–४७ के नित्यमनुवास्याः | ... ७०१ |
| ४८ अनुवासने आमस्नेहनिषेधः | ,, |
| ४९ गुदकण्ठाभ्यां युगपत्स्नेहदाननिषेधः | ... ,, |
| ५०–५१ अनुवासननिरूहयोरेकान्ततः सेवननिषेधः | ... ,, |
| ५२ केषां मात्रावस्तिर्हितः | ... ,, |
| ५३–५४ मात्रावस्तेर्गुणाः | ... ,, |
| ५५–५६ अध्यायोक्तार्थसंग्रहः | ,, |

५ नेत्रवस्तिव्यापदिकी सिद्धिः ।

| विषयः | पृष्ठाङ्कः |
|---|---|
| १–३ नेत्रवस्तिव्यापत्सिद्ध्युपक्रमः | ७०१–७०२ |
| ३–५ वर्ज्यानि वस्तिनेत्राणि, तेषां दोषाश्च | ... ७०२ |
| ६–७ वर्ज्या वस्तयः, तेषां दोषाश्च | ,, |
| ८ वस्तिप्रणेतुर्दोषाः | ... ,, |
| ९ अनुच्छ्वास्य दत्ते निःशेषं वा दत्ते वस्तौ दोषाः | ... ,, |
| १० तत्र चिकित्सा | ... ,, |
| १०–११ द्रुतप्रणीतादिवस्तिदोषाः, तेषां चिकित्सा च | ... ,, |
| १२ वस्तेरूर्ध्वमगमने हेतुः, तच्चिकित्सा च | ... ,, |
| १३–१४ पीड्यमाने वस्त्यावन्तरा मुक्ते दोषाः, तच्चिकित्सा च | ७०२ |
| १४ नेत्रकम्पनाभिहते गुदे दोषाः, तच्चिकित्सा च | ,, |
| १५–१६ अतिमात्रप्रणीतनेत्रदोषाः, तच्चिकित्सा च | ... ,, |
| १७ मन्दं प्रणीते बाह्ये वा स्नेहे दोषाः, तच्चिकित्सा च | ... ७०३ |
| १८ अतिप्रपीडनदोषाः, तच्चिकित्सा च | ... ,, |
| १९ अध्यायोक्तविषयाः | ... ,, |

६ वमनविरेचनव्यापत्सिद्धिः ।

| विषयः | पृष्ठाङ्कः |
|---|---|
| १–३ वमनविरेचनव्यापत्सिद्ध्युपक्रमः | ... ७०३ |
| ४–६ साधारणेषु प्रावृड्शरद्वसन्तेषु संशोधनोपदेशः | ... ,, |
| ७ वमनादीनामादौ अन्तरा अन्ते च स्नेहस्वेदप्रयोगः | ... ७०४ |
| ८ कान् नातिस्निग्धान् विरेचयेत् | ,, |
| ९ केषां स्नेहविरेचनं केषां च रूक्षं विरेचनं देयं | ... ,, |
| १०–१३ कथं पीतमौषधं सम्यग्योगाय कल्पते | ... ,, |
| १४ अजीर्णस्य संशोधनौषधस्य लिङ्गानि | ... ,, |
| १५–१६ मात्रावतः संशोधनौषधस्य गुणाः | ... ,, |
| १७ कथंभूतमना औषधं पिबेत् | |
| १८–१९ श्वो वमनं पाता किं भुञ्जीत | ,, |
| १९–२० सम्यक्शुद्धस्य लिङ्गानि | ७०५ |
| २१ शुद्धिलक्षणदर्शनेऽपि सावशेषौषधे वमनोपदेशः | ... ,, |
| २२ यथोक्तवमनफलम् | ... ,, |
| २३ सम्यग्वमितस्य पश्चात्कर्म | ,, |
| २४ पेयादिक्रमाचरणे हेतुः | ... ,, |
| २५ तर्पणादिक्रमः कुत्र योज्यः | ,, |
| २६ जीर्णौषधस्य लिङ्गानि | ... ,, |
| २७ अजीर्णौषधस्य ,, | ... ,, |
| २८ कथंभूतमौषधं व्याप्यते | ... ,, |
| २९–३० वमनविरेचनयोर्दश व्यापदः | ,, |
| ३१–३४ वमनविरेचनयोर्योगातियोगायोगानां लक्षणम् | ... ७०६ |

विषयः पृष्ठाङ्कः

३५–३६ पीतेऽप्यौषधेऽशुद्धस्य कर्तव्यम् ... ७०६
३७ दुर्वमने वमनं क्रूरकोष्ठे विरेचनं च न देयम् ... ,,
३८–४१ अयोगजन्या व्यापदः ,,
४२–४४ तत्र चिकित्सा ... ,,
४५–४६ अतियोगजन्या व्यापदः ,,
४६–५७ तासां चिकित्सा ७०६–७०७
५८–६० आध्मानव्यापदः वर्णनं चिकित्सा च ७०७
६१–६७ परिकर्तिकाव्यापदः ,, ,, ,,
६८–७० परिस्राव-व्यापदः ,, ,, ७०७–७०८
७१–७५ हृद्ग्रहव्यापदः ,, ,, ७०८
७६–७७ अङ्गग्रहव्यापदः ,, ,, ,,
७८–८४ जीवादानव्यापदः ,, ,, ,,
८५–८७ विभ्रंशव्यापदः ,, ,, ,,
८८–८९ स्तम्भव्यापदः ,, ,, ७०९
९०–९१ उपद्रवाख्यव्यापदः ,, ,, ,,
९२–९३ क्लमाख्यव्यापदः ,, ,, ,,
९४–९५ अध्यायोक्तविषयसंग्रहः ,,

७ वस्तिव्यापत्सिद्धिः ।

१–४ वस्तिव्यापत्सिद्ध्युपक्रमः ७०९
५–६ बस्त्यसम्यग्योगजन्यद्वादश-व्यापदां निर्देशः ... ,,
७–११ अयोगव्यापदः वर्णनं चिकित्सा च ७०९–७१०
१२–१४ अतियोगव्यापदः ,, ,, ७१०
१५–२० क्लमाख्यव्यापदः ,, ,, ,,
२१–२६ आध्मानव्यापदः ,, ,, ,,
२७–२९ हिक्काव्यापदः ,, ,, ,,
३०–३१ हृत्प्राप्तिव्यापदः ,, ,, ७११
३२–३९ ऊर्ध्वताख्यव्यापदः ,, ,, ,,
४०–४२ प्रवाहिकाव्यापदः ,, ,, ,,
४३–४६ शिरःशूलव्यापदः ,, ,, ,,
४७–५३ अङ्गशूल-व्यापदः ,, ,, ७११–७१२
५४–५७ परिकर्तिकाव्यापदः ,, ,, ७१२
५८–६२ परिस्रवव्यापदः ,, ,, ,,
६३ बस्तेर्मृदुत्वं तीक्ष्णत्वं च कथं विधेयं ... ,,
६४–६५ बस्तेः सर्वशरीरमलहरत्वे दृष्टान्तद्वयम् ... ,,
६६ अध्यायोक्तार्थसंग्रहः ... ,,

विषयः पृष्ठाङ्कः

८ प्रासृतयोगिका सिद्धिः ।

१–३ प्रासृतयोगिकीसिद्ध्युपक्रमः ७१३
४ वातघ्नो बलवर्णकृच्च निरूहः ,,
५ वातनुन्निरूहः ... ,,
६ द्वितीयो वातनुन्निरूहः ... ,,
७ शुक्रकृन्निरूहः ... ,,
८ पञ्चतिक्तो निरूहः ... ,,
९–१० क्रिमिनाशनो ,, ... ,,
११ वृषलकृत् ,, ... ,,
१२ भेदनः ,, ... ,,
१३–१४ मूत्रकृच्छ्रहृत् ,, ... ,,
१५ मृदुवस्तिजडीभूते तीक्ष्णो निरूहः ... ,,
१५ तीक्ष्णवस्तिविकर्षिते प्रत्या-स्थापनम् ... ,,
१६–१७ गुददाहादौ द्राक्षादियोगः ,,
१७ वस्तिशुद्धस्य यवागूविधानं ,,
१८ क्षीणविट्कस्य चिकित्सा ... ,,
१९–२१ अतिसारस्य षट्त्रिं-शद्भेदाः ७१४
२२ अतिसारोपद्रवाः ... ,,
२३–३३ तेषां नाशना योगाः ,,
३४ अतिसारोक्तक्रमस्यान्यत्रा-प्यतिदेशः ... ,,
३५ आमादिषट्कसंसर्गचिकित्सा ७१५
३६–३७ अतिसारहरं घृतं ... ,,
३८–४२ अतिसारहरा यवागवः ,,
४३–४५ अतिसारचिकित्सासूत्रं ,,
४६ अध्यायोक्तविषयाः ... ,,

९ त्रिमर्मीया सिद्धिः ।

१–२ त्रिमर्मीयसिद्ध्युपक्रमः ... ७१६
३ मर्मणां संख्या ... ,,
३ तत्र त्रयाणां प्राधान्यं ... ,,
४ प्रधानमर्मणां हृदयशिरो-बस्तीनां वर्णनम् ... ,,
५ प्रधानमर्मणामुपघाते सामान्य-लक्षणानि ... ,,
६ ,, विशेषलक्षणानि ... ७१७
७ सर्वाणि मर्माणि वाताद्विशे-षतो रक्ष्याणि ... ,,
८ वातोपहतेषु मर्मसु चिकित्सा ७१७–७१८
९–१० मर्मणां परिपालनं कथं कर्तव्यं ... ७१८

विषयः पृष्ठाङ्कः

११–२० अपतन्त्रकस्य निदानलक्षण-चिकित्सितानि ... ७१८
२१–२४ तन्द्राया निदानलक्षण-चिकित्सितानि ... ७१९
२५–२६ त्रयोदशमूत्रदोषाणां नामतो निर्देशः ... ,,
२७–२८ मूत्रौकसादस्य निदान-लक्षणचिकित्सितानि ... ,,
२९–३१ मूत्रजठरस्य ,, ... ,,
३२ मूत्रकृच्छ्रस्य निदानलक्षणे... ,,
३३–३४ मूत्रोत्सङ्गस्य ,, ... ,,
३४ मूत्रसंक्षयस्य ,, ... ,,
३५ मूत्रातीतस्य ,, ... ,,
३६ मूत्राष्ठीलायाः ,, ... ,,
३७ वातवस्तेः ,, ... ,,
३८ उष्णवातस्य ,, ... ,,
३९–४० वातकुण्डलिकायाः ,, ,,
४१–४२ रक्तग्रन्थेः ,, ... ,,
४२–४३ विड्विघातस्य ,, ... ,,
४४–४९ वस्तिकुण्डलस्य ,, ... ,,
४९–५० मूत्राघातानां चिकित्सा ७२०
५०–६१ उत्तरबस्तेर्विधिः ... ,,
६२–७० स्त्रीणामुत्तरवस्तिदाने विशेषः ७२०–७२१
७०–७३ शङ्खकस्य निदानलक्षण-चिकित्सितानि ... ७२१
७४–७८ अर्धावभेदकस्य ,, ... ,,
७९–८३ सूर्यावर्तकस्य ,, ७२१–७२२
८४–८६ अनन्तवातस्य ,, ... ७२२
८६–८७ शिरःकम्पस्य ,, ... ,,
८८ नस्तःकर्मगुणाः ... ,,
८९–९२ नस्यकर्मभेदाः ... ,,
९३–९५ नस्यकर्म केषु रोगेषु कार्यं ,,
९६ विरेचनं नस्यं कैर्द्रव्यैः कल्पनीयं ७२३
९७ तर्पणं ,, ,, ,, ,,
९८–१०७ अवपीडनस्य दानविधिः ,,
१०७–१०८ प्रधमापनस्य प्रयोगविधिः ,,
१०९–११५ नस्यकर्मणो व्यापदः, तच्चिकित्सा च ... ,,
११६ प्रतिमर्शगुणाः ... ,,
११८ प्रतिमर्शप्रयोगविधिः ... ,,
११८–११९ अध्यायोक्तविषयाः ७२४

| विषयः | पृष्ठाङ्कः |
|---|---|
| **१० वस्तिसिद्धिः ।** | |
| १–३ वस्तिसिद्ध्युपक्रमः ... | ७२४ |
| ४ वयआदीन् प्रविभज्य दत्तो बस्तिः | |
| ४ सर्वरोगान्निवर्तयति ... | ,, |
| ५ वस्तेर्गुणाः ... | ,, |
| ६–८ विरेचनाद्यपेक्षया वस्तेः श्रेष्ठत्वप्रतिपादनम् ... | ,, |
| ८ वस्तेर्भेदाः ... | ,, |
| ९–१० कुत्र कीदृशो वस्तिर्योज्यः | ,, |
| ११ बृंहणीयवस्त्यनर्हाः ... | ,, |
| १२ शोधनीयवस्त्यनर्हाः ... | ,, |
| १३–१७ कार्यविशेषापेक्षया बस्तीनां संस्कारविशेषः ... | ७२५ |
| १८–२० वातरोगे शस्ताः त्रयो वस्तयः | ,, |
| २१–२२ पित्तरोगे ,, ,, ,, | ,, |
| २३–२४ कफरोगे ,, ,, ,, | ,, |
| २५–२७ पक्वाशयशोधनाश्चत्वारो,, | ,, |
| २८–२९ शुक्रमांसदाश्चत्वारो ,, | ७२६ |
| ३०–३१ सांग्राहिकाश्चत्वारो ,, | ,, |
| ३२ परिस्रवे द्वौ वस्ती ... | ,, |
| ३३ दाहे एको वस्तिः ... | ,, |
| ३४–३५ परिकर्ते द्वौ वस्ती ... | ,, |
| ३६ प्रवाहणे,, ,, ... | ,, |
| ३७–३८ अतियोगे,, ,, ... | ,, |
| ३८–४२ जीवादाने वस्तयः ... | ,, |
| ४३ रक्तपित्ते प्रमेहे च वस्तिः... | ,, |
| ४४–४८ अध्यायोक्तविषयाः ... | ,, |
| **११ फलमात्रासिद्धिः ।** | |
| १–२ फलमात्रासिद्ध्युपक्रमः ... | ७२७ |
| ३–१० आस्थापने कतमत्फलं श्रेष्ठमित्यत्र मुनीनां मतानि | ,, |
| ११–१४ तत्रात्रेयकृतो निश्चयः | ,, |
| १५–१६ गुदगतो वस्तिः सर्वशरीरस्थान् दोषान् कथमपहरतीत्यग्निवेशप्रश्नः ... | ७२८ |
| १७–१८ तत्रात्रेयकृतं समाधानं | ,, |
| १९–२६ पशूनां बस्तिकर्मविधिः | ,, |
| २७ सदातुरा नराः ... | ७२९ |
| २८–३६ तेषां सदातुरत्वे हेतुः चिकित्सा च ... | ,, |
| ३७ अध्यायोक्तविषयाः ... | ,, |
| **१२ उत्तरवस्तिसिद्धिः ।** | |
| १–२ उत्तरबस्तिसिद्ध्युपक्रमः ... | ७२९ |
| ३–५ वमनादिभिः शुद्ध आतुरो यथा परिपालनीयः ... | ७३० |
| ६–८ तस्याग्निसंधुक्षणार्थं पेयादिक्रमः | ,, |
| ९ प्रकृतिमापन्नस्य लक्षणानि | ,, |
| १०–१२ प्रकृतिमप्राप्तस्य वर्ज्यानि | ,, |
| १३ तेषां विस्तरतो व्याख्यानप्रतिज्ञा | ,, |
| १४(१) उच्चैर्भाष्यातिभाष्यजा व्यापदः | ,, |
| १४(२) रथक्षोभजा ,, | ,, |
| १४(३) अतिचङ्क्रमणजा ,, | ७३१ |
| १४(४) अत्याशनजा ,, | ,, |
| १४(५) अजीर्णाध्यशनजा ,, | ,, |
| १४(६) विषमाशनजा ,, | ,, |
| १४(७) दिवास्वप्नजा ,, | ,, |
| १४(८) व्यवायजा ,, | ,, |
| १५ पूर्वोक्तव्यापदां चिकित्सा ... | ,, |
| १६(१) मुस्ताद्यो यापनबस्तिः... | ,, |
| १६(२) एरण्डमूलाद्यः,, | ७३१–७३२ |
| १६(३) सहचराद्यः ,, ... | ७३२ |
| १६(४) बृहत्याद्यः ,, | ,, |
| १६(५–६) बलाद्यौ यापनवस्ती | ,, |
| १६(७) हपुषाद्यः यापनबस्तिः | ,, |
| १६(८) लघुपञ्चमूलाद्यः ,, | |
| १६(९) द्वितीयो बलाद्यः ,, ... | ,, |
| १६(१०) तृतीयो ,, ,, ... | ,, |
| १६(११) शालिपर्ण्याद्यो यापनबस्तिः | ,, |
| १६ स्थिराद्यो यापनबस्तिः ... | ७३२ |
| १७ शिखिगोनर्दादिषु पूर्वोक्तकल्पातिदेशः | ,, |
| १८(१) तित्तिर्याद्यो यापनबस्तिः | ,, |
| १८(२) द्विपञ्चमूलाद्यो ,, ... | ,, |
| १८(३) मयूराद्यो ,, ... | ,, |
| १८(४) विष्किरादिषु पूर्वोक्तकल्पातिदेशः | ७३३ |
| १८(५) गोधाद्यो यापनबस्तिः | ,, |
| १८(६) कूर्माद्यो ,, ... | ,, |
| १८(७) कर्कटरसाद्यः ,, ... | ,, |
| १८(८) गोक्षुराद्यो ,, ... | ,, |
| १८(९) दशमूलाद्यो ,, ... | ,, |
| १८(१०) मृगादिषु पूर्वोक्तकल्पातिदेशः | ,, |
| १८(११) मध्वाद्यो यापनबस्तिः | ,, |
| १८(१२) सद्योघृताद्यः ,, | ,, |
| १८(१३) मधुतैलाद्यः ,, | ,, |
| १८(१४–१५) मधुघृताद्यौ यापनवस्ती | ,, |
| १८(१६) सुराद्यो यापनबस्तिः | ,, |
| १८ द्विपञ्चमूलाद्यो ,, ... | ,, |
| १९ वृष्यतमाः स्नेहवस्तयः | ७३३–७३४ |
| २०–२२ पूर्वोक्तवस्तीनां गुणाः | ७३४ |
| २३ तत्र वर्ज्यानि ... | ,, |
| २४२५ अध्यायोक्तविषयाः ... | ,, |
| २९–३० यापनावस्त्यप्रवृत्तौ कर्तव्यं | ७३५ |
| ३० यापनावस्तेरतिसेवने दोषाः | ,, |
| ३१–३२ तत्र चिकित्सा ... | ,, |
| ३३ सिद्धिस्थाननिरुक्तिः ... | ,, |
| ३४–३५ एतत्तन्त्रपठनफलं ... | ,, |
| ३६ प्रतिसंस्कर्तुः कर्म ... | ,, |
| ३७–४१ चरकदृढबलाभ्यां कृतोऽग्निवेशतन्त्रप्रतिसंस्कारः | ,, |
| ४१–४५ षट्त्रिंशत्तन्त्रयुक्तिनिरूपणं | ७३६ |
| ४५–६० तन्त्रयुक्तिज्ञानफलं ... | ७३७ |
| ५१–५५ एतच्छास्त्रज्ञानफलम् | ७३७–७३८ |




# चरकतन्त्रे निर्दिष्टानां महर्षीणां नामानि तत्स्थानोल्लेखश्च ।

अङ्गिराः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४ इत्यत्र ।

जमदग्निः सू. स्था. अ. १ इत्यत्र ।

वसिष्ठः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४ इत्यत्र ।

कश्यपः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४ इत्यत्र ।

भृगुः[1] सू. स्था. अ. १; चि. स्था. अ. १, पा. ४; सि. स्था. अ. ११ इत्यत्र ।

आत्रेयः[2] ( पुनर्वसुः ) सू. स्था. अ. १; सू. स्था. अ. १२; सू. स्था. अ. २५; सू. स्था. अ. २६; शा. स्था. अ. ३ इत्यादौ ।

गौतमः[3] सांख्यः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४; सि. स्था. अ. ११ इत्यत्र ।

पुलस्त्यः सू. स्था. अ. १; चि. स्था. अ. १. पा. ४; सि. स्था. अ. ११ इत्यत्र ।

नारदः सू. स्था अ. १ इत्यत्र ।

असितः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४; सि. स्था. अ. ११ इत्यत्र ।

अगस्त्यः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४ इत्यत्र ।

वामदेवः सू. स्था. अ. १; चि. स्था. अ. १, पा. ४ इत्यत्र

मार्कण्डेयः सू. स्था. अ. १ इत्यत्र ।

आश्वलायनः सू. स्था. अ. १ इत्यत्र ।

पारि(री)क्षिः ( मौद्गल्यः ) सू. स्था. अ. १; सू. स्था. अ. २५ इत्यत्र ।

भिक्षुरात्रेयः[4] सू. स्था. अ. १; सू. स्था. अ. २५ इत्यत्र ।

भरद्वाजः[5] सू. स्था. अ. १ इत्यत्र ।

कपिञ्जलः ( कपिष्ठलः ) सू. स्था. अ. १. इत्यत्र ।

विश्वामित्रः सू. स्था. अ. १. इत्यत्र ।

आश्वरथ्यः सू. स्था. १. इत्यत्र ।

भार्गवश्च्यवनः सू. स्था. अ. १; चि. स्था. अ. १. पा. १ इत्यत्र ।

अभिजित् सू. स्था. अ. १ इत्यत्र ।

गार्ग्यः सू. स्था. अ. १. इत्यत्र ।

शाण्डिल्यः सू. स्था. अ. १ इत्यत्र ।

कौण्डिन्यः सू. स्था. अ. १ इत्यत्र ।

वार्क्षिः सू. स्था. अ. १ इत्यत्र

देवलः सू. स्था. अ. १ इत्यत्र ।

गालवः सू. स्था. अ. १. इत्यत्र ।

साङ्कृत्यः सू. स्था. अ. १ इत्यत्र ।

वैजवापिः सू. स्था. अ. १ इत्यत्र ।

कुशिकः सू. स्था. अ. १ इत्यत्र ।

बादरायणः सू. स्था. अ. १ इत्यत्र ।

बडिशः ( धामार्गवः ) सू. स्था. अ. १; सू. स्था. अ. १२; सू. स्था. अ. २६; शा. स्था. अ. ६; सि. स्था. अ. ११ इत्यत्र ।

शरलोमा सू. स्था. अ. १; सू. स्था. अ. २५ इत्यत्र ।

काप्यः सू. स्था. अ. १; सू. स्था. अ. १२; सि. स्था. अ. ११ इत्यत्र ।

कात्यायनः सू. स्था. अ. १ इत्यत्र ।

काङ्कायनः ( वाह्लीकभिषक् ) सू. स्था. अ. १; सू. स्था. अ. १२; सू. स्था. अ. २५; सू. स्था. अ. २६; शा. स्था. अ. ६ इत्यत्र ।

कैकशेयः सू. स्था. अ. १ इत्यत्र ।

धौम्यः सू. स्था. अ. १ इत्यत्र ।

मारीचिः[1] का(क) श्यपः सू. स्था. अ. १; सू. स्था. अ. १२; शा. स्था. अ. ६ इत्यत्र ।

शर्कराक्षः सू. स्था. अ. १ इत्यत्र ।

हिरण्याक्षः ( कुशिकः ) सू. स्था. अ. १; सू. स्था. अ. २५; सू. स्था. अ. २६ इत्यत्र ।

---

१. गङ्गाधरस्तु 'काश्यपो भृगुः' इति पठित्वा 'कश्यपगोत्रो भृगुर्नाम ऋषिः, न तु सप्तर्षिषु भृगुर्नाम यः' इति व्याख्याति । २. 'आत्रेयोऽत्र कृष्णात्रिपुत्रः पुनर्वसुः' इति गङ्गाधरः । पुनर्वसुः कृष्णात्रेयनाम्ना निर्दिष्टः सूत्रस्थानस्यैकादशेऽध्याये अध्यायोक्तार्थसङ्ग्रहे 'त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता' इति । ३. गौतमः सांख्य इति बौद्धविशेषगौतमव्यावृत्तये सांख्य इति, इति गङ्गाधरः । 'सांख्यशब्देन सांख्यदर्शनकृत् कपिल उच्यते' इति योगीन्द्रनाथसेनः । ४. 'भिक्षुरिति आत्रेयविशेषणं, पुनर्वसुतो भिन्नोऽयं भिक्षुरात्रेयः' इति योगीन्द्रनाथसेनः । ५. 'भरद्वाजः कपिष्ठलः न तु कुमारशिरःप्रभृतिर्भरद्वाजः' इति गङ्गाधरः ।

१. 'वर्तमानप्रतिषु 'मारीचिकाश्यपौ' इति, 'मारिचकाश्यपौ' इति वा द्विवचनान्तः पाठ उपलभ्यते । शारीरस्थाने षष्ठेऽध्याये 'बुद्धिपरोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः' इति कश्यपविशेषणतया मारीचिशब्दः पठ्यते ।

लौगाक्षः ( लोकाक्षः ) सू. स्था. अ. १ इत्यत्र ।

पैङ्गिः सू. स्था. अ. १ इत्यत्र ।

शौनकः सू. स्था. अ. १; सू. स्था अ. २५; सि. स्था. अ. ११ इत्यत्र ।

शाकुनेयः सू. स्था. अ. १ इत्यत्र ।

मैत्रेयः मैमतायानिः सू. स्था. अ. १; सू. स्था. अ. १० इत्यत्र ।

वैखानसाः सू. स्था. अ. १; चि. स्था. अ. १, पा. १ इत्यत्र ।

वालखिल्याः सू. स्था. अ. १; चि. स्था. अ. १, पा. १ इत्यत्र ।

भद्रशौनकः शा. स्था. अ. ६; सि. स्था. अ. ११ इत्यत्र ।

कुशः साङ्कृत्यायनः सू. स्था. अ. १२ इत्यत्र ।

कुमारशिरा भरद्वाजः सू. स्था. अ. १२; सू. स्था. अ. २६; शा. स्था. अ. ६ इत्यत्र ।

वार्योविदो राजर्षिः सू. स्था. अ. १२; सू. स्था. अ. २५; सू. स्था. अ. २६ इत्यत्र ।

वामकः ( काशिपतिः ) सू. स्था. अ. २५; सि. स्था. अ. ११ इत्यत्र ।

शाकुन्तेयो ब्राह्मणः सू. स्था. अ. २६ इत्यत्र ।

पूर्णाक्षो मौद्गल्यः सू. स्था. अ. २६ इत्यत्र ।

निमिर्वैदेहः सू. स्था. अ. २६ इत्यत्र ।

भद्रकाप्यः सू. स्था. अ. २५; सू. स्था. अ. २६; शा. स्था. अ. ६ इत्यत्र ।

भरद्वाजः सू. स्था. अ. २५; शा. स्था. अ. ३ इत्यत्र ।

धन्वन्तरिः शा. स्था. अ. ६ इत्यत्र ।

अत्रिः चि. स्था. अ. १. पा. ४ इत्यत्र ।

जनको वैदेहः शा. स्था. अ. ६ इत्यत्र ।

कौशिकः सि. स्था. अ. ११ इत्यत्र ।



# चरकसंहिताव्याख्यायामायुर्वेददीपिकायां श्रीचक्रपाणिदत्तेन प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां चैकद्विस्थानोल्लेखपूर्वकं नामानि।

व्याकरणमहाभाष्यम् २(पृष्ठं)-१(पार्श्वं)-३७(पंक्तिः) इत्यत्र।
वैशेषिकसूत्रम् २-१-३८; ९-१-२९ इत्यादौ।
पाणिनीयव्याकरणम् २-२-१५; ३-१-६ इत्यादौ।
सुश्रुतः (शल्यतन्त्रप्रणेता) ३-२-२६; १६-१-९ इत्यादौ।
जतूकर्णः (कायचिकित्सातन्त्रप्रणेता) ३-२-४०; ९-२-२९; २६-२-२४ इत्यादौ।
हरिवंशः (महाभारतस्य खिलपर्व) ४-१-८ इत्यत्र।
व्यासः (महाभारतपुराणादिकर्ता) ४-२-१६; २४३-१-२२ इत्यादौ।
हारीतः (कायचिकित्सातन्त्रकर्ता) ७-२-३५; २०-२-१; ११८-२-२६ इत्यादौ।
वाग्भटः (अष्टाङ्गसंग्रहाष्टाङ्गहृदययोः कर्ता) ७-२-३८; १९-१-१ इत्यादौ।
भट्टारहरिचन्द्रः (चरकव्याख्याकारः) १०-२-८; ५३-२-२८ इत्यादौ।
मनुस्मृतिः (धर्मशास्त्रम्) १२-१-२४ इत्यत्र।
न्यायदर्शनम् १२-२-१; २६७-२-३० इत्यादौ।
पदार्थधर्मसंग्रहः (वैशेषिकम्) १३-१-११ इत्यत्र।
अगस्त्यः (कायचिकित्सातन्त्रकारः) १७-२-२० इत्यत्र।
शालाक्यम् (विदेहप्रणीतम्) २४-२-६; ३७-२-४०; ३९-१-२५ इत्यादौ।
अग्निवेशः (कायचिकित्सातन्त्रकारः) २६-१-४; ४१४-२-१६; ४५३-२-१७; ४३२-१-६ इत्यादौ।
सूदशास्त्रम् (पाकशास्त्रम्) २६-१-२०; १८९-१-७ इत्यादौ।
शौनकः ३१-१-२६; ४१७-२-२१ इत्यादौ।
हस्तिवैद्यकं (पालकाप्यप्रणीतम्) ४६-१-२४ इत्यत्र।
अश्ववैद्यकम् ५२-२-३२ इत्यत्र।
कपिलबलः (कायचिकित्सातन्त्रप्रणेता) ५३-२-२६ इत्यत्र।
क्षारपाणिः (कायचिकित्सातन्त्रप्रणेता) ५८-२-२५; ११८-२-२३ इत्यादौ।
शान्तिरक्षितः (तत्त्वसंग्रहकारः) ७२-१-२३ इत्यत्र।
कमलशीलः (तत्त्वसंग्रहव्याख्याकारः) ७२-१-२८ इत्यत्र।
चन्द्रिका (चरकव्याख्या) १६१-२-७ इत्यत्र।
विश्वामित्रः १६४-२-८; ४३९-२-३२ इत्यादौ।
नलः (पाकशास्त्रप्रणेता) १६८-२-३५ इत्यत्र।
विशाखी (नाट्यशास्त्रकारः) २२३-२-३३ इत्यत्र।
काश्यपः २८१-१-३४
सांख्यकारिका २८८-१-१२; २९०-१-१२ इत्यादौ।
निघण्टुः ३५४-१-१७ इत्यादौ।
वराहमिहिरः (बृहत्संहिताप्रणेता) ३७४-१-३१ इत्यादौ।
भरतः (नाट्यशास्त्रप्रणेता) ३९१-१-९ इत्यत्र।
खरनादः (कायचिकित्सातन्त्रकारः) ४०५-१-३०; ४०८-२-३४ इत्यादौ।
दारुवाहः ४०५-१-३४ इत्यत्र।
भालुकिः (शल्यतन्त्रकारः) ४०७-१-२०; ४०७-१-३१ इत्यत्र।
काश्मीराः ४०८-१-८; ५९४-१-६
पुष्कलावतः (शल्यतन्त्रप्रणेता) ४१२-१-१५; ४९०-२-२७; ५५६-२-२६ इत्यादौ।
अग्निवेशसंहिता (कायचिकित्साग्रन्थः) ४१४-२-१८ इत्यत्र।
कृष्णात्रेयः ४१६-१-३१; ४१७-२-१६ इत्यत्र।
दारुकः ४१६-२-३२ इत्यत्र।
आत्रेयः (कायचिकित्सातन्त्रकारः) ४१७-१-६ इत्यत्र।
चक्षुष्येणः ४५३-२-२० इत्यत्र।
आषाढवर्मा (चरकव्याख्याकारः) ४१९-१-२०; ५७७-२-२८; ६७३-२-२७ इत्यत्र।
भासदत्तः (चरकव्याख्याकारः) ४१९-१-२० इत्यत्र।
स्वामिदासः (चरकव्याख्याकारः) ४१९-१-२० इत्यत्र।
ब्रह्मदेवः (चरकव्याख्याकारः) ४१९-१-२१ इत्यत्र।
भेलः (कायचिकित्सातन्त्रप्रणेता) ४२४-२-३२ इत्यत्र।
क्षीरस्वामिदत्तः (चरकवार्तिककारः) ४३४-१-१४ इत्यत्र।
भीमदत्तः। (चरकव्याख्याकारः) ४७७-१-३२ इत्यत्र।
चरककाश्मीरपाठः ४९७-१-२६; ८२-२-२७ इत्यत्र।
पराशरः (कायचिकित्सातन्त्रकारः) ५१६-१-३; ६८३-१-११ इत्यादौ।
भोजः (शल्यतन्त्रप्रणेता) ५१५-१-५; ५१९-२-२५ इत्यादौ।
ईश्वरसेनः (चरकव्याख्याकारः) ५१९-२-२७; ६८०-२-३५ (सि. स्था.) इत्यत्र।
वृद्धकाश्यपः (अगदतन्त्रकारः) ५७१-२-२६ इत्यत्र।
काश्यपः (अगदतन्त्रकारः) ५७३-१-२५ इत्यत्र।
परिहारवार्तिकम् ५७७-२-३३; ५८५-२-३४ इत्यत्र।
करालः (शालाक्यतन्त्रप्रणेता) ६०६-२-१ इत्यत्र।
सात्यकिः (शालाक्यतन्त्रकारः) ६०६-२-१ इत्यत्र।
विदेहः (शालाक्यतन्त्रप्रणेता) ६०६-१-३९; ६०७-१-१८ इत्यत्र।
गन्धशास्त्रम् ६२३-२-२० इत्यत्र।
भरद्वाजः ६७७-१-३३ इत्यत्र।
भद्रशौनकः ६८०-२-३१ इत्यत्र।
अङ्गिरिः (चरकव्याख्याकारः) ६८०-२-३४ इत्यत्र।
सैन्धवः (चरकटीकाकारः) ६८०-२-३५ इत्यत्र।
जेज्जटः (चरक-सुश्रुतव्याख्याकारः) ६८०-२-३५ इत्यत्र।

---

१ वृद्धजीवकीयतन्त्रे (कौमारभृत्ये) दृश्यते दारुवाहस्य नाम; यथा सूत्रस्थाने वेदनाध्याये—"उपासमानमृषिभिः कश्यपं वृद्धजीवकः। चोदितो दारुवाहेन वेदनार्थेऽभ्यचोदयत्" इति; तथा सूत्रस्थाने रोगाध्याये "पञ्चरोगा आगन्तुवातपित्तकफत्रिदोषजा इति दारुवाहो राजर्षिः" इति।

श्रीः ।

# चरकसंहिता

## श्रीचक्रपाणिदत्तविरचितया

## आयुर्वेददीपिकाख्यव्याख्यया संवलिता ।



## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

**अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

गुणत्रयविभेदेन मूर्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥
सरस्वत्यै नमो यस्याः प्रसादात् पुण्यकर्मभिः ।
बुद्धिदर्पणसंक्रान्तं जगदध्यक्षमीक्ष्यते ॥ २ ॥
ब्रह्मदक्षाश्विदेवेशभरद्वाजपुनर्वसु-
हुताशवेशचरकप्रभृतिभ्यो नमो नमः ॥ ३ ॥
पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥ ४ ॥
नरदत्तगुरूद्दिष्टचरकार्थानुगामिनी ।
क्रियते चक्रदत्तेन टीकाऽऽयुर्वेददीपिका ॥ ५ ॥
सभ्याः सद्गुरुवाक्सुधाप्लुतिपरिस्फीतश्रुतीनस्मि वो
नालं तोषयितुं पयोदपयसा नाम्भोनिधिस्तृप्यति ।
व्याख्याभासरसप्रकाशनमिदं त्वस्मिन् यदि प्राप्यते
क्वापि क्वापि कणो गुणस्य तदसौ कर्णे क्षणं धीयताम् ॥ ३ ॥

इह हि धर्मार्थकाममोक्षपरिपन्थिरोगोपशमाय ब्रह्मप्रभृतिभिः प्रणीतायुर्वेदतन्त्रेष्वतिविस्तरत्वेन संप्रति वर्तमानाल्पायुर्मेधसां पुरुषाणां न सम्यगर्थाधिगमः, तदनधिगमाच्च तद्विहितार्थानामननुष्ठाने तथैवोपप्लवो रुजामिति मन्वानः परमकारुणिकोऽत्रभवानग्निवेशोऽल्पायुर्मेधसामपि सुखोपलम्भार्थं नातिसङ्क्षेपविस्तरं कायचिकित्साप्रधानमायुर्वेदतन्त्रं प्रणेतुमारब्धवान् । तस्मिंश्च श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानात्मकेऽभिधातव्ये निखिलतन्त्रप्रधानार्थाभिधायकतया श्लोकस्थानमेवाग्रे वक्तव्यममन्यत । वक्ष्यति हि—"श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् । चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः" ( सू. अ. ३० ) इति । तत्र च सूत्रस्थानेऽप्युत्पन्नरोगग्रहणे त्वरया रोगोपघातिभेषजाभिधायिचतुष्केऽभिधातव्ये निखिलतन्त्रबीजभूतहेतुलिङ्गौषधार्थस्य तथा तन्त्रप्रवृत्त्यङ्गप्रयोजनवदायुर्वेदागमादेरभिधायकं दीर्घञ्जीवितीयमध्यायमभिधातुमारब्धवान् । श्रोतृजनप्रवृत्तिहेत्वभिधेयप्रयोजनसंबन्धोपदर्शकं श्रोतृबुद्धिसमाधानाय व्याख्यानप्रतिज्ञापरमष्टपदमष्टसंख्याया मङ्गलत्वेनादौ सूत्रं निवेशितवान्—अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्याम इति । यतो निरभिधेये कचटतपादौ साभिधेये वा निष्प्रयोजने काकदन्तपरीक्षादौ प्रेक्षावतां प्रवृत्तिर्नोपलभ्यते, तेनादावभिधेयप्रयोजने अभिधातव्ये । यदुक्तं—"अभिधेयफलज्ञानविरहस्तिमितोद्यमाः । श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः"—इति । अभिधेयवत्त्वप्रयोजनवत्त्वनिर्वाहार्थं चाभिधेयशास्त्रयोरभिधानाभिधेयलक्षणः संबन्धः, प्रयोजनशास्त्रयोश्च साध्यसाधनभावलक्षणोऽभिधातव्यः । तत्रेहाभिधेयं हिताहितादिरूपेणायुः । वक्ष्यति हि—"हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते" ( सू. अ. ३० ) इति । अत्र च सर्वाभिधेयावरोधो यथास्थानमेव व्याकरणीयः । प्रयोजनं च धातुसाम्यम् । यथोक्तं—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्"—( सू. अ. १ ) इति । संबन्धोऽप्यायुःशास्त्रयोरभिधानाभिधेयलक्षणः, प्रयोजनेन च धातुसाम्येन सममस्य शास्त्रस्य हेयोपादेयज्ञानावान्तरव्यापारस्य साध्यसाधनभावलक्षणः । तदेतत्सर्वं दीर्घञ्जीवितीयमित्यनेन पदेन दीर्घञ्जीवितशब्दमधिकृत्य कृतप्रयोजनाभिधायकं'धातुसाम्यक्रिया चो-

१ 'ऽमितो नमः' इति पा० । २ 'हत्रे' इति । ३ 'दीयताम्' इति पा० । ४ 'तद्विहितानुष्ठाने' इति पा० । ५ 'तन्त्रभवान्' इति च पा० । ६ 'निखिलतन्त्रार्थाभिधायकतया' इति पा० ।

१ 'दीर्घञ्जीवितमित्यधिकृत्य' इति पा० ।

क्ता'इत्यादिवाक्याभिधायकेन दर्शितं मन्तव्यम्। ननु, प्रयोजनाभिधानं शास्त्रप्रवृत्त्यर्थमिति यदुक्तं तन्न युक्तं, यतो न प्रयोजनाभिधानमात्रेण प्रयोजनवत्तावधारणं, विप्रलम्भकसंसारमोचनप्रतिपादकादिशास्त्रेषु प्रयोजनाभिधानेऽपि निष्प्रयोजनत्वदर्शनात्। अथ मन्यसे, आप्तप्रयोजनाभिधानमेतदतोऽत्र यथार्थत्वं; ननु भो कथमयं प्रयोजनाभिधायी आप्तः? तदभिहितशास्त्रस्य यथार्थत्वादिति चेत्, हन्त न यावच्छास्त्रस्य प्रयोजनवत्त्वावधारणं न तावच्छास्त्रप्रवृत्तिः, न यावच्छास्त्रप्रवृत्तिर्न तावच्छास्त्रस्य यथार्थत्वावधारणं, न यावच्छास्त्रस्य यथार्थत्वावधारणं न तावच्छास्त्रस्य कर्तुराप्तत्वमवधार्यते, आप्तत्वानवधृतौ च कुतस्तदभिहितप्रयोजनवत्तावधारणमिति चैकृकमापद्यते; अथ मन्यसे, मा भवतु प्रयोजनवत्तावधारणम्, अर्थरूपप्रयोजनवत्तासन्देह एव प्रवर्तको भविष्यति, कृष्यादावपि हि प्रवृत्तिरर्थसन्देहादेव; नहि तत्र कृषीवलानां फललाभावधारणं विद्यते, अन्तराऽवग्रहादेरपि संभाव्यमानत्वात्; नन्वेवमसत्यपि प्रयोजनाभिधाने सप्रयोजननिष्प्रयोजनशास्त्रदर्शनाच्छास्त्रत्वमेव प्रयोजनवत्तासन्देहोपदर्शकमस्तु, तथाऽप्यलं प्रयोजनाभिधानेन। नैवं, नहि सामान्येन प्रयोजनसन्देहः प्रयोजनविशेषार्थिनं तथा प्रवर्तयति यथाऽभिप्रेतप्रयोजनविशेषविषयः सन्देहः; अभिप्रेतविशेषविषयश्च सन्देहो न विशेषविषयस्मरणमन्तरा भवति, अतो ये तावदनवधृताभिवेशप्रामाण्यास्तेषां धातुसाम्यसाधनमिदं शास्त्रं न वेत्येवमाकारविशेषसन्देहोत्पादनार्थं प्रयोजनविशेषाभिधानं; ये पुनः परमर्षेरग्निवेशस्याप्त एवावधृतप्रामाण्यास्तेषां तदभिहितप्रयोजनवत्तावधारणेनैव प्रवृत्तिरिति युक्तं प्रयोजनाभिधानम्। प्रयोजनाभिधायिवाक्ये तु स्वल्पप्रयत्नबोध्ये प्रयोजनसामान्यसन्देहादेव प्रवृत्तिरुपपन्ना, न पुनरनेकसंवत्सरक्लेशबोध्ये शास्त्रे। तदेवं यदुच्यते—'प्रयोजनाभिधायिवाक्यप्रवृत्तावपि प्रयोजनमभिधातव्यं, तथा चानवस्था' इति, तन्निरस्तं भवति। अथेत्यादिसूत्रेऽथशब्दो ब्रह्मादिप्रणीततन्त्रेष्वल्पायुर्मेधसामर्थानवधारणस्य, तथाऽभीष्टदेवतानमस्कारशास्त्रकरणार्थगुर्वाज्ञालाभयोरानन्तर्ये प्रयुक्तोऽपि शास्त्रादौ स्वरूपेण मङ्गलं भवत्युदकाहरणप्रवृत्तोदकुम्भदर्शनमिव प्रस्थितानाम्। ग्रन्थादौ मङ्गलसेवानिरस्तान्तरायाणां ग्रन्थकर्तृश्रोतॄणामविघ्नेनेष्टलाभो भवतीति युक्तं मङ्गलोपादानम्। अथशब्दस्य मङ्गलत्वे स्मृतिः—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"—इति। शास्त्रान्तरे चादौ मङ्गलत्वेन दृष्टोऽयमथशब्दः। यथा—"अथ शब्दानुशासनम्" (व्या. म. भा. अ. १ पा० १ आ. १), "अथातो धर्मं व्याख्यास्यामः" (वै. अ. १ आ. १ सू. १) इत्यादौ। अभीष्टदेवतानमस्कारस्तु ग्रन्थादौ शिष्टाचारप्राप्तः परमशिष्टेनाग्निवेशेन कृत एव, अन्यथा शिष्टाचारलङ्घनेन शिष्टत्वमेव न स्याद् व्याख्यानान्तरायभयश्च; तथा ग्रन्थाविनिवेशितस्यापि नमस्कारस्य प्रत्यवायापहत्वाच्च न ग्रन्थनिवेशनम्। यथा च गुर्वाज्ञालाभानन्तरमेतत्तन्त्रकरणं तथा "अथ मैत्रीपरः पुण्यम्"(सू.अ.१) इत्यादौ स्फुटमेव। ग्रन्थकरणे च गुर्वनुमतिप्रतिपादनेन ग्रन्थस्योपादेयता प्रदर्शिता भवति। यत् पुनः शिष्यप्रश्नानन्तर्यार्थत्वमथशब्दस्य वर्ण्यते तन्न मां धिनोति, नहि शिष्यान् पुरो व्यवस्थाप्य शास्त्रं क्रियते; श्रोतृबुद्धिस्थीकारे तु शास्त्रकरणं युक्तं, न च बुद्धिस्थीकृताः प्रष्टारो भवन्ति। अतःशब्दोऽधिकारप्रागवध्युपदर्शकः, अत ऊर्ध्वं यदुपदेक्ष्यामो दीर्घञ्जीवितीयं तदिति; यदि वा हेतौ, येन ब्रह्मादिप्रणीतायुर्वेदतन्त्राणामुक्तेन न्यायेनोत्सन्नत्वमिव,अतो हेतोर्दीर्घञ्जीवितीयं व्याख्यास्याम इति योजनीयम्। दीर्घञ्जीवितीयमित्यत्र दीर्घञ्जीवितशब्दोऽस्मिन्नस्तीति मत्वर्थे "अध्यायानुवाकयोर्लुक् च" (पा.अ.५.पा. २ सू. ६०) इति छप्रत्ययः। यदि वा दीर्घञ्जीवितशब्दमधिकृत्य कृतो ग्रन्थोऽध्यायरूपस्तन्त्ररूपो वा,इत्यस्यां विवक्षायाम् "अधिकृत्य कृते ग्रन्थे" (पा.अ. ४।३।८७) इत्यधिकारात् "शिशुक्रन्दयमसभ" (पा.अ.४पा. ३सू. ८८) इत्यादिना छः। एवमन्यत्राप्येवंजातीये मन्तव्यम्। अत्र च सत्यपि शब्दान्तरे दीर्घञ्जीवितशब्देनैव संज्ञा कृता, दीर्घञ्जीवितशब्दस्यैव प्रवचनादौ निवेशात् प्रशस्तत्वाच्च। 'दीर्घञ्जीवितशब्दोऽस्मिन्नस्ति' इति, 'दीर्घञ्जीवितशब्दमधिकृत्य कृतो वा, इत्यनया व्युत्पत्त्या दीर्घञ्जीवितीयशब्दस्तन्त्रेऽध्याये च प्रवर्तनीयः। तेन दीर्घञ्जीवितीयं व्याख्यास्याम इत्यनेन तन्त्रं प्रति व्याख्यानप्रतिज्ञा लब्धा भवति, पुनर्दीर्घञ्जीवितीयमिति पदमावर्त्याध्यायपदसमभिव्याहृतमध्यायव्याख्यानप्रतिज्ञां लम्भयति। दृष्टं चावृत्य पदस्य योजनं, यथा-अपामार्गतण्डुलीये "गौरवे शिरसः शूले पीनसे" (सू. अ. २) इत्यादौ 'शिरस' इति पदं 'गौरवे' इत्यनेन युज्यते, आवृत्य 'शूले' इत्यनेन च। अतश्च यदुच्यते—अकृततन्त्रप्रतिज्ञस्याध्यायप्रतिज्ञा ऊनकायमानेति, तन्निरस्तं भवति। यदि वा, अध्यायप्रतिज्ञैवास्तु, तयैव तन्त्रप्रतिज्ञाऽप्यर्थलब्धैव, न ह्यध्यायस्तन्त्रव्यतिरिक्तः, तेनावयवव्याख्याने तन्त्रस्याप्यवयविनो व्याख्या भवत्येव; यथा—अङ्गुलीग्रहणेन देवदत्तोऽपि गृहीतो भवति। अवयवान्तरव्याख्यानप्रतिज्ञा तु न लभ्यते, तां तु प्रत्यध्यायमेव करिष्यति। अध्यायमिति अधिपूर्वादिङः "इङश्च" (पा. अ. २ पा. ४ सू. ४७) इति कर्मणि घञा साध्यम्। तेन अधीयते इत्यध्यायः।

१ '०संसारमोचकादिशास्त्रेषु' इति पा०। २ '०मेतद्, तत्कुतोऽयथार्थत्वम्' इति पा०। ३ 'चक्रकमापतितं' इति पा०। ४ 'गण्डं' इति पा०।

१ 'व्याख्यानान्तरायभयात्' इति पा०। २ 'उत्सन्नत्वमिव' इति पा०। ३ 'तन्त्रव्याख्यानप्रतिज्ञा' इति पा०। ४ 'तु लभ्यते' इति पा०। ५ 'अधीयतेऽसावित्यध्यायः' इति पा०।

न चानया व्युत्पत्त्या प्रकरणचतुष्कस्थानादिष्वतिप्रसङ्गः, यतो योगरूढेयमध्यायसंज्ञाऽध्यायस्य प्रकरणसमूहविशेष एव दीर्घञ्जीवितीयादिलक्षणे पङ्कजशब्दवद्वर्तते न योगमात्रेण वर्तते । वक्ष्यति हि—"अधिकृत्येयमध्यायनामसंज्ञा प्रतिष्ठिता" ( सू. अ. ३० ) इति; नामसंज्ञा योगरूढसंज्ञेत्यर्थः । यदि वा करणाधिकरणयोरर्थयोः "अध्यायन्यायोद्यावसंहाराश्च" (पा. अ. ३, पा. ३, सू. ११२) इतिसूत्रेण निपातनादध्यायपदसिद्धिः । अधीयतेऽस्मिन्ननेन वाऽर्थविशेष इत्यध्यायः । अतिप्रसक्तिनिषेधस्तूक्तन्यायः । व्याख्यास्याम इति व्याङ्पूर्वात् ख्यातेर्लृटा साध्यम् । चक्षिङो हि प्रयोगेऽनिच्छतोऽपि व्याख्यातुः क्रियाफलसंबन्धस्य दुर्निवारत्वेन "स्वरितञित" (पा. अ. १ पा. ३ सू. ७२) इत्यादिनाऽऽत्मनेपदं स्यादिति । 'वि' इति विशेषे, विशेषाश्च व्याससमासादयः । आङ्यं क्रियायोगे, ये तु मर्यादायामभिविधौ वा आङ्प्रयोगं मन्यन्ते तेषामभिप्रायं न विद्मः । यतो मर्यादायामभिविधौ चाङः प्रातिपदिकेन योगः स्यात्; यथा—"आसमुद्रक्षितीशानां" (र. वं. अ. १. ) "आपाटलीपुत्राद्वृष्टो देव" इत्यादौ, इहापि च तथा । क्रियायोगविरहे "उपसर्गाः क्रियायोगे" (पा. अ. १. पा. ४. सू. ५९) इति नियमादाङ उपसर्गत्वं न स्यात्; ततश्चानुपसर्गेणाङा व्यवधानाद् वेरुपसर्गस्य प्रयोगो न स्यात् । येनाव्यवहितः सजातीयव्यवहितो वा धातोरुपसर्गो भवति । व्याङोरुभयोरप्यनुपसर्गत्वे तत्संबन्धोचितभूरिप्रातिपदिककल्पनागौरवप्रसङ्गः स्यात्; तस्मात् क्रियायोगित्वमेवाङो न्याय्यम् । अथ, अतः, दीर्घं, जीवितीयम्, अध्यायं, वि, आ, ख्यास्याम इत्यष्टपदत्वम् ॥ १ ॥

## इति ह स्माह भगवानात्रेयः ॥ २ ॥

ननु कथमग्निवेशः सकलपदार्थाशेषविशेषज्ञानव्याख्येयमायुर्वेदं व्याख्यास्यति; यतो न तावद्भेषजादीनामशेषविशेषः प्रत्यक्षज्ञेयः, सर्वपदार्थानां[१] विशेषाणां प्रत्यक्षाविषयत्वात्; अन्वयव्यतिरेकाभ्यां तु सर्वपदार्थावधारणं दुष्करमेव[२], यत एकमेव मधु स्वरूपेण जीवयति, मारयति चोष्णं समघृतं च, कफप्रकृतेर्हितमहितं वातप्रकृतेः, अनूपे सात्म्यमसात्म्यं मरौ, शीते सेव्यमसेव्यं ग्रीष्मे, हितमवृद्धे वृद्धे चाहितम्, अल्पं गुणकरमाबाधकरमत्युपयुक्तम्, आमतां गतमुदरे उपक्रमविरोधित्वादतिविभ्रमकरं, काकमाचीयुक्तं पक्वनिकुचेन च सहोपयुक्तं मरणाय अथवा बलवर्णवीर्यतेजउपघाताय भवति, इत्येवमादि तत्तद्युक्तं तत्तच्छतशः करोति; अत एवैकस्यैव मधुनो रूपं यदाऽनेन प्रकारेण दुरधिगमं, तदाऽत्र कैव कथा निखिलपदार्थाशेषविशेषज्ञानस्य; अजानंश्च व्याचक्षाणः कथमुपादेयवचन इति कृत्वा गुरोरासात् प्रतिपन्नं प्रतिपादयिष्याम इति दर्शयन् तामिमां शङ्कां निराचिकीर्षुर्गुरूक्तानुवादरूपतां स्वग्रन्थस्य दर्शयन्नाह—इति ह स्माह भगवानात्रेय इति । अत्र इतिशब्दो वक्ष्यमाणार्थपरामर्शकः, हशब्दोऽवधारणे; यथा—"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति"—इति, अत्र न हेति नैवेत्यर्थः । अत्र 'स्माह' इति स्मशब्दप्रयोगेण भूतमात्र एव लिडर्थे "लट् स्मे" (३।२।११८) इति लट्; न भूतानद्यतनपरोक्षे, आत्रेयोपदेशस्याग्निवेशं प्रत्यपरोक्षत्वात् । यथा च भूतमात्रे लिड् भवति तथाच दर्शयिष्यामः । भगं पूजितं ज्ञानं, तद्वान्; यथोक्तम्—"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति"; यदि वा भगशब्दः समस्तैश्वर्यमाहात्म्यादिवचनः; यथोक्तम्—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना:" इति । अत्रेरपत्यमात्रेयः; अनेन विशुद्धवंशत्वं दर्शितं भवति । अत्रान्ये वर्णयन्ति—"चतुर्विधं सूत्रं भवति—गुरुसूत्रं, शिष्यसूत्रं, प्रतिसंस्कर्तृसूत्रम्, एकीयसूत्रं चेति । तत्र गुरुसूत्रं यथा—"नैतद्बुद्धिमता द्रष्टव्यमग्निवेश" (सू. स्था. अ.४)इत्यादि, प्रतिसंस्कर्तृसूत्रं यथा—"तमुवाच भगवानात्रेयः" ( सू. अ. ४ ) इत्यादि, शिष्यसूत्रं यथा—"नैतानि भगवन् पञ्चकषायशतानि पूर्यन्ते" (सू. स्था. अ. ४) इत्यादि, एकीयसूत्रं यथा—"कुमारस्य शिरः पूर्वमभिनिर्वर्तत इति कुमारशिरा भरद्वाजः" (शा. स्था. अ. ६) इत्यादि । तेनायं व्याख्यानप्रतिज्ञासूत्रं गुरोरेव, शिष्यस्याग्निवेशस्य व्याख्यानेऽनधिकारत्वात् । द्वितीयं च सूत्रं प्रतिसंस्कर्तुः । इतिशब्देन च प्रकारवाचिना 'दीर्घञ्जीवितीयं व्याख्यास्याम' इति परामृश्यते; तेनाहस्मेति भूतानद्यतनपरोक्ष एव भवति, प्रतिसंस्कर्तारं प्रत्यात्रेयोपदेशस्य परोक्षत्वात् । अनेन च न्यायेन तमुवाच भगवानात्रेय इत्यादावपि लिड्विधिरुपपन्नो भवति । सुश्रुते च "यथोवाच भगवान् धन्वन्तरिः" (सु. सू. स्था. अ. १) इति प्रतिसंस्कर्तृसूत्रमिति कृत्वा टीकाकृता लिड्विधिरुपपादितः" इति । अत्र ब्रूमः—यत्तावदुक्तं शिष्यस्याग्निवेशस्य व्याख्यानानधिकारादिदं गुरोः सूत्रं; तन्न, नहि जात्या गुरुत्वमस्ति, यतः स एवात्रेयः स्वगुरुमपेक्ष्य शिष्यः, अग्निवेशादीनपेक्ष्य गुरुः; एवमग्निवेशोऽपि ग्रन्थकरणकाले स्वबुद्धिस्थीकृताञ् शिष्यान् प्रति गुरुरिति न कश्चिद्दोषः । यत्तुनर्द्वितीयसूत्रस्य प्रतिसंस्कर्तृसूत्रतया भूतानद्यतनपरोक्षे लिड्विधिरुपपाद्यते, तत्र विचार्यं—किमिदं द्वितीयं सूत्रं पूर्ववाक्यैकतापन्नं न वा ? यद्येकवाक्यतापन्नं तदा सुश्रुते—तथा व्याख्यास्यामो यथोवाच धन्वन्तरिरिति योजनीयं, तथाच तथा व्याख्यास्याम इति क्रियैकवाक्यतापन्नमुवाचेति पदं न भिन्नकर्तृकं भवितुमर्हति, तथाच कुतो लिड्विधिः; अथ नैकतापन्नं, तदा गौरश्वः पुरुषो हस्तीतिवन्नार्थसङ्गतिः । किंच जतूकर्णादौ प्रतिसंस्कर्तृश्रुतिगन्धोऽपि नास्ति, तत् कथं "नानाश्रुतपरिपूर्णकण्ठः शिष्यो जतूकर्णः प्राञ्जलिर-

१ 'सर्वपदार्थविशेषाणां' इति पा०। २ 'दुश्शकमेव' इति पा०।

१ 'कारणं' इति पा० । २ 'माहात्म्ययशसोः' इति पा० । ३ 'कामस्याथ प्रयत्नस्य' इति पा० ।

धिगम्योवाच" इत्यादौ लिख्विधिः। अनेन न्यायेन चरकेऽपि प्रतिसंस्कर्तृसूत्रपक्षे लिख्विधिर्नास्ति, तस्माच्चरकेऽग्निवेशः सुश्रुते सुश्रुत एव सूत्राणां प्रणेता, क्वचित् किंचिदर्थं स्तोतुं निन्दितुं वाऽऽख्यायिकारूपं पुराकल्पं दर्शयन् किमपि सूत्रं गुरूक्तानुवादरूपतया किमप्येकीयमतानुवादरूपतया लिखति; प्रतिसंस्कर्ता त्वयं ग्रन्थं पूरयति तदाद्यग्रन्थकर्तृतयैव। लिख्विधिस्तु भूतानद्यतनमात्र एव छन्दोविहितो भाषायामपि वर्णनीयः, अन्यथा उवाचेति पदं जतूकर्णादौ न स्यात्; तथा च हरिवंशे धन्योपाख्याने "मामुवाच" इति, तथा "अहमुवाच" इति च न स्यात्; यथा "स मामुवाचाम्बुचरः कूर्मो मानुषवत् स्वयम्। किमाश्चर्यं मयि मुने धन्यश्चाहं कथं विभो" (हरिवंशे, विष्णुपर्व २, अ. ११०) इति, तथा "स्वयम्भुवचनात् सोऽहं वेदान् वै समुपस्थितः। उवाच चैनांश्चतुरः"-इति। यदपि 'इति ह स्माह' इत्यत्र इतिशब्देन पूर्वसूत्रं परामृश्यते; तत्र, येन दीर्घञ्जीवितीयादिसूत्रमात्रस्य तदर्थस्य वा गुरूक्तत्वप्रतिपादने सति नैवोत्तरत्राभिधेयाभिधानेन निखिलतन्त्रस्य गुरूक्तानुवादरूपतया करणं श्रोतृश्रद्धाकरणं प्रतिपादितं भवति। भवति तु भावयितुं यथा पुरा व्याख्यातं, तस्मात्तदेव न्याय्यमिति। अग्निवेशस्य व्याख्यास्याम इति बहुवचनमेकस्मिन्नप्यसदः प्रयोगाद्बहुवचनप्रयोगस्य साधुत्वात्; साधु हि वदन्ति वक्तारो—'वयं करिष्यामः' इति। भगवानात्रेय इत्यत्र त्वेकवचननिर्देशः कृतः, भगवानित्यनेनैवात्रेयस्य गुरोर्गौरवस्य दर्शितत्वात्॥ २॥

**दीर्घं जीवितमन्विच्छन्भरद्वाज उपागमत्।**
**इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम्॥ ३॥**

ननु यथाऽग्निवेशस्यायुर्वेदस्य दुरधिगमत्वेन प्रत्यक्षतो वाऽन्वयव्यतिरेकाद्वा ज्ञानं न संभाव्यते, एवमात्रेयस्यापि कथमायुर्वेदज्ञानं स्यात्, यन्मूलमग्निवेशस्यायुर्वेदज्ञानं समीचीनमुच्यते, इत्याशङ्क्यायुर्वेदस्याविप्लुतागमत्वं दर्शयन्नाह—दीर्घं जीवितमित्यादि। जीवितं शरीरेन्द्रियसत्त्वात्मसंयोगः। तच्च दीर्घमिति दीर्घकालसंबन्धि, कालशब्दोऽप्यत्र लुप्तनिर्दिष्टो द्रष्टव्यः। यत्तन्त्रशैली चेयमाचार्यस्य[1] यत आदिमध्यान्तलोपान् करोति, ये लुप्ता अपि गम्यन्त एव। यथा "ग्राम्यानूपौदकरसा"-(सू. अ. २१) इत्यत्र मांसशब्दो लुप्तः, तथा 'दग्धविद्ध' इत्यत्र विषशब्दो लुप्त इत्यादि। अन्विच्छन्निति अनुरूपं दीर्घमिच्छन्। भरद्वाज इति गोत्रनाम। 'उग्रतपा' इति विशेषणेन भरद्वाजस्य मानुषस्यापीन्द्राभिगमनशक्तिः, तथा शरण्यत्वप्रतीतिशक्तिश्चोपदर्श्यते; अचिन्त्यो हि तपसां प्रभावो येनागस्त्यो महोदधिमपि चुलुकनिपेयमकरोत्। नच वाच्यमुग्रतपस्त्वेनैव किमित्ययमायुर्वेदमपि न बुध्यते, यतस्तपःप्रभावोऽपि प्रतिनियतविषयत्वान्न सर्वत्र शक्तिमान्, शक्तिश्चास्य कार्योन्नेया; तेन गुरुनिरपेक्षायुर्वेदज्ञानलक्षणकार्यादर्शनान्न तत्तपस्तत्र समर्थमित्यवधारयामः; किंवा गुरुपूर्वक्रमेणैवायुर्वेदज्ञानं फलतीतीन्द्रमुपागमद्भरद्वाजः। अथ कथं ब्रह्मादिष्वायुर्वेदपूर्वगुरुषु विद्यमानेष्विन्द्रमेवायमुपागमत्? युक्तं च प्रधानगुरोरेव श्रवणं, यतः शिष्यपरम्परासंचारिणी विद्याऽसम्यग्ग्रहणादिदोषात् पात्रपरम्परासंचार्यमाणमधुवत् क्षीणाऽपि संभाव्येत; अत आह—बुद्ध्वा शरण्यममरेश्वरमिति। यस्मादयमेवेन्द्रोऽल्पायुः, स एव भयत्रस्तानां यथा शरण्यो रक्षणहितो न तथा ब्रह्मादयः, तेन तमेवोपागमत्। अमरेश्वर इत्यनेन चेन्द्रस्य रक्षणोपयुक्ततां दर्शयति; राजा हि प्रजारक्षणे प्रयत्नातिशयवान् भवति। ननु दीर्घं जीवितमन्विच्छन्नित्यत्र दीर्घस्याव्यवस्थितत्वेन कियत्कालं तद्दीर्घमभिप्रेतं? तत्र युगानुरूपं वर्षशतं, यदुक्तं—"वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले" (वि. स्था. अ. ३) इति। एतच्च कलिकालादौ परमायुःकालस्य यथा यथा क्षयस्तथाऽऽयुषः क्षयः। यदाह—"संवत्सरशते पूर्णे याति संवत्सरः क्षयम्। देहिनामायुषः काले यत्र यन्मानमिष्यते" (वि. स्था. अ. ३) इति। एतदनुसारेण पूर्वयुगेष्वायुःप्रकर्षः। यदाह भगवान् व्यासः— "पुरुषाः सर्वसिद्धाश्च चतुर्वर्षशतायुषः। कृते त्रेतादिकेऽप्येवं पादशो ह्रसति क्रमात्"—इति। कर्मानुरूपं चायुर्नियतं वा, अनियतं वा भवति। तत्र बलवत्कर्मारब्धं नियतं, यथाऽयमस्मिन् काले म्रियत एव परम्; अबलवत्कर्मारब्धं त्वनियतं, तद्यदा दृष्टं विषादि मारकं प्रत्ययमासादयति तदा संजातबलं मारयति, यदा न प्राप्नोति दृष्टं मारकं कारणं तदा युगानुरूपायुःप्राप्तौ युगप्रभावजर्जरीकृतशरीरं मारयति। अत्र दृष्टान्तश्चाचार्येण दर्शितः "यथा ह्यक्षः स्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छति, स एवाक्षोऽतिभाराधिष्ठित, इत्यारभ्य यावत् 'अन्तरा व्यसनमापद्यते; तथाऽनियतायुषोऽन्तरा प्राणा अपराधान्निरुध्यन्ते" (वि. स्था. अ. ३) इत्यन्तेन। यदा त्वनियतायुषो रसायनमाचरन्ति तदा तत्प्रभावाद्युगप्रभावनियतायुर्लङ्घनं भवति। यदाह—"तानि यावन्ति भक्षयेत्। जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः" (चि. स्था. अ. १) इत्यादि। न तु बलवत्कर्मनियतस्यायुषो लङ्घनमस्ति, यदाह— "कर्म किंचित् क्वचित्काले विपाकनियतं महत्। किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते"—(वि. स्था. अ. ३) इति। हन्त यद्येवं तदा सर्वत्र कर्मैव कारणं मरणे जीविते वा तथा व्याधौ व्याध्यपगमे वा, तत् किमनेनायुर्वेदेन कर्मजनितफलानुविधायिना; तथाहि—यत्तावदुच्यते—नियतं कर्म, तत्र तावदायुर्वेदव्यापारो नास्ति, येन नियतेनैव कर्मणा मिलितमपि दृष्टं तत्र विफलीक्रियते; यच्चाबलवत्कर्मारब्धत्वेनानियतमायुरुच्यते तदपि न श्रद्धाधीनं, येनादृष्टशक्तिपराभवेन दृष्टस्य कार्यकारितां दृष्ट्वाऽपि विवादाध्यासिते विषयेऽदृष्टमेव कारणमवधारयामः, दृष्टं त्वदृष्टाकृष्टमेव तत्र भवति। नैवम्, एवं सति सर्वा-

[1] 'चैवमाचार्यस्य' इति पा०।

नुष्ठानस्योपरमप्रसङ्गः; किंच केवलकर्मवादिनो दृष्टमपवदतोऽदृष्टोत्पत्तिरेव न प्राप्नोति, अदृष्टं हि दृष्टाग्निष्टोमादिजन्यं, दृष्टं च कारणं कर्मवादिनोऽभिमतम्; अथादृष्टकारणं दृष्टमिच्छन्ति हन्त तर्हि तेनैव न्यायेन दहनादीनामपि किमिति शीतापहत्वस्फोटादिजनकत्वादि न स्वीक्रियते; किंच केवलकर्मवादिनो दृष्टे कारणे व्याप्तिग्रहणाभावाददृष्टानुमानमेव न स्यात्, तस्माद्दृष्टमदृष्टं च कारणम्। तत्र क्वचिददृष्टं दृष्टेन बाध्यते, क्वचिच्च दृष्टमदृष्टेनेति; तेन यत्र पुरुषे बलवन्नियतमरणकारणमदृष्टं, तत्र जीवितमरणयोरकिंचित्करोऽयमायुर्वेदः, किंतु तत्रापि नियतमरणकालादर्वाग्दुःखजनकव्याधिप्रशमने व्याप्रियत एव यदि व्याधिरपि तस्य नियतकर्मजन्यो न स्यात्; यत्तु कर्मानियतविपाकं भवति तत्प्रति सर्वथा प्रयोजनवदायुर्वेदोपादानम्। यत्तु युगनियतमायुः, तन्नातिबलवता कर्मणा नियमितं; येन रसायनप्रयोगात्तद्बाधनं दृष्टत्वादनुमन्यन्ते, न तु स्वस्थहितानुरहितचिकित्साभ्याम्। अयं च वादः शास्त्रकारेण स्वयमेव प्रपञ्चेन निर्लोचनीय इति नेह प्रतन्यते ॥ ३ ॥

**ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः।**
**जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ ४ ॥**
**अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम् ॥**
**ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥ ५ ॥**

कथमिन्द्र एव शरण्यो न ब्रह्मादय इत्याह—ब्रह्मणा हीत्यादि। हि यस्मादर्थे। प्रजापतिर्दक्षनामा। प्रोक्तमिति प्रकर्षेणोक्तं, प्रकर्षश्चानवशेषेणाभिधानम्। यथेत्यनेन तथाशब्दस्य नित्यसंबन्धस्याकर्षणाद्यादृशं प्रोक्तं तादृशमेव जग्राह। निखिलेनेति अनवशेषेण। अश्विनौ तु ततः प्रजापतेर्जगृहतुः। अत्रापि यथाप्रोक्तं निखिलेन चेतिपदं तथैव योजनीयम्। एवमश्विभ्यां भगवाञ्छक्रः प्रतिपेदे हेत्यत्रापि यथाप्रोक्तमित्यादि योजनीयम्। हशब्दस्त्ववधारणे, तेन प्रतिपेदे एव परं शक्रो नतु कस्मैचिदायुर्वेदं दत्तवानित्यर्थः। अनेन च ग्रन्थेनान्यूनाधिकायुर्वेदागमोपदर्शकेन यथा ब्रह्मण आयुर्वेदज्ञानं तथेन्द्रस्यापीति दर्शितम्। तेन ब्रह्मणो वाऽऽयुर्वेदः श्रूयते इन्द्राद्वेति न किंचिदर्थतो विशेषः। इन्द्रे त्विदमधिकं—यदयमसंक्रामितविद्यत्वेन शिष्यार्थी। यदुक्तं—"यो हि गुरुभ्यः सम्यगादाय विद्यां न प्रयच्छत्यन्तेवासिभ्यः स खल्वृणी गुरुजनस्य महदेनो विन्दति" इति, अतोऽकृतशिष्यत्वेन शिष्यार्थित्वविशेषयोगाद्ब्रह्मादिभ्यो विशेषेणेन्द्र एव शरण्य इति। ब्रह्मणस्तु परमगुरोर्विदितसकलवेदस्य सर्वत्रातिरोहितमतेरायुर्वेदज्ञानं स्वतःसिद्धमेवेति न गुर्वन्तरापेक्षा। एतच्च ब्रह्मादिगुरुपरम्परोपदर्शनमायुर्वेदस्याविप्लुतागमोपदर्शनार्थं तथा महापुरुषसेवितत्वेनोपादेयत्वोपदर्शनार्थं च। वचनं हि,—"तत्र यन्मन्येत महयशस्विसुधीरपुरुषासेवितम्" इत्यादि यावत् "तदभिप्रपद्येत शास्त्रम्" (वि. स्था. अ ८) इति। ऋषिप्रोक्त इति वक्ष्यमाणवृत्तान्तेन ऋषिप्रोक्तः। तस्मादिति यस्मादिन्द्र एव विशेषेण शरण्यः ॥ ४ ॥ ५ ॥

**विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम्।**
**तपोपवासाध्ययनब्रह्मचर्यव्रतायुषाम् ॥ ६ ॥**
**तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः।**
**समेताः पुण्यकर्माणः पार्श्वे हिमवतः शुभे ॥ ७ ॥**

अथ कथमयमृषिप्रोक्त इत्यायुर्वेदस्य मर्त्यलोकागमे हेतुमाह—विघ्नभूता इत्यादि। विघ्नभूता इत्यन्तरायस्वरूपाः। रुजन्तीति रोगाः। प्रादुर्भूता इत्याविर्भूताः। अयं च रोगप्रादुर्भावः कृतयुगान्ते बोद्धव्यः। वक्ष्यति हि—"भ्रश्यति तु कृतयुगे" (वि. स्था. अ. ३) इत्यादिना रोगप्रादुर्भावं जनपदोद्ध्वंसनीये। प्रादुर्भावश्च पूर्वसिद्धस्यैवाविर्भावः। तेन रोगसन्ताननित्यताऽप्यविरुद्धा भवत्यर्थेदशमहामूलीये (सू. अ. ३०) वक्तव्या। शीर्यत इति शरीरं, तदस्यास्तीति शरीरी। एतेन शरीरं स्वत एव शीर्यमाणं रोगसंबन्धात्तु नितरां शीर्यत इति सूचयति। केषां विघ्नभूता इत्याह—तपोपवासाध्ययनेत्यादि। रोगग्रस्ता हि शरीरिणस्तपःप्रभृतीनि कर्तुं न पारयन्ति विकृतत्वात्; तथा, आयुषश्च मारकत्वेन केचिद्गदा विरोधका भवन्ति। अत्र तपश्चान्द्रायणादि, उपवासः क्रोधादिपरित्यागः सत्याद्युपादानं च, वचनं हि—"उपावृत्तस्य पापेभ्यः सहवासो गुणे हि यः। उपवासः स विज्ञेयो न शरीरस्य शोषणम्" इति; अध्ययनं वेदाध्ययनं, ब्रह्मणे मोक्षाय चर्यं ब्रह्मचर्यमुपस्थनिग्रहादि, व्रतमीप्सितकामो नियमः, आयुरुक्तम्। तपोपवासेति प्रयोगः पूर्वत्रासिद्धविधेरनित्यत्वेन तपःसकारस्थानिभूतयलोपस्य सिद्धत्वाज्ज्ञेयः, यथा "नोपधायाः"—(पा. अ. ६ पा. ४ सू. ७) इति। भूतेषु प्राणिषु। अनुक्रोशमिति अनुकम्पां, कस्मात्? अनेकार्थत्वाद्धातूनाम्। पुरस्कृत्य आदृत्य। एतेन प्राणिरोगहरणमेव प्रधानमायुर्वेदोपगमने महर्षीणां फलम्; आयुःप्रकर्षस्त्वनुषङ्गसिद्धस्तेषां महात्मनामिति भावः। नरेष्विति वक्तव्ये यदयं भूतेष्विति सामान्यशब्दं करोति, तेन न समानेजीवप्रयुक्तेयमनुकम्पा, किंतु प्राणिमात्रप्रयुक्तेति समदर्शितामहर्षीणां दर्शयति। महान्तश्च ते ऋषयश्चेति महर्षयः; अनेन चतुर्विधा अपि ऋषयः—ऋषिका, ऋषिपुत्रा, देवर्षयो, महर्षयश्च गृह्यन्ते; महर्ष्यनुगामित्वादृषिकादीनामपि ग्रहणम्। पुण्यं पावनं कर्म येषां ते पुण्यकर्माणः। पर्शुकाभिस्तृतं पार्श्वं, तेन पार्श्वमिव (ततं) पार्श्वम्। शुभे इति पदं कर्तव्यसमाध्यनुगुणोपदर्शनार्थं, यतः शुभे हि देशे समाधयः प्रसीदन्ति ॥ ६ ॥ ७ ॥

---

१ 'बलवत्वात्' इति पा०। २ 'न कश्चिदर्थतो विशेषः' इति पा०। ३ 'स्वयमेव बुद्धसकलवेदस्य' इति पा०।

१ 'तदुपादद्याच्छास्त्रम्' इति पा०। २ 'विघ्नभूता इत्यत्राभूततद्भावे च्विर्न संभवति, रोगाणामुत्पत्तित एव विघ्नस्वरूपत्वेनाविघ्नस्वरूपत्वाभावात्' इति गङ्गाधरः। ३ 'व्रतायुषाम्' इति, तथा 'उपवासतपःपाठब्रह्मचर्यव्रतायुषाम्' इति च पा०। ४ 'सजातीयत्वप्रयुक्तेयमनुकम्पा' इति पा०।

अङ्गिरा जमदग्निश्च वसिष्ठः कश्यपो भृगुः ।
आत्रेयो गौतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः ॥८॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।
पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिञ्ज(ष्ठ)लः ॥ ९ ॥
विश्वामित्राश्मरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।
गार्ग्यः शाण्डिल्यकौण्डिल्यौ(न्यौ)वार्क्षिर्देवलगालवौ
साङ्कृत्यो वैजवापिश्च कुशिको बादरायणः ।
बडिशः शरलोमा च काप्यकात्यायनावुभौ ॥११॥
काङ्कायनः कैकशेयो धौम्यो मारीचकाश्यपौ ।
शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च ॥ १२ ॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।
वैखानसा वालखिल्यास्तथा चान्ये महर्षयः ॥ १३ ॥
ब्रह्मज्ञानस्य निधयो द(य)मस्य नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ १४ ॥
सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम् ।

के ते महर्षय इत्याह—अङ्गिरा इत्यादि । बहूषीणामत्र कीर्तनं ग्रन्थादौ पापक्षयहेतुत्वेन, तथाऽऽयुर्वेदस्यैवंविधमहापुरुषसेवितत्वेन सेव्यत्वोपदर्शनार्थं चेति । एषु च मध्ये केचिद्यायावराः, केचिच्छालीनाः, केचिदयोनिजाः, एवंप्रकाराश्च सर्वे मिलिता बोद्धव्याः । भिक्षुरित्यात्रेयविशेषणं, वक्ष्यति हि—"तन्नेति भिक्षुरात्रेयः (सू. स्था. अ २५)" इति । वैखानसा इति कर्मविशेषप्रयुक्ता संज्ञा । वालखिल्यास्तु स्वल्पप्रमाणाः केचिदृषयः । निधय इव निधयोऽक्षयस्थानत्वेन । दमो दान्तत्वम् । इमामिति अग्रे वक्ष्यमाणाम् ॥ ८–१४ ॥—

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥ १५ ॥
रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ।
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥ १६ ॥
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ।
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ॥ १७ ॥
स वक्ष्यति शमोपायं यथावदमरप्रभुः ।

धारणाद्धर्मः स चात्मसमवेतः कार्यदर्शनानुमेयः, अर्थः सुवर्णादिः, काम्यत इति कामो वनितापरिष्वङ्गादिः, मोक्षः संसारविमोक्षः । आरोग्यं रोगाभावाद्धातुसाम्यम् । मूलं कारणम् । उत्तममिति प्रधानं; तेनारोग्यं चतुर्वर्गे प्रधानं कारणं, रोगगृहीतस्य क्वचिदपि पुरुषार्थेऽसमर्थत्वादित्युक्तम् । तस्यापहर्तार इति आरोग्यस्यापहर्तारः; इदमेव च रोगाणामारोग्यापहरणं यदनर्थलाभः; न पुनरुत्पन्नो रोगः पश्चादारोग्यमपहरति, भावाभावयोः परस्पराभावात्मकत्वात् । श्रेयसो जीवितस्य चेति श्रेयोवज्जीवितं हितत्वेन सुखत्वेन चार्थेदशमहामूलीये (सू. अ. ३०) वक्ष्यमाणं, तस्य जीवितस्यापहर्तार इति योजनीयम्; अश्रेयोजीवितमहितत्वेन दुःखहेतुतया चानुपादेयमिति कृत्वा तदपहरणमिह नोक्तम् । अत्र सुखहितजीवितोपघातो धर्माद्युपघातेनैव लब्धः; तेन वयं पश्यामः—श्रेयःशब्देन सामान्येनाभ्युदयवाचिना धर्मादयोऽभिधीयन्ते, जीवितशब्देन च जीवितमात्रं, यतो जीवितं स्वरूपेणैव सर्वप्राणिनां निरुपाध्युपादेयं; वचनं हि,—"आचकमे च ब्रह्मण इयमात्मा आशीः—आयुष्मान् भूयासम्—" इति । यत्त्वत्यन्तदुःखगृहीतस्य जीवितं जिहासितं, तत्र दुःखस्यात्यन्तजिहासितस्यान्यथाहातुमशक्यत्वात् प्रियमपि जीवितं त्यक्तुमिच्छति न स्वरूपेण । अन्तराय इति धर्मादिसाधने बोद्धव्यः । अयमिति रोगप्रादुर्भावरूपः । तेषामिति रोगाणाम् । शरणमिति रक्षितारम् । शक्तत्वाच्छक्र उच्यते । ध्यानं समाधिविशेषः, तदुपलब्धिसाधनत्वाच्चक्षुरिव ध्यानचक्षुः, तेन 'स वक्ष्यति शमोपायं यथावदमरप्रभुः' इति ध्यानचक्षुषा ददृशुरिति योजना ॥ १५–१७ ॥—

कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ॥ १८ ॥
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ १९ ॥
स शक्रभवनं गत्वा सुरर्षिगणमध्यगम्[1] ।
ददर्श बलहन्तारं[2] दीप्यमानमिवानलम् ॥ २० ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच विनयाद्धीमानृषीणां[3] वाक्यमुत्तमम् ॥ २१ ॥
व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः ।
तद्ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ २२ ॥
तस्मै प्रोवाच भगवानायुर्वेदं[4] शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥ २३ ॥

अथैतेषु मध्ये भरद्वाजः कथमिन्द्रमुपागमदित्याह—क इत्यादि । शचीपतिमित्यनेन शचीसंभोगव्यासक्तमप्यहमुपासितुं क्षम इति भरद्वाजो दर्शयति । अर्थे प्रयोजने । नियुज्येयं व्यापार्येयम् । अत्रेति प्रकृतप्रयोजन एव, अत्रेतिशब्दो यस्मादर्थे । यथा—सुभिक्षमित्यागतः; यस्मात् सुभिक्षं तस्मादागत इत्यर्थः । नियोजित इति चौरादिको णिच् , न हेतौ । अनेन प्रकरणेन भरद्वाजस्यायुर्वेदागमे विशेषेणार्थित्वात्र प्रेरणमिति दर्शितं भवति । प्रोवाचेति सम्यगुवाच; न तु प्रशब्दः प्रपञ्चार्थः, पदैरल्पैरित्युक्तत्वात् । कस्मात् पदैरल्पैरुवाचेत्याह—मतिं बुद्ध्वा विपुलामिति; यस्माद्विपुलमतिं भरद्वाजं प्रतिपन्नवान् तस्मात् पदैरल्पैरुवाचेति भावः; मतिश्च बहुविषयत्वेनोपचाराद्विपुलेत्युच्यते,

१ 'सुरर्षिगणसेवितम्' इति पा० । २ 'बलहन्तारं बलनामासुरारिं शक्रमिति यावत्' इति गङ्गाधरः । ३ 'विनयेनाभिगम्यैनं द्र(प्र)ष्टुकामो महायशाः । दृष्ट्वैव च मुनिं प्राह भगवान् पाकशासनः ॥ स्वागतं चेति धर्मज्ञो मुनिस्तस्याथ्यैप्सितम् । अर्चितश्च यथान्यायमुपविष्टः समागतः ॥ तत्रोपायं विकाराणां पप्रच्छ हरिवाहनम् । ब्रूहि नः प्रशमोपायं तेषाममरसत्तम ॥ श्रुत्वेति वचनं तस्य सर्वभूतहितावहम् । तस्मै प्रोवाच' इत्यधिकः पाठ उपलभ्यते क्वचिद्धस्तलिखितपुस्तके । ४ 'भगवान् धीमान्' इति पा० ।

सा च मतिः शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशवतीह विपुला बोद्धव्या। अत्र चेन्द्रेण दिव्यदृशा भरद्वाजाभिप्रायमग्रत एव बुद्ध्वाऽऽयुर्वेद उपदिष्टः; तेन भरद्वाजस्येन्द्रपृच्छादीह न दर्शितं, किंवा भूतमपीन्द्रपृच्छादि ग्रन्थविस्तरभयादिह न लिखितम् ॥ १८-२३ ॥

**हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम्।**
**त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ २४ ॥**

यादृशोऽसावल्पपदैरुपदिष्ट आयुर्वेदस्तमाह—हेत्वित्यादि। हेतुलिङ्गौषधज्ञानमिति हेत्वादीनि ज्ञायन्तेऽनेनेति हेतुलिङ्गौषधज्ञानं, यावच्चायुर्वेदवाच्यं तावद्धेत्वाद्यन्तर्भूतमित्यर्थः। हेतुग्रहणेन सन्निकृष्टविप्रकृष्टव्याधिहेतुग्रहणं; लिङ्गग्रहणेन च व्याधेरारोग्यस्य च कृत्स्नं लिङ्गमुच्यते, तेन व्याध्यारोग्ये अपि लिङ्गशब्दवाच्ये, यतस्ताभ्यामपि हि तल्लिङ्गं लिङ्ग्यत एव; वक्ष्यति हि "विषमारम्भमूलानां ज्वर एको हि लक्षणम्। विषमारम्भमूलाद्यैर्ज्वर एको निगद्यते" (नि. अ. ८) इत्यादि; औषधग्रहणेन च सर्वपथ्यावरोधः। शरीरं चात्र हेतौ लिङ्गे चान्तर्भवति। स्वस्थातुरयोः परमुत्कृष्टमयनं मार्ग इति स्वस्थातुरपरायणम्। किमन्योऽयं हेतुलिङ्गौषधज्ञानरूप आयुर्वेदो ब्रह्मबुद्धादायुर्वेदादुतानन्य इत्याह—त्रिसूत्रमित्यादि। पितामहोऽपि यं त्रिसूत्रं बुबुधे तमिन्द्रः प्रोवाच। त्रीणि हेत्वादीनि सूत्र्यन्ते यस्मिन् येन वा तत्त्रिसूत्रम्। तत्र सूचनात् सूत्रणाच्चार्थसन्ततेः सूत्रम्। एतेन तं यथा ब्रह्मा त्रिसूत्रं बुबुधे तथैव हेतुलिङ्गौषधज्ञानमिन्द्रः प्रोवाचेत्यविप्लुतमागमं दर्शयति। बुबुध इति न कृतवान्। अत एवोक्तं—शाश्वतं; नित्यमित्यर्थः। तच्च नित्यत्वं सूत्रस्थानान्ते व्युत्पादनीयम् ॥ २४ ॥

**सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः।**
**यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः ॥ २५ ॥**
**तेनायुरमितं लेभे भरद्वाजः सुखान्वितम्।**
**ऋषिभ्योऽनधिकं तच्च[2] शशंसानवशेषयन् ॥ २६ ॥**

अथोद्दिष्टमायुर्वेदं कथं गृहीतवान् भरद्वाज इत्याह—सोऽनन्तेत्यादि। अविद्यमानावन्तपारौ यस्यासावनन्तपारः, अत्र पारशब्देन गोबलीवर्दन्यायेनादिरुच्यते; पारशब्दो ह्युभयोरपि नदीकूल्योर्विवक्षावशाद्वर्तते; किंवा अनन्तो मोक्षः, पारमुत्कृष्टं फलं यस्यायुर्वेदस्यासावनन्तपारः। वक्ष्यति हि—"चिकित्सा तु नैष्ठिकी या विनोपधाम्" (शा. स्था. अ. १) इति। अत्र नैष्ठिकी मोक्ष[3]साधनहेतुः। त्रयो हेत्वादयः स्कन्धरूपा यस्य स त्रिस्कन्धः; स्कन्धश्च स्थूलावयवः प्रविभागो वा। तत्रैवायुर्वेदग्रहणे मनो यस्य स तन्मनाः। मननात् ज्ञान[4]प्रकर्षशालित्वान्मुनिः। एतेन यस्मादयं महामतिस्तन्मनाः मुनिश्च तेनानन्तपारमप्यायुर्वेदं हेत्वादिस्कन्धत्रयमालम्बनं कृत्वा यथावदचिरादेव प्रतिपन्नवानित्याशयः। अचिरादिति अचिरेण। अत्र च यथा ब्रह्मा त्रिसूत्रं बुबुधे यथा चेन्द्रो हेतुलिङ्गौषधज्ञानं प्रोवाच तथैव भरद्वाजोऽपि त्रिस्कन्धं तं बुबुधे इत्यनेनायुर्वेदस्याविप्लुतागमत्वमुपदर्श्यते; तेन त्रिसूत्रत्रिस्कन्धयोर्न पुनरुक्तिः। तेनेति इन्द्राद्गृहीतेनायुर्वेदेन। अमितमिति अमितमिवामितम्, अतिदीर्घत्वात्। आयुःशब्दश्चायुःकारणे रसायनज्ञाने बोद्धव्यः; येनोत्तरकालं हि रसायनोपयोगादयं भरद्वाजोऽमितमायुरवाप्स्यति (नै ऋषिभ्य आयुर्वेदकथनात् पूर्वं रसायनमाचरति स्म); किंवा सर्वप्राण्युपकारार्थाधीतायुर्वेदजनितधर्मवशात्तत्कालमेवामितमायुर्लेभे भरद्वाज इति बोद्धव्यम्। तच्चेति श्रुतं; यदा तमिति पाठः, तदा तमायुर्वेदम्। अनवशेषयन्निति कार्त्स्न्येनेत्यर्थः। आयुर्वेदमधीत्यानन्तरमेवायं तमृषिभ्यो दत्तवान् ॥२५॥२६॥

**ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम्।**
**दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ॥ २७ ॥**
**महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा।**
**सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म च** २८
**समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः।**
**लेभिरे परमं शर्म जीवितं चाप्यनित्वरम्[2] ॥ २९ ॥**

दीर्घमायुश्चिकीर्षन्त इति प्राणिनामात्मनश्च। ज्ञानार्थं ज्ञानरूपं वा चक्षुर्ज्ञानचक्षुः, तेन ज्ञानचक्षुषा। गृहीतेन तेनायुर्वेदेन किं ददृशुरित्याह—सामान्यं चेत्यादि। एषां चोत्तरत्र लक्षणं षण्णां पदार्थानां विश्वरूपाणां भविष्यति; तेनैतत्तत्रैव व्याकरणीयम्। तदिति सामान्यादि। तन्त्रोक्तं विधिमिति अपथ्यपरिहारपथ्योपादानरूपम्। शर्म सुखम्। परमिति दुःखानाक्रान्तम्। अनित्वरमिति अगत्वरम् ॥ २७-२९ ॥

**अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः।**
**शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया** ३०
**अग्निवेशश्च भेल(ड)श्च जतूकर्णः पराशरः।**
**हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ ३१ ॥**

अथेत्यादिना भरद्वाजशिष्यस्यात्रेयस्य पुनर्वस्वपरनाम्नोऽग्निवेशादिगुरुतां दर्शयति। अत्र केचिद्भरद्वाजात्रेययोरैक्यं मन्यन्ते, तन्न; भरद्वाजसंज्ञया आत्रेयस्य क्वचिदपि तन्त्रप्रदेशेऽकीर्तनात्; हारीते चात्रेयादिगुरुतया भरद्वाज उक्तः—"शंकादहमधीतवान्" इत्यादिना "मत्तः पुनरसंख्येयास्त्रिसूत्रं त्रिप्रयोजनम्। अत्रात्रेयादिपर्यन्ता विदुः सप्त महर्षयः ॥ आत्रेयाद्धारीतऋषिः"—इत्यन्तेन। वाग्भटेन तु यदुक्तं "ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत्। सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन्" (वा. सू. अ. १) इत्यनेनात्रेयस्येन्द्रशिष्यत्वं, तदायुर्वेदसमुत्थानीयरसायनपादे आदिशब्देन वक्ष्य-

१ 'शब्दाक्षरपदन्यासच्छन्दोवृत्तरसक्रमैः। श्रुत्वा सहस्रवर्षाणामारोग्यार्थं विनिश्चयम् ॥ तेनायुरमितं' इत्यधिकः पाठः क्वचित्पुस्तके दृश्यते। २ 'तं च' इति पा०। ३ 'मोक्षसाधना' इति पा०। ४ 'ज्ञानप्रकर्षणनियोगित्वान्मुनिः' इति पा०।

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। २ 'अनश्वरम्' इति पा०।

माणेन्द्रशिष्यतायोगात् समर्थनीयम् । तत्र हीन्द्रेण पुनर्महर्षीणामायुर्वेद उपदिष्ट इति वक्तव्यम् । मैत्रीपरो मैत्रीप्रधानः; मैत्री च सर्वप्राणिष्वात्मनीव बुद्धिः ॥ ३० ॥ ३१ ॥

**बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः ।**
**तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत् ॥ ३२ ॥**
**अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।**
**श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥ ३३ ॥**
**श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्मणाम् ।**
**यथावत्सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ३४ ॥**
**सर्वे एवास्तुवंस्तांश्च सर्वभूतहितैषिणः ।**
**साधु भूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥ ३५ ॥**
**तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।**
**सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥ ३६ ॥**
**अहो साध्विति निर्घोषो लोकांस्त्रीनन्ववा(ना)दयत् ।**
**नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥ ३७ ॥**
**शिवो वायुर्ववौ सर्वा भाभिरुन्मीलिता दिशः ।**
**निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ ३८ ॥**
**अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः ।**
**बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्तिः क्षमा दया॥**
**तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः ।**
**भ(भा)वाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥४०॥**

बुद्धेर्विशेष उत्कर्षः । यत इति बुद्धेर्विशेषात् । स्वं स्वं तन्त्रमिति स्वस्वनामाङ्कितं भेलतन्त्रं, जतूकर्णतन्त्रमित्यादिकम् । कृतानि चेत्यत्र 'तन्त्राणि' इति शेषः । पुण्यमायुर्वेदतन्त्रकरणलक्षणं कर्म येषामग्निवेशादीनां ते पुण्यकर्माणः, तेषां पुण्यकर्मणाम् । सर्वभूतहितैषिण इत्यग्निवेशादिविशेषणं; किंवा ऋषिसङ्घविशेषणम् । साधुशब्दोऽजहल्लिङ्गतया नपुंसकलिङ्ग एव; यथा—वेदाः प्रमाणमिति । केचित्तु साध्विति विशेषणस्य नपुंसकलिङ्गतानुरोधादनुक्रोशमित्यपि नपुंसकलिङ्गं पठन्ति । अहो इति साध्विति प्रशंसायाम् । स्निग्ध इति अनुत्कटत्वेनाह्लादकत्वेन च । शिवो वायुर्ववावित्यादिना शुभलक्षणेन प्रकृततन्त्रकरणस्य देवैरप्यर्थतोऽनुमतत्वमुपदर्श्यते । ज्ञानदेवता इति ज्ञानाभिमानिन्यो देवताः । तेन ग्रन्थकरणात् पूर्वमेवाग्निवेशादीनां बुद्ध्यादयो व्यवस्थिताः, तन्त्रकरणोत्तरकालं त्वादरेण बुद्ध्यादिदेवतानुप्रवेश इति । सिद्धिः साध्यसाधनज्ञानम् । कीर्तिः कीर्तनं वक्तुं ज्ञानमित्यर्थः; ननु कीर्तिर्यशोरूपा, तस्या अज्ञानरूपत्वात्; ज्ञानदेवताश्चेहोच्यन्ते । भवाय स्थितये, रोगानुपहतजीवितायेति यावत् । प्रतिष्ठा जनोपादेयतयाऽवस्थानम् ॥ ३२–४० ॥

१ 'भूतेषु साधु यथा स्यात्तथाऽनुक्रोश' इति गङ्गाधरः ।

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ ४१ ॥**

संप्रत्यायुर्वेदव्युत्पत्तिं कुर्वन्नायुर्वेदाभिधेयं दर्शयति—हिताहितमित्यादि । हितं चाहितं च हिताहितं, तथा सुखयुक्तत्वात् सुखं, दुःखयुक्तत्वाद्दुःखं; एतच्च चतुष्प्रकारमप्यायुरर्थेदशमहामूलीये "तत्र शारीरमानसाभ्याम्" इत्यादिना ग्रन्थेन "अहितमतो विपर्ययेण" (सू. अ. ३०) इत्यन्तेन वक्ष्यति । तस्य हिताहितमिति आयुषः पथ्यापथ्यम् । मानं चेत्यायुष एव, तच्च प्रमाणं मासिकद्विमासिकत्वादिभिर्विकृतिलक्षणैरिन्द्रियस्थाने तथा प्रकृतिलक्षणैः "इदमायुष्मतां कुमाराणां लक्षणं भवति" (शा.अ. ८) इत्यादिना शारीरे वक्तव्यम् । तच्चेति आयुः स्वरूपेण "शरीरेन्द्रियसत्त्वात्मसंयोग" इत्यादिना वक्ष्यमाणम् । तेन हिताहितमित्यादिना 'आयुर्वेदयतीत्यायुर्वेद' इत्युक्तं भवति । विदधातुश्चेह ज्ञानार्थ एवाभिप्रेतः । यद्वक्ष्यत्यर्थे दशमहामूलीये—"तदायुर्वेदयतीत्यायुर्वेदः" (सू. अ. ३० ) इति । लाभादयस्त्वर्था विदेरिह नोक्ताः, तेषां साक्षादायुर्वेदाजन्यत्वादिति भावः ॥ ४१ ॥

**शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् ।**
**नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥ ४२ ॥**

आयुर्वेदपदे पूर्वपदवाच्यमायुराह—शरीरेत्यादि । शरीरं पञ्चमहाभूतविकारात्मकमात्मनो भोगायतनम्, इन्द्रियाणि चक्षुरादीनि, सत्त्वं मनः, आत्मा ज्ञानप्रतिसन्धाता, एषां सम्यगदृष्टयन्त्रितो योगः संयोगः । यद्यपि शरीरग्रहणेनैव इन्द्रियाण्यपि लभ्यन्ते, तथाऽपि प्राधान्यात्तानि पुनः पृथगुक्तानि । अयं च संयोगः संयोगिनः शरीरस्य क्षणिकत्वेन यद्यपि क्षणिकस्तथाऽपि सन्तानव्यवस्थितोऽयमेकतयोच्यते । तस्यायुषः पर्यायानाह—धारीत्यादि ।—धारयति शरीरं पूतितां गन्तुं न ददातीति धारि । जीवयति प्राणान् धारयतीति जीवितम् । नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति नित्यगः । अनुबध्नात्यायुरपरापरशरीरादिसंयोगरूपतयेत्यनुबन्धः । पर्यायैरायुरुच्यत इति एकार्थाभिधायिभिः शब्दैरुच्यते । यद्यपि च नित्यगानुबन्धशब्दाभ्यां न क्वचिदप्यायुरभिधीयते, तथाऽपि नित्यगत्वानुबन्धत्वधर्मख्यापनार्थमेवैतत्संज्ञाद्वयं बोद्धव्यं, धारिसंज्ञा त्वर्थेदशमहामूलीये भविष्यति । ननु, उत्तरत्र "चैतन्यानुवृत्तिरायुः" (सू. अ. ३०) इत्यायुर्लक्षणं करिष्यति, इह तु शरीरेन्द्रियसत्त्वात्मसंयोग इति किमर्थमुक्तम् ? । ब्रूमः—शरीरेन्द्रियसत्त्वात्मसंयोगजन्या चैतन्यानुवृत्तिर्यथोक्तसंयोगाव्यभिचारित्वेन व्यक्तत्वेन चार्थेदशमहामूलीये लक्षणत्वेनोक्ता; शरीरादिसंयोगरूपमेव त्वायुः परमार्थतः; एवंभूतसंयोगाभावे मरणमायुरुपरमरूपं भवति, मृतशरीरे तु चेतसोऽभावादायूरूपसंयोगाभावः ॥ ४२ ॥

**तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।**
**वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितम् ॥ ४३ ॥**

१ 'हितः' इति पा० ।

तस्येत्यादि। वेदयतीति वेदः। वेदविदां मत इति वेदविद्भिः पूजितः। अथ कस्मादायुर्वेदलक्षणो वेदः पुण्यतमो वेदविदां च पूजित इत्याह—वक्ष्यत इत्यादि। यदिति यस्मात्; एवमुक्तं भवति-यदन्ये ऋग्वेदादयः प्रायः परलोकहितमेवार्थं वदन्ति तेन पुण्याः, पुण्यतमश्चायमायुर्वेदो यद् यस्मान्मनुष्याणामुभयोरपि लोकयोर्यद्धितमायुरारोग्यसाधनं धर्मसाधनं च तद्वक्ष्यते, तेनातिशयेन पुण्यतमस्तथा वेदविदां च पूजित इति। केचित् 'वक्ष्यते यः' इति पठन्ति, तत्रापि हेतुगर्भमिति व्याख्येयम्। जीवितप्रदातृत्वादायुर्वेदस्य पुण्यतमत्वं बोद्धव्यं, यतश्चतुर्वर्गसाधनीभूतजीवितप्रदमेव सर्वोत्तमं भवति। उच्यते च—"न हि जीवितदानाद्धि दानमन्यद्विशिष्यते" (चि. अ. १) इति॥ ४३॥

**सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।**
**ह्रासहेतुर्विशेषश्च, प्रवृत्तिरुभयस्य तु॥ ४४॥**

संप्रत्यायुर्वेदाभिधेयतया सूत्रिते सामान्यादौ सामान्यस्य प्रथमंसूत्रितत्वात्तथा सामान्यज्ञानमूलत्वाच्चायुर्वेदप्रतिपाद्यस्य हेत्वादेः सामान्यमेवाग्रे निर्दिशति—सर्वदेत्यादि। सर्वदा सर्वस्मिन् काले नित्यगे चावस्थिके च। सर्वभावानामित्यत्र सर्वशब्दः कृत्स्नवाची; भवन्ति सत्तामनुभवन्तीति भावा द्रव्यगुणकर्माणीत्यर्थः, नतु भवन्त्युत्पद्यन्त इति भावाः; तथा सति पृथिव्यादिपरमाणूनां नित्यानां सामान्यस्य पार्थिवद्व्यणुकादिवृद्धं कार्यमसंगृहीतं स्यात्। सामान्यं च "सामान्यमेकत्वकरं" इत्यादिना वक्ष्यमाणलक्षणम्। वृद्धिः आधिक्यं, तत्कारणं वृद्धिकारणम्। एतच्च सामान्यं सामान्यवतो मांसद्रव्यादेर्वृद्धिकारणस्य लक्षणत्वेन वृद्धिकारणमित्युक्तम्। यतो न सामान्यं मांसत्वादिजातिरूपं वृद्धौ कारणं भवति, तथाहि सति सामान्यं मांसत्वरूपं यथा वर्धके भोज्यरूपे मांसेऽस्ति तथा शरीरधातुरूपे वर्धनीयेऽप्यस्ति, ततश्च नित्यं मांसत्वसंबन्धादमांसादानामपि मांसेन वर्धितव्यं; तस्माद्वृद्धिकारणलक्षणत्वेन सामान्यं वृद्धिकारणमित्युक्तम्। अत एव वैशेषिकेऽप्युक्तं—"त्रयाणामकार्यत्वमकारणत्वं च—" इति। अत्र त्रयाणामिति सामान्यविशेषसमवायानाम्। ये तु समानमेव सामान्यमिति कृत्वा द्रव्याद्येव सामान्यशब्देनाभिदधति, तेषां मते "सामान्यं च विशेषं च" (सू. स्था. अ. १) इत्यादिग्रन्थोक्तस्य सामान्यस्य नैं किंचिदनेनोक्तं स्यादित्यसंबन्धार्थत्वं प्रकरणस्य स्यात्। एतच्च वृद्धिकारणत्वं सामान्यस्य न लक्षणं, किं तर्ह्यायुर्वेदोपयोगिना धर्मेण निर्देशः; लक्षणं तु "सामान्यमेकत्वकरम्" इति करिष्यति। एवं द्रव्यादावपि चोद्देशानन्तरं निर्देशं करिष्यति "खादीन्यात्मा" इत्यादिना, ततो लक्षणं "यत्राश्रिताः कर्मगुणाः" इत्यादिना करिष्यति। सामान्यस्य च वृद्धिकारणत्वं ह्यसति विरोधिकारणे बोद्धव्यं, तेनामलकादिगतानामम्लत्वादीनां पित्तगताम्लत्वाद्यवर्धकत्वमामलकगतशिशिरत्वप्रभावविरोधितत्वादुपपन्नम्। एवमन्यत्रापि त्रिदोषहरद्रव्ये बोद्धव्यम्। इह च सामान्यस्य वृद्धिकारणत्वमित्युच्यते, नतु सामान्यमेव वृद्धिकारणमित्युच्यते, तेनासमानादपि घृतान्मेधाया वह्नेश्च वृद्धिः प्रभावादेवोपपन्ना, यदुक्तं,—"घृतमग्निमेधे करोति"—इति; तथा चिन्तया वातवृद्धिः, तथा संकल्पाद्वृष्यपादयुगलेपाच्च शुक्रवृद्धिरित्यादि प्रभावादुपपन्नम्। सामान्यं चेह वृद्धिकारणमित्युच्यमाने समानस्येति गम्यते, न हि शोणितं प्रति मांसत्वं सामान्यं, किंतु व्यावृत्तबुद्धिजनकत्वाद्विशेष एव। अथ वैशेषिकोक्तानामन्त्यविशेषाणामिह शास्त्रे चिकित्सायामनुपयुक्तत्वात्तद्विशेषधर्मव्यावर्तकत्वयोगात् सामान्यविशेषानेव ह्रासकारणत्वेनाह—ह्रासहेतुरित्यादि। अत्रापि सर्वदा सर्वभावानामिति योजनीयम्। ह्रासः अपचयः। विशिष्यते व्यावर्तत इति विशेषः। सामान्यमेव गवेधुकत्वं मांसादीन् प्रति विशेषः; गवेधुको हि गवेधुकत्वेन गवेधुकव्यक्त्यन्तरापेक्षया समानः, मांसापेक्षया व्यावृत्तत्वाद्विशेषः; न हि मांसे गवेधुकत्वमस्ति। एवं मांसत्वं मांसान्तरापेक्षयाऽनुगतत्वात् सामान्यं, शोणिताद्यपेक्षया तु मांसानां व्यावृत्तत्वाद्विशेष एव। अत्रापि ह्रासहेतुत्वं ह्रासहेतुद्रव्यादिलक्षणत्वेन सामान्यवज्ज्ञेयं; तथा ह्रासहेतुत्वमप्यसति विरोधके सामान्योक्तन्यायेन ज्ञेयं; तेन मन्दकनिकुचादीनां वातादिविरुद्धानामपि निरधत्वादीनां वातायशमकत्वं द्रव्यस्यापथ्यत्वप्रभावादेव ज्ञेयम्। विशेषश्चेह विरुद्धविशेषोऽभिप्रेतः; ते(ये)नोत्तरत्र विरुद्धविशेषमेव ह्रासहेतुतया तत्र तत्रोपदेक्ष्यति; यथा—"वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" (वा. सू. अ. १) इति, तथा "विपरीतगुणैर्देशमात्राकालोपपादितैः" (सू. अ. १) इत्यादि, तथा "विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति" (सू. अ. १) इत्यादि, तथा जतूकर्णेऽप्युक्तं—"समानैः सर्वभावानां वृद्धिर्ह्रासनिर्विपर्ययात्" इति। अविरुद्धविशेषस्तु यद्यपि ह्रासे वृद्धौ वाऽप्यकारणं, यथा—पृथिव्या अनुष्णाशीतस्पर्शो वातस्य शैत्यं न वर्धयति नापि ह्रासयति, तथाऽप्यभिक्षीयमाणानां धातूनामसमानत्वेनाजनकत्वाद्ध्रासकारणमि(मे)व भवति; यतोऽसमानद्रव्योपयोगे सति ह्रासो विनश्वराणां भावानामापूरकहेत्वभावादुपलभ्यत एव; यथा—वहतो जलस्य पूर्वदेशसेतुनोत्तरदेशजलस्य ह्रासः। एवंभूतं चाविरुद्धविशेषोपयोगेऽपि ह्रासं पश्यताऽऽचार्येण सामान्येनैवेहोक्तं—ह्रासहेतुर्विशेष इति। चशब्दः सर्वभावानामिति समुच्चिनोति। अथ किमसंबद्धावपि सामान्यविशेषौ वृद्धिह्रासकारणं नेत्याह—प्रवृत्तिरुभयस्य त्विति। 'कारणं' इति शेषः। उभयस्य सामान्यस्य विशेषस्य च, प्रवृत्तिः प्रवर्तनं शरीरेणाभिसंबन्ध

१ योगीन्द्रनाथसेनस्तु चरकोपस्कारे 'सत्त्वमात्मा शरीरं च' इत्याद्यायुर्वेदाधिकरणप्रतिपादकं ग्रन्थं प्राक् पठित्वाऽनन्तरं 'सर्वदा सर्वभावानां' इत्यादिग्रन्थं पठति। २ 'मांसत्वं सामान्यरूपं' इति पा०। ३ 'न किञ्चिदनेन ग्रन्थेनोच्यते इति' इति पा०।

१ 'वृष्यपादलेपात्' इति पा०। २ 'इत्याह' इति पा०।

इति यावत्; एवंभूता प्रवृत्तिः धातुसामान्यविशेषयोर्वृद्धिह्रासे कारणमित्यर्थः । तुशब्दोऽवधारणे; तेन नासंबद्धौ सामान्यविशेषौ स्वकार्यं कुरुत इति दर्शयति । किंवा प्रवृत्तिः उचिता धातुप्रवृत्तिर्धातुसाम्यमिति यावत्, सा उभयस्य सामान्यस्य विशेषस्य च 'कार्या' इति शेषः । तेन केवलसमानोपयोगाद्धातुवृद्ध्या धातुवैषम्यं, केवलविशेषोपयोगाच्च धातुक्षयाद्धातुवैषम्यं, युगपत्समानविशिष्टद्रव्योपयोगात् प्रवृत्तिर्धातुसाम्यरूपा भवतीत्युक्तं भवति । तुशब्दः पूर्वपक्षादेकद्रव्योपयोगलक्षणाद्व्यावर्तयति ॥ ४४ ॥

**सामान्यमेकत्वकरं, विशेषस्तु पृथक्त्वकृत् ।**
**तुल्यार्थता हि सामान्यं, विशेषस्तु विपर्ययः ॥४५॥**

अथ किंलक्षणं तत् सामान्यं किंलक्षणो वा स विशेष इत्याह—सामान्यमित्यादि । एकत्वकरमिति एकत्वबुद्धिकरं, सामान्यं यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु 'अयं गौरयं गौः' इत्यादिप्रकारा एकाकारा बुद्धिस्तत् सामान्यम् । न हि भिन्नासु व्यक्तिष्वभिन्नं सामान्यमेकरूपं विनाऽभ्रान्ता एकाकारा बुद्धिर्भवतीति भावः । यत्रापि च 'अयं पाचकोऽयं पाचकः' इति, तथा 'अयं शुक्लोऽयं शुक्लः' इत्यादौ क्रियागुणादिसामान्यादेकरूपा बुद्धिस्तत्रापि सामान्यमेकक्रियागुणादिगतमेकरूपाध्यवसाये हेतुः । न ह्येकस्मिन् पाचके या क्रिया सा पाचकान्तरेऽपि, किंतर्हि तज्जातीया । अतः क्रियासामान्यं तत्राप्येकत्वाध्यवसाये कारणम् । विशेषलक्षणं—पृथक्त्वकृदिति ।—व्यावृत्तबुद्धिकृत्; तेन यद्गोव्यक्त्यन्तरापेक्षयैकबुद्धिकर्तृतया गोत्वं सामान्यं, तदेव गोत्वमश्वाद्यपेक्षया व्यावृत्तबुद्धिकर्तृत्वादश्वादीन् प्रति विशेष इत्युक्तं भवति । तेन मांसत्वं मांसं प्रति मांसान्तरापेक्षया समानत्वाद्वृद्धिकारणं भवति, तदेव तु मांसत्वं वातं प्रति विशेषरूपतया ह्रासहेतुर्भवति; शोणितादीन् प्रति त्वविरोधिविशेषत्वेन न तथा ह्रासकारणं, गुणसामान्यात्तु वर्धकमपि मांसं शोणितादीनां भवति । कथमनेकासु व्यक्तिषु सामान्यमेकबुद्धिमव्यभिचारिणीं करोतीत्याह—तुल्यार्थता हीत्यादि । तुल्यार्थता एकसामान्यरूपार्थानुयोगिता । एतेन यस्माद्भिन्नासु व्यक्तिषु सामान्यमेकरूपंसंबन्धमस्ति, ततस्तदनेकार्थावलम्बा सत्यपि व्यक्तिभेदे एकबुद्धिर्युक्तेति भावः । विशेषस्तु विपर्यय इति अतुल्यार्थता हि विशेषत्वं, तेन गोगजयोरतुल्यगोत्वगजत्वरूपार्थयोः पृथग्बुद्धिर्युक्तैवेति दर्शितं भवति । अन्ये तु व्याख्यानयन्ति यत्—त्रिविधं सामान्यं, विशेषश्च त्रिविधः; यथा—द्रव्यगोचरः, गुणगोचरः, कर्मगोचरश्च; तत्र सर्वदेत्यादिना द्रव्यसामान्यमुच्यते; सामान्यमेकत्वकरमित्यनेन गुणसामान्यं; यथा—पयःशुक्रयोर्भिन्नजातीययोरपि मधुरत्वादिगुणसामान्यं तत्रैकतां करोति, एवं विशेषेऽप्युदाहार्यं; तुल्यार्थतेत्यादिना तु कर्मसामान्यं निगद्यते, आस्यारूपं हि कर्म न श्लेष्मणा समानमपि तु पानीयादिकफसमानद्रव्यार्थक्रियाकारित्वात् कफवर्धकरूपतया आस्याऽपि कफसमानेत्युच्यते; एवं स्वप्नादावपि कर्मणि बोद्धव्यम् । तदेतद्भट्टारहरिचन्द्रेणैव दूषितं; यतः सर्वदेत्यादिनैव लक्षणेन त्रिविधमपि सामान्यं लभ्यते, तेनास्मिन् पक्षे सामान्यमेकत्वकरमित्यादिवाच्यं स्यादिति कृत्वा । अन्ये तु पश्यन्ति—यत्त्रिविधं सामान्यम्—अत्यन्तसामान्यं, मध्यसामान्यम्, एकदेशसामान्यं च; तत्र सर्वदेत्यादिनाऽत्यन्तसामान्यमुच्यते; सामान्यमेकत्वकरमित्यनेन मध्यसामान्यं, तुल्यार्थता हीत्यादिनैकदेशसामान्यम्; एतदपि त्रैविध्यकथनं नातिप्रयोजनमसंगतलक्षणं चेति नातिश्रद्धाकरम् । केचित् सामान्यं द्विविधमिच्छन्ति—उभयवृत्ति, तथैकवृत्ति च; तत्र मांसं मांसवर्धकम्, उभयवृत्तिसामान्यात्; मांसत्वं हि पोष्ये पोषके च गतत्वादुभयवृत्ति; एकवृत्ति तु यथा—घृतमग्निकरं, तथा धावनादिकर्म वातकरं, तथाऽऽस्यादि कफकरम्; एतद्धि सर्वं न वर्धनीयेन समानं, किंतु प्रभावाद्वर्धकं; प्रभावश्च घृतत्वधावनत्वादिरेव; स चैकवृत्तिसामान्यरूपः, तेनात्रापि सामान्यमेव वृद्धिकारणमिति ब्रुवते । अस्मिंस्तु पक्षेऽनुभयवृत्तिसामान्यं विशेष एव भवति, तथा समानमसमानं च वृद्धिकारणं भवतीति न किंचित् सामान्यस्योक्तं स्यात् । अस्मन्मते तु सामान्यं वृद्धौ कारणमेव भवतीति सामान्यं वृद्धिकारणत्वेन नियम्यते; न तु वृद्धिः सामान्यकारणिकैवेति नियम्यते, तेनासमानादपि वृद्धिर्भवति निर्दोषा । यत्तूच्यते—कर्मसामान्यं नेह तन्त्रे वृद्धिकारणमस्ति, यतो न धावनेन वायुः समान इति; अत एवाचार्येण द्रव्यसामान्यमुक्तं "मांसमाप्यायते मांसेन" (शा. स्था. अ. ६) इत्यादिना, तथा "समानगुणानामाहारविकाराणामुपयोगः" (शा. अ. ६) इत्यादिना गुणसामान्यमुक्तं; नैवं कर्मसामान्यमुक्तं, वचनं हि "कर्मापि च यद्यस्य धातोर्वृद्धिकरं तत्तदासेव्यम्" ( शा. अ. ६ ) इति; न तत्र सामान्योपग्रहः कृतः । अत्र ब्रूमः—कर्मणां प्रायः प्रभावेणैव वृद्धिहेतुत्वात् सामान्यानुपग्रहः कृतः, न तु कर्मसामान्याभावात्; यतः क्रियावतो वातस्य क्रियावता व्यायामादियुक्तेन शरीरेण वृद्धिः क्रियते, निष्क्रियतया चास्य वातस्य ह्रासः । स्वप्नादयस्तु "संयोगे च विभागे च" इत्यनेन वक्ष्यमाणलक्षणेनायुक्ता अपि शास्त्रव्यवहारात् कर्मशब्देनोच्यन्ते । तत्र स्वप्नः स्वकारणादेव चीयमानस्य कफस्य क्षयकारणशरीरपरिस्पन्दादिनिरोधकत्वेन वृद्धिकर उच्यते, न तु स्वप्नः साक्षाच्छ्लेष्मवृद्धिं

१ 'सामान्यविशेषयोः' इति पा० । २ 'वैषम्यं' इति पा० । ३ 'इत्येवमाद्येकाकारा' इति पा० । ४ 'अभ्रान्तैकरूपा' इति पा० । ५ 'सामान्यमेव क्रियागुणादिगतं' इति पा० । ६ 'प्रत्यविरुद्धविशेषत्वेन' इति पा० । ७ '०मेकरूपं संबद्धमस्ति' इति पा० । ८ दिशेषः' इति पा० ।

१ 'स्वरूपत' इति शेषः । २ 'एवेति' इति पा० । ३ 'सामान्यकारणत्वेनैवेति' इति पा० ।

करोति। एवमास्वादावपि चिन्तनीयम्। यत्र त्वेवं कारणं चिन्तयितुं न पार्यते तत्र प्रभाव एव वर्णनीयः। ननु मांसं मांसं वर्धयति सामान्यात्, विशेषाच्च वातं क्षपयति, तत् कथं युगपद्विरुद्धार्थद्वयकर्तृत्वं मांसस्य; न हि देवदत्तो यदैव कुम्भं करोति तदैव काण्डमपि। नैवं, क्रियावतामयं धर्मो नाक्रियावतामिति; तथाहि—शब्दो युगपदनेकानेव शब्दानेककालमारभते, तथाऽग्निः प्रकाशदाहौ युगपत् करोति; अत एवोक्तमाचार्येण—"तस्माद्भेषजं सम्यगवचार्यमाणं युगपदूनातिरिक्तानां धातूनां साम्यकरं भवति; अधिकमपकर्षति, न्यूनमाप्याययति" (शा.अ.६) इति। यदुच्यते—क्षीयमाणधातोर्वृद्धस्य तथा बहुदोषस्य समानगुणोऽप्याहारो न वृद्धिहेतुः, तथा ग्रीष्मे च मधुरादिना समानेनापि न कफाभिवृद्धिरित्यादि; तत्र प्रतिबन्धकानां जराबहुदोषत्व-ग्रीष्मोष्णत्वादीनां विद्यमानत्वान्न सामान्यं वर्धकम्; असति च विरोधके सामान्यं वृद्धिकारणमिति सिद्धान्तः; तेन न काचित् क्षतिः। किंवा वृद्धादीनां समानेनाहारेण क्रियत एव वृद्धिः; परमतिवलवता क्षयहेतुनाऽऽधीयमानक्षये पुरुषे सा वृद्धिर्नोपलभ्यते। अत्र च द्रव्यसामान्यमेव धातूनां द्रव्यरूपाणां वर्धकं न गुणसामान्यं, गुणानां द्रव्यानारम्भकत्वात्। गुणसामान्यात्तु तद्गुणाश्रयं द्रव्यमनुमीयते; तच्च द्रव्यं धातुवर्धकं भवति, यथा—रूक्षादीन् गुणान् दृष्ट्वा चित्रके वाय्वधिको योऽनुमितः, स च चित्रक उपयुक्तो वातं वर्धयति, गुणास्तु गुणानेव जनयन्तोऽभिवर्धयन्ति। सामान्यं च वृद्धि कारणलक्षणं न साक्षाद्वृद्धिकारणमिति प्रागेवोक्तम्; एवं विशेषेऽपि। अयं च सामान्यविशेषवादो ग्रन्थविस्तरभयादायुर्वेदोपयुक्तधर्ममात्रेणोक्तः; विस्तरस्त्वस्य वैशेषिके बोद्धव्यः ॥ ४५ ॥

**सत्त्वमात्मा शरीरं च त्रयमेतत्त्रिदण्डवत्।**
**लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥ ४६ ॥**
**स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम्।**
**वेदस्यास्य, तदर्थं हि वेदोऽयं संप्रकाशितः ॥ ४७ ॥**

संप्रति सामान्यविशेषावभिधाय, उद्देशक्रमानुरोधाद्गुणेऽभिधातव्ये, गुणेषु प्रधानभूतमायुर्वेदोपकार्यं सत्त्वात्मशरीरसंयोगं वक्तुमाह—सत्त्वमित्यादि; किंवा सामान्यविशेषाभ्यामेव हेतुलिङ्गौषधानि दर्शितानि, सामान्यविशेषवत एव सर्वत्र कारणत्वाल्लिङ्गत्वाच्चैतावदेव विचार्यमाणं तन्त्रं भवति, अधिकरणं च नोक्तम्, अतः सत्त्वादिमेलकं हेत्वाद्यधिकरणमाह—सत्त्वमित्यादि। सत्त्वं मनः। चशब्दः समुच्चये। संख्येयनिर्देशादेव संख्यायां लब्धायां त्रयमिति पदं मिलितानामेव ग्रहणार्थम्। एतदित्यनन्तरोक्तनिर्देशः। त्रिदण्डः परस्परसंयोगविधृतः कुम्भादिधारकस्तद्वत्। एतेन यथा त्रिदण्डेऽन्यतमापाये नावस्थानं, तथा सत्त्वादीनामन्यतमापायेऽपि न लोकस्थितिरित्युक्तं भवति। लोकत आलोकत इति लोकः, तेनेह जङ्गमो भूतग्राम उच्यते। संयोगात्तिष्ठतीति परस्परोपग्राहकात् संयोगात् स्वार्थक्रियां कुर्वन्न विशकलितं भवति। अत्र तु पृथगिन्द्रियग्रहणं न कृतं, शरीरग्रहणेनैव गृहीतत्वात्। तत्र सर्वं प्रतिष्ठितमिति तस्मिँल्लोके कर्मफलादि व्यवस्थितं; यद्वक्ष्यति—"अत्र कर्मफलं चात्र ज्ञानं चात्र प्रतिष्ठितम्। अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता" (शा. अ. १) इति। स पुमानिति तत् सत्त्वादित्रयं पुमानिति भण्यते। तत्र यद्यपि सत्त्वादित्रयं नपुंसकलिङ्गं, तथाऽपि पुमानिति वक्ष्यमाणलिङ्गग्रहणात् 'स' इति पुंलिङ्गनिर्देशः; यथा—"णेरणौ यत् कर्म णौ चेत् स कर्ता" (पा. अ. १ पा. ३ सू. ६७) इत्यादौ। किंचैतदिति यद्यपि वर्तमाननिर्देशः कृतस्तथाऽपि तस्यैव 'स' इत्यतीतनिर्देशोऽपि सर्वनाम्नां सर्वकालनिर्देशादेवाविरुद्धो मन्तव्यः। वदन्ति हि लाक्षणिकाः—"प्रत्यक्षे च परोक्षे च सामीप्ये दूर एव च। एतेष्वर्थेषु विद्वद्भिः सर्वनाम प्रयुज्यते"—इति। चेतनमिति ज्ञानवत्। तच्चाधिकरणं स्मृतं तन्त्रस्येत्यत्र हेतुमाह—तदर्थं हीत्यादि। तदर्थमिति तदुपकारार्थम्; एतेन तदुद्दिश्य प्रवृत्तिरधिकरणार्थो नाधारार्थेति दर्शयति। अत्र सत्त्वमादौ कृतं, तदधीनत्वादात्मशरीरक्रियायाः; यदुक्तं—"अचेतनं क्रियावच्च मनश्चेतयिता परः। युक्तस्य मनसा तस्य निर्दिश्यन्त्यात्मनः क्रियाम्" (शा. अ. १) इति। पूर्वं शरीरेत्यादिनाऽऽयुरुक्तं, सत्त्वमात्मेत्यादिना तु तन्त्राधिकरणभूतपुरुष उच्यत इति न पौनरुक्त्यम्। अत्र चात्मग्रहणेन बुद्ध्यहङ्कारादीनां ग्रहणं, शरीरग्रहणेनेन्द्रियाणामर्थानां च शरीरसंबद्धानां ग्रहणं व्याख्येयम् ॥ ४६ ॥ ४७ ॥

**खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।**
**सेन्द्रियं चेतनं द्रव्यं, निरिन्द्रियमचेतनम् ॥ ४८ ॥**

संप्रति गुणाभिधानं क्रमप्राप्तमुल्लङ्घ्य द्रव्याणि निर्दिशता गुणाधारतया द्रव्यस्य प्राधान्यमुच्यते; सूत्रे च "सामान्यं च विशेषं च" इत्यादौ गुणानादौ निर्दिशता गुणानामेव रसादीनां प्रायः शास्त्रे कार्मुकत्वमुपदर्श्यते; अत एवात्रेयभद्रकाप्यीये (सू. २६) मधुरादिरसद्वारा सर्वगुणान् कर्माणि च द्रव्यस्य वक्ष्यति; किंच सर्वप्रधानं यज्जीवितं तदेव संयोगगुणरूपमित्यग्रे तत्र गुणग्रहणं, स च संयोगगुणः सत्त्वमात्मेत्यादिना प्रथममुक्त एव; विशेषगुणेषु तु द्रव्यं प्रधानमिति द्रव्यमुच्यते—खादीनीत्यादि। खादीनीत्यादावात्मा कस्मात् प्रधानभूतोऽपि प्रथमं नोक्तः? उच्यते—शरीरस्येह व्याध्यारोग्याधिकरणतया प्रधानत्वात्तदारम्भकानि खादीन्येवोच्यन्ते नात्मा, तस्य निर्विकारत्वात्; वचनं हि "निर्विकारः परस्त्वात्मा" (सू. अ. १) इत्यादि; खादीनि च "महा-

१ 'नाक्रियाणां' इति पा०। २ 'चित्रके वायुरधिको योऽनुमितः स च चित्रके उपयुक्ते' इति पा०। ३ 'त्रिदण्डानामन्यतमापायेऽपि' इति पा०।

१ 'विस्खलितं' इति पा०। २ '०वाविरोधो' इति पा०। ३ 'तदुद्देशप्रवृत्तिरधिकरणार्थो नाधारार्थः' इति पा०। ४ 'निर्दिशयन्ते विभोः क्रियाः' इति पा०। ५ तदधिकरणभूतपुरुषः' इति पा०।

भूतानि खं वायुरग्निरापः क्षितिस्तथा" ( शा. अ. १ ) इत्यनेन क्रमेणोक्तानि भूतान्यनागतवेक्षणेनोच्यन्ते। आत्मादीनां च यथाभ्यर्हितस्य पूर्वनिर्देशः। द्रव्यसंग्रह इति करचरणहरीतकीत्रिवृतायसंख्येयभेदभिन्नस्य कार्यद्रव्यस्य कारणद्वारा संक्षेप इत्यर्थः। सर्वकार्यद्रव्याणामपि व्यवस्थामाह—सेन्द्रियमित्यादि। निरिन्द्रियमित्यत्र निःशब्दोऽभावे, निर्मक्षिकमितिवत्। अत्र सेन्द्रियं चेतनमित्येवावतैवार्थापत्त्या निरिन्द्रियमचेतनमिति लब्धेऽपि पुनस्तद्वचनमेवंभूतार्थापत्तेरनैकान्तिकत्वाद्वोद्धव्यम्। यथा नवज्वरे दिवास्वप्नादि निषिद्धं, अर्थाजीर्णे ज्वरे तदुपचेत, न चैवं; तत्र तेषां दिवास्वप्नादीनां निषिद्धत्वात्; तस्मात्त्रिविधशिष्यबुद्धिहितत्वोद्यमपि साक्षादेवोच्यते; वदन्ति हि न्यायविदो—"व्याख्यानाद्वरं करणम्" इति। यद्यपि चात्मैव चेतनो न शरीरं, नापि मनः, यदुक्तं—"चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते" (शा. अ.१) इति, तथाऽपि सलिलौष्ण्यवत् संयुक्तसमवायेन शरीराद्यपि चेतनम्। इदमेव चात्मनश्चेतनत्वं यदिन्द्रिययोगे सति ज्ञानशालित्वं, न केवलस्यात्मनश्चेतनत्वं; यदुक्तं—"आत्मा ज्ञः, करणैर्योगाज्ज्ञानं त्वस्य प्रवर्तते" (शा. अ. १) इति। अत्र सेन्द्रियत्वेन वृक्षादीनामपि चेतनत्वं बोद्धव्यं; तथाहि-सूर्यभक्ताया यथा यथा सूर्यो भ्रमति तथा तथा भ्रमणाद्दृगनुमीयते, तथा लवली मेघस्तनितश्रवणात् फलवती भवति, बीजपूरकमपि शृगालादिवसागन्धेनातीव फलवद्भवति, चूतानां च मत्स्यवसासेकात् फलाढ्यतया रसनमनुमीयते, अशोकस्य च कामिनीपादतलाहतिसुखिनः स्वक्तिस्य स्पर्शनानुमानं; स्मृतिश्चानुमानं द्रढयति, यथा—"योऽभिवादितविप्रस्तु नाशिषं संप्रयच्छति। श्मशाने जायते वृक्षो गृध्रकङ्कोपसेवितः" इति; तथा "वृक्षगुल्मं बहुविधं तत्रैव तृणजातयः। तमसाऽधर्मरूपेण च्छादिताः कर्महेतुना॥ अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः। एतदन्ताश्च गतयो ब्रह्माद्याः समुदाहृताः" (मनुस्मृति अ. १) इति। तथा तन्त्रकारश्च वानस्पत्यानूकान् प्राणिनो वक्ष्यति; तेनागमसंवलितया युक्त्या चेतना वृक्षाः॥ ४८॥

**सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः।**
**गुणाः प्रोक्ताः**

संप्रति गुणान्निर्देष्टुमाह—सार्था इत्यादि। अनेन त्रिविधा अपि वैशेषिकाः सामान्या आत्मगुणाश्चोद्दिष्टाः। तत्रार्थाः शब्दस्पर्शरूपरसगन्धाः। यदुक्तम्—"अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः" ( शा. अ. १ ) इति। एते च वैशेपिकाः; यत आकाशस्यैव शब्दः प्राधान्येन, वायोरेव स्पर्शः प्राधान्येन, एवमग्न्यादिषु रूपादयः। अन्यगुणानां चान्यत्र दर्शनं भूतान्तरानुप्रवेशात्। वचनं हि—"विष्टं ह्यपरं परेण" ( न्या. द. अ. ३ आ. १ सू. ६६ ) इति। गुर्वादयस्तु गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिः। एते च सामान्यगुणाः, पृथिव्यादीनां साधारणत्वात्। एते यज्जःपुरुषीये प्राय आयुर्वेदोपयुक्तत्वात् परादिभ्यः पृथक् पठिताः। बुद्धिः ज्ञानम्; अनेन च स्मृतिचेतनाधृत्यहङ्कारादीनां बुद्धिविशेषाणां ग्रहणम्। प्रयत्नोऽन्ते येषां निर्देशे ते प्रयत्नान्ताः; एतेन चेच्छाद्वेषसुखदुःखप्रयत्नानां ग्रहणम्। वचनं हि—"इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः" (शा. अ. १) इति। इह चेतनादीनां बुद्धिग्रहणेनैव ग्रहणं, शारीरे तु चेतनादीनामपि पृथगात्मगमकत्वेन पृथक् पाठः। एतच्च तत्रैव व्याकरणीयम्। परादयो यथा—"परापरत्वे युक्तिश्च संख्या संयोग एव च। विभागश्च पृथक्त्वं च परिमाणमथापि च॥ संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः" ( सू. अ. २६ ) इति। एते च सामान्यगुणा अपि नात्युपयुक्तत्वात्तथा बुद्धिप्राधान्याच्चान्ते प्रोक्ताः। प्रोक्ता इति प्रकर्षेण विशेषगुणत्ववादिनोक्ताः॥—

**प्रयत्नादि कर्म चेष्टितमुच्यते॥ ४९॥**

क्रमागतं कर्म निर्दिशति—प्रयत्नादीत्यादि। प्रयतनं प्रयत्नः कर्मैवाद्यमात्मनः; यथा—"तुल्यास्यप्रयत्नं सवर्णम्" (पा. अ.१ पा. १ सू. ९) इत्यत्र व्याख्यातम्। आदिशब्दः प्रकारवाची। तेन संस्कारगुरुत्वादिजन्यकृत्स्नक्रियावरोधः। यद्यपि चेष्टितं प्राणिव्यापार उच्यते, तथाऽपीह सामान्येन क्रिया विवक्षिता। चेष्टितपदेनैव सर्वकर्मलाभे सिद्धे वमनादिकर्मनिषेधे च सिद्धे प्रयत्नादीति पदं सुसूक्ष्मप्रयत्नरूपकर्मव्यापित्वद्योतनार्थम्। अन्ये तु प्रयत्नादीति प्रयत्नकारणमिति ब्रुवते, प्रयत्नग्रहणं च कारणोपलक्षणं वदन्ति; तेन गुरुत्वादिकार्यस्यापि कर्मणो ग्रहणमिति। प्रयत्नशब्दश्चायुर्वेदेऽपि कर्मवचनो दृश्यते; "प्रवृत्तिस्तु चेष्टा कार्यार्था, सैव क्रिया प्रयत्नः कार्यसमारम्भश्च" ( वि. अ. ८ ) इति वचनात्॥ ४९॥

**समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः।**
**स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः॥ ५०॥**

समवायमाह—समवाय इत्यादि। समवायस्य चायं निर्देश एव लक्षणम्। तेनोत्तरत्र द्रव्यादिलक्षणे पुनरस्य लक्षणं न कर्तव्यम्। समवाय इति लक्ष्यनिर्देशः, अपृथग्भाव इति लक्षणम्; अपृथग्भावः अयुतसिद्धिः, सहैवावस्थानमिति यावत्। यथा—अवयवावयविनोः, गुणगुणिनोः, कर्मकर्मवतोः, सामान्यसामान्यवतोः; नह्यवयवादीन् विरहय्यावयव्यादय उपल-

१ 'अनागतावेक्षणादुच्यन्ते' इति पा०। २ 'यथाभ्युदितस्य' इति 'तथाऽव्यवहितस्य' इति च पा०। ३ 'तद्यापचेत' इति पा०। ४ 'निकृष्टस्यात्मनः' इति पा०। ५ 'तमसा बहुरूपेण' इति पा०। ६ 'वानस्पत्यान् मूकान्' इति पा०।

१ 'भूतान्तरप्रवेशकृतम्' इति पा०। २ पूर्वं भूतं परे भूते स्वगुणसहितं प्रविष्टं, यथा—आकाशो वायौ, तौ वह्नौ, ते जले, तानि पृथिव्याम्। ३ 'प्रकारेण' इति पा०। ४ 'सुसूक्ष्मरूपकर्मव्यापित्वद्योतनार्थम्' इति पा०।

भ्यन्ते। अपृथग्भावमेव विशेषयन्नाह—भूम्यादीनां गुणैर्मत इति। भूम्यादीनां भूमिप्रकाराणां; भूमिश्च भूयसामाधेयानामाधारा, तेनाधारत्वोदाहरणार्थमुक्ता; यतो भूमेरर्थाः सर्वे गुर्वादिपराद्याश्च गुणास्तथा चावयविसामान्यक(ध)र्माण्यप्याधेयानि, नेतरद्रव्ये यथोक्तसर्वाधेयसंपत्तिः। एतेन भूम्यादीनामित्याधाराणां, गुणैरिति अप्रधानैराधेयैः; आधेयो ह्याधारापेक्षयाऽप्रधानम्, अप्रधाने च गुणशब्दो यथा—गुणीभूतोऽयमिति, अप्रधानमित्यर्थः; तेनाधाराणामाधेयैर्योऽपृथग्भावः स समवायः इति। तेन पृथिवीत्वगन्धवत्त्वयोरपृथक्सिद्धयोरप्याधाराधेयभावाभावाच्च समवाय इत्युक्तं भवति। अत एवोक्तं वैशेषिके यत्—"अयुतसिद्धानामाधार्याधारभूतानां यः संबन्ध इहेतिप्रत्ययहेतुः स समवायः" (प. ध. सं. द्रव्यपदार्थनिरूपण) इति। स नित्य इति समवायोऽविनाशी। सत्यपि समवायिनां द्रव्याणां नाशे समवायो न विनश्यति। अत्र हेतुमाह—यत्र हीत्यादि। यत्र द्रव्यं नियतं नित्यं, यथा—आकाशं, न तत्र नित्य आकाशेऽनियतो विनाशी गुणः, 'कश्चित्' इति शेषः। एवं मन्यते—नित्ये व्योम्नि परिमाणमपि तावन्नित्यं, तथा द्रव्यत्वमप्याकाशगतं नित्यं, तथा नित्ययोराकाशतद्गुणयोः समवायलक्षणः संबन्धोऽपि नित्य एव। एवं तत्र समवायस्य नित्यत्वे सिद्धे एकरूपत्वात् समवायस्यान्यत्रापि नित्यत्वमेव। न चाश्रयद्रव्यनाशे समवायविनाशः। यथा—गोव्यक्तिविनाशेऽपि गोत्वस्य सामान्यस्य न विनाशः। नित्यस्यैव समवायस्य ते ते पार्थिवद्रव्यादयस्तत्र तत्र व्यञ्जका भवन्ति सामान्यस्येव व्यक्तयः। अन्यैस्तु नित्यानित्यभेदेन द्विविधः समवायो व्याख्यातः; अयं च ग्रन्थो भूम्यादीनां गुणैरेव यः संयन्धस्तस्यैव यथाश्रुतस्य प्रतिपादक ईति व्याख्यातं; तत्तु न व्यापकं नापि वैशेषिकमतानुयायीति नेह प्रपञ्चितम् ॥ ५० ॥

**यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्।**
**तद्द्रव्यं**

द्रव्यलक्षणमाह—यत्रेत्यादि। यत्राश्रिता यत्र समवेताः, कर्म च गुणाश्च कर्मगुणाः। कारणं समवायि यदिति समवायि कारणं यत्, द्रव्यमेव हि द्रव्यगुणकर्मणां समवायिकारणम्। समवायिकारणं च तद् यत् स्वसमवेतं कार्यं जनयति; गुणकर्मणी तु न स्वसमवेतं कार्यं जनयतः, अतो न ते समवायिकारणे। एतत्कर्मवत्त्वं हि द्रव्यस्य गुणादिपञ्चपदार्थव्यावृत्तिमात्रलक्षणकथनं, न तु सजातीयव्यापकविजातीयव्यावर्तकलक्षणकथनं; येन कर्मसमवायो नाकाशादीनां वर्तते, तेन लक्षणानुगतं विजातीयव्यावृत्तं द्रव्यस्य लक्षणं गुणवत्त्वं समवायिकारणत्वं च बोद्धव्यम्। यत्तु(त्तू)त्पन्नमात्रं द्रव्यं प्रथमक्षणे निर्गुणं, तदपि द्वितीयक्षणावश्यंभाविगुणवत्तया तद्योग्यत्वाद्गुणवदेवेति मन्तव्यम्। वैशेषिकेऽप्युच्यते—"क्रियावद्गुणवत् समवायिकारणं द्रव्यम्" (वै. द. अ. १., सू. १५) इति। तत्रापि च यथेह व्याख्यातं तथैव व्याख्यातम् ॥—

**समवायी तु निश्चेष्टः कारणं गुणः ॥ ५१ ॥**

गुणलक्षणमाह—समवायीत्यादि। समवायीति समवायाधेयः; तेन व्यापकद्रव्येभ्यो निष्क्रियेभ्य आकादिभ्यो गुणस्य व्यावृत्तिः; नह्याकाशादयः समवायाधेयाः। निर्गतश्चेष्टायाः निश्चेष्टः, चेष्टानिर्गत्या चेह चेष्टाशून्यत्वं तथा चेष्टाव्यतिरिक्तत्वं चोच्यते; तेन चेष्टारूपात् कर्मणो व्यावृत्तिः, तथा क्रियाधारत्वयोगेभ्यो मूर्तद्रव्येभ्यो व्यावृत्तिः सिद्धा; गुणस्य कारणमित्यनेन चाकारणेभ्यः सामान्यविशेषसमवायेभ्यो व्यावृत्तिः सिद्धा। कारणत्वं तु विभुद्रव्यपरिमाणान्त्यावयविरूपादिषु लक्षणीयेषु गुणेषु नास्ति, तेन भागासिद्धं लक्षणं स्यात्, अतः कारणत्वेनेह भावरूपकारणाव्यभिचारि सामान्यवत्त्वं लक्षणतया बोद्धव्यम्। तच्च सामान्यवत्त्वं सर्वगुणव्यापकं सामान्यादिव्यावर्तकं च, सामान्यादीनां सामान्यवत्त्वाभावात्। अथवा विभुद्रव्यपरिमाणान्त्यावयविरूपाद्यन्तराणां कारणत्वदर्शनाद्विभुद्रव्यपरिमाणान्त्यावयविरूपादावपि कारणत्वयोग्यत्वमस्त्येवेति न भागासिद्धता कारणत्वस्य; किंवा योगिप्रत्यक्षज्ञानहेतुतया विभुद्रव्यपरिमाणादीनामपि कारणत्वं बोद्धव्यम्। एवंभूतं च कारणत्वं यद्यपि सामान्यादिष्वपि क्वचिदनुगम्यते, तथाऽपि 'समवायी तु' इति पदेन समवायाधारता तथा समवायाधेयता च युगपद्विवक्षिता; तेन समवायकेवलाधारस्य विभुद्रव्यस्य तथा समवायकेवलाधेयस्य सामान्यादेश्च व्युदासः सिद्धो भवति ॥ ५१ ॥

**संयोगे च विभागे च कारणं द्रव्यमाश्रितम्।**
**कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥ ५२ ॥**

कर्मलक्षणमाह—संयोग इत्यादि। संयोगे च विभागे च युगपत् कारणम्। तेन संयोगे उत्तरदेशसंयोगकारके विभागाकारणे, तथा विभागे च विभागजविभागमात्रकारणे संयोगाकारणे व्यावृत्तिः सिद्धा। द्रव्यमाश्रितमिति स्वरूपमात्रकथनं व्याख्येयं, द्रव्यैर्व्यावृत्तिस्तु 'कर्म नान्यदपेक्षते' इत्यनेनैव सिद्धा। अस्यायमर्थो यत्—कर्म उत्पन्नं स्वाश्रयस्य द्रव्यस्य पूर्वदेशविभागे उत्तरदेशसंयोगे च कर्तव्ये नान्यत्कारणं पश्चात्कालभाव्यपेक्षते; द्रव्यं तु यद्यपि संयोगविभागकारणं युगपद्भवति, तथाऽपि तदुत्पन्नं यदा कर्मयुक्तं भवति तदैव संयोगविभागकारणं स्यात्; कर्म तूत्पन्नं करोत्येव परं संयोगविभागौ न तु कारणान्तरं पश्चाद्भाव्यपेक्षते, संयोगविभागाश्रयप्रत्यासत्तिं त्वपेक्षते,

१ 'द्रव्यादीनां' इति पा०। २ 'यथा' इति पा०। ३ 'आश्रयनाशे' इति पा०। ४ 'इत्यादि' इति पा०। ५ विद्यते' इति पा०। ६ 'लक्ष्यार्थ' इति पा०।

१ 'लक्षणया' इति पा०। २ 'किंवा' इति पा०। ३ 'सामान्यादिषु केचिदनुमन्यन्ते' इति पा०। ४ 'द्रव्यव्यावृत्तेस्तु' इति पा०। ५ 'सिद्धत्वात्' इति पा०। ६ 'भवति' इति पा०। ७ 'कारणं' इति पा०।

सा च पूर्वसिद्धैवेति न चैरमभाविकारणान्तरापेक्षता कर्मणः। अथ कर्मशब्देन वमनादीनां तथाऽदृष्टस्य तथा क्रियायाश्चाभिधीयमानत्वात् कस्य कर्मण इदं लक्षणमित्यत आह—कर्तव्यस्य क्रिया कर्मेति। एतेन क्रियारूपस्य कर्मण इदं लक्षणं नादृष्टादेरिति ॥ ५२ ॥

**इत्युक्तं कारणं,**

प्रकरणमुपसंहरति—इतीत्यादि। इति समाप्तौ; तेनैतावदेव सामान्यादिषट्कं सर्वस्यैव कार्यजातस्य कारणं, नान्यत् कारणमस्ति॥—

**कार्यं धातुसाम्यमिहोच्यते।**
**धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥५३॥**

कारणं सामान्येनाभिधायायुर्वेदोपयुक्तं कार्यमाह—कार्यमित्यादि। धातुसाम्यम् आरोग्यं; वक्ष्यति हि—"विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यम्" (सू. स्था. अ. ९) इत्यादि। इहेत्यायुर्वेदे; तेनान्यत्रान्यदपि घटादि कार्यमुच्यते। इह तु किमिति तत् कार्यं नोच्यत इत्याह—धातुसाम्येत्यादि। चकारो हेतौ। धातुसाम्यक्रियैव यस्मादायुर्वेदप्रयोजनं, तस्मादायुर्वेदे धातुसाम्यमेव कार्यमुच्यते प्रयोजनं कथ्यते; अन्यत्त्वविवक्षितत्वात्तथाऽप्रधानत्वाच्च नेह कार्यत्वेनोच्यते ॥ ५३ ॥

**कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च।**
**द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ ५४ ॥**

संप्रति सामान्येन कारणमुक्तं तदायुर्वेदोपयुक्तद्वारेण वक्तव्यं; तत्र व्याधिकारणमेव तावदग्रेऽभिधीयते-कालेत्यादिना सूत्रक्रमानुरोधात्। सूत्रणं हि "हेतुलिङ्गौषधज्ञानम्" (सू. स्था. अ. १) इति। कालः शीतोष्णवर्षलक्षणः, बुद्धिः प्रज्ञा, इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धास्तत्सहचरितानि द्रव्यगुणकर्माणीन्द्रियद्वारोपयुज्यमानानि च; तेषां कालादीनाम् योगः संबन्धः। तस्य विशेषणत्रयं—मिथ्या न चाति चेति। तेन कालादीनां मिथ्यायोगः, नच योगः अयोग इत्यर्थः, अति च योगः अतियोग इत्यर्थः। द्वयाश्रयाणामिति मनःशरीराश्रयाणाम्। एतच्च मनःशरीराधिष्ठानत्वं पृथङ् मिलितं च बोद्धव्यम्। त्रिविध इत्ययोगातियोगमिथ्यायोगरूपः। हेतुसंग्रहः हेतुसंक्षेपः। एते च कालादीनामतियोगायोगमिथ्यायोगास्तिस्रैषणीये "तत्रातिप्रभावतां" (सू. अ. ११) इत्यादिना ग्रन्थेन सुव्यक्तं वाच्या इति नेह विव्रियन्ते। कालग्रहणं त्विहादौ कृतं, कालस्य दुष्परिहारत्वात्। तदनु बुद्धिरुच्यते, बुद्ध्यपराधस्यैवेन्द्रियार्थातियोगादिहेतुत्वात्; वक्ष्यति हि—"प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते" (सू. अ. २८) इति; एवं च यद्यप्यसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधे प्रविशति, तथाऽपि प्रत्यासन्नकारणत्वादसात्म्येन्द्रियार्थसंयोगेनैवायं पृथक् तन्त्रे सूच्यते, प्रज्ञापराधस्त्वसात्म्येन्द्रियार्थसंयोगव्यतिरिक्तकायवाङ्मनःक्रियापराधे वर्तते। अत्र चाधर्मोऽपि व्याधिहेतुरस्ति, यदुक्तं—"क्रियाघ्नाः कर्मजा रोगाः" (शा. अ. १) इत्यादि; तस्य चाधर्मस्य कालग्रहणेनैव ग्रहणं केचिन्मन्यन्ते; तन्न, तिस्रैषणीये प्रज्ञापराधेनैवाधर्मग्रहणात्। तत्र हि, अनृतवचनाभिध्यादिवाङ्मनोमिथ्यायोगरूपः प्रज्ञापराधविशेष उक्तः; नत्वनृतवचनादीनां स्वरूपेण व्याधिकर्तृत्वं, किन्त्वधर्मोत्पादावान्तरव्यापाराणामेव; तेन प्रज्ञापराध एवाधर्मोत्पादावान्तरव्यापारः कर्मजरोगेषु कारणं, याग इव धर्मोत्पादावान्तरव्यापारः स्वर्गे। यत्तूच्यते—कालपरिणामजायमानत्वात् कर्मजविकाराणां कालजत्वं, यदुक्तं—"कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः" (शा. अ. १) इति; तन्न, तथा सत्यसात्म्येन्द्रियार्थसंयोगजस्यापि किंचित्कालपरिणामजायमानस्य कालजत्वं स्यात्। नच कालातियोगाद्यभिधायिग्रन्थे तिस्रैषणीये कर्मावरोधः कथमपि प्रतिभाति। कतिधापुरुषीये तु "धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम्। असात्म्येन्द्रियसंयोगा विज्ञेया रोगहेतवः" (शा. अ. १) इत्यभिधाय स्वाभाविकानां रोगाणां तथा कर्मजानां च कालज एवावरोधः कृतः। उक्तं हि तत्र—"कालस्य परिणामेन जरामृत्युनिमित्तजाः। रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः" (शा. अ. १) इति, तथा "निर्दिष्टं दैवसंज्ञं तु कर्म यत् पौर्वदैहिकम्। हेतुस्तदपि कालेन रोगाणामुपलभ्यते" (शा. अ. १) इति। अत्रापि बुद्धिमिथ्यायोगरूपः प्रज्ञापराध एव रोगजनककर्मकारणम्। कालविशेषप्राप्त्या तु येषां व्याधीनामागमो भवति, ते कालमिथ्यादियोगजन्या वा भवन्तु, असात्म्येन्द्रियार्थप्रज्ञापराधजन्या वा; सर्वे एवाविशेषेण कालकृताभिव्यक्तिमात्रपरिग्रहणात्तत्र कालसंप्राप्तिजन्या इत्युक्ता गदाः। तथाहि—तत्र सन्ततादिज्वरा अपि कालजन्या एवोक्ताः। वचनं हि—"सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ। स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः" (शा. अ. १) इति। नच सन्ततादौ कालस्य मिथ्यायोगादयः कारणत्वेनोपलभ्यन्ते, किंतर्ह्यसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधावेव; तथा स्वाभाविकेषु च रोगेषु न कालमिथ्यायोगादयः कारणत्वेनोपलभ्यन्ते; तस्मान्न तत्र कालमिथ्यायोगादिजन्याः कालजत्वेनाचार्यस्याभिप्रेताः, किंतु कालाभिव्यञ्जनीयाः कालजाः; अत एव च तत्र "संप्राप्तिः कालकर्मणाम्" (शा. अ. १) इति पठितं नतु "कालो मिथ्या न चाति च" इति पठितम्। किंच तत्रापि कालमभिधायापि कर्मणामिति पदं पृथक् पठित्वा काले जातः कर्मजः

१ 'चरमभाविनिमित्तान्तरापेक्षा कर्मणः' इति पा०। २ 'असात्म्येन्द्रियार्थसंयोग एवायं' इति पा०।

१ 'कालाभिधायिग्रन्थे' इति पा०। २ 'कालविशेषं प्राप्य' इति पा०। ३ 'कालकृताभिव्यक्तिमात्रपरिग्रहात्तत्र' इति पा०। ४ 'अन्येद्युष्को ग्रहग्राही तृतीयकचतुर्थकौ' इति कतिधापुरुषीये पाठः। ५ 'कृतम्' इति पा०। ६ 'कृत्वा' इति पा०।

पृथगेव सूचितः । किंच, उन्मादनिदाने साक्षादेवाचार्येण कर्मजस्य प्रज्ञापराधजत्वमुक्तम् । वचनं हि—"प्रज्ञापराधात् संभूते व्याधौ कर्मज आत्मनः । नाभिशंसेद्बुधो देवान्न पितॄन्न च राक्षसान्" ( नि. अ. ७ ) इति । जनपदोद्ध्वंसनीयेऽप्युक्तं—"तस्य मूलमधर्मः, तन्मूलं चासत्कर्म पूर्वकृतं, तयोर्योनिः प्रज्ञापराध एव" ( वि. अ. ३ ) । ( तदेवं कर्मापेक्षद्वयमुपदर्शितं, ) बलाबलं तु विद्वांसः स्वयमेव निर्लोचयिष्यन्ति । इदं त्वत्र चिन्त्यतां—स्वाभाविकानां क्षुत्पिपासादीनां तथा कालसम्यग्योगेऽपि जायमानानां दोषचयप्रकोपाणां क्व प्रवेशो भवतु; न तावत् कालजे, यतः कालो हि तत्र सम्यग्युक्त एव, कालसम्यग्योगश्च न व्याधिकारणमिति सिद्धान्तः; अथ कालप्रतिनियतस्तत्रासात्म्येन्द्रियार्थसंयोग एव कारणमिष्यते, तथाऽप्येवं सति कालमिथ्यायोगादावप्यसात्म्येन्द्रियार्थसंयोग एव कारणमिति वक्तुं पार्यते; तस्मादस्मिन्मार्गे एवं बुद्धिर्वलते—यत्—सहजानां विकाराणां निष्प्रतिक्रियत्वेनेहायोगादिजन्यत्वेनावरोधो न कृत एव, कालस्वभावजा अपि सहजा एव; या त्वत्र प्रतिक्रिया कालस्वभावजानामनागतानां भावानां सत्त्वगुणद्रव्यसेवादिरूपा तथा स्वाभाविकानां च क्षुत्पिपासाजरादीनां कालभोजनरसायनादिरूपा, तस्या अकरणे सति कालस्वभावजस्य रोगस्य प्रादुर्भावः प्रज्ञापराधजन्य एव, उचिते हि काले कर्तव्याकरणं प्रज्ञापराध एव; उक्तं हि कतिधापुरुषीयेऽपि प्रज्ञापराधसंग्रहे—"कर्मकालातिपातश्च मिथ्यारम्भश्च कर्मणाम्" ( शा. अ. १ ) इति । अन्ये तु मिथ्यायोगादिशून्यकालविद्यमानत्वेन काल एवावरोध एषां विकाराणामिति कतिधापुरुषीये वक्ष्यमाणग्रन्थस्य यथाश्रुतार्थपरिग्रहाद्वर्णयन्ति । नचेति चकाराद्धीनयोगं गृह्णाति । वक्ष्यति हि—"मिथ्यातिहीनलिङ्गेभ्यो यो व्याधिरुपजायते" ( शा. अ. १ ) इति । हीनयोगस्य तु साक्षादपठनमयोगप्रभेदत्वात्; स्वल्पयोगे-(गो)ऽप्ययोगो भवति, यथैकतण्डुलाभ्यवहारेऽनशनमुच्यते ॥५४

**शरीरं सत्त्वसंज्ञं च व्याधीनामाश्रयो मतः ।**
**तथा सुखानां, योगस्तु सुखानां कारणं समः ॥५५॥**

द्व्याश्रयाणामित्यनेनोक्तमाश्रयं दर्शयति—शरीरमित्यादि । अत्र शरीरमादौ कृतं, शरीररोगाधिकारेणैवास्य तन्त्रस्य प्रवृत्तत्वात् । सत्त्वसंज्ञशब्देन मन उच्यते; किंवा सत्त्वशब्देनैव मनसि लब्धे संज्ञाशब्देनात्मशरीरसंबद्धं मन उच्यते, शरीराद्यसंबन्धस्य मनसो व्याध्यनाश्रयत्वात् । असमासेन च पृथगपि शरीरमनसोर्व्याध्याश्रयत्वं दर्शयति । यतः कुष्ठादयः शारीरा एव, कामादयस्तु मानसाः, उन्मादादयश्च द्व्याश्रयाः । आरोग्यस्याश्रयं हेतुं चाह—तथा सुखानामित्यादि । सुखानामिति आरोग्याणाम् । वचनं हि—"सुखसंज्ञकमारोग्यं विकारो दुःखमेव तु" ( सू. अ. ९ ) इति । तथेति शरीरं मनश्च, तत्र शरीररोगाभावरूपस्यारोग्यस्य शरीरमाश्रयः, मानसरोगाभावस्य तु मनः । योगस्तु समः कालबुद्धीन्द्रियार्थानां सम्यग्योगरूपस्तथा सुखानामारोग्याणां कारणम् । सुखानामिति सुखपदाभिधेयानां च रोगाभावानां बहुत्वं निषेध्यरोगबहुत्वादेव बोद्धव्यम् । इदमेव ह्यभावानां बहुत्वं यन्निषेध्यभावबहुत्वम् । ननु "आयुर्वेदागमो हेतुः" ( सू. अ. १ ) इत्यादावध्यायार्थसंग्रहे व्याध्याश्रयो न संगृहीतः, तत् किमिदमनार्षं? न, हेतवश्चेत्यनेन व्याध्याश्रयरूपस्यापि हेतोस्तत्र संग्रहणम् ॥ ५५ ॥

**निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।**
**चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥५६॥**

सत्त्वमात्मा शरीरं चेति वचनेन त्रयमुपात्तम्, अत्र शरीरमनसी व्याध्याश्रयतयोक्ते, आत्मनस्तु का व्यवस्थेत्याह—निर्विकार इत्यादि । निर्विकारो निर्विकृतिः, तेन नीरोगत्वमात्मनः । पर इति सूक्ष्मः श्रेष्ठो वा, तेन सत्त्वशरीरात्ममेलकरूपो य आत्मशब्देनोच्यते तं व्यावर्तयति; यदुक्तं—"संयोगपुरुषस्येष्टो विशेषो वेदनाकृतः" ( शा. अ. १ ) इति । संयोगेऽपि चात्मादीनां मनस्येव वेदना भवति, सा तु मनःसंयुक्ते आत्मन्यपि संबद्धेत्युच्यते, तेन "निर्ग्रथे चान्तरात्मनि" ( सू. अ. २२ ) इति वचनं निर्ग्रथे मनसीति सौत्; तथा शरीरादावप्यात्मशब्दो वर्तते, तद्व्यवच्छेदार्थं पर इति पदम् । उक्तं ह्यन्यत्र—"ब्रह्मेन्द्रवाग्व्रभिमनोधृतीनां धर्मस्य कीर्तेर्यशसः श्रियश्च । तथा शरीरस्य शरीरिणश्च स्याद्वादशखिन्नित आत्मशब्दः" इति । ननु, यद्यात्मा निर्विकारस्तत् किं ज्ञानरूपोऽप्यस्य विकारोऽस्ति वा नास्तीत्याह—सत्त्वेत्यादि । सत्त्वं मनः, भूतगुणाः शब्दादयः, इन्द्रियाणि चक्षुरादीनि, एतैः करणभूतैश्चैतन्ये कारणं भवत्यात्मा । चैतन्यं चात्मनि जायते व्यज्यते वा । अत एव च सत्त्वादीनां ज्ञानकारणानां सर्वत्रासंभवात् सर्वगतेऽप्यात्मनि न सर्वत्र प्रदेशे ज्ञानं भवति । ननु यदि चैतन्यवानात्मा, तदा कदाचिज्ज्ञानवान् कदाचिदज्ञ इत्यनित्यः स्यादित्याह—नित्य इति । नित्यस्याप्यात्मनो ज्ञानमनित्यं; नच धर्मानित्यत्वे धर्मिणोऽप्यनित्यत्वं, नह्याकाशगुणशब्दानित्यत्वेऽप्याकाशस्याप्यनित्यत्वमिति भावः । नित्यत्वं चात्मनः पूर्वापरावस्थानुभूतार्थप्रतिसन्धानात्; नह्यनित्ये ज्ञातरि पूर्वानुभूतमर्थमुत्तरो ज्ञाता प्रतिसन्धत्ते; नहि देवदत्तबुद्धमर्थं यज्ञदत्तोऽवगतत्वेन प्रतिसन्दधाति । ननु, दृश्यते ज्ञानवतः सुखोपलब्धावनुरागलक्षणो विकारस्तथा दुःखोपलब्धौ च द्वेषलक्षणः; तत् कथं सुखदुःखोपलब्धावयमात्मा निर्विकार इत्याह—द्रष्टा पश्यति हि क्रिया इति ।—द्रष्टा साक्षी; तेन यतिर्यथा परमशान्तः साक्षी सन्नगतः क्रियाः सर्वाः पश्यन्न रागद्वेषादिना युज्यते, तथाऽऽत्माऽपि सुखदुःखाद्युपलभमानोऽपि न रागादिना युज्यते;

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'बुद्धिर्वर्णयति' इति पा० । ३ 'भाविधात्वनुगुणद्रव्यसेवार्थरूपा' इति पा० । ४ 'संज्ञाशब्देन शरीरसंबद्धं' इति पा० । ५ 'शरीरासंबद्धस्य' इति पा० । ६ 'राजयक्ष्मादयः' इति पा० ।

१ 'व्याध्याश्रये प्रोक्ते, तत्का आत्मनो व्यवस्था' इति पा० । २ 'भवति' इति पा० । ३ 'प्रतिसंधातुर्मलम्' इति पा० ।

दृश्यमानरागादिविकारस्तु मनसि, प्राकृतबुद्धौ वा सांख्यदर्शनपरिग्रहाद्भवतीति भावः। सांख्यमते च मनःशब्देन बुद्धिरन्तःकरणं च गृह्यते ॥ ५६ ॥

**वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः।**
**मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ५७ ॥**

संप्रति विकाराश्रयं तथा विकारस्य व्यवहितं च हेतुमभिधाय प्रत्यासन्नं दोषरूपहेतुमाह—वायुरित्यादि। अत्र प्रधानत्वादग्रे वायुरुक्तः, प्राधान्यं चाशुभूरिदारुणविकारकर्तृत्वात्; वचनं हि-'आशुकारी मुहुश्चारी' (सु. नि. अ. १) इति; तथा अशीतिं वातजान् विकारान्, चत्वारिंशत् पित्तविकारान्, विंशतिं च कफजान् वक्ष्यति हि महारोगाध्याये (सू. अ. २०)। वातमनु पित्तं प्रधानं, शरीरमूलभूताग्निहेतुत्वात्तथा कफाधिकविकारकर्तृत्वात्तथा कफापेक्षया चाशुकारित्वात्। असमासकरणं तु पृथगपि वाय्वादीनां रोगकर्तृत्वोपदर्शनार्थम्। शारीर इति मानसदोषव्यवच्छेदार्थम्। संग्रह इति "द्युल्वणैकोल्वणैः षट् स्युर्हीनमध्याधिकैश्च षट्" (सू. अ. १७) इत्यादिवक्ष्यमाणप्रपञ्चस्य संक्षेपः। ननु, शोणितस्यापि दोषत्वाज्ञायं संग्रहः साधुः, यतो रक्तस्यापि वातादिवद्विशिष्टहेतुलक्षणविकारचिकित्सितनिर्देशः कृतः; तत्र हेतुनिर्देशो यथा—"काले चानवसेचनात्" (सू. अ. २४, श्लो. ९) इत्यादि, लक्षणं च यथा-"तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्" (सू. अ. २४. श्लो. २२) इत्यादि, रक्तविकाराश्च रक्तार्शःप्रदररक्तपित्तादय उक्ताः, उपक्रमश्च "स्रावणं शोणितस्य तु" (सू. अ. २४. श्लो. १८) इत्यादिनोक्तः, तथा दोषसंज्ञा च चरके कृता, यदुक्तं,—"कफे वाते जितप्राये पित्तं शोणितमेव वा। यदि कुप्यति वातस्य क्रियमाणे चिकित्सिते ॥ यथोल्वणस्य दोषस्य तत्र कार्यं भिषग्जितम्" (चि. अ. ५. श्लो. २७) इति; तथा च तन्त्रान्तरेऽपि शल्ये शोणितं दोषत्वेनोक्तं—"तैरेतैः शोणितचतुर्थैः" (सु. सू. अ. २१) इति वचनात्। नैवं, दोषो हि स्वतन्त्रदूषणात्मक उच्यते; यतो न वातादयो वृद्धाः किंचिदपेक्ष्य दूषयन्ति किंतु स्वत एव, शोणितं तु दुष्टवातादिसंसर्गमपेक्ष्यैव दूषकं भवति; न हि शोणितं विकृतवातादिसंबन्धमन्तरेण विकृतं भवति, सर्वदा वातादिजनकैरेव शोणितदुष्टेः; तथा सर्वदा वातादिलक्षणयुक्तस्यैव शोणितस्य दुष्टत्वात्; यश्च हेत्वादिविशेष उक्तः स वातादियुक्तस्यैव शोणितस्य भवति; तेन वातादय एव तत्रापि दूषणात्मकाः, शोणितं तु स्वप्रमाणातिरिक्तमपि दूष्यमेव; न च दूष्यस्य हेत्वादयो विशिष्टा न भवन्ति, यतो मांसादीनामपि हेत्वादिविशेषोऽस्ति; यथा मांसदुष्टौ—"मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतां दिवा" (वि. अ. ५)इत्यादि वक्ष्यति; मांसदुष्टिलक्षणं "शृणु मांसप्रदोषजान्" (सू. अ. २८) इत्यादिना विविधाशितपीतीये वक्ष्यति यान् विकारास्ते ज्ञेयाः, यत एतानेव मांसदोषविकारान् स्रोतोविमाने मांसदुष्टिलक्षणत्वेनातिदेशादभिधास्यति, दुष्टमांसविकाराश्चाधिमांसार्बुदादय उक्ताः; उपक्रमश्च "मांसजानां तु संशुद्धिः शस्त्रक्षाराग्निकर्म च" (सू. अ. २८) इत्युक्तः। तस्माद्दूष्याधिकरे दोषकृते कार्ये दूष्येण व्यपदेशः—रक्तजोऽयं, मांसजोऽयमित्यादि; यथा-स्नेहाधारेण वह्निना दग्धे स्नेहदग्ध इति व्यपदेशः। दोषसंज्ञा तु पीडाकर्तृत्वसामान्याद्दोषेऽपि स्यात्; यथा—"स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशनैः"—(चि. अ. ५ श्लो. ४६) इत्यत्र पुरीषमेव दोषत्वेनोक्तम्। सुश्रुते तु शोणितस्य दोषत्वं व्रणेषु प्रायः शोणितदुष्टिदर्शनादुपचरितमेवोक्तम्। यतः प्रदेशान्तरे व्रणप्रश्ने वातादयस्त्रय एव तत्राप्युक्ताः—"वातपित्तश्लेष्माण एव देहसंभवहेतवो भवन्ति" (सु. सू. अ. २१) इत्यादिना। किंच यदि शोणितं दोषः स्यात्तदा वातादिवत्प्रकृत्यारम्भकं स्यात्, नचारभते; तस्मात्त्रय एव दोषा इति सिद्धम्। मानसदोषमाह—मानसः पुनरित्यादि। पुनःशब्दोऽवधारणे, तेन मानस उद्दिष्ट एव परं न शारीरदोषवत् प्रपञ्चितः, मानसदोषाणामस्मिंस्तन्त्रे कायचिकित्सारूपेऽप्रास्ताविकत्वादिति भावः। आदौ रज उक्तं प्राधान्यात्; वचनं हि-"नारजस्कं तमः प्रवर्तते" (वि. अ. ६) इति। एवशब्देन सत्त्वाख्यगुणस्यादोषत्वमवधारयति, सत्त्वं ह्यविकारि ॥ ५७ ॥

**प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः।**
**मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥ ५८ ॥**

संप्रति दोषप्रशमकारणमाह—प्रशाम्यतीत्यादि। पूर्व इति शारीरः। दोषग्रहणेन तज्जन्या व्याधयोऽपि गृह्यन्ते, विकृतदोषादनन्यत्वाद्व्याधीनाम्। दैवमदृष्टं, तदाश्रित्य यद्व्याधिप्रतीकारं करोति तद्दैवव्यपाश्रयं बलिमङ्गलादि; एतच्च प्रथममुक्तं सद्योऽक्लेशेन च व्याधिप्रशमकत्वात्। युक्तिः योजना; शरीरभेषजयोर्हितो यो योगस्तदपेक्षं संशोधनसंशमनादि युक्तिव्यपाश्रयमुच्यते। ज्ञानम् अध्यात्मज्ञानं, विज्ञानं शास्त्रज्ञानं, धैर्यम् अनुन्नतिश्चेतसः, स्मृतिः अनुभूतार्थस्मरणं, समाधिः विषयेभ्यो निवर्त्यात्मनि मनसो नियमनम् ॥ ५८ ॥

**रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।**
**विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ ५९ ॥**
**सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु।**
**विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ ६० ॥**

१ 'सर्वत्र' इति पा०।

१ 'दूष्याधिष्ठाने' इति पा०। २ 'भवति' इति पा०। ३ 'शास्त्रार्थज्ञानम्' इति पा०। ४ "सस्नेहमुष्णमिति वचनेन स्नेहस्याल्पत्वमुष्णत्वस्य चातिशयत्वं तद्योगादिति सूचितम्। तेन पैत्तिके व्याधौ घृतदुग्धादिस्नेहशीतभेषजविधिर्न विरुध्यते। अतिशीतस्निग्धत्वयोश्च पित्तस्याल्पस्नेहात्यन्तोष्णत्वविपर्ययात् प्रशान्तिः स्यात्। उष्णतीक्ष्णद्रवसरतिक्तत्वविपरीतैः शैत्यमान्द्यसान्द्रस्थिरकषायमाधुर्यगुणैः पक्वस्य पित्तस्य प्रशमनम्। आमस्याम्लस्य विपरीतेन तिक्तेन प्रशमः। कट्विति तिक्तं, तेन तिक्तरसस्य पित्तस्य विदग्धावस्थायामम्लरसत्वे तद्विपरीतत्वेन तिक्तरसः पित्तप्रकोपनाशकत्वेनोपपद्यते। उक्तं हि सुश्रुते—"पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटु सरं चैव विदग्धं चाम्लमेव च"—इति गङ्गाधरः।

**गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।**
**श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ६१ ॥**

संप्रति शरीररोगाधिकारप्रवृत्तत्वादस्य तन्त्रस्य शारीररोगजनकवातादिलक्षणं भेषजं चाह—रूक्ष इत्यादि। प्रधानत्वादग्रे वायोरभिधानम्। रूक्षादीनां ज्यायस्त्वादभिधानं, तेन दारुणादयोऽपि गुणा बोद्धव्याः; रूक्षत्वं च वायावधिकं, स्नेहसाध्यत्वाद्वायोः; अतो रूक्षत्वमग्रेऽभिहितम् । यद्यपि वैशेषिकेऽनुष्णाशीतो वायुः, तथाऽपीह शीतेन वृद्धिदर्शनादुष्णेन च प्रशमदर्शनात्तथा केवलवातारब्धे रोगे शीतदर्शनाच्च शीत एव वायुः; यच्च पित्तयुक्तस्योष्णत्वं, तद्योगवाहित्वात्; यथा पाषाणस्य येन द्रव्येण शीतेनोष्णेन वा योगो भवति तद्गुणानुविधानं, तथा वायोरपि। विपरीता वातगुणप्रतिपक्षा गुणा यस्य तद्विपरीतगुणं; गुणशब्देन चेह धर्मवाचिना रसवीर्यविपाकप्रभावाः सर्वं एव गृह्यन्ते, तेन प्रभावादपि यद्वातविपरीतं तदपि गृह्यते। अन्ये त्वेकविपरीतशब्दलोपाद्विपरीतं विपरीतगुणं च ग्राहयन्ति; तेन विपरीतग्रहणात् प्रभावविपरीतं गृह्यते, गुणवैपरीत्याद्विपाकादयो गृह्यन्ते। ननु विपरीतगुणभूयिष्ठैरपि वातादीनां प्रशमो भवति, यतो न हि सर्वं भेषजं वातादीनां सर्वात्मना विरुद्धं भवति; उक्तं हि—"विरुद्धगुणसन्निपाते हि भूयसाऽल्पमवजीयते" (वि. अ. १) इति; तत् किमिति विरुद्धगुणभूयिष्ठस्याग्रहणम्? उच्यते—विरुद्धगुणभूयिष्ठस्यापि विपरीतगुणशब्देनैव ग्रहणात्। विपरीतगुणभूयिष्ठेऽपि ये विपरीता अल्पा अबला वा गुणास्ते स्वकार्याकर्तृत्वादव्यपदेश्या एव; किंवा सर्वथा विपरीतगुणैरधिका प्रशस्ता च शान्तिर्भवति, अत एव संप्रशब्दौ शीघ्रसम्यक्प्रशमार्थाभिधायकौ कृतौ; विपरीतगुणभूयिष्ठैर्न तथा शान्तिर्भवति, अत एव संप्रशब्दाभ्यां न तत् साक्षादुक्तम्। एवं च व्याख्यानं पित्तश्लेष्मणोरपि कर्तव्यम्। सस्नेहमिति ईषत्स्नेहं, तेन पित्ते सर्पिषः स्निग्धस्य भेषजत्वमुपपन्नम्। अम्ललरसता चेह पित्तस्योच्यते, अप्तेजःसमारब्धत्वात्[१] पित्तस्य; सुश्रुते तु कटुत्वमेव पित्तस्योक्तम्, अम्लता च विदग्धस्य पित्तस्योक्ता। यदुक्तं—"विदग्धं चाम्लमेव च" (सु. सू. अ. २१) इति। एवं सस्नेहतायामपि पित्तस्य सुश्रुतस्वरसो नास्ति। एतच्च स्निग्धत्वमम्लत्वं च जलानलारब्धत्वात् पित्तस्योपपन्नमेव, सुश्रुते तु तेजोरूपपित्ताभिप्रायेणैव तन्निरस्तं भवति। श्लेष्मणो विपरीतगुणैर्गुणानां प्रशम उच्यते, न पुनः श्लेष्मणः प्रशमोऽभिधीयते; कस्मादेवमुच्यते? गुणप्रशमनेन च गुणिप्रशमो गुणवृद्ध्या च गुणिवृद्धिर्भवतीति सूचनार्थम्। यत उष्णेन शीतप्रशमे क्रियमाणे शीताधारस्योदकभागस्यावश्यमेव प्रशमः क्रियते ॥ ६१ ॥

**विपरीतगुणैर्देशमात्राकालोपपादितैः ।**
**भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः ॥ ६२ ॥**
**साधनं न त्वसाध्यानां व्याधीनामुपदिश्यते ।**

विपरीतगुणैरप्यल्पमात्रैस्तथाऽविपरीतदेशकालादिप्रविवृद्धैश्च न प्रशमो भवतीत्याह—विपरीतेत्यादि। देशो भूमिरातुरश्च, मात्रा अनपायिपरिमाणं, कालो नित्यगः ऋत्वादिरावस्थिको बाल्यादिश्च; देशाद्यपेक्षया यथोचितत्वेन कल्पितो देशमात्राकालोपपादितः। उपपादितैरिति चौरादिको णिच्; किंवा वैद्येनोपपादितैः। अत्र देशग्रहणाद्बलशरीराहारसात्म्यसत्त्वप्रकृतीनां ग्रहणं, कालग्रहणाद्वयसोऽपि ग्रहणं, दोषस्तु प्रशमनीयतयैव गृहीतः, भेषजं तु साक्षादेवोक्तम्; एवं दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसां परीक्ष्याणां दशविधानां सर्वेषामेव ग्रहणं भवति। साध्यत्वेन प्रामाणिकानां संमताः साध्यसंमताः; एतेनाज्ञेनाज्ञानाद्यै साध्यत्वेन गृहीतास्ते निराक्रियन्ते। यत्तु सम्यग्ग्रहणेन याप्ययापनमुच्यते तन्नातिसुन्दरं, विनिवर्तन्त इति वचनात्; न च याप्ययापनं विनिवृत्तिः। असाध्ये भेषजनिवृत्तिमाह—साधनमित्यादि। नन्वसाध्यानामपि साधनं दृष्टं, यतोऽरिष्टवांस्तावदवश्यं मृत्युगृहीतत्वेनासाध्यः; यदुक्तं—"अरिष्टं चापि तन्नास्ति यद्विना मरणं भवेत्। मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" (इं. अ. २); उत्पन्नारिष्टसाधनं[२] च सुश्रुते प्रोक्तं—"ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायनतपोजप्यतत्परैर्वा निवार्यते"— (सु. सू. अ. २८) इति; तथा चाह भगवानगस्त्यः—"रसायनतपोजप्ययोगसिद्धैर्महात्मभिः। कालमृत्युरपि प्राज्ञैर्जीयते नालसैर्नरैः" इति; तथाऽन्यत्राप्युक्तं—"जाताऽरिष्टोऽपि जीवति"—इति। अत्राहुरेके—द्विविधमरिष्टं नियतमनियतं च; तत्र यन्नियतं तदसाध्यमेव, अत एवोक्तं "न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते" (इं. अ. २); अत्र जातस्येति वचनान्नियतस्येति गम्यते; यत्त्वनियतमरिष्टं तत्प्रति सुश्रुतागस्त्यवचनयोरर्थवत्ता। चरकेऽप्यनियतमरिष्टमुक्तं; यथा—"संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" (इं. अ. ९) इति। अन्ये तु ब्रुवते—संशयप्राप्तमिति उक्तिभेदमात्रमत्र; तेन सर्वारिष्टं मारकमेवासति रसायनादौ, रसायनतपःप्रभृतयस्तु प्रभावातिशययोगादितरक्रियाऽसाध्यमपि साधयन्ति; तच्चारिष्टनिवारणं विरलेष्वेव पुरुषातिशयेषु नन्दिकेश्वरादिषु दृष्टं, न सर्वपुरुषैस्तच्छक्यमतो जातारिष्टानामसाध्यतैव तन्त्रे प्रोच्यते। यत्तु कैश्चिदुच्यते—नियतायुषो मृत्युररिष्टपूर्वो भवति, अनियतायुषस्त्वरिष्टं विनैव मृत्युर्भवति। तन्न, "मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" (इं. अ. २) इति वचनात्। यदुच्यते—अनियतायुषः सत्यपि रिष्टप्रादुर्भावे सम्यक्क्रियोपपादनाज्जीवितेन भवितव्यं, यतोऽनियतायुषः पुरुषकारापराधादेव परं मृत्युर्भवति, सम्यक्क्रियायां च पुरुषकारापराधो नास्ति। तन्न, नह्यनियतायुषः सर्वदैव पुरुषकारसाध्याः, किन्तु यथोचितकालक्रियमाणस्वस्थातुरहितसेवारूपपुरुषकारसाध्याः; तेन यथोचितकाले हितासेवनादसा-

१ 'अप्तेजःसमवायारब्धत्वात्' इति पा० ।

२ 'उत्पन्नारिष्टे च साधनं' इति पा० ।

ष्यत्वयुक्ते व्याधौ रिष्टे जाते किं भेषजमतीतकालक्रियमाणमपक्रान्ते सलिल इव सेतुबन्धः करिष्यतीति। तस्मादसाध्यानां साधनं नोपदिश्यत इति साधु ॥ ६२ ॥—

**भूयश्चातो यथाद्रव्यं गुणकर्माणि वक्ष्यते ॥ ६३ ॥**

किमेतान्येव गुणकर्माणि, उतापराण्यपीत्याह—भूयश्चेत्यादि। गुणानां कर्माणि गुणकर्माणि। यथाद्रव्यमिति यस्मिन् यस्मिन् द्रव्ये यद्यद्गुणकर्म तत्तत्तस्मिंस्तस्मिन् द्रव्येऽन्नपानादौ कृत्स्ने वा तन्त्रे वक्ष्यते 'आचार्य' इति शेषः; वक्ष्यते इति भूयो वचिरादेशात् प्रयोगः। किंवा यथाद्रव्यमिति यथाहेतु; तद्यथा—गुरुखरकठिनादिगुणबहुलं पार्थिवद्रव्यं, तेषां च पार्थिवानां गुणानां कर्म उपचयसङ्घातगौरवाणीति ॥ ६३ ॥

**रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।**
**निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ६४ ॥**

संप्रति दोषानभिधाय तत्प्रशमनप्रधानान् रसान् वक्तुमुद्यतो रसलक्षणपूर्वकं रसोत्पत्तिक्रममाह—रसनार्थ इत्यादि। रस्यत आस्वाद्यत इति रसः। रसनार्थ इति जिह्वाग्राह्यः। एतच्च षण्णामपि रसानामनुगतं रूपादिषु च व्यावृत्तत्वात् साधुलक्षणम्। तस्येति रसस्य। द्रव्यमिति आधारकारणम्। द्रव्यशब्दो ह्याधारकारणवाची; यथा—"पञ्चेन्द्रियद्रव्याणि" (सू. अ. ८) इति। क्षितिस्तथेति यथा आप आधारकारणं तथा क्षितिरपि। 'अक्षिती' इति वक्तव्ये क्षितिस्तथेतिवचनात् क्षितेराधारकारणत्वमप्राधान्यमिति दर्शयति। येनापो हि निसर्गेण रसवत्यः। तथा ह्यात्रेयभद्रकाप्यीये "सौम्याः खल्वापः" (सू. अ. २६) इत्यादिना जल एव रसस्य व्यक्तिरिति दर्शयति। सुश्रुतेऽप्युक्तं—"तस्मादाप्यो रसः" (सु. सू. स्था. अ. ४२) इति। क्षितिस्त्वपामेव रसेन नित्यानुषक्तेन रसवतीत्युच्यते। यतो नित्यः क्षितिजलसंबन्धः; वचनं हि—"विष्टं ह्यपरं परेण" (न्या. द. ३।१।६०) इति। अस्यार्थः—खवाय्वग्निजलक्षितीनामुत्तरोत्तरे भूते पूर्वपूर्वभूतस्य नित्यमनुप्रवेशः, तत्कृतश्च खादिषु गुणोत्कर्षः। रसस्य किं व्यक्तावक्षिती कारणं किंवा विशेषे इत्याह—निर्वृत्तावित्यादि। निर्वृत्तौ चेति अभिव्यक्तौ। एतेन रसोऽभिव्यज्यमानो जलक्षित्याधार एव व्यज्यत इति दर्शयति। चकाराद्विशेषेऽपि मधुरादिलक्षणे अक्षिती प्रत्ययौ। तेन "सोमगुणातिरेकान्मधुरः, पृथिव्यग्निगुणातिरेकादम्लः" (सू. अ. २६) इत्यादिना जलपृथिव्योरपि विशेषकारणत्वं वक्ष्यमाणमुपपन्नम्। विशेषे च प्रत्ययाः खादय इति मधुरादिविशेषनिर्वृत्तौ निमित्तकारणं खवाय्वनलाः, न त्वाधारकारणभूताः। खादय इत्यनेनैव त्रित्वे लब्धे पुनस्त्रय इति वचनं तेषामेव व्यस्तसमस्तानामपि प्रत्ययत्वदर्शनार्थम्; अत एव व्यस्तसमस्ताकाशादिसंसर्गभेदाद्रसानां मधुरतरमधुरतमाद्यवान्तरभेद उपपन्नः। विशेषे चेति चकारादभिव्यक्तावप्याकाशादीनां निमित्तकारणत्वं दर्शयति। वक्ष्यति हि—"तास्त्वन्तरीक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतविकारगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्तीरभिप्रीणयन्ति; तासु षडभिमूर्च्छन्ति रसाः" (सू. अ. २६) इति। अन्ये तु विशेषे चेति चकारं खादयश्चेत्यत्र योजयन्ति; तेन चकारात् कालोऽपि विशेषेऽभिव्यक्तौ च कारणं लभ्यते। साक्षात्तु कालस्यावचनेन खादिभ्योऽप्यपकृष्टं कालस्य कारणत्वं दर्श्यते। किंवा रसस्यापो द्रव्यं क्षितिस्तथेति पूर्ववदेव; निर्वृत्तौ चेति क्षितिरेव निर्वृत्तावभिव्यक्तौ प्रत्ययो नापः; यत आपो ह्यव्यक्तरसा एव, क्षितिसंबन्धादेव च रसोऽभिव्यक्त उपलभ्यते। उक्तं च—"जङ्गमस्थावराणां भूतानां मूर्तीरभिप्रीणयन्ति, तासु षडभिमूर्च्छन्ति रसाः" (सू. अ. २६) इति। तेन पार्थिवद्रव्यसम्बन्धादेवापां रसो व्यज्यते, नान्यथा। विशेषे चेति चकारादक्षिती विशेषे कारणे। यद्यपि चाक्षिती विशेषे कारणे, तथाऽपि "सोमगुणातिरेकान्मधुरः"-(सू. अ. २६) इत्यादौ तु खादय एव तथा सन्निविशन्ति यथा सोमोऽतिरिक्तो भवति, तेन तत्राप्यूनत्वेन सन्निविष्टाः खादय एव विशेषहेतव इति। यद्यपि चाभिव्यक्तिर्मधुरादिविशेषरहिता क्वचिद्भवति, तथाऽपि सामान्येन सर्वत्र यदभिव्यक्तयेऽनुगतं कारणमुपलभ्यते क्षितिरूपं जलक्षितिरूपं वा तदभिव्यक्तिकारणं; यदनुगमात्तु मधुरादिविशेषोपलब्धिस्तद्विशेषकारणमुच्यते ॥ ६४ ॥

**स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च।**
**कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः ॥६५॥**

रसविशेषानाह—स्वादुरित्यादि। अत्र सर्वप्राणिनामिष्टत्वादादौ मधुर उक्तः; तदनु च प्राण्यभीष्टोत्कर्षक्रमेणैवाम्लादिनिर्देशक्रमो बोद्धव्यः। षट्क इति पुनः संख्याकरणं परवादिमतसप्तसंख्यत्वादिनिषेधार्थम्। अयं संग्रह इत्यनेनावान्तरभेदबहुत्वं तथा वक्ष्यमाणरससंसर्गबहुत्वं च दर्शयति ॥ ६५ ॥

**स्वाद्वम्ललवणा वायुं, कषायस्वादुतिक्तकाः।**
**जयन्ति पित्तं, श्लेष्माणं कषायकटुतिक्तकाः ॥६६॥**
**( कट्वम्ललवणाः पित्तं, स्वाद्वम्ललवणाः कफम्।**
**कटुतिक्तकषायाश्च कोपयन्ति समीरणम्[३] ॥ १ ).**

रसानामुपयुक्ततरं कार्यमाह—स्वाद्वम्लेत्यादि। अत्र च वायोर्नीरसस्यापि रससहचरितस्निग्धत्वादिगुणैर्विपरीतैः प्रशमो ज्ञेयः। एवं मधुररसस्यापि श्लेष्मणोऽम्ललवणाभ्यां स्निग्धत्वाभिष्यन्दित्वादिसहचरितगुणयोगादेव वृद्धिः। अत्र च ये प्रशमकत्वेन

---

१ 'अतीतकालमपक्रान्तसलिलस्येव' इति पा०। २ 'क्षितेरत्वप्रे प्रतिवचनात्' इति पा०। ३ 'व्यक्तिं' इति पा०। ४ 'न प्रधानकारणभूताः' इति पा०।

१ 'यदि वा अक्षिती विशेषेण कारणे, सोमगुणातिरेकान्मधुर इत्यादौ तु' इति पा०। २ 'तथोनत्वेन' इति पा०। ३ योगीन्द्रनाथसेनसंमतोऽयं पाठः; स त्वेतदनन्तरं 'भूयश्चातो यथाद्रव्यं गुणकर्माणि वक्ष्यते' इत्यर्धश्लोकं पठति।

रसा वातादीनां नोक्तास्ते वर्धका बोद्धव्याः। यदाह वाग्भटः—"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते"। (वा. सू. अ. १) इति। रसकर्मातिदेशेनैव गुणवीर्यविपाकानामपि कर्मनिर्देशः कृत एव। यतो मधुरादिरसेनैव सर्वेगुणान् वीर्यविपाकांश्च निर्देक्ष्यत्यात्रेयभद्रकाप्यीये—"तत्र स्वादुः" (सू. अ. २६) इत्यादिना; तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः" (सू. अ.२६); तथा "अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" (सू. अ. २६); तथा "शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः। तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः"—(सू. अ. २६) इत्यादिना ॥ ६६ ॥

**किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम् ॥**
**स्वस्थवृत्तौ मतं किंचित्रिविधं द्रव्यमुच्यते ॥ ६७ ॥**

अतोऽवशिष्टं द्रव्यकार्यं प्रभावकृतं वक्तुं प्रभावभेदेन द्रव्यभेदमाह—किंचिदित्यादि। किंचिदिति न सर्वम्। दोषस्य दोषयोर्दोषाणां वा प्रशमनं दोषप्रशमनम्। दोषग्रहणेन दुष्टा रसादयोऽपि गृह्यन्ते। तेन द्रव्यमहिम्ना यद्दोषाणां दुष्टानां रसादीनां धातूनां वा शमकमामलकदुरालभादि तद्गृह्यते। आमलकं हि शिवत्वात्रिदोषहरं; दुरालभा चापि वातपित्तश्लेष्महरी। यद्यपि चामलकस्य "हन्ति वातं तदम्लत्वात्" (सु. सू. अ. ४६) इत्यादिना गुणद्वारा त्रिदोषहरत्वमुच्यते, तथाऽपि तत्प्रभावबृंहितमेव बोद्धव्यम्। यतस्तत्राम्लत्वादिना पित्तादिकोपोऽपि युज्यते, स त्वामलकप्रभावान्न भवति। धातुप्रदूषणमिति वातादीनां समत्वेन शरीरधारणात्मकानां तथा रसादीनां च दूषणं किंचित्, यथा—यवकमन्दकविषादि। सुष्ठु अवतिष्ठते नीरोगत्वेनेति स्वस्थः, तस्य वृत्तिः स्वस्थरूपतयाऽनुवर्तनं, तत्र स्वस्थवृत्तौ मतमभिमतं पूजितमिति यावत्। संख्येयनिर्देशादेव त्रित्वे लब्धे त्रिविधग्रहणं नियमार्थम्। तेन संशोधनसंशमनादीनामनेकविधानामप्यत्रैवावरोधः। रसायनवाजीकरणे तु स्वस्थवृत्तिमात्र एव। यदुक्तं—"स्वस्थस्योजस्करं यत्तु तद्वृष्यं तद्रसायनम्" (चि. अ. १ पा.१) इति। प्रतिपादे किंचिद्ग्रहणं दोषहरत्वादिकर्मणां विभिन्नद्रव्याश्रयित्वोपदर्शनार्थम्; एककिंचिद्ग्रहणे त्वेकमेव द्रव्यं दोषहरं धातुप्रदूषकं स्वस्थवृत्तिमतं च स्यात्, न च तदभिमतम्। ननु, स्वस्थवृत्तिमतानां रक्तशालिषष्टिकयवादीनां[1] दोषप्रशमनत्वमपि दृश्यते, यतो वक्ष्यति तत्र तत्र रक्तशाल्यादीनां ज्वरादौ प्रयोगं; तथा प्रकृतिशरीरदेशकालमात्राभि(दि)युक्तं दोषप्रशमनमपि दोषकरं भवति, यथा—आमलकमतिमात्रमभिमान्द्यायेत्यादि ज्ञेयं; तथा धातुप्रदूषणमपि दोषशमनं दृश्यते, यथा—विषमुदरहरं, तथा यदेव मन्दकादि दोषकरं तदेव क्षीणदोषं प्रति दोषवृद्ध्या साम्यापादनेन दोषप्रशमनं भवति; तदेवमव्यवस्थितत्वात् किंचिद्दोषप्रशमनमित्यादि विरुद्धम्? अत्रोच्यते—स्वस्थवृत्तिमतं रक्तशाल्यादि दोषप्रशमनमपि भवति, परं तत् प्रायः स्वस्थवृत्तिहितत्वात् स्वस्थवृत्तिमतत्वेन गृह्यते। वचनं हि—"स्वस्थस्योजस्करं यत्तु तद्वृष्यं तद्रसायनम्। प्रायः, प्रायेण रोगाणां द्वितीयं शमने हितम् ॥ प्रायःशब्दो विशेषार्थे उभयं ह्युभयार्थकृत्" (चि. अ. १) इति। दोषप्रशमनानि द्रव्याणि विगुणप्रकृत्यादिप्रतिबन्धकाभावे[1] दोषप्रशमनमाचरन्त्येव, प्रतिबन्धकसद्भावे तु न कुर्वन्ति, न चैतावता तेषां स स्वभावो[2] न भवति; नह्यग्निर्मन्त्रादिप्रतिबन्धात् कदाचिन्न दहतीति दाहकत्वेन नोपदिश्यते; एवं धातुप्रदूषकस्यापि कदाचिद्धातुप्रशमकत्वं निमित्तान्तरयोगाद्भवन्न धातुप्रदूषकस्वरूपतां हन्ति, यथा सलिलस्याग्निसम्बन्धादुष्णत्वम्। तस्माद्यद्यस्य प्रायिकमनन्योपाधिकृतं च रूपं, तेनैव व्यपदेशो युक्तः। यच्च मन्दकादीनां क्षीणदोषवर्धकत्वेन दोषप्रशमकत्वं तद्विद्यमानमपि कादाचित्कत्वात्तथा ह्युत्तरकालं दोषावहत्वाच्च न व्यपदिश्यते दोषप्रशमकत्वेन। ननु, यद्यप्येवं तथाऽपि यदेकदोषहरमपरदोषकरं यथा मरिचं श्लेष्महरं पित्तकरं चेत्यादि बहुद्रव्यजातं तत् कुत्र प्रविशतु? अत्रैके वदन्ति—यदुभयात्मकं तद्दोषहरं दोषकरं च, नचैतावता द्रव्यत्रित्वक्षतिः; यतो न वातादिसंसर्गजव्याधिसद्भावे वातादिजन्यत्वेन यत्रैविध्यं रोगाणामुच्यते तत् खण्डितं भवति; किंवा मरिचादीनां यदुभयकर्तृत्वं न तद्द्रव्यप्रभावकृतं, किं तर्हि रसादिकृतं, तेन न द्रव्यप्रभावप्रस्तावे तदुदाहरणीयं; नच किंचिद्द्रव्यं तादृशमस्ति यत् प्रभावादेव किंचिद्दोषं करोति किंचिच्छमयतीति न दोषप्रशमनत्वादिप्रभावं प्रति नियमः; अयमेव च पक्षः साधुः। ननु 'किंचिद्दोषप्रशमनं किंचिद्दोषप्रदूषणम्' इति वा क्रियतां, 'किंचिद्धातुप्रशमनं किंचिद्धातुप्रदूषणम्' इति वा। नैवं, तथा सति दोषशब्दस्य मुख्यवृत्त्या वातादिष्वेव वृत्तित्वात्तथा[3] धातुशब्दस्य च रसादिवृत्तित्वादुभयग्रहणं[4] न प्राप्यते; उभयपदोपादानेन द्वयं निपुणकारी तन्त्रकारो दूषणत्वधारणत्वयोगपरिग्रहाद्दोषप्रशमनेन दुष्टरसादिप्रशमनमपि भेषजं विविधाशितपीतीयादिवक्ष्यमाणं, तथा धातुप्रदूषणेन वातादिप्रदूषकमपि निदानादिवक्ष्यमाणं ग्राहयति। प्रशब्दोऽत्र प्रकारे; तेन प्रकारेण सूक्ष्मध्यादिना प्रकोपणं, तथा प्रकारेण संशोधनसंशमनादिना शमनमुच्यते; किंवा धात्वर्थानुवृत्तावेव[5] इमौ प्रशब्दौ, यथा—'च्युतांशः परिधावति' इत्यत्र धावतीत्यर्थः। आदौ दोषप्रशमनग्रहणं तस्यैवेहाभिप्रेतत्वात्। ननु स्वस्थवृत्तिमतं द्रव्यं भाविदोषहरत्वेन दोषप्रशमनमेव। नैवं, नहि स्वास्थ्यानुवृत्तिजनकत्वाद्दोषनिवृत्तिकरं[6] दोषहरणमुच्यते, किं तर्हि समधातूनामवर्धकत्वेनाक्षयकरत्वेन च रसादिस्रोतसां चानुगुण-

---

१ 'रसादीनाम्' इति हस्तलिखितपुस्तके नोपलभ्यते।

१ 'प्रतिबन्धकसंभवे' इति पा०। २ 'स्वस्वभावो' इति पा०। ३ 'वृत्तत्वात्' इति पा०। ४ 'रसादिवृत्तत्वात्' इति पा०। ५ 'धात्वर्थानुवृत्तिरेवासौ प्रशब्दः' इति पा०। ६ 'स्वास्थ्यानुवृत्तित्वात्' इति पा०।

त्वेन धातुसाम्यानुवृत्तिकरमुच्यते । वचनं हि—"पथ्यं पथोऽनपेतं यत्" ( सू. अ. २५ ) इति ॥ ६७ ॥

**तत् पुनस्त्रिविधं प्रोक्तं जङ्गमौद्भिदपार्थिवम् ।**
**मधूनि गोरसाः पित्तं वसा मज्जाऽसृगामिषम् ॥६८॥**
**विण्मूत्रचर्मरेतोऽस्थिस्नायुशृङ्गनखाः खुराः ।**
**जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः ॥ ६९ ॥**
**सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा ।**
**मनःशिलाले मणयो लवणं गैरिकाञ्जने ॥ ७० ॥**
**भौममौषधमुद्दिष्टमौद्भिदं तु चतुर्विधम् ।**
**वनस्पतिस्तथा वीरुद्वानस्पत्यस्तथौषधिः ॥ ७१ ॥**
**फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि ।**
**ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः ॥७२॥**
**मूलत्वक्सारनिर्यासनाल(ड)स्वरसपल्लवाः ।**
**क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः ॥७३॥**
**पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गणः ।**

संप्रत्यन्यथा द्रव्यभेदमाह—तत् पुनरित्यादि । तदिति द्रव्यम् । गच्छतीति जङ्गमम्, उद्भिद्य पृथिवीं जायत इति औद्भिदं वृक्षादि, उक्तप्रकारद्वयातिरिक्तः पृथिवीविकारः पार्थिवम् । संस्वेदजस्येह क्रिम्यादेर्जङ्गमेऽवरोधः, कुकुण्डकादेश्च औद्भिदे । इह च द्रव्यशब्देन पार्थिवद्रव्यमेवोच्यते; तेन जलानिलाग्न्यादीनामग्रहणादव्याप्तिर्न वाच्या । जङ्गमशब्देन जङ्गमप्रभवं गोरसमध्वाद्यपि ग्राह्यम् । एवमौद्भिदपार्थिवयोरपि ग्रहणं वाच्यम् । रोचना गोरोचना । एतच्च मध्वादि प्राय उपयोगित्वात् प्राधान्यादुक्तं; तेनाण्डवस्त्यादीनां च ग्रहणं बोद्धव्यम् । यद्यपि जङ्गमानन्तरं बहुप्रपञ्चत्वेन प्रधानत्वादौद्भिदमुपदिष्टं, तथाऽप्यबहुवक्तव्यत्वात् पार्थिवमेव जङ्गमानन्तरं विक्रियते; तदनु बहुवक्तव्यमौद्भिदम् । सुवर्णमित्यादि । पञ्च लोहा इति ताम्ररजतत्रपुसीसकृष्णलोहानां ग्रहणम् । समला इति मलशब्देन शिलाजतूनि लोहमलरूपाणि गृह्यन्ते, तच्च सुश्रुतदर्शनात् सुवर्णरजतादिभवं षड्विधमेव गृह्यते; सुश्रुते हि षड्विधमेव शिलाजतूक्तम्, इह तु रसायने चतुर्विधमुक्तं—"चतुर्भ्यो धातुभ्यस्तस्य संभवः । हेम्नोऽथ रजतात्ताम्राद्वरं कृष्णायसादपि" ( चि. अ. १ ) इति वचनात् । एतच्च वचनं रसायनाधिकारितां चतुर्विधस्य शिलाजतुनो दर्शयति, न तु षड्विधशिलाजतुप्रतिषेधपरमिति न सुश्रुतेन समं विरोधः । किंवा सुवर्णं निर्मलं, समलास्तु रजतताम्रत्रपुसीसलोहाः (इति मिलित्वा पञ्च लोहाः ।) शिलाजतुपाषाणपङ्कप्रभृतीनां तु ग्रहणमुद्दिष्टशब्देन सूचितम्; उद्देशो ह्यल्पकथनम् । सुधा गाङ्गेयिका । आलं हरितालम् । अञ्जनं सौवीराञ्जनम् । फलैर्वनस्पतिरिति विनापुष्पैः फलैर्युक्ता वटोदुम्बरादयः । यदुक्तं हारीते—"तेषामपुष्पाः फलिनो वनस्पतय इति स्मृताः" इति । पुष्पैर्वानस्पत्यः फलैरपीति पुष्पानन्तरं फलभाज इत्यर्थः । फलस्य पाकादन्तो विनाशो येषां तिलमुद्गादीनां ते फलपाकान्ताः; अत्र केचित् फलपाकान्ताः पाकान्ताश्चौषध्य इति वदन्ति; तेन विनाऽपि फलं पाकेनैवान्तो येषां दूर्वादीनां तेऽपि गृह्यन्ते । प्रतानशब्देन लता गुल्माश्च गृह्यन्ते । यदुक्तं हारीतेन—"लता गुल्माश्च वीरुधः" इति । मूलत्वगित्यादौ निर्यासो लाक्षासर्जरसादिः । औद्भिदो गण इत्यौद्भिदसमुद्भूतो गणः ॥ ६८–७३ ॥—

**मूलिन्यः षोडशैकोना फलिन्यो विंशतिः स्मृताः ७४**
**महास्नेहाश्च चत्वारः पञ्चैव लवणानि च ।**
**अष्टौ मूत्राणि संख्यातान्यष्टावेव पयांसि च ॥ ७५ ॥**
**शोधनार्थाश्च षड् वृक्षाः पुनर्वसुनिदर्शिताः ।**
**य एतान् वेत्ति संयोक्तुं विकारेषु स वेदवित् ॥७६॥**

संप्रत्यत्रैव जङ्गमौद्भिदपार्थिवद्रव्ये यत् प्रशस्तं तदाह—मूलिन्य इत्यादि । मूलं प्रशस्ततमं यासां ता मूलिन्यः; एवं फलिन्योऽपि । षोडशेति च्छेदः । महास्नेहा इति क्षीरमांसादीनामपि स्नेहतया स्नेहाध्याये वक्ष्यमाणत्वेन तेषु सर्पिरादीनां भूरिस्नेहवत्त्वेन महत्त्वम् । पञ्चैव लवणानीति विमाने (अ.८) वक्ष्यमाणलवणबहुत्वे पञ्चानामेव प्रशस्तत्वेन दर्शनार्थम् । एवं मूत्रादिष्वपि प्राधान्यमुन्नेयं सजातीयेषु । वेदविदिति आयुर्वेदवित् ॥ ७४–७६ ॥

**हस्तिदन्ती हैमवती श्यामा त्रिवृदधोगुडा ।**
**सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि ॥७७॥**
**ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका ।**
**अजगन्धा द्रवन्ती च क्षीरिणी चात्र षोडशी ॥७८॥**
**शणपुष्पी च बिम्बी च च्छर्दने हैमवत्यपि ।**
**श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने ॥७९॥**
**एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने ।**
**इत्युक्ता नामकर्मभ्यां मूलिन्यः,**

हस्तिदन्तीत्यादि । हस्तिदन्ती बृहत्फला गोडुम्बा, 'इयमेव नागदन्ती भण्यते' इत्येके । हैमवती वचा । श्यामा श्याममूला त्रिवृत् । अधोगुडा प्रवृद्धदारकः । सप्तला चर्मकषा । श्वेतनामा श्वेताऽपराजिता । प्रत्यक्श्रेणी दन्ती । बिम्बी ओष्ठोपमफला । शणपुष्पी घण्टारवा । विषाणिका आवर्तनी । अजगन्धा 'फोकान्दी' इति ख्याता । द्रवन्ती दन्त्येव चीरितपत्रा । क्षीरिणी दुग्धिका । मूलिनीनां वमनादिविनियोगमाह—शणपुष्पीत्यादि ॥ ७७–७९ ॥—

१ 'जाङ्गमं भौममौद्भिदम्' इति पा० । २ 'तेनाणुवंशादीनां' इति पा० । ३ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

१ 'फलान्ताः' इति पा० ।

फलिनीः शृणु ॥८०॥
शङ्खिन्यथ विडङ्गानि त्रपुषं मदनानि च ।
धामार्गवमथेक्ष्वाकु जीमूतं कृतवेधनम् ।
आनूपं स्थलजं चैव क्लीतकं द्विविधं स्मृतम् ॥ ८१ ॥
प्रकीर्या चोदकीर्या च प्रत्यक्पुष्पा तथाऽभया ।
अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम् ॥ ८२ ॥
कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च ।
धामार्गवमथेक्ष्वाकु जीमूतं कृतवेधनम् ॥ ८३ ॥
मदनं कुटजं चैव त्रपुषं हस्तिपर्णिनी ।
एतानि वमने चैव योज्यान्यास्थापनेषु च ॥ ८४ ॥
नस्तः प्रच्छर्दने चैव प्रत्यक्पुष्पा विधीयते ।
दश यान्यवशिष्टानि तान्युक्तानि विरेचने ॥ ८५ ॥
नामकर्मभिरुक्तानि फलान्येकोनविंशतिः ।

शङ्खिनी श्वेतबुह्या (घ्न) । क्लीतकं यष्टीमधु; अस्य तु यद्यपि सुश्रुते मूलं प्रशस्तं, मूलेनैव व्यवहारः, तथाऽपि विरेचनं प्रति यष्टीमधुद्वयस्यापि फलमेव प्रशस्तं ज्ञेयम् । धामार्गवः पीतघोषकः । इक्ष्वाकुः तिक्तालाबुः । जीमूतो घोषकभेदः । कृतवेधनं ज्योत्स्निका । प्रकीर्योदकीर्ये करञ्जद्वयम् । प्रत्यक्पुष्पा अपामार्गः । अन्तःकोटरपुष्पी नीलबुघ्ना । हस्तिपर्णी मोरटः, अस्याश्च शरत्कालभवमेव फलं ग्राह्यं; अत उक्तं—हस्तिपर्ण्याश्च शारदमिति । कम्पिल्लकं गुँड्डारोचनिका । आरग्वधस्य यद्यपि सुश्रुते पत्रं प्रधानमुक्तं, तथाऽपीह फलं गृह्यते प्रधानतमत्वात् । धामार्गवमित्यादिना पञ्चकर्मविनियोग उच्यते । नस्तः प्रच्छर्दन इति शिरोविरेचने ॥ ८०-८५ ॥—

सर्पिस्तैलं वसा मज्जा स्नेहो दिष्टश्चतुर्विधः ॥ ८६ ॥
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थं चैव योगतः ।
स्नेहना जीवना वर्ण्या बलोपचयवर्धनाः ॥ ८७ ॥
स्नेहा ह्येते च विहिता वातपित्तकफापहाः ।

महास्नेहेषु सर्पिरादौ पठितं, प्राधान्यात्; वचनं हि,—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्तते । यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्" (नि. अ. १) इति ॥८६॥८७॥—

सौवर्चलं सैन्धवं च विडमौद्भिदमेव च ॥ ८८ ॥
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ।
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च ॥८९॥
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा ।
अधोभागोर्ध्वभागेषु निरूहेष्वनुवासने ॥ ९० ॥
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने ।
शस्त्रकर्मणि वर्त्यर्थमञ्जनोत्सादनेषु च ॥ ९१ ॥
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे ।
उक्तानि लवणा(नि)-

लवणेषु यद्यपि सैन्धवं प्रधानं, यतो वक्ष्यति—"सैन्धवं लवणानाम्" ( सू. अ. २५ ) इत्यग्र्याधिकारे, तथाऽपि सौवर्चलस्य रोचनत्वप्रकर्षात्तथा सैन्धवमनु प्राधान्यख्यापनार्थमग्रे पाठः । औद्भिदम् औत्कारिकालवणं, केचिच्छाम्भरिलवणमाहुः । सामुद्रं दक्षिणसमुद्रभवं 'करकच' इति ख्यातम् । अभ्यञ्जन इति स्नेहाभ्यङ्गे । वर्त्यर्थमिति फलवर्त्यर्थम् ॥ ८८-९१ ॥—

न्यू(ऊ)र्ध्वं मूत्राण्यष्टौ निबोध मे ९२ ॥
मुख्यानि यानि दिष्टानि सर्वाण्यात्रेयशासने ।
अविमूत्रमजामूत्रं गोमूत्रं माहिषं च यत् ॥ ९३ ॥
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ।
उष्णं तीक्ष्णमथोऽरूक्षं कटुकं लवणान्वितम् ॥९४॥
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च ।
युक्तमास्थापने मूत्रं युक्तं चापि विरेचने ॥ ९५ ॥
स्वेदेष्वपि च तद्युक्तमानाहेष्वगदेषु च ।
उदरेष्वथ चार्शःसु गुल्मिकुष्ठिकिलासिषु ॥ ९६ ॥
तद्युक्तमुपनाहेषु परिषेके तथैव च ।
दीपनीयं विषघ्नं च क्रिमिघ्नं चोपदिश्यते ॥ ९७ ॥
पाण्डुरोगोपसृष्टानामुत्तमं शर्म चोच्यते ।
श्लेष्माणं शमयेत् पीतं मारुतं चानुलोमयेत् ॥९८॥
कर्षेत् पित्तमधोभागमित्यस्मिन् गुणसंग्रहः ।
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ९९ ॥
अविमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च ।
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च ॥ १०० ॥
गव्यं समधुरं किंचिद्दोषघ्नं क्रिमिकुष्ठनुत् ।
कण्डूं च शमयेत् पीतं सम्यग्दोषोदरे हितम् ॥१०१॥
अर्शःशोफोदरघ्नं तु सक्षारं माहिषं सरम् ।
हास्तिकं लवणं मूत्रं हितं तु क्रिमिकुष्ठिनाम् १०२ ॥
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम् ।
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते ॥ १०३ ॥
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम् ।
खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ॥ १०४ ॥
इतीहोक्तानि मूत्राणि यथासामर्थ्ययोगतः ।

अविमूत्रमित्यादौ स्त्रीमूत्रमेव प्रशस्तमिति लिङ्गपरिग्रहाद्दर्शयति; यतः स्त्रीणां लघ्वङ्गत्वान्मूत्रमपि लघु; वचनं हि—"लाघवं

१ 'हस्तिपर्णी च शारदा' इति पा० । २ 'दृष्टः' इति पा० । ३ 'दीपनीयलघूनि च' इति पा० ।

१ 'दृष्टानि' इति पा० । २ 'तथा' इति पा० । ३ 'अरूक्षं स्निग्धं' इति गङ्गाधरः । योगीन्द्रनाथस्तु 'रूक्षं' इति पठति । ४ 'गुल्मकुष्ठकिलासिषु' इति पा० ५ 'सर्वथोच्यते' इति पा० ।

जातिसामान्ये स्त्रीणां पुंसां च गौरवम्" (सू. अ. २७) इति। यत्तूच्यते पुंसां-मूत्रं शुक्रसंबन्धाद्गुरु; तन्न, शुक्रसम्बन्धस्य स्त्रीणामपि शुक्रवत्त्वेन तुल्यत्वात्; वचनं हि-"यदा नारी हि नार्या तु मैथुनायोपपद्यते। मुञ्चतः शुक्रमन्योऽन्यमनस्थिस्तत्र जायते" इत्यादि; नपुंसकमूत्रं त्वमङ्गलत्वान्न गृह्यते। अगदेष्वित्यनेनागदप्रयोगयौगिकत्वं, विषघ्नमित्यनेन च केवलस्यैव विषहन्तृत्वमिति न पौनरुक्त्यम्। शर्म चोच्यत इति आरोग्यरूपसुखकर्तृत्वात्। अधोभागमिति अधोमार्गेण पित्तं कर्षेत्; किंवा यदेवाधोगतं पित्तं तदेव विरेचयति नोर्ध्वगम्। यथासामर्थ्ययोगत इति यादृशः शक्तियोगो मूत्राणां तथा ॥ ९२-१०४ ॥—

अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये ॥१०५॥
अविक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत्।
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ॥१०६॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयो मतम्।
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ॥ १०७ ॥
जीवनीयं श्रमहरं श्वासकासनिबर्हणम्।
हन्ति शोणितपित्तं च सन्धानं विहतस्य च ॥१०८॥
सर्वप्राणभृतां सात्म्यं शमनं शोधनं तथा।
तृष्णाघ्नं दीपनीयं च श्रेष्ठं क्षीणक्षतेषु च ॥ १०९ ॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे।
अतीसारे ज्वरे दाहे श्वयथौ च विशेषतः ॥ ११० ॥
योनिशुक्रप्रदोषेषु मूत्रेष्वप्रचुरेषु च।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ॥ १११ ॥
नस्यालेपावगाहेषु वमनास्थापनेषु च।
विरेचने स्नेहने च पयः सर्वत्र युज्यते ॥ ११२ ॥
यथाक्रमं क्षीरगुणानेकैकस्य पृथक् पृथक्।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥११३॥

प्रायशो मधुरमिति प्राधान्येन मधुरम्। तेन क्षीरमुष्ट्रीणामीषल्लवणं तथा छागं कषायमित्यादौ रसान्तरस्याप्राधान्येनानुबन्धोऽपि क्षीरे भवतीति दर्शयति। प्रायश इति बृंहणं स्निग्धमित्येताभ्यां तथा शीतमित्यनेन च संबध्यते; तेनौष्ट्रस्य रूक्षौष्ण्यत्वाभिधानं न विरोधि। स्तन्यमिति स्तन्यवृद्धिकरम्। मनस्करमिति प्रभावादोजस्करत्वाच्च; ओजोवृद्ध्या हि तदनुविधायिनो मनसोऽपि स्वकर्मसामर्थ्यं भवति। एतदेव च नित्यस्येह मनसः करणं यन्मनसः प्रकर्षबुद्ध्युत्कर्षादिगुणकरणम्। हन्ति शोणितपित्तमिति अवस्थाविशेषापन्नमेव शोणितपित्तं हन्ति। वचनं हि-"कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च। यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्याद्नु, तत्र कार्यम् ॥ छागं पयः स्यात् परमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा" (चि. अ. ४) इति। एवं च यदुच्यते— अधोभागे रक्तपित्ते सरत्वात् क्षीरमयौगिकम्, ऊर्ध्वगे च कफकर्तृतयाऽयौगिकमिति, तन्निरस्तम्। सर्वप्राणभृतां सात्म्यमित्यत्र सर्वशब्दश्चिकित्स्यतया प्रकृतसर्वमनुष्येष्वेव वर्तते, तेन क्षीरस्य संस्वेदजादिप्राण्यसात्म्यत्वं नोद्भावनीयं; किंवा सर्वशब्दोऽयं भूरिवचनः ॥ १०५-११३ ॥

अथापरे त्रयो वृक्षाः पृथग्ये फलमूलिभिः।
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म पृथक् पृथक् ॥११४॥
वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने।
क्षीरमर्कस्य विज्ञेयं वमने सविरेचने ॥ ११५ ॥

फलमूलिभिरिति पृथक्शब्दयोगादपादाने तृतीया। अश्मन्तको माळुयासदृशपत्रो वृक्षः ॥ ११४॥११५ ॥

इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः।
पूतीकः कृष्णगन्धा च तिल्वकश्च तथा तरुः ॥११६॥
विरेचने प्रयोक्तव्यः पूतीकस्तिल्वकस्तथा।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते ॥११७॥
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च।
षड्वृक्षाञ्छोधनानेतानपि विद्याद्विचक्षणः ॥११८॥
इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च।
मूत्रं क्षीराणि वृक्षाश्च षड् ये दिष्टपयस्त्वचः ॥११९॥

पूतीकः कण्टकीकरञ्जः। तिल्वको लोध्रः; तस्य तरुरिति विशेषणेन पट्टिकालोध्रं व्युदस्यति, शावरलोध्रं च महाप्रमाणं तरुशब्दयोग्यं ग्राहयति; किंवा तरुविशेषणेन बालं लोध्रं व्युदस्यति। षड्वृक्षान् शोधनानित्यत्र यद्यपि कृष्णगन्धायाः पञ्चकर्मण्यनभिधानान्न शोधनत्वं, तथाऽपि बाह्यालेपनेन बहिःस्थितदोषसंशोधनत्वं बोद्धव्यं;-किंवा अपिशब्दात् कृष्णगन्धाया अशोधनत्वमपि सूच्यते ॥ ११६-११९ ॥

ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने।
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ १२० ॥
न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः।
ओषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ॥ १२१ ॥
योगविन्नामरूपज्ञस्तासां तत्त्वविदुच्यते।
किं पुनर्यो विजानीयादोषधीः सर्वथा भिषक् ॥१२२॥
योगमासां तु यो विद्याद्देशकालोपपादितम्।
पुरुषं पुरुषं वीक्ष्य स ज्ञेयो भिषगुत्तमः ॥ १२३ ॥

१ 'यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते' इति सुश्रुते (शा. अ. २) पाठः। २ 'अथ' इति पा०। ३ 'विधीयते' इति पा०। ४ 'मूत्रेषु प्रदरेषु' इति पा०।

१ अश्मन्तकः अश्वत्थसदृशपत्रः क्षीरिवृक्षो महाराष्ट्रभाषायां 'अस्टा' इति ख्यातः। २ 'येषां दिष्टाः पयस्त्वचः' इति पा०। ३ 'योगविन्नामरूपज्ञः' इति पा०। ४ 'स विज्ञेयो भिषक्तमः' इति पा०।

उक्तानामोषधीनां योगज्ञानस्य प्राधान्यं दर्शयन्नाह—ओषधीरित्यादि। परां प्राप्तिमिति उत्कृष्टं व्याधिशरीराद्यपेक्षं सम्यग्योगम्। योगी व्याधिशरीराद्यपेक्षा सम्यग्योजना भेषजस्य। सर्वैरेति नामरूपयोगैः। योगमेव विशिष्टं दर्शयन्नाह—योगमित्यादि। देशकालोपपादितमिति देशकालकृतम्। पुरुषं पुरुषं वीक्ष्येति वीप्सायां, प्रतिपुरुषं प्रकृत्यादिभेदेन योगस्य प्रायो भेदो भवतीति दर्शयति। पुरुषशब्देन चेह संयोगपुरुषोऽभिप्रेतः॥ १२०–१२३॥

**यथा विषं यथा शस्त्रं यथाऽग्निरशनिर्यथा।**
**तथौषधमविज्ञातं विज्ञातममृतं यथा॥ १२४॥**
**औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः।**
**विज्ञातं चापि दुर्युक्तमनर्थायोपपद्यते॥ १२५॥**

योगस्यौषधज्ञानाधीनत्वादौषधाज्ञानस्य महानर्थकारितां बहुभिर्दृष्टान्तैर्दर्शयति—यथा विषमित्यादि। विषादिबहुदृष्टान्तेनाज्ञातं भेषजं किंचिद्विषवत् संज्ञानाशं कृत्वा मारयति, किंचिच्च शस्त्रवन्मर्मच्छेदं कृत्वा मारयति, किंचिच्चाग्निवत् स्फोटादिकं कृत्वा मारयति, किंचिच्चाशनिवत् सद्यो मारयतीति दर्शयति। नामरूपगुणैरित्यनेन त्रित्वे लब्धे पुनस्त्रिभिरिति वचनमेकैकज्ञानप्रतिषेधार्थं; तेन त्रिभिरेव मिलितैर्ज्ञातं भेषजं प्रशस्तमिति दर्शयति॥ १२४॥ १२५॥

**योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत्।**
**भेषजं चापि दुर्युक्तं तीक्ष्णं संपद्यते विषम्॥ १२६॥**
**तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम्।**
**धीमता किंचिदादेयं जीवितारोग्यकाङ्क्षिणा॥ १२७॥**
**कुर्यान्निपतितो मूर्ध्नि सशेषं वासवाशनिः।**
**सशेषमातुरं कुर्यान्नत्वज्ञमतमौषधम्॥ १२८॥**
**दुःखिताय शयानाय श्रद्दधानाय रोगिणे।**
**यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति॥ १२९॥**
**त्यक्तधर्मस्य पापस्य मृत्युभूतस्य[1] दुर्मतेः।**
**नरो नरकपाती स्यात्तस्य संभाषणादपि॥ १३०॥**
**वरमाशीविषविषं क्वथितं ताम्रमेव वा।**
**पीतमत्यग्निसन्तप्ता भक्षिता वाऽप्ययोगुडाः॥ १३१॥**
**नतु श्रुतवतां वेशं बिभ्रता शरणागतात्।**
**गृहीतमन्नं पानं वा वित्तं वा रोगपीडितात्॥ १३२॥**
**भिषग्बुभूषुर्मतिमानतः स्वगुणसम्पदि।**
**परं प्रयत्नमातिष्ठेत् प्राणदः स्याद्यथा नृणाम्॥ १३३॥**

योगं स्तौति—योगादपीत्यादि। विषं च सम्यग्योगाद्भेषजं भवतीति "तिलं दद्याद्विषस्य तु" (चि. अ. १) इत्यादिप्रयोगे बोद्धव्यम्। न केवलमातुरेणैवाभिषजो भेषजं नादेयं, किन्तु भिषजाऽपि युक्तिबाह्येन भेषजमातुराय न देयमित्याह—दुःखितायेत्यादि॥ १२६–१३३॥

**तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।**
**स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्॥ १३४॥**

अथ सम्यग्युक्तस्य भेषजस्य किं लक्षणं किंवा उपादेयस्य श्रेष्ठवैद्यस्य लक्षणमित्याह—तदेवेत्यादि। रोगेभ्यो यः प्रमोचयेदित्यनेन च ज्ञानपूर्वं भेषजप्रयोगेण रोगहारकत्वमुच्यते; तेन यादृच्छिकसिद्ध्या कुवैद्यव्यवहारो न वाच्यः; यादृच्छिकसिद्धौ हि वैद्यो न रोगप्रमोक्षे कारणं, किन्तु घुणाक्षरन्यायेन दैवागतो भेषजस्य सम्यग्योग इति॥ १३४॥

**सम्यक्प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम्।**
**सिद्धिराख्याति सर्वैश्च गुणैर्युक्तं भिषक्तमम्॥ १३५॥**

कथमारोग्यात् सम्यग्योगो भेषजस्य ज्ञायते इत्याह—सम्यक्प्रयोगमित्यादि। सर्वेषामित्यनेनान्येषामपि कर्मणां प्रतिमाकरणादीनां सिद्धिः सम्यग्योगं तत्कारणतां ख्यापयति; न ह्यसम्यक्प्रयुक्ते कारणे सम्यक् कार्यं भवति। सिद्धिराख्यातीति उक्ता प्रातिनियमिकी सिद्धिः, न यादृच्छिकी। सर्वैर्गुणैरिति श्रुते पर्यवदातत्वादिभिः खुड्डाकचतुष्पाद( सू. अ. १० )वक्ष्यमाणैः॥ १३५॥

**तत्र श्लोकाः—**

**आयुर्वेदागमो हेतुरागमस्य प्रवर्तनम्।**
**सूत्रणस्याभ्यनुज्ञानमायुर्वेदस्य निर्णयः॥ १३६॥**
**संपूर्णं कारणं कार्यमायुर्वेदप्रयोजनम्।**
**हेतवश्चैव दोषाश्च भेषजं संग्रहेण च॥ १३७॥**
**रसाः सप्रत्ययद्रव्यास्त्रिविधो द्रव्यसंग्रहः।**
**मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च॥ १३८॥**
**मूत्रं क्षीराणि वृक्षाश्च षड् ये क्षीरत्वगाश्रयाः।**
**कर्माणि चैषां सर्वेषां योगायोगगुणागुणाः॥ १३९॥**
**वैद्यापवादो यत्रस्थाः सर्वे च भिषजां गुणाः।**
**सर्वमेतत् समाख्यातं पूर्वाध्याये महर्षिणा॥ १४०॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सूत्रस्थाने**
**दीर्घञ्जीवितीयो नाम प्रथमोऽध्यायः॥ १॥**

तत्र श्लोका इति तन्त्रकारस्य रीतिरियं यत्—यत्रोक्तमर्थं संग्रहेणाभिधत्ते तत्र 'तत्र श्लोका' इति करोति; यत्र तूक्तादनधिकमुच्यते तत्र 'भवति चात्र' इति करोति; न चास्य निष्प्रयोजनत्वं, तन्त्रधर्मत्वात्। अध्यायोक्तमर्थमध्यायान्ते संग्रहेणाभिधत्ते—आयुर्वेदागम इत्यादिना। संग्रहकथनं च पूर्वोक्तार्थस्य सङ्क्षेपेण ग्रहणार्थं तथा दुर्ज्ञानप्रतिषेधार्थं च। यतो यत्किंचिदत्र दुर्ज्ञानं स्यात्तदिह प्रतिपादितार्थसंवादेनावधार्यते। वचनं हि—"गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते। तद्व्यक्तिव्यवसायार्थं द्विरुक्तिः सा न गर्ह्यते" (नि.अ. १) इति। अत्र च गद्योक्त इति

१ 'मृत्युदूतस्य' इति पा०।

विस्तरोक्तोपलक्षणम् । तेन श्लोकोक्तस्याप्यारग्वधीयाद्यर्थस्य पुनः श्लोकेन संग्रहणमविरुद्धम् । व्यक्तिः स्पष्टता, व्यवसायः अवधारणम् । आगम इति "दीर्घंजीवितमन्विच्छन्" इत्यादिना, हेतुरिति आयुर्वेदागमहेतुः, स च "विघ्नभूता यदा रोगा" इत्यादिना रोगप्रादुर्भाव उक्तः; किंवा "दीर्घंजीवितमन्विच्छन्" इत्यादिश्लोको विशेषेणायुर्वेदागमस्य तथाऽऽयुर्वेदागमहेतोश्च पिण्डसूत्ररूपः, "ब्रह्मणा हि" इत्यादिग्रन्थस्त्वायुर्वेदागमप्रतिपादकः, हेतुप्रतिपादकस्तु "विघ्नभूता" इत्यादिग्रन्थो यथोक्त एव । आगमस्य प्रवर्तनमिति इन्द्रादानीय भरद्वाजेन मर्त्यलोके प्रवर्तनमायुर्वेदग्रहणपर्यन्तम् । सूत्रणमित्यायुर्वेदतन्त्रकरणमग्निवेशादीनाम् । अभ्यनुज्ञानमिति "तानि चानुमतानि" इत्यादि । शेषं सुगमम् ॥ १३६-१४० ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकाख्यायां चरकतात्पर्यटीकायां सूत्रस्थाने दीर्घंजीवितीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

**अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च ।**
**विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥ ३ ॥**
**अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम् ।**
**पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ ॥ ४ ॥**
**शिरीषबीजं लशुनं हरिद्रे लवणद्वयम् ।**
**ज्योतिष्मतीं नागरं च दद्याच्छीर्षविरेचने ॥ ५ ॥**
**गौरवे शिरसः शूले पीनसेऽर्धावभेदके ।**
**क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके ॥ ६ ॥**

दीर्घंजीवितीये मूलिन्यश्च फलिन्यश्च पञ्चकर्माङ्गभूता उक्ताः, अपराण्यपि च पिप्पलीमरिचप्रभृतीनि पञ्चकर्मसाधनानि सन्ति, तथा पञ्चकर्मप्रवृत्तिविषयोऽपि तत्र नोक्तः, तेनानन्तरं शेषपञ्चकर्मोपयोगिद्रव्यपञ्चकर्मप्रवृत्तिविषयाभिधायकोऽपामार्गतण्डुलीयोऽभिधीयते । पूर्वोक्तान्यपि चापामार्गादीनि यत् पुनरिहाभिधीयन्ते तदाचार्य एवाध्यायान्ते 'पूर्वं मूलफल'इत्यादिना श्लोकद्वयेन समाधास्यति । अपामार्गबीजीय इति संज्ञायां प्राप्तायामपामार्गतण्डुलीय इति संज्ञाकरणमपामार्गादिबीजानां निस्तुषाणामेव ग्रहणार्थम् । अध्यायसंज्ञां तण्डुलेन कृत्वाऽपामार्गस्य बीजानीति यद्बीजशब्दं करोति तदङ्कुरजननसमर्थबीजभवानामेव तण्डुलानां ग्रहणार्थम् । यद्यपि चेहोत्सर्गतः पञ्चकर्मप्रवृत्तिर्वमनपूर्विकैव भवति, यदुक्तं-"साधारणेष्वृतुषु वमनादीनां प्रवृत्तिर्भवति" ( वि. अ. ८ ) इत्यादि, तथा सुश्रुतेऽप्युक्तं— "अवान्तस्य हि सम्यग्विरिक्तस्याप्यधःस्रस्तः श्लेष्मा ग्रहणीमाच्छादयति" ( सु. चि. अ. ३३ ) इत्यादि; तथाऽपि क्वचित् प्रबलदोषापेक्षयाऽन्यथाऽपि क्रमो भवति, यथा शरद्युद्रिक्ते पित्ते विरेचनादि, तथा प्रावृषि प्रबलवाते बस्त्यादिरित्यनियमार्थमिह शिरोविरेचनमादावभिहितं; यदि वा, प्रधानाङ्गशिरःशोधनत्वाच्छिरोविरेचनमादौ कृतम् । यदुक्तं-"यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते" ( सू. अ. १७ ) इति । शालक्येऽप्युक्तं-"अनामये यथा मूले वृक्षः सम्यक् प्रवर्धते । अनामये शिरस्येवं देहः सम्यक् प्रवर्धते" इति । अपामार्गाभिधानमादौ शिरोविरेचनप्राधान्यात् । यदुक्तं-"प्रत्यक्पुष्पा शिरोविरेचनानाम्" इति ( सू. अ. २५ ) । अजगन्धा अजमोदा, 'फोफान्धी' इति केचित् । पीलु औत्तरापथिकं फलम् । लवणद्वयं लवणवर्गादिपठितं सौवर्चलं सैन्धवं च । अयं वर्गो व्यस्तः समस्तश्च शिरोविरेचने प्रयोज्यो गणत्वात् । यदुक्तं—"परिसंख्यातमपि हि यद्द्रव्यमयौगिकं मन्येत तदपहरेत्" ( वि. अ. ८ ) इति । अन्यत्राप्युक्तं-"समस्तं वर्गमर्धं वा यथालाभमथापि वा" ( सु. सू. अ. ३७ ) इति । शिरस इति गौरव इत्यनेन शूल इत्यनेन च संबध्यते । क्रिमिव्याधिरिह शिरोगत एव बोद्धव्यः, तत्रैव शिरोविरेचनस्य समर्थत्वात् । प्रमोहको मूर्च्छा, इन्द्रियापटुत्वं वा ॥ १-६ ॥

**मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।**
**पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥ ७ ॥**
**उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।**
**वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥ ८ ॥**

वमनद्रव्ये आदौ मदनमुक्तं प्राधान्यात्; उक्तं हि-"वमनद्रव्येषु मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्" इति ( क. अ. १ ) । उपस्थित इति आमाशयोर्ध्वभागे श्लेष्मणः स्थानं गत्वोत्क्लेशं गत इति व्याख्येयम् । श्लेष्मपित्त इति श्लेष्मपित्ते श्लेष्मणि पित्ते च । पित्तं च यद्यपि साक्षान्न वमनविषयं तथाऽपि श्लेष्मस्थानगतत्वेन श्लेष्मसंबन्धाद्वमनविषयम् । यदुक्तं-"दोषस्थानगतं दोषं स्थानिवत् समुपाचरेत्" इति । देहमदूषयन्निति यद्यपि वमने प्रोक्तं तथाऽपि विरेचनादिष्वपि बोद्धव्यं, तत्राप्यतियोगायोगमिथ्यायोगैर्देहदुष्टिशङ्कायाः समानत्वात् । उच्यते च न्यायविद्भिर्यत्-"समानेष्वर्थेष्वेकत्राभिहितो विधिरन्यत्राप्यनुषञ्जनीयः" इति ॥ ७ ॥ ८ ॥

**त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।**
**कम्पिल्लकं गवाक्षीं च क्षीरिणीमुदकीर्यकाम् ॥ ९ ॥**
**पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।**
**पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ १० ॥**

वमनमनु विरेचनाभिधानं शिरःपूर्वकदेहशोधनाभिधानानुक्रमेणामाशयोर्ध्वभागशोधनानन्तरमामाशयाधोभागस्थितपित्तहरत्वेन । एवं विरेचनानन्तरं बस्त्यभिधानेऽपि वाच्यम् । त्रिवृ-

---

१ 'चाजमोदां च' इति पा० ।

१ 'प्रवर्तते' इति पा० ।

दादावुच्यते, विरेचनद्रव्येषु श्रेष्ठत्वात् । उक्तं हि—"त्रिवृत् सुखविरेचनानाम्"-(सू. अ. २५) इति । नीलिका नीलवुहा । क्षीरिणी दुग्धिका । द्रवन्ती दन्तीभेदः । निचुलं हिज्जलमिति प्रसिद्धम् । पक्वश्चासावाशयगतश्चेति पक्वाशयगतः । तेन पित्ताशये एवामाशयाधोभागलक्षणे दोषो विरेचनविषयो भवति, न पक्वाशयगतः । दोषशब्देन चेह विरेचननिर्हरणयोरयत्वात् पित्तं कफपित्तं वा गृह्यते । यदुक्तं—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् । स्रंसनं, त्रीन् मलान् वस्तिर्हरेत् पक्वाशयस्थितान्"—(चि.अ.३)इति। यदि वा पक्वाशयसमीपगतत्वेनाधःप्रवृत्त्युन्मुखो दोषः पक्वाशयगत इत्युच्यते; यथा—गङ्गायां घोष इति ॥९॥१०॥

**पाटलां चाग्निमन्थं च बिल्वं श्योनाकमेव च ।**
**काश्मर्यं शालपर्णीं च पृश्निपर्णीं निदिग्धिकाम् ॥११॥**
**बलां श्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवम् ।**
**यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च १२**
**पलाशं कत्तृणं चैव स्नेहांश्च लवणानि च ।**
**उदावर्ते विबन्धेषु युञ्ज्यादास्थापनेषु च ॥ १३ ॥**
**अत एवौषधगणात् संकल्प्यमनुवासनम् ।**
**मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्मिकः ॥ १४ ॥**

पाटलामित्यादिनाऽनुवासनात् प्राङ्निरूहाभिधानं, निरूहस्य दोषहरणप्रधानत्वात् । कत्तृणं गन्धतृणम् । स्नेहाः सर्पिस्तैलवसामज्जानः । लवणानि सैन्धवादीनि रोगभिषग्जितीये (वि.अ. ८) वस्त्यर्थं मुख्यान्युक्तानि गणेन । अत एवेति निरूहोक्तपाटलादिगणात् । संकल्प्यमनुवासनमित्यनेन स्नेहसाधनं ब्रूते; अनुवासनं हि स्नेह एव भवति । अनुवासनार्थं स्नेहसाधनद्रव्यं पृथङ्नोक्तं, निरूहार्थोक्तभेषजगणेनैव तत्सिद्धेः । मारुतघ्नमित्यनेनानुवासनप्रवृत्तिविषयं दर्शयति; मारुते हन्तव्येऽनुवासनं प्रकल्प्यमित्यर्थः । यदि वा पाटलादेर्मारुतहराद्गणान्मारुतघ्नमनुवासनं प्रकल्प्यम्; अन्यत्र तु पित्तहराद्गणात् पित्तघ्नं, तथा श्लेष्महराद्गणाच्छ्लेष्मघ्नमिति सूचयति । संग्रह इत्यनेन रोगभिषग्जितीये (वि. अ. ८) कल्पे सिद्धौ च वक्ष्यमाणपञ्चकर्मप्रपञ्चं सूचयति ॥११-१४॥

**तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।**
**पञ्चकर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ १५ ॥**

पञ्चकर्म यथा कर्तव्यं तथा तानीत्यादिना दर्शयति । तानीति पूर्वोक्तानि । स्नेहस्वेदोपपादनैरिति बहुवचनं नानाविधस्नेहस्वेदोपदर्शनार्थम् । उपस्थितदोषाणामिति शाखां त्यक्त्वा कोष्ठगमनेन तथा लीनत्वपरित्यागेन प्रधानावस्थाप्राप्तदोषाणाम् । तत्र पञ्चकर्मप्रवृत्तावुपस्थितदोषत्वमेव हेतुः, तद्यदि स्नेहस्वेदोपपादनमन्तराऽपि स्यात्, यथा ज्वरे "कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान् । बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्" (चि. अ. ३) इति; तत्र स्नेहस्वेदावन्तरेणापि वमनप्रवृत्तिर्भवत्येव । स्नेहस्वेदोपपादनं तु प्रायिकत्वेन तथाऽन्ययोपस्थितदोषेऽपि स्तोकमात्रया पञ्चकर्मप्रवृत्तिक्षोभजन्यवातजयार्थं क्रियमाणत्वेनोक्तम् । मात्राकालयोर्विचार्यत्वेन ग्रहणं प्राधान्यात्, तेन दोषभेषजादयोऽपि विचार्यत्वेनेह बोद्धव्याः; यदि वा पूर्ववत् कालग्रहणादेव शेषाणां दोषादीनामवरोधो व्याख्येयः । तानीत्युक्तेऽपि पुनः पञ्चग्रहणं पञ्चानामप्युपस्थितदोषत्वे सति प्रवृत्त्युपदेशार्थम् । इह वमनादिषु कर्मलक्षणं बह्वितिकर्तव्यतायोगिदोषनिर्हरणशक्तियायत्त्वम् । तेन तन्त्रान्तरे स्नेहस्वेदौ प्रक्षिप्य सप्तकर्माणीति यदुच्यते तन्न भवति, नहि स्नेहस्वेदौ दोषबहिर्निःसरणं कुरुतः, दोषसंशमनं तु तौ कुरुतः; पञ्चकर्माङ्गत्वेन व्याप्रियमाणौ तु स्नेहस्वेदौ दोषोपस्थान एव परं व्याप्रियेते, न दोषनिर्हरणे वमनादिसंपाद्ये । अनुवासनं तु यद्यपि वमनादिवन्न बहुदोषनिर्हरणकारणं भवति, तथाऽपि पुरीषस्य पक्वाशयगतवातस्य च बहिर्निर्हारकत्वात् कर्मलक्षणप्राप्तमेव । निष्ठीवननेत्राञ्जनादौ तु न स्नेहस्वेदादिवद्बह्वितिकर्तव्यतायोगो नच बहुदोषनिर्हारकत्वं, तेन न तत् कर्मशब्दवाच्यम् । उत्तरबस्तिस्तु स्नेहरूपो निरूहः स्नेहवस्तावेवान्तर्भवति । यदि वेह वमनादिषु पञ्चकर्मसु पङ्कजशब्दवद्योगरूढेयं संज्ञा; तेन स्नेहस्वेदनिष्ठीवनादिषु न प्रवर्तते ॥ १५ ॥

**मात्राकालाश्रया युक्तिः, सिद्धिर्युक्तौ प्रतिष्ठिता ।**
**तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ १६ ॥**

मात्राकालविचारफलमाह—मात्राकालेत्यादि । युक्तिः योजना भेषजस्य देहदोषाद्यपेक्षया । युक्तिं स्तौति—सिद्धिरित्यादिना । सिद्धिरिह विकारोपशमस्य साध्यस्य निष्पत्तिः ॥ १६ ॥

**अत ऊर्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।**
**विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥१७॥**

इदानीं वमनादीनामयोगान्मन्दीभूतस्य वह्नेः सन्धुक्षणार्थं तथा वमनादिष्वप्रयोगजनितस्य शूलादेः प्रशमार्थं प्रतिज्ञापूर्वकं यवागूरभिधत्ते—अत ऊर्ध्वमित्यादि । उक्तं हि "यथाऽणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण । महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः" (सि. अ. १) इति । पिप्पल्यादियवागूनिर्देशे उपसाधितेति वचनं भेषजपानीयतण्डुलादिप्रकृतिद्रव्याणामुचितपरिमाणग्रहणार्थम् । साक्षाद्भेषजादीनां प्रमाणमिह नोक्तं, मात्राया अग्न्यादिभेदेनानवस्थितत्वात् । यदुक्तं—"मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः । व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत्" इति । यद्यप्येवं तथाऽपि परिभाषादर्शनाद्वृद्धवैद्यव्यवहारदर्शनाच्च यथा कर्तव्यं तदुच्यते—यवागूसाधनद्रव्यं तावद्द्विविधं—वीर्य-

१ 'नीलवंशा' इति पा० । २ 'पाटलिं' इति पा० । ३ 'प्रधानावस्थाप्राप्तदोषाणां' इति पा० ।

१ 'वमनादिप्रयोगजनितस्य' इति पा० । २ 'भेषजपानीयतण्डुलादिद्रव्याणां' इति पा० । ३ 'दोषादिभेदेन' इति पा० ।

प्रधानमौषधद्रव्यं, तथा रसप्रधानमाहारद्रव्यं च। तत्राप्यौषधद्रव्यं त्रिविधं, वीर्यभेदात्; तीक्ष्णवीर्यं यथा शुण्ठ्यादि, मध्यवीर्यं बिल्वाग्निमन्थादि, मृदुवीर्यं चामलकादि; तत्र तीक्ष्णानां कर्षः, मध्यानामर्धपलं, मृदूनां पलमित्युत्सर्गः। यदुक्तमग्निवेशेन—"कर्षार्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्। विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम्" इति। अत्र मध्यवीर्याणामर्धपलमात्रा नोक्ता सा मध्यप्रमाणग्रहणाद्बोद्धव्या। तथा "जीवन्त्यजाजीशटीपुष्कराह्वैः" (चि.अ.१२) इत्यादिकायां पेयायां नवभिर्द्रव्यैः कोलप्रमाणैर्मिलित्वा पलमदूरान्तरं भवति, तच्च मृदुवीर्याभिप्रायेणैव; "क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके। अर्धश्रृतेन तेनाथ यवागूवाद्युपकल्पयेत्" इत्यत्र चतुष्पलद्रव्याभिधानं रसप्रधानद्रव्याभिप्रायेणैव; तेन "सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता" इत्यादावियं परिभाषा बोद्धव्या। षडङ्गसाधनपरिभाषायां "यदप्सु श्रृतशीतासु षडङ्गादि प्रयुज्यते। कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि॥ अर्धश्रृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इत्यत्र पेयां प्रति कर्षद्रव्याभिधानं मध्यवीर्यस्यापि षडङ्गस्य मन्दानलपुरुषाभिप्रायेण बोद्धव्यम्। वारिमानं तु षडङ्गार्थपरिभाषायां कर्षद्रव्ये वारिप्रस्थोऽभिहितः, तदनुसारेणान्यत्रापि जलोत्कर्षो बोद्धव्यः। कल्कसाध्या तु यवागूर्यत्र भवति, तत्र सूदशास्त्रोक्तपरिमाणाजलं ग्राह्यम्। यदुक्तं—"अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे। मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि" इति। एतच्च पञ्चगुणे इत्यादि तण्डुलभेषजसमुदायाद्बोद्धव्यम्। यवागूप्रकृतिभूततण्डुलमानं तु सुश्रुतवचनाद्बोद्धव्यम्। यदुक्तं—"विलेपीमुचिताङ्काचतुर्भागकृतां भिषग्" (सू. चि. अ. ३९) इत्यादि। तथा—"यवागूः स्वल्पतण्डुला" इति॥ १७॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता॥ १८॥
दधित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता।
पाचनी ग्राहिणी, पेया सवाते पाञ्चमूलिकी॥ १९॥
शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम्॥ २०॥
पयस्यर्धोदके च्छागे ह्रीवेरोत्पलनागरैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता॥ २१॥
दद्यात् सातिविषां पेयां सामे साम्लां सनागराम्।
श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणिताम्॥ २२॥
विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका॥ २३॥
मृद्वीकासारिवालाजपिप्पलीमधुनागरैः।
पिपासाघ्नी, विषघ्नी च सोमराजीविपाचिता॥ २४॥
सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता।
गवेधुकानां भृष्टानां कर्शनीया समाक्षिका॥ २५॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता।
कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी॥ २६॥
दशमूलीश्रृता कासहिक्काश्वासकफापहा।
यमके मदिरासिद्धा पक्वाशयरुजापहा॥ २७॥
शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति।
जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैः साङ्ग्राहिकी मता॥ २८॥
क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदिनी मता।
अभयापिप्पलीमूलविश्वैर्वातानुलोमनी॥ २९॥
तक्रसिद्धा यवागूः स्याद्घृतव्यापत्तिनाशिनी।
तैलव्यापदि शस्ता स्यात्तक्रपिण्याकसाधिता॥ ३०॥
गव्यमांसरसैः साम्ला विषमज्वरनाशिनी।
कण्ठ्या यवानां यमके पिप्पल्यामलकैः श्रृता॥ ३१॥
ताम्रचूडरसे सिद्धा रेतोमार्गरुजापहा।
समाषविदला वृष्या घृतक्षीरोपसाधिता॥ ३२॥
उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी।
क्षुधं हन्यादपामार्गक्षीरगोधारसैः श्रृता॥ ३३॥

पञ्चकोलसाधिता यवागूरादावुच्यते, पञ्चकर्मक्षीणाग्निवृद्धिहेतुत्वेन। दधित्थः कपित्थः। तक्रमिह जलार्थकारकम्। ग्राहिणीति छेदः। सवाते इति सवातेऽतीसारे। पञ्चमूलमत्र स्थिरादिपञ्चमूलं; यदुक्तं जतूकर्णे—"ध्रुवाद्यैर्वाऽप्यतीसारे" इति; ध्रुवादिः विदारिगन्धादिः। पृश्निपर्णी वर्तुलपत्रा सिंहपुच्छी। दाडिमाम्लेति वचनेन यावता दाडिमेनाम्लत्वं स्यात्तावन्मानं दाडिमं दर्शयति। पयस्यर्धोदके इत्यादौ नागरं मुक्तं; यदुक्तं जतूकर्णे—"रक्तातीसारेऽजाक्षीरजले घनजलोत्पलैः" इति। पृश्निपर्ण्या चेति रक्तातीसारघ्नयवागूमेव। साम्लामिति दाडिमाम्लामिति बोद्धव्यम्। श्वदंष्ट्रेत्यादौ जतूकर्णः—"पृश्निगोकण्टकगुडैर्मूत्रार्तिवस्तिशूलनुत्" इति। सुवर्चिका सर्जिकाक्षारः। पिपासाघ्नीति छेदः। सोमराजी अवल्गुजः। गवेधुको घुलुचः; गवेधुकाश्च तण्डुलस्थाने। श्यामाकः तृणविशेषः; तस्य च बीजतण्डुला ग्राह्याः। यमके घृततैले। मदिरा द्रवस्थाने। शाकादिभिः समानैर्यवागूर्मन्तव्या। दधित्थाम्लशब्देन कपित्थस्याम्लावस्थायामेव ग्रहणं दर्शयति। क्षारो यवक्षारः। तक्रसिद्धेति तक्रकृतोदककार्या। पिण्याकः तिलकल्कः। यमक इत्यनेन यमकेन परिभर्जनं दर्शयति। समाषविदलेत्यादौ तण्डुलेन माषविदलस्य तुल्यमानता, क्षीरं च जलस्थाने, घृतं च परिभर्जने; किंवा माषप्रकृतिके-

१ 'षडङ्गपरिभाषायां' इति पा०। २ 'पेयामामे' इति पा०। ३ 'अत्र तक्रं जलस्थाने बोध्यं' इति गङ्गाधरः।

१ अत्र श्यामाकबीजतण्डुलास्तण्डुलस्थाने बोध्याः। २ '०विल्वै०' इति पा०। ३ 'अवल्गुजः' इति पा०।

वेयम्। मदशब्देन विषज-रौधिर-मद्यमदानां त्रयाणामपि ग्रहणम्, अविशेषाभिधानात्। क्षुधं हन्यादित्यादावपामार्गतण्डुलास्तण्डुलस्थाने; क्षीरगोधामांसरसौ तु जलस्थाने ॥ १८-३३ ॥

तत्र श्लोकः—

अष्टाविंशतिरित्येता यवाग्वः परिकीर्तिताः।
पञ्चकर्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥ ३४ ॥

प्रतिलोमतन्त्रयुक्त्याऽध्यायसंग्रहं करोति—अष्टाविंशतिरित्यादि ॥ ३४ ॥

पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम्।
पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्तितं पुनः ॥ ३५ ॥

दीर्घञ्जीवितीये मूलिनीफलिनीगणपठितानामपामार्गजीमूतादीनां पुनर्वचने उपपत्तिमाह—पूर्वमित्यादि। मूलफलज्ञानहेतोरिति अस्य मूलेन व्यवहारः, अस्य फलेन व्यवहारः, इति ज्ञातुमित्यर्थः। पञ्चकर्मणामाश्रयः, आश्रयशब्दश्च भावप्रधानः; तेन पञ्चकर्माश्रयत्वे ज्ञानार्थमिति फलति। यद्यपि मूलिन्यश्च फलिन्यश्च दीर्घञ्जीवितीयेऽपि "शणपुष्पी च बिम्बी च" (सू. अ. १) इत्यादिना ग्रन्थेन पञ्चकर्माश्रयत्वेनाप्युक्ताः, तथाऽपीह मुख्यप्रपञ्चेनाभिधीयमानपञ्चकर्माश्रयद्रव्यगणेऽनभिधानात् पञ्चकर्माश्रयत्वेनाप्राधान्यं वाऽपामार्गादीनां शङ्क्येत, अत उक्तं-पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्तितं पुनरिति ॥ ३५ ॥

स्मृतिमान् हेतुयुक्तिज्ञो जितात्मा प्रतिपत्तिमान्।
भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति ॥ ३६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

एतदध्यायप्रतिपादितायाः पञ्चकर्मप्रवृत्तेर्ज्ञेयत्वेन यथाभूतेन वैद्येन चिकित्सा कर्तव्या तादृशं वैद्यमाह—स्मृतिमानित्यादि। प्रतिपत्तिरुत्पन्नायामापदि झटिति यथाकर्तव्यताज्ञानं, तद्वान् प्रतिपत्तिमान् ॥ ३६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने प्रथमे भेषजचतुष्केऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः।

अथात आरग्वधीयमध्यायं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्विविधं हि भेषजमन्तःपरिमार्जनं बहिःपरिमार्जनं च; तत्रापामार्गतण्डुलीयेन पञ्चकर्मयवागूरूपमन्तःपरिमार्जनमभिधायावशिष्टं बहिःपरिमार्जनं प्रलेपाद्यारग्वधीयेनाह—अथात आरग्वधीयमित्यादि। यद्यपि कुष्ठचिकित्सितं पृथगेव चिकित्सास्थाने भविष्यति, तत्रैव चावसरप्राप्ता एते आरग्वधादयो वक्तुमुचिताः; तथाऽपीह पृथक् कुष्ठयोगानामभिधानेन कुष्ठस्यानुबन्धित्वेन च महारोगत्वं ख्यापयति; अभ्यर्हितो ह्यर्थः पुनः पुनरभिधीयते। इयं च कुष्ठचिकित्साऽनागतावेक्षणतन्त्रयुक्त्या निदानस्थाने हेतुलक्षणादिभिर्लक्षितं कुष्ठमुद्दिश्योक्ता; तेनालक्षितस्य चिकित्साऽभिधीयमानाऽज्ञातविषयत्वेन न युज्यत इति यदुच्यते तन्निरस्तं भवति। यद्यपि राजयक्ष्मप्रभृतयोऽपि महारोगाः सन्ति, तथाऽपि न ते भूरिबहिःपरिमार्जनविषया यथा कुष्ठमिति कुष्ठविषया एव बहिःपरिमार्जनयोगा अभिधीयन्ते। कुष्ठहरबहिःपरिमार्जनोपोद्घातेन च वातापहाः "कोलं कुलत्था" इत्यादयोऽभिधास्यन्ते। किंच कुष्ठहरबहिःपरिमार्जनप्रयोगाणामिदं स्वरूपं यच्छोधनानन्तरं प्रयुज्यमानाः सिद्धिभाजो भवन्ति; यदुक्तं-"ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्हृतास्रदोषाणाम्। संशोधिताशयानां सद्यः सिद्धिर्भवेत्तेषाम्" (चि. अ. ७) इति; तत् पूर्वाध्याये संशोधनमभिधायेह कुष्ठप्रयोगानवसरप्राप्तानभिदधताऽऽचार्येण साधु ग्रन्थनिवेशः कृतः। यद्यपि च "खदिरः कुष्ठहराणाम्" (सू. अ. २५) इति वचनेन खदिरः कुष्ठहरभेषजेषु प्रधानं, तथाऽपि खदिरं परित्यज्यारग्वधमादावुपदिशति, कुष्ठहरबहिःपरिमार्जनभेषजेष्वारग्वधस्यैव प्रधानत्वख्यापनार्थम् ॥ १ ॥ २ ॥

आरग्वधः सैडगजः करञ्जो
वासा गुडूची मदनं हरिद्रे।
श्याह्वः सुराह्वः खदिरो धवश्च
निम्बो विडङ्गं करवीरकत्वक् ॥ ३ ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः
सलोमशो गुग्गुलुकृष्णगन्धे।
फणिज्झको वत्सकसप्तपर्णौ
पीलूनि कुष्ठं सुमनःप्रवालाः ॥ ४ ॥
वचा हरेणुस्त्रिवृता निकुम्भो
भल्लातकं गैरिकमञ्जनं च।
मनःशिलाले गृहधूम एला
काशीसलोध्रार्जुनमुस्तसर्जाः ॥ ५ ॥
इत्यर्धरूपैर्विहिताः षडेते
गोपित्तपीताः पुनरेव पिष्टाः।
सिद्धाः परं सर्षपतैलयुक्ता-
श्चूर्णप्रदेहा भिषजां प्रयोज्याः ॥ ६ ॥
कुष्ठानि कृच्छ्राणि नवं किलासं
सुरेशलुप्तं किटिभं सदद्रु।
भगन्दरार्शांस्यपचीं सपामां
हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ ७ ॥

कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रू ।
ससर्षपं तुम्बुरुधान्यवन्यं
चण्डां च चूर्णानि समानि कुर्यात् ॥ ८ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्यकण्डूः पिडकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ९ ॥
कुष्ठामृतासङ्गकटङ्कटेरी-
कासीसकम्पिल्लकमुस्तलोध्राः ।
सौगन्धिकं सर्जरसो विडङ्गं
मनःशिलाले करवीरकत्वक् ॥ १० ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रूः सकण्डूः किटिभानि पामा
विचर्चिका चैव तथैति शान्तिम् ॥ ११ ॥
मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः ।
तुत्थं विडङ्गं मरिचानि कुष्ठं
लोध्रं च तद्वत् समनःशिलं स्यात् ॥ १२ ॥
रसाञ्जनं सप्रपुनाडबीजं
युक्तं कपित्थस्य रसेन लेपः ।
करञ्जबीजैडगजं सकुष्ठं
गोमूत्रपिष्टं च परः प्रदेहः ॥ १३ ॥
उभे हरिद्रे कुटजस्य बीजं
करञ्जबीजं सुमनःप्रवालान् ।
त्वचं समध्यां हयमारकस्य
लेपं तिलक्षारयुतं विदध्यात् ॥ १४ ॥
मनःशिला त्वक् कुटजात् सकुष्ठात्
सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥ १५ ॥
पलाशनिर्दाहरसेन चापि
कर्षोद्धृतान्याढकसंमितेन ।
दर्वीप्रलेपं प्रवदन्ति लेप-
मेतं परं कुष्ठनिसूदनाय ॥ १६ ॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठा-
न्युद्वर्तयेदश्वहनच्छदैश्च ॥ १७ ॥

तानेव कुष्ठहरयोगानाह—आरग्वध इत्यादि । श्याह्वो 'नवनीतखोटिः' इति प्रसिद्धः । ग्रन्थिश्च भौर्ज इति भूर्जपत्रग्रन्थिः । सलोमशो धातुकासीसम् । फणिज्झकः पर्णासभेदः । सुमनःप्रवाला जातीपल्लवाः । निकुम्भो दन्ती । आलं हरितालम् । अर्धरूपैरिति अर्धश्लोकैः । गोपित्तपीता इति पीतगोपित्ताः, मयूरव्यंसकादित्वेन पूर्वनिपातनियमात्; यदि वा गोपित्तभावनया पीतवर्णा गोपित्तपीताः । परमत्यर्थं सिद्धाः; यद्यपि सर्वप्रयोगा महर्षिप्रणीताः स्वविषये सिद्धास्तथाऽपीह बहूनां दुश्चिकित्स्यानां रोगाणामाशुहरणात् परं सिद्धा इत्युच्यन्ते । चूर्णानि च प्रदेहाश्च चूर्णप्रदेहाः; यदि वा चूर्णीकृतानां प्रदेहाश्चूर्णप्रदेहा; प्रदेहो लेपः, प्रदेहताकरणं चैषां योगानां कुष्ठहरगोमूत्रगोपित्तादिना बोद्धव्यम् । सुरेशलुप्तम् इन्द्रलुप्तम् । कुष्ठग्रहणेन लब्धानामपि किटिभदद्रुपामादीनां पुनरभिधानं प्रयोगाणां विशेषेण तद्धरणशक्तिख्यापनार्थम् । तुम्बुरु खनामप्रसिद्धम् । वन्यं कैवर्तमुस्तकम् । चण्डा चोरपुष्पी । प्रथममिति तैलाक्तमित्यनेन संबध्यते । तैलं चेह कुष्ठहरप्रकरणे सार्षपं बोद्धव्यम् । अमृतासङ्गः तुत्थकम् । कटङ्कटेरी दारुहरिद्रा । सौगन्धिकं गन्धतृणं गन्धको वा । आर्कं पयः अर्कक्षीरम् । तद्वदिति प्रदेहः कुष्ठहरः[१] । प्रपुन्नाड एडगजः । हयमारकः करवीरः; तस्य त्वग् ग्राह्या, मध्यं च पृथग्भावेन ग्राह्यम् । तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम् । पलाशस्य निर्दाहेन गृहीतो रसः पलाशनिर्दाहरसः; स च पलाशस्य प्रधानमूले च्छिन्नेऽधः कुम्भं दत्त्वोपरि वृक्षदाहाद्यो गलति स्वरसः स गृह्यते । चतुरङ्गुलः स्वर्णहालिः । अश्वहनः करवीरः । चतुरङ्गुलकाकमाच्यश्वहनच्छदैरेकः प्रयोगः, द्वित्वे ह्यस्य द्वात्रिंशत्संख्या वक्ष्यमाणा विरुध्यते ॥ ३–१७ ॥

कोलं कुलत्थाः सुरदारुरास्ना-
माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्ल-
मुष्णानि वातामयिनां प्रदेहः ॥ १८ ॥
आनूपमत्स्यामिषवेसवारै-
रुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रै-
र्गन्धौषधैश्चानिलहः प्रदेहः ॥ १९ ॥
तक्रेण युक्तं यवचूर्णमुष्णं
सक्षारमर्तिं जठरे निहन्यात् ।
कुष्ठं शताह्वां सवचां यवानां
चूर्णं सतैलाम्लमुशन्ति वाते ॥ २० ॥
उभे शताह्वे मधुकं मधूकं
बलां प्रियालं च कशेरुकं च ।

१ 'प्रदेहात् कुष्ठहरम्' इति पा० ।

घृतं विदारीं च सितोपलां च
कुर्यात् प्रदेहं पवने सरक्ते ॥ २१ ॥
रास्ना गुडूची मधुकं बले द्वे
सजीवकं सर्षभकं पयश्च ।
घृतं च सिद्धं मधुशेषयुक्तं
रक्तानिलार्तिं प्रणुदेत् प्रदेहः ॥ २२ ॥
वाते सरक्ते सघृतं प्रदेहो
गोधूमचूर्णं छगलीपयश्च ।

तैलयोनिफलान्येरण्डफलतिलादीनि । अम्लमिति काञ्जिकादियोगात् । आनूपानां खड्गादीनां मत्स्यानां चामिषं मांसमानूपमत्स्यामिषम् । वेसवारः—"निरस्थि पिशितं पिष्टं खिन्नं गुडघृतान्वितम् । कृष्णामरिचसंयुक्तं वेसवार इति स्मृतः" । गन्धप्रधानान्यौषधानि गन्धौषधानि, तानि चागुर्वादीनि ज्वराध्याये प्रतिपाद्यानि; गन्धौषधैश्च सिद्धैरिति योजनीयं; तेन दशमूलगन्धौषधाभ्यां स्नेहाः साधनीयाः (किंवा गन्धौषधैर्दशमूलसिद्धैः स्नेहप्रक्तैरयं प्रदेहः) । उशन्ति कथयन्ति । विदारी विदारीकन्दः । सितोपला सितशर्करा । मधुशेषः सिक्थकम् । सिद्धमिति घृतदुग्धयुक्तं सत् किंचिदेवाग्नौ साधितम् ॥१८-२२॥—

नतोत्पलं चन्दनकुष्ठयुक्तं
शिरोरुजायां सघृतं प्रदेहः ॥ २३ ॥
प्रपौण्डरीकं सुरदारु कुष्ठं
यष्ट्याह्वमेला कमलोत्पले च ।
शिरोरुजायां सघृतः प्रदेहो
लोहैरकापद्मकचोरकैश्च ॥ २४ ॥
रास्ना हरिद्रे नलदं शताह्वे
द्वे देवदारूणि सितोपला च ।
जीवन्तिमूलं सघृतं सतैल-
मालेपनं पार्श्वरुजासु कोष्णम् ॥ २५ ॥
शैवालपद्मोत्पलवेत्रतुङ्ग-
प्रपौण्डरीकाण्यमृणाललोध्रम् ।
प्रियङ्गुकालेयकचन्दनानि
निर्वापणः स्यात् सघृतः प्रदेहः ॥ २६ ॥
सितालतावेतसपद्मकानि
यष्ट्याह्वमैन्द्री नलिनानि दूर्वा ।
यवासमूलं कुशकाशयोश्च
निर्वापणः स्याज्जलमेरका च ॥ २७ ॥
शैलेयमेलागुरुणी सकुष्ठे
चण्डा नतं त्वक् सुरदारु रास्ना ।
शीतं निहन्यादचिरात् प्रदेहो
विषं शिरीषस्तु ससिन्धुवारः ॥ २८ ॥

शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि
शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २९ ॥

नतं तगरपादिका, तदभावे शीउलीचोप्पडको गृह्यते । प्रपौण्डरीकः पुण्डरीकम् । लोहम् अगुरु । एरका होरगलः । अयं प्रपौण्डरीकादिभिश्चोरकैश्चेत्यन्त एकः प्रयोगः । चोरकः चोरपुष्पिका खनामप्रसिद्धः । नलदं मांसी । शताह्वे इति शतपुष्पामधुरिके । तुङ्गः पुन्नागः । अमृणालम् उशीरम् । कालेयकं कालियाकाष्ठम् । लता मञ्जिष्ठा । ऐन्द्री गोरक्षकर्कटी । नलिनं कमलम् । यवासमूलं दुरालभामूलम् । कुशकाशयोश्च मूलम् । अयं सितादिरेरका चेत्यन्त एको योगः । जलं वालकम् । सिन्धुवारः निर्गुण्डी । विषमित्यादिरपरः प्रयोगः । लामज्जकम् उशीरम् । हेम नागकेशरम् । अभयम् उशीरम् ॥ २३-२९ ॥

तत्र श्लोकः—

इहात्रिजः सिद्धतमानुवाच
द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
चूर्णप्रदेहान् विविधामयघ्ना-
नारग्वधीये जगतो हितार्थम् ॥ ३० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

अध्यायार्थसंग्रहः—इहात्रिज इत्यादि । चूर्णप्रदेहानिति पूर्ववद्व्याख्येयम् । द्वात्रिंशतमिति संख्याकरणं न्यूनाधिकसंख्यादुर्बोधनिराकरणार्थम् ॥ ३० ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने प्रथमे भेषजचतुष्के आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

इह खलु षड् विरेचनशतानि भवन्ति, षड् विरेचनाश्रयाः, पञ्च कषाययोनयः, पञ्चविधं कषायकल्पनं, पञ्चाशन्महाकषायाः, पञ्च कषायशतानि, इति संग्रहः ॥ ३ ॥

अपामार्गतण्डुलीयेऽन्तःपरिमार्जनमुक्तम्, आरग्वधीये च बहिःपरिमार्जनमुक्तं; संप्रति पूर्वाध्यायद्वयप्रतिपादितभेषज-

१ अयं पाठः क्वचित्पुस्तके नोपलभ्यते ।

१ 'षड्विरेचनशतीयं' इति पा० ।

चतुष्कावश्यवक्तव्यमवशिष्टमुभयपरिमार्जनभेषजमभिधातुं षड्विरेचनशताश्रितीयोऽभिधीयते । आश्रीयत इत्याश्रितमाश्रय इत्यर्थः । षट्संख्यावच्छिन्नानि विरेचनशतान्याश्रितानि चाधिकृत्य कृतोऽध्यायः षड्विरेचनशताश्रितीयः, एतेनैतदुक्तं—षड्विरेचनशतानि, षड्विरेचनाश्रयाः, एतद्द्वयमधिकृत्य संज्ञेयं प्रणीतेति मन्तव्यम् । यद्यपि चाध्यायादाविह खल्विति पदं श्रूयते, तथाऽपि तदप्रधानत्वान्नाध्यायसंज्ञाप्रणयने निवेशितम् । इहेति अग्निवेशतन्त्रेऽनतिसंक्षेपविस्तरे । एतेन वक्ष्यमाणविरेचनषट्शतानां तथा पञ्चाशन्महाकषायाणां तथा पञ्चकषायशतानां विस्तरकल्पनायामधिकत्वमपि भवतीति सूच्यते । अत एव वक्ष्यति कल्पे—"उद्देशमात्रमेतावद्द्रष्टव्यमिह षट्शतम् । खलु द्व्येवं सहस्राणि कोटिर्वा संप्रकल्पयेत्"–(क. अ. १२) इति । तथाऽत्रैव वक्ष्यति—"न हि विस्तरस्य प्रमाणमस्ति" इत्यादि । खलुशब्दः प्रकाशने । विरेचनशब्देनेह वमनं विरेचनं च गृह्यते । यतो वक्ष्यति कल्पे—"उभयं वा दोषमलविरेचनाद्विरेचनशब्दं लभते" (क. अ. १) इति । न च वाच्यं दोषमलविरेचनाच्चेद्विरेचनसंज्ञा, तेन बस्तिशिरोविरेचनयोरपि विरेचनसंज्ञाप्रवृत्तिः; यतस्तन्त्रकारसिद्धेयं संज्ञा न पाचकवद्योगमात्रप्रवृत्ता; तन्त्रकारश्च वमनविरेचनयोरेव योगरूढां संज्ञां विदधाति नान्यत्र, ततः कुतोऽन्यत्र प्रसक्तिः । षड्विरेचनशतानीत्यादि स्वयमेवाचार्यो व्याख्यास्यति । पञ्च कषायशतानीत्यत्र कषायशब्देन मधुरादीनां लवणवर्जानां रसानां कषायत्वेन परिभाषितानामाश्रयत्वेनौषधद्रव्यमुच्यते । कषाययोनयः कषायजातयः । कषायाणां यथोक्तद्रव्याणां कल्पनमुपयोगार्थं संस्करणं कषायकल्पनम् । महाकषाया इति दशसंख्यावच्छिन्नस्यैककार्यकरणार्थोपात्तस्यौषधगणस्य संज्ञा; यद्वक्ष्यति—"दशेमानि जीवनीयानि" इत्यादिना ॥ १–३ ॥

**षड् विरेचनशतानि, इति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषदि व्याख्यास्यामः; (तत्र)[1] त्रयस्त्रिंशद्योगशतं प्रणीतं फलेषु, एकोनचत्वारिंशज्जीमूतकेषु योगाः, पञ्चचत्वारिंशदिक्ष्वाकुषु, धामार्गवः षड्विधो भवति योगयुक्तः, कुटजस्त्वष्टादशधा योगमेति, कृतवेधनं षड्विधं भवति योगयुक्तं, श्यामात्रिवृद्योगशतं प्रणीतं दश चापरे चात्र भवन्ति योगाः, चतुरङ्गुलो द्वादशधा योगमेति, लोध्रं विधौ षोडशयोगयुक्तं, महावृक्षो भवति विंशतियोगयुक्तः, एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः, अष्टचत्वारिंशद्दन्तीद्रवन्त्योः, इति षड्विरेचनशतानि ॥ ४ ॥**

संग्रहेण उद्देशमात्रेण । कल्प एवोपनिषत् कल्पोपनिषत्; उपनिषदित्यत्युपयुक्तरहस्यविद्योपदेशस्थानमुच्यते वेदे; तद्वदिहापि कल्पस्यात्युपयुक्तत्वेन रहस्यवमनविरेचनप्रयोगोपदेशकत्वात् कल्प एवोपनिषदित्युच्यते । न च वाच्यं कल्प एव विस्तरेण षड्विरेचनशतान्यभिधास्यन्ते, तेन तदेवास्तु, अलमनेन संक्षेपाभिधानेन सम्यगवबोधानुपायत्वात्; यतस्तन्त्रधर्मोऽयं—यत् प्रथमं सूत्रणं भवति, तदनु तद्विवरणं प्रपञ्चेन; उच्यते च न्यायविद्भिः—"ते वै विषयाश्च[1] सुसंगृहीता भवन्ति येषां समासो व्यासश्च" इति । त्रयस्त्रिंशताऽधिकं योगशतं त्रयस्त्रिंशद्योगशतम् । कृतवेधनयोगान्ता योगा वमनस्य, शेषा विरेचनस्य । अत्रेति श्यामात्रिवृतोरेव । श्यामेति श्याममूला त्रिवृत्, त्रिवृदिति अरुणमूला त्रिवृत् ॥ ४ ॥

**षड् विरेचनाश्रया इति क्षीरमूलत्वक्पत्रपुष्पफलानीति ॥ ५ ॥**

षडित्यादि । षडेव विरेचनाश्रया विरेचनाधिकरणानि । अत्र हि क्षीरमादौ कृतं तीक्ष्णविरेचनत्वात्; उक्तं हि—"स्नुक्पयस्तीक्ष्णविरेचनानाम्" (सू. अ. २५) इति । त्वगित्यनेन लोध्रत्वग्गृह्यते । पत्रमित्यनेन इक्ष्वाक्वादिपत्रम् । यद्वक्ष्यति कल्पे—"अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमिताम् । क्षीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे" (क. अ. ३) इति । यद्यपि चैरण्डतैलताम्रपारदादीनां क्षीराद्यधिकानामपि विरेचनाश्रयत्वं संभवति, तथाऽपि तेषामिह तन्त्रे कल्पस्थाने विरेचनाश्रयत्वेनानभिधानादध्यायादिप्रतिपादितेनेहशब्देन योगादिह षडाश्रया इत्यविरुद्धमेव ॥ ५ ॥

**पञ्च कषाययोनय इति मधुरकषायोऽम्लकषायः कटुकषायस्तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ६ ॥**

पञ्च कषायशतानि महाकषायव्याख्यया व्याख्यातव्यानि, अतस्तदुल्लङ्घ्य पञ्च कषाययोनयोऽभिधीयन्ते । मधुरश्चासौ कषायश्चेति मधुरकषायः, एवं शेषेष्वपि । तन्त्रे संज्ञेत्यनेन लवणरसं वर्जयित्वा मधुरादयो रसाः कषायसंज्ञया व्यवह्रियन्ते इत्ययं स्वतन्त्रसमय इति सूचयति, नात्र परतन्त्रव्यवहार इति । अथ किमर्थं पुनराचार्येण कषायसंज्ञाप्रणयने लवणस्य मधुरादेरिव गुणादिभिरुद्दिष्टस्य तथा प्रयोगेषु चित्रकगुडिकादौ "द्वौ क्षारौ लवणानि च" (चि. अ. १५) इत्यादिनोद्दिष्टस्य रोगभिषग्जितीये (वि. अ. ८) च स्कन्धेनोपदिष्टस्य रसाधिकारेषु च तेषु तेषु मधुरादिवदुपदिष्टस्य परित्यागः क्रियते? उच्यते—कषायसंज्ञेयं भेषजत्वेन व्याध्रियमाणेषु रसेष्वाचार्येण निवेशिता । अत्र च केवलस्य लवणस्य प्रयोगो नास्ति, मधुरादीनां तु केवलानामपि प्रयोगोऽस्ति, लवणं तु द्रव्यान्तरसंयुक्तमेवोपयुज्यते । मधुरादिषु स्वरसकल्कादिलक्षणा कल्पना संभवति, न लवणे । यतो न तावल्लवणस्य स्वरसोऽस्ति; कल्कोऽपि द्रव्यस्य द्रवेण

१ 'तत्र' इति क्वचित्पुस्तके नोपलभ्यते ।

१ 'विषयः' इति पा० ।

पेषणात् क्रियते, तच्च न संभवति लवणे, लवणं हि पानीययोगात् पानीयमेव भवति; यद्यपि कल्कस्यैव भेदश्चूर्णं, चूर्णता च लवणस्य संभवति, तथाऽपि लवणस्य चूर्णरूपता न पूर्वस्मादचूर्णरूपात् किंचिच्छक्तिविशेषमापादयति, शक्तिविशेषकल्पनार्थं च कल्पना क्रियत इत्युत्तरत्र प्रतिपादयिष्यामः, तस्माच्चूर्णत्वमपि लवणस्य कल्पनकल्पनमिव; शृतशीतफाण्टकषायास्तु द्रव्यस्य कार्त्स्न्येनानुपयोज्यस्य तत्तत्संस्कारवशाद्द्रवेषु द्रव्यस्य स्तोकावयवानुप्रवेशार्थमुपदिश्यन्ते; लवणे चैतन्न संभवति, लवणं हि द्रवसंबन्धे सर्वात्मनैव द्रवमनुगतं भवति; तस्माल्लवणं पृथक्प्रयोगाभावात् कल्पनाऽसंभवाच्चाचार्येण कषायसंज्ञाप्रणयने निरस्तमिति न निष्प्रयोजनेयमाचार्यप्रवृत्तिः ॥ ६ ॥

पञ्चविधं कषायकल्पनमिति तद्यथा—स्वरसः, कल्कः, शृतः, शीतः, फाण्टः, कषाय इति ।
( यन्त्रनिष्पीडिताद्द्रव्याद्रसः स्वरस उच्यते ।
यः पिण्डो रसपिष्टानां स कल्कः परिकीर्तितः ॥
वह्नौ तु कथितं द्रव्यं शृतमाहुश्चिकित्सकाः ।
द्रव्यादापोत्थितात्तोये प्रतप्ते निशि संस्थितात् ॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ।
क्षिप्त्वोष्णतोये मृदितं तत् फाण्टं परिकीर्तितम् ॥)

तेषां यथापूर्वं बलाधिक्यम्; अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी; न त्वेवं खलु सर्वाणि सर्वत्रोपयोगीनि भवन्ति ॥ ७ ॥

कल्पनमुपयोगार्थं प्रकल्पनं संस्करणमिति यावत् स्वरसादिबहुलक्षणं; यथा—"स्वो रसः स्वरसः प्रोक्तः, कल्को दृषदि पेषितः । क्वथितस्तु शृतः, शीतः शर्वरीमुषितो मतः ॥ क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते"—इति । अत्र शौनकवचनं तु "द्रव्यादापोत्थितात्तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्याति स शीतः समुदाहृतः" इति । फाण्टः कषाय इति कषायशब्दोऽयं स्वरसादिभिरपि संबध्यते, तेन स्वरसः कषायः, कल्कः कषायः, इत्याद्यपि बोद्धव्यम् । तेषां स्वरसादीनां यथापूर्वं बलाधिक्यमिति फाण्टाच्छीतो गुरुः, शीताच्छृतो गुरुरित्यादि । यतो यथापूर्वं गुर्वी कषायकल्पना, अत एव व्याध्यातुरबलापेक्षिणी; व्याधेरातुरस्य च बलमपेक्षत इत्यर्थः । अत्रोपपत्तिमाह—न त्वेवमित्यादि । बलवति पुरुषे व्याधौ च द्रव्यसारभागमयत्वेनात्यर्थं गुरुर्बहुकार्यकरः स्वरसो युज्यते, नायमल्पबले पुरुषे रोगे वा योगवान् भवति, बलभ्रंश[1]भेषजातियोगदोषकर्तृत्वादिति भावः; एवमन्यत्रापि व्याख्येयम् । तथा न सर्वाणि स्वरसादीनि सर्वत्र पुरुषे योग्यानि भवन्ति; यतः केचित् स्वरसद्विषः, केचित् स्वरसप्रिया इतरकल्पनाद्विष एवमादि । न चात्यर्थं द्विष्टभेषजस्य प्रयोग इष्यते, तत्क्षण[3]वमनारुच्यादिदोषकर्तृत्वात् । तथा कषायकल्पना व्याध्यातुरबलापेक्षिणीत्येतदुदाहरणार्थं, तेन द्रव्यापेक्षिणीत्येतदपि बोद्धव्यम् । यतो द्रव्यनियमेन कल्पनानियमं वक्ष्यति रसायने; यथा—"मण्डूकपर्ण्याः स्वरसः प्रयोज्यः, क्षीरेण यष्टीमधुकस्य चूर्णम् । रसो गुडूच्यास्तु समूलपुष्प्याः, कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः" ( चि. अ. १ ) इति । चूर्णं कल्क एवान्तर्भावनीयं, द्विविधो हि कल्कः सद्रवोऽद्रवश्चेति कृत्वा; तेन "निशि स्थिता वा स्वरसीकृता वा कल्कीकृता चूर्णमथो शृता वा ( चि. अ. ४ )" इत्यादौ पृथक् चूर्णपाठेनाधिककल्पनाप्रसङ्गो नोद्भावनीयः ॥ ७ ॥

'पञ्चाशन्महाकषाया' इति यदुक्तं तदनुव्याख्यास्यामः; तद्यथा—जीवनीयो बृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः; बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः; तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः क्रिमिघ्नो विषघ्न इति षट्कः कषायवर्गः; स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः; स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः; छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः; पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः कषायवर्गः; कासहरः श्वासहरः शोथहरो ज्वरहरः श्रमहर इति पञ्चकः कषायवर्गः; दाहप्रशमनः शीतप्रशमन उदर्दप्रशमनोऽङ्गमर्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः; शोणितस्थापनो वेदनास्थापनः संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषायवर्गः; इति पञ्चाशन्महाकषाया महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति । तेषामेकैकस्मिन् महाकषाये दश दशावयविकान् कषायाननुव्याख्यास्यामः; तान्येव पञ्च कषायशतानि भवन्ति ॥ ८ ॥

महाकषायाननुदाहरति—पञ्चाशदित्यादि । जीवने हितो जीवनीयः; एवमन्यत्रापि । षड्भिर्निष्पादितः षट्कः, एवं चतुष्कादिष्वपि बोध्यम् । अत्र च षट्कादिर्महाकषायाणां परिच्छेदः कस्यचिदर्थस्यानुगमेन बोद्धव्यः; यथा—जीवनीयादौ षट्के ईयान्तत्वं, बल्यादौ यप्रत्ययान्तत्वं, तृप्तिघ्नादौ घ्नान्तत्वं, स्तन्यजननादौ स्तन्यशुक्रविषयत्वम्, एवमाद्यूह्यम्[1] । एतच्च ईयप्रत्ययान्तत्वादिना[2] बहुभेदकथनं वैचित्र्येण ग्रन्थस्य पुष्कलाभिधानताकरणार्थम् । एतच्च शास्त्रेऽवश्यं कर्तव्यम् । यदुक्तमिहैव शास्त्रगुणकथने यथा—"अनपपतितशब्दमकष्टशब्दं पुष्कला-

१ अयं पाठश्चक्रासंमतः । २ 'बलभ्रंशभेषजातियोगे दोषकर्तृत्वात्' इति पा० । ३ '०वमनारुच्यादिकर्तृत्वदोषात्' इति पा० ।

१ 'एवमाद्युक्तम्' इति पा० । २ 'इयशब्दान्तत्वादिना' इति पा० ।

भिधानम्" (वि.अ.८) इत्यादि। जीवनीयशब्देनेहायुष्यत्वमभिप्रेतम्। यत्र च मधुररसगुणे "आयुष्यो जीवनीयः" (सू.अ. २६) इति च करिष्यति तत्र मूर्च्छितस्य संज्ञाजनकत्वेन जीवनीयत्वं व्याख्येयम्। तृप्तिः श्लेष्मविकारो येन तृप्तमिवात्मानं मन्यते, तद्धं तृप्तिघ्नम्। स्नेहोपगानीति स्नेहस्य सर्पिरादेः स्नेहनक्रियायां सहायत्वेनोपगच्छन्तीति स्नेहोपगानि, मृद्वीकादिस्नेहोपगयुक्तस्य सर्पिरादेः स्नेहने प्रकर्षवती शक्तिर्भवतीत्यर्थः; तथा वमनोपगानीत्यत्र मदनफलादीनां वमनद्रव्याणां मधुमधुकादीनि सहायानि भवन्तीति; एवं स्वेदोपगादौ व्याख्येयम्। शिरोविरेचनोपगे तु शिरोविरेचनप्रधानान्येव द्रव्याणि बोद्धव्यानि। पुरीषस्य विरजनं दोषसंबन्धनिरासं करोतीति पुरीषविरजनीयः। एवं मूत्रविरजनीये व्याख्येयम्। मूत्रस्य विरेचनं करोतीति मूत्रविरेचनीयः। उदर्दो वरटीदष्टाकारः शोथः, तत्प्रशमन उदर्दप्रशमनः; न पुनरिह महारोगाध्याये पठितो वातविकारो गृह्यते, तिन्दुकादीनामुदर्दप्रशमनानां वातं प्रत्यननुकूलत्वात्। शोणितस्य दुष्टस्य दुष्टिमपहृत्य प्रकृतौ शोणितं स्थापयतीति शोणितस्थापनम्। वेदनायां संभूतायां तां निहत्य शरीरं प्रकृतौ स्थापयतीति वेदनास्थापनम्। संज्ञां ज्ञानं च स्थापयतीति संज्ञास्थापनम्। प्रजोपघातकं दोषं हृत्वा प्रजां स्थापयतीति प्रजास्थापनम्। वयस्तरुणं स्थापयतीति वयःस्थापनम्। उपसंहरति—इतीत्यादि। महतां कषायाणां पञ्चाशन्महाकषाया भवन्तीत्यनेनोद्दिष्टानां, लक्षणं स्वरूपं जीवनीयादि, तस्योदाहरणं प्रपञ्चेन कथनं, तदर्थं व्याख्याता निर्देशेन कथिता इत्यर्थः; यदि वा महतां कषायाणां यल्लक्षणमनेकैः कषायैर्मिलित्वैकार्थजीवनीयादिसंपादनं, तस्योदाहरणार्थं दृष्टान्तार्थम्। एतेनान्यान्यपि महाकषायाणि वातप्रशमनपित्तप्रशमनादीन्येककार्यसंपादकानेकद्रव्यमयानि भवन्तीति सूचयति। महतां चेति चकार उदाहरणार्थं चेत्यत्र बोद्धव्यः, तेनाल्पबुद्धीनां व्यवहारार्थं चेति समुच्चिनोति; एतच्चोत्तरत्र स्फुटं भविष्यति। उत्तरत्र यद्वक्ष्यति—"महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति" इति, तत् तद्यथेत्यादिग्रन्थस्यार्थं व्याकर्तुं; किंवाऽत्र व्याख्याता इति पदं संज्ञामात्रेण महाकषायकथने वर्तते, तत्र तु व्याख्याता इति पदं प्रति प्रति जीवकादिद्रव्यकथने वर्तते, तेन न पौनरुक्त्यम्। अवयवा एवावयविकाः, तान्येव पञ्चाशन्महाकषायाणि दशावयवगुणितान्येकैकद्रव्यरूपाणि पञ्च कषायशतानि भवन्तीत्यर्थः॥ ८॥

**तद्यथा—जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गपर्णीमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति (१); क्षीरिणी राजक्षवकाश्वगन्धाकाकोलीक्षीरकाकोलीवाट्यायनीभद्रौदनीभारद्वाजीपयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति (२), मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रकचिरबिल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति (३), सुवहार्कोरुबुकाग्निमुखीचित्राचित्रकचिरबिल्वशङ्खिनीशकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति (४), मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरसधातकीलोध्रप्रियङ्गुकट्फलानीति दशेमानि सन्धानीयानि भवन्ति (५), पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति (६), इति षट्कः कषायवर्गः॥ ९॥**

जीवनीयमादावुच्यते सर्वेषां जीवनहितस्यैवात्यर्थमभिप्रेतत्वात्। मुद्गमाषपर्ण्यन्तं सुगमम्। जीवन्ती स्वनामख्याता सुवर्णवर्णाभा, मधुकं यष्टीमधुकम् (१)। क्षीरिणी क्षीरलता, राजक्षवको दुरधिका, वाट्यायनी श्वेतबला, भद्रौदनी पीतबला, भारद्वाजी वनकार्पासी, पयस्या विदारीकन्दः, ऋष्यगन्धा ऋष्यजाङ्गलकः (२)। कटुका कटुरोहिणी, चिरबिल्वः करञ्जः, हैमवती श्वेतवचा (३)। सुवहा त्रिवृत्, अग्निमुखी 'लाङ्गलिया' इति ख्याता, चित्रा दन्ती, शङ्खिनी श्वेतबुह्रा, शकुलादनी कटुरोहिणी, स्वर्णक्षीरिणी अङ्गुष्ठप्रभा (४)। अम्बष्ठकी अकर्णविद्धा, समङ्गा वराहक्रान्ता, कट्फलं स्वनामप्रसिद्धं, सन्धानीयः संग्रहणः सामान्येन; पुरीषस्य संग्रहणस्तु भिन्नमलमात्रसंग्रहणः (५)। शृङ्गवेरः शुण्ठी, हिङ्गुनिर्यासो हिङ्गु॥ ९॥

**ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलातिबला इति दशेमानि बल्यानि भवन्ति (७), चन्दनतुङ्गपद्मकोशीरमधुकमञ्जिष्ठासारिवापयस्यासितालता इति दशेमानि वर्ण्यानि भवन्ति (८), सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्यहंसपादीबृहतीकण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति (९), आम्राम्रातकलिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाडिममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति (१०), इति चतुष्कः कषायवर्गः॥१०॥**

ऐन्द्री गोरक्षकर्कटी, ऋषभी शूकशिम्बा, अतिरसा शतावरी ऋद्धिर्वा, ऋष्यप्रोक्ता माषपर्णी, अतिबला पीतबला, पयस्येह क्षीरविदारी काकोली वा (७)। तुङ्गः पुन्नागः, सिता श्वेतदूर्वा, लता श्यामदूर्वा (८)। सारिवा अनन्तमूलम्, इक्षुमूलमत्रेक्षोर्मूलं मोरटो वा, विदारी विदारीकन्दः, कैटर्यं कट्फलं, हंसपादी स्वनामप्रसिद्धा (९)। आम्रातक आम्राडकः, वृक्षाम्लं बृहदम्लम् (१०)॥१०॥

१ 'स्नेहप्रकर्षवती' इति पा०। २ 'मुद्गमाषपर्ण्यौ' इति पा०। 'पर्णीशब्दो मुद्गमाषाभ्यां योज्यः, तेन मुद्गपर्णी माषपर्णी च' इति गङ्गाधरः। ३ '०बला०' इति पा०।

१ 'सरला०' इति पा०। २ 'सरला' इति पा०। ३ 'कङ्कुष्ठप्रभवा' इति पा०। ४ 'भिन्नमात्रमलसंग्रहणः' इति पा०।

नागरचव्यचित्रकविडङ्गमूर्वागुडूचीवचामुस्तपिप्पलीपटोलानीति दशेमानि तृप्तिघ्नानि भवन्ति (११), कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति दशेमान्यर्शोघ्नानि भवन्ति (१२), खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविडङ्गजातीप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति (१३), चन्दननलदकृतमालनक्तमालनिम्बकुटजसर्षपमधुकदारुहरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति (१४), अक्षीवमरिचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रावृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति (१५), हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीषसिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति (१६), इति षट्कः कषायवर्गः ॥११॥

तृप्तिघ्नो व्यक्तः (११)। धन्वयासो दुरालभा (१२)। अरुष्करो भल्लातकः (१३)। नलदं मांसी, कृतमालः सुवर्णहलिः, नक्तमालः करञ्जः (१४)। अक्षीवोऽब्दकः शोभाञ्जनो वा, गण्डीरः शमठशाकं, निर्गुण्डी सिन्धुवारः, किणिही कटभी, आखुपर्णी मूषिकपर्णी, वृषपर्णी च तद्भेदः 'फञ्जिपत्रिका' इति ख्याता (१५)। सुवहा रास्ना हाफरमाली वा, पालिन्दी श्यामलता, श्लेष्मातको बहुवारः (१६)॥ ११ ॥

वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकत्तृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति (१७), पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तककटुरोहिणीसारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति (१८), जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्धरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति (१९), कुष्ठैलवालुककट्फलसमुद्रफेनकदम्बनिर्यासेक्षुकाण्डेक्ष्विक्षुरकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति (२०), इति चतुष्कः कषायवर्गः ॥ १२ ॥

इक्षुवालिका खांगालिका, दर्भ उलुयातृणं, गुन्द्रा गुलुंच (१७)। स्तन्यशोधनो व्यक्तः (१८)। वृद्धरुहा शतावरी, वृक्षरुहापाठपक्षे वन्दाकः, जटिला उच्चटा, कुलिङ्ग उच्चटाभेदः (१९)। कदम्बो बहुफलस्तस्य निर्यासः, इक्षुरकः कोकिलाक्षः, वसुको वसुहट्टकः, अत्र जतूकर्णः पठत्येलवालुकं कट्फलस्थाने (२०)॥ १२ ॥

मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोलीजीवकजीवन्तीशालपर्ण्य इति दशेमानि स्नेहोपगानि भवन्ति (२१), शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषबदराणीति दशेमानि स्वेदोपगानि भवन्ति (२२), मधुमधुककोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पाप्रत्यक्पुष्पा इति दशेमानि वमनोपगानि भवन्ति(२३), द्राक्षाकाश्मर्यपरूषकाभयामलकबिभीतककुवलबदरकर्कन्धुपीलूनीति दशेमानि विरेचनोपगानि भवन्ति (२४), त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेमान्यास्थापनोपगानि भवन्ति (२५), रास्नासुरदारुबिल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योनाका इति दशेमान्यनुवासनोपगानि भवन्ति (२६), ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति (२७), इति सप्तकः कषायवर्गः ॥ १३ ॥

स्नेहोपगो व्यक्तः (२१)। वृश्चीरः श्वेतपुनर्नवा (२२)। कोविदारः स्वनामप्रसिद्धः, कर्बुदारः श्वेतकाञ्चनः, विदुलो हिज्जलः, शणपुष्पी घण्टारवा, सदापुष्पा अर्कः, प्रत्यक्पुष्पा अपामार्गः (२३)। बदरीत्रयम् (२४)। व्यक्तः (२५)। व्यक्तः (२६)। क्षवकः छिक्काकारकः, श्वेता अपराजिता, महाश्वेता तद्भेदः कटभी वा (२७)॥ १३ ॥

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहणानि भवन्ति (२८), नागरधन्वयवासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीवेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति (२९), शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभयापिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहणानि भवन्ति (३०), इति त्रिकः कषायवर्गः ॥ १४ ॥

व्यक्तः (२८)। व्यक्तः (२९)। व्यक्तः (३०)॥ १४॥

प्रियङ्ग्वनन्ताम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणीयानि भवन्ति (३१), जम्बुशल्लकीत्वक्कच्छुरामधूकशाल्मलीश्रीवेष्टकभृष्टमृत्पयस्योत्पलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति (३२), जम्ब्वाम्रप्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मन्तकसोमवल्का इति दशेमानि मूत्रसंग्रहणीयानि भवन्ति (३३), पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधुकप्रियङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति (३४), वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रेत्कटमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति (३५), इति पञ्चकः कषायवर्गः ॥ १५ ॥

अनन्ता अनन्तमूलं, कट्वङ्गः श्योनाकः, मोचरसः शाल्मलीवेष्टकः, पद्मा ब्राह्मणयष्टिका (३१)। शल्लकी खनामप्रसिद्धा, कच्छुरा शूकशिम्बा, शाल्मलीवेष्टकः शिमलीआठा, श्रीवेष्टको नवनीतखोटी (३२)। कपीतनो गन्धमुण्डः, अश्मन्तकः अम्ललोटः, सोमवल्कः खदिरः (३३)। पद्मभेदाश्चत्वारः, सौगन्धिकः शुन्धी (३४)। वृक्षादनी वन्दाको विदारिकन्दो वा, वशिरः सूर्यावर्तः (३५)॥ १५॥

द्राक्षाभयामलकपिप्पलीदुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवातामलक्य इति दशेमानि कासहराणि भवन्ति (३६), शटीपुष्करमूलाम्लवेतसैलाहिङ्ग्वगुरुसुरसातामलकीजीवन्तीचण्डा इति दशेमानि श्वासहराणि भवन्ति (३७), पाटलाग्निमन्थश्योनाकबिल्वकाश्मर्यकण्टकारिकाबृहतीशालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानि श्वयथुहराणि भवन्ति (३८), सारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलकविभीतकानीति दशेमानि ज्वरहराणि भवन्ति (३९), द्राक्षाखर्जूरप्रियालबदरदाडिमफल्गुपरूषकेक्षुयवषष्टिका इति दशेमानि श्रमहराणि भवन्ति (४०), इति पञ्चकः कषायवर्गः॥१६॥

तामलकी भूम्यामलकी (३६)। चण्डा चोरहुली (३७)। व्यक्तः (३८)। व्यक्तः (३९)। फल्गुः काष्ठोदुम्बरकः (४०)॥ १६॥

लाजाचन्दनकाश्मर्यफलमधूकशर्करानीलोत्पलोशीरसारिवागुडूचीह्रीवेराणीति दशेमानि दाहप्रशमनानि भवन्ति (४१), तगरागुरुधान्यकशृङ्गवेरभूतीकवचाकण्टकार्यग्निमन्थश्योनाकपिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति (४२), तिन्दुकप्रियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति (४३), विदारीगन्धापृश्निपर्णीबृहतीकण्टकारिकैरण्डकाकोलीचन्दनोशीरैलामधुकानीति दशेमान्यङ्गमर्दप्रशमनानि भवन्ति (४४), पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचाजमोदाजगन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति (४५), इति पञ्चकः कषायवर्गः॥ १७॥

लाजादौ जतूकर्णपाठात् गुडूचीस्थाने पद्मकः, यदि वा "अर्कागुरुगुडूचीनां तिक्तानां चौष्ण्यमिष्यते" ( सू. अ. २६ ), इति वचनाद्यद्यप्युष्णा गुडूची, तथाऽपि तस्या दाहप्रशमकत्वं प्रभावाद्बोद्धव्यम् (४१)। भूतीकों यवानिका (४२)। तिन्दुकः 'केन्दुः' इति प्रसिद्धः, कदरो विट्खदिरः, अरिमेदः खदिरभेदः (४३)। व्यक्तः (४४)। अजगन्धा फोकान्दी (४५)॥ १७॥

मधुमधुकरुधिरमोचरसमृत्कपाललोध्रगैरिकप्रियङ्गुशर्करालाजा इति दशेमानि शोणितस्थापनानि भवन्ति (४६), शालकट्फलकदम्बपद्मकतुम्बमोचरसशिरीषवञ्जुलैलवालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति (४७), हिङ्गुकैटर्यारिमेदावचाचोरकवयस्थागोलोमीजटिलापलङ्कषाशोकरोहिण्य इति दशेमानि संज्ञास्थापनानि भवन्ति (४८), ऐन्द्रीब्राह्मीशतवीर्यासहस्रवीर्याऽमोघाऽव्यथाशिवाऽरिष्टावाट्यपुष्पीविष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति (४९), अमृताऽभयाधात्रीमुक्ताश्वेताजीवन्त्यतिरसामण्डूकपर्णीस्थिरापुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति (५०), इति पञ्चकः कषायवर्गः॥ १८॥

रुधिरं कुङ्कुमम् (४६)। वञ्जुलो वेतसः (४७)। कैटर्यः पर्वतनिम्बः, वयःस्था ब्राह्मी, गोलोमी भूतकेशी, पलङ्कषा गुग्गुलुः जटामांसी वा (४८)। शतवीर्यासहस्रवीर्ये दूर्वे; अमोघा पाटला, आमलकी वा, लक्ष्मणा वा; अव्यथा कदली, गुडूची वा, हरीतकी वा; अरिष्टा कटुरोहिणी; विष्वक्सेनकान्ता प्रियङ्गुः (४९)। मुक्ता रास्ना; श्वेतास्थाने 'श्रेयसी' इति केचित्, सा रास्नाभेदः (५०)॥ १८॥

इति पञ्चकषायशतान्यभिसमस्य पञ्चाशन्महाकषाया महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति॥ १९॥

संप्रत्येतान्येव जीवकादीन्युक्तानि प्रत्येकशो द्रव्यगणनया पञ्चकषायशतानि स्युः, दशकगणनया च पञ्चाशन्महाकषायाः शृङ्गग्राहिकयोक्ता भवन्तीति दर्शयन्नुपसंहरति—इतीत्यादि। अभिसमस्येति दशकसंख्ययैकवर्गीकृत्य। लक्षणस्योदाहरणं (लक्षणोदाहरणं), पूर्वं जीवनीयादिसंज्ञा लक्षणमभिप्रेत्योक्ता; लक्षणोदाहरणार्थमिति संप्रति जीवकर्षभकादीन्युदाहरणार्थं व्याख्यातानि; जीवकादिभिर्दशभिर्लक्ष्यते ज्ञायते जीवनीयो महाकषायः। महतां चेति चकारः पञ्चकषायशतानां च लक्षणस्योदाहरणार्थमिति समुच्चिनोति। तत्र जीवकादयः प्रत्येकं पञ्चकषायशतानामेकैकद्रव्यरूपाणां लक्षणस्वरूपा भवन्ति। यदि वा लक्षणार्थमुदाहरणार्थं चेति; तत्र मन्दबुद्धीनां लक्षणार्थं पञ्चकषायशतपञ्चाशन्महाकषायज्ञानार्थमित्यर्थः, बुद्धिमतां तूदाहरणार्थं दृष्टान्तार्थम्॥ १९॥

नहि विस्तरस्य प्रमाणमस्ति, न चाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्पते, तस्मादनतिसंक्षेपेणानतिविस्तरेण चोपदिष्टाः। एतावन्तो ह्यलमल्पबुद्धीनां व्यवहाराय, बुद्धिमतां च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानायेति॥ २०॥

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। २ 'जीवनीयसंज्ञा' इति पा०।

ननु कषायद्रव्याणि यावन्ति सन्ति तावन्ति वाऽभिधीयन्तां, दृष्टान्तार्थं द्वित्राणि वा; तत् किमर्थमयं नातिविस्तरो नातिसंक्षेप इत्यत्राह—नहीत्यादि। न हि विस्तरस्य प्रमाणमियत्तापरिच्छेदोऽस्ति, तेन विस्तरो नाभिधीयत इत्यर्थः। अतिसंक्षेपोऽपि द्वित्रलक्षणाभिधानरूपो नाल्पबुद्धीनामनुमानाकुशलानां सामर्थ्याय चिकित्साव्यवहारायोपकल्पते। एतावन्तो यथोक्ताः। अलं समर्थाः। व्यवहारायेति चिकित्साव्यवहाराय। स्वलक्षणस्य भावः स्वालक्षण्यं, तेनानुमानं, तत्र कुशला अभिज्ञा इत्यर्थः। बुद्धिमन्तो हि, जीवकादयो हि स्निग्धशीतमधुरवृष्यादिगुणयुक्ताः सन्तो जीवनं कुर्वन्तीति भूयोदर्शनादवधार्य तद्गुणयुक्तेऽन्यत्रापि द्राक्षापयोविदार्यादौ तज्जातीयत्वेन जीवनानीत्यनुमिमते, यथा जीवकादीनामेकजीवनकार्यकर्तृत्वेन महाकषायत्वं, तद्वत् पाठासमङ्गाप्रभृतीनामप्यतीसारहराणामतीसारहरमहाकषायत्वमित्यनुमानेन कृत्स्नमेव कषायं प्रतिपद्यन्त इति भावः॥ २०॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—नैतानि भगवन्! पञ्च कषायशतानि पूर्यन्ते, तानि तानि ह्येवाङ्गान्युपप्लवन्ते तेषु तेषु महाकषायेष्विति॥ २१॥**

**तमुवाच भगवानात्रेयः—नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश। एकोऽपि ह्यनेकां संज्ञां लभते कार्यान्तराणि कुर्वन्, तद्यथा-पुरुषो बहूनां कर्मणां करणे समर्थो भवति, स यद्यत् कर्म करोति तस्य तस्य कर्मणः कर्तृ-करण-कार्यसंप्रयुक्तं तत्तद्गौणं नामविशेषं प्राप्नोति, तद्वदौषधद्रव्यमपि द्रष्टव्यम्। यदि चैकमेव किंचिद्द्रव्यमासादयामस्तथागुणयुक्तं यत् सर्वकर्मणां करणे समर्थं स्यात्, कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति॥ २२॥**

पूर्वपक्षमुत्थापयति—एवमित्यादि। तानि तानीति जीवकक्षीरकाकोलीप्रभृतीनि, तेषु तेषु जीवनीयबृंहणीयशुक्रजननादिषु, उपप्लवन्ते पुनः पुनस्तान्येव पठ्यन्ते; एकं द्रव्यमनेकेषु पठ्यमानमेकमेव, ततश्च न संख्या पूर्यत इति पूर्वपक्षः। सिद्धान्तयति—नैतदेवमित्यादि। एकस्यानेकत्वेनाभिधाने दृष्टान्तमाह—यथेत्यादि। एकः पुरुषः कर्मणां व्यापाराणामोदनपचनकुम्भकरणखनित्रकरणभूमिखननानां करणे समर्थो भवति, य इत्यध्याहार्यं, स इत्युक्तगुणं पुरुषं प्रत्यवमृषति; यद्यत् कर्मेति ओदनपाकादि, यद्यत् कर्म करोति तस्य तस्य कर्मणः कर्तृसंप्रयुक्तं 'पाचक' इति, करणसंप्रयुक्तं 'खानित्रिक' इति, कार्यसंप्रयुक्तं 'कुम्भकार' इति नामविशेषं; गुणयोगप्रवृत्तं गौणं; गुणयोगश्च 'पाचक' इत्यत्र पचिक्रियायां कर्तृत्वं, 'खानित्रिक' इत्यत्र खनित्रकरणकखननं प्रति कर्तृत्वं, कुम्भकार इत्यत्र कुम्भोपहितं कर्तृत्वमित्येभिस्त्रिभिर्गुणैरभिन्नो भिन्नोऽभिधीयते व्यवह्रियते चेति भावः। तद्वत् पुरुषवदौषधद्रव्यमपि; एकमपि सत् क्षीरकाकोलीद्रव्यं जीवनबृंहणशुक्रजननलक्षणनानागुणयोगान्नानाजीवनीयादिशब्देनाभिधीयते व्यवह्रियते चेत्यर्थः। अथ किमर्थं पुनरेकमेव द्रव्यं बहुजीवनीयादिगुणयोगात्तत्र तत्र पठ्यते, सन्ति तावद्बहूनि द्रव्याण्येकैकजीवनीयादिगुणानि स्वरूपतो भिन्नानि, तान्येव पृथक्कस्मान्न पठ्यन्त इत्याह—यदि चैकमेवेत्यादि। यथा बहुद्रव्याण्येकैकजीवनीयादिकार्यकरणसमर्थानि भवन्ति, तथैकमेव द्रव्यमनेकजीवनीयादिकार्यकरणसमर्थमस्ति, तत्रैकमेव द्रव्यं बहुकार्यकर्तृ शिष्येभ्य उपदेष्टुमुपधारयितुं च युज्यतेऽल्पप्रयत्नबोध्यत्वादल्पप्रयत्नधार्यत्वाच्च; न बहून्येककार्यनियतानि, बहुप्रयासोपपाद्यत्वाद्बहुप्रयासबोध्यत्वाद्बहुप्रयासधार्यत्वाच्च; कार्यं च जीवनबृंहणाद्युभयोरपि पक्षयोरविशिष्टमिति वाक्यार्थः। तथागुणयुक्तम् अनेकजीवनीयादिकार्यसमर्थम्। तथागुणयुक्तत्वमेव विवृणोति—यत् सर्वकर्मणां जीवनीयादीनां करणे समर्थं स्यात्, ततो बहुकार्यकारकादेकस्मात्, अन्यद्बहु प्रतिनियतकर्मकारकं, क इच्छेत्? न कोऽपीच्छेदित्यर्थः। उपधारयितुम् आवर्तनेन स्मृत्यारूढं कर्तुम्। कस्तत इत्यस्यादौ 'तदा' इत्यध्याहार्यम्॥ २१॥ २२॥

**तत्र श्लोकाः—**

**यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट्।**
**उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः॥ २३॥**
**रसा लवणवर्ज्याश्च कषाय इति संज्ञिताः।**
**तस्मात् पञ्चविधा योनिः कषायाणामुदाहृता॥ २४॥**
**तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः।**
**महतां च कषायाणां पञ्चाशत् परिकीर्तिता॥ २५॥**
**पञ्च चापि कषायाणां शतान्युक्तानि भागशः।**
**लक्षणार्थं, प्रमाणं हि विस्तरस्य न विद्यते॥ २६॥**
**न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते।**
**अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः॥ २७॥**
**मन्दानां व्यवहाराय, बुधानां बुद्धिवृद्धये।**
**पञ्चाशत्को ह्ययं वर्गः कषायाणामुदाहृतः॥ २८॥**
**तेषां कर्मसु बाह्येषु योगमाभ्यन्तरेषु च।**
**संयोगं च प्रयोगं च यो वेद स भिषग्वरः॥ २९॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने षड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः॥ ४॥**

अध्यायार्थसंग्रहमाह—यत इत्यादि। यतः मदनफलादेः। यावन्ति त्रयस्त्रिंशद्योगशतमित्यादीनि। यैर्द्रव्यैर्विरेचनशतानि

१ 'जीवकादयोऽमी' इति पा०। २ 'संप्लवन्ते' इति पा०।

१ 'बहुप्रयासोत्पादकत्वात्' इति पा०। २ 'तथायुक्त०' इति पा०। ३ 'तथायुक्तत्वमेव' इति पा०। ४ 'तेषां' इति पा०।

षडिति यैरेव मदनफलादिभिर्मिलितैरुक्तानि विरेचनशतानि षडिति । लक्षणार्थमित्यादिग्रन्थोऽनतिसंक्षेपविस्तरेणोक्तपञ्चाशन्महाकषायोपपत्तिसंग्राहकः । अलमिति समर्थः । अल्पबुद्धेरयमित्यत्रायमितिपदमतिसंक्षेप इत्यनेन संबध्यते; यद्यपि चेहातिसंक्षेपो नास्ति, तथाऽपि बुद्धिस्थिरीकृतः प्रत्यवमृश्यते । पञ्चाशत्को ह्ययमित्यत्रायमिति पदं सुघटमेवं । बाह्येषु प्रलेपादिषु । आभ्यन्तरेषु वमनपाचनादिषु । संयोगं द्रव्याणामुचितं मेलन(क)म् । प्रयोगं कालप्रकृत्याद्यपेक्षा योजना ॥ २३–२९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने प्रथमे भेषजचतुष्के षड्विरेचनशताश्रितीयश्चतुर्थोऽध्यायः ॥ ४ ॥

**इति भेषजचतुष्कः ॥ १ ॥**

---

## पञ्चमोऽध्यायः ।

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

द्वितयमिह शास्त्रप्रयोजनं यदातुरव्याधिहरणं स्वस्थस्य स्वास्थ्यरक्षणं च; यदाह—"स्वस्थातुरपरायणम्" (सू. अ. १) इति; तेनोत्पन्नव्याधिप्रतीकारद्वाराऽऽतुररक्षणं भेषजचतुष्कमभिधाय स्वस्थचतुष्कोऽभिधातव्यः; तत्रापि स्वास्थ्यपरिपालनहेतुषु मात्रावदन्नं प्रधानं; यदाह—"प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च" (सु. सू. अ. १) इति; तच्चेह मात्रावदन्नं विधीयत इत्यादौ मात्राशितीय एवाभिधीयते । मात्राशितमधिकृत्य कृतोऽध्यायो मात्राशितीयः । यद्यप्यध्यायादौ 'मात्राशी' इति पदमनुश्रूयते, तथाऽपि 'मात्राशीयः' इति संज्ञाप्रणयने कष्टोच्चारणभयात्तदर्थपरपर्यायशब्देनेयं संज्ञा कृता; यथा "नवेगान्धारणीय" (सू. अ. ७) इत्यादिका संज्ञा ॥ १ ॥ २ ॥

**मात्राशी स्यात् । आहारमात्रा पुनरग्निबलापेक्षिणी ३**

मात्रां मात्रावदन्नमशितुं भोक्तुं शीलं यस्यासौ मात्राशी, यदि वा मात्रयाऽशितुं भोक्तुं शीलं यस्य स तथा । तत्रेह मात्रा अनपायिपरिमाणम् । अशिरयमिहाविशेषेण खाद्यप्राश्यलेह्यपेयानामभ्यवहारे वर्तते । तेन मात्राशी स्यादित्युक्तं खाद्यप्राश्यलेह्यपेयानां मात्रयाऽभ्यवहरणं नोक्तमिति यच्चोच्यते, तन्निरस्तं भवति । दृष्टश्चायमशिः खाद्याद्यभ्यवहारे; यथा—दशमूलहरीतक्यां—"एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्" (चि. अ. १२); तथा—"क्षीराशी तत् प्रयोजयेत्" ( चि. अ. १ ) इति । इतश्चावगन्तव्यमशिरयं सर्वाभ्यवहारे वर्तते, येनैतद्विवरणं सामान्येनैव कृतम्—आहारमात्रा पुनरिति, न पुनरशितमात्रा पुनरिति । मात्रां व्याकरोति—आहारेत्यादि । अग्नेर्बलमुत्कृष्टं मध्यमल्पं वाऽपेक्ष्योत्कृष्टा मध्याऽल्पा वा मात्रा भवतीत्यग्निबलापेक्षिणी । पुनःशब्दो भेषजादिमात्रां व्यायाममात्रां च व्यावर्तयति; तेन न सर्वमात्राऽग्निबलापेक्षिणी; यतो भेषजमात्रा व्याध्यातुरबलापेक्षिणी वक्तव्या, व्यायामस्य तु दोषक्षयाग्निवृद्ध्याद्युत्पाद-श्रमक्लमाद्यनुत्पादापेक्षिणी व्यवस्थापयितव्या । यदि वा पुनःशब्दः पौनःपुन्ये, तेनाहारमात्रा पुनः पुनरग्निबलमपेक्षते । एतदुक्तं भवति—यदेकस्मिन् पुरुषे एकदा याऽग्निबलेन व्यवस्थापिता मात्रा सा न सर्वकालं भवति, यत ऋतुभेदेन वयोभेदेन च तस्यैवाग्निः कदाचिद्विवृद्धो भवति, यथा—हेमन्ते यौवने च, कदाचिन्मन्दो भवति, यथा–वर्षासु वार्धक्ये च; तेनाग्निबलभेदान्मात्राऽप्येकरूपा न भवति, किंतु तत्कालभवमग्निबलमपेक्ष्य पुनः पुनर्मात्राऽपि भिद्यत इति ॥ ३ ॥

**यावद्ध्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ ४ ॥**

अग्निबलापेक्षित्वमेव विवृणोति—यावद्धीत्यादि । यावदिति यावत्परिमाणम् । हिशब्दो हेतौ । अस्येति भोक्तुः । अशनं चतुर्विधमपि भोज्यम् । अशितं भुक्तम् । प्रकृतिं वातादीनां रसादीनां च साम्यावस्थाम् । अनुपहत्य विकारमकृत्वेत्यर्थः । यथाकालमिति निशाशेषे । तावदिति पूर्वप्रमाणावच्छिन्नमशनं प्रत्यवमृशति । द्वितीयमस्येति ग्रहणमन्यत्र प्रतिषेधार्थम् । तेन यस्यैव यावती मात्रा निर्विकारा, तस्यैव सा मन्तव्या नान्येषां, प्रतिपुरुषमग्निबलस्य भिन्नत्वात् । यद्यपि चैकस्मिन्नपि पुरुषे कालादिभेदेनाग्निबलभेदो भवति, तथाऽप्येकपुरुष एकमात्रामवधार्य कियन्तमपि कालं तयैव मात्रया अग्निबलभेदहेत्वभावे सति व्यवहारो भवत्येव । मात्राप्रमाणं मात्रेयत्ता; मात्राप्रमाणशब्देन चेह मात्राप्रमाणवदिति बोद्धव्यम्; अन्यथा, तावच्छब्देनावच्छिन्नाशनवाचिना मात्राप्रमाणशब्दस्य गुणवाचिनः सामानाधिकरण्यं न स्यात् । ननु, प्रकृतिमनुपहत्येति न कर्तव्यं विशेषणं, न ह्याहारो यो यथाकालं जरां याति स मात्रादोषाद्विकारं करोति, करोति तु द्रव्यस्वभावसंस्कारादिदोषात्; यथा मन्दकलकुचादयो यथाकालं जरां गच्छन्तोऽपि दोषजनका भवन्त्येव; न तावताऽपि तत्र मात्रा दुष्यति, यथा वक्ष्यति त्रिविधकुक्षीये—"न च केवलं मात्रावत्त्वादेवाहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यं, प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां भिन्नफलत्वात्" (वि. अ. २) इति । नैवं, द्विविधा हि मात्रा रसविमाने वक्तव्या—सर्वग्रहरूपा, परिग्रहरूपा च; तत्र समुदितस्याहारस्य परिमाणं सर्वग्रहः, मधुराम्लादीनामाहारावयवानां प्र-

---

१ 'बुद्धिस्थीकृतः' इति पा० । २ 'दुर्घटमेव' इति पा० । ३ 'उत्पन्नव्याधिप्रतिकारतया' इति पा० । ४ 'अभिधीयते' इति पा० । ५ 'मात्रावन्तमशितुं' इति पा० ।

त्येकं मात्रया ग्रहणं परिग्रहः; तेन यत्राहारसमुदायपरिमाणं समुचितमेव गृह्यते, आहारावयवानां तु मधुरादीनां स्वभावहितानामप्ययथोक्तमानं स्यात्, तत्राहारावयवमात्रावैषम्याद्धातुवैषम्यं भवत्येव, अयथाकालं जरागमनं च स्यात्; तदुक्तं— प्रकृतिमनुपहत्येति विशेषणम् । अन्ये तु व्याख्यानयन्ति— 'अस्य' इति, 'अशनम्' इति, 'अशितम्' इति च पदत्रयं प्रकरणादेव लभ्यते; यत् पुनः क्रियते तद्विशेषप्रतिपादनार्थम् । तेन, अस्येत्यनेन परीक्षको भोक्ताऽधिक्रियते, अशनमित्यनेन च प्रशस्तमशनं प्रकृतिकरणसंयोगदेशकालाविरुद्धमुच्यते, अशितमित्यनेन च यथाविधिभोजनमुच्यते; तदेवं सर्वगुणसंपन्न आहारो मात्रावानुच्यते ॥ ४ ॥

**तत्र शालिषष्टिकमुद्गलावककपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति । तथा पिष्टेक्षुक्षीरविकृतितिलमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृतिगुरूण्यपि मात्रामेवापेक्षन्ते ॥ ५ ॥**

मात्रालक्षणमुपदिश्य व्यवहारोपयोगिनं द्रव्यभेदेन मात्राभेदं दर्शयति—तत्र शालीत्यादि । तत्र लघुवर्ग एव प्रथमं पठ्यते, पथ्यतमत्वात्; तत्राप्यादौ रक्तशालिराहारद्रव्यप्रधानत्वात् । कपिञ्जलो गौरतित्तिरिः, एणः कृष्णसारः, शरभो महाश्रृङ्गी हरिणः, शम्बरस्तद्विशेषः । अन्नपानविधौ "शीतः स्निग्धोऽगुरुः स्वादुः" ( सू. अ. २७ ) इति षष्टिकगुणकथने "अगुरुः" इत्यकारप्रश्लेषो द्रष्टव्यः, तेनेह षष्टिकस्य लघुत्वप्रतिपादनं न विरुध्यते । अपि समुच्चये, तेन प्रकृतिलघूनि करणलघूनि च लाजादीनि मात्रापेक्षीणि भवन्तीति लभ्यते । एवं प्रकृतिगुरूण्यपीत्यत्रापि संस्कारगुरुशष्कुपिण्डादिग्रहणं वाच्यम् । आदिशब्दोऽत्र प्रकारवाची, शालिषष्टिकादिगणाभावात् । विकृतिशब्दः पिष्टेक्षुक्षीरैः संबध्यते, क्षीरविकृतिः क्षीरकृता भक्ष्याः; पिशितमानूपौदकाभ्यां संबध्यते ॥ ५ ॥

**न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत, लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति; पृथ्वीसोमगुणबहुलानीतराणि; तस्मात् स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि, गुरूणि पुनर्नाग्निसन्धुक्षणस्वभावान्यसामान्यात्, अतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तान्यन्यत्र व्यायामाग्निबलात्; सैषा भवत्यग्निबलापेक्षिणी मात्रा ॥ ६ ॥**

ननु, यदि लघु हितमपि स्वगुणकरणे मात्रामपेक्षते, गुरु चाहितमपि मात्रापरिगृहीतं हितमेव स्यात्, तत् किं गौरवलाघवोपदेशेनेत्याशङ्क्याह—न चैवमित्यादि । लघूनि यद्यप्याकाशवाय्वग्निगुणबहुलानि भवन्ति, तथाऽप्याकाशस्याग्निदीपनं प्रति तथाविधसामर्थ्याभावात् वाय्वग्न्योस्त्वग्निदीपकत्वाद् वाय्वग्निगुणबहुलानीत्युक्तम् । तस्मात् कारणाल्लघूनि मात्रया तावदग्निं दीपयन्ति; स्वगुणादपि वाय्वग्निगुणबाहुल्यादग्निसन्धुक्षणस्वभावानि स्युः । मात्राव्यतिक्रमे समानेऽपि लघुगुरुद्रव्ययो-र्लघुद्रव्यस्य[1] विशेषं दर्शयति—अल्पदोषाणि चोच्यन्तेऽपि सौहित्योपयुक्तानि; सौहित्यं मात्रातिक्रमेण तृप्तिः । गुरूणीत्यादौ पुनःशब्दो व्यावृत्त्यर्थः । असामान्यादिति विरोधार्थे नञ्, असितमिति यथा; तेनासामान्यादिति अग्निविरुद्धपृथ्वीतोयगुणबाहुल्यादित्यर्थः । 'अन्यसामान्यात्' इतिपाठपक्षेऽप्यन्यशब्दो विरुद्धवचन एव, तेन तथाऽपि स एवार्थः । अतश्चेत्यादिना मात्राव्यतिक्रमे गुरौ गरीयांसं दोषं दर्शयति । ननु, दृश्यन्ते केचन भारिकादयः पुरुषाः सौहित्योपयुक्तगुरुद्रव्याहारेऽपि[2] निर्दोषाः, तत् किमुच्यतेऽतिमात्रं दोषवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि । व्यायामकृतमग्निबलं व्यायामाग्निबलम् । यद्यपि कालाहितबलोऽग्निर्मात्राऽधिकगुरुद्रव्यक्षमो भवति, यदुक्तं—"पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः" (सू. अ. ६) इति, तथाऽपि व्यायामाहितबलो वह्निर्नितरां बलवान् भवतीत्ययमेव प्रधानपरिग्रहादुक्तः । ये तु व्यायामादिति चाग्निबलादिति हेतुद्वयं वर्णयन्ति, तेषामेवं सति व्यायामापेक्षिण्यशनमात्रा स्यादिति प्रकरणविरुद्धोऽर्थः स्यात् । प्रतिज्ञातमर्थं न्यायसंपादितमुपसंहरति— सैषेत्यादि । सेति अग्निबलापेक्षिणी प्रतिज्ञाता मात्रा, एषेति न्यायेनाप्यपेक्षित्वेन निर्वाहिता ॥ ६ ॥

**न च नापेक्षते द्रव्यं; द्रव्यापेक्षया च त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते, लघूनामपि च नातिसौहित्यमग्नेर्युक्त्यर्थम् ॥ ७ ॥**

ननु, यद्यप्यग्निबलापेक्षिणी मात्रा, तत् कस्मादेकरूप एवाग्नौ लघूनां द्रव्याणां भूयसी मात्रा भवति, गुरूणां ततस्त्रिभागोचिता अर्धा वेत्याह—न चेत्यादि । द्रव्यमपेक्षत इत्यर्थः । त्रिभागसौहित्यं मनाग्गुरुभिः । एवं गौरवप्रकर्षापकर्षादन्यदपि कल्पनीयम् । लघूनामपि नातिसौहित्यमित्यत्र सौहित्यशब्दस्तृप्तिमात्रे वर्तते, तेन लघूनि तृप्त्यतिक्रमेण न भोक्तव्यानि, एवं हि तेषां मात्रातिक्रमो न स्यात्[3] । अग्नेर्युक्तिः स्वमानावस्थितिः, तदर्थम् । ननु, गुरूणां तावदतिमात्रोपयोगोऽग्निपरिपालनार्थं निषिध्यतां; येन गुरूण्यग्न्यसमानानि; लघूनि पुनरग्निसमानानि, तत्तेषां कथमतिमात्रोपयोगो वह्निमान्द्यमावहतीति ? । ब्रूमः—लघूनां द्रव्याणां सामान्यमभिभूयातिमात्रत्वमेवाग्निमान्द्यं करोति; यथा—चक्षुस्तैजसं, तेजःसहकृतं च पश्यति, तदेव तेजोतियोगादुपहन्यते; तथा शस्त्रमश्मसंभवम्, अश्मयोगाच्च तीक्ष्णं संपद्यते, अश्मन्येव च मिथ्यायोगात् प्रतिहतं भवति; तदुक्तं शालाक्ये—"यत्तेजो ज्योतिषां दीप्तं शारीरं प्राणिनां च यत् ।

१ 'लघुद्रव्यं सविशेषं' इति पा० । २ 'सौहित्योपयुक्तगुरुद्रव्यां अपि' इति पा० । ३ 'भवति' इति पा० ।

संयुक्तं तेजसा तेजस्तद्धि रूपाणि पश्यति ॥ तदेव चक्षुस्तान्येव ज्योतींष्यति तु पश्यतः । विकारं भजतेऽत्यर्थमथवाऽपि विनश्यति ॥ शस्त्रस्याश्मा यथा योनिर्निशितं च तदश्मनि । तीक्ष्णं भवत्यतियोगात्तत्रैव प्रतिहन्यते" इति ॥ ७ ॥

**मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति ॥ ८ ॥**

एवं तावच्छ्रुत्पादिताऽग्निबलद्रव्यापेक्षिणी मात्रा, मात्रान्वितं च भोज्यं भोक्तव्यमित्युक्तं, मात्राशितत्वे को गुण इत्याह—मात्रावद्धीत्यादि । इहावश्यमिति नियमो विरोधिकारणान्तराभावे सति बोद्धव्यः; यतो यद्यपि पूर्ववदशनाशितोपयोक्तृपदैः प्रशस्तभोजनादिवाचिभिः प्रकृतिकरणादिगुणसंपन्नमन्नं लभ्यते, तथाऽपि कालविपर्ययप्रज्ञापराधासात्म्यशब्दस्पर्शरूपरसगन्धाः सन्त्येवाहारजन्यबलादिविरोधकाः; यदाह—"सन्ति ह्यृतेऽप्यहिताहारादन्या रोगप्रकृतयः" ( सू. अ. २८ ) इति; तेन मात्रापरिगृहीताः शुभा अपि प्रकृत्यादयः प्रायो बलादिहेतवो भवन्तीति मात्रावदाहारस्तुसर्थमवश्यमिति कृतम् । सुखयुक्तमायुः सुखायुः, यदि वा सुखं चायुश्चेति मन्तव्यं; स्वरूपेणापि चायुस्त्र्यमिति प्राक् प्रतिपादितमेव ॥ ८ ॥

भवन्ति चात्र—

**गुरु पिष्टमयं तस्मात्तण्डुलान् पृथुकानपि ।**
**न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः ॥ ९ ॥**

भवन्ति चात्रेति । तन्त्रकारस्य समयोऽयं—यत् पूर्वव्याख्यातार्थसंग्रहार्थं यदा श्लोकेन वक्तुमारभते तदा 'भवति चात्र' इति करोति । पिष्टमयं पिष्टविकारः । तस्मादिति गुरुत्वात् । पृथुकाः 'चिपिटा' इति लोकप्रसिद्धाः । न जातु न कदाचित् । मात्रां खादेदिति अनपायिपरिमाणवन्तं खादेत् ॥ ९ ॥

**वल्लूरं शुष्कशाकानि शालूकानि बिसानि च ।**
**नाभ्यसेद्गौरवान्मांसं कृशं नैवोपयोजयेत् ॥ १० ॥**
**कूर्चिकांश्च किलाटांश्च शौकरं गव्यमाहिषे ।**
**मत्स्यान् दधि च माषांश्च यवकांश्च न शीलयेत् ११**

वल्लूरं शुष्कमांसम् । नाभ्यसेन्न निरन्तरमुपयुञ्ज्यात् । अनभ्यासहेतुमाह—गौरवादिति । मांसं कृशम् अपुष्टं रोगादुपरतमृगादिसंभवमित्यर्थः । एतच्चापथ्यत्वादेव निषिद्धं, न गौरवादिति ब्रुवते । कूर्चिकः क्षीरेण समं दधि तक्रं वा पक्वं; किलाटः कूर्चिकपिण्डः, नष्टक्षीरस्य धेनो भाग इत्यन्ये । शौकरमिति शूकरमांसं, शौकरसाहचर्याद्गव्यमाहिषे अपि मांसे एव बोद्धव्ये । यवकः शूकधान्यविशेषः । वक्ष्यति हि—"यवकः शूकधान्यानामपथ्यतमत्वे प्रकृष्टतमो भवति" ( सू. अ. २५ ) इति ॥ १० ॥ ११ ॥

**षष्टिकाञ्छालिमुद्गांश्च सैन्धवामलके यवान् ।**
**आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत् ॥ १२॥**

अभ्यस्यान् दर्शयति—षष्टिकानित्यादि । इह षष्टिक आदौ पठ्यते रक्तशालिमनु प्रधानत्वख्यापनार्थम् । आन्तरीक्षमिति आन्तरीक्षं पानीयम् । पयः क्षीरम् । जाङ्गलमिति जाङ्गलदेशभवं मृगादिमांसम् । इह सैन्धवाभ्यासोऽन्नसंस्कारत्वेन मात्रयाऽभिप्रेतः; तेन, "त्रीणि द्रव्याणि नात्युपयुञ्जीत पिप्पल्यो लवणं क्षारः" ( वि. अ. १ ) इति यद्वक्ष्यति तेन समं विरोधो न भवति, तत्र लवणातियोगस्य प्रतिषिद्धत्वात् ॥ १२ ॥

**तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्तते ।**
**अजातानां विकाराणामनुत्पत्तिकरं च यत् ॥१३॥**

मात्राशीत्यादिना स्वास्थ्यपरिपालनोपाय उच्यते, अतिबहु च स्वस्थपरिपालनं तन्त्रे वक्तव्यं, तच्चेहाभिधीयमानं ग्रन्थगौरवमावहति, अनभिधीयमानं च ग्रन्थस्य न्यूनतामापादयति; अतस्तत्सूत्रमात्रेणोद्देष्टुमाह—तच्चेत्यादि । सुष्ठु निर्विकारत्वेनावतिष्ठत इति स्वस्थः, तस्य भावः स्वास्थ्यम्; उद्वेजकधातुवैषम्यविरहितधातुसाम्यमित्यर्थः । तच्च स्वाथ्यमुभयथा परिपाल्यते विशुद्धाहाराचाराभ्यां सदा क्षीयमाणशरीरपोषणेन, प्रत्यवायहेतुपरिहारेण च; यथा—दीपपरिपालनं स्नेहवर्तिदानात् पोषणेन क्रियते, तथा शलभवातादिनिर्वापकहेतुपरिहारेण च । शरीरप्रत्यवायहेतुश्च द्विविधः—बुद्धिदोषाद्विषमशरीरन्यासादिर्वातादिकारकः, दुष्परिहरश्च कालविशेषः स्वभावादिह हेमन्तादिः कफचयादिकारकः । तत्र श्लोकपूर्वार्धेन स्वास्थ्यपोषकहेतुमाह, उत्तरार्धेन तु अजातानामित्यादिना स्वास्थ्यविघातकहेतुपरिहारमाह । यद्यपि चाजातानां विकाराणामनुत्पत्तिः स्वभावसिद्धा विद्यत एव, विद्यमाने च करोत्यर्थो मुख्यो नास्ति, तथाऽपीदमेवाजातविकाराणामनुत्पत्तिकरणं यत्तद्विकारहेतुपरिहरणं तथा दुष्परिहरकालविशेषैर्जनितदोषहरणं, यथा वक्ष्यति—"माधवप्रथमे मासि नभस्यप्रथमे पुनः । सहस्यप्रथमे चैव वाहयेद्दोषसंचयम्" (सू. अ. ७) इति; तथा हेत्वन्तरनिरपेक्षोत्पद्यमानचक्षुःश्लेष्महरणार्थमञ्जनम्; एवमादि ॥ १३ ॥

**अत ऊर्ध्वं शरीरस्य कार्यमक्ष्यञ्जनादिकम् ।**
**स्वस्थवृत्तिमभिप्रेत्य गुणतः संप्रवक्ष्यते ॥ १४ ॥**

अत ऊर्ध्वमित्यादि । अतः स्वास्थ्यानुवृत्तिकारणकथनादूर्ध्वं, कार्यम् अवश्यकार्यं, स्वस्थवृत्तिमभिप्रेत्य स्वस्थवृत्तानुष्ठाने, अक्ष्यञ्जनाद्यवश्यं कार्यमित्यर्थः; अञ्जनशब्दोऽभ्यञ्जनेऽपि वर्तते, तदर्थमक्ष्यञ्जनमित्युक्तम् । अञ्जनमेवादावुपाहितं प्रधानावयवचक्षुःपरिपालकत्वात् । उक्तं च—"चक्षुः प्रधानं सर्वेषामिन्द्रियाणां

१ 'गुणाः' इति पा० । २ 'मात्रास्तुल्यर्थं' इति पा० । ३ 'रोगाद्युपहतमृगादिसंभवम्' इति पा० । ४ 'एतच्चाप्यवृष्यत्वादेव' इति पा० । ५ 'सारो भागः' इति पा० ।

१ 'दुर्व्यवहारश्च, कालविशेषस्वभावादिहेमन्तादिः' इति पा० । २ 'विद्यमानाया' इति पा० । ३ 'कालविशेषजन्य०' इति पा० । ४ 'हारयेद्' इति पा० ।

विदुर्बुधाः । घननीहारयुक्तानां ज्योतिषामिव भास्करः" इति । यदि वा स्वस्थवृत्तमधिकृत्य यदञ्जनादि, तदुच्यते; रोगेषु तु यदञ्जनादि, तद्रोगचिकित्सासु वक्तव्यम् । यद्यपि चैतदञ्जनादि रोगहरमपि वक्तव्यं, तथाऽपि प्रायः स्वस्थवृत्तमतमेतदिति स्वस्थवृत्तमभिप्रेत्येत्युक्तम् ॥ १४ ॥

**सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।**
**पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थे रसाञ्जनम् ॥ १५ ॥**

सौवीरमित्यादि । सुवीरानदीभवं सौवीरम् । नित्यं प्रत्यहम् । अक्ष्णोरिति द्विवचनमक्षिगोलकद्वयेऽप्यञ्जनविधानार्थम् । पञ्चरात्राष्टरात्रग्रहणमदूरान्तरकाले नियमदर्शनार्थम् । तेन दोषकालमपेक्ष्यार्वाङ्मध्ये ऊर्ध्वं च कर्तव्यं स्रावणमञ्जनमिति भवति ॥ १५ ॥

**चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ।**
**ततः श्लेष्महरं कर्म हितं दृष्टेः प्रसादनम् ॥ १६ ॥**
**दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम् ।**
**विरेकदुर्बला दृष्टिरादित्यं प्राप्य सीदति ॥ १७ ॥**
**तस्मात् स्राव्यं निशायां तु ध्रुवमञ्जनमिष्यते ।**

स्रावणाञ्जनप्रकरणोपपत्तिमाह—चक्षुरित्यादि । चक्षुरिन्द्रियस्य तैजसस्य श्लेष्मत आप्यात्तैजसविरुद्धत्वेन हेतुना, विशेषादिति वातापित्तभयादधिकत्वेन भयं भवति । श्लेष्मजये च स्रावणं प्रधानं, तस्मात् स्राव्यमित्यर्थः । स्रावणाञ्जनकालं नियमयति—निशायामित्यादि । ध्रुवमवश्यं निशायामेव, अञ्जनं प्रत्यासन्नत्वात् स्रावणाञ्जनम् । जतूकर्णेनापि स्रावणरसाञ्जनं निशायामेव विहितं; यदुक्तं—"सप्ताहाद्रसाञ्जनं नक्तम्" इति । शालाक्येऽप्युक्तं—"विरेकदुर्बला दृष्टिरादित्यं प्राप्य सीदति । रात्रौ स्वप्नगुणाच्चाक्षि पुष्यत्यञ्जनकर्षि(र्शि)तम्" इति । सौवीराञ्जनं तु विरेचनं न भवति, चक्षुःप्रसादमात्रं करोति, तेन तद्दिवाक्रियमाणं न विरोधि । अन्ये तु व्याख्यानयन्ति—ध्रुवं नित्यकर्तव्यं सौवीराञ्जनं यत्तन्निशि कर्तव्यं, स्रावणाञ्जनं तु श्लेष्मोद्रेकविषये(यि) वमनवत् पूर्वाह्ण एव कर्तव्यम् ॥१६-१७॥—

**यथा हि कनकादीनां मलिनां विविधात्मनाम् १८**
**धौतानां निर्मला शुद्धिस्तैलचेलकचादिभिः ।**
**एवं नेत्रेषु मर्त्यानामञ्जनाश्च्योतनादिभिः ॥ १९ ॥**
**दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत् ।**

अञ्जनगुणमाह—यथा हीत्यादि । शुद्धिः स्वाभाविकी; साऽऽगन्तुधूल्याद्यपनयनेन निर्मला सति भाति । आश्च्योतनं नेत्रविरेकार्थं द्रवौषधदानं, तच्चेहानभिहितमपि फलैक्यादभिहितम्, आदिशब्देन पुटपाकादीनां ग्रहणम् ॥ १८ ॥ १९ ॥—

१ 'दूष्यति' इति पा० । २ 'मणीनां' इति पा० ।

**हरेणुकां प्रियङ्गुं च पृथ्वीकां केशरं नखम् ॥ २० ॥**
**ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम् ।**
**ध्यामकं मधुकं मांसी गुग्गुल्वगुरुशर्करम् ॥ २१ ॥**
**न्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः ।**
**वन्यं सर्जरसं मुस्तं शैलेयं कमलोत्पले ॥ २२ ॥**
**श्रीवेष्टकं शल्लकीं च शुकबर्हमथापि च ।**
**पिष्ट्वा लिम्पेच्छरेषीकां तां वर्तिं यवसन्निभाम् ॥२३॥**
**अङ्गुष्ठसंमितां कुर्यादष्टाङ्गुलसमां भिषक् ।**
**शुष्कां निगर्भां तां वर्तिं धूमनेत्रार्पितां नरः ॥ २४ ॥**
**स्नेहाक्तामग्निसंप्लुष्टां पिबेत् प्रायोगिकीं सुखाम् ।**

इहैवाञ्जनान्ते धूमपानं विधास्यति—"नावनाञ्जननिद्रान्ते" इत्यादिना; अतोऽञ्जनानन्तरं धूमोऽभिधीयते; उक्तं च शालाक्ये—"तीक्ष्णाञ्जनेनाञ्जितलोचनस्य यः संप्रदुष्टो न निरेति नेत्रात् । श्लेष्मा शिरःस्थः स तु पीतमात्रे धूमे प्रशान्तिं लभते क्षणेन" इति । हरेणुकामित्यादि । हरेणुका रेणुका । पृथ्वीका कृष्णजीरकम् । केशरं नागकेशरम् । पद्मकं पद्मकाष्ठम् । ध्यामकं गन्धतृणम् । न्यग्रोधादीनां प्लक्षान्तानां त्वचः, तासां विशेषणं शुभा इति । वन्यं कैवर्तमुस्तकम् । शुकबर्हं ग्रन्थिपर्णकम् । शरेषीका शरपुष्पस्य नाली 'शरिका' इति प्रसिद्धा । अत्र विधानं—पिष्टैर्भेषजैः शरिका तथा वेष्टयितव्या यथा अष्टाङ्गुलायता अङ्गुष्ठपरिणाहा च वर्तिः स्यात्, तस्यां च शुष्कायां सत्यां शरेषीकामाकृष्य स्नेहेनाभ्यज्याग्निनैकस्मिन्नग्रेऽवदह्य वक्ष्यमाणधूमपाननलिकायामग्ररन्ध्रे निवेश्यातो धूमः पेयः । प्रायोगिकी च नित्यपेयधूमवर्तिसंज्ञा । सुखामित्यनेनाकटुकत्वमनत्ययत्वं च दर्शयति ॥ २०-२४ ॥—

**वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः ॥ २५ ॥**
**वर्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत् ।**

स्नैहिकधूमवर्तिमाह—वसेत्यादि । मधूच्छिष्टं सिक्थकम् । वरौषधैरिति मधुरकविशेषणं; मधुरकाणि जीवनीयानि जीवकर्षभकादीनि । युक्तियुक्तैरित्यनेन तथा वसादिग्रहणं कर्तव्यं, यथा वर्तिः कर्तुं पार्यत इति दर्शयति । वर्तिकरणं च पूर्ववत् । स्नैहिकी स्नेहनकारिका ॥ २५ ॥—

**श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ॥ २६ ॥**
**गन्धाश्चागुरुपत्राद्या धूमं मूर्धविरेचने ।**

१ 'अङ्गुष्ठोदरा' इति पा० । २ 'मूलरन्ध्रे' इति पा० । ३ "तां वर्तिं यवाकारादिरूपां शुष्कां शुष्कीकृत्य शरेषिकामाकृष्य विगर्भां कृत्वा स्नेहेनाभ्यज्य वक्ष्यमाणधूमनेत्रे धूमपाननलिकायां षट्त्रिंशदङ्गुलमितायां त्रिकोषाफलितायामर्पितां तच्छिद्रे प्रविष्टमेकमग्रं यस्यास्तामग्निसंप्लुष्टामन्यस्मिन्नग्रेऽग्निना दह्यमानां सुखां सुखजनिकां प्रायोगिकीं पिबेत्" इति गङ्गाधरः । ४ 'धूमः शीर्षविरेचनम्' इति पा० ।

वैरेचनिकधूमपानवर्तिं दर्शयति—श्वेतेत्यादि । श्वेता अपराजिता। गन्धाः सुगन्धद्रव्याणि, तेषां विशेषणमगुरुपत्राद्याः, अगुरु च पत्राद्याश्च अगुरुपत्राद्याः; अगुरुपत्राद्याश्च ज्वरे वक्ष्यमाणः "अगुरुकुष्ठतगरपत्र" (चि.अ.३) इत्यादिगणो मन्तव्यः । अगुर्वाद्या इति न कृतं, कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गकस्राव-भयात् परिहारार्थम् । वक्ष्यति च त्रिमर्मीये—"धूमवर्तिं पिबेद्गन्धैरकुष्ठतगरैस्तथा (सि. अ. ९)" इति, शालाक्येऽप्युक्तं—"नतकुष्ठे स्रावयतो धूमवर्तिप्रयोजिते। मस्तुलुङ्गं विशेषेण तस्मात्ते नैव योजयेत्" इति; सुश्रुतेऽप्युक्तं—"एलादिना तगरकुष्ठवर्ज्येन" (सु. चि. अ. ४०) इति ॥ २६ ॥—

गौरवं शिरसः शूलं पीनसार्धावभेदकौ ॥ २७ ॥
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ।
दन्तदौर्बल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः ॥ २८ ॥
पूतिर्घ्राणास्यगन्धश्च दन्तशूलमरोचकः ।
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ॥ २९ ॥
श्लेष्मप्रसेको वैस्वर्यं गलशुण्ड्युपजिह्विका ।
खालित्यं पिञ्जरत्वं च केशानां पतनं तथा ॥ ३० ॥
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ।
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ॥३१॥
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ।
न च वातकफात्मानो बलिनोऽप्यूर्ध्वजत्रुजाः ॥३२॥
धूमवक्त्रकपानस्य व्याधयः स्युः शिरोगताः ।

धूमपानगुणान् दर्शयति—गौरवमित्यादि । शिरोरुहाः केशाः; कपालाश्च शिरस एव । बलिनोऽपीति बलवत्कारणा अपीत्यर्थः । ऊर्ध्वजत्रुजत्वेनैव शिरोगता अपि लब्धास्ते पुनरभिधीयन्ते विशेषविधानार्थम् ॥ २७–३२ ॥—

प्रयोगपाने तस्याष्टौ कालाः संपरिकीर्तिताः ॥ ३३ ॥
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ।
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान्निघृष्य च ॥
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ।
तथा वातकफात्मानो न भवन्त्यूर्ध्वजत्रुजाः ॥ ३५ ॥
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ।

धूमपानकालं दर्शयति—प्रयोगेत्यादि । प्रयोगपाने प्रायोगिकधूमपाने एतेऽष्टौ कालाः, स्नैहिकपाने तु वातवृद्ध्युपलक्षितः कालः, वैरेचनिकपाने तु श्लेष्मवृद्ध्युपलक्षितो मन्तव्यः । प्रायोगिक एव प्रायः स्वस्थवृत्ताधिकारे, तेन तत्काल एव कण्ठरवेणाभिधीयते; यदि वा प्रयोगपाने सततपाने स्वस्थाधिकार इति यावत्; तेन धूमत्रयस्याप्येते काला भवन्ति । वातकफात्मशब्देन वातात्मानः कफात्मानो वातकफात्मानश्च गृह्यन्ते । पेयाः स्युरित्यादावापाना धूमाभ्यवहारमोक्षाः; एकैकस्मिन् स्नानादिधूमपानकाले त्रिरिति आवृत्तित्रयं कर्तव्याः, ते चावृत्तित्रयेऽपि त्रिधा त्रिधा कर्तव्याः; एकैकस्मिन् धूमपानकाले नव धूमाभ्यवहारमोक्षाः कर्तव्याः; त्रींस्त्रीनभ्यवहारान् कृत्वा विश्रामोऽन्तरा कर्तव्य इत्यर्थः ॥ ३३–३५ ॥—

परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ॥ ३६ ॥
प्रयोगे, स्नैहिके त्वेकं, वैरेच्यं त्रिचतुः पिबेत् ।
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ॥ ३७ ॥
यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ।

अष्टसु कालेष्वेकस्मिन्नेकस्मिन् दिवसे यस्मिन् धूमे यावान् यावान् पानकालनियमस्तं दर्शयति—परमित्यादि । कालेषु स्नात्वेत्यादिकालेषु । प्रयोगे प्रायोगिकधूमे । स्नैहिके त्वेकमिति स्नैहिकधूमे एकमेव कालं व्याप्य धूमं पिबेदिति योज्यम् । त्रिचतुरिति वैरेच्ये दोषबलापेक्षो विकल्पः ॥ ३६ ॥ ३७ ॥—

बाधिर्यमान्ध्यमूकत्वं रक्तपित्तं शिरोभ्रमम् ॥ ३८ ॥
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान् ।
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ॥ ३९ ॥
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ।
शीतं तु रक्तपित्ते स्याच्छ्लेष्मपित्ते विरूक्षणम् ॥४०॥

बाधिर्येत्यादि । धूमज इत्यविधिप्रयुक्तधूमकृते यदि वायुः पित्तानुगो वृद्धस्तदा नावनाञ्जनतर्पणं स्नैहिकं स्नेहकृतं कर्तव्यं, शीतं शीतद्रव्यकृतं कर्तव्यं नावनाद्येव, विरूक्षणमपि नावनाद्येव ॥ ३८–४० ॥

परं त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ।
न विरिक्तः पिबेद्धूमं न कृते बस्तिकर्मणि ॥ ४१ ॥
न रक्ती न विषेणार्तो न शोचन्न च गर्भिणी ।
न श्रमे न मदे नामे न पित्ते न प्रजागरे ॥ ४२ ॥
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ।
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम् ४३
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ।
न तालुशोषे तिमिरे शिरस्यभिहिते न च ॥ ४४ ॥
न शङ्खके न रोहिण्यां न मेहे न मदात्यये ।
एषु धूममकालेषु मोहात् पिबति यो नरः ॥ ४५ ॥
रोगास्तस्य प्रवर्धन्ते दारुणा धूमविभ्रमात् ।

१ 'मस्तुलुङ्गद्रावकयोः' इति पा० । २ 'पालित्यं' इति पा० । ३ 'धूमरक्तकपालस्य' इति 'धूमरिक्तकपालस्य' इति च पा० ।

१ 'धूमे' इति पा० । २ 'अधिकप्रयुक्तधूमकृते' इति पा० । ३ 'शोषी' इति पा० । ४ 'न मद्यं न पयः' इति पा० । ५ 'न चापि भुक्तवान् दध्ना' इति पा० ।

न विरिक्त इत्यादौ प्रतिनिषेध्यं नकारकरणं निषेधगौरवदर्शनार्थम्। धूमं न भुक्त्वेति पुनर्धूमग्रहणं दध्ना भुक्तवतो विशेषप्रतिषेधार्थम् ॥ ४१-४५ ॥—

**धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ॥ ४६ ॥**
**घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत्।**
**आस्येन धूमकवलान् पिबन् घ्राणेन नोद्वमेत् ॥४७॥**
**प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी ॥**

धूमयोग्य इत्यादौ घ्राणेनेति छेदः। प्रतिलोमं गत आस्यपीतो घ्राणं गत इत्यर्थः। हिशब्दद्वयं च हेतौ। तेनायमर्थः—यस्मात् प्रतिलोमं विमार्गे गतो धूमस्तस्माच्चक्षुषी हिंस्यात्, यस्माद्धिंस्यात् तस्माद् घ्राणेन नोद्वमेदिति ॥ ४६ ॥ ४७ ॥—

**ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्ययम् ॥ ४८ ॥**
**पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान्।**

सम्यगुपविष्टः सूपविष्टः। त्रिपर्ययमिति तु यद्यपि पूर्वमेवोक्तम् 'आपानास्त्रिस्त्रयस्त्रयः' इत्यनेन, तथाऽपि त्रिपर्ययधूमपानपर्यन्तमृज्वङ्गचक्षुरादि कर्तव्यं नोपक्रममात्र एवेति पुनरभिधानेन दर्शयति। नासिकयाऽपि रन्ध्रैकच्छिद्रं पिधाय पिबेन्न पुनर्नासिकयैव पिबेदिति नियमः ॥ ४८ ॥—

**चतुर्विंशतिकं नेत्रं स्वाङ्गुलीभिर्विरेचने ॥ ४९ ॥**
**द्वात्रिंशदङ्गुलं स्नेहे प्रयोगेऽध्यर्धमिष्यते।**
**ऋजु त्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ॥५०॥**
**वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते।**

नेत्रं नलिका। चतुर्विंशतिकं चतुर्विंशत्यङ्गुलम्। अध्यर्धं सार्धमित्यर्थः; इह वैरेचनिकनेत्रमेव चतुर्विंशत्यङ्गुलप्रमाणं सार्धं सत् षट्त्रिंशदङ्गुलप्रमाणं प्रायोगिकधूमपाने; तत्तु जतूकर्णप्रत्याद्वोद्धव्यम्। यदाह—"सार्धत्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु" इति। त्रिकोषाफलितमिति त्रिभिः पर्वभिर्भिन्नैः समन्वितम् ॥ ४९ ॥ ५० ॥—

**दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः ॥ ५१ ॥**
**नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः।**

यथाभिहितनलिकया पाने गुणं दर्शयति—दूरादित्यादि ॥ ५१ ॥—

**यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत् ॥ ५२ ॥**
**कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत्।**
**अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत् ॥५३॥**
**स्तिमितो मस्तकश्चैवमपीतं धूममादिशेत्।**
**तालु मूर्धा च कण्ठश्च शुष्यते परितप्यते ॥ ५४ ॥**
**तृष्यते मुह्यते जन्तू रक्तं च स्रवतेऽधिकम् ॥**
**शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते ॥ ५५ ॥**
**इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते।**

केचिद्धूमसम्यक्पानादिलक्षणं ग्रन्थं पठन्ति। तत्र, यदा चोरश्चेत्यादि सम्यग्धूमपानलक्षणम्, अविशुद्ध इत्याद्ययोगलक्षणं, ताल्वित्याद्यतियोगलक्षणम् ॥ ५२-५५ ॥—

**वर्षे वर्षेऽणुतैलं च कालेषु त्रिषु ना चरेत् ॥ ५६ ॥**
**प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले।**
**नस्यकर्म यथाकालं यो यथोक्तं निषेवते ॥ ५७ ॥**
**न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते।**
**न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः॥**
**न च केशाः प्रमुच्यन्ते वर्धन्ते च विशेषतः।**
**मन्यास्तम्भः शिरःशूलमर्दितं हनुसंग्रहः ॥ ५९ ॥**
**पीनसार्धावभेदौ च शिरःकम्पश्च शाम्यति।**
**सिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ॥६०॥**
**नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम्।**
**मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ६१**
**सर्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम्।**
**न चास्य रोगाः सहसा प्रभवन्त्यूर्ध्वजत्रुजाः॥ ६२ ॥**
**जीर्यतश्चोत्तमाङ्गेषु जरा न लभते बलम्।**

धूमनस्ययोर्नासाद्वारसामान्याद्धूममनु नस्यं ब्रूते—वर्षे इत्यादि। अणूनां स्रोतसां हितमित्यणुतैलं, तच्चाग्रे वक्ष्यमाणम्। शिरःकपालानामेव सिराः सन्धयः स्नायुकण्डराश्च। उत्तमाङ्गेष्विति बहुवचनं शिरसोऽभ्यर्हितत्वात्; यदि वा जरा वलीपलितादिलक्षणा या सा उत्तमा प्रकर्षप्राप्ताऽङ्गेषु मस्तकादिषु निषिध्यते ॥ ५६-६२ ॥—

**चन्दनागुरुणी पत्रं दार्वीत्वङ्मधुकं बलाम् ॥ ६३ ॥**
**प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं बिल्वमुत्पलम्।**
**ह्रीवेरमभयं वन्यं त्वङ्मुस्तं सारिवां स्थिराम् ॥६४॥**
**जीवन्तीं पृश्निपर्णीं च सुरदारुं शतावरीम्।**
**हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम् ॥ ६५ ॥**
**विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि।**
**तैलाद्दशगुणं शेषं कषायमवतारयेत् ॥ ६६ ॥**
**तेन तैलं कषायेण दशकृत्वो विपाचयेत्।**
**अथास्य दशमे पाके समांशं छागलं पयः ॥ ६७ ॥**
**दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः।**
**अस्य मात्रां प्रयुञ्जीत तैलस्यार्धपलोन्मिताम् ॥ ६८ ॥**

१ 'ह्रस्व' इति पा०। २ 'ऋजु त्रिकोपमच्छिद्रं' इति योगीन्द्रनाथसेनः पठति, "ऋजु अकुटिलं, त्रीणि कोपाणि पर्वाणि यस्य तत्रिकोपम्, अच्छिद्रं छिद्ररहितं, यथा तेन मार्गेण न निर्गच्छेत्" इति च व्याख्यानयति। "कोपः पर्व, ऋजुभिस्त्रिभिः कोपैराफलितम् आ सम्यक् सन्धिस्थानेऽनृजुरूपेणोत्तरमुखेन सन्धानेन निष्पादितं त्रिभङ्गमित्यर्थः। त्रिकोपस्य ऋजुत्वेन समुदायस्य त्रिवक्रत्वमायातम्।" इति गङ्गाधरः।

१ 'वर्लवर्षे' इति पा०। २ 'प्रलुच्यन्ते' इति पा०। ३ "श्चोत्तमाङ्गे च' इति पा०। ४ 'सुराह्वं पृश्निपर्णी च जीवन्तीं च' इति पा०। ५ 'समानं' इति पा०।

स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ।
त्र्यहात्त्र्यहाच्च सप्ताहमेतत् कर्म समाचरेत् ॥ ६९ ॥
निवातोष्णसमाचारी[1] हिताशी नियतेन्द्रियः ।
तैलमेतत्त्रिदोषघ्नमिन्द्रियाणां बलप्रदम् ॥ ७० ॥
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ।

चन्दनेत्यादौ दार्व्यास्त्वक् दार्वीत्वक्, जीवन्ती सुवर्णनाला स्वनामप्रसिद्धा, सुरभी शूकशिम्बा, पद्मस्य केशरं पद्मकेशरम् । माहेन्द्रे आन्तरिक्षे । शतगुणे तैलादिति योज्यम् । दशगुणमित्येतदपि तैलादिति योजनीयम् । अत्र तु क्वाथ्यभेषजं तावन्मानं ग्राह्यं यावता क्वाथार्थोपात्तं पानीयं भेषजचतुर्गुणं भवति, "क्वाथ्याच्चतुर्गुणं वारि" इत्यस्याबाधितत्वात्, न तु भेषजाच्छतगुणेऽम्भसीत्येवं व्याख्येयं; यदाह जतूकर्णः—"पक्त्वाऽथाम्बुशतप्रस्थे दशभागस्थितेन तु । तैलप्रस्थं पचेत्तेन छागीक्षीरेण संयुतम्" इति । यदि वा, तैलप्रमाणानुमानेनैव "स्नेहाच्चतुर्गुणं क्वाथ्यं" इति परिभाषया क्वाथ्यद्रव्यपरिमाणं व्यवस्थापनीयम् । पिचुनेति तूलकपिण्डिकया । नावनैस्त्रिभिः वारत्रयेणेत्यर्थः । त्र्यहात्त्र्यहादिति एकैकं दिनमन्तरीकृत्य, सप्ताहमिति अन्तरितदिनानि वर्जयित्वा; तेनैकैकस्मिन् ऋतौ त्रयोदशाहात्मकप्रयोगः समाप्यते ॥ ६३–७० ॥—

आपोथिताग्रं द्वौ कालौ कषायकटुतिक्तकम् ॥ ७१ ॥
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ।
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम् ॥७२॥
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ।
करञ्जकरवीरार्कमालतीककुभासनाः ॥ ७३ ॥
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ।
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ॥ ७४ ॥
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ।
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ॥ ७५ ॥
दौर्गन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ।

स्थानप्रत्यासत्त्या दन्तकाष्ठगुणान् दर्शयति—आपोथितेत्यादि । द्विकालं सायं प्रातरिति । दन्तान् पुनातीति दन्तपवनं दन्तकाष्ठम् । निष्कृष्य मलमिति संबन्धः । ककुभः अर्जुनः । एवंविधा एवंरसा इत्यर्थः ॥ ७१–७५ ॥—

धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता ॥ ७६ ॥
जातीकटुकपूगानां लवङ्गस्य फलानि च ।
कक्कोलस्य फलं पत्रं ताम्बूलस्य शुभं तथा ।
तथा कर्पूरनिर्यासः सूक्ष्मैलायाः फलानि च ॥ ७७ ॥

कटुकं लताकस्तूरी । यद्यपि लवङ्गस्य वृन्तमभिप्रेतं तथाऽपि बहूनां फलस्य ग्राह्यत्वाच्छत्रिणो गच्छन्तीति न्यायेन सामान्येन फलमित्युक्तम् ॥ ७६ ॥ ७७ ॥

हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात् परं च रसज्ञानमन्ने च रुचिरुत्तमा ॥ ७८ ॥
न चास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम् ।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च ॥७९॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च ।
परानपि खरान् भक्ष्यांस्तैलगण्डूषधारणात् ॥ ८० ॥
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते ।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च ॥८१॥
बलं शिरःकपालानां विशेषेणाभिवर्धते ।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च ॥८२॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चाननम् ।
निद्रालाभः सुखं च स्यान्मूर्ध्नि तैलनिषेवणात् ॥८३॥
न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः ।
नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णतर्पणात् ॥८४॥
स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्म स्नेहविमर्दनात् ।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा ॥ ८५ ॥
तथा शरीरमभ्यङ्गाद्दृढं सुत्वक् च जायते ।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥ ८६ ॥
स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रितम् ।
त्वच्यश्च परमभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥ ८७ ॥
न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥ ८८ ॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ८९ ॥

हन्वोरित्यादि स्नेहगण्डूषगुणाः । नित्यमित्यादि निषेवणादित्यन्तं शिरस्तैलगुणाः । मूर्ध्नि तैलनिषेवणादित्युक्तेऽपि स्नेहार्द्रशिरस इति यत् करोति, तेन यावता तैलेनार्द्रशिराः स्यात्तावन्मूर्ध्नि तैलं सेव्यमिति दर्शयति । स्नेहाभ्यङ्गादित्यादि । उपाङ्गात्स्नेहदानात्, अक्षो रथस्य चक्रनिबन्धनकाष्ठम् । बहुदृष्टान्तकरणं तु कस्यचित् किञ्चित् प्रसिद्धं भविष्यति न हि सर्वं सर्वत्र प्रसिद्धमित्यभिप्रायेण; यदि वा स्नेहस्य नानाकार्यकरणशक्त्युपदर्शनार्थम् । स्पर्शने स्पर्शनेन्द्रिये वायुरधिकः; वैद्यकदर्शने पाञ्चभौतिकत्वादिन्द्रियस्येत्यर्थः । त्वच्यश्च परमभ्यङ्ग इति चकाराद्वातहितश्च, एतेनाश्रितस्य वाताधिकस्य स्पर्शनेन्द्रियस्य, आश्रयस्य च त्वचो हित इत्युक्तं भवति । बलेन संपाद्यं कर्म बलकर्म गुरुभारहरणादि ॥ ७८–८९ ॥

खरत्वं स्तब्धता रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥ ९० ॥
जायते सौकुमार्यं च बलं स्थैर्यं च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥ ९१ ॥

---

१ 'निवातोष्णसमाचारो' इति पा० ।

१ 'चामलम्' इति पा० । २ 'परमोऽभ्यङ्गः' इति पा० । ३ 'शुष्कता' इति पा० ।

न च स्याद्गृध्रसीवातः पादयोः स्फुटनं न च।
न सिरास्नायुसंकोचः पादाभ्यङ्गेन पादयोः ॥ ९२ ॥

खरत्वमित्यादि पादाभ्यङ्गगुणाः । प्रथमं पादयोरिति पदं खरत्वादिविशेषणार्थं, द्वितीयं तु वलादेः कालान्तरोत्पादसूचनार्थं, तृतीयं तु स्फुटनविशेषणार्थं, चतुर्थं तु सिरास्नायुविशेषणार्थं, शिष्टं तु पादाभ्यङ्गेनेति पदं दूरान्तरितस्य पादाभ्यङ्गस्य स्मरणार्थम् ॥ ९०–९२ ॥

दौर्गन्ध्यं गौरवं तन्द्रां कण्डूं मलमरोचकम्।
स्वेदवीभत्सतां हन्ति शरीरपरिमार्जनम् ॥ ९३ ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम्।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ ९४ ॥

अभ्यङ्गपूर्वकत्वादुद्वर्तनस्य तमनु परिमार्जनमुद्वर्तनं ब्रूते—दौर्गन्ध्यमित्यादि। स्वेदेन वीभत्सता स्वेदवीभत्सता। शरीरस्य बलेन सन्धानं योजनं करोतीत्यर्थः ॥ ९३ ॥ ९४ ॥

काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम्।
श्रीमत् पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ ९५ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम्।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ९६ ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम्।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ९७ ॥
मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम्।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ९८ ॥
पौष्टिकं वृष्यमायुष्यं शुचि रूपविराजनम्।
केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम् ॥ ९९ ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ १०० ॥
ईतेः[3] प्रशमनं बल्यं गुप्त्यावरणशङ्करम्।
घर्मानिलरजोम्बुघ्नं छत्रधारणमुच्यते ॥ १०१ ॥
स्खलतः संप्रतिष्ठानं शत्रूणां च निषूदनम्।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ १०२ ॥

श्रीमदिति शोभायुक्तम्। परिषदि शस्तं पारिषदम्। शस्तं मङ्गल्यम्। व्यसनं सर्पपिशाचाद्यभिघातः। रत्नवदाभरणानि, रत्नं तु विशुद्धमाणिक्यहीरकमुक्ताफलसुवर्णादि। शौचाधानं पानीयेन मृदा च। अभीक्ष्णशः पुनः पुनः। शुचि शुचिताकारकम्। कल्पनं छेदनं, संप्रसाधनं मण्डनम्; एतच्च यथायोग्यतया योजनीयं; केशानां प्रसाधनं सम्यग्बन्धनादि, श्मश्रूणां कल्पनमेव, नखस्य तु कल्पनमलक्तकादिदानेन प्रसाधनं च। आदिग्रहणेन नासालोमकल्पनादि गृह्यते। पादयोरिति स्पर्शनहितमित्यनेन व्यसनापहमित्यनेन च संबध्यते। पादत्रं पादध्री, पादुकेति यावत्। अत्र च वृष्यत्वचक्षुष्यत्वे प्रभावात्; यदि वा पादसंबद्धनेत्रपोषिकानाडीप्रत्यवायहरणाच्चक्षुष्यम्। ईती रोगादिदुर्दैवम्। गुप्तिः पिशाचादिभ्यो रक्षा, शङ्करं कल्याणकरम्। अवष्टम्भनं बलप्रदम्। भयघ्नं सर्पादिभ्यः ॥ ९५–१०२ ॥

नगरी नगरस्येव रथस्येव रथी यथा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ १०३ ॥

संप्रत्युक्तस्वस्थविध्युपसंग्रहार्थं तथोपदिष्टस्यावधानेन करणार्थमाह—नगरीत्यादि। कृत्येषु करणीयेषूक्तेष्वनुक्तेषु च। नगरदृष्टान्तेनान्तरप्रत्यवायहेतुविघातकारिणि कृत्येऽवधानं दर्शयति, रथदृष्टान्तेन च बाह्यस्पर्शादिपरिहारके कृत्येऽवधानं दर्शयति। नगरोच्छेदे ह्यान्तरो दुष्टजनसंबन्ध एव हेतुः प्रायो भवति, रथभङ्गे तु बाह्यस्वभ्रविषमपतनादिः ॥ १०३ ॥

भवति चात्र—

वृत्त्युपायान्निषेवेत ये स्युर्धर्माविरोधिनः।
शममध्ययनं चैव सुखमेवं समश्नुते ॥ १०४ ॥

प्रधानभूतां शरीरप्रत्यवेक्षां कृत्वा स्वस्थेन सता यदन्यच्च कर्तव्यं तदाह—वृत्त्युपायानित्यादि। वृत्तिः वर्तनं, तस्योपायाः कृष्यादयो धनैषणायां तिस्रैषणीये वाच्याः। शमः शान्तिः, अध्ययनं वेदाध्ययनं, निषेवेतेति संबन्धः। एवं सति सुखं समश्नुते प्राप्नोति। एतेन कृष्यादिभ्योऽर्थः, शान्त्यध्ययनाभ्यां धर्मः, अर्थधर्माभ्यां च सुखलक्षणः कामः, इति त्रिवर्गानुष्ठानं दर्शितं भवति ॥ १०४ ॥

तत्र श्लोकाः—

मात्रा द्रव्याणि मात्रां च संश्रित्य गुरुलाघवम्।
द्रव्याणां गर्हितोऽभ्यासो येषां, येषां च शस्यते १०५
अञ्जनं धूमवर्तिश्च त्रिविधा वर्तिकल्पना।
धूमपानगुणाः कालाः पानमानं च यस्य यत् ॥१०६॥
व्यापत्तिचिह्नं भैषज्यं धूमो येषां विगर्हितः।
पेयो यथा यन्मयं च नेत्रं यस्य च यद्विधम् ॥१०७॥
नस्यकर्मगुणा नस्तःकार्यं यच्च यथा यदा।
भक्षयेद्दन्तपवनं यथा यद्गुणं च यत् ॥ १०८ ॥
यदर्थं यानि चास्येन धार्याणि कवलग्रहे।
तैलस्य ये गुणा दिष्टाः[1] शिरस्तैलगुणाश्च ये ॥ १०९॥
कर्णतैले तथाऽभ्यङ्गे पादाभ्यङ्गेऽङ्गमार्जने।
स्नाने वाससि शुद्धे च सौगन्ध्ये रत्नधारणे ॥११०॥
शौचे संहरणे लोम्नां पादत्रच्छत्रधारणे।
गुणा मात्राशितीयेऽस्मिंस्तथोक्ता[2] दण्डधारणे ॥१११॥

---

१ 'न तस्य गृध्रसी वाताः' इति पा०। २ 'काम्यं पुष्टिबलप्रदम्। सौमनस्यमलक्ष्मीघ्नं स्नानमोजस्करं परम् ॥' इति पा०। ३ 'ईतेर्विधमनं' इति पा०।

१ 'दृष्टाः' इति पा०। २ 'यथोक्ताः' इति पा०।

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने मात्राशितीयो नाम पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥**

मात्रेत्यादि अध्यायार्थसंग्रहः । मात्रोक्ता यावद्ध्यस्याशनमित्यादिना । तथा द्रव्याणि तत्र शालीत्यादिना । मात्रां चाश्रित्य गुरुलाघवमिति प्रकृतिलघून्यपि मात्रामेवापेक्षन्ते इत्येवंप्रकारेणोक्तम् । पानस्य मानं पानमानम्, आपानाम्निस्त्रयस्त्रय इत्यादि । नस्तःकार्यं यदिति अणुतैलम् । यथेति पिचुनेत्यादि । यदेति प्रावृट्शरदित्यादि । शेषं सुगमम् ॥ १०५–१११ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां द्वितीये स्वस्थवृत्तचतुष्के मात्राशितीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

**अथातस्तस्याशितीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

मात्राशितीये मात्रावदाहारस्य बलादिहेतुत्वं प्रतिपादितं, तच्च ऋतुसात्म्यमपेक्ष्य कृतस्याहारस्य भवति; तेन, ऋतुप्रविभागपूर्वकमृतुसात्म्याभिधायकं तस्याशितीयं ब्रूते ॥ १ ॥ २ ॥

**तस्याशिताद्यादाहाराद्बलं वर्णश्च वर्धते ।**
**यस्यर्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयम् ॥ ३ ॥**

अशिताद्यादिति अशितपीतलीढजग्धात् । बलं वर्णश्चेति चकारेण पूर्वाध्यायोक्तसुखायुषी अपि गृह्येते; यदि वा बलवर्णाभ्यामेव नान्तरीयकं कृत्स्नं धातुसाम्यकार्यं सुखादि गृह्यते । विदितमित्यनेन सम्यग्ज्ञानपूर्वकमृतुसात्म्यानुष्ठानं दर्शयति । चेष्टाग्रहणेन व्यवायव्यायामाभ्यङ्गादीनां ग्रहणम् । चेष्टाहारव्यपाश्रयं चेष्टाहारगोचरम् ॥ ३ ॥

**इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात् । तत्रादित्यस्योदगयनमादानं च त्रीनृतूञ्छिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्, वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गं च ॥ ४ ॥**

ऋतुज्ञानमन्तरा ऋतुसात्म्यज्ञानं न संभवतीत्यृतूनामुपयुक्तस्वरूपज्ञानार्थमाह—इहेत्यादि । ऋतुप्रतिपादनप्रस्तावे संवत्सरं विद्यादिति संवत्सरप्रतिपादनमृतूनामेव मिलितानां संवत्सरत्वप्रतिपादनार्थम् । मेलकश्च बुद्ध्या व्यवह्रियते, न तु परमार्थतः ऋतूनां मेलकोऽस्ति । ऋतूनां संवत्सरात्मकत्वं पुनः पुनस्त एवर्तवः परावर्तन्त इति ज्ञानार्थमवश्यं प्रतिपादनीयम् । इहेति इह प्रकरणे, षडङ्गं विद्यात्; अन्यत्र तु रोगभिषग्जितीयादौ तत्तत्कार्यवशादन्यथाऽपि । उक्तं च—"शीतोष्णवर्षलक्षणः काल" इत्यादि । षडङ्गमिति समाहारे द्विगुः, ऋतुव्यतिरेकेण संवत्सरस्याविद्यमानत्वात्; यदि वा समुदायिभ्योऽन्यः समुदाय इत्याश्रित्य बहुव्रीहिः कार्यः । तत्रेति ऋतुविभागकथने । उदगुत्तरां दिशं प्रति, अयनं गमनमुदगयनम् । आददाति क्षपयति पृथिव्याः सौम्यांशं प्राणिनां च बलमित्यादानम् । त्रीन् शिशिरादीनित्यनेनैव लब्धेऽपि ग्रीष्मान्तत्वे ग्रीष्मान्तानिति शिशिरस्यादिरिति विग्रहस्य तथाऽऽदिशब्दस्य प्रकारवाचितायाः प्रतिषेधार्थम् । एवं हेमन्तान्तानिति च व्याख्येयम् । दक्षिणां दिशं प्रति अयनं दक्षिणायनम् । विसृजति जनयति आप्यमंशं प्राणिनां च बलमिति विसर्गः । संज्ञाप्रणयनं च व्यवहारार्थं, निरुक्तिप्रतीयमानार्थप्रतिपादनार्थं च ॥ ४ ॥

**विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्ति, इतरे पुनरादाने; सोमश्चाव्याहतबलः शिशिराभिर्भाभिरापूरयञ्जगदाप्याययति शश्वत्, अतो विसर्गः सौम्यः । आदानं पुनराग्नेयं; तावेतावर्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते ॥ ५ ॥**

विसर्गधर्मं निर्दिशति—विसर्गे पुनरित्यादि । यद्यपि चादानमादौ पठितं, तथाऽपि प्रतिलोमतन्त्रयुक्त्याऽऽदौ विसर्गगुणकथनं; यदि वा प्रथममादानस्योत्तरायणरूपस्य प्रशस्तत्वादग्रेऽभिधानम्, इह तु विसर्गस्य बलजनकत्वेनाभिप्रेतत्वादग्रेऽभिधानम् । नातिरूक्षा इति सौम्यविसर्गकालसंबन्धेन मन्दीकृतरौक्ष्याः प्रवान्तीति । इतरे पुनरादान इति अप्रशान्तातिरूक्षाश्च, आग्नेयादानसंबन्धाहितरूक्षत्वात् । सोमश्चेत्यादि प्रकृतेन विसर्गेण संबध्यते । अव्याहतबल इति कालमार्गमेघवातादिभिस्तदा सूर्यस्य सोमपरिपन्थिनो हतबलत्वात् । शिशिराभिः शीताभिः । शश्वदिति छेदः । सौम्यः सोमगुणप्रधानः । आग्नेयम् अग्निगुणप्रधानम्, अप्रतिहतबलत्वेनेत्यर्थः । नन्वेतावतैवादित्यचन्द्रवातानां बलवत्त्वमबलवत्त्वं च कथं भवतीत्याह—तावेतावित्यादि । कालो देवतारूपः, स च नित्यरूपोऽपि प्राणिनामदृष्टेन नानारूपेण गृहीतः सन् कदाचित् सूर्यबलवायुबलसोमबलादीन् करोति; स्वभावः सूर्यस्य सौम्यांशक्षयकर्तृत्वादिर्वायोर्विरूक्षणादिः सोमस्याप्यायनादिः; मार्गो दक्षिण उत्तरश्च, तत्र दक्षिणः कर्कटादयो धनुरन्ताः, मकरादिरुत्तरः । एते च कालस्वभावमार्गपरिग्रहा यथासंभवं बोद्धव्याः; न हि सोमे मार्गपरिग्रहः क(कि)श्चिद्विशेषमावहति, वायोश्च मार्गपरिग्रह एव नास्ति । परिगृहीताः संबद्धाः । कालर्त्वादीनां निर्वृत्तिप्रत्ययभूता निष्पत्तिकारणभूताः, उपदिश्यन्ते 'आचार्यैः' इति शेषः; कालः संवत्सरोऽयनद्वयं च, ऋतवः शिशिरादयः, देहस्य बलं देहबलम् । अन्ये तु ब्रुवते—संवत्सरस्यायनद्वयस्य च ऋतुमेलकरूपत्वादृतुग्रहणेनैव ग्रहणं लब्धं, तेन कालग्रहणमृतुविशेषणं, तेन कालरूपः ऋतुरिति स्त्रीणामेवार्तववदर्शनं यदृतुस्तद्व्यपवर्त्यते । प्रत्ययभूता

१ 'क्रियते' इति पा० ।

१ 'सौम्यं रसं' इति पा० । २ '°संबन्धवर्धितरूक्षत्वात्' इति पा० ।

इत्यत्र भूतशब्द उपमाने। केचिद्व्याख्यानयन्ति—'अर्कवायू' इत्येकतया पठित्वा 'सोमश्च' इति यत् पृथक् पठति, तेनार्कवाय्वोर्मिलितयोरादानं प्रति कारणत्वं, विसर्गं प्रति पृथगेव सोमस्य कारणत्वमिति दर्शयति। एवं बलहरणबलकरणादिष्वपि बोद्धव्यम् ॥ ५ ॥

**तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्ररूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेषु यथाक्रमं रौक्ष्यमुत्पादयन्तो रूक्षान् रसांस्तिक्तकषायकटुकांश्चाभिवर्धयन्तो नृणां दौर्बल्यमावहन्ति ॥६॥**

तत्रेत्यादि। आददान उच्छोषयन्। जगतः स्थावरजङ्गमस्य। स्नेहं सारं सौम्यभागमित्यर्थः। न केवलं रविः, वायवश्च शोषयन्तः स्नेहमिति संबन्धः। तीव्राश्च रूक्षाश्च तीव्ररूक्षाः; यदि वा तीव्रं रौक्ष्यं येषां ते तीव्ररूक्षाः; एतच्चादाने तीव्रेण रविणा संबन्धाद्वाय्वोर्भवति योगवाहित्वाद्वायोः। उक्तं हि—"योगवाही (हः) परं वायुः संयोगादुभयार्थकृत्" (चि. अ. ३) इत्यादि। यथाक्रममिति शिशिरे रौक्ष्यमल्पं तिक्तं रसमल्पं च दौर्बल्यं, तथा वसन्ते मध्यं रौक्ष्यं कषायं रसं मध्यं दौर्बल्यं, तथा ग्रीष्मे प्रकृष्टं रौक्ष्यं कटुकं रसं महच्च दौर्बल्यं दर्शयति। यद्यपि च कषायो रसो रूक्षतमः कटुकश्च रूक्षतरः, यदुक्तं—"रौक्ष्यात् कषायो रूक्षाणां प्रवरो मध्यमः कटुः" (सू. अ. २६) इत्यादि; रौक्ष्यप्रकर्षश्च ग्रीष्मे, मध्यबलं च रौक्ष्यं वसन्ते, तथाऽपि वाय्वग्निगुणबाहुल्यात् कटुकस्य वाय्वग्निगुणबहुले ग्रीष्मकाल एवोत्पत्तिः, पवनपृथिव्युत्कर्षवति तु वसन्ते पवनपृथिव्युत्कर्षजन्यस्य कषायस्योत्पत्तिः। यदुक्तं—"वाय्वग्निगुणभूयिष्ठत्वात् कटुकः, पवनपृथिव्यतिरेकात् कषायः" (सू. अ. २६) इति। पृथिव्याद्युत्कर्षश्च कालविशेषप्रभावकृतः कार्यदर्शनानुमेयः। अभिवर्धयन्त इति वचनाद्यथास्वकाले तिक्तादीनामभिवृद्धिः सूच्यते, तेन न तदेकरसत्वम्। अत्र च क्रमवद्रौक्ष्योत्पत्तितिक्ताद्युत्पत्ती अपि दौर्बल्योत्पत्तौ कारणं, यतो रौक्ष्यमुत्पादयन्त इति तिक्तकषायकटुकानभिवर्धयन्त इति च हेतुगर्भविशेषणद्वयं कृत्वा दौर्बल्यमावहन्तीत्युक्तम् ॥ ६ ॥

**वर्षाशरद्धेमन्तेषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे, शशिनि चाव्याहतबले, माहेन्द्रसलिलप्रशान्तसन्तापे जगति, अरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं तत्र बलमुपचीयते नृणामिति ॥ ७ ॥**

वर्षेत्यादि। तुशब्दः पूर्वपक्षव्यावृत्तौ। दक्षिणाभिमुखे दक्षिणाशां गन्तुमुद्यत एवार्के, तेन विषुवदुदयोपलक्षितमध्यदेशादुत्तरेण[1] वर्तमानोऽपि रविर्यदैव दक्षिणाशां गन्तुमुद्यतो भवति तदैव क्षीयमाणबलो भवति, उत्तराशागमनप्रकर्षाहितबलप्रकर्षतया तु स्तोकस्तोकक्रमापचीयमानबलोऽपि तथा दुर्बलो न लक्ष्यते। एवमुत्तरायणेऽपि व्याख्येयम्। कालः पूर्वं व्याख्यातः; मार्ग इह दक्षिणाभिमुखः, मेघस्य वातो मेघवातः, वर्षणं वर्षः; एतैरभिहतप्रतापेऽर्के इति संबन्धः। वातस्त्विह मेघसंबन्धाहितशैत्योऽर्कतापपरिपन्थी भवति, शशिनोऽव्याहतबलत्वं सूर्यस्य परिपन्थिनोऽभिहतप्रतापत्वादनुगुणमेघवातवर्षणयोगाच्च। जगति स्थावरजङ्गमे। अत्र च "पृथिव्यग्निभूयिष्ठत्वादम्लः", सलिलाग्निभूयिष्ठत्वाल्लवण" (सू. अ. २६) इत्युक्तं, तत् कथं सौम्ये विसर्गे तयोश्चाग्नेययोरुत्पाद इति न वाच्यम्, यतो बलप्रकर्षवतोऽर्कस्य क्षीयमाणबलस्यापि विषुवपर्यन्तं बलवत्त्वमस्त्येवेति व्युत्पादितमेव ॥ ७ ॥

भवति चात्र—

**आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम्।**
**मध्ये मध्यबलं, त्वन्ते श्रेष्ठमग्रे च निर्दिशेत् ॥ ८ ॥**

संप्रति शिशिरादौ बलह्रासः प्रतिपादितो वर्षादौ च बलोत्कर्षः; तत्र शिशिरे दुर्बला वर्षासु बलवन्तः प्राणिनो भवन्तीत्यादिदुर्ग्रहं निषेद्धुमाह—आदावन्ते चेत्यादि। विसर्गस्यादौ वर्षासु, आदानस्यान्ते ग्रीष्मे, दौर्बल्यं प्रकर्षं प्राप्तं निर्दिशेदिति संबन्धः; तथा मध्ये विसर्गस्य शरदि, आदानस्य मध्ये वसन्ते, मध्यं नातिक्षीणं नातिवृद्धं बलं विनिर्दिशेदिति योज्यं; तथाऽन्ते विसर्गस्य हेमन्ते, अग्रे च प्रथमे आदानस्य शिशिरे, श्रेष्ठं बलं विनिर्दिशेदिति योजना। एवं मन्यते—विसर्गप्रकर्षाहितबलप्रकर्षः पुरुष आदानस्यादौ शिशिरे स्तोकक्षीयमाणबलोऽपि बलवान् भवति, यथा—पौषमासान्ताहितवृद्धिप्रकर्षा निशा माघफाल्गुनयोः क्षीयमाणाऽपि दिवसान्महत्येव भवति। अनेन न्यायेन वर्षासु दौर्बल्यं, वसन्तशरदोश्च मध्यमं बलं बोद्धव्यम्। एवं कालर्तुरसदेहबलकारणत्वमर्कादीनां व्यवस्थापितं, दोषकारणत्वं त्वग्रे ऋतुविधाननिर्देशेऽभिधास्यते ॥ ८ ॥

**शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली।**
**पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः ॥ ९ ॥**
**स यदा नेन्धनं युक्तं लभते देहजं तदा।**
**रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति ॥ १० ॥**
**तस्मात्तुषारसमये स्निग्धाम्ललवणान्[2] रसान्।**
**औदकानूपमांसानां मेद्यानामुपयोजयेत् ॥ ११ ॥**
**बिलेशयानां मांसानि प्रसहानां भृतानि च।**
**भक्षयेन्मदिरां शीधुं मधु चानुपिबेन्नरः ॥ १२ ॥**
**गोरसानिक्षुविकृतीर्वसां तैलं नवौदनम्।**
**हेमन्तेऽभ्यस्यतस्तोयमुष्णं चायुर्न हीयते ॥ १३ ॥**
**अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम्।**
**भजेद्भूमिगृहं चोष्णमुष्णं गर्भगृहं तथा ॥ १४ ॥**

१ 'विषुवदुभयोपलक्षितमध्यदेशान्तरेण' इति पा०।

१ 'स्वाद्वम्ललवणान्' इति पा०।

शीतेषु संवृतं सेव्यं यानं शयनमासनम् ।
प्रावाराजिनकौषेयप्रवेणीकुथकास्तृतम् ॥ १५ ॥
गुरूष्णवासा दिग्धाङ्गो गुरुणाऽगुरुणा सदा ।
शयने प्रमदां पीनां विशालोपचितस्तनीम् ॥ १६ ॥
आलिङ्ग्यागुरुदिग्धाङ्गीं सुप्यात् समदमन्मथः ।
प्रकामं च निषेवेत मैथुनं शिशिरागमे ॥ १७ ॥
वर्जयेदन्नपानानि वातलानि लघूनि च ।
प्रवातं प्रमिताहारमुदमन्थं हिमागमे ॥ १८ ॥

वर्धमानबलप्रकर्षवत्तया हेमन्तस्याभिप्रेतत्वात्तत्सात्म्यमेवाग्रे प्राह—शीत इत्यादिना । शीते शीतगुणयुक्ते हेमन्ते, यद्यपि चानुक्ते शीत इति विशेषणे हेमन्तः शीत एव लभ्यते, तथाऽपि न पूर्वं क्वचिद्धेमन्ते शीतत्वं प्रतिपादितमिति प्रतिपाद्यते; यदि वा यदैव हेमन्ते शीतं महद्भवति तदैव विशेषेण वह्निर्बली भवति, नोपक्रममात्रेणापि, ऋतुव्यापत्तौ शीतायोग इति च शीत इति पदेन लभ्यते । हिमसंवन्धाद्विशेषेण शीतोऽनिलः शीतानिलः; विशेषेण शीतत्वं वायोर्योगवाहित्वाच्छीतकालसंवन्धादेव लब्धं पुनरभिधीयतेऽग्निसंरोधहेतुत्वात् । वायुर्हि हिमसंवन्धादेव वहिर्निर्गच्छच्छरीरोष्मणो रोधं कृत्वा कुम्भकारपवनाहितपङ्कलेप इवान्तरस्य वह्नेर्वृद्धिमावहति । एतेन यदुच्यते—असमानाच्छीतवातात् कथमग्निवृद्धिरित्येतदपास्तम् । नह्यत्र शीतो वातोऽग्नित्वेन परिणमते, किं तर्हि निर्गच्छत्तेजःप्रतीपीभूतः । शीतानिलस्य स्पर्शः शरीरसंवन्ध इत्यर्थः । वलिनां प्राणिनां हेमन्तस्वभावाद्बली भवति; अनेन प्राणिबलवत्त्वमग्निबलवत्त्वे हेतुरिति दर्शयति । उक्तं च हस्तिवैद्यके वालगजानां नीरोगत्वप्रतिपादने; यथा—"अव्याहतादभिप्रायात् प्रीतिः, प्रीतेर्बलं, बलात् । अग्निरेधश्च धातूनां बलं, नाशस्ततो रुजाम्" इति । मात्रया यद् गुरु अतिमात्रमित्यर्थः, द्रव्यतश्च द्रव्यस्वभावतश्च यद् गुरु नवधान्यादि, तत्क्षमः । एवंभूतो वली वह्निर्यदा युक्तं गुरुभूतं चान्नं न लभते, तदा देहजं रसं हिनस्ति क्षयं नयति; देहार्थं देहजातं वा देहजं धातुरूपं रसमित्यर्थः । अत इन्धनाभावे सति रसधातुक्षयाद्वायुः प्रकुप्यति हेमन्ते । हेत्वन्तरमाह वातकोपे—शीतः शीत इति; यस्मादयं शीतगुणो वायुः, तस्माच्छीतकाले हेमन्तलक्षणे समानं कारणमासाद्य कुप्यतीत्यर्थः । अत्र वृद्धो वायुर्मंदस्विनो यथाऽग्निवृद्धिं करोति, न तु वैषम्यमनतिवृद्धत्वात्, तथाऽग्निवृद्धिमेव करोति । यदुक्तं—"मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः । चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि" (सू. अ. २१) इत्यादिनाऽष्टौनिन्दितीये । तस्मादिति देहजरसक्षयभयात् । प्रकरणलब्धेऽपि तुषारसमय इति यत् पुनः करोति, तद्विशेषेण तुषारपाते विशेषेण स्निग्धादीनां भोजनार्थम् । मेद्यानां मेदुराणाम् । औदकानूपमांसादयश्च हेमन्तकालकफचयसंवर्धका अपि महात्ययवातविकारप्रतिपक्षत्वेन व्यवायादिकफचयप्रतिपक्षयुक्तत्वाचाभिप्रेताः । औदकाः कूर्मादयोऽन्नपाने वक्ष्यमाणाः, अनूपाः सृमरखड्गादयः, विलेशया गोधाप्रभृतयः, प्रसहा गोखरादयः । मृतं भक्तित्रमिति प्रसिद्धम् । हेमन्तेऽभ्यस्यत इति पुनर्हेमन्तग्रहणं हेमन्तं व्याप्यैवोष्णोदकसेवोपदर्शनार्थम् । जेन्ताकः खेदविशेषो वक्ष्यमाणः । गर्भगृहं गृहकोष्ठकम् । हेमन्त इत्यनेनार्थलब्धेऽपि शीते शीतेष्विति पदं वर्षाकालादावपि शीतप्राप्तौ संवृतयानादिसेवोपदर्शनार्थम् । प्रावारो गुरुप्रावरणं कम्बलादि, अजिनं व्याघ्रादिचर्म, कौषेयं कोषकारकीटतन्तुमयं, प्रवेणी गोणीति प्रसिद्धा, कुथकश्चित्रकम्बलः । गुरुणाऽगुरुणेति अगुरुघनप्रलेपेनेत्यर्थः । विशालावायामेन, उपचितौ परिणाहेन । मैथुनसेवोपदेशश्चेह प्राणिनां बलवत्त्वेन शीतप्रतीकारकत्वेन चीयमानकफविरुद्धत्वेन च; सुश्रुतेऽपि हेमन्ते मैथुनसेवोक्ता; यदुक्तं—"तत्रापनीतहाराश्च प्रिया नार्यः स्वलङ्कृताः । रमयेयुर्यथाकामं बलादपि मदोत्कटाः" इति ॥ ९-१८ ॥

हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम् ।
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ॥ १९ ॥
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ।
निवातमुष्णं त्वधिकं शिशिरे गृहमाश्रयेत् ॥ २० ॥
कटुतिक्तकषायाणि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ २१ ॥

शिशिरविधिमाह—हेमन्तेत्यादि । विशेषणं विशेषः; शिशिरस्यादानारम्भत्वेन रौक्ष्यं, तथा मेघमारुतवर्षाः शिशिरेऽधिका भवन्ति तज्जं च शीतमधिकं हेमन्तादस्तीत्यर्थः । तस्मादिति हेमन्ततुल्यत्वाद्विशिष्टरौक्ष्यशीतयुक्तत्वाच हैमन्तिको विधिः । निवातमुष्णं त्विति तुशब्दः पक्षान्तरपरिग्रहार्थः; हेमन्तोक्तनिवातोष्णगृहाच्छिशिरे रूक्षातिशीतेऽधिकमुष्णं गृहमाश्रयेदित्यभिप्रायः । केचिदत्रासेव्यप्रतिपादकं ग्रन्थं पठन्ति, स त्वनार्षः ॥ १९-२१ ॥

वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥ २२ ॥
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत् ॥ २३ ॥
व्यायामोद्वर्तनं धूमं कवलग्रहमञ्जनम् ।
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे ॥२४॥
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम् ॥ २५ ॥

१ 'शीते सुसंवृतं' इति पा० । २ 'अग्निसंबोधहेतुत्वात्' इति पा० । ३ 'प्राणिबलत्वमग्निबलत्वे' इति पा० । ४ 'साम्यं' इति पा० ।

१ '०प्रतिपक्षयुक्तिद्वारा' इति पा० । २ 'हेमन्ते' इति गङ्गाधरसंमतः पाठः ।

भक्षयेन्निर्गदं सीधुं पिबेन्माध्वीकमेव वा।
वसन्तेऽनुभवेत् स्त्रीणां काननानां च यौवनम् ॥२६॥

वसन्त इत्यादिना वसन्तविधिमाह। निचितः संचितो वसन्तपूर्वकाले, ईरितो विलायितो वसन्ते। कायाग्निमिति कायनिर्वर्तकमग्निं जाठरं, न तु धात्वग्निविशेषमात्रम्। तत इत्यत्र चकारो लुप्तनिर्दिष्टो बोद्धव्यः, तेन ततोऽग्निवधाच्चेत्यर्थः; यदि वा ततोऽग्निवधानन्तरम्। वमनादीनि वमनप्रधानानि; तेन, आदानमध्यत्वेन यदि वातपित्तप्रकोपस्तथाविधो भवति तदा विरेचनास्थापनानुवासनानामपि प्रवृत्तिर्भवति, शिरोविरेचनं तु कफजयार्थं कर्तव्यमेव। वसन्तशब्देन वमनं प्रति चैत्र एव बोद्धव्यः; येन, दोषचयाद्यर्थं पञ्चकर्मप्रवृत्त्यर्थं चाभिधातव्यप्रावृडाद्यृतुक्रमेण फाल्गुनचैत्रौ वसन्तो भवति, न वैशाखः। अनेनैवाभिप्रायेण पूर्वश्लोकेऽपि सामान्येन निचित इति कृतं, न तु हेमन्ते निचित इति; हेमन्त इत्युक्ते हि रसोत्पत्तिक्रमाभिहितमार्गशीर्षपौषात्मके हेमन्ते प्रकृतत्वाद्दोषचयो बुध्यते, स च नाभिप्रेतः; उक्तस्तु दोषचयादिक्रमोक्तपौषमाघात्मके हेमन्ते श्लेष्मचयः। सुखाम्बुना सुखोष्णाम्बुना। लावकपिञ्जलं मांसमिति संबन्धः। भक्षयेदिति च्छेदः। अनुभवेदिति भाषया श्लेष्मक्षयार्थं स्तोकं मैथुनमनुजानाति ॥ २२–२६ ॥

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥ २७॥
शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥२८॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम्।
लवणाम्लकटूष्णानि व्यायामं च[1] विवर्जयेत् ॥ २९ ॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ॥ ३० ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥ ३१ ॥
काननानि च शीतानि जलानि कुसुमानि च।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ३२ ॥

मयूखैरित्यादिना ग्रैष्मविधिमाह। मयूखैः तेजोभिः। स्नेहः सार इत्यर्थः। पेपीयते अत्यर्थं पिबति। मन्थः—"सक्तवः सर्पिषा युक्ताः शीतवारिपरिप्लुताः। नात्यच्छा नातिसान्द्राश्च मन्थ इत्यभिधीयते"। मद्यमल्पमिति एकान्तमद्यसात्म्येन; नवेति मद्यस्य स्वभावपाकाभ्यामम्लस्य ग्रीष्मविरुद्धत्वेन; सुबहूदकमिति मद्यसात्म्यस्यैव, मद्यस्योष्णाम्लत्वाद्यपवादार्थं बहुतरं पानीयं प्रक्षिप्य पातव्यमिति दर्शयति; तेनैतत् फलति—यन्मद्यं ग्रीष्मे न पातव्यमेव तावत्; मद्यसात्म्यानां सात्म्यमद्यत्यागे सात्म्यत्यागजा रोगा भवन्ति, तेन तस्याल्पं वा सुबहूदकं वा देयमित्यर्थः। मुक्तैव मणिर्मुक्तामणिः। ग्रीष्मकाले चण्डातपे मध्याह्न इत्यर्थः। मैथुनोपरतिस्तु दिवानिशं बोद्धव्या ॥ २७–३२ ॥

आदानदुर्बले देहे पक्ता भवति दुर्बलः।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥ ३३ ॥
भूबाष्पान्मेघनिस्यन्दात् पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे[1] कुप्यन्ति पवनादयः ॥ ३४ ॥
तस्मात् साधारणः सर्वो विधिर्वर्षासु शस्यते।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ॥ ३५ ॥
व्यायाममातपं चैव व्यवायं चात्र वर्जयेत्।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत् ३६
व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥ ३७ ॥
अग्निसंरक्षणवता यवगोधूमशालयः।
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ॥ ३८ ॥
पिबेत् क्षौद्रान्वितं चाल्पं माध्वीकारिष्टमम्बु वा।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा ॥ ३९ ॥
प्रघर्षोद्वर्तनस्नानगन्धमाल्यपरो भवेत्।
लघुशुद्धाम्बरः स्थानं भजेदक्लेदि वार्षिकम् ॥ ४० ॥

वर्षाविधिमाह—आदानेत्यादि। देहस्य दुर्बलत्वे पक्ताऽपि दुर्बलो भवति, देहबलानुविधायित्वाद्वह्नेः। एतच्च बलिनां वली भवतीत्यत्र व्युत्पादितम्। स दुर्बलो वह्निः। अनिलादीनामिति अनिलप्रधानानाम्। वर्षासु वातादयः कुतः कुप्यन्तीत्याह—भूबाष्पादित्यादि। भूबाष्पः प्रभावादेव त्रिदोषकोपकः। मेघनिस्यन्दो वातश्लेष्मकारकः। अम्लपाकता जलस्य वर्षास्वभावकृता पित्तश्लेष्मकरी। अग्निबले क्षीणे इत्यनेनादानाहितमग्निमान्द्यमपि दोषप्रकोपकमिति दर्शयति। अग्निमान्द्यं चापाकविदाहाभ्यां कफपित्तकारि, धातुपोषकरसानुत्पादाच्च धातुक्षयेण वातकारि। एतेन वर्षासु वह्निमान्द्येन वातादिकोपः, वातादिकोपेन च वह्निमान्द्यमिति दर्शितम्। यदुक्तं वाग्भटे—"भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेष्वित्यन्योऽन्यदूषिषु॥ साधारणो विधिः कार्यस्त्रिदोषघ्नोऽग्निदीपनः" (वा. सू. अ. ३) इति। उदकप्रधानो मन्थ उदमन्थः। पानम् उदकादि, भोजनं रक्तशाल्यादि, तयोः संस्काराः संस्कारवन्त्यन्नपानानीत्यर्थः। क्षौद्रं च यद्यपि वातप्रकोपि, तथाऽपि वार्षिकक्लेदशमनार्थं स्वल्पमात्रया क्षौद्रान्वितपदेन विहितम्। विशेषशीत इति हेतुगर्भविशेषणं; तेनात्यर्थशीते दिवसे यस्मान्महात्ययस्य वातस्य कोपो भवति ततस्तज्जयार्थं वर्षाकालप्रभावक्रियमाणपित्तचयानुगुणयोरप्यम्ललवणयोरुपयोगः कर्तव्य इति दर्शितं भवति ॥ ३३–४० ॥

[1] 'चात्र वर्जयेत्' इति पा०।

[1] 'हीने' इति पा०।

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥ ४१ ॥
तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥ ४२ ॥
लावान् कपिञ्जलानेणानुरभ्राञ्छरभान् शशान् ।
शालीन् सयवगोधूमान् सेव्यानाहुर्घनात्यये ॥ ४३ ॥
तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम् ।
धाराधरात्यये कार्यमातपस्य च वर्जनम् ॥ ४४ ॥
वसां तैलमवश्यायमौदकानूपमामिषम् ।
क्षारं दधि दिवास्वप्नं प्राग्वातं चात्र वर्जयेत् ॥ ४५ ॥
दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् ।
कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् ॥ ४६ ॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि ।
स्नानपानावगाहेषु हितमम्बु यथाऽमृतम् ॥ ४७ ॥
शारदानि च माल्यानि वासांसि विमलानि च ।
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ ४८ ॥

शरद्विधिमाह—वर्षेत्यादि । उचितम् अभ्यस्तम्, 'उच समवाये' इत्यस्माद्धातोः; शीतमुचितान्यङ्गानि येषां, तेषाम् । सहसैवेति पदेनाक्रमेण शरदि तीव्रातपसंबन्धादनभ्यस्तात् पित्तप्रकोपो न्याय्य इति दर्शयति । आचितमिति वर्षासु । प्राय इत्यनेन वर्षासु पित्तचयप्रतिकूलं विधिं प्रयत्नेनाचरतो न भवत्यपि पित्तचयः, शरदि तु प्रकोपो न भवतीति दर्शयति; एतच्च सामान्यन्यायेन श्लेष्मणो वातस्य च चयप्रकोपयोर्बोद्धव्यं; यदि वा, प्रायः पित्तं प्रकुप्यति श्लेष्मा चानुबलत्वेनेत्यर्थः । यदुक्तं—"तस्य चानुबलः कफः" (चि.अ. ३) इति । लघ्विति अग्निसन्धुक्षणार्थम् । अत्र वह्नेः समानेनापि पित्तेन द्रवांशसंबन्धेनाग्निमान्द्यं क्रियते । यदुक्तं ग्रहण्यध्याये—"आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्"( चि. अ. १५ ) । उत्सर्गसिद्ध एव भोजनस्य मात्रावत्त्वे मात्रयेति वचनं मात्रातिक्रमेणेह विशेषतो भूरिदोषत्वदर्शनार्थम् । सुप्रकाङ्क्षितैः सुबुभुक्षितैः । उरभ्रो मेषः । घनात्यय इति पुनर्वचनं शरत्प्रवेश एवैतदुक्तविधिकरणं ग्रन्थाधिक्यात् सूचयतीति व्याख्यानयन्ति; वयं तु पश्यामः—पर्यायशब्दानां पुनः पुनः करणे यत्र तात्पर्यं शास्त्रे प्रतीयते तत्र तदेव वाच्यं, यत्र तु तात्पर्यान्तरं न प्रतीयते तत्र वाक्यभेदेनैव पुनरभिधानमिति । धाराधराणां मेघानामत्ययोऽदर्शनम् । तेन, प्रव्यक्तायां शरदि तिक्तसर्पिःपानं विरेकादि च कार्यम् । क्रमश्चात्राचार्यस्याभिप्रेतः, तेन प्रथमं तिक्तसर्पिष्पानं, तेन पित्ताप्रशान्तौ विरेकः, तेनाप्यशान्तौ शोणितदुष्टौ च सत्यां रक्तमोक्षणं; रक्तं चात्र कालस्वभावाद्दूष्यत्येव प्रायः; यदाह—"शरत्कालस्वभावाच्च शोणितं संप्रदूष्यति" (सू. अ. २४) इति । दिवेत्यादि ।—सूर्यांशुतापादेव दिवेति लब्धे दिवेति सकलदिनव्याप्त्यर्थम् । सूर्यतप्तमिति वक्तव्येंऽशुग्रहणं मेघावरणरहितांशुसूर्यग्रहणार्थम् । संतप्तमित्यत्र संशब्दः परितस्तापोपदर्शनार्थः । एवं निशीत्यादि च व्याख्येयम् । चन्द्रांशुग्रहणेन च निशि सौम्यांशसंबन्धं लक्षयति । कालेनेति शरत्कालस्वभावेन । पक्वमिति वर्षास्वभिनवभूमिसंबन्धजनितपैच्छिल्यव्यम्लत्वादिदोषरहितम् । यतः पक्वं ततो निर्दोषं दोषाजनकमित्यर्थः । अगस्त्येनाविषीकृतमित्यगस्त्योदयेन प्रभावाद्वर्षासु मेघसंबद्धोरगलूतादिसंबन्धात्सविषमविषं भवतीति वाच्यम् । हंसोदकमिति एवंभूतोदकस्य संज्ञा; हंसशब्देन सूर्याचन्द्रमसावभिधीयेते, ताभ्यां शोधितमुदकं हंसोदकं; यदि वा हंससेवायोग्यं हंसोदकं, हंसाः किल विशुद्धमेवोदकं भजन्ते । अवगाहः चिरं जलावस्थानम् । शारदानीति माल्यविशेषणमनार्तवकुसुमनिषेधार्थम् । प्रदोष इति निशाप्रवेश एव परं चन्द्ररश्मिसेवा; नोपरि, शिशिरभयात् । अत्र पूर्वर्तुसात्म्यपरित्यागो भविष्यदृतुसात्म्याभ्यासश्च पूर्वर्तोरन्तसप्ताहागाम्यृत्वादिसप्ताहयोः कर्तव्यः । यदुक्तं वाग्भटे—"ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः । तत्र पूर्वो विधिस्त्याज्यः सेवनीयः परः क्रमात्" (वा. सू. अ. ३ ) इति ॥ ४१-४८ ॥

इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम् ।
उपशेते यदौचित्यादोकःसात्म्यं तदुच्यते ॥ ४९ ॥

उपसंहरति—इत्युक्तमित्यादि । ऋतुसात्म्यप्रसङ्गेनाभ्याससात्म्यं दर्शयति—उपशेते इत्यादि । उपशेते सुखयति, अपथ्यमपि सद्विकारं न जनयति । कुत इत्याह—औचित्यात् अभ्यासादित्यर्थः; अपथ्यमपि हि निरन्तराभ्यासाद्विषमिवाशीविषस्य नोपघातकं भवतीति भावः ॥ ४९ ॥

देशानामामयानां च विपरीतगुणं गुणैः ।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च ५०

देशसात्म्यं रोगसात्म्यं च दर्शयति—देशानामित्यादि । देशानामनूपादीनां, गुणैः स्नेहगौरवादिभिः सह विपरीतगुणं स्नेहगौरवविपरीतगुणरौक्ष्यलाघवयुक्तं जाङ्गलमांसमध्वादि; अदनीयमाद्यं, चेष्टितं च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः । एवमामयानां च विपरीतगुणमित्यादि व्याख्येयम् । गुणशब्दश्चेह धर्ममात्रवचनः, यथोच्यते—द्रव्यगुणो द्रव्यधर्म इत्यर्थः । तेन विपरीतप्रभावादीनामपि ग्रहणं भवति । आमयशब्देन चामयहेतुरपि गृहीतव्यः । तत आमयविपरीतानाम्, आमयहेतुविपरीतानां, तथा प्रभाववैपरीत्यात्तद्विपरीतार्थकारिणां च ग्रहणं भवति । तदुदाहरणानि यथावसरं निदाने करिष्यामः । आद्यग्रहणेनौषधाहारयोर्ग्रहणं, चेष्टितग्रहणेन स्वप्नाभ्यञ्जनादीनां ग्रहणं व्याख्येयम् ॥ ५० ॥

१ 'शस्यते तद्यथाऽमृतम्' इति पा० ।

१ 'मेघापराहतांशुसूर्यग्रहणार्थम्' इति पा० । २ 'सौम्यांशुसंबन्धं' इति पा० । ३ गङ्गाधरस्तु 'ओकसात्म्यं' इति पठति, 'ओकादौचित्यात् सात्म्यमित्योकसात्म्यमित्युच्यते' इति च व्याख्यानयति ।

तत्र श्लोकः—
ऋतावृतौ नृभिः सेव्यमसेव्यं यच्च किंचन।
तस्याशितीये निर्दिष्टं हेतुमत् सात्म्यमेव च॥५१॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने तस्याशितीयो नाम षष्ठोऽध्यायः॥६॥

उक्तमध्यायार्थमुपसंहरति—ऋतावित्यादि। अत्र हेमन्ते असेव्यं कण्ठरवेण यद्यपि न प्रतिपादितं तथाऽपि 'स यदा नेन्धनं युक्तं लभते' इत्यभिधानादल्पभोजनपरिहार उक्त एव भवति; तेन, ऋतावृताविति वीप्सा कृताऽर्थवती भवति; यदि वा छत्रिणो गच्छन्तीति न्यायाद्वीप्सोक्ता। हेमन्तपरिहारविधिवच्च शिशिरपरिहारविधिर्व्याख्येयः। हेतुमदिति उपपत्तिमत्, औचित्यादिहेतुनिर्देशोपपन्नमित्यर्थः॥५१॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने स्वस्थचतुष्के तस्याशितीयो नाम षष्ठोऽध्यायः॥६॥

---

## सप्तमोऽध्यायः।

अथातो नवेगान्धारणीयमध्यायं व्याख्यास्यामः॥१॥
इति ह स्माह भगवानात्रेयः॥२॥
न वेगान् धारयेद्धीमाञ्जातान् मूत्रपुरीषयोः।
न रेतसो न वातस्य न छर्द्याः[१] क्षवथोर्न च॥३॥
नोद्गारस्य न जृम्भाया न वेगान् क्षुत्पिपासयोः।
न वाष्पस्य न निद्राया निःश्वासस्य श्रमेण च॥४॥

पूर्वाध्यायाभ्यां स्वस्थहित आहारः प्राधान्येनोक्तः, तस्य चाहारस्य स्वस्थहितत्वमाहारपाकजमूत्रपुरीषाणामविधारितवेगानां वहिर्गमने सति भवतीति मूत्रादिवेगाविधारणोपदेशकं नवेगान्धारणीयमाह। इहापि नवेगधारणशब्दस्याभावान्मात्राशितीयवत् पर्यायशब्देन संज्ञा वोद्धव्या। जातानिति जातमात्रान्। वेगः प्रवृत्त्युन्मुखत्वं मूत्रपुरीषादीनाम्। मूत्रग्रहणमादौ मूत्रस्य पुरीषाद्यपेक्षया बहुवेगत्वात्। मूत्रपुरीषयोरिति क्षुत्पिपासयोरिति च समासकरणं प्रायशोऽनयोः सहोत्पाददर्शनार्थम्। प्रतिनिषेध्यं नकारकरणं निषेध्यगौरवोपदर्शनार्थम्। निःश्वासस्य श्रमेण चेति श्रमोत्थस्य निःश्वासस्याविधार्यत्वं दर्शयति, यतोऽनन्तरं वक्ष्यति—"श्रमनिःश्वासधारणात्" इति; सुश्रुतेऽप्युक्तं—"श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमूर्च्छे अथवाऽपि गुल्मः" (सू. उ. अ. ५५) इति॥१—४॥

एतान् धारयतो जातान् वेगान् रोगा भवन्ति ये।
पृथक्पृथक्चिकित्सार्थं तान्मे निगदतः शृणु॥५॥

१ 'वम्याः' इति पा०।



वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं[१] शिरोरुजा।
विनामो वंक्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे॥६॥
स्वेदावगाहनाभ्यङ्गान् सर्पिषश्चावपीडकम्।
मूत्रे प्रतिहते कुर्यात्त्रिविधं वस्तिकर्म च[२]॥७॥
पक्वाशयशिरःशूलं वातवर्चोऽप्रवर्तनम्[३]।
पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद्विधारिते॥८॥
स्वेदाभ्यङ्गावगाहाश्च वर्तयो वस्तिकर्म च।
हितं प्रतिहते वर्चस्यन्नपानं प्रमाथि च॥९॥
मेढ्रे वृषणयोः शूलमङ्गमर्दो हृदि व्यथा।
भवेत् प्रतिहते शुक्रे विबद्धं मूत्रमेव च॥१०॥
तत्राभ्यङ्गोऽवगाहश्च मदिरा चरणायुधाः।
शालिः पयो निरूहश्च शस्तं मैथुनमेव च॥११॥
सङ्गो विण्मूत्रवातानामाध्मानं वेदना क्लमः[४]।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात्॥१२॥
स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च।
पानानि वस्तयश्चैव शस्तं वातानुलोमनम्॥१३॥
कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः।
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः॥१४॥
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम्।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते॥१५॥
मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ।
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात्॥१६॥
तत्रोर्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः सनावनः।
हितं वातघ्नमाद्यं च घृतं चौत्तरभक्तिकम्॥१७॥
हिक्का श्वासोऽरुचिः[५] कम्पो विबन्धो हृदयोरसोः।
उद्गारनिग्रहात्तत्र हिक्कायास्तुल्यमौषधम्॥१८॥
विनामाक्षेपसंकोचाः सुप्तिः कम्पः प्रवेपनम्।
जृम्भाया निग्रहात्तत्र सर्वं वातघ्नमौषधम्॥१९॥
कार्श्यदौर्बल्यवैवर्ण्यमङ्गमर्दोऽरुचिर्भ्रमः।
क्षुद्वेगनिग्रहात्तत्र स्निग्धोष्णं लघु भोजनम्॥२०॥
कण्ठास्यशोषो वाधिर्यं श्रमः सादो[६] हृदि व्यथा।
पिपासानिग्रहात्तत्र शीतं तर्पणमिष्यते॥२१॥
प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः।
वाँष्पनिग्रहणात्तत्र[७] स्वप्नो मद्यं प्रियाः कथाः॥२२॥

१ 'शिरोरुक्कृच्छ्रमूत्रता' इति पा०। २ 'मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम्। जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्॥ अवपीडकमेतच्च संज्ञितं' इति वाग्भटः (सू. अ. ४)। ३ 'वातवर्चोनिरोधनम्' इति पा०। ४ 'वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा' इति पा०। ५ 'कासोऽरुचिः' इति पा०। ६ 'श्वासः' इति पा०। ७ 'बाष्पस्य निग्रहात्तत्र' इति पा०।

**जृम्भाऽङ्गमर्दस्तन्द्रा च शिरोरोगोऽक्षिगौरवम् ।**
**निद्राविधारणात्तत्र स्वप्नः संवाहनानि च ॥ २३ ॥**
**गुल्महृद्रोगसंमोहाः श्रमनिःश्वासधारणात् ।**
**जायन्ते तत्र विश्रामो वातघ्न्यश्च क्रिया हिताः ॥२४॥**
**वेगनिग्रहजा रोगा य एते परिकीर्तिताः ।**
**इच्छंस्तेषामनुत्पत्तिं वेगानेतान्न धारयेत् ॥ २५ ॥**

यद्वेगविधारणे ये रोगास्तेषां यच्चिकित्सितं तदल्पवक्तव्यत्वात् प्रकरणागतत्वाच्च ब्रूते—बस्तिमेहनयोरित्यादि । मेहनं शिश्नं¹ । विनमनं शरीरस्य विनामः । अवपीडको बहुमात्रप्रयोगः, मात्राधिकत्वेन हि भेषजं दोषान् पीडयतीति कृत्वा; अन्यत्राप्युक्तम्—"अवपीडकसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाऽभ्यङ्गैः" इति । त्रिविधमिति निरूहानुवासनोत्तरबस्त्यात्मकम् । पिण्डिका जानुजङ्घामध्यमांसपिण्डिका । वर्तयः फलवर्तयः । प्रमाथि अनुलोमनम् । चरणायुधः कुक्कुटः । रुजा जठर इति संबन्धः । 'भोजनानि' 'पानानि' 'बस्तय' इति त्रयं वातानुलोमनं शस्तमिति योज्यम् । कोठो वरटीदष्टाकारः शोथः । व्यङ्गः श्यामवर्णं मण्डलं मुखे । हृल्लासः उत्क्लेशः । अर्धावभेदः अर्धमस्तकवेदना । आद्यं खाद्यं भोजनमित्यर्थः । चकारात् खेदादयोऽपि वातघ्ना इति सूचयति । यद्यपि सुश्रुते मूत्रादीनां त्रयोदशानां विधारणात्त्रयोदशोदावर्ता अभिधीयन्ते, तथाऽपीहाष्टोदरीये मूत्रपुरीषवातशुक्रवमिक्षवथुविघातजा एव परं षडुदावर्ता अभिधातव्याः; उद्गारादिनिरोधजानां वातनिरोधज एवोदावर्तेऽन्तर्भावाभिप्रायात्; यदि वा मूत्रादिविघातज एव विकारे चरकाचार्यस्य उदावर्तसंज्ञाऽभिप्रेता, नान्यत्रेति न विरोधः । मुहुर्मुहुरज्ञानामाक्षेपणमाक्षेपः; पर्वणामाकुञ्चनं संकोचः । सुप्तिः स्पर्शाज्ञानम् । भ्रमणं भ्रमो येन चक्रस्थितमिवात्मानं मन्यते । सादः अङ्गावसादः । तर्पयतीति तर्पणम् । संवाहनं पाणिना पादादिप्रदेशे सुखमभिहननमुन्मर्दनं च ॥ ५—२५ ॥

**इमांस्तु धारयेद्वेगान् हितार्थी² प्रेत्य चेह च ।**
**साहसानामशस्तानां मनोवाक्कायकर्मणाम् ॥ २६ ॥**

वेगानामविधार्यत्वेनोक्तत्वाल्लोभादीनामपि वेगा अविधार्याः स्युरित्याह—इमांस्त्वित्यादि । प्रेत्य जन्मान्तरे । इहेति इह जन्मनि । सहसा आत्मशक्तिमनालोच्य क्रियत इति साहसं, तत्तु गजाभिमुखधावनादि । अशस्तानाम् अप्रशस्तानामनिष्टफलानामिति³ यावत् । मनोवाक्कायकर्मणामित्यत्र कर्मशब्दो व्यापारवचनः ॥ २६ ॥

**लोभशोकभयक्रोधमानवेगान् विधारयेत् ।**
**नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥२७॥**

अशस्तं मनसः कर्म दर्शयति—लोभेत्यादि । लोभः विषयेऽनुचिता प्रार्थना, शोकः पुत्रादिविनाशजं दैन्यम्, भयम् अपकारकानुसंधानजं दैन्यम्, क्रोधः प्रद्वेषो येन प्रज्वलितमिवात्मानं मन्यते, मानः सदसद्गुणाध्यारोपेणात्मन्युत्कर्षप्रत्ययः । जुगुप्सितगोपनेच्छा लज्जा, तदभावो नैर्लज्ज्यं; समाने द्रव्ये परसंबन्धप्रतिषेधेच्छा ईर्ष्या; अतिराग उचित एव विषये पुनः पुनः प्रवर्तनेच्छा । अभिध्या मनसा पराभिद्रोहचिन्तनं, यदि वा परद्रव्यविषये स्पृहा ॥ २७ ॥

**परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।**
**वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ॥ २८ ॥**

अशस्तं वचनकर्माह—परुषस्येत्यादि । परुषं परोद्वेजकं वचनम् । अतिमात्रं बहु । सूचकं परानिष्टजनकाभिधायकम्¹ । अनृतम् अपार्थकम् । अकालयुक्तम् अप्रस्तावागतम् ॥ २८ ॥

**देहप्रवृत्तिर्या काचिद्विद्यते परपीडया ।**
**स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान्विधारयेत् ॥ २९ ॥**

अशस्तं देहकर्माह—देहेत्यादि । परपीडया परपीडानिमित्तमित्यर्थः । स्त्रीभोगः परस्त्रीभोगः, स्तेयं परद्रव्यग्रहणं, हिंसा विधिरहिता प्राणिपीडा; आदिग्रहणाद्गुर्वाद्यभिमुखपादप्रसारणादि गृह्यते ॥ २९ ॥

**पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्मणाम् ।**
**धर्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च ॥३०॥**

एवं कृते यद्भवति तद्दर्शयति—पुण्येत्यादि । पुण्यः पावनः शब्दो यस्यासौ पुण्यशब्दः । भुङ्क्ते चिनोति चेति उत्पन्नादविरोधतः फलोपयोगेन भुङ्क्ते²; चिनोति चोत्पादयति चापरानित्यर्थः ॥ ३० ॥

**शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी ।**
**देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥ ३१ ॥**

अविधार्यप्रवृत्तीन्मूत्रादीन् विधार्यप्रवृत्तीन् साहसादींश्च दर्शयित्वा विधार्याविधार्यप्रवृत्तिं व्यायाममाह—शरीरेत्यादि । देहस्य व्यायामो देहव्यायामः, देहग्रहणान्मनोव्यायामं चिन्तनादि निराकरोति; संख्याता संज्ञिता । या च इष्टा अभिप्रेता, एतेन भारहरणाद्याऽनिष्टा कार्यवशात् क्रियमाणा चेष्टा निरस्यते, चङ्क्रमणरूपा तु क्रिया प्राप्यते । स्थैर्यं स्थिरता शरीरस्य, तदर्था । मात्रया अनपायिपरिमाणेन; एतावती चेयं शरीरचेष्टा मात्रावती यावत्या लाघवादयो वक्ष्यमाणा भवन्ति, चेष्टातियोगवक्ष्यमाणाश्च श्रमभ्रमादयो³ न भवन्ति । सुश्रुतेऽप्युक्तं—"यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम्" ( सु. चि. अ. २४ ) इति ॥ ३१ ॥

**लाघवं कर्मसामर्थ्यं स्थैर्यं दुःखसहिष्णुता⁴ ।**
**दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ३२ ॥**

१ 'शेफः' इति पा० । २ 'हितैषी' इति पा० । ३ 'निष्फलानां' इति पा० ।

१ 'परात्ययाभिधायकं' इति पा० । २ 'उत्पन्नानविरोधतः फलभोगेन' इति पा० । ३ 'भ्रमक्लमादयः' इति पा० । ४ 'क्लेशसहिष्णुता' इति पा० ।

**श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः।**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ ३३ ॥**
**(स्वेदागमः श्वासवृद्धिर्गात्राणां लाघवं तथा।**
**हृदयाद्युपरोधश्च इति व्यायामलक्षणम् ॥ १ ॥)**

यथोक्तव्यायामगुणानाह—लाघवमित्यादि । दोषक्षयोऽत्र श्लेष्मक्षयोऽभिप्रेतः; यदि वाऽग्निकर्तृत्वेन त्रिदोषक्षयोऽपि । उक्तं हि—"शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ" इति । व्यायामातिप्रवृत्तिदोषमाह—श्रम इत्यादि । क्लम इह मनइन्द्रियग्लानिः । क्षयो धातुक्षयः । प्रतमक एव प्रतामकः श्वासविशेषः ॥ ३२ ॥ ३३ ॥

**व्यायामहास्यभाष्याध्वग्राम्यधर्मप्रजागरान् ।**
**नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥ ३४ ॥**

इदानीं व्यायामतुल्यत्वेनान्यानप्यतिमात्रत्वेन निषेद्धुमाह—व्यायामेत्यादि । यद्यप्यतिव्यायामो निषिद्धस्तथाऽपीह पुनरभिधीयते अतिभाष्यादिष्वपि तद्दोषश्रमक्लमादिप्राप्त्यर्थं; यदि वा पूर्वमनभ्यस्तव्यायामातिसेवा निषिद्धा, इह तु अभ्यस्तस्यापि निषेधः । यदाह—नोचितानपि; उचितानप्यभ्यस्तानपीत्यर्थः । अपिशब्दादनभ्यस्तानां नितरां निषेधो लभ्यते । भाषणं भाष्यम्, अध्वशब्देनाध्वगमनं, ग्राम्यधर्मो मैथुनम् ॥ ३४ ॥

**एतानेवंविधांश्चान्यान् योऽतिमात्रं निषेवते ।**
**गजं सिंह इवाकर्षन् सहसा स विनश्यति ॥ ३५ ॥**
**([१]अतिव्यवायभाराध्वकर्मभिश्चातिकर्शिताः ।**
**क्रोधशोकभयायासैः क्रान्ता ये चापि मानवाः ॥१॥**
**बालवृद्धप्रवाताश्च ये चोच्चैर्बहुभाषकाः ।**
**ते वर्जयेयुर्व्यायामं क्षुधितास्तृषिताश्च ये ॥ २ ॥[२])**

एवंशब्देन गुरुभारहरणदर्पशिलाचालनादि गृह्यते । सिंहः किल स्वल्पप्रमाणः स्वबलोद्रेकाद्गजं कर्षन् पाटयन् स्वदेहानुचितव्यायामात् पश्चाद्वातक्षोभेण विपद्यते, तेनायं दृष्टान्तः सङ्गतार्थः; यदि वा सिंहोऽष्टापदोऽभिप्रेतः, स च किल गजं व्यापाद्य पृष्ठे क्षिपति, ततस्तत्कोथाद्विपद्यते, तेन दृष्टान्तो व्याख्येयः ॥३५॥

**उचितादहिताद्धीमान् क्रमशो विरमेन्नरः ।**
**हितं क्रमेण सेवेत क्रमश्चात्रोपदिश्यते ॥ ३६ ॥**
**प्रक्षेपापचये ताभ्यां क्रमः पादांशिको भवेत् ।**
**एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ ३७ ॥**

हितस्य सेवनमहितस्य परित्यागः कर्तव्य इति पूर्वमुक्तं, तच्च हितसेवनमहितपरिवर्जनं चाक्रमेण क्रियमाणमक्रमाचरितव्यायामादिवत् प्रत्यवायकरं परं भवति, अतस्तत्क्रममाह—उचितादित्यादि । उचितात् अभ्यस्तात् । क्रमशो वक्ष्यमाणेन क्रमेण । हितम् अनभ्यस्तहितम् । कोऽसौ क्रम इत्याह—क्रमश्चेत्यादि । प्रक्षेपो हितस्य, अपचयोऽहितस्य, ताभ्यां हिताहिताभ्याम् । पादः चतुर्थो भागः, तद्रूपोंऽशः पादांशः, तेन कृतः क्रमः पादांशिकः; अन्ये तु पादस्यांशः पादांश इति षोडशं भागं वर्णयन्ति[१] । स च हिताहितयोर्युगपत्प्रक्षेपापचये पादांशिकः क्रमः, प्रथममेकान्तरमेकाहमन्तरा कृत्वेत्यर्थः; ततः प्रथमहितपादप्रक्षेपाहितपादापचयाभ्यासादूर्ध्वं द्वितीयपादप्रक्षेपापचये द्व्यन्तरं द्व्यहमन्तरीकृत्य क्रमो भवेत्; तथा द्वितीयपादाभ्यासादूर्ध्वं तृतीयपादप्रक्षेपापचये त्र्यहमन्तरीकृत्य क्रमो भवेत्; चतुर्थपादप्रक्षेपापचये तु कालनियमो नास्ति, अत ऊर्ध्वं प्रक्षेपापचयाभावाच्चतुष्पादसंपूर्णस्य पथ्यस्यानवधिसेव्यत्वात् । अयं पिण्डार्थः—अपथ्या यवकादयोऽभ्यस्तास्ते त्याज्याः, रक्तशाल्यादयः पथ्या अनभ्यस्तास्ते सेव्याः; तत्र प्रथमदिने यवकपादत्रयं रक्तशालीनामेकः पादः[२]; द्वितीये दिवसे द्वौ पथ्यस्य पादौ द्वावपथ्यस्य, एवं तृतीये, एवं द्वितीयपादाभ्यासो द्व्यन्तरो भवति; चतुर्थे त्रयः पादाः पथ्यस्य एकोऽपथ्यस्य, एवं पञ्चमे षष्ठे च, एवं तृतीयपादाभ्यासस्त्र्यन्तरो भवति; सप्तदिनप्रभृति तु चतुष्पादपथ्याभ्यासः । यदि[३] वाऽन्तरशब्दो व्यवधिवचनः, तथाशब्दाच्चतुरन्तरमिति च लभ्यते; तेनायमर्थः—प्रथमे दिवसेऽपथ्यपादत्रयं पथ्यस्यैकः पादः, द्वितीये सर्वमपथ्यं, तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य, एवं चतुर्थे; पञ्चमे तु दिने पथ्यस्य भाग एकस्त्रयोऽपथ्यस्य, एवं

१–२ योगीन्द्रनाथसेनसंमतोऽयं पाठः ।

१ "पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत्" इति वाग्भटः (सू. अ. ७) । "यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनापि त्यजमाने शरीरबाधा शक्यते वह्निमान्द्यं वा, तदा पादपादेन वा षोडशांशेन त्यजेदिति वाशब्दार्थः" इत्यरुणदत्तः । २ 'रक्तशालीनामेकपादयोगवद्भोजनं' इति पा० । ३ "यदि पुनरन्तरशब्दो व्यवधिवचनस्तदाऽयमर्थः—प्रथमदिने अपथ्यस्य त्रयः पादाः पथ्यस्य चैकः । द्वितीयदिने सर्वमपथ्यं, एवमेकेन अह्ना पथ्यपादसहितोऽपथ्यपादोऽन्तरीकृतः । ततस्तृतीयदिने अपथ्यस्य द्वौ पादौ, द्वौ च पथ्यस्य । ततश्चतुर्थे पञ्चमे च सर्वमपथ्यं, एवं पथ्यपादद्वयसहितमपथ्यपादद्वयं द्वाभ्यामहोभ्यामन्तरीकृतम् । ततः पुनः षष्ठे दिवसे अपथ्यस्य एकः पादः, त्रयश्च पथ्यस्य । सप्तमे अष्टमे नवमे च सर्वमपथ्यम् । एवं त्रिभिरहोभिः पथ्यपादत्रयसहितोऽपथ्यस्य च एकः पादोऽन्तरीकृतो भवति । ततो दशमदिने सर्वं पथ्यं सेवनीयम्" इति चरकोपस्कारे योगीन्द्रनाथसेनः । "यत्त्वन्तरशब्दस्य व्यवधानार्थत्वेन प्रथमदिने पथ्यपादापथ्यत्रिपादमानेन भोजनं, ततः परमेकदिनं न तथा भोक्तव्यं, किन्त्वपथ्यमभ्यस्तं यत्तदेव भोक्तव्यं, तदेकदिनं व्यवधाय तृतीयदिने पथ्यपादद्वयापथ्यपादद्वयं भोक्तव्यं, तदुत्तरं दिनद्वयं न तथा भुक्त्वा किन्त्वभ्यस्तमपथ्यमेव भोक्तव्यं, तद्दिनद्वयं व्यवधाय षष्ठे दिने पथ्यपादत्रयापथ्यैकपादमानेन भोज्यं, तदुत्तरं दिनत्रयं न तथा भोक्तव्यं, किन्त्वपथ्यमात्रमेवेति, तद्दिनत्रयं व्यवधाय दशमे दिने पथ्यचतुष्पादभोजनमपथ्यपादचतुष्टयत्यागः सुतरामिति व्याख्यायते; षोडशांशिकक्रमवादेऽप्येवं च बोध्यमिति; तदसम्यक् अहितस्याभ्यासानुवृत्तेः" इति जल्पकल्पतरौ गङ्गाधरः । अत्राष्टाङ्गसंग्रहव्याख्यायां चत्वारि मतानि प्रदर्शितानि, तानि तत्रैव द्रष्टव्यानि; चक्रदत्तव्याख्यानं तु तत्र प्रदर्शितेन तृतीयमतेन समानम् ।

ह्यन्तरीकृतौ भवतः; षष्ठे पथ्यभागत्रयमपथ्यभाग एकः, एवं सप्तमेऽष्टमे च; ततो नवमे भागद्वयं पथ्यस्य चापथ्यस्य च, एवं त्रीण्यहान्यन्तरीकृतानि भवन्ति; ततो दशमे सर्वं पथ्यम्, एवमेकादशे द्वादशे त्रयोदशे च, चतुर्दशे तु पथ्यभागत्रयमेकोऽपथ्यभागः; एवं चतुरन्तरता तथाशब्दसूचिता भवति; पञ्चदशाहात् प्रभृति संपूर्णपथ्यतैव ॥ ३६ ॥ ३७ ॥

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।**
**सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥ ३८ ॥**

एवं कृते किं स्यादित्याह—क्रमेणेत्यादि । क्रमेणेति क्रमेणैव । दोषा इति दोषजनकान्यभ्यस्तान्यपथ्यानि । गुणा इति गुणजनकानि पथ्यानि । अपुनर्भावं यान्ति दोषा इति संबन्धः । अक्रमेण तु सहसाऽपथ्यत्यागे दोषा भवन्त्येव । यदुक्तम्—"असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्" (वा. सू. अ. ३ ) इति । अप्रकम्प्या अप्रचाल्या भवन्ति गुणा इति संबन्धः । पथ्यमपि ह्यनभ्यस्तं सहसोपयुज्यमानमरुच्यमिवधादीञ्जनयति ॥ ३८ ॥

**समपित्तानिलकफाः केचिद्गर्भादि मानवाः ।**
**दृश्यन्ते वातलाः केचित्पित्तलाः श्लेष्मलास्तथा ३९**
**तेषामनातुराः पूर्वे वातलाद्याः सदातुराः ।**
**दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥ ४० ॥**

इह स्वस्थहितं सामान्येनैव रक्तशाल्यादि प्रतिपादितं, स्वस्थश्च प्रकृतिभेदेन नानाप्रकारः, अतस्तेषां हितमपि नानाप्रकारमेव, तेन तत्प्रतिपादनार्थं प्रकृतिभेदमेव तावदाह—समपित्तानिलेत्यादि । समा अवैकारिकमानावस्थिताः पित्तानिलकफा यस्य स तथा । गर्भादि गर्भाधानादि, शुक्रशोणितजीवसंमूर्च्छनादीति यावत् । वातला वातप्रधानाः, एवं पित्तलाः श्लेष्मलाश्च । सर्वत्र गर्भादीति योज्यम् । अत्र पित्तग्रहणमादौ छन्दोऽनुरोधात्, यदि वा पित्तसमानस्य वह्नेर्गौरवप्रदर्शनार्थं; यदि वा प्रकृत्यारम्भे वातस्याप्राधान्यख्यापनार्थं, वातप्रकृतिर्हि सर्वत्र प्रत्यवरो भवति । इह च प्रत्येकदोषप्रकृतिग्रहणेनैव द्वन्द्वप्रकृतिरपि ग्राह्यः, संयोगस्य संयोगिनामान्तरीयकत्वात्, निदान इव वातादिज्वराभिधानेन द्वन्द्वजज्वराभिधानं, तेन रोगभिषग्जितीयोक्ता द्वन्द्वजा अपि तिस्रः प्रकृतयो गृहीता भवन्ति; अन्ये तु द्वितीयकेचिद्ग्रहणाद्द्वन्द्वाधिक्येन तद्ग्रहणं वर्णयन्ति । तेषामिति समवातपित्तश्लेष्मप्रकृत्यादीनां च मध्ये । पूर्वे इति समप्रकृतयः । सदातुरा इति स्वस्थव्यवहारभाजोऽपि स्फुटिताङ्गत्वविषमाग्नित्वादियुक्ता यस्मादित्यर्थः । स्वस्था अप्येते कस्माद्रोगिण इत्याह—दोषानुशयितेत्यादि । दोषानुशयिता उल्वणवातादिभाविताऽव्यभिचारिणीति यावत् । देहप्रकृतिः देहस्वास्थ्यमिति यावत् । एते नैतेषां वातलादीनां मुख्यं स्वास्थ्यं नास्ति, किं तर्हि उपचारस्वस्था एत इति दर्शयति । ननु, गर्भादीत्यनेन शुक्रशोणितजीवानां संसर्गे यथाभूता वातादयः समा विकृता वा तथाभूतैव प्रकृतिर्भवति, सा च प्रकृतिर्यावज्जीवमनुवर्तते रिष्टं विना, यदुक्तं सुश्रुते—"प्रकोपो वाऽन्यभावो वा क्षयो वा नोपजायते । प्रकृतीनां स्वभावेन, जायते तु गतायुषि" (सु. शा. अ. ४ ) इति; तत्र यदा समप्रकृतेर्वातप्रकृतेर्वाऽऽक्षेपकादिर्वातविकारो भवति, तदा वातस्य प्रकृतिभूतस्याधिक्यं भवत्येव; यदा च वातप्रकृतेः पित्तविकारो भवति, तदा वातप्रकृतेरन्यथाभावः पित्तप्रकृतित्वं भवति; यदा तु समप्रकृतेरन्यतरदोषक्षयो भवति प्राकृतस्वकर्महानिलक्षणस्तदाऽसौ प्रकृतिक्षयो भवति; यदुक्तं दोषक्षयलक्षणे—"कर्मणः प्राकृताद्धानिर्वृद्धिर्वाऽपि विरोधिनाम्" (सू. अ. १८) इति । अत्रोच्यते—प्रकृतिसमानरोगोत्पत्तौ न प्रकृतिभूतस्य वृद्धिः, किं तर्हि हेत्वन्तरजनितस्य वातादेस्तत्र विकारकारित्वं, प्रकृतिभूतस्तु दोषस्तत्रोपदर्शको भवति, यदुक्तं—"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् । निष्प्रत्यनीकः कुरुते तस्माज्ज्ञेयः सुदुःसहः" (चि. अ. ३) इति; वातप्रकृतेस्तु पित्तविकारोत्पत्तौ वातः प्रकृतिभूतस्तथैव करचरणस्फुटनादिकं कुर्वन्नास्ते, न तस्यागन्तुना पित्तविकारेण किंचित् क्रियते; वातादीनां तु स्वमानात् क्षयः प्राकृतकर्महानिलक्षणो न शुक्रशोणितसंसर्गकालजस्य प्रकृतिभूतस्य दोषस्य बीजभूतस्य क्षयमावहतीति न प्रकृतिभूतदोषक्षयः; यदि वा, प्रकृतेः प्रकोपान्यथाभावक्षया न भवन्तीति प्रकृतित्वेनेति ब्रूमः; तेन समप्रकृतिर्वातप्रकृतिर्न भवति, वातप्रकृतिः पित्तप्रकृतिर्न भवति समप्रकृतिर्वा; विकारावस्था तु हीनाधिकवातत्वादिलक्षणा भवतीत्यर्थः । नच वाच्यं—प्रकृतिभूतानां वातादीनां दूषणात्मकानां कथं न शरीरबाधकत्वं, सहजातत्वेन तथाविधविनाशकविकाराकर्तृत्वात्; यदुक्तं सुश्रुते—"विषजातो यथा कीटो विषेण न विपद्यते । तद्वत्प्रकृतिभिर्देहस्तज्जातत्वान्न बाध्यते" (सु. शा. अ. ४) इति; न बाध्यते नातिबाध्यत इति बोद्धव्यं, वातादिप्रकृतेर्नित्यवातादिविकारगृहीततरत्वात् । तदुक्तमिह "वातलाद्याः सदातुराः" इति । उक्तं चाश्ववैद्यके—"सर्वान् प्राणभृतो हन्ति नूनं कायगतं विषम् । अस्मिंश्चापि समुत्पन्ना दृश्यन्ते कृमयो यथा ॥ तथा च विषमो दोषः प्रकृतिं नातिबाधते" इति । नच वातादयो वृद्धाः शुक्रशोणितसंसर्गे यथा दुष्टत्वाद्धातविकारवन्तं गर्भं कुर्वन्ति तथा गर्भजनकत्वमेव शुक्रशोणितयोः कस्मान्न निघ्नन्तीति वाच्यं, वातादिप्रकोपाणामेव हीनमध्योत्तमानां नानाशक्तित्वात्; प्रबला वातादयो विनाशयन्ति, हीनास्तु विकृतिमात्रं जनयन्ति ॥ ३९ ॥ ४० ॥

**विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः ।**
**समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ ४१ ॥**

१ 'हितानामपि नानाप्रकारत्वमुच्यते' इति पा० । २ 'शुक्रशोणितजीवसंमूर्च्छनात् प्रभृतीति यावत्' इति पा० ।

१ 'विकारित्वं' इति पा० । २ 'सहजत्वेन' इति पा० ।

तेषामिति सदातुराणां वातलादीनाम्। विपरीतगुणो वातादिगतरौक्ष्यादिविपरीतस्नेहादिगुण इत्यर्थः । समाः सर्वे रसा यत्र तत्तथा; समत्वं चेहातुरूपत्वमभिप्रेतं, नतु तुल्यमानत्वं; न हि स्वस्थभोजने यावान्मधुर उपयुज्यते, तावन्मानाः कट्वादयोऽपीति; यदि वा समशब्दोऽविरुद्धवचनः, तेनोपोदिकामत्स्यादिप्रतिपादनीयविरुद्धरसवर्जितं सर्वरसमित्यर्थः। एवं च प्रकृत्यपेक्षः समधातुं प्रति सर्वरसोपयोगः ऋतुविहितेन "तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान्" (सू. अ. ६ ) इत्यादिना विशेषविधानेन युक्तः सन् सर्वरसमेवाम्ललवणरसोत्कटं भोजनं हेमन्ते फलति; वातप्रकृतेस्तु कटुतिक्तकषायवर्जितं प्रभूतमधुराम्ललवणभोजनं हेमन्ते भवति; एवमन्यत्रापि देहप्रकृत्यृतुस्वभावपर्यालोचनयाऽनुगुणं तर्कणीयम्। यदुक्तं वाग्भटेन—"नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ" (वा. सू. अ. ३) इति ॥४१॥

**द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च ।**
**मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः ॥ ४२ ॥**
**मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम् ।**
**मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥ ४३ ॥**

स्वास्थ्योत्पत्तिकारणमभिधाय स्वास्थ्यप्रतिबन्धकदोषसंचयनिर्हरणमभिधातुं दोषसंचयस्य लक्षणान्येव तावद्वक्तुमाह—द्वे अध इत्यादि । द्वे गुदलिङ्गे । खानि छिद्राणि । सप्त शिरसीति द्वे श्रोत्रे, द्वौ नासापुटौ, द्वे अक्षिणी, मुखं च; स्वेदमुखानीति लोमकूपानि; एतानि सर्वाणि मलस्यायनानि । दुष्टैरिति गोवलीवर्दन्यायेन क्षीणैः, मात्राधिकैरिति वृद्धैः; येनोत्तरत्र क्षयवृद्धयोरपि लक्षणं वदति । मलवृद्धिं गुरुतया मलायनगुरुतयेत्यर्थः, लाघवान्मलायनानां संक्षयं मलस्य स्वमानादपि क्षयमित्यर्थः; यदि वा दुष्टैरिति मात्राधिकैरित्यस्य विशेषणम्, एवं सति लाघवान्मलसङ्क्षयमिति प्रकृतिस्थाल्लाघवान्मलक्षयमित्यधिकस्य मलस्य क्षयं प्रकृतिस्थत्वमित्यर्थो व्याख्येयः । सङ्गोत्सर्गादतीव चेति अतीवसङ्गादप्रवृत्तेर्मलक्षयम्, अतीवोत्सर्गान्मलवृद्धिं जानीयादित्यर्थः ॥ ४२ ॥ ४३ ॥

**तान् दोषलिङ्गैरादिश्य व्याधीन् साध्यानुपाचरेत् ।**
**व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥ ४४ ॥**

तानिति मलवृद्धिक्षयात्मकान् मलवृद्धिक्षयजनितानिति यावत्, दोषाणां वातादीनां, लिङ्गैः क्षयवृद्धिसंबन्धैः, आदिश्य बुद्ध्वा, ये साध्यास्तानुपाचरेत् । व्याधिप्रतिद्वन्द्वैः व्याधिप्रत्यनीकैः, हेतुप्रतिद्वन्द्वैः हेतुप्रत्यनीकैः; प्रतिद्वन्द्वशब्देन च विपरीतार्थकारिणामपि ग्रहणम् । मात्राकालग्रहणं च प्राधान्यात्; तेन, दोषभेषजादीनामपि ग्रहणं बोद्धव्यं; यदि वा कालग्रहण एव दोषादीनामवरोधो व्याख्येयः ॥ ४४ ॥

१ '°स्नेहादिकर्मप्रयुक्तः' इति पा० । २ 'अम्ललवणरसातिरिक्तं' इति पा० । ३ 'प्रभूततराम्ललवणभोजनं' इति पा० । ४ 'आत्मगुणं' इति पा० । ५ 'स्वेदवहानि' इति पा० । ६ 'स्रोतांसि' इति पा० ।

**विषमस्वस्थवृत्तानामेते रोगास्तथाऽपरे ।**
**जायन्तेऽनातुरस्तस्मात् स्वस्थवृत्तपरो भवेत् ॥४५॥**
**माधवप्रथमे मासि नभस्यप्रथमे पुनः ।**
**सहस्यप्रथमे चैव हारयेद्दोषसंचयम् ॥ ४६ ॥**
**स्निग्धस्विन्नशरीराणामूर्ध्वं चाधश्च नित्यशः ।**
**वस्तिकर्म ततः कुर्यान्नस्यकर्म च बुद्धिमान् ॥ ४७ ॥**
**यथाक्रमं यथायोग्यमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥४८॥**
**रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु ।**
**धातवश्चाभिवर्धन्ते जरा मान्द्यमुपैति च ॥ ४९ ॥**
**विधिरेष विकाराणामनुत्पत्तौ निदर्शितः ।**
**निजानामितरेषां तु पृथगेवोपदेक्ष्यते ॥ ५० ॥**

विषमेत्यादि । अनातुरशब्देनातुर्यात् प्रागेवानागताबाधेन स्वस्थपरेण भवितव्यमिति शिक्षयति । माधवो वैशाखस्तस्य प्रथमश्चैत्रः, एवं नभस्यस्य भाद्रस्य प्रथमः श्रावणः, तथा सहस्यस्य पौषस्य प्रथमो मार्गशीर्षः; एते च मासाश्चैत्रश्रावणमार्गशीर्षा रोगभिषग्जितीये विमाने (वि. अ. ८) शोधनार्थं वक्ष्यमाणप्रावृडाद्यृतुक्रमेण वसन्तप्रावृट्शरदन्तर्गता भवन्ति । दृढबलसंस्कारेऽपि पठ्यते—"प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्जसहौ पुनः । तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति" (सि. अ. ६) इति, सुश्रुतेऽपि ऋतुचर्याध्याये दोषोपचयप्रकोपोपशमननिमित्तमीदृश एव ऋतुक्रमः पठितः । तेन, शोधनमभिधीयमानं शोधनार्थोक्तर्तुक्रमेणैव व्याख्येयम् । वसन्तादीनामन्तमासेषु तु वमनाद्यभिधानं संपूर्णप्रकोपे भूते निर्हरणोपदेशार्थं; प्रथमेषु हि मासेषु फाल्गुनाषाढकार्तिकेषु प्रकोपः प्रकर्षप्राप्तो न भवति, चितस्य ह्यसम्यक्प्रकुपितस्याविलीनस्य सम्यङ्निर्हरणं न भवतीति । अत एव कपिलबलेऽपि पठ्यते—"मधौ सहे नभसि च मासि दोषान् प्रवाहयेत् । वमनैश्च विरेकैश्च निरूहैः सानुवासनैः" इति । हरिचन्द्रेण तु, सहशब्दोऽयमकारान्तो मार्गशीर्षवचनस्तस्य सहस्य प्रथमे कार्तिके इति व्याख्यातम् । तन्मतानुसारिणा वाग्भटेन चोक्तं—"श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत्" (वा.सू.अ.३) इति । "कार्तिके श्रावणे चैत्रे मासि साधारणे क्रमात् । वर्षादिसंचितान् दोषान् त्रिमासान्तरितान् हरेत्"—इत्यस्य तु श्लोकस्य केनापि पठितस्याविरुद्धान्वेषणे बुद्धिमतां न व्यापारः । ऊर्ध्वं चेति वमनेन, अध इति विरेकेण, वस्तिकर्मशब्देनास्थापनानुवासने; एतच्च सर्वं वमनादि यथायोग्यतया, न यथासंख्येन; तेन वमनं मधौ प्रधानं, सहस्यप्रथमे विरेकः, नभस्यप्रथमे वस्तिरिति भवति । यथाक्रमं यथानुपूर्वं, यथायोग्यं यद्यस्य युज्यते; एतच्च पूर्वेण वमनादिना, उत्तरेण च रसायनादि प्रयोजयेदित्यनेन योज्यम् ।

१ 'नस्तःकर्म' इति पा० । २ 'चरितव्यं' इति पा० ।

सिद्धानीति दृष्टफलानि । रोगास्तथा न जायन्त इति वमनादीनाचरतः; धातवश्चाभिवर्धन्त इति रसायनवृष्ययोगानुपयोजयत इति योजनीयम् । निजानामिति छेदः । इतरेषामित्यागन्तूनाम् । आगन्तवश्चेह भूतविषवातादिजन्यास्तथा मानसाश्चाभिप्रेताः; येनैतद्द्वितयमप्यभिधायाऽऽगन्तूनामनुत्पत्ताविलाद्युपसंहारमागन्तुकत्वेनैव करिष्यति ॥ ४५—५० ॥

**ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः ।**
**नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥ ५१ ॥**
**ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये ।**
**मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥ ५२ ॥**

ये भूतेत्यादि । भूताः पिशाचादयः, आदिग्रहणात् पातवन्धनादीनां ग्रहणम् । प्रज्ञा बुद्धिस्तदपराधोऽज्ञानदुर्ज्ञाने, एतन्मूलाश्चैते भूताभिषङ्गादय ईर्ष्यादयश्च । यद्यपि च निजा अपि प्रज्ञापराधमूला एव; यदुक्तं—"प्रज्ञापराधाद्यहितानर्थान् पञ्च निषेवते" (सू. अ. २८) इति, तथाऽपि ते प्राधान्यात् प्रज्ञापराधजनितबाह्यवातादिरूक्षभोजनादिजन्यत्वेन तथाऽन्तरां वातादिजन्यत्वेन पृथक्त्वेनोच्यन्ते [1] ॥ ५१ ॥ ५२ ॥

**त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ५३ ॥**
**आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ।**
**प्राज्ञः प्रागेव तत् कुर्याद्धितं विद्याद्यदात्मनः ॥५४॥**

आगन्तुमानसपरिहारे [2] हेतुमाह—त्याग इत्यादि । इन्द्रियोपशमः इन्द्रियाणां स्वविषयेऽलम्पटत्वं, स्मृतिः पुत्रादीनां विनश्वरत्वस्वभावाद्यनुस्मरणं; यदुक्तम्—"स्मृत्वा स्वभावं भावानां स्मरन् दुःखाद्विमुच्यते" (शा. अ. १); एतच्च द्वयं मानसरोगप्रतिघातकम् । देशज्ञानाच्छून्यगृहाद्युपसर्गगृहीतदेशवर्जनादि भवति, कालज्ञानात् पौर्णमास्यादिवक्ष्यमाणभूताद्यभिघातकालादिवर्जनम् [3], आत्मज्ञानात् स्वशक्तिपर्यालोचनया प्रचरतो बलवदभिघातादिपरिवर्जनादि व्याख्येयम् । सद्वृत्तमिन्द्रियोपक्रमणीये वक्ष्यमाणम् । प्रागेवेति अनुत्पन्नेष्वेव रोगेषु ॥५३॥५४॥

**आप्तोपदेशप्रज्ञानं [4] प्रतिपत्तिश्च कारणम् ।**
**विकाराणामनुत्पत्तावुत्पन्नानां च शान्तये ॥ ५५ ॥**

अथ किं हितमित्याह—आप्तोपदेश इत्यादि । आप्ता ज्ञानवन्तो रागद्वेषरहिताः पुरुषाः, यद्वक्ष्यति—"रजस्तमोभ्यां निर्मुक्ताः" (सू. अ. ११) इत्यादि; प्रतिपत्तिरुपदिष्टार्थस्य सम्यगवबोधः; एतद्द्वयं कारणं विकाराणामनुत्पत्तौ हेतुवर्जनेन, उत्पन्नानां च शान्तये कारणं तच्चिकित्सानुष्ठानेनेत्यर्थः ॥ ५५ ॥

१ 'प्रपञ्चेनोच्यते' इति पा० । २ 'आगन्तुमूलकारणपरिहारे' इति पा० । ३ '०भिघातादिवर्जनम्' इति पा० । ४ 'आप्तोपदेशः प्रज्ञानं' इति पा० ।

**पापवृत्तवचःसत्त्वाः सूचकाः कलहप्रियाः ।**
**मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥ ५६ ॥**
**परापवादरतयश्चपला रिपुसेविनः [1] ।**
**निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ॥ ५७ ॥**
**बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः ।**
**वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥ ५८ ॥**
**सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः [2] ।**
**सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥ ५९ ॥**

आप्तोपदेशग्रहणार्थमनाप्तान् वर्ज्यान् पापवृत्तेत्यादिना, सेव्यांश्चाप्तान् बुद्धीत्यादिना दर्शयति । वृत्तं चेष्टितं शरीरव्यापारः, सत्त्वं मनः; एषां पापत्वं पापहेतुत्वात् । शठाः क्रूराः । निर्घृणा निष्कृपाः । बुद्ध्यादिभिर्वृद्धाः प्रभूतप्रशस्तबुद्ध्यादियुक्ता इत्यर्थः । गतव्यथा गतशोकादय इत्यर्थः । सुमुखाः प्रसन्नमुखाः । शंसितव्रताः कथितव्रताः ॥ ५६–५९ ॥

**आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।**
**परं प्रयत्नमातिष्ठेद्बुद्धिमान् हितसेवने ॥ ६० ॥**

आहाराचारचेष्टास्विति निर्धारणे सप्तमी, तेनाहाराचारचेष्टानां मध्ये यद्धितं तस्य सेवने प्रयत्नमातिष्ठेदिति फलति; आचारः शास्त्रविहितमनुष्ठानम् ॥ ६० ॥

**न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।**
**नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ ६१ ॥**
**ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।**
**प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः ॥६२॥**

दध्नोऽनेकप्रकारनिषिद्धत्वाद्दिङ्मात्रोदाहरणार्थं [3] दधिभोजनविधिमाह—न नक्तमित्यादि । अत्र न नक्तमित्यत्र नोष्णमित्यत्र च नकारः क्रियया संबध्यते, तेन निशि उष्णं दधि सर्वथैव न सेव्यम् । अघृतशर्करमित्यादौ च निषेधो नञा संबध्यते, तेनोभयप्रतिषेधात् सशर्करं भुञ्जीतेत्यादि वाक्यार्थो भवति । तेन घृतादीनां मध्येऽन्यतमसंबन्धेनापि दध्युपयोज्यं भवति । न नक्तमित्यादिवदिहापि नकारस्य क्रियासंबन्धे मुद्गसूपसहितस्याप्यघृतशर्करत्वमस्त्येव दध्न इत्यनुपादेयत्वं स्यात् । जतूकर्णे-

१ 'परनारीप्रवेशिनः' इति पा० । २ 'अवलम्बितनियमाः' इति पा० ।

३ "अस्याग्रे—"अलक्ष्मीदोषयुक्तत्वान्नक्तं तु दधि वर्जितम् ।
श्लेष्मलं स्यात् ससर्पिष्कं दधि मारुतसूदनम् ॥
न च सन्धुक्षयेत् पित्तमाहारं च विपाचयेत् ।
शर्करासंयुतं दद्यात्तृष्णादाहनिवारणम् ॥
मुद्गसूपेन संयुक्तं दद्याद्रक्तानिलापहम् ।
सुरसं चाल्पदोषं च क्षौद्रयुक्तं भवेद्दधि ॥
उष्णं पित्तास्रकृद्दोषान् धात्रीयुक्तं तु निर्हरेत् ॥"
इति क्वचिदधिकः पाठ उपलभ्यते ।

नापि घृतादीनां मिलितानामयोगाद्दध्यसेव्यमुक्तम्। यदुक्तं— "नाश्नीयाद्दधि नक्तमुष्णं वा न घृतमधुशर्करामुद्गामलकैर्विना वा" इति ॥ ६१–६२ ॥

तत्र श्लोकाः—

**वेगा वेगसमुत्थाश्च रोगास्तेषां च भेषजम्।**
**येषां वेगा विधार्याश्च यदर्थं यद्धिताहितम् ॥ ६३ ॥**
**उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः।**
**यथाप्रकृति चाहारो मलायनगदौषधम् ॥ ६४ ॥**
**भविष्यतामनुत्पत्तौ रोगाणामौषधं च यत्।**
**वर्ज्याः सेव्याश्च पुरुषा धीमताऽऽत्मसुखार्थिना ६५**
**विधिना दधि सेव्यं च येन यस्मात्तदत्रिजः।**
**नवेगान्धारणेऽध्याये सर्वमेवावदन्मुनिः ॥ ६६ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने नवेगान्धारणीयो नाम सप्तमोऽध्यायः ॥ ७ ॥**

अध्यायार्थसंग्रहे हिताहितमिति सेव्यासेव्यं व्यायामहास्यादि। भविष्यतामनुत्पत्तौ भेषजमिति माधवप्रथमे मासीत्यादिनोत्पन्नानां च शान्तय इत्यन्तेन ॥ ६३–६६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्य टीकायुर्वेददीपिकाख्यायां द्वितीये स्वस्थचतुष्के नवेगान्धारणीयो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

**अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

स्वस्थाधिकारे आहाराचारचेष्टासु परं प्रयत्नमातिष्ठेदित्युक्तं, तत्राहारचेष्टाः काश्चित् पूर्वाध्यायत्रयेण प्रतिपादिताः, तेनावशिष्टस्याचारस्याभिधानार्थं तथेन्द्रियमनसामतियोगायोगमिथ्यायोगपरिहाररूपचेष्टोपदर्शनार्थं चेन्द्रियोपक्रमणीयमाह। तत्रापि वक्ष्यमाणचेष्टाचारयोः प्रायेणेन्द्रियादिविषयत्वेनेन्द्रियादीन्येव तावदाह[1]। इन्द्रियस्योपक्रमणं व्याकर्तुमारम्भः, तमिन्द्रियोपक्रममिन्द्रियव्याकरणमधिकृत्य कृतोऽध्याय इन्द्रियोपक्रमणीयः ॥१॥२॥

**इह खलु पञ्चेन्द्रियाणि, पञ्चेन्द्रियद्रव्याणि, पञ्चेन्द्रियाधिष्ठानानि, पञ्चेन्द्रियार्थाः, पञ्चेन्द्रियबुद्धयो भवन्ति, इत्युक्तमिन्द्रियाधिकारे ॥ ३ ॥**

इहेति इह प्रकरणे पञ्चेन्द्रियाणि, तेन प्रकरणान्तरे दर्शनान्तरपरिग्रहेण वक्ष्यमाणैकादशेन्द्रियाभिधानेन समं न विरोधः; यतः सर्वपारिषदमिदं शास्त्रं, तेनायुर्वेदाविरुद्धवैशेषिकसांख्यादिदर्शनभेदेन विरुद्धार्थोऽभिधीयमानो न पूर्वापरविरोधमावहतीत्यर्थः। मनस्तु यद्यपि वैशेषिकमतेऽपीन्द्रियं, शास्त्रकारेणापि मधुररसप्रस्तावे "षडिन्द्रियप्रसादनः" (सू. अ. २६) इत्यभिधानादनुमतमेव, तथाऽपीह प्रकरणे चक्षुरादिभ्यो वक्ष्यमाणाधिकधर्मयोगितया नेन्द्रियत्वेन[1] पठितम्। इन्द्रियादीनि स्वयमेव व्याकरिष्यति—तत्र चक्षुरित्यादिना। इत्येतावदेवोक्तमिन्द्रियाधिकारे, 'पूर्वाचार्यैः' इति शेषः; एतेनान्यशास्त्रेऽपीन्द्रियाधिकारे एतावदेवोक्तमिति फलति ॥ ३ ॥

**अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं, 'चेतः' इत्याहुरेके, तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ॥ ४ ॥**

चक्षुरादिभ्यो विशिष्टेन धर्मेण मनो दर्शयति—अतीन्द्रियमित्यादि। अतिक्रान्तमिन्द्रियमतीन्द्रियं; चक्षुरादीनां यदिन्द्रियत्वं बाह्यज्ञानकारणत्वं, तदतिक्रान्तमित्यर्थः; यद्यपि मनोऽपि सुखादिज्ञानं प्रति कारणत्वेनेन्द्रियं, तथाऽपीन्द्रियचक्षुराद्यधिष्ठायकत्वविशेषादतीन्द्रियमित्युक्तं; यदि वाऽतीन्द्रियमिति चक्षुरादिभ्योऽप्यतीन्द्रियेभ्यः सूक्ष्मतरं, दुरवबोधात्। सत्त्वमित्येषा संज्ञा यस्य तत्तथा। चेत इत्याहुरेक इति परमतस्याप्रतिषेधात् स्वयमप्यनुमतम्। पर्यायकथनं शास्त्रे व्यवहारार्थम्। तदिति मनः, अर्थो[2] मनोऽर्थः, स च सुखादिश्चिन्त्यविचार्यादिश्च, आत्मा चेतनप्रतिसन्धाता, अनयोः सम्पत् तदर्थात्मसम्पत्, एतदायत्ता चेष्टा व्यापारो यस्य तत्तथा; तत्रार्थसम्पत् सुखादीनां सन्निकर्षश्चिन्त्यादीनामाभिमुख्यं च, आत्मसम्पदर्थग्रहणे प्रयत्नशालित्वं, मनश्चेष्टा च सुखादिज्ञानं तथा चिन्त्यचिन्तनादि तथा चक्षुरादीन्द्रियप्रेरणं च। इन्द्रियाणां चक्षुरादीनां या चेष्टा स्वविषयरूपादिज्ञानलक्षणा, तत्र प्रत्ययभूतं कारणभूतं मन इति योज्यम्। एतेनैतदुक्तं भवति—यदा सुखादयश्चिन्त्यादयोऽपि विषया भवन्त्याऽऽत्मा च प्रयत्नवान् भवति तदा मनः स्वविषये प्रवर्तते, इन्द्रियाणि चाधितिष्ठति, इन्द्रियाणि च मनोऽधिष्ठितान्येव स्वविषयज्ञाने प्रवर्तन्ते ॥ ४ ॥

**स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्वं, रजस्तमःसत्त्वगुणयोगाच्च; न चानेकत्वं, नह्येकं[3] ह्येककालमनेकेषु प्रवर्तते; तस्मान्नैककाला[4] सर्वेन्द्रियप्रवृत्तिः ॥ ५ ॥**

इदानीं तन्मन एकस्मिन् पुरुषे उपाधिभेदादनेकं परमार्थतस्त्वेकमिति दर्शयति—स्वार्थेत्यादि। सत्त्वं मनः। अनेकम् अनेकमिव, स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणात् तथा रजस्तमःसत्त्वगुणयोगाच्च। चकारः परस्परसमुच्चये। स्वार्थस्य मनोऽर्थस्य चिन्त्यस्य व्यभिचरणादेकं चिन्त्यमर्थं परित्यज्यान्यस्यार्थस्य ग्रहणादित्यर्थः; एतेनैतदुक्तं भवति—यदेकमेव मनो यदा

---

१ 'इन्द्रियादीन्येवादावाह' इति पा०।

१ 'नेन्द्रियमितीन्द्रियत्वेन न पठितम्' इति पा०। २ 'तस्यार्थो' इति पा०। ३ 'नाण्वेकं' इति पा०। ४ 'न चानेकं ह्येककालं प्रवर्तते' इति पा०।

धर्मं चिन्तयेत्तदा धर्मचिन्तकं, यदा धर्मं परित्यज्य तदेव कामं चिन्तयति तदा कामचिन्तकम्, इत्येवमादिना धर्मभेदेनाभिन्नमपि भिन्नमभिधीयते; एवमिन्द्रियार्थव्यभिचरणेऽपि यदा रूपं गृह्णाति तदा रूपग्राहकं, यदा गन्धं गृह्णाति तदा गन्धग्राहकमित्यादि वाच्यम्; एवं सङ्कल्पव्यभिचरणेऽपि व्याख्येयं, तत्र सङ्कल्पः प्रतिपन्नानां भावानामुपकारकं ममेदमपकारकं ममेदमिति वा गुणतो दोषतो वा कल्पनम्; एतद्व्यभिचरणे च कश्चिद्गुणकल्पकं कदाचिद्दोषकल्पकमिति मनोभेदो व्याख्येयः। तथा एकपुरुषे एकमेव मनो यदा बहुरजोयुक्तं भवति तदा क्रोधादिमद्भवति, यदा बहुतमोयुक्तं भवति तदाऽज्ञानभयादिमद्भवति, यदा सत्त्वयुक्तं भवति तदा सत्यशौचादियुक्तं भवति, ततश्चानेकमिव मनो भवति। तदेतत् प्रतिपादितमनेकत्वं परमार्थतो न भवतीत्याह—न चेत्यादि। न चानेकत्वं मनस इत्यर्थः। चकारादमहत्त्वं च मनस इति समुच्चिनोति। यदुक्तम्—"अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ"(शा.अ.१) इति। कुतो नानेकत्वमित्याह—न हीत्यादि। अनेकमेककालमनेकेषु प्रवर्तते; अनेकं यन्मनः देवदत्तयज्ञदत्तविष्णुमित्रेषु शरीरिषु दृष्टं तदेककालं युगपदनेकेषु रूपज्ञानशब्दज्ञानगन्धज्ञानेषु वर्तेते एवं दृष्टं, तद्यदि एकपुरुषेऽपि बहूनि मनांसि स्युस्तदा तान्यपि युगपदेकपुरुष एव रूपादिज्ञानेषु प्रवर्तेरन्, न तु प्रवर्तन्ते, तस्मादेकमेवैकपुरुषे मन इत्यर्थः। दीर्घां शष्कुलीं भक्षयतो युगपत् पञ्चज्ञानान्युत्पद्यन्त इति तु ज्ञानं युगपदुत्पलपत्रशतव्यक्तिभेदज्ञानवद्भ्रान्तम्। परमार्थतो युगपज्ज्ञानोत्पत्तौ हि सति विषयसन्निकर्षे सर्वदैव हि युगपज्ज्ञानानि स्युः। अत एव हि कारणान्महत्त्वमपि मनसो नास्ति, महत्त्वे हि सति युगपत्पञ्चेन्द्रियाधिष्ठानाज्ज्ञानोत्पत्तिः स्यात्, न च भवति, तस्मादेकमणु च मन इति। यस्माच्चैकपुरुषे एकं मनोऽणुपरिमाणं च, तस्मात् कारणाच्चैककाला सर्वेन्द्रियप्रवृत्तिः न युगपदिन्द्रियाणि स्वविषयोपलब्धौ प्रवर्तन्त इत्यर्थः। इन्द्रियाणि मनोऽधिष्ठितानि प्रवर्तन्ते, तेन यदा मनश्चक्षुरधितिष्ठति तदा न घ्राणादीनि, एवं यदा घ्राणमधितिष्ठति तदा न चक्षुरादीनि ॥ ५ ॥

**यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्त्वं तत्सत्त्वमेवोपदिशन्ति मुनयो बाहुल्यानुशयात् ॥ ६ ॥**

ननु यद्येकस्मिन्नेव पुरुषे कदाचिद्रजोयुक्तं कदाचित्तमोयुक्तं कदाचित् सत्त्वयुक्तं मनो भवति, तत् कथमयं सात्त्विकोऽयं राजस इत्यादिव्यपदेशो भवतीत्याह—यद्गुणमित्यादि। येन गुणेन सत्त्वादिना युक्तं यद्गुणम्, अभीक्ष्णं पुनः पुनः, सत्त्वं मनः, अनुवर्ततेऽनुबध्नाति, तत्सत्त्वं सात्त्विकं राजसं तामसं वा उपदिशन्ति, बाहुल्यानुशयात् भूरिसंबन्धादित्यर्थः। एतदुक्तं भवति—सत्यपि गुणान्तरान्वये[१] सत्त्वबाहुल्यात् सत्त्वकार्याणि सत्यशौचादीनि यस्य भवन्ति स 'सात्त्विक' इति व्यपदिश्यते; एवमपरेमपि[२] व्याख्येयम् ॥ ६ ॥

१ 'गुणान्तरोदये सत्त्वबाहुल्येन' इति पा०। २ 'एवमपरत्रापि' इति पा०।

**मनः पुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति ॥ ७ ॥**

उक्तं मनश्चेष्टाप्रत्ययभूतमिन्द्रियाणां[१] तद्व्याकरोति—मन इत्यादि। मनःपुरःसराणि मनोधिष्ठितानि ॥ ७ ॥

**तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि ॥ ८ ॥**

पञ्चेन्द्रियाणीत्युक्तं तद्विवृणोति—तत्र चक्षुरित्यादि। चष्टे[२] रूपं रूपवन्तं च प्रकाशयतीति चक्षुः। तच्चोभयनयगोलकाधिष्ठानमेकमेव। शृणोत्यनेनेति श्रोत्रम्। जिघ्रत्यनेनेति घ्राणम्। रसयत्यास्वादयत्यनेनेति रसनम्। स्पृशत्यनेनेति स्पर्शनम् ॥ ८ ॥

**पञ्चेन्द्रियद्रव्याणि—खं वायुर्ज्योतिरापो भूरिति ॥ ९ ॥**

इन्द्रियाणां प्राधान्येनारम्भकं द्रव्यमिन्द्रियद्रव्यम्; इन्द्रियेषु चक्षुरादौ निर्दिष्टं, प्राधान्यात्। यदुक्तं शालाक्ये—"श्रोत्रत्वक्घ्राणरसनैः श्रेष्ठैरपि समन्वितः[३]। वलवर्णाद्युपेतोऽपि नष्टदृक् कुब्जसन्निभः" इति। इन्द्रियद्रव्यनिर्देशे तु उदिततत्त्वेन[४] निर्देशः कृतो वक्ष्यमाणेन "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा" (शा. अ. १) इति ग्रन्थक्रमानुरोधेन ॥ ९ ॥

**पञ्चेन्द्रियाधिष्ठानानि—अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति ॥ १० ॥**

इन्द्रियाधिष्ठानमिन्द्रियाश्रयः। यद्यपि चाक्षिणी कर्णौ नासापुटे द्वे तथाऽप्येकेन्द्रियाधिष्ठानत्वेनैकमेवेति कृत्वा "पञ्च" इत्युक्तम् ॥ १० ॥

**पञ्चेन्द्रियार्थाः—शब्दस्पर्शरूपरसगन्धाः ॥ ११ ॥**

इन्द्रियार्था इन्द्रियविषयाः। अत्र च स्पर्शग्रहणेन स्पर्शस्य स्पर्शाश्रयस्य च द्रव्यस्य स्पर्शैकार्थसमवेतस्य च परिमाणादेः स्पर्शग्राह्यस्य ग्रहणम्। एवं रूपादिष्वपि वाच्यम् ॥ ११ ॥

**पञ्चेन्द्रियबुद्धयः—चक्षुर्बुद्ध्यादिकाः; ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः, क्षणिका, निश्चयात्मिकाश्च, इत्येतत् पञ्चपञ्चकम् ॥ १२ ॥**

असाधारणेन कारणेनेन्द्रियेण व्यपदिष्टा बुद्धय इन्द्रियबुद्धयः। चक्षुषा असाधारणेन कारणेन जनिता बुद्धिश्चक्षुर्बुद्धिः; एवं श्रोत्रादिबुद्धिषु वाच्यम्। इह चक्षुर्बुद्धिरादावुपदिश्यते, चक्षुर्बुद्धेरेव बहुविषयत्वात्। इन्द्रियबुद्ध्युत्पादसामग्रीमाह—ताः पुनरित्यादि। सन्निकर्षः संबन्धः; स च क्वचित् संयोगः, क्वचित् समवायः; तेन चक्षुर्बुद्ध्यादावात्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन; श्रोत्रबुद्धौ तु श्रोत्रशब्दयोः समवाय इति विशेषः। क्षणिका इति आशुतरविनाशिन्यः, न तु बौद्धसिद्धान्त-

१ हस्तलिखितपुस्तके 'मनः' इति नोपलभ्यते। २ 'चष्टे आचष्टे' इति पा०। ३ 'समर्थितः' इति पा०। ४ 'खादितत्वेन' इति पा०।

वदेकक्षणावस्थायिन्यः । निश्चयात्मिका वस्तुस्वरूपपरिच्छेदात्मिका । क्षणिकत्वेऽपि वस्तुपरिच्छेदकत्वं प्रदीपार्चिर्ज्वलनवद्बुद्धीनामविरुद्धमित्यर्थः ॥ १२ ॥

**मनो मनोर्थो बुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसंग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च, द्रव्याश्रितं च कर्म; यदुच्यते क्रियेति ॥ १३ ॥**

मनोर्थो वक्ष्यमाणो 'मनसस्तु चिन्त्यमर्थः' इत्यनेन । बुद्धिरिह मनोबुद्धिर्विवक्षिता, इन्द्रियबुद्धीनां पञ्चपञ्चकेनैव ग्रहणात् । आत्मानमधिकृत्याध्यात्मम्; आत्मानमधिकृत्य यानि द्रव्याणि ये च गुणाः, तेषां संग्रहोऽध्यात्मद्रव्यगुणसंग्रहः । तत्र गुणा रूपादिबुद्धयः, शेषं द्रव्यम् । एतदुक्तं भवति—आत्मनोऽपकारकोपकारकाणां द्रव्यगुणानामयं संग्रह इति । योऽयं संग्रहः शुभस्य धर्मस्य सुखस्य च प्रवृत्तौ हेतुर्भवति, अशुभस्याधर्मस्यासुखस्य च निवृत्तौ हेतुर्भवति; तत्रोक्तसंग्रहस्य सम्यग्योगः शुभस्य प्रवृत्तावशुभस्य निवृत्तौ हेतुर्भवति, अयोगातियोगमिथ्यायोगास्तु अशुभस्य प्रवृत्तौ हेतवः; यदि वा शुभस्य पूर्वव्याकृतस्य, अशुभस्य च पूर्वव्याकृतस्य प्रवृत्तेः संसारस्य, निवृत्तेर्मोक्षस्य यथोक्तसंग्रहो हेतुरिति व्याख्येयं; तत्र संग्रहस्य शुभाशुभहेतुत्वं पूर्ववदेव व्याख्येयं; दुर्ज्ञातस्तु संग्रहः संसारस्य हेतुर्भवति, तत्त्वतो ज्ञातस्तु मोक्षहेतुरिति व्याख्येयम् । अध्यात्मद्रव्यगुणादधिकमनुक्तं शुभादिहेतुमाह—द्रव्याश्रितं चेत्यादि । कर्मेत्युच्यमाने वमनादिष्वपि तथाऽऽस्यास्वप्रादिष्वपि कर्मशब्दवाच्येषु प्रसक्तिः स्यात्, अतस्तद्व्यावृत्त्यर्थं द्रव्याश्रितमिति पदं; तथाऽपि धर्माधर्मयोः कर्मशब्दवाच्ययोः प्रसक्तिः स्यादित्यत उक्तं—यदुच्यते क्रियेति । कर्मणः पृथक्कृत्वाऽभिधानं पञ्चकर्मादिषु कर्मणोऽप्रविष्टत्वात् ॥ १३ ॥

**तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां तेजश्चक्षुषि, खं श्रोत्रे, घ्राणे क्षितिः, आपो रसने, स्पर्शनेऽनिलो विशेषेणोपपद्यते । तत्र यद्यदात्मकमिन्द्रियं विशेषात्तत्तदात्मकमेवार्थमनुगृह्णाति, तत्स्वभावाद्विभुत्वाच्च ॥ १४ ॥**

संप्रति वैद्यकसिद्धान्तेन पाञ्चभौतिकानामपि चक्षुरादीनां यथा तैजसत्वादिव्यपदेशो भवति तदाह—तत्रेत्यादि । अनुमानेन प्रतीयन्त इत्यनुमानगम्यानि; अनुमानं च—चक्षुर्बुद्ध्यादयः करणकार्याः, क्रियात्वात्; छिदिक्रियावत् । महाभूतानि खादीनि, तेषां विकारः परिणामविशेषः, समुदायो मेलकः, स आत्मा समवायिकारणं येषां तानि । विशेषेण अधिकत्वेन । एतदुक्तं भवति—पाञ्चभौतिकत्वेऽपि तेजोधिकत्वाच्चक्षुस्तैजसं व्यपदिश्यते; एवं घ्राणादिष्वपि पृथिव्याद्यधिकत्वेन पार्थिवत्वादिव्यपदेशः । अथ कथं चक्षुस्तेजोधिकं, घ्राणं पृथिव्यधिकमित्याद्यवधार्यत इत्याह—तत्रेत्यादि । यदिन्द्रियं विशेषाद्भूयस्त्वेन यदात्मकं यद्भूतारब्धं, तदिन्द्रियं तदात्मकमेव तद्भूतात्मकमेव, अर्थं विषयमनुगृह्णाति अनुधावति; यत्तेजःप्रधानं तत्तेजःप्रधानमेव विषयं गृह्णातीत्यर्थः, एवं पार्थिवादिष्वपि वाच्यम् । तत्र हेतुमाह—तत्स्वभावाद्विभुत्वाच्च । तत्स्वभावादिति आग्नेयानां रूपादीनां यः स्वभावस्तैजसत्वादिः, चक्षुरादीनामपि तत्स्वभावादेवेत्यर्थः; विभुत्वादिति शक्तत्वात्, समानजातीयतैजसादिग्रहण एव चक्षुरादीनां शक्तत्वादित्यर्थः । तदनेन प्रन्थेनैतदनुमानमुपदिश्यते—यत्-चक्षुस्तैजसं, रूपादीनां मध्ये रूपस्यैव प्रकाशकत्वाद्ग्राह्यालोकवत्; रसनमाप्यं, रूपादीनां मध्ये रसस्यैव प्रकाशकत्वाद्दन्तोदकवत्; तथा गन्धः स्वजातीयगुणोत्कर्षवदिन्द्रियग्राह्यः, भूतविशेषगुणत्वाद्रूपवदित्यादि ॥ १४ ॥

**तदर्थातियोगायोगमिथ्यायोगात् समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वं बुद्ध्युपघाताय संपद्यते, सामर्थ्ययोगात् पुनः प्रकृतिमापद्यमानं यथास्वं बुद्धिमाप्याययति ॥ १५ ॥**

शुभाशुभप्रवृत्तिहेतुरिति यदुक्तं तदुपपादयति—तदर्थेत्यादि । तत् इन्द्रियम्, अर्थस्य रूपादेरतियोगो रूपाद्यतिदर्शनम्, अयोगो हीनमात्ररूपादिदर्शनं सर्वशो रूपाद्यदर्शनं च, मिथ्यायोगो विकृतबीभत्सरूपादिदर्शनम् । समनस्कं मनसा सहितं, विकृतिं विकारमापद्यमानं; समनस्कमिति विशेषणं कुर्वन् चक्षुराद्युपघातान्मनसोऽप्युद्धिमत्वदैन्यादिलक्षणो विकारो भवतीति दर्शयति । यथास्वं या यस्यात्मीया बुद्धिः । सामर्थ्ययोगात् समयोगात् । पुनःशब्दः पूर्वपक्षाद्यावर्तयति । प्रकृतिं स्वभावम्, आपद्यमानम् अनुविधीयमानम्; 'इन्द्रियम्' इति शेषः । यथास्वं बुद्धिमाप्याययतीति आत्मीयामात्मीयां बुद्धिं सातत्येन जनयतीत्यर्थः ॥१५॥

**मनसस्तु चिन्त्यमर्थः । तत्र मनसो मनोबुद्धेश्च त एव समानातिहीनमिथ्यायोगाः प्रकृतिविकृतिहेतवो भवन्ति ॥ १६ ॥**

पूर्वं मन उक्तं, तस्य ग्राह्यं विषयमाह—मनसस्तु चिन्त्यमर्थ इति । इन्द्रियनिरपेक्षं मनो यद्गृह्णाति तच्चिन्त्यं (यदि वा, इन्द्रियगृहीतमेवार्थं यत् पुनरिन्द्रियनिरपेक्षं मनो गृह्णाति तच्चिन्त्यम्) । एतच्च प्राधान्यादुक्तं; तेन मनोर्थानां सुखादीनामनुपादानं दोषत्वेन नैवोद्भावनीयम् । त एवेत्यादि मनोविषयस्य चिन्त्यस्य समयोगस्तथाऽतिहीनमिथ्यायोगाश्च । प्रकृतिः अविकारः स्वभाव इति यावत्; विकृतिः विकारः । तत्र चिन्त्यस्य सम्यग्योगो मनसो मनोबुद्धेश्च प्रकृतिहेतुर्भवति, अतियोगादयस्तु चिन्त्यस्यैव मनसो मनोबुद्धेश्च चिन्तन-

१ 'वस्तुस्वरूपविच्छेदात्मिका' इति पा० । २ 'प्रदोपार्चिर्वत्' इति पा० । ३ 'शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च द्रव्याश्रितं कर्म यदुच्यते सा क्रियेति' इति योगीन्द्रनाथसेनसंमतः पाठः ।

१ 'समयोगात्' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ३ अस्याग्रे 'मनसा समं' इति हस्तलिखितपुस्तकेऽधिकं पठ्यते ।

ध्यानादिलक्षणाया विकृतेर्हेतवो भवन्तीति वाच्यम्। अचिन्तनातिचिन्तनभयानकचिन्तनैर्मनोऽपि विकृतं मनोबुद्धिमपि विकृतां जनयतीति भावः ॥ १६ ॥

**तत्रेन्द्रियाणां समनस्कानामनुपतप्तानामनुपतापाय प्रकृतिभावे प्रयतितव्यमेभिर्हेतुभिः; तद्यथा—सात्म्येन्द्रियार्थसंयोगेन बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्मणां सम्यक् प्रतिपादनेन, देशकालात्मगुणविपरीतोपासनेन चेति। तस्मादात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् ॥ १७ ॥**

तदीदृशे कर्तव्यमाह—तत्रेत्यादि। अनुपतापाय अनुपघाताय; उपघातकहेतुवर्जनेनेत्यभिप्रायः। प्रकृतिभावे निर्विकारत्वकरणे; भेषजोपयोगेनेत्यभिप्रायः। सात्म्येन्द्रियार्थसंयोगेनेति इन्द्रियार्थसमयोगेन। बुद्ध्या सम्यगिदं मम हितमिदं ममाहितमित्यवेक्ष्यावेक्ष्य। कर्मणां प्रवृत्तीनां सम्यक्प्रतिपादनेनेति अहितकर्मपरित्यागेन हितकर्माचरणेन च। एतेन प्रज्ञापराधमूलाहितप्रवृत्तिनिषेधेन हितार्थप्रवृत्त्युपदेशः कृतो भवति। एतेन चासात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिहाराभ्यामनागताबाधप्रतिषेधरूपा चेष्टोक्ता भवति। उत्पन्नविकारप्रतिषेधोपायस्तु देशकालेत्यादिना कथ्यते; गुणशब्दः प्रत्येकमभिसंबध्यते, आत्मशब्देन प्रकृतिविकारयोर्ग्रहणम्। तस्मात् कर्मणां क्रियारूपाणां शास्त्रविहितत्वेन[2] प्रतिपादितानां सम्यगनुष्ठानमारोग्यहेतुः। तच्च कर्म हितं सद्वृत्तानुष्ठानरूपम्। तस्मात् कारणादात्महितं कर्तुमिच्छता, स्मृतिमास्थायावधानेन सद्वृत्तोपदेशं स्मृत्वेत्यर्थः, सतां वृत्तमनुष्ठानं देहवाङ्मनःप्रवृत्तिरूपं सद्वृत्तमनुष्ठेयम्। इह जन्मनि जन्मान्तरे च शान्तिशौचाचारादियोगजनितधर्मप्रभावात्त्रिवर्गमव्याकुलमुपयुञ्जानास्तिष्ठन्तीति 'सन्त' इत्युच्यन्ते, अधार्मिकास्तु विद्यमाना अप्यप्रशस्तावस्थानत्वेन। 'असन्त' इत्युच्यन्ते ॥ १७ ॥

**तद्ध्यनुतिष्ठन्[3] युगपत् संपादयत्यर्थद्वयमारोग्यमिन्द्रियविजयं चेति; तत् सद्वृत्तमखिलेनोपदेक्ष्यामोऽग्निवेश[4]! तद्यथा—देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत्, अग्निमुपचरेत्, ओषधीः प्रशस्ता धारयेत्, द्वौ कालावुपस्पृशेत्, मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्, त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्, नित्यमनुपहतवासाः[5] सुमनाः सुगन्धिः स्यात्[6], साधुवेशः, प्रसिद्धकेशः[7], मूर्धश्रोत्रघ्राणपादतैलनित्यः, धूमपः, पूर्वाभिभाषी, सुमुखः, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्ता, बलीनामुपहर्ता, अतिथीनां पूजकः, पितृभ्यः पिण्डदः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्ष्युः, फले नेर्ष्युः, निश्चिन्तः, निर्भीकः, ह्रीमान्, धीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्मिकः, आस्तिकः, विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्याणामुपासिता[1], छत्री दण्डी मौली[2] सोपानत्को युगमात्रदृग्विचरेत्[3], मङ्गलाचारशीलः, कुचेलास्थिकण्टकामेध्यकेशतुषोत्कररभस्मकपालस्नानबलिभूमीनां परिहर्ता, प्राक् श्रमाद् व्यायामवर्जी स्यात्, सर्वप्राणिषु बन्धुभूतः स्यात्, क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसंधः, सामप्रधानः[4], परपरुषवचनसहिष्णुः, अमर्षघ्नः, प्रशमगुणदर्शी, रागद्वेषहेतूनां हन्ता च ॥ १८ ॥**

सद्वृत्तानुष्ठानं दर्शयति—तदित्यादि। सद्वृत्तानुष्ठानेन नान्यश्रियमभिलषेदित्याद्यनुष्ठानेनेन्द्रियं यद्यते, यन्त्रणाभ्यासात्तदिन्द्रियं जीयत इत्युक्तमिन्द्रियविजयं चेति; यस्मादेवं गुणं सद्वृत्तानुष्ठानं तत् तस्मात् सद्वृत्तमुपदेक्ष्यामः; अखिलेन कार्त्स्न्येन। द्वौ कालौ सायं प्रातः, उपस्पृशेत् स्नायात्; यदि वा उपस्पृशेत् सन्ध्यामुपासीत। त्रिः पक्षस्येति पञ्चभिः पञ्चभिर्दिनैः, यदि वा क्षारपाणिवचनप्रामाण्यात् पक्षशब्दोऽयं मासे वर्तते, पतति पञ्चदशाहाभ्यां पक्षरूपाभ्यां मास इति पञ्चदशाहः पक्षोऽभिधीयते, एवं पतति ऋतुर्मासाभ्यां पक्षरूपाभ्यामिति मासोऽपि पक्षाभिधेयः; उक्तं च क्षारपाणौ—"त्रिर्मासस्य रोमनखान् संहारयेत्" इति। अनुपहतवासा अम्लानवासाः। प्रसिद्धकेशः प्रसाधितकेशः; इह केशप्रसाधनाभिधानात् पूर्वं केशसंहरणे वचनं तीर्थादिप्राप्तनिमित्तेन कृतमुण्डनस्नातकादिविषयम्। पूर्वाभिभाषी प्रथमसंभाषणशीलः। दुर्गेष्वभ्युपपत्ता दुर्गतिपतितानां रक्षिता। यष्टा यज्ञकारकः। वश्यात्मा वश्येन्द्रियः, आत्मशब्दोऽयमिन्द्रियवचनः। हेतावीर्ष्युरिति येन हेतुनाऽयं धनवान् विद्यावान् वा जातः स हेतुर्मे कथं भवेदिति प्रयत्नवता भवितव्यमिति दर्शयति। फले नेर्ष्युरित्यनेन परस्य न धनादिफलसंबन्धनिवारणेच्छा कर्तव्येति दर्शयति। निर्भीक इति उपस्थितेऽपरिहार्ये भयहेतौ बोद्धव्यं, शक्यपरिहारेषु तु दृष्टादृष्टप्रत्यवायहेतुषु भेतव्यमेव। अभिजनो विशुद्धकुलम्। सर्वप्राणिषु बन्धुभूत इति तु यद्यपि राजद्विष्टपतितादीनामधर्मभयाच्चिकित्सां न करोति, तथाऽपि तेष्वपि करुणार्द्रहृदयत्वेन मन्तव्यम्। अभ्युपपत्ता उपकारार्थं स्वीकर्ता। सत्यसन्धः प्रतिज्ञातार्थनिर्वाहकः।

१ '०विपरीतोपसेवनेन' इति पा०। २ 'शास्त्रे हितत्वेन' इति पा०। ३ 'तद्ध्यनुष्ठानं' इति पा०। ४ 'अग्निवेश' इति न पठ्यते क्वचित्पुस्तके। ५ 'नित्यमहतवासाः' इति पा०। ६ योगीन्द्रनाथसेनस्तु 'सुमनःसुगन्धिः स्यात्' इति पठति, 'सुमनोभिः पुष्पैः पुष्पस्रजेत्यर्थः, सुगन्धिः स्यात्' इति च व्याख्यानयति। ७ 'प्रसाधितकेशः' इति पा०।

१ 'विनयबुद्धिविद्याभिजनवतामुपासिता' इति पा०। २ 'मौलिमान्' इति, 'मौनी' इति च पा०। ३ 'नक्तं युगमात्रदृग्विचरेत्' इति पा०। ४ 'शमप्रधानः' इति पा०। ५ 'अहतवासा अच्छिन्नवासाः' इति पा०।

अमर्षः अक्षमा, तां हन्तीति अमर्षघ्नः । प्रशमं शान्ति गुणत्वेन द्रष्टुं शीलं यस्य स प्रशमगुणदर्शी ॥ १८ ॥

नानृतं ब्रूयात्, नान्यस्वमाददीत, नान्यस्त्रियमभिलषेन्नान्यश्रियं, न वैरं रोचयेत्, न कुर्यात् पापं, न पापेऽपि पापी स्यात्, नान्यदोषान् ब्रूयात्, नान्यरहस्यमागमयेत्, नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः, न दुष्टयानान्यारोहेत, न जानुसमं कठिनमासनमध्यासीत, नानास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत, न गिरिविषममस्तकेष्वनुचरेत्, न द्रुममारोहेत्, न जलोग्रवेगमवगाहेत, न कुलच्छायामुपासीत, नाग्न्युत्पातमभितश्चरेत्, नोच्चैर्हसेत्, न शब्दवन्तं मारुतं मुञ्चेत्, नानावृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्, न नासिकां कुष्णीयात्, न दन्तान् विघट्टयेत्, न नखान् वादयेत्, नास्थीन्यभिहन्यात्, न भूमिं विलिखेत्, न छिन्द्यात्तृणं, न लोष्टं मृद्नीयात्, न विगुणमङ्गैश्चेष्टेत, ज्योतींष्यनिष्टममेध्यमशस्तं च नाभिवीक्षेत, न हुंकुर्याच्छवं, न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्, न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानाघातनान्यासेवेत, नैकः शून्यगृहं न चाटवीमनुप्रविशेत्, न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत, नोत्तमैर्विरुध्येत, नावरानुपासीत, न जिह्मं रोचयेत्, नानार्यमाश्रयेत्, न भयमुत्पादयेत्, न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत, नोर्ध्वजानुश्चिरं तिष्ठेत्, न व्यालानुपसर्पेन्न दंष्ट्रिणो न विषाणिनः, पुरोवातातपावश्यायातिप्रवातान्जह्यात्, कलिं नारभेत, नासुनिभृतोऽग्निमुपासीत नोच्छिष्टः, नाधः कृत्वा प्रतापयेत्, नाविगतक्लमो नानाप्लुतवदनो न नग्न उपस्पृशेत्, न स्नानशाट्या स्पृशेदुत्तमाङ्गं, न केशाग्राण्यभिहन्यात्, नोपस्पृश्य ते एव वाससी बिभृयात्, नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्, न पूज्यमङ्गलान्यपसव्यं गच्छेन्नेतराण्यनुदक्षिणम् ॥ १९ ॥

१ 'पापः' इति पा० । २ योगीन्द्रनाथसेनस्तु 'नाजानुसमं कठिनमासनमध्यासीत' इति पठति,'जानुप्रमाणोत्सेधं जानुसमं तादृशं न भवतीति अजानुसमं; कठिनम् अनास्तृतोत्तरप्रच्छदम्, आसनं पीठादिकं नाध्यासीत' इति च व्याख्यानयति। ३ 'सत्कुलोत्पन्नानां स्ववंशोत्पन्नानां वा छायां नोपासीत, पश्चामिति शेषः' इति गङ्गाधरः। योगीन्द्रनाथसेनस्तु 'कूलच्छायां' इति पठित्वा कूलस्य (नदीतटस्य) छायां नोपसेवेत, तत्र तिष्ठतस्तत्पातात् भयं स्यात्' इति च व्याख्यानयति । ४ 'नासंवृतमुखः' इति पा० । ५ 'ज्योतींष्यनिष्टमशस्तं च' इति पा० । 'ज्योतींष्यग्निं चामेध्यमशस्तं च' इति गङ्गाधरसंमतः पाठः। ६ 'शिवं' इति पा० । ७ 'ॱघातनाॱ' इति पा० । ८ 'नानिभृतो' इति पा० ।

नानृतं ब्रूयादित्यस्य राजयक्ष्मणि "काकोक्तिस्तित्तिरियूषेन" (चि. अ. ८) इत्याद्ययथाभाषणोपदेशेन विरोधो न वाच्यः,यतः परापकारफलमसत्यभाषणमनृतत्वाहारदोषेण स्पृश्यते, न तु परस्य जीवनार्थमन्यथाभाषणम्; उक्तं च—"प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि" । आगमयेत् बुध्येत। अधार्मिकसङ्गनिषेधेनैव पतितादिसङ्गनिषेधे लब्धे पुनस्तदभिधानं विशेषप्रतिषेधार्थम् । भ्रूणहा गर्भघातकः । अनुपहितम् अनुपधानं गण्डकादिरहितम् । न द्रुममारोहेदिति सामान्यो विधिः, अस्य च विशेषेण रसायनवक्ष्यमाणामलकीवृक्षारोहणोपदेशेन महाफलेन बाधा भवत्येव । कुष्णीयात् विघट्टयेत् । इह सद्वृत्तोपदेशे यत्र न नखान् वादयेदित्यादौ साक्षाद्दृष्टमदृष्टं वा फलं न दृश्यते तत्राप्यदृष्टफलं वचनप्रामाण्यादेव बोद्धव्यम् । न शवं हुंकुर्यादित्यत्रागमः—"यः शवं हुंकरोति तेन सोमो बहिर्निरस्तो भवति" इति । चैत्यो ग्रामप्रधानतरुः, आघातनं वधस्थानम् । अवरा नीचाः । जिह्मं कुटिलम् । आराद्दूरात् पापेभ्यो यात आर्यः, तद्विपरीतोऽनार्यः । अतिशब्दः स्वप्नादिभिः सह प्रत्येकमभिसंबध्यते । इह च प्रकरणे साहसनक्तदधिभोजनादीनां येषां प्रकरणान्तर एव निषेधः कृतस्तानि पुनर्निषिध्यन्ते प्रकरणवशादेव, प्रकरणप्राप्तो ह्यर्थः प्रागुक्तोऽपि पुनरभिधीयमानः प्रकृतग्रन्थस्य न्यूनतामुदस्यति, पुनरभिधीयमानार्थगौरवं च दर्शयति, न पुनरुक्तदोषमावहति । यदुक्तम्—"अधिकरणवशाद्वाक्याद्गुणदोषप्राप्तितोऽर्थसंबन्धात् । स्तुत्यर्थं संशयतः शिष्यधियां चाभिवृद्ध्यर्थम् ॥ तन्त्रे स्यात् पुनरुक्तं पुनरुक्तं नेष्यते तद्धि" इति । ऊर्ध्वजानुः दण्डायमानः । व्यालाः सर्पाः । असुनिभृतः असमाहितः, नाधःकृत्वा अग्निमिति संबन्धः । ते एव वाससी स्नानवासःसीत्यर्थः, यदि वा स्नानकालात् पूर्वं धृते । अपसव्यं वामम् ॥१९॥

नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न विमना नाभक्ताशिष्टाशुचिक्षुधितपरिचरो न पात्रीष्वमेध्यासु नादेशे नाकाले नाकीर्णे नादत्त्वाऽग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन्न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत, न पर्युषितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः, नाशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तुसर्पिर्भ्यः, न नक्तं दधि भुञ्जीत, न सक्तूनेकानश्नीयान्न निशि न भुक्त्वा न बहून्न द्विर्नोदकान्तरितान्, न छित्त्वा द्विजैर्भक्षयेत् ॥२०॥

१ 'अयथार्थभाषणोपदेशेन' इति पा० । २ 'तन्त्रेऽस्मिन् पुनरुक्तं' इति पा० ।

अनिरूप्य अनिवेद्य । आकीर्णे बहुजनाकीर्णे । अन्नस्य प्रोक्षणाभिमन्त्रणानि वेदे बोद्धव्यानि । कुत्सितं स्वरूपत एव कदर्थत्वेन निन्दितम् । हरितकम् आर्द्रकादि, शुष्कशाकं शुष्कपत्रादि, भक्ष्या मोदकादयः । नाशेषभुक् स्यात् निःशेषभोजी न स्यादित्यर्थः । नक्तं दधिभोजननिषेधे आगमः—"दिवा कपित्थे वसति रात्रौ दध्नि च सक्तुषु । अलक्ष्मीः कलहाधारा कोविदारे कृतालया" इति । एकानिति घृतशर्करारहितान् । नोदकान्तरितान् नोदकमन्तरा पीत्वेत्यर्थः ॥ २० ॥

**नानृजुः क्षुयान्नाद्यान्न शयीत, न वेगितोऽन्यकार्यः स्यात्, न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविका(वात)वर्चोमूत्राण्युत्सृजेत्, न पन्थानमवमूत्रयेन्न जनवति नान्नकाले, न जपहोमाध्ययनबलिमङ्गलक्रियासु श्लेष्मसिङ्घाणकं मुञ्चेत् ॥ २१ ॥**

नाद्यादनृजुः, न शयीतानृजुरिति च योज्यम् ॥ २१ ॥

**न स्त्रियमवजानीत, नातिविश्रम्भयेत्, न गुह्यमनुश्रावयेत्, नाधिकुर्यात् । न रजस्वलां नातुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथोपवनश्मशानाघातनसलिलौषधिद्विजगुरुसुरालयेषु न सन्ध्ययोर्नातिथिषु[१] नाशुचिर्नाजग्धभेषजो नाप्रणीतसङ्कल्पो नानुपस्थितप्रहर्षो नाभुक्तवान्नात्यशितो न विषमस्थो न मूत्रोच्चारपीडितो न श्रमव्यायामोपवासक्लमाभिहतो नारहसि व्यवायं गच्छेत् ॥ २२ ॥**

नातिविश्रम्भयेत् नातिप्रश्रयवतीं कुर्यात् । नाधिकुर्यान्न सर्वत्राधिकृतां कुर्यात् । अशस्तां कुष्ठादिसंबन्धेन । नान्ययोनिमित्यस्यान्ते 'अभिगच्छेत्' इति शेषः, अन्ययोनिः असवर्णा । ओषध्यादिभिरालयशब्दः संबध्यते । नातिथिष्विति न निषिद्धासु मैथुनं प्रतिपत्पूर्णिमाप्रभृतिषु । अजग्धभेषजः अनुपयुक्तवृष्यभेषजः । अनुपस्थितप्रहर्षः अजातध्वजोच्छ्रायः । अरहसि अविजने ॥२२॥

**न सतो न गुरून् परिवदेत्, नाशुचिरभिचारकर्मचैत्यपूज्यपूजाध्ययनमभिनिर्वर्तयेत् ॥ २३ ॥**

**न विद्युत्स्वनार्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने न नष्टचन्द्रायां तिथौ न सन्ध्ययोर्नामुखाद्गुरोर्नावपतितं नातिमात्रं न तान्तं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीबं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत् ॥ २४ ॥**

अभ्युदितासु दिक्षु दाहवतीषु दिक्षु । महाग्रहोपगमनं चन्द्रसूर्यग्रहणम् । अवपतितं हीनवर्णम् । तान्तं रूक्षस्वरम् । अतिक्लीबम् अतिविलम्बितोच्चारणम् ॥ २३ ॥ २४ ॥

१ 'नाति, न निषिद्धतिथिषु' इति पा० ।

**नातिसमयं जह्यात्, न नियमं भिन्द्यात्, न नक्तं नादेशे चरेत्, न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्, न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्यात्, न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात्, न गुह्यं विवृणुयात्, न कञ्चिदवजानीयात्, नाहंमानी स्यान्नादक्षो नादक्षिणो[१] नासूयकः, न ब्राह्मणान् परिवदेत्, न गवां दण्डमुद्यच्छेत्, न वृद्धान्न गुरून्न गणान्न नृपान् वाऽधिक्षिपेत्, न चातिब्रूयात्, न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिष्कुर्यात् २५**

अतिसमयो मिलित्वा बहुभिः कृतो नियमः । न सन्ध्याखिलादौ पुनः स्त्रीनिषेधः सन्ध्यासु यावदकर्तव्यस्य न्यूनतापरिहारार्थमुक्तः, पूर्वं तु स्त्री यथा न सेव्या तन्निखिलेनोपदिशता न सन्ध्ययोरित्युक्तम्, इति प्रकरणभेदान्न पौनरुक्त्यम् । क्लीबो हीनसत्त्वः । क्लिष्टो निन्दितो रोगादिना । गणान् मिलितान् । कृच्छ्रद्वितीय आपदि सहायः । बहिष्कुर्यात् अवजानीयात् ॥ २५ ॥

**नाधीरो नात्युच्छ्रितसत्त्वः स्यात्, नाभृतभृत्यः, नाविश्रब्धस्वजनः, नैकः सुखी, न दुःखशीलाचारोपचारः, न सर्वविश्रम्भी, न सर्वाभिशङ्की, न सर्वकालविचारी ॥ २६ ॥**

नैकः सुखी स्यादिति न सुखहेतून्याम्रफलादीन्येक एवाविभज्योपयुञ्ज्यादित्यर्थः । शीलं स्वाभाविकं वृत्तम्, आचारः शास्त्रोपदेशानुरूपो व्यवहारः, उपचारः परिच्छदः, एतेषां च दुःखत्वं दुःखहेतुत्वात् । सर्वविश्रम्भी सर्वेषु विश्वासी ॥ २६ ॥

**न कार्यकालमतिपातयेत्, नापरीक्षितमभिनिविशेत्, नेन्द्रियवशगः स्यात्, न चञ्चलं मनोऽनुभ्रामयेत्, न बुद्धीन्द्रियाणामतिभारमादध्यात्, न चातिदीर्घसूत्री स्यात्, न क्रोधहर्षावनुविदध्यात्, न शोकमनुवसेत्, न सिद्धावुत्सेकं[२] यच्छेन्नासिद्धौ दैन्यं, प्रकृतिमभीक्ष्णं स्मरेत्, हेतुप्रभावनिश्चितः स्याद्धेत्वारम्भनित्यश्च, न कृतमित्याश्वसेत्, न वीर्यं जह्यात्, नापवादमनुस्मरेत् ॥ २७ ॥**

चञ्चलमिति क्रियाविशेषणं, यदि वा मनोविशेषणम् । बुद्धेरिन्द्रियाणां बुद्धीन्द्रियाणाम् । अतिदीर्घसूत्री शतैकविनिपाताशङ्की, किंवा दीर्घसूत्री चिरक्रियः । न शोकमनुवसेदिति न चिरं शोकवशगः स्यात् । उत्सेकम् अतिगर्वम्[३] । प्रकृतिम् उत्पत्तिकारणं स्मरेत्; प्रकृतिं पञ्चभूतसमुदायलक्षणामनित्यां स्मरन्न रागद्वेषादिभिरभिभूयते । हेतुप्रभावनिश्चित इति अस्ति शुभाशुभहेतूनां शुभाशुभफलसंबन्ध इति निश्चयमुपेयात्, नात्र कथं तावान् स्यादित्यर्थः । हेत्वारम्भनित्यः शुभहेतुयो(या)गाद्यारम्भपरः ॥ २७ ॥

१ 'दक्षिणान्' इति पा० । २ 'औत्सुक्यं' इति पा० । ३ 'अतिहर्षम्' इति पा० ।

नाशुचिरुत्तमाज्याक्षततिलकुशसर्षपैरग्निं जुहुयादात्मानमाशीर्भिराशासानः, अग्निर्मे नापगच्छेच्छरीराद्वायुर्मे प्राणानादधातु विष्णुर्मे बलमादधातु इन्द्रो मे वीर्यं शिवा मां प्रविशन्त्वाप आपोहिष्ठेत्यपः स्पृशेत्, द्विः परिमृज्योष्ठौ पादौ चाभ्युक्ष्य मूर्धनि खानि चोपस्पृशेदद्भिरात्मानं हृदयं शिरश्च ॥ २८ ॥

उत्तमाज्यं गोसर्पिः। आशीर्भिराशासान इति च्छेदः। 'अग्निर्मे' इत्यादिना 'आपोहिष्ठा' इत्यन्तः स्नानमन्त्रः ॥ २८ ॥

ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति ॥ २९ ॥

मैत्री सर्वभूतेष्वात्मनीवाप्रतिकूला प्रवृत्तिः। ननु मैत्रीपरः स्यादिति विरुद्धमेतत्, येन शास्त्रकार एवायं दिग्धविद्धस्वयंमृतादिमांसपरित्यागेन वयस्थत्वादिगुणयुक्तानां मृगादीनां सद्यस्कं मांसं सेव्यत्वेनोपदिशन् साक्षान्मैत्रीविरुद्धां हिंसामेवाह; नैवं, रागत एव प्राणिनां हिंसापूर्वकमांसभक्षणे प्राप्तेऽयमायुर्वेदोपदेष्टा मांसस्य क्वचिद्रोगे कस्यचिद्धितत्वं क्वचिच्चाहितत्वमुपदिशति, नतु मांसभक्षणं हिंसां वा विदधाति; न ह्ययं मदिराया अपि स्वस्थवृत्ते रोगिवृत्ते वा हितत्वमुपदिशन् मदिरापानं प्रत्युपदेष्टा भवति; एवं च रोगाधिकारे राजयक्ष्मादौ मांसोपदेशस्तथा शरदृतुचर्यादौ "लावान् कपिञ्जलानेणान्" (सू. अ. ६) इत्यादिग्रन्थो लावादिमांसहितत्वोपदेशार्थो न हिंसाविधायकः; तेन रोगिणः स्वस्थाश्च हिंसाफलभाजो भवन्त्येव; यथा— "श्येनेनाभिचरन् यजेत" इत्यत्राभिचारस्य कामत एव प्राप्तत्वाच्छ्येनस्याभिचारसाधनत्वमात्रमेव विधिर्ब्रूते, तेन श्येनेनाभिचारकरणेऽधर्मो भवत्येव; अयं त्वत्र विशेषः—यदि हिंसोपार्जितमांसोपयोगं विना पुरुषो न जीवति, अतो हिंसां करोति, तदा "सर्वत्रात्मानं गोपायीत" इति वेदवचनविहितत्वात्तथाविधहिंसा न प्रत्यवायहेतुः, जीवनोपायान्तरसंभवे तु पुष्ट्यादिप्रयोजना हिंसा प्रत्यवायहेतुरेव; किंच भवतु वाऽऽयुर्वेदविहिता हिंसा, तथाऽपि हिंसा दोषार्थमुच्यते; न ह्यायुर्वेदविधयो धर्मसाधनमेवोपदिशन्ति, किं तर्ह्यारोग्यसाधनं "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" (सू. अ. १) इत्युक्तेः ॥ २९ ॥

तत्र श्लोकाः—

पञ्चपञ्चकमुद्दिष्टं मनो हेतुचतुष्टयम्।
इन्द्रियोपक्रमेऽध्याये सद्वृत्तमखिलेन च ॥ ३० ॥
स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥ ३१ ॥
नृलोकमापूरयते यशसा साधुसंमतः।
धर्मार्थावेति भूतानां बन्धुतामुपगच्छति ॥ ३२ ॥
परान् सुकृतिनो लोकान् पुण्यकर्मा प्रपद्यते।
तस्माद्वृत्तमनुष्ठेयमिदं सर्वेण सर्वदा ॥ ३३ ॥

संग्रहे हेतुचतुष्टयं समातिहीनमिथ्यायोगाः। समाः शतं वर्षशतं; यद्यपि सद्वृत्तानुष्ठानेऽपि दैवविपर्ययेणान्तरा मरणं व्याधयो वा भवन्ति, तथाऽपि प्राधान्याद्दैवकृतव्याधेः पुरुषापराधाविषयत्वादुक्तं समाः शतमित्यादि; यदुक्तं—"परिहार्याणि यत्नेन सदा परिहरन्नरः। भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः" (सू. अ. २८) इति ॥ ३०–३३ ॥

यच्चान्यदपि किंचित् स्यादनुक्तमिह पूजितम्।
वृत्तं तदपि चात्रेयः सदैवाभ्यनुमन्यते ॥ ३४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने इन्द्रियोपक्रमणीयो नामाष्टमोऽध्यायः ॥ ८ ॥

इति स्वस्थचतुष्को द्वितीयः ॥ २ ॥

अनुक्तसद्वृत्तोपसंग्रहार्थमाह—यच्चान्यदपीत्यादि। वृत्तम् आचारः। इहायुर्वेदेऽनुक्तमप्याचारोपदेशकेषु धर्मशास्त्रेषु पूजितं, यथा—"नाकस्माद्धिक्कचो भवेन्न परशस्येषु गां चरन्तीं धावन्तीं वा परस्य ब्रूयात्" इत्यादि, सर्वमात्रेयस्यानुमतं साक्षादायुर्वेदाविषयत्वेन ग्रन्थविस्तरभयाच्च न प्रोक्तमित्यभिप्रायः ॥३४॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने द्वितीये स्वस्थचतुष्के इन्द्रियोपक्रमणीयो नामाष्टमोऽध्यायः ॥८॥

---

## नवमोऽध्यायः।

अथातः खुड्डाकचतुष्पादमध्यायं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

स्वस्थचतुष्कानन्तरं स्वस्थातुरयोरुभयोरपि हितत्वेन निर्देशचतुष्कोऽभिधीयते। स्वस्थातुरहितं वैद्यभेषजादि निर्दिशतीति निर्देशचतुष्कः, तत्रापि स्वस्थातुरहितेषु प्रधानभूतचिकित्साङ्गवैद्यादिपादचतुष्टयाभिधायकत्वेन खुड्डाकचतुष्पादोऽभिधीयते। खुड्डाकशब्दोऽल्पवचनः; यथा—खुड्डिका गर्भावक्रान्तिः, अल्पेत्यर्थः। वैद्यौषधपरिचारकरोगिणश्चिकित्सायाश्चत्वारः पादाः, चतुष्पादं तं खुड्डाकमभिधेयतयाऽधिकृत्य कृतोऽध्यायः खुड्डाकचतुष्पादः। अत्रोत्पन्नस्य तु प्रत्ययस्य "अध्यायानुवाकयोर्लुक् च" (पा. अ. ५। २। ६०) इति लुक्। खुड्डाकत्वं चास्य वक्ष्यमाणमहाचतुष्पादमपेक्ष्य ॥ १ ॥ २ ॥

भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये ॥ ३ ॥

अत्र भिषगादावुक्तः प्रधानत्वात्, वक्ष्यति हि—"प्रधानं भिष-

---

१ 'भागाच्छरीरात्' इति पा०। २ 'मूर्धनि शिरसि स्थितानि खानि सप्त आस्यं, नासापुटे, चक्षुषी, श्रोत्रे च' इति योगीन्द्रनाथसेनः। ३ 'आत्मनीवाप्रातिकूल्येन' इति पा०।

गत्र तु" इति; तदनु भेषजं, चिकित्सायां प्रधानकारणभूतत्वात्; तदनु परिचारकः, भेषजप्रयोगस्य कल्ककाथादिसाध्यस्य तदधीनत्वात् । यद्यप्यातुराधिकरणमारोग्यं पादैः संपाद्यते, स एव च वैद्यादीनामुपकार्यः, उपकार्यश्च प्रधानं भवति, तथाऽपीह व्याधिप्रशमे साध्ये यथा वैद्यादिपादत्रयस्य व्यापारो न तथाऽऽतुरस्येत्यप्राधान्यविवक्षया पश्चादुक्तः। पादश्चतुर्थो भागः, श्लोकादिपादवद्वैद्यादिषु पादसंज्ञाकरणेनान्यतरवैकल्येनापि चिकित्सा न भवतीति दर्शयति । गुणवदिति वक्ष्यमाण-श्रुतेपर्यवदातत्वादिगुणवत् । इह च वैद्यादयो व्याप्रियमाणा एव विकारप्रशमने कारणं भवन्ति, यतः कारणत्वं कार्ये व्यापारवतामेव भवति; तथा हि—देवदत्तः पाचक इत्युक्ते तुषपुषप्रक्षेपादिक्रिययैव पाकं करोतीति गम्यते; एतेन यदुच्यते—"चतुर्णां भिषगादीनां" इत्यादिना श्लोकेन वैद्यादीनां प्रवृत्तिश्चिकित्सा व्याधिप्रशमहेतुरभिधातव्या, इह तु वैद्यादय एवेति पूर्वापरविरोधः; तन्न भवति, इह वैद्यादिप्रवृत्तेर्वैद्यादिग्रहणेनैव ग्रहणात् । चतुर्णामित्यादौ श्लोके वैद्यादीनां धर्मिणां धर्मरूपायाश्च प्रवृत्तेर्भेदं पुरस्कृत्य चिकित्सायाः क्रियारूपायाः कथनम् । एते वैद्यादयो विकारशमने कारणमेवेति नियमः, न पुनरेतैरेव विकारप्रशमनमिति नियमः, यतो वैद्यादीन् प्रत्याख्यायापि रोगशान्तिर्भवति; वक्ष्यति हि महाचतुष्पादे—"ये ह्यातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ते" (सू. अ. १०) इत्यादिना ॥ ३ ॥

**विकारो धातुवैषम्यं, साम्यं प्रकृतिरुच्यते ।**
**सुखसंज्ञकमारोग्यं, विकारो दुःखमेव च ॥ ४ ॥**

अत्र विकारव्युपशान्तय इत्युक्तं, तेन विकारस्वरूपज्ञानार्थमाह—विकारो धातुवैषम्यमित्यादि । धातवो वातादयो रसादयश्च तथा रजःप्रभृतयश्च, तेषां वैषम्यं व्यवह्रियमाणस्वास्थ्यहेतोः स्वमानान्न्यूनत्वमधिकत्वं वा । साम्यं धातुसाम्यं; प्रकृतिः आरोग्यम् । उच्यतेग्रहणाद्वैद्यकसिद्धान्ते हीयं प्रकृतिविकारव्यवस्था, अन्यदर्शनसिद्धान्तपरिग्रहे तु विकारः षोडशकः, प्रकृतिर्गुणानां साम्यावस्था भवतीति दर्शयति । ननु, रात्रिदिनभोजनानां तासु तास्ववस्थासु श्लेष्मप्रकोपादिना नित्यं धातुवैषम्यमस्ति, तत्कृतो धातुसाम्यमित्याह—सुखसंज्ञकमित्यादि । सुखहेतुः सुखम्, एवं दुःखहेतुर्दुःखं; यतो न दुःखं व्याधिः, तथा हि सति न ज्वरादीनां व्याधित्वं स्यात्; अत एव सुश्रुतेऽप्युक्तं—"तत्तु सप्तविधे व्याधावुपनिपतति" ( सु. सू. अ. २४ ) इति; संज्ञकग्रहणात् परमार्थतोऽसुखमपि लोके सुखमिति यद् व्यवह्रियते, तदिह गृह्यत इति दर्शयति; तेन, दिवारात्रिभोजनावस्थादिजनितं धातुवैषम्यमुद्वेजकविकाराकर्तृत्वेन सुखमिति व्यवह्रियते, तेन यो ह्यल्पः स नास्त्येवेति कृत्वाऽल्पेऽपि धातुवैषम्ये धातुसाम्यव्यवहारः सिद्धो भवति; तथा संज्ञकग्रहणेन लौकिकसुखं न परमार्थतः सुखमिति दर्शयति, यतो वक्ष्यति "सर्वं कारणवद्दुःखं" ( शा. अ. १ ) इत्यादि; 'एव च' ग्रहणेन दुःखं परमार्थतोऽपि दुःखमेवेति दर्शयति, न सुखमिव व्यवहारमात्रेण । अत्र च धातुवैषम्येण कारणेनोपचारात्तत्कार्यज्वरादयोऽभिधीयन्ते, यतो धातुवैषम्यजो हि विकारो न धातुवैषम्यमात्रं, यद्वक्ष्यति—"स्वधातुवैषम्यनिमित्तजा ये विकारसंघा बहवः शरीरे" ( सू. अ. १९ ) इत्यादि, तथा "विकृतिमापन्ना नानाविधैर्विकारैः शरीरमुपतपन्ति" ( वि. अ. १ ) इत्यादि, तथा सुश्रुतेऽप्युक्तं—"वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः" ( सू. अ. १ ) इति । अत्र पक्षे धातुवैषम्यजश्चेद्विकारस्तदा जनितविकारं धातुवैषम्यं क्व प्रविशतु; किं विकारे, उत आरोग्ये? न तावदारोग्ये, यतः "इत्युक्तं कारणं कार्यं धातुसाम्यमिहोच्यते । धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" (सू. अ. १) इत्यनेन ग्रन्थेनारोग्यं धातुसाम्यमित्युक्तं; न च रोगे प्रविशति, रोगहेतुत्वेनैव कथितत्वात्; अथ मतं धातुवैषम्यं भवति, विकारो न भवतीति; एषा दशा नास्त्येव; यतोऽवश्यं प्रमाणाधिको दोषः स्वलिङ्गाधिको भवति, क्षीणो वा क्षीणस्वलक्षण इति; इह तर्हि धातुवैषम्यमेव विकारोऽस्तु, एवमयं ग्रन्थोऽपि मुख्यो भवति; धातुवैषम्यजविकारप्रतिपादकस्तु ग्रन्थ आविष्कृततमज्वरादिप्रतिपादकत्वेन व्यवस्थाप्यतां, तेन धातुवैषम्यं च धातुवैषम्यजाश्च ज्वरादयो विकारा भवन्ति; धातुवैषम्यजातेष्वपि हि ज्वरादिषु धातुवैषम्यरूपताऽस्त्येव; किंच स्वमानक्षीणा दोषाः किंचिद्विकारं न जनयन्ति, क्षीणलक्षणं वैषम्यमेव परं यान्ति; वचनं हि—"क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म कुर्वते" ( सू. अ. ७ ) इति; नात्र धातुवैषम्यमात्रं विकार इति ब्रुवतामयं पन्थाः; ये तु धातुवैषम्यजो विकार इति व्यवस्थिताः, ते त्वजनितव्यपदेश्यविकारं धातुवैषम्यं रात्रिदिनावस्थादिकृतधातुवैषम्यवदल्पत्वेनाव्यपदेश्यतया धातुसाम्य एव प्रक्षिपन्तीति; तिलकालकमषकप्रभृतीनां तु धातुवैषम्यजत्वेनेह चरके रोगत्वं मुख्यत्वमेव, दुःखहेतुत्वं च तेषां ज्ञातानां मनोदुःखकर्तृत्वेन ॥ ४ ॥

**चतुर्णां भिषगादीनां शस्तानां धातुवैकृते ।**
**प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ॥ ५ ॥**

विकारलक्षणानन्तरं विकारप्रशमहेतोश्चिकित्साया लक्षणमाह—चतुर्णामित्यादि । चतुर्णामिति पदं वैद्यादीनां मिलितानामेव ग्राहकम् । शस्तानामिति वक्ष्यमाणश्रुते पर्यवदातत्वमित्यादिगुणयोगेन प्रशस्तानाम् । धातुवैकृते रोगे चिकित्साधिकरणभूते । धातुसाम्यार्था आरोग्यकरणार्थेत्यर्थः । धातुवैकृत इति पदं स्पष्टार्थं, येन धातुसाम्यार्था प्रवृत्तिर्धातुवैकृते एव वैद्यादीनां भवति । प्रवृत्तिर्वैद्यस्य इदं कर्तव्यमिदं न कर्तव्य-

१ 'संपद्यते' इति पा० । २ 'धातुवैषम्यं स्वल्पमुद्वेजकं विकाराकर्तृत्वेन' इति पा० ।

१ 'वातपित्तकफशोणितसन्निपातनिमित्ता' इति पा० । २ 'विकारादयो भवन्ति' इति पा० ।

मित्यादिकोपदेशरूपा, द्रव्यस्य तूपयोगे सति स्वकार्यारम्भरूपा, परिचारकप्रवृत्तिर्भेषजसंस्करणातुरपरिचर्यादिरूपा, आतुरप्रवृत्तिर्वैद्योक्तानुष्ठानव्याधिस्वरूपकथनादिका ॥ ५ ॥

**श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता।**
**दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥ ६ ॥**

पूर्वसूत्रितवैद्यगुणान् दर्शयति—श्रुत इत्यादि । श्रुतमादौ श्रेष्ठवैद्यगुणत्वात्, एवमन्यत्रापि व्याख्येयम् । पर्यवदातत्वं विशुद्धज्ञानवत्त्वं गुरुशास्त्रसेवनादिना। शौचमदृष्टद्वारोपकारकम्। जितहस्तत्वादयोऽपरेऽपि वैद्यगुणा अत्रैव गुणचतुष्टयेऽन्तर्भावनीयाः ॥ ६ ॥

**बहुता तत्रयोग्यत्वमनेकविधकल्पना।**
**संपच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥ ७ ॥**

बहुता भेषजगुणः, अल्पं हि भेषजं गुणवदप्यविद्यमानमिव, असाधकत्वात् । तत्र प्रतिकर्तव्ये व्याधौ योग्यत्वं तत्रयोग्यत्वम् । अनेकविधकल्पना नानाप्रकारस्वरसाद्युपयुक्तकल्पनायोग्यत्वमित्यर्थः; यतः प्राणिनः केचित् स्वरसद्विषः, केचित् कल्कद्विष एवमादि; एवं व्याधिस्वभावादपि काचित् कल्पना हिता भवति, यथा—ज्वरे कषाय इत्यादि; तेनानेककल्पनायोग्यत्वाद्यत्र युज्यते तत्तत्र क्रियते । संपदिति क्रिमिसलिलाद्यनुपहतत्वेन रसादिसंपत् ॥ ७ ॥

**उपचारज्ञता दाक्ष्यमनुरागश्च भर्तरि।**
**शौचं चेति चतुष्कोऽयं गुणः परिचरे जने ॥ ८ ॥**

उपचारज्ञता यूषरसादिकरणसंवाहनस्नापनादिज्ञता ॥ ८ ॥

**स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च।**
**ज्ञापकत्वं च रोगाणामातुरस्य गुणाः स्मृताः ॥ ९ ॥**

निर्देशकारित्वं वैद्योपदिष्टार्थकर्तृत्वम् । अभीरुत्वं गुणः, भीरुत्वस्य रोगकर्तृत्वात्; यदुक्तं—"विषादो रोगवर्धनानां" (सू. अ. २५) इति । अथापि चेतिशब्देन क्वचिद्भीरुत्वमप्यस्मृतिरपि गुणो भवतीति दर्शयति; यथोन्मादे "सर्पेणोद्धृतदंष्ट्रेण" इत्यादिना त्रासनमुक्तं चिकित्सायां, तत्र यद्यप्यभीरुः स्याद्रोगी तदा चिकित्सा न फलति; अस्मृतिस्तु ज्वरवेगागमनकालास्मरणेऽभिप्रेता, यदुक्तं—"ज्वरवेगं च कालं च चिन्तयञ्ज्वर्यते तु यः । तस्येष्टैश्च विचित्रैश्च प्रयोगैर्नाशयेत् स्मृतिम्" (चि. अ. ३) इति ॥ ९ ॥

**कारणं षोडशगुणं सिद्धौ पादचतुष्टयम्।**
**विज्ञाता शासिता योक्ता प्रधानं भिषगत्र तु ॥ १० ॥**

एवं वैद्यादीनां चतुर्णामपि कारणत्वे सिद्धे वैद्यस्य प्राधान्यं दर्शयति—कारणमित्यादि । विज्ञाता औषधस्य । शासिता परिचारकस्य—एवं कुर्वेवं मा कुर्विति । योक्ता आतुरस्य । एतेन वैद्यपराधीना भेषजादीनां प्रवृत्तिः, वैद्यस्तु स्वतन्त्रः, ततश्च वैद्यः प्रधानमिति वाक्यार्थः ॥ १० ॥

**पक्तौ हि कारणं पक्तुर्यथा पात्रेन्धनानलाः।**
**विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ॥ ११ ॥**
**आतुराद्यास्तथा सिद्धौ पादाः कारणसंज्ञिताः।**
**वैद्यस्यातश्चिकित्सायां प्रधानं कारणं भिषक् ॥ १२ ॥**

एतदेवाभ्यर्हितत्वाद्दृष्टान्तद्वयेन दर्शयति—पक्तावित्यादि । पक्तौ पाके कर्तव्ये, पात्रस्थानीय आतुरः, परिचारक इन्धनरूपः, अनलो भेषजरूपः । कारणमिति उपकरणम् । भूमिः युद्धानुगुणो देशः । अत्रापि पूर्ववदेवातुरादिस्थानीयत्वं भूम्यादीनाम् ॥ ११ ॥ १२ ॥

**मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा।**
**नावहन्ति गुणं वैद्यादृते पादत्रयं तथा ॥ १३ ॥**

संप्रति व्यतिरेकदृष्टान्तेन वैद्यप्राधान्यं दर्शयति—मृद्दण्डेत्यादिना । नावहन्ति न निष्पादयन्ति। गुणं साध्यमित्यर्थः ॥१३॥

**गन्धर्वपुरवन्नाशं यद्विकाराः सुदारुणाः।**
**यान्ति यच्चेतरे वृद्धिमाशूपायप्रतीक्षिणः ॥ १४ ॥**
**सति पादत्रये ज्ञाज्ञौ भिषजावत्र कारणम्।**

अन्वयेन व्यतिरेकेण च पृथग्दृष्टान्तं दर्शयित्वा कौशलेनैकत्रैव दृष्टान्ते गन्धर्वपुरेत्यादिनाऽन्वये गुणं व्यतिरेके च दोषं दर्शयति । एकत्रपक्षे नाशमाशु यान्तीति संबन्धः, इतरे अपरेऽनभिज्ञवैद्योपक्रान्ता गन्धर्वपुरवदाशु वृद्धिं यान्तीति संबन्धः । उपायप्रतीक्षिण इति वृद्धौ शान्तौ च । आशु विकारशान्तौ ज्ञो भिषक्कारणम्, आशुवृद्धौ चाज्ञः ॥ १४ ॥—

**वरमात्मा हुतोऽज्ञेन न चिकित्सा प्रवर्तिता ॥ १५ ॥**
**पाणिचाराद्यथाऽचक्षुरज्ञानाद्भीतभीतवत्।**
**नौर्मारुतवशेवाज्ञो भिषक् चरति कर्मसु ॥ १६ ॥**

अज्ञवैद्यस्य चिकित्साप्रवृत्तिं निषेधयति—वरमित्यादि । न वरम् अनुचितमेव । प्रवर्तितेतिभाषया अज्ञवैद्येन बलात् कृतेति दर्शयति । पाणिचारात् हस्तपरामर्शात् । कर्मसु चिकित्सासु ॥ १५ ॥ १६ ॥

**यदृच्छया समापन्नमुत्तार्य नियतायुषम्।**
**भिषङ्मानी निहन्त्याशु शतान्यनियतायुषाम् ॥ १७ ॥**

यदृच्छयेति वैद्यसम्यग्ज्ञानपूर्वकप्रवृत्तिं विना कर्मवशादित्यर्थः । समापन्नं सम्यगुपक्रान्तम् । नियतायुषमित्यनेनायुर्बलेनैव व्याधिमुत्तीर्यमाणमित्यर्थः । आत्मानमभिषजं भिषक्त्वेन मन्यत इति भिषङ्मानी । अनियतायुषामिति यत्रायुःकारणं बलवत् कर्म नास्ति, तत्र पुरुषकारापराधेन वैद्यदोषान्मरणं भवतीति दर्शयति ॥ १७ ॥

**तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने।**
**भिषक् चतुष्टये युक्तः प्राणाभिसर उच्यते ॥ १८ ॥**

१ 'व्याधितं' इति पा० ।

शास्त्रे शास्त्रावधारणे। अर्थविज्ञाने शास्त्रार्थावबोधे। प्रवृत्तौ स्वयं कर्मकरणे। युक्त उद्युक्त उद्योगनिष्पादितगुणप्रकर्ष इति यावत्। प्राणान् गच्छतो व्यावर्तयतीति प्राणाभिसरः॥ १८॥

**हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे।**
**ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः॥ १९॥**
**शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये।**
**पात्रापेक्षीण्यतः प्रज्ञां चिकित्सार्थं विशोधयेत्॥२०॥**
**विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया।**
**यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते॥ २१॥**
**विद्या मतिः कर्मदृष्टिरभ्यासः सिद्धिराश्रयः।**
**वैद्यशब्दाभिनिष्पत्तावलमेकैकमप्यतः॥ २२॥**
**यस्य त्वेते गुणाः सर्वे सन्ति विद्यादयः शुभाः।**
**स वैद्यशब्दं सद्भूतमर्हन् प्राणिसुखप्रदः॥ २३॥**

पात्रापेक्षीणीति गुणवति पात्रे सगुणानि, दोषवति पात्रे दोषवन्ति भवन्तीत्यर्थः। विशोधयेत् सद्गुरुसच्छास्त्रसेवादिभिरित्यर्थः। विद्या वैद्यकशास्त्रज्ञानम्। वितर्कः शास्त्रमूल ऊहापोहः। विज्ञानं शास्त्रान्तरज्ञानं; किंवा सहजं विशुद्धं ज्ञानम्। तत्परतेह व्याधिचिकित्सायां प्रयत्नातिशयत्वम्। क्रिया पुनः पुनश्चिकित्साकरणम्। मतिः सहजविशुद्धमतिः। अभ्यासः कर्माभ्यासः। सिद्धिः प्रायशो व्याधिप्रशमकत्वम्। आश्रयः सद्गुर्वाश्रय इत्यर्थः। वैद्यशब्दाभिनिष्पत्तावित्यनेन पारमार्थिकवैद्यत्वनिष्पत्ताविति दर्शयति। एत इत्यनेनैव लब्धेऽपि विद्यादय इति वचनं पूर्वोक्तगुणव्युदासार्थं, तद्व्युदासश्च विद्यादिष्वेवान्तर्भावनीयः; एतच्च प्रवन्धेन पृथक् पृथग्गुणकथनं वैद्यस्य गुणोत्पादने यत्नातिशयं कारयितुं तथा द्रव्यादिभ्यः पादेभ्यो वैद्यस्यैव प्रधानतोपदर्शनार्थं; वैद्यो हि पादत्रयं विगुणमपि कल्पनया शिक्षया मन्त्रणेन च संपाद्य चिकित्सितुं पारयति, नतु गुणवद्वैद्यं विना द्रव्यादयः पादा गुणवन्तोऽपि क्षमाः॥ १९-२३॥

**शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः।**
**ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति २४**
**चिकित्सिते त्रयः पादा यस्माद्वैद्यव्यपाश्रयः।**
**तस्मात् प्रयत्नमातिष्ठेद्भिषक् स्वगुणसंपदि॥ २५॥**

शास्त्रशब्देन शास्त्राभ्यासकृता मतिः, सा हि ज्योतिः बाह्यालोक इव, प्रकाशार्थं वस्तूनां ग्रहणयोग्यतां कर्तुमित्यर्थः। दर्शनमिव दर्शनं चक्षुरिवेत्यर्थः। यद्यपि बुद्धिरात्मन एव भवति, तथाऽप्यात्मन इत्यनेन सहजां बुद्धिं दर्शयति, यतः सहजां बुद्धिं विना शास्त्रजा बुद्धिर्या वैनायकीत्यभिधीयते, सा न सम्यक्चिकित्सासमर्था भवतीति। ताभ्यामिति सहजविशुद्धबुद्धिशास्त्राभ्यां सहजवैनायकबुद्धिभ्याम्॥ २४॥ २५॥

**मैत्री कारुण्यमार्तेषु शक्ये प्रीतिरुपेक्षणम्।**
**प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधेति॥ २६॥**

वैद्येन च यादृश्या बुद्ध्या व्यवहर्तव्यं, तां दर्शयति—मैत्रीत्यादि। मैत्री पूर्वमेव व्याकृता। आर्तेषु आर्तियुक्तेषु। कारुण्यं परदुःखप्रहाणेच्छा। शक्ये साधयितुं शक्ये, साध्यव्याधिगृहीत इति यावत्। प्रकृतिरिह मरणं, प्रकृतिरुच्यते स्वभावः; तथा—"इदमस्मान्मुहूर्तात्...स्वभावमापत्स्यते" (सू. अ. ३०), मरणमित्यर्थः; मरणसमीपगतत्वादुच्यते 'प्रकृतिस्थे' इति। तस्मिन्नुपेक्षा कर्तव्या; न तत्र भेषजदानादि कर्तव्यं, यशोहान्यादिभयात्॥ २६॥

तत्र श्लोकौ—

**भिषग्जितं चतुष्पादं पादः पादश्चतुर्गुणः।**
**भिषक् प्रधानं पादेभ्यो यस्माद्वैद्यस्तु यद्गुणः॥ २७॥**
**ज्ञानानि बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा।**
**सर्वमेतच्चतुष्पादे खुड्डाके संप्रकाशितमिति॥ २८॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने खुड्डाकचतुष्पादो नाम नवमोऽध्यायः॥ ९॥**

संग्रहे ब्राह्मी बुद्धिः चतुर्विधा मैत्रीकारुण्यादिका॥२७।२८॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने तृतीये निर्देशचतुष्के खुड्डाकचतुष्पादो नाम नवमोऽध्यायः॥ ९॥

## दशमोऽध्यायः।

**अथातो महाचतुष्पादमध्यायं व्याख्यास्यामः॥ १॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

**चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते, यदुक्तं पूर्वाध्याये षोडशगुणमिति, तद्भेषजं युक्तियुक्तमलमारोग्यायेति भगवान् पुनर्वसुरात्रेयः॥ ३॥**

पूर्वाध्याये वैद्यादयो व्याधिप्रशमकारणमित्युक्तं, तदिहाक्षिप्य व्यवस्थाप्यत इत्यनन्तरं महाचतुष्पादोऽभिधीयते। महत्त्वं चास्य पूर्वाध्यायापेक्षया, बहुग्रन्थत्वेन पूर्वपक्षसिद्धान्तरूपबहुप्रमेयाभिधायकत्वेन च। षोडशकलं षोडशगुणं, कलाशब्दो गुणवचनः। भिषजो भाषन्त इति ब्रुवते। प्रकृतेऽर्थे शास्त्रान्तरसंमतिं दर्शयति—युक्तियुक्तमिति। युनक्तीति युक्तिः प्रवृत्तिरुच्यते; युक्तियुक्तं प्रवृत्तिमदित्यर्थः; प्रवृत्तिश्च वैद्यादीनां चिकित्सारूपा पूर्वाध्याये व्याकृता। अलं समर्थम्। इति भगवानात्रेयो 'ब्रूते' इति शेषः॥ १—३॥

**नेति मैत्रेयः, किं कारणं? दृश्यन्ते ह्यातुराः केचिदुपकरणवन्तश्च परिचारकसंपन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः, तथायु-**

१ 'शास्त्रधारणे' इति पा०। २ 'सद्भूतमर्हेत्' इति पा०। ३ 'यत्रणेन च' इति पा०।

१ 'भिषग्भिरुपक्रान्ताः' इति पा०।

काश्चापरे म्रियमाणाः; तस्माद्भेषजमकिंचित्करं भवति, तद्यथा—श्वभ्रे सरसि च प्रसिक्तमल्पमुदकं, नद्यां वा स्यन्दमानायां पांसुधाने वा पांसुमुष्टिः प्रकीर्ण इति; तथाऽपरे दृश्यन्तेऽनुपकरणाश्चापरिचारकाश्चानात्मवन्तश्चाकुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः, तथायुक्ता म्रियमाणाश्चापरे। यतश्च प्रतिकुर्वन् सिध्यति, प्रतिकुर्वन् म्रियते; अप्रतिकुर्वन् सिध्यति, अप्रतिकुर्वन् म्रियते; ततश्चिन्त्यते भेषजमभेषजेनाविशिष्टमिति ॥ ४ ॥

उक्तमाक्षिपति—नेतीत्यादि। उपकरणं भेषजम्। अनुष्ठिताः चिकित्सितुमुपक्रान्ताः। तथायुक्ताः पूर्ववच्चिकित्सितुमुपक्रान्ता इत्यर्थः। अकिञ्चित्करमिति भेषजे सत्यपि यदाऽऽरोग्यं न भवति; तेन, यत्रापि सति भेषजे आरोग्यं भवति, तत्रापि भेषजव्यतिरिक्तं कर्मैव दैवसंज्ञकं कारणं, भेषजं तु तत्र दैवागतसन्निधानमकारणमेवेत्यर्थः। अत्रैवार्थे दृष्टान्तद्वयं दर्शयति—तद्यथेत्यादि। श्वभ्रे गर्ते यथाऽल्पं जलमकिंचित्करमेवं म्रियमाणेऽपि भेषजं, यथा च सरसि अन्यत एव पूर्णेऽल्पमुदकमकिञ्चित्करं भवत्येवमन्यत एवारोग्यहेतोः कर्मणो रोगप्रशमने जायमाने भेषजमकिञ्चित्करं भवतीति सरोदृष्टान्तेन दर्शयति; एवं नद्यां स्यन्दमानायां वहमानायां पांशुमुष्टिरिति निदर्शनं श्वभ्रवत्, पांशुधाने पांशुराशौ पांशुमुष्टिरिति सरोदृष्टान्तवद्व्याख्येयम्। अत्र च तोयदृष्टान्तः संशोधनभेषजाभिप्रायेण, पांशुदृष्टान्तस्तु संशमनभेषजाभिप्रायेण; यदि वा जलं संतर्पणभेषजाभिप्रायेण, पांशुमुष्टिस्त्वपतर्पणाभिप्रायेण बोद्धव्या। भेषजान्वयव्यभिचारं दर्शयित्वा तद्व्यतिरेकव्यभिचारं दर्शयति—तथाऽपरे इत्यादि। प्रतिकुर्वन्नित्यन्तर्भावितण्यर्थत्वात् प्रतिकारयन्नित्यर्थः; यदि वाऽऽतुर एव वैद्यादीनुत्पाद्यात्मानं प्रतिकुर्वन्निति मन्तव्यम्; एतेन दैवाख्यकर्मवशादेवायं जीवति म्रियते वा, रोगी भवत्यरोगो वा, न दृष्टभेषजमत्र किञ्चित्करमिति पूर्वपक्षार्थः ॥ ४ ॥

मैत्रेयं! मिथ्या चिन्त्यत इत्यात्रेयः; किं कारणं, ये ह्यातुराः षोडशगुणसमुदितेनानेन भेषजेनोपपद्यमाना म्रियन्त इत्युक्तं तदनुपपन्नं, न हि भेषजसाध्यानां व्याधीनां भेषजमकारणं भवति; ये पुनरातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ते, न तेषां संपूर्णभेषजोपपादनाय समुत्थानविशेषो नास्ति;यथा हि पतितं पुरुषं समर्थमुत्थानायोत्थापयन् पुरुषो बलमस्योपादध्यात्; स क्षिप्रतरमपरिक्लिष्ट एवोत्तिष्ठेत्, तद्वत् संपूर्णभेषजोपलम्भादातुराः; ये चातुराः केवलाद्भेषजादपि म्रियन्ते, न च सर्व एव ते भेषजोपपन्नाः समुत्तिष्ठेरन्, नहि सर्वे व्याधयो भवन्त्युपायसाध्याः, न चोपायसाध्यानां व्याधीनामनुपायेन सिद्धिरस्ति, न चासाध्यानां व्याधीनां भेषजसमुदायोऽयमस्ति, न ह्यलं ज्ञानवान् भिषङ्मुमूर्षुमातुरमुत्थापयितुं; परीक्ष्यकारिणो हि कुशला भवन्ति, यथा हि योगज्ञोऽभ्यासनित्य इष्वासो धनुरादायेषुमस्यन्नातिविप्रकृष्टे महति काये नापराधवान् भवति, संपादयति चेष्टकार्यं, तथा भिषक् स्वगुणसंपन्न उपकरणवान् वीक्ष्य कर्मारभमाणः साध्यरोगमनपराधः संपादयत्येवातुरमारोग्येण; तस्मान्न भेषजमभेषजेनाविशिष्टं भवति ॥ ५ ॥

सिद्धान्तयति—मिथ्येत्यादि। केवलात् संपूर्णात्। न नास्तीत्युभयनकारकरणादस्ति समुत्थानविशेष इत्यर्थः। तद्वदिति क्षिप्रतरमक्लिष्ट एवोत्तिष्ठन्त इत्यर्थः। एवं मन्यते—यद्यप्यदृष्टमेवोत्थाने कारणं, तथाऽपि यदि दृष्टमपि तत्रानुबलं भवति, तदा दृष्टादृष्टोभयबलाच्छीघ्रमेवारोग्यं भवति। सर्वे एवेति साध्यव्याधयोऽसाध्यव्याधयश्च; संपूर्णभेषजोपपत्तावपि सत्यामसाध्यव्याधयो नोत्तिष्ठन्ते, साध्यव्याधय उत्तिष्ठन्त इति भावः। यद्यप्यसाध्यव्याधिं प्रति संपूर्णभेषजोपपत्तिरेव नास्ति, यदुक्तं—"न चासाध्यानां व्याधीनां भेषजसमुदायोऽयमस्ति, नह्यलं ज्ञानवान् भिषङ्मुमूर्षुमातुरमुत्थापयितुम्" इति, तथाऽपीह किञ्चिदसंपूर्णभेषजत्वेऽपि संपूर्णभेषजोपपन्न इत्युक्तम्। ये तु साध्यव्याधयस्ते सत्यामेव भेषजसंपत्तौ जीवन्ति, असत्यां तु भेषजसंपत्तौ बलवज्जीवनकर्माभावे म्रियन्त एवेति दर्शयन्नाह—न चोपायेत्यादि। उपायेनैव दृष्टार्थेन साध्या उपायसाध्याः। इदमत्राकूतं—यत्–द्विविधं कर्म बलवदबलवच्च; तत्र बलवन्नियतविपाककालं, यथेदं कर्मास्मिन्नेव काले मारयति; अबलवच्च मारकं कर्म मारयत्येव परं कालानियमेन, तद्यदा दृष्टसामग्रीमनुगुणामपथ्यसेवारूपामौषधाभावरूपां च प्राप्नोति तदा मारयति, यदा तु न प्राप्नोति तदा न मारयति। यदुक्तं जनपदोद्ध्वंसनीये—"कर्म किंचित् क्वचित् काले विपाकनियतं महत्। किंचित्त्व कालनियतं प्रत्ययैः प्रतिबोध्यते" ( वि. अ. ३) इति। अस्य त्वर्थं प्रपञ्चेन तत्रैव दर्शयिष्यामः। न च वाच्यम्—अदृष्टमेव सर्वत्र कारणं, तच्च नियतकालविपाकमेव, यदुच्यते—"नाकाले जायते कश्चिन्नाकाले म्रियते तथा। जगत् कालवशं सर्वं कालः सर्वत्र कारणम्"—इति; यतः, यदेवादृष्टं तदेव दृष्टयागादिवद्रज्ज्वादिजन्यं किञ्चित्। यद्दृष्टेनानुपपन्नं, तत्रादृष्टकल्पना प्रामाणिकी, यत्तु दाहादि दृष्टेनैवाभिसंबन्धेनोपपद्यते तत्र का कथाऽदृष्टस्य दृष्टकार्यान्यथानुपपत्तिपरिकल्पनीयस्य; तेन य इमे दुर्बलेन कर्मणा दृष्टबलवदपथ्यसेवाजनितदोषबलादारब्धा व्याधयस्ते बलवता चतुष्पादसंपन्नेन भेषजेन दोषक्षयकेनोपायेन परं साध्याः,तदभावे

१ 'इति मैत्रेयः' इति पा०। २ 'मिथ्या चिन्त्यते' इति पा०। ३ 'समसमुत्थानविशेषोऽस्ति' इति गङ्गाधरसंमतः पाठः।

१ 'भेषजसमुदायोऽस्ति' इति पा०।

तु दुर्बलेनापि कर्मणा दृष्टदोषबलादारब्धा व्याधयो न निवर्तन्त इति। यदुक्तं—"दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते। दैवेन चेतरत् कर्म विशिष्टेनोपहन्यते" (वि. अ. ३) इति। अनुपायेन अभेषजेन। अयं भेषजसमुदायः सर्वगुणसंपन्न इत्यर्थः; असाध्ये व्याधौ चिकित्सां कुर्वन् वैद्य एव यथोक्तगुणो न भवतीत्यर्थः। नह्यलं न समर्थः; यद्यसाध्यतां जानाति तदा न प्रवर्तेत एव, अथ न जानाति तदा ज्ञानवानेव न भवतीति भावः। चतुष्पादसंपदाऽवश्यं व्याधिप्रशमो भवतीति दृष्टान्तेनाह—यथा हीत्यादि। इष्वासो धानुष्कः। अस्यन् क्षिपन्। नातिविप्रकृष्टे सन्निहिते। अनपराध इति लक्ष्यभ्रंशरहितः। इष्टं कार्यं लक्ष्यवेधलक्षणम् ॥ ५ ॥

**इदं चै नः प्रत्यक्षं—यदनातुरेण भेषजेनातुरं चिकित्सामः, क्षाममक्षामेण, कृशं च दुर्बलमाप्याययामः, स्थूलं मेदस्विनमपतर्पयामः, शीतेनोष्णाभिभूतमुपचरामः, शीताभिभूतमुष्णेन, न्यूनान् धातून् पूरयामः, व्यतिरिक्तान् ह्रासयामः, व्याधीन् मूलविपर्ययेणोपचरन्तः सम्यक् प्रकृतौ स्थापयामः; तेषां नस्तथा कुर्वतामयं भेषजसमुदायः कान्ततमो भवति ॥ ६ ॥**

भेषजस्य रोगप्रशमकर्तृत्वे उपपत्त्यन्तरमाह—इदं चेत्यादि। अनातुरेणेति आतुरगुणविपरीतेन। आतुरमनातुरेण चिकित्साम इति यदुक्तं, तस्यैव विवरणं—क्षाममक्षामेणेत्यादि। क्षामो निर्द्रवः। कृशं च दुर्बलमाप्याययाम इति संतर्पयामः। व्यतिरिक्तानिति अतिरिक्तानित्यर्थः। मूलविपर्ययेणेति कारणविपर्ययेण, तच्च प्रभावादिति बोद्धव्यं; तेन विषविकारस्य विषेणोपचरणमेतत् प्रत्यक्षं चान्यदुपगृहीतं भवति। कान्ततमो विकारप्रशमकत्वेनाभीष्टतमः; अन्येऽर्थधर्मोपायाः कान्ताः कान्ततराश्च, अयं तु भेषजसमुदायः सर्वोच्छेदकरोगहरत्वेन कान्ततमः ॥ ६ ॥

**भवन्ति चात्र—**

**साध्यासाध्यविभागज्ञो ज्ञानपूर्वं चिकित्सकः।**
**काले चारभते कर्म यत्तत् साधयति ध्रुवम् ॥ ७ ॥**
**अर्थविद्यायशोहानिमुपक्रोशमसंग्रहम्।**
**प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत् ॥ ८ ॥**

ज्ञानपूर्वमिति भेषजादिज्ञानपूर्वं, यत् कर्मारभते तत् कर्म चिकित्सितरूपं, साधयति 'साध्यं' इति शेषः। असाध्यव्याधौ न प्रवर्तितव्यमिति शिक्षयति—अर्थेत्यादि। अर्थः अर्थलाभः, हानिः क्षतिः। उपक्रोशो जनापवादः। असंग्रहः चिकित्सार्थमनुपादानं; यदि 'वा असद्ग्रह' इति पाठः, तदा चासद्ग्रहो राजदण्डेनासत्पुरुषैश्चाण्डालादिभिर्ग्रहणम् ॥ ७ ॥ ८ ॥

१ 'नापराधवान्' इति पा०। २ 'इदं चेदं च' इति पा०। ३ 'उपचरामः' इति पा०। ४ 'न्यूनव्यतिरिक्तानधिकानित्यर्थः' इति पा०। ५ 'स्वार्थं०' इति पा०। ६ '०मसद्ग्रहम्' इति पा०।

**सुखसाध्यं मतं साध्यं कृच्छ्रसाध्यमथापि च।**
**द्विविधं चाप्यसाध्यं स्याद्याप्यं यच्चानुपक्रमम् ॥ ९ ॥**
**साध्यानां त्रिविधश्चाल्पमध्यमोत्कृष्टतां प्रति।**
**विकल्पो, न त्वसाध्यानां नियतानां विकल्पना ॥ १० ॥**

साध्ये प्रवृत्तिरुक्ता, असाध्ये निवृत्तिश्च, तेन साध्यासाध्ययोर्भेदकथनपूर्वकं लक्षणं वक्तुमाह—सुखसाध्यमित्यादि। अकिञ्चित्करत्वेनाविद्यमान उपक्रमो यस्य तदनुपक्रमं; याप्यं त्वनुपक्रमं न भवति, यापनाकर्तृत्वेन किञ्चित्करत्वात्। तत्रोपक्रमस्याल्पमध्यमोत्कृष्टतां प्रतीति अल्पमध्यमोत्कृष्टयोगादित्यर्थः; तेनाल्पसाध्यमल्पोपायसाध्यं, मध्यसाध्यं मध्योपायसाध्यम्, उत्कृष्टसाध्यमुत्कृष्टोपायसाध्यमिति भेदत्रयं साध्यानां भवति। असाध्यानां तु नियतानामिति याप्यव्यतिरिक्तानामनुपक्रमाणां, विकल्पना विकल्पः, नास्तीति एवंभूताऽल्पासाध्यादिरूपा नास्ति; प्राणहर-वैकल्यकर-सद्यःप्राणहर-कालान्तरप्राणहरत्वादिकल्पना त्वसाध्यानामस्त्येव; यदसाध्यं तदल्पेन मध्येन चोत्कृष्टेन चोपायेनासाध्यमेव; याप्यरूपासाध्यानां त्वल्पोपाययाप्यत्वादिभेदोऽस्त्येव ॥ ९ ॥ १० ॥

**हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य च।**
**न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत् ॥ ११ ॥**
**न च कालगुणस्तुल्यो न देशो दुरुपक्रमः।**
**गतिरेका नवत्वं च रोगस्योपद्रवो न च ॥ १२ ॥**
**दोषश्चैकः समुत्पत्तौ देहः सर्वौषधक्षमः।**
**चतुष्पादोपपत्तिश्च सुखसाध्यस्य लक्षणम् ॥ १३ ॥**

न दोषः प्रकृतिर्भवेदिति व्याध्यारम्भको यो दोषः स तत्प्रकृतावुत्कटो न भवेदित्यर्थः। देशो भूमिरातुरश्च। देशो दुरुपक्रमो यथा—वातव्याधौ तुल्यगुणो मरुः, तथा श्लेष्मव्याधावनूपः। देहश्च दुरुपक्रमो यथा—सर्वव्याधीनामेव मर्मलक्षणो देशः, तथा वातव्याधेः पक्वाशय इत्यादि। गतिरेका एको मार्ग इत्यर्थः, मार्गास्त्रयस्त्रिस्रैषणीये वक्तव्याः—"शाखा मर्मास्थिसन्धयः कोष्ठश्च" (सू. अ. ११) इति। एतच्चोत्सर्गन्यायेनोक्तं, तेन क्वचिद्व्याधिप्रभावादन्यथाऽपि सुखसाध्यत्वादिलक्षणाभिधानेन विरोधो न वक्तव्यः। यदुक्तं—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्"—इति ॥ ११–१३ ॥

**निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले।**
**कालप्रकृतिदूष्याणां सामान्येऽन्यतमस्य च ॥ १४ ॥**
**गर्भिणीवृद्धबालानां नात्युपद्रवपीडितम्।**
**शस्त्रक्षाराग्निकृत्यानामनवं कृच्छ्रदेशजम् ॥ १५ ॥**
**विद्यादेकपथं रोगं नातिपूर्णचतुष्पदम्।**
**द्विपथं नातिकालं वा कृच्छ्रसाध्यं द्विदोषजम् ॥ १६ ॥**

१ 'यदनुपक्रमम्' इति पा०। २ 'गुर्विणीवृद्धबालानां' इति पा०।

कालप्रकृतिदूष्याणामिति निर्धारणे षष्ठी । सामान्य इति दोषेण समम् । गर्भिणीवृद्धबालानां सर्व एव व्याधिः कृच्छ्रसाध्यो बोद्धव्यः । नात्युपद्रवपीडितमिति पूर्वेण न योजनीयं, किंतु स्वतन्त्रमेव । शस्त्रक्षाराग्निकृत्याः शस्त्रक्षाराग्निसाध्याः; एषां यो व्याधिस्तं कृच्छ्रसाध्यं विद्यादिति संबन्धः । कृच्छ्रदेशजं मर्मसन्ध्यादिजम् । एकपथस्य विशेषणं—नातिपूर्णचतुष्पदमिति । द्विपथमित्यस्य विशेषणं—नातिकालमिति ॥१४–१६॥

**शेषत्वादायुषो याप्यमसाध्यं पथ्यसेवया ।**
**लब्धाल्पसुखमल्पेन हेतुनाऽऽशुप्रवर्तकम् ॥ १७ ॥**
**गम्भीरं बहुधातुस्थं मर्मसन्धिसमाश्रितम् ।**
**नित्यानुशायिनं रोगं दीर्घकालमवस्थितम् ॥ १८ ॥**
**विद्याद्द्विदोषजं, तद्वत् प्रत्याख्येयं त्रिदोषजम् ।**
**क्रियापथमतिक्रान्तं सर्वमार्गानुसारिणम् ॥ १९ ॥**
**औत्सुक्यारतिसंमोहकरमिन्द्रियनाशनम् ।**
**दुर्बलस्य सुसंवृद्धं व्याधिं सारिष्टमेव च ॥ २० ॥**

याप्यत्वेनैवासाध्यत्वे लब्धे यदसाध्यमिति पदं तद्याप्यत्वापनार्थं क्रियमाणभेषजतया साध्यत्वशङ्कानिरासार्थम् । शेषत्वादायुष इति वचनमायुःशेषे विद्यमान एव याप्यव्याधिप्रादुर्भावो भवतीति दर्शनार्थम् । पथ्यसेवया भेषजसेवया, लब्धमल्पं सुखं यस्मिन् तल्लब्धाल्पसुखम् । प्रवर्तनं प्रवर्तः, अल्पेन हेतुनाऽऽशु शीघ्रं प्रवर्तनं यस्य तदाशुप्रवर्तकं; स्वार्थे अण् । गम्भीरं मेदःप्रभृतिधातुगतम् । नित्यानुशायी नित्यानुबन्धः । विद्याद्द्विदोषजमित्यन्तेन याप्यलक्षणम् । तद्वदित्यादि तु प्रत्याख्येयलक्षणम् । तद्वदित्यनेन गम्भीरादियाप्यलक्षणयुक्तं सत्रिदोषजं प्रत्याख्येयमित्यर्थः । औत्सुक्यं हर्षोद्रेकः, अरतिरनवस्थानलक्षणा, संमोहो मनसो मोहः ॥ १७–२० ॥

**भिषजा प्राक् परीक्ष्यैवं विकाराणां स्वलक्षणम् ।**
**पश्चात्कर्मसमारम्भः कार्यः साध्येषु धीमता ॥ २१ ॥**
**साध्यासाध्यविभागज्ञो यः सम्यक्प्रतिपत्तिमान् ।**
**न स मैत्रेयतुल्यानां मिथ्याबुद्धिं प्रकल्पयेत् ॥ २२ ॥**

न स मैत्रेयतुल्यानां मिथ्याबुद्धिं प्रकल्पयेदिति एवंगुणो वैद्यः प्रतिनियमेन यं व्याधिमुपक्रमेत्तं साधयत्येव परं, ततो भेषजस्य व्याधिप्रशमनं प्रति करणत्वावधारणे सति भेषजमभेषजेन समानमिति मैत्रेयसदृशानां कर्मवादिनां मिथ्याबुद्धेरनुत्पाद इति भावः ॥ २१ ॥ २२ ॥

**तत्र श्लोकौ—**

**इहौषधं पादगुणाः प्रभवो भेषजाश्रयः ।**
**आत्रेयमैत्रेयमती मतिद्वैविध्यनिश्चयः ॥ २३ ॥**
**चतुर्विधविकल्पाश्च व्याधयः स्वस्वलक्षणाः ।**
**उक्ता महाचतुष्पादे येष्वायत्तं भिषग्जितम् ॥२४॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने महाचतुष्पादो नाम दशमोऽध्यायः ॥ १० ॥**

संग्रहे इहेति इहाध्याये । औषधमिति चतुष्पादम् । पादगुणा इति यदुक्तं पूर्वाध्याये षोडशगुणमिति । प्रभवो भेषजाश्रय इति तद्भेषजं युक्तियुक्तमलमारोग्यायेति ॥ २३ ॥ २४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने तृतीये निर्देशचतुष्के महाचतुष्पादो नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

**अथातस्तिस्रैषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये चतुष्पादमारोग्यकारणं व्यवस्थापितं, ततश्चतुष्पादसंपत्त्या प्राप्तारोग्येण सता यदनुष्ठेयं प्राणपरिपालनसाधनं, तथा धनार्जनसाधनं, तथा धर्मार्जनसाधनं, तदिहैषणात्रयरूपमभिधीयत इत्यनन्तरं तिस्रैषणीयोऽभिधीयते । तिस्रैषणाशब्दोऽस्मिन्नस्तीति मत्वर्थीयश्छः, अत्रानुकार्यानुकरणयोर्भेदाविवक्षया यलोपासिद्धेरभावात् संहितया 'तिस्रैषणीयः' इति संज्ञायते, अध्यायान्ते "तिस्रैषणीये मार्गाश्च" इति श्लोकपादं करिष्यति; यद्यप्यन्येऽप्यत्र शब्दाः सन्ति, तथाऽपि प्रधानत्वेनायं गृह्यते ॥ १ ॥ २ ॥

**इह खलु पुरुषेणानुपहतसत्त्वबुद्धिपौरुषपराक्रमेण हितमिह चामुष्मिंश्च लोके समनुपश्यता तिस्र एषणाः पर्येष्टव्या भवन्ति । तद्यथा—प्राणैषणा, धनैषणा, परलोकैषणेति ॥ ३ ॥**

इहेति भोगार्थिपुरुषाधिकारे, यतो मोक्षार्थिपुरुषं प्रति धनैषणा सर्वथैवानुपयुक्ता । पुरुषेणेति पदं कुर्वन् य एव पुरुष एषणात्रयमन्विष्यति स एव पुरुषो भण्यते नान्यः, पशुतुल्यत्वादिति दर्शयति । पौरुषं शारीरं बलं, पराक्रमस्तु शौर्याख्यं मानसं बलम् । इहेति इह जन्मनि, अमुष्मिन्निति जन्मान्तरे । इष्यतेऽन्विष्यते साध्यतेऽनयेत्येषणा । प्राणो जीवितं, तत् साध्यते दीर्घत्वेन रोगानुपहतत्वेन चानयेति प्राणैषणा । एवं धनैषणा । परलोकोपकारकस्य धर्मस्यैषणा परलोकैषणा । कामैषणा तु प्राणैषणाधनैषणयोरन्तर्भावनीया, शरीरसंपत्तिधनसंपत्तिसाध्यत्वात् कामस्य; यदि वा कामैषणायां स्वत एव पुरुषः प्रवृत्तो भवति नोपदेशमपेक्षत इति तदेषणोपदेशो न कृतः ॥ ३ ॥

---

१ 'तिस्र एषणाः पर्येष्टव्या इत्यस्यानुकार्यस्यानुकरणेन तिस्रैषणा इत्यनेन शब्देन सह्यभेदविवक्षया रोः स्थाने कृतयलोपासिद्धौ भवति पुनः संहिता' इति गङ्गाधरः ।

**आसां तु खल्वेषणानां प्राणैषणां तावत् पूर्वतरमापद्येत। कस्मात्? प्राणपरित्यागे हि सर्वत्यागः। तस्यानुपालनं—स्वस्थस्य स्वस्थवृत्तानुवृत्तिः, आतुरस्य विकारप्रशमनेऽप्रमादः, तदुभयमेतदुक्तं वक्ष्यते च; तद्यथोक्तमनुवर्तमानः प्राणानुपालनाद्दीर्घमायुरवाप्नोतीति प्रथमैषणा व्याख्याता भवति ॥ ४ ॥**

प्राणैषणायाः प्रथमानुष्ठाने उपपत्तिमाह—आसां त्वित्यादि। त्रयाणां मध्ये द्वे पूर्वे भवतः, तृतीयायाः सर्वोत्तरत्वेनापूर्वत्वात्; तेन द्वयोरुत्तर इति न्यायात् पूर्वतरं प्राणैषणेति साधुत्तरप्रयोगः। प्राणशब्दो जीवितवचन एकवचनान्तोऽप्यस्ति; यदुक्तं—"दशैवायतनान्याहुः प्राणो येषु प्रतिष्ठिताः" (सू. अ. ३०) इति, तेन प्राणप्रत्यवमर्शकं 'तस्य' इति पदमेकवचनेन युक्तमेव। विकारान् प्रशमयतीति विकारप्रशमनं चिकित्सा, तस्मिन्। अप्रमादः अवधानेनानुष्ठानम्। वक्ष्यते चेति निखिलेन शास्त्रेण। प्राणानुपालनादिति प्राणानुपालनसाधनात्; तेन प्राणानुपालनदीर्घायुष्ट्वयोरर्थभेदात् साध्यसाधनभावो नास्तीति यच्चोच्यते तन्निरस्तं भवति। प्रथमेति प्राधान्यात् प्राणैषणा ॥४॥

**अथ द्वितीयां धनैषणामापद्येत, प्राणेभ्यो ह्यनन्तरं धनमेव पर्येष्टव्यं भवति; न ह्यतः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः, तस्मादुपकरणानि पर्येष्टुं यतेत। तत्रोपकरणोपायाननुव्याख्यास्यामः; तद्यथा—कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि, यानि चान्यान्यपि सतामविगर्हितानि कर्माणि वृत्तिपुष्टिकराणि विद्यात्तान्यारभेत कर्तुं; तथा कुर्वन् दीर्घजीवितं जीवत्यनवमतः पुरुषो भवति। इति द्वितीया धनैषणा व्याख्याता भवति॥५॥**

अथेति प्राणैषणानन्तरम्। द्वितीयामिति हेतुगर्भं विशेषणं, यस्मादियमेव द्वितीया प्राणैषणानन्तरमवश्योपादेयत्वेन, तत इयमेवोच्यत इत्यर्थः। प्राणैषणामनु चास्याः प्राधान्यं दर्शयति—प्राणेभ्यो हीत्यादि। पापशब्देन पापकार्यं दुःखमुच्यते। उपकरणम् आरोग्यभोगधर्मसाधनीभूतो धनप्रपञ्चः, स यस्य नास्त्यसावनुपकरणः। धनोपायानिति वक्तव्ये उपकरणोपायानिति यतः करोति, तेन धनस्य भोगधर्मसाधनार्थमेवोत्पादमिच्छन्ति, न पुनः कृपणस्येव विनियोगशून्यस्य सुसंवर्धितमात्रकरणार्थम्। अन्यान्यपीति प्रतिग्रहाध्यापनादीनि। वृत्तिः वर्तनं, पुष्टिः धनसंपत्तिः। अनवमतः अनवज्ञातो बहुमानगृहीत इति यावत्। दीर्घं जीवितं जीवति धारयतीत्यर्थः, अनेकार्थत्वाद्धातूनां; यदि वा दीर्घजीवितं यथा स्यात्तथा जीवतीति क्रियाविशेषणत्वेन व्याख्येयम् ॥ ५ ॥

१ अस्याग्रे 'किमर्थमिति चेत् उच्यते' इत्यधिकः पाठ उपस्कारे उपलभ्यते। २ 'दीर्घजीवितमनवमतः पुरुषो जीवति' इति पा०। ३ 'सुसंबन्धितामात्राकरणार्थं' इति पा०। ४ 'पुष्टिर्बलसंपत्तिः' इति पा०।

**अथ तृतीयां परलोकैषणामापद्येत। संशयश्चात्र, कथं? भविष्याम इतश्च्युता नवेति; कुतः पुनः संशय इति, उच्यते—सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चागमप्रत्ययादेव पुनर्भवमिच्छन्ति; श्रुतिभेदाच्च—**

**'मातरं पितरं चैके मन्यन्ते जन्मकारणम्।**
**स्वभावं परनिर्माणं यदृच्छां चापरे जनाः ॥ इति।'**

**अतः संशयः—किं नु खल्वस्ति पुनर्भवो न वेति ॥६॥**

परलोकैषणां व्याकरोति—अथेत्यादि। अत्र च परलोकस्य दुर्ज्ञेयत्वेन चार्वाकादिनास्तिकासंमतत्वेन च परलोके प्रमाणेन व्यवस्थापयितुं निर्णयार्थं प्रमाणप्रवृत्तिविषयं संशयमेव तावत् परलोके दर्शयति—संशयश्चात्रेत्यादि। इतश्च्युता इह जन्मनि मृताः, भविष्यामो जन्मान्तर इत्यर्थः। संशयहेतुं पृच्छति—कुतः संशयः पुनरिति। वादिविप्रतिपत्तिं संशयहेतुमाह—उच्यत इत्यादि। प्रत्यक्षपरा अनुमतप्रत्यक्षैकप्रमाणाः। परोक्षत्वात् प्रत्यक्षाविषयत्वात्। पुनर्भवस्य जन्मान्तरस्य। नास्ति पुनर्भवो नास्ति कर्मफलं नास्त्यात्मेत्यादिनास्तिना प्रचरतीति नास्तिकः, तस्य भावो नास्तिक्यम्। यत् प्रत्यक्षप्रमाणेनोपलभ्यते घटपटादि, तदेव परमस्ति; नोपलभ्यते च प्रत्यक्षेण परलोकः, तस्मान्नास्ति परलोक इति नास्तिकाभिप्रायः। अस्ति पुनर्भव इति येषां मतं तान् दर्शयति—सन्तीत्यादि। सन्ति चेत्यत्र 'अपरे' इति वाक्यशेषः। आगमप्रत्ययात् आगमप्रामाण्यात्। आगमं च पुनर्भवप्रतिपादकं दानतपोयज्ञेत्यादि दर्शयिष्यत्यग्रे। इच्छन्तीत्यत्र 'ये' इति वाक्यशेषः। एवं तावद्वादिविप्रतिपत्तिरेका संशयकारणं दर्शिता; संशयहेत्वन्तरमाह—श्रुतिभेदाच्चेत्यादि। श्रूयत इति श्रुतिः; प्रतिवादिवचनमेवंग्रन्थनिबद्धम्। एतानि च मातापितरावेव जन्मकारणमित्यादीनि पुनर्भवप्रतिक्षेपकाणि वचनानि। आगमप्रत्ययादस्ति पुनर्भव इति यो ब्रूते, तद्वचनेन समं वादिविप्रतिपत्तिरूपतयैव संशयकारणं भवतीत्यत उक्तमुपसंहारे 'अतः संशयः' इति। एके मन्यन्ते जन्मकारणमिति जन्मकारणमिति पदं मातरं पितरं तथा स्वभावं तथा परनिर्माणमिति पदत्रयेण संबध्यते; यदृच्छां चाऽपरे जना इत्यत्र मन्यन्ते जन्मकारणमिति पदं संबध्यते। मातापितरावेवात्मान्तरनिरपेक्षावपत्योत्पादने कारणं, तेन पूर्वशरीरं परित्यज्य शरीरान्तरपरिग्रहरूप आत्मनः परलोको नास्तीति प्रथमवादिनः पक्षः। परिदृश्यमानपृथिव्यादिभावानामेवायं स्वभावो—यत्—संयोगविशेषान्मिलिताः सन्तश्चेतनं पुरुषादिलक्षणं कार्यविशेषमारभन्ते, यथा सुराबीजादीनि प्रत्येकममदकराण्यपि मदकरं मद्यमारभन्ते, नात्र कश्चिदात्मा विद्यते यस्य परलोकः स्यादिति स्वभाववादिनो भावः। पर ऐश्वर्यादिगुणयुक्त आत्मविशेषः, तेन संसार्यात्मनिरपेक्षिणा निर्माणं

१ 'भूतानाम्' इति पा०।

परनिर्माणं, तत्रापि परस्यैवैश्वर्यादिगुणयुक्तस्यात्मविशेषस्य प्रभावाद्भूतानि चेतयन्ते नात्मान्तरमस्तीति परलोकाभावः । यदृच्छा कारणाप्रतिनियमेनोत्पादः; न कारणप्रतिनियमेन कार्योत्पादोऽवधारयितुं शक्यते, अवधारकप्रमाणानां प्रामाण्यानवधारणात्; तस्मादात्मैव पुनर्भवमनुभवतीति न वाच्यमिति यादृच्छिकस्याभिप्रायः ॥ ६ ॥

**तत्र बुद्धिमान्नास्तिक्यबुद्धिं जह्याद्विचिकित्सां च । कस्मात् ? प्रत्यक्षं ह्यल्पम्; अनल्पमप्रत्यक्षमस्ति, यदागमानुमानयुक्तिभिरुपलभ्यते; यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते, तान्येव सन्ति चाप्रत्यक्षाणि ॥ ७ ॥**

पुनर्भवास्तित्वपक्षं गृहीत्वा प्राह—तत्रेत्यादि । बुद्धिमानिति प्रशस्तबुद्धियुक्तः । नास्त्येव परलोक इति विपर्ययज्ञानं नास्तिक्यबुद्धिः, तां जह्यात् । परलोकविषयो विपर्ययो यथा धर्मानुष्ठानं प्रति विरोधकः, तथा लोकक्रमेणास्ति परलोको न वेति संशयोऽपि धर्मानुष्ठानं प्रति विरोधक इत्याह—विचिकित्सां चेति; विचिकित्सां जह्यादिति संबन्धः, विचिकित्सा सन्देहः, सा चेह प्रकृतत्वात् परलोकविषयैव । अत्रैव हेतुप्रश्नपूर्वकं हेतुमाह—कस्मादित्यादि । अप्रत्यक्षत्वात् परलोको नास्तीति प्रथमवादिमतं दूषयति—प्रत्यक्षमित्यादि । यथा, प्रत्यक्षं प्रमाणमव्यभिचारिप्रमाजनकत्वेन; तथाऽऽगमादीन्यपि तथाभूतप्रमाजनकत्वात् प्रमाणान्येव; ततश्च प्रत्यक्षाविषयत्वेनैव यत् पुनर्भवस्य नास्तित्वं व्यवस्थाप्यते तन्न युक्तमिति प्रकरणार्थः । पुनर्भवसाधकानि चागमादीन्यग्रे वक्ष्यमाणानि सन्त्येवेति भावः । आगमादीनि लक्षणतोऽग्रेऽभिधास्यन्ते । प्रत्यक्षाविषयत्वे सत्यपि यान्यन्यप्रमाणसिद्धानि सन्ति तान्याह—यैरेवेत्यादि । प्रत्यक्षमिति प्रत्यक्षविषयं घटादि । सन्तीति इन्द्रियोपक्रमणीयोक्तानुमानगम्यत्वादिति बोद्धव्यम् ॥ ७ ॥

**सतां च रूपाणामतिसन्निकर्षादतिविप्रकर्षादावरणात् करणदौर्बल्यान्मनोनवस्थानात् समानाभिहारादभिभवादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः; तस्मादपरीक्षितमेतदुच्यते—प्रत्यक्षमेवास्ति, नान्यदस्तीति ॥ ८ ॥**

इतश्च प्रत्यक्षानुपलब्धिर्न वस्त्वभावनिश्चयकारिकेत्याह—सतामित्यादि । सतामित्यग्रे वक्ष्यमाणातिसन्निकर्षाद्यभावे प्रत्यक्षेणैव गृह्यमाणत्वेन सतामित्यर्थः । प्रत्यक्षानुपलब्धिरित्यतिसन्निकर्षादिभिः सह प्रत्येकमभिसंबध्यते । अतिसन्निकर्षादनुपलब्धिर्यथा—नयनगतकज्जलादेः, अतिविप्रकर्षाद्यथा—दूराकाशगतस्य पक्षिणः, आवरणाद्यथा—कुड्यादिपिहितस्य घटादेः, करणदौर्बल्याद्यथा—कामलाद्युपहतस्य चक्षुषः पटसौक्ष्म्याद्यप्रतिभानं, मनोनवस्थानाद्यथा—कान्तामुखनिरीक्षणप्रहितमनसः पार्श्वागतवचनानवबोधः, समानाभिहाराद्यथा—बिल्वराशिप्रविष्टस्य बिल्वस्येन्द्रियसंबद्धस्यापि भेदेनाग्रहणम्, अभिभवाद्यथा—मध्यन्दिने उल्कापातस्य, सौक्ष्म्याद्यथा—त्रिचतुर्हस्तप्रमाणदेशवर्तिनः क्रिमिविशेषलिक्ष्यादेरग्रहणम् ॥ ८ ॥

**श्रुतयश्चैता न कारणं, युक्तिविरोधात् ।**
**आत्मा मातुः पितुर्वा यः सोऽपत्यं यदि संचरेत् ।**
**द्विविधं संचरेदात्मा सर्वो वाऽवयवेन वा ॥ ९ ॥**
**सर्वश्चेत् संचरेन्मातुः पितुर्वा मरणं भवेत् ।**
**निरन्तरं, नावयवः कश्चित्सूक्ष्मस्य चात्मनः ॥ १० ॥**

संप्रति श्रुतिभेदवादिमतं दूषयति—श्रुतयश्चेत्यादि । न कारणमिति न पुनर्भवप्रतिषेधे कारणमित्यर्थः । युक्तिविरोधात् उपपत्तिविरोधात् । अपत्यशरीरे मातापित्रोः कारणत्वमनुमतमेव, यतस्तथाविधे मातापित्रोः कारणत्वे सत्यपि चैतन्यहेतोरात्मनः परलोकादागमने प्रेत्यभावोऽखण्डित एवेति । चैतन्यमपत्यस्य मातापित्रोरपि चैतन्यहेतुर्य आत्मा तत एव भवतीति यो मन्यते तं प्रत्याह—आत्मा मातुरित्यादि । द्विविधं द्विप्रकारम् । सर्व इति मातरं पितरं परित्यज्यापत्यं गच्छेत्; अवयवेनेति एकोऽवयवो वाऽऽत्मनो मातरि पितरि वा तिष्ठेत्, अन्यश्चैकदेश आत्मनोऽपत्यं गच्छेत् । प्रथमपक्षे दूषणमाह—सर्वश्चेत्यादि । निरन्तरमिति च्छेदः, निरन्तरं तत्कालमेव, यदि मातुरात्माऽपत्यं संचरेत्तदा तत्कालमेव मातुर्मरणं, यदि तु पितुरात्माऽपत्यं संचरेत्तदा तत्कालमेव पितुर्मरणं स्यादिति । द्वितीयं पक्षं दूषयति—नावयव इत्यादि । सूक्ष्मस्येति अस्थूलस्य; स्थूलानां पृथिव्यादीनामवयवा भवन्ति, न तु सूक्ष्माणामाकाशकालमनोबुद्धिप्रभृतीनां; ततश्चावयवाभावादात्मनोऽवयवेन संचरणं दूरमपास्तमित्यर्थः ॥ ९ ॥ १० ॥

**बुद्धिर्मनश्च निर्णीते यथैवात्मा तथैव ते ।**
**येषां चैषा मतिस्तेषां योनिर्नास्ति चतुर्विधा ॥ ११ ॥**

अथ शङ्क्यते—माऽऽत्मा मातापित्रोः संचरतु, बुद्धिस्तु तयोर्मनो वाऽपत्यं संचरतु, अत एवापत्यस्य चैतन्यं भविष्यतीत्याह—बुद्धिर्मनश्चेत्यादि । निर्णीते व्यवस्थापिते प्रमाणेन, किंभूतेनेत्याह—यथैवात्मा निरवयवत्वेनावयवसंचरणाक्षमस्तथा तत्कालमेव मातापितृपरित्यागप्रसङ्गेन कार्त्स्न्येनापि संचरितुमक्षमः, तथा ते अपि बुद्धिमनसी निरवयवत्वान्नैकदेशेन संचरेयातां, मातापित्रोस्तत्कालमेवाबुद्धिमत्त्वामनस्कत्वप्रसङ्गाच्च न कार्त्स्न्येन संचरेयातामिति भावः । दूषणान्तरमाह—येषामित्यादि । येषां मतिरिति मातापितरावेवापत्ये चैतन्यकारणमित्येवंरूपा । चतुर्विधा योनिरिति जरायुजाण्डजसंस्वेदजोद्भिज्जलक्षणा । एवं मन्यते—संस्वेदजानां मशकादीनां तथोद्भिज्जानां गण्डूपदादीनां चेतनानां मातापितरौ न विद्येते; ततस्तेषामचैतन्यं स्यात्, मातापित्रोश्चेतनकारणयोरभावादिति ॥ ११ ॥

१ 'स चेह प्रकृतत्वात् परलोकविषये एव' इति पा० । २ 'नद्यादिपिहितस्य' इति पा० ।

**विघात् स्वाभाविकं षण्णां धातूनां यत् स्वलक्षणम् ।**
**संयोगे च वियोगे च तेषां कर्मैव कारणम् ॥ १२ ॥**

स्वाभाविकवादिनो भूतचैतन्यपक्षं दूषयति—विघादित्यादि । स्वभावकृतं स्वाभाविकम् । षण्णां धातूनामिति पृथिव्यप्तेजोवाय्वाकाशात्मनाम्, एषां च धातुत्वं शरीरधारणाजगद्धारणाच्च । स्वलक्षणम् आत्मीयमव्यभिचारि लक्षणं; तच्च पृथिव्याः काठिन्यादि, अपां द्रवत्वादि, तेजस उष्णत्वादि, वायोस्तिर्यग्गमनादि, आकाशस्याप्रतिघातादि, आत्मनो ज्ञानादि; एतेन, एतदेव परमेषां लक्षणं स्वाभाविकं, न तावदात्मरहितानामेषां चैतन्यमपि स्वाभाविकमस्तीति दर्शयति । ततश्च यत् प्रत्येकं भूतानां न संभवति तन्मिलितानामपि न संभवति चैतन्यं; यतो भूतानामपि संयोगाच्चैतन्यसंभवे बहूनि चेतनानि स्युर्बाल्याद्यवस्थाभेदात्, ततश्च ज्ञातृभेदात् प्रतिसंधानानुपपत्तिरिति भावः; आत्मसंबन्धेन तु चैतन्यं संमतमेव, परं तत्रापि गर्भोत्पत्तौ भूतानामात्मसंबन्धे तथा मरणे भूतानामात्मनो वियोगे कर्मैव जन्मान्तरकृतं कारणं, नान्यत् । तेन भूतसंयोगविभागकारणजन्मान्तरकृतकर्मस्वीकारात् प्रेत्यभावः स्वीकृतो भवतीति भावः ॥ १२ ॥

**अनादेश्चेतनाधातोर्नेष्यते परनिर्मितिः ।**
**पर आत्मा स चेद्धेतुरिष्टोऽस्तु परनिर्मितिः ॥ १३ ॥**

परनिर्माणपक्षं दूषयति—अनादेरित्यादि । अत्र परनिर्माणपक्षे शरीरस्यात्मरहितस्य परेण निर्माणं वाऽभिप्रेतं स्यात्, आत्मनो वाऽपि परेण निर्माणमभिप्रेतं स्यात्; आत्मनः परनिर्माणं दूषयति—अनादेरित्यादि । नित्यस्य चेतनाधातोरिति आत्मनः; नेष्यते नित्यस्योत्पादककारणाभावादिति भावः; नित्यत्वं चात्मनः शारीरे प्रतिपादयिष्यति । अथ शरीरमात्रस्य परनिर्माणमभिप्रेतं, तदनुमतमेव; परेणाऽऽत्मना धर्माधर्मसहायेन तस्य क्रियमाणत्वादित्याह—पर इत्यादि । हेतुरिष्ट इति शरीरोत्पादे हेतुरिष्ट इत्यर्थः; अस्तु परनिर्मितिरीदृशी प्रेत्यभावाविरोधिनीति भावः । एवं मन्यते—परेणैश्वर्यादिगुणयुक्तेनात्मविशेषेणैतच्चेतनं शरीरं क्रियमाणं चेतनाहेतुभूतातिरिक्तात्मसंबन्धमन्तरा ( चेतनायुक्तं ) कर्तुं न पार्येत, घटादिवदचेतनत्वप्रसङ्गात्; चेतनाहेतुश्चात्मा नित्यत्वेन न क्रियते, तस्माच्चेतनाहेतुनित्यत्वेन जन्मान्तरसंबन्धिनमात्मानं गृहीत्वा शरीरं चेतनं परः करोतीति स्वीकरणीयम्; एवमपि चेश्वरदरिद्रादिजगद्वैचित्र्यदर्शनादात्मनो धर्माधर्मयोगवैचित्र्यं कल्पनीयं; तथाच सत्यात्मन एव धर्माधर्मसहायताऽवश्यं स्वीकरणीया, तस्मात् स एव शरीराद्युत्पत्तौ कारणमस्तु किमपरेणेहात्मविशेषकल्पनेन; यदि वा, एवमात्मन्यनेकजन्मसंबन्धिनि संसारहेतुधर्माधर्मगुणशालिनि सिद्धे अस्तु

सोऽप्यात्मविशेषः कारणम्, अतो न काचित् क्षतिरिति ॥१३॥

**न परीक्षा न परीक्ष्यं न कर्ता कारणं न च ।**
**न देवा नर्षयः सिद्धाः कर्म कर्मफलं न च ॥ १४ ॥**
**नास्तिकस्यास्ति नैवात्मा यदृच्छोपहतात्मनः ।**
**पातकेभ्यः परं चैतत् पातकं नास्तिकग्रहः ॥ १५ ॥**

यदृच्छावादिमतं दूषयति—न परीक्षेत्यादि । यदृच्छावादी खल्वेकमपि प्रमाणं नानुमन्यते, ततश्च तस्याप्रामाणिकत्वात् प्रमाणं विनैव यत्किञ्चिद्ब्रुवतो न श्रद्धेयं वचनं भवति, तस्मादुपेक्षणीय एवायमिति प्रकरणाभिप्रायः । यदृच्छया अपरिस्थितपक्षतया, उपहत इहलोकपरलोकानुपयुक्त आत्मा यस्य स यदृच्छोपहतात्मा; तस्य परीक्षा नास्तीति परीक्षाहेतूनां प्रमाणानामभावादित्यर्थः; परीक्ष्यमपि नास्ति, परीक्षकप्रमाणाभावादेव; एवं कर्ताऽपि नास्ति तत्कारणमपि नास्ति, प्रमाणास्वीकारादिति भावः; तथा सर्वजनसिद्धा देवादयोऽपि न सन्तीत्यभिधानेन नास्तिकस्य वर्जनीयत्वं दर्शयति । पातकेभ्यो ब्रह्मवधादिभ्यः; परं श्रेष्ठं; नास्ति परलोक इत्यादिको ग्रहो नास्तिकग्रहः; नास्तिकबुद्ध्या ह्युच्छृङ्खलः पुरुषः सर्वमपि पातकं करोतीति भावः ॥ १४ ॥ १५ ॥

**तस्मान्मतिं विमुच्यैताममार्गप्रसृतां बुधः ।**
**सतां बुद्धिप्रदीपेन पश्येत्सर्वं यथातथम् ॥ १६ ॥**

नास्तिकतापरित्यागेन यथाकर्तव्यतामाह—तस्मादित्यादि । एतामिति नास्तिकबुद्धिम् । अमार्गे अधर्मे प्रसृता अमार्गप्रसृता । बुद्धिरेव प्रदीपो बुद्धिप्रदीपः, तेन प्रत्यक्षादिप्रमाणेन पश्येदित्यर्थः । यथातथमिति यथास्वरूपम् ॥ १६ ॥

**द्विविधमेव खलु सर्वं सच्चासच्च; तस्य चतुर्विधा परीक्षा—आप्तोपदेशः, प्रत्यक्षम्, अनुमानं, युक्तिश्चेति ॥ १७ ॥**

संप्रति परपक्षं दूषयित्वा स्वपक्षपरलोकसाधनानि प्रमाणान्यवतारयति—द्विविधमित्यादि । सर्वमिति यत्किंचित् प्रमाणप्रतीयमानं, तद्द्विविधं; तद्द्वैविध्यमाह—सच्चासच्च; सदिति विधिविषयप्रमाणगम्यं भावरूपम्, असदिति निषेधविषयप्रमाणगम्यमभावरूपम् । परीक्ष्यते व्यवस्थाप्यते वस्तुस्वरूपमनयेति परीक्षा प्रमाणानि, आप्तोपदेशादय उत्तरग्रन्थे स्फुटा भविष्यन्ति ॥ १७ ॥

**आप्तास्तावत्—**
**रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।**
**येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥ १८ ॥**
**आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ।**
**सत्यं, वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः ॥ १९ ॥**

---

१ 'विभागे' इति पा० । २ 'उद्भूततद्भूतसंयोगकारण०' इति पा० । ३ 'इष्टाऽस्तु' इति पा० । ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

१ 'सोऽप्यात्मा विशेषकारणं' इति पा० । २ 'कस्मान्नीरजस्तमसो मृषा' इति पा० ।

आप्तोपदेशं दर्शयितुमाप्तमेव तावदाह—आप्ता इत्यादि। निःशेषेण मुक्ता निर्मुक्ताः। तपोज्ञानबलेनेति रजस्तमोनिर्मुक्तौ कारणत्वेन योजनीयम्। त्रिकालमिति अतीतानागतवर्तमानविषयम्। अमलमिति यथार्थग्राहित्वेन। अव्याहतमिति क्वचिदपि विषयेऽकुण्ठितशक्तित्वेन। आप्ती रजस्तमोरूपदोषक्षयः, तद्युक्ता आप्ताः; शासति जगत्कृत्स्नं कार्याकार्यप्रवृत्तिनिवृत्त्युपदेशेनेति शिष्टाः; बोद्धव्यं विशेषेण बुद्धमेतैरिति विबुद्धाः; आप्ताः, शिष्टाः, विबुद्धा इति संज्ञात्रयेणाप्तानां लोके प्रसिद्धिं दर्शयति; तेषामाप्तानां वाक्यमसंशयं निश्चितं सत्यं यथार्थमित्यर्थः। तद्वाक्यसत्यत्वे हेतुमाह—वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमा इति। नीरजस्तमा इति तमप्प्रत्ययान्तः शब्दः, तेन नीरजस्त्वप्रकर्षेण तमोऽपि व्युदस्तं भवति; न हि सर्वथा नीरजस्के पुरुषे तमो भवति; यदुक्तं—"नारजस्कं तमः" (वि. अ. ६) इति। वक्ष्यन्ति ते कस्मादसत्यं न कस्मादपीत्यर्थः; असत्यं मिथ्याज्ञानाद्वाऽभिधीयते, सम्यग्ज्ञाने सत्यपि रागद्वेषाभ्यां वाऽभिधीयते, तच्च त्रितयमपि मिथ्याज्ञानरागद्वेषरूपं रजस्तमोनिर्मुक्ते सत्त्वगुणोद्रेकादमलविज्ञाने न संभवतीत्यर्थः; यदि वा 'नीरजस्तमसो मृषा' इति पाठः सुगमः। एतच्चाप्तलक्षणं सहजाप्तब्रह्माद्यभिप्रायेण, लौकिकानां तु पुरुषाणामाप्तत्वं प्रतिविषयसम्यग्ज्ञानसंभवेन तद्विषयरागद्वेषासंभवेन च बोद्धव्यम्; एतेन, आप्तोपदेश इति शब्दरूपप्रमाणलक्षणमुक्तं भवति; बुद्धिप्रमाणपक्षे तु, आप्तोपदेशजनिता बुद्धिः प्रमाणमिति बोद्धव्यम् ॥ १८ ॥ १९ ॥

**आत्मेन्द्रियमनोर्थानां सन्निकर्षात् प्रवर्तते।**
**व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते ॥२०॥**

प्रत्यक्षलक्षणमाह—आत्मेन्द्रियेत्यादि। सन्निकर्षादिति सम्बन्धात्; स च सम्बन्धः—संयोगः, समवायः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवेतसमवायः, विशेषणविशेष्यभावलक्षणो बोद्धव्यः। व्यक्ता इत्यनेन व्यभिचारिणीमयथार्थबुद्धिं संशयं च निराकरोति। तदात्वे तत्क्षणम्; अनेन च प्रत्यक्षज्ञानानन्तरोत्पन्नानुमानज्ञानं स्मरणं च परम्परयाऽऽत्मेन्द्रियमनोर्थसन्निकर्षजं व्यवच्छिनत्ति; आत्मादिचतुष्टयसन्निकर्षाभिधानं च प्रत्यक्षकारणाभिधानपरं; तेन, 'इन्द्रियार्थसन्निकर्षात् प्रवर्तते या' इत्येतावदेव लक्षणं बोद्धव्यम्; एतेन सुखादिविषयमपि प्रत्यक्षं गृहीतं भवति; तत्र हि चतुष्टयसन्निकर्षो नास्ति, आत्मसन्निकर्षस्तु प्रमाणज्ञानसाधारणत्वेनैव लक्षणानुपयुक्तः। इह च प्रत्यक्षफलरूपाऽपि बुद्धिः प्रत्यक्षशब्देनाभिधीयते, तथैव लोकव्यवहारात्; परमार्थतस्तु यतो भवतीन्द्रियादेर्दर्शी बुद्धिस्तत् प्रत्यक्षम् ॥ २० ॥

**प्रत्यक्षपूर्वं त्रिविधं त्रिकालं चानुमीयते।**
**वह्निर्निगूढो धूमेन मैथुनं गर्भदर्शनात् ॥ २१ ॥**
**एवं व्यवस्यन्त्यतीतं बीजात् फलमनागतम्।**
**दृष्ट्वा बीजात् फलं जातमिहैव सदृशं बुधाः ॥ २२ ॥**

अनुमानस्वरूपमाह—प्रत्यक्षेत्यादि। प्रत्यक्षग्रहणं व्याप्तिग्राहकप्रमाणोपलक्षणार्थं, तेन प्रत्यक्षपूर्वमिति व्याप्तिग्राहकप्रमाणपूर्वकम्। त्रिविधमित्यनेनानुमानत्रैविध्यं दर्शयति; तेन, कार्यात् कारणानुमानं, यथा–गर्भदर्शनान्मैथुनानुमानं; तथा कारणात् कार्यानुमानं, यथा–बीजात् सहकारिकारणान्तरयुक्तात् फलानुमानं; तथाऽकार्यकारणभूतानां च सामान्यतो दर्शनादनुमानं, यथा–धूमाद्वर्तमानक्षणसंबन्धादग्न्यनुमानम्; एतत्त्रिविधमनुमानं गृहीतं भवति। त्रिकालमित्यनेन त्रिकालविषयत्वमनुमानस्य दर्शयति। अनुमीयते इत्यत्र 'येन तदनुमानम्' इति वाक्यशेषः। तेन, व्याप्तिग्रहणादनु अनन्तरं मीयते सम्यग्ज्ञायते परोक्षार्थो येन तदनुमानं, व्याप्तिस्मरणसहायलिङ्गदर्शनमित्यर्थः। त्रिविधमिति यदुक्तं तस्योदाहरणं दर्शयति–वह्निरित्यादि। एतच्च व्याकृतमेव[1]। निगूढः अदृश्यमानः। एवं व्यवस्यन्त्यतीतमिति व्यवच्छेदः। बीजादिति सहकारिकारणान्तरजलकर्षणाद्वियुक्तादिति बोद्धव्यम्। अनागतं फलं सदृशं व्यवस्यन्तीति सम्बन्धः। दृष्ट्वा बीजात् फलं जातमित्यनेन बीजफलयोः कारणकार्यलक्षणां व्याप्तिं दर्शयति; यद्यपि च कारणं कार्यं व्यभिचरति, यतो नावश्यं बीजसद्भावे फलं भवति, तथाऽपि सहकारिकारणान्तरयुक्तं बीजं फलं न व्यभिचरतीत्यभिप्रायो बोद्धव्यः; कारणसामग्री च कार्यं न व्यभिचरत्येव ॥ २१ ॥ २२ ॥

**जलकर्षणबीजर्तुसंयोगात् सस्यसंभवः।**
**युक्तिः षड्धातुसंयोगाद्गर्भाणां संभवस्तथा ॥ २३ ॥**
**मथ्यमन्थन(क)मन्थानसंयोगादग्निसंभवः।**
**युक्तियुक्ता चतुष्पादसंपद्व्याधिनिबर्हणी ॥ २४ ॥**

युक्तेः प्रमाणस्यान्यशास्त्रैरप्रसिद्धत्वेनोदाहरणान्येव तावद्दर्शयति[2], उदाहरणे ज्ञाते युक्तेर्लक्षणं सुखेन ज्ञायते इत्यभिप्रायेण—जलकर्षणेत्यादि। कर्षणशब्देन कर्षणसंस्कृता भूमिर्गृह्यते, जलकर्षणबीजर्तुसंयोगात् सस्यस्य संभवो भवतीति यज्ज्ञानं तद्युक्तिरिति योजनीयम्। षड्धातुसंयोगात् पञ्चमहाभूतात्मसंयोगात्। तथाशब्दो युक्तिरित्याकर्षति। मथ्यं मन्थनकाष्ठयन्त्रकं काष्ठं मन्थनं, मन्थानं काष्ठभ्रामणं; किंवा 'मन्थक' इति पाठः, तत्र मन्थानं भ्राम्यमाणकाष्ठं; संयोगान्मेलकादिति बोद्धव्यं, यतो मन्थनस्य क्रियारूपस्य संयोगो न सङ्गच्छते; किंवा मन्थनशब्देन मन्थनरज्जुरुच्यते। युज्यते संबध्यतेऽनयेति युक्तिः, तया

१ 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणं, तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते' इति न्यायदर्शनभाष्ये वात्स्यायनः। २ 'आत्मेन्द्रियमनइन्द्रियमनोर्थसंनिकर्षजं' इति पा०। ३ 'लक्षणार्थमुपयुक्तः' इति पा०।

[1] 'व्यक्तमेव' इति पा०। [2] 'अन्यशास्त्राप्रसिद्धत्वेन' इति पा०।

युक्ता युक्तियुक्ता । चतुष्पाद इति वक्तव्ये संपद्ग्रहणं गुणवच्चतुष्पादग्रहणार्थम् ॥ २३ ॥ २४ ॥

**बुद्धिः पश्यति या भावान् बहुकारणयोगजान् ।**
**युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया ॥२५॥**

संप्रति युक्तेर्लक्षणमाह-बुद्धिरित्यादि । या बुद्धिर्भावान् पश्यति विषयीकरोति, बहुकारणयोगो बहूपपत्तियोगः, जनिश्चायं ज्ञानार्थे, तेन बहूपपत्तियोगज्ञायमानानर्थान् या बुद्धिः पश्यति ऊहलक्षणा सा युक्तिरिति प्रमाणसहायीभूता । एवमनेन भवितव्यमित्येवंरूप ऊहोऽत्र युक्तिशब्देनाभिधीयते; सा च परमार्थतोऽप्रमाणभूताऽपि वस्तुपरिच्छेदे प्रमाणसहायत्वेन व्याप्रियमाणत्वात्, तथा तयैव ऊहरूपया प्रायो लोकानां व्यवहारादिह प्रमाणत्वेनोक्ता । अत एव प्रदेशान्तरे युक्तिं विना यथोक्तं प्रमाणत्रयं दर्शयिष्यति—"त्रिविधा वा ( परीक्षा ) सहोपदेशेन" ( वि. अ. ४ ) इति वचनात् । तथा, उपमानं गृहीत्वा रोगभिषग्जितीये शब्दादीनि चत्वारि प्रमाणान्यभिधास्यति । त्रिकाला वर्तमानातीतानागतविषया; त्रिकालविषयत्वं चास्यास्त्रिकालानुमानविषयोपदेशकत्वेनैव । त्रिवर्गसाधकत्वं च त्रिवर्गसाधनादेव, ऊहेनैव हि प्रायस्त्रिवर्गानुष्ठाने प्रवृत्तिर्भवति; (प्रमाणपरिच्छेदेन तु प्रचारो विरल एव ।) यत्तु बहुकारणजलकर्षणबीजर्तुसंयोगाद्भाविसस्यज्ञानं युक्तिरुच्यते, तच्चानुमानान्नार्थान्तरभूतं; तत्रानुमानाद्भेदो दुष्कर इति नाद्रियामहे; किंच कारणेभ्यः कार्यं प्रतीयमानं न कदाऽपि वर्तमानं प्रतीयते, ततश्च त्रिकालेति पराहतं स्यात् । अत्र शान्तरक्षितकमलशीलाभ्यां युक्तिप्रमाणान्तरस्वीकारे पूर्वपक्षसिद्धान्तावुक्तौ—"यस्मिन् सति भवत्येव न भवत्यसतीति च । तस्मादतो भवत्येतद्युक्तिरेषाऽभिधीयते ॥ प्रमाणान्तरमेवेदमित्याह चरको मुनिः । नानुमानमियं यस्माद्दृष्टान्तोऽत्र न विद्यते" ( त. सं. का. १६९२–९३ ) इति । एतच्छान्तरक्षितवचनं कमलशीलेन व्याख्यातं—"तद्भावभावित्वेन या तत्कार्यताप्रतीतिरियं युक्तिः; इयं च सविकल्पत्वान्न प्रत्यक्षं; नाप्यनुमानं दृष्टान्ताभावात्, तथाहि—दृष्टान्तोऽपि-अत एव तद्भावभावित्वात्तत्कार्यताप्रतिपत्तिः, तत्रापि दृष्टान्तोऽन्योऽन्वेषणीयः, तत्राप्यपर इत्यनवस्था स्यात्; तस्मात् प्रमाणान्तरं युक्तिरित्याह चरको वैद्यः; एवं पूर्वपक्षमुत्थाप्य दूषितं यत्—"कार्यकारणभावस्य प्रतिपत्तिर्न सङ्गता । तस्मादस्यां न भेदोऽस्ति साध्यसाधनयोर्यतः ॥ तद्भावव्यवहारे तु योग्यतायाः प्रसाधने । सङ्केतकालविज्ञातो विद्यतेऽर्थो निदर्शनम्" ( त. सं. का. १६९६–४८ ) । एतद्व्याख्यातं कमलशीलेन—"युक्तौ न साध्यसाधनयोर्भेदः; तथाहि—अत्र तद्भावभाविता हेतुः, कार्यकारणता च साध्या, न चानयोर्भेद उपलभ्यते पर्यायत्वात्तरुपादपवत्; अथ मतं-नैव कार्यकारणता साध्यते किंतर्हि तद्भावव्यवहार इति, तत्राह—तद्भावव्यवहारे इत्यादि; तस्या हेतुफलताया भावस्तद्भावः, तत्र व्यवहारो यः स तद्भावव्यवहारः ज्ञानाभिधानप्रवृत्तिलक्षणमनुष्ठानं, तस्मिन् योग्यता मूढं प्रति साध्यते; ये यद्व्यापारानन्तरनियतोपलम्भस्वभावास्ते तत्कार्यव्यवहारयोग्याः, तद्यथा—सङ्केतकालानुभूताः कुलालादिव्यापारानन्तरोपलम्भस्वभावा घटादयः; तथा च ताल्वादिव्यापारानन्तरनियतोपलम्भस्वभावाः शब्दा इति स्वभावो हेतुः; ततश्च स दृष्टान्तत्वादनुमानादभेदो युक्तेः" । एतौ च पूर्वपक्षसिद्धान्तौ एवंभूतयुक्त्यस्वीकारादेवाप्रतिविधेयौ ॥ २५ ॥

**एषा परीक्षा नास्त्यन्या यया सर्वं परीक्ष्यते ।**
**परीक्ष्यं सदसच्चैवं तया चास्ति पुनर्भवः ॥ २६ ॥**

उपसंहरति—एषेत्यादि । नास्त्यन्येतिवचनेनार्थापत्त्यसंभवादीनामन्यतन्त्रमतानां प्रमाणानां निषेधं करोति । प्रस्तुते परीक्षां प्रयोजयति—तया चास्ति उपलभ्यते च पुनर्भव इति ॥ २६ ॥

**तत्राप्तागमस्तावद्वेदः, यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः, स चाऽऽप्तागमः; आप्तागमादुपलभ्यतेदानत—पोयज्ञसत्याहिंसाब्रह्मचर्याण्यभ्युदयनिःश्रेयसकराणीति ॥ २७ ॥**

तत्र शब्दस्य पुनर्भवप्रतिपादकत्वं दर्शयति—तत्राऽऽप्तागम इत्यादि । प्रथमं वेदं प्रदर्शयन् वेदस्य निरस्तविभ्रमाशङ्कं प्रामाण्यं दर्शयति, यश्चान्योऽपीत्यनेन ग्रन्थेन वेदार्थाविपरीतत्वादिभिर्हेतुभिः परिच्छेदनीयप्रामाण्यायुर्वेदस्मृतिशास्त्रादीनि दर्शयति । शास्त्ररूपो वादः शास्त्रवादः । आप्तागमादिति वेदात् । यज्ञः अग्निष्टोमादिः; ब्रह्मचर्यम् उपस्थसंयमादि । अभ्युदयः स्वर्गः, निःश्रेयसं मोक्षः; अत्र यथायोग्यतया स्वर्गस्य मोक्षस्य च कारणमिति बोद्धव्यम् । एतेन जन्मान्तरभोग्यस्वर्गानेकजन्मलभ्यमोक्षोपदेशेनात्मनः परलोकः कथितो भवतीति भावः ॥ २७ ॥

**न चानतिवृत्तसत्त्वदोषाणामदोषैरपुनर्भवो धर्मद्वारेषूपदिश्यते ॥ २८ ॥**

आगमान्तरमाह—न चेत्यादि । अनतिवृत्तौ अवनुपशान्तौ सत्त्वदोषौ मनोदोषौ रजस्तमोरूपौ येषां ते तथा, तेषाम्; पुनर्भवो मोक्षः, धर्मद्वारेषु धर्मशास्त्रेषु, अदोषैः निर्मनोदोषैर्महर्षिभिः, उपदिश्यते न, इति सम्बन्धः; तेन पुनर्भव उपदिश्यते इत्यर्थः ॥ २८ ॥

**धर्मद्वारावहितैश्च व्यपगतभयरागद्वेषलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्मविद्भिरनुपहतसत्त्वबुद्धिप्रचारैः**

---

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'दृष्टान्तोऽन्वेषणीयः' इति पा० । ३ 'नाम्यां कार्यकारणताभावौ साध्येते, किं तर्हि व्यवहारः' इति मुद्रिततत्त्वसंग्रहपुस्तके पाठः ।

१ 'एव प्रतिविधेयौ' इति पा० । २ 'आप्तागमस्तावत्' इति पा० ।

**पूर्वैः पूर्वतरैर्महर्षिभिर्दिव्यचक्षुर्भिर्दृष्टोपदिष्टः पुनर्भव इति व्यवस्येदेवम्॥ २९॥**

आगमान्तरमृषिवचनमाह—धर्मद्वारेत्यादि। ब्रह्म अध्यात्मज्ञानं, तत्परैः। कर्मविद्भिः अनुष्ठातव्ययागादिकर्मविद्भिः। अनुपहतसत्त्वगुणो बुद्धेः प्रचारो बोधलक्षणो येषां ते तथा, एतेन विशुद्धबुद्धित्वं दर्शयति। दिव्यमतीन्द्रियार्थदर्शि चक्षुः समाधिरूपं ज्ञानं येषां ते दिव्यचक्षुषः, तैः। दृष्टोपदिष्टः स्वयमनुभूय कथित इत्यर्थः। इतिशब्दो हेतौ। एवमिति आगमेन॥२९॥

**प्रत्यक्षमपि चोपलभ्यते—मातापित्रोर्विसदृशान्यपत्यानि, तुल्यसंभवानां वर्णस्वराकृतिसत्त्वबुद्धिभाग्यविशेषाः, प्रवरावरकुलजन्म, दास्यैश्वर्यं, सुखासुखमायुः, आयुषो वैषम्यम्, इह कृतस्यावाप्तिः, अशिक्षितानां च रुदितस्तनपानहासत्रासादीनां प्रवृत्तिः, लक्षणोत्पत्तिः, कर्मसादृश्ये फलविशेषः, मेधा क्वचित् क्वचित् कर्मण्यमेधा, जातिस्मरणम्—इहागमनमितश्च्युतानामिति, समदर्शने प्रियाप्रियत्वम्॥ ३०॥**

प्रत्यक्षं च यद्यपि पुनर्भवं न गृह्णाति, तथाऽपि तत् पुनर्भवग्राहकानुमानस्य लिङ्गग्रहणे यथा व्याप्रियते तथा दर्शयति—प्रत्यक्षमपीत्यादि। विसदृशानीति कश्चित् कुरूपः, कश्चित् सुरूपः। तुल्यसंभवानां तुल्योत्पादकारणानां कश्चिद्गौरः कश्चित् कृष्णः, एवं स्वरादावपि विशेषो बोद्धव्यः। दास्यैश्वर्यमिति कस्यचिद्दास्यं कस्यचिदैश्वर्यम्। एवमपरत्रापि विपर्ययः पुरुषभेदेन बोद्धव्यः। सुखासुखमिति आयुषो विशेषणम्। रुदितादयोऽमी अव्युत्पन्नबालगोचरतया बोद्धव्याः; एते च रुदितादयो यथायोगमिष्टानिष्टस्मरणमन्तरा न भवन्ति, स्मरणं च पूर्वज्ञानं विना न भवतीति पूर्वजन्मज्ञानानुमानात् परलोकानुमायका भवन्ति। पूर्वप्रतिपादितं च विसदृशत्वादिवैचित्र्यमुत्तरत्र प्रतिपादनीयं च लक्षणोत्पत्त्यादिकारणान्तरादर्शने सति पूर्वजन्मकृतकारणानुमायकमिति परलोकानुमायकं मन्तव्यम्। लक्षणोत्पत्तिरिति सामुद्रकलक्षणप्रतिपादितलक्षणोत्पत्तिः। कर्मसादृश्ये सेवादिसादृश्ये। मेधा क्वचित् कर्मणि चित्रलेखनास्त्रविद्यादौ। जातेरतीतायाः स्मरणं जातिस्मरणं; तदेव स्मरणं दर्शयति—इहागमनमितश्च्युतानामिति; इह कुले जातोऽस्मि, इतश्च कुलादागतोऽसीत्येवमाकारं जातिस्मरणमित्यर्थः; यदि वा, इह जन्मनि च्युतानामिह जन्मनि पुनरागमनम्, अनेन च नामभ्रान्त्या यमपुरुषैर्नीतस्य पुनरागमनं दृश्यते। समदर्शने तुल्याकारे क्वचित् पुरुषे प्रियत्वं क्वचित् पुनरप्रियत्वमिति समदर्शने प्रियाप्रियत्वम्। अत्र चावान्तरानुमानभेदो विस्तरभयान्न दर्शितः॥ ३०॥

१ 'व्यवस्येदेवं पुनर्भवम्' इति पा०। २ 'कर्मसामान्ये' इति पा०। ३ '०मितश्च्युतानां च भूतानां' इति पा०।



**अत एवानुमीयते—यत्—स्वकृतमपरिहार्यमविनाशि पौर्वदेहिकं दैवसंज्ञकमानुबन्धिकं कर्म, तस्यैतत् फलम्; इतश्चान्यद्भविष्यतीति; फलाद्बीजमनुमीयते, फलं च बीजात्॥ ३१॥**

एवं प्रत्यक्षेण लिङ्गग्रहणं दर्शयित्वाऽनुमानमाह—अत एवेत्यादि। स्वकृतम् आत्मना कृतम्। अविनाशीति उपभोगं विनाऽविनाशि। पौर्वदेहिकं पूर्वदेहकृतम्। जन्मान्तराण्यनुगच्छतीत्यानुबन्धिकम्। एतत्फलमिति विसदृशापत्योत्पादादि फलम्; एतच्च संक्षेपादुत्पादितमेव। इतश्चेति इह जन्मनि कृतात् कर्मणः, अन्यदिति भाविजन्मान्तरं, भविष्यतीत्यनुमीयत इति संबन्धः। कथमनुमीयते इत्याह—फलादित्यादि। फलात् फलसदृशापत्यदर्शनात्, बीजं पूर्वजन्मकृतं कर्मादिकारणमनुमीयते; तथा फलं च भाविजन्मान्तरे सुखदुःखादि, बीजादिहजन्मकृतात् कर्मणोऽनुमीयत इति योजना॥ ३१॥

**युक्तिश्चैषा—षड्धातुसमुदयाद्गर्भजन्म, कर्तृकरणसंयोगात् क्रिया; कृतस्य कर्मणः फलं नाकृतस्य, नाङ्कुरोत्पत्तिरबीजात्; कर्मसदृशं फलं, नान्यस्माद्बीजादन्यस्योत्पत्तिः; इति युक्तिः॥ ३२॥**

तर्करूपयुक्तिविषयतां परलोकस्य दर्शयति—युक्तिश्चैषेत्यादि। षड्धातुसमुदायाद्गर्भजन्मेति वदता आत्मसंबन्धमन्तरा चेतना गर्भस्य नोत्पद्यते, आत्मा च परलोकसंबन्ध एवेति परलोकसद्भावे युक्तिरुपदर्श्यते। कर्तृकरणसंयोगात् क्रियेति आत्मानं कर्तारं विना क्रिया परिदृश्यमाना यागादिलक्षणा न भवतीति। आत्मन ऊहं दर्शयति—कृतस्येत्यादिनाऽबीजादित्यन्तेन। परिदृश्यमानदास्यैश्वर्यादिफलेन जन्मान्तरकृतस्य कर्मणः कारणभावं दर्शयति। कर्मसदृशं फलमिति पूर्वकृतशुभकर्मणः शुभं पुत्रधनादि फलम्। अत्र दृष्टान्तमाह—नान्यस्मादित्यादि। नान्यबीजात् शालिबीजादन्यस्य यवाङ्कुरस्योत्पत्तिरित्यर्थः। युक्तिमुपसंहरति—इति युक्तिरिति। अत्र बहुवक्तव्ये प्रमेये तथाविधोपयोगाभावाद्विस्तरभयाच्च विस्तरो न कृतः॥ ३२॥

**एवं प्रमाणैश्चतुर्भिरुपदिष्टे पुनर्भवे धर्मद्वारेष्ववधीयेत; तद्यथा—गुरुशुश्रूषायामध्ययने व्रतचर्यायां दारक्रियायामपत्योत्पादने भृत्यभरणेऽतिथिपूजायां दानेऽनभिध्यायां तपस्यनसूयायां देहवाङ्मानसे कर्मण्यक्लिष्टे देहेन्द्रियमनोर्थबुद्ध्यात्मपरीक्षायां मनःसमाधाविति; यानि चान्यान्यप्येवंविधानि कर्माणि सतामविगर्हितानि स्वर्ग्याणि वृत्तिपुष्टिकराणि विद्यात्तान्यारभेत कर्तुं; तथा कुर्वन्निह चैव यशो लभते प्रेत्य च स्वर्गम्। इति तृतीया परलोकैषणा व्याख्याता भवति॥ ३३॥**

१ 'विसदृशापत्यफलदर्शनात्' इति पा०।

संप्रति परलोकं व्युत्पाद्य तदुपयुक्तधर्मसाधनान्याह—एवमित्यादि। धर्मद्वारेषु धर्मसाधनद्वारेषु। इह चातिथिपूजादीनि सद्वृत्तोक्तान्यपि प्रकरणप्राप्तत्वेनोदाहरणार्थं पुनरभिधीयन्ते। देहादिपरीक्षायामवधीयेतेति वचनादवधानोपदर्शनेन देहादीनां क्षयित्वादिधर्मनिरूपणेनोपजायमानां मतिं विषयानभिषङ्गं[१] च जायमानमिच्छन्ति। विषयेषु प्रसक्तिं मनसो वारयित्वाऽऽत्मनि समाधानं मनःसमाधिः। अत्र च सर्वत्र 'अवधीयेत' इति संबन्धः। स्वर्ग्याणि स्वर्गहितानि स्वर्गकराणीति यावत्। वृत्तेर्धनस्य पुष्टिः वृत्तिपुष्टिः, धनैषणायां च वृत्तिपुष्टिकराभिधानं धर्महेतूनां वृत्तिहेत्वविरोधेनाचरणोपदेशार्थम्। यशो लभते धार्मिकोऽयमित्येवमादिख्यातिरूपम्। परलोकैषणा तृतीयैव, ततश्च पुनस्तृतीयेति पदं धर्मस्य प्राणधनकारणत्वेन धनैषणायाः प्राणधनैषणात्वप्रसक्तिप्रतिषेधार्थम्॥ ३३॥

**अथ खलु त्रय उपस्तम्भाः, त्रिविधं बलं, त्रीण्यायतनानि, त्रयो रोगाः, त्रयो रोगमार्गाः, त्रिविधा भिषजः, त्रिविधमौषधमिति॥ ३४॥**

संप्रति त्रिसंख्यावच्छिन्नोपोद्घातेनान्यान्यपि त्रिसंख्यावच्छिन्नानि स्वस्थातुरहितत्वेनेह वक्तव्यान्याह—अथ खल्वित्यादि। प्रथममुपस्तम्भा अभिधीयन्ते मूलभूतशरीरधारकत्वेन, तदनु बलमुपस्तम्भाहारादिजन्यत्वात्, तदनु रोगायतनानि बलविरोधकर्तृत्वेन, तदनु रोगास्तज्जन्यत्वेन, तदनु तन्मार्गज्ञानं सुविन्यस्तमेव, तदनु रोगप्रतिषेधार्थं प्रधानकारणवैद्याभिधानं, तदनु तदुपकरणत्वेन भैषज्यम्॥ ३४॥

**त्रय उपस्तम्भा इति—आहारः, स्वप्नो, ब्रह्मचर्यमिति; एभिस्त्रिभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्तते यावदायुःसंस्कारात् संस्कारमहितमनुपसेवमानस्य[२], य इहैवोपदेक्ष्यते॥ ३५॥**

अन्येन स्तभ्यमानं धार्यमाणमुप समीपं प्रधानकारणस्य गत्वा स्तम्भयति धारयतीत्युपस्तम्भः; यथा गृहधारणनियुक्तप्रधानस्तम्भसमीपवर्ती तद्बलाधायक उपस्तम्भः, तथेहापि शरीरस्यायुःसंप्रवर्तकेन कर्मणा ध्रियमाणस्याहारादयो धारकत्वेनोपस्तम्भा इत्युच्यन्ते। आयतनानि कारणानि 'रोगस्य' इति शेषः। ब्रह्मचर्यशब्देन इन्द्रियसंयमसौमनस्यप्रवृत्तयो ब्रह्मज्ञानानुगुणा गृह्यन्ते। आहारादयश्चेह प्रधानकल्पनया प्रशस्ता एव गृह्यन्ते, तेन विरुद्धकाहारादीनां शरीरानुस्तम्भकत्वं नोद्भावनीयम्; अत एव युक्तियुक्तैरिति विशेषणं करिष्यति, युक्त्या प्रशस्तेन योगेन युक्ता युक्तियुक्ताः। ब्रह्मचर्यस्यायुक्तिरनभ्यासादतिमात्रेन्द्रियसंयमनादिरूपा, सा हि मनःक्षोभादिहेतुर्भवति। उपचितं युक्तम्। आयुःसंस्कारात् आयुःकारणं धर्माधर्मावसानं यावदित्यर्थः; संस्कारशब्दः कारणवचनः। आहारादयश्च प्राधान्येनोक्ताः; तेनाभ्यङ्गादीनां शरीरधारकत्वमविरुद्धमेव। नन्वाहारादीनि सम्यगाचरतोऽपि विशेषैरसात्म्येन्द्रियार्थसंयोगादिजन्यैर्व्याधिभिरन्तराऽपि मरणं दृष्टमित्याह—संस्कारमित्यादि। संस्कारं कारणम्। अहितं 'शरीरस्य' इति शेषः। य इहैवोपदेक्ष्यत इति 'त्रीण्यायतनानि' इत्यादिना ग्रन्थेन॥ ३५॥

**त्रिविधं बलमिति—सहजं, कालजं, युक्तिकृतं च। सहजं यच्छरीरसत्त्वयोः प्राकृतं, कालकृतमृतुविभागजं वयःकृतं च, युक्तिकृतं पुनस्तद्यदाहारचेष्टायोगजम्॥ ३६॥**

युक्तिः आहारचेष्टयोः सम्यक् शरीरेण योजना। सत्त्वं मनः, मनसो बलं वा यत् 'उत्साह' उच्यते। प्राकृतमिति जन्मादिप्रवृत्तं प्राकृतधातुवृद्ध्या हेत्वन्तरनिरपेक्षं वृद्धं, दृश्यन्ते हि केचित् स्वभावादेव बलिनो दुर्बलाश्च केचित्। ऋतुविभागजम् "आदावन्ते च दौर्बल्यं" (सू. अ. ६) इत्याद्युक्तम्। आहारस्य मांससर्पिरादेः, चेष्टाया उचितविश्रामव्यायामादेर्योग आहारचेष्टायोगः; अन्ये तु योगशब्देन रसायनप्रयोगं ग्राहयन्ति॥ ३६॥

**त्रीण्यायतनानीति—अर्थानां कर्मणः कालस्य चातियोगायोगमिथ्यायोगाः। तत्रातिप्रभावतां दृश्यानामतिमात्रं दर्शनमतियोगः, सर्वशोऽदर्शनमयोगः, अतिश्लिष्टातिविप्रकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सनविकृतवित्रासनादिरूपदर्शनं मिथ्यायोगः; तथाऽतिमात्रस्तनितपटहोत्क्रुष्टादीनां शब्दानामतिमात्रं श्रवणमतियोगः, सर्वशोऽश्रवणमयोगः, परुषेष्टविनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः; तथाऽतितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः, सर्वशोऽघ्राणमयोगः, पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं मिथ्यायोगः; तथा रसानामत्यादानमतियोगः, सर्वशोऽनादानमयोगः, मिथ्यायोगो राशिवर्ज्येष्वाहारविधिविशेषायतनेषूपदेक्ष्यते; तथाऽतिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनां चात्युपसेवनमतियोगः, सर्वशोऽनुपसेवनमयोगः, स्नानादीनां शीतोष्णादीनां च स्पृश्यानामनानुपूर्व्योपसेवनं विषमस्थानाभिघाताशुचिभूतसंस्पर्शादयश्चेति मिथ्यायोगः॥ ३७॥**

अर्थानाम् इन्द्रियार्थानाम्। कर्मणः कायवाङ्मनःप्रवृत्तेः। कालस्य शीतोष्णवर्षलक्षणस्य। अतिप्रभावताम् आतपाग्निप्रभृतीनाम्।

१ 'विषयासङ्गं' इति पा०। २ 'संस्कारः स हितमुपसेवमानस्य' इति योगीन्द्रनाथसेनसंमतः पाठः।

१ 'शेषैः' इति पा०। २ 'यद्वीर्यमुच्यते' इति पा०। ३ 'अतिसूक्ष्मातिविप्रकृष्ट०' इति पा०। ४ वित्रासनेति जल्पकल्पतरावुपस्कारे च न पठ्यते।

अत्र हीनमात्रदर्शनं विकारं न करोति, तेन 'सर्वश' इत्युक्तम्। अदर्शनं चातिप्रभावतामेव बोद्धव्यम्, अप्रभावतां च घटादीनां दर्शनमतियोगादपि न दोषकरम्; एवमन्यत्रापि सर्वश इति व्याख्येयम्। अतिश्लिष्टं नयनप्रत्यासन्नम्, अतिविप्रकृष्टम् अतिदूरवर्ति, रौद्रम् अद्भुतकारणात्मकं भयजनकं, भैरवम् अनद्भुतमपि व्याघ्रादि, दिष्टं यदस्य द्वेष्यं, बीभत्सनं मनस उद्वेगकारकं, विकृतं हीनाङ्गादि, वित्रासनं झटिति भयजनकम्; आदिग्रहणादमेध्यादीनां ग्रहणम्। रौद्रादयो यद्यपि न रूपं किन्त्वाकृतिविशेषाः, तथाऽपि रूपैकार्थसमवायेन चक्षुर्र्था एव; न चेहेन्द्रियार्थग्रहणेन रूपादीनामेव परं ग्रहणमिति पूर्वमेव व्याख्यातं, यतः स्पर्शनरसनयोः सम्यग्योगेऽसम्यग्योगे च बहवः स्पर्शरसव्यतिरिक्ताः स्नानाभ्यङ्गादयः प्रकृतिसंयोगसंस्कारादयश्च कारणत्वेन वक्तव्याः। अतिमात्रस्तनितं प्रवृद्धो मेघध्वनिः, पटहः पटहशब्दः, उत्कृष्टं दर्पादतिमात्रं शब्दितं, प्रधर्षणं तिरस्कारः। तीक्ष्णो गन्धश्चक्षुर्विरेचनकारकः, यथा—कृष्णजीरकादीनाम्; उग्रो वमनकारको वचादीनाम्; अभिष्यन्दी स्तैमित्यकारको मस्तुसुरासवादीनां[१]; पूति अत्यर्थक्लिन्नं; विषयुक्तः पवनो विषपवनः; कुणपः शवः। रसानामिति रससहितानां द्रव्याणाम्। इहानादानमिति कुर्वन् हीनयोगोऽपि रसानां विकारकर इति दर्शयति। आहारविधिविशेषायतनानि रसविमाने वक्ष्यमाणानि "प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि" (वि. अ.१); तत्र राशिवर्ज्येष्विति वचनेन राशिं पृथक्करोति, राशेराहारस्य परिमाणरूपस्य यो दोषः—हीनमात्रत्वमतिमात्रत्वं वा, तस्यातियोगायोगाभ्यामेव गृहीतत्वात्; न मिथ्यायोगो राशेः संभवति; उक्तं हि—"राशिः पुनर्मात्रामात्राफलविनिश्चयार्थः" (वि. अ. १) इति। प्रकृत्यादीनां तु दोषादाहारस्य मिथ्यायोग एव परं संभवति, यतः प्रकृतिविरुद्धानां माषादीनां भोजनं मिथ्यायोग एवाहारस्य भवति; एवं संस्कारविरुद्धशक्तुपिण्डिकेऽपि मिथ्यायोग एव, तथा संयोगविरुद्धसमधृतमधुसर्पिरुपयोगेऽपि; एवं कालादिविरुद्धोदाहरणमपि रसविमाने प्रतिपादितं सर्वं मिथ्यायोगरूपमेव, तेषामयोगातियोगनिरपेक्षाणामेव दोषकर्तृत्वात्। शीतोष्णादीनामित्यादि। यद्यपि शीतोष्णादीनामभ्यङ्गादीनां च हीनयोगोऽपि रोगकरस्तथाऽपि सर्वशोऽनुपसेवनमिति वचनं सर्वशोऽनुपसेवनस्य भूरिप्रव्यक्तविकारकर्तृत्वाभिप्रायेण। अनानुपूर्व्या यथोक्तक्रमलङ्घनेन, यथा—स्नात्वा उत्सादनं, तथोष्णपीडितस्य सहसा शीतलपानीयावगाहनम्, एवमादि। अभिघातः खड्गहननादि, भूताः प्राणिनः पिशाचप्रभृतयः। आदिग्रहणाद्यत्किञ्चित् स्पर्शनसंबद्धं शरीरोपघातकमयोगातियोगव्यतिरिक्तं तद्गृह्यते॥ ३७॥

**तत्रैकं स्पर्शनमिन्द्रियाणामिन्द्रियव्यापकं, चेतःसमवायि, स्पर्शनव्याप्तेर्व्यापकमपि च चेतः; तस्मात् सर्वेन्द्रियाणां व्यापकस्पर्शकृतो यो भावविशेषः, सोऽयमनुपशयात् पञ्चविधस्त्रिविधविकल्पो भवत्यसात्म्येन्द्रियार्थसंयोगः; सात्म्यार्थो ह्युपशयार्थः॥ ३८॥**

ननु चक्षुरादीनि पञ्चेन्द्रियाणि, अतस्तेषां प्रतिनियताः पञ्चासात्म्येन्द्रियार्थसंयोगाः, तत् कथमेकोऽसात्म्येन्द्रियार्थसंयोग इत्याख्यायत इत्याशङ्क्य स्पर्शनेन्द्रियस्य सर्वेन्द्रियव्यापकत्वं दर्शयित्वा सर्वेन्द्रियानुगतं स्पर्शमर्थग्रहणकारणमेकरूपं दर्शयति, ततश्च तस्यैकस्यासात्म्येन्द्रियार्थेन संयोगादुपपन्न एकरूपोऽसात्म्येन्द्रियार्थसंयोग इति दर्शयति—तत्रैकमित्यादिना सात्म्यार्थो ह्युपशयार्थ इत्यन्तेन। एकं स्पर्शनमिति स्पर्शनेन्द्रियमेव, नान्यच्चक्षुरादि। इन्द्रियाणामिति निर्धारणे षष्ठी। इन्द्रियाणि चक्षुरादीनि व्याप्नोतीतीन्द्रियव्यापकं; स्पर्शनं हि सर्वेष्विन्द्रियेष्वस्ति, अत एव स्पृष्ट्वैवार्थमिन्द्रियाणि गृह्णन्ति। तर्हि कथं न सर्वदाऽर्थग्रहणं भवतीत्यत आह—चेत इत्यादिना। श्रोत्रं चात्रसदर्शने पाञ्चभौतिकं कर्णशष्कुलीगतनभोरूपं, तेन तस्यापि स्पर्शोऽस्ति; चेतःसमवायि मनःसंबन्धि; मनःसंबन्धकथनेन चार्थग्रहणं प्रति समर्थत्वं स्पर्शस्य दर्शयति, मनोऽधिष्ठितानामिन्द्रियाणामर्थग्राहकत्वात्। तत् किमणुपरिमाणेन मनसैकत्रस्थितेनैव स्पर्शनस्य सर्वेन्द्रियव्यापकस्य संबन्धात् सर्वेन्द्रियाणि प्रवर्तन्ते, तथा सति युगपत्पञ्चज्ञानोत्पत्तिप्रसङ्ग इत्याह—स्पर्शनेन्द्रियव्याप्तेर्व्यापकमपि चेत इति। स्पर्शनेनेन्द्रियाणां व्याप्तिः स्पर्शनेन्द्रियव्याप्तिः, तस्याश्चेतोऽपि व्यापकम्; एतदुक्तं भवति—यावति प्रदेशे स्पर्शनं तिष्ठति तावन्तं देशं मनोऽपि भ्रमति प्रत्यक्षेणार्थग्रहणार्थं, तेन यस्मिन् प्रदेशे यदा मनो वर्तते तदा तेन प्रदेशेन चक्षुरादिरूपेणार्थं गृह्णातीति न युगपज्ज्ञानोत्पत्तिः। प्रकृते योजयति—तस्मादित्यादि। व्यापकश्चासौ स्पर्शश्चेति व्यापकस्पर्शः, तेन कृतस्तन्निबन्धनः; सर्वेन्द्रियाणां भावविशेषः स्वभावविशेषोऽर्थग्रहणकारणीभूतः स्पर्श इत्यर्थः; यमधिकृत्योक्तम्—"स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च। द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः" (शा. अ. १) इति; अत्र श्लोके स्पर्शनसंबन्धकृतः सर्वेन्द्रियस्पर्शः स्पर्शनेन्द्रियसंस्पर्शशब्देनोक्तः, मानसस्तु स्पर्शश्चिन्त्येन विषयेण[१] सताऽपि संभवतीति तत्रैव व्याख्येयम्। विशेष इत्यत्र 'अस्ति' इति शेषः। सोऽयमेकस्येन्द्रियव्यापकस्य स्पर्शस्यैकरूपोऽसात्म्येन्द्रियार्थसंयोगः, अनुपशयादिति दुःखकर्तृत्वात्, पञ्चविधः चक्षुरसात्म्येन्द्रियार्थसंयोगो घ्राणासात्म्येन्द्रियार्थसंयोग इत्यादिरूपः सन्, पुनस्त्रिविधविकल्पो भवति—अयोगातियोगमिथ्यायोगेनेति भावः। एवं चैकप्रकारस्त्रिप्रकारस्तथा पञ्चदशप्रकारोऽसात्म्येन्द्रियार्थसंयोग उक्तो भवति। अनुपशयशब्देन चक्षुराद्यनुपशयविशेषोऽत्रासा-[२]

१ 'फाणितमुत्तरासवादीनां' इति पा०। २ 'स्पर्शनेन्द्रियं' इति पा०।

१ 'विषयेणासताऽपि' इति पा०। २ 'अत्रासात्म्येन्द्रियार्थसंयोगस्य पञ्चविधत्वं हेतोरुपदेशाद्बोद्धव्यं' इति पा०।

त्म्येन्द्रियार्थसंयोगस्य पञ्चविधहेतुत्वोपदेशाद्बोद्धव्यः, न ह्येकरूपोऽनुपशयः पञ्चविधत्वमसात्म्येन्द्रियार्थस्य कर्तुं समर्थः, यतश्चक्षुरादीनां प्रतिनियतान्येवोपघातकान्यतिभास्वररूपादीनि, ततश्च स्पर्शेन्द्रियव्याप्त्याऽपि नैकस्पर्शनेन्द्रियत्वं चक्षुरादीनाम्, एकत्वे ह्येकेन्द्रियोपघातकमन्येषामप्युपघातकं स्यादिति मन्तव्यम्। सात्म्योपशययोरेकार्थतां दर्शयति—सात्म्यार्थो ह्युपशयार्थ इति। एतेनानुपशयेनेन्द्रियार्थसंयोगं दर्शयित्वाऽसात्म्येन्द्रियार्थसंयोग इति संज्ञाकरणमविरुद्धमिति दर्शितं भवति ॥ ३८ ॥

**कर्म वाङ्मनःशरीरप्रवृत्तिः। तत्र वाङ्मनःशरीरातिप्रवृत्तिरतियोगः; सर्वशोऽप्रवृत्तिरयोगः; वेगधारणोदीरणविषमस्खलनपतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारमर्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः, सूचकानृताकालकलहाप्रियाबद्धानुपचारपरुषवचनादिर्वाङ्मिथ्यायोगः, भयशोकक्रोधलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः ॥ ३९ ॥**

अर्थानामयोगातियोगमिथ्यायोगानभिधाय कर्मणस्तानाह—कर्मेत्यादि। अत्र यद्यपि भूरिप्रधानशरीररोगकर्तृत्वेन पूर्वं शारीरमेव कर्मासात्म्यमभिधातुं युज्यते, तथाऽप्यल्पत्वेन वाङ्मानसे कर्मणी पूर्वमुक्ते, प्रत्येकमिथ्यायोगकथने तु प्राधान्याच्छारीर एव मिथ्यायोगः प्रथमं दर्शितः। अत्रातियोगरूपाऽतिप्रवृत्तिस्तथाऽयोगरूपाऽप्रवृत्तिर्विहितानां कायवाङ्मनःकर्मणां बोद्धव्या, अहिताचरणस्य तु सर्वस्य मिथ्यायोगत्वेन वक्तव्यत्वात्। वेगोदीरणम् अप्राप्तवेगोदीरणम्। विषमशब्दोऽङ्गप्रणिधानान्तैः संबध्यते। अङ्गदूषणम् अतिकण्डूयनादिभिः। संक्लेशनं मद्यातपजलसेचनादिभिः[1]। अबद्धवचनम् असंबद्धं यावत्तावत्कीर्तनम्। अनुपचारवचनम् अननुकूलवचनम्। इह चानृतवचनादयोऽधर्मद्वारेण रोगकराः ॥ ३९ ॥

**संग्रहेण चातियोगायोगवर्जं कर्म वाङ्मनःशरीरजमहितमनुपदिष्टं यत्तच्च मिथ्यायोगं विद्यात् ॥ ४० ॥**

अनुक्तमिथ्यायोगसंग्रहार्थमाह—संग्रहेणेत्यादि। अहितमिह जन्मनि, अनुपदिष्टमित्यनेन परलोकेऽधर्महेतुतया पापकारकं परदारसेवादि ग्राहयति; एतेन यदुच्यते—अधर्मस्याग्रहणान्न्यूनमेतदायतनकथनमिति, तन्न भवति। शारीरमानसिकवाचनिककर्ममिथ्यायोगेनैवाधर्मोत्पादावान्तरव्यापारेणाधर्मजन्यानां विकाराणां क्रियमाणत्वात्, यथा—अग्निष्टोमेन स्वर्गः क्रियते धर्मोत्पादावान्तरव्यापारेणैव; अन्ये तु कालमिथ्यायोगेऽधर्मं क्षिपन्ति, अधर्मो हि कालवशादेव फलति न तत्कालमिति कृत्वा; एतच्च प्रथमाध्याय एव प्रपञ्चितम् ॥ ४० ॥

**इति त्रिविधविकल्पं त्रिविधमेव कर्म प्रज्ञापराध इति व्यवस्येत् ॥ ४१ ॥**

संप्रति कर्मासम्यग्योगः प्रज्ञापराधमूलत्वात् प्रज्ञापराध एवोच्यत इति त्रिविधमित्यादिना दर्शयन्, यदुक्तं पूर्वं हेतुत्रयकथने "असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च" इत्यस्याविरोधं दर्शयति; एवं यदग्रे वक्ष्यति 'कालः पुनः परिणाम उच्यते' तत्रापि पूर्वोक्ताविरोधोपदर्शनं व्याख्येयमिति। त्रिविधविकल्पमिहातियोगादिरूपम् ॥ ४१ ॥

**शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः, स कालः। तत्रातिमात्रस्वलक्षणः कालः कालातियोगः, हीनस्वलक्षणः (कालः) कालायोगः, यथास्वलक्षणविपरीतलक्षणस्तु (कालः) कालमिथ्यायोगः। कालः पुनः परिणाम उच्यते ॥ ४२ ॥**

कालातिशययोगादीन् दर्शयति—शीतोष्णेत्यादि। अतिमात्रस्वलक्षणः अतिमात्रशीतादिः। यथास्वलक्षणाच्छीतादेर्विपरीतलक्षणो यथा—हेमन्ते वर्षणं, वर्षासु शीतमित्यादि ॥ ४२ ॥

**इत्यसात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति त्रयस्त्रिविधविकल्पा हेतवो विकाराणां; समयोगयुक्तास्तु प्रकृतिहेतवो भवन्ति ॥ ४३ ॥**

आयतनान्युपसंहरति—इतीत्यादि। विकाराणां हेतवो भवन्तीति संबन्धः; तथा समयोगयुक्ताः सम्यग्योगयुक्ताः प्रकृतिहेतवो भवन्तीति योज्यं; प्रकृतिः आरोग्यम् ॥ ४३ ॥

**सर्वेषामेव भावानां भावाभावौ नान्तरेण योगायोगातियोगमिथ्यायोगान् समुपलभ्येते; यथास्वयुक्त्यपेक्षिणौ हि भावाभावौ ॥ ४४ ॥**

इदानीं धातुसाम्यवैषम्यहेतुत्वेन सम्यग्योगायोगौ च प्रतिपाद्य बाह्यानामपि वृक्षघटादीनां सम्यक्स्थितिविनाशयोः सम्यग्योगायोगावेव कारणमिति दृष्टान्तार्थं भावस्वरूपज्ञानार्थं चाह—सर्वेषामित्यादि। भावः सम्यगवस्थानम्, अभावः असम्यगवस्थानं विनाशो वा; योगात् सम्यग्योगाद्भावः, अयोगादिभ्योऽभावः; यथास्वं युक्तिर्या यस्य भावस्याभावस्य वा युक्तिः स्वकारणयुक्तिः, तदपेक्षिणौ भवत इति संबन्धः। यथा—वृक्षस्य भावे अवस्थानेऽनत्यल्पपानीययोगादिर्युक्तिः, अभावे तु वृक्षस्य पानीयातपातियोगायोगौ तथा वज्रपातादिर्युक्तिः; ततस्तदपेक्षौ वृक्षस्य भावाभावौ भवत इत्यादि कल्पनीयम् ॥ ४४ ॥

**त्रयो रोगा इति—निजागन्तुमानसाः। तत्र निजः शारीरदोषसमुत्थः, आगन्तुर्भूतविषवाय्वग्निसंप्रहारादिसमुत्थः, मानसः पुनरिष्टस्य लाभाल्लाभाच्चानिष्टस्योपजायते ॥ ४५ ॥**

रोगानाह—त्रयो रोगा इत्यादि। इष्टलाभाज्जायते कामहर्षादिः, अनिष्टप्रियवियोगादिलाभाच्च शोकादयः; यदि वा

[1] 'संक्लेशनं व्रतोपवासादिभिः' इति गङ्गाधरः।

'इष्टस्यालाभाल्लाभाच्चानिष्टस्य' इति पाठः; अत्र तु पाठे चकारादिष्टलाभोऽपि हेतुर्बोद्धव्यः ॥ ४५ ॥

**तत्र बुद्धिमता मानसव्याधिपरीतेनापि सता बुद्ध्या हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानामहितानामनुपसेवने हितानां चोपसेवने प्रयतितव्यं, न ह्यन्तरेण लोके त्रयमेतन्मानसं किंचिन्निष्पद्यते सुखं वा दुःखं वा; तस्मादेतच्चानुष्ठेयं—तद्विद्यानां चोपसेवने प्रयतितव्यम्, आत्मदेशकुलकालबलशक्तिज्ञाने यथावच्चेति ॥ ४६ ॥**

संप्रति मानसव्याधिचिकित्साया अल्पवक्तव्यत्वेनेहैव तच्चिकित्सामाह—तत्रेत्यादि। मानसव्याधिपरीतेनापीति अपिशब्देन शारीरव्याधियुक्तेनापि वक्ष्यमाणमनुष्ठेयमिति सूचयति। त्रयमेतद्धर्मार्थकामरूपं मानसं सुखं वा मानसं दुःखं वा निष्पद्यत इति योज्यम्। तद्विद्य इह मानसव्याधिभेषजवेदी। आत्मदेशेत्यादि। —कोऽहं, किं मे हितमित्यात्मज्ञानं; को देशः, अस्मिन् किमुचितमिति देशज्ञानम्; एवं कालादावपि ज्ञानं बोद्धव्यम् ॥ ४६ ॥

**भवति चात्र—**

**मानसं प्रति भैषज्यं त्रिवर्गस्यान्ववेक्षणम्।**
**तद्विद्यसेवा विज्ञानमात्मादीनां च सर्वशः ॥ ४७ ॥**

संप्रत्युक्तमेवार्थं सुखग्रहणार्थं श्लोकेनाह—मानसं प्रतीत्यादि। —मानसं विकारमिति भावः। त्रिवर्गस्य धर्मादेः ॥ ४७ ॥

**त्रयो रोगमार्गा इति—शाखा, मर्मास्थिसन्धयः, कोष्ठश्च। तत्र शाखा रक्तादयो धातवस्त्वक् च, स बाह्यो रोगमार्गः; मर्माणि पुनर्बस्तिहृदयमूर्धादीनि, अस्थिसन्धयोऽस्थिसंयोगास्तत्रोपनिबद्धाश्च स्नायुकण्डराः, स मध्यमो रोगमार्गः; कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयश्चेति पर्यायशब्दैस्तन्त्रे, स रोगमार्ग आभ्यन्तरः ॥ ४८ ॥**

अत्र रोगमार्गानाह—त्रय इत्यादि। मर्मास्थिसन्धिभ्यामेको मार्गः। अत्र शाखेतिसंज्ञाकरणं व्यवहारार्थं, तथा रक्तादीनां धातूनां शाखाभिधेयानां वृक्षशाखातुल्यत्वेन बाह्यत्वज्ञापनार्थम्। त्वक्चेति त्वक्शब्देन तदाश्रयो रसोऽपि गृह्यते; साक्षात्तु रसानभिधानं हृदयस्थायिनो रसस्य शाखासंज्ञाव्यवच्छेदार्थं, तस्य हि कोष्ठग्रहणेनैव ग्रहणम्; अनेन न्यायेन यकृत्प्लीहाश्रितं च शोणितं कोष्ठत्वेनैवाभिप्रेतमिति बोद्धव्यं, समानन्यायत्वात्। उक्तं च कोष्ठविवरणे—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" (सु. चि. अ. २) इति। अस्थिसन्धिविवरणम्—अस्थिसंयोगा इत्यादि। तत्रेति अस्थिसन्धौ। कण्डरा इह तन्त्रे स्थूलस्नायुः। आमस्य पक्वस्य चाशय आमपक्वाशयः। एतच्च मार्गभेदकथनं तदाश्रितव्याधीनां सुखसाध्यत्वादिज्ञानार्थम् ॥ ४८ ॥

**तत्र, गण्डपिडकालज्यपचीचर्मकीलाधिमांसमशककुष्ठव्यङ्गादयो विकारा बहिर्मार्गजाश्च विसर्पश्वयथुगुल्मार्शोविद्रध्यादयः शाखानुसारिणो भवन्ति रोगाः; पक्षवधग्रहापतानकार्दितशोषराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयः शिरोहृद्बस्तिरोगादयश्च मध्यममार्गानुसारिणो भवन्ति रोगाः; ज्वरातीसारच्छर्द्यलसकविसूचिकाकासश्वासहिक्कानाहोदरप्लीहादयोऽन्तर्मार्गजाश्च विसर्पश्वयथुगुल्मार्शोविद्रध्यादयः कोष्ठानुसारिणो भवन्ति रोगाः ॥ ४९ ॥**

संप्रति यन्मार्गाश्रितो यो रोगो भवति तं दर्शयति—तत्र गण्डेत्यादि। बहिर्मार्गजाश्चेति विसर्पादीनां विशेषणं विसर्पादयो ह्यन्तर्मार्गभाजोऽपि संभवन्त्यतस्तद्व्युदासार्थम्। पक्षशब्दो वधग्रहाभ्यां संबध्यते, शोषो धातुशोषः। ज्वरो यद्यपि सर्वशरीरग एव, तथाऽपि विशेषेणामाशयसमुत्थत्वादिहोच्यते। अन्तर्मार्गजाश्चेति विसर्पादिविशेषणम्। अर्शो बहिर्वल्याश्रितं शाखागतम्, अन्यच्च कोष्ठगतम्। बहिर्मार्गजो गुल्मो यो बहिरुत्तुण्डित उपलभ्यते बहिश्च पच्यते स ज्ञेयः, अन्यस्तु सर्वः कोष्ठगत एव ॥ ४९ ॥

**त्रिविधा भिषज इति—**

**भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः।**
**सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि ॥ ५० ॥**
**वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः।**
**लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः ॥ ५१ ॥**
**श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः।**
**वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः ॥ ५२ ॥**
**प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः।**
**जीविताभिसरास्ते स्युर्वैद्यत्वं तेष्ववस्थितमिति ५३**

भिषक्छद्मचरा भिषग्वेशचराः। सिद्धेन प्रसिद्धेन साधिताः सिद्धसाधिताः। वैद्यभाण्डं बस्तिनेत्रादि। प्रतिरूपका वैद्यसदृशाः। व्यपदेशः अन्यसंबन्धेन कीर्तनम्। अतद्विधा ज्ञानहीनाः ॥ ५०–५३ ॥

**त्रिविधमौषधमिति—दैवव्यपाश्रयं, युक्तिव्यपाश्रयं, सत्त्वावजयश्च। तत्र दैवव्यपाश्रयं—मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि, युक्तिव्यपाश्रयं—पुनराहारौषधद्रव्याणां योजना, सत्त्वावजयः—पुनरहितेभ्योऽर्थेभ्यो मनोनिग्रहः ॥ ५४ ॥**

१ 'तद्विद्यवृद्धानां' इति पा०। २ 'स्नायुकण्डराः सिरादयश्च' इति पा०। ३ 'प्रतिरोगमार्गान्' इति, 'प्रति प्रति रोगमार्गान्' इति च पा०। ४ 'शाखासंज्ञाप्रतिषेधार्थम्' इति पा०। ५ 'सामान्यन्यायात्' इति पा०।

दैवमदृष्टं तद्व्यपाश्रयं, तच्च यददृष्टजननेन व्याधिप्रत्यनीकं मन्त्रादि; यदि वा दैवशब्देन देवा उच्यन्ते, तानाश्रित्य यदुपकरोति तत्तथा; मन्त्रादयो हि देवप्रभावादेव व्याधिहराः, बल्युपहारादिप्रीताश्च देवा एव प्रभावाद्याधीन् घ्नन्ति। अत्र दैवव्यपाश्रयमादावुक्तमाशुव्याधिहरत्वेन। प्रणिपातो देवादीनां शारीरो नमस्कारः, गमनं विदूरदेवादिगमनम् ॥ ५४ ॥

शरीरदोषप्रकोपे खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषधमिच्छन्ति—अन्तःपरिमार्जनं, बहिःपरिमार्जनं, शस्त्रप्रणिधानं चेति। तत्रान्तःपरिमार्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रमार्ष्टि, यत्पुनर्बहिःस्पर्शमाश्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्दनाद्यैरामयान् प्रमार्ष्टि तद्बहिःपरिमार्जनं, शस्त्रप्रणिधानं पुनश्छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छनसीवनैषणक्षारजलौकसश्चेति ॥ ५५ ॥

संप्रति प्रकारान्तरेणोपयुक्तं भेषजत्रैविध्यमाह—शरीरेत्यादि। प्रायःशब्दः शरीरदोषकोप इत्यनेन संबध्यते; तेन, मानसदोषजेऽप्युन्मादापस्मारादावञ्जनादि भवतीति दर्शयति; यदि वा प्रायस्त्रिविधमित्यनेन शारीरेऽपि दैवव्यपाश्रयं स्वस्त्ययनादि दर्शयति ॥ ५५ ॥

भवन्ति चात्र—

प्राज्ञो रोगे समुत्पन्ने बाह्येनाभ्यन्तरेण वा।
कर्मणा लभते शर्म शस्त्रोपक्रमणेन वा ॥ ५६ ॥
बालस्तु खलु मोहाद्वा प्रमादाद्वा न बुध्यते।
उत्पद्यमानं प्रथमं रोगं शत्रुमिवाबुधः ॥ ५७ ॥
अणुर्हि प्रथमं भूत्वा रोगः पश्चाद्विवर्धते।
स जातमूलो मुष्णाति बलमायुश्च दुर्मतेः ॥ ५८ ॥
न मूढो लभते संज्ञां तावद्यावन्न पीड्यते।
पीडितस्तु मतिं पश्चात् कुरुते व्याधिनिग्रहे ॥५९॥
अथ पुत्रांश्च दारांश्च ज्ञातींश्चाहूय भाषते।
सर्वस्वेनापि मे कश्चिद्भिषगानीयतामिति ॥ ६० ॥
तथाविधं च कः शक्तो दुर्बलं व्याधिपीडितम्।
कृशं क्षीणेन्द्रियं दीनं परित्रातुं गतायुषम् ॥ ६१ ॥
स त्रातारमनासाद्य बालस्त्यजति जीवितम्।
गोधा लाङ्गूलबद्धेवाकृष्यमाणा बलीयसा ॥ ६२ ॥
तस्मात् प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा।
भेषजैः प्रतिकुर्वीत य इच्छेत् सुखमात्मनः ॥ ६३ ॥

वैद्यभेदाभिधानप्रसङ्गेनातुरभेदमाह—प्राज्ञ इत्यादि। शर्म सुखमारोग्यमिति यावत्। प्रमादः बुद्ध्वाऽपि रोगमप्रतीकारः। संज्ञा सम्यग्ज्ञानं व्याधिरयं त्वरया प्रतिकर्तव्य एवमाकारम्। त्रातारं वैद्यमनासाद्य; तथाविधं हि रोगिणं वैद्यो नोपसर्पतीति भावः। बालः अज्ञः। गोधादृष्टान्तेन जीवनार्थं यत्नं कुर्वन्नपि विपद्यत इति दर्शयति। प्रतिकुर्वीत 'यत्नम्' इति शेषः ॥ ५६–६३ ॥

१ 'श्रद्धां' इति पा०।

तत्र श्लोकौ—

एषणाः समुपस्तम्भा बलं कारणमामयाः।
तिस्रैषणीये मार्गाश्च भिषजो भेषजानि च ॥ ६४ ॥
त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता।
भावा, भावेष्वसक्तेन येषु सर्वं प्रतिष्ठितम् ॥ ६५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने तिस्रैषणीयो नामैकादशोऽध्यायः ॥ ११ ॥

संग्रहे धीमता भावा इति छेदः; अष्टौ भावा इति संबन्धः। भावेषु विषयेषु। असक्तेन अप्रसक्तेन। येषु एषणादिष्वष्टसु। सर्वमिति धर्मार्थकामाः ॥ ६४ ॥ ६५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकाख्यायां सूत्रस्थाने निर्देशचतुष्के तिस्रैषणीयो नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

अथातो वातकलाकलीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये रोगाः स्वरूपमार्गबाह्यकारणभेषजैरभिहिताः, उपयुक्तज्ञानास्तत्कारणवातादयो बहुवाच्यत्वान्नोक्ताः, अतः संप्रति पृथक्प्रकरणे तेऽभिधीयन्ते वातकलाकलीये; तत्रापि प्राधान्याद्वायुरेव प्रथममुच्यते। कला गुणः, यदुक्तं—"षोडशकलम्" (सू. अ. १०) इति; अकला गुणविरुद्धो दोषः; तेन वातकलाकलीयो वातगुणदोषीय इत्यर्थः; यदि वा कला सूक्ष्मो भागः, तस्यापि कला कलाकला; तस्यापि सूक्ष्मो भाग इत्यर्थः ॥ १ ॥ २ ॥

वातकलाकलाज्ञानमधिकृत्य परस्परमतानि जिज्ञासमानाः समुपविश्य महर्षयः पप्रच्छुरन्योऽन्यं—किंगुणो वायुः, किमस्य प्रकोपणम्, उपशमनानि वाऽस्य कानि, कथं चैनमसङ्घातवन्तमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा, कानि चास्य कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वेति ॥ ३ ॥

अत्रानेकर्षिवचनरूपतया वातादिगुणवचनं बहुऋषिसंमतिदर्शनार्थं तन्त्रधर्मैतिह्ययुक्तत्वकरणार्थं च। असङ्घातमिति पित्त-

१ 'वातस्यातिसूक्ष्मो भागः' इति पा०।

श्लेष्मवदवयवसङ्घातरहितम् । अनवस्थितमिति चलस्वभावम् । अनासाद्येति चलत्वेनानिविडावयवत्वेन चेति मन्तव्यम् ॥ ३ ॥

अत्रोवाच कुशः साङ्कृत्यायनः—रूक्षलघुशीतदारुणखरविशदाः षडिमे वातगुणा भवन्ति ॥ ४ ॥

रूक्षादयो भावप्रधानाः, तेन रूक्षत्वादयो गुणा मन्तव्याः । दारुणत्वं चलत्वं चलत्वात्, एवं दीर्घञ्जीवितीयोक्तं चलत्वमुक्तं भवति; यदि वा, दारुणत्वं शोषणत्वात् काठिन्यं करोतीति ॥४॥

तच्छ्रुत्वा वाक्यं कुमारशिरा भरद्वाज उवाच—एवमेतद्यथा भगवानाह, एत एव वातगुणा भवन्ति, स त्वेवंगुणैरेवंद्रव्यैरेवंप्रभावैश्च कर्मभिरभ्यस्यमानैर्वायुः प्रकोपमापद्यते, समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति ॥ ५ ॥

कुमारशिरा इति भरद्वाजविशेषणमात्रेयगुरुभरद्वाजनिषेधार्थम् । एवंप्रभावैरिति प्रभावाद्रौक्ष्यादिकारकैर्धावनजागरणादिभिः, प्रभावाभिधानं[१] च कर्मणां निर्गुणत्वात् । अभ्यस्यमानैरिति असकृत्प्रयुक्तैः ॥ ५ ॥

तच्छ्रुत्वा वाक्यं काङ्कायनो वाह्लीकभिषगुवाच—एवमेतद्यथा भगवानाह, एतान्येव वातप्रकोपणानि भवन्ति; अतो विपरीतानि वातस्य प्रशमनानि भवन्ति, प्रकोपणविपर्ययो हि धातूनां प्रशमकारणमिति ॥ ६ ॥

तच्छ्रुत्वा वाक्यं वडिशो धामार्गव उवाच—एवमेतद्यथा भगवानाह, एतान्येव वातप्रकोपप्रशमनानि भवन्ति । यथा ह्येनमसङ्घातमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा, तथाऽनुव्याख्यास्यामः—वातप्रकोपणानि खलु रूक्षलघुशीतदारुणखरविशदशुषिरकराणि शरीराणां, तथाविधेषु शरीरेषु वायुराश्रयं गत्वाऽऽप्यायमानः प्रकोपमापद्यते; वातप्रशमनानि पुनः स्निग्धगुरूष्णश्लक्ष्णमृदुपिच्छिलघनकराणि शरीराणां, तथाविधेषु शरीरेषु वायुरसज्यमानश्चरन् प्रशान्तिमापद्यते ॥ ७ ॥

शरीराणामिति शरीरावयवानाम् । शुषिरकराणि रन्ध्रकराणि । आश्रयमिति समानगुणस्थानम् । आप्यायमानः चीयमानः । दारुणविपरीतो मृदुः, शुषिरविपरीतो घनः । असज्यमानः अनवतिष्ठमानः, क्षीयमाणावयव इति यावत् । एतेनैतदुक्तं भवति—यद्यपि वायुना वातकारणानां वातशमनानां वा तथा संबन्धो नास्ति, तथाऽपि शरीरसंबद्धैस्तैर्वातस्य शरीरचारिणः संबन्धो भवति, ततश्च वातस्य समानगुणयोगाद्वृद्धिर्विपरीतगुणयोगाच्च ह्रास उपपन्न एवेति ॥ ६ ॥ ७ ॥

१ 'प्रभावाद्विधानं' इति पा० ।

तच्छ्रुत्वा वडिशवचनमवितथमृषिगणैरनुमतमुवाच वार्योविदो राजर्षिः—एवमेतत् सर्वमनपवादं यथा भगवानाह । यानि तु खलु वायोः कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वा भवन्ति, तेषामवयवान् प्रत्यक्षानुमानोपदेशैः साधयित्वा नमस्कृत्य वायवे यथाशक्ति प्रवक्ष्यामः—वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योजकः, सर्वेन्द्रियार्थानामभिवोढा, सर्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलं, हर्षोत्साहयोर्योनिः, समीरणोऽग्नेः, दोषसंशोषणः[१], क्षेप्ता बहिर्मलानां, स्थूलाणुस्रोतसां भेत्ता, कर्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः । कुपितस्तु खलु शरीरे शरीरं नानाविधैर्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय[२], मनो व्याहर्षयति[३],सर्वेन्द्रियाण्युपहन्ति, विनिहन्ति गर्भान् विकृतिमापादयत्यतिकालं वा धारयति, भयशोकमोहदैन्यातिप्रलापाञ्जनयति, प्राणांश्चोपरुणद्धि । प्रकृतिभूतस्य खल्वस्य लोके चरतः कर्माणीमानि भवन्ति; तद्यथा—धरणीधारणं, ज्वलनोज्ज्वालनम्, आदित्यचन्द्रनक्षत्रग्रहगणानां सन्तानगतिविधानं, सृष्टिश्च मेघानाम्, अपां विसर्गः, प्रवर्तनं स्रोतसां, पुष्पफलानां चाभिनिर्वर्तनम्, उद्भेदनं चौद्भिदानाम्, ऋतूनां प्रविभागः, विभागो धातूनां, धातुमानसंस्थानव्यक्तिः, बीजाभिसंस्कारः, शस्याभिवर्धनमविक्लेदोपशोषणे[४], अवैकारिकविकारश्चेति । प्रकुपितस्य खल्वस्य लोकेषु चरतः कर्माणीमानि भवन्ति; तद्यथा—शिखरिशिखरावमथनम्, उन्मथनमनोकहानाम्, उत्पीडनं सागराणाम्, उद्वर्तनं सरसां, प्रतिसरणमापगानाम्, आकम्पनं च भूमेः, आधमनमम्बुदानां[५], नीहारनिर्ह्रादपांशुसिकतामत्स्यभेकोरगक्षाररुधिराश्माशनिविसर्गः, व्यापादनं च षण्णामृतूनां, शस्यानामसङ्घातः, भूतानां चोपसर्गः, भावानां चाभावकरणं, चतुर्युगान्तकराणां मेघसूर्यानलानिलानां विसर्गः; स हि भगवान् प्रभवश्चाव्ययश्च, भूतानां भावाभावकरः, सुखासुखयोर्वि-

१ 'संशोषणो दोषाणां' इति पा० । २ 'उपघाताय भवति' इति पा० । ३ 'व्यावर्तयति' इति पा० । ४ योगीन्द्रनाथसेनस्तु 'विक्लेदोपशोषणम्, अवैकारिकविकारश्च' इति पठति; 'विक्लेदस्य उपशोषणं; वैकारिको वातादिविकृतिजन्यो विकारो मरकादिः, तदभावोऽवैकारिकविकारः' इति च व्याख्यानयति । ५ 'अवधूननमम्बुदानाम्' इति पा० ।

**धाता, मृत्युः, यमः, नियन्ता, प्रजापतिः, अदितिः, विश्वकर्मा, विश्वरूपः, सर्वगः, सर्वतन्त्राणां विधाता, भावानामणुः, विभुः, विष्णुः, क्रान्ता लोकानां, वायुरेव भगवानिति ॥ ८ ॥**

शरीराशरीरचरस्येति वातस्वरूपकथनं, तेन शरीरेषु चरत इति बहिः शरीरेभ्यो वेति च पुनरुक्तं न भवति। अत्रावयवानिति वदन् कार्त्स्न्याभिधानमशक्यं बहुप्रपञ्चत्वादिति दर्शयति। साधयित्वा प्रतिपाद्य। वातकर्मसु प्रत्यक्षाणि वचनादीनि,मनःप्रेरणाद्यनुमेयं, गर्भाकृतिकरणाद्यागमगम्यम्। तन्त्रं शरीरं, यदुक्तं—"तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्" (इं. अ.१२) इति, तदेव यन्त्रं; यदि वा, तन्त्रस्य यन्त्रं सन्धयः। प्राणाद्यात्मा प्राणादिस्वरूपः। चेष्टाविशेषणम्-उच्चावचानां,विविधानामित्यर्थः, किंवा शुभाशुभानामित्यर्थः। नियन्ता अनीप्सिते विषये प्रवर्तमानस्य मनसः, प्रणेता च मनस एवेप्सितेऽर्थे। उद्योजकः प्रेरकः; किंवा 'उद्योगकारक' इति पाठः, सोऽप्यभिन्नार्थः। अभिवोढेवाभिवोढा सर्वेन्द्रियार्थग्राहकत्वेन; तच्चास्य वायुमयेन स्पर्शनेन्द्रियेण सर्वेन्द्रियाणां व्यापकत्वात्, पूर्वाध्यायप्रतिपादितेन न्यायेन बोद्धव्यम्। व्यूहकरः सङ्घातकरो रचनाकर इति यावत्। प्रकृतिः कारणं, शब्दकारणत्वं च वायोर्नित्यमाकाशानुप्रवेशात्; उक्तं हि खादीन्यभिधाय—"तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे" (शा. अ. १) इति। तथा पुनरुक्तं खादीन्यभिधाय "विष्टं ह्यपरं परेण" (न्या द. अ. २. आ. १. सू. ६६) इति। श्रवणमूलत्वं वायोः कर्णशष्कुलीरचनाविशेषे व्याप्रियमाणत्वात्; मूलं प्रधानकारणम्। उत्साहः कार्येषूद्योगो मनसः। योनिः अभिव्यक्तिकारणम्। दोषसंशोषणः शरीरक्लेदसंशोषणः। भेत्ता कर्ता; एतच्च शरीरोत्पत्तिकाले। भूतशब्दः स्वरूपवचनः। उपघातायेति छेदः। गर्भानिति विकृतिमापादयत्यतिकालं धारयतीत्यनेन च संबध्यते। आदित्यादीनां सन्तानेनाविच्छेदेन गतिविधानं सन्तानगतिविधानम्। स्रोतसामिति नदीनाम्। प्रविभागो विभक्तलक्षणम्। धातूनामिति पृथिव्यादीनां, धातवः कार्यद्रव्याणि प्रस्तरादीनि; मानं परिमाणं, संस्थानमाकृतिः, तयोर्व्यक्तिरभिव्यक्तिः, तत्र कारणमिति यावत्। बीजस्य शाल्यादेः, अभिसंस्कारोऽङ्कुरजननशक्तिः। अविक्लेदः पाककालादर्वागविक्लिन्नत्वम्, उपशोषणं च पाकेन यवादीनामार्द्राणामेव, अविक्लेदोपशोषणे शस्यानामेव। अवैकारिकविकारेण सर्वस्मिन्नेव जगति प्रकृतिरूपे कारणत्वं ब्रूते। शिखरी पर्वतः। अनोकहो वृक्षः। ऊर्ध्वं वर्तनमुद्वर्तनम्। प्रतिसरणं प्रतीपगमनम्। विसर्जनं विसर्गः, स च पृथङ्नीहारादिभिः संबध्यते; नीहारः शिशिरसमूहः, निर्ह्रादो मेघं विना गर्जितम्, अशनिः वज्रभेदोऽग्निः। असङ्घातः अनुत्पादोऽनुपचयो वा। उपसर्गः मरकादिप्रादुर्भावः। मेघसूर्येत्यादौ विसर्गः सृष्टिः। वायुरिह देवतारूपोऽभिप्रेतः, तेन तस्य भूतरूपचतुर्युगान्तकरानिलकरणमविरुद्धम्; एवं यदन्यदप्यनुपपद्यमानं वायोस्तदपि देवतारूपत्वेनैव समाधेयम्। संप्रति सामान्येन पुनः कुपिताकुपितस्य वायोः स्वरूपमुच्यते—स हि भगवानित्यादि। प्रभवः कारणम्। अव्ययः अक्षयः। भूतानामित्युत्तरेण संबध्यते। मृत्युयमादिभेदाश्चागमे ज्ञेयाः। सर्वतन्त्राणां सर्वकर्मणां; तन्त्रशब्दः कर्मवचनोऽप्यस्ति, यदुक्तं—"बस्तितन्त्राणां" (सू. अ. २५); कर्मणामित्यर्थः॥ ८॥

**तच्छ्रुत्वा वार्योविदवचो मरीचिरुवाच—यद्यप्येवमेतत्, किमर्थस्यास्य वचने विज्ञाने वा सामर्थ्यमस्ति भिषग्विद्यायां; भिषग्विद्यामधिकृत्येयं कथा प्रवृत्तेति ॥ ९ ॥**

**वार्योविद उवाच—भिषक् पवनमतिबलमतिपरुषमतिशीघ्रकारिणमात्ययिकं चेन्नानुनिशाम्येत्, सहसा प्रकुपितमतिप्रयतः कथमग्रेऽभिरक्षितुमभिधास्यति प्रागेवैनमत्ययभयात्; वायोर्यथार्था स्तुतिरपि भवत्यारोग्याय बलवर्णविवृद्धये वर्चस्वित्वायोपचयाय ज्ञानोपपत्तये परमायुःप्रकर्षाय चेति ॥१०॥**

तच्छ्रुत्वेत्यादि सुगमम्। वर्चस्वित्वं तेजस्वित्वम्॥ ९॥ १०॥

**मरीचिरुवाच—अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति; तद्यथा—पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वानीति ॥ ११ ॥**

पित्तान्तर्गत इति वचनेन शरीरे ज्वालादियुक्तवह्निनिषेधेन पित्तोष्मरूपस्य वह्नेः सद्भावं दर्शयति; न तु पित्तादभेदं, पित्तेनाग्निमान्द्यस्य ग्रहण्यध्याये वक्ष्यमाणत्वात्, तथा पित्तहरस्य सर्पिषोऽग्निवर्धनत्वेनोक्तत्वात्। पक्तिमपक्तिमिति अविकृतिविकृतिभेदेन पाचकस्याग्नेः कर्म, दर्शनादर्शने नेत्रगतस्यालोचकस्य, ऊष्मणो मात्रामात्रत्वं वर्णभेदौ च त्वग्गतस्य भ्राजकस्य, भयशौर्यादयो हृदयस्थस्य साधकस्य, रञ्जकस्य तु बहिःस्फुटकार्यादर्शनादुदाहरणं न कृतम्॥ ११॥

**तच्छ्रुत्वा मरीचिवचः काप्य उवाच—सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति; तद्यथा—दार्ढ्यं शैथिल्यमुपचयं कार्श्यमुत्साहमालस्यं वृषतां क्लीबतां ज्ञानमज्ञानं बुद्धिं मोहमेवमादीनि चापराणि द्वन्द्वानीति ॥ १२ ॥**

सोमो जलदेवता, यदि वा चन्द्रः॥ १२॥

**तच्छ्रुत्वा काप्यवचो भगवान् पुनर्वसुरात्रेय उवाच—सर्व एव भवन्तः सम्यगाहुरन्यत्रैकान्तिकव-**

१ 'वचनं' इति पा०। २ 'व्यूहः संघातो रचनेति यावत्' इति पा०। ३ 'विभागलक्षणं' इति पा०।

१ 'यदप्यनुपपद्यमानं' इति पा०। २ सामर्थ्यमिति प्रयोजनम्। ३ 'प्रवर्तते' इति पा०।

चनात्; सर्वे एव खलु वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति सम्यगेवाचरिता धर्मार्थकामा इव निःश्रेयसेन महता पुरुषमिह चामुष्मिंश्च लोके; विकृतास्त्वेनं महता विपर्ययेणोपपादयन्ति ऋतवस्त्रय इव विकृतिमापन्ना लोकमशुभेनोपघातकाल इति ॥ १३ ॥

तदृषयः सर्वे एवानुमेनिरे वचनमात्रेयस्य भगवतोऽभिननन्दुश्चेति ॥ १४ ॥

भवति चात्र—

तदात्रेयवचः श्रुत्वा सर्वे एवानुमेनिरे।
ऋषयोऽभिननन्दुश्च यथेन्द्रवचनं सुराः ॥ १५ ॥

ऐकान्तिकवचनादिति अवधारणादित्यर्थः। निःश्रेयसेन सुखेन। ऋतवस्त्रय इति शीतोष्णवर्षलक्षणाश्चतुर्मासेन ऋतुना। उपघातकाल इति देशोच्छेदकाले ॥ १३–१५ ॥

तत्र श्लोकौ—

गुणाः षड् द्विविधो हेतुर्विविधं कर्म यत् पुनः।
वायोश्चतुर्विधं कर्म पृथक् च कफपित्तयोः ॥ १६ ॥
महर्षीणां मतिर्या या पुनर्वसुमतिश्च या।
कलाकलीये वातस्य तत् सर्वं संप्रकाशितम् ॥१७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने वातकलाकलीयो नाम द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

इति निर्देशचतुष्कः ॥ ३ ॥

संग्रहे गुणाः षडिति रूक्षादयः। द्विविधो हेतुरिति वातप्रकोपहेतुर्वातप्रशमहेतुश्च। विविधं नानाप्रकारं सन्निखिलमेव वायोः कर्म, यत् पुनश्चतुर्विधं कुपिताकुपितशरीराशरीरचरभेदेन भवति, तदुक्तमिति योजनीयं; न हि चतुर्विधव्यतिरेकेण वायोः पृथग्विधं कर्मोक्तम् ॥ १६ ॥ १७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने निर्देशचतुष्के वातकलाकलीयो नाम द्वादशोऽध्यायः ॥१२॥

इति निर्देशचतुष्कः ॥ ३ ॥

---

## त्रयोदशोऽध्यायः।

अथातः स्नेहाध्यायं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

निर्देशवातकलाकलीये वातादयोऽभिहिताः, तेषां भेषजं यथा कल्पनीयं तदुपदेष्टुं कल्पनाचतुष्कोऽभिधीयते। भेषजानां कल्पना भेषजकल्पना, सा च कल्पना आश्रयद्रव्याभिधानं विना न पार्यते कल्पयितुम्; अतः स्नेहादिद्रव्यगोचरा स्नेह-स्वेद-वमन-विरेचनकल्पनेहाभिधीयते, बस्तिकल्पना त्विह बहुवक्तव्यत्वान्नोक्ता। अत्रापि वमनादिप्रवृत्तौ स्नेहस्यैव प्रथमं विधीयमानतया तथा दोषप्रधानस्य वातस्य प्रधानभेषजत्वाच्च तत्प्रतिपादक एव स्नेहाध्यायोऽभिधीयते। स्नेहस्य प्रतिपादकोऽध्यायः स्नेहाध्यायः ॥ १ ॥ २ ॥

सांख्यैः संख्यातसंख्येयैः सहासीनं पुनर्वसुम्।
जगद्धितार्थं पप्रच्छ वह्निवेशः स्वसंशयम् ॥ ३ ॥

संख्या सम्यग्ज्ञानं, तेन व्यवहरन्तीति सांख्याः। संख्यातं ज्ञातं संख्येयं ज्ञेयं यैस्ते तथा; यदि वा 'संख्यातसंख्येयम्' इति पाठः, तदा पुनर्वसुविशेषणमेतत्; अर्थस्तु समानः। सांख्यैः सहावस्थानोपदर्शनमात्रेयस्य कर्तव्यप्रश्नानुगुणमनःसमाधानोपदर्शनार्थम्। संशयमिति संशयेन विषयिणा विषयं लक्षयति, तेन संशयमिति संशयविषयमित्यर्थः ॥ ३ ॥

किंयोनयः कति स्नेहाः के च स्नेहगुणाः पृथक्।
कालानुपाने के कस्य कति काश्च विचारणाः ॥ ४ ॥
कति मात्राः कथंमानाः का च केषूपदिश्यते।
कश्च केभ्यो हितः स्नेहः प्रकर्षः स्नेहने च कः ॥ ५ ॥
स्नेह्याः के के न च स्निग्धास्निग्धातिस्निग्धलक्षणम्।
किं पानात् प्रथमं पीते जीर्णे किंच हिताहितम् ॥६॥
के मृदुक्रूरकोष्ठाः का व्यापदः सिद्धयश्च काः।
अच्छे संशोधने चैव स्नेहे का वृत्तिरिष्यते ॥ ७ ॥
विचारणाः केषु योज्या विधिना केन तत् प्रभो!।
स्नेहस्यामितविज्ञान ज्ञानमिच्छामि वेदितुम् ॥ ८ ॥

कोऽसौ संशय इत्याह—किंयोनय इत्यादि। किंयोनयः किमाधारकारणाः। कालश्चानुपानं च कालानुपाने। विचारणा द्रव्यान्तरासंयुक्तस्नेहपानं वर्जयित्वा स्नेहोपयोगः। कथंमाना कीदृङ्माना। का चेति मात्रा। प्रकर्षः कालप्रकर्षः। स्नेहने स्नेहयुक्तिक्रियायाम्। के नचेति के न च स्नेह्याः। किं पानात् स्नेहपानात् प्रथमं पूर्वं हिताहितं; किंच पीते स्नेहे तथा जीर्णे च स्नेहे हिताहितमिति योज्यम्। सिद्धयो व्यापत्साधनानि भेषजानि। अच्छे इति संशोधनपृथङ्निर्देशाद्गोबलीवर्दन्यायेन संशमन इति भवति। वृत्तिरिति वृत्तिः उपचारविधानम्। ज्ञानं शास्त्रम् ॥४–८॥

अथ तत्संशयच्छेत्ता प्रत्युवाच पुनर्वसुः।
स्नेहानां द्विविधा सौम्य योनिः स्थावरजङ्गमा ॥ ९ ॥

तिलः प्रियालाभिषुकौ बिभीतक-
श्चित्राभयैरण्डमधूकसर्षपाः।
कुसुम्भबिल्वारुकमूलकातसी-
निकोचकाक्षोडकरञ्जशिग्रुकाः ॥ १० ॥

१ 'कथयितुं' इति पा०। २ 'संशयविषयेण विषयिणं' इति पा०।

**स्नेहाशयाः स्थावरसंज्ञितास्तथा**
**स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः ।**
**तेषां दधिक्षीरघृतामिषं वसा**
**स्नेहेषु मज्जा च तथोपदिश्यते ॥ ११ ॥**

अभिषुक औत्तरापथिकः । चित्रा गोरक्षकर्कटी, तद्बीजमिह; यदि वा चित्रा लोहितैरण्डः । अतसी 'उमा' इति ख्याता । आरुकनिकोचकाक्षोडा औत्तरापथिकाः । स्नेहाशयाः स्नेहस्थानानि । एते चाविष्कृततमत्वेनोक्ताः, तेन निम्बतैलादयो बोद्धव्याः । आमिषं मांसम् ॥ ९–११ ॥

**सर्वेषां तैलजातानां तिलतैलं विशिष्यते ।**
**बलार्थे स्नेहने चाग्र्यमैरण्डं तु विरेचने ॥ १२ ॥**
**(कट्वूष्णं तैलमैरण्डं वातश्लेष्महरं गुरु ।**
**कषायस्वादुतिक्तैश्च योजितं पित्तहन्त्रपि ॥ १ ॥)**

तैलजातानामिति जातशब्दः प्रकारवचनः; यथा—"यदाहारजातमग्निवेश" ( सू. अ. २५ ) इत्यादि । अत्र यद्यपि योगात्तिलभवमेव तैलं, तथाऽपि रूढ्येह सर्व एव स्थावरस्नेहास्तैलमित्युच्यन्ते । यदुक्तं सुश्रुते—"निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" ( सु. सू. अ. ४५ ) इति । विशिष्यते अतिरिच्यते । अग्र्यमित्यैरण्डेन संबध्यते ॥ १२ ॥

**सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मताः ।**
**एषु चैवोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ १३ ॥**

सर्वस्नेहोत्तमा इत्यत्र सर्वशब्देन दधिक्षीरादयो गृह्यन्ते; सर्वस्नेहोत्तमत्वं च सर्पिरादीनां स्नेहगुणप्रकर्षवत्त्वेन । संस्कारो गुणान्तरारोपणं, तस्यानुवर्तनमनुविधानं स्वीकरणमिति यावत् । एतदुक्तं भवति—यत्—न तथा तैलादयो द्रव्यान्तरसंस्कृताः संस्कारगुणान् वहन्ति यथा सर्पिरिति । अत एवोक्तं—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्तते । यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्" ( नि. अ. १ ) । अत एव संस्कारकद्रव्यचित्रकादिगुणानुविधानेऽपि सर्पिर्न स्वगुणान् स्नेहशैत्यादीन् जहाति, किंच स्वगुणान् तद्गुणांश्च वहति, यतोऽनुशब्देन पश्चाद्वाचिना स्वगुणवर्तनस्य पश्चात् संस्कारकगुणवर्तनमुच्यते । अत एवोक्तं—"स्नेहाद्वातं शमयति पित्तं माधुर्यशैत्यतः । घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्" ( नि. अ. १ ) इति । न च वाच्यं रूक्षोष्णचित्रकादिसंस्काराद्रूक्षोष्णं सर्पिर्भूतं, ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथं तिष्ठतः ? इति; यतः सर्पिःसंबद्धचित्रकावयवानुगतं हि रूक्षोष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः; इदमेव च सर्पिषः संस्कारानुवर्तनं यत्—स्वगुणविरुद्धस्यापि तस्यानुपघातेन धारणं; संस्कारकचित्रकादिगुणवहनेऽपि सर्पिषः शैत्यादयः कदाचिदभिभूयन्ते संस्कारकगुणैरुष्णादिभिर्न पुनः स्नेहगुणः, तस्य स्नेहेषु सर्वात्मना व्यवस्थितस्य प्रबलत्वात्; अत एव सर्पिरादयः स्नेहप्रधानत्वात् 'स्नेहा' इत्युच्यन्ते । अन्ये तु संस्कारानुवर्तनं स्वगुणोपघातेन संस्कारकगुणवहनं ब्रुवते, एतच्च तैले तिष्ठति न सर्पिषीति वदन्ति; सर्पिषि तु संस्कारानुवर्तनमुक्तं यत्, तत् सर्पिषि सर्वथा कस्यचिद्गुणस्य संस्कारगुणेनानुपघाताद्भवति; तथाहि—दाहप्रशमनार्थं ज्वरे चन्दनादिशीतद्रव्यसाधिततैलमुक्तं, यतः शीतेन साधितं तैलमुष्णमपि स्वभावाच्छीतमेव भवतीति ॥ १३ ॥

**घृतं पित्तानिलहरं रसशुक्रौजसां हितम् ।**
**निर्वापणं मृदुकरं स्वरवर्णप्रसादनम् ॥ १४ ॥**
**मारुतघ्नं न च श्लेष्मवर्धनं बलवर्धनम् ।**
**त्वच्यमुष्णं स्थिरकरं तैलं योनिविशोधनम् ॥ १५ ॥**
**विद्धभग्नाहतभ्रष्टयोनिकर्णशिरोरुजि ।**
**पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा ॥ १६ ॥**
**बलशुक्ररसश्लेष्ममेदोमज्जविवर्धनः ।**
**मज्जा विशेषतोऽस्थ्नां च बलकृत् स्नेहने हितः ॥१७॥**

स्नेहगुणानभिधत्ते—घृतमित्यादि । निर्वापणं दाहप्रशमनम् । मारुतघ्नमित्यादि तैलगुणाः । स्थिरकरम् अङ्गस्थैर्यकरम् । विद्धेत्यादि वसागुणाः । पौरुषोपचयः शुक्रोपचयः । स्नेहे शरीरस्नेहने कर्तव्ये । बलशुक्रेत्यादि मज्जगुणाः ॥ १४–१७ ॥

**सर्पिः शरदि पातव्यं वसा मज्जा च माधवे ।**
**तैलं प्रावृषि नात्युष्णशीते स्नेहं पिबेन्नरः ॥ १८ ॥**

सर्पिरादिपानकालमाह—सर्पिः शरदीत्यादि । माधवे वैशाखे । प्रावृडाषाढश्रावणौ, यदुक्तं—"प्रावृट् शुक्रनभौ ज्ञेयौ" ( सि. अ. ६ ) इति । शरदि बहुपित्तत्वेन पित्तविरुद्धं घृतमेव यौगिकं, नान्यत्तैलादिः । वसामज्ज्ञोस्तु नातिशीतोष्णत्वात् साधारणे; यतस्तयोरनुपाने शीतत्वेन वोष्णत्वेन वा निर्देशो न कृतः; "यथासत्त्वं तु शैत्यौष्ण्ये वसामज्ज्ञोर्विनिर्दिशेत्" ( सू. अ. २७ ) इति तु वचनेन शैत्यौष्ण्याभिधानं सामान्येन, तैलसर्पिर्वैदौष्ण्यशैत्यानभिधानाच्च प्रकर्षप्राप्तशैत्योष्णत्वप्रापकम् । अत एवोक्तं—"तैलवसामज्जसर्पिषां तु यथापूर्वं श्रेष्ठत्वं वातश्लेष्मविकारेषु भवति, यथोत्तरं पित्तविकारेषु" (वि. अ. ८ ) इति । अत्रोत्तरस्य सर्पिषः शैत्यात् पित्तहरत्वं, तैलस्य तूष्णत्वाद्वातश्लेष्महरत्वं, वसामज्ज्ञोस्तु साधारणत्वेन मध्यगतत्वमिति स्थितम् । एवं वसामज्ज्ञोः साधारणत्वेन तथा बल्यत्वधातुवृद्धिकरत्वाभ्यामनतिशीतोष्णे तथा बलक्षयधातुक्षययुक्ते माधवे प्रयोगो युक्तः । चैत्रस्तु मुख्यसाधारणगुणोऽपि प्रभूतश्लेष्मतया न स्नेहविषय इत्यनुक्तः । सामान्येन स्नेहोपयोगे शस्तं कालमाह—नात्युष्णेत्यादि । नात्युष्णे ग्रीष्मे, नातिशीते हेमन्ते शिशिरे च तथा वर्षजनितशैत्ये वर्षाकाले । अयं चानात्ययिकविकारे सति कालनियमो ज्ञेयः, अग्रे उष्णे शीते च काले स्नेहोपदेशात् ॥ १८ ॥

**वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।**
**श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥१९॥**

१ 'सीढनीति प्रसिद्धा' इति पा० ।

१ 'संस्कारगुणेन स्वगुणोपघाताद्भवति' इति पा० ।

कालविशेषे दोषविशेषे च पानक्रमं दर्शयति—वातेत्यादिना । वातश्च पित्तं च वातपित्तं, तदधिको वातपित्ताधिकः । रात्राविति सायम् । उष्णे ग्रीष्मे । श्लेष्माधिकग्रहणमत्यन्तशीतविकारगृहीतपुरुषोपलक्षणार्थं, तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते; अत एव सुश्रुतेऽप्युक्तं—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" ( सु. चि. ३१ ) इति । केवलवाताधिकस्य तथा पित्ताधिकस्य श्लेष्माधिकस्य च साधारणे शरदादौ काले उत्सर्गसिद्ध एव पानकालो वक्ष्यमाणो भवति । वक्ष्यति हि—"पिबेत् संशमनं स्नेहमन्नकाले" इत्यादि । अन्ये तु ब्रुवते—वाताधिकग्रहणेन केवलवातस्यापि ग्रहणं, श्लेष्माधिकव्यपदेशाच्च वातश्लेष्म-पित्तश्लेष्मणोरपि ग्रहणमिति । शीते हेमन्तादौ । अमलः प्रवलरश्मिर्यस्मिन् दिनस्य भागे भास्करः सोऽमलभास्करो मध्याह्न इति यावत् ॥ १९ ॥

**अत्युष्णे वा दिवा पीतो वातपित्ताधिकेन वा ।**
**मूर्च्छां पिपासामुन्मादं कामलां वा समीरयेत् ॥२०॥**
**शीते रात्रौ पिबन् स्नेहं नरः श्लेष्माधिकोऽपि वा ।**
**आनाहमरुचिं शूलं पाण्डुतां वा समृच्छति ॥ २१ ॥**

उक्तकालनियमविपर्यये दोषमाह—अत्युष्णे वेत्यादि । अत्युष्णे काले दिवा पीतः स्नेहः श्लैष्मिकस्यापि यथोक्तविकारकरः, तथा वातपित्ताधिकेन पीतः शीतकालेऽपि यथोक्तविकारकरः; एवं निशापानेऽपि वाक्यार्थः; परं निषिद्धस्य कालस्य दोषस्य च मेलकेऽत्यये चोक्तविकारप्रकर्षाप्रकर्षौ तर्कणीयौ ॥ २० ॥ २१ ॥

**जलमुष्णं घृते पेयं यूषस्तैलेऽनु शस्यते ।**
**वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा २२**

अनुपानमाह—जलमित्यादि । तैलेऽन्विति अनुपाने । अनुपानपरिमाणं तु सम्यग्भेषजपाकार्थं क्रियमाणं भेषजावैकारिकपाकेनैवोन्नेयं, वृद्धवैद्यव्यवहाराच्च ॥ २२ ॥

**ओदनश्च विलेपी च रसो मांसं पयो दधि ।**
**यवागूः सूपशाकौ च यूषः काम्बलिकः खडः ॥२३॥**
**सक्तवस्तिलपिष्टं च मद्यं लेहास्तथैव च ।**
**भक्ष्यमभ्यञ्जनं वस्तिस्तथा चोत्तरवस्तयः ॥ २४ ॥**
**गण्डूषः कर्णतैलं च नस्तःकर्णाक्षितर्पणम् ।**
**चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणाः ॥ २५ ॥**

विचारणाः संख्यया स्वरूपेण चैकग्रन्थेनाह—ओदनश्चेत्यादि । विलेपी विरलद्रवा यवागूर्बहुसिक्थसमन्विता ज्ञेया । सशाकपल्लवेन कृतो यूषः खडः । काम्बलिको दधिलवणस्नेहतिलादिकृत ईषदम्लः । एतयोरुदाहरणं यथा—"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोऽयमयं काम्बलिको मतः ॥ दध्यम्लो लवणस्नेहतिलमाषान्वितः शृतः" इति । लेहः शर्करादीनां पाकात् कृतः; लिह्यत इति लेहः । प्रविचार्यते अवचार्यतेऽनुकल्पेनोपयुज्यतेऽनयेति प्रविचारणा ओदनादयः; ओदनादयश्च स्नेहप्रविचारणायां स्नेहयुक्ता एव बोद्धव्याः; अभ्यञ्जनादयस्तु यद्यपि शुद्धस्नेहसंपाद्यास्तथाऽपि जठराग्निसंबन्धे न व्याप्रियन्त इति तत्रे विचारणाशब्देनोच्यन्ते ॥ २३-२५ ॥

**अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम् ।**
**स्नेहस्य स भिषग्दृष्टः कल्पः प्राथमकल्पिकः ॥ २६ ॥**

केवलस्नेहपानं तु स्नेहने शक्त्यतिशयवत्त्वेन न विचारणासंज्ञयोच्यते, एतदेवाह—अच्छपेय इत्यादि । अच्छश्च पेयश्च अच्छपेयः, ओदनाद्यसंबन्धे सति पेय इत्यर्थः । न तामाहुर्विचारणामिति वचनेन वैद्यपरम्परासिद्धोऽयं व्यवहार इति दर्शयति । भिषग्भिर्दृष्टो भिषग्दृष्टः । प्रथमे श्रेष्ठे कल्पे पक्षे भवतीति प्राथमकल्पिकः, श्रेष्ठ इत्यर्थः ॥ २६ ॥

**रसैश्चोपहितः स्नेहः समासव्यासयोगिभिः ।**
**षड्भिस्त्रिषष्टिधा संख्यां प्राप्नोत्येकश्च केवलः ॥२७॥**
**एवमेताश्चतुःषष्टिः स्नेहानां प्रविचारणा ।**
**ओकर्तुव्याधिपुरुषान् प्रयोज्या जानता भवेत् ॥२८॥**

प्रकारान्तरेण विचारणाभेदमाह—रसैश्चेत्यादि । समासो रसानामन्योन्यमेलकः, व्यासोऽमेलकः; समासव्यासवद्भिः षड्भी रसैरोदनादिगतैरुपहितो युक्तः सन् स्नेहस्त्रिषष्टिसंख्यां प्राप्नोति । एकश्च केवल इत्यच्छपेयं वर्जयित्वाऽभ्यञ्जनादिप्रयोज्यः । त्रिषष्टी रसभेदा आत्रेयभद्रकाप्यीये "स्वादुरम्लादिभिर्योगं" ( सू. अ. २६ ) इत्यादिवाक्ये वक्ष्यमाणा बोद्धव्याः । एवं स्नेहानां रसयुक्तानां चतुःषष्टिः प्रविचारणा भवन्ति । चतुःषष्टिरिति स्नेहानामित्यनेन संबध्यते, तेन प्रविचारणेत्येकवचनमुपपन्नं भवति । न सर्वविचारणा सर्वत्र कर्तव्या, किन्तु सात्म्यर्तुव्याधिदोषपुरुषान् परीक्ष्य या यत्र युज्यते सा तत्र कर्तव्येत्याह—ओकर्त्वित्यादि । ओकः अभ्यासः । पुरुषग्रहणेन कस्मिन् देशेऽयं पुरुषो वर्तत इति परीक्षया देशोऽप्यवरुद्धो बोद्धव्यः, वयोबलप्रभृतयश्च बोद्धव्याः ॥ २७ ॥ २८ ॥

**अहोरात्रमहः कृत्स्नमर्धाहं च प्रतीक्षते ।**
**प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥ २९ ॥**
**इति तिस्रः समुद्दिष्टा मात्राः स्नेहस्य मानतः ।**
**तासां प्रयोगान् वक्ष्यामि पुरुषं पुरुषं प्रति ॥ ३० ॥**
**प्रभूतस्नेहनित्या ये क्षुत्पिपासासहा नराः ।**
**पावकश्चोत्तमबलो येषां ये चोत्तमा बले ॥ ३१ ॥**
**गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ।**
**उन्मत्ताः कृच्छ्रमूत्राश्च गाढवर्चस एव च ॥ ३२ ॥**
**पिबेयुरुत्तमां मात्रां तस्याः पाने गुणाञ्छृणु ।**
**विकाराञ्छमयत्येषा शीघ्रं सम्यक्प्रयोजिता ॥ ३३ ॥**
**दोषानुकर्षिणी मात्रा सर्वमार्गानुसारिणी ।**
**बल्या पुनर्नवकरी शरीरेन्द्रियचेतसाम् ॥ ३४ ॥**

१ कल्पनापूर्वकभेदा इत्यर्थः । २ '°चुक्रीका°' इति पा० ।

१ 'भिषग्दिष्टः' इति । २ 'प्रविचारणाः' इति पा० ।

अरुष्कस्फोटपिडकाकण्डूपामाभिरर्दिताः ।
कुष्ठिनश्च प्रमीढाश्च वातशोणितिकाश्च ये ॥ ३५ ॥
नातिबह्वाशिनश्चैव मृदुकोष्ठास्तथैव च ।
पिबेयुर्मध्यमां मात्रां मध्यमाश्चापि ये बले ॥ ३६ ॥
मात्रैषा मन्दविभ्रंशा न चातिबलहारिणी ।
सुखेन च स्नेहयति शोधनार्थे च युज्यते ॥ ३७ ॥
ये तु वृद्धाश्च बालाश्च सुकुमाराः सुखोचिताः ।
रिक्तकोष्ठत्वमहितं येषां मन्दाग्नयश्च ये ॥ ३८ ॥
ज्वरातीसारकासाश्च येषां चिरसमुत्थिताः ।
स्नेहमात्रां पिबेयुस्ते ह्रस्वां ये चावरा बले ॥ ३९ ॥
परिहारे सुखा चैषा मात्रा स्नेहनबृंहणी ।
वृष्या बल्या निराबाधा चिरं चाप्यनुवर्तते ॥ ४० ॥

मात्रायाः संख्यां प्रमाणं चाह—अहोरात्रमित्यादि । अहोरात्रशब्दोऽष्टप्रहरोपलक्षणः, एवमहःशब्दार्धाहशब्दौ चतुःप्रहरद्विप्रहरोपलक्षणौ, तेन प्रहरायतीतेऽप्यहनि पीता मात्रा यथोक्तप्रहरकालप्राप्त्या दिनान्तरे रात्रौ वा जीर्यमाणा मन्तव्या; अन्ये त्वहोरात्रशब्देन न्यूनेनाप्यह्ना युक्ता रात्रिरहोरात्रशब्देनोच्यते[1], कृत्स्नार्धाहौ तु प्रहरोपलक्षणाविति वदन्ति । अत्र यदा अहोरात्रपरिणामिनी मात्रा क्रियते, तदा तदहराहारो न कर्तव्यः; अत एवैतत्पानं पुरुषविशेषविषयकथने उक्तं—"क्षुत्पिपासासहा नराः" इति । प्रभूतस्नेहनित्याः प्रभूतस्नेहसात्म्याः । सम्यग्योजितेतिवचनेन महाव्यापत्तित्वमस्याः सूचयति । सर्वमार्गाः कोष्ठसन्धिमर्मशाखाः । पुनर्नवकरी निःशेषदोषहरत्वेन । अरुष्केत्यादि मध्यममात्रागुणः; अरुष्का अरूंषिका । शोधनार्थे इति शोधनार्थ(स्न)स्नेहकरणे; एतेन उत्तममात्रा संशमने[2] एव परं, न तु शोधनाङ्गस्नेहे कर्तव्येति दर्शयति । ये त्वित्यादि ह्रस्वमात्रागुणः । परिहारे सुखेति अल्पपरिहारत्वेन ॥ २९–४० ॥

वातपित्तप्रकृतयो वातपित्तविकारिणः ।
चक्षुःकामाः क्षताः क्षीणा वृद्धा बालास्तथाऽबलाः ॥
आयुःप्रकर्षकामाश्च बलवर्णस्वरार्थिनः ।
पुष्टिकामाः प्रजाकामाः सौकुमार्यार्थिनश्च ये ॥ ४२ ॥
दीप्त्योजःस्मृतिमेधाग्निबुद्धीन्द्रियबलार्थिनः ।
पिबेयुः सर्पिरार्ताश्च दाहशस्त्रविषाग्निभिः ॥ ४३ ॥

यः स्नेहो यत्र कार्यस्तमाह—वातपित्तेत्यादि । वातपित्तविकारग्रहणेनैव वातपित्तप्रकृतिषु लब्धेषु पुनस्तदभिधानं वातपित्तप्रकृतीनां स्तोकश्लेष्मविकारेऽपि घृतपानोपदेशार्थम्; एवं वातव्याधिभिराविष्टा वातप्रकृतयश्च य इत्यत्र व्याख्येयम् । बलार्थिन इत्यत्र बलशब्दः स्मृत्यादिभिः संबध्यते । आर्ताः पीडिताः, दाहादिभिरिति संबन्धः ॥ ४१–४३ ॥

प्रवृद्धश्लेष्ममेदस्काश्चलस्थूलगलोदराः ।
वातव्याधिभिराविष्टा वातप्रकृतयश्च ये ॥ ४४ ॥

बलं तनुत्वं लघुतां दृढतां स्थिरगात्रताम्[1] ।
स्निग्धश्लक्ष्णतनुत्वक्तां ये च काङ्क्षन्ति देहिनः ॥४५॥
कृमिकोष्ठाः क्रूरकोष्ठास्तथा नाडीभिरर्दिताः ।
पिबेयुः शीतले काले तैलं तैलोचिताश्च ये ॥ ४६ ॥

तैलविषयमाह—प्रवृद्धेत्यादि । शीतले काल इति तैलस्योष्णत्वेन शीतलेऽपि काल इत्यर्थः; तेन सामान्यप्रतिषेधः 'नात्युष्णशीते स्नेहं पिबेन्नरः' इति न विरुध्यते; यदि वा सर्पिःपानकालापेक्षया शीतलत्वं बोद्धव्यम् ॥ ४४–४६ ॥

वातातपसहा ये च रूक्षा भाराध्वकर्शिताः ।
संशुष्करेतोरुधिरा निष्पीतकफमेदसः ॥ ४७ ॥
अस्थिसन्धिसिरास्नायुमर्मकोष्ठमहारुजः ।
बलवान्मारुतो येषां खानि चावृत्य तिष्ठति ॥ ४८ ॥
महच्चाग्निबलं येषां वसासात्म्याश्च ये नराः ।
तेषां स्नेहयितव्यानां वसापानं विधीयते ॥ ४९ ॥

वसाविषयमाह—वातातपेत्यादि । संशुष्कनिष्पीतशब्दौ क्षीणार्थावेव । महारुज इत्यस्थ्यादिभिः संबध्यते । खानि स्रोतांसि ॥ ४७–४९ ॥

दीप्ताग्नयः क्लेशसहा घस्मराः स्नेहसेविनः ।
वातार्ताः क्रूरकोष्ठाश्च स्नेह्या मज्जानमाप्नुयुः ॥ ५० ॥
येभ्यो येभ्यो हितो यो यः स्नेहः स परिकीर्तितः ।

दीप्ताग्नय इत्यादि मज्जपानविषयः । घस्मरा बहुभक्षकाः । आप्नुयुः उपयुञ्जीरन् ॥ ५० ॥—

स्नेहनस्य प्रकर्षौ तु सप्तरात्रत्रिरात्रकौ ॥ ५१ ॥

प्रकर्षाविति अल्पप्रकर्षभूयःप्रकर्षौ[2]; तेन, अल्पत्वेन त्रैरात्रिकः प्रकर्षः, भूयस्त्वेन साप्तरात्रिक इति च भवति । एतच्च वक्ष्यमाणसद्यःस्नेहप्रयोगातिरिक्तप्रयोगे बोद्धव्यं; यदि वा, सद्यःस्नेहप्रयोगा अपि त्र्यहेणैव स्नेहयन्ति, स्तुत्यर्थं तु तेषु सद्य इत्युक्तम् । यदुक्तं—"त्र्यहावरं सप्तदिनं परं तु स्निग्धो नरः स्वेदयितव्य इष्टः । नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत् सप्तदिनात् परं तु" ( सि. अ. १ ) इति ॥ ५१ ॥

स्वेद्याः शोधयितव्याश्च रूक्षा वातविकारिणः ।
व्यायाममद्यस्त्रीनित्याः स्नेह्याः स्युर्ये च चिन्तकाः ॥

सामान्येन स्नेह्यानाह—स्वेद्या इत्यादि । स्वेद्याः स्वतन्त्रस्वेदसाध्या वातरुगार्तादयः, शोधनाङ्गस्वेदसाध्यानां तु शोधयितव्या इत्यनेनैव गृहीतत्वात् । चिन्तका इति चिन्ताबहुलाः ॥ ५२ ॥

संशोधनादृते येषां रूक्षणं संप्रवक्ष्यते ।
न तेषां स्नेहनं शस्तमुत्सन्नकफमेदसाम् ॥ ५३ ॥
अभिष्यण्णाननगुदा नित्यमन्दाग्नयश्च ये ।
तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः ॥ ५४ ॥

१ 'अहोरात्रेणैवोच्यते' इति पा० । २ 'संशमनी' इति पा० ।

१ 'स्थिरतां दृढगात्रताम्' इति पा० । २ 'अल्पत्वभूयस्त्वप्रकर्षौ' इति पा० ।

अन्नद्विषश्छर्दयन्तो जठरामगरार्दिताः ।
दुर्बलाश्च प्रतान्ताश्च स्नेहग्लाना मदातुराः ॥ ५५ ॥
न स्नेह्या वर्तमानेषु न नस्तोवस्तिकर्मसु ।
स्नेहपानात् प्रजायन्ते तेषां रोगाः सुदारुणाः ॥५६॥

अस्नेह्यानाह—संशोधनादृत इत्यादि । येषां रूक्षणं वक्ष्यते लङ्घनबृंहणीये—"अभिष्यन्दा महादोषा मर्मस्था व्याधयश्च ये । ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः" ( सू. अ. २२ ) इत्यनेन, तेषां शोधनादृते स्नेहनं न शस्तं, यदा तु शोधनेन विरूक्ष्यन्ते तदा परं शोधनान्न(र्थं)स्तत्र स्नेहः कर्तव्य इति भावः । उत्सन्नो वृद्धः कफो मेदश्च येषां ते तथा; एतच्च विशेषणं विरूक्षणीया एवंभूता एव भवन्तीति दर्शयति । अभिष्यण्णः द्रवप्रधानश्लेष्मविकारी । गरः कृत्रिमं विषम् । अतिप्रतान्तः अतिक्षीणद्रवधातुः । वर्तमानेषु क्रियमाणेष्वित्यर्थः ॥५३–५६॥

पुरीषं ग्रथितं रूक्षं वायुरप्रगुणो मृदुः ।
पक्ता खरत्वं रौक्ष्यं च गात्रस्यास्निग्धलक्षणम् ॥५७
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।
मार्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते ॥ ५८ ॥
पाण्डुता गौरवं जाड्यं पुरीषस्याविपक्वता ।
तन्द्रीररुचिरुत्क्लेशः स्यादतिस्निग्धलक्षणम् ॥ ५९ ॥

अस्निग्धलक्षणमाह—पुरीषमित्यादि । मृदुरिति पक्तुर्विशेषणम् । वातानुलोम्यमित्यादि स्निग्धलक्षणम् । पाण्डुतेत्यादि अतिस्निग्धलक्षणम् । जाड्यम् इन्द्रियजडत्वम् ॥ ५७–५९ ॥

द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः ।
नातिस्निग्धमसंकीर्णं श्वः स्नेहं पातुमिच्छता ॥६०॥
पिबेत् संशमनं स्नेहमन्नकाले प्रकांक्षितः ।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ॥ ६१ ॥

स्नेहात् पूर्वं यत् पथ्यं तदाह—द्रवोष्णमित्यादि । असङ्कीर्णम् अविरुद्धवीर्यम् । श्व इत्यागामिदिने । अन्नकाले द्विप्रहरादिलक्षणे बुभुक्षा कदाचिन्न स्यादपि तदर्थं विशेषणं—प्रकाङ्क्षित इति । शुद्ध्यर्थं तु स्नेहं नैशे दिनान्तरकृते आहारे जीर्णे एव प्रातरेव पिबेदित्यर्थः । संशमनार्थस्नेहो यदि जरणान्ते प्रातरेव क्रियते तदा कोष्ठोपलेपकदोषस्याक्षयात्तेन दोषेण संवद्धो दोषोत्क्लेशं कुर्यान्न संशमनं, संशोधनार्थस्तु दोषोत्क्लेशं करोतीत्यपेक्षणीय एवेति भावः । एतच्च कालकथनमुत्सर्गेण, तेन "वातपित्ताधिको रात्रौ" इत्युक्तकालविरोधो न भवति ॥ ६० ॥ ६१ ॥

उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ।
शकृन्मूत्रानिलोद्गारानुदीर्णांश्च न धारयेत् ॥ ६२ ॥
व्यायाममुच्चैर्वचनं क्रोधशोकौ हिमातपौ ।
वर्जयेदप्रवातं च सेवेत शयनासनम् ॥ ६३ ॥
स्नेहं पीत्वा नरः स्नेहं प्रतिभुञ्जान एव च ।
स्नेहमिथ्योपचाराद्धि जायन्ते दारुणा गदाः ॥ ६४ ॥

क्षपायामेव स्वपितीति क्षपाशयः । अप्रवातं चेति शयनासनविशेषणम् । स्नेहं प्रतिभुञ्जान इति स्नेहे जीर्णेऽपि स्नेहप्रयोगानुगुणमन्यस्नेहमविरुद्धवीर्यादिगुणयुक्तं भुञ्जानः । एतेन स्नेहे पीते जीर्णे किंच हिताहितमिति प्रश्नद्वयस्योत्तरमिदम्—उष्णोदकोपचारी स्यादित्यादि भवति ॥ ६२–६४ ॥

मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ।
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ ६५ ॥
गुडमिक्षुरसं मस्तु क्षीरमुल्लोडितं दधि ।
पायसं कृशरां सर्पिः काश्मर्यत्रिफलारसम् ॥ ६६ ॥
द्राक्षारसं पीलुरसं जलमुष्णमथापि वा ।
मद्यं वा तरुणं पीत्वा मृदुकोष्ठो विरिच्यते ॥ ६७ ॥
विरेचयन्ति नैतानि क्रूरकोष्ठं कदाचन ।
भवति क्रूरकोष्ठस्य ग्रहण्यत्युल्बणानिला ॥ ६८ ॥
उदीर्णपित्ताऽल्पकफा ग्रहणी मन्दमारुता ।
मृदुकोष्ठस्य तस्मात् स सुविरेच्यो नरः स्मृतः ॥६९

मृदुकोष्ठादिलक्षणमाह—मृद्वित्यादि । अभ्यर्हितत्वात् कोष्ठज्ञानस्यान्यथाऽपि तल्लक्षणमाह—गुडमित्यादि । उल्लोडितं दधिसरः । कृशरा तिलतण्डुलमाषकृता यवागूः; वचनं हि—"तिलतण्डुलमाषैस्तु कृशरा त्रिसरेति च" । क्रूरकोष्ठाविरेचनहेतुमाह—भवतीत्यादि । ग्रहणी कोष्ठस्थाग्न्यधिष्ठानभूता नाडी; यदुक्तम्—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" ( चि. अ. १५ ) इति । उदीर्णपित्तेत्यादि मृदुकोष्ठस्वरूपकथनम् । क्रूरकोष्ठस्य ग्रहणीगतो वायुर्गुडादीनां सरत्वं प्रतिवध्नाति, मृदुकोष्ठस्य हि ग्रहण्यां विरोधको वायुर्नास्ति, स्तम्भकोऽपि श्लेष्माऽल्पः, उद्भूतसरत्वगुणं च पित्तं प्रबलं; तेन गुडादिभिः सुखं विरेचनं भवतीति भावः ॥ ६५–६९ ॥

उदीर्णपित्ता ग्रहणी यस्य चाग्निबलं महत् ।
भस्मीभवति तस्याशु स्नेहः पीतोऽग्नितेजसा ॥७०॥
स जग्ध्वा स्नेहमात्रां तामोजः प्रक्षारयन् बली ।
स्नेहाग्निरुत्तमां तृष्णां सोपसर्गामुदीरयेत् ॥ ७१ ॥

---

१ 'दर्शनार्थं' इति पा० । २ 'सदनं' इति पा० । ३ 'न भवत्यपि' इति पा० । ४ 'ब्रह्मचारी क्षपाशय इत्यनेन मैथुनदिवास्वप्नरात्रिजागरणानां निषेधः' इति शिवदाससेनः । ५ 'उदीर्णांश्च न धारयेदित्यत्र चकारादनुदीर्णांश्च नोदीरयेदित्यर्थो ज्ञेयः' इति शिवदाससेनः ।

१ गङ्गाधरस्तु 'स्नेहं पीत्वा नरे स्नेहं प्रतिभुञ्जान एव च' इति पठति, 'स्नेहं पीत्वा त्वपरं स्नेहं प्रतिभुञ्जाने नरे स्नेहमिथ्योपचाराद्दारुणा गदा जायन्ते' इति व्याख्यानयति । योगीन्द्रनाथसेनस्तु 'स्नेहं पीत्वा नरः स्नेहं प्रतिभुञ्जान एव च । उष्णोदकोपचारी स्याद्' इत्यादि 'सेवेत शयनासनम् । स्नेहमिथ्योपचाराद्धि जायन्ते दारुणा गदा' इत्येवं किञ्चित्पौर्वापर्यं कृत्वा पठति, 'पीते हिताहितमाह—स्नेहं पीत्वेत्यादि । स्नेहं पीत्वा तथा स्नेहं प्रतिभुञ्जानः तस्मिन्नेव दिने स्नेहं पिबन् स्नेहं पीतवान् स्नेहं पिबंश्चेत्यर्थः, नर उष्णोदकोपचारी स्याद्' इत्यादि व्याख्यानयति च ।

नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि ।
स चेत् सुशीतं सलिलं नासादयति दह्यते ।
यथैवाशीविषः कक्षमध्यगः स्वविषाग्निना ॥ ७२ ॥
अजीर्णे यदि तु स्नेहे तृष्णा स्याच्छर्दयेद्भिषक् ।
शीतोदकं पुनः पीत्वा भुक्त्वा रूक्षान्नमुल्लिखेत् ७३
न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ।
सर्वं ह्यनुरजेद्देहं हत्वा संज्ञां च मारयेत् ॥ ७४ ॥
तन्द्रा सोत्क्लेश आनाहो ज्वरः स्तम्भो विसंज्ञता ।
कुष्ठानि कण्डूः पाण्डुत्वं शोफार्शांस्यरुचिस्तृषा ७५
जठरं ग्रहणीदोषाः स्तैमित्यं वाक्यनिग्रहः ।
शूलमामप्रदोषाश्च जायन्ते स्नेहविभ्रमात् ॥ ७६ ॥
तत्राप्युल्लेखनं शस्तं स्वेदः कालप्रतीक्षणम् ।
प्रति प्रति व्याधिबलं बुद्ध्वा स्रंसनमेव च ॥ ७७ ॥
तक्रारिष्टप्रयोगश्च रूक्षपानान्नसेवनम् ।
मूत्राणां त्रिफलायाश्च स्नेहव्यापत्तिभेषजम् ॥ ७८ ॥

संप्रति स्नेहव्यापदो दर्शयति—उदीर्णेत्यादि । ओजः सर्वधातुसारभूतं हृदि स्थितं, प्रक्षारयन् स्थानाद्भ्रंशयन्, क्षपयंश्च । वलीत्यनेन स्नेहेन्धनो वह्निर्नितरां बलवान् भवतीति दर्शयति । वचनं हि—"नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि" इति । उत्तमां महतीं मात्राम् । सोपसर्गा सोपद्रवाम् । कक्षः काष्ठसमूहः । छर्दयेदिति प्रथमं स्नेहमेव तृष्णाकारकं छर्दयित्वा पुनः शीतोदकं पीत्वा रूक्षान्नं च भुक्त्वा उल्लिखेदिति योजनीयम् । न सर्पिरित्यादि ।—न सर्पिः सामे पित्ते पेयं, केवलं त्वसंस्कृतं विशेषतो न पेयं सामपित्त एवेति योजना; एवं मन्यते—संस्कृतं तिक्तकादिभिर्युतं सामे पित्ते तिक्तकादिपाचनगुणानुयोगाद्योग्यं कदाचिद्भवत्यपि, असंस्कृतं तु सर्वथा विरुद्धमेव; यदिवा, केवलमसंस्कृतं सर्पिः पित्ते सामान्येन सामे निरामे वा न पेयं, सामे पित्ते विशेषत इति योजना । एतेन, यत्रापि सामान्येन घृतं विहितं, यथा—"अत ऊर्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे । परिपक्वेषु दोषेषु सर्पिःपानं यथाऽमृतम्" ( चि. अ. ३ ) इत्यादौ, तत्राप्युचितभेषजसंस्कृतमेव बोद्धव्यम् । यदिवा, न केवलं पित्ते सामे सर्पिर्विशेषतो न पेयं, किंतर्हि तैलादीन्यपि वातश्लेष्मविहितानि तयोः सामयोर्न पेयानीत्यर्थः । अस्मिन् व्याख्यानेऽपेयमित्यकारप्रश्लेषो द्रष्टव्यः । अनुरजेत् पित्तवर्णं कुर्यात् । संज्ञा स्मृतिः, तद्धननं चेह व्याधिप्रभावात् । स्तैमित्यम् आर्द्रवस्त्रावगुण्ठितत्वमिव । आमप्रदोषा अलसकविसूचिकादयः । कालप्रतीक्षणं स्नेहजनितदोषक्षयं यावदभोजनम् । तक्रस्यारिष्टानां च चिकित्सावक्ष्यमाणानां प्रयोगः । मूत्राणां त्रिफलायाश्च सेवनमिति संबन्धः ॥ ७०–७८ ॥

अकाले चाहितश्चैव मात्रया न च योजितः ।
स्नेहो मिथ्योपचाराच्च व्यापद्येतातिसेवितः ॥ ७९ ॥

मिथ्योपचारात् यथोक्तविध्यननुष्ठानात् । अतिसेवितः कालप्रकर्षेण सेवितः ॥ ७९ ॥

स्नेहात् प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत् ।
स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम् ॥ ८० ॥

संशोधनस्नेहपाने वृत्तिप्रचारमाह—स्नेहादित्यादि । स्नेहात् स्नेहप्रयोगात् । त्रिरात्रोपरतः त्रिरात्रं परित्यक्तस्नेहपान इत्यर्थः । प्रस्कन्दनं विरेचनम् । स्नेहोपरमत्रिरात्र एव भोजनं दर्शयति—स्नेहवदित्यादि । रसप्रधानमोदनं रसौदनम् ॥ ८० ॥

एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत् ।

वमने स्नेहवृत्तिमाह—एकेत्यादि । एकाहोपरतः स्नेहादिति योजना । तद्वदिति स्नेहवद्द्रवमुष्णं च रसौदनं स्नेहोपरमदिवस एव ॥—

स्यात्त्वसंशोधनार्थीये वृत्तिः स्नेहे विरिक्तवत् ॥८१॥

संशमनविधिमाह-स्यात्त्वित्यादि । असंशोधनार्थीये संशमने । वृत्तिः उपचारः । विरिक्तवदित्यनेनागतावेक्षणेनोपकल्पनीयवक्ष्यमाणं "सम्यग्विरिक्तं चैनं" ( सू. अ. १५ ) इत्यादिग्रन्थप्रतिपादनीयमुपचारमाह, नतु पेयादिक्रममात्रम् । यद्यपि वमनोक्ता एव तत्रोच्चैर्भाष्यादयो विरेचनवृत्तावप्यतिदिष्टास्तथाऽपीह वमनविधिं परित्यज्य विरेचनविध्यतिदेशो धूमपानप्रतिषेधार्थः, विरेचने हि तत्र "धूमपानवर्जं" ( सू. अ. १५ ) इति कृतं, स्नेहपाने च धूमपानं निषिद्धं मात्राशितीये—"न मद्यदुग्धे पीत्वा च न स्नेहं" ( सू. अ. ५ ) इत्यादिना ॥ ८१ ॥

स्नेहद्विषः स्नेहनित्या मृदुकोष्ठाश्च ये नराः ।
क्लेशासहा मद्यनित्यास्तेषामिष्टा विचारणा ॥ ८२ ॥
लावतैत्तिरमायूरहांसवाराहकौक्कुटाः ।
गव्याजौरभ्रमात्स्याश्च रसाः स्युः स्नेहने हिताः ॥८३
यवकोलकुलत्थाश्च स्नेहाः सगुडशर्कराः ।
दाडिमं दधि सव्योषं रससंयोगसंग्रहः ॥ ८४ ॥
स्नेहयन्ति तिलाः पूर्वं जग्धाः सस्नेहफाणिताः ।
कृशराश्च बहुस्नेहास्तिलकाम्बलिकास्तथा ॥ ८५ ॥
फाणितं शृङ्गवेरं च तैलं च सुरया सह ।
पिबेद्रूक्षो भृतैर्मांसैर्जीर्णेऽश्नीयाच्च भोजनम् ॥ ८६ ॥
तैलं सुराया मण्डेन वसां मज्जानमेव वा ।
पिबन् सफाणितं क्षीरं नरः स्निह्यति वातिकः ॥८७
धारोष्णं स्नेहसंयुक्तं पीत्वा सशर्करं पयः ।
नरः स्निह्यति पीत्वा वा सरं दध्नः सफाणितम् ॥८८
पाञ्चप्रसृतिकी पेया पायसो माषमिश्रकः ।
क्षीरसिद्धो बहुस्नेहः स्नेहयेदचिरान्नरम् ॥ ८९ ॥
सर्पिस्तैलवसामज्जातण्डुलप्रसृतैः शृ(कृ)ता ।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता ॥ ९० ॥

१ 'ह्यनुत्तरेद्देहं' इति पा० । २ 'तन्द्रीरुत्क्लेश' इति पा० ।
३ 'योग्यं शंक्यतापि' इति पा० ।

१ 'स्नेहोपरतस्य त्रिरात्र एव' इति पा० । २ 'विरिक्तवदिति यथा विरिक्ते पेयादिक्रमस्तथाऽस्मिन्नपि' इति योगीन्द्रनाथसेनः ।

(शौकरो वा रसः स्निग्धः सर्पिर्लवणसंयुतः।
पीतो द्विर्वासरे यत्नात् स्नेहयेदचिरान्नरम्॥ १॥)

विचारणाविषयमाह—स्नेहद्विष इत्यादिना। लावादिरसानामुक्तानां संस्कारमाह—यवेत्यादि। रसे स्नेहार्थोक्तरस उचितः संयोगो येषां ते रससंयोगाः, तेषां संग्रहणं संग्रहः। पूर्वमिति भोजनात् पूर्वम्। तिलप्रधानः काम्बलिकस्तिलकाम्बलिकः। फाणितमित्यादौ शृङ्गवेरमिति शृङ्गवेररसम्। सूतैः मटित्रीकृतैः। पाञ्चप्रसृतिकी अग्रे वक्ष्यमाणा। माषमिश्रको माषतण्डुलकृतमन्नम्। पेया पातव्या॥ ८७–९०॥

ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान्।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत्॥ ९१॥
स्नेहैर्यथार्हं तान् सिद्धैः स्नेहयेदविकारिभिः।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलयाऽपि वा॥९२॥
द्राक्षामलकयूषाभ्यां दध्ना चाम्लेन साधयेत्।
व्योषगर्भं भिषक् स्नेहं पीत्वा स्निह्यति तं नरः॥९३॥
यवकोलकुलत्थानां रसाः क्षारः सुरा दधि।
क्षीरसर्पिश्च तत् सिद्धं स्नेहनीयं घृतोत्तमम्॥९४॥

यथार्हमिति यो यत्र स्नेहो युज्यते सर्पिरादिः। सिद्धैरिति पिप्पलीभिस्तथा हरीतक्या तथा त्रिफलया चेति पृथग्योजनीयं; पिप्पल्यादिसिद्धस्नेहश्च कुष्ठादिषु यथासंख्यमिति केचित्। यूषशब्दः क्वाथवचनः। व्योषगर्भं व्योषकल्कम्। अत्र त्रिभिर्द्रव्यैर्मिलित्वा चातुर्गुण्यम्। यवकोलादौ षड्द्रव्याणि स्नेहसमानि। क्षारो यवक्षारः कल्कः॥ ९१–९४॥

तैलमज्जवसासर्पिर्बदरत्रिफलारसैः।
योनिशुक्रप्रदोषेषु साधयित्वा प्रयोजयेत्॥ ९५॥

तैलमज्जेत्यादि।—चतुःस्नेहोऽकल्क एव, तैलमज्जवसासर्पिरित्येकवद्भावाद्बितीयान्तः प्रयोगः॥ ९५॥

गृह्णात्यम्बु यथा वस्त्रं प्रस्रवत्यधिकं यथा।
यथाग्निर्जीर्यति स्नेहस्तथा स्रवति चाधिकः॥ ९६॥
यथा वाऽऽक्लेद्य मृत्पिण्डमासिक्तं त्वरया जलम्।
स्रवति स्रंसते स्नेहस्तथा त्वरितसेवितः॥ ९७॥

संप्रति स्नेह उपयुक्तो यथा शरीरं संक्लेद्याधिको दृश्यते, तदाह—गृह्णातीत्यादि। तच्च शिष्येणाध्यायादावपृष्टमपि शिष्यहिततयाऽभिधीयते। यथाग्नीति अग्न्यनधिक इत्यर्थः। नन्वग्न्यधिकश्चेत् स्रवति, तदवधि च स्नेहलक्षणमुक्तं, यदुच्यते—"अधस्तात् स्नेहदर्शनम्" इति, तेनैकदिन एवाधिकस्नेहपानं क्रियतामित्याह—यथा चेत्यादि। आक्लेद्य ईषत्क्लेदयित्वा। त्वरितसेवितः स्नेहो धातूनस्नेहयित्वैव स्रंसतेऽधो याति यावान्, न तावता स्नेहनं भवतीति भावः॥ ९६॥ ९७॥

लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम्।
तद्ध्यभिष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च॥९८॥

स्नेहने सर्वस्नेहेषु लवणप्रयोगमाह—लवणोपहिता इत्यादि। तदिति लवणम्। अभिष्यन्दि दोषसङ्घातविच्छेदकम्। व्यवायि अखिलदेहव्याप्तिपूर्वकपाकगामि॥ ९८॥

स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्।
स्नेहस्वेदोपपन्नस्य संशोधनमथेतरत्॥ ९९॥

अतो वक्ष्यमाणस्वेदोपकल्पनाध्याययोः संबन्धसूचकं स्वेदादिषु स्नेहस्य प्राग्भावमाह—स्नेहमित्यादि॥ ९९॥

तत्र श्लोकः—
स्नेहाः स्नेहविधिः कृत्स्नव्यापत्सिद्धिः सभेषजा।
यथाप्रश्नं भगवता व्याहृतं चान्द्रभागिना॥ १००॥

चान्द्रभागी पुनर्वसुः॥ १००॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने स्नेहाध्यायो नाम त्रयोदशोऽध्यायः॥ १३॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां सूत्रस्थाने कल्पनाचतुष्के स्नेहाध्यायो नाम त्रयोदशोऽध्यायः॥ १३॥

---

## चतुर्दशोऽध्यायः।

अथातः स्वेदाध्यायं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

स्नेहपूर्वकत्वात् स्वेदस्य स्वेदाध्यायोऽभिधीयते। स्वेदप्रतिपादकोऽध्यायः स्वेदाध्यायः॥ १॥ २॥

अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत्प्रयोजितैः।
स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः॥३॥
स्नेहपूर्वं प्रयुक्तेन स्वेदेनावजितेऽनिले।
पुरीषमूत्ररेतांसि न सज्जन्ति कथंचन॥ ४॥
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः।
नमयन्ति यथान्यायं किं पुनर्जीवतो नरान्॥ ५॥

वातकफात्मका असंसृष्टवातकफजाः, वातकफजत्वेऽप्युदरादयः स्वेदेन न शाम्यन्ति, अत आह—स्वेदसाध्याः; एतेनोदरादयोऽस्वेद्या व्यावर्त्यन्ते। स्नेहपूर्वमिति क्रियाविशेषणम्। न सज्जन्ति अप्रवृत्तानि न भवन्ति। यथान्यायं यथागमम्, एतच्च स्नेहस्वेदोपपादनैरित्यनेन संबध्यते; यदि वा यथान्यायं यथासहजं नमयन्तीति संबन्धः॥ ३–५॥

---

१ "इदानीमुपयुक्तः स्नेहः शरीरं संक्लेद्याधिकश्चेद्भवति तदा स्रवति, अन्यथा तु जीर्यत्येवेत्याह- गृह्णातीत्यादि। यथाग्नीति अग्न्यनुरूपम्। ननु स्नेहपानं हि स्निग्धलक्षणावधि कार्यं, तेनैकदिन एव तथा स्नेहपानं क्रियतां यथा शीघ्रमेव स्नेहलक्षणं स्यादित्याह–यथा चेत्यादि। आक्लेद्य ईषत्क्लेदयित्वा,एवं त्वरितसेवितोऽपि स्नेहो धातूनक्लेदयित्वैव स्रंसते अधो याति, तथा च सति सम्यक्स्नेहनं न भवतीति भावः" इति शिवदाससेनः।

१ 'संशोधनमनन्तरम्' इति पा०। २ 'यथान्यायं यथाशास्त्रं स्नेहस्वेदोपपादनैरित्यन्वयः, शास्त्रोक्तस्नेहस्वेदविधिभिरित्यर्थः' इति शिवदाससेनः।

**रोगर्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च ।**
**द्रव्यवान् कल्पितो देशे स्वेदः कार्यकरो मतः ॥ ६ ॥**

रोगमृतुं व्याधितं च बलवत्त्वादिनाऽपेक्षत इति रोगर्तुव्याधितापेक्षः । नात्युष्णो नातिचण्डतापः । द्रव्यवानिति स्निग्धरूक्षादिद्रव्यवान् । कल्पित इति रोगादीनपेक्ष्य यथोचितेन द्रव्येण देशे चामाशयादौ यथायोग्यतया संपादित इति मन्तव्यम् ॥ ६ ॥

**व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।**
**दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो हितः ॥ ७ ॥**
**वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।**
**स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ॥ ८ ॥**

रोगाद्यपेक्षयोक्तकल्पनां दर्शयति—व्याधावित्यादि । व्याधौ महाबले तथा शीते कालकृते महाबले । महानिति चण्डताप एव पुनः पुनः क्रियमाणत्वेन मृदुस्वेदापेक्षयाऽधिकतापत्वेन ज्ञेयः । दुर्बल इति तथा मध्यम इति च व्याध्यादिषु पूर्ववद्योजनीयम् । स्निग्धरूक्षद्रव्यकृतः स्निग्धरूक्षः, स्निग्धरूक्षद्रव्यादयो वातश्लेष्मादिषु यथासंख्यं मन्तव्याः; एतच्च स्निग्धरूक्षादिकथनं द्रव्यापेक्षकल्पनोदाहरणं; वाते स्निग्धः, कफे रूक्षः ॥ ७–८ ॥

**आमाशयगते वाते कफे पक्वाशयाश्रिते ।**
**रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ ९ ॥**

तं देशविशेषसंबन्धेन व्यभिचारयन् देशापेक्षां कल्पनामाह—आमाशयेत्यादि । आमाशयगते वाते रूक्षपूर्वः स्थानापेक्षया पूर्वं रूक्षं कृत्वा पश्चाद्वातापेक्षः स्निग्धः कार्यः, एवं पक्वाशयगते कफे स्नेहपूर्वो व्याख्येयः; आमाशयशब्देन कफस्थानं ज्ञेयं, कफस्थानापेक्षया हि प्रथमं रूक्षः क्रियते, यदुक्तं—"स्थानं जयेद्धि पूर्वं तु स्थानस्थस्याविरुद्धतः" इति ॥ ९ ॥

**वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु नैव वा ।**
**मध्यमं वंक्षणौ शेषमङ्गावयवमिष्टतः ॥ १० ॥**

मृदु नैव वेति स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदुस्वेदः, स्वेदव्यतिरिक्तोपायान्तरसंभवे तु न वेति बोद्धव्यम् । इष्टत इत्यातुरेच्छातो वैद्येच्छातश्च । इष्टत इति भावक्तादिच्छावचनः ॥ १० ॥

**सुशुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा ।**
**पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी ॥ ११ ॥**

स्वेदे क्रियमाणे चक्षुषः स्वेदपरिहारोपायमाह—सुशुद्धैरित्यादि । नक्तकः कर्पटावयवः[1] ॥ ११ ॥

**मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि ।**
**जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ॥ १२ ॥**

स्वेदे क्रियमाणे हृदयरक्षणार्थमाह—मुक्तावलीभिरित्यादि । जलजानि पङ्कजादीनि । एवमस्वेद्यत्वसामान्यत्वाद्वृषणरक्षाऽप्युन्नेतव्या, प्राधान्याद्धृदयचक्षुःपालनमुक्तम् ॥ १२ ॥

**शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।**
**संजाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ १३ ॥**

शीतशूलेत्यादि । स्वेद इति स्वेदभवे घर्मे । स्वेदनाद्विरतिर्मतेत्युपदिशन् शीतादिव्युपरमे सति स्वेदो निवर्तनीयः, शीताद्यनुपरमे च स्वेदः कर्तव्य इति द्वयमुपदिशति; ततश्च इत एव स्वेदनिवृत्तिविषयशीतादिव्युपरमोत्पादः स्वेदस्य सम्यग्योगलक्षणं तथा शीतादिव्युपरमानुत्पादश्च स्वेदानिवृत्तिविषयोऽयोगलक्षणमुक्तं भवतीति नायोगलक्षणानभिधानमुद्भावनीयम् ॥ १३ ॥

**पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा ।**
**दाहः स्वराङ्गदौर्बल्यमतिस्विन्नस्य लक्षणम् ॥ १४ ॥**
**उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्वशो विधिः ।**
**सोऽतिस्विन्नस्य कर्तव्यो मधुरः स्निग्धशीतलः ॥ १५ ॥**

अतिस्विन्नचिकित्सितमाह—उक्त इत्यादि । ग्रैष्मिको विधिरित्यनेन लब्धे पुनर्मधुरः स्निग्धशीतल इत्यादिवचनं "मद्यमल्पं न वा पेयं" ( सू. अ. ६) इत्यत्रोपदिष्टमद्यपानस्य प्रतिषेधार्थं, मधुरशीतादियोगविशेषविधानार्थं च ॥ १४–१५ ॥

**कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम् ।**
**पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् ॥ १६ ॥**
**विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम् ।**
**श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् ॥ १७ ॥**
**तृष्यतां क्षुधितानां च क्रुद्धानां शोचतामपि[1] ।**
**कामल्युदरिणां चैव क्षतानामाढ्यरोगिणाम् ॥ १८ ॥**
**दुर्बलातिविशुष्काणामुपक्षीणौजसां तथा ।**
**भिषक् तैमिरिकाणां च न स्वेदमवतारयेत् ॥ १९ ॥**

अस्वेद्यानाह—कषायेत्यादि । कषायद्रव्यकृतं मद्यं कषायमद्यं; किंवा कषायशब्दोऽमधुरवचनः, न तेन यदुच्यते—कषायनित्यस्य वातप्रधानता स्यात् कषायस्य वातकारित्वात्, वाते च स्वेदो विहित एव, तत् कथं कषायनित्यं प्रति स्वेदनिषेध इति, तन्निरस्तं भवति । किंवा, कषायनित्या रूक्षातिस्तब्धगात्रा भवन्ति, कषायस्य विरूक्षकस्तम्भकत्वेन; ततश्च तेषां स्वेदः पर्वभेदमावहतीत्यतः कषायनित्यनिषेधः । रक्तपित्तिनामविधानादेव स्वेदे निषिद्धे, पुनः स्वेदनिषेधो रक्तपित्तिनां यद्यन्योऽपि स्वेदसाध्यो वातश्लेष्मजो विकारो भवति तत्रापि स्वेदनिषेधार्थं, तथा रक्तपित्तिनां वमनविरेचनाङ्गतया प्राप्तस्वेदप्रतिप्रसवनिषेधार्थं च; एवं पित्तमेहिकामल्यादिष्वपि व्याख्येयम् । पित्तिनामिति पित्तप्रकृतीनाम् । मधुमेहशब्देन सर्वे एव मेहा गृह्यन्ते, मधुमेहशब्दो हि सर्वेष्वेव मेहेषु वर्तत इति कियन्तःशिरसीये दर्शनीयं, मेहेषु च सर्वेष्वेव शरीरशैथिल्यप्रवृत्तेषु विशेषतः शरीरशैथिल्यहेतुत्वेन स्वेदो न युज्यते;

[1] कर्पटावयवः पटावयवः ।

[1] 'क्षुत्परीतानां' इति पा० ।

पित्तमेहिनामिति तु पुनरभिधानं पित्तसंबन्धेन विशेषप्रतिषेधतादर्शनार्थम्। ब्रध्नः गुदः। मद्यविकारिणामिति मद्यनित्यस्य वातकफजमदात्यये स्वेदनिषेधार्थम्। आढ्यरोगीह वातरक्ती। एषु चास्वेदविषयेषु यदि स्वेदैकसाध्यः संन्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेक्ष्यापि स्वेदो विधेय इति न्यायसिद्धमेव; यदाहुर्न्यायविदः—"भूयोविरोधे स्वल्पमन्याय्यम्" इति ॥ १६-१९ ॥

प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे।
कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे ॥ २० ॥
अर्दितैकाङ्गसर्वाङ्गपक्षाघाते विनामके।
कोष्ठानाहविबन्धेषु मूत्राघाते विजृम्भके ॥ २१ ॥
पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च।
मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्दके ॥ २२ ॥
पादजानूरुजङ्घार्तिसंग्रहे श्वयथावपि।
खल्लीष्वामेषु शीते च वेपथौ वातकण्टके ॥ २३ ॥
संकोचायामशूलेषु स्तम्भगौरवसुप्तिषु।
सर्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते ॥ २४ ॥

प्रतिश्याये चेत्यादिना स्वेद्यान् दर्शयति। विनामकः शरीरविनमनकारी वातः। विजृम्भको बहिरायामः, जृम्भाबहुत्वं वा। पादजानूरुजङ्घाभिरर्तिः संग्रहश्च पृथक् संबध्यते। खल्ली हस्तपदावमोटनम्। वातकण्टको गुल्फाश्रितो वातः। अलाघव इति पूर्वमुक्तेऽपि पुनर्गौरववचनमङ्गानां गुरुतरत्वप्रतिपादनार्थम्, अलाघववचनं तु लाघवप्रतिषेधमात्रप्रयोजनं नातिगुरुत्वं ब्रूते, यतः सर्वत्र नञ् विरुद्धे न वर्तते, यथा "अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम्" (सू. अ. २१) इत्यत्र न ह्यरूक्षशब्देन स्निग्धत्वमभिप्रेतं, किं तर्हि रूक्षताप्रतिषेधमात्रमेव ॥ २०-२४ ॥

तिलमाषकुलत्थाम्लघृततैलामिषौदनैः।
पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ॥ २५ ॥
गोखरोष्ट्रवराहाश्वशकृद्भिः सतुषैर्यवैः।
सिकतापांशुपाषाणकरीषायसपूटकैः ॥ २६ ॥
श्लैष्मिकान् स्वेदयेत् पूर्वैर्वातिकान् समुपाचरेत्।
द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि ॥ २७ ॥

वक्ष्यमाणानां सङ्करादिस्वेदानां द्रव्याण्याह—तिलमाषेत्यादि। पिण्डरूपः स्वेदः पिण्डस्वेदः। करीषः शुष्कगोमयः; आयसः अयोविकारः, स चेह पुटकरणयोग्यो बोद्धव्यः। पूर्वैरिति तिलमाषादिभिः। यथास्वमित्यनेन तिलमाषादयो वाते, गोखरादिग्रन्थोक्ताश्च श्लेष्मणि, प्रस्तरस्वेदे कर्तव्या इति दर्शयति ॥ २५-२७ ॥

भूगृहेषु च जेन्ताकेषूष्णगर्भगृहेषु च।
विधूमाङ्गारतप्तेषु स्वभ्यक्तः स्विद्यते सुखम् ॥ २८ ॥

भूगृहेष्विति भूस्वेदार्थेषु गृहेषु। उष्णगर्भगृहेष्विति कुटीस्वेदं दर्शयति। स्वभ्यक्त इति सम्यगभ्यक्तः ॥ २८ ॥

ग्राम्यानूपौदकं मांसं पयो वस्तशिरस्तथा।
वराहमध्यपित्तासृक् स्नेहवत्तिलतण्डुलाः ॥ २९ ॥
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत्।
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः ॥ ३० ॥
वारुणामृतकैरण्डशिग्रुमूलकसर्षपैः।
वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च ॥ ३१ ॥
शोभाञ्जनकसैरेयमालतीसुरसार्जकैः।
पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् ॥ ३२ ॥
भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना।
मूत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत् ॥ ३३ ॥

वस्तशिरः छागमस्तकम्। स्नेहवन्तश्चैरण्डबीजादयः तिलाश्च तण्डुलाश्च स्नेहवत्तिलतण्डुलाः। ग्राम्येत्यादिना वातापहो नाडीस्वेद उक्तः, वारुणेत्यादिना कफापहः, भूतीकेत्यादिना वातश्लेष्मापहः। वारुणो वरुणः, अमृतका गुडूची, सर्षपैरित्यत्र पत्रैरिति संबध्यते। वंशो वेणुः। पुनः शोभाञ्जनग्रहणाद्द्वितीयो विटपशोभाञ्जनो गृह्यते, सैरेयः झिण्टी ॥ २९-३३ ॥

एत एव च निर्यूहाः प्रयोज्या जलकोष्ठके।
स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत् ॥ ३४ ॥

एत एवेति नाडीस्वेदोक्तास्त्रयोऽपि। जलकोष्ठः अवगाहार्थं कृतं महज्जलपात्रम्; एवं घृतक्षीरतैलकोष्ठाश्च व्याख्याताः ॥ ३४ ॥

गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः।
सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥ ३५ ॥
गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया।
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ॥ ३६ ॥
चर्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः।
उष्णवीर्यैरलाभे तु कौशेयाविकशाटकैः ॥ ३७ ॥

गोधूमशकलैः गोधूमचूर्णैः। किण्वः सुराबीजम्। उपनाहः बहलं लेपं दत्त्वा चर्मादिभिराव्रत्य व्याधियुक्तस्याङ्गस्य बन्धनम्; चर्मभिश्चोपनद्धव्य इत्यत्र उपनाहोऽनग्निस्वेदो ग्राह्यः। गन्धैः सुगन्धिद्रव्यैरुपनाहो बन्धनीयः। उष्णवीर्यैरिति उष्णवीर्यमृगादिप्राणिप्रभवैः। आविकशाटकः कम्बलः ॥ ३५-३७ ॥

रात्रौ बद्धं दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवा कृतम्।
विदाहपरिहारार्थं, स्यात् प्रकर्षस्तु शीतले ॥ ३८ ॥

१ 'शुक्रावाते' इति पा०। २ 'स्तम्भस्य गौरवं बहुत्वमतिस्तब्धतेत्यर्थः; न तु गौरवमित्यर्थः, 'अलाघवे' इति पूर्वमुक्तत्वात्' इति शिवदाससेनः।

१ 'वराहमेदः' इति पा०। २ 'देशकालविकारज्ञः' इति, 'देशकालविचारज्ञः' इति च पा०। ३ '०शैरीष०' इति पा०। ४ 'अयं चानग्निस्वेदोऽतिबहलत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति' इति शिवदाससेनः। ५ 'आनूपप्राणिभवानि चर्माणि प्रायेणोष्णवीर्याणि भवन्ति' इति शिवदाससेनः।

उपनाहस्वेदे बन्धमोक्षावधिं दर्शयति—रात्रौ बद्धमित्यादि। दिवाकृतमित्यत्र 'बन्धं' इति शेषः। विदाहः रक्तादिविदाहः। शीतले इत्यत्र 'काले' इति शेषः। प्रकर्ष उक्ताद्बन्धनकालादधिककालत्वं बन्धनस्य ॥ ३८ ॥

**सङ्करः प्रस्तरो नाडी परिषेकोऽवगाहनम्।**
**जेन्ताकोऽश्मघनः कर्षूः कुटी भूः कुम्भिकैव च ३९**
**कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश।**
**तान् यथावत् प्रवक्ष्यामि सर्वानेवानुपूर्वशः ॥ ४० ॥**

संप्रति साग्निस्वेदानां सङ्करादीनां लक्षणमभिधातुं सङ्करादीन् स्वेदान् नामतस्तावदुद्दिशति—सङ्कर इत्यादि। सङ्करादिशब्दाश्चायुर्वेदपरम्परासिद्धाः; तत्र क्वचिन्नाडीस्वेदादौ नाड्या प्रणीयत इत्यन्वयोऽप्यनुसरणीयः, जेन्ताकादयश्चान्वयनिरपेक्षा एव ॥ ३९ ॥ ४० ॥

**तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ ४१ ॥**

पिण्डैर्यथोक्तैरिति तिलमाषादिपिण्डैस्तथा गोखरादिग्रन्थोक्तपुटकरूपैश्च पिण्डैः; स्वेदनमेवोपस्वेदनम् ॥ ४१ ॥

**शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबूकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपस्वेदनं[१] प्रस्तरस्वेद इति विद्यात् ॥ ४२ ॥**

पुलाकः तुच्छधान्यम्। उत्कारिका मांसादिकृतोत्कारा[२]कृतिव्यञ्जनविशेषः। प्रस्तीर्यत इति प्रस्तरः शयनप्रमाणेन स्वेदवस्तूनां विस्तरणं, तस्मिन् प्रस्तरे। कौशेयाविकोत्तरप्रच्छदे कौशेयाविकपिहित इत्यर्थः। पञ्चाङ्गुल एरण्डभेदः ॥ ४२ ॥

**स्वेदनद्रव्याणां पुनर्मूलफलपत्रशुङ्गादीनां मृगशकुनपिशितशिरस्पदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्कथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वाष्पमुपहरेत्; बाष्पो ह्यनृजुगामी[३] विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥ ४३ ॥**

स्वेदनेत्यादिना नाडीस्वेदमाह। स्वेदनद्रव्याणि स्वेदोपगगणोक्तानि इह च नाडीस्वेदकार्यार्थमुक्तानि। शिरःपदं मस्तकम्। वाष्पमनुद्वमन्त्यामित्यनेन क्वथनकाले वाष्पो यथा न निर्याति तथा कर्तव्यमिति दर्शयति। उत्कथितानां वाष्पं स्नेहाक्तगात्रः[१] सन् नाड्या उपहरेदिति संबन्धः। नाडीकरणविधिमाह—शरेषीकेत्यादि। वंशदलो वंशविदलः[२]। गजाग्रहस्तसंस्थानत्वं नाड्या अग्र एव बोद्धव्यम्। व्यामः तिर्यग्विस्तृतबाहुद्वयप्रमाणं; व्यामदीर्घत्वं नाड्या बहुलस्वेदे कर्तव्यम्। व्यामचतुर्थभागेन व्यामाष्टभागेन च मूले अग्रे च यथासंख्यं मानं नाड्या वेदितव्यं; परिणाहेन वेष्टनेन स्रोतो रन्ध्रं यस्याः सा तथा। यथोक्तनाडीकरणे गुणमाह—वाष्पो हीत्यादि। विहतचण्डवेगत्वं नाडीकाया दीर्घत्वेन वक्रत्वेन च बोद्धव्यम् ॥ ४३ ॥

**वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षणिकाः[३] प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः ॥ ४४ ॥**

परिषेकविधिमाह—वातिकेत्यादि। वातिकानि वातहराणि, उत्तरवातिकानि उत्तरवाते प्रधानवाते वातश्लेष्मणि हितानीह[४] ग्राह्याणि। वर्षणिका अल्पघटी, 'सहस्रधारा' इत्यन्ये; प्रणाडी वेणुनलनाड्याद्याः ॥ ४४ ॥

**वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः ॥ ४५ ॥**

यथोक्त एवेति लोकप्रसिद्ध एव। अवगाहः अवगाहस्वेदः ॥ ४५ ॥

**अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत—तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमधुरमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वाऽरत्नीरुपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाऽभिमुखतीर्थं कूटागारं कारयेत्, उत्सेधविस्तारतः परमरत्नीः षोडश, समन्तात् सुवृत्तं मृत्कर्मसंपन्नमनेककवातायनम्; अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेदाकपाटात्, मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृन्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत्; तं च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत्; स यदा जानीयात् साधु दग्धानि काष्ठानि गतधूमान्यवतप्तं च केवलमग्निना तदग्निगृहं**

१ 'शयानस्योपरि स्वेदनं' इति पा०। २ 'मांसादिकृत०' इति पा०। ३ 'ह्यनूर्ध्वगामी' इति पा०।

१ 'स्नेहाक्तगात्रस' इति पा०। २ 'वंशपत्रं' इति पा०। ३ 'वार्पुलिकाः' इति, 'वर्पुलिका' इति च पा०। ४ 'उत्तरः प्रधानो वातो यत्र ईदृशो यो वातकफसंसर्गस्तत्र हितानि' इति शिवदाससेनः।

स्वेदयोग्येन चोष्मणा युक्तमिति, तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्, प्रवेशयंश्चैनमनुशिष्यात्—सौम्य! प्रविश कल्याणायारोग्याय चेति, प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः, न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्याऽऽप्राणोच्छ्वासात्, भ्रश्यमानो ह्यतः पिण्डिकावकाशाद्द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणाञ्जह्याः, तस्मात् पिण्डिकामेनां न कथंचन मुञ्चेथाः; त्वं यदा जानीयाः—विगताभिष्यन्दमात्मानं सम्यक्प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघूभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति, ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः, निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः, अपगतसन्तापक्लमस्तु मुहूर्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयाः; इति जेन्ताकस्वेदः ॥ ४६ ॥

जेन्ताकविधिमाह—अथेत्यादि। अथशब्दो मङ्गले आनन्तर्ये वा। पूर्वस्यामुत्तरस्यां वेति ग्रामाद्बोद्धव्यम्। गुणवतीति सस्यप्ररोहादियुक्तत्वेन; प्रशस्तभूमिभागत्वं तुषाङ्गारादिरहितत्वेन। परीवापः दीर्घिका। सुष्ठु उप समीपे तीर्थं यस्य तस्मिन् सूपतीर्थे। अरत्निः हस्तः। प्राङ्मुखमिति पश्चिमे, उदङ्मुखमिति दक्षिणे; एवं ह्यभिमुखं तीर्थं भवति। कूटागारमिति वर्तुलागारम्। आकपाटादित्यनेन द्वारपर्यन्तं लक्षयति। किष्कुः हस्तः। पुरुषप्रमाणमिति ऊर्ध्वतः। कन्दुः कन्द्वाकाराग्निस्थानम्। अङ्गारार्थं कोष्ठोऽवकाशो विद्यते यस्मिन् सोऽङ्गारकोष्ठकः, स एव स्तम्भ इत्यङ्गारकोष्ठकस्तम्भः। खादिराणामिति पूरणे षष्ठी। स इत्यत्र 'त्वं' इत्यध्याहार्यं, जानीया इत्यर्थः; किंवा, जानीयात्' इति पाठः, उत्तरत्रापि 'प्रवेशयेत्' इति पाठः; एवं च सुगमम्। पिच्छा स्वेदस्यैव पिच्छिलो भागः। सर्वेषु स्रोतःसु विमुक्तं सर्वस्रोतोविमुक्तम्, अपगतविबन्धस्तु अपगतमलविबन्धो बोद्धव्यः। चक्षुषोः परिपालनार्थमिति अत्रोपतप्तस्य[1] सहसा शीतजलप्रवेशे शीतजलपराहत ऊष्मा नयनोपघातं करोतीत्यभिप्रायः। अत्र च जेन्ताके भूमिविशेषपरिग्रहजलसान्निध्यादयो मङ्गलार्थाः; जलसान्निध्यं तु स्विद्यमानस्य दर्शनेन दृष्टेः परिपालनार्थं च, तथा स्वेदातियोगप्रतिक्रियार्थं कूटागारस्य जलसान्निध्ये सुखेन करणार्थं च ॥ ४६ ॥

शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः ॥ ४७ ॥
व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम् ॥ ४८ ॥
तस्यां स्वभ्यक्तसर्वाङ्गः स्वपन् स्विद्यति ना सुखम्।
कौरवाजिन[1]कौषेयप्रावाराद्यैः सुसंवृतः ॥ ४९ ॥
इत्युक्तोऽश्मघनस्वेदः,

कौरवं कार्पासम् ॥ ४७–४९ ॥—

कर्षूस्वेदः प्रवक्ष्यते।
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित् ॥ ५० ॥
दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः।
तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ५१

कर्षूः अभ्यन्तरविस्तीर्णः स्वल्पमुखो गर्तः ॥ ५० ॥ ५१ ॥

अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः संप्रलेपयेत् ॥ ५२ ॥
कुटीमध्ये भिषक् शय्यां स्वास्तीर्णामुपकल्पयेत्।
प्रावाराजिनकौशेयकुथकम्बलगोलकैः ॥ ५३ ॥
हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः।
परिवार्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम् ॥ ५४ ॥
य एवाश्मघनस्वेदविधिर्भूमौ स एव तु।
प्रशस्तायां निवातायां समायामुपदिश्यते ॥ ५५ ॥

अनत्युत्सेधविस्तारामिति स्वल्पप्रमाणोच्छ्रायविस्ताराम्। अलोचनां निर्जालकाम्। कुष्ठाद्यैरिति अत्रादिशब्दः प्रकारवचनः, तेनोष्णसुगन्धिद्रव्यैरिति भवति। हसन्तिका अङ्गारधानि(रि)का, परिवार्येति हसन्तिकाभिरित्यनेन संबध्यते। तामिति उपकल्पितशय्यां कुटीम्, आरोहेदिति संबन्धः ॥ ५२–५५ ॥

कुम्भीं वातहरक्वाथपूर्णां भूमौ निखानयेत्।
अर्धभागं त्रिभागं वा शयनं तत्र चोपरि ॥ ५६ ॥
स्थापयेदासनं वाऽपि नातिसान्द्रपरिच्छदम्।
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् ॥५७
पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम्।
सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः ॥ ५८ ॥

शयनं तत्र चोपरीति अत्र कुम्भीकोपरि शयनं खट्वादि तथा कर्तव्यं यथा कुम्भीका न भज्यते। तत्स्थ इति यथोक्तशयनासनस्थः ॥ ५६–५८ ॥

कूपं शयनविस्तारं द्विगुणं चापि वेधतः।
देशे निवाते शस्ते च कुर्यादन्तःसुमार्जितम् ॥ ५९ ॥
हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते।
स्ववच्छन्नः[2] सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना सुखम् ॥

कूपमिति कूपमिव कूपं गभीरत्वेन। द्विगुणमिति विस्ताराद्बोद्धव्यम्। वेधत इत्यधःखननप्रमाणेन। सुसंस्तीर्णे इति सुष्ठु संस्तीर्णे आच्छादिते, शय्यया खट्वोपरिस्थितया आच्छादिते कूपे इति बोद्धव्यम् ॥ ५९ ॥ ६० ॥

१ 'अत्रोष्णतप्तस्य' इति पा०।

१ 'रौरवाजिन०' इति पा०। २ 'सुखं वृतः' इति पा०।

धीतीकां तु करीषाणां यथोक्तानां प्रदीपयेत् ।
शयनान्तःप्रमाणेन शय्यामुपरि तत्र च ॥ ६१ ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् ६२
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणा ।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥ ६३ ॥

धीतीकामित्यादिना होलाकस्वेदः । धीतीका शुष्कगोमयादिकृतोऽग्न्याश्रयविशेषः । यथोक्तानामिति पूर्वोक्तहस्त्यश्वादिभवानाम् । शयनान्तःप्रमाणेन धीतीकां 'कृत्वा' इत्यध्याहार्य योज्यम् । यथोक्तामिति नातिसान्द्रपरिच्छदाम् । उपसंहरति—इतीत्यादि । साक्षादग्नेर्गुणमुष्णत्वमाश्रित्य स्वेदयतीत्यग्निगुणसंश्रयः ॥ ६१-६३ ॥

व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा ।
बहुपानं भयक्रोधावुपनाहाहवातपाः ॥ ६४ ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ।

संप्रत्यनग्निस्वेदानाह—व्यायाम इत्यादि । उष्णसदनमिति अग्निसन्तापव्यतिरेकेण निर्जालकतया घनभित्तितया च यद्गृहं स्वेदयति तद्बोद्धव्यम् । बहुपानमिति बहुमद्यपानम् । उपनाहो द्विविधः—साग्निरनग्निश्च; तत्र यः साग्निरुपनाहः स सङ्कर एव बोद्धव्यः, यदुक्तं—"कोलं कुलत्थाः सुरदारुरास्नाः" ( सू. अ. ३) इत्यादिनाऽऽरग्वधीये; यस्त्वनग्निर्बहलत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति स इह बोद्धव्यः । आतपश्च यद्यप्युष्णः, तथाऽप्यग्निकृतं तस्योष्णत्वं न भवतीत्यनग्निस्वेद उक्तः । अग्निगुणादृते इति साक्षादग्निसंबन्धेन कृतादुष्णत्वाद्विना ॥ ६४ ॥—

इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ॥६५॥
एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च ।
इत्येतत्त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्तितम् ॥ ६६ ॥

सर्वस्वेदमुपसंहरति—इत्युक्त इत्यादि । एकाङ्गगताः सङ्करनाड्यादयः, सर्वाङ्गगताः प्रस्तरजेन्ताकादयः । स्निग्धो वातविहितः स्वेदः । रूक्षः कफविहितः । स्निग्धरूक्षस्तु वातश्लेष्मविहितोऽनयोर्न भिद्यत इति पृथङ्नोक्तः । द्वन्द्वं परस्परं विरुद्धं युग्मम् ॥ ६५ ॥ ६६ ॥

स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत् ।
तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नरः ॥ ६७ ॥

स्विन्नेन यथा कर्तव्यं तदाह—स्निग्ध इत्यादि । पथ्याशनो भवेदित्यत्र यद्यपि श्वङ्गग्राहिकया पथ्यं नोक्तं, तथाऽपि स्वेदप्रवृत्तिविषयदोषस्य यत् पथ्यं तदेव बोद्धव्यम् ॥ ६७ ॥

तत्र श्लोकाः—
स्वेदो यथा कार्यकरो हितो येभ्यश्च यद्विधः ।
यत्र देशे यथा योग्यो देशो रक्ष्यश्च यो यथा ॥६८॥

१ 'धीतिकां' इति पा० ।

स्विन्नातिस्विन्नरूपाणि तथाऽतिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥ ६९ ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना ।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः ॥७०॥
स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा ।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुः ॥ ७१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने स्वेदाध्यायो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

संग्रहे स्वेदो यथा कार्यकर इति स्नेहपूर्वं प्रयुक्तेनेत्यादि । येभ्यश्च यद्विध इति वाते स्निग्ध इत्यादि संगृह्णाति । यत्र देशे यथा योग्य इति आमाशयगते वाते रूक्षपूर्वं इत्यादि । शेषं सुगमम् ॥ ६८-७१ ॥

इति श्रीचक्रपाणिदत्तकृतायां चरकतात्पर्यटीकायामायुर्वेददीपिकाख्यायां सूत्रस्थाने निर्देशचतुष्के स्वेदाध्यायश्चतुर्दशः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथात उपकल्पनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

स्नेहस्वेदोपपन्नस्य संशोधनमनन्तरमित्यनेनैवोक्तात् संबन्धात् स्वेदाध्यायानन्तरं शोधनविधेरभिधायकमुपकल्पनीयमाह । उपकल्पनीयमिति शोधनोपकल्पनामधिकृत्य कृतोऽध्याय उपकल्पनीयः ॥ १ ॥ २ ॥

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं वमनं विरेचनं वा पाययितुकामेन भिषजा प्रागेवौषधपानात् संभारा उपकल्पनीया भवन्ति सम्यक्चैव हि गच्छत्यौषधे प्रतिभोगार्थाः, व्यापन्ने चौषधे व्यापदः परिसंख्याय प्रतीकारार्थाः; न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यपि क्रयाक्रये सुकरमाशु संभरणमौषधानां यथावदिति ॥३॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—ननु भगवन्! आदावेव ज्ञानवता तथा प्रतिविधातव्यं यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन, सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा, व्यापच्चासम्यक्प्रयोगनिमित्ता; अथ सम्यगसम्यक् च समारब्धं कर्म सिद्ध्यति व्यापद्यते वाऽनियमेन, तुल्यं भवति ज्ञानमज्ञानेनेति ॥ ४ ॥

राज्ञ इव मात्रा परिच्छदो यस्य स राजमात्रः । विपुलद्रव्यस्तु

१ 'यद्वाच्यमुक्तमिति स्वेदाध्याये यद्वाच्यं योऽर्थं उक्तः, तच्छिष्यैः प्रतिपत्तव्यं, यतः पुनर्वसुरुपदेष्टा' इति शिवदाससेनः ।

वणिगादिः। परिसंख्यायेति ज्ञात्वा। क्रयः पण्यम्, आक्रयो मूल्यम्। अनियमेनेति सम्यगारब्धं सिध्यति व्यापद्यते च ॥३॥४॥

तमुवाच भगवानात्रेयः—शक्यं तथा प्रतिविधातुमस्माभिरसद्विधैर्वाऽप्यग्निवेश! यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन, तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावत्; नहि कश्चिदस्ति य एतदेवमुपदिष्टमुपधारयितुमुत्सहेत, उपधार्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा; सूक्ष्माणि हि दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि, यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः किं पुनरल्पबुद्धेः; तस्मादुभयमेतद्यथावदुपदेक्ष्यामः—सम्यक्प्रयोगं चौषधानां, व्यापन्नानां च व्यापत्साधनानि सिद्धिषूत्तरकालम् ॥ ५ ॥

प्रयोगसौष्ठवं प्रयोगसुष्ठुत्वं, यथावदुपदेष्टुं शक्यमस्माभिरसद्विधैर्वेति योजना। एतदिति प्रयोगसौष्ठवम्। एवमिति यथावद्। उपधारयितुमिति ग्रन्थेन धारयितुम्। प्रतिपत्तुमिति अर्थतो ग्रहीतुम्। सूक्ष्माणीत्यादि सूक्ष्माणीव सूक्ष्माणि दुर्बोधत्वेन; तत्र दोषस्यावस्थान्तराणि—क्षयस्तथा वृद्धिस्तथा समत्वं, एवमूर्ध्वदेहगमनं तथाऽधोदेहगमनं तिर्यग्गमनं वा, तथा शाखाश्रयित्वं कोष्ठाश्रयित्वं मध्यमार्गाश्रयित्वं, तथा स्वदेशगमनं परदेशगमनं, तथा स्वतन्त्रत्वं परतन्त्रत्वं, तथांऽशांशविकल्पः, तथा धातुविशेषाश्रयित्वं, तथा कालप्रकृतिदूष्याद्यनुगुणत्वादिकृतस्वतन्त्रप्रतिपादितानि ज्ञेयानि; एवं भेषजस्यावस्थान्तराणि—तरुणत्वं, वृद्धत्वम्, आर्द्रत्वं, शुष्कत्वं, द्रव्यान्तरसंयुक्तत्वं, स्वरसादिकल्पनायोगित्वं, रसवीर्यविपाकैः प्रभावैश्च तस्मिन् देहे दोषादौ तत्तत्कार्यकर्तृत्वमेवमादीनि; देशस्त्वानूपजाङ्गलसाधारणप्रशस्तादिभेदभिन्नः; कालावस्थान्तराणि तु ऋतुभेदाः, पूर्वाह्णादिश्च तथा व्याध्यवस्था ज्वराद्यहादय इत्येवमादीनि; बलं तु सहजं युक्तिकृतं तथा कालकृतमुत्कृष्टापकृष्टमध्यादिभेदभिन्नं; शरीरं तु स्थूलत्वकृशत्वसारवत्त्वनिःसारवत्त्वादि, तथा परिपालनीयदृष्टिमर्माद्यवयवविशेषादिभिश्च भिन्नम्; आहारस्तु प्रकृतिकरणसंयोगराशिभेदादिभिर्भिन्नः; सात्म्यं तु देशतः कालतो व्याधितः प्रकृतितः स्वभावतोऽभ्यासतश्च भिन्नं भवति; सत्त्वं तु भयशौर्यविषादहर्षादियोगभिन्नं भवति; प्रकृतिभेदास्त्वनेकप्रकारभिन्नवाताद्यारब्धत्वेन बोद्धव्याः; वयोभेदास्तु बाल्ययौवनवार्धक्यतदवान्तरभेदौः; एतानि दोषाद्यवस्थान्तराणि चिकित्साप्रयोगे यथायथाऽपेक्ष्यन्ते, तदुदाहरणं शास्त्रेऽनुसरणीयम्, इह लिख्यमानं तु विस्तरत्वं ग्रन्थस्यावहतीति नोक्तम्। उभयमेतदुत्तरकालं सिद्धिषूपदेक्ष्याम इति योजना ॥ ५ ॥

इदानीं तावत् संभारान् विविधानपि समासेनोपदेक्ष्यामः; तद्यथा—दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं धूमातपजलरजसामनभिगमनीयमनिष्टानां च शब्दस्पर्शरसरूपगन्धानां सोदपानोदूखलमुसलवर्चःस्थानस्नानभूमिमहानसं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्वमुपकल्पयेत् ॥ ६ ॥

विविधानपीति अपिशब्दः समासेनापीत्येवंरूपो ज्ञेयः; तेन गृहादयोऽपि विस्तरेणोच्यन्ते, संग्रहणीयादयश्च समासेनेति द्वयमपि सुस्थं स्यात्; यदि वा 'द्विविधानपि' इति पाठः, तेन भोगार्थानि तथा व्यापत्साधनानि गृह्यन्ते। अनुपत्यकं यद् विदूरमन्यस्य महतो गृहस्य। उदकं पीयते येन तदुदपानम् ॥ ६ ॥

ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्वकर्मसु पर्यवदातान् सूपौदनपाचकस्नापकसंवाहकोत्थापकसंवेशकौषधपेषकांश्च परिचारकान् सर्वकर्मस्वप्रतिकूलान्, तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञाननुमतांश्च देशकालविदः पारिषद्यांश्च, तथा लावकपिञ्जलशशहरिणैणकालपुच्छकमृगमातृकोरभ्रान्, गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहिततृणशरणपानीयां, पात्र्याचमनीयोदकोष्ठमणिकघटपिठरपर्योगकुम्भीकुम्भकुण्डशरावदर्वीकटोदञ्चनपरिपचनमन्थानचर्मचेलसूत्रकार्पासोर्णादीनि च, शयनासनादीनि चोपन्यस्तभृङ्गारप्रतिग्रहाणि सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानानि सोपाश्रयाणि[1] संवेशनोपवेशनस्नेहस्वेदाभ्यङ्गप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनशिरोविरेचनमूत्रोच्चारकर्मणामुपचारसुखानि, सुप्रक्षालितोपधानाश्च सुश्लक्ष्णखरमध्यमा दृषदः, शस्त्राणि चोपकरणार्थानि, धूमनेत्रं च, बस्तिनेत्रं चोत्तरबस्तिकं च, कुशहस्तकं च, तुलां च, मानभाण्डं च, घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदकमधुसीधुसुरासौवीरकतुषोदकमैरेयमेदकदधिदधिमण्डोदश्विद्धान्याम्लमूत्राणि च, तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थबदरमृद्वीकाकाश्मर्यपरूषकाभयामलकबिभीतकानि, नानाविधानि च स्नेहस्वेदोपकरणानि द्रव्याणि, तथैवोर्ध्वहरानुलोमिकोभयभाञ्जि, संग्रहणीयदीपनीयपाचनीयोपशमनीयवातहरादिसमाख्यातानि चौषधानि; यच्चान्यदपि किञ्चिद्व्यापदः

१ 'अनियमेनेति कदाचित् सम्यगारब्धं व्यापद्यति, असम्यगारब्धं च सिध्यतीति' इति शिवदाससेनः। २ 'वार्धक्याद्यवस्था'।

१ 'सह उपाश्रयेण वर्तमानानि सोपाश्रयाणि, उपाश्रय उपधानभेदः' इति योगीन्द्रनाथसेनः। 'स्वापाश्रयाणि' इति पा०।

**परिसंख्याय प्रतीकारार्थमुपकरणं विद्यात्, यच्च प्रतिभोगार्थं, तत्तदुपकल्पयेत् ॥ ७ ॥**

प्रादक्षिण्यम् आनुकूल्यम् । उल्लापकं स्तोत्रम्, इतिहासः अज्ञायमानकर्तृकाप्तोपदेशः । मृगमातृका पृथूदरो हरिणः । शरणं गृहम् । आचमनीयोदकोष्ठम् आचमनार्थमुदककोष्ठं; किंवा आचम्यते येन पात्रेण तदाचमनं; मणिको गोलकः, पिठरः स्थाली, पर्योगः कटाहः, कुम्भो दृढावयवोऽल्पमुखो घटः, कटः तृणादिरचितमासनम्, उदञ्चनं पिधानशरावः, परिपचनं तैलपाचनिका । ऊर्णा गड्डररोमाणि । सुप्रक्षालितेत्यादौ उपधानः शिलापुत्र इति प्रसिद्धः, दृषदः पाषाणपट्टकाः । शस्त्राणि चोपकरणार्थानीति कुद्दालकर्तरीप्रभृतीनि । कुशहस्तकं संमार्जनी; अन्ये तु आर्द्रद्रव्यपरिपचनमभिदधति । मानभाण्डं प्रतिमानम् ॥७॥

**ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत्, तं चेदस्मिन्नन्तरे मानसः शारीरो वा व्याधिः कश्चित्तीव्रतरः सहसाऽभ्यागच्छेत्तमेव तावदस्योपावर्तयितुं यतेत, ततस्तमुपावर्त्य तावन्तमेवैनं कालं तथाविधेनैव कर्मणोपाचरेत् ॥ ८ ॥**

**ततस्तं पुरुषं स्नेहस्वेदोपपन्नमनुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतं देवताग्निद्विजगुरुवृद्धवैद्यानर्चितवन्तमिष्टे नक्षत्रतिथिकरणमुहूर्ते कारयित्वा ब्राह्मणान् स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफलकषायमात्रां पाययेत् ॥ ९ ॥**

तं चेत्यादौ अस्मिन्नन्तर इति स्नेहस्वेदकरणसमये । तावन्तमेव कालमिति यावता कालेनागतव्याधिप्रशमः कृतस्तावन्तम् । इष्ट इति शोधनकर्तृपुरुषनक्षत्राद्यनुगुणे औषधप्रयोगार्थं विहित इत्यर्थः; यदुक्तं ज्योतिषे—"पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनौ । स्वाति सौम्यं च भैषज्ये कुर्यादन्यत्र वर्जयेत्" इत्यादि । कारयित्वेति स्वस्तिवाचनं कारयित्वा ॥ ८ ॥ ९ ॥

**मदनफलकषायमात्राप्रमाणं तु खलु सर्वसंशोधनमात्राप्रमाणानि च प्रतिपुरुषमपेक्षितव्यानि भवन्ति; यावद्धि यस्य संशोधनं पीतं वैकारिकदोषहरणायोपपद्यते न चातियोगायायोगाय, तावदस्य मात्राप्रमाणं वेदितव्यं भवति ॥ १० ॥**

१ मणति गम्भीरत्वाज्जलार्पणे शब्दायते इति मणिकः । २ 'मानभाण्डं घृततैलादिपरिमाणार्थं भाण्डम्' इति शिवदाससेनः । ३ 'उपशमयितुं' इति पा० ।

**पीतवन्तं तु खल्वेनं मुहूर्तमनुकांक्षेत, तस्य यदा जानीयात् स्वेदप्रादुर्भावेण दोषं प्रविलयनमापद्यमानं, लोमहर्षेण च स्थानेभ्यः प्रचलितं, कुक्षिसमाध्मापनेन च कुक्षिमनुगतं, हृल्लासास्यस्रवणाभ्यामपि चोर्ध्वमुखीभूतम्, अथास्मै जानुसममसंबाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं सोपाश्रयमासनमुपवेष्टुं प्रयच्छेत्, प्रतिग्रहांश्चोपचारयेत्, ललाटप्रतिग्रहे पार्श्वोपग्रहणे नाभिप्रपीडने पृष्ठोन्मर्दने चानपत्रपणीयाः सुहृदोऽनुमताः प्रयतेरन् ॥ ११ ॥**

प्रतिपुरुषमपेक्षितव्यानीत्यनेन प्रतिपुरुषं शोधनमात्राभेदं दर्शयति । यावद्धीत्यादि मात्राशितीयोक्तः 'यावद्ध्यस्याशनं' ( सू. अ. ५ ) इत्यादिग्रन्थव्याख्यानानुसारेण व्याख्येयम् । अनुकांक्षेतेति परीक्षयन् धारयेत् । असंबाधमिति असंकीर्णम् । प्रतिगृह्णन्तीति प्रतिग्रहाः पतद्ग्रहाः । ललाटप्रतिग्रहादय अनपत्रपणीया अलज्जाविषयाः ॥ १० ॥ ११ ॥

**अथैनमनुशिष्यात्—विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीर्णानुदीरयन् किञ्चिदवनम्य ग्रीवामूर्ध्वशरीरमुपवेगमप्रवृत्तान् प्रवर्तयन् सुपरिलिखितनखाभ्यामङ्गुलिभ्यामुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमभिस्पृशन् सुखं प्रवर्तयस्वेति, स तथाविधं कुर्यात्; ततोऽस्य वेगान् प्रतिग्रहगताननवेक्षेतावहितः, वेगविशेषदर्शनाद्धि कुशलो योगायोगातियोगविशेषानुपलभेत, वेगविशेषदर्शी पुनः कृत्यं यथार्हमवबुध्येत लक्षणेन; तस्माद्वेगानवेक्षेतावहितः ॥ १२ ॥**

उपवेगं वेगसमीपम्; एतेन सर्वथाऽप्रवृत्ते वेगे प्रवर्तनं निषेधयति । वेगविशेषदर्शनाद्धीत्यादिग्रन्थस्य भाविनो योगायोगादीन् वेगविषयानुपलभ्य तर्कयतीत्यर्थः; किंवा, सिद्धौ वैगिकी शुद्धिरभिधातव्या "जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ" ( सि. अ. १ ) इत्यादिना, तामनेन दर्शयति ॥ १२ ॥

**तत्रामून्ययोगयोगातियोगविशेषज्ञानानि भवन्ति; तद्यथा—अप्रवृत्तिः कुतश्चित् केवलस्य वाऽप्यौषधस्य विभ्रंशो विबन्धो वेगानामयोगलक्षणानि भवन्ति; काले प्रवृत्तिरनतिमहती व्यथा यथाक्रमं दोषहरणं स्वयं चावस्थानमिति योगलक्षणानि भवन्ति, योगेन तु दोषप्रमाणविशेषेण तीक्ष्णमृदुमध्यविभागो ज्ञेयः; योगाधिक्येन तु फेनिलरक्तचन्द्रिकोपगमनमित्यतियोगलक्षणानि भवन्ति । तत्राति-**

१ 'स्वापाश्रयं' इति गङ्गाधरसंमतः पाठः । निद्राकरणोपयोगीत्यर्थः । २ 'अनुकूलाः' इति पा० ।

**योगायोगनिमित्तानिमानुपद्रवान् विद्यात्—आध्मानं परिकर्तिका परिस्रावो हृदयोपसरणमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लमश्चेत्युपद्रवाः ॥ १३ ॥**

अप्रवृत्तिः कुतश्चिदिति सर्वस्यैवाप्रवृत्तिः; तथा केवलस्य कृत्स्नस्य शोधनीयदोषस्याप्रवृत्तिः; तथौषधस्य विभ्रंशः प्रातिलोम्येन गमनं; यथा—वमनस्याध ऊर्ध्वं च विरेचनस्य, एतदेव सिद्धावुक्तं—"अयोगः प्रातिलोम्येन नचाऽल्पं वा प्रवर्तनम्" ( सि. अ. ६ ) इति। किंवा, कुतश्चिद्वाऽप्रवृत्तिः स्तोकदोषप्रवृत्तिरित्यर्थः, तथा केवलस्य चाप्यौषधस्य प्रवृत्तिरिति योजना। यथाक्रममिति वमने प्रथमं श्लेष्मा, तदनु पित्तं, तदनु वायुः; यदुक्तं—"क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः' ( सि. अ. १ ) इति । सम्यग्योगोऽपि हर्तव्यदोषस्याल्पत्वमध्यत्वोत्कृष्टत्वेन त्रिविधो भवतीति दर्शयन्नाह—योगेन त्वित्यादि। तुशब्दोऽवधारणे, तेन योगेनैव यः प्रमाणविशेषोऽल्पादिस्तेन, न त्वयोगातियोगाभ्यामित्यर्थः; अयं च तीक्ष्णादियोगविभागः[2] पेयाक्रमोत्कर्षार्थः, तथाहि वक्ष्यति सिद्धौ—"पेयां विलेपीं" ( सि. अ. १ ) इत्यादि । तत्रातियोगेत्यादौ आध्मानादयः शोधनसिद्धौ "बहुदोषस्य रूक्षस्य" ( सि. अ. ६ ) इत्यादिना ग्रन्थेन प्रपञ्चेन वक्तव्याः, अतस्तन्नैषां योगातियोगजन्यो यश्चायोगजन्यः स स्फुटो ज्ञेयः ॥१३॥

**योगेन तु खल्वेनं छर्दितवन्तमभिसमीक्ष्य सुप्रक्षालितपाणिपादास्यं मुहूर्तमाश्वास्य, स्नैहिकवैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा, पुनरेवोदकमुपस्पर्शयेत् ॥ १४ ॥**

**उपस्पृष्टोदकं चैनं निवातमागारमनुप्रवेश्य संवेश्य चानुशिष्यात्—उच्चैर्भाष्यमत्याशनमतिस्थानमतिचङ्क्रमणं क्रोधशोकहिमातपावश्यायातिप्रवातान् यानयानं ग्राम्यधर्ममस्वपनं निशि दिवा स्वप्नं विरुद्धाजीर्णासात्म्याकालप्रमितातिहीनगुरुविषमभोजनवेगसन्धारणोदीरणमिति भावानेतान्मनसाऽप्यसेवमानः सर्वमहो गमयस्वेति। स तथा कुर्यात् ॥ १५ ॥**

स्नैहिकादिधूमपानविकल्पः पुरुषप्रकृत्यपेक्षः; अत एव सामर्थ्यत इत्युक्तं, यद्यस्य युज्यत इत्यर्थः। अतिस्थानमिति अत्यर्थं दण्डायमानत्वेनावस्थितिः । प्रमितभोजनम् एकरसाभ्यासः। अतिहीनं नष्टशक्तिकं धान्यादि। गुरुशब्देन स्वभावगुरुलड्डुकचिपिटकादेर्यथोक्तमात्रयाऽपि भोजननिषेधः ॥ १४ ॥ १५ ॥

**अथैनं सायाह्ने परे वाऽह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्वक्लिन्नां मण्डपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य, एवं द्वितीये तृतीये चान्नकाले, चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्, एवं पञ्चमे षष्ठे चान्नकाले, सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्, एवमष्टमे नवमे चान्नकाले, दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनौदकलावणिकेन नातिसारवता भोजयेदुष्णोदकानुपानम्; एवमेकादशे द्वादशे चान्नकाले; अत ऊर्ध्वमन्नगुणान् क्रमेणोपभुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेत् ॥ १६ ॥**

सायाह्न इत्यादौ सम्यगग्निशुद्धिलक्षणभूते सायाह्ने, किंचित्त्वविशुद्धावपरेऽह्नि । यदुक्तं सिद्धौ—"वमितं लङ्घयेत् सम्यग्जीर्णलिङ्गान्यवेक्षयन् । तानि दृष्ट्वा तु पेयादिक्रमं कुर्याच्च लङ्घनम्" ( सि. अ. ६ ) इति । मण्डपूर्वां मण्डप्रधानाम् । अयं च द्वादशकालनिवर्तनीयः क्रमः प्रधानशुद्धिशुद्धे ज्ञेयः, मध्ये त्वष्टानुकालिकः, तथाऽल्पे चतुरनुकालिकः; उक्तं हि—"पेयां विलेपीं" ( सि. अ. १ ) इत्यादि । अन्नगुणान् मधुरादीन् गुरुकठिनादींश्च। एतच्च संसर्जनक्रमादूर्ध्वं सप्तरात्रेण प्रकृतिभोजनगमनं तदा कर्तव्यं यदि वमनानन्तरं विरेचनं न कर्तव्यं भवति, तत्करणे तु संसर्जनक्रमादूर्ध्वमेव स्नेहपानं; यदुक्तं—"संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेद्वाऽप्यनुवासयेद्वा" ( सि. अ. १ ) इति। तथा सुश्रुतेऽप्युक्तं—"पक्षाद्विरेको वान्तस्य" ( सु. चि. अ. ३६ ) इति। यदि संसर्जनक्रमं तथाऽनुगुणाभ्यासं च कृत्वा स्नेहः क्रियते, तदा पक्षाद्विरेको वान्तस्य न स्यात् ॥ १६ ॥

**अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं कृतहोमबलिमङ्गलजपप्रायश्चित्तमिष्टे तिथिनक्षत्रकरणमुहूर्ते ब्राह्मणान् स्वस्ति वाचयित्वा त्रिवृत्कल्कमक्षमात्रं यथार्हालोडनप्रतिविनीतं पाययेत् प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवय-**

१ 'हृदयोपसरणं हृद्ग्रहः, किंवा हृद्ग्रहोत्पादनार्थं हृदये दोषाणामुपसरणम्; अत एव वक्ष्यति—"कुपिता हृदयं गत्वा दोषाः कुर्वन्ति हृद्ग्रहम्" इति । जीवादानमिति जीवनहेतुधातुरूपशोणितनिर्गमः, यदुक्तं—"अतियोगाच्च भेषज्यं जीवं हरति शोणितम्। तज्जीवादानमित्युक्तमादत्ते जीवितं यतः"—इति। विभ्रंशः संज्ञाभ्रंशादिरूपस्त्रिविधः, स च सिद्धौ वक्ष्यमाणः' इति शिवदाससेनः। २ 'तीक्ष्णादिविभागः' इति पा०। ३ 'सामर्थ्यं योग्यता' इति शिवदाससेनः। ४ 'सर्वमाहारमद्याः' इति पा०।

१ 'औदकलावणिकेनोदकलवणाभ्यां संस्कृतेन' इति शिवदाससेनः।

सामवस्थान्तराणि विकारांश्च, सम्यक् विरिक्तं चैनं वमनोक्तेन धूमवर्जेन विधिनोपपादयेदावलवर्णप्रकृतिलाभात्, वलवर्णोपपन्नं चैनमनुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतमनुरूपालङ्कारालङ्कृतं सुहृदां दर्शयित्वा ज्ञातीनां दर्शयेत्, अथैनं कामेष्ववसृजेत् ॥ १७ ॥

भवन्ति चात्र—

अनेन विधिना राजा राजमात्रोऽथवा पुनः ।
यस्य वा विपुलं द्रव्यं स संशोधनमर्हति ॥ १८ ॥

अथैनमिति कृतसंसर्जनक्रमम् । प्रतिविनीतम् आलोडितम् । दोषादयः पूर्ववद्व्याख्येयाः । विकारांश्चेति कुष्ठज्वरादीन् विरेचनसाध्यान्; पूर्वं तु "सूक्ष्माणि हि" इत्यादौ विकारो नोक्तः, तस्य परीक्ष्यत्वेनैव ग्रहणात्; किंवा दोषग्रहणेनैव तत्र विकारग्रहणम् । कामेषु ईप्सितेषु, अवसृजेत् निर्यन्त्रणं कुर्यात् ॥ १७ ॥ १८ ॥

दरिद्रस्त्वापदं प्राप्य प्राप्तकालं विशोधनम् ।
पिबेत् काममसंभृत्य संभारानपि दुर्लभान् ॥ १९ ॥
न हि सर्वमनुष्याणां सन्ति सर्वे परिच्छदाः ।
न च रोगा न बाधन्ते दरिद्रानपि दारुणाः ॥ २० ॥
यद्यच्छक्यं मनुष्येण कर्तुमौषधमापदि ।
तत्तत् सेव्यं यथाशक्ति वसनान्यशनानि च ॥ २१ ॥

संप्रति दरिद्रस्य यथोक्तं संभारमकृत्वाऽपि संशोधनकरणमाह—दरिद्र इत्यादि । दुर्लभानिति वचनेन सुलभानि दरिद्रेणाऽप्युत्पादनीयानि ॥ १९–२१ ॥

मलापहं रोगहरं वलवर्णप्रसादनम् ।
पीत्वा संशोधनं सम्यगायुषा युज्यते चिरम् ॥२२॥

संशोधनकरणगुणमाह—मलापहमित्यादि ॥ २२ ॥

तत्र श्लोकाः—

ईश्वराणां वसुमतां वमनं सविरेचनम् ।
संभारा ये यदर्थं च समानीय प्रयोजयेत् ॥ २३ ॥
यथा प्रयोज्या मात्रा या यदयोगस्य लक्षणम् ।
योगातियोगयोर्यच्च दोषा ये चाप्युपद्रवाः ॥ २४ ॥
यदसेव्यं विशुद्धेन यश्च संसर्जनक्रमः ।
तत् सर्वं कल्पनाध्याये व्याजहार पुनर्वसुः ॥ २५ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने उपकल्पनीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

संग्रहे—ईश्वराः सविलासाः; तेन राज्ञो राजमात्रस्य च ग्रहणम् । प्रयोजयेदिति 'संभारान्' इति शेषः ॥ २३–२५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने निर्देशचतुष्के पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

अथातश्चिकित्साप्राभृतीयमध्यायं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्यायोक्तवमनविरेचनयोर्विस्तरेण सम्यग्योगादिलक्षणं, तथा तत्प्रवृत्तिविषयबहुदोषपुरुषाद्यभिधातुं चिकित्साप्राभृतीयोऽभिधीयते । चिकित्सा प्रभृतरूपा सदा यत्नेन आतुरोपढौकनीयत्वेन च यस्य विद्यते स चिकित्साप्राभृतीयः ॥ १ ॥ २ ॥

चिकित्साप्राभृतो धीमान् शास्त्रवान् कर्मतत्परः ।
नरं विरेचयति यं स योगात् सुखमश्नुते ॥ ३ ॥
यं वैद्यमानी त्वबुधो विरेचयति मानवम् ।
सोऽतियोगादयोगाच्च मानवो दुःखमश्नुते ॥ ४ ॥

योगात् सम्यग्योगात् । सुखम् आरोग्यम् । विरेचयतीत्यत्र वामयतीत्यपि बोद्धव्यं, विरेचनशब्दस्य वमनेऽपि प्रवृत्तेः । सोऽतियोगादित्यादि । दुःखं विकारं; यदुक्तं—"विकारो दुःखमेव तु" ( सू. अ. ९ ) । ननु वमनादौ कस्मान्मिथ्यायोगो नोच्यते, यावता यस्य वस्तुन उचितो योगः स योगः, तस्य स्वल्पो वा योगः सर्वथा वा अयोगो अयोग उच्यते, तस्यैवातिमात्रयोगो विकारकरोऽतियोगः, अनुचितसंबन्धेन तु वस्तुनो मिथ्यायोगः; तेनेहाप्युत्क्लिष्टश्लेष्मादिधर्मप्रयुक्ते पुरुषे विरेचनं सर्वथाऽयौगिकमेव, तच्च प्रयुक्तं प्रतीपगमनेनैव याति, विरेचने मिथ्यायोगोऽयमुचितः, एवं वमनादिष्वपि ज्ञेयम् । नैवम्, एवंभूतमिथ्यायोगस्यायोगेनैव ग्रहणात्, उक्तं हि—"प्रातिलोम्येन दोषाणां हरणात्ते ह्यकृत्स्नशः । अयोगसंज्ञे कृच्छ्रेण यदा गच्छति चाल्पशः" ( सि. अ. ६ ) इति । दुष्टविरेचनौषधस्य रसनयोपयुज्यमानस्य हीनमात्रत्वातिमात्रत्वाभ्यां विना यद्बाधिकरणत्वं तन्मिथ्यायोगादेव परं भवति; यदुक्तं तिस्रैषणीये—"मिथ्यायोगो राशिवर्जेष्वाहारविधिविशेषायतनेषूपदेक्ष्यते" ( सू. अ. ११ ) इति । सत्यं भेषजस्य मिथ्यायोगोऽयं, वमनस्य तु दोषहरणरूपस्यायोग इति; एवं च विरेचनादावपि ज्ञेयम् । यद्यप्यत्रापि मिथ्यायोगः कथंचित् पार्यते कल्पयितुं, तथाऽपि प्रयोजनशून्यत्वादाचार्येण पृथङ्न कृतः, शब्दादिषु तु मिथ्यायोगिनां संबन्धमात्रस्यापि परिहारार्थं पृथक्कृत इति ॥ ३ ॥ ४ ॥

दौर्बल्यं लाघवं ग्लानिर्व्याधीनामणुता रुचिः ।
हृद्वर्णशुद्धिः क्षुत्तृष्णा काले वेगप्रवर्तनम् ॥ ५ ॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता ।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्तनम्[1] ॥ ६ ॥
ष्ठीवनं हृदयाशुद्धिरुत्क्लेशः श्लेष्मपित्तयोः ।
आध्मानमरुचिश्छर्दिरदौर्बल्यमलाघवम् ॥ ७ ॥

१ 'चानुवर्धनम्' इति पा० ।

जङ्घोरुसदनं तन्द्रा स्तैमित्यं पीनसागमः।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः ॥ ८ ॥
विट्पित्तकफवातानामागतानां यथाक्रमम्।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम् ॥ ९ ॥
निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा।
तृष्यतो मारुतार्तस्य सोऽतियोगः प्रमुह्यतः ॥ १० ॥

दौर्बल्यमित्यादीनि विरेचनस्य सम्यग्युक्तायुक्तातियुक्तस्य लक्षणानि। अदौर्बल्यं स्थौल्यानपगमः[1]। यथाक्रममिति पठन् क्रमेणैवेति दर्शयति; यदुक्तं—"प्रासिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण" (सि. अ. १) इति। आगतानां परमूर्ध्वमिति योजना ॥ ५-१० ॥

वमनेऽतिकृते लिङ्गान्येतान्येव भवन्ति हि।
ऊर्ध्वगा वातरोगाश्च वाग्ग्रहश्चाधिको भवेत् ॥ ११ ॥
चिकित्साप्राभृतं तस्मादुपेयाच्छरणं नरः।
युञ्ज्याद् य एनमत्यन्तमायुषा च सुखेन च ॥ १२ ॥

अतियोगलक्षणं वमनेऽतिदिशति—वमन इत्यादि। वमनातियोगे विट्पित्तकफवातानामिति न योजनीयं, येन वमनप्रयोगे कफपित्तानिलागमरूपः क्रमो भवेत्। यदुक्तं—"क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स इष्टः" (सि. अ. १) इति ॥ ११ ॥ १२ ॥

अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः।
पिडकाकोठकण्डूनां संभवोऽरतिरेव च ॥ १३ ॥
आलस्यश्रमदौर्बल्यं दौर्गन्ध्यमवसादकः।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता ॥१४॥
तन्द्रा क्लैब्यमबुद्धित्वमशस्तस्वप्नदर्शनम्।
बलवर्णप्रणाशश्च तृप्यतो बृंहणैरपि ॥ १५ ॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम्।
ऊर्ध्वं चैवानुलोमं च यथादोषं यथाबलम् ॥ १६ ॥
एवं विशुद्धकोष्ठस्य कायाग्निरभिवर्धते।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्तते ॥ १७ ॥
इन्द्रियाणि मनोबुद्धिर्वर्णश्चास्य प्रसीदति।
बलं पुष्टिरपत्यं च वृषता चास्य जायते ॥ १८ ॥
जरां कृच्छ्रेण लभते चिरं जीवत्यनामयः।
तस्मात् संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥ १९ ॥

संशोधनविषयबहुदोषलक्षणमाह—अविपाक इत्यादि। अनायासकृतः श्रमः क्लमः; श्रमस्त्विह स्वल्पेनायासेन ज्ञेयः। अवसादको मनोऽवसादः। निद्रानाशो वातप्रधानेन दोषेण; अतिनिद्रता श्लेष्मप्रधानेन ॥ १३-१९ ॥

दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः ॥ २० ॥
दोषाणां च द्रुमाणां च मूलेऽनुपहते सति।
रोगाणां प्रसवानां च गतानामागतिर्ध्रुवा ॥ २१ ॥

सैमूलदोषापहारकत्वं संशोधनस्य, लङ्घनपाचनयोस्तु दोषापहरत्वे सत्यपि न संशोधनवद्दोषहन्तृत्वमित्याह—दोषा इत्यादि। कदाचिदिति अन्यहेतुप्राप्त्या। न तेषां पुनरुद्भव इति बलवद्दोषकारणत्वं विनेति मन्तव्यम्। उक्तेऽर्थे दृष्टान्तमाह—दोषाणामित्यादि। लङ्घनपाचनाभ्यां रोगकारणीभूतदोषप्रकोपहरणमात्रे कृते रोगो यो निवृत्तः स मूलभूताशयव्यवस्थितदोषानुच्छेदाद्यत्किंचिदनुगुणकालादिप्राप्त्या पुनः कुपितदोषेण भवतीति भावः ॥ २० ॥ २१ ॥

भेषजक्षपिते पथ्यमाहारैरेव बृंहणम्।
घृतमांसरसक्षीरहृद्ययूषोपसंहितैः ॥ २२ ॥
अभ्यङ्गोत्सादनैः स्नानैर्निरूहैः सानुवासनैः।
तथा स लभते शर्म युज्यते चायुषा चिरम् ॥ २३ ॥

संप्रति शोधनेन यथा दोषक्षयस्तथा धातुक्षयोऽपि भवति, तेन तत्र प्रतीकारमाह—भेषजेत्यादि। आहारैरेवेति एवावधारणे; तेन भेषजेन बृंहणं निषेधति, भेषजस्य वीर्यप्रधानस्य तदा दुःसहत्वात्। सानुवासनैरित्यत्र चकारो बोद्धव्यः, तेनाभ्यङ्गादिभिश्च बृंहणं पथ्यम् ॥ २२ ॥ २३ ॥

अतियोगानुबद्धानां सर्पिःपानं प्रशस्यते।
तैलं मधुरकैः सिद्धमथवाऽप्यनुवासनम् ॥ २४ ॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम्।
मात्राकालबलापेक्षी स्मरन् पूर्वमनुक्रमम् ॥ २५ ॥
स्नेहने स्वेदने शुद्धौ रोगाः संसर्जने च ये।
जायन्तेऽमार्गविहिते तेषां सिद्धिषु साधनम् ॥ २६ ॥

अतियोगादिचिकित्सामाह—अतियोगेत्यादि। स्मरन् पूर्वमनुक्रममित्यनेन यः पूर्वमयोगे हेतुभूतस्तं परिहरन्निति शिक्षयति। अमार्गविहिते अविधिविहिते। साधनमित्यत्र 'वक्ष्यते' इति शेषः ॥ २४-२६ ॥

जायन्ते[2] हेतुवैषम्याद्विषमा देहधातवः।
हेतुसाम्यात् समास्तेषां स्वभावोपरमः सदा ॥ २७ ॥

संप्रति यदेतत् सिद्धौ वक्ष्यमाणं रोगाणां साधनं तदनुषङ्गेण च सर्वभेषजानामेव क्षणभङ्गिभावे पक्षेऽपि रोगशमकत्वं प्रतिपादयितुं प्रकरणमारभते—जायन्त इत्यादि। तेषामिति विषमाणां धातूनां समानां च। स्वभावात् विनाशकारणनिरपेक्षादुपरमो विनाशः स्वभावोपरमः। सदेति अविलम्बेन; तेनोत्पन्नमात्रा एव विनश्यन्तीत्यर्थः ॥ २७ ॥

प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम्।
केचित्तत्रापि[3] मन्यन्ते हेतुं हेतोरवर्तनम् ॥ २८ ॥

---

१ 'स्थौल्यानपचयः' इति पा०।

१ 'समूलदोषापहारकत्वेन' इति पा०। २ 'संप्रति रोगाणां क्षणिकत्वेन यदुपशमार्थं चिकित्साभिधानं तन्निष्फलमिति सौगतपक्षे चिकित्सायाः प्रयोजकत्वमभिधातुं तन्मतमुपन्यस्यति—जायन्त इत्यादि।' इति शिवदाससेनः। ३ 'केचित्त्वत्रापि' इति पा०।

अत्रैवार्थे उपपत्तिमाह—प्रवृत्तीत्यादि। प्रवृत्तिहेतुः उत्पत्तिहेतुर्भावानामस्ति, निरोधे विनाशे हेतुर्भावानां कारणं नास्ति; यस्मात् सर्वे एव भावाः प्रदीपार्चिर्वदुत्पत्तौ कारणापेक्षिणः, विनाशे तु द्वितीयक्षणाविद्यमानत्वलक्षणे सहजसिद्धे न हेत्वन्तरमपेक्षन्ते; यतो न स्वाभाविकरूपे हेत्वन्तरापेक्षा भवति, नह्युत्पन्नः खड्गः स्वाभाविके लौहमयत्वे कारणान्तरमपेक्षते; तदेवं सर्वेषामेव भावानां स्वाभाविके नाशे विषमधातूनामपि नाशः स्वाभाविक एवेति भावः। व्याधिप्रशमे च चिकित्सापेक्षकं पक्षान्तरमाह—केचिदित्यादि। तत्रापि विनाशेऽपि, हेतुं कारणं, हेतोरवर्तनमिति उत्पादकहेतोरभावं, मन्यन्त इति योजना। एवमपि हेतुपरंपरायाः क्षणिकत्वेन तत्कार्याणामपि स्वभावादेव नित्यं सन्निहितस्वहेतुविनाशरूपविनाशहेतूनां न विनाशहेतुचिकित्सापेक्षेति भावः॥ २८॥

एवमुक्तार्थमाचार्यमग्निवेशोऽभ्यभाषत।
स्वभावोपरमे कर्म चिकित्साप्राभृतस्य किम्॥ २९॥
भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक्।
का वा चिकित्सा भगवन्! किमर्थं वा प्रयुज्यते॥३०॥

एवमुत्थितायां शङ्कायां गुरुं पृच्छति—एवमित्यादि। किमिति आक्षेपे। कर्म साध्यं; स्वभावोपरमे सति न किमपि साध्यं पश्यामीति भावः। कान् समीकुरुते इति विषमाणामस्थिरत्वेन साम्यं तत्र कर्तुं न पार्यत इत्याशयः। का वा चिकित्सेति रोगप्रशमं प्रत्यकारणत्वेन चिकित्सा नास्तीत्यर्थः। किमर्थं वा प्रयुज्यत इति यन्निवृत्त्यर्थं चिकित्सा प्रयुज्यते तद्धातुवैषम्यं स्वत एव निर्वृत्तमिति चिकित्साप्रयोजनं नास्ति॥ २९॥ ३०॥

तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्वसुः।
श्रूयतामत्र या सौम्य! युक्तिर्दृष्टा महर्षिभिः॥३१॥
न नाशकारणाभावाद्भावानां नाशकारणम्।
ज्ञायते नित्यगस्येव कालस्यात्ययकारणम्॥ ३२॥
शीघ्रगत्वाद्यथा भूतस्तथा भावो विपद्यते।

पूर्वोक्तहेतुविनाशं दृष्टान्तेन हेतुमन्तमाह—न नाशेत्यादि। भावानां नाशकारणं न ज्ञायते, तत् किमभावादेव, यथा—शशविषाणम्, उत वा ज्ञानायोग्यत्वात् पृथिव्यां निखातमूलकीलकादिवत् सदपि न ज्ञायते, इत्याह—नाशकारणाभावादिति; न ज्ञानायोग्यत्वेन, किंतर्ह्यभावादेवेत्यर्थः। अत्र दृष्टान्तमाह—नित्यगस्येत्यादि। निमेषादिरूपत्वेन नित्यगस्य। एवं मन्यते—नित्यगः कालो यथा विनश्वरत्वेन न हेत्वन्तरं विनाशेऽपेक्षते, तथा सर्व एव भावाः; यद्धि यस्य हेत्वन्तरापेक्षं न तस्य तदवश्यंभावि, यथा—पटस्य रागः; हेत्वन्तरापेक्षी चेद्विनाशः स्यात्, नावश्यंभावी स्यात्; एतद्विपर्ययाच्चानपेक्षत्वं विनाशस्य सिद्धम्। संप्रत्यहेतुको विनाश उत्पत्त्यनन्तरमेव भवति, पश्चादस्थिरत्वेन संस्काराधानमपि भावेषु न पार्यते कर्तुमित्याह—शीघ्रगत्वादित्यादि। यथा भूत इति यादृश उत्पन्नः, तथेति तादृश एव विपद्यते; कुतः? शीघ्रगत्वात् अस्थिरत्वात्॥ ३१॥ ३२॥—

निरोधे कारणं तस्य नास्ति नैवान्यथाक्रिया॥ ३३॥

पूर्वसाधितमहेतुविनाशित्वं तथा शीघ्रगत्वहेतुसाधितं चासंस्कार्यत्वमुपसंहरति—निरोध इत्यादि। तस्येति भावस्य। अन्यथाक्रिया अन्यथाकरणं, संस्काराधानमिति यावत्; एतेन विषमे धातौ साम्यं संस्कार आधीयतामित्येवंरूपाऽपि चिकित्सा निरस्ता मन्तव्या॥ ३३॥

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः।
सा चिकित्सा विकाराणां कर्म तद्भिषजां स्मृतम्॥ ३४॥
कथं शरीरे धातूनां वैषम्यं न भवेदिति।
समानां चानुबन्धः स्यादित्यर्थं क्रियते क्रिया॥३५॥
त्यागाद्विषमहेतूनां समानां चोपसेवनात्।
विषमा नानुबध्नन्ति जायन्ते धातवः समाः॥ ३६॥

एवं व्यवस्थिते पूर्वाक्षिप्तं चिकित्सितं समादधाति—याभिरित्यादि। 'सा चिकित्सा' इत्यनेन 'का वा चिकित्सा' इत्याक्षेपः परिहृतः। 'कर्म तद्' इत्यनेन प्रथमोद्दिष्ट आक्षेपः परिहृतः। 'इत्यर्थं क्रियते क्रिया' इत्यनेन 'किमर्थं वा' इत्याक्षेपः परिहृतः। 'कान् समीकुरुते' इत्याक्षेपस्तु 'समैस्तु हेतुभिर्यस्माद्' इत्यादिना परिहृतः। विषमेषु धातुषु याभिः क्रियाभिः समा धातवो जन्यन्ते सा चिकित्सा। एवं मन्यते—यद्यपि धातुवैषम्यं क्षणिकत्वेन विनश्वरं, तथाऽपि विनश्यदपि तद्धातुवैषम्यं स्वकार्यं विषममेव धातुमारभते, एवं सोऽप्यपरं विषममिति[1] न धातुवैषम्यसन्ताननिवृत्तिर्धातुसाम्यजनकहेतुं विना; यदा तु धातुसाम्यहेतुरुपयुक्तो भवति, तदा तेन सहितं वैषम्यसन्ततिपतितमपि कारणं सममेव धातुसंतानमारभते, यथा—मुद्गरप्रहारसहितो घटपरमाणुसन्तानो विसदृशं कपालसन्तानमारभते; एवं व्यवस्थिते 'कथं शरीरे' इत्यादिग्रन्थो व्याख्येयः। वैषम्यं न भवेत् नोत्पद्यत इत्यर्थः। समानां चानुबन्ध इति सन्तत्योत्पादः। विषमा नानुबध्नन्तीति हेत्वभावाद्विषमसन्तानस्योत्पादो न भवति। समानां चोपसेवनादिति समहेतूनां सेवनात्॥ ३४-३६॥

समैस्तु हेतुभिर्यस्माद्धातून् संजनयेत् समान्।
चिकित्साप्राभृतस्तस्माद्दाता देहसुखायुषाम्॥ ३७॥
धर्मस्यार्थस्य कामस्य नृलोकस्योभयस्य च।
दाता संपद्यते वैद्यो दानाद्देहसुखायुषाम्॥ ३८॥

---

१ देहधातूनामपि' इति पा०। २ '०स्वहेतुविनाशहेतूनां' इति, '०सहेतुविनाशहेतूनां' इति च पा०। ३ 'तस्यास्तीत्यर्थः' इति पा०। ४ 'स्वभावान्निवृत्तमिति' इति पा०।

१ 'यद्यप्युक्तक्षणभङ्गवादिमतमेतदप्रामाणिकं, तथा तन्निराकरणमनतिप्रयोजनमित्युपेक्ष्य तुष्यतु दुर्जन इति तन्मतेऽपि चिकित्सितस्य प्रयोजकत्वं समर्थयति—याभिरित्यादि। एतेन यद्यपि विषमा धातवः क्षणिकत्वेनैव विनश्यन्ति तथाऽपि समधातूत्पत्तौ चिकित्सितं क्षणभङ्गिनामप्यभ्युपेयं, यतस्तन्मतेऽपि उत्पत्तौ हेत्वपेक्षा विद्यत एवेति भावः' इति शिवदाससेनः। २ अस्याग्रे 'क्षणभङ्गवादिनाऽप्यभ्युपेयं' इति शिवदाससेनव्याख्यायामधिकः पाठ उपलभ्यते।

देहसुखायुषां दानात् धर्मादीनां दाता भवति, देहसंपत्तिसाध्यत्वाद्धर्मादीनामिति भावः ॥ ३७ ॥ ३८ ॥

तत्र श्लोकाः—

**चिकित्साप्राभृतगुणो दोषो यश्चेतराश्रयः।**
**योगायोगातियोगानां लक्षणं शुद्धिसंश्रयम् ॥ ३९ ॥**
**बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये।**
**चिकित्सासूत्रमात्रं च सिद्धिव्यापत्तिसंश्रयम् ॥ ४० ॥**
**या च युक्तिश्चिकित्सायां यं चार्थं कुरुते भिषक्।**
**चिकित्साप्राभृतेऽध्याये तत् सर्वमवदन्मुनिः ॥ ४१ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने चिकित्साप्राभृतीयो नाम षोडशोऽध्यायः ॥ १६ ॥**

**समाप्तः कल्पनाचतुष्कः ॥ ४ ॥**

संग्रहे सिद्धिसंश्रयं च व्यापत्तिसंश्रयं च सिद्धिव्यापत्तिसंश्रयं; तत्र सिद्धिसंश्रयं सिद्धिस्थानसंश्रयेण, व्यापत्तिसंश्रयं 'अतियोगानुबद्धानां' इत्यादिनोक्तम् ॥ ३९–४१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने चतुर्थे कल्पनाचतुष्के चिकित्साप्राभृतीयो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः।

**अथातः कियन्तःशिरसीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वचतुष्कचतुष्टयेन भेषजमभिहितं, संप्रति तद्विषयरोगाभिधानार्थं रोगचतुष्कोऽभिधातव्यः, चिकित्सा च विधेयत्वेनैव प्रधानमतः प्रथममुक्ता, किंच दर्शितश्चायं प्रथमाध्याय एव संबन्धः, एवं चाङ्गेषु मर्मसु च प्रधानभूतशिरोहृदयरोगाभिधायकत्वेन कियन्तःशिरसीयोऽभिधीयते ॥ १ ॥ २ ॥

**कियन्तः शिरसि प्रोक्ता रोगा हृदि च देहिनाम्।**
**कति चाप्यनिलादीनां रोगा मानविकल्पजाः ॥ ३ ॥**
**क्षयाः कति समाख्याताः पिडकाः कति चानघ!।**
**गतिः कतिविधा चोक्ता दोषाणां दोषसूदन! ॥ ४ ॥**
**हुताशवेशस्य[२] वचस्तच्छ्रुत्वा गुरुरब्रवीत्।**
**पृष्टवानसि यत् सौम्य! तन्मे शृणु सविस्तरम् ॥ ५ ॥**
**दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृदयामयाः।**
**व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा ॥ ६ ॥**
**दशाष्टौ च क्षयाः सप्त पिडका माधुमेहिकाः।**
**दोषाणां त्रिविधा चोक्ता गतिर्विस्तरतः[३] शृणु ॥ ७ ॥**

क्षयस्थानवृद्धयो दोषमानं, तस्य विकल्पो दोषान्तरसंबन्धासंबन्धकृतो भेदः। माधुमेहिका इत्यत्र मधुमेहशब्दः सामान्येन प्रमेहवचनः। यतोऽत्रैव सामान्येन ब्रूते—"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति; अन्यथा हि 'विना मधुमेहं' इति कृतं स्यात्; तथा चिकित्सिते वक्ष्यति सामान्येनैव यत्—"प्रमेहिणां याः पिडका मयोक्ता रोगाधिकारे पृथगेव सप्त" (चि. अ. ६) इत्यादि। तथा मधुमेहपिडकानां चिकित्सितोपदेशाच्च सर्वमेहभवत्वं पिडकानां, मधुमेहभवत्वे हि मधुमेहस्यैवासाध्यत्वाच्च तद्भवपिडकानामुपक्रमणीयत्वमस्ति; किंच प्रदेशान्तरेऽपि मधुमेहशब्देनायं सर्वप्रमेहानुक्तवान्, यथा—"गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः। अचिकित्स्या भवन्त्येते बलमांसपरिक्षये" (इ. अ. ९) इति। अत्र हि यदि वातिको मधुमेहोऽभिप्रेतः स्यात्तदा तस्य स्वरूपत एवासाध्यत्वेन 'बलमांसपरिक्षये सति' इति विशेषणमनर्थकं स्यात्। सुश्रुतेनापि च सामान्येन प्रमेहे एवैताः पिडका दर्शिताः, यदुक्तं—"तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते" (सु. नि. ६) इत्यादि। सर्व एव प्रमेहा यस्माद्देहं मधुरीकृत्य जायन्ते तस्मान्मधुमेहा इत्युच्यन्ते, वचनं हि—"षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणम्" (नि.अ.४) इति, तथा च वाग्भटः—"मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति। सर्वे हि मधुमेहाख्या माधुर्याच्च तनोरतः" (वा. नि. अ. १०) इति। विस्तरत इति शृण्वित्यनेन संबध्यते ॥ ३–७ ॥

**संधारणाद्दिवास्वप्नाद्रात्रौ जागरणान्मदात्।**
**उच्चैर्भाष्यादवश्यायात् प्राग्वातादतिमैथुनात् ॥ ८ ॥**
**गन्धादसात्म्यादाघ्रातादृजोधूमहिमातपात्।**
**गुर्वम्लहरितादानादति शीताम्बुसेवनात् ॥ ९ ॥**
**शिरोऽभिघाताद्दुष्टामाद्रोदनाद्बाष्पनिग्रहात्[१]।**
**मेघागमान्मनस्तापाद्देशकालविपर्ययात् ॥ १० ॥**
**वातादयः प्रकुप्यन्ति शिरस्यस्रं च दुष्यति।**
**ततः शिरसि जायन्ते रोगा विविधलक्षणाः ॥ ११ ॥**

संधारणादिति वेगसंधारणात्। हरितम् आर्द्रकादि। अतीति पूर्वेण परेण च शीताम्बुसेवनादित्यनेन संबध्यते। दुष्टादामात् दुष्टामात्; किंवा 'उष्णामात्' इति पाठः, तत्रोष्णाच्चामाच्चेत्यर्थः। देशकालविपर्ययादित्यत्र देशविपर्यय उपसर्गगृहीतत्वं देशस्य। अस्रं च प्रदुष्यतीत्यभिदधानः सर्वशिरोरोगेषु रक्तदुष्टिं दर्शयति ॥ ८–११ ॥

**प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च।**
**यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ॥ १२ ॥**

प्राणा इत्यादिनाऽङ्गेषु शिरःप्राधान्यं दर्शयन् प्रकृतशिरोरोगाणामेवात्यहितत्वं[२] दर्शयति; तेन नोत्सूत्रं शिरःप्राधान्याभिधानम्। श्रिता इव श्रिताः, शिरउपघाते उपघातात्। उपरिष्टादङ्गमुत्तमाङ्गम् ॥ १२ ॥

**अर्धावभेदको वा स्यात् सर्वं वा रुज्यते शिरः।**
**प्रतिश्यायमुखनासाक्षिकर्णरोगशिरोभ्रमाः ॥ १३ ॥**

---

१ 'सिद्धिसमानसंश्रयेण' इति पा०। 'सिद्धिसंश्रयं भेषजक्षपित इत्यादिनोक्तं' इति योगीन्द्रनाथसेनः। २ 'हुताशवेशवचनं' इति पा०। ३ 'गतिर्वक्ष्यामि विस्तरम्' इति पा०।

१ 'शिरोभितापात्' इति पा०। २ 'अभ्यर्हितत्वं' इति पा०।

अर्दितं शिरसः कम्पो गलमन्याहनुग्रहः ।
विविधाश्चापरे रोगा वातादिक्रिमिसंभवाः ॥ १४ ॥

प्रकृताञ्छिरोरोगानाह—अर्धेत्यादिना क्रिमिसंभवा इत्यन्तेन । एतच्च 'जायन्ते रोगा विविधलक्षणाः' इत्यस्य विवरणम् १३॥१४

पृथग्दिष्टास्तु ये पञ्च संग्रहे परमर्षिभिः ।
शिरोगदांस्ताञ्छृणु मे यथास्वैर्हेतुलक्षणैः ॥ १५ ॥
उच्चैर्भाष्यातिभाष्याभ्यां तीक्ष्णपानात् प्रजागरात् ।
शीतमारुतसंस्पर्शाद्व्यवायाद्वेगनिग्रहात् ॥ १६ ॥
उपवासादभीघाताद्विरेकाद्वमनादति ।
बाष्पशोकभयत्रासाद्भारमार्गातिकर्शनात् ॥ १७ ॥
शिरोगताः सिरा वृद्धो वायुराविश्य कुप्यति ।
ततः शूलं महत्तस्य वातात् समुपजायते ॥ १८ ॥
निस्तुद्येते भृशं शङ्खौ घाटा संभिद्यते तथा ।
संभ्रूमध्यं ललाटं च तपतीवातिवेदनम् ॥ १९ ॥
वध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ।
घूर्णतीव शिरः सर्वं संधिभ्य इव मुच्यते ॥ २० ॥
स्फुरत्यति सिराजालं स्तभ्यते च शिरोधरा ।
स्निग्धोष्णमुपशेते च शिरोरोगेऽनिलात्मके ॥ २१ ॥

शिरोगतत्वेन नासादिरोगेष्वपि प्राप्तेषु तान् विहायैवाष्टोदरीये प्रोक्तांस्तानेव शिरःशूललक्षणान् रोगान् प्रपञ्चेन वक्तुमाह—पृथगित्यादि । संग्रहे अष्टोदरीये; तेन नार्दिकादयोऽत्र प्रकरणे शिरोरोगशब्देनोच्यन्ते; शिरोरोगशब्दस्य शूल एव रुजाकरे वृत्तत्वात्। तीक्ष्णपानं तीक्ष्णमद्यपानं; किंवा, तीक्ष्णं मरिचादि। वध्येते इव वध्येते, अत्यर्थपीडायुक्तत्वेन ॥ १५–२१ ॥

कट्वम्ललवणक्षारमद्यक्रोधातपानलैः ।
पित्तं शिरसि संदुष्टं शिरोरोगाय कल्पते ॥ २२ ॥
दह्यते रुज्यते तेन शिरः शीतं सुपूयते ।
दह्येते चक्षुषी तृष्णा भ्रमः स्वेदश्च जायते ॥ २३ ॥

शीतं सुपूयते शीतमिच्छति ॥ २२ ॥ २३ ॥

आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः ।
श्लेष्मा शिरसि संदुष्टः शिरोरोगाय कल्पते ॥ २४ ॥
शिरो मन्दरुजं तेन सुप्तं स्तिमितभारिकम् ।
भवत्युत्पद्यते तन्द्रा तथाऽऽलस्यमरोचकः ॥ २५ ॥
वाताच्छूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा ।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥ २६ ॥

स्वप्नसुखमनुचितदिवास्वप्नेन ज्ञेयम् । सुप्तमिव सुप्तं, प्रबोधरहितत्वेन । भाराक्रान्तमिव भारिकम् ॥ २४–२६ ॥

तिलक्षीरगुडाजीर्णपूतिसङ्कीर्णभोजनात् ।
क्लेदोऽसृक्कफमांसानां दोषलस्योपजायते ॥ २७ ॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्मणः ।
जनयन्ति शिरोरोगं जाता बीभत्सलक्षणम् ॥ २८ ॥
व्यधच्छेदरुजाकण्डूशोफदौर्गन्ध्यदुःखितम् ।
क्रिमिरोगातुरं विद्यात् क्रिमीणां दर्शनेन च ॥ २९ ॥

संकीर्णभोजनं विरुद्धाहारः । दोषलस्य बहुदोषस्य । पापकर्मण इत्यनेनाधर्मवत एवायमतिदुःखक्रिमिरोगो भवतीति दर्शयति । बीभत्सलक्षणमिति घ्राणादिभ्यः पूयादिप्रवृत्तेः ॥२७–२९॥

शोकोपवासव्यायामरूक्षशुष्काल्पभोजनैः ।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥ ३० ॥
वेपथुर्वेष्टनं स्तम्भः प्रमोहः शून्यता दरः ।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥ ३१ ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनैः ।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति ॥ ३२ ॥
हृद्दाहस्तिक्तता वक्त्रे तिक्ताम्लोद्गिरणं क्लमः ।
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ॥३३॥
अत्यादानं गुरुस्निग्धमचिन्तनमचेष्टनम् ।
निद्रासुखं चाभ्यधिकं कफहृद्रोगकारणम् ॥ ३४ ॥
हृदयं कफहृद्रोगे सुप्तं स्तिमितभारिकम् ।
तन्द्रारुचिपरीतस्य भवत्यश्मावृतं यथा ॥ ३५ ॥
हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः ।
( हृद्रोगः कष्टदः कष्टसाध्य उक्तो महर्षिभिः )
त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ॥ ३६ ॥
तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते ।
मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति ॥ ३७ ॥
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः ।
मर्मैकदेशे ते जाताः सर्पन्तो भक्षयन्ति च ॥ ३८ ॥
तुद्यमानं स हृदयं सूचीभिरिव मन्यते ।
छिद्यमानं यथा शस्त्रैर्जातकण्डूं महारुजम् ॥ ३९ ॥
हृद्रोगं क्रिमिजं त्वेतैर्लिङ्गैर्बुद्ध्वा सुदारुणम् ।
त्वरेत जेतुं तं विद्वान् विकारं शीघ्रकारिणम् ॥ ४० ॥

शोकोपवासेत्यादि हृद्रोगलक्षणम् । वेष्टनम् उद्वेष्टनमिव । दरः दरदरिका । अचिन्तनम् अल्पचिन्तनम् । अश्मावृतम् अश्माक्रान्तम् । ग्रन्थिरिव ग्रन्थिः, स च रसदोषकृतः । मर्मैकदेशे हृदयैकदेशे । द्वितीयं मर्मेतिपदं कर्मतापन्नम् ॥ ३०–४० ॥

द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् ।
समैश्चैको विकारास्ते सन्निपातास्त्रयोदश ॥ ४१ ॥
संसर्गे नव षट् तेभ्य एकवृद्ध्या समैस्त्रयः ।
पृथक् त्रयश्च तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ॥ ४२ ॥

१ 'तीक्ष्णाघ्राणात्' इति पा० । २ 'शिरोगता वै धमनीर्वायुराविश्य कुप्यति' इति पा० । ३ घाटा ग्रीवायाः पश्चाद्भागः, 'घाड' इति यस्यापभ्रंशः । ४ 'भ्रुवोर्मध्यं' इति पा० । ५ 'बाध्येते' इति पा० । ६ वृत्तत्वात् प्रसिद्धत्वात् । ७ 'सुखायते' इति पा० ।

१ 'छेदव्यधनरुक्कण्डूशोफदौर्गन्ध्यदुःखितम्' इति पा० । २ 'लक्षणेन च' इति पा० । ३ '°शीतरूक्षाल्पभोजनैः' इति पा० । ४ योगीन्द्रनाथसेनस्तु 'द्रवः' इति पठति, 'द्रवः द्रुतत्वं' इति च व्याख्यानयति । ५ 'संसर्गेण नवैते षडेकवृद्ध्या' इति पा० ।

यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ।
वृद्धिक्षयकृतश्चान्यो विकल्प उपदेक्ष्यते ॥ ४३ ॥
वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः ।
द्वन्द्ववृद्धिः क्षयश्चैकस्यैकवृद्धिर्द्वयोः क्षयः ॥ ४४ ॥

'कति चाप्यनिलादीनाम्'इत्याद्युक्तस्योत्तरं—द्व्युल्बणैरित्यादि। हीनमध्याधिकैरिति वृद्धवृद्धतरवृद्धतमैः । संसर्गे नवेति च्छेदः । अस्यैव विवरणं—षट् तेभ्य इत्यादि । समैस्त्रय इति वृद्धैः समैः। वृद्धिक्षयकृत इत्यस्य विवरणं—वृद्धिरेकस्येत्यादि। अत्र च यद्यपि समताऽपि वृद्धिक्षयविकल्पे पठ्यते, तथाऽपि समतायाः स्वातन्त्र्येण विकाराकर्तृत्वात् 'वृद्धिक्षयकृत' इत्युक्तम् । वृद्धिरेकस्य समता चैकस्यैकस्य संक्षय इत्यनेन षड्विकाराः । द्वन्द्ववृद्धिः क्षयश्चैकस्येत्यनेन त्रयः । एकवृद्धिर्द्वयोः क्षयः, तेन त्रयः । एवं द्विषष्टिप्रकारा भवन्ति ॥ ४१–४४ ॥

प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये ।
स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ ४५ ॥
तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः ।
गात्रदेशे भवत्यस्य श्रमो दौर्बल्यमेव च ॥ ४६ ॥
[2]प्रकृतिस्थं कफं वायुः क्षीणे पित्ते यदा बली ।
कर्षेत् कुर्यात्तदा शूलं सशैत्यस्तम्भगौरवम् ॥ ४७ ॥
[3]यदाऽनिलं प्रकृतिगं पित्तं कफपरिक्षये ।
संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥ ४८ ॥
[4]श्लेष्माणं हि समं पित्तं यदा वातपरिक्षये ।
[5]सन्निरुन्ध्यात्तदा कुर्यात् सतन्द्रागौरवं ज्वरम् ॥४९॥
प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम् ।
रुन्ध्यात्तदा प्रकुर्वीत शीतकं गौरवं रुजम् ॥ ५० ॥
समीरणे परिक्षीणे कफः पित्तं समत्वगम् ।
कुर्वीत सन्निरुन्धानो मृद्वग्नित्वं शिरोग्रहम्[6] ॥ ५१ ॥
निद्रां तन्द्रां प्रलापं च हृद्रोगं गात्रगौरवम् ।
नखादीनां च पीतत्वं ष्ठीवनं कफपित्तयोः ॥ ५२ ॥
हीनवातस्य तु श्लेष्मा पित्तेन सहितश्चरन् ।
करोत्यरोचकापाकौ सदनं गौरवं तथा ॥ ५३ ॥

---

१ 'व्याधीनां द्व्यधिका षष्टिरित्युक्तं विवृणोति–द्व्युल्बणैकोल्बणैरिति । वृद्धैर्दोषैः पञ्चविंशतिर्व्याधयो भवन्ति । तद्यथा–संनिपाते त्रयोदश, संसर्गे नव, पृथक् त्रयश्चेति; द्व्युल्बणैकोल्बणैर्दोषैः षट्:, संनिपतितानां दोषाणां मध्ये द्वयोरतिशये त्रयः, एकस्यातिशये त्रयः, इति द्व्युल्बणैकोल्बणैः षट्; हीनमध्याधिकैः संनिपतितैः षट्; समैः तुल्यवृद्धैर्दोषैश्चैकः, इति संनिपाताः त्रयोदश; तथाच-कफः वृद्धः वातपित्ते अधिकवृद्धे १, पित्तं वृद्धं वातकफावधिकवृद्धौ २, वातो वृद्धः पित्तकफावधिकवृद्धौ ३, इति द्व्युल्बणैस्त्रयः; पित्तकफौ वृद्धौ वातोऽधिकवृद्धः १, वातकफौ वृद्धौ पित्तमधिकवृद्धं २, वातपित्ते वृद्धे कफोऽधिकवृद्धः ३, इति एकोल्बणैस्त्रयः; वातो वृद्धः पित्तं वृद्धतरं श्लेष्मा वृद्धतमः १, वातो वृद्धः श्लेष्मा वृद्धतरः पित्तं वृद्धतमं २, पित्तं वृद्धं श्लेष्मा वृद्धतरः वातो वृद्धतमः ३, पित्तं वृद्धं वातो वृद्धतरः श्लेष्मा वृद्धतमः ४, श्लेष्मा वृद्धो वातो वृद्धतरः पित्तं वृद्धतमं ५, श्लेष्मा वृद्धः पित्तं वृद्धतरं वातो वृद्धतमः ६, इति हीनमध्याधिकैः षट्; तुल्यवृद्धा वातपित्तश्लेष्माण इति समैरेकः । संसर्गेण नव । तत्र एकवृद्ध्या षट्, समैश्च त्रयः । संसृष्टयोर्दोषयोर्मध्ये एकस्य वृद्ध्या अतिशयेन षट् । तद्यथा–वातो वृद्धः पित्तं वृद्धतरं १, पित्तं वृद्धं वातो वृद्धतरः २, श्लेष्मा वृद्धः पित्तं वृद्धतरं ३, पित्तं वृद्धं श्लेष्मा वृद्धतरः ४, वातो वृद्धः श्लेष्मा वृद्धतरः ५, श्लेष्मा वृद्धो वातो वृद्धतरः ६, इति एकवृद्ध्या षट् । समैर्दोषयोः समानवृद्ध्या त्रयः; तद्यथा–वातपित्ताभ्यां वृद्धाभ्यामेकः, वातश्लेष्मभ्यां वृद्धाभ्यां द्वितीयः, पित्तश्लेष्मभ्यां वृद्धाभ्यां तृतीयः, इति संसर्गेण नव । पृथक् व्यस्तैर्वृद्धैस्त्रयः; तद्यथा–वातो वृद्धः, पित्तं वृद्धं, श्लेष्मा वृद्धः, एवं वृद्धैः पञ्चविंशतिः ।

वृद्ध्या पञ्चविंशतिमुक्त्वा क्षयेऽपि पञ्चविंशतिं दर्शयति–यथेत्यादि । यथा वृद्धैर्दोषैः पञ्चविंशतिस्तथा क्षीणैरपि पञ्चविंशतिर्विकाराः स्युः । संनिपाते त्रयोदश, संसर्गे नव, पृथक् त्रयश्चेति । तद्यथा–वातः क्षीणः पित्तश्लेष्माणावतिक्षीणौ १, पित्तं क्षीणं वातश्लेष्माणावतिक्षीणौ २, श्लेष्मा क्षीणः वातपित्ते अतिक्षीणे ३ इति क्षीणानां संनिपतितानां मध्ये द्वयोरतिशये त्रयः। वातपित्ते क्षीणे श्लेष्मा अतिक्षीणः १, पित्तश्लेष्माणौ क्षीणौ वातोऽतिक्षीणः २, वातश्लेष्माणौ क्षीणौ पित्तमतिक्षीणम् ३, इति एकस्यातिशये त्रयः । श्लेष्मा क्षीणः पित्तं क्षीणतरं वातः क्षीणतमः १, वातः क्षीणः श्लेष्मा क्षीणतरः पित्तं क्षीणतमं २, पित्तं क्षीणं श्लेष्मा क्षीणतरो वातः क्षीणतमः ३, श्लेष्मा क्षीणो वातः क्षीणतरः पित्तं क्षीणतमं ४, वातः क्षीणः पित्तं क्षीणतरं श्लेष्मा क्षीणतमः ५, पित्तं क्षीणं वातः क्षीणतरः श्लेष्मा क्षीणतमः ६, इति हीनमध्याधिकैः षट् । क्षीणा वातपित्तश्लेष्माण इति समैः क्षीणैरेकः । एते त्रयोदश संनिपाताः । संसर्गेण नव । तत्र क्षीणयोरेकस्यातिशये षट्; तद्यथा-वातः क्षीणः पित्तं क्षीणतरं १, पित्तं क्षीणं वातः क्षीणतरः २, वातः क्षीणः श्लेष्मा क्षीणतरः ३, श्लेष्मा क्षीणः वातः क्षीणतरः ४, श्लेष्मा क्षीणः पित्तं क्षीणतरं ५, पित्तं क्षीणं श्लेष्मा क्षीणतरः ६ । तुल्यक्षीणाभ्यां त्रयः; तद्यथा–क्षीणे वातपित्ते १, क्षीणौ पित्तश्लेष्माणौ २, क्षीणौ वातश्लेष्माणौ ३, इति संसर्गेण नव । पृथक् त्रयः–वातः क्षीणः १, पित्तं क्षीणं २, श्लेष्मा क्षीणः ३, एवं क्षीणैः पञ्चविंशतिः ।

संनिपतितानां दोषाणां युगपद्वृद्धिक्षयकृतोऽन्यो विकल्पो भेद उपदिश्यते । तमेव विकल्पं दर्शयति–वृद्धिरिति । एकस्य वृद्धिः, एकस्य समता, एकस्य च संक्षयः । वातो वृद्धः पित्तं समं श्लेष्मा क्षीणः १, वातो वृद्धः श्लेष्मा समः पित्तं क्षीणं २, पित्तं वृद्धं वातः समः श्लेष्मा क्षीणः ३, पित्तं वृद्धं श्लेष्मा समः वातः क्षीणः ४, श्लेष्मा वृद्धः वातः समः पित्तं क्षीणं ५, श्लेष्मा वृद्धः पित्तं समं वातः क्षीणः ६ । द्वन्द्ववृद्धिः द्वयोर्वृद्धिः, एकस्य च क्षयः, एकस्य वृद्धिर्द्वयोश्च क्षयः, अत्रापि षट्; तद्यथा–श्लेष्मपित्ते वृद्धे वातः क्षीणः १, श्लेष्मवातौ वृद्धौ पित्तं क्षीणं २, वातपित्ते वृद्धे श्लेष्मा क्षीणः ३, इति द्वन्द्ववृद्ध्या एकस्य क्षयेण त्रयः । श्लेष्मा वृद्धः वातपित्ते क्षीणे १, पित्तं वृद्धं श्लेष्मवातौ क्षीणौ २, वायुर्वृद्धः पित्तश्लेष्माणौ क्षीणौ ३, इति एकवृद्ध्या द्वयोः क्षयेण त्रयः । वृद्धैः पञ्चविंशतिः क्षीणैः पञ्चविंशतिरिति पञ्चाशत्, वृद्धिक्षयसमताकृताः षट्, वृद्धिक्षयकृताश्च षट्, एवं द्विषष्टिः ।' इति चरकोपस्कारे योगीन्द्रनाथसेनः ।

१ 'एकवृद्धिरित्यादिनाऽपि त्रयः' इति पा० । २ 'साम्ये स्थितं' इति पा० । ३ 'प्रकृतिस्थं यदा वातं' इति पा० । ४ 'प्रकृतिस्थं कफं' इति पा० । ५ 'प्रकृतिस्थं यदा वातं श्लेष्मा पित्तपरिक्षये । सन्निरुन्ध्यात्तदा कुर्याच्छीतकं गौरवं ज्वरम्' इति पा० । ६ 'प्रकृतिस्थं यदा पित्तं श्लेष्मा मारुतसंक्षये । संनिरुन्ध्यात्तदा कुर्यान्मृद्वग्नित्वं शिरोग्रहम्' इति पा० ।

हृल्लासमास्यस्रवणं पाण्डुतां दूयनं मदम् ।
विरेकस्य च वैषम्यं वैषम्यमनलस्य च ॥ ५४ ॥
हीनपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः ।
स्तम्भं शैत्यं च तोदं च जनयत्यनवस्थितम् ॥ ५५ ॥
गौरवं मृदुतामग्नेर्भक्ताश्रद्धां प्रवेपनम् ।
नखादीनां च शुक्लत्वं गात्रपारुष्यमेव च ॥ ५६ ॥
मारुतस्तु कफे हीने पित्तं च कुपितं द्वयम् ।
करोति यानि लिङ्गानि शृणु तानि समासतः ॥५७॥
भ्रममुद्वेष्टनं तोदं दाहं स्फुटनवेपने ।
अङ्गमर्दं परीशोषं दूयनं धूपनं तथा ॥ ५८ ॥
वातपित्तक्षये श्लेष्मा स्रोतांस्यपिदधद्भृशम् ।
चेष्टाप्रणाशं मूर्च्छां च वाक्सङ्गं च करोति हि ॥५९॥
वातश्लेष्मक्षये पित्तं देहौजः स्रंसयच्चरेत् ।
ग्लानिमिन्द्रियदौर्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम् ६०
पित्तश्लेष्मक्षये वायुर्मर्माण्यतिनिपीडयन् ।
प्रणाशयति संज्ञां च वेपयत्यथवा नरम् ॥ ६१ ॥

वृद्धिरेकस्येत्यादेरुदाहरणम्—प्रकृतिस्थं यदा पित्तमित्यादि । अत्र केचिदेतदेव परमुदाहरणं दृष्टान्तार्थं पठन्ति, शेषोदाहरणं तु कृत्स्ने तन्त्रे बोद्धव्यं; केचित्तु वृद्धिक्षयविकल्पस्य दुर्बोधत्वेन सर्वेषामेव द्वादशानामपि विकल्पानामाचार्येण लक्षणं कृतमिति कृत्वा सर्वमेव पठन्ति । ननु प्रकृतिस्थे पित्ते कथं तदा दाहश्चेति सङ्गतं भवति, न हि प्रकृतिस्थो दोषो विकारकारी, न च वायोर्दाहः संभवति । उच्यते—यत्र यत्रेति वचनाद् यत्र कुपितेन वायुना पित्तं नीतं, तत्र शरीरावयवे प्रकृतिमानस्थितमपि पित्तं वृद्धमेव, यतस्तस्मिन् प्रदेशे तावान् पित्तसंबन्ध उचितो न भवत्येवेत्यधिकेन तत्र पित्तेन दाह उपपन्न एव, एवमन्यत्रापि प्रकृतिस्थस्यापि दोषस्य विकारे व्याख्येयम् । अन्ये तु ब्रुवते—प्रकृतिस्थानामपि दोषाणां दुष्टदोषसंबन्धाद्विकारकारित्वं भवति; यथा—रक्तादीनाम् । हीनवातस्येत्यादि 'द्वन्द्ववृद्धिः क्षयश्चैकस्य' इत्यस्योदाहरणम् । देहौजो देहसारः; किंवा देहश्च ओजश्च देहौजः ॥ ४५-६१ ॥

दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् ।
क्षीणा जहति लिङ्गं स्वं, समाः स्वं कर्म कुर्वते ॥६२॥

दोषाणां वृद्धिसाम्यक्षयलक्षणानि पृथगाह—दोषा इत्यादि । स्वं लिङ्गमिति वैकारिकम् । यथाबलमिति अतिवृद्धैरतिवृद्धं, मध्यवृद्धैर्मध्यवृद्धमित्यादि । लिङ्गं स्वं जहतीत्यनेन क्षीणानां प्रकृतिलिङ्गक्षयव्यतिरिक्तं विकारकर्तृत्वं नास्तीति दर्शयति; यतो वृद्धा उन्मार्गगामिनो दोषा दूष्यं दूषयन्तो ज्वरादीन् कुर्वन्ति न क्षीणाः, स्वयमेव दुःस्थितत्वात् । स्वं कर्मेति प्राकृतं कर्म । एते च द्विषष्टिर्भेदा आविष्कृततमत्वेनोक्ताः; तेनैकदोषक्षये द्विदोषवृद्धौ च वृद्धवृद्धतरभेदादिभ्योऽधिकत्वमुद्भावनीयम्[3] । ननु भवत्वेवं संख्या यदि सन्निपातो दोषाणां स्यात्, स तु न भवितुमर्हति, यतो वातादीनां परस्परं विरुद्धाः सन्ति गुणाः, विरुद्धगुणानां तु परस्परोपघातो भवति, यथा—वह्नितोययोः । नैवं, विरोधो हि भावानां कार्योन्नेयः, नान्यतो दृष्टमात्रेण कल्पयितुं पार्यते; यतोऽन्यत्र तोयदहनयोर्भेद उपलब्धः, तत् किं पाञ्चभौतिकद्रव्यारम्भेऽपि तयोर्विरोधात् पाञ्चभौतिकं द्रव्यं न स्यात्, तोयाग्निगुणातिरेकाद्वाऽम्लरसो न स्यात्, तस्मादनुपलब्धत्वाद्दोषसंसर्गे विरोधस्य स्वभावपर्यनुयोगो न युज्यते । अथ मन्यसे—एवं विरुद्धगुणानामपि दोषाणामविरोधे "विरुद्धगुणसन्निपाते भूयसाऽल्पमवजीयते" ( वि. अ. १ ) इति, तथा "ह्रासहेतुर्विशेषस्तु" ( सू. अ. १ ) इति वचने तर्हि निरर्थके । न, अनयोः प्रभावात् प्रतिपादितविषयव्यतिरेके चरितार्थत्वात्। प्रभावस्तु तयोर्विरोधको भवत्येव; यथा–त्रिदोषकरनिकुचगता गुणाः समान् दोषान् कुर्वन्ति परं, न तु विरुद्धत्वेन दोषहरणं कुर्वते त्रिदोषकर्तृत्वप्रभावात्; तथा आमलकेऽम्लत्वं वातं हन्ति, माधुर्यशैत्ये तु पित्तं, श्लेष्माणं च कटुत्वतिक्तत्वे; निकुचे त्वम्लत्वं कषायशैत्याभिभूतं वातं न निहन्ति, माधुर्यशैत्ये चाम्लत्वाभिभूते पित्तं न जयत एवमादि । तस्माद्दोषाणां प्रभावोऽयं दृष्टत्वादवधार्यते–यत्–न ते परस्परमुपघ्नन्ति । एवंभूतप्रभावत्वे तु तेषामदृष्टमेव कारणं, प्राणिनां दुःखजनकेन ह्यदृष्टेन तेऽविरोधेन निवेश्यन्ते, अत एव वक्ष्यति–"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद्घोरं विषमहीनिव" (चि. अ. २६) इति । सहजं दैववशात् स्वाभाविकं सात्म्यत्वं सहजसात्म्यत्वम् । अनेन च व्याख्यानेन 'यथा दोषा अन्योन्यं नोपघ्नन्ति, तथा रसरक्तादीनपि नोपहन्युः' इत्यादि यदुच्यते कैश्चित्, तत् सर्वं निरस्तम् । ननु, "कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि संततम् । निष्प्रत्यनीकः कुरुते" ( चि. अ. ३ ) इति चिकित्सिते वक्ष्यति, तेन प्रकृतिर्दोषस्य प्रतिपक्षा भवतीत्युक्तं, प्रकृतिश्च जन्मप्रभृतिवृद्धो वातादिरुच्यते, "दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते" ( सू. अ. ७ ) इत्यादिवचनात्; तदयं प्राकृतेन दोषेण दोषस्य विरोधः[1] कथं तर्ह्युपपन्नः ? । उच्यते—तत्र प्रकृतेः प्रत्यनीकता अननुगुणत्वेन मन्तव्या, समानां हि प्रकृतिं प्राप्य दोषः प्रवृद्धबलो भवति[2], असमानां तु प्राप्य तथा बलवान्न भवति, नासमानया प्रकृत्या हन्यते; एवमन्यत्राप्युन्नेयम् । अतिवृद्धेन वायुना श्लेष्मणो दुर्बलस्य दुष्टत्वाद्विरोधो भवत्येव क्वचित्, नैतावता संसर्गसन्निपातासंभवः ॥ ६२ ॥

वातादीनां रसादीनां मलानामोजसस्तथा ।
क्षयास्तत्रानिलादीनामुक्तं संक्षीणलक्षणम्[4] ॥ ६३ ॥

भेदेन रसरुधिरादिसंसर्गभेदेन अगण्यत्वमेव ज्ञेयं, उक्तंहि–"संसर्गाद्रसरुधिरादिभिस्तथैषां दोषांस्तु क्षयसमतावृद्धिभेदात् । आनन्त्यं तरतमयोगतश्च यातान्जानीयादवहितमानसो यथास्वम्' ( वा. सू. अ. १२ )' इति शिवदाससेनेन व्याख्यातत्वात् ।

१ 'वेपयत्यथ मानवम्' इति पा० । २ 'तत्र तत्रेति' इति पा० ३ नोद्भावनीयमिति पाठस्तु न समीचीनः 'तेनैतेषां तरतमादि-

१ 'विरोधः' इति पा० । २ 'भवति' इति पा० । ३ 'प्रभावोत्पादितविषयव्यतिरेके' इति पा० । ४ 'च क्षीणलक्षणम्' इति पा० ।

घट्टते सहते शब्दं नोच्चैर्द्रवति शूल्यते।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥ ६४ ॥
परुषा स्फुटिता म्लाना त्वग्रूक्षा रक्तसंक्षये।
मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥ ६५ ॥
सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च।
लक्षणं मेदसि क्षीणे तनुत्वं चोदरस्य च ॥ ६६ ॥
केशलोमनखश्मश्रुद्विजप्रपतनं श्रमः।
ज्ञेयमस्थिक्षये लिङ्गं सन्धिशैथिल्यमेव च ॥ ६७ ॥
शीर्यन्त इव चास्थीनि दुर्बलानि लघूनि च।
प्रततं वातरोगीणि क्षीणे मज्जनि देहिनाम् ॥ ६८ ॥
दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः।
क्लैव्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥ ६९ ॥
क्षीणे शकृति चान्त्राणि पीडयन्निव मारुतः।
रूक्षस्योन्नमयन् कुक्षिं तिर्यगूर्ध्वं च गच्छति ॥ ७० ॥
मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च।
पिपासा बाधते चास्य मुखं च परिशुष्यति ॥ ७१ ॥
मलायनानि चान्यानि शून्यानि च लघूनि च।
विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥ ७२ ॥

संप्रत्यष्टादशक्षयानाह—वातादीनामित्यादि। अत्र मलानामित्यनेन मूत्रपुरीषयोः पञ्चेन्द्रियमलानां च ग्रहणम्। विशेषेणेतिवचनादन्यगात्राणामपि शुष्कता लभ्यते। सन्धीनामित्यादि मेदःक्षयलक्षणम्, केशेत्यादि अस्थिक्षयस्य। बाधते चास्येति कर्मणि शेषलक्षणा षष्ठी। मलायनानीत्यनेन पञ्चेन्द्रियाधिष्ठानानां मुखनासिकाचक्षुःकर्णानां त्वगिन्द्रियाधिष्ठानभूतानां च लोमकूपप्रजननानां यथास्वं मलायनानि गृह्यन्ते। यदुक्तं जतूकर्णे—"दोषाणां धातूनामोजोमूत्रशकृदिन्द्रियमलानाम्। अष्टादशक्षयास्ते लक्ष्याः स्वगुणक्रियानाशात्" इति ॥ ६३-७२ ॥

बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः।
दुश्छायो दुर्मना रूक्षः क्षामश्चैवौजसः क्षये ॥ ७३ ॥
हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्।
ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥ ७४ ॥
प्रथमं जायते ह्योजः शरीरेऽस्मिञ्छरीरिणाम्।
सर्पिर्वर्णं मधुरसं लाजगन्धि प्रजायते ॥ ७५ ॥
( भ्रमरैः फलपुष्पेभ्यो यथा संभ्रियते मधु।
तद्वदोजः स्वकर्मभ्यो गुणैः संभ्रियते नृणाम् ॥ १ ॥)

ओजःक्षयलक्षणमाह—बिभेतीत्यादि। दुर्मना मनोबलविहीनः। ओजसो दुर्ज्ञेयत्वेन लक्षणमाह—हृदीत्यादि। शुद्धमिति शुक्लं, रक्तमीषदिति किंचिद्रक्तं, सपीतकमिति ईषत्पीतकं; तेन शुक्लवर्णमोजः, रक्तपीतौ तु वर्णावत्रानुगतौ; किंवा, ईषदित्यल्पप्रमाणं, तेनाष्टबिन्दुकमोज इति दर्शयति। यदुक्तं तन्त्रान्तरे—"प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रयाः" इति। एतच्चाष्टबिन्दुकं परमोजो ज्ञेयम्, अर्धाञ्जलिपरिमाणं तु यदोजस्तदप्रधानं; यच्छारीरे वक्ष्यति—"तावच्चैव श्लैष्मिकस्यौजसः प्रमाणम्" (शा. अ. ७) इत्यनेन; तस्माद्द्विविधमिहौजः। अत एवार्थे दशमहामूलीये वक्ष्यति—"तत् परस्यौजसः स्थानं" (सू. अ. ३०) इति; परस्य श्रेष्ठस्याष्टबिन्दुकस्येत्यर्थः। इह च क्षयलक्षणमर्धाञ्जलिमानस्यैव ज्ञेयम्, अष्टबिन्दुकस्य त्ववयवनाशेऽपि मृत्युर्भवतीति हृदीत्यादिना ग्रन्थेन दर्शयति। एतच्चौजः सर्वधातुसमुदायरूपं, तेन सप्तधातुष्वेवावरुद्धमिति नाष्टमधातुत्वातिप्रसक्तिः; अत एव सुश्रुतेऽप्युक्तं—"रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजः" (सु. सू. अ. १५) इति। अन्यत्राप्युक्तं—"भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु। तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्" इति। 'प्रथमं जायते' इत्यादिपाठस्तु नातिप्रसिद्धः। एते चाष्टादश क्षया आविष्कृततमत्वेनोक्ताः; तेन उदकक्षयस्वरक्षयायनभिधानं नोद्भावनीयम्; उक्तं हि—"स्वरक्षयगुरोर्गं" इति; तथोदकक्षयलक्षणं यथा—"जिह्वाताल्वोष्ठकण्ठक्लोमसंशोषं पिपासां चातिप्रवृद्धां दृष्ट्वा उदकवहान्यस्य स्रोतांसि प्रदुष्टानीति जानीयात्" (वि. अ. ५) इति ॥ ७३-७५ ॥

व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम्।
वातातपौ भयं शोको रूक्षपानं प्रजागरः ॥ ७६ ॥
कफशोणितशुक्राणां मलानां चातिवर्तनम्।
कालो भूतोपघातश्च ज्ञातव्याः क्षयहेतवः ॥ ७७ ॥

सामान्येन क्षयाणां हेतुमाह—व्यायाम इत्यादि। प्रमिताशनम् एकरसाभ्यासः। अतिवर्तनम् अतिप्रवृत्तिः, बहिर्गमनमिति यावत्। कालो वार्धक्यमादानं च। भूतोपघातः पिशाचाद्युपघातः। अत्र वातक्षयहेतुर्नोक्तो विलक्षणत्वात्, स चाचिन्तनदिवास्वपनादिर्ज्ञेयः; किंवा, अनशनात् किट्टाभावः, ततश्च किट्टरूपस्य वातस्याप्यनुत्पादात् क्षयो ज्ञेयः ॥ ७६ ॥ ७७ ॥

गुरुस्निग्धाम्ललवणान्यतिमात्रं समश्नताम्।
नवमन्नं च पानं च निद्रामास्यासुखानि च ॥ ७८ ॥
त्यक्तव्यायामचिन्तानां संशोधनमकुर्वताम्।
श्लेष्मा पित्तं च मेदश्च मांसं चातिप्रवर्धते ॥ ७९ ॥
तैरावृतगतिर्वायुरोज आदाय गच्छति।
यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्तते ॥ ८० ॥
स मारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः।
दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ॥ ८१ ॥
उपेक्षयाऽस्य जायन्ते पिडकाः सप्त दारुणाः।
मांसलेष्ववकाशेषु मर्मस्वपि च संधिषु ॥ ८२ ॥

---

१ "द्रवति इति हृदयं धुगधुगिति करोति" इति शिवदाससेनः। २ 'तनुत्वं तोदनं त्वचः' इति पा०। ३ 'विशुष्काणि च लक्ष्यन्ते' इति पा०।

१ 'नाष्टधातुत्वादिप्रसक्तिः' इति पा०। २ 'तैरावृतः प्रसादं च गृहीत्वा याति मारुतः' इति पा०। ३ 'भवन्त्युपेक्षया तस्य' इति पा०।

शराविका कच्छपिका जालिनी सर्षपी तथा ।
अलजी विनताख्या च विद्रधी चेति सप्तमी ॥ ८३ ॥
अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुगन्विता ।
शराविका स्यात् पिडका शरावाकृतिसंस्थिता ॥८४॥
अवगाढार्तिनिस्तोदा महावास्तुपरिग्रहा ।
श्लक्ष्णा कच्छपपृष्ठाभा पिडका कच्छपी मता ॥८५॥
स्तब्धा सिराजालवती स्निग्धास्रावा महाशया ।
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ ८६ ॥
पिडका नातिमहती क्षिप्रपाका महारुजा ।
सर्षपी सर्षपाभाभिः पिडकाभिश्चिता भवेत् ॥ ८७ ॥
दहति त्वचमुत्थाने तृष्णामोहज्वरप्रदा ।
विसर्पत्यनिशं दुःखाद्दहत्यग्निरिवालजी ॥ ८८ ॥
अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा ।
महती विनता नीला पिडका विनता मता ॥ ८९ ॥

संप्रति सप्तपिडका वक्तव्याः, अतस्तासां प्रधानहेतुत्वेन प्रमेहानेव तावन्निदानादिक्रमेणाह—गुर्वित्यादि । नवं पानमिति नवं मद्यम् । निद्रामास्यासुखानि चेत्यत्रान्ते 'भजतां' इति शेषः । ओजः प्रसादो धातूनामिति यावत् । कृच्छ्र इति कृच्छ्रसाध्यः । उपेक्षया अचिकित्सया । शराविकादिसंज्ञान्वयो विवरणे स्फुटः । अलजीसंज्ञा रूढा । एताश्च प्राधान्यादुक्ताः । तेन सुश्रुतेऽपि पिडकाधिक्यमुक्तं यत्, तन्न विरोधि । सिराजालं सिरासमूहः । चिता अधिष्ठिता ॥ ७८–८९ ॥

विद्रधिं द्विविधामाहुर्बाह्यामाभ्यन्तरीं तथा ।
बाह्या त्वक्स्नायुमांसोत्था कण्डराभा महारुजा ॥९०॥
शीतकान्नविदाह्युष्णरूक्षशुष्कातिभोजनात् ।
विरुद्धाजीर्णसंक्लिष्टविषमासात्म्यभोजनात् ॥ ९१ ॥
व्यापन्नबहुमद्यत्वाद्वेगसंधारणाच्छ्रमात् ।
जिह्मव्यायामशयनादतिभाराध्वमैथुनात् ॥ ९२ ॥
अन्तःशरीरे मांसासृगाविशन्ति यदा मलाः ।
तदा संजायते ग्रन्थिर्गम्भीरस्थः सुदारुणः ॥ ९३ ॥
हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः ।
नाभ्यां वंक्षणयोर्वाऽपि वस्तौ वा तीव्रवेदनः ॥ ९४ ॥
दुष्टरक्तातिमात्रत्वात् स वै शीघ्रं विदह्यते ।
ततः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते ॥ ९५ ॥
व्यधच्छेदभ्रमानाहशब्दस्फुरणसर्पणैः ।
वातिकीं, पैत्तिकीं तृष्णादाहमोहमदज्वरैः ॥ ९६ ॥
जृम्भोत्क्लेशारुचिस्तम्भशीतकैः श्लैष्मिकीं विदुः ।
सर्वासु च महच्छूलं विद्रधीषूपजायते ॥ ९७ ॥

शस्त्रास्त्रैर्भिद्यत इव चोल्मुकैरिव दह्यते ।
विद्रधी व्यम्लता याता वृश्चिकैरिव दश्यते ॥ ९८ ॥
तनु रूक्षारुणं श्यावं फेनिलं वातविद्रधी ।
तिलमाषकुलत्थोदसन्निभं पित्तविद्रधी ॥ ९९ ॥
श्लैष्मिकी स्रवति श्वेतं पिच्छिलं बहलं बहु ।
लक्षणं सर्वमेवैतद्भजते सान्निपातिकी ॥ १०० ॥

विद्रधिं द्विविधामित्यनेनाभ्यन्तरविद्रधेरपि विद्रधित्वेन पिडकानां सप्तत्वेऽविरोध इति दर्शयति । कण्डराभा स्थूलस्नाय्वाकारा । अन्तर्विद्रधेर्गरीयस्त्वेन निदानान्याह—शीतकेत्यादि । संक्लिष्टं दोषलम् । व्यापन्नं च बहु च मद्यमुपयुङ्क्ते यः स व्यापन्नबहुमद्यः । अन्तःशरीर इति कोष्ठे । मला दोषाः । ग्रन्थिरिव ग्रन्थिः । स इति ग्रन्थिः । व्यधादयो व्यथाप्रकाराः । शीतमेव शीतकम् । व्यम्लतां याता विदाहं प्राप्ता । तमकः श्वासभेदः ॥ ९०–१०० ॥

अथासां विद्रधीनां साध्यासाध्यत्वविशेषज्ञानार्थं स्थानकृतं लिङ्गविशेषमुपदेक्ष्यामः—तत्र प्रधानमर्मजायां विद्रध्यां हृद्घट्टनतमकप्रमोहकासश्वासाः, क्लोमजायां पिपासामुखशोषगलग्रहाः, यकृज्जायां श्वासः, प्लीहजायामुच्छ्वासोपरोधः, कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलं, वृक्कजायां पृष्ठकटिग्रहः, नाभिजायां हिक्का, वंक्षणजायां सक्थिसादः, वस्तिजायां कृच्छ्रपूतिमूत्रवर्चस्त्वं चेति ॥ १०१ ॥

पक्वप्रभिन्नासूर्ध्वजासु मुखात् स्रावः स्रवति, अधोजासु गुदात्, उभयतस्तु नाभिजासु ॥ १०२ ॥

आसां हृन्नाभिवस्तिजाः परिपक्वाः सान्निपातिकी च मरणाय; शेषाः पुनः कुशलमाशुप्रतिकारिणं चिकित्सकमासाद्योपशाम्यन्ति । तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्यां स्नेहविरेचनैराश्वेवोपक्रमेत् सर्वशो गुल्मवच्चेति ॥ १०३ ॥

कुक्षिपार्श्वान्तरांसशूलमिति कुक्षिपार्श्वान्तरांसेषु शूलम् । हृन्नाभिवस्तिजासु सान्निपातिकीं पृथक् पठन् सान्निपातिकीं पक्वामपक्वां चासाध्यां दर्शयति । शस्त्रादिदृष्टान्तत्रयाच्छस्त्रवन्मर्मच्छेदकत्वं, सर्पवदाशुसंज्ञाहारित्वं, विद्युदग्निवदाशुमारकत्वं ज्ञेयम् ॥ १०१–१०३ ॥

भवन्ति चात्र—

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ १०४ ॥
शराविका कच्छपिका जालिनी चेति दुःसहाः ।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसः ॥ १०५ ॥

१ 'शराविकादिसंज्ञा स्वयोनिविवरणे स्फुटा' इति पा० । २ 'मांसासृक् प्रविशन्ति' इति पा० । ३ 'सर्वास्वासु' इति पा० ।

१ 'तप्तैः शस्त्रैर्यथा मथ्येतोल्मुकैरिव दह्यते' इति पा० । उल्मुकमङ्गारम् । २ 'कृच्छ्रमूत्रता, पूतिवर्चस्त्वं च' इति पा० । ३ व्यापन्नम् असम्यक्सन्धानादिना विकृतिमापन्नम् । ४ 'व्यथाविशेषाः' इति पा० । ५ 'कुक्षिपार्श्वमध्येंऽसे शूलं' इति पा० ।

सर्षपी चालजी चैव विनता विद्रधी च याः ।
साध्याः पित्तोल्बणास्तास्तु संभवन्त्यल्पमेदसः १०६
मर्मस्वंसे गुदे पाण्योः स्तने सन्धिषु पादयोः ।
जायन्ते यस्य पिडिकाः स प्रमेही न जीवति ॥१०७॥

प्रमेहं विनाऽप्युक्तपिडकासंभवं दर्शयति—विनेत्यादि । एतेन च पिडकानां माधुमेहिकत्वं यत् पूर्वमुक्तं तत् प्रायिकत्वेन ज्ञेयम् । वास्तु स्थानम् । विद्रधी चेति बाह्यविद्रधी ॥१०४–१०७

तथाऽन्याः पिडकाः सन्ति रक्तपीतासितारुणाः ।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः ॥१०८॥
मृद्व्यश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथाऽपराः ।
मन्दवेगा महावेगाः स्वल्पशूला महारुजः ॥ १०९ ॥
ता बुद्ध्वा मारुतादीनां यथास्वैर्हेतुलक्षणैः ।
ब्रूयादुपचरेच्चाशु प्रागुपद्रवदर्शनात् ॥ ११० ॥
तृट्श्वासमांससंकोथमोहहिक्कामदज्वराः ।
वीसर्पमर्मसंरोधाः पिडकानामुपद्रवाः ॥ १११ ॥

प्रमेहपिडकाप्रसङ्गेनान्यासामपि पिडकानामाविष्कृतानां लक्षणं ब्रूते—तथाऽन्या इत्यादि । पाण्डुरा धूसराः, पाण्डुवर्णास्तु रूक्षपाण्डुवर्णा ज्ञेयाः । मेचकप्रभाः स्निग्धकृष्णवर्णाः । उपचरेच्चेति मारुतादीनां भेषजैरित्यर्थाद्भवति । प्रागुपद्रवदर्शनादित्यनेन उपद्रवयुक्ता पिडका असाध्येति दर्शयति । संकोथः पूतिभावः ॥ १०८–१११ ॥

क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः ।
ऊर्ध्वं चाधश्च तिर्यक्च विज्ञेया त्रिविधाऽपरा ११२
त्रिविधा चापरा कोष्ठशाखामर्मास्थिसन्धिषु ।
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः ॥११३॥

संप्रति दोषाणां गतिं विवृणोति—क्षय इत्यादि । स्थानं स्वमानावस्थानम् । गतिः प्रकारोऽवस्था वा । चय इत्यत्र प्रशब्दो लुप्तनिर्दिष्टः, तेन प्रकृष्टचयः; एवं प्रकृष्टः कोपः प्रकोपः; एवं प्रशमोऽपि । एतेन वर्षादिषु पित्तादीनां प्रकृष्टश्चयो भवतीति दर्श्यते, इतरदोषस्यापि च स्तोकमात्रेण चयो यथासंभवं सूच्यते; तेन शरद्यनुबलत्वेन कफप्रकोपो भवतीत्यादि गृहीतं भवति ॥ ११२ ॥ ११३ ॥

चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम् ।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु ॥ ११४ ॥
गतिः कालकृता चैषा चयाद्या पुनरुच्यते ।

यथाक्रममिति वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृट्क्रमेण; किंवा यथाक्रममिति यथायोग्यतया । पित्तादीनामिति पित्तश्लेष्मवातानाम् । एकैकश इति अयौगपद्येन । एतच्च प्राधान्येनैव ज्ञेयं, तेन प्रावृषि श्लेष्मपित्तकोपेनाप्रधानेन न व्यभिचारः । यदुक्तं—"वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः" (सू. अ. ६) इति । अत्र हि पवनादय इति पवनप्रधानाः; एवं वसन्ते वातपित्तप्रकोपे व्याख्येयम् । अत्र च षट्सु ऋतुषु पित्तश्लेष्मवातानां प्रवलचयादयो विभज्यमानत्वेन; तेन पित्तचयकाले वातस्य कोपः, शरदि पित्तस्य प्रकोपकाले वातप्रशमः, हेमन्ते पित्तप्रशमः कफस्य चयः, वसन्ते तु कफप्रकोप एव परं, तथा कफप्रशमके ग्रीष्मे वातचय इति च स्यात् । वातं परित्यज्य पित्तादीनामित्यभिधानं विसर्गस्याभिप्रेतत्वेनाग्रे वक्तव्यत्वात् कृतं, विसर्गे च पित्तचय एव भवतीति कृत्वा ॥ ११४ ॥—

गतिश्च द्विविधा दृष्टा प्राकृती वैकृती च या ॥११५॥
पित्तादेवोष्मणः पक्तिर्नराणामुपजायते ।
तच्च पित्तं प्रकुपितं विकारान् कुरुते बहून् ॥ ११६ ॥
प्राकृतस्तु बलं श्लेष्मा विकृतो मल उच्यते ।
स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते ११७
सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृतः ।
तेनैव रोगा जायन्ते तेन चैवोपरुध्यते ॥ ११८ ॥

गतिभेदान्तरमाह—गतिश्चेत्यादि । अत्र पित्तमादौ कृतं शरीरस्थितिहेत्वग्निकर्तृत्वेन । पक्तिः पाकः । बलमिति बलहेतुत्वेन । मल इति शरीरमलिनीकरणात् । ओज इति सारभूतं; यदि वा द्वितीयश्लैष्मिकौजोहेतुत्वेनौजः । वक्ष्यति हि शारीरे—"तावच्चैव श्लैष्मिकस्यौजसश्च प्रमाणम्" (शा. अ. ७) इति । दुःखहेतुत्वात् पाप्मा । सर्वा हि चेष्टा इति अविकृतगमनाद्याः । उपरुध्यते म्रियते ॥ ११५–११८ ॥

नित्यं सन्निहितामित्रं समीक्ष्यात्मानमात्मवान् ।
नित्यं युक्तः परिचरेदिच्छन्नायुरनित्वरम् ॥ ११९ ॥

आत्मवानिति प्रशंसायां मतुप्प्रत्ययः । युक्त इत्युद्युक्तः । अनित्वरम् अगत्वरम् ॥ ११९ ॥

तत्र श्लोकौ—

शिरोरोगाः सहृद्रोगा रोगा मानविकल्पजाः ।
क्षयाः सपिडकाश्चोक्ता दोषाणां गतिरेव च ॥१२०॥
कियन्तःशिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना ।
ज्ञानार्थं भिषजां चैव प्रजानां च हितैषिणा ॥ १२१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः ॥१७॥

तत्र श्लोकावित्यादि ॥ १२० ॥ १२१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने रोगचतुष्के कियन्तःशिरसीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

१ 'पित्तं चैव' इति पा० । २ 'पित्तमग्रे' इति पा० ।

## अष्टादशोऽध्यायः ।

अथातस्त्रिशोथीयमध्यायं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये पिडका उक्ताः, ताश्च शोथरूपाः, अतः शोथाधिकारात्त्रिशोथीयोऽभिधीयते ॥ १ ॥ २ ॥

त्रयः शोथा भवन्ति वातपित्तश्लेष्मनिमित्ताः, ते पुनर्द्विविधा निजागन्तुभेदेन ॥ ३ ॥

वक्ष्यमाणद्विविधादिभेदे विद्यमानेऽपि वातादिकृतत्रित्वाभिधानमग्रे वातादिकृतस्यैव प्राधान्यख्यापनार्थम् ॥ ३ ॥

तत्रागन्तवश्छेदनभेदनक्षणनभञ्जनपिच्छनोत्पेषणप्रहारवधबन्धनवेष्टनव्यधनपीडनादिभिर्वा भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाहितपत्रलतागुल्मसंस्पर्शनैर्वा स्वेदनपरिसर्पणावमूत्रणैर्वा विषिणां सविषप्राणिदंष्ट्रादन्तविषाणनखनिपातैर्वा सागरविषवातहिमदहनसंस्पर्शनैर्वा शोथाः समुपजायन्ते ॥ ४ ॥

भेदनम् आशयविदारणं, क्षणनम् अस्थिचूर्णनं, भञ्जनं जर्जरीकरणं, पिच्छनम् अत्यर्थपीडनम्, उत्पेषणं शिलोत्पेषणमिव, वेष्टनम् अग्रन्थिबन्धनं सर्पादिभिः । शूकवतां क्रिमीणां शूकः शूकक्रिमिशूकः । स्वेदनादिभिर्विषिणामिति योज्यम् ॥ ४ ॥

ते पुनर्यथास्वं हेतुव्यञ्जनैरादावुपलभ्यन्ते निजव्यञ्जनैकदेशविपरीतैः; बन्धमन्त्रागदप्रलेपप्रतापनिर्वापणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते ॥ ५ ॥

आदावुपलभ्यन्त इति वचनादुत्तरकालमागन्तोरपि निजतुल्यतां ब्रूते । यदुक्तम्—"आगन्तुरन्वेति निजं विकारं" ( सू. अ. १९ ) इति । निजव्यञ्जनैकदेशविपरीतैरिति निजलक्षणेभ्य आगन्तूनामेकदेशो विपरीतो भवति, स च वातादिजन्यश्यावादिवर्णविकारत्वाज्ज्ञेयः; किंवा आगन्तुर्व्यथापूर्वो भवति पश्चाद्वातादिभिरनुबध्यते, निजस्तु पूर्वं वातादिलक्षणैर्युज्यते पश्चाद्वेदनावान् भवतीत्येकदेशवैपरीत्यम् । बन्धः अरिष्टाबन्धो व्रणबन्धश्च । बन्धादयश्च यथायोग्यतया बोद्धव्याः ॥ ५ ॥

निजाः पुनः स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत्प्रयोगान्मिथ्यासंसर्जनाद्वा छर्द्यलसकविसूचिकाश्वासकासातिसारशोषपाण्डुरोगोदरज्वरप्रदरभगन्दरार्शोविकारातिकर्शनैर्वा कुष्ठकण्डूपिडकादिभिर्वा छर्दिक्षवथूद्गारशुक्रवातमूत्रपुरीषवेगधारणैर्वा कर्मरोगोपवासाध्वकर्शितस्य वा सहसाऽतिगुर्वम्ललवणपिष्टान्नफलशाकरागदधिहरितकमद्यमन्दकविरूढनवशूकशमीधान्यानूपौदकपिशितोपयोगान्मृत्पङ्कलोष्टभक्षणाल्लवणातिभक्षणाद्गर्भसंपीडनादामगर्भप्रपतनात् प्रजातानां च मिथ्योपचारादुदीर्णदोषत्वाच्च शोफाः प्रादुर्भवन्ति; इत्युक्तः सामान्यो हेतुः ॥ ६ ॥

छर्द्यादयः स्वरूपत एव शोथहेतवः । कर्माद्यतिकर्शितस्य तु सहसाऽतिगुर्वादिसेवनं शोथहेतुः; कर्मेति पञ्चकर्म । विरूढनवशब्दौ शूकशमीधान्यविशेषणौ । प्रजातानामिति अचिरप्रसूतानाम् ॥ ६ ॥

अयं त्वत्र विशेषः—शीतरूक्षलघुविशदश्रमोपवासातिकर्शनक्षपणादिभिर्वायुः प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोफं जनयति; स क्षिप्रोत्थानप्रशमो भवति, तथा श्यामारुणवर्णः प्रकृतिवर्णो वा, चलः स्पन्दनः खरपरुषभिन्नत्वग्रोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचीभिरिव तुद्यते पिपीलिकाभिरिव संसृप्यते सर्षपकल्कावलिप्त इव चिमिचिमायते संकुच्यत आयम्यत इवेति वातशोथः ( १ );

उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितान्यभिभूय शोथं जनयति; स क्षिप्रोत्थानप्रशमो भवति, कृष्णपीतनीलताम्रावभास उष्णो मृदुः कपिलताम्ररोमा उष्यते दूयते धूप्यते ऊष्मायते स्विद्यते क्लिद्यते न च स्पर्शमुष्णं च मृष्यत इति पित्तशोथः ( २ );

गुरुमधुरशीतस्निग्धैरतिस्वप्नाव्यायामादिभिश्च श्लेष्मा प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति; स कृच्छ्रोत्थानप्रशमो भवति, पाण्डुश्वेतावभासो गुरुः स्निग्धः श्लक्ष्णः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्मशोथः ( ३ );

यथास्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोथा भवन्ति; यथास्वकारणाकृतिसन्निपातात् सान्निपातिक एकः; एवं सप्तविधो भेदः ॥ ७ ॥

प्रकृतिभिस्ताभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधश्चतुर्विधः सप्तविधोऽष्टविधश्च शोथ उपलभ्यते, पुनश्चैक एवोत्सेधसामान्यात् ॥ ८ ॥

क्षपणं वमनादिभिः । प्रकृतिवर्णः देहसमानवर्णः । चलः संक्रमणवान् । स्पन्दनः कम्पनः । उष्यते पार्श्वस्थेनेव वह्निना

१ '°धूमोपवास°' इति पा० । २ 'कपिलपिङ्गलताम्ररोमा' इति पा० । ३ 'सहते' इति पा० । ४ 'एवं सप्तविधो भेदः' इति क्वचित्पुस्तके न पठ्यते । ५ 'एवं भेदप्रकृतिभिस्ताभिस्ताभिर्भिद्यमानः' इति पा० । ६ 'स पुनश्चैकः' इति पा० ।

दह्यते। धूप्यते धूममिवोद्वमति। ऊष्मायते बहिः परैरप्युष्णत्वेनोपलभ्यते। खिद्यते खेदवान् भवति। न सुपूयते न सहते; स्पर्शनं च न सहते, उष्णं च न सहते। स कृच्छ्रोत्थानप्रशम इति चिरोत्थानप्रशमः। प्रकृतिभिरिति कारणैः। उत्सेध उन्नतत्वम् ॥ ७ ॥ ८ ॥

भवन्ति चात्र—

शूयन्ते यस्य गात्राणि स्वपन्तीव[1] रुजन्ति च।
पीडितान्युन्नमन्त्याशु वातशोथं तमादिशेत् ॥ ९ ॥
यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति।
स्नेहोष्णमर्दनाभ्यां च प्रणश्येत् स च वातिकः ॥१०॥
यः पिपासाज्वरार्तस्य दूयतेऽथ विदह्यते।
खिद्यति क्लिद्यते गन्धी स पैत्तः श्वयथुः स्मृतः ११
यः पीतनेत्रवक्त्रत्वक्[3] पूर्वं मध्यात् प्रशूयते।
तनुत्वक् चातिसारी च पित्तशोथः स उच्यते ॥१२॥
शीतः[4] सक्तगतिर्यस्तु कण्डूमान् पाण्डुरेव च।
निष्पीडितो नोन्नमति[5] श्वयथुः स कफात्मकः ॥ १३ ॥
यस्य शस्त्रकुशच्छिन्नाच्छोणितं[6] न प्रवर्तते।
कृच्छ्रेण पिच्छा स्रवति स चापि कफसंभवः ॥ १४ ॥
निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्द्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रहेतुजः ॥ १५ ॥

शूयन्त इत्यादि। पुनः श्लोकेन लक्षणाभिधानं प्रायोभाविलक्षणदर्शनार्थम्। स्वपन्तीवेति निर्वेदनः। एतेन[7] वायोश्चलत्वेन क्षणाच्च रुक्, क्षणाच्च तदभाव इति ज्ञेयम्। मध्यादिति शरीरमध्यात्। सक्तगतिः अविसारी। शस्त्रकुशच्छिन्नादिति शस्त्रकुशकृताच्छेदात् ॥ ९–१५ ॥

यस्तु पादाभिनिर्वृत्तः शोथः सर्वाङ्गगो भवेत्।
जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखाच्च यः १६
यश्चापि गुह्यप्रभवः स्त्रिया वा पुरुषस्य वा।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ १७ ॥

पादाभिनिर्वृत्तः शोथः पुरुषाणां लघावधोदेशे जातः सन् यदा न जीयते तदा गुरुमूर्ध्वदेशं गतः स न पार्यते जेतुं, यो हि लघौ प्रदेशे जेतुं न पार्यते स गुरुप्रदेशगतो नितरामेव न पार्यते; एवं प्रसृतः स्त्रीमुखाच्च य इत्यपि ज्ञेयम्। वचनं हि—"अधोभागो गुरुः स्त्रीणामूर्ध्वः पुंसां गुरुस्तथा" ( सु. सू. अ. ४६ ) इति ॥ १६ ॥ १७ ॥

छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च।
सप्तकोऽयं सदौर्बल्यः शोफोपद्रवसंग्रहः ॥ १८ ॥

उक्तानुपद्रवानाह—छर्दिरित्यादि ॥ १८ ॥

यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते।
आशु संजनयेच्छोथं[1] जायतेऽस्योपजिह्विका ॥ १९ ॥
यस्य श्लेष्मा प्रकुपितः काकले व्यवतिष्ठते।
आशु संजनयेच्छोफं[2] करोति गलशुण्डिकाम् ॥ २० ॥
यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते।
शनैः संजनयेच्छोफं[3] गलगण्डोऽस्य जायते ॥ २१ ॥
यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः।
आशु संजनयेच्छोफं[4] जायतेऽस्य गलग्रहः ॥ २२ ॥
यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति।
शोफं सरागं जनयेद्विसर्पस्तस्य[5] जायते ॥ २३ ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेऽवतिष्ठते।
शोथं सरागं जनयेत्[6] पिडका तस्य जायते ॥ २४ ॥
यस्य प्रकुपितं पित्तं शोणितं प्राप्य शुष्यति।
तिलका पिप्लवो व्यङ्गा नीलिका तस्य जायते ॥२५॥
यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥ २६ ॥
यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते।
ज्वरान्ते दुर्जयोऽन्ताय शोथस्तस्योपजायते ॥ २७ ॥
वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति।
शनैः[7] परितुदन् पार्श्वे प्लीहा तस्याभिवर्धते ॥ २८ ॥
यस्य वायुः प्रकुपितो गुल्मस्थानेऽवतिष्ठते।
शोफं सशूलं जनयन् गुल्मस्तस्योपजायते ॥ २९ ॥
यस्य वायुः प्रकुपितः शोफशूलकरश्चरन्।
वङ्क्षणाद्वृषणौ याति वृद्धिस्तस्योपजायते ॥ ३० ॥
यस्य वातः प्रकुपितस्त्वङ्मांसान्तरमाश्रितः।
शोथं संजनयेत् कुक्षावुदरं तस्य जायते ॥ ३१ ॥
यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति।
नाधो व्रजति नाप्यूर्ध्वमानाहस्तस्य जायते ॥ ३२ ॥
रोगाश्चोत्सेधसामान्यदधिमांसार्बुदादयः।
विशिष्टा नामरूपाभ्यां निर्देश्याः शोथसंग्रहे ॥ ३३ ॥
वातपित्तकफा यस्य युगपत् कुपितास्त्रयः।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः ॥ ३४ ॥

---

१ 'उष्णायते' इति पा०। २ 'स्पन्दन्तीव' इति पा०। ३ 'पीतमुखनेत्रत्वक्' इति पा०। ४ 'यः शीतलः सक्तगतिः पाण्डुः कण्डूयतेऽपि च' इति पा० ५ 'पीडितो नोन्नमेन्मन्दः' इति पा०। ६ 'छिन्नादित्यनन्तरं 'अङ्गात्' इति शेषः' इति शिवदाससेनः। 'शस्त्रकुशच्छेदात्' इति पा०। ७ 'एतच्च' इति पा०।

१–२–३–४ 'संजनयञ्छोथं' इति पा०। ५–६ 'जनयत्' इति पा०। ७ 'शूलैः परितुदन्' इति पा०।

जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः ।
तं शीघ्रकारिणं रोगं रोहिणीति विनिर्दिशेत् ॥ ३५ ॥
त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम् ।
कुशलेन त्वनुक्रान्तः क्षिप्रं संपद्यते सुखी ॥ ३६ ॥

संप्रत्युत्सेधसामान्यात् प्रादेशिकाञ्छोथानाह—यस्येत्यादि । काकलं तालुमूलम् । शनैरितिवचनेन गलगण्डकारिणो दोषाश्चिरक्रिया भवन्तीति दर्शयति; गलग्रहादौ चाशुकारिणो दोषा भवन्ति । विसर्पस्य पिडकायाश्च तुल्यकारणत्वेऽपि विसर्पे सर्पणशीलो दोषः, पिडकायां च स्थिरो ज्ञेयः; अत एव पिडकासंप्राप्तौ 'अवतिष्ठते' इत्युक्तम् । यस्य पित्तमित्यादौ पित्तं प्राप्य शोणितं कर्तृ शुष्यतीति योजनीयम् । पिप्लवः 'जटुला' इति प्रसिद्धः । दारुणः अनुपक्रमादाशुमारकः । दुर्जयोऽन्तायेति दुर्जयो वा यथाक्रममुपक्रम्यमाणः, अन्ताय वा मिथ्योपक्रमाद्वेति मन्तव्यम् । अयमेव शोथोऽन्यत्राप्युक्तः—"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः । शोथः संजायते तेन कश्चिदेव प्रमुच्यते" इति । गुल्मादयो विस्तरवक्तव्या अपि इहोत्सेधसामान्याल्लेशत उच्यन्ते । शोथसंग्रह इति शोथत्वेनोत्सेधरूपेण संग्रहः शोथसंग्रहः ॥ समुच्छ्रिता अतिरिक्तप्रमाणाः । भृशम् अत्यर्थदुःखकारिणम् । क्षिप्रमित्यनुक्रान्त इत्यनेन संबध्यते, तेन त्रिरात्रघातित्वं यस्य तस्य कथं शीघ्रप्रशम इति चोद्यं नोत्तिष्ठते; किंवा क्षिप्रं संपद्यते सुखीति व्याधिमहिम्ना भवति । व्याधेरेवैतत् स्वरूपं यच्छीघ्रं हन्ति, शीघ्रं प्रशाम्यतीति । यदुक्तं—"स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा" ( चि. अ. ३ ) इति ॥ १९–३६ ॥

सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः ।
ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः ॥ ३७ ॥
साध्याश्चाप्यपरे सन्ति व्याधयो मृदुसंमताः ।
यत्नायत्नकृतं येषु कर्म सिध्यत्यसंशयम् ॥ ३८ ॥
असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः ।
सुसाध्वपि कृतं येषु कर्म यात्राकरं भवेत् ॥ ३९ ॥
सन्ति चाप्यपरे रोगा येषु कर्म न सिध्यति ।
अपि यत्नकृतं बालैर्न तान् विद्वानुपाचरेत् ॥ ४० ॥
साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।
मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः ॥ ४१ ॥

एतदेव शीघ्रकारित्वमन्येष्वपि ज्वरान्तकर्णशोथवलयादिष्वस्तीत्याह—सन्तीत्यादि । दारुणा इति संमता दारुणसंमताः । दारुणत्वप्रसङ्गेन मृद्वादिभेदानप्याह—साध्याश्चेत्यादि । यात्राकरं यापनाकरम् । बालैः अज्ञैः, असाध्ये अज्ञा एवोत्साहात् प्रवर्तन्त इत्यर्थः । असाध्यस्य मृदुदारुणत्वं याप्यप्रत्याख्येयभेदेन, तथा सद्यःप्राणहरकालान्तरप्राणहरत्वादिना च ॥ ३७–४१ ॥

त एवापरिसंख्येया भिद्यमाना भवन्ति हि ।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः ॥ ४२ ॥
व्यवस्थाकरणं तेषां यथास्थूलेषु संग्रहः ।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥ ४३ ॥

त एवेत्यादि । समुत्थानभेदा हेतुभेदाः; रूक्षभोजनरात्रिजागरणादिभिन्नहेतुजन्यो हि वातो भिन्नोपक्रमसाध्यश्च भवतीति भावः । स्थानभेदा आमाशयादयो रसादयश्च । संस्थानम् आकृतिः, यथा—गुल्मार्बुदादिः । नामभेदो यथा—एकस्मिन्नेव राजयक्ष्मणि राजयक्ष्मशोषादिसंज्ञा । नन्वेवमपरिसंख्येयत्वे कथं व्यवहार इत्याह—व्यवस्थेत्यादि । व्यवस्थाकरणं चिकित्साव्यवहारार्थं संख्याकथनम् । यथास्थूलेष्विति ये ये स्थूला उदरमूत्रकृच्छ्रादयस्तेषु; संग्रहः अष्टोदरीयरोगसंग्रहे (उदिश्यते) इत्यर्थः । अस्थूलेषु विकारेषु अष्टोदरीये संज्ञयाऽनुक्तेषु कथं व्यवस्थाकरणमित्याह—तथेत्यादि । प्रकृतिसामान्यं समानकारणता; तेनानुक्तेषु साक्षाद्व्याधिषु वातजोऽयं श्लेष्मजोऽयमिति, तथा रसजोऽयं रक्तजोऽयमित्यादिका चिकित्साव्यवहारार्थं व्यवस्था कर्तव्येति भावः । अत एवाष्टोदरीये वक्ष्यति—"सर्वे विकारा वातपित्तकफान्नातिवर्तन्ते" ( सू. अ. १९ ) इति ॥ ४२–॥ ४३ ॥

विकारनामाकुशलो न जिह्रीयात् कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ४४
स एव कुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून् ॥ ४५ ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥ ४६ ॥
यो ह्येतत्त्रितयं ज्ञात्वा कर्माण्यारभते भिषक् ।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥ ४७ ॥

ज्वररक्तपित्तादिवन्नामाज्ञानेऽपि वातादिजन्यत्वज्ञानेनैव प्रचरितव्यमित्याह—विकारेत्यादि । स्थानान्तरगतश्चेत्यत्र चकार एकस्थानगतोऽपि बहुविकारं करोतीति समुच्चिनोति । यतो वक्ष्यति—"करोति गलमाश्रितः । कण्ठोद्ध्वंसं च कासं च स्वरभेदमरोचकम्" ( चि. अ. ८ ) इति । अधिष्ठानान्तराणि आशयान्तराणि । ज्ञानपूर्वमिति चिकित्साज्ञानपूर्वकम् । यथान्यायं यथागमम् । एवं मन्यते—यद्धातारन्धत्वादिज्ञानमेव कारणं

---

१ 'क्षिप्रमनुक्रान्त इति शीघ्रं चिकित्सित इत्यर्थः' इति शिवदाससेनः । २ 'यथाक्रममनुपक्रम्यमाणः' इति पा० । ३ 'मिथ्यारम्भेण' इति पा० । ४ 'साध्याश्चैवापरे' इति पा० ।

१ 'निदानवेदनावर्णस्थानसंस्थाननामभिः' इति पा० । २ 'व्यवस्थाकारणं' इति योगीन्द्रनाथसेनसंमतः पाठः । ३ 'स्थानान्तरगतश्चापि विकारान् कुरुते बहून्' इति पा० । ४ 'यथाम्नायं' इति पा० ।

रोगाणां चिकित्सायामुपकारि, नामज्ञानं तु व्यवहारमात्रप्रयोजनार्थं न खरूपेण चिकित्सायामुपकारीति ॥ ४४-४७ ॥

**नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।**
**विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ४८**

संप्रति वातादिज्ञानेन रोगज्ञानमुद्दिष्टं तेनोपोद्धातेन वातादीनां प्रकृतिस्थानामप्रकृतिस्थानां च लक्षणं वक्तुमाह—नित्या इत्यादि। बुभुत्सेत ज्ञातुमिच्छेत् ॥ ४८ ॥

**उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा।**
**समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥४९॥**
**दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम्।**
**प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥ ५० ॥**
**स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम्।**
**क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥ ५१ ॥**

चेष्टेति अविकृता चेष्टा। धातुगतिरिति रसादीनां पोष्यं धातुं प्रति गमनम्। गतिमतामिति पुरीषादीनां बहिर्निःसरताम्। प्रसादः मनःप्रसादः। बन्धः सन्धिबन्धः। स्थिरत्वम् अशैथिल्यम्। गौरवं प्राकृतं शरीरगौरवम्। क्षमा सहिष्णुता। धृतिः मनसोऽचाञ्चल्यम्। क्षमादयश्च श्लेष्मणः प्रभावात् क्रियन्ते; एवमन्यत्रापि ज्ञेयम् ॥ ४९-५१ ॥

**वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते।**
**कर्मणः प्राकृताद्धानिर्वृद्धिर्वाऽपि विरोधिनाम् ॥५२॥**

क्षयलक्षणमाह—वाते इत्यादि। कर्मणः प्राकृतादिति वातादिप्रकृतिकर्मत्वेनोक्तादुत्साहादेः। हानिः अपचयः। वृद्धिर्वाऽपि विरोधिनामिति उक्तप्राकृतलक्षणविरोधिनां कर्मणां वृद्धिः; यथा वातक्षये उत्साहविरोधिनो विषादस्य वृद्धिः, पित्तक्षयेऽदर्शनापक्त्यादीनां, श्लेष्मक्षये रौक्ष्यादीनां वृद्धिः। इह प्राकृतकर्महानौ सत्यां नावश्यं विरोधिकर्मवृद्धिरत उक्तं—वृद्धिर्वेत्यादि; न ह्यवश्यमुत्साहहानावल्पमात्रायां सत्यां विषादो वर्धते, अलोभन्यूनत्वे वा मनाग्लोभो वर्धते; किंवा, उत्साहाद्यभावेनाभावमुखेन ज्ञानार्थं 'कर्मणः प्राकृताद्धानिः' इत्युक्तं, विषादादिवृद्ध्या तु विधिमुखेन ज्ञानार्थं 'वृद्धिर्वाऽपि विरोधिनाम्' इत्युक्तम्। यदुच्यते—वृद्धिर्वाऽपि विरोधिनामिति विरोधिदोषाणां, यथा—पित्तवृद्धौ श्लेष्मक्षयो जायते, इत्येवमादि; तन्न, यतोऽन्यदोषवृद्धावन्यस्यावश्यं न ह्यपायो भवति, तथाहि सति पित्तवृद्धौ सत्यां सर्वदा श्लेष्मक्षयः स्यात्; न च दोषाः परस्परघातका इति प्रागेव प्रतिपादितं; प्रदेशान्तरेऽपि दोषाणां खलक्षणहानिरेव परं क्षयलक्षणं—"क्षीणा जहति लिङ्गं स्वं" (सू. अ. १७) इत्यनेनोक्तम् ॥ ५२ ॥

**दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम्।**
**दोषाणां प्रकृतिर्हानिर्वृद्धिश्चैवं परीक्ष्यते ॥ ५३ ॥**

वृद्धिलक्षणमाह—दोषेत्यादि। प्रकृतिः स्वभावः, तस्य वैशेष्यमाधिक्यं; श्लेष्मणः स्नेहशैत्यमाधुर्यादिर्या प्रकृतिस्तस्या अतिस्निग्धातिशैत्यातिमाधुर्यादिवैशेष्यं वृद्धिलक्षणम्। नियतमिति प्रतिनियतं, यद्यस्य प्रकृतिलक्षणं तद्वृद्धं सत्तस्यैव वृद्धिलक्षणमित्यर्थः; अन्ये तु निश्चितमित्याहुः ॥ ५३ ॥

तत्र श्लोकाः—

**संख्यां निमित्तं रूपाणि शोथानां साध्यतां न च।**
**तेषां तेषां विकाराणां शोथांस्तांस्तांश्च पूर्वजान् ॥५४**
**विधिभेदं विकाराणां त्रिविधं बोध्यसंग्रहम्।**
**प्राकृतं कर्म दोषाणां लक्षणं हानिवृद्धिषु ॥ ५५ ॥**
**वीतमोहरजोदोषलोभमानमदस्पृहः।**
**व्याख्यातवांस्त्रिशोथीये रोगाध्याये पुनर्वसुः ॥५६॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने त्रिशोथीयो नामाष्टादशोऽध्यायः ॥ १८ ॥**

संग्रहे शोथानां साध्यतामिति भेषजविशेषसाध्यत्वम्, उपशय इत्यर्थः; तच्च 'स्नेहौष्ण्यमर्दनाभ्यां च प्रणश्येत् स च वातिक' इत्युक्तं ज्ञेयम्। न चेति न च साध्यतां, यथा—'यश्च पादाभिनिर्वृत्तः' इत्यादि। तेषां तेषामिति उपजिह्वादीनाम्। शोथान् पूर्वजानित्यभिदधान उपजिह्वादिषु पूर्वं शोथो भवति, पश्चादुपजिह्वादिरोगव्यक्तिरिति दर्शयति। अत एव 'आशु संजनयेच्छोथं' इत्युक्त्वा 'जायतेऽस्योपजिह्विका' इत्युक्तम्। बोध्यः बोद्धव्यो विकारप्रकृत्यादिः। तस्य त्रिविधं संग्रहमिति 'तस्माद्विकारप्रकृतीः' इत्याद्युक्तं त्रयम् ॥ ५४-५६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकाख्यायां सूत्रस्थाने रोगचतुष्के त्रिशोथीयो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## ऊनविंशोऽध्यायः।

**अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये प्रोक्तं "व्यवस्थाकरणं तेषां यथास्थूलेषु संग्रहः" (सू. अ. १८) इति, तदनु जिज्ञासायामष्टावुदराणीत्यादि यथास्थूलं संग्रहोऽभिधीयते। अष्टोदरीय इति चार्थपरां संज्ञा ॥ १॥२ ॥

**इह खल्वष्टावुदराणि, अष्टौ मूत्राघाताः, अष्टौ क्षीरदोषाः, अष्टौ रेतोदोषाः; सप्त कुष्ठानि, सप्त पिडकाः, सप्त वीसर्पाः; षडतीसाराः, षडुदावर्ताः; पञ्च गुल्माः, पञ्च प्लीहदोषाः, पञ्च कासाः, पञ्च श्वासाः, पञ्च हिक्काः, पञ्च तृष्णाः, पञ्च छर्दयः, पञ्च भक्तस्यानशनस्थानानि, पञ्च शिरोरोगाः, पञ्च हृद्रोगाः, पञ्च पाण्डुरोगाः, पञ्चोन्मादाः; चत्वारोऽ-**

पस्माराः, चत्वारोऽक्षिरोगाः, चत्वारः कर्णरोगाः, चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः, चत्वारो मूर्च्छायाः, चत्वारः शोषाः, चत्वारि क्लैब्यानि; त्रयः शोफाः, त्रीणि किलासानि, त्रिविधं लोहितपित्तं; द्वौ ज्वरौ, द्वौ व्रणौ, द्वावायामौ, द्वे गृध्रस्यौ, द्वे कामले, द्विविधमामं, द्विविधं वातरक्तं, द्विविधान्यर्शांसि; एक ऊरुस्तम्भः, एकः संन्यासः,एको महागदः; विंशतिः क्रिमिजातयः, विंशतिः प्रमेहाः, विंशतिर्योनिव्यापदः; इत्यष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे समुद्दिष्टानि ॥ ३ ॥

उदराभिधानमादौ पूर्वाध्यायोक्तशोथसामान्यात्; उदराण्युत्सेधसामान्याच्छोथप्रभेदा एव ॥ ३ ॥

एतानि यथोद्देशमभिनिर्देक्ष्यामः—

अष्टावुदराणीति वातपित्तकफसन्निपातप्लीहबद्धच्छिद्रदकोदराणि, अष्टौ मूत्राघाता इति वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजाः, अष्टौ क्षीरदोषा इति वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातो रौक्ष्यं गौरवमतिस्नेहश्च, अष्टौ रेतोदोषा इति तनु शुष्कं फेनिलमश्वेतं पूत्यतिपिच्छलमन्यधातूपहितमवसादि च ( १ );

सप्त कुष्ठानीति कपालोदुम्बरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणानि, सप्त पिडका इति शराविका कच्छपिका जालिनी सर्षप्यलजी विनता विद्रधी च, सप्त विसर्पा इति वातपित्तकफाग्निकर्दमकग्रन्थिसन्निपाताख्याः ( २ );

षडतीसारा इति वातपित्तकफसन्निपातभयशोकजाः, षडुदावर्ता इति वातमूत्रपुरीषशुक्रच्छर्दिक्षवथुजाः ( ३ );

पञ्च गुल्मा इति वातपित्तकफसन्निपातशोणितजाः, पञ्च प्लीहदोषा इति गुल्मैर्व्याख्याताः, पञ्च कासा इति वातपित्तकफक्षतक्षयजाः, पञ्च श्वासा इति महोर्ध्वच्छिन्नतमकक्षुद्राः, पञ्च हिक्का इति महती गम्भीरा व्यपेता क्षुद्राऽन्नजा च, पञ्च तृष्णा इति वातपित्तामक्षयोपसर्गात्मिकाः, पञ्च छर्द्य इति द्विष्टार्थसंयोगजा वातपित्तकफसन्निपातोद्रेकोत्थाश्च, पञ्च भक्तस्यानशनस्थानानीति वातपित्तकफसन्निपातद्वेषाः, पञ्च शिरोरोगा इति पूर्वोद्देशमभिसमस्य वातपित्तकफसन्निपातक्रिमिजाः, पञ्च हृद्रोगा इति शिरोरोगैर्व्याख्याताः, पञ्च पाण्डुरोगा इति वातपित्तकफसन्निपातमृद्भक्षणजाः, पञ्चोन्मादा इति वातपित्तकफसन्निपातागन्तुनिमित्ताः ( ४ );

चत्वारोऽपस्मारा इति वातपित्तकफसन्निपातनिमित्ताः, चत्वारोऽक्षिरोगाश्चत्वारः कर्णरोगाश्चत्वारः प्रतिश्यायाश्चत्वारो मुखरोगाश्चत्वारो ग्रहणीदोषाश्चत्वारो मदाश्चत्वारो मूर्च्छाया इत्यपस्मारैर्व्याख्याताः, चत्वारः शोषा इति साहससन्धारणक्षयविषमाशनजाः, चत्वारि क्लैब्यानीति बीजोपघाताद्ध्वजभङ्गाज्जरायाः शुक्रक्षयाच्च ( ५ );

त्रयः शोथा इति वातपित्तश्लेष्मनिमित्ताः, त्रीणि किलासानीति रक्तताम्रशुक्लानि, त्रिविधं लोहितपित्तमिति ऊर्ध्वभागमधोभागमुभयभागं च ( ६ );

द्वौ ज्वराविति उष्णाभिप्रायः शीतसमुत्थश्च शीताभिप्रायश्चोष्णसमुत्थः, द्वौ व्रणाविति निजश्चागन्तुजश्च, द्वावायामाविति बाह्यश्चाभ्यन्तरश्च, द्वे गृध्रस्याविति वाताद्वातकफाच्च, द्वे कामले इति कोष्ठाश्रया शाखाश्रया च, द्विविधमाममिति अलसको विसूचिका च, द्विविधं वातरक्तमिति गम्भीरमुत्तानं च, द्विविधान्यर्शांसीति शुष्काण्यार्द्राणि च ( ७ );

एक ऊरुस्तम्भ इत्यामत्रिदोषसमुत्थः, एकः संन्यास इति त्रिदोषात्मको मनःशरीराधिष्ठानः, एको महागद इति अतत्त्वाभिनिवेशः ( ८ );

विंशतिः क्रिमिजातय इति यूका पिपीलिकाश्चेति द्विविधा बहिर्मलजाः, केशादा लोमादा लोमद्वीपाः सौरसा औदुम्बरा जन्तुमातरश्चेति षट् शोणितजाः, अन्त्रादा उदरावेष्टा हृदयादाश्चुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति सप्त कफजाः, ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति पञ्च पुरीषजाः; विंशतिः प्रमेहा इत्युदकमेहश्चेक्षुवालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति दश श्लेष्मनिमित्ताः, क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठमेहश्च हरिद्रमेहश्चेति षट् पित्तनिमित्ताः, वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ताः, इति विंशतिः प्रमेहाः; विंशतिर्योनिव्यापद इति वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रो दोषजाः, दोषदूष्यसंसर्गप्रकृतिनिर्देशैरवशिष्टाः षोडश निर्दिश्यन्ते, तद्यथा—रक्तयोनिश्चारजस्का चाचरणा चातिचरणा च प्राक्चरणा चोपप्लुता च परिप्लुता चोदावर्तिनी च

१ '०सन्निपातोद्रेकात्मिकाश्च' इति पा० ।

**कर्णिनी च पुत्रघ्नी चान्तर्मुखी च सूचीमुखी च शुष्का च वामिनी च पण्ढयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदो भवन्ति ( ९ );**

**केवलश्चायमुद्देशो यथोद्देशमभिनिर्दिष्टो भवति॥४॥**

इहैकादिसंख्यापरित्यागादष्टसंख्याग्रहणमादौ कृतम्, अष्टसंख्याया बहुत्वेन प्राधान्यात्; विंशतिसंख्यमेहादीनामूनविंशत्याद्यधःसंख्यानुपूर्वीप्राप्त्यभावाच्च कृतः प्रथमं निवेशः। यद्यपि चिकित्सितेऽष्टादश कुष्ठानि, तथाऽपीह महाकुष्ठाभिप्रायेण सप्तोच्यन्ते। षडुदावर्ता इत्यत्र नवेगान्धारणीयोक्तन्यायेनोच्चारादिनिरोधजादय उदावर्ता इहोच्यन्ते। गुल्मैर्व्याख्याता इति यथा गुल्मभेदास्तथा प्लीहदोषाः। पञ्च तृष्णेति संभोजनस्नेहादिजनितानामपि वातादिजास्वेवावरोधात्। स्थानमिव स्थानं कारणं; तेन, अनशनस्थानान्यरोचकानि; अनेन कारणेन कार्याण्यरोचकानि लक्ष्यन्ते; तेन रोगसंग्रहे कारणाभिधानमन्याय्यमिति न भवति। पूर्वोद्देशमभिसमस्येति कियन्तःशिरसीये विस्तरोक्तान् संक्षिप्य; किंवा कियन्तःशिरसीय एव "अर्धावभेदको वा स्यात्" (सू. अ.१७) इत्याद्युद्दिष्टानभिसमस्य परित्यज्य शिरस्येव रुजारूपा ये पञ्च त उच्यन्ते। 'साहसं सन्धारणं क्षयो विषमाशनम्' इति पाठे कारणेन कार्यं चतुर्विधः शोष उच्यते। द्वौ ज्वरावित्यादौ शीतसमुत्थत्वेनैवोष्णाभिप्रायता लब्धा, यतो निदानविपरीतमिच्छति ज्वरी; तदिहोष्णाभिप्रायताविशेषणं शीतर्तुसमुत्थत्वेन पैत्तिकस्यापि ज्वरस्य शीतसमुत्थत्वनिरासार्थम्; एवं शीताभिप्रायेऽपि वाच्यम्। द्विविधमाममिति आमविषस्य त्रिविधकुक्षीये वक्ष्यमाणस्यालसक एवान्तर्भावात्; अन्ये त्वामविषस्य विषत्वेनान्यविषतन्त्रविषयत्वादिहाग्रहणमिति ब्रुवते। अतत्त्वाभिनिवेशो मानसो विकारः, स च सर्वसंसारिदुःखहेतुतया गद इत्युच्यते। क्रिमीणां संज्ञा प्रायो रूढा ज्ञातव्या। पिपीलिका लिख्याः। दोषस्य दूष्येण रक्तादिना संसर्गो दोषदूष्यसंसर्गः, प्रकृतिः कारणम्; तत्र दोषदूष्यसंसर्गनिर्देशेन रक्तयोन्यादयः, प्रकृतिनिर्देशेन प्राक्चरणादयो योनिव्यापत्तिचिकित्सितं वीक्ष्य व्याकर्तव्याः। अत्र मदा एव मदात्ययरूपतां यान्तीति कृत्वा मदात्ययाः पृथङ्नोक्ताः। इह चोक्तानां रोगाणां यद्यपि प्रकारान्तरेणान्यथाऽपि संख्या भवति; तथा हि-अष्टौ ज्वराः, द्वावुन्मादौ निजागन्तुकभेदेनेत्यादि, तथाऽपि प्रधानविवक्षया एत एव भेदा गृहीताः; प्राधान्यं च स्वाधिकारे रोगाणामनुसरणीयम्॥ ४॥

**सर्वे एव निजा विकारा नान्यत्र वातपित्तकफेभ्यो निर्वर्तन्ते[1], यथाहि-शकुनिः सर्वं[2] दिवसमपि परिपतन् स्वां छायां नातिवर्तते, तथा स्वधातुवैषम्यनिमित्ताः सर्वे विकारा वातपित्तकफान्नातिवर्तन्ते। वातपित्तश्लेष्मणां पुनः स्थानसंस्थानप्रकृतिविशेषानभिसमीक्ष्य[1] तदात्मकानपि च सर्वविकारांस्तानेवोपदिशन्ति बुद्धिमन्तः॥ ५॥**

संप्रत्यष्टोदरादीनां तथा वक्ष्यमाणानां महारोगे तथाऽनुक्तानामिह तन्त्रे रोगाणां निजानां वातपित्तश्लेष्माण एव व्यस्ताः समस्ता वा कारणं भवन्तीत्येतद्रूपं रोगाणां चिकित्सोपयोगि सूत्रं दर्शयितुमाह—सर्वे इत्यादि। सर्वे इत्युक्ता अनुक्ताश्च। यद्यप्यागन्तुष्वपि दोषसंबन्धो न व्यभिचरति, तथाऽप्यागन्तौ रोगे दोषापेक्षया न चिकित्सेत्यागन्तुव्युदासार्थं निजा इत्युक्तम्। स्वशब्देनागन्तुकृतं धातुवैषम्यं निराकरोति। ननु, यदि वातादिजन्या एव सर्वविकारास्तत् किमर्थमन्यथाऽप्युदरादयः प्लीहजत्वादिभिर्निर्दिश्यन्त इत्याह—वातपित्तेत्यादि। स्थानं रसादयो वस्त्यादयश्च, संस्थानम् आकृतिर्लक्षणमिति यावत्, प्रकृतिः कारणम्, एषां विशेषानभिसमीक्ष्य तांस्तानुपदिशन्तीति 'अष्टावुदराणि' इत्येवमाद्युपदिशन्ति। तदात्मकानपीति वातादिजनितानपि। तत्र, स्थानविशेषादुपदेशो यथा–ऊरुस्तम्भरक्तयोनिकामलाप्रभृतयः; संस्थानविशेषात् पिडकागुल्मप्रभृतयः; प्रकृतिविशेषाच्छ्लेष्मप्लीहोदरप्रभृतयः। अन्ये तु व्याख्यानयन्ति–यतस्तानेवेति वातादिजानेवेति व्यपदिशन्ति; तदात्मकानपीति यथोक्ताष्टादिसंख्यायुक्तानपि। यद्यपि प्लीहादिकारणान्तरेण भिन्ना अपि रोगास्तथाऽपि वातादिस्थानजन्यत्वेन तथा वातादिलक्षणयुक्तत्वेन तथा वातादिकारणजातत्वेन वातादिजा एव सर्वविकारा इति वाक्यार्थः॥ ५॥

भवतश्चात्र—

**स्वधातुवैषम्यनिमित्तजा ये**
**विकारसंघा बहवः शरीरे।**
**न ते पृथक् पित्तकफानिलेभ्य**
**आगन्तवस्त्वेव ततो विशिष्टाः॥ ६॥**

अमुमेवार्थं श्लोकेनाह—स्वधात्वित्यादि। स्वशब्दोऽत्रे वक्ष्यमाणशरीरापेक्षः; तेन शरीरधातुवैषम्यं गृह्यते, मानसं तु प्रतिक्षिप्यते। धातवश्च न स्वरूपेण रोगकारणमिति वैषम्यपदं कृतम्। आगन्तवो हि रोगा अभिघातज्वरादयो धातुवैषम्यजा भवन्ति, अतस्तद्व्युदासार्थं निमित्तपदम्; आगन्तुषु वैषम्यं विद्यमानमपि कारणत्वेन न व्यपदिश्यते, अप्रधानत्वात्; किंत्वागन्तुरेव लगुडादिप्रहारस्तत्र चिकित्साविशेषप्रयोजकः कारणं, निजे तु वैषम्यमेव चिकित्साप्रयोजकम्। निमित्तजा इति च स्वधातुवैषम्यपदस्य कर्मधारयत्वेन, बहुव्रीहिपक्षे त्वनर्थकमेव स्यात्। विकारसंघा इति 'अष्टावुदराणि' इत्यादयः। बहुवचनेनैव बहुत्वे लब्धे पुनः 'बहवः' इति वचनं बहुवचनस्य त्रित्वमात्रेणैव चरि-

१ 'गृह्यन्ते' इति पा०। २ 'सर्वां दिशोऽपि' इति पा०।

१ 'समुत्थानस्थानसंस्थानवेदनावर्णनामप्रभावचिकित्सितप्रकृतिविशेषानभिसमीक्ष्य' इति पा०।

तार्थत्वनिषेधार्थम् । न ते पित्तकफानिलेभ्यः पृथगिति पित्तकफानिला एव ते दूष्यादिविशेषभाज इत्यर्थः । इह पित्तमादौ कृतं छन्दोऽनुरोधात्; किंवा प्राधान्यानियमज्ञापनार्थं कृतम् । अत्र च धातुवैषम्यमात्रं विकारो नोक्तः, तस्य वातादिवैषम्यरूपत्वेन सिद्धत्वादेव; यस्तु धातुवैषम्यविशेषो धातुवैषम्यजातो ज्वरादिरूपः, स इह शिष्यं प्रति विकृतवाताद्यभेदेन प्रतिपाद्यते । तत इति पूर्वोक्तविकारसंघात् । विशिष्टा इति पित्तकफानिलव्यतिरिक्ताः ॥ ६ ॥

**आगन्तुरन्वेति निजं विकारं**
**निजस्तथाऽऽगन्तुमपि प्रवृद्धः ।**
**तत्रानुबन्धं प्रकृतिं च सम्यग्**
**ज्ञात्वा ततः कर्म समारभेत ॥ ७ ॥**

संप्रति भिन्नयोर्निजागन्त्वोः संबन्धमाह—आगन्तुरित्यादि । निजं प्रथमसमुत्पन्नं विकारमागन्तुर्भूतादिजन्यो विकारः अन्वेति अनुगतो भवति, यथा—दोषज एव ज्वरे उन्मादे वा पश्चाद्भूतनिवेशोऽपि भवति; तथाऽऽगन्तुमुत्पन्नमभिघातजं ज्वरं भूतजं चोन्मादं पश्चाद्धेतुमासाद्य निजोऽपि तत्र दोषलक्षणलक्षितो गदो भवति । 'अपि प्रवृद्धः' इति वचनेन आगन्त्ववस्थायामपि निजदोषो वृद्धोऽस्त्येव, परं प्रवृद्धोऽसौ न भवति स्वलक्षणाकर्तृत्वेनेति दर्शयति । अपिशब्देन निजस्य निजेन तथाऽऽगन्तोरप्यागन्तुनाऽनुबन्धः सूच्यते । अत्र निजागन्त्वोरनुबन्धे कार्यमाह—तत्रेत्यादि । अनुबन्धः पश्चात्कालजातः । प्रकृतिः मूलभूतः । सम्यग्ज्ञात्वेति बलवत्त्वाबलवत्त्वादिना; किंवा, अनुबन्धः अप्रधानः, प्रकृतिः अनुबन्ध्यः प्रधानमित्यर्थः । यदुक्तं—"स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यः, अतो विपरीतस्त्वनुबन्धः" ( वि. अ. ६ ) इति ॥ ७ ॥

तत्र श्लोकौ—

**विंशकाश्चैककाश्चैव त्रिकाश्चोक्तास्त्रयस्त्रयः ।**
**द्विकाश्चाष्टौ, चतुष्काश्च दश, द्वादश पञ्चकाः ॥ ८ ॥**
**चत्वारश्चाष्टका वर्गाः, षट्कौ द्वौ, सप्तकास्त्रयः ।**
**अष्टोदरीये रोगाणां रोगाध्याये प्रकाशिताः ॥ ९ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टोदरीयो नामोनविंशोऽध्यायः ॥ १९ ॥**

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां सूत्रस्थाने रोगचतुष्केऽष्टोदरीयो नामोनविंशोऽध्यायः ॥ १९ ॥

---

१ 'अनुकार्यमाह' इति पा० ।

## विंशोऽध्यायः ।

**अथातो महारोगाध्यायं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वं सामान्येन वातादिजन्या गदा उक्ताः, संप्रत्यवशिष्टान् केवलवातादिजन्यानभिधातुं महारोगाध्यायोऽभिधीयते ॥१॥२॥

**चत्वारो रोगा भवन्ति—आगन्तुवातपित्तश्लेष्मनिमित्ताः; तेषां चतुर्णामपि रोगाणां रोगत्वमेकविधं भवति, रुक्सामान्यात्; द्विविधा पुनः प्रकृतिरेषाम्, आगन्तुनिजविभागात्; द्विविधं चैषामधिष्ठानं, मनःशरीरविशेषात्; विकाराः पुनरपरिसंख्येयाः, प्रकृत्यधिष्ठानलिङ्गायतनविकल्पविशेषापरिसंख्येयत्वात् ॥ ३ ॥**

आगन्तोरुक्तस्यापि त्रिशोथीये पुनरिह विशेषेण लक्षणाद्यभिधानार्थमभिधानम् । प्रकृतिरिह स्वभावः । मनःशरीरविशेषादिति आगन्तोरपि मनः शरीरं चाधिष्ठानम्, एवं निजस्यापि; आगन्तुग्रहणेन च मानसोऽपि कामादिर्गृह्यते । एवं चतुर्विधत्वादि प्रतिपाद्य पुनः प्रकारान्तरेणापरिसंख्येयतां रोगाणामाह—विकारा इत्यादि । पुनरिति वक्ष्यमाणप्रकारान्तरेण । प्रकृतिः प्रत्यासन्नं कारणं वातादि, अधिष्ठानं दूष्यं, लिङ्गानि लक्षणानि, आयतनानि बाह्यहेतवो दुष्टाहाराचाराः; एषां विकल्परूपो विशेषो विकल्पविशेषः, तेषामपरिसंख्येयत्वादिति । अत्र दोषाः संसर्गांशांशविकल्पादिभिरसंख्येयाः, दूष्यास्तु शरीरावयवा अणुशः परस्परमेलकेन विभज्यमाना असंख्येयाः, लिङ्गानि कृत्स्नविकारगतान्यसंख्येयान्येव, आविष्कृतानि तु तन्त्रे कथितानि, हेतवश्चावान्तरविशेषादसंख्येयाः प्रव्यक्ता एव । केचित् पुनः 'एषां विकाराः' इति पठन्ति, स तु पाठो नानुमतस्तावत्; यदि च स्यात्तदा देहमनःप्रत्यवमर्शकम् 'एषाम्' इति पदं, बहुवचनं तु मनःशरीरयोर्बहुत्वविवक्षया ॥ ३ ॥

**मुखानि तु खल्वागन्तोर्नखदशनपतनाभिचाराभिशापाभिषङ्गाभिघातव्यधबन्धनवेष्टनपीडनरज्जुदहनशस्त्राशनिभूतोपसर्गादीनि, निजस्य तु मुखं वातपित्तश्लेष्मणां वैषम्यम् ॥ ४ ॥**

मुखानि कारणानि; यथा "रजस्वलागमनमलक्ष्मीमुखानाम्" ( सू. अ. २५ ) इति ॥ ४ ॥

**द्वयोस्तु खल्वागन्तुनिजयोः प्रेरणमसात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति ॥ ५ ॥**

---

१ 'महत्त्वं चास्य पूर्वाध्यायापेक्षया, न तु महायाससाध्यानां रोगाणामभिधायकोऽध्यायो महारोगाध्यायः' इति शिवदाससेनः । २ 'मनःशरीरभेदात्' इति पा० । ३ 'प्रकृत्यधिष्ठानलिङ्गायतनवेदनाविकल्पानामपरिसंख्येयत्वात्' इति पा० । ४ 'मनःशरीरभेदादिति' इति पा० । ५ 'पुनःशब्दः पूर्वोक्तभेदापेक्षया' इति शिवदाससेनः ।

प्रेरणमिति कारणम्, अनेकार्थत्वाद्धातूनाम् ॥ ५ ॥

**सर्वेऽपि तु खल्वेतेऽभिप्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति, न चान्योन्येन सह सन्देहमापद्यन्ते ॥ ६ ॥**

अनुबध्नन्ति अनुगच्छन्ति । न सन्देहमापद्यन्त इति न सन्देहविषयतामापद्यन्ते; मिश्रीभूता अपि प्रतिस्वं भिन्नैर्लक्षणैर्भेदेन ज्ञायन्त इत्यर्थः ॥ ६ ॥

**आगन्तुर्हि व्यथापूर्वं समुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति; निजे तु वातपित्तश्लेष्माणः पूर्वं वैषम्यमापद्यन्ते जघन्यं व्यथामभिनिर्वर्तयन्ति ॥ ७ ॥**

आगन्तुनिजयोर्भेदकं लक्षणमाह—आगन्तुर्हीत्यादि । आगन्तुरुत्पन्नः सन्, व्यथापूर्वमिति पीडां प्रथमं कृत्वा, पश्चाद्दोषाणां वैषम्यमिति दोषवैषम्यलक्षणमुक्तं; स्वलक्षणकारकं तु वैषम्यमागन्तोरादितःप्रभृति विद्यमानमप्यकिंचित्करमिति भावः ॥७॥

**तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभाग उपदेक्ष्यते; तद्यथा—वस्तिः पुरीषाधानं कटिः सक्थिनी पादावस्थीनि पक्वाशयश्च वातस्थानानि, तत्रापि पक्वाशयो विशेषेण वातस्थानं; स्वेदो रसो लसीका रुधिरमामाशयश्च पित्तस्थानानि, तत्राप्यामाशयो विशेषेण पित्तस्थानम्; उरः शिरो ग्रीवा पर्वाण्यामाशयो मेदश्च श्लेष्मस्थानानि, तत्राप्युरो विशेषेण श्लेष्मस्थानम् ॥ ८ ॥**

आगन्तुनिजयोर्भेदकं लक्षणमभिधाय निजविकारकराणां वातादीनां भेदज्ञानार्थमाह—तेषामित्यादि । पुरीषाधानं पक्वाशयः । यद्यपि प्राणादिभेदभिन्नस्य वायोः पृथगेव स्थानानि वक्ष्यति; यथा—"स्थानं प्राणस्य शीर्षोरःकैण्ठजिह्वास्यनासिकाः" ( चि. अ. २८ ) इत्यादि; तथाऽपीदं वैशेषिकं स्थानं ज्ञेयं, यतोऽत्र प्रायो वातविकारा भवन्ति, भूताश्च दुर्जयाः; अत्र च विजिते वाते सर्ववातविकारावजय इति । लसीका उदकस्य पिच्छाभागः । पित्तस्थानेषु आमाशय इति आमाशयाधोभागः, श्लेष्मस्थानेष्वामाशय आमाशयोर्ध्वभागः ॥ ८ ॥

**सर्वशरीरचरास्तु वातपित्तश्लेष्माणः सर्वस्मिञ्छरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति—प्रकृतिभूताः शुभान्युपचयबलवर्णप्रसादादीनि, अशुभानि पुनर्विकृतिमापन्ना विकारसंज्ञकानि ॥ ९ ॥**

**तत्र विकाराः सामान्यजा, नानात्मजाश्च । तत्र सामान्यजाः पूर्वमष्टोदरीये व्याख्याताः, नानात्मजांस्त्विहाध्यायेऽनुव्याख्यास्यामः । तद्यथा—अशीतिर्वातविकाराः, चत्वारिंशत् पित्तविकाराः, विंशतिः श्लेष्मविकाराः ॥ १० ॥**

**तत्रादौ वातविकाराननुव्याख्यास्यामः । तद्यथा—नखभेदश्च, विपादिका च, पादशूलं च, पादभ्रंशश्च, पादसुप्तता च, वातखुड्डता च, गुल्फग्रहश्च, पिण्डिकोद्वेष्टनं च, गृध्रसी च, जानुभेदश्च, जानुविश्लेषश्च, ऊरुस्तम्भश्च, ऊरुसादश्च, पाङ्गुल्यं च, गुदभ्रंशश्च, गुदार्तिश्च, वृषणाक्षेपश्च, शेफस्तम्भश्च, वङ्क्षणानाहश्च, श्रोणिभेदश्च, विड्भेदश्च, उदावर्तश्च, खञ्जत्वं च, कुब्जत्वं च, वामनत्वं च, त्रिकग्रहश्च, पृष्ठग्रहश्च, पार्श्वावमर्दश्च, उदरावेष्टश्च, हृन्मोहश्च, हृद्द्रवश्च, वक्षउद्धर्षश्च, वक्षउपरोधश्च, वक्षस्तोदश्च, बाहुशोषश्च, ग्रीवास्तम्भश्च, मन्यास्तम्भश्च, कण्ठोद्ध्वंसश्च, हनुभेदश्च, ओष्ठभेदश्च, अक्षिभेदश्च, दन्तभेदश्च, दन्तशैथिल्यं च, मूकत्वं च, वाक्सङ्गश्च, कषायास्यता च, मुखशोषश्च, अरसज्ञता च, घ्राणनाशश्च, कर्णशूलं च, अशब्दश्रवणं च, उच्चैःश्रुतिश्च, बाधिर्यं च, वर्त्मस्तम्भश्च, वर्त्मसङ्कोचश्च, तिमिरं च, अक्षिशूलं च, अक्षिव्युदासश्च, भ्रूव्युदासश्च, शङ्खभेदश्च, ललाटभेदश्च, शिरोरुक् च, केशभूमिस्फुटनं च, अर्दितं च, एकाङ्गरोगश्च, सर्वाङ्गरोगश्च, पक्षवधश्च, आक्षेपकश्च, दण्डकश्च, तमश्च, भ्रमश्च, वेपथुश्च, जृम्भा च, हिक्का च, विषादश्च, अतिप्रलापश्च, रौक्ष्यं च, पारुष्यं च, श्यावारुणावभासता च, अस्वप्नश्च, अनवस्थितचित्तत्वं च; इत्यशीतिर्वातविकारा वातविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ ११ ॥**

सामान्यजा इति वातादिभिः प्रत्येकं मिलितैश्च ये जन्यन्ते । नानात्मजा इति ये वातादिभिर्दोषान्तरासंपृक्तैर्जन्यन्ते । विपादिका पाणिपादस्फुटनम् । पादभ्रंशः पादस्यारोपविषयदेशादन्यत्र पतनम् । सुप्तिः पादयोर्निष्क्रियत्वं स्पर्शाज्ञता वा । वातखुड्डता 'वातुल' इति प्रसिद्धः । गृध्रसीशब्देन गृध्रसीशूलं गृह्यते । ऊरुस्तम्भेन च ऊरुस्तम्भनमात्रं वातजन्यत्वेन गृह्यते ।

१ 'एते चागन्तवो दोषजाश्च परस्परं संसृज्यन्त इत्याह—सर्वेऽपीत्यादि । अनुबध्नन्ति अनुगच्छन्ति । ननु, यदा येषां परस्परसंसर्गस्तदा संसृष्टयोः क्षीरनीरयोरिव भेदेन ज्ञानं न स्यात्, तथा च तद्विशेषज्ञाननिबन्धनचिकित्साविशेषोऽपि न संभवतीत्याह—न चेत्यादि' इति शिवदाससेनः । २ 'स्थानविभागमनुव्याख्यास्यामः' इति पा० । ३ 'कर्णजिह्वास्यनासिकाः' इति पा० ।

१ 'तत्रादित एव' इति पा० । २ 'वृषणोत्क्षेपश्च' इति पा० । ३ 'कुब्जत्वं' इति पाठः केषुचित्पुस्तकेषु नोपलभ्यते । ४ 'उन्मादश्च' इति पा० । ५ 'वक्षोघर्षश्च' इति पा० । ६ 'हनुस्तम्भ' इति अष्टाङ्गसंग्रहे पाठः । ७ 'तालुभेद' इति अष्टाङ्गसंग्रहे पाठः । ८ 'मूकत्वं च, गद्गदत्वं च' इति पा० । ९ 'उच्चैः श्रवणं' इति पा० । १० 'पक्षवधश्च' इति केषुचित्पुस्तकेषु नोपलभ्यते । ११ 'श्रम' इति पा० । १२ 'ग्लानिः' इति अष्टाङ्गसंग्रहे पा० ।

एवं कर्णाक्षिशूलयोः शूलमात्रम्। वातजातीसारेऽपि विड्भेदो वातजः। एवं च न गृध्रस्यादीनां सामान्यजत्वं, यथोक्तांशस्य केवलवातजन्यत्वात्। उदरस्यावेष्टनमिवोदरावेष्टः। अशब्दश्रवणं शब्दाभावेऽपि शब्दश्रवणम्। उच्चैःश्रुतिः तारस्वरमात्रश्रवणम्, अल्पशब्दस्य तु सर्वथैवाश्रवणम्। बाधिर्यं शब्दमात्रस्यैवाश्रवणम्। तिमिरं तु वातजमेव, दोषान्तरसंबन्धस्तत्रानुबन्धरूपः। एकाङ्गरोगः सर्वाङ्गरोगश्चेति ज्वरादिषु उष्णत्वशीतत्वादीनां कदाचिदेकाङ्गव्यापकत्वेनैकाङ्गरोगः, तेषामेव कदाचित् सर्वाङ्गव्यापकत्वेन सर्वाङ्गरोगः; दोषान्तरसंबन्धेऽपि व्याप्यव्याप्ती वातकृते एव, "वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत्" इति वचनात्। तथा भ्रमश्च वातिकः स्मृतिमोहरूपः। अत्र कस्यचिदङ्गस्य पादादेः शूलादयोऽभिहिता न हस्तादीनां; तत्र येऽभिहितास्ते प्रधानभूताः प्रायोभावित्वेन, अनुक्तास्तु वातविकाराणामपरिसंख्येयत्वेन ग्राह्याः ॥ ९–११ ॥

**सर्वेष्वपि खल्वेतेषु वातविकारेषूक्तेष्वन्येषु चानुक्तेषु वायोरिदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं, यदुपलभ्य तदवयवं वा विमुक्तसन्देहा वातविकारमेवाध्यवस्यन्ति कुशलाः; तद्यथा—रौक्ष्यं शैत्यं लाघवं वैशद्यं गतिरमूर्तत्वमनवस्थितत्वं चेति वायोरात्मरूपाणि; एवंविधत्वाच्च वायोः कर्मणः स्वलक्षणमिदमस्य भवति तं तं शरीरावयवमाविशतः; तद्यथा—स्रंसभ्रंसव्याससङ्गभेदसादहर्षतर्षकम्पवर्तचालतोदव्यथाचेष्टादीनि, तथा खरपरुषविशदसुषिरारुणवर्णकषायविरसमुखत्वशोषशूलसुप्तिसङ्कोचनस्तम्भनखञ्जतादीनि च वायोः कर्माणि; तैरन्वितं वातविकारमेवाध्यवस्येत् ॥ १२ ॥**

वायोरिदमित्यादौ वायोरिदमात्मरूपं स्वरूपम्। अपरिणामीति सहजसिद्धं नान्योपाधिकृतमित्यर्थः। कर्मणश्चेति विकृतस्य वायोः कर्मणः। स्वलक्षणमिति आत्मीयं लक्षणम्। अत्राप्यपरिणामीति संबध्यते; अपरिणामीति पित्तश्लेष्मसंबन्धनिरपेक्षं, न तु शरीरावयवानपेक्षमिति; यतः ब्रूते–'तं तं शरीरावयवमाविशतः' इति; अत एव च स्रंसादीनां शरीरावयवापेक्षत्वेन न सर्वदा भावः। एवं च पित्तश्लेष्मणोरपि चात्मरूपादि व्याख्येयम्। अमूर्तत्वमिति अदृश्यत्वम्। एवंविधत्वादिति रौक्ष्यादियुक्तत्वाद्वायोरिति संबन्धः। स्रंसः किंचित्स्वस्थानचलनम्, भ्रंशस्तु दूरगतिः। व्यासः विस्तरणम्। हर्षः वायोरनवस्थितत्वेन प्रभावाद्वा क्रियते। वर्तुलीकरणं वर्तः। चालः स्पन्दः। रसवर्णौ वायुना रसवर्णरहितेनापि प्रभावात् क्रियेते ॥ १२ ॥

**तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमैरुपक्रमेत, स्नेहस्वेदास्थापनानुवासननस्तःकर्मभोजनाभ्यङ्गोत्सादनपरिषेकादिभिर्वातहरैर्मात्रां कालं च प्रमाणीकृत्य; तत्रास्थापनानुवासनं तु खलु सर्वत्रोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः, तद्ध्यादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलं छिनत्ति; तत्रावजितेऽपि वाते शरीरान्तर्गता वातविकाराः प्रशान्तिमापद्यन्ते, यथा वनस्पतेर्मूले छिन्ने स्कन्धशाखाप्ररोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वत् ॥ १३ ॥**

प्रस्तावागतत्वेन चिकित्सासूत्रमाह—तं मधुरेत्यादि। आदित एवेति शीघ्रमेव। केवलं वैकारिकमिति सकलविकारकारकम् ॥ १३ ॥

**पित्तविकारांश्चत्वारिंशतमत ऊर्ध्वमनुव्याख्यास्यामः—ओषश्च, प्लोषश्च, दाहश्च, दवथुश्च, धूमकश्च, अम्लकश्च, विदाहश्च, अन्तर्दाहश्च, अंसदाहश्च, ऊष्माधिक्यं च, अतिस्वेदश्च ( अङ्गस्वेदश्च ), अङ्गगन्धश्च, अङ्गावदरणं च, शोणितक्लेदश्च, मांसक्लेदश्च, त्वग्दाहश्च, (मांसदाहश्च), त्वगवदरणं च, चर्मदलनं च, रक्तकोठश्च, रक्तविस्फोटश्च, रक्तपित्तं च, रक्तमण्डलानि च, हरितत्वं च, हारिद्रत्वं च, नीलिका च, कक्षा(क्ष्या)च, कामला च, तिक्तास्यता च, लोहितगन्धास्यता च, पूतिमुखता च, तृष्णाधिक्यं च, अतृप्तिश्च, आस्यविपाकश्च, गलपाकश्च, अक्षिपाकश्च, गुदपाकश्च, मेढ्रपाकश्च, जीवादानं च, तमःप्रवेशश्च, हरितहारिद्रनेत्रमूत्रवर्चस्त्वं च; इति चत्वारिंशत्पित्तविकाराः पित्तविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ १४ ॥**

**सर्वेष्वपि खल्वेतेषु पित्तविकारेषूक्तेष्वन्येषु चानुक्तेषु पित्तस्येदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं, यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः; तद्यथा—औष्ण्यं तैक्ष्ण्यं द्रवत्वमनतिस्नेहो वर्णश्च शुक्लारुणवर्जो**

---

१ 'एवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति' इति पा०। २ 'ननु वायोरदृश्यत्वेन तत्र रौक्ष्यादयो गुणास्तथा वक्ष्यमाणस्रंसादीनि च कर्माणि प्रत्यक्षेण नोपलभ्यन्ते, तत् कथमेतानि वायोरात्मरूपाणि? इत्यत आह—तं तं शरीरावयवमाविशत इति। एतेन यद्यपि वायोरेते गुणास्तथा एतानि कर्माणि प्रत्यक्षेण नोपलभ्यन्ते तथाऽपि यं यं शरीरावयवमाविशति विकृतो वायुस्तत्र तत्र रौक्ष्यादिकं स्रंसादिकं च दृष्ट्वा वायोरपि तद्गुणकर्मयोगित्वमवधार्यते, तत्तदवयवगतरौक्ष्यादीनां विकृतवायुसंबन्धान्वयव्यतिरेकाधिष्ठानादिति भावः' इति शिवदाससेनः। ३ '°कम्पावमर्द°' इति पा०।

१ 'सकलशरीरविकारकारणं' इति पा०। २ 'अङ्गदाहश्च' इति पा०, "अङ्गदाहश्च" इति केषुचित्पुस्तकेषु न पठ्यते। ३ 'अवयवसदनं' इति अष्टाङ्गसंग्रहे पा०। ४ 'मांसदाहश्च' इति केषुचित्पुस्तकेषु न पठ्यते। ५ 'चर्मावदरणं च' इति पा०। ६ 'जीवादानं जीवनहेतुधातुरूपशोणितनिर्गमः' इति शिवदाससेनः।

गन्धश्च विस्रो रसौ च कट्वम्लौ सरत्वं च पित्तस्यात्मरूपाणि; एवंविधत्वाच्च पित्तस्य कर्मणः स्वलक्षणमिदमस्य भवति तं तं शरीरावयवमाविशतः; तद्यथा–दाहौष्ण्यपाकस्वेदक्लेदकोथकण्डूस्रावरागा यथास्वं च गन्धवर्णरसाभिनिर्वर्तनं पित्तस्य कर्माणि; तैरन्वितं पित्तविकारमेवाध्यवस्येत् ॥ १५ ॥

तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत स्नेहविरेकप्रदेहपरिषेकाभ्यङ्गादिभिः पित्तहरैर्मात्रां कालं च प्रमाणीकृत्य; विरेचनं तु सर्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः; तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलमपकर्षति, तत्रावजिते पित्तेऽपि शरीरान्तर्गताः पित्तविकाराः प्रशान्तिमापद्यन्ते, यथाऽग्नौ व्यपोढे केवलमग्निगृहं शीतीभवति तद्वत् ॥ १६ ॥

ओषः पार्श्वस्थितेनेव वह्निना पीडा । प्लोषः किंचिद्दहनमिव । दाहः सर्वाङ्गदहनमिव । दवथुः 'धकधकिका' इति लोके ख्याता । धूमकः धूमोद्वमनमिव । त्वगवदरणं बाह्यत्वङ्मात्रावदरणं; चर्मावदरणं तु षण्णामपि त्वचां दरणम् । रक्तपित्तं दोषान्तरासंपृक्तं रक्तपित्तं पैत्तिकं ज्ञेयम् । एवं तृष्णायां च तृष्णामात्रम् । कक्षा कक्षदेशगतमांसदारणाः स्फोटाः सुश्रुतक्षुद्ररोगोक्ताः । गन्धो विस्र आमगन्धः । यथास्वमिति आत्मगन्धवर्णरससदृशम् । अग्निमद्गृहमग्निगृहम् ॥ १४–१६ ॥

श्लेष्मविकारांश्च विंशतिमत ऊर्ध्वं व्याख्यास्यामः; तद्यथा—तृप्तिश्च, तन्द्रा च, निद्राधिक्यं च, स्तैमित्यं च, गुरुगात्रता च, आलस्यं च, मुखमाधुर्यं च, मुखस्रावश्च, श्लेष्मोद्गिरणं च, मलस्याधिक्यं च, बैलासकश्च, अपक्तिश्च, हृदयोपलेपश्च, कण्ठोपलेपश्च, धमनीप्रति(वि)चयश्च, गलगण्डश्च, अतिस्थौल्यं च, शीताग्निता च, उदर्दश्च, श्वेतावभासता च, श्वेतमूत्रनेत्रवर्चस्त्वं च; इति विंशतिः श्लेष्मविकाराः श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याता भवन्ति ॥ १७ ॥

सर्वेष्वपि खल्वेतेषु श्लेष्मविकारेषूक्तेष्वन्येषु चानुक्तेषु श्लेष्मण इदमात्मरूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः श्लेष्मविकारमेवाध्यवस्यन्ति कुशलाः; तद्यथा—स्नेहशैत्यशौक्ल्यगौरवमाधुर्यस्थैर्यपैच्छिल्यमात्स्न्र्यानि श्लेष्मण आत्मरूपाणि; एवंविधत्वाच्च श्लेष्मणः कर्मणः स्वलक्षणमिदमस्य भवति तं तं शरीरावयवमाविशतः; तद्यथा–श्वैत्यशैत्यकण्डूस्थैर्यगौरवस्नेहसुप्तिक्लेदोपदेहबन्धमाधुर्यचिरकारित्वानि श्लेष्मणः कर्माणि; तैरन्वितं श्लेष्मविकारमेवाध्यवस्येत् ॥ १८ ॥

तं कटुकतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रमेत स्वेदवमनशिरोविरेचनव्यायामादिभिः श्लेष्महरैर्मात्रां कालं च प्रमाणीकृत्य; वमनं तु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः, तद्ध्यादित एवामाशयमनुप्रविश्योरोगतं केवलं वैकारिकं श्लेष्ममूलमूर्ध्वमुत्क्षिपति, तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते, यथा भिन्ने केदारसेतौ शालियवषष्टिकादीन्यनभिष्यन्द्यमानान्यम्भसा प्रशोषमापद्यन्ते तद्वदिति १९

तृप्तिर्येन तृप्तमिवात्मानं सर्वदा मन्यते । बलासकः बलक्षयः; किंवा श्लेष्मोद्रेकान्मन्दज्वरित्वं, स्थूलाङ्गता वा बलासकः । धमनीप्रतिचयो धमन्युपलेपः । शीताग्निता मन्दाग्निता । मात्स्न्र्यं मसृणता । श्लेष्मकर्मसु सुप्तिर्निष्क्रियत्वेन, वाते तु स्पर्शाज्ञानेन । अत्रामाशयमनुप्रविश्येति वचनेन श्लेष्मस्थानेष्वामाशयस्य प्राधान्यं, पूर्वं तु 'तत्रापि उरो विशेषेण' इति वचनेनोरः प्रधानम्; एवमुभयमपि तुल्यं ज्ञेयम् ॥ १७–१९ ॥

भवन्ति चात्र—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ २० ॥
यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक् ।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥ २१ ॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः ।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥ २२ ॥

संप्रति रोगज्ञानस्य चिकित्सायामुपयोगमाह—रोगमित्यादि । औषधं परीक्षेतेति संबन्धः । औषधपरीक्षा रोगापेक्षिणी, तेन तदनन्तरमेव सा भवतीति भावः । ततः कर्मेति चिकित्साम् । ज्ञानपूर्वमिति कर्मदर्शनजनितज्ञानपूर्वम् २०–२२

तत्र श्लोकाः—

संग्रहः प्रकृतिर्देशो विकारमुखमीरणम् ।
असन्देहोऽनुबन्धश्च रोगाणां संप्रकाशितः ॥ २३ ॥
दोषस्थानानि रोगाणां गणा नानात्मजाश्च ये ।
रूपं पृथक् च दोषाणां कर्म चापरिणामि यत् २४

१ 'एवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति' इति पा० । २ 'बलनाशश्च' इति पा० । ३ 'एवंविधत्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति' इति पा० ।

१ 'धमन्युपलेपेन धमनीनां पुष्टता' इति गङ्गाधरः । 'धमनीनां प्रतिचयः अतिपूरणं' इति योगीन्द्रनाथसेनः । २ 'देशकालविभागज्ञः' इति पा० । ३ 'विकारो मुखमीरणम्' इति पा० ।

पृथक्त्वेन च दोषाणां निर्दिष्टाः समुपक्रमाः।
सम्यङ्महति रोगाणामध्याये तत्त्वदर्शिना ॥ २५ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
महारोगाध्यायो नाम विंशोऽध्यायः ॥ २० ॥
समाप्तो रोगचतुष्कः ॥ ५ ॥

संग्रहे संग्रह इति 'चत्वारो रोगा' इत्यादिसंक्षेपोक्तिः। प्रकृतिरिति 'द्विविधा पुनः' इत्यादिना। देश इति 'द्विविधं चैषामधिष्ठानम्' इत्यादिना। विकाराश्च मुखं च विकारमुखं, तत्र 'विकाराः पुनः' इत्यादिना विकाराः, 'मुखानि' इत्यादिना मुखम्। 'द्वयोस्तु' इत्यादिना ईरणम्। असन्देहः 'न चान्योन्य' इत्यादिना। 'सर्वेषु' इत्यादिना अनुबन्धः। नानात्मजाः सर्वे इति दोषान्तरासंपृक्तदोषजन्या उक्ताः ॥ २३-२५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां सूत्रस्थाने रोगचतुष्के महारोगाध्यायो विंशतितमः ॥ २० ॥

---

## एकविंशोऽध्यायः।

अथातोऽष्टौनिन्दितीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

रोगचतुष्के रोगा उक्ताः, भेषजं च भेषजचतुष्के, रोगभेषजयोस्तु योजना यथा कर्तव्या तदुक्तुं योजनाचतुष्कोऽभिधीयते। सा च योजना रोगेण समं भेषजानां प्रायः शरीरमेवापेक्षत इति शरीरभेदप्रतिपादकोऽष्टौनिन्दितीयोऽभिधीयते ॥ १ ॥ २ ॥

इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति; तद्यथा—अतिदीर्घश्च, अतिह्रस्वश्च, अतिलोमा च, अलोमा च, अतिकृष्णश्च, अतिगौरश्च, अतिस्थूलश्च, अतिकृशश्चेति ॥ ३ ॥

शरीरमधिकृत्येतिवचनेन मनोऽधिकृत्य ये निन्दिता अधार्मिककदर्यादयः, तानिहानुपयुक्तान्निराकरोति; अतिदीर्घादयश्च पडिह निन्दितप्रस्तावादुच्यन्ते; निन्दितत्वं च तेषां लोकविगानादेव। अतिदीर्घश्चेत्यादिचकारः कुब्जादिनिन्दितग्रहणार्थम् ॥ ३ ॥

तत्रातिस्थूलकृशयोर्भूय एवापरे निन्दितविशेषा भवन्ति। अतिस्थूलस्य तावदायुषो ह्रासो जवोपरोधः कृच्छ्रव्यवायता दौर्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः। तदतिस्थौल्यमतिसंपूरणाद्गुरुमधुरशीतस्निग्धोपयोगादव्यायामादव्यवायाद्दिवास्वप्नाद्धर्षनित्यत्वादचिन्तनाद्बीजस्वभावाच्चोपजायते। तस्य ह्यतिमात्रमेदस्विनो मेद एवोपचीयते न तथेतरे धातवः, तस्मादस्यायुषो ह्रासः; शैथिल्यात् सौकुमार्याद्गुरुत्वाच्च मेदसो जवोपरोधः, शुक्राबहुत्वान्मेदसाऽऽवृतमार्गत्वाच्च कृच्छ्रव्यवायता, दौर्बल्यमसमत्वाद्धातूनां, दौर्गन्ध्यं मेदोदोषान्मेदसः स्वभावात् स्वेदनत्वाच्च, मेदसः श्लेष्मसंसर्गाद्विष्यन्दित्वाद्बहुत्वाद्गुरुत्वाद्व्यायामासहत्वाच्च स्वेदाबाधः, तीक्ष्णाग्नित्वात् प्रभूतकोष्ठवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति ॥ ४ ॥

तत्रातिस्थूलकृशयोश्चिकित्सोपयुक्तं विशेषं वक्तुमाह—तत्रेत्यादि। भूय एवेति अतिदीर्घादितुल्यलोकविगानादधिकाः। निन्दिताश्च ते विशेषाश्चेति निन्दितविशेषाः। अतिस्थौल्यस्य हेतुमाह—तदित्यादि। अतिसंपूरणम् अतिभोजनम्। बीजस्वभावादिति स्थूलमातापितृजन्यत्वात्। संप्रति स्थूलस्य साधारणादप्याहाराद्भूरिमेदोजन्माह—तस्य हीत्यादि। मेदस्विन इति हेतुगर्भविशेषणं; तेन यस्मादतिस्थूले शरीरे मेदो देहव्यापकत्वेन लब्धवृत्ति, अतस्तदेव प्रायो वर्धते नान्ये रसादयः, तदभिभूतत्वादित्यर्थः। तस्मादिति विषमधातुत्वात्। मेदोदोषादिति दुष्टं मेदो दुर्गन्धं भवति। स्वभावादिति स्वभावादपि मेद आमगन्धित्वेन दुर्गन्धम्। स्वेदनत्वाच्चेति सति च स्वेदे दुर्गन्धताऽनुभवसिद्धैवेत्यर्थः। श्लेष्मसंसर्गादिभ्यो हेतुभ्यः स्वेदाबाधो ज्ञेयः ॥ ४ ॥

भवन्ति चात्र—

मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः।
चरन् संधुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥
तस्मात् स शीघ्रं जरयत्याहारं चातिकाङ्क्षति।
विकारांश्चाश्नुते घोरान् कांश्चित्कालव्यतिक्रमात् ६
एतावुपद्रवकरौ विशेषादग्निमारुतौ।
एतौ हि दहतः स्थूलं वनदावो वनं यथा ॥ ७ ॥
मेदस्यतीव संवृद्धे सहसैवानिलादयः।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ८

---

१ 'ज्ञानार्थं भिषजां चैव प्रजानां च हितैषिणा' इति पा०। २ 'चातिश्वेतश्चातिकृष्णश्च' इति पा०। ३ 'एषां च निन्दितत्वे वैरूप्यमेव हेतुः। प्रत्येकं चकारकरणमेषां परस्परसांकर्येऽतिशयितनिन्द्यत्वं बोधयति, तेन अतिदीर्घोऽतिह्रस्वो वा पुरुषो यद्यतिलोमादिर्भवति, तदा विशेषान्निन्दितो भवतीत्यर्थः' इति शिवदाससेनः।

१-२ 'जरोपरोधः' इति पा०। ३ 'अतिमात्रं मेदस्विन' इति पा०। ४ 'दुर्गन्धतेत्यर्थः' इति पा०। ५ 'विकारान् दारुणानिति प्रमेहपिडकाज्वरभगन्दरविद्रधिवातरोगाणामन्यतमान्' इति शिवदाससेनः।

मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥
इति मेदस्विनो दोषा हेतवो रूपमेव च।
निर्दिष्टं,

मेदसेत्यादौ वायोरनतिवृद्धत्वेनाग्निसन्धुक्षकत्वं न वैषम्यापादकत्वं, यतोऽतिवृद्धो हि वैषम्यं वह्नेः करोति वायुः। स इति मेदस्वी। कालव्यतिक्रमादिति भोजनकालातिक्रमात्। अतिस्थूललक्षणमाह—मेदोमांसेत्यादि ॥ ५-९ ॥—

वक्ष्यते वाच्यमतिकार्श्ये त्वतः परम् ॥१०॥
सेवा रूक्षान्नपानानां लङ्घनं प्रमिताशनम्।
क्रियातियोगः शोकश्च वेगनिद्राविनिग्रहः ॥ ११ ॥
रूक्षस्योद्वर्तनं स्नानस्याभ्यासः प्रकृतिर्जरा।
विकारानुशयः क्रोधः कुर्वन्त्यतिकृशं नरम् ॥ १२ ॥
व्यायाममतिसौहित्यं क्षुत्पिपासामयौषधम्।
कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥ १३ ॥
प्लीहा कासः क्षयः श्वासो गुल्मोऽर्शांस्युदराणि च।
कृशं प्रायोऽभिधावन्ति रोगाश्च ग्रहणीगताः ॥१४॥
शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मतः ॥ १५ ॥

वाच्यम् अभिधेयं; किंवा वाच्यमिति निन्दितमवद्यमिति यावत्। प्रमितस्य स्तोकस्याशनं प्रमिताशनम्। क्रियातियोगः वमनाद्यतियोगः। प्रकृतिः देहजनकं बीजम्। अनुशयः अनुबन्धः। कृशस्य लक्षणं—शुष्केत्यादि। त्वगस्थिशेष इति 'दृश्यत' इति शेषः। स्थूलपर्वा स्थूलग्रन्थिः ॥ १०-१५ ॥

सततं व्याधितावेतावतिस्थूलकृशौ नरौ।
सततं चोपचर्यौ हि कर्शनैर्बृंहणैरपि ॥ १६ ॥
स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हि तौ।
यद्युभौ व्याधिरागच्छेत् स्थूलमेवातिपीडयेत् ॥१७॥

कर्शनैर्बृंहणैरिति यथासंख्यम्। वरमिति मनागिष्टम्। स्थूलमेवातिपीडयेदिति स्थूलस्य दुरुपक्रमत्वात्। यतः स्थूलस्य संतर्पणमतिस्थौल्यकरम्, अपतर्पणं चायं प्रवृद्धाग्नित्वान्न सोढुं क्षमः; दुर्बले तु संतर्पणं योग्यमेवेति भावः ॥ १६ ॥ १७ ॥

सममांसप्रमाणस्तु समसंहननो नरः।
दृढेन्द्रियो विकाराणां न बलेनाभिभूयते ॥ १८ ॥
क्षुत्पिपासातपसहः शीतव्यायामसंसहः।
समपक्ता समजरः सममांसचयो मतः ॥ १९ ॥

संप्रति प्रशस्तपुरुषमाह—समेत्यादि। मांसशब्देनेहोपचयो विवक्षितः, तेन समसुपचयस्य प्रमाणं यस्य स तथा। संहननं मेलकः। अपरानपि सममांसप्रमाणगुणानाह—क्षुदित्यादि ॥ १८ ॥ १९ ॥

गुरु चातर्पणं चेष्टं स्थूलानां कर्शनं प्रति।
कृशानां बृंहणार्थं च लघु संतर्पणं च यत् ॥ २० ॥

एवं स्थूलकृशौ प्रतिपाद्य तयोर्योजनीयं भेषजमाह—गुर्वित्यादि। गुरु चातर्पणं च यथा—मधु; एतद्धि गुरुत्वाद्वृद्धमग्निं यापयति, अतर्पणत्वाच्च मेदो हन्ति। एवं प्रशातिकाप्रभृतीनामतर्पणानां संस्कारादिना गुरुत्वं कृत्वा भोजनं देयम्। कृशानां तु लघु तर्पणं च देयं; तद्धि लाघवादग्निवृद्धिकरं संतर्पणत्वाच्च पुष्टिकृत्। एतच्च द्वितयमप्यमीष्टतमत्वेनोक्तं; तेन, मेदस्विनो यल्लघु चातर्पणं प्रशातिकाप्रियङ्ग्वादि तच्च कर्तव्यं; तथा कृशस्यापि नवान्नादि गुर्वपि संतर्पणं कर्तव्यं; परं लाघवं गौरवं च तत्र संस्कारादिना प्रतिकर्तव्यम् ॥ २० ॥

वातघ्नान्यन्नपानानि श्लेष्ममेदोहराणि च।
रूक्षोष्णा वस्तयस्तीक्ष्णा रूक्षाण्युद्वर्तनानि च ॥२१॥
गुडूचीभद्रमुस्तानां प्रयोगस्त्रैफलस्तथा।
तक्रारिष्टप्रयोगश्च प्रयोगो माक्षिकस्य च ॥ २२ ॥
विडङ्गं नागरं क्षारः काललोहरजो मधु।
यवामलकचूर्णं च प्रयोगः श्रेष्ठ उच्यते ॥ २३ ॥
बिल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः।
शिलाजतुप्रयोगश्च साग्निमन्थरसः परः २४ ॥
प्रशातिका प्रियङ्गुश्च श्यामाका यवका यवाः।
जूर्णाह्वाः कोद्रवा मुद्गाः कुलत्थाश्चक्रमुद्गकाः ॥२५॥
आढकीनां च बीजानि पटोलामलकैः सह।
भोजनार्थं प्रयोज्यानि पानं चानु मधूदकम् ॥ २६ ॥
अरिष्टांश्चानुपानार्थे मेदोमांसकफापहान्।
अतिस्थौल्यविनाशाय संविभज्य प्रयोजयेत् ॥ २७ ॥
प्रजागरं व्यवायं च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणाभिप्रवर्धयेत् ॥२८॥

माक्षिकस्येति मधुनः; न च मधुनो वृष्यप्रयोगेषु दृष्टत्वाद् बृंहणत्वं वाच्यं, यतो योगवाहि मधु यदा वृष्येण युज्यते तदा वृष्यत्वं करोति, लेखनयुक्तं तु लेखनकरं, तथा स्वरूपेणापि रूक्षादिगुणयोगात् कर्शनं; वचनं हि—"नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु (सु. सू. अ. ४५) इति"। विडङ्गादिप्रयोगो गौरवनिरपेक्ष एवातिस्थौल्यहरः, प्रभावात्। प्रशातिका 'उडिका' इति प्रसिद्धा। यवकाः स्वल्पयवाः। चक्रमुद्गकः 'ऋषिमुद्गक' इति प्रसिद्धः। आढकी तुवरी ॥ २१-२८ ॥

१ 'अयथोपचयोत्साह इति शरीरोपचयानुरूपबलरहित इत्यर्थः' इति शिवदाससेनः। २ '०महौषधम्' इति पा०। ३ 'अभिबाधन्ते' इति पा०। ४ 'समोपकरणाविति समस्पुकरणं चिकित्साविधानं ययोस्तौ, तथाच चिकित्स्यत्वेन तुल्यावपीत्यर्थः' इति शिवदाससेनः। ५ 'दृढेन्द्रियत्वाद्व्याधीनां' इति पा०।

१ 'समकुष्ठकाः' इति पा०। २ 'अलमं च' इति पा०।

स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः ।
चिन्ताव्यवायव्यायामविरामः प्रियदर्शनम् ॥ २९ ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः ।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च॥३०॥
इक्षवः शालयो माषा गोधूमा गुडवैकृतम् ।
वस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्वदा ॥ ३१ ॥
स्निग्धमुद्वर्तनं स्नानं गन्धमाल्यनिषेवणम् ।
शुक्लं वासो यथाकालं दोषाणामवसेचनम् ॥ ३२ ॥
रसायनानां वृष्याणां योगानामुपसेवनम् ।
हत्वाऽतिकार्श्यमाधत्ते नृणामुपचयं परम् ॥ ३३ ॥
अचिन्तनाच्च कार्याणां ध्रुवं संतर्पणेन च ।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ ३४ ॥

कार्श्यचिकित्सामाह—स्वप्न इत्यादि । शमः शान्तिः । ननु नवान्नादीनां गुरूणां संस्कारादिना गौरवं प्रतिकर्तव्यमग्निमान्द्यभयात्, तत् किमिति लघून्येव रक्तशाल्यादीनि तत्र न दीयन्ते, तानि हि प्रकृत्या लघूनि तर्पणानि च मधुरयोगात् । न, उभयसाध्यभिप्रेतत्वात्; प्रकृतिलघु च तर्पणं रक्तशाल्यादि, संस्कारादिलघु च नवान्नादि संतर्पणकरमिति । एवं पूर्वोक्तप्रशातिकादावप्यनुसर्तव्यम् । अचिन्तनाच्चेत्यादिना प्रकृष्टं बृंहणकारणमुच्यते । स्वप्नप्रसङ्गो नित्यं स्वप्नमतिमात्रं च ॥२९-३४॥

यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः[1] ।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ॥ ३५ ॥

संप्रति प्रस्तावागतं स्थौल्यकार्श्यचिकित्साप्रधानभूतं स्वप्नं निद्रारूपं सर्वतो निरूपयति—यदा त्वित्यादि । मनसीति अन्तःकरणे; किंवा मनोयुक्त आत्मा मन इत्युच्यते, तस्मिन् क्लान्त इति निष्क्रिये । कर्मात्मान इति इन्द्रियाणि । क्लमान्विताः क्रियारहिताः । विषयेभ्यः रूपादिभ्यः । मनसोऽप्रवृत्त्येन्द्रियाण्यपि न प्रवर्तन्त इति भावः । तदा स्वपितीति स्वप्नगुणयुक्तो भवति; स्वप्नश्च निरिन्द्रियप्रदेशे मनोवस्थानम् । किंवा कर्मात्मान इति संसार्यात्मानः । मनसि क्लान्ते आत्मानः क्लान्ता भवन्ति, मनोधीनप्रवृत्तित्वादात्मनां; ततश्च मनोनिवृत्त्या आत्मानोऽपि न विषयान् गृह्णन्ति, इन्द्रियाणि चात्मनोऽप्रवृत्त्यैव न प्रवर्तन्ते ॥ ३५ ॥

निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ ३६ ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी पराकुर्यात् कालरात्रिरिवापरा[2] ॥ ३७ ॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा ।
पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता ॥ ३८ ॥

[1] 'क्लमं गताः' इति पा० । [2] 'निराकुर्यात् कालरात्रिरिवागता', इति पा० ।

संप्रति विधिना सेवितायाः निद्राया गुणमविधिना च दोषमाह—निद्रायत्तमित्यादिना न चेत्यन्तेन । अत्र च सुखादि विधिसेवितनिद्राफलं, दुःखादि त्वविधिनिद्राफलम् । एतदेव विभजते—अकाल इत्यादि । अकाल इति दिनादौ निद्रां प्रति निषिद्धे काले; अनेन च मिथ्यायोगो निद्राया उक्तः । कालरात्रिः कालोषा । सत्या बुद्धिः तत्त्वज्ञानम् ॥ ३६-३८ ॥

गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्शिताः ।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाऽबलाः ३९
तृष्णातीसारशूलार्ताः श्वासिनो हिक्किनः कृशाः ।
पतिताभिहतोन्मत्ताः क्लान्ता यानप्रजागरैः ॥ ४० ॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये ।
सर्व एते दिवास्वप्नं सेवेरन् सार्वकालिकम् ॥ ४१ ॥
धातुसाम्यं तथा ह्येषां बलं चाप्युपजायते ।
श्लेष्मा पुष्णाति चाङ्गानि स्थैर्यं भवति चायुषः ॥४२॥
ग्रीष्मे त्वादानरूक्षाणां वर्धमाने च मारुते ।
रात्रीणां चातिसंक्षेपाद्दिवास्वप्नः प्रशस्यते ॥ ४३ ॥

संप्रति दिनेऽपि यैर्निद्रा सेव्या तानाह—गीतेत्यादि । इह गीतकर्शितानां दिवास्वप्नाद्धातुपुष्टौ सत्यामारोग्यम् । अतीसारादिषु च प्रभावाद्दिवाऽपि निद्रा हिता । अजीर्णिनस्त्वजीर्णपाकार्थं दिवानिद्रा; निद्रा हि स्रोतोऽवरोधेनाग्निबलं कृत्वा शीघ्रमाहारं पचति । दिवास्वप्नसात्म्यानां सहसा तत्परित्यागे दोष एव स्यात् । रात्रौ जागरितानां च तज्जनितवातक्षोभशमार्थं दिवास्वप्नः, स च क्षारपाणिवचनेन कर्तव्यः; यदुक्तं—"यावत्कालं न सुप्तः स्याद्रात्रौ स्वप्नाद्यथोचितात् । ततोऽर्धमात्रं तत्कालं दिवास्वप्नो विधीयते" इति; अयं च दिवास्वप्नोऽभुक्तवतामेव; यदुक्तं हारीते—"भुक्त्वा स्वप्नं न सेवेत सुस्थोऽप्यसुखितो भवेत्" इति; अन्यत्राप्युक्तं व्यायामादिषु दिवास्वप्नविधाने—"नराञ्जिरशनान् कामं दिवा स्वापयेत्" इति । सार्वकालिकमिति ग्रीष्मं परित्यज्यापि । 'रात्रीणां चातिसंक्षेपादिति अनेनाल्पनिद्रत्वं च सूचयति ॥ ३९-४३ ॥

ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात् प्रकुप्यतः ।
श्लेष्मपित्ते दिवास्वप्नस्तस्मात्तेषु न शस्यते ॥ ४४ ॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः ।
दूषीविषार्ताश्च दिवा न शयीरन् कदाचन ॥ ४५ ॥
हलीमकः शिरःशूलं स्तैमित्यं गुरुगात्रता ।
अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च ॥ ४६ ॥
शोफारोचकहृल्लासपीनसार्धावभेदकाः ।
कोठारुःपिडकाः कण्डूस्तन्द्रा कासो गलामयाः ४७
स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः ।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्त(र्ध)नम्[1] ॥ ४८ ॥

[1] 'स्रोतोवबोधेन' इति पा० ।

भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात्।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् सुखं बुधः ४९

न शयीरन् कदाचनेतिवचनाद्ग्रीष्मेऽपि दिवास्वप्नं मेदस्विप्रभृतीनां निषेधति। गीतकर्पणादौ तु बलाबलं निरूप्य दिवास्वप्नप्रवृत्तिर्वा निवृत्तिर्वा विधेया। विषवेगप्रवर्तनमिति दूषीविषार्तानां बोद्धव्यम्। स्वप्यात् सुखमिति सुखं यथा भवति तथा स्वप्यात्; तच्चाहितस्वप्नपरित्यागेन हितस्वप्नसेवया च ॥ ४४-४९ ॥

रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५० ॥

रात्रावित्यादिना जागरणस्य स्वप्नस्य च रूक्षत्वं स्निग्धत्वं च तत्कार्यकर्तृत्वादुपचर्यते। किंच जागरणं रात्रौ दिने वा रूक्षमेव; परं दिवा जागरणं न विरूक्षणं शरीरे करोति रात्रिस्वप्नप्रस्निग्धत्वात्; रात्रौ जागरणं तु रौक्ष्यं करोति, तेन तद्रूक्षमुच्यते; एवं दिवास्वप्नेऽपि वाच्यम्। स्वप्नप्रसङ्गेन स्वप्नभेदगुणमाह—अरूक्षमित्यादि। अनभिष्यन्दि अस्निग्धमित्यर्थः। आसीनप्रचलायितम् उपविष्टस्य किंचिन्निद्रासेवनं; यदाहुर्जनाः प्रधानं विहारेषु ॥ ५० ॥

देहवृत्तौ यथाऽऽहारस्तथा स्वप्नः सुखो मतः।
स्वप्नाहारसमुत्थे च स्थौल्यकार्श्ये विशेषतः ॥ ५१ ॥

स्वप्नप्राधान्ये हेतुमाह—देहवृत्तावित्यादि। सुख इति सुखहेतुः ॥ ५१ ॥

अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मनःसुखम् ॥ ५२ ॥
मनसोऽनुगुणा गन्धाः शब्दाः संवाहनानि च।
चक्षुषोस्तर्पणं लेपः शिरसो वदनस्य च ॥ ५३ ॥
स्वास्तीर्णं शयनं वेश्म सुखं कालस्तथोचितः।
आनयन्त्यचिरान्निद्रां प्रनष्टा या निमित्ततः ॥ ५४ ॥

स्वप्नजनकं हेतुमाह—अभ्यङ्गेत्यादि। कालस्तथोचित इति यस्मिन् काले निद्रा पुरुषेणाभ्यस्ता स कालस्तस्योचितः। निमित्ततः प्रनष्टेतिवचनमरिष्टजनितनिद्राप्रतिषेधार्थम्; अरिष्टं ह्यनिमित्तमुच्यते शास्त्रे ॥ ५२—५४ ॥

कायस्य शिरसश्चैव विरेकश्छर्दनं भयम्।
चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम् ५५
उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥ ५६ ॥
एत एव च विज्ञेया निद्रानाशस्य हेतवः।
कार्यं कालो विकारश्च प्रकृतिर्वायुरेव च ॥ ५७ ॥

अत्र निद्राप्रतिषेधहेतुमाह—कायस्येत्यादि। सत्त्वौदार्यं सत्त्वगुणभूरित्वम्। तमोजयः तमोगुणजयः, स च योगाभ्यासादिना भवति। एत एव चेति स्वस्थे क्रियमाणा इति बोद्धव्यं; निद्रातिप्रसङ्गे तु सति क्रियमाणा अतिप्रसङ्गनिषेधका भवन्ति। अपरानपि निद्रानाशहेतूनाह—कार्यमित्यादि। कार्यमिति कार्यासक्तो न निद्रां याति। काल इति वार्धक्यं, वृद्धा हि स्वभावत एव जागरूका भवन्ति। विकारः व्याधिः शूलादिः। प्रकृतिः स्वभावः, स्वभावादेव केचिदनिद्रा भवन्ति। विकारग्रहणेनैव वाते लब्धे पुनर्वातग्रहणं विशेषेण वायोर्निद्रापहारकत्वप्रतिपादनार्थम् ॥ ५५—५७ ॥

तमोभवा श्लेष्मसमुद्भवा च
मनःशरीरश्रमसंभवा च।
आगन्तुकी व्याध्यनुवर्तिनी च
रात्रिस्वभावप्रभवा च निद्रा ॥ ५८ ॥

निद्राविशेषानाह—तमोभवेत्यादि। तमोभवा इति तमोगुणोद्रेकभवा। मनःशरीरश्रमसंभवा तु निद्रा मनःशरीरयोः श्रमेण क्रियोपरमे सति नेन्द्रियाणि न च मनो विषयेषु प्रवर्तन्ते, ततश्च निद्रा भवति; श्रमश्चायमनतिवृद्धो भूरिवाताप्रकोपकोऽभिप्रेतः, तेन श्रमस्य वातजनकत्वेन निद्रानाशः किमिति न भवतीति न वाच्यं, दृष्टं चैतयच्छ्रान्तानां निद्रा भवतीति। आगन्तुकी रिष्टभूता। व्याध्यनुवर्तिनी सन्निपातज्वरादिकार्या। रात्रिस्वभावात् प्रभवतीति रात्रिस्वभावप्रभवा। दिवा प्रभवन्ती तु निद्रा तमःप्रभृतिभ्य एव भवति ॥ ५८ ॥

रात्रिस्वभावप्रभवा मता या
तां भूतधात्रीं प्रवदन्ति तज्ज्ञाः।
तमोभवामाहुरघस्य मूलं
शेषाः पुनर्व्याधिषु निर्दिशन्ति ॥ ५९ ॥

आसु निद्रासु प्रशस्तां निन्दितां चाह—रात्रीत्यादि। भूतानि प्राणिनो दधाति पुष्णातीति भूतधात्री, धात्रीव धात्री। अघस्य पापस्य मूलमिति कारणं; तमोगृहीतो हि सदा निद्रात्मकत्वेनानुष्ठेयं सद्वृत्तं न करोति, ततश्चाधर्मोत्पादः। व्याधिष्विति शारीरव्याधिषु; श्लेष्मादयो व्याधय एव, तेषु च भूता निद्रा व्याधिरूपैव। आगन्तुकी चासाध्यव्याधिभवा च स्वयमप्यसाध्यभूता व्याधिरूपा, तेन तां च व्याधिषु मध्ये निर्दिशन्ति; किंवा व्याधिष्वाधारेषु निर्दिशन्तीत्यर्थो ज्ञेयः ॥ ५९ ॥

तत्र श्लोकाः—
निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ।
निन्दिते कारणं दोषास्तयोर्निन्दितभेषजम् ॥ ६० ॥

१ 'क्रोधः कथा धूमो व्यवायो' इति पा०। २ 'निद्रानाशस्येति हितनिद्रानाशस्याप्येत एव सुखेनातिप्रसङ्गेन क्रियमाणा हेतवो भवन्तीत्यर्थः' इति शिवदाससेनः।

१ 'दधातीति भूतधात्री' इति पा०। २ 'महाविद्रालुत्वेन' इति पा०। ३ 'यद्यपि तमोभवाऽपि व्याधिरेव, तथाऽपि सा मानसदोषजन्येति न तस्याः शारीरव्याधिष्वन्तर्भाव इत्यर्थः' इति शिवदाससेनः। ४ 'द्वयमप्यसाध्यव्याधिरूपा' इति पा०।

येभ्यो यदा हिता निद्रा येभ्यश्चाप्यहिता यदा।
अतिनिद्रायानिद्राय भेषजं यद्भवा च सा ॥ ६१ ॥
या या यथाप्रभावा च निद्रा तत् सर्वमत्रिजः।
अष्टौनिन्दितसंख्याते व्याजहार पुनर्वसुः ॥ ६२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टौनिन्दितीयो नामैकविंशतितमोऽध्यायः ॥२१॥

संग्रहे अनिद्रायेति अविद्यमाननिद्राय पुरुषाय। यथाप्रभावा चेति भूतधात्रीत्यादिवर्णितप्रभावा ॥ ६०—६२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां सूत्रस्थाने योजनाचतुष्केऽष्टौनिन्दितीयो नामैकविंशोऽध्यायः।

---

## द्वाविंशोऽध्यायः।

अथातो लङ्घनबृंहणीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

योजनापेक्षिणीयं शरीरमभिधाय लङ्घनादिविषयत्वाद्योजनाया लङ्घनादीन्येव विषयतः स्वरूपतश्च वक्तुं लङ्घनबृंहणीयोऽभिधीयते ॥ १ ॥ २ ॥

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान्।
षडग्निवेशप्रमुखानुक्तवान् परिचोदयन् ॥ ३ ॥
लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा।
स्वेदनं स्तम्भनं चैव जानीते यः स वै भिषक् ॥ ४ ॥
तमुक्तवन्तमात्रेयमग्निवेश उवाच ह ॥ ५ ॥
भगवँल्लङ्घनं किंस्विल्लङ्घनीयाश्च कीदृशाः।
बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम् ॥ ६ ॥
के स्नेहाः स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः।
स्तम्भनं स्तम्भनीयाश्च वक्तुमर्हसि तद्गुरो! ॥ ७ ॥
लङ्घनप्रभृतीनां च षण्णामेषां समासतः।
कृताकृतातिवृत्तानां लक्षणं वक्तुमर्हसि ॥ ८ ॥

परिचोदयन्निति ज्ञानार्थं प्रेरयन्। कृतेत्यादौ कृतं सम्यक्कृतम् ॥ ३—८ ॥

तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।
यत् किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥ ९ ॥
बृहत्त्वं यच्छरीरस्य जनयेत्तच्च बृंहणम्।
रौक्ष्यं खरत्वं वैशद्यं यत् कुर्यात्तद्धि रूक्षणम् ॥ १० ॥
स्नेहनं स्नेहविष्यन्दमार्दवक्लेदकारकम्।
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम् ॥ ११ ॥
स्तम्भनं स्तम्भयति यद्गतिमन्तं चलं ध्रुवम्।
लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं खरं सरम् ॥ १२ ॥
कठिनं चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम्।
गुरु शीतं मृदु स्निग्धं बहलं स्थूलपिच्छिलम् ॥ १३ ॥
प्रायो मन्दं स्थिरं श्लक्ष्णं द्रव्यं बृंहणमुच्यते।
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छिलम् ॥ १४ ॥
प्रायशः कठिनं चैव यद्द्रव्यं तद्धि रूक्षणम्।
द्रवं सूक्ष्मं सरं स्निग्धं पिच्छिलं गुरु शीतलम्।
प्रायो मन्दं मृदु च यद्द्रव्यं तत्स्नेहनं मतम् ॥ १५ ॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षं सूक्ष्मं द्रवं स्थिरम्।
द्रव्यं गुरु च यत् प्रायस्तद्धि स्वेदनमुच्यते ॥ १६ ॥
शीतं मन्दं मृदु श्लक्ष्णं रूक्षं सूक्ष्मं द्रवं स्थिरम्।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम् ॥ १७ ॥

रौक्ष्यमित्यादौ रौक्ष्यमेव प्रधानं बोद्धव्यं, खरत्ववैशद्ये तु तदनुगते। विष्यन्दः विलयनम्। स्वेदकारकं घर्मकारकम्। स्तम्भयतीति निरुणद्धि। चलमिति किंचिद्गतिमत्। गतिमन्तमिति प्रव्यक्तगतिमन्तम्। एतच्चातिसारशोणितस्रुतिविषदाहवेदनादिषु बोद्धव्यं न केवलवाते, गतिमन्तं प्रति स्तम्भकस्य वर्धकत्वात्। गुर्वित्यादौ बहलं घनम्। मन्दमिति चिरकारि। स्थूलं संहतावयवं लड्डुकपिष्टकादि। विरूक्षणद्रव्यकथने यद्गुणमेव लङ्घनद्रव्यमुक्तं तद्गुणमेव विरूक्षणं यद्यप्युक्तं, तथाऽपि रूक्षगुणस्यात्र प्राधान्यं, लङ्घने तु लघुगुणप्राधान्यं ज्ञेयं; तथा लङ्घनमद्रव्येणोपवासेनापि क्रियते, विरूक्षणं तु द्रव्यकार्यतयैव प्राधान्यादुक्तं; तेन लङ्घनविरूक्षणयोर्नैकता। यत्तु वक्ष्यति—"कृतातिकृतलिङ्गं यल्लङ्घिते तद्विरूक्षिते" इति, तत् प्रायोवादात्। विरूक्षणस्य हि मुख्यः स्नेहाभावः साध्यः, लङ्घनस्य तु गौरवाभाव इति स्फुट एव भेदः प्रतिभाति। स्वेदनगुणकथने स्निग्धं रूक्षमिति स्निग्धं वा रूक्षं वेत्यर्थः। एवं सरस्थिरावपि विकल्पेन ज्ञेयौ। पिपासेति पिपासानिग्रहः। मारुतो यद्यपि सोमसंबन्धात्तथालङ्घनं न भवति, तथाऽपि स्वरूपेण लङ्घनमेव। पचन्तमग्निं प्रतिपक्षक्षपणेन बलदानेन च यत् पाचयति तत् पाचनं; तच्च वाय्वग्निगुणभूयिष्ठम् ॥ ९—१७ ॥

---

१ 'अतिनिद्रानिद्रयोश्च' इति पा०। २ 'पूर्वाध्याये तर्पणैर्बृंहणैरित्युक्तम्, अतस्तदभिधायकं लङ्घनबृंहणीयमाह—अथात इत्यादि' इति शिवदाससेनः। ३ 'लङ्घनमित्यादि। रूक्षादीन्यपि लङ्घनबृंहणयोरन्तर्भवन्ति, यदुक्तं "स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत्। भूतानां तच्च द्वैविध्याद्द्वितयं नातिवर्तते" इति ( वा. सू. अ. १४ ); तथाऽप्यत्रेपविशेषज्ञानार्थं तेषामपीह भेदेनोपादानं मन्तव्यम्' इति शिवदाससेनः। ४ 'किं तत्' इति पा०। ५ 'स्नेहनं' इति पा०। ६ 'कृताकृतातिरिक्तानां' इति पा०।

१ 'मार्दवक्लेदकृन्मतम्' इति पा०।

चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ १८ ॥

चतुष्प्रकारा संशुद्धिरिति अनुवासनं वर्जयित्वा, तस्य बृंहणत्वात् ॥ १८ ॥

प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः ।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥ १९ ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः ।
वम्यतीसारहृद्रोगविसूच्यलसकज्वराः ॥ २० ॥
विबन्धगौरवोद्गारहृल्लासारोचकादयः ।
पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत् ॥ २१ ॥
एत एव यथोद्दिष्टा येषामल्पबला गदाः ।
पिपासानिग्रहैस्तेषामुपवासैश्च ताञ्जयेत् ॥ २२ ॥
रोगाञ्जयेन्मध्यबलान् व्यायामातपमारुतैः ।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥ २३ ॥
त्वग्दोषिणां प्रमीढानां स्निग्धाभिष्यन्दिबृंहिणाम् ।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥ २४ ॥

उक्तस्य दशप्रकारलङ्घनस्य भिन्नं विषयमाह—प्रभूतेत्यादि । आदाविति वचनमन्ते च्छर्द्यादीनां निरामाणां संशमनीयत्वात् । रोगानिति लङ्घनीयरोगान् । बलिनामिति पदं बलवतामेव व्यायामादिसेवाभिधानार्थम् । मध्यबलानिति मध्यबलानपि; एतेनाञ्जसा अल्पबला एव गदा व्यायामादिविषया इति भावः । बृंहिणां बृंहणयुक्तानाम् । लङ्घनं शस्तमिति दशविधमपि । शिशिर इति शिशिरगुणयुक्ते हेमन्ते शिशिरे च; अत्र च लङ्घनं बलवत्त्वात् प्राणिनां कार्यम् ॥ १९—२४ ॥

अदिग्धविद्धमक्लिष्टं वयस्थं सात्म्यचारिणाम् ।
मृगमत्स्यविहङ्गानां मांसं बृंहणमुच्यते ॥ २५ ॥
क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः ।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥ २६ ॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्शिताश्च ये ।
तेषां क्रव्यादमांसानां बृंहणा लघवो रसाः ॥ २७ ॥
स्नानमुत्सादनं स्वप्नो मधुराः स्नेहबस्तयः ।
शर्कराक्षीरसर्पींषि सर्वेषां विद्धि बृंहणम् ॥ २८ ॥

अदिग्धविद्धमिति विषाक्तशस्त्राविद्धम् । सात्म्ये देशे चरन्तीति सात्म्यचारिणः । लघव इति संस्कारेण लघवः; किंवा क्रव्यादानां ये लघवः श्येनादयः, तन्मांसरसा इत्यर्थः ॥ २५—२८ ॥

कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः ।
खलिपिण्याकतक्राणां मध्वादीनां च रूक्षणम् ॥ २९ ॥

१ 'दोषान्' इति पा० । २ 'दोषाणां' इति पा० । ३ 'प्रमूढानाम्' इति पा० ।

अभिष्यण्णा महादोषा मर्मस्था व्याधयश्च ये ।
ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः ॥ ३० ॥
स्नेहाः स्नेहयितव्याश्च स्वेदाः स्वेद्याश्च ये नराः ।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तरम् ॥ ३१ ॥

मध्वादीनां च सेवनमिति संबन्धः । खलिः सर्षपखलिः; पिण्याकं तिलखलिः, किंवा पिण्याकशाकम् । प्रभृतिग्रहणादाढ्यवातप्रमेहादयो ग्राह्याः ॥ २९ ॥ ३१ ॥

द्रवं तन्वसरं यावच्छीतीकरणमौषधम् ।
स्वादु तिक्तं कषायं च स्तम्भनं सर्वमेव तत् ॥ ३२ ॥
पित्तक्षाराग्निदग्धा ये वम्यतीसारपीडिताः ।
विषस्वेदातियोगार्ताः स्तम्भनीया निदर्शिताः ॥ ३३ ॥

तनु अबहलम् । सरति गच्छतीति सरं, न सरमसरं, स्थिरमित्यर्थः ॥ ३२—३३ ॥

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ ३४ ॥
स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ ३५ ॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ ३६ ॥
मनसः संभ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि ।
देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥ ३७ ॥

क्षुत्पिपासयोरसहः पीडाकरत्वेनोदयः क्षुत्पिपासासहोदयः, न तु क्षुत्पिपासयोर्युगपदुदयः । अत एवोक्तं सुश्रुते—"सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम्" (सु. उ. तं. अ. ३९) इत्यादि । अन्तरात्मनीति मनसि । मनसः संभ्रमो भ्रान्तिरेव । ऊर्ध्वे काये वात ऊर्ध्ववातः ॥ ३४—३७ ॥

बलं पुष्ट्युपलम्भश्च कार्श्यदोषविवर्जनम् ।
लक्षणं बृंहिते स्थौल्यमति चात्यर्थबृंहिते ॥ ३८ ॥
कृतातिकृतलिङ्गं यल्लङ्घिते तद्धि रूक्षिते ।

कार्श्यदोषविवर्जनमिति कार्श्ये ये दोषाः शीतोष्णासहत्वादयः, तेषां वर्जनम् ॥ ३८ ॥—

१ 'स्तम्भनीयास्तथाविधाः' इति पा० । २ 'क्षुत्पिपासयोरसहः पीडाकरत्वेनोदयः क्षुत्पिपासासहोदयः, न क्षुत्पिपासयोर्युगपदुदय इति, सुश्रुते—"सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम्" इत्युक्तत्वादिति चक्रः । किंतु, "क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता । व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते" (सू. अ. १४) इति वाग्भटवचनाद्युगपदुदय इत्यर्थोऽपि प्रमाणसिद्ध एव' इति शिवदाससेनः । ३ 'ऊर्ध्वकाये वात ऊर्ध्ववातो हिक्काश्वासकर्णस्वनजृम्भादिः; न पुनरुद्गारविशेषः, तस्यावरोधककफजन्यत्वात्; प्रकृते तु लङ्घनेन कफसंक्षयात्, स च कफकोपात्; यदुक्तं "अधःप्रतिहतो वायुः श्लेष्मणा कुपितेन च । करोति नित्यमुद्गारमूर्ध्ववातः स उच्यते" इति शिवदाससेनः । ४ 'तद्विरूक्षिते' इति पा० ।

 

स्तम्भितः स्याद्बले लब्धे यथोक्तैश्चामयैर्जितैः॥ ३९॥
श्यावता स्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः।
हृद्वर्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम्॥ ४०॥

बले लब्धे इति बलवान् यदा पुरुषो भवति। यथोक्तैरिति "पित्तक्षाराग्निदग्धा ये" इत्याद्यभिधेयैः। उद्वेग ऊर्ध्ववातवेगः; किंवा भैषज्यानभिलाषः॥ ३९॥ ४०॥

लक्षणं चाकृतानां स्यात् षण्णामेषां समासतः।
तदौषधानां धातूनामशमो वृद्धिरेव च॥ ४१॥
इति षट् सर्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः।
साध्यानां साधने सिद्धा मात्राकालानुरोधिनः॥४२॥

तदौषधानामिति लङ्घनादिसाध्यानाम्। वृद्धिरेव चेति स्तोकमात्रकृतलङ्घनादिक्रियया दोषक्षोभमात्रस्य कृतत्वात्। धातूनामिति दोषाणां, "दोषा अपि धातुशब्दं लभन्ते" इति वचनात्॥ ४१॥ ४२॥

भवति चात्र—

दोषाणां बहुसंसर्गात् सङ्कीर्यन्ते ह्युपक्रमाः।
षट्त्वं तु नातिवर्तन्ते त्रित्वं वातादयो यथा॥ ४३॥

संप्रत्युक्तलङ्घनाद्युपक्रमाणां विकारापेक्षया संसर्गमाह—दोषाणामित्यादि। दोषाणां यस्मात् संसर्गा बहवः, तस्मात्तत्साधनार्थमुपक्रमा अपि सङ्कीर्यन्ते मिश्रतां यान्ति। यथा—क्वचिल्लङ्घनस्वेदने, क्वचिद्बृंहणस्नेहने, एवमादि। षट्त्वं तु नातिवर्तन्त इति संसृष्टा अपि लङ्घनादिस्वरूपं न जहति; न लङ्घनादयः परस्परयुक्ता मधुसर्पिःसंयोगवत् प्रकृतिगुणानपेक्षिकार्यान्तरमारभन्त इति भावः। अत्रैव दृष्टान्तमाह—त्रित्वमित्यादि। अयं च दृष्टान्तः संसर्गिसंख्याऽपरित्यागमात्रेकः॥ ४३॥

तत्र श्लोकाः—

इत्यस्मिँल्लङ्घनाध्याये व्याख्याताः षडुपक्रमाः।
यथाप्रश्नं भगवता चिकित्सा यैः प्रवर्तते॥ ४४॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
लङ्घनबृंहणीयो नाम द्वाविंशोऽध्यायः॥ २२॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां सूत्रस्थाने योजनाचतुष्के लङ्घनबृंहणीयो नाम द्वाविंशोऽध्यायः॥ २२॥

---

१ 'रोगाणां' इति पा०। २ 'बृंहणस्वेदने' इति पा०।

## त्रयोविंशोऽध्यायः।

अथातः संतर्पणीयमध्यायं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

व्याख्यातषडुपक्रमाणामेव संतर्पणापतर्पणभेदेन द्विविधानां द्विविधविषये प्रवृत्तिं दर्शयितुं संतर्पणीयोऽभिधीयते॥ १॥ २॥

संतर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः॥ ३॥
गोरसैर्गौडिकैश्चान्नैः पैष्टिकैश्चातिमात्रशः।
चेष्टाद्वेषी दिवास्वप्नशय्यासनसुखे रतः॥ ४॥
रोगास्तस्योपजायन्ते संतर्पणनिमित्तजाः।
प्रमेहपिडकाकोठकण्डूपाण्ड्वामयज्वराः॥ ५॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः।
तन्द्रा क्लैब्यमतिस्थौल्यमालस्यं गुरुगात्रता॥ ६॥
इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः।
शोफाश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्वतः॥ ७॥

संतर्पयति संतर्पणमाचरति। स्निग्धैरित्यादिवचनमस्निग्धादिभिरपि शक्तुप्रभृतिभिस्तृप्तिमात्रकारकत्वेन संतर्पणनिषेधार्थं; भवति हि तृप्तिकारके संतर्पणशब्दप्रयोगः, यथाऽत्रैव संतर्पणप्रयोगे—"शक्तूनां षोडशगुणो भागः संतर्पणं पिबेत्" इति। शय्यासनसुखे रतत्वेनैव चेष्टाद्वेषित्वे लब्धे पुनस्तद्वचनं शय्यासनस्थितस्यापि गीताङ्गचालनादिचेष्टानिषेधार्थम्। आमप्रदोषा विसूचिकादयः। प्रमीलकः सततं प्रध्यानम्॥ ३–७॥

शस्तमुल्लेखनं तत्र विरेको रक्तमोक्षणम्।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च॥ ८॥
सक्षौद्रश्चाभयाप्राशः प्रायो रूक्षान्नसेवनम्।
चूर्णप्रदेहा ये चोक्ताः कण्डूकोठविनाशनाः॥ ९॥
त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम्।
मुस्तं समदनं निम्बं जलेनोत्क्वथितं पिबेत्॥ १०॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम्।
मात्राकालप्रयुक्तेन संतर्पणसमुत्थिताः॥ ११॥
मुस्तमारग्वधः पाठा त्रिफला देवदारु च।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रे त्वक्च वत्सकात्॥ १२॥
रसमेषां यथादोषं प्रातः प्रातः पिबन्नरः।
संतर्पणकृतैः सर्वैर्व्याधिभिः संप्रमुच्यते॥ १३॥

---

१ 'पूर्वाध्याये षडुपक्रमा उक्तास्ते संतर्पणापतर्पणभेदेन द्विविधाः, तदुक्तम्, "उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः। एकः संतर्पणः प्रोक्तो द्वितीयश्चापतर्पणः" (वा. सू. अ. १४) इति। अतस्तेषां द्विविधविषये प्रवृत्तिं दर्शयितुं संतर्पणीयोऽभिधीयते—अथात इत्यादि' इति शिवदाससेनः। २ '०श्चान्यैः' इति पा०।

एभिश्चोद्वर्तनोद्धर्षस्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥ १४ ॥
कुष्ठं गोमेदको हिङ्गु क्रौञ्चास्थि त्र्यूषणं वचा ।
वृषकैले श्वदंष्ट्रा च खराह्वा चाश्मभेदकः ॥ १५ ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहं च पीतमेतद्व्यपोहति ॥ १६ ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः शमम् ॥ १७ ॥
त्र्यूषणं त्रिफला क्षौद्रं क्रिमिघ्नमजमोदकः ।
मन्थोऽयं सक्तवस्तैलं हितो लोहोदकाप्लुतः ॥ १८ ॥
व्योषं विडङ्गं शिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥ १९ ॥
हिङ्गु केबुकमूलानि यवानीधान्यचित्रकान् ।
सौवर्चलमजाजीं च हपुषां चेति चूर्णयेत् ॥ २० ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
सक्तूनां षोडशगुणो भागः संतर्पणं पिबेत् ॥ २१ ॥
प्रयोगादस्य शाम्यन्ति रोगाः संतर्पणोत्थिताः ।
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥ २२ ॥
प्लीहा पाण्ड्वामयः शोफो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः ॥२३॥
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्धते ॥ २४ ॥
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः ।
संतर्पणकृतैर्दोषैः स्थौल्यं मुक्त्वा विमुच्यते ॥ २५ ॥
उक्तं संतर्पणोत्थानामपतर्पणमौषधम् ।

सक्षौद्रश्चाभयाप्राश इति क्षौद्रेण सह हरीतकीप्राशः; किंवा अगस्त्यहरीतक्यादिप्राशः । ये चोक्ता इति आरग्वधीये ( सू. अ. ३ ) । तेनेति क्वाथेन करणभूतेन, अभ्यस्यतोऽभ्यासं कुर्वाणस्य; किंवा तेन क्वाथेन त्रिफलादीन्यभ्यस्यत इति योजना। यथादोषमिति दोषप्रमाणापेक्षया गृहीतमात्रम् । उद्वर्तनमभ्यङ्ग-पूर्वकम्, उद्धर्षस्त्वनभ्यङ्गपूर्वकः । स्नेहोपसंहितैरिति स्नेहसाध-नोपयुक्तैः । गोमेदकः मणिविशेषः । क्रौञ्चः पक्षी, 'कोंच' इति ख्यातः । खराह्वा अजमोदा । लोहोदकाप्लुत इति अगुरूदकाप्लुतः । उदककरणं च षडङ्गजलविधानेन । इह प्रयोगे वक्ष्यमाणव्यो-षाद्युक्तप्रमाणेन साहचर्याच्चूर्णादिमानं ज्ञेयम् । संतर्पणमिति जला-लोडितशक्तुरूपतया, तेन संतर्पणसंज्ञस्याप्यपतर्पणता ज्ञेया । श्वैत्र्यं श्वित्रित्वं; 'श्वैत्यं' इति पाठे श्वेतावभासता ॥ ८–२५ ॥—

वक्ष्यन्ते सौषधाश्चोर्ध्वमपतर्पणजा गदाः ॥ २६ ॥
देहाग्निबलवर्णौजःशुक्रमांसपरिक्षयः ।
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः ॥ २७ ॥
श्रोत्रदौर्बल्यमुन्मादः प्रलापो हृदयव्यथा ।
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम् ॥ २८ ॥
पर्वास्थिसन्धिभेदश्च ये चान्ये वातजा गदाः ।
ऊर्ध्ववातादयः सर्वे जायन्ते तेऽपतर्पणात् ॥ २९ ॥
तेषां संतर्पणं तज्ज्ञैः पुनराख्यातमौषधम् ।
यत्तदात्वे समर्थं स्यादभ्यासे वा तदिष्यते[1] ॥ ३० ॥

ऊर्ध्ववातादय इति पूर्वाध्यायोक्ताः "ऊर्ध्ववातस्तमो हृदि" ( सू. अ. २२ ) इत्यादयः । ऊर्ध्ववातः श्वासादिर्यत्रोर्ध्वं वायु-र्याति; किंवा तन्त्रान्तरोक्तो रोगविशेष एव, यथा—"अधः प्रतिहतो वायुः श्लेष्मणा कुपितेन च । करोत्यनिशमुद्गारमूर्ध्व-वातः स उच्यते" इति ॥ २६–३० ॥

सद्यःक्षीणो हि सद्यो वै तर्पणेनोपचीयते ।
नर्ते संतर्पणाभ्यासाच्चिरक्षीणस्तु पुष्यति ॥ ३१ ॥
देहाग्निदोषभैषज्यमात्राकालानुवर्तिना ।
कार्यमत्वरमाणेन भेषजं चिरदुर्बले ॥ ३२ ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च ।
स्नानानि बस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥ ३३ ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम् ।
तृष्यतामूर्ध्ववातानां वक्ष्यन्ते तर्पणा हिताः ॥ ३४ ॥
शर्करापिप्पलीतैलघृतक्षौद्रैः समांशकैः ।
सक्तुद्विगुणितो वृष्यस्तेषां मन्थः प्रशस्यते ॥ ३५ ॥
सक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम् ।
पिबेन्मारुतविण्मूत्रकफपित्तानुलोमनम् ॥ ३६ ॥
फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्तहरं पिबेत् ॥ ३७ ॥
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ ३८ ॥

सद्यस्तर्पणतर्पणाभ्यासयोरुक्तयोर्विषयभेदमाह—सद्य इत्या-दि । अत्वरमाणेनेति वचनेन चिरदुर्बले त्वरया क्रियमाणं तर्पणमग्निवधादिदोषं करोतीति सूचयति । तर्पणास्तर्पणाश्चेति संतर्पणकारका मन्थादयः; तेन, इह संज्ञामात्रेण ये तर्पणा अपतर्पणकारका व्योषादयस्ते न ग्राह्याः; किंतु 'शर्करापिप्पली' इत्यादिग्रन्थवाच्याः । शर्करादिमन्थोक्तमानेनापरेऽपीह मन्था ग्राह्याः ॥ ३१–३८ ॥

१ 'व्योषमित्यादि । अत्र तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसम-त्वं, समुदितचूर्णमपेक्ष्यैव सक्तूनां षोडशगुणो भागः' इति शिव-दाससेनः । २ 'लौल्यं' इति पा० ।

१ 'संतर्पणस्य द्वैविध्यमाह—यत्तदात्व इत्यादि । तदात्वे इति सद्यः, समर्थमिति अपतर्पणजव्याधिनिराकरणसमर्थं; तेन सद्यःसंतर्पण-मेकम्, अभ्यासवशात् संतर्पणमपरमित्यर्थः' इति शिवदाससेनः । २ 'हि' इति पा० । ३ 'तेन' इति पा० ।

**स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा।**
**सद्यः संतर्पणो मन्थः स्थैर्यवर्णबलप्रदः॥ ३९॥**

स्वादुरम्ल इत्यादिना सद्यस्तर्पणमाह। अम्ल इति अम्लदाडिमादियोगात्। अत्र रूक्षसक्तुकृतस्यापि मन्थस्य द्रवत्वशैत्यदेहानुसारित्वैः सद्यःसंतर्पकत्वं भवत्येव, अत एव 'सद्य' इत्युक्तं, स्नेहादिबृंहणद्रव्ययोगात्तु कालान्तरतर्पकत्वमपि भवति॥ ३९॥

तत्र श्लोकः—

**संतर्पणोत्था ये रोगा रोगा ये चापतर्पणात्।**
**संतर्पणीये तेऽध्याये सौषधाः परिकीर्तिताः॥४०॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने संतर्पणीयो नाम त्रयोविंशोऽध्यायः॥२३॥**

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकाख्यायां सूत्रस्थाने योजनाचतुष्के संतर्पणीयो नाम त्रयोविंशोऽध्यायः॥ २३॥

---

## चतुर्विंशोऽध्यायः।

**अथातो विधिशोणितीयमध्यायं व्याख्यास्यामः॥१॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

संप्रति वातादिवद्बहुविकारकर्तृत्वेन शोणितस्य शोणितविकाराणां पूर्वोक्तानेवोपक्रमान् लङ्घनबृंहणादीन् विशेषेण दर्शयितुं विधिशोणितीयोऽभिधीयते। इयमप्यर्थपरा संज्ञा॥ १॥ २॥

**विधिना शोणितं जातं शुद्धं भवति देहिनाम्।**
**देशकालौकसात्म्यानां विधिर्यः संप्रकाशितः॥ ३॥**

विधिनेति सम्यगाहाराचारविधिना। शुद्धं भवतीत्यत्र भवति विद्यत इत्यर्थः, उत्पादस्य जातशब्देनैवोक्तत्वात्। केन विधिनेत्याह—देशेत्यादि। सात्म्यशब्दस्य देशादिभिः प्रत्येकमन्वयः। ओकसात्म्यम् अभ्याससात्म्यम्। संप्रकाशित इति तस्याशितीये (सू. अ. ६), संप्रकाशित इत्यत्र 'तेन' इति शेषः; अतो यः संप्रकाशितो विधिस्तेन विधिनेति संबन्धः। अन्ये व्याख्यानयन्ति—शोणितं जातं तावद्भवति, तच्च कारणान्तरदुष्टं सद्विधिना यथोक्तेन पुनः शुद्धं भवतीति योजनीयम्॥३॥

**तद्विशुद्धं हि रुधिरं बलवर्णसुखायुषा।**
**युनक्ति प्राणिनं प्राणः शोणितं ह्यनुवर्तते॥ ४॥**

विशुद्धं शोणितं किं करोतीत्याह—तद्विशुद्धमित्यादि। तेन विधिना विशुद्धं तद्विशुद्धं; किंवा तदिति शोणितम्। प्राणः शोणितं ह्यनुवर्तत इति शोणितान्वयव्यतिरेकमनुविधीयते। यदुक्तं—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्"—(सू. अ. २९) इति॥ ४॥

**प्रदुष्टबहुतीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः।**
**तथाऽतिलवणक्षारैरम्लैः कटुभिरेव च॥ ५॥**
**कुलत्थमाषनिष्पावतिलतैलनिषेवणैः।**
**पिण्डालुमूलकादीनां हरितानां च सर्वशः॥ ६॥**
**जलजानूपबैलानां प्रसहानां च सेवनात्।**
**दध्यम्लमस्तुसुक्तानां सुरासौवीरकस्य च॥ ७॥**
**विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च।**
**भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च॥ ८॥**
**अत्यादानं तथा क्रोधं भजतां चातपानलौ।**
**छर्दिवेगप्रतीघातात् काले चानवसेचनात्॥ ९॥**
**श्रमाभिघातसंतापैरजीर्णाध्यशनैस्तथा।**
**शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति॥ १०॥**

शुद्धिहेतुमभिधाय दुष्टिहेतुमाह—प्रदुष्टेत्यादि। प्रदुष्टं स्वप्रकृतिविपरीतम्। अन्यैश्च तद्विधैरिति प्रदुष्टपानकादिभिः; किंवा 'अन्नैः' इति पाठः। तथाऽतिलवणक्षारैरित्यादि केचिद्भेषजविषयं वर्णयन्ति, तद्विधैरिति वचनेनान्नपानस्यातिलवणादेर्गृहीतत्वात्। निष्पावः श्वेतशिम्बिः। अत्यादानं तृप्तिमतिक्रम्य भोजनम्। काले चेति शोणितदुष्टियुक्ते शरत्काले। अजीर्णेऽध्यशनमजीर्णाध्यशनं; किंवा अजीर्णस्यापक्वस्याशनमजीर्णाशनम्, अध्यशनं तु पूर्वान्नशेषे यद्भुज्यते, यदाह—"भुक्तस्योपरि यद्भुक्तं तदध्यशनमुच्यते" (चि. अ. १५)॥ ५–१०॥

**ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः।**
**मुखपाकोऽक्षिरागश्च[1] पूतिघ्राणास्यगन्धिता॥ ११॥**
**गुल्मोपकुशवीसर्परक्तपित्तप्रमीलकाः।**
**विद्रधी रक्तमेहश्च प्रदरो वातशोणितम्॥ १२॥**
**वैवर्ण्यमग्निसादश्च पिपासा गुरुगात्रता।**
**संतापश्चातिदौर्बल्यमरुचिः शिरसश्च रुक्॥ १३॥**
**विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः।**
**क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता॥ १४॥**
**स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः।**
**तन्द्रानिद्रातियोगश्च तमसश्चातिदर्शनम्॥ १५॥**
**कण्ड्वरुःकोठपिडकाकुष्ठचर्मदलादयः।**
**विकाराः सर्व एवैते विज्ञेयाः शोणिताश्रयाः॥ १६॥**

---

१ 'यद्यपि शोणितविकारा अपि वातादिजन्या एव, तथाऽपि धातुषु बहुविकारकर्तृत्वेन प्राधान्यसूचनार्थं पृथगध्यायेऽभिधानं ज्ञेयम्' इति शिवदाससेनः। २ 'इयमप्यर्थपरा संज्ञा; किंवा विधिना शोणितमितिशब्दमधिकृत्य कृतोऽध्यायो विधिशोणितीयाध्यायः; "वर्णागमः" इत्यादिना 'ना'शब्दलोपः' इति शिवदाससेनः।

१ 'अक्षिपाकश्च' इति पा०।

**शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः।**
**सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विभावयेत्॥**

उपकुशः मुखरोगविशेषः; यदुक्तं सुश्रुते—"वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च। यस्मिन्नुपकुशो नाम पित्तरक्तकृतो गदः" (सु. नि. अ. १६) इति। कुष्ठ इत्युक्तेऽपि चर्मदलाभिधानं विशेषार्थम्। शोणिताश्रया इति भाषया शोणितस्य वातादिवत् स्वातन्त्र्येण रोगकर्तृत्वं निराकरोति। अनुक्तभूरिशोणितरोगग्रहणार्थमाह—शीतोष्णेत्यादि। आद्यग्रहणात्तीक्ष्णमृद्वादीनां ग्रहणम्। सम्यगिति पूर्वेण योजनीयम्। तत्र शीतोष्णस्निग्धरूक्षाद्यैरिति शोणितवृद्धिमनपेक्ष्य वातादिजयार्थमात्रप्रयुक्तैरिति मन्तव्यम्। येन शोणितव्याधेरपि शान्तिर्वक्ष्यमाणरक्तपित्तहरक्रियादिभिः शीतोष्णस्निग्धादिक्रियाप्रविष्टैव, ततश्च शोणितरोगस्यापि शीतादिक्रियाभिरेव शोणितप्रतिकूलाभिः प्रशमो भवति; प्रवृद्धशोणिताश्रयास्तु वातादय आश्रयप्रभावान्न स्वचिकित्सामात्रेण प्रशाम्यन्ति॥ ११–१७॥

**कुर्याच्छोणितरोगेषु रक्तपित्तहरीं क्रियाम्।**
**विरेकमुपवासं च स्रावणं शोणितस्य च॥ १८॥**

शोणितरोगचिकित्सामाह—कुर्यादित्यादि। रक्तपित्तहरक्रियादयो यथायोग्यतया बोद्धव्याः॥ १८॥

**बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा।**
**रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा॥ १९॥**

उक्तशोणितस्रावणप्रमाणमाह—बलेत्यादि। बलदोषप्रमाणादिति बलस्य तथा दोषस्य शोणितव्याधिरूपस्य प्रमाणं वीक्ष्य; दोषशब्दो ह्ययं रोगे वर्तते। विशुद्ध्या रुधिरस्य चेति यावता स्रावणेन शोणितं विशुद्धं भवति। आशयं स्थानं दुष्टशोणिताश(श्र)यमिति यावत्। यथा—स्वल्पे कुष्ठे स्तोकमेव विशुद्ध्यर्थमुपादेयं, महति कुष्ठे बहु स्रावणीयम्। यदुक्तं—"प्रच्छनमल्पे कुष्ठे महति च शस्तं सिराव्यधनम्" (चि. अ. ७) इति। एषु च पक्षेषु यद्यत्रानत्ययं भवति तत्तत्र ग्राह्यम्॥ १९॥

**अरुणाभं भवेद्वाताद्विशदं फेनिलं तनु।**
**पित्तात् पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च॥२०॥**
**ईषत्पाण्डु कफाद्दुष्टं पिच्छिलं तन्तुमद्घनम्।**
**संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम्॥ २१॥**

दुष्टरक्तलक्षणमाह—अरुणाभमित्यादि। स्त्यायति घनं भवति॥ २०॥ २१॥

**तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्।**
**गुञ्जाफलसवर्णं च विशुद्धं विद्धि शोणितम्॥ २२॥**

तपनीयं लोहितसुवर्णम्, इन्द्रगोपः स्वनामप्रसिद्धः कीटविशेषः। विशुद्धरक्तलिङ्गे नानावर्णता वातादिप्रकृतित्वान्मनुष्याणाम्॥ २२॥

**नात्युष्णशीतं लघु दीपनीयं**
**रक्तेऽपनीते हितमन्नपानम्।**
**तदा शरीरं ह्यनवस्थितासृ-**
**गग्निर्विशेषेण च रक्षितव्यः॥ २३॥**

नात्युष्णादिभोजने हेतुमाह—तदेत्यादि। अतिशीतमग्निमान्द्यं करोति, अत्युष्णं च प्रचलस्यासृजो नितरां प्रचलतां करोति, तस्मान्नात्युष्णशीतम्। लघु दीपनीयं चाग्निदीप्त्यर्थमेव॥ २३॥

**प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-**
**निच्छन्तमव्याहतपक्तृवेगम्।**
**सुखान्वितं तु(पु)ष्टिबलोपपन्नं**
**विशुद्धरक्तं पुरुषं वदन्ति॥ २४॥**

संप्रति शोणितादर्शनेनापि विशुद्धरक्तज्ञानार्थं लक्षणमाह—प्रसन्नेत्यादि। अव्याहता पक्तिश्च वेगश्च पुरीषादीनां यस्य स तथा॥ २४॥

**यदा तु रक्तवाहीनि रससंज्ञावहानि च।**
**पृथक् पृथक् समस्ता वा स्रोतांसि कुपिता मलाः॥२५॥**
**मलिनाहारशीलस्य रजोमोहावृतात्मनः।**
**प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा॥ २६॥**
**मदमूर्च्छायसंन्यासास्तेषां विद्याद्विचक्षणः।**
**यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु॥ २७॥**
**दुर्बलं चेतसः स्थानं यदा वायुः प्रपद्यते।**
**मनो विक्षोभयञ्जन्तोः संज्ञां संमोहयेत्तदा॥ २८॥**
**पित्तमेवं कफश्चैवं मनो विक्षोभयन्नृणाम्।**
**संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते॥ २९॥**

संप्रति रक्तवाहिधमनीदुष्ट्या ये व्याधयो भवन्ति तानाह—यदा त्वित्यादि। संज्ञावहानीति संज्ञाहेतुमनोवहानि, मनस्तु केवलमेव शरीरमयनीभूतं; यदुक्तं—"सत्त्वादीनां पुनः केवलं शरीरमयनीभूतम्" (वि. अ. ५) इत्यादि; किंवा रससंज्ञं धातुमावहन्तीति रससंज्ञवहानि। रसवहधमनीनां तु हृदयं स्थानं, तदुपघाताच्च मोह उपपन्न एव। मला इति दुष्टदोषसंज्ञाः; यदुक्तं—"मलिनीकरणान्मलाः" इति। यथोत्तरं लिङ्गाधिक्यं मदमूर्च्छायसंन्यासेषु मोहरूपं ज्ञेयं; मदेऽपि हि स्तोको मोहोऽस्ति, उत्तरयोस्तु व्यक्त एव मोहः॥ २५–२९॥

---

१ 'सम्यगुपक्रान्ता इत्यन्वयः' इति शिवदाससेनः। २ '°रामयं' इति पा०। ३ 'द्विदोपलिङ्गं' इति पा०।

१ 'अन्ये तु रससंज्ञं धातुमावहन्तीति रससंज्ञवहानीत्याहुः; किंतु "रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः। मदमूर्च्छायसंन्यासा यथोत्तरबलोत्तराः" इति तन्त्रान्तरे मनोवहधमनीदुष्टिर्व्यक्ता, सा चास्मिन् व्याख्याने नोपपद्यते, इति पूर्वव्याख्यैव युक्ता' इति शिवदाससेनः।

सक्तानल्पद्रुताभाषं चलस्खलितचेष्टितम्[1]।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥ ३० ॥
सक्रोधपरुषाभाषं संप्रहारकलिप्रियम्।
विद्यात् पित्तमदाविष्टं रक्तपीतासिताकृतिम् ॥ ३१ ॥
स्वल्पासंबद्धवचनं तन्द्रालस्यसमन्वितम्।
विद्यात् कफमदाविष्टं पाण्डुं प्रध्यानतत्परम् ॥ ३२ ॥
सर्वाण्येतानि रूपाणि सन्निपातकृते मदे।

परुषं ब्रूत इति परुषाभाषः ॥ ३०–३२ ॥—

जायते शाम्यति क्षिप्रं मदो मद्यमदाकृतिः ॥ ३३ ॥

मदस्वरूपमाह—जायत इत्यादि ॥ ३३ ॥

यश्च मद्यकृतः प्रोक्तो विषजो रौधिरश्च यः।
सर्वे एते मदा नर्ते वातपित्तकफत्रयात् ॥ ३४ ॥

मदप्रसङ्गेन मद्यविषजयोरपि मदयोश्चातुर्विध्यमाह—यश्चेत्यादि। वातपित्तकफत्रयादिति वातात् पित्तात् कफाद्वातपित्तकफाच्च; एतेन तेषामप्येतदेव लक्षणं वातादिकृतं भवतीति भावः ॥ ३४ ॥

नीलं वा यदि वा कृष्णमाकाशमथवाऽरुणम्।
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते[2] ॥ ३५ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च।
कार्श्यं श्यावारुणा च्छाया मूर्च्छाये वातसंभवे ॥ ३६ ॥
रक्तं हरितवर्णं वा वियत् पीतमथापि वा।
पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ॥ ३७ ॥
सपिपासः ससंतापो रक्तपीताकुलेक्षणः।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥ ३८ ॥
मेघसङ्काशमाकाशमावृतं वा तमोघनैः।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ३९ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे ॥ ४० ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ ४१ ॥

मूर्च्छायलक्षणमाह—नीलं वेत्यादि। तत्र वातमूर्च्छाये श्यावारुणा छाया रिष्टरूपत्वान्मरणाय स्याद् वायव्यत्वादिति चोद्यं कुर्वन्ति; उक्तं हि—"वायव्या सा विनाशाय क्लेशाय महतेऽपि वा" (इ. अ. ७) इति। तन्न, अनिमित्ता हि छाया रिष्टं न तु दृश्यमाननिमित्ता, इह च वातसंबन्धो दृश्यत एव निमित्तं; किंवा "क्लेशाय महतेऽपि वा" इति वचनादेव वायव्यच्छायाया मारकत्वं व्यभिचरितम्। तमोभिर्घनैश्चेति तमोघनैः; किंवा तमोभिरेव घनैः। विना बीभत्सचेष्टितैरिति दन्तखादनाङ्गविक्षेपणादिकं विना ॥ ३५–४१ ॥

दोषेषु मदमूर्च्छायाः कृतवेगेषु[1] देहिनाम्।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ ४२ ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनसंश्रिताः ॥ ४३ ॥
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः।
प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यःफलाः क्रियाः ४४
दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः।
गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितम् ॥ ४५ ॥
अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥ ४६ ॥
लुञ्चनं केशलोम्नां च दन्तैर्दशनमेव च।
आत्मगुप्तावघर्षश्च हितं तस्यावबोधने ॥ ४७ ॥
संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च।
प्रभूतकटुयुक्तानि[2] तस्यास्ये गालयेन्मुहुः ॥ ४८ ॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम्।
तद्वत्सौवर्चलं दद्याद्युक्तं मद्याम्लकाञ्जिकैः ॥ ४९ ॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनम्।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत् ॥ ५० ॥
विस्मापनैः स्मारणैश्च प्रियश्रुतिभिरेव च।
पटुभिर्गीतवादित्रशब्दैश्चित्रैश्च दर्शनैः ॥ ५१ ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः।
शोणितस्यावसेकैश्च व्यायामोद्धर्षणैस्तथा ॥ ५२ ॥
प्रबुद्धसंज्ञं मतिमाननुबन्धमुपक्रमेत्।
तस्य संरक्षितव्यं हि मनः प्रलयहेतुतः[3] ॥ ५३ ॥

संन्यासस्य मूर्च्छादिभ्यो भेदकं लक्षणमाह–दोषेष्वित्यादि। कृतवेगेष्विति वेगं कृत्वा क्षीणबलेषु, वेगो हि दोषाणां बलक्षयकारणं भवति; यदुक्तं विषमज्वरे—"कृत्वा वेगं गतबला" (चि. अ. ३) इत्यादि। संन्यस्यन्ति अचेष्टं कुर्वन्ति[4]। प्राणायतनमिति हृदयम्। मुक्त्वेति अप्राप्य। सद्यःफला इति सद्यःप्रबोधनकारिकास्तीक्ष्णाञ्जनादिकाः। सूचीभिरिति च तोदनेन संबध्यते। संमूर्च्छितानीति मिलितानि। गालयेदिति यत्नेन मुखे प्रक्षिपेत्। सौवर्चलस्थाने केचित् सौवीरकमाहुः। अनुबन्धं[5] सततम्। प्रलयहेतुत इति मोहहेतुतः ॥ ४२–५३ ॥

स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम्।
पञ्च कर्माणि कुर्वीत मूर्च्छायेषु मदेषु च ॥ ५४ ॥

---

१ 'सक्तानल्पद्रुताभाषमिति सक्तं विच्छिन्नवर्णम्, अनल्पं बहु, द्रुतं शीघ्रं भाषते यः स तथा, एवं परुषाभाससमित्यपि व्याख्येयम्' इति शिवदाससेनः। २ 'तमः प्रविशति मूर्च्छतीत्यर्थः, शीघ्रं च प्रतिबुध्यत इति वायोः शीघ्रकारित्वात्' इति शिवदाससेनः।

१ 'हृतवेगेषु' इति पा०। २ 'प्रभूतकटुतिक्तानि' इति। पा० ३ 'ततः स रक्षितव्यो हि मनःप्रलयहेतुतः' इति पा०। ४ 'संन्यस्यन्ति मोहयन्ति' इति शिवदाससेनः। ५ 'अनुबद्धं' इति पा०।

अष्टाविंशत्यौषधस्य तथा तिक्तस्य सर्पिषः।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य वा ॥ ५५ ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ५६ ॥
पिप्पलीनां प्रयोगो वा पयसा चित्रकस्य वा।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ५७ ॥
रक्तावसेकाच्छास्त्राणां सतां सत्त्ववतामपि।
सेवनान्मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम् ॥५८॥

अष्टाविंशत्यौषधस्येति पानीयकल्याणस्य। तिक्तस्य महतस्तथा तिक्तस्य षट्पलस्य तथा महतस्तिक्तस्येति संबन्धः; एते च तिक्तषट्पलमहातिक्तकघृते कुष्ठचिकित्सिते वक्तव्ये। कौम्भं सर्पिर्दशाब्दिकम् ॥ ५४—५८ ॥

तत्र श्लोकौ—

विशुद्धं चाविशुद्धं च शोणितं तस्य हेतवः।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥ ५९ ॥
मदमूर्च्छायसंन्यासहेतुलक्षणभेषजम्।
विधिशोणितकेऽध्याये सर्वमेतत् प्रकाशितम् ॥६०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने विधिशोणितीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने योजनाचतुष्के विधिशोणितीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तो योजनाचतुष्कः ॥ ६ ॥

---

## पञ्चविंशोऽध्यायः।

अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

य इमे योजनाचतुष्के षड्उपक्रमा अभिहितास्तेऽन्नपानापेक्षयैव व्याधिहरणे समर्थाः, अतोऽन्नपानचतुष्कोऽभिधीयते। तत्रापि संक्षेपेणान्नपानगुणाभिधायको यज्जःपुरुषीयोऽभिधीयते। तत्रादौ पुरुषव्याधिकारणनिश्चायकप्रकरणं त्वाहारगुणप्रश्नावतारार्थं तथा पूर्वोक्तषडुपक्रमणीयरोगकारणज्ञानार्थं च 'यज्जःपुरुष' इति प्रश्नं प्राधान्येनाधिकृत्य कृतोऽध्यायो यज्जःपुरुषीयो ज्ञेयः। यद्यपि 'पुरुषो यज्जः' इति प्रश्नक्रमः, तथाऽपि प्रश्नार्थोऽत्र गृहीतः ॥ १ ॥ २ ॥

पुरा प्रत्यक्षधर्माणं भगवन्तं पुनर्वसुम्।
समेतानां महर्षीणां प्रादुरासीदियं कथा ॥ ३ ॥

आत्मेन्द्रियमनोर्थानां योऽयं पुरुषसंज्ञकः।
राशिरस्यामयानां च प्रागुत्पत्तिविनिश्चये ॥ ४ ॥

प्रत्यक्षधर्मत्वं तपःप्रभावात्। इयमिति अग्रे वक्ष्यमाणा। कथा तत्त्वजिज्ञासार्थमन्योन्यपृच्छा। राशिः मेलकः, आत्मेन्द्रियमनोऽर्थसमुदाय इत्यर्थः। अस्य राशेरामयानां चोत्पत्तिविनिश्चये उत्पत्तिविनिश्चयविषयिणी कथा प्रादुरासीदिति संबन्धः ॥ ३ ॥ ४ ॥

तदन्तरं काशिपतिर्वामको वाक्यमर्थवित्।
व्याजहारर्षिसमितिमुपसृत्याभिवाद्य च ॥ ५ ॥
किन्नु भोः पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्वसुः ॥ ६ ॥

तामेव परस्परप्रश्नरूपां कथां दर्शयति—तदन्तरमित्यादि। अन्तरशब्दः कालवचनः; यथा—"अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम्" ( चि. अ. १० ) इति; किंचित्कालमित्यर्थः; तेन तदन्तरमिति कथारम्भकाले इत्यर्थः। काशी वाराणसी तस्याः पतिः, तेषां बहुत्वाद्विशेषणं—वामक इति। यस्माज्जातो यज्जः; तत एव पुरुषजनकात् कारणाज्जातास्तज्जाः। न वेति अन्यतः पुरुषो जायतेऽन्यतश्च तस्य रोगा इत्यर्थः। नरेन्द्रेणेति काशिपतिनाम्ना राजर्षिणा ॥ ५ ॥ ६ ॥

सर्वे एवामितज्ञानविज्ञानच्छिन्नसंशयाः।
भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥ ७ ॥

अमिताभ्यां ज्ञानविज्ञानाभ्यां छिन्नः संशयो येषां ते तथा। "भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम्" इति पाठः सुगमः। "भवन्तोऽर्हन्ति नश्छेत्तुं काशिराजे च संशयम्" इति तु पाठे, नोऽस्माकं काशिराजेऽस्मन्मध्यगत इत्यर्थः। एतेन स्वपक्षे काशिराजे न व्यामोहवचनं वक्तव्यमिति शिक्षयति। चकारेणान्येषां च ऋषीणां संशयं समुच्चिनोति। अन्ये तु, नोऽस्माकं संशयं काशिराजे च संशयमिति व्याख्यानयन्ति। संशयद्वये चैकोऽत्र ऋषीणामात्मेन्द्रियेत्यादिना श्लोकेन दर्शितः संशयः, स च पुरुषस्यामयानां च प्रागुत्पत्तिं प्रथमोत्पत्तिं प्रतीति व्याख्यानयन्ति; द्वितीयस्तु काशिपतेर्यथोक्त एव ॥ ७ ॥

पारीक्षिस्तत्परीक्ष्याग्रे मौद्गल्यो वाक्यमब्रवीत्।
आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः ॥८॥
स चिनोत्युपभुङ्क्ते च कर्म कर्मफलानि च।
नह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः ॥ ९ ॥

आत्मजः पुरुष इत्यादिप्रश्नद्वयस्योत्तरं; तत्र पूर्वप्रश्नस्य पुरुषस्यामयानां च कुत उत्पत्तिरित्येवंरूपस्य प्रश्नस्योत्तरं आत्मजः पुरुषो रोगाश्चेति, काशिपतिप्रश्नमात्रेऽप्युत्तरमेतत् यत एवात्मतः पुरुषो जायते तत एव रोगा इत्यर्थरूपमेव। प्रश्नोत्तरता

---

१ 'उपासतां' इति पा०। २ 'महर्षय उपासीनाः प्रादुश्चक्रुरिमां कथाम्' इति पा०।

१ 'अथ काशिपतिर्वाक्यं वामकोऽर्थवदन्तरा' इति पा०। २ 'कथारम्भ एव' इति पा०। ३ 'इत्यनुरूपमेव' इति पा०।

त्वस्य ग्रन्थस्य सुगमैव । कारणत्वे हेतुमाह—स चिनोतीत्यादि । चिनोति कर्म, कर्मफलानि च शरीरारोग्यविकारादीनि भुङ्क्ते इति योजना । कर्मसहायस्यात्मनः शरीरविकारादिकर्तृत्वात् कारणत्वमिति भावः । एतदेव व्यतिरेकेणाह—नह्यृत इत्यादि । चेतनाधातुः आत्मा । सुखदुःखयोरिति सुखदुःखसाधनयोः नीरुक्शरीरविकारयोरित्यर्थः ॥ ८ ॥ ९ ॥

**शरलोमा तु नेत्याह न ह्यात्माऽऽत्मानमात्मना ।**
**योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥ १० ॥**
**रजस्तमोभ्यां तु मनः परीतं सत्त्वसंज्ञकम् ।**
**शरीरस्य समुत्पत्तौ विकाराणां च कारणम् ॥ ११ ॥**
**वार्योविदस्तु नेत्याह न ह्येकं कारणं मनः[1] ।**
**नर्ते शरीराच्छा[2]रीररोगा न मनसः स्थितिः ॥ १२ ॥**
**रसजानि तु भूतानि व्याधयश्च पृथग्विधाः ।**
**आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥ १३ ॥**

मन इत्युक्ते मन्यतेऽनेनेति व्युत्पत्त्याऽऽत्माऽपि शङ्क्येत, तदुक्तं—सत्त्वसंज्ञकमिति । नर्ते शरीराच्छारीरा वातादिजन्याः शोषादयस्तिष्ठन्ति; तथा न मनसः स्थितिः, ऋते शरीरादिति योज्यम् । रजस्तमःपरीतस्य हि मनसो नित्यं शरीर एव स्थितिः; यत्तु निर्दोषं मनस्तत्तु न पुरुषस्य नापि च व्याधेः कारणमिति भावः । रसजानीत्यादौ स्मृता निर्वृत्तिहेतव इति व्याधिपुरुषयोः । एतेन व्याधिपुरुषजनकरसकारणत्वेनापः कारणकारणतया पुरुषविकारयोः कारणं भवन्ति । किंवा आपो निर्वृत्तिहेतव इति रसानां; किंवा यस्माद्रसवत्य आपस्तस्मात्ता निर्वृत्तिहेतव इति योजना ॥ १०–१३ ॥

**हिरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः ।**
**नातीन्द्रि[3]यं मनः सन्ति रोगाः शब्दादिजास्तथा १४**

१ 'न ह्येकं कारणं मन' इति 'व्याधिमात्रं प्रति' इति शेषः । व्याधिमात्रं प्रति मनसः कारणत्वं कथं नास्तीत्याह–नर्ते इत्यादि । मानसरोगेष्वेव मनसः कारणत्वं, शारीरा वातादिजन्या व्याधयः पुनः शरीरादृते न तिष्ठन्तीति शरीरस्यैव कारणत्वं, न तु मनस इति भावः । शरीरोत्पत्तावपि मनसः कारणत्वं नास्तीत्याह—न मनसः स्थितिरिति । अत्रापि शरीरादृत इति योज्यं, शरीरमन्तरेण रजस्तमःसंबद्धस्य मनसः स्थितिरेव नास्ति, मनसि रजस्तमःसंबन्धस्य शरीराधीनत्वात्; तथा रजस्तमःसंबन्धे सति शरीरोत्पत्तिः, शरीरसंबन्धे च मनसि रजस्तमःसंबन्ध इति परस्पराश्रयप्रसङ्गाच्छरीरोत्पत्तिं प्रति रजस्तमःपरीतस्य मनसः कारणत्वं नास्तीति भावः । रसजानीत्यादि । भूतानि पृथिव्यादीनि; एतेन तेषां रसजत्वेन तन्मेलकस्य पुरुषस्यापि रसजत्वमिति भावः' इति शिवदाससेनः । २ 'शारीररोगाणां मनसः स्थितिः' इति पा० । ३ 'अतीन्द्रियमिति हेतुगर्भविशेषणम्, अतीन्द्रियं सूक्ष्मं निरवयवमिति यावत्, यस्मादतीन्द्रिय आत्मा मनोऽप्यतीन्द्रियं तस्मान्न रसजम्' इति शिवदाससेनः ।

**षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा ।**
**राशिः षड्धातुजो ह्येष सांख्यैराद्यैः प्रकीर्तितः १५**

नह्यात्मेत्यादौ नातीन्द्रियं मनो रसजं स्मृतमिति योजना; यस्मादतीन्द्रियं मन आत्मा चातीन्द्रियः, तस्मान्न रसजौ; रसाद्धि जायमानं कारणगुणानुविधानादैन्द्रियकं स्यादित्यर्थः । हेत्वन्तरमाह—सन्तीत्यादि । अहितशब्दरूपादिजन्ये विकारे न रसः कारणमित्यर्थः । आत्मा पृथिव्यादीनि च पञ्च षड् धातवः । यदुक्तं–"खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः" ( शा. अ. १ ) इति ॥ १४ ॥ १५ ॥

**तथा ब्रुवाणं कुशिकमाह तन्नेति कौशिकः ।**
**कस्मान्मातापितृभ्यां हि विना षड्धातुजो भवेत् १६**
**पुरुषः पुरुषाद्गौर्गोरश्वादश्वः प्रजायते ।**
**पित्र्या मेहादयश्चोक्ता[2] रोगास्तावत्र कारणम् ॥ १७ ॥**

कुशिक इति हिरण्याक्षस्य नाम । कस्मादिति आक्षेपे । मातापित्रनपेक्षित्वे सर्वप्राणिषु षड्धातुसमुदायस्य विद्यमानत्वेन नरगोऽश्वादिभेदो न स्यादिति भावः । हेत्वन्तरमाह—पित्र्या मेहादयश्चोक्ता इति । पितृतोऽपत्यं गच्छन्तीति पित्र्याः; आदिशब्देन कुष्ठार्शःप्रभृतयो ग्राह्याः । स्वपक्षं दर्शयति—तावत्र कारणमिति; तौ मातापितरौ ॥ १६ ॥ १७ ॥

**भद्रकाप्यस्तु नेत्याह नह्यन्धोऽन्धात् प्रजायते ।**
**मातापित्रोरपि च ते प्रागुत्पत्तिर्न युज्यते ॥ १८ ॥**
**कर्मजस्तु मतो जन्तुः कर्मजास्तस्य चामयाः ।**
**नह्यृते कर्मणो जन्म रोगाणां पुरुषस्य वा ॥ १९ ॥**

न ह्यन्ध इत्यादि । मातापितृकारणत्वेऽन्धेन जातोऽन्धः स्यादित्यर्थः । हेत्वन्तरमाह—मातापित्रोरपीत्यादि । ते तव मातापितृकारणवादिनः, प्रागिति सर्गादौ मातापित्रोरुत्पत्तिर्न स्यात्; सर्गादौ निःशरीरिणि आदिभूतयोर्मातापित्रोरभावादुत्पादो नोपपन्न इति भावः ॥ १८ ॥ १९ ॥

**भरद्वाजस्तु नेत्याह कर्ता पूर्वं हि कर्मणः ।**
**दृष्टं न चाकृतं कर्म यस्य स्यात् पुरुषः फलम् ॥ २० ॥**
**भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।**
**खरद्रवचलोष्णत्वं तेजोन्तानां यथैव हि ॥ २१ ॥**

कर्ता पूर्वं हीत्यादि । कर्मणः पूर्वं कर्ता 'भवति' इति शेषः । येन कर्मणा स पुरुषः कर्तव्यः, तस्य कर्मणः पुरुषै[3]पूर्वभावित्वात् कारणत्वं स्वीकर्तव्यं; ततश्च स चेद्विना कर्म पुरुषो[4]ऽभूत्, तत् कथं पुरुषस्य कर्म कारणमिति भावः । अथ शङ्क्यते अकृतमेवादौ पुरुषजनकं कर्म भविष्यतीत्याह–दृष्टं न चेत्यादि । अकृतं कर्म न दृष्टं, प्रमाणेन नोपलब्धमित्यर्थः । यस्माच्छुभाशु-

१ 'परीक्षितः' इति पा० । २ 'मातापितृभवाश्चोक्ता' इति पा० । ३ 'पुरुषपूर्वंभाविकारणं' इति पा० । ४ 'भूतः' इति पा० ।

भकर्म क्रियाजन्यमेव धर्माधर्मरूपं सर्वं भवतीति भावः। भावहेतुः उत्पत्तिहेतुः। स्वाभाविकत्वे दृष्टान्तमाह—खरेत्यादि। तेजोऽन्तानामिति "खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्" (शा. अ. १) इत्यादिवक्ष्यमाणक्रमेण भवेत् ॥ २० ॥ २१ ॥

काङ्कायनस्तु नेत्याह न ह्यारम्भफलं भवेत्।
भवेत् स्वभावाद्भावानामसिद्धिः सिद्धिरेव वा ॥ २२ ॥
स्रष्टा त्वमितसङ्कल्पो ब्रह्मापत्यं प्रजापतिः।
चेतनाचेतनस्यास्य जगतः सुखदुःखयोः ॥ २३ ॥
तन्नेति भिक्षुरात्रेयो न ह्यपत्यं प्रजापतिः।
प्रजाहितैषी सततं दुःखैर्युञ्ज्यादसाधुवत् ॥ २४ ॥
कालजस्त्वेव पुरुषः कालजास्तस्य चामयाः।
जगत् कालवशं सर्वं कालः सर्वत्र कारणम् ॥ २५ ॥

स्वभावादित्यत्र आदौ 'यदि' इत्यध्याहर्तव्यं; तेन यदि स्वभावादेव भावानां विकारशरीरादीनां सिद्ध्यसिद्धी भवतः, तदा आरम्भफलं न भवेत्, स्वाभाविकत्वाद्भावानां; य इमे लोकशास्त्रसिद्धा यागकृष्यध्ययनाद्यारम्भास्ते निष्प्रयोजना भवेयुः, अकारणत्वादित्यर्थः। स्रष्टेत्यादौ जगतः सुखदुःखयोश्च स्रष्टा प्रजापतिरिति योजना। स च ब्रह्मणोऽपत्यम्। अमितसङ्कल्प इति युगपदपरिमितस्थावरजङ्गमरूपकार्यकर्तृत्वेनापरिमिततज्जननसङ्कल्प इत्यर्थः। असाधुवदिति असाधुः अपत्यद्रोहकारी ॥ २२–२५ ॥

तथर्षीणां विवदतामुवाचेदं पुनर्वसुः।
मैवं वोचत तत्त्वं हि दुष्प्रापं पक्षसंश्रयात् ॥ २६ ॥
वादान् सप्रतिवादान् हि वदन्तो निश्चितानिव।
पक्षान्तं नैव गच्छन्ति तिलपीडकवद्गतौ ॥ २७ ॥
मुक्त्वैवं वादसङ्घट्टमध्यात्ममनुचिन्त्यताम्।
नाविधूते तमःस्कन्धे ज्ञेये ज्ञानं प्रवर्तते ॥ २८ ॥
येषामेव हि भावानां संपत् संजनयेन्नरम्।
तेषामेव विपद्व्याधीन्विविधान्समुदीरयेत् ॥ २९ ॥

पक्षसंश्रयादिति रागतः पक्षसंग्रहात्। निश्चितानिवेति परमार्थतोऽनिश्चिता एव, परं पक्षरागाद्बुद्धिप्रकर्षान्निश्चिता इवाभिधीयन्ते पक्षा इत्यर्थः। पक्षान्तमिति सम्यगर्थावधारणरूपं पक्षान्तम्। तिलपीडकस्तैलार्थं यन्त्रोपरि स्थितो मनुष्यः; तिलपीडको यथा गतौ गमने सति, गम्यदेशाप्राप्त्या चान्तं नासादयति, पुनस्तत्रैव भ्रमणात्; तथा पक्षसंश्रयाद्वादिनोऽपीत्यर्थः। सङ्घट्टः अन्योन्यपीडको मेलकः। अध्यात्मं तत्त्वम्। स्कन्धः समूहः। पक्षरागश्चेह तत्त्वज्ञानप्रतिबन्धकत्वेन तमःस्कन्ध उच्यते। सिद्धान्तमाह—येषामित्यादि। येषामिति यज्जातीयानां, ते च महाभूतादयः। तेन महाभूतत्वेनैव वातादीनां ग्रहणम्। संपदिति प्रशस्तगुणता। नरमिति संयोगिपुरुषम्। विपदिति वैगुण्यम्। समुदीरयेदिति जनयेत्। एतेषां च ऋषिवादानां कथनं पूर्वपक्षसिद्धान्तश्रवणेन शिष्यसन्देहनिवृत्त्यर्थम् ॥ २६–२९ ॥

अथात्रेयस्य भगवतो वचनमनुनिशम्य पुनरेव वामकः काशिपतिरुवाच भगवन्तमात्रेयं—भगवन्! संपन्निमित्तजस्य पुरुषस्य विपन्निमित्तजानां च रोगाणां किमभिवृद्धिकारणमिति ॥ ३० ॥

तमुवाच भगवानात्रेयः—हिताहारोपयोग एक एव पुरुषवृद्धिकरो भवति, अहिताहारोपयोगः पुनर्व्याधिनिमित्तमिति ॥ ३१ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—कथमिह भगवन्! हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीमहे; हितसमाख्यातानामाहारजातानामहितसमाख्यातानां च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभामह इति ॥ ३२ ॥

हिताहारोपयोग एक एवेत्यवधारणेनास्य प्राधान्यं दर्शयति नान्यप्रतिषेधम्, आचारस्य स्वप्नादेस्तथा शब्दादीनामपि कारणत्वेनोक्तत्वात्। व्याधिनिमित्तमिति व्याध्यभिवृद्धिनिमित्तं मध्यपदलोपाज्ज्ञेयम्, अभिवृद्धिकारणस्यैव पृष्टत्वात्; तथाऽहिताहारस्य यद्व्याधिनिमित्तत्वं, तस्य 'तेषामेव विपद्व्याधीन् विविधान् समुदीरयेत्' इत्यनेनैवोक्तत्वात्। किंवा व्याधिनिमित्तशब्देन सामान्येन जनको वर्धकश्च हेतुरुच्यते। अनपवादमिति अव्यभिचारि। हिताहिताहारदुर्ज्ञानताहेतुमाह—हितसमाख्यातानामित्यादि। विपरीतकारित्वमिति पथ्यस्यापथ्यत्वं तथा अपथ्यस्य पथ्यत्वं मात्रादिवशाद्भवति। तत्र पथ्या रक्तशाल्यादयोऽतिमात्रा हीनमात्रा वा मात्रादोषादपथ्या भवन्ति। तथा कालवशात्त एव रक्तशाल्यादयो लघुत्वाद्बलवदग्नीनां हेमन्ते न हिताः; कालशब्देन चेह नित्यग एव कालो गृह्यते, आवस्थिकस्य पुरुषावस्थाशब्देन गृहीतत्वात्। क्रिया तु संस्करणं, तेन च रक्तशालिरसम्यक्स्विन्नप्रस्रुतत्वादिना ओदनदोषेणाहितो भवति, तथा स एव भूमिसंबन्धादानूपदेशजः सन्नपथ्यो भवति। तथा देहापेक्षया मेदस्विनो रक्तशालिर्लघुतया न हितो भवति, तदुक्तं—"गुरु चातर्पणं चेष्टं स्थूलानां कर्शनं प्रति" (सू. अ. २१) इति। तथा स एव दोषे वायावहितः, दोषशब्देन व्याधिरपि ग्रहीतव्यः। तथा–पुरुषस्य बाल्यावस्थायां श्लेष्मप्रधानायां तिक्तादि पथ्यं, तत्तु वार्धक्ये वृद्धवाते न पथ्यम्। अवस्थान्तरशब्दश्च मात्रादिभिः प्रत्येकं संबध्यते। एवमहितस्यापि मात्रादिपरिग्रहेण हितत्वमुन्नेतव्यम् ॥ ३०—३२ ॥

१ 'तेजोऽन्तानामिति भूजलानिलतेजसां क्रमात् खरद्रवचलोष्णत्वं यथा स्वभावसिद्धं, तथा व्याधिपुरुषयोरपि स्वभावसिद्धतेत्यर्थः' इति शिवदाससेनः। २ 'चेतनाचेतनस्यायं' इति पा०। ३ 'स्वर्गादिफलस्यापि स्वभावादेव जायमानत्वेन यागादीनां निष्प्रयोजनत्वात्' इति शिवदाससेनः। ४ 'प्रोवाचर्षीन्' इति पा०।

१ 'शिष्यकथंतानिवृत्त्यर्थम्' इति पा०। २ 'व्याधीनामिति' इति पा०। ३ 'एवेत्यवधारणेनान्याप्राधान्यं' इति पा०।

तमुवाच भगवानात्रेयः—यदाहारजातमग्निवेश ! समांश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोतीत्येतद्धितं विद्धि, विपरीतं त्वहितमिति; इत्येतद्धिताहितलक्षणमनपवादं भवति ॥ ३३ ॥

एवंवादिनं च भगवन्तमात्रेयमग्निवेश उवाच—भगवन् ! न त्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति ॥ ३४ ॥

सिद्धान्तयति—यदाहारजातमित्यादि । अनेन च ग्रन्थेन हिताहितत्वं न स्वरूपेण भावानां, किंतु मात्रादिसव्यपेक्षमिति दर्शितं भवति । न त्वेतदित्यादि । एतदिति हिताहितम् । एवमुपदिष्टमिति यदाहारजातमित्यादिलक्षणोद्दिष्टम् । विज्ञास्यन्ति न त्विति संवन्धः । एतस्मिन् हिताहितलक्षणे मात्राद्यवस्थान्तरज्ञानं[1] विना न हितत्वमहितत्वं वा हितानां रक्तशाल्यादीनामहितानां यवकादीनां च ज्ञातुं पार्यते, मात्राद्यवस्थायाश्च दुर्ज्ञानत्वेन सर्ववैद्या ज्ञातुमक्षमा इति भावः ॥ ३३ ॥ ३४ ॥

तमुवाच भगवानात्रेयः-येषां हि विदितमाहारतत्त्वमग्निवेश ! गुणतो द्रव्यतः कर्मतः सर्वावयवशश्च मात्रादयो भावाः, त एतदेवमुपदिष्टं विज्ञातुमुत्सहन्ते । यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति, तथैतदुपदेक्ष्यामो मात्रादीन् भावानुदाहरन्तः[2]; तेषां हि बहुविधविकल्पा भवन्ति । आहारविधिविशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः ॥ ३५ ॥

एतदेवासर्वभिषग्ज्ञेयत्वं लक्षणस्याह—येषां हीत्यादि । गुणत इति इह प्रकरणे गुरुलघुत्वादिगुणतः । द्रव्यत इति कारणतः, यथा-इदमाप्यमिदमाग्नेयमित्यादि; किंवा द्रव्यत इत्याहारद्रव्याद्रक्तशाल्यादेः । कर्मतः कार्यतः; यथा—इदं जीवनमिदं बृंहणमित्यादि । सर्वावयवशश्चेति रसवीर्यविपाकप्रभावेभ्यः । मात्रादयश्चानन्तरोक्ताः पुरुषान्ता ज्ञेयाः । आहारतत्त्वं च गुणादिभ्यो विदितं मात्रादयश्च विदिता इति योजना । किंवा गुणशब्देन रसवीर्यादीनामपि ग्रहणं, सर्वावयवशश्चेति मात्रादिज्ञानेन संवध्यते । यथेत्यादौ एतदिति हिताहितम् । भूयिष्ठकल्पा नानाप्रकारा उत्तमाधममध्यमा इत्यर्थः, भूयिष्ठकल्पा इति कृत्वा सर्वग्रहणमुत्तमादीनामेव श्रेष्ठश्रेष्ठतरश्रेष्ठतमादिभेदग्रहणार्थं; किंवा शल्याद्यष्टाङ्गाध्यायिवैद्यग्रहणार्थं[3]; किंवा भूयिष्ठकल्पा इति विज्ञातभूरिहिताहितोदाहरणाः; अस्याधिकारे हि बहु हिताहितं वक्तव्यं, तच्चाल्पबुद्धीनां व्यवहाराय भवति, प्रकृष्टबुद्धीनां चानुक्तज्ञानायेति भावः । लक्षणत इति लक्षणमाहारत्वं स्थावरजङ्गमात्मकत्वादि[1], एतच्च 'तद्यथा—आहारत्वं' इत्यादिना 'करणवाहुल्यात्' इत्यन्तेन वक्ष्यति । अवयवत इति एकदेशतः, एकदेशाश्च लोहितशाल्यादयः; ते तु 'तद्यथा लोहितशालयः' इत्यादिना वक्ष्यन्ते ॥ ३५ ॥

तद्यथा—आहारत्वमाहारस्यैकविधमर्थाभेदात्; स पुनर्द्वियोनिः, स्थावरजङ्गमात्मकत्वात्; द्विविधप्रभावः, हिताहितोदर्कविशेषात्; चतुर्विधोपयोगः, पानाशनभक्ष्यलेह्योपयोगात्; षडास्वादः, रसभेदतः षड्विधत्वात्; विंशतिगुणः, गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुगमात्; अपरिसंख्येयविकल्पः, द्रव्यसंयोगकरणवाहुल्यात् ॥ ३६ ॥

अर्थाभेदादिति अभ्यवह्रियमाणत्वार्थाभेदात् । द्वियोनिरिति द्विप्रभवः । हितरूपोऽहितरूपो वोदर्को हिताहितोदर्कः, स एव विशेषः; उदर्क उत्तरकालीनं फलम् । गुरुलाघवादयो युग्माः परस्परविरोधिनो ज्ञेयाः; अनुगमादिति अनुगतत्वात् । आत्रेयभद्रकाप्यीये ( सू. अ. २६ ) वक्ष्यमाणाः परत्वादयो गुणा न तथाऽत्रोपकारका इति नेहोच्यन्ते । ये तु तत्र संयोगकरणे आहारविधौ भूर्युपयोगिनी, ते बहुविधत्वेन त्वपरिसंख्येयविकल्पहेतुत्वेनैव निवेशिते । परिमाणं तु मात्रा, सा चेहानुदाहरणीयत्वेन प्रतिज्ञाता 'मात्रादीन् भावाननुदाहरन्तः' इति वचनेन । द्रव्यसंयोगकरणवाहुल्यादिति द्रव्यं शूकधान्यादिकं, संयोग आहारद्रव्याणां मेलकः, करणं संस्कारः ॥ ३६ ॥

तस्य खलु ये ये विकारावयवा भूयिष्ठमुपयुज्यन्ते, भूयिष्ठकल्पानां च मनुष्याणां प्रकृत्यैव हिततमाश्चाहिततमाश्च, तांस्तान् यथावदुपदेक्ष्यामः ॥ ३७ ॥

विकारावयवा इति विकारैकदेशाः । भूयिष्ठकल्पानामिति किंचिन्न्यूनैर्बहूनां[2], कल्पशब्दो ह्ययमीषदसमाप्त्यर्थः[3], यथा—राजकल्प इति । एतेन प्रायशो बहूनां ये हिता अहिताश्च त उच्यन्त इत्यर्थः । अन्ये तु भूयिष्ठकल्पानामिति समानधातुप्रकृतीनामिति ब्रुवते । प्रकृत्येति न संयोगकरणादिना, किंतु स्वभावेन ॥ ३७ ॥

तद्यथा—लोहितशालयः शूकधान्यानां पथ्यतमत्वे श्रेष्ठतमा भवन्ति, मुद्गाः शमीधान्यानाम्, आन्तरिक्षमुदकानां, सैन्धवं लवणानां, जीवन्तीशाकं शाकानाम्, ऐणेयं मृगमांसानां, लावः पक्षिणां, गोधा विलेशयानां, रोहितो मत्स्यानां, गव्यं सर्पिः सर्पिषां, गोक्षीरं क्षीराणां, तिलतैलं स्थावरजातानां स्नेहानां, वराहवसा आनूपमृगवसानां,

१ 'मात्राद्यवान्तरज्ञानं' इति पा० । २ 'मात्रादीन् सर्वाननुदाहरन्तु' इति गङ्गाधरसंमतः पाठः । 'मात्रादीन् सर्वाननुदाहरन्तः' इति योगीन्द्रनाथसेनसंमतः पाठः । 'मात्रादीन् भावाननुदाहरन्त इति गुरुलघुत्वादिगुणवदपरिगणयन्तः, अत्र हेतुमाह—तेषामित्यादि' इति शिवदाससेनः । ३ 'शल्याद्यङ्गान्तराध्यायिवैद्यग्रहणार्थम्' इति पा० ।

१ 'लक्ष्यत इति लक्षणमाहारत्वं स्थावरजङ्गमात्मकत्वात्' इति शिवदाससेनः । २ 'किंचिन्न्यूनवस्तूनां' इति पा० । ३ 'ईषदसमाप्तौ' इति पा० ।

चुलुकीवसा मत्स्यवसानां, पाकहंसवसा जलचरविहङ्गवसानां, कुक्कुटवसा विष्किरशकुनिवसानां, अजमेदः शाखादमेदसां, शृङ्गवेरं कन्दानां, मृद्वीका फलानां, शर्करेक्षुविकाराणाम्, इति प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि भवन्ति ॥ ३८ ॥

लोहितशाली रक्तशालिः। शूकधान्यानामित्यादौ निर्धारणे षष्ठी। पथ्यतमत्व इति तमप्प्रयोगः सजातीयेभ्यः[1] प्रकृष्टत्वेन श्रेष्ठतमा इति, यथा—श्रेष्ठतम इति प्रशस्यः; किंवा तमप्ग्रहणं स्वार्थिकं, यथा—"युधिष्ठिरः श्रेष्ठतमः कुरूणाम्" इति, तथा 'अन्यतमं जिह्वावैषयिकम्' (सू. अ. २६) इति। यद्यपि काकमाची त्रिदोषघ्नी रसायनी च, तथाऽपीह जीवन्ती स्वस्थहितत्वप्रकर्षादुच्यते, स्वस्थहितत्वप्रकर्षश्चेह वचनादेव लभ्यते। एवमन्यत्रापि व्याख्येयम्। काकमाच्यां त्वयं विशेषः—यत्—काकमाची पर्युषिता मरणाय। यद्यपि गोधारोहितौ कफपित्तवर्धनौ, वचनं हि"—भूशया वारिजाताश्च कफपित्तविवर्धनाः" इति, तथाऽपीह सजातीयेषु पथ्यत्वप्रकर्षेणेहोच्येते; तथा किंचिद्दोषकरस्यापि ऋतुभेदेन[2] पथ्यत्वं भवत्येव; किंचित् स्वस्थहितत्वं द्रव्यस्य पृथगेव गुणः न दोषकर्तृत्वं दोषहरत्वं वाऽपेक्षते; यदुक्तं—"किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्। स्वस्थवृत्तौ मतं किंचिद्द्रव्यं त्रिविधमुच्यते" ( सू. अ. १ ) इति। चुलुकी 'सुग्रह' इति ख्यातः। पाकहंसः श्वेतहंसः ॥ ३८ ॥

अहिततमानप्युपदेक्ष्यामः—यवकाः शूकधान्यानामपथ्यतमत्वेन प्रकृष्टतमा[3] भवन्ति, माषाः शमीधान्यानां, वर्षानादेयमुदकानाम्, ऊषरं लवणानां, सर्षपशाकं शाकानां, गोमांसं मृगमांसानां, काणकपोतः पक्षिणां, भेको बिलेशयानां, चिलिचिमो मत्स्यानाम्, अविकं सर्पिः सर्पिषाम्, अविक्षीरं क्षीराणां, कुसुम्भस्नेहः स्थावरस्नेहानां, महिषवसा आनूपमृगवसानां, कुम्भीरवसा मत्स्यवसानां, काकमद्गुवसा जलचरविहङ्गवसानां, चटकवसा विष्किरशकुनिवसानां, हस्तिमेदः शाखादमेदसां, निकुचं फलानाम्, आलुकं कन्दानां, फाणितमिक्षुविकाराणाम्, इति प्रकृत्यैवाहिततमानामाहारविकाराणां प्रकृष्टतमानि द्रव्याणि व्याख्यातानि भवन्ति; (इति) हिताहितावयवो व्याख्यात आहारविकाराणाम् ॥३९॥

प्रकृष्टतमा इति तमप्प्रयोगः पूर्ववत् स्वार्थिकः। यद्यप्यपथ्यतम इति तमप्प्रयोगेणैव प्रकृष्टत्वं प्रतिपादितं, तथाऽप्यपथ्यतमानां बहूनां मध्ये प्रकर्षख्यापनार्थं प्रकृष्टतम इति पदम्। वर्षासु नादेयं वर्षानादेयम्। ऊषरदेशभवमूषरम्। काणकपोत इत्यत्र काणशब्दोऽल्पवचनः; यथा—काणो मेघ इति। चिलिचिमो महाशल्की मत्स्यो रोहितभेदः, अत्रैव ह्यग्रे रोहितभेदमेव चिलिचिमं वक्ष्यति। काकमद्गुः पानीयकाकिका। चटकः प्रसिद्धः। हिताहितावयव इत्यादि। अत्रादौ 'इति' शब्दोऽध्याहार्यः, तेन इति हिताहितावयव आहारविकाराणां व्याख्यातो भवतीति पूर्वेणैव योजनीयम् ॥ ३९ ॥

१ 'तज्जातीयेभ्यः' इति पा०। २ 'धातुभेदेन' इति पा०। ३ 'श्रेष्ठतमा' इति पा०।

अतो भूयः कर्मौषधानां च प्राधान्यतः सानुबन्धानि द्रव्याण्यनुव्याख्यास्यामः। तद्यथा—अन्नं वृत्तिकराणां श्रेष्ठम्, उदकमाश्वासकराणां ( सुरा श्रमहराणां )[1], क्षीरं जीवनीयानां, मांसं बृंहणीयानां, रसस्तर्पणीयानां, लवणमन्नद्रव्यरुचिकराणाम्, अम्लं हृद्यानां, कुक्कुटो बल्यानां, नक्ररेतो वृष्याणां, मधु श्लेष्मपित्तप्रशमनानां, सर्पिर्वातपित्तप्रशमनानां, तैलं वातश्लेष्मप्रशमनानां, वमनं श्लेष्महराणां, विरेचनं पित्तहराणां, बस्तिर्वातहराणां, स्वेदो मार्दवकराणां, व्यायामः स्थैर्यकराणां, क्षारः पुंस्त्वोपघातिनां, (तिन्दुकमन्नद्रव्यरुचिकराणाम्,)[2] आमं कपित्थमकण्ठ्यानाम्, आविकं सर्पिरहृद्यानाम्, अजाक्षीरं शोषघ्नस्तन्यसात्म्यरक्तसांग्राहिकरक्तपित्तप्रशमनानाम्, अविक्षीरं श्लेष्मपित्तजननानां, महिषीक्षीरं स्वप्नजननानां, मन्दकं दध्यभिष्यन्दकराणां, गवेधुकान्नं कर्शनीयानाम्, उद्दालकान्नं विरूक्षणीयानाम्, इक्षुर्मूत्रजननानां, यवाः पुरीषजननानां, जाम्बवं वातजननानां, शष्कुल्यः श्लेष्मपित्तजननानां, कुलत्था अम्लपित्तजननानां, माषाः श्लेष्मपित्तजननानां, मदनफलं वमनास्थापनानुवासनोपयोगिनां, त्रिवृत् सुखविरेचनानां, चतुरङ्गुलो मृदुविरेचनानां, स्नुक्पयस्तीक्ष्णविरेचनानां, प्रत्यक्पुष्पा शिरोविरेचनानां, विडङ्गं क्रिमिघ्नानां, शिरीषो विषघ्नानां, खदिरः कुष्ठघ्नानां, रास्ना वातहराणाम्, आमलकं वयःस्थापनानां, हरीतकी पथ्यानाम्, एरण्डमूलं वृष्यवातहराणां, पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां, चित्रकमूलं दीपनीयपाचनीयगुदशोथार्शःशूलहराणां, पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणां, मुस्तं सांग्राहिकदीपनीयपाचनीयानाम्, उदीच्यं निर्वापणदीपनीयपाचनीयच्छर्द्यतीसारहराणां, कट्वङ्गं सांग्राहिकपाचनीयदीपनीयानाम्, अनन्ता सांग्राहिकरक्तपित्तप्रशमनानाम्, अमृता सांग्राहिकवातहरदीपनीयश्लेष्मशोणितविबन्धप्रशमनानां, बिल्वं सांग्राहिकदीपनीयवातकफप्रशमनानाम्, अतिविषा दीपनीयपाचनीयसांग्राहिकसर्वदोषहराणाम्, उत्पलकुमुदपद्मकिञ्जल्कः सांग्राहिकरक्तपित्तप्रशमनानां, दुरालभा पित्तश्लेष्मप्रशमनानां, गन्धप्रियङ्गुः शोणित-

१ 'आप्यायनकराणाम्' इति पा०। २—३ अयं पाठ क्वचित्पुस्तके नोपलभ्यते।

पित्तातियोगप्रशमनानां, कुटजत्वक् श्लेष्मपित्तरक्तसांग्राहिकोपशोषणानां, काश्मर्यफलं रक्तसांग्राहिकरक्तपित्तप्रशमनानां, पृश्निपर्णी सांग्राहिकवातहरदीपनीयवृष्याणां, विदारिगन्धा वृष्यसर्वदोषहराणां, बला सांग्राहिकबल्यवातहराणां, गोक्षुरको मूत्रकृच्छ्रानिलहराणां, हिङ्गुनिर्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानाम्, अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणां, यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां, तक्राभ्यासो ग्रहणीदोषशोफार्शोघृतव्यापत्प्रशमनानां, क्रव्यान्मांसरसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानां, क्षीरघृताभ्यासो रसायनानां, समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणां, तैलगण्डूषाभ्यासो दन्तबलरुचिकराणां, चन्दनं दुर्गन्धहरदाहनिर्वापणलेपनानां, रास्नागुरुणी शीतापनयनप्रलेपनानां, लामज्जकोशीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां, कुष्ठं वातहराभ्यङ्गोपनाहोपयोगिनां, मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यविरजनीयरोपणीयानां, वायुः प्राणसंज्ञाप्रदानहेतूनाम्, अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानां, जलं स्तम्भनीयानां, मृद्भृष्टलोष्ट्रनिर्वापितमुदकं तृष्णाच्छर्द्यतियोगप्रशमनानाम्, अतिमात्राशनमामप्रदोषहेतूनां, यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानां, यथासात्म्यं चेष्टाभ्यवहारौ सेव्यानां, कालभोजनमारोग्यकराणां, तृप्तिराहारगुणानां, वेगसन्धारणमनारोग्यकराणां, मद्यं सौमनस्यजननानां, मद्याक्षेपो धीधृतिस्मृतिहराणां, गुरुभोजनं दुर्विपाककराणाम्, एकाशनभोजनं सुखपरिणामकराणां, स्त्रीष्वतिप्रसङ्गः शोषकराणां, शुक्रवेगनिग्रहः षाण्ड्यकराणां, पराघातनमन्नाश्रद्धाजननानाम्, अनशनमायुषो ह्रासकराणां, प्रमिताशनं कर्शनीयानाम्, अजीर्णाध्यशनं ग्रहणीदूषणानां, विषमाशनमग्निवैषम्यकराणां, विरुद्धवीर्याशनं निन्दितव्याधिकराणां, प्रशमः पथ्यानां, आयासः सर्वापथ्यानां, मिथ्यायोगो व्याधिकराणां, रजस्वलाभिगमनमलक्ष्मीमुखानां, ब्रह्मचर्यमायुष्याणां, परदाराभिगमनमनायुष्याणां, सङ्कल्पो वृष्याणां, दौर्मनस्यमवृष्याणाम्, अयथाबलमारम्भः प्राणोपरोधिनां, विषादो रोगवर्धनानां, स्नानं श्रमहराणां, हर्षः प्रीणनानां, शोकः शोषणानां, निवृत्तिः पुष्टिकराणां, पुष्टिः स्वप्नकराणाम्, अतिस्वप्नस्तन्द्राकराणां, सर्वरसाभ्यासो बलकराणाम्, एकरसाभ्यासो दौर्बल्यकराणां, गर्भशल्यमाहार्याणाम्, अजीर्णमुद्धार्याणां, बालो मृदुभेषजीयानां, वृद्धो याप्यानां, गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्जनीयानां, सौमनस्यं गर्भधारणानां, सन्निपातो दुश्चिकित्स्यानाम्, आमो विषमचिकित्स्यानां[1], ज्वरो रोगाणां, कुष्ठं दीर्घरोगाणां, राजयक्ष्मा रोगसमूहानां, प्रमेहोऽनुषङ्गिणां, जलौकसोऽनुशस्त्राणां, वस्तिस्तन्त्राणां, हिमवानौषधिभूमीनां, सोम ओषधीनां, मरुभूमिरारोग्यदेशानाम्, अनूपोऽहितदेशानाम्, निर्देशकारित्वमातुरगुणानां, भिषक् चिकित्साङ्गानां, नास्तिको वर्ज्यानां, लौल्यं क्लेशकराणाम्, अनिर्देशकारित्वमरिष्टानां, अनिर्वेदो वार्तलक्षणानां, वैद्यसमूहो निःसंशयकराणां, योगो वैद्यगुणानां, विज्ञानमौषधीनां, शास्त्रसहितस्तर्कः साधनानां, संप्रतिपत्तिः कालज्ञानप्रयोजनानाम्, अव्यवसायः कालातिपत्तिहेतूनां, दृष्टकर्मता निःसंशयकराणाम्, असमर्थता भयकराणां, तद्विद्यसंभाषा बुद्धिवर्धनानाम्, आचार्यः शास्त्राधिगमहेतूनाम्, आयुर्वेदोऽमृतानां, सद्वचनमनुष्ठेयानाम्[2], असद्ग्रहणं सर्वाहितानां, सर्वसंन्यासः सुखानामिति ॥ ४० ॥

अतो भूय इति अत इति हेतौ, यस्माद्धिताहितायुक्तं न तु तेषां कर्मेत्यर्थः। भूयःशब्दः पुनरर्थे, कर्मेति कार्यम्; तेन, अतो भूय आहारविकाराणां कर्म। यथा—'अन्नं वृत्तिकराणाम्', 'उदकमाश्वासकराणाम्' इत्यादि; तथौषधानां च कर्म, यथा—'त्रिवृत् सुखविरेचनानाम्' इत्यादि वक्ष्यामः। प्राधान्यत इत्यनेन न सर्वेषामाहारविकाराणामौषधानां च कर्माभिधानं[3], किंतु यथाप्रधानमिति दर्शयति। सानुबन्धानीति सप्रयोजनानि, यथा—अजीर्णमुद्धार्याणामित्यादि; अजीर्णज्वरादिकर्मकथनं[4] हि चिकित्सोपयोगि व्यक्तमेव। द्रव्याणीति महाभूतानि, यथा—जलं स्तम्भनानां, वायुः प्राणसंज्ञाप्रदानहेतूनाम्, इत्यादि। द्रव्याणीत्युपलक्षणं; तच्च सानुबन्धानीत्यस्य विशेषणं, तेनाद्रव्यमपि सानुबन्धमुच्यते; यथा—'शास्त्रसहितस्तर्कः साधनानाम्' इत्यादि। किंवा, हिताहितावयवमिति कर्मविशेषणं; तेन, हिताहितैकदेशरूपं कर्माहारविकाराणामिति भवति; तत्र हितं कर्म 'अन्नं वृत्तिकराणाम्' इत्यादि, अहितं कर्म 'आविकं सर्पिरहृद्यानाम्' इत्यादि। औषधानां कर्म[5] 'त्रिवृत् सुखविरेचनानाम्' इत्यादि व्याख्यानं पूर्ववदेव। वृत्तिकराणामिति शरीरस्थितिकराणाम्[6]। अन्नद्रव्यरुचिकराणामिति लवणमन्नेन संयुक्तं सदन्ने रुचिं करोतीत्यर्थः। अम्लं हृद्यानामिति रुच्यानाम्, अम्लं तु स्वयमेव रोचते। मधु श्लेष्मपित्तप्रशमनानामिति द्रव्यद्रव्येषु, दुरालभा त्वौषधद्रव्येषु; तेन दुरालभाया मधुनश्च श्लेष्मपित्तप्रशमनश्रेष्ठत्वावधारणं न विरोधि। वस्तिरिति अविशेषादास्थापनानुवासने। अविक्षीरं

---

१ 'आमविषमचिकित्स्यानां' इति पा०। २ 'असंबन्धवचनं', 'असद्वचनम्' इति च पा०। ३ 'कर्माभिधातव्यं' इति पा०। ४ '°ज्वरादिकथनं' इति पा०। ५ 'औषधानां कर्मेत्यादि, व्याख्यानं पूर्ववदेव' इति पा०। ६ 'शरीरस्थितिकारणत्वात्' इति पा०।

पित्तश्लेष्मजननानामिति पेयेषु मध्ये, माषाः पित्तश्लेष्मजनननानामिति भोज्येषु, शष्कुल्यः पित्तश्लेष्मजननानामिति भक्ष्येषु मध्ये; किंवा, त्रयमप्येतत् पित्तश्लेष्मजननं प्रति समानमिति त्रितयमप्युच्यते; एवमन्यत्रापि तुल्यश्रेष्ठताभिधानं तज्जातीयश्रेष्ठताभिप्रायेण तथा तुल्यत्वेन च ज्ञेयम् । मन्दकमिति मन्दजातम् । उद्दालको वनकोद्रवः । गुदशोथः अर्शः । गन्धप्रियङ्गुः प्रियङ्गुरेव । क्रव्यं मांसमत्तीति क्रव्याद् व्याघ्रादिः । समघृत इत्यत्र समशब्दः सहार्थः । उद्वेपनमिति वेपनम् । उदकमाश्वासनस्तम्भनानामिति वक्तव्ये, यत् पृथक् 'उदकमाश्वासकराणां', तथा 'जलं स्तम्भनानां' इति करोति, तेन कर्मद्वयेऽपि जलस्यानन्यसाधारणतां दर्शयति; मिलित्वा गुणपाठे ह्युभयकर्मकर्तृत्वेव प्राधान्यं स्यात्; एवमन्यत्राप्यनेककर्मकर्तृत्वे यस्य प्राधान्यमुक्तं पिप्पलीमूलादौ, तत्र तथाभूतानेककर्मकर्तृत्वेष्वेव प्राधान्यं ज्ञेयं, न पृथक्कर्मणि । लामज्जकोशीरमुशीरद्वयं सगन्धमगन्धं च गृह्यते । एकाशनभोजनमिति एककालभोजनम्; अनेनैकाशनस्य सुखपरिणामतामात्रमुच्यते, न द्वितीयान्नप्रतिषेधः क्रियते; एतेन द्विर्भोजनेऽप्यव्याहताभ्रितानिद्रादयः सुखपरिणामकारणत्वेन ज्ञेयाः । शोषद्वाराणामिति शोषकारणानाम् । पराघातनं वधस्थानं, वध्यमानप्राणिदर्शनाद्धि घृणया नान्ने श्रद्धा स्यात् । 'यथाऽशितं' इति केचित् पठन्ति, तन्नातिसाधु । प्रमिताशनम् अतीतकालभोजनं, स्तोकभोजनं वा । विषमाशनं प्रकृतिकरणादिविषमाशनम् । निन्दितव्याधिः श्वित्रकुष्ठादिः । अलक्ष्मीमुखानाम् अलक्ष्मीकारणानाम् । मिथ्यायोगः सम्यग्योगादन्यस्त्रिविधो योगः । सङ्कल्पः स्त्रीसङ्गसङ्कल्पः । ज्वरो रोगाणामिति रुजाकर्तॄणाम् । अनुषङ्गी पुनर्भावी । तन्त्राणामिति कर्मणाम् । सोम ओषधिराजः पञ्चदशपर्वा । वार्तलक्षणानामिति आरोग्यलक्षणानाम् । ज्ञानमिति औषधादिविज्ञानम् । साधनानामिति ज्ञानसाधनानाम् । संप्रतिपत्तिः यथाकर्तव्यतानुष्ठानम्[२] । तृप्तिराहारगुणानामित्यत्र गुणशब्दः प्रशस्तधर्मवचनः । एकरसाभ्यासः कर्शनानामिति अपवादं वर्जयित्वा, तेन घृताभ्यासो रसायनानामिति न विरुध्यते । अमृतानामिति जीवितप्रधा(दा)नहेतूनाम् । सर्वसंन्यासः सर्वक्रियात्यागः[३], स हि परमसुखमोक्षहेतुः शारीरे वक्तव्यः ॥ ४० ॥

भवन्ति चात्र—

**अग्र्याणां शतमुद्दिष्टं यद्द्विपञ्चाशदुत्तरम् ।**
**अलमेतद्विकाराणां विघातायोपदिश्यते ॥ ४१ ॥**

अग्र्याणामित्यादौ अग्र्यशब्दः श्रेष्ठवचनः । अलमिति समर्थम् । अत्र ज्वरप्रमेहादयोऽपि स्वरूपेणातिपीडाकरत्वानुषङ्गिकत्वादिना ज्ञाताः सन्तश्चिकित्सायामुपयुक्ता भवन्ति, अतो ज्वरादिज्ञानमपि विकाराणां विघाताय समर्थं भवति[१] । अग्र्याणां च विकारशमकत्वाभिधानं प्राधान्यादुच्यते, स्तुत्यर्थं वा; तेन यदुच्यते—एत एव चेदग्र्याधिकारे विहिता विकाराञ्छमयन्ति, तत् किमपरचिकित्साभिधानेनेति; तन्निरस्तं भवति । विकारविघातश्चेहोत्पन्नानामौषधोपयोगेन, तथाऽनुत्पन्नानां स्वास्थ्यपरिपालनेन ज्ञेयः ॥ ४१ ॥

**समानकारिणो येऽर्थास्तेषां श्रेष्ठस्य लक्षणम् ।**
**ज्यायस्त्वं कार्यकर्तृत्वे वरत्वं[२] चाप्युदाहृतम् ॥ ४२ ॥**
**वातपित्तकफानां च यद्यत् प्रशमने हितम् ।**
**प्राधान्यतश्च निर्दिष्टं यद्व्याधिहरमुत्तमम् ॥ ४३ ॥**
**एतन्निशम्य निपुणं चिकित्सां संप्रयोजयेत् ।**
**एवं कुर्वन् सदा वैद्यो धर्मकामौ समश्नुते ॥ ४४ ॥**

अग्र्याधिकारोक्तं संग्रहेण कथयति—समानेत्यादि । समानकारिणः तुल्यकर्माणः । श्रेष्ठस्य लक्षणमिति प्रशस्तस्य लक्षणं; लक्षणं त्विह पाठ एव, पाठेन हि श्रैष्ठ्यं लक्ष्यते ज्ञायत इत्यर्थः । ज्यायस्त्वं वृहत्त्वं[३], तदप्रशस्तगुणवृहत्त्वं[४] ज्ञेयम्; अत एवाहिताधिकारकथने श्रेष्ठतमशब्दं त्यक्त्वा 'अपथ्यतमत्वे प्रकृष्टतमा भवन्ति' इत्युक्तं, तेन श्रेष्ठस्य लक्षणमिति रक्तशाल्यादीनां हिताहाराणां ज्ञेयं, ज्यायस्त्वं चाहिताहाराणां यवकादीनामपथ्यतमत्वे प्रकर्षशालित्वम् । कार्यकर्तृत्वे वरत्वं चेति कर्मणि चोत्कृष्टत्वं, तच्च 'अन्नं वृत्तिकराणाम्' इत्यादिनोक्तं ज्ञेयम् । वातपित्तकफानां चेत्यादौ 'बस्तिर्वातहराणां,' 'विरेचनं पित्तहराणां,' 'वमनं श्लेष्महराणाम्', 'आस्थापनं वाताहराणाम्' इत्यादि ज्ञेयम् । यद्व्याधिहरमिति 'खदिरः कुष्ठहराणां,' 'पुष्करमूलं हिक्काश्वासकासपार्श्वशूलनाहहराणाम्' इत्यादि ज्ञेयम् । किंवा 'अवरत्वम्' इति पाठः; तदा अवरत्वम् अन्यथा अनभिप्रेतकर्तृत्वं, तच्च 'रजस्वलागमनमलक्ष्मीमुखानाम्' इत्यादि ज्ञेयम् । श्रेष्ठत्वज्यायस्त्वाभ्यां प्रशस्ताप्रशस्तकर्मणामपि ग्रहणं व्याख्येयम् ॥ ४२-४४ ॥

**पथ्यं पथोऽनपेतं यद्यच्चोक्तं मनसः प्रियम् ।**
**यच्चाप्रियमपथ्यं च नियतं तन्न लक्षयेत् ॥ ४५ ॥**
**मात्राकालक्रियाभूमिदेहदोषगुणान्तरम् ।**
**प्राप्य तत्तद्धि दृश्यन्ते ते ते भावास्तथा तथा ॥ ४६ ॥**
**तस्मात् स्वभावो निर्दिष्टस्तथा मात्रादिराश्रयः ।**
**तदपेक्ष्योभयं कर्म प्रयोज्यं सिद्धिमिच्छता ॥ ४७ ॥**

संप्रत्युक्तस्य पथ्यस्य हितापरनाम्नो लक्षणमाह—पथ्यमित्यादि । पथः शरीरमार्गात् स्रोतोरूपादनपेतम्; अपेतम् अपकारकम्, अनपेतम् अनपकारकमित्यर्थः । पथोग्रहणेन पथोवाह्या दोषा धातवश्च, तथा पथोनिर्वर्तका धातवो गृह्यन्ते; तेन कृत्स्नमेव

१ 'अव्याहतार्थतानिद्रादयः' इति पा० । २ 'कालानतिक्रमेण कार्यकरणं संप्रतिपत्तिः, अध्यवसायः अनुद्योगः, 'अध्यवसाय' इति पाठे अध्यवसायः कर्तव्यतामात्रेण ज्ञानम्' इति शिवदाससेनः । ३ 'सर्वेन्द्रियार्थत्यागः' इति पा० । ४ 'अग्र्याणां बलवत्कर्मकारिणां' इति शिवदाससेनः ।

१ 'अत्र ज्वरादीनामपि पीडाकरत्वादि ज्ञात्वा भिषगातुरस्य तत्प्रशमेऽवहितो भवतीति ज्वरादिज्ञानमपि विघाताय समर्थं भवति' इति शिवदाससेनः । २ 'कार्यकारित्वेऽवरत्वं' इति पा० । ३ 'वृद्धत्वं' इति पा० । ४ 'तदप्रशस्तगुणवृद्धत्वं' इति पा० । ५ क्रिया संस्कारः ।

शरीरं गृहीतं भवति, ततश्च शरीरानुपघाति पथ्यमिति भवति। किंवा, स्वस्थस्वास्थ्यरक्षणमातुरव्याधिपरिमोक्षश्चेति पन्थाः, तस्मादनपेतं पथ्यम्। एवमपि मनसोऽनुपघातित्वं न लभ्यत इत्याह—यच्चोक्तं मनसः प्रियमिति। मनसोऽतिप्रीत्याऽभिलषितं, तेन मनसो हितमिति प्रियार्थः; तेन प्रशमज्ञानातीक्ष्णत्वादयो गृह्यन्ते। एतेन, 'मनःशरीरानुपघाति पथ्यं' इति पथ्यलक्षणमनपवादमुक्तं भवति। अन्ये तु पथ्यलक्षणद्वयमेतत् पठन्ति, वदन्ति च—"यद्येकं लक्षणं स्यात्तदा ज्वरादिषु तिक्तं भेषजं मनसोऽप्रियत्वेन न पथ्यं स्यात्; एतच्चानुमतमेवं, यद् ज्वरे तिक्तप्रयोगस्य तदात्वे न मनसोऽनुकूलत्वं, न चैतावता शरीरं प्रत्यपथ्यत्वं भवति, अतो यन्मात्रं मनोऽनुकूलत्वं मानसविकाराकर्तृत्वात् तद्व्यपदेश्यमेव; किंवा तावन्मात्रमनोऽननुकूलत्वं मानसविकाराकर्तृत्वादव्यपदेश्यमेव। तदेतदपथ्यत्वं किमाहाराचाराणां नियतमस्ति नेत्याह—यच्चेत्यादि। नियतं निश्चितमिदमप्रियमेव सर्वदेदमपथ्यमेव सर्वदेत्येवंरूपं किंचिन्नास्तीत्यर्थः। कुतो नास्तीत्याह—मात्रेत्यादि। गुणान्तरशब्दो मात्रादिभिः संबध्यते। तत्तदिति मात्रादिगुणान्तरम्। ते ते इति हिताहिताहाराचाराः। तथा तथेति हितोक्ता अपि हिताश्चाहिताश्च, तथा अहितोक्ताश्चाहिता हिताश्च। एवं प्रियमपि मधुराद्यप्रियं, तिक्ताद्यप्रियमपि प्रियम्। अत्रोदाहरणं यथा-पथ्यं तावद्धृतं; तदतिमात्रमपथ्यं भवति, काले च वसन्तेऽपथ्यं, संस्कारेण च विरुद्धद्रव्यसंस्कृतमपथ्यं, भूमौ चानूपायामपथ्यम्, एवं देहेऽतिस्थूले दोषे च कफेऽपथ्यम्। अपथ्यमपि विषं मात्रादिना हितं भवति, यथा रसायने—"विषस्य तिलं दद्यात्" (चि. अ. १) इत्यादि। एवमन्यदप्यूह्यम्। यस्मादेवमेकान्तमपथ्यत्वमनिश्चितं, प्रायोवादपथ्यता तु निश्चिता; तस्मात् स्वभावो निर्दिष्ट इति पथ्यानां रक्तशाल्यादीनामपथ्यानां च यवकादीनामित्यर्थः; स्वभावः प्रकृत्या पथ्यता अपथ्यता च। तथा मात्रादिराश्रय इति निर्दिष्ट इति संबन्धः। मात्रादिः मात्राकालक्रियादिः। आश्रय इति पथ्यत्वापथ्यत्वयोः। मात्रादीन्याश्रित्य भावानां पथ्यत्वापथ्यत्वं च पारमार्थिकं भवतीत्यर्थः। उभयमिति स्वभावं मात्रादिं च ॥ ४५-४७ ॥

**तदात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि भगवन्तमात्रेयमग्निवेश उवाच—यथोद्देशमभिनिर्दिष्टः केवलोऽयमर्थो भगवता श्रुतश्चास्माभिः। आसवद्रव्याणामिदानीमनपवादं लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामह इति ॥ ४८ ॥**

१ 'प्रशमज्ञानामीष्टत्वादयः' इति पा०। २ 'असत्पित्तचरणास्तु व्याचक्षते—आयुर्वेदोदितमार्गः पन्थाः, तस्मादनपेतमायुर्वेदाविरुद्धं यदाहारादि तदेव पथ्यमिति, तेन न कश्चिद्दोषः' इति शिवदाससेनः। ३ 'एतच्चानुमन्यत एव' इति पा०। ४ केवल इति संपूर्णः।

**तमुवाच भगवानात्रेयः—धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयोऽग्निवेश! संग्रहेणाष्टौ शर्करानवमीकाः। तास्वेव द्रव्यसंयोगकरणतोऽपरिसंख्येयासु यथापथ्यतमानामासवानां चतुरशीतिं निबोध। तद्यथा-सुरासौवीरतुषोदकमैरेयमेदकधान्याम्लाः षड् धान्यासवा भवन्ति, मृद्वीकाखर्जूरकाश्मर्यधन्वनराजादनतृणशून्यपरूषकाभयामलकमृगलिण्डिकाजाम्बवकपित्थकुवलबदरककर्कन्धुपीलुप्रियालपनसन्यग्रोधाश्वत्थप्लक्षकपीतनोदुम्बराजमोदशृङ्गाटकशङ्खिनीफलासवाः षड्विंशतिर्भवन्ति, विदारिगन्धाश्वगन्धाकृष्णगन्धाशतावरीश्यामात्रिवृद्दन्तीद्रवन्तीबिल्वोरुबूकचित्रकमूलैरेकादश मूलासवा भवन्ति, शालप्रियकाश्वकर्णचन्दनस्यन्दनखदिरकदरसप्तपर्णार्जुनासनारिमेदतिन्दुककिणिहीशमीशुक्तिशिंशपाशिरीषवञ्जलधन्वनमधूकैः सारासवा विंशतिर्भवन्ति, पद्मोत्पलनलिकुमुदसौगन्धिकपुण्डरीकशतपत्रमधूकप्रियङ्गुधातकीपुष्पैर्दश पुष्पासवा भवन्ति, इक्षुकाण्डेक्षुक्षुवालिकापुण्ड्रकचतुर्थाः काण्डासवा भवन्ति, पटोलताडकपत्रासवौ द्वौ भवतः, तिल्वकलोध्रैलवालुककमुकचतुर्थास्त्वगासवा भवन्ति, शर्करासव एक एवेति। एवमेषामासवानां चतुरशीतिः परस्परेणासंसृष्टानामासवद्रव्याणामुपनिर्दिष्टा भवति। एषामासवानामासुतत्वादासवसंज्ञा। द्रव्यसंयोगविभागविस्तारस्त्वेषां बहुविधकल्पः संस्कारश्च। यथास्वं संयोगसंस्कारसंस्कृता ह्यासवाः स्वं कर्म कुर्वन्ति। संयोगसंस्कारदेशकालमात्रादयश्च भावास्तेषां तेषामासवानां ते ते समुपदिश्यन्ते तत्तत्कार्यमभिसमीक्ष्येति ॥ ४९ ॥**

इदानीमध्याधिकारादासवेष्वनन्तेषु य आसवा अभ्यास्त उच्यन्ते। धान्यादीन्येकत्वेन पठित्वा पृथक् शर्करां पठति, धान्यादीनामवान्तरजातिमत्वात्; शर्करायास्त्ववान्तरजातिर्नास्ति, या तु यासशर्करा सा नासवकारणतया श्रूयते, मधुशर्करा तु मध्वन्तर्निविष्टैव। मधु तु नासवयोनितया पृथक्पठितं, येन तत्कृतस्यासवस्य धान्यसंबन्धाद्धान्यासवेनैव ग्रहणम्। एवं गौडासवादिष्वपि बोद्धव्यम्। द्रव्यं च संयोगश्च करणं च द्रव्यसंयोगकरणं, ततोऽपरिसंख्येयाः स्युः। सौवीरं निस्तुषयवकृतं, मैरेयं सुराकृता सुरा, मेदकः श्वेतसुरा जगलाख्या, धान्याम्लु काञ्जिकम्। तृणशून्यं केतकी, मृगलि-

१ करणतः संस्कारतः। २ 'धान्याम्बुषष्ठा' इति पा०। ३ '०मधूकसारासवा' इति पा०। ४ 'पटोलताडकौ पत्रासवौ' इति पा०। ५ 'द्रव्यसंयोगविभागस्तु द्रव्याणामावापोद्वापप्रपञ्चः' इति शिवदाससेनः। ६ 'ग्रहणात्' इति पा०।

ण्डिका विभीतकं, कुवलमिति स्थूलबदरी, कर्कन्धुः शृगालबदरी । कदरः श्वेतखदिरः, अश्वकर्णः शालभेदः, अरिमेदो विट्खदिरः, किणिही अपामार्गः, शुक्तिः बदरी । पद्मं सरक्तमष्टदलपद्मं, नलिनं श्वेतमष्टदलपद्मं, पुण्डरीकं श्वेतशतपत्रपद्मं, शतपत्रं त्वरुणम् । इक्षुशब्दप्राप्तस्यापि पुण्ड्रकस्य पुनरभिधानमासवं प्रति तस्य प्राधान्यख्यापनार्थम् । क्रमुकं गुवाकम् । तिल्वकः शावरलोध्रः । आसुतत्वादिति सन्धानरूपत्वात् । द्रव्यसंयोगविभाग इत्यादौ 'एषाम्' इति पदेन प्रत्येकं धान्यादिद्रव्यकृता आसवा उक्ताः । तेषां च विभागोऽनुपपन्न एकरूपत्वादिति चेत्? तन्न, तेषामपि सजातीयद्रव्यविभागस्य विद्यमानत्वात् । किंच संस्कारकद्रव्यविभागस्यापि तत्र शक्यत्वात्; नह्येकेनैव द्रव्येण सुरादयः क्रियन्ते, प्राधान्यात्तु धान्यादयोऽभिधीयन्ते । संस्कारश्च बहुविधविकल्प इति योजना । संयोगसंस्कारकरणप्रयोजनमाह—यथास्वमित्यादि । यथास्वमिति यद्युज्यते; देशो भस्मराशिधान्यराश्यादिः सन्धानेषु वक्ष्यमाणः, कालस्तु पक्षमासादिस्थापनं, मात्रा सन्धानद्रव्यमात्रा । आदिग्रहणाद्द्रव्यस्वभावेतिकर्तव्यतासंग्रहणम् । तत्तत्कार्यमिति[1] देशकालशरीरदोषादिभिन्नं हितत्वम् ॥ ४९ ॥

भवति चात्र—

मनःशरीराग्निबलप्रदाना-
मस्वप्नशोकारुचिनाशनानाम् ।
संहर्षणानां प्रवरासवाना-
मशीतिरुक्ता चतुरुत्तरैषा ॥ ५० ॥

मनःशरीरेत्यादिना गुणकथनं युक्त्या पीतस्यासवस्य ज्ञेयम् ॥ ५० ॥

तत्र श्लोकः—

शरीररोगप्रकृतौ मतानि[2]
तत्त्वेन चाहारविनिश्चयं च ।
उवाच यज्जःपुरुषादिकेऽस्मिन्
मुनिस्तथाऽग्र्याणि वरासवांश्च ॥ ५१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने यज्जःपुरुषीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकाख्यायां सूत्रस्थानेऽन्नपानचतुष्के यज्जःपुरुषीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ।

अथात आत्रेयभद्रकाप्यीयमध्यायं व्याख्यास्यामः १
इति ह स्माह भगवानात्रेयः ॥ २ ॥

हिताहितैकदेशमभिधाय कृत्स्नद्रव्यहिताहितत्वज्ञानार्थं रसवीर्यविपाकाभिधायक आत्रेयभद्रकाप्यीयोऽभिधीयते । तत्रापि विपाकादीनामपि रसेनैव प्रायो लक्षणीयत्वाद्रसप्रकरणमादौ कृतम् ॥ १ ॥ २ ॥

आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च ।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः ॥ ३ ॥
यः कुमारशिरा नाम भरद्वाजः स चानघः ।
श्रीमान् वार्योविदश्चैव राजा मतिमतां वरः ॥ ४ ॥
निमिश्च राजा वैदेहो बडिशश्च महामतिः ।
काङ्कायनश्च बाह्लीको बाह्लीकभिषजां वरः ॥ ५ ॥
एते श्रुतवयोवृद्धा जितात्मानो महर्षयः ।
वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः ॥ ६ ॥
तेषां तत्रोपविष्टानामियमर्थवती कथा ।
बभूवार्थविदां सम्यग्रसाहारविनिश्चये ॥ ७ ॥

मुनिमतैः पूर्वपक्षं कृत्वा सिद्धान्तव्यवस्थापनं शिष्यव्युत्पत्त्यर्थम् । रसेनाहारविनिश्चयो रसाहारविनिश्चयः; किंवा अयं रसविनिश्चयः, तथा 'परं चातो विपाकानां' इत्यादिराहारविनिश्चयः[1] ॥ ३—७ ॥

एक एव रस इत्युवाच भद्रकाप्यः, यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वावैषयिकं भावमाचक्षते कुशलाः, स पुनरुदकादनन्य इति । द्वौ रसाविति शाकुन्तेयो ब्राह्मणः, छेदनीय उपशमनीयश्चेति । त्रयो रसा इति पूर्णाक्षो मौद्गल्यः, छेदनीयोपशमनीयसाधारणा इति । चत्वारो रसा इति हिरण्याक्षः कौशिकः, स्वादुर्हितश्च स्वादुरहितश्चास्वादुर्हितश्चास्वादुरहितश्चेति । पञ्च रसा इति कुमारशिरा भरद्वाजः, भौमौदकाग्नेयवायव्यान्तरिक्षाः । षड्रसा इति वार्योविदो राजर्षिः, गुरुलघुशीतोष्णस्निग्धरूक्षाः । सप्त रसा इति निमिर्वैदेहः, मधुराम्ललवणकटुतिक्तकषायक्षाराः । अष्टौ रसा इति बडिशो धामार्गवः, मधुराम्ललवणकटुतिक्तकषायक्षाराव्यक्ताः । अपरिसंख्येया रसा इति काङ्कायनो बाह्लीकभिषक्, आश्रयगुणकर्मसंस्वादविशेषाणामपरिसंख्येयत्वात् ॥ ८ ॥

एक एवेत्यादि[2] । इन्द्रियार्थानामिति निर्धारणे षष्ठी । अन्यतममिति एकम्; अन्यशब्दो ह्ययमेकवचनः, यथा—अन्यो दक्षिणेन गतोऽन्य उत्तरेण; एक इत्यर्थः; तमप्प्रत्ययश्च स्वार्थिकः । जिह्वावैषयिकमिति जिह्वाग्राह्यम् । रसाभावोऽपि जिह्वया गृह्यतेऽत आह—भावमिति । उदकादनन्य इति रसोदकयोरेकत्वख्यापनार्थं, पूर्वपक्षत्वाददुष्टम् । पूर्वपक्षश्च कपिलमतेन, ते

१ 'तत्तत्कार्यमिति तत्तद्दोषप्रशमनरूपं कार्यम्' इति शिवदाससेनः । २ 'शरीररोगप्रकृतौ मतानीति शरीररोगयोः कारणे ये मुनीनां मतभेदास्तानीत्यर्थः' इति शिवदाससेनः ।

१ 'रसाहारविनिश्चय इति रसविनिश्चयपूर्वकं आहारविनिश्चयो रसाहारविनिश्चयः' इति शिवदाससेनः । २ तत्र, 'पाको नास्ति विना वीर्यं वीर्यं नास्ति विना रसात्' इति वीर्यविपाकयो रसाधीनत्वात् प्रथमं रसविनिश्चयप्रकरणमाह—एक एवेत्यादि' इति शिवदाससेनः ।

हि रसतन्मात्रं गन्धतन्मात्रमित्यादिवचनेन गुणाव्यतिरिक्तं द्रव्यमिति ब्रुवते । छेदनीय इति अपतर्पणकारकः । उपशमनीय इति बृंहणः । साधारण इत्याग्नेयसौम्यसामान्यादुभयोरपि लङ्घनबृंहणयोः कर्ता, परस्परविरोधादकर्ता वा । स्वादुरिति अभीष्टः, हित इति आयतावनपकारी । आश्रीयत इत्याश्रयो द्रव्यं, गुणाः स्निग्धगुर्वादयः, कर्म धातुवर्धनक्षपणादि, संस्वादः रसानामवान्तरभेदः; एषां विशेषाणां भेदानामित्यर्थः । तत्र द्रव्यभेदादाधारभेदेनाश्रितस्यापि रसस्य भेदो भवति, आश्रयो हि कारणं, कारणभेदाच कार्यभेदोऽवश्यं भवतीत्यर्थः । गुर्वादिगुणभेदास्तथा कर्मभेदाश्च रसकृता एव । ततश्च कार्यभेदादवश्यं कारणभेद इति पूर्वपक्षाभिप्रायः । संस्वादभेदस्तु एकस्यामपि मधुरजाताविक्षुक्षीरगुडादिगतः प्रत्यक्षमेव भेदो दृश्यते, स तु संस्वादभेदः स्वसंवेद्य एव; यदुक्तं—"इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । भेदस्तथाऽपि नाख्यातुं सरस्वत्याऽपि शक्यते" इति ॥ ८ ॥

**षडेव रसा इत्युवाच भगवानात्रेयः पुनर्वसुः, मधुराम्ललवणकटुतिक्तकषायाः । तेषां षण्णां रसानां योनिरुदकं, छेदनोपशमने द्वे कर्मणी, तयोर्मिश्रीभावात् साधारणत्वं, स्वाद्वस्वादुता भक्तिः, हिताहितौ प्रभावौ, पञ्चमहाभूतविकारास्त्वाश्रयाः प्रकृतिविकृतिविचारदेशकालवशाः, तेष्वाश्रयेषु द्रव्यसंज्ञकेषु गुणा गुरुलघुशीतोष्णस्निग्धरूक्षाद्याः; क्षरणात् क्षारः, नासौ रसः, द्रव्यं तदनेकरससमुत्पन्नमनेकरसं कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम्; अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवत्यनुरसेऽनुरससमन्विते वा द्रव्ये; अपरिसंख्येयत्वं पुनस्तेषामाश्रयादीनां भावानां विशेषापरिसंख्येयत्वान्न युक्तम्, एकैकोऽपि ह्येषामाश्रयादीनां भावानां विशेषानाश्रयते विशेषापरिसंख्येयत्वात्, न च तस्मादन्यत्वमुपपद्यते; परस्परसंसृष्टभूयिष्ठत्वान्न चैषामभिनिर्वृत्तेर्गुणप्रकृतीनामपरिसंख्येयत्वं भवति; तस्मान्न संसृष्टानां रसानां कर्मोपदिशन्ति बुद्धिमन्तः । तच्चैव कारणमपेक्षमाणाः षण्णां रसानां परस्परेणासंसृष्टानां लक्षणपृथक्त्वमुपदेक्ष्यामः ॥ ९ ॥**

१ 'यथा तैलं; यदुक्तं वाग्भटे,—"कृशानां बृंहणायालं स्थूलानां कर्शनाय च' इति शिवदाससेनः । २ 'एक एव रस इत्यादि यदुक्तं तन्निराकरोति-तेषामित्यादि । षण्णां रसानामित्यनेन रसस्यैकत्वावधारणं प्रत्युक्तं, रसभेदस्य प्रत्यक्षसिद्धत्वादिति भावः । योनिराधारकारणम्, एतेन 'स पुनरुदकानन्यः' इति प्रत्याख्यातं, कार्यकारणयोर्भेदस्य दुरुपपन्नत्वादिति भावः; छेदनोपशमने कर्मणी, तयोर्मिश्रीभावाच्च साधारणत्वमित्यनेन द्वितीयतृतीयपक्षौ निराकृतौ । भक्तिरिच्छार्थः, तेन यो यमिच्छति स तस्य स्वादुरितरः पुनरस्वादुरिति पुरुषापेक्षौ धर्मौ, न रसभेदकारिणावित्यर्थः' इति शिवदाससेनः । ३ 'भक्तिद्वेषौ' इति पा० । ४ 'अव्यक्तभावस्तु' इति पा० ।

सिद्धान्तं पुनर्वसुवचनेनाह—षडेवेत्यादि । पूर्वपक्षोक्तरसैकत्वादिव्यवस्थामाह—तेषां षण्णामित्यादि । योनिः आधारकारणं, कार्यकारणयोश्च भेदात् सिद्ध उदकाद्रसभेदः प्रत्यक्ष एवेति भावः । क्षितिव्यतिरिक्तमुदकमेव यथा रसयोनिस्तथा "रसनार्थो रसस्तस्य" ( सू. अ. १ ) इत्यादौ विवृतमेव दीर्घंजीवितीये । तयोर्मिश्रीभावादिति कर्मणोरमूर्तयोर्मिश्रीभावानुपपत्तौ तदाधारयोर्द्रव्ययोर्मिश्रीभावादिति बोद्धव्यम् । साधारणमिति साधारणकार्ययोगित्वम् । भक्तिः इच्छेत्यर्थः । तेन, यो यमिच्छति स तस्य स्वादुरस्वादुरितर इति पुरुषापेक्षौ धर्मौ, न रसभेदकार्याविलर्थः । पञ्चमहाभूतेत्यादौ 'तु'शब्दोऽवधारणे; तेन आश्रया एव, न रसा इत्यर्थः । किंभूता भौमादयो भूतविकारा आश्रया इत्याह—प्रकृतिविकृतिविचारदेशकालवशा इति; वशशब्दोऽधीनार्थः, स च प्रकृत्यादिभिः प्रत्येकं योज्यः । तत्र प्रकृतिवशा यथा—मुद्गाः कषाया मधुराश्च सन्तः प्रकृत्या लघवः; एतद्धि लाघवं न रसवशं, तथाहि सति कषायमधुरत्वाद्गुरुत्वं स्यात्; विकृतिवशं च व्रीहेर्लाजानां लघुत्वं, तथा सक्तुसिद्धपिण्डकानां च गुरुत्वम्; विचारणा विचारो द्रव्यान्तरसंयोग इत्यर्थः, तेन विचारणावशं यथा-मधुसर्पिषी संयुक्ते विषं, तथा विषं चागदसंयुक्तं स्वकार्यव्यतिरिक्तकार्यकारि; देशो द्विविधो भूमिरातुरश्च, तत्र भूमौ 'श्वेतकापोती वल्मीकाधिरूढा विषहरी', तथा "हिमवति भेषजानि महागुणानि भवन्ति", शरीरदेशे यथा-"सक्थिमांसाद्गुरुतरं स्कन्धक्रोडशिरस्पदाम्" ( सू. अ. २७ ) इत्यादि; कालवशं तु यथा मूलकमधिकृत्योक्तं-"तद्बालं दोषहरं वृद्धं त्रिदोषम्" ( सू. अ. २७ ), तथा "यथर्तुपुष्पफलमाददीत" ( क. अ. १ ) इत्यादि । अत्र चैकप्रकरणोक्ता येऽनुक्तास्ते चकारात् स्वभावादिष्वेवान्तर्भावनीयाः । यदुक्तं-"चरः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते" ( सू. अ. २७ ) इति । तत्र, चरशरीरावयवधातूनां देशेन ग्रहणं, मात्रा विचारे प्रविशति, शेषं स्वभावे; तथा रसविमाने वक्ष्यमाणं चात्राप्रविष्टमाहारविशेषायतनमन्तर्भावनीयं यथासंभवम् । स्निग्धरूक्षाद्या इत्यत्रादिग्रहणेनानुक्ता अपि तीक्ष्णमृद्वादयो न रसाः, किंतु द्रव्यगुणाः पृथगेवेति दर्शयति । क्षरणात् अधोगमनक्रियायोगात् क्षारो द्रव्यं नासौ रसः, रसस्य हि

१ 'साधारणकर्मयोगित्वं' इति पा० । २ 'एतद्धि लाघवं स्वाभाविकमेव, न तु रसवशं, तथा सति कषायमधुरत्वाद्गुरुत्वं स्यात्, वक्ष्यते च-"स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः' इति शिवदाससेनः । ३ 'विचारणा विचारो द्रव्यान्तरसंयोग इत्यर्थः, तद्वशं यथा—उष्णवीर्यस्यापि तैलस्य चन्दनोशीरादिशीतवीर्यद्रव्यसंस्काराच्छैत्यं तथा शीतवीर्यस्यापि घृतस्य तत्तद्द्रव्यसंयोगादुष्णता, तथा मांसरससिद्धस्य रक्तशालेर्गुरुत्वमित्यादि' इति शिवदाससेनः ।

निष्क्रियस्य क्रियाऽनुपपत्तेरित्यर्थः । क्षरणं च क्षारस्य पानीययुक्तस्याधोगमनेन, वदन्ति हि लौकिकाः—'क्षारं स्रावयामः' इति; शास्त्रं च—"छित्त्वा छित्त्वाऽऽशयात् क्षारः क्षरत्वात् क्षारयत्यधः" ( चि. अ. ५ ) इति । हेत्वन्तरमाह—द्रव्यं तदनेकरसोत्पन्नमिति; अनेकरसेभ्यो मुष्ककापामार्गादिभ्य उत्पन्नमनेकरसोत्पन्नं; यतश्चानेकरसोत्पन्नमत एवानेकरसं, कारणगुणानुविधायित्वात् कार्यगुणस्येति भावः । अनेकरसत्वमेवाह—कटुकलवणभूयिष्ठमिति ।—भूयिष्ठशब्देनाप्रधानरसान्तरसंबन्धोऽस्तीति दर्शयति । हेत्वन्तरमाह—अनेकेन्द्रियार्थसमन्वितमिति । क्षारो हि स्पर्शेन गन्धेन चान्वितः, तेन द्रव्यं, रसे हि गुणे न स्पर्शो नापि गन्ध इति भावः । हेत्वन्तरमाह—करणाभिनिर्वृत्तमिति; करणेन भस्मपरिस्रावणादिनाऽभिनिर्वृत्तं कृतमित्यर्थः, न रसोऽनेन प्रकारेण क्रियत इति भावः । अव्यक्तरसपक्षं निषेधयति—अव्यक्तीभाव इत्यादि । अव्यक्तीभाव इत्यभूततद्भावे च्विप्रत्ययेन रसानां मधुरादीनां व्यक्तानामेव क्वचिदाधारेऽव्यक्तत्वं, नान्यो मधुरादिभ्योऽव्यक्तरस इत्यर्थः । रसानामिति मधुरादीनां षण्णाम् । प्रकृतावित्यादि । प्रकृतौ कारणे जल इत्यर्थः । अव्यक्तत्वं च रससामान्यमात्रोपलब्धिर्मधुरादिविशेषशून्या, सा च जले भवति; यत उक्तं जलगुणकथने सुश्रुते—"व्यक्तरसता रसदोषः" ( सु. सू. अ. ४५ ) इति, इहापि च 'अव्यक्तरसं च' इति वक्ष्यति, लोकेऽपि चाव्यक्तरसं द्रव्यमास्वाद्य वक्तारो वदन्ति—जलस्येवास्य रसो न कश्चिन्मधुरादिर्व्यक्त इति । विशेषमधुराद्यनुपलब्धिश्चानुद्भूतत्वेन । यथा-दूरादविज्ञायमानविशेषवर्णे वस्तुनि रूपसामान्यप्रतीतिर्भवति, न शुक्लत्वादिविशेषबुद्धिः, तथाऽनुरसेऽव्यक्तीभावो भवति; प्रधानं व्यक्तं रसमनुगतोऽव्यक्तत्वेनेत्यनुरसः, यथा वेणुयवे मधुरे कषायोऽनुरसः । यदुक्तं—"रूक्षः कषायानुरसो मधुरः कफपित्तहा" ( सू. अ. २७ ) इति । अनुरससमन्वित इति सर्वानुरसयुक्ते, यथा—विषे; वचनं हि-"उष्णमनिर्देश्यरसं" ( चि. अ. २३ ) इत्यादि । किंवा, 'अणुरससमन्विते' इति पाठः; तेन, अणुरसेनैकेन मरिचेन शर्करापानके कटुत्वमव्यक्तं स्यात् । अपरिसंख्येयपक्षं दूषयति—अपरीत्यादि । तेषामिति रसानाम्, अपरिसंख्येयत्वं न युक्तम्; आश्रयादीनां भावानामिति आश्रयगुणकर्मसंस्वादानाम्; विशेषापरिसंख्येयत्वादिति आश्रयादिभेदस्यापरिसंख्येयत्वात् । अत्र हेतुमाह—एकैकोऽपि हीत्यादि । एषामाश्रयगुणकर्मसंस्वादानां विशेषानेकैकोऽपि मधुरादिराश्रयते, न च तस्मादाश्रयादिभेदादन्यत्वमाश्रितस्य मधुरादेर्भवति । एवं मन्यते—यद्यपि शालिमुद्गघृतक्षीरादयो मधुरस्याश्रया भिन्नाः, तथाऽपि तत्र मधुरत्वजात्याक्रान्त एक एव रसो भवति बलाकाक्षीरकार्पासादिषु शुक्लवर्ण इव । तथा गुणानां गुरुपिच्छिलस्निग्धादीनामन्यत्वेऽपि कर्मणां वा रसादिवर्धनायुर्जननवर्णकरत्वादीनां भिन्नत्वे सत्यपि न मधुररसस्यान्यत्वं, यत एक एव मधुरस्तत्तद्गुणयुक्तो भवति तत्कर्मकारी चेति को विरोधः । तथा मधुरस्यावान्तरास्वादभेदेऽपि मधुरत्वजात्यनतिक्रमः, कृष्णवर्णावान्तरभेदे यथा कृष्णत्वानतिक्रमः । ननु, मैवं भवत्वपरिसंख्येयत्वं रसानां, परस्परसंयोगात्तु य आस्वादविशेषः स कार्यविशेषकरोऽपि; नहि यन्मधुराम्लेन क्रियते, तन्मधुरेण वाऽम्लेन वा शक्यम्; अतस्तेन परस्परसंयोगेनापरिसंख्येयत्वं भविष्यतीत्याह—परस्परेत्यादि । संसृष्टमिति भावे क्तः, तेन परस्परसंसर्गभूयिष्ठत्वादेषां मधुरादीनामभिनिर्वृत्तेर्न गुणप्रकृतीनामसंख्येयत्वमिति योजना; अयमर्थः—यद्यपि रसाः परस्परसंसर्गेणातिभूयसा युक्ताः सन्तोऽभिनिर्वृत्ता द्विरसादौ द्रव्ये भवन्ति, तथाऽपि न तेषां गुणा गुरुलघ्वादयः, प्रकृतयो वा मधुरादीनां या या आयुष्यत्वरसाभिवर्धकत्वाद्यास्ता असंख्येया भवन्ति, किन्तु य एव मधुरादीनां प्रत्येकं गुणाः प्रकृतयश्च उद्दिष्टास्त एव मिश्रा भवन्ति । किंवा गुणप्रकृतीनामिति मधुरादिषड्गुणस्वरूपाणामित्यर्थः; तेन, रसस्य रसान्तरसंसर्गे दोषाणामिव दोषान्तरसंसर्गे रसानां नापरिसंख्येयत्वमित्यर्थः । प्रकृतिशब्देन कर्म वोच्यते, तेन गुणकर्मणामित्यर्थः । मधुरादीनामवान्तरास्वादविशेषोऽपि परस्परसंसर्गकृतो ज्ञेयः । यत एव हेतो रसानां संसृष्टानां नान्ये गुणकर्मणी भवतः, अत एव संसृष्टानां रसानां पृथक्कर्म शास्त्रान्तरेऽपि नोक्तमित्याह—तस्मादित्यादि । कर्मशब्देनेह गौरवलाघवादिकारका गुरुत्वादयो रसरक्तादिजननादयश्चापि बोद्धव्याः । न केवलमन्यशास्त्रकारै रसानां संसृष्टानां कर्म नोपदिष्टं, किंतु वयमपि नोपदेक्ष्याम इत्याह—तच्चैवेत्यादि । तच्चैव कारणमिति परस्परसंसर्गेऽपि रसानामनधिकगुणकर्मत्वम् । लक्षणेन पृथक्त्वं लक्षणपृथक्त्वम् ।

---

१ 'मधुरादियुक्तः' इति पा० । २ 'शर्करापले' इति पा० । ३ 'अपरिसंख्येयपक्षं दूषयति—अपरिसंख्येयत्वमित्यादि । आदिशब्देन गुणकर्मसंस्वादानां ग्रहणम्, आश्रयगुणकर्मसंस्वादानां ये विशेषा भेदास्तेषामपरिसंख्येयत्वात्तेषां रसानामपरिसंख्येयत्वं यदुच्यते तन्न युक्तं; तत्र हेतुमाह—एकैकोऽपीत्यादि । एषामाश्रयगुणकर्मसंस्वादानां विशेषानेकैकोऽपि मधुरादिराश्रयते, न त्वस्मादाश्रयादिभेदादन्यत्वमाश्रितस्य मधुरादेर्भवति । एतेन, आश्रयादय एव परं भिन्नाः, मधुरादिस्त्वेक एवेत्यर्थः । तथाहि—यद्यपि शालिमुद्गघृतक्षीरादयो मधुरस्याश्रया भिन्नाः, तथाऽपि तत्र मधुरत्वजात्याक्रान्त एक एव रसो भवति, बलाकाक्षीरादिषु शुक्लवर्णवत् । एवं गुणानां गुरुपिच्छिलादीनामन्यत्वेऽपि तथा कर्मणां रसादिवर्धनबलवर्णकरणादीनां भिन्नत्वेऽपि तथा मधुरस्यावान्तरास्वादभेदेऽपि न मधुररसस्यान्यत्वं, मधुरत्वजात्यनतिक्रमादिति भावः' इति शिवदाससेनः ।

१ 'गुणप्रकृतीनामिति परस्परसंसर्गहेतुत्वान्मधुरादिगुणा एव प्रकृतयः, तासां मधुरादिषड्गुणस्वरूपाणामित्यर्थः । तथा च, परस्परसंसर्गभूयिष्ठत्वादेषां रसानामभिनिर्वृत्तेः प्रकृतिभूतानां मधुरादिगुणानामसंख्येयत्वं न चेति योजना । तेन, रसानां रसान्तरसंसर्गे रसान्तरभेदसंसर्गे वा तत्संसर्गाणामेवापरिसंख्येयत्वं, न पुनः प्रकृतिभूतमधुरादिषड्रसानां षट्त्वातिक्रमः,यथा—दोषाणां परस्परसंसर्गभूयस्त्वेऽपि त्रित्वानतिक्रम इत्यर्थः । यतः संसृष्टानां रसानां मधुरादिषड्रसप्रकृतिकत्वान्न रसान्तरत्वम्, अत एव संसृष्टरसानां पृथक्कर्म शास्त्रान्तरेऽपि नोक्तमित्याह—तस्मान्न संसृष्टानामित्यादि ।' इति शिवदाससेनः ।

तत्र लक्ष्यते येन तल्लक्षणम्; अतस्तु 'मधुरो रसः' इत्यादिना ग्रन्थेन, तथा 'स्नेहनप्रीणनह्लादन' इत्यादिना च यद्वाच्यं, तत् सर्वं गृह्यते; । किंवा, लक्षणशब्देन 'मधुरो रस' इत्यादिग्रन्थवाच्यं लक्षणमुच्यते, पृथक्त्वं च रसभेदज्ञानार्थं यद्वक्ष्यति 'स्नेहनप्रीणन' इत्यादि तदुच्यते ॥ ९ ॥

**अग्रे तु तावद्द्रव्यभेदमभिप्रेत्य किंचिद्भिधास्यामः। सर्वं द्रव्यं पाञ्चभौतिकमस्मिन्नर्थे; तच्चेतनावदचेतनं च, तस्य गुणाः शब्दादयो गुर्वादयश्च द्रवान्ताः, कर्म पञ्चविधमुक्तं वमनादि ॥ १० ॥**

अग्रे त्वित्यादि । रसेषु वाच्येषु द्रव्यभेदमभिप्रेत्य प्रतिपादनीयतया परिगृह्य रसानां द्रव्यज्ञानाधीनज्ञानत्वाद्द्रव्याभिधानमग्रे कृतमित्यर्थः । किंचिदिति आयुर्वेदोपयोगिद्रव्यस्वरूपं न सर्वम्, अप्रसङ्गदोषादिति भावः । सर्वद्रव्यमिति कार्यद्रव्यम् । अस्मिन्नर्थे अस्मिन् प्रकरणे । द्रवान्ता इति वचनेन पूर्वोक्तान् विंशतिगुणानाह । अत्र च परत्वापरत्वादीनामिहानभिधानेन चिकित्सायां परत्वादीनामप्राधान्यं दर्शयति; येऽपि तत्रापि युक्तिसंयोगपरिमाणसंस्काराभ्यासा अत्यर्थंचिकित्सोपयोगिनोऽपि न ते पार्थिवादिद्रव्याणां शब्दादिवत् सांसिद्धिकाः किंतर्ह्याधेयाः, अत इह नैसर्गिकगुणकथने नोक्ताः । उक्तमिति अपामार्गतण्डुलीये । एतच्च प्राधान्यादुच्यते, तेन बृंहणाद्यपि बोद्धव्यम् ॥ १० ॥

**तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलानि पार्थिवानि, तान्युपचयसङ्घातगौरवस्थैर्यकराणि; द्रवस्निग्धशीतमन्दमृदुपिच्छिलरसगुणबहुलान्याप्यानि, तान्युपक्लेदस्नेहबन्धविष्यन्दमार्दवप्रह्लादकराणि; उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलान्याग्नेयानि, तानि दाहपाकप्रभाप्रकाशवर्णकराणि; लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि, तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि; मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि, तानि मार्दवसौषिर्यलाघवकराणि ॥ ११ ॥**

बहुलशब्दो गुर्वादिभिः प्रत्येकं संबध्यते; किंवा गन्धेनैव, यतो गन्धगुणबहुला पृथिव्येव भवति; अत एव द्रव्यान्तरलक्षणेऽपि वैशेषिकगुणोऽन्त एव पठ्यते 'रसगुणबहुलानि' इत्यादि; तेन तत्रापि रसादिभिरेव बहुलशब्दो योज्यः । सर्वकार्यद्रव्याणां पाञ्चभौतिकत्वेऽपि पृथिव्याद्युत्कर्षेण पार्थिवत्वादि ज्ञेयम् । सङ्घातः काठिन्यं, स्थैर्यम् अविचाल्यम् । बन्धनं परस्परयोजनं, प्रह्लादः शरीरेन्द्रियतर्पणम् । सूक्ष्मं सूक्ष्मस्रोतोऽनुसारि । प्रभा वर्णप्रकाशिनी दीप्तिः; यदुक्तं—"वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिका" (इं. अ. ७) इत्यादि । विचरणं विचारो गतिरित्यर्थः । सौषिर्यं रन्ध्रबहुलता । अत्राकाशबाहुल्यं द्रव्यस्य पृथिव्यादिभूतान्तराल्पत्वेन भूरिव्यक्ताकाशत्वेन च ज्ञेयं, यदेव भूरिशुषिरं तन्नाभसं; किंवा आकाशगुणबहुलत्वेन नाभसं द्रव्यमित्युच्यते ॥ ११ ॥

**अनेनोपदेशेन नानौषधिभूतं जगति किंचिद्द्रव्यमुपलभ्यते तां तां युक्तिमर्थं च तं तमभिप्रेत्य ॥ १२ ॥**

अनेनेति प्रतिनियतद्रव्यगुणोपदेशेन; यत् पार्थिवादि द्रव्यं यद्गुणं तद्गुणे देहे संपाद्य तद् भेषजं भवतीत्यर्थः । तच्च पार्थिवादि द्रव्यं न सर्वथा न च सर्वस्मिन् व्याधौ भेषजमित्याह—तां तां युक्तिमित्यादि ।—युक्तिमिति उपायम्, अर्थमिति प्रयोजनम्, अभिप्रेत्येति अधिकृत्य; तेन केनचिदुपायेन क्वचित् प्रयोजने किंचिद्द्रव्यमौषधं भवति न सर्वत्र । तेन यदुच्यते—वैरोधिकानां सर्वदाऽपथ्यत्वेन 'नानौषधं द्रव्यम्' इति वचो विरोधि; तन्न भवति, वैरोधिकानि हि संयोगसंस्कारदेशकालाद्यपेक्षाणि भवन्ति, वैरोधिकसंयोगाद्यभावे तु पथ्यान्यपि क्वचित् स्युः । यान्यपि (सर्वदाऽपि[1]) स्वभावादेव विषमन्दकादीन्यपथ्यानि, तान्यप्युपाययुक्तानि क्वचित् पथ्यानि भवन्ति; यथा उदरे-"विषस्य तिलं दद्यात्" (चि. अ. १३) इत्यादि । यत्तु तृणपांशुप्रभृतीनि नोपयुज्यन्ते, अतो न तानि भेषजानीत्युच्यते; तन्न, तेषामपि भेषजखेदाद्युपायत्वेन भेषजत्वात् ॥ १२ ॥

**न तु केवलं गुणप्रभावादेव द्रव्याणि कार्मुकाणि भवन्ति; द्रव्याणि हि द्रव्यप्रभावाद्गुणप्रभावाद्द्रव्यगुणप्रभावाच्च तस्मिंस्तस्मिन् काले तत्तदधिकरणमासाद्य तां तां च युक्तिमर्थं च तं तमभिप्रेत्य यत् कुर्वन्ति, तत् कर्म; येन कुर्वन्ति, तद्वीर्यं; यत्र कुर्वन्ति, तदधिकरणं; यदा कुर्वन्ति, स कालः; यथा कुर्वन्ति, स उपायः; यत् साधयन्ति, तत् फलम् ॥ १३ ॥**

पार्थिवादिद्रव्याणां गुरुखरादिगुणयोगाद्भेषजत्वमुक्तं, तेन गुणप्रभावादेव भेषजं स्यादिति शङ्कां निरस्यन्नाह—न तु केवलमित्यादि । द्रव्यप्रभावाद्यथा—दन्त्या विरेचकत्वं, तथा मणीनां विषादिहन्तृत्वमित्यादि । गुणप्रभावाद्यथा—ज्वरे तिक्तको रसः, शीतेऽग्निरित्यादि । द्रव्यगुणप्रभावाद्यथा—कृष्णाजिनस्योपरीति, अत्रापि कृष्णत्वं गुणोऽजिनं च द्रव्यमभिप्रेतं; यथा वा—"मण्डलैर्जातरूपस्य तस्या एव पयः शृतम्" (चि. अ. २. पा. ३); तत्र मण्डलगुणयुक्तस्यैव जातरूपस्य कार्मुकत्वम्[2] । कथं कुर्वन्तीत्याह—तस्मिंस्तस्मिन्नित्यादि । तां तां युक्तिमासाद्येति तां तां योजनां प्राप्य । यत् कुर्वन्तीत्यादावुदाहरणं यथा—शिरोविरेचनद्रव्याणि यच्छिरोविरेचनं कुर्वन्ति, तच्छिरोविरेचनं

१ 'अस्मिन्नर्थे इत्यस्मिन् प्रकरणे, तेन पाञ्चभौतिकत्वं यद्द्रव्याणां तदायुर्वेदसिद्धान्तः, न तु शास्त्रान्तरस्येत्यर्थः; नैयायिकादिभिः पाञ्चभौतिकत्वाधनभ्युपगमात्' इति शिवदाससेनः । २ 'पार्थिवानीति पृथिवीभूतबहुलानीत्यर्थः । एवमाप्यानीत्याद्यपि बोध्यम्' इति शिवदाससेनः ।

[1] 'सर्वदाऽपि' इति क्वचित् पुस्तके नोपलभ्यते । [2] 'गुणकारित्वम्' इति पा० ।

कर्म; येनोष्णत्वादिकारणेन शिरोविरेचनं कुर्वन्ति, तद्वीर्यं, वीर्यं शक्तिः, सा च द्रव्यस्य गुणस्य वा; यत्र शिरोविरेचनं कुर्वन्ति तदधिकरणं शिरः, नान्यत्राधिकरणे शिरोविरेचनद्रव्यं प्रभवतीत्यर्थः; यदेति वसन्तादौ शिरोगौरवादियुक्ते च काले, एतेनाकाले शीते शिरोविरेचनं स्वव्धत्वान्न कार्मुकं, किन्तु स्वकाल एव; यथा येन प्रकारेण प्रधमनावपीडनादिना तथा "प्रसारिताङ्गमुत्तानं शयने संस्तरास्तृते । ईषत्प्रलम्बशिरसं संवेद्य चाप्ततेक्षणम्"—इत्यादिना विधिना कुर्वन्ति, स उपायः; यत् साधयन्ति शिरोगौरवशूलाद्युपरमं, तत् फलं; फलम् उद्देश्यम् । कर्म कार्यं साधनम्, उद्देश्यं फलं साध्यं; यथा—यागनिष्पाद्यो धर्मः कार्यतया कर्म, तज्जन्यस्तु स्वर्गादिरुद्देश्यः फलम्; एवं वमनादिष्वपि कर्माधिकरणाद्युन्नेयम् ॥ १३ ॥

**भेदश्चैषां त्रिषष्टिविधविकल्पो द्रव्यदेशकालप्रभावाद्भवति, तमुपदेक्ष्यामः ॥ १४ ॥**

संप्रति द्रव्यमभिधाय विकृतानां रसानामेव भेदमाह—भेदश्चैषामित्यादि । प्रभावशब्दो द्रव्यदेशकालैः प्रत्येकं युज्यते; तत्र द्रव्यप्रभावाद्यथा—'सोमगुणातिरेकान्मधुरः' इत्यादि; देशप्रभावाद्यथा—हिमवति द्राक्षादाडिमादीनि मधुराणि भवन्त्यन्यत्राम्लानीत्यादि; कालप्रभावाद्यथा—बालाम्रं सकषायं तरुणमम्लं पक्वं मधुरं, तथा हेमन्ते ओषध्यो मधुरा वर्षास्वम्ला इत्यादि । अग्निसंयोगादयो येऽन्ये रसहेतवस्तेऽपि काले द्रव्ये वाऽन्तर्भावनीयाः १४

**स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक् ।**
**यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि तु ॥ १५ ॥**

भेदमाह—स्वादुरित्यादि । तत्र स्वादोरम्लादियोगात् पञ्च, शेषैरिति आदित्वेनोपयुक्तादन्यैः; तेनाम्लस्य लवणादियोगाच्चत्वारि, एवं लवणस्य कट्वादियोगात्त्रीणि, कटुकस्य तिक्तकषाययोगाद्द्वे, तिक्तस्य कषाययोगादेकम्, एवं पञ्चदश द्विरसानि ॥१५॥

**पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत् ।**
**मधुरस्य तथाऽम्लस्य लवणस्य कटोस्तथा ॥ १६ ॥**
**त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः ।**

त्रिरसमाह—पृथगित्यादि । मधुरस्याम्लादिरसचतुष्टयेन पृथगित्येकैकशो युक्तस्य शेषैर्लवणादिभिर्योगो भवति; तत्र मधुरस्याम्लयुक्तस्य शेषलवणादियोगाच्चत्वारि, तथा मधुरस्य लवणयुक्तस्य कट्वादियोगात्त्रीणि, तथा कटुयुक्तस्य तिक्तादियोगाद्द्वे, तथा तिक्तयुक्तस्य कषाययोगादेकम्, एवं मधुरेणादिस्थितेन दश । एवमम्लस्यादिस्थितस्य लवणयुक्तस्य कट्वादियोगात्त्रीणि, तथा कटुकयुक्तस्य शेषाभ्यां योगाद्द्वे, एवं तिक्तयुक्तस्य कषाययोगादेकम्, एवमम्लस्य षट् । अनेनैव न्यायेन लवणस्य त्रीणि, कटोश्चैकमेव; एवं मिलित्वा त्रिरसानि विंशतिः ॥ १६ ॥—

**वक्ष्यन्ते तु चतुष्केण द्रव्याणि दश पञ्च च ॥ १७ ॥**
**स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग्गतौ ।**

१ "शिरोगौरवशूलाद्युपशमम्' इति पा० । २ 'द्रव्यभेदमभिधाय रसभेदमाह—भेदश्चैषामित्यादि" इति शिवदाससेनः । ३ 'एतच्चोपलक्षणं, तेनाग्निसंयोगादयोऽपि रसभेदहेतवो ज्ञेयाः, इति शिवदाससेनः । ४ "स्वादोरम्लादियोगात् पञ्च, तद्यथा-मधुराम्लं १, मधुरलवणं २, मधुरकटुकं ३, मधुरतिक्तं ४, मधुरकषायम् ५ इति । शेषैरित्यादित्वेनोपयुक्तादन्यैरम्लादयः पृथग्योगं यान्ति, तेनापरे दश; तथाहि—अम्लस्य प्रत्येकं लवणादिचतुष्कयोगाच्चत्वारः—अम्ललवणम् १, अम्लकटुकम् २, अम्लतिक्तम् ३, अम्लकषायम् ४, इति; तथा लवणस्य कटुकादियोगात्त्रयः—लवणकटुकं १, लवणतिक्तं २, लवणकषायम् ३, इति; कटुकस्य तिक्तकषाययोगाद्द्वौ भेदौ—कटुतिक्तं १, कटुकषायम् २ इति; तिक्तस्य कषाययोगादेकः—तिक्तकषायम् १; एवं हि द्विरसानि द्रव्याणि पञ्चदश भवन्ति" इति शिवदाससेनः ।

१ "इदानीं त्रिरसद्रव्याणां विंशतिभेदानाह—पृथगम्लेत्यादि । मधुरस्य अम्लादिरसचतुष्टयेन पृथगित्येकैकशो युक्तस्य शेषैर्लवणादिभिर्योगो भवेत्, तत्र मधुरस्याम्लयुक्तस्य शेषैर्लवणादिभिर्योगाच्चत्वारो भेदाः—मधुराम्ललवणं १, मधुराम्लकटुकं २, मधुराम्लतिक्तं ३, मधुराम्लकषायम् ४ इति; तथा मधुरस्य लवणयुक्तस्य शेषैः कटुतिक्तकषायैर्योगात्त्रयः—मधुरलवणकटुकं १, मधुरलवणतिक्तं २, मधुरलवणकषायम् ३ इति; तथा मधुरस्य कटुयुक्तस्य तिक्तकषाययोगाद्द्वौ—मधुरकटुतिक्तं १, मधुरकटुकषायम् २ इति; एवं मधुरस्य तिक्तयुक्तस्य कषाययोगादेकः—मधुरतिक्तकषायम् १ इति; एवमम्लस्य लवणयुक्तस्य प्रत्येकं कटुतिक्तकषाययोगात्त्रयः—अम्ललवणकटुकम् १, अम्ललवणतिक्तम् २, अम्ललवणकषायम् ३ इति; तथा तस्यैव कटुकयुक्तस्य तिक्तकषाययोगाद्द्वौ—अम्लकटुतिक्तम् १, अम्लकटुकषायम् २ इति; तथाऽम्लस्य तिक्तयुक्तस्य कषाययोगादेकः—अम्लतिक्तकषायम् १ इति; एवं लवणस्य कटुयुक्तस्य तिक्तकषाययोगाद्द्वौ—लवणकटुतिक्तं १, लवणकटुकषायम् २ इति; तथा लवणस्य तिक्तयुक्तस्य कषाययोगादेकः—लवणतिक्तकषायम् १ कटोश्च तिक्तयुक्तस्य कषाययोगादेकः—कटुतिक्तकषायः १ इति; मिलित्वा त्रिरसानि द्रव्याणि विंशतिर्भवन्ति" इति शिवदाससेनः ।

२ "चतुष्कसंयोगेन पञ्चदशभेदानाह—वक्ष्यन्त इत्यादि । सहितावित्ति मिलितौ स्वाद्वम्लौ लवणाद्यैश्चतुर्भिः पृथगेकैकशो योगं गतौ शेषैः कटुतिक्तकषायैः पृथग्योगं चतुष्करससंख्यया यातो गच्छतः; तेन षड् भेदाः—मधुराम्ललवणकटुकं १, मधुराम्ललवणतिक्तं २, मधुराम्ललवणकषायं ३, मधुराम्लकटुतिक्तं ४, मधुराम्लकटुकषायं ५, मधुराम्लतिक्तकषायम् ६; इति । अम्लपरित्यागेनापरांश्चतुरो भेदानाह—सहितावित्यादि । मिलितौ स्वादुलवणौ कट्वादिभिः कटुतिक्तकषायैः पृथग्युक्तौ, शेषैरिति यथाक्रमं तिक्तकषायकटुभिः पृथग्योगं यातो गच्छतः; तेन त्रयो भेदाः—स्वादुलवणकटुतिक्तं १, स्वादुलवणतिक्तकषायं २, स्वादुलवणकषायकटुकम् ३ इति । अत्राद्यापेक्षया शेषाणां बहुत्वाद्बहुवचनमुपपन्नम् । लवणपरित्यागात् पुनश्चतुर्थो भेद इत्याह—स्वादूषणौ तथेति; स्वादूषणावपि शेषाभ्यां तिक्तकषायाभ्यां योगं यातः—स्वादुकटुतिक्तकषायम् १ । एवं चतुष्के मधुरयोगेन दश भेदाः । इदानीं मधुरपरित्यागात् पञ्च भेदानाह—कट्वाद्यैरित्यादि । अम्ललवणौ कट्वाद्यैः कटुतिक्तकषायैः पृथग्युक्तौ यथाक्रमं शेषैस्तिक्तकषायकटुभिः पृथग्योगं यातो गच्छतः; तेन त्रयो भेदाः—अम्ललवणकटुतिक्तम् १, अम्ललवणतिक्तकषायम् २, अम्ललवणकषायकटुकम् ३ इति । लवणपरित्यागाच्च तुर्यं भेदमाह—शेषैरम्लकटू तथेति; अम्लकटू शेषैरिति शेषाभ्यां तिक्तकषायाभ्यां योगं यातो गच्छतः; अत्र शेषैरिति जातौ बहुवचनम्; अम्लकटुतिक्तकषायम् १ । मधुराम्लपरित्यागात्तु पञ्चमो भेद इत्याह—युज्येते त्वित्यादि । लवणकटुतिक्तकषायम् १ । तदेवं चतुष्के पूर्वं दशभिर्मिलित्वा पञ्चदश भेदा उक्ताः" इति शिवदाससेनः ।

**योगं शेषैः पृथग्यातश्चतुष्करससंख्यया ॥ १८ ॥**
**सहितौ स्वादुलवणौ तद्वत् कट्वादिभिः पृथक् ।**
**युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ तथा ॥ १९ ॥**
**कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक् ।**
**यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा ॥ २० ॥**
**युज्यते तु कषायेण सतिक्तौ लवणोषणौ ।**

चतूरसे स्वाद्वम्लावादिस्थितौ लवणादिभिरेकैकश्येन युक्तौ शेषैः कट्वादिभिर्योगात् षड् भवन्ति । स्वादुलवणौ सहितौ आदिस्थितौ, कट्वादिभिरिति कटुतिक्ताभ्यां पृथग्युक्तौ, शेषैरिति तिक्तकषायाभ्यां, तेनेह बहुवचनं जातौ बोद्धव्यम्; एवं त्रीणि। स्वादूषणौ तथेत्यनेन स्वादुकटुकतिक्तकषायरूपमेकम् । कट्वाद्यैरित्यादावपि बहुवचनं जातौ । अम्ललवणौ संयुक्तौ कटुना सहितौ शेषाभ्यां योगाद्वे, तथाऽम्ललवणौ तिक्तयुक्तौ शेषयोगादेकम् । अम्लकटू तथेत्यनेनाम्लकटुतिक्तकषायरूपमेकम् । युज्येते त्वित्यादिना चैकम् । एवं पञ्चदश चतूरसानि १७–२० ॥—

**षट् तु पञ्चरसान्याहुरेकैकस्यापवर्जनात् ॥ २१ ॥**
**षट् चैवैकरसानि स्युरेकं षड्रसमेव तु ।**

अपवर्जनादिति[२] त्यागात् । अत्र च रसानां गुणत्वेनैकस्मिन् द्रव्ये समवायो योगशब्देनोच्यते ॥ २१ ॥—

**इति त्रिषष्टिर्द्रव्याणां निर्दिष्टा रससंख्यया ॥ २२ ॥**
**त्रिषष्टिः स्यात्त्वसंख्येया रसानुरसकल्पनात् ।**
**रसास्तरतमाभ्यां तां संख्यामतिपतन्ति हि ॥ २३ ॥**

रससंसर्गस्य प्रकारान्तरेणासंख्येयतामाह—त्रिषष्टिः स्यादित्यादि । अनुरसोऽग्रे वक्ष्यमाणः । अत्र च त्रिषष्ट्यात्मकरसे रसानुरसकल्पना नास्ति, केवले मधुरादौ तदभावात्; तेन यथासंभवं सप्तपञ्चाशत्संयोगविषयं रसानुरसकल्पनं ज्ञेयम् । किंवा, एकरसेऽप्यनुरसोऽस्त्येवाव्यपदेश्यः । प्रकारान्तरेणाप्यसंख्येयतामाह—रसास्तरतमाभ्यामित्यादि । मधुरमधुरतरमधुरतमादिभेदादसंख्येयता रसानां भवतीति भावः । किंवा, रसानुरसत्वेनैव याऽसंख्येयता तत्रैवायं हेतुः—रसास्तरतमाभ्यामित्यादिः ॥ २१ ॥ २३ ॥

**संयोगाः सप्तपञ्चाशत् कल्पना तु त्रिषष्टिधा ।**
**रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः ॥२४॥**

एवमसंख्येयत्वेऽपि त्रिषष्टिविधैव कल्पना चिकित्साव्यवहारार्थमिहाचार्यैः कल्पितेत्याह—संयोगा इत्यादि । तत्र योग्यत्वादिति तत्र स्वस्थातुरहितचिकित्साप्रयोगेऽनतिसंक्षेपविस्तररूपतया हितत्वादित्यर्थः ॥ २४ ॥

**क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् ।**
**दोषौषधादीन् संचिन्त्य भिषजा सिद्धिमिच्छता २५**
**द्रव्याणि द्विरसादीनि संयुक्तांश्च रसान् बुधाः ।**
**रसानेकैकशो वाऽपि कल्पयन्ति गदान् प्रति ॥२६॥**

तमेव चिकित्साप्रयोगमाह—क्वचिदित्यादि । अत्रादिग्रहणाद्देशकालबलादीनामनुक्तानां ग्रहणम् । एतदेव संयुक्तासंयुक्तरसकल्पनं भिन्नरसद्रव्यमेलकाद्वाऽनेकरसैकद्रव्यप्रयोगादेकरसद्रव्यप्रयोगाद्वा भवतीति दर्शयन्नाह—द्रव्याणीत्यादि । द्विरसादीनि उत्पत्तिसिद्धद्विरसत्रिरसादीनि; द्विरसं यथा—कषायमधुरो मुद्गः; त्रिरसं यथा—"मधुराम्लकषायं च विष्टम्भि गुरु शीतलम् । पित्तश्लेष्महरं भव्यं" ( सू. अ. २७ ) इत्यादि; चतूरसस्तिलः, यदुक्तं—"स्निग्धोष्णमधुरस्तिक्तः कषायः कटुकस्तिलः" ( सू. अ. २७ ); पञ्चरसं त्वामलकं हरीतकी च, "शिवा पञ्चरसा" इत्यादिवचनात्; व्यक्तषड्रसं तु द्रव्यमिहानुक्तं, विषं त्वव्यक्तषड्रससंयुक्तं; हारीते त्वेणमांसं व्यक्तषड्रससंयुक्तमुक्तम् । एवं द्विरसादिद्रव्ययोगाद्द्विरसाद्युपयोगः । तथा संयुक्तांश्च रसानिति एकैकरसादिद्रव्यमेलकात् संयुक्तान् रसानेकैकशः कल्पयन्ति प्रयोजयन्ति । गदान् प्रतीति प्राधान्येन, तेन स्वस्थवृत्तेऽपि बोद्धव्यं; किंवा, द्विरसादिभेदो गद एव, स्वस्थे तु सर्वरसप्रयोग एव; यदुक्तं—"समसर्वरसं सात्म्यं समधातोः प्रशस्यते" ( सू. अ. ७ ) इति । एवं च व्याख्याने सति 'क्वचिदेको रस' इत्यादिना सममस्य न पौनरुक्त्यम् । किंवा, 'क्वचिदेको रसः' इत्यादिना स्वमतमुक्तम्, अत्रैवार्थे 'द्रव्याणि द्विरसादीनि' इत्यादिनाऽऽचार्यान्तरसंमतिं दर्शयति; अत एवान्याचार्यान्तराभिप्रायेण कल्पयन्तीत्युक्तं, तेन न पौनरुक्त्यम् ॥ २५–२६ ॥

**यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।**
**न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥ २७ ॥**

रसज्ञानफलमाह—यः स्यादित्यादि । अत्र रसविकल्पज्ञानादेव व्याधिहेतुद्रव्यज्ञानं कृत्स्नमवरुद्धं, रसज्ञानेनैव प्रायः सकलद्रव्यगुणस्य वक्ष्यमाणत्वात् । दोषविकल्पज्ञानाच्च लिङ्गज्ञानं, यावद्धि लिङ्गं तत् सर्वं दोषविकल्पसंबद्धम् । रसदोषविकल्पज्ञानात्तु भेषजज्ञानं, यतो रसतः स्वरूपज्ञानं भेषजद्रव्यस्य, दोषतश्च भेषजप्रयोगविषयविज्ञानम् । किंवा, रसविकल्पाच्च तथा दोषविकल्पाच्च हेत्वादिज्ञानं पृथगेव वक्तव्यं; रसभेदाद्धि तत्कार्यं लिङ्गमपि ज्ञायते, हेतुभेषजविज्ञानं तु

---

१ "पञ्चके षड्भेदानाह—षडित्यादि । अपवर्जनादिति त्यागात्; यथा—मधुरत्यागादम्ललवणकटुतिक्तकषायम् १, एवमम्लत्यागान्मधुरलवणकटुतिक्तकषायं २, लवणपरित्यागान्मधुराम्लकटुतिक्तकषायं ३, कटुकत्यागान्मधुराम्ललवणतिक्तकषायं ४, तिक्तत्यागान्मधुराम्ललवणकटुकषायं ५, कषायत्यागान्मधुराम्ललवणकटुतिक्तम् ६" इति शिवदाससेनः । २ 'अपवर्जनादिति स्फोटनात्' इति पा० । ३ 'रसानां रसकल्पनात्' इति पा० । ४ 'रसास्तरतमाभ्यस्ता' इति पा० ।

१ तत्र योगित्वाद्' इति पा० । २ उपशान्तिः चिकित्सा ।

रसभेदविज्ञानादेव वक्तव्यं, यतो रसभेदवद्द्रव्यमेव विकाराणां हेतुर्भेषजं च भवतीति; एवं दोषभेदं ज्ञात्वा च तस्य समानं हेतुं प्रत्येति, दोषविरोधि च द्रव्यं भेषजमिति। तद्युक्तमुक्तं-न स सुखोद्विकाराणां हेतुलिङ्गोपशान्तिष्विति ॥ २७ ॥

**व्यक्तः शुष्कस्य चादौ च रसो द्रव्यस्य लक्ष्यते।**
**विपर्ययेणानुरसो रसो नास्ति हि सप्तमः ॥ २८ ॥**

पूर्वोक्तरसानुरसलक्षणमाह—व्यक्त इत्यादि। शुष्कस्य चेति चकारादार्द्रस्य च, आदौ चेति चकारादन्ते च; तेन शुष्कस्य वाऽऽर्द्रस्य वा प्रथमजिह्वासंबन्धे वाऽऽस्वादान्ते वा यो व्यक्तत्वेन मधुरोऽयमम्लोऽयमित्यादिना विकल्पेन गृह्यते, स व्यक्तः; यस्तूक्तावस्थाचतुष्टयेऽपि व्यक्तो नोपलभ्यते, किंतर्ह्यव्यपदेश्यतया छायामात्रेण कार्यदर्शनेन वा मीयते, सोऽनुरस इति वाक्यार्थः। यतश्च मधुरादय एव व्यक्तत्वाव्यक्तत्वाभ्यां रसानुरसरूपाः, अतोऽव्यक्तो नाम सप्तमो रसो नास्ति। अयं चार्थः पूर्वं प्रतिषिद्धोऽप्यनुगुणस्पष्टहेतुप्राप्त्या पुनर्निषिध्यते। अन्ये त्वाहुः—शुष्कस्य चेत्यनेन यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः, तत्र शुष्कावस्थायां योऽव्यक्तः स रस उच्यते; यस्त्वार्द्रावस्थायां व्यक्तः सन् शुष्कावस्थायां नानुयाति, नासौ रसः, किन्त्वनुरसः। यथा—पिप्पल्या आर्द्राया मधुरो रसो व्यक्तः, शुष्कायास्तु पिप्पल्याः कटुकः; तेन कटुक एव रसः पिप्पल्याः, मधुरस्त्वनुरसः; यस्तु द्राक्षादीनामार्द्रावस्थायां शुष्कावस्थायां च मधुर एव, तत्र विप्रतिपत्तिरपि नास्ति, तेन तत्र मधुर एव रसः; नित्यार्द्रप्रयोज्यानां तु काञ्जिकतक्रादीनामादौ व्यक्तो य उपलभ्यते रसः, अनु चोपलभ्यते यः सोऽनुरसो युक्तस्तिक्तत्वादिः; तथा, आर्द्रावस्थायां शुष्कावस्थाविपरीतो यः पिप्पल्या इव मधुरः, सोऽनुरस इति। किंत्वार्द्राऽपि पिप्पली मधुररसैवेति पश्यामः, यतो वक्ष्यति—"श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली" (सू. अ. २७) इति; मधुरस्य तत्रानुरसत्वे गुरुत्वश्लेष्मकर्तृत्वान्यनुपपन्नानि; तेन, आर्द्रा पिप्पली व्यक्तमधुररसैव, शुष्का तु मधुरानुरसेति युक्तम् ॥ २८ ॥

**परापरत्वे युक्तिश्च संख्या संयोग एव च।**
**विभागश्च पृथक्त्वं च परिमाणमथापि च ॥ २९ ॥**
**संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः।**
**सिद्ध्युपायाश्चिकित्साया लक्षणैस्तान् प्रचक्ष्महे ३०**
**देशकालवयोमानपाकवीर्यरसादिषु।**
**परापरत्वे, युक्तिश्च योजना या तु युज्यते ॥ ३१ ॥**
**संख्या स्याद्गणितं, योगः सह संयोग उच्यते।**
**द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव च ॥ ३२ ॥**
**विभागस्तु विभक्तिः स्याद्वियोगो भागशो ग्रहः।**
**पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥ ३३ ॥**

१ 'रसभेदविज्ञाने' इति पा०। २ 'शुष्कावस्थां न याति' इति पा०। ३ 'विप्रतिपत्तिरेव' इति पा०।

**परिमाणं पुनर्मानं, संस्कारः करणं मतम्।**
**भावाभ्यसनमभ्यासः शीलनं सततक्रिया ॥ ३४ ॥**
**इति स्वलक्षणैरुक्ता गुणाः सर्वे परादयः।**
**चिकित्सा यैरविदितैर्न यथावत् प्रवर्तते ॥ ३५ ॥**

संप्रति पूर्वोक्तगुर्वादिगुणातिरिक्तान् परत्वापरत्वादीन् दश गुणान् रसधर्मत्वेनोपदेष्टव्यानाह—परेत्यादि। तत्र परत्वं प्रधानत्वम्, अपरत्वम् अप्रधानत्वम्। तद्विवरणं—देशकालेत्यादि। तत्र देशो मरुः परः, अनूपोऽपरः; कालो विसर्गः परः, आदानमपरः; वयस्तरुणं परम्, अपरमितरत्; मानं च शरीरस्य यथा वक्ष्यमाणं शारीरे परं, ततोऽन्यदपरं; पाकवीर्यरसास्तु ये यस्य योगिनस्ते तं प्रति पराः, अयौगिकास्त्वपराः। आदिग्रहणात् प्रकृतिबलादीनां ग्रहणम्। किंवा, परत्वापरत्वे वैशेषिकोक्ते ज्ञेये; तत्र देशापेक्षया सन्निकृष्टदेशसंबन्धिनमपेक्ष्य विदूरदेशसंबन्धिनि परत्वं, सन्निकृष्टदेशसंबन्धिनि चापरत्वं भवति; एवं सन्निकृष्टविप्रकृष्टकालापेक्षया च स्थविरे परत्वं, यूनि चापरत्वं भवति। वयःप्रभृतिषु परत्वापरत्वं यथासंभवं कालदेशकृतमेवेह्योपयोगादुपचरितमप्यभिहितं, यतो न गुणे मानादौ गुणान्तरसंभवः। युक्तिश्चेत्यादौ योजना दोषाद्यपेक्षया भेषजस्य समीचीनकल्पना, अत एवोक्तं—या तु युज्यते; या कल्पना यौगिकी भवति सा तु युक्तिरुच्यते, अयौगिकी तु कल्पनाऽपि सती युक्तिर्नोच्यते पुत्रोऽप्यपुत्रवत्। युक्तिश्चेयं संयोगपरिमाणसंस्काराद्यन्तर्गताऽप्यत्युपयुक्तत्वात् पृथगुच्यते। संख्यां लक्षयति—संख्येत्यादि। गणितमिहैकद्वित्र्यादि। संयोगमाह—योग इत्यादि। सहेति मिलितानां द्रव्याणां योगः प्राप्तिरित्यर्थः, सहेत्यनेनेहाकिंचित्करं परस्परसंयोगं निराकरोति। तद्भेदमाह—द्वन्द्वेत्यादि। तत्र द्वन्द्वकर्मजो यथा—युध्यमानयोर्मेषयोः, सर्वकर्मजो यथा—भाण्डे प्रक्षिप्यमाणानां मापाणां बहुलमापक्रियायोगजः, एककर्मजो यथा—वृक्षवायसयोः। अनित्य इति संयोगस्य कर्मजत्वेनानित्यत्वं दर्शयति। विभागमाह—विभागस्त्वित्यादि। विभक्तिः विभजनम्। विभक्तिमेव विवृणोति—वियोग इति; संयोगस्य विगमो वियोगः। तेन किं संयोगाभाव एव वियोग

१ 'संयोगमाह—योग इत्यादि। द्रव्याणां योगः संबन्ध इत्युक्ते अवयवावयविसंबन्धस्यापि संयोगत्वं स्यात्, अत आह—सहेति। साहित्यरूपो योगः, स च पृथक्सिद्धयोरेव भवतीति भावः। ननु विभुनोरपि संयोगः कुतो न स्यादित्याह—द्वन्द्वसर्वैककर्मज इति। द्वन्द्वकर्मजो यथा—युध्यमानयोर्मेषयोः, सर्वकर्मजो यथा—भाण्डे प्रक्षिप्यमाणानां मापाणां बहुमापक्रियासंयोगजः, एकतरकर्मजो यथा—वृक्षवायसयोः; एतच्चोपलक्षणं, तेन संयोगजोऽपि बोध्यः, यथा—अङ्गुलीतरुसंयोगाद्धस्ततरुसंयोगः, एतेन विभुद्रव्ययोरुक्तकारणाभावादेव संयोगो नास्तीति भावः। ननु, संयोगोऽनित्य एव कारणापेक्षः, विभुनोस्तु संयोगो नित्य एव भविष्यतीत्याह—अनित्य एवेति। एवेत्यवधारणे। नित्यः संयोगो न संभवत्येव, अप्राप्तिपूर्विकायाः प्राप्तेः संयोगत्वात्; नित्यत्वे च तद्विरोधात्' इति शिवदाससेनः। २ 'स' इति पा०।

इत्याह—भागशो ग्रह इति ।—विभागशो विभक्तत्वेन ग्रहणं यतो भवतीति भावः; तेन विभक्तिरिलेषा भावरूपा प्रतीतिः, न संयोगाभावमात्रं भवति, किंतर्हि भावरूपविभागगुणयुक्ता इत्यर्थः । पृथक्त्वं तु 'इदं द्रव्यं पटलक्षणं, घटात् पृथग्' इत्यादिका बुद्धिर्यतो भवति, तत् पृथक्त्वं भवति । तच्चाचार्येस्त्रैविध्येनाह—पृथक्त्वमित्यादि । तत्र यत् सर्वथाऽसंयुज्यमानयोरिव मेरुहिमाचलयोः पृथक्त्वम्, एतदसंयोग इत्यनेनोक्तम् । तथा संयुज्यमानानामपि पृथक्त्वं विजातीयानां महिषवराहादीनां, तदाह—वैलक्षण्यमित्यादि ।—विशिष्टलक्षणयुक्तत्वलक्षितं विजातीयानां पृथक्त्वमित्यर्थः । तथैकजातीयानामप्यविलक्षणानां माषाणां पृथक्त्वं भवतीत्याह—अनेकतेति । एकजातीयेषु हि संयुक्तेषु न वैलक्षण्यं नाप्यसंयोगः, अथ चानेकता पृथक्त्वरूपा भवतीति भावः । किंवा, पृथक्त्वं गुणान्तरमिच्छन् लोकव्यवहारार्थमसंयोगवैलक्षण्यानेकतारूपमेव यथोदाहृतं पृथक्त्वं दर्शयति । मानं प्रस्थाढकादितुलादिमेयम् । करणं गुणान्तराधायकत्वं संस्करणमित्यर्थः; यद्वक्ष्यति—"संस्कारो हि गुणान्तराधानमुच्यते" (वि.अ.१)इति । भावस्य षष्टिकादेर्व्यायामादेश्चाभ्यसनमभ्यासः । अभ्यसनमेव लोकप्रसिद्धाभ्यां पर्यायाभ्यां विवृणोति—शीलनं सततक्रियेति; यं लोकाः शीलनसततक्रियाभ्यामभिदधति सोऽभ्यास इति भावः । अयं च संयोगसंस्कारविशेषरूपोऽपि विशेषेण चिकित्सोपयुक्तत्वात् पृथगुच्यते । न यथावत् प्रवर्तत इति वचनेन शब्दादिषु च गुर्वादिषु च परादीनामप्राधान्यं सूचयति ॥ २९—३५ ॥

**गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक् ।**
**विद्याद्द्रव्यगुणान् कर्तुरभिप्रायाः पृथग्विधाः ॥ ३६ ॥**

संप्रति रसानां परस्परसंयोगो गुण उक्तः, तथाऽग्रे च स्निग्धत्वादिर्गुणो वाच्यः, स च गुणरूपरसे न संभवतीति यथा रसानां गुणनिर्देशो बोद्धव्यस्तदाह-गुणा इत्यादि । गुणा गुणाश्रया नोक्ता इति दीर्घञ्जीवितीये "समवायी तु निश्चेष्टः कारणं गुणः" ( सू. अ. १ ) इत्यनेन । रसगुणानिति रसे स्निग्धादीन् गुणान्निर्दिष्टान् तद्रसाधारद्रव्यगुणानेव विद्यात् । ननु, यदि द्रव्यगुणा एव ते, तत् किमिति रसगुणत्वेनोच्यन्त इत्याह—कर्तुरित्यादि; कर्तुरिति तन्त्रकर्तुः । अभिप्राया इति तत्र तन्त्रोपचारेण तथा सामान्यशब्दादिप्रयोगेण तन्त्रकरणबुद्धयः; सामान्यशब्दोपचारादिप्रयोगश्च प्रकरणादिवशादेव स्फुटत्वात् तथा प्रयोजनवशाच्च क्रियते । तच्च प्रकरणादि 'अतश्च प्रकृतं बुद्ध्वा' इत्यादौ दर्शयिष्यामः । इह च द्रव्यगुणानां रसेषु यदुपचरणं तस्यायमभिप्रायो—यत्-मधुरादिनिर्देशेनैव स्निग्धशीतादिगुणा अपि प्रायो मधुराद्यव्यभिचारिणो द्रव्ये निर्दिष्टा भवन्तीति न मधुरत्वं निर्दिश्य स्निग्धत्वादिप्रतिपादनं पुनः पृथक् क्रियत इति ॥ ३६ ॥

**अतश्च प्रकृतं बुद्ध्वा देशकालान्तराणि च ।**
**तन्त्रकर्तुरभिप्रायानुपायांश्चार्थमादिशेत् ॥ ३७ ॥**

अभिप्रायपृथक्त्वे सति यथा ग्रन्थो बोद्धव्यस्तदाह-अतश्चेत्यादि । तत्र प्रकृतं बुद्ध्वा, यथा—"क्षाराः क्षीरं फलं पुष्पम्" इत्यत्रोद्भिदगणस्य प्रकृतत्वात् क्षीरमिति स्नुह्यादिक्षीरमेव क्षीरशब्देन वदेत् । देशान्तरं बुद्ध्वेति यथा—शिरसि शोधनेऽभिधीयमाने "क्रिमिव्याधौ ( सू. अ. २ )" इति, तच्छिरोगतक्रिमिव्याधावेव भवति । कालान्तरे यथा—वमनकालेऽभिहितं "प्रतिग्रहांश्चोपहारयेत्" (सू. अ. १५) इति, तत्र प्रतिग्रहशब्देन पात्रमुच्यते, न तु ग्रहणं प्रतिग्रहः । तन्त्रकर्तुरभिप्रायानिति यथोक्तं रसेषु गुणारोपणे तद्बोद्धव्यम् । उपायानिति शास्त्रोपायान् तन्त्रयुक्तिरूपान् । अर्थम् अभिधेयम् । यद्यपि प्रकृतादयोऽपि तन्त्रकर्तुरभिप्राया एव, तथाऽपि यत्र प्रकृतत्वादि न स्फुटं प्रतीयते तत्र तन्त्रकर्तुरभिप्रायत्वेन बोद्धव्यम् ॥ ३७ ॥

**षड्विभक्तीः प्रवक्ष्यामि रसानामत उत्तरम् ।**
**षट् पञ्चभूतप्रभवाः संख्याताश्च यथा रसाः ॥ ३८ ॥**

षड्विभक्तीरिति मधुरादिषड्विभागानित्यर्थः । षट् पञ्चभूतप्रभवा इति पञ्चभूतप्रभवाः सन्तो यथोक्तेन प्रकारेण 'सोमगुणातिरेकात्' इत्यादिना यथा षट् संख्याताः षट्संख्यापरिच्छिन्ना भवन्ति, तथा वक्ष्यामीति योजना ॥ ३८ ॥

**सौम्याः खल्वापोऽन्तरिक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चाव्यक्तरसाश्च, तास्त्वन्तरिक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतगुणसमन्विता जङ्गमस्थावराणां**

१ 'विभागलक्षणमाह—विभागस्त्वित्यादि । विभक्तिरिति विभक्तिप्रतीतिहेतुर्विभाग इत्यर्थः । ननु विभाग एव न प्रमाणं, संयोगाभावस्यैव विभक्तिप्रतीतिहेतुत्वादित्याह—विभागशो ग्रह इति । 'तु' शब्दो वियोग इत्यनन्तरं द्रष्टव्यः, तेन वियोग एव विभागशो विभक्तत्वेन प्रतीतिहेतुः, न च तत्र विभागव्यवहारः । न च द्रव्ययोर्वर्तमानः संयोगात्यन्ताभावो विभक्तिप्रतीतिहेतुरिति वाच्यम्, अवयवावयविनोरपि प्रसङ्गात्; नापि संयोगध्वंसो वियोगः, एकसंयोगानन्तरं पुनः संयुक्तयोर्बदरामलकयोः संयोगदशायामपि विभक्तिप्रत्ययप्रसङ्गादिति दिक्' इति शिवदाससेनः । २ 'सर्वदा' इति पा० । ३ 'गुणान्तरमनिच्छन्' इति पा० । ४ 'पृथक्त्वं लक्षयति—पृथक्त्वं स्यादित्यादि । इदमस्मात् पृथगन्यदर्थान्तरमित्यादिव्यवहारो यतो भवति, तत् पृथक्त्वं' इति शिवदाससेनः । ५ 'गुणा गुणाश्रया नोक्ता' इति सगुणत्वे द्रव्यत्वप्रसङ्गादिति भावः, तस्माद्रसनिर्दिष्टान् गुणान् द्रव्यगुणानेव विद्यात्, एकार्थसमवायेनोपचारादिति भावः' इति शिवदाससेनः । "गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये । रसेषु व्यपदिश्यन्ते साहचर्योपचारतः" (वा.सू.अ.९) इति वाग्भटः ।

१ प्रकृतं प्रकरणम् । २ गङ्गाधरस्तु 'पञ्चमहाभूतविकारगुणसमन्विताः' इति पठित्वा 'तत्काले पञ्चमहाभूतानां विकारभूता पतदाकाशपवनार्कचन्द्राः तथा सततमाकाशे समुड्डीयमाना भौमास्त्रसरेणवस्तेषां गुरुत्वादिगुणसमन्विताः सत्यस्तद्योगानां सेन्द्रियाणां प्राणिनां मनुष्यादीनां स्थावराणां च वृक्षादीनां मूर्तीरभिप्रीणयन्ति' इति व्याख्यानयति ।

**भूतानां मूर्तीरभिप्रीणयन्ति, तासु मूर्तिषु षडभिमूर्च्छन्ति रसाः ॥ ३९ ॥**

संप्रति रसानामादिकारणमेव तावदाह—सौम्या इत्यादि। सौम्याः सोमदेवताकाः। भ्रश्यमाना इति वदता भूमिसंबन्धव्यतिरेकेणान्तरीक्षे रितैः पृथिव्यादिपरमाण्वादिभिः संबन्धो रसारम्भको भवतीति दर्शयते। मूर्तीरिति व्यक्तीः। अभिप्रीणयन्तीति तर्पयन्ति, किंवा जनयन्ति। अभिमूर्च्छन्ति रसा इति व्यक्तिं यान्ति। अत्र चान्तरीक्षमुदकं रसकारणत्वे प्रधानत्वादुक्तं, तेन क्षितिस्थमपि स्थावरजङ्गमोत्पत्तौ रसकारणं भवत्येव ॥ ३९ ॥

**तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः, पृथिव्यग्निभूयिष्ठत्वादम्लः, सलिलाग्निभूयिष्ठत्वाल्लवणः, वाय्वग्निभूयिष्ठत्वात् कटुकः, वाय्वाकाशातिरिक्तत्वात्तिक्तः, पवनपृथिवीव्यतिरेकात् कषाय इति। एवमेषां रसानां षट्त्वमुपपन्नं न्यूनातिरेकविशेषान्महाभूतानां भूतानामिव स्थावरजङ्गमानां नानावर्णाकृतिविशेषाः; षडृतुकत्वाच्च कालस्योपपन्नो महाभूतानां न्यूनातिरेकविशेषः ॥ ४० ॥**

सोमगुणातिरेकादिति अतिरेकशब्देन सर्वेष्वेव रसेषु सर्वभूतसान्निध्यमस्ति, क्वचित्तु कस्यचिद्भूतगुणस्यातिरेकाद्रसविशेषो भवतीति दर्शयति; एतच्च मधुरं प्रति अब्गुणातिरिक्तत्वं विशेषोत्पत्तौ कारणत्वेन ज्ञेयं; यच्चाधारकारणत्वमपां, तत् सर्वसाधारणम्। एवं लवणेऽप्यपां कारणत्वं ज्ञेयम्। लवणस्तु सुश्रुते पृथिव्यग्न्यतिरेकात् पठितः, अस्मिंश्च विरोधे कार्यविरोधो नास्त्येव। ननु, उष्णशीताभ्यामग्निसलिलाभ्यां कृतस्य लवणस्याप्युष्णशीतत्वेन भवितव्यं, तल्लवणं कथमुष्णं भवति? नैवं, यतो भूतानामयं स्वभावः—यत्—केनचित् प्रकारेण सन्निविष्टाः कञ्चिद्गुणमारभन्ते, न सर्वम्। यथा-मकुष्ठकेऽद्भिर्मधुरो रसः क्रियते, न स्नेहः; तथा सैन्धवे वह्निनाऽपि नोष्णत्वमारभ्यते। अयं च भूतानां सन्निवेशोऽदृष्टप्रभावकृत एव, स च सन्निवेशः कार्यदर्शनेनोन्नेयः। तेन यत्र कार्यं दृश्यते तत्र कल्प्यते, यथा—लवणे उष्णत्वादग्निर्विष्यन्दित्वाच्च जलमनुमीयते। आगमवेदनीयश्चायमर्थो नात्रास्मद्विधानां कल्पनाः प्रसरन्ति। एतेन यदुच्यते—तोयवत् पृथिव्यादयोऽपि किमिति पृथग्रसान्तरं न कुर्वन्ति, तथा तोयवातादिसंयोगादिभ्यः किमिति रसान्तराणि नोत्पद्यन्त इति, तदपि भूतस्वभावापर्यनुयोगादेव प्रत्युक्तम्। इह च कारणत्वं भूतानां रसस्य मधुरत्वादिविशेष एव निमित्तकारणरूपमुच्यते, तेन नीरसानामपि हि दहनादीनां कारणत्वमुपपन्नमेव व्युत्पादितम्। रसभेदं दृष्टान्तेन साधयन्नाह—एवमित्यादि। रसानां षट्त्वं महाभूतानां न्यूनातिरेकविशेषात् सोमगुणातिरेकपृथिव्यग्न्यतिरेकादेः षडुत्पादककारणादुपपन्नं, षड्भ्यः कारणेभ्यः षट् कार्याणि भवन्तीति युक्तमेवेति भावः। भूतानां यथा नानवर्णाकृतिविशेषा महाभूतानां न्यूनातिरेकविशेषात्, तथा रसानामपीति। भूतानां यथोक्तानामतिरेकविशेषहेतुमाह—षडृतुकत्वादित्यादि। षडृतुकत्वेन कालो नानाहेमन्तादिरूपतया कञ्चिद्भूतविशेषं क्वचिद्वर्धयति, स चात्मकार्यं रसं पुष्टं करोति, यथा—हेमन्तकाले सोमगुणातिरेको भवति, शिशिरे वाय्वाकाशातिरेकः, एवं तस्याशितीयोक्तरसोत्पादक्रमेण वसन्तादावपि भूतोत्कर्षो ज्ञेयः; षडृतुकाच्चेति चकारेणाहोरात्रकृतोऽपि भूतोत्कर्षो ज्ञेयः, तथाऽदृष्टकृतश्च; तेन हेमन्तादावपि रसान्तरोत्पादः क्वचिद्वस्तुन्युपपन्नो भवति। यद्यपि च, ऋतुभेदेऽपि भूतोत्कर्षविशेष एव कारणं, यदुक्तं—"तावेतावर्कवायू" ( सू. अ. ६ ) इत्यादि, तथाऽपि बीजाङ्कुरकार्यकारणभाववत् संसारानादितयैव भूतविशेषर्त्वोः कार्यकारणभावो वाच्यः ॥ ४० ॥

**तत्राग्निमारुतात्मका रसाः प्रायेणोर्ध्वभाजः, लाघवादुत्प्लवनत्वाच्च वायोरूर्ध्वज्वलनत्वाच्च वह्नेः; सलिलपृथिव्यात्मकास्तु प्रायेणाधोभाजः, पृथिव्या गुरुत्वान्निम्नगत्वाच्चोदकस्य; व्यामिश्रात्मकाः पुनरुभयतोभाजः ॥ ४१ ॥**

भूतविशेषकृतं रसानां धर्मान्तरमाह—तत्रेत्यादि। प्रायेणेति न सर्वे। रसा इति रसयुक्तानि द्रव्याणि। प्लवनत्वादिति गतिमत्त्वात्; यद्यपि गतिरधोऽपि स्यात्, तथाऽपि लघुत्वपरिगतगतिरिह वायोरूर्ध्वमेव गमनं करोति, यथा—शाल्मलीतुलानाम्। हेत्वन्तरमाह—ऊर्ध्वज्वलनत्वाच्चाग्नेरिति; अग्नेरप्यूर्ध्वगतित्वादित्यर्थः। निम्नगत्वमधोगत्वमेव ॥ ४१ ॥

**तेषां षण्णां रसानामेकैकस्य यथाद्रव्यं गुणकर्माण्यनुव्याख्यास्यामः ॥ ४२ ॥**

यथाद्रव्यमिति यद्यस्य रसस्य द्रव्यमाधारस्तदनतिक्रमेण। एतेन रसानां गुणकर्मणी रसाधारे द्रव्ये बोद्धव्ये इति दर्शयति ४२

**तत्र, मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमे-**

१ 'यासु' इति पा०। २ 'षड्रसारम्भकः' इति पा०। ३ 'पृथ्वीसोमगुणातिरेकान्मधुरो रसः' इति पा०। यदाह वाग्भटः—"क्ष्माम्भोग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोनिलैः। द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः"(वा. सू. अ. १०) इति। 'पृथ्वीसोमगुणातिरेकान्मधुरो रसः, भूम्यग्निगुणभूयिष्ठत्वादम्लः, तोयाग्निगुणभूयिष्ठत्वाल्लवणः, वाय्वग्निगुणभूयिष्ठत्वात् कटुकः, वाय्वाकाशगुणातिरेकात्तिक्तः, पवनपृथ्वीगुणातिरेकात् कषायः" इति योगीन्द्रनाथसेनसंमतः पाठः। ४ 'ननु कारणानां भूतानां पञ्चविधत्वेन कार्यस्यापि रसस्य पञ्चविधत्वमेव युक्तमित्यभिप्रेत्य षट्त्वमुपपादयति-सोमगुणातिरेकादित्यादि। सोमो जलदेवता, तेन जलगुणातिरेकादित्यर्थः; किंवा सोमशब्देन पृथिवीजलयोरेव ग्रहणम्, उभयोरपि सौम्यत्वात्; अत एव सुश्रुतेऽपि 'पृथिव्यम्बुगुणबाहुल्यान्मधुर' इत्यादि। तथा तत्रैव 'पृथिव्यग्निगुणबाहुल्याल्लवणः, तोयाग्निगुणबाहुल्यादम्ल' इति यदुक्तं तदपि न विरुध्यते, भूमिजलयोः सौम्यत्वेनैकरूपतया कार्यविरोधाभावात्' इति शिवदाससेनः। ५ 'तच्च' इति पा०।

१ 'प्लवनत्वात् तिर्यगूर्ध्वगतिमत्त्वात्' इति शिवदाससेनः।

दोस्थिमज्जौजःशुक्राभिवर्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णादाहप्रशमनस्त्वच्यः केश्यः कण्ठ्यो बल्यः प्रीणनो जीवनस्तर्पणो बृंहणः स्थैर्यकरः क्षीणक्षतसन्धानकरो घ्राणमुखकण्ठौष्ठजिह्वाप्रह्लादनो दाहमूर्च्छाप्रशमनः षट्पदपिपीलिकानामिष्टतमः स्निग्धः शीतो गुरुश्च। स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः स्थौल्यं मार्दवमालस्यमतिस्वप्नं गौरवमनन्नाभिलाषमग्नेर्दौर्बल्यमास्यकण्ठयोर्मांसाभिवृद्धिं श्वासकासप्रतिश्यायालसकशीतज्वरानाहास्यमाधुर्यवमथुसंज्ञास्वरप्रणाशगलगण्डगण्डमालाश्लीपदगलशोफबस्तिधमनीगलोपलेपाक्ष्यामयाभिष्यन्दानित्येवंप्रभृतीन् कफजान् विकारानुपजनयति ( १ );

तत्रेत्यादि । मधुर आदावुच्यते प्रशस्तायुष्यादिगुणतया प्रायः प्राणिप्रियतया च । षडिन्द्रियाणि मनसा समम् । जीवनः अभिघातादिमूर्च्छितस्य जीवनः । आयुष्यस्तु आयुःप्रकर्षकारित्वेन । क्षीणस्य सन्धानकरो धातुपोषकत्वेन; किंवा क्षीणश्चासौ क्षतश्चेति, तेन क्षीणक्षतस्य उरःक्षतं संदधाति । षट्पदाद्यभीष्टत्वगुणकथनं प्रमेहपूर्वरूपादिज्ञानोपयुक्तम्[2] । यदुक्तं—"मूत्रेऽभिधावन्ति पिपीलिकाश्च" (नि. अ. ६) इति, तथा रिष्टे वक्ष्यति—"यस्मिन् गृध्नन्ति मक्षिकाः" (इ. अ. ५) इति, अनेन च मधुरत्वं ज्ञायते । अक्ष्यामयेनैवाभिष्यन्दे लब्धे विशेषोपादानार्थं पुनर्वचनं; किंवा अभिष्यन्दो नासादिष्वपि ज्ञेयः ॥ (१) ॥

अम्लो रसो भक्तं रोचयति, अग्निं दीपयति, देहं बृंहयति ऊर्जयति, मनो बोधयति, इन्द्रियाणि दृढीकरोति, बलं वर्धयति, वातमनुलोमयति, हृदयं तर्पयति, आस्यमास्रावयति, भुक्तमपकर्षयति क्लेदयति जरयति, प्रीणयति, लघुरुष्णः स्निग्धश्च । स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति, तर्षयति, संमीलयत्यक्षिणी, संवेजयति लोमानि, कफं विलापयति, पित्तमभिवर्धयति, रक्तं दूषयति,मांसं विदहति, कायं शिथिलीकरोति, क्षीणक्षतकृशदुर्बलानां श्वयथुमापादयति, अपि च क्षताभिहतदष्टदग्धभग्नशूनप्रच्युतावमूत्रितपरिसर्पितमर्दितच्छिन्नभिन्नविश्लिष्टोद्विद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात्, परिदहति कण्ठमुरो हृदयं च ( २ );

हृदयं तर्पयतीति हृद्यो भवति । भुक्तमपकर्षयतीति सारयति; क्लेदयति तथा जरयति भुक्तमेव । अवमूत्रितं मूत्रविषैर्जन्तुभिः, परिसर्पितं च स्पर्शविशेषैः कारण्डादिभिः ॥ (२) ॥

लवणो रसः पाचनः क्लेदनो दीपनश्च्यावनश्छेदनो भेदनस्तीक्ष्णः सरो विकास्यधःस्रंस्यवकाशकरो वातहरः स्तम्भबन्धसङ्घातविधमनः सर्वरसप्रत्यनीकभूतः, आस्यमास्रावयति, कफं विष्यन्दयति, मार्गान् विशोधयति, सर्वशरीरावयवान् मृदूकरोति, रोचयत्याहारम्, आहारयोगी, नात्यर्थं गुरुः स्निग्ध उष्णश्च । स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति, रक्तं वर्धयति, तर्षयति, मूर्च्छयति[2], तापयति, दारयति, कुष्णाति मांसानि, प्रगालयति कुष्ठानि, विषं वर्धयति, शोफान् स्फोटयति, दन्तांश्च्यावयति, पुंस्त्वमुपहन्ति, इन्द्रियाण्युपरुणद्धि, वलिपलितखालित्यमापादयति, अपि च लोहितपित्ताम्लपित्तवीसर्पवातरक्तविचर्चिकेन्द्रलुप्तप्रभृतीन्विकारानुपजनयति (३);

विकासी क्लेदच्छेदनः[3] । अधःस्रंसी विष्यन्दनशीलः । सर्वरसप्रत्यनीकभूत इति यत्र मात्रातिरिक्तो लवणो भवति तत्र नान्यो रस उपलक्ष्यते । आहारयोगीति आहारे सदा युज्यते । मोहयति वैचित्त्यं कुरुते । मूर्च्छयतीति संज्ञानाशं करोति ॥(३)॥

कटुको रसो वक्त्रं शोधयति, अग्निं दीपयति, भुक्तं शोषयति, घ्राणमास्रावयति, चक्षुर्विरेचयति, स्फुटीकरोतीन्द्रियाणि, अलसकश्वयथूपचयोदर्दाभिष्यन्दस्नेहस्वेदक्लेदमलानुपहन्ति, रोचयत्यशनं, कण्डूर्विनाशयति, व्रणानवसादयति, क्रिमीन् हिनस्ति, मांसं विलिखति, शोणितसङ्घातं भिनत्ति, बन्धांश्छिनत्ति, मार्गान् विवृणोति, श्लेष्माणं शमयति, लघुरुष्णो रूक्षश्च । स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात् पुंस्त्वमुपहन्ति, रसवीर्यप्रभावान्मोहयन्ति, ग्लापयति, सादयति, कर्शयति, मूर्च्छयति, नमयति, तमयति, भ्रमयति, कण्ठं परिदहति, शरीरतापमुपजनयति, बलं क्षिणोति, तृष्णां जनयति; अपि च वाय्वग्निगुणबाहुल्याद्भ्रमदवथुकम्पतोदभेदैश्चरणभुजपार्श्वपृष्ठप्रभृतिषु मारुतजान् विकारानुपजनयति ( ४ );

तिक्तो रसः स्वयमरोचिष्णुरप्यरोचकघ्नो विषघ्नः क्रिमिघ्नो मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनस्त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसामज्जलसीकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणो रूक्षः शीतो लघुश्च । स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात्खरविशदस्वभावाच्च रसरुधिरमांसमेदोस्थिमज्जशु-

---

१ "°जिह्वाप्रसादनः" इति पा० । २ 'प्रमेहरूपादिज्ञानोपयुक्तम्' इति पा० ।

१ 'अवस्रंसी' इति पा० । २ 'मोहयति' इति पा० । ३ 'छेदनः' इति पा० । ४ 'विलालयति' इति पा० ।

क्षाण्युच्छोषयति, स्रोतसां खरत्वमुपपादयति, बलमादत्ते, कर्शयति, ग्लपयति, मोहयति, भ्रमयति, वदनमुपशोषयति, अपरांश्च वातविकारानुपजनयति (५);

कषायो रसः संशमनः संग्राही सन्धानकरः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतोऽलघुश्च। स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति, हृदयं पीडयति, उदरमाध्मापयति, वाचं निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्वमापादयति, पुंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषरेतांस्यवगृह्णाति, कर्शयति, ग्लपयति, तर्षयति, स्तम्भयति, खरविशदरूक्षत्वात् पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातविकारानुपजनयति ॥ ४३ ॥

विपाकस्य प्रभावो विपाकप्रभावः, विपाकश्च कटूनां कटुरेव; रसस्य वीर्यस्य च प्रभावो रसवीर्यप्रभावः; अयं च वक्ष्यमाणे सर्वत्र हेतुः। चरणादीनां साक्षाद्ग्रहणं तत्रैव प्रायो वातविकारभावात्। अत्र च विपाकप्रभावादिकथनमुदाहरणार्थं, तेन मधुरादिषु विपाकादिकार्यमुन्नेयम्। ग्लपयति हर्षक्षयं करोति। पीडनो व्रणपीडनः। शरीरक्लेदस्योपयोक्तेति आचूषकः। 'शीतोऽलघुश्च' इत्यकारप्रश्लेषादलघुः। अवगृह्णातीति वद्धानि करोति ॥ ४३ ॥

इत्येवमेते षड्साः पृथक्त्वेनैकत्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकाराय भवन्त्यध्यात्मलोकस्य, अपकारकराः पुनरतोऽन्यथा भवन्त्युपयुज्यमानाः; तान् विद्वानुपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ४४ ॥

पृथक्त्वेनेति एकैकशो मात्रशः। एकत्वेनेति एकीकृत्य समुदायमात्रश इत्यर्थः। मात्रश इति मात्रया। तच्चैकीकरणं द्विव्यादिभिः सर्वैर्ज्ञेयम्। अध्यात्मलोकस्येति सर्वप्राणिजनस्य। अन्यथेति अमात्रया ॥ ४४ ॥

भवन्ति चात्र—

शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णं च यद्द्रव्यं कटुकं तयोः ॥ ४५ ॥

संप्रति रसद्वारेणैव द्रव्याणां वीर्यमाह—शीतमित्यादि[3]। यद्द्रव्यं रसे पाके च मधुरं तच्छीतं वीर्येण ज्ञेयं; तथा तयोरिति रसपाकयोर्यदम्लं द्रव्यं तदुष्णं वीर्येण; तथा यच्च द्रव्यं तयोरिति रसपाकयोः कटुकमुक्तं तच्चोष्णं वीर्येण, 'भवति' इति शेषः। किंवा 'यच्चोष्णं कटुकं तयोः' इति पाठः। तत्र यद्रसतो मधुरं तद्वीर्यतः शीतमिति वक्तव्ये यद्रसपाकयोरिति करोति, तन्मधुररसोचितपाकस्यैव मधुरद्रव्यस्य शीतवीर्यताप्राप्त्यर्थम्; एवमम्लकटुकयोरपि वाच्यम् ॥ ४५ ॥

तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः।
वीर्यतोऽविपरीतानां पाकतश्चोपदेक्ष्यते ॥ ४६ ॥
यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक् ॥ ४७ ॥

तेषामिति मधुरपाकादीनां, रसोपदेशेनेति रसमात्रकथनेनैव, यतो विपाकोऽपि रसत एव प्रायो ज्ञायते; यद्वक्ष्यति—'कटुतिक्तकषायाणां विपाकः प्रायशः कटुः' इत्यादि। एतच्च न सर्वत्रेत्याह—वीर्यत इत्यादि। वीर्यतोऽविपरीतानां रसद्वारा वीर्यज्ञानं, न तु रसविरुद्धवीर्याणां महापञ्चमूलादीनां; न केवलं रसेन किंतर्हि पाकतश्च य उपदेक्ष्यते गुणसंग्रहः 'शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः' इत्यादिना, स च वीर्यतोऽविरुद्धानां विज्ञेयः; यदि तत्र वीर्यं विरोधि भवति तदा विपाकोऽपि यथोक्तगुणकारी न स्यात्। किंवा, पाकतश्चाविपरीतानां रसोपदेशेन गुणसंग्रहः शीतोष्णलक्षणो निर्देश्यः, यस्मात्तु पिप्पल्याः कटुकाया अपि विपरीतमधुरपाकित्वं, न तत्र कटुरसत्वेनोष्णत्वमित्यर्थः। अस्मिंश्च पक्षे 'उपदेक्ष्यते' इति 'यथा पयः' इत्यादिना संबध्यते। तान्येवाविपरीतवीर्यविपाकान्याह—यथा पय इत्यादि। पयःप्रभृतीनि हि द्रव्यगुणकथनेऽविरुद्धवीर्यविपाकान्युपदेष्टव्यानि ॥४६॥४७॥

मधुरं किंचिदुष्णं स्यात् कषायं तिक्तमेव च।
यथा महत्पञ्चमूलं यथाऽब्जानूपमामिषम् ॥ ४८ ॥
लवणं सैन्धवं नोष्णमम्लमामलकं तथा।
अर्कागुरुगुडूचीनां तिक्तानामुष्णमुच्यते ॥ ४९ ॥

संप्रति यत्र विरुद्धवीर्यत्वेन रसेनोष्णत्वादि न निर्देश्यं तदाह—मधुरमित्यादि। किंचित् कषायं चोष्णं तिक्तं चोष्ण-

१ 'शीतोऽलघुश्चेत्यकारप्रश्लेषादलघुः, उक्तं च वाग्भटे—"कषायः पित्तकफहा गुरुरस्रविशोधनः(वा.सू.अ.१०)" इति। यत्तु सुश्रुते "कषायो रसो लाघवाद्वातं वर्धयति" (सु.सू.अ.४२) इत्युक्तं तत्तस्य लघुपाकतयेति न विरोधः' इति शिवदाससेनः। गङ्गाधरस्तु 'शीतो गुरुश्च' इत्येव पठति। २ 'मात्रश इति मात्रया, तेन पृथक्त्वेनैकैकशो मात्रया सम्यगुपयुज्यमानास्तथैकत्वेन समुदितत्वेनैकीकृत्य मात्रया सम्यगुपयुज्यमाना रसा अध्यात्मलोकस्य सर्वप्राणिजनस्योपकारका भवन्तीत्यर्थः; अतोऽन्यथेति अमात्रया। तत्र मात्रयोपयोगं निगमयति—तानित्यादि' इति शिवदाससेनः। ३ 'इदानीं रसविशेषाद्विपाकविशेषाच्च वीर्यविशेषो ज्ञातव्य इत्याह—शीतमित्यादि' इति शिवदाससेनः।

१ 'संप्रति मधुरतिक्तकषायाणां शीतत्वं, तथा कट्वम्ललवणानां चोष्णत्वं, तथा कटुतिक्तकषायाणां चावृष्यत्वमित्यादयो रसद्वारेण द्रव्याणां ये गुणा उक्तास्तदपवादमाह—तेषामित्यादि। रसोपदेशेन रसगुणकथनद्वारेण द्रव्याणां यः शीतोष्णादिगुणसंग्रहः कृतः, स वीर्यतः पाकतश्चाविपरीतानां तेषां वक्ष्यमाणक्षीरादिद्रव्याणामेव निर्देष्टुं शक्यः, न तु रसविपरीतवीर्यविपाकानामित्यर्थः। तेष्वविपरीतवीर्यविपाकानुपदिशति—उपदेक्ष्यत इत्यादि। उपदेक्ष्यत इति यथा पय इत्यादिभिः संबध्यते। एतानि हि द्रव्यगुणकथनप्रसङ्गे रसाविपरीतवीर्यविपाकतयैवोपदेष्टव्यानीति रसानुरूपगुणत्वमेषां ज्ञातव्यमित्यर्थः। इदं तूदाहरणैकदेशमात्रं, तेनापराण्यप्येवंजातीयान्युदाहर्तव्यानीत्याह—एवमादीनीत्यादि। एवमादीनि एवंप्रकाराणि गोधूमादीनीत्यर्थः।' इति शिवदाससेनः। २ 'संप्रति विरुद्धवीर्यत्वेन विरुद्धविपाकत्वेन वा रसद्वारेण येषां गुणा न निर्देश्यास्तानाह—मधुरमित्यादि' इति शिवदाससेनः। ३ 'लवणमित्यादि। लवणमपि न किंचिदुष्णं यथा सैन्धवम्, अम्लमपि न किंचिदुष्णं यथाऽऽमलकम्' इति शिवदाससेनः।

मिति योजना, कषायतिक्तलवणानामुदाहरणमसूत्रितानामपि प्रकरणात् कृतम् । महत्पञ्चमूलं बिल्वादिपञ्चमूलमिह । एतच्च तिक्तस्य कषायस्य चोष्णतायामुदाहरणम्, अब्जानूपामिषं तु मधुरस्योष्णवीर्यत्वे ॥ ४८ ॥ ४९ ॥

**किंचिदम्लं हि संग्राहि किंचिदम्लं भिनत्ति च ।**
**यथा कपित्थं संग्राहि भेदि चामलकं तथा ॥ ५० ॥**
**पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते ।**
**कषायः स्तम्भनः शीतः सोऽभयायामतोऽन्यथा ५१**
**तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेत् ।**
**दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम् ॥ ५२ ॥**

वीर्यप्रसङ्गादन्यमप्यम्लादीनां विरुद्धगुणमाह—किंचिदित्यादि । अभयायामतोऽन्यथेति अभयायां कषायो रसो भेदनश्चोष्णश्चेत्यर्थः ॥ ५०–५२ ॥

**रौक्ष्यात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः ।**
**तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः ॥ ५३ ॥**
**मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः ।**
**मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्निरुच्यते ॥५४**
**मध्योत्कृष्टावराः शैत्यात् कषायस्वादुतिक्तकाः ।**
**स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः ॥ ५५ ॥**
**अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमोत्तमः ।**
**केचिल्लघूनामवरमिच्छन्ति लवणं रसम् ॥ ५६ ॥**
**गौरवे लाघवे चैवं सोऽवरस्तूभयोरपि ।**

रौक्ष्यादित्यादि । रौक्ष्येण कषाय उत्तम इति रूक्षतमः, तिक्तो रूक्षः, कटुस्तु मध्यो रूक्षतरः; एवमन्यत्रापि । कटुकश्चान्त्य इति अवर इत्यर्थः । एवं लवणश्चान्त्य इति अवर इत्यर्थः । लवणोऽवर इति गुरुत्वेनेत्यर्थः । अम्लात् कटुरित्यादौ अम्लात् कटुर्लघुः, ततः कटुकादुत्तमात्तिक्तो लघुत्वेनोत्तमोत्तमः; उत्तमात् कटुकादुत्तम उत्तमोत्तमः । एकीयमतमाह—केचिदित्यादि । एकीयमतं वचनभङ्ग्या स्वीकुर्वन्नाह—गौरव इत्यादि । एतेन, गौरवे लाघवे चावरत्वं लवणस्य स्वीकुर्वन्, गौरवेऽवर इत्यनेनाम्लकटुतिक्तेभ्यो गुरुत्वं स्वीकरोति लवणस्य, लाघवे चावर इत्यनेनाम्लादपि लघुनोऽल्पं लाघवं लवणस्य स्वीकरोति । न च वाच्यम्—अम्ले पृथिवी कारणं लवणे तु तोयं, ततः पृथिव्यपेक्षया तोयजन्यस्य लवणस्यैव लाघवमुचितमिति; यतो न भूतनिवेशेन गौरवलाघवे शक्येतेऽवधारयितुं, तथाहि तोयातिरेककृतो मधुरः पृथिव्यतिरेककृतात् कषायाद्गुरुर्भवति ॥ ५३–५६ ॥—

**परं चातो विपाकानां लक्षणं संप्रवक्ष्यते ॥ ५७ ॥**
**कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।**
**अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ५८ ॥**

संप्रति विपाकस्यापि रसरूपत्वाल्लक्षणमाह—परमित्यादि । प्रायोग्रहणात् पिप्पलीकुलत्थादीनां रसाननुगुणपाकितां दर्शयति । कटुकादिशब्देन च तदाधारं द्रव्यमुच्यते, यतो न रसाः पच्यन्ते किंतु द्रव्यमेव । लवणस्तथेति लवणोऽपि मधुरविपाकः प्राय इत्यर्थः । विपाकलक्षणं तु—जठराग्नियोगादाहारस्य निष्ठाकाले यो गुण उत्पद्यते स विपाकः; वचनं हि—"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । आहारपरिणामान्ते स विपाकः प्रकीर्तितः" ( वा. सू. अ. ९ ) ॥ ५७ ॥ ५८ ॥

**मधुरो लवणाम्लौ च स्निग्धभावात्त्रयो रसाः ।**
**वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥ ५९ ॥**
**कटुतिक्तकषायास्तु रूक्षभावात्त्रयो रसाः ।**
**दुःखाय मोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥ ६० ॥**

संप्रति वक्ष्यमाणविपाकलक्षणे मधुराम्लपाकयोर्वातमूत्रपुरीषानवरोधकत्वे तथा कटोर्विपाकस्य वातमूत्रपुरीषविबन्धकत्वे हेतुमाह—मधुर इत्यादि । अत्र मधुराम्ललवणा निष्ठापाकं गता अपि सन्तः स्नेहगुणयोगाद्वातमूत्रपुरीषाणां विसर्गं सुखेन कुर्वन्तीति वाक्यार्थः । तेन मधुराम्लपाकयोरेतत् समानं लक्षणम् । एवं कटुतिक्तकषायेष्वपि विपर्ययेऽपि वाक्यार्थः ॥ ५९ ॥ ६० ॥

**शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः ।**
**मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः ॥ ६१ ॥**
**पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।**
**तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥६२॥**

संप्रति विपाकलक्षणं हेतुव्युत्पादितं शुक्रहत्वादिविशेषयुक्तं वक्तुमाह—शुक्रहेत्यादि । अतोऽन्यथेति लघुः ॥६१ ॥ ६२ ॥

**विपाकलक्षणस्याल्पमध्यभूयिष्ठतां प्रति ।**
**द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥ ६३ ॥**

संप्रति यथोक्तविपाकलक्षणानां द्रव्यभेदे क्वचिदल्पत्वं क्वचिन्मध्यत्वं क्वचिच्चोत्कृष्टत्वं यथा भवति तदाह—विपाकेत्यादि । विपाकलक्षणस्याल्पमध्यभूयिष्ठतामुपलक्षयेत्, प्रति प्रति द्रव्याणां गुणवैशेष्याद्धेतोरित्यर्थः । एतेन, द्रव्येषु यद्गुणवैशेष्यं मधुरत्वमधुरतरत्वमधुरतमत्वादि, ततो हेतोर्विपाकानामल्पत्वादयो विशेषा भवन्तीत्युक्तं भवति । अत्र केचिद्ब्रुवते—प्रतिरसं पाको

१ 'पिप्पलीत्यादि । अत्र पिप्पलीनागरयोः कटुकयोरपि तद्विपरीतमधुरविपाकित्वेन नोष्णत्वं ज्ञेयम्' इति शिवदाससेनः । २ 'तस्मादित्यादि । उक्तरीत्या तुल्यरसेऽपि द्रव्ये यतो गुणान्तरं दृष्टं, तस्मादित्यर्थः' इति शिवदाससेनः । ३ 'तिक्तात् कषायो मधुरः शीताच्छीततरः परः' इति पा० । ४ 'मतान्तरमाह—केचिदित्यादि । प्रतिसंस्कर्ता उभयोरपि मतयोरवबोधार्थं मतद्वयं सङ्कलय्य दर्शयति—गौरव इत्यादि । उभयोरपीति मतद्वयेऽपि स लवणोऽवरः; अग्निवेशमते गौरवेऽवरः, मतान्तरे लाघवेऽवरः । एतेन गौरवेऽवर इति येनोच्यते तेनापि किंचिल्लघुत्वं स्वीक्रियत एव, तथा लाघवेऽवर इति मतेऽपि किंचिद्गुरुत्वमर्थायातमेवेति न कश्चिदर्थभेद इत्यर्थः' इति शिवदाससेनः । ५ 'चैवं' इति पा० । ६ अल्पमिति अवरम् ।

१ 'विपाकस्यापि रसरूपत्वादनन्तरं विपाकलक्षणाभिधानं प्रतिजानीते—परं चात इत्यादि । आहारपरिणामाख्योऽवस्थापाकः, ते च ग्रहणीचिकित्सिते "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" (चि. अ. १५) इत्यादिना वक्ष्यमाणाः, तेषामवसाने पुनर्जठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विशिष्टः पाको विपाक इत्यर्थः' इति शिवदाससेनः । २ 'रसानां परिणामान्ते स विपाक इति स्मृतः' इति वाग्भटे पाठ उपलभ्यते । ३ 'पुरीषारोधकत्वे' इति पा० । ४ '०ष्वपमध्यभूयस्त्वमेव च' इति पा० ।

भवति, यथा मधुरादीनां षण्णां षण्मधुरादयः पाका इति; केचिद्वदन्ते—बलवतां रसानामबलवन्तो रसा वशतां यान्ति, ततश्चानवस्थितः पाकः। तत्रैतद्वितयमपि पाके व्यवस्थाऽकरणमनादृत्य सुश्रुतेन द्विविधः पाको मधुरः कटुश्चाङ्गीकृतः। द्वैविध्यं च पञ्चभूतात्मके द्रव्ये गुरुभूतपृथिवीतोयातिरेकान्मधुरः पाको भवति, शेषलघुभूतातिरेकात्तु कटुकः पाको भवति; यदुक्तं—"द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः। निर्वर्तन्तेऽधिकास्तत्र पाको मधुर उच्यते॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु। निर्वर्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते" (सु. सू. अ. ४०) इति। प्रतिरसपाके तथाऽनवस्थितपाके च द्रव्यं रसगुणेनैव तुल्यं पाकावस्थायामपि भवति, तेन न कश्चिद्विशेषो विपाकेन तत्र बोध्यत इति सुश्रुतेन तत्पक्षद्वयमुपेक्षितमिति साधुक्तम्। तृतीयाम्लपाकनिरासस्तु दोषमावहति, यतो व्रीहिकुलत्थादीनामम्लपाकतया पित्तकर्तृत्वमुपलभ्यते; अथ मन्यसे—व्रीह्यादेरुष्णवीर्यत्वेन तत्र पित्तकर्तृत्वं; तन्न, मधुरस्य व्रीहेस्तन्मते मधुरविपाकस्योष्णवीर्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते, रसविपाकाभ्यामेकस्य वीर्यस्य बाधनीयत्वात्। किंच, अम्लपाकत्वाद्व्रीह्यादेः पित्तमम्लगुणमुत्पद्यते, यदि तु तदुष्णवीर्यताकृतं स्यात्तदा कटुगुणभूयिष्ठं पित्तं स्यात्; दृश्यते च व्रीहिभक्षणादम्लोद्गारादिनाऽम्लगुणभूयिष्ठत्वं चेति। किंच, पृथिवीसोमगुणातिरेकान्मधुरः पाको भवति, वाय्वग्न्याकाशातिरेकाच्च कटुर्भवतीति पक्षे यदा व्यामिश्रगुणातिरेकता भवति तदा सोमाग्न्यात्मकस्याम्लस्योत्पादः कथं प्रतिक्षेपणीयः। अथवा, तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्तव्यं; यतो यदम्लपाकं चरको ब्रूते, तत् सुश्रुतेन वीर्योष्णमिति कृत्वा समाधीयते; तेन न कश्चिद्द्रव्यगुणे विरोधः। यत्तु सुश्रुतेऽम्लपाकनिरासार्थं दूषणमुच्यते "पित्तं हि विदग्धमम्लतामुपैति" (सु. सू. अ. ४०) इत्यादिना, तदनभ्युपगमादेव निरस्तम्। ननु, लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वमनुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे पित्तहन्तृत्वमनुपपन्नं? नैवं, सत्यपि लवणस्य मधुरपाकित्वे तत्र लवणरस उष्णं च वीर्यं यदस्ति तेन तत् पित्तरक्तादिकारकं, विपाकस्तु तत्र पित्तरक्तहरणलक्षणे कार्ये बाधितः सन् 'सृष्टविण्मूत्र' इत्यादिना लक्षणेन लक्ष्यत एव। एतेन यदुच्यते—लवणे मधुरो विपाकश्चेद्रसवीर्याभ्यां बाधितः सन् स्वकार्यकरो न भवति तत् किं तेनोपदिष्टेनेति, तन्निरस्तं भवति। यतोऽस्त्येव सृष्टविण्मूत्रतादिना तत्र लवणे मधुरविपाकित्वं लक्षणीयम्। अनया दिशा तिक्तकषाययोरपि पूर्वपक्षपरिहारः। अन्ये त्वेतद्दोषभयाल्लवणोऽप्यम्लं पच्यत इति व्याख्यानयन्ति, लवणस्तथेत्यत्र तथाशब्देन विप्रकृष्टस्याम्लमित्यस्य कर्षणादिति। तन्न, "कट्वादीनां कटुर्विपाकोऽम्लोऽम्लस्य शेषयोर्मधुरः"—इति जतूकर्णवचनात्। नच वाच्यं, कस्मात्त्रय एव विपाका भवन्ति न पुनस्तिक्तादयोऽपीति; यतो भूतस्वभाव एवैषः, येन मधुरादयस्त्रय एव भवन्ति, भूतस्वभावाश्चापर्यनुयोज्याः। ननु, यश्च रसविपरीतः पाको यथा—लवणस्य मधुरः, तिक्तकषाययोश्च

१ 'इष्यते' इति पा०। २ 'कटुर्भवतीत्यपेक्षया' इति पा०।

कटुः, स उच्यतां; यस्तु समानगुणो मधुरस्य मधुरोऽम्लस्याम्लः कटुकस्य वा कटुकः, तत्कथने किं प्रयोजनं? यतो रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते। नैवं, येन लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थमपि तत्रानुगुणोऽपि विपाको वक्तव्य एव; विपाकजश्च रस आहारपरिणामान्ते भवति, प्राकृतस्तु रसो विपाकविरुद्धः परिणामकालं वर्जयित्वा ज्ञेयः; तेन पिप्पल्याः कटुकरसत्वमादौ कण्ठस्थश्लेष्मक्षपणमुखशोधनादिकर्तृत्वेन सप्रयोजनं, मधुरविपाकत्वं तु परिणामेन वृष्यत्वादिज्ञापनेन सप्रयोजनम्। तथा, यत्र विपाकस्य रसाः समानगुणतयाऽनुगुणा भवन्ति तत्र बलवत् कार्यं भवति, विपर्यये तु दुर्बलमिति ज्ञेयम्। एतच्च पाकत्रयं द्रव्यनियतं, तेन ग्रहण्यध्याये वक्ष्यमाणाहारावस्थापाकाद्भिन्नमेव; तत्र ह्यविशेषेण सर्वेषामेव रसानामवस्थावशात्त्रयः पाका वाच्याः "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" (चि. अ. १५) इत्यादिना ग्रन्थेन॥ ६३॥

**मृदुतीक्ष्णगुरुलघुस्निग्धरूक्षोष्णशीतलम्।**
**वीर्यमष्टविधं केचित्, केचिद्द्विविधमास्थिताः॥ ६४॥**
**शीतोष्णमिति, वीर्यं तु क्रियते येन या क्रिया।**
**नावीर्यं कुरुते किंचित् सर्वा वीर्यकृता क्रिया॥ ६५॥**

एकीयमतेन वीर्यलक्षणमाह—मृद्वित्यादि। एतच्चैकीयमतद्वयं पारिभाषिकीं वीर्यसंज्ञां पुरस्कृत्य प्रवृत्तम्। वैद्यके हि रसविपाकप्रभावव्यतिरिक्ते प्रभूतकार्यकारिणि गुणे वीर्यमिति संज्ञा, तेनाष्टविधवीर्यवादिमते पिच्छिलविशदादयो गुणा न रसादिविपरीतं कार्यं प्रायः कुर्वन्ति, तेन तेषां रसाद्युपदेशेनैव ग्रहणं; मृद्वादीनां तु रसाद्यभिभावकत्वमस्ति, यथा—पिप्पल्यां कटुरसकार्यं पित्तकोपनमभिभूय तद्गते मृदुशीतवीर्ये पित्तमेव शमयत इति, तथा कषाये तिक्तानुरसे महति पञ्चमूले तत्कार्यं वातकोपनमभिभूयोष्णेन वीर्येण तद्विरुद्धं वातशमनमेव क्रियते, तथा मधुरेऽपीक्षौ शीतवीर्यत्वेन वातवृद्धिरित्यादि। यदुक्तं सुश्रुते—"एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म दर्शयन्ति" (सु. सू. अ. ४०) इत्यादि। शीतोष्णवीर्यवादिमतं त्वग्नीषोमीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्याज्ज्ञेयम्। उक्तं च "नानाऽऽत्मकमपि द्रव्यमग्नीषोमौ महाबलौ। व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित्" (वा.सू.अ.९) इति। एतच्च मतद्वयमप्याचार्यस्य परिभाषासिद्धमनुमतमेव, येनोत्तरत्र "रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते" इत्यादौ पारिभाषिकमेव वीर्यं निर्देक्ष्यति। पारिभाषिकवीर्यसंज्ञापरित्यागेन तु शक्तिपर्यायस्य वीर्यस्य लक्षणमाह—वीर्यं त्वित्यादि। वीर्यमिति

१ 'कुर्वन्ति' इति पा०। २ 'तेनोत्तरत्र' इति पा०। ३ 'पारिभाषिकवीर्यसंज्ञापरित्यागेन शक्तिपर्यायस्य वीर्यस्य लक्षणमाह—वीर्यं त्वित्यादि। येनेत्यादि येन रसेन विपाकेन वा प्रभावेण वा गुर्वादिभिर्गुणैर्वा या क्रिया ह्लादनतर्पणशमनादिरूपा क्रियते, तस्यां क्रियायां तद्रसादि वीर्यमुच्यते इत्यर्थः। नचैवं द्रव्यस्यापि वीर्यत्वप्रसङ्गः; येनेति करणे तृतीया, करणस्यैव शक्तित्वात्, द्रव्यस्य तु कर्तृत्वात्; एतेन द्रव्यकर्तृके रसादिकरणे कार्ये रसादीनां वीर्यत्वमित्यर्थः। सुश्रुतेऽप्युक्तं—"येन कुर्वन्ति तद्वीर्यम्" (सु.सू.अ.४०) इति शिवदाससेनः।

शक्तिः। येनेति रसेन वा विपाकेन वा प्रभावेण वा गुर्वादिपरादिभिर्वा गुणैर्या क्रिया तर्पणह्लादनशमनादिरूपा क्रियते, तस्यां क्रियायां तद् रसादि वीर्यम्। अत एवोक्तं सुश्रुते—"येन कुर्वन्ति तद्वीर्यम्" (सु. सू. अ. ४०) इति। अत्रैव लोकप्रसिद्धासुपपत्तिमाह—नावीर्यमित्यादि। अवीर्यम् अशक्तमित्यर्थः। वीर्यकृतेति वीर्यवता कृता वीर्यकृता ॥ ६४ ॥ ६५ ॥

**रसो निपाते द्रव्याणां, विपाकः कर्मनिष्ठया।**
**वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ६६ ॥**

रसादीनामेकद्रव्यनिविष्टानां भेदेन ज्ञानार्थं लक्षणमाह—रसो निपात इत्यादि। निपात इति रसनायोगे। कर्मनिष्ठयेति कर्मणो निष्ठा निष्पत्तिः कर्मनिष्ठा क्रियापरिसमाप्तिः, रसोपयोगे सति योऽन्त्याहारपरिणामकृतः कर्मविशेषः कफशुक्राभिवृद्ध्यादिलक्षणः, तेन विपाको निश्चीयते। अधीवासः सहावस्थानं, यावदधीवासादिति यावच्छरीरनिवासात्; एतच्च विपाकात् पूर्वं निपाताच्चोर्ध्वं ज्ञेयम्। निपाताच्चेति शरीरसंयोगमात्रात्; तेन किंचिद्वीर्यमधीवासादुपलभ्यते, यथा—आनूपमांसादेरुष्णत्वं; किंचिच्च निपातादेव लभ्यते, यथा—मरीचादीनां तीक्ष्णत्वादि; किंचिच्च निपाताधीवासाभ्यां, यथा—मरीचादीनामेव। एतेन रसः प्रत्यक्षेणैव; विपाकस्तु नित्यपरोक्षः, तत्कार्येणानुमीयते; वीर्यं तु किंचिदनुमानेन, यथा—सैन्धवगतं शैत्यमानूपमांसगतं वा औष्ण्यं, किंचिच्च वीर्यं प्रत्यक्षेणैव, यथा—राजिकागतं तैक्ष्ण्यं घ्राणेन, पिच्छिलविशदस्निग्धरूक्षादयः चक्षुःस्पर्शनाभ्यां निश्चीयन्त इति वाक्यार्थः। एतच्च वीर्यं सहजं कृत्रिमं च ज्ञेयम्। एतच्च यथासंभवं गुरुलध्वादिषु वीर्येषु लक्षणं ज्ञेयम्। द्रव्याणामिति उपयुज्यमानद्रव्याणाम्। एतच्च वीर्यलक्षणं पारिभाषिकवीर्यविषयमेव ॥ ६६ ॥

**रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते।**
**विशेषः कर्मणां चैव प्रभावस्तस्य स स्मृतः ॥ ६७ ॥**

प्रभावलक्षणमाह—रसवीर्येत्यादि। सामान्यमिति तुल्यता। विशेषः कर्मणामिति दन्त्याद्याश्रयाणां विरेचनत्वादीनाम्। सामान्यं लक्ष्यत इत्यनेन रसादिकार्यत्वेन यन्नावधारयितुं शक्यते कार्यं तत् प्रभावकृतमिति सूचयति, अत एवोक्तम्—प्रभावोऽचिन्त्य उच्यते; रसवीर्यविपाककार्यतयाऽचिन्त्य इत्यर्थः ॥ ६७ ॥

**कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः।**
**तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम् ॥ ६८ ॥**

**विषं विषघ्नमुक्तं यत् प्रभावस्तत्र कारणम्।**
**ऊर्ध्वानुलोमिकं यच्च तत् प्रभावप्रभावितम् ॥ ६९ ॥**
**मणीनां धारणीयानां कर्म यद्विविधात्मकम्।**
**तत् प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते ॥ ७० ॥**
**सम्यग्विपाकवीर्याणि प्रभावश्चाप्युदाहृतः।**
**किंचिद्रसेन कुरुते कर्म वीर्येण चापरम् ॥ ७१ ॥**
**द्रव्यं गुणेन पाकेन प्रभावेण च किंचन।**
**रसं विपाकस्तौ वीर्यं प्रभावस्तानपोहति ॥ ७२ ॥**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम्।**

अस्यैव दुरधिगमत्वादुदाहरणानि बहून्याह—कटुक इत्यादिना। तद्वदिति चित्रकसमानगुणा। विषघ्नमुक्तमिति "तस्माद्दंष्ट्राविषं मौलं" (चि० अ० २३) इत्यादिना। ऊर्ध्वानुलोमिकमिति युगपदुभयभागहरं, किंवा ऊर्ध्वहरं तथाऽनुलोम-

१'कृत्वा क्रियत इत्युपदिश्यते' इति पा०। २ 'अत्रैव लोकसिद्धासुपपत्तिमाह—नावीर्यमित्यादि। अवीर्यम् अशक्तमित्यर्थः। एतेन रसादयः सर्वे एव स्वकार्यकरणसमर्थाः सन्तो द्रव्यशक्तिपर्यायरूपवीर्यशब्दवाच्या भवन्तीत्यर्थः' इति शिवदाससेनः। ३ 'एतच्च वीर्यं सहजं कृत्रिमं च ज्ञेयं; तत्राद्यं मापाणां गौरवं मुद्गानां लाघवमित्यादि, कृत्रिमं तु लाजादीनां लघुत्वमित्यर्थः' इति शिवदाससेनः। ४ 'सामान्यं तुल्यता। कर्मणां पुनर्विशेषः, न तुल्यतेत्यर्थः। एतेन द्रव्ययो रसादिसामान्ये सत्यपि, एकस्मिन् द्रव्ये जायते कार्यविशेषः, अन्यस्मिन्न जायते, इत्यत्र यत् कारणतया वाच्यं तत् प्रभाव इत्यर्थः' इति शिवदाससेनः। ५ 'सा नरम्' इति पा०।

१ 'तस्य' इति पा०। २ 'ननु विषमण्यादौ रसवीर्यादिनिश्चयो दुर्घटस्तत् कथमत्र प्रभाव उच्यते, उक्तप्रभावलक्षणस्यासंभवादित्याह—प्रभावोऽचिन्त्य उच्यत इति। रसवीर्यविपाकाजन्यतयाऽचिन्त्य इत्यर्थः। एतेन रसादिजन्यत्वेन यत् कार्यं नावधारयितुं शक्यते, तदपि प्रभावकृतमिति मन्तव्यमित्यर्थः' इति शिवदाससेनः। ३ "किंचिदित्यादि। द्रव्यं रसेन किंचिच्छुभाशुभं कर्म कुरुते। यथा—मधु कषायरसत्वात् पित्तं शमयति। वीर्येण वीर्यं शक्तिमन्तो गुर्वादयो गुणाः, तेनापरमन्यत् कर्म कुरुते। यथा—कषायतिक्तं महत्पञ्चमूलं वातं जयति न तु पित्तम्, उष्णवीर्यत्वात्। गुणेन किंचित् कर्म कुरुते। यथा—मधु रौक्ष्याच्छ्लेष्माणं जयति। पाकेन विपाकेन किंचित् कर्म कुरुते। यथा—शुण्ठी कटुकाऽपि मधुरविपाकतया वातं शमयति। प्रभावेणापि किंचन किंचित् कर्म कुरुते। यथा—दन्ती कटुरसविपाका उष्णवीर्या चापि विरेचयति प्रभावात्। तदुक्तं सुश्रुतेन—"तद्द्रव्यमात्मना किंचित् किंचिद्वीर्येण सेवितम्। किंचिद्रसविपाकाभ्यां दोषं हन्ति करोति वा" इति (सु. सू. अ. ४०)। सह वसतां रसादीनां मध्ये यद्यदपि बलवत्तरं भवति तत्तदितरदभिभूय कर्म कुरुते, तदुक्तं वृद्धवाग्भटेन—"यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते। अभिभूयेतरांस्तत्तत् कारणत्वं प्रपद्यते" इति (अ.संग्रह.सू.अ.१७)। ननु यत्र रसादीनां बलसाम्यं तत्र कस्य कार्यनिष्पत्तौ कारणत्वं स्यादित्यत आह—रसमिति। रसं मधुरादिकं षड्विधं तुल्यबलमपि विपाकः अपोहति कार्यकरणे कुण्ठयति। यथा—मधुनि मधुरः रसः कटुना विपाकेन अभिभूयते। तस्मान्मधु मधुररसहेतुकं श्लेष्मजननं कर्म न करोति। तौ रसविपाकौ समबलौ वीर्यं कर्तृ अपोहति। यथा—औदकानूपपिशिते मधुररसविपाके उष्णेन वीर्येणाभिभूयेते, तस्मात् अनूपौदकपिशितं मधुररसविपाकतया शीतमपि पित्तं न जयति, किन्तु उष्णवीर्यत्वात् पित्तं जनयति। प्रभावः पुनः तान् त्रीन् समबलान् अपोहति। यथा—अम्लरसविपाका उष्णवीर्याऽपि सुरा क्षीरं जनयति प्रभावात्, कटुरसविपाका उष्णवीर्या चापि दन्ती विरेचयति प्रभावात्। अत्र प्रभावेण रसवीर्यविपाकाः अभिभूयन्ते। इति ईदृशं रसादीनां बलसाम्ये नैसर्गिकं बलं स्वाभाविकी शक्तिः" इति योगीन्द्रनाथसेनः। अनयोः श्लोकयोश्चक्रपाणिकृता व्याख्या लुप्तेति प्रतीयते। ४ 'तद्वच्चित्रकतुल्यरसवीर्यविपाका। एतेन चित्रकस्य रसाद्यैस्तुल्यायामपि दन्त्यां यद्विरेकत्वरूपं विशिष्टकर्म, तत् स्वकारणं प्रभावमनुमापयतीति भावः' इति शिवदाससेनः। ५ 'विषघ्नमिति स्थावरजङ्गमविषयोः परस्परहन्तृत्वम्' इति शिवदाससेनः।

हरं च। कर्म यद्विविधात्मकमिति विषहरणशूलहरणादि। एतच्चोदाहरणमात्रं, तेन जीवनमेध्यादिद्रव्यस्य रसाद्यचिन्त्यं सर्वं 'प्रभाव' इति ज्ञेयम्। प्रभावश्चेह द्रव्यशक्तिरभिप्रेता, सा च द्रव्याणां सामान्यविशेषः दन्तीत्वादियुक्ता व्यक्तिरेव, यतः शक्तिर्हि स्वरूपमेव भावानां, नातिरिक्तं किंचिद्धर्मान्तरम्; एवं प्रदेशान्तरोक्तगुणप्रभावादिष्वपि वाच्यम्; यथोक्तं—'द्रव्याणि हि द्रव्यप्रभावाद्गुणप्रभावात्' इत्यादि। न च वाच्यं दन्त्यादिः स्वरूपत एव विरेचयति, तेन किमिति जलाद्युपहता दन्ती न विरेचयतीति; प्रतिबन्धकाभावविशिष्टस्यैव प्रभावस्य कारणत्वात्, जलोपहतायां दन्त्यां जलोपघातः प्रतिबन्धक इत्याद्यनुसरणीयम्। नैयायिकशक्तिवादे या च विषस्य विषघ्नत्वे उपपत्तिरुक्ता ऊर्ध्वाधोगामित्वविरोधक्षलणा साऽन्तर्भावत्वात्[1] प्रभावादेव भवति। एवमूर्ध्वानुलोमिकत्वादौ पार्थिवत्वादिकथनेऽपि वाच्यम् ॥ ६८ ॥ ७२ ॥—

**षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम् ॥ ७३ ॥**
**स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते।**
**मुखस्थो मधुरश्चास्यं व्याप्नुवँल्लिम्पतीव च ॥ ७४ ॥**
**दन्तहर्षान्मुखास्रावात् स्वेदनान्मुखबोधनात्।**
**विदाहाच्चास्यकण्ठस्य प्राश्यैवाम्लं रसं वदेत् ॥७५॥**
**प्रलीयन्[3] क्लेदविष्यन्दमार्दवं कुरुते मुखे।**
**यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च ॥७६॥**
**संवेजयेद्यो रसानां निपाते तुदतीव च।**
**विदहन्मुखनासाक्षि संस्रावी स कटुः स्मृतः ॥७७॥**
**प्रतिहन्ति निपाते यो रसनं स्वदते न च।**
**स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः[2] ॥ ७८ ॥**
**वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः।**
**बध्नातीव च यः कण्ठं कषायः स विकास्यपि[4] ॥७९॥**

विज्ञायतेऽनेनेति विज्ञानं लक्षणमित्यर्थः। प्रलीयन्निति विलीनो भवन्। संस्रावयतीति संस्रावी। विकासीति हृदयविकसनशीलः; उक्तं हि सुश्रुते—"हृदयं पीडयति" (सु० सू० अ० ४२) इति ॥ ७४–७९ ॥

**एवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच—भगवन्! श्रुतमेतदवितथमर्थसंपद्युक्तं भगवतो यथावद्द्रव्यगुणकर्माधिकारे वचः, परं त्वाहारविकाराणां[5] वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामहे इति ॥ ८० ॥**

संप्रति विरुद्धाहारं वक्तुमाह—एवमित्यादि। शरीरधातुविरोधं कुर्वन्तीति वैरोधिकाः, लक्ष्यते वैरोधिकमनेनेति लक्षणं वैरोधिकाभिधायको ग्रन्थ एव। 'यत् किंचिद्दोषमास्राव्य' इत्यादि वैरोधिकलक्षणं ज्ञेयम् ॥ ८० ॥

**तमुवाच भगवानात्रेयः—देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते; परस्परगुणविरुद्धानि कानिचित्, कानिचित् संयोगात्, संस्कारादपराणि, देशकालमात्रादिभिश्चापराणि, तथा स्वभावादपराणि ॥ ८१ ॥**

देहधातुप्रत्यनीकभूतानीति देहधातूनां रसादीनां वातादीनां च प्रकृतिस्थानां प्रत्यनीकस्वरूपाणि। विरोधमापद्यन्त इति देहधातूनां विरोधमाचरन्ति, दूषयन्तीति यावत्। यथाभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते तदाह—परस्परविरुद्धानि कानिचिदित्यादि। तत्र परस्परगुणविरुद्धानि यथा—"न मत्स्यान् पयसाऽभ्यवहरेत्, उभयं ह्येतत्" इत्यादिनोक्तानि। संयोगविरुद्धं यथा—"तदेव निकुचं पक्वं न माष"इत्यादिनोक्तं; यत् संस्कारादिविरुद्धगुणकथनं विना साहित्यमात्रेण विरुद्धमुच्यते, तत् संयोगविरुद्धम्। मत्स्यपयसोस्तु यद्यपि सहोपयोगो विरुद्धत्वेनोक्तः, तथाऽप्यसौ गुणविरुद्धत्वेन कथित इति गुणविरोधकस्यैवोदाहरणम्। विरोधश्च विरुद्धगुणत्वे सत्यपि क्वचिदेव द्रव्यप्रभावाद्भवति; तेन षड्रसाहारोपयोगे मधुराम्लयोर्विरुद्धशीतोष्णवीर्ययोर्विरोधो नोद्भावनीयः। संस्कारतो विरुद्धं यथा—"न कपोतान् सर्षपतैलभृष्टान्" इत्यादि। देशो द्विविधः—भूमिः, शरीरं च। तत्र भूमिविरुद्धं यथा—"तदेव भस्मपांशुपरिध्वस्तम्", किंवा यत् किंचिदगोचरभूतं तद्देशविरुद्धं; शरीरविरुद्धं यथा—उष्णार्तस्य मधु मरणाय। कालविरुद्धं यथा—पर्युषिता काकमाची मरणाय। मात्राविरुद्धं यथा—समघृते मधुसर्पिषी मरणाय। आदिग्रहणाद्दोषप्रकृत्यादिविरुद्धानां ग्रहणम्। स्वभावविरुद्धं यथा—विषम् ॥ ८१ ॥

**तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेक्ष्यामः—न मत्स्यान् पयसा सहाभ्यवहरेत्, उभयं ह्येतन्मधुरं मधुरविपाकं महाभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रदूषणाय महाभिष्यन्दित्वान्मार्गोपरोधाय च ॥ ८२ ॥**

**तन्निशम्यात्रेयवचनमनु भद्रकाप्योऽग्निवेशमुवाच—सर्वानेव मत्स्यान् पयसा सहाभ्यवहरेदन्यत्रैकस्माच्चिलिचिमात्, स पुनः शकली लोहितनयनः सर्वतो लोहितराजी रोहिताकारः प्रायो भूमौ चरति, तं चेत् पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विबन्धजानां च व्याधीनामन्यतममथवा मरणं प्राप्नुयादिति ॥ ८३ ॥**

वैरोधिकमधिकृत्येति वैरोधिकमुद्दिश्य। शीतोष्णत्वादिति पयः शीतमुष्णवीर्याश्च मत्स्याः, शेषं मधुरत्वादि समानम्। एतच्च द्रव्यप्रभावादेव विरोधि। 'स पुनः शकली' इत्यादिना 'नान्दिनिः' इति ख्यातो मत्स्य उच्यते ॥ ८२ ॥ ८३ ॥

१ अन्तर्भावत्वादिति कर्मविशेषान्तर्भूतत्वादित्यर्थः। २ 'तिक्तो मुखस्य प्रह्लादकारकोऽरुचिहन्तृत्वात्' इति शिवदाससेनः। ३ 'प्रलीयन्निति रसनेन्द्रियसंबन्धादेव विलीनो भवतीत्यर्थः' इति शिवदाससेनः। ४ 'विकासी धातूनां हिंसकः, तदुक्तं—"विकासी विकसन् धातून्" इति, अन्ये तु हृत्पीडाजनक इत्याहुः' इति शिवदाससेनः। ५ 'विकाराः पञ्चभूतप्रकृतिकानि द्रव्याणि, तेनाहारद्रव्याणामित्यर्थः' इति शिवदाससेनः।

१ 'गुणविरोधेन' इति पा०।

नेति भगवानात्रेयः—सर्वानेव मत्स्यान्न पयसा सहाभ्यवहरेद्विशेषतस्तु चिलिचिमं, स हि महाभिष्यन्दित्वात् स्थूललक्षणतरानेतान् व्याधीनुपजनयत्यामविषमुदीरयति च। ग्राम्यानूपौदकपिशितानि च मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैर्वा नैकध्यमद्यात्, तन्मूलं हि बाधिर्यान्ध्यवेपथुजाड्यकलमूकतामैणिमिण्यमथवा मरणमाप्नोति। न पौष्करं रोहिणीकं शाकं कपोतान् वा सर्षपतैलभ्रष्टान्मधुपयोभ्यां सहाभ्यवहरेत्, तन्मूलं हि शोणिताभिष्यन्दधमनीप्रवि(ति)चयापस्मारशङ्खकगलगण्डरोहिणीनामन्यतमं प्राप्नोत्यथवा मरणमिति। न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं, कुष्ठाबाधभयात्। न जातुकशाकं न निकुचं पक्वं मधुपयोभ्यां सहोपयोज्यम्, एतद्धि मरणायाथवा बलवर्णतेजोवीर्योपरोधायालघुव्याधये षाण्ढ्याय चेति। तदेव निकुचं पक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात्। तथाऽऽम्राम्रातकमातुलुङ्गनिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपारावताक्षोडपनसनालिकेरदाडिमामलकान्येवंप्रकाराणि चान्यानि द्रव्याणि सर्वं चाम्लं द्रवमद्रवं च पयसा सह विरुद्धम्। तथा कङ्गुवनकमकुष्ठकुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः। पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातं चातिकोपयति। हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तं चातिकोपयति। पायसो मन्थानुपानो विरुद्धः श्लेष्माणं चातिकोपयति। उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य। बलाका वारुण्या सह कुल्माषैरपि विरुद्धा, सैव शूकरवसापरिभृष्टा सद्यो व्यापादयति। मयूरमांसमेरण्डसीसकावसक्तमेरण्डाग्निप्लुष्टमेरण्डतैलयुक्तं सद्यो व्यापादयति। हारिद्रकमांसं हारिद्रसीसकावसक्तं हारिद्राग्निप्लुष्टं सद्यो व्यापादयति; तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं सद्यो मरणाय। मत्स्यनिस्तालनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय। मधु चोष्णमुष्णार्तस्य च मधु मरणाय। मधुसर्पिषी समधृते, मधु वारि चान्तरिक्षं समधृतं, मधु पुष्करबीजं, मधु पीत्वोष्णोदकं, भल्लातकोष्णोदकं, तक्रसिद्धः कम्पिल्लकः, पर्युषिता काकमाची, अङ्गारशूल्यो भासश्चेति विरुद्धानि। इत्येतद्यथाप्रश्नमभिनिर्दिष्टं भवतीति॥ ८४॥

१ 'मूलकमारिषैः' इति पा०। २ 'बाधिर्यान्ध्यजाड्यवैकरयमूकतामैणिण्यं' इति पा०। ३ '°वरक°' इति पा०।

ग्राम्यपिशितादीनि मध्वादीनामन्यतरेणापि विरुद्धानि। कलमूकतेति कलमूकता अव्यक्तवचनता। पौष्करादीनां मधुपयोभ्यां सहाभ्यवहारो विरुद्धः, पौष्करं पुष्करजन्नरूपं शाकं, रोहिणी कटुरोहिणी। ( धमनीप्रतिचयः सिराजग्रन्थिः।) जातुशाकं वंशपत्रिका। वैरोधिकत्वादित्यनेन प्रकरणलब्धस्यापि वैरोधिकत्वस्य पुनरभिधानं सामान्योक्तषाण्ढ्यादिव्याधिकर्तृतोपदर्शनार्थम्, एवमन्यत्रापि सामान्येऽपि वैरोधिकत्वमात्राभिधाने वक्तव्यम्। तथाऽम्लेत्यादौ अम्लग्रहणेन लब्धानाप्यम्लाम्रातकादीनामभिधानं विशेषविरोधसूचनार्थम्। सर्वग्रहणेनैव द्रवाद्रवाम्ले प्राप्ते पुनर्द्रवाद्रववचनं 'सर्व'शब्दस्य द्रवाद्रवाम्लकार्त्स्न्यार्थताप्रतिषेधार्थं, भवति हि प्रकरणादेकदेशेऽपि सर्वव्यपदेशः, यथा सर्वान् भोजयेदिति; किंवा सर्वग्रहणमम्लविपाकानां व्रीह्यादीनां ग्रहणार्थम्। पयसेति तृतीययैव सहार्थे लब्धे पुनः सहेत्यभिधानं केवलाम्लादियुक्तस्यैव विरोधितोपदर्शनार्थं; तेन, अम्लपयःसंयोगे गुडादिसंयोगे सति विरुद्धत्वं न दुग्धाम्रादीनाम्। वनको वनकोद्रवः। पद्मोत्तरिका कुसुम्भः। शार्कर इति मैरेयविशेषणम्। वातं चातिकोपयतीति वचनेन पित्तकफावल्पं कोपयतीति बोधयति; एवं पित्तं चातिकोपयति कफं चातिकोपयतीत्येतयोरपि वाच्यम्। हारिद्रको 'हरिताल' इति ख्यातः पक्षी। बलाका वारुण्या सह विरुद्धा, तथा कुल्माषैश्च बलाका विरुद्धा। एरण्डसीसकावसक्तमिति एरण्डकाष्ठावसक्तं, सीसको हि भटित्रकरणकाष्ठमुच्यते। तदेवेति हारिद्रकमांसम्। मत्स्या निस्तात्यन्ते पच्यन्ते यस्मिन् तन्मत्स्यनिस्तालनं; किंवा निस्तालनं वसा, जतूकर्णेऽप्युक्तं—"मत्स्यवसासिद्धाः पिप्पल्यः" इति। काकमाची मधु चेति संयोगविरुद्धम्। भासो गोष्ठकुक्कुटः॥ ८४॥

भवन्ति चात्र श्लोकाः—

यत् किञ्चिद्दोषमास्राव्य न निर्हरति कायतः।
आहारजातं तत् सर्वमहितायोपपद्यते॥ ८५॥

अनुक्तवैरोधिकसंग्रहार्थमाह—यत् किञ्चिदित्यादि। आहियत इत्याहारो भेषजमपि। दोषमास्राव्येति दोषानुत्क्लिष्टरूपान् जनयित्वा न निर्हरतीति। अनेन वमनविरेचनद्रव्याणि निराकरोति, तानि हि दोषानास्राव्य निर्हरन्ति॥ ८५॥

यच्चापि देशकालाग्निमात्रासात्म्यानिलादिभिः।
संस्कारतो वीर्यतश्च कोष्ठावस्थाक्रमैरपि॥ ८६॥
परिहारोपचाराभ्यां पाकात् संयोगतोऽपि च।
विरुद्धं तच्च न हितं हृत्संपद्विधिभिश्च यत्॥ ८७॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादि धन्वनि।
आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते॥ ८८॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम्।
शीते काले, तथोष्णे च कटुकोष्णादिसेवनम्॥८९॥

१ अयं पाठः क्वचित्पुस्तके नोपलभ्यते। २ 'दोषमुत्क्लेश्य' इति पा०।

विरुद्धमनले तद्वदन्नपानं चतुर्विधे।
मधुसर्पिः समधृतं मात्रया तद्विरुध्यते ॥ ९० ॥
कट्वकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम्।
यत्तत् सात्म्यविरुद्धं तु विरुद्धं त्वनिलादिभिः ॥९१॥
या समानगुणाभ्यासविरुद्धान्नौषधक्रिया।
संस्कारतो विरुद्धं तद्यद्भोज्यं विषवद्भवेत् ॥ ९२ ॥
एरण्डसीसकासक्तं शिखिमांसं यथैव हि।
विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम् ॥ ९३ ॥
तत् संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते।
क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्यमभेदनम् ॥ ९४ ॥
मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु।
एतत् कोष्ठविरुद्धं तु, विरुद्धं स्यादवस्थया ॥ ९५ ॥
श्रमव्यवायव्यायामसक्तस्यानिलकोपनम्।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥ ९६ ॥
यच्चानुत्सृज्य विण्मूत्रं भुङ्क्ते यश्चाबुभुक्षितः।
तच्च क्रमविरुद्धं स्याद्यच्चातिक्षुद्वशानुगः ॥ ९७ ॥
परिहारविरुद्धं तु वराहादीन्निषेव्य यत्।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥ ९८ ॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम्।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत्।
संयोगतो विरुद्धं तद्यथाऽम्लं पयसा सह ॥ ९९ ॥
अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते।
संपद्विरुद्धं तद्विद्यादसंजातरसं तु यत् ॥ १०० ॥
अतिक्रान्तरसं वाऽपि विपन्नरसमेव वा।
ज्ञेयं विधिविरुद्धं तु भुज्यते निभृते न यत्।
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम् ॥ १०१ ॥

यच्चापि देशकालाग्नीत्यादिग्रन्थं केचित् पठन्ति, स च व्यक्त एव ॥ ८६–१०१ ॥—

षाण्ढ्यान्ध्यवीसर्पदकोदराणां
विस्फोटकोन्मादभगन्दराणाम्।
मूर्च्छामदाध्मानगलग्रहाणां
पाण्ड्वामयस्यामविषस्य चैव ॥ १०२ ॥
किलासकुष्ठग्रहणीगदानां
शोथाम्लपित्तज्वरपीनसानाम्[1]।
सन्तानदोषस्य तथैव मृत्यो-
र्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥ १०३ ॥

षाण्ढ्यं नपुंसकता। सन्तानदोषो मृतवत्सत्वादिः। एतच्च वैरोधिककथनं विशेषवचनेन बाध्यते; तेन लशुनस्य क्षीरेण पानं क्वचिन्न विरोधि; यदुक्तं—"साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम्। क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाययेत्" (चि. अ. ५), तथा "मूलकस्वरसं क्षीरं" इत्यादिप्रयोगेषून्नेयम्। किंवा, अनेकद्रव्यसंयोगादत्र विरोधिनामविरोधः; विरोधिमात्रसंयोग एव विरोधी भवति। यत्तु मधुन उष्णेन वमनेन संयुक्तस्य सत्यपि मदनफलादिद्रव्यसंयोगेऽविरोधार्थमुक्तमपक्वगमनादि, तन्मधुनो द्रव्यान्तरसंयोगेऽप्युष्णसंबन्धत्वे विरोधित्वोपदर्शनार्थं; यतो विषान्वयं मधु, विषस्य चोष्णविरोधि। लशुनादीनां तु द्रव्यान्तरासंयोगे सत्येव मेलको विरुद्ध इति शास्त्रवचनादुन्नीयते ॥ १०२–१०३ ॥

एषां खल्वपरेषां च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतिकारा[1] भवन्ति। तद्यथा—वमनं विरेचनं च, तद्विरोधिनां च द्रव्याणां संशमनार्थमुपयोगः, तथाविधैश्च द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति ॥ १०४ ॥

भवतश्चात्र—

विरुद्धाशनजान्[2] रोगान् प्रतिहन्ति विवेचनम्।
वमनं शमनं चैव पूर्वं वा हितसेवनम् ॥ १०५ ॥
सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च।
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ १०६ ॥

तद्विरोधिनामिति षाण्ढ्यादिहराणाम्। तथाविधैरिति विरुद्धाहारजव्याधिविरुद्धैः। अभिसंस्कार इति सततोपयोगेन शरीरभावनम्। किंवा तथाविधैरिति रसायनप्रयोगैः। एतच्चानागताबाधचिकित्सितं ज्ञेयम् ॥ १०४–१०६ ॥

तत्र श्लोकाः—

मतिरासीन्महर्षीणां या या रसविनिश्चये।
द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रया ॥१०७॥
कारणं रससंख्याया रसानुरसलक्षणम्।
परादीनां गुणानां च लक्षणानि पृथक्पृथक् ॥१०८॥
पञ्चात्मकानां षट्त्वं च रसानां येन हेतुना।
ऊर्ध्वानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥ १०९ ॥
षण्णां रसानां षट्त्वे च सविभक्ता[3] विभक्तयः।
उद्देशश्चापवादश्च द्रव्याणां गुणकर्मणि ॥ ११० ॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्यसंख्याविनिश्चयः ॥ १११ ॥
षण्णामास्वाद्यमानानां रसानां यत् स्वलक्षणम्।
यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत् ॥ ११२ ॥
वैरोधिकनिमित्तानां व्याधीनामौषधं च यत्।
आत्रेयभद्रकाप्यीये तत् सर्वमवदन्मुनिः ॥ ११३ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

१ 'शोपाम्लपित्त०' इति पा०।

१ 'प्रतीघातकरा' इति पा०। २ 'विरुद्धाशनजानित्यादौ प्रतिहन्तीति प्रतिपक्ष हन्तीति, तेन कुष्ठादिप्रतिपक्षं विरेचनादि कुष्ठादि हन्ति, एवं वमनशमनयोरपि प्रत्यर्थो व्याख्येयः। पूर्वं वा हितसेवनं पूर्वं महाप्रभावरसायनादिसेवया न भवन्त्येवंभूता व्याधयः' इति शिवदाससेनः। ३ 'सातिभुक्ताः' इति पा०।

संग्रहे द्रव्यसंख्या रसाश्रया इति 'भेदश्चैषां' इत्यादिना; रससंख्या हि परमार्थतो द्रव्यसंख्यैव, निर्गुणत्वाद्रसानामिति भावः। कारणं रससंख्याया इति 'रसानां तत्र योग्यत्वात्' इत्यादिना। विभक्तयो भेदः 'तत्र मधुर' इत्यादिना। उद्देशो द्रव्याणां 'शीतं वीर्येण' इत्यादिना, अपवादो द्रव्याणां 'मधुरं किंचित्' इत्यादिना ॥ १०७–११३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने अन्नपानचतुष्के आत्रेयभद्रकाप्यीयो नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः।

**अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

संप्रति सामान्येनोक्तानां गुणकर्मभ्यां प्रतिव्यक्त्यनुक्तानां प्रतिव्यक्तिप्रायउपयोगिद्रव्यस्य विशिष्टगुणकर्मकथनार्थमन्नपानविधिरध्यायोऽभिधीयते। अत्रोत्पन्नस्य छप्रत्ययस्य लुक्। अत्रान्ने काठिन्यसामान्यात् खाद्यं, पाने च द्रवत्वसामान्याल्लेह्यमवरुद्धं ज्ञेयम्। अन्नपानं विधीयते विशिष्टगुणकर्मयोगितया प्रतिपाद्यतेऽनेनेत्यन्नपानविधिः; द्रव्याणां गुणकर्मकथनमेव चान्नपानविधिः, यतस्तद्धि ज्ञात्वाऽन्नपानं विधीयते ॥ १ ॥ २ ॥

**इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणिसंज्ञकानां प्राणमाचक्षते कुशलाः, प्रत्यक्षफलदर्शनात्; तदिन्धना ह्यन्तरग्नेः स्थितिः; तत् सत्त्वमूर्जयति, तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं, विपरीतमहिताय संपद्यते ॥ ३ ॥**

किं तदन्नपानं करोतीत्याह—इष्टेत्यादि। इष्टमिति अभिमतं हितं च; किंवा इष्टं प्रियं, हितं तु विधिविहितशब्देनैव प्राप्यते। विधिर्वक्ष्यमाणरसविमाने "तदेतदाहारविधानम्" ( वि० अ० १ ) इत्यादिग्रन्थवाच्यः, तथेन्द्रियोपक्रमणीये च "नारन्नपाणिः" ( सू. अ. ८ ) इत्यादिनोक्तं विधानं; तेन विधिना विहितं विधिविहितम्। अत्र वर्णादिषु शब्दाग्रहणमन्नपाने प्रायः शब्दस्याविद्यमानत्वात्। वर्णादिषु यद्यत् प्रथममन्नपाने गृह्यते, तत्तत् पूर्वमुक्तम्। रसस्तु स्पर्शस्य पश्चाद्गृह्यमाणोऽपि प्राधान्यख्यापनार्थं स्पर्शस्याग्रे कृतः। प्राणिनामित्यनेनैव लब्धेऽपि 'प्राणिसंज्ञकानाम्' इति वचनं स्थावरप्राणिप्रतिषेधार्थं; वृक्षादयो हि वनस्पतिसत्त्वानुकारोपदेशाच्छास्त्रे प्राणिन उक्ताः; नतु लोके प्राणिसंज्ञकाः, किंतर्हि जङ्गमा एव। इह च मनुष्यस्यैवाधिकृतत्वेऽपि सामान्येन सकलप्राणिप्राणहेतुतयाऽऽहारकथनं मनुष्यव्यतिरिक्तेऽपि प्राणिन्याहारस्य प्राणजनकत्वोपदर्शनार्थम्। प्राणमिति प्राणहेतुत्वात्; यथा—आयुर्घृतम्। अथ कथं तत् प्राणमाचक्षत इत्याह—प्रत्यक्षफलदर्शनादिति[1]।—प्रत्यक्षेणैव ह्याहारं विधिना कुर्वतां प्राणा अनुवर्तन्ते इति, तथा निराहाराणां प्राणा नह्यवतिष्ठन्त इति दृश्यत इत्यर्थः। प्रत्यक्षशब्दश्चेह स्फुटप्रमाणे वर्तते, यतः प्राणानामन्नकार्यत्वमनुमानगम्यमेव। अन्नकार्यत्व एव प्राणानां हेतुमाह—तदिन्धना हीत्यादिना। यस्मादन्तरग्निस्थितिश्चान्नपानहेतुना, अग्निस्थितिश्च प्राणहेतुः, ततोऽन्नं प्राणा इति भावः; उक्तं हि—"बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः"। किंवा, पूर्वमन्नपानस्य प्राणहेतुत्वमुक्तं, तदिन्धना हीत्यादिनाऽग्निहेतुत्वं वर्ण्यते। सत्त्वमूर्जयतीति मनोबलं करोति। धातुव्यूहो धातुसङ्घातः। विपरीतम् अविधिसेवितम् ॥ ३ ॥

**तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामोऽग्निवेश!। तत् स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु संदधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्जरीकरोति, शीधुरवधमति, द्राक्षासवो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याकशाकं ग्लपयति, प्रभूतान्तर्मलो माषसूपः, दृष्टिशुक्रघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र दाडिमामलकात्, प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाच्च शालिषष्टिकयवगोधूमात्, प्रायस्तिक्तं वातलमवृष्यं चान्यत्र वेत्राग्रामृतापटोलपत्रात्, प्रायः कटुकं वातलमवृष्यं चान्यत्र पिप्पलीविश्वभेषजात् ॥ ४ ॥**

अन्नपानं विधीयते येन तं विधिं द्रव्यगुणकर्मरूपं, तथा चरशरीरावयवादिरूपं चाखिलेन कार्त्स्न्येनोपदेक्ष्यामः। यद्यपि चेह द्रव्यं प्रति प्रति गुणकर्मभ्यां न निर्देक्ष्यति, वक्ष्यति हि—"अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः" इति, तथाऽप्यनुक्तानामपि द्रव्याणां चरशरीरावयवाद्युपदेशेन, तथा पूर्वाध्यायोक्तपार्थिवादिद्रव्यगुणकर्मकथनेन च तद्विधानमप्युक्तं भवतीत्यत उक्तम्—अखिलेनेति; वक्ष्यति हि—"यथा नानौषधं किंचिद्देशजानां वचो यथा। द्रव्यं तु तत्तथा वाच्यमनुक्तमिह यद्भवेत्", तथा "चरः शरीरवयवाः" इत्यादि; किंवा, विधिशब्दोऽशितपीतलीढखादितप्रकारवाची[2], तेन चाशितादयः सर्व एवाखिलेन वाच्यः, तत्कारणभूतानि तु द्रव्याणि रक्तशाल्यादीन्येकदेशेनोक्तानि, अतो वक्ष्यति—'अन्नपानैकदेशोऽयमुक्तः

---

१ 'अन्नपानकथने उपपत्तिमभिधातुं तत्स्वरूपमाह—इष्टवर्णेत्यादि' इति शिवदाससेनः।

[1] 'प्राणहेतुत्वे हेतुमाह—प्रत्यक्षफलदर्शनादिति। अन्वयव्यतिरेकसहकृतेन प्रत्यक्षेण विधिविहिताहारस्य प्राणरूपफलदर्शनात् प्राणहेतुत्वमित्यर्थः।' इति शिवदाससेनः। [2] 'विधिमिति तत्तद्विशिष्टकर्मनिबन्धनं प्रकारम्' इति शिवदाससेनः।

इति। अन्नपाने च वक्तव्ये यद्द्रव्यं प्राय उपयुज्यते, तस्य सामान्यगुणमभिधाय वर्गसंग्रहेण गुणमुपदेक्ष्यति। उदकाभिधानं चाग्रे कृतम्, उदकस्यान्ने पाने च व्याप्रियमाणत्वात्। तदित्युदाहरणं; किंवा स स्वभावो यस्य स तत्स्वभावः, तस्मात् क्लेदनस्वभावादित्यर्थः। यद्यपि 'उदकमाश्वासकराणां, जलं स्तम्भनानाम्' (सू० अ० २६) इत्युक्तं, तथाऽपीहानुक्तक्लेदनकर्माभिधानार्थं पुनरुच्यते। इह जललवणादीनां यत् कर्मोच्यते तत्तेषामितरकर्मभ्यः प्रधानं ज्ञेयम्, अग्र्याधिकारे तु तत्कर्मकर्तृद्रव्यान्तरप्रशस्तता ज्ञेया। क्षारः पचन्तमग्निं पाचयति, तेन पाचयतीति हेतौ णिच्। स्नेहयतीत्यादौ तु "तत्करोति तदाचष्टे" इति णिच्। संदधातीति विश्लिष्टानि त्वङ्मांसादीनि संश्लेषयति। रसः मांसरसः। प्रीणयतीति क्षीणान् पुष्णाति,नत्वतिवृद्धत्वं करोति; तेन मांसकर्मणा बृंहणेन समं नैक्यम्। जर्जरीकरोतीति [1]श्लथमांसाद्युपचयं करोति; यदुक्तं हारीते—"सुरा जर्जरीकरोत्यस्वेदोवाहुल्यात्" इति, तथा तन्त्रेऽप्युक्तं—"सुरा कृशानां पुष्ट्यर्थम्" इति। अवधमयतीति विलिखतीत्यर्थः, अनेकार्थत्वाद्धातूनां; वचनं हि—'लेखनः शीतरसिकः' इति, तथा हारीतेऽप्युक्तं—"शीधुरवधमयति वाय्वग्निप्रबोधनात्" इति। आचिनोति 'दोषान्' इति शेषः, तन्त्रान्तरवचनं हि—"वातपित्तकफांस्तस्मादाचिनोति च फाणितम्" इति। पिण्याकः तिलकल्कः; निघण्टुकारस्त्वाह—पिण्याको हरितशिग्रुः। ग्लपयति हर्षक्षयं करोति। प्रभूतान्तर्मलस्य पुरीषस्य कर्ता प्रभूतान्तर्मलः; यद्यपि 'माषो बहुमलः' इति वक्ष्यति, तथाऽपि माषविकृतेः सूपस्येह गुणकथनं, तेन न पुनरुक्तं; न चावश्यं प्रकृतिधर्मो विकृतिमनुगच्छति, यतः सक्तूनां सिद्धपिण्डिका गुर्वी एव भवति, तस्मान्माषविकृतावपि मलवृद्धिदर्शनार्थमेतदभिधानम्। क्षारस्य पाचनत्वं गुणोऽभिहितः, इह तु दृष्टिशुक्रघ्नत्वं दोष इति पृथगुच्यते। प्रायः पित्तलमिति विशेषेणान्येभ्यो लवणकटुकेभ्योऽम्लं पित्तलम्। एवमन्यत्रापि प्रायःशब्दो विशेषार्थो वाच्यः; किंवा प्रायःशब्दोऽम्लेन संबध्यते। अत्र पित्तमादावम्लजन्यतयोक्तं, दोषप्राधान्यस्यानियतत्वात्; उक्तं हि—"न ते पृथक् पित्तकफानिलेभ्य" (सू० अ० १९) इति, तथा "समपित्तानिलकफा" (सू० अ० ७) इति; किंवा पित्तोष्मा वह्निः, स चेहान्नपानपचने प्रधानं; यदुक्तं—'यदन्नं देहधात्वोजोवलवर्णादिपोषकम्। तत्राग्निर्हेतुराहारान्नह्यपक्वाद्रसादयः" (चि० अ० १५) इति; तेनेह वह्निकारणपित्तजनकमेवादावुच्यते; यतश्च पित्तजनकमग्रे वक्तव्यम्, अतो रसप्रधानमपि मधुरो नादावुक्तः। मधुन इति विच्छेदपाठेन नवानवस्य मधुनः कफाकर्तृत्वं दर्शयति। इह च षड्रसस्यैव कथनमेतन्न्येनैव, अनुक्तानां लवणतिक्तकषायाणामपि पाकद्वारा ग्रहणात्; यतो लवणः पाकात् प्रायो मधुरः, तिक्तकषायौ कटुकौ पाकतो भवतः। 'प्रायः सर्वं तिक्तं' इत्यादिस्तु ग्रन्थो हारीतीयः, इह केनापि प्रमादाल्लिखितः॥ ४॥

**परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ५**
**शूकधान्यशमीधान्यमांसशाकफलाश्रयान्।**
**वर्गान् हरितमद्याम्बुगोरसेक्षुविकारिकान्॥ ६॥**
**दश द्वौ चापरौ वर्गौ कृतान्नाहारयोगिनाम्।**
**रसवीर्यविपाकैश्च प्रभावैश्च प्रचक्ष्महे॥ ७॥**

वर्गेण शूकधान्यादीनां आहारद्रव्याणां संग्रहो वर्गसंग्रहः। रसवीर्येत्यादौ प्रभावोऽल्पविषयतया पृथक्पठितः। रसादिनिर्देशश्च यथायोग्यतया ज्ञेयः, तेन न सर्वद्रव्ये सर्वरसाद्यभिधानं भविष्यति। अत्र शूकधान्यमादावाहारप्रधानत्वात्; शूकवन्ति धान्यानि शूकधान्यानि॥ ५-७॥

**अथ शूकधान्यवर्गः—**

**रक्तशालिर्महाशालिः कलमः शकुनाहृतः[2]।**
**तूर्णको[3] दीर्घशूकश्च गौरः पाण्डुकलाङ्कुलौ॥ ८॥**
**सुगन्धको लोहवालः सारिवाख्यः प्रमोदकः।**
**पतङ्गस्तपनीयश्च ये चान्ये शालयः शुभाः॥ ९॥**
**शीता रसे विपाके च मधुराश्चाल्पमारुताः।**
**बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः॥ १०॥**
**रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः[4]।**
**महांस्तस्यानु कलमस्तस्याप्यनु ततः परे॥ ११॥**
**यवका हायनाः पांसुवाप्यनैषधकादयः[5]।**
**शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः॥ १२॥**

इह च द्रव्यनामानि नानादेशप्रसिद्धानि, तेन नामज्ञाने सामर्थ्यं तथाभूतं नास्त्येवान्येषामपि टीकाकृतां, तेन देशान्तरिभ्यो नाम प्रायशो ज्ञेयं, यत्तु प्रचरति गौडे तल्लेखिष्यामोऽन्यदेशप्रसिद्धं च किंचित्। कलमो वेदाग्रहारेषु स्वनामप्रसिद्धः। शकुनाहृतः श्रावस्त्यां वक्रनाम्ना प्रसिद्धः। रक्तशालिः प्रसिद्ध एव। महाशालिर्मगधे प्रसिद्धः। अत्र च शालिर्हैमन्तिकं धान्यं, षष्टिकादयश्च ग्रैष्मिकाः, व्रीहयः शारदा इति व्यवस्था। रक्तशाल्यादीनां मधुरपाकित्वेऽपि बद्धवर्चस्त्वं प्रभावादेव।

---

[1] 'जर्जरीकरोतीति मांसादि शिथिलीकरोतीत्यर्थः' इति शिवदाससेनः।

१ 'वर्गसंश्रयेण' इति पा०। [2] 'शकुनाऽऽहृतः उत्तरकुरुभ्यो हंसैरानीतः, अवन्त्यां वक्रनाम्ना प्रसिद्धः, मगधदेशे तु पाशक इति। वृद्धवैद्यास्तु—"द्वीपान्तरात् समानीतो गरुडेन महात्मना। शकुनाऽऽहृतः स शालिः स्याद्गरुडापरनामकः" इत्याहुः' इति सुश्रुतटीकायां डल्हणः। अरुणदत्तस्तु अष्टाङ्गहृदयटीकायां "शकुनाहृतो यो मगधेषु बुद्धोत्पादकाले उत्तरकुरुभ्यो हंसैरानीतो मृगारिमात्रा विशाखाख्यया वापितो विस्तारं गतः, अत एव शकुनाहृत इत्यन्वर्थाऽस्य संज्ञा" इत्याह। [3] 'चूर्णकः' इति पा०। [4] 'तृष्णाघ्नश्च मलापहः' इति पा०। [5] 'पांसुवाष्पनैषधकादयः' इति पा०। ६ 'अवन्त्यां' इति पा०।

महांस्तस्यान्विति रक्तशालेरनु, तेन रक्तशालिगुणा महाशालेर्मनागल्पाः; एवं तस्यानु कलम इत्यत्रापि वाच्यम्। तस्येति महाशालेः। ततः परे इति शकुनाहृतादयः, उत्तरोत्तरमल्पगुणा इत्यर्थः। गुणागुणैरिति शालीनां रक्तशाल्यादीनां ये गुणास्तृष्णाघ्नत्वत्रिमलापहत्वादयः, तेषामगुणैस्तद्गुणविपरीतैर्दोषैर्यवकादयोऽनुकारं कुर्वन्ति, ततश्च यवकास्तृष्णात्रिमलादिकरा इति। गुणशब्दश्चेह प्रशंसायाम्॥ ८–१२ ॥

शीतः स्निग्धोऽगुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥ १३ ॥
वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः।
गन्धनाः[2] कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥१४॥
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ १५ ॥

षष्टिकगुणेऽकारप्रश्लेषादगुरुरिति बोद्धव्यं, मात्राशितीये (सू. अ. ५) षष्टिको लघुः पठितः। ततोऽनु चेति गौरषष्टिकादल्पान्तरगुणः। वरकोद्दालकादयः षष्टिकविशेषाः; केचित् कुधान्यानि वरकादीनि वदन्ति। व्रीहिरिति शारदाशुधान्यस्य संज्ञा। पाटलो व्रीहिविशेषः। तन्त्रान्तरेऽपि पठ्यते—“त्रिदोषस्त्वेव पाटलः” इति, सुश्रुते पाटलशब्देनैतद्व्यतिरिक्तो धान्यविशेषो ज्ञेयः, तेन तद्गुणकथनेन नेह विरोधः ॥ १३–१५ ॥

सकोरदूषः श्यामाकः कषायमधुरो लघुः।
वातलः कफपित्तघ्नः शीतः संग्राहिशोषणः ॥ १६ ॥
हस्तिश्यामाकनीवारतोयपर्णीगवेधुकाः।
प्रशान्तिकाम्भःश्यामाकलौहित्याणु[3]प्रियङ्गवः ॥ १७ ॥

मुकुन्दो झिण्टिगर्मूटी[1] वरुका वरकास्तथा।
शिविरोत्कटजूर्णाह्वाः श्यामाकसदृशा गुणैः ॥ १८ ॥

कोरदूषादयः कुधान्यविशेषाः। कोरदूषः कोद्रवः, कोरदूषस्य केवलस्य श्लेष्मपित्तघ्नत्वं, तेन यदुक्तं रक्तपित्तनिदाने—“यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते” ( नि. अ. २ ) इत्यादिना पित्तकर्तृत्वं कोरदूषस्य, तत्तत्रैवोक्तनिष्पावकाञ्जिकादियुक्तस्य संयोगमहिम्ना बोद्धव्यम्। श्यामाकादयोऽपि तृणधान्यविशेषाः। हस्तिश्यामाकः श्यामाकभेद एव; नीवार उडिका; गवेधुको घुलुंचः, स ग्राम्यारण्यभेदेन द्विविधः। प्रशातिका उडिकैव स्थलजा रक्तशूका; अम्भःश्यामाका जलजा ओडिका लोके ‘डे’ इत्युच्यते; प्रियङ्गुः ‘काङ्गनी’ इति प्रसिद्धा। मुकुन्दो ‘वाकसतृण’ इति; वरुकः शणबीजं; वरकः श्यामबीजं; शिविरस्तीरभुक्तौ[2] ‘सिद्ध(क्ता)क’ इत्युच्यते; जूर्णाह्वो ‘जोनार’ इति ख्यातः ॥ १६–१८ ॥

रूक्षः शीतोऽगुरुः स्वादुर्बहुवातशकृद्यवः।
स्थैर्यकृत् सकषायश्च[3] बल्यः श्लेष्मविकारनुत् ॥१९॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा।
मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ २० ॥

यवस्य गुरोरपि बहुवातत्वं रूक्षत्वात्; किंवा[4] सुश्रुते यवो लघुः पठितः, तेनात्राप्यगुरुरिति मन्तव्यं; बल्यश्च स्रोतःशुद्धिकरत्वात् प्रभावाद्वा। अस्य च शीतमधुरकषायत्वेनानुक्तमपि पित्तहन्तृत्वं लभ्यत एव, तेन सुश्रुते “कफपित्तहन्ता” ( सु. सू. अ. ४६ ) इत्युक्तमुपपन्नम् ॥ १९ ॥ २० ॥

सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः।
जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥२१॥
नान्दीमुखी मधूली च मधुरस्निग्धशीतले।
इत्ययं शूकधान्यानां पूर्वो वर्गः समाप्यते ॥ २२ ॥

गोधूमस्य स्वादुशीतस्निग्धादिगुणोपयोगाच्छ्लेष्मकर्तृत्वं भवत्येव, अत एव सुश्रुते “श्लेष्मकर” (सु. सू. अ. ४६) इत्युक्तम्। यत्तु वसन्ते कफप्रधाने “यवगोधूमभोजनः”(सू.अ.६) इत्युक्तं तत् पुराणगोधूमाभिप्रायेण; पुराणश्च गोधूमः कफं न करोतीत्युक्तमेव ‘प्रायः श्लेष्मलं मधुरम्’ इत्यादिना ग्रन्थेनात्रैवाध्याये। नन्दीमुखी यविका, मधूली गोधूमभेदः। इत्ययमत्र

१ ‘ननु, शाल्यादीनामुपयोगस्तण्डुलभक्तपेयादिप्रकारेण परं भवति, ते च प्रकाराः पृथगेव गुणतो निर्देष्टव्याः, प्रकृतिगुणसहिता एव विकृतिगुणाः कार्यकराः, यतस्तण्डुलभक्तपेयादयो रक्तशाल्यादिप्रकृतिगुणानुगता एव, नहि रक्तशालिभक्तपेयालाजादयो यथा लघ्वादिगुणास्तथा व्रीहिकृतभक्तपेयादयः, किंतु प्रकृतिगुणानुगतरक्तशालिकृतभक्ताद्यपेक्षया गुरव एव; तेन यत्र प्रकृतिसमानो विकृतिगुणस्तत्र गुणोत्कर्षः, यत्र प्रकृतिगुणविपरीतो विकृतिगुणस्तत्र गुणापकर्षः; यथा व्रीहेर्गुरोर्लघवो लाजाः, अत्र लाजकरणेनाल्पमेव लघुत्वं क्रियते। यत्र तु प्रकृतिगुणैर्न समानो नापि विपरीतो विकृतेर्गुणः, यथा दध्नोऽम्लत्वं मण्डस्य वा दीपनत्वं, तत्र द्वयोरपि प्रकृतिविकृतिगुणयोः पृथगेव कार्यकारित्वमुत्सर्गतः। क्वचित्तु यद्विकृतेर्बलीयस्त्वेन प्रकृतिगुणाभिभवकत्वं, यथा शुक्तासुतार्द्रकक्करीरादिषु, तत् ‘तद्वत्तदासुतं’ इति विशेषागमादेव प्रतीयते; तेन तत्र प्रकृतिगुणानां दुर्बलत्वम्। यदपि प्रकृतिगुणोपमर्देन तद्विरुद्धकार्यकर्तृत्वं विकृतेः, यथा कांस्यभाजने दशरात्रस्थितस्य सर्पिषो मारकत्वमित्यादि, तदपवादरूपागमवेद्यमेव; तेन यत्रोत्सर्गभूतशास्त्रार्थापवादस्तत्रोपदेशं करोत्येव शास्त्रकार इति प्रकृतिविकृतिपृथगभिधानं युक्तमेव, अयं च न्याय एवंजातीयेषु सर्वत्र मांसादिषु ज्ञेयः’ इति शिवदाससेनः। २ ‘गन्धलाः’ इति पा०। ३ ‘अणुश्चीनः, ‘चिना’ इति लोके; ‘लौहित्याम्भःप्रियङ्गवः’ इति पा०।

१ ‘झिण्टिरमुखः’ इति पा०। २ तीरभुक्तौ विदेहदेशे ‘तिरहुत’ इति प्रसिद्धे मण्डले। ३ ‘सकषायश्चेति कषायस्य स्वादुत्वापेक्षया हीनताऽवबोधार्थमुपसर्जनार्थं सहशब्दः प्रयुक्त इति ज्ञेयम्’ इति शिवदाससेनः। ४ ‘किंवा, सुश्रुते यवो लघुः पठितः; तेन, अत्राप्यकारप्रश्लेषेण ‘अगुरुः’ इति पाठो मन्तव्यः; गुरुत्वप्रतिज्ञानार्थमीषदर्थे नञ् प्रश्लेषयन्ति, अत एव लघुरित्यसन्दिग्धमपि न पठितम्। अन्ये तु गुरुगुणस्यापि यवस्य कटुविपाकित्वं द्रव्यप्रभावादेव समर्थनीयमित्याहुः। सकषाय ईषत्कषायः। बल्यत्वं च स्रोतोविशुद्धिकरत्वेन सम्यग्रससंचारेणेष्टं, न तु देहस्योपचयकारकत्वेन रौक्ष्यादिधर्मयोगाद्यवस्य’ इति शिवदाससेनः।

'इति' प्रकारार्थः । समाप्त इति वक्तव्ये समाप्यत इति यत् करोति, तेन ज्ञापयति—यत्–बहुद्रव्यत्वान्नायं समाप्तो गणः, किंतु यथाकथंचित् प्रसिद्धगुणकथनेन समाप्यते । एवमन्यत्रापि षष्ठो वर्गः समाप्यत इत्यादौ व्याख्येयम् ॥ २१ ॥ २२ ॥

इति शूकधान्यवर्गः प्रथमः ॥ १ ॥

अथ शमीधान्यवर्गः—

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।
विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः ॥२३॥
वृष्यः परं वातहरः स्निग्धोष्णो मधुरो गुरुः ।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥२४॥
राजमाषः सरो रुच्यः कफशुक्राम्लपित्तनुत् ।
तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः ॥ २५ ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः ।
कुलत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः २६
मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ।
मकुष्ठकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥ २७ ॥
चणकाश्च मसूराश्च खण्डिकाः सहरेणवः ।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥ २८ ॥
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कलायो वातलः परम् ॥ २९ ॥
स्निग्धोष्णो मधुरस्तिक्तः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥३०॥
मधुराः शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिकाः ।
सस्नेहा बलिभिर्भोज्या विविधाः शिम्बिजातयः॥३१॥
शिम्बी रूक्षा कषाया च कोष्ठे वातप्रकोपिनी ।
न च वृष्या न चक्षुष्या विष्टभ्य च विपच्यते ॥३२॥
आढकी कफपित्तघ्नी वातला, कफवातनुत् ।
अवल्गुजः सैडगजो, निष्पावा वातपित्तलाः ॥
काकाण्डोमा(ला)त्मगुप्तानां माषवत् फलमादिशेत् ।
द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥३४॥

१ 'श्लेष्मपित्तप्रशमनो' इति पा० । २ 'रूक्षश्चैव कषायश्च वातलः श्लेष्मपित्तहा। विष्टम्भी चाप्यवृष्यश्च राजमाषः प्रकीर्तितः।' इति पाठान्तरम् । 'राजमाषगुणमाह—राजमाष इत्यादि । सरति जलक्षिप्ततैलवदाशयं व्याप्नोतीति सरः, सरत्वं हि स्थिरविपरीतगुणः, अयं च गुणो जलबहुलस्यैव द्रव्यस्य भवति; तदुक्तं—''शीतस्निग्धमृदुस्तिमितसरपिच्छिलमाप्यम्' इति । तत्स्वादुरिति तयो रसपाकयोः स्वादुः; उक्तं हि सुश्रुते—''कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्ता । स्वादुर्विपाके मधुरोऽलसान्द्रः संतर्पणः स्तन्यरुचिप्रदश्च'' ( सु. सू. अ.४६) । अलसान्द्रो राजमाष इति चक्रादयः । अस्य च विपाके मधुरस्यापि प्रभावादेव बद्धविण्मूत्रत्वं कफहारित्वमवृष्यत्वं चेति गयदासः । अन्ये तु तत्स्वादुरिति माषवत्स्वादुरित्याहुः । ये तु सर इत्यस्य वचोभेदार्थत्वं वर्णयन्ति, तन्मते सुश्रुतविरोधोऽपरिहार्यः।' इति शिवदाससेनः ।

धान्यत्वेन शमीधान्यवर्गेऽभिधातव्ये प्रधानत्वान्मुद्गो निरुच्यते । सूप्यं सूपयोग्यं शमीधान्यं, तत्रोत्तमः सूप्योत्तमः । वृष्य इत्यादिमाषगुणे स्निग्धोष्णमधुरत्वादिगुणयोगादेव वातहरत्वे लब्धे पुनस्तदभिधानं विशेषवातहन्तृत्वप्रतिपादनार्थम्, एवमन्यत्राप्येवंजातीये व्याख्येयम् । पुंस्त्वं शुक्रम् । शीघ्रमितिवचनेन शुक्रस्रुतिकरत्वलक्षणमपि वृष्यत्वं माषस्य दर्शयति, शुक्रस्रुतिकरं च वृष्यशब्देनोच्यत एव, वचनं हि—''शुक्रस्रुतिकरं किंचित् किंचित् शुक्रविवर्धनम् । स्रुतिवृद्धिकरं किंचिन्त्रिविधं वृष्यमुच्यते'' इति; तदेवं संपूर्णवृष्यत्वं माषे बोद्धव्यम्। राजमाषगुणकथने तत्स्वादुरिति माषवत्स्वादुः; किंवा रूक्षश्चेत्यादि पाठान्तरम् । उष्ण इत्यादिना कुलत्थगुणः, कुलत्थश्च-शुक्लकृष्णचित्रलोहितभेदेन चतुर्विधो भवति, तथा ग्राम्यवन्यभेदेन च द्विविधोऽपि;अत एव तन्त्रान्तरे ''वन्यः कुलत्थस्तद्वच्च विशेषान्नेत्ररोगनुत्'' इत्युक्तम् । मकुष्ठको 'मोठ' इति ख्यातः । चणकः प्रसिद्धः । खण्डिका त्रिपुटकलायः, हरेणुः वर्तुलकलायः । कलायो वातल इति त्रिपुटकलायः । तिलगुणो यद्यपि विशेषेण नोक्तः, तथाऽपि प्रधाने कृष्णतिले ज्ञेयः; उक्तं हि सुश्रुते—''तिलेषु सर्वेष्वसितः प्रधानो, मध्यः सितो, हीनतरास्ततोऽन्ये'' ( सु. अ. अ. ४६ ) इति । विविधाः शिम्बीजातय इति कृष्णपीतरक्तश्वेतकुशिम्बीभेदा इत्यर्थः । 'शिम्बी रूक्षा' इत्यादि केचित् पठन्ति । आढकी तुवरी वातलेति च्छेदः । कफवातनुदित्यवल्गुजैडगजयोर्बीजस्य गुणः । निष्पावो वल्लः । काकाण्डः शूकरशिम्बिः, उमा अतसी, ऊर्णापाठपक्षे तस्यैवोर्णा । शमीधान्यवर्ग इत्यत्र शमी शिम्बिः, तदन्तर्गतं धान्यम् ॥ २३–३४ ॥

इति शमीधान्यवर्गो द्वितीयः ॥ २ ॥

१ 'अस्य च कषायरूक्षत्वादिना किंचिद्वातकोपकत्वं ज्ञेयम्; अत एव वाग्भटेऽपि ''मुद्गोऽल्पचलः'' (वा. सू. अ. ६) इत्युक्तम्, अल्पचलोऽल्पवात इत्यर्थः, सुश्रुतेऽपि 'नात्यर्थं वातल' (सु. सू. अ. ४६) इत्युक्तम्' इति शिवदाससेनः । २ 'स्निग्ध इत्यादिना तिलगुणाः । मधुर इति रसेन पाकेन च ज्ञेयः; उक्तं हि—''ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः । तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः'' ( सु. सू. अ. ४६ ) इति । यद्यपि तन्त्रान्तरे ''स माधुर्यात्तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुत् ॥ औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः'' ( सु. चि. अ. १ ) इत्यनेन तिलस्य त्रिदोषहरत्वमेवोक्तं, तथाऽपि व्रणविषयप्रलेपाभिप्रायेण तद्वचनं व्याख्येयम्; अत एव सुश्रुते ''व्रणालेपन एव पथ्यः'' इत्यत्र एवकारेण व्रणे तिलानामालेपन एव पथ्यत्वम्, अभ्यवहारे पुनः कफपित्तकरत्वेनापथ्यत्वमेवेति बोधयति । अत एव तत्र व्रणविरुद्धवर्गे नवधान्यादौ तिलः पठितः । सेयं स्वभावोपजनितैवाधारशक्तिरस्य । यदुक्तं सुश्रुते—''यत्र कुर्वन्ति तदधिकरणम्'' ( सु. सू. ४१ ) इति, धान्याम्लस्य बहिरन्तःप्रयोगे दाहहरणकरणत्ववत्' इति शिवदाससेनः । ३ 'शूकशिम्बीसदृशशिम्बिः काकाण्डः शूकरशिम्बीति लोके, उमा अतसी, आत्मगुप्ता शूकशिम्बी, अन्ये तु ''फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः'' (वा. सू. अ.६) इति वाग्भटे द्विवचनं दृष्ट्वा काकाण्डोला कटभीति व्याचक्षते' इति शिवदाससेनः ।

अथ मांसवर्गः—

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः।
वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः॥ ३५॥
लोपाको जम्बुकः श्येनो वान्तादश्चापवायसौ।
शशघ्नी मधुहा भासो गृध्रोलूककुलिङ्गकाः॥ ३६॥
धूमिका कुररश्चेति प्रसहा मृगपक्षिणः।

सूप्यानन्तरं मांसस्य व्यञ्जनत्वेन प्राधान्यान्मांसवर्गाभिधानम्। खरः गर्दभः; अश्वतरः वेगसरः, स चाश्वायां खराज्जातः; द्वीपिः चित्रव्याघ्रः; ऋक्षः भल्लूकः। वृकः कुक्कुरानुकारी पशुशत्रुः; तरक्षुः व्याघ्रभेदः 'तरच्छ' इति ख्यातः; बभ्रुः अतिलोमशः कुक्कुरः पर्वतोपकण्ठे भवति, केचिद्बृहन्नकुलमाहुः। लोपाकः स्वल्पशृगालो महालाङ्गूलः। श्येनः पक्षी प्रसिद्धः। वान्तादः कुक्कुरः। चासः( पः )'कनकवायसं' इति ख्यातः। शशघ्नी 'पाङ्गिः' इति ख्याता। भासः भसवर्णः पक्षी शिखावान् प्रसहवर्गे। कुलिङ्गः कालचटकः॥ ३५॥ ३६॥—

श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुलीमृगः॥३७॥
कूर्चिका चिल्लटो भेको गोधा शल्लकगण्डकौ।
कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ३८

काकुलीमृगः 'माल्लुयासर्प' इति ख्यातः, तस्य श्वेत इत्यादयश्चत्वारो भेदाः। कूर्चिका सङ्कुचः। चिल्लटः चियारः। शल्लकः महाशकली, 'शलक' इति ख्यातः; गण्डकः गोधाभेदः। कदली 'कदलीहट्ट' इति ख्यातः। श्वावित् 'सेज्जक' इति ख्यातः। भूमिशया विलेशयाः॥ ३७॥ ३८॥

सृमरश्चमरः खड्गो महिषो गवयो गजः।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्वे रुरुस्तथा॥ ३९॥

सृमरः महाशूकरः। चमरः केशमृत्युः। खड्गः गण्डकः। गवयः गवाकारः। न्यङ्कुः न्यङ्कुशो हरिणः। रुरुः बहुशृङ्गो हरिणः॥ ३९॥

कूर्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः।
शुक्तिशङ्खोद्रकुम्भीरचुलुकीमकरादयः॥ ४०॥
इति वारिशयाः प्रोक्ता

शिशुमारः गोतुण्डनक्रः। तिमिङ्गिलः सामुद्रो महामत्स्यः। शुक्तिः मुक्ताप्रभवो जन्तुः, उद्रः जलबिडालः, कुम्भीरः घटिकावान्, चुलुकी 'शुशु' इति ख्यातः। शिशुमारादीनां मत्स्यग्रहणेन ग्रहणे प्राप्ते विशेषव्यवहारार्थं पुनरभिधानम्॥ ४०॥

वक्ष्यन्ते वारिचारिणः।
हंसः क्रौञ्चो बलाका च बकः कारण्डवः प्लवः॥४१॥
शरारिः पुष्कराह्वश्च केशरी मणितुण्डकः।
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः॥ ४२॥
उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी।
आरा नन्दीमुखी वाटी सुमुखाः सहचारिणः॥४३॥
रोहिणी कामकाली च सारसो रक्तशीर्षकः।
चक्रवाकस्तथाऽन्ये च खगाः सन्त्यम्बुचारिणः ४४

हंसश्चतुर्विधोऽपि राजहंसादिर्ग्राह्यः। क्रौञ्चः 'कोञ्च' इति ख्यातः। बकः पाण्डुरपक्षः। बलाका शुक्ला। कारण्डवः काकवक्त्रः। प्लवः स्वनामप्रसिद्धः प्रसेवगलः। शरारिः 'शराली' इति लोके। मद्गुः पानीयकाकः। कादम्बः कलहंसः। काकतुण्डकः श्वेतकारण्डवः। उत्क्रोशः 'कुरल' इति ख्यातः। पुण्डरीकाक्षः पुण्डरः। मेघरावः मेघनादः; मेघरावश्चातक इत्यन्ये, तन्न तस्य वारिचरत्वाभावात्। अम्बुकुक्कुटी जलकुक्कुटी। आरा स्वनामख्याता। नन्दीमुखी पत्राटी। सारसः प्रसिद्धः। रक्तशीर्षकः सारसभेदो लोहितशिराः। अम्बुचारिण इति जले प्लवन्त इत्यर्थः॥ ४१—४४॥

पृषतः शरभो रामः श्वदंष्ट्रो मृगमातृका।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः॥ ४५॥
चारुष्को हरिणैणौ च शम्बरः कालपुच्छकः।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः॥ ४६॥

पृषतः चित्रहरिणः। शरभः अष्टापद उग्रप्रमाणो महाशृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः। रामः हिमालये महामृगः। श्वदंष्ट्रः चतुर्दंष्ट्रः कार्तिकपुरे प्रसिद्धः। मृगमातृका स्वल्पा पृथूदरा हरिणजातिः। कुरङ्गः हरिणभेदः। गोकर्णः गोमुखहरिणविशेषः। हरिणः ताम्रवर्णः, एणः कृष्णसारः। ऋष्यः नीलाण्डो हरिणः। चारुष्कादयोऽपि हरिणभेदा एव। शशस्तु सुश्रुते विलेशयेषु पठितः, तदद्दूरान्तरार्थम्॥ ४५॥ ४६॥

लावो वर्तीरकश्चैव वार्तीकः सकपिञ्जलः।
चकोरश्चोपचक्रश्च कुक्कुभो रक्तवर्त्मकः॥ ४७॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्तकादयः।
वर्तको वर्तिका चैव बर्ही तित्तिरिकुक्कुटौ॥ ४८॥
कङ्कशारपदेन्द्राभगोनर्दगिरिवर्तकाः।
क्रकरोऽवकरश्चैव वारडश्चेति विष्किराः॥ ४९॥

लावः प्रसिद्धः। वर्तीरः कपिञ्जलभेदः। कपिञ्जलः गौरतित्तिरिः। वार्तीकः चटकभेदः सङ्घातचारी। उपचक्रः चकोरभेदः। कुक्कुभः प्रसिद्धः; रक्तवर्त्मक इति कुक्कुभविशेषणं, तेन स्थूलकुक्कुभो गृह्यते। वर्तकः 'वट्टही' इति ख्यातः। वार्तिका स्वल्पप्रमाणा जात्यन्तरमेव, केचित्तु वर्तकस्त्रियं वर्तिकां वदन्ति; अस्याश्च ग्रहणं स्त्रीलिङ्गभेदेऽपि विशेषलाघवप्रतिषेधार्थम्, अन्यथा स्त्रीत्वेन वर्तिकाद्वर्तिकाया लाघवं स्यात्। बर्ही मयूरः। शारपदेन्द्राभः मल्लकङ्कः। गोनर्दो 'घोडाकङ्क' इति ख्यातः। क्रकरः प्रसिद्धः। लावादिवर्तिकादिविष्किरगणद्वयकरणं गुणभेदकथनार्थम्॥ ४७—४९॥

१ 'काननचटकः' इति पा०। २ 'मानतुण्डकः' इति पा०।

१ 'गाल्युहरिणः' इति पा०। २ 'वारटाश्चेति' इति पा०।

शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः ।
कैरातः कोकिलोऽत्यूहो गोपापुत्रः प्रियात्मजः ॥५०॥
लट्वा लट्व(ट्ट)षको बभ्रुर्वटहा डिण्डिमानकः ।
जटी दुन्दुभिपाक्कारलोहपृष्ठकुलिङ्गकाः ॥ ५१ ॥
कपोतशुकशारङ्गाश्चिरटीकङ्कुयष्टिकाः ।
सारिका कलविङ्कश्च चटकोऽङ्गारचूडकः ॥ ५२ ॥
पारावतः पाण्ड(न)विक इत्युक्ताः प्रतुदा द्विजाः ।

शतपत्तः काष्ठकुक्कुटकः । भृङ्गराजः प्रसिद्धो भ्रमरवर्णः । कोयष्टिः 'कोडा' इति ख्यातः । जीवञ्जीवकः विषदर्शनमृत्युः । अत्यूहः डाहुकः, 'दात्यूह' इति वा पाठः, स च प्रसिद्धः । लट्वा फेञ्चाको रक्तपुच्छाधोभागः, लट्वषकोऽपि तद्भेदः । डिण्डिमानकः डिण्डिमवदुत्कटध्वनिः । कुलिङ्ग इति वनचटकाकारः पीतमस्तकः 'वाऐ' इति लोके । कलविङ्कः ग्राम्यचटकः । चटकस्तु देवकुलचटकः स्वल्पप्रमाणः । यान्यत्रानुक्तान्यप्रसिद्धानि तानि तद्विद्भ्यो देशान्तरिभ्यश्च ज्ञेयानि ॥ ५०–५२ ॥—

प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ॥ ५३ ॥
भूशया विलवासित्वादानूपानूपसंश्रयात् ।
जले निवासाज्जलजा जलेचर्याज्जलेचराः ॥ ५४ ॥
स्थलजा जाङ्गलाः प्रोक्ता मृगा जाङ्गलचारिणः ।
विकीर्य विष्किराश्चेति प्रतुद्य प्रतुदाः स्मृताः ॥ ५५ ॥
योनिरष्टविधा त्वेषा मांसानां परिकीर्तिता ।

प्रसहादिसंज्ञानिरुक्त्या लक्षणमाह । प्रसह्येति हठात् । आनूपानूपसंश्रयादिति पूर्वत्रासिद्धविधेरनित्यत्वेनानूपा इत्यत्र यलोपस्य सिद्धत्वेनैव संहिता ज्ञेया । जलेचर्यादिति जलवासिनामेव हंसादीनां जले चरणमात्रत्वं बोद्धव्यम् । 'स्थलजा'इत्युक्ते गजादिष्वपि स्थलजातेषु प्रसक्तिः स्यादित्याह—जाङ्गलचारिण इति । विकीर्येत्यत्र 'भक्षयन्ति' इति शेषः; एवं प्रतुद्येत्यत्रापि, प्रतुद्येति बहुधाऽभिहत्य ॥ ५३–५५ ॥—

प्रसहा भूशयानूपवारिजा वारिचारिणः ॥ ५६ ॥
गुरूष्णस्निग्धमधुरा बलोपचयवर्धनाः ।
वृष्याः परं वातहराः कफपित्तविवर्धनाः ॥ ५७ ॥
हिता व्यायामनित्येभ्यो नरा दीप्ताग्नयश्च ये ।
प्रसहानां विशेषेण मांसं मांसाशिनां भिषक् ॥ ५८ ॥
जीर्णार्शोग्रहणीदोषशोषार्तानां प्रयोजयेत् ।
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ॥ ५९ ॥
लघवः शीतमधुराः सकषाया हिता नृणाम् ।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ६० ॥

१ °भाङ्कोर° इति पा० । २ 'यान्यत्रोक्तान्यप्रसिद्धानि' इति पा० ।
३ 'बिलशायित्वादानूपोऽनूपसंश्रयात्' इति पा० ।

विष्किरा वर्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ।

प्रसहा द्विविधा मांसादा व्याघ्रश्येनादयः, तथा अमांसादाश्च गवादयः; तेन मांसादानां विशेषमाह—प्रसहानामित्यादि । जीर्णत्वेनार्शःप्रभृतीनां चिरानुबन्धं दर्शयति । प्रतुदा इत्यत्र तथा जाङ्गला इत्यत्र चकारो लुप्तनिर्दिष्टः । कफानुगे इति च्छेदः ॥ ५६–६० ॥—

नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ॥ ६१ ॥
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।
मांसं मधुरशीतत्वाद्गुरु बृंहणमाविकम् ॥ ६२ ॥
योनावजाविके मिश्रगोचरत्वादनिश्चिते ।

शरीरधातुसामान्यादिति मनुष्यमांससमानत्वात् । एतेन शीतगुरुस्निग्धत्वेन युक्तमप्याजमांसं शरीरधातुसाम्यात् कफं न करोतीत्युक्तं भवति । आविकं मांसं मधुरशीतत्वेन पित्तहरमपि बोद्धव्यम्, अत एव शरद्विधावप्युक्तम्—"उरभ्रशरभान्" ( सू. अ. ६ ) इति । रक्तपित्तनिदाने ( नि. अ. २ ) तु वराहमहिषेत्यादिना द्रव्यान्तरसंयुक्तस्यैवाविकमांसस्य रक्तपित्तकर्तृत्वं ज्ञेयम् । योनाविति प्रसहाद्यष्टविधजातौ । मिश्रगोचरत्वादिति कदाचिदनूपसेवनात्, कदाचिद्धन्वसेवनात्, कदाचिदुभयसेवनादजाव्योरनिश्चितयोनित्वमित्यर्थः । अत्र, 'अनिश्चिते' इति योनिविशेषणं, किंवा अजा च अवी च एते अनिश्चिते । ननु यद्येवं तदा तित्तिरिरपि धन्वानूपसेवनाज्ञ विष्किरगणे पठनीयः । नैवं, तित्तिरिजातिविशेषस्य धन्वानूपयोर्नियमेन निषेवणाद्गुणनियमः पार्यते कर्तुम्; अव्यजयोस्तु नियमोऽयं नास्ति, यतः केचिदजावी धन्वमात्रचरे, केचिदा-

१ 'नातिशीतेत्यादि । अदोषलमिति यद्यपि सुश्रुते "अतिशीतगुरुस्निग्धो मन्दपित्तकफः स्मृतः । छागलस्त्वनभिष्यन्दी तेषां पीनसनाशनः" ( सु. सू. अ. ४६ ) इति कथितः, तथाऽप्यव्यपदेश्यपित्तकफजनकत्वाददोषलमित्युक्तम् । यत्तु हारीते "त्रिदोषनुद्देहधातुसामान्याच्छागलं लघु" इत्युक्तं, तदपि ग्राम्यत्वेन कफजननयोग्यस्यापि छागलस्य तदजनकत्वात् समाधेयं, यथा मधुरस्य दाडिमस्य मधुरद्रव्यान्तरवत्कफाजनकत्वेन त्रिदोषहरत्वं, यथा वा सहकारतैलस्य रूक्षत्वं सजातीयापेक्षया तथाविधस्नेहनाकर्तृत्वात्, यथा वा "चतुर्भागावशिष्टं तु तोयं कफहरं स्मृतम्" इत्यत्र कफं प्रतीतरपानीयवदजनकत्वेन कफहरत्वमुच्यते । अन्यत्राप्येवंजातीये प्रतुदविष्किरवसामज्जादौ श्लेष्महरत्वादि व्याख्येयम् । शरीरसामान्यादिति मनुष्यमांसस्यापि नातिशीतगुरुस्निग्धत्वादित्यर्थः । अयं च बृंहणत्वे हेतुः । एतेन, यद्यपि मांसान्तरमपि मांसत्वेन शरीरमांसतुल्यं, तथाऽपि तत्र गुणसामान्याभावादजमांसवन्न सर्वैरूपेण बृंहणमित्यर्थः । एतेन, भङ्ग्या नृमांसस्यापि गुणा आचार्येणोक्ता इत्यवधेयम् । अन्ये तु, शरीरधातुसामान्यादित्यनभिष्यन्दत्वे हेतुमाहुः; तन्न, अप्रयोजकत्वात्; स्वमते तु ग्राम्यस्य बृंहणस्याप्यजामांसस्यानभिष्यन्दित्वं प्रभावादेव वक्तव्यम् । यदेव हि द्रव्यगुणद्वारा नोपपद्यते, तत्रैव प्रभावकल्पनस्योचितत्वात्' इति शिवदाससेनः । २ 'योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते' इति पा० ।

नूपमात्रचरे, केचिच्चोभयमात्रचरे; तेन तयोर्नियमचरकृतो योनिभेदः कर्तुं न पार्यते ॥ ६१ ॥ ६२ ॥—

सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ॥ ६३ ॥
केषांचिद्गुणवैशेष्याद्विशेष उपदेक्ष्यते ।
दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ॥ ६४ ॥
बर्ही हिततमो बल्यो वातघ्नो मांसशुक्रलः ।
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ॥ ६५ ॥
बृंहणाः शुक्रलाश्चोक्ता हंसा मारुतनाशनाः ।
स्निग्धाश्चोष्णाश्च वृष्याश्च बृंहणाः स्वरबोधनाः ॥६६॥
बल्याः परं वातहराः स्वेदनाश्चरणायुधाः ।
गुरूष्णो मधुरो नातिधन्वानूपनिषेवणात् ॥ ६७ ॥
तित्तिरिः संजयेच्छीघ्रं त्रीन् दोषाननिलोल्बणान् ।
पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ॥ ६८ ॥
मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात् ।
लावाः कषायमधुरा[१] लघवोऽग्निविवर्धनाः ॥ ६९ ॥
सन्निपातप्रशमनाः कटुकाश्च विपाकतः ।
गोधा विपाके मधुरा कषायकटुका रसे ॥ ७० ॥
वातपित्तप्रशमनी बृंहणी बलवर्धनी ।
शल्लको मधुराम्लश्च विपाके कटुकः स्मृतः ॥ ७१ ॥
वातपित्तकफघ्नश्च कासश्वासहरस्तथा ।
कषायविशदाः शीता रक्तपित्तनिबर्हणाः ॥ ७२ ॥
विपाके मधुराश्चैव कपोता गृहवासिनः ।
तेभ्यो लघुतराः किंचित् कपोता वनवासिनः ॥ ७३ ॥
शीताः संग्राहिणश्चैव स्वल्पमूत्रकराश्च ते ।
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ॥ ७४ ॥
शोषकासक्षयहितं संग्राहि लघु दीपनम् ।
चटका मधुराः स्निग्धा बलशुक्रविवर्धनाः ॥ ७५ ॥
सन्निपातप्रशमनाः शमना मारुतस्य च ।
कषायो विशदो रूक्षः शीतः पाके कटुर्लघुः ॥ ७६ ॥
शशः स्वादुः प्रशस्तश्च संनिपातेऽनिलावरे ।
मधुरा मधुराः पाके त्रिदोषशमनाः शिवाः ॥ ७७ ॥
लघवो बद्धविण्मूत्राः शीताश्चैणाः प्रकीर्तिताः ।
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥ ७८ ॥
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ।
गव्यं केवलवातेषु पीनसे विषमज्वरे ॥ ७९ ॥
शुष्ककासश्रमात्यग्निमांसक्षयहितं च तत् ।
स्निग्धोष्णं मधुरं वृष्यं माहिषं गुरु तर्पणम् ॥ ८० ॥

१ 'कषायमधुराः' इति पा० । "कपोता वनवासिन इति वनवासिनो पारावता इत्यर्थः; न तु वनवासिपाण्डुकपोताः, तेषां काणकपोतत्वेनापथ्यत्वात्" इति शिवदाससेनः ।

दार्ढ्यं बृहत्त्वमुत्साहं स्वप्नं च जनयत्यपि ।
गुरूष्णा मधुरा बल्या बृंहणाः पवनापहाः ॥ ८१ ॥
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्तिताः ।
शैवालशष्पभोजित्वात्स्वप्नस्य च विवर्जनात् ॥ ८२ ॥
रोहितो दीपनीयश्च लघुपाको महाबलः ।
वर्ण्यो वातहरो वृष्यश्चक्षुष्यो बलवर्धनः ॥ ८३ ॥
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म उच्यते ।
खड्गमांसमभिष्यन्दि बलकृन्मधुरं स्मृतम् ॥ ८४ ॥
स्नेहनं बृंहणं वर्ण्यं श्रमघ्नमनिलापहम् ।
धार्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ॥ ८५ ॥
चटकानां च यानि स्युरण्डानि च हितानि च ।
क्षीणरेतःसु कासेषु हृद्रोगेषु क्षतेषु च ॥ ८६ ॥
मधुराण्यविदाहीनि सद्योबलकराणि च ।
शरीरबृंहणे नान्यत् खाद्यं मांसाद्विशिष्यते ॥ ८७ ॥
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्तितः ।

केषांचिदिति वक्ष्यमाणमयूरादीनाम् । गुणवैशेष्यादिति विशिष्टगुणशालित्वात् । मयूरस्य गुरुत्वस्निग्धत्वं वर्तकादिगणपठितत्वेनैव लब्धं सत् पुनरुच्यते विशेषार्थम् । एवमन्यत्रापि गणोक्तगुणकथनेन लब्धस्य पुनः कथने व्याख्येयम् । चरणायुधः कुक्कुटः । धन्वानूपनिषेवणादिति हेतुकथनेन य एव धन्वानूपनिषेवी तित्तिरिः स एव यथोक्तगुण इति ज्ञेयम् । एवमन्येऽपि ये गवादयो धन्वानूपनिषेविणस्तेऽपि तित्तिरिसमानगुणा भवन्ति, तित्तिरिस्तु विशेषेणेति तित्तिरिः साक्षादुक्तः । किंवा, तित्तिरेरेव एवंगुणत्वे धन्वानूपनिषेवणं हेतुः, नान्यत्र गवादेरनूपदेशादेरिति ज्ञेयम् । कपोता गृहवासिन इति पारावताः । चटका मधुरा इत्यादि केचित् पठन्त्येव, ये तु न पठन्ति तेषां मते चटकस्य प्रतुदसामान्यगुणलब्धं वृष्यत्वं "तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः" ( चि. अ. २ ) इत्यादिवृष्यप्रयोगादेव लभ्यते । मयूरादीनां तु बहवो गुणा गणोक्तगुणाधिका इति पृथक् पाठः कृतः । "मांसं बृंहणानाम्" (सू. अ. २५ ) इत्यनेनैवाग्र्याधिकारवचनेन मांसस्य बृंहणत्वे लब्धे 'शरीरबृंहणे नान्यत्' इत्यादिवचनं प्रकरणप्राप्तत्वेन तथा तस्यैवार्थस्य दार्ढ्यार्थं च ज्ञेयम् ॥ ६३–८७ ॥—

इति मांसवर्गस्तृतीयः ॥ ३ ॥

अथ शाकवर्गः—

पाठाशुषाशटीशाकं वास्तुकं सुनिषण्णकम् ॥ ८८ ॥
विद्याद्ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम् ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ॥ ८९ ॥
नात्युष्णशीतवीर्या च भेदिनी कुष्ठनाशिनी ।
राजक्षवकशाकं तु त्रिदोषशमनं लघु ॥ ९० ॥

ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ।
कालशाकं तु कटुकं दीपनं गरशोफजित् ॥ ९१ ॥
लघूष्णं वातलं रूक्षं कालायं शाकमुच्यते ।
दीपनी चोष्णवीर्या च ग्राहिणी कफमारुते ॥ ९२ ॥
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा ।
मधुरा मधुरा पाके भेदिनी श्लेष्मवर्धनी ॥ ९३ ॥
वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदिका ।
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम् ॥ ९४ ॥
मधुरो मधुरः पाके शीतलस्तण्डुलीयकः ।
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम् ॥ ९५ ॥
कर्कोटकावल्गुजकौ पटोलं शकुलादनी ।
वृषपुष्पाणि शार्ङ्गेष्टा केम्बूकं सकठिल्लकम् ॥ ९६ ॥
नाडी कलायं गोजिह्वा वार्ताकं तिलपर्णिका ।
कौलकं कार्कशं नैम्बं शाकं पार्पटकं च यत् ॥ ९७ ॥
कफपित्तहरं तिक्तं शीतं कटु विपच्यते ।

शाकानामपि व्यञ्जनत्वेनानन्तरमुपदेशः । क्षुपा कासमर्दः । शटी खनामप्रसिद्धा । वास्तुकं टङ्कवास्तुकम् । नात्युष्णशीतवीर्येति नोष्णत्वं प्रकर्षप्राप्तमस्या नापि शीतत्वमित्यर्थः । यत्तु सुश्रुते "तिक्ता काकमाची वातं शमयति, उष्णवीर्यत्वात्" (सु. सू. अ. ४०) इत्युक्तं तद्वीर्यवादिमतेन, अत एव द्रव्यगुणे सुश्रुतेऽपि "नात्युष्णशीता" (सु. सू. अ. ४६) इत्येवमेव पठितम् । राजक्षवकः क्षुरिधका । कालशाकं 'कालिया' इति ख्यातं, कालाख्यमिति कालशाकमेवोच्यते पुनः; अन्ये तु 'कालायं' इति पठन्ति । मण्डूकपर्णी मणिमणीति ख्याता । कुचेला अकर्णविद्धिकाभेदः । वनतिक्तकं पथ्यसुन्दरम् । अवल्गुजो वाल्गुजी । शकुलादनी कटुरोहिणी । शार्ङ्गेष्टा काकतिक्ता । कठिल्लकः पुनर्नवा । नाडी नाडीचः । कलायो वर्तुलकलायः । तिलपर्णिका हुलहुलिका । गोजिह्वा दार्विपत्रिका । कुलकः कारवेल्लकः, केचित्तु कुलकं पटोलभेदमाहुः । कर्कशः खल्पकर्कोटकः ॥ ८८–९७ ॥—

सर्वाणि सूप्यशाकानि फञ्जी चिल्ली कुतुम्बकः ॥९८॥
आलुकानि च सर्वाणि सपत्राणि कुटिञ्जरम् ।
शणशाल्मलिपुष्पाणि कर्बुदारः सुवर्चला ॥ ९९ ॥
निष्पावः कोविदारश्च पत्तुरश्चुचुपर्णिका ।
कुमारजीवो लोट्टाकः पालङ्क्या मारिषस्तथा ॥१००॥
कलम्बनालिकासूर्यः कुसुम्भवृकधूमकौ ।
लक्ष्मणा च प्रपुन्नाडो नलिनीका कुठेरकः ॥ १०१ ॥
लोणिका यवशाकं च कुष्माण्डकमवल्गुजम् ।
यातुकः शालकल्याणी त्रिपर्णी पीलुपर्णिका ॥१०२॥

१ 'कालाख्यं' इति पा० । २ 'मानवती' इति 'धानकुनी' इति च पा० । ३ 'कुटिञ्जरं ताम्रमूलकम्' इति अरुणदत्तः; 'कठिञ्जरं' इति पा० ।

शाकं गुरु च रूक्षं च प्रायो विष्टभ्य जीर्यति ।
मधुरं शीतवीर्यं च पुरीषस्य च भेदनम् ॥ १०३ ॥
खिन्नं निष्पीडितरसं स्नेहाढ्यं तत् प्रशस्यते ।
शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः ॥ १०४ ॥
पुष्पं ग्राहि प्रशस्तं च रक्तपित्ते विशेषतः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ॥ १०५ ॥
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ॥१०६॥
श्रेयसी बिल्वपर्णी च बिल्वपत्रं तु वातनुत् ।
भण्डी शतावरीशाकं बला जीवन्तिकं च यत् ॥१०७॥
पर्वण्याः पर्वपुष्प्याश्च वातपित्तहरं स्मृतम् ।
लघु भिन्नशकृत्तिक्तं लाङ्गलक्युरुबूकयोः ॥ १०८ ॥
तिलवेतसशाकं च शाकं पञ्चाङ्गुलस्य च ।
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्तनम् ॥ १०९ ॥
रूक्षाम्लमुष्णं कौसुम्भं कफघ्नं पित्तवर्धनम् ।
त्रपुसैर्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ॥ ११० ॥
मुखप्रियं च रूक्षं च मूत्रलं त्रपुसं त्वति ।
एर्वारुकं च संपक्वं दाहतृष्णाक्लमार्तिनुत् ॥ १११ ॥
वर्चोभेदीन्यलाबूनि रूक्षशीतगुरूणि च ।
चिर्भटैर्वारुके तद्वद्वर्चोभेदहिते तु ते ॥ ११२ ॥
सक्षारं पक्वकूष्माण्डं मधुराम्लं तथा लघु ।
सृष्टमूत्रपुरीषं च सर्वदोषनिबर्हणम् ॥ ११३ ॥

सूप्यशाकानि माषपर्ण्यादीनि । फञ्जी ब्राह्मणयष्टिका । चिल्ली गौडवास्तुकः । कुतुम्बकः द्रोणपुष्पिका । आलुकानि पिण्डालुकादीनि । कर्बुदारः काञ्चनः । सुवर्चला सूर्यभक्तिका, केचित् फप्पुकमाहुः । पत्तूरः शालिञ्चः । चुचुपर्णिका नाडीचभेदः । कुमारजीवः जीवशाकम् । लोट्टाकः लोट्टामारिषः । नालिका गोनाडीचः । आसुरी राजिका मण्डको वा । वृकधूमकः भूमिशिरीषः । लक्ष्मणा खनामख्याता । नलिनी पद्ममृणालं, नीलिनीतिपाठपक्षे बुह्वा । यवशाकं क्षेत्रवास्तुकम् । कूष्माण्डः सर्पच्छत्रम् । अवल्गुजमिति अवल्गुजभेदः । यातुकः शुक्ला शालपर्णी । शालकल्याणी शालिञ्चभेदः । त्रिपर्णी हंसपादिका । पीलुपर्णी मोरटकः । गण्डीरः शमठः । बिल्वपर्णी बिल्वार्जकम् । भण्डी खनामख्याता । पर्वणी पर्वशाकम् । पर्वपुष्पी कुक्कुटी । पञ्चाङ्गुलः चित्रैरण्डः । एर्वारुकं राजकर्कटी । कूष्माण्डकं सुश्रुते बाल्याद्यवस्थाभेदेन पठितं तदप्य-

१ 'भिन्नवर्चांस्यलाबूनि' इति पा० । २ 'सक्षारमित्यादि पक्वकूष्माण्डगुणः, बालमध्ययोः क्षारत्वाभावात्; अत एव तन्त्रान्तरे 'पित्तघ्नं तेषु कूष्माण्डं बालं मध्यं कफावहम् । पक्वं लघूष्णं सक्षारं दीपनं बस्तिशोधनम् ॥ सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम्'' (सु. सू. अ. ४६)' इति शिवदाससेनः ।

विरुद्धमेव, यतो बालमध्ययोस्तत्र पित्तहरत्वं कफकरत्वं चोक्तं, तदपीह पित्तोत्तरे कफोत्तरे सन्निपाते बोद्धव्यम् ॥ ९८–११३ ॥

केलूटं च कदम्बं च नदीमाषकमैन्दुकम् ।
विशदं गुरु शीतं च समभिष्यन्दि चोच्यते ॥११४॥
उत्पलानि कषायाणि रक्तपित्तहराणि च ।
तथा तालप्रलम्बं स्यादुरःक्षतरुजापहम् ॥ ११५ ॥
खर्जूरं तालशस्यं च रक्तपित्तक्षयापहम् ।
तरूटबिसशालूककौञ्चादनकशेरुकम् ॥ ११६ ॥
शृङ्गाटकाङ्कलोड्यं च गुरु विष्टम्भि शीतलम् ।
कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ११७
शीताः स्वादुकषायास्तु कफमारुतकोपनाः ।
कषायमीषद्विष्टम्भि रक्तपित्तहरं स्मृतम् ॥ ११८ ॥
पौष्करं तु भवेद्वीजं मधुरं रसपाकयोः ।
वल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः ११९
वातपित्तहरः स्वादुर्वृष्यो मुञ्जातकः परम् ।
जीवनो बृंहणो वृष्यः कण्ठ्यः शस्तो रसायने १२०
विदारिकन्दो बल्यश्च मूत्रलः स्वादुशीतलः ।
अम्लिकायाः स्मृतः कन्दो ग्रहण्यर्शोहितो लघुः१२१
नात्युष्णः कफवातघ्नो ग्राही शस्तो मदात्यये ।
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते ॥ १२२ ॥
(तद्वत् स्याद्रक्तनालस्य रूक्षमम्लं विशेषतः ।)
तद्वत् पिण्डालुकं विद्यात् कन्दत्वाच्च मुखप्रियम् ।
सर्पच्छत्रकवर्ज्यास्तु बह्वयोऽन्याश्छत्रजातयः ॥१२३॥
शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च ।
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः ॥ १२४ ॥

केलुटे हारीतवचनं–"केलुटं स्वादु विटपं तत्कन्दः स्वादुशीतलः" इति । कदम्बं कदम्बिकां वदन्ति, केचित्तु स्वल्पकदम्बकमाहुः । नदीमाषकः 'उदीमानक' इति ख्यातः । ऐन्दुकं निक्षारः । तालप्रलम्बः तालाङ्कुरः । शस्यशब्देनेह मस्तकमज्जा गृह्यते । तरुटः कहारकन्दः । क्रौञ्चादनं घिञ्चुलिका । कशेरुकशब्देन चिंचोडका राजकशेरुकश्च गृह्यते । अङ्कालोड्यं ह्स्वोत्पलकन्दः । मुञ्जातकं औत्तरापथिककन्दः । अम्लिका स्वल्पविटपा प्रायः कामरूपादौ भवति । सर्पच्छत्रं सर्पफणाकारं छत्रकम् । अन्याश्छत्रजातयः करीषपलालादिजा बहुला ज्ञेयाः । पत्रकन्दफलाश्रय इति प्राधान्येन, तेन पुष्पाद्याश्रयत्वमपि शाकवर्गस्य ज्ञेयम् ॥ ११४–१२४ ॥

इति शाकवर्गश्चतुर्थः ॥ ४ ॥

अथ फलवर्गः—

तृष्णादाहज्वरश्वासरक्तपित्तक्षतक्षयान् ।
वातपित्तमुदावर्तं स्वरभेदं मदात्ययम् ॥ १२५ ॥
तिक्तास्यतामास्यशोषं कासं चाशु व्यपोहति ।
मृद्वीका बृंहणी वृष्या मधुरा स्निग्धशीतला ॥१२६॥
मधुरं बृंहणं वृष्यं खर्जूरं गुरु शीतलम् ।
क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥१२७॥
तर्पणं बृंहणं फल्गु गुरु विष्टम्भि शीतलम् ।
परूषकं मधूकं च वातपित्ते च शस्यते ॥ १२८ ॥
मधुरं बृंहणं बल्यमाम्रातं तर्पणं गुरु ।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्यति ॥१२९॥
तालशस्यानि सिद्धानि नारिकेलफलानि च ।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥ १३० ॥
मधुराम्लकषायं च विष्टम्भि गुरु शीतलम् ।
पित्तश्लेष्मकरं भव्यं ग्राहि वक्त्रविशोधनम् ॥ १३१ ॥
अम्लं परूषकं द्राक्षा बदराण्यारुकाणि च ।
पित्तश्लेष्मप्रकोपीणि कर्कन्धुनिकुचान्यपि ॥ १३२ ॥
नात्युष्णं गुरु संपक्वं स्वादुप्रायं मुखप्रियम् ।
बृंहणं जीर्यति क्षिप्रं नातिदोषलमारुकम् ॥ १३३ ॥
द्विविधं शीतमुष्णं च मधुरं चाम्लमेव च ।
गुरु पारावतं ज्ञेयमरुच्यत्यग्निनाशनम् ॥ १३४ ॥
भव्यादल्पान्तरगुणं काश्मर्यफलमुच्यते ।
तथैवाल्पान्तरगुणं तूदमम्लं परूषकात् ॥ १३५ ॥
कषायमधुरं टङ्कं वातलं गुरु शीतलम् ।
कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि वातलम् ॥१३६॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
परिपक्वं च दोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ १३७ ॥
बिल्वं तु दुर्जरं पक्वं दोषलं पूतिमारुतम् ।
स्निग्धोष्णतीक्ष्णं तद्बालं दीपनं कफवातजित् ॥१३८॥
रक्तपित्तकरं बालमापूर्णं पित्तवर्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥ १३९ ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम् ।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥ १४० ॥
बदरं मधुरं स्निग्धं भेदनं वातपित्तजित् ।
तच्छुष्कं कफवातघ्नं पित्ते न च विरुध्यते ॥ १४१ ॥
कषायमधुरं शीतं ग्राहि सिम्बि(म्बि)तिकाफलम् ।
गाङ्गेरुकी करीरं च बिम्बी तोदनधन्वनम् ॥ १४२ ॥
मधुरं सकषायं च शीतं पित्तकफापहम् ।
संपक्वं पनसं मोचं राजादनफलानि च ॥ १४३ ॥
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ।
कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ॥ १४४ ॥

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'वर्तुला' इति पा० ।

१ 'शीतलम्' इति पा० । २ 'तदेव सिद्धं' इति पा० ।

अवदंशाक्षमं हृद्यं वातलं लवलीफलम् ।
नीपं शताह्वकं पीलु तृणशून्यं विकङ्कतम् ॥ १४५ ॥
प्राचीनामलकं चैव दोषघ्नं गरहारि च ।
ऐङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ॥१४६॥
तिन्दुकं कफपित्तघ्नं कषायं मधुरं लघु ।
विद्यादामलके सर्वान् रसांल्लवणवर्जितान् ॥ १४७ ॥
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम् ।
रसासृङ्मांसमेदोजान्दोषान् हन्ति विभीतकम् १४८
स्वरभेदकफोत्क्लेदपित्तरोगविनाशनम् ।
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम् ॥ १४९ ॥
स्निग्धोष्णं दाडिमं हृद्यं कफपित्ताविरोधि च ।
रूक्षाम्लं दाडिमं यत्तु तत् पित्तानिलकोपनम् १५०
मधुरं पित्तनुत्तेपां पूर्वं दाडिममुत्तमम् ।
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्मणि शस्यते १५१
अम्लिकायाः फलं पक्वं तस्मादल्पान्तरं गुणैः ।
गुणैस्तैरेव संयुक्तं भेदनं त्वम्लवेतसम् ॥ १५२ ॥
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे ।
हिक्काश्वासे च कासे च वम्यां वर्चोगदेषु च ॥१५३॥
वातश्लेष्मसमुत्थेषु सर्वेष्वेवोपदिश्यते ।
केसरं मातुलुङ्गस्य लघु शेषमतोऽन्यथा ॥ १५४ ॥
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्विवर्जितः ।
कर्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ॥ १५५ ॥
मधुरं किंचिदम्लं च हृद्यं भक्तप्ररोचनम् ।
दुर्जरं वातशमनं नागरङ्गफलं गुरु ॥ १५६ ॥
वातामाभिषुकाक्षोटमुकूलकनिकोचकाः ।
गुरूष्णस्निग्धमधुराः सोरुमाणा बलप्रदाः ॥ १५७ ॥
वातघ्ना बृंहणा वृष्याः कफपित्ताभिवर्धनाः ।
प्रियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ॥१५८॥
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ।
श्लेष्मलं गुरु विष्टम्भि चाङ्कोटफलमग्निजित् ॥१५९॥
गुरूष्णं मधुरं रूक्षं केशघ्नं च शमीफलम् ।
विष्टम्भयति कारञ्जं वातश्लेष्माविरोधि च ॥ १५९ ॥
आम्रातकं दन्तशठमम्लं सकरमर्दकम् ।
रक्तपित्तकरं विद्यादैरावतकमेव च ॥ १६१ ॥
वातघ्नं दीपनं चैव वार्ताकं कटु तिक्तकम् ।
वातलं कफपित्तघ्नं विद्यात् पर्पटकीफलम् ॥ १६२ ॥
पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षिकीफलम् ।
मधुराण्यम्लपाकीनि पित्तश्लेष्महराणि च ॥ १६३ ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ।
कषायमधुराम्लानि वातलानि गुरूणि च ॥ १६४ ॥
भल्लातकास्थ्यग्निसमं तन्मांसं स्वादु शीतलम् ।
पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥ १६५ ॥

फलानामपि केषांचिच्छाकवदुपयोगात् फलवर्गमाह । मृद्वीकाऽग्रेऽभिधीयते श्रेष्ठगुणत्वात् । फल्गु औदुम्बरम् । मधूकशब्देन समानगुणत्वात् फलं कुसुमं च ज्ञेयम् । परूपकं चेह मधुरपरूषकं ज्ञेयम् । आम्रातम् 'आमडा' इति ख्यातमाम्रफलसदृशमिति चन्द्रिका; एतच्च द्विविधं मधुरमम्लं च; अत्र मधुरस्यैव गुणः, अम्लस्य वक्ष्यमाणत्वात् । तालशस्यानीति तालफलानि, यथा "हरीतकीनां शस्यानि" ( चि. अ. १ ) इत्यत्र फलमेव शस्यमुच्यते । सिद्धानि पक्वानि; तेन पक्वतालस्य ग्रहणम् । भव्यं कर्मरङ्गफलं; केचित्त्वक्कसंहतिमात्रफलं वदन्ति । आरुकं कार्तिकेयपुरे प्रसिद्धम् । कर्कन्धूः शृगालबदरी, कर्कन्धूनिकुचयोर्विच्छिद्य पाठेन नित्यं पित्तश्लेष्मकर्तृत्वं तयोर्दर्शयति । परूपकादीनां तु मधुराम्लभेदेन द्विरूपाणां य एव परूषकादयोऽम्लास्त एव पित्तश्लेष्मकरा इति । पारावतः कामरूपप्रसिद्धः । अत्र यो मधुरः स शीतः, यस्त्वाम्लः स उष्ण इति ज्ञेयम् । एवं रसनिर्देशेनैव वीर्ये लब्धेऽपि पुनर्वीर्याख्यानमम्लस्यामलकस्य शीततादर्शनाद्बोद्धव्यम् । टङ्कं काश्मीरप्रसिद्धम् । सिद्धमिति कालवशात् पक्वम् । कपित्थबिल्वाम्राणामवस्थाभेदेन गुणकथनं सर्वावस्थासु तेषामुपयोज्यत्वात् । बदरं मध्यप्रमाणं; तद्धि मधुरमेव भवति । गाङ्गेरुकं नागबलाफलम् । करीरो मरुजो द्रुमः । तोदनं धन्वनभेदः । राजादनं क्षीरी । अवदंशक्षममिति लवलीफलं प्राश्य द्रव्यान्तरे रुचिर्भवति । नीपं कदम्बकम् । शताह्वफलं 'सेह' इति ख्यातम् । पीलु औत्तरापथिकम् । तृणशून्यं केतकीफलम् । प्राचीनामलकं पानीयामलकम् । तिन्दुकं केन्दुः । दाडिमगुणे कफपित्ताविरोधीति अम्लदाडिमं पित्ताविरोधि, मधुरं तु कफाविरोधि, एवं च त्रिदोषहरत्वमस्योपपन्नं; यदुक्तं सुश्रुते—"द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च । त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम्" ( सु. सू. अ. ४६ ) इति । वृक्षाम्लं महार्द्रकम् । अम्लिका तिन्तिडी । शेषमिति त्वङ्मांसम्, अतोऽन्यथेति गुरु; किंवा, शूलेऽरुचावित्याद्युक्तकेशरगुणविपरीतम् । वातामादय औत्तरापथिकाः । प्रियालोऽयं सगधप्रसिद्धः । दन्तशठः जम्बीरः; केचिदम्लोटं वदन्ति । इहाम्रातकमम्लं ग्राह्यं, पूर्वं तु मधुरमाम्रातकमुक्तम् । करमर्दं द्विविधं ग्रामजं वनजं च । ऐरावतम् अम्लातकं; किंवा नागरङ्गम् । वार्ताकं दक्षिणापथे फलवत् खाद्यते यद्गोष्ठवार्ताकसंज्ञकं, तस्येह गुणः; किंवा फलवदसिद्धस्यैव वार्ताकस्योपयोज्यस्यायं गुणः । आक्षिकी लता तस्याः फलमाक्षिकम् । अनुपाकि 'अनुया' इति ख्याता । अग्निसममिति स्फोटादिजनकत्वात् ॥ १२५–१६५ ॥

इति फलवर्गः ॥ ५ ॥

---

१ 'सभार्गकं' इति पा० । २ 'मद्यविप्लवो मदात्ययः' इति शिवदाससेनः । ३ 'सुगन्धि मधुरं साम्लं विशदं भक्तरोचनम् । गुरु वातप्रशमनं विद्यान्नारिङ्गजं फलम्' इति पा० ।

१ 'परूपकमिह पक्वम्, आमस्य पित्तजनकत्वात्;उक्तं च वाग्भटे—'वातघ्नं पित्तजननमामं विद्यात् परूपकम् । तदेव पक्वं मधुरं वातपित्तनिबर्हणम्' इति शिवदाससेनः ।

अथ हरितवर्गः—

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम्।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥ १६६ ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखशोधनः।
जम्बीरः कफवातघ्नः क्रिमिघ्नो भक्तपाचनः ॥१६७॥
बालं दोषहरं, वृद्धं त्रिदोषं, मारुतापहम्।
स्निग्धसिद्धं, विशुष्कं तु मूलकं कफवातजित्॥१६८॥
हिक्काकासविषश्वासपार्श्वशूलविनाशनः।
पित्तकृत् कफवातघ्नः सुरसः पूतिगन्धहा ॥ १६९ ॥
यवानी चार्जकश्चैव शिग्रुशालेयमृष्टकम्।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति च ॥ १७० ॥
गण्डीरो जलपिप्पल्यस्तुम्बरुः शृङ्गवेरिका।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥ १७१ ॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूस्तृणो वक्त्रशोधनः।
खराह्वा कफवातघ्नी बस्तिरोगरुजापहा ॥ १७२ ॥
धान्यकं चाजगन्धा च सुमुखश्चेति रोचनाः।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति च ॥१७३॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः।
स्वेदनेऽभ्यवहारे च योजयेत्तमपित्तिनाम् ॥ १७४ ॥
श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तनुत्[१]।
आहारयोगी बल्यश्च गुरुर्वृष्योऽथ रोचनः ॥ १७५ ॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः ॥१७६॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि च।
हरितानामयं चैष षष्ठो वर्गः समाप्यते ॥ १७७ ॥

हरितानामप्यार्द्रकादीनां फलवदग्निपाकमन्तरेण भोजनस्य प्राक् पश्चाचोपयोगात् फलमनु हरितकथनं, फलेभ्यस्तु पश्चादभिधानं हरितस्य तृप्त्यनाधायकत्वात्। आर्द्रकमिति विशेषणं शुण्ठीव्यावृत्त्यर्थं, शुण्ठीगुणश्चाहारसंयोगिवर्गे भविष्यति। जम्बीरः पर्णासभेदः, जम्बीरफलं सुगन्धि। बालं दोषहरमिति तरुणावस्थायामव्यक्तरसायां त्रिदोषहरम्। तन्त्रान्तरवचनं हि—"यावद्धि चाव्यक्तरसान्वितानि नवप्ररूढानि च मूलकानि। भवन्ति तावल्लघुदीपनानि पित्तानिलश्लेष्महराणि चैव"। वृद्धं त्रिदोषमिति तदेव प्रवृद्धम्, एनामेव मूलकावस्थामभिप्रेत्य चोक्तं—"मूलकं कन्दानामपथ्यत्वे प्रकृष्टतमम्" (सू. अ. २५) इति। मारुतापहं स्निग्धसिद्धमिति सामान्येन बालं वृद्धं च। 'शुष्काणि कफवातघ्नान्येतानि' इति वक्ष्यमाणग्रन्थेनैव शुष्कमूलकस्य कफवातहन्तृत्वे लब्धे पुनर्वचनं प्रकर्षप्राप्त्यर्थम्। पूतिगन्धहेति शरीरस्य तथा व्यञ्जनार्थं मांसस्य च पूतिगन्धतां हन्ति। अर्जकः श्वेतपर्णासः। शिग्रुः विटपशोभाञ्जनः; शालेयश्चाणक्यमूलं मरौ प्रसिद्धं, किंवा शालेयमिति मिस्लेयं पाटकप्रसिद्धं, वचनं हि—"चाणक्यमूलमिस्लेये शालेयाभिख्यया जगुः" इति; मृष्टकं राजिका। गण्डीरो द्विविधो रक्तः शुक्लश्च; तत्र यो रक्तः स हि कटुत्वेन हरितवर्गे पठ्यते, यस्तु शुक्लो जलजः स शाकवर्गे पठित इति नैकस्य वर्गद्वये पाठः। जलपिप्पली जले पिप्पल्याकारा भवति। शृङ्गवेरी गोजिह्विका, किंवा आर्द्रकाकृतिः शृङ्गवेरी; यदुक्तं—"शृङ्गवेरवदाकृत्या शृङ्गवेरीति भाषिता। कुस्तुम्बुरुसमाकृत्या तुम्बुरूणि वदन्ति च" इति। भूस्तृणो गन्धतृणः। खराह्वा कृष्णजीरकम्। अजगन्धा वनयवानी। सुमुखः पर्णासभेदः। अयं च धान्यकादीनामार्द्राणां गुणः, शुष्काणां त्वाहारयोगिगणे "कारवी कुञ्चिका" इत्यादिना गुणं निर्देक्ष्यति। गृञ्जनकः स्वल्पनालपत्रः पलाण्डुरेव। एतानीति हरितवर्गोक्तानि। शुष्काणीत्यादिना यद्यपि शुष्काणामपि शुण्ठीप्रभृतीनां गुण उक्तो भवति, तथाऽपि विशेषगुणान्तरकथनार्थं पुनस्तदभिधानमाहारसंयोगिवर्गे भविष्यतीति न पौनरुक्त्यम् ॥ १६६–१७७ ॥

इति हरितवर्गः ॥ ६ ॥

अथ मद्यवर्गः—

प्रकृत्या मद्यमम्लोष्णमम्लं चोक्तं विपाकतः।
सर्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते ॥ १७८ ॥

अन्नमभिधाय पानं वक्तव्यं, तत्रापि पानप्रधानमपि पानीयमुल्लङ्घ्य हर्षादिकर्तृत्वाज्जनानां मुख्यपेयत्वाच्च मद्यमाह[१]। प्रकृत्येति स्वभावात्। यद्यपि च मद्ये पीयमाने नाम्लरसता प्रतीयते व्यक्ता, तथाऽपि दन्तहर्षमुखस्रावाद्यम्लकार्यकर्तृत्वादम्लमेव। वचनं हि—"मधुराणि मधुरप्रभावाणि मधुराण्येव कृत्वोपदेक्ष्यामः, तथेतराण्यपि" (वि. अ. ८) इति। तेन, अम्लप्रभावस्य मद्यस्याम्लरसत्वमेव; अत एवोक्तं—"सर्वेषां मद्यमम्लानामुपर्युपरि वर्तते" (चि. अ. २४) इति। विपाकत इति तृतीयायां तसिः ॥ १७८ ॥

कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम्।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च ॥ १७९ ॥
हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ।
वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥ १८० ॥
शूलप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भक्तपाचनः[२] ॥१८१॥
शोषार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान्।
हन्त्यरिष्टः कफकृतान् रोगान्रोचनदीपनः ॥ १८२ ॥
मुखप्रियः सुखमदः सुगन्धिर्बस्तिरोगनुत्[३]।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः ॥ १८३ ॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥ १८४ ॥
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः।
लेखनः शीतरसिको हितः शोफोदरार्शसाम् ॥१८५॥

१ 'नच पित्तनुदिति नातिपित्तलः, किंचित्पित्तं करोत्येव, इति शिवदाससेनः।

१ 'जलादत्यर्थं प्रियत्वाच्च मद्यमाह–' इति पा०। २ '°पाचनः' इति पा०। ३ 'बस्तिदोषनुत्' इति पा०।

सृष्टभिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥ १८६ ॥
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥१८७॥
धातक्याऽभिषुतो हृद्यो रूक्षो रोचनदीपनः ।
माध्वीकवन्न चात्युष्णो मृद्वीकेक्षुरसासवः ॥१८८॥
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नं च मधु लघ्वल्पमारुतम् ॥ १८९ ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्वी जीर्यति विष्टभ्य श्लेष्मला तु मधूलिका ॥१९०॥
दीपनं जरणीयं च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥ १९१ ॥
दाहज्वरापहं स्पर्शात् पानाद्वातकफापहम् ।
विबन्धघ्नमवस्रंसि दीपनं चाम्लकाञ्जिकम् ॥ १९२ ॥
प्रायशोऽभिनवं मद्यं गुरुदोषसमीरणम् ।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥१९३॥
हर्षणं प्रीणनं मद्यं भयशोकश्रमापहम् ।
प्रागल्भ्यवीर्यप्रतिभातुष्टिपुष्टिबलप्रदम् ॥ १९४ ॥
सात्त्विकैर्विधिवद्युक्त्या पीतं स्यादमृतं यथा ।
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्तितः ॥ १९५ ॥

सुरा अनुद्धृतमण्डा । मदिरा तु सुरामण्डः । जगलः भक्तकिण्वकृता सुरा । अरिष्टं औषधक्काथमध्वादिसंपादितो वक्ष्यमाणो दन्त्यभयारिष्टादिः । शार्करः शर्कराप्रकृतिक आसवः । पक्वरसः यः क्वथितेनेक्षुरसेन क्रियते । शीतरसिकस्तु शीतेक्षुरसकृतः । गौडः गुडप्रकृतिकः । सुरासवः यत्र सुरयैव तोयकार्यं क्रियते । मधूकपुष्पकृतो मध्वासवः । मैरेयलक्षणं यथा—"आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयान्मैरेयमुभयाश्रयम्" इति । धातक्याऽभिषुतो धातकीफलासवः । माध्वीकं मधुप्रधानं 'रोचनं दीपनं' इत्यादिना वक्ष्यमाणं; तद्वन्मृद्वीकेक्षुरसाभ्यां मिलिताभ्यां कृत आसवो ज्ञेयः । मध्विति मधुप्रधान आसवः । सुरा समण्डेति यवतण्डुलकृता बोद्धव्या । विष्टभ्येति विच्छेदः । मधूलकः गोधूमभेदः, तत्कृतं मद्यं मधूलकम्; अन्ये तु मेदकमाहुः । दीपनमित्यादि सौवीरतुषोदकगुणः । अम्लकाञ्जिकमिति काञ्जिकमेवाम्लगुणम् ॥ १७९–१९५ ॥

इति मद्यवर्गः सप्तमः ॥ ७ ॥

अथ जलवर्गः—

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् ।

संप्रति पानप्रधानस्य जलस्य गुणमाह—जलमित्यादि । सर्वमिति सुश्रुतप्रतिपादितधारकारहैमतौषारमपि । एकविधमिति "शिवाः खल्वापः" (सू. अ. २६) इत्यादिनोक्तगुणं, तथा 'शीतं शुचि' इत्यादिवक्ष्यमाणगुणम् । ऐन्द्रमिति प्राण्यदृष्टवशेनेन्द्रप्रेरितम् ॥—

तत् पतत् पतितं चैव देशकालावपेक्षते ॥ १९६ ॥

एकविधत्वेऽपि तस्य भेदहेतुमाह—तत् पतदित्यादि । पतद् देशमाकाशगतभूतरूपं, कालं च शीतोष्णादिरूपं; तथ-पतितं च भूमिविशेषरूपं देशं, कालं च तथैवापेक्षते; 'गुणदोषा संबन्धे' इति शेषः ॥ १९६ ॥

खात् पतत् सोमवाय्वर्कैः स्पृष्टं कालानुवर्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥ १९७ ॥

एनमेव देशकालसंबन्धमाह—खादित्यादि । सोमग्रहणेन सौम्यत्वात् पृथिव्या अपि गगनगतधूलीरूपायास्तथा मेघसहचरितलूतादिविषादिरूपायाश्च ग्रहणं वक्तव्यं; किंवा वायुग्रहणादेव वायुना नीयमानायाः पृथिव्या ग्रहणम् । स्पृष्टं 'भवति' इतिशेषः । कालानुवर्तिभिरिति कालपराधीनैः; एतेन कालकृत एव सोमादिसंबन्धविशेषो जले विशेषं करोति, तेन न कालस्याकिंचित्करता । पतितजलस्य देशकालसंबन्धमाह—शीतोष्णेत्यादि । यथासन्नमिति यस्मिन् काले यस्यां मह्यां ये गुणाः शीतादय उद्रिक्ता भवन्ति, तैः स्पृष्टं जलं भवति । एतेन सुश्रुते प्रतिपादितगाङ्गसामुद्रभेदो गुणदोषसंबन्धमात्रकृत एव दिव्यजलस्येति दर्शयति । तेन, यद्विषादिजुष्टं तत् सामुद्रसमानगुणत्वात् सामुद्रं, यद्धूल्यादिना विषादिना च रहितं तत्तद्गुणत्वाद्गाङ्गमित्युक्तं सुश्रुते । आश्विने तु मासि दिव्यजलस्य धूलीविषादिसंबन्धो न भवत्येव, कालमहिम्ना भवन्नपि वा न जलं तथा दूषयति; अत उक्तं सुश्रुते—"सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना" ( सु. सू. अ. ४५ ) इति । अत्र हारीतवचनात् कार्तिकाग्रहायणयोरप्यान्तरीक्षं जलं ग्राह्यमेव भवति; यदाह—"प्रवृत्तायां शरद्यस्मात् पश्चाद्वाते प्रवाति च । हेमन्ते चापि गृह्णीयात्तज्जलं मृन्मयैर्घटैः" इति । तेन 'आश्वयुजाद्विना' इति वचनं आश्वयुजात् प्रभृति जलोपादेयतोपदर्शनार्थं, न त्वाश्विन एवोपादेयतोपदर्शनपरम् । अन्ये त्वाहुः—आश्विन एव परमान्तरीक्षं ग्राह्यमिति । जतूकर्णवचनं हि—"वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च । तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्" इति ॥ १९७ ॥

शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं,

दिव्यजलस्य प्राकृतगुणमाह—शीतमित्यादि । शिवमिति कल्याणकरत्वेन । मृष्टमिति वदनप्रियत्वेन ॥—

भ्रष्टं पात्रमपेक्षते ॥ १९८ ॥
श्वेते कषायं भवति पाण्डरे स्यात्तु तिक्तकम् ।

---

१ 'आक्षिकी विभीतककृता सुरा' इति शिवदाससेनः । २ 'जीर्णः' इति पा० । ३ 'माद्वीकवत्' इति पा० ।

१ 'ननु एकविधत्वे किंचिज्जलं सदोषं किंचिच्च सगुणमिति यो भेद उपलभ्यते तस्य का गतिरित्याह–तत् पतदित्यादि' इति शिवदाससेनः । २ 'गुणदोषोत्पादेषु' इति पा० । ३ 'एनमेव देशकालसंबन्धविशेषं दर्शयति–खात् पतदित्यादि । सोमवाय्वर्कैरित्युपलक्षणं, तेन वायुनीयमानानां गगनगतधूलीनां तथा मेघसहचरितलूतादीनां च ग्रहणं बोध्यम्' इति शिवदाससेनः ।

कपिले क्षारसंसृष्टमूषरे लवणान्वितम् ॥ १९९ ॥
कटु पर्वतविस्तारे मधुरं कृष्णमृत्तिके ।
एतत् षाड्गुण्यमाख्यातं महीस्थस्य जलस्य हि ॥
तथाऽव्यक्तरसं विद्यादैन्द्रं कारं हिमं च यत् ॥२००॥
यदन्तरीक्षात् पततीन्द्रसृष्टं
चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः ।
तदैन्द्रमित्येव वदन्ति धीरा
नरेन्द्रपेयं सलिलं प्रधानम् ॥ २०१ ॥
ईषत्कषायमधुरं सुसूक्ष्मं विशदं लघु ।
अरूक्षमनभिष्यन्दि सर्वं पानीयमुत्तमम् ॥ २०२ ॥
गुर्वभिष्यन्दि पानीयं वार्षिकं मधुरं नवम् ।
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ॥ २०३ ॥
तत्तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजनाः ।
तेषां भोज्ये च भक्ष्ये च लेह्ये पेये च शस्यते २०४
हेमन्ते सलिलं स्निग्धं वृष्यं बलहितं गुरु ।
किंचित्ततो लघुतरं शिशिरे कफवातजित् ॥२०५॥
कषायमधुरं रूक्षं विद्याद्वासन्तिकं जलम् ।
ग्रैष्मिकं त्वनभिष्यन्दि जलमित्येव निश्चयः ॥
ऋतावृताविहाख्याताः सर्व एवाम्भसो गुणाः २०६
विभ्रान्तेषु तु कालेषु यत् प्रयच्छन्ति तोयदाः ।
सलिलं तत्तु दोषाय युज्यते नात्र संशयः ॥ २०७ ॥
राजभी राजमात्रैश्च सुकुमारैश्च मानवैः ।
सुगृहीताः शरद्यापः प्रयोक्तव्या विशेषतः ॥ २०८ ॥

वक्ष्यमाणगुणविशेषहेतुमाह—अष्टमित्यादि । पात्रमपेक्षत इति नद्यादिपात्रविशेषसंबन्धमपेक्ष्य गुणविशेषवद्भवति । एतच्च यद्यपि 'देशकालावपेक्षते' इत्यनेन पूर्वमेवोक्तं, तथाऽपि कालापेक्षया देशविशेषस्य प्रकर्षेण गुणविशेषे हेतुताप्रदर्शनार्थं पुनरुक्तम् । केचित्तु "श्वेते कषायं भवति" इत्यादिग्रन्थं पठन्ति, स तु नातिप्रसिद्धः ॥ १९८–२०८ ॥

नद्यः पाषाणविच्छिन्नविक्षुब्धाभिहतोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥२०९॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥ २१० ॥
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्मलोदकाः ।
प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः ॥ २११ ॥
पारियात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ २१२ ॥

आधारविशेषे गुणविशेषमाह—नद्य इत्यादि । पाषाणैर्विच्छिन्नं विक्षुब्धमभिहतं चोदकं यासां तास्तथा; एतेन, अधित्यकाप्रभवा एव हिमालये नद्यः पथ्या उक्ता भवन्ति नोपत्यकाप्रभवाः, यतोऽधित्यकाप्रभवास्वेव पाषाणविच्छिन्नत्वादि; अतश्च सुश्रुते यदुक्तं—"हिमवत्प्रभवा हृद्रोगादीन् जनयन्ति" (सु. सू. अ. ४५) इति, तदुपत्यकाप्रभवाभिप्रायेणेति न विरोधः । यत्तु तत्रोक्तं "मलयप्रभवाः क्रिमीञ्जनयन्ति" (सु. सू. अ. ४५) तदपाषाणसिकतावाहिनद्यभिप्रायेण, इह पाषाणसिकतावाहिनीष्वमृतोपममिति न विरोधः । यत्तु, पारियात्रभवानां शिरोरोगादिकर्तृत्वं, तत् पारियात्रदरीभवनदीजलाभिप्रायेण, सुश्रुते तु पारियात्रतडागभवनदीजलाभिप्रायेणोक्तं—"पारियात्रभवाः पथ्याः" (सु. सू. अ. ४५) इति । तदुक्तं विश्वामित्रेण—"तडागजं दरीजं च तडागायत् सरिज्जलम् । बलारोग्यकरं तत् स्याद्दरीजं दोषलं मतम्" इति । प्रायोग्रहणात् पूर्वसमुद्रगमनेऽपि गाङ्गं पथ्यं भवति; किंवा यथोक्तलक्षणहिमालयभवत्वादेव गाङ्गं जलं पथ्यम् । पारियात्रादयः पर्वताः स्वनामप्रसिद्धाः ॥ २०९–२१२ ॥

वसुधाकीटसर्पाखुमलसंदूषितोदकाः ।
वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ॥ २१३ ॥
वापीकूपतडागोत्ससरःप्रस्रवणादिषु ।
आनूपशैलधन्वानां गुणदोषैर्विभावयेत् ॥ २१४ ॥
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥२१५॥
विस्रं त्रिदोषं लवणमम्बु यद्वरुणालयम् ।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः ॥२१६॥

वर्षासु जलं वहन्तीति वर्षाजलवहाः; यदुक्तमग्र्याधिकारे "वर्षानादेयमुदकानाम्" ( सू. अ. २५ ) इति, तत्सेहापथ्यत्वे उपपत्तिवर्णनमिति न पौनरुक्त्यम् । प्रस्रवणादिष्वित्यत्र 'जलं' इति शेषः । वाप्यादयोऽनूपदेशे धन्वनि हिमालयादिपर्वतेषु च भवेयुः, ततश्चानूपादिजलगुणैरेव तद्गुणनिर्देशः कर्तव्यः; पश्चिमाभिमुखनदीजलपूर्वाभिमुखनदीजलानूपजलखधन्वजलपर्वतजलगुणाश्चोक्ता एव, तेन तद्गुणातिदेशो वाप्यादिषु बोद्धव्यः । उक्तं च हारीतेन—"अनूपदेशे यद्वारि गुरु तच्छ्लेष्मवर्धनम् । विपरीतमतो मुख्यं जाङ्गलं लघु चोच्यते" इति । सुश्रुतेऽपि वाप्यादीनां पृथगेव गुण उक्तः; स चेह कूपादीनां सक्षारत्वादिः प्रत्यक्षदृष्टो ग्रन्थविस्तरभयान्नोक्त इति मन्तव्यम् । वापी इष्टकादिबद्धतीर्था दीर्घिका; कूपः प्रसिद्धः; तटादागो गतिर्यस्य स तडागः, स पुनरुच्चदेशादागच्छज्जलबन्धनाद्भवति, अन्ये तु पुष्करिणीं तडागमाहुः; उत्सा निम्नाद्युत्तिष्ठज्जलस्थानं; सरो दिव्यखातं पुरुषव्यापारं विना, तत्पुनः पम्पादि; प्रस्रवणः निर्झरः । अन्ये तु 'ह्रदधाराजलादिषु' इति पठन्ति; तत्र ह्रदः नदीस्थजलप्रदेशो गम्भीरो जलाशयः, धारा तु पर्वतादेव जलधारारूपा पतन्ती; आदिग्रहणात् केदारकुण्डादीनां ग्रहणम् । क्लिन्नं पर्णादिभिर्युतं सदित्यर्थः । वरुणालये समुद्रे । विस्रम् आमगन्धि । सुविनिश्चित इति सर्वजलगुणकथनात् ॥ २१३–२१६ ॥

इति जलवर्गोऽष्टमः ॥ ८ ॥

१ 'पर्वतविस्तारे' इति पा० । २ 'सलिलप्रधानम्' इति पा० ।
३ '०विक्षुब्धंविमलोदकाः' इति पा० ।

१ 'पर्वतादेकजलधारारूपा' इति पा० ।

अथ गोरसवर्गः—

स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् ।
गुरु मन्दं प्रसन्नं च गव्यं दशगुणं पयः ॥ २१७ ॥
तदेवंगुणमेवौजः सामान्यादभिवर्धयेत् ।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ॥ २१८ ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहान्न्यूनमनिद्राय हितमत्यग्नये च तत् ॥ २१९ ॥
रूक्षोष्णं क्षीरमुष्ट्रीणामीषत्सलवणं लघु ।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥२२०॥
वल्यं स्थैर्यकरं सर्वमुष्णं चैकशफं पयः ।
साम्लं सलवणं रूक्षं शाखावातहरं लघु ॥ २२१ ॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥ २२२ ॥
हिक्काश्वासकरं तूष्णं पित्तश्लेष्मलमाविकम् ।
हस्तिनीनां पयो वल्यं गुरु स्थैर्यकरं परम् ॥ २२३ ॥
जीवनं बृंहणं सात्म्यं स्नेहनं मानुषं पयः ।
नावनं रक्तपित्ते च तर्पणं चाक्षिशूलिनाम् ॥ २२४ ॥

जीवनीयसामान्याज्जलमनु क्षीरमुच्यते[1], क्षीरजत्वाद्दध्यादयश्चोच्यन्ते । प्रसन्नमिति निर्दोषं, निर्दोषता तु प्रशस्तत्वेन गुण इत्युच्यते; किंवा गुणानामसंख्येयत्वेन प्रसन्नत्वं गुर्वाद्यपठितमपि गुण एवेति ज्ञेयम् । एवंगुणमेवेति स्वाद्वादिदशगुणम् । सामान्यादिति समानत्वात् । महिषीक्षीरगुणे स्नेहान्न्यूनमिति महिषीक्षीरं गव्यक्षीरात् स्नेहोनं, गौरवशैत्याभ्यां तु तदधिकमिति केचिद्वदन्ते; तच्च, प्रत्यक्षमेव हि महिषीक्षीरादधिकमेव घृतं दृश्यते; तथा जतूकर्णेऽप्युक्तं—"गुरु शीतं स्निग्धतरं माहिषमतिबल्यं बृंहणं चाम्यम्" इति, सुश्रुतेऽप्युक्तं—"गव्यात् स्निग्धतरं" ( सू. अ. ४५ ) इति; तस्मात् 'स्नेहान्न्यूनं' इति पाठः; तेन स्नेहादधिकमित्यर्थः; किंवा स्नेहान्न्यूनमिति स्नेहपूर्णमित्यर्थः । उष्ट्रीक्षीरादीनां सलवणत्वादि मधुरानुरसत्वेन बोद्धव्यं; मधुरस्तु रसः प्रधान एव, दीर्घंजीवितीये 'प्रायशो मधुरं' ( सू. अ. १ ) इत्युक्तं, न तु सर्वथा मधुरमेव । ऐकशफमिति वडवायाः । केचित्तु सर्वशब्देन खरवेगसरयोरपि क्षीरस्यायं गुण इति वदन्ति । उष्णमिति क्षीरान्तरापेक्षया, तेन सामान्यगुणे शीतत्वमुक्तमविरुद्धं भवति, यतो लघूत्तमात्तित्तिरसाद्गुरुरपि कटु लघुरेवोच्यते मधुराद्यपेक्षया, एवं शीततमादितरक्षीरादुष्णमपि वडवायाः क्षीरं शीतमेव मूत्रमध्वाद्यपेक्षया भवति; एवं रूक्षमित्येतदपि व्याख्येयम् । यद्यपि च हस्तिनीक्षीरादीनि शास्त्रे प्रयोगेषु नोक्तानि, तथाऽपि कथितगुणं बुद्ध्वा तत्र तत्र प्रयोज्यानि ॥ २१७–२२४ ॥

रोचनं दीपनं वृष्यं स्नेहनं वलवर्धनम् ।
पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं बृंहणं दधि ॥ २२५ ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥२२६॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
रक्तपित्तकफोत्थेषु विकारेष्वहितं च तत् ॥ २२७ ॥

दधिगुणमाह—रोचनमित्यादि । अत्र रोचनमित्युक्त्वाऽपि अरुचाविति वचनमरुचिरोगहरत्वेन, रोचनता तूपयोगकाल एव द्रव्यान्तररुचिकरत्वेनोक्ता । बृंहणमिति रोगादिकृशस्य बृंहणं, कार्श्ये चेति सहजे कार्श्ये शस्यत इति बोद्धव्यं; तेन न पौनरुक्त्यम् । पीनसे चतुर्विधेऽपि प्रभावाद्धितं; किंवा पीनसपाचकत्वात् सर्वत्र हितम् । यच्च वृष्यशीतकहितत्वादि दधिगुणपर्यालोचनयाऽनुपपद्यमानमिह दृश्यते, तत् प्रभावाद्बोद्धव्यम् । यच्च गुणान्तरादेवाम्लत्वोष्णत्वस्निग्धत्वाल्लभ्यमानमपि वातघ्नत्वं पुनरुच्यते तत् प्रकर्षार्थं, तथा अम्लत्वादियुक्तस्यापि वातहन्तृताव्यभिचारदर्शनादिति बोद्धव्यम् । व्यभिचारोदाहरणानि च मन्दकमन्दजातमद्यादीन्यनुसर्तव्यानि । न्यायश्चायं सर्वान्नपानगुणकथने यथासंभवं वर्णनीयः, ग्रन्थप्रचुरतरताभीत्या सर्वं वस्तु वयमत्र नोद्भावयामः । प्रायश इति वचनात् कालान्तरेऽपि गर्हितत्वं शरदादावपि च प्रकृत्यादिवशाद्धितत्वं दर्शयति ॥ २२५–२२७ ॥

त्रिदोषं मन्दकं, जातं वातघ्नं दधि, शुक्रलः ।
सरः, श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः॥२२८

मन्दकं यदा क्षीरं विक्रियामापन्नं घनत्वं न याति तदा तन्मन्दकम् । जातं वातघ्नमिति यदा तु मन्दकावस्थामुत्सृज्य घनतया जातं सन्मधुरमीषदम्लं च भवति, तदा वातघ्नं विशेषेण भवतीत्यर्थः । पूर्वे तु दधिगुणाः सुजातस्य व्यक्ताम्लस्य बोद्धव्याः । शुक्रलः सर इति च्छेदः । सरो दध्युपरिस्नेहः, शुक्रलः शुक्रस्रुतिवृद्धिकरः; अत एव सुश्रुते सरगुणे "वृष्यः शुक्रविवर्धनः" ( सु. सू. अ. ४५ ) इति पदद्वयोपादानं कृतम् । मण्ड इति प्रकरणाद्दधिमण्डो मस्त्वित्यर्थः ॥ २२८ ॥

---

१ 'पयःक्षीरसंज्ञासामान्यात् पयस इव जीवनीयादिगुणयोगाच्च तोयवर्गानन्तरं क्षीरवर्गः प्रस्तूयते । तत्र श्रेष्ठत्वात् प्रथमं गव्यक्षीरगुणमाह—स्वाद्वित्यादि' इति शिवदाससेनः । २ 'एकः शफः खुरो यासां ता एकशफाः; अत्राश्वाया इति वक्तव्ये यदैकशफमिति सामान्यशब्दप्रयोगं करोति, तद्वेगसरप्रभृतीनामप्येकशफानां ग्रहणार्थम् । शाखावातहरमित्यत्र केचिच्छाखाशब्देन बाहू सक्थिनी चाहुः, अन्ये तु रक्तादीनाहुः । धान्याम्लस्यैवोभयत्राधारशक्तिप्रभावेण परस्परविरुद्धकार्यद्वयं भवति, तथथा—बहिःपित्तहरत्वमन्तःपित्तकरत्वम्; एवं शाखागतवातहरत्वं, कुक्षिगतवातकरत्वं चास्याधारशक्तिप्रभावेण मन्तव्यमित्याहुः' इति शिवदाससेनः ।

१ '°मिव' इति पा० । २ 'त्रिदोषं मन्दकमिति क्षीरावस्थामतिक्रम्य संप्राप्तदध्यवस्थं मन्दकमुच्यते, तत् पुनस्त्रिदोषं दोषकोपकं; जातं वातघ्नमिति यदा तु तदेव मन्दकं मन्दकावस्थामुत्सृज्य कालवशाद् घनतया जातं सन्मधुरमीषदम्लं भवति तदा वातघ्नं विशेषेण भवतीत्यर्थः' इति शिवदाससेनः ।

शोफार्शोग्रहणीदोषमूत्रग्रहोदरारुचौ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद्गरेषु च ॥ २२९ ॥

शोफेत्यादिना तक्रगुणः। मूत्रग्रहो मूत्रकृच्छ्रादि। गरोऽत्र कृत्रिमविषम् ॥ २२९ ॥

संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम्।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥ २३० ॥

संग्राहीत्यादि नवनीतगुणः। नवोद्धृतं सद्यस्कं; नवोद्धृतमिति वचनादभिनवस्यैव नवनीतस्य यथोक्तगुणाः प्रकर्षवन्तो भवन्ति, पुराणस्य तु नैते बलवन्तो गुणा भवन्तीति ॥ २३० ॥

स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्धनम्।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ २३१ ॥
सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः।
सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ २३२ ॥
मदापस्मारमूर्च्छायशोषोन्मादगरज्वरान्।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥ २३३ ॥
सर्पींष्यजाविमहिषीक्षीरवत् स्वानि निर्दिशेत्।

उत्पादक्रमागतस्य घृतस्य गुणमाह—स्मृतीत्यादि। सहस्रवीर्यमिति भूरिशक्तिकम्। कथं सहस्रवीर्यमित्याह—विधिवदिति। विधिवद् विधियुक्तं सदित्यर्थः, विधिश्च नानाकर्मकारिभिर्द्रव्यैः संस्कारः संयोगश्च, अत एवोक्तं—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्तते" (नि. अ. १) इति, तथा तन्त्रान्तरे "घृतं योगवाहि" इति; तस्मात् सहस्रवीर्यतः कर्मसहस्रकृदिति योज्यम्। यत्तु सुश्रुतटीकाकृतः सुश्रुतोक्तघृतगुणेषु "त्रिदोषापकर्षणं" इति पठन्ति, तत् संस्कारेण कफहरणादिति ज्ञेयम्। मदेत्यादि। जीर्णं तु दशवर्षातीतं; वचनं हि—"पुराणं दशवर्षं स्यात् प्रपुराणमतः परम्" इति। यथा यथा च जीर्णत्वप्रकर्षस्तथा तथा गुणोत्कर्षो ज्ञेयः। उक्तं हि हारीते—"यथा यथा जरां याति गुणवत् स्यात्तथा तथा" इति। अनुक्तसर्पिर्गुणानतिदिशति—सर्पींषीत्यादि। सर्पींषि स्वानीति संबंधः; तेन, अजाक्षीरवदजासर्पिर्निर्दिशेदिति। एवं शेषयोरपि वाच्यम्। अनेन च न्यायेन हस्तिन्यादिसर्पिरपि बोद्धव्यं, हस्तिन्यादिसर्पिर्व्यवहाराभावात् साक्षान्नोक्तम् ॥ २३१–२३३ ॥—

पीयूषो मोरटं चैव किलाटा विविधाश्च ये ॥२३४॥
दीप्ताग्नीनामनिद्राणां सर्वे एव सुखप्रदाः।
गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः ॥ २३५ ॥
विशदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः।
गोरसानामयं वर्गो नवमः परिकीर्तितः ॥ २३६ ॥

पीयूषः सद्यःप्रसूतायाः क्षीरम्। तदेव यावन्न परतः प्रसन्नतां याति तावत् 'मोरट' इत्युच्यते। किलाटो नष्टक्षीरभागः, यं लोकाः क्षीरसामित्याहुः। विशद इत्यादिस्तक्रपिण्डकगुणः, तक्रपिण्डः तक्रकूर्चिकाया एव स्रुतद्रवो घनो भागः। गोरसानामित्यत्र आदिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन महिषीक्षीरादीनामपि ग्रहणं; किंवा प्राधान्याद्गोरसनिर्देशः; गोरसभाषया गोरसनिष्पन्नाः सर्वे एव क्षीरदधितक्रादयो गृह्यन्ते; लोके हि सर्वेष्वेवैषु गोरससंज्ञा ॥ २३४–२३६ ॥

इति गोरसवर्गो नवमः ॥ ९ ॥

अथेक्षुवर्गः—

वृष्यः शीतः सरः स्निग्धो बृंहणो मधुरो रसः।
श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते ॥२३७॥
शैत्यात् प्रसादान्माधुर्यात् पौण्ड्रकाद्वंशको वरः।

माधुर्यसामान्यादिक्षुविकृतिप्रायो वर्ग उच्यते। भक्षितस्येति दन्तपीडितस्य। यान्त्रिक इति यन्त्रपीडितः। विदाहश्चास्य प्रायशस्त्वग्ग्रन्थियुक्तस्य यन्त्रेण पीडनात्, तथा कालान्तरावस्थानाच्च। वचनं हि—"मूलत्वग्ग्रन्थिसंयोगाद्यान्त्रिकस्तु विदह्यते"; उक्तं च हारीते—"व्यापित्वात् सुकुमारो हि रसो यन्त्रनिपीडितः। सौक्ष्म्यात् स्पृष्टोऽनिलार्काभ्यां भृशं काये विदह्यते" इति। अत्र व्यापित्वादिति त्वगादियुक्तेक्षुकाण्डभवत्वात्। यदुच्यते—विदाहित्वे यान्त्रिकस्य रक्तपित्तहन्तृत्वमुक्तं विरुध्यते, यथा "मधूदकस्येक्षुरसस्य चैव पानाच्छमं गच्छति रक्तपित्तम्" (चि. अ. ४) इति; तन्न, यतो दन्तनिष्पीडितस्यैवाविदाहिनो रक्तपित्ते ग्रहणं भविष्यति, किंवा यान्त्रिकेऽपि विदाहकारकत्वगादिसंयोगस्य तथा कालान्तरावस्थानस्य च त्यागं कृत्वोपयोगः कर्तव्यः; 'यान्त्रिकस्तु विदह्यते' इति वचनं प्रायोवादमाश्रित्य बोध्यम्। अन्ये त्वेतद्दोषभयाद्विदह्यत इति शीघ्रं पच्यत इति व्याख्यानयन्ति ॥ २३७ ॥—

प्रभूतकृमिमज्जासृङ्मेदोमांसकरो गुडः ॥ २३८ ॥
क्षुद्रो गुडश्चतुर्भागत्रिभागार्धावशेषितः।
रसो गुरुर्यथापूर्वं धौतः स्वल्पमलो गुडः ॥ २३९ ॥
ततो मत्स्यण्डिकाखण्डशर्करा विमलाः परम्।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥ २४० ॥
वृष्या क्षीणक्षतहिता सस्नेहा गुडशर्करा।
कषायमधुरा शीता सतिक्ता यासशर्करा ॥ २४१ ॥
रूक्षा वम्यतिसारघ्नी च्छेदनी मधुशर्करा।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्वशर्कराः ॥ २४२ ॥

प्रभूतकृम्यादिकारणत्वात् प्रभूतकृम्यादिकरो गुड उच्यते। क्षुद्रगुडस्तथा चतुर्भागत्रिभागार्धावशेषितो रस इत्यत्र चकारलोपो द्रष्टव्यः; तेन क्षुद्रगुडश्चतुर्भागावशेषिताद्रसाद्गुरुः, तथा त्रिभागाच्चतुर्भागावशेषितो गुरुरित्यादि ज्ञेयम्। क्षुद्रगुडोऽसितगुड

१ 'अत्र घृतस्य स्मृत्यादिकर्तृत्वं तथाऽलक्ष्मीप्रशमकत्वं च गुणपर्यालोचनयाऽनुपपद्यमानं प्रभावादेव ज्ञेयम्, एवमन्यत्रापि गुणद्वाराऽनुपपद्यमानकार्यस्य प्रभावजनकत्वं व्याख्येयम्' इति शिवदाससेनः।

१ 'मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात्। किंचित्कालं विधृत्या च विकृतिं याति यान्त्रिकः' (वा. सू. अ. ५) इति वाग्भटः।

इत्युच्यते । फाणितं च तन्तुलीभावाद्भवति । धौतः स्वल्पमल इति मलावसेकेन धौतोऽल्पमलो भवति, तेनाल्पक्रिम्यादिर्भवतीति भावः । तत इति धौतगुडात् । मत्स्यण्डिका खण्डमध्ये पाकाद्धनीभूता मत्स्याण्डनिभा भवति । विमलाः परमित्युत्तरोत्तरं विमलाः । भवेच्छैत्यं तथा तथेति मत्स्यण्डिकायाश्च खण्डः शीततरः, ततश्च शर्करा शीततमेत्यर्थः । गुडशर्करेति यासमधुशर्करयोर्व्यवच्छेदार्थम् । यासशर्करा दुरालभाक्वाथकृता शर्करा । मधुशर्करा तु मधुभाण्डेषु शर्कराकारा भवति ॥ २३८–२४२ ॥

**माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ।**
**माक्षिकं प्रवरं तेषां विशेषाद्भ्रामरं गुरु ॥ २४३ ॥**
**माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौत्तिकम् ।**
**क्षौद्रं कपिलवर्णं स्याच्छ्वेतं भ्रामरमुच्यते ॥ २४४ ॥**
**वातलं गुरु शीतं च रक्तपित्तकफापहम् ।**
**सन्धातृ च्छेदनं रूक्षं कषायं मधुरं मधु ॥ २४५ ॥**
**हन्यान्मधूष्णमुष्णार्तमथवा सविषान्वयात् ।**
**गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥ २४६ ॥**

मधुशर्कराप्रसङ्गेन मध्वभिधानम् । मक्षिकाः पिङ्गलाः, तद्भवं माक्षिकम् । भ्रमरः प्रसिद्धः । क्षुद्रमक्षिकाभवं क्षौद्रम् । पिङ्गला मक्षिका महत्यः पुत्तिकाः, तद्भवं पौत्तिकम् । छत्रादयश्चापरे चत्वारो मधुभेदाः सुश्रुतोक्ताः सामान्यमधुगुणा एव ज्ञेयाः; किंवा अप्रशस्तत्वादिह नोक्ताः । केचित् 'माक्षिकं तैलवर्णं स्यात्' इत्यादिश्लोकं पठन्ति । उष्णार्तमथवेति भाषया, यथा उष्णं मधु हन्यान्न तथा उष्णार्तमिति सूचयति । तत्रैव हेतुमाह—सविषान्वयादिति ।—सविषाणि नानापुष्पाणि, किंवा सविषा एव मक्षिकादयः, अन्वया उत्पत्तिस्थानानि यस्य तत् सविषान्वयं मधु; तेन विषानुगतस्योष्णविरोधित्वस्यैव मधुनोऽनुगमो भवति, न तु सविषत्वस्य; तथा सत्युष्णमपि मारकं स्यात्; किंवा अथवेति सविषान्वयादित्यनेन संबध्यते, तेन सविषान्वयादन्यतश्च शैत्यात् सौकुमार्याच्चोष्णेन मधु विरुध्यत इत्यर्थो भवति । उक्तं हि हारीते—"नानापुष्पप्रकाराणां रससारात्मकं मधु । तच्छैत्यात् सौकुमार्याच्च सर्वैरुष्णैर्विरुध्यते" इति; सुश्रुतेऽप्युक्तं—"तत् सौकुमार्याच्च तथैव शैत्यात्" (सु. सू.अ. ४५) इत्यादि । अल्पस्य मधुनो हितत्वे हेतुमाह—गुर्वित्यादि । गुरुत्वान्मध्वामकारकं भवति, रूक्षं कषायशीतं तु महात्ययवातकरमिति भावः ॥ २४३–२४६ ॥

**नातः कष्टतमं किंचिन्मध्वामात्तद्धि मानवम् ।**
**उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम् २४७**
**आमे सोष्णा क्रिया कार्या सा मध्वामे विरुध्यते ।**
**मध्वामं दारुणं तस्मात् सद्यो हन्याद्यथा विषम् २४८**

मध्वामस्य महात्ययतामाह—नात इत्यादि । उपक्रमविरोधित्वं मध्वामे यथा—आमे तूष्णं पथ्यं, तन्मधुनि विरुद्धं; यत्तु मधुहितं शीतं, तदामे विरुद्धम् ॥ २४७ ॥ २४८ ॥

**नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।**
**इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः ॥ २४९ ॥**

मधुनो योगवाहित्वमाह—नानेत्यादि । यस्मान्नानारसवीर्यादिभ्यः पुष्पेभ्य उत्पन्नं तन्मधु, तेनानभिव्यक्तनानाशक्तिकमेव । ततश्च येन द्रव्येण वामनीयेन वाऽऽस्थापनीयेन वा वृष्येण कार्यान्तरकारकेण वा युज्यते तस्यैव कर्म करोति, समानानुकारिद्रव्यप्रबोधितशक्तित्वादिति भावः । चकारोऽत्र हेत्वन्तरसमुच्चये, तेन प्रभावाच्चेति बोद्धव्यम् । तेन सत्यपि नानौषधिसंभवत्वे प्रभावान्न क्षीरमद्यादयो योगवाहिनः; तथा, अनानात्मका अपि शिलाजतुतैलादयो योगवाहिनो भवन्ति । योगवाहित्वेऽपि मधु स्नेहने न प्रयुज्यते वाते, रूक्षादिगुणयुक्तत्वात् । नानाद्रव्यात्मकत्वेऽपि मधु रूक्षकषायत्वाभ्यामेवाविर्भूतं भवति, प्रायेण रूक्षकषायगुणाधिके एव पुष्पे मधुमक्षिकाणां चरणादिति बोद्धव्यम् । अनेन च न्यायेन नानाद्रव्यात्मकत्वेन सर्वगुणताप्रसङ्गो मधुनो निरस्तो भवति । सुश्रुतेऽप्येवमेव योगवाहित्वं "तच्च नाना"( सु. सू. अ. ४५ )इत्यादिना ग्रन्थेन मधुन उक्तम् । इक्षुविकृतिप्राय इति इक्षुविकृतिप्रधानः, तेन यासशर्करादिकथनमप्यत्राविरुद्धमिति भावः ॥ २४९ ॥

इतीक्षुवर्गो दशमः ॥ १० ॥

अथ कृतान्नवर्गः—

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।**
**स्वेदाग्निजननी पेया वातवर्चोनुलोमनी ॥ २५० ॥**
**तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।**
**मण्डस्तु दीपयत्यग्निं वातं चाप्यनुलोमयेत् ॥ २५१॥**
**मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि ।**
**लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् २५२**
**दीपनत्वाल्लघुत्वाच्च मण्डः स्यात् प्राणधारणः ।**
**लाजपेया श्रमघ्नी तु क्षामकण्ठस्य देहिनः ॥ २५३ ॥**
**तृष्णातीसारशमनो धातुसाम्यकरः शिवः ।**
**लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ॥ २५४ ॥**
**मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।**
**देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥२५५॥**

१ 'मलावक्षेपेण' इति पा० २ 'शैत्यमित्युपलक्षणं, तेन मधुरत्वादिकमपि बोध्यम्, उक्तं च सुश्रुते—"यथा यथैषां वैमल्यं मधुरत्वं तथा तथा । स्नेहगौरवशैत्यानि सरत्वं च तथा भवेत्" ( सु. सू. अ. ४५ ) इति शिवदाससेनः । ३ 'वातलमित्यादि मधुसामान्यस्य गुणः । ननु सुश्रुते मधुनस्त्रिदोषशमनत्वं लघुत्वं चोक्तम्, अत्र च वातलं गुरुत्वं चोच्यत इति विरोधः? सत्यं, सुश्रुते त्रिदोषशमनत्वं यदस्योक्तं तत् प्रभावान्मिलितत्रिदोषारब्धज्वरहरतया ज्ञेयम्, अत्र तु पृथग्वातजनकत्वमुक्तमिति न विरोधः । तथा सुश्रुते—यल्लघुत्वमुक्तं तत् पुराणाभिप्रायेण, अत्र पुराणादिविशेषमनादृत्य गुरुत्वमुक्तं, चक्रस्तु अलघ्विति व्याख्यानेन विरोधं परिहरति' इति शिवदाससेनः ।

१ 'ग्राही दोषविपाचनः' इति पा० ।

**क्षुत्पिपासापहः पथ्यः शुद्धानां च मलापहः ।**
**शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजाम्लदाडिमैः॥२५६**
**कषायमधुराः शीता लघवो लाजसक्तवः ।**

संप्रति शूकधान्यादिवर्गैर्यथासंभवं संपादितस्य कृतान्नस्य पेयादेर्गुणान् वक्तुं कृतान्नवर्ग उच्यते[2] । ते च पेयादीनां गुणाः केचित् संस्कारसंयोगादिजाः, केचित् प्राकृता अपि ज्ञेयाः । न च वाच्यं— पेयादीनामेव गुणेन बाधितत्वाच्छूकधान्यादीनां पृथग्गुणो न वाच्य इति; यतः पेयादयो हि प्रकृतिगुणानुविधायिनः सन्तः स्वगुणमावहन्ति, तेन कृतान्नस्य यो गुण उच्यते स यदि रक्तशाल्यादिप्रकृतावपि भवति तदा बलवान् भवति, अथ प्रकृतौ विपरीतो गुणो भवति तदा कृतान्नगुणस्याल्पत्वं भवतीति मन्तव्यम् । अत्र स्वस्थातुरहितत्वेनादौ पेयोच्यते; पेया बहुद्रवा यवागूः, विलेपी विरलद्रवा यवागूः । पेयादिक्रमेणान्ने वक्तव्ये अन्नात् प्रथमोत्पद्यमानत्वेन मण्डगुणकथनम् । दीपनलघुत्वाभ्यामग्निं यस्मात् करोति, तस्माल्लङ्घितादीनां प्राणधारण इति ज्ञेयम् । सुसंस्कृत इति धान्यकपिप्पल्यादिसुसंस्कृतः । शुद्धानां मलापह इति सम्यक्शुद्धानामपि कोष्ठोपलेपकदोषापहरत्वेन; यदुच्यते—शुद्धानामिति ईषच्छुद्धानां; तेन, ईषच्छुद्ध्या शेषदोषसंबन्धान्मलापह इत्युपपन्नं, सुश्रुतेऽपि ( सु. सू. अ. ४६ ) "लाजमण्डोऽविशुद्धानां" इत्यकारप्रश्लेषादीषद्विशुद्धानामिति बोध्यम् । तन्न सत्, ईषद्विशुद्धे पेया निषिद्धैव, वचनं हि—"कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके । तर्पणादिक्रमः कार्यः पेयाऽभिष्यन्दयेद्धि तान्" ( सि. अ. ६ ) इति ॥ २५०–२५६ ॥—

**सुधौतः प्रस्रुतः स्विन्नः संतप्तश्चौदनो लघुः ॥२५७॥**
**भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ।**
**अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः २५८**
**मांसशाकवसातैलघृतमज्जफलौदनाः ।**
**बल्याः संतर्पणा हृद्या गुरवो बृंहयन्ति च ॥२५९॥**
**तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः ।**

स्विन्न इत्युत्स्विन्नधान्यतण्डुलकृतः, किंवा सम्यक्स्विन्नत्वेन मृदुभूतः । संतप्त इति सहजेनोष्मणा, न तु पुनस्तापनेन; वचनं हि—"विवर्जयेत् स्थिरं शीतमन्नमुष्णीकृतं पुनः" इति । भृष्टतण्डुलकृत ओदनो भृष्टतण्डुलः । अधौतः अधौततण्डुलकृतः । अत्र सुधौतत्वादिगुणविशिष्टस्यौदनस्य लघुत्ववचनेन तद्विपरीतानामधौतादीनां गुरुत्वमर्थतः सिद्धमपि यत् पुनरुच्यते तत् स्पष्टार्थम् । संतर्पणा इति तदात्वेऽपि बलकराः । मांसादिसंयोगसाधिताश्चौदना एव बोद्धव्याः । अत्र रूक्षाभ्यां शाकमुद्गाभ्यामपि संयुक्तस्यौदनस्य बल्यत्वादि संयोगमहिम्ना तथा घृतादिसंस्काराच्च लोकव्यवहारक्रियमाणत्वाद्बोद्धव्यम्[1] ॥ २५७–२५९ ॥—

**कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ॥ २६० ॥**
**स्विन्नभक्ष्यास्तु ये केचित् सौप्यगौधूमयाविकाः ।**
**भिषक् तेषां यथाद्रव्यमादिशेद्गुरुलाघवम् ॥ २६१ ॥**

यवपिष्टमुष्णोदकसिक्तमीषत्स्विन्नमपूपीकृतं कुल्माषमाहुः । स्विन्नभक्ष्या इत्युत्स्वेदनमात्रकृता हण्डरिकादयः । यथाद्रव्यमिति वदता नात्र प्रकृतिगुणोपमर्दैन लाजादाविव गुणान्तरोदय इति दर्शयति ॥ २६० ॥ २६१ ॥

**अकृतं कृतयूषं च तनुं सांस्कारिकं रसम् ।**
**सूपमम्लमनम्लं च गुरुं विद्याद्यथोत्तरम् ॥ २६२ ॥**

अकृतकृतयूपलक्षणम्—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना । विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" ( सु. सू. अ. ४६ ) इति । तनुमिति स्वल्पमांसत्वेनाघनं, सांस्कारिकमिति बहुमांसस्नेहादिसंस्कृतत्वाद्घनम् ॥ २६२ ॥

**सक्तवो वातला रूक्षा बहुवर्चोऽनुलोमिनः ।**
**तर्पयन्ति नरं सद्यः पीताः सद्योबलाश्च ते ॥ २६३ ॥**
**मधुरा लघवः शीताः सक्तवः शालिसंभवाः ।**
**ग्राहिणो रक्तपित्तघ्नास्तृष्णाच्छर्दिज्वरापहाः ॥२६४॥**

सक्तूनां रूक्षत्वेऽपि वातलत्वाभिधानं तक्रस्य रूक्षस्यापि वातहारित्वदर्शनात् । पीता इत्यनेन सक्तूनां पिण्डोपयोगे निषेधं दर्शयति[2] । तर्पयन्ति तृप्तिं जनयन्ति । सद्योबलाः तदात्वेनैव वाजीकरणवद्बलकराः; एतेन परिणामे बलापहत्वमप्युक्तं भवति ॥ २६३ ॥ २६४ ॥

**हन्याद्व्याधीन् यवापूपो यावको वाट्य एव च ।**
**उदावर्तप्रतिश्यायकासमेहगलग्रहान् ॥ २६५ ॥**
**धानासंज्ञास्तु ये भक्ष्याः प्रायस्ते लेखनात्मकाः ।**
**शुष्कत्वात्तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः ॥ २६६ ॥**
**विरूढधाना शष्कुल्यो मधुक्रोडाः सपिण्डकाः ।**
**पूपाः पूपलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥२६७॥**

यवकृतो वाट्यो यावको वाट्यः, वाट्यश्च भृष्टयवौदनः । धाना भृष्टयवाः । अङ्कुरितस्य यवस्य धाना विरूढधानाः । शष्कुल्यः शालिपिष्टैः सतिलैस्तैलपक्वाः क्रियन्ते । मधुक्रोडाः पाकघनीभूतमधुगर्भाः । सपिण्डका इति मधुक्रोडा एव सपिष्टकपिण्डाः; नलस्त्वाह—"विमर्द्य समिताचूर्णं मृदुपाकं गुडान्वितम् । घृतावगाहे गुडिकां वृत्तां पक्वां सकेशराम् ॥ सौगन्धिकाधिवासां च कुर्यात् पूपलिकां बुधः । स एव खण्डसंयावः सिताम्रातकपूरितः ॥ मातुलुङ्गत्वचा चैव वेष्टितो मधुशीर्षकः" इति । मधुशीर्षक एव मधुक्रोडः । पूपाः पिष्टिकाः । पूपलिका चापडिकेति ख्याता ॥ २६५–२६७ ॥

१ 'लाजमण्डोऽम्लदाडिमैः' इति पा० । २ 'धान्यादीनां संस्कारविशेषाहितं गुणमभिधातुं कृतान्नवर्गं उच्यते' इति शिवदाससेनः ।

१ 'लोकव्यवहारक्रियमाणव्यवहारत्वाद्बोद्धव्यम्' इति पा० ।
२ 'पिण्डोपयोगं निषेधयति' इति पा० ।

फलमांसवसाशाकपललक्षौद्रसंस्कृताः ।
भक्ष्या वृष्याश्च वल्याश्च गुरवो बृंहणात्मकाः ॥२६८॥
वेशवारो गुरुः स्निग्धो वलोपचयवर्धनः ।
गुरवस्तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः ॥ २६९ ॥
सगुडाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः ।
भक्ष्या वृष्याश्च वल्याश्च परं तु गुरवः स्मृताः २७०

पललं तिलचूर्णम् । वेशवारः सूदशास्त्रे—"मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् । पिप्पलीशुण्ठिमरिचगुडसर्पिः-समन्वितम् ॥ ऐकध्यं विपचेत् सम्यग्वेशवार इति स्मृतः" । क्षीरप्रधानाः पूपाः क्षीरपूपाः । सगुडा इत्यादौ 'सक्षीराः' इति क्षीरयोगमात्रं, न क्षीरप्रधानतेति न पौनरुक्त्यम् ॥२६८–२७०॥

सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः ।
गुरवस्तर्पणा वृष्या हृद्या गौधूमिका मताः ॥ २७१ ॥
संस्काराल्लघवः सन्ति भक्ष्या गौधूमपैष्टिकाः ।
धानापर्पटपूपाद्यास्तान् वुद्ध्वा निर्दिशेत्तथा ॥ २७२ ॥

सस्नेहा इति पिष्टावस्थायामेव स्नेहयोगात् । गुरुत्वेनोक्तानामपि भूर्यग्निसंयोगादिना संस्काराल्लाघवं भवतीत्याह–संस्काराल्लघव इत्यादि । वुद्ध्वा निर्दिशेदिति संस्कारगुणं तथा प्रकृतिगुणं च वुद्ध्वा यथोचितं गुणं निर्दिशेत् ॥ २७१ ॥ २७२ ॥

पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान् ।
यावा विष्टभ्य जीर्यन्ति सरसा भिन्नवर्चसः ॥२७३॥

पृथुकाः चिपिटाः । यावा इति यवचिपिटाः, अन्ये तु गान्धारदेशप्रसिद्धान् सपिष्टिसंज्ञानाहुः । सरसा अमृष्टाः ॥ २७३ ॥

सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः ।
सकटुस्नेहलवणानल्पशो भक्षयेत्तु तान् ॥ २७४ ॥

सूप्यविकृता इति मुद्गमाषादिविकाराः ॥ २७४ ॥

मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये ।
गुरवस्ते व्यतिक्रान्तपाकाः पुष्टिवलप्रदाः ॥ २७५ ॥

मृदुपाकाः स्तोकाग्निसंयोगसाध्याः । व्यतिक्रान्तपाका इति चिरेण जरां गच्छन्ति ॥ २७५ ॥

द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक् तथा ।
भक्ष्याणामादिशेद्बुद्ध्वा यथास्वं गुरुलाघवम् ॥ २७६ ॥

अनुक्तभक्ष्यगुणातिदेशार्थमाह—द्रव्यसंयोगेत्यादि । द्रव्यमानं पृथगिति भक्ष्यकरणे संयुक्तानां द्रव्याणां मध्ये कस्य कियन्मानमिति बुद्ध्वा । यथास्वमिति यस्य द्रव्यस्य गौरवं लाघवं वा बलवद्भवति तं निर्दिशेत् ॥ २७६ ॥

(नानाद्रव्यैः समायुक्तः पक्वामक्लिन्नभर्जितैः ।
विमर्दको गुरुर्हृद्यो वृष्यो वलवतां हितः ॥ २७७ ॥)

रसाला बृंहणी वृष्या स्निग्धा वल्या रुचिप्रदा ।
स्नेहनं तर्पणं हृद्यं वातघ्नं सगुडं दधि ॥ २७८ ॥

रसाललक्षणं—"सचतुर्जातकाजाजि ससितार्द्रकनागरम् । रसाला स्याच्छिखरिणी संघृष्टं ससरं दधि" इति । रसालाप्रसङ्गेन सगुडदधिगुणमाह—स्नेहनमित्यादि ॥ २७७ ॥ २७८ ॥

द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम् ।
परूपकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति ॥ २७९ ॥
तेषां कट्वम्लसंयोगान् पानकानां पृथक् पृथक् ।
द्रव्यं मानं च विज्ञाय गुणकर्माणि चादिशेत् ॥२८०॥
कट्वम्लस्वादुलवणा लघवो रागषाडवाः ।
मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः ॥ २८१ ॥
आम्रामलकलेहाश्च बृंहणा वलवर्धनाः ।
रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्यगौरवात् ॥ २८२ ॥
वुद्ध्वा संयोगसंस्कारं द्रव्यमानं च तच्छ्रितम् ।
गुणकर्माणि लेहानां तेषां तेषां तथा वदेत् ॥ २८३ ॥

पानकानामपि कृतान्नभेदत्वात्तद्गुणमाह–द्राक्षेत्यादि । यच्चेक्षुविकृतिं प्रति पानकमिति संवन्धः । रागषाडवं केचिदेवं वदन्ति—"क्वथितं तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः" इति; किंवा, "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकयाऽन्वितः" इति । षाडवस्तु मधुराम्लद्रव्यकृतः । आम्रामलकलेहास्तु तयोः पृथक्क्वाथेन सशर्करेण घनाः क्रियन्ते । अनुक्तपानकगुणातिदेशार्थमाह—बुद्ध्वेत्यादि । अस्य द्रव्यसंयोगेत्यादिवद्व्याख्यानम् ॥ २७९–२८३ ॥

रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।
कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम् ॥ २८४ ॥
शिण्डाकी चासुतं चान्यत् कालाम्लं रोचनं लघु ।
विद्याद्वर्गं कृतान्नानामेकादशतमं भिषक् ॥ २८५ ॥

शुक्तलक्षणं—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इति । तदासुतमिति शुक्तमध्यस्थितं मूलककूष्माण्डादि । शिण्डाकी स्वनामप्रसिद्धा तीरभुक्तौ । आसुतं चान्यदिति सन्धानान्तरम् । कालाम्लमिति चिरकालावस्थानादम्लं, नत्वम्लद्रव्यसंयोगात् । कृतान्नानामिति करणनिष्पादितमण्डपेयादीनाम् ॥ २८४ ॥ २८५ ॥

इति कृतान्नवर्ग एकादशः ॥ ११ ॥

कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं वद्धविण्मूत्रं न च श्लेष्माभिवर्धनम् ॥२८६॥

१ 'क्षीरेक्षुरसपूपका इति क्षीरे इक्षुरसे च भाविताः पूपका इत्यर्थः' इति शिवदाससेनः । २ 'वल्याः' इति पा० । ३ 'सपिष्टकसंज्ञानाहुः' इति पा० । ४ 'अनुक्तभक्ष्यातिदेशार्थमाह—द्रव्यसंयोगेत्यादि । यस्मिन् भक्ष्ये गुरुद्रव्यसंयोगस्तत्र गुरुत्वमन्यथा लघुत्वम् । तथा यत्राल्पाग्निसंयोगादिसंस्कारस्तत्र गुरुत्वमन्यथा लघुत्वम् । द्रव्यमानमिति यत्र भक्ष्ये लघुगुरुबहुद्रव्यसंयोगस्तत्र कस्य द्रव्यस्य कियन्मानमिति बुद्ध्वा, यस्याधिक्यं तत्कृतं गौरवं लाघवं वा विनिर्दिशेदित्यर्थः' इति शिवदाससेनः । ५ 'संयुक्तद्रव्यादेः' इति पा० । ६ 'नानाद्रव्यसमायुक्तः पक्त्वा वह्निषु भर्जितः' इति पा० ।

१ 'कट्वम्लसंयोगात्' इति पा० । २ अस्याग्रे 'यथाऽऽह नलः' इत्यधिकं पठ्यते क्वचित्पुस्तके । ३ 'सितारुचकसिद्धार्थैः' इति पा० । ४ 'सूक्ष्ममिति सूक्ष्मस्रोतोऽनुसारि । व्यवायीति अपक्वमेवाखिलदेहव्यापकम् । त्वच्यमिति अभ्यङ्गात् । यत्तु वाग्भटे त्वग्दोषकरत्वमुक्तं तैलस्य, तद्भक्षणाभिप्रायेणेति न विरोधः । अन्ये तु तत्रापि 'त्वग्दोषहृत्' इति पठन्ति, तत्तु न टीकाकृद्भिर्व्याख्यातम् । तैलमिति तिलभवस्नेहः' इति शिवदाससेनः ।

वातघ्नेषूत्तमं बल्यं त्वच्यं मेधाग्निवर्धनम् ।
तैलं संयोगसंस्कारात् सर्वरोगापहं मतम् ॥ २८७ ॥
तैलप्रयोगादजरा निर्विकारा जितश्रमाः ।
आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ॥ २८८ ॥
ऐरण्डतैलं मधुरं गुरु श्लेष्माभिवर्धनम् ।
वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ॥ २८९ ॥
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ।
कफशुक्रानिलहरं कण्डूकोठविनाशनम् ॥ २९० ॥
प्रियालतैलं मधुरं गुरु श्लेष्माभिवर्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात्संयोगे वातपित्तयोः२९१
आतस्यं मधुराम्लं तु विपाके कटुकं तथा ।
उष्णवीर्यं हितं वाते रक्तपित्तप्रकोपणम् ॥ २९२ ॥
कुसुम्भतैलमुष्णं च विपाके कटुकं गुरु ।
विदाहि च विशेषेण सर्वदोषप्रकोपणम् ॥ २९३ ॥
फलानां यानि चान्यानि तैलान्याहारसंविधौ ।
युज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद्यथाफलम् ॥२९४॥

आहारमभिधाय तद्योगिद्रव्यं ब्रूते । तत्र सर्पिष उक्तत्वात्तैलमेवाह्संस्कारकप्रधानत्वादाह—कषायेत्यादि । संयोगाच्च संस्काराच्चेति संयोगसंस्कारात्; संस्कारस्तैलस्य भेषजैः पाकः, संयोगस्त्ववचारणायां ज्ञेयः । संख्ये युद्धे । आतस्यम् उमातैलम् । अनुक्ततैलगुणनिर्देशार्थमाह—फलानामित्यादि । फलानामित्युपलक्षणं; तेन सारस्नेहा अपि सुश्रुतोक्ता बोद्धव्याः । यथाफलमिति यादृशगुणं फलं तादृश एव तत्स्नेहोऽपीत्यर्थः ॥ २८६–२९४ ॥

१ 'कण्डूकोठनिवारणम्' इति पा० । २ 'ननु तैलपदं तैलत्वप्रवृत्तिनिमित्तं; तच्च न तावत्तिलोद्भवत्वं, सर्षपतैलादावव्याप्तेः; नापि बीजप्रभवत्वं, तद्गतरूपादावतिव्याप्तेः; नापि बीजप्रभवस्नेहत्वं, सारतैलादावव्याप्तेः; अपि च बीजप्रभवस्नेहत्वं न तावत् स्नेहरूपगुणवृत्ति, तैलं गन्धवदिति प्रत्ययस्य सर्वजनसाधारणस्य भ्रान्तित्वापत्तेः; नापि स्नेहाश्रयद्रव्यवृत्ति, बीजद्रवमात्रस्यैव तैलत्वापत्तेः; इत्यनुपपत्तिं हृदि निधाय सर्षपादिस्नेहेष्वपि तैलशब्दं व्युत्पादयन्नाह—निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि (सु.सू.अ.४५) इति। निष्पत्तेरिति तिले यथा तैलं निष्पद्यते चूर्णीकरणयन्त्रादिना तथा सर्षपादावपि स्नेहापकर्षणात् । भवति च समाननिष्पत्तिकतया तच्छब्दता; यथा—वितुषे धान्ये तण्डुलशब्दो वृत्तः, स वितुषे विडङ्गेऽपि वर्तते, यथा विडङ्गतण्डुला–इति । तद्गुणत्वेन च तच्छब्दता, यथा–गौर्वाहीक इति। तद्गुणत्वं च सुश्रुतेनोक्तं यथा—"यावन्तः स्थावराः स्नेहाः समासात् परिकीर्तिताः। सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः"(सु.सू.अ.४५) इति । एतेन 'तिलस्य विकारस्तैलम्' इति योगे बाधकाभावात्तिलप्रभवस्नेह एव तैलपदप्रयोगात् स्नेहत्वेऽपि शक्ते तैलपदं योगरूढं, सार्षपादौ तैलपदप्रयोगो भाक्त इति भावः । अन्ये तु गन्धरसविशेषाङ्गं तैलत्वं जातिः, अत एव घृततैलसंशये गन्धविशेषनिश्चयात्तैलत्वनिश्चय इति सार्षपस्नेहादीनामपि तैलत्वमित्याहुः' इति शिवदाससेनः ।

मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा ।
यथासत्त्वं तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत् २९५

यथासत्त्वमिति यः प्राणी आनूपादिरुष्णस्तस्योष्णः, यस्तु प्राणी जाङ्गलादिः शीतस्तस्य शीत इत्यर्थः । सामान्यतस्तु वसामज्ज्ञोरनुष्णाशीतत्वं यथा भवति तथा स्नेहाध्याये एव प्रोक्तम् ॥ २९५ ॥

सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ।
विपाके मधुरं हृद्यं रोचनं विश्वभेषजम् ॥ २९६ ॥
श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली ।
सा शुष्का कफवातघ्नी कटूष्णा वृष्यसंमता ॥२९७॥
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ।
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित् ॥२९८॥
वातश्लेष्मविबन्धघ्नं कटूष्णं दीपनं लघु ।
हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम् ॥ २९९ ॥
रोचनं दीपनं वृष्यं चक्षुष्यमविदाहि च ।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम् ॥ ३०० ॥
सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ॥ ३०१ ॥
तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ।
ऊर्ध्वं चाधश्च वातानामानुलोम्यकरं बिडम् ॥३०२॥
सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
न काललवणे गन्धः सौवर्चलगुणाश्च ते ॥ ३०३ ॥
सामुद्रकं समधुरं, सतिक्तं कटु पांशुजम् ।
रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम् ॥ ३०४ ॥

सौक्ष्म्यादित्यादिना सौवर्चलगुणः । तैक्ष्ण्यादित्यादिना बिडगुणः । औद्भिदम् उत्कारिकालवणम् । काललवणं सौवर्चलमेवागन्धम् । दक्षिणसमुद्रसमीपे भवतीति सामुद्रं करकचम् । पांशुजं पूर्वसमुद्रजम् ॥ २९६–३०४ ॥

हृत्पाण्डुग्रहणीरोगप्लीहानाहगलग्रहान् ।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥ ३०५ ॥
तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पक्ता विदारणः ।
दाहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसन्निभः ३०६

क्षाराणामपि लवणसत्त्वात् क्षारगुणमाह—हृदित्यादि ।— यवक्षारगुणः । सर्वः क्षार इति स्वर्जिकाक्षारटङ्कनक्षारादिः ॥ ३०५ ॥ ३०६ ॥

१ 'आर्द्रपिप्पलीगुणे श्लेष्मलेति सजातीयद्रव्यान्तरवच्छ्लेष्माणं न शमयतीति कृत्वैव श्लेष्मलत्वमस्या इति केचित्। सा शुष्का कफवातघ्नीत्यनेन पित्ताविरोधित्वमस्या इति बोधयति, अत एव सुश्रुते "पित्तप्रसादनी" ( सु. सू. अ. ४६ ) इत्युक्तम्' इति शिवदाससेनः । २ 'नात्यर्थमुष्णमित्यादिना शुष्कमरिचगुणः; आर्द्रमरिचं तु कफप्रकोपकम्, उक्तं च सुश्रुते—"स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रकोपि च" ( सु. सू. ४६ ) इति' शिवदाससेनः । ३ 'सैन्धवगुणे समधुरम् ईषन्मधुरम्' इति शिवदाससेनः । ४ 'बिडं कृत्रिमं स्वनामख्यातम् । उत्तरदेशभवमुत्कारिकालवणमौद्भिदम्' इति शिवदाससेनः । ५ 'पाकी' इति पा० । ६ 'स्वर्जीक्षारो' इति पा० ।

कारवी कुञ्चिकाऽजाजी यवानी धान्यतुम्बुरु ।
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥ ३०७ ॥

कारवी कृष्णजीरकम् । कुञ्चिका स्थूलजीरकम् । अजाजी जीरकम् ॥ ३०७ ॥

आहारयोगिनां भक्तिनिश्चयो न तु विद्यते ।
समासो द्वादशश्चायं वर्ग आहारयोगिनाम् ॥ ३०८ ॥

उक्तात्तैलादेरन्यदप्याहारसंस्कारकत्वेनाहारयोगि भवतीत्याह—आहारेत्यादि । भक्तिः विभाग इयत्तेति यावत्; किंवा भक्तिः इच्छा; तेन पुरुषेच्छानामनियमादुक्तमपि किंचित् प्राय आहारयोगि न भवति, तथा अनुक्तमपि रसोनाम्रपेषिकाद्याहारसंयोगि भवतीत्युक्तं भवति ॥ ३०८ ॥

इत्याहारयोगिवर्गो द्वादशः ॥ १२ ॥

शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥ ३०९ ॥
यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम् ।
निस्तुषं युक्तिभृष्टं च सूप्यं लघु विपच्यते ॥ ३१० ॥

संप्रत्युक्तानां शूकधान्यादीनां यदनुक्तगुणं तद्वक्तुमाह—शूकधान्यमित्यादि । समातीतमिति एकवर्षातीतम् । प्रशस्यत इति लाघवात्; हेमन्ते नवधान्यविधानं त्वपवादः । आगच्छति क्षिप्रमिति उप्तं सच्छीघ्रं भवति; तेन षष्टिकाः सर्वधान्येषु लघवः, ते हि षष्टिरात्रेण भवन्ति । अस्मिंश्च व्याख्याने, व्रीहिः शारदस्य च हैमन्तं शालिं प्रत्यल्पकालत्वेन लघुत्वं प्राप्नोति, तस्मात् सजातीय एव शीघ्रगमनं लाघवहेतुरिति वाच्यम् । किंवा, आगच्छति क्षिप्रमिति भुक्तं सत् क्षिप्रं पच्यते । युक्तिभृष्टम् ईषद्भृष्टमिति यावत् । सूप्यं सूपाय योग्यं मुद्गमाषादि ॥ ३०९ ॥ ३१० ॥

मृतं कृशं चातिमेद्यं वृद्धं वालं विषैर्हतम् ।
अगोचरभृतं व्यालसूदितं मांसमुत्सृजेत् ॥ ३११ ॥
अतोऽन्यथा हितं मांसं बृंहणं बलवर्धनम् ।

मृतमिति स्वयं मृतम् । मेद्यं मेदुरम् । कृशग्रहणेन शुष्कमपि ग्राह्यम् । अगोचरभृतं यथा—आनूपं धन्वदेशे पुष्टम् । व्याला व्याघ्रादयः; किंवा व्यालः सर्पः । विषहतं तु विषदिग्धशस्त्रविद्धम् ॥ ३११ ॥—

प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम् ॥ ३१२ ॥
शुष्यतां व्याधिमुक्तानां कृशानां क्षीणरेतसाम् ।
बलवर्णार्थिनां चैव रसं विद्याद्यथामृतम् ॥ ३१३ ॥

सर्वरोगप्रशमनं यथास्वं विहितं रसम् ।
विद्यात् स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥ ३१४ ॥
व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः ।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः ॥ ३१५ ॥

मांसरसगुणाः—प्रीणन इत्यादि । सर्वरोगप्रशमनमिति सर्वशब्दो भूरिवचनः; एतेन उन्मादादौ मांसनिषेधो न विरोधवान् भवति; उक्तं हि उन्मादे—"निवृत्तामिषमद्यो यः" (चि. अ. ९) इत्यादि । यथास्वमिति यस्य व्याधेर्यो विहितः, तादृशं रसम् ॥ ३१२ ॥ ३१५ ॥

क्रिमिवातातपहतं शुष्कं जीर्णमनार्तवम् ।
शाकं निःस्नेहसिद्धं च वर्ज्यं यच्चापरिस्रुतम् ॥ ३१६ ॥
पुराणमामं संक्लिष्टं क्रिमिव्यालहिमातपैः ।
अदेशकालजं क्लिन्नं यत्स्यात्फलमसाधु तत् ॥ ३१७ ॥
हरितानां यथाशाकं निर्देशः साधनादृते ।
मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥ ३१८ ॥

स्नेहेन विना सिद्धं निःस्नेहसिद्धम् । आममिति अपक्वम्; एतच्च बिल्वादीन् विहाय बोद्धव्यम् । अदेशजमिति अनुचितदेशभवम् । अकालजम् अनार्तवम् । साधनादृत इति हरितानामार्द्रकपलाण्डुप्रभृतीनां निःस्नेहसिद्धानामपि तथा अपरिस्रुतानामपि निर्दोषत्वमित्यर्थः । विनिश्चयः 'कृत' इति शेषः; तथाच मद्यानां 'प्रायशोऽभिनवम्' इत्यादिना गुणदोषकथनं कृतमेव, एवं जलेऽपि 'पिच्छिलं क्रिमिलम्' इत्यादिना, गोरसकृतान्नाहारयोगिवर्गेषु तु यथोक्तकर्तृगुणवद्विपरीते विपरीतगुणमनुमेयमिति भावः ॥ ३१६–३१८ ॥

यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥ ३१९ ॥
आसवानां समुद्दिष्टामशीतिं चतुरुत्तराम् ।
जलं पेयमपेयं च परीक्ष्यानुपिबेद्धितम् ॥ ३२० ॥
स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥ ३२१ ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ।
क्लान्तानामनुपानार्थं पयः पथ्यं यथाऽमृतम् ॥ ३२२ ॥

---

१ 'पूर्यते' इति पा० । २ 'प्रायशो रूक्षमिति प्रायःशब्दो विशेषार्थः, तेन पुराणं वर्षद्वयातीतमतिशयेन रूक्षं भवतीति तत्र प्रशस्तमित्यर्थः; एवं प्रायेणाभिनवं गुर्वित्यपि व्याख्येयम्' इति शिवदाससेनः । ३ 'यज्जरां याति शीघ्रं तु' इति पा० । ४ 'अगोचरभृतमिति गोचरो देशः, तेन यस्य वराहमहिषादेर्यो देशोऽनूपादिस्तत्र न पुष्टं; किन्तु आनूपं धन्वदेशे पुष्टं, जाङ्गलं वाऽनूपे पुष्टम्' इति शिवदाससेनः ।

१ 'सर्वरोगप्रशमनमित्यत्र सर्वशब्दो भूरिवचनः, तेन कुष्ठादौ मांसनिषेधो न विरोधमावहति, यथा "वर्जयेद्द्विदलं शूली, कुष्ठी मांसं, क्षयी स्त्रियम्" इति शिवदाससेनः । २ 'हरितानामित्यादि । हरितानां पलाण्डुप्रभृतीनां यथाशाकं निर्देशः, तेन हरिता अपि क्रिमिवाताद्युपहतास्तथा शुष्कजीर्णा अनार्तवाश्च न ग्राह्याः । साधनादृत इति साधनं संस्कारः, तेन हरितानां निःस्नेहसिद्धानामपि तथा अपरिस्रुतानामपि निर्दोषत्वमित्यर्थः' इति शिवदाससेनः । ३ 'आहारमभिधाय तस्यैव सुखपाकार्थमनुपानमुपयुज्यत इत्यनन्तरमनुपानं वाच्यं, तत्र समासेनानुपानमाह—यदाहारेत्यादि ।' इति शिवदाससेनः । ४ 'सामान्येनानुपानमभिधाय विशेषेणानुपानेऽभिधातव्ये दोषविशेषेऽनुपानमाह—स्निग्धोष्णमित्यादि' इति शिवदाससेनः ।

**सुरा कृशानां पुष्ट्यर्थमनुपानं विधीयते।**
**कार्श्यार्थं स्थूलदेहानामनु शस्तं मधूदकम् ॥३२३॥**
**अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः।**
**मद्यमांसोचितानां च मद्यमेवानुशस्यते ॥ ३२४ ॥**

संप्रति येषां यदनुपानं कर्तव्यं तदेवाह—यदित्यादि। आहारगुणैरिति शीतस्नेहमधुरादिभिः; विपरीतमिति विपरीतगुणमनुपेयम्। एवं च दध्नोऽम्लस्य मधुरं क्षीरं तथा पायसस्य काञ्जिकानुपानं स्यादित्याह—धातूनां यन्न विरोधि चेति। एवं चाम्ले पयोऽनुपीयमानं विरुद्धत्वाद्धातुविरोधेन प्रत्युक्तं भवति, एवमन्यदपि विरुद्धं बोद्धव्यम्। समुद्दिष्टमिति यज्जःपुरुषीये (सू. अ. २५)। पेयमपेयं चेति सहजगुणदोषवत्त्वात् तथोपयुक्तभोजनापेक्षया। स्निग्धोष्णमित्यादिना दोषभेदेनाप्यनुपानमाह। अनु शस्तमिति अनुपानं शस्तम् ॥ ३१९-३२४ ॥

**अथानुपानकर्मगुणान् प्रवक्ष्यामः—अनुपानं तर्पयति, प्रीणयति, ऊर्जयति, बृंहयति, पर्याप्तिमभिनिर्वर्तयति, भुक्तमवसादयति, अन्नसङ्घातं भिनत्ति, मार्दवमापादयति, क्लेदयति, जरयति, सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयतीति ॥३२५**

**भवति चात्र—**
**अनुपानं हितं युक्तं तर्पयत्याशु मानवम्।**
**सुखं पचति चाहारमायुषे च बलाय च ॥ ३२६ ॥**

अनुपानगुणानाह—अथेत्यादि। पर्याप्तिः तृप्तिः ॥ ३२५ ॥ ॥ ३२६ ॥

**नोर्ध्वाङ्गमारुताविष्टा न हिक्काश्वासकासिनः।**
**न गीतभाष्याध्ययनप्रसक्ता नोरसि क्षताः ॥३२७॥**
**पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम्।**
**स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥ ३२८ ॥**

यैरनुपानं न कर्तव्यं तानाह—नोर्ध्वाङ्गेत्यादि। कण्ठोरसि स्थितमिति अनेनोर्ध्वाङ्गमारुतादीनामनुपानं कण्ठोरसि स्थितमेव भवति, नाधो यातीति दर्शयति। स्नेहमाहारजं हत्वेति आहारजातं स्नेहमभिभूय भूयो दोषाय कल्पते, वातलक्षणं दोषं करोतीत्यर्थः। आहारस्नेहेन यो वातप्रशमः कर्तव्यस्तं शैत्यप्रकर्षात् पानीयमभिभवतीत्यर्थः। एतेन यदुच्यते—अपां स्निग्धत्वेन स्नेहनमुपपन्नमिति, तन्न भवति। ये तु ब्रुवते—'हन' हिंसागत्योरिति वचनात् स्नेहं हत्वेति स्नेहं गत्वेत्यर्थः; तदपि न भवति, यतः स्नेहयुक्तत्वेनोर्ध्वाङ्गमारुतादिहननमेव युक्तं, न तु करणम्। किंवा स्नेहमिति सारं, यथा—"देहः स्नेहपरिक्षयात्" (चि.अ.८) इति देहसारपरिक्षयादित्यर्थः, सारहननं च जलेनाहारस्नेहं गृहीत्वा कण्ठोरस्यवस्थानादपाकात् क्रियते ॥ ३२७ ॥ ३२८ ॥

**अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः।**
**द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभिः ३२९**
**यथा नानौषधं किंचिद्देशजानां वचो यथा।**
**द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह यद्भवेत् ॥ ३३० ॥**

अन्नपानद्रव्यैकदेशकथनं सहेतुकमाह—अन्नेत्यादि। अन्नपानैकदेशः प्रायोपयोगिक इति बाहुल्येन यदुपयुज्यते; एतेन यद्बाहुल्येनोपयुज्यते तस्य श्रृङ्गग्राहिकया कथनं, प्रायोऽनुपयुज्यमानानां श्रृङ्गग्राहिकयाऽकथनमल्पदोषमिति दर्शयति; तथा अल्पदोषस्यापि परिहारार्थं तदपि किमिति नोच्यत इत्याह—द्रव्याणीत्यादि। द्रव्याणि कार्त्स्न्येनेति साकल्येन निर्देष्टुं; नामभिरिति नामभिरपि न शक्यं, 'केनचित्' इति शेषः; हिंशब्दो यस्मादर्थे, एतेन यस्मात् सर्वाणि द्रव्याणि नाममात्रेणापि वक्तुं कश्चिन्न पारयत्यतिबहुत्वात्, तत् का कथा अशेषान्नपानद्रव्यस्य श्रृङ्गग्राहिकया गुणकथनं प्रतीति भावः। किंवा, नामभिर्निर्दिष्टानि कार्त्स्न्येन निर्देष्टुमिति गुणतः कथयितुं न शक्यं केनचिदिति योजना। अथ कथं ह्यत्राकीर्तितान्नपानस्य तर्हि गुणा निर्देष्टव्या इत्याह—यथेत्यादि। यथा येन प्रकारेण "नानौषधं किंचित्" (सू. अ. २६) इति पूर्वाध्याये प्रोक्तं तथा तेन प्रकारेणानुक्तं द्रव्यं वाच्यं; 'गुणतः' इति शेषः। पूर्वाध्याये हि "तत्र द्रव्याणि गुरुखर" (सू. अ. २६) इत्यादिना ग्रन्थेन पार्थिवादिभेदेन विशिष्टेन च कर्मणा प्रोक्तानि द्रव्याणि, ततश्चानुक्तं द्रव्यं तेनैव गुरुखरादिना गुणेन पार्थिवत्वादि प्रतिपद्य यथोक्तोपचयादिकर्मकर्तृकतया व्यपदेष्टव्यमित्यर्थः। तदेवानिर्दिष्टद्रव्यस्य गुरुखरत्वादि कथं ज्ञेयमित्याह—देशजानां वचो यथेति; देशजा देशान्तरीयाः, तद्देशीयवचनात्ते ते गुरुखरत्वादयो ज्ञेया इत्यर्थः; किंवा, देशजा यथा तत्तद्द्रव्यं व्यवहरन्ति 'इदं मधुरम्, इदमम्लम्' इत्यादि, तत् प्रतिपद्य मधुरत्वाम्लत्वादिप्रतिपन्नपृथिव्याद्यस्य कारणमिति पृथिव्यादीनां गुर्वादिगुणगणेन कर्मणा च रसोक्तेन तद्वक्तव्यमित्यर्थः ॥ ३२९ ॥ ३३० ॥

**चरः शरीरावयवाः स्वभावो धातवः क्रिया।**
**लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ३३१**

अपरमप्यनुक्तान्नपानगुणज्ञानकारणमाह—चर इत्यादि।

---

१ 'अथेत्यादि। तर्पयतीति चक्षुरादिप्रसादं जनयति। प्रीणयतीति मनःप्रसादं जनयति। ऊर्जयतीति उत्साहं जनयति। पर्याप्तिम् अलोलुपताम्, अभिनिर्वर्तयतीति जनयति। भुक्तमवसादयतीति आमाशयादधोभागं नयति। अन्नस्य सङ्घातं काठिन्यम्। व्यवायितां व्यापकत्वम्' इति शिवदाससेनः। २ 'गत्वा' इति पा०।

१ 'आहारस्नेहेन यो वातप्रशमः कर्तव्यस्तं शैत्यप्रकर्षात् पानीयमभिभवतीत्यर्थं इति केचित्; तन्न, यदि हि पानीयस्य शैत्यप्रकर्षप्रवाहारस्नेहहनने हेतुस्तदा कण्ठोरसि स्थितमिति विशेषणं व्यर्थं, कण्ठोरस्यनवस्थितस्यापि जलस्य शैत्यप्रकर्षेण स्नेहोपघातकत्वात्; तस्मादयमर्थः—उदकं हि आहारसङ्गतं भूत्वैव स्निग्धत्वादाहारस्नेहं जनयति, तद्यदि कण्ठोरसि स्थितं भवति तदा आहारेण सहासंबन्धादाहारस्नेहं न जनयतीति कृत्वैव स्नेहोपघातकत्वं जलस्येत्युच्यते; यथा—अवग्रहप्रतिबन्धाया वृष्टेः सम्यगजनकत्वेनैव शस्योपघातकत्वम्' इति शिवदाससेनः। २ 'व्याहरन्ति' इति पा०।

चर्यत इति चरो देशः भक्ष्यश्च सामान्येन गृह्यते। क्रिया व्यापारः। प्रमाणं मानम्। अत्रेति अन्नपानगुणाधिकरणे ॥३३१॥

**चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः।**
**जलजानूपजाश्चैव जलानूपचराश्च ये ॥ ३३२ ॥**
**गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः।**
**लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥३३३॥**

चरं विवृणोति—चरोऽनूपेत्यादि। भक्ष्यस्य संविधिः भक्ष्यभक्षणम्। तत्रानूपजलाकाशधन्वाद्य इत्यनेन गतिरूपश्चर उच्यते, भक्ष्यसंविधिवचनेन च भक्ष्यरूपश्चर उच्यते। अत्रैवोदाहरणमाह—जलजेत्यादि। अत्र जलजत्वेनानूपजत्वेन च जले वाऽनूपे वा गतिरेव दृश्यते, न हि जलादौ ये जातास्ते प्रायोऽन्यत्रावतिष्ठन्ते; ये त्वन्यत्र जाता अप्यन्यत्र तिष्ठन्ते प्रायः काकमद्गुप्रभृतयस्तद्ग्रहणार्थमाह—जलानूपचराश्च ये इति। एतेन सामान्येन जले प्रायोऽवस्थानादिह जलचरत्वम्; एवमनूपचरत्वाद्यपि ज्ञेयम्। भक्ष्यरूपचरकृतं गुणमाह—गुरुभक्ष्या इत्यादि। धन्वजा धन्वचारिण इत्यत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन, आकाशचारिणामपि श्येनादीनामनुक्तमपि लाघवं स्वजातिप्रसहान्तरापेक्षया बोद्धव्यम्, आकाशस्य लघुत्वात्। ये तु ब्रुवते—आकाशचारिणां गौरवलाघवानियमादकथनमिति; तन्न, तथा सत्याकाशस्याप्रयोजकत्वेन 'चरोऽनूपजलाकाशधन्वाद्यः' इत्यत्राकाशकथनं निष्प्रयोजनं स्यात् ॥ ३३२ ॥ ३३३ ॥

**शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा।**
**सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः ३३४**
**वृषणौ चर्म मेढ्रं च श्रोणी वृक्कौ यकृद्गुदम्।**
**मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥ ३३५ ॥**

मांसाद्गुरुतरं विद्यादिति गुरुत्वेन प्रतिपादितसक्थ्यादिमांसाद्वृषणादि गुरुतरं विद्यादिति। यथास्वमिति एकशरीरसक्थ्यादीनामेवैतद्गौरवादि, नत्वन्यशरीरापेक्षया। मध्यमिति अन्तराधिः। अस्थि इति अस्थिस्थितं मांसम्। अन्ये तु मध्यमिति अस्थिमध्यगतं मज्जानं ब्रुवते; तन्नातिसुन्दरं, तस्योत्तरोत्तरधातुगौरवकथनेनैव लब्धत्वात् ॥ ३३४ ॥ ३३५ ॥

**स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः।**
**स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ ३३६ ॥**

**धातूनां शोणितादीनां गुरुं विद्याद्यथोत्तरम्।**
**अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ३३७**

स्वभावादिति प्रकृत्या। क्रियोदाहरणम्—अलसेभ्य इत्यादि; अलसेभ्य इति अल्पक्रियेभ्यः। विशिष्यन्त इति विशिष्टा भवन्ति, लघवो भवन्तीत्यर्थः ॥ ३३६ ॥ ३३७ ॥

**गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां तु लाघवम्।**
**महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥ ३३८ ॥**

लिङ्ग्यन्ते ज्ञायन्ते गवादयोऽनेनेति लिङ्गं जातिः, तेन लिङ्गसामान्ये जातिसामान्ये; एतच्च चतुष्पादाभिप्रायेण बोद्धव्यं, पक्षिषु विपर्ययः; यदाह हारीतः—"चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमान्" इति, अत्राप्युक्तं—"स्त्रियश्चतुष्पात्सु पुमान् विहगेषु लघुः" इति। पुंसां च गौरवे अत्यर्थंगुरोः शुक्रस्यारम्भकस्य भूयस्त्वं हेतुं ब्रुवते; किन्तु स्वभावस्तत्र हेतुरपवाद इति पश्यामः, विहङ्गेषु विपर्ययदर्शनादिति ॥३३८॥

**गुरूणां लाघवं विद्यात् संस्कारात् सविपर्ययम्।**
**व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिकाः ॥**

सविपर्ययमिति संस्काराल्लघूनामपि गौरवं विद्यादित्यर्थः। तदेव संस्कारजन्यं लाघवं गौरवं चाह—व्रीहेरित्यादि। गुरोरपि व्रीहेः संस्काराल्लाजा लघव इत्यर्थः। सक्तूनां च लघूनां सिद्धपिण्डिका गुर्व्यः, सिद्धपिण्डिका अग्निपाचिताः पिण्डाः ॥३३९॥

**अल्पादाने गुरूणां च लघूनां चातिसेवने।**
**मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ ३४० ॥**
**गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते।**
**मात्रां द्रव्याण्यपेक्षन्ते मात्रा चाग्निमपेक्षते ॥ ३४१ ॥**

अल्पादान इत्यादि। गुरूणां द्रव्याणामल्पस्य स्तोकमात्रस्यादाने यल्लाघवं, तस्मिन् लाघवे मात्रा कारणं; न द्रव्यं, तस्य गुरुत्वात्। एवं लघूनामतिसेवने गौरवं मात्राकृतम्। उद्दिष्टमितिं मात्राशितीये ( सू. अ. ५ ), अस्माभिरपि च तत्रैवैतत् सप्रपञ्चं व्याख्यातम्; प्रकरणागतत्वेन अभ्यर्हितत्वाच्च पुनरुक्तम्। द्रव्याणि मात्रामपेक्षन्ते इति यथोचितमात्रावन्ति सुखे पच्यन्त इत्यर्थः। मात्रा चाग्निमपेक्षत इति प्रतिपुरुषं प्रतिदिनं चाग्निभेदमपेक्ष्य मात्रा महती स्वल्पा वा भवति, न प्रतिनियता मात्रा विद्यत इति भावः ॥ ३४० ॥ ३४१ ॥

**बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः।**
**अन्नपानेन्धनैश्चाग्निर्ज्वलति व्येति चान्यथा ॥३४२॥**

कुतः पुनरग्न्यपेक्षा मात्रा क्रियत इत्याह—बलमित्यादि। अग्निमपेक्ष्य मात्रया प्रयुक्तयाऽग्न्यनाशाद्बलादयो भवन्तीति भावः। अग्नौ प्रतिष्ठिता इति अग्न्यधीनाः; यथा—राजाश्रिताः प्रजा इति। प्राणा इति वायवः; किंवा, प्राणाश्रयाः

---

१ 'चर्यत इति चरो देशो भक्ष्यश्च, 'चर' गतिभक्षणयोरित्यतो निष्पन्नत्वात् सामान्येन गृह्यते; कस्मिन् देशेऽयं विहरति धन्वन्यनूपे जले वियति वा, किं पुनरयमाहरति गुरु लघु शीतमुष्णं स्निग्धं रूक्षं वा, प्तद्विहारादिगुणभावितशरीरधातोर्मृगस्य पक्षिणो वा तत्तद्गुणमेव मांसमिति प्रतिपत्तव्यमिति भावः। शरीरावयवाः सक्थ्यादयः। स्वभावः तत्तद्द्रव्यप्रतिबद्धः स्वाभाविको धर्मः। धातवः शोणितादयः। क्रियेति क्रिया चेष्टा। लिङ्गं स्त्रीत्वादि। प्रमाणं मानम्। संस्कारो गुणान्तराधानम्। मात्रा चेति चकारेण बहिरनुक्तोऽपि मात्रायाः कारणभूतः समुच्चीयते; तेन मात्राया भूयस्त्वाल्पीयस्त्वेनाग्निरपि परीक्ष्य इत्यर्थः' इति शिवदाससेनः। २ 'सक्थिमांसाद्गुरुतरं स्कन्धक्रोडशिरस्पदाम्' इति पा०।

१ 'मात्रामपेक्षते द्रव्यं' पा०। २ अस्याग्रे 'मात्राया द्रव्यापेक्षणीयत्वं मात्रायाश्चाप्युपेक्षितयुक्तत्वमिति' इत्यधिकः पाठ उपलभ्यते हस्तलिखितपुस्तके। ३ 'दीप्यते शाम्यतेऽन्यथा' इति पा०।

शब्दादयो दश प्राणाः। इन्धनं काष्ठम्, इन्धनमिवेन्धनं, तैः; किंवा अग्निदाह्यमिन्धनमुच्यते। अन्यथेति अनिन्धनम् ३४२

**गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति।**
**मन्दक्रियाननारोग्यान् सुकुमारान्सुखोचितान् ३४३**

इयं चरादिकृता गुरुलाघवचिन्ताऽल्पाग्निं प्रति प्राय इति दर्शयन्नाह—गुर्वित्यादि। अत्राप्यबलत्वेन मन्दकार्यैरपि वह्निमान्द्यमेव लक्षणीयम् ॥ ३४३ ॥

**दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः।**
**ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ३४४**

खराहारा इति कठिनाहारसात्म्याः। महोदरत्वेनापि मेदोवरोधान्महाग्नित्वं दर्शयति। नावश्यं चिन्त्यमिति अनेन दीप्ताग्नीनामपि प्रति स्तोकप्रयोजना गुरुलाघवचिन्ता विद्यत एवेति दर्शयति। यतो दीप्ताग्न्यादीनामपि गुरुद्रव्यमग्नेः प्रतिपक्षमावहत्येव, स्वभावतोऽग्निविरुद्धत्वात् ॥ ३४४ ॥

**हिताभिर्जुहुयान्नित्यमन्तरग्निं समाहितः।**
**अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥ ३४५ ॥**
**आहिताग्निः सदा पथ्यान्यन्तरग्नौ जुहोति यः।**
**दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ॥ ३४६ ॥**
**नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने।**
**भजन्ते नामयाः केचिद्भाविनोऽप्यन्तरादृते ॥ ३४७ ॥**

अन्नं समिध इव समिधः। आहिताग्निरिति सात्म्येन व्यवस्थापिताग्निः; किंवा आहिताग्निरिवाहिताग्निः; तेन आहिताग्निर्यथा प्रातः सायं जुहोति, तथाऽयमपि प्रातः सायं च पथ्यान्यन्तरग्नौ जुहोति। ब्रह्म जपतीति प्रणवादिमन्त्रमावर्तयति। ददाति चेति यथाशक्ति दानमाचरति। तं नरं निःश्रेयसे कल्याणे युक्तमामया न भजन्ते। भाविनोऽपीति जन्मान्तरेऽपि; इह जन्मनि पथ्याशितत्वान्न भवन्ति गदाः, जन्मान्तरेऽपि ब्रह्मजपदानाभ्यामर्जितधर्मप्रभावादेव न भवन्ति। अत एवाह—अन्तरादृत इति; अन्तराविति कारणात्, ऋते विना; अपथ्यस्य तथा अधर्मस्य रोगकरणस्याभावाद्गदा न भवन्तीति भावः ३४५–३४७

**षट्त्रिंशतं सहस्राणि रात्रीणां हितभोजनः।**
**जीवत्यनातुरो जन्तुर्जितात्मा संमतः सताम् ॥ ३४८ ॥**

वर्षशतायुष्ट्वमपि हिताद्भोजनाद्भवतीत्याह—षट्त्रिंशतमित्यादि। एतावतीभी रात्रिभिर्वर्षशतमेव भवति। जितात्मा जितेन्द्रियः। संमतः पूजितः ॥ ३४८ ॥

**प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति।**
**वर्णः प्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम् ३४९**
**तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम्।**
**लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ॥ ३५० ॥**
**कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम्।**

किमर्थमन्नपानविधावेतत् परीक्ष्यमित्याह—प्राणा इत्यादि। अभिधावतीति प्रार्थयति। प्रतिभा प्रज्ञा। मेधा धारणावती धीः। लौकिकमिति अपरीक्षकलोके भवम्; अपरीक्षका एव हि वर्तमानमात्रे प्रवर्तन्ते, परीक्षकास्तु जन्मान्तरोपकारिण्येव। कर्म यद्वृत्ताविति वर्तमाने साध्ये यत् कर्म कृष्यादि। स्वर्गताविति स्वर्गगमने। वैदिकमिति यज्ञादि। अपवर्ग इति मोक्षे। एताश्च निमित्तसप्तम्यः। यच्चोक्तमिति मोक्षशास्त्रे सत्यब्रह्मचर्यादि। अन्ने प्रतिष्ठितमिति निरन्नस्य देहस्थित्यभावेन सर्वारम्भाभावात्। यस्मादन्नं सर्वत्र कारणं, ततस्तत्रावधातव्यमिति ॥ ३४९ ॥ ३५० ॥—

**तत्र श्लोकः—**
**अन्नपानगुणाः साग्र्या वर्गा द्वादश निश्चिताः ३५१**
**सगुणान्यनुपानानि गुरुलाघवसंग्रहः।**
**अन्नपानविधावुक्तं तत् परीक्ष्यं[1] विशेषतः ॥ ३५२ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपानविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥**

संग्रहेऽन्नपानगुणा इति 'इष्टवर्ण'इत्यादिनोक्ताः। साग्र्या इति 'उदकं क्लेदयति' इत्यादिना; उदकादयो हि क्लेदनादिषु अग्र्याः श्रेष्ठा इत्यर्थः ॥ ३५१ ॥ ३५२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायामन्नपानचतुष्केऽन्नपानविधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः।

**अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः १**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये 'अन्नं प्राणाः' (सू. अ. २७) इत्युक्तं, तद्येन प्रकारेणान्नं प्राणहेतुर्भवति तदभिधानार्थं विविधाशितपीतीयोऽभिधीयते[2]। इयमप्यर्थपरा संज्ञा ॥ १ ॥ २ ॥

**विविधमशितं पीतं लीढं खादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयति शरीरधातूनूर्जयति च। धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते ॥ ३ ॥**

विविधमित्यादि। विविधमिति अनेनाशितादीनामवान्तरभेदं दर्शयति; अशितादिषु यो यः प्राय उपयुज्यते स पूर्वमुक्तः। जन्तोर्हितमिति वचनमहितस्याशितादेर्बलवर्णादिकर्तृत्वाभावात्। अन्तरग्निना जाठरेण वह्निना सन्धुक्षितं बलं यस्य तेनान्तरग्निसन्धुक्षितबलेन। यथास्वेनोष्मणेति पृथिव्यादिरूपाशितादेर्यस्य य ऊष्मा पार्थिवाग्न्यादिरूपस्तेन; वचनं हि—"भौमाप्याग्नेयवा-

---

१ 'तत् परीक्ष्य विशेषतः' इति पा०। २ 'पूर्वाध्यायग्रन्थेनान्नपानस्वरूपविशेषाणामनुक्तानामभिधानाय विविधाशितपीतीयोऽभिधीयते' इति शिवदाससेनः।

यव्याः पञ्चोष्माणः सनाभसाः। पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि" (चि. अ. १५) इति। सम्यग्विपच्यमानमिति अशितादि। किंवा यथास्वेनोष्मणेति यस्य रुधिरादेर्य ऊष्मा धात्वग्निरूपस्तेन सम्यग्विपच्यमानमशितादि रसतामापन्नं यदा रक्तादिधातून् प्रतिपद्यते तदा रक्ताद्यूष्मणैव पच्यते; एवं विपच्यमानमशितादि शरीरमुपचयादिना योजयत्यूर्जयति वर्धयतीति योजना। किंविशिष्टं शरीरमित्याह—कालवदित्यादि।—यथा कालो नित्यगत्वेनानवस्थितः, तथाऽनवस्थितः अविश्रान्तः सर्वधातूनां पाको यस्मिन् शरीरे तत्तथा; एतेन सर्वदा स्वाग्निपाकक्षीयमाणधातोः शरीरस्याशितादिनोपचयादियोजनमुपपन्नमिति दर्शयति, यदि हि पाकक्षीयमाणं शरीरं न स्यात्तदा स्वतः सिद्धे उपचयादौ किमशितादि कुर्यादिति भावः। किंवा कालवदित्यशितादिविशेषणं; तेन यथोक्तकालकृतमशितादीत्यर्थः, अकालभोजनस्योपचयाद्यकारकत्वात्। तथा, अनवस्थितसर्वधातुपाकमित्येतदपि अशितादिविशेषणं, तेन अनवस्थितः सर्वधातुषु पाको यस्याशितादेस्तत्तथा; एतेन क्वचिदपि धातौ स्थगितस्याशितादे रसरूपस्य पाकविगमनान्नोपचयादिर्भवतीति दर्शयति। एतच्च व्याख्यानं नातिसुन्दरम्, अस्यार्थस्य अनुपहतेत्यादिशरीरविशेषणेनैव लब्धत्वात् पुनः शरीरविशेषणमनुपपन्नम्। अनुपहतेत्यादि अनुपहतानि सर्वधातूनामूष्ममारुतस्रोतांसि यस्य तत्तथा; यदा हि एकोऽपि धातुपाचकोऽग्निरुपहतः, मारुतो वा धातुपोषकरसवाही व्यानरूपः क्वचिदुपहतो भवति, तथा स्रोतो वा धातुपोषकरसवहमुपहतं स्यात्, तदा अशितादिकं धातूनामवर्धकत्वान्नोपचयादिकारकमिति भावः। केवलमिति कृत्स्नं शरीरं; किंवा केवलमिति अधर्मरहितम्, अधर्मयुक्ते हि शरीरे विफलमशितादि भवतीति। ननु शरीरधातूनां प्रकृतिस्थितानां स्वत एवोपचयादयस्ति, तत् किमशितादिना क्रियत इत्याह—धातवो हीत्यादि। धातुराहारो येषां ते धात्वाहाराः; धातवो रसादयो नित्यं क्षीयमाणा अशितादिजनितधात्वाहारा एव सन्तः परं स्वास्थ्यमनुवर्तन्ते, नान्यथेत्यर्थः॥ ३॥

**तत्राहारप्रसादाख्यो रसः किट्टं च मलाख्यमभिनिर्वर्तते। किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चावयवाः पुष्यन्ति। पुष्यन्ति त्वाहाररसाद्रसरुधिरमांसमेदोस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि शरीरसन्धिबन्धपिच्छादयश्चावयवाः। ते सर्व एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वं मानमनुवर्तन्ते यथावयःशरीरम्। एवं रसमलौ स्वप्रमाणावस्थितावाश्रयस्य समधातोर्धातुसाम्यमनुवर्तयतः। निमित्ततस्तु क्षीणवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुत्पादयत्यारोग्याय, किट्टं च मलानामेवमेव। स्वमानातिरिक्ताः पुनरुत्सर्गिणः शीतोष्णपर्यायगुणैश्चोपचर्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते॥४**

योऽसौ धातूनामाहारस्तमाह— तत्रेत्यादि। तत्रेति अशितादौ। रसः किट्टं चाभिनिवर्तत इत्यन्वयः। आहारप्रसाद इत्याख्या यस्य स तथा; प्रसादः सारः। किट्टम् असारभागः। किट्टादिति किट्टांशात्, तेन अन्नाद्यः किट्टांशस्ततो मूत्रपुरीषे भवतो वायुश्च, रसात् पच्यमानान्मलः कफः, एवमादि ग्रहण्यध्याये वक्ष्यमाणमनुसर्तव्यं; वक्ष्यति हि—"किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः। पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः॥ स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचाम्' (चि.अ.१५) इति। आदिग्रहणादक्षिस्नेहादि ग्राह्यम्। यद्यपि च वातोऽनशनादप्युपलभ्यते, तथाऽपि रूक्षकिट्टादिभोजनमलांशादप्युत्पद्यत एवेति किट्टाद्वातोत्पत्तिर्युक्तैव; न चायं नियमो यन्मलादेवोत्पद्यत इति, व्यायामादवगाहादेरपि च वातादिसद्भावात्। प्रजननं लिङ्गम्। रसपोष्यमाह—पुष्यन्ति त्वित्यादि। पञ्चेन्द्रियद्रव्याणीति पृथिव्यादीनि घ्राणादीन्द्रियकारणानि। धातुप्रसादसंज्ञकानीति अत्यर्थशुद्धेनैव धातुप्रसादेनेन्द्रियाण्यारभ्यन्त इति दर्शयति। शरीरं बध्नातीति शरीरबन्धः स्नायुसिरादिः। आदिग्रहणादार्तवस्तन्यादिग्रहणम्। अत्राहाररसाद् रक्तादिपोषणे केचिद्ब्रुवते—यत्—रसो रक्तरूपतया परिणमति, रक्तं च मांसरूपतया, एवं मांसादयोऽप्युत्तरोत्तरधातुरूपतया परिणमन्ति।

१ 'यथोचितकालकृतं' इति पा०। २ 'क्वचिदप्यशितादेः' इति पा०। ३ 'धातुपोषकरसमार्गरूपं' इति पा०। ४ 'धातूनामवर्धनात्' इति पा०। ५ 'तत्राहारः प्रसादाख्यं रसं किट्टं च मलाख्यमभिनिर्वर्तयति' इति पा०।

१ 'मलाख्यात्' इति पा०। २ 'पञ्चेन्द्रियद्रव्याणीति घ्राणादिपञ्चेन्द्रियाणां द्रव्याणि समवायिकारणानि पृथिव्यादीनि, कीदृशानि—धातुप्रसादसंज्ञानि' इति शिवदाससेनः। ३ "अत्र च रसाद्रक्तोत्पादने केचिदिदं वदन्ति—यत्—रसोऽग्निपच्यमानः (सर्वात्मना) रक्ततां याति, रक्तं च मांसतामित्यादिपूर्वपूर्वधातुपरिणामादेव उत्तरोत्तरधातूत्पादः; यथा—(सर्वात्मना) क्षीराद्दधि भवति, दध्नो नवनीतं नवनीताद्घृतमित्येकः पक्षः। किंवा रस एव रक्तं प्रथमं प्लावयति; तत्र रक्तस्थानसंबन्धाद्रक्तसादृश्यं रक्तव्यपदेशं चानुभवति, रक्तं च रक्तसमानेन स्तोकेनांशेन पोषयति; ततो रक्तमाप्लाव्य मांसमाप्लावयति, तत्रापि मांससमानेनांशेन मांसपोषणं करोति, मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति; एवमुत्तरोत्तरधातून् रस एवाप्लावयति, यथा—केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः। एतदेवोक्तं हारीते—यत्—"रसः सप्ताहादर्वाक् परिवर्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्ताद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते" इत्यादि, अत्रापि "तत्रैषां धातूनां" (सु.सू.अ. १४) इत्यादिना तथा "स खलु त्रीणि" (सु.सू.अ. १४) इत्यादिना रसेनैव रक्तादिपोषणमनेनैव न्यायेनोक्तम्। किंवा आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमांसादीन् रसरुधिरादिसमानांशेन तर्पयति; तत्र यः प्रत्यासन्नो धातुस्तत्पोषको भागस्तं शीघ्रं पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं

अत्रापि च पक्षे केचिद्ब्रुवते—क्षीराद्यथा सर्वात्मना दधि भवति, तथा कृत्स्नो रसो रक्तं भवति; एवं रक्तादयोऽपि मांसादिरूपा भवन्ति । अन्ये त्वाहुः—केदारीकुल्यान्यायेन रसस्य धातुपोषणं; तत्रात्राद्युत्पन्नो रसो धातुरूपं रसमभिगम्य क्रिय-

भवति । एवं भिन्नैरपि मार्गैर्धातुपोषणं भवति । तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, तथा मांसपोषणकालादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयतीत्यादि । तेन रसाद्रक्तमित्यादेरयमर्थो–यत्–रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्तते, रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्तते, इत्यादि । अस्मिंश्च पक्षे यदुक्तं—"विण्मूत्रमाहारमलः सारः प्रागीरितो रसः । स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत्" (सु.सू.अ.४६) इति, तथा "तस्मिन् धातुमलानुसारिणि रसे" (सु.सू.अ.१४) इति च मुख्यार्थं भवति, तथा चरकेऽपि–"स्रोतसा च यथास्वेन धातुः पुष्यति धातुना" (च. चि. अ.८) इति च मुख्यार्थं भवति । तेन यथा–खले उत्पतितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण वा गमनं भवति, तद्वत् । इति क्षीरदधिन्याय-केदारिकुल्यान्याय-खलेकपोतन्यायात् त्रिधा धातुपोषणक्रमः । तत्रैतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेन नीरसत्वं देहस्य स्यात्, मासोपवासाच्च शुक्रमयं शरीरं स्यादिति (स पक्षः) नेष्यते । केदारीकुल्यापक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति । यदपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मकात् तथा रक्तादिव्यपदेशभाजो भवतीति व्युत्पादितमेव । यत्तु रसस्य सर्वधातुदोषमलाशयानुसारित्वमुक्तं तदपि रक्तादिपोषकतया, तथा हृदयस्थायिरसस्य च कृत्स्नदेहव्यापकतया चोपपन्नम् । एवं चरकेऽप्युक्तं—"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा" (च.चि.अ.१५) इत्यादि, तदप्युक्तन्यायादेवोपपन्नम् । यदपि मांसादिना समानेन मांसादेरेव पोषणं,तदपि धात्वाप्लावनन्यायेन गच्छताऽपि रसेन तद्धातुसमानेनांशेनेन तद्धातुपोषणादुपपन्नम् । वृष्यं तु प्रभावाद्यथा खलेकपोतन्यायेन विदूरमपि शुक्रं प्रभावाच्छीघ्रं याति तथाऽत्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम्; एवमनया दिशाऽप्यत्र दूषणमुह्यार्यं, तेनायं पक्षस्तावत् साधुः । खलेकपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति तद्दर्शितमेव । यत्तु चरके "रक्तं विबद्धमार्गत्वान्मांसादीन्न प्रतिपद्यते"(च.चि.अ.८) इति तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न पोषकरक्ताभिप्रायेण इति व्यवस्थाप्यते । यत्तु "एकैकस्मिन् धातौ त्रीणि"(सु.सू.अ.४३) इत्यादिना धातावस्थानकाल उक्तः, स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते । एवमनयोः पक्षयोर्महाजनोपगीतयोर्गतिरुपदर्शिता भवति । स्वरसस्त्वसाकं केदारीकुल्यान्याये । यत्त्वन्यैः खलेकपोतन्यायस्वीकारेण चरके संततज्वरस्य द्वादशाश्रयत्वं युक्तमित्युक्तं तन्न बुध्यामहे, येन संततस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया–"यथाधातूंस्तथा मूत्रं पुरीषं चानिलादयः"(च.चि अ.३) इत्यादिनोक्तं; दोषाणां च कुपितानां संप्राप्तिविशेषात् किमगम्यमस्ति देहे, येन यावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणे अपेक्षन्ते" इति सुश्रुतटीकायां भानुमत्यां सूत्रस्थाने १४ अध्याये चक्रपाणिः । 'अत्राहारेण रसादिपोषणमेवं' इतिपा० ।

ताऽप्यंशेन तं रसं वर्धयति; अपरश्च रसराशिस्तत्र गतः सन् शोणितगन्धवर्णयुक्तत्वाच्छोणितमिव भूत्वा कियताऽपि शोणितसमानेनांशेन धातुरूपं शोणितं पुष्णाति, शेषश्च भागो मांसं याति, तत्रापि शोणितवद्व्यवस्था; तथा मेदःप्रभृतिष्वपीति । अत एव च मुख्यार्थोऽयं ग्रन्थो भवति; यथा—"रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः"—( चि. अ. १५ ) इति; तथा हारीतेऽप्युक्तं,—"रसः सप्ताहादर्वाक् परिवर्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्ताद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते" इति; तथा सुश्रुतेऽप्युक्तं–"स खल्वाप्यो रसं एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला अवतिष्ठते, एवं मासेन रसः शुक्रीभवति" ( सु. सू. अ. १४ ) इति । अन्ये त्वाहुः—खलेकपोतन्यायेनायमन्नरसः पृथक्पृथग्धातुमार्गे गतः सन् रसादीन् पोषयति, न त्वस्य धातुपोषको रसभागो धात्वन्तरेण समं संबन्धमप्यनुभवति, रसादिपोषकाणि स्रोतांस्युत्तरोत्तरं सूक्ष्ममुखानि दीर्घाणि च, तेनैव रसपोषकरसभागो रसमार्गचारित्वाद्रसं पोषयति, एवं रसपोषणकालादुत्तरकालं ( रक्तपोषकमार्गचारित्वात् ) रक्तपोषको रसभागो रक्तं पोषयति, तथा शोणितपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, विदूरसूक्ष्ममार्गचारित्वात्; एवं मेदःप्रभृतिपोषणेऽपि ज्ञेयम् । तेन, "रसाद्रक्तं ततो मांसं" इत्यादेरयमर्थः—यत्—रसपुष्टिकालादुत्तरकालं रक्तं जायते, तथा रक्तपुष्टिकालादुत्तरकालं मांसं प्रजायते इत्यादि । एवं सुश्रुतहारीतवचने अपि व्याख्येये । यच्च "रक्तं विबद्धमार्गत्वान्मांसादीन्न प्रपद्यते" ( चि. अ. ८ ) इति राजयक्ष्मणि वक्ष्यति, तद्धृदयचारिशोणिताभिप्रायेण, न तु पोषकशोणिताभिप्रायेण । किंच, परिणामपक्षे वृष्यप्रयोगस्य रक्तादिरूपतापत्तिक्रमेणातिचिरेण शुक्रं भवतीति, क्षीरादयश्च सद्य एव वृष्या दृश्यन्ते; खलेकपोतपक्षे तु वृष्योत्पन्नो रसः प्रभावाच्छीघ्रमेव शुक्रेण संबद्धः सन् तत्पुष्टिं करोतीति युक्तं; तथा रसदुष्टौ सत्यां परिणामपक्षे तज्जन्मनां शोणितादीनां सर्वेषामेव दुष्टिः स्यात्, दुष्टकारणजातत्वात् । खलेकपोतपक्षे तु यद्धातुपोषको रसभागो दुष्टः स एव दुष्यति न सर्वे, तदितरेषामदुष्टकारणत्वात्; तथा मेदोवृद्धौ सत्यां भूरिकारणत्वेनास्थ्नाऽपि भूयसा भवितव्यं, दृश्यते च भूरिमेदस इतरधातुपरिक्षयः; वचनं च—"मेदस्विनो मेद एवोपचीयते, न तथेतरे धातवः" (सू.अ. २१ ) इति; एवमादि परिणामवादे दूषणम् । एषु च पक्षेषु सर्वात्मपरिणामवादो विरुद्ध एव, येन सर्वात्मपरिणामे त्रिचतुरोपवासेनैव नीरसत्वाच्छरीरस्य मरणं स्यात्, मासोपवासे च केवलं शुक्रमयं शरीरं स्यात् । केदारीकुल्यान्यायस्तु तुल्यबल एव खलेकपोतन्यायेन; यतो

१ 'मध्ये' इति पा० । २ 'कृत्स्नाद्रसात्' इति पा० ।

१ 'प्रजायते' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ३ 'कृत्स्नदेहचारिशोणिताभिप्रायेण' इति पा०

यदुक्तं वृष्यप्रभावं प्रति तत् केदारीकुल्यापक्षेऽपि प्रभावादेव शीघ्रं रक्तादिधातूनभिगम्य शुक्रं जनयिष्यति वृष्यं, यथा खलेकपोतपक्षेऽपि प्रभवादिति। यत्तु रसदुष्टौ शोणितदूषणं; तत्र भवति, धातुभूतशोणितांशपोषकस्य रसभागस्यादुष्टत्वात्; इति समानं पूर्वेण। अत्रापि हि पक्षे न सर्वो रसो धातुरूपशोणिततामापद्यते, किं तर्हि कश्चिदेव शोणितसमानो भागः; शेषस्तु शोणितस्थानगतत्वेन किंचिच्छोणितसमानवर्णादित्वाच्च शोणितमुच्यते; अनेन न्यायेन मेदोवृद्धौ सत्यामस्थिवृद्धिरपि निरस्ता, यतो न मेदसा अस्थि पोष्यते, अपि तर्हि मेदःस्थानगतेनैव रसेन मेदोनुकारिणा। एवमनयोः पक्षयोर्महाजनादृतत्वेन तुल्यन्यायत्वेन च नैकमपि निश्चितं ब्रूमः, बुद्धिविभवाच्च पक्षबलाबलम्, अत्र न कश्चित् कार्यविरोध इत्युपरम्यते। नन्वाहाररसाद्रसादयः पुष्यन्तीति वदता धातुरसादाहाररसोत्पादः पृथक् स्वीक्रियते, ततश्च तस्य किं स्थानं किंवा प्रमाणमिति किमिति नोक्तम्? उच्यते—न तस्याहारोत्कर्षापकर्षविवेवंविधौ, उत्कर्षापकर्षस्य निश्चितप्रमाणत्वाभावात्; स्थानं तु धमन्य एव। पोषकाहाररसस्य तस्य च पृथक्प्रसादिधातुभ्यः प्रदेशान्तरग्रहणं न क्रियते, रसादिकारणरूपतया रसादिग्रहणेनैव ग्रहणात्। अत्र यद्यप्योजः सप्तधातुसाररूपं, तेन धातुग्रहणेनैव लभ्यते, तथाऽपि प्राणधारणकर्तृत्वेन पृथक् पठितं; ये तु शुक्रजन्यमोज इच्छन्ति, तेषामष्टमो धातुरोजः स्यादिति पक्षे चातिदेशं कृत्वा वक्ष्यति— "रसादीनां शुक्रान्तानां यत् परं तेजः, तत् खल्वोजः"—(सु. सू. अ. १५) इति। उपपादितपोषणानां धातुमलानां प्रकृत्यनुविधानमुपसंहरति—ते सर्वे इत्यादि। मलाख्या अपि स्वेदमूत्रादयः स्वमानावस्थिता देहधारणाद्धातवो भवन्तीत्युक्तं—धातवो मलाख्या इति। यथावयःशरीरमिति यस्मिन् वयसि बाल्यादौ यादृशं मानं धातूनां तादृशं पुष्यन्तः, तथा यस्मिन् शरीरे प्रकृत्या दीर्घे ह्रस्वे कृशे वा स्थूले वा यादृशं मानं धातूनां तादृशं पुष्यन्त इति योजना। एवमित्यादौ स्वप्रमाणावस्थिताविति अनतिरिक्तावन्यूनौ च। आश्रयस्येति शरीरस्य; यथावत्पक्तौ सर्वाश्रयं पश्चाद्धमनीभिः प्रपद्येते, सर्वशरीरमित्यर्थः। समधातोरिति समरसादेः समस्वेदमूत्रादेश्च। निमित्तत इत्यादि। निमित्तत इत्यनेनानिमित्ते अरिष्टरूपे क्षयवृद्धी निराकरोति। वृद्धिक्षयाभ्यामाहारमूलाभ्यामिति यथासंख्यं वृद्धक्षीणाहारकृताभ्याम्, एतेनाहारविशेषकृतवृद्धिक्षयो रसः साम्यं करोतीत्यर्थः[1]। धातुसाम्यस्यारोग्यत्वे सिद्धेऽपि यदारोग्यायेति ब्रूते तेन प्राकृतधातूनां क्षयेण वाऽतिवृद्ध्या वा साम्यं निराकरोति, अस्य साम्यस्य रोगकर्तृत्वादेव। किंच मलानामेवमेवेति यथा रसस्तथा किट्टमप्यारोग्याय मलानां साम्यं प्रतिपादितरसक्रमेण करोति। वृद्धमलानां चिकित्सान्तरमाह—स्वमानेत्यादि। उत्सर्गो बहिर्निःसरणं संशोधनरूपमेषां शास्त्रोक्तमस्ति, उत्सर्गं वा वहन्तीत्युत्सर्गिणः[2]। वृद्धानां मलानां चिकित्सान्तरमाह—शीतोष्णेत्यादि। पर्ययः विपर्ययः; तेन शीतोष्णविपरीतगुणैरित्यर्थः; तेन, शीतसमुत्थे मले उष्णं तयोष्णसमुत्थे शीतमुपचारो भवति। आदिशब्दश्चात्र लुप्तनिर्दिष्टः; तेन स्निग्धरूक्षादीनामपि विपरीतगुणानां ग्रहणम्। किंवा पर्ययगुणा द्वन्द्वगुणाः स्निग्धरूक्षमृदुतीक्ष्णादयः, तैश्च यथायोग्यतयोपचर्यमाणा इति ज्ञेयम्। एतेन, वृद्धमलानां त्रिविधोऽप्युपक्रमो निदानवर्जनशोधनशमनरूप उक्तो भवति; तत्र निदानवर्जनं वृद्धमले मलवृद्धिहेत्वाहारपरित्यागादल्पमलाहारोपयोगाद्वा बोद्धव्यं; संशोधनं च उत्सर्गिण इत्यनेनोक्तं, शमनं च शीतोष्णेत्यादिग्रन्थेनोक्तम्॥ ४॥

**तेषां तु मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि। तानि यथाविभागेन यथास्वं धातूनापूरयन्ति। एवमिदं शरीरमशितपीतलीढखादितप्रभवम्। अशितपीतलीढखादितप्रभवाश्चास्मिन् शरीरे व्याधयो भवन्ति। हिताहितोपयोगविशेषास्त्वत्र शुभाशुभविशेषकरा भवन्तीति॥ ५॥**

अयनानि च तानि मुखानि चेत्ययनमुखानि, अत्र आयान्त्यनेनेत्ययनानि मार्गाणि, मुखानि तु यैः प्रविशन्ति; एतेन मलानां धातूनां च यदेवायनं तदेव प्रवेशमुखमिति नान्येन प्रवेशो नान्येन च गमनमित्युक्तं भवति। रसादीनां यथास्वनाम स्रोतोमुखं चायनं च। किंवा, अयनस्य गमनस्य मुखानि मार्गाणि; तेन, अयनमुखानि गतिमार्गाणीत्यर्थः। तानि च स्रोतांसि मलप्रसादपूरितानि धातून् यथास्वमिति यद्यस्य पोष्यं तच्च तत् पूरयति। यथाविभागेनेति यस्य धातोर्यो विभागः प्रमाणं तेनैव प्रमाणेन पूरयति, तादृक्प्रमाणान्येव पुष्यन्ति, नाधिकन्यूनानीत्यर्थः। एतच्च प्रकृतिस्थानां कर्म, विकृतानां तु न्यूनातिरिक्तधातुकरणमस्त्येवेति बोद्धव्यम्। उक्तं चान्यत्र—"स्रोतसा च यथास्वेन धातुः पुष्यति धातुना" (चि. अ. ८) इति। उपसंहरति—एवमित्यादि। कथमशितादेर्विरुद्धयोः शरीरतदुपघातकरोगयोरुत्पाद इत्याह—हिताहितेत्यादि। हितरूपोऽशितादिविशेषः शुभरूपविशेषकारकः, अहितरूपस्त्वशितादिविशेषोऽशुभरूपविशेषकरो भवति; तेन नैकरूपात् कारणाद्विरुद्धकार्योदय इति भावः॥ ५॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—दृश्यन्ते हि भगवन्! हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्तश्चागदाश्च, तथैवाहितसमाख्यातम्; एवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषमुपलभामह इति॥ ६॥**

१ 'वृद्धिक्षयाभ्यामिति यथासंख्यमन्वयः, पञ्चमी च ल्यब्लोपे; तेन क्षीणानां धातूनां वृद्धिं विधाय साम्यमापादयति, अतिवृद्धानां च धातूनां क्षयं विधाय साम्यमापादयतीत्यर्थः। आहारमूलाभ्यामिति यथासंख्यं वृद्धक्षीणाहारकृताभ्यामित्यर्थः' इति शिवदाससेनः।

१ 'प्रतिपादितं रसक्रमेण' इति पा०। २ 'उत्सर्गिणः संशोषणार्हा इत्यर्थः' इति शिवदाससेनः।

दृश्यन्ते हि भगवन्नित्यादौ तथैवाहितसमाख्यातमुपयुञ्जाना व्याधिमन्तश्चागदाश्चेति संबन्धः। विशेषात्मकमिति विशेषोद्भवम् ॥ ६ ॥

**तमुवाच भगवानात्रेयः—न हिताहारोपयोगिनामग्निवेश! तन्निमित्ता व्याधयो जायन्ते, न च केवलं हिताहारोपयोगादेव सर्वव्याधिभयमतिक्रान्तं भवति, सन्ति ह्यृतेऽप्यहिताहारोपयोगादन्या रोगप्रकृतयः, तद्यथा—कालविपर्ययः, प्रज्ञापराधः, शब्दस्पर्शरूपरसगन्धाश्चासात्म्या इति। ताश्च रोगप्रकृतयो रसान् सम्यगुपयुञ्जानमपि पुरुषमशुभेनोपपादयन्ति; तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः। अहिताहारोपयोगिनां पुनः कारणतो न सद्यो दोषवान् भवत्यपचारः। न हि सर्वाण्यपथ्यानि तुल्यदोषाणि, न च सर्वे दोषास्तुल्यबलाः, न च सर्वाणि शरीराणि व्याधिक्षमत्वे समर्थानि भवन्ति। तदेव ह्यपथ्यं देशकालसंयोगवीर्यप्रमाणातियोगाद्भूयस्तरमपथ्यं संपद्यते। स एव दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गम्भीरानुगतश्चिरस्थितः प्राणायतनसमुत्थो मर्मोपघाती कष्टतमः क्षिप्रकारितमश्च संपद्यते। शरीराणि चातिस्थूलान्यतिकृशान्यनिविष्टमांसशोणितास्थीनि दुर्बलान्यसात्म्याहारोपचितान्यल्पाहाराण्यल्पसत्त्वानि च भवन्त्यव्याधिसहानि, विपरीतानि पुनर्व्याधिसहानि। एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणश्च भवन्ति। त एव वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभिनिर्वर्तयन्त्यग्निवेश! ॥ ७ ॥**

तन्निमित्ता इति हिताहारनिमित्ताः। न केवलमिति न परम्। रोगप्रकृतय इति रोगकारणानि। अहिताहारोपयोगिनामित्यादि। कारणत इति निमित्तान्तरात् प्रतिबन्धकात्; तच्च कारणं 'तदेव ह्यपथ्यं' इत्यादिवक्ष्यमाणग्रन्थविपरीतं बोद्धव्यम्। सद्य इति तत्कालम्। अनेनापथ्यस्य रोगजननं प्रति कालान्तरविकारकर्तृत्वं प्रायो भवतीति दर्शयति; अन्यथा सद्य इत्यनर्थकं स्यात्, कालान्तरेऽपि दोषाकर्तृत्वात्। दोषवानिति व्याधिजनकः। अपचार इति अहिताहारोपयोगः। उक्ते कारणमाह—नहीत्यादि। तुल्यदोषाणीति तुल्यदोषकराणि। व्याधिक्षमत्वं व्याधिबलविरोधित्वं व्याध्युत्पादप्रतिबन्धकत्वमिति यावत्। तदेवापथ्यतुल्यदोषतादि विवृणोति—तदेवेत्यादि। अत्र यद्यपि प्रस्तुतत्वादपथ्यप्रतिबन्धकानि कारणानि वक्तव्यानि, तथाऽपि समानन्यायतयाऽपथ्यशक्तिवर्धकान्युच्यन्ते। तत्र देशादीनां योगादिति अननुगुणदेशादियोगात्; यथा—व्रीहिः पित्तकर्तृत्वेनापथ्यः, स चानूपदेशयोगाद्भूयस्तरमपथ्यो भवति, धन्वदेशे तु हीनबलो भवति; तथा शरत्कालस्याननुगुणस्य योगाद्बलवान् भवति, हेमन्ते दुर्बलः; संयोगाद्यथा—स व्रीहिर्दधिफाणितादियुक्तो बलवान्, मध्वादियुक्तश्च दुर्बलः; वीर्याद्यथा—स एवोष्णीकृतो बलवान्, शीतस्तु दुर्बलः; स एव च प्रमाणातियोगाद्बली, हीनमात्रस्त्वबलः; इत्याद्यनुसर्तव्यम्। दोषतुल्यबलतामाह—स एव दोष इत्यादि। संसृष्टा मिलिता बहवो योनयः कारणानि यस्य स तथा, किंवा संसृष्टयोनिरिति अननुगुणदूष्यः; यथा–पित्तस्य रक्तं दूष्यमासाद्य कष्टत्वं क्षिप्रकारित्वं च भवति। विरुद्धोपक्रमो यथा—पित्तं मेहारम्भकं, वचनं हि—"पित्तमेहाः सर्वं एव याप्याः, विरुद्धोपक्रमत्वात्" (नि.अ.४)इति;विरुद्धता चोपक्रमस्यात्र यत् पित्तहरं मधुरादि तन्मेहप्रधानदूष्यमेदसो विरुद्धं, मेदोनुगुणं तु कट्वादि पित्ते विरुद्धमिति। गम्भीरानुगत इति गम्भीरमज्जादिधातुगतः; वचनं हि—"त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्" ( चि. अ. ३९ ) इति। चिरस्थित इति देहे चिरकालावस्थानेन कृतमूलत्वात् कष्टसाध्यः। प्राणायतनसमुत्थ इति अग्रेऽध्याये (सू. अ. २९) वक्ष्यमाणशङ्खादिदशप्राणायतनाश्रयी। मर्मोपघातीति प्राणायतनव्यतिरिक्तक्षिप्रतलहृदयादिमर्मोपघातकारी। मर्मघातित्वेनैव मर्मविशेषप्राणायतनसमुत्थत्वे लब्धे पुनस्तद्वचनं प्राणायतनमर्माश्रयिणो विशेषेण कष्टत्वप्रतिपादनार्थम्। कष्टतम इति बहुदुःखकर्तृत्वेनासाध्यत्वेन च। क्षिप्रकारितम इति आशुविकारकारितमः। चकारात् संसृष्टयोनित्वादिहेतूनामल्पत्वेन कष्ट-कष्टतर-क्षिप्रकारि-क्षिप्रकारितरादिविशेषाश्च भवन्तीति दर्शयति; यथोक्तसर्वहेतुमेलके कष्टतमः क्षिप्रकारितमश्च भवतीति ज्ञेयं, कष्टतमत्वादि च यथायोग्यतया ज्ञेयं; विरुद्धोपक्रमो दोषः कष्ट एव भवति न क्षिप्रकारी। व्याध्यक्षमशरीराण्याह—शरीराणि चेत्यादि। अनिविष्टानि श्लथानि मांसादीनि येषां शरीराणां तानि तथा; किंवा, अनिविष्टानीति विषमाणि। उपचितानीति संवर्धितानि; असात्म्यपुष्टं हि शरीरं भूरिदोषभावितमेव भवतीति भावः। विपरीतानीति अनतिस्थूलत्वादियुक्तानि। व्याधिसहानीति व्याध्युत्पादकप्रतिबन्धकानि। एतच्च शरीरमधिकृत्य वैपरीत्यं व्याधिसहत्वे उदाहरणार्थमुपन्यस्तं, तेन यथोक्तापथ्यबलवैपरीत्यं दोषबलवैपरीत्यं च न सद्यो व्याधिकारकं भवतीत्येतदप्युक्तं बोद्धव्यम्। एतदेवापथ्याहारदोषशरीराणामेवाबलवत्त्वबलवत्त्वाभ्यां लक्षणविशेषं यथायोग्यतया मृद्वादिव्याधिकारणत्वेनोपसंहरन्नाह—एभ्यश्चैवेत्यादि। विशेषा यथोक्ता उक्तविपरीताश्च; तत्रोक्तविपरीतविशेषान्मृदवस्तथा चिरकारिणश्च भवन्ति, यथोक्तापथ्यादिविशेषात्तु दारुणाः क्षिप्रकारिणश्च भवन्तीति मन्तव्यम्। अनेन प्रसङ्गेन वातादीनां रसादिस्थानविशेषेषु कुपितानां ये व्याधयो भवन्ति तान् दर्शयितुमाह—त एवेत्यादि ॥ ७ ॥

१ 'कारणविशेषतः' इति पा०। २ 'इत्यादिग्रन्थवक्ष्यमाणविपरीतं' इति पा०। ३ 'कालान्तरप्रतिवध्यमानस्याकालान्तरविकारकर्तृत्वं' इति पा०। ४ 'व्याधिबलविरोधकत्वं' इति पा०।

१ 'गुणवान्' इति पा०।

तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् स्थाने ये ये व्याधयः संभवन्ति तांस्तान् यथावदनुव्याख्यास्यामः ॥ ८ ॥

तत्र रसेत्यादौ प्रकुपितानां दोषाणामिति अनियमेन रसे कुपितो वायुर्वा पित्तं वा श्लेष्मा वा संसृष्टा वा अश्रद्धादीनि कुर्वन्ति। सत्यपि दोषभेदेऽत्राश्रयस्याभेदादाश्रयप्रभावेणैवाश्रद्धादयो भवन्ति, परं दोषभेदे अश्रद्धादावेव वातादिलिङ्गं विशिष्टं भवति। किंवा यथायोग्यतया रसाश्रयिणा वातादिना अश्रद्धादिकरणं बोद्धव्यं, यतो न गौरवं वातदुष्टरसे भवितुमर्हति; एतच्च नातिसुन्दरं, तेन पूर्व एव पक्षो ज्यायान् ॥ ८ ॥

अश्रद्धा चारुचिश्चास्यवैरस्यमरसज्ञता।
हृल्लासो गौरवं तन्द्रा साङ्गमर्दो ज्वरस्तमः[1] ॥ ९ ॥
पाण्डुत्वं स्रोतसां रोधः क्लैब्यं सादः कृशाङ्गता।
नाशोऽग्नेरयथाकालं वलयः पलितानि च ॥ १० ॥
रसप्रदोषजा रोगा,

अश्रद्धायां मुखप्रविष्टस्याहारस्याभ्यवहरणं भवत्येव परं त्वनिच्छा[2], अरुचौ तु मुखप्रविष्टं नाभ्यवहरतीति भेदः। आस्यवैरस्यम् उचितादास्यरसादन्यथात्वम्[3]। अरसज्ञता रसाप्रतिपत्तिः। सादः अङ्गावसादः ॥ ९ ॥ १० ॥—

वक्ष्यन्ते रक्तदोषजाः।
कुष्ठवीसर्पपिडका रक्तपित्तमसृग्दरः ॥ ११ ॥
गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोऽथ विद्रधिः।
नीलिका कामला व्यङ्गः पिप्लवस्तिलकालकाः ॥१२॥
दद्रुश्चर्मदलं श्वित्रं पामा कोठास्रमण्डलम्।
रक्तप्रदोषाज्जायन्ते,

रक्तप्रदोषजेषु कुष्ठग्रहणादेव दद्र्वादिलाभे सिद्धे पुनस्तद्वचनं विशेषप्रादुर्भावप्रदर्शनार्थम्। तिलकालकाः तिलाकृतयः। अस्रमण्डलं लोहितमण्डलम् ॥ ११ ॥ १२ ॥—

शृणु मांसप्रदोषजान् ॥ १३ ॥
अधिमांसार्बुदं कीलं गलशालूकशुण्डिके।
पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः ॥ १४ ॥
विद्यान्मांसाश्रयान्,

कीलशब्देनात्रार्श उच्यते ॥ १३ ॥ १४ ॥—

मेदःसंश्रयांस्तु प्रचक्ष्महे।
निन्दितानि प्रमेहाणां पूर्वरूपाणि यानि च ॥ १५ ॥

निन्दितानि प्रमेहपूर्वरूपाणीति केशजटिलत्वादीनि, तेषामेव निन्दितत्वात्; नत्वास्यवैरस्यमधुरत्वादीनि। किंवा, निन्दितानीति अतिस्थूलगतान्यायुर्ह्रासादीन्यष्टौनिन्दितीयोक्तानि, तेषां च निन्दितत्वं निन्दितातिस्थूलसंबद्धत्वेन। एवं पूर्वस्मिन् व्याख्याने 'यानि च' इति चकारो नियमे, उत्तरव्याख्याने तु समुच्चये ॥ १५ ॥

१ 'अङ्गमर्दो ज्वरस्तन्द्रा हृल्लासो गौरवं तमः' इति पा०। २ 'प्रथमं त्वनिच्छा' इति पा०। ३ 'उचितादाहारस्य रसादन्यथात्वम्' इति पा०।

अध्यस्थिदन्तौ[1] दन्तास्थिभेदशूलं विवर्णता।
केशलोमनखश्मश्रुदोषाश्चास्थिप्रदोषजाः ॥ १६ ॥

अध्यस्थिदन्तशब्देन अध्यस्थ्यधिदन्तयोर्ग्रहणम्। शूलमिति अस्थिशूलमेव बोद्धव्यम् ॥ १६ ॥

रुक् पर्वणां भ्रमो मूर्च्छा दर्शनं तमसस्तथा।
अरुषां स्थूलमूलानां[2] पर्वजानां च दर्शनम् ॥ १७ ॥
मज्जप्रदोषात्,

रुगित्यादि मज्जदोषाज्ज्ञेयम्। अरुंषीति व्रणानि ॥ १७ ॥—

शुक्रस्य दोषात् क्लैब्यमहर्षणम्।
रोगि वा क्लीवमल्पायुर्विरूपं वा प्रजायते ॥ १८ ॥
न चास्य जायते गर्भः पतति प्रस्रवत्यपि।
शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम् ॥ १९ ॥

क्लैब्यमिति ध्वजानुच्छ्रायः। अहर्षणं च सत्यपि ध्वजोत्थाने मैथुनाशक्तिः[3]। शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरमिति अत्रापत्यबाधा रोगिक्लीबाद्यपत्यजनकत्वेन, दारबाधा तु स्राविगर्भादिजनकत्वेन ॥ १८ ॥ १९ ॥

इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः।
उपघातोपतापाभ्यां योजयन्तीन्द्रियाणि ते ॥ २० ॥

उपघातेत्यादौ उपघातो विनाशः, उपतापस्तु किंचिद्वैकल्यम् ॥ २० ॥

स्नायौ सिराकण्डराभ्यो दुष्टाः[4] क्लिश्नन्ति मानवम्।
स्तम्भसंकोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः ॥ २१ ॥

कण्डराभ्य इति सप्तम्यर्थे पञ्चमी। खल्ली करपदावमोटनम्। ग्रन्थिः स्नाय्वादिग्रन्थिरेव ॥ २१ ॥

मलानाश्रित्य कुपिता भेदशोषप्रदूषणम्।
दोषा मलानां कुर्वन्ति सङ्गोत्सर्गावतीव च ॥ २२ ॥

मलानित्यादौ भेदशोषप्रदूषणमिति यथासंभवं ज्ञेयं; तत्र भेदः पुरीषस्य, शोषस्तु विशेषेण सर्वमलेषु संभवति, प्रदूषणं तु प्रदुष्टवर्णादियुक्तत्वेन प्राकृतवर्णाद्युपघातः। संगोत्सर्गावतीव चेति अतीव सङ्गः अप्रवृत्तिः, अत्युत्सर्गस्तु अतिप्रवृत्तिः ॥२२॥

विविधादशितात् पीतादहिताल्लीढखादितात्।
भवन्त्येते मनुष्याणां विकारा य उदाहृताः ॥ २३ ॥
तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान् सदा।
हितान्येवाशितादीनि न स्युस्तज्जास्तथाऽऽमयाः २४
रसजानां विकाराणां सर्वं लङ्घनमौषधम्।
विधिशोणितिकेऽध्याये रक्तजानां भिषग्जितम् २५

१ अधिशब्दस्यास्थिदन्ताभ्यां प्रत्येकमन्वयः, एवं भेदशब्दस्यापि दन्तास्थिभ्याम्' इति शिवदाससेनः। २ 'स्थूलमूलानां गम्भीरपरिणाहानाम्' इति शिवदाससेनः। ३ 'क्लैब्यमिति सत्यपि ध्वजोत्थाने मैथुनाशक्तिः, अहर्षणं तु ध्वजानुच्छ्रायः' इति पा०। ४ 'सिराकण्डरयोर्दुष्टा' इति पा०।

मांसजानां तु संशुद्धिः शस्त्रक्षाराग्निकर्म च ।
अष्टौनिन्दितिकेऽध्याये मेदोजानां चिकित्सितम् २६
अस्थ्याश्रयाणां व्याधीनां पञ्चकर्माणि भेषजम् ।
वस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च ॥ २७ ॥
मज्जशुक्रसमुत्थानामौषधं स्वादुतिक्तकम् ।
अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया ॥२८॥
शान्तिरिन्द्रियजानां तु त्रिमर्मीये प्रवक्ष्यते ।
स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके ॥ २९ ॥
नवेगान्धारणेऽध्याये चिकित्सासंग्रहः कृतः ।
मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित्क्वचित् ३०

संप्रत्यहिताहारजनितान् दोषान् दर्शयन् यथाकर्तव्यमुपदिशति—विविधादित्यादि । भिषग्जितम् 'उक्तम्' इति शेषः । पञ्चकर्माणीत्यभिधायापि वस्तय इति वचनं तिक्तोपहितवस्तेर्विशेषेण हितत्वोपदर्शनार्थम् । शुद्धिरिति वमनादिना । सिद्धिः प्रोक्ता क्वचिदिति अतीसारग्रहण्यादौ ॥ २३-३० ॥

व्यायामादूष्मणस्तैक्ष्ण्याद्धितस्यानवचारणात् ।
कोष्ठाच्छाखा मला यान्ति द्रुतत्वान्मारुतस्य च ३१
तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः ।
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः ॥ ३२ ॥

संप्रति रसादीनां शाखारूपत्वात् कोष्ठाश्रयिणो दोषा यथा शाखां यान्ति तदाह—व्यायामेत्यादि । तत्र व्यायामक्षोभात् कोष्ठं परित्यज्य शाखां मला यान्ति, ऊष्मणो वह्नेस्तीक्ष्णत्वाद्विलायिता दोषाः शाखां यान्ति, हितस्यानवचारणयाऽहितसेवयाऽतिसेवयाऽतिमात्रवृद्धो दोषो जलापूरवद्वृद्धः स्वस्थानमाप्लाव्य स्थानान्तरं यातीति युक्तम् । द्रुतत्वान्मारुतस्येति चलत्वाद्वायोर्वायुना क्षिप्तो यातीत्यर्थः; वाय्वन्तरेण च वायोराक्षेपणमुपपन्नमेवेति, अन्यथा मला इति बहुवचनमसाधु । अथ शाखागताः किं कुर्वन्तीत्याह—तत्रस्थाश्चेत्यादि । विलम्बन्ते कदाचिदिति कदाचिद्व्याधिकरणे विलम्बं कुर्वन्ति । कुतो विलम्बन्त इत्याह—न समीरिताः । ये दोषा अल्पत्वेनावलवन्तस्ते हेत्वन्तरेण समीरिताः सन्तः कुप्यन्ति; तथा त एव नादेश इत्यननुगुणदेशे, तथा नाकाल इत्यननुगुणकाले कुप्यन्तीति योजना । अत्रैव हेतुमाह—भूय इत्यादि । यस्माद्भूयो हेतुप्रतीक्षिणस्तेऽल्पबला दोषास्तस्मादीरणाद्यपेक्षन्ते; एतेन भूयो येऽहेतुप्रतीक्षिणो भवन्ति बलवत्त्वान्न ते ईरणाद्यपेक्षन्ते, अत एवोक्तं कदाचिदिति ॥ ३१ ॥ ३२ ॥

वृद्ध्या विष्यन्दनात् पाकात् स्रोतोमुखविशोधनात् ।
शाखा मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्॥

संप्रति शाखाभ्यः कोष्ठागमनहेतुं दोषाणामाह—वृद्ध्येत्यादि । विष्यन्दनादिति विलयनात्, विलीनश्च द्रवत्वादेव कोष्ठे निम्नं याति । पाकादिति पक्वो दोषोऽवद्धत्वेनैव निम्नं कोष्ठं याति[3] । स्रोतोमुखविशोधनादिति अवरोधकापगमात् । वायोर्निग्रहादिति क्षेप्तुर्वायोर्निग्रहात् प्राकृतं स्थानं कोष्ठं याति ॥ ३३ ॥

अजातानामनुत्पत्तौ जातानां विनिवृत्तये ।
रोगाणां यो विधिर्दिष्टः सुखार्थी तं समाचरेत् ॥३४॥
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
ज्ञानाज्ञानविशेषात्तु मार्गामार्गप्रवृत्तयः ॥ ३५ ॥

इदानीं सङ्क्षेपेणाखिलव्याधिप्रतीकारं सूत्रयति—अजातानामित्यादि । यो विधिर्दिष्ट इति कृत्स्ने तन्त्रे । ननु, यदि सुखार्था सर्वप्राणिनां प्रवृत्तिस्तत्कथं कोऽपि अमार्गे प्रवर्तेत इत्याह—ज्ञानेत्यादि । अज्ञानादेव सुखसाधनमिदमिति कृत्वा अपरीक्षकाः प्रवर्तन्ते, न तु दुःखकर्तृतासन्धानादिति भावः ॥ ३४ ॥ ३५ ॥

हितमेवानुरुध्यन्ते प्रपरीक्ष्य परीक्षकाः ।
रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः ॥ ३६ ॥
श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम् ।
वाग्विशुद्धिः शमो धैर्यमाश्रयन्ति परीक्षकम् ॥३७॥
लौकिकं नाश्रयन्त्येते गुणा मोहरजःश्रितम् ।
तन्मूला बहवो यन्ति रोगाः शारीरमानसाः ॥३८॥

हितमेवेति आयतिविशुद्धमेव तदात्वे दुःखकरमपि । प्रियमेवेति तदात्वे सुखकरमायतिविरुद्धम् । लौकिका अपरीक्षकाः । परीक्षकं स्तौति—श्रुतमित्यादि । परीक्षकमाश्रयन्तीति परीक्षके भवन्ति; किंवा, बुद्ध्यादिदेवताः परीक्षकमाश्रयन्ते, यदुक्तं—"विविद्बुद्धिर्ज्ञानदेवताः" ( सू. अ. १ ) इति । तन्मूला इति रजस्तमोमूलाः ॥ ३६ ॥ ३८ ॥

प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते ।
संधारयति वेगांश्च सेवते साहसानि च ॥ ३९ ॥

---

१ 'अष्टौनिन्दितसंख्याने' इति पा० । २ 'शाखा इति रसादिधातून्' इति शिवदाससेनः । 'शाखां' इति पा० । ३ 'पाकादिति पाकजनितलाघवात्, पक्वो हि दोषो लघुः सन् कोष्ठं याति' इति शिवदाससेनः ।

१ 'विधिर्दिष्टः' इति पा० । २ 'इदानीं संक्षेपेण निखिलव्याधिप्रतीकारं सूत्रयति–अजातानामित्यादि । यो विधिर्दिष्ट इति कृत्स्ने तन्त्रे । सुखार्थी आरोग्यार्थी । सुखस्य स्वतः पुरुषार्थत्वं दर्शयति–सुखार्था इत्यादि । एतेन निरुपाधीच्छाविषयत्वेन सुखस्य स्वतः पुरुषार्थत्वमित्यर्थः । नन्विदमसङ्गतम्, असुखसाधनेऽप्यसन्मार्गे जनप्रवृत्तिदर्शनादित्याह–ज्ञानाज्ञानेत्यादि । अत्र यथासंख्यमन्वयः; एतेन, असुखसाधनेऽसन्मार्गे 'सुखसाधनोऽयम्' इति भ्रमाद्रागाद्वा प्रवर्तते, न तु दुःखकर्तृतानुसन्धानादिति भावः' इति शिवदाससेनः । ३ 'हितमेवेत्यादि । परीक्षकाः सदसद्विवेचकाः प्रेक्षापूर्वककारिणः, हितमायतिविशुद्धमेवेति प्रपरीक्ष्य सम्यग् ज्ञात्वा, अनुरुध्यन्ते कामयन्ते; अनूपपदको हि रुधधातुः कामे वर्तते, वचनं हि 'अनुरुधः कामे' इति' इति शिवदाससेनः । ४ 'मोहतमःश्रितम्' इति पा० । ५ 'बहवश्चैव' इति पा० । ६ 'कथं पुनरपरीक्षके रजस्तमोमूला रोगा भवन्तीत्याह–प्रज्ञापराधादित्यादि । हि यस्मादज्ञोऽपरीक्षकः प्रज्ञापराधाद्रजस्तमोऽभिभूतबुद्धित्वादहितेन्द्रियार्थसेवादिं करोति, अतस्तन्मूला व्याधयो भवन्तीति भावः' इति शिवदाससेनः ।

तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ।
रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते ॥ ४० ॥

यथा अपरीक्षके रजस्तमोमूला रोगा भवन्ति तदाह—प्रज्ञापराधादित्यादि । अहितार्थसेवादि च रोगं करोतीति भावः । तदात्वसुखेष्विति वक्तव्ये, यत् 'सुखसंज्ञेषु' इति करोति, तत्तदात्वसुखस्यापथ्यस्य दुःखानुबन्धसुखकर्तृतया परमार्थतस्तदात्वेऽप्यसुखत्वं दर्शयति; यथा 'सुखसंज्ञकमारोग्यं' ( सू. अ. ९ ) इत्यत्रोक्तम् । विज्ञातेति परीक्षकः ॥ ३९ ॥ ४० ॥

न रागान्नाप्यविज्ञानादाहारानुपयोजयेत् ।
परीक्ष्य हितमश्नीयाद्देहो ह्याहारसंभवः ॥ ४१ ॥

न रागादित्यादि । अहितत्वेन जानन्नपि रागादेव कश्चिद्दुष्टः प्रवर्तते, अज्ञानाचाहितत्वाज्ञानादेव कश्चिद्धिताध्यवसायेन प्रवर्तते; एतद्द्वयमपि निषिध्यते ॥ ४१ ॥

आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः ।
शुभाशुभसमुत्पत्तौ तान् परीक्ष्य प्रयोजयेत् ॥ ४२ ॥

कथमाहारः परीक्ष्य इत्याह—आहारस्येत्यादि । आहारस्य विधौ विधानेऽष्टौ विशेषाः प्रकृतिकरणसंयोगादयो रसविमाने ( वि. अ. १ ) वक्तव्या हेतुसंज्ञकाः; क्व हेतुसंज्ञका इत्याह—शुभेत्यादि । शुभाशुभसमुत्पत्तौ इति ते च प्रकृत्यादयः शुभाः शुभकराः, अशुभा अशुभकराः, इति ज्ञेयम् ॥ ४२ ॥

परिहार्याण्यपथ्यानि सदा परिहरन्नरः ।
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः ॥ ४३ ॥
यत्तु रोगसमुत्थानमशक्यमिह केनचित् ।
परिहर्तुं न तत् प्राप्य शोचितव्यं मनीषिभिः ॥ ४४ ॥

ननु पथ्यसेवायां क्रियमाणायामपि बलवत्प्राक्तनाधर्मवशादपि व्याधयो भवन्ति, तत् किमनेन पथ्यसेवनेनेत्याह—परिहार्याणीत्यादि । अनृणतामिव प्राप्तोऽनृणतां प्राप्तः; एतेन परिहार्यपरिहारेण पुरुषकारेऽनपराधः पुरुषो भवतीति दर्शयति । यस्तु दैवागतस्तस्य व्याधिस्तत्र साधवो नैवं पथ्यसेविनं गर्हयन्ति, एतदेवाह—यत्त्वित्यादि । अशक्यं परिहर्तुमिति बलवत्कर्मजन्यत्वादित्यर्थः । न शोचितव्यमिति पुरुषकारस्य दैवजन्येऽवश्यंभाविनि व्याधावकिंचित्करत्वादित्यर्थः ॥ ४३ ॥ ४४ ॥

तत्र श्लोकाः—

आहारसंभवं वस्तु रोगाश्चाहारसंभवाः ।
हिताहितविशेषाच्च विशेषः सुखदुःखयोः ॥ ४५ ॥
सहत्वे चासहत्वे च दुःखानां देहसत्त्वयोः ।
विशेषो रोगसङ्घाश्च धातुजा ये पृथक्पृथक् ॥ ४६ ॥
तेषां चैव प्रशमनं कोष्ठाच्छाखा उपेत्य च ।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेत्य च ४७

१ 'दुःखानां व्याधीनाम्' इति शिवदाससेनः ।

प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितं च यत् ।
विविधाशितपीतीये तत् सर्वं संप्रकाशितम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सूत्रस्थाने विविधाशितपीतीयो नामाष्टाविंशोऽध्यायः ॥२८॥

इत्यन्नपानचतुष्कः ॥ ७ ॥

संग्रहे वस्त्विति शरीरम् । सहत्वे चासहत्वे चेत्यादिना 'शरीराणि चातिस्थूलानि' इत्यादि 'विपरीतानि पुनर्व्याधिसहानि' इत्यन्तं ग्रन्थं ज्ञापयति ॥ ४५—४८ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यव्याख्यायां सूत्रस्थाने अन्नपानचतुष्के विविधाशितपीतीयो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## ऊनत्रिंशोऽध्यायः ।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

संप्रत्यध्यायद्वयेऽवशिष्टे वक्तव्ये पूर्वाध्याये 'प्राणायतनसमुत्थः' इति प्राणायतनशब्दकीर्तनाद्दशप्राणायतनीय उच्यते; किंवा, अयं दशप्राणायतनीयः सूत्रस्थानोपसंग्रहः, शेषाध्यायस्तु सर्वतन्त्रसंग्रह इति पश्चादुच्यते । इयमप्यर्थपरा संज्ञा, न शब्दानुकारिणी । आयतनानीव आयतनानि, तदुपघाते प्राणोपघातात्, तन्नाशे च प्राणनाशादित्यर्थः । न प्राणस्य जीविताख्यस्य शरीरेन्द्रियसत्त्वात्मसंयोगरूपस्य शङ्खादय एव परमाशयाः, तस्य कृत्स्नशरीराद्याश्रयत्वात् ॥ १ ॥ २ ॥

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः ।
शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम् ॥ ३ ॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयान् ।
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते ॥४॥

मर्मत्रयमिति हृदयबस्तिशिरांसि । तानीति शङ्खादीनि । विज्ञानं बुद्धिः । चेतनाहेतुः आत्मा, चेतनासमवायिकारणत्वात्; किंवा चेतनाशब्देनात्मा, हेतुशब्देन तु व्याधीनां जनको हेतुर्निदानरूपस्तथा शमको हेतुर्भेषजरूप उच्यते; आमयशब्देन च लिङ्गमुच्यते । तेन, आध्यात्मिकानीन्द्रियादीनि बाह्यानि च हेतुलिङ्गौषधानि यो जानीत इत्युक्तं भवति; एतावच्चैतच्छास्त्रं यत्—आध्यात्मिकानीन्द्रियाणि तथा हेतुलिङ्गौषधानि च । प्राणाभिसरा महाचतुष्पादे उक्ताः ॥ ३ ॥ ४ ॥

द्विविधास्तु खलु भिषजो भवन्त्यग्निवेश ! प्राणा-

१ 'इत्युक्तं' इति पा० । २ 'प्रतिष्ठिता नियताः' इति शिवदाससेनः । ३ 'विज्ञायतेऽनेनेति विज्ञानं निदानपूर्वरूपरूपोपशयसंप्राप्तिरूपम्' इति शिवदाससेनः । ४ 'संप्रति सूत्रस्थानार्थसंग्रहं दर्शयितुं भूमिकां रचयति—द्विविधा इत्यादि । अभिसराः प्रत्यावर्तकाः' इति शिवदाससेनः ।

नामेकेऽभिसरा हन्तारो रोगाणां, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति ॥ ५ ॥

सर्वचिकित्साया वैद्याधीनत्वेन यादृशो वैद्य उपादेयो यादृशश्चानुपादेयस्तद्दर्शनकौशलात् सूत्रस्थानार्थसंग्रहं दर्शयति—द्विविधा इत्यादि । रोगाणामभिसरा इति रोगाणामानेतारः ॥५॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—भगवंस्ते कथमस्माभिर्वेदितव्या भवेयुरिति ॥ ६ ॥

भगवानुवाच—य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञाश्च ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणां; तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः, सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानां च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषज्ञाने व्यपगतसंदेहाः, त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः, पञ्चत्रिंशतो मूलफलानां चतुर्णां च स्नेहानां पञ्चानां च लवणानामष्टानां च मूत्राणामष्टानां च क्षीराणां क्षीरत्वग्वृक्षाणां च षण्णां शिरोविरेचनादेश्च पञ्चकर्माश्रयस्यौषधगणस्याष्टाविंशतेश्च यवागूनां द्वात्रिंशतश्चूर्णप्रदेहानां षण्णां च विरेचनशतानां पञ्चानां च कषायशतानां प्रयोक्तारः, स्वस्थवृत्तविहितभोजनपाननियमस्थानचङ्क्रमणशयनासनमात्राद्रव्याञ्जनधूमनावनाभ्यञ्जनपरिमार्जनवेगाविधारणविधारणव्यायामसात्म्येन्द्रियपरीक्षोपक्रमणसद्वृत्तकुशलाः, चतुष्पादोपगृहीते च भेषजे षोडशकले सविनिश्चये सत्रिपर्येषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः, चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयस्योपकल्पनीयस्य चतुःषष्टिपर्यन्तस्य च व्यवस्थापयितारः, बहुविधविधानयुक्तानां च स्नेह्यस्वेद्यवम्यविरेच्यविविधौषधोपचाराणां च कुशलाः, शिरोरोगादेर्दोषांशविकल्पजस्य च व्याधिसंग्रहस्य सक्षयपिडकाविद्रधेस्त्रयाणां च शोफानां बहुविधशोफानुबन्धानामष्टचत्वारिंशतश्च रोगाधिकरणानां चत्वारिंशदुत्तरस्य च नानात्मजस्य व्याधिशतस्य तथा विगर्हितातिस्थूलातिकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णां च लङ्घनादीनामुपक्रमाणां संतर्पणापतर्पणजानां च रोगाणां सरूपप्रशमनानां शोणितजानां च व्याधीनां मदमूर्च्छायसंन्यासानां च सकारणरूपौषधोपचाराणां कुशलाः, कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या हिताहितानामाहारविकाराणामग्र्यसंग्रहस्यासवानां च चतुरशीतेर्द्रव्यगुणकर्मविनिश्चयस्य रसानुरससंश्रयस्य सविकल्पवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानस्य सगुणप्रभावस्य सानुपानगुणस्य नवविधस्यार्थसंग्रहस्याहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणां च रोगाणां सौषधसंग्रहाणां दशानां च प्राणायतनानां यं च वक्ष्याम्यर्थेदशमहामूलीये त्रिंशत्तमाध्याये तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्मकार्यकालकर्तृकरणकुशलाः, कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्यात्मनः शीलगुणैरविसंवादनेन च संपादनेन सर्वप्राणिषु चेतसो मैत्रस्य मातापितृभ्रातृबन्धुवत्, एवंयुक्ता भवन्त्यग्निवेश! प्राणानामभिसरा हन्तारो रोगाणामिति ॥ ७ ॥

प्रतिपत्तिज्ञा इति तदात्वे कर्तव्यज्ञाः । शरीराभिनिर्वृत्तिज्ञानं यथा शरीरं शुक्रशोणितसंयोगादिभ्य उपजायते, तथा ज्ञानम् । प्रकृतिविकारज्ञानं सांख्यनयेन शारीरे वक्ष्यमाणम् । त्रिविधस्यायुर्वेदसूत्रस्येति "हेतुलिङ्गौषधज्ञानं" (सू. अ. १) इत्यस्य । इतः प्रभृति च तन्त्रोद्देशलक्षणस्येत्यन्तेन सूत्रस्थानार्थसंग्रहो यथाक्रममनुसारणीयः । ससंग्रहव्याकरणस्येति "सामान्यं च विशेषं च" ( सू. अ. १ ) इत्यादिना दीर्घञ्जीवितीये संग्रहः, व्याकरणं च "सामान्यमेकत्वकरं" ( सू. अ. १ ) इत्यादि । सत्रिपर्येषणेति एषणात्रययुक्ते । नवविधस्येति "चरः शरीरावयवाः" (सू. अ. २७ ) इत्यादेः । आहारगतेरिति "विविधमशितं पीतं" (सू. अ. २८ ) इत्यादिना । तन्त्रोद्देशलक्षणस्येति तत्र तन्त्रोद्देशः "अष्टौ स्थानानि" ( सू. अ. ३० ) इत्यादिना, तन्त्रलक्षणं तु आयुषो वेदस्य च यन्निरुक्तौ लक्षणं वक्ष्यति । अत्र स्थानार्थज्ञाने कौशलमभिधायान्यथाप्याह—तन्त्रस्येत्यादि । गृहीतस्योत्तरकालस्मरणं धारणं, विज्ञानम् अर्थतो ज्ञानं, प्रयोगः चिकित्साप्रयोगः, कर्म अनेकधा चिकित्साकरणं, कार्यं धातुसाम्यं, कालः क्रियाकालः, कर्तेह भिषक्, करणं भेषजम् । शास्त्रयुक्तिः शास्त्रयोजना । युक्तिज्ञानस्येति कुशलयोगात् करणे षष्ठी । आत्मन इत्यादि ।—आत्मनः शीलगुणैः करणभूतैः

१ 'श्रुतं शास्त्रं ज्ञानं वा, जितहस्ता लघुहस्ताः, जितात्मान इति जितेन्द्रियाः, प्रकृतिः कारणम्' इति शिवदाससेनः । २ 'सत्रिविधौषधग्रामस्येति ग्रामशब्दः समूहवचनः, प्रवक्तार इत्यस्य सर्वैः पष्ठ्यन्तैः प्रत्येकमन्वयः' इति शिवदाससेनः । ३ 'स्वस्थवृत्तावपि च भोजन०' इति पा० । ४ 'चतुर्विंशत्युपनयस्येति उपनयो विचारणाः' इति शिवदाससेनः । ५ 'चतुःषष्टिपर्यन्तस्येति रसभेदेन चतुःषष्टिसंख्यापर्यन्तोऽवधिर्यस्य, चतुःषष्टिसंख्याकरसस्येत्यर्थः' इति शिवदाससेनः ।

१ 'श्रवणग्रहणविज्ञान०' इति पा० । २ 'एवमुक्ताः' इति पा० । ३ 'संग्रहः सङ्कलय्य कथनं, व्याकरणं च विवरणम्' इति शिवदाससेनः ।

मातृपितृबन्धुवत् सर्वप्राणिषु चेतसो मैत्र्यस्य संपादनेन तथा अविसंवादनेन च कुशला इति ग्रन्थसंबन्धो बोद्धव्यः ॥६॥७॥

अतो विपरीता रोगाणामभिसरा हन्तारः प्राणानां, भिषक्छद्मप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपकसधर्माणो राज्ञां प्रमादाच्चरन्ति राष्ट्राणि ॥ ८ ॥

तेषामिदं विशेषविज्ञानं भवति—अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्मलोभात्, श्रुत्वा च कस्यचिदातुर्यमभितः परिपतन्ति, संश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति, यश्चास्य वैद्यः प्रतिकर्म करोति तस्य च दोषान्मुहुर्मुहुरुदाहरन्ति, आतुरमित्राणि च प्रहर्षणोपजापोपसेवादिभिरिच्छन्त्यात्मीकर्तुं, स्वल्पेच्छुतां चात्मनः ख्यापयन्ति, कर्म चासाद्य मुहुर्मुहुरवलोकयन्ति दाक्ष्येणाज्ञानमात्मनः प्रच्छादयितुकामाः, व्याधिं चापावर्तयितुमशक्नुवतो व्याधितमेवानुपकरणमपरिचारकमनात्मवन्तमुपदिशन्ति, अन्तगतं चैनमभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मनः कृत्वा, प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्णयन्ति, अधीरवच्च धैर्यमपवदन्ति धीराणां, विद्वज्जनसन्निपातं ( चाभिसमीक्ष्य ) प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्, यश्चैषां कश्चित् सूत्रावयवो भवत्युपयुक्तस्तमप्रकृते प्रकृतान्तरे वा सततमुदाहरन्ति, न चानुयोगमिच्छन्त्यनुयोक्तुं वा, मृत्योरिव चानुयोगादुद्विजन्ते, न चैषामाचार्यः शिष्यः सब्रह्मचारी वैवादिको वा कश्चित् प्रज्ञायत इति ॥ ९ ॥

भिषक्छद्मचरो वञ्चनार्थकृतभिषग्वेशः । प्रतिरूपकः अन्यथारूपकारी द्रोहकारक (?) इत्युच्यते लोके[3] । राज्ञां प्रमादादिति राज्ञा हि ते कुवैद्याः शासनीयाः । विशिखा रथ्या, किंवा कर्ममार्गः । संश्रवणे चास्येति आतुरस्य श्रवणयोरग्रे प्रदेशे । अन्तगतमिति मुमूर्षुम् । अपदेशं व्याजम् । अकुशलवदिति यथा अकुशलाः परस्परविरुद्धमात्मकौशलं वर्णयन्ति तथेत्यर्थः । अधीरवदिति उच्चाटरवाः सन्तः । उपयुक्त इति ज्ञातः । अनुयोगं पृच्छाम् ॥ ८ ॥ ९ ॥

भवन्ति चात्र—

भिषक्छद्म प्रविश्यैवं व्याधितांस्तर्कयन्ति ये ।
वीतंसमिव संश्रित्य वने शाकुन्तिका द्विजान् ॥१०॥

श्रुतदृष्टक्रियाकालमात्राज्ञानवहिष्कृताः ।
वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि ॥ ११ ॥
वृत्तिहेतोर्भिषग्मानपूर्णान् मूर्खविशारदान् ।
वर्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥ १२ ॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः ।
जितहस्ता जितात्मानस्तेभ्यो नित्यं कृतं नमः ॥१३॥

तत्र श्लोकः—

दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः ।
द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च ॥ १४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने दशप्राणायतनीयो नामोनत्रिंशोऽध्यायः ॥ २९ ॥

वीतंसः पक्षिबन्धनम् । श्रुतं शास्त्रे श्रवणम् । दृष्टं कर्मदर्शनम् । क्रिया चिकित्साज्ञानं, ज्ञानं शास्त्रजन्यं, श्रुतं तु श्रवणमात्रम् । तेभ्यो नित्यं कृतं नम इत्यनेन प्राणाभिसरं स्तौति ॥ १०—१४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थाने दशप्राणायतनीयो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

अथातोऽर्थेदशमहामूलीयमध्यायं व्याख्यास्यामः १
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पारिशेष्यात् किंवा सूत्रस्थानमभिधाय तन्त्रसंग्रहं वक्तुमर्थेदशमहामूलीय उच्यते । अत्र 'अधिकृत्य कृते ग्रन्थे' ( ४।३।८७ ) इत्यनुवर्तमाने "अध्यायानुवाकयोर्लुक् च" (५।२।६०) इति च्छः ॥ १ ॥ २ ॥

अर्थे दश महामूलाः समासक्ता महाफलाः ।
महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः ॥ ३ ॥
षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।
आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संश्रितम् ॥४॥

अर्थे इति हृदये, महामूला इति महद्धृदयं मूलं यासां धमनीनां तास्तथा, समासक्ता इत्याश्रिताः । तस्य हृदयस्य पर्यायानाह—महच्चे-ादि । महत्संज्ञा तथा अर्थसंज्ञा च हृदयस्य वैद्यव्यवहारसिद्धा न सर्वत्र शास्त्रान्तरेषु । हृदयस्य यथा यन्महत्त्वं यथा वा अर्थ्यमानत्वेनार्थत्वं तद्धृदयस्याभ्यर्हितत्वात् । अभ्यर्हितत्वमाह— षडङ्गमित्यादि । षडङ्गानि बाहुद्वयजङ्घाद्वयशिरोन्त-

---

१ 'भिषक्छद्मसु प्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपेण, इत्युक्तधर्माणो राज्ञां प्रमादादेव चरन्ति राष्ट्राणि' इति पा० । २ 'अपचारिकं' इति पा० । ३ 'प्रतिरूपेण ब्रह्मचार्यादिवेशेन चरन्तीति प्रतिरूपका धर्मध्वजिनः' इति शिवदाससेनः ।

१ 'तत्र हृदयाश्रितव्याधीनां शीघ्रं प्रतिकर्तव्यतां बोधयितुं सर्वावयवापेक्षया हृदयस्य प्राधान्यमाह— अर्थे इत्यादि । हृदये समासक्ताः प्रसक्ता महामूला धमन्यो दशैतन्वयः । महद्धृदयं मूलं यासामिति विग्रहः । महदर्थयोरर्थं स्पष्टयति—महच्चार्थश्चेत्यादि । अर्थ्यते उपादीयतया याच्यत इत्यर्थः' इति शिवदाससेनः । २ 'सिराः सक्ता' इति पा० ।

राधिरूपाणि यस्य तत् षडङ्गमङ्गम्। अङ्गं च षडङ्गादतिरिक्तं समुदायरूपमवयविरूपं वा। अङ्गमिति वक्तव्ये षडङ्गविशेषणं षण्णामङ्गानामपि हृदयाश्रितत्वप्रतिपादनार्थं; किंवा, अङ्गशब्दस्यावयववाचिनो निषेधार्थम्। विज्ञानं च यद्यपि 'आत्मा च सगुणः' इति वचनादेव आत्मगुणत्वेन लब्धं, तथाऽप्यात्मगुणेषु प्राधान्यात् पुनः पृथगुच्यते; वचनं हि "सुखं समग्रं विज्ञानं विसर्गे च प्रतिष्ठितम्" इति। इन्द्रियाणि चक्षुरादीनि पञ्च। अर्थपञ्चकं शब्दादि। सगुण इत्यनेन सुखादिग्रहणम्। चेतः मनः। चिन्त्यं मनोविषयः। एते च षडङ्गविज्ञानादयः प्रति प्रति पठिताः प्रत्येकमेवोपादेयत्वेन; तेनात्र कस्यचिदर्थलब्धत्वेनोपादानं कर्तव्यमिति नोद्भावनीयम्, अर्थलब्धो ह्यर्थः साक्षादनभिधीयमानत्वादप्रधानं भवति ॥ ३ ॥ ४ ॥

**प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते।**
**गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ॥ ५ ॥**
**तस्योपघातान्मूर्च्छायं भेदान्मरणमृच्छति।**

अथ कथममी षडङ्गादयो हृदयाश्रयाः, यावता "हृदयं द्यङ्गुलं" (वि.अ. ८) इति वक्ष्यति, अङ्गं च षडङ्गाश्रयं महत्, इन्द्रियाण्यपि च स्वाश्रयचक्षुरादिस्थितानि, अर्थाश्च बाह्यद्रव्याश्रयिणः, आत्मा चानाश्रित एव व्यापकः, तद्गुणश्च विज्ञानमात्मन्येवाश्रितं, मनोऽप्यनाश्रितमात्मगतं, चिन्त्यं च ध्येयादि न हृदि, इत्याशङ्क्याह–प्रतिष्ठेत्यादि।—प्रतिष्ठा कार्यकरणाविरोधेनावस्थानम्। भावानामेषामिति षडङ्गादीनाम्। हृदयमिष्यते 'कारणम्' इति शेषः। अत्रैव दृष्टान्तमाह–गोपानसीनामित्यादि। गोपानस्यः गृहाच्छादनाधारकाष्ठानि। आगारकर्णिका गृहाच्छादनमध्ये गृहाच्छादनकाष्ठनिबन्धनी लोके 'आडकम्' इत्युच्यते। अर्थचिन्तकैरिति हृदयचिन्तकैः। तेन, षडङ्गादीनां हृदयाश्रितत्वं नाधाराधेयभावेन, किं तर्हि तदन्वयव्यतिरेकानुविधायित्वेनेति दर्शितं भवति। हृदयाश्रितत्वं हृदये प्रकृतिस्थे षडङ्गादिभावानां प्रकृतिस्थत्वं, हृदयोपघाते तदुपघात इत्यर्थः। यद्यपि च, आत्मविज्ञानमनसां हृदयाश्रितत्वमाधाराधेयभावादपि कष्टसृष्ट्या पार्यते वक्तुं, तथाऽपि सर्वव्यापकत्वान्नोपादेयमाधारधेयत्वम्। नैवम्, आत्मा ह्यत्र संसारी भोगायतनत्वेनाभिप्रेतः, स च हृदयप्रदेश एव सुखदुःखाद्युपलभत इत्यनुभवसिद्धं, तेन हृदयाश्रित इवात्मा। तथा मनोऽपि प्रायेण हृद्येव तिष्ठति, यत उपरतक्रियं मनो हृद्येव तिष्ठति, तथा ध्याने योगे च हृदिस्थमेव मनो भवति। यदप्युक्तम्–"आत्मस्थे मनसि स्थिरे" (शा. अ. १) इति, तदप्यात्मस्थत्वं मनसो हृदयस्थत्वमेव। एवं ज्ञानसुखदुःखानि च हृदयस्थान्येव लक्ष्यन्ते, तथा ह्यतिचिन्तनात्तथा दुःखावेशाद्वा हृदयमेव पीड्यते, नान्यदङ्गम्। भवत्वनेनाव्यापकेनाश्रयाश्रयिभावेन व्युत्पादितेन। तमेव हृदयोपघाते षडङ्गादिभावोपघातमाह—तस्योपघातादित्यादि। तस्येति हृदयस्य। उपघातः किञ्चिदुपहननम्। भेदादिति महोपघातात्। मरणं च षडङ्गादीनां सर्वेषामेव यथोक्तप्रतिष्ठानाश इति भावः ॥५॥—

**यद्धि तत् स्पर्शविज्ञानं धारि तत्तत्र संश्रितम् ॥ ६ ॥**
**तत् परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः।**
**हृदयं महदर्थश्च तस्मादुक्तं चिकित्सकैः ॥ ७ ॥**

कथमेतद्भवतीत्याह—यद्धीत्यादि। स्पर्शो विज्ञायतेऽनेनेति स्पर्शं वा विजानातीति स्पर्शविज्ञानं; तस्यैव विशेषणं—धारीति, धारि तु शरीरेन्द्रियसत्त्वात्मसंयोगः; यदुक्तं—"शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्" ( सू. अ. १ ) इति; एतेन यः शरीरादिसंयोगः स्पर्शनेन विजानाति सर्वं ज्ञेयं, यश्चायं शरीरधारणाद्धारीत्युच्यते, स हृदि स्थितः। तेन, तदुपघातान्मूर्च्छा तथा तद्भेदान्मरणं चैतन्यानुवृत्तिलक्षणमुपपन्नम्। स्पर्शो हि द्विविध ऐन्द्रियको मानसश्च, एतत्स्पर्शद्वयं विना न किंचिज्ज्ञानं भवति; यदुक्तं—"यश्चैवैन्द्रियकः स्पर्शः स्पर्शो मानस एव च। द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः" ( शा. अ. १ ) इति। मानसं च स्पर्शनं शारीरे यथास्थानमेव दर्शयिष्यामः। स्पर्शो विज्ञायत इति निरुक्तिपक्षे तु स्पर्शशब्देन लक्षणया स्पृश्यमानोऽर्थोऽभिप्रेतः, तेन सर्वज्ञेयावरोधः; यं प्राप्यैवार्थमिन्द्रियाणि स्पर्शेनार्थं प्रकाशयन्ति, यदुक्तं—"स्पृश्यते नानुपादानो नाऽस्पृष्टो वेत्ति वेदनाः" ( शा. अ. १ ) इति। यद्यपि शरीरेन्द्रियसत्त्वात्मसंयोगः शरीरप्रदेशान्तरेऽप्यस्ति, तथाऽपि नासौ शरीरधारणे तथा ज्ञानोत्पत्तौ वा प्रधानं, तदुपघातेऽपि शरीरधारणज्ञानयोर्दृष्टत्वात्; हृद्गतस्तु संयोगः प्रधानं, तदन्वयव्यतिरेकानुविधायित्वात् स्पर्शज्ञानशरीरधारणयोः; तेन सूक्तं—तत्तत्र संश्रितमिति। हृदयाभ्यर्हितत्वे धर्मान्तरमाह—तत् परस्येत्यादि। परस्य

१ 'आत्मा च सगुण इत्यत्र गुणशब्देन विज्ञानातिरिक्त आत्मगुणो गोबलीवर्दन्यायेनाभिधीयते, एवमिन्द्रियाणीत्यनेनापि मनोभिन्नमिन्द्रियमुच्यते; एतच्च विज्ञानमनसोः सजातीयेषु प्राधान्यख्यापनार्थं पृथग्बोध्यम्' इति शिवदाससेनः। २ 'श्रुतिप्रतिपठिताः' इति पा०। ३ 'ननु यद्यप्यात्मनो विभुत्वेन नाधेयत्वमुक्तं, तथाऽपि लिङ्गशरीरावच्छिन्नस्य साङ्ख्यस्वीकृतस्य जीवात्मनो हृदयाश्रितत्वमुपचारेण शक्यते वक्तुम्, एवमात्मगुणस्यापि हृदयाश्रितत्वं परंपरयाऽपि शक्यतेऽभिधातुं, मनसोऽपि प्रायशो हृदय एवावस्थितिरिति तस्यापि हृदयाश्रितत्वमस्तु, एवमतिचिन्तया हृदयमेव पीड्यते नान्यदङ्गमिति दर्शनात्तस्यापि हृदयाश्रितत्वं यथाकथंचिदुपपद्यतां नाम; षडङ्गादीनां तु हृदयाश्रितत्वं कथमपि नोपपद्यते, यःवता 'हृदयं द्यङ्गुलम्' इति वक्ष्यति, षडङ्गाश्रयमङ्गं च महदिति, इन्द्रियाण्यपि चक्षुरादीनि हृदयाऽपेक्षया नितरां विप्रकृष्टानि, अर्थाश्च शब्दादयो बाह्यद्रव्याश्रयिण इत्याशङ्कां निराचिकीर्षुराह—प्रतिष्ठार्थमित्यादि' इति शिवदाससेनः। ४ 'कार्यकारणाविरोधेन' इति पा०। ५ 'गृहाच्छादनधारककाष्ठानि' इति पा०।

१ 'अलमात्मनो व्यापकस्याश्रयाश्रयिभावेन व्युत्पादितेन। यश्चात्मा संसारी हृदयाश्रितो भवति तस्यैव हृदयनाशान्नाश इति भावः' इति पा०। २ 'चिकित्सिते' इति पा०। ३ 'इन्द्रियाण्यसदर्शनार्थं' इति पा०।

श्रेष्ठस्य। एतेन द्विविधमोजो दर्शयति—परमपरं च; तत्राञ्जलिपरिमाणमपरं, यदुक्तं—"तावदेव परिमाणं श्लैष्मिकस्यौजसः" (शा. अ. ७) इति; अल्पप्रमाणं तु परं, यदभिप्रेत्योक्तं—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्" (सू. अ. १७) इति, तत्रान्तरेऽप्युक्तं—"प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रिताः" इति; किंच, सति हि परे चापरे चौजसि 'परस्य' इति विशेषणं सार्थकं भवति, नत्वेकरूपे। अर्धाञ्जलिपरिमितस्यौजसो धमन्य एव हृदयाश्रिताः स्थानम्। तथा प्रमेहेऽर्धाञ्जलिपरिमितमेवौजः क्षीयते नाष्टबिन्दुकम्, अस्य हि किंचित्क्षयेऽपि मरणं भवति; प्रमेहे तु ओजःक्षये जीवत्येव तावत्; ओजःक्षयलक्षणमप्यर्धाञ्जल्योजःक्षय एव बोद्धव्यम्। ओजःशब्दश्च यद्यपि रसेऽपि वर्तते, यदुक्तं—"रसश्चौजसंख्यातः" (नि. अ. ४) इति, तथा "मलीभवति तत् प्रायः कल्पते किंचिदोजसे" (चि. अ. ८) इति; तथाऽपीह सर्वधातुसारमोजोऽभिधीयते। एतच्चौज उपधातुरूपं केचिदाहुः; धातुर्हि धारणपोषणयोगाद्भवति, ओजस्तु देहधारकं सदपि न देहपोषकं, तेन नाष्टमो धातुरोजः। केचित्तु शुक्रविशेषमोजः प्राहुः, तच्च न मनः प्रीणाति। ये तु ब्रुवते—सर्वधातूनां सारसमुद्यभूतमोजः, ते रसादिसाररूपतया रसादिभ्योऽभिन्नमोज इति पृथग्धातुत्वेनोपधातुत्वेन वा न निर्देश्यमिति पश्यन्ति; वचनं च—"भ्रमरैः फलपुष्पेभ्यो यथा संचीयते मधु। तद्वदोजः शरीरेभ्यो गुणैः संभ्रियते नृणाम्" (सू. अ. १७) इति; अत्र शरीरेभ्य इति धातुभ्यः, गुणैरिति सारभागैः। तत्र चैतन्यसंग्रह इति तत्र हृदि आत्मा चैतन्यस्य स्वविषये प्रसृतस्य संग्रहणं करोति, तेन प्रसृतं मनो हृदये निगृह्य योगज्ञो भवत्यात्मेत्युक्तं भवति; ततश्च योगस्य मोक्षसाधनत्वेनोपादेयस्यापि हृदयमेव स्थानमिति हृदयमभ्यर्हितं भवति। यस्मादेवंगुणं हृदयम्, अतो हृदयं 'महद्' इति च, तथा 'अर्थ' इति चोच्यते चिकित्सकैः ॥ ६ ॥ ७ ॥

**तेन मूलेन महता महामूला मता दश।**
**ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ॥८॥**

संप्रति धमनीनां महामूलत्वं प्रतिपादयति—तेनेत्यादि। तेनेति हृदयेन महता, 'युक्ताः' इति शेषः। विधम्यन्ते विसर्पन्ते ॥८॥

**येनौजसा वर्तयन्ति प्रीणिताः सर्वदेहिनः।**
**यदृते सर्वभूतानां जीवितं नावतिष्ठते ॥ ९ ॥**
**यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः।**
**संवर्तमानं हृदयं समाविशति यत् पुरा ॥ १० ॥**
**यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्।**
**यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः ॥ ११ ॥**
**तत्फला बहुधा वा ताः फलन्तीव (ति) महाफलाः।**

संप्रति धमनीनामुक्तं महाफलत्वं व्युत्पादयन्नाह—येनौजसेत्यादि। येनौजसेति सामान्येन द्विविधमप्योजो ग्राह्यम्। वर्तयन्ति जीवन्ति, वर्तयन्तीति चौरादिको णिच्। प्रीणिता इति तर्पिताः। यत् सारमादौ गर्भस्येति शुक्रशोणितसंयोगे जीवाधिष्ठितमात्रे यत् सारभूतं, तत्रापि तिष्ठति। यत्तद्गर्भरसाद्रस इति गर्भरसाच्छुक्रशोणितसंयोगपरिणामेन कललरूपात्, रस इति सारभूतम्। संवर्तमानं हृदयं समाविशति यत् पुरेति यदा हृदयं निष्पद्यमानं, तदैव व्यक्तलक्षणं सद्धृदयमधितिष्ठति यदित्यर्थः। एतेन, गर्भावस्थात्रयेऽपि तदोजस्तिष्ठतीत्युच्यते; परं गर्भादौ शुक्रशोणितसाररूपतया, कललावस्थायां तु रससाररूपतया, अवयवनिष्पत्तौ तु स्वलक्षणयुक्तमेव भवत्योज इत्योजसः सर्वावस्थाव्यापकत्वेन महत्त्वमुच्यते। यस्य नाशात्तु नाशोऽस्तीति धात्वन्तराक्षयेऽपि सत्योजःक्षये मरणमित्यर्थः। धारीति जीवधारकसंयोगिभ्यः प्रधानत्वात्। शरीररसस्नेह इति शरीरसारसारं; रसशब्दः स्नेहशब्दश्च सारवचनः, तेन शरीररसानां धातूनामपि सार इत्यर्थः। एतच्च प्रकारान्तरेणाभ्यर्हितानेककर्मकथनमोजसोऽभ्यर्हितत्वख्यात्यर्थम्। तत्फला ओजःफला ओजोवहा इति यावत्। एतेन, यथोक्तगुणशालित्वेनौजो महत्; एतद्वहनेनैव फलन्तीवेति महाफला धमन्य उक्ताः। द्वितीयां निरुक्तिमाह—बहुधा वा ताः फलन्तीति, 'ता हृदयाश्रिता दश धमन्यो बहुधा अनेकप्रकारं फलन्तीति निष्पद्यन्ते; एतेन, मूले हृदये दशरूपाः सत्यो महासंख्याः शरीरे प्रतानभेदाद्भवन्तीत्युक्तम् ॥ ९–११ ॥—

**ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्सिराः १२**

धमनीशब्दादिनिरुक्तिमाह—ध्मानादित्यादि। ध्मानात् पूरणाद् वाय्वेन रसादिनेत्यर्थः। स्रवणादिति रसादेरेव पोष्यस्य स्रवणात्। सरणाद् देशान्तरगमनात् ॥ १२ ॥

**तन्महत् ता महामूलास्तच्चौजः परिरक्षता।**
**परिहार्या विशेषेण मनसो दुःखहेतवः ॥ १३ ॥**
**हृद्यं यत् स्याद्यदौजस्यं स्रोतसां यत् प्रसादनम्।**
**तत्तत् सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च ॥ १४ ॥**

१ 'संग्रहं संवरणं' इति पा०। २ 'विधम्यन्ते विसर्प्यन्ते', किंवा विधम्यन्ते पूर्यन्ते 'वाय्वेन धातुना' इति शेषः' इति शिवदाससेनः। ३ 'सर्वजन्तवः' इति पा०। ४ 'योऽसौ' इति पा०। ५ 'संवर्धमानं' इति पा०। ६ 'समाविशति यत् पुनः' इति कविराजश्रीगणनाथसेनसंमतः पाठः, युक्तश्चायं; भेले(डे)ऽपि पठ्यते—"हृदो रसो निःसरति तत एव च सर्वतः। सिराभिर्हृदयं चैति तस्मात्तत्प्रभवाः सिराः" (भे. सू. अ. २०) इति।

१ 'यस्मान्नाशान्न नाशोऽस्ति' इति पा०। २ 'धारीति जीवाधिष्ठितं लिङ्गशरीरं, तदेव शरीरधारकत्वाद्धारिशब्देनोच्यते; किंवा, जीवितधारकत्वादोज एव धारिशब्दार्थ उच्यते। यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितमिति एतेन यस्मान्निखिलपदार्थज्ञानहेतुभूतं मनो हृदि संश्रितं तिष्ठति, तस्मात्तदुपघातभेदाभ्यां मनोजीवितयोरप्युपघातभेदाविति मूर्च्छा मरणं चोपपन्नमित्यर्थः। यद्यपि मनोजीविताश्रयत्वेन हृदयमुक्तमेव, तथाऽपि तदुपघातस्य मूर्च्छामरणहेतुत्वप्रदर्शनार्थं पुनरुक्तमिति मन्तव्यम्' इति शिवदाससेनः। ३ 'विविधाः' इति पा०। ४ 'तद्बलेन' इति पा०। ५ 'रसस्यैव पोषकस्य स्रवणात्' इति पाठो युक्तः। ६ 'सरणात् अवयवान्तरगमनात्' इति पा०।

संप्रति हृदिस्थस्य मनसः परिपालनहेतुमाह—तन्महदित्यादि। तन्महदिति षडङ्गादिस्थानं हृदयम्। ता महामूला इति ओजोवहा धमन्यः। तच्चौज इति येनौजसेत्यादिनोक्तगुणमोजः। प्रशमः शान्तिः। ज्ञानं तत्त्वज्ञानम्॥ १३॥ १४॥

**अथ खल्वेकं प्राणवर्धनानामुत्कृष्टतममेकं बलवर्धनानामेकं बृंहणानामेकं नन्दनानामेकं हर्षणानामेकमयनानामिति। तत्राहिंसा प्राणिनां प्राणवर्धनानामुत्कृष्टतमं, वीर्यं बलवर्धनानां, विद्या बृंहणानाम्, इन्द्रियजयो नन्दनानां, तत्त्वावबोधो हर्षणानां, ब्रह्मचर्यमयनानामिति; एवमायुर्वेदविदो मन्यन्ते॥ १५॥**

सेव्यप्रस्तावेन प्राणवर्धनाद्युत्कृष्टान्यहिंसादीन्यप्याह—अथ खल्वित्यादि। एकमिति एकमेव, न द्वितीयमुत्कृष्टतममस्तीत्यर्थः। अयनानामिति मार्गाणाम्। यद्यप्यन्नं प्राणवर्धनं तथाऽप्यहिंसैवोत्कृष्टा, अहिंसया हि धर्मजननोत्तत्कृतमविचाल्यं भवति। यद्यपि मांसं बृंहणप्रधानं, तथाऽपि तच्छरीरमात्रबृंहणं, विद्या तु शरीरमनोबृंहणीयाऽतिरिच्यते॥ १५॥

**तत्रायुर्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः। तत्राह—कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽर्थावयवशश्चोक्तानि भवन्तीति॥ १६॥**

**अत्रोच्यते—तन्त्रमार्षं कार्त्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम्॥ १७॥**

**बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनैर्युक्ताभिस्त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तम्॥ १८॥**

**तन्त्रनियतानामर्थदुर्गाणां पुनर्विभावनैरुक्तमर्थावयवशो भवत्युक्तम्॥ १९॥**

आयुर्वेदश्रवणप्रसङ्गेनायुर्वेदनिरुक्त्याऽऽयुषस्तथाऽऽयुर्वेदस्य च निरूपकं प्रकरणं ब्रूते—तत्रेत्यादि। वाक्यश इत्यादि स्वयमेव व्याकरिष्यति। आर्षम् ऋषिकृतम्। तन्त्रं शास्त्रम्। यथाम्नायमुच्यमानमिति यथापाठक्रमेणोच्यमानम्। उदाहरणं दृष्टान्तः; उपनयः सिद्धान्तोपपादितस्य साधनधर्मस्य साध्ये पुनः कथनं, यथा—तथा चायं धूमवानिति; निगमनं हेतुसाधितसाध्यधर्मकथनं, यथा—तस्मादग्निमानिति। तन्त्रनियतानामिति तन्त्रगतानाम्। विभावनैरुक्तमिति व्याख्यानैः कथनम्; उक्तमिति भावे 'क्तः'। अस्योदाहरणं यथा—"शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी" ( सू. अ. ७ ) इत्यत्र 'इष्टा या चेष्टा' इत्येतावन्मात्रमुच्यते, तेन द्वितीयचेष्टापदस्य दुर्गस्य व्याकरणं परं भवति॥ १६-१९॥

**तत्र चेत् प्रष्टारः स्युः—चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः?, किमायुः?, कस्मादायुर्वेदः?, किमर्थमायुर्वेदः?, शाश्वतोऽशाश्वतो वा?, कति कानि चास्याङ्गानि?, कैश्चायमध्येतव्यः?, किमर्थं च? इति॥ २०॥**

इदानीमायुर्वेदविदः प्रश्नैनैव निर्णेतव्या इत्यतः प्रश्नानाह—तत्र चेदित्यादि। कं वेदमुपदिशन्ति 'आयुर्वेदम्' इति शेषः॥ २०॥

**तत्र भिषजा पृष्टेनैवं चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या, वेदो ह्याथर्वणो दानस्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह; चिकित्सा चायुषो हितायोपदिश्यते॥ २१॥**

अथर्ववेदे भक्तिः सेवेत्यर्थः; एतेन भिषक्सेव्यत्वेनाथर्ववेदस्यायुर्वेदत्वमुक्तं भवति। आयुर्वेदस्याथर्ववेदाभेदहेतुमाह—वेदो हीत्यादि। एतेनैकप्रयोजनत्वादथर्ववेदैकदेश एवायुर्वेद इत्युक्तं भवति॥ २१॥

**वेदं चोपदिश्यायुर्वाच्यं; तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेत्येकोऽर्थः॥ २२॥**

प्रश्नक्रमेण वेदं प्रतिपाद्यायुरेव प्रतिपादनीयं भवतीत्याह—वेदं चोपदिश्येत्यादि। चेतनानुवृत्तिरिति चैतन्यसन्तानः; एतच्च गर्भावधिमरणपर्यन्तं बोद्धव्यं, तदूर्ध्वं चेतनानानुवृत्तेः; साक्षादनुपलब्धत्वेनैवानवृत्तिरिति भावः। न च वाच्यं प्रसुप्तस्य चैतन्यविच्छेदो भवतीति, यतस्तत्रापि 'सुखमहमस्वाप्सम्' इत्युत्तरकालीनप्रतिसन्धानदर्शनात् सूक्ष्मज्ञानमस्त्येव। यद्यपि दीर्घजी-

---

१ 'नियमानाम्' इति पा०। २ 'वीर्यम् उत्साहः। विद्या योगविद्या। नन्दनानामिति श्रेयःसमृद्धिजननानाम्। अयनानामिति मोक्षसाधनमार्गाणाम्' इति शिवदाससेनः। ३ 'धर्मजननात्तयाऽऽयुर्वर्धनं' इति पा०। ४ 'साध्यधर्मवत्त्वेन पक्षकथनं प्रतिज्ञा, यथा—आयुर्वेदो नित्य इति। हेतुः तत्साधकवचनं, यथा—अनादित्वादिति। उदाहरणं दृष्टान्तः, यथा—आत्मवदिति। उपनयो नाम साधनधर्मवत्त्वेन पुनः पक्षकथनं, यथा आत्मा अनादिस्तथा चायमिति। निगमनं तु पुनर्हेतुसाधितस्य साध्यस्य पक्षनिष्ठतया कथनं, यथा—तस्मान्नित्यः' इति शिवदाससेनः। ५ '°पुरुषबुद्धिगम्याभिः' इति पा०। 'त्रिविधशिष्यबुद्धिगम्याभिरिति उत्तममध्यमाधमशिष्यबुद्धिगम्याभिः' इति शिवदाससेनः। ६ 'तन्त्रनियतार्थानां' इति पा०।

१ 'सिद्धान्तव्युत्पादितस्य' इति पा०। २ 'अवयवश इत्यस्यार्थमाह—तन्त्रनियतानामित्यादि। अत्रापि तन्त्रमार्षमिति संबध्यते, तन्त्रनियतानां तन्त्रगतानाम्। दुःखेन गम्यन्ते बुध्यन्ते इति दुर्गाः, दुर्गार्थानामिति दुर्गाश्च ते अर्थाश्चेति तेषां, विभावनैः प्रकाशनैः, तन्त्रस्थितानां दुर्बोधार्थानां यत् पुनः प्रकाशनानि तैरुक्तं व्याख्यातं तन्त्रमवयवश उक्तं भवतीत्यर्थः। अस्योदाहरणं यथा—'शरीरचेष्टा या चेष्टा', 'इष्टा या चेष्टा' इति विभज्योक्ते सति द्वितीयचेष्टापदस्यार्थः प्रकाशितो भवतीति, एवमन्यदप्युन्नेयम्' इति शिवदाससेनः। ३ 'चादिदय' इति पा०।

वितीये शरीरादिसंयोग आयुरित्युक्तं, तथाऽपि तत्कार्यत्वादिह चैतन्यानुवृत्तिः कार्यकारणयोरभेदविवक्षया आयुरुच्यते । अनुबन्धधारिशब्दौ प्रथमाध्याये व्याकृतौ ॥ २२ ॥

**तदायुर्वेदयतीत्यायुर्वेदः; कथमिति चेत्? उच्यते—स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतश्च; यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयत्यतोऽप्यायुर्वेदः । तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥ २३ ॥**

कस्मादायुर्वेदः? इत्यस्योत्तरं—तदायुरित्यादि । वेदयति बोधयति । ये त्वत्र तन्त्रान्तरे विदेर्लाभादयोऽर्था व्याख्याताः, ते न साक्षात्तदर्थजन्या इतीह नोक्ताः । स्वलक्षणत इत्यादि स्वमयैवोदाहरिष्यति । आयुष्यानायुष्ये आयुःकारणत्वेन आयुःशब्देन वक्तव्ये, तेनायुष्यानायुष्यवेदपक्षे गौणी निरुक्तिः 'आयुर्वेदः' इति; अत एवात्र अपिशब्दः कृतः—अतोऽप्यायुर्वेद इति । अनायुष्यमपि च ज्ञातमसेव्यत्वेनाव्यवह्रियमाणमायुःकारणं भवत्येव, तेनानायुष्यमप्यायुःकारणतया आयुःशब्दवाच्यं, नात्रापराधः ॥ २३ ॥

**तत्रायुरुक्तं स्वलक्षणतो यथावदिहैव पूर्वाध्याये च । तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्ययशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदये वर्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते; असुखमतो विपर्ययेण; हितैषिणः पुनर्भूतानां परस्वादुपरतस्य सत्यवादिनः शमपरस्य परीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुपसेवमानस्य पूजार्हसंपूजकस्य ज्ञानविज्ञानोपशमशीलस्य वृद्धोपसेविनः सुनियतरागरोषेर्ष्यामदमानवेगस्य सततं विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमिमं चामुं चावेक्षमाणस्य स्मृतिमतिमतो हितमायुरुच्यते; अहितमतो विपर्ययेण ॥ २४ ॥**

इहैवेति 'तत्रायुश्चेतनानुवृत्तिः' इत्यादिना । तत्र शारीरेत्यादिना सुखमायुरभिधत्ते । पौरुषम् उत्कृष्टं कर्म । ज्ञानविज्ञानेन्द्रियैर्बलशब्दः, इन्द्रियार्थेन च समुदयशब्दः संबध्यते; किंवा ज्ञानादिभिः सर्वैरेव समुदयशब्दः संबध्यते; किंवा ज्ञानादिभिः सर्वैरेव 'बलसमुदये' इति योज्यं; बलस्य समुदयो बलसमुदयः । परमा अत्यर्था ऋद्धिर्यस्य स परमर्द्धिः । समृद्धा निष्पादितसाध्याः सर्वारम्भा यस्य स तथा । हितैषिणो भूतानामिति संबन्धः । तत्परस्येति अध्यात्मपरस्य, अध्यात्मम् आत्मादिस्वरूपम् । अमुं चेति परलोकम् ॥ २४ ॥

**प्रमाणमायुषस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां विकृतिलक्षणैरुपलभ्यतेऽनिमित्तैः, अयमस्मात् क्षणान्मुहूर्तोद्दिवसात्त्रिपञ्चसप्तदशद्वादशाहात् पक्षान्मासात् षण्मासात् संवत्सराद्वा स्वभावमापत्स्यत इति; तत्र स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध इत्येकोऽर्थः; इत्यायुषः प्रमाणम्; अतो विपरीतमप्रमाणमरिष्टाधिकारे; देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणमायुर्वेदे ॥ २५ ॥**

**प्रयोजनं चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनं च ॥ २६ ॥**

विकृतिरूपैर्लक्षणैः विकृतिलक्षणैः; तेषामेव विशेषणम्—अनिमित्तैः; आकस्मिकैः अरिष्टैरित्यर्थः; अनिमित्ता हि विकृतिरर्थेन्द्रियाणामरिष्टम् । तत्रार्थविकृतिर्यथा—"नानापुष्पोपमगन्धो यस्य वाति दिवानिशम्" ( इं. अ. २ ) इत्यादि, इन्द्रियविकृतिर्यथा—"यश्च पश्यत्यदृश्यान्" ( इं. अ. ४ ) इत्यादि, मनोविकृतिर्यथा—"यैः पुरा विन्दते भावैः समेतैः परमां रतिम् । तैरेवारममाणस्य ग्लास्नोर्मरणमादिशेत्" ( इं. अ. ८ ) इति, बुद्धिविकृतिर्यथा—"बुद्धिर्बलमहेतुकम्" इत्यादि, चेष्टाविकृतिर्यथा—"विकर्षन्निव यः पादौ च्युतांसः परिधावति" ( इं. अ. १२ ) इत्यादि । आदिग्रहणात् परिजनविकृत्यादयो ज्ञेयाः । अत्र च रिष्टप्रस्तावे क्षणादिवर्षान्तकालकथनं वर्षादूर्ध्वं रिष्टजन्यमरणाभावात् । अतो विपरीतमप्रमाणमिति रिष्टहीनं न निश्चितप्रमाणमायुररिष्टाधिकार इत्यर्थः । अन्यदपि चायुःप्रमाणज्ञानमाह—देहप्रकृतीत्यादि[2] । देहश्च प्रकृतिश्च लक्षणं च देहप्रकृतिलक्षणम् । तत्र देहमधिकृत्यायुःप्रमाणं यथा—"सर्वैः सारैरुपेताः" इत्यारभ्य यावत् "चिरजीविनश्च भवन्ति" (वि. अ. ८) इति; प्रकृतितो यथा—"श्लेष्मिका बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता आयुष्मन्तश्च भवन्ति" ( वि. अ. ८ ) इति; लक्षणतो यथा—"तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि भवन्ति" ( शा. अ. ८ ) इत्यादि । किंवा, देहस्य सहजलक्षणं देहप्रकृतिलक्षणं, तच्च सर्वं सारप्रकृत्यादिलक्षणं बोद्धव्यम् ॥ २५ ॥ २६ ॥

**सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादि-**

१ 'तत्रायुर्वेदयति' इति पा० । २ 'असेव्यत्वेन व्यवह्रियमाणं' इति पा० । ३ 'आयुःकारणतानाम्नाऽऽयुःशब्दवाच्यमित्यनपराधम्' इति पा० । ४ 'यच्च सुखादितस्तत्र' इति पा० । योगीन्द्रनाथस्तु 'तत्र' इति न पठति । ५ 'सामपरस्य' इति पा० ।

१ 'प्रमाणाप्रमाणमायुर्वेदे' इति पा० । २ 'न केवलमरिष्टाधिकारेऽरिष्टमात्रमधिकृत्यायुषः प्रमाणमुपदिष्टं, देहादिकमधिकृत्यापि विमाने उपदिष्टमित्याह—देहप्रकृतिलक्षणमित्यादि' इति शिवदाससेनः । ३ 'इदानीं किमायुर्वेदः शाश्वतोऽशाश्वतो वेति प्रश्नस्योत्तरमाह—सोऽयमित्यादि । शाश्वत इति अपौरुषेयः । अनादित्वादिति संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृत्वात्, आत्मवदित्यर्थः । न च कल्पादौ हिरण्यगर्भ एवेमं प्रणीतवानित्यसिद्धो हेतुरिति वाच्यं, यतः "यो ब्रह्माणं विदधाति

त्वात्, स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च । न हि नाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा, शाश्वतश्चायुषो वेदिता, अनादि च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात् । एष चार्थसंग्रहो विभाव्यते आयुर्वेदलक्षणमिति । गुरुलघुशीतोष्णस्निग्धरूक्षादीनां द्रव्याणां सामान्यविशेषाभ्यां वृद्धिह्रासौ, यथोक्तं—गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनां, एवमेवेतरेषामिति, एष भावस्वभावो नित्यः, स्वलक्षणं च द्रव्याणां पृथिव्यादीनां; सन्ति तु द्रव्याणि गुणाश्च नित्यानित्याः । न ह्यायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यते, अन्यत्रावबोधोपदेशाभ्याम्; एतद्वै द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके । स्वाभाविकं चास्य लक्षणमकृतकं, यदुक्तमिहाद्येऽध्याये च; यथा-अग्नेरौष्ण्यम्, अपां द्रवत्वम् । भावस्वभावनित्यत्वमपि चास्य, यथोक्तं—गुरुभिरभ्यस्यमानैर्गुरूणामुपचयो भवत्यपचयो लघूनामिति ॥ २७ ॥

अनादित्वादिति हेतुत्रयमत्र । प्रथमस्य विवरणं-न हीत्यादि । इह व्यवहारनित्यत्वमायुर्वेदे साध्यं, तच्चार्थरूपस्यायुर्वेदस्य न शब्दरूपस्य; किंवा, व्यवहारनित्यायुर्वेदार्थाभिधायकस्यायुर्वेदस्य पारंपर्ययोगान्नित्यत्वं साध्यते । तत्रायुषस्तावदायुर्वेदप्रतिपाद्यस्य नित्यत्वम् । न हि नाभूत् कदाचिदायुःसन्तान इति सर्वदैवायुरपरापरसन्तानन्यायेन विद्यते, आयुर्युक्तानां प्राणिनामनुच्छेदादित्यर्थः । एवं बुद्धिसन्तानोऽपि नहि कदाचिन्नाभूदिति योजना । एतेन तस्यापि सन्तानेन नित्यस्यायुषो वेदनमपि नित्यम् । शाश्वतश्चायुषो वेदितेति अनेनायुर्वेदवेदितृनित्यत्वमुक्तम् । एतेन वेद्यवेदनवेदितॄणामनादित्वादायुर्वेदस्य नित्यत्वम् । न चायुःस्वरूपेणैवायुर्वेदविषयः, किं तर्हि रोगादिगृहीतमित्याह—अनादि चेत्यादि । सुखदुःखमिति आरोग्यं सुखं, व्याधिर्दुःखम् । सद्रव्यहेतुलक्षणमिति सहेतुचिकित्सितलिङ्गम् । हेतुशब्दो हि द्रव्यशब्देनैव व्याधिकारणस्योक्तत्वात् प्रशमहेतुमाह; केचित्तु 'सहेतुलक्षणम्' इति पठन्ति, तत्रापि हेतुशब्देन जनकः शमकश्च रोगहेतुर्वाच्यः; यदि वा सुखहेतुर्भेषजं दुःखहेतुश्च निदानमिति ज्ञेयं, लक्षणं च व्याध्यारोग्ययोरुभयोरपि; एतेन दुःखं तावत् कदाचिदप्यजिहासितं न भवति, जिहासितमनुपायं न भवति, उपायश्चायुर्वेद एव, स च सर्वदुःखपरिहारार्थमुपादेयः; तस्माद्दुःखप्रशमनोपायोपदेशरूपायुर्वेदस्यानादितेति भावः । एवं सुखस्य नित्योपादेयस्यानादित्वं ज्ञेयं, तदुपायस्यायुर्वेदस्य च । कथमनादि सुखदुःखमित्याह—अपरापरयोगादिति; सन्तानादित्यर्थः । स्वभावसंसिद्धलक्षणत्वं द्वितीयं हेतुमाह—एष चेत्यादि । एष इति आयुर्बुद्धिवेदितृसुखदुःखानि । अर्थसंग्रहः अभिधेयसंग्रहः; एतेन आयुरादिरायुर्वेदप्रतिपाद्य इति दर्शयति । अयं चायुरादिरत्रायुर्वेदलक्षणमिति विभाव्यते ज्ञायत इत्यर्थः । आयुरादिनाऽभिधेयेनायुर्वेदो लक्ष्यते, वचनं हि—"हिताहितं सुखं दुःखं" (सु. अ. १) इत्याद्यायुर्वेदलक्षणम् । एतेन, आयुरादेरर्थस्यायुर्वेदलक्षणस्यानादितया यथोक्तया स्वभावसंसिद्धलक्षणत्वं व्याकृतं भवति । स्वभावसंसिद्धमिति सर्वदा सन्तानन्यायेन सिद्धत्वमभिप्रेतम् । भावस्वभावनित्यत्वादिति तृतीयं हेतुं व्याकरोति—गुर्वित्यादि । गुरुलघुस्निग्धरूक्षशीतोष्णादीनां द्रव्याणां सामान्यविशेषाभ्यां यथाक्रमं वृद्धिह्रासौ भवतः । तदेव पूर्वोक्तं घटयति—गुरुभिरित्यादिना एवमेवेतरेषामित्यन्तेन । एवमेवेतरेषामिति लघुभिरभ्यस्यमानैर्लघूनामुपचयो भवति, अपचयो गुरूणामित्यादि द्रष्टव्यम् । एष इत्येवंप्रकारः; भावस्वभावो नित्य इति नैष सामान्यविशेषाभ्यां वृद्धिह्रासरूपो भावस्वभावः कदाचिदन्यथा भवतीत्यर्थः । न केवलमयं भावस्वभावो नित्यः, किंतर्ह्यन्योऽपीत्याह-स्वलक्षणं चेत्यादि । स्वलक्षणं पृथिव्यादीनां खरद्रवत्वादि । कथं पृथिव्यादिस्वलक्षणं नित्यमित्याह—सन्ति त्वित्यादि । द्रव्याणि यस्मात् सर्वदा सन्ति, गुणाश्च नित्याः सन्ति सर्वदा, चकाराद्द्रव्याणि चानित्यानि सन्ति । तत्राकाशादि द्रव्यं नित्यं, पृथिव्यादि कार्यं चानित्यम् । एवंगुणा आकाशपरिमाणादयो नित्याः, अनित्याश्च कार्यगुणा रसादयः, अनित्या अपि च सजातीयापरापरसन्तानन्यायेन सर्वदा तिष्ठन्तीति युक्तमनित्यानामपि सन्ताननित्यत्वमिति भावः । अत्र भावस्वभावनित्यत्वेन हेतुना भावस्वभावस्य व्याधिजनकस्य तथा व्याधिप्रशमकस्य नित्यत्वेन तत्प्रतिपादकस्यायुर्वेदस्यापि नित्यत्वमुक्तं भवतीति मन्तव्यम् । अथायुर्वेदस्य यत्र तत्रोत्पत्तिश्रवणात् कथं नित्यत्वमित्याह-न ह्यायुर्वेदस्येत्यादि । अभूत्वोत्पत्तिः पूर्वमसत उत्पत्तिः । अन्यत्रावबोधोपदेशाभ्यामिति यत्र यत्रायुर्वेदस्योत्पत्तिरुक्ता, तत्र तत्रावबोधादुपदेशाद्वा; अवबोधादुत्पत्तिर्यथा—ब्रह्मण आयुर्वेदोत्पत्तिः, उपदेशाच्चोत्पत्तिर्यथा—इन्द्रोपदेशाद्भरद्वाजेन

---

पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेर्न हिरण्यगर्भकृतत्वं वेदस्येति । न च शब्दत्वेन वेदस्यापि पौरुषेयत्वं साध्यं, शब्दस्यानित्यत्वात्; किमत्र प्रमाणमिति चेत्, मीमांसका एव पर्यनुयोज्याः, अस्माकं पुनरार्द्रकवणिजां वहित्रजलचिन्तया प्रयोजनं नास्तीति । ये तु द्विविधो ह्यायुर्वेदः शब्दरूपोऽर्थरूपश्च; तत्राद्यः कृतकत्वादनित्य एव, अर्थरूपस्तु नित्य एवेत्याहुः; तेषामायुर्वेदस्य नित्यत्वमर्धशौचन्यायमवगाहते' इति शिवदाससेनः ।

१ 'नैवाभूत्' इति पा० । 'इदानीं संप्रदायाविच्छेदं दर्शयितुमायुर्वेदस्य सन्ताननित्यतामाह—नहीत्यादि । अयं भावः—अनादौ संसारे आयुर्युक्तानां प्राणिनामनुच्छेदात् सर्वदैवायुरपरापरसन्तानन्यायेन विद्यते, ततश्चायुर्वेदोपकार्यस्यायुःसन्तानस्यानादित्वात्तदुपकरणायुर्वेदेनापि तथा भवितव्यं, नह्युपकरणाभावे उपकार्यत्वं संभवतीति । न हि नाभूत् कदाचिदायुःसन्तान इति न्यायेनायुर्वेदाभिधेयस्यायुःसन्तानस्य नित्यत्वेन तदभिधायकस्यापि नित्यत्वमिति वर्णयन्ति' इति शिवदाससेनः । २ 'यत् पुनर्गुरुलघु०' इति पा० ।

१ 'स्वभावसंसिद्धं हि सर्वदा सन्तानन्यायेन सिद्धमभिप्रेतम्' इति पा० । २ 'एतदेव पूर्वोक्तं द्रढयति-एवमेवेतरेषामिति' इति पा० ।

मर्त्यलोके आयुर्वेद उत्पादित इत्यादि । एतद्द्वयमिति अवबोधोपदेशौ । ननु, स्वभावसंसिद्धलक्षणत्वादिति यो हेतुरुक्तः, तत्र स्वाभाविकं च लक्षणं भविष्यत्यनित्यं च, यथा—घटे कम्बुग्रीवाकारतादि, न हि तत् स्वाभाविकमपि घटस्य नित्यतां साधयतीत्याह—स्वाभाविकं चेत्यादि । अकृतकमिति नासदादिनैा कृतम् । यदुक्तमिह—'स्वलक्षणतः सुखासुखतः' इत्यादिना, आद्ये चाध्याये दीर्घञ्जीवितीये "हिताहितं सुखं दुःखं" (सू. अ. १) इत्यादिना । अत्रैवाकृतकत्वे दृष्टान्तमाह—यथाऽग्नेरौष्ण्यमित्यादि । एतेन स्वलक्षणस्याकृतकत्वेन व्यवहारनित्यत्वात्तत्प्रतिपादकस्यायुर्वेदस्यापि व्यवहारनित्यत्वमिति भावः । न केवलं स्वाभाविकं लक्षणमकृतकं, किं तर्हि भावस्वभावनित्यत्वमपि न केनचिदीश्वरादिना कृतमित्याह—भावस्वभावनित्यत्वमपि चेति; अकृतकमिति चकारेणानुकर्षति । तदेव भावस्वभावनित्यत्वं दर्शयति—यथोक्तमित्यादि । सामान्यविशेषकृतवृद्धिह्रासकारकौ(णो)ऽपि भावस्वभावो न केनचित् कृत इत्यर्थः, ततश्चायुर्वेदोऽपि नित्यः ॥ २७ ॥

**तस्यायुर्वेदस्याङ्गान्यष्टौ; तद्यथा—कायचिकित्सा, शालाक्यं, शल्यापहर्तृकं, विषगरवैरोधिकप्रशमनं, भूतविद्या, कौमारभृत्यकं, रसायनं, वाजीकरणमिति ॥ २८ ॥**

संप्रति कानि चेत्यादिप्रश्नस्योत्तरं—तस्येत्यादि । कायस्यान्तरग्नेश्चिकित्सा कायचिकित्सा । पटलवेधशलाकाप्रधानमङ्गं शालाक्यम् । गरः कालान्तरप्रकोपि विषं, वैरोधिकं संयोगविरुद्धम् । भूतानां राक्षसादीनां ज्ञानार्था प्रशमार्था च विद्या भूतविद्या । कुमारस्य भरणमधिकृत्य कृतं कौमारभृत्यम् ॥ २८ ॥

**स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः । तत्रानुग्रहार्थं प्राणिनां ब्राह्मणैः, आरक्षार्थं राजन्यैः, वृत्त्यर्थं वैश्यैः; सामान्यतो वा धर्मार्थकामपरिग्रहार्थं सर्वैः । तत्र यदध्यात्मविदां धर्मपथस्थानां धर्मप्रकाशकानां वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने प्रयत्नवान् भवति, यच्चायुर्वेदोक्तमध्यात्ममनुध्यायति वेदयत्यनुविधीयते वा, सोऽस्य परो धर्मः; या पुनरीश्वराणां वसुमतां वा सकाशात् सुखोपहारनिमित्ता भवत्यर्थावाप्तिरारक्षणं च, या च स्वपरिगृहीतानां प्राणिनामातुर्यादारक्षा, सोऽस्यार्थः; यत् पुनरस्य विद्वद्ग्रहणयशः शरण्यत्वं च, या च संमानशुश्रूषा, यच्चेष्टानां विषयाणामारोग्यमाधत्ते सोऽस्य कामः । इति यथाप्रश्नमुक्तमशेषेण ॥ २९ ॥**

आरक्षार्थं राजन्यैरिति क्षत्रियस्य परिपालनधर्मत्वात् । अनुध्यायति मनसा चिन्तयति । वेदयतीति अन्यस्य प्रतिपादयति । अनुविधीयत इति तदनुगुणं देहेनानुतिष्ठति । आरक्षणम् आत्मादिरक्षणम् । स्वपरिगृहीतानामिति भृत्यादीनाम् । विद्वद्ग्रहणमेव यशः विद्वदुपादेयताजन्यं यश इत्यर्थः । इष्टानामिति वनिताद्दीनाम् २९

**अथ भिषगादित एव भिषजा प्रष्टव्योऽष्टविधं भवति—तन्त्रं, तन्त्रार्थान्, स्थानं, स्थानार्थान्, अध्यायम्, अध्यायार्थान्, प्रश्नं, प्रश्नार्थांश्चेति; पृष्टेन चैतद्वक्तव्यमशेषेण वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति ॥ ३० ॥**

भिषक्परीक्षार्थं पृच्छाविधिमाह—अथेत्यादि ॥ ३० ॥

**तत्रायुर्वेदः शाखा विद्या सूत्रं ज्ञानं शास्त्रं लक्षणं तन्त्रमित्यनर्थान्तरम् ॥ ३१ ॥**

१ 'अववोधमुपदेशं च' इति पा० । २ 'नान्येनेश्वरादिना' पा० । ३ "कायचिकित्सेति यद्यपि सुश्रुते शल्यमेव प्रथमतो निर्दिष्टं, तथाऽप्यस्य तन्त्रस्य कायचिकित्साप्रधानत्वादग्रे तन्निर्देश इति ज्ञेयम् । कायः सकलं शरीरं, तस्य चिकित्सा, प्रायेण रसादेः सर्वाङ्गव्यापकस्य दोषादेव ज्वरातीसाररक्तपित्तादयः संभवन्ति; किंवा, कायति शब्दं करोतीति कायो जाठराग्निः, अङ्गुलीपिहिते कर्णयुगले 'घूकू' इति शब्दश्रवणात्तारस्थ्याद्वा कायशब्देनाग्निरुच्यते, उक्तं च भोजे—"जाठरः प्राणिनामग्निः काय इत्यभिधीयते । यस्तं चिकित्सेत् सीदन्तं स वै कायचिकित्सकः" इति; युक्तं चैतत्, यतो ज्वरातीसारादयः कायचिकित्साविषया रोगा अग्निदोषादेव भवन्ति । शलाका पटलवेधनी, तस्याः कर्म शालाक्यं; ब्राह्मणादित्वात् ष्यञ्, शालाक्यप्रधानमङ्गं शालाक्यम् । एतेन शिरोरोगप्रतीकारस्यापि ग्रहणं, प्राधान्यं च शालाक्यस्य प्रधानचक्षुर्विषयतया; एवमन्यत्रापि प्राधान्येन व्यपदेशः । शल्यमिति 'शल' हिंसायामिति धातुः, तस्माच्चौरादिण्यन्तादच्, शलः शलनं हिंसेत्यर्थः, शलस्य निमित्तं संयोग इति विवक्षायां "तस्य निमित्तं संयोगोत्पातौ" (पा.अ. ५।१।३८) इत्यनुवर्तमानात् "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" (पा. अ. ५।१।३९) इति व्याख्यानात्, तेन शल्यं हिंसोचितसंबन्धः, तदाहरणार्थं तन्त्रमपि शल्यम् । कौमारभृत्यमिति कुमाराणां भृतिर्धारणं पोषणं च, तस्येदमिति कौमारभृत्यं; "तस्येदम्" (पा.अ.४।३।१२०) इति यत् । रसायनानीति अत्र रसशब्देन रसकार्यत्वात् सर्वेषामेव धातूनां ग्रहणं, तेन रसादीनां शुक्रान्तानां किंवा रसवीर्यविपाकानामयनं लाभोपायो रसायनं; वक्ष्यति च—"लाभोपायो हि शस्तानां रसादीनां रसायनम्" ( चि. अ. १ ) इति । वाजीकरणमिति अवाजिनं वाजिनं कुर्वन्त्यनेनेति वाजीकरणं, येन वाऽत्यर्थं व्यज्यते स्त्रीषु शुक्रं तद्वाजीकरणं, वक्ष्यति च—"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः । व्रजते चाधिकं येन वाजीकरणमेव तत्" (चि.अ.१) इति । 'व्रजेच्चात्यधिकम्' इति पाठे पुनः पुनर्गच्छेदित्यर्थः । शब्दसिद्धिस्तु पृषोदरादित्वात् । अन्ये तु, वाजो वेगः प्रस्तावाच्छुक्रस्य, स विद्यते येषां ते वाजिनः, ते क्रियन्तेऽनेनेति वाजीकरणमित्याहुः । किंवा, वाजः शुक्रं, सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणम् । किंवा, वाजो मैथुनम्, उक्तं हि हारीते—"वाजो नाम प्रकाशत्वाच्च मैथुनसंज्ञितम् । वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते"—इति शिवदाससेनः ।

१ 'संयोगिविषम्' इति पा० । २ 'आत्मरक्षार्थं' इति पा० । ३ 'विद्वद्ग्रहणं यशः' इति पा० । ४ 'तदनुगुणदेहमनुतिष्ठति' इति पा० । ५ "वक्तव्यमिति वक्ष्यमाणं तन्त्रादिस्वरूपम् । वाक्यश इत्यादिपूर्ववद्व्याख्येयम्" इति शिवदाससेनः । ६ उक्तानामेव तन्त्रादीनां स्वरूपं क्रमेणाह—तत्रेत्यादि । तत्र तेषु तन्त्रादिषु मध्ये 'तन्त्रस्वरूपं निरुच्यते' इति शेषः; अनर्थान्तरमिति अर्थान्तरमर्थभेदः, न विद्यतेऽर्थभेदो यत्र तत्तथा, अभिन्नार्थमित्यर्थः । एतेन, एते शब्दा यस्यार्थस्याभेदेन वाचकाः, तत्तन्त्रमिति तन्त्रस्वरूपं दर्शितं भवति ।" इति शिवदाससेनः ।

**तन्त्रार्थः पुनः स्वलक्षणैरुपदिष्टः । स चार्थः प्रकरणैर्विभाव्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्मकार्यकालकर्तृकरणविधिविनिश्चयाद्दशप्रकरणः, तानि च प्रकरणानि केवलेनोपदेक्ष्यन्ते तन्त्रेण ॥ ३२ ॥**

तन्त्रेत्यादि । स्वलक्षणैरिति तदायुर्वेदयतीत्यायुर्वेदः, इत्यादिना हिताहितायूरूपैरित्यर्थः । प्रकरणैरिति आयुर्वेदप्रदेशैः । दशप्रकरणानि दशभेदाः, ते च शरीरादयो दश । तत्र शरीरं पञ्चमहाभूतविकारसमुदयात्मकमवयवादिभेदाद्बहुप्रकारं; वृत्तिश्चाहारोऽशितपीतादिभेदभिन्ना(न्नः); हेतुस्तु व्याधिहेतुरसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामलक्षणः; व्याधिश्च धातुवैषम्यरूपः; कर्म चिकित्सा; कार्यम् आरोग्यं; कालः ऋत्वादिः, क्रियाकालश्च; कर्ता भिषक्; करणं भेषजं; विधिः विधानम् उपकल्पना, सा च कालव्याधिद्रव्यापेक्षा बोद्धव्या, यथा—"हेमन्तेऽभ्यसतस्तोयमुष्णमायुर्न हीयते" ( सू. अ. ६ ) इत्यादि; देशस्त्वत्राहितो हेतुग्रहणेन, हितस्तु देशः करणग्रहणेन गृहीतो मन्तव्यः । शरीरवृत्त्यादिभेदाश्च बहवः कृत्स्ने तन्त्रे बुद्धिमता बोद्धव्याः । केवलेनेति समग्रेण ॥ ३१ ॥ ३२ ॥

**तन्त्रस्यास्याष्टौ स्थानानि[३]; तद्यथा—श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानानि । तत्र त्रिंशदध्यायकं श्लोकस्थानम्, अष्टाष्टाध्यायकानि निदानविमानशारीरस्थानानि, द्वादशकमिन्द्रियाणां, त्रिंशकं चिकित्सितानां, द्वादशके कल्पसिद्धिस्थाने भवतः ॥ ३३ ॥**

तन्त्रस्येत्यादि । इन्द्रियाणां चिकित्सितानां चेत्युभयत्रापि स्थानमिति शेषः ॥ ३३ ॥

**भवति चात्र—**

**द्वे त्रिंशके द्वादशकं त्रयं च**
**त्रीण्यष्टकान्येषु समाप्तिरुक्ता ।**
**श्लोकौपधारिष्टविकल्पसिद्धि-**
**निदानमानाश्रयसंज्ञकेषु ॥ ३४ ॥**

त्रिंशके इति सूत्रस्थानं चिकित्सितं च । आश्रयसंज्ञकं शारीरस्थानम्, आश्रयो हि शरीरमुच्यते ॥ ३४ ॥

**स्वे स्वे स्थाने यथास्वं च स्थानार्थ उपदेक्ष्यते ।**
**सविंशमध्यायशतं शृणु नामक्रमागतम् ॥ ३५ ॥**

सविंशमिति विंशतिशब्दात् स्वार्थे 'डः', स्वार्थिकश्च 'डः' प्रत्ययो भवति; तेन ललितेश्वरे च—"चतुर्विंशाधिकं" इति प्रयोगः सिद्धो भवति; वचनं हि "चतुर्विंशाधिकं ज्ञेयं भुवनानां शतत्रयम्" इति । एवं सुश्रुतेऽपि 'सविंशं' (सु. सू. अ. १) इति व्याख्येयम् ॥ ३५ ॥

**दीर्घञ्जीवोऽप्यपामार्गतण्डुलारग्वधादिकौ ।**
**षड्विरेकाश्रयश्चेति चतुष्को भेषजाश्रयः ॥ ३६ ॥**
**मात्रातस्याशितीयौ च नवेगान्धारणं तथा ।**
**इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तिकाः ॥ ३७ ॥**
**खुड्डाकश्च चतुष्पादो महांस्तिस्रैषणस्तथा ।**
**सह वातकलाख्येन विद्यान्नैर्देशिकान् बुधः ॥ ३८ ॥**
**स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः ।**
**चिकित्साप्राभृतश्चैव सर्व एव प्रकल्पनाः ॥ ३९ ॥**
**कियन्तःशिरसीयश्च त्रिशोफाष्टोदरादिकौ ।**
**रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥ ४० ॥**
**अष्टौनिन्दितसंख्यातस्तथा लङ्घनतर्पणे ।**
**विधिशोणितिकश्चैव व्याख्यातास्तत्र योजनाः ॥ ४१ ॥**
**यज्जःपुरुषसंख्यातो भद्रकाप्यान्नपानिकौ ।**
**विविधाशितपीतीयश्चत्वारोऽन्नविनिश्चयाः ॥ ४२ ॥**
**दशप्राणायतनिकस्तथाऽर्थेदशमूलिकः ।**
**द्वावेतौ प्राणदेहार्थौ प्रोक्तौ वैद्यगुणाश्रयौ ॥ ४३ ॥**
**औषधस्वस्थनिर्देशकल्पनारोगयोजनाः ।**
**चतुष्काः षट् क्रमेणोक्ताः सप्तमश्चान्नपानिकः ॥ ४४ ॥**
**द्वौ चान्त्यौ संग्रहाध्यायाविति त्रिंशकमर्थवत् ।**
**श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम्[३] ॥ ४५ ॥**
**चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः ।**
**श्लोकार्थः संग्रहार्थश्च श्लोकस्थानमतः स्मृतम् ॥ ४६ ॥**
**ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।**
**शोषोन्मादनिदाने च स्यादपस्मारिणां च यत् ॥ ४७ ॥**
**इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते ।**
**रसेषु त्रिविधे कुक्षौ ध्वंसे जनपदस्य च ॥ ४८ ॥**
**त्रिविधे रोगविज्ञाने स्रोतःस्वपि च वर्तने ।**
**रोगानीके व्याधिरूपे रोगाणां च भिषग्जिते ॥ ४९ ॥**
**अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा ।**
**कतिधापुरुषीयं च गोत्रेणातुल्यमेव च ॥ ५० ॥**
**खुड्डिका महती चैव गर्भावक्रान्तिरुच्यते ।**
**पुरुषस्य शरीरस्य विचयौ द्वौ विनिश्चितौ ॥ ५१ ॥**
**शरीरसंख्या सूत्रं च जातेरष्टममुच्यते ।**
**इत्युद्दिष्टानि मुनिना शारीराण्यत्रिसूनुना ॥ ५२ ॥**
**वर्णस्वरीयः पुष्पाख्यस्तृतीयः परिमर्शनः ।**

१ 'तन्त्रार्थ इति तन्त्रस्यार्थोऽभिधेयं, स च हिताहितादिरूपमायूराशुप्याश्च पदार्थाः । स्वलक्षणैरिति आयुश्चेतनानुवृत्तिर्जीवितमित्यादिना ग्रन्थेनोक्तैरायुःस्वरूपैः' इति शिवदाससेनः । २ 'हिताहितदेशौ तु करणहेतुशब्दाभ्यां गृहीतौ मन्तव्यौ' इति शिवदाससेनः । ३ 'तन्त्रमष्टौ स्थानानीत्यादिना स्थानमाह' इति शिवदाससेनः । 'तन्त्रमष्टौ स्थानानि' इति पा० ।

१ षड्विरेकशतश्रेति' इति पा० । २ 'स्वस्थवृत्तिकाः' इति पा० । ३ 'इति त्रिंशकं श्लोकस्थानं समुद्दिष्टमित्यन्वयः, अर्थवदिति स्थानार्थसहितं, शिर इव शिरः प्रधानत्वात्' इति शिवदाससेनः । ४ 'सूत्रं च जातेरिति जातिसूत्रीयमित्यर्थः' इति शिवदाससेनः ।

चतुर्थ इन्द्रियानीकः पञ्चमः पूर्वरूपिकः ॥ ५३ ॥
कतमानिशरीरीयः पन्नरूपोऽप्यवाक्शिराः ।
यस्यश्यावनिमित्तश्च सद्योमरण एव च ॥ ५४ ॥
अणुज्योतिरिति ख्यातस्तथा गोमयचूर्णवान् ।
द्वादशाध्यायकं स्थानमिन्द्रियाणामिति स्मृतम् ५५
अभयामलकीयं च प्राणकामीयमेव च ।
करप्रचितकं वेदसमुत्थानं रसायनम् ॥ ५६ ॥
संयोगशरमूलीयमासिक्तक्षीरकं तथा ।
माषपर्णभृतीयं च पुमाञ्जातबलादिकम् ॥ ५७ ॥
चतुष्कद्वयमप्येतदध्यायद्वयमुच्यते ।
रसायनमिति ज्ञेयं वाजीकरणमेव च ॥ ५८ ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषोन्मादेऽप्यपस्मारे क्षतशोथोदरार्शसाम् ॥५९॥
ग्रहणीपाण्डुरोगाणां श्वासकासातिसारिणाम् ।
छर्दिवीसर्पतृष्णानां विषमद्यविकारयोः ॥ ६० ॥
द्विव्रणीयं त्रिमर्मीयमूरुस्तम्भिकमेव च ।
वातरोगे वातरक्ते योनिव्यापत्सु चैव यत् ॥ ६१ ॥
त्रिंशच्चिकित्सितान्युक्तान्यतः कल्पान् प्रचक्ष्महे ।
फलजीमूतकेक्ष्वाकुकल्पो धामार्गवस्य च ॥ ६२ ॥
पञ्चमो वत्सकस्योक्तः षष्ठश्च कृतवेधने ।
श्यामात्रिवृतयोः कल्पस्तथैव चतुरङ्गुले ॥ ६३ ॥
तिल्वकस्य सुधायाश्च सप्तलाशङ्खिनीषु च ।
दन्तीद्रवन्त्योः कल्पश्च द्वादशोऽयं समाप्यते ॥६४॥
कल्पना पञ्चकर्माख्या वस्तिसूत्री तथैव च ।
स्नेहव्यापदिकी सिद्धिर्नेत्रव्यापदिकी तथा ॥ ६५ ॥
सिद्धिः शोधनयोश्चैव वस्तिसिद्धिस्तथैव च ।
प्रासृती मर्मसंख्याता सिद्धिर्वस्त्याश्रया च या ॥६६॥
फलमात्रा तथा सिद्धिः सिद्धिश्चोत्तरसंज्ञिता ।
सिद्धयो द्वादशैवैतास्तन्त्रं चाशु समाप्यते ॥ ६७ ॥
स्वे स्वे स्थाने तथाऽध्याये चाध्यायार्थः प्रवक्ष्यते ।
तं ब्रूयात् सर्वतः सर्वं यथास्वं ह्यर्थसंग्रहात् ॥ ६८ ॥

दीर्घञ्जीवेत्यादिसंज्ञाः श्लोकानुरोधादेकदेशलक्षणा बोद्धव्याः । प्राणदेहार्थावित्यादौ देहशब्देनौजोऽभिधीयते[1] । शिरः शुभमित्यत्र शिर इव शिरः । श्लोकार्थं इत्यादौ संग्रहार्थश्चेति चकारात् सुश्रुतोक्तसूत्रणादिकं, तेन "सूत्रणात् सूचनाच्चैव धारणादर्थसन्ततेः । सूत्रस्थानं समुद्दिष्टम्" ( सु. सू. अ. ३ ) इत्येतदपि गृहीतं भवति । मानार्थानीति ज्ञानार्थानि । इन्द्रियाणामिति रिष्टानाम् । चतुष्कद्वयमिति रसायनपादचतुष्क एकः, वाजीकरणपादचतुष्कश्चैकः; चतुष्पादश्चाध्यायो भवतीति युक्तमेवाध्यायत्वम् । तन्त्रं चाशु समाप्यत इति आशु समाप्ताशु तन्त्रं समाप्यत इत्यर्थः । चाध्यायार्थं इति चकारो भिन्नक्रमे; तेन अध्यायार्थश्चाध्यायान्ते तथा स्थानार्थश्च स्थानान्ते कृतसंग्रहः । यद्यपि शारीरे स्थानार्थो न व्यक्तः, तथाऽपि शारीरशब्दव्युपत्त्या बोद्धव्यस्तन्त्रान्तराद्वा; यथा—"शरीरं चिन्त्यते सर्वं दैवमानुपसंपदा । सर्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते" ( शा. अ. ८ ) इति ॥ ३६–६८ ॥

पृच्छा तन्त्राद्यथाम्नायं विधिना प्रश्न उच्यते ।
प्रश्नार्थो युक्तिमांस्तस्य तन्त्रेणैवार्थनिश्चयः ॥ ६९ ॥
निरुक्तं तन्त्रणात्तन्त्रं, स्थानमर्थप्रतिष्ठया ।
अधिकृत्यार्थमध्यायनामसंज्ञा प्रतिष्ठिता ॥ ७० ॥
इति सर्वं यथाप्रश्नमष्टकं संप्रकाशितम् ।
कार्त्स्न्येन चोक्तस्तन्त्रस्य संग्रहः सुविनिश्चितः ॥७१॥

विधिना प्रश्न इत्यत्र विधिनेति पूर्वापरविरोधादिदोषशून्येन वाक्येन । तन्त्रणादिति शरीरधारणात्; किंवा आयुर्वेदानुपालनात् । अर्थप्रतिष्ठयेति प्रधानभूतार्थावस्थानात् । एताश्च योगरूढाः संज्ञाः; तेन, अतिप्रसङ्गो न वाच्यः । अधिकृत्येति अधिकारिणं कृत्वा । अर्थं दीर्घञ्जीवितादिकम् । अध्यायनामसंज्ञा अध्यायरूपा नामसंज्ञा, नामसंज्ञा च योगरूढा संज्ञोच्यते; किंवा, 'अध्यायो नाम' इति पाठः, तदा नामशब्दः प्रकाशने, तेन अधिकार इत्यर्थः । अर्थशब्दोऽत्रार्थान्तरे, तेन युक्ताऽध्यायसंज्ञा, सा च अधिकरणसाधना करणसाधना वा कर्मसा-

---

१ 'प्रकीर्तितम्' इति पा० । २ 'अतः कल्पान् परं शृणु' इति पा० । "अतः कल्पानिति अतः परं कल्पान् शृणु, इत्यन्वयः" इति शिवदाससेनः । ३ 'चात्र' इति पा० । ४ "अध्यायमुक्त्वाऽध्यायार्थमाह—स्वे स्वे स्थान इत्यादि । स्वे स्वे स्थाने योऽध्यायो वक्तव्यस्तत्र तत्र चाध्याये तस्य तस्याध्यायस्यार्थसंग्रहो वाच्य इत्यर्थः; चकारोऽत्र अध्यायार्थ इत्यनन्तरं योज्यः, तेन 'स्थानार्थः' इति समुच्चीयते; ततश्च स्थानान्ते स्थानार्थसंग्रहमध्यायान्ते चाध्यायार्थसंग्रहं यथाक्रमेण वक्ष्यतीत्यर्थः । यद्यपि शारीरस्थाने तत्स्थानार्थो विशिष्य न वक्तव्यः, तथाऽपि शारीरस्थानस्य शरीरनिरूपणरूपो योऽर्थः सः "शरीरं चिन्त्यते सर्वं दैवमानुपसंपदा" ( शा. अ. ८ ) इत्यादिशारीरशब्दनिरुक्तिद्वारेणैवोक्त इति ज्ञेयम् । तं ब्रूयादिति तं सर्वं तन्त्रार्थं स्थानार्थमध्यायार्थं च । अर्थसंग्रहादिति ल्यब्लोपे पञ्चमी, तन्त्रादीनामर्थं संगृह्य संक्षिप्येत्यर्थः । सर्वतः अनवशेषतः । यथास्वमित्यनेन यो यस्यार्थस्तस्य संग्रहं कृत्वा तन्त्रार्थं स्थानार्थमध्यायार्थं चाशेषतो ब्रूयादित्यर्थः" इति शिवदाससेनः । ५ 'यथार्थाश्च्यनुसंग्रहात्' इति पा० ।

१ "प्राणदेहार्थावित्यत्र देहशब्देन हृदयं तथा तदाश्रितमोजोऽप्यभिधीयते" इति शिवदाससेनः । २ "तन्त्रादिति तन्त्रमारभ्य । यथाम्नायं यथाक्रमम् । विधिना सामान्यविशेषप्रकारेण, पूर्वापरविरोधादिदोषशून्येन वा पृच्छा प्रश्न उच्यत इत्यर्थः । प्रश्नार्थं विवृणोति—प्रश्नार्थ इत्यादि । तस्य प्रश्नस्य तन्त्रेण शास्त्रेणार्थनिश्चयो यः स प्रश्नार्थः प्रश्नप्रयोजनमुच्यते । युक्तिमानिति युक्तिमान् उपपत्तिमान्" इति शिवदाससेनः । ३ 'तन्त्रादिशब्दानां निरुक्तिद्वारेणार्थं स्पष्टयति—निरुक्तमित्यादि । तन्त्रणादिति व्युत्पादनात् । अर्थप्रतिष्ठयेति प्रधानभूतार्थावस्थानात् । एतेन तन्त्र्यते व्युत्पाद्यतेऽनेनेति तन्त्रं शास्त्रं, तथा चार्थाः प्रतिष्ठन्त्यस्मिन्निति स्थानमिति निरुक्तिर्दर्शिता भवति' इति शिवदाससेनः । ४ 'अधिकृत्येति निरुक्त्यैकदेशप्रकाशनमधिकृतोऽध्यायार्थः, तत्प्रयुक्ता नामसंज्ञा अध्यायनामसंज्ञा योगरूढसंज्ञेत्यर्थः । किंवा अधिकृत्येति तृतीयान्तपदम्; तेन, अधिकृतिरधिकृतार्थसंबन्धः, तेनोपलक्षिताऽध्यायसंज्ञेत्यर्थः" इति शिवदाससेनः ।

धना वा बोद्धव्या। अधीयतेऽस्मिन्, अध्येत्यनेन वा, अधीयते वेत्यध्यायः ॥ ६९-७१ ॥

**सन्ति पाल्लविकोत्पाताः संक्षोभं जनयन्ति ये।**
**वर्तकानामिवोत्पाताः सहसैवाविभाविताः ॥ ७२ ॥**
**तस्मात्तान् पूर्वसंजल्पे सर्वत्राष्टकमादिशेत्।**
**परावरपरीक्षार्थं तत्र शास्त्रविदां बलम् ॥ ७३ ॥**
**शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः।**
**भ्रमन्त्यल्पबलास्तन्त्रे ज्याशब्देनेव वर्तकाः ॥ ७४ ॥**

प्रश्नाष्टकस्योक्तस्य निराकरणीयसंज्ञामाह—सन्तीत्यादि। पाल्लविकाः प्रादेशिकाः। वर्तका अकस्मादुत्पतन्तः क्षोभं मनसो जनयन्तीति लोकप्रसिद्धम्। अष्टकमिति यथोक्तं प्रश्नाष्टकम्। परावरौ श्रेष्ठाश्रेष्ठौ। तत्र शास्त्रविदां बलमिति शास्त्रविद एव प्रश्नाष्टकं जानन्ति न पाल्लविकाः ॥ ७२-७४ ॥

**पशुः पशूनां दौर्बल्यात् कश्चिन्मध्ये वृकायते।**
**स सत्यं वृकमासाद्य प्रकृतिं भजते पशुः ॥ ७५ ॥**
**तद्वदज्ञोऽज्ञमध्यस्थः कश्चिन्मौखर्यसाधनः।**
**स्थापयत्याप्तमात्मानमाप्तं त्वासाद्य भिद्यते ॥ ७६ ॥**
**बभ्रुर्गूढ इवोर्णाभिरबुद्धिरबहुश्रुतः।**
**किं वै वक्ष्यति संजल्पे कुण्डभेदी जडो यथा ॥७७॥**
**सद्वृत्तैर्न विगृह्णीयाद्भिषगल्पश्रुतैरपि।**
**हन्यात् प्रश्नाष्टकेनादावितरांस्त्वाप्तमानिनः ॥ ७८ ॥**
**दम्भिनो मुखरा ह्यज्ञाः प्रभूताबद्धभाषिणः।**
**प्रायः, प्रायेण सुमुखाः सन्तो युक्ताल्पभाषिणः॥७९॥**
**तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रितः।**
**स्वल्पाधाराज्ञमुखरान्मर्षयेन्न विवादिनः ॥ ८० ॥**
**परो भूतेष्वनुक्रोशस्तत्त्वज्ञान(नि)परा दया।**
**येषां तेषामसद्वादनिग्रहे निरता मतिः ॥ ८१ ॥**

प्रकृतिः स्वभावः। बभ्रुरूर्णावान् कश्चित् पशुः, स यथा मेषं युद्धायात्मीयामिवोर्णां दृष्ट्वा उपसर्पन्नङ्गभङ्गमाप्नोति, तद्वदज्ञोऽप्याप्तं प्राप्य भिद्यत इत्यर्थः; किंवा, बभ्रुर्गूढनकुल ऊर्णाराशिमध्यगो यथा किंचिन्न प्रतिपद्यते, तथाऽबुद्धिरपि संजल्पे वादिप्रतिवादिकथायाम्। कुण्डभेदी भ्रष्टयोनिः; तेन पृच्छादितात्मीयनिर्णितजातिर्यथाऽवदातजातिः सन् कश्चिद्ब्रूते, तथाऽबुद्धिरपि संजल्पे। विगृह्णीयाद् विगृह्य संभाषां कुर्यात्। इतरान् असद्वृत्तान्। स्वल्पाधाराः स्वल्पश्रुताः। न मर्षयेदिति नोपेक्षेत। अज्ञवैद्यसंवादप्रतिषेधफलमाह—परो भूतेष्वित्यादि। निरता इति तत्परा ॥ ७५-८१ ॥

**असत्पक्षाक्षणित्वार्तिदम्भपारुष्यसाधनाः।**
**भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थकाः ॥ ८२ ॥**
**तान् कालपाशसदृशान् वर्जयेच्छास्त्रदूषकान्।**
**प्रशमज्ञानविज्ञानपूर्णाः सेव्या भिषक्तमाः ॥ ८३ ॥**

अज्ञवैद्यफलमाह—असत्पक्षेत्यादि। असत्पक्षादि साधनं येषां ते तथा; असत्पक्षः अनागमपक्षसिद्धः पक्षः। अक्षणित्वं पृच्छाधर्मयुक्तस्य 'संप्रति वक्तुं क्षणो नास्ति' इति भाषणम्, आर्तिः पृच्छार्थमनुयुक्तस्य शिरोव्यथादिकमुद्भाव्य भाषणं, दम्भः पुस्तकवैद्यभाण्डादिभिः स्वार्थोत्कर्षप्रतिपादनं, पारुष्यं कृच्छ्रतोऽपि नवाच्यत्वादिपरुषभाषणम्। अनाप्ताः स्वे तन्त्र इति स्वतन्त्रानभिज्ञानात्। परविकत्थकाः परदूषकाः ॥ ८२ ॥ ८३ ॥

**समग्रं दुःखमायत्तमविज्ञाने द्वयाश्रयम्।**
**सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ॥ ८४ ॥**
**इदमेवमुदारार्थमज्ञानां न प्रकाशकम्।**
**शास्त्रं दृष्टिप्रणष्टानां यथैवादित्यमण्डलम् ॥ ८५ ॥**

द्वयाश्रयमिति मनःशरीराश्रयम्। समग्रमिति शारीरं मानसं च सुखमारोग्यादिरूपम्। विज्ञाने विमल इति विशुद्धज्ञाने, किंवा विज्ञाने विमल इति मोक्षे, मोक्षे हि सुखं स्वच्छं समग्रं च दुःखासंभिन्नत्वात्; किंवा, भद्रदर्शनात् सुसंभवम्। इदमिति शास्त्रम्। एवमुदारार्थमिति लोकद्वयहितार्थाभिधायकम्। दृष्टिप्रणष्टानामिति प्रणष्टदृशाम् ॥ ८४ ॥ ८५ ॥

तत्र श्लोकाः—

**अर्थे दशमहामूलाः संज्ञा चासां यथा कृता।**
**अयनान्ताः षडग्र्याश्च रूपं वेदविदां च यत् ॥ ८६ ॥**
**सप्तकश्चाष्टकश्चैव परिप्रश्नाः सनिर्णयाः।**
**यथा वाच्यं यदर्थं च षड्विधाश्चैकदेशिकाः ॥ ८७ ॥**
**अर्थेदशमहामूले सर्वमेतत् प्रकाशितम्।**
**संग्रहश्चायमध्यायस्तन्त्रस्यास्यैव केवलः ॥ ८८ ॥**
**यथा सुमनसां सूत्रं संग्रहार्थं विधीयते।**
**संग्रहार्थं तथाऽर्थानामृषिणा संग्रहः कृतः ॥ ८९ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽर्थेदशमहामूलीयो नाम त्रिंशोऽध्यायः ॥ ३० ॥**

**अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।**
**इयताऽवधिना सर्वं सूत्रस्थानं समाप्यते ॥ ९० ॥**

संग्रहे संज्ञा चासां यथा कृतेति 'तेन मूलेन महता महामूला' इत्यादिना। अयनान्ताः षडग्र्याश्चेति 'एकं प्राणवर्धनानाम्' इत्यादिनोक्ताः। एते चाहिंसादयोऽग्र्याधिकारे यज्जःपुरुषीये उक्ता उल्लङ्घ्येहोक्ता अध्यात्मविषयत्वेन, पूर्वोक्तास्त्वग्र्यरोगाधिकारिकाः; उक्तं हि तत्र—"अलमेतद्विकाराणाम्" (सू. अ. २५) इत्यादि। सप्तकः प्रश्नः 'किमायुः? कस्मादायुर्वेदः?' इत्यादि; अष्टकः प्रश्नः 'तन्त्रं तन्त्रार्थ' इत्यादि ॥ ८६-८९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां सूत्रस्थानेऽर्थेदशमहामूलीयस्त्रिंशत्तमोऽध्यायः ॥ ३० ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तकृतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां प्रथमं सूत्रस्थानम् ॥ १ ॥

---

१ 'पल्लविकोपेताः' इति पा०। २ 'तस्मात्तु पूर्वकं जल्पे' इति पा०। ३ 'निराकरणीयतामाह' इति पा०। ४ 'ये प्रमादिनः' इति पा०।

१ 'पृच्छार्थमाकृष्टस्य' इति पा०। २ 'उच्चार्य' इति पा०। ३ 'पृच्छताऽपि वाच्यत्वादिपरुषभाषणम्' इति पा०।

## प्रथमोऽध्यायः ।

**अथातो ज्वरनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

संक्षेपेण हेतुलिङ्गाभिधायकं सूत्रस्थानमनु प्रपञ्चेन हेतुलिङ्गाभिधायकं निदानस्थानमुच्यते; हेतुलिङ्गज्ञानपूर्विका हि चिकित्सा साध्वी भवति । यच्च चिकित्सासूत्रमात्रमभिधातव्यं, तदुपशयान्तर्गतमेवेति कृत्वा; किंवा, हेतुलिङ्गाभिधानस्यापि चिकित्सार्थत्वाच्चिकित्सासूत्रमात्राभिधानमिह[1] । तत्रापि च शारीरविकारेषु प्रधानत्वाज्ज्वरस्यैव निदानमादावुच्यते । यथा च ज्वरः प्रधानं तथाऽत्रैव 'ज्वरस्तु खलु' इत्यादिना वक्ष्यति; तथा चिकित्सितेऽपि वक्ष्यति–"देहेन्द्रियमनस्तापी सर्वरोगाग्रजो वली" (चि. अ. ३) इत्यादि । यत्तु वक्ष्यति–"पुरा गुल्मोत्पत्तिरभूत् ( नि. अ. ८ )" इति; तत्र पुराशब्द आद्याविर्भावे गुल्मस्य वर्तते, नतु ज्वरस्य प्रागभावे; दक्षाध्वरोद्ध्वंसे हि ज्वरपरिगृहीतानां प्राणिनां दिक्षु विद्रावणादिना गुल्मोत्पत्तेरुक्तत्वात् । निदानं कारणमिहोच्यते, तच्चेह व्याधिजनकं व्याधिबोधकं[2] च सामान्येनोच्यते । तत्र व्याधिजनकं निदानं हेतुः, व्याधिबोधकं च कारणं निदानपूर्वरूपरूपोपशयसंप्राप्तिरूपम् । तत्र हेतुरूपं निदानं जनकं च भवति, व्याधेर्बोधकं च भवति । अत एव प्रथमम् 'इह खलु' इत्यादिना हेतुमभिधाय तस्योपलब्धिर्निदानेत्यादिना पुनर्हेतुरप्युक्तः । ज्वरस्य निदानं ज्वरनिदानम् । किंवा, निदानशब्दो जनककारणवचन एव; तं ज्वरस्य जनककारणं निदानमधिकृत्य कृतोऽध्यायो ज्वरनिदानम् । तेन पूर्वरूपादीनामपि ज्ञप्तिहेतूनां तथा चिकित्सासूत्रस्य च ग्रहणम् ॥ १ ॥ २ ॥

**इह खलु हेतुर्निमित्तमायतनं कर्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम् । तत्त्रिविधम्—असात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति ॥ ३ ॥**

तदेवं ज्वरनिदाने वक्तव्ये सर्वव्याधिसाधारणमेव निदानं वक्तुमुद्यतः सामान्यपूर्वकत्वाद्विशेषस्य, तत्राप्युत्पन्नस्य व्याधेर्लक्षणं युक्तमिति कृत्वा उत्पत्तिहेतुमेव व्यवहारार्थं लक्षणार्थं च पर्यायैराह–इह खल्वित्यादि । इहेति इह प्रकरणे कारणाभिधायके हेत्वादयोऽनर्थान्तरे[3]; प्रकरणान्तरे अर्थान्तरेऽपि हेत्वादिशब्दा भवन्तीति दर्शयति; यथा–वक्ष्यति–"हेतुरुक्तकत्वात्" ( वि. अ. ८ ) इति, तथा "दशैवायतनानि स्युः" ( सू. अ. २९ ), तथा "कर्ता, मन्ता, वेदिता, बोद्धा" (शा. अ. ४) इत्यादौ, प्रत्ययस्य लडादौ, उत्थानस्य उद्गमनादौ । हेत्वादिभूरिपर्यायकथनं शास्त्रे व्यवहारार्थं, तथा हेत्वादिशब्दानामर्थान्तरेऽपि वर्तमानत्वे[1] पर्यायान्तरेणै[2] समं सामानाधिकरण्यात् कारण एव वृत्तिर्नियम्यते; तेन, एकस्मिन्नर्थे यस्मिंस्ते शब्दाः प्रवर्तन्ते तत् कारणमितरहेत्वाद्यर्थेभ्यो व्यवच्छिद्यते; तेन, लक्षणार्थं[3] च पर्यायाभिधानं भवति । एवमन्यत्रापि व्याध्यादिपर्यायाभिधानेऽपि व्याख्येयम् । इह चाष्टसंख्याया मङ्गलत्वेन, तथाऽष्टविधव्याधिज्वराद्यभिधानानुषङ्गाच्चाष्टावेव हेतुपर्याया उक्ताः;[4] तेनापरेऽपि योनिमूलमुखप्रकृत्यादयो हेतुपर्याया बोद्धव्याः, ते च तन्त्रविस्तरभयान्नोक्ताः । एवं रोगपर्यायान्तरानभिधानेऽपि ग्रन्थविस्तरभयाद्यनुसरणीयम् । हेतोर्भेदमाह—तत्त्रिविधमित्यादि । एतच्चासात्म्येन्द्रियार्थसंयोगादि दीर्घंजीवितीये तिस्रैषणीये च प्रपञ्चितमिति नेह प्रपञ्च्यते । अत्र पाठादेव त्रित्वे सिद्धे त्रिविधमितिवचनं बहुप्रपञ्चस्याप्यसात्म्येन्द्रियार्थसंयोगादेस्त्रैविध्यानतिक्रमोपदर्शनार्थं, तथा प्रत्येकमयोगातियोगमिथ्यायोगभेदात्त्रिविधत्वदर्शनार्थं च । एतच्च हेतुत्रितयमुक्तमपि पुनः प्रकरणवशादुच्यमानमिहै[5] न पुनरुक्तं दोषमावहति । एतच्चासात्म्येन्द्रियार्थादेस्त्रैविध्यं मूलकारणं प्रति नियामकं, तेन "ज्वरसंतापाद्रक्तपित्तमुदीर्यते" ( नि. अ. ८ ) इत्याद्युक्तरोगादिरूपप्रत्यासन्नकारणानवरोधो[6] नोद्भावनीयः । किंवा, रक्तपित्तादिकारणे ज्वरादावप्यसात्म्येन्द्रियार्थसंयोगाद्येव मूलकारणं, तेन ज्वरादिकार्ये रक्तपित्तादौ ज्वरादिकारणमेवै[7] मूलकारणं भवति । "कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च" ( सू. अ. १ ) इति पूर्वोक्तक्रमभेदेनेहासात्म्येन्द्रियार्थसंयोगस्यादावभिधानेन सर्वेषामेवैषां रोगकर्तृत्वे प्राधान्यं दर्शयति, मा भूदेकान्ताभिधानेन प्रधानतानियमः । यद्यपि च मूलभूतत्वेन प्रज्ञापराधः प्रधानं भवति, तथाऽपि प्रत्यासन्नकारणत्वेन तथाऽबुद्धिपूर्वकस्याप्युत्कटशब्दमिथ्यायोगादेरपि कारणत्वेनासात्म्येन्द्रियार्थसंयोगोऽपि प्रधानम् । यद्यपि कालो दुष्परिहरत्वेन प्रधानं, तथाऽपि सोऽपीन्द्रियार्थपराधीनत्वेनाप्रधानं, कालातियोगादयो हीन्द्रियार्थशीताद्यतियोगादिभ्य एव प्रायो भवन्ति[8] ॥ ३ ॥

**अतस्त्रिविधा व्याधयः प्रादुर्भवन्ति–आग्नेयाः, सौम्याः, वायव्याश्च; द्विविधाश्चापरे–राजसाः, तामसाश्च ॥ ४ ॥**

---

१ चिकित्सार्थत्वादिति चिकित्सामात्रप्रयोजनत्वादित्यर्थः । २ 'व्याधिज्ञानजनकं' इति पा० । ३ 'नार्थान्तरे' इति पा० ।

१ 'वर्तमानानां' इति पा० । २ पर्यायान्तरेणेति एकार्थवाचकशब्दान्तरेणेत्यर्थः । ३ लक्षणार्थमिति लक्षणप्रयोजनकमित्यर्थः । ४ 'अष्टविधव्याधिज्वराद्यभिधानार्थसंज्ञाश्चाष्टैत्यष्टावेव' इति पा० । ५ 'वक्ष्यमाणमिह' इति पा० । ६ 'इत्याद्युक्तरोगादेरपि प्रत्यासन्नकारणावबोधो' इति पा० । ७ ज्वरादिकारणमेवेति ज्वरादिमूलकारणमसात्म्येन्द्रियार्थसंयोगाद्येवेत्यर्थः । ८ 'प्रतिभाति' इति पा० ।

हेतोर्हेतुत्वं कार्ये भवतीति हेतुकार्यं व्याधिमाह—अतस्त्रिविधा इत्यादि। न चात्र यथासंख्यम्, एकरूपादपि हेतोस्त्रिविधव्याध्युत्पादात्। अत्रापि त्रिविधवचनमानन्त्येऽपि रोगाणामाग्नेयत्वाद्यनतिक्रमोपदर्शनार्थम्। आग्नेयाः पैत्तिकाः, सौम्याः कफजाः, वायव्याः वातजाः। यद्यपि प्रधानत्वेन वायव्या एव प्रथमं निर्देष्टुं युज्यन्ते, तथाऽपीह ज्वरे पित्तस्य प्रधानत्वादाग्नेयाभिधानम्। आग्नेयसौम्यवायव्या इति समासेनैकैकस्मादप्यसात्म्येन्द्रियार्थसंयोगादेस्त्रिविधरोगोत्पत्तित्वं दर्शयति, असमासे हि यथासंख्यमपि शङ्केत। अन्यथाऽपि व्याधीनुक्तहेतुजानाह—द्विविधाश्चापरे इत्यादि। राजसतामसानां च विच्छिद्य पाठेनेह तन्त्रे शारीरव्याध्यधिकारप्रवृत्तेऽनधिकारत्वेनाप्रपञ्चनीयत्वं दर्शयति, अभिधानं च राजसतामसयोरिह व्याधिकथनस्य न्यूनतापरिहारार्थम्। आगन्तवश्चाभिघातादिजा रोगा आग्नेयादिष्वेवान्तर्भवन्ति; यतस्तत्रापि हि दोषप्रकोपोऽप्यपदेश्योऽस्त्येव; किंवा, अपरे इति अप्रधानाः, परो हि श्रेष्ठ उच्यते; अप्रधानत्वे चोक्तैवोपपत्तिः ॥ ४ ॥

**तत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकारो रोग इत्यनर्थान्तरम् ॥ ५ ॥**

व्याधीनामाग्नेयादिविभागं दर्शयित्वा व्यवहारार्थं लक्षणार्थं च पर्यायानाह—तत्र व्याधिरित्यादि। अत्रापि पर्यायाणामनर्थान्तरेणातङ्कादिशब्दानां भयाद्यर्थतात्व्युदासाद्व्याधिलक्षणत्वं बोध्यम्। आतङ्कशब्देन हि भयमप्युच्यते, विकारशब्देन हि इन्द्रियादयोऽपि षोडश विकारा उच्यन्ते। तथा व्याध्यादिशब्दानां व्युत्पत्त्या रोगधर्मा लक्षणीयाः। तथा हि–विविधं दुःखमादधातीति व्याधिः; प्रायेणामसमुत्थत्वेनामय इत्युच्यते[1]; आतङ्क इति दुःखयुक्तत्वेन कृच्छ्रजीवनं करोति, वचनं हि–"आतङ्कः कृच्छ्रजीवने" इति; यक्ष्मशब्देन च राजयक्ष्मवदनेकरोगयुक्तत्वं विकाराणां दर्शयति; ज्वरशब्देन च देहमनःसंतापकरत्वं; विकारशब्देन च शरीरमनसोरन्यथाकरणत्वं व्याधेर्दर्शयति; रोगशब्देन च रुजाकर्तृत्वम् ॥ ५ ॥

**तस्योपलब्धिर्निदानपूर्वरूपलिङ्गोपशयसंप्राप्तितः ६**

इदानीं व्याधेर्जनकहेतुमभिधाय तथा तद्धेतुजन्यं च व्याधिमुक्त्वा तस्य व्याधेर्ज्ञानोपायमाह—तस्येत्यादि। अविज्ञाते हि व्याधौ चिकित्सा न प्रवर्तते, अतः सामान्येन व्याधिज्ञानोपायनिदानपञ्चकाभिधानं युक्तम् ॥ ६ ॥

**तत्र निदानं कारणमित्युक्तमग्रे ॥ ७ ॥**

निदानं विवृणोति—तत्रेत्यादि। अग्रे उक्तमिति 'इह खलु' इत्यादिना 'परिणामश्च' इत्यन्तेन। कारणं च व्याधीनां सन्निकृष्टं वातादि, विप्रकृष्टं चार्थानामयोगादि; पुनर्विप्रकृष्टं कारणं रक्तपित्तस्य ज्वरसंताप इत्यादि; पुनश्च व्याधीनां सामान्येन विप्रकृष्टं कारणमुक्तं यथा–"प्रागपि चाधर्माद्दते न रोगोत्पत्तिरभूत्" (वि. अ. ३) इत्यादि; तदेतत् सर्वमपि कारणशब्देन ग्राह्यम्। तत्राधर्मकार्यत्वेन व्याधीनां दैवव्यपाश्रयप्रायश्चित्तबलिमङ्गलेत्यादिचिकित्सासाध्यत्वं प्रतीयते, रुद्रकोपभवत्वेन च ज्वरस्य महाप्रभावत्वं तथाऽऽग्नेयत्वं च प्रतीयते; क्रोधो ह्याग्नेयः, तेन तन्मयो ज्वरोऽप्याग्नेयः। तथाच वचनम्—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्" (वा. चि. अ. १) इति। वातादिजन्यत्वज्ञानेन च वातादिविपरीतभेषजसाध्यत्वं तथाऽनुद्भूतवातादिविकारान्तरसंबन्धोऽपि भावी कल्प्यते। असात्म्यरूक्षादिहेतुसेवादर्शनेन च भावी व्याधिस्तज्जन्य उन्नीयते। व्याधिपरीक्षायां च सन्देहे जाते यस्य व्याधेर्हेतुसेवा दृश्यते, स परिकल्प्यते; एवमादि हेतुना व्याधिपरीक्षणम् ॥ ७ ॥

**पूर्वरूपं प्रागुत्पत्ति लक्षणं व्याधेः ॥ ८ ॥**

निदानानन्तरीयकत्वात् पूर्वरूपादीनां निदानानन्तरं पूर्वरूपादीन्युच्यन्ते, अतः पूर्वरूपलक्षणमाह—पूर्वेत्यादि। उत्पत्तेः प्राक् प्रागुत्पत्ति। एतेन उत्पत्तेः पूर्वं यद्भविष्यद्व्याधेर्लक्षणं तत् पूर्वरूपम्[1]। निदानसेवा तु भाविव्याधिबोधिका भवत्यपि[2] निदानशब्दगृहीतत्वादेव तथा लक्षणशब्दानभिधेयत्वाच्च न पूर्वरूपशब्देनोच्यते। उक्तं ह्यन्यत्र–"स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम्। लिङ्गं कुर्वन्ति यद्दोषाः पूर्वरूपं तदुच्यते" इति। न च वाच्यं यदनुत्पन्नस्याविद्यमानस्य व्याधेः कथं लक्षणं भवतीति; यतो मेघादपि भाविनी वृष्टिरनुमीयते, तथा रोहिण्युदयं दृष्ट्वा कृत्तिकोदयोऽनुमीयते। तच्च पूर्वरूपं द्विविधम्–एकं भाविव्याध्यव्यक्तरूपं, यदुक्तम्—"अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्' (चि. अ. ११) इति, तथा "लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम्" (वा. नि. अ. १) इति[3]; द्वितीयं तु दोषदूष्यसंमूर्च्छनावस्थाजन्यमव्यक्तलिङ्गादन्यदेव; यथा—ज्वरे बालप्रद्वेषरोमहर्षादि; न[4] ह्येतत् पूर्वरूपं ज्वरावस्थायां नियमेन व्यक्तं भवति, किन्तु ज्वरपूर्वकाल एव; यत्र तु व्यक्तं भवति, स चासाध्यो मतः[5]। अत एवैवंभूतपूर्वरूपाभिप्रायेणैवारिष्टे वक्ष्यति—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरस्सरः" (इं. अ. ५) इति; तथा—"अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" (इं. अ. ५) इति। एतद्धि यद्यव्यक्तलक्षणपूर्वरूपाभिप्रायेण वचनं स्यात्तदा सर्वज्वराणाम-

१ 'प्रायेणामाशयसमुत्थत्वेनामय इत्युच्यते' इति पा०।

१ 'पूर्वरूपाण्युत्पद्यन्ते' इति पा०। २ अस्याग्रे 'तथाऽपि' इत्यधिकं पठ्यते हस्तलिखितपुस्तके। ३ 'लिङ्गं लक्षणम्; अव्यक्तं नालमभिव्यक्तम्; अत्र हेतुः–अल्पत्वात् अणुत्वात्, नत्वावरणादियोगादव्यक्तमित्यर्थः' इति मधुकोशे। ४ 'नह्येतत्पूर्वरूपं ज्वरावस्थायां व्यक्तं भवति, अत एवैवंभूतपूर्वरूपाभिप्रायेणैवारिष्टे वक्ष्यति' इति पा०। ५ 'स चासाध्यः प्रकीर्तितः' इति पा०।

साध्यत्वं स्यात्, यतः पूर्वरूपावस्थायामव्यक्तानि लक्षणानि ज्वरे जाते व्यक्तानि सर्वाणि सर्वत्रैव भवन्ति; तस्मात् पूर्वरूपावस्थाप्रतिनियतपूर्वरूपाभिप्रायेणैवैतद्वचनम्। अव्यक्तता च लक्षणानामियमेव—यदल्पत्वेनास्फुटत्वम्। यत्तु पूर्वरूपं दोषदूष्यसंमूर्च्छनावस्थानियतं तद् व्याधिमात्रस्य गमकं, न तद्दोषविशेषं गमयति। एतत्पूर्वरूपाभिप्रायेण च वाग्भटेऽप्युक्तं यत्—"प्राग्रूपं येन लक्ष्यते। उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः" (वा. नि. अ. १) इति। यत्तु अव्यक्तलिङ्गं रूपं पूर्वरूपं, तद्दोषविशेषमपि व्याधेर्गमयति, यदुक्तं हारीते—"इति पूर्वरूपमष्टानां ज्वराणां सामान्यतः, विशेषतस्तु जृम्भाङ्गमर्दभूयिष्ठं हृदयोद्वेगि वातजम्" इत्यादि, तथा सुश्रुतेऽप्युक्तं—"सामान्यतो, विशेषात्तु जृम्भाऽत्यर्थं समीरणात्। पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम्" (सु. उ. अ. ३९) इति, एतद्धि पूर्वरूपं भाविज्वरलिङ्गमेवाव्यक्तमल्पत्वेनेति ज्ञेयम्। व्यक्ते हि ज्वरे वातादिजे जृम्भादयः पूर्वरूपापेक्षयाऽत्यर्थं भवन्ति। एवं पूर्वरूपद्वैविध्ये यत्र विशिष्टं पूर्वरूपमस्ति तत्र साक्षादेवाभिधीयते, यत्र विशिष्टं नास्ति तत्र लिङ्गमात्रं वक्ष्यति; तेनाव्यक्तान्येव लिङ्गानि पूर्वरूपमिति तत्र ज्ञातव्यम्॥ ८॥

**प्रादुर्भूतलक्षणं पुनर्लिङ्गम्। तत्र लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम्॥ ९॥**

लक्षणमाह—प्रादुर्भूतेत्यादि। उत्पन्नव्याधेः स्वरूपं, तथा वाताद्यामपक्वादिविशेषणविशिष्टं व्याधिं निदानोपशयसंप्राप्तिव्यतिरिक्तं यद्बोधयति, तल्लिङ्गम्। अनेन च व्याधिप्रतिनियतं लिङ्गं यथा—ज्वरस्य संतापः, तथा अतिसरणमतीसारस्येत्यादि गृह्यते; तथा वातादिकृतं च वातादिज्वरस्य विषमारम्भविसर्गित्वादि गृह्यते; तथा आमपक्वजीर्णज्वरलक्षणादीनि विशिष्टव्याधिबोधकानि गृह्यन्ते; तथा उपद्रवाश्चासाध्यतावस्थापन्नव्याधिबोधकत्वेन लक्षणान्येव। रिष्टं तु मरणस्य पूर्वरूपमेव। निदानादयस्तु यद्यप्युत्पन्नव्याधिगमका अपि भवन्ति, तथाऽपि पृथग्लक्षणानिर्देशान्न ते इह लिङ्गशब्देनोच्यन्ते। व्यवहारार्थं तथा लक्षणार्थं च लिङ्गपर्यायानाह—तत्र लिङ्गमित्यादि। अस्मिन्नर्थेऽनर्थान्तरमिति लिङ्गलक्षणेऽर्थेऽभिधेयेऽनर्थान्तरं, प्रकरणान्तरे त्वर्थान्तरेऽपि लिङ्गादयो भवन्ति; यथा—"वली लिङ्गं समर्पयेत्" (चि. अ. २) इत्यत्र शेफ उच्यते, तथा "संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या" (इ. अ. ७); तथा "लक्षणवच्चोदाहरणवच्च" (वि. अ. ८), तथा "तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत्", तथा "रूपस्य सत्त्वस्य च सन्ततिर्या" (शा. अ. २) इत्यादौ। ननु, यथेह 'अस्मिन्नर्थे' इत्युक्तं तथा हेतुव्याधिसंप्राप्तिपर्यायाभिधानेऽपि 'अस्मिन्नर्थे' इति वक्तव्यम्? न, हेतुपर्यायाभिधाने तावत् 'इह खलु' इत्यनेनैव तदर्थं उक्त एव, संप्राप्तिपर्यायकथने च व्याधेरिति पदेनैव 'अस्मिन्नर्थे' इतिपदस्यार्थो लभ्यत एव, गदपर्यायेषु तु नार्थान्तरता प्रायो दृश्यते, तेन तत्र 'अस्मिन्नर्थे' इति न कृतम्। अयं चाचार्याभिप्रायो यत्—यत्रान्यार्थतां शब्दस्य पश्यति, तत्रैव 'अस्मिन्नर्थे' इति करोति, यथा—'समवेतानां पुनर्दोषाणामंशांशविकल्पो विकल्पोऽस्मिन्नर्थे' इति। विकल्पशब्दो ह्ययमन्यत्रापि वर्तते, यथा—"अन्यैश्च विकल्पैर्विकल्पितानां" (वि. अ. १), तथा "विकल्पो न त्वसाध्यानां" (सू. अ. १०) इत्यादि। ननु पूर्वरूपोपशययोः किमिति पर्यायानभिधानम्? ब्रूमः—पूर्वरूपस्य तावत् पर्यायाभिधानं यदेव रूपस्य तदेव; यतः, रूपादय एव हि पूर्वशब्दयुक्ताः पूर्वरूपपर्याया भवन्ति; उपशयस्तु चिकित्सा, तस्यास्तु पर्यायाश्चिकित्सित एव स्वाधिकारत्वेन वक्तव्या इति नेह पुनरुक्ताः॥ ९॥

**उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणां चौषधाहारविहाराणामुपयोगः सुखानुबन्धः॥ १०॥**

उपशयमाह—उपशय इत्यादि। उपशयनमुपशयः सुखानुबन्ध इत्यर्थः। हेतुना, तथा व्याधिना, तथा हेतुव्याधिभ्यां च विपरीता हेतुव्याधिविपरीताः; तेषामौषधाहारविहाराणां, तथा हेतुव्याधिविपरीतार्थकारिणां चौषधान्नविहाराणां; सुखानुबन्ध इति सुखरूपोऽनुबन्धः, अनुबन्धश्च सुखकारणमित्यर्थः। अयं चोपशयो गूढलिङ्गे च व्याधौ ज्ञानोपायो भवति। यदुक्तं—"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" (वि. अ. ४) इति; उक्तं च त्रिशोथीये—"स्नेहोष्णमर्दनाभ्यां च प्रणश्येत् स च वातिकः" (सू. अ. १८)। अत्र च विपरीतार्थकारि तदेवोच्यते यदविपरीततयाऽऽपाततः प्रतीयमानं विपरीतस्यार्थं प्रशमलक्षणं करोति। अत्रोदाहरणानि लिख्यन्ते—हेतुविपरीतमौषधं यथा—शीतकफजे ज्वरे शुण्ठ्याद्युष्णं भेषजं, हेतुविपरीतमन्नं यथा—श्रमानिलजे ज्वरे रसौदनः, हेतुविपरीतो विहारो यथा—दिवास्वप्नोत्थकफे रात्रौ जागरणं, व्याधिविपरीतमौषधं यथा—अतीसारे स्तम्भनं पाठादि, व्याधिविपरीतमन्नं यथा—अतीसारे स्तम्भनं मसूरादि, व्याधिविपरीतो विहारो यथा—उदावर्ते प्रवाहणं, हेतुव्याधिविपरीतमौषधं यथा—वातशोथे वातहरं शोथहरं च दशमूलं, हेतुव्याधिविपरीतमन्नं यथा—शीतोत्थज्वरे उष्णा ज्वरघ्नी च

१ 'उत्पित्सुः सामग्रीसाकल्यादुत्पादेच्छुः, आमयो रोगः, दोषविशेषेण वातादिजन्यासाधारणवेपथ्वादिना, अनधिष्ठितोऽसंबद्धः' इति मधुकोशे। २ प्राग्रूपं द्विविधं सामान्यं, विशिष्टं च; सामान्यं तु दोषदूष्यसंमूर्च्छनावस्थाजनितं, येन भाविज्वरादिव्याधिमात्रं प्रतीयते, नतु वातादिजनितत्वादिविशेषः; विशिष्टं पुनर्भाविव्याधिलिङ्गानामव्यक्तत्वम्। अरुणदत्तेन तु (वाग्भटव्याख्यायां) पूर्वरूपत्रैविध्यं दर्शितं—शारीरं, मानसं, शारीरमानसं च।

१ 'सुखकराणामित्यर्थः' इति पा०।

यवागूः, हेतुव्याधिविपरीतो विहारो यथा—स्निग्धदिवास्वप्नजायां तन्द्रायां रूक्षं तन्द्राविपरीतं च रात्रिजागरणं, हेतुविपरीतार्थकार्यौषधं यथा—पित्तप्रधाने पच्यमाने शोथे पित्तकर उष्ण उपनाहः, हेतुविपरीतार्थकार्यन्नं यथा—पच्यमाने पित्तप्रधाने शोथे विदाह्यन्नं, हेतुविपरीतार्थकारी विहारो यथा—वातोन्मादे संत्रासनं, व्याधिविपरीतार्थकार्यौषधं यथा—छर्द्यां वमनकारकं मदनफलादि; व्याधिविपरीतार्थकार्यन्नं यथा—अतीसारे विरेककारकं क्षीरं, उक्तं हि—"बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति । पैत्तिको यद्यतीसारः पयसा तं विरेचयेत्" ( चि. अ. १९ ) इति; व्याधिविपरीतार्थकारी विहारो यथा—छर्द्यां वमनसाध्यायां वमनार्थं प्रवाहणं; हेतुव्याधिविपरीतार्थकार्यौषधं यथा—अग्निना दुष्टेऽगुर्वादिना लेपः, उष्णं हि हेतावग्नौ व्याधौ च दाहेऽनुगुणं प्रतिभाति; हेतुव्याधिविपरीतार्थकार्यन्नं यथा—मद्यपानोत्थे मदात्यये मदकारकं मद्यं; हेतुव्याधिविपरीतार्थकारी विहारो यथा—व्यायामजनितसंमूढवाते जलप्रतरणादिरूपो व्यायामः, अयं हेतौ व्यायामे व्याधौ च संमूढवातेऽनुगुणः प्रतिभाति । ननूपशयवदनुपशयोऽपि व्याधिपरीक्षकोऽस्ति, उच्यते च—"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" ( वि. अ. ४ ), तथा वाग्भटेऽप्युक्तं,—"विपरीतोऽनुपशयः स ह्यसात्म्यमिति स्मृतः" (वा. नि. अ.१) इति; सत्यमस्ति च, परं निदानग्रहणेनैव गृहीतत्वान्न पृथगुच्यते; अनुपशयोऽपि हेतुसेवयैव भवति ॥ १० ॥

**संप्राप्तिर्जातिरागतिरित्यनर्थान्तरं व्याधेः ॥ ११ ॥**

यद्यपि संप्राप्त्यनन्तरं लिङ्गप्रादुर्भावः, तथाऽपि संप्राप्तेर्व्याधिनिरूपणं प्रत्यल्पप्रयोजनत्वाच्छेषतः संप्राप्तिमाह—संप्राप्तिरित्यादि । जातिः जन्म; संप्राप्त्यागतिजातिशब्दैर्योऽर्थोऽभिधीयते सा व्याधेः संप्राप्तिरित्यर्थः । अ(त)त्रैके व्याधिजन्ममात्रमन्त्यकारणव्यापारजन्यं संप्राप्तिमाहुः । इयं च संप्राप्तिर्यद्यपि निदानादिवद् व्याधिबोधिका न भवति, तथाऽपि नानुत्पन्नस्य व्याधेर्लक्षणं भवतीति कृत्वा उपत्तेर्व्याध्युपलम्भकत्वं वर्णयन्ति । एतच्चान्ये न मन्यन्ते, यतो नैवं सति संप्राप्तितः कश्चिद्विशेषो व्याधेरधिगम्यते । न चायं नियमः—यदुत्पन्न एव परं व्याधिरुपलभ्यते, यतो निदानपूर्वरूपाभ्यामनुत्पन्नोऽपि व्याधिर्भावित्वेन बुध्यते । तस्माद् व्याधिजनकदोषव्यापारविशेषयुक्तं व्याधिजन्मेह संप्राप्तिशब्देन वाच्यम्, अत एव पर्याये 'आगतिः' इत्युक्तम् । आगतिर्हि उत्पादकारणस्य व्याधिजननपर्यन्तं गमनम् । इयं च संप्राप्तिर्व्याधिविशेषं बोधयत्येव । यथा ज्वरे—'स यदा प्रकुपितः प्रविश्यामाशयम्' इत्यारभ्य 'तदा ज्वरमभिनिर्वर्तयति' इत्यन्तेन या संप्राप्तिरुच्यते, तया ज्वरस्यामाशयदूषकत्वाम्युपघातकत्वरसदूषकत्वादयो धर्माः प्रतीयन्ते । न च वाच्यं—दोषाणामयमामाशयदूषकत्वादिधर्मः, ततश्च कारणधर्माणां निदानग्रहणेनैव ग्रहणं भवतीति; यतः, कारणधर्मोऽप्ययं व्याधिजनकदोषव्यापाररूपः संप्राप्तिशब्देन विशेषबोधनार्थं पृथक् कृत्वोच्यते; यथा—लिङ्गत्वाविशेषेऽपि भाविव्याधिबोधकत्वविशेषात् पूर्वरूपं पृथगुच्यते, अत एव वाग्भटेऽप्येवमेव संप्राप्तिलक्षणमुक्तं—"यथा-दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः" ( वा. नि. अ. १ ) इति ॥ ११ ॥

**सा संख्याप्राधान्यविधिविकल्पबलकालविशेषैर्भिद्यते ॥ (१) ॥**

संप्रति संप्राप्तेः प्रतिव्याधिव्यक्तिभिन्नायाः सर्वत्र व्याधौ तत्प्रयोजनाभावान्न भेदो वक्तव्यः, यस्तूपयुक्तो भवति संप्राप्तिविशेषस्तमभिधास्यत्येव, "स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यादिना ग्रन्थेन; अतः सर्वसंप्राप्त्यनभिधानान्न्यूनतादोषपरिहारार्थं सर्वव्याधिसाधारणान् संप्राप्तिभेदानाह—सा संख्येत्यादि । —सा संप्राप्तिः संख्यादिभिर्भिद्यते इति संख्यादिभिन्ने व्याधौ भिन्ना भवतीत्यर्थः; यतो न भिन्नानां भावानामभिन्नोत्पत्तिर्भवति, किन्तर्हि भिन्नैव भवति; यद्यपि च प्रतिव्याधि व्यक्ताऽपि संप्राप्तिर्भिन्नैव भवति, तथाऽपि स भेदः संप्राप्तेरिह प्रयोजनाभावान्नोच्यते; यतः, संख्याप्राधान्यविध्यादितुल्यासु ज्वरव्यक्तिषु एकरूपनिदानलिङ्गचिकित्सितासु भेदप्रतिपादने न किंचित् प्रयोजनमस्ति, संख्यादिभिन्ने तु ज्वरादौ निदानलिङ्गचिकित्साभेदोऽस्ति, अतः संख्यादिभेदजनकायाः संप्राप्तेर्भेदकथनमुचितमेव ॥(१)॥

**संख्या तावद्यथा—अष्टौ ज्वराः, पञ्च गुल्माः, सप्त कुष्ठान्येवमादिः ॥ (२) ॥**

संख्याभेदमुदाहरति—संख्या तावदित्यादि । यद्यपि प्राधान्यादिभेदभिन्नेऽपि व्याधौ संख्याभेदोऽस्त्येव, तथाऽपीह यैव शास्त्रसिद्धा अष्टौदरीयादिप्रतिपादिता संख्या सैव संख्याशब्देन प्राप्ता । अत एवाष्टौ ज्वरा इत्यभिधाय द्विविधं शोणितपित्तमिति क्रमात् प्राप्तं रक्तपित्तं नोदाहृतं; यतः, द्विविधत्वं हि रक्तपित्तस्य विधिभेदे प्रविशति न संख्यायां, 'द्विविधं शोणितपित्तम्' इति विधिशब्देनैवोक्तत्वात् ॥ (२) ॥

**प्राधान्यं पुनर्दोषाणां तरतमाभ्यामुपलभ्यते । तत्र द्वयोस्तरः, त्रिषु तम इति ॥ (३) ॥**

प्राधान्यं पुनरित्यादौ तरतमाभ्यामिति तरतमशब्दाभिधेयाभ्यां वृद्धिभ्याम् । तरतमशब्दयोर्विषयं विभजते—द्वयोरित्यादि ।—द्वयोस्तर इति द्वयोर्दोषयोर्वृद्धयोस्तरप्रयोगो भवति—वृद्धतर इति । एवं त्रिषु तम इति त्रिषु दोषेषु

१ 'स्निग्धस्वप्नजातायां' इति पा० । २ 'जागरणं' इति पा० ।
३ 'दोषाणामयं ज्वरे आमाशयदूषकत्वादिर्धर्मः' इति पा० ।

१ 'येन प्रकारेण दुष्टः कुपितो वाताद्यन्यतमो दोषो यथादुष्टस्तेन यथादुष्टेन दोषेण, यथाचानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता, प्रत्यामयं वा निर्वृत्तिर्निष्पत्तिरुद्भव इति यावन्निर्दिष्टा, सा संप्राप्तिः' इति वाग्भटटीकायामरुणदत्तः ॥

वृद्धेषु सत्सु तमप्रयोगो भवति—वृद्धतम इति। तदेवं द्वन्द्वारब्धे विकारेऽन्यतरदोषस्य तरशब्दलक्षितेन प्राधान्येन संप्राप्तिर्मिद्यते, तथा त्रिदोषारब्धे विकारे तमशब्दलक्षितान्यतमदोषप्राधान्यात् संप्राप्तिर्भिद्यते, इत्युक्तं भवति ॥ (३) ॥

**विधिर्नाम—द्विविधा व्याधयो निजागन्तुभेदेन, त्रिविधास्त्रिदोषभेदेन, चतुर्विधाः साध्यासाध्यमृदुदारुणभेदेन ॥ (४) ॥**

संप्राप्तिभेदं क्रमागतं विधिमाह—विधिर्नाम द्विविधा व्याधयो निजागन्तुभेदेनेत्यादिना। विधिरिति विधिकृत इत्यर्थः। तेन द्विविधत्वादयो भेदा यतो भवन्ति स विधिः; विधिश्च प्रकारो भेद इत्यर्थः। साध्यासाध्यमृदुदारुणभेदेनेति साध्यासाध्यगतेन मृदुदारुणभेदेन; तेन, मृदुसाध्यं सुखसाध्यं, दारुणसाध्यं कृच्छ्रसाध्यं रोहिणीवलयादि, तथा मृदुसाध्यं याप्यं, दारुणासाध्यं प्रत्याख्येयमिति भेदचतुष्टयम्। यद्यपि च संख्याप्राधान्यादिकृतोऽपि व्याधेर्विधिभेदो भवत्येव, तथाऽपि संख्यादिभेदानां स्वसंज्ञयैव गृहीतत्वाद्गोबलीवर्दन्यायात् संख्याद्यगृहीते व्याधिप्रकारेऽयं विधिशब्दो वर्तनीयः ॥ (४) ॥

**समवेतानां पुनर्दोषाणामंशांशबलविकल्पो विकल्पोऽस्मिन्नर्थे[१] ॥ (५) ॥**

क्रमागतं विकल्पमाह—समवेतानामित्यादि।—समवेतानामिति सर्वेषां; तेन, एकशो द्विशो मिलितानां च दोषाणां ग्रहणम्। अंशमंशं प्रति बलमंशांशबलं, तस्य विकल्प उत्कर्षापकर्षरूपोंऽशांशबलविकल्पः; एवंभूतो दोषाणामंशांशबलविकल्पोऽस्मिन्नर्थे इति अस्मिन् प्रकरणे विकल्प उच्यते। प्रकरणान्तरे तु विकल्पशब्देन भेदमात्रमुच्यते; यथा—"विकल्पो न त्वसाध्यानां" (सू. अ. १०) इत्यादाविति भावः। तत्र दोषाणामंशांशविकल्पो यथा—वाते प्रकुपितेऽपि कदाचिद्वातस्य शीतांशो बलवान् भवति, कदाचिद्रूक्षांशः, कदाचिल्लघ्वंशः, कदाचिल्लघुरूक्षांश इत्यादि; एवं पित्तकफयोरप्युदाहार्योऽशांशविकल्पः; अयं चांशांशबलविकल्पो दोषाणां शीतादिगुणोद्भूतहेतुभेदाद्भवति ॥ (५) ॥

**बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहारकालविधिविनियतो भवति ॥ १२ ॥**

बलकालविशेषमाह—बलेत्यादि।—बलस्य कालो बलकालः, तस्य विशेषो वसन्तपूर्वाह्णादिर्बलकालविशेषः। ऋतवश्चाहोरात्राहारयोः कालाश्च ऋत्वहोरात्राहारकालाः, तेषां भेदो विधिः, तत्र विशेषेण नियतो बलकालविशेषः ऋत्वहोरात्राहारकालविधिविनियतः; तत्र ऋतुविनियतो बलकालविशेषो यथा—श्लेष्मज्वरस्य वसन्तः, अहोरात्रविनियतो यथा—श्लेष्मज्वरस्य पूर्वाह्णः प्रदोषश्च, आहारविनियतो यथा—श्लेष्मज्वरस्य भुक्तमात्रकालः, एवमाद्युन्नेयम्। केचित्तु विधिशब्देन पूर्वकृतं कर्म ब्रुवते, तत्रापि कर्मनियतो बलकालविशेषः पच्यमानकर्मकाल एव ज्ञेयः। एषु च बलकालेषु यद्यपि व्याधेरभूतप्रादुर्भावरूपा संप्राप्तिर्न भवति, तथाऽपि व्याधिसन्ताने तत्कालं व्याध्युत्पत्तौ संप्राप्तिर्भिन्नैव भवतीति मन्तव्यम्। इयं च कालविशेषप्राप्त्या बलवद्व्याधिजनिका संप्राप्तिर्व्याधेर्विशेषं स्फुटमेव बोधयति। यतः पूर्वाह्णे बलसंप्राप्त्या ज्वरस्य कफजत्वमुन्नीयते, मध्याह्ने च बलप्राप्त्या पित्तजत्वमित्यादि। इह च संप्राप्तेरेव विशेषाः संख्यादिकृता उक्ताः, न तु निदानादीनां विशेषाः; यतो निदानादिविशेषाः प्रतिव्याधिवक्ष्यमाणभेदेनैवोपयुक्ताः। यतो यादृग् ज्वरे निदानं न तादृग् रक्तपित्ते; ये च पूर्वरूपादिविशेषा ज्वरे, न ते रक्तपित्तादौ, किंतु भिन्नजातीया एव। स च भेदो निदानादीनां व्याधिभेदगमकत्वेनोपयुक्तो व्याधिभेदकथन एव वक्तव्यः। संप्राप्तेस्तु संख्यादिभेदः सर्वव्याधिष्वेकजातीयत्वेन न विशेषगमक इति इहैव सर्वव्याधिनिदाने कथ्यते; निदानादिविशेषास्तु प्रतिव्याधिविशिष्टत्वेन नेह प्रपञ्चेनोच्यन्ते। अत एव चात्रैवाध्याये संप्राप्तेः सामान्याभिधानेनैवोक्तत्वात् संप्राप्तिं परित्यज्य निदानादिविशेषं प्रतिजानीते—तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुव्याख्यास्याम इति ॥ १२ ॥

**तस्माद्व्याधीन् भिषगनुपहतसत्त्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुद्ध्येत ॥ १३ ॥**

यस्मादिमे निदानादय उक्तेन न्यायेन व्याधिपरीक्षायामुपयुक्ताः, तस्माद्व्याधीन् भिषग् हेत्वादिभिः परीक्षेतेति योजना। न च वाच्यं यत्–निदानादीनां मध्ये चेदन्यतमेनापि व्याधिपरिच्छेदं कर्तुं समर्थस्तत् किं पञ्चकाभिधानेनेति; यतो यावन्तो ज्ञानोपाया व्याधीनां ते सर्वे एवोपदर्शनीयाः। तत्र यो निदानं विस्मृतवान्, तस्य पूर्वरूपादिभिर्व्याधिः परीक्ष्यते; तथा यत्र च पूर्वरूपादयो विस्मृताः संदिग्धा वा, तत्रोपशयेन परीक्षा भवति; एवं कफजत्वसंदेहे ज्वरस्य संप्राप्तिरपि पूर्वाह्णे भुक्तमात्रे वा भवन्ती कफजत्वं गमयतीत्यादि प्रयोजनमनुसरणीयम्। तथा पूर्वरूपेणापि लिङ्गसामान्यनिश्चयें उक्तः; यदुक्तं—"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः। यो मूत्रयेत्तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः" (चि. अ. ६) इति। तथा लिङ्गनिश्चितेऽपि व्याधौ पूर्वरूपेणासाध्यत्वमुक्तं, यथा—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः" (इं. अ. ५) इति। तस्मान्निदानादिपञ्चकमभिधातव्यमेव। ननु, लिङ्गेन व्याधिः परीक्षणीय इति वचनाल्लिङ्गव्यतिरिक्तो व्याधिरित्युक्तं भवति; तत्र च न लिङ्गसमुदायव्यतिरिक्तो व्याधिरुपलभ्यते, विषमारम्भिविसर्गित्वादयो हि संतापसहिता ज्वराः, तथा प्रतिश्यायकासाद्येका-

१ 'पृथक् समवेतानां च' इति पा०।

१ 'पूर्वरूपोपशयविशेषा' इति पा०। २ 'निदानादिविशेषाभिधानं, तत्प्रतिजानीते' इति पा०। ३ 'अन्यतमेनापि व्याधिं परिच्छेत्तुं समर्थः' इति पा०। ४ 'भवतीति' इति पा०। ५ 'सामान्यो लिङ्गनिश्चयः' इति पा०।

दशरूपमेलक एव यक्ष्मा। नैवं, लिङ्गत्वेन शास्त्रे प्रतिपादितानां तदतिरिक्तव्याध्यभावे लिङ्गत्वानुपपत्तेः, वचनं हि—"विषमारम्भमूलैश्च ज्वर एको निरुच्यते" (नि. अ. ८) इति। विकारश्चेह दोषदूष्यमेलकविशेषो ज्वरादिशब्देनोच्यते। स च दोषदूष्यविशेषात्मा ज्वरोऽरुच्यादिभ्यो दोषदूष्यवैषम्यविशेषेभ्योऽर्थान्तरमेव। न च वाच्यं ज्वरलिङ्गारुच्यङ्गमर्दादिरूपधातुवैषम्यविशेषमेलको ज्वरोऽस्तु, अलं तदतिरिक्तज्वरकल्पनया, लिङ्गलिङ्गिभावश्च समुदायसमुदायिभेदाद्भविष्यतीति; यत एवमप्यरुच्यङ्गमर्दादिधातुवैषम्यानुगतो धातुवैषम्यविशेषो ज्वररूपोऽवयवीति भिन्न एव वक्तव्यः; जङ्घाबाहुशिरोन्तराध्यवयवानतिरिक्तमेव शरीरमवयविरूपम्। दुःखमेव व्याधिरिति पूर्वमेव पराकृतं, तेन दुःखरूपत्वाद्व्याधेरवयवित्वं न संभवतीति न वाच्यम्। लिङ्गानि तु खरूपेण व्याधयो भवन्ति, ते च बोद्धव्यव्याध्यपेक्षया लिङ्गानि भवन्ति। तदुक्तं—"व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः" (नि. अ. ८) इति। लिङ्गलिङ्गिभावश्च जिज्ञासावशाद्भवति। यद्वक्ष्यति—"विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः। विषमारम्भमूलैश्च ज्वर एको निरुच्यते" (नि. अ. ८) इति। अस्य चार्थमपस्मारनिदाने प्रकरणागतं व्याख्यास्यामः। तस्मात् सुस्थितं व्याधिगमकत्वं निदानादिपञ्चकस्येत्यर्थः ॥१३॥

**इत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टो भवति। तं विस्तरेणोपदिशन्तो भूयस्तरमतोऽनुव्याख्यास्यामः ॥ १४ ॥**

इतीत्यादौ इति परिसमाप्तौ। निदानस्थानस्येति सर्वव्याधिनिदानस्य। अर्थसंग्रह इत्यनेनैव संक्षेपार्थाभिधाने लब्धे उद्दिष्ट इति संक्षेपाभिधायिपदकरणेन संक्षेपस्यापि संक्षेपाभिधानमेतदिति दर्शयति। तमिति सामान्यनिदानोद्देशम्, अतो निदानोद्देशमात्रतो भूयस्तरमुपदिशन्तो विस्तरेण व्याख्यास्याम इति योजना। तेनैतदतिसंक्षेपकथनापेक्षया प्रपञ्चकथनमेवेह विस्तरशब्दार्थ इति दर्शयति; तेन निदानादीनां यावद्विस्तरकथनमुत्तरत्रोपपन्नं भवति ॥ १४ ॥

**तत्र प्रथमत एव तावदाद्याँल्लोभाभिद्रोहकोपप्रभवानष्टौ व्याधीन्निदानपूर्वेण क्रमेण व्याख्यास्यामः, तथा सूत्रसंग्रहमात्रं चिकित्सायाः। चिकित्सितेषु[१] चोत्तरकालं यथोपचितविकाराननुव्याख्यास्यामः ॥ १५ ॥**

तत्रेत्यादिना ज्वराद्यष्टविधरोगस्य निदानस्थाने कथनं प्रतिजानीते। प्रथमत एव तावदित्यनेन पश्चाच्चिकित्साभिधेयानर्शःप्रभृतीन् सूचयति। आद्यानित्यनेन आदौ दक्षाध्वरोद्ध्वंसे उत्पन्ना ये तेषामिह कथनं दर्शयति। यद्यपि च राजयक्ष्मा पृथगेवोत्पन्नः, वचनं हि—"अतिव्यवायात् पुनर्नक्षत्रराजस्य यक्ष्मा" (नि. अ. ८) इति, तथाऽप्यस्य प्राधान्यादिहाभिधानम्। यद्यपि च दक्षाध्वरोद्ध्वंसोद्भूतानपस्मारान्तानभिधाय पृथगुत्पन्नस्य यक्ष्मणोऽभिधानमुचितं, तथाऽप्युन्मादापस्मारयोरागन्तुत्वेन शोषमप्यभिधायान्तेऽभिधानम्। लोभाभिद्रोहप्रभवानित्यनेन जनपदोद्ध्वंसनीये "प्रागपि चाधर्माद्दते न रोगोत्पत्तिरभूत्" (वि. अ. ३) इत्यनेन वक्ष्यमाणानां ज्वरादीनां लोभाभिद्रोहजन्यतां दर्शयति, अनेनाधर्मजत्वं ज्वरादीनामुक्तं भवति। निदानपूर्वेणेति निदानप्रथमेन। क्रमेणेति रोगसामान्योक्तनिदानपूर्वरूपरूपोपशयसंप्राप्तिरूपेण। अयं च क्रमः क्वचित् प्रयोजनवशाद्बाध्यते; यथाऽत्रैव ज्वरेऽग्रे हि रूपमभिधाय पूर्वरूपमभिधातव्यम्[१]। क्रमभेदप्रयोजनं चेह यत्—रूपाण्यत्र प्रतिज्वरमभिधातव्यानि, न तु प्राग्रूपाणि प्रतिज्वरमभिधातव्यानि; तेन सर्वसाधारणत्वात् सर्वमभिधाय प्राग्रूपं सामान्यमभिधातव्यम्। तथा, सूत्रसंग्रहमात्रं चिकित्साया व्याख्यास्याम इति संबन्धः। निदाने च चिकित्साभिधानप्रयोजनं प्रागेवोक्तम्। सूत्रमिति कृत्वा यत् संग्रहमिति करोति तेन सूत्रस्यापि संक्षेपेणाभिधानं दर्शयति; तथा चिकित्सासूत्रमपीह किंचिच्च वक्तव्यं, यथा—लङ्घनकालयवाग्वादयः। चिकित्सितेष्वित्यनेनैव चोत्तरकालत्वे लब्धे पुनरुत्तरकालमिति वचनं चिकित्सितस्थानेऽपि ज्वराद्यभिधानोत्तरकालमेव यथोपचितविकाराणां निदानादिकथनं दर्शयति। यथोपचितमिति ये ये उपचिता विकाराः शोथार्शःप्रभृतयस्तान्। किंवा, 'यथाचितम्' इति पाठः, तत्रापि यथाप्रधानमित्यर्थं उन्नेयः। चिकित्सिते च विकाराणां निदानाद्यभिधानं निदानादिनाऽव्यवधानेन प्रतीते विषये चिकित्सा सम्यक् प्रतीयत इत्यभिप्रायेण। अत एव च ज्वरादीनामपि पुनर्निदानाद्यभिधास्यति, इह तु ज्वरादीनां निदानाद्यभिधानं बहुवक्तव्यत्वेन स्थानभेदं कृत्वा कृतम्। स्थानभेदकरणेन च चिकित्सावदायुर्वेदे निदानस्यापि ज्ञेयत्वेन प्राधान्यं दर्शयति ॥ १५ ॥

**इह खलु ज्वर एवादौ विकाराणामुपदिश्यते, तत्प्रथमत्वाच्छारीराणाम् ॥ १६ ॥**

इह खल्विति अष्टविधव्याधिनिदाने वक्तव्ये। शारीराणामित्यनेन कामक्रोधादिमानसं[२] रोगं प्रति न ज्वरस्य प्रथमत्वमिति दर्शयति ॥ १६ ॥

**अथ खल्वष्टाभ्यः कारणेभ्यो ज्वरः संजायते मनुष्याणां; तद्यथा—वातात्, पित्तात्, कफात्, वातपित्ताभ्यां, वातकफाभ्यां, पित्तकफाभ्यां, वातपित्तकफेभ्यः, आगन्तोरष्टमात् कारणात् ॥ १७ ॥**

ज्वरस्य निरूपणीयस्य कारणकृतं भेदमाह—अथेत्यादि। एतच्च कारणं वातादि सन्निकृष्टम्। मनुष्याणामितिवचनेन

१ 'चिकित्सितं चोत्तरकालं यथोद्दिष्टं विकाराणाम्' इति पा०।
२ 'यथाचितं', 'यथाचित्रं', 'यथोद्दिष्टं' इति च पाठान्तराणि।

१ 'रूपमभिधाय सामान्यं प्राग्रूपमभिधातव्यं' इति पा०।
२ 'कामक्रोधादिमनःसंयोगं प्रति' इति पा०।

गोगजशकुन्यादीनां नावश्यमिदं ज्वराष्टत्वमनुगामीति दर्शयति; तथाहि—हस्त्यादीनां पाकलादयो नाष्टविधाः प्रतिपाद्यन्ते। आगन्तोरिति वक्तव्ये अष्टमादिति वचनमागन्तोरभिघातादिचतुष्कारणभेदेऽप्येकत्वोपदर्शनार्थम्। आगन्तुर्हि कारणभेदोत्पन्नोऽप्येकरूप एव, यत आगन्तुः सर्वो व्यथापूर्वमेव भवति; यस्तु तत्र, "कामशोकभयाद्वायुः" (चि. अ. ३) इत्यादिना भेदो वक्तव्यः, स वातादिकृत एवेति भावः ॥ १७ ॥

**तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुव्याख्यास्यामः ॥ १८ ॥**

तस्येत्यादौ तस्येति ज्वरस्य। विशेषानिति निदानादिभिः प्रत्येकं संबध्यते। निदानादिविशेषाश्चेह रोगान्तररक्तपित्ताद्यपेक्षया तथा परस्परं वातादिज्वरापेक्षया च यथासंभवं बोद्धव्याः। तेन पूर्वरूपविशेष इह रक्तपित्तादिपूर्वरूपापेक्षया बोद्धव्यः, पूर्वरूपस्य विशेषेणेहानभिधानात्। उपशयविशेषानभिधानं च निदानविशेषाभिधानादेव लभ्यते, यतो निदानविपर्ययेणोपशयमभिधास्यति। पूर्वरूपं चेह विशिष्टमव्यक्तलिङ्गविशेषरूपमेव ज्ञेयम्। संप्राप्तेस्तु वक्ष्यमाणाया इहाप्रतिज्ञानं, तस्याः सर्वरोगे संप्राप्तिभेदाभिधाने च कथितत्वात्, तथा निदानादिवत् संप्राप्तेर्व्याधिबोधनं प्रत्यप्रधानत्वाच्च; यश्च संप्राप्तिभेदोऽभिधातव्यः स सर्वरोगसाधारण एव; भेदस्तु तस्या वातादिदोषमात्रकृत एव, वातादिभेदश्च निदानभेद एव। अन्ये तु ब्रुवते—संप्राप्तिं नाभिधास्यत्येवायं, यदेतत् 'स यदा प्रकुपितः' इत्याद्यभिधास्यति, तन्निदानरूपवातादिधर्मकथनमिति कृत्वा निदानान्तर्गतमेव ॥ १८ ॥

**रूक्षलघुशीतवमनविरेचनास्थापनशिरोविरेचनातियोगव्यायामवेगसंधारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिषेकजागरणविषमशरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते ॥ १९ ॥**

रूक्षेत्यादि। वातप्रकोपणं प्रति रूक्षस्य प्रधानत्वेनाग्रेऽभिधानं, रूक्षो हि गुणो वातगुणेषु प्रधानम्। आस्थापनं यद्यपि वातहरमुक्तम्—"आस्थापनानुवासनं तु खलु सर्वोपक्रमेभ्यो वातविकारेषु प्रधानम्" (सू. अ. २०) इति वचनात्, तथापीहास्थापनस्यातियोगो वातहेतुरुक्त एवेति न दोषः। वचनं हि—"उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद्भयम्" (सि. अ. ४) इति। निरूहश्चानुवासनं कृत्वा युक्त एव, मात्राकृतश्च साधारणवातहर इति सिद्धान्तः ॥ १९ ॥

**स यदा प्रकुपितः प्रविश्यामाशयमूष्मणा सह मिश्रीभूयाद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयति ॥ २० ॥**

स यदेत्यादिना संप्राप्तिमाह। यदेति वचनादेवंकुपितोऽपि वायुर्यदाऽऽमाशयप्रवेशादिसंप्राप्तियुक्तो भवति तदैव ज्वरं करोति, नान्यदेति दर्शयति। प्रविश्यामाशयमित्यनेन ज्वरकर्तुर्दोषस्यामाशयदूषकत्वं दर्शयति। अत एव सर्वज्वरेष्वामाशयविशुद्ध्यर्थं लङ्घनमुत्सर्गतो वदन्ति। यद्यपि चामाशयप्रवेशादेवोष्मणाऽपि मिश्रत्वं लभ्यत एव, यत आमाशय एव वह्निस्थानं, "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" (वि. अ. २) इति वचनात्, तथाऽपि वह्निस्थानस्यामाशयैकदेशत्वेनामाशयप्रवेशेऽपि नावश्यं ग्रहणीरूपवह्निस्थानदुष्टिर्विशेषेण लभ्यत इति; अत एवोक्तम्—ऊष्मणा सह मिश्रीभूयेति। रसनामानमित्युच्यमाने आहाररसेऽपि मधुररसादौ प्रसक्तिः स्यात्, अत उक्तम्—आहारपरिणामधातुमिति; आहारपरिणामभवो धातुराहारपरिणामधातुः, तमिति। आहारपरिणामधातुत्वं च परम्परया रक्तादिष्वप्यस्तीत्याह—आद्यमिति; प्रथममित्यर्थः। रसमिति वक्तव्ये रसनामानमिति यत् करोति तेन रसतीति रस इति व्युत्पत्तिमात्रेण रक्तादिषु रससंज्ञां निषेधयति, यत्रैव रससंज्ञा रूढा तं ग्राहयति; एवमन्यत्रापि च यत् पदमधिकार्थमिह प्रतीयते तत् स्पष्टार्थमेव, यतस्त्रिविधशिष्यबुद्धिहितमेव विस्पष्टार्थं तन्त्रं युज्यते। अन्वितिं यथोक्तक्रमेण। अन्वेत्येति गत्वा। पिधायेति अवरुध्य। पक्तिस्थानात् पाचकाग्निस्थानात्। ऊष्माणमिति पाचकवह्निम्। बहिरिति पक्तिस्थानव्यतिरिक्तशरीरे। यद्यपि चोष्माणं निरस्येतिवचनादेव पक्तिस्थानादिति लभ्यते, तथाऽपि पक्तिस्थानादितिवचनेन पक्तिस्थानात् कृत्स्नस्य वह्नेर्निरसनं दर्शयति, इह चोष्मशब्देन पाचकाग्निं व्यपदिशन् पाचकस्य वह्नेरूष्मरूपतां दर्शयति, बाह्यवह्निसदृशज्वालाकारं पित्तं निषेधयति। अत एव च वह्नेर्निरसनादग्निमान्द्यं ज्वरे दर्शितं भवति। वायुश्चात्रातिवृद्धत्वेन वह्नेर्निरासकः, तेनाग्निदीप्तिं न करोति; यत्र हि प्रेरकमात्रो भवति वायुस्तत्र वह्नेर्वृद्धिं करोति; यथा—मेदस्विनः कोष्ठे चरन् वायुरग्निवृद्धिकरो भवति ॥ २० ॥

**तस्येमानि लिङ्गानि भवन्ति; तद्यथा—विषमारम्भविसर्गित्वम्, ऊष्मणो वैषम्यं, तीव्रतनुभावानवस्थानानि ज्वरस्य, जरणान्ते दिवसान्ते निशान्ते घर्मान्ते वा ज्वरस्याभ्यागमनमभिवृद्धिर्वा, विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं रूक्षीभावश्च; अनेकविधोपमाश्चलाचलाश्च वेदनास्तेषां तेषामङ्गावयवानां; तद्यथा—पादयोः सुप्तता, पिण्डिकयोरुद्वेष्टनं, जानुनोः केवलानां च**

१ 'निदानपूर्वरूपलिङ्गोपशयसंप्राप्तिविशेषाननुव्याख्यास्यामः' इति पा०। २ 'संप्राप्तिभेदाभिधानेनैव' इति पा०। ३ 'सर्वज्वरसाधारणः' इति पा०। ४ 'अनुवासनयुक्त एव' इति पा०। ५ 'प्रविश्यामाशयमूष्मणः स्थानमूष्मणा सह' इति पा०।

१ 'पक्तिस्थानमिति लभ्यते' इति पा०। २ 'अत्र च' इति पा०। ३ 'यथा मेदस्विनः, क्षिप्रस्तु वह्निं निर्वापयत्येव' इति, 'मेदस्विनस्तमाक्षिपन् वह्निं निर्वापयत्येव' इति च पा०।

सन्धीनां विश्लेषणम्, ऊर्वोः सादः, कटीपार्श्वपृष्ठस्कन्धबाह्वंसोरसां च भग्नरुग्णमृदितमथितचटितावपाटितावनुन्नत्वमिव, हन्वोश्चाप्रसिद्धिः, स्वनश्च कर्णयोः, शङ्खयोर्निस्तोदः, कषायास्यता आस्यवैरस्यं वा, मुखतालुकण्ठशोषः, पिपासा, हृदयग्रहः, शुष्कच्छर्दिः, शुष्ककासः, क्षवथूद्गारविनिग्रहः, अन्नरसखेदः, प्रसेकारोचकाविपाकाः, विषादजृम्भाविनामवेपथुश्रमभ्रमप्रलापप्रजागररोमहर्षदन्तहर्षाः, उष्णाभिप्रायता, निदानोक्तानामनुपशयो विपरीतोपशयश्चेति वातज्वरस्य लिङ्गानि भवन्ति ॥ २१ ॥

लिङ्गान्याह—तद्यथा विषमेत्यादि । तदिति सामान्येन स्त्रीलिङ्गपुंलिङ्गनपुंसकलिङ्गवक्ष्यमाणरूपप्रत्यवमर्शकं, सर्वलिङ्गप्रत्यवमर्शे हि तदिति सर्वनाम युक्तम् । यथेति उदाहरणे । आरम्भ उत्पादः, विसर्गो मोक्षः, तौ विषमौ यस्य स विषमारम्भविसर्गी; विषमत्वं च कदाचिच्छिरो गृहीत्वा भवति, कदाचित् पृष्ठं, कदाचिज्जङ्घे इत्यादि; एवं मोक्षोऽपि कदाचिच्छिरोऽग्रे मुच्यते इत्यादि; किंवा, ज्वरारम्भमोक्षकालानवस्थितत्वमेव वैषम्यम् । ऊष्मणो वैषम्यमिति क्वचिच्छरीरप्रदेशे महानूष्मा, क्वचिन्मन्द इत्यादि । तीव्रतनुभावानवस्थानानीति तीव्रभावस्तनुभावश्च ज्वरस्य कालाप्रतिनियत इत्यर्थः । एतत्सर्वं वायोरनवस्थितत्वेनोपपन्नम् । यच्च वायोर्जरणान्तदिवसान्तादिषु बलवत्कार्यकर्तृत्वमुक्तं, तदपि प्रायिकत्वेन ज्ञेयम् । अन्यथा, एतद्वेवारम्भादिवैषम्यं न स्यात् । यदि कालविशेषे जरणान्तादौ शरीरप्रदेशविशेषे च जङ्घादौ प्रतिनियमेन वातकोपः स्यात्, तदा शरीरप्रदेशविशेषे वातस्थाने जङ्घादौ कालविशेषे जरणान्तादौ च वातप्रकोपः प्रायिको ज्ञेयः । एतमेव प्रायिकवातकालमाश्रित्याह—जरणान्त इत्यादि । घर्मान्त इति प्रावृषि मुक्तिभाववतो ज्वरस्य सततकादेरभ्यागमनं, नित्यानुषक्तस्य त्वतिवृद्धिरिति व्यवस्था । परुषारुणत्वं च नखादिष्वेव प्रव्यक्तमुपलभ्यत इति कृत्वा नखादय इहोच्यन्ते । त्वग्ग्रहणेनैव वदनग्रहणे लब्धेऽपि वदनग्रहणं वदनत्वचि विशेषेण परुषत्वादिदर्शनार्थम् । स्रुतीभावः अप्रवृत्तिः, सा च योग्यतया मूत्रपुरीषयोरेव नखादिपूक्तयोर्मन्तव्या; किंवा, स्रुतीभावो भेदः स्फुटनमिति यावत्; स च नखादीनाम् । चलाश्च काश्चिद्वेदना अचलाश्च काश्चिन्नित्यानुपक्तत्वेनेति चलाचलाः; किंवा अत्यर्थं चलाश्चलाः । पिण्डिका जान्वधो जङ्घामध्यमांसपिण्डिका । भग्नं किंचिदवशेषेण छिन्नं, रुग्णं किंचिच्छिन्नं, मृदितं पार्श्वावमोटितम्, अवपाटितम् एकदेशोत्पाटितम्, अवनुन्नं प्रेरितम्; एषां च भग्नादीनां लोकत एवावगतिः, यतो लौकिकैरेवैते शब्दाः प्रसिद्धत्वेन तत्र तत्र शास्त्रेऽभिधीयन्ते । हन्वोरप्रसिद्धिरिति हन्वोः स्वव्यापाराकरणम् । आस्यवैरस्यमिति अरसज्ञता । अन्नरसखेदः अन्नरसे खेदोऽवसादोऽन्नरसखेदः, सर्वरसेष्वनिच्छेत्यर्थः । अरुचिस्तु वक्ष्यमाणा वक्त्रे प्रविष्टान्नानभ्यवहरणाद्बोद्धव्या । उष्णाभिप्रायता उष्णप्रियता । निदानोक्तानामनुपशय इति वचनेनैव विपरीत उपशयोऽर्थलब्धोऽपि स्पष्टार्थमुच्यते; किंवा, अर्थापत्तेरनैकान्तिकत्वेन उच्यते; यथा—नवज्वरे दिवास्वप्ने प्रतिषिद्धेऽर्थापत्त्या पुराणज्वरे दिवास्वप्नः प्राप्नोति, अथ च तत्र दिवास्वप्नो न विहित इत्यर्थापत्तेरनैकान्तिकत्वं वदन्ति । निदानोक्तानामित्यत्रोक्तग्रहणाद्यदेव निदानत्वेनोक्तं तस्यैवानुपशयित्वं निदर्शयति न पुनर्यस्यापाततो निदानत्वं प्रतिभाति; तेन, मदात्ययादौ मद्यादेर्निदानत्वेन प्रतीयमानस्यापि उपशयित्वमेव ॥ २१ ॥

उष्णाम्ललवणक्षारकटुकाजीर्णभोजनेभ्योऽतिसेवितेभ्यस्तथा तीक्ष्णातपाग्निसंतापश्रमक्रोधविषमाहारेभ्यश्च पित्तं प्रकोपमापद्यते ॥ २२ ॥

तद्यदा प्रकुपितमामाशयादूष्माणमुपसृज्याद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधाय द्रवत्वादग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य प्रपीडयत् केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयति ॥ २३ ॥

तस्येमानि लिङ्गानि भवन्ति; तद्यथा—युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा भुक्तस्य विदाहकाले मध्यन्दिनेऽर्धरात्रे शरदि वा विशेषेण, कटुकास्यता, घ्राणमुखकण्ठौष्ठतालुपाकः, तृष्णा, मदो, भ्रमो, मूर्च्छा, पित्तच्छर्दनम्, अतीसारः, अन्नद्वेषः, सदनं, खेदः, प्रलापः, रक्तकोठाभिनिर्वृत्तिः शरीरे, हरितहारिद्रत्वं नखनयनवदनमूत्रपुरीषत्वचाम्, अत्यर्थमूष्मणस्तीव्रभावः, अतिमात्रं दाहः, शीताभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति पित्तज्वरलिङ्गानि भवन्ति २४

उष्णेत्यादिना पित्तज्वरमाह—तद्यथेत्यादि ।—पूर्ववद्व्याख्येयम् । द्रवत्वादग्निमुपहत्येतिवचनादुष्णस्यापि पित्तस्य द्रवत्वेनाग्निविपरीतेन गुणेनाग्निहन्तृतां दर्शयति । वक्ष्यति हि ग्रहण्यध्याये—"आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" (चि. अ. १५) इति । बहिर्निरस्य प्रपीडयदितिवचनेन पित्तज्वरे वातज्वर इव न सहसा वह्निक्षेपणं भवति, किंतु शनैः स्तोकक्रमेणेति दर्शयति । युगपदेवेति न वैषम्येण । अभ्यागमनमभिवृद्धिर्वेति च पूर्वेण

१ 'अवपीडितावनुन्नत्वमिव' इति पा०। २ योगीन्द्रनाथस्तु 'वातज्वरस्य लिङ्गानि भवन्ति' इति न पठति । ३ 'स्त्रीपुंनपुंसकलिङ्गवक्ष्यमाणप्रत्यवमर्शकम्' इति पा० । ४ 'जङ्घामध्यपिण्डिका' इति पा०।

१ 'शास्त्रैरभिधीयन्ते' इति पा० । २ 'प्रकुपितमामाशयं प्रविश्यदेवोष्माणमुपसृजदाद्यमाहारपरिणामधातुं' इति पा० । ३ 'बहिर्द्वारं निरस्य' इति पा० । ४ 'योगीन्द्रनाथसेनस्तु 'पित्तज्वरलिङ्गानि भवन्ति' इति न पठति।

युगपदेवेत्यादिना परेण च विशेषेणेत्यन्तेन च ग्रन्थेन संबध्यते। कोठाभिनिर्वृत्तिः शरीर इति च्छेदः ॥ २२-२४ ॥

**स्निग्धगुरुमधुरपिच्छिलशीताम्ललवणदिवास्वप्नहर्षाव्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मा प्रकोपमापद्यते ॥ २५ ॥**

**स यदा प्रकुपितः प्रविश्यामाशयमूष्मणा सह मिश्रीभूयाद्यमाहारपरिणामधातुं रसनामानमन्वेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं बहिर्निरस्य प्रपीडयन् केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्तयति ॥ २६ ॥**

स्निग्धेत्यादिना श्लेष्मज्वरमाह। स यदेत्यादि पूर्ववत् कफज्वरेऽपि व्याख्येयम्। ननु, श्लेष्मण आमाशयः स्थानं, तत् किं प्रविश्यामाशयमिति वचनेन ? नैवं, श्लेष्मण उरोऽपि प्रधानं स्थानं, तेनेहोरःस्थस्यापि श्लेष्मण आमाशयप्रवेशं दर्शयति। यत्र केवलमामाशयवृत्ति पित्तं, तत्र 'आमाशयं प्रविश्य' इति न कृतं, किंतु 'आमाशयादूष्माणमुपसृज्य' इति कृतं; पित्तं ह्यामाशयप्रविष्टमेव भवति, तच्चामाशयैकदेशस्थं ग्रहणीरूपामाशयैकदेशं वह्निस्थानं स्वस्थानाद्गच्छतीति युक्तम् ॥ २५ ॥ २६ ॥

**तस्येमानि लिङ्गानि भवन्ति; तद्यथा—युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा भुक्तमात्रे पूर्वाह्णे पूर्वरात्रे वसन्तकाले वा विशेषेण, गुरुगात्रत्वम्, अनन्नाभिलाषः, श्लेष्मप्रसेकः, मुखमाधुर्यं, हृल्लासः, हृदयोपलेपः, स्तिमितत्वं, छर्दिः, मृद्वग्निता, निद्राधिक्यं, स्तम्भः, तन्द्रा, कासः, श्वासः, प्रतिश्यायः, शैत्यं, श्वैत्यं च नखनयनवदनमूत्रपुरीषत्वचाम्, अत्यर्थं च शीतपिडका भृशमङ्गेभ्य उत्तिष्ठन्ति, उष्णाभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्च; इति ( श्लेष्मज्वरलिङ्गानि भवन्ति ) ॥ २७ ॥**

युगपदिति एककालम्; एकदैव कफज्वरे सर्वशरीरव्याप्त्या आगमनमभिवृद्धिर्वा भवतीति दर्शयति। शीतपिडकास्तन्त्रान्तरे श्वेतपिडका उच्यन्ते। 'तस्येमानि लिङ्गानि भवन्ति' इत्येतावतैव कफज्वरलिङ्गत्वे लब्धे पुनः 'श्लेष्मज्वरलिङ्गानि भवन्ति' इति वचनं किमर्थं ? ब्रूमः—तस्येतिपदेन स्वदोषमात्रप्रत्यवमर्शोऽपि स्यात्, तेन दोषलिङ्गतैवं परं लिङ्गानां मा स्यादित्येतदर्थं पुनरभिधानम्; किंवा, पूर्वप्रतिज्ञया लिङ्गानां प्रागवच्छेद उक्तः, उत्तरेण श्लेष्मज्वरलिङ्गानि भवन्तीत्यनेनान्यावच्छेद उच्यते; एवमन्यत्रापि वातज्वरादौ पूर्वरूपे च पुनरुक्तिः परिहर्तव्या ॥ २७ ॥

**विषमाशनादनशनादन्नपरिवर्तादृतुव्यापत्तेरसात्म्यगन्धोपघ्राणाद्विषोपहतस्य चोदकस्योपयोगाद्गरेभ्यो गिरीणां चोपश्लेषात् स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत्प्रयोगात् मिथ्यासंसर्जनाद्वा स्त्रीणां च विषमप्रजननात् प्रजातानां च मिथ्योपचाराद् यथोक्तानां च हेतूनां मिश्रीभावाद्यथानिदानं द्वन्द्वानामन्यतमः सर्वे वा त्रयो दोषा युगपत् प्रकोपमापद्यन्ते, ते प्रकुपितास्तयैवानुपूर्व्या ज्वरमभिनिर्वर्तयन्ति ॥ २८ ॥**

विषमाशनादित्यादिना द्वान्द्विकसान्निपातिकज्वरानाह। अनशनं यद्यपि न पित्तश्लेष्मकरं, तथाऽप्यग्निमान्द्यकरत्वात्त्रिदोषकरमपि भवति; किंवा एषु विषमाशनादिषु यथायोग्यतया द्वन्द्वकारणत्वं त्रिदोषकारणत्वं चोन्नेयं, तेनानशनं वातपित्तकरं बोद्धव्यं; यत्तु पित्तहरत्वमुक्तमनशनस्य, तत्तु पित्तद्रवांशक्षयात्। वचनं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति। अन्नपरिवर्तादिति सहसैवाक्रमेण कृताभ्यस्तान्नपरिवर्तात्। असात्म्यगन्धो गन्धद्रव्यस्य नासिकयाऽन्तःप्रवेशाद्यथा दोषकरो भवति न तथाऽसात्म्यरूपादयः, ते हि नावश्यं शरीरं विशन्ति, तेन नेहासात्म्यरूपादय उक्ताः। यथानिदानमिति यदा द्वयोर्निदानं सेव्यते तदा द्वन्द्वः, यदा त्रयाणां निदानं सेव्यते तदा त्रयो दोषाः; द्वन्द्वेऽपि यदा वातपित्तयोर्निदानं सेव्यते तदा वातपित्तरूपं द्वन्द्वम्; एवमन्यदपि कुप्यतीत्यर्थः। सर्वे त्रयो दोषा इत्यनेनैव लब्धेऽपि युगपदितिवचनं क्रमप्रकोपप्रतिषेधार्थं, युगपदेव प्रकोपमापद्यन्ते न क्रमेणेत्यर्थः ॥ २८ ॥

**तत्र तथोक्तानां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनाद्द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यात् ॥ २९ ॥**

ज्वरलिङ्गानामित्यादौ मिश्रीभावविशेषो वातपित्तलिङ्गं वा, वातश्लेष्मलिङ्गं वा, पित्तश्लेष्मलिङ्गं वा। अन्यतममिति वातपित्तज्वरादिकम् ॥ २९ ॥

**अभिघाताभिषङ्गाभिचाराभिशापेभ्य आगन्तुर्हि व्यथापूर्वोऽष्टमो ज्वरो भवति। स किंचित्कालमागन्तुः केवलो भूत्वा पश्चाद्दोषैरनुबध्यते। तत्राभिघातजो वायुना दुष्टशोणिताधिष्ठानेन, अभिषङ्गजः पुनर्वातपित्ताभ्याम्, अभिचाराभिशापजौ तु सन्निपातेनानुबध्येते ॥ ३० ॥**

आगन्तुज्वरमाह—अभिघातेत्यादि। अभिघातो लगु-

१ 'आमाशयस्थितं' इति पा०। २ 'अङ्गे भृशमुत्तिष्ठन्ति' इति पा०। ३ योगीन्द्रनाथसेनस्तु श्लेष्मज्वरलिङ्गानि भवन्ति' इति न पठति। ४ दोषलिङ्गतैव श्लेष्मलिङ्गतैव परं, नतु श्लेष्मज्वरलिङ्गतेति भावः।

ड्याद्यभिघातः, अभिषङ्गः कामाद्यभिषङ्गः, अभिचारोऽथर्वमन्त्रादिर्ज्वरकरः, अभिशापस्तु गुरुसिद्धाद्यभिशपनम्; एतत् प्रधानत्वेन चतुर्विधं कारणमिहोक्तं; तेन, ओषधिगन्धभूताभिषङ्गदुष्टग्रहनिरीक्षणादयोऽप्यागन्तुज्वरहेतवो बोद्धव्याः; किंवा, अभिघातग्रहणेन शरीराभिहननवाचिनाऽसात्म्यगन्धादयो ग्राह्याः, अभिषङ्गेण तु भूताभिषङ्गादयः। व्यथापूर्वमिति आगन्तौ प्रथमं व्यथा भवति, पश्चाद्दोषानुबन्धकृतानि लक्षणानीति दर्शयति; किंवा, व्यथापूर्वमितिवचनादागन्तौ ज्वरे व्यथैव पूर्वरूपमिति वदन्ति। रूपं तु यदेव ज्वरस्य प्रात्यात्मिकं संतापरूपं तदेव वातज्वरादिलक्षणरहितं बोद्धव्यं प्रथमतः, उत्तरकालीनदोषानुबन्धे तु यथावक्ष्यमाणदोषलिङ्गान्येव भवन्ति। अष्टम इतिवचनेनाभिघातादिहेतुचतुष्टययोगप्राप्तं चातुर्विध्यं निषेध्य व्यथापूर्वकत्वेनैकरूपयोगादेकविधत्वं चतुर्णां दर्शयति; चातुर्विध्ये ह्यागन्तोर्नाष्टमत्वं, नवमत्वादयोऽपि स्युः। किंचित्कालमिति स्तोककालं; केचित् त्र्यहं वदन्ति, अन्ये सप्ताहमाहुः। आगन्तौ हि सप्ताहादूर्ध्वं दोषलिङ्गानि भवन्तीति दृष्टम्। तत्र यस्यागन्तोर्यादृशो दोषानुबन्धो भवति तमाह—तत्राभिघातेत्यादि। वातपित्ताभ्यामिति कश्चिद्वातेन, कश्चित् पित्तेन, कश्चिद्वातपित्ताभ्याम्। वचनं हि—"कामशोकभयाद्वायुः, क्रोधात् पित्तं, त्रयो मलाः। भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः" (चि. अ. ३) इति। भूताभिषङ्गे तु यद्यपि त्रिदोषप्रकोप उक्तः, तथाऽपि तत्र वातपित्तयोरेवैतद्वचनबलात् प्राधान्यम् ॥ ३० ॥

**स सप्तविधाज्ज्वराद्विशिष्टलिङ्गोपक्रमसमुत्थानत्वाद्विशिष्टो वेदितव्यः, कर्मणा साधारणेन चोपचर्यते[१]। इत्यष्टविधा ज्वरप्रकृतिरुक्ता ॥ ३१ ॥**

आगन्तोर्निजाद्भेदमाह—स इत्यादि। विशेषलिङ्गता आगतोर्व्यथापूर्वकव्याख्याने व्याकृता, समुत्थानविशेषोऽप्यभिघातादिरुक्तः, उपक्रमविशेषोऽपि 'साधारणेन कर्मणा चोपचर्यते' इति वचनेनैवात्र कथ्यते। साधारणेनेति दैवयुक्तिव्यपाश्रयेण; दैवव्यपाश्रयं हि बलिमङ्गलहोमादि, युक्तिव्यपाश्रयं हि लघ्वशनापतर्पणयवागूकषायपानादि। प्रकृतिरुक्तेति स्वभावोऽपि वातादिज्वराणां निदानाद्युपहित उक्त इत्यर्थः ॥ ३१ ॥

**ज्वरस्त्वेक एव संतापलक्षणः। तमेवाभिप्रायविशेषाद्द्विविधमाचक्षते, निजागन्तुविशेषाच्च। तत्र निजं द्विविधं त्रिविधं चतुर्विधं सप्तविधं चाहुर्भिषजो वातादिविकल्पात्[२] ॥ ३२ ॥**

निजागन्तुविशेषाच्च द्विविधमिति संबन्धः। निजं द्विविधमित्यादौ द्वैविध्यं (संसृष्टासंसृष्टजन्यत्वेन) शीतोष्णाभिप्रायभेदात्, त्रिविधं त्रिदोषभेदात्, चतुर्विधं प्रत्येकं वातादिदोषजन्यभेदात्। तत्र चातुर्विध्ये द्वन्द्वज्वराः प्रतिक्षिप्यन्ते, तेषां प्रत्येकं वातादिज्वरसदृशत्वात्; त्रिदोषज्वरस्तु असाध्यतायोगात् कृच्छ्रसाध्यतायोगाद्वा पृथगुच्यते ॥ ३२ ॥

**तस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—मुखवैरस्यं, गुरुगात्रत्वम्, अनन्नाभिलाषः, चक्षुषोराकुलत्वम्, अश्र्वागमनं, निद्राधिक्यम्, अरतिः, जृम्भा, विनामः, वेपथुः, श्रमभ्रमप्रलापजागरणरोमहर्षदन्तहर्षाः, शब्दशीतवातातपसहत्वासहत्वम्, अरोचकाविपाकौ, दौर्बल्यम्, अङ्गमर्दः, सदनम्, अल्पप्राणता, दीर्घसूत्रता, आलस्यम्, उचितस्य कर्मणो हानिः, प्रतीपता स्वकार्येषु, गुरूणां वाक्येष्वभ्यसूया, बालेभ्यः प्रद्वेषः, स्वधर्मेष्वचिन्ता, माल्यानुलेपनभोजनपरिक्लेशनं, मधुरेभ्यश्च भक्ष्येभ्यः प्रद्वेषः, अम्ललवणकटुकप्रियता च, इति ज्वरस्य पूर्वरूपाणि भवन्ति प्राक्संतापात्; अपि चैनं संतापार्तमनुबध्नन्ति ॥ ३३ ॥**

तस्येमानीत्यादिना सर्वज्वरसाधारणं पूर्वरूपमाह। एतानि च पूर्वरूपाण्यागन्तोरपीत्येके वदन्ति; अन्ये तु निजानामेवैतानीति वदन्ति, आगन्तोस्तु व्यथैव पूर्वरूपम्। अत्राप्यनन्नाभिलाषारोचकयोः पूर्ववद्भेदः। दौर्बल्यं शरीरबलहानिः, अल्पप्राणता च मानसबलहानिर्बोद्धव्या; किंवा दौर्बल्यं मांसापचयः। दीर्घसूत्रता चिरेण कार्यकर्तृत्वम्। ज्वरपूर्वरूपाणि भवन्ति प्राक्संतापादिति च्छेदः, ज्वररूपसंतापात् प्रागेतानि पूर्वरूपाणि भवन्तीत्यर्थः। अपिच संतापार्तमनुबध्नन्तीत्यनेन प्रव्यक्तेऽपि ज्वरे कानिचित्पूर्वरूपाणि मुखवैरस्यारुच्यादीनि भवन्तीति दर्शयति। न चैवं पूर्वरूपानुवृत्तौ रिष्टत्वं वाच्यं; यतः सर्वपूर्वरूपाणामतिमात्रानुवर्तनं रिष्टमुक्तम्। वचनं हि—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः" (इ. अ. ५) इति; किंवा, अस्य श्लोकस्यान्य एवार्थः, तमिन्द्रिये वक्ष्यामः। न चारुच्यादीनां व्यक्तज्वरभावित्वेन पूर्वरूपत्वं हन्यते, यतो लिङ्गान्तरयुक्तान्यरुच्यादीनि लिङ्गानि भवन्ति, लिङ्गान्तरविरहितानि तु पूर्वरूपाणि ॥ ३३ ॥

**इत्येतान्येकैकशो ज्वरलिङ्गानि व्याख्यातानि भवन्ति विस्तरसमासाभ्याम् ॥ ३४ ॥**

एकैकशो ज्वरलिङ्गानीत्यत्र लिङ्गशब्देन निदानपूर्वरूपादीन्युच्यन्ते। विस्तरसमासाभ्यामिति विस्तरेण वातादिज्वरा उक्ताः, समासेन संसर्गसन्निपातजाः; यस्त्वत्र समासेनोक्तः स चिकित्सिते प्रपञ्चनीय इति भावः ॥ ३४ ॥

**ज्वरस्तु खलु महेश्वरकोपप्रभवः, सर्वप्राणभृतां प्राणहरो, देहेन्द्रियमनस्तापकरः, प्रज्ञाबलवर्णहर्षोत्साहह्रासकरः[१], श्रमक्लममोहाहारोपरोधसंजननः;**

१ 'चोपक्रम्यः' इति, 'चोपक्रम्यते' इति च पा०। २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते।

१ 'प्रज्ञानलवर्णहर्षोत्साहसादनः' इति पा०।

ज्वरयति शरीराणीति ज्वरः, नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्स्याश्च यथाऽयम् । स सर्वरोगाधिपतिः, नानातिर्यग्योनिषु च बहुविधैः शब्दैरभिधीयते । सर्वे प्राणभृतः सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते च; स महामोहः, तेनाभिभूताः प्राग्दैहिकं देहिनः कर्म किंचिदपि न स्मरन्ति, सर्वप्राणभृतां च ज्वर एवान्ते प्राणानादत्ते ॥ ३५ ॥

संप्रति ज्वरस्य महाप्रभावतां दर्शयितुं पूर्वोत्पत्तिप्रकारमाह—ज्वरस्त्वित्यादि । महेश्वरकोपप्रभव इत्यनेन ज्वरचिकित्सिते "द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम्" ( चि. अ. ३ ) इत्यादिग्रन्थे वक्ष्यमाणां ज्वरोत्पत्तिमाह । क्रोधभवत्वेन च श्लेष्मजन्यस्याप्याग्नेयत्वं दर्शयति; क्रोधो ह्यग्निरूपः, तेन तन्मयोऽपि ज्वरस्तथैव; अत एवोक्तम्—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना । तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्" ( वा. चि. अ. १ ) इति । न च रुद्रकोपभवत्वेन लोभाभिद्रोहप्रभवत्वं ज्वरस्य विरुध्यते; यतो रुद्रकोपोद्भूत एव ज्वरो लोभाभिद्रोहस्वरूपपापाचारप्राप्त्या पुरा मनुष्येषु भूतः । सर्वप्राणिनां ज्वर एव प्राणहर इति मरणकाले सर्वप्राणिनां ज्वर एव प्राणहर इति दर्शयति । देहेन्द्रियमनस्तापकर इत्यत्र प्रत्येकं तापलक्षणं ज्वरचिकित्सिते बोद्धव्यं "वैचित्त्यमरतिर्ग्लानिर्मनःसंतापलक्षणम्" (चि. अ. ३) इत्यादिना । ज्वरयति संतापयति । इतिशब्दो हेतौ; तेन, यस्मादुक्तमहेश्वरक्रोधप्रभवत्वादियुक्तः, तस्मात् । सर्वरोगाणामधिपतिरिवेति सर्वरोगाधिपतिः । नानाविधैः शब्दैरिति हस्तिषु पाकलो, गोषु खेरिको[1], मत्स्यानामिन्द्रजालो, विहङ्गानां भ्रामरक इत्यादिशब्दैः । सर्वप्राणभृतः सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते च तत् किमिति तेषां जन्मनि मरणे वा संतापात्मा ज्वरो न लक्ष्यत इत्याह—स महामोह इति; जन्ममरणयोर्महामोहरूपो ज्वरो भवति, न संतापात्मेत्यर्थः । अत एवोक्तं— "ज्वरप्रभावो जन्मादौ निधने च महत्तमः" ( चि. अ. ३ ) इति । जन्मनि महामोहरूपतामाह—तेनेत्यादि । प्राग्दैहिकं जन्मान्तरकृतम् । ननु, शुद्धसत्त्वानुगमात् प्राग्दैहिकं स्मरणं युक्तं; वचनं हि—"यदा तेनैव शुद्धेन मनसा युज्यते, तदा जातिमतिक्रान्तामपि स्मरति" ( शा. अ. ३ ) इति । न, तस्य शुद्धमनःसत्त्वानुवृत्तेरपवादत्वादेतत्परित्यज्यान्यत्र ज्वरस्य प्राग्दैहिकविस्मारकत्वं ज्ञेयम् । मरणे महामोहतामाह—सर्वप्राणभृतामित्यादि । ज्वर एव महामोहरूप एवेति भावः; तेन म्रियमाणाः सर्वे महामोहं प्रविशन्तीत्यर्थः ॥ ३५ ॥

तत्र पूर्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणं वा, ज्वरस्यामाशयसमुत्थत्वात्; ततः कषायपानाभ्यङ्गस्नेहस्वेदप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूपधूमपानाञ्जनक्षीरभोजनविधानं च यथास्वं युक्त्या प्रयोज्यम् ॥ ३६ ॥

संप्रति सूत्रितं चिकित्सासूत्रमाह—तत्रेत्यादि । यद्यपि चिकित्सिते ज्वरादौ लङ्घनं वक्ष्यति, तथाऽपीह पाक्षिकलघ्वशनविधानं न विरोधि, लघ्वशनस्यापि लाघवकर्तृत्वेनैव लङ्घनत्वात्; किंवा, यत्र वातादिज्वरे लङ्घनं न कर्तव्यं तत्र लघ्वशनं बोद्धव्यम्, अपतर्पणं च लङ्घनमेव । अथ किमिति वातिकेऽपि ज्वरे वातकारकं लघ्वशनमपतर्पणं वा कार्यमित्याह—आमाशयसमुत्थत्वादित्यादि । आमाशयसंबन्धेन[1] वातोऽपि मनाग्लङ्घनीयः स्थानापेक्षया भवतीति भावः । वचनं हि— "स्थानं जयेद्धि पूर्वं स्थानस्याविरोधेन" इति ॥ ३६ ॥

जीर्णज्वरेषु तु सर्वेष्वेव सर्पिषः पानं प्रशस्यते यथास्वौषधसिद्धस्य; सर्पिर्हि स्नेहाद्वातं शमयति, संस्कारात् कफं, शैत्यात् पित्तमूष्माणं च; तस्माज्जीर्णज्वरेषु सर्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु[2] द्रव्येष्विति ॥ ३७ ॥

भवन्ति चात्र—

यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा ।
नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम् ॥ ३८ ॥
स्नेहाद्वातं शमयति, शैत्यात् पित्तं नियच्छति ।
घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम् ॥ ३९ ॥
नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्तते ।
यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम् ॥ ४० ॥

यथास्वौषधसिद्धस्येति वातादिज्वरे वातज्वरादिहरद्रव्यसिद्धस्य । कथं सर्पिः सर्वत्र कार्यमित्याह—सर्पिर्हि स्नेहादित्यादि । संस्कारात् कफमिति कटुतिक्तादिकफहरसंस्कारात् । यद्यपि च 'यथास्वौषधसिद्धस्य' इति वचनाद्वातेऽपि वातहरसंस्कृतमेव सर्पिर्विहितं, तथाऽपि वाते रूक्षविपरीतेन स्नेहेनापि सर्पिर्वातहरमेव, पित्तेऽप्युष्णविपरीतशैत्यान्वितं, कफे तु सर्पिषः स्नेहशैत्यादिना समानेन कश्चिच्च स्वाभाविको विरोधिगुणोऽस्ति किंतु संस्काराद्धितमेवेति दर्शयति । ऊष्माणं चेति ज्वरप्रभावभूतमूष्माणं; न पित्तोष्माणं, तस्य पित्तग्रहणेनैव ग्रहणात् । अनेन ज्वरस्योष्महरणेन सर्पिषो ज्वरव्याधिप्रत्यनीकत्वं दर्शितं भवति । अत्र वातशमनं सर्पिषोऽभिधाय पित्तशमनेऽभिधातव्ये कफशमनमुच्यते, शेषतो वक्तव्योष्मरूपव्याधिप्रत्यनीकतयाऽपि[3] पित्तशमनहेतोः शैत्यस्य समानगुणत्वात्; यदि त्विह मध्ये पित्तप्र-

१ 'कोरको' इति पा० ।

१ 'आमाशयसमुत्थत्वेन' इति पा० । २ 'सर्पिर्हितम्' इति पा० । ३ 'व्याधिप्रत्यनीकताया अपि' इति, 'व्याधिप्रत्यनीकतायामपि' इति च पा० ।

शमनमुच्यते, तदा पुनः संस्कारात् कफमित्युक्त्वा शैत्यादूष्माणमिति वक्तव्यं स्यात्। यत्र तु श्लोकपाठे व्याधिप्रत्यनीकत्वं घृतस्य पृथङ्नोक्तं; तत्र, 'स्नेहाद्वातं शमयति' इत्यादौ वातमनु पित्तमेव कृतमिति साधु कृतम्। तस्मादिति दोषव्याधिप्रत्यनीकत्वात्। जीर्णज्वरेष्विति वचनेनामज्वरे निषेधयति, सामे हि समानगुणत्वात् सर्पिरहितम्। शान्तिमिति संतापशान्तिम्। अभिप्रेत्येति बुद्ध्या स्वीकृत्य, तथा जीर्णज्वरे घृतं 'ददाति' इति शेषः। नन्वत्र, श्लोके सर्पिर्गुणकथने किमिति व्याधिरूपोष्मशमनं नोच्यते? ब्रूमः—पित्तोष्माव्यतिरिक्तत्वेन ज्वरोष्मणः पित्तशमनेनैव लब्धत्वात्। ननु यद्येवं गद्यपाठे पृथङ्न तर्हि पठनीय ऊष्मा? ब्रूमः—यावानूष्मा शारीरः स पैत्त एव, यतो ब्रूते—"ऊष्मा पित्तादृते नास्ति" ( वा. चि. अ. १ ) इत्यादि, तथा "पित्तादूष्मोष्मणः पक्तिर्नराणामुपजायते" ( सू. अ. १७ ) इति; किंतु, नासावूष्मा कदाचित् पित्तेन साम्येऽप्येको भवति, यथा—कफज्वरे; कदाचित्त्वधिके पित्ते वह्निरूप ऊष्मा मन्दो भवति, यथा—पित्ताग्निमान्द्ये; तदेवमूष्मा पित्ताद्भिन्नोऽभिन्नश्च भवति; तत्र भेदं गृहीत्वा गद्यपाठे पृथग् ज्वरोष्मा पठितः, श्लोकपाठे त्वभेदविवक्षया न पृथक् पठितः। ज्वरे तु पित्तोष्मा ज्वरप्रभावेण वर्धते, स च प्रभावो ज्वरस्य दोषदूष्यविशेषात्मकस्य, तथा "ज्वरस्त्रिपादस्त्रिशिराः" इत्याद्युक्तप्राणिविशेषस्य ज्ञेयः। ननु सर्पिः कथं पित्तं हन्ति? यतः, यथा पित्तविपरीतशैत्यं सर्पिषि, तथा पित्तसमानः स्नेहोऽप्यस्ति। नैवं, पित्ते "सस्नेहं" ( सू. अ. १ ) इतीपदर्थेन सशब्देनाल्पस्य स्नेहस्याभिधानात्, उष्णत्वं तु पित्ते प्रधानम्। यद्यपि पित्तं जलेनाप्यारब्धं, तथाऽपि तत्र शैत्यमभिभूयाग्निकृतमौष्ण्यमेवाधिकं भवति, तथा तेजसो रौक्ष्येण जलकृतस्नेहोऽपि पित्तेऽभिभूयते, द्रवत्वं तु जलकृतं तेजसा नाभिभूयते, दृश्यते ह्यग्निसंपृक्ते जले द्रवत्वमल्पस्नेहता उष्णता चेति। किंवा, किमनेन तप्तजलदृष्टान्तेन, अदृष्टकृत एवायं भूतानामुत्पादः; तेन, कश्चिदेव गुणः पाञ्चभौतिकत्वेऽपि द्रव्याणामाविर्भूतो भवति, न तु सर्वे; यथा—शालिषु तोयकृतं मधुरत्वं, न तु गौरवमित्युक्तं सूत्रस्थाने। उत्सर्गतः सस्नेहस्यापि पित्तस्य कदाचित्तेजोभूयस्त्वेन रूक्षत्वमपि भवति जीर्णज्वरे; तेन स्निग्धशीतं सर्पिर्हितं तत्र भवतीति न दोषः। अत एवोक्तं चिकित्सिते—"रूक्षं तेजो ज्वरकरं" ( चि. अ. ३ ) इत्यादि। न च वाच्यं—यत्-सांसिद्धिकमपि चेत् पित्तस्य स्निग्धत्वमपैति तदा वातस्यापि रौक्ष्यं किमिति नापैतीति; यतो विचित्रा एव हि गुणा अप्रतिक्षेपणीयाः प्रतिक्षेपणीयाश्च; तत्र ये न सर्वदा दृश्यन्ते वातशैत्य-पित्तस्नेहादयः, त एव प्रतिक्षेपणीयाः; नान्ये, तथैव दृष्टत्वात्। तुल्यगुणमिति सर्वथा तुल्यगुणम्। ननु संस्कारात् कफहन्तृत्वे संस्कारेणैव कफो हन्यते, कस्तत्र सर्पिषो व्यापार इत्याह—नान्य इत्यादि। नान्य इति तैलादिः। संस्कारमनुवर्तत इति संस्कारकद्रव्यकार्यं करोति। एतेनैतद्दर्शयति—यत्—तेनैव द्रव्येण यादृशानेन घृतं संस्क्रियते, अन्यत्र तैलादिस्नेहस्तथैव यदि संस्क्रियते तदा घृतमेवान्यस्नेहेभ्यो विशेषेण संस्कारकद्रव्यकार्यं करोति; अयं घृतप्रभावोऽधिकः, तेन संस्कारात् कफविजये घृतमेव कर्तव्यमित्यर्थः। प्रपञ्चितश्चायमर्थः स्नेहाध्याये ॥ ३७–४० ॥

**गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते।**
**तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते ॥ ४१ ॥**

ननु स्नेहाद्वातं शमयतीत्यादिग्रन्थो गद्येनैवोक्तः, तत् किमर्थं श्लोकेनोच्यत इत्याह— गद्योक्तो य इत्यादि। तद्व्यक्तिव्यवसायार्थमित्यत्र तद्व्यक्तिर्गद्योक्तार्थस्य व्यक्तिः प्रसन्नतेति यावत्, व्यवसायः अध्यवसायो ग्रहणमित्यर्थः; यस्मात् पूर्वोक्तार्थस्पष्टीकरणार्थं पुनः श्लोकेनाभिधानं, तस्मात् प्रयोजनान्तरयुक्तत्वान्न पुनरुक्तिदोष इति भावः। गद्योक्तापेक्षया श्लोकाभिधानं सुखग्रहणं भवतीति लोकसिद्धमेव। अत्र च गद्योक्त इत्युपलक्षणं, तेन श्लोकोक्तोऽपि श्लोकेनोच्यत इति बोद्धव्यं; यथा—आरग्वधीये। एवं गद्योक्तोऽपि गद्येनेति बोद्धव्यं; यथा—प्रपञ्चेन कारणाभिधायोक्तम्—"एवमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च" ( सू. अ. ११ ) इत्यादि। तथा श्लोकेनोक्तोऽपि गद्येनोच्यते, यथा—"ब्रह्मणा हि यथा प्रोक्तं" ( सू. अ. १ ) इत्यादि श्लोकेनाभिधाय आद्येऽध्याये पुनरन्यत्रोक्तं—"यमायुर्वेदमश्विनौ मह्यं प्रायच्छेताम्"—( चि. अ. १. पा. ४ ) इत्यादि। अत्र श्लोकाभिधानमेव सुखग्रहणार्थमिति ज्ञेयम्। किंवा, तद्व्यक्तिव्यवसायार्थमिति यथायोग्यतया बोद्धव्यम्। तेन, प्रपञ्चाभिधानमर्थव्यक्त्यर्थं बोद्धव्यं, संक्षेपाभिधानं तु व्यवसायार्थं; तेन गद्यश्लोकाभिधानाभ्यां व्यक्तिव्यवसायौ क्रियेते। तत्र प्रपञ्चाभिधानेऽर्थस्य व्यक्तिः स्फुटैवेति, संक्षेपाभिधानं तु प्रपञ्चापेक्षया सुखग्रहणं भवति ॥ ४१ ॥

तत्र श्लोकाः—

**त्रिविधं नामपर्यायैर्हेतुं पञ्चविधं गदम्।**
**गदलक्षणपर्यायान् व्याधेः पञ्चविधं ग्रहम् ॥ ४२ ॥**
**ज्वरमष्टविधं तस्य प्रकृष्टासन्नकारणम्।**
**पूर्वरूपं च रूपं च भेषजं संग्रहेण च ॥ ४३ ॥**
**व्याजहार ज्वरस्याग्रे निदाने विगतज्वरः।**
**भगवानग्निवेशाय प्रणताय पुनर्वसुः ॥ ४४ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने ज्वरनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥**

---

१ ननु यद्येवं ज्वरोष्मणः पित्तोष्मव्यतिरिक्तत्वं स्यात्तर्हि गद्यपाठे पृथङ् न पठनीय ऊष्मेति योजना। २ 'गद्यपाठे ज्वरोष्मा पठितः' इति पा०। ३ 'न पठितः' इति पा०।

१ 'हन्येत' इति पा०।

संग्रहे यद्यपि हेतुपर्यायाः पूर्वमुक्तास्तदनु हेतुत्रैविध्यं, तथाऽपि छन्दोऽनुरोधेन तद्विपर्ययकथनम् । नामरूपा योगरूढाः पर्याया नामपर्यायाः । पञ्चविधं गदमिति आग्नेयादिभेदेन । 'गदपर्यायनामानि' इति पाठे यल्लिङ्गपर्यायाभिधानं तस्य व्याधिपञ्चविधग्रहशब्देनैव 'तस्योपलब्धिः' इत्यादिग्रन्थान्तर्निविष्टसकलार्थस्य गृहीतत्वाद्ग्रहणम्; 'गदलक्षणपर्यायान्' इति पाठे तु पूर्वपक्षो नास्त्येव, पाठस्तु नायमतिप्रसिद्धः । प्रकृष्टासन्नकारणं ज्वरस्य रूक्षादि प्रकृष्टम्, आसन्नं वातादि; तथा प्रकृष्टं रुद्रकोपः, आसन्नं तु रूक्षादि । यद्यपि रूपात् पश्चात् पूर्वरूपमुक्तं, तथाऽपि छन्दोनुरोधात् पूर्वरूपमग्रे कृतं; किंवा, वातादिजविशिष्टज्वरलक्षणानामव्यक्तानां विशिष्टज्वरपूर्वरूपतां सूचयता पूर्वरूपं पूर्वं कृतं; वातादिज्वरलक्षणानि ह्यव्यक्तानि पूर्वरूपाणि भवन्ति ॥ ४२–४४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने ज्वरनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

**अथातो रक्तपित्तनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**पित्तं यथाभूतं लोहितपित्तमिति संज्ञां लभते, तद् व्याख्यास्यामः ॥ ३ ॥**

आद्योत्पत्तौ ज्वरसंतापाद्रक्तपित्तोत्पत्तेर्ज्वरमनु रक्तपित्तनिदानमुच्यते । पित्तं यथाभूतमित्यादिना पित्तमेवावस्थावशाल्लोहितपित्तमित्युच्यत इति दर्शयति, नतु रक्तं च पित्तं च रक्तपित्तमिति ॥ १–३ ॥

**यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते, भृशोष्णतीक्ष्णमपि चान्यदन्नजातं निष्पावमाषकुलत्थसूपक्षारोपसंहितं, दधिदधिमण्डोदश्वित्कट्वराम्लकाञ्जिकोपसेकं वा, वाराहमाहिषाविकमात्स्यगव्यपिशितं, पिण्याकपिण्डालुशुष्कशाकोपहितं, मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रु(खडयूष)भूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकोपदंशं, सुरासौवीरतुषोदकमैरेयमेदकमधूलकशुक्तकुवलबदराम्लप्रायानुपानं वा, पिष्टान्नोत्तरभूयिष्ठम्; उष्णाभितप्तो वाऽतिमात्रमतिवेलं वाऽऽमं पयः पिबति, पयसा समश्नाति रौहिणीकं, काणकपोतं वा सर्षपतैलक्षारसिद्धं, कुलत्थपिण्याकजाम्बवलकुचपक्वैः शौक्तिकैर्वा सह क्षीरं पिबत्युष्णाभितप्तः; तस्यैवमाचरतः पित्तं प्रकोपमापद्यते, लोहितं च स्वप्रमाणमतिवर्तते । तस्मिन् प्रमाणातिवृत्ते पित्तं प्रकुपितं शरीरमनुसर्पद्यदेव यकृत्प्लीहप्रभवाणां लोहितवहानां च स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिरुन्ध्यात्तदेव लोहितं दूषयति ॥ ४ ॥**

१ 'तथाऽनुव्याख्यास्यामः' इति पा० । २ "काञ्जिकोपहितं' इति पा० । ३ 'खण्डयूष' इति योगीन्द्रनाथसेनो न पठति । ४ 'रोहिणीशाकं' इति पा० ।

यदा जन्तुरित्यादिना निदानमुच्यते । यवकः व्रीहिविशेषः; उद्दालः वनकोद्रवः; कोरदूषः यद्यप्यन्नपाने पित्तहर उक्तस्तथाऽप्यस्य निष्पावादियुक्तस्य संयोगमहिम्ना रक्तपित्तनिदानत्वं ज्ञेयम्, एवमन्यत्रापि रक्तपित्तनिदानत्वेनेहोक्तक्षीरादौ ज्ञेयम् । दधिमण्डः मस्तु, उदश्वित् अर्धजलं तक्रं, कट्वरं निर्जलं, किंवा अम्लं तक्रम् । मधुशिग्रुः स्वल्पशोभाञ्जनकः । खडयूषः रागकर्पूर इति ख्यातः । सुमुखादयः फणिज्झकान्ताः पर्णासभेदाः । उपदंशमिति मूलकादीनि खादयित्वा यावकाद्यन्नं भुङ्क्ते इत्यर्थः । मधूलकः गोधूमविशेषः । शुक्तः सन्धानविशेषः । पिष्टान्नमुत्तरत्र भोजनस्य भूयिष्ठं यत्र तत् पिष्टान्नोत्तरभूयिष्ठम् । अतिवेलमिति पुनः पुनः । रौहिणीकं रोहिणीशाकम् । शौक्तिकैरिति बदरीफलैः । आममित्युत्तरेण संबध्यते । स्वप्रमाणमतिवर्तते प्रवर्धत इत्यर्थः । यदेवेत्यनेन एवमपि प्रकुपितस्य पित्तस्य य एवांश उक्तसंप्राप्तिमान् भवति स एव रक्तं दूषयति नान्य इति दर्शयति । लोहिताभिष्यन्दगुरूणि प्रवृद्धलोहितस्यन्देन गुरूणि उत्सन्नानि विवृतानीति यावत् । प्रतिरुन्ध्यात् 'वृद्धेन शोणितेन' इति शेषः; 'प्रतिपद्यते' इति पाठपक्षे तु 'शोणितम्' इति शेषः, तेन शोणितं प्रतिपद्यत इत्यर्थः । यकृत्प्लीहप्रभवाणामित्यस्य विशेषणं—लोहितवहानामिति । चकारोऽवधारणे । वक्ष्यति च रक्तपित्तचिकित्सिते—"प्लीहानं च यकृच्चैव तदधिष्ठाय वर्तते । स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम्" ( चि. अ. ४ ) इति ॥ ४ ॥

**संसर्गाल्लोहितप्रदूषणाल्लोहितगन्धवर्णानुविधानाच्च पित्तं लोहितपित्तमित्याचक्षते ॥ ५ ॥**

एवं रक्तदूषके पित्ते यथा रक्तपित्तसंज्ञा भवति, तदाह—संसर्गादित्यादि । संसर्गात् लोहितसंबन्धात् । लोहितगन्धवर्णानुविधानादिति लोहितसदृशगन्धवर्णयुक्तत्वात् । एतेन, 'रक्तयुक्तं पित्तं रक्तपित्तम्' इति प्रथमा निरुक्तिः, 'रक्तं दूष्ये

१ 'क्षीरमामतिमात्रमथवा पिबति' इति पा० । २ 'चाशु प्रमाणमतिवर्तेते' इति पा० । ३ 'यदैव' इति योगीन्द्रनाथसेनसंमतः पाठः । ४ 'प्रतिपद्यते' इति पा० । ५ 'तदैव' इति पा० । ६ 'खडो द्विविधः—सतक्रशमीधान्य एकः, सतक्रशाकश्चापरः । तत्राद्यः—"सशमीधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् खडान्" इत्युक्तलक्षणः । सतक्रशाकस्तु—"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोऽयम्" इति शिवदाससेनः । ७ 'आमलकादीनि' इति पा० । ८ 'तल्लोहितसंसर्गाद' इति पा० ।

पित्तम्' इति द्वितीया, 'रक्तवत् पित्तं रक्तपित्तम्' इति तृतीया दृश्यते। उक्तं च चिकित्सिते—"संसर्गाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः। रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः"—(चि. अ. ४) इति। एतदेव च रक्तपित्तस्य सामान्यलक्षणं—यद्—रक्तगन्धवर्णानुविधानं; विशेषलक्षणं तु ऊर्ध्वादिभेदेन कफादिसंबन्धादेवेह बोद्धव्यं; चिकित्सितेऽपि 'सान्द्रं सपाण्डु' (चि. अ. ४) इत्यादिना लक्षणं वक्ष्यति ॥ ५ ॥

**तस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—अनन्नाभिलापः, भुक्तस्य विदाहः, शुक्ताम्लगन्धरस उद्गारः, छर्देरभीक्ष्णमागमनं, छर्दितस्य बीभत्सता, स्वरभेदो, गात्राणां सदनं, परिदाहः, मुखाद्धूमागम इव, लोहलोहितमत्स्यामगन्धित्वमिव चास्यस्य, रक्तहरितहारिद्रत्वमङ्गावयवशकृन्मूत्रस्वेदलालासिङ्घाणकास्यकर्णमलपिडकोलिकापिडकानाम्, अङ्गवेदना, लोहितनीलपीतश्यावानामर्चिष्मतां च रूपाणां स्वप्ने दर्शनमभीक्ष्णमिति (लोहित[3]पित्तपूर्वरूपाणि भवन्ति) ॥ ६ ॥**

पूर्वरूपे छर्दितस्य बीभत्सता वैवर्ण्यवैगन्ध्यादियोगात्। पिडकोलिका नेत्रमलः। अङ्गवेदना अङ्गमर्दः ॥ ६ ॥

**उपद्रवास्तु खलु दौर्बल्यारोचकाविपाकश्वासकासज्वरातीसारशोफशोषपाण्डुरोगाः स्वरभेदश्च ॥ ७ ॥**

व्याधेरसाध्यत्वस्य धर्मस्य ख्यापकान् लिङ्गविशेषानुपद्रवाख्यानाह—उपद्रवास्त्वित्यादि। एतेनोपद्रवस्य लिङ्गभूतत्वेन निदानपञ्चकानतिरिक्तत्वम्। रक्तपित्ते चैते उपद्रवाः प्रायोभावित्वेन नियता इत्यभिधीयन्ते; ज्वरे तूपद्रवा नियता न सन्ति, तेन तत्र नोक्ताः; एवं गुल्मादावपि प्रायोभावित्वेनोपद्रवकथनं व्याख्येयम्। स्वरभेदश्चेति पृथक्पाठेन स्वरभेदस्य प्रायोभावित्वमाह ॥ ७ ॥

**मार्गौ पुनरस्य द्वौ-ऊर्ध्वं, चाधश्च। तद्बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्ध्वं प्रतिपद्यमानं कर्णनासिकानेत्रास्येभ्यः प्रच्यवते, बहुवाते तु शरीरे वातसंसर्गादधः प्रतिपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते, बहुश्लेष्मवाते तु शरीरे श्लेष्मवातसंसर्गाद्द्वावपि मार्गौ प्रतिपद्यते, तौ मार्गौ प्रतिपद्यमानं सर्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य ॥ ८ ॥**

**तत्र यदूर्ध्वभागं तत् साध्यं, विरेचनोपक्रमणीयत्वाद्बह्वौषधत्वाच्च; यदधोभागं तद्याप्यं, वमनोपक्रमणीयत्वादल्पौषधत्वाच्च; यदुभयभागं तदसाध्यं, वमनविरेचनायोगित्वादनौषधत्वाच्चेति ॥ ९ ॥**

साध्यत्वादिविशेषस्य तथा कफादिसंबन्धस्य च मार्गविशेषकृतस्य प्रतिपादनार्थं मार्गमाह—मार्गावित्यादि। बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादिति वचनेन ऊर्ध्वगे रक्तपित्ते श्लेष्मसंबन्धः कारणान्तरचितेनापि श्लेष्मणा भवतीति दर्शयति। यत्तु रक्तपित्तनिदानजन्यत्वं कफस्य, तच्चावश्यं भवति; अत एव 'स्निग्धोष्णमुष्णरूक्षं च रक्तपित्तस्य कारणम्। अधोगस्योत्तरं प्रायः" (चि. अ. ४) इत्यादौ प्रायःशब्दं कृतवान्। एवं 'बहुवाते तु' इत्यत्रापि व्याख्येयम्। खेभ्य इति रन्ध्रेभ्यः। विरेचनोपक्रमणीयत्वादिति एतच्च श्लोकेन स्वयमेव व्याकरिष्यति ॥ ८ ॥ ९ ॥

**रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञोध्वंसे रुद्र[1]कोपामर्षाग्निना प्राणिनां परिगतशरीरप्राणानामभवज्ज्वरमनु ॥ १० ॥**

रक्तपित्तस्याप्याग्नेयत्वप्रतिपादनार्थं पूर्वोत्पत्तिमाह—रक्तेत्यादि। कोपयुक्तः अमर्षः, अमर्षः अभिनिवेशः; अन्यत्रापि च कोपामर्षयोर्भेद उक्तः; यथा—"अमर्षसंरम्भविनम्रभावाः संतर्जनाभिद्रवणौष्ण्यरोषाः" (चि. अ. ९) इति ॥ १० ॥

**तस्याशुकारिणो दावाग्नेरिवापतितस्यात्ययिकस्याशु प्रशान्त्यै प्रयतितव्यं मात्रां देशं कालं चाभिसमीक्ष्य संतर्पणेनापतर्पणेन वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्यैः प्रदेहपरिषेकावगाहसंस्पर्शनैर्वमनाद्यैर्वा तत्रावहितेनेति ॥ ११ ॥**

संतर्पणेनेति अधोगस्य, अपतर्पणेनेति ऊर्ध्वगस्य। संस्पृश्यत इति संस्पर्शनं मुक्तादि ॥ ११ ॥

**भवन्ति चात्र—**

**साध्यं लोहितपित्तं तद्यदूर्ध्वं प्रतिपद्यते।**
**विरेचनस्य योगित्वाद्बहुत्वाद्भेषजस्य च ॥ १२ ॥**
**विरेचनं तु पित्तस्य जयार्थे परमौषधम्।**
**यश्च तत्रान्वयः[2] श्लेष्मा तस्य चानधमं स्मृतम् ॥१३॥**
**भवेद्योगावहं तत्र मधुरं[3] चैव भेषजम्।**
**तस्मात् साध्यं मतं रक्तं यदूर्ध्वं प्रतिपद्यते ॥ १४ ॥**

ऊर्ध्वगस्य विरेचनयोग्य[4]तां विवेचयति—विरेचनमित्यादि। ऊर्ध्वगे रक्तपित्ते पित्तं प्रधानमनुबन्धश्च श्लेष्मा, रक्तपित्ताख्यव्याधिर्जेतव्यः; तत्र पित्तस्य जयार्थे विरेचनं तावत् परमौषधं, "विरेचनं पित्तहराणाम्" (सू. अ. २५) इति वचनादिति भावः, यश्च तत्रान्वयः अनुबन्धस्वरूपः श्लेष्मा, तस्य च

१ 'कफादिसंबन्धादिहोक्तं' इति पा०। २ '°पिचडिका°' इति पा०। ३ योगीन्द्रनाथसेनस्तु 'लोहितपित्तपूर्वरूपाणि भवन्ति' इति न पठति।

१ 'रुद्रकोपाग्निना' इति पा०। २ 'तत्रानुगः' इति पा०। ३ 'कषायं तिक्तमेव च' इति पा०। ४ 'ऊर्ध्वगे विरेचनस्य योग्यतां' इति पा०।

जयार्थे अनधममधमं न भवति मध्यममित्यर्थः; वचनं हि— "पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् । स्रंसनं" ( चि. अ. ३ ) इति । योगावहं च तत्रेति तत्रोर्ध्वगे रक्तपित्ते तद्विरेचनं योगावहं भवति, प्रतिमार्गहरणरूपत्वादित्यर्थः; अनेन च व्याधिप्रत्यनीकत्वमुच्यते । एवं व्याधिप्रधानकारणे पित्ते प्रधानशमक(न)त्वात्, तथा मध्यकुपिते च कफे मध्यभेषजत्वात्, प्रतिमार्गहरणरूपतया च व्याधिप्रत्यनीकत्वाद् विरेचनमूर्ध्वगे साधु भेषजम् । मधुरं चैव भेषजमित्यत्र एवशब्दोऽप्यर्थः; तेन, तिक्तकषायौ तावद्भेषजे भवत एव पित्तकफप्रत्यनीकत्वात्, मधुरमपि लङ्घनादिना कफे जिते भेषजं भवतीत्यर्थः ॥ १२–१४ ॥

**रक्तं तु यदधोभागं तद्याप्यमिति निश्चितम् ।**
**वमनस्याल्पयोगित्वादल्पत्वाद्भेषजस्य च ॥ १५ ॥**
**वमनं हि न पित्तस्य हरणे श्रेष्ठमुच्यते ।**
**यश्च तत्रान्वयो वायुस्तच्छान्तौ चावरं स्मृतम् ॥१६॥**
**तच्चायोगावहं तत्र कषायं तिक्तकानि च ।**
**तस्माद्याप्यं समाख्यातं यदुक्तमनुलोमगम् ॥ १७ ॥**

अधोगे वमनस्यायोगितां विवेचयति—वमनं हीत्यादि । पित्तस्य रक्तपित्तमूलस्य हरणे न श्रेष्ठं वमनं; वमनं हि कफानुगं पित्तं हरति, न पित्ते प्राधान्येन क्रियते । तच्छान्तौ चावरमिति वातहरणे त्वप्रधानमेव वमनं, वातहरणेऽयुक्तत्वादेव वमनस्य । तच्चायोगावहमिति तद्वमनं प्रतिमार्गहरणरूपतया योगावहमपि सत् पित्तवातयोरुक्तेन न्यायेनायौगिकत्वेनायोगावहमित्यर्थः । कषायं तिक्तकानि च अयोगावहानीति योजना, कषायतिक्तयोर्वातप्रतिकूलत्वादित्यर्थः; एवं मधुरमेकमवशिष्टमधोगे रक्तपित्ते भेषजं भवति; तेनाल्पौषधत्वं सिद्धम् । अम्ललवणकटुकानां तु पित्तविरुद्धत्वेन रक्तपित्ते प्रसक्तिरपि नास्तीति भावः ॥ १५–१७ ॥

**रक्तपित्तं तु यन्मार्गौ द्वावपि प्रतिपद्यते ।**
**असाध्यमिति तज्ज्ञेयं पूर्वोक्तादेव कारणात् ॥ १८ ॥**
**नहि संशोधनं किंचिदस्त्यस्य प्रतिमार्गगम् ।**
**प्रतिमार्गं च हरणं रक्तपित्ते विधीयते ॥ १९ ॥**
**एवमेवोपशमनं सर्वशो नास्य विद्यते ।**
**संसृष्टेषु च दोषेषु सर्वजिच्छमनं मतम् ॥ २० ॥**
**इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः ।**

पूर्वोक्तादिति वमनविरेचनायौगिकत्वादनौषधत्वाच्च । वमनविरेचनायौगिकत्वं व्युत्पादयति—न हीत्यादि । संशोधनमिति सामान्यवचनेन बस्तिशिरोविरेचनयोरपि प्रतिक्षेपं सूचयति । यदधोभागं विरेचनं तदधोभागं रक्तपित्तं कोपयति, यदूर्ध्वभागं वमनं तदूर्ध्वभागं रक्तपित्तं कोपयति; अतो नास्त्युभयमार्गे रक्तपित्ते शोधनम् । अथानुगुणमेव शोधनं कफच्छर्द्यामिव वमनं रक्तपित्ते भवतीत्याह—प्रतिमार्गं चेत्यादि । रक्तपित्तव्याधिमहिम्ना प्रतिमार्गहरणमेव भेषजं भवति नान्यदित्यर्थः । अथात्रैवं संशोधनं मा भवतु भेषजं, संशमनं भेषजं भवत्वित्याह—एवमेवेत्यादि । उभयमार्गानुसारित्वेन वातकफानुबन्धत्वाद् यथा यौगिकं संशोधनं नास्ति तथोपशमनमपि युगपद्वातकफशमकत्वाभावान्नास्तीत्यर्थः । सर्वशो न विद्यत इति किंचिदपि न विद्यत इति । एतदेवोपशमनभेषजाभावं स्फोटयति—संसृष्टेष्वित्यादि । संसृष्टेष्विति सन्निपातेष्विति बोद्धव्यम् । सर्वजिदिति अनुबन्धभूतवातकफमूलभूतपित्तजित्; मधुरं हि कफकारि, तिक्तकषायौ तु वातकरौ, शेषास्तु पित्तकरा एवेति भावः । किंवा, एवमेवेति विना भेषजं नोपशमनं रक्तपित्तस्य भवतीति योजनीयम् । त्रिविधोदर्कमिति त्रिविधायतीयफलं, तच्च साध्यत्व-याप्यत्व प्रत्याख्येयत्वरूपम् ॥ १८–२० ॥—

**एभ्यस्तु खलु हेतुभ्यः किंचित्साध्यं न सिध्यति २१**
**प्रेष्योपकरणाभावाद्दौरात्म्याद्वैद्यदोषतः ।**
**अकर्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्तते ॥ २२ ॥**
**तत्रासाध्यत्वमेकं स्यात् साध्ययाप्यपरिक्रमात् ।**

असाध्यतोपोद्घातेनेतरव्याधिसाधारणान्यप्यसाध्यतापत्तिकारणान्याह—एभ्यस्त्वित्यादि । उपकरणाभावादिति भेषजाभावात् । दौरात्म्यादिति आतुरस्यानात्मवत्त्वात् । अकर्मत इत्यत्र कुत्सायां नञ्, अपुत्र इति यथा; तेन, अकर्मतः असम्यक्चिकित्सात इत्यर्थः; किंवा अकर्मत इति अधर्मादसाध्यव्याधिजनकात् । कश्चिदितिवचनेन अचिकित्सया न सर्वे तिलालकमशकादयोऽवश्यमसाध्या भवन्तीति दर्शयति, तेषामचिकित्सायामपि साध्यत्वात् । प्रेष्यादिदोषेण प्रकृते रक्तपित्तेऽसाध्यत्वं दर्शयन्नाह—तत्रेत्यादि । तत्रेति रक्तपित्ते । असाध्यत्वमेकमिति असाध्यत्वमेव परं स्यात् । साध्ययाप्यपरिक्रमादिति साध्ययाप्यमार्गाभ्यां परिक्रमादुभयमार्गानुसारित्वादित्यर्थः; किंवा, साध्ययाप्ययोः परिक्रमः साध्ययाप्यपरिक्रमः, तस्मात्; तत्र साध्यपरिक्रमो याप्यमार्गगामित्वम्, एवं याप्यस्य परिक्रमोऽसाध्यमार्गगामित्वम् । अयं च मार्गपरिक्रमः मार्गपरित्यागादपरित्यागाद्वाऽसाध्य एव; अपरित्यागे तावदुभयमार्गत्वेनैवासाध्यत्वं; परित्यागेऽसाध्यत्वमुक्तं, वक्ष्यति हि चिकित्सिते— "मार्गान्मार्गं चरेद्यद्वा तच्च रक्तमसिद्धिमत्" ( चि. अ. ४ ) इति । किंवा, साध्ययाप्यपरिक्रमादिति साध्यस्य याप्यत्वेन परिक्रमादित्यर्थः ॥ २१ ॥ २२ ॥—

१ 'जयार्थे परमौपधम्' इति पा० । २ 'तत्रानुगः' इति पा० । ३ 'स्याच्च योगावहं तत्र मधुरं चैव भेषजम्' इति पा० । ४ 'यद्रक्तमनुलोमगम्' इति पा० । ५ 'अनुक्तत्वादेव' इति पा० । ६ 'हितम्' इति पा० ।

१ 'साध्यत्वयाप्यातिक्रमादित्यर्थः' इति पा० ।

रक्तपित्तस्य विज्ञानमिदं तस्योपदिश्यते ॥ २३ ॥
यत् कृष्णमथवा नीलं यद्वा शक्रधनुष्प्रभम् ।
रक्तपित्तमसाध्यं तद्वाससो रञ्जनं च यत् ॥ २४ ॥
भृशं पूत्यतिमात्रं च सर्वोपद्रववच्च यत् ।
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत् ॥ २५ ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चापि तच्चासाध्यं न संशयः ॥ २६ ॥

ऊर्ध्वगस्यापि रक्तपित्तस्य लाक्षणिकीमसाध्यतामाह—रक्तपित्तस्येत्यादि । एते च कृष्णादयो वर्णा गम्भीरधातुसंबन्धाद्भवन्ति, ततश्चासाध्यत्वं युक्तमेव । वाससो रञ्जनं च यदिति प्रक्षालितमपि सद्वासो रञ्जयति, न क्षालनेनापैतीति बोद्धव्यम्; अन्यथा 'सर्वमेव रक्तं वाससो रञ्जनं भवति' इति वचनमनर्थकं स्यात् । किंवा 'अरञ्जनम्' इति पाठः; तेन, रक्तस्य वाससो रञ्जकस्यारञ्जनमेव विकृतिः । भृशं पूतीति धात्वन्तरसंबन्धादतिदुर्गन्धि । सर्वोपद्रववदिति उक्तदौर्बल्याद्युपद्रवयुक्तम् । दृश्यं घटपटादि । वियद् आकाशम् । रक्तं रक्तवर्णमित्यर्थः । यद्यप्याकाशमपि दृश्यं भवति मीमांसकनये, तथाऽपि प्राय आकाशे एवासाध्यरक्तपित्ते रक्तत्वं प्रतीयत इति न पुनरुक्तम् ॥ २३–२६ ॥

तत्रासाध्यं परित्याज्यं, याप्यं यत्नेन यापयेत् ।
साध्यं चावहितः सिद्धैर्भेषजैः साधयेद्भिषक् ॥ २७ ॥

यत्नेनेति वचनाद्याप्ययापनं यत्नं विना न भवतीति दर्शयति ॥ २७ ॥

तत्र श्लोकौ—
कारणं नामनिर्वृत्तिं पूर्वरूपाण्युपद्रवान् ।
मार्गौ दोषानुबन्धं च साध्यत्वं न च हेतुमत् ॥२८॥
निदाने रक्तपित्तस्य व्याजहार पुनर्वसुः ।
वीतमोहरजोदोषलोभमानमदस्पृहः ॥ २९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
निदानस्थाने रक्तपित्तनिदानं नाम
द्वितीयोऽध्यायः ॥ २ ॥

कारणमित्यादि संग्रहः । नामनिर्वृत्तिमिति लोहितसंसर्गादित्यादिना । न चेति न च साध्यत्वम्; अनेन च याप्यमपि संगृहीतम्, असाध्यभेदो हि याप्यम् । हेतुमदिति विरेचनस्य यौगिकत्वादिहेतुवर्णनं संग्रह्णाति । वीता अपगता मोहादयो यस्य स तथा ॥ २८ ॥ २९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने रक्तपित्तनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातो गुल्मनिदानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

इह खलु पञ्च गुल्मा भवन्ति; तद्यथा—वातगुल्मः, पित्तगुल्मः, श्लेष्मगुल्मो, निचयगुल्मः, शोणितगुल्म इति ॥ ३ ॥

दक्षाध्वरोद्ध्वंसे रक्तपित्तमनु गुल्म उत्पन्न इति रक्तपित्तमनु गुल्मनिदानम् । इह पञ्चेतिवचनाच्चिकित्सितेऽधिकारान् गुल्मान् सूचयति; वक्ष्यति हि—"व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" ( चि. अ. ५ ) इति । निचयः सन्निपातः, तत्कृतो गुल्मो निचयगुल्मः । इह प्रत्येकवातादिगुल्मक्रियामेलकादेव द्वन्द्वजगुल्माः साध्यन्त इति कृत्वा न पृथगुक्ताः । सन्निपातगुल्मस्तु वातादिगुल्मक्रियामेलकेन साध्यो न भवत्येव वातादिसंयोगमहिम्ना; तेन, अतिरिक्तासाध्यत्वयोगान्निचयगुल्मः पृथगुक्तः । एतदेव गुल्मेऽस्मिन्नसाध्यत्वं प्रतिपादयितुं सन्निपातशब्दं साध्यज्वरादिसन्निपातेऽपि वर्तमानं परित्यज्य निचयशब्दः कृतः; अत्यर्थं हि असाध्यरूपश्चायं निचयः ॥ १–३ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—कथमिह भगवन् पञ्चानां गुल्मानां विशेषमभिजानीमहे; नह्यविशेषविद्रोगाणामौषधविदपि भिषक् प्रशमनसमर्थो भवतीति ॥ ४ ॥

तमुवाच भगवानात्रेयः—समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषेभ्यो विशेषविज्ञानं गुल्मानां भवत्यन्येषां च रोगाणामग्निवेश ! तत्तु खलु गुल्मेषूच्यमानं निबोध ॥ ५ ॥

समुत्थानेत्यादौ लिङ्गान्तर्निविष्टा वेदना पृथगुच्यते, गुल्मादिष्वन्तर्गतेषु वेदनाप्रधानविकारेषु प्रायो वेदनयैव विशेषावधारणं भवतीति दर्शयितुम् । संप्राप्तेस्त्विहाकथनं गुल्मविशेषागमकत्वेनैव बोद्धव्यं, गुल्मविज्ञानं चेहाधिकृतं; संख्यादिभेदभिन्ना तु सामान्यसंप्राप्तिः सर्वरोगनिदानप्रस्ताव एवोक्तेति भावः । बलकालभिन्ना तु संप्राप्तिर्यद्यपि वातिकत्वादिविशेषं गमयत्यपि, तथाऽप्यल्पत्वात्तथा लिङ्गगृहीतत्वाच्च सा नाद्रियते । दिवसान्तजरणान्तादिबलसंप्राप्तिर्हि वातादेर्लिङ्गमध्य एव पठ्यते तत्र तत्र; तेन लिङ्गग्रहणेनैव तत् सुस्थम् । प्राग्रूपं च यद्यपि पृथग्वातादिगुल्मगमकं साक्षान्न पठितं, तथाऽपि विशेषलिङ्गाव्यक्ततारूपं विशिष्टं प्राग्रूपं विशेषलिङ्गकथनेनैवोक्तमेव; तेन, वातादिगुल्मविशेषगमकनिदानादिमध्ये पूर्वरूपपाठो न्याय्य एव; किंवा, पूर्वरूपविशेषोऽप्यत्र रक्तपित्तादिरोगान्तरापेक्षया सामान्योक्तोऽपि विशेषो ज्ञेयः ॥ ४–५ ॥

---

१ 'तत्र तावद्' इति पा० । २ 'संप्राप्तिः' इति पा० ।

यदा पुरुषो वातलो विशेषेण ज्वरवमनविरेचनातीसाराणामन्यतमेन कर्शनेन कर्शितो वातलमाहारमाहरति, शीतं वा विशेषेणातिमात्रम्, अस्नेहपूर्वे वा वमनविरेचने पिबति, अनुदीर्णां वा छर्दिमुदीरयति, उदीर्णान् वातमूत्रपुरीषवेगान्निरुणद्धि, अत्यशितो वा पिबति नवोदकमतिमात्रम्, अतिसंक्षोभिणा वा यानेन याति, अतिव्यवायव्यायाममद्यशोकरुचिर्वा, अभिघातमृच्छति वा, विषमासनशयनस्थानचङ्क्रमणसेवी वा भवति, अन्यद्वा किंचिदेवंविधं विषममतिमात्रं व्यायामजातमारभते, तस्यापचाराद्वातः प्रकोपमापद्यते ॥ ६ ॥

वातलो विशेषेणेति वचनात् पित्तलादेरपि यथोक्तमाचरतो वातगुल्मो भवति, वातलस्य त्वत्यर्थमिति दर्शयति । शीतं वा विशेषेणेति अत्यर्थंशीतमित्यर्थः । अतिमात्रमिति च्छेदः । अतिव्यवायव्यायामादिरुचिर्वा 'भवति' इति शेषः; व्यवायादिरुच्या व्यवायाद्याचरणं लक्षयति ॥ ६ ॥

स प्रकुपितो वायुर्महास्रोतोऽनुप्रविश्य रौक्ष्यात् कठिनीभूतमाप्लुत्य पिण्डितोऽवस्थानं करोति हृदि वस्तौ पार्श्वयोर्नाभ्यां वा; स शूलमुपजनयति ग्रन्थींश्चानेकविधान्, पिण्डितश्चावतिष्ठते, स पिण्डितत्वाद् 'गुल्म' इत्यभिधीयते; स मुहुराधमति, मुहुरल्पत्वमापद्यते; अनियतविपुलाणुवेदनश्च भवति चलत्वाद्वायोः, मुहुः पिपीलिकासंप्रचार इवाङ्गेषु, तोदभेदस्फुरणायामसङ्कोचसुप्तिहर्षप्रलयोदयबहुलः; तदातुरः सूच्येव शङ्कुनेव चाभिसंविद्धमात्मानं मन्यते, अपि च दिवसान्ते ज्वर्यते, शुष्यति चास्यास्यम्, उच्छ्वासश्चोपरुध्यते, हृष्यन्ति चास्य रोमाणि वेदनायाः प्रादुर्भावे; प्लीहाटोपान्त्रकूजनाविपाकोदावर्ताङ्गमर्दमन्याशिरःशङ्खशूलब्रध्नरोगाश्चैनमुपद्रवन्ति; कृष्णारुणपरुषत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति, निदानोक्तानि चास्य नोपशेरते, विपरीतानि चोपशेरत इति वातगुल्मः ॥ ७ ॥

रौक्ष्यात् कठिनीभूतमिति महास्रोतोविशेषणं; तच्च प्रकुपितस्य वायो रौक्ष्येण तथोक्तज्वरकर्शनादिहेतुकृताच्च रौक्ष्यात् कोष्ठस्य कठिनत्वमुपपन्नम् । आप्लुत्येति व्याप्य, कोष्ठमेव । अन्यत्राप्युक्तम्—"आप्लुतं मारुतेनेह शरीरं यस्य केवलम्" (इं. आ. १०) इति; आप्लुतं व्याप्तमित्यर्थः । यदा तु 'रौक्ष्यात् कठिनीभूत' इति पाठस्तदा वातविशेषणं, वातस्य कठिनत्वमत्यर्थं प्रकोपेण घनत्वमेव बोद्धव्यम् । पिण्डित इति कुण्डलीभूतः । नाभ्यां चेति च्छेदः । पिण्डितश्चेति द्वितीयपिण्डितशब्देन मांसाद्युत्तुण्डनेन गुल्मप्रदेशस्यापि पिण्डितत्वमुच्यते; पूर्वेण पिण्डितशब्देन तु वायोः पिण्डितत्वमिति न पौनरुक्त्यम् । अनेकविधानिति च्छेदः । ग्रन्थींश्चानेकविधानिति दीर्घवृत्तस्थूलादिभेदेन भिन्नान् । पिण्डितत्वाद् 'गुल्म' इत्युच्यते इत्यनेन लतादिगुल्मसादृश्यनिबन्धनां गुल्मसंज्ञां दर्शयति । आधमति विस्तारीभवति । अनियतविपुलाणुवेदन इति कदाचिद्विपुलवेदनः कदाचिदल्पवेदनश्चानियमेन भवति । अत्रैव हेतुमाह—चलत्वाद्वायोरिति । आयामः विस्तरणं, हर्षः रोमहर्षः, प्रलयः नाशः, उदयः जन्म; स्फुरणादीनां जन्मनाशौ बहुधा भवत इत्यर्थः । अत्रापि चलत्वमेव वायोर्हेतुर्बोद्धव्यः । हृष्यन्ति चास्य रोमाणीति वेदनाप्रादुर्भावे प्रतिनियमेन, स्फुरणादौ तु हर्षो विनाऽपि वेदनामिति ज्ञेयम् ॥ ७ ॥

तैरेव तु कर्शनैः कर्शितस्याम्ललवणकटुकक्षारोष्णतीक्ष्णशुक्तव्यापन्नमद्यहरितकफलाम्लानां विदाहिनां च शाकधान्यमांसादीनामुपयोगादजीर्णाध्यशनाद्रौक्ष्यानुगते चामाशये वमनमतिवेलं संधारणं वातातपौ चातिसेवमानस्य पित्तं सह मारुतेन प्रकोपमापद्यते ॥ ८ ॥

तत् प्रकुपितं मारुत आमाशयैकदेशे संवर्त्य तानेव वेदनाप्रकारानुपजनयति, य उक्ता वातगुल्मे; पित्तं त्वेनं विदहति कुक्षौ हृद्युरसि कण्ठे च; स विदह्यमानः सधूममिवोद्गारमुद्गिरत्यम्लान्वितं, गुल्मावकाशश्चास्य दह्यते दूयते धूप्यते ऊष्मायते स्विद्यति क्लिद्यति शिथिल इव स्पर्शासहोऽल्परोमाञ्चश्च भवति; ज्वरभ्रमदवथुपिपासागलतालुमुखशोषप्रमोहविड्भेदाश्चैनमुपद्रवन्ति; हरितहारिद्रत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति; निदानोक्तानि चास्य नोपशेरते, विपरीतान्युपशेरत इति पित्तगुल्मः ॥ ९ ॥

रौक्ष्यानुगते चामाशये इति रौक्ष्यणहेतुभी रूक्षीकृते इत्यर्थः; किंवा रौक्ष्यानुगते चामाशये सति वमनं सेवमानस्येति योजनीयम् । आमाशयैकदेशे संवर्त्येतिवचनात् पित्तगुल्मस्य कफगुल्मस्य च वस्तिः स्थानं न भवतीति दर्शयति; वचनं हि—"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" (वि. अ. २) इति; वातगुल्मस्य तु वस्तिरपि स्थानं भवति, अत एव तत्र सामान्येन महास्रोत इति कृतं, महास्रोतोग्रहणेन च वस्ति-

१ 'अतिमात्रमस्नेहपूर्वे वा' इति गङ्गाधरसंमतः पाठः । २ 'विषमाशनशयनासनस्थानचङ्क्रमणसेवी' इति पा० । ३ 'तस्य तदपचाराद्वायुः' इति पा० । ४ कठिनीभूत आप्लुत्य' इति पा० । ५ 'अवधमति' इति पा० । ६ 'जीर्यति' इति पा० ।

१ 'लतादिकल्पितगुल्मसादृश्यनिबन्धनां' इति पा० । २ 'वमनविरेचनमतिवेलं' इति पा० । ३ 'संमूर्च्छ्य' इति पा० । ४ 'धूमायते' इति पा० । ५ 'मृदुशिथिल' इति पा० । ६ 'अल्परोमा च' इति पा० । ७ 'रौक्ष्येण हेतुनाऽतीव रूक्षीकृते' इति पा० ।

रपि गृह्यते; तथा वातगुल्म एव 'हृदि वस्तौ' इत्यादि कृतम्। दाहदूयनादयः पित्तवेदनाविशेषा असकृद्व्याख्याताः। दवथुः 'धक्धक्' इति लोके कथ्यते ॥ ८ ॥ ९ ॥

**तैरेव तु कर्शनैः कर्शितस्यात्यशनादतिस्निग्धगुरुमधुरशीताशनात् पिष्टेक्षुक्षीरतिलमाषगुडविकृतिसेवनान्मन्दकमद्यातिपानाद्धरितकातिप्रणनयादानूपौदकग्राम्यमांसातिभक्षणात् संधारणादबुभुक्षस्य चातिप्रगाढमुदपानात् संक्षोभणाद्वा शरीरस्य श्लेष्मा सह मारुतेन प्रकोपमापद्यते ॥ १० ॥**

**तं प्रकुपितं मारुत आमाशयैकदेशे संवर्त्य तानेव वेदनाप्रकारानुपजनयति य उक्ता वातगुल्मे; श्लेष्मा त्वस्य शीतज्वरारोचकाविपाकाङ्गमर्दहर्षहृद्रोगच्छर्दिनिद्रालस्यस्तैमित्यगौरवशिरोभितापानुपजनयति, अपि च गुल्मस्य स्थैर्यगौरवकाठिन्यावगाढसुप्तताः, तथा कासश्वासप्रतिश्यायान् राजयक्ष्माणं चातिप्रवृद्धः, श्वैत्यं त्वङ्नखनयनवदनमूत्रपुरीषेषूपजनयति, निदानोक्तानि चास्य नोपशेरते, विपरीतानि चोपशेरत इति श्लेष्मगुल्मः ॥ ११ ॥**

श्लेष्मगुल्मे अबुभुक्षस्येति अबुभुक्षितस्य; 'अतिसुहितस्य' इति वा पाठः। यद्यपि राजयक्ष्मा त्रिदोषजः, तथाऽपि कफगुल्म एव रोगमहिम्ना अजनितदोषत्रयेण जन्यत इति बोद्धव्यम् ॥ १० ॥ ११ ॥

**त्रिदोषहेतुलिङ्गसन्निपाते तु सान्निपातिकं गुल्ममुपदिशन्ति कुशलाः। स विप्रतिपिद्धोपक्रमत्वादसाध्यो निचयगुल्मः ॥ १२ ॥**

विप्रतिपिद्धोपक्रमत्वादिति परस्परं वातादिविरुद्धोपक्रमत्वात्। इह च विप्रतिपिद्धोपक्रमत्वं विकृतिविषमसन्निपातेन बोद्धव्यम्। तेन, साध्यत्रिदोषज्वरादौ वातादिविरुद्धोपक्रमत्वं सदपि नासाध्यतामापादयति ॥ १२ ॥

**शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य, गर्भकोष्ठार्तवागमनवैशेष्यात्। पारतन्त्र्यादवैशारद्यात् सततमुपचारानुरोधाद्वा वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाऽप्यचिरपतितेऽथवाऽप्यचिरप्रजातायाः ऋतौ वा वातप्रकोपणान्यासेवमानायाः क्षिप्रं वातः प्रकोपमापद्यते ॥ १३ ॥**

**स प्रकुपितो योनिमुखमनुप्रविश्यार्तवमुपरुणद्धि, मासि मासि तदार्तवमुपरुध्यमानं कुक्षिमभिवर्धयति। तस्याः शूलकासातीसारच्छर्द्यरोचकाविपाकाङ्गमर्दनिद्रालस्यस्तैमित्यकफप्रसेकाः समुपजायन्ते, स्तनयोश्च स्तन्यम्, ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यम्, अत्यर्थं ग्लानिश्चक्षुषोः, मूर्च्छा, हृल्लासः, दोहदः, श्वयथुश्च पादयोः, ईषच्चोद्गमो रोमराज्याः, योन्याश्चाटालत्वम्, अपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते, केवलश्चास्या गुल्मः पिण्डित एव स्पन्दते, तामगर्भां गर्भिणीमित्याहुर्मूढाः ॥ १४ ॥**

शोणितगुल्मे स्त्रिया एवेति वचनादेव न पुरुषस्येति लब्धे पुनर्न पुरुषस्येति वचनं स्पष्टार्थम्। गर्भार्थः कोष्ठो गर्भकोष्ठस्तस्मिन् गर्भकोष्ठे य आर्तवस्यागमनरूपो विशेषो रक्तगुल्मकारणं, स स्त्रिया एव भवति; तेनैवंरूप आर्तवप्रतिबन्धजन्यः शोणितगुल्मः पुरुषस्य न भवति। सामान्यशोणितदुष्टिजन्यस्तु पुरुषस्यापि भवति; तथाहि वक्ष्यति—"कफो वाते जितप्राये पित्तं शोणितमेव च। यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते (चि. अ. ५)" इत्यादि; तथा 'गुल्मोपकुशवीसर्प' (सू. अ. २४) इत्यादयो 'रक्तजा गदाः' इत्युक्तम्। पारतन्त्र्यादिहेतुत्रयं वेगविधारणे, पारतन्त्र्यादेव स्त्रियो वेगं विधारयन्ति। अवैशारद्यम् अज्ञानं; तेन, वेगविधारणेन महान् व्याधिर्भवतीत्यज्ञानाद्वेगं विधारयन्ति। उपचारानुरोधादिति भर्त्राद्युपचारपरत्वात्। योनिमुखमिति गर्भाशयद्वारम्। स्तनयोः स्तन्यमिति रोगप्रभावादेव बोद्धव्यम्। आर्तवरोधलक्षणस्य व्याधेरयं प्रभावो यत् स्तन्यं करोति, दृष्टत्वात्। तेन, यदुच्यते—"स्त्रिया ह्यापन्नसत्त्वायास्त्रिधा रसः संपद्यते—स्वशरीरपुष्टये, स्तन्याय, गर्भाभिवृद्धये च" (शा. अ. ६) इति वचनाद् गर्भे एव स्तन्यं भवति" तन्निरस्तं मन्तव्यम्। दोहदशब्देनेह नार्या उच्चावचभावतृष्णायोगो दोहदाभिधानो ज्ञेयः। यदुक्तं क्षारपाणिना—"दोहदिनी वा स्यान्नारी शोणितगुल्मिनी" इति। न त्विह द्वैहृद्यकृतो दोहदोऽभिप्रेतः, स हि गर्भहृदयस्य मातृहृदयेन संबन्धाद्भवति; वचनं हि—"मातृजं ह्यस्य हृदयं, तदस्य मातृहृदयेन संबद्धं भवति रसवाहिनीभिः संवाहिनीभिः, तस्मात्तयोस्ताभिर्भक्तिः संपद्यते" (शा. अ. ४) इति; शोणितगुल्मे च चेतना नास्ति, तेन नैवंरूपमिह द्वैहृद्यं दोहदम्। तेन गर्भभ्रान्त्या यत्किंचिदभ्यवहारेच्छादिलक्षणं दोहदं तस्या भवति, असत्यपि विषसंबन्धे यथा शङ्काविषाद्विषलिङ्गानि भवन्ति; वचनं हि—"शङ्काविषेणोपहताः कुर्वन्ति विषलक्षणम्" इति। आटालत्वं विस्तृतत्वं; योनिविस्तारेण च रोमराज्या अपि विस्तरणं वितन्यमानचर्मरोम्णा चैवोपपन्नम्। केवलः स्पन्दत

---

१ 'पिष्टेक्षुक्षीरतिलमाषविकृतिसेवनान्मद्यातिपानात्' इति पा०। २ 'अतिसुहितस्य' इति पा०। ३ 'संमूर्च्छ्य' इति पा०। ४ 'विरुद्धोपक्रमत्वात्' इति पा०।

१ 'उच्चावचभावतृष्णायोगाद्दोहदाभिधानो ज्ञेयः' इति पा०। २ 'यत्किञ्चिदभ्यवहारेच्छादिलक्षणा दोहदिनी भवति' इति पा०। ३ 'दुरन्धकारे विद्धस्य केनचिद्दष्टशङ्कया। विषोद्वेगो ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत्॥ ग्लानिर्मोहोऽतिसारो वा तच्छङ्काविषमुच्यते॥' (वा० उ० अ० ३६.)।

इति नैकदेशेन; गर्भो ह्येकदेशेनापि स्पन्दते, तेनैतल्लक्षणं गर्भशङ्काव्यावर्तकम्। ननु यदुक्तं रक्तगुल्मे—"समगर्भलिङ्गः" इति, तथा "मासे व्यतीते दशमे चिकित्स्यः" (चि. अ. ५) इति; तदनुपपन्नं, यतो गर्भाद्विशिष्टं पिण्डितस्पन्दनं विद्यत एव; तथा नवत्वं सुखसाध्यताहेतुत्वेनोक्तम्, इह च कथं कालातिक्रमेणोपक्रमणीयत्वमुच्यते? ब्रूमः—समगर्भलिङ्गत्वं तावद्भूरिगर्भसमलिङ्गताभिप्रायेणोक्तं; किंवा, समस्यावैकारिकस्य दशमासिकपर्यन्तस्य गर्भस्य लिङ्गानि यस्य स समगर्भलिङ्गः, तेन वैकारिकगुल्मनागोदरादेर्लक्षणं नेह भवतीति दर्शयति। दशममासचिकित्स्यत्वं चेह व्याधिमहिम्ना बोद्धव्यं, दशममास एवायं शिथिलीभूतः सन् चिकित्स्यो भवतीति व्याधिप्रभावः। दृष्टा च व्याधिप्रभावकृता कालपेक्षा—"ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्। षडहे षडहे देयम्" इत्यादिषु। यत्तु समगर्भलिङ्गत्वेन गर्भशङ्कानिरासार्थं रक्तगुल्मस्य दशममासापेक्षणं; तन्न, दशममासादर्वागपि पिण्डितस्पन्दनेन रक्तगुल्मस्यावधारणम्, तथा दशममासादूर्ध्वमपि गर्भावस्थानस्य दृष्टत्वेन गर्भशङ्कानपगमाच्च; वक्ष्यति हि दशममासादूर्ध्वमवस्थानं गर्भस्य—"वैकारिकमत ऊर्ध्वमवस्थानं" (शा. अ. ४) इति ॥ १३ ॥ १४ ॥

**एषां तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि पूर्वरूपाणि भवन्ति; तद्यथा—अनन्नाभिलषणम्, अरोचकाविपाकौ, अग्निवैषम्यं, विदाहो भुक्तस्य, पाककाले चायुक्त्या छर्द्युद्गारौ, वातमूत्रपुरीषवेगानां चाप्रादुर्भावः, प्रादुर्भूतानां चाप्रवृत्तिरीषदागमनं वा, वातशूलाटोपान्त्रकूजनापरिहर्षणातिवृत्तपुरीषताः, अबुभुक्षा, दौर्बल्यं, सौहित्यस्य चासहत्वमिति ॥ १५ ॥**

तद्यथेत्यादिना पूर्वरूपाण्याह। अयुक्त्येति छर्द्युद्गारकारणमन्तरेण व्याधिप्रभावादेवेत्यर्थः। अतिवृत्तपुरीषता उदावर्तः ॥ १५ ॥

**सर्वेष्वपि खल्वेतेषु गुल्मेषु न कश्चिद्वाताद्दते संभवति गुल्मः। तेषां सान्निपातिकमसाध्यं ज्ञात्वा नैवोपक्रमेत, एकदोषजे तु यथास्वमारम्भं प्रणयेत्, संसृष्टांस्तु साधारणेन कर्मणोपचरेत्। यच्चान्यदप्यविरुद्धं मन्येत तदप्यवचारयेद्विभज्य गुरुलाघवमुपद्रवाणां, गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेज्जघन्यमितरान्। त्वरमाणस्तु विशेषमनुपलभमानो गुल्मेष्वात्ययिके कर्मणि वातचिकित्सितं प्रणयेत्, स्नेहस्वेदौ वातहरौ स्नेहोपसंहितं च मृदु विरेचनं वस्तींश्च; अम्ललवणमधुरांश्च रसान् युक्त्याऽवचारयेत्। मारुते ह्युपशान्ते स्वल्पेनापि प्रयत्नेन शक्योऽन्योऽपि दोषो नियन्तुं गुल्मेष्विति ॥ १६ ॥**

१ 'दशम एवायं मासे' इति पा०।

**भवति चात्र—**

**गुल्मिनामनिलशान्तिरुपायैः**
**सर्वशो विधिवदाचरितव्या।**
**मारुते ह्यवजितेऽन्यमुदीर्णं**
**दोषमल्पमपि कर्म निहन्यात् ॥ १७ ॥**

पित्तादिकृतेष्वपि तु गुल्मेषु संप्राप्तिसिद्धस्य वातस्य प्राधान्यमाह—सर्वेष्वपीत्यादि। साधारणेनेति संसृष्टोभयदोषप्रत्यनीकेन। यच्चान्यदपीति संसर्गे एकदोषोपशमकमपि। अविरुद्धमिति उपद्रवाणां गुरूणामविरुद्धम्। विभज्येति गुरुलाघवं विभज्य। तेनैकदोषप्रशमनमपि तदेव कर्तव्यं यद्गुरूपद्रवप्रशमनं भवतीति भावः। एतदेवाह—गुरूनित्यादि। सर्वगुल्मानां वातमूलत्वेन वातनिरपेक्षचिकित्साविशेषानुपलम्भे वातचिकित्सैव त्वरया कर्तव्येत्याह—त्वरमाणस्त्वित्यादि। आत्ययिके कर्मणि 'क्रियमाणे' इति शेषः। अल्पमपीति कर्मविशेषणम् ॥ १६–१७ ॥

**तत्र श्लोकः—**

**संख्या निमित्तं रूपाणि पूर्वरूपमथापि च।**
**दिष्टं निदाने गुल्मानामेकदेशश्च कर्मणाम् ॥ १८ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने गुल्मनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥**

संग्रहे एकदेशश्च कर्मणामिति चिकित्सितानाम् ॥ १८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने गुल्मनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

**अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**त्रिदोषकोपनिमित्ता विंशतिः प्रमेहा भवन्ति विकाराश्चापरेऽपरिसंख्येयाः। तत्र यथा त्रिदोषप्रकोपः प्रमेहानभिनिर्वर्तयति तथाऽनुव्याख्यास्यामः ॥ ३ ॥**

दक्षाध्वरे गुल्ममनु प्रमेहोत्पादात् प्रमेहाभिधानं; वचनं हि—"हविःप्राशान्मेहकुष्ठयोर्जन्म" (नि. अ. ८) इति। त्रिदोषप्रकोपनिमित्ता इति सर्वमेहेष्वेव त्रिदोषाः कारणम्, अधिकत्वाच्च श्लेष्मिकादिव्यपदेश इति दर्शयति। सुश्रुतेऽप्युक्तं—"सर्व एव मेहाः सर्वदोषजाः" (नि. अ. ६) इति।

विकारा इति प्रमेहलिङ्गोपद्रवरूपाः; किंवा, अन्येऽपि ये केचन त्रिदोषजास्ते ग्राह्याः ॥ १–३ ॥

**इह खलु निदानदोषदूष्यविशेषेभ्यो विकारविघातभावाभावप्रतिविशेषा भवन्ति। यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्त्यथवा कालप्रकर्षाद्बलीयांसोऽथवाऽनुबध्नन्ति न तदा विकाराभिनिर्वृत्तिः, चिराद्वाऽप्यभिनिर्वर्तन्ते, तनवो वा भवन्त्ययथोक्तसर्वलिङ्गा वा; विपर्यये विपरीताः; इति सर्वविकारविघातभावाभावप्रतिविशेषाभिनिर्वृत्तिहेतुर्भवत्युक्तः ॥ ४ ॥**

इहेत्यादौ निदानादीनां विशेषाः परस्परानुबन्धित्वादयोऽग्रे वक्ष्यमाणा ज्ञेयाः । विकाराणां विघातस्योत्पत्तिप्रतिबन्धस्य भावो विघातभावः, विकाराणां विघातस्याभावो विकारजननमिति विकारविघातभावाभावौ, तयोः प्रतिविशेषा विकारविघातभावाभावप्रतिविशेषाः । तत्र विकाराणां विघातभावस्य प्रतिविशेषाः—विकाराजननं, तथा चिरेण च जननम्, अणुविकारजननं वा, असर्वलिङ्गविकारजननं वाऽग्रे वक्ष्यमाणम्। विघाताभावप्रतिविशेषास्तु विकाराजननादिविपर्ययेणाग्रे वक्ष्यमाणाः। उक्तफक्किकार्थं व्याकरोति—यदेत्यादि । परस्परं नानुबध्नन्ति परस्परं प्रतिकूला भवन्ति, अनुबन्धो ह्यनुकूलेऽभिप्रेतः। तत्र तदेव निदानं दोषमनुबध्नाति, यद्भूयःसामान्याद्विरोधेन दोषं दूषयति । दोषस्य दूष्यानुबन्धित्वं यद्—दूष्यं व्याधिकारणं सामान्यगुणत्वादिधर्मयोगादविरोधेन दूषयति। तथा दूष्यस्य च दोषानुबन्धित्वं यद्—दोषस्य दूषणं प्रति शिथिलत्वसमानगुणत्वादिनाऽऽनुकूल्येनावस्थानम् । तथा दोषस्य चेदमेव निदानानुबन्धित्वं यत्—निदानं दोषजननं प्रति समानगुणत्वं, समानगुणतया हि दोषो निदानस्य व्याधिजननं प्रत्यनुकूलो भवति । एतदुदाहरणानां च विपर्ययेणाननुबन्धो बोद्धव्यः। निदानस्य च दोषाननुबन्धः समानासमानगुणयोगात् किंचिद्दोषजनने बोद्धव्यः, सर्वथा दोषवैपरीत्ये तथा दोषजननं प्रत्युदासीनत्वे च निदानस्य निदानत्वमेव न स्यात्; जनकं हि निदानमुच्यते। अथवा कालप्रकर्षादिति अनुबध्नन्तीति संबन्धः; कालप्रकर्षादनुबध्नन्तीति कालप्रकर्षात् परस्परं निदानादयोऽनुगुणा भवन्ति यदा,तदा विकाराश्चिरादभिनिर्वर्तन्त इति ज्ञेयम् । यदा परस्परं नानुबध्नन्ति, न तदा विकाराभिनिर्वृत्तिर्भवतीति योजनीयम्। कालप्रकर्षाच्चानुबन्धो निदानस्य दोषेण तदा भवति, यदा हेतुर्विच्छेदं कृत्वा पुनः सेव्यते; काल एव वा चिरेण समानगुणतया हेतुरूपः प्राप्यत इत्यादि तर्क्यम्। अबलीयांसोऽथवाऽनुबध्नन्तीति निदानं यदाऽल्पं भवति तदा स्तोकदोषं करोति, दोषश्च स्तोकः स्तोकं च दूष्यं दूषयतीत्यादि ज्ञेयम्। यदा चा(वाऽ)बलीयांसोऽनुबध्नन्ति, तदा तनवो वा विकारा भवन्ति, अयथोक्तसर्वलिङ्गा वा भवन्तीति योज्यं; तनवः अल्पमात्राः, अयथोक्तसर्वलिङ्गा इति येन प्रकारेण लिङ्गान्युक्तानि न तेन प्रकारेण सर्वाणि लिङ्गानि भवन्तीत्यर्थः। एवमेते निदानादीनामननुबन्धविशेषकृता विकारविघातभावस्य प्रतिविशेषा उक्ताः। संप्रति निदानादीनां परस्परानुबन्धविशेषकृतान् विकाराणां विघाताभावविशेषानाह—विपर्यये विपरीता इति। विपर्यय इति निदानादीनामनुबन्धे तथा शीघ्रानुबन्धे तथा बलवतां चानुबन्धे; विपरीता इति निर्वर्तमाना विकाराः, तथा शीघ्रं निर्वर्तमानाः, तथा महान्तो यथोक्तसर्वलिङ्गाश्चेति यथासंख्यं बोद्धव्यम् । उपसंहरति—इतीत्यादि । एतच्च प्रकरणं सर्वविकारसाधारणमपि प्रमेहस्य परस्परानुबन्धिभिरेव निदानादिभिर्जन्यत्वं भवतीति ख्यापयितुं प्रमेहनिदाने कृतम् ॥ ४ ॥

**तत्रेमे त्रयो निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणामाश्वभिनिर्वृत्तिकरा भवन्ति; तद्यथा—हायनकयवकचीनकोद्दालकनैषधेत्कटमुकुन्दकमहाव्रीहिप्रमोदकसुगन्धकानां नवानामतिवेलमतिप्रमाणेन चोपयोगः, तथा सर्पिष्मतां नवहरेणुमाषसूप्यानां, ग्राम्यानूपौदकानां च मांसानां, शाकतिलपललपिष्टान्नपायसकृशराविलेपीक्षुविकाराणां, क्षीरनवमद्यमन्दकदधिद्रवमधुरतरुणप्रायाणां चोपयोगः, मृजाव्यायामवर्जनं, स्वप्नशयनासनप्रसङ्गः, यश्च कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्रसंजननः, स सर्वो निदानविशेषः ॥ ५ ॥**

संप्रति प्रकृते कफजादिमेहे परस्परानुबन्धिनो निदानादिविशेषानाह—तत्रेत्यादि। इह कफ एवाग्रेऽभिधीयते, भूरिप्रमेहकर्तृत्वात्। हायनकादयो धान्यविशेषाः । अतिवेलमिति पुनः पुनः। हरेणुः वर्तुलकलायः । तिलतण्डुलमाषकृतमन्नं कृशरा। मृजा उद्वर्तनम्। सर्वः स निदानविशेष इति एवंभूतमेव निदानं प्रमेहकर्तुः श्लेष्मणः कारणमित्यर्थः ॥ ५ ॥

**बहुद्रवः श्लेष्मा दोषविशेषः ॥ ६ ॥**

बहुद्रवः श्लेष्मा दोषविशेष इति बहुद्रव एव कफो मेहजनको नाल्पद्रव इति ॥ ६ ॥

**बद्धवद्धं मेदो मांसं शरीरजक्लेदः शुक्रं शोणितं वसा मज्जा लसीका रसश्चौजःसंख्यात इति दूष्यविशेषाः ॥ ७ ॥**

---

१ 'नानुबध्नन्ति न तदा विकाराभिनिर्वृत्तिर्भवति; अथाप्रकर्षादबलीयांसोऽनुबध्नन्ति न तदाऽवश्यं विकाराभिनिर्वृत्तिर्भवति, चिराद्वाऽप्यभिनिर्वर्तन्ते विकाराः, तनवो वा भवन्ति, अयथोक्तसर्वलिङ्गा वा' इति योगीन्द्रनाथसेनसंमतः पाठः।

१ 'योगीन्द्रनाथसेनस्तु 'बहुबद्धं' इति पठति, 'बहुबद्धं चितम्', इति च व्याख्यानयति।

अवद्धमिति असंहतम्। अत्र तु वहुत्वमघनत्वं च यथायोग्यतया वोद्धव्यम्। तेन, मेदसि मांसे वसामज्ज्ञोश्च द्वयमपि, शेषेषु वहुत्वम्। ओजःसंख्यात इति ओजोरूप एव। वक्ष्यति हि प्रमेहचिकित्सिते—"मज्जा रसौजः पिशितं च दूष्याः" (चि. अ. ५) इति। इतिशब्दो वहुवद्धमेदआदीन् प्रत्यवमृशति; किंवा 'संख्याताः' इति पाठः सुगमः ॥ ७॥

त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते, प्रागतिभूयस्त्वात्; स प्रकुपितः क्षिप्रमेव शरीरे विसृप्तिं लभते, शरीरशैथिल्यात्; स विसर्पञ् शरीरे मेदसैवादितो मिश्रीभावं गच्छति, मेदसश्चैव वहुवद्धत्वान्मेदसश्च गुणैः समानगुणभूयिष्ठत्वात्; स मेदसा मिश्रीभवन् दूषयत्येनत्, विकृतत्वात्; स विकृतो दुष्टेन मेदसोपहितः शरीरक्लेदमांसाभ्यां संसर्गं गच्छति, क्लेदमांसयोरतिप्रमाणाभिवृद्धत्वात्; स मांसे मांसप्रदोषात् पूतिमांसपिडकाः शराविकाकच्छपिकाद्याः संजनयति, अप्रकृतिभूतत्वात्; शरीरक्लेदं पुनर्दूषयन् मूत्रत्वेन परिणमयति, मूत्रवहानां च स्रोतसां वङ्क्षणवस्तिप्रभवाणां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यते; ततः प्रमेहांस्तेषां स्थैर्यमसाध्यतां वा जनयति, प्रकृतिविकृतिभूतत्वात् ॥ ८॥

सन्निपाते मेलके। प्रकोपमापद्यत इति प्रमेहकरणायोद्यतो भवति। कुतः प्रमेहकरणायोद्यतो भवतीत्याह—प्रागतिभूयस्त्वात्। प्रागिति उत्पादकाल एव। यस्मात् प्रमेहकरणं प्रत्यभिमुखो भूयांश्च कफो भूतस्तत इत्यर्थः। प्रमेहनिदानेन हि कफोऽयं प्रमेहकरणाभिमुख एव जनितो भूरिश्च; ततो भूरित्वात् तथा प्रमेहकरणशक्तियोगाच्च तथा प्रकुप्यतीति युक्तम्। विसृप्तिं विसरणम्। मेदसश्च गुणानां गुणैः समानगुणभूयिष्ठत्वादित्यादि।—मेदसो गुणानां मधुरस्नेहगौरवादीनां श्लेष्मणो गुणैर्गुरुशीतादिभिर्भूरिसामान्यादित्यर्थः; समानं हि समानेन मिलतीति भावः। विकृतत्वादितिवचनेन प्रकृतेन श्लेष्मणा संबन्धो मेदोदूषको न भवति, किन्तर्हि विकृतेनैवेति दर्शयति। अतिप्रमाणवृद्धत्वादिति अतिशयितप्रमाणयोगेन वृद्धत्वात्; न गुणातियोगमात्रेण वृद्धत्वमिह, किन्तर्ह्यवयवोपचयेनेत्यर्थः। पूतिमांसवत्यः पिडकाः पूतिमांसपिडकाः। अप्रकृतिभूतत्वादिति मांसप्रदोषेण नानाविधशराविकादिजनकत्वशक्तित्वादितीह वोद्धव्यम्। तेन, अप्रकृतभूतत्वादितिवचनं हि विशेषार्थत्वान्न पुनरुक्तम्। आसाद्य प्रतिरुध्यत इति गत्वाऽवतिष्ठते। प्रकृतिविकृतिभूतत्वादिति प्रकृतिभूतैर्गुणैः सर्वैरेव विकृतत्वात्; सर्व एव यस्माच्छ्लेष्मणो गुणा विकृतास्तस्मात् प्रकोपप्रकर्षात् स्थिरो भवति, अतिप्रकर्षात्त्वसाध्य इत्यर्थः। किंवा प्रकृतिभूतः श्लेष्मा समाने दूष्ये मेदोवसादौ, विकृतिभूतश्चासमाने शोणितादौ; तेन समानासमानत्वादित्यर्थः। तथा च समानदूष्यप्राप्त्या वलित्वम्, असमानदूष्यप्राप्त्या च विरुद्धोपक्रमत्वं कफस्य भवति; ततश्च स्थैर्यमसाध्यता वा युक्तेति मन्तव्यम् ॥ ८॥

शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुपसृज्यते वैषम्ययुक्तैः[1]; तद्यथा—श्वेतशीतमूर्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमन्दैः, तत्र येन गुणेनैकेनानेकेन वा भूयस्तरमुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति ॥ ९॥

ते तु खल्विमे दश प्रमेहा नामविशेषेण भवन्ति; तद्यथा—उदकमेहश्च, इक्षुवालिकारसमेहश्च, सान्द्रमेहश्च, सान्द्रप्रसादमेहश्च, शुक्लमेहश्च, शुक्रमेहश्च, शीतमेहश्च, सिकतामेहश्च, शनैर्मेहश्च, आलालमेहश्चेति ॥ १०॥

ते दश प्रमेहाः साध्याः, समानगुणमेदःस्थानकत्वात्, कफस्य प्राधान्यात्, समक्रियत्वाच्च ॥ ११॥

संप्रति यथा कफमेहाः कफगुणयोगाद्दश भवन्ति तथा प्राह—शरीरेत्यादि। वैषम्यमिह वृद्धिकृतमेव बोद्धव्यं, क्षयरूपवैषम्यस्यैवंरूपव्याध्यजनकत्वात्। वैषम्य एव वृद्धवृद्धतरत्वादिना हानिवृद्धी बोद्धव्ये; तेन श्वेतादिगुणवृद्ध्या ये शुक्लमेहादय उक्ताः, तेष्वपीतरे श्लेष्मगुणा हानिवृद्धिरूपवैषम्ययुक्ताः सन्तीत्यर्थः। किंवा वैषम्ये सति क्वचिद्द्वयोः क्वचित्त्रयाणां क्वचिच्चतुर्णां गुणानां वृद्धिर्भवतीति दर्शयति। तेन गुणसंख्योत्कर्षापकर्षाद्धानिवृद्धी ज्ञेये। नचेह श्वेतादिदशगुणयोगाद्यथासंख्यं दश प्रमेहाः, किंतु व्यस्तसमस्तगुणयोगाच्च; अत एवाह—येन गुणेनैकेनानेकेन वेत्यादि। सान्द्रप्रसादशब्देनैक एव गुणो गणनीयः; सान्द्रमेहव्यपदेशस्तु सान्द्रप्रसादगुणैकदेशोनोद्भूतेन ज्ञेयः। तत्समाख्यमित्यादौ तत्समाख्यं वा गौणं वा[2] नामविशेषं प्राप्नोतीति योजनीयम्। तद्गुणस्य समा आख्या यस्य तत् तत्समाख्यं नाम, यथा—शीतमेह-शुक्लमेह-सान्द्रमेहेषु; अत्र हि शीतादिगुणाख्ययैव मेहा व्यपदिश्यन्ते, इतरेषु तूदकमेहादिषु न श्वेतादिगुणसंज्ञातुल्यं नाम, किं तर्हि श्लेष्मणो नैकगुणयुक्तोदकादितुल्यत्वेन[3] गुणयोगप्रवृत्तत्वाद्गौणमुदकमेह इति; अच्छसितशीतादिकफगुणयोगाद्गौणमुदकमेह इति नाम भवति। एवमन्यत्राप्यनुसरणीयम्। उदकादयस्त्विह कफगुणमेलकलक्षणार्थास्तत्तत्कफगुणयुक्ता उपात्ताः संज्ञाकरणार्थम् ॥ ९-११॥

तत्र श्लोकाः श्लेष्मप्रमेहविशेषविज्ञानार्था भवन्ति—॥ १२॥

---

१ 'वृक्कवस्तिप्रभवाणां' इति पाठश्चेत् साधु।

१ 'भूयसा समुपगृह्यते' इति पा०। २ 'तद्गौणं' इति पा०। ३ 'श्लेष्मण एव गुणयुक्तोदकादितुल्यत्वेन' इति पा०।

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।
श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥ १३ ॥
अत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलम् ।
काण्डेक्षुरससङ्काशं श्लेष्मकोपात् प्रमेहति ॥ १४ ॥
यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने ।
पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम् ॥ १५ ॥
यस्य संहन्यते मूत्रं किंचित् किंचित् प्रसीदति ।
सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥ १६ ॥
शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति ।
पुरुषं कफकोपेन तमाहुः शुक्लमेहिनम् ॥ १७ ॥
शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः ।
शुक्रमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १८ ॥
अत्यर्थमधुरं शीतं मूत्रं मेहति यो भृशम् ।
शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १९ ॥
मूर्तान्मूत्रगतान् दोषानणून्मेहति यो नरः ।
सिकतामेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥ २० ॥
मन्दं मन्दमवेगं तु कृच्छ्रं यो मूत्रयेच्छनैः ।
शनैर्मेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ २१ ॥
तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति ।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥ २२ ॥

इत्येते दश प्रमेहाः श्लेष्मप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ २३ ॥

विशेषविज्ञानार्था भवन्तीति परस्परभिन्नलक्षणप्रतिपादका इत्यर्थः । उदकोपममिति उदकवर्णादितुल्यम् । ननु, इक्षुवालिकामेहे काण्डेक्षुरससङ्काशमिति किमित्युच्यते, इक्षुवालिकाकाण्डेक्ष्वोरर्थान्तरत्वात् । नैवम्, इक्षुवालिकारसस्य तथा काण्डेक्षुरसस्य चैकरूपताप्रतिपादनार्थमुभयोरुपादानं[1]; किंवा, काण्डेक्षुरसतुल्योऽपि तथेक्षुवालिकारसतुल्यश्चेक्षुवालिकामेहो भवतीत्युभयोपादानाद्दर्शयति । संहन्यते स्त्यानीभवति । मूर्तानिति कठिनान् । दोषानिति जातौ बहुवचनं, येन दोषोऽत्रैक एव प्रभूतः कफः । तन्तुबद्धं तन्तुवद्दीर्घमित्यर्थः । लालामिवालालं, समन्ताल्लालारूपमित्यर्थः । प्रति प्रति मेहं च श्लेष्मकोपत इत्यादिवचनं सुखग्रहणार्थम्[2] । नचेह वाच्यम्—यत्—यथा श्लेष्मगुणा दश प्रमेहाञ्जनयन्ति, तथा किमित्यपरानपि गुणसंसर्गाद्विकल्पान्तरेण न कुर्वन्तीति; यतो भावस्वभावोऽयं—यथा दृष्ट एव परं कल्प्यते नादृष्टः; नहि सत्यपि भूतसंसर्गभूयस्त्वे रसभूयस्त्वं भवतीति व्यवस्थितमेव ॥ १२-२३ ॥

उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेविनस्तथाऽतितीक्ष्णातपाग्निसंतापश्रमक्रोधविषमाहारोपसेविनश्च तथाविधशरीरस्यैव क्षिप्रं पित्तं प्रकोपमापद्यते, तत्तु प्रकुपितं तयैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्वर्तयति ॥ २४ ॥

तेषामपि तु खलु पित्तगुणविशेषेणैव नामविशेषा भवन्ति; तद्यथा—क्षारमेहश्च, कालमेहश्च, नीलमेहश्च, लोहितमेहश्च, माञ्जिष्ठमेहश्च, हारिद्रमेहश्चेति ॥ २५ ॥

ते षड्भिरेव क्षाराम्ललवणकटुकविस्रोष्णैः पित्तगुणैः पूर्ववद्युक्ता भवन्ति ॥ २६ ॥

उष्णेत्यादिना पित्तमेहनिदानम् । षट् क्षिप्रतरमिति श्लेष्मप्रमेहापेक्षया; श्लेष्मणो हि क्षिप्रकारि पित्तं, तेन क्षिप्रतरोत्पादो युक्तः । पूर्ववद्युक्ता भवन्तीति वैषम्यहानिवृद्धियुक्तैरित्यर्थः[3] ॥ २४-२६ ॥

सर्वे एव ते याप्याः, संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ २७ ॥

तत्र श्लोकाः पित्तप्रमेहविशेषविज्ञानार्था भवन्ति—॥ २८ ॥

गन्धवर्णरसस्पर्शैर्यथा क्षारस्तथाविधम् ।
पित्तकोपान्नरो मूत्रं क्षारमेही प्रमेहति ॥ २९ ॥
मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति ।
पित्तस्य परिकोपेण तं विद्यात् कालमेहिनम् ॥ ३० ॥
चाषपक्षनिभं मूत्रमम्लं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥ ३१ ॥
विस्रं लवणमुष्णं च रक्तं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्याद्रक्तमेहिनम् ॥ ३२ ॥
मञ्जिष्ठोदकसंकाशं भृशं विस्रं प्रमेहति ।
पित्तस्य परिकोपात्तं विद्यान्माञ्जिष्ठमेहिनम् ॥ ३३ ॥
हरिद्रोदकसङ्काशं कटुकं यः प्रमेहति ।
पित्तस्य परिकोपात्तं विद्याद्धारिद्रमेहिनम् ॥ ३४ ॥

इत्येते षट् प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ३५ ॥

संसृष्टदोषमेदःस्थानत्वादिति संसृष्टं सन्निकृष्टं दोषस्य पित्तस्य मेदसश्च स्थानं यस्मात्; पित्तस्य ह्यामाशयः स्थानं, तथा मेदसोऽपि यत् स्थानं वपावहनं, तदप्यामाशयैकदेश एव; तेन दोषदूष्ययोः स्थानप्रत्यासत्त्या दूषणं नित्यं प्रत्यासन्नत्वाद्दुर्जयमिति भावः । किंवा संसृष्टदोषं मेदोरूपं स्थानं यस्य स तथा, एष विरुद्धोपक्रमत्वे हेतुः । तेन, यस्मात् पित्तरूपेण दोषेण संबद्धं मेदोरूपं स्थानं, तस्माद्विरुद्धोपक्रमता । यद्धि पित्तस्य मधुरशीतादि पथ्यं, तदपथ्यं मेदसः; यच्च मेदसः कटुकादि पथ्यं, तदपथ्यं पित्तस्य । चकाराद्व्याधिप्रभावाच्च याप्यत्वमिति दर्शयति ॥ २७-३५ ॥

१ 'उभयोपादानं' इति पा० । २ 'ग्रन्थसौन्दर्यार्थम्' इति पा० । ३ 'पित्तमाहुः' इति पा० ।

१ श्लेष्मवद्वृद्धिहानियुक्ता इत्यर्थः' इति पा० ।

कषायकटुतिक्तरूक्षलघुशीतव्यवायव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगसंधारणानशनाभिघातातपोद्वेगशोकशोणितातिषेकजागरणविषमशरीरन्यासानुपसेवमानस्य तथाविधशरीरस्यैव क्षिप्रं वातः प्रकोपमापद्यते ॥ ३६ ॥

स प्रकुपितस्तथाविधे शरीरे विसर्पन् यदा वसामादाय मूत्रवहानि स्रोतांसि प्रतिपद्यते तदा वसामेहमभिनिर्वर्तयति; यदा पुनर्मज्जानं मूत्रवस्तावाकर्षति तदा मज्जमेहमभिनिर्वर्तयति; यदा तु लसीकां मूत्राशयेऽभिवहन्मूत्रमनुबन्धं च्योतयति लसीकातिबहुत्वाद्विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसङ्गं[1] करोति, तदा स मत्त इव गजः क्षरत्यजस्रं मूत्रमवेगं, तं हस्तिमेहिनमाचक्षते; ओजः पुनर्मधुरस्वभावं, तद् यदा रौक्ष्याद्वायुः कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहति तदा मधुमेहं करोति ॥ ३७ ॥

रूक्षेत्यादि वातमेहस्य निदानम् । मूत्रवस्तावाकर्षति मूत्रवस्तौ स्थित आकर्षति, अर्थान्मूत्रवस्तिमेव नयति । लसीका मांसत्वगन्तरे उदकभागः । वक्ष्यति हि शारीरे—"यन्मांसत्वगन्तरे उदकं, तल्लसीकाशब्दं लभते" (शा. अ. ७) इत्यादि । अनुबन्धमिति अविच्छेदेन । च्योतयतीति पातयति । रौक्ष्याद्वायुः कषायत्वेनाभिसंसृज्येति मधुरमप्योजो वायुः प्रभावात् कषायरसयुक्तं कृत्वा रौक्ष्यान्मूत्राशयेऽभिवहति, मूत्राशयं रौक्ष्याच्छेदयित्वा रूक्षं च कृत्वा नयत्योजः; स्वमहिम्ना च वायुरोजः कषायं करोति, यतो वातो हि वृद्धः प्रभावात् कषायरसं करोति ॥ ३६ ॥ ३७ ॥

इमांश्चतुरः प्रमेहान् वातजानसाध्यानाचक्षते भिषजः, महात्ययिकत्वाद्विरुद्धोपक्रमत्वाच्चेति॥३८॥

तेषामपि पूर्ववद्गुणविशेषेण नामविशेषा भवन्ति; तद्यथा—वसामेहश्च, मज्जमेहश्च, हस्तिमेहश्च, मधुमेहश्चेति ॥ ३९ ॥

तत्र श्लोका वातप्रमेहविशेषविज्ञानार्था भवन्ति—॥ ४० ॥

वसामिश्रं वसाभं वा मुहुर्मेहति यो नरः ।
वसामेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४१ ॥
मज्जानं सह मूत्रेण मुहुर्मेहति यो नरः ।
मज्जमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४२ ॥

हस्ती मत्त इवाजस्रं मूत्रं क्षरति यो भृशम् ।
हस्तिमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४३ ॥
कषायमधुरं पाण्डु रूक्षं मेहति यो नरः ।
वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम् ॥ ४४ ॥

इत्येते चत्वारः प्रमेहा वातप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ४५ ॥

एवं त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा व्याख्याता भवन्ति ॥ ४६ ॥

महात्ययिकत्वादिति मज्जप्रभृतिसारभूतधातुक्षयकरत्वात् । विरुद्धोपक्रमत्वं तु यद्वायोः स्निग्धादि पथ्यं, तन्मेदसोऽपथ्यमित्यादि ज्ञेयम् ॥ ३८–४६ ॥

त्रयस्तु खलु दोषाः प्रकुपिताः प्रमेहानभिनिर्वर्तयिष्यन्त इमानि पूर्वरूपाणि दर्शयन्ति; तद्यथा-जटिलीभावं केशेषु, माधुर्यमास्यस्य, करपादयोः सुप्ततादाहौ, मुखतालुकण्ठशोषं, पिपासाम्, आलस्यं, मलं काये, कायच्छिद्रेषूपदेहं, परिदाहं सुप्ततां चाङ्गेषु, षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणं, मूत्रे च मूत्रदोषान्, विस्रं शरीरगन्धं, निद्रां, तन्द्रां च सर्वकालमिति ॥ ४७ ॥

त्रयस्त्विति त्रयोऽपीत्यर्थः । तेन, सर्वप्रमेहाणामप्येतदेव समानं पूर्वरूपमिति दर्शयति ॥ ४७ ॥

उपद्रवास्तु खलु प्रमेहिणां तृष्णातीसारज्वरदाहदौर्बल्यारोचकाविपाकाः पूतिमांसपिडकालजीविद्रध्यादयश्च तत्प्रसङ्गाद्भवन्ति ॥ ४८ ॥

तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथार्हमुपपादयंश्चिकित्सेदिति ॥ ४९ ॥

तत्प्रसङ्गाद्भवन्तीति प्रमेहास्यनुबन्धाद्भवन्तीत्यर्थः ॥४८॥४९॥

भवन्ति चात्र—

गृध्नुमभ्यवहार्येषु स्नानचङ्क्रमणद्विषम् ।
प्रमेहः क्षिप्रमभ्येति नीडद्रुममिवाण्डजः ॥ ५० ॥
मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम् ।
मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति ॥ ५१ ॥
यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः ।
सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते ॥ ५२ ॥

यादृशे पुरुषे प्रमेहो भवति प्रायस्तमाह—गृध्नुमित्यादि ।—गृध्नुं लुब्धम् । नीडद्रुमः पक्षिणां वासवृक्षः । मृत्युः प्रमेहरूपेणेत्यादिवचनान्मन्दोत्साहादियुक्ते प्रमेहो जातोऽसाध्य एव भवतीति दर्शयति । विविधाश्चान्याश्चेष्टा इति धातुसाम्यकरा इत्यर्थः ॥ ५०–५२ ॥

तत्र श्लोकाः—

हेतुर्व्याधिविशेषाणां प्रमेहाणां च कारणम् ।
दोषधातुसमायोगो रूपं विविधमेव च ॥ ५३ ॥

[1] "मूत्रातिप्रवृत्तिसङ्गमिति मूत्रस्य प्रवृत्तिश्च सङ्गश्च तयोः समाहारः तत् तथा; समाहारकरणान्निःशेषेण न मूत्रातिप्रवृत्तिं करोति, किंतु सङ्गपूर्वकमूत्रातिप्रवृत्तिं करोति, सावशेषमूत्रातिक्षरणं करोतीत्यर्थः" इति गङ्गाधरः ।

दश श्लेष्मकृता यस्मात् प्रमेहाः षट् च पित्तजाः ।
यथा च वायुश्चतुरः प्रमेहान् कुरुते बली ॥ ५४ ॥
साध्यासाध्यविशेषाश्च पूर्वरूपाण्युपद्रवाः ।
प्रमेहाणां निदानेऽस्मिन् क्रियासूत्रं च भाषितम् ॥५५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने प्रमेहनिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

संग्रहे व्याधिविशेषाणामित्यनेन 'इह खलु' इत्यादिग्रन्थं[1] संगृह्णाति । साध्यासाध्यविशेषा इत्यत्रासाध्यविशेषत्वेन पित्तजानां याप्यानां ग्रहणम् ॥ ५२-५५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने प्रमेहनिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

प्रमेहमनु प्रागुत्पत्तौ कुष्ठोत्पादात् कुष्ठनिदानमुच्यते । वचनं हि—"हविःप्राशान्मेहकुष्ठयोः" ( नि. अ. ८ ) इति ॥१॥२॥

सप्त द्रव्याणि कुष्ठानां प्रकृतिर्विकृतिमापन्नानि[2] भवन्ति । तद्यथा—त्रयो दोषा वातपित्तश्लेष्माणः प्रकोपणविकृताः, दूष्याश्च शरीरधातवस्त्वङ्मांसशोणितलसीकाश्चतुर्धा[3] दोषोपघातविकृता इति । एतत् सप्तानां सप्तधातुकमेवङ्गतमाजननं कुष्ठानाम्, अतःप्रभवाण्यभिनिर्वर्तमानानि केवलं शरीरमुपतपन्ति ॥ ३ ॥

सप्त द्रव्याणीति त्रयो दोषाश्चत्वारि दूष्याणि । प्रकृतिरिति कारणमित्यर्थः । सप्तद्रव्याणां विशेषणं—विकृतिमापन्नानीति । किंवा 'प्रकृतिविकृतिमापन्नानि' इति पाठः, तदा प्रकृत्या कुष्ठकारणेन विकृतिमापन्नानीत्यर्थः । एतेन च यदा कुष्ठजनकहेतुव्यतिरेकेण वातादीनां विकृतिर्भवति न तदा कुष्ठोत्पादो भवति, किन्तु विसर्पोत्पाद इति दर्शयति; विसर्पे हि "रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः । सर्वे एव प्रकुप्यन्ति विसर्पाणां समुद्भवे" ( चि. अ. २१ ) इति वचनादेत एव सप्त विकृताः कारणमित्युक्तम् । यद्यपि कुष्ठविसर्पयोर्दोषदूष्यकृतं साम्यमस्ति, तथाऽपि विसर्पणशीलेन रक्तप्रधानेन च दोषेण विसर्पजन्म, अन्यथा तु कुष्ठजन्मेति व्याधिभेदोत्पत्तिः । अत एव "विविधं सर्पति यतो विसर्पस्तेन संज्ञितः" (चि. अ. २१) इत्युक्तम् । तथा, विशिष्टशोणितदुष्टिवशादेव विसर्पे प्रबला वेदना भवति, तथा रक्तचिकित्सायाः प्राधान्योपदेशाच्च रक्तप्राधान्यं विसर्पे ज्ञेयम् । वचनं हि—"एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः" (चि.अ.२१) इति । अन्ये तु ब्रुवते—विसर्पे नावश्यं दोषदूष्यसप्तकदुष्टिः, किंतु सप्तानां तत्र दुष्टिर्योग्यतया दर्श्यते, कुष्ठे तु सर्वत्र प्रतिनियमेन सप्तकदुष्टिरिति । यथा कुष्ठारम्भका दोषाः कुप्यन्ति यथा च दूष्याणि, तदाह—तद्यथेत्यादि । प्रकोपणविकृता इति कुष्ठनिदानप्रकोपणविकृताः; अन्यथा प्रकोपणवचनमनर्थकं स्यात्, विना प्रकोपणं व्याधिजनकविकृत्यभावात् । दोषोपघातविकृता इत्यनेन दोषोपघातादेव धातूनां विकृतिर्भवतीति दर्शयति, न दोषमन्तरा धातवो दूष्यन्तीत्यर्थः । किंवा, कुष्ठकारणानां धातूनां क्षयवृद्धिमात्ररूपविकृतिं निराकृत्य दोषाभिसंबन्धरूपां दुष्टिं ग्राहयति । सप्तधातुकं सप्तधातुमेलकः । एवंगतमिति उक्तक्रमेण विकृतिं गतम् । आजननं कारणम् । अतःप्रभवाणीति एतत्कारणभूतानि । अभिनिर्वर्तमानानीति अभितः प्रसर्पमाणानि । केवलं कृत्स्नं दूष्यचतुष्टयातिरिक्तमपीत्यर्थः । एतेन, प्रथमोत्पत्तौ कुष्ठे चतुर्धातुदुष्टिनियमः[1], उत्पन्नस्य त्वस्थिसिरादिदूषणमपि भवतीति दर्शयति । तत्र सुश्रुते कुष्ठस्य प्रथमं त्वगाश्रयस्य पश्चादुत्तरोत्तरधातूनामनुगमनमुक्तम्—"एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः । क्रमेण धातून् व्याप्नोति" ( सु. नि. अ. ५ ) इत्यादिना ग्रन्थेन, तदिहाप्यविरुद्धमेव । येन, सर्वकुष्ठेषु प्रथमं त्वच्येव वैकृतं भवति विशेषेण, पश्चाद्वैशेषिकी दुष्टिः कालप्रकर्षाद्रक्तादिषु भवति । चतुर्धातुदुष्टिश्चेह कुष्ठोत्पादे सामान्यदुष्ट्यभिप्रायेणोक्ता, वैशेषिकी तु दुष्टिस्तेषां क्रमेणैव भवति । वैशेषिकदुष्टिश्चेह 'केवलं शरीरमुपतपन्ति' इति वचनाद्व्याख्येया । अत एव सुश्रुते वैशेषिकदुष्ट्यभिप्रायेणैव—"कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रये" ( सु. नि. अ. ५ ) इत्यादिना विशिष्टदुष्टिलक्षणमुक्तम् । इह तु या सामान्येन चतुर्धातुदुष्टिरुक्ता न सा तल्लक्षणयुक्ता, किन्तु कुष्ठोत्पादमात्रज्ञेया; तेन न विरोधः ॥ ३ ॥

न च किञ्चिदस्ति कुष्ठमेकदोषप्रकोपनिमित्तम्, अस्ति तु खलु समानप्रकृतीनामपि कुष्ठानां दोषांशांशविकल्पानुबन्धस्थानविभागेन वेदनावर्णसंस्थानप्रभावनामचिकित्सितविशेषः । स सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा भवति । दोषा हि विकल्पनैर्विकल्प्यमाना विकल्पयन्ति विकारान्, अन्यत्रासाध्यभावात् । तेषां विकल्पविकारसंख्यानेऽतिप्रसङ्गमभिसमीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः ॥ ४ ॥

संप्रति त्रिदोषजन्यत्वेऽपि सर्वकुष्ठानां यथा वातिकादिव्यपदेशो भवति तदाह—न च किंचिदित्यादि । समानप्रकृतीना-

---

१ 'ग्रन्थार्थं' इति पा० । २ 'प्रकृतिविकृतिमापन्नानि' इति पा० ।
३ 'चतुर्धा चतुर्विधाः' इति योगीन्द्रनाथसेनः ।

१ 'सप्तधातुदुष्टिनियमः' इति पा० ।

मिति अवान्तरविकल्परहिततुल्यवातादिसप्तकारणानाम्, अवान्तरभेदाभावे हि कारणानां कार्यस्याप्येकरूपत्वमेव स्यात्। दोषांशांशविकल्पस्य तथा स्थानस्य च विभागेन वेदनाविशेषः कुष्ठे भवतीति वाक्यार्थः। दोषाणामंशमंशं प्रति विकल्पोंऽशांशविकल्पः; क्वचिद्वायुः स्वस्य रूक्षांशेन प्रकुपितो भवति, क्वचिच्छैत्यांशेनेत्यादि। तथा दोषदूष्यरूपस्थानविभागेन च वेदनाविशेषो भवति; वचनं हि—"तत्र रसादिस्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयो भवन्ति" (सू. अ. २८) इत्यादि। स्थानं च यद्यपि चतुर्विंधदूष्यरूपमिह नियतं, तथाऽप्येष दोषस्यैव दूष्ये व्याप्त्यादिकृतः स्थानविभागो ज्ञेयः। तत्र वेदनाविशेषः—"कापालं तोदबहुलं" (चि. अ. ७) इत्यादि, वर्णविशेषः—"यत् काकणन्तिकावर्णं" (चि. अ. ७) इत्यादि, संस्थानविशेषः—"यदृष्यजिह्वासंस्थानं" (चि. अ. ७) इत्यादि, प्रभावविशेषः—साध्यतासाध्यतादि, नामविशेषः—कापाल इत्यादि। यतश्च समानेऽपि हि कारणे दोषांशांशबलविकल्पस्थानविभागेन वेदनादिविशेषः कुष्ठभेदकोऽस्ति, अतः सप्तविध इत्यादि योजनीयम्। सप्तविध इति अत्रैव वक्ष्यमाणमहाकुष्ठभेदेन, अष्टादशविधस्तु चिकित्सावक्ष्यमाणभेदेन, अपरिसंख्येयस्तु वेदनाद्यवान्तरभेदेन। कुतोऽपरिसंख्याता एव विकल्पा भवन्तीत्याह—दोषा हीत्यादि। विकल्पनैरिति विविधभेदविकल्पनैरंशांशविकल्पादिभिः, विकल्प्यमाना भिद्यमानाः, विकल्पयन्ति भेदयन्ति; व्याधिकारणदोषभेदात् कार्यस्यापि व्याधेर्भेदो बहुविधो भवतीति भावः। सोऽयं दोषभेदकृतो भेदोऽसाध्ये व्याधौ नेह क्रियत इत्याह—अन्यत्रेत्यादि। असाध्यमिह प्रत्याख्येयमभिप्रेतं, याप्यभेदो ह्यसाध्यस्य क्रियत एव यापनार्थम्। एवं मन्यते—प्रत्याख्येये व्याधौ सत्यपि दोषभेदकृतो भेदोऽचिकित्स्यत्वेन चिकित्साविशेषाप्रवर्तकत्वान्नेह क्रियते, साध्ये तु चिकित्साभेदार्थं क्रियत इति युक्तम्। संप्रतीतरप्रकारत्यागं सहेतुकं दर्शयन् सप्तविधाभिधानं प्रतिजानीते—तेषामित्यादि। विकल्पैः सर्वैर्विकारकथनं विकल्पविकारसंख्यानम्। अतिप्रसङ्गमिति अत्यभिधानदोषप्रसङ्गम्। ननु, यदि सप्तविधकुष्ठेऽपरैकादशचिकित्सावक्ष्यमाणकुष्ठान्तर्भावो भवति, तदा सप्तविधत्वं तथाऽष्टादशविधत्वं चेति विधाद्वयं भवति; यथा ज्वराणामेकविधत्वद्विविधत्वादि, अत्र हि सर्वास्वेव विधासु सर्वान्तर्भावोऽस्ति; न चेह सप्तमहाकुष्ठे क्षुद्रकुष्ठप्रवेशोऽस्ति, किंचैवं क्षुद्रकुष्ठाप्रवेशे कथमिहाचार्यो निदाने सप्तकुष्ठाभिधानेन कृती स्यात्? उच्यते—इह सप्तविधकुष्ठाभिधानेनैकदोषजद्विदोषजत्रिदोषजकुष्ठाभिधानं कृतं—'वातेऽधिकतरे कापालकुष्ठं' इत्यादिना, न चैतत्प्रकारत्रयात् प्रकारान्तरं क्षुद्रकुष्ठानामप्यस्ति; तेन क्षुद्रकुष्ठेषु यत् कुष्ठं यद्दोषजं वक्तव्यं तस्येहोक्तदोषलक्षणयुक्तत्वेनावरोधो व्याख्येयः, परं क्षुद्रकुष्ठे महाकुष्ठोक्तदोषलक्षणानामल्पत्वं भवतीति ज्ञेयम्। अत्र "चर्माख्यमेककुष्ठं तु किटिमं सविपादिकम्। कुष्ठं त्वलसकं ज्ञेयं प्रायो वातकफात्मकम्" (चि. अ. ७) इत्यादि चिकित्सिते वक्ष्यमाणग्रन्थानुरोधात्[1] क्षुद्रकुष्ठान्तर्भावो व्याख्येयः ॥ ४ ॥

**इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयत्सु वातेऽधिकतरे कपालकुष्ठमभिनिर्वर्तते, पित्ते त्वौदुम्बरं, श्लेष्मणि मण्डलकुष्ठं, वातपित्तयोर्ऋष्यजिह्वं, पित्तश्लेष्मणोः पुण्डरीकं, श्लेष्ममारुतयोः सिध्मकुष्ठं, सर्वदोषाभिवृद्धौ काकणकमभिनिर्वर्तते; एवमेष सप्तविधः कुष्ठविशेषो भवति। स[2] चैष भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां भूयसीं विकारविकल्पसंख्यामापद्यते ॥ ५ ॥**

कुष्ठानां कापालादिसंज्ञाः कपालादिसादृश्यप्रयुक्तास्तथा शास्त्रव्यवहारसिद्धाश्च बोद्धव्याः; नहि सिध्मसंज्ञायामन्वयोऽस्ति, तेन शास्त्रव्यवहारसिद्धैव सिध्मसंज्ञा। प्रकृतौ विकल्प्यमानायामिति कुष्ठजनककारणे भिद्यमाने। विकल्पसंख्या भेदरूपसंख्या। इह च क्षुद्रकुष्ठानभिधानमुक्तन्यायेन महाकुष्ठान्तर्गतत्वादेवेति बोद्धव्यम् ॥ ५ ॥

**तत्रेदं सर्वकुष्ठनिदानं समासेनोपदेक्ष्यामः—शीतोष्णव्यत्यासमनानुपूर्व्योपसेवमानस्य तथा संतर्पणापतर्पणाभ्यवहार्यव्यत्यासं, मधुफाणितमत्स्यलकुचमूलककाकमाचीः सततमतिमात्रमजीर्णे च समश्नतः, चिलिचिमं च पयसा, हायनकयवकचीनकोद्दालककोरदूषप्रायाणि चान्नानि क्षीरदधितक्रकोलकुलत्थमाषातसीकुसुम्भस्नेहवन्ति, एतैरेवातिमात्रं सुहितस्य च व्यवायव्यायामसंतापानत्युपसेवमानस्य, भयश्रमसंतापोपहतस्य च सहसा शीतोदकमवतरतः, विदग्धं चाहारजातमनुल्लिख्य विदाहीन्यभ्यवहरतः, छर्दिं च प्रतिघ्नतः, स्नेहांश्चातिचरतः, त्रयो दोषाः युगपत् प्रकोपमापद्यन्ते; त्वगादयश्चत्वारः शैथिल्यमापद्यन्ते; तेषु शिथिलेषु दोषाः प्रकुपिताः स्थानमधिगम्य संतिष्ठमानास्तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभिनिर्वर्तयन्ति ॥ ६ ॥**

शीतोष्णव्यत्यासं शीतोष्णपरिवर्तनम्। अनानुपूर्व्येति यथोक्तक्रमत्यागेन; क्रमत्यागश्चोष्णं निषेव्य सहसा शीतसेवा, तद्विपर्ययश्च; तथा अनुचिते काले शीतोष्णसेवा। एवं संतर्पणापतर्पणाभ्यवहार्यव्यत्यासमपि अनानुपूर्व्योपसेव्यमानस्येति ज्ञेयम्। चिलिचिमस्तन्त्रकृताऽऽत्रेयभद्रकाप्यीये दर्शितो रोहितभेदः। स्थानमधिगम्येति कुष्ठजननानुगुणं शिथिलत्वगादिस्थानं प्राप्य; किंवा स्थानमिति जनयितव्यकुष्ठशरीरदेशं प्राप्येत्यर्थः। संति-

१ 'दूष्यस्यैव कर्मव्याप्त्यादिकृतः' इति पा०।

१ '०ग्रन्थानुसारात्' इति पा०। २ 'स एव' इति पा०।

ष्ठमाना इति वचनेन स्थिरा एव दोषाः कुष्ठजनका भवन्ति, न हि सरणशीलास्त इति दर्शयति ॥ ६ ॥

तेषामिमानि पूर्वरूपाणि भवन्ति; तद्यथा—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो लोमहर्षः खरत्वमूष्मायणं गौरवं श्वयथुर्वीसर्पागमनमभीक्ष्णं च काये कायच्छिद्रेषूपदेहः पक्वदग्धदष्टभग्नक्षतोपस्खलितेष्वतिमात्रं वेदना स्वल्पानामपि च व्रणानां दुष्टिरसंरोहणं चेति ॥ ७ ॥

अस्वेदनादिपूर्वरूपं प्रभावात् । परिहर्षो झिनझिनिका[1] ॥७॥

ततोऽनन्तरं कुष्ठान्यभिनिर्वर्तन्ते, तेषामिदं वेदनावर्णसंस्थानप्रभावनामविशेषविज्ञानं भवति; तद्यथा—रूक्षारुणपरुषाणि विषमविसृतानि खरपर्यन्तानि तनून्युद्वृत्तबहिस्तनूनि[2] सुप्तवत्सुप्तानि[3] हृषितलोमाचितानि निस्तोदबहुलान्यल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानान्याशुभेदीनि जन्तुमन्ति कृष्णारुणकपालवर्णानि च कपालकुष्ठानीति विद्यात् (१);

ताम्राणि ताम्रखररोमराजीभिरवनद्धानि बहलानि बहुबहलपूयरक्तलसीकानि कण्डूक्लेदकोथदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि ससंतापक्रिमीणि पक्वोदुम्बरफलवर्णान्यौदुम्बरकुष्ठानीति विद्यात् (२);

स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीतपर्यन्तानि[4] शुक्लरक्तावभासानि शुक्लरोमराजीसन्तानानि बहुबहलशुक्लपिच्छिलस्राविणि[5] बहुक्लेदकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि मण्डलकुष्ठानि विद्यात् (३);

परुषाण्यरुणवर्णानि बहिरन्तःश्यावानि नीलपीतताम्रावभासान्याशुगतिसमुत्थानान्यल्पकण्डूक्लेदक्रिमीणि दाहभेदनिस्तोद(पाक)बहुलानि शूकोपहतोपमवेदनान्युत्सन्नमध्यानि तनुपर्यन्तानि कर्कशपिडकाचितानि दीर्घपरिमण्डलान्यृष्यजिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात् (४);

शुक्लरक्तावभासानि रक्तपर्यन्तानि रक्तराजीसिरासन्ततान्युत्सेधवन्ति बहुबहलरक्तपूयलसीकानि कण्डूक्रिमिदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि पुण्डरीकपलाशसंकाशानि पुण्डरीकाणीति विद्यात् (५);

परुषारुणानि[1] विशीर्णबहिस्तनून्यन्तःस्निग्धानि शुक्लरक्तावभासानि बहून्यल्पवेदनान्यल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानान्यल्पभेदक्रिमीण्यलाबुपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात् (६);

काकणन्तिकावर्णान्यादौ पश्चात्तु सर्वकुष्ठलिङ्गसमन्वितानि पापीयसा सर्वकुष्ठलिङ्गसंभवेनानेकवर्णानि[2] काकणानीति विद्यात् । तान्यसाध्यानि, साध्यानि पुनरितराणि ॥ ८ ॥

उद्वृत्तबहिस्तनूनीति[3] उच्छलीकृतबाह्यदेहानि । सुप्तवत् सुप्तानि अत्यर्थास्पर्शज्ञानीत्यर्थः । कपालः स्थाल्यादिखण्डः । सक्तानि चिरभावीनि गत्यादीनि येषां ते तथा । ऋष्यजिह्वलक्षणे बहिरिति कुष्ठपर्यन्ते, अन्तरिति विकृतमध्यमुच्यते[4] । ऋष्यो हरिणविशेषः । पुण्डरीकपलाशशब्देन पद्मपुष्पदलमिह । विशीर्णबहिस्तनूनीत्यत्र तनुशब्दः प्रदेशे वर्तते; तेन विशीर्णपर्यन्तदेशानीत्यर्थः । सिध्मकुष्ठं यथोक्तलक्षणं सिध्मपुष्पिकाव्यतिरिक्तमेव ब्रुवते; सिध्मपुष्पिकाभिप्रायेण च सुश्रुते सिध्मकुष्ठं क्षुद्रकुष्ठेषु पठितम् । दद्रु तु सुश्रुते महाकुष्ठे पठितमपीह क्षुद्रकुष्ठे पठितमुत्तरोत्तरधात्वनुप्रवेशाभावात् तथाऽत्यर्थपीडारहितत्वाच्च, सुश्रुते तु तदनुबन्धित्वप्रकर्षान्महाकुष्ठे पठितम् । सर्वकुष्ठलिङ्गसमन्वितानीत्येतेतावतैवार्थे लब्धे पुनः पापीयसा सर्वकुष्ठलिङ्गसंभवेनेतिवचनाद्देव पापीयः कुष्ठलिङ्गं, तदेव काकणके भवति नान्यदिति दर्शयति । पापीयसेति अत्यर्थपीडाकृता । किंवा पापीयसेत्यादिपुनर्वचनेन सर्वकुष्ठलिङ्गानां काकणके पापारब्धत्वेनासाध्यतामत्यर्थपीडाकर्तृतां च दर्शयति ॥ ८ ॥

तत्र यदसाध्यं तदसाध्यतां नातिवर्तते, साध्यं पुनः किंचित् साध्यतामतिवर्तते कदाचिदपचारात् । साध्यानि हि षट् काकणकवर्ज्यान्यचिकित्स्यमानान्यपचारतो वा दोषैरभिष्यन्दमानान्यसाध्यतामुपयान्ति ॥ ९ ॥

कदाचिदित्यनेनाग्रे[5] वक्ष्यमाणसचिकित्स्यमानतापक्षान्तरं दर्शयति । अपचारतो वेति उत्पन्नेऽपि कुष्ठे निदानसेवनात् । अभिष्यन्दमानानीति आपूर्यमाणानि ॥ ९ ॥

साध्यानामपि ह्युपेक्ष्यमाणानां त्वङ्मांसशोणितलसीकाकोथक्लेदसंस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति; ते भक्षयन्तस्त्वगादीन् दोषाः[6] पुनर्दूषयन्त इमानुपद्रवान् पृथक् पृथगुत्पादयन्ति—तत्र वातः श्यावारुणवर्णं परुषतामपि च रौक्ष्यशूलशोषतोदवेपथुह-

१ 'झिणझिणिका' इति पा० । २ 'तनूनि' इति पा० । ३ 'सुप्तसुप्तानि' इति पा० । ४ '°पीनपर्यन्तानि' इति पा० । ५ '°शुक्लरक्तपिच्छास्राविणि' इति पा० ।

१ 'परुषारुणविशीर्णानि बहिस्तनूनि' इति पा० । २ 'पापीयसा सर्वकुष्ठलिङ्गसंभवत्वेन' इति पा० । ३ 'उद्धूतबहिस्तनूनि उन्मूलीकृतबाह्यदेहानि' इति पा० । ४ 'विकृतं मध्ये' इति पा० । ५ 'कदाचिद्वचनेनाग्रे' इति पा० । ६ 'दोषान्' इति पा० ।

र्षसङ्कोचायासस्तम्भसुप्तिभेदभङ्गान्, पित्तं दाहक्लेदक्लेदकोथस्रावपाकरागान्, श्लेष्मा त्वस्य श्वैत्यशैत्यकण्डूस्थैर्यगौरवोत्सेधोपस्नेहोपलेपान्, क्रिमयस्तु त्वगादींश्चतुरः सिराः स्नायूश्चास्थीन्यपि च तरुणान्याददते ॥ १० ॥

अस्यां चैवावस्थायामुपद्रवाः कुष्ठिनं स्पृशन्ति; तद्यथा—प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां तृष्णाज्वरातीसारदाहदौर्बल्यारोचकाविपाकाश्च, तथाविधमसाध्यं विद्यादिति ॥ ११ ॥

दोषाः पुनर्दूषयन्त इति त्वगादीनेव । तरुणानीति कोमलानि नासास्थ्यादीनि । आददते भक्षयन्ति ॥ १० ॥ ११ ॥

भवन्ति चात्र—

साध्योऽयमिति यः पूर्वं नरो रोगमुपेक्षते ।
स किंचित्कालमासाद्य मृत एवावबुध्यते ॥ १२ ॥
यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा ।
भेषजं कुरुते सम्यक् स चिरं सुखमश्नुते ॥ १३ ॥
यथा ह्यल्पेन यत्नेन छिद्यते तरुणस्तरुः ।
स एवातिप्रवृद्धस्तु छिद्यतेऽतिप्रयत्नतः ॥ १४ ॥
एवमेव विकारोऽपि तरुणः साध्यते सुखम् ।
विवृद्धः साध्यते कृच्छ्रादसाध्यो वाऽपि जायते १५

तत्र श्लोकः—

संख्या द्रव्याणि दोषाश्च हेतवः पूर्वलक्षणम् ।
रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथक् ॥१६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
निदानस्थाने कुष्ठनिदानं नाम
पञ्चमोऽध्यायः ॥ ५ ॥

किंचित्कालमिति असाध्यव्याधिकालम् । मृत एवेति मरणोपकण्ठगतः । अवबुध्यत इत्यत्र 'साध्यव्याध्युपेक्षाफलं मृत्युम्' इति शेषः ॥ १२–१६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातः शोषनिदानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

ज्वरनिदानोक्तसंबन्धाद्राजयक्ष्मनिदानमुच्यते ॥ १ ॥ २ ॥

इह खलु चत्वारि शोषस्यायतनानि भवन्ति; तद्यथा—साहसं संधारणं क्षयो विषमाशनमिति ३

आयतनानीति कारणानि । संख्येयसाहसादिनिर्देशादेव संख्यायां लब्धायां चत्वारीति पुनर्वचनं साहसादीनामवान्तरबलवद्विग्रहादिभेदेऽप्येकजातीयताप्रतिपादनार्थम् ॥ ३ ॥

तत्र साहसं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषो दुर्बलो हि सन् बलवता सह विगृह्णाति, अतिमहता वा धनुषा व्यायच्छति, जल्पति वाऽप्यतिमात्रम्, अतिमात्रं वा भारमुद्वहति, अप्सु वा प्लवते चातिदूरम्, उत्सादनपदाघातने वाऽतिप्रगाढमासेवते, अतिप्रकृष्टं वाऽध्वानं द्रुतमभिपतति, अभिहन्यते वा, अन्यद्वा किंचिदेवंविधं विषममतिमात्रं वा व्यायामजातमारभते, तस्यातिमात्रेण कर्मणोरः क्षण्यते । तस्योरः क्षतमुपप्लवते वायुः । स तत्रावस्थितः श्लेष्माणमुरःस्थमुपसंगृह्य पित्तं च दूषयन् विहरत्यूर्ध्वमधस्तिर्यक् च । तस्य योंऽशः शरीरसन्धीनाविशति तेनास्य जृम्भाऽङ्गमर्दो ज्वरश्चोपजायते, यस्त्वामाशयमभ्युपैति तेन रोगा भवन्ति उरस्या अरोचकश्च, यः कण्ठमभिप्रपद्यते कण्ठस्तेनोद्ध्वंस्यते स्वरश्चावसीदति, यः प्राणवहानि स्रोतांस्यन्वेति तेन श्वासः प्रतिश्यायश्च जायते, यः शिरस्यवतिष्ठते शिरस्तेनोपहन्यते; ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्य चोद्ध्वंसनात् कासः सततमस्य संजायते, स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितागमनाच्चास्य दौर्बल्यमुपजायते; एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति । ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति । तस्मात् पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि कर्माण्यारभेत कर्तुं; बलसमाधानं हि शरीरं, शरीरमूलश्च पुरुष इति ॥ ४ ॥

भवति चात्र—

साहसं वर्जयेत् कर्म रक्षञ्जीवितमात्मनः ।
जीवन् हि पुरुषस्त्विष्टं कर्मणः फलमश्नुते ॥ ५ ॥

पदाघातनं पद्भ्यामुन्मर्दनम् । अतिप्रकृष्टमिति अतिदूरम् । उरःक्षतमुपप्लवते व्याप्नोतीत्यर्थः । उरःस्थमिति स्वभावादेवोरःस्थम् । उरस्या इति उरोगता हृद्द्रवशूलादयः । आमाशयगतेन चोरस्यरोगकरणमुरसोऽप्यामाशयप्रत्यासन्नत्वात् । बलेन सम्यगाधीयते धार्यत इति बलसमाधानं शरीरम् । शरीरमूलश्च पुरुष इति संयोगपुरुष इत्यर्थः ॥ ४ ॥ ५ ॥

संधारणं शोषस्यायतनमिति यदुक्तं तदनुव्या-

१ '°नि खादन्ति' इति पा० ।

१ योगीन्द्रनाथसेनस्तु 'उच्छादनपराघातने' इति पठति, 'उच्छादनं शिलादिभिरुरसि आवरणं, पराघातनं परैरन्यैः शत्रुभिर्वा आघातनं च' इति च व्याख्यानयति । २ 'उपसंसृज्य शोषयन्' इति पा० । ३ 'यस्त्वामाशयमभ्युपैति तेनास्य वर्चो भिद्यते, यस्तु हृदयमाविशति तेन रोगा भवन्त्युरस्याः, यो रसानां तेनास्यारोचकः' इति पा० । ४ 'हृद्रवशूलादयः' इति पा० ।

ख्यास्यामः—यदा पुरुषो राजसमीपे भर्तुः समीपे वा गुरोर्वा पादमूले द्यूतसभमन्यं वा सतां समाजं स्त्रीमध्यं वा समनुप्रविश्य यानैर्वाऽप्युच्चावचैरभियान् भयात् प्रसङ्गाद्ध्रीमत्त्वाद्घृणित्वाद्वा निरुणद्ध्यागतान् वातमूत्रपुरीषवेगान्, तदा तस्य संधारणाद्वायुः प्रकोपमापद्यते, स प्रकुपितः पित्तश्लेष्माणौ समुदीर्योर्ध्वमधस्तिर्यक् च विहरति; ततश्चांशविशेषेण पूर्ववच्छरीरावयवविशेषं प्रविश्य शूलमुपजनयति, भिनत्ति पुरीषमुच्छोषयति वा, पार्श्वे चातिरुजति, अंसाववमृद्नाति, कण्ठमुरश्चावधमति, शिरश्चोपहन्ति, कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायं चोपजनयति; ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शारीरेष्वेव योगक्षेमकरेषु प्रयतेत विशेषेण; शरीरं ह्यस्य मूलं, शरीरमूलश्च पुरुषो भवति ॥ ६ ॥

भवति चात्र—

सर्वमन्यत् परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥ ७ ॥

समाजमिति सभाम्। उच्चावचैरिति उच्चनीचैः। अभियानिति गच्छन्। भयादित्यादि राजसमीपादिषु यथायोग्यतया बोद्धव्यम्। योगेन ये क्षेमकरास्ते योगक्षेमकराः, ते चेह मूत्रपुरीषाविधारणादयः। विशेषेणेतिवचनाच्छारीरेष्वेव विशेषेण यत्नं कुर्यान्मानसयोगक्षेमापेक्षयेति दर्शयति। आत्मन इति पदं परशरीरयोगक्षेमापेक्षया स्वशरीरयोगक्षेमकरणस्योपादेयतादर्शनार्थम्। अथ कथं मानसयोगक्षेमापेक्षया तथा परशरीरयोगक्षेमापेक्षया स्वैशरीरयोगक्षेमः श्रेष्ठ इत्याह—शरीरमित्यादि। अस्य पुरुषस्य। सर्वपुरुषार्थेषु कर्तव्येषु यस्माच्छरीरं मूलमिति कारणं, तस्मात् स्वशरीरयोगक्षेममेवाचरेद्विशेषेण, पश्चात् परशरीरमानसयोगक्षेममित्यर्थः। स्वशरीरे ह्युपहते परशरीरोपकारस्तथाऽध्यात्मिकशुभचिन्ता च व्याकुला भवतीति भावः। किंवा, योगाः शरीरस्य बलवर्णाद्युत्कर्षयोगाः, क्षेमाश्चानागताबाधप्रतिषेधाः, तेषु। ननु यद्येवमाध्यात्मिकेऽपि भावे शरीरं मूलं, तत् किं पुरुषोऽप्रधानमेव? नेत्याह—शरीरमूलश्च पुरुष इति। शरीरस्याप्युत्पत्तौ धर्माधर्मसहायो भोक्ता सुखदुःखानामात्मा मूलं कारणमित्यर्थः। मूलशब्दश्चायं भावप्रधानः; तेन शरीरमूलत्वं यस्यात्मनः स 'शरीरमूलः' इति पुंलिङ्गनिर्देश उपपन्नः। सर्वाभाव इति धर्मादिचतुर्वर्गाभाव इत्यर्थः ॥ ६ ॥ ७ ॥

क्षयः शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषोऽतिमात्रं शोकचिन्तापरिगतहृदयो भवति, ईर्ष्योत्कण्ठाभयक्रोधादिभिर्वा समाविश्यते, कृशो वा सन् रूक्षान्नपानसेवी भवति, दुर्बलप्रकृतिरनाहारोऽल्पाहारो वा भवति, तदा तस्य हृदयस्थायी रसः क्षयमुपैति; स तस्योपक्षयाच्छोषं प्राप्नोति, अप्रतीकाराच्चानुबध्यते यक्ष्मणा यथोपदेक्ष्यमाणरूपेण (१);

हृदयस्थायी रस इति धातुरूपोऽन्नरसपोष्य इत्यर्थः; अन्ये तु, हृदयस्थायी रस इति ओजो ब्रुवते। यथोपदेक्ष्यमाणरूपेणेति 'सन्धयः शिथिलीभवन्ति' इत्यादिग्रन्थवक्ष्यमाणलक्षणेन ॥(१)॥

यदा वा पुरुषोऽतिहर्षादतिप्रसक्तभावः स्त्रीष्वतिप्रसङ्गमारभते, तस्यातिमात्रप्रसङ्गाद्रेतः क्षयमेति। क्षयमपि चोपगच्छति रेतसि यदि मनः स्त्रीभ्यो नैवास्य निवर्तते, तस्य चातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य न शुक्रं प्रवर्ततेऽतिमात्रोपक्षीणरेतस्त्वात्, तथाऽस्य वायुर्व्यायच्छमानशरीरस्यैव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति, तच्छुक्रक्षयादस्य पुनः शुक्रमार्गेण शोणितं प्रवर्तते वातानुसृतलिङ्गम्। अथास्य शुक्रक्षयाच्छोणितप्रवर्तनाच्च सन्धयः शिथिलीभवन्ति, रौक्ष्यमुपजायते, भूयः शरीरं दौर्बल्यमाविशति, वायुः प्रकोपमापद्यते; स प्रकुपितो वैशिकं शरीरमनुसर्पन्नुदीर्य श्लेष्मपित्ते परिशोषयति मांसशोणिते, प्रच्यावयति श्लेष्मपित्ते, संरुजति पार्श्वे, अवमृद्नात्यंसौ, कण्ठमुद्ध्वंसति, शिरः श्लेष्माणमुपत्क्लेश्य प्रतिपूरयति श्लेष्मणा, सन्धींश्च प्रपीडयन् करोत्यङ्गमर्दमरोचकाविपाकौ च, पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं श्वासं स्वरभेदं प्रतिश्यायं चोपजनयति; स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितगमनाच्चास्य दौर्बल्यमुपजायते, ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षञ्छुक्रमनुरक्षेत्। परा ह्येषा फलनिर्वृत्तिराहारस्येति ॥ ८ ॥

भवति चात्र—

आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः।
क्षयो ह्यस्य बहून् रोगान्मरणं वा नियच्छति ॥ ९ ॥

संप्रति क्षयेषु शोषकारणेषु प्रायः शोषजनकत्वेन प्रधानं शुक्रक्षयं शोषकारणं यदा वेत्यादिना प्राह। अतिप्रणीत-

१ 'अभिगच्छन्' इति पा०। २ 'ततः' इति पा०। ३ 'स्वशरीरयोगक्षेमकरणमेव कर्तव्यमित्याह' इति पा०।

१ 'दौर्बल्यमाविशतीति वायुः प्रकोपमापद्यते' इति पा०। २ 'अरसिकं' इति पा०। ३ 'अवगृह्णात्यंसौ' इति पा०। ४ 'क्षयादस्य बहून् रोगान् मरणं वाऽधिगच्छति' इति पा०।

सङ्कल्पस्येति अतिमहता प्रयत्नेन कृतध्वजोच्छ्रायस्य । व्यायच्छमानस्येति व्यवायमाचरतः । वातानुसृतलिङ्गमिति वातलिङ्गयुक्तं दुष्टवातलिङ्गयुक्तमिति यावत् । शरीरं कर्मभूतं, दौर्बल्यं कर्तृभूतम्, आविशतीति योजना । वशिकमिति शून्यं, शुक्रशोणितक्षयाद्रिक्तमित्यर्थः; एतच्च हेतुगर्भविशेषणम्; एतेन यस्माद्वशिकं शरीरं, तस्मादनुसर्पतीत्यर्थः । परा फलनिर्वृत्तिरिति श्रेष्ठा आहारफलसंपत्तिरित्यर्थः । परं धाम इति उत्कृष्टसारम्; उत्कृष्टत्वं च शुक्रस्यातिप्रसादरूपत्वात् । एतच्च शोषकारणेषु क्षयेषु केवलशुक्रक्षयोपसंहरणं प्राधान्यात्, नान्यधोषहेत्वभावादिति बोद्धव्यम् । रूक्षाद्यन्नपानसेवाजनितो रक्तादिक्षयोऽपि राजयक्ष्मकारणत्वेनोक्तः ॥ ८ ॥ ९ ॥

विषमाशनं शोषस्यायतनमिति यदुक्तं, तदनुव्याख्यास्यामः—यदा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयविषमानासेवते, तदा तस्य तेभ्यो वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते; ते विषमाः शरीरमनुसृत्य यदा स्रोतसामयनमुखानि[१] प्रतिवार्यावतिष्ठन्ते तदा जन्तुर्यद्यदाहारजातमाहरति तत्तदस्य मूत्रपुरीषमेवोपजायते भूयिष्ठं नान्यस्तथा शरीरधातुः; स पुरीषोपष्टम्भाद्वर्तयति, तस्माच्छुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथाऽन्येषामतिकृशदुर्बलानां; तस्यानाप्यायमानस्य विषमाशनोपचिता दोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तो भूयः शरीरमुपशोषयन्ति । तत्र वातः शूलमङ्गमर्दं कण्ठोद्ध्वंसनं पार्श्वसंरुजनमंसावमर्दं स्वरभेदं प्रतिश्यायं चोपजनयति; पित्तं ज्वरमतीसारमन्तर्दाहं च; श्लेष्मा तु प्रतिश्यायं शिरसो गुरुत्वमरोचकं कासं च, स कासप्रसङ्गादुरसि क्षते शोणितं निष्ठीवति, शोणितगमनाच्चास्य दौर्बल्यमुपजायते । एवमेते विषमाशनोपचितास्त्रयो दोषा राजयक्ष्माणमभिनिर्वर्तयन्ति । स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैः शुष्यति । तस्मात् पुरुषो मतिमान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयादविषममाहारमाहरेत् ॥ १० ॥

भवति चात्र—

हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः ।
पश्यन् रोगान् बहून् कष्टान् बुद्धिमान् विषमाशनात् ॥ ११ ॥

प्रकृतिकरणादयो रसविमाने प्रपञ्चनीयाः । अत्र चोपशयशब्देन उपयोक्ता यो रसविमाने वक्तव्यः स एव गृह्यते । यतस्तत्रोक्तं—"उपयोक्ता पुनर्यस्तमाहारमाहरति, यदायत्तमोकसात्म्यम्" ( वि. अ. १ ) इति । अनेन हि तत्रोपयोक्तृपरीक्षया सात्म्यमेव परीक्ष्यत इत्युक्तम् । अयनमुखानीति गतिद्वाराणि; अयनं गतिः । परिवार्येति अवरुध्य । तथा सर्वेषामत्यर्थकृशदुर्बलानां पुरीषमनुरक्ष्यमिति योजना । एनमेव चार्थं वक्ष्यति—"शोषी मुञ्चति गात्राणि पुरीषस्रंसनादति(पि) । सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ( चि. अ. ८ )" इति । कासप्रसङ्गादिति कासातिसंबन्धादित्यर्थः ॥ १० ॥ ११ ॥

एतैश्चतुर्भिः शोषस्यायतनैरुपसेवितैर्वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते । ते प्रकुपिता नानाविधैरुपद्रवैः शरीरमुपशोषयन्ति । तं सर्वरोगाणां कष्टतमत्वाद्राजयक्ष्माणमाचक्षते भिषजः; यस्माद्वा पूर्वमासीद्भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति[२] ॥ १२ ॥

कष्टतमत्वादित्यत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन कष्टतमत्वाच्च तथा चन्द्रमसः प्रागुत्पन्नत्वाच्चेति हेतुद्वयं ज्ञेयम् । यदा कष्टतमत्वात्तदा 'राजेव यक्ष्मा राजयक्ष्मेति' निरुक्तिर्बोद्धव्या । उडुराजस्येति वचनाद् राजसंज्ञत्वं सोमस्य दर्शयति; ततश्च 'राज्ञो यक्ष्मा राजयक्ष्मा' इति निरुक्तिर्भवति ॥ १२ ॥

तस्येमानि पूर्वरूपाणि[३] भवन्ति; तद्यथा-प्रतिश्यायः, क्षवथुरभीक्ष्णं, श्लेष्मप्रसेकः, मुखमाधुर्यम्, अनन्नाभिलाषः, अन्नकाले चायासः, दोषदर्शनमदोषेष्वल्पदोषेषु वा भावेषु पात्रोदकान्नसूपापूपोपदंशपरिवेशकेषु, भुक्तवतश्चास्य हृल्लासः, तथोल्लेखनमप्याहारस्यान्तरान्तरा, मुखस्य पादयोश्च शोफः, पाण्योश्चावेक्षणमत्यर्थम्, अक्ष्णोः श्वेतावभासता चातिमात्रं, बाह्वोश्च प्रमाणजिज्ञासा, स्त्रीकामता, निर्घृणित्वं, बीभत्सदर्शनता चास्य काये, स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां शून्यानां च ग्रामनगरनिगमजनपदानां शुष्कदग्धभग्नानां च वनानां कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः संस्पर्शनमधिरोहणं यानं वा श्वोष्ट्रखरवराहैः[४] केशास्थिभस्मतुषाङ्गारराशीनां चाधिरोहणमिति ( शोषपूर्वरूपाणि भवन्ति )[५] ॥ १३ ॥

पूर्वरूपेषु प्रतिश्यायादिः प्रायः कफयुक्तपूर्वरूपोत्पादो वायुनाऽपि प्रधानेन क्रियमाणे शोषे उरःस्थश्लेष्मसंसर्गाद्बोद्धव्यः; यतश्च प्रायेण कफोऽत्र स्थानमहिम्ना प्रकुपितो भवति, तेन शोषं कफप्रधानलिङ्गत्वेन श्लेष्मरोग इति च ब्रुवते । अदोषे-

१ 'स्रोतसां मुखानि' इति पा० ।

१ 'आयतिमुखानीति गतिद्वाराणि, आयतिर्हि गतिः' इति पा० । २ 'यक्ष्मणां राजा राजयक्ष्मा' इति पा० । ३ 'शोषः' इति पा० । ४ 'वराहोष्ट्रखरैः' इति पा० । ५ योगीन्द्रनाथसेनस्तु 'शोषपूर्वरूपाणि भवन्ति' इति न पठति ।

श्विति पात्रादिविशेषणम् । पाण्योश्चावेक्षणादिपूर्वरूपं प्रभावात्। बीभत्सदर्शनता काय इति कायस्य विवर्णविगन्धत्वादिना। निगमो नगरविशेषो बहुवसतिः; जनपदं मण्डलम् । अधिरोहणं चेति कृकलासादीनामेव शरीराधिरोहणम् । स्वप्ने श्वोष्ट्रखरगमनं चेहादिङ्नियमेन बोद्धव्यं, तेन रिष्टं न भवति; यत्तु वक्ष्यति—"श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम्" इत्यादि, तद्दक्षिणदिङ्नियतत्वाद्रिष्टं ज्ञेयम् । यत्र पूर्वरूपं स्वप्नरूपमस्ति राजयक्ष्मोन्मादादौ तत्रोच्यते, ज्वरादौ त्वविद्यमानत्वान्नोच्यते । यत्तु रिष्टं रिष्टाधिकारे ज्वरादीनां स्वप्नरूपं पूर्वरूपं वक्ष्यति—"प्रेतैः सह पिबेन्मद्यं" ( इं. अ. ५ ) इत्यादिना, तद्रिष्टमेव ॥ १३ ॥

**अत ऊर्ध्वमेकादशरूपाणि तस्य भवन्ति; तद्यथा—शिरसः परिपूर्णत्वं, कासः, श्वासः, स्वरभेदः, श्लेष्मणश्छर्दनं, शोणितष्ठीवनं, पार्श्वसंरोजनम्, अंसावमर्दः, ज्वरः, अतीसारः, अरोचकश्चेति ॥१४॥**

एकादशरूपाणीतिवचनेन एकादशरूपाण्येव संपूर्णराजयक्ष्मणि भवन्तीति दर्शयति । कासश्वासादयश्च ये एकादशरूपा उदाहरणार्थं व्याख्याता न ते प्रतिनियमार्थं, तेन चिकित्सिते वक्ष्यमाणमेकादशरूपचतुष्टयं भिन्नलक्षणं न विरोधि ॥ १४ ॥

**तत्रापरिक्षीणबलमांसशोणितो बलवानजातारिष्टः सर्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयः । बलवानुपचितो हि सहत्वाद्व्याध्यौषधबलस्य कामं सुबहुलिङ्गोऽप्यल्पलिङ्ग एव मन्तव्यः ॥ १५ ॥**

अपरिक्षीणबलाभिधानेऽपि बलवानिति पदं सहजबलयुक्तत्वोपदर्शनार्थं; सहजबलो ह्युपक्षीणबलोऽप्यक्षीणबलवद्भवतीति भावः । सहत्वाद्व्याध्यौषधबलस्येति यस्माद्बलवान् व्याधिबलं तथौषधबलं च सहते, तेन न ताभ्यामभिभूयत इत्यर्थः । अल्पलिङ्ग एवेति अल्पलिङ्ग इव सुखसाध्य इत्यर्थः ॥ १५ ॥

**दुर्बलं त्वतिक्षीणबलमांसशोणितमल्पलिङ्गमजातारिष्टमपि बहुलिङ्गं जातारिष्टं च विद्यात्, असहत्वाद्व्याध्यौषधबलस्य; तं परिवर्जयेत्, क्षणेनैव हि प्रादुर्भवन्त्यरिष्टानि, अनिमित्तश्चारिष्टप्रादुर्भाव इति ॥ १६ ॥**

तत्र श्लोकः—

**समुत्थानं च लिङ्गं च यः शोषस्यावबुध्यते ।**
**पूर्वरूपं च तत्त्वेन स राज्ञः कर्तुमर्हति ॥ १७ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने शोषनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥**

बहुलिङ्गं जातारिष्टं च विद्यादिति बहुलिङ्गमिवासाध्यं तथा जातारिष्टमिव मारकं विद्यादित्यर्थः । ननु, रिष्टं विना मरणं नास्ति, वचनं हि—"मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" ( इं. अ. २ ) इति, तत् कथमजातारिष्टो जातारिष्ट इवादूरमरणत्वेनेह ज्ञातव्य इत्याह—क्षणेन हीत्यादि । असाध्ये हि रिष्टं भवति, असाध्यता च बलमांसक्षयकृताऽस्त्येव; तेन, अवश्यं रिष्टेन भवितव्यमित्यर्थः । अथाजातारिष्टे कारणासेवयाऽरिष्टं न भविष्यत्येवेत्याह—अनिमित्तश्चारिष्टप्रादुर्भाव इति । न हि रिष्टं दृष्टं किञ्चित्कारणान्तरमपेक्षते, किन्त्वनिमित्तत एव भवति । तेन हेत्वसेवयाऽप्यरिष्टोत्पादो भविष्यतीति कृत्वा आश्वासः कर्तव्यः; किंचानिमित्तमेवारिष्टं भवति तेन रिष्टानुत्पादे सति नाश्वासः कर्तव्य इत्यर्थः ॥ १६ ॥ १७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने शोषनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

**अथात उन्मादनिदानं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

औत्पादिकं शोषमभिधाय दक्षयज्ञे कुष्ठानन्तरोत्पन्नमुन्मादं ब्रूते । वचनं हि—"भयत्रासशोकैरुन्मादापस्माराणाम्" ( नि. अ. ८ ) इति ॥ १ ॥ २ ॥

**इह खलु पञ्चोन्मादा भवन्ति; तद्यथा—वातपित्तकफसन्निपातागन्तुनिमित्ताः ॥ ३ ॥**

**तत्र दोषनिमित्ताश्चत्वारः पुरुषाणामेवंविधानां क्षिप्रमभिनिर्वर्तन्ते; तद्यथा—भीरूणामुपक्लिष्टसत्त्वानामुत्सन्नदोषाणां समलविकृतोपहितान्यनुचितान्याहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोगमपि विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामत्युपक्षीणदेहानां व्याधिवेगसमुद्भ्रमितानामुपहतमनसां वा कामक्रोधलोभहर्षभयमोहायासशोकचिन्तोद्वेगादिभिर्भूयोऽभिघाताभ्याहतानां वा मनस्युपहते बुद्धौ च प्रचलितायामभ्युदीर्णा दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांस्यावृत्य जनयन्त्युन्मादम् ॥ ४ ॥**

उपक्लिष्टसत्त्वानामिति रजस्तमोभ्यामुपहतचेतसाम् । उत्सन्नदोषाणामिति प्रवृद्धोद्भ्रान्तदोषाणाम् । समलैः अशुचिभिः, विकृतैः वैरोधिकैः, उपहितानि मिश्रीकृतानीति समलविकृतोपहितानि; किंवा समलैः मलिनैः, विकृतैः कुष्ठिव्यङ्गादिभिः परिजनैः, उपहितानि उपढौकितानीति समलविकृतोपहितानि । वैषम्ययुक्तेनोपयोगविधिनेति यः प्रकृतिकरणादिराहारोपयोगविधिर्वै-

१ 'अपरिक्षीणमांसशोणितः' इति योगीन्द्रनाथसेनसंमतः पाठः ।

१ 'कारणमपेक्षते' इति पा० । २ 'औत्पातिकं' इति पा० । ३ 'व्याधिवेगसमुद्भ्रमितोपहतमनसां' इति पा० । ४ 'अभ्युदीर्णत्वाद्दोषाः' इति पा० ।

काव्यः, तेन वैषम्ययुक्तेन; वैषम्यं च प्रकृत्यादीनामशस्तत्वं प्रकृतिगुरुत्वादिभिः कृतं ज्ञेयम्। तन्त्रं शरीरं, तस्य परिपालनार्थं सद्वृत्तोक्तः प्रयोगः; शरीरचेष्टाशब्देन तु गमनादि गृह्यते, तेन न पौनरुक्त्यम्। तन्त्रशब्दः शरीरे वर्तते; यदुक्तं—"तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम् ( इं. अ. १२ )" इति। व्याधिवेगसमुद्भ्रमितानामिति व्याधिबलेनाप्रकृतिस्थितानाम्। उपहतमनसामिति कामादिभिः संबध्यते। भूय इति पुनः पुनः। उपसृत्येति व्याप्य ॥ ३॥४॥

**उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशीलचेष्टाचारविभ्रमं विद्यात् ॥ ५ ॥**

उन्मादप्रत्यात्मलक्षणमाह—उन्मादं पुनरित्यादि। विभ्रममिति मनःप्रभृतिभिः प्रत्येकं संबध्यते। अत्र मनोविभ्रमाच्चिन्त्यानर्थान्न चिन्तयते, अचिन्त्यांश्च चिन्तयते; उक्तं हि—"मनसश्च चिन्त्यमर्थः" ( सू. अ. ८ ) इति। बुद्धिविभ्रमात्तु नित्यमनित्यमिति, प्रियं चाप्रियमिति पश्यति; वचनं हि—"विषमाभिनिवेशो यो नित्यानित्ये प्रियाप्रिये। ज्ञेयः स बुद्धिविभ्रंशः, समं बुद्धिर्हि पश्यति" (शा. अ. १) इति। संज्ञा ज्ञानं, तद्विभ्रमादग्न्यादिदाहं न बुध्यते; किंवा संज्ञा नामोल्लेखेन ज्ञानम्। स्मृतिविभ्रमात्तु न स्मरति, अयथावद्वा स्मरति। भक्तिरिच्छा, तद्विभ्रमाच्च यत्रेच्छा पूर्वमासीत्तत्रानिच्छा भवति। शीलविभ्रमादक्रोधनः क्रोधनो भवति। चेष्टाविभ्रमादनुचितचेष्टो भवति। आचारः शास्त्रशिक्षाकृतो व्यवहारः; तद्विभ्रमादशौचाद्याचरति ॥ ५ ॥

**तस्येमानि पूर्वरूपाणि; तद्यथा—शिरसः शून्यता, चक्षुषोराकुलता, स्वनः कर्णयोः, उच्छ्वासस्याधिक्यम्, आस्यसंस्रवणम्, अनन्नाभिलाषारोचकाविपाकाः, हृद्ग्रहः, ध्यानायाससंमोहोद्वेगाश्चास्थाने, सततं लोमहर्षः, ज्वरश्चाभीक्ष्णम्, उन्मत्तचित्तत्वम्, उदर्दित्वम्, अर्दिताकृतिकरणं च व्याधेः, स्वप्ने चाभीक्ष्णं दर्शनं भ्रान्तचलितानवस्थितानां रूपाणामप्रशस्तानां च तिलपीडकचक्राधिरोहणं वातकुण्डलिकाभिश्चोन्मथनं निमज्जनं च कलुषाणामम्भसामावर्ते चक्षुषोश्चापसर्पणमिति (दोषनिमित्तानामुन्मादानां पूर्वरूपाणि भवन्ति ) ॥ ६ ॥**

अस्थाने इत्यविषये; तेन अध्यानविषये ध्यानम्, असंमोहविषये च मोह इत्यादि ज्ञेयम्। उन्मत्तचित्तत्वमिति उद्भ्रान्तचित्तत्वम्। उदर्दितत्वमिति ऊर्ध्वकाये पीडितत्वम्। अर्दिताकृतिकरणं च व्याधेरिति अर्दितस्य व्याधेराकृतिकरणं; तेनार्धवक्त्रभ्रमणादिकरणमित्यर्थः। किंवा व्याधेरिति प्रथमोक्तेन तस्येत्यनेन संबध्यते, तेन तस्य व्याधेर्बुद्ध्यादिविभ्रमरूपस्योन्मादस्य यथोक्तानि पूर्वरूपाणीति योजना। चक्षुषोश्चापसर्पणमिति चक्षुर्व्यपगम इत्यर्थः ॥ ६ ॥

**ततोऽनन्तरमेवमुन्मादाभिनिर्वृत्तिरेव। तत्रेदमुन्मादविशेषविज्ञानं भवति; तद्यथा—परिसरणमजस्रम्, अक्षिभ्रुवौष्ठांसहन्वग्रहस्तपादाङ्गविक्षेपणमकस्मात्, सततमनियतानां च गिरामुत्सर्गः, फेनागमनमास्यात्, अभीक्ष्णं स्मितहसितनृत्यगीतवादित्रसंप्रयोगाश्चास्थाने, वीणावंशशङ्खशम्यातालशब्दानुकरणमसाम्ना, यानमयानैः, अलङ्करणमनलङ्कारिकैर्द्रव्यैः, लोभश्चाभ्यवहार्येष्वलब्धेषु, लब्धेषु चावमानस्तीव्रमात्सर्यं च, कार्श्यं, पारुष्यम्, उत्पिण्डितारुणाक्षता, वातोपशयविपर्यासादनुपशयता च; इति वातोन्मादलिङ्गानि भवन्ति (१);**

**अमर्षः, क्रोधः, संरम्भश्चास्थाने, शस्त्रलोष्टकशाकाष्ठमुष्टिभिरभिहननं स्वेषां परेषां वा, अभिद्रवणं, प्रच्छायशीतोदकान्नाभिलाषः, संतापश्चातिवेलं, ताम्रहरितहारिद्रसंरब्धाक्षता, पित्तोपशयविपर्यासादनुपशयता च; इति पित्तोन्मादलिङ्गानि भवन्ति (२);**

**स्थानमेकदेशे, तूष्णींभावः, अल्पशश्चङ्क्रमणं, लालाशिङ्घाणकस्रवणम्, अनन्नाभिलाषः, रहस्कामता, बीभत्सत्वं, शौचद्वेषः, स्वप्ननित्यता, श्वयथुराननें, शुक्लस्तिमितमलोपदिग्धाक्षत्वं, श्लेष्मोपशयविपर्यासादनुपशयता च; इति श्लेष्मोन्मादलिङ्गानि भवन्ति (३);**

**त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात्; तमसाध्यमाचक्षते कुशलाः ॥ ७ ॥**

ततोऽनन्तरमेवेतिवचनात् पूर्वरूपानन्तरं शीघ्रमेवोन्मादो भवतीति दर्शयति; अन्ये रोगा यथा पूर्वरूपे भूतेऽपि चिरेण भवन्ति, न तथोन्माद इत्यर्थः। उन्मादविशेषविज्ञानमिति वाताद्युन्मादलिङ्गमित्यर्थः। परिसरणं भ्रमणम्। शम्या दक्षिणहस्तेन वादनं, तालस्तु वामहस्तेन वादनं; यदुक्तं विशाखिना—"शम्या दक्षिणहस्तेन, वामहस्तेन तालकः। उभाभ्यां वादनं यत्तु सन्निपातः स उच्यते" इति। असाम्नेति उच्चैः। अयानैरिति हस्त्यादियानव्यतिरिक्तैः। लब्धेषु चावमान इति प्राप्तेष्वभ्यवहार्येष्वाहार्येष्वनुपयोगोऽवधीरणं च; न केवलमवमानः, किंतु तीव्रं मात्सर्यं च; अभ्यवहार्यं लब्ध्वा न कस्यचिद्दातुमिच्छतीत्यर्थः। वाते उपशय उपशयहेतुः स्नेहादिर्वा-

१ 'व्याधिवेगसमुद्रसितानामिति' इति पा०। २ 'उपसृत्येति उपगम्य प्रदुष्येति यावत्' इति पा०। ३ 'चेष्टाचारविभ्रंशं' इति पा०। ४ 'अर्दिताकृतिकरणमुन्मर्दितत्वं' इति पा०। ५ 'चक्षुषोश्चापतर्पणम्' इति पा०।

१ 'अंसहन्वग्रहस्तपादाङ्गाक्षिभ्रूविक्षेपश्चाकस्मात्' इति पा०। २ 'लब्धेषु चावमानः, तीव्रत्वं, मात्सर्यं' इति पा०।

तोपशयः, तस्य विपर्यासो रूक्षादिः, तेनानुपशयिता असुखमित्यर्थः । चकाराद्वातानुगुणस्नेहाद्युपशयता च गृह्यते । अमर्ष इत्यादि पित्तोन्मादलिङ्गम् । संरम्भ आरभटी । स्वेषामिति आत्मीयानाम् । कफोन्मादलिङ्गे रहो विजनम् ॥ ७ ॥

साध्यानां तु त्रयाणां साधनानि—स्नेहस्वेदवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूमधूपनाञ्जनावपीडप्रधमनाभ्यङ्गप्रदेहपरिषेकानुलेपनवधवन्धनावरोधनवित्रासनविस्मापनविस्मारणापतर्पणसिराव्यधनानि, भोजनविधानं च यथास्वं युक्त्या, यच्चान्यदपि किंचिन्निदानविपरीतमौषधं कार्यं तदपि स्यादिति ॥ ८ ॥

भवति चात्र—

उन्मादान् दोषजान् साध्यान् साधयेद्भिषगुत्तमः ।
अनेन विधियुक्तेन कर्मणा यत् प्रकीर्तितम् ॥ ९ ॥

अवरोधनं तमोगृहावरोधनादि । विधियुक्तेनेति उन्मादचिकित्सिते प्रपञ्चवक्ष्यमाणविधियुक्तेनेत्यर्थः ॥ ८ ॥ ९ ॥

यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषसमन्वितो भवत्युन्मादस्तमागन्तुकमाचक्षते । केचित् पुनः पूर्वकृतं कर्माप्रशस्तमिच्छन्ति तस्य निमित्तम् । तस्य च हेतुः प्रज्ञापराध एवेति भगवान् पुनर्वसुरात्रेयः । प्रज्ञापराधाद्ध्ययं देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्यपूज्यानवमत्याहितान्याचरति, अन्यद्वा किंचिदेवंविधं कर्माप्रशस्तमारभते; तमात्मना हतमुपघ्नन्तो देवादयः कुर्वन्त्युन्मत्तम् ॥ १० ॥

केचित् पुनरित्यादौ 'तस्य निमित्तं' इतिपदमावृत्य पूर्वेण परेण च योजनीयम् । तत्र प्रज्ञापराध एव तस्य निमित्तमिति ब्रुवता अप्रशस्तप्राक्तनकर्मजन्यत्वं न प्रतिक्षिप्यते, यतः प्राक्तनमपि हि कर्म प्रज्ञापराधजमेव । किंवा, तस्य निमित्तं प्रज्ञापराध एवेत्यनेन तस्येत्यप्रशस्तकर्मणोऽपि प्रज्ञापराध एव कारणमिति दर्श्यते; तेन कर्मजस्य प्रज्ञापराधान्तर्निविष्टत्वमुच्यते । आत्मना हतमिति आत्मना कृतेनाशुभकर्मणा हतम् । उपघ्नन्त इत्यावेशं कुर्वन्तः ॥ १० ॥

तत्र देवादिप्रकोपनिमित्तेनागन्तुकोन्मादेन पुरस्कृतस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—देवगोब्राह्मणतपस्विनां हिंसारुचित्वं, कोपनत्वं, नृशंसाभिप्रायता, अरतिः, ओजोवर्णच्छायाबलवपुषामुपतप्तिः, स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्तनं चेति; ततोऽनन्तरमुन्मादाभिनिर्वृत्तिः ॥ ११ ॥

पुरस्कृतस्येति अभिशपनीयतया व्यवस्थापितस्य । नृशंसाभिप्रायता परापकाररुचित्वम् । ओजस उपतप्त्या ओजःकार्यबलादिरहितः । प्रवर्तनं प्रेरणम् ॥ ११ ॥

तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषो भवति; तद्यथा—अवलोकयन्तो देवा जनयन्त्युन्मादं, गुरुवृद्धसिद्धमहर्षयोऽभिशपन्तः, पितरो दर्शयन्तः, स्पृशन्तो गन्धर्वाः, समाविशन्तो यक्षाः, राक्षसास्त्वात्मगन्धमाघ्रापयन्तः, पिशाचाः पुनरारुह्य वाहयन्तः ॥ १२ ॥

दर्शयन्त इत्यत्र 'आत्मानम्' इति शेषः ॥ १२ ॥

तस्येमानि रूपाणि भवन्ति; तद्यथा—अत्यात्मबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणज्ञानवचनविज्ञानानि, अनियतश्चोन्मादकालः ॥ १३ ॥

अत्यात्मशब्दो बलादिभिः प्रत्येकमभिसंबध्यते । आत्मानमतिरिच्येति अत्यात्म; तेनात्माननुरूपबलादियोगो भवतीत्यर्थः ॥ १३ ॥

उन्मादयिष्यतामपि खलु देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचानां गुरुवृद्धसिद्धानां वा एष्वन्तरेष्वभिगमनीयाः पुरुषा भवन्ति; तद्यथा—पापस्य कर्मणः समारम्भे, पूर्वकृतस्य वा कर्मणः परिणामकाले, एकस्य वा शून्यगृहवासे चतुष्पथाधिष्ठाने वा, सन्ध्यावेलायामप्रयतभावे वा पर्वसन्धिषु वा मिथुनीभावे, रजस्वलाभिगमने वा, विगुणे वाऽध्ययनबलिमङ्गलहोमप्रयोगे, नियमव्रतब्रह्मचर्यभङ्गे वा, महाहवे वा, देशकुलपुरविनाशे वा, महाग्रहोपगमने वा, स्त्रिया वा प्रजननकाले, विविधभूताशुभाशुचिस्पर्शने वा, वमनविरेचनरुधिरस्रावे, अशुचेरप्रयतस्य वा चैत्यदेवायतनाभिगमने वा, मांसमधुतिलगुडमद्योच्छिष्टे वा, दिग्वाससि वा, निशि नगरनिगमचतुष्पथोपवनश्मशानाघातनाभिगमने वा, द्विजगुरुसुरयतिपूज्याभिधर्षणे वा, धर्माख्यानव्यतिक्रमे वा, अन्यस्य वा कर्मणोऽप्रशस्तस्यारम्भे, इत्यभिघातकाला व्याख्याता भवन्ति ॥ १४ ॥

पर्वसन्धिः अमावास्या पौर्णमासी च । दिग्वाससीति नग्ने । निशीत्यादौ पुनश्चतुष्पथवचनं निशि पुनरन्येन सहापि चतुष्पथगमनप्रदर्शनार्थम्; एकस्येत्यादौ तु दिवाऽप्येकस्य चतुष्पथगमनं ब्रुवते। धर्माख्यानव्यतिक्रम इति अविधिना धर्मप्रकाशने ॥ १४ ॥

त्रिविधं तु खलून्मादकराणां भूतानामुन्मादने प्रयोजनं भवति; तद्यथा—हिंसा, रतिः, अभ्यर्चनं चेति । तेषां तं प्रयोजनविशेषमुन्मत्ताचारविशेषलक्षणैर्विद्यात् । तत्र हिंसार्थिनोन्माद्यमानोऽग्निं

१ 'तत्र' इति पा० ।

१ 'अनोजाः इति' इति पा० । २ 'धर्षयन्तः' इति पा० । ३ 'अमर्त्यबल॰' इति पा० । ४ 'निशिचतुष्पथोपगमनस्य विशेषेणाभिघातकालत्वं बोध्यं, पुनरुक्तत्वात्' इति गङ्गाधरः ।

प्रविशति, अप्सु निमज्जति, स्थलाच्छ्वभ्रे वा पतति, शस्त्रकशाकाष्ठलोष्टमुष्टिभिर्हन्त्यात्मानम्, अन्यच्च प्राणवधार्थमारभते किञ्चित्, तमसाध्यं विद्यात्; साध्यौ पुनर्द्वावितरौ ॥ १५ ॥

रतिः क्रीडा । अभ्यर्चनं पूजा । उन्मत्ताचारविशेषलक्षणैर्विद्यादिति उन्मत्तस्याचारविशेषरूपैर्लक्षणैर्हिंसार्थाद्युन्मादितं विद्यात् । तत्र हिंसार्थिनोन्मादितो हिंसानुगुणमभिप्रवेशाद्याचरति, रत्यर्थिना चोन्मादितः क्रीडार्थं प्रचरति, पूजार्थिना गृहीतो पूजां चेष्टते । इह च देवादिवचनेन देवानुचरा देवादिसधर्माणो ग्राह्याः, देवादयस्तु न मानुपानाविशन्ति । उक्तं हि सुश्रुते—"न ते मनुष्यैः सह संविशन्ति नवा मनुष्यान् क्वचिदाविशन्ति । ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः" ( सु. उ. तं. अ. ६१ ) इत्यादि । हिंसार्थिगृहीतस्यासाध्यत्वेन तद्विज्ञानार्थं सामान्योक्तान्यपि लक्षणानि भङ्ग्याहिकया ब्रूते ॥ १५ ॥

तयोः साधनानि—मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमव्रतप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादीनि ॥ १६ ॥

एवमेते पञ्चोन्मादा व्याख्याता भवन्ति ॥ १७ ॥

तयोरित्यादौ गमनं देवतीर्थादिगमनम् ॥ १६ ॥ १७ ॥

ते तु खलु निजागन्तुविशेषेण साध्यासाध्यविशेषेण च प्रविभज्यमानाः पञ्च सन्तो द्वावेव भवतः । तौ च परस्परमनुबध्नीतः कदाचिद्यथोक्तहेतुसंसर्गात् । तयोः संसृष्टमेव पूर्वरूपं भवति, संसृष्टमेव च लिङ्गम् । तत्रासाध्यसंयोगं साध्यासाध्यसंयोगं चासाध्यं विद्यात्, साध्यं तु साध्यसंयोगम् । तस्य साधनं साधनसंयोगमेव विद्यादिति ॥ १८ ॥

ताविति तौ निजागन्तू । परस्परमनुबध्नीतः कदाचिदिति न सर्वदा । यथोक्तहेतुसंसर्गादिति निजागन्तुहेतुमेलकात् । तत्रेति निजागन्तुहेतुसंसर्गे । असाध्यसंयोगमिति यदा त्रिदोषजोन्मादे हिंसार्थिना देवादिनाऽनुबन्धो भवति, तदाऽसाध्ययोः संयोगो भवति । साध्यासाध्यसंयोगस्तु एकदोषजे उन्मादे हिंसार्थ्युन्मादयोगात्तथा रत्यर्थोन्मादे त्रिदोषोन्मादानुबन्धाच्चेत्यादि ज्ञेयम् । साध्यसंयोगस्य साध्यरूपतयैव साध्यतायां सिद्धायां पुनः साध्यमितिवचनं साध्यरूपविकारान्तरसंबन्धे विकारभूयस्त्वेनासाध्यशङ्काप्रतिषेधार्थम् । साधनसंयोगमेवेति निजागन्तुसाधनमेलकमित्यर्थः ॥ १८ ॥

भवन्ति चात्र—

नैव देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
न चान्ये स्वयमक्लिष्टमुपक्लिश्नन्ति मानवम् ॥ १९ ॥
ये त्वेनमनुवर्तन्ते क्लिश्यमानं स्वकर्मणा ।
न स तद्धेतुकः क्लेशो न ह्यस्ति कृतकृत्यता ॥ २० ॥

संप्रति देवाद्युन्मादहेतुपरिहारार्थं देवाद्युन्मादेऽपि प्रकृतमेव कर्म कारणं दर्शयति—नैवेत्यादि । अनुवर्तन्त इतिवचनाद्दुष्कृतकर्मप्रेरिता एव देवादयोऽशुभकर्माणमभिनिविशन्तीति दर्शयति; यदि ह्येवमेव देवादयः कर्मनिरपेक्षा उन्मत्तं कुर्युस्तदा सर्वानेव कुर्युरिति भावः । न स तद्धेतुकः क्लेश इति नासौ देवादिकृत उन्माद इत्यर्थः । अथ कथं देवाद्यावेशजनितोऽप्ययं न देवादिकृत इत्याह—नह्यस्ति कृतकृत्यतेति; न यस्मादशुभकर्मणा कृते उन्मादे पुनर्देवादिकृत्यत्वमस्ति, न हि कृतं पुनः क्रियते, देवादयश्च कर्मपराधीना एवेति भावः । किंवा, 'नह्यस्य कृतकृत्यता' इति पाठः । तत्र कृतेनैव प्राक्तनकर्मणा उन्मादितो न कृत्यः करणीयः पुरुषो भवति; अन्यथा, सर्वेषामेवाविशेषेण देवाद्युन्मादः स्यात्; तस्माद्यैनैवोन्मादफलजनकं कर्म कृतं, स एव देवादिभिः कर्मपराधीनैरभिगम्यते; अनेनाभिप्रायेणाह—नह्यस्य कृतकृत्यतेति ।—अकृतपापकर्मणो न देवाद्यभिगमनीयताऽस्तीत्यर्थः । यस्माद्देवादयोऽत्र कर्मपराधीनास्तस्माद्देवादयो नोपालम्भ्याः ॥ १९ ॥ २० ॥

प्रज्ञापराधात् संभूते व्याधौ कर्मज आत्मनः ।
नाभिशंसेद्बुधो देवान्न पितॄन्नापि राक्षसान् ॥ २१ ॥
आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।
तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नो त्रसेत् ॥ २२ ॥
देवादीनामपचितिर्हितानां चोपसेवनम् ।
ते च तेभ्यो विरोधश्च सर्वमायत्तमात्मनि ॥ २३ ॥

तत्र श्लोकः—

संख्या निमित्तं प्राग्रूपं लक्षणं साध्यता न च ।
उन्मादानां निदानेऽस्मिन् क्रियासूत्रं च भाषितम् २४

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने उन्मादनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

न च देवादिभ्यो भेतव्यमित्याह—प्रज्ञापराधादित्यादि । नाभिशंसेदिति नोपालभेत । आत्मानमित्यादौ आत्मैव शुभाशुभकर्मकरणात् सुखदुःखयोर्यथासंख्यं कारणं भवतीति वाक्यार्थः । नो त्रसेदिति देवादिभ्यः, एवमेवामी शुभकर्माणमपि गृह्णन्तीति कृत्वा नो त्रसेत् । अपचितिः पूजा । ते चेत्यादौ ते चेति देवापचितिहितोपसेवने । तेभ्यो विरोधश्चेति तेभ्यो देवादिभ्यो विरोधो यतो भवत्यशुभकर्मभ्यः, तत् सर्वमात्मन्यायत्तम् । एतेन, आत्माधीनमेवेदमुन्मादकारणस्य परिवर्जनं परिसेवनं च दर्शयति ॥ २१-२४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थाने उन्मादनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'हिंसार्थ्युन्मादनं' इति पा० । २ 'देवाद्यनुचरानुविधायिनो ग्राह्याः' इति पा० ।

१ 'न तन्निमित्तः क्लेशोऽसौ' इति पा० । २ 'यश्च' इति पा० ।

## अष्टमोऽध्यायः ।

**अथातोऽपस्मारनिदानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

उन्मादानन्तरं प्रागुत्पत्तावपस्मारोत्पादादपस्मारनिदानमुच्यते ॥ १ ॥ २ ॥

**इह खलु चत्वारोऽपस्मारा भवन्ति वातपित्तकफसन्निपातनिमित्ताः ॥ ३ ॥**

चत्वार इति वचनमागन्तुसंबन्धेऽप्यपस्माराणां चतुष्कप्रतिपादनार्थम्; अपस्मारो हि नोन्मादवत् स्वतन्त्रेणागन्तुना क्रियते ॥ ३ ॥

**त एवंविधानां प्राणभृतां क्षिप्रमभिनिर्वर्तन्ते; तद्यथा—रजस्तमोभ्यामुपहतचेतसामुद्भ्रान्तविषमबहुदोषाणां समलविकृतोपहितान्यशुचीन्यभ्यवहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोगमपि च विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामत्युपक्षयाद्वा दोषाः प्रकुपिता रजस्तमोभ्यामुपहतचेतसामन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृत्योपरि तिष्ठन्ते, तथेन्द्रियायतनानि च । तत्र चावस्थिताः सन्तो यदा हृदयमिन्द्रियायतनानि चेरिताः कामक्रोधभयलोभमोहहर्षशोकचिन्तोद्वेगादिभिः सहसाऽभिपूरयन्ति, तदा जन्तुरपस्मरति ॥ ४ ॥**

उद्भ्रान्तविषमबहुदोषाणामिति अत्रोद्भ्रान्तत्वेनोन्मार्गित्वं, विषमत्वेन कदाचिदपस्मारवेगकर्तृत्वं दर्श्यते । समलेत्यादि उन्मादव्याख्यानतुल्यम् । अत्युपक्षयाद्वेति अत्युपक्षीणदेहत्वादित्यर्थः; उन्मादनिदानेऽपि समलविकृतेत्यादिग्रन्थे 'अत्युपक्षीणदेहानां' ( नि. अ. ७ ) इत्युक्तम् । श्रेष्ठतमायतनमिति अनेनान्योऽपि शरीरदेशोऽन्तरात्मनः स्थानं, हृदयं तु श्रेष्ठतमं, तत्रैव चेतनाविशेषनिबन्धनादिति दर्शयति । उपसृत्येति व्याप्य । उपरि तिष्ठन्ते इति हृदयस्योपरि इन्द्रियायतनानि चोपसृत्य तिष्ठन्ते इति योजना । 'पर्यवतिष्ठन्ते' इति पाठो व्यक्त एव । तत्रावस्थिता इति हृदये इन्द्रियायतनेषु च लीनत्वेनावस्थिताः । ते च लीनाः सन्तः कामादिभिरीरिताः पुनर्हृदयमिन्द्रियायतनानि च विशेषेण पूरयन्ति यदा, तदा अपस्मरति अपस्मारवेगयुक्तो भवतीति वाक्यार्थः ॥ ४ ॥

**अपस्मारं पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद्बीभत्सचेष्टमावस्थिकं तमःप्रवेशमाचक्षते ॥ ५ ॥**

अपस्मारप्रत्यात्मलक्षणमाह—अपस्मारं पुनरित्यादि । संप्लवादिति विकृतिगमनात् । बीभत्सा फेनवमनाङ्गभङ्गादिरूपा चेष्टा यस्मिन् तद्बीभत्सचेष्टम् । आवस्थिकं तमःप्रवेशमिति कादाचित्कं तमःप्रवेशं; तमःप्रवेशोऽज्ञानसाधर्म्यात्, अपस्मारवेगवान् हि तमःप्रवेशे इव न किंचिद्बुध्यते ॥ ५ ॥

**तस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—भ्रूव्युदासः सततमक्ष्णोर्वैकृतमशब्दश्रवणं लालासिङ्घाणप्रस्रवणमनन्नाभिलषणमरोचकाविपाकौ हृदयग्रहः कुक्षेराटोपो दौर्बल्यमस्थिभेदोऽङ्गमर्दो मोहस्तमसो दर्शनं मूर्च्छा भ्रमश्चाभीक्ष्णं स्वप्ने च मदनर्तनव्यधनव्यथनवेपनपतनादीनीति ॥ ६ ॥**

**ततोऽनन्तरमपस्माराभिनिर्वृत्तिरेव ॥ ७ ॥**

अशब्दश्रवणमिति अविद्यमानशब्दश्रवणशब्दम् । आटोपः गुडगुडाशब्दविशेषो वातजन्यः श्रूयत इत्यर्थः ॥ ६ ॥ ७ ॥

**तत्रेदमपस्मारविशेषविज्ञानं भवति; तद्यथा—अभीक्ष्णमपस्मरन्तं, क्षणेन संज्ञां प्रतिलभमानम्, उत्पिण्डिताक्षम्, असाम्ना विलपन्तम्, उद्वमन्तं फेनम्, अतीवाध्मातग्रीवम्, आविद्धशिरस्कं, विषमविनताङ्गुलिम्, अनवस्थितपाणिपादम्, अरुणपरुषश्यावनखनयनवदनत्वचम्, अनवस्थितचपलपरुषरूक्षरूपदर्शिनं, वातलानुपशयं, विपरीतोपशयं च वातेनापस्मरन्तं विद्यात् ॥ (१) ॥**

**अभीक्ष्णमपस्मरन्तं, क्षणेन संज्ञां प्रतिलभमानम्, अवकूजन्तम्, आस्फालयन्तं भूमिं, हरितहारिद्रताम्रनखनयनवदनत्वचं, रुधिरोक्षितोग्रभैरवादीप्तरुषितरूपदर्शिनं, पित्तलानुपशयं, विपरीतोपशयं च पित्तेनापस्मरन्तं विद्यात् ॥ (२) ॥**

**चिरादपस्मरन्तं, चिराच्च संज्ञां प्रतिलभमानं, पतन्तम्, अनतिविकृतचेष्टं, लालामुद्वमन्तं, शुक्लनखनयनवदनत्वचं, शुक्लगुरुस्निग्धरूपदर्शिनं, श्लेष्मलानुपशयं, विपरीतोपशयं च श्लेष्मणाऽपस्मरन्तं विद्यात् ॥ (३) ॥**

**समवेतसर्वलिङ्गमपस्मारं सान्निपातिकं विद्यात्, तमसाध्यमाचक्षते ॥ (४) ॥**

**इति चत्वारोऽपस्मारा व्याख्याताः ॥ ८ ॥**

तत्रेदमित्यादि । विशेषविज्ञानं वाताद्यपस्मारलिङ्गमित्यर्थः । क्षणेन संज्ञां प्रतिलभमानमिति वातापस्मारे शीघ्रं प्रबोधो भवतीति दर्शयति । आध्मातग्रीवमिति पूरितस्तब्धग्रीवम् । आविद्धशिरस्कमिति वक्रशिरस्कम् । अनवस्थितचपलरूपदर्शनं पतनकाले ज्ञेयं, पतितस्तु न बुध्यत एव । एवमन्यत्रापि रूपदर्शनं बोद्धव्यम् । सुश्रुतेऽपि पतनकाल एव रूपदर्शनमुक्तं; यथा—"यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनु-

---

१ 'अत्युपक्षीणदेहानां वा' इति पा० । २ 'हृदयमुपसंसृज्य पर्यवतिष्ठन्ते' इति, 'हृदयमुपसंगृह्योपरि तिष्ठन्ते' इति च पा० ।

१ 'वातजत्वादिति ज्ञायते' इति पा० । २ 'क्षणे क्षणे च' इति पा० । ३ 'वातेनापस्मारितं' इति पा० । ४ 'क्षणे क्षणे च' इति पा० ।

धावति। ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः" (सु. उ. अ. ६१) इत्यादि। पित्तापस्मारे यद्यपि विशेषलक्षणे क्षणेन संज्ञां प्रतिलभमानमित्युक्तं, तथाऽपि वातिकापेक्षया कालप्रकर्षोऽत्र ज्ञेयः; पित्तादपि हि वायुः शीघ्रकारी भवति। उग्रं हिंसकमिव, भैरवं तु अहिंसकमपि भयजनकं श्मशानादि, आदीप्तं ज्वलितम्। चिरादपस्मरन्तमिति भूयसा कालेनापस्मारवेगवन्तम् ॥ ८ ॥

**तेषामागन्तुरनुबन्धो भवत्येव कदाचित्, तमुत्तरकालमुपदेक्ष्यामः। तस्य विशेषविज्ञानं यथोक्तलिङ्गैर्लिङ्गाधिक्यमदोषलिङ्गानुरूपं च किञ्चित् ॥ ९ ॥**

भवत्येवेत्यत्र एवकारोऽत्यन्तायोगव्यवच्छेदे; यथा—नीलं सरोजं भवत्येव, न च न भवति। कदाचिदिति पदं त्वत्यन्तायोगव्यवच्छेदार्थतामेव द्योतयति। एतेन, सर्वापस्मारे भूतसंबन्धो भवति, न च स्वतन्त्रोऽपस्मारो भौतिको भवतीति दर्शयति। उत्तरकालमिति चिकित्सिते, यद्यपि चापस्मारचिकित्सितेऽपि प्रपञ्चो न वक्तव्यः, तथाऽपि तत्रोन्मादविध्यतिदेशादुन्मादोक्तविस्तार एवेति कृत्वा इहोक्तं—'तमुत्तरकालमुपदेक्ष्यामः' इति; उक्तं हि—"यस्यानुबन्धं त्वागन्तुं दोषलिङ्गाधिकाकृतिम्। पश्येत्तस्य भिषक्कुर्यादागन्तून्मादभेषजम्" (चि. अ. १०) इति। यथोक्तलिङ्गैरिति पञ्चमीस्थाने तृतीया, तेन यथोक्तापस्मारलिङ्गेभ्यो लिङ्गाधिक्यं लिङ्गातिरिक्तत्वं; तच्चादोषलिङ्गानुरूपं दोषलिङ्गासदृशमित्यर्थः। किंचिदिति न सर्वं, किंतु स्तोकं दोषलिङ्गविलक्षणं लिङ्गमागन्त्वनुबन्धे भवति। एतेन च स्वातन्त्र्येणागन्त्वपस्मारसंभवो न भवतीति दर्शयति; यदि हि स्वतन्त्र एवागन्तुः स्यात्तदा न स्तोकमागन्तुलिङ्गं स्यात्, किंतु सर्वमेव ॥ ९ ॥

**हितान्यपस्मारिभ्यस्तीक्ष्णानि संशोधनान्युपशमनानि च यथास्वं, मन्त्रादीनि चागन्तुसंयोगे ॥ १० ॥**

हितानीत्यादिना चिकित्सासूत्रमाह। उपशमनानि च हितानीति योजना ॥ १० ॥

**तस्मिन् हि दक्षाध्वरध्वंसे देहिनां नानादिक्षु विद्रवतामभिद्रवणतरणधावनप्लवनलङ्घनाद्यैर्देहविक्षोभणैः पुरा गुल्मोत्पत्तिरभूत्, हविष्प्राशात् प्रमेहकुष्ठानां, भयत्रासशोकैरुन्मादानां, विविधभूताशुचिसंस्पर्शादपस्माराणां, ज्वरस्तु खलु महेश्वरललाटप्रभवः, तत्संतापाद्रक्तपित्तम्, अतिव्यवायात् पुनर्नक्षत्रराजस्य राजयक्ष्मेति ॥ ११ ॥**

**भवन्ति चात्र—**

**अपस्मारो हि वातेन पित्तेन च कफेन च।**

१ 'यद्यपि अविशेषेण संज्ञां प्रतिलभमानमित्युक्तं' इति पा०। २ 'उन्मादोक्तविस्तर उक्तत्वादिहोक्तम्' इति पा०। ३ 'महेश्वरललाटात् प्रभवति' इति पा०।

**चतुर्थः सन्निपातेन प्रत्याख्येयस्तथाविधः ॥ १२ ॥**
**साध्यांस्तु भिषजः प्राज्ञाः साधयन्ति समाहिताः।**
**तीक्ष्णैः संशोधनैश्चैव यथास्वं शमनैरपि ॥ १३ ॥**
**यदा दोषनिमित्तस्य भवत्यागन्तुरन्वयः।**
**तदा साधारणं कर्म प्रवदन्ति भिषग्विदः ॥ १४ ॥**

संप्रत्युक्तानां गदानामुत्पत्तिमाह—तस्मिन्नित्यादि। यद्यपि च ज्वर एव तत्र प्रथम उत्पन्नस्तथाऽप्यसौ पृथगेव रुद्रक्रोधरूप उत्पन्न इति कृत्वा पश्चादुच्यते, गुल्मादयस्तु यज्ञध्वंसानन्तरकालभूता एकसामग्रीजातत्वेन प्रथममुच्यन्ते; ज्वरस्य तु सर्वप्रथमोत्पत्तिर्ज्वरनिदान एवोक्तेति भावः। पुरा इति आद्युत्पत्तौ। ललाटप्रभव इति ललाटभवक्रोधाग्निप्रभव इत्यर्थः। अन्वयः अनुबन्धः। साधारणमिति दोषप्रत्यनीकं वमनादि, देवादिप्रत्यनीकं च बलिमङ्गलादि ॥ ११–१४ ॥

**सर्वरोगविशेषज्ञः सर्वौषधविशारदः।**
**भिषक् सर्वामयान् हन्ति न च मोहं निगच्छति १५**

निदानस्थानोक्तसर्वरोगज्ञानफलमाह—सर्वेत्यादि। न च मोहं निगच्छतीति निदानस्थानाद्यनुक्तेऽपि प्रमेये सूक्ष्मेऽपि बहुदृष्टत्वेन न मोहं गच्छति, किन्तु तदप्यूहत इत्यर्थः ॥ १५ ॥

**इत्येतदखिलेनोक्तं निदानस्थानमुत्तमम्।**

अखिलेनेति यावन्निदानस्थानतया व्याध्यष्टकं प्रतिज्ञातं तावदखिलेनोक्तम्। तेन चिकित्सास्थानवक्तव्यनिदानाभिधानान्न न्यूनत्वं; यच्च ज्वरादिनिदानमपि पुनर्वक्तव्यं तदस्यैव प्रपञ्च इति भावः ॥—

**निदानार्थकरो रोगो रोगस्याप्युपलभ्यते ॥ १६ ॥**
**तद्यथा-ज्वरसंतापाद्रक्तपित्तमुदीर्यते।**
**रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते ॥ १७ ॥**
**प्लीहाभिवृद्ध्या जठरं जठराच्छोथ एव च।**
**अर्शोभ्यो जठरं दुःखं गुल्मश्चाप्युपजायते ॥ १८ ॥**
**प्रतिश्यायाद्भवेत् कासः कासात् संजायते क्षयः।**
**क्षयो रोगस्य हेतुत्वे शोषस्याप्युपलभ्यते ॥ १९ ॥**

संप्रति निदानप्रकरणाद्रोगाणामपि केषांचिद्व्याधिं प्रति कारणत्वं यत् संभवति, तद्वक्तुमाह—निदानार्थेत्यादि। निदानस्यार्थः प्रयोजनं व्याधिजननं, तत् करोतीति निदानार्थकरः; व्याधिजनक इत्यर्थः। निदानरूप इति वक्तव्ये यन्निदानार्थकर इति ब्रूते, तेन व्याधिना व्याध्यन्ते क्रियमाणेऽपि मूलभूतव्याधिजनक एव हेतुर्व्याधिजन्येऽपि व्याधौ मूलव्याधिजननावान्तरव्यापारो निदानमिति दर्शयति। तेन, रोगजन्येऽपि रोगे मूलभूतासात्म्येन्द्रियार्थादि कारणत्रयमेव कारणं

१ 'समृच्छति' इति पा०। २ 'श्वासश्चाप्युपजायते' इति पा०।

भवतीति न चतुर्थकारणान्तरापत्तिरित्यतिप्रसङ्गो वाच्यः; ज्वरकारणान्येव हि उष्णादीन्यतिमात्राणि ज्वरमभिनिर्वर्त्य रक्तपित्तमपि कारणान्तरवर्धनशक्तीनि जनयन्तीत्याद्यनुसरणीयम्। गुल्मश्चाप्युपजायते इति अर्शोभ्य एव। कासात् संजायते क्षय इति कासाद्धातुक्षयो जायते, स च धातुक्षयो रोगस्य शोषाभिधानस्य हेतुरुपलभ्यत इति योजना ॥ १६-१९ ॥

**ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः।**
**उभयार्थकरा दृष्टास्तथैवैकार्थकारिणः ॥ २० ॥**

ननु यत्र रोगस्य कारणं रोगो भवति, तत्र किं कारणभूतरोगोऽप्रधानमेवेत्याशङ्क्याह—ते पूर्वमित्यादि।—ते ज्वरादयो रक्तपित्ताद्युत्पादात् पूर्वं केवलाः सन्तो रोगा एव रुजाकर्तृत्वेन स्वयमेव प्रधाना इति; पश्चाद्धेत्वर्थकारिण इति पश्चाद्रक्तपित्ताद्युत्पादका भवन्तीत्यर्थः। अथैवमपि रक्तपित्तादिकं जनयित्वा ज्वरादयो हेतुवदरोगरूपा भवन्ति न वेत्याह—उभयेत्यादि। उभयार्थकरा इति हेत्वर्थं रक्तपित्तादिजननरूपं, रोगार्थं च पीडालक्षणं कुर्वन्ति; न व्याध्यन्तरजननमात्रं कृत्वा निवर्तन्त इत्यर्थः। प्रकारान्तरमाह—तथैवैकार्थकारिण इति। एकस्यैव हेतोरर्थं कुर्वन्तीति एकार्थकारिणः ॥ २० ॥

**कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति।**
**न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च ॥२१॥**

एतदेव पक्षद्वयं प्रातिलोम्येन विवृणोति—कश्चिद्धीत्यादि। अत्र यो हेत्वर्थं व्याधिजननं कृत्वा प्रशाम्यति, स एकार्थकारी; यस्तु हेत्वर्थं व्याध्यन्तरजननं कृत्वा स्वयमप्यनुवर्तते, स उभयार्थकारी; यदा कासं समारभ्यापि स्वयमनुवर्तते, तदा प्रतिश्यायः स्वयं च रुजाकर्तृत्वेन रोगार्थंकरः, कासजनकत्वेन हेत्वर्थकरश्च भवति; यदा तु कासं जनयित्वा स्वयं निवर्तते, तदा कासकाले निवृत्तत्वात् हेत्वर्थमात्रं करोतीत्युदाहार्यम् ॥ २१ ॥

**एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः।**
**प्रयोगापरिशुद्धत्वात्तथा चान्योन्यसंभवात् ॥ २२ ॥**

व्याधिसङ्करा व्याधिमेलकाः। कुतः पुनरेवं[4] भवतीत्याह—प्रयोगेत्यादि।—प्रयोगापरिशुद्धत्वं यथा—आमातीसारे स्तम्भनं कृतं दोषं संस्तभ्य शूलानाहाध्मानादि जनयति। हेत्वन्तरमाह—अन्योन्यसंभवादिति; परस्परकारणरूपत्वादित्यर्थः। प्रतिश्यायो हि स्वरूपेणैव कासस्य कारणं, स च राजयक्ष्मण इत्यादि ॥ २२ ॥

**प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत्।**
**नासौ विशुद्धः, शुद्धस्तु शमयेद्यो न कोपयेत् २३**

प्रयोगापरिशुद्धिं विवृणोति—प्रयोग इत्यादि। न कोपयेदिति व्याध्यन्तरं न कुर्यादित्यर्थः। अन्योन्यसंभवश्च ज्वरसंतापाद्रक्तपित्तमुदीर्यते इत्यादिनैवोक्त इति न पुनर्विव्रियते ॥ २३ ॥

**एको हेतुरनेकस्य तथैकस्यैक एव हि।**
**व्याधेरेकस्य चानेको बहूनां बहवोऽपि च ॥ २४ ॥**
**ज्वरभ्रमप्रलापाद्या दृश्यन्ते रूक्षहेतुजाः।**
**रूक्षेणैकेन चाप्येको ज्वर एवोपजायते ॥ २५ ॥**
**हेतुभिर्बहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत्।**
**रूक्षादिभिर्ज्वराद्याश्च व्याधयः संभवन्ति हि ॥२६॥**

हेतुप्रकरणाद्धेतुधर्मान्तरमाह—एको हेतुरित्यादि। एतत्पक्षचतुष्टयोदाहरणान्याह—ज्वरेत्यादि। यद्यपि रूक्षं बहूनां कारणं, तथाऽपि देशकालादिवशात् कदाचिदेकस्यैव ज्वरस्य कारणं भवतीति ज्ञेयम्। रूक्षादिभिरिति रूक्षोष्णलवणादिभिः। ज्वराद्या इति ज्वररक्तपित्तगुल्माद्याः ॥ २४-२६ ॥

**लिङ्गं चैकमनेकस्य तथैवैकस्य लक्ष्यते।**
**बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च ॥ २७ ॥**
**विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः।**
**ज्वरस्यैकस्य चाप्येकः संतापो लिङ्गमुच्यते ॥ २८॥**
**विषमारम्भमूलैश्च ज्वर एको निरुच्यते।**
**लिङ्गैरेतैर्ज्वरश्वासहिक्काद्याः सन्ति चामयाः ॥ २९ ॥**

लिङ्गस्यापि हेतोरिव चातुर्विध्यमाह—लिङ्गमित्यादि। तथैवैकस्य लक्ष्यत इति एकं लिङ्गमिति संबन्धः। विषमारम्भमूलानामिति विषमारम्भप्रथमानां; विषमारम्भविसर्गित्वसूक्ष्मणो वैषम्यमित्याद्युक्तज्वरलिङ्गानामित्यर्थः। ज्वरं ह्येकं (संतापात्मकं) दृष्ट्वा विषमारम्भविसर्गित्वादयोऽस्य भूता भविष्यन्ति वर्तन्त इति वा लिङ्ग्यते। ज्वर एको निरुच्यत इति ज्ञायत इत्यर्थः। लिङ्गैरेतैरित्यादि। एतैर्विषमारम्भविसर्गित्वाद्यैर्ज्वरादयः सन्ति 'युक्ता' इति शेषः। विषमारम्भादयो हि वातज्वरे तथा वातश्वासे वातहिक्कायां वा यथासंभवं दृश्यन्त एव ॥२७-२९॥

**एका शान्तिरनेकस्य तथैवैकस्य लक्ष्यते।**
**व्याधेरेकस्य चानेका बहूनां बह्व्य एव च ॥ ३० ॥**
**शान्तिरामाशयोत्थानां व्याधीनां लङ्घनक्रिया।**
**ज्वरस्यैकस्य चाप्येका शान्तिर्लङ्घनमुच्यते ॥ ३१ ॥**
**तथा लघ्वशनाद्याश्च ज्वरस्यैकस्य शान्तयः।**
**एताश्चैव ज्वरश्वासहिक्कादीनां प्रशान्तयः ॥ ३२ ॥**

एतच्चातुर्विध्यं चिकित्सायामपि ब्रूते—एकेत्यादि ॥ ३०-३२ ॥

---

१ 'तथैवैकार्थकारिणः' इति पा०। २ 'हेतुत्वं' इति पा०। ३ 'हेत्वर्थंकरो भवतीत्युदाहार्यम्' इति पा०। ४ 'कुतः पुनरेते भवन्ति' इति पा०।

१ 'रूक्षोष्णातिसरणादिभिः' इति पा०। २ 'तथैकस्यैकमुच्यते' इति पा०। ३ 'बह्वस्तथा' इति पा०। ४ 'संतापात्मकं इति हस्तलिखितपुस्तके नोपलभ्यते। ५ 'तथैकैकस्य' इति पा०।

सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ।
साध्यते कृच्छ्रसाध्यस्तु यत्नेन महता चिरात् ॥ ३३ ॥
याति नाशेषतां व्याधिरसाध्यो याप्यसंज्ञितः ।
परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयोऽतिवर्तते ३४
नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्
पादापचाराद्दैवाद्वा यान्ति भावान्तरं गदाः ॥ ३५ ॥

चिकित्साभिधानप्रसङ्गेन चिकित्साप्रवृत्तिविषयं साध्यभेदं तथा चिकित्सानिवृत्तिविषयं चासाध्यभेदमाह—सुखेत्यादि ।—सुखोपाय इति सुखलभ्यवैद्याद्युपायः; किंवा, सुखोपायः सन् साध्यते अल्पेनैव यत्नेन साध्यत इत्यर्थः । याति नाशेषतामिति न सर्वथा निवर्तते । परोऽसाध्य इति याप्यापेक्षया उत्कृष्टोऽसाध्यः । अस्यैव विवरणं—प्रत्याख्येय इति । क्रियाः चिकित्साः । भावान्तरमिति सुखसाध्यः कृच्छ्रसाध्यो भवति, कृच्छ्रश्च याप्यः, याप्यश्च प्रत्याख्येय इति ॥ ३३–३५ ॥

वृद्धिस्थानक्षयावस्थां रोगाणामुपलक्षयेत् ।
सुसूक्ष्मामपि च प्राज्ञो देहाग्निबलचेतसाम् ॥ ३६ ॥
व्याध्यवस्थाविशेषान् हि ज्ञात्वा ज्ञात्वा विचक्षणः ।
तस्यां तस्यामवस्थायां चतुःश्रेयः प्रपद्यते ॥ ३७ ॥

व्याधेः सुखसाध्यत्वाभिधानप्रसंगेन वृद्ध्याद्यवस्थान्तरमाह—वृद्धीत्यादि । न केवलं रोगाणां किंतु देहाग्निबलचेतसामपि वृद्धिस्थानक्षयावस्थामुपलक्षयेदिति योजना । एतद्व्याध्यवस्थाज्ञानप्रयोजनमाह—व्याध्यवस्थेत्यादि । चतुःश्रेय इति चतुःश्रेयःकारकं चिकित्सितं, प्रपद्यते बुध्यत इत्यर्थः ॥ ३६ ॥ ३७ ॥

प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ।
तेषु न त्वरया कुर्याद्देहाग्निबलवित् क्रियाम् ॥ ३८ ॥
प्रयोगैः क्षपयेद्वा तान् सुखं वा कोष्ठमानयेत् ।
ज्ञात्वा कोष्ठप्रपन्नांस्तान् यथासन्नं हरेद्बुधः ॥ ३९ ॥

व्याधिप्रकारानभिधाय चिकित्सोपयुक्तान् दोषप्रकारानाह—प्राय इत्यादि । तिर्यग्गताश्च दोषा उन्मार्गगतत्वेन न सम्यक् शीघ्रं वा भेषजेन योजयितुं पार्यन्ते, तेन चिरं क्लेशयन्तीति युक्तम् । देहाग्निबलविदित्यनेन तिर्यग्गतदोषे त्वरया भूरि भेषजप्रयोगेण क्रियमाणा चिकित्सा देहमग्निबलं च हन्तीति सूचयति । प्रयोगैरिति अल्पमात्रदीर्घकालप्रयोगैः । सुखं वेति सुखं यथा भवति तथा आसन्नं हरेदित्यर्थः; यच्छोधनं वमनादि यत्रामाशयादिगते दोषे आसन्नं हरणयोग्यतया भवति, तेन हरेदित्यर्थः ॥ ३८ ॥ ३९ ॥

१ 'सुखोपलभ्यवैद्याद्युपायः' इति पा० । २ 'दोषाणां' इति पा० । ३ 'तत्तच्छ्रेयः' इति पा० । ४ योगीन्द्रनाथसेनस्तु 'तेषु तु त्वरया कुर्याद्देहाग्निबलवत्क्रियाम्' इति पठति, 'तेषामातुराणां देहाग्निबलवत्क्रियां देहाग्न्योर्बलकरीं क्रियां त्वरया आशु कुर्यात्' इति च व्याख्यानयति । ५ 'यथास्वं तं' इति पा० ।

ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे ।
व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः ॥ ४० ॥

संप्रति निदाने लिङ्गत्वेनोक्तानां व्याधीनां पृथग्व्याधित्वमपि भवतीत्याह—ज्ञानार्थमित्यादि । संग्रह इति व्याधिनिदानादिसंग्रहे । ये निदानस्थाने ज्ञानार्थं प्रधानभूतज्वरादिज्ञानार्थं व्याधयः सन्ति, तेऽविपाकारुच्यादयः स्वातन्त्र्येणोत्पद्यमाना व्याधय एव व्याधित्वेनैव व्यपदेष्टव्या इत्यर्थः । तदात्वे तु लिङ्गानीति यदा ज्वरादिपरतन्त्रा जायन्तेऽरुच्यादयः, तदा पारतन्त्र्याल्लिङ्गान्येव ते, नामयाः; आमयो हि स्वतन्त्रः स्वचिकित्साप्रशमनीयो भवतीत्यायुर्वेदस्थितिः, ज्वरलिङ्गरूपास्त्वरुच्यादयो ज्वरचिकित्साप्रशमनीया एवेति भावः ॥ ४० ॥

विकारः प्रकृतिश्चैव द्वयं सर्वं समासतः ।
तद्धेतुवशगं हेतोरभावान्नानुवर्तते ॥ ४१ ॥

संप्रति निदानाधिकृतस्य हेतोर्विभवमाह—विकार इत्यादि । विकारः वैषम्यम् । प्रकृतिः साम्यम् । सर्वमिति अनेन शारीरं तथाऽऽध्यात्मिकं चोपसंगृह्णाति । हेतुवशगमिति हेत्वधीनोत्पादम् । एतेन, आरोग्यरूपप्रकृत्यर्थिना साम्यहेतुः सेवनीयः, तथा विकाररूपरोगपरिहारार्थिना च विकारहेतुर्वर्जनीयः । न च वाच्यं—यद्—दध्यादिशोथजननहेतोरुपरमेऽपि तज्जनितशोथानुवृत्तिदर्शनान्मृषैतद्वचनं—'हेतोरभावान्नानुवर्तते' इति, यत उपरतेऽपि दध्यादौ दध्यादिजनितो दोषसन्तानः शोथादिजनकस्तत्रानुवर्तत एव ॥ ४१ ॥

तत्र श्लोकाः—

हेतवः पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिः पूर्वमुत्पत्तिः सूत्रमात्रं चिकित्सितात् ४२
ज्वरादीनां विकाराणामष्टानां साध्यता न च ।
पृथगेकैकशश्चोक्ता हेतुलिङ्गोपशान्तयः ॥ ४३ ॥
हेतुपर्यायनामानि व्याधीनां लक्षणस्य च ।
निदानस्थानमेतावत् संग्रहेणोपदिश्यते ॥ ४४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने अपस्मारनिदानं नामाष्टमोऽध्यायः ।

निदानस्थानं समाप्तम् ।

संग्रहे 'सूत्रमात्रं चिकित्सितात्' इत्यन्तेनापस्माराध्यायार्थसंग्रह उक्त इति बोद्धव्यम् । 'ज्वरादीनां' इत्यादिग्रन्थेन तु निदानस्थानोक्तार्थसंग्रहं करोति । यद्यपि ज्वरस्य ज्वरनिदानेऽसाध्यता नोक्ता, तथाऽपि 'अष्टानां' इतिपदं 'छत्रिणो गच्छन्ति' इति न्यायेन बोद्धव्यम् । किंवा, अष्टानां हेतुलिङ्गोपशान्तय इति योजनीयम्; असाध्यता यथायोग्यतयैव बोद्धव्या । पृथक्त्वेन चैकैकशश्चेति पृथगेकैकशः । तेन, पृथक्त्वेन सर्वसा-

धारणहेत्वादयो निदानस्थानादावुक्ताः, तथैकैकशश्च ज्वरादीनां हेतुलिङ्गोपशान्तयः स्वे स्वे अध्याये उक्ताः । अत्र च लिङ्गग्रहणेन पूर्वलिङ्गग्रहणम्, उपशान्तिग्रहणेन चोपशयग्रहणं, संप्राप्तेस्तु प्रतिरोगमभिधानादग्रहणं व्याख्येयम् । हेतुपर्यायनामानीति 'हेतुर्निमित्तं' ( नि. अ. १ ) इत्यादिना, व्याधिपर्यायनामानीति तथा लक्षणपर्यायनामानीति चाद्याध्यायोक्तान्येव ज्ञेयानि; संप्राप्तेस्तु 'संप्राप्तिर्जातिरागतिः' ( नि. अ. १ ) इति नामकथनं लक्षणप्रयोजकमेव प्रायः, तेनेह न संगृहीतम् । किंवा हेतव इत्यादिस्थानसंग्रह एव, अपस्माराध्यायार्थसंग्रहस्तु स्थानसंग्रहेणैवाव्यवहितेन कृतत्वान्न पुनः पृथक्कृतः । तत्र हेतव इत्यादि सर्वरोगहेत्वादिसंग्रहणम् । अस्मिन् पक्षे पृथक्त्वेनेति ज्वरादीनामित्यनेन संबध्यते, एकैकशश्चेति हेतुलिङ्गोपशयशान्तिभिः संबध्यते । संग्रहेणेति वचनाच्चिकित्सितप्रपञ्चनीयं निदानं सूचयति । केचिदत्र निदीयते निबध्यते हेत्वादिपञ्चकमनेनेति निदानमिति निदानशब्दव्युत्पत्तिं कुर्वन्ति, निदानशब्देन च गवां दोहनकालनिबन्धनरज्जुरुच्यते इति ब्रुवते । ज्वरनिदाने च निदानशब्दो व्याकृत एव ॥ ४२-४४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां निदानस्थानेऽपस्मारनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥

**निदानस्थानव्याख्या समाप्ता ।**

## प्रथमोऽध्यायः ।

**अथातो रसविमानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

निदाने ज्ञातहेत्वादिपञ्चकस्य चिकित्सोपयोगितया दोषभेषजादिविशेषज्ञानमपेक्षितं भवति, अतो वक्ष्यमाणदोषभेषजादिविशेषज्ञापकं विमानस्थानं ब्रूते । तत्रापि च दोषभेषजयोः प्राधान्यात्तद्विशेषज्ञापकं रसविमानं प्रथमं ब्रूते । इमं च स्थानसंबन्धं स्वयमेव दर्शयिष्यति । विशेषेण मीयते ज्ञायते दोषभेषजाद्यनेनेति विमानं, दोषभेषजादीनां प्रभावादिविशेष इत्यर्थः; एवंभूतं विमानमभिधेयतया यत्र तिष्ठति तद्विमानस्थानम् । रसविमानमधिकृत्य कृतोऽध्यायो रसविमानम् ॥ १ ॥ २ ॥

**इह खलु व्याधीनां निमित्तपूर्वरूपरूपोपशयसंख्याप्राधान्यविधिविकल्पबलकालविशेषाननुप्रविश्यानन्तरं दोषभेषजदेशकालबलशरीरसाराहारसात्म्यसत्त्वप्रकृतिवयसां मानमवहितमनसा यथावज्ज्ञेयं भवति भिषजा, दोषादिमानज्ञानायत्तत्वात् क्रियायाः । न ह्यमानज्ञो दोषादीनां भिषग् व्याधिनिग्रहसमर्थो भवति । तस्माद्दोषादिमानज्ञानार्थं विमानस्थानमुपदेक्ष्यामोऽग्निवेश ! ॥ ३ ॥**

इह खल्वित्यादिना स्थानसंबन्धमाह । इह संप्राप्तिभेदसंख्याप्राधान्यादिग्रहणेनैव संप्राप्तिमुपदिशन् संख्यादिभेदेन सर्वैव संप्राप्तिः कथिता भवतीति दर्शयति । निमित्तादीनां तु न तादृशो भेदोऽल्पग्रन्थवक्तव्योऽस्ति, येन भेदेन तेऽपीह कथ्येरन्, अतस्ते सामान्येनैवोक्ताः । अनुप्रविश्येति बुद्ध्वा । दोषादयः सूत्रस्थान एव प्रपञ्चिताः । मानमिति प्रभावादिविशेषः । एतज्ज्ञाने हेतुमाह—दोषादीत्यादि । क्रियाया इति चिकित्सायाः ॥ ३ ॥

**तत्रादौ रसद्रव्यदोषविकारप्रभावान् वक्ष्यामः । रसास्तावत् षट्—मधुराम्ललवणकटुतिक्तकषायाः । ते सम्यगुपयुज्यमानाः शरीरं यापयन्ति, मिथ्योपयुज्यमानास्तु खलु दोषप्रकोपायोपकल्पन्ते ॥ ४ ॥**

अध्यायार्थं वक्तुं प्रतिजानीते—तत्रादावित्यादि । यद्यपि च दोषभेषजेत्यादौ दोषापेक्षत्वाद्भेषजस्य दोष आदौ कृतः, तथाऽपीह रसद्रव्यरूपभेषजस्यापेक्षितरोगप्रशमकर्तृत्वेन तथा दोषस्यापि च रसद्रव्ययोरेव कारणत्वेन भेषजशब्दसूचिते रसद्रव्ये एवाग्रे कृते, पश्चात्तु दोषग्रहणगृहीतौ दोषविकारौ । प्रकृष्टो भावः प्रभावः शक्तिरित्यर्थः; स चेहाचिन्त्यश्चिन्त्यश्च ग्राह्यः । येन, 'तत्र खल्वनेकरसेषु' इत्यादिना द्रव्यविकारयोः प्रभावं रसद्वारा दोषद्वारा च चिन्त्यमपि वक्ष्यति । यापयन्तीति साम्येनावस्थापयन्ति । मिथ्याशब्द इहायोगातियोगमिथ्यायोगेषु वर्तते ॥ ४ ॥

**दोषाः पुनस्त्रयो वातपित्तश्लेष्माणः । ते प्रकृतिभूताः शरीरोपकारका भवन्ति, विकृतिमापन्नास्तु खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति ॥ ५ ॥**

दोषा इति शारीरदोषाः । पुनःशब्दो मानसदोषं व्यावर्तयति ॥ ५ ॥

**तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति, त्रयस्त्रयश्चोपशमयन्ति । तद्यथा—कटुतिक्तकषाया वातं जनयन्ति, मधुराम्ललवणास्त्वेनं शमयन्ति; कट्वम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनच्छमयन्ति; मधुराम्ललवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनं शमयन्ति ॥ ६ ॥**

रसानामसंसृष्टानां कर्माह—तत्रेत्यादि । अनेन च रसकर्मोपदेशेन दोषाणामपि तत्तद्रसोत्पाद्यत्वं तथा तत्तद्रसोपशमनीयत्वमुक्तं भवति । कटुतिक्तकषाया वातं जनयन्तीति असति परिपन्थिनीति ज्ञेयं, तेनार्कागुरुगुडूच्यादीनां तिक्तानामपि वाताजनकत्वे न दोषः । तत्र ह्युष्णवीर्यता परिपन्थिनी विद्यते, तेन न ते वातं जनयन्तीत्याद्यनुसरणीयम् । एनमिति पदेन यथैव कट्वादिजो वायुस्तमेव मधुरादयः सर्वात्मवैपरीत्याद्विशेषेण शमयन्तीति दर्शयति; जागरणादिजे हि वायौ जागरणादिविपरीताः स्वप्नादय एव विशेषेण पथ्याः । एवं पित्तश्लेष्मणोरपि एनदेनंशब्दयोस्तात्पर्यं दर्शयति ॥ ६ ॥

**रसदोषसन्निपाते तु ये रसा यैर्दोषैः समानगुणाः समानगुणभूयिष्ठा वा भवन्ति ते तानभिवर्धयन्ति, विपरीतगुणा विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमाना इति । एतद्व्यवस्थाहेतोः षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानां, त्रित्वं च दोषाणाम् ॥ ७ ॥**

अथ कया युक्त्या रसा दोषाञ्जनयन्ति शमयन्ति चेत्याह—रसदोषेत्यादि । सन्निपाते इति अन्तःशरीरमेलके । तुशब्दो

---

१ 'अभिनिविश्य' इति पा० । २ 'रसद्रव्यदोषविकारभेषजदेशकालबलशरीरसाराहारसात्म्यसत्त्वप्रकृतिवयसाम्' इति गङ्गाधरसंमतः पाठः. ३ 'रसादिमानज्ञानायत्तत्वात्' इति पा० । ४ 'रसादीनां' इति पा० । ५ 'रसादिमानज्ञानार्थं' इति पा० । ६ 'कल्पिता' इति पा० । ७ 'बुद्धा' इति पा० ।

१ 'शरीरयोगक्षेमकराः' इति पा० । २ 'यत्र च' इति पा० ।

विशेषे, तेन विपरीतगुणा एव विशेषेण विपरीतगुणभूयिष्ठापेक्षया शमयन्तीति दर्शयति। रसानां तु यथा उपचाराद्गुणी भवन्ति तदभिहितं "गुणागुणाश्रया नोक्ताः (सू. अ. २६)" इत्यादिना सूत्रे। अभ्यस्यमाना इति न सकृदुपयुज्यमानाः। अथ कस्माद्रसदोषसंसर्गभूयस्त्वं परित्यज्य रसषट्त्वं दोषत्रित्वं चोच्यते? इत्याह—इत्येतदित्यादि। व्यवस्येति रसदोषसंसर्गप्रपञ्चसंक्षेपः। परस्परेणासंसृष्टानामिति पदं दोषाणामित्यनेनापि योज्यम् ॥ ७ ॥

**संसर्गविकल्पविस्तरो ह्येषामपरिसंख्येयो भवति, विकल्पभेदापरिसंख्येयत्वात् ॥ ८ ॥**

रसदोषसंसर्गप्रपञ्चानभिधाने हेतुमाह—संसर्गेत्यादि। यस्मात् संसर्गभेदविस्तरोऽपरिसंख्येयस्तस्मात् षट्त्वं त्रित्वं चोच्यते। विकल्पभेदापरिसंख्येयत्वादिति संसर्गविकल्पस्य भेदो विजातीयप्रकारः, तस्यापरिसंख्येयत्वात्। एतेन, यथा रसानामवान्तरव्यक्तिभेदेऽपि मधुरत्वादिसामान्ययोगान्मधुरादिव्यपदेशेन षट्त्वमुच्यते; तथा मधुराम्लमधुरलवणादिसंसर्गाणामपि सत्यप्यवान्तरभेदे सामान्येनोपसंग्रहं कृत्वा त्रिषष्टित्वसंख्यानियमो भविष्यतीति निरस्यते, यतो मधुराम्लादिसंसर्गेऽपि विजातीयो मधुरतरमधुरतमादिभेदकृतो भेदोऽपरिसंख्येयो भवति। वचनं हि—"रसास्तरतमाभ्यां तां संख्यामतिपतन्ति हि" (सू. अ. २६) इति ॥ ८ ॥

**तत्र खल्वनेकरसेषु द्रव्येष्वनेकदोषात्मकेषु च विकारेषु रसदोषप्रभावमेकैकश्येनाभिसमीक्ष्य ततो द्रव्यविकारयोः प्रभावतत्त्वं व्यवस्येत् ॥ ९ ॥**

अथ कथं तर्हि संसृष्टानां रसानां दोषाणां च प्रभावो ज्ञेय इत्याह—तत्र खल्वित्यादि। तत्र चानेकरसद्रव्यस्यानेकदोषविकारस्य च प्रत्येकरसदोषप्रभावमेलकेन प्रभावं कथयन् रससंसर्गदोषसंसर्गयोरपि तादृशमेव प्रभावं कथयति, यतो रसदोषसंसर्गप्रभावावत्र द्रव्यविकाराश्रयित्वाद्रसदोषयोर्द्रव्यविकारप्रभावत्वेनोच्येते। अनेन न्यायेन साक्षादनुक्तोऽपि एकरसद्रव्यैकदोषविकारयोरपि प्रभावोऽसंसृष्टरसदोषप्रभावकथनादुक्त एव ज्ञेयः। एकैकश्येनाभिसमीक्ष्येति प्रत्येकमुक्तरसादिप्रभावेणानेकरसं द्रव्यमनेकदोषं च विकारं समुदितप्रभावमभिसमीक्ष्य ॥ ९ ॥

**न त्वेवं खलु सर्वत्र। न हि विकृतिविषमसमवेतानां नानात्मकानां परस्परेण चोपहतानामन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेनैव समुदायप्रभावतत्त्वमध्यवसातुं शक्यम् ॥ १० ॥**

अयं च रसदोषप्रभावद्वारा द्रव्यविकारप्रभावनिश्चयो न सर्वत्र द्रव्ये विकारे चेत्याह—न त्वेवं खलु सर्वत्रेति। अत्रैव हेतुमाह—नहीत्यादिनाऽध्यवसातुं शक्यमित्यन्तेन। विकृतिविषमसमवेतानामिति विकृतिसमवेतानां तथा विषमसमवेतानां चेति विकृतिविषमसमवेतानाम्। समवेतानामिति मिलितानां रसानां दोषाणां च। तत्र रसस्य विकृतिसमवायो यथा—मधुरे तण्डुलीयके; मधुरो हि प्रकृत्या स्नेहवृष्यत्वादिकरः, तण्डुलीयके तु विकृतिसमवेतत्वेन तन्न करोति। विषमसमवेतास्तु तिले कषायकटुतिक्तमधुराः; यदि हीमे रसाः समया मात्रया समवेताः स्युस्ततस्तिलोऽपि पित्तश्लेष्महरस्त्रिदोषहरो वा स्यात्, पित्तकफकरस्त्वयं; तेनात्र रसानां क्वचित् कर्तृत्वमकर्तृत्वं च क्वचिदिति वैषम्यमुच्यते। नानात्मकानामित्यादिहेतुत्रयं तु विकृतिसमवायविषमसमवाययोरेवोपलम्भकम्। तेन, नानात्मकत्वादित्यादिभिर्विकृतिसमवायविषमसमवायौ भवतः। नानात्मकानामिति नानारूपहेतुजनितानां; तेन हेतुभेदबलादेव रसदोषयोर्विकृतो विषमो वा मेलको भवतीत्यर्थः। किंवा, नानात्मकानामिति नानाप्रमाणानाम्। एवं च नानाप्रमाणत्वं विषमसमवाये हेतुः। परस्परेण चोपहतानामिति अन्योन्यमुपघातितगुणानाम्। परस्परगुणोपघातस्तु यद्यपि दोषाणां प्रायो नास्त्येव, तथाऽप्यदृष्टवशात् क्वचिद्भवतीति ज्ञेयं; रसानां तु प्रबलेनान्योपघातो भवत्येव। अन्यैश्च विकल्पनैरिति अन्यैश्च भेदकैः, तत्र रसस्य भेदकाः स्वरसकल्कादयः; एकस्यैव हि द्रव्यस्य कल्पनाविशेषेण गुणान्तराणि भवन्ति। दोषस्य तु दूष्यान्तराण्येव गुणान्तरयोगाद्भेदकानि भवन्ति। यदुक्तं—"स एव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून्" (सू. अ. १८) इति। अस्मिन् व्याख्याने रसानां दोषाणां च य उत्कर्षापकर्षकृतो विषमसमवायः पृथगुच्यते, स न युज्यते; यतो विषमसमवायेऽप्युत्कृष्टस्य रसस्य तथा दोषस्य चोत्कृष्टा गुणा अपकृष्टस्य चापकृष्टा गुणा भवन्तीति कृत्वाऽवयवप्रभावानुमानेनैव समुदायप्रभावानुमानं शक्यम्। अथोच्येत—विषममेलके रसस्य दोषस्य च न त एव गुणा उत्कृष्टा अपकृष्टा वा भवन्ति किंतु गुणान्तरमेव भवति, हन्त तर्हि विकृत एवायं समवायो विसदृशकार्यकारणत्वात्। तदेवं दूषणदर्शनादन्यथा व्याख्यायते—यत्—द्विविधो मेलको भवति रसानां दोषाणां च प्रकृत्यनुगुणः, प्रकृत्यननुगुणश्च; तत्र यो मिलितानां प्राकृतगुणानुपमर्देन मेलको भवती, स प्रकृतिसमसमवायशब्देनोच्यते; यस्तु प्राकृतगुणोपमर्देन भवति, स विकृतिविषमसमवायोऽभिधीयते; विकृत्या हेतुभूतया विषमः प्रकृत्यननुगुणः समवायो विकृतिविषमसमवाय इत्यर्थः। अत्रैव विकृतिविषमसमवाये नानात्मकत्वादिहेतुत्रयं यथाविवृतमेव योजनीयम्। ये तु विकृतिविषमसमवायौ पृथगेव कुर्वन्ति, विषमसमवायस्य वैषम्यतारतम्येनातिबहुप्रपञ्चितत्वाद् विषमावयवगुणानुमानं

१ 'यथोपचाराद्गुणा भवन्ति, ये च भवन्ति' इति पा०। २ 'रसदोषप्रपञ्चसंक्षेपः' इति पा०। ३ 'तत्र त्वनेकरसेषु' इति पा०। ४ 'द्रव्यविकारप्रभावाश्रयित्वात्' इति पा०। ५ 'चोपहतप्रकृतिकानां' इति पा०।

१ 'उपपादकं' इति पा०। २ 'नानार्थकानामिति नानाहेतुरूपजनितानां' इति पा०। ३ 'स्थानान्तराण्येव' इति पा०।

दुःशकमिति कृत्वा, तदपि द्रव्यविकारप्रभावेणैव व्यपदिशन्ति ॥ १० ॥

**तथायुक्ते हि समुदये समुदायप्रभावतत्त्वमेवमेवोपलभ्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत् ॥११॥**

अथ कथं तर्हि विकृतिविषमसमवायप्रभावज्ञानमित्याह—तथायुक्ते हीत्यादि। तथायुक्ते समुदय इति विकृतिविषमसमवाये। समुदयप्रभावतत्त्वमिति मेलकप्रभावतत्त्वम्। समघृते हि मधुसर्पिषि सूर्यावर्ताख्ये वा दोषसमुदये न संयुज्यमानमधुघृतगुणक्रमागतं मारकत्वं, न च वातादिदोषप्रभावगतं सूर्यवृद्ध्या वर्धिष्णुत्वं सूर्यावर्तस्य, किं तु संयोगमहिमकृतमेवेत्यर्थः। यच्च गैतिद्वयं दोषरसमेलकस्य, तेन प्रकृतिसमसमवायरूपं सन्निपातं ज्वरनिदाने दोषलिङ्गमेलकेनैवोक्तवान्। यदुक्तं—"पृथगुक्तलक्षणसंसर्गाद्वान्द्विकमन्यतमं सान्निपातिकं वा ज्वरं विद्यात्" (नि. अ. १) इति। यस्तु विकृतिविषमसमवेतस्त्रिदोषकृतो ज्वरस्तस्य चिकित्सिते—"क्षणे दाहः क्षणे शीतं" (चि. अ. ३) इत्यादिना लक्षणमुक्तम्। न हि श्यावरक्तकोठोत्पत्त्यादि तत्रोक्तं वातादिज्वरे क्वचिदस्ति। एवं रसेऽपि यत्राम्राते मधुरत्वं प्रकृतिसमसमवेतं, तत्राम्रातं मधुरमेतन्मात्रमेवोक्तं; तेन, मधुरसामान्यगुणागतं तस्य वातपित्तहरत्वमपि लभ्यत एव। यत्र वार्ताके कटुतिक्तत्वेन वातकरत्वं प्राप्तमपि च विकृतिविषमसमवायात्तन्न भवति, तत्राचार्येण "वार्ताकं वातघ्नं" (सू. अ. २७) इत्युक्तमेव। एवमित्यादि तत्तदुदाहरणं शास्त्रप्रसृतमनुसरणीयम्। यत्तु प्रकृतिसमसमवायकृतैरसदोषगुणद्वारा प्राप्तमपि द्रव्यगुणं विकारलक्षणं च ब्रूते, तत् प्रकर्षार्थं स्पष्टार्थं चेति ज्ञेयम् ॥ ११ ॥

**तस्माद्रसप्रभावतश्च द्रव्यप्रभावतश्च दोषप्रभावतश्च विकारप्रभावतश्च तत्त्वमुपदेक्ष्यामः ॥ १२ ॥**

उपसंहरति—तस्मादित्यादि। तत्त्वमिति रसादिप्रभावतत्त्वम्। यत्तु पूर्वं "तत्रादौ रसद्रव्यदोषविकारप्रभावानुपदेक्ष्यामः" इत्यनेन रसादिप्रभावव्याख्यानप्रतिज्ञानं कृतं, तत्तु रसप्रभावानुमानेनैव द्रव्यप्रभावकथनात्, तथा दोषप्रभावेण च विकारप्रभावकथनाच्चरितार्थं स्यात्। इह तु विकृतिविषमसमवायात्मके द्रव्ये विकारे वा रसदोषप्रभावानुमानेन न द्रव्यविकारप्रभावानुमानमस्तीति कृत्वा पृथक् पृथग्रसादिप्रभावतत्त्वाभिधानप्रतिज्ञानमिति न पौनरुक्त्यम्। इह द्रव्याणां वीर्यप्रभाव-विपाकप्रभावौ च द्रव्यप्रभावे रसप्रभावे वाऽन्तर्भावनीयौ। तत्र यौ रसानुगुणौ वीर्यविपाकप्रभावौ, तौ रसे; यौ तु रसक्रमोक्तवीर्यविपाकविपरीतौ वीर्यविपाकौ, तौ द्रव्यप्रभावे बोद्धव्यौ। उपदेक्ष्याम इति निखिलेन तन्त्रेण रसादिप्रभावतत्त्वं पृथगुपदेक्ष्याम इत्यर्थः; रसादिप्रभावः प्रपञ्चेन निखिले तन्त्र एव वक्तव्यः ॥ १२ ॥

१ 'यतश्च द्वयी गतिः' इति पा०। २ 'कृत' इति हस्तलिखितपुस्तके न पठ्यते।



**तत्रैव रसप्रभाव उपदिष्टो भवति। द्रव्यप्रभावं पुनरुपदेक्ष्यामः। तैलसर्पिर्मधूनि वातपित्तश्लेष्मप्रशमनार्थानि द्रव्याणि भवन्ति ॥ १३ ॥**

संक्षेपाभिधानमेतदेवेति दर्शयन्नाह—तत्रैव इत्यादि। एव इति 'रसाः षड्' इत्यादिना 'तत्त्वमुपदेक्ष्यामः' इत्यन्तेन ग्रन्थेनोक्त इत्यर्थः। उपदिष्टो भवतीति संक्षेपेण कथितो भवति। अन्ये तु 'तत्रैव रसप्रभाव उद्दिष्टो भवति' इति पठन्ति। अस्मिन् पक्षे द्रव्यदोषविकारप्रभावोऽपि योऽत्र उद्दिष्टः सोऽपि रसद्वारा, तेन रसस्यैव प्रपञ्चाभिहितत्वात्तस्यैवाभिधानमुपसंहरति न द्रव्यादीनामिति ज्ञेयम्। द्रव्यप्रभावमित्यादौ पुनरिति सामान्येन द्रव्यप्रभावकथनात् पुनः श्लक्ष्णाह्निकया तैलादिद्रव्यप्रभावं कथयिष्याम इत्यर्थः। प्रशमनार्थानीति प्रशमनप्रयोजनानि ॥ १३ ॥

**तत्र तैलं स्नेहौष्ण्यगौरवोपपन्नत्वाद्वातं जयति सततमभ्यस्यमानं; वातो हि रौक्ष्यशैत्यलाघवोपपन्नो विरुद्धगुणो भवति, विरुद्धगुणसन्निपाते हि भूयसाऽल्पमवजीयते, तस्मात्तैलं वातं जयति सततमभ्यस्यमानम्। सर्पिः खल्वेवमेव पित्तं जयति, माधुर्याच्छैत्यान्मन्दत्वाच्च; पित्तं ह्यमधुरमुष्णं तीक्ष्णं च। मधु च श्लेष्माणं जयति, रौक्ष्यात्तैक्ष्ण्यात् कषायत्वाच्च; श्लेष्मा हि स्निग्धो मन्दो मधुरश्च। यच्चान्यदपि किञ्चिद्द्रव्यमेवं वातपित्तकफेभ्यो गुणतो विपरीतं स्यात्तच्चैताञ्जयत्यभ्यस्यमानम् ॥ १४ ॥**

सततमभ्यस्यमानमिति अविच्छेदेनोपयुज्यमानम्। विरुद्धगुण इति तैलगुणेभ्यो विपरीतगुणः। विरुद्धगुणसन्निपाते इति विरुद्धगुणयोर्मेलके। ननु विरुद्धगुणयोर्मध्ये भूयसाऽल्पं जीयते, तत् कथं तैलं वातं जयति? न ह्यस्य वातं प्रति भूयस्त्वं युक्तमित्याह—सततमभ्यस्यमानमिति। सततोपयोगेन हि तैलं वाताद्धिकं भवति, तेन वातं जयतीत्यर्थः। सर्पिः खल्वेवमेवेति सर्पिरपि सततमभ्यस्यमानमित्यर्थः। अमधुरमिति रौक्ष्यलाघवानुष्णत्वादिना मधुरविपरीतं कटुरसमित्यर्थः। इह च प्रभावशब्देन सामान्येन द्रव्यशक्तिरुच्यते, नाचिन्त्यशक्तिः; तेन तैलादीनां स्नेहौष्ण्यादिगुणादपि वातादिशमनं द्रव्यप्रभावादेव भवति। सर्पिषि च यद्यपि मधुरो रसः पित्तप्रशमे व्याप्रियते, तथाऽपि माधुर्यशैत्यमन्दत्वैः पित्तशमनं सर्पिःकार्यमेव, तेन द्रव्यप्रभाव एव वाच्यः। यदा तु रसद्वारा कार्यं द्रव्यस्य चिन्त्यते, तदा रसप्रभाव इति व्यपदेशो भवति। एवं कषायानुरसे मधुनि च समाधानं वाच्यम्। अन्ये तु ब्रुवते—यत्—तैलादीनां वातादिशमनत्वं प्रत्यचिन्त्य एव प्रभावोऽयमुच्यते; तत्र च तैलवात-

१ 'वातपित्तश्लेष्मप्रशमनानि' इति पा०। २ 'शमयति' इति पा०। ३ 'मन्दवीर्यत्वाच्च' इति पा०। ४ 'मधुरश्चेति विपरीतगुणः' इति पा०। ५ 'उच्यते' इति पा०।

योर्विरुद्धगुणयोर्मेलके तैलमेव वातं जयति, न तु वातस्तैलमिति तैलस्याचिन्त्यप्रभावः; एवं सर्पिर्मधुनोरपि पित्तश्लेष्महरणे प्रभावाज्ज्ञेये। एतच्चान्ये नेच्छन्ति, यतस्तैलादीनां सततमभ्यस्यमानमिति पदेनाधिक्यमेव वातादिजयकारणमुक्तं; तथा यच्चान्यदपि किंचिद्द्रव्यमित्यादिग्रन्थेन द्रव्याचिन्त्यप्रभावं परित्यज्य सामान्येन गुणवैपरीत्यमेवाभ्यासाद्वातादिजयहेतुरुच्यते ॥ १४ ॥

**अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्यः; तद्यथा—पिप्पली, क्षारः, लवणमिति ॥ १५ ॥**

अभ्यस्यद्रव्यं प्रभावोदाहरणार्थमभिधायानभ्यस्यानाह—अथेत्यादि। अधिकमन्येभ्य इति वचनादन्यदपि चित्रकभल्लातकाद्येवंजातीयं नात्युपयोक्तव्यं, पिप्पल्यादिद्रव्यं त्वन्येभ्योऽप्यधिकमत्युपयोगे वर्जनीयमिति दर्शयति ॥ १५ ॥

**पिप्पल्यो हि कटुकाः सत्यो मधुरविपाका गुर्व्यो नात्यर्थं स्निग्धोष्णाः प्रक्लेदिन्यो भेषजाभिमताश्च ताः सद्यः; शुभाशुभकारिण्यो भवन्ति;[१] आपातभद्राः, प्रयोगसमसाद्गुण्यात्; दोषसञ्चयानुबन्धाः;—सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वाच्छ्लेष्माणमुत्क्लेशयन्ति, औष्ण्यात् पित्तं, न च वातप्रशमनायोपकल्पन्तेऽल्पस्नेहोष्णभावात्; योगवाहिन्यस्तु खलु भवन्ति; तस्मात् पिप्पलीर्नात्युपयुञ्जीत ॥ १६ ॥**

'कटुकाः सत्यो मधुरविपाकाः' इत्यादि पिप्पलीगुणकथनमनभ्यासप्रयोगे दोषवैपरीत्येन दोषप्रशमनोपदर्शनार्थं; तथा, अत्यभ्यासे 'गुरुप्रक्लेदित्वाच्छ्लेष्माणमुत्क्लेशयन्ति' इत्यादिग्रन्थवक्तव्यदोषकरणयोग्यतोपदर्शनार्थं च। भेषजाभिमताश्च सद्य इति च्छेदः। सद्य इति अनभ्यासे। शुभाशुभकारिण्यो भवन्तीति सद्यः शुभकारिण्यः, अत्यभ्यासप्रयोगे त्वशुभकारिण्यः। एतदेव शुभाशुभकारित्वं दर्शयति—आपातभद्रा इत्यादिना। प्रयोगसमसाद्गुण्यादिति समस्य प्रयोगस्य सद्गुणत्वात्, समेऽल्पकाले अल्पमात्रे च पिप्पल्यादिप्रयोगे सद्गुणा भवन्तीत्यर्थः। दोषसंचयानुबन्धोऽत्युपयोगो यासां ता दोषसंचयानुबन्धाः। एतदेव दोषसंचयानुबन्धत्वं विवृणोति—सततमित्यादि। पिप्पलीधर्मकथनप्रस्तावाद्गुणान्तरमाह—योगवाहिन्यस्त्वित्यादि। योगवाहित्वेन कटुकानामपि पिप्पलीनां वृष्यप्रयोगेषु योगः, तथा ज्वरगुल्मकुष्ठहृदादिप्रयोगेषु ज्वरादीन् हन्ति पिप्पली। अयं च पिप्पल्यतियोगनिषेधोऽपवादं[२] परित्यज्य ज्ञेयः। तेन, पिप्पलीरसायनप्रयोगस्तथा गुल्मादिषु च पिप्पलीवर्धमानकप्रयोगो न विरोधमावहति। उक्ते हि विषये यथोक्तविधानेन निर्दोषा एव पिप्पल्य इति ऋषिवचनादुन्नीयते। अन्ये तु, अन्नसंस्करणे[३] पिप्पल्यादीनामतिप्रयोगो निषिध्यते, न तु स्वातन्त्र्येणेति ब्रुवते। सततमुपयुज्यमाना इति अतिमात्रत्वेन तथा सततप्रयोगेण चेति ज्ञेयम् ॥ १६ ॥

**क्षारः पुनरौष्ण्यतैक्ष्ण्यलाघवोपपन्नः क्लेदयत्यादौ पश्चाद्विशोषयति,[१] स पचनदहनभेदनार्थमुपयुज्यते; सोऽतिप्रयुज्यमानः केशाक्षिहृदयपुंस्त्वोपघातकरः संपद्यते। ये ह्येनं ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते त आन्ध्यषाण्ढ्यखालित्यपालित्यभाजो हृदयापकर्तिनश्च भवन्ति, तद्यथा—प्राच्याश्चीनाश्च; तस्मात् क्षारं नात्युपयुञ्जीत ॥ १७ ॥**

हृदयापकर्तिन इति हृदयपरिकर्तनरूपवेदनायुक्ताः ॥ १७ ॥

**लवणं पुनरौष्ण्यतैक्ष्ण्योपपन्नम्, अनतिगुरु, अनतिस्निग्धम्, उपक्लेदि, विस्रंसनसमर्थम्, अन्नद्रव्यरुचिकरम्, आपातभद्रं प्रयोगसमसाद्गुण्यात्, दोषसंचयानुबन्धं, तद्रोचनपाचनोपक्लेदनविस्रंसनार्थमुपयुज्यते। तदत्यर्थमुपयुज्यमानं ग्लानिशैथिल्यदौर्बल्याभिनिर्वृत्तिकरं शरीरस्य भवति। ये ह्येनद्ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते, ते भूयिष्ठं ग्लास्नवः शिथिलमांसशोणिता अपरिक्लेशसहाश्च भवन्ति। तद्यथा—वाह्लीकसौराष्ट्रिकसैन्धवसौवीरकाः; ते हि पयसाऽपि सह लवणमश्नन्ति। येऽपीह भूमेरत्यूषरा देशास्तेष्वोषधिवीरुद्वनस्पतिवानस्पत्या न जायन्तेऽल्पतेजसो वा भवन्ति, लवणोपहतत्वात्। तस्माल्लवणं नात्युपयुञ्जीत। ये ह्यतिलवणसात्म्याः पुरुषास्तेषामपि खालित्यपालित्यानि वलयश्चाकाले भवन्ति ॥ १८ ॥**

ग्लानिः मांसापचयो हर्षक्षयो वा। न केवलं लवणातियोगः शरीरोपघातकरः, किंतु भूमेरप्युपघातकर इत्याह—येऽपीहेत्यादि। ऊषरा इति लवणप्रधानाः। लवणं नात्युपयुञ्जीतेति नातिमात्रं लवणं सततमुपयुञ्जीत, अन्नद्रव्यसंस्कारकं तु स्तोकमात्रमभ्यासेनाप्युपयोजनीयमेव। वाह्लीकादिव्यतिरिक्तेऽपि देशे येऽतिलवणमश्नन्ति तेषामपि दोषानाह—ये हीत्यादि। एतेन चान्यत्रापि देशेऽतिमात्रलवणसात्म्यानां लवणात्युपयोगकृत एव शैथिल्यादिदोष उन्नीयते, न देशस्वभावकृतः ॥ १८ ॥

**तस्मात्तेषां तत्सात्म्यतः क्रमेणापगमनं श्रेयः। सात्म्यमपि हि क्रमेणोपनिवर्त्यमानमदोषमल्पदोषं वा भवति ॥ १९ ॥**

तेषामिति अतिक्षारलवणसात्म्यानाम्। तत्सात्म्यत इति अतिमात्रक्षारादतिमात्रलवणाच्च सात्म्यात्। क्रमेणेति नवेगान्धारणीयोक्तसात्म्यपरित्यागक्रमेण। इह च सात्म्यशब्देनौकसात्म्यमभिप्रेतम्। अल्पदोषमदोषं वेति पक्षद्वयेऽत्यर्थसात्म्यमल्पदोषं भवति, अन्यत्त्वदोषमिति व्यवस्था ॥ १९ ॥

---

१ 'ताः सद्यः शुभाशुभकारिण्यो भवन्ति' इति यो०। २ 'अपवादविशेषविधानं' इति पा०। ३ 'अन्नसंस्कारेण' इति पा०।

१ 'पश्चाद्विशोषयति, दहति, पचति, भिनत्ति संघातम्' इति पा०

**सात्म्यं नाम तद् यदात्मन्युपशेते; सात्म्यार्थो ह्युपशयार्थः। तत्रिविधं प्रवरावरमध्यविभागेन; सप्तविधं तु रसैकैकत्वेन सर्वरसोपयोगाच्च। तत्र सर्वरसं प्रवरम्, अवरमेकरसं, मध्यं तु प्रवरावरमध्यस्थम्। तत्रावरमध्याभ्यां सात्म्याभ्यां क्रमेणैव प्रवरमुपपादयेत् सात्म्यम्। सर्वरसमपि च सात्म्यमुपपन्नः प्रकृत्याद्युपयोक्त्रष्टमानि सर्वाण्याहारविधिविशेषायतनान्यभिसमीक्ष्य हितमेवानुरुध्येत २०**

सात्म्यं नामेति ओकसात्म्यं नामेत्यर्थः। (ओकादिति अभ्यासात्।) उपशयार्थ इति उपशयशब्दाभिधेय इत्यर्थः। तदिति ओकसात्म्यम्। त्रिविधमिति प्रवरावरमध्यभेदेन। सप्तविधं तु—एकैकरसेन षड्, संसृष्टरसोपयोगाच्चैकम्, एवं सप्तविधम्। संसृष्टशब्देन द्विरसादयः षड्रसपर्यन्ता गृह्यन्ते। प्रवरावरमध्यस्थमिति द्विरसादिपञ्चरसपर्यन्तम्। अवरमध्यमाभ्यां लक्षितः पुरुषः। प्रवरमिति सर्वरसम्। सात्म्यमुपपादयेत् अभ्यसेदित्यर्थः। क्रमेणेति यथोक्ताभ्यासक्रमेण। उपपादितसर्वरससात्म्येनापि चाहारः प्रशस्तप्रकृत्यादिसंपन्न एव कर्तव्य इत्याह—सर्वरसमित्यादि। अभिसमीक्ष्येति हिताहितत्वेन विचार्य। हितमेवेति पदेन यदेव प्रकृत्यादिना हितं तदेवानुरुध्येत सेवेतेत्यर्थः ॥२०॥

**तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति; तद्यथा—प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि (भवन्ति)[1] ॥ २१ ॥**

आहारस्य विधिः प्रकारो विधानं वा इत्याहारविधिः, तस्य विशेषो हितत्वमहितत्वं च, तस्यायतनानि हेतूनीत्याहारविधिविशेषायतनानि। आहारप्रकारस्य हितत्वमहितत्वं च प्रकृत्यादिहेतुकमित्यर्थः। उपयोक्ता अष्टमो येषां तान्युपयोक्त्रष्टमानि ॥ २१ ॥

**तत्र प्रकृतिरुच्यते स्वभावो यः, स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः; तद्यथा—माषमुद्गयोः, शूकरैणयोश्च ॥ (१) ॥**

उक्तानि प्रकृत्यादीना विभजते—तत्रेत्यादिना। स्वाभाविक इति संस्काराद्यकृतः। माषमुद्गयोरिति प्रकृत्या माषे गुरुत्वं, मुद्गे च लघुत्वं; शूकरे गुरुत्वं, एणे च लघुत्वम् ॥ १ ॥

**करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारः। संस्कारो हि गुणान्तराधानमुच्यते। ते गुणास्तोयाग्निसन्निकर्षशौचमन्थनदेशकालवासनभावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते[3] ॥ (२) ॥**

द्रव्याणामिति वक्तव्ये स्वाभाविकानामिति यत् करोति, तेनोत्पत्तिकाले जनकभूतैः स्वगुणारोपणं, संस्कारस्तूत्पन्नस्यैव तोयादिना गुणान्तराधानमिति दर्शयति। तत्र प्राकृतगुणोपमर्देनैव क्रियते, यथा—तोयाग्निसन्निकर्षशौचैस्तण्डुलस्थं गौरवमुपहत्य लाघवमन्ने क्रियते। यदुक्तं—"सुधौतः प्रस्रुतः स्विन्नः संतप्तश्चौदनो लघुः" (सू. अ. २७)। तथा रक्तशाल्यादेर्लेघोरप्यग्निसंयोगादिना लाघवं वर्धते। मन्थनाद्गुणाधानं यथा "शोथकृद्दधि शोथघ्नं सस्नेहमपि मन्थनात्" इति। देशेन यथा "भस्मराशेरधः स्थापयेत्" (चि. अ. १, पा. १) इत्यादौ। वासनेन गुणाधानं यथा—अपामुत्पलादिवासनेन सुगन्धानुकरणम्। भावनया च स्वरसादिकृतया स्थितस्यैवामलकादेर्गुणस्योत्कर्षो भवति। कालप्रकर्षाद्यथा—"पक्षाज्जातरसं पिबेत्" (चि. अ. १५) इत्यादि। भाजनेन यथा—"त्रैफलेनायसीं पात्रीं कल्केनालेपयेत्" (चि. अ. १, पा. ३) इत्यादौ। आदिग्रहणात् पेषणाभिमन्त्रणादि गृह्यते। ननु, संस्काराधेयेन गुणेन कथं स्वाभाविकगुणनाशः क्रियते, यतः "स्वभावो निष्प्रतिक्रियः" इत्युक्तं; यदि हि संस्कारेण स्वाभाविकगुरुत्वं प्रतिक्रियते, तदा "स्वभावो निष्प्रतिक्रियः" इति कथं? ब्रूमः—"स्वभावो निष्प्रतिक्रियः" इति स्वभावो भावानामुत्पत्तौ नान्यथा क्रियते। तेन, जातिप्रतिबद्धं माषादीनां गुरुत्वं न तज्जातौ स्फोटयितुं पार्यते, संस्कारेण तु तदन्यथाकरणमनुमतमेव दृष्टत्वात्। कश्चित्तु गुणो द्रव्याणां संस्कारादिनाऽपि नान्यथा क्रियते, यथा—वह्नेरौष्ण्यं, वायोश्चलत्वं, तैलस्य स्नेह इत्यादि। एते हि यावद्द्रव्यभाविन एव गुणाः। गौरवादयस्तु पुराणधान्यादिष्वप्यपगमदर्शनान्न यावद्द्रव्यभाविनः। उक्तं हि—"गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति। गुणान्तरोपधानाद्वा" इति। यत्र तु संस्कारेण व्रीहेर्लाजलक्षणं द्रव्यान्तरमेव जन्यते, तत्र गुणान्तरोत्पादः सुष्ठुर्व ॥ (२) ॥

**संयोगः पुनर्द्वयोर्बहूनां वा द्रव्याणां संहतीभावः, स विशेषमारभते, यं पुनर्नैकैकशो द्रव्याण्यारभन्ते; तद्यथा—मधुसर्पिषोः, मधुमत्स्यपयसां च संयोगः ॥ (३) ॥**

संयोगमाह—संयोगस्त्वित्यादि। स विशेषमारभत इति संयुज्यमानद्रव्यैकदेशेऽदृष्टं कार्यमारभत इत्यर्थः। यं नैकैकश्च इति यं विशेषं प्रत्येकमसंयुज्यमानानि द्रव्याणि नारभन्त इत्यर्थः। मधुसर्पिषी हि प्रत्येकममारके मिलिते तु मारके भवतः, क्षीरमत्स्यादिसंयोगश्च कुष्ठादिकरो भवति। संयोगस्त्विह प्राधान्येनैवोपलभ्यमानद्रव्यमेलको विवक्षितः[2], तेन भावनादिष्वपि यद्यपि संयोगोऽस्ति, तथाऽपि तत्र भावनाद्रव्याणां प्राधान्येनानुपलब्धेर्न संयोगेन ग्रहणम् ॥ (३) ॥

**राशिस्तु सर्वग्रहपरिग्रहौ मात्रामात्रफलविनिश्चयार्थः। तत्र सर्वस्याहारस्य प्रमाणग्रहणमेक-**

१ 'सात्म्यमुपपन्नं सर्वाण्याहारविधिविशेषायतनान्यभिसमीक्ष्य' इति पा०। २ हस्तलिखितपुस्तके एवायं पाठ उपलभ्यते। ३ 'देशकालवशेन भावनादिभिः' इति पा०।

१ 'स्वस्य एव' इति पा०। २ 'अभिप्रेतः' इति पा०।

**पिण्डेन सर्वग्रहः, परिग्रहः पुनः प्रमाणग्रहणमेकैकश्येनाहारद्रव्याणाम् । सर्वस्य हि ग्रहः सर्वग्रहः, सर्वतश्च ग्रहः परिग्रह उच्यते ॥ (४) ॥**

राशिः प्रमाणम् । मात्रामात्रफलविनिश्चयार्थं इति मात्रावदाहारस्यौपधस्य च यत् फलं शुभम्, अमात्रस्य हीनस्यातिरिक्तस्य वा यत् फलमशुभम् । यदुक्तं—"तस्य ज्ञानार्थमुचितप्रमाणमनुचितप्रमाणं च राशिसंज्ञं भवति" । सर्वग्रहं विवृणोति—तत्रेत्यादि । सर्वस्येति मिश्रीकृतस्यान्नमांससूपादेरेकपिण्डेन मानम् । परिग्रहं विवृणोति—परिग्रहः पुनरित्यादि । एकैकश्येनेति अन्नस्य कुडवः, सूपस्य पलं, मांसस्य द्विपलमित्याद्यवयवमानपूर्वकं समुदायमानम् । सर्वग्रहे प्रत्यवयवमाननियमो नास्ति; तेन येन केनचिदाहारेण प्रत्येकमनियतमानेन संपूर्णाहारमात्रानियमनं सर्वग्रहः । एतदेव शब्दव्युत्पत्त्या दर्शयति—सर्वस्य हीत्यादि । सर्वत इति प्रत्येकावयवत इत्यर्थः ॥ ( ४ ) ॥

**देशः पुनः स्थानं; स द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यं चाचष्टे ॥ (५) ॥**

देशं विभजते—देश इत्यादि । स्थानग्रहणेनाहारद्रव्यस्य तथा भोक्तुश्च स्थानं दर्शयति । आचष्ट इति द्रव्यस्योत्पत्तिप्रचारादिकृतगुणज्ञानहेतुर्भवति । तत्रोत्पत्त्या—हिमवति जातं गुणैर्वद्भवति, मरौ जातं लघु भवति, इत्यादि । प्रचारेण लघुभक्ष्याणां प्राणिनां तथा धन्वप्रचारिणां बहुक्रियाणां च लाघवं, विपर्यये च गौरवं गृह्यते । देशसात्म्येन च देशविपरीतगुणं सात्म्यं गृह्यते; यथा—आनूपे उष्णरूक्षादि, धन्वनि च शीतस्निग्धादि । ओकसात्म्यं तु उपयोक्तृग्रहणेन गृहीतम् ॥ ( ५ ) ॥

**कालो हि नित्यगश्चावस्थिकश्च; तत्रावस्थिको विकारमपेक्षते, नित्यगस्तु ऋतुसात्म्यापेक्षः ॥(६)॥**

नित्यग इति अहोरात्रादिरूपः । आवस्थिक इति रोगित्वबाल्याद्यवस्थाविशेषित इत्यर्थः । विकारमपेक्षत इति वाल्यादिकृतं तु श्लेष्मविकारं ज्वरादिकं चाहारनियमार्थमपेक्षत इत्यर्थः । ऋतुसात्म्यं हि ऋतुमपेक्षत इति ऋतुसात्म्यापेक्षः ॥ ६ ॥

**उपयोगसंस्था तूपयोगनियमः; स जीर्णलक्षणापेक्षः ॥ (७) ॥**

एवमाहारोपयोगः कर्तव्य एवं न कर्तव्य इत्युपयोगनियमः, स जीर्णलक्षणापेक्ष इति प्राधान्येनोक्तः । तेनेह 'अजल्पन्नहसन्नातिद्रुतं नातिविलम्बितम्' इत्याद्युपयोगनियममप्यपेक्षत एव; अजीर्णभोजने तु महांस्त्रिदोषकोपलक्षणो दोषो भवतीत्ययमेवोदाहृतः ॥ ( ७ ) ॥

**उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते, यदायत्तमोकसात्म्यम् । इत्यष्टावाहारविधिविशेषायतनानि व्याख्यातानि भवन्ति ॥ २२ ॥**

यदायत्तमोकसात्म्यमिति भोक्तृपुरुषापेक्षं ह्यभ्याससात्म्यं भवति; कस्यचिद्धि किञ्चिदेवाभ्यासात् पथ्यमपथ्यं वा सात्म्यं भवति ॥ २२ ॥

**एषां विशेषाः शुभाशुभफलाः परस्परोपकारका भवन्ति; तान् बुभुत्सेत, बुद्ध्वा च हितेप्सुरेव स्यात्; नच मोहात् प्रमादाद्वा प्रियमहितमसुखोदर्कमुपसेव्यमाहारजातमन्यद्वा किंचित् ॥ २३ ॥**

एषामित्यादौ शुभफला विशेषा अशुभफलाश्च परस्परोपकारका भवन्तीति ज्ञेयम् । तत्र प्रकृत्या लाघवादिः शुभफलः, गुर्वादिश्चाशुभफलः । करणाद्याधेयोऽपि विशेषः शास्त्रोक्तः शुभः, निषिद्धस्त्वशुभः । देशसात्म्यं निन्दितदेशभवत्वादि च द्रव्यस्याशुभफलम् । एवं कालासात्म्यमशुभफलं चाजीर्णभोजनादि, तथा ओकासात्म्यं चाशुभमशुभफलमिति ज्ञेयं; विपरीतं तु शुभफलम् । मोहादिति अज्ञानात्, प्रमादादिति ज्ञात्वाऽपि रागादित्यर्थः । प्रियमिति तदात्वमात्रप्रियम् । अहितमित्यस्य विवरणम्—असुखोदर्कमिति ।—असुखं दुःखरूपम्, उदर्क उत्तरकालीनं फलं, यस्य स तथा । अन्यद्वेति भेषजविहारादि ॥ २३ ॥

**तत्रेदमाहारविधिविधानमरोगाणामातुराणां चापि केषांचित् काले प्रकृत्यैव हिततमं भुञ्जानानां भवति-उष्णं, स्निग्धं, मात्रावत्, जीर्णे वीर्याविरुद्धम्, इष्टे देशे, इष्टसर्वोपकरणं, नातिद्रुतं, नातिविलम्बितम्, अजल्पन्, अहसन्, तन्मना भुञ्जीत, आत्मानमभिसमीक्ष्य सम्यक् ॥ २४ ॥**

तत्रेत्यादौ इदमिति वक्ष्यमाणम् । आहारविधिर्विधीयते येनोष्णस्निग्धादिना वक्ष्यमाणेन तदाहारविधिविधानम् । आतुराणां च केषांचिदिति पदेन रक्तपित्तिनां शीतमेव, कफरोगिणां रूक्षमेवं हितमित्यादिविपर्ययं दर्शयति । केषांचिद्भुञ्जानानामिदमाहारविधिविधानं हिततमं भवतीति योजना । प्रकृत्यैवेति स्वभावेनैव हिततमं हिततममित्युक्तं; तेन यत् प्रकृत्या हितं तत् कदाचिदेव कंचिदेव पुरुषमासाद्याहितं भवति, तच्च कादाचित्कत्वादनादृतं; तेन प्रायिकत्वादेनं हिततमं वक्ष्याम इति भावः । उष्णमित्यादौ सम्यगिति छेदः ॥ २४ ॥

**तस्य साद्गुण्यमुपदेक्ष्यामः—उष्णमश्नीयात्; उष्णं हि भुज्यमानं स्वदते, भुक्तं चाग्निमौदर्यमुदीरयति, क्षिप्रं जरां गच्छति, वातमनुलोमयति, श्लेष्माणं च परिह्रासयति; तस्मादुष्णमश्नीयात् ॥ (१) ॥**

**स्निग्धमश्नीयात्; स्निग्धं हि भुज्यमानं स्वदते, भुक्तं चानुदीर्णमग्निमुदीरयति, क्षिप्रं जरां गच्छति, वातमनुलोमयति, शरीरमुपचिनोति, दृढीकरोती-**

१ 'गुरु भवति' इति पा० ।

१ 'उष्णमेव' इति पा० । २ 'परिशोषयति' इति पा० ।
३ 'भुक्तमौदर्यमग्निमुदीरयति' इति पा० ।

न्द्रियाणि, बलाभिवृद्धिमुपजनयति, वर्णप्रसादं चाभिनिर्वर्तयति; तस्मात् स्निग्धमश्नीयात् ॥ (२) ॥

तस्येति उष्णादिगुणयुक्तस्यान्नस्य । साद्गुण्यमिति प्रशस्तगुणयोगिताम् । परिहासयतीति भिन्नसङ्घातं करोति ॥ (१।२) ॥

मात्रावदश्नीयात्; मात्रावद्धि भुक्तं वातपित्तकफानपीडयदायुरेव विवर्धयति केवलं, सुखं गुदमनुपर्येति, न चोष्माणमुपहन्ति, अव्यथं च परिपाकमेति; तस्मान्मात्रावदश्नीयात् ॥ (३) ॥

मात्रावदिति प्रशंसायां मतुप्; तेन प्रशस्तमात्रमित्यर्थः । अपीडयदिति अनतिमात्रत्वेन स्वस्थानस्थितं सद्वातादीन् स्थानापीडनादप्रकोपयत् । गुदमनुपर्येतीति परिणतं सदनुरूपतया निःसरतीत्यर्थः । ऊष्माणं वह्निम् ॥ (३) ॥

जीर्णेऽश्नीयात्; अजीर्णे हि भुञ्जानस्याभ्यवहृतमाहारजातं पूर्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजत् सर्वान् दोषान् प्रकोपयत्याशु, जीर्णे तु भुञ्जानस्य स्वस्थानस्थेषु दोषेष्वग्नौ चोदीर्णे जातायां च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषु विशुद्धे चोद्गारे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेष्वभ्यवहृतमाहारजातं सर्वशरीरधातूनप्रदूषयदायुरेवाभिवर्धयति केवलं; तस्माज्जीर्णेऽश्नीयात् ॥ (४) ॥

पूर्वस्येति दिनान्तरकृतस्य । अपरिणतमिति असम्यग्जातम् । आहाररसेनेति आहारपरिणामगतेन मधुरादिना; किंवा आहारजेन रसेन । स्वस्थानस्थेषु दोषेष्वित्यादि जीर्णाहारस्य लक्षणम् ॥ (४) ॥

वीर्याविरुद्धमश्नीयात्; अविरुद्धवीर्यमश्नन् हि विरुद्धवीर्याहारजैर्विकारैर्नोपसृज्यते; तस्माद्वीर्याविरुद्धमश्नीयात् ॥ (५) ॥

विरुद्धवीर्याहारजैरिति कुष्ठान्ध्यविसर्पाद्यैरात्रेयभद्रकाप्यीयोक्तैः ॥ (५) ॥

इष्टे देशे इष्टसर्वोपकरणं चाश्नीयात्; इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति, तथैवेष्टैः सर्वोपकरणैः; तस्मादिष्टे देशे तथेष्टसर्वोपकरणं चाश्नीयात् ॥ (६) ॥

मनोविघातकरैर्भावैरिति त्रिविधकुक्षीये ( वि. अ. २ ) वक्ष्यमाणैः कामादिभिश्चित्तोपतापकरैश्चित्तविकारैरित्यर्थः । तथेष्टैश्च सर्वोपकरणैर्भुञ्जानो मनोविघातं न प्राप्नोतीति योजना; अनिष्टभोजनादेर्मनोविघातो भवति ॥ (६) ॥

नातिद्रुतमश्नीयात्; अतिद्रुतं हि भुञ्जानस्योत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं च, भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता; तस्मान्नातिद्रुतमश्नीयात् ॥ (७) ॥

उत्स्नेहनम् उन्मार्गगमनम् । अवसदनम् अवसादः । अप्रतिष्ठानं हृदयस्थत्वेन कोष्ठाप्रवेशः । भोज्यगतानां दोषाणां केशादीनां, साद्गुण्यस्य च स्वादुत्वादेः, उपलब्धिर्न नियता भवति कदाचिदुपलभ्यते कदाचिन्नेति । तत्र दोषानुपलब्ध्या सदोषस्यैव भक्षणं, साद्गुण्यानुपलब्ध्या च प्रीत्यभावः ॥ (७) ॥

नातिविलम्बितमश्नीयात्; अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति, बहु भुङ्क्ते, शीतीभवत्याहारजातं, विषमं च पच्यते[1]; तस्मान्नातिविलम्बितमश्नीयात् ॥ (८) ॥

विषमं च पच्यत इति चिरकालभोजनेनाग्निसंबन्धस्य वैषम्यादिति भावः ॥ (८) ॥

अजल्पन्नहसन् तन्मना भुञ्जीत; जल्पतो हसतोऽन्यमनसो वा भुञ्जानस्य त एव हि दोषा भवन्ति, य एवातिद्रुतमश्नतः; तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत ॥ (९) ॥

य एवातिद्रुतमश्नतो दोषा इति उत्स्नेहनादयः ॥ (९) ॥

आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्; इदं ममोपशेते इदं नोपशेत इत्येवं विदितं ह्यस्यात्मन आत्मसात्म्यं भवति; तस्मादात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति ॥ २५ ॥

नोपशेत इतीत्यत्र इतिशब्देन सात्म्यासात्म्यविधानोपदर्शकेन विचारफलमोकसात्म्यसेवनं दर्शयति । आत्मन इति पदेनात्मनैवात्मसात्म्यं प्रतिपुरुषं ज्ञायते, न शास्त्रोपदेशेनेति दर्शयति ॥ २५ ॥

भवति चात्र—

रसान् द्रव्याणि दोषांश्च विकारांश्च प्रभावतः ।
वेद यो देशकालौ च शरीरं च स नो भिषक्[2] ॥ २६ ॥

अध्यायोक्तरसप्रभावादिज्ञानं स्तौति—रसानित्यादि । स नो भिषगिति नोऽस्माकं संमत[3] इत्यर्थः ॥ २६ ॥

तत्र श्लोकौ—

विमानार्थो रसद्रव्यदोषरोगाः प्रभावतः ।
द्रव्याणि नातिसेव्यानि त्रिविधं सात्म्यमेव च ॥ २७ ॥
आहारायतनान्यष्टौ भोज्यसाद्गुण्यमेव च ।
विमाने रससंख्याते सर्वमेतत् प्रकाशितम् ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने रसविमानं नाम प्रथमोऽध्यायः ॥ १ ॥

दोषविकारौ च यद्यपि त्रिविधकुक्षीये ( वि. अ. २ ) प्रभावविस्तारेण वक्तव्यौ, तथाऽपीह संक्षेपेणोक्तावेव; तेन दोषविकारप्रभावावप्युक्ताविति यदुच्यते संग्रहे तत् साधु । तैलादिद्रव्यत्रयकथनं च द्रव्यप्रभावगृहीतमिति कृत्वा न पृथक् संग्रहे पठितम् ॥ २७ ॥ २८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने रसविमानं नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ 'विषमपाकं च गच्छति' इति पा० । २ 'स ना भिषक्' इति पा० । ३ 'सोऽस्मत्संमतः' इति पा० ।

## द्वितीयोऽध्यायः।

**अथातस्त्रिविधकुक्षीयं विमानं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

रसविमाने राशिरुक्तः, तस्य राशेर्मात्रामात्रावतः फलप्रपञ्चं दोषविकारप्रपञ्चं दर्शयितुं त्रिविधकुक्षीयोऽभिधीयते ॥ १ ॥ २॥

**त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्याहारमुपयुञ्जानः; तद्यथा-एकमवकाशांशं मूर्तानामाहारविकाराणाम्, एकं द्रवाणाम्, एकं पुनर्वातपित्तश्लेष्मणाम्; एतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किंचिदशुभं प्राप्नोति ॥ ३ ॥**

त्रिविधमिति त्रिप्रकारम्। अवकाशांशमिति कोष्ठावकाशभागम्। आहारस्येति आहारनिमित्तमित्यर्थः। तेन द्वाववकाशावाहारस्य वक्तव्यौ, एकस्तु दोषाणामिति त्रिविधं वक्ष्यमाणमुक्तम्। दोषावकाशस्थापनं ह्याहारोपकारकत्वादाहारस्येत्युच्यते, दोषावकाशानवस्थाने ह्याहारो दोषैर्दूष्यत इति वक्तव्यम्। किंवा, आहारस्यावकाशांशमामाशयरूपं कुक्षौ वक्ष्यमाणविभागेन त्रिविधं स्थापयेदित्यर्थः। कुक्ष्यंशभागं यथाकर्तव्यमाह—तद्यथेत्यादि। मूर्तानामिति अश्यखाद्यानां, द्रवाणामिति लेह्यपेयानाम्। इह चांशशब्दो न समप्रविभागे वर्तते, किंतु यथोचितविभागे; तेन मूर्तानां बहुभागो भवतीति ज्ञेयम्। वातपित्तश्लेष्मणां यद्यपि भिन्नानि स्थानानि, तथाऽपि मूर्ताहारादिभागापेक्षया मिलितानां किंचित्स्थानं भवतीत्येकत्वेनाध्यारोप्यात्र एकमिति कृतम्। ननु कुक्ष्यंशविभागेन कृतेऽप्याहारे प्रकृतिगुर्वादिदुष्टद्रव्यजदोषो दृश्यत इत्याह—नामात्राहारजमिति; प्रकृत्यादिदोषकृतं तु प्राप्नोत्येवेत्यर्थः ॥ ३ ॥

**न च केवलं मात्रावत्त्वादेवाहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यं, प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां प्रविभक्तफलत्वात् ॥ ४ ॥**

तदेव स्फोरयति—न चेत्यादि। सौष्ठवं सुष्ठुत्वं भाद्रक्यमित्यर्थः। प्रविभक्तफलत्वादिति प्रविभिन्नफलत्वात् ॥ ४ ॥

**तत्रायं तावदाहारराशिमधिकृत्य मात्रामात्राफलविनिश्चयार्थः प्रकृतः। एतावानेव ह्याहारराशिविधिविकल्पो यावन्मात्रावत्त्वममात्रावत्त्वं च ॥ ५ ॥**

**तत्र मात्रावत्त्वं पूर्वमुद्दिष्टं कुक्ष्यंशविभागेन, तद्भूयो विस्तरेणानुव्याख्यास्यामः। तद्यथा—कुक्षेरप्रपीडनमाहारेण, हृदयस्यानवरोधः, पार्श्वयोरविपाटनम्, अनतिगौरवमुदरस्य, प्रीणनमिन्द्रियाणां, क्षुत्पिपासोपरमः, स्थानासनशयनगमनोच्छ्वासप्रश्वासहास्यसंकथासु सुखानुवृत्तिः, सायं प्रातश्च सुखेन परिणमनं, बलवर्णोपचयकरत्वं च; इति मात्रावतो लक्षणमाहारस्य भवति ॥ ६ ॥**

कुक्ष्यंशविभागेनेति एकमवकाशांशं मूर्तानामित्यादिना। उद्दिष्टमिति संक्षेपेण कथितम्। सायं प्रातश्चेतिवचनात् सायं भोजने कृते यदि प्रातः, प्रातश्च कृते यदि सायं, सुखेन परिणमनं तथा स्थानासनादिषु सुखानुवृत्तिर्भवति, तदा मात्रावद्भोजनमनेन कृतमिति ज्ञेयम् ॥ ५ ॥ ६ ॥

**अमात्रावत्त्वं पुनर्द्विविधमाचक्षते—हीनम्, अधिकं च। तत्र हीनमात्रमाहारराशिं बलवर्णोपचयक्षयकरमतृप्तिकरमुदावर्तकरमनायुष्यवृष्यमनौजस्यं शरीरमनोबुद्धीन्द्रियोपघातकरं सारविधमनमलक्ष्म्यावहमशीतेश्च वातविकाराणामायतनमाचक्षते, अतिमात्रं पुनः सर्वदोषप्रकोपणमिच्छन्ति कुशलाः। यो हि मूर्तानामाहारजातानां सौहित्यं गत्वा द्रवैस्तृप्तिमापद्यते भूयस्तस्यामाशयगता वातपित्तश्लेष्माणोऽभ्यवहारेणातिमात्रेणातिप्रपीड्यमानाः सर्वे युगपत् प्रकोपमापद्यन्ते, ते प्रकुपितास्तमेवाहारराशिमपरिणतमाविश्य कुक्ष्येकदेशमन्नाश्रिता विष्टम्भयन्तः सहसा वाऽप्युत्तराधराभ्यां मार्गाभ्यां प्रच्यावयन्तः पृथक् पृथगिमान् विकारानभिनिर्वर्तयन्त्यतिमात्रभोक्तुः। तत्र वातः शूलानाहाङ्गमर्दमुखशोषमूर्च्छाभ्रमाग्निवैषम्यपार्श्वपृष्ठकटिग्रहसिराकुञ्चनस्तम्भनानि करोति, पित्तं पुनर्ज्वरातीसारान्तर्दाहतृष्णामदभ्रमप्रलपनानि, श्लेष्मा तु छर्द्यरोचकाविपाकशीतज्वरालस्यगात्रगौरवाणि ॥ ७ ॥**

सारविधमनमिति रोगभिषग्जितीये ( वि. अ. ८ ) वक्ष्यमाणत्वक्सारादिविधमनम्। आहारविकाराणामिति करणे सौहित्ययोगात् षष्ठी। द्रवैस्तृप्तिमिति भूयःपदविशेषणादतितृप्तिमित्यर्थः। आमाशयगता इति वचनेनाग्निसहाय(समान)स्यैव वायोः कोपो भवति, न पक्वाशयगतस्येति दर्शयति। कुक्ष्येकदेशमन्नाश्रिताः सह दूषितेनाहारेणेत्यर्थः ॥ ७ ॥

**न च खलु केवलमतिमात्रमेवाहारराशिमामप्रदोषकरमिच्छन्ति, अपि तु खलु गुरुरूक्षशीतशुष्कद्विष्टविष्टम्भिविदाह्यशुचिविरुद्धानामकाले चान्नपानानामुपसेवनं, कामक्रोधलोभमोहेर्ष्याह्रीशोकमानोद्वेगभयोपतप्तमनसा वा यदन्नपानमुपयुज्यते, तदप्याममेव प्रदूषयति ॥ ८ ॥**

**भवति चात्र—**

**मात्रयाऽप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति।**
**चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ९ ॥**

अतिमात्राशनजन्यत्वेनामप्रदोषे वक्तव्येऽन्यतश्च यत आ-

---

१ 'मात्रावत्त्वामात्रावत्त्वरूपस्य' इति पा०। २ 'चतुर्भागो भवति' इति पा०। ३ 'किञ्चिन्मानसाम्यं' इति पा०। ४ 'दुष्टद्रव्ययोगाद्दोषो' इति पा०।

१ 'परिणामगमनं' इति पा०। २ 'कुक्ष्येकदेशमाश्रिताः' इति पा०। ३ 'आमप्रदोषकारणं' इति पा०।

मप्रदोषो भवति तमाह—न च खल्विलादि । कामादिभिर्मानस उपघातः प्रभावादेवान्नं दूषयति । एवमशुच्यप्यन्नमशुचित्वेन ज्ञातं मनस उपघातकत्वादामदूषकं भवति । आमस्यापक्वस्याहारस्य प्रदोष आमप्रदोषः । आममेव प्रदूषयतीति अत्र कर्मकर्तृत्वे 'अच्', दुष्टं भवतीत्यर्थः; किंवा, आममपक्वं सद्दुष्टदोषसंपर्काच्छरीरं दूषयतीति ज्ञेयम् ॥ ८ ॥ ९ ॥

तं द्विविधमामप्रदोषमाचक्षते भिषजः—विसूचिकाम्, अलसकं च ॥ १० ॥

तत्र विसूचिकामूर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात् ॥ ११ ॥

द्विविधमित्यादौ अलसक एव दण्डालसकामविषयोरवरोधो ज्ञेयः; तयोरपि हि दोषोऽप्रवर्तमानत्वादलसीभूत एव भवति ॥ १० ॥ ११ ॥

अलसकमुपदेक्ष्यामः—दुर्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्षशीतशुष्कान्नसेविनस्तदन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्न बहिर्मुखीभवति, ततश्छर्दतीसारवर्ज्यान्यामप्रदोषलिङ्गान्यभिदर्शयत्यतिमात्राणि । अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचिदेव केवलमस्य शरीरं दण्डवत् स्तम्भयन्ति, ततस्तं दण्डालसकमसाध्यं ब्रुवते[1] । विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरामदोषमामविषमित्याचक्षते[2] भिषजः, विषसदृशलिङ्गत्वात्; तत् परमसाध्यम्, आशुकारित्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ १२ ॥

अलसकमुपदेक्ष्याम इत्यादिना पुनर्विशेषहेतुः प्रायोऽभिनिर्वर्तक उच्यते, सामान्येन त्वतिमात्राहाररूप उक्त एवेति ज्ञेयम् । अनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमिति दोषद्वयव्यापारवचनाद्वातश्लेष्मणोरलसके प्राधान्यमुच्यते, पित्तं तु सामान्यवचनसिद्धमप्रधानमस्त्येव तृष्णामदभ्रमादिलिङ्गमिति ज्ञेयम् । प्रदुष्टामबद्धमार्गा इति अत्रापक्व आहारोऽन्नरसो वा अपक्व आम उच्यते । केवलं कृत्स्नम् । विरुद्धाध्यशनाजीर्णाशनशीलिन इति विरुद्धाशनम्, अध्यशनम्, अजीर्णाशनं च; अजीर्णस्यापक्वस्याशनमजीर्णाशनम्, अजीर्णे भोजनस्याध्यशनशब्देन लब्धत्वात् । आमदोषमामविषमाचक्षत इत्यत्र विषसदृशलिङ्ग एवामप्रदोषोऽभिप्रेतः, अत एव विषसदृशलिङ्गत्वादित्युक्तम् । विरुद्धोपक्रमत्वादिति आमापेक्षया यदुष्णं क्रियते तद्विषविरुद्धं, यच्च विषापेक्षया शीतं क्रियते तदामविरुद्धम् । विषसदृशता चामस्यामजनकहेतुविशेषप्रभावाद्भवति मधुघृतसमसंयोग इव विषत्वम् ॥ १२ ॥

तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेदादौ पाययित्वा सलवणमुष्णं वारि, ततः स्वेदनवर्तिप्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम् । विसूचिकायां तु लङ्घनमेवाग्रे विरिक्तवच्चानुपूर्वी । आमप्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधमग्निसंधुक्षणार्थं च, नत्वेवाजीर्णाशनम्; आमप्रदोषदुर्बलो ह्यग्निर्न युगपद्दोषमौषधमाहारजातं च शक्तः पक्तुम् । अपि चामप्रदोपाहारौषधविभ्रमोऽतिबलत्वादुपरतकायाग्निं[1] सहसैवातुरमबलमतिपातयेत् । आमप्रदोषजानां पुनर्विकाराणामपतर्पणेनैवोपरमो भवति, सति त्वनुबन्धे कृतापतर्पणानां व्याधीनां निग्रहे निमित्तविपरीतमपास्यौषधमातङ्कविपरीतमेवावचारयेद्यथास्वम् । सर्वविकाराणामपि च निग्रहे हेतुव्याधिविपरीतमौषधमिच्छन्ति कुशलाः, तदर्थकारि वा । विमुक्तामप्रदोषस्य[2] पुनः परिपक्वदोषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विधिवत् स्नेहपानं च युक्त्या प्रयोज्यं प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च सम्यगिति ॥ १३ ॥

वर्तिरिति फलवर्तिः । आनुपूर्वीति पेयादिक्रम इत्यर्थः । जीर्णाहारमिति विसूचिकालसकयोरेवाहारस्य जीर्णतां दर्शयति । दोषावलिप्तामाशयस्तिमितगुरुकोष्ठत्वादि पुरुषविशेषणमपि लक्षणं ज्ञेयम् । न त्वजीर्णाशनमिति पुनर्निषेधकरणेनाजीर्णाशने प्रमादादजीर्णप्रशमनाभिप्रायेण क्रियमाणभेषजस्य महात्ययतां 'दोषदुर्बलो ह्यग्निः' इत्यादिना वक्ष्यमाणां दर्शयति । कृतापतर्पणानामित्यनेन दोषाणामामताक्षयं सूचयति; सम्यक्कृते ह्यपतर्पणे नामानुबन्धोऽस्ति । ततश्च निरामदोषारब्धे विसूचिकालसकव्यवस्थिते शूलज्वरादौ आतङ्कविपरीतं निरामशूलज्वरादिहरमेव युज्यते । यथास्वमिति यद्यस्य शूलादेरातङ्कस्य विपरीतं तत्तत् कार्यमित्यर्थः । आतङ्कविपरीतशब्देन च तदर्थकारि गृहीतं मन्तव्यम् । अत एवोत्तरत्र 'तदर्थकारि वा' इति सर्वविकारभेषजकथने उपपन्नं भवति; अन्यथा कथमिहानभिहितं तदर्थकारि तत्राप्रस्तुतमुच्यते । विमुक्तामप्रदोषस्येत्यादिनाऽभ्यङ्गादिविधानं व्याधिजनितातिदौर्बल्यादिदोषप्रशमनार्थम् ॥ १३ ॥

भवति चात्र—

आहारविध्यायतनानि चाष्टौ
सम्यक् परीक्ष्यात्महितं विदध्यात् ।

---

१ 'अतस्तमलसकमसाध्यं' इति पा० । २ 'पुनरेवं दोषमामविषमित्याचक्षते' इति, 'आमप्रदोषविषमाचक्षते' इति च पा० ।

१ 'अतिबलत्वादुपहत्य कायाग्निं' इति पा० । २ 'अनुद्रिक्तामप्रदोषस्य' इति पा० । ३ 'न आमसद्भावोऽस्ति' इति पा० । ४ 'विपरीतार्थकारि' इति पा० ।

अन्यश्च यः कश्चिदिहास्ति मार्गो
हितोपयोगेषु भजेत तं च ॥ १४ ॥

अनुक्तविध्युपग्रहार्थमाह—अन्यश्चेत्यादि । अन्यश्चेति ग्रहण्यतिसारादिवक्ष्यमाणामदोषक्षयकरो भेषजरूपो मार्ग इहामप्रदोषे हित इति संबन्धः ॥ १४ ॥

अशितं खादितं पीतं लीढं च क्व विपच्यते ।
एतत्त्वां धीर ! पृच्छामस्तन्न आचक्ष्व बुद्धिमन् ॥१५॥
इत्यग्निवेशप्रमुखैः शिष्यैः पृष्टः पुनर्वसुः ।
आचचक्षे ततस्तेभ्यो यत्राहारो विपच्यते ॥ १६ ॥
नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः ।
अशितं खादितं पीतं लीढं चात्र विपच्यते ॥ १७ ॥
आमाशयगतः पाकमाहारः प्राप्य केवलम् ।
पक्वः सर्वाशयं पश्चाद्धमनीभिः प्रपद्यते ॥ १८ ॥

तत्र श्लोकः—

तस्य मात्रावतो लिङ्गं फलं चोक्तं यथायथम् ।
अमात्रस्य तथा लिङ्गं फलं चोक्तं विभागशः ॥ १९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविधकुक्षीयविमानं नाम द्वितीयोऽध्यायः ॥२॥

आमाशयप्रमाणोपदर्शनार्थं च गुरुपृच्छोत्तरग्रन्थमाह—अशितमित्यादि । सर्वाश्रयमिति सर्वशरीरम् ॥ १५-१९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने त्रिविधकुक्षीयविमानं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातो जनपदोद्ध्वंसनीयं विमानं व्याख्यास्यामः १
इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्विविधो हेतुर्व्याधिजनकः प्राणिनां भवति—साधारणः, असाधारणश्च; तत्रासाधारणं प्रतिपुरुषनियतं वातादिजनकमाहाराद्यभिधाय बहुजनसाधारणं वातजलदेशकालरूपं साधारणरोगकारणमभिधातुं जनपदोद्ध्वंसनीयोऽभिधीयते ॥ १ ॥ २ ॥

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुविचरञ्छिष्यमग्निवेशमब्रवीत् ॥ ३ ॥

जनपदवसत्युपलक्षितं मण्डलं जनपदमण्डलं, 'पञ्चालक्षेत्रे' इति तस्य विशेषणम् । द्विजातिवराध्युषित इति वचनेन महाजनसेवितेऽपि देशेऽधर्मवशाज्जनपदोद्ध्वंसो वक्ष्यमाणो भवतीति दर्शयति । पश्चिमे घर्ममास इति ज्येष्ठे । वनविचारमनुविचरन्निति वनं विचर्य विचर्यानुविचरन्नित्यर्थः ॥ ३ ॥

दृश्यन्ते हि खलु सौम्य ! नक्षत्रग्रहगणचन्द्रसूर्यानिलानलानां दिशां चाप्रकृतिभूतानामृतुवैकारिका भावाः, अचिरादितो भूरपि च न यथावद्रसवीर्यविपाकप्रभावमोषधीनां प्रतिविधास्यति, तद्वियोगाच्चातङ्कप्रायता नियता । तस्मात् प्रागुद्ध्वंसात् प्राक् च भूमेर्विरसीभावादुद्धरध्वं सौम्य ! भैषज्यानि यावन्नोपहतरसवीर्यविपाकप्रभावाणि भवन्ति । वयं चैषां रसवीर्यविपाकप्रभावानुपयोक्ष्यामहे ये चास्माननुकाङ्क्षन्ति, यांश्च वयमनुकाङ्क्षामः । न हि सम्यगुद्धृतेषु सौम्य ! भैषज्येषु सम्यग्विहितेषु सम्यक् चावचारितेषु जनपदोद्ध्वंसकराणां विकाराणां किंचित् प्रतीकारगौरवं भवति ॥ ४ ॥

ऋतुविकाराय भूता ऋतुवैकारिकाः; ऋतुविकारश्चोपलक्षणं, तेन जलदेशवातविकाराय भूता इति मन्तव्यं; यतो भूम्यादीनामपि विकृतिं वक्ष्यति । किंवा ऋत्वननुरूपा ऋतुवैकारिकाः; तेन, ऋत्वननुरूपलक्षणमेव नक्षत्रादीनां विकृतिरित्युक्तं भवति; ग्रीष्मे हि नक्षत्राणि निर्मलानि भवन्ति, तानि यदि तुषारच्छन्नानि ग्रीष्मे भवन्ति, तदा विकृतानि भवन्तीति बोद्धव्यम् । भूरपि चेत्यपिवचनाज्जलानिलौ च ग्राहयति; तेन, भूस्तावदोषधीनां प्रधानं कारणं, सा रसादीन्न प्रतिविधास्यति; जलवातावपि चौषधीनां रसादीन्न प्रतिविधास्यत इत्युक्तं भवति । प्रतिविधास्यतीति जनयिष्यति । उद्धरध्वमिति बहुवचनं बह्वन्तेवासियुक्ताग्निवेशाभिप्रायेण; अग्निवेशस्तु प्रधानत्वेनैक एवेति 'अग्निवेश' इतिपदेन तथा 'सौम्य' इतिपदेन संबोध्यते; भेषजोद्धरणं तु बहुभिरेव कर्तव्यमित्यभिप्रायेण बहुवचनम् । भवति हि प्रधानं संबोध्य गणसंपाद्यक्रियायां बहुवचनं; यथा—सेनापते युध्यध्वमिति । अन्ये तु सौम्यपदं भेषजविशेषणं कुर्वन्ति । ये चास्माननुकाङ्क्षन्ति ये चास्मान् भिषजोऽनुकाङ्क्षन्तीत्यर्थः, यांश्च वयमनुकाङ्क्षामश्चिकित्स्यत्वेन । एतेन, ये वैद्यमनुकाङ्क्षन्ति ते वैद्यप्रियत्वेन साध्याः, असाध्या हि वैद्यद्विष उक्ताः; वैद्याश्च यानिच्छन्ति ते साध्यरोगा एव, असाध्यान् हि वैद्या नेच्छन्ति । एतेनान्येषामपि येषां भेषजसाध्या रोगास्ते आसामोषधीनां रसादीनुपयोक्ष्यन्तीत्यर्थः । यदि च ये अस्मद्गताः, यांश्च वयं प्रयोजनवशादनुगताः, ते उपयोक्ष्यन्तीति व्याख्यायते, तदा आत्रेयस्य पक्षरागित्वेनाप्तत्वं न संभवति, "सर्वप्रजानां पितृवच्छरण्यः" ( चि.अ.५ ) इति वचनाच्चास्य नीरागत्वमुक्तम् ॥४॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—उद्धृतानि खलु भगवन् ! भैषज्यानि, सम्यग्विहितानि, सम्यगवचारितानि च; अपि तु खलु जनपदोद्ध्वं-

---

१ 'च प्रकृतिभूतानां' इति पा० । २ 'लक्षणत्वादीनां इति पा० ।
३ 'सम्यग्विचारचारितानि' च इति पा० ।

सनमेकेनैव व्याधिना युगपदसमानप्रकृत्याहारदेहबलसात्म्यसत्त्ववयसां मनुष्याणां कस्माद्भवतीति ५

उद्धृतानीति वचनमभूते भूतवचेति प्रयोगाद्बोद्धव्यं, यथा—अचिरकर्तव्ये कृतमिति वदन्ति; न हि वचनकाल एव ओषधीनामुद्धरणं संभवतीति। एकेनेति एकजातीयेन। असमानप्रकृत्यादीनां समानकारणाभावान्न तुल्यरूपो व्याधिर्भवितुमर्हतीति प्रश्नार्थः॥ ५॥

तमुवाच भगवानात्रेयः—एवमसामान्यावतामप्येभिरग्निवेश! प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्ये भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिर्वर्तमाना जनपदमुद्ध्वंसयन्ति। ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति; तद्यथा–वायुः, उदकं, देशः, काल इति॥६॥

समानलिङ्गा इति तुल्यलिङ्गाः॥ ६॥

तत्र वातमेवंविधमनारोग्यकरं विद्यात्; तद्यथा—यथर्तुविषममतिस्तिमितमतिचलमतिपरुषमतिशीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहतपरस्परगतिमतिकुण्डलिनमसात्म्यगन्धवाष्पसिकतापांशुधूमोपहतमिति (१);

उदकं तु खल्वत्यर्थविकृतगन्धवर्णरसस्पर्शं क्लेदबहुलमपक्रान्तजलचरविहङ्गमुपक्षीणजलेशयमप्रीतिकरमपगतगुणं विद्यात् (२);

देशं पुनः प्रकृतिविकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृपव्यालमशकशलभमक्षिकामूषकोलूकश्माशानिकशकुनिजम्बूकादिभिस्तृणोलूपोपवनवन्तं प्रतानादिबहुलमपूर्ववदवपतितशुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घमुत्सृष्टनष्टधर्मसत्यलज्जाचारशीलगुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पमतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससंभ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलं चाहितं विद्यात् (३);

कालं तु खलु यथर्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गं चाहितं व्यवस्येत् (४);

इमानेवंदोषयुक्तांश्चतुरो भावाञ्जनपदोद्ध्वंसकरान् वदन्ति कुशलाः; अतोऽन्यथाभूतांस्तु हितानाचक्षते॥७॥

विगुणेष्वपि खल्वेतेषु जनपदोद्ध्वंसकरेषु भावेषु भेषजेनोपपाद्यमानानामभयं भवति रोगेभ्य इति॥ ८॥

यथर्तुविषममिति ऋत्वननुरूपम्। अपगतगुणमिति जीवनपिपासाहरत्वाद्युक्तजलगुणरहितम्। प्रकृतिवर्णादेर्विकृता वर्णादयो यस्य देशस्य तं प्रकृतिविकृतवर्णगन्धरसस्पर्शम्। श्माशानिकशकुनिः गृध्रः। अपूर्ववदिति परिचितमप्युपहतत्वेनापूर्वमिव दृश्यते। उत्सृष्टाश्च नष्टाश्च धर्मसत्यलज्जागुणा जनैर्यत्र स तथा; तत्र ये धर्मादियुक्तास्ते उत्सृजन्ति धर्मादीनि, ये तु धर्मादीनि सर्वथा अज्ञानान्नाचरन्ति तान् प्रति नष्टान्येव धर्मादीनि। गुह्यकाक्रान्तो हि देशो यथा आक्रन्दनशब्दबहुलो भवति तादृशम्॥ ७॥ ८॥

भवन्ति चात्र—

वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम्।
गरीयस्त्वं विशेषेण हेतुमत् संप्रवक्ष्यते॥ ९॥
वाताज्जलं जलाद्देशं देशात् कालं स्वभावतः।
विद्याद्दुष्परिहार्यत्वाद्गरीयस्तरमर्थवित्[1]॥ १०॥
वाय्वादिषु यथोक्तानां दोषाणां तु विशेषवित्।
प्रतीकारस्य सौकर्ये विद्याल्लाघवलक्षणम्॥ ११॥

वैगुण्यमित्यादिना दुष्टानां वातादीनां यस्य य उत्कर्षो येन च हेतुना तदाह। स्वभावतो दुष्परिहार्यत्वादिति स्वभावादेव वातापेक्षया जलं दुष्परिहरं भवति, जलाच्च देशः, देशाच्च कालः। वातो हि निवातदेशसेवया दुष्टः परिह्रियते, न तथा जलं, तद्धि देहवृत्त्यर्थमवश्यं सेव्यं; जलमपि च यदि महता प्रयत्नेन त्यज्यते, देशस्तु जलापेक्षया दुष्परिहरो भवति, तद्व्यतिरेकेणावस्थातुमशक्यत्वात्; देशोऽपि यदि देशान्तरगमनेन त्यज्यते, कालस्तु सर्वथा त्यक्तुमशक्य इति सर्वेष्वेव गरीयान्। 'गरीयः परम्' इति पाठे यद्यतः परं, तत्ततो गरीयो विद्यादिति योजना। एतद्विपर्ययेण लाघवमाह—वाय्वादिष्वित्यादि। प्रतीकारस्य सौकर्य इति यथोक्तविधया वातादिपरित्यागस्य सुकरत्वेनेत्यर्थः॥ ९–११॥

चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः।
भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा॥ १२॥
येषां न मृत्युसामान्यं सामान्यं न च कर्मणाम्।
कर्म पञ्चविधं तेषां भेषजं परमुच्यते॥ १३॥
रसायनानां विधिवच्चोपयोगः प्रशस्यते।
शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः॥ १४॥
सत्यं भूते दया दानं बलयो देवतार्चनम्।
सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः॥ १५॥
हितं जनपदानां च शिवानामुपसेवनम्।
सेवनं ब्रह्मचर्यस्य तथैव ब्रह्मचारिणाम्॥ १६॥

---

१ 'उपक्षीणजलाशयं' इति पा०। २ 'सततक्षुभितोदीर्णसलिलाशयं' इति पा०। ३ '°प्रतिभयाबाररूपं' इति गङ्गाधरसंमतः पाठः।

[1] 'विषादपरिहार्यत्वाद्गरीयः परमर्थवित्' इति पा०।

संकथा धर्मशास्त्राणां महर्षीणां जितात्मनाम्।
धार्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसंमतैः ॥ १७॥
इत्येतद्भेषजं प्रोक्तमायुषः परिपालनम्।
येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे ॥ १८॥

येषां न मृत्युसामान्यमिति न मृत्युजनकदैवसाम्यं येषामस्तीत्यर्थः। सामान्यं न च कर्मणामिति नच मारककर्मसामान्यं येषामस्तीत्यर्थः। केचिद्धि संभूयैव जन्मान्तरे ग्रामदाहादिकर्म कुर्वते स्म, तत्कर्मबलात् संहतमृत्यव एव भवन्ति; किंवा पृथगपि मारकं कर्म कृतं केषाञ्चिदेककालं विपच्यमानं भवति, तेऽपि समकालमृत्यवो भवन्ति। तत्र, न मृत्युसामान्यमित्यनेनोत्पन्नरिष्टत्वादेव केचिदसाध्या इति दर्शयति, न कर्मसामान्यमित्यनेन केचिच्चाजातरिष्टा अपि नियतमारककर्मवशादसाध्या भवन्तीति दर्शयति; किंवा न मृत्युसामान्यमित्यनेन च मारको व्याधिः साधारण उच्यते, न कर्मसामान्यमित्यनेन च मारकव्याधिजनकं कर्मोच्यते। पूर्वमुद्धृतैरिति व्यापत्तेः पूर्वं गृहीतैः। गुप्तिः मन्त्रादिना रक्षा। अनियत इति वचनेन दुर्बलकर्मारब्धो हि मृत्युः पार्यत एवैवं प्रतिकर्तुमिति दर्शयति ॥ १२-१८॥

इति श्रुत्वा जनपदोद्ध्वंसने कारणानि पुनरपि भगवन्तमात्रेयमग्निवेश उवाच—अथ खलु भगवन्! कुतोमूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते? येनोपपन्ना जनपदमुद्ध्वंसयन्तीति ॥ १९॥

तमुवाच भगवानात्रेयः—सर्वेषामप्यग्निवेश! वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः, तन्मूलं वाऽसत्कर्म[2] पूर्वकृतं; तयोर्योनिः प्रज्ञापराध एव। तद्यथा—यदा वै देशनगरनिगमजनपदप्रधाना[3] धर्ममुत्क्रम्याधर्मेण प्रजां वर्तयन्ति, तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति, ततः सोऽधर्मः प्रसभं धर्ममन्तर्धत्ते, ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते; तेषां तथाऽन्तर्हितधर्मणामधर्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते; तेन नापो यथाकालं देवो वर्षति न वा वर्षति विकृतं वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, ओषधयः स्वभावं परिहायापद्यन्ते विकृतिं; तत उद्ध्वंसन्ते जनपदाः स्पृश्याभ्यवहार्यदोषात्[4] ॥२०॥

कुतोमूलं किंमूलमित्यर्थः। तस्य मूलमधर्म इति ऐहिकमधर्मं दर्शयति। तन्मूलं वेति तस्य वातादिवैगुण्यस्य मूलं पूर्वकृतं वा कर्म। तेनैहिको वाऽधर्मो जन्मान्तरकृतो वाऽधर्मो वातादिवैगुण्यस्य कारणमिति ब्रूते। तद्यदा देशेत्यादिना त्वैहिकमेवाधर्मं यद्वक्ष्यति हेतुतया तत् प्रत्यक्षत्वेन स्फुटसिद्धान्तार्थं, नतु जन्मान्तरकृताधर्मस्याकारणत्वेनेति ज्ञेयम्। तयोरिति ऐहिकजन्मान्तरीययोरधर्मयोः। योनिरिति कारणम्। स्पृश्याभ्यवहार्यदोषादिति स्पृश्यस्य वा जलादेरभ्यवहार्यस्य च छन्नस्य दुष्टत्वात्। एतच्च प्राधान्येन ज्ञेयं; तेन दुष्टपवनगन्धदोषोऽपि ज्ञेयः; असात्म्यगन्धोऽपि दुष्टवाते उक्तः ॥ १९॥ २०॥

तथा शस्त्रप्रभवस्यापि जनपदोद्ध्वंसस्याधर्म एव हेतुर्भवति। येऽतिप्रवृद्धलोभक्रोधमोहमानास्ते दुर्बलानवमत्यात्मस्वजनपरोपघाताय शस्त्रेण परस्परमभिक्रामन्ति, परान् वाऽभिक्रामन्ति, परैर्वाऽभिक्राम्यन्ते ॥ २१॥

शस्त्रप्रभवस्यापीति बहुजनमारकस्य शस्त्रप्रभवस्येत्यर्थः। आत्मस्वजनपरोपघातायेति अत्र आत्मनः स्वजनस्य परस्य चोपघातो भवति प्राय इत्यर्थः ॥ २१॥

रक्षोगणादिभिर्वा विविधैर्भूतसङ्घैस्तमधर्ममन्यद्वाऽप्यपचारान्तरमुपलभ्याभिहन्यन्ते ॥ २२॥

राक्षसाद्युत्सादोऽपि जनानामधर्मकृत एव भवतीत्याह—रक्षोगणेत्यादि। अन्यद्वा अपचारान्तरमिति यथोक्ताधर्मकारणादन्यदधर्मकारणमशौचादीत्यर्थः ॥ २२॥

तथाऽभिशापप्रभवस्याप्यधर्म एव हेतुर्भवति। ये लुप्तधर्माणो धर्मादपेतास्ते गुरुवृद्धसिद्धर्षिपूज्यानवमत्याहितान्याचरन्ति; ततस्ताः प्रजा गुर्वादिभिरभिशप्ता भस्मतामुपयान्ति प्रागेवानेकपुरुषकुलविनाशाय, नियतप्रत्ययोपलम्भादनियताश्चापरे ॥ २३॥

प्रागेवेति झटिति, अनेकपुरुषकुलविनाशायाभिशप्ता भस्मतां यान्तीत्यर्थः[1]। नियतप्रत्ययोपलम्भादनियताश्चापरे भस्मतां यान्तीति योजना। अनियता अमिलिता इत्यर्थः। प्रतिनियतपुरुषाभिशापात् प्रतिनियता एव भस्मतां यान्ति, न सर्वे जना इत्यर्थः ॥ २३॥

प्रागपि चाधर्मादृते नाशुभोत्पत्तिरन्यतोऽभूत्। आदिकाले ह्यदितिसुतसमौजसोऽतिविमलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्मयज्ञविधिविधानाः शैलसारसंहतस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबलजवपराक्रमाश्चारुस्फिचोऽभिरूपप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्जवानृशंस्यदानदमनियमतपउपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषः। तेषामुदारसत्त्वगुणकर्मणामचिन्त्यरसवीर्यविपाकप्रभावगु-[2]

१ 'येषां न मृत्युजनकादिष्टरूपं सामान्यमस्तीत्यर्थः' इति पा०। २ 'चासत्कर्म' इति पा०। ३ नगरनिगमजनपदप्रधाना नगरादीनामध्यक्षाः। ४ 'स्पर्शाभ्यवहार्यदोषात्' इति पा०।

१ प्रागेवेत्यादि पाठो योगीन्द्रनाथसेनेन न पठ्यते। २ 'उदारसत्त्वगुणैः कर्मणां धर्माणां चाचिन्त्यत्वाद्रस०' इति पा०।

णसमुदितानि प्रादुर्बभूवुः शस्यानि सर्वगुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ। भ्रश्यति तु कृतयुगे केषांचिदत्यादानात् सांपन्निकानां सत्त्वानां शरीरगौरवमासीत्, शरीरगौरवाच्छ्रमः, श्रमादालस्यम्, आलस्यात् संचयः, संचयात् परिग्रहः, परिग्रहाल्लोभः प्रादुरासीत् कृते। ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः। ततस्त्रेतायां धर्मपादोऽन्तर्धानमगमत्। तस्यान्तर्धानात् युगवर्षप्रमाणस्य पादह्रासः, पृथिव्यादेश्च गुणपादप्रणाशोऽभूत्। तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्यरसवीर्यविपाकप्रभावगुणपादभ्रंशः। ततस्तानि प्रजाशरीराणि हीयमानगुणपादैराहारविहारैरयथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तानि। अतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति ॥ २४ ॥

आद्याविर्भावे च रोगाणामधर्म एव कारणमित्याह—प्रागपि चेत्यादि। यज्ञः यज्ञदेवता, विधिः यज्ञविधायको वेदः, विधानं यज्ञकर्म। जवः वेगः। परिग्रहः ममता। अमितमिवातिबहुत्वेनायुर्येषां ते अमितायुषः। सत्ये हि चतुर्वर्षशतमायुः; यदुक्तं भगवता व्यासेन—"पुरुषाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः। कृते" इति। सांपन्निकानाम् ईश्वराणाम्। कृते इति कृतयुगस्य शेषे। हीयमानगुणपादैरिति यथा यथा त्रेतायाः क्षयो भवति, तथा तथा आहारविहारगुणपादह्रासो भवन्नास्त इति दर्शयति। विहारोऽपि चाधर्मवतां हीनगुणो भवति, तेन न यथावच्छरीरोपष्टम्भनं करोति। उपष्टभ्यमानानीति धातुसाम्येन पाल्यमानानि ॥ २४ ॥

भवतश्चात्र—

युगे युगे धर्मपादः क्रमेणानेन हीयते।
गुणपादश्च भूतानामेवं लोकः प्रलीयते ॥ २५ ॥
संवत्सरशते पूर्णे याति संवत्सरः क्षयम्।
देहिनामायुषः काले यत्र यन्मानमिष्यते ॥ २६ ॥
इति विकाराणां प्रागुत्पत्तिहेतुरुक्तो भवति ॥ २७ ॥

संवत्सरशते पूर्णे इति संवत्सरेण शततमेंऽशे पूर्णे। यत्र यन्मानमिष्यत इति यत्र युगे यन्मानमिष्यते, तस्य शततमेंऽशे पूर्णे वर्ष एकः क्षयं याति। तेन, कलौ शतवर्षायुषि यदा शततमोंऽशो याति क्षयं तदा नवनवतिः परमायुर्भवतीत्याद्यनुसरणीयम् ॥ २५–२७ ॥

एवंवादिनं भगवन्तमग्निवेश उवाच-किंनु खलु भगवन्! नियतकालप्रमाणमायुः सर्वं न वेति ॥२८॥

तं भगवानुवाच—

इहाग्निवेश! भूतानामायुर्युक्तिमपेक्षते।
दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥ २९ ॥
दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम्।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ ३० ॥
बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः।
दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम् ॥ ३१ ॥
तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च।
नियतस्यायुषो हेतुर्विपरीतस्य चेतरा ॥ ३२ ॥
मध्यमा मध्यमस्येष्टा कारणं शृणु चापरम्।

युक्तिमपेक्षत इति दैवपुरुषकारयोर्योगमपेक्षते नियतत्वेऽनियतत्वे चेत्यर्थः। बलं चाबलं च बलाबलं; तत्रायुषो नियतत्वेन बलम्, अनियतत्वेनाबलं ज्ञेयम्। यद्यपि पौर्वदैहिकं कर्मास्थिरत्वेन गतं, तथाऽपि तज्जनितादृष्टस्य विद्यमानत्वात् तद्द्वारा तत्कर्म कारणं भवत्येवेह जन्मन्यपि। पुरुषकारस्त्विह जन्मनि कृतं कर्म सामान्येनोच्यते। तत्र बलिमङ्गलादि अदृष्टजननत्वाद् व्याप्रियते, तथा भेषजादि रसरुधिरादिद्वारा॥ २८–३२ ॥—

दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ॥ ३३ ॥
दैवेन चेतरत् कर्म विशिष्टेनोपहन्यते।
दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥ ३४ ॥
कर्म किंचित् क्वचित् काले विपाके नियतं महत्।
किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते ॥ ३५ ॥

उदारयोरिति प्रशस्तत्वेनोत्तमयोः। दीर्घस्येति रसायनादिना

१ 'हीयमानानि हीयमानगुणपादैर्हीयमानगुणैश्चाहारविहारैरयथापूर्वमुपष्टभ्यमाना ह्यग्निमारुतपरीतानि' इति पा०।

१ "आहाराचारप्रायश्चित्तादिपुरुषकारस्त्वैहिकफलं दृष्टम्, अदृष्टं च प्रायो जन्मान्तरकृतं शुभाशुभं शरीरादिनिर्वर्तकं, तदेतद्द्वितयमपि कारणं दृष्टसामर्थ्यात्; तत्र यदा दृष्टमाहारादि शुभमुपचितम्, अदृष्टं च धर्मरूपं शुभमुपचितं भवति, तदा युगनियतवर्षशतरूपस्यायुषः सुखयुक्तस्य च निष्पत्तिः; यदा तु दैवपुरुषकारयोः शुभमध्यमयोरन्योन्यस्यानुगुणयोर्योगः, तदा मध्यं मध्यमसुखं युगनियतादल्पं भवति; यदा तु हीनयोर्योगः, तदा हि हीनमसुखायुर्भवति; एवं यदा दैवमशुभं, पुरुषकारश्चाशुभः, तदाऽल्पं दुःखबहुलं चायुर्भवति; एवमशुभदैवपुरुषकारयोर्मध्यमतायां हीनतायां वा उदाहरणमूह्यम्; एवं यदा दैवं शुभमुत्तमं, पुरुषकारस्तु मध्यो हीनो वा, तदाऽपि फलविशेष ऊह्यः; अत्रार्थे चरकः—"इहाग्निवेश! भूतानामायुर्युक्तिमपेक्षते। दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्। दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम्। स्मृतः पुरुषकारस्तु क्रियते यदिहापरम्। बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः। दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम्। तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च। नियतस्यायुषो हेतुर्विपरीतस्य चेतरा। मध्यमा मध्यमस्योक्ता विशेषं शृणु चापरम्" (च. वि. अ. ३) इति। अत्र पौर्वदैहिकमिति प्रायेण जन्मान्तरकृतस्यैवेह जन्मनि पाकादुक्तमेतत्, जन्मान्तरकृतं तु यागब्रह्मवधादि प्रायो जन्मान्तर एव फलति; नियतस्येति युगनियतस्य" इति सु. टी. भा. (सू. अ. १७) चक्रः।

शतादपि दीर्घस्य; सुखस्येति नीरोगत्वेन; नियतस्येति युगनियतस्य, कलौ वर्षशतप्रमाणस्येत्यर्थः; शतादर्वागनियतमपीह नियतशब्देनोच्यते; तेन न तत्र तस्य दैवपुरुषकारजन्यत्वं घटते, तथाऽपि तस्याप्रशस्तदैवपुरुषकारजन्यत्वात् दैवपुरुषकारजन्यत्वं भवतीति युक्तं; किंवाऽनियतायुष एव पुरुषा रसायनाधिकारिणो भवन्ति, नियतायुषं प्रति रसायनस्याकिञ्चित्करत्वात्; रसायनादिकृतं चायुरनियतं प्रशस्तत्वेन प्रशस्तदैवपुरुषकारजन्यं भवतीति युक्तम्। किंवा, दीर्घत्वे सति नियतस्यायुषो हेतुरिति योजना; तेन युगनियतं च शतवर्षं, तथा तदधिकं चानियतं महता कर्मणैव क्रियते; पुरुषकारेण तु महताऽस्य सुखित्वं रोगानुपघातात् क्रियते; रसायनेन च जरादिव्याधिप्रतिघातः क्रियते; रसायनलभ्यमप्यायुर्बलवत्कर्मनियतमेवेति भावः। विपरीतस्य दीर्घत्वेनानियतस्य तथा रोगयुक्तत्वेनासुखस्य। इतरेति हीनयोर्दैवपुरुषकारयोर्युक्तिरित्यर्थः। मध्यमा मध्यमस्य दीर्घत्वेनादीर्घत्वेनानियतस्य, तथा सुखासुखत्वेनानियतस्यायुषो मध्यमयोः कर्मणोर्युक्तिरित्यर्थः। कारणमिति दैवपुरुषकारयोः परस्परबाधने उपपत्तिमित्यर्थः। दैवमित्यादि। दुर्बलमायुर्जननं दैवं बलवता मारकेण दृष्टापथ्यभोजनादिना विपरीतमरणकार्यजननादुपहन्यते; विशिष्टेन बलवता, इतरत् कर्म दृष्टं पुरुषकाराख्यम्, उपहन्यते पराभूयते। एतद्दैवकर्तृकदृष्टपराभवदर्शनाद्दैवनियतमेव सर्वमायुरिति केचिन्मन्यन्त इत्याह—दृष्ट्वेत्यादि। यदि दृष्टमायुः कारणं स्यात्, न तदा भेषजैः सम्यगुपपादितानां मृत्युः स्यात्; यतश्च सत्यपि चिकित्सिते कर्मवशात्तु मृत्युर्भवति; तेन, यत्रापि चिकित्सा जीवयतीति मन्यन्ते, तत्रापि कर्मैवास्ति जीवनकारणमिति दृष्टशक्तित्वादवधारयाम इति भावः। दैवपुरुषकारयोरुभयोरपि बाध्यत्वं दर्शयन्नेकान्तेन नियतायुःपक्षं व्युदस्यति—कर्मेत्यादि। न क्वचित् कर्म न भवति; यदुच्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति। किंचित्त्वकालनियतमिति, यथा—इदं मारकं कर्म न तु क्वचित्काले पञ्चविंशवर्षादौ नियतं, तेन यस्मिन् काले पुरुषकाराख्यं दृष्टकर्मानुगुणं प्राप्नोति तस्मिन् काले सहकारिसान्निध्योपबृंहितबलं मारयति, यदा तु दृष्टमपथ्यसेवादि न प्राप्नोति न तदा मारयति; प्रत्ययैः प्रतिबोध्यत इति दृष्टकारणैरुद्रिक्तं क्रियते। ये तु ब्रुवते—किंचित् कर्म कालनियतं यदा पच्यते, तस्मिन् काले पच्यत एवेति कालनियमः; विपाकनियतं तु—इदं कर्म विपच्यत एव, न तु विपच्यत इति न; कालविपाकनियतं तु यथा—इदं कर्म अस्मिन्नेव काले विपच्यत एवेति; एतच्च कालविपाकनियतत्वाद्बलवदुच्यते; एतदेव दृष्टाबाधनीयमिति; तेषां मते, अभुक्तमपि क्षीयते दुर्बलकर्म प्रायश्चित्तादिनेति बोद्धव्यं, परं विपर्ययेऽपि तदा किंचित्त्वविपाककालनियतमिति वक्तव्यं स्यात्; किंचित्त्वकालनियतमिति वचनात्तु कालनियतमपि ॥ ३३-३५ ॥

१ "यदा तु दैवपुरुषकारयोर्विरोधः, तदा दुर्बलं दैवं पुरुषकारेण बलवता हन्यते, बलवता दैवेन दुर्बलः पुरुषकारो हन्यते; अत एव च दैवेन पुरुषकारं पराभूतं दृष्ट्वा केचित् कर्मवादिनो दैवनियतमेवायुरादिकं वदन्ति, व्यर्थं च पुरुषकारं दैवयुक्त्यपाश्रयाहाराचाररूपं वदन्ति।" इति सु. टी. भा. (सू. अ. १) चक्रः।

**तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु। निदर्शनमपि चात्रोदाहरिष्यामः—यदि हि नियतकालप्रमाणमायुः सर्वं स्यात्, तदाऽऽयुष्कामाणां न मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनाद्याः क्रिया इष्टयश्च प्रयोज्येरन्; नोद्भ्रान्तचण्डचपलगोगजोष्ट्रखरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्याः स्युः, न प्रपातगिरिविषमदुर्गाम्बुवेगाः, तथा न प्रमत्तोन्मत्तोद्भ्रान्तचण्डचपलमोहलोभाकुलमतयः, नारयः, न प्रवृद्धोऽग्निः, च विविधविषाश्रयाः सरीसृपोरगादयः, न साहसं, नादेशकालचर्या, न नरेन्द्रप्रकोप इति; एवमादयो हि भावा नाभावकराः स्युः, आयुषः सर्वस्य नियतकालप्रमाणत्वात्। न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमागच्छेत् प्रा-**

१ "बलवतोस्तु दैवपुरुषकारयोर्विरोधिनोर्युगपदुपस्थापनं नास्त्येव, विरोधिनां सुखदुःखादीनां यौगपद्येनानुपलम्भादेव; बलवत्ता तु दैवाख्यकर्मणो धर्माधर्मरूपस्य कालविपाकनियमाद् भवति; विपर्यये तु अबलवत्त्वं पुरुषकारबाधनीयत्वं च भवति; यदाह चरकः—"कर्म किंचित् क्वचित् काले विपाकनियतं महत्। किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते" (च.वि.अ.३) इति; अत्र त्रिविधो नियमः एकविधश्चानियमः, एवं पक्षचतुष्टयमपि भवति; यथा—"इदं कर्म यदि पच्येत तदा अस्मिन्नेव काले पच्येत, नान्यत्रेति कालनियमः; तथा—इदं कर्म यत्र क्वचित् काले पच्येतैव, न पच्येतेति न, इति विपाकनियमः; एतौ पक्षौ पुरुषकारबाध्यतया शास्त्रविषयौ, पाक्षिकस्य नियमस्यासत्त्वात्; तथा—इदं कर्मास्मिन्नेव काले पच्येतैवेति कालविपाकनियमः; अयमविषयः शास्त्रस्य, पुरुषकारानपेक्षत्वात्; तथा—इदं कर्म कुत्रचित् काले प्रत्ययं दृष्टमासाद्य पच्येत, यदि वा न पच्येत, तदपि च प्रायश्चित्तादिपराभूतत्वादेवेति कालविपाकानियमः सर्वथा शास्त्रविषयः। अत्र पक्षचतुष्टये केचिद् वदन्ति—"किञ्चित्तु कालनियतं" ( च. वि. अ. ३ ) इति वदता चरकेण कालानियमो दर्शितः, विपाकानियमस्तु न दर्शितः; कर्मणां विपाकानियमो नास्ति; यदुच्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति; किन्तु प्रायश्चित्तानामपि अदृष्टफलकर्मक्षयोपदेशात्, तथा "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन"(भ.गी.अ.४) इति ज्ञानाग्निना च कर्मक्षयोपदेशाद् विपाकानियमपक्षोऽपि संभवत्येव; तथा च—"न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते (शा.अ.१)" इति वदता चरकेणापि महतः कर्मणः प्रायश्चित्ताबाधनीयस्य विपाकनियमोऽपि दर्शितो भवति; अलमतिसूक्ष्मगतिकर्मविचारेण; शास्त्रस्यारोग्यसाधनाहाराचाररूपपुरुषकारोपदेशकत्वेन प्रयोजनवत्त्वमस्त्येव" इति सु.टी.भा. (सू.अ.१) चक्रः।

णिनां, व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्युर्महर्षीणां रसायनाधिकारे, नापीन्द्रो नियतायुषं शत्रुं वज्रेणाभिहन्यात्, नाश्विनावार्तं भेषजेनोपपादयेतां, न महर्षयो यथेष्टमायुस्तपसा प्राप्नुयुः, न च विदितवेदितव्या महर्षयः ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा। अपि च सर्वचक्षुषामेतत् परं यदैन्द्रं चक्षुः, इदं चाप्यस्माकं तेन प्रत्यक्षं; यथा—पुरुषसहस्राणामुत्थायोत्थायाहवं कुर्वतामकुर्वतां चातुल्यायुष्ट्वं, तथा जातमात्राणामप्रतीकारात् प्रतीकाराच्च, अविषविषप्राशिनां चाप्यतुल्यायुष्ट्वमेव, न च तुल्यो योगक्षेम उदपानघटानां चित्रघटानां चोत्सीदतां; तस्माद्धितोपचारमूलं जीवितम्, अतो विपर्ययान्मृत्युः । अपि च देशकालात्मगुणविपरीतानां कर्मणामाहारविकाराणां च क्रमोपयोगः सम्यक्, त्यागः सर्वस्य चातियोगायोगमिथ्यायोगानां, सर्वातियोगसंधारणम्, असंधारणमुदीर्णानां च गतिमतां, साहसानां च वर्जनम्, आरोग्यानुवृत्तौ हेतुमुपलभामहे सम्यगुपदिशामः सम्यक् पश्यामश्चेति ॥ ३६ ॥

अतः परमुत्तरमुपसंहरति—तस्मादित्यादि । उभयदृष्टत्वादिति दैवस्य पुरुषकारेण, तथा पुरुषकारस्य दैवेन बाधदर्शनात् । एकान्तग्रहणमिति नियतमेवायुरिति तथा अनियतमेवायुः सर्वमिति चेत्यर्थः । निदर्श्यतेऽभिमतः पक्षः साध्यतेऽनेनेति निदर्शनं युक्तिरित्यर्थः । अत्रेति अनैकान्तिकपक्षे । यदीत्यादिना प्रकरणेनायुर्जनकस्य दृष्टस्य हेतोः सेवा तथा आयुर्विघातकस्य हेतोरसेवा सर्वप्रामाणिकजनाविवादसिद्धा दर्श्यते । सा च सर्वा यदि नियतमायुः स्यात्तदा अकिंचित्करी स्यात्, अनियते चायुषि किंचित्करी स्यात्; तस्मादनियतमप्यायुर्भवतीति भावः । न च सर्वत्रैवादृष्टमेव कारणं दृष्टमकिंचित्करमेवेति वदतो दृष्टस्यापि त्रिवृतादेर्विरेकादिकर्तृत्वं व्यक्तमेव; अदृष्टस्यैव तु कारणत्वं दृष्टकार्यानुपपत्तेः कल्पनीयं; तेनादृष्टस्य कारणत्वं दृष्टकारणमूलमित्यर्थः; न च दृष्टकारणोच्छेदः कल्पयितुमपि पार्यते । इष्टयः यज्ञाः । अत्यर्थंसर्पणशीला उरगाः सरीसृपोरगाः । आचरेयुर्वा 'भेषजम्' इति शेषः । चक्षुषां परमिति अत्यर्थाभ्रान्तत्वेन । अतुल्यायुष्ट्वमिति ये आहवं कुर्वते ते शस्त्रेण म्रियन्ते, ये तु न कुर्वते ते शस्त्रेण न प्रायो म्रियन्ते । प्रतीकारादप्रतीकाराच्चातुल्यायुष्ट्वमिति योजना । न च तुल्यं इत्यादौ चित्रघटो यश्चित्रित इव स्थाप्यते, स हि पानीयवहनादिप्रत्यवायहेत्वभावाच्चिरं तिष्ठति; उदपानघटस्तु जलसंबन्धात् तथा वहनसमये पतनादिना च शीघ्रमुत्सीदति । हितोपचारमूलमिति हितोपचारमूलमपि । क्रमोपयोगः सम्यगिति योजना । सर्वातियोगसंधारणं सर्वातियोगानां वर्जनम् ॥ ३६ ॥

अतः परमग्निवेश उवाच—एवं सत्यनियतकालप्रमाणायुषां भगवन्! कथं कालमृत्युरकालमृत्युर्वा भवतीति ॥ ३७ ॥

एवं सतीत्यादि । यत्तावत् कालनियतं तस्याकाले मरणाभावादेव नाकालमृत्युरस्ति, यत्त्वकालनियतं तस्याप्यनियतत्वात् कथं कालमृत्युरकालमृत्युर्वा भवति ? अनियते ह्यायुषि कालनियमो नास्ति, नियतकालाच्चार्वागकालमृत्युरुच्यत इति पृच्छार्थः ॥ ३७ ॥

तमुवाच भगवानात्रेयः—श्रूयतामग्निवेश ! यथा यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः स च सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छेत्, तथाऽऽयुः शरीरोपगतं बलवत्प्रकृत्या यथावदुपचर्यमाणं स्वप्रमाणक्षयादेवावसानं गच्छति; स मृत्युः काले । यथा च स एवाक्षोऽतिभाराधिष्ठितत्वाद्विषमपथादपथादक्षचक्रभङ्गाद्वाह्यवाहकदोषादणिमोक्षादनुपाङ्गात् पर्यसनाच्चान्तराऽवसानमापद्यते, तथाऽऽयुरप्ययथाबलमारम्भादयथाग्न्यभ्यवहरणाद्विषमाभ्यवहरणाद्विषमशरीरन्यासादतिमैथुनादसत्संश्रयादुदीर्णवेगविनिग्रहाद्विधार्यवेगाविधारणाद्भूतविषवाय्वग्न्युपतापादभिघातादाहारप्रतीकारविवर्जनाच्चान्तराऽवसानमापद्यते, स मृत्युरकाले; तथा ज्वरादीनप्यातङ्कान्मिथ्योपचरितानकालमृत्यून् पश्याम इति ॥ ३८ ॥

यथाकालमिति यावता कालेन प्रत्यवायशून्यस्याक्षस्य क्षयो भवति तस्मिन्नेवेत्यर्थः । स्वप्रमाणक्षयादेवेति युगानुरूपवर्षशतादिप्रमाणक्षयादित्यर्थः । अपथादिति सर्वथा अमार्गगमनात् । अणिमोक्षादिति कीलमोक्षात् । अनुपाङ्गादिति स्नेहादानात् । पर्यसनात् परिक्षेपात् । मिथ्योपचरितानिति असम्यक्चिकित्सितान् । अकालमृत्यूनिति अकालमृत्युकरान् ॥ ३८ ॥

अथाग्निवेशः पप्रच्छ—किन्नु खलु भगवन्! ज्वरि-

१ 'भेषजेनोपचरेताम्' इति पा० । २ सर्वचक्षुषां सर्वप्रमाणानामित्यर्थः, एतत्परमभ्रान्तत्वेन श्रेष्ठं, यदैन्द्रं चक्षुः प्रत्यक्षप्रमाणमित्यर्थः । 'यदिन्द्यं' इति पा० । ३ 'आहारं' इति पा० ४ 'क्रियोपयोगः' इति पा० । ५ सर्वस्येति कालस्य कर्मण इन्द्रियार्थस्य च । ६ 'संधारणमनुदीर्णानां' इति पा० । ७ 'अतः परमुक्तमुपसंहरति' इति पा० । ८ 'भेषजं तावदाहाराचाररूपं यस्य दोषस्य विकारस्य वा विपरीतं, तदसति विरोधके तं शमयतीति दृष्टं, यथा—कटुकेन श्लेष्मक्षयः, अग्निना शीतप्रशमनम्, आहारेण क्षुदुपशमः, पानीयपानेन पिपासापगमः; एवमादि सामान्येन वृद्धिः, विपरीतेन च ह्रास इति दृश्यते । न चात्रापि दृष्टेनैवोपपद्यमानेऽदृष्टमेव कारणमिति कल्पना युक्ता; यतो दृष्टेनानुपपद्यमाने कार्ये कारणमदृष्टं कल्प्यते, दृष्टपराभवेन तु सर्वत्राऽदृष्टकल्पनं प्रामाणिकमेव । यतो यदेवादृष्टं कारणत्वेनाभिमतं तद्दृष्टयागादिजन्यं, तद्वदेव भेषजं दृष्टरूपं तावत्क्वचिदस्त्येवं स्वीकर्तव्यम्' इति सुश्रुतटीकायां भानुमत्यां(सू.अ.१)चक्रः ।

तेभ्यः पानीयमुष्णं प्रयच्छन्ति भिषजो भूयिष्ठं न तथा शीतम्, अस्ति च शीतसाध्योऽपि धातुर्ज्वरकर इति ॥ ३९ ॥

संप्रति मिथ्योपचारश्रुत्या उष्णतोयं ज्वरेऽप्याग्नेये मिथ्योपचारः स्यादित्याशङ्क्याह—किंन्वित्यादि । शीतसाध्योऽपि धातुः पित्तमुष्णरूपमित्यर्थः । पानीयं यस्मात् सर्वज्वरितेभ्यो दीयते, तस्मात् पानीयमेवात्र पृच्छति ॥ ३९ ॥

तमुवाच भगवानात्रेयः—ज्वरितस्य कायसमुत्थानदेशकालानभिसमीक्ष्य पाचनार्थं पानीयमुष्णं प्रयच्छन्ति भिषजः । ज्वरो ह्यामाशयसमुत्थः, प्रायो भेषजानि चामाशयसमुत्थानां विकाराणां पाचनवमनापतर्पणसमर्थानि[1] भवन्ति; पाचनार्थं च पानीयमुष्णं, तस्मादेतज्ज्वरितेभ्यः प्रयच्छन्ति भिषजो भूयिष्ठम् । तद्धि तेषां पीतं वातमनुलोमयति, अग्निं चोदर्यमुदीरयति, क्षिप्रं जरां गच्छति, श्लेष्माणं परिशोषयति, स्वल्पमपि च पीतं तृष्णाप्रशमनायोपकल्पते; तथायुक्तमपि चैतन्नात्यर्थोत्सन्नपित्ते ज्वरे सदाहभ्रमप्रलापातिसारे वा प्रदेयम्, उष्णेन हि दाहभ्रमप्रलापातिसारा भूयोऽभिवर्धन्ते, शीतेन चोपशाम्यन्तीति ॥ ४० ॥

उत्सन्नपित्ते प्रवृद्धपित्ते ॥ ४० ॥

भवति चात्र—

शीतेनोष्णकृतान् रोगाञ्छमयन्ति भिषग्विदः ।
ये तु शीतकृता रोगास्तेषामुष्णं भिषग्जितम् ॥४१॥

न केवलं ज्वरे एव शीतोष्णसमुत्थत्वभेदेन उष्णशीतोपचारः, किंतु सर्वत्रैव व्याधावेवमित्याह—शीतेनेत्यादि । भिषजश्च ते ज्ञानवन्तश्चेति भिषग्विदः ॥ ४१ ॥

एवमितरेषामपि व्याधीनां निदानविपरीतं भेषजं भवति; यथा—अपतर्पणनिमित्तानां व्याधीनां नान्तरेण पूरणमस्ति शान्तिः, तथा पूरणनिमित्तानां व्याधीनां नान्तरेणापतर्पणम् ॥ ४२ ॥

अपतर्पणमपि च त्रिविधं—लङ्घनं, लङ्घनपाचनं, दोषावसेचनं चेति ॥ ४३ ॥

तत्र लङ्घनमल्पबलदोषाणां[2], लङ्घनेन ह्यग्निमारुतवृद्ध्या वातातपपरीतमिवाल्पमुदकमल्पो दोषः प्रशोषमापद्यते; लङ्घनपाचने[3] तु मध्यबलदोषाणां, लङ्घनपाचनाभ्यां हि सूर्यसंतापमारुताभ्यां पांशुभस्मावकिरणैरिव चानतिबहूदकं मध्यबलो दोषः प्रशोषमापद्यते; बहुदोषाणां पुनर्दोषावसेचनमेव कार्यं, न ह्यभिन्ने केदारसेतौ पल्वलाप्रसेकोऽस्ति, तद्वद्दोषावसेचनम् ॥ ४४ ॥

न केवलं शीतोष्णसमुत्थयोरेव परं हेतुविपर्ययेण चिकित्सा, किन्त्वपतर्पणादिजेऽपि हेतुविपरीतेनेत्याह—एवमित्यादि । अपतर्पणसंतर्पणाभ्यां च सर्वं चिकित्सितं गृहीतं, न ह्यपतर्पणसंतर्पणाभ्यां विनाऽन्यद्विधानान्तरमस्ति चिकित्सायाः; येन सर्वं एवोपक्रमाः संतर्पणापतर्पणभेदा एव । अत[1] एव विशेषज्ञानार्थमपतर्पणभेदानाह—अपतर्पणमित्यादि । लङ्घनपाचनमितिवचनेन यत्र पाचनं क्रियते तत्रावश्यं स्तोकमात्रया लङ्घनमपि क्रियत इति दर्शयति, पाचनकाले हि यदि बृंहणं क्रियते तदा बृंहणेनाग्नेः प्रतिकूलेन पाचनं न स्यादित्यर्थः । अवकिरणैरिवेत्यत्र इवशब्दोऽनतिबहूदकमिवेत्येवंरूपो ज्ञेयः । अन्यद्वेति लङ्घनादि बृंहणादि च ॥ ४२-४४ ॥

दोषावसेचनमन्यद्वा भेषजं प्राप्तकालमप्यातुरस्य नैवंविधस्य कुर्यात् । तद्यथा—अनपवादप्रतीकारस्या[2]धनस्यापरिचारकस्य वैद्यमानिनश्चण्डस्यासूयकस्य तीव्राधर्मारुचेरतिक्षीणबलमांसशोणितस्यासाध्यरोगोपहतस्य मुमूर्षुलिङ्गान्वितस्य चेति । एवंविधं ह्यातुरमुपचरन् भिषक् पापीयसाऽयशसा योगमृच्छतीति ॥ ४५ ॥

अनपवादप्रतीकारो वाच्यप्रतीकारः । अधनस्यानुपकरणत्वेन न चिकित्सा पार्यते कर्तुमित्यर्थः । वैद्यमानी दुरभिमानाद्वैद्योपदेशं न करोति । तीव्राधर्मरुचेः प्रतिक्रियायामधर्मो भवति, न च चिकित्सा सिध्यत्यधर्मप्रतिबन्धात् । मुमूर्षुलिङ्गान्वितस्येति रिष्टयुक्तस्य । पापीयसेति पापहेतुना पापजनकेनायशसा ॥४५॥

भवति चात्र—

तदात्वे चानुबन्धे वा यस्य स्यादशुभं फलम् ।
कर्मणस्तन्न कर्तव्यमेतद्बुद्धिमतां मतम् ॥ ४६ ॥
( अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः ।
ज्ञेयः स जाङ्गलो देशः स्वल्परोगतमोऽपि च ॥ ४७ ॥
प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः ।
अनूपो बहुदोषश्च, समः साधारणो मतः ॥ ४८ ॥ )

अनुबन्धे वेति उत्तरकालम् । केचिदल्पोदकद्रुमो यस्त्वित्यादिग्रन्थं जाङ्गलादिदेशलक्षणमत्र पठन्ति ॥ ४६-४८ ॥

तत्र श्लोकाः—

पूर्वरूपाणि सामान्या हेतवः सस्वलक्षणाः ।
देशोद्ध्वंसस्य भैषज्यं हेतूनां मूलमेव च ॥ ४९ ॥
प्राग्विकारसमुत्पत्तिरायुषश्च क्षयक्रमः ।
मरणं प्रति भूतानां कालाकालविनिश्चयः ॥ ५० ॥

१ 'विरेचनवमनापतर्पणसंशमनान्येव' इति पा० । २ 'अल्पदोषाणाम्' इति पा० । ३ 'लङ्घनपाचनं' इति पा० ।

१ 'अत एव' इति हस्तलिखितपुस्तके न पठ्यते । २ 'अल्पवादप्रतीकारस्य' इति पा० ।

यथा चाकालमरणं यथायुक्तं च भेषजम्।
सिद्धिं यात्यौषधं येषां न कुर्यायेन हेतुना ॥ ५१ ॥
तदात्रेयोऽग्निवेशाय निखिलं सर्वमुक्तवान्।
देशोद्ध्वंसनिमित्तीये विमाने मुनिसत्तमः ॥ ५२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने जनपदोद्ध्वंसनीयविमानं नाम तृतीयोऽध्यायः ॥ ३ ॥

संग्रहे पूर्वरूपाणीति नक्षत्रादिविकाराः। सस्वलक्षणाः सस्वविकृतिलक्षणाः, तच्च लक्षणं तत्र वातमेवंविधमित्यादिना प्रोक्तम्। यथायुक्तं च भेषजं सिद्धिं यातीति अनेनोष्णपानीयदानोपपत्त्या सर्वं संगृहीतम् ॥ ४९-५२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने जनपदोद्ध्वंसनीयविमानं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः।

अथातस्त्रिविधरोगविशेषविज्ञानीयं विमानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

जनपदोद्ध्वंसनीयेऽविशेषेण सर्वेऽपि रोगा उक्ताः, तेषां विशेषो यथा ज्ञातव्यस्तदुपदेष्टुं त्रिविधरोगविशेषविज्ञानीयोऽभिधीयते ॥ १ ॥ २ ॥

त्रिविधं खलु रोगविशेषविज्ञानं भवति; तद्यथा—आप्तोपदेशः, प्रत्यक्षम्, अनुमानं चेति ॥ ३ ॥

रोगाणां विशेषो यथा वक्ष्यमाणो विज्ञायते येन तद्रोगविशेषविज्ञानम्, उपदेशप्रत्यक्षानुमानरूपं प्रमाणत्रयम्। अत्र तु युक्तेरनुमानान्तर्गतत्वादेव न पृथक्करणम्। एतच्च प्रमाणत्रयं क्वचिद्रोगे मिलितं, क्वचिद्द्वयं, क्वचिदेकं परीक्षायां वर्तते; येन, नान्तरे वह्निमान्द्यादौ प्रत्यक्षमवश्यं व्याप्रियते ॥ ३ ॥

तत्राप्तोपदेशो नामाप्तवचनम्। आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च[१]। तेषामेवंगुणयोगाद्यद्वचनं तत् प्रमाणम्। अप्रमाणं पुनर्मत्तोन्मत्तमूर्खरक्तदुष्टादुष्टवचनमिति; प्रत्यक्षं तु खलु तद्यत् स्वयमिन्द्रियैर्मनसा[२] चोपलभ्यते। अनुमानं खलु तर्को युक्त्यपेक्षः ॥ ४ ॥

त्रिस्रैषणीये प्रथममनुमानादिलक्षणान्युक्तानि, पुनरिह 'तत्रोपदेशो नाम' इत्यादिनाऽऽप्तोपदेशादिलक्षणाभिधानं प्रकरणागतत्वात् क्रियते, प्राकरणिको ह्यर्थोऽनुच्यमानो न्यूनो भवति। अवितर्केत्यादि।—वितर्कः कथंता अनिश्चितज्ञानमिति यावत्, स्मृतिः स्मरणज्ञानं, विभाग एकदेशः; एतद्विपर्ययान्निश्चयेनानुभवेन च कार्त्स्न्येन च ये भावान् जानते, तेऽवितर्कस्मृतिविभागविदः। वितर्कादिवेदी तु नाप्तः, प्रतिपाद्यवस्त्वशेषविशेषाविज्ञानात्। स्मृतिज्ञानं च यद्यपि प्रमाणमूलमेव, तथाऽपि वर्तमानक्षणे स्मृतिज्ञानविपर्यायस्य नावश्यविद्यमानतेति न तत् प्रमाणमिति भावः; किंवा, स्मृतिज्ञानं स्मृतिशास्त्रजं ज्ञानं गणितज्ञानं च; एतच्च ज्ञानद्वयं साक्षादर्थादर्शकं दुरवबोधेन मिथ्याज्ञानत्वसंभवादप्रमाणमपीति नोपादेयम्। अथ सम्यग्ज्ञानवन्तोऽपि रागादिवशादन्यथा व्याहरन्तीत्याह—निष्प्रीत्युपतापदर्शिन इति।—निष्प्रीत्या निरुपतापेन[१] च द्रष्टुं शीलं येषां ते तथा। एतेन यथार्थदर्शी निर्दोषश्चाप्तो भवतीत्युक्तं भवति। एवंभूतं चाप्तत्वं कस्यचिद्ब्रह्मादेः सर्वत्रैव भवति, लौकिकस्य तु यस्मिन्नेव विषये वितर्कादि न भवति तत्रैवोपदेशः प्रमाणमिति ज्ञेयम्। अप्रमाणमिति नावश्यं प्रमाणतयाऽवधार्यते, रागादिदुष्टत्वादित्यर्थः। दुष्टश्चासावदुष्टश्चेति दुष्टादुष्टः, तेन पिता हि पुत्रस्य दुष्टोऽप्यदुष्टत्वादाप्त एव भवति; किंवा दुष्टो वञ्चकः। स्वयमिन्द्रियैर्मनसा चेत्यनेन यदात्मनेन्द्रियैश्चक्षुरादिभिरव्यवधानेन गृह्यते रूपादि तत् प्रत्यक्षमिति बाह्यं प्रत्यक्षं गृह्णाति; मनसा चेत्यनेन च मनसाऽव्यवधानेन यदुपलभ्यते सुखादि, तच्च मानसं प्रत्यक्षं गृह्णाति। तर्कोऽत्राप्रत्यक्षं ज्ञानम्। युक्तिः संबन्धोऽविनाभाव इत्यर्थः; तेनाविनाभावजं परोक्षज्ञानमनुमानमित्यर्थः ॥ ४ ॥

त्रिविधेन खल्वनेन ज्ञानसमुदायेन पूर्वं परीक्ष्य रोगं सर्वथा सर्वमथोत्तरकालमध्यवसानमदोषं[२] भवति, न हि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुत्पद्यते। त्रिविधे त्वस्मिन् ज्ञानसमुदये पूर्वमाप्तोपदेशाज्ज्ञानं, ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते। किं ह्यनुपदिष्टं पूर्वं यत्तत् प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात्। तस्माद्द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षम्, अनुमानं च; त्रिविधा वा सहोपदेशेन ॥ ५ ॥

ज्ञानसमुदायेनेति ज्ञानसमुदायः प्रमाणसङ्घातः; तेन समुदायेन 'अयमेवं रोगः' इत्येवंभूतनिश्चयोऽध्यवसानम्। त्रिविधे त्वित्यादि। ज्ञायतेऽनेनेति ज्ञानं प्रमाणम्। प्रथमाप्तोपदेशो व्याधिं बोधयति, ततश्चाप्तोपदिष्टं व्याधिं प्रत्यक्षानुमानाभ्यां यथोक्तलिङ्गादिपरीक्षया निश्चिनोति; आगमाननुपदिष्टे च व्याधौ अवैद्य इव न प्रत्यक्षेणानुमानेन च व्याधिमुपलभत इत्याह—किं ह्यनुपदिष्टमित्यादि। एवं मन्यते—व्याधिविशेषास्तावद्दुरधिगमनीयाः, नोपदेशमन्तरेण शक्या विज्ञातुं, येऽधिगतवैद्यकशास्त्रास्ते प्रतिपादयन्त्येव व्याधिविशेषान्; तस्मादागमेन ये व्याधीनां हेत्वादिविशेषाः प्रतिपादितास्तान्

१ 'मत्तोन्मत्तमूर्खवक्तृदुष्टादुष्टवचनम्' इति गङ्गाधरसंमतः पाठः। २ 'आत्मना' इति पा०।

१ 'निरुपतापेन भावान् द्रष्टुं' इति पा०। २ 'सर्वमेवोत्तरकालं' इति पा०।

प्रत्यक्षानुमानाभ्यामुपलभमानो व्याधिं निश्चिनोति; अनुपदेशवांस्त्वनुपलभमानोऽपि हेत्वादिविशेषानशिक्षितरत्नपरीक्षो यथा रत्नानां विशेषं पश्यन्नपि नावधारयति रत्नविशेषं, तथा नावधारयति व्याधिविशेषमिति भावः। ज्ञानवतामिति आप्तोपदेशवताम्। त्रिविधा वेत्यनेन व्याधिपरीक्षासमये ह्याप्तोपदेशोऽपि व्याप्रियते ग्रहणीमार्दवस्वप्नदर्शनादिप्रतिपत्तौ, तथा दुरधिगमस्थानसंश्रयादिप्रतिपत्तौ, तथा कोष्ठमृदुदारुणत्वादिपरीक्षायां चातुरवचनरूपाप्तोपदेशोऽपि व्याप्रियत इति दर्शयति ॥ ५ ॥

**तत्रेदमुपदिशन्ति बुद्धिमन्तः—रोगमेकैकमेवंप्रकोपणमेवंयोनिमेवमुत्थानमेवमात्मानमेवमधिष्ठानमेवंवेदनमेवंसंस्थानमेवंशब्दस्पर्शरूपरसगन्धमेवमुपद्रवमेवंवृद्धिस्थानक्षयसमन्वितमेवमुदर्कमेवंनामानमेवंयोगं विद्यात्; तस्मिन्निदं प्रतीकारार्था प्रवृत्तिरथवा निवृत्तिरित्युपदेशाज्ज्ञायते ॥ ६ ॥**

तत्रेत्यादिनाऽऽप्तोपदेशगम्यमाह। प्रकोपणं वायो रूक्षत्वादिहेतुः। योनिः वातादयः। आत्मा स्वभावः; यथा—रोहिण्या दारुणत्वं, संन्यासस्य शीघ्रोपक्रमणीयत्वादि। अधिष्ठानं शरीरमवयवा मनश्च। इयं प्रतीकारार्था प्रवृत्तिः, यथा—ज्वरे लङ्घनपाचनार्था[१] प्रवृत्तिः। निवृत्तिश्च प्रतीकारार्था यथा—नवज्वरे दिवास्वप्नस्नानादौ निवृत्तिरित्यादि मन्तव्यम् ॥ ६ ॥

**प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्सुः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्थानातुरशरीरगतान् परीक्षेत, अन्यत्र रसज्ञानात्; तद्यथा—अन्त्रकूजनं, सन्धिस्फुटनमङ्गुलीपर्वणां च, स्वरविशेषांश्च,ये चान्येऽपि केचिच्छरीरोपगताः शब्दाः स्युस्तान्छ्रोत्रेण परीक्षेत; वर्णसंस्थानप्रमाणच्छायाः, शरीरप्रकृतिविकारौ[२], चक्षुर्वैषयिकाणि यानि चान्यान्यनुक्तानि तानि चक्षुषा परीक्षेत; रसं तु खल्वातुरशरीरगतमिन्द्रियवैषयिकमप्यनुमानादवगच्छेत्, न ह्यस्य प्रत्यक्षेण ग्रहणमुपपद्यते, तस्मादातुरपरिप्रश्नेनैवातुरमुखरसं विद्यात्, यूकापसर्पणेन त्वस्य शरीरवैरस्यं, मक्षिकोपसर्पणेन शरीरमाधुर्यं, लोहितपित्तसंदेहे तु किं धारिलोहितं लोहितपित्तं वेति श्वकाकभक्षणाद्धारिलोहितमभक्षणाल्लोहितपित्तमित्यनुमातव्यम्, एवमन्यानप्यातुरशरीरगतान् रसाननुमिमीत; गन्धांस्तु खलु सर्वशरीरगतानातुरस्य प्रकृतिवैकारिकान् घ्राणेन परीक्षेत; स्पर्शं च पाणिना प्रकृतिविकृतियुक्तम्। इति प्रत्यक्षतोऽनुमानादुपदेशतश्च[३] परीक्षणमुक्तम् ॥ ७ ॥**

अङ्गुलीपर्वणां च स्फुटनमिति संबन्धः। अन्येऽपि चेति कासहिक्काशब्दादयः। यानि चान्यानीत्यनेन लक्षणप्रभादीनि गृह्यन्ते। यूकापसर्पणेन शरीरवैरस्यमिति विरसाद्धि शरीराद्यूका अपसर्पन्ति; एवं यूकायनपसर्पणेन प्राकृतरसयुक्तं शरीरमनुमातव्यम्। धारिलोहितमिति जीवच्छोणितमित्यर्थः; श्वकाकभक्षणादिज्ञेयं यद्धारि रक्तं तत् पित्ताद्युष्टत्वेनाविरसं श्वादयो भक्षयन्ति, ननु पित्तदुष्टं रक्तपित्तमिति भावः। अत्र एवंशब्दस्पर्शरूपरसगन्धमित्युपदेशं कृत्वा शब्दानन्तरं चक्षुर्ग्राह्यं रूपं दर्शयन् शब्दादिपरीक्षायाश्च क्रमनियमाभावं सूचयति ॥ ७ ॥

**इमे तु खल्वन्येऽप्येवमेव भूयोऽनुमानज्ञेया[१] भवन्ति भावाः। तद्यथा—अग्निं जरणशक्त्या परीक्षेत, बलं व्यायामशक्त्या, श्रोत्रादीनि शब्दाद्यर्थग्रहणेन, मनोऽर्थाव्यभिचरणेन, विज्ञानं व्यवसायेन, रजः सङ्गेन, मोहमविज्ञानेन, क्रोधमभिद्रोहेण, शोकं दैन्येन, हर्षमामोदेन, प्रीतिं तोषेण, भयं विषादेन, धैर्यमविषादेन, वीर्यमुत्थानेन[२], अवस्थानमविभ्रमेण, श्रद्धामभिप्रायेण, मेधां ग्रहणेन, संज्ञां नामग्रहणेन, स्मृतिं स्मरणेन, ह्रियमपत्रपणेन, शीलमनुशीलनेन, द्वेषं प्रतिषेधेन, उपधिमनुबन्धेन[३], धृतिमलौल्येन, वश्यतां विधेयतया, वयोभक्तिसात्म्यव्याधिसमुत्थानानि कालदेशोपशयवेदनाविशेषेण, गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां, दोषप्रमाणविशेषमपचारविशेषेण, आयुषः क्षयमरिष्टैः, उपस्थितश्रेयस्त्वं कल्याणाभिनिवेशेन, अमलं सत्त्वमविकारेण, ग्रहण्यास्तु मृदुदारुणत्वं स्वप्नदर्शनमभिप्रायं द्विष्टेष्टसुखदुःखानि[४] चातुरपरिप्रश्नेनैव विद्यादिति ॥ ८ ॥**

भूयोऽनुमानज्ञेया इत्यनेनानुमानगम्यतया वक्ष्यमाणा केचिदग्निबलादय आतुरोपदेशगम्या अपि भवन्तीति सूचयति। मनोऽर्थाव्यभिचरणेनेति सतीन्द्रियाणामर्थसंबन्धे यदिदं कदाचिच्छब्दं प्रत्येति, कदाचिद्रसमित्याद्ययौगपद्येन सर्वार्थान् प्रत्येति, तेनास्ति कारणानन्तरमिन्द्रियार्थग्राहकं[५] मन इत्यनुमीयते। ज्ञानं व्यवसायेनेति व्यवसायः प्रवृत्तिः, यथा—पेयंजले पानार्था प्रवृत्तिः; तेनानुमीयते जलज्ञानमस्य जातं, कथमन्यथा ज्ञानकार्यार्थक्रियायां प्रवर्तेत इति। रजः सङ्गेनेति नार्यादिसङ्गेन तत्कारणं रजोऽनुमीयते। अभिद्रोहः परपीडार्था प्रवृत्तिः। दैन्यं रोदनादि। आमोदः नृत्यगीतवादित्राद्युत्सवकरणम्। तोषः मुखनयनप्रसादादिः; एतेन प्रीतिस्तोषमात्रं, हर्षस्तु प्रीतिविशेषो मनउद्रेककारक इत्युक्तं भवति। धैर्यं विपद्यपि मन-

१ 'लङ्घनस्वेदनाद्यर्था' इति पा०। २ 'वर्णसंस्थानप्रमाणच्छायाशरीरप्रकृतिविकारौ' इति गङ्गाधरसंमतः पाठः। ३ 'अनुमानैकदेशतश्च' इति पा०।

१ 'खल्वन्यतमा ये भूयश्चानुमानज्ञेयाः' इति पा०। २ 'वीर्यमुत्साहेन' इति पा०। ३ 'उपाधिमनुबन्धेन' इति पा०। ४ 'द्विष्टेष्टेषु सुखासुखानि' इति पा०। ५ 'इन्द्रियादिग्राहकं' इति पा०।

सोऽदैन्यम्। वीर्यम् आरब्धदुष्करकार्येष्वव्यावृत्तिर्मनसः। उत्थानेनेति क्रियारम्भेण। अवस्थानं स्थिरमतित्वम्। अविभ्रमेणेति अभ्रान्त्या। श्रद्धाम् इच्छाम्। अभिप्रायेणेति अभ्यर्थनेन। ग्रहणेनेति ग्रन्थादिधारणेन। स्मृतिमिति स्मृतिजनकं संस्कारं; स्मरणेन हि तत्कारणं संस्कारोऽनुमीयते। ह्रियमिति लज्जाम्। अपत्रपेणेति लज्जिताकारेण। शीलमिति सहजं वस्तुषु रागम्। अनुशीलनेनेति अनुशीलनं संततशीलनं तेन; सततं यमर्थं सेवते तच्छीलोऽयमित्यनुमीयते। प्रतिषेधेनेति व्यावृत्त्या। उपेत्य धीयते इति उपधिः छद्म इत्यर्थः, तमनुबन्धेनेत्युत्तरकालीनफलेन; उत्तरकालं हि श्रात्रादिवधेन फलेन ज्ञायते—यदयमुन्मत्तच्छद्मप्रचारी चन्द्रगुप्त इति। विधेयतयेति विधेयप्रचारेण। वयःप्रभृतीनि व्याधिसमुत्थानान्तानि चत्वारि यथासंख्यं कालादिविशेषेण ज्ञायन्ते। तत्र कालविशेषेण षोडशवर्षादिना वयो बाल्यादि ज्ञायते; देशेन तु भक्तिरिच्छा ज्ञायते, यथा हि—अयं मध्यदेशीयस्तेनास्य गोधूममाषादिष्विच्छाऽनुमीयते; यस्माच्चेदमस्योपशेते तेनेदमस्य सात्म्यमिति ज्ञायते; वेदनाविशेषेण व्याधिसमुत्थानं ज्ञायते, यथा—यस्मादयं सन्तापवेदनावान् तस्मादस्य ज्वरव्याधिसमुत्थानं भूतमित्यादि ज्ञेयम्। गूढलिङ्गमितिविशेषणेनागूढलिङ्गे व्याधौ लिङ्गैरेवावधारिते नोपशयानुपशयाभ्यां परीक्षा करणीयेति दर्शयति। अपचारविशेषेणेति महताऽपचारेण भूरिदोषो भवति, स्वल्पेन स्वल्प इति। कल्याणाभिनिवेशेनेति श्रेयस्करमार्गानुष्ठानेन; एतद्धि अचिरभाविश्रेयसामेव भवति। सत्त्वमिति सत्त्वगुणोद्रेकम्। अविकारेणेति रागद्वेषविकाराभावेन। परिप्रश्नेनैवेतिवचनेन यद्यपि ग्रहणीमार्दवाद्यनुमानादपि पार्यते ज्ञातुं, तथाऽप्यनुमानस्य बुद्धिप्रयासबहुत्वेनातुरपृच्छयैव सुखोपचाररूपया विवादू ग्रहणीमार्दवादीनीति दर्शयति। अभिप्रायः भोजनादीच्छा। द्विष्टेष्टशब्देन तु द्विष्टेप्सितप्रेष्यादिग्रहणम्॥ ८॥

भवन्ति चात्र—

**आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च।**
**अनुमानेन च व्याधीन् सम्यग्विद्याद्विचक्षणः॥ ९॥**
**सर्वथा सर्वमालोच्य यथासंभवमर्थवित्।**
**अथाध्यवस्येत्तत्त्वे च कार्ये च तदनन्तरम्॥ १०॥**
**कार्यतत्त्वविशेषज्ञः प्रतिपत्तौ न मुह्यति।**
**अमूढः फलमाप्नोति यदमोहनिमित्तजम्॥ ११॥**
**ज्ञानबुद्धिप्रदीपेन यो नाविशति तत्त्ववित्।**
**आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति॥१२॥**

तत्र श्लोकौ—

**सर्वरोगविशेषाणां त्रिविधं ज्ञानसंग्रहम्।**
**यथा चोपदिशन्त्याप्ताः प्रत्यक्षं गृह्यते यथा॥ १३॥**
**ये यथा चानुमानेन ज्ञेयास्तांश्चाप्युदारधीः।**
**भावांस्त्रिरोगविज्ञाने विमाने मुनिरुक्तवान्॥ १४॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविधरोगविशेषविज्ञानीयं विमानं नाम चतुर्थोऽध्यायः॥ ४॥**

यथासंभवमित्यनेन सर्वत्र परीक्षणीये सर्वप्रमाणासंभव इति दर्शयति। अथेत्यादि अथ प्रत्येकशब्दादिविषयपरीक्षानन्तरम्। तत्त्वे व्याधितत्त्वे, तथा कार्ये च तत्र साध्ये व्याधौ कर्तव्यलक्षणे, तदनन्तरमध्यवस्येत्; यद्युक्तं तत्त्वं भवति, यच्च कार्यमुक्तं, तत्राध्यवसायं निश्चयं कुर्यादित्यर्थः। अनन्तरमिति अविद्यमानान्तरयोग्यमित्यर्थः। कार्यतत्त्वविशेषाध्यवसायफलमाह—कार्येत्यादि। प्रतिपत्तिः कर्मणां यथार्हतयाऽनुष्ठानम्। अमूढ इति प्रतिपत्तावमूढ इत्यर्थः। ज्ञानं शास्त्रं, तत्कृता बुद्धिः ज्ञानबुद्धिः। आविशति बुद्ध्याऽवगाहत इत्यर्थः। अन्तरात्मानमिति वैद्यपक्षे अन्तःशरीरम्॥ ९-१४॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने त्रिविधरोगविशेषविज्ञानीयं विमानं नाम चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

**अथातः स्रोतसां विमानं व्याख्यास्यामः॥ १॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

पूर्वस्मिन्नध्याये परीक्षामभिधाय तत्परीक्षणीयं शरीरं दुष्टादुष्टस्रोतोविभागेन वक्तुं स्रोतसां विमानमुच्यते॥ १॥ २॥

**यावन्तः पुरुषे मूर्तिमन्तो भावविशेषास्तावन्त एवास्मिन् स्रोतसां प्रकारविशेषाः। सर्वे हि भावा पुरुषे नान्तरेण स्रोतांस्यभिनिर्वर्तन्ते, क्षयं वाऽप्यभिगच्छन्ति। स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्त्ययनार्थेन॥ ३॥**

मूर्तिमन्त इति असर्वगतद्रव्यपरिमाणवन्तः, असर्वगतद्रव्यपरिमाणं हि मूर्तिरुच्यते। भावविशेषा इति उत्पत्तिमन्तो विशेषाः। अत्र हेतुमाह—सर्वे इत्यादि। अभिनिर्वर्तन्त इति संतानन्यायेन। स्रोतांसीत्यादि। खलुशब्दो हेतौ। परिणाममापद्यमानानामिति पूर्वपूर्वरसादिरूपतापरित्यागेनोत्तरोत्तररक्तादिरूपतामापद्यमानानाम्। अयनार्थेनेतिवचनाच्च स्थिराणां धातूनामभिवाहीनि भवन्ति स्रोतांसि, किंतु देशान्तरप्रापणेनाभिवाहीनि भवन्ति। एवं मन्यते—रक्तस्य वृद्धिः शोणितरूपतया परिण-

---

१ 'योगवित्' इति पा०।

१ 'दुष्टादुष्टस्रोतोविभागेन' इति पा०।

मता रसेन मिलितेन कर्तव्या, स च स्थानान्तरस्थस्य रसस्य रुधिरेण समं मेलको न गमनमार्गं स्रोतःसंज्ञकमन्तरा भवति। अयं तावदभिसंधिः—स्रोतःकारणिको हि धातूनां प्रायो रक्तादीनामुत्तरधातुपोषकभागपरिणामो भवति, तच्चाप्युत्तरधातुपोषणं नान्तरेण स्रोतो भवति; यश्च रक्ते न्यायः, स सर्वत्र शारीरे भावे; न चान्यस्रोतसाऽन्यधातुपुष्टिः संभवति, सर्वपोष्याणां भिन्नदेशत्वात्; न ह्यभिन्नेन स्रोतसा भिन्नदेशवृक्षयोः सेचनमस्ति। मनस्तु यद्यपि निलत्वेन न पोष्यं, तथाऽपि तस्येन्द्रियप्रदेशगमनार्थं स्रोतोऽस्त्येव। तच्च मनःप्रभृतीनामतीन्द्रियाणां कृत्स्नमेव शरीरं स्रोतोरूपं वक्ष्यति। दोषाणां तु सर्वशरीरचरत्वेन यथास्थूलस्रोतोऽनभिधानेऽपि सर्वस्रोतांस्येव गमनार्थं वक्ष्यन्ते, सूक्ष्मजिज्ञासायां तु वातादीनामपि प्रधानभूता धमन्यः सन्त्येव; यदुक्तं सुश्रुते—"तासां वातवाहिन्यो दश (सु. शा. अ. ७)" इत्यादि। नच चरके सुश्रुते इव धमनीसिरास्रोतसां भेदो विवक्षितः॥ ३॥

अपि चैके स्रोतसामेव समुदयं पुरुषमिच्छन्ति, सर्वगतत्वात् सर्वसरत्वाच्च दोषप्रकोपणप्रशमनानाम्। न त्वेतदेवं, यस्य हि स्रोतांसि, यच्च वहन्ति, यच्चावहन्ति, यत्र चावस्थितानि, सर्वं तदन्यत्तेभ्यः। अतिबहुत्वात् खलु केचिदपरिसङ्ख्येयान्याचक्षते स्रोतांसि, परिसङ्ख्येयानि पुनरन्ये॥ ४॥

सर्वगतत्वादिति स्रोतसां सर्वशरीरावयवगतत्वादित्यर्थः। सर्वसरत्वादित्युत्तरेण संबध्यते। दोषप्रकोपणमपथ्यं दोषप्रशमनं वा पथ्यं सर्वस्मिन् शरीरप्रदेशे दोषरूपं सत् तथा भेषजरूपं सद्गच्छति; तेन सर्वत्र स्रोतो विद्यते; तेन स्रोतोमयः पुरुष इति पूर्वपक्षः। तं निषेधति—न त्वित्यादि। यस्य हि स्रोतांसि यद्घटितानीत्यर्थः, यच्च वहन्तीति यद्रसादि वहन्तीत्यर्थः, यच्चावहन्तीति यच्च पुष्यन्तीत्यर्थः, यत्र चावस्थितानीति यत्र मांसादौ संबद्धानीत्यर्थः, तत् सर्वं धमनीभ्योऽन्यत्; तस्मान्न स्रोतोरूप एव पुरुष इत्यर्थः॥ ४॥

तेषां तु खलु स्रोतसां यथास्थूलं कतिचित्प्रकारान्मूलतश्च प्रकोपविज्ञानतश्चानुव्याख्यास्यामः; ये भविष्यन्त्यलमनुक्तार्थज्ञानाय ज्ञानवतां, विज्ञानाय चाज्ञानवताम्। तद्यथा—प्राणोदकान्नरसरुधिरमांसमेदोस्थिमज्जशुक्रमूत्रपुरीषस्वेदवहानीति; वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वाणि स्रोतांस्ययनभूतानि, तद्वदतीन्द्रियाणां पुनः सत्त्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतं च। तदेतत् स्रोतसां प्रकृतिभूतत्वान्न विकारैरुपसृज्यते शरीरम्॥ ७॥

प्रकोपविज्ञानतश्चेति यथा स्रोतसां प्रकोपो विज्ञायते तथा व्याख्यास्याम इति योजना। अनुक्तार्थज्ञानायेति अनुक्तस्रोतोज्ञानाय। ज्ञानवतामिति अनुक्तार्थज्ञानसमर्थानाम्। ज्ञानवन्तो ह्यनेन लिङ्गेनानुक्तमपि स्रोतोऽनुमिमते। विज्ञानाय चाज्ञानवतामिति यथोक्तमात्रज्ञानाय च मन्दबुद्धीनामित्यर्थः। तद्वदिति सर्वशरीरचराणाम्। चेतनावच्छरीरमित्यनेनाचेतनकेशनखादिप्रदेशं सत्त्वादिगमने निषेधति, दोषास्तु तत्रापि यान्तीति। अयनभूतमिति मार्गभूतम्। अधिष्ठानभूतमिति स्थानरूपम्॥ ६॥ ७॥

तत्र प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—अतिसृष्टमतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्। उदकवहानां स्रोतसां तालुमूलं क्लोम च, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—जिह्वाताल्वोष्ठकण्ठक्लोमशोषं पिपासां चातिप्रवृद्धां दृष्ट्वोदकवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्। अन्नवहानां स्रोतसामामाशयो मूलं वामं च पार्श्वं, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—अनन्नाभिलषणमरोचकविपाकौ छर्दिं च दृष्ट्वाऽन्नवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्। रसवहानां स्रोतसां हृदयं मूलं दश च धमन्यः। शोणितवहानां स्रोतसां यकृन्मूलं प्लीहा च। मांसवहानां च स्रोतसां स्नायुमूलं त्वक् च। मेदोवहानां स्रोतसां वृक्कौ मूलं वपावहनं च। अस्थिवहानां स्रोतसां मेदो मूलं जघनं च। मज्जवहानां स्रोतसामस्थीनि मूलं सन्धयश्च। शुक्रवहानां स्रोतसां वृषणौ मूलं शेफश्च। प्रदुष्टानां तु खल्वेषां रसादिवहस्रोतसां विज्ञानान्युक्तानि विविधाशितपीतीये; यान्येव हि धातूनां प्रदोषविज्ञानानि तान्येव यथास्वं प्रदुष्टानां धातुस्रोतसाम्। मूत्रवहानां स्रोतसां वस्तिर्मूलं वङ्क्षणौ च, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—अतिसृष्टमतिबद्धं प्रकुपितमल्पाल्पमभीक्ष्णं वा बहलं सशूलं मूत्रयन्तं दृष्ट्वा मूत्रवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्। पुरीषवहानां स्रोतसां पका-

१ 'यच्च वहन्ति यथा वहन्ति' इति गङ्गाधरसंमतः पाठः।

१ 'वृक्कौ' इति पा०। २ 'वृक्कौ च' इति पाठश्चेत् साधु।

शयो मूलं स्थूलगुदं[1] च, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—कृच्छ्रेणाल्पाल्पं सशब्दशूलमतिद्रवमतिग्रथितमतिबहु चोपविशन्तं दृष्ट्वा पुरीषवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्। स्वेदवहानां स्रोतसां मेदो मूलं लोमकूपाश्च, प्रदुष्टानां तु खल्वेषामिदं विशेषविज्ञानं भवति; तद्यथा—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णतामङ्गस्य परिदाहं लोमहर्षं च दृष्ट्वा स्वेदवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् ॥ ८ ॥

प्राणवहानामिति प्राणसंज्ञकवातवहानाम्। एतच्च प्राणाख्यविशिष्टस्य वायोर्विशिष्टस्रोतः, सामान्येन तु वायोः सर्वा एव धमन्य इति न विरोधः। मूलमिति प्रभवस्थानम्। अतिसृष्टं वा अतिबद्धं वेति विकल्पेन बोद्धव्यम्, अतिसृष्टातिबद्धयोरेकत्रासंभवात्। अल्पाल्पं वा तथाऽभीक्ष्णं वेति च विकल्पः। क्लोम हृदयस्थपिपासास्थानम्। वपावहनं वपा उदरस्था स्निग्धवर्तिका यामाहुर्जनास्तैलवर्तिकेति। सुश्रुते तु "मेदोवहानां मूलं वृक्कौ कटी च" (सु. शा. अ. ) इत्युक्तं; तदत्रातीन्द्रियार्थदर्शिगम्ये नास्मद्विधानां बुद्धयः प्रभवन्ति। अस्थ्यपि द्रवरूपमस्त्येव स्रोतोवाह्यमिति कृत्वा अस्थिवहानामित्युक्तम्। यद्यपि विविधाशितपीतीये रसादीनां दुष्टिलक्षणमुक्तं न रसादिस्रोतसां, तथाऽपि रसादिदुष्ट्या रसादिवहधमनीनामपि दुष्टेः साधारणत्वेनोक्तं—रसादिवहस्रोतसां विज्ञानान्युक्तानीति। ये तु ब्रुवते—रसादिदुष्टेरभिन्नैव तद्वहधमनीदुष्टिरिति, तेषां मते पृथग्धमनीदुष्ट्यभिधानमनुपपन्नं, तथा धमनीदुष्ट्या यद्धातुदुष्टिं वक्ष्यति "तेषां प्रकोपात् स्थानस्थाश्चैव" इत्यादिना तदनुपपन्नम्। धमनीदुष्ट्या तु तद्वाह्यदुष्टिरवश्यं भवतीति कृत्वा धातुदुष्टिलक्षणैरेवेह धमनीदुष्टिरुक्ता, रक्तादिधातुदुष्ट्यतिरिक्तं तु धमनीदुष्टिलक्षणम् "अतिप्रवृत्तिः" इत्यादिनाऽत्रैव वक्ष्यति। अस्वेदनादिकं स्वेदवहदुष्टिलक्षणं कुष्ठपूर्वरूपेऽप्यस्ति; तेन यत्रान्यत्कुष्ठपूर्वरूपदर्शनं भवति तत्र कुष्ठपूर्वरूपता निश्चेतव्या, एतावन्मात्रलक्षणोदये तु स्वेदवहधमनीदुष्टिरिति। धमनीनामिह मूलज्ञाने यद्यपि साक्षात् प्रयोजनं नोक्तं, तथाऽपि मूलोपघाताद्वृक्षाणामिव धमनीनां महानुपघातो भवतीति ज्ञेयम्, अत एव सुश्रुते स्रोतोमूलविद्धलक्षणान्युक्तानि ॥ ८ ॥

स्रोतांसि, सिराः, धमन्यः, रसायन्यः, रसवाहिन्यः, नाड्यः, पन्थानः, मार्गाः, शरीरच्छिद्राणि, संवृतासंवृतानि, स्थानानि, आशयाः, निकेताश्चेति शरीरधात्ववकाशानां लक्ष्यालक्ष्याणां नामानि भवन्ति। तेषां प्रकोपात् स्थानस्थाश्चैव मार्गगाश्च शरीरधातवः प्रकोपमापद्यन्ते, इतरेषां प्रकोपादितराणि च। स्रोतांसि स्रोतांस्येव, धातवश्च धातूनेव प्रदूषयन्ति प्रदुष्टाः[2]। तेषां सर्वेषामेव वातपित्तश्लेष्माणः प्रदुष्टा दूषयितारो भवन्ति, दोषस्वभावादिति ॥ ९ ॥

स्रोतसां व्यवहारार्थं पर्यायानाह—स्रोतांसीत्यादि। संवृतासंवृतानीत्येका संज्ञा, तत्राग्रे संवृतानि मूलेऽसंवृतानि। स्थानादिपर्यायान् केचिद्धमनीमूलस्य पर्यायानाचक्षते; अन्ये त्वेतानपि धमनीपर्यायानाहुः, धमन्योऽपि हि रसादिस्थानं भवन्त्येवेति कृत्वा। स्थानस्था इति आशयस्थाः। मार्गगाश्चैवेति धमनीभिर्गच्छन्तः। इतरेषां चेत्यादिनोक्तमर्थं स्रोतांसि चेत्यादिना विवृणोति। स्रोतांसि धातवश्च दुष्टाः प्रत्यासन्नानि स्रोतांसि धात्वन्तराणि च स्वदोषसंक्रान्त्या दूषयन्तीत्यर्थः। दोषस्वभावादिति दोषाणामेवायं स्वभावो यद्दूषकत्वं[1], न धात्वन्तराणां; तेन धातुना दुष्टिर्धातुदुष्टिः धातुगतदोषकृतैव ज्ञेया ॥ ९ ॥

भवन्ति चात्र—

क्षयात् संधारणाद्रौक्ष्याद्व्यायामात् क्षुधितस्य च।
प्राणवाहीनि दुष्यन्ति स्रोतांस्यन्यैश्च दारुणैः ॥ १० ॥
औष्ण्यादामाद्भयात् पानादतिशुष्कान्नसेवनात्।
अम्बुवाहीनि दुष्यन्ति तृष्णायाश्चातिपीडनात् ॥ ११ ॥
अतिमात्रस्य चाकाले चाहितस्य च भोजनात्।
अन्नवाहीनि दुष्यन्ति वैगुण्यात् पावकस्य च ॥ १२ ॥
गुरुशीतमतिस्निग्धमतिमात्रं समश्नताम्।
रसवाहीनि दुष्यन्ति चिन्त्यानां चातिचिन्तनात् १३
विदाहीन्यन्नपानानि स्निग्धोष्णानि द्रवाणि च।
रक्तवाहीनि दुष्यन्ति भजतां चातपानलौ ॥ १४ ॥
अभिष्यन्दीनि भोज्यानि स्थूलानि च गुरूणि च।
मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतां दिवा ॥ १५ ॥
अव्यायामाद्दिवास्वप्नान्मेद्यानां चातिभक्षणात्।
मेदोवाहीनि दुष्यन्ति वारुण्याश्चातिसेवनात् ॥ १६ ॥
व्यायामादतिसंक्षोभादस्थ्नामतिविघट्टनात्।
अस्थिवाहीनि दुष्यन्ति वातलानां च सेवनात् ॥ १७ ॥
उत्पेषादत्यभिष्यन्दादभिघातात् प्रपीडनात्।
मज्जवाहीनि दुष्यन्ति विरुद्धानां च सेवनात् ॥ १८ ॥
अकालयोनिगमनान्निग्रहादतिमैथुनात्।
शुक्रवाहीनि दुष्यन्ति शस्त्रक्षाराग्निभिस्तथा ॥ १९ ॥
मूत्रितोदकभक्ष्यस्त्रीसेवनान्मूत्रनिग्रहात्।
मूत्रवाहीनि दुष्यन्ति क्षीणस्याभिक्षतस्य[2] च ॥ २० ॥

१ 'स्थूलान्त्रं गुदं च' इति पा०। २ 'प्रसरन्ति' इति पा०।

१ 'यद्दूपकत्वं धात्वन्तराणाम्' इति पा०। २ 'क्षीणस्यातिकृशस्य च' इति पा०।

संधारणादत्यशनादजीर्णाध्यशनात्तथा ।
वर्चोवाहीनि दुष्यन्ति दुर्बलाग्नेः कृशस्य च ॥ २१ ॥
व्यायामादतिसंतापाच्छीतोष्णाक्रमसेवनात् ।
स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा ॥ २२ ॥

यथाक्रमं स्रोतसां दुष्टिकारणमाह—क्षयादित्यादि । दारुणैरित्यत्र 'कर्मभिः' इति शेषः । गुरूणि च भजतामिति पूर्वोक्तेन संबन्धः । मेद्यानां मेदुराणाम् । अकालयोनिगमनादिति अहर्षकालगमनात्, तथाऽनुचितयोनौ गमनात् । निग्रहादिति शुक्रवेगनिग्रहात् । मूत्रितेत्यादौ मूत्रवेगयुक्तस्य उदकादिसेवनादिति ज्ञेयम् ॥ १०–२२ ॥

आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।
धातुभिर्विगुणश्चापि स्रोतसां स प्रदूषकः ॥ २३ ॥

आहारश्चेत्यादिना सामान्येन सर्वस्रोतोदुष्टिमाह । दोषगुणैः सम इत्यनेन दोषातिवर्धकत्वं दर्शयति । क्षीणाश्च दोषा नान्यदुष्टिं कुर्वन्ति, किं तु स्वयमेव क्षीणस्वलिङ्गा भवन्तीत्यादि वेदितव्यम् । धातुभिर्विगुण इति धातुविरोधकस्वभाव इत्यर्थः, नतु धातुविपरीतगुणो विगुणः; दिवास्वप्नमेद्यादयो हि मेदसा समानगुणा एव मेदोदूषका उक्ताः ॥ २३ ॥

अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गगमनं चापि स्रोतसां दुष्टिलक्षणम् ॥ २४ ॥

अतिप्रवृत्तिरित्यादिना सामान्येन स्रोतोदुष्टिलक्षणमाह । अतिप्रवृत्तिरिह स्रोतोवाह्यस्य रसादेर्बोद्धव्या; एवं सङ्गोऽपि रसादेरेव । विमार्गगमनं च यथा—मलस्य मूत्रमार्गगमनमित्यादि २४

स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ २५ ॥

स्वधातुसमवर्णानीति वाह्यधातुतुल्यवर्णानि । प्रतानः लताप्रपञ्चः ॥ २५ ॥

प्राणोदकान्नवाहानां दुष्टानां श्वासिकी क्रिया ।
कार्या तृष्णोपशमनी तथैवामप्रदोषिकी ॥ २६ ॥
विविधाशितपीतीये रसादीनां यदौषधम् ।
रसादिस्रोतसां कुर्यात्तद्यथास्वमुपक्रमम् ॥ २७ ॥
मूत्रविट्स्वेदवाहानां चिकित्सा मौत्रकृच्छ्रिकी ।
तथाऽतिसारिकी कार्या तथा ज्वरचिकित्सिकी २८

प्राणोदकेत्यादिना चिकित्सामाह । प्राणवहानां श्वासिकी, उदकवहानां तृष्णोपशमनी, अन्नवहानामामप्रदोषिकीति बोद्धव्यम् । मूत्रादिवहानामपि त्रयाणां मौत्रकृच्छ्रिक्यादयो यथासंख्यं तिस्रश्चिकित्सा ज्ञेयाः ॥ २६–२८ ॥

तत्र श्लोकाः—

त्रयोदशानां मूलानि स्रोतसां दुष्टिलक्षणम् ।
सामान्यं नामपर्यायाः कोपनानि परस्परम् ॥ २९ ॥

दोषहेतुः पृथक्त्वेन भेषजोद्देश एव च ।
स्रोतोविमाने निर्दिष्टस्तथा चादौ विनिश्चयः ॥ ३० ॥
केवलं विदितं यस्य शरीरं सर्वभावतः ।
शारीराः सर्वरोगाश्च स कर्मसु न मुह्यति ॥ ३१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने स्रोतोविमानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

संग्रहे दुष्टिलक्षणं सामान्यं वाताद्यविशेषितं दुष्टिलक्षणमित्यर्थः, स्रोतोदुष्टिलक्षणानीह वातादिदोषभेदेन नोक्तानीत्यर्थः[1]; वातादिविशेषेण चेह विस्तरभयाद्बुद्धिर्नोक्ता; तेन वातादिविशेषलिङ्गाधिक्याद्बुद्धिर्निर्णेतव्या । आदौ विनिश्चय इति अध्यायादौ पुरुषस्य धमनीमयत्वादिवादनिश्चय इत्यर्थः । केवलमित्यादिना अत्रोक्तधमन्यादिभेदेन शरीरज्ञानस्योपादेयतामाह ॥ २९–३१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने स्रोतोविमानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातो रोगानीकं विमानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये स्रोतोरूपाधिष्ठानभेदेन रोगानभिधाय प्रभावादिभेदेन रोगानभिधातुं रोगानीकं विमानमुच्यते । रोगानीकमिति रोगसमूहः ॥ १ ॥ २ ॥

द्वे रोगानीके भवतः प्रभावभेदेन—साध्यम्, असाध्यं च; द्वे रोगानीके बलभेदेन—मृदु, दारुणं च; द्वे रोगानीके अधिष्ठानभेदेन—मनोऽधिष्ठानं, शरीराधिष्ठानं च; द्वे रोगानीके निमित्तभेदेन—स्वधातुवैषम्यनिमित्तम्, आगन्तुनिमित्तं च; द्वे रोगानीके आशयभेदेन—आमाशयसमुत्थं, पक्वाशयसमुत्थं चेति । एवमेतत् प्रभावबलाधिष्ठाननिमित्ताशयभेदाद्द्वैधं सद्भेदप्रकृत्यन्तरेण भिद्यमानमथवाऽपि सन्धीयमानं स्यादेकत्वं बहुत्वं वा । एकत्वं तावदेकमेव रोगानीकं, दुःखसामान्यात्[2]; बहुत्वं तु दश रोगानीकानि प्रभावभेदादिना भवन्ति; बहुत्वमपि संख्येयं स्यादसंख्येयं वा । तत्र संख्येयं तावद्यथोक्तमष्टोदरीये, अपरिसंख्येयं पुनर्यथा—महारोगाध्याये रुग्वर्णसमुत्थानादीनामसंख्येयत्वात् ॥ ३ ॥

बलभेदेनेत्यत्र मृदु अल्पबलं, दारुणं तु महाबलं ज्ञेयम् । दारुणं किंचित्कालातिपातादेव बलवत्त्वान्मारयति । यदुक्तम्—"सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः । ये हन्युरनुप-

१ 'व्यायामादतिसंक्षोभात्' इति पा० ।

[1] 'नोपयुक्तानीत्यर्थः' इति पा०। [2] 'रुक्सामान्यात्' इति पा०।

क्रान्ता मिथ्यारम्भेण वा पुनः" ( सू. अ. १८ ) इति । आमाशयसमुत्थत्वेन आमाशयाश्रयाः कफपित्तजाः सर्वे गदा गृह्यन्ते, पक्वाशयसमुत्थग्रहणेन सर्वे वातजाः; एवं सर्वविकारावरोधः । द्वैधं सदिति द्वैविध्यं सत् । भेदप्रकृत्यन्तरेणेति भेदकारणान्तरेण । अथवाऽपि सन्धीयमानमिति एकीक्रियमाणम्, एकबुद्धिकारकानुगतधर्मान्तरेणेति बोद्धव्यम् । दुःखसामान्यादिति दुःखकर्तृत्वेन सर्वरोगानुगतेन साधारणेन रूपेण सर्व एव रोगा एकरूपा भवन्ति । बहुत्वमपीति उक्तप्रभावभेदादिकृतत्वादपि बहुत्वमित्यर्थः । संख्येयत्वमष्टोदरीये "अष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे" ( सू. अ. १९ ) इत्यादिनोक्तम् । असंख्येयत्वं महारोगाध्याये तथा त्रिशोथीये च "त एवापरिसंख्येया भिद्यमाना भवन्ति हि । रुजावर्णसमुत्थानस्थानसंस्थाननामभिः" ( सू. अ. १८ ) इत्यनेनोक्तम् ॥ १-३ ॥

**न च संख्येयाग्रेषु भेदप्रकृत्यन्तरीयेषु विगीतिरित्यतो दोषवती स्यादत्र काचित् प्रतिज्ञा, न चाविगीतिरित्यतः स्याददोषवती । भेत्ता हि भेद्यमन्यथा भिनत्ति, अन्यथा पुरस्ताद्भिन्नं भेदप्रकृत्यन्तरेण भिन्दन् भेदसंख्याविशेषमापादयत्यनेकधा, न च पूर्वं भेदाग्रमुपहन्ति । समानायामपि खलु भेदप्रकृतौ प्रकृतानुप्रयोगान्तरमपेक्ष्यम् । सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानि, सन्ति चानर्थान्तराणि पर्यायशब्दाभिहितानि । समानो हि रोगशब्दो दोषेषु च व्याधिषु च; दोषा ह्यपि रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दं च लभन्ते, व्याधयश्च रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दं च लभन्ते । तत्र दोषेषु चैव व्याधिषु च रोगशब्दः समानः, शेषेषु तु विशेषवान् ॥ ४ ॥**

ननु संख्येयत्वमसंख्येयत्वं च विरुद्धावेतौ धर्मौ, तथैकत्वमनेकत्वं चेति विरुद्धौ, तत् कथं विरुद्धत्वेन ख्यातौ धर्मावेकस्मिन् रोगे घटेतामित्याह—न चेत्यादि । संख्येयाग्रेष्विति संख्येयरोगपरिमाणेषु, अग्रशब्दः परिमाणे वर्तते; यथा—एकैकस्य भेदाग्रमपरिसंख्येयं भवति, भेदसंख्यारूपं परिमाणमित्यर्थः । भेदप्रकृत्यन्तरीयेष्विति भेदकारणान्तरभवेषु । विरुद्धा गीतिः विगीतिः कैथनं; यथा—'एकं चानेकं च तत्' इत्यादिकैा विरुद्धा गीतिः । अत इति यथोक्तविगीतियोगात्, न दोषवती काचित् प्रतिज्ञा; यथा—एकानेकरूपान्तरगमनरूपा अत्रोक्ता स्यादिति योजना । विगीतौ दोषाभावं दर्शयित्वा भेदकारणान्तरकृतायामविगीतावपि दोषो भवतीति दर्शयन्नाह—न चाविगीतिरित्यादि । यदि हि 'एकं रोगानीकं रुजासामान्यात्' इत्यभिधाय पुनः 'एकं रोगानीकं प्रभावभेदात्' इत्यविरुद्धा एकताख्यायिकाऽविगीतिः क्रियते, सा विरुद्धैव स्यात्; यतो न प्रभावभेदेन रोगाणामेकत्वमुपपन्नं, किंतु द्वैधमेवेति भावः । विगीतौ दोषाभावे हेतुमाह—भेत्ता हीत्यादि ।—भेत्ता पुरुषः, भेद्यं रोगम्, अन्यथा द्वित्वादिना भिनत्ति, अन्यथा एकत्वेन पुरस्ताद्भिदितं चान्यथा भिनत्तीति । अस्यार्थं व्याकरोति—भेदप्रकृत्यन्तरेणेत्यादिना । अनेकधेति द्वे रोगानीके, तथा दश रोगानीकानीत्यादि । न च पूर्वं भेदाग्रं भेदप्रमाणमुपहन्ति । एवं मन्यते—यद्धर्मयोगविवक्षयैकत्वमुक्तं, तद्धर्मयोगविवक्षयैव यदि बहुत्वमप्युच्यते रोगाणां ततो विरोधो भवति, न हि तदेवैकं चानेकं चेत्युपपन्नं; यदा तु धर्मान्तरयोगविवक्षया बहुत्वमुच्यते, न तदा विरोधः; बहुत्वाभिधानकाले बहूनामेव रोगधर्माणां विवक्षितत्वात्; तेन रोगाणामेकत्वमेकधर्मविषयं, बहुत्वं च बहुधर्मविषयमिति नास्ति विरोधः । ननु यत्रासमानं भेदकारणं तत्र कारणान्तरकृतत्वादुक्तन्यायेन विगीतिः साध्वी भवतु, यत्र तु दश रोगानीकानि प्रभावादिद्वैविध्यादुच्यन्ते, तत्र कथं द्वे रोगानीके इति द्वित्वकृतं द्वैविध्यमभिधाय पुनर्द्वित्वादिभेदेनैव दशत्वमुच्यते ? समानो ह्ययं द्विशब्दो द्वित्वे दशत्वे च रोगाणां हेतुरित्याह—समानायामपीति; समानशब्दाभिधेयत्वेनापाततः समानत्वेन प्रतिभासमानायामित्यर्थः । प्रकृतानुप्रयोगान्तरमपेक्ष्यमिति प्रकृतस्य समानशब्देनाभिहितस्य यद्भेदख्यापकं पश्चात्प्रयोगान्तरं, तदपेक्षणीयं विगीतिसमाधानार्थमित्यर्थः । एतेनैतद्दर्शयति—यद्यपि द्विशब्दो रोगप्रभावे तथा रोगबलादौ च समानः, तथाऽप्येकत्र 'प्रभावभेदात्' इत्यनुप्रयोगान्तरमपेक्ष्य प्रभावद्वैविध्ये वर्तते, तथा 'बलभेदात्' इत्यनुप्रयोगान्तरमपेक्ष्य च द्विशब्दो बलद्वैविध्ये वर्तत इत्यादि । तेनार्थान्तराभिधायिभिर्द्विशब्दैर्भिद्यमानस्य दशत्वमप्युपपन्नं तथा द्वित्वं चेति भावः । दृष्टान्तार्थमेकेन शब्देनानेकार्थाभिधानमाह—सन्ति हीत्यादि । अर्थान्तराणि पर्यायशब्दानभिहिता अर्थाः । तत्रोदाहरणमाह—समानो हीत्यादि ।—दोषेषु व्याधिषु च समान उभयवाचकत्वेन तुल्यो रोगशब्दः; तेन रोगदोषसमानत्वेनाभिधेयसमानानां रोगातङ्कयक्ष्मादिशब्दानां सर्वेषामेव वक्ष्यमाणानां ग्रहणम् । शेषेष्विति हेत्वादिषु । विशेषवानिति अभिधानरूपविशेषवानित्यर्थः ॥ ४ ॥

**तत्र व्याधयोऽपरिसंख्येया भवन्ति, अतिबहुत्वात्; दोषास्तु खलु परिसंख्येया भवन्ति, अनतिबहुत्वात् । तस्माद्यथाचित्रं विकारानुदाहरणार्थम्, अनवशेषेण**

---

१ 'प्रकृत्यनुप्रयोगान्तरं' इति गङ्गाधरसंमतः पाठः । २ विगीतिः विरुद्धभाषणमित्यर्थः । ३ 'एकं तदनेकं च तदित्यादिका' इति पा० ।

१ 'सामान्यो ह्ययं' इति पा० । २ 'तथाऽप्येका' इति पा० । ३ 'तदेवोपपादयति—सन्तीत्यादि' इति पा० । ४ 'रोगस्य शब्दो रोगशब्दः' इति पा० । ५ 'रोगदोषसमानत्वेनाभिधेयानां' इति पा० ।

**च दोषान् व्याख्यास्यामः। रजस्तमश्च मानसौ दोषौ। तयोर्विकाराः कामक्रोधलोभमोहेर्ष्यामानमदशोकचित्तो(न्तो)द्वेगभयहर्षादयः। वातपित्तश्लेष्माणस्तु खलु शारीरा दोषाः। तेषामपि च विकारा ज्वरातीसारशोफशोषश्वासमेहकुष्ठादयः। इति दोषाः केवला व्याख्याता विकारैकदेशश्च ॥ ५ ॥**

**तत्र खल्वेषां द्वयानामपि दोषाणां त्रिविधं प्रकोपणं; तद्यथा—असात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति ॥ ६ ॥**

तत्रापि रोगशब्दाभिधेयतया समानेऽपि दोषे तथा विकारे च परिसंख्येयापरिसंख्येय(त्व)रूपा विगीतिरस्त्यथ चादोष इत्यभिप्रायेणाह—तत्रेत्यादि। एकैकस्मिन् दोषे बहवो विकारा भवन्तीत्यभिप्रायेण विकारापेक्षया दोषाणामनतिबहुत्वं ज्ञेयम्। यथाचित्रमिति यथाविन्यासं, तेन यानेव पूर्वाचार्या विकारानधिकतमत्वेनोक्तवन्तस्तानेव व्याख्यास्यामः; नतु सर्वान्, अशक्यत्वात्। किंवा, 'यथोचितम्' इति पाठः। अनवशेषेण च दोषानित्यनेन दोषा अनतिबहुत्वेनानवशेषेणाप्यभिधातुं शक्यन्त इति प्रकाशयति। तत्र मानसदोषविकारयोरनल्पवक्तव्यत्वेनाग्रेऽभिधानम् ॥ ५ ॥ ६ ॥

**प्रकुपितास्तु खलु ते प्रकोपणविशेषाद्दूष्यविशेषाच्च विकारविशेषानभिनिर्वर्तयन्त्यपरिसंख्येयान् ॥ ७ ॥**

ननु परिमिताद्दोषरूपात् कारणात् कथमपरिमिता विकारा भवन्तीत्याह—प्रकुपितास्त्वित्यादि। हेतुविशेषदुष्टो हि स एव दोषो दूष्यान्तरगतश्च विभिन्नशक्तियोगाद्बहून् विकारान् करोतीति युक्तमेव। उक्तं च—"स एव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून्" (सू. अ. १८) इति ॥ ७ ॥

**ते च विकाराः परस्परमनुवर्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च ॥ ८ ॥**

विकाराणां शारीरमानसानां परस्परं संसर्गमाह—ते च विकारा इत्यादि। अनुवर्तमाना इत्यनेन यदैव ज्वरादयः कामादयो वा बलवत्त्वेन चिरकालमनुवर्तन्ते, तदैवानुबध्नन्ति प्रायः; यदा तु स्तोककालावस्थायिनो भवन्ति, न तदा प्रायोऽनुबध्नन्तीत्यर्थः। किंवा, अनुवर्तमानाः परस्परबलमभिवर्धयन्तः। अत्र च परस्परशब्देन शारीराणां शारीरेण, मानसानां मानसेन, शारीराणां मानसेन, मानसानां शारीरेण चानुबन्धो ज्ञेयः ॥ ८ ॥

**नियतस्त्वनुबन्धो रजस्तमसोः परस्परं, न ह्यरजस्कं तमः प्रवर्तते ॥ ९ ॥**

१ 'विकारानाविष्कृतवन्तस्तानेव' इति पा०। २ 'यथोपचितं' इति पा०। ३ 'बाऽबलवत्त्वेन' इति पा०। ४ 'प्रायः' इति पा०।

विकारानुबन्धं दर्शयित्वा दोषानुबन्धमाह—नियतस्त्वित्यादि ॥ ९ ॥

**(प्रायः) शारीरदोषाणामेकाधिष्ठानीयानां सन्निपातः संसर्गो वा समानगुणत्वात्; दोषा हि दूषणैः समानाः ॥ १० ॥**

शारीरदोषानुबन्धमाह—शारीरेत्यादि। एकाधिष्ठानीयानामित्यनेनैकशरीराधिष्ठानप्रत्यासत्त्या च संसर्गो दोषाणां भवन्तीति दर्शयति। समानगुणत्वादिति हेतुं विवृणोति—दोषा हीत्यादि। दूषणैरिति हेतुभिः; प्रायो हि शारीराणां वातादीनां समान एव हेतुर्भवति; यथा—ह्यम्लं लवणं कटु च पित्तकरं; तत्राम्लं सकफं पित्तं करोति, लवणं च सपित्तं कफं करोति, कटु तु सवातं पित्तं करोति। तथा वसन्तः श्लेष्मकारकोऽप्यादानत्वेन वातपित्ते च करोति, तथा वर्षास्वपि पित्तं चीयमानं शरदि प्रकुप्य कफानुगतमेव कुप्यति, तथा ग्रीष्मो वातचयं रूक्षत्वेन कुर्वन् उष्णत्वेन मनाक् पित्तचयमपि करोतीत्यनुसरणीयम् ॥ १० ॥

**तत्रानुबन्ध्यानुबन्धकृतो विशेषः—स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यः, तद्विपरीतलक्षणस्त्वनुबन्धः। अनुबन्ध्यलक्षणसमन्वितास्तत्र यदि दोषा भवन्ति तत्रिकं सन्निपातमाचक्षते, द्वयं वा संसर्गम्। अनुबन्ध्यानुबन्धविशेषकृतस्तु बहुविधो दोषभेदः। एवमेष संज्ञाप्रकृतो भिषजां दोषेषु व्याधिषु च नानाप्रकृतिविशेषव्यूहः ॥ ११ ॥**

एनमेव दोषानुबन्धमनुबन्ध्यानुबन्धभेदेन दर्शयितुमनुबन्ध्यानुबन्धलक्षणमेवाह—तत्रेत्यादि। अनुबन्ध्यस्य अनुबन्धस्य च विशेषोऽनुबन्ध्यानुबन्धविशेषः 'स्वतन्त्र'इत्यादिग्रन्थलक्षणीयः। स्वतन्त्र इत्यस्यैव विवरणं—व्यक्तलिङ्ग इत्यादि। यथोक्तसमुत्थानप्रशम इति स्वहेतुसमुत्थितः स्वचिकित्सयैव प्रशमनीयः। किंवा, स्वतन्त्र इत्यनेनापि स्वविकारकरणे प्राधान्यमुच्यते; स्वतन्त्रो हि दोषः प्रकोपकाले विकारान् करोति, अस्वतन्त्रस्तु स्वतन्त्रप्रकोपकाल एव विकारं प्रधानदोषेरितः सन् करोति। तद्विपरीतलक्षण इति अनेनाव्यक्तलिङ्गोऽस्वहेतुप्रकुपितः परचिकित्साप्रशमनीयश्चानुबन्ध इति लभ्यते; अनुबन्धो ह्यबलवत्त्वेन न लिङ्गं व्यक्तं करोति, तथा परहेतुना किंचिदनुगुणेन कृतः परचिकित्सयैव किंचिदनुगुणया शाम्यति। यथा—शरदि श्लेष्मा पित्तहेतुना जलाद्यम्लविपाकेन जन्यते, स च पित्तचिकित्सयैव तिक्तसर्पिरादिकया कफेऽप्यनुगुणया शाम्यति। द्वयं वाऽनुब-

१ 'पित्तं कफं वातं च करोति'इति पा०। २ 'अनुबन्ध्यानुबन्धलक्षणसमन्विताः' इति पा०। ३ 'नानाप्रकृतिविशेषाद् व्यूहः' ग.। ४ 'अपारतन्त्र्यमुच्यते' इति पा०। ५ 'विकारं ज्वरातिसारादिरूपं तथाऽनुबन्ध्यानुबन्धरूपं प्रधानदोषेरितः' इति पा०। ६ 'प्रकुपितः' इति पा०।

न्ध्यलक्षणं प्राप्तं संसर्गमाचक्षत इति योजना। अनुबन्ध्यशब्दश्चायं व्यक्तलिङ्गतादिधर्मयुक्ते दोषे वर्तते । तेनाप्रधानानुगमनीये सन्निपाते अनुबन्धाभावेऽप्यनुबन्ध इति व्यपदेशो भवत्येव अनुबन्ध्यानुबन्धरूपसंसर्गविशेषेण कृतः। संज्ञाप्रकृत इति अनुबन्ध्यानुबन्धसन्निपातसंसर्गज्वरातिसारादिसंज्ञाकृत इत्यर्थः । नानाप्रकृतिविशेषव्यूह इति यथोक्तनानाकारणविशेषकृतो ज्वरातिसारादिरूपो व्याधीनां दोषाणां च समूह इत्यर्थः । भिषजामितिपदेन च वैद्यानामेवेयं समयसिद्धाऽनुबन्ध्यादिसंज्ञेति दर्शयति ॥ ११ ॥

**अग्निषु तु शारीरेषु चतुर्विधो विशेषो बलभेदेन भवति। तद्यथा—तीक्ष्णो, मन्दः, समो, विषमश्चेति। तत्र तीक्ष्णोऽग्निः सर्वापचारसहः, तद्विपरीतलक्षणस्तु मन्दः, समस्तु खल्वपचारतो विकृतिमापद्यतेऽनपचारतस्तु प्रकृतावतिष्ठते, समलक्षणविपरीतलक्षणस्तु विषम इति । एते चतुर्विधा भवन्त्यग्नयश्चतुर्विधानामेव पुरुषाणाम्। तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः, वातलानां तु वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः, पित्तलानां तु पित्ताभिभूते ह्यग्न्यधिष्ठाने तीक्ष्णा भवन्त्यग्नयः, श्लेष्मलानां तु श्लेष्माभिभूतेऽग्न्यधिष्ठाने मन्दा भवन्त्यग्नयः ॥ १२ ॥**

दोषभेदविकारभेदमभिधाय शारीरस्थितेः प्रधानकारणस्याग्नेर्भेदमाह—अग्निष्वित्यादि । शारीरेष्विति सामान्यवचनेन सर्वशरीरगतानग्नीन् ग्राहयति, विवरणे तु जठराग्नेरेव 'तीक्ष्णोऽग्निः सर्वापचारसहः' इत्यादिना यच्चातुर्विध्यमुक्तं, तज्जठराग्नितीक्ष्णतादिमूलकमेव त्वगग्न्यादितीक्ष्णत्वादिकमिति ज्ञापयति। वचनं हि—"तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः" ( चि. अ. १५ ) इति। यद्यपि समोऽग्निः शस्तत्वेनाग्नेऽभिधातुं युज्यते, तथाऽपि समतश्च तीक्ष्णस्यैव प्राधान्योपदर्शनार्थमिहाग्रेऽभिधानं; समस्य हि प्राधान्यं निर्विकारत्वेनैव सुस्थितं, तीक्ष्णस्य तु सर्वापचारसहत्वेन प्राधान्यम् । तद्विपरीतलक्षण इति स्वल्पापचारमपि यो न सहते, स मन्द इत्यर्थः। समलक्षणविपरीतलक्षण इति कदाचिद्विषमोऽपचारादपि न विक्रियते, कदाचिद्विक्रियते । समवातपित्तश्लेष्मणामित्युक्तेऽपि प्रकृतिस्थानामिति पदं वृद्धानां समवातपित्तश्लेष्मणां प्रतिषेधार्थम् । प्रकृतिशब्दस्य कारणाद्यनेकार्थतान्युदासार्थं समवातपित्तश्लेष्मणामिति कृतम् । वाताभिभूतेऽग्न्यधिष्ठाने इति वचनेन वातलानामपि यदैवाग्न्यधिष्ठानोपघातो वातेन क्रियते, तदैव वैषम्यं भवति। एवं पित्ताभिभूत इत्यादावपि व्याख्येयम् ॥ १२ ॥

**तत्र केचिदाहुः—न समवातपित्तश्लेष्माणो जन्तवः सन्ति, विषमाहारोपयोगित्वान्मनुष्याणां; तस्माच्च वातप्रकृतयः केचित्, केचित् पित्तप्रकृतयः, केचित् पुनः श्लेष्मप्रकृतयो भवन्तीति । तच्चानुपपन्नं, कस्मात् कारणात्? समवातपित्तश्लेष्माणं ह्यरोगमिच्छन्ति भिषजः, यतः[1] प्रकृतिश्चारोग्यम्, आरोग्यार्था च भेषजप्रवृत्तिः, सा चेष्टरूपा, तस्मात् सन्ति समवातपित्तश्लेष्माणः; न खलु सन्ति वातप्रकृतयः पित्तप्रकृतयः श्लेष्मप्रकृतयो वा । तस्य तस्य किल[2] दोषस्याधिक्यात् सा सा दोषप्रकृतिरुच्यते मनुष्याणां, न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते, तस्मान्नैताः प्रकृतयः सन्ति; सन्ति तु खलु वातलाः पित्तलाः श्लेष्मलाश्च, अप्रकृतिस्थास्तु ते ज्ञेयाः ॥ १३ ॥**

विषमाहारोपयोगित्वादिति नायं पुरुषस्तुलाधारधृतमिवाहारमुपयुङ्क्ते, तेनावश्यमत्र वातादिष्वन्यतमोऽपि दोषो विकृतो भवतीति भावः। समवातपित्तश्लेष्माणमित्यादिना अस्ति तावदारोग्यं पुरुषेषु वैद्यव्यवहारसिद्धमिति दर्शयति । तेन, यादृगिदं दोषाणां कलाकाष्ठादिवैषम्यं परित्यज्याविर्भूतविकारकारित्वेनादूरान्तरं साम्यमिष्यते, तादृगेव प्रकृतावपि साम्यमस्त्येवेति भावः। अन्ये तु वैषम्यं नाद्रियन्त एव, व्यपदेश्यरोगाजनकत्वात्। दोषप्रकृतिरिति दुष्टदोषभाविता प्रकृतिरित्यर्थः ॥ १३ ॥

**तेषां तु खलु चतुर्विधानां पुरुषाणां चत्वार्यनुप्रणिधानानि श्रेयस्कराणि भवन्ति। तत्र समसर्वधातूनां सर्वाकारसमम्, अधिकदोषाणां तु त्रयाणां यथास्वं दोषाधिक्यमभिसमीक्ष्य दोषप्रतिकूलयोगीनि त्रीण्यनु(त्र)प्रणिधानानि[3] श्रेयस्कराणि भवन्ति यावदग्नेः समीभावात्, समे तु सममेव कार्यम्; एवं चेष्टा भेषजप्रयोगाश्चापरे। तान्[4] विस्तरेणानुव्याख्यास्यामः ॥ १४ ॥**

दोषे प्रवृद्धे प्रतिकूलतया योगीनि दोषप्रतिकूलयोगीनि। त्रीणि वातपित्तश्लेष्मप्रतिकूलानि। समे त्विति समतां गते वह्नौ, यथोचितविधानेन ( वातप्रकृत्यादीनां ) सममेवानुप्रणिधानं कर्तव्यम् । एवमित्यनेन प्रकारेण चेष्टाभेषजयोरपि प्रयोगा वातादीनां भवन्ति; ये तु, एवमित्यनेन चतुर्विधेनोक्तेन प्रकारेणेति वदन्ति, ते समप्रकृतीनां च समव्यायामादिचेष्टा भेषजं च ऋतुचर्याविधेयं वमनादिकारकं सूच्यतेऽनेनेति व्याख्यानयन्ति ॥ १४ ॥

**त्रयस्तु पुरुषा भवन्त्यातुराः, ते त्वनातुरास्तन्त्रान्तरीयाणां भिषजाम्[5] । तद्यथा-वातलः, पित्तलः, श्लेष्मलश्चेति । तेषामिदं विशेषविज्ञानं-वातलस्य वातनिमित्ताः, पित्तलस्य पित्तनिमित्ताः, श्लेष्म-**

---

१ 'यतः' इति ह. पु. न पठ्यते। २ 'हि' इति पा०। ३ 'चत्वार्यत्रप्रणिधानानि' इति पा०। ४ 'तानि' इति पा०। ५ अयं पाठः क्वचित्पुस्तके नोपलभ्यते।

लस्य श्लेष्मनिमित्ता व्याधयः प्रायेण बलवन्तश्च भवन्ति ॥ १५ ॥

तत्र वातलस्य वातप्रकोपणान्यासेवमानस्य क्षिप्रं वातः प्रकोपमापद्यते, न तथेतरौ दोषौ; स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय। तस्यावजयनं—स्नेहस्वेदौ विधियुक्तौ, मृदूनि च संशोधनानि स्नेहोष्णमधुराम्ललवणयुक्तानि, तद्वदभ्यवहार्याणि, अभ्यङ्गोपनाहनोद्वेष्टनोन्मर्दनपरिषेकावगाहनसंवाहनावपीडनवित्रासनविस्मापनविस्मारणानि, सुरासवविधानं, स्नेहाश्चानेकयोनयो दीपनीयपाचनीयवातहरविरेचनीयोपहितास्तथा शतपाकाः सहस्रपाकाः सर्वशश्च प्रयोगार्थाः, वस्तयः, वस्तिनियमः सुखशीलता चेति ॥ १६ ॥

न तथेतरौ दोषाविति सत्याऽपि हेतुसेवयेत्यर्थः; अन्यथा वातप्रकोपणसेवया पित्तश्लेष्मणोर्वृद्धिरेव नास्ति । वित्रासनादयो यद्यपि वातकारकास्तथाऽपि वातजनितोन्मादविनाशकत्वेन चोक्ता इति ज्ञेयम्। उन्मादे हि वित्रासनादि भेषजमभिधायोक्तं—"तेन याति शमं तस्य सर्वतो विप्लुतं मनः" (चि. अ. ९) इति। सर्वशः प्रयोगार्था इति पानाभ्यञ्जनवस्त्यादिभिः प्रयोजनीया इत्यर्थः। वस्तिनियम इति वस्तौ यथोक्तनियमसेवेत्यर्थः; किंवा वस्तिनियमशब्देन सिद्धौ वक्ष्यमाणकर्म-काल-योगरूपं वस्तिसंख्यानियमं कर्तव्यतया दर्शयति । वक्ष्यति हि—"त्रिंशन्मताः कर्मसु वस्तियोगाः कालस्ततोऽर्धेन ततश्च योगः" (सि. अ. १) इति। सुखशीलता सततसुखसेवित्वम् ॥ १५–१६ ॥

पित्तलस्यापि पित्तप्रकोपणान्यासेवमानस्य क्षिप्रं पित्तं प्रकोपमापद्यते, न तथेतरौ दोषौ; तदस्य प्रकोपमापन्नं यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय । तस्यावजयनं—सर्पिष्पानं, सर्पिषा च स्नेहनम्, अधश्च दोषहरणं, मधुरतिक्तकषायशीतानां चौषधाभ्यवहार्याणामुपयोगः, मृदुमधुरसुरभिशीतहृद्यानां गन्धानां चोपसेवा, मुक्तामणिहारावलीनां च परमशिशिरवारिसंस्थितानां धारणमुरसा, क्षणे क्षणेऽग्र्यचन्दनप्रियङ्गुकालीयमृणालशीतवातवारिभिरुत्पलकुमुदकोकनदसौगन्धिकपद्मानुगतैश्च वारिभिरभिप्रोक्षणं, श्रुतिसुखमृदुमधुरमनोऽनुगानां च गीतवादित्राणां श्रवणं, श्रवणं चाभ्युदयानां, सुहृद्भिः संयोगः, संयोगश्चेष्टाभिः स्त्रीभिः शीतोपहितांशुकस्रग्धारिणीभिः, निशाकरांशुशीतलप्रवातहर्म्यवासः, शैलान्तरपुलिनशिशिरसदनवसनव्यजनपवनसेवनं, रम्याणां चोपवनानां सुखशिशिरसुरभिमारुतोपहितानामुपसेवनं, सेवनं च पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रहस्तानां, सौम्यानां च सर्वभावानामिति ॥ १७ ॥

यथोक्तैरिति महारोगाध्यायोक्तैः । अधश्च दोषहरणमिति विरेचनादित्यर्थः । अग्र्यचन्दनं धवलचन्दनम् । हस्तानामिति कलापानाम् ॥ १७ ॥

श्लेष्मलस्यापि श्लेष्मप्रकोपणान्यासेवमानस्य क्षिप्रं श्लेष्मा प्रकोपमापद्यते, न तथेतरौ दोषौ; स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपघाताय । तस्यावजयनं—विधियुक्तानि तीक्ष्णोष्णानि संशोधनानि, रूक्षप्रायाणि चाभ्यवहार्याणि कटुकतिक्तकषायोपहितानि, तथैव धावनलङ्घनप्लवनपरिसरणजागरणनियुद्धव्यवायव्यायामोन्मर्दनस्नानोत्सादनानि, विशेषतस्तीक्ष्णानां दीर्घकालस्थितानां च मद्यानामुपयोगः, सधूमपानः सर्वशश्चोपवासः, तथोष्णं वासः, सुखप्रतिषेधश्च सुखार्थमेवेति ॥ १८ ॥

श्लेष्मविजयार्थं रूक्षस्यैव हिततवेन रूक्षाणीति वक्तव्ये यद्रूक्षप्रायाणीति करोति, तेनात्यर्थरूक्षास्य वातानुगुणत्वेन तथा धात्वपोषकत्वेन चासेव्यत्वं दर्शयति; उक्तं हि रसविमाने—"स्निग्धमश्नीयात्; स्निग्धं हि भुक्तं स्वदते, भुक्तमौदर्यमभिमुदीरयति" (वि. अ. १) इत्यादि। लङ्घनम् उत्प्लुत्य गमनं, परिसरणं कुण्डलरूपभ्रमणम्। सर्वशश्चोपवास इति सर्वलङ्घनानि। यदुक्तं—"चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ। पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्" (सू. अ. २२) इति। उपवासशब्दो ह्यत्र लङ्घने वर्तते। सुखार्थमिति आयतिसुखार्थं; सुखप्रतिषेधाद्धि श्लेष्मक्षये भूते श्लेष्मविकाराभावलक्षणं सुखं भवति ॥ १८ ॥

भवति चात्र—

सर्वरोगविशेषज्ञः सर्वकार्यविशेषवित्।
सर्वभेषजतत्त्वज्ञो राज्ञः प्राणपतिर्भवेदिति ॥ १९ ॥

यथोक्ताध्यायज्ञानादेव सर्वरोगाभिज्ञं स्तौति—सर्वेत्यादिना। प्राणान् पाति रक्षतीति प्राणपतिः ॥ १९ ॥

तत्र श्लोकाः—

प्रकृत्यन्तरभेदेन रोगानीकविकल्पनम्।
परस्पराविरोधश्च सामान्यं रोगदोषयोः ॥ २० ॥
दोषसंख्या विकाराणामेकदेशः प्रकोपणम्।
जरणं प्रति चिन्ता च कायाग्नेर्धुक्षणानि च ॥ २१ ॥

१ 'वातप्रकोपणोक्तानि' इति पा०। २ 'पित्तप्रकोपणोक्तानि' इति पा०।

१ 'शतपत्रह्रदानां' इति पा०। २ 'श्लेष्मप्रकोपणोक्तान्यासेवमानस्य' इति पा०। ३ 'देहाग्नेः रक्षणानि च' इति पा०।

नराणां वातलादीनां प्रकृतिस्थापनानि च।
रोगानीके विमानेऽस्मिन् व्याहृतानि महर्षिणा॥२२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने रोगानीकविमानं नाम षष्ठोऽध्यायः ॥ ६ ॥

संग्रहे जरयतीति जरणो वह्निः, तं प्रति चिन्ता 'अग्निपु' इत्यादिना कृता। प्रकृतिस्थापनानीति भेषजानि ॥ २०–२२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया-मायुर्वेददीपिकायां विमानस्थाने रोगानीकविमानं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

अथातो व्याधितरूपीयं विमानं व्याख्यास्यामः॥१॥

इति ह स्माह भगवानात्रेयः॥ २॥

पूर्वाध्याये व्याधिं प्रतिपाद्य व्याधितस्य पुरुषस्य भेदं चिकित्सोपयोगितया प्रतिपादयितुं तथा तत्प्रसङ्गाच्च क्रिमीन् प्रतिपादयितुं व्याधितरूपीयोऽभिधीयते ॥ १ ॥ २ ॥

इह खलु द्वौ पुरुषौ व्याधितरूपौ भवतः-गुरुव्याधितः, लघुव्याधितश्च। तत्र-गुरुव्याधित एकः सत्त्वबलशरीरसंपदुपेतत्वाल्लघुव्याधित इव दृश्यते, लघुव्याधितोऽपरः सत्त्वादीनामधमत्वाद्गुरुव्याधित इव दृश्यते। तयोरकुशलाः केवलं चक्षुषैव रूपं दृष्ट्वाऽध्यवस्यन्तो व्याधिगुरुलाघवे विप्रतिपद्यन्ते॥ ३॥

द्वावित्यादौ व्याधिः जातो यस्य स व्याधितः, तस्येव रूपं ययोस्तौ व्याधितरूपौ; व्याधितसदृशावित्यर्थः। तेन, व्याधितरूपावित्यनेन गुरुलघुव्याधियुक्तसदृशौ बोद्धव्यौ। यो हि गुरुव्याधिः संपन्नसत्त्वादिना लघुव्याधिर्दृश्यते, नासावपि लघुना व्याधिना व्याधितः, किं तु गुरुव्याधित एवासौ। स तु गुरुणैव व्याधिना व्याधितो गुरुव्याधिरदूरदर्शिना लघुव्याधिरिव दृश्यते, एवं विपर्यासाल्लघुव्याधितोऽपर इत्यादावपि व्याख्येयम्। अधमत्वादिति अवरत्वादित्यर्थः। चक्षुषैवेति इतरज्ञानसाधनोपलक्षणं; तेन स्पर्शादिनाऽपि विशेषानवगाहकेनेति बोद्धव्यम्। रूपमिति विरूपम्। अध्यवसन्त इति निश्चयं कुर्वन्तः। गुरुलाघवे विप्रतिपद्यन्ते इति गुरुलघुत्वे न प्रतिपद्यन्ते ॥ ३ ॥

नहि ज्ञानावयवेन कृत्स्ने ज्ञेये विज्ञानमुत्पद्यते। विप्रतिपन्नास्तु खलु रोगज्ञाने उपक्रमयुक्तिज्ञाने चापि विप्रतिपद्यन्ते। ते यदा गुरुव्याधितं लघुव्याधितरूपमासादयन्ति, तदा तमल्पदोषं मत्वा संशोधनकालेऽस्मै मृदु संशोधनं प्रयच्छन्तो भूय एवास्य दोषानुदीरयन्ति। यदा तु लघुव्याधितं गुरुव्याधितरूपमासादयन्ति, तदा तं महादोषं मत्वा संशोधनकालेऽस्मै तीक्ष्णं संशोधनं प्रयच्छन्तो दोषानतिनिर्हृत्य शरीरमस्य क्षिण्वन्ति। एवमवयवेन ज्ञानस्य कृत्स्ने ज्ञेये ज्ञानमभिमन्यमानाः परिस्खलन्ति। विदितवेदितव्यास्तु भिषजः सर्वं सर्वथा यथासंभवं परीक्ष्यं परीक्ष्याध्यवस्यन्तो न क्वचिदपि विप्रतिपद्यन्ते, यथेष्टमर्थमभिनिर्वर्तयन्ति चेति॥ ४॥

अत्रैव विरुद्धप्रतिपत्तौ हेतुमाह—नहीत्यादि। ज्ञानावयवेनेति एकदेशज्ञानेन। विप्रतिपत्तिफलमाह—विप्रतिपन्नास्त्वित्यादि। उपक्रमस्य भेषजप्रयोगस्य विकारेण समं योजना उपक्रमयुक्तिः, तस्या ज्ञाने विरुद्धप्रतिपत्तिमन्तो भवन्ति। एतदेव व्याकरोति—ते यदेत्यादि। आसादयन्तीति बुध्यन्ते। उदीरयन्तीति प्रकोपयन्त्येव परं, नत्वल्पबलत्वाद्धरन्तीत्यर्थः। अतिनिर्हृत्येति अतियोगेन हृत्वेत्यर्थः। ज्ञानस्येति ज्ञानसाधनस्य। यथासंभवमिति यानि यत्र ज्ञानसाधनानि भवन्ति, तैस्तत्र। परीक्ष्यं सत्त्वादि। न क्वचिदपीति गौरवलाघवादौ ॥ ४ ॥

भवन्ति चात्र—

सत्त्वादीनां विकल्पेन व्याधिरूपमथातुरे[1]।
दृष्ट्वा विप्रतिपद्यन्ते बाला व्याधिबलाबले॥ ५॥
ते भेषजमयोगेन कुर्वन्त्यज्ञानमोहिताः।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा॥ ६॥
प्राज्ञास्तु सर्वमाज्ञाय परीक्ष्यमिह सर्वथा।
न स्खलन्ति प्रयोगेषु भेषजानां कदाचन॥ ७॥

एतदेव सुखग्रहणार्थं श्लोकेनाह—सत्त्वेत्यादि। व्याधिरूपमिति व्याधेर्गतिरूपमित्यर्थः। 'व्याधितरूपम्' इति तु पाठः सुगमः। बाला इति अल्पज्ञाः। अतियोगेनेति असम्यक्प्रयोगेन; तेनातियोगमिथ्यायोगयोर्ग्रहणं भवति ॥ ५–७ ॥

इति व्याधितरूपाधिकारे व्याधितरूपसंख्याग्रसंभवं व्याधितरूपहेतुविप्रतिपत्तौ कारणं सापवादं संप्रतिपत्तिकारणं चानपवादं निशम्य, भगवन्तमात्रेयमग्निवेशोऽतः परं सर्वक्रिमीणां पुरीषसंश्रयाणां समुत्थानस्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषान् पप्रच्छोपसंगृह्य पादौ॥ ८॥

संप्रति व्याधिगुरुलाघवस्य दुर्ज्ञेयताप्रसङ्गेन दुर्ज्ञेयक्रिमिव्याख्यापकमपि प्रकरणमारभते—इति व्याधितेत्यादि। संख्याग्रसंभवमिति संख्याप्रमाणसंभवमित्यर्थः; अग्रशब्दो हि परिमाणवाची। व्याधितरूपस्य हेतुः सत्त्वादिबलवत्त्वाबलवत्त्वे, तत्कृ-

१ 'अल्पत्वात्' इति पा०। २ 'विप्रतिपद्यन्ते प्रमाद्यन्ति' इति योगीन्द्रनाथसेनः।

[1] १ 'व्याधीनां रूपमातुरे' इति पा०।

तो विप्रतिपत्तिर्व्याधितरूपहेतुविप्रतिपत्तिः, तत्र । कारणम् एकदेशेन ज्ञानम् । सापवादमिति सदोषम् । सम्यक् प्रतिपत्तिः संप्रतिपत्तिः ॥ ८ ॥

अथास्मै प्रोवाच भगवानात्रेयः—इह खल्वग्निवेश ! विंशतिविधाः क्रिमयः पूर्वमुद्दिष्टा नानाविधेन प्रविभागेनान्यत्र सहजेभ्यः; ते पुनः प्रकृतिभिर्विभज्यमानाश्चतुर्विधा भवन्ति; तद्यथा—पुरीषजाः, श्लेष्मजाः, शोणितजा, मलजाश्चेति ॥ ९ ॥

पूर्वमुद्दिष्टा इति अष्टोदरीये संज्ञामात्रकथिताः । अन्यत्र सहजेभ्य इत्यनेन शरीरसहजास्त्ववैकारिकाः क्रिमयो विंशतेरप्यधिका भवन्तीति दर्शयति । प्रकृतिभिरिति कारणैः । मलजा इति बाह्यमलजाः ॥ ९ ॥

तत्र मलो बाह्यश्चाभ्यन्तरश्च । तत्र बाह्यमलजातान् मलजान् संचक्ष्महे[1] । तेषां समुत्थानं-मृजावर्जनं; स्थानं—केशश्मश्रुलोमपक्ष्मवासांसि; संस्थानम्-अणवस्तिलाकृतयो बहुपादाश्च; वर्णः-कृष्णः, शुक्लश्च; नामानि-यूकाः, पिपीलिकाश्च; प्रभावः—कण्डूजननं, कोठपिडकाभिनिर्वर्तनं च; चिकित्सितं तु खल्वेषामपकर्षणं, मलोपघातः, मलकराणां च भावानामनुपसेवनमिति ॥ १० ॥

पिपीलिकां लिक्षां केचिदाहुः । क्रिमीणां संज्ञा खशास्त्रव्यवहारसिद्धा देशान्तरप्रसिद्धा च बोद्धव्या । प्रभाव इति स्वक्रियासंपाद्यमित्यर्थः ॥ १० ॥

शोणितजानां तु खलु कुष्ठैः समानं समुत्थानं; स्थानं-रक्तवाहिन्यो धमन्यः; संस्थानम्-अणवो वृत्ताश्चापादाश्च, सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः;वर्णः—ताम्रः; नामानि-केशादा, लोमादा, लोमद्वीपाः, सौरसा, औडुम्बरा, जन्तुमातरश्चेति; प्रभावः-केशश्मश्रुनखलोमपक्ष्मापध्वंसः, व्रणगतानां च हर्षकण्डूतोदसंसर्पणानि, अतिवृद्धानां च त्वक्सिरास्नायुमांसतरुणास्थिभक्षणमिति; चिकित्सितमप्येषां कुष्ठैः समानं, तदुत्तरकालमुपदेक्ष्यामः ॥ ११ ॥

हर्षकण्ड्वादयो व्रणदेश एव ज्ञेयाः ॥ ११ ॥

श्लेष्मजाः क्षीरगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहाजीर्णपूतिक्लिन्नसंकीर्णविरुद्धासात्म्यभोजनसमुत्थानाः; तेषामामाशयः स्थानं, ते प्रवर्धमानास्तूर्ध्वमधो वा विसर्पन्त्युभयतो वा; संस्थानवर्णविशेषास्तु—श्वेताः पृथुब्रध्नसंस्थानाः केचित्, केचिद्वृत्तपरिणाहा गण्डूपदाकृतयः श्वेतास्ताम्रावभासाश्च, केचिदणवो दीर्घास्तन्त्वाकृतयः श्वेताः; तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि-अन्त्रादाः, उदरादाः, हृदयचराः[1], चुरवः, दर्भपुष्पाः, सौगन्धिकाः, महागुदाश्चेति; प्रभावो—हृल्लासः, आस्यसंस्रवणम्, अरोचकाविपाकौ, ज्वरः, मूर्च्छा, जृम्भा, क्षवथुः, आनाहः, अङ्गमर्दः, छर्दिः कार्श्यं, पारुष्यं, चेति ॥ १२ ॥

परमान्नं पायसम् । संकीर्णभोजनं घृणाविषयमलादिमिश्रितव्यञ्जनादिभोजनम् । ब्रध्नः[2] चर्मलता ॥ १२ ॥

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैः; तेषां स्थानं पक्वाशयः, ते प्रवर्धमानास्त्वधो विसर्पन्ति, यस्य पुनरामाशयाभिमुखाः स्युर्यदन्तरं[3] तदन्तरं तस्योद्गारनिःश्वासाः पुरीषगन्धिनः स्युः; संस्थानवर्णविशेषास्तु-सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घा[4] ऊर्णांशुसंकाशाः केचित्, केचित् पुनः स्थूलवृत्तपरीणाहाः श्यावनीलहरितपीताः; तेषां नामानि ककेरुकाः, मकेरुकाः, लेलिहाः; सशूलकाः, सौसुरादाश्चेति; प्रभावः—पुरीषभेदः, कार्श्यं, पारुष्यं, लोमहर्षाभिनिर्वर्तनं च, त एव चास्य गुदमुखं परितुदन्तः कण्डूं चोपजनयन्तो गुदमुखं पर्यासते, त एव जातहर्षा गुदनिष्क्रमणमतिवेलं कुर्वन्ति; इत्येष श्लेष्मजानां पुरीषजानां च क्रिमीणां समुत्थानादिविशेषः ॥१३॥

यदन्तरमिति यस्मिन् काले, तदन्तरं तत्कालमेव । ऊर्णांशुसंकाशा इति मेषलोमतुल्याः । पर्यासत इति क्षिपन्ति, किंवा गुदं परिवार्यासते । अतिवेलमिति पुनः पुनः ॥ १३ ॥

चिकित्सितं तु खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेणोपदेक्ष्यामः । तत्र सर्वक्रिमीणामपकर्षणमेवादितः कार्यं, ततः प्रकृतिविघातः, अनन्तरं निदानोक्तानां भावानामनुपसेवनमिति ॥ १४ ॥

तत्रापकर्षणं-हस्तेनाभिगृह्य विमृश्योपकरणवताऽपनयनमनुपकरणेन वा; स्थानगतानां तु क्रिमीणां भेषजेनापकर्षणं न्यायतः, तच्चतुर्विधं; तद्यथा—शिरोविरेचनं, वमनं, विरेचनम्, आस्थापनं च; इत्यपकर्षणविधिः । प्रकृतिविघातस्त्वेषां कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगः, यच्चान्यदपि किंचिच्छ्लेष्मपुरीषप्रत्यनीकभूतं तत् स्यात्; इति प्रकृतिविघातः । अनन्तरं निदानोक्तानां भावानामनुपसेवनं—यदुक्तं निदानविधौ तस्य विवर्जनं तथाप्रायाणां चापरेषां द्रव्याणाम् । इति लक्षणत-

१ 'व्याचक्ष्महे' इति पा० ।

१ 'हृदयादाः' इति पा० । २ 'ब्रध्नः मांसपेशी' इति पा० । ३ 'स्युस्तस्योद्गारनिःश्वासाः' इति पा० । ४ 'दीर्घोर्णांशुसंकाशाः' इति पा० ।

श्चिकित्सितमनुव्याख्यातम्। एतदेव पुनर्विस्तरेणोपदेक्ष्यते ॥ १५ ॥

अपकर्षणं हस्तादि संशोधनानि च। प्रकृतेः कारणस्य श्लेष्मादिरूपस्य विघातः प्रकृतिविघात इत्यर्थः। उपकरणवतेति संदंशाद्युपकरणयुक्तेन। तत् स्यादिति विघातः स्यादिति योजना। निदानोक्तानां भावानामनुपसेवनमिति विवरणानुवादः। अस्य विवरणं—यदुक्तमित्यादि। तथाप्रायाणामिति श्लेष्मजपुरीषजक्रिमिनिदानसदृशानामित्यर्थः। लक्षणत इति संक्षेपतः; संक्षेपो हि विस्तरस्य ग्राहकं लक्षणं भवति ॥ १४ ॥ १५ ॥

अथैनं क्रिमिकोष्ठमातुरमग्रे षड्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्यामुपपाद्य श्वोभूते एनं संशोधनं पायिताऽसीति क्षीरगुडदधितिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहसंप्रयुक्तैर्भोज्यैः सायं प्रातश्चोपपादयेत् समुदीरणार्थं क्रिमीणां कोष्ठाभिसरणार्थं च भिषक्। अथ व्युष्टायां रात्र्यां सुखोषितं सुप्रजीर्णभक्तं च विज्ञायास्थापनवमनविरेचनैस्तदहरेवोपपादयेदुपपादनीयश्चेत् स्यात् सर्वान् परीक्ष्यविशेषान् परीक्ष्य सम्यक् ॥ १६ ॥

कोष्ठाभिसरणार्थमिति क्षीरगुडादिलोभेन देशान्तरं परित्यज्य कोष्ठगमनार्थम्। तदहरेवेति एकस्मिन् दिने; एतच्चैकदिन एव भूरिकर्मकरणं व्याधिप्रभावाद्बोद्धव्यम्। एतच्चैकाहेन सर्वकरणं यदि शरीरबलादिसंपद्युक्तः पुरुषो भवति तदैव परं कर्तव्यं, नान्यथेत्याह—उपपादनीयश्चेत् स्यादित्यादिना ॥ १६ ॥

अथाहरेति ब्रूयात्—मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रुखरपुष्पाभूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकानि सर्वाण्यथवा यथालाभं; तान्याहृतान्यभिसमीक्ष्य खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समावाप्य गोमूत्रेणार्धोदकेनाभिषिच्य साधयेत् सततमवघट्टयन् दर्व्या, तमुपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमवतार्य सुपरिपूतं कषायं सुखोष्णं मदनफलपिप्पलीविडङ्गकल्कतैलोपहितं स्वर्जिकालवणितमभ्यासिच्य वस्तौ विधिवदास्थापयेदेनं; तथाऽर्कालर्ककुटजाढकीकुष्ठकैडर्यकषायेण वा, तथा शिग्रुपीलुकुस्तुम्बुरुकटुकासर्षपकषायेण, तथाऽऽमलकशृङ्गवेरदारुहरिद्रापिचुमर्दकषायेण मदनफलादिसंयोगसंपादितेन, त्रिवारं सप्तरात्रं वाऽऽस्थापयेत् ॥ १७ ॥

मधुशिग्रुः शोभाञ्जनः। अत्र क्वाथ्यद्रव्यजलादिमानं क्वाथपरिभाषया कर्तव्यम्। उपयुक्तभूयिष्ठे प्रक्षीणभूयिष्ठ इत्यर्थः। गतरसेष्वौषधेष्विति जले संक्रान्तरसेषु। अनेन कषायसिद्धिलक्षणेन यावता जलेन पाकेन चौषधानि गतरसानि भवन्ति, तावदेव जलं देयं, तावांश्च पाकः कर्तव्यः, नावश्यं परिभाषया सर्वत्रेति क्रमं दर्शयति। सुपरिपूतमिति वस्त्रगालितम्। वस्तौ कषायादिमानं सिद्धौ वक्ष्यमाणेन ज्ञेयम्। अलर्कः मन्दारः ॥ १७ ॥

प्रत्यागते च पश्चिमे वस्तौ प्रत्याश्वस्तं तदहरेवोभयतोभागहरं संशोधनं पाययेद्युक्त्या; तस्य विधिरुपदेक्ष्यते—मदनफलपिप्पलीकषायस्यार्धाञ्जलिमात्रेण त्रिवृत्कल्काक्षमात्रमालोड्य पातुमस्मै प्रयच्छेत्, तदस्य दोषमुभयतो निर्हरति साधु; एवमेव कल्पोक्तानि वमनविरेचनानि प्रतिसंसृज्य पाययेदेनं बुद्ध्या सर्वविशेषानवेक्षमाणो भिषक् १८

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत्। तेनैव च कषायेण बाह्याभ्यन्तरान् सर्वोदकार्थान् कारयेच्छश्वत्; तदभावे कटुतिक्तकषायाणामौषधानां क्वाथैर्मूत्रक्षारैर्वा परिषेचयेत्। परिषिक्तं चैनं निवातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसिद्धेन यवाग्वादिना क्रमेणोपाचरेत्, विलेपीक्रमागतं चैनमनुवासयेद्विडङ्गतैलेनैकान्तरं द्विस्त्रिर्वा ॥ १९ ॥

पश्चिमे तृतीयपुटके। संसृज्येति मिश्रीकृत्य। शैखरिककषायेणेति विडङ्गकषायेण, विडङ्गकषायो हि वैद्यकव्यवहारात् शैखरिककषाय उच्यते। विलेप्याः क्रमागतमिति कृतयवाग्वादिक्रममित्यर्थः ॥ १८ ॥ १९ ॥

यदि पुनरस्यातिप्रवृद्धाञ्छीर्षादान् क्रिमीन् मन्येत शिरस्यैवाभिसर्पतः कदाचित्, ततः स्नेहस्वेदाभ्यामस्य शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ॥ २० ॥

अपामार्गतण्डुलादिनेति अपामार्गतण्डुलीयोक्तेन ॥ २० ॥

यस्त्वभ्यवहार्यविधिः प्रकृतिविघातायोक्तः क्रिमीणामथ तमनुव्याख्यास्यामः,—मूलकपर्णीं समूलाग्रप्रतानामाहृत्य खण्डशश्छेदयित्वोलू(दू)खले क्षोदयित्वा पाणिभ्यां पीडयित्वा रसं गृह्णीयात्, तेन रसेन लोहितशालितण्डुलपिष्टं समालोड्य पूपलिकां कृत्वा विधूमेष्वङ्गारेषूपकुड्य विडङ्गतैललवणोपहितां क्रिमिकोष्ठाय भक्षयितुं प्रयच्छेत्, अनन्तरं चाम्लकाञ्जिकमुदश्विद्वा पिप्पल्यादिपञ्चवर्ग-

१ 'तयोर्विघाताय स्यादिति' इति पा०। २ 'तस्मिञ्छीतीभूते तूपयुक्तभूयिष्ठे' इति पा०।

१ 'शैखरिकः अपामार्गः' इति गङ्गाधरः। २ 'मूषिकपर्णी' इति पा०। ३ 'विपाच्य' इति पा०।

संसृष्टं सलवणमनुपाययेत्। अनेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डीसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकवकुलकुटजसुवर्णक्षीरीस्वरसानामन्यतमस्मिन् कारयेत् पूपलिकाः; तथा किणिहीकिराततिक्तकसुवहामलकहरीतकीविभीतकस्वरसेषु कारयेत् पूपलिकाः; स्वरसांश्चैतेषामेकैकशो द्वन्द्वशः सर्वशो वा मधुविलुलितान् प्रातरनन्नाय पातुं प्रयच्छेत्॥ २१॥

मूलकपर्णी शोभाञ्जनः। उपकुडयेति पाचयित्वा, 'कुड दाहे', इति धातुः पठ्यते। पिप्पल्यादिपञ्चवर्गोऽत्रैव पेयादिक्रमोक्तपञ्चकोलम्। सहचरः झिण्टिका। मधुविलुलितानिति मधुनाऽऽलोडितान्॥ २१॥

अथाश्वशकृदाहृत्य महति किलिञ्जके प्रस्तीर्यातपे शोषयित्वोदूखले क्षोदयित्वा दृषदि पुनः सूक्ष्मचूर्णानि कारयित्वा विडङ्गकषायेण त्रिफलाकषायेण वाऽष्टकृत्वो दशकृत्वो वाऽऽतपे सुपरिभावितानि[1] भावयित्वा दृषदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा नवे कलशे समावाप्यानुगुप्तं निधापयेत्। तेषां तु खलु चूर्णानां पाणितलं यावद्वा साधु मन्येत तत् क्षौद्रेण संसृज्य क्रिमिकोष्ठिने लेढुं प्रयच्छेत्॥ २२॥

सुपरीतादि यथा सुपरिभावितानि भवन्ति तथा भावयित्वेत्यर्थः। अनुगुप्तमिति वातायनननुगमनीयं कृतरक्षं च यथा भवति॥ २२॥

तथा भल्लातकास्थीन्याहृत्य कलशप्रमाणेन चापोथ्य स्नेहभाविते दृढे कलशे सूक्ष्मानेकच्छिद्रब्रध्ने शरीरमुपवेष्ट्य[2] मृदावलिप्ते समावाप्योडुपेन पिधाय भूमावाकण्ठं निखातस्य स्नेहभावितस्यैवान्यस्य दृढस्य कुम्भस्योपरि समारोप्य समन्ताद्गोमयैरुपचित्य दाहयेत्, स यदा जानीयात् साधु दग्धानि गोमयानि विगतस्नेहानि च भल्लातकास्थीनीति ततस्तं कुम्भमुद्धरेत्। अथ तस्माद्वितीयात् कुम्भात् स्नेहमादाय विडङ्गतण्डुलचूर्णैः स्नेहार्धमात्रैः प्रतिसंसृज्यातपे सर्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत् पानाय; तेन साधु विरिच्यते, विरिक्तस्य चानुपूर्वी यथोक्ता। एवमेव भद्रदारुसरलकाष्ठस्नेहानुपकल्प्य पातुं प्रयच्छेत्॥ २३॥

अनुवासयेच्चैनमनुवासनकाले[3]॥ २४॥

ब्रध्नः गुदः, इह तु कलशाधोभागः। शरीरमुपवेष्ट्येति वेष्टयित्वा। उडुपः पिधानम्। स इति भल्लातकस्नेहसाधकः। द्वितीयादिति अधःस्थाद्धटात्॥ २३॥ २४॥

१ 'वाऽऽतपे भावितानि दृषदि' इति पा०। २ 'शरीरमुपवेष्ट्य' इति गङ्गाधरो न पठति। ३ 'चैनमत ऊर्ध्वमनुवासनकाले' इति पा०।

अथाहरेति ब्रूयात्—शारदान्नवांस्तिलान् संपदुपेतान्; तानाहृत्य सुनिष्पूतान्निष्पूय, सुशुद्धान् शोधयित्वा[1], विडङ्गकषाये सुखोष्णे प्रक्षिप्य निर्वापयेदादोषगमनात्, गतदोषानभिसमीक्ष्य, सुप्रलूनान्[2] प्रलुञ्च्य,पुनरेव सुनिष्पूतान्[3] निष्पूय, सुशुद्धान् शोधयित्वा, विडङ्गकषायेण त्रिःसप्तकृत्वः सुपरिभावितान्[4] भावयित्वा, आतपे शोषयित्वा, उलू(दू)खले संक्षुद्य, दृषदि पुनः श्लक्ष्णपिष्टान् कारयित्वा,द्रोण्यामभ्यवधाय, विडङ्गकषायेण मुहुर्मुहुरवसिञ्चन् पाणिमर्दमेव मर्दयेत्; तस्मिंस्तु खलु प्रपीड्यमाने यत्तैलमुदियात्तत् पाणिभ्यां पर्यादाय, शुचौ दृढे कलशे न्यस्यानुगुप्तं निधापयेत्॥ २५॥

निष्पूयेति मृत्तिकायवकरान्निश्चित्य। शोधयित्वेति प्रक्षाल्य। आदोषगमनादित्यत्र तिलदोषगमनं तिलत्वग्लग्नमलादिगमनं ज्ञेयम्। प्रलुञ्च्य निस्तुषीकृत्य। अभ्यवधायेति आरोप्य। पाणिभ्यां पर्यादायेति पाणिलग्नं पुनः पुनः पुनर्गृहीत्वा॥ २५॥

अथाहरेति ब्रूयात्—तिल्वकोद्दालकयोर्द्वौ बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विडङ्गकषायेण, तदर्धमात्रौ श्यामात्रिवृतयोः, अतोऽर्धमात्रौ दन्तीद्रवन्त्योः,अतोऽर्धमात्रौ च चव्यचित्रकयोरिति। एतं संभारं विडङ्गकषायस्यार्धाढकमात्रेण प्रतिसंसृज्य, तत्तैलप्रस्थं समावाप्य, सर्वमालोड्य, महति पर्यङ्गे समासिच्याग्नावधिश्रित्यासने सुखोपविष्टः सर्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद्दर्व्या सततमवघट्टयन्। स यदा जानीयाद्विरमति शब्दः, प्रशाम्यति च फेनः, प्रसादमापद्यते स्नेहः,यथास्वं च गन्धवर्णरसोत्पत्तिः, संवर्तते च भैषज्यमङ्गुलिभ्यां मृद्यमानमनतिमृद्वनतिदारुणमनङ्गुलिग्राहि चेति, स कालस्तस्यावतारणाय। ततस्तमवतार्य शीतीभूतमहतेन वाससा परिपूय, शुचौ दृढे कलशे समासिच्य, पिधानेन पिधाय, शुक्लेन वस्त्रपट्टेनावच्छाद्य, सूत्रेण सुबद्धं सुनिगुप्तं निधापयेत्। ततोऽस्मै मात्रां प्रयच्छेत् पानाय, तेन साधु विरिच्यते; सम्यगपहृतदोषस्य चानुपूर्वी यथोक्ता। ततश्चैनमनुवासयेदनुवासनकाले। एतेनैव च पाकविधिना सर्षपातसीकरञ्जकोषातकीस्नेहानुपकल्प्य पाययेत् सर्वविशेषानवेक्षमाणः। तेनागदो भवति॥ २६॥

एवं द्वयानां[5] श्लेष्मपुरीषसंभवानां क्रिमीणां समुत्थानसंस्थानवर्णनामप्रभावचिकित्सितविशेषा

१ 'सुनिष्पूताञ्छोधयित्वा' यो.। २ 'सुप्रलूनान्' इति गङ्गाधरः। ३ 'निष्पूताञ्छोधयित्वा' यो.। ४ 'सुभावितानातपे' यो.। ५ 'इत्येतद्द्वयानां' इति पा०।

व्याख्याताः सामान्यतः। विशेषतस्तु स्वल्पमात्रमास्थापनानुवासनानुलोमहरणभूयिष्ठं तेष्वेवौषधेषु पुरीषजानां क्रिमीणां चिकित्सितं कर्तव्यं, मात्राधिकं पुनः शिरोविरेचनवमनोपशमनभूयिष्ठं तेष्वेवौषधेषु श्लेष्मजानां क्रिमीणां चिकित्सितं कार्यम्; इत्येष क्रिमिघ्नो भेषजविधिरनुव्याख्यातो भवति। तमनुतिष्ठता यथास्वं हेतुवर्जने प्रयतितव्यम्। यथोद्देशमेवमिदं क्रिमिकोष्ठचिकित्सितं यथावदनुव्याख्यातं भवति ॥ २७ ॥

उद्दालकः बहुवारः। बिल्वमात्रौ पलप्रमाणौ। पर्योगः कटाहः। यथास्वमिति यावन्मात्रं यद्द्रव्यं तैलसंस्कारकं, तदानुरूप्येण वर्णादिसंपत्तिरित्यर्थः। संवर्तते इति वर्तिवद्भवति। अल्पमात्रमिति आस्थापनानुलोमहरणद्रव्यातिरिक्तं भेषजमल्पमात्रं कर्तव्यमित्यर्थः ॥ २६ ॥ २७ ॥

भवन्ति चात्र—

अपकर्षणमेवादौ क्रिमीणां भेषजं स्मृतम्।
ततो विघातः प्रकृतेर्निदानस्य च वर्जनम् ॥ २८ ॥
अयमेव विकाराणां सर्वेषामपि निग्रहे।
विधिर्दृष्टस्त्रिधा योऽयं क्रिमीनुद्दिश्य कीर्तितः ॥२९॥
संशोधनं संशमनं निदानस्य च वर्जनम् ॥
एतावद्भिषजा कार्यं रोगे रोगे यथाविधि ॥ ३० ॥

तत्र श्लोकौ—

व्याधितौ पुरुषौ ज्ञाज्ञौ भिषजौ सप्रयोजनौ।
विंशतिः क्रिमयस्तेषां हेत्वादिः सप्तको गणः ॥ ३१ ॥
उक्तो व्याधितरूपीये विमाने परमर्षिणा ॥
शिष्यसंबोधनार्थाय व्याधिप्रशमनाय च ॥ ३२ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने व्याधितरूपीयविमानं नाम सप्तमोऽध्यायः ॥ ७ ॥

एतदेवापकर्षणादित्रयं रोगान्तरे शब्दान्तरेणोच्यत इत्याह—अयमेवेत्यादि। अत्र संशोधनमपहरणं, संशमनं विघातः, निदानवर्जनं तु शब्देनापि समानम् ॥ २८-३२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने व्याधितरूपीयं विमानं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

अथातो रोगभिषग्जितीयं विमानं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये व्याधितरूपभ्रान्तिज्ञानमुक्तं, तच्च बुद्धिदोषाद्भवति, तेन विशुद्धबुद्ध्युत्पादहेतूनामध्ययनाध्यापनतद्विद्यसंभाषाणां कथनाय रोगभिषग्जितीयोऽभिधीयते। रोगभिषग्जितं चिकित्सितमधिकृत्य कृतोऽध्यायो रोगभिषग्जितीयः। रोगचिकित्साकारित्वं चास्य चिकित्सोपयुक्तस्य सम्यग्ज्ञानसाधनस्याध्ययनविध्यादेस्तथा करणकारणादेश्चाभिधानाज्ज्ञेयम् ॥ १ ॥ २ ॥

बुद्धिमानात्मनः कार्यगुरुलाघवं कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद्भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत। विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके; तत्र यन्मन्येत सुमहद्यशस्विधीरपुरुषासेवितमर्थबहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वविनिश्चयप्रधानं संगतार्थमसंकुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च, तदभिप्रपद्येत शास्त्रम्। शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वम् ॥ ३ ॥

इहाध्ययनविध्यादिषु कर्तव्येषु यादृक् शास्त्रमध्येयं, तदेवायुर्वेदार्थिपुरुषमुपदर्श्य दर्शयन्नाह—बुद्धिमानित्यादि। कार्यं कर्तव्यं, तस्य गौरवं बहुप्रयाससाध्यत्वेन, लाघवं वा स्वल्पप्रयाससाध्यत्वेनेति कार्यगुरुलाघवम्। कर्मफलमिति कार्यफलम्, एतच्च तादात्विकं फलमीप्सितम्। अनुबन्धमिति कार्यस्यैवायतीयं फलम्। देशकालाविति कर्तव्यकार्यानुगुणौ देशकालावित्यर्थः। एतत् सर्वं विदित्वा, युक्तिदर्शनादुपपत्तिदर्शनाद्यदि भिषग्भवितुमिच्छुः स्यात्, तदा शास्त्रं तावदादितः परीक्षेत। एवं मन्यते—य आयुर्वेदाध्ययनलक्षणे कार्ये स्वशक्त्यपेक्षया गौरवं मन्यते स न वर्तते, यश्चायुर्वेदफलेनारोग्यादिना अर्थी न भवति स च तथा, यश्चानुपादेयायुर्वेदज्ञाने देशे स्थितः स च तथा, यस्य च वपुषो वार्धक्यलक्षणः कालः स चायुर्वेदाध्ययनान्तगमनाशक्तत्वादेव यथोक्तानुपपत्तिदर्शनाद्भिषग्भवितुं नेच्छति, अतो न तान् प्रत्यायुर्वेदशास्त्रपरीक्षामप्युपदिशामः; यस्तु यथोक्तविपरीतधर्मयोगी स चायुर्वेदाध्ययनोपादानाद्भिषग्बुभूषुः शास्त्रं परीक्षेत। विविधानीति अगणितानि। सुमहद्यशस्वि च धीरपुरुषासेवितं च; किंवा सुमहद्यशस्विधीरपुरुषैरासेवितमिति विग्रहः। आप्तजनपूजितमिति बहुविधैराप्तैर्यथार्हमनुमतम्। उत्कृष्टमध्याल्पबुद्धयस्त्रिविधाः शिष्याः। अपगतपुनरुक्तमिति कर्तव्ये यद्दोषपाठं करोति, तेनाधिकरणवशप्राप्तं यत् करोति तत् पुनरुक्तमदोषं भवति।

---

१ 'एष एव' इति गङ्गाधरसंमतः पाठः।

१ 'कार्यगुरुलाघवे' इति पा०। २ 'वक्तव्ये' इति पा०।

वचनं हि—"अधिकरणवशाद्दुर्गाद्गुणदोषप्राप्तितोऽर्थसंबन्धात्। स्तुत्यर्थं संशयतः शिष्यधियां चाभिवृद्ध्यर्थम् ॥ अल्पतोऽन्तरितत्वाद्विशेषणेष्वपि च तन्त्रकृद्भिस्तु। यत्तन्त्रे स्यात् पुनरुक्तं नेष्यते तद्विभाव्य विवरणम्" इति । स्वाधारमिति शोभनाभिधेयम्। अनवपतितमिति अग्राम्यशब्दम्। अकष्टशब्दमिति अकृच्छ्रोच्चार्यशब्दं, किंवा प्रसिद्धाभिधेयशब्दम्। पुष्कलाभिधानमिति सम्यगर्थसमर्पकवाक्यम्। क्रमागतार्थमिति परिपाट्यागतार्थम्। संगतार्थमिति प्रतिपादितार्थम्। असंकुलप्रकरणमिति अमिश्रीभूतप्रकरणम्। लक्षणवदिति आयुर्वेदप्रधानार्थहेतुलिङ्गौषधाख्यासाधारणधर्मकथनवत्; किंवा प्रशस्तशास्त्रलक्षणवत्। उदाहरणवदिति दृष्टान्तवत् ॥ ३ ॥

**ततोऽनन्तरमाचार्यं परीक्षेत; तद्यथा—पर्यवदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थं चेति । एवंगुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः संपादयति ॥ ४ ॥**

अध्येतव्यं शास्त्रं परीक्ष्य यस्मात्तच्छास्त्रमध्येतव्यं तस्याचार्यस्य परीक्षामाह—तत इत्यादि। दक्षमिति अवामबुद्धिम्। उपकरणवन्तमिति अनेनानुपकरणे गुरौ चिकित्सावृत्त्यभावात् कर्मदर्शनं न भवति । अनुपस्कृतविद्यमिति शास्त्रान्तरज्ञानेन नास्त्येवोपस्कृता विद्या यस्य स तथा; य आयुर्वेदज्ञः सन् शास्त्रान्तरेणापि संस्कृतो भवति, स तु नितरामुपादेयः । आर्तव इति यथोचितकालभवः ॥ ४ ॥

**तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्तृवच्चाप्रमत्तः। ततस्तत्प्रसादात् कृत्स्नं शास्त्रमधिगम्य शास्त्रस्य दृढतायामभिधानस्य सौष्ठवेऽर्थस्य विज्ञाने वचनशक्तौ च भूयो भूयः प्रयतेत सम्यक् ॥ ५ ॥**

अग्न्यादिबहुदृष्टान्तदर्शनेन येन येन भावेनाग्न्यादयः सेव्यन्ते, तथा तथा गुरुः सेव्यत इति दर्शयति। दृढतायामिति शास्त्रग्रहणस्य स्थैर्ये। अभिधानस्येति शास्त्राभिधानस्य। वचनशक्तौ अर्थकीर्तनसामर्थ्ये ॥ ५ ॥

**तत्रोपायाननुव्याख्यास्यामः—अध्ययनम्, अध्यापनं, तद्विद्यसंभाषा चेत्युपायाः ॥ ६ ॥**

**तत्रायमध्ययनविधिः—कल्यः कृतक्षणः प्रातरुत्थायोपव्यूषं वा कृत्वाऽऽवश्यकमुपस्पृश्योदकं देवर्षिगोब्राह्मणगुरुवृद्धसिद्धाचार्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरःसराभिर्वाग्भिः**

१ 'दीर्घा' इति पा० । २ 'मिश्रीकृतप्रकरणम्' इति पा० । ३ 'उपस्कृतिविद्यं' इति पा० ।

**सूत्रमनुक्रामन् पुनः पुनरावर्तयेद् बुद्ध्वा सम्यगनुप्रविश्यार्थतत्त्वं स्वदोषपरिहारार्थं परदोषप्रमाणार्थं च; एवं मध्यंदिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येत्। इत्यध्ययनविधिः ॥ ७ ॥**

तत्रेति शास्त्रदृढतादौ । तद्विद्यसंभाषा तच्छास्त्राध्यायिना सह संभाषणम्। कल्यः नीरोगः। कृतक्षण इति अनन्यव्यापारत्वेनाध्ययनाय कृतकालपरिग्रहः। प्रातर्वा उत्थाय, उपव्यूषं वा उत्थायेति योजना। उपव्यूषमिति किंचिच्छेषायां रात्रौ। मनःपुरःसराभिरिति एकाग्रमनःप्रणीताभिः । स्वदोषपरिहारपरदोषप्रमाणार्थमिति स्वकीयाध्ययनदोषपरिहारार्थं, परकीयाध्ययनदोषप्रमाणार्थं परकीयाध्ययनदोषज्ञानार्थमित्यर्थः । प्रमीयतेऽनेनेति प्रमाणं ज्ञानमात्रमीप्सितम् । सम्यग् बुद्ध्वाऽर्थतत्त्वं, बुद्ध्वा चाधीयानो निर्दोषाध्ययनो भवति, सम्यगध्ययनज्ञानाच्च परस्य सदोषमध्ययनं प्रतिपद्यते। इत्यध्ययनविधिरिति पूर्वप्रतिज्ञाताध्ययनविधेरुपसंहरणम् । यथोक्तेन विधिनाऽध्ययनं क्रियमाणं सुसंगृहीतं भवति । दृष्टादृष्टसंपत्त्याऽध्ययनकालवर्जनं वेदाध्ययने निषिद्धमेवात्रापि तज्ज्ञेयमिति न विशेषेणोक्तम् ॥ ६ ॥ ७ ॥

**अथाध्यापनविधिः—अध्यापने कृतबुद्धिराचार्यः शिष्यमेवादितः परीक्षेत; तद्यथा—प्रशान्तमार्यप्रकृतिकमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठममिन्मिनं धृतिमन्तमनहङ्कृतं मेधाविनं वितर्कस्मृतिसंपन्नमुदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतमर्थतत्त्वभावकमकोपनमव्यसनिनं शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यसर्वानुशिष्टिप्रतिकरमनुरक्तं च, एवंगुणसमुदितमध्याप्यमाहुः ॥ ८ ॥**

इह शिष्यगुणेषु ऋजुचक्षुर्मुखनासावंशत्वादयो गुणाः सहजलक्षणत्वेनोपादेयाः; अतो विपरीतलक्षणो हि जडो भवति। तद्विद्यवृत्तमिति आयुर्वेदज्ञाचारम्। निभृतमिति विनीतम्। अनुद्धतमिति अनहङ्कृतम्। अनुरागशब्देनाध्ययनानुराग उच्यते, अनुरक्तमित्यनेन च गुरावनुरक्तत्वमुच्यते। दाक्ष्यं दर्शयित्वाऽप्यनलसमिति यत् करोति तेन दाक्ष्यादारब्धेऽपि कार्ये बहुप्रयाससाध्येऽनलसमित्याह। अनुशिष्टिप्रतिकरमिति आज्ञाकरम् ८

**एवंविधमध्ययनार्थिनमुपस्थितमारिराधयिषुमाचार्योऽनुभाषेत—उदगयने शुक्लपक्षे प्रशस्तेऽहनि**

१ 'बुद्ध्या' इति पा० । २ 'उद्ग्राहिका' इति पा० । ३ 'अनुद्धतवेशं' इति पा० । ४ '°सर्वानुशिष्टिप्रतिपत्तिकरम्' इति पा० । ५ 'तद्विद्यवृत्तमिति तद्विद्यवृत्त्या वर्तयन्तं वैद्यवृत्तिकमित्यर्थः' इति योगीन्द्रनाथसेनः। ६ 'एवं सर्वगुणसमुदितं' इति पा० ।

तिष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे कल्याणे च करणे मैत्रे मुहूर्ते मुण्डः कृतोपवासः स्नातः काषायवस्त्रसंवीतः सगन्धहस्तः समिधोऽग्निमाज्यमुपलेपनमुदकुम्भान् माल्यदामदीपहिरण्यहेमरजतमणिमुक्ताविद्रुमक्षौमपरिधीन् कुशलाजसर्षपाक्षतांश्च शुक्लानि सुमनांसि ग्रथिताग्रथितानि मेध्यान् भक्ष्यान् गन्धांश्च घृष्टानादायोपतिष्ठस्वेति ॥ ९ ॥

सं तथा कुर्यात् ॥ १० ॥

तिष्यः पुष्यनक्षत्रम्, अश्वयुग् अश्विनी। शशिनि कल्याणे इति उक्तनक्षत्रेष्वध्ययनार्थिनो यतः शशी कल्याणकरो भवति, उदित एव शशिन्यध्ययनं कर्तव्यम्। मैत्रे मुहूर्ते इति अनुकूले मुहूर्ते; मुहूर्ताश्च शिवभुजगादयः। मुण्डः कृतवापनः। गन्धेन युक्तो हस्तः पञ्चाङ्गुलो गन्धहस्तः। हिरण्यशब्देनाघटितं हेम गृह्यते, हेमशब्देन च घटितम्। परिधयो हस्तप्रमाणा होमकुण्डचतुःपार्श्वे स्थाप्याः पालाशादिदण्डा उच्यन्ते। अत्र चोपार्जितवस्तुसान्निध्यमेव फलप्रदमिति ऋषिवचनादुन्नीयते, ( तेन अन्योपाहृतमपीष्टगन्धादि नोद्भावनीयम् ) ॥ ९ ॥ १० ॥

तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे उदक्प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं स्थण्डिलं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिहितं परिधिभिश्चतुर्दिशं यथोक्तचन्दनोदकुम्भक्षौमहेमहिरण्यरजतमणिमुक्ताविद्रुमालङ्कृतं मेध्यभक्ष्यगन्धशुक्लपुष्पलाजसर्षपाक्षतोपशोभितं कृत्वा, तत्र पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधुकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयादग्निमाशीःसंप्रयुक्तैर्मन्त्रैर्ब्रह्माणमग्निं धन्वन्तरिं प्रजापतिमश्विनाविन्द्रमृषींश्च सूत्रकारानभिमन्त्रयमाणः पूर्वं स्वाहेति ॥ ११ ॥

शिष्यश्चैनमन्वालभेत। हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत्। परिक्रम्य ब्राह्मणान् स्वस्ति वाचयेत्; भिषजश्चाभिपूजयेत् ॥ १२ ॥

किष्कुरिह हस्तप्रमाणम्। सुपरिहितमिति सुवेष्टितम्। उपधायेति आरोप्य। जुहुयादिति अध्यापक इत्यभिप्रायः। ब्रह्मादीन् स्वाहेति मन्त्रेण मन्त्रयमाण आचार्यः पूर्वमग्निं जुहुयादिति योजना। तेन ब्रह्माद्यृग्भिराशीःप्रयुक्ताभिः 'ब्रह्मणे स्वाहा' इत्यादिभिर्होमः कर्तव्यः। शिष्यश्चैनमन्वालभेतेति शिष्योऽपि गुरुहोमानन्तरमेव जुहुयादित्यर्थः ॥ ११ ॥ १२ ॥

१ 'अथ सोऽपि तथा कुर्यात्' इति पा०। २ अयं पाठः क्वचिन्नोपलभ्यते। ३ प्रवणं निम्नम्। ४ 'सुपविहितं' ग.।

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चानुशिष्यात्—ब्रह्मचारिणा श्मश्रुधारिणा सत्यवादिनाऽमांसादेन मेध्यसेविना निर्मत्सरेणाशस्त्रधारिणा च भवितव्यं, न च ते मद्वचनात् किञ्चिदकार्यं स्यादन्यत्र राजद्विष्टात् प्राणहराद्विपुलादधर्म्यादनर्थसंप्रयुक्ताद्वाऽप्यर्थात्; मदर्पणेन मत्प्रधानेन मदधीनेन मत्प्रियहितानुवर्तिना च शश्वद्भवितव्यं, पुत्रवद्दासवदर्थिवच्चोपचरताऽनुवस्तव्योऽहम्, अनुत्सेकेनावहितेनानन्यमनसा विनीतेनावेक्ष्यावेक्ष्यकारिणाऽनसूयकेन चाभ्यनुज्ञातेन प्रविचरितव्यम्, अनुज्ञातेन ( चाननुज्ञातेन च ) प्रविचरता पूर्वं गुर्वर्थोपाहरणे यथाशक्ति प्रयतितव्यं, कर्मसिद्धिमर्थसिद्धिं यशोलाभं प्रेत्य च स्वर्गमिच्छता भिषजा त्वया गोब्राह्मणमादौ कृत्वा सर्वप्राणभृतां शर्माशासितव्यमहरहरुत्तिष्ठता चोपविशता च, सर्वात्मना चातुराणामारोग्याय प्रयतितव्यं, जीवितहेतोरपि चातुरेभ्यो नाभिद्रोग्धव्यं, मनसाऽपि च परस्त्रियो नाभिगमनीयास्तथा सर्वमेव परस्वं, निभृतवेशपरिच्छदेन भवितव्यम्, अशौण्डेनापापेनापापसहायेन च, श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसंपत्सु नित्यं यत्नवता च; न च कदाचिद्राजद्विष्टानां राजद्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वाऽप्यौषधमनुविधातव्यं, तथा सर्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारोपचाराणामनपवादप्रतिकाराणां मुमूर्षूणां च, तथैवासन्निहितेश्वराणां स्त्रीणामनध्यक्षाणां वा; न च कदाचित् स्त्रीदत्तमामिषमादातव्यमननुज्ञातं भर्त्राऽथवाऽध्यक्षेण, आतुरकुलं चानुप्रविशता विदितेनानुमतप्रवेशिना सार्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेनावेक्ष्यावेक्ष्य मनसा सर्वमाचरता सम्यगनुप्रवेष्टव्यम्, अनुप्रविश्य च वाङ्मनोबुद्धीन्द्रियाणि न क्वचित् प्रणिधातव्यान्यन्यत्रातुरादातुरोपकारार्थादातुरगतेष्वन्येषु वा भावेषु, न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः, ह्रसितं चायुषः प्रमाणमातुरस्य जानताऽपि त्वया न वर्णयितव्यं तत्र यत्रोच्यमानमातुरस्यान्यस्य वाऽप्युपघाताय संपद्यते; ज्ञानवताऽपि च नात्यर्थमात्मनो ज्ञाने विकत्थितव्यम्, आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्त्यनेके ॥ १३ ॥

ते भवितव्यमिति त्वया भवितव्यम्। प्रविचरितव्यमिति

१ 'अनुसर्तव्योऽहम्' इति पा०। २ 'अल्पवादप्रतीकाराणां' इति पा०।

चिकित्सार्थं व्यवहर्तव्यम् । गोब्राह्मणमादौ कृत्वेति प्रथमं गोब्राह्मणानां शर्म आशासितव्यं, ततश्चेतरेषां प्राणिनाम् । उपविशता चेति च्छेदः । शुण्डा मद्यशाला, तत्प्रचारी शौण्डः; अशौण्डस्तु तदप्रचारी । शुक्लमिव शुक्लं, निर्दोषत्वादेतद्वचनम् । यत्नवता भवितव्यमिति संबन्धः । राज्ञो द्विष्टो राजद्विष्टः, यस्तु राजानं द्वेष्टि स राजद्वेषी । आचारस्योपचरणमाचारोपचारः । अनध्यक्षाणां वा न प्रतिकर्तव्यमिति योजना । प्रवृत्तय इति वार्ताः । तत्रेति न वर्णयितव्यमित्यनेन संबध्यते । अन्यस्य आतुरपुत्रपित्रादेः; अन्यत्र उदासीने जीवितह्रासकथनं यशस्करमेव । न विकत्थितव्यं न श्लाघा कर्तव्या । आप्तादपि हीति अत्राप्तः सत्यवागुच्यते, अन्यत्रापि सत्यमेवाप्तं वक्ष्यति; यथाकालप्राप्तमेव ब्रूयादित्यर्थः ॥ १३ ॥

न चैव ह्यस्ति सुतरमायुर्वेदस्य पारं, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत्, एतच्च कार्यम्, एवंभूयश्च वृत्तसौष्ठवमनसूयता परेभ्योऽप्यागमयितव्यं, कृत्स्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमताम्, अतश्चाभिसमीक्ष्य बुद्धिमताऽमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौक्यमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यं चेति । अतः परमिदं ब्रूयात्—देवताग्निद्विजगुरुवृद्धसिद्धाचार्येषु ते नित्यं सम्यग्वर्तितव्यं, तेषु ते सम्यग्वर्तमानस्यायमग्निः सर्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युः, अतोऽन्यथा वर्तमानस्याशिवायेति । एवं ब्रुवति चाचार्ये शिष्यः 'तथा' इति ब्रूयात् । यथोपदेशं च कुर्वन्नध्याप्यः, अतोऽन्यथा त्वनध्याप्यः । अध्याप्यमध्यापयन् ह्याचार्यो यथोक्तैश्चाध्यापनफलैर्योगमाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानं च युनक्ति । इत्यध्यापनविधिरुक्तः ॥ १४ ॥

न चैव हीत्यादि । यस्मादायुर्वेदोऽपि ज्ञातुं न शक्यते प्रायत्नेनायुर्वेदज्ञानार्थमुद्यमं गच्छेत् । अस्मिन्निति दुस्तरे आयुर्वेदे । अनुक्तसद्वृत्तकरणार्थमाह—एतच्चेत्यादि ।—एतच्चेति 'अथैनमग्निसकाशे' इत्यादिग्रन्थोक्तमनुष्ठेयम् । एवंभूयश्च वृत्तसौष्ठवमिति उक्तसदृशं च साधुवृत्तमित्यर्थः । लौक्यं लोकानुमतम् । इतिशब्दोऽवधारणे, तेन यदेवामित्रस्य धन्यादिगुणयुक्तं वचस्तदेवानुविधातव्यं श्रोतव्यं च । यथोक्तैरिति शास्त्रान्तरे; न ह्यस्मिन् शास्त्रेऽध्ययनफलं साक्षात् क्वचिदुक्तम् ॥ १४ ॥

संभाषाविधिमत ऊर्ध्वं व्याख्यास्यामः—भिषक् भिषजा सह संभाषेत । तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशारद्यमपि चाभिनिर्वर्तयति, वचनशक्तिमपि चाधत्ते, यशश्चाभिदीपयति, पूर्वश्रुते च संदेहवतः पुनः श्रवणाच्छ्रुतसंशयमपकर्षति, श्रुते चासंदेहवतो भूयोऽध्यवसायमभिनिर्वर्तयति, अश्रुतमपि च कञ्चिदर्थं श्रोत्रविषयमापादयति, यच्चाचार्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातं तत् परस्परेण सह जल्पन् पिण्डेन विजिगीषुराह संहर्षात्, तस्मात्तद्विद्यसंभाषामभिप्रशंसन्ति कुशलाः ॥ १५ ॥

द्विविधा तु खलु तद्विद्यसंभाषा भवति—सन्धायसंभाषा, विगृह्यसंभाषा च ॥ १६ ॥

संहर्षः स्पर्धा, ज्ञानार्थमभियोगसंहर्षौ करोतीति ज्ञानाभियोगसंहर्षकरी । वैशारद्यमिति परवचनाभिभवपाण्डित्यम्; एतच्च सभायामभ्यासाद्भवति । भूयोऽध्यवसायमिति दृढनिश्चयम् । अथ कथं श्रुतत्वमपि कस्यचिद्गुह्यस्यार्थस्य स्यात्तदाह—जल्पन् पिण्डेनेति ।—पिण्डेनेति सारोद्धारेण । ननु गुह्यश्चेत् सारतस्तत् कथमयं विजिगीषुस्तमाहेत्याह—संहर्षादिति । स्पर्धया तु गुह्योऽप्यर्थो विजयार्थमभिधीयत इति भावः । सन्धायसंभाषा नये 'संवाद' इत्युच्यते । विगृह्यसंभाषा तु जल्पवितण्डारूपा ज्ञेया ॥ १५ ॥ १६ ॥

तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नेनाकोपनेनानुपस्कृतविद्येनानसूयकेनानुनेयेनानुनयकोविदेन क्लेशक्षमेण प्रियसंभाषणेन च सह सन्धायसंभाषा विधीयते । तथाविधेन सह कथयन् विस्रब्धः कथयेत्, पृच्छेदपि च विस्रब्धः, पृच्छते चास्मै विस्रब्धाय विशदमर्थं ब्रूयात्, न च निग्रहभयादुद्विजेत, निगृह्य चैनं न हृष्येत्, न च परेषु विकत्थेत, न च मोहादेकान्तग्राही स्यात्, न चाविदितमर्थमनुवर्णयेत्, सम्यक् चानुनयेनानुनयेत्, तत्र चावहितः स्यात् । इत्यनुलोमसंभाषाविधिः ॥ १७ ॥

तत्रेत्यादिना सन्धायसंभाषाविधिमाह । विस्रब्धः कथयेदिति जल्पवितण्डोक्तनिग्रहाभीतः । कथयेदिति ब्रूयात् । निगृह्य चैनं न हृष्येदिति अनुलोमसंभाषारूपवादे च यानि संभवन्ति निग्रहस्थानानि तत्त्वविघातीनि हेत्वाभासापसिद्धान्तन्यूनाधिकरूपाणि, तैरपि निगृह्य न हृष्येत् । जल्पोक्तनिग्रहस्थानानि त्वत्राग्राह्याण्येव । अविदितमिति प्रतिवादिनोऽविदितम् । अनुनयेच्च सम्यगनुनयेनेति संबन्धः; तेन चात्र छलजातिप्रयोगो

१ 'एतच्चैवं कार्यम् । एवं भूयः प्रवृत्तस्य सौष्ठवं' इति पा० ।
२ 'लौकिकं' इति पा० ।

१ 'पण्डेन' इति पा० । 'पण्डेन स्वपाण्डित्यप्रकाशनेन' इति गङ्गाधरः । २ 'सम्यक् चानुनयेनानुनीयेत, अनुनयाच्च परं तत्रावहितः स्यात्' इति पा० ।

न कर्तव्य इति शिक्षयति । तत्र चावहितः स्यादिति सम्यगनुनयेऽवधानं कुर्यात् ॥ १७ ॥

अत ऊर्ध्वमितरेण सह विगृह्य संभाषायां जल्पेच्छ्रेयसा योगमात्मनः पश्यन् । प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं परिषद्विशेषांश्च सम्यक् परीक्षेत । सम्यक्परीक्षा हि बुद्धिमतां कार्यप्रवृत्तिनिवृत्तिकालौ शंसति, तस्मात् परीक्षाममिप्रशंसन्ति कुशलाः । परीक्षमाणस्तु खलु परावरान्तरमिमान् जल्पकगुणाञ्श्रेयस्करान् दोषवतश्च परीक्षेत सम्यक्; तद्यथा—श्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्तिरिति, एतान् गुणान् श्रेयस्करानाहुः; इमान् पुनर्दोषवतः, तद्यथा—कोपनत्वमवैशारद्यं भीरुत्वमधारणत्वमनवहितत्वमिति । एतान् गुणान् गुरुलाघवतः परस्य चैवात्मनश्च तुलयेत् ॥ १८ ॥

इतरेणेति अविशिष्टेन । वादे तु विशिष्टो गुरुर्ब्रह्मचारी वाऽधिकृतः; उक्तं हि न्याये—"तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात्" ( न्या. द. ४।२।४० ) इति । संभाषायामिति प्रवृत्तकथोपलक्षणं, तेन जल्पे वितण्डायां चेति ज्ञेयम् । परावरान्तरमिति प्रतिवादिन आत्मनश्च प्रतिभादिविशेषमित्यर्थः । जल्पान्तरमिति सामयिकसर्वार्थादिविशेषितं जल्पकविशेषमित्यर्थः ॥ १८ ॥

तत्र त्रिविधः परः संपद्यते—प्रवरः, प्रत्यवरः, समो वा, गुणविनिक्षेपतः; नत्वेव कार्त्स्न्येन ॥१९॥

परिषत्तु खलु द्विविधा—ज्ञानवती, मूढपरिषच्च । सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन—सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति । तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नायां मूढायां वा न कथंचित् केनचित् सह जल्पो विधीयते; मूढायां तु सुहृत्परिषद्युदासीनायां वा ज्ञानविज्ञानवचनप्रतिवचनशक्तीरन्तरेणाप्यदीप्तयशसा महाजनविद्विष्टेनापि सह जल्पो विधीयते । तद्विधेन च सह कथयता आविद्धदीर्घसूत्रसंकुलैर्वाक्यदण्डकैः कथयितव्यम्, अतिहृष्टं मुहुर्मुहुरुपहसता परं निरूपयता च पर्षदमाकारैर्ब्रुवतश्चास्य वाक्यावकाशो न देयः; कष्टशब्दं च ब्रुवता वक्तव्यो नोच्यते, अथवा पुनर्हीना ते प्रतिज्ञा, इति । पुनश्चाहू(ह्व)यमानः प्रतिवक्तव्यः—परिसंवत्सरो भवान् शिक्षस्व तावत्; न त्वया गुरुरुपासितो नूनम्, अथवा पर्याप्तमेतावत्ते; सकृदपि हि परिक्षेपिकं निहतं निहतमाहुरिति नास्य योगः कर्तव्यः कथञ्चित् । अप्येवं श्रेयसा सह विगृह्य वक्तव्यमित्याहुरेके; नत्वेवं ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः ॥ २० ॥

गुणविनिक्षेपत इति गुणपरिमाणादुत्कृष्टगुणत्वेन प्रवर इत्यर्थः; प्रत्यवरः हीनगुणः, समगुणः समो वाद्यपेक्षयेत्यर्थः । नत्वेव कार्त्स्न्येनेति न कुलशीलधर्मादिनाऽपि प्रवरादिरिहाभिप्रेत इत्यर्थः । मूढपरिषदित्यत्र मूढेव मूढा किंचित्कृत्ये, सर्वथा मूढायां तु न कश्चिद्ब्रूते । न केनचिदिति नाधमेनापीत्यर्थः । आविद्धं वक्रम् । कथयितव्यमिति वक्तव्यम् । उपहसता परं प्रतिवादिनम् । तथा परिषदं निरूपयता आकारैरिति संबन्धः । कष्टशब्दमिति नातिप्रसिद्धार्थम् । नोच्यत इति त्वया नोच्यत इति वक्तव्यं; कष्टशब्दस्य ह्यर्थं मूढा परिषन्न जानात्येव, ततश्च कष्टशब्दस्यानर्थकतायाः परिषदं प्राप्य सुखसाध्यत्वमिति भावः । तथा कष्टशब्दं वदंस्त्वेवं वाच्यं—हीना ते प्रतिज्ञेति । परिसंवत्सरोऽध्ययनं गुरुमुपास्याय पुनरधीष्व । पर्याप्तमेतावत्त इति 'पक्षावसादाय' इति शेषः । परिक्षेपिकमिति प्रतिक्षेपिकशब्दम् । नास्य योगः कर्तव्य इति न सकृत्पराभूतस्य पक्षस्य पुनः प्रतिक्षेपकहेतुना योगः कर्तव्य इत्यर्थः । कथंचिदित्यादिना श्रेयसा समं विगृह्यसंभाषायामेकीयमतमाह; नत्वेवेत्यादिना आत्ममतमाह ॥ १९ ॥ २० ॥

प्रत्यवरेण तु सह समानाभिमतेन वा विगृह्य जल्पता सुहृत्परिषदि कथयितव्यम्, अथवाऽप्युदासीनपरिषद्यवधानश्रवणज्ञानविज्ञानोपधारणवचनप्रतिवचनशक्तिसंपन्नायां कथयता चावहितेन परस्य साद्गुण्यदोषबलमवेक्षितव्यं, समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत नास्य तत्र जल्पं योजयेदनाविष्कृतमयोगं कुर्वन्; यत्र त्वेनमवरं मन्येत तत्रैवैनमाशु निगृह्णीयात् । तत्र खल्विमे प्रत्यवराणामाशु निग्रहे भवन्त्युपायाः; तद्यथा—श्रुतहीनं महता सूत्रपाठेनाभिभवेत्, विज्ञानहीनं पुनः कष्टशब्देन वाक्येन, वाक्यधारणाहीनमाविद्धदीर्घसूत्रसंकुलैर्वाक्यदण्डकैः, प्रतिभाहीनं पुनर्वचनेनैकविधेनाने-

१ 'संभाषेत' इति पा० । २ 'जल्पान्तरं जल्पकस्य वैशेष्यं गुणदोषौ' इति योगीन्द्रनाथसेनः । ३ 'प्रतिकूलत्वेन निविष्टाः सभ्या यत्र सा प्रतिनिविष्टपरिषत्, शत्रुपरिषदित्यर्थः' इति योगीन्द्रनाथसेनः । ४ 'दीप्तयशसा' इति पा० । ५ 'ब्रुवन्' इति पा० ।

१ 'परिसंवत्सरः संवत्सरं परिप्राप्तः' इति गङ्गाधरः । 'शिक्षस्व तावद्गुरुमुपासितो नूनम्' इति पा० । २ 'प्रतिवादिरिहाभिप्रेतः' इति पा० । ३ 'कष्टं शब्दं दुर्बोधार्थवाक्यं ब्रुवता स वक्तव्यो नोच्यते त्वयेति निरुत्तरत्वान्निगृहीतोऽसि' इति योगीन्द्रनाथसेनः । ४ 'परिक्षेपिकं प्रतिवादिनं, सकृत् एकवारमपि, निहतं निगृहीतं निहतमाहुः पण्डिताः, अतो हेतोरस्य निगृहीतपक्षस्य योगो न पुनः कर्तव्यः' इति योगीन्द्रनाथसेनः । ५ 'अनेकविधेन' इति पा० ।

कार्थवाचिना, वचनशक्तिहीनमर्धोक्तस्य वाक्यस्याक्षेपेण, अविशारदमपत्रपणेन, कोपनमायासनेन, भीरुं वित्रासनेन, अनवहितं नियमनेनेति। एवमेतैरुपायैः परमवरमभिभवेच्छीघ्रम् ॥ २१ ॥

तत्र श्लोकौ—

विगृह्य कथयेद्युक्त्या युक्तं च न निवारयेत्।
विगृह्यभाषा तीव्रं हि केषांचिद्द्रोहमावहेत् ॥ २२ ॥
नाकार्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते।
कुशला नाभिनन्दन्ति कलहं समितौ सताम् ॥ २३ ॥

एवं प्रवृत्ते वादे कुर्यात् ॥ २४ ॥

साद्गुण्यस्य विद्यमानगुणतायास्तथा दोषस्य बलं साद्गुण्यदोषबलम्। 'श्रेष्ठं मन्येतेति यत्र वादविषये प्रतिवादिनमधिकं पश्येदित्यर्थः। तत्र परस्य पुरःसरवादविषये तथा वादो निवर्तनीयः, यथा आविष्कृतः प्रकटीकृतः सभायां नायोगः स्यात्; अनभीष्टविषये तथा वादनिवृत्तिः कर्तव्या यथा कोऽपि न जानात्येवं तत्र वक्तुमक्षम इत्यर्थः। तत्रैवेति तत्रैव हीनपक्षे प्रवृत्तं निगृह्णीयादिति योजना। महता सूत्रपाठेनेति श्रुतहीनो ह्यपरिचयाद्दीर्घसूत्रपाठं कर्तुमक्षमः। विज्ञानहीनमिति अज्ञातार्थम्। नानार्थवाचिनेति अनेकार्थवाचिना, एकविधेनेति एकविधेन शब्देन; प्रतिभाहीनो ह्यनेकार्थं नावधारयति यत् केनाभिप्रायेणायं प्रयुक्तोऽनेन शब्द इति। वचनशक्तिहीनोऽर्धोक्तवाक्याक्षेपान्न पुनर्वक्तुं क्षमो भवतीति द्रष्टव्यम्। अविशारदमिति अदृष्टसभम्; अदृष्टसभो ह्यपत्रपणेनातीव लज्जितः सन्न किंचित् प्रतिपद्यते। एवमिति 'तद्यथा श्रुतहीनम्' इत्यादिग्रन्थोक्तम्। प्रवृत्ते वादे कुर्यादिति च्छेदः ॥ २१-२४ ॥

प्रागेव तावदिदं कर्तुं यतेत—सन्धाय पर्षदाऽयनभूतमात्मनः प्रकरणमादेशयितव्यं, यद्वा परस्य भृशदुर्गं स्यात्, पक्षमथवा परस्य भृशं विमुखमानयेत्; परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुम्, एषैव ते परिषद्यथेष्टं यथायोगं यथाभिप्रायं वादं वादमर्यादां च स्थापयिष्यतीत्युक्त्वा तूष्णीमासीत ॥ २५ ॥

तथाऽप्रवृत्ते वादे किं कुर्यादित्याह—प्रागेवेत्यादि। अयनभूतमिति अभ्यासान्मार्गीभूतमिव अभ्यस्तमित्यर्थः। परस्य भृशदुर्गमिति प्रतिवादिनोऽविदितत्वेन दुर्गमिव दुर्गं; तत् पूर्वं सन्धितया परिषदाऽऽदेशयेत्। पक्षान्तरमाह—पक्षमथवेत्यादि। परस्य प्रतिवादिनः पक्षं भृशमत्यर्थं सभायां यथा विमुखं भवति, तथा वादं प्रवर्तयेत्; एतेन नास्ति परलोको नास्ति कर्मफलमित्यादि यदि परस्य पक्षो भवति, तदैतस्य पक्षस्य स्वाभाविकद्विष्टत्वेन यत्किंचित् स्वपक्षसाधनमुच्यते, तदेव परिषदपि गृह्णातीत्युक्तं भवति। उपसंहितायामिति संधिना युक्तायां तूष्णीमासीतेति योजना। उपसंहिता हि परिषत् परोक्षेणाभिमतत्वेनोपदर्शितमेव सर्वं करिष्यति, तदलमिहात्यर्थवचनेन माहात्म्यखण्डकेनेति भावः ॥ २५ ॥

तत्रेदं वादमर्यादालक्षणं भवति—इदं वाच्यम्, इदमवाच्यम्, एवं पराजितो भवतीति ॥ २६ ॥

वादमर्यादालक्षणमाह—तत्रेदमित्यादि। वादशब्देन चेह विगृह्य पक्षप्रतिपक्षवचनमात्रमुच्यते; सन्धायसंभाषया तु तत्त्वबुभुत्सोर्वाद उक्तः ॥ २६ ॥

इमानि तु खलु पदानि भिषग्वादमार्गज्ञानार्थमधिगम्यानि भवन्ति; तद्यथा-वादः, द्रव्यं, गुणाः, कर्म, सामान्यं, विशेषः, समवायः, प्रतिज्ञा, स्थापना, प्रतिष्ठापना, हेतुः, दृष्टान्तः, उपनयः, निगमनम्, उत्तरं, सिद्धान्तः, शब्दः, प्रत्यक्षम्, अनुमानम्, ऐतिह्यम्, औपम्यं, संशयः, प्रयोजनं, सव्यभिचारं, जिज्ञासा, व्यवसायः, अर्थप्राप्तिः, संभवः, अनुयोज्यम्, अननुयोज्यम्, अनुयोगः, प्रत्यनुयोगः, वाक्यदोषः, वाक्यप्रशंसा, छलम्, अहेतुः, अतीतकालम्, उपालम्भः, परिहारः, प्रतिज्ञाहानिः, अभ्यनुज्ञा, हेत्वन्तरम्, अर्थान्तरं, निग्रहस्थानमिति ॥ २७ ॥

संप्रति वादमार्गज्ञानार्थं वादाभिज्ञेयानि द्रव्यगुणादीन्युपदर्शयन्नाह—इमानीत्यादि। भिषजां वादमार्गो भिषग्वादमार्गः। वादादयः स्वयमेवाचार्येणाग्रे विव्रियन्त इति नेह संज्ञाकथने विव्रियन्ते ॥ २७ ॥

तत्र वादो नाम स यत् परेण सह शास्त्रपूर्वकं विगृह्य कथयति। स च द्विविधः संग्रहेण—जल्पः, वितण्डा च। तत्र पक्षाश्रितयोर्वचनं जल्पः, जल्पविपर्ययो वितण्डा। यथा—एकस्य पक्षः पुनर्भवोऽस्तीति, नास्तीत्यपरस्य; तौ च स्वस्वपक्षहेतुभिः स्वस्वपक्षं स्थापयतः, परपक्षमुद्भावयतः, एष जल्पः। जल्पविपर्ययो वितण्डा। वितण्डा नाम परपक्षे दोषवचनमात्रमेव ॥ २८ ॥

तत्रेत्यादिना वादलक्षणम्। इह वादशब्देन विगृह्यवादोऽभिप्रेतः, तत्त्वबुभुत्सुवादस्तु सन्धायसंभाषयैवोक्तः। शास्त्रपूर्वकमित्यनेनार्थादिकलहवादं निषेधति। तत्र वादे विगृह्यसंभाषारूपत्वादेव छलजातिनिग्रहस्थानानां विजिगीषा-

१ 'वाक्यस्य क्षेपणेन' इति पा०। २ 'न जानात्ययं तत्र वक्तुमक्षम इति' इति पा०। 'आत्मनः अयोगमयोग्यत्वमनाविष्कृतं कुर्वन् न प्रकाशयन्, तत्र तेन सह जल्पात्तथा विरमेद्यथाऽऽत्मनोऽसामर्थ्यं नावबुध्येत' इति योगीन्द्रनाथसेनः। ३ 'ज्ञातुमक्षमः' इति पा०। ४ 'एवंप्रवृत्ते वादे प्रागेव तावदिदं कर्तुं यतेत' इति योगीन्द्रनाथसेनसंमतः पाठः।

१ 'उपसंहितायां सन्धिना स्वपक्षमानीतायां' इति योगीन्द्रनाथसेनः। २ 'भिषग्भिर्वादमार्गज्ञानार्थं' इति पा०।

प्रवृत्तानां प्रयोगो लभ्यते। पक्षाश्रितयोरिति पक्षं साधयतोरित्यर्थः; तेन, वितण्डायामप्युत्तरवादिनः परपक्षदूषणलक्षणः पक्षोऽस्त्येव, परं स्वमतं न साधयतीति भेदः। यथैकस्येत्यादि जल्पोदाहरणम्। परपक्षे दोषवचनमात्रमित्यनेन न स्वपक्षसाधनवचनं वैतण्डिकस्येति दर्शयति ॥ २८ ॥

**द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाः स्वलक्षणैः श्लोकस्थाने पूर्वमुक्ताः ॥ २९ ॥**

**अथ प्रतिज्ञा—प्रतिज्ञा नाम साध्यवचनं; यथा—नित्यः पुरुष इति ॥ ३० ॥**

पूर्वमुक्ता दीर्घञ्जीवितीये ॥ २९ ॥ ३० ॥

**अथ स्थापना—स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः स्थापना। पूर्वं हि[1] प्रतिज्ञा, पश्चात् स्थापना, किं ह्यप्रतिज्ञातं स्थापयिष्यति; यथा—नित्यः पुरुष इति प्रतिज्ञा; हेतुः—अकृतकत्वादिति; दृष्टान्तः—यथाऽऽकाशमिति;[2] उपनयः—यथा चाकृतकमाकाशं, तच्च नित्यं, तथा पुरुष इति; निगमनं—तस्मान्नित्य इति ॥ ३१ ॥**

स्थापयति सिद्धमर्थं परं प्रति साधयतीति स्थापना। सा च साध्यं परं प्रति हेत्वादिभिश्चतुर्भिः साधयति। प्रतिज्ञाऽपि परं प्रति स्थापना भवति, यतः पञ्चावयवमेवानुमानं भवति, सा त्विह स्थाप्यत्वेनैव लब्धेति न स्थापनायामिहोदाहृता ॥ ३१ ॥

**अथ प्रतिष्ठापना—प्रतिष्ठापना नाम या तस्या एव पर[3]प्रतिज्ञाया विपरीतार्थस्थापना। यथा—अनित्यः पुरुष इति प्रतिज्ञा[4]; हेतुः—ऐन्द्रियकत्वादिति; दृष्टान्तः—यथा घट[5] इति, उपनयो—यथा घट ऐन्द्रियकः स चानित्यः, तथा चायमिति; निगमनं—तस्मादनित्य इति ॥ ३२ ॥**

प्रतिष्ठापनापदं प्रथमं संप्रत्यवसरप्राप्ता प्रतिष्ठापनेति दर्शयति; द्वितीयं तु प्रतिष्ठापना नामेति तस्या एवेत्यादिना वक्ष्यमाणस्य लक्षणस्योपदर्शनार्थम्। एवं 'स्थापना नाम' इत्यादावपि पुनरुक्तस्य प्रयोजनं वाच्यम्। प्रतिष्ठापनापदगतस्य प्रतिशब्दस्यार्थं व्याकरोति—विपरीतार्थस्थापनेति; प्रतिशब्दोऽयं विपरीतार्थ इत्यर्थः। इयं च प्रतिष्ठापना आन्वीक्षिक्यां प्रकरणसमाख्यं हेतुदूषणम् ॥ ३२ ॥

**अथ हेतुः—हेतुर्नामोपलब्धिकारणं; तत् प्रत्यक्षम्, अनुमानम्, ऐतिह्यम्, औपम्यमिति; एभिर्हेतुभिर्यदुपलभ्यते तत् तत्त्वम् ॥ ३३ ॥**

हेतुश्चाविनाभावलिङ्गवचनं यद्यपि, तथाऽपीह लिङ्गप्रग्राहकाणि प्रत्यक्षादिप्रमाणान्येव यथोक्तहेतुमूलत्वेन हेतुशब्देनाहेति बोद्धव्यम्; अन्यथा पुनः प्रत्यक्षाद्यभिधानं पुनरुक्तं स्यात्। उपलब्धिकारणमिति व्यापकस्य साध्यस्योपलब्धिकारणम्। तत्तत्त्वमिति तल्लिङ्गमित्यर्थः ॥ ३३ ॥

**अथ दृष्टान्तः—दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धिसाम्यं, यो वर्ण्यं वर्णयति[1]। यथा—अग्निरुष्णः, द्रवमुदकं, स्थिरा पृथिवी, आदित्यः प्रकाशक इति; यथा आदित्यः[2] प्रकाशकस्तथा सांख्य[3]ज्ञानं प्रकाशकमिति ॥ ३४ ॥**

मूर्खविदुषां बुद्धिसाम्यमित्यनेन लौकिकानां पण्डितानां च योऽर्थोऽविवादसिद्धः स दृष्टान्तो भवति, न पण्डितमात्रसिद्धः। योऽपि लोकप्रसिद्धो दृष्टान्त उच्यते, स यावच्च प्रतिपाद्यपुरुषं प्रति साध्यते, न तावद्दृष्टान्ततामासादयतीति भावः। अथ बुद्धिसाम्यमात्रेण साध्यसाधर्म्यभावादिष्टत्वाद् दृष्टान्तो भवतीत्याह—यो वर्ण्यं वर्णयति; यः साध्यं साधयतीत्यर्थः। प्रसिद्धसाध्यसाधनसंबन्धश्च दृष्टान्तः साध्यं साधयतीति भावः। अग्न्यादयश्च लोकप्रसिद्धत्वेनोदाहृताः; तेनैतेषामपि साध्यसाधनोदाहरणमादित्यादिवत् क्वचिद्द्वन्द्वेऽयमयमिवेति दर्शयति ॥ ३४ ॥

**उपनयो निगमनं चोक्तं स्थापनाप्रतिष्ठापनाव्याख्यायाम् ॥ ३५ ॥**

**अथोत्तरम्—उत्तरं नाम साधर्म्योपदिष्टे हेतौ वैधर्म्यवचनं, वैधर्म्योपदिष्टे वा हेतौ साधर्म्यवचनम्। यथा—'हेतुसधर्माणो विकाराः, शीतकस्य हि व्याधेर्हेतुभिः साधर्म्यं हिमशिशिरवातसंस्पर्शाः,' इति ब्रुवतः परो ब्रूयात्[4]—हेतुविधर्माणो विकाराः, यथा शरीरावयवानां दाहौष्ण्यकोथप्रपचने हेतुवैधर्म्यं[5] हिमशिशिरवातसंस्पर्शा इति। एतत् सविपर्ययमुत्तरम् ॥ ३६ ॥**

उत्तरमित्यादि। उत्तरशब्देनेह जात्युत्तरमुत्तराभासमीप्सितं; यतोऽसाधकसाधर्म्यमात्रप्रत्यवस्थानमेवोत्तरं विवरणे दर्शयिष्यति। उक्तं च न्याये—"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" ( न्या. द. १।२।१८ ) इति। एतच्च साधर्म्यवैधर्म्योदाहरणार्थम्। तेन न्यायोक्ता जात्युत्तरा उत्कर्षापकर्षसमादयोऽप्यनुक्ता इहैवानुबोद्धव्याः। हेतुसधर्माण इति हेतुसदृशाः। शीतकः शीतं, हिमशिशिरवातगताः संस्पर्शाः शीतस्य हेतुभिः साधर्म्यमिति कृत्वा योजना। तेन हिमादीनां हेतूनां ये शीतस्पर्शास्ते शीतकेऽपीति साधर्म्यं हेतुविकारयोरिति। परो ब्रूयादिति प्रतिवादी वदेत्। दाहौष्ण्यकोथप्रपचने 'विकारे' इति

---

१ 'पूर्वं हि लोके प्रतिज्ञा' इति पा०। २ 'दृष्टान्तोऽकृतकमाकाशं, तच्च नित्यं, उपनयो—यथा चाकृतकमाशं तथा पुरुषः' इति पा०। ३ 'तस्या एव प्रतिज्ञायाः प्रति विपरीतार्थस्थापना' इति पा०। ४ 'विपरीतार्थप्रतिज्ञा' इति पा०। ५ 'घट ऐन्द्रियकः, स चानित्यः; उपनयो यथा घटस्तथा पुरुषः' इति पा०।

१ 'तेनैव यद्वर्ण्यं वर्णयति' इति पा०। २ 'वाऽऽदित्यः' इति पा०। ३ 'सांख्यवचनं' इति पा०। ४ 'प्रतिवादिपुरुषमित्यर्थः। ५ 'हेतुभिर्वैधर्म्यं' इति पा०।

शेषः। हेतुवैधर्म्यं हेतुवैसादृश्यम्। हिमादिसंस्पर्शाः हिमादिजन्यस्पर्शाः, शरीरावयवदाहादिविकारे उष्णे विसदृशा इति वाक्यार्थः। एवं तावद् वैधर्म्योक्ते हेतौ विपर्ययायदा हेतुसाम्यमुत्तरं क्रियते, तदा विपर्ययो भवति। एवमेवोदाहरणद्वयं सविपर्ययं संपूर्णमुत्तरं भवतीत्यर्थः॥ ३५॥ ३६॥

**अथ सिद्धान्तः-सिद्धान्तो नाम स यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिश्च साधयित्वा स्थाप्यते निर्णयः। स चतुर्विधः—सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्तश्चेति। तत्र सर्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन् सर्वस्मिंस्तन्त्रे तत्तत् प्रसिद्धं; यथा सन्ति निदानानि, सन्ति व्याधयः, सन्ति सिद्ध्युपायाः साध्यानामिति। प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन्नेकैकस्मिंस्तन्त्रे तत्तत् प्रसिद्धं; यथा—अन्यत्राष्टौ रसाः षडत्र, पञ्चेन्द्रियाण्यत्र षडिन्द्रियाण्यन्यत्र तन्त्रे, वातादिकृताः सर्वे विकारा यथाऽन्यत्र, अत्र वातादिकृता भूतकृताश्च प्रसिद्धाः। अधिकरणसिद्धान्तो नाम स यस्मिन्नधिकरणे प्रस्तूयमाने सिद्धान्यन्यान्यप्यधिकरणानि भवन्ति, यथा—'न मुक्तः कर्मानुबन्धिकं कुरुते, निस्पृहत्वात्' इति प्रस्तुते सिद्धाः कर्मफल-मोक्ष-पुरुष-प्रेत्यभावा भवन्ति। अभ्युपगमसिद्धान्तो नाम स यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः; तद्यथा—द्रव्यं प्रधानमिति कृत्वा वक्ष्यामः, गुणाः प्रधानमिति कृत्वा वक्ष्यामः, वीर्यं प्रधानमिति कृत्वा वक्ष्यामः, इत्येवमादिः। इति चतुर्विधः सिद्धान्तः॥ ३७॥**

बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यत इत्यस्य विवरणं—निर्णय इति; निर्णीयत इति निर्णयः। एतच्च सिद्धान्तलक्षणमभ्युपगमसिद्धान्ते नास्ति, तेन तत्र बुद्धिव्यवस्थितत्वेन चोक्तं सिद्धान्तत्वं ज्ञेयम्। सिद्धान्तं विभजते—स इत्यादि। प्रतितन्त्रसिद्धान्ते षड्सा अष्टौ रसा इति परस्परविरुद्धेऽपि वादे स्वयुक्तिव्यवस्थापनबलात्तु सिद्धान्तत्वं ज्ञेयम्। यस्मिन्नित्यादौ अधिकरणे इति अभिधेय[2]प्रधानत्वे। अन्यान्यपीति साक्षादनभिधीयमानान्यपि। अनुबध्नातीति आनुबन्धिकं जन्मान्तरेऽप्यनुगामीत्यर्थः। मुक्त इति प्रत्यासन्नमुक्तिः, सर्वथामुक्तस्त्वशरीरत्वात् कर्म न करोति; किंवा आनुबन्धिकं विशेषेण न करोति। सिद्धा इत्यादि। यदीह कर्मफलं न स्यात्तदा मुमुक्षुणाऽपि क्रियते कर्म, फलोद्विग्नो ह्ययं न तत् कर्म करोति; यदि च मोक्षो न स्यात्तदा मुक्त इति वचनं न स्यात्; तथा यदि च पुरुषो न स्यात्तदा कस्य वा बन्धः, कस्य वा मोक्षः स्यात्; यदा जन्मान्तरं न स्यात्तदा कर्मणो जन्मान्तरानुबन्धित्वमनुपपन्नं स्यादिति; न मुक्त इत्यादिवदता अधिकरणबलादेव सिद्धाः सिद्धान्तत्वेन कर्मफलादयः स्वीकृता भवन्ति। असिद्धमित्यस्य विवरणम्—अपरीक्षितमित्यादि॥ ३७॥

१ 'कर्म' इति पा०। २ प्रधानाभिधेये इत्यर्थः।

**अथ शब्दः—शब्दो नाम वर्णसमाम्नायः; स चतुर्विधः—दृष्टार्थश्च, अदृष्टार्थश्च, सत्यश्च, अनृतश्चेति। तत्र दृष्टार्थो नाम—त्रिभिर्हेतुभिर्दोषाः प्रकुप्यन्ति, षड्भिरुपक्रमैश्च प्रशाम्यन्ति, सति श्रोत्रादिसद्भावे शब्दादिग्रहणमिति। अदृष्टार्थः पुनः—अस्ति प्रेत्यभावः, अस्ति मोक्ष इति। सत्यो नाम—यथार्थभूतः; सन्त्यायुर्वेदोपदेशाः, सन्ति सिद्ध्युपायाः साध्यानां व्याधीनां, सन्त्यारम्भफलानीति। सत्यविपर्ययश्चानृतः॥ ३८॥**

शब्दशब्देनेह सङ्केतबलादर्थप्रकाशिका वर्णमालोच्यते। आप्तोपदेशशब्दस्तु द्विविधः—परमाप्तब्रह्मादिप्रणीतः, तथा लौकिकाप्तप्रणीतश्च; ऐतिह्यशब्देन परमाप्तप्रणीतोऽवरुद्धः, लौकिकाप्तप्रणीतश्च शब्दैकदेशरूपः सत्यप्रकारविहितो ज्ञेयः। वर्णसमाम्नाय इति वर्णमेलक इत्यर्थः। वर्णानां यद्यप्यत्र सहस्थायिनां मेलको नास्ति, तथाऽप्येकस्मृतिसमानरूपित्वेन किंवा पूर्वपूर्वानुभवजनितसंस्कारसहितान्त्यवर्णानुभवारोहेण मेलको ज्ञेयः। दृष्टार्थं इति प्रमाणान्तरोपलब्धियोग्यार्थः। त्रिभिर्हेतुभिरिति प्रज्ञापराधादिभिः। षडुपक्रमा लङ्घनादयो लङ्घनबृंहणीयोक्ताः। एतेषां वाक्यानामिहैव दृश्यतेऽर्थ इति दृष्टार्थत्वम्। सत्यविपर्ययः—'न सन्त्यायुर्वेदोपदेशाः' इत्यादिर्ज्ञेयः॥ ३८॥

**अथ प्रत्यक्षं-प्रत्यक्षं नाम तद्यदात्मना चेन्द्रियैश्च स्वयमुपलभ्यते; तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः, शब्दादयस्त्विन्द्रियप्रत्यक्षाः॥ ३९॥**

आत्मनेति मनसा, तेन मानसप्रत्यक्षं सुखाद्यमवरुध्यते। इन्द्रियैश्चेत्यनेन बाह्यं प्रत्यक्षं गृह्यते। स्वयमुपलभ्यत इति साक्षादुपलभ्यते; अनेन चेन्द्रियव्यापारे सत्यपि यदनुमानविज्ञानं तदसाक्षात्कारित्वान्न प्रत्यक्षमिति दर्शयति॥ ३९॥

**अथानुमानम्—अनुमानं नाम तर्को युक्त्यपेक्षः; यथा—अग्निं जरणशक्त्या, बलं व्यायामशक्त्या, श्रोत्रादीनि शब्दादिग्रहणेनेत्येवमादि॥ ४०॥**

तर्को युक्त्यपेक्ष इत्यनुमानलक्षणं विविधरोगविज्ञानीय एव व्याकृतम्। अनुमानोदाहरणमाह—अग्निं जरणशक्त्येत्यादिना॥ ४०॥

**अथैतिह्यम्—ऐतिह्यं नामाप्तोपदेशो वेदादिः ४१**

अलौकिकाप्तोपदेश ऐतिह्यपदेनोच्यत इत्याह—वेदादिरिति॥ ४१॥

**अथौपम्यम्—औपम्यं नाम यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनं; यथा—दण्डेन दण्ड-**

कस्य, धनुषा धनुःस्तम्भस्य, इष्वासेनाऽऽरोग्यदस्येति ॥ ४२ ॥

यदन्येनेत्यादौ अन्येनेति प्रसिद्धेन, अन्यस्येति अप्रसिद्धस्य। सादृश्यमधिकृत्येति सादृश्यं प्रतिपाद्यं संज्ञासंज्ञिसंबन्धं प्रति कारणतया अधिकृत्य; यदा तु भट्टनयेनोपमानं व्याख्येयं तदा सादृश्यं प्रतिपाद्यतया अधिकृत्येति योजनीयं, तेषां सादृश्यप्रतिपत्तिरुपमानार्थः। न्याये च संज्ञासंज्ञिसंबन्धप्रतीतिरुपमानफलं, तच्च प्रथमव्याख्यानाद्भवति; उक्तं हि तत्र—"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" (न्या. द. १।१।६) इति। दण्डेन दण्डकस्येति दण्डेन प्रसिद्धेनाप्रसिद्धस्य दण्डकस्य साधर्म्यमासाच्छ्रुतवान् कुम्भकारदण्डवद्विकारदर्शने सत्यमसौ दण्डकसंज्ञो विकार इति प्रत्येति, किंवा भट्टनयेन प्रसिद्धं दण्डगतं साधर्म्यमप्रसिद्धदण्डकाख्यविकारसंबन्धितया प्रत्येति; एवमन्यत्राप्युदाहरणे ज्ञेयम्। इष्वासेनेति इषुमोक्षकेण, यथा इषुमोक्षकेण लक्ष्येऽनतिविप्रकृष्टे नापराध्यते, तथाऽऽरोग्यदेन वैद्येन वैद्यगुणैरातुरं साधयता ॥ ४२ ॥

**अथ संशयः—संशयो नाम सन्देहलक्षणानुसन्दिग्धेष्वर्थेष्वनिश्चयः[1]; यथा—दृष्टा ह्यायुष्मल्लक्षणैरुपेताश्चानुपेताश्च तथा सक्रियाश्चाक्रियाश्च पुरुषाः शीघ्रभङ्गाश्चिरजीविनश्च, एतदुभयदृष्टत्वात् संशयः—किमस्ति खल्वकालमृत्युरुत नास्तीति॥४३॥**

सन्देहलक्षणानुसंदिग्धेष्वर्थेष्वित्यनेन सन्देहयोग्यं विषयं दर्शयति; अनेन च न्यायोक्त"समानानेकधर्मोपपत्तेः" (न्या. द. १।१।२३) इत्यादिवचनाद् विषयं संशयस्य दर्शयति। संशयलक्षणम् 'अनिश्चयः' इति ज्ञेयम्; अनिश्चयः पाक्षिकविरुद्धधर्मावमर्शकरं ज्ञानं, यथा—स्थाणुर्वा पुरुषो वेति। दृष्टा हीत्यादिना संशयोत्पत्तिसामग्रीमाह। तत्रायुष्यलक्षणोपेतानामक्रियाणां शीघ्रभङ्गे तथा सक्रियाणां च चिरजीवने दृष्टे अकालमृत्युरस्तीति बुद्धिः, एतद्विपर्यये चाकालमृत्युर्नास्तीति बुद्धिः ॥ ४३ ॥

**अथ प्रयोजनं—प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः; यथा—यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्याम्यनायुष्याणि च परिहरिष्यामि, कथं मामकालमृत्युः प्रसहेतेति ॥ ४४ ॥**

यदर्थमिति यन्निमित्तम्। प्रसहेतेति मारयेदित्यर्थः ॥ ४४ ॥

**अथ सव्यभिचारं—सव्यभिचारं नाम यद्व्यभिचरणं; यथा—भवेदिदमौषधमस्मिन् व्याधौ यौगिकमथवा नेति ॥ ४५ ॥**

सव्यभिचारमिति अनैकान्तिकमित्यर्थः। अथवा नेति न भवेदिति। अनैकान्तिकं चात्रौषधं यौगिकत्वायौगिकत्वाभ्यां संशयजनकमेव; तेन संशयेन सममेकता न शङ्कनीयाऽनैकान्तिकस्य ॥ ४५ ॥

**अथ जिज्ञासा—जिज्ञासा नाम परीक्षा; यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते ॥ ४६ ॥**

उत्तरकालमिति इहैव परीक्षाप्रकरणे; किंवा रसायने "भेषजं द्विविधं च तत्" (चि. अ. १, पा. १) इत्यादिना ॥ ४६ ॥

**अथ व्यवसायः—व्यवसायो नाम निश्चयः; यथा—वातिक एवायं व्याधिः, इदमेवास्य[1] भेषजं चेति ॥ ४७ ॥**

**अथार्थप्राप्तिः—अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्यार्थस्यानुक्तस्यापि सिद्धिः; यथा—नायं संतर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिः—अपतर्पणसाध्योऽयमिति, नानेन दिवा भोक्तव्यमित्युक्ते भवत्यर्थप्राप्तिः—निशि भोक्तव्यमिति ॥ ४८ ॥**

अर्थप्राप्तिरिति अर्थापत्तिरित्यर्थः। इह उक्तेनेति वचनाच्छ्रुतार्थापत्तिरेव विवक्षिता, दृष्टार्थापत्तिरपि त्वेतत्सामान्यत्वेनैव ज्ञेया। इयं चार्थापत्तिरन्यथोपपत्त्या न प्रमाणमिति न प्रमाणप्रकरणे पठिता, या तु दोषरहिता साऽनुमानान्तर्गतैवेति भावः। यो ह्यपतर्पणसाध्योऽपि न स्यात्तं प्रति 'नायं संतर्पणसाध्यः' इतिवचनमेवासंबद्धमर्थविशेषणतया[2] न स्यादित्यर्थापत्तिर्नेत्यभिप्रायः, उभयथाऽप्यसाध्ये हि 'असाध्यः' इत्येतावदेव वक्तव्यं स्यात्। एवमन्यत्राप्युदाहरणे ज्ञेयम् ॥ ४७ ॥ ४८ ॥

**अथ संभवः—यो यतः संभवति स तस्य संभवः; यथा—षड्धातवो गर्भस्य, व्याधेरहितं, हितमारोग्यस्येति ॥ ४९ ॥**

संभवति विद्यते अस्मादिति संभवः, कारणं हि अव्यक्तस्वजन्मकार्यमुक्तम्, यतः कारणं सत्कार्यवादिमते कार्ययुक्तमेव। तेन षड्धातौ गर्भोऽस्त्येव, एवमहितेऽपि व्याधिरस्त्येव, स उत्तरकालं व्यज्यते इति सांख्यमतेनोक्तम्। ततश्च यदन्यत्र संभवोदाहरणमुक्तं यथा—'संभवति खार्यां द्रोण' इत्यादि, तत्समानमेतदप्युदाहरणं भवति ॥ ४९ ॥

**अथानुयोज्यम्—अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तत्। सामान्यतो व्याहृतेष्वर्थेषु[4] वा विशेषग्रहणार्थं यद्वाक्यं तदप्यनुयोज्यं; यथा—'संशोधनसाध्योऽयं व्याधिः' इत्युक्ते 'किं वमनसाध्योऽयं, किंवा विरेचनसाध्यः' इत्यनुयुज्यते ॥ ५० ॥**

अनुयोज्यान्तरमाह—सामान्यत इत्यादि ॥ ५० ॥

**अथाननुयोज्यम्—अननुयोज्यं नामातो विपर्ययेण; यथा—अयमसाध्यः ॥ ५१ ॥**

१ 'संदिग्धेष्वर्थेषु' इति पा०।

१ 'इदमेवात्र' इति पा०। २ 'असंबन्धविशेषणतया' इति पा०।
३ 'अस्मिन्' इति पा०। ४ 'सामान्योदाहृतेष्वर्थेषु' इति पा०।

अननुयोज्यमाह—अतो विपर्ययेणेति, । यथोक्तानुयोज्यद्वयोदाहरणविपर्ययेण ज्ञेयम् ॥ ५१ ॥

**अथानुयोगः—अनुयोगो नाम स यत् तद्विद्यानां तद्विद्यैरेव सार्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञानवचनप्रतिवचनपरीक्षार्थमादिश्यते। यथा—'नित्यः पुरुषः' इति प्रतिज्ञाते यत् परः 'को हेतुः' इत्याह, सोऽनुयोगः ॥ ५२ ॥**

**अथ प्रत्यनुयोगः—प्रत्यनुयोगो नामानुयोगस्यानुयोगः; यथा—अस्यानुयोगस्य पुनः को हेतुरिति ॥ ५३ ॥**

अनुयोगमाह—अथेत्यादि । प्रश्न इतिशब्देन यथोक्तशास्त्रे संपूर्णप्रश्नो गृह्यते, यथाऽत्रैव 'तत्र चेद्भिषक् भिषजं पृच्छेद्' इत्यादिना यावदुक्तं तत् संपूर्णं ज्ञेयम्; अत्रैव चैकदेशोऽपि प्रश्नस्य ज्ञेयः ॥ ५२ ॥ ५३ ॥

**अथ वाक्यदोषः—वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनम्, अधिकम्, अनर्थकम्, अपार्थकं, विरुद्धं चेति; एतानि ह्यन्तरेण न प्रकृतोऽर्थः प्रणश्येत्। तत्र न्यूनं—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं भवति; यद्वा बहूपदिष्टहेतुकमेकेन हेतुना साध्यते तच्च न्यूनम्। अथाधिकम्—अधिकं नाम यन्न्यूनविपरीतं, यद्वाऽऽयुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा यत्किंचिदप्रतिसंबद्धार्थमुच्यते, यद्वा संबद्धार्थमपि द्विरभिधीयते तत् पुनरुक्तदोषत्वादधिकं; तच्च पुनरुक्तं द्विविधम्—अर्थपुनरुक्तं, शब्दपुनरुक्तं च; तत्रार्थपुनरुक्तं यथा—भेषजमौषधं साधनमिति, शब्दपुनरुक्तं पुनर्भेषजं भेषजमिति। अथानर्थकम्—अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्न चार्थतो गृह्यते । अथापार्थकम्—अपार्थकं नाम यदर्थवच्च परस्परेणासंयुज्यमानार्थकं; यथा—चक्र-न(त)क्र-वंश-वज्र-निशाकरा इति। अथ विरुद्धं—विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं; तत्र पूर्वं दृष्टान्तसिद्धान्तावुक्तौ; समयः पुनस्त्रिधा भवति; यथा—आयुर्वैदिकसमयः, याज्ञिकसमयः, मोक्षशास्त्रिकसमयश्चेति; तत्रायुर्वैदिकसमयः-चतुष्पादं भेषजमिति, याज्ञिकसमयः-आलभ्या यजमानैः पशव इति, मोक्षशास्त्रिकसमयः-सर्वभूतेष्वहिंसेति; तत्र स्वसमयविपरीतमुच्यमानं विरुद्धं भवति। इति वाक्यदोषाः ॥ ५४ ॥**

वाक्यदोषानुदाहरति—अथेत्यादि । अस्मिन्नर्थे इतिवचनेन छलहेत्वाभासादिपदगृहीतानपि वाक्यदोषत्वेन दर्शयति; छलादयो हि वाक्यदोषा एव, परं पृथग्गृहीतत्वादिह नोच्यन्ते; तथा शास्त्रान्तरोक्ताश्चासिद्धादयोऽनया भाषया सूच्यन्ते वाक्यदोषाः। यद्वेत्यादौ यदा पुरुषनित्यत्वे ये हेतव उक्ता 'अनादित्वात्, अकृतकत्वात्, निर्विकारत्वात्'इति, तेषु यदि सकलहेत्वभिधानं प्रतिज्ञाय एकं हेतुं ब्रूते, तदा प्रतिज्ञातार्थस्य न्यूनार्थत्वान्न्यूनं भवतीति ज्ञेयं; यदा हेतुर्वक्तव्यस्तदा एक एव वक्तव्यो युज्यते, एकस्यापि हेतोः साध्यसाधनसमर्थत्वात्; तेन तत्र बहुहेतुकथनमेवाधिकत्वाद्दोष एव भवतीति ज्ञेयम्। प्रकृत इति साध्यत्वेन प्रतिज्ञातः । बार्हस्पत्यमौशनसं च नीतिशास्त्रम्। अप्रतिसंबद्धार्थमित्यनेन बार्हस्पत्याद्यपि यदि धनैषणाभिधानप्रसङ्गेन प्रसङ्गागतं भवति, तदा श्लोकक्रमेणोच्यमानमायुर्वेदोपकारकत्वेन नाधिकमिति दर्शयति। पुनरुक्तदोषादिति दोषवतः पुनरुक्तादित्यर्थः । दोषवत्त्वं च यथा पुनरुक्तस्य, तथोक्तमेव। पञ्चवर्गवदिति क-ख-ग-घ-ङादिवर्गसमुदायवत्, तत्र त्वभिधेयोऽर्थो न प्रतिभाति । अर्थवदिति प्रत्येकं पदरूपतया प्रसिद्धार्थम् । परस्परेणायुज्यमानमिति वाक्यरूपतयाऽर्थाप्रत्यायकं; चक्रादयो हि शब्दाः क्रियां विना न वाक्यरूपार्थाभिधायका इत्यर्थः। विरुद्धे दृष्टान्तविरुद्धं यथा—यथा शीतं जलं तापकं तथा ज्वरोऽपीति । सिद्धान्तविरुद्धं यथा—वैद्यो ब्रूते—न भेषजं रोगहरमिति; आयुर्वेदे चतुष्पादमेव भेषजमिति सिद्धान्त एव, तथा चतुष्पादसंज्ञा समयकृता ज्ञेया। एवं याज्ञिकानामालभ्यसंज्ञा समयकृता। तत्र यदि स्वसमयविपरीतमभिदधाति तदा समयविरुद्धं भवति ॥ ५४ ॥

**अथ वाक्यप्रशंसा—वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे त्वन्यूनम्, अनधिकम्, अर्थवत्, अनपार्थकम्, अविरुद्धम्, अधिगतपदार्थं चेति यत्तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ५५ ॥**

अननुयोज्यमिति नानुयोगार्हम् ॥ ५५ ॥

**अथ च्छलं—छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेव । तद्द्विविधं—वाक्छलं, सामान्यच्छलं च। तत्र वाक्छलं नाम यथा—कश्चिद्ब्रूयात्—नवतन्त्रोऽयं भिषगिति, अथ भिषग् ब्रूयात्—नाहं नवतन्त्र एकतन्त्रोऽहमिति; परो ब्रूयात्—नाहं ब्रवीमि नव तन्त्राणि तवेति, अपि तु नवाभ्यस्तं ते तन्त्रमिति; भिषक् ब्रूयात्—न मया नवाभ्यस्तं तन्त्रम्, अनेकधाऽभ्यस्तं मया तन्त्रमिति; एतद्वाक्छलम्। सामान्यच्छलं नाम यथा—व्याधिप्रशमनायौषधमित्युक्ते, परो ब्रूयात्—सत् सत्प्रशमनायेति किं नु भवानाह; सन् हि रोगः, सदौषधं; यदि च सत् सत्प्रशमनाय भवति, तत्र सत् कासः,**

१ 'अपसिद्धान्तादयः' इति पा०। २ 'यद्वा' इति पा०। ३ 'समयविरोधो भवति' इति पा०।

सत् क्षयः, सत्सामान्यात् कासस्ते क्षयप्रशमनाय भविष्यतीति। एतत् सामान्यच्छलम् ॥ ५६॥

छलमित्यादि। परिशठमिति वचनाप्रवृत्तम्। अर्थवदिवाभासत इत्यर्थाभासः। एतदेव विवृणोति—अपार्थकमित्यादि। अपगतसमीचीनार्थत्वेन वाग्वस्तुमात्रमित्यर्थः। छलं ह्यभिप्रेतार्थादर्थान्तरं परिकल्प्य परवचनोपघाताय प्रतिकल्प्यते। यदुक्तं न्याये "वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम्" (न्या. द. १।२।१०) इति। अत्र वाक्छले एवोपचारच्छलं न्यायोक्तं संभवति। सामान्यशब्दोक्ते ह्यर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलं; तेन 'मञ्चाः क्रोशन्ति'इत्यत्रापि मञ्चशब्दो मुख्यः सन् मञ्चे वर्तते, उपचारात्तु मञ्चस्थेषु पुरुषेषु मञ्चशब्दप्रयोगे सति 'कथमचेतना मञ्चाः क्रोशन्ति?', इत्याक्षेपो वाक्छल एव प्रविशतीति भावः। नवतन्त्रोऽयमित्यादि व्यक्तम्। सामान्यच्छललक्षणमत्रानुक्तं, तत्र न्यायोक्तलक्षणमेव ज्ञेयं; यथा—'संभवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम्' (न्या. द. अ. १. आ. २. सू. १३) इति। सत् सत्प्रशमायेति सता सतः प्रशमः क्रियते इति तव मतमिति कृत्वा च्छलवादी पूर्वपक्षं करोति, तेनाविवक्षितेन सत्त्वसामान्येन प्रत्यवस्थानात् सामान्यच्छलं भवति ॥ ५६॥

अथाहेतुः—अहेतुर्नाम प्रकरणसमः, संशयसमः, वर्ण्यसमश्चेति। तत्र प्रकरणसमो नामाहेतुर्यथा—अन्यः शरीरादात्मा नित्य इति; परो ब्रूयात्—यस्मादन्यः शरीरादात्मा, तस्मान्नित्यः; शरीरं ह्यनित्यमतो विधर्मिणा चात्मना भवितव्यमित्येष चाहेतुः; नहि य एव पक्षः स एव हेतुरिति। संशयसमो नामाहेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुः; यथा—अयमायुर्वेदैकदेशमाह, किन्वयं चिकित्सकः स्यान्न वेति संशये परो ब्रूयात्—यस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति, न च संशयच्छेदहेतुं विशेषयति, एष चाहेतुः; न हि य एव संशयहेतुः, स एव संशयच्छेदहेतुर्भवति। वर्ण्यसमो नामाहेतुः—यो हेतुर्वर्ण्याविशिष्टः; यथा—कश्चिद्ब्रूयात्—अस्पर्शत्वाद्बुद्धिरनित्या शब्दवदिति; अत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या, तदुभयवर्ण्याविशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः ॥ ५७॥

अहेतुः असाधकहेतुरित्यर्थः। प्रक्रियते साध्यत्वेनाधिक्रियत इति व्युत्पत्त्या प्रकरणं पक्षः, तेन समः प्रकरणसमः। अन्यः शरीरादात्मा नित्य इति प्रतिज्ञायां शरीरादन्यत्वं नित्यत्वं चात्मनः साध्यम्। अतो विधर्मिणेति शरीरादनित्याद्विधर्मिणा नित्येनेत्यर्थः। य एव पक्ष इत्यनेनान्यत्वं च शरीरादात्मनो न सिद्धमिति दर्शयति, सति हि नित्यत्वे चेतनाधारस्य शरीरादन्यत्वमपि सिध्यति; चार्वाकपक्षे तु शरीरमेव चेतनमनित्यं चेति तं प्रत्युभयमपि साध्यं; न च साध्यं साधनं भवति, असिद्धत्वादिति भावः। अयमायुर्वेदैकदेशमाहेति आयुर्वेदैकदेशाभिधानं चिकित्सकाचिकित्सकगमकत्वेन संशयहेतुः, एकदेशकथनं हि शास्त्रानभ्यासेऽपि कुतश्चिच्छ्रवणादपि भवतीति भावः। न संशयच्छेदहेतुं विशेषयतीति न संशयच्छेदहेतुं विशिष्टं दर्शयतीत्यर्थः। एष चाहेतुरिति यथोक्तो हेतुरहेतुः संशयोच्छेदे इत्यर्थः। वर्ण्येन साध्येन दृष्टान्तोऽप्यसिद्धत्वेन सम इति वर्ण्यसमः। वर्ण्यः शब्द इति अस्पर्शत्वयोगादनित्यत्वेन शब्दोऽपि साध्यः, न च साध्यो दृष्टान्तो भवति। उभयवर्ण्याविशिष्टत्वादिति उभयत्र वर्ण्ये दृष्टान्ते च वर्ण्यस्य साध्यस्य साध्यत्वेनाविशिष्टत्वादित्यर्थः ॥ ५७॥

अथातीतकालम्—अतीतकालं नाम यत् पूर्वं वाच्यं तत् पश्चादुच्यते, तत् कालातीतत्वादग्राह्यं भवतीति; पूर्वं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृह्णीते, तत्तस्यातीतकालत्वान्निग्रहवचनमसमर्थं भवतीति ॥ ५८॥

यत् पूर्वं वाच्यं तत् पश्चादुच्यते इति यथा निगमनमभिधायं पश्चात् प्रतिज्ञोच्यते। निग्रहप्राप्तमिति निग्रहणीयं ज्ञातम् ॥५८॥

अथोपालम्भः—उपालम्भो नाम हेतोर्दोषवचनं; यथा—पूर्वमहेतवो हेत्वाभासा व्याख्याताः ॥ ५९॥

हेतोर्दोषवचनमित्यनेन कालात्ययापदिष्टासिद्धयोर्द्वयोरपीहानुक्तयोर्ग्रहणं कर्तव्यम्; उदाहरणार्थं त्वहेतव उक्ताः। हेतुवदाभासन्त इति हेत्वाभासाः ॥ ५९॥

अथ परिहारः—परिहारो नाम तस्यैव दोषवचनस्य परिहरणं; यथा—नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते, तस्य चापगमान्नोपलभ्यन्ते, तस्मादन्यः शरीरादात्मा नित्यश्चेति ॥ ६०॥

अथ प्रतिज्ञाहानिः—प्रतिज्ञाहानिर्नाम सा पूर्वपरिगृहीतां प्रतिज्ञां पर्यनुयुक्तो यत् परित्यजति, यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति, पर्यनुयुक्तस्त्वाह—अनित्य इति ॥ ६१॥

यथा नित्यमात्मनीत्यादिना प्रकरणसमत्वेनोक्तहेतौ दोषमुद्धरति। नित्यमिति सर्वदा। जीवलिङ्गानि प्रतिसन्धानस्मरणादीनि। तस्यापगमान्नोपलभ्यन्त इत्यनेन मृतशरीरे चेतनाभावादन्यदेव तत्कारणमुन्नीयते, यदपगमान्न चेतयते मृतश-

१ 'वाक्छलमेव' इति पा०। २ 'प्रत्यवस्थानमुपालम्भः प्रतिषेधः' इति वात्स्यायनः। ३ 'चानेन' इति पा०। ४ 'अहेतुर्न साधकहेतुरित्यर्थः' इति पा०। ५ 'प्रक्रियते साध्यते इति प्रकरणं पक्षः' इति। पा०।

१ 'साध्ये दृष्टान्ते च' इति पा०। २ 'परं' इति पा०।

रीरं, तस्मादन्यत्वमात्मनः सिद्धं, ततश्च शरीरादन्यत्वाच्छरीरविधर्मित्वेन पूर्वमेवोपपादितेन नित्यत्वमपि सिध्यतीत्याह—नित्यश्चेति ॥ ६० ॥ ६१ ॥

**अथाभ्यनुज्ञा—अभ्यनुज्ञा नाम सा य इष्टानिष्टाभ्युपगमः ॥ ६२ ॥**

**अथ हेत्वन्तरं—हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये यद्विकृतहेतुमाह ॥ ६३ ॥**

**अथार्थान्तरम्—अर्थान्तरं नामैकस्मिन् वक्तव्येऽपरं यदाह । यथा-ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥ ६४ ॥**

इष्टानिष्टाभ्युपगमो यथा—'भवान् चौर' इत्युक्ते स्वदोषमपरिहृत्य वचनं—भवानपि चौर इति । एतद्धि वचनं स्वीयमनिष्टं चौरत्वं परस्य चेष्टं चौरत्वमभ्यनुजानाति । तदेवं वचनं न्याये 'मतानुज्ञा'शब्देनोच्यते ॥ ६२–६४ ॥

**अथ निग्रहस्थानं—निग्रहस्थानं नाम पराजयप्राप्तिः; तच्च त्रिरभिहितस्य वाक्यस्यापरिज्ञानं परिषदि विज्ञानवत्यां, यद्वा अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः। प्रतिज्ञाहानिः, अभ्यनुज्ञा, कालातीतवचनम्, अहेतुः,न्यूनम्, अधिकं, व्यर्थम्, अनर्थकं, पुनरुक्तं, विरुद्धं, हेत्वन्तरम्, अर्थान्तरं च निग्रहस्थानम् ॥ ६५ ॥**

**इति वादमार्गपदानि यथोद्देशमभिनिर्दिष्टानि भवन्ति ॥ ६६ ॥**

निग्रहस्य पराजयस्य स्थानमिव स्थानं कारणमिति निग्रहस्थानम् । परिषदि विज्ञानवत्यामित्यनेन यदि परिषत्तस्य त्रिरभिहितस्यार्थं विजानाति, प्रतिवादी च न जानाति, तदा तस्य निग्रहस्थानं भवति । अन्यानप्युक्तानेव निग्रहस्थानत्वेनाह[१]—अननुयोज्यस्यानुयोग इत्यादि । एते च व्याकृता एव । अत्र चाप्रतिभादयोऽपि न्यायोक्ता अन्तर्भावनीया बुद्धिमद्भिः, आयुर्वेदे तथाविधोपकारकत्वाभावादेतत् प्रपञ्चविषयमपि न प्रपञ्चितं; न्यायविदां त्वेतदनुक्तमपि सुगमं[२]एव, तदवेदिनां च मनाक्प्रपञ्चोक्तमपि नालं ज्ञानायेत्यलं प्रपञ्चेन ॥ ६५॥ ६६ ॥

**वादस्तु खलु भिषजां प्रवर्तमानो प्रवर्तेतायुर्वेद एव, नान्यत्र । अत्र हि वाक्यप्रतिवाक्यविस्तराः केवलाश्चोपपत्तयः सर्वाधिकरणेषु । ताः सर्वाः समवेक्ष्यावेक्ष्य सर्वं वाक्यं ब्रूयात्, नाप्रकृतकमशास्त्रमपरीक्षितमसाधकमाकुलमव्यापकं वा। सर्वं च हेतुमद्ब्रूयात् । हेतुमन्तो ह्यकलुषाः सर्व एव वादविग्रहाश्चिकित्सिते कारणभूताः, प्रशस्तबुद्धिवर्धकत्वात्; सर्वारम्भसिद्धिं ह्यावहत्यनुपहता बुद्धिः ॥ ६७ ॥**

इदानीं यथोक्तवाद एवायुर्वेदे आयुर्वेदाध्यायिभिः कर्तव्यः, एवंभूतस्यैव वादस्य विवक्षितत्वं सम्यग्ज्ञानजनकत्वादित्याह[१]—वाद इत्यादि । अथ किमर्थं वादविषयाः सन्तीत्याह—अत्र हीत्यादि । सर्वाधिकरणेषु 'सन्ति' इति शेषः । अव्यापकं[२] वेति ब्रूयादिति पूर्वेण संबन्धः । वादो विग्रहः शरीरमिव येषां ते वादविग्रहा जल्पभेदा वितण्डाभेदाश्च । प्रशस्तबुद्धिकर्तृत्वेन कथं वादश्चिकित्सायां कारणं भवतीत्याह—सर्वेत्यादिना । न केवलं चिकित्सासिद्धिं करोत्यनुपहता बुद्धिः, किन्तु सर्वारम्भसिद्धिं करोतीत्यर्थः ॥ ६७ ॥

**इमानि खलु तावदिह कानिचित् प्रकरणानि भिषजां ज्ञानार्थमुपदेक्ष्यामः । ज्ञानपूर्वकं हि कर्मणां समारम्भं प्रशंसन्ति कुशलाः । ज्ञात्वा हि कारण-करण-कार्ययोनि-कार्य-कार्यफलानुबन्ध-देश-काल-प्रवृत्त्युपायान् सम्यगभिनिर्वर्तमानः कार्याभिनिर्वृत्ताविष्टफलानुबन्धं कार्यमभिनिर्वर्तयत्यनतिमहता यत्नेन कर्ता ॥ ६८ ॥**

संप्रति बुद्धेर्वर्धनकारणतद्विधसंभाषाविध्यभिधानप्रसङ्गेनायुर्वेदोपयुक्तकारणकरणाद्यभिधायकान्यपि प्रकरणानि बुद्धिवर्धनान्यभिधातुं प्रतिजानीते—इमानीत्यादि । ज्ञानपूर्वकमिति कर्तव्यकार्यानुगुणपदार्थज्ञानपूर्वकमित्यर्थः । यानि ज्ञात्वा क्रियमाणं कार्यं साधु भवति तान्याह—ज्ञात्वा हीत्यादि । अभिनिर्वर्तमान इति आभिमुख्येन वर्तमानः । इष्टं तादात्विकं फलमनुबन्धश्चायतीयफलं यस्य तदिष्टफलानुबन्धम् ॥ ६८ ॥

**तत्र कारणं नाम तद् यत् करोति, स एव हेतुः, स कर्ता ॥ ६९ ॥**

उक्तानि कारणादीनि व्याकरोति—तत्रेत्यादिना । यदिति कारणप्रत्ययमर्शात्रपुंसकम् । करोतीति स्वातन्त्र्येण करोति । तेनेह कारणशब्देन स्वतन्त्रकारणं कर्तृलक्षणमुच्यते ॥ ६९ ॥

**करणं पुनस्तद् यदुपकरणायोपकल्पते कर्तुः कार्याभिनिर्वृत्तौ प्रयतमानस्य ॥ ७० ॥**

करणं विवृणोति—करणं पुनरित्यादि । उपकरणायेति कर्तुः संपाद्ये कार्ये सन्निहितं सहकारितया व्याप्रियते । कार्याभिनिर्वृत्ताविति कार्याभिनिर्वृत्तिमुद्दिश्य । यतमानस्येति यत्नं कुर्वतः । एतेन यः कार्ये कारणान्तरप्रेरकः, स[३] चात्र कर्ता कारणशब्देनोच्यते; यत्तु कर्त्रधीनव्यापारे साधकतमं, तत् करणम् । कर्तृत्वं च तस्यैव मुख्यं यो हि बुद्धिप्रयत्नयुक्तत्वादितरका-

१ 'निग्रहस्थानत्वेन धर्मेणाह' इति पा० । २ 'क्षममेव' इति पा० ।

१ 'विवक्षितसम्यक्ज्ञानजनकत्वात्' इति पा० । २ 'अव्यापकं च' इति पा० । ३ 'यः' इति पा० । ४ 'स्वतन्त्र इह कर्ता कारणप्रेरको भवति, अचेतने तु कर्तृव्यपदेशः स्वातन्त्र्याविवक्षया भाक्तः' इति पा० ।

रणप्रेरको भवति, अचेतने तु कर्तृत्वव्यपदेशः स्वातन्त्र्यविवक्षया भाक्तः ॥ ७० ॥

**कार्ययोनिस्तु सा या विक्रियमाणा कार्यत्वमापद्यते ॥ ७१ ॥**

कार्यस्य योनिः समवायिकारणं कार्ययोनिः। येत्यादि या योनिः कारणरूपा विक्रियमाणा रूपान्तरमापद्यमाना कार्यत्वमापद्यते कार्यरूपा भवतीत्यर्थः। तत्र घटस्य मृत्तिका कार्ययोनिः; मृदेव ह्यवस्थान्तरप्राप्त्या घटो भवति ॥ ७१ ॥

**कार्यं तु तद्यस्याभिनिर्वृत्तिमभिसन्धाय कर्ता प्रवर्तते ॥ ७२ ॥**

अभिनिर्वृत्तिमभिसन्धायेति कर्तव्यतां[1] बुद्धिं स्थिरीकृत्य ॥ ७२ ॥

**कार्यफलं पुनस्तद् यत्प्रयोजना कार्याभिनिर्वृत्तिरिष्यते ॥ ७३ ॥**

कार्यफलशब्देनेह तादात्विकं कार्यफलं ज्ञेयं, यथा—कुम्भकारस्य घटकरणे तन्मूल्यप्राप्तिः; अनुबन्धस्त्वायतीयं फलं, यथा—घटमूल्यविनियोगः कुटुम्बपोषणादौ ॥ ७३ ॥

**अनुबन्धः खलु स यः कर्तारमवश्यमनुबध्नाति कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाऽप्यशुभो भावः ॥ ७४ ॥**

अनुबध्नातीति उत्तरकालं कर्तारमुपतिष्ठते। शुभो वाऽप्यशुभो वेति शुभस्य कार्यस्य शुभः, अशुभस्य चाशुभः ॥ ७४ ॥

**देशस्त्वधिष्ठानम् ॥ ७५ ॥**

देशस्त्वधिष्ठानमिति कार्यानुगुणोऽननुगुणो वा आधाररूपो देशः ॥ ७५ ॥

**कालः पुनः परिणामः ॥ ७६ ॥**

परिणाम इति परिणामी ऋत्वयनादिरूपः कालः। तेन नित्यगं कालं निरस्यति, तस्य सर्वसाधारणत्वेन कार्ये प्रयत्नपेक्षणीयत्वात् ॥ ७६ ॥

**प्रवृत्तिस्तु खलु चेष्टा कार्यार्था; सैव क्रिया, कर्म, यत्नः, कार्यसमारम्भश्च ॥ ७७ ॥**

प्रवृत्तेश्चेष्टादिशब्दाः पर्याया एव लक्षणम् ॥ ७७ ॥

**उपायः पुनस्त्रयाणां कारणादीनां सौष्ठवमभिविधानं[2] च सम्यक् कार्यकार्यफलानुबन्धवर्ज्यानां, कार्याणामभिनिर्वर्तक इत्यतस्तूपायः;[3] कृते नोपायार्थोऽस्ति, न च विद्यते तदात्वे, कृताच्चोत्तरकालं फलं, फलाच्चानुबन्ध इति ॥ ७८ ॥**

उपायमाह—उपायः पुनरित्यादि। सौष्ठवमिति सुष्ठुत्वं कर्त्रादीनां कार्यानुगुणयोगित्वमित्यर्थः। अभिविधानं च सम्यगिति कारणादीनां कार्यानुगुण्येनावस्थानं, यथा—भेषजस्य शिरोविरेचनकारकस्य तापनपिचुदानमित्यादि; यथा वा पटकारणानां तन्त्वादीनां पटवापनयोग्यतयाऽवस्थानम्। एतच्चोपायरूपं सौष्ठवमभिविधानं च कार्यादित्रिकरहितानां कारणादीनां ज्ञेयमित्याह—कार्येत्यादि। उपायस्य स्वरूपान्तरमाह[1]—कार्याणामभिनिर्वर्तक इत्यतस्तूपाय इति। असत्युपाये कारणादीनि कार्यं न कुर्वन्तीत्यर्थः। अथ कथं कार्यादिषूपायत्वं न संभवतीत्याह—कृत इत्यादि। उपायो हि कार्यकारकः, तत्र कृते उत्पन्ने कार्ये नोपायार्थोऽस्ति, न हि कृतं पुनः क्रियते; तेन कार्यगतमप्युपायत्वं न पुनः कार्योत्पादे स्वीकुर्मः। अथानुत्पन्ने कार्ये उपायरूपता भविष्यतीत्याह—न च विद्यते तदात्वे; 'कार्यम्' इति शेषः; तदात्वे कार्योत्पत्तेः पूर्वं कार्यमेव नास्ति, तेन तदात्वेऽप्युपायत्वं कार्यस्य नास्तीति। यदा च कार्यं एवोपायत्वमुपायोत्तरकालीनत्वेन नास्ति तदा कार्योत्तरकालजयोः फलानुबन्धयोरपि उपायार्थो नास्तीत्याह—कृताच्चोत्तरकालमित्यादि ॥ ७८ ॥

**एतद्दशविधमग्रे परीक्ष्यं, ततोऽनन्तरं कार्यार्था प्रवृत्तिरिष्टा। तस्माद्भिषक् कार्यं चिकीर्षुः प्राक् कार्यसमारम्भात् परीक्षया केवलं परीक्ष्यं परीक्ष्य कर्म समारभेत कर्तुम् ॥ ७९ ॥**

उपसंहरति—एतदित्यादि ॥ ७९ ॥

**तत्र चेद्भिषगभिषग्वा भिषजं कश्चिदेवं खलु पृच्छेद्—वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यं, कश्चात्र परीक्ष्यविशेषः, कथं च परीक्षितव्यः, किंप्रयोजना च परीक्षा, क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः, प्रवृत्तिनिवृत्तिलक्षणसंयोगे च किं नैष्ठिकं, कानि च वमनादीनां भेषजद्रव्याण्युपयोगं गच्छन्तीति ॥ ८० ॥**

संप्रत्युक्तं कारणादिदशकं वैद्योपयुक्तभिषगादिदृष्टान्तेन दर्शयितुं तत्र चेदित्यादिप्रकरणमारभते। अभिषग्वेति किंचिद्भिषगित्यर्थः। कतिविधं परीक्ष्यमिति कतिप्रकारं परीक्षणीयम्। प्रवृत्तिनिवृत्तिलक्षणसंयोग इति प्रवृत्त्यनुगुणनिवृत्त्यनुगुणयोर्लक्षणयोरेकत्र मेलके। किं नैष्ठिकमिति निष्ठा निश्चयस्तद्भवं नैष्ठिकं; किं निश्चयेन कर्तव्यमित्यर्थः ॥ ८० ॥

**स एवं पृष्टो यदि मोहयितुमिच्छेत्, ब्रूयादेनं—बहुविधा हि परीक्षा तथा परीक्ष्यविधिभेदः, कतमेन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया केन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदाग्रं भवान् पृच्छत्याख्यायमानं;[2] नेदानीं भवतोऽन्येन**

---

१ 'कर्तव्यतां बुद्धिसीकृत्य' इति पा०। २ 'अभिसंधानं' इति पाठः। ३ 'कार्यकार्यफलानुबन्धोपायवर्ज्यानां तेषां, तद्धि कार्याणामभिनिवर्तकमित्यतस्तूपायः' इति पा०।

१ 'स्वरूपान्तरमुपादेयमाह' इति पा०। २ 'इच्छत्याख्यायमानं' इति पा०।

**विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षयाऽन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलपितमर्थं श्रोतुमहमन्येन परीक्षाविधिभेदेनान्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भित्त्वाऽन्यथाऽऽचक्षाण इच्छां पूरयेयमिति ॥ ८१ ॥**

यदि मोहयितुमिच्छेदिति यदि विगृह्यसंभाषाप्रवृत्तत्वेन मोहयितुमिच्छेदित्यर्थः। तथेति बहुविध इत्यर्थः। विधिरूपो भेदो विधिभेदः, तस्य प्रकृत्यन्तरमिति कारणान्तरम्। भेदाग्रमिति भेदपरिमाणं, भेदपरिमाणं चेह भेदसंख्यापरिच्छेद एव ज्ञेयः। आख्यायमानमिति च्छेदः। किमर्थमेवं पुनः पृच्छसीत्याकाङ्क्षायामाह—नेदानीमित्यादि। भवतोऽन्यथा श्रोतुमभिलपितमर्थमहमन्यथाऽऽचक्षाणो न भवत इच्छां पूरयेयं; तेन त्वमेव तावद्विशेषयित्वा पृच्छेति वाक्यार्थः। यदा तु, 'वेदानीं न पूरयेयम्' इतिपाठः, तदा वेदानीमित्यग्रे आचक्षाण इच्छां न पूरयेयमिति योज्यं; किंवा, नेति पूर्वेण युज्यते। तेन, कतमेन विधिभेदप्रकृत्यन्तरेणाख्यायमानं भवानिच्छति, केन वा विधिभेदप्रकृत्यन्तरेणाख्यायमानमिच्छति न, इति योज्यम्। इदानीमित्यादि तु पूर्ववदाशङ्कायां वचनम्। एतद्विशेषपृच्छया पृच्छको व्याकुलो भवतीति भावः। परीक्ष्यस्यार्थं भवतः श्रोतुमभिलपितमन्यथा आचक्षाण इति योजना ॥८१॥

**स यदुत्तरं ब्रूयात्तत् समीक्ष्योत्तरं वाच्यं स्याद्यथोक्तं च प्रतिवचनविधिमवेक्ष्य; सम्यक् यदि तु ब्रूयान्न चैनं मोहयितुमिच्छेत्, प्राप्तं तु वचनकालं मन्येत, काममस्मै ब्रूयादाप्तमेव निखिलेन ॥८२॥**

तत् समीक्ष्येति तद्वचनं समीक्ष्य यदौपयिकं भवति। यथोक्तं प्रतिवचनविधिमित्यत्रैवाध्याये विगृह्यसंभाषाविधावुक्तमवेक्ष्योत्तरं वाच्यम्। पक्षान्तरमाह—सम्यगित्यादि। सम्यग्यदि तु ब्रूयादिति यदि सन्धायसंभाषायां ब्रूयात्। प्राप्तमिति उचितम्, उचिते हि वचनकाले वक्तव्यमेव; आप्तमेवेति यथार्थमेवेत्यर्थः ॥ ८२ ॥

**द्विविधा तु खलु परीक्षा ज्ञानवतां—प्रत्यक्षम्, अनुमानं च। एतद्धि द्वयमुपदेशश्च परीक्षा स्यात्। एवमेषा द्विविधा परीक्षा, त्रिविधा वा सहोपदेशेन ॥८३॥**

तदेव यथार्थमुत्तरं पूर्वप्रश्नेषु यथाक्रमेणाह—द्विविधात्वित्यादि। ज्ञानवतामित्याप्तोपदेशरूपशास्त्रजनितज्ञानवताम्। पक्षान्तरे परीक्षात्रैविध्यमाह—एतद्धीत्यादि। एतच्च परीक्षाया द्वैविध्यं त्रैविध्यं वा त्रिविधरोगविशेषविज्ञानीय एव व्याख्यातम् ॥ ८२ ॥

१ 'भित्त्वाऽर्थमाचक्षाण' इति पा०। २ 'नेदानीं पूरयेयं' इति पा०। ३ 'केन विधिभेदादिनाऽऽख्यायमानं' इति पा०। ४ 'विधिभेदादिनाऽऽख्यायमानं इति पा०। ५ 'अवेक्ष्य सम्यक्। यदि तु न चैनं मोहयितुमिच्छेत्' इति पा०। ६ 'अनुचिते तु वचनकाले संध्यादौ न वक्तव्यमेव' इति पा०।

**दशविधं तु परीक्ष्यं कारणादि यदुक्तमग्रे, तदिह भिषगादिषु संसार्य संदर्शयिष्यामः—इह कार्यप्राप्तौ कारणं भिषक्, करणं पुनर्भेषजं, कार्ययोनिर्धातुवैषम्यं, कार्यं धातुसाम्यं, कार्यफलं सुखावाप्तिः, अनुबन्धः खल्वायुः, देशो भूमिरातुरश्च, कालः पुनः संवत्सरश्चातुरावस्था च, प्रवृत्तिः प्रतिकर्मसमारम्भः, उपायस्तु भिषगादीनां सौष्ठवमभिविधानं च सम्यक्। इहाप्यस्योपायस्य विषयः पूर्वेणैवोपायविशेषेण व्याख्यातः। इति कारणादीनि दश दशसु भिषगादिषु संसार्य संदर्शितानि, तथैवानुपूर्व्यैतद्दशविधं परीक्ष्यमुक्तं च ॥ ८४ ॥**

भिषगादिषु संसार्येति भिषगादीनि चोपयुक्तान्युदाहरणानि कृत्वा। धातुवैषम्यमिति विषमतां गता धातवः; धातव एव हि विषमामवस्थां परित्यज्य समावस्थामापद्यमाना आरोग्याख्यस्य धातुसाम्यस्य समवायिकारणतया कार्ययोनितामापद्यन्ते। सुखावाप्तिरिति अरोग्यावाप्तिः। उक्तं च—"सुखसंज्ञकमारोग्यं" (सू. अ. ९) इति। आयुश्चानुबन्धफलरूपं यद्यप्यत्र रोगिगतं न वैद्यगतं, तथाऽपि वैद्येन काङ्क्षितत्वाद्वैद्यगतमेव तद्विज्ञेयम्। तेनानुबन्धलक्षणे कर्तारमभिप्रैतीति यदुक्तं तदुपपन्नम्। कर्ता ह्यत्र भिषक्, तेनातुरगतमप्यायुर्भिषगपेक्षितत्वेन भिषज एव फलमिति ज्ञेयम्। प्रतिकर्म चिकित्सा। इहाप्यस्येत्यादि। अत्रापि कार्यफलानुबन्धव्यतिरिक्तानां कारणादीनां सौष्ठवमभिविधानं च यथोक्तन्यायेनोपाय इति दर्शयति ॥ ८४ ॥

**तस्य यो यो विशेषो यथा यथा च परीक्षितव्यः, स तथा तथा व्याख्यास्यते ॥ ८५ ॥**

**कारणं भिषगित्युक्तमग्रे, तस्य परीक्षा—भिषङ्नाम यो भिषज्यति, यः सूत्रार्थप्रयोगकुशलः, यस्य चायुः सर्वथा विदितं यथावत्। स च सर्वधातुसाम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत गुणिषु गुणतः कार्याभिनिर्वृत्तिं पश्यन्, कच्चिदहमस्य कार्यस्याभिनिर्वर्तने समर्थो न वेति; तत्रेमे भिषग्गुणा यैरुपपन्नो भिषग्धातुसाम्याभिनिर्वर्तने समर्थो भवति; तद्यथा—पर्यवदातश्रुतता, परिदृष्टकर्मता, दाक्ष्यं, शौचं, जितहस्तता, उपकरणवत्ता, सर्वेन्द्रियोपपन्नता, प्रकृतिज्ञता, प्रतिपत्तिज्ञता चेति ॥ ८६ ॥**

कश्च परीक्ष्यविशेषः? कथं च परीक्षितव्यः? इति प्रश्नद्वयोत्तरं दातुमाह—तस्येत्यादि। यो यो विशेष इति कारणादीनां यो यो दृष्टकर्मत्वादिः सजातीयाद्वैद्यातुरादेस्तथा विजातीयाच्च भेष-

१ 'अभिसंधानं' इति पा०। २ 'परीक्ष्यविशेषः' इति पा०।

जादेर्विशेष इत्यर्थः। यथा परीक्षितव्य इत्यस्योदाहरणं 'कश्चिदहमस्य' इत्येवं( प्रकार )ग्रन्थे वक्ष्यमाणं ज्ञेयम्। भिषज्यति चिकित्सति। सर्वथेति हिताहितसुखदुःखत्वादिना। स चेति कारणं भिषङ्न परेण परीक्षणीयः, किं त्वात्मनाऽप्यात्मानं परीक्षेतेति दर्शयति। अथ कथमात्मानं परीक्षेतेत्याह—गुणिभिरित्यादि। आत्मानं गुणयोगतया परीक्षेतेत्यर्थः। गुणत इति हेतौ पञ्चमी। कच्चिदिति इच्छाप्रकाशने। प्रतिपत्तिः उत्पन्नायामापदि झटिति कर्तव्यकरणम्॥ ८५॥ ८६॥

**करणं पुनर्भेषजम्। भेषजं नाम तद्यदुपकरणायोपकल्पते भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य विशेषतश्चोपायान्तेभ्यः। तद्द्विविधं व्यपाश्रयभेदात्—दैवव्यपाश्रयं, युक्तिव्यपाश्रयं चेति। तत्र दैवव्यपाश्रयं—मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि, युक्तिव्यपाश्रयं—संशोधनोपशमने चेष्टाश्च दृष्टफलाः। एतच्चैव भेषजमङ्गभेदादपि द्विविधं—द्रव्यभूतम्, अद्रव्यभूतं च। तत्र यदद्रव्यभूतं तदुपायाभिप्लुतम्। उपायो नाम भयदर्शनविस्मापनविस्मारणक्षोभणहर्षणभर्त्सनवधबन्धस्वप्नसंवाहनादिरमूर्तो भावविशेषो यथोक्ताः सिद्ध्युपायाश्चोपायाभिप्लुता इति। यत्तु द्रव्यभूतं तद्वमनादिषु योगमुपैति। तस्यापीयं परीक्षा—इदमेवंप्रकृत्यैवंगुणमेवंप्रभावमस्मिन् देशे जातमस्मिन्नृतावेवं गृहीतमेवं निहितमेवमुपस्कृतमनया च मात्रया युक्तमस्मिन् व्याधावेवंविधस्य पुरुषस्यैवतावन्तं दोषमपकर्षत्युपशमयति वा, यदन्यदपि चैवंविधं भेषजं भवेत्तच्चानेन विशेषेण युक्तमिति॥ ८७॥**

विशेषतश्चोपायान्तेभ्य इत्यनेन कार्ययोनिप्रवृत्तिदेशकालोपायेभ्योऽन्यद्यद्यत् कर्तुरुपकरणं भवति तत् करणमिति दर्शयति। कार्ययोनिर्हि लोके विकार्यकर्मतया साधकतमात् करणात् पृथगुच्यते, प्रवृत्त्युपाययोस्तु कर्तृकरणादिधर्मत्वेन न करणसंज्ञा, देशकालौ तु न साधकतमौ; तेनोपायान्तेभ्यो यथोक्तविशेषेण यत् कर्तुरुपकरणं भवति, तत् करणम्। अत्र दैवव्यपाश्रययुक्तिव्यपाश्रयद्वैविध्ये तु सत्त्वावजयोऽपि भेषजमवरुद्धं ज्ञेयं; सत्त्वावजयो हि दृष्टद्वारोपकारी युक्तिव्यपाश्रये, तथाऽदृष्टद्वारोपकारी तु दैवव्यपाश्रये प्रविशति। अत एवोक्तं युक्तिव्यपाश्रयव्याकरणे—चेष्टाश्च दृष्टफला इति। चेष्टाशब्देन मनश्चेष्टाऽपि सत्त्वावजयलक्षणा गृह्यते। पुनरौषधस्य प्रकारान्तरेण द्वैविध्यमाह—अङ्गभेदादित्यादि। अङ्गं शरीरं स्वरूपमिति यावत्; तेन स्वरूपभेदादित्यर्थः। द्रव्यभूतं द्रव्यरूपम्, एवमद्रव्यरूपम्। उपायाभिप्लुतमिति उपायव्याप्तम्, उपायग्रहणगृहीतमिति यावत्। एवं मन्यते—भयादयोऽमूर्ता भावा न साक्षादारोग्यकारणानि भवन्ति, किं तर्हि शरीरस्थितानेव वातादीन् तथा कुर्वन्ति समत्वेनोत्पाद्यमानान् येनारोग्यं भवति, न ह्यमूर्तानि मूर्तानां शरीरधातूनामुत्पत्तौ समवायिकारणानि भवन्ति; भेषजं तु द्रव्यभूतं समशरीरोत्पादे समवायिकारणं भवत्येव, तेन द्रव्यस्यारोग्यं प्रति साधकतमत्वं साधु; अमूर्तानां तु भयादीनां न भेषजवत् साधकतमत्वमिति कृत्वा द्रव्यजन्य एव धातुसाम्ये तेषामुपायत्वं युक्तम्। एवं सूक्ष्मया बुध्या भयादीनामुपायत्वं, स्थूलया तु बुद्ध्या भेषजत्वमपीति कृत्वा भयादिषु भेषजव्यवहारश्चाचार्याभिमतो द्विविधभेषजेऽर्थेऽद्रव्यभूतभयादिग्रहणादुन्नीयते। न केवलमद्रव्यभूतं भेषजमुपायव्याप्तं, किं त्वन्येऽपि परिचारकादय उपायग्रहणगृहीता एवेत्याह—यथोक्ताः सिद्ध्युपायाश्चेति। यथोक्ताः सिद्ध्युपायाः परिचारकादयोऽत्र दशविधपरीक्ष्ये साक्षादनुक्तास्तेऽपि उपायाभिप्लुता एवेत्यर्थः। किंवा उपायाभिप्लुतमिति उपायमिश्रितम्। तत्र भयाद्यमूर्तभेषज एव यथोक्ता उपायाः कारणादिसौष्ठवसम्यगभिविधानरूपा अद्रव्यभूतभेषजपक्षगृहीता इत्यर्थः। तेन, भयादिषु तथोपायशब्दाभिधेयेषु च अद्रव्यभूतभेषजशब्दप्रयोगो भवतीति दर्शयति। ये तु 'उपायान्ताभिप्लुतम्' इति पठन्ति, ते देशकालावेव अद्रव्यभूतभेषजमिति वदन्ति; वदन्ति च द्रव्यशब्देन क्वाथकल्काद्युपयोजनीयं द्रव्यमुच्यते इति। एतच्च नातिमनोहारि। अनेन चेति साधनभूतेन च 'एवंप्रकृत्या' इत्यादिनोक्तेन तथा साध्येन च 'एवंविधस्य पुरुषस्य' इत्यादिनोक्तेन विशेषेण युक्तमभूदित्यर्थः॥ ८७॥

**कार्ययोनिर्धातुवैषम्यं, तस्य लक्षणं विकारागमः। परीक्षा त्वस्य विकारप्रकृतेश्चैवोनातिरिक्तलिङ्गविशेषावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति॥ ८८॥**

तस्य लक्षणं धातुवैषम्यस्य प्रत्यात्मरूपमित्यर्थः। विकारप्रकृतेरिति विकारकारणस्य दोषस्येत्यर्थः॥ ८८॥

**कार्यं धातुसाम्यं, तस्य लक्षणं विकारोपशमः। परीक्षा त्वस्य—रुगुपशमनं, स्वरवर्णयोगः, शरीरोपचयः, बलवृद्धिः, अभ्यवहार्याभिलाषः, रुचिराहारकाले, अभ्यवहृतस्य चाहारस्य काले सम्यग्जरणं, निद्रालाभो यथाकालं, वैकारिणां च स्वप्नानामदर्शनं, सुखेन च प्रतिबोधनं, वातमूत्रपुरीषरेतसां मुक्तिः, सर्वाकारैर्मनोबुद्धीन्द्रियाणां चाव्यापत्तिरिति॥ ८९॥**

---

१ 'यथावत्सर्वधातुसाम्यमित्यादिना धातुसाम्यस्य चात्र कारणं भिषक् न केवलं परेण परीक्षणीयः किं त्वात्मनाऽप्यात्मानं परीक्षयेदिति दर्शयति' इति पा०। २ गङ्गाधरस्तु 'उपायाभिप्लुताः' इति न पठति। ३ 'अनेनान्येन वा' इति पा०। ४ 'करणरूपं' इति पा०।

१ 'द्विविधभेषजतन्त्रे' इति पा०। २ 'विशेषणेन' इति पा०।

सर्वाकारैरिति सर्वशुभलक्षणैः ॥ ८९ ॥

कार्यफलं सुखावाप्तिः, तस्य लक्षणं—मनोबुद्धीन्द्रियशरीरतुष्टिः ॥ ९० ॥

सुखावाप्तिरिति आत्मगुणसुखप्राप्तिः ॥ ९० ॥

अनुबन्धस्तु खल्वायुः, तस्य लक्षणं—प्राणैः सह संयोगः ॥ ९१ ॥

प्राणैः सह संयोग इति प्राणलक्षणेन वायुना योग इत्यर्थः। तेन प्राणशब्दस्यायुषो भिन्नार्थत्वाल्लक्ष्यलक्षणयोरभेदः ॥ ९१ ॥

देशस्तु भूमिरातुरश्च ॥ ९२ ॥

तत्र भूमिपरीक्षा आतुरपरिज्ञानहेतोर्वा स्यादौषधपरिज्ञानहेतोर्वा। तत्र तावदियमातुरपरिज्ञानहेतोः। तद्यथा—अयं कस्मिन् भूमिदेशे जातः संवृद्धो व्याधितो वा; तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातम्, इदं विहारजातम्, इदमाचारजातम्, एतावच्च बलम्, एवंविधं सत्त्वम्, एवंविधं सात्म्यम्, एवंविधो दोषः, भक्तिरियम्, इमे व्याधयः, हितमिदम्, अहितमिदमिति प्रायोग्रहणेन। औषधपरिज्ञानहेतोस्तु कल्पेषु भूमिपरीक्षा वक्ष्यते ॥ ९३ ॥

क्रमप्राप्तं देशमाह—देश इत्यादि। आतुरशब्देनेह शङ्कमानातुर्यतया स्वस्थवृत्तोपपादनीयः स्वस्थोऽपि गृह्यते। सोऽपि परीक्ष्यत एव स्वस्थवृत्तप्रयोगार्थम्। परिशब्दो विशेषार्थः, तेनातुरस्य सकलदेशकृतविशेषेण ज्ञानमातुरपरिज्ञानम्। एवं भेषजपरिज्ञानेऽपि देशकृतविशेषज्ञानं परिज्ञानं बोद्धव्यम्। संवृद्ध इति वर्धितः। एवंविधं सात्म्यमिति ओकसात्म्यमित्यर्थः। इदं हितमित्यनेन च देशापेक्षया विपरीतगुणसात्म्यं ब्रूते। प्रायोग्रहणेनेति च्छेदः, प्रायोग्रहणेन नैकान्ततः परीक्षेतेति योजना। प्रायःशब्देन च देशेनाहाराद्यनुमानं न निश्चितं किं तु प्रायोभावीति दर्शयति। कल्पेष्विति मदनादिकल्पेषु। तत्र च यद्यपि प्रथम एव कल्पे भूमिपरीक्षा वक्तव्या, तथाऽप्यन्तरकल्पेष्वपि तदर्थस्यातिदेशेन कथनाद्बहुवचनं कृतम्, उत्तरकल्पवक्तव्यान्यपि हि द्रव्याणि यथोक्त एव देशे ग्राह्याणीति दर्शनार्थम् ॥ ९२ ॥ ९३ ॥

आतुरस्तु खलु कार्यदेशः। तस्य परीक्षा आयुषः प्रमाणज्ञानहेतोर्वा स्याद्, बलदोषप्रमाणज्ञानहेतोर्वा। तत्र तावदियं बलदोषप्रमाणज्ञानहेतोः; दोषप्रमाणानुरूपो हि भेषजप्रमाणविकल्पो बलप्रमाणविशेषापेक्षो भवति। सहसा ह्यतिबलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमतिपातयेत्; न ह्यतिबलान्याग्नेयवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्माणि वा शक्यन्तेऽल्पबलैः सोढुम्; असह्यातितीक्ष्णवेगत्वाद्धि तानि सद्यःप्राणहराणि स्युः। एतच्चैव कारणमपेक्षमाणा हीनबलमातुरमविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्त्यौषधैः; विशेषतश्च नारीः, ता ह्यनवस्थितमृदुविवृतविक्लवहृदयाः प्रायः सुकुमार्योऽबलाः परसंस्तभ्याश्च। तथा बलवति बलवद्व्याधिपरिगते स्वल्पबलमौषधमपरीक्षकप्रयुक्तमसाधकमेव भवति। तस्मादातुरं परीक्षेत प्रकृतितश्च, विकृतितश्च, सारतश्च, संहननतश्च, प्रमाणतश्च, सात्म्यतश्च, सत्त्वतश्च, आहारशक्तितश्च, व्यायामशक्तितश्च, वयस्तश्चेति, बलप्रमाणविशेषग्रहणहेतोः ॥ ९४ ॥

भूमिरूपं देशमभिधायातुररूपमाह—आतुरस्तु खल्वित्यादि। कार्यदेश इति कर्तव्यधातुसाम्याधार इत्यर्थः। बलस्य दोषस्य च प्रमाणं बलदोषप्रमाणम्। इयमिति अग्रे 'तस्मादातुरं परीक्षेत' इत्यादिग्रन्थवक्ष्यमाणा। अथ किमर्थं बलदोषप्रमाणपरीक्षा कर्तव्येत्याह—दोषप्रमाणेत्यादि। दोषप्रमाणापेक्षया भेषजप्रमाणं क्रियते, तेनैव सम्यक् साध्यसिद्धिर्यस्माद्भवति तस्माद्बलप्रमाणपरीक्षा शरीरस्य कर्तव्येति प्रकरणार्थः। बलप्रमाणविशेषापेक्ष इति यदि बलवच्छरीरं भवति तदैव दोषप्रमाणापेक्षया महौषधप्रमाणं भवति, विपर्यये तु न भवति। एतदेव विपर्ययेण व्याकरोति—सहसेत्यादि। अल्पबले रोगिण्यपरीक्षकप्रयुक्तमेवातिमात्रं भेषजं भवतीत्युक्तं, न तु परीक्षकप्रयुक्तमिति। सद्यःप्राणहराणि स्युरिति 'अल्पबले' इत्यर्थाद्बुध्यते। अविषादकरं शरीरमनसोरग्लानिकरम्। उत्तरोत्तरं प्रमाणलक्षणगुरुत्वं येषां, तैः। तेन यदि दुर्बले महादोषः, स च भूरिमात्रभेषजसाध्यस्तथाऽपि तदात्वव्यापत्तिभयान्न सहसा भेषजभूयस्त्वं कर्तव्यं, किन्तूत्तरोत्तरमभ्यासवशाद्बलमपेक्ष्य भेषजभूयस्त्वं कर्तव्यमिति दर्शयति। अविभ्रमैरिति पाककालेऽप्यवैकारिकैः। अनात्ययिकैरिति न महाविपत्तिकरैः। यथोक्तगुणं भेषजं विशेषेण स्त्रीणां कर्तव्यमित्याह—विशेषत इत्यादि। हृदयशब्देन हृदयस्थं मन इति ज्ञेयम्। मृदुविवृतम् अगम्भीरम्। विक्लवं स्तोकक्लेशाभिभवनीयम्, अनेन च दुर्बलचेतस्त्वमुक्तम्। परसंस्तभ्याः न स्वयमात्मानं सत्त्वबलात् स्तम्भयन्ति। तथेत्यादिना स्वल्पप्रमाणभेषजदोषमाह। बलवद्व्याधिपरिगते इति वचनेन य एव बलवान् व्याधिर्बलवतः स एवानल्पभेषजासाध्यः; यस्तु बलवतोऽप्यल्पबलः सोऽल्पभेषजसाध्य एव। परीक्षाहेतुमभिधाय यथा शरीरं परीक्षणीयं तदाह—तस्मादित्यादि। बलप्रमाणविशेषग्रहणहेतोरित्यत्र देहबलं दोषबलं च सामान्येन गृह्यते। येन विकृतितः शरीरज्ञानं दोषबलज्ञानहेतोर्भवति, तदेव 'प्रकृत्या-

१ 'चात्मना' इति पा०। २ 'भिन्नत्वात्' इति पा०। ३ योगीन्द्रनाथसेनस्तु 'प्रायोग्रहणेन' इति न पठति। ४ 'नैकान्तेन' इति पा०। ५ 'भेषजप्रमाणविशेषः' इति पा०।

१ 'प्रयोजनस्वबहुत्वलक्षणं गुरुत्वं येषां' इति पा०।

दीनां विकृतिवर्ज्यानां' इत्यादिना वक्ष्यति । किंवा बलं शरीरबलमेवोच्यते; तत्र च विकृतिबलेनापि शरीरबलं बुध्यत इति कृत्वा इह सामान्येनोक्तम्, उत्तरत्र तु विकृत्या दोषप्रमाणं प्रायो विज्ञायत इति कृत्वा 'विकृतिबलत्रैविध्येन दोषबलत्रैविध्यमनुमीयते' इत्युक्तम् ॥ ९४ ॥

तत्र प्रकृत्यादीन् भावाननुव्याख्यास्यामः । तद्यथा—शुक्रशोणितप्रकृतिं, कालगर्भाशयप्रकृतिं, आतुराहारविहारप्रकृतिं, महाभूतविकारप्रकृतिं च गर्भशरीरमपेक्षते । एतानि हि येन येन दोषेणाधिकेनैकेनानेकेन वा समनुबध्यन्ते, तेन तेन दोषेण गर्भोऽनुबध्यते; ततः सा सा दोषप्रकृतिरुच्यते मनुष्याणां गर्भादिप्रवृत्ता । तस्माच्छ्लेष्मलाः प्रकृत्या केचित्, पित्तलाः केचित्, वातलाः केचित्, संसृष्टाः केचित्, समधातवः केचिद्भवन्ति । तेषां हि लक्षणानि व्याख्यास्यामः ॥ ९५ ॥

प्रकृतिमिति स्वभावम् । एतानीति शुक्रादीनि । अत्र शुक्रे शोणिते वा यादृगवस्थो दोषस्तादृग्गर्भे प्रकृतिर्भवति; तथा शुक्रशोणितमेलककाले ऋतुरूपे यो दोष उत्कटो भवति, स प्रकृतिमारभते; एवं गर्भाशयस्थश्च दोषः; मातुराहारविहारौ तत्कालीनौ यद्दोषकरणस्वभावौ, सा च प्रकृतिर्गर्भशरीरे भवति । एषु च प्रकृत्यारम्भकेषु कारणेषु यद्बलवद्भवति कारणान्तरबृंहितं च, तदेव प्रकृत्यारम्भकं भवति । कालादयश्च शुक्रशोणितमेव कुर्वन्तः प्रकृतिजनका भवन्तीति तन्त्रान्तरे शुक्रशोणितगतदोषेणैव प्रकृत्युत्पादो दर्शितः । गर्भादिप्रवृत्तेति गर्भस्यादिमेलके प्रवृत्ता । अत्र च समैर्दोषैर्वृद्धैर्गर्भजन्मैव न भवतीति विकृतदोषत्रयप्रकृतेरनभिधानादिति ज्ञेयम् । प्रकृतिविकारश्च सूत्रस्थान एव व्याकृतः ॥ ९५ ॥

श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमितगुरुशीतविज्जलाच्छः । तस्य स्नेहाच्छ्लेष्मलाः स्निग्धाङ्गाः, श्लक्ष्णत्वाच्छ्लक्ष्णाङ्गाः, मृदुत्वाद्दृष्टिसुखसुकुमारावदातगात्राः, माधुर्यात् प्रभूतशुक्रव्यवायापत्याः, सारत्वात् सारसंहतस्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्वाङ्गाः, मन्दत्वान्मन्दचेष्टाहारव्याहाराः, स्तैमित्यादशीघ्रारम्भक्षोभविकाराः, गुरुत्वात् साराधिष्ठितावस्थितगतयः, शैत्यादल्पक्षुत्तृष्णासंतापस्वेददोषाः, विज्जलत्वात् सुश्लिष्टसारसन्धिबन्धनाः, तथाऽच्छत्वात् प्रसन्नदर्शनाननाः प्रसन्नस्निग्धवर्णस्वराश्च भवन्ति । त एवंगुणयोगाच्छ्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता आयुष्मन्तश्च भवन्ति ॥ ९६ ॥

मृदुत्वं जलकृतम् । अवदातगात्रा इति मृदुत्वादेवावदातत्वम् । अशीघ्रशब्द आरम्भादिभिः प्रत्येकमभिसंबध्यते । सारगतयो न स्खलन्ति, अधिष्ठितगतयः सर्वेण पदेन महीमाक्रामन्ति, अवस्थितगतय इति अवस्थितत्वेन न चपला गतिर्भवति । प्रसन्ने दर्शनानने यस्य स तथा । वसुमत्त्वादि प्रकृतिरूपं यद्भवति, तत् प्रकृतिप्रभावाज्ज्ञेयम् ॥ ९६ ॥

पित्तमुष्णं तीक्ष्णं द्रवं विस्रमम्लं कटुकं च । तस्यौष्ण्यात् पित्तला भवन्त्युष्णासहा, उष्णमुखाः, सुकुमारावदातगात्राः, प्रभूतविप्लुव्यङ्गतिलपिडकाः, क्षुत्पिपासावन्तः, क्षिप्रवलीपलितखालित्यदोषाः, प्रायो मृद्वल्पकपिलश्मश्रुलोमकेशाश्च; तैक्ष्ण्यात्तीक्ष्णपराक्रमाः, तीक्ष्णाग्नयः, प्रभूताशनपानाः, क्लेशासहिष्णवो, दन्दशूकाः; द्रवत्वाच्छिथिलमृदुसन्धिमांसाः, प्रभूतसृष्टस्वेदमूत्रपुरीषाश्च; विस्रत्वात् प्रभूतपूतिकक्षास्यशिरःशरीरगन्धाः; कट्वम्लत्वादल्पशुक्रव्यवायापत्याः; त एवंगुणयोगात् पित्तला मध्यबला मध्यायुषो मध्यज्ञानविज्ञानवित्तोपकरणवन्तश्च भवन्ति ॥ ९७ ॥

दंदशूकाः पुनः पुनर्भक्षणशीलाः । प्रभूताशनत्वं तु बहुभक्षणत्वेन । प्रभूतः पूतिः कक्षाप्रभृतिषु गन्धो येषां ते तथा ॥ ९७ ॥

वातस्तु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदः । तस्य रौक्ष्याद्वातला रूक्षापचिताल्पशरीराः प्रततरूक्षक्षामसन्नसक्तजर्जरस्वरा जागरूकाश्च भवन्ति, लघुत्वाल्लघुचपलगतिचेष्टाहारव्याहाराः, चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्धपाणिपादाः, बहुत्वाद्बहुप्रलापकण्डरासिराप्रतानाः, शीघ्रत्वाच्छीघ्रसमारम्भक्षोभविकाराः शीघ्रत्रासरागविरागाः श्रुतग्राहिणोऽल्पस्मृतयश्च, शैत्याच्छीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः, पारुष्यात् परुषकेशश्मश्रुरोमनखदशनवदनपाणिपादाः, वैशद्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनश्च भवन्ति; त एवं गुणयोगाद्वातलाः प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाल्पधनाश्च भवन्ति ॥ ९८ ॥

संसर्गात् संसृष्टलक्षणाः ॥ ९९ ॥

प्रततैः प्रसृतः । सन्नः हीनः, सक्तः बद्धः, जर्जरः भग्नपात्रध्वनिसमः । सततसन्धिशब्दगामिन इति सन्धिस्फुटनशब्दवन्तः ॥ ९८ ॥ ९९ ॥

---

१ 'दोषबलं त्रिविधमनुमीयते' इति पा० । २ 'तत्रेमे प्रकृत्यादयो भावाः' इति पा० । ३ 'एता हि' इति पा० । ४ 'दोषेणैकेनाधिकेन समेन वाऽनुबध्यन्ते' इति पा० । ५ 'प्रकृतः' इति पा० ।

१ 'शुष्कसुकुमारावदातगात्राः' इति गङ्गाधरसंमतः पाठः । 'शुष्काक्षुकुमारावदातगात्राः' इति योगीन्द्रसेनसंमतः पाठः । २ '°भिन्न°' इति पा० । ३ 'प्रततः प्रभूतः' इति पा० ।

**सर्वगुणसमुदितास्तु समधातवः। इत्येवं प्रकृतितः परीक्षेत ॥ १०० ॥**

सर्वगुणसमुदिता इति सर्वप्रकृतिपूक्तप्रशस्तगुणयुक्ताः; यदुक्तं वाग्भटे—'समधातुः समस्तासु श्रेष्ठा' ( वा.सू.अ. १ ) इति। यदि च प्रशस्तगुणवान् न स्यात्, न तदा श्रेष्ठत्वं स्यात्। साम्यस्थिताश्च दोषाः साम्यप्रभावादेव गुणान् परं कुर्वते, न दोषानिति ज्ञेयम् ॥ १०० ॥

**विकृतितश्चेति विकृतिरुच्यते विकारः। तत्र विकारं हेतु-दोष-दूष्य-प्रकृति-देश-काल-बलविशेषैर्लिङ्गतश्च परीक्षेत, न ह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः। यस्य हि व्याधेर्दोष-दूष्य-प्रकृति-देश-काल-बलसाम्यं भवति, महच्च हेतुलिङ्गबलं, स व्याधिर्बलवान् भवति; तद्विपर्ययाच्चाल्पबलः; मध्यबलस्तु दोषदूष्यादीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते ॥ १०१ ॥**

साम्यं भवतीति परस्परतुल्यगुणता भवति। महच्च हेतुलिङ्गबलमिति हेतवो लिङ्गानि च बलवन्ति भूयांसि च। अन्यतमसामान्यादिति दोषादीनां येन केनचित् सामान्ये सतीत्यर्थः ॥ १०१ ॥

**सारतश्चेति साराण्यष्टौ पुरुषाणां बलमानविशेषज्ञानार्थमुपदिश्यन्ते; तद्यथा—त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानीति ॥ १०२ ॥**

**तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक् त्वक्साराणाम्। सा सारता सुखसौभाग्यैश्वर्योपभोगबुद्धिविद्यारोग्यप्रहर्षणान्यायुष्यत्वं चाचष्टे ॥ १०३ ॥**

**कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादतलनखललाटमेहनं स्निग्धरक्तवर्णं श्रीमद्भ्राजिष्णु रक्तसाराणाम्। सा सारता सुखमुद्धतां मेधां मनस्वित्वं सौकुमार्यमनतिबलमक्लेशसहिष्णुत्वमुष्णासहिष्णुत्वं चाचष्टे ॥ १०४ ॥**

**शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसन्धयः स्थिरगुरुशुभमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे ॥ १०५ ॥**

**वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहो मेदःसाराणाम्। सा सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतां चाचष्टे ॥ १०६ ॥**

**पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्वस्थूलाः स्थूलास्थिनखदन्ताश्चास्थिसाराः। ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च ॥ १०७ ॥**

**मृद्वङ्गा बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जसाराः। ते दीर्घायुषो बलवन्तः श्रुतवित्तविज्ञानापत्यसंमानभाजश्च भवन्ति ॥१०८॥**

**सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिचश्च शुक्रसाराः। ते स्त्रीप्रियोपभोगा[1] बलवन्तः सुखैश्वर्यारोग्यवित्तसंमानापत्यभाजश्च भवन्ति ॥ १०९ ॥**

**स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनस्त्यक्तविषादाः सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्त्वसाराः। तेषां स्वलक्षणैरेव गुणा व्याख्याताः ॥ ११० ॥**

**तत्र सर्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परमसुखयुक्ताः[2] क्लेशसहाः सर्वारम्भेष्वात्मनि जातप्रत्ययाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगम्भीरमहास्वराः सुखैश्वर्यवित्तोपभोगसंमानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च ॥ १११ ॥**

**अतो विपरीतास्त्वसाराः ॥ ११२ ॥**

**मध्यानां मध्यैः सारविशेषैर्गुणविशेषा व्याख्याता भवन्ति ॥ ११३ ॥**

**इति साराण्यष्टौ पुरुषाणां बलप्रमाणविशेषज्ञानार्थमुपदिष्टानि भवन्ति ॥ ११४ ॥**

**कथं नु शरीरमात्रदर्शनादेव भिषग्बुध्येदयमुपचितत्वाद्बलवान्, अयमल्पबलः कृशत्वात्, महाबलोऽयं महाशरीरत्वात्, अयमल्पशरीरत्वादल्पबल इति; दृश्यन्ते ह्यल्पशरीराः कृशाश्चैके बलवन्तः; तत्र पिपीलिकाभारहरणवत् सिद्धिः। अतश्च सारतः परीक्षेतेत्युक्तम्[3] ॥ ११५ ॥**

सारतश्चेत्यादौ सारशब्देन विशुद्धतरो धातुरुच्यते। सप्रभेवेति प्रभायुक्ता त्वक्। त्वक्साराणामिति च्छेदः। अथेयं सारता किं करोतीत्याह—सा सारतेत्यादि। एवमन्यत्रापि सा सारतेत्यादि व्याख्यातव्यम्। श्रीमदिति शोभायुक्तम्। अरत्निः कफोणिका। शिखरदशना इति शोभनदशनाः। स्त्रीप्रिय उप-

१ 'स्त्रीप्रियाः प्रियोपभोगाः' इति पा०। २ 'परमगौरवयुक्ताः' इति पा०। ३ 'परीक्षेत्युक्तं' इति पा०।

भोगः संभोगो येषां ते तथा। समरे विक्रम्य युध्यन्तीति समरविक्रान्तयोधिनः। खस्थिता इति न परस्थिताः। तुल्यगुणविस्तीर्णापत्या इति जनितात्मसदृशापत्याः। प्रायःशब्दो नियमेन निषेधयति। मध्यानामिति स्तोकसाराणाम्। मध्यैः सारविशेषैरिति ये तत्र संभवन्ति सारास्तद्युक्तैः सारगुणैरित्यर्थः। उपचितत्वादिति स्थूलत्वात्। महाशरीरत्वादिति अतिप्रमाणशरीरत्वात्। पिपीलिकाभारहरणवदिति खल्पाः पिपीलिका यथा सारशरीरत्वेन महान्तं भारं नयन्ति, तथाऽल्पकृशशरीरा इत्यर्थः। ॥ १०२–११५ ॥

**संहननतश्चेति संहननं, संहतिः, संयोजनमित्येकोऽर्थः। तत्र समसुविभक्तास्थि, सुबद्धसन्धि, सुनिविष्टमांसशोणितं, सुसंहतं शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तः, विपर्ययेणाल्पबलाः, मध्यत्वात् संहननस्य मध्यबला भवन्ति ॥११६॥**

संहतिरिति निबिडसन्धानतेत्यर्थः ॥ ११६ ॥

**प्रमाणतश्चेति शरीरप्रमाणं पुनर्यथास्वेनाङ्गुलिप्रमाणेनोपदेक्ष्यते उत्सेधविस्तारायामैर्यथाक्रमम्। तत्र पादौ चत्वारि षट् चतुर्दशाङ्गुलानि, जङ्घे त्वष्टादशाङ्गुले षोडशाङ्गुलपरिक्षेपे च, जानुनी चतुरङ्गुले षोडशाङ्गुलपरिक्षेपे, त्रिंशदङ्गुलपरिक्षेपावष्टादशाङ्गुलावूरू, षडङ्गुलदीर्घौ वृषणावष्टाङ्गुलपरिणाहौ, शेफः षडङ्गुलदीर्घं पञ्चाङ्गुलपरिणाहं, द्वादशाङ्गुलिपरिणाहो भगः, षोडशाङ्गुलविस्तारा कटी, दशाङ्गुलं बस्तिशिरः, दशाङ्गुलविस्तारं द्वादशाङ्गुलमुदरं, दशाङ्गुलविस्तीर्णे द्वादशाङ्गुलायामे पार्श्वे, द्वादशाङ्गुलं स्तनान्तरं, द्व्यङ्गुलं स्तनपर्यन्तं, चतुर्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुरः, द्व्यङ्गुलं हृदयम्, अष्टाङ्गुलौ स्कन्धौ, षडङ्गुलावंसौ, षोडशाङ्गुलौ प्रबाहू, पञ्चदशाङ्गुलौ प्रपाणी, हस्तौ द्वादशाङ्गुलौ, कक्षावष्टाङ्गुलौ, त्रिकं द्वादशाङ्गुलोत्सेधम्, अष्टादशाङ्गुलोत्सेधं पृष्ठं, चतुरङ्गुलोत्सेधा द्वाविंशत्यङ्गुलपरिणाहा शिरोधरा, द्वादशाङ्गुलोत्सेधं चतुर्विंशत्यङ्गुलपरिणाहमाननं, पञ्चाङ्गुलमास्यं, चिबुकौष्ठकर्णाक्षिमध्यनासिकाललाटं चतुरङ्गुलं, षोडशाङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिरः; इति पृथक्त्वेनाङ्गावयवानां मानमुक्तम्। केवलं पुनः शरीरमङ्गुलिपर्वाणि चतुरशीतिः। तदायामविस्तारसमं समुच्यते। तत्रायुर्बलमोजः सुखमैश्वर्यं वित्तमिष्टाश्चापरे भावा भवन्त्यायत्ताः प्रमाणवति शरीरे; विपर्ययस्त्वतो हीनेऽधिके वा ॥ ११७ ॥**

प्रमाणतश्चेत्यादिना प्रशस्तं प्रमाणमङ्गावयवानामाह। पादौ उत्सेधेन चत्वारि, विस्तारेण षट्, दैर्घ्येण चतुर्दशाङ्गुलानीति यथाक्रमं भवतः। जङ्घा जान्वधस्तादुच्यते। परिक्षेपः परिणाहः। जानुः जङ्घोरुसन्धिः। परिणाहपरिमाणं च यदुच्यते तन्मध्यस्थानस्य, तेनासमपरिणाहमानेषु जङ्घादिषु मध्यस्थानमेतज्ज्ञेयम्। कट्या उत्सेधपरिमाणं नोक्तं, तस्या उत्सेधस्योर्वन्तराधिसन्धित्वेन पृथगुत्सेधप्रमाणस्याविद्यमानत्वात्। प्रबाहुरंसादर्वाक् कफोणिपर्यन्तम्। प्रपाणिः कफोण्यधस्तात्। त्रिकमिति गुदास्थ्नः प्रभृति कटीकपालोर्ध्वपर्यन्तम्। चिबुकं च ओष्ठश्च कर्णौ च अक्षिमध्यं च नासिका च ललाटं च प्रति प्रति चतुरङ्गुलम्। षडङ्गुलोत्सेधं शिर इति पृष्ठमनु ग्रीवाया उपरि ज्ञेयम्। केवलमिति पादतलात् प्रभृति शिरःपर्यन्तं चतुरशीत्यङ्गुलं भवति, एवं सार्धत्रिहस्तप्रमाणत्वं शरीरस्य स्वहस्तेन भवति। अत्र च प्रत्यवयवोत्सेधेन चतुरशीत्यङ्गुलादधिकं यच्छरीरं भवति, तदवयवानामवयवान्तरदैर्घ्यानुप्रविष्टानां ग्रहणात्; तेन प्रत्यवयवदैर्घ्यमानेन न चतुरशीत्यङ्गुलं गणनीयं किं तु समुदितमेव शरीरम्। तत्र पादस्याङ्गुलानि चत्वारि, जङ्घाया अष्टादश, जानुनश्चत्वारि, ऊर्वोरष्टादश, पृष्ठस्याष्टादश, ग्रीवायाश्चत्वारि, शिरसः षट्, एवं चतुरशीत्यङ्गुलानि घटन्ते। सुश्रुतेन समं योऽत्र मानविरोधः सोऽत्राङ्गुलिमानभेदाच्छमयितव्यः। तत्र हि सविंशमङ्गुलिशतं पुरुषमानमुक्तम्। तेन तत्राङ्गुलि(ल)मानमेवाल्पं ज्ञेयम्। आयामविस्तारसममिति यथोक्तप्रत्यवयवायामविस्तारयुक्तं; किंवा, यावताऽऽयामेन चतुरशीत्यङ्गुलं, तावद्यदि विस्तृतबाहुद्वयप्रमाणेन च विस्तारेण शरीरं भवति, तदा आयामविस्तारसमं भवति। तत्रेति यथोक्तप्रमाणवति शरीरे इति योजनीयम्। हीने इति हीनप्रमाणे। अधिके इति अधिकप्रमाणे ॥ ११७ ॥

**सात्म्यतश्चेति सात्म्यं नाम तद्यत् सातत्येनोपसेव्यमानमुपशेते। तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च ते बलवन्तः क्लेशसहाश्चिरजीविनश्च भवन्ति, रूक्षसात्म्याः पुनरेकरससात्म्याश्च ये ते प्रायेणाल्पबला अल्पक्लेशसहा अल्पायुषोऽल्पसाधनाश्च भवन्ति, व्यामिश्रसात्म्यास्तु ये ते मध्यबलाः सात्म्यनिमित्ततो भवन्ति ॥ ११८ ॥**

सात्म्यतश्चेत्यत्र सात्म्यशब्देन ओकसात्म्यमुच्यते, प्रकृतिसात्म्यादीनां भेषजादिपरीक्ष्यैव परीक्षितत्वादिति ज्ञेयम्। अल्पसाधना इति अल्पभेषजाः, एकरससात्म्यानां पञ्चरसा असात्म्यत्वेनापथ्या इति भावः ॥ ११८ ॥

**सत्त्वतश्चेति सत्त्वमुच्यते मनः। तच्छरीरस्य तन्त्रकमात्मसंयोगात्। तत्त्रिविधं बलभेदेन—प्रवरं,**

१ 'संघातः' इति पा०। २ 'पादौ चतुर्दशाङ्गुलौ' इति पा०। ३ 'त्र्यङ्गुलं' पा०। ४ 'दशाङ्गुलौ' इति पा०।

१ 'शूर्ध्वपरिमाणं' इति पा०। २ 'विंशत्यधिकशताङ्गुलं' इति पा०।

मध्यम्, अवरं चेति; अतश्च प्रवरमध्यावरसत्त्वाः पुरुषा भवन्ति। तत्र प्रवरसत्त्वाः सत्त्वसारास्ते सारेषूपदिष्टाः, स्वल्पशरीरा ह्यपि ते निजागन्तुनिमित्तासु महतीष्वपि पीडास्वव्यथा दृश्यन्ते सत्त्वगुणवैशेष्यात्; मध्यसत्त्वास्त्वपरानात्मन्युपनिधाय संस्तम्भयन्त्यात्मनाऽऽत्मानं परैर्वाऽपि संस्तभ्यन्ते; हीनसत्त्वास्तु नात्मना नापि परैः सत्त्वबलं प्रति शक्यन्ते उपस्तम्भयितुं, महाशरीरा ह्यपि ते स्वल्पानामपि वेदनानामसह्या दृश्यन्ते, सन्निहितभयशोकलोभमोहमाना रौद्रभैरवद्विष्टबीभत्सविकृतसंकथास्वपि च पशुपुरुषमांसशोणितानि चावेक्ष्य विषाददैवर्ण्यमूर्च्छोन्मादभ्रमप्रपतनानामन्यतममाप्नुवन्त्यथवा मरणमिति ॥ ११९ ॥

तन्त्रकमिति प्रेरकं धारकं च। ते सारेषूपदिष्टा इति य एव सत्त्वसारास्त एव प्रवरसत्त्वा इति ज्ञेया इत्यर्थः। सत्त्वगुणवैशेष्यादिति सत्त्वगुणेन संस्तम्भितवेदनाविकारत्वादव्यथा इव दृश्यन्त इत्यर्थः। परानात्मन्युपनिधायेति परं वेदनासहं दृष्ट्वा, 'चेदयं वेदनासहस्तदहमपि वेदनासहो भवामि' इति कृत्वा वेदनां सहत इत्यर्थः ॥ ११९ ॥

आहारशक्तितश्चेति आहारशक्तिरभ्यवहरणशक्त्या जरणशक्त्या च परीक्ष्या; बलायुषी ह्याहारायत्ते ॥ १२० ॥

जरणशक्त्या चेतिवचनाद्यो बहु भुङ्क्ते परिणमयति च, असावाहारशक्तिमानिहोच्यते, न तु वस्तुगपरिणतिगृहीतः ॥ १२० ॥

व्यायामशक्तितश्चेति व्यायामशक्तिरपि कर्मशक्त्या परीक्ष्या। कर्मशक्त्या ह्यनुमीयते बलत्रैविध्यम् ॥ १२१ ॥

कर्म भारवहनादि, तत्र शक्तिः कर्मशक्तिः ॥ १२१ ॥

वयस्तश्चेति कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधीयते। तद्वयो यथास्थूलभेदेन त्रिविधं—बालं, मध्यं, जीर्णमिति। तत्र बालमपरिपक्वधातुमजातव्यञ्जनं सुकुमारमक्लेशसहमसंपूर्णबलं श्लेष्मधातुप्रायमाषोडशवर्षं, विवर्धमानधातुगुणं पुनः प्रायेणानवस्थितसत्त्वमात्रिंशद्वर्षमुपदिष्टं; मध्यं पुनः समत्वागतबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानसर्वधातुगुणं बलस्थितमवस्थितसत्त्वमविशीर्यमाणधातुगुणं पित्तधातुप्रायमापष्टिवर्षमुपदिष्टम्; अतः परं हीयमानधात्विन्द्रियबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वायुधातुप्रायं क्रमेण जीर्णमुच्यते आवर्षशतम्। वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले; सन्ति च पुनरधिकोनवर्षशतजीविनोऽपि मनुष्याः; तेषां विकृतिवर्ज्यैः प्रकृत्यादिबलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत् ॥ १२२ ॥

वयःस्वरूपमाह—कालेत्यादि। कालप्रमाणविशेषापेक्षिणीति कालस्य प्रमाणविशेषेण योगाद्भवतीत्यर्थः। यथास्थूलभेदेनेतिवचनाद् बालबालतराद्यवस्थाभेदादधिकमपि वयो भवतीति दर्शयति। बालो द्विविधः—अपरिपक्वधातुराषोडशवर्षात्, तथा वर्धमानधातुरात्रिंशत्तमात्। तदेतयोर्बालभेदयोरुपयुक्तत्वेन भेदमाह—तत्रेत्यादि। षोडशवर्षीयो हि बालोऽल्पमृदुभेषजोपचर्यत्वादिना शास्त्रे वक्तव्यः, तदूर्ध्वं बालोऽपि नाल्पभेषजत्वादिना तथोपचर्यते। क्रमेणेति नैकदैव, षष्टिवर्षादूर्ध्वं धात्वादिहानिरिति दर्शयति। अस्मिन् काल इति कलौ। अथाधिकवर्षशतजीविनां कथं वयस्त्रित्वं विभक्तव्यमित्याह—तेषामित्यादि। प्रकृत्यादयो दश परीक्ष्या अत्रैव प्रकृतिविकृतिसारेत्यादिनोक्ताः; अत्र विकृतिवर्ज्यानामित्यनेन विकृतेः परित्यागः कृतः। तेन प्रकृतिसारादीनां बलविशेषैः प्रवरावरमध्यभेदभिन्नप्रकृत्यादिभेदेन कृतैः प्रवरावरमध्यरूपैरायुषः प्रमाणं प्रवरावराद्युपलभ्य वयस्त्रित्वं विभजनीयम्। एतेन यस्य प्रकृतिबलमुत्तमं श्लेष्मप्रकृतेः समप्रकृतेर्वा तस्यायुर्दीर्घं भवति, हीने तु प्रकृतिबले हीनम्; एवं सारादावपि ज्ञेयम्। एवं वयःप्रकृत्यादीनां सर्वेषामेवोत्तमेन बलेन युक्तः स शताधिकं जीवति। तेन, तस्य विंशतिवर्षाधिकशतं यद्यायुरुपलभ्यते, तदा पूर्वोक्तवयोविभागानुमानादापञ्चत्रिंशद्वर्षाणि स बालो भवति, द्विसप्ततिवर्षश्च स मध्यः, शेषे तु वृद्धः; यस्तु प्रकृत्यादीनां मध्यमत्वेनाल्पायुरशीतिवर्षोऽवधार्यते, स पञ्चविंशतिवर्षाणि बालः, पञ्चाशतं मध्यः, ततो वृद्ध इत्यादि विभजनीयम्। न केवलं प्रकृत्यादिनाऽऽयुरवधार्यं, किंत्वायुर्लक्षणैरपि शरीरप्रतिबद्धैः शारीरे वक्तव्यैरित्याह—आयुषो लक्षणतश्चेति। आयुर्लक्षणेनापि वयोऽवधार्य बाल्यादिवयोविभागः कर्तव्य इत्यर्थः। अयं च स्तोकन्यूनाधिकशतायुषां बाल्यादिविभागः कर्तव्यः; येषां तु विंशतिवर्षादि परमायुषो मानं न तेषां तदनुमानेन वयोभेदः, ते ह्यप्राप्तमध्यावस्था एव म्रियन्ते ॥ १२२ ॥

एवं प्रकृत्यादीनां विकृतिवर्ज्यानां भावानां प्रवरमध्यावरविभागेन बलविशेषं विभजेत्। विकृतिबलत्रैविध्येन तु दोषबलं त्रिविधमनुमीयते। ततो भैषज्यस्य तीक्ष्णमृदुमध्यविभागेन त्रैविध्यं विभज्य यथादोषं भैषज्यमवचारयेदिति ॥ १२३ ॥

---

१ 'पीडास्वव्यग्रा' इति पा०। २ 'परं' इति पा०। ३ 'बलं त्रिविधम्'। ४ 'यथावस्थाभेदेन' इति पा०।

१ 'आत्रिंशतं' इति पा०। २ 'द्विसप्ततिश्च वर्षाणि' इति पा०। ३ 'वक्तव्यम्' इति पाठः।

'प्रकृत्यादिविभागेन शरीरबलपरीक्षामुक्तामुपसंहरति—एवमित्यादि । दोषबलं तु यथा शरीररूपदेशपरीक्षया परीक्ष्यं तदाह—विकृतिबलेत्यादि ॥ १२३ ॥

**आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियेषु जातिसूत्रीये च लक्षणान्युपदेक्ष्यन्ते ॥ १२४ ॥**

शरीरबलदोषबलपरीक्षार्थं शरीरपरीक्षां प्रतिज्ञातामभिधाय पुनरायुःप्रमाणज्ञानार्थं शरीरपरीक्षामतिदिशति—आयुष इत्यादि । इन्द्रियेष्विति इन्द्रियस्थानाध्यायेषु । तत्रेन्द्रिये वर्णादिविकृत्या रिष्टरूपया ह्रसितमायुर्ज्ञातव्यं, जातिसूत्रीये शारीरे च जन्मप्रतिबद्धैर्लक्षणैर्दीर्घायुष्ट्वमल्पायुष्ट्वं च ज्ञातव्यम्[1] ॥ १२४ ॥

**कालः पुनः संवत्सरश्चातुरावस्था च । तत्र संवत्सरो द्विधा त्रिधा षोढा द्वादशधा भूयश्चाप्यतः प्रविभज्यते तत्तत्कार्यमभिसमीक्ष्य । अत्र खलु तावत् षोढा प्रविभज्य कार्यमुपदेक्ष्यते–हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति, तेषामन्तरेष्वितरे साधारणलक्षणास्त्रय ऋतवः–प्रावृट्शरद्वसन्ता इति । प्रावृडिति प्रथमः प्रवृष्टः[2] कालः, तस्यानुबन्धो हि वर्षाः । एवमेते संशोधनमधिकृत्य षट् विभज्यन्ते ऋतवः ॥ १२५ ॥**

देशपरीक्षां समाप्य कालपरीक्षामाह—काल इत्यादि । संवत्सरोऽयनभेदेन द्विविधः, शीतोष्णवर्षभेदेन त्रिविधः, ऋतुभेदेन षोढा, मासभेदेन द्वादशधा, पक्षभेदाच्चतुर्विंशतिधा, प्रहरादिनाऽनेकधेति ज्ञेयम्[3] । तत्तत् कार्यमिति अयनादिज्ञेयभेदेन संपाद्यं कार्यमित्यर्थः । साधारण इति अनतिशीतोष्णवर्षः । प्रावृषं विभजते–प्रावृडित्यादि । प्रथमप्रवृष्टशब्देनाऽऽषाढश्रावणावुच्येते । एतच्च द्विमासमृतुभेदमागमादिं[4] कृत्वा शेषमासद्विकेन वर्षादयो यथाक्रमं ज्ञेयाः । अयं च ऋतुक्रमो न रसोत्पत्त्यादौ, किंतु शरीरशोधनप्रवृत्तावेवेति दर्शयता 'संशोधनमधिकृत्य' इत्युक्तम्, एवमेव च क्रमं सिद्धौ वक्ष्यति—"प्रावृट् शुक्रनभौ[5] ज्ञेयौ शरदूर्जसहौ पुनः । तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति" (सि.अ. ६) इति । अस्मिन्नृतुक्रमे शिशिरो नास्ति । ये तु ब्रुवते—गङ्गाया दक्षिणकूले वर्षा बहु भवति तेन तत्र प्रावृडादिक्रमः, गङ्गोत्तरकूले शीतं बहु भवति तेन तत्र हेमन्तशिशिरौ भवतः; उक्तं हि काश्यपेन—यत्—"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम् । तेन प्रावृड्वर्षाख्यौ ऋतू तेषां प्रकल्पितौ ॥ गङ्गाया उत्तरे कूले हिमवदम्बुसैङ्कुले[6] । भूयः शीतमतस्तेषां हेमन्तशिशिरावृतू"—इति । एतच्च न,

१ 'इन्द्रियस्थाने' पा० । २ 'वक्तव्यम्' इति पा० । ३ 'प्रवृष्टेः' पा० । ४ 'पक्षादिभेदात्तु भूय इति ज्ञेयम्' इति पा० । ५ 'द्विमासभागर्तुभेदमादिं' इति पा० । ६ 'शुचिनभौ' इति पा० । ७ 'हिमवदग्निसंकुले' इति 'हिमवद्धिमसंकुले' इति च पा० ।



अत्र 'संशोधनमधिकृत्य' इति वचनात् । यदि देशकृतोऽयं[1] भेदः स्यात्तदा तमेव भेदकं ब्रूयात्, न संशोधनम् । तेन, काश्यपोक्तदेशभेदेन प्रावृडादिक्रमो न तावदिहाभिमतः । अविकल्पकाश्च शरीरौषधानामिति न शरीरस्य कृत्रिमतापादितगुणेन भेदकाः, तथौषधस्य च न प्रमाणोत्कर्षापकर्षभेदकारका इत्यर्थः । विकल्पकाश्च शरीरौषधानामिति यदाऽऽत्ययिकत्वेनावश्यकर्तव्या भवन्ति वमनादयः, तदौषधस्य कृत्रिमगुणोपधानेन यथावक्ष्यमाणेन, तथा शरीरस्य च विकल्पका भवन्ति ॥ १२५ ॥

**तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते, निवृत्तिरितरेषु । साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वात् सुखतमाश्च भवन्त्यविकल्पकाश्च शरीरौषधानाम्, इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद्दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम् ॥ १२६ ॥**

**तत्र हेमन्ते ह्यतिमात्रशीतोपहतत्वाच्छरीरमसुखोपपन्नं भवत्यतिशीतवाताध्मातमतिदारुणीभूतमवबद्धदोषं च,भेषजं पुनः संशोधनार्थमुष्णस्वभावमतिशीतोपहतत्वान्मन्दवीर्यत्वमापद्यते, तस्मात्तयोः संयोगे संशोधनमयोगायोपपद्यते शरीरमपि च वातोपद्रवाय । ग्रीष्मे पुनर्भृशोष्णोपहतत्वाच्छरीरमसुखोपपन्नं भवत्युष्णवातातपाध्मातमतिशिथिलमत्यर्थप्रविलीनदोषं, भेषजं पुनः संशोधनार्थमुष्णस्वभावमुष्णानुगमनात्तीक्ष्णतरत्वमापद्यते, तस्मात्तयोः संयोगे संशोधनमतियोगायोपपद्यते शरीरमपि पिपासोपद्रवाय । वर्षासु तु मेघजलावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्कजलपटलसंवृतायामत्यर्थोपक्लिन्नशरीरेषु भूतेषु विहतस्वभावेषु च केवलेष्वौषधग्रामेषु तोयतोयदानुगतमारुतसंसर्गाद् गुरुप्रवृत्तीनि[2] वमनादीनि भवन्ति, गुरुसमुत्थानानि च शरीराणि । तस्माद्वमनादीनां निवृत्तिर्विधीयते वर्षान्तेष्वृतुषु[3], न चेदात्ययिकं कर्म । आत्ययिके पुनः कर्मणि काममृतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन भेषजं संयोगसंस्कारप्रमाणविकल्पेनोपपाद्य प्रमाणवीर्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेनावहितः ॥ १२७ ॥**

यथा हेमन्तादिषु दुःखतमत्वं भवति तदाह—तत्र हेमन्त इत्यादि । अवबद्धदोषमिति अतिबद्धदोषम् । तयोरिति यथोक्तशरीरभेषजयोः । तोयस्य तोयदानुगतमारुतस्य च संसर्गस्तस्मात् । गुरुप्रवृत्तीनीति गुरोर्यथा न सुखकारिणी प्रवृत्तिर्भवति, तथाऽस्यापीत्यर्थः; किंवा बहुप्रतिविधेयप्रवृत्तीनि गुरुप्रवृत्तीनि ।

१ 'शब्दभेदकृतोऽयं' इति पा० । २ 'तोयानुगतमारुतसंसर्गोपहतेषु गुरुप्रवृत्तीनि' पा० । ३ 'वर्षाभागान्तेषु' पा० ।

गुरुसमुत्थानानीति संशोधनक्लिष्टानि शरीराणि तदा महता प्रयत्नेन चिरेण च कालेन प्रकृतिं प्राप्नुवन्तीत्यर्थः। वर्षान्तेष्विति हेमन्तग्रीष्मवर्षासु। हेमन्तादिष्वप्यात्ययिके व्याधौ संशोधनं दर्शयन्नाह—न चेदित्यादि। विकल्प्येति अल्पगुणयुक्तं कृत्वा। कृत्रिमगुणोपधानं यथा—शीते शीतप्रतीकारार्थमुष्णसदनादिकरणम्; उक्तं चान्यत्र—"शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्। कृत्वा कुर्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्"—(सु. सू. अ. ३५) इति। ऋतौ प्रतीकारं दर्शयित्वा भेषजप्रतीकारमाह—भेषजमित्यादि। संयोगविकल्पो यथा—शीते त्रिवृताया उष्णेन गोमूत्रेणालोडनं; प्रमाणविकल्पो यथा—अयोगप्रतीकारार्थमतिमात्रत्रिवृद्दानमित्यादि। अत्र च प्रमाणविकल्पस्तथा कर्तव्यो यथा प्राणाविरोधः स्यात्, तथा संयोगविकल्पश्च तथा कर्तव्यो यथा विरुद्धवीर्यभेषजमेलको न स्यादिति दर्शयन्नाह—प्रमाणवीर्यसमं कृत्वेति ॥ १२६ ॥ १२७ ॥

**आतुरावस्थास्वपि तु कार्याकार्यं प्रति कालाकालसंज्ञा; तद्यथा—अस्यामवस्थायामस्य भेषजस्याकालः, कालः पुनरन्यस्येति; एतदपि हि भवत्यवस्थाविशेषेण; तस्मादातुरावस्थास्वपि हि कालाकालसंज्ञा। तस्य परीक्षा—मुहुर्मुहुरातुरस्य सर्वावस्थाविशेषावेक्षणं यथावद्भेषजप्रयोगार्थम्। न ह्यतिपतितकालमप्राप्तकालं वा भेषजमुपयुज्यमानं यौगिकं भवति; कालो हि भैषज्यप्रयोगपर्याप्तिमभिनिर्वर्तयति ॥ १२८ ॥**

आतुरावस्थालक्षणं कालमाह—आतुरावस्थास्वित्यादि। तत्रोदाहरणं यथा—नवज्वरे न कषायकालः, अतिक्रान्तषडहे ज्वरे कषायकाल इत्यादि। भैषज्यप्रयोगपर्याप्तिमिति भेषजप्रयोगसाध्यसिद्धिमित्यर्थः ॥ १२८ ॥

**प्रवृत्तिस्तु प्रतिकर्मसमारम्भः। तस्य लक्षणं भिषगौषधातुरपरिचारकाणां क्रियासमायोगः ॥ १२९ ॥**

कालमभिधाय क्रमप्राप्तां प्रवृत्तिमाह—प्रवृत्तिरित्यादि। प्रतिकर्म चिकित्सा ॥ १२९ ॥

**उपायः पुनर्भिषगादीनां सौष्ठवमभिविधानं च सम्यक्। तस्य लक्षणं—भिषगादीनां यथोक्तगुणसंपत् देशकालप्रमाणसात्म्यक्रियादिभिश्च सिद्धिकारणैः सम्यगुपपादितस्यौषधस्यावचारणमिति १३०**

परिशिष्टमुपायमाह—उपाय इत्यादि। यथोक्तगुणसंपदित्यनेन सौष्ठवमुक्तम् ॥ १३० ॥

**एवमेते दश परीक्ष्यविशेषाः पृथक् पृथक् परीक्षितव्या भवन्ति ॥ १३१ ॥**

एवमित्यादिना तु सम्यगभिविधानं ब्रूते ॥ १३१ ॥

**परीक्षायास्तु खलु प्रयोजनं प्रतिपत्तिज्ञानम्। प्रतिपत्तिर्नाम यो विकारो यथा प्रतिपत्तव्यस्तस्य तथाऽनुष्ठानज्ञानम् ॥ १३२ ॥**

किंप्रयोजना परीक्षेत्यस्योत्तरं—परीक्षायास्त्वित्यादि। प्रतिपत्तिशब्दार्थं विभजते—य इत्यादि। प्रतिपत्तव्य इति अनुष्ठानेन योजयितव्यः ॥ १३२ ॥

**यत्र तु खलु वमनादीनां प्रवृत्तिः, यत्र च निवृत्तिः, तद्यासतः सिद्धिषूत्तरमुपदेक्ष्यामः ॥ १३३ ॥**

'क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः' इत्यस्योत्तरमतिदेशेनाह—यत्र त्वित्यादि ॥ १३३ ॥

**प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु गुरुलाघवं संप्रधार्य सम्यगध्यवस्येदन्यतरनिष्ठायाम्। सन्ति हि व्याधयः शास्त्रेषूत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टाः। तस्माद्गुरुलाघवं संप्रधार्य सम्यगध्यवस्येदित्युक्तम् ॥ १३४ ॥**

'प्रवृत्तिनिवृत्तिलक्षणसंयोगे किं नैष्ठिकम्' इत्यस्योत्तरं—प्रवृत्तीत्यादि। अध्यवस्येदिति अध्यवसायं कुर्यादित्यर्थः। अन्यतरनिष्ठायामिति अन्यतरपक्षव्यवस्थायाम्। अत्र गुरुलाघवे ज्ञाते गुरुप्रतिक्रियानिश्चयोऽनुक्तोऽपि ज्ञायते; तेन शास्त्रकारेण गुरुव्याधिप्रतीकारनिष्ठायामध्यवसायं कुर्यादिति साक्षान्न कृतम्। एतदेव गुरुव्याधिप्रतीकारं लघुव्याध्युपपादकेन वचनभङ्ग्यन्तरेणाह—सन्ति हीत्यादि। सम्यगध्यवस्येदिति उत्सर्गलब्धं परित्यज्यापवादगुरुमुपक्रमयतयाऽध्यवसेत्; बलवन्तमुपद्रवं वेत्यादिना हि दुर्बलं परित्यज्य बलवच्चिकित्सामभिधास्यति ॥ १३४ ॥

**यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति तान्यनुव्याख्यास्यामः। तद्यथा—फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनफलानि, फलजीमूतकेक्ष्वाकुधामार्गवपत्रपुष्पाणि आरग्वधवृक्षकमदनस्वादुकण्टकपाठापाटलाशार्ङ्गेष्टामूर्वासप्तपर्णनक्तमालपिचुमर्दपटोलसुषवीगुडूचीचित्रकसोमवल्कशतावरीद्वीपीशिग्रुमूलकषायैः, मधुकमधूककोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पाप्रत्यक्पुष्पाकषायैश्च, एलाहरेणुप्रियङ्गुपृथ्वीकाकुस्तुम्बुरुतगरनलदह्रीबेरतालीशोशीरकषायैश्च, इक्षुकाण्डेक्षिवक्षुवालिकादर्भपोटगलकालङ्कृ(ङ्क)तकषायैश्च, सुमनासौमनस्यायनीहरिद्रादारुहरिद्रावृश्चीरपुनर्नवामहासहाक्षुद्रसहाकषायैश्च, शाल्मलिशाल्मलिकभद्रपर्ण्येलापर्ण्युपोदिकोद्दालकधन्वनराजादनोपचित्रागोपीशृङ्गाटिकाकषायैश्च, पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसर्षपफाणितक्षीरक्षारलवणोदकैश्च, यथालाभं यथेष्टं वाऽप्युपसंस्कृत्य वर्तिक्रियाचूर्णावलेहस्नेहकषायमांसरसयवागूयूषकाम्बलिकक्षीरोपधेयान्मोदकानन्यांश्च भक्ष्य-**

१ 'गुरुसमुत्थानतमानि' इति पा०। २ 'विरुद्धप्रमाणभेषजमेलकः कालः स्यात्' इति पा०। ३ 'अस्य भेषजस्य कालः, अकालः पुनरस्य' इति पा०। ४ 'अतिक्रान्ताष्टाहे' इति पा०। ५ 'भेषजप्रवृत्तिसाध्यसिद्धिमित्यर्थः' इति पा०। ६ 'अभिसंधानं' इति पा०।

१ '०तालीशगोपीकषायैश्च' इति पा०।

प्रकारान् विविधाननुविधाय यथार्हं वमनार्हाय दद्याद्विधिवद्वमनम् । इति कल्पसंग्रहो वमनद्रव्याणाम् । कल्पमेषां विस्तरेणोत्तरकालमुपदेक्ष्यामः ॥ १३५ ॥

संप्रति 'कानि च वमनादिषु भेषजद्रव्याणि योगं गच्छन्ति' इत्यस्योत्तरं—यानीत्यादि । शार्ङ्गेष्टा गुञ्जा, सोमवल्कः खदिरः; सुषवी कारवेल्लकः । द्वीपी कण्टकारी, द्वीपिशत्रुरिति पाठे शतावरी ज्ञेया । विदुलो वेतसः, शतपुष्पा घण्टारवा, सदापुष्पा रक्तार्कः । कालङ्कृतो कासमर्दः, पोटगलो होग्गलः । सुमना जाती, सौमनस्यायनी जातिकलिका जातिकोषो वा । शाल्मलिकों रोहितकः, स्वल्पशाल्मलिर्वा, भद्रपर्णी भादाली, एलापर्णी रास्ना, उद्दालः बहुवारः, गोपी सारिवा । वर्तिक्रिया वर्तिरूपदीर्घभक्ष्यकरणम् । अत्र 'आरग्वधादि' 'मध्वादि' इति पृथग्वर्गकरणं प्रायः समानगुणतां विच्छेदपाठेन दर्शयितुं कृतम् । कल्पनं कल्पः प्रयोग इत्यर्थः । उत्तरकालमिति कल्पस्थाने ॥ १३५ ॥

विरेचनद्रव्याणि तु श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनां क्षीरमूलत्वक्पत्रपुष्पफलानि यथायोगं तैस्तैः क्षीरमूलत्वक्पत्रपुष्पफलैर्विक्लिप्ताविक्लिप्तैः, अजगन्धाश्वगन्धाजशृङ्गीक्षीरिणीनीलिनीक्लीतककषायैश्च, प्रकीर्योदकीर्यामसूरविदलाकम्पिल्लकविडङ्गगवाक्षीकषायैश्च, पीलुप्रियालमृद्वीकाकाश्मर्यपरूषकवदरदाडिमामलकहरीतकीविभीतकवृश्चीरपुनर्नवाविदारिगन्धादिकषायैश्च, सीधुसुरासौवीरकतुषोदकमैरेयमेदकमदिरामधुमधूलकधान्याम्लकुवलवदरखर्जूरकर्कन्धुभिश्च, दधिदधिमण्डोदश्विद्भिश्च, गोमहिष्यजावीनां च क्षीरमूत्रैर्यथालाभं यथेष्टं वाऽप्युपसंस्कृत्य वर्तिक्रियाचूर्णासवलेहस्नेहकषायमांसरसयूषकाम्बलिकयवागूक्षीरोपधेयान् मोदकानन्यांश्च भक्ष्यप्र(वि)कारान् विविधांश्च योगाननुविधाय यथार्हं विरेचनार्हाय दद्याद्विरेचनम् । इति कल्पसंग्रहो विरेचनद्रव्याणाम् । कल्पमेषां विस्तरेण यथावदुत्तरकालमुपदेक्ष्यामः ॥ १३६ ॥

विक्लिप्तिः द्रव्यान्तरसंयोगः, अविक्लिप्तिः केवलप्रयोगः; तेन विक्लिप्ताविक्लिप्तैरिति संयुक्तायुक्तैरित्यर्थः । क्षीरिणी दुग्धिका, क्लीतकं यष्टीमधु । मसूरविदला श्यामलता । प्रथमं तु श्यामा श्याममूला त्रिवृदेवोक्ता ॥ १३६ ॥

आस्थापनेषु तु भूयिष्ठकल्पानि द्रव्याणि यानि योगमुपयान्ति तेषु तेष्ववस्थान्तरेष्वातुराणां, तानि द्रव्याणि नामतो विस्तरेणोपदिश्यमानान्यपरिसंख्येयानि स्युरतिवहुत्वात्; इष्टश्चानतिसंक्षेपविस्तरोपदेशस्तन्त्रे, इष्टं च केवलं ज्ञानं, तस्माद्रसत एव तान्यत्र व्याख्यास्यामः । रससंसर्गविकल्पविस्तरो ह्येषामपरिसङ्ख्येयः, समवेतानां रसानामंशांशवलविकल्पातिवहुत्वात् । तस्माद्द्रव्याणां चैकदेशमुदाहरणार्थं रसेष्वनुविभज्य रसैकैकश्येन च नामलक्षणार्थं षडास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्यास्यन्ते ॥ १३७ ॥

भूयिष्ठकल्पानीति बहुप्रयोगाणि प्रायैःप्रयोज्यानि च । इष्टश्चानतिसंक्षेपविस्तरोपदेश इति अनतिसंक्षेपविस्तरेण शास्त्रे कथनमिष्टम् । इष्टं च केवलं ज्ञानमिति अनतिसंक्षेपविस्तराभिधानेन यदनुक्तं तस्यापि यथासामान्यद्वारा ज्ञानं भवति तदपीष्टं ग्रन्थकर्तुः श्रोतुश्चेत्यर्थः । तस्माद्रसत एवेति रसं प्राधान्येनोद्दिश्य रसाश्रयद्रव्यस्यानतिसंक्षेपविस्तारोपदेशेनेत्यर्थः । तानीति आस्थापनोपयोगीनि द्रव्याणि । अत्र च रसद्वारा निर्देशेऽपि रससंसर्गस्यातिबहुत्वेन कृत्स्नद्रव्यनिर्देशवदसंख्येयता स्यादिति कृत्वा षड्भिरेव रसैर्निर्देशः कर्तव्य आस्थापनोपयोगिद्रव्याणामिति दर्शयन्नाह—रसेत्यादि । उदाहरणार्थमिति मधुरादिरसस्याधारभूतस्य द्रव्यस्योदाहरणार्थम् । रसेष्वनुविभज्येति रसेषु मधुरादिषु द्रव्याणामेकदेशमाधारतयोपदिश्येत्यर्थः । रसैकैकश्येनेति न रससंसर्गेण । नामलक्षणार्थं षडास्थापनस्कन्धा इति साक्षादुक्तानां जीवकादीनां नामार्थं, तथा अनुक्तानां मधुरादिद्रव्याणां तज्जातीयत्वेन लक्षणार्थमास्थापनयोगिद्रव्यसमूहा व्याख्यास्यन्त इति; किंवा, नामलक्षणार्थमिति नामज्ञानार्थम् । आस्थाप्यतेऽनेनेति आस्थापनं जीवकादिद्रव्यं; स्कन्धः समूहः । रसतोऽनुविभज्येति मधुरादिरसतया निर्दिश्येत्यर्थः ॥ १३७ ॥

यत्तु षड्विधमास्थापनमेकरसमित्याचक्षते भिषजः, तद्दुर्लभतमं संसृष्टरसभूयिष्ठत्वाद्द्रव्याणाम् । तस्मान्मधुराणि मधुरप्रायाणि मधुरविपाकानि मधुरप्रभावाणि च मधुरस्कन्धे मधुराण्येव कृत्वोपदेक्ष्यन्ते, तथेतराणि द्रव्याण्यपि ॥ १३८ ॥

अयं च मधुरादिरसेन द्रव्यगणनिर्देशो न मधुराद्येकरसस्यैव द्रव्यस्य संग्रहेण यथा परैराख्यायते तथाऽस्माभिरपीष्यते, किंतु यत्र सत्यपि रसान्तरे मधुरादयः प्रधानं, यद्वा द्रव्यं मधुरादिकार्यकारि विपाकप्रभावात्, तदपि मधुरादिगण एवास्माभिः पठनीयमिति दर्शयन्नाह—यत्त्वित्यादि । एकरसमिति शुद्धैकरसम् । मधुरप्रायाणीति उत्कृष्टमधुररसानि । तथेतराणीति अम्लादीनि अम्लप्रायाणि अम्लपाकानि च अम्लमेव कृत्वोपदेक्ष्यामः; तथा लवणादिष्वप्येवमेव तथेतराणीतिपदेन दर्शयति ॥ १३८ ॥

तद्यथा—जीवकर्षभकौ जीवन्ती वीरा तामलकी काकोली क्षीरकाकोली मुद्गपर्णी माषपर्णी शालपर्णी पृश्निपर्ण्यसनपर्णी मधुपर्णी मेदा महामेदा

१ 'अर्कपुष्पी कुन्दो वा' इति पा० । २ 'अहिंस्रा' इति पा० । ३ 'भक्ष्यप्रकारान् यथोक्ताननुविधाय' इति पा० ।

१ 'रससमवायविकल्पविस्तरः' इति पा० । २ 'अभिप्राययोज्यानि' इति पा० । ३ 'रसकैवल्येनेति' इति पा० । ४ 'आस्थापनयोगसमूहा' इति पा० । ५ 'विपाकप्रभावबलात्' इति पा० । ६ 'शणपर्णी' ग० ।

कर्कटशृङ्गी शृङ्गाटिका छिन्नरुहा छत्राऽतिच्छत्रा श्रावणी महाश्रावणी सहदेवा विश्वदेवा शुक्ला क्षीरशुक्ला वलाऽतिवला विदारी क्षीरविदारी क्षुद्रसहा महासहा ऋष्यगन्धाऽश्वगन्धा वृश्चीरः पुनर्नवा बृहती कण्टकारिकोरुवूको मोरटः श्वदंष्ट्रा संहर्षा शतावरी शतपुष्पा मधूकपुष्पी यष्टीमधु मधूलिका मृद्वीका खर्जूरं परूषकमात्मगुप्ता पुष्करबीजं कशेरुकं राजकशेरुकं राजादनं कतकं काश्मर्यं शीतपाक्योदनपाकी तालखर्जूरमस्तकमिक्षुरिक्षुवालिका दर्भः कुशः काशः शालिर्गुन्द्रेत्कटकः शरमूलं राजक्षवकः ऋष्यप्रोक्ता द्वारदा भारद्वाजी वनत्रपुष्यभीरुपत्री हंसपादी काकनासिका कुलिङ्गाक्षी क्षीरवल्ली कपोलवल्ली कपोतवल्ली सोमवल्ली गोपवल्ली मधुवल्ली चेति; एषामेवंविधानामन्येषां च मधुरवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समावाप्य पयसाऽर्धोदकेनाभ्यासिच्य साधयेद्दर्व्या सततमवघट्टयन्; तदुपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु पयसि चानुपदग्धे स्थालीमुपहृत्य सुपरिपूतं पयः सुखोष्णं घृततैलवसामज्जलवणफाणितोपहितं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात्; शीतं तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिवद्दद्यात्। इति मधुरस्कन्धः ॥ १३९ ॥

वीरा जालन्धरं शाकम्। अस(श)नपर्णी अपराजिता। मधुपर्णी विकङ्कतम्। छत्रा कोकिलाक्षः। अतिच्छत्रा अरुणकोकिलाक्षः। महाश्रावणी अलम्बुषा। शुक्ला शर्करा। क्षीरशुक्ला बृहच्छृङ्गाटिका। क्षुद्रसहा कुमारी। ऋष्यगन्धा ऋष्यजाङ्गलकः, वलाभेदो वा। मोरटः मूर्वा। संहर्षा वन्दाकः। मधुकपर्णी मधुकभेदः। मधूलिका मर्कटहस्ततृणम्। राजादनं 'वेर्कुलि'कीति ख्यातम्। कशेरुः चिश्चोडकः। राजकशेरुः कशेरुभेदः। शीतपाकी शीतला। ओदनपाकी नीलझिण्टी। ऋष्यप्रोक्ता वलाभेदः। द्वारदा शाकतरुः। भारद्वाजी वनकार्पासी। वनत्रपुषी बृहत्फला गोडुम्वा। अभीरुपत्री शतावरीभेदः। कुलिङ्गाक्षी पेटिका, कुलिङ्गापाठपक्षे उच्चटा। क्षीरवल्ली क्षीरलता। कपोलवल्ली 'कवडवेण्डुआ' इति ख्याता। कपोतवल्ली सूक्ष्मैला। सोमवल्ली सोमलता। गोपवल्ली अनन्तमूलम्। मधुवल्ली यष्टीमधुभेदः ॥ १३९ ॥

आम्राम्रातकलकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलवदरदाडिममातुलुङ्गगण्डीरामलकनन्दीतकशीतकतिन्तिडीकदन्तशठैरावतककोशाम्रधन्वनानां फलानि, पत्राणि चाम्रातकाश्मन्तकचाङ्गेरीणां चतुर्विधानां चाम्लिकानां द्वयोश्च कोलयोश्चामशुष्कयोर्द्वयोश्चैव शुष्काम्लिकयोर्ग्राम्यारण्ययोः, आसवद्रव्याणि च सुरासौवीरकतुषोदकमैरेयमेदकमदिरामधुशुक्तशीधुदधिदधिमण्डोदश्विद्धान्याम्लादीनि च, एषामेवंविधानामन्येषां चाम्लवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा द्रवैः स्थाल्यामभ्यासिच्य साधयित्वोपसंस्कृत्य यथावत्तैलवसामज्जलवणफाणितोपहितं सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात्। इत्यम्लस्कन्धः ॥ १४० ॥

अम्लस्कन्धे नन्दीतकः कर्परनन्दी, शीतकः अम्ललोटः, ऐरावतः नागरङ्गम्। अम्लिका कन्दप्रधाना कामरूपे प्रसिद्धा अम्लिकाभेद एवेत्याहुः। द्रवैः स्थिराणीति द्रवमज्जनात् स्थिरीभूतानीत्यर्थः (?) ॥ १४० ॥

सैन्धवसौवर्चलकालविडपाक्यानूपकूप्यवालुकैलमौलकसामुद्ररोमकौद्भिदौषरपाटेयकपांशुजान्येवंप्रकाराणि चान्यानि लवणवर्गपरिसंख्यातानि, एतान्यम्लोपहितान्युष्णोदकोपहितानि वा स्नेहवन्ति सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात्। इति लवणस्कन्धः ॥ १४१ ॥

कूप्यादयो लवणभेदा देशान्तरप्रसिद्धाः; तेन देशान्तरीयेभ्यो ज्ञेयाः। रोमकं रूमानदीभवम् ॥ १४१ ॥

पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचव्यचित्रकशृङ्गवेरमरिचाजमोदार्द्रकविडङ्गकुस्तुम्बुरुपीलुतेजोवत्येलाकुष्ठभल्लातकास्थिहिङ्गुनिर्यासकिलिममूलकसर्षपलशुनकरञ्जशिग्रुकमधुशिग्रुकखरपुष्पभूस्तृणसुमुखसुरसकुठेरकार्जकगण्डीरकालमालकपर्णासक्षवकफणिज्झकक्षारमूत्रपित्तानीति; एषामेवंविधानां चान्येषां कटुकवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा गोमूत्रेण सह साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात्। इति कटुकस्कन्धः ॥ १४२ ॥

तेजस्विनी तेजोवती। किलिमं देवदारु ॥ १४२ ॥

चन्दननलदकृतमालनक्तमालनिम्वतुम्वुरुकुटजहरिद्रादारुहरिद्रामुस्तमूर्वाकिराततिक्तककटुकरोहिणीत्रायमाणाकारवेल्लिकाकरीरकरवीरकेवुककठिल्लकवृषमण्डूकपर्णीकर्कोटकवार्ताकुकर्कशकाकमाचीकाकोदुम्वरिकासुषव्यतिविषापटोलकुलकपाठागुडूचीवेत्राग्रवेतसविकङ्कतवकुलसोमवल्कसप्तपर्णसुमनार्कावल्गुजवचातगरागुरुवालकोशीराणीति, एषामेवंविधानां चान्येषां तिक्तवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेद-

१ 'परिस्रुतं पूतं' इति पा०। २ 'इन्द्रा' इति पा०। ३ 'त्रिवृत्' इति पा०। ४ 'वल्गुलीतिख्याता' इति पा०।

१ 'देशान्तरीयात्तदर्था ज्ञातव्याः' इति पा०। २ '°वरा°' इति पा०।

यित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात्, शीतं तु मधुसर्पिर्भ्यामपसंसृज्य पित्तविकारिणे विधिज्ञो विधिवद्दद्यात्। इति तिक्तस्कन्धः ॥ १४३ ॥

तिक्तवर्गे कर्कशः पटोलभेदः ॥ १४३ ॥

प्रियङ्ग्वनन्ताम्रास्थ्यम्बष्ठकीकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशरजम्ब्वाम्रप्लक्षवटकपीतनोदुम्बराश्वत्थभल्लातकाश्मन्तकशिरीषशिंशपासोमवल्कतिन्दुकप्रियालबदरखदिरसप्तपर्णाश्वकर्णस्यन्दनार्जुनारिमेदैलवालुकपरिपेलवकदम्बशल्लकीजिङ्गिनीकाशकशेरुकराजकशेरुकट्फलवंशपद्मकाशोकशालधवसर्जभूर्जशणखरपुष्पापुरशमीमाचीकवरकतुङ्गाजकर्णस्फूर्जकविभीतककुम्भीपुष्करबीजबिसमृणालतालखर्जूरतरुणानीति[1], एषामेवंविधानां चान्येषां कषायवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यात्, शीतं तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे दद्यात्। इति कषायस्कन्धः ॥ १४४ ॥

कषायवर्गे अश्वकर्णः प्रियालशालः, परिपेलवं कैवर्तमुस्तकं, जिङ्गिनी स्वनामख्याता, माचीकः देवदारुः, अजकर्णः शालभेदः, कुम्भी 'कुम्भीक' इति ख्याता, किंवा हठः, मृणालं मृणालनालिका, तालखर्जूरतरुणानीति तालखर्जूराङ्कुरा इत्यर्थः। अत्र च स्कन्धेषु यद्द्रव्यं स्कन्धद्वये पठ्यते तदुभयगुणयुक्तत्वेनोभयत्रापि योगीति ज्ञेयम् ॥ १४४ ॥

तत्र श्लोकाः—

षड्वर्गाः परिसंख्याता य एते रसभेदतः।
आस्थापनमभिप्रेत्य तान्विद्यात्सार्वयौगिकान् १४५
सर्वशो हि प्रणिहिताः सर्वरोगेषु जानता।
सर्वान्रोगान्नियच्छन्ति येभ्य आस्थापनं हितम् १४६

सार्वयौगिकानिति सर्वेष्वास्थापनसाध्येषु रोगेषु वातव्याधिज्वरगुल्मादिषु यथोक्तदोषसंबन्धे सति यौगिकानित्यर्थः। एतदेव विवृणोति—सर्वशो हीत्यादि। सर्वश इति समस्तवर्गेण अर्धवर्गेण यथालाभं वा ॥ १४५ ॥ १४६ ॥

येषां येषां प्रशान्त्यर्थं ये ये न परिकीर्तिताः।
द्रव्यवर्गा विकाराणां तेषां ते परिकोपकाः ॥१४७॥
इत्येते षडास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्याताः ॥१४८॥

इदानीं सर्ववर्गाणां सर्वेष्वास्थापनसाध्यरोगेषु यौगिकत्वं यदुक्तं तत्र पित्तज्वरे कटुवर्गेणास्थापनं पित्तकरत्वाज्ज्वरवर्धकं भवति, तेन न दोषविशेषेण सर्वगणानां यौगिकत्वमेतदुक्तं, किंतु सामान्येन सर्वास्थापनसाध्यरोगहितत्वं, दोषविशेषेषु तु तत्र तत्राननुगुणवर्गस्य प्रकोपकस्य निषेध एवेति दर्शयन्नाह—येषामित्यादि। येषां येषामिति वातादिविकाराणामुक्तानामिह। तत्र मधुरस्कन्धः कफप्रशान्त्यर्थमनुक्तः, तेन कफवर्धकः; एवमम्लादिवर्गेष्वपि ज्ञेयम्। किंवा सार्वयौगिकानित्यनेनोक्तानां वर्गाणां समासव्यासयोगेन सकलास्थापनसाध्यरोगहरत्वमुच्यते, न प्रत्येकं; प्रत्येकं तु वर्गाणां साध्यत्वेनानुक्तरोगाहन्तृत्वमुच्यते येषामित्यादिना ॥ १४७ ॥ १४८ ॥

तेभ्यो भिषग्बुद्धिमान् परिसंख्यातमपि यद्यद्द्रव्यमयौगिकं मन्येत, तत्तदपकर्षयेत्; यद्यच्चानुक्तमपि यौगिकं मन्येत, तत्तद्विदध्यात्; वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्तिं प्रमाणीकृत्य। प्रचरणमिव भिक्षुकस्य बीजमिव कर्षकस्य सूत्रं बुद्धिमतामल्पमप्यनल्पज्ञानाय भवति; तस्माद्बुद्धिमतामूहापोहवितर्काः, मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः। यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति कार्यमनतिमहत्त्वाद्वा विनिपातयत्यनतिह्रस्वत्वादुदाहरणस्येति[1] ॥ १४९ ॥

संप्रत्युक्तवर्गेषु व्याध्यादिपर्यालोचनया यौगिकत्वमपेक्ष्य यौगिकप्रक्षेपमयौगिकोद्धरणं च दर्शयन्नाह—तेभ्य इत्यादि। बुद्धिमानितिपदेन बुद्धिमतैव प्रक्षेपोद्धारौ गणे कर्तव्यौ, नाल्पबुद्धिनोहापोहकरणासमर्थेनेति दर्शयति। एकं वर्गमेकेन वर्गेणोपसृजेदनेकेन वा वर्गेणेति योज्यम्। युक्तिं प्रमाणीकृत्येति इदमत्र यौगिकमिदमयौगिकमिति ऊहं प्रमाणीकृत्येत्यर्थः। प्रचरणं भिक्षामूलं तण्डुलादि पात्रस्थम्। ननु मन्दबुद्धेः कथं यथोक्तानुगमनं? यथोक्तमयौगिकमूहेन[2] बुद्धिमन्तः प्रतिपद्यन्ते तत्रैव तन्मन्दधीः प्रयुञ्जानो न कथमनर्थमावहेदित्याह—यथोक्तं हीत्यादि। अनतिमहत्त्वाद्वा विनिपातयतीत्यनेन मन्दबुद्धेर्यथोक्तमाचरत ऊहं विना न महती व्यापद्भवतीति दर्शयति। यतः शास्त्रे हि यो विधिर्यथोक्तः, स प्रायो यौगिक एव भवति तत्र; यत्रापि शरीरादिभेदेनायौगिकः, तत्रापि स्तोकमात्रेण यौगिक इत्यर्थः। अनतिह्रस्वत्वादुदाहरणस्येति शास्त्रे उदाहरणत्वेनोक्तस्य विधेरनतिसङ्क्षेपादित्यर्थः। एतेन यदि स्तोकं रोगसाधनोदाहरणं स्यात्, ऊह्यमेव बहु, तदा मन्दबुद्धिः साक्षादुदाहरणविषयाज्ञानात्[3] तथा स्वयमुहाक्षमत्वाच्च न रोगशान्तिलक्षणं कार्यं कर्तुं क्षमः स्यात्; यतस्तूदाहरणानि बहूनि, तेन तैरेवोदाहरणात्मकप्रयोगैस्तत्साध्यत्वेनोक्तव्याधीन्[4] साधयतीति युक्तम्। इमौ चावापोद्धारौ गणोक्त एव द्रव्ये प्रायौ ज्ञेयौ। यदुक्तं सुश्रुते—"गणोक्तमपि यद्द्रव्यं भवेद्व्याधावयौगिकम्। तदु-

---

१ '°तरुण्यः' इति पा०।

१ 'कार्यम्, अनतिमहत्त्वादनतिह्रस्वत्वाच्चोदाहरणस्य' इति पा०। २ 'यथोक्तं यौगिकं' इति पा०। ३ 'साक्षादुदाहृतविषयाज्ञानात्' इति पा०। ४ 'उदाहरणार्थप्रयोगैः' इति पा०।

द्धरेत्, प्रक्षिपेत्तु यन्मन्येद्यौगिकं तु तत्" (सु. चि.अ. १)इति। ये तु संयोगमहिम्ना कार्यकरा अगस्त्यहरीतक्यादयः, न तेष्वावापोद्धारौ कर्तव्यौ। एनमेव चार्थमभिप्रेत्योक्तं सुश्रुते—"एष चागमसिद्धत्वात्तथैव फलदर्शनात्। मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथंचन" ( सु. चि. अ. १ ) इति ॥ १४९ ॥

अतः परमनुवासनद्रव्याण्यनुव्याख्यास्यामः। अनुवासनं तु स्नेह एव। स्नेहस्तु द्विविधः—स्थावरात्मकः, जङ्गमात्मकश्च। तत्र स्थावरात्मकः स्नेहस्तैलमतैलं च। तद्द्वयं तैलमेव कृत्वोपदेक्ष्यामः, सर्वतस्तैलप्राधान्यात्। जङ्गमात्मकस्तु वसा, मज्जा, सर्पिरिति। तेषां तैलवसामज्जसर्पिषां यथापूर्वं श्रेष्ठं वातश्लेष्मविकारेष्वनुवासनीयेषु, यथोत्तरं तु पित्तविकारेषु, सर्वे एव वा सर्वविकारेष्वपि योगमुपयान्ति संस्कारविधिविशेषादिति ॥ १५० ॥

क्रमप्राप्तमनुवासनद्रव्यमाह—अतः परमित्यादि। अत्र तैलमिति तैलभूतं सर्षपस्नेहादि। तैलप्राधान्यादिति स्थावरस्नेहेषु तिलैतैलस्यैव प्राधान्यादित्यर्थः। एतेन तैले यो विधिः स सार्षपादौ बोद्धव्यः, तैलशब्देन तु सार्षपादीनामिह ग्रहणं तिलभवस्नेहस्य प्राधान्यप्रख्यापनार्थं; तैलशब्देन सार्षपादीनां ग्रहणं भवत्येव। यदुक्तं सुश्रुते—"निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" ( सु. सू. अ. ४५ ) इति ॥ १५० ॥

शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिचविडङ्गशिग्रुशिरीषतुम्बुरुपिल्वजाज्यजमोदावार्ताकीपृथ्वीकैलाहरेणुकाफलानि च, सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलशुनतर्कारीसर्षपपत्राणि च, अर्कालर्ककुष्ठनागदन्तीवचापामार्गश्वेताज्योतिष्मतीगवाक्षीगण्डीरपुष्पवाकुपुष्पीवृश्चिकालीवयस्थातिविषामूलानि च, हरिद्राशृङ्गवेरमूलकलशुनकन्दाश्च, लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च, देवदार्वगुरुसरलशल्लकीजिङ्गिन्यसनहिङ्गुनिर्यासाश्च, तेजोवतीवराङ्गेङ्गुदीशोभाञ्जनकबृहतीकण्टकारिकात्वचश्चेति। शिरोविरेचनं सप्तविधं, फल-पत्र-मूल-कन्द-पुष्प-निर्यास-त्वगाश्रयभेदात्। लवणकटुतिक्तकषायाणि चेन्द्रियोपशयानि तथाऽपराण्यनुक्तान्यपि द्रव्याणि यथायोगविहितानि शिरोविरेचनार्थमुपदिश्यन्त इति ॥ १५१ ॥

पारिशेष्याच्छिरोविरेचनान्याह—शिरोविरेचनेत्यादि। फलानि चेति चकारेण तस्मादुक्तद्रव्यादङ्गान्तरोपयोगं च दर्शयति। तेन शिग्रोर्वक्ष्यमाणत्वगुपयोगश्च भवति, एवमन्यत्राप्युदाहार्यम्। सुमुखादयः पर्णासभेदाः, तर्कारी जयन्ती। गण्डीरपुष्पी शमठः, वयस्था ब्राह्मी। वराङ्गं गुडत्वक्। इन्द्रियोपशयानीत्यनेन यानि लवणादीनि इन्द्रियाणुपघातकानि तान्येव शिरोविरेचने योज्यानि; तथाऽपराणीति मधुराम्लकषायाण्यपि यानि शिरोविरेचने यौगिकानि ॥ १५१ ॥

तत्र श्लोकाः—

लक्षणाचार्यशिष्याणां परीक्षा कारणं च यत्।
अध्येयाध्यापनविधी संभाषाविधिरेव च ॥ १५२ ॥
षड्भिरूनानि पञ्चाशद्वादमार्गपदानि च।
पदानि दश चान्यानि कारणादीनि तत्त्वतः ॥ १५३ ॥
संप्रश्नश्च परीक्षादेर्नवको वमनादिषु।
भिषग्जितीये रोगाणां विमाने संप्रकाशितः ॥ १५४ ॥

संग्रहे लक्षणाचार्यशिष्याणामिति शास्त्राचार्यशिष्याणां परीक्षा, लक्षणं हि शास्त्रमुच्यते। कारणं च यदिति शास्त्रादिपरीक्षाकारणं च यदित्यर्थः, 'एवंभूतं शास्त्रममल इवादित्यः' इत्यादिशास्त्रपरीक्षाकारणम्। आचार्यपरीक्षाकारणं तु 'एवंविधो ह्याचार्यः' इत्यादि। शिष्यपरीक्षाकारणं तु 'अध्याप्यमध्यापयन् ह्याचार्यः' इत्यादि। अध्येयम् अध्येतव्यं, तस्य विधिरध्ययनविधिरेव ॥ १५२-२५४ ॥

बहुविधमिदमुक्तमर्थजातं
बहुविधवाक्यविचित्रमर्थकान्तम्।
बहुविधशुभशब्दसन्धियुक्तं
बहुविधवादनिसूदनं परेषाम् ॥ १५५ ॥
इमां मतिं बहुविधहेतुसंश्रयां
विजज्ञिवान् परमतवादसूदनीम्।
न सज्जते परवचनावमर्दनैर्न
शक्यते परवचनैश्च मर्दितुम् ॥ १५६ ॥
दोषादीनां तु भावानां सर्वेषामेव हेतुमत्।
मानात् सम्यग्विमानानि निरुक्तानि विभागशः ॥ १५७
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने
रोगभिषग्जितीयविमानं नामाष्टमोऽध्यायः ॥
(अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
अनेनावधिना स्थानं विमानानां समर्थितम्।)

इदमुक्तमर्थजातमिति लक्षणाचार्यशिष्यपरीक्षादिरूपमभिधेयजातमुक्तम्। अर्थकान्तमिति यथा संवद्धार्थवादिना गुणेन कमनीयार्थं भवति तथोक्तमित्यर्थः। शब्दस्य वाक्ये योजनं शब्दसन्धिः। दोषादीनामित्यादिना विमानस्थानार्थसंग्रहं करोति। हेतुमदिति उपपत्तिमद्यथा भवति तथा दोषादिमानादित्यर्थः। निरुक्तानीति निरुक्त्योक्तानि। निरुक्तिश्च दोषादयो विशेषेण मीयन्ते ज्ञायन्ते एभिरिति विमानानि ॥ १५५-१५७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां विमानस्थाने रोगभिषग्जितीयविमानं नामाष्टमोऽध्यायः ॥ ८ ॥

१ 'तिलानुभूतं' इति पा०। २ 'तिलप्रभवस्यैव' इति पा०। ३ 'प्राधान्यप्रत्ययार्थं' इति पा०।

१ 'निलीयते परवचनावमर्दने' इति पा०।

विमानस्थानव्याख्या समाप्ता।

## प्रथमोऽध्यायः ।

अथातः कतिधापुरुषीयं शारीरं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

निदानस्थाने ज्ञातहेत्वादिना तथा विमाने प्रतीतरसदोषादिमानेन कर्तव्यचिकित्साया अधिकरणं शरीरं ज्ञातव्यं भवति; यतोऽप्रतिपन्नेऽशेषविशेषतः शरीरे न शरीरविज्ञानाधीना चिकित्सा साध्वी भवति; अतः शरीरं कारणोत्पत्तिस्थितिवृद्ध्यादिविशेषैः प्रतिपादयितुं शारीरं स्थानमुच्यते। अत्रापि चात्यन्तदुःखोपरममोक्षकारणचिकित्सोपयुक्तपुरुषभेदादिप्रतिपादकतया प्रधानत्वेन कतिधापुरुषीयोऽध्यायोऽभिधीयते ॥१॥२॥

कतिधा पुरुषो धीमन्! धातुभेदेन भिद्यते ।
पुरुषः कारणं कस्मात्, प्रभवः पुरुषस्य कः ॥ ३ ॥
किमज्ञो ज्ञः, स नित्यः किं किमनित्यो निदर्शितः ।
प्रकृतिः का, विकाराः के, किं लिङ्गं पुरुषस्य च ॥४॥
निष्क्रियं च स्वतन्त्रं च वशिनं सर्वगं विभुम् ।
वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा ॥ ५ ॥
निष्क्रियस्य क्रिया तस्य भगवन्! विद्यते कथम् ।
स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते ॥ ६ ॥
वशी यद्यसुखैः कस्माद्भावैराक्रम्यते बलात् ।
सर्वाः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः ॥ ७ ॥
न पश्यति विभुः कस्माच्छैलकुड्यतिरस्कृतम् ।
क्षेत्रज्ञः क्षेत्रमथवा किं पूर्वमिति संशयः ॥ ८ ॥
ज्ञेयं क्षेत्रं विना पूर्वं क्षेत्रज्ञो हि न युज्यते ।
क्षेत्रं च यदि पूर्वं स्यात् क्षेत्रज्ञः स्यादशाश्वतः ॥ ९ ॥
साक्षिभूतश्च कस्यायं कर्ता ह्यन्यो न विद्यते ।
स्यात् कथं चाविकारस्य विशेषो वेदनाकृतः ॥ १० ॥
अथ चार्तस्य भगवंस्तिसृणां कां चिकित्सति ।
अतीतां वेदनां वैद्यो वर्तमानां भविष्यतीम् ॥ ११ ॥
भविष्यन्त्या असंप्राप्तिरतीताया अनागमः ।
सांप्रतिक्या अपि स्थानं नास्त्यर्तेः संशयो ह्यतः॥१२॥
कारणं वेदनानां किं, किमधिष्ठानमुच्यते ।
क्व चैता वेदनाः सर्वा निवृत्तिं यान्त्यशेषतः ॥ १३ ॥
सर्ववित् सर्वसंन्यासी सर्वसंयोगनिःसृतः ।
एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते ॥ १४ ॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः ।
सर्वं यथावत् प्रोवाच प्रशान्तात्मा पुनर्वसुः ॥ १५ ॥

१ 'वचस्तदग्निवेशस्य' इति पा० ।

कतिधेति कतिप्रकारः। पुरुष इत्यनेन चाविशेषेण पुरुषशब्दाभिधेयोऽर्थोऽभिधीयते; यतः 'खादयश्चेतनाषष्ठा' इत्यादिना, तथा चतुर्विंशतिकभेदभिन्नश्च कर्मपुरुष एव शरीरी वाच्यः, तथा 'चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः' इत्यनेनात्मैव शरीररहितः पुरुषशब्दार्थत्वेन वाच्यः । पुरुषधारणाद्धातुः; तेन धातुभेदेनेति पुरुषधारणार्थभेदेन। धीमन्निति विशेषणेन य एव धीमान् स एव पुरुषभेदादिकमिमं वक्ष्यमाणं सुसूक्ष्मं वक्तुं समर्थ इति दर्शयति। पुरुषः कारणं कस्मादिति कस्माद्धेतोः पुरुषः संसारे प्रधानं स्थायिकारणमित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम्। योनिष्विति जातिषु। सर्वा इति परपुरुषगता अपि। क्षेत्रज्ञः आत्मा। क्षेत्रम् अव्यक्तवर्जितं सर्वं वक्ष्यमाणम्। ज्ञेयमित्यादि । असति क्षेत्रे क्षेत्रज्ञानाभावाच्च क्षेत्रज्ञत्वमुपपद्यते इति भावः। साक्षिभूत इति साक्षिसदृशः। विशेषो वेदनाकृत इति पुत्रादिज्ञानरूपवेदनाजनितो हर्षादिविशेष इत्यर्थः। तिसृणामिति अतीतानागतवर्तमानानां दुःखरूपाणां मध्ये कां चिकित्सति। अतीतामित्यादौ किंशब्दोऽध्याहार्यः; तेन किमतीतां चिकित्सति, किं वर्तमानां, किंवा भविष्यतीमिति योज्यम्। स्थानं नास्तीति क्षणिकत्वेन चिकित्सायाः प्रवृत्तियोग्यकालावस्थानं नास्ति। वेदनानां कारणमधिष्ठानं च यद्यपि दीर्घञ्जीवितीयेऽप्युक्तं, तथाऽपीह प्रकरणवशाद्विशेषप्रतीत्याकाङ्क्षया च विशिष्टैः पुनः प्रश्नाः। प्रश्नार्थाश्चामी उत्तरग्रन्थे आचार्येण प्रपञ्चनीया इति नेह व्याकरणीयाः ॥ ३—१५ ॥

खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः ।
चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः ॥ १६ ॥

खादय इत्यादि। खादयः "खं वायुरग्निरापः क्षितिस्तथा" इति वक्ष्यमाणाः; चेतनाषष्ठा इत्यत्र चेतनाशब्देन चेतनाधारः समनस्क आत्मा गृह्यते; खादिग्रहणेन चेन्द्रियाणि खादिमयान्यवरुद्धानि । अयं च वैशेषिकदर्शनपरिगृहीतश्चिकित्साशास्त्रविषयः पुरुषः; अयमेव "पञ्चमहाभूतशरीरिसमवायः पुरुषः" (सु. सू. अ. १) इत्यनेन सुश्रुतेनाप्युक्तः। स्मृत इति भाषया पूर्वाचार्याणामप्ययं पुरुषशब्दवाच्योऽभिप्रेतो नासत्कल्पित इति दर्शयति। पुरि शरीरे शेते इति व्युत्पत्त्या य आत्मा पुरुषशब्देनोच्यते तमाह—चेतनेत्यादि। अत्र पुरुष इति कर्तव्ये यत् 'पुरुषसंज्ञक' इति करोति तेन न चेतनाधातुरूपः पुरुषश्चिकित्सायामभिप्रेतः, किंतु शास्त्रान्तरव्यवहारानुरोधादिहाप्ययं

१ 'सर्वपुरुषगता अपि' इति पा० । २ 'इत्यर्थः' इति पा० । ३ 'शिष्यस्य' इति पा० । ४ 'तत्रैव' इति पा० । ५ 'खादयश्चेतनाधातुषष्ठास्तु' इति पा० । ६ 'वक्तव्ये' इति पा० ।

पुरुषशब्देन संज्ञित इति दर्शयति; चिकित्साविषयस्तु षड्धातुक एव पुरुषः, अत एव तत्र संज्ञितग्रहणं न कृतम्। अयं च पुरुषशब्दो गवादावपि षड्धातुसमुदाये यद्यपि वर्तते, तथाऽपि सर्वप्रधाने नर एव विशेषेण वर्तते; तेन नातिप्रसिद्धो गवादौ पुरुषशब्दः ॥ १६ ॥

**पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः।**
**मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ॥ १७ ॥**

षड्धातुरूपमेव पुरुषं पुनः सांख्यदर्शनभेदाच्चतुर्विंशतिकभेदेनाह—पुनश्चेत्यादि । चतुर्विंशतिकमेव विभजते—मन इत्यादि। यद्यपि पञ्चविंशतितत्त्वमयोऽयं पुरुषः सांख्यैरुच्यते, यदाह—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" (सां. का. ३) इति, तथाऽपीह प्रकृतिव्यतिरिक्तं चोदासीनं पुरुषमव्यक्तत्वसाधर्म्यादव्यक्तायां प्रकृतावेव प्रक्षिप्य अव्यक्तशब्देनैव गृह्णाति; तेन 'चतुर्विंशतिकः पुरुषः' इत्यविरुद्धम्। उदासीनस्य हि सूक्ष्मस्य भेदप्रतिपादनमिहानतिप्रयोजनमिति न कृतम्। दशेन्द्रियाणीति पञ्च कर्मेन्द्रियाणि, पञ्च बुद्धीन्द्रियाणि च। अष्टधातुकीति खादिपञ्चकबुद्ध्यव्यक्ताहङ्काररूपा; वक्ष्यति हि—"खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाऽष्टमः" इति ॥ १७ ॥

**लक्षणं मनसो ज्ञानस्याभावो भाव एव च।**
**सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्तते ॥ १८ ॥**
**वैवृत्त्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्तते।**
**अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ ॥ १९ ॥**

अत्र चतुर्विंशतिके प्रथमोद्दिष्टं मनो लक्षयितुमाह—लक्षणमित्यादि । यथा ज्ञानस्याभावो ज्ञानस्य भावश्च मनोगमको भवति तदाह—सतीत्यादि। वैवृत्त्यान्मनस इति इन्द्रियेणासंयोगात्, सान्निध्यादिति इन्द्रियेण मनसः संबन्धात् । एवं[१] मन्यते—यदा युगपदिन्द्रियार्था इन्द्रियैः संयुज्यन्ते तदा क्वचिदिन्द्रियार्थे ज्ञानं भवति क्वचिन्न भवतीति दृष्टं, तेनेमौ ज्ञानभावाभावौ ज्ञानकारणान्तरं[२] दर्शयतः; यच्च तत् कारणान्तरं तन्मनः। तच्च कारणं मनोरूपं यद्यात्मवद्युगपत् सर्वेन्द्रियव्यापकं स्वीक्रियते किंवा अनेकसंख्यमिन्द्रियवत् स्वीक्रियते, तदा पुनरपि युगपदिन्द्रियार्थसंबन्धे पञ्चभिर्ज्ञानैर्भवितव्यं विभुना वा मनसा, अनेकैर्वा मनोभिर्युगपदधिष्ठितत्वादिन्द्रियाणां; न च भवन्ति युगपज्ज्ञानानि, तस्माद्युगपज्ज्ञानानुदयाल्लिङ्गान्मनोऽणुरूपमेकं च सिध्यतीत्याह—अणुत्वमित्यादि ॥ १८ ॥ १९ ॥

**चिन्त्यं विचार्यमूह्यं च ध्येयं संकल्प्यमेव च।**
**यत्किंचिन्मनसो ज्ञेयं तत् सर्वं ह्यर्थसंज्ञकम् ॥ २० ॥**

१ 'एवं मन्यते' इति हस्तलिखितपुस्तके न पठ्यते। २ 'ज्ञानकारणान्तरभावाभावं' इति पा०।

**इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः।**
**ऊहो विचारश्च, ततः परं बुद्धिः प्रवर्तते ॥ २१ ॥**

मनोगुणमभिधाय मनोविषयमाह—चिन्त्यमित्यादि । चिन्त्यं कर्तव्यतया अकर्तव्यतया वा यन्मनसा चिन्त्यते। विचार्यम् उपपत्त्यनुपपत्तिभ्यां यद्विमृश्यते। ऊह्यं च यत् संभावनया ऊह्यते 'एवमेतद्भविष्यति'[१] इति। ध्येयं भावनाज्ञानविषयम्। संकल्प्यं गुणवत्तया दोषवत्तया वाऽवधारणाविषयम्। यत् किंचिदित्यनेन सुखाद्यनुक्तविषयावरोधः। मनसो ज्ञेयमिति इन्द्रियनिरपेक्षमनोग्राह्यम्। एते च मनोऽर्थाः शब्दादिरूपा एव; तेन षष्ठार्थकल्पनया न चतुर्विंशतिसंख्यातिरेकः। सुखादयस्तु शब्दादिव्यतिरिक्ता मनोऽर्था बुद्धिभेदग्रहणेनैव ग्राह्याः। मनोविषयमभिधाय मनःकर्माह—इन्द्रियेत्यादि । इन्द्रियाभिग्रहः इन्द्रियाधिष्ठानं मनसः कर्म, तथा स्वस्य निग्रहो मनसः कर्म; मनो ह्यनिष्टविषयप्रसृतं मनसैव नियम्यते, "मनश्च गुणान्तरयुक्तं सद्विपयान्तरान्नियमयति" इत्याहुरेके । यदुक्तम्—"विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते। नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका" इति। तेन, धृत्या कारणभूतया(मन[२]) आत्मानं नियमयतीति न स्वात्मनि क्रियाविरोधः। मनःकर्मान्तरमाह–ऊहो विचारश्चेति।–अत्रोह आलोचन(ना)ज्ञानं निर्विकल्प(क)म्, विचारो हेयोपादेयतया विकल्पनम्। चतुर्विधं हि विकल्पकारणं सांख्या मन्यन्ते; तत्र बाह्यमिन्द्रियरूपम्, आभ्यन्तरं तु मनोऽहङ्कारो बुद्धिश्चेति त्रितयम् । तत्रेन्द्रियाण्यालोचयन्ति निर्विकल्पेन गृह्णन्तीत्यर्थः, मनस्तु संकल्पयति हेयोपादेयतया कल्पयतीत्यर्थः, अहङ्कारोऽभिमन्यते 'ममेदमहमत्राधिकृतः' इति मन्यत इत्यर्थः, बुद्धिरध्यवस्यति 'त्यजाम्येनं दोषवन्तमुपाददाम्येनं गुणवन्तम्'इत्यध्यवसायं करोतीत्यर्थः। ऊहस्तु यद्यपि बाह्यचक्षुरादिकर्म, तथाऽपि तत्रापि मनोऽधिष्ठानमस्तीति मनःकर्मतयोक्तः। वचनं हि "सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मात्त्रिविधं करणं द्वारि, द्वाराणि शेषाणि" ( सां. का. ३५ ) इति[३]। ततः परं बुद्धिः प्रवर्तत इति ऊहविचारानन्तरं बुद्धिरध्यवसायं करोतीत्यर्थः। अहङ्कारव्यापारश्चाभिमननमिहानुक्तोऽपि बुद्धिव्यापारेणैव सूचितो ज्ञेयः । बुद्धिर्हि त्यजाम्येनमुपाददामीति वाऽध्यवसायं कुर्वती अहङ्काराभिमत एव विषये भवति; तेन बुद्धिव्यापारेणैवाहङ्कारव्यापारोऽपि गृह्यते। बुद्धौ हि सर्वकरणव्यापारार्पणं भवति। यदुक्तम्–"एते

१ 'एवमेतद्भवति' इति पा०। २ 'मनः' इति हस्तलिखितपुस्तके न पठ्यते। ३ "सांप्रतं त्रयोदशसु करणेषु केषाञ्चिद्गुणभावं केषाञ्चित् प्रधानभावं सहेतुकमाह—सान्तःकरणेत्यादि। द्वारि प्रधानम्। शेषाणि करणानि बाह्येन्द्रियाणि, द्वाराणि गौणानि; तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति, तस्माद्बाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिः" इति वाचस्पतिमिश्रेण तत्त्वकौमुद्यां व्याख्यातेयं कारिका।

प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" ( सां. का. ३६ ) ॥ २० ॥ २१ ॥

**इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते।**
**कल्प्यते मनसा तूर्ध्वं गुणतो दोषतोऽथवा ॥ २२ ॥**
**जायते विषये तत्र या बुद्धिर्निश्चयात्मिका।**
**व्यवस्यति तया वक्तुं कर्तुं वा बुद्धिपूर्वकम् ॥ २३ ॥**

एतदेवोहविचारपूर्वकत्वं बुद्धेर्विवृणोति—इन्द्रियेणेत्यादि। गृह्यते इति ऊहमात्रेण निर्विकल्पेन गृह्यते। गुणत इति उपादेयतया। दोषत इति हेयतया। बुद्ध्यध्यवसायं विवृणोति—जायत इत्यादि। विषये तत्रेति मनसा कल्पिते विषये। निश्चयात्मिकेति स्थिरस्वरूपा अध्यवसायरूपेत्यर्थः। व्यवस्यतीति अनुष्ठानं करोति, उद्युक्तो भवतीत्यर्थः; बुद्ध्यध्यवसितमर्थं वक्तुं कर्तुं वाऽनुतिष्ठतीति यावत्। बुद्धिपूर्वकमित्यनेन यदेव बुद्धिपूर्वकमनुष्ठानं तदेवैवंविधं भवति नोन्मत्ताद्यनुष्ठानमिति दर्शयति ॥ २२ ॥ २३ ॥

**एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु।**
**पञ्च कर्मानुमेयानि येभ्यो बुद्धिः प्रवर्तते ॥ २४ ॥**

मनोऽभिधायेन्द्रियाण्यभिधत्ते, तत्रापि ज्यायस्त्वाद् बुद्धीन्द्रियाणि प्रागाह—एकैकेत्यादि। खादीनां मध्ये एकैकेनाधिकेन भूतेन युक्तानीन्द्रियाणि पञ्च चक्षुरादीनि; एकैकाधिकपदेन पञ्चापि पाञ्चभौतिकानि, परं चक्षुषि तेजोऽधिकमित्याद्युक्तं सूचयति। कर्मानुमेयानीति कार्यानुमेयानि; कार्यं चक्षुर्बुद्ध्यादि। येभ्यो बुद्धिः प्रवर्तत इति यानि बुद्धीन्द्रियाणि, तानीमानि पञ्चेति दर्शयति। यद्यपि च सांख्ये आहङ्कारिकाणीन्द्रियाणि, यदुक्तं—"सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्" ( सां. का. २५ ) इति, तथाऽपि मतभेदाद्भौतिकत्वमिन्द्रियाणां ज्ञेयं; किंवा, औपचारिकमेतद्भौतिकत्वमिन्द्रियाणां ज्ञेयम्; उपचारबीजं च यद्गुणभूयिष्ठं यदिन्द्रियं गृह्णाति, तत्तद्भूयिष्ठमित्युच्यते; चक्षुस्तेजो गृह्णाति, तेन तैजसमुच्यत इत्यादि ज्ञेयम् ॥ २४ ॥

**हस्तौ पादौ गुदोपस्थं वागिन्द्रियमथापि च।**
**कर्मेन्द्रियाणि पञ्चैव पादौ गमनकर्मणि ॥ २५ ॥**

१ 'न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अप्यहङ्कारमनसी द्वारिणी, ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—एत इत्यादि। यथाहि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां, तदिदमुक्तं—पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति, इति। बाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषा गुणानां सत्त्वरजस्तमसां विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः; यथा—वर्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपे, एवमेते गुणविशेषा इति योजना' इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रः। २ 'अनुतिष्ठतीत्यर्थः' इति पा०। ३ 'यद्गुणं भूतं' इति पा०। ४ 'हस्तपादं' इति पा०।

**पायूपस्थं विसर्गार्थं हस्तौ ग्रहणधारणे।**
**जिह्वा वागिन्द्रियं वाक् च सत्या ज्योतिस्तमोऽनृता ॥**

अथ कर्मेन्द्रियाण्याह—हस्तावित्यादि। हस्तावेकं पादौ चैकमिन्द्रियमेकरूपकर्मकर्तृतया। गुदोपस्थं चैकैकम्। वाच उपादानहानार्थं भेदमाह—वाक् चेत्यादि। ज्योतिरिव ज्योतिः, धर्मकर्तृत्वेनोभयलोकप्रकाशकारित्वात्; एतद्विपर्ययेण तमः अनृता ॥ २५ ॥ २६ ॥

**महाभूतानि खं वायुरग्निरापः क्षितिस्तथा।**
**शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ २७ ॥**

संप्रत्युद्देशक्रमानुरोधादर्थेऽभिधातव्येऽर्थानां प्रकृतिग्रहणगृहीतपञ्चभूतगुणतया पराधीनत्वादष्टधातुप्रकृतिगृहीतानि भूतान्येव तावदाह—महाभूतानीत्यादि। शब्दादयो यथासंख्यं खादीनां नैसर्गिका गुणा ज्ञेयाः। यस्तु गुणोत्कर्षोऽभिधातव्यः स हि अनुप्रविष्टभूतसंबन्धादेव। तेन पृथिव्यां चतुर्भूतप्रवेशात् पञ्चगुणत्वम्, एवं जलादावपि चतुर्गुणत्वादि ज्ञेयम् ॥ २७ ॥

**तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे।**
**पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः ॥ २८ ॥**

नैसर्गिकं गुणमभिधाय भूतान्तरप्रवेशकृतं गुणमाह—तेषामित्यादि। एकगुणः पूर्वं इति पूर्वो धातुः खरूपः शब्दैकगुणः। पुंलिङ्गता च खादीनां धातुरूपतामुद्दिश्यीकृतत्वात्; उक्तं हि—"खादयश्चेतनाषष्ठा धातवः" इति। यथा यथा च परत्वं तथा तथा च गुणवृद्धिर्यथासंख्यम्। ननु, एतावताऽप्येकगुणत्वद्विगुणत्वादि न नियमेन ज्ञायते को गुणः क भूते इत्याह—पूर्व इत्यादि।—गुणिषु खादिषु धातुषु पूर्वो गुणः क्रमेण यथासंख्यं वर्तते; न केवलं पूर्वः किंतु पूर्वस्यापि यो गुणः, स च पूर्वगुण उत्तरे भूते वर्तते। तेन खे पूर्वः पूर्वः शब्द(ब्दो)गुणो वर्तते; वायौ तु स्पर्शः क्रमप्राप्तः पूर्वो भवति, पूर्वगुणश्च शब्द इति द्विगुणत्वम्; एवमग्न्यादौ च ज्ञेयम्। गन्धस्तूत्तरगुणान्तराभावान्न पूर्वो भवति, तथाऽपि 'गन्धश्च तद्गुणाः' इति ग्रन्थे तद्गुणा इतिपदापेक्षया गन्धस्य पूर्वत्वं कल्पनीयं; किंवा, पूर्व इति छत्रिणो गच्छन्तीतिन्यायेनोक्तं, तेनापूर्वोऽपि गन्धः क्रमागतः पृथिव्यां ज्ञेयः ॥ २८ ॥

**खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्।**
**आकाशस्याप्रतीघातो दृष्टं लिङ्गं यथाक्रमम् ॥ २९ ॥**
**लक्षणं सर्वमेवैतत् स्पर्शनेन्द्रियगोचरम्।**
**स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्ययः ॥ ३० ॥**

भूतानामसाधारणं लक्षणमाह—खरेत्यादि। अप्रतीघातः अप्रतिहननमस्पर्शत्वमिति यावत्; स्पर्शवद्धि गतिविघातकं

१ '०प्रकाशकरत्वात्' इति पा०। २ 'तनित्यानुप्रविष्टभूतसंबन्धादेव' इति पा०। ३ 'तेषामेकगुणं पूर्वं' इति पा०। ४ 'पूर्वो गुणश्चैव' इति पा०। ५ '०बुद्धिस्थीकारात्' इति पा०। ६ '०द्विगुणत्वादिनियमो न ज्ञायते' इति पा०। ७ 'प्रथमे' इति पा०।

भवति नाकाशः, अस्पर्शवत्त्वात् । सर्वमेवैतदिति खरत्वादि । स्पर्शनेन्द्रियगोचरमिति स्पर्शनेन्द्रियज्ञेयम् । कथमेतत् सर्वं स्पर्शनेन्द्रियज्ञेयमित्याह—स्पर्शनेत्यादि । सविपर्ययं इति स्पर्शाभाव इत्यर्थः । यदिन्द्रियं यद्गृह्णाति, तत्तस्याभावमपि गृह्णाति; तेन, आकाशस्यास्पर्शत्वमपि स्पर्शनेन्द्रियग्राह्यमिति युक्तम् । द्रवत्वं चलत्वं च सांख्यमते स्पर्शनग्राह्यत्वात् स्थूलभूतवातधर्मः स्पर्श एव; यद्धि स्पर्शनेन गृह्यते, तत् सर्वं महाभूतवातपरिणाम एव । एतानि च खादीनि सूक्ष्माणि तन्मात्ररूपाणि ज्ञेयानि, स्थूलभूतानि तु खादीनि विकारतया तत्रोक्तानि । प्रकृतिवर्गे सूक्ष्मरूपास्तन्मात्रा उक्ताः । वचनं हि—"तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः । एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च" ( सां. का. ३८ ) इति; तेनेहापि खादीनि तन्मात्रशब्दोक्तानि सूक्ष्माणि बोद्धव्यानि ॥ २९ ॥ ३० ॥

**गुणाः शरीरे गुणिनां निर्दिष्टाश्चिह्नमेव च ।**

भूतानां सूक्ष्माणां शरीरस्थानां लिङ्गान्तराण्याह—गुणा इत्यादि । गुणाः शब्दादयः । गुणिनामिति सूक्ष्मरूपभूतानाम् । एवचग्रहणात् शब्दादयश्च व्यक्ताः सूक्ष्माणां शरीरस्थानां भूतानां लक्षणं भवन्तीति वाक्यार्थः ॥—

**अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः ॥ ३१ ॥**

अर्थानाह—अर्था इत्यादि । अर्थशब्देन तु ये शब्दादयोऽभिधीयन्ते ते स्थूलखादिरूपा एव ज्ञेयाः; येनाकाशपरिणाम एव शब्दः, वातपरिणामः स्पर्श इत्यादि दर्शनम् । शब्दादिग्रहणेनात्राकाशादिग्रहणं यत्, तदाकाशादिपरिणामा एव शब्दादय इति युक्तमेव । एतेन यच्छ्रोत्रग्राह्यं तत् सर्वमाकाशं शब्दश्च, यत् स्पर्शेन गृह्यते तत् सर्वं वायुः स्पर्शश्चेत्यादि ज्ञेयम् ॥ ३१ ॥

**या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्तते ।**
**याति सा तेन निर्देशं मनसा च मनोभवा ॥ ३२ ॥**
**भेदात् कार्येन्द्रियार्थानां बह्व्यो वै बुद्धयः स्मृताः ।**
**आत्मेन्द्रियमनोर्थानामेकैका सन्निकर्षजा ॥ ३३ ॥**
**अङ्गुल्यङ्गुष्ठतलजस्तन्त्रीवीणानखोद्भवः ।**
**दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा ॥ ३४ ॥**

संप्रति प्रकृतिगणप्रविष्टाया बुद्धेरुपदर्शनार्थं तस्या बुद्धेर्वृत्तिभेदात् ज्ञानविशेषरूपाण्याह—येत्यादि । यदिन्द्रियमाश्रित्येति यैदिन्द्रियप्रणालिकामाश्रित्य महच्छब्दाख्यस्य बुद्धितत्त्वस्य वृत्तिविशेषरूपाणि ज्ञानानीन्द्रियप्रणालिकया भवन्ति, तदिन्द्रियजन्यत्वेनैव तानि व्यपदिश्यन्ते—चक्षुर्बुद्धिः, श्रोत्रबुद्धिरित्यादिव्यपदेशैर्न । मनोभवा च बुद्धिश्चिन्त्यादिविषया मनसा निर्दिश्यते; मनोबुद्धिरिति व्यपदिश्यत इत्यर्थः । इन्द्रियमनोभेदेन षट्त्वं बुद्धीनां प्रतिपाद्य बुद्धिबहुत्वं प्राह—भेदादित्यादि । कार्यस्य इन्द्रियार्थस्य च भेदात् तत्संबन्धेन भिद्यमाना बह्व्यो बुद्धयो भवन्ति; कार्यं सुखदुःखभेदाः; सुखदुःखप्रपञ्चेन हि तत्कार्येण कारणं ज्ञानमपि बहु भवति । इदानीं सर्वबाह्यज्ञानसाधनमाह—आत्मेत्यादि । आत्मा अव्यक्तम् । एकैकेति प्रत्येकम् । बुद्धेरनेकात्मादिमेलकजन्यत्वे दृष्टान्तमाह-अङ्गुलीत्यादि । अनेन दृष्टान्तेन शब्दद्वयमाह; अङ्गुल्यङ्गुष्ठतलजशब्द एकः, अयं चाङ्गुष्ठयन्त्रितमध्यमाङ्गुल्याः करतलसंयोगाज्जायमानतलशब्द उच्यते; तन्त्रीवीणानखोद्भवश्च वीणाशब्द एकः; अन्ये त्वेकमेवाङ्गुल्यादिजं वीणाशब्दं वर्णयन्ति । एतेन, यथा शब्दोऽङ्गुलाद्यन्यतमवैकल्येऽपि न भवति, तथा बुद्धिरप्यात्मादीनामन्यतमवैकल्येऽपि न भवतीति दर्शयति ॥ ३२-३४ ॥

**बुद्धीन्द्रियमनोर्थानां विद्याद्योगधरं परम् ।**
**चतुर्विंशतिको ह्येष राशिः पुरुषसंज्ञकः ॥ ३५ ॥**

अत्र च बुद्धिवृत्तीनां ज्ञानानां कथनेनैवाहङ्कारोऽपि सूचित एव; यतोऽहङ्कारोपजीवितैवात्मादिसंवलितेयं बुद्धिः 'अहं पश्यामि' इत्यादिरूपा भवति; तेन बुद्धेरहङ्कारस्य चोक्तत्वादवशिष्टमव्यक्तं कार्यद्वारा ब्रूते—बुद्धीत्यादि । परमिति अव्यक्तम् । बुद्ध्यादीनां योगं मेलकं धरतीति योगधरम्; अव्यक्तं हि प्रकृतिरूपं पुरुषार्थप्रवृत्तं बुद्ध्यादिमेलकं भोगसंपादकं सृजति । एवं व्युत्पादितं चतुर्विंशतिकमुपसंहरति—चतुर्विंशतिक इत्यादि । यदि वा कर्मेन्द्रियाण्यभिधाय महाभूतानीत्यादिना अर्था एवाश्रयभूतखादिकथनेनोच्यन्ते, या यदिन्द्रियमाश्रित्येत्यादिना तु स्फुटोपलभ्यमाना बुद्धिवृत्तिभेदा उच्यन्ते, बुद्ध्यहङ्कारतन्मात्राण्यव्यक्तानि तु सूक्ष्माणि नोक्तानि, तानि सर्वाण्येव बुद्धीन्द्रियमनोर्थानामित्यादिग्रन्थे परशब्देनोच्यन्ते, तेन योगधरं परमित्यनेन मूलप्रकृतिस्तथा प्रकृतिविकृतयश्च महदादयः सप्तोच्यन्ते; एवं चतुर्विंशतिको राशिर्भवति । परत्वं च विकारापेक्षया प्रकृतीनामुपपन्नमेव ॥ ३५ ॥

**रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान् ।**
**ताभ्यां निराकृताभ्यां तु सत्त्ववृद्ध्या निवर्तते ॥ ३६ ॥**

संश्लेषरूपपुरुषस्य सकारणं संसरणं मोक्षहेतुं चाह—रज इत्यादि । संयोगोऽयमिति चतुर्विंशतिराशिरूपो मेलकः । ताभ्यामिति रजस्तमोभ्याम् । सत्त्ववृद्ध्या कारणभूतया रजस्तमोनिवृत्त्या पुरुषरूपः संयोगो निवर्तते मोक्षो भवतीत्यर्थः । सत्त्वं वृद्धं विशुद्धज्ञानजननाद् रजस्तमसी संसारकारणे विजित्य प्रकृतिपुरुषविवेकज्ञानान्मोक्षमावहति ॥ ३६ ॥

**अत्र कर्म फलं चात्र ज्ञानं चात्र प्रतिष्ठितम् ।**
**अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता ॥ ३७ ॥**
**एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ ।**
**पारंपर्यं चिकित्सां च ज्ञातव्यं यच्च किंचन ॥ ३८ ॥**

१ 'स्पर्शग्राह्यमिति' इति पा० । २ 'विशेषास्ते' इति पा० । ३ 'एकैकसन्निकर्षजाः' इति पा० । ४ 'वृत्तिभेदाद्विशेषरूपाण्याह' इति पा० । ५ 'यदिन्द्रियप्रणालिकामाश्रित्य' इति पा० । ६ '°रित्यादीनि' इति पा० । ७ 'षट्कं' इति पा० ।

१ 'कर्म' इति पा० । २ 'दृष्टान्तत्वेन शब्दमाह—' इति पा० । ३ 'दधाति' इति पा० । ४ 'सत्त्वबुद्ध्या' इति पा० । ५ 'एतयो वेद' इति पा० । ६ 'वेदं मृत्युना' इति पा० ।

पुनश्चतुर्विंशतिके पुरुषे कर्मफलादि दर्शयन् दोषहीने पुरुषे कर्मफलाद्यभावमर्थाद्दर्शयति—अत्रेत्यादि। फलमत्रेति यथोक्तसमुदायपुरुषे। कर्मेति अदृष्टम्। फलमिति अदृष्टफलम्। खता ममता। ज्ञानं च यद्यपि चतुर्विंशतितत्त्वातिरिक्तस्योदासीनस्यैव, तथाऽपि तच्चेतनया प्रकृतिरपि चेतनामापद्य चेतनैव भवतीति युक्तम् 'अत्र ज्ञानम्' इति। वचनं हि—"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्" (सां. का. २०) इति। प्रलयोदयाविति जीवितमरणे। पारंपर्यमिति शरीरपरंपराम्। चिकित्सां चेति नैष्ठिकी आत्यन्तिकदुःखचिकित्सा मोक्षसाधना ज्ञातव्या। यच्च किंचनेत्यनेनानुक्तमपि कृत्स्नं ज्ञेयमवरुणद्धि॥ ३७॥ ३८॥

**भास्तमः सत्यमनृतं वेदाः कर्म शुभाशुभम्।**
**न स्युः कर्ता च बोद्धा च पुरुषो न भवेद्यदि॥ ३९॥**
**नाश्रयो न सुखं नार्तिर्न गतिर्नागतिर्न वाक्।**
**न विज्ञानं न शास्त्राणि न जन्म मरणं न च॥ ४०॥**
**न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद्यदि।**
**कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः॥ ४१॥**
**न चेत् कारणमात्मा स्याद्भादयः स्युरहेतुकाः।**
**न चैषु संभवेज् ज्ञानं न च तैः स्यात् प्रयोजनम्॥४२॥**

पुरुषः कारणं कस्मादिति प्रश्नस्योत्तरं—भास्तम इत्यादि। भाः प्रतिभा। तमः मोहः। पुरुष इह प्रकरणे आत्माऽभिप्रेतः। आश्रयः शरीरम्। गतिश्च प्रयोजनानुसन्धानाद्भवति, एवमागतिरपि। कारणं पुरुषस्तस्मादिति भास्तमःसत्यादौ कारणं पुरुष इत्यर्थः। एतदेव भाआदिकारणत्वमात्मन आह—न चेदित्यादि। एवं मन्यते—भास्तमसी धर्माधर्मजन्ये, धर्माधर्मौ चासत्यात्मनि निराश्रयौ न भवितुमर्हतः; तथा सत्यं धर्मजनकतया उपादेयम्, अनृतं चाधर्मजनकतयाऽनुपादेयम्, एतच्चात्मनि स्थिरेऽसति धर्माधर्मजनकत्वं नास्ति, ततश्च सत्यासत्यभेदोऽप्यकिञ्चित्करत्वान्नास्ति; एवं शुभाशुभकर्मण्यपि वाच्यं; तथा कर्ता च कारणप्रतिसन्धाता न भवति, प्रतिसन्धातुरात्मनोऽभावादित्यर्थः; तथा बोद्धा च पूर्वापरावस्थाप्रतिसन्धातैव भवति; शरीरं चात्मनो भोगायतनं नात्मानं विना भवति; एवं सुखादावप्यात्मनः कारणत्वमुन्नेयम्; विज्ञानं शास्त्रार्थज्ञानं, शास्त्राणि प्रतिसन्धात्राऽऽत्मनैव कृतानि। न चैषु संभवेज्ज्ञानमिति आत्मानं ज्ञातारं विना न भादिषु ज्ञानं संभवेत्, ज्ञातुरात्मनोऽभावादित्यर्थः। न च तैः स्यात् प्रयोजनमिति भावीनामात्मार्थत्वेनासत्यात्मनि भाद्युत्पत्तेः प्रयोजनं न स्यात्, प्रयोजनाभावाच्चोत्पादो न स्यात्; सर्वेषामेव हि भावानामात्मस्थौ धर्माधर्मौ पुरुषभोगार्थमुत्पादकौ, असति भोक्तरि भोज्येनापि न भवितव्यं कारणाभावात्॥ ३९—४२॥

१ 'लिङ्गं महदादिसूक्ष्मपर्यन्तं, लिङ्गनाद् ज्ञापनाद् बुद्ध्यादयो लिङ्गम्' इति वाचस्पतिमिश्रः। २ 'कर्ता वेदिता' इति पा०। ३ 'खादयः' इति पा०। ४ 'प्रयोजनानुसन्धाना' इति पा०।

**कृतं मृद्दण्डचक्रैश्च कुम्भकाराद्दते घटम्।**
**कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम्॥ ४३॥**
**यो वदेत् स वदेद्देहं संभूय करणैः कृतम्।**
**विना कर्तारमज्ञानाद्युक्त्यागमबहिष्कृतः॥ ४४॥**

आत्मानं विना शरीराद्युत्पादे दृष्टान्तद्वयं प्रमेयगौरवादाह—कृतं मृद्दण्डेत्यादि। संभूय करणैः कृतमित्यात्मनिरपेक्षैर्भूतैः कृतमित्यर्थः। युक्त्या अनुमानरूपया आगमेन च रहितो युक्त्यागमबहिष्कृतः; प्रत्यक्षं चात्र नोक्तं, तस्यात्मानं प्रति प्रायोऽयोग्यत्वात्॥ ४३॥ ४४॥

**कारणं पुरुषः सर्वैः प्रमाणैरुपलभ्यते॥**
**येभ्यः प्रमेयं सर्वेभ्य आगमेभ्यः प्रमीयते॥ ४५॥**

सर्वैः प्रमाणैरिति प्रत्यक्षादिभिः। येभ्य इति करण एवापादानविवक्षया पञ्चमी। आगमयन्ति बोधयन्तीति आगमाः प्रमाणान्येव; अन्ये त्वागमप्रमाणाभ्यां शास्त्राण्येव ब्रुवते॥ ४५॥

**न ते तत्सदृशास्त्वन्ये पारंपर्यसमुत्थिताः।**
**सारूप्याद्ये त एवेति निर्दिश्यन्ते नवा नवाः॥ ४६॥**
**भावास्तेषां समुदयो निरीशः सत्त्वसंज्ञकः।**
**कर्ता भोक्ता न स पुमानिति केचिद्व्यवस्थिताः॥ ४७॥**

निरात्मवादिमतमुत्थापयति—न ते इत्यादि। अस्मिञ् शरीरे ते क एव पृथिवीजलादयो भावाः, ये त एवेति व्यपदिश्यन्ते; ते न भवन्ति पूर्वानुभूता नानुभवन्तीत्यर्थः। यदि ते न भवन्ति, कथं तर्हि 'ते' इत्यभिज्ञानमित्याह—तत्सदृशास्त्वन्ये पूर्वसदृशा इत्यर्थः। पारंपर्यसमुत्थिता इति सदृशसन्तानव्यवस्थिताः। सारूप्यादिति सदृशरूपत्वात्। तेषां समुदय इति क्षणभङ्गिनां मेलक इत्यर्थः। निरीश इति स्वाम्यात्मरहितः। सत्त्वसंज्ञक इति प्राणिसंज्ञकः। केचिदिति बौद्धाः। बौद्धा हि निरात्मकं क्षणिकज्ञानादिसमुदायमात्रं शरीरमिच्छन्ति; प्रतिसन्धानं च क्षणिकानामपि ज्ञानादीनां कार्यकारणभावादेकफलसन्तताविच्छन्ति॥ ४६॥ ४७॥

**तेषामन्यैः कृतस्यान्ये भावा भावैर्नवाः फलम्।**
**भुञ्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते॥ ४८॥**

एतद्दूषयति—तेषामित्यादि। तेषां ज्ञानसन्तानवादिनाम्, अन्येन कृतस्यौदनपाकादेः फलमन्यादि अन्ये भुञ्जत इति प्राप्नोति। एतच्चासङ्गतं, यतः फलं भोक्ष्यामीति कृत्वा भाविफलप्रत्याशया प्रवृत्तिर्युक्ता, न त्वन्यस्य भोग्यतां फलस्य पश्यन् कश्चित् प्रवर्तते; योऽपि सूपकारादिः परार्थं प्रवर्तते, सोऽपि परार्थेन स्वार्थं साधयितुकाम एवेति भावः॥ ४८॥

**करणान्यान्यता दृष्टा कर्तुः कर्ता स एव तु।**
**कर्ता हि करणैर्युक्तः कारणं सर्वकर्मणाम्॥ ४९॥**

परमतं दूषयित्वा स्वमतमाह—करणेत्यादि। करणस्य

१ 'भावैर्भावा' इति पा०।

शरीरस्य परिणामिनोऽन्यान्यता दृष्टा। कर्ता चात्मा, स एव न विनाशीत्यर्थः। अत्रैव दृष्टान्तमाह—कर्ता हीत्यादि। यथाऽनेकशिल्पवित् कर्ता करणैर्वासीसंदंशयन्त्रादिभिः काष्ठपाटनलौहघटनादि करोति, तथाऽऽत्माऽपीत्यर्थः ॥ ४९ ॥

**निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये।**
**भग्नानां न पुनर्भावः कृतं नान्यमुपैति च ॥ ५० ॥**
**मतं तत्त्वविदामेतद्यस्मात्तस्मात् स कारणम्।**
**क्रियोपभोगे भूतानां नित्यः पुरुषसंज्ञकः ॥ ५१ ॥**

अथायमात्मसद्भावः स्थिरोऽस्तु, शरीरारम्भकाणां भूतानां का वा गतिरित्याह—निमेषेत्यादि। भावानामिति शरीरादिभावानाम्। अत्यय इति विनाशे; शरीरस्य स्वामिपच्यमानस्य निमेषकालादपि शीघ्रं विनाशो भवतीत्यर्थः। अमीषां च भावानां भग्नानां न पुनर्भावः पुनरागमनं नास्तीत्यर्थः। तेन, येन शरीरेण यत् कृतं तच्छरीरं तत्फलं न प्राप्नोतीत्युक्तं भवति। अथ मा भवत्वेवं ततः किमित्याह—कृतमित्यादि।—कृतं कर्म यागादि न फलरूपतयाऽन्यमुपैति, एवं सति देवदत्तकृतेन शुभकर्मणा यज्ञदत्तादयोऽपि सुखभाजः स्युः; तस्मात् क्षणभङ्गिशरीरादतिरिक्तः कर्मकर्ता तत्फलभोक्ता चास्तीति भावः। क्रियोपभोग इति क्रियायां तत्फलभोगे च। भूतानामिति प्राणिनाम् ॥ ५० ॥ ५१ ॥

**अहङ्कारः फलं कर्म देहान्तरगतिः स्मृतिः।**
**विद्यते सति भूतानां कारणे देहमन्तरा ॥ ५२ ॥**

आत्मसद्भावे हेत्वन्तरमाह—अहङ्कार इत्यादि। एतेऽहङ्कारादयः स्थिर एव परमात्मनि भवन्ति, पूर्वापरकालावस्थायिवस्तुधर्मत्वादिति भावः। देहमन्तरेति देहं विना; देहातिरिक्ते कारणे सत्यहङ्कारो भवतीत्यर्थः ॥ ५२ ॥

**प्रभवो न ह्यनादित्वाद्विद्यते परमात्मनः।**
**पुरुषो राशिसंज्ञस्तु मोहेच्छाद्वेषकर्मजः ॥ ५३ ॥**

'प्रभवः पुरुषस्य कः' इत्यस्योत्तरं—प्रभव इत्यादि। प्रभवः कारणम्। राशिसंज्ञ इति षड्धातुसमुदायरूपश्चतुर्विंशतिराशिरूपो वा। मोहेच्छाद्वेषजनितकर्मजो मोहेच्छाद्वेषकर्मजः। मोहादिषु भावेषु इच्छा द्वेषश्च भवति, ततः प्रवृत्तिः, प्रवृत्तेर्धर्माधर्मौ, तौ च शरीरं जनयतो भोगार्थम् ॥ ५३ ॥

**आत्मा ज्ञः करणैर्योगाज् ज्ञानं त्वस्य प्रवर्तते।**
**करणानामवैमल्यादयोगाद्वा न वर्तते ॥ ५४ ॥**
**पश्यतोऽपि यथाऽऽदर्शे संक्लिष्टे नास्ति दर्शनम्।**
**तत्त्वं जले वा कलुषे चेतस्युपहते तथा ॥ ५५ ॥**

'किमज्ञो ज्ञः' इत्यस्योत्तरम्—आत्मेत्यादि। करणानीह मनोबुद्धीन्द्रियाणि। न वर्तते ज्ञानमिति योजना। ननु यद्ययमात्मा ज्ञः, तत् किमित्यस्य सर्वदा ज्ञानं न भवतीत्याह—पश्यतोऽपीत्यादि। पश्यतोऽपीति चक्षुष्मतोऽपीत्यर्थः। तत्त्वमिति दर्शनविशेषणम्। तेन, म्लाने दर्पणे जले वा दर्शनं भवदप्ययथार्थग्राहितया न तत्त्वरूपं भवतीत्यर्थः। चेतसीत्युपलक्षणं, तेन चक्षुरादावप्युपहत इति ज्ञेयम् ॥ ५४ ॥ ५५ ॥

**करणानि मनो बुद्धिर्बुद्धिकर्मेन्द्रियाणि च।**
**कर्तुः संयोगजं कर्म वेदना बुद्धिरेव च ॥ ५६ ॥**
**नैकः प्रवर्तते कर्तुं भूतात्मा नाश्नुते फलम्।**
**संयोगाद्वर्तते सर्वं तमृते नास्ति किञ्चन ॥ ५७ ॥**

करणप्रस्तावाज् ज्ञाने कर्मणि वेदनायां च यावत् करणमात्मनस्तदाह—करणानीत्यादि। संयोगजमिति कर्मणा वेदनया बुद्ध्या च योज्यम्। नाश्नुते फलमेक इति योज्यम्। एक इति निष्करणः। संयोगाद्वर्तत इति करणसमुदायादुत्पद्यते। तमृत इति संयोगं विना ॥ ५६ ॥ ५७ ॥

**न ह्येको वर्तते भावो वर्तते नाप्यहेतुकः।**
**शीघ्रगत्वात्स्वभावात्त्वभावो न व्यतिवर्तते ॥ ५८ ॥**

अत्रैव सामग्रीजन्यत्वे सर्वकार्याणामुपपत्तिमाह—न ह्येक इत्यादि। एको भावः कारणरूपः सहकारिकारणान्तररहितो न कार्यकरणे वर्तत इत्यर्थः; एवं तावदेकं कारणं कार्यं न वर्तते, कार्यं च हेतुं विना न भवतीत्याह—वर्तते नाप्यहेतुक इति; हेतुं विना भाव उत्पत्तिधर्मा न वर्तते न भवतीत्यर्थः। तेन करणयुक्तात्मजन्यं कार्यं न केवलादात्मनो हेतुरूपाद्भवतीत्युक्तं भवति। अथ हेतुं विना चेद्भावो न भवति, तत् किमभावेऽपि शारीराणां भावानां हेत्वपेक्षा न वेत्याह—शीघ्रगत्वादित्यादि। शीघ्रगत्वात् स्वभावाल्लक्षितोऽभावो न स्वभावं व्यतिवर्तते शीघ्रगत्वस्वभावं न त्यजतीत्यर्थः। तेन, अहेतुक एवाभावो भवति, भावस्तु सहेतुकः। उक्तं हि "उत्पत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम्" (सू. अ. १६) इति। किंवा, शीघ्रगत्वादस्थिरत्वादभावो नावस्थान्तरमात्मनाशं प्रति गच्छतीति ग्रन्थार्थः ॥ ५८ ॥

**अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः।**
**सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा ॥ ५९ ॥**

'स नित्यः किमनित्यः' इत्यस्योत्तरम्—अनादिरित्यादि। अनादिश्च पुरुषोऽव्यक्तरूप आत्मशब्दाभिधेयः। विपरीत इति आदिमान् राशिरूपः पुरुष इत्यर्थः। अत्रैवानादेर्नित्यत्वे शास्त्रान्तरसंमतिमप्याह—सदित्यादि। सदिति त्रिविधसमये प्रमाणगम्यभावरूपम्। एतेन, प्रागभावस्याकारणवतोऽप्यभावरूपतयाऽनित्यत्वं न व्यभिचारकम्। हेतुजमन्यथेति अत्रापि भावहे-

१ 'च' इति पा०। २ 'शरीरस्यानुपच्यमानस्य' इति पा०। ३ 'क्षणभाविशरीरातिरिक्तः' इति पा०। ४ 'यद्वज्जले' इति पा०।

१ 'ह्यस्वभावः' इति पा०। २ 'वर्तते' इति पा०। ३ 'स्वभावात्तु भावो न व्यतिवर्तते' इति पा०। ४ 'विधिविषयप्रमाणगम्यभावरूपम्' इति पा०।

पमिति योजनीयम्। तेन, हेतुजन्यस्यापि प्रध्वंसस्याविनाशित्वं परिहृतं भवति ॥ ५९ ॥

**तदेव भावादग्राह्यं नित्यत्वं न कुतश्चन ।**
**भावाज्ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा ॥ ६० ॥**
**अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः ।**
**तस्माद्यदन्यत्तद्व्यक्तं, वक्ष्यते चापरं द्वयम् ॥ ६१ ॥**
**व्यक्तमैन्द्रियकं चैव गृह्यते तद्यदिन्द्रियैः ।**
**अतोऽन्यत् पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियम् ॥६२॥**

किं तन्नित्यत्वमित्याह—तदेवेत्यादि । भावादुत्पत्तिधर्मकात् । तन्नित्यत्वं न कुतोऽपि भावाद्भवति, नित्यं हि न कुतोऽपि भवति । ततश्चात्मा भावं प्रति निरपेक्षत्वात् सर्वेभ्यो भावेभ्योऽप्यग्रे नित्यं सदेव । तच्चैवंभूतं नित्यमव्यक्तं ज्ञेयम् । अचिन्त्यमित्यव्यक्तविशेषणम् । अव्यक्तं च मूलप्रकृतिः । व्यक्तमन्यथेति प्रकृतेरन्यतमकार्यं महदादिकमनित्यम्; आकाशमपि विकाररूपतयाऽनित्यमेव; उदासीनपुरुषस्तु नित्य एवाव्यक्तशब्देनैव लक्षित इत्युक्तमेव । अव्यक्तधर्मान्तरव्यापकान् पर्यायानाह–अव्यक्तमित्यादि । पुनः प्रकारान्तरेण व्यक्ताव्यक्तार्थमाह—वक्ष्यत इत्यादि । अपरं द्वयमिति प्रकारान्तरकृतं व्यक्ताव्यक्तद्वयम् । लिङ्गग्राह्यमिति अनुमानग्राह्यम् । अतीन्द्रियमित्यनेन चेन्द्रियग्रहणायोग्यं यत् केनापि शब्दादिलिङ्गेन गृह्यते न तदव्यक्तं, किन्तु यन्नित्यानुमेयं मनोऽहङ्कारादि तदेवाव्यक्तम् ॥६०-६२ ॥

**खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाऽष्टमः ।**
**भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश ॥ ६३ ॥**
**बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।**
**समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः ॥६४॥**

'प्रकृतिः का विकाराः के' इत्यस्योत्तरं—खादीनीत्यादि । खादीनि सूक्ष्मैर्भूतखादीनि तन्मात्रशब्दाभिधेयानि । बुद्धिः महच्छब्दाभिधेया । अव्यक्तं मूलप्रकृतिः । अहङ्कारः बुद्धिविकारः; स च त्रिविधः–भूतादिः, तैजसः, वैकारिकश्च । भूतानां स्थावरजङ्गमानां प्रकृतिर्भूतप्रकृतिः । अत्र चाव्यक्तं प्रकृतिरेव परं, बुद्ध्यादयस्तु स्वकारणविकृतिरूपा अपि स्वकार्यापेक्षया प्रकृतिरूपा इह प्रकृतित्वेनोक्ताः । यदुक्तं–"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" ( सां. का. ३ ) इति । विकारानाह—विकारा इत्यादि । एवशब्दो भिन्नक्रमेऽवधारणे, तेन विकारा एव षोडश परं न प्रकृतयः । बुद्धेरिन्द्रियाणि बुद्धीन्द्रियाणि । पञ्चार्था इति स्थूला आकाशादयः शब्दादिरूपाः; गुणगुणिनोर्हि परमार्थतो भेदो नास्त्येवास्मिन् दर्शने ॥६३॥६४॥

**इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् ।**
**अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः ॥ ६५ ॥**

एनमेव प्रकृतिविकारसमूहं क्षेत्रक्षेत्रज्ञभेदेन विभजते—इतीत्यादि । अव्यक्तवर्जितमिति प्रकृत्युदासीनवर्जितं, प्रकृतेश्चोदासीनपुरुषचैतन्येन चैतन्यमस्त्येव ॥ ६५ ॥

**जायते बुद्धिरव्यक्ताद्बुद्ध्याऽहमिति मन्यते ।**
**परं खादीन्यहङ्काराढुत्पद्यन्ते यथाक्रमम् ॥ ६६ ॥**
**ततः संपूर्णसर्वाङ्गो जातोऽभ्युदित उच्यते ।**

संप्रति महाप्रलयान्तरं यथाऽऽदिसर्गे बुध्याद्युत्पादो भवति तदाह—जायत इत्यादि । बुध्याऽहमिति मन्यत इति बुद्धेर्जातेनाहङ्कारेणाहमिति मन्यत इत्यर्थः । खादीनीति खादीनि सूक्ष्माणि तन्मात्ररूपाणि, तथैकादशेन्द्रियाणि । वचनं हि "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः" ( सां. का. २२ ) इति । यथाक्रममिति यस्मादहङ्कारादुत्पद्यते तेन क्रमेण; तत्र वैकृतात् सात्त्विकादहङ्कारात्तैजससहायादेकादशेन्द्रियाणि भवन्ति, भूतादेस्त्वहङ्कारात्तामसात्तैजससहायात् पञ्चतन्मात्राणि । यदुक्तं—"सात्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" ( सां. का. २५ ) इति । तत इति आहङ्कारिककार्यानन्तरं तन्मात्रेभ्य उत्पन्नस्थूलभूतसंबन्धात् । संपूर्णसर्वाङ्गो जात इति आदिसर्गो(र्गे) जातः ॥ ६६ ॥—

**पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥ ६७ ॥**
**अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।**
**रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्तते ॥ ६८ ॥**
**येषां द्वन्द्वे परा सक्तिरहङ्कारपराश्च ये ।**
**उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥ ६९ ॥**

एवमादिसर्गे प्रकृतेर्महदादिसर्गं दर्शयित्वा महाप्रलये प्रकृतावव्यक्तरूपायां बुद्ध्यादीनां लयमाह—पुरुष इत्यादि । इष्टैर्भावैरिति पुरुषोपभोगार्थमिष्टैर्बुध्यादिभिः । अन्ये तु एवंभूतैसर्ग जन्मनि, बुध्यादिवियोगं च मरणे ब्रुवते । तन्न, जन्ममरणयोर्बुध्यादीनां विद्यमानत्वात् । उक्तं हि—"अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तपूर्वः । नैवेन्द्रियैर्नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः"(शा.अ.२) इति । तथाऽन्यत्राप्युक्तं–"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" ( सां. का. ४० ) इति । तस्मान्महाप्रलय एव प्रकृतौ लयः, तथाऽऽदिसर्ग एव प्रकृतेर्महदादिसृष्टिरिति । एतदेव प्रपञ्चं लयं च प्रकृतेराह—अव्यक्तादित्यादि । अव्यक्तादिति प्रकृतेः, व्यक्ततामिति महदादिमहाभूतपर्यन्तप्रपञ्चरूपतां याति । व्यक्तादिति महाभूतप्रपञ्चावस्थातः पुनरव्यक्तरूपतां याति गच्छति; महाप्रलये हि महाभूतानि तन्मात्रेषु लयं यान्ति, तन्मात्राणि तथेन्द्रियाणि चाहङ्कारे लयं यान्ति, अहङ्कारो बुद्धौ, बुद्धिश्च प्रकृताविति लयक्रमः । अयं च लयक्रमो मोक्षेऽपि भवति । परं तु तत्र तं पुरुषं प्रति

१ 'नित्यत्वान्न कुतश्चन' इति पा० । २ 'व्यक्ताव्यक्तत्वमाह' इति पा० । ३ 'शब्दतन्मात्रादिशब्दाभिधेयानि' इति पा० ।

१ 'खादीन्यहङ्कार उपादत्ते' इति पा० । २ 'एवंभूतसर्गं' इति पा० ।

पुनः सर्ग नारभते प्रकृतिः । अयं संसारः कुतो भवतीत्याह— रजइत्यादि । आविष्टो युक्तः । चक्रवत् परिवर्तेत इति पुनः पुनर्लयसर्गाभ्यां युज्यते । द्वन्द्व इति रजस्तमोरूपे मिथुने । अहङ्कारपरा इति अहङ्कारान्ममेदमित्यादिमिथ्याज्ञानपराः । उदयप्रलयौ जन्ममरणे, किंवा लयसर्गौ । अतोऽन्यथेति ये रागद्वेषविमुक्ता निरहङ्काराश्च तेषां नोदयप्रलयौ भवतः ॥६७-६९॥

**प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।**
**इन्द्रियान्तरसंचारः प्रेरणं धारणं च यत् ॥ ७० ॥**
**देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।**
**दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥ ७१ ॥**
**इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।**
**बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ ७२ ॥**
**यस्मात् समुपलभ्यन्ते लिङ्गान्येतानि जीवतः ।**
**न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ॥ ७३ ॥**
**शरीरं हि गते तस्मिन् शून्यागारमचेतनम् ।**
**पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते ॥ ७४ ॥**

'किं लिङ्गं पुरुषस्य च' इत्यस्योत्तरं—प्राणापानावित्यादि । प्राणापानौ उच्छ्वासनिःश्वासौ । निमेषाद्या इति आद्यशब्दग्रहणेन उन्मेषाद्याः प्रेक्षणविशेषा गृह्यन्ते । मनसो गतिरिति मनसा पाटलिपुत्रगमनादिरूपा । इन्द्रियान्तरसंचारोऽपि मनस एव, यथा चक्षुः परित्यज्य मनः स्पर्शनमधितिष्ठतीत्यादि । प्रेरणं च तथा धारणं च मनस एवेति ज्ञेयम् । देशान्तरगतिः स्वप्ने इति छेदः । पञ्चत्वग्रहणं मरणज्ञानम् । सव्येनावगम इति सव्येनाक्ष्णा स एवायं दक्षिणाक्षिदृष्टो घट इत्यवगम इत्यर्थः । चेतना ज्ञानमात्रम् । बुद्धिस्तु ऊहापोहज्ञानम् । अथ कथमेतान्यात्मानं गमयन्तीत्याह—यस्मादित्यादि । जीवत इति पञ्चभूतातिरिक्तात्मसंयुक्तस्य । पञ्चत्वं तु यद्यपि जीवतो न भवति किंतु मृतस्यैव, तथाऽपि पञ्चत्वं मृतशरीरे दृश्यमानं विपर्ययात् पञ्चत्वाभावाज्जीवच्छरीरलिङ्गं भवतीति ज्ञेयम् । अत्रैवोदाहृताश्च प्राणापानादयो न भूतमात्रे भवन्ति, निरात्मकेष्विष्टकामृतशरीरादिष्वदर्शनात् । न च मन एव भूतातिरिक्तमात्मा भवितुमर्हति, यतस्तस्यापि करणरूपस्य प्रेरणाद्यात्मना कर्त्रा कर्तव्यम् । नापीन्द्रियाण्यात्मत्वेन स्वीकर्तुं पार्यन्ते, यतस्तथा सति इन्द्रियान्तरोपलब्धमर्थं नेन्द्रियाणि यज्ञदत्तोपलब्धमर्थं देवदत्त इव प्रतिसन्धातुं समर्थानि भवेयुः; अस्ति चेन्द्रियान्तरोपलब्धार्थप्रतिसन्धानं, यथा—सुरभिचन्दनं स्पृशामीत्यत्र । तस्मान्मनइन्द्रियभूतातिरिक्त आत्मा तिष्ठतीति ज्ञेयम् । अत्र यद्यपि बुद्धिशब्देन चेतनाधृतिस्मृत्यहङ्काराः प्राप्यन्त एव बुद्धिप्रकारत्वेन, तथाऽपि पृथक्पृथगर्थगमकत्वेन पुनः पृथगुपात्ताः । तथाहि—चेतना गुणत्वेन अचेतनखादिभूतातिरिक्तधर्मिणमात्मानं गमयति, धृतिस्तु नियमात्मिका नियन्तारमात्मानं गमयति, बुद्धिस्तु ऊहापोहयोरेकं कारणं गमयत्यात्मानं, स्मृतिस्तु पूर्वानुभूतार्थस्मर्तारं स्थायिनमात्मानं गमयतीत्याद्यनुसरणीयम् । आत्माधिष्ठानाभावे शरीरे प्राणाद्यभावमाह—शरीरमित्यादि । शून्यागारमिव शून्यागारं यथा अधिष्ठातृशून्यम्, एवं मृतशरीरमपि । षड्धातुकं शरीरं, तत्र षष्ठे आत्मनि गते पञ्चभूतात्मकं शरीरं भवति, तेन पञ्चत्वं गतमुच्यते ॥ ७०-७४ ॥

**अचेतनं क्रियावच्च मनश्चेतयिता परः ।**
**युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ७५**
**चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते ।**
**अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥ ७६ ॥**

'निष्क्रियस्य क्रिया तस्य कथम्' इत्यस्योत्तरम्—अचेतनमित्यादि । चेतयिता पर इति पर आत्मा चेतयिता परं न तु साक्षात् क्रियावान् । ननु, यद्येवं कथं तस्य क्रियेत्याह—युक्तस्येत्यादि । आत्माधिष्ठितस्यैव मनसः क्रिया उपचारादात्मनः क्रियेत्युच्यत इत्यर्थः । एतदेवोपपादयति—चेतनावानित्यादि । चेतनेन ह्यात्मनाऽधिष्ठितं मनः क्रियासु प्रवर्तते, चेतनानधिष्ठितं तु मनः क्रियासु न प्रवर्तते; तेन यत्कृता सा क्रिया स एव क्रियावानिति व्यपदेष्टुं युज्यते, नैवचेतनं मनः; तत् पराधीनक्रियत्वेन परमार्थतः क्रियावदपि कर्तृत्वेन नोच्यत इति वाक्यार्थः; नोच्यते इति 'कर्तृ' इति शेषः ॥ ७५ ॥ ७६ ॥

**यथास्वेनात्मनाऽऽत्मानं सर्वः सर्वासु योनिषु ।**
**प्राणैस्तन्त्रयते प्राणी नह्यन्योऽस्त्यस्य तन्त्रकः ॥७७॥**

संप्रति स्वतन्त्रत्वेऽप्यनिष्टयोनिगमनमाक्षिप्तं समादधाति—यथास्वेनेत्यादि । सर्वासु नरगोहस्तिकीटादियोनिषु । प्राणैस्तन्त्रयते प्राणैर्योजयति, आत्मनैवायं धर्माधर्मसहायेनात्मानं सर्वयोनिषु नयति, न परप्रेरितो याति; यतो नान्यः पुरुषोऽस्य प्रेरकोऽस्ति ईश्वराभावात्; किंवा सत्यपि ईश्वरे तस्यापि कर्मपराधीनत्वात् । इदमेव चास्यानिष्टयोनिगमने स्वातन्त्र्यं यद्—अनिष्टयोनिगमनहेत्वधर्मकरणे स्वातन्त्र्यम्, अधर्मकरणारब्धस्वकर्मणैवायमनिच्छन्नपि नीयत इत्यनिष्टयोनिगमनं भवति; स्वातन्त्र्यं च यथोक्तं भवति ॥ ७७ ॥

**वशी तत् कुरुते कर्म यत् कृत्वा फलमश्नुते ।**
**वशी चेतः समाधत्ते वशी सर्वं निरस्यति ॥ ७८ ॥**

'वशी यद्यसुखैः कस्माद्भावैराक्रम्यते' इत्यस्योत्तरं—वशीत्यादि । वशी स्वेच्छाधीनप्रवृत्तिः ( इष्टेऽनिष्टे वाऽऽत्मा, ); तेन, वशी सन्नयं तानि कर्माणि करोति शुभान्यशुभानि वा आपातफलरागात्, यानि कृत्वा तत्कर्मप्रभावाच्छुभेनाशुभेन वा फलेन

१ 'अथ' इति पा० । २ 'पञ्चभूतातिरिक्तात्माख्यभावसंप्रयुक्तस्य' इति पा० । ३ 'करणभूतस्य' इति पा० ।

१ 'पञ्चभूतमात्रकं' इति पा० । २ 'कथं तर्हि क्रियावानित्याह' इति पा० । ३ 'क्रियायोग्यमपि न प्रवर्तते' इति पा० । ४ 'युज्यते । यस्त्वचेतनं मनस्तत्' इति पा० । ५ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

योगमाप्नोति। एतेन कर्तव्ये कर्मण्यस्य वशित्वं, कृतकर्मफलं त्वस्यानिच्छतोऽपि भवति; तेन तत्प्रति नास्य वशित्वम्। अन्यैदपि वशित्वफलमाह—वशी चेतः समाधत्त इति। अनिष्टेऽर्थे वशी सन्नयं मनो निवर्तयति; यदि ह्ययं वशी न स्यात्, न मनो निवर्तयितुं शक्नुयात्। अपरमपि वशित्वगमकं कर्माह—वशी सर्वं निरस्यतीति। वशी सन्नयं मोक्षार्थं प्रवृत्तः सर्वारम्भं शुभाशुभफलं त्यजतीत्यर्थः। इह स्वतन्त्रः परात्मना ईश्वरादिना प्रेरितप्रवृत्तिरुच्यते; वशी तु स्वयमपि प्रवर्तमान इच्छावशात् प्रवर्तते, न प्रेरितप्रवृत्तिरूपत्वेनेप्सितेऽनीप्सिते च वर्तते इति स्वातन्त्र्यवशित्वयोर्भेदः॥ ७८॥

**देही सर्वगतोऽप्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये।**
**सर्वाः सर्वाश्रयस्थास्तु नात्माऽतो वेत्ति वेदनाः ७९**

'सर्वाः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः' इत्यस्योत्तरमाह—देहीत्यादि। सर्वगत इति सर्वगतोऽपि सन्, संस्पर्शनेन्द्रिय इति संस्पर्शनयुक्ते शरीरे, वेदनाः सुखदुःखरूपा वेत्ति, सर्वाश्रयस्थास्तु न वेत्तीति योजना। यस्मात् सर्वगतोऽप्यात्मा स्वकीय एव स्पर्शनवति शरीरे परं वेदना वेत्ति, तेन सर्वाश्रयस्थाः सर्ववेदना न वेत्तीति वाक्यार्थः। सर्वाश्रयस्था इति सर्वपरशरीरगताः। परशरीरे चात्मा स्वकर्मोपार्जितेन्द्रियाभावाद्विद्यमानोऽपि नोपलभते सुखदुःखे। स्वे स्वे शरीर इति वक्तव्ये यत् 'संस्पर्शनेन्द्रिये' इति करोति, तेन स्वशरीरेऽपि यत्र केशनखादौ स्पर्शनेन्द्रियं नास्ति तत्र नात्मा किंचिदुपलभत इति दर्शयति॥ ७९॥

**विभुत्वमत एवास्य यस्मात् सर्वगतो महान्।**
**मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतम् ८०**
**नित्यानुबन्धं मनसा देहकर्मानुपातिना।**
**सर्वयोनिगतं विद्यादेकयोनावपि स्थितम्॥ ८१॥**

'न पश्यति विभुः कस्मात्' इत्यादिप्रश्नस्योत्तरं वक्तुं प्रवृत्तो विभुत्वसाधकार्थगुणहेतुप्राप्त्या विभुत्वमेव तावदात्मनः साधयति—विभुत्वमित्यादि। विभुत्वं सर्वगतपरिमाणयोगित्वम्। अत एवेति उक्तसर्वगतत्वात्। एतदेव स्पष्टार्थं साक्षाद्ब्रूते—यस्मादित्यादि। सर्वगतत्वं सर्वतोऽप्युपलभ्यमानत्वेन सर्वगताकाशादिपरिमाणस्याप्यस्ति, तेन तद्व्यवच्छेदार्थं 'महान्' इति पदं; तेन सर्वत्रोपलभ्यमानं महापरिमाणयोगिद्रव्यं विभुरुच्यत इति फलति। विभुत्वं व्युत्पाद्य कुड्यादितिरोहितज्ञानं नैकान्तेन भवतीति दर्शयन्नाह—मनस इत्यादि। समाधानं समाधिः। अनेन, योगिनः समाधिबलात्तिरोहितमपि पश्यन्तीति दर्शयति। ये तु तिरोहितं न पश्यन्ति तत्राप्युपपत्तिमाह—नित्येत्यादि। सर्वयोनिगतमप्यात्मानं मनसाऽनुबन्धगतमेकयोनावव-

स्थितं विद्यादिति योज्यम्। देहनिर्वर्तकेन कर्मणा अनुपात आत्मनि संबन्धो यस्य, तेन मनसा देहकर्मानुपातिना। एतेन, यद्यप्यात्मा कुड्यादिभिरतिरोहितस्तथाऽपि यदस्योपलब्धिसाधनं मनस्तस्यैकस्मिन्नेव शरीरे व्यवस्थितस्य व्यवधानाच्च पदयत्ययं तिरस्कृतमित्युक्तं भवति॥ ८०॥ ८१॥

**आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम्।**
**अतस्तयोरनादित्वात् किं पूर्वमिति नोच्यते॥ ८२॥**

'क्षेत्रज्ञः क्षेत्रमथवा' इत्यादिप्रश्नस्योत्तरम्—आदिरित्यादि। क्षेत्रपारंपर्यमिति क्षेत्रस्याव्यक्तवर्जितस्य महदादित्रयोविंशतिकस्य परम्परासन्ततेरनादित्वेनैव क्षेत्रक्षेत्रज्ञयोरिदं प्रथममिति व्यपदेशो नैवं भवतीत्यर्थः। ननु यदि क्षेत्रपरंपराऽप्यनादिस्तदा तस्यात्मवदुच्छेदो न प्राप्नोति, यदनादि तन्नित्यं भवति, यथा—आत्मेति दृष्टं? ब्रूमः—अनादित्वेऽपि यत् स्वरूपेणैवानादि तन्नोच्छिद्यते, यथा—आत्मा; यत्तु उच्छित्तिधर्मकं बुद्ध्यादि, तदुच्छिद्यत एव; सन्तानस्तु परमार्थतः सन्तानिभ्योऽतिरिक्तो नास्त्येव, यदनादिः स्यात्; तेन, सन्तानस्यानादित्वं भाक्तमेव। किञ्चैवंभूतस्य बुद्ध्यादिसन्तानस्योच्छेदे मोक्षप्रतिपादक आगम एव प्रमाणत्वेन ज्ञेयः॥ ८२॥

**ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी त्वात्मा यतः स्मृतः।**
**सर्वे भावा हि सर्वेषां भूतानामात्मसाक्षिकाः॥ ८३॥**

'साक्षिभूतश्च कस्यायम्' इत्यस्योत्तरं—ज्ञ इत्यादि। ज्ञो ज्ञानवान् साक्षीति लोके कथ्यते, नत्वज्ञः पाषाणादिः। तेन, ज्ञत्वेनासत्यप्यन्यस्मिन् कर्तरि साक्षीत्युच्यते इति वाक्यार्थः। सर्वेषामिति खादिभूतानाम्। सर्वे भावा इति सर्वे भूतधर्मा दर्शनयोग्याः। आत्मसाक्षिका इति आत्मोपलभ्यमानाः॥ ८३॥

**नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते।**
**विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते॥ ८४॥**
**संयोगपुरुषस्येष्टो विशेषो वेदनाकृतः।**
**वेदना यत्र नियता विशेषस्तत्र तत्कृतः॥ ८५॥**

'स्यात् कथं चाविकारस्य' इत्यादिप्रश्नस्योत्तरं—नैक इत्यादि। अविकारस्य परमात्मनो वेदनाकृतो विशेषो नास्त्येव, यत्र तु वेदनाकृतो विशेषः स राशिरूपः परमात्मव्यतिरिक्त एवेति वाक्यार्थः। भूतानामधिष्ठाता आत्मा भूतात्मा, अयं भूतात्मा एको भूतव्यतिरिक्तो न लक्षणैः प्राणापानादिभिरुक्तैरुपलभ्यते। कुतो नोपलभ्यत इत्याह—विशेष इत्यादि। एकस्य भूतरहितस्य; यदात्मनो विशेषो वेदनादिर्नोपलभ्यत एव, तेनानुपलब्धिरेवात्र प्रमाणमित्यर्थः। संयोगपुरुषः चतुर्विंश-

---

१ 'नास्त्येव' इति पा०। २ 'अन्यथा तु' इति पा०। ३ 'देहे सर्वगतश्चात्मा' इति पा०। ४ 'सर्वशरीरगताः' इति पा०। ५ 'मनसाऽनुबद्धं सन्तं' इति पा०।

१ 'देहानुवर्तकेन' इति पा०। २ 'अनादिरात्मा क्षेत्रस्य पारम्पर्यमनादिकम्' इति पा०। ३ 'नावतरतीत्यर्थः' इति पा०। ४ 'तदाऽऽत्मवदुच्छेदं नाप्नोति' इति पा०। ५ 'अत्राविकारस्य परमात्मनो विशेषो वेदनादिर्नोपलभ्यत एव, वेदनाकृतो विशेषो नास्त्येव' इति पा०।

तिकः। नन्वेवमपि चतुर्विंशत्यन्तर्निविष्टस्य भूतात्मनोऽपि वेदनाकृतविशेषेण भवितव्यं, यतः समुदायधर्मः समुदायिनामेव भवति, यथा—माषराशेर्गुरुत्वं प्रत्येकं माषाणामेव गौरवेण भवतीत्याह—वेदनेत्यादि। वेदना सुखदुःखरूपा। यत्र बुद्ध्यादिसमूहे नियता व्यवस्थिता वेदना, तत्रैव तत्कृतो दैन्यहर्षादिविशेषोऽपि नियतः; तत्रैव बुद्ध्यादिराशौ वर्तते नात्मनीति भावः। बुद्ध्यादिगतेन गुणत्रयपरिणामरूपेण सुखदुःखादिना असुखदुःख एवात्मा तत्संबन्धात् सुखदुःखादिमान् भवति ॥ ८४ ॥ ८५ ॥

**चिकित्सति भिषक् सर्वास्त्रिकाला वेदना इति।**
**यया युक्त्या वदन्त्येके सा युक्तिरुपधार्यताम् ॥ ८६ ॥**
**पुनस्तच्छिरसः शूलं ज्वरः स पुनरागतः।**
**पुनः स कासो बलवांश्छर्दिः सा पुनरागता ॥ ८७ ॥**
**एभिः प्रसिद्धवचनैरतीतागमनं मतम्।**
**कालश्चायमतीतानामर्तीनां पुनरागतः ॥ ८८ ॥**
**तमर्तिकालमुद्दिश्य भेषजं यत् प्रयुज्यते।**
**अतीतानां प्रशमनं वेदनानां तदुच्यते ॥ ८९ ॥**
**आपस्ताः पुनरागुर्मा याभिः शस्यं पुरा हतम्।**
**यथा प्रक्रियते सेतुः प्रतिकर्म तथाऽऽश्रये ॥ ९० ॥**
**पूर्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम्।**
**या क्रिया क्रियते सा च वेदनां हन्त्यनागताम् ९१**
**पारंपर्यानुबन्धस्तु दुःखानां विनिवर्तते।**
**सुखहेतूपचारेण सुखं चापि प्रवर्तते ॥ ९२ ॥**
**न समा यान्ति वैषम्यं विषमाः समतां न च।**
**हेतुभिः सदृशा नित्यं जायन्ते देहधातवः ॥ ९३ ॥**
**युक्तिमेतां पुरस्कृत्य त्रिकालां वेदनां भिषक्।**
**हन्तीत्युक्तं चिकित्सा तु नैष्ठिकी या विनोपधाम् ९४**

'अथवाऽऽर्तस्य' इत्यादिप्रश्नस्योत्तरमाह—चिकित्सतीत्यादि। अतीतवेदनाचिकित्सा न मुख्या, किंतु लोकप्रसिद्धोपचारेणोच्यत इति वाक्यार्थः। प्रसिद्धवचनैरिति लोकप्रसिद्धवचनैः। प्रतिकर्म चिकित्सा। आश्रय इति शरीरे। पूर्वरूपमित्यादिना अनागतवेदनाचिकित्सां समर्थयति। पूर्वरूपं यद्यपि भविष्यतामेव भवति रोगाणां, तथाऽपि भविष्यतामिति पदेन भूतेऽपि व्याधौ यानि रूपाणि भवन्ति तानि निराकरोति। उक्तं हि—"प्राक्सन्तापात्, अपि चैनं सन्तापार्तमनुबध्नन्ति" (नि. अ, १) इत्यनेन रोगावस्थायामपि पूर्वरूपसद्भावः। एवमतीतानागतवेदनाचिकित्सा व्युत्पादिता। वर्तमानचिकित्सामपि दर्शयन् पारमार्थिकं मतमाह—पारम्पर्येत्यादि। पारम्पर्यानुबन्धः सन्तानन्यायेनानुबन्धः। दुःखानामिति रोगाणाम्। सुखहेतूपचारेणेति आरोग्यहेतुचिकित्सासेवया। सुखमिति आरोग्यम्। एवं मन्यते—यदा चिकित्सा सुखहेतुः सेव्यते तदा दुःखहेतुसेवाभावाद्दुःखं नोत्पद्यते, उत्पन्नं च दुःखं रोगरूपं क्षणभङ्गित्वेन स्वयमेव नश्यति, सुखहेतुसान्निध्यात् सुखमारोग्यमुत्पद्यते; तेन चिकित्सया अनागतं दुःखं हेतुप्रतिबन्धान्निरुध्यते, सुखं च जन्यते इति सिद्धान्तः[1]। एतदेवाह—न समा इत्यादि। समाश्च विषमाश्च क्षणभङ्गित्वस्वभावान्न वैषम्यावस्थां साम्यावस्थां वा यान्तीत्यर्थः। हेतुभिः सदृशा इति समहेतोः समाः, तथा विषमहेतोश्च विषमाः। एतच्चिकित्साप्राभृतीयेऽध्याये प्रपञ्चितमेव। चिकित्साप्रस्तावेन सकलदुःखहारिणीं चिकित्सां मोक्षफलामाह[2]—चिकित्सा त्वित्यादि। निष्ठा अत्यन्तदुःखमोक्षो मोक्षरूपः, तदर्थं भूता नैष्ठिकी। विनोपधामिति तृष्णां विना, तृष्णाशून्या प्रवृत्तिर्मोक्षफला भवतीत्यर्थः ॥ ९४ ॥

**उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः।**
**त्यागः सर्वोपधानां च सर्वदुःखव्यपोहकः ॥ ९५ ॥**
**कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान्[3]।**
**उपादत्ते तथाऽर्थेभ्यस्तृष्णामज्ञः सदाऽऽतुरः ॥९६॥**
**यस्त्वग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्तते।**
**अनारम्भादसंयोगात्तं दुःखं नोपतिष्ठते ॥ ९७ ॥**

परो हेतुरिति मूलकारणम्। दुःखरूपेणैव दुःखाश्रयः शरीरम्। भोगतृष्णया हि प्रवर्तमानो धर्माधर्मान् दुःखशरीरोत्पादकानुपादत्ते, सर्वोपधात्यागात्तु न रागद्वेषाभ्यां क्वचित् प्रवर्तते, अप्रवर्तमानश्च न धर्माधर्मानुपादत्ते, एवमनागतधर्माधर्मोपरमः, उपात्तधर्माधर्मयोस्तु रागद्वेषशून्यस्योपभोगादेव क्षयः[4]; तेन सर्वथा कर्मक्षयाद्दुःखशरीराभाव इति भावः। अत्रैव तृष्णाया दुःखकारणत्वे दृष्टान्तमाह—कोषकार इत्यादि। कोषकारः स्वनामप्रसिद्धः कीटः। सदाऽऽतुर इति सदा संसारदुःखगृहीतः। अनारम्भादिति रागद्वेषपूर्वकारम्भविरहात्। असंयोगादिति आरम्भशून्यत्वेन धर्माधर्मोच्छेदकृताच्छरीरासंयोगात्; शरीराभावे च निराश्रयमकारणकं दुःखं न भवतीति भावः ॥ ९५-९७ ॥

**धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम्।**
**असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥ ९८ ॥**

'कारणं वेदनानां किम्' इत्यस्योत्तरमाह—धीधृतीत्यादि। अयं चार्थः प्रकरणागतत्वादुच्यमानो न पुनरुक्ततामावहति। धीधृतिस्मृतयः प्रज्ञाभेदाः। एते च शिष्यव्युत्पत्त्यर्थं प्रज्ञाभेदत्वेनान्यथा व्युत्पाद्य इहोच्यन्ते। संप्राप्तिः कालकर्मणामिति कालस्य संप्राप्तिस्तथा कर्मणश्च संप्राप्तिः। कर्मसंप्राप्तिः पच्य-

१ 'हेतुप्रतिबन्धान्निषिध्यते, सुखं च कल्प्यते, इति सिद्धान्तः' इति पा०। २ 'मोक्षफलामावहतीत्यर्थः' इति पा०। ३ 'वधावहान्' इति पा०। ४ 'उपात्तधर्माधर्मयोरनुरागद्वेषशून्योपभोगादेव क्षयः' इति पा०।

मानकर्मयोगः । कालसंप्राप्तिग्रहणेन चेह ये कालव्यक्तास्ते गृह्यन्ते, नावश्यं कालजन्याः; यतः स्वाभाविकानपि कालजन्यान् तथा तृतीयकादीनप्यासात्म्येन्द्रियार्थादिजन्यान् कालजत्वेनैवेहाभिधास्यति । कर्मजास्तु प्रज्ञापराधजन्या एवेह कर्मजन्यत्वेन विशेषेण शिष्यव्युत्पत्त्यर्थं पृथगुच्यन्ते, कालव्यङ्ग्यत्वेन च कर्मजा इह कालसंप्राप्तिजन्येष्ववरोद्धव्याः । प्रज्ञापराधावरोधश्च यथा कर्मजानां, तथा प्रथमाध्याय एवोक्तम् । किंचाचार्येणोन्मादनिदाने स्वयमेवोक्तं यत्—"प्रज्ञापराधात् संभूते व्याधौ कर्मज आत्मनः" ( नि. अ. ७ ) इत्यादि, तथा जनपदोद्ध्वंसनीये च विमाने पुनरुक्तं—"वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः, तन्मूलं वाऽसत्कर्म पूर्वकृतं, तयोर्योनिः प्रज्ञापराध एव" ( वि. अ. ३ ) इति । तस्मादिह संप्राप्तिः कालकर्मणामित्यनेन न कालजन्या गदा उच्यन्ते, किं तु कालव्यङ्ग्याः ॥ ९८ ॥

**विषमाभिनिवेशो यो नित्यानित्ये हिताहिते ।**
**ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥ ९९ ॥**

धीविभ्रंशं विवृणोति—विषमेत्यादि । विषमाभिनिवेशः अयथाभूतत्वेनाध्यवसानं नित्येऽनित्यमिति, एवं हितेऽहितमहिते वा हितमिति या बुद्धिः स बुद्धिभ्रंशः । अथ कथमयं बुद्धिविभ्रंशशब्देनोच्यत इत्याह—समं बुद्धिर्हि पश्यति; उचिता बुद्धिः समं यथाभूतं यस्मात् पश्यति, तस्मादसमदर्शनं बुद्धिविभ्रंश उचित एवेत्यर्थः ॥ ९९ ॥

**विषयप्रवणं सत्त्वं धृतिभ्रंशान्न शक्यते ।**
**नियन्तुमहितादर्थाद्धृतिर्हि नियमात्मिका ॥ १०० ॥**

धृतिभ्रंशमाह—विषयेत्यादि । विषयप्रवणं विषयेषु प्रसज्जत् । नियन्तुमिति व्यावर्तयितुम् । धृतिर्हि नियमात्मिकेति यस्माद् धृतिरकार्यप्रसक्तं मनो निवर्तयति स्वरूपेण, तस्मान्मनोनियमं कर्तुमशक्ता धृतिः स्वकर्मभ्रष्टा भवतीत्यर्थः ॥ १०० ॥

**तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः ।**
**भ्रश्यते स स्मृतिभ्रंशः स्मर्तव्यं हि स्मृतौ स्थितम् १०१**

स्मृतिभ्रंशं विवेचयति—तत्त्वेत्यादि । तत्त्वज्ञाने स्मृतिर्यस्य भ्रश्यत इति योजना । स्मर्तव्यं हि स्मृतौ स्थितमिति स्मर्तव्यत्वेन संमतस्यार्थस्य स्मरणं प्रशस्तस्मृतिधर्मः । तत्र च तत्त्वज्ञानस्य शिष्टानां स्मर्तव्यत्वेन संमतस्य यदस्मरणं, तत् स्मृत्यपराधाद्भवतीत्यर्थः ॥ १०१ ॥

**धीधृतिस्मृतिविभ्रष्टः कर्म यत् कुरुतेऽशुभम् ।**
**प्रज्ञापराधं तं विद्यात् सर्वदोषप्रकोपणम् ॥ १०२ ॥**
**उदीरणं गतिमतामुदीर्णानां च निग्रहः ।**
**सेवनं साहसानां च नारीणां चातिसेवनम् ॥ १०३ ॥**
**कर्मकालातिपातश्च मिथ्यारम्भश्च कर्मणाम् ।**
**विनयाचारलोपश्च पूज्यानां चाभिधर्षणम् ॥ १०४ ॥**
**ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।**
**परमौन्मादिकानां च प्रत्ययानां निषेवणम् ॥ १०५ ॥**
**अकालादेशसंचारौ मैत्री संक्लिष्टकर्मभिः ।**
**इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम् ॥ १०६ ॥**
**ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः ।**
**तज्जं वा कर्म यत् क्लिष्टं क्लिष्टं यद्देहकर्म च ॥ १०७ ॥**
**यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम् ।**
**प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम्[1] ॥ १०८ ॥**

एवं बुद्ध्यादिभ्रंशत्रयरूपप्रज्ञापराधजन्यं कर्म प्रज्ञापराधत्वेन दर्शयन्नाह—धीत्यादि । सर्वदोषशब्देन वातादयो रजस्तमसी च गृह्यन्ते । कर्मकालातिपातः चिकित्साकालातिवर्तनम् । मिथ्यारम्भ इति अयोगातियोगमिथ्यायोगरूपः । विनयाचारलोपेनैव प्राप्तमपि यत् पुनः पूज्यानामभिधर्षणाद्यभिधीयते,तद्विशेषेण प्रकोपकत्वख्यापनार्थमुदाहरणार्थं च । संक्लिष्टकर्मभिरिति पतितैः । क्लिष्टमिति निन्दितम् ॥ १०२–१०८ ॥

**बुद्ध्या विषमविज्ञानं विषमं च प्रवर्तनम् ।**
**प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥ १०९ ॥**

संक्षेपेण प्रज्ञापराधलक्षणमाह—बुद्ध्येत्यादि । विषममिति अनुचितं, विषमविज्ञानं स्वरूपत एव प्रज्ञापराधः । विषमप्रवर्तनं च प्रज्ञापराधकार्यत्वेन प्रज्ञापराधशब्देनोच्यते । मनसो गोचरं हि तदिति तद्विषमप्रवर्तनं विषमज्ञानं च मनःकार्यप्रज्ञाविषयत्वेन मनसो गोचरमित्यर्थः । विषमप्रवर्तनं च मनोगोचरजन्यत्वेनोपचारादुक्तं, विसदृशमनोविषयज्ञानाद्विषमवाग्देहप्रवृत्तिरपि भवति ॥ १०९ ॥

**निर्दिष्टा कालसंप्राप्तिर्व्याधीनां व्याधिसंग्रहे ।**
**चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा ॥ ११० ॥**
**मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः ।**
**जीर्णभुक्तप्रजीर्णान्नकालाकालस्थितिश्च[2] या ॥ १११ ॥**
**पूर्वमध्यापराह्णाश्च रात्र्या यामास्त्रयश्च ये ।**
**एषु कालेषु नियता ये रोगास्ते च कालजाः ॥ ११२ ॥**

व्याधीनां कालसंप्राप्तिमाह—निर्दिष्टेत्यादि । व्याधिसंग्रह इति कियन्तःशिरसीये "चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम् । भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु" ( सू. अ. १७ ) इत्यनेन तथा ह्युदाहरणेन[3] च । तेन, कालसंप्राप्तिर्व्याधीनां यथा—चयप्रकोपप्रशमाः पित्तादीनां पुरा निर्दिष्टा इति योज्यम् । उदाहरणान्तरमाह—मिथ्येत्यादि । जीर्णेत्यादौ जीर्णाद्यवस्थात्रयविशिष्टस्यान्नस्य कालः, तथाऽन्नस्याकालोऽजीर्णाद्यवस्थालक्षितः । प्रजीर्णं[4] विदग्धम् । रात्रेर्यामास्त्रयश्च य इति त्रयो भागाः पूर्वरात्रमध्यरात्रापररात्ररूपाः, न तु यामः

१ 'व्याधिकारिणम्' इति पा० । २ 'भुक्तजीर्णप्रजीर्णान्नकालः' इति पा० । ३ 'यथेत्युदाहरणेन च' इति पा० । ४ 'प्रजीर्णस्य जरणारम्भात्रस पच्यमानस्य' इति गङ्गाधरः ।

प्रहर इति ज्ञेयम्। अन्यत्रापि च भागत्रये यामविभागं कृत्वा अभिधानशास्त्रे त्रियामा निशाऽभिधीयते। तेषु कालेष्विति जीर्णान्नकालादिषु; जीर्णे अपराह्णे रात्रिशेषे च वातिका गदाः, भुक्तमात्रे पूर्वाह्णे पूर्वरात्रे च कफजा गदाः, प्रजीर्णे मध्याह्ने मध्यरात्रे च पित्तजा नियता रोगाः। अन्नकाले चाजीर्णलक्षणे भोजनात् त्रयोऽपि दोषा भवन्तीति ज्ञेयम्। किंवा, 'जीर्णभुक्तप्रजीर्णान्नकाला' इति च्छेदः, तेन जीर्णाद्यवस्थायुक्तान्नकालाः पूर्ववदेव ज्ञेयाः; तथा 'कालस्थितिश्च या' इति योजना; कालस्थितिशब्देन बाल्यादिवयस्त्रैविध्यमुच्यते। तत्र बाल्ये श्लैष्मिकाः, यौवने पैत्तिकाः, वार्धक्ये वातिका गदा वर्धन्ते इति ज्ञेयम् ॥ ११०-११२ ॥

**अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ।**
**स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः ॥ ११३ ॥**

विषमज्वरानपि कालविशेषप्रवर्तमानमात्रत्वेन कालजे दर्शयन्नाह—अन्येद्युष्क इत्यादि। द्व्यहग्राही चतुर्थकविपर्ययः। वक्ष्यति हि—"विषमज्वर एवान्यश्चतुर्थकविपर्ययः। मध्ये अहनी ज्वरयत्यादावन्ते च मुञ्चति" (चि. अ. ३) इति। कथं स्वकीय एव काले प्रवर्तन्त इत्याह—काले ह्येषां बलागम इति। उक्त एव काले यस्माद् बलवन्तो भवन्ति, तस्मात्तत्रैव संजातबलाः सन्तो व्यज्यन्त इत्यर्थः ॥ ११३ ॥

**एते चान्ये च ये केचित् कालजा विविधा गदाः।**
**अनागते चिकित्स्यास्ते बलकालौ विजानता ॥ ११४ ॥**

एतेषां चिकित्साक्रममाह—एते चेत्यादि। अन्ये चेत्यनेनान्यानपि कालविशेषप्राप्तिप्रादुर्भाविनः शोथकुष्ठादीन् सूचयति ॥ ११४ ॥

**कालस्य परिणामेन जरामृत्युनिमित्तजाः।**
**रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः ॥ ११५ ॥**

स्वाभाविकानपि कालपरिणामव्यज्यमानतया इह कालजेऽवरोधयितुमाह—कालस्येत्यादि। जरामृत्युरूपान्निमित्ताज्जाता जरामृत्युनिमित्तजाः, मृत्युशब्देनेह युगानुरूपायुःपर्यवसानभवकालमृत्युर्ग्राह्यः; किंवा जरामृत्व्योर्यन्निमित्तं तस्माज्जाता जरामृत्युनिमित्तजाः, जरामृत्युनिमित्तं च प्राणिनां साधारणदेहनिवर्तकभूतस्वभावोऽदृष्टं च। अथ स्वाभाविकानां का चिकित्सेत्याह—स्वभाव इत्यादि। निष्प्रतिक्रिय इति साधारणचिकित्सया रसायनवर्ज्यया न प्रतिक्रियते, रसायनेन तु प्रतिक्रियत एव; तेन, "अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा" (चि. अ. १ पा.) इत्यादिरसायनप्रयोगेण समं न विरोधः; किंवा, स्वाभाविका जरादयो रसायनजनितप्रकर्षाद्युत्तरकालं पुनरवश्यं भवन्तीति निष्प्रतिक्रियत्वेनोक्ताः ॥ ११५ ॥

**निर्दिष्टं दैवशब्देन कर्म यत् पौर्वदेहिकम्।**
**हेतुस्तदपि कालेन रोगाणामुपलभ्यते ॥ ११६ ॥**

संप्रति कर्मसंप्राप्तिकृतमपि गदं कालविशेषव्यज्यमानतया दर्शयन्नाह—निर्दिष्टमित्यादि। कालेनेति पच्यमानतालक्षितेन कालेन (युक्तं सत्) कर्म कारणं भवतीत्यर्थः ॥ ११६ ॥

**न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते।**
**क्रियाघ्नाः कर्मजा रोगाः प्रशमं यान्ति तत्क्षयात् ॥ ११७ ॥**

कर्मणः फलसंबन्धिनियममाह—न हीत्यादि। महदिति विशेषणेन किञ्चिदमहत् कर्म प्रायश्चित्तबाधनीयफलं न ददात्यपि फलमिति दर्शयति। कर्मजानामचिकित्स्यत्वमाह—क्रियाघ्ना इत्यादि। तत्क्षयादिति कर्मक्षयात्; कर्मक्षयश्च कर्मफलोपभोगादेव परं भवति ॥ ११७ ॥

**अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्वशो न च।**
**शब्दानां चातिहीनानां भवन्ति श्रवणाज्जडाः ॥ ११८ ॥**
**परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः।**
**शब्दैः श्रवणसंयोगो मिथ्यासंयोग उच्यते ॥ ११९ ॥**
**असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च।**
**स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः ॥ १२० ॥**
**यो भूतविषवातानामकालेनागतश्च यः।**
**स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते ॥ १२१ ॥**
**रूपाणां भास्वतां दृष्टिर्विनश्यत्यतिदर्शनात्।**
**दर्शनाच्चातिसूक्ष्माणां सर्वशश्चाप्यदर्शनात् ॥ १२२ ॥**
**द्विष्टभैरवबीभत्सदूरातिश्लिष्टदर्शनात्।**
**तामसानां च रूपाणां मिथ्यासंयोग उच्यते ॥ १२३ ॥**
**अत्यादानमनादानमोकसात्म्यादिभिश्च यत्।**
**रसानां विषमादानमल्पादानं च दूषणम् ॥ १२४ ॥**
**अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम्।**
**असेवनं सर्वशश्च घ्राणेन्द्रियविनाशनम् ॥ १२५ ॥**
**पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्तवाः।**
**तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ॥ १२६ ॥**
**इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपनः।**

क्रमागतमसात्म्येन्द्रियार्थसंयोगं विवृणोति—अत्युग्रेत्यादि। सर्वशो न चेति सर्वथोग्रशब्दाश्रवणात्। स्पृश्यानामिति स्पृश्यत्वेनोक्तानां शास्त्रेऽभ्यङ्गोत्सादनादीनाम्। भूताः सविषक्रिमिपिशाचादयः। यो भूतविषवातादीनां संस्पर्शः, तथाऽकालेनागतः स्नेहशीतोष्णसंस्पर्शश्चेति योजना। तत्राकाले स्नेहसंस्पर्शो यथा—अजीर्णे कफवृद्धिकाले अभ्यङ्गस्पर्शः, एवं शीते शीतस्पर्शः, उष्णे चोष्णस्पर्शोऽकालेनागतो ज्ञेयः। सर्वशश्चाप्यदर्शनादिति भास्वतां सूक्ष्माणां च सर्वथाऽदर्शनात्। अतिश्लिष्टमिति नेत्रप्रत्यासन्नम्। तामसानां च रूपाणां दर्शनाद्विनश्यति दृष्टिरिति संबन्धः। मिथ्यायोगः स इति द्विष्टभैरवादिदर्शनरूपः। अतिसूक्ष्मदर्शनं च मिथ्यायोग एव ज्ञेयः। ओकसात्म्यादिभिरिति

१ 'भवन्तीति' इति पा०। २ '°प्रवर्तमानत्वेन' इति पा०। ३ अन्ये च ये केचिदिति अर्धावभेदकापस्मारादयः। ४ '°पर्यवसानान्तरजः' इति पा०। ५ 'रसायनप्रयोगबलेन' इति पा०।

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। २ '°तिश्लिष्टदर्शनात्' इति पा०। ३ "सर्वशः न च श्रवणात्, अश्रवणात्, अतिहीनानां शब्दानां श्रवणाच्च। शब्दस्य सर्वशः अश्रवणम्, अल्पशः श्रवणं वा शब्दस्यायोगः। एवमन्यत्र बोद्धव्यम्।" इति योगीन्द्रनाथसेनः।

विषमादानमिति संबन्धः। ओकसात्म्यादिवैपम्येण च राशिदोषवर्जं प्रकृत्यादिसप्तदोषा ग्रहीतव्याः। त्रिविध इति अयोगातियोगमिथ्यायोगरूपः॥ ११८–१२६॥—

**असात्म्यमिति तद्विद्याद्यन्न याति सहात्मताम्॥१२७॥**

असात्म्यार्थं दर्शयति—असात्म्यमित्यादि। सहेति मिलितं शरीरेण। आत्मताम् अविकृतरूपतां न याति; एतेन, यदुपयुक्तं प्राकृतरूपोपघातकं भवति, तदसात्म्यमिति॥ १२७॥

**मिथ्यातिहीनयोगेभ्यो यो व्याधिरुपजायते।**
**शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः॥१२८॥**

इत्थमसात्म्यार्थजस्य व्याधेरिन्द्रियद्वारभूतत्वेनैन्द्रियकत्वं दर्शयन्नाह— मिथ्येत्यादि। हीनयोगेनेहायोगो ग्राह्यः। ऐन्द्रियक इति इन्द्रियद्वारभूतः॥ १२८॥

**वेदनानामशान्तानामित्येते हेतवः स्मृताः।**
**सुखहेतुः समस्त्वेकः समयोगः सुदुर्लभः॥ १२९॥**

दुःखरूपवेदनाहेतुं प्रपञ्चोक्तमुपसंहरति—वेदनानामित्यादि। अशान्तानामिति दुःखानाम्। अथ सुखरूपवेदनाहेतुः क इत्याह—सुखेत्यादि। समयोग इति कालबुद्धीन्द्रियार्थानां सम्यग्योगः। सुदुर्लभ इति कालादिसम्यग्योगस्य अयोगादिविरहत्वेन सुदुर्लभत्वात्। प्रायो हि कालादीनां मध्ये अन्यतरेणाप्ययोगादिना पुरुषः संबध्यते; तेन च नित्यातुरा एव पुरुषा भवन्ति, अल्पं च रोगमनादृत्य स्वस्थव्यपदेशः पुरुषाणां क्रियत इति भावः॥ १२९॥

**नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः।**
**हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्विधः॥ १३०॥**
**सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक्।**
**न सुखं, कारणं तस्माद्योग एव चतुर्विधः॥ १३१॥**

संप्रति सम्यग्योगस्योपादेयतामयोगादीनां च हेयतां दर्शयितुं योगमेव चतुर्विधं कारणत्वेन दर्शयन्नाह—नेन्द्रियाणीत्यादि। ननु कथमिन्द्रियार्थयोः सुखदुःखकारणत्वेनोपलभ्यमानयोरप्यकारणत्वमित्याह—सन्तीत्यादि। योगो न चेति इन्द्रियार्थयोः संबन्धो न च। न सुखमिति च्छेदः। इन्द्रियार्थयोर्योगाभावे अकारणत्वेन, सति तु योगे कारणत्वेन, योग एवान्वयव्यतिरेकाभ्यां कारणमवधार्यत इति भावः। अयं च योग इन्द्रियार्थावधिकृत्य स्पष्टत्वेनोक्तः; तेन, प्रज्ञाकालयोरपि बोद्धव्यः। एतच्चेन्द्रियमर्थं चानुपादेयं कृत्वा चतुर्विधयोगस्य कारणत्वं योगानामेव हेयोपादेयत्वोपदर्शनार्थं कृतम्॥ १३०॥१३१॥

**नात्मेन्द्रियं मनो बुद्धिं गोचरं कर्म वा विना।**
**सुखदुःखं, यथा यच्च बोद्धव्यं तत्तथोच्यते॥१३२॥**

परमार्थतस्त्वात्मेन्द्रियमनोबुध्यर्थादृष्टान्येव तथायुक्तानि सुखदुःखकारणानीति दर्शयन्नाह—नात्मेत्यादि। गोचर इन्द्रियार्थः। कर्म अदृष्टम्। तत्र आत्मानं विना न लोष्टादौ सुखदुःखे भवतः। इन्द्रियार्थादीनां च सुखदुःखकारणत्वं स्पष्टमेव। कर्मापि च शुभं सुखकारणम्, अशुभं च दुःखकारणम्। यद्यात्मादय एव कारणं, तर्हि किमर्थं कालाद्ययोगातियोगादय इहोच्यन्त इत्याह—यथेत्यादि। यद् बोद्धव्यं सुखदुःखं यथा बोद्धव्यं कार्यवशाद्भवति, तत्तथैवोच्यते नान्यथा। तेन सात्म्यासात्म्येन्द्रियार्थजन्यत्वेन सुखदुःखे इह प्रतीयमाने चिकित्सायामुपयुक्ते भवतः, नैात्मादिजन्यत्वेनेह सुखदुःखे अभिधीयेते; न ह्यात्मादयो दुःखहेतुतया प्रतिपन्ना अपीह हेयतया प्रतिपाद्यन्ते; किन्त्वसात्म्येन्द्रियार्थयोगादय एव दुःखहेतवस्त्यज्यन्ते, सुखहेतवः सात्म्येन्द्रियार्थयोगादयस्तूपादीयन्त इति भावः १३२

**स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च।**
**द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः॥ १३३॥**

इदानीं सकलकारणव्यापकं योगं व्युत्पादयितुमैन्द्रियकं मानसं च स्पर्शं दर्शयितुमाह—स्पर्शनेत्यादि। स्पर्शनेन्द्रियसंस्पर्श इत्यनेनेन्द्रियाणामर्थेन संबन्धं स्पर्शनेन्द्रियकृतं दर्शयति; चक्षुरादीन्यपि स्पृष्टमेवार्थं जानन्ति; यदि ह्यस्पृष्टमेव चक्षुः श्रोत्रं घ्राणं वा गृह्णाति,तदा विदूरमपि गृह्णीयात्, न च गृह्णाति, तस्मात् स्पृष्ट्वैवेन्द्रियाण्यर्थं प्रतिपद्यन्ते; मानसस्तु स्पर्शश्चिन्त्यादिनाऽर्थेन समं सूक्ष्मोऽस्त्येव, येन मनः किञ्चिदेव चिन्तयति, न सर्वं; तेन यन्मनसा स्पृश्यते तदेव मनो गृह्णातीति स्थितिः १३३

**इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्तते।**
**तृष्णा च सुखदुःखानां कारणं पुनरुच्यते॥ १३४॥**
**उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान्।**
**स्पृश्यते नानुपादाने नास्पृष्टो वेत्ति वेदनाः॥१३५॥**

सुखदुःखोत्पत्तिक्रममाह—इच्छेत्यादि। सुखादिच्छारूपा तृष्णा, दुःखाच्च द्वेषरूपा तृष्णा प्रवर्तते। इयं चोत्पन्ना तृष्णा ईप्सितेऽर्थे प्रवर्तयन्ती द्विष्टे च निवर्तयन्ती प्रवृत्तिनिवृत्तिविषयस्य सुखदुःखहेतुतामपेक्ष्य सुखदुःखे जनयतीति वाक्यार्थः। यथोक्तं तृष्णायाः सुखदुःखहेतुत्वं दर्शयन्नाह—उपादत्ते हीत्यादि। वेदनाश्रयसंज्ञकानिति वेदनाकारणत्वेनोक्तान् कालाद्ययोगादिरूपान्। अथ तृष्णा चेत् सुखदुःखकारणं, तत् किमिन्द्रियार्थेनापरेण कारणेनेत्याह—स्पृश्यत इत्यादि। अनुपादान इति अविद्यमानार्थरूपे स्पर्शकारणे अर्थे विना नार्थस्य स्पर्शो भवति। अथ न भवत्वर्थस्पर्शः, ततः किमित्याह—नास्पृष्टो वेत्ति वेदना इति; अर्थस्पर्शशून्यः सन् न सुखदुःखे अनुत्पन्नत्वादेव वेत्तीत्यर्थः॥ १३४॥ १३५॥

**वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः।**
**केशलोमनखाग्रान्नमलद्रवगुणैर्विना॥ १३६॥**

१–२ 'असात्म्यानां' इति पा०। ३ 'नास्ति' इति पा०। ४ 'नात्मेन्द्रियमनोबुद्धिगोचरं' इति पा०

१ 'नोष्णादौ' इति पा०। २ 'नात्मादिजन्यत्वेन। आत्मादिजन्यत्वेनेह सुखदुःखे अभिधीयेते, नह्यात्मादयः सुखदुःखहेतुतया प्रतिपाद्यन्ते' इति पा०। ३ 'जिह्वासातृष्णा' इति पा०। ४ 'अविद्यमानार्थरूपमूलकारणेऽर्थस्पर्शो न भवति' इति पा०

'वेदनानां किमधिष्ठानम्'इत्यस्योत्तरमाह—वेदनानामित्यादि। देहः सेन्द्रिय इति अनेन निरिन्द्रियो देहो केशलोमादिको निरस्तः। तदेव स्पष्टार्थं विवृणोति—केशेत्यादि। किंवा, इन्द्रियाण्यपि प्राधान्यख्यापनार्थं प्रथग् वेदनाश्रयत्वेनेन्द्रियग्रहणेनोच्यन्ते। वेदनाया देहेन्द्रियगतत्वं तदाधारत्वेन प्रतीयमानत्वाज्ज्ञेयम्। द्रवं मूत्रम्। गुणाः शब्दादयः। शरीरगता एते हि केशादयो न वेदनाधारा इत्यनुभव एव प्रमाणम्। या तु मूत्रपुरीषगता वेदना ग्रहणीमूत्रकृच्छ्रादौ वक्तव्या, सा मूत्रपुरीषाधारशरीरप्रदेशस्यैव योध्या ॥ १३६ ॥

**योगे मोक्षे च सर्वासां वेदनानामवर्तनम्।**
**मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः ॥१३७॥**

'क चैता वेदनाः सर्वा' इत्यादिप्रश्नस्योत्तरं—योग इत्यादि। योगः' अनारम्भात्' इत्यादिग्रन्थवक्ष्यमाणः। मोक्ष आत्यन्तिकशरीराद्युच्छेदः। निःशेषेति न पुनर्भवति। एतेन, योगे निवृत्ता वेदना पुनर्भवतीति सूचयति। मोक्षप्रवर्तक इति मोक्षकारणम्। किंवा, 'योगमोक्षौ निवर्तकौ' इति पाठः; तदा अस्मिन् पक्षे यद्यपि योगमोक्षयोर्वेदनानिवर्तकत्वं 'योगे मोक्षे च' इत्यादिना श्लोकार्धेनोक्तं, तथाऽपि योगमोक्षयोरिह कर्तृता वेदनानिवृत्तिं प्रति दृश्यत इति न पौनरुक्त्यम् ॥ १३७ ॥

**आत्मेन्द्रियमनोर्थानां सन्निकर्षात् प्रवर्तते।**
**सुखदुःखमनारम्भादात्मस्थे मनसि स्थिरे ॥ १३८॥**
**निवर्तते तदुभयं वशित्वं चोपजायते।**
**सशरीरस्य योगज्ञास्तं योगमृषयो विदुः ॥ १३९॥**

यथा योगो वेदनानिवर्तको भवति, यश्च योगस्तमाह—आत्मेत्यादि। अनारम्भादिति विषयोपादानार्थं मनसाऽनारम्भात्। आत्मस्थे मनसीति विषये निवृत्ते केवलात्मज्ञानस्थे। स्थिरे इति अचले, आत्मज्ञानप्रसक्त एवेति यावत्। तदुभयमिति सुखदुःखे। योगे योगधर्मान्तरप्राप्तिमाह—वशित्वमित्यादि। वशित्वं वक्ष्यमाणमष्टविधमैश्वर्यबलम्। सशरीरस्येतिपदेन शरीरेण सहैव वशित्वं भवतीति दर्शयति ॥ १३८ ॥ १३९ ॥

**आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया।**
**दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम्॥१४०**
**इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम्।**
**शुद्धसत्त्वसमाधानात्तत् सर्वमुपजायते ॥ १४१॥**

आवेश इत्यादि। आवेशः परपुरप्रवेशः। चेतसो ज्ञानमिति परचित्तज्ञानम्। अर्थानां छन्दतः क्रियेति अर्थानामिच्छातः करणम्। दृष्टिः अतीन्द्रियदर्शनम्। श्रोत्रम् अतीन्द्रियश्रवणम्। स्मृतिः सर्वभावतत्त्वस्मरणम्। कान्तिः अमानुषी कान्तिः। इष्टतश्चाप्यदर्शनमिति यदेच्छति तदा दर्शनयोग्य एव न दृश्यते, यदा चेच्छति तदा दृश्यते। किंवा, आवेशश्चेतस इति परचेतसः प्रवेशः, ज्ञानमिति सर्वमतीतानागतादिज्ञानं, शेषं पूर्ववत्। ऐश्वरमिति योगप्रभावादुपपन्नैश्वर्यकृतम्। शुद्धसत्त्वसमाधानादिति नीरजस्तमस्कस्य मनस आत्मनि सम्यगाधानात् ॥ १४० ॥ १४१ ॥

१ 'कर्तृतया वेदनानिवृत्तिं दर्शयति' इति पा०।
२ 'मनसोऽनवस्थानात्' इति पा०।

**मोक्षो रजस्तमोऽभावात् बलवत्कर्मसंक्षयात्।**
**वियोगः सर्वसंयोगैरपुनर्भव उच्यते ॥ १४२ ॥**

अथ कथं मोक्षो भवति, कश्चेत्याह—मोक्ष इत्यादि। बलवत्कर्मसंक्षयादिति अवश्यभोक्तव्यफलस्य कर्मणः क्षयात्। सर्वसंयोगैरिति सर्वैरात्मसंबन्धिभिः शरीरबुध्यहङ्कारादिभिः। न पुनः शरीरादिसंबन्धो भवतीत्यपुनर्भवः ॥ १४२ ॥

**सतामुपासनं सम्यगसतां परिवर्जनम्।**
**व्रतचर्योपवासौ च नियमाश्च पृथग्विधाः ॥ १४३ ॥**
**धारणं धर्मशास्त्राणां विज्ञानं विजने रतिः।**
**विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥ १४४ ॥**
**कर्मणामसमारम्भः कृतानां च परिक्षयः।**
**नैष्क्रम्यमनहङ्कारः संयोगे भयदर्शनम् ॥ १४५ ॥**
**मनोबुद्धिसमाधानमर्थतत्त्वपरीक्षणम्।**
**तत्त्वस्मृतेरुपस्थानात् सर्वमेतत् प्रवर्तते ॥ १४६ ॥**

प्रस्तावान्मोक्षोपायमाह—सतामित्यादि। परा धृतिरिति अतिशयितं मनोनियमनम्। कर्मणामसमारम्भ इति अनागतधर्माधर्मसाधनानामकरणम्। कृतानां च परिक्षय इति जन्मान्तरैः कृतानां कर्मणां फलोपभोगात् परिक्षयः। नैष्क्रम्यं संसारनिष्क्रमणेच्छा। अनहङ्कार इति ममेदम्, अहं 'करोमि'इत्यादिबुद्धिवर्जनम्। संयोग इति आत्मशरीरादिसंयोगे। मनोबुद्धिसमाधानमिति मनोबुध्योरात्मनि समाधानम्। सर्वमेतदिति 'कर्मणामसमारम्भः' इत्याद्युक्तम्। तत्त्वस्मृतिः आत्मादीनां यथाभूतानुसरणं; सा च नात्मा शरीराद्युपकार्यः, शरीरादयश्चामी आत्मव्यतिरिक्ताः, इत्यादिस्मरणरूपस्मृतिः ॥ १४३-१४६ ॥

**स्मृतिः सत्सेवनाद्यैश्च धृत्यन्तैरुपजायते।**
**स्मृत्वा स्वभावं भावानां स्मरन् दुःखात् प्रमुच्यते१४७**

अथ स्मृतिः कथं दुःखप्रमोक्षे कारणमित्याह—स्मृत्वेत्यादि। स्वभावमिति प्रत्यात्मनियतरूपम्। गुरुवचनाद्धि प्रथमप्रतिपन्नमात्मादीनां रूपं परस्परभिन्नं परस्परानुपकारकत्वेन व्यवस्थितं स्मरन् न क्वचिदपि प्रवर्तते, अप्रवर्तमानश्च न दुःखेन प्रवृत्तिजन्येन युज्यत इत्यर्थः ॥१४७॥

**वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते।**
**निमित्तरूपग्रहणात् सादृश्यात् सविपर्ययात् ॥१४८**
**सत्त्वानुबन्धादभ्यासाज्ज्ञानयोगात् पुनः श्रुतात्।**
**दृष्टश्रुतानुभूतानां स्मरणात् स्मृतिरुच्यते ॥ १४९ ॥**

१ 'न पुनः शरीरादिसंबन्धेन भवनमपुनर्भवः' इति पा०।
२ 'नैष्कर्म्यं' इति पा०। ३ 'इतःत आरभ्य सर्वमुक्तम्' इति पा०।
४ 'यथार्थस्मरणम्' इति पा०।

इदानीं स्मृतिप्रस्तावात् स्मृतिकारणान्याह—वक्ष्यन्त इत्यादि। निमित्तग्रहणं कारणज्ञानं, कारणं हि दृष्ट्वा कार्यं स्मरति। रूपग्रहणम् आकारग्रहणम्। यथा—वने गवयं दृष्ट्वा गां स्मरति। सादृश्याद् यथा—पितुः सदृशं पुत्रं दृष्ट्वा पितरं स्मरति। सविपर्ययादिति अत्यर्थवैसादृश्यादपि स्मरणं भवति; यथा—अत्यर्थकुरूपं दृष्ट्वा प्रतियोगिनमत्यर्थसुरूपं स्मरति। सत्त्वानुबन्धादिति मनसः प्रणिधानात्, स्मर्तव्यस्मरणाय प्रणिहितमनाः स्मर्तव्यं स्मरति। अभ्यासादिति अभ्यस्तमर्थमभ्यासबलादेव स्मरति। ज्ञानयोगादिति तत्त्वज्ञानयोगात्; उपजाततत्त्वज्ञानो हि तद्बलादेव सर्वं स्मरति। पुनः श्रुतादिति श्रुतोऽप्यर्थो विस्मृतः पुनरेकदेशं श्रुत्वा स्मर्यते। स्मृतिकारणमभिधाय स्मृतिरूपमाह—दृष्टेत्यादि।—दृष्टं प्रत्यक्षोपलक्षणं, श्रुतं त्वागमप्रतीतं, तेन सर्वपूर्वानुभूतावरोधः। क्वचित्, 'स्मरणं स्मृतिरुच्यते' इति पाठः, तत्रापि नार्थभेदः॥ १४८॥ १४९॥

**एतत्तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम्।**
**तत्त्वस्मृतिबलं, येन गता न पुनरागताः॥ १५०॥**
**अयनं पुनराख्यातमेतद्योगस्य योगिभिः।**
**संख्यातधर्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम्॥१५१॥**

एवं स्मृतिं सामान्येन प्रतिपाद्य तत्त्वस्मृतेर्मोक्षसाधकत्वं दर्शयन्नाह—एतदित्यादि। एकमयनमिति श्रेष्ठः पन्थाः। मुक्तैरिति जीवन्मुक्तैरिति ज्ञेयं, सर्वथामुक्तानां शरीराभावेनोपदर्शकत्वाभावात्। तत्त्वस्मृतिबलमिति तत्त्वस्मृतिरूपं बलं; किंवा, तत्त्वस्मृतिर्बलं यत्र मोक्षसाधनमार्गे तत्तत्त्वस्मृतिबलम्। येनेति येन यथा। गता इति मोक्षं गताः। न पुनरागता इति मुक्तिं याता न पुनरागच्छन्ति॥ १५०॥ १५१॥

**सर्वं कारणवद्दुःखमस्वं चानित्यमेव च।**
**न चात्मकृतकं तद्धि तत्र चोत्पद्यते स्वता॥ १५२॥**
**यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यया।**
**नैतन्ममेति विज्ञाय ज्ञः सर्वमतिवर्तते॥ १५३॥**

इदानीं संक्षेपेण संसारहेतुमज्ञानं, तथा मोक्षहेतुं च सम्यग्ज्ञानं दर्शयन्नाह—सर्वमित्यादि। सर्वं कारणवदिति सर्वमुत्पद्यमानं बुद्ध्यहङ्कारशरीरादि। दुःखमिति दुःखहेतुरेव। अस्वमिति सर्वं कारणवदेवात्मव्यतिरिक्तं परमार्थतः। न चात्मकृतकमिति न चात्मनोदासीनेन कृतम्। तत्रेति कारणवति बुद्धिशरीरादौ। स्वतेति ममता 'ममेयं बुद्धिः' इत्यादिरूपा। अथ कियन्तं कालमियं भ्रान्त्या युतोत्पद्यते इत्याह—यावदित्यादि। सत्या बुद्धिः सम्यग्ज्ञानम्। यया सत्यया बुद्ध्या। नैतद् बुद्ध्याद्यहं, किंतु भिन्न एवाहं; तथा नैतद् बुद्ध्यादि मम, किंतु प्रकृतेः प्रपञ्च इति विज्ञाय। ज्ञः तत्त्वसाक्षात्कारवान्। सर्वमतिवर्तते इति सर्वं बुद्ध्यादि त्यजति॥ १५२॥१५३॥

**तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः।**
**ससंज्ञाज्ञानविज्ञाना निवृत्तिं यान्त्यशेषतः॥ १५४॥**

चरमसंन्यास इति पश्चाद्भाविसकलकर्मसंन्यासे। प्रथमं हि मोक्षोपयोगित्वेन गुरुवचनात् क्रियासंन्यासः कृत एव, परं स्वानुभवविरक्तेन न कृतः; अभ्यासादुद्भूतेन ज्ञानेन साक्षाद्दृष्टभावस्वभावेन यः सर्वसन्न्यासः क्रियते, तत्र समूलाः सर्ववेदना ज्ञानादयश्च शरीरोपरमादेवोपरमन्ते। समूला इति सकारणाः, कारणं च बुद्ध्यादयः। संज्ञा आलोचनं निर्विकल्पकं, ज्ञानं सविकल्पकं, विज्ञानं बुद्ध्यवसायः; किंवा, संज्ञा नामोल्लेखेन ज्ञानं, विज्ञानं शास्त्रज्ञानम्। तत्त्वज्ञानमपि हि मोक्षं जनयित्वा निवर्तत एव, कारणाभावात्॥ १५४॥

**अतः परं ब्रह्मभूतो भूतात्मा नोपलभ्यते।**
**निःसृतः सर्वभावेभ्यश्चिह्नं यस्य न विद्यते॥**
**ज्ञानं ब्रह्मविदां चात्र नाज्ञस्तज्ज्ञातुमर्हति॥ १५५॥**

'सर्वविद्' इत्यादिप्रश्नस्योत्तरम्—अतः परमित्यादि। ब्रह्मभूत इति प्रकृत्यादिरहितः। चिह्नं यस्य न विद्यते इत्यनेन मुक्तात्मनः प्राणापानाद्यात्मलिङ्गाभावाद्ब्रह्मकं चिह्नं नास्त्येवेति दर्शयति। न क्षरति अन्यथात्वं न गच्छतीत्यक्षरम्। अविद्यमानं लक्षणं यस्येति अलक्षणम्। एतस्यैव मोक्षस्येतरपुरुषाज्ञेयतां दर्शयति—ज्ञानमित्यादि। ब्रह्मविदामेवात्र मनः प्रस्येति, नाज्ञानामहङ्कारादिवासनागृहीतानामित्यर्थः॥ १५५॥

तत्र श्लोकः—

**प्रश्नाः पुरुषमाश्रित्य त्रयोविंशतिरुत्तमाः।**
**कतिधापुरुषीयेऽस्मिन्निर्णीतास्तत्त्वदर्शिना॥ १५६॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने कतिधापुरुषीयं शारीरं नाम प्रथमोऽध्यायः॥ १॥**

संग्रहो व्यक्तः॥ १५६॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां शारीरस्थाने कतिधापुरुषीयं शारीरं नाम प्रथमोऽध्यायः॥ १॥

## द्वितीयोऽध्यायः।

**अथातोऽतुल्यगोत्रीयं शारीरं व्याख्यास्यामः॥ १॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

पूर्वाध्याये शरीरस्यादिसर्ग आध्यात्मिको नैष्ठिकमोक्षरूपचिकित्सोपयुक्त उक्तः, संप्रति गर्भादिरूपं सर्गमभिधातुमतुल्यगोत्रीयोऽभिधीयते॥ १॥ २॥

---

१ 'कार्यज्ञानं' इति पा०। २ 'आकाररूपग्रहणम्' इति पा०। ३ 'एकदेशस्मृत्या' इति पा०। ४ 'त्वागमप्रतिपादकम्' इति पा०। ५ 'श्रेयः पन्थाः' इति पा०। ६ 'दर्शयितुमाह' इति पा०। ७ 'भिन्नमेवेदं' इति पा०।

१ 'समग्रज्ञेयविज्ञानान्निवृत्तिं' इति पा०। २ 'अद्यानुभवविरक्तेन' इति पा०। ३ 'अभ्यासादुद्भवबलेन' इति पा०। ४ 'गर्भस्यादिरूपमभिधातुमतुल्यगोत्रीयोऽभिधीयते' इति पा०।

अतुल्यगोत्रस्य रजःक्षयान्ते
रहोविसृष्टं मिथुनीकृतस्य।
किं स्याच्चतुष्पात्प्रभवं च षड्भ्यो
यत् स्त्रीषु गर्भत्वमुपैति पुंसः॥ ३॥

अतुल्यगोत्रस्येति अतुल्यगोत्रस्य पुंसः। तुल्यगोत्राणां हि मैथुनेऽधर्मो भवति, धर्मशास्त्रेषु निषिद्धत्वात्। रजःक्षयान्ते इति रजःप्रवृत्त्यन्ते; 'अन्ते' इतिपदेन रजःप्रवृत्तित्र्यहं निषेधयति। रहोविसृष्टमिति विजने विसृष्टम्। शुक्रविसर्गश्च विजन एव प्रतिबन्धकलज्जाभावात् सम्यग्भवतीति रह इत्यनेन दर्शयति। मिथुनीकृतस्येत्यनेन सम्यङ्मैथुनप्रयोगं दर्शयति, विपरीतसुरतादींश्च निषेधति। चतुष्पादत्वपद्प्रभवत्वे उत्तरग्रन्थे एव व्यक्ते। अयं च शिष्यप्रश्नतया निवेशितो ग्रन्थः अ(प्रा)ज्ञशिष्यस्य आचार्यसन्मतिमात्रार्थो ज्ञेयः; तेन यः शिष्यश्चतुष्पदादिविशेषं सूक्ष्मं बीजस्य जानाति, स कथं शुक्रशब्दाभिधेयं न वेत्तीति न वाच्यम्॥ ३॥

शुक्रं तदस्य प्रवदन्ति धीरा
यद्धीयते गर्भसमुद्भवाय।
वाय्वग्निभूम्यब्गुणपादवत्तत्
षड्भ्यो रसेभ्यः प्रभवश्च तस्य॥ ४॥

प्रश्नस्योत्तरं—शुक्रमित्यादि। धीयत आरोप्यत इत्यर्थः। वाय्वादिपादवदिति वक्तव्ये यद् गुणपदमधिकं करोति, तेन प्रशस्तगुणवतामेव वाय्वादीनां विशुद्धशुक्रारम्भकत्वमिति दर्शयति। वाय्वादिषु शुक्रारम्भकेषु पादव्यपदेशेन सर्वेषां तुल्यशुक्रारम्भकत्वं दर्शयति। आकाशं तु यद्यपि शुक्रे पाञ्चभौतिकेऽस्ति, तथाऽपि न पुरुषशरीरान्निर्गत्य गर्भाशयं गच्छति, किंतु भूतचतुष्टयमेव क्रियावद् याति, आकाशं तु व्यापकमेव तत्रगतेन शुक्रेण संबद्धं भवति, तेनाकाशस्य गमनाभावादिह गर्भाशयगमनाभिधानप्रस्तावे शुक्रगतत्वेनानभिधानम्। अन्यत्रापि च भूतानां गमनप्रस्तावे आकाशं परित्यक्तमेव। यथा—"भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्" इति। शुक्रं च षड्रसाहारोत्पन्नमेव विशुद्धं भवतीति कृत्वोक्तं—षड्भ्यो रसेभ्य इत्यादि। यत्तु मधुरस्य शुक्रजनकत्वमम्लादीनां च शुक्रविघातकत्वमुच्यते, तदत्यर्थोपयोगादिति ज्ञेयम्॥ ४॥

संपूर्णदेहः समये सुखं च
गर्भः कथं केन च जायते स्त्री।
गर्भं चिराद्विन्दति सप्रजाऽपि
भूत्वाऽथवा नश्यति केन गर्भः॥ ५॥

'संपूर्णदेहः कथं जायते' इत्येकः प्रश्नः, 'समये कथं जायते' इति द्वितीयः, 'सुखं कथं जायते' इति तृतीयः। सप्रजाऽपीति अवन्ध्याऽपि सती कथं चिरेण गर्भं विन्दति॥ ५॥

शुक्रासृगात्माशयकालसंपद्
यस्योपचारश्च हितैस्तथाऽन्नैः[1]।
गर्भश्च काले च सुखी सुखं च
संजायते संपरिपूर्णदेहः॥ ६॥

योनिप्रदोषान्मनसोऽभितापा-
च्छुक्रासृगाहारविहारदोषात्।
अकालयोगाद्बलसंक्षयाच्च
गर्भं चिराद्विन्दति सप्रजाऽपि॥ ७॥

असृङ्निरुद्धं पवनेन नार्या
गर्भं व्यवस्यन्त्यबुधाः कदाचित्।
गर्भस्य रूपं हि करोति तस्या-
स्तदसृगस्रावि विवर्धमानम्॥ ८॥

तदग्निसूर्यश्रमशोकरोगै-
रुष्णान्नपानैरथवा प्रवृत्तम्।
दृष्ट्वाऽसृगेकं न च गर्भसंज्ञं
केचिन्नरा भूतहृतं वदन्ति॥ ९॥

ओजोशनानां रजनीचराणा-
माहारहेतोर्न शरीरमिष्टम्।
गर्भं हरेयुर्यदि ते न मातु-
र्लब्धावकाशा न हरेयुरोजः॥ १०॥

पञ्चानां प्रश्नानामुत्तरं—शुक्रेत्यादि। संपच्छब्दः शुक्रादिभिः प्रत्येकमभिसंबध्यते। शुक्रासृगाशयानामदुष्टत्वं संपद्, आत्मनस्तु शुक्रशोणितसंयोगाधिष्ठातुः शुभजीवकर्मयुक्तत्वं संपत्, कालस्य त्वनतितीक्ष्णत्वादि संपत्। उपचारो गर्भिण्युपचारः। काल इति नवमे दशमे वा मासे। यदुक्तं—"कालः पुनर्नवमं मासमुपादायादशमात्" (शा. अ. ४) इति। सुखीति व्याधिना केनचिन्न ग्रस्तः। सुखमिति अक्लेशेन। अकालयोगादिति ऋतुकालातिक्रमेण पुरुषेण संयोगात्, ऋतुकालश्च षोडशरात्रं यावत्। यदुक्तं हारीते—"षोडश दिवसा ऋतुकालः" इति। सुश्रुते तु द्वादशरात्रमृतुकाल उक्तः। 'भूत्वाऽथवा नश्यति केन गर्भः' इत्यस्योत्तरम्—असृगित्यादि। पवनेनेति दुष्टवातेन। कृते असृङ्निरोधे गर्भभ्रमो भवतीत्याह—गर्भस्य रूपमित्यादि। गर्भाशये हि विवर्धमानं रुधिरं प्रभावाद्गर्भलिङ्गानि कानिचिद्दर्शयतीत्यर्थः। असृगेकमिति असृगेव परम्। न च गर्भसंज्ञमिति न गर्भं ग्रन्थाद्याकारकम्। भूतैर्गर्भानाहरणे हेतुमाह—ओजोशनानामित्यादि। ओजः अष्टबिन्दुकमश्नन्तीति ओजोशनाः। यदि त्वनाहारभूतमपि गर्भं हरेयुस्तदा मातुर्नितरामाहारभूतमोजो लब्धावकाशत्वेन हरेयुः। लब्धावकाशा इति प्राप्तगर्भिण्यभिगमनकारणाः॥ ६–१०॥

१ 'चतुष्पदं षड्रसप्रभवं किमस्य' इति पा०। २ 'शुक्रस्याभिधेयतां' इति पा०। ३ 'क्रियावत्त्वात्' इति पा०।

१ 'हितैस्तथाऽर्थैः' इति पा०। २ 'विबद्धं' इति पा०। ३ तदग्निसूर्यश्रमरोषशोकैः' इति पा०। ४ 'दृष्ट्वाऽसृगेवं' इति पा०।

कन्यां सुतं वा सहितौ पृथग्वा
सुतौ सुते वा तनयान् बहून् वा ।
कस्मात् प्रसूते सुचिरेण गर्भ-
मेकोऽभिवृद्धिं च यमेऽभ्युपैति ॥ ११ ॥

कन्यामित्यादि प्रश्नाष्टकम् । कन्यां कस्मात् पृथक् प्रसूत इति प्रथमः, सुतं पृथग् वेति द्वितीयः, सहितौ कन्यासुतौ वेति तृतीयः, सुतौ सहिताविति चतुर्थः, सुते सहिते इति पञ्चमः, तनयान् बहून् वेति षष्ठः, सुचिरात् कथं स्त्री प्रसूत इति सप्तमः, यमे युग्मे कथमेकोऽभिवृद्धिमभ्युपैतीत्यष्टमः ॥११॥

रक्तेन कन्यामधिकेन पुत्रं
शुक्रेण तेन द्विविधीकृतेन
बीजेन कन्यां च सुतं च सूते
यथास्वबीजान्यतराधिकेन ॥ १२ ॥
शुक्राधिकं द्वैधमुपैति बीजं
यस्याः सुतौ सा सहितौ प्रसूते ।
रक्ताधिकं वा यदि भेदमेति
द्विधा सुते सा सहिते प्रसूते ॥ १३ ॥
भिनत्ति यावद्बहुधा प्रपन्नः
शुक्रार्तवं वायुरतिप्रवृद्धः ।
तावन्त्यपत्यानि यथाविभागं
कर्मात्मकान्यस्ववशात् प्रसूते ॥ १४ ॥
आहारमाप्नोति यदा न गर्भः
शोषं समाप्नोति परिस्रुतिं वा ।
तं स्त्री प्रसूते सुचिरेण गर्भं
पुष्टो यदा वर्षगणैरपि स्यात् ॥ १५ ॥
कर्मात्मकत्वाद्विषमांशभेदा-
च्छुक्रासृजोर्वृद्धिमुपैति कुक्षौ ।
एकोऽधिको न्यूनतरो द्वितीय
एवं यमेऽप्यभ्यधिको विशेषः[1] ॥ १६ ॥

रक्तेनेत्याद्युत्तरम् । अधिकेनेति पदं रक्तेन शुक्रेण च योजनीयम् । द्विविधीकृतेन द्विखण्डीकृतेन । यथास्वं बीजेऽन्यतरो भागोऽधिको यत्र तेन बीजेन; एतेन यदि द्विविधे भागे एकत्र रक्तमधिकम्, अपरत्र शुक्रम्, एष विभागो भवति, तदा कन्यासुतौ भवत इत्युक्तं भवति । यावद्बहुधा भिनत्तीति यावतीं बहुसंख्यां करोति चतुःपञ्चादिरूपाम् । प्रपन्न आगतः शुक्रार्तवं वायुरिति संबन्धः । यथाविभागमिति यथा शुक्ररक्तविभागो भवति तथा कन्याः सुताश्च स्वबीजाधिक्यापेक्षया भवन्तीति । कर्मात्मकानि कर्मकारणकानि । अस्ववशात् कर्मपराधीनत्वेन । आहारमित्यादौ गर्भिण्या आहारप्राप्त्या गर्भस्याहारप्राप्तिः । शुक्रासृजोर्यः स्थूलसूक्ष्मरूपो विषमांशभेदो भवति, स जायमानगर्भकर्मवशादेव भवतीत्याह—कर्मात्मकत्वादिति ॥ १२-१६ ॥

कस्माद्द्विरेताः पवनेन्द्रियो वा
संस्कारवाही नरनारिषण्डौ ।
वक्री तथेर्ष्याभिरतिः कथं वा
संजायते वातिकषण्डको वा ॥ १७ ॥

कस्मादित्यादि प्रश्नाष्टकम् । नरषण्डो नारिषण्डश्चेति नरनारिषण्डौ ॥ १७ ॥

बीजात् समांशादुपतप्तबीजात्
स्त्रीपुंसलिङ्गी भवति द्विरेताः ।
शुक्राशयं गर्भगतस्य हत्वा[1]
करोति वायुः पवनेन्द्रियत्वम् ॥ १८ ॥
शुक्राशयद्वारविघट्टनेन
संस्कारवाहं[2] कुरुतेऽनिलश्च ।
मन्दाल्पबीजावबलावहर्षौ
क्लीबौ च हेतुर्विकृतिद्वयस्य ॥ १९ ॥
मातुर्व्यवायप्रतिघेन वक्री
स्याद्बीजदौर्बल्यतया पितुश्च ।
ईर्ष्याभिभूतावपि मन्दहर्षा-
वीर्ष्यारतेरेव[3] वदन्ति हेतुम् ॥ २० ॥
वाय्वग्निदोषाद्वृषणौ तु यस्य
नाशं गतौ वातिकषण्डकः सः ।
इत्येवमष्टौ विकृतिप्रकाराः
कर्मात्मकानामुपलक्षणीयाः ॥ २१ ॥

बीजादिति शुक्रशोणितात् । उपतप्तबीजादिति उपतप्तबीजजनकबीजभागात् । स्त्रीपुंसलिङ्गीति स्त्रीपुरुषसाधारणनासिकाचक्षुरादिलिङ्गयुक्तः, यानि तु स्त्रीपुंसयोरसाधारणान्युपस्थध्वजस्तनश्मश्रुप्रभृतीनि तानि चास्य न संभवन्तीति । असाधारणानि लिङ्गानि वृद्धेन शुक्रेण रक्तेन वा जन्यानि, इह समरक्तशुक्रारब्धेन नास्त्यन्यतरवृद्धिरिति नोपस्थध्वजादिविशेषलिङ्गभवनम् । द्विधा स्त्रीत्वपुरुषत्वोपजनकत्वेन स्थितं रेतो बीजं यस्य स द्विरेताः । किंवा, स्त्रीपुंसलिङ्गीति स्त्रीपुंसयोर्यल्लिङ्गमुपस्थध्वजरूपं, तद्युक्त एव स्त्रीपुरुषलिङ्गी; उत्तरकालभावीनि त्वस्य स्तनश्मश्रुप्रभृतीनि न भवन्ति । अस्मिन् पक्षे बीजोपतापेनोत्तरकालभाविस्तनादिप्रतिबन्धः क्रियते, नोपस्थध्वजोत्पादप्रतिबन्धः कर्मवशादेवेति ब्रुवते । किंवा उपस्थध्वजौ बलवन्तौ, येन तौ गर्भकाल एव भवतः; स्तनादि तूत्तरकालभावितया दुर्बलं, दुर्बलेन बीजोपतापेन न बलवतोरुपस्थध्वजयोर्बाधः, किंतु दुर्बलानामेव स्तनादीनामिति । यत्र समांशे शुक्रशोणिते भवतः, तत्र संयोगमहिम्नैव बीजांशतापो भवतीति ज्ञेयम् । पवनेन्द्रियं विवृणोति—शुक्राशयमित्यादि । शुक्राशयं शुक्रस्थानम् । पवनेन्द्रियत्वमिति पवनशुक्रत्वम् । शुक्रं हीन्द्रि-

१ 'यमेऽधिकेऽप्येष भवेद्विशेषः' इति पा० ।

१ 'गत्वा' इति पा० । २ 'संस्कारवाहं हि करोति वायुः' इति पा० । ३ '०वीर्ष्याद्युयसैव' इति पा० ।

यमुच्यते, पवनस्य चेदमेवेह शुक्रत्वं—यद् व्यवायकाले शुक्रसदृशरूपतया प्रवर्तनं; अस्य हि वायुरेव परं व्यवायकाले याति। शुक्राशयद्वारेत्यादि संस्कारवाहविवरणम्। द्वारविघट्टनेनेति द्वारदूषणेन। संस्कारेण वस्तिवाजीकरणादिना परं यस्य शुक्रमदुष्टद्वारं सत् प्रवर्तते स संस्कारवाहः। अत्र च संस्कारवाहेन सुश्रुतोक्ता आसेक्यसौगन्धिककुम्भीका अन्तर्भावनीयाः, यत एतेऽपि संस्कारविशेषेणैव शुक्रं लभन्ति; यदुक्तं तत्र—"पित्रोरत्यल्पवीर्यत्वादासेक्यः पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्॥ यः पूतियोन्यां जायेत स सौगन्धिकसंज्ञकः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्॥ स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत् प्रवर्तते। कुम्भीकः स तु विज्ञेयः" ( सु. शा. अ. २ ) इति। नरनारीषण्डावाह—मन्देत्यादि। मन्दवेगमल्पं च बीजं ययोस्तौ तथा। अबलाविति निसर्गबलरहितौ। अहर्षाविति अनुत्साहौ। क्लीबाविति दुष्टबीजौ। अत्र यथोक्तगुणा स्त्री स्त्रीषण्डस्य, यथोक्तगुणः पुरुषस्तु पुरुषषण्डस्य हेतुरिति विज्ञेयम्। एतौ त्वबीजावेव ज्ञेयौ; यदुक्तं सुश्रुते—"अशुक्रस्त्वेव षण्डकः" ( सु. शा. अ. २ ) इति। मातुर्व्यवायप्रतिघेनेति व्यवायकाले मातुर्व्यवायानिच्छा विषमाङ्गन्यासो वा व्यवायप्रतिघः, तेन यस्य शुक्रं गर्भाशयं नियमान्नोपैति स वक्रीत्युच्यते। बीजदौर्बल्यतया च पितुर्वक्री स्यादिति योजना। अत्र दुर्बलस्य कर्म दौर्बल्यं तस्य भावो दौर्बल्यता, तेन पितुर्बीजस्य दुर्बलक्रियतयेत्यर्थः। परव्यवायं दृष्ट्वा प्राप्तध्वजोच्छ्रायो व्यवायशक्तो भवति, स ईर्ष्यारतिः। यदुक्तं सुश्रुते—"दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्तते। ईर्ष्यकः स तु विज्ञेयः" ( सु. शा. अ. २ ) इति। कर्मात्मकानामितिपदेन एते क्लैब्यभेदाः प्राक्तनकर्मबलादेव प्रायो भवन्तीति दर्शयति॥ १८–२१॥

गर्भस्य सद्योऽनुगतस्य कुक्षौ
स्त्रीपुंनपुंसामुदरस्थितानाम्।
किं लक्षणं? कारणमिष्यते किं
सरूपतां येन च यात्यपत्यम्॥ २२॥

गर्भस्येत्यादिपञ्च प्रश्नाः। सद्योऽनुगतस्येति सद्योगृहीतस्य। कारणमित्यादि। कारणं किं तत्, येन कारणेन सरूपतां सादृश्यमपत्यं गर्भो यातीत्यर्थः। अयं च पञ्चमः प्रश्नः॥ २२॥

निष्ठीविका गौरवमङ्गसाद-
स्तन्द्राप्रहर्षौ हृदये व्यथा च।
तृप्तिश्च बीजग्रहणं च योन्यां
गर्भस्य सद्योऽनुगतस्य लिङ्गम्॥ २३॥
सव्याङ्गचेष्टा पुरुषार्थिनी[1] स्त्री
स्त्रीस्वप्नपानाशनशीलचेष्टा।
सव्यात्तगर्भा[2] न च वृत्तगर्भा
सव्यप्रदुग्धा स्त्रियमेव सूते॥ २४॥
पुत्रं त्वतो लिङ्गविपर्ययेण
व्यामिश्रलिङ्गा प्रकृतिं तृतीयाम्।
गर्भोपपत्तौ तु मनः स्त्रिया यं
जन्तुं व्रजेत्तत्सदृशं प्रसूते॥ २५॥
गर्भस्य चत्वारि चतुर्विधानि
भूतानि मातापितृसंभवानि।
आहारजान्यात्मकृतानि चैव
सर्वस्य सर्वाणि भवन्ति देहे॥ २६॥
तेषां विशेषाद्बलवन्ति यानि
भवन्ति मातापितृकर्मजानि।
तानि व्यवस्येत् सदृशत्वहेतुं
सत्त्वं यथानूकमपि व्यवस्येत्॥ २७॥

बीजग्रहणं शुक्रस्य योनौ निषिक्तस्यानिःसरणम्। सव्याङ्गप्रधानतया चेष्टते या सा सव्याङ्गचेष्टा। स्त्रिया इव स्वप्नादयो यस्याः सा स्त्रीस्वप्नपानाशनशीलचेष्टा। सव्येन पार्श्वेन आत्तो गृहीतो गर्भो यया सा सव्यात्तगर्भा; किंवा 'सव्याङ्गगर्भा' इति पाठः। न च वृत्तगर्भेति दीर्घगर्भेत्यर्थः। सव्ये स्तने प्रकृष्टं दुग्धं यस्याः सा सव्यप्रदुग्धा। व्यामिश्रलिङ्गा तु सव्यदक्षिणाङ्गचेष्टादिना ज्ञेया। प्रकृतिं तृतीयामिति नपुंसकम्। गर्भोपपत्तावित्यादिना सारूप्यकारणमाह। गर्भोपपत्तौ बीजग्रहणकाले मनो यं जन्तुं व्रजेद् यं प्राणिनं मनसा ध्यायति। एतच्च बीजग्रहणकालीनं मनसाऽनुध्यानं प्रभावादेव चिन्त्यमानसदृशमपत्यं करोतीति ज्ञेयं; किंवा तत्कालीनचिन्तयैव बीजं चिन्त्यमानजन्तुसदृशारम्भशक्तिकं क्रियते, दृष्टश्च मानसानामपि भावानां भूतविशेषकरणे शक्तिविशेषः; यथा—सङ्कल्पः शुक्रोदीरणं करोति, तथा दोहदाप्राप्तौ तच्चिन्तया गर्भविकृतिः, ईर्ष्याभयादीनां चौजःशुक्रक्षयकर्तृत्वमित्यादि। एतदेव च सादृश्यकारणं पश्यता पुनर्वसुकव्यं यथा—"या या यथाविधं पुत्रमाशासीत" इत्युपादाय "सा सा तांस्ताञ्जनपदान् मनसाऽनुक्रमेत्" ( शा. अ. ८ ) इति। जन्त्वनुध्यानं सादृश्यकारणमभिधाय सादृश्यकारणान्तरमाह—गर्भस्येत्यादि। चत्वारीति निर्विशेषमाकाशं वर्जयित्वा। भूतानि चतुर्विधानीति विवृणोति—मातेत्यादि। मातृसंभवानि रक्तगतानि, पितृसंभवानि शुक्रगतानि, आहारजानि तु शुक्रशोणितसंयोगोत्तरकालं मातुराहारसंभूतरसजानि, आत्मजानि त्वात्मप्रतिबद्धकर्मवशभूतानि ज्ञेयानि। तत्र शुभकर्मणा सदृशरूपजनकानि, अशुभकर्मणा तु विसदृशरूपजनकानीति ज्ञेयम्। यानि त्वात्मनि सूक्ष्माणि भूतानि आतिवाहिकशरीररूपाणि, तानि सर्वसाधारणत्वेनाविशेषसादृश्यकारणानीति नेह बोद्धव्यानि। तत्रैवं चतुर्विधानां सादृश्ये किं भवति कारणं, किंभूतं चेत्याह—तेषामित्यादि। विशेषादितिपदेन सर्वाण्येव सादृश्यकारणानि भवन्ति, किंतु यानि बलवन्ति तानि विशेषाद्भूयिष्ठं सादृश्यं जनयन्तीति दर्शयति।

१. 'वक्री वक्रध्वजः स्यात्' इति योगीन्द्रनाथसेनः। २ 'सुसुखार्थिनी या' इति पा०। ३ 'सव्याङ्गगर्भा' इति पा०।

अत्र चाहारजभूतानां प्राक्तनकर्मापेक्षयैव सादृश्यकारणत्वं भवतीति कृत्वा नाहारजानां ग्रहणं कृतं, तेन कर्मजेष्वेवाहारजानामवरोधो ज्ञेयः; पूर्वं तु 'आहारजानि' इति पदेन तेषां विद्यमानतामात्रमुक्तं ज्ञेयम्। किंवा, मातृजादीनि हि मात्रादिभिः सदृशं कुर्वन्ति, नत्वाहारजातान्याहारसदृशं कुर्वन्ति, तेन तेषामिहानुपादानम्। तथा ह्युत्तराध्याये "यानि खल्वस्य रसजानि" (शा. अ. ३) इत्यादिना प्राणानुबन्धादीनि वक्तव्यानि, न च तानि सादृश्यरूपतयेह भवितुमर्हन्ति। देहसादृश्यहेतुमभिधाय मनःसादृश्यहेतुमाह—सत्त्वमित्यादि। अनूकं प्राक्तनाऽव्यवहिता देहजातिः; तेन यथानूकमिति यो देवशरीरादव्यवधानेनागत्य भवति स देवसत्त्वो भवति, यः पशुशरीरादेति स पशुसत्त्वो भवतीत्यादि। अपिशब्दात् कर्मसंबन्धं जातिसंबन्धं च दर्शयति; तेन कर्मवशादपि सत्त्वं राजसं, तामसं, सात्त्विकं वा भवति; तथा मानुषादिजात्यनुरूपं च भवति ॥ २३–२७ ॥

कस्मात् प्रजां स्त्री विकृतां प्रसूते
हीनाधिकाङ्गीं विकलेन्द्रियां वा।
देहात् कथं देहमुपैति चान्य-
मात्मा सदा कैरनुबध्यते च ॥ २८ ॥

कस्मादित्यादिना विकलेन्द्रियां वेत्यन्तेनैकः प्रश्नः; तत्र विकृतामित्यस्य विवरणं—हीनेत्यादि। देहादित्यादिर्द्वितीयः। सदा कैरनुबध्यते इति तृतीयः। ये तु विकृतामितिपदेन कुरूपां, हीनाधिकाङ्गीमितिपदेन च हीनाङ्गादिरूपामेव कुरूपातिरिक्तां वदन्ति, तेषां मते प्रश्नभेदः स्यात्, तथाऽध्यायान्ते च वक्ष्यमाणा प्रश्नसंख्याऽतिरिक्ता भवति ॥ २८ ॥

बीजात्मकर्माशयकालदोषै-
र्मातुस्तथाऽऽहारविहारदोषैः।
कुर्वन्ति दोषा विविधानि दुष्टाः
संस्थानवर्णेन्द्रियवैकृतानि ॥ २९ ॥
वर्षासु काष्ठाश्मघनाम्बुवेगा-
स्तरोः सरित्स्रोतसि संस्थितस्य।
यथैव कुर्युर्विकृतिं तथैव
गर्भस्य कुक्षौ नियतस्य दोषाः ॥ ३० ॥

आत्मीयं कर्म आत्मकर्म, आशयो गर्भाशयः, दोषो वैगुण्यम्। अश्मघनानि पाषाणखण्डाः; वेगाः काष्ठादीनां त्रयाणाम् ॥ २९ ॥ ३० ॥

भूतैश्चतुर्भिः सहितः सुसूक्ष्मै-
र्मनोजवो देहमुपैति देहात्।
कर्मात्मकत्वान्न तु तस्य दृश्यं
दिव्यं विना दर्शनमस्ति रूपम् ॥ ३१ ॥
स सर्वगः सर्वशरीरभृच्च
स विश्वकर्मा स च विश्वरूपः।
स चेतनाधातुरतीन्द्रियश्च
स नित्ययुक् सानुशयः स एव ॥ ३२ ॥
रसात्ममातापितृसंभवानि
भूतानि विद्याद्दश षट् च देहे।
चत्वारि तत्रात्मनि संश्रितानि
स्थितस्तथाऽऽत्मा च चतुर्षु तेषु ॥ ३३ ॥
भूतानि मातापितृसंभवानि
रजश्च शुक्रं च वदन्ति गर्भे।
आप्याय्यते शुक्रमसृक् च भूतै-
र्यैस्तानि भूतानि रसोद्भवानि ॥ ३४ ॥
भूतानि चत्वारि तु कर्मजानि
यान्यात्मलीनानि विशन्ति गर्भम्।
स बीजधर्मा ह्यपरापराणि
देहान्तराण्यात्मनि याति याति ॥ ३५ ॥
रूपाद्धि रूपप्रभवः प्रसिद्धः
कर्मात्मकानां मनसो मनस्तः।
भवन्ति ये त्वाकृतिबुद्धिभेदा
रजस्तमस्तत्र च कर्म हेतुः ॥ ३६ ॥

द्वितीयप्रश्नस्योत्तरं—भूतैरित्यादि। सुसूक्ष्मैरित्यनेन चातीन्द्रियत्वं दर्शयति। आकाशमिहाक्रियत्वेन देहान्तरगमनकर्मणि नोक्तम्। मनसा जवते गच्छतीति मनोजवः। एतेन चात्मनो व्यापकस्य यद्यपि देहान्तरगतिर्नास्ति, तथाऽप्यस्य मनोगतिरेव भूतसहिता गतिशब्देनोच्यत इति दर्शितं भवति। देहादिति म्रियमाणदेहात्। देहमिति उत्पद्यमानदेहम्। कर्मात्मकत्वादिति कर्माधीनत्वात्। तेन, कर्म धर्माधर्मरूपं यत्रैनं भोगार्थं नयति, तदेव देहमयं यातीत्युक्तं भवति। अथ गच्छन् किमित्ययं नोपलभ्यते म्रियमाणपुरुषादित्याह—न त्वित्यादि। तस्यात्मन आतिवाहिकशरीरयुक्तस्य दृश्यं रूपं नास्ति, अतिसूक्ष्मरूपत्वादिति भावः। अथ किं सर्व एवैनं गच्छन्तं न पश्यन्तीत्याह—दिव्यं विना दर्शनमिति।—दिव्यं दर्शनं योगिचक्षुः, तेन योगिन एव पश्यन्त्येनमिति दर्शयति। अस्यैवातिवाहिकशरीरयुक्तस्यात्मनो धर्मान्तराण्याह—स सर्वग इत्यादि। सर्वशरीरभृदिति सर्वशरीराणि भर्तुं योग्यः। विश्वकर्मकरणक्षमो विश्वकर्मा। विश्वरूपतां च नरपश्वादिशरीररूपतया कर्मवशाद्भजत इति विश्वरूपः। नित्यं बुद्ध्यादिभिर्युज्यत इति नित्ययुक्। सहानुशयेन रागादिना वर्तत इति सानुशयः। आतिवाहिकशरीररूपभूतचतुष्टयव्याकरणार्थं शरीरे यानि संभवन्ति भूतानि तान्येवाह—रसेत्यादि। एतानि भूतानि सारूप्यहेतुप्रस्तावोक्तान्यपि प्रकरणवशात्तथा वक्तव्यरजःशुक्राद्यनुक्तरूपप्र-

१ 'एकः' इति पा०। २ 'देहे रसजानि विद्यात्' इति पा०। ३ 'दिव्यचक्षुः' इति, 'योगचक्षुः' इति च पा०। ४ 'विधारयितुं' इति पा०।

तिपादनार्थं च पुनरुच्यन्ते। आत्मनि संश्रितानीति आत्मकर्मणाऽऽत्मन्यातिवाहिकदेहरूपतया निवद्धानि। स्थितस्तथाऽऽत्मेति आत्मा तेषु भूतेषु देहान्तरादिक्रियार्थं स्थितः। या च गतिर्देहान्तरादिनाऽऽत्मनः, सा तद्भूतव्यवस्थितस्यैवोच्यते न व्यापकस्य, तस्य (सर्वत्र) सर्वगतत्वादित्यर्थः। मातापितृसंभवानि रजश्च शुक्रमिति यथासंख्यं मातापितृसंभवानि। आत्मलीनानीति नित्यमात्मसंवद्धानि। आत्मलीनभूतानां धर्मान्तरमाह—स बीजधर्मेत्यादि। स आत्मलीनभूतसन्तानो बीजधर्मा बीजस्वरूपः, बीजं हि स्वसदृशमङ्कुरं करोति; तेन, अयमप्यात्मलीनो भूतसन्तानः सदृशं देहरूपं भूतान्तरसङ्गं कुर्वन् बीजधर्मा भवति। 'सा बीजधर्मिणि' इति वा पाठः, तदा सा 'भूतसन्ततिः' इत्यध्याहार्यम्। आत्मनीति मनोयुक्तात्मनि। याति गच्छति सति देहान्तराणि यातीति योजना। आत्मनश्च गमनं मनोगमनमेव। 'परापराणि' इति वा पाठः; तदा पराणि श्रेष्ठानि देवादिशरीराणि, अपराणि अश्रेष्ठानि क्रिम्यादिशरीराणीति योजनीयम्। नन्वपरिदृश्यमाना भूतचतुष्टयी मनःप्रवृत्तियुक्ता बीजधर्मिणी किमर्थं स्वीकर्तव्या, यतः परिदृश्यमानमेवेदं पाञ्चभौतिकं शरीरं शुक्रशोणितकारणकमस्त्वित्याह—रूपाद्धीत्यादि। रूप्यत इति रूपं भौतिकं शरीरम्। तेन, अभौतिकाच्छरीराद्भौतिकं शरीरं भवतीत्यागमप्रसिद्धम्। तेनागमादेव सांख्यदर्शनरूपादातिवाहिकशरीराद् व्यक्तं शरीरमुत्पद्यत इति वाक्यार्थः। यद्यपि शुक्ररजसी कारणे, तथाऽपि यदैवातिवाहिकं सूक्ष्मभूतरूपशरीरं प्राप्नुतः, तदैव ते शरीरं जनयतः, नान्यदा; यदि शुक्रशोणितमातिवाहिकशरीरनिरपेक्षं गर्भं जनयेत्, तदा असत्यपि जीवाधिष्ठाने जनयेत्, न तु जनयति, तस्मादात्मस्थसूक्ष्मभूतादेव बीजरूपाच्छुक्रशोणितयुक्ताद्गर्भजन्मेति। एतच्चात्मस्थभूतं मातापितृजभूतेन समं शरीरकारणं कर्मवशादेव भवतीत्याह—कर्मेत्यादि। कर्मात्मकानामिति कर्मकारणकानां; किंवा यस्माद् रूपवत्तन्तुभ्यो रूपवान् पट उत्पद्यत इति प्रसिद्धं, तेनातिवाहिकशरीरेण कर्तव्यशरीरसदृशेन भवितव्यं, कारणसदृशं हि कार्यं भवति; तर्तैश्चात्मधर्मित्वं सूक्ष्माणामात्मस्थितभूतानां सिद्धमिति भावः। अथ मनः सात्त्विकराजसतामसभेदाद्भिन्नं कुतस्तत्र तत्र पुरुषे भवतीत्याह—मनसो मनस्त इति। पूर्वजन्मन्यव्यवहिते यादृङ्मनः, इह जन्मन्यपि तादृगेव मनो भवति। उक्तं चान्यत्र "जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तदेवाभ्यस्यते पुनः" इति। अत्रापि च मनउत्पत्तौ कर्मात्मकानामिति योज्यम्। तेन कर्मवशादेवं मनोभेदो भवति। नन्वेवं सति आत्मस्थसूक्ष्मभूतानामेकरूपत्वेनैकरूपेणैव शरीरेण सर्वप्राणिनां भवितव्यमित्याह—भवन्तीत्यादि। आकृतिः संस्थानम्। रजस्तमसी अनेकतरतमादिभेदभिन्ने तथा कर्म चानेकधा भिन्नं सत्यप्यभिन्ने सूक्ष्मभूतरूपे कारणे भेदकारणं भवतीत्यर्थः॥ ३१-३६॥

अतीन्द्रियैस्तैरतिसूक्ष्मरूपै-
रात्मा कदाचिन्न वियुक्तरूपः।
न कर्मणा नैव मनोमतिभ्यां
न चाप्यहङ्कारविकारदोषैः॥ ३७॥
रजस्तमोभ्यां हि मनोऽनुवद्धं
ज्ञानं विना तत्र हि सर्वदोषाः।
गतिप्रवृत्त्योस्तु निमित्तमुक्तं
मनः सदोषं वलवच्च कर्म॥ ३८॥

'आत्मा सदा कैरनुवध्यते' इत्यस्योत्तरम्—अतीन्द्रियैरित्यादि। तैरिति बीजधर्मित्वेनोक्तैः। अहङ्कारविकारा एव दोषाः, किंवा रजस्तमसी दोषौ। अयं च सूक्ष्मभूताद्यनुवन्धो मनस एवेत्याह—रज इत्यादि। रजस्तमोभ्यां हेतुभूताभ्यां मनः सर्वैर्भूतादिभिरनुबद्धं भवति। अत्रैव हेतुमाह—ज्ञानादित्यादि। ज्ञानादिति तत्त्वज्ञानात्; तत्त्वज्ञानं विना मनः सर्वैर्दोषैर्युक्तं भवति, तत्त्वज्ञानात्तु निर्दोषं भवतीत्यर्थः। सदोषत्वे मनसः किं भवतीत्याह—गतीत्यादि। गतिः देहान्तरगमनं, प्रवृत्तिः धर्माधर्मक्रियासु प्रवृत्तिः; सदोषत्वेन मनः संसारहेतुर्भवतीति वाक्यार्थः। गतिप्रवृत्त्योर्हेत्वन्तरमाह—वलवच्च कर्मेत्यादि। वलवदिति नियतविपाकं; 'फलवत्' इति वा पाठः, तथाऽपि स एवार्थः। नियतं कर्मफलं कर्मवलादेव भवति। अत्र च प्रश्नोत्तरेषु यदधिकमुच्यते 'गतिप्रवृत्त्योः' इत्यादिना, तत् प्रकरणवशादेव ज्ञेयम्॥ ३७॥ ३८॥

रोगाः कुतः संशमनं किमेषां
हर्षस्य शोकस्य च किं निमित्तम्।
शरीरसत्त्वप्रभवा विकाराः
कथं न शान्ताः पुनरापतेयुः॥ ३९॥

'रोगाः कुतः' इत्येकः प्रश्नः। 'संशमनं किम्' इति द्वितीयः। 'हर्षस्य किं निमित्तम्' इति तृतीयः। 'शोकस्य किं निमित्तम्' इति चतुर्थः। 'शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः' इति पञ्चमः। एवं संग्रहवक्ष्यमाणं षट्त्रिंशकं प्रश्नानां पूर्यते॥ ३९॥

प्रज्ञापराधो विषमास्तथाऽर्था
हेतुस्तृतीयः परिणामकालः।

१ '°क्रियान्तरार्थं' इति पा०। २ कोष्ठस्थः पाठो हस्तलिखितपुस्तके न पठ्यते। ३ 'एतच्चात्मस्थभूतेन मातापितृभूतेन च समं शरीरकरणं कर्मवशाद्भवतीत्याह' इति पा०। ४ 'ततश्च बीजधर्मित्वं' इति पा०।

१ 'बोध्यम्' इति पा०। २ 'कर्मवशादपि' इति पा०।

सर्वामयानां त्रिविधा च शान्ति-
ज्ञानार्थकालाः समयोगयुक्ताः ॥ ४० ॥

प्रज्ञापराधादयः प्रकरणवशात् पुनरुच्यन्ते। परिणामकाल इति कालपरिणाम इत्यर्थः ॥ ४० ॥

धर्म्याः क्रिया हर्षनिमित्तमुक्ता-
स्ततोऽन्यथा शोकवशं नयन्ति।
शरीरसत्त्वप्रभवास्तु रोगा-
स्तयोरवृत्त्या न भवन्ति भूयः ॥ ४१ ॥

धर्म्या धर्मसाधनाः, ताश्च हर्षकारणधर्मकर्तृत्वेन हर्षकारणं भवन्ति। ततोऽन्यथेति अधर्म्याः क्रियाः। तयोरवृत्त्येति शरीरमनसोः सन्तानोच्छेदात्। मोक्षे हि शरीरमनसी निवर्तेते, ततः सर्वथा रोगसन्ताननिवृत्तिर्भवति ॥ ४१ ॥

रूपस्य सत्त्वस्य च सन्ततिर्या
नोक्तस्तदादिर्नहि सोऽस्ति कश्चित्।
तयोरवृत्तिः क्रियते पराभ्यां
धृतिस्मृतिभ्यां परया धिया च ॥ ४२ ॥

ननु यस्य निवृत्तिर्भवति तदादिमद्भवति, तत् किं शरीरमनःसन्ततिरादिमती, येन तस्या निवृत्तिर्वास्तविकरोगनिवृत्तिकारणमुच्यत इत्याह—रूपस्येत्यादि। रूपस्य शरीरस्य, रूपं हि शरीरं रूप्यमाणत्वेन रूपशब्देनोच्यते, यथा—"रूपाद्धि रूपप्रभवः" इत्यत्रोक्तम्। नोक्त इत्यागमेषु। कुतो नोक्त इत्याह—न हि सोऽस्तीति; अभावादेव नोक्त इत्यर्थः। अथ यद्यनादिमती शरीरमनःसन्ततिः, तत् कथं तस्या निवृत्तिरित्याह—तयोरित्यादि। तयोरिति शरीरसत्त्वयोः संतन्यमानयोः। पराभ्यामिति श्रेष्ठाभ्याम्। धृत्यादयस्तु यथा मोक्षकारणं तथोक्तं कतिधापुरुषीये। अनादिरपि च शरीरसन्ततिर्यथा विनश्यति, तथा च तत्रैवोक्तम् ॥ ४२ ॥

सत्याश्रये वा द्विविधे यथोक्ते
पूर्वं गदेभ्यः प्रतिकर्म नित्यम्।
जितेन्द्रियं नानुपतन्ति रोगा-
स्तत्कालयुक्तं यदि नास्ति दैवम् ॥ ४३ ॥

प्रकारान्तरेण शारीरमानसरोगाणां चिकित्सां शास्त्रे व्यवहियमाणामाह—सतीत्यादि। आश्रयशब्देन शरीरमनसी गृह्येते। पूर्वं गदेभ्य इति अनुत्पन्नेष्वेव रूपेषु[1]। प्रतिकर्म नित्यमिति अनागतचिकित्सा नित्यम्। जितेन्द्रियमित्यनेन च रोगहेतु[2]प्रज्ञापराधासात्म्येन्द्रियार्थवर्जनं दर्शयति, प्रतिकर्मनित्यतया चाशक्यपरिहारकालकृतदोषचिकित्सां दर्शयति। तत्कालयुक्तमिति तत्कालेऽवश्यं रोगकर्तृतया पच्यमानम्; एतेन, बलवद्दैवमवश्यं रोगं ददातीति दर्शयति ॥ ४३ ॥

१ 'रोगेषु' इति पा०। २ 'रोगहेतु' इति हस्तलिखितपुस्तके न पठ्यते।

दैवं पुरा यत् कृतमुच्यते तत्
तत् पौरुषं यत्त्विह कर्म दृष्टम्।
प्रवृत्तिहेतुर्विषमः स दृष्टो
निवृत्तिहेतुर्हि समः स एव ॥ ४४ ॥

प्रकरणाद्दैवाख्यं कर्म तदनुषङ्गात् पुरुषकारमप्याह—दैवमित्यादि। तेन, प्रकरणादुच्यमानतया[2] जनपदोद्ध्वंसनीयोक्तकर्मलक्षणेन समं न पौनरुक्त्यम्। पुरेति जन्मान्तरे[1]। इहेति इह जन्मनि। प्रवृत्तिहेतुरिति रोगप्रवृत्तिहेतुः। विषम इति अधर्मरूपं दैवं, रोगजनकश्च पुरुषकारः। समस्तु दैवं धर्मरूपं, रोगपरिपन्थी च पुरुषकारः। स इति पुंलिङ्गनिर्देशस्तु कर्मणि (पुंलिङ्ग[3])धर्माधर्मरूपतया तथा पुरुषकारस्य प्रत्यवमर्शाज्ज्ञेयः। अन्ये तु प्रवृत्तिहेतुरित्यनेन संसारप्रवृत्तिहेतुरिति, तथा निवृत्तिहेतुरित्यनेन मोक्षहेतुरिति च वर्णयन्ति ॥ ४४ ॥

हैमन्तिकं दोषचयं वसन्ते
प्रवाहयन् ग्रैष्मिकमभ्रकाले।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु[4] ॥ ४५ ॥

अथ कथं कालकृतदोषनिमित्तरोगपरिहारः प्रतिकर्मणा कर्तव्य इत्याह—हैमन्तिकमित्यादि। वसन्त इति चैत्रे। अभ्रकाल इति श्रावणे। घनात्यय इति मार्गशीर्षे। यदुक्तं—"माधवप्रथमे मासि" (सू. अ. ७) इत्यादि। प्रवाहयन्नित्यनेन यथायोग्यतया वमनादिनेति ज्ञेयम् ॥ ४५ ॥

नरो हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥ ४६ ॥

मतिर्वचः कर्म सुखानुबन्धं
सत्त्वं विधेयं विशदा च बुद्धिः।
ज्ञानं तपस्तत्परता च योगे
यस्यास्ति तं नानुपतन्ति[5] रोगाः ॥ ४७ ॥

तत्र श्लोकः।

इहाग्निवेशस्य महार्थयुक्तं
षट्त्रिंशकं प्रश्नगणं महर्षिः।
अतुल्यगोत्रे भगवान् यथाव-
न्निर्णीतवान् ज्ञानविवर्धनार्थम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थानेऽतुल्यगोत्रीयं शारीरं नाम
द्वितीयोऽध्यायः ॥ २ ॥

१ 'तन्मानुषं' इति पा०। २ 'प्रकरणादुच्यमानस्य' इति पा०। ३ 'पुंलिङ्ग' इति हस्तलिखितपुस्तके न पठ्यते। ४ 'जन्तुः' इति पा०। ५ 'नानुतपन्ति' इति पा०।

हेत्वन्तरं रोगाभावकारणमाह—नर इत्यादि। सम इति भूतेषु समचित्तः। सुखानुबन्धमिति लिङ्गविपरिणामान्मत्या वचसा च योज्यम्। तेन कायवाङ्मनःकर्माण्युत्तरकालीनसुखफलानि शुभानि गृह्यन्ते। सत्त्वं विधेयं स्वायत्तं मनः। विशदा बुद्धिरिति न कश्मला बुद्धिः। बुद्धिश्चेह ऊहापोहवती विवक्षिता। मतिस्तु स्मृतिचिन्तादि। ज्ञानं तत्त्वज्ञानम्। शेषं सुगमम्॥ ४६-४८॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया-
मायुर्वेददीपिकायां शारीरस्थानेऽतुल्यगोत्रीयं
शारीरं नाम द्वितीयोऽध्यायः॥ २॥

## तृतीयोऽध्यायः।

**अथातः खुड्डिकां गर्भावक्रान्तिं शारीरं व्याख्यास्यामः॥ १॥**

**इति ह स्माह भगवानात्रेयः॥ २॥**

पूर्वाध्याये शुक्रशोणिते गर्भकारणत्वेनोक्ते, नतु कृत्स्नं गर्भकारणमुक्तम्, अतः संपूर्णगर्भकारणाभिधानार्थं खुड्डिकागर्भावक्रान्तिरुच्यते। खुड्डिकामिति अल्पाम्। गर्भस्यावक्रान्तिः मेलकः, उत्पत्तिरिति यावत्॥ १॥ २॥

**पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्गः ऋतुकाले, यदा चानयोस्तथायुक्ते संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्त्वसंप्रयोगात्तदा गर्भोऽभिनिर्वर्तते, स सात्म्यरसोपयोगादरोगोऽभिवर्धते सम्यगुपचारैश्चोपचर्यमाणः, ततः प्राप्तकालः सर्वेन्द्रियोपपन्नः परिपूर्णशरीरो बलवर्णसत्त्वसंहननसंपदुपेतः सुखेन जायते समुदायादेषां भावानां—मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च, अस्ति च खलु सत्त्वमौपपादुकमिति होवाच भगवानात्रेयः॥ ३॥**

पुरुषस्येत्यादि। अनुपहतरेतस इति पदेनैव पुरुषस्येति लभ्यते, यतः पुरुषस्यैव रेतसो गर्भजनकत्वमुक्तं; तेन पुरुषस्येति पदेन य एव संपूर्णधातुः पुरुषशब्दवाच्यो बालव्यतिरिक्तस्तं ग्राहयति। स्त्रियाश्चेति पदमर्थलब्धं सद् यौवनवतीं स्त्रियं लम्भयति। संसर्गः मैथुनम्। ऋतौ पुष्पदर्शने प्रशस्तः कालः ऋतुकालः; तेन ऋतुकालस्यादित्र्यहं निषेधयति। यतः "रजस्वलाभिगमनमलक्ष्मीमुखानां" (सू. अ. २५) इत्यादिना ऋतौ त्र्यहं निषिद्धम्। आर्तवदर्शनं च शरदावृतुसाधर्म्याद् ऋतुशब्देनोच्यते। यथा ऋतावुप्तानि बीजानि प्ररोहन्ति, तथा आर्तवदर्शनाख्येऽपि ऋतौ शुक्ररूपं बीजमुप्तमिति ऋतुसाधर्म्यम्। न केवलमेवंभूतः संसर्ग एव गर्भकारणं, किं तु जीवाधिष्ठाने सतीत्याह—यदेत्यादि। तथायुक्त इति अदुष्टरेतसः पुरुषस्य अदुष्टयोन्यादेश्च स्त्रियाः संसर्गे। अयं चार्थः पुरुषस्येत्यादिनैव लब्धोऽपि पुनः शुक्रशोणितसंसर्गमित्यादिग्रन्थवक्ष्यमाणाधिकधर्मविध्यर्थमनूद्यते, तेन न पौनरुक्त्यम्। किंवा, पुरुषस्येत्यादिना पूर्वं मैथुनात् प्रागनुपहतरेतस्त्वाद्युक्तं, तथायुक्त इत्यनेन तु मैथुनसमयेऽपि शुक्रयोन्यादीनामदुष्टिरुच्यते। मैथुनकाले हि ईर्ष्यादिना शुक्रदुष्टिः संभाव्यते। शुक्रशोणितसंसर्गमिति शुक्रशोणितमेलकम्। अन्तरित्यनेन गर्भाशयबाह्यगतं संसर्गमकारणं गर्भस्य निषेधयति। जीवशब्देन चेतनाधातुरात्मा। नन्वात्मा व्यापकः, तत् कथमयमवक्रामतीत्याह—सत्त्वेत्यादि। सत्त्वसंप्रयोगादिति मनोगमनादित्यर्थः। तद् यथोक्तं—"युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ( शा. अ. १ )" इति। यद्यप्यात्मा विभुत्वात् सर्वगतत्वेन न क्वचिदपि याति, तथाऽपि यत्रास्य कर्मवशान्मनो याति, तत्रैव चैतन्योपलब्धेरात्माऽपि गत इति व्यपदिश्यत इति भावः। अथैवमुत्पन्नो गर्भः कथमभिवर्धते, कथं वा जायत इत्याह—सम्यगुपचारैरिति; गर्भहितकरैराहारविहारैरित्यर्थः। प्राप्तकाल इति प्राप्तप्रसवकालः, प्रसवकालो नवमदशममासौ। परिपूर्णशरीर इति सर्वाङ्गोपचितदेहः। संपच्छब्दो बलादिभिः प्रत्येकमभिसंबध्यते। समुदयादिति सम्यङ्मेलकात्। एषामित्यनेन पुरुषस्येत्यादिग्रन्थोक्तान् रेत-आर्तव-जीव-सत्त्व-सात्म्य-रस-सम्यगुपचारान् प्रत्यवमृशति। एतदेव समुदायप्रभवत्वं गर्भस्य प्रत्येकं मात्रादिगर्भकारणव्युत्पादनेन दर्शयन्नाह—मातृजश्चेत्यादि। सात्म्यजश्चेत्यत्र सात्म्यशब्देन रसव्यतिरिक्तरूपादि, तथा आचारश्च सात्म्यो ग्राह्यः। सात्म्यरसस्तु 'रसज' इत्यनेनैव गृहीतः। औपपादुकमिति आत्मनः शरीरान्तरसंबन्धोपपादकम्। एतच्च व्याकृतमेव पूर्वम्। अत्र यद्यपि पुरुषस्यानुपहतरेतस इत्यनेन पितैव प्रथममुक्तः, तथाऽपि मातृप्रधानतां गर्भस्य दर्शयितुं मातृजश्चायमिति प्रथमं कृतं; माता च गर्भे प्रधानं कारणं, येन आसेकात् प्रभृति प्रसवपर्यन्तं मातुरेव गुणदोषावनुविदधाति गर्भः; प्रथमं तु पुरुषस्य मैथुने स्वातन्त्र्यात् तथा शरीरधारकप्रधानास्थिकारणत्वाच्चाग्रेऽभिधानं कृतम्॥ ३॥

**नेति भरद्वाजः, किं कारणं—न हि माता न पिता नात्मा न सात्म्यं न पानाशनभक्ष्यलेह्योपयोगा गर्भं जनयन्ति, न च परलोकादेत्य गर्भं सत्त्वमवक्रामति॥ (१)॥**

पूर्वपक्षोद्धारेण सिद्धान्तं ग्राहयितुं मात्रादिगर्भकारणानि भरद्वाजमुखेनाक्षिपति—नेत्यादि। नेतीत्यनेन सामान्येनात्रेय-

१ 'तयोस्तथैव युक्ते संसर्गे' इति, 'चानयोस्तथाविषयोस्तथैव युक्ते संसर्गे' इति च पा०। २ 'सत्त्वमुपपादुकं' इति पा०।

१ 'बीजमुप्तं जनयतीति' इति पा०।

वचनस्योक्तस्याक्षेपः। किं कारणमित्यनेन कस्मादात्रेयवचनमेतद्विरुद्धमित्यत्र कारणं पृच्छतो नहि मातेत्यादिनोक्तमात्रादिकारणानामकारणत्वं भरद्वाजः प्रतिजानीते॥ (१)॥

**यदि हि मातापितरौ गर्भं जनयेतां, भूयस्यः स्त्रियः पुमांसश्च भूयांसः पुत्रकामाः, ते सर्वे पुत्रजन्माभिसन्धाय मैथुनधर्ममापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामाः, न तु काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्याः स्युरपत्यकामा वा परिदेवेरन्॥ (२)॥**

यदि हीत्यादिना मात्रादीनामकारणत्वे हेतुं ब्रूते। किंवा, मात्रादीनामकारणत्वं भरद्वाजेन प्रतिज्ञातं तत्र 'किं कारणमिति' हेतुप्रश्नः, ततः 'नहि माता' इत्यादिना हेतुकथनम्। अस्य चायमर्थः—यत्—न मात्रादयो गर्भकारणत्वेन प्रत्यक्षेण दृश्यन्ते, ततो न मात्रादयो गर्भकारणम्। यदि हीत्यादिना तूपपत्तिविरोधोऽपि मात्रादिकारणत्वेऽस्तीति दर्शयति; तेन न पौनरुक्त्यम्। मैथुनधर्मः व्यवायः। पुत्रकामाः पुत्रानेव जनयेयुः, दुहितृकामा दुहितॄर्वा जनयेयुरिति योजना। नतु काश्चित् स्त्रिय इत्यत्र मैथुनमापद्यमाना एव स्त्रियः पुरुषाश्च परिदेवेरन् न चेति योजना। मातापित्रधीनत्वेन गर्भस्य यदैवेच्छन्त्यपत्यं, तदैव मैथुनमापद्यमानाः सापत्याः स्युः; ततश्च सर्वापत्यत्वेन न केचित् परिदेवेरन्नित्यर्थः॥ (२)॥

**न चात्माऽऽत्मानं जनयति। यदि ह्यात्माऽऽत्मानं जनयेज्जातो वा जनयेदात्मानमजातो वा, तच्चोभयथाऽप्ययुक्तम्। न हि जातो जनयति सत्त्वात्, न चाजातो जनयत्यसत्त्वात्, तस्मादुभयथाऽप्यनुपपत्तिः। तिष्ठतु तावदेतत्। यद्ययमात्माऽऽत्मानं शक्तो जनयितुं स्यात्, न त्वेनमिष्टास्वेव कथं योनिषु जनयेद्वशिनमप्रतिहतगतिं कामरूपिणं तेजोबलजववर्णसत्त्वसंहननसमुदितमजरमरुजममरम्; एवंविधं ह्यात्माऽऽत्मानमिच्छत्यतो वा भूयः॥ (३)॥**

आत्मजत्वं गर्भस्य निषेधयति—न चात्मेत्यादि। मनुष्यकरितुरगादिरूपेण आत्मानं जनयतीत्यर्थः। सत्त्वादिति जन्यस्यात्मनो विद्यमानत्वात्, न च विद्यमानो जन्यत इत्यर्थः। असत्त्वादिति कारणभूतस्यात्मनोऽजातपक्षेऽसत्त्वान्न कारणत्वमुपपन्नमित्यर्थः। अत्रैव दूषणान्तरमाह—तिष्ठत्वित्यादि। योनिष्विति जातिषु। अतो वा भूय इति यथोक्तगुणयुक्तादप्यधिकं शक्रादिपरमर्धितुल्यमित्यर्थः॥ (३)॥

**असात्म्यजश्चायं गर्भः। यदि हि सात्म्यजः स्यात्, तर्हि सात्म्यसेविनामेवैकान्तेन प्रजा स्यात्, असात्म्यसेविनश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्रैव दृश्यते॥ (४)॥**

तच्चोभयमिति सप्रजत्वमनपत्यत्वं च। उभयत्रेति सात्म्यसेविन्यसात्म्यसेविन्यपि॥ (४)॥

**अरसजश्चायं गर्भः। यदि हि रसजः स्यात्, न केचित् स्त्रीपुरुषेष्वनपत्याः स्युः, न हि कश्चिदस्त्येषां यो रसान्नोपयुङ्क्ते; श्रेष्ठरसोपयोगिनां चेद्गर्भा जायन्त इत्यभिप्रेतमिति, एवं सत्याजौरभ्रमार्गमायूरगोक्षीरदधिघृतमधुतैलसैन्धवेक्षुरसमुद्गशालिभृतानामेवैकान्तेन प्रजा स्यात्, श्यामाकवरकोद्दालककोरदूषककन्दमूलभक्षाश्च निखिलेनानपत्याः स्युः, तच्चोभयमुभयत्र दृश्यते॥ (५)॥**

यो रसान्नोपयुङ्क्ते इति रसश्चेद्गर्भकारणं तं च सर्व एव स्त्रीपुरुषाः सेवन्ते, तेन सर्वे एव सापत्याः स्युरिति भावः। अथ रसजो गर्भ इत्यस्य श्रेष्ठरस इत्यर्थो वर्ण्यते, तत्रापि दूषणमाह—श्रेष्ठेत्यादि॥ (५)॥

**न खल्वपि परलोकादेत्य सत्त्वं गर्भमवक्रामति; यदि ह्येनमवक्रामेत्, नास्य किञ्चित् पौर्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा, स च तच्च न किञ्चिदपि स्मरति॥ (६)॥**

**तस्मादेतद्ब्रूमहे—अमातृजश्चायं गर्भोऽपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च, न चास्ति सत्त्वमौपपादुकमिति (होवाच भरद्वाजः)॥ ४॥**

'अस्ति च सत्त्वमौपपादुकम्' इति यदुक्तं, तद्दूषयति—न खल्वपीत्यादि। पौर्वदेहिकमिति पूर्वदेहानुभूतम्। अविदितमदृष्टं वेति इह जन्मन्यपि पूर्वदेहानुभूतं नाविदितमदृष्टं वा स्यात्; विदितं प्रत्यक्षव्यतिरिक्तप्रमाणोपलब्धं, दृष्टं तु प्रत्यक्षोपलब्धम्, एतद्विपर्ययादविदितमदृष्टं च विज्ञेयम्। न च किञ्चिदपि स्मरतीति नच पूर्वजन्मानुभूतं स्मरतीत्यर्थः। एवं मन्यते—यन्मनः पौर्वदेहिकमनुभवति तच्चेह जन्मन्यप्यनुवर्तते, तथा यत् तेन जन्मान्तरेऽनुभूतं तदिह जन्मन्यपि तथैव स्मरतु; यथा—देवदत्तो बाल्यानुभूतं यौवने स्मरति, न चायं तथा स्मरति; तेन न पूर्वापरजन्मन्येकं सत्त्वमिति। तस्मादित्यादिना दूषणदूषितमर्थं पुनर्निगमनेन दर्शयति॥ ४॥

**नेति भगवानात्रेयः, सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्तते॥ ५॥**

भरद्वाजमतमात्रेयवचसा दूषयति—नेतीत्यादि। समुदितेभ्य इति वचनात् प्रत्येकं मात्रादीनामितरकारणनिरपेक्षाणां गर्भकारणत्वं निषेधयति। तेन, मात्रादिगर्भकारणसान्निध्येऽपि गर्भकारणान्तरजीवावक्रमाद्यभावाद् गर्भानुत्पादो युक्त एव। न च सामग्रीजन्ये कार्ये एकदेशस्याजनकत्वेनाकारणत्वम्। एवं

१ 'स्युः। न चापत्यकामाः परिदेवेरन्' इति पा०। २ 'योज्यम्' इति पा०।

१ योगीन्द्रनाथसेनस्यासंमतोऽयं पाठः। एवमग्रेऽप्यसिन्नध्याये कोष्ठस्थः पाठो ज्ञेयः।

सति तन्तूनामपि पटकारणानां कारणान्तरासान्निध्ये पटाजनकत्वेनाकारणत्वं स्यादिति भावः। इदमेव गर्भस्य मात्रादिजन्यत्वं यत्—मात्रादिव्यतिरेकेणानुत्पद्यमानत्वम् ॥ ५ ॥

**मातृजश्चायं गर्भः। न हि मातुर्विना गर्भोत्पत्तिः स्यात्, न च जन्म जरायुजानाम्। यानि खल्वस्य गर्भस्य मातृजानि, यानि चास्य मातृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः; तद्यथा—त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानं चामाशयश्च पक्वाशयश्चोत्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनं चेति (मातृजानि) ॥ ६ ॥**

एवंविधमेव मातुस्तावत् कारणत्वमाह—मातृजश्चायं गर्भ इत्यादिना। गर्भोत्पत्तौ मातुः कारणत्वं दर्शयित्वा जरायुजजन्मनि कारणत्वमाह—न च जन्मेत्यादि। जरायुः अमरा, येन वेष्टिता मनुष्यादयः प्रजायन्ते; जरायुणा वेष्टिता जायन्ते इति जरायुजा मनुष्यादयः। संस्वेदजानां मशकादीनामुद्भिज्जादीनां भेकादीनां च मातरं विनाऽपि जन्म भवति। अण्डजानामपि यद्यपि माता कारणं भवत्येव जन्मनि, तथाऽपि जरायुजस्य मातुरपत्येऽत्र प्रकरणेऽभिप्रेतत्वेनाण्डजान् विहाय जरायुजानामिति कृतम्। किंवा, जरायुजस्याभिव्यक्तिरूपे जन्मनि यावदभिव्यक्ति यथा माता कारणं भवति, न तथाऽण्डजे; तत्र कूर्मादावण्डोत्पत्तिमात्र एव माता कारणं, न जन्मन्यभिव्यक्तिरूपे। यत्तु 'पितुर्विना न जरायुजानां जन्म' इति वक्ष्यति, तज्जरायुजोत्पादे पितुरवश्यापेक्षणीयत्वोपदर्शनार्थम्; अण्डजास्तु मत्स्यादयः पितरं विनाऽपि ऋतुविशेषप्राप्त्यैव भवन्तीति भावः। मातृजानीत्यस्य विवरणं—यान्यस्य मातृतः संभवतः संभवन्तीति संभवतो गर्भस्य यानि मातृत इति मातुरागताच्छोणितात् संभवन्त्युत्पद्यन्ते, तानि मातृजानि त्वगादीन्यनुव्याख्यास्याम इति योजना। एवमन्यत्रापि यानि त्विल्यादिग्रन्थो व्याख्येयः। मातृजत्वं च त्वगादीनामागमगम्यमेव। पुरीषाधानं पक्वाशयः। उत्तरगुदाधरगुदौ गुदोत्तराधरभागौ। वपावहनं 'तैलवर्तिका' इति कथ्यते ॥ ६ ॥

**पितृजश्चायं गर्भः। नहि पितुर्ऋते गर्भोत्पत्तिः स्यात्, न च जन्म जरायुजानाम्। यानि खल्वस्य गर्भस्य पितृजानि, यानि चास्य पितृतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः; तद्यथा—केशश्मश्रुनखलोमदन्तास्थिसिरास्नायुधमन्यः शुक्रं चेति (पितृजानि) ॥ ७ ॥**

शुक्रमिति विच्छिद्यपाठेन शुक्रस्य सर्वधातुसारस्योपादेयतां दर्शयति ॥ ७ ॥

१ 'ख्यातम्' इति पा०।

**आत्मजश्चायं गर्भः। गर्भात्मा ह्यन्तरात्मा यः, तं 'जीव' इत्याचक्षते शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमलोड्यं विश्वरूपं विश्वकर्माणमव्यक्तमनादिमनिधनमक्षरमपि। स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनाऽऽत्मानम्, आत्मसंज्ञा हि गर्भे। तस्य पुनरात्मनो जन्मानादित्वान्नोपपद्यते, तस्मान्न जात एवायमजातं गर्भं जनयति, अजातो ह्ययमजातं गर्भं जनयति; स चैव गर्भः कालान्तरेण बालयुवस्थविरभावान् प्राप्नोति, स यस्यां यस्यामवस्थायां वर्तते तस्यां तस्यां जातो भवति, या त्वस्य पुरस्कृता तस्यां जनिष्यमाणश्च, तस्मात् स एव जातश्चाजातश्च युगपद्भवति; यस्मिंश्चैतदुभयं संभवति जातत्वं जनिष्यमाणत्वं च स जातो जन्यते, स चैवानागतेष्ववस्थान्तरेष्वजातो जन्ययत्यात्मनाऽऽत्मानम्। सतो ह्यवस्थान्तरगमनमात्रमेव हि जन्म चोच्यते तत्र तत्र वयसि तस्यां तस्यामवस्थायां; यथा-सतामेव शुक्रशोणितजीवानां प्राक् संयोगाद्गर्भत्वं न भवति, तच्च संयोगाद्भवति; यथा-सतस्तस्यैव पुरुषस्य प्रागपत्यात् पितृत्वं न भवति, तच्चापत्याद्भवति; तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वं चोच्यते ॥ ८ ॥**

आत्मज इत्यादिना आत्मजत्वं व्युत्पादयति। अन्तरात्मोच्यत इत्यनेन गर्भकारणभूतमात्मानं षड्धातुसमुदायवर्त्यात्मशब्दाभिधेयाद् व्यावर्तयति। आचक्षत इति आगमेषु शाश्वतादिशब्दैर्बुवते वृद्धाः। अलोड्यमिति अक्षोभ्यम्। गर्भत्वेन जनयत्यात्मानमिति गर्भस्वरूपो यः षड्धातुक आत्मा तं जनयतीत्यर्थः। गर्भस्यात्मशब्दाभिधेयतामाह—आत्मसंज्ञा हि गर्भे इति। तस्येत्यनेन परमात्मानं प्रत्यवमृशति। यस्मादस्यानादित्वाज्जन्म नोपपद्यते तस्माज्जात एवायमजातं गर्भं जनयतीति पक्षोऽन, इति योज्यम्। अथ जातः स न चेज्जनयति कथं तर्हि जनयतीत्याह—अजातो ह्ययमिति; नित्यो ह्ययमित्यर्थः। तेन नित्यत्वेनाकाशवच्च जातः सन्नन्तरात्मा गर्भस्वरूपमात्मानं जनयति। अतश्चान्तरात्मरूपतया नित्यविद्यमानत्वेनाजातः सन् गर्भरूपावस्थायां जात उच्यते। एवमजातत्वं जातत्वं चात्मनि द्वयमपि व्यपदिश्यते। एतदेवात्मनि जातत्वमजातत्वं च दर्शयितुं दृष्टान्तार्थं गर्भ एव जातत्वमजातत्वं च दर्शयति—स चैवेत्यादि। पुरस्कृतेति अग्रे भविष्यन्ती। यथा—बालस्य वृद्धत्वावस्थाऽजाता जन्यत इति च, तथा अजातो जनयत्यात्मनाऽऽत्मानमिति च शब्दप्रयोगसमर्थनमात्रमेतद् विवक्षाभेदाद्बोद्ध-

१ 'तस्मादजात एवायमजातं गर्भं जनयति, जातोऽप्यजातं च गर्भं जनयति' इति पा०।

व्यम्। अनेन चात्मन्यवस्थाभेदकृतजातत्वसमर्थनेन 'जातो वा जनयेत्, अजातो वा' इत्यादिग्रन्थकृतपूर्वपक्षः शब्दप्रयोगसमर्थनतया परिहृतः। परमार्थतस्तु नित्यत्वेनाजात एवात्मा आत्मनोऽजातावस्थां गर्भादिरूपां जनयति। तेन, नासतः कारणत्वं सतो वा जन्यत्वमिति पक्षः स्थित एव। सतो हीत्यादिना सत्कार्यपक्षं सांख्यमतं दर्शयति। किंवा वयोभेदेन यदेवावस्थान्तरगमनं तदेव जन्मेति दर्शयति। तस्यां तस्यामवस्थायामिति च्छेदः। पितृत्वमिति पितृत्वेन व्यपदेश इत्यर्थः॥ ८॥

**न खलु गर्भस्य न च मातुर्न पितुर्न चात्मनः सर्वभावेषु यथेष्टकारित्वमस्ति; ते किंचित् स्ववशात् कुर्वन्ति, किंचित् कर्मवशात्, क्वचिच्चैषां करणशक्तिर्भवति, क्वचिन्न भवति। यत्र सत्त्वादिकरणसंपत्तत्र यथाबलमेव यथेष्टकारित्वम्, अतोऽन्यथा विपर्ययः। न च करणदोषादकरणमात्मा संभवति गर्भजनने, दृष्टं चेष्टा योनिरैश्वर्यं मोक्षश्चात्मविद्भिरात्मायत्तम्। नह्यन्यः सुखदुःखयोः कर्ता। न चान्यतो गर्भो जायते जायमानः, नाङ्कुरोत्पत्तिरबीजात्॥ ९॥**

यदुक्तं—यद्यात्मा आत्मानं जनयति तदा वशित्वादिगुणयुक्तं जनयेदिति, तत्रोत्तरमाह—न खल्वित्यादि। गर्भस्य सर्वभावेषु न मात्रादीनां यथेष्टकारित्वमिति योज्यम्। अत्र च यद्यप्यात्मैव प्रकृतः, तथाऽपि तुल्यसमाधानत्वेन मातापितरावप्युपात्तौ। यथा आत्मनः सर्वभावेषु यथेष्टकारित्वेनेष्टयोनिगमनादिप्रसक्तिः समाधीयते, तथा मातापित्रोरपि यथेष्टकारित्वेन पुत्रानेव जनयेयुरित्यादिपूर्वपक्षैः परिहृतो भवति। अथ कुत एवात्मादीनां यथेष्टकारित्वं क्वचिन्न भवतीत्याह—किंचिदित्यादि। किंचिदिति न सर्वम्। तत्र मातापितरौ स्ववशौ मैथुनं गर्भकारणं सात्म्यरससेवादिकं चाचरतः, गर्भस्य जीवाधिष्ठानादौ तु कर्माधीने परवशौ; तथा, आत्माऽपि गर्भस्य चैतन्ये तथा धर्माधर्महेतुक्रियानुष्ठाने स्ववशः, कर्मजन्ये इष्टानिष्टयोन्यादिगमने तु धर्माधर्मपराधीन एव; तेन कर्माधीने विषये न मात्रादीनां यथेष्टकारित्वम्। यथेष्टकारित्वमपि मात्रादीनां क्वचिद्दर्शयन्नाह—क्वचिच्चैषामित्यादि। करणमुपकरणं साधनोपाय इति यावत्। सत्त्वं मनः, आदि प्रधानं येषां तानि सत्त्वादीनि मनइन्द्रियशुक्रशोणितादीनि। यथाबलमिति यथाकर्म; बलशब्देनेहादृष्टमुच्यते। एतेन, यत्र मात्रादीनां पुत्रेच्छायामिष्टयोनिगमनादिकरणशक्तिर्भवति, कर्म चानुगुणं भवति, तत्रेप्सितपुत्रादिष्विष्टयोनिगमनादि कार्यं भवति; यथा—यदि तत्र विशुद्धभूरिशुक्रः पुरुषो भवति, स्त्री च विशुद्धयोन्याशयत्वादिगुणयुक्ता, पुत्रजनकं च कर्म तयोर्बलवत्, तदा पुत्रजन्माभिसन्धाय मैथुनमापद्यमानौ ईप्सितं पुत्रं जनयतः; तथा आत्माऽपि विशुद्धसत्त्वादिगुणयुक्तः शुभकर्मवान् तत्काले इष्टं योनिमनुध्यायति, तदाऽभीष्टयोनिगमनं संपादयत्यात्मन इत्यादि यथेष्टकारित्वोदाहरणं ज्ञेयम्। अतोऽन्यथा इति सत्त्वादिकरणाशक्तौ विगुणे च दैवे। विपर्यय इति न यथेष्टकारित्वम्। किंवा, क्वचिच्च मैथुनादावेषां पित्रादीनां स्ववशत्वं, तत् किमिति जीवोपक्रमादावपि न स्ववशत्वमेषां भवतीत्याह—क्वचिच्चैषामित्यादि। क्वचिदेव कार्ये यस्मात् किंचित् करणं मात्रादीनां शक्तं न सर्वत्र, तेन सर्वेष्वेव गर्भस्य भावेषु न स्ववशत्वमिति भावः। यत्रापि चैते मात्रादयः स्ववशाः सन्तः कुर्वन्ति, तत्रापि स्वीयस्वीयकरणयुक्ता एव कुर्वन्तीत्याह—यत्र सत्त्वेत्यादि। यथाबलमिति यथाशक्ति। अनेन च मात्रादयो गर्भस्य येषु विशेषेषु शक्ताः, तेषु सत्त्वादिकरणसंपत्तौ यथेष्टकारिणो भवन्ति, न त्वशक्ये विषये उपहतकरणा वा यथेष्टकारिणो भवन्तीति दर्शयति। अतोऽन्यथा विपर्यय इत्यस्य चार्थोऽग्रे व्याकृतः। ननु सत्त्वादिकरणदोषाच्चेदयमात्मा गर्भं न जनयति तथाविधं, हन्त तर्ह्यकारणमेवायमात्मा, कारणं हि यद्भवति तत् करोत्येव कार्यमित्याह—न चेत्यादि। करणदोषादकुर्वन् गर्भं कदाचिदात्मा न गर्भजनने कारणं भवतीति न, अपितु भवत्येव कारणम्; एवं मन्यते—मृदाद्यभावात् घटमकुर्वन्नपि कुम्भकारः कारणमेव घटस्य भवति, घटजननशक्तियुक्तत्वात्; तथा आत्माऽपि करणदोषादकुर्वन्नपि तथाविधं गर्भं, तज्जननशक्तत्वेन भूयोदृष्टत्वात् कारणमेव भवति। तथेष्टयोनिगमने प्रसक्तिरपि प्रोद्भाविता आत्मनः कारणत्वेन सा क्वचिद्भवतीत्यपि दर्शयन्नाह—दृष्टं चेत्यादि। आत्माधीना योनिः पुरुषं प्रति इष्टा योनिः; तथा ऐश्वर्यादयश्चात्माधीना दृष्टाः, यथोक्तं कतिधापुरुषीये—"आवेशश्चेतसो ज्ञानं" (शा. अ. १) इत्यादिना। आत्मनः कारणत्वे हेत्वन्तरमाह—न ह्यन्य इत्यादि।—हि यस्मादात्मनोऽन्यः सुखदुःखयोः कर्ता नास्ति, किं त्वात्मैवं सुखदुःखसाधनेन्द्रियकर्मशरीरादिकर्ता; तेन आत्मा कारणं गर्भस्य सुखदुःखाद्याधारस्येति भावः। अथ भूतान्येव कस्मात् संयोगवशाच्चेतनामासाद्य सुखादिकारणानि न भवन्तीत्याह—न चान्यत इत्यादि। अन्यत इति विजातीयात्। जायमान इति उत्पद्यमानः। सदृशमेव कारणात् कार्यमुत्पद्यते; येन न शणस्याङ्कुरोत्पत्तिर्नारिकेलबीजाद्भवति; अबीजादिति कार्यत्वेनाभिमताङ्कुरस्याबीजात्। एतेन, गर्भस्य यच्चैतन्यं तदचेतनेभ्यो भूतेभ्यो न भवति, किंतु चेतनाधातोरात्मन एवेति दर्शयति॥ ९॥

**यानि तु खल्वस्य गर्भस्यात्मजानि, यानि चास्यात्मतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः;**

१ 'सत एवावस्थान्तरगमनमिति दर्शयति' इति पा०। २ 'पूर्वपक्षपरिहारः कृतो भवति' इति पा०। ३ 'बलशब्देनेह दृष्टमुच्यते' इति पा०। ४ 'पुत्रेच्छायामिष्टयोनिषु गमनादिकरणशक्तिर्भवति' इति मुद्रितपुस्तकपाठः।

१ 'ऋतुकाले' इति पा०। २ 'अत आत्मैव' इति पा०।

तद्यथा—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेति ( आत्मजानि ) ॥ १० ॥

एवमात्मजत्वं गर्भस्य व्युत्पाद्यात्मजान् विशेषानाह—यानीत्यादि। प्रेरणं धारणं चेन्द्रियाणामेव। अत्र च तत्तद्देवादिपश्वादियोनिगमनादौ धर्माधर्मजन्ये धर्माधर्मस्यापि जनकत्वेनात्मैव मूलकारणमुच्यते; आत्मज्ञानप्राणापानप्रेरणादौ तु मनःकरण आत्मैवाव्यवधानेन कारणम् ॥ १० ॥

सात्म्यजश्चायं गर्भः। नह्यसात्म्यसेवित्वमन्तरेण स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति,गर्भेषु वाऽप्यनिष्टो भावः। यावत् खल्वसात्म्यसेविनां स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते, तावत् समर्था गर्भजननाय भवन्ति। सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले सन्निपतितानां जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति। नहि केवलं सात्म्यज एवायं गर्भः, समुदयोऽत्र कारणमुच्यते। यानि खल्वस्य गर्भस्य सात्म्यजानि, यानि चास्य सात्म्यतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः; तद्यथा—आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णबीजसंपत् प्रहर्षभूयस्त्वं चेति ( सात्म्यजानि ) ॥ ११ ॥

सात्म्यजश्चेत्यादिना सात्म्यजत्वं व्युत्पादयति, असात्म्यसेवां च गर्भोपघातिनीं दर्शयन् सात्म्यसेवाया गर्भं प्रति कारणत्वं द्रढयति। असात्म्यसेविनामपि प्रजाभवनोपपत्तिं दर्शयन् 'असात्म्यसेविनश्च निखिलेनानपत्याः स्युः' इति पूर्वपक्षं परिहरति। सात्म्यसेविनां पुनरित्यादिना तु ग्रन्थेन 'सात्म्यसेविनामेकान्तेन प्रजा स्यात्' इति यदुक्तं तत् परिहरति। सन्निपतितानामिति व्यवायमापन्नानाम्। अत्र स्वरवर्णौ सात्म्यजत्वेन तथा आत्मजत्वेन चोक्तौ, तेन द्वावप्यत्र कारणमिति ज्ञेयम् ॥ ११ ॥

रसजश्चायं गर्भः। न हि रसादृते मातुः प्राणयात्राऽपि स्यात्, किं पुनर्गर्भजन्म। न चैवासम्यगुपयुज्यमाना रसा गर्भमभिनिर्वर्तयन्ति, न च केवलं सम्यगुपयोगादेव रसानां गर्भाभिनिर्वृत्तिर्भवति, समुदायोऽप्यत्र कारणमुच्यते। यानि तु खल्वस्य गर्भस्य रसजानि, यानि चास्य रसतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः; तद्यथा—शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति ( रसजानि ) ॥ १२ ॥

प्राणयात्राऽपि स्यादिति गर्भधारणकारणभूताया मातुरपि प्राणस्थितिरित्यर्थः। न चैवासम्यगुपयुज्यमाना इत्यादिना असात्म्यरसोपयोगस्य गर्भोपघातित्वं दर्शयति। असात्म्यरसोपयोगिनां प्रजाभवनं यत्, तदसात्म्यसेविप्रजाभवनन्यायतुल्यमिति नेह पुनर्दर्शितम्। समुदायोऽप्यत्र कारणमित्यनेन तु असम्यक्प्रसेविनां चापत्यभवने कारणं धर्मादि दर्शयति। अभिनिर्वृत्तिः अङ्गप्रत्यङ्गव्यक्तता। प्राणानुबन्ध इति बलानुबन्धः। पुष्टिः उपचयः। वृद्धिस्तु दैर्घ्येण वृद्धिः। उत्साहः बलम्। इतिशब्दः प्रकारे; तेनैवंप्रकाराण्यन्यान्यपि वर्णादीनि रसजानीति दर्शयति। एवं पूर्वत्रापि इतिशब्दो व्याख्येयः। यदा त्वितिशब्दः परिसमाप्त्यर्थस्तदाऽप्याविष्कृतानां रसजानां परिसमाप्तिर्ज्ञेया; तेन अनाविष्कृता वर्णादयोऽपि रजसा लभ्यन्ते ॥ १२ ॥

अस्ति खलु सत्त्वमौपपादुकं; यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति, यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, भक्तिर्विपर्यस्यते, सर्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्याय्यन्ते, यस्माद्धीनः प्राणाञ्जहाति, यदिन्द्रियाणामभिग्राहकं च 'मन' इत्यभिधीयते; तत्त्रिविधमाख्यायते—शुद्धं, राजसं, तामसमिति। येनास्य खलु मनो भूयिष्ठं, तेन द्वितीयायामाजातौ संप्रयोगो भवति; यदा तु तेनैव शुद्धेन संयुज्यते, तदा जातेरतिक्रान्ताया अपि स्मरति। स्मार्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धादनुवर्तते, यस्यानुवृत्तिं पुरस्कृत्य पुरुषो 'जातिस्मर' इत्युच्यते। यानि खल्वस्य गर्भस्य सत्त्वजानि, यान्यस्य सत्त्वतः संभवतः संभवन्ति, तान्यनुव्याख्यास्यामः; तद्यथा—भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्यं शौर्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्वमित्येवमादयश्चान्ये, ते सत्त्वविकारा यानुत्तरकालं सत्त्वभेदमधिकृत्योपदेक्ष्यामः। नानाविधानि खलु सत्त्वानि, तानि सर्वाण्येकपुरुषे भवन्ति, न च भवन्त्येककालम्, एकं तु प्रायोवृत्त्याऽऽह ॥ १३ ॥

अस्तीत्यादिना मनस औपपादुकत्वमाक्षिप्तं समादधाति। अपिशब्दोऽवधारणे। अत्र च 'यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति' इत्यादिना मनसोऽसाधारणधर्मकथनमेवौपपादुकसाधनं भवति, मनोव्यतिरेकेणैतदुच्यमानधर्माणामसिद्धेः। नित्यमात्मानं स्पृशतीति स्पृक्, शरीरमातिवाहिकशरीरं; तेन स्पृक्शरीरेण कारणभूतेन जीवमात्मरूपमभिसंबध्नाति भोगायतनशरीरेणेत्यर्थः। आतिवाहिकशरीरसद्भावश्च "भूतैश्चतुर्भिः सहितः सुसूक्ष्मै-

१ 'न चैवास्या असम्यपयुज्यमाना' इति पा०। २ 'समुदायोऽत्र' इति पा०।

१ 'इतिशब्दार्थः' इति पा०। २ 'जीवस्पृक्शरीरेण' इति पा०। "जीवं स्पृशतीति जीवस्पृक्। जीवस्पृक्शरीरं शुक्रशोणितात्मकगर्भशरीरम्। तत्रैव जीवात्मनः प्रथमसंबन्धो भवतीति तत् 'जीवस्पृक्' इत्युच्यते" इति योगीन्द्रनाथसेनः। ३ 'द्वितीयायां जातौ' इति पा०। ४ 'प्रायोऽनुवृत्त्या' इति पा०। ५ 'उपपादकत्वसाधनं' इति पा०।

मनोजवो देहमुपैति देहात्" (शा. अ. २) इत्यनेन प्रतिपादितः। किंवा, जीवम् आत्मानं, स्पृक्चशरीरेणेति स्पर्शवता शरीरेण, यन्मनोऽभिसंवध्नाति तदुपपादुकमस्तीति योजना। एवं मन्यते—यदि मनोऽत्रात्मनः शरीरसंबन्धेन स्वीक्रियते तदा व्यापकत्वादात्मनः सर्वत्रैवोपलब्ध्या भवितव्यं, न च भवति; तस्मा यत्रैव स्पर्शवति शरीरे मनः प्रतिवद्धं भवति तत्रैवायं सुखाद्युपलभते। स्पृगितिविशेषणेन शरीरस्य मूत्रनखकेशादौ मनोगमनाभावादात्मनोऽनुपलब्धिं दर्शयति। अपगमनपुरस्कृते इति देहान्तरगमनाभिमुखे। भक्तिः इच्छा। यस्माद्धीन इति मनसा त्यक्तः। येनेति यथाभूतेन सात्त्विकेन राजसेन तामसेन वा मनसा भूयिष्ठमित्यभिप्रायः। द्वितीयायामाजाताविति द्वितीयजन्मनि; पूर्वजन्मनि यादृशं मनस्तादृशमेव जन्मान्तरे प्रायो भवतीत्यर्थः। केचित्तु, 'तेन न द्वितीयायां' इत्यादि पठन्ति। तत्रापि प्रायो द्वितीये जन्मनि तुल्येन मनसा योगो न भवति, कदाचित्तु भवतीत्यर्थः। यदुक्तं 'नास्य किंचित् पौर्वदेहिकमविदितं स्यात्' इति, तत् पौर्वदेहिकं ज्ञानं क्वचिद्भवतीति दर्शयन्नाह—यदा त्वित्यादि। शुद्धेनेति विशुद्धसत्त्वगुणेन। तस्यैवेति वक्ष्यमाणेन यस्येत्यनेन संबध्यते। योनियन्त्रपीडायां हि उद्भूतेन तमसा विप्लुतं मनो नातिक्रान्तजन्मगतं स्मरति; यस्तूद्भूतसत्त्वस्तमसा नाभिभूयते, स स्मरत्येवातिक्रान्तजन्मानुभूतमिति भावः। पुरस्कृत्येति कारणत्वेनावधार्य। अयं च मनोधर्मसमूह इन्द्रियोपक्रमणीयोक्तोऽपि पुनरिह प्रकरणवशादुच्यमानो न पुनरुक्तदोषमावहति। यद्यपि सत्त्वस्य गर्भजनकत्वं साक्षान्नोक्तं, तथाऽपि सत्त्वस्य यदुपपादुकत्वं गर्भं प्रति तेनैव सत्त्वस्य गर्भजनकत्वं प्रतिज्ञातं मन्तव्यम्। तेन 'यानि खल्वस्य गर्भस्य सत्त्वजानि' इत्यादिना गर्भे सत्त्वजभावकथनमुपपन्नमेव। गर्भकारणस्यापि च सत्त्वस्योपपादुकभाषया कारणत्वं यदुक्तं तद्देहाद्देहान्तरगमनरूपमनोधर्मस्य गर्भकारणत्वातिरिक्तस्य प्रतिपादनार्थम्। नानाविधानीति नानाविधसात्त्विकराजसतामसवृत्तिभिन्नानि। तान्येकपुरुषे भवन्तीत्यनेनैक एव पुरुषः कदाचिद्धर्मक्रियायां सात्त्विको भवति, कदाचित् कामचिन्तायां राजसः, कदाचिन्मोहे तमोमय इति दर्शयति। न भवन्त्येककालमिति एकदैव सात्त्विकादयो धर्मा न भवन्ति, किंतु पर्यायेण भवन्ति। ननु यद्येकपुरुष एव सर्वे सात्त्विकादयो भवन्ति, तत् कथम् 'अयं सात्त्विकः' इत्यादिव्यपदेशो भवतीत्याह—एकं त्वित्यादि। प्रायोवृत्त्येति भूयिष्ठा यस्य सात्त्विकवृत्तयो भवन्ति स सात्त्विकः, यस्य भूयिष्ठं राजस्यो वृत्तयो भवन्ति स राजस उच्यते इत्यादि। एतदेव पूर्वमुक्तं—"यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्त्वं, तत्सत्त्वमेवोपदिशन्ति बाहुल्यानुशयात्" (सू. अ. ८) इति ॥ १३ ॥

एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदायादभिनिर्वर्तते गर्भः; यथा—कूटागारं नानाद्रव्यसमुदायात्, यथा वा—रथो नानारथाङ्गसमुदायात्; तस्मादेतदवोचाम—मातृजश्चायं गर्भः, पितृजश्च, आत्मजश्च, सात्म्यजश्च, रसजश्च, अस्ति च सत्त्वमौपपादुकमिति (होवाच भगवानात्रेयः) ॥१४॥

एवं मात्रादिकारणव्युत्पादनेन गर्भस्य समुदायप्रभवतां व्युत्पादितां दृष्टान्तेन द्रढयन्नाह—एवमयमित्यादि। कूटागारं वर्तुलाकारं गृहं जेन्ताकस्वेदप्रतिपादितम्; अन्ये तु वस्त्रादिकृतं संचारिगृहं कूटागारमाहुः। अत्र च प्रकरणे यद्यपि मात्रादीनां सर्वेषां समुदितानामेव गर्भं प्रति कारणत्वं, तथाऽपि मातापित्रात्मसत्त्वानि विहाय सात्म्यरसयोरेव कारणत्वव्युत्पादने यत् 'समुदायोऽप्यत्र कारणम्' इत्युक्तं तत्रैवं मन्यते—अत्र यथा मात्रादयश्चत्वारोऽवश्यं गर्भं प्रति कारणभूता न तथा सात्म्यं रसो वा; येन शुक्रशोणितसत्त्वात्मसंसर्गादेव गर्भो भवति, नावश्यं गर्भमेलके सात्म्यरसयोरपेक्षा; गर्भमेलकोत्तरकालं सात्म्यरसाभ्यां गर्भस्य हि पुष्ट्यादयो जन्यन्ते, तेन सात्म्ये रसे चावश्यं समुदायापेक्षां दर्शयता तत्रैव 'समुदायोऽप्यत्र कारणम्' इत्युक्तं, मात्रादयस्तु परस्परसमुदायमपेक्षमाणा अपि नावश्यं सात्म्यरससमुदायमादिगर्भमेलकेऽपेक्षन्त इति कृत्वा पुनस्तत्र समुदायापेक्षित्वं नोक्तम्। समुदायादेषां भावानामित्यनेन ग्रन्थेन यत् परस्परसमुदायापेक्षित्वं मात्रादीनां चतुर्णां, तदुक्तमेव। यदपि गर्भं प्रत्यविशेषेण सात्म्यरसयोरपि कारणत्वं, 'सात्म्यजश्चायं, रसजश्चायं' इत्यनेनोक्तं, तद्गर्भमेलकोत्तरकालं कारणत्वेन, तथा मातापित्रोरपि विशुद्धशुक्रशोणितोत्पादहेतुतया पारंपर्येण कारणत्वादिति ज्ञेयम् ॥ १४ ॥

भरद्वाज उवाच—यद्ययमेषां नानाविधानां गर्भकराणां भावानां समुदायादभिनिर्वर्तते गर्भः कथमयं सन्धीयते, यदि चापि सन्धीयते कस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते, मनुष्यश्च मनुष्यप्रभव उच्यते; तत्र चेदिष्टमेतद्यस्मान्मनुष्यो मनुष्यप्रभवस्तस्मादेव मनुष्यविग्रहेण जायते, यथा—गौर्गोप्रभवः, यथा—चाश्वोऽश्वप्रभव इति; एवं सति यदुक्तमग्रे समुदयात्मक इति तदयुक्तम्। यदि च मनुष्यो मनुष्यप्रभवः, कस्माज्जडान्धकुब्जमूकवामनमिम्मिनव्यङ्गोन्मत्तकुष्ठिकिलासिभ्यो जाताः पितृसदृशरूपा न भवन्ति। अथात्रापि बुद्धिरेवं स्यात्—स्वेनैवायमात्मा चक्षुषा

१ 'कर्मप्रतिबद्धं मनोऽस्ति' इति पा०। २ 'नातिक्रान्तजन्मान्तरगतं' इति पा०। ३ 'गर्भस्य सत्त्वजन्यत्वं' इति पा०। ४ 'मोहचिन्तायाम्' इति पा०। ५ 'प्रायोऽनुवृत्त्या (त्तेः)' इति पा०। ६ 'भवन्ति भूयिष्ठं यस्य सत्त्वमनुवर्तते' इति पा०।

१ 'समुदायार्थकत्वं नोक्तम्' इति पा०। २ 'यत्तु' इति पा०। ३ 'पितृसदृशाः' इति पा०।

रूपाणि वेत्ति, श्रोत्रेण शब्दान्, घ्राणेन गन्धान्, रसनेन रसान्, स्पर्शनेन स्पर्शान्, बुद्ध्या बोद्धव्यमित्यनेन हेतुना न जडादिभ्यो जाताः पितृसदृशा भवन्ति। अत्रापि प्रतिज्ञाहानिदोषः स्यात्, एवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यादसत्स्वज्ञः; यत्र चैतदुभयं संभवति ज्ञत्वमज्ञत्वं च, सविकारश्चात्मा। यदि च दर्शनादिभिरात्मा विषयान् वेत्ति, निरिन्द्रियो दर्शनादिविरहादज्ञः स्यात्, अज्ञत्वादकारणम्, अकारणत्वाच्च नात्मेति वाग्वस्तुमात्रमेतद्वचनमनर्थं स्यादिति ( होवाच भरद्वाजः ) ॥ १५ ॥

पुनर्भरद्वाजः पृच्छति—यथयमित्यादि । कथं सन्धीयत इति कया परिपाट्या मिलतीत्यर्थः । मनुष्यविग्रहेण जायत इति मनुष्यजातौ कस्मान्मनुष्यविग्रहेणैव जायत इत्यर्थः । समुदायात्मक इति यदुक्तं तदयुक्तमिति अत्र मात्राद्यतिरिक्तजातेः कारणत्वकथनेन तथा जातेरेव मनुष्यादिरूपाया बलवत्कारणत्वेन यथोक्तमात्रादिसमुदायप्रभवत्वं न युक्तमिति भावः । दूषणान्तरमाह—यदि चेत्यादि। जडो जडबुद्धिः, मिन्मिनः सानुनासिकाव्यक्ताक्षरः । पितृसदृशरूपा इत्यत्र पितृशब्देन मातापितरौ ग्राह्यौ। कारणसदृशरूपत्वेन चेन्मनुष्या भवन्ति तदा जडादिरूपकारणजाता अपि कारणसदृशत्वेन जडादिरूपाः स्युरिति भावः। अत्र जडादिवद्बहूदाहरणकरणं पक्षस्य बहूदाहरणसिद्धत्वेन दृढत्वप्रतिपादनार्थम्। कृतपूर्वपक्षे समाधानमाशङ्कते—अथात्रेत्यादि । खेनैवेति आत्मकर्मोपार्जितेनैव । तेन, इन्द्रियाणि यस्मादात्मजान्युक्तानि न तु मातापितृरूपमनुष्यजन्यानि, ततश्च पित्रोरिन्द्रियं प्रत्यकारणत्वेन न तदिन्द्रियसदृशानीन्द्रियाण्यस्य भवन्तीति भावः। खेनैवेति श्रोत्रादिभिरभिसंबध्यते। जडादिभिर्जाता इत्यत्र आदिशब्दः प्रकारवाची, तेन कुब्जकुण्ठादीनां ग्रहणम्। कुब्जत्वकुण्ठाद्याधारभूतं हि शरीरं नात्मजं, किंतु मातापितृजमेव; ततश्च कुब्जादिजातस्य कुब्जत्वादिप्रसङ्गेनैवापकृतत्वं तदवस्थमेव । आशङ्कितं समाधानं दूषयति—अत्रापीत्यादि । प्रतिज्ञादोषः स्यादिति "आत्मा ज्ञः"(शा.अ.१) इत्यादिना आत्मनो ज्ञत्वप्रतिज्ञायाः, तथा "निर्विकारः परस्त्वात्मा"(सू.अ.१) इत्यादिना कृताया निर्विकारत्वप्रतिज्ञाया दोषः स्यादिति भावः। असत्स्वज्ञ इत्यनेन कदाचिदज्ञत्वात् प्रतिज्ञातं ज्ञत्वं व्याहतम्, इन्द्रियाधीनत्वेन ज्ञत्वमात्मनः पराधीनं सन्न वास्तवं स्यादिति भावः। यत्रेत्यादिना सविकारत्वं साधयति। ज्ञत्वपरित्यागेनाज्ञत्वे प्रकृतेरन्यथाभूतत्वेन विकारो भवतीति भावः। सविकार इति 'विकारवान्' इत्यर्थो मतुब्लोपाज्ज्ञेयः । आत्मन इन्द्रियाधीनत्वेन ज्ञत्वे दूषणान्तरमाह—यदि चेत्यादि। अज्ञत्वादकारणमिति अज्ञत्वात् ज्ञानपूर्वकशरीरप्रेरणादौ न कारणं स्यादित्यर्थः। अकारणत्वाच्च नात्मेति शरीरप्रेरणादौ बुद्धिनिष्पाद्येऽकारणत्वादचेतनपञ्चभूतातिरिक्तश्चेतनाभिध आत्मशब्दवाच्य इत्यर्थः। वाग्वस्तुमात्रमिति अर्थरहितशब्दमात्रमेतद्—यदुच्यते—आत्मा खेन चक्षुषा रूपं पश्यतीत्यादि ॥ १५ ॥

आत्रेय उवाच—पुरस्तादेतत् प्रतिज्ञातं—सत्त्वं जीवं स्पृक्शरीरेणाभिसंबध्नातीति। यस्मात्तु समुदायप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते, मनुष्यो मनुष्यप्रभव इत्युच्यते, तद्वक्ष्यामः-भूतानां चतुर्विधा योनिर्भवति—जरायवण्डस्वेदोद्भिदः । तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति, भूतानामाकृतिविशेषापरिसंख्येयत्वात्। तत्र जरायुजानामण्डजानां च प्राणिनामेते गर्भकरा भावा यां यां योनिमापद्यन्ते, तस्यां तस्यां योनौ तथातथारूपा भवन्ति; यथा—कनकरजतताम्रत्रपुसीसकान्यासिच्यमानानि तेषु तेषु मधूच्छिष्टविग्रहेषु, तानि यदा मनुष्यबिम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते, तस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते; मनुष्यश्च मनुष्यप्रभव उच्यते, तद्योनित्वात् ॥ १६ ॥

आत्रेयः समादधाति—पुरस्तादित्यादि ।—एतच्च 'कथमयं सन्धीयते' इत्यस्योत्तरम्। सत्त्वं शुक्रार्तवसन्धानकारणमित्यर्थः। भूतानामिति प्राणिनाम्। योनिः जातिः, यदाऽपि योनिशब्दः कारणवचनस्तदाऽपि जरायुजादिरूपयोनिजाता अपि जरायुजादय एवोच्यन्ते, कार्ये कारणोपचारात्। आकृतिः संस्थानं, तस्या विशेषाः परस्परविसदृशाकृतय एव नर-करि-तुरगादिरूपाः। संभवे योनिभेदं दर्शयित्वा यथा योन्यनुकारो भवति तदाह—तत्रेत्यादि। गर्भकरा भावाः शुक्रादयः। मधूच्छिष्टविग्रहेष्विति सिक्थकेन मृत्तिकायां निर्मितसञ्चकरूपविग्रहेषु। मनुष्यबिम्बमिति मनुष्याकारं सिक्थककृतं सञ्चकम्। कनकादिबहुद्रव्योदाहरणं यथा कनकादीनां बहूनामपि मनुष्यसञ्चकसिक्थकस्थानां मनुष्याकृतिजनकत्वं, तथा शुक्रादीनामपि बहूनां मनुष्ययोनिपतितानां मनुष्यविग्रहकर्तृत्वमिति साधर्म्योदाहरणार्थम्। समुदायात्मकः सन्निति यद्यपि समुदायजन्यस्तथाऽपि योनिरूपकारणमहिम्ना स्वयोनिसदृश एव भवति नान्ययोनिसदृशः; न च कारणधर्मैः पर्यनुयोगमर्हति। तेन, शुक्रादिसमुदायोऽपि कारणं भवति, मातापितरौ विशेषेण गर्भस्य सजातीयत्वे कारणं भवत इति न काचित् क्षतिः । तद्योनित्वादिति विशेषेण मनुष्यस्य कारणत्वात् ॥ १६ ॥

यच्चोक्तं—यदि च मनुष्यो मनुष्यप्रभवः, कस्मान्न जडादिभ्यो जाताः पितृसदृशरूपा भवन्तीति; तत्रोच्यते—यस्य यस्य ह्यङ्गावयवस्य बीजे बीज-

१ 'पितृसदृशरूपाः' इति पा०। २ 'स विकारप्रकृतिकश्चात्मा' इति पा०। ३ 'अयथाभूतत्वेन' इति पा०।

१ 'जीवस्पृक्शरीरेण' इति पा०।

भाग उपतप्तो भवति, तस्य तस्याङ्गावयवस्य विकृतिरुपजायते, नोपजायते चानुपतापात्; तस्मादुभयोपपत्तिरप्यत्र। सर्वस्य चात्मजानीन्द्रियाणि, तेषां भावाभावहेतुर्दैवं; तस्मान्नैकान्ततो जडादिभ्यो जाताः पितृसदृशरूपा भवन्ति ॥ १७ ॥

बीज इति शुक्रशोणिते। बीजस्याङ्गप्रत्यङ्गनिर्वर्तको भागो बीजभागः। उभयोपपत्तिरप्यत्रेति पितृसदृशरूपा भवन्ति न भवन्ति चेत्यर्थः। आत्मजानीति आत्मप्रतिबद्धकर्मजानि। भावाभावहेतुर्दैवमिति इन्द्रियभावे इन्द्रियजनकं शुभम्, इन्द्रियाभावे चाशुभं दैवं हेतुरित्यर्थः। उपसंहरति—तस्मादित्यादि। एवं मन्यते—मनुष्यबीजं हि प्रत्यङ्गबीजभागसमुदायात्मकं स्वसदृशप्रत्यङ्गसमुदायरूपपुरुषजनकम्, इन्द्रियाणि च भोगसाधनानि आत्मप्रतिबद्धकर्माधीनानि; तेन पिता यदि कुष्ठ्यपि भवति, बीजं चादुष्टं भवति कुष्ठाधारत्वगादिजनकं, ततो निष्कुष्ठान्येव त्वगादीन्यनुपतप्तत्वगादिबीजात् सदृशानि जायन्ते; यदा त्वतिवृद्धकुष्ठतया पित्रोर्बीजमपि कुष्ठजनकदोषेण दुष्टं भवति, तदा दुष्टत्वगादिबीजभागात् कुष्ठदुष्टैव त्वग् जायते। यदुक्तं—"दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्" (सु. नि. अ. ५) इति। एवं कुष्ठिनोऽपि यदि हेतुबलाद् बीजे कुष्ठजनको दोषो भवति, तदा कुष्ठिनोऽपि कुष्ठवदपत्यं भवति। अन्धत्वादाविन्द्रियोपघातरूपे दुर्दैवमेव कारणं; तच्चान्धापत्येऽप्यवश्यमस्ति; तेन यदाऽन्धेऽपत्ये दृष्ट्युपघातकमशुभं भवति, तदा काकतालीयन्यायादन्धजातोऽप्यन्धो दृश्यते। एवं कुब्जादौ जडादौ च व्याख्येयम् ॥ १७ ॥

न चात्मा सत्स्विन्द्रियेषु ज्ञः, असत्सु वा भवत्यज्ञः; न ह्यसत्त्वः कदाचिदात्मा, सत्त्वविशेषाच्चोपलभ्यते ज्ञानविशेष इति ॥ १८ ॥

या चाज्ञत्वप्रसक्तिरात्मन्युक्ता, तत्राह—न चेत्यादि। इन्द्रियभावे तथेन्द्रियाभावेऽपि नित्यं ज्ञानवानेवात्मा इति प्रतिज्ञार्थः[1]। न ह्यसत्त्वः कदाचिदित्यत्र हिशब्दो हेतौ; तेन यस्मात् सर्वदा समनस्क एवात्मा, तेन बाह्येन्द्रियाभावेऽप्यन्तःकरणमनोयोगान्नित्यमात्मा मनःकरणको[2] ज्ञानवानेवायमित्यर्थः। यस्त्वेतद्बाह्यविषयगतं ज्ञानं, तत् सत्त्वस्येन्द्रियाधिष्ठानविशेषाद्भवति;तेन, इन्द्रियभावे इन्द्रियजन्यं विशिष्टं ज्ञानं भवति[3]; यत्तु केवलमनोजन्यमात्मज्ञानं, तद् भवत्येव सर्वदा; तस्मादनित्यभावि मनोसन्निधिमात्रजन्यमात्मज्ञानं, तत् सदैवास्ति ॥ १८ ॥

भवन्ति चात्र—

न कर्तुरिन्द्रियाभावात् कार्यज्ञानं प्रवर्तते।
या क्रिया वर्तते भावैः[4] सा विना तैर्न वर्तते ॥ १९ ॥

जानन्नपि मृदोऽभावात् कुम्भकृन्न प्रवर्तते।

न चास्य ज्ञानजननशक्तिः पराहता भवतीत्याशयेनाह—नेत्यादि। यत्त्वेतदैन्द्रियकं विषयोपभोगवत्तद्भवति कदाचित्, कदाचिच्चेन्द्रियाभावान्न भवतीत्यध्यात्मविदो मन्यन्ते; किंच बाह्यज्ञानेऽपि ज्ञानजननशक्त एवायमात्मा, परं करणाभावात् कदाचिन्न प्रवर्तते। कार्यज्ञानमिति कार्यप्रवृत्तिजनकबाह्यविषयज्ञानं; तेन निर्विषयं ज्ञानमात्मन इन्द्रियाभावे भवतीति सूचयति[1]। भावैरित्यत्र 'यैः' इति शेषः। वर्तते उत्पद्यते। अत्रैव दृष्टान्तमाह—जानन्नपीत्यादि। जानन्नपीति घटं कर्तुं जानन्नपीत्यर्थः। मृदो मृत्तिकाया अभावात् ॥ १९ ॥

श्रूयतां चेदमध्यात्ममात्मज्ञानबलं महत् ॥ २० ॥
इन्द्रियाणि च संक्षिप्य[3] मनः संक्षिप्य चञ्चलम् ॥
प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्यवस्थितः ॥ २१ ॥
सर्वत्रावहितज्ञानः सर्वभावान् परीक्षते।

आत्मनो ज्ञत्वे साधनान्तरमाह—श्रूयतामित्यादि। आत्मानमधि अध्यात्मम्। आत्मनो ज्ञानस्य बलमात्मज्ञानबलम्। संक्षिप्येति विषयेभ्यो व्यावर्त्य। मनः संक्षिप्येति मनोऽप्यात्मव्यतिरिक्तविषयान्निगृह्य। चञ्चलमिति स्वभावतः। स्वे ज्ञाने इति आत्मज्ञाने। सर्वभावान् परीक्षत इति विनाऽपीन्द्रियैः समाधिबलादेव यस्मात् सर्वज्ञो भवति, तस्माज्ज्ञस्वभाव एव निरिन्द्रियोऽप्यात्मा ॥ २०–२१ ॥

गृह्णीष्व चे(वे)दमपरं[2] भरद्वाज विनिर्णयम् ॥ २२ ॥
निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नगतो[4] यदा।
विषयान् सुखदुःखे च वेत्ति नाज्ञोऽप्यतः स्मृतः ॥ २३ ॥
नात्मज्ञानादृते चैकं ज्ञानं किञ्चित् प्रवर्तते।
न ह्येको वर्तते भावो वर्तते नाप्यहेतुकः ॥ २४ ॥

अपरमपि लौकिकं निरिन्द्रियस्य ज्ञानसद्भावोदाहरणमाह—गृह्णीष्वेत्यादि। स्वप्नगत इति स्वप्नदर्शनावस्थां प्राप्तः। आत्मज्ञानविषयज्ञानयोर्विशेषमाह—नात्मेत्यादि। आत्मज्ञानान्नित्याद्विना, किञ्चिज्ज्ञानं विषयजम्, एकम् सहायं, न प्रवर्तते इन्द्रियादिकरणरूपसहायं विना नोत्पद्यते। आत्मज्ञानं च नित्यमेव सांख्येऽप्युक्तं[5]—"चिच्छक्तिरपरिणामिनी" इत्यादिना "आत्मनः" इत्यन्तेन। अत्रोपपत्तिमाह—न ह्येको वर्तते भाव इति। भावः उत्पत्तिधर्मा, एकः सन् कारणरहितः सन्, न वर्तते नोत्पद्यते। तथा भावः कारणजन्यत्वे सत्यपि अहेतुक इति अकर्तृको न वर्तते नोत्पद्यते, किंतु कर्तृकुम्भकाराधिष्ठितान्येव मृच्चक्रादीनि प्रवर्तन्ते; तस्माद्विषयज्ञानान्यपि इन्द्रियमनोर्थैस्तथा कर्त्रा चात्मना जन्यन्त इति भावः ॥ २२–२४ ॥

तस्माज्ज्ञः प्रकृतिश्चात्मा द्रष्टा कारणमेव च।
सर्वमेतद्भरद्वाज निर्णीतं जहि संशयम् ॥ २५ ॥

---

१ 'प्रतिज्ञातार्थः' इति पा०। २ 'मनःकरणज्ञानवान्' इति पा०। ३ 'इन्द्रियाभावे इन्द्रियजन्यं विशिष्टं ज्ञानं न भवति' इति पा०। ४ 'यैः क्रिया वर्तते या तु' इति पा०।

१ 'कार्यज्ञानमिति बाह्यकार्यप्रवृत्तिजनकं विषयज्ञानमिन्द्रियाभावेऽपि भवतीति सूचयति' इति पा०। २ योगीन्द्रनाथसेनस्तु 'वेदं' इति पठति, व्याख्यानयति च 'वेदं वेदमिवातथ्यज्ञानं श्रूयताम्' इति। ३ 'संयम्य' इति पा०। ४ 'स्वप्नगतान्' इति पा०। ५ 'सांख्ये प्रोक्तम्' इति पा०।

उपसंहरति–तस्मादित्यादि। अत्र चात्मनो ज्ञत्वाज्ञत्वप्रसक्त्याऽऽपादितं सविकारत्वमात्मनो नित्यज्ञानसाधनेनैवं परिहृतमिति कृत्वा न पृथक् परिहृतम्। भरद्वाजशब्देनेह नात्रेयगुरुरुच्यते, किंतु अन्य एव भरद्वाजगोत्रः कश्चित्; तेन, तस्य संशयच्छेदनमात्रेयेणोपपन्नमेव ॥ २५ ॥

तत्र श्लोकौ—

**हेतुर्गर्भस्य निर्वृत्तौ वृद्धौ जन्मनि चैव यः।**
**पुनर्वसुमतिर्या च भरद्वाजमतिश्च या ॥ २६ ॥**
**प्रतिज्ञाप्रतिषेधश्च विशदश्चात्मनिर्णयः।**
**गर्भावक्रान्तिमुद्दिश्य खुड्डीकां तत्प्रकाशितम् ॥ २७ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने खुड्डीकागर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥**

संग्रहे हेतुशब्दो गर्भादिषु जन्मान्तेषु संबध्यते। प्रतिज्ञाप्रतिषेधो भरद्वाजकृतो ज्ञेयः। तत्साधनं च यदात्रेयस्य तत् 'विशदश्चात्मनिर्णयः' इत्यनेनोक्तम्। तदिति सामान्येन मात्रादिप्रत्यवमर्शान्नपुंसकम् ॥ २६ ॥ २७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां शारीरस्थाने खुड्डीकागर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

**अथातो महतीं गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

खुड्डीकागर्भावक्रान्तिप्रपञ्चत्वान्महत्या गर्भावक्रान्तेरनन्तरमभिधानम् ॥ १ ॥ २ ॥

**यतश्च गर्भः संभवति, यस्मिंश्च गर्भसंज्ञा, यद्विकारश्च गर्भः, यया चानुपूर्व्याऽभिनिर्वर्तते कुक्षौ, यश्चास्य वृद्धिहेतुः, यतश्चास्याजन्म भवति, यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति, यतश्च कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते, तदनुव्याख्यास्यामः ॥ ३ ॥**

यत इति यतः कारणात्। यद्विकार इति यन्मय इत्यर्थः। ययाऽऽनुपूर्व्या येनानुक्रमेणेत्यर्थः। कार्त्स्न्येनाविनश्यन्निति मरणमगच्छन् ॥ ३ ॥

**मातृतः पितृत आत्मतः सात्म्यतो रसतः सत्त्वत इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः संभवति। तस्य ये येऽवयवा यतो यतः संभवतः संभवन्ति तान् विभज्य मातृजादीनवयवान् पृथक् पृथगुक्तमग्रे ॥ ४ ॥**

ये ये भावा मातृजपितृजप्रभृतयस्त्वग्लोहितादयः, यतो यतो मात्रादेः संभवन्ति, तान् मातृजादीनवयवान् पृथग्विभज्य, अग्रे पूर्वाध्याये; तेनात्र मातृजादयो नोक्ता इति वाक्यार्थः फलति। अयं चार्थो यद्यपि पूर्वाध्याय एवोक्तो "मातृजश्चायं" ( शा. अ. ३ ) इत्यादिना, तथाऽपि प्रश्नक्रमविशुद्ध्यनुरोधात्[१] पुनरिह कृतः; येन प्रथमं कारणं, तदनु कार्यरूपो गर्भः, तदनु गर्भधर्मोऽभिधेय इति क्रमेण प्रश्नः शोभते ॥ ४ ॥

**शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति ॥ ५ ॥**

यत्तु "शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं" इत्यादिना, "गर्भोऽभिनिर्वर्तते" ( शा. अ. ३ ) इत्यन्तेनोक्तं, तत्रायमसौ गर्भशब्दाभिधेयोऽर्थ इति नाभिहितम्, अपेक्षते च; तेनेह गर्भसंज्ञाभिधेयार्थव्याकरणमपुनरुक्तमेव। कुक्षिगते इति कुक्ष्येकदेशगतगर्भाशयगते। संयोगे इति सम्यग्योगे; तेन जीवस्यातिवाहिकशरीरेण योगः संगृह्यते, न चात्मनो व्यापकत्वेन यो योगो गर्भजनकः। एवंभूतश्च संयोगो यद्यपि कुक्षावेव भवति, तथाऽपि सिद्धमेवार्थं शिष्यं प्रतिपादयितुं 'कुक्षिगते' इति पदं कृतम् ॥ ५ ॥

**गर्भस्तु खल्वन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः। एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठानभूतः; स ह्यस्य षष्ठो धातुरुक्तः ॥ ६ ॥**

गर्भस्त्वित्यादि। गर्भारम्भकाण्यपि भूम्यादीनि परित्यज्यान्तरिक्षमादौ कृतं, वक्ष्यमाणभूतग्रहणानुरोधात्। वक्ष्यति हि—'अन्तरिक्षं पूर्वमन्येभ्यो गुणेभ्य उपादत्ते' इत्यादि। चेतनाधिष्ठानभूत इति आत्मनो भोगायतनस्वरूप इत्यर्थः, चेतनाशब्देन ह्यात्मोच्यते; किंवा, भूतशब्दः सादृश्ये; तेनाधिष्ठानमिवात्मनः शरीरं, न तु परमार्थतो निराश्रयस्यात्मनो भोगायतनत्वव्यतिरेकेण शरीरमाश्रयो भवति। अनया युक्त्येति अनया भूतविकाररूपया[२] योजनया पञ्चमहाभूतविकारसमुदायात्मको भवति, अन्यया युक्त्या[३] कतिधापुरुषीयोक्तश्चतुर्विंशतिको भवति, तथा मातृजादिरूपचिन्तया मात्रादिसमुदायात्मको भवतीत्यर्थः। न चैतेषां पक्षाणां विरोधोऽस्ति; यतो मातृजादिव्यपदेशेऽपि पञ्चमहाभूतविकारत्वमविरुद्धमेव, येन मातृजादयोऽप्यस्य महाभूतविकारा एव; उक्तं हि—"रसात्ममातापितृसंभवानि भूतानि विद्याद्दश षट् च देहे" (शा. अ. २) इति; चतुर्विंशतिकत्वेऽपि च पञ्चमहाभूतात्मकरूपतैव तत्र प्रपञ्चिता। स हीत्यादि। अस्येति गर्भस्य ॥ ६ ॥

**यया चानुपूर्व्याऽभिनिर्वर्तते कुक्षौ तां व्याख्यास्यामः—गते पुराणे रजसि नवे चावस्थिते शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुम-**

---

१ 'नित्यज्ञानवत्त्वसाधनेन' इति पा०।

१ 'प्रश्नक्रमानुरोधात्' इति पा०। २ 'अनेकमहाभूतविकाररूपया' इति पा०। ३ 'अन्यथा तु युक्त्या' इति पा०।

तीमाचक्ष्महे। तया सह तथाभूतया यदा पुमान् व्यापन्नबीजो मिथीभावं गच्छति, तदा तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात् संभवति। स तथा हर्षभूतेनात्मनोदीरितश्चाधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्योचितेन पथा गर्भाशयमनुप्रविश्यार्तवेनाभिसंसर्गमेति ॥ ७ ॥

गत इति निर्वृत्ते। पुराण इति ऋतुकालातिक्रमसंचिते। नवे चावस्थित इतिवचनेन नवेऽप्यनवस्थिते गर्भकारणत्वं नास्तीति दर्शयति। शुद्धस्नातामित्यनेन शुद्धस्नातैव स्त्री गम्या नास्नाता, अशुद्धत्वादिति दर्शयति। स्त्यायत्यस्यां गर्भ इति स्त्री; अनेन वन्ध्यां निरस्यति। ऋतुमतीमित्यत्र प्रशंसायां मतुप्। तया सहेति तया स्त्रिया। तथाभूतयेति तादृग्गुणयुक्तया। हर्षः प्रीतिविशेषः, तेनोदीरितः प्रेरितः। पर इति सारः; किंवा परकालोत्पन्नः परः, शुक्रं हि सर्वधातुभ्यः परैरुत्पद्यते। शरीरधात्वात्मेति शरीरधातुरूपः। शुक्रभूत इति शुक्ररूप एवाङ्गादङ्गात् संभवति व्यज्यते। तेन नाङ्गेभ्यः शुक्रमुत्पद्यते, किंतु शुक्ररूपतयैव स्थितं व्यज्यते। वचनं हि—"सर्वत्रानुगतं देहे शुक्रं" (चि.अ.२पा.४) इति। हर्षभूतेनेति हर्षमयतां गतेन; उदीरितश्चाधिष्ठितश्चेत्यनेन उदीरणकाले तथा निःसरणकाले हर्षमयात्माधिष्ठानं शुक्रस्य गर्भाशयप्राप्तिकारणं दर्शयति; यदि शुक्रप्रवृत्तिकाले पुरुषो हर्षरहितः स्यान्न तदा सम्यक् शुक्रप्रवृत्तिः, तथा वेगविघातान्न गर्भाशयप्राप्तिर्भवति। बीजरूपो धातुः शुक्रम्। अभिसंसर्गं सम्यङ्मूर्च्छनम् ॥ ७ ॥

तत्र पूर्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्तते; स हि हेतुः कारणं निमित्तमक्षरं कर्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यो गुणी ग्रहणं प्रधानमव्यक्तं जीवो ज्ञः पुद्गलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति। स गुणोपादानकालेऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते, यथा—प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूत आत्मा सत्त्वोपादानः पूर्वतरमाकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः; तथा देहग्रहणेऽपि प्रवर्तमानः पूर्वतरमाकाशमेवोपादत्ते, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः। सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति ॥ ८ ॥

सत्त्वं मनः करणं यस्य स सत्त्वकरणः; आत्मा निष्क्रियत्वेन क्रियावता मनसा यत् कार्यं करोति, तच्च कार्यं मनसा क्रियमाणमप्यचेतनेन चेतनावत आत्मन एवोच्यते। वचनं हि—"चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते" (शा. अ. १) इति। गुणग्रहणायेत्यत्र गुणशब्देन गुणगुणिनोरभेदोपचाराद्गुणवन्ति भूतान्युच्यन्ते। किंवा, गुणोऽप्रधानं, प्रधानं चात्मा, तद्व्यतिरिक्तानि च भूतानि गुणाः। कस्मादात्मा भूतानि गृह्णात्यप्रधानरूपाणीत्याशङ्कायामात्मनः प्राधान्यख्यापकान् पर्यायानाह—स हीत्यादि। न क्षरतीत्यक्षरम्। गुणी भूतरूपगुणवानित्यर्थः। गृह्णाति भूतानीति ग्रहणम्। एतैः पर्यायैरात्मनोऽभिधेयस्येतरपदार्थोपकार्यत्वेनाश्रयत्वं प्रसिद्धं दर्शयते। पूर्वतरं प्रथममेव। अन्येभ्यो गुणेभ्य इति वाय्वादिभ्यः। अत्र गर्भे भूतग्रहणक्रमे दृष्टान्तमाह—यथेत्यादि। प्रलयस्य महाप्रलयस्य, अत्यये इति आदिसर्गे इत्यर्थः। सिसृक्षुरिति स्रष्टुमिच्छुः। भूतानि आकाशादीनि। सत्त्वोपादान इति मनःकरणः। महाप्रलये हि विकारस्य प्रकृतौ लयात् प्रकृतिपुरुषावेवं परमव्यक्तरूपौ तिष्ठतः, ततश्च सर्गारम्भे प्रकृतेर्महदादिप्रपञ्च उत्पद्यते क्रमेण; तत्र प्रथममाकाशमुत्पद्यते, ततो वाय्वादीनि व्यक्तानीति सांख्यसिद्धान्तः। आकाशस्य च जन्यत्वं सांख्यमतेनैव ज्ञेयम्। देहग्रहणेऽपीति गर्भस्वरूपग्रहणेऽपि। उपादत्त इति शुक्रशोणितगतमाकाशमाकाशमयतया स्वीकरोति। व्यक्ततरगुणानिति आकाशमेकगुणमपेक्ष्य शब्दस्पर्शगुणो वायुर्व्यक्ततरः, तमपेक्ष्य शब्दस्पर्शरूपगुणं तेजो व्यक्ततरमित्यादि। अयं च भूतग्रहणक्रम आगमसिद्ध एव, नात्र युक्तिस्तथाविधा हृदयङ्गमाऽस्ति। एतच्च भूतग्रहणं लघुनैव कालेन भवतीति दर्शयन्नाह—सर्वमित्यादि ॥ ८ ॥

स सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ॥ ९ ॥

द्वितीये मासि घनः संपद्यते पिण्डः पेश्यर्बुदं वा। तत्र घनः पुरुषः, पेशी स्त्री, अर्बुदं नपुंसकम् ॥ १० ॥

सर्वधातुकलुषीकृत इति अव्यक्तसर्वधातुतया कलुषीकृतः। धातुशब्देन च भूतान्युच्यन्ते, किंवा रसादिधातुबीजानि। खेटः श्लेष्मा; तेन खेटभूत इति श्लेष्मसदृश इत्यर्थः। अव्यक्तविग्रह इत्यस्य विवरणं—सदसद्भूताङ्गावयव इति; विद्यमानाविद्यमानाङ्गप्रत्यङ्ग इत्यर्थः; अङ्गानां च बीजरूपतया स्थितत्वेन सत्त्वम्, अव्यक्तभावाच्चासत्त्वम्। किंवा, सदसद्भूताङ्गावयवो घनः

१ 'अधिष्ठितबीजधातुः' इति पा०। २ 'प्रवृत्ते' इति पा०। ३ 'परेणोत्पद्यते' इति पा०। ४ 'हर्षरूपेणात्मना' इति पा०। ५ 'सत्त्वोपकरणः' इति पा०। ६ 'बोधयिता' इति पा०।

१ 'क्रियावन्मन आदाय कार्यं करोति' इति पा०। २ 'श्रेष्ठत्वं' इति पा०। ३ 'व्यक्तगुणः' इति पा०। ४ 'व्यक्तगुणं' इति पा०। ५ 'सर्वधातुकलनीकृतः' इति, 'सर्वधातुकललीकृतः' इति च पा०। ६ 'पिण्डः' इति हस्तलिखितपुस्तके न पठ्यते। ७ 'अव्यक्तरूपताभावाच्चासत्त्वं' इति पा०।

संपद्यते इति योजना। घनः कठिनः। पिण्डो ग्रन्थ्याकारः। पेशी दीर्घा मांसपेश्याकारा। अर्बुदं वर्तुलोन्नतम् ॥ ९ ॥ १० ॥

**तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्ते ॥ ११ ॥**

अङ्गानि शिरःप्रभृतीनि, तदवयवाश्चेलङ्गावयवाः। यौगपद्येनेति वचनेन 'कुमारस्य शिरः पूर्वमभिनिर्वर्तते' (शा. अ. ६) इत्यादिवक्ष्यमाणान्येकीयमतानि निषेधयति। यौगपद्येन हि सर्वाङ्गनिर्वृत्तिरिति सिद्धान्तः ॥ ११ ॥

**तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावत्। महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गावयवान् कांश्चित् पर्यायान्तरेणापरांश्चानुव्याख्यास्यामः। मातृजादयोऽप्यस्य महाभूतविकारा एव। तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च, वाय्वात्मकं स्पर्शः स्पर्शनं रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः, अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यं च, अबात्मकं रसो रसनं शैत्यं मार्दवं स्नेहः क्लेदश्च, पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्चेति ॥ १२ ॥**

केचिदिति न सर्वे। तत्र मातृजाद्यङ्गकथनेन शब्दादयो य इह भूतविकारत्वेन वक्ष्यन्ते ते न सर्वे प्रोक्ताः, किं तु केचिदेव त्वगादयः। पर्यायान्तरेणेतिवचनाद्ये मातृजादयः 'त्वक् च लोहितं च' ( शा. अ. ३ ) इत्यादिनोक्तास्त इह न साक्षाद्वक्तव्याः, किंतु ये त्वग्गता मूर्तिस्नेहमार्दवादयस्ते भूतजन्यत्वेनोच्यमानास्त्वचोऽभिधायका भवन्ति। एवं शोणितादिगतभूतविकारकथनेन शोणितादिकथनं ज्ञेयम्। त्वगादयो वक्ष्यमाणा इति भूतविकारसमुदायरूपा एव। त्वगादीनां मातृजादिरूपेण यदभिधानं, तन्मात्राद्यधीनत्वप्रतिपत्त्यर्थम्। पुनश्चेह भूतजन्यत्वेनाभिधानमङ्गानां क्षये वा वृद्धौ वा सत्यां तत्कारणभूतभूतोपयोगप्रतिषेधाभ्यां वृद्धिक्षयजननज्ञानार्थम्। यदङ्गं यद्भूतप्रभवं तदङ्गं तद्भूतप्रधानेन द्रव्येण वर्धते, क्षीयते च तद्विपरीतेन। लाघवं यद्यपि वायौ पठन्ति—"रूक्षः शीतो लघुश्चैव" ( सू. अ. १ ) इत्यादिना, तथाऽपि आकाशेऽतिशयितं ज्ञेयं, तेनेहाकाशविकारे पठन्ति; आकाशं हि अत्यर्थसूक्ष्मत्वाद्वातादपि लघु। विवेको विच्छेदः। धातुव्यूहनं धातुरचना धातुवहनं च। दृश्यतेऽनेनेति दर्शनं चक्षुरिन्द्रियम्। मूर्तिः काठिन्यम् ॥ १२ ॥

**एवमयं लोकसंमितः पुरुषः। यावन्तो हि लोके मूर्तिमन्तो भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके इति; बुधास्त्वेवं द्रष्टुमिच्छन्ति ॥ १३ ॥**

एतद्भूतविकारमयत्वं शरीरस्य लोकसाम्येन ज्ञातं सन्मोक्षस्यापि परमाभीष्टस्य कारणं भवतीति लोकसाम्यं दर्शयन्नाह—एवमयमित्यादि। एवमिति पञ्चभूतविकारमयत्वेन। लोकसंमित इति लोकतुल्यः। इह च भूतविकारमयत्वं यच्छरीरस्योक्तं तेन भूतविकारमयत्वमधिकृत्य सादृश्यमुक्तं लोकपुरुषयोः; यत्त्वाध्यात्मिकं लोकपुरुषयोः साम्यं पुरुषविचये वक्तव्यं, तदपीहाद्युक्तमपि 'यावन्तो हि' इत्यादिविशेषाभिधानेन सूचितं ज्ञेयम्। तेन, यावन्तो भावविशेषा आध्यात्मिका अन्तरात्मसत्त्वाहङ्कारादयो, भौतिका वा मूर्तिक्लेदादयः, ते पुरुषगता लोकेनापि समाना इति ज्ञेयम्। एतच्च लोकपुरुषयोः साम्यं पुरुषविचये व्यक्तं भविष्यति। एतच्च लोकपुरुषयोः साम्यकथनं मुमुक्षूणामेवोपयुक्तमिति दर्शयन्नाह—बुधास्त्वेवमित्यादि। बुधाः सम्यग्ज्ञानवन्तः, मोक्षयुक्ता इति यावत्। लोकपुरुषसाम्यकथनं च मोक्षार्थमेवेति पुरुषविचये स्वयमेव वक्ष्यति ॥ १३ ॥

**एवमस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्तेऽन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते; तद्यथा—दन्ता व्यञ्जनानि व्यक्तीभावस्तथायुक्तानि चापराणि। एषा प्रकृतिः, विकृतिः पुनरतोऽन्यथा। सन्ति खल्वस्मिन् गर्भे केचिन्नित्या भावाः, सन्ति चानित्याः केचित्। तस्य य एवाङ्गावयवाः सन्तिष्ठन्ते, त एव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति। तत्र स्त्रीपुरुषयोर्यें वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च, तेषां यतो भूयस्त्वं ततोऽन्यतरभावः। तद्यथा—क्लैब्यं भीरुत्वमवैशारद्यं मोहोऽनवस्थानमधोगुरुत्वमसहनं शैथिल्यं मार्दवं गर्भाशयबीजभागस्तथायुक्तानि चापराणि स्त्रीकराणि, अतो विपरीतानि पुरुषकराणि, उभयभागावयवा नपुंसककराणि भवन्ति ॥ १४ ॥**

प्रकृतां तृतीयमासभवामिन्द्रियाद्यङ्गाभिनिर्वृत्तिमुपसंहरति—एवमस्येत्यादि। युगपदेव यौगपद्यं; यौगपद्यमित्यभिधानमिन्द्रियाणामपि सर्वाङ्गाभिनिर्वृत्तेः समकालतोपदर्शनार्थम्। किं दन्तादयोऽपि तृतीयमासे भवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि। व्यञ्जनानि श्मश्रुस्तनादीनि। व्यक्तीभावः शुक्ररजसोराविर्भावः। तथायुक्तानीति जातोत्तरकालजत्वेन दन्तादिसदृशानि चाङ्गानि बुद्ध्यादीनि। एषा प्रकृतिरिति इन्द्रियाण्यङ्गावयवाश्च युगपद्भवन्ति, दन्तादयश्च जातस्यापि चिरेण भवन्तीत्येवंरूपो मनुष्यस्वभाव इत्यर्थः। अन्यथेति कदाचित् सदन्त एव जायत इत्यादिका विकृतिर्मनुष्यस्य। अथ कस्माद्दन्तादयो गर्भादिजाय-

१ 'स्विदानीमपरांश्चैवाङ्गावयवान् पर्यायान्तरेणानुव्याख्यास्यामः' इति पा०

१ 'शुक्ररजोव्यक्तीभावः' इति पा०। २ 'उभयभागभावानि' इति 'उभयभावा' इति च पा०। ३ 'स्थूलमांसादीनि' इति पा०।

माना विकृतिरित्वेनोच्यन्त इत्याह—सन्तीत्यादि । खलु-शब्दो हेतौ । नित्या इति यावच्छरीरभाविनः करचरणादयः, अनित्याश्च न यावच्छरीरभाविनो दन्तादयः । एतेन, अनित्यस्वभावानां दन्तादीनां गर्भाद्यजायमानत्वान्नित्यत्वं विकृतिरिति युक्तमित्यर्थः । अथ नित्यानित्येषु मध्ये के रूयादिलिङ्गं बिभ्रतीत्याह—तस्येत्यादि । सन्तिष्ठन्त इति यावच्छरीरं तिष्ठन्ति । एतेन, य एव नित्या उपस्थादयस्त एव स्त्रीलिङ्गतां पुंलिङ्गतां वा बिभ्रति । तत्रोपस्थरूपो नित्यो भावः स्त्रीलिङ्गं, शेफश्च पुंलिङ्गम्, उपस्थलिङ्गाकारविरहितं च रन्ध्रमात्रं नपुंसकलिङ्गं भवति । किंवा, स्त्रिया यल्लिङ्गं स्तनादि, पुरुषस्य वा श्मश्रुप्रभृति, नपुंसकस्य वा स्त्रीपुंसमानाकाररूपं जातोत्तरकालभावि, तदपि य एव नित्या भावा उरःकपोलप्रभृतयस्त एव कालवशाद्बिभ्रतीति वाक्यार्थः । उर एव हि स्तनारम्भकबीजयुक्तं स्त्रिया उत्तरकालं स्तनवद्भवति, एवं कपोल एव श्मश्रुबीजयुक्तः श्मश्रुवान् भवति । न चावश्यं यत् स्तनश्मश्रुप्रभृतीनां बीजं चेदस्ति शरीरे, तत् किमिति गर्भात् प्रभृति स्तनादि न जायत इति; यतो बीजमहिमाऽयं—यत् स्वकाल एव कार्यं करोति । यथा-अवनिपतितमपि शाल्यादिबीजमृतुप्राप्तावेवाङ्कुरं जनयति; न च स्वभाव उपालम्भमर्हति । 'यदैवाङ्गावयवाः सन्तिष्ठन्ते, तदैव रूयादिलिङ्गं बिभ्रति' इत्यादिपाठपक्षे तु व्यक्त एवार्थः । अथ कुतः समाने शुक्रादौ कारणे रूयादिविशेषो भवतीत्याह—वैशेषिका इति । वैशेषिका विशिष्टाः परस्परव्यावृत्ता इति यावत् । प्रधानसंश्रया इति आत्मसंश्रयाः । गुणसंश्रया इति शुक्रशोणितगतभूतसंश्रयाः; गुणशब्देनेह भूतान्युच्यन्ते । यत इति सप्तम्यां तसिः; तेन यस्मिन् वैशेषिके भावे भूयस्त्वं दैववशाद्भवति, ततो भावादन्यतरस्य स्त्रीरूपस्य पुंरूपस्य वा गर्भस्योत्पत्तिर्भवति; यदि स्त्रीकरा भावा क्लैब्यादयो भूयांसो भवन्ति तदा स्त्री जायते, विपर्यये पुमानित्यर्थः । तत्र स्त्रीकरान् भावानाह—तत्रेत्यादि । अवैशारद्यं मोहः । शैथिल्यम् अनिबिडसंयोगता, यथा—दृढशणतन्तुविरलवापितपटस्य शैथिल्यं; मार्दवं तु निबिडसंयोगस्यापि सहजावयवमार्दवं, यथा—पट्टसूत्रे निरन्तरवापितपटस्य मृदुत्वम् । क्लैब्यादनवस्थानपर्यन्तं प्रधानसंश्रयं, शेषं गुणसंश्रयम् । तथायुक्तानीत्यनेन योनिबीजभागादीनि ग्राहयति । एते चाधोगुरुत्वादयो रजोधिक एव बीजे भवन्तीति ज्ञेयम् । तेन, "रक्तेन कन्यामधिकेन" ( शा. अ. २ ) इति यदुक्तं तदनेन समं न विरुद्धं भवति । विपरीतानि अक्लैब्यादीनीत्यर्थः । उभयभागावयवा इति स्त्रीपुरुषकारका अवयवाः । नपुंसककराणीति नपुंसकनिर्देशोऽव्यक्तगुणाभिप्रायेण । तेन प्रथमं नपुंसककराणीति अव्यक्तगुणसंदोहाभिप्रायेण प्रयुक्तं, ततः कानि तानीत्यपेक्षायां विशेषपरिग्रहादुभयभागावयवा इति पुंलिङ्गेन निर्देशो ज्ञेयः ॥ १४ ॥

**तस्य यत्कालमेवेन्द्रियाणि संतिष्ठन्ते, तत्कालमेव चेतसि वेदना निर्बन्धं प्राप्नोति; तस्माच्चदा प्रभृति गर्भः स्पन्दते, प्रार्थयते च जन्मान्तरानुभूतं यत् किंचित्, तद्द्वैहृदय्यमाचक्षते वृद्धाः । मातृजं चास्य हृदयं मातृहृदयेनाभिसंबद्धं भवति रसवाहिनीभिः संवाहिनीभिः; तस्मात्तयोस्ताभिर्भक्तिः संस्पन्दते । तच्चैव कारणमवेक्षमाणा न द्वैहृदय्यस्य विमानितं गर्भमिच्छन्ति कर्तुम् । विमानने ह्यस्य दृश्यते विनाशो विकृतिर्वा । समानयोगक्षेमा हि तदा भवति गर्भेण केषुचिदर्थेषु माता । तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः ॥ १५ ॥**

संतिष्ठन्त इति अभिनिर्वर्तन्ते । वेदना सुखदुःखोपलब्धिः । निर्बन्धं प्राप्नोतीति संबन्धं प्राप्नोति, इन्द्रियोत्पादसमकालमेव सुखदुःखज्ञो भवतीति वाक्यार्थः । तस्मादिति सुखदुःखसंबन्धात्; सुखोत्पादनार्थं दुःखपरिहारार्थं च स्पन्दते चलति, तथा प्रार्थयते च सुखहेतून् जन्मान्तरानुभूतानित्यर्थः । तद्गर्भप्रार्थनायुक्तं मातृहृदयं द्वैहृदय्यमिति वृद्धा ज्ञानवृद्धा आचक्षते । द्विहृदयस्य भावाद् द्वैहृदय्यं, मातृहृदयं गर्भहृदयेन सर्म हृदयद्वयं भवति । ननु गर्भहृदयं कथं मातृहृदयेन संबद्धं भवतीत्याह—मातृजमिति; मातृकारणकार्तवजम् । रसवाहिनीभिरिति गर्भपोषणार्थाभिर्मातृहृदयगर्भनाभिप्रतिबद्धाभी रसवाहिनीभिः । एतेन, यद् गर्भः प्रार्थयते, तया प्रार्थनया रसवाहिनीभिर्हृदयमागतया माताऽपि तत्प्रार्थनावती भवति एवं मातृप्रार्थनयाऽपि गर्भः प्रार्थनावान् भवति । तयोरिति मातृगर्भयोः । भक्तिः इच्छा । ताभिरिति रसवाहिनीभिः । संस्पन्दत इति मातृहृदयाद्गर्भहृदयं याति, गर्भहृदयाच्च मातृहृदयमित्यर्थः । गर्भस्य विनाशो विकृतिर्वेति महता इच्छाविघातेन विनाशः, स्वल्पेन तु विकृतिः; किंवा गर्भेच्छापूर्विका मातुरिच्छा, तद्विघातेन विनाशो गर्भस्य, सा हीच्छा विहता साक्षाद्गर्भसंबन्धितया सुकुमारतरं गर्भं वातप्रकोपाद्विनाशयति; या तु मातुरिच्छा विहता, सा मातरि वातक्षोभं जनयती समानयोगक्षेमे गर्भेऽपि मनाग्विकृतिजननाद्विकृतिं जनयति । एतदेव दर्शयति-समानयोगक्षेमा हीत्यादि ।—योगः सुखहेतुयोगः, क्षेमः प्रत्यवायपरिहारः, एतौ योगक्षेमौ मातुर्गर्भेण समानौ भवतः । केषुचिदर्थेष्विति वचनाददतुल्ययोगक्षेमता च क्वचिद्भवतीति दर्शयति । तेन, नावश्यं मातुर्विकाराः क्षुदादयो गर्भे विकृतिमावहन्ति, गर्भस्य वा मातरीति दर्शयति । गर्भिणी विशेषेणेतिवचनादगर्भिण्यपि स्त्री ऋतुकाले प्रियहितोपचर-

१ 'नित्यत्वेन नोच्यन्त इत्याह' इति पा० । २ 'नित्यत्वेनावतिष्ठन्ते' इति पा० । ३ 'स्त्रीनराकाररूपं' इति पा० । ४ 'बीजोक्त एवार्थः' इति पा० । ५ 'निरन्तरवापितचर्मपटस्य' इति पा० ।

१ 'रसहारिणीभिः' इति पा० । २ 'संपद्यते' इति पा० । ३ 'द्वैहृदय्याविमानितं' इति पा० । ४ 'सुखदुःखज्ञानवान्' इति पा० । ५ 'सुखदुःखहेतून्' इति पा० ।

णीया । यदुक्तं—"सहचर्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुः" ( शा. अ. ८ ) इत्यादि ॥ १५ ॥

तस्या गर्भापत्तेर्द्वैहृदय्यस्य च विज्ञानार्थं लिङ्गानि समासेनोपदेक्ष्यामः। उपचारसाधनं ह्यस्य ज्ञाने, ज्ञानं च लिङ्गतः, तस्मादिष्टो लिङ्गोपदेशः । तद्यथा—आर्तवादर्शनमास्यसंस्रवणमनन्नाभिलाषश्छर्दिररोचकोऽम्लकामता च विशेषेण श्रद्धाप्रणयनमुच्चावचेषु भावेषु गुरुगात्रत्वं चक्षुषोर्ग्लानिः स्तनयोः स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थं श्वयथुः पादयोरीषल्लोमराज्युद्गमो योन्याश्चाटालत्वमिति गर्भे पर्यागते रूपाणि भवन्ति ॥ १६ ॥

उपचारसाधनं यथोचितोपचारकरणम् । अस्येति गृहीतस्य गर्भस्य तथा द्वैहृदय्यस्य च । तत्र गृहीतगर्भोपचारो यथा—"शङ्किता चेद्गर्भमापन्ना क्षीरमनुपस्कृतं काले काले पिबेत्" ( शा. स. ८ ) इत्यादि द्विहृदयोपचारं चात्रैव वक्ष्यति। ज्ञानमिति गर्भस्य द्विहृदयस्य च ज्ञानम् । अम्लकामता विशेषेणेति च्छेदः। श्रद्धा इच्छा । उच्चावचेष्विति उच्चनीचेषु, भक्षणीयत्वेन कृतेषु चाकृतेषु चेत्यर्थः। ईषत् पादयोः श्वयथुः। चाटालत्वं विवृतत्वम्। एतानि च लक्षणानि स्वरूपेण गर्भस्य भवन्ति, तृतीयमासयुक्तानि तु द्वैहृदय्यस्य च लिङ्गानि भवन्तीति ज्ञेयम् ॥ १६ ॥

सा यद्यदिच्छेत्तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः ॥ १७ ॥

गर्भोपघातकरास्त्विमे भावा भवन्तिः; तद्यथा—सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टाः; इमांश्चान्यानुपदिशन्ति वृद्धाः—देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयान्न मदकराणि मद्यान्यभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत्, यच्चान्यदपि किञ्चित् स्त्रियो विद्युः ॥ १८ ॥

दारुणाश्चेष्टा व्यवायादिकाः । देवतारक्षोऽनुचरेभ्यः परिरक्षणं देवतारक्षोऽनुचरपरिरक्षणम् । यदित्यादि । यच्चान्यत् स्त्रियो गर्भकालासेव्यत्वेन विद्युस्तदपि वर्जयेत् । वदन्ति हि स्त्रियः—"न गर्भिणी कूपमवलोकयेत्, न नदीपारं यायात्" इत्यादि । वृद्धस्त्रीवचनमप्यागममूलमेव, इह तु ग्रन्थविस्तरभयान्न दर्शितमिति भावः ॥ १७ ॥ १८ ॥

तीव्रायां तु खलु प्रार्थनायां काममहितमप्यस्यै हितेनोपहितं दद्यात् प्रार्थनाविनयनार्थम् । प्रार्थनासंधारणाद्धि वायुः प्रकुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्यात् ॥ १९ ॥

प्रार्थना ईप्सितार्थयाच्ञा, तस्यास्तु तीव्रत्वं बलवदिच्छाजन्यत्वमेव । हितोपहितमिति हितेन युक्तं, किंवा कल्पनया हितम् । प्रार्थनाया विनयनं विस्फोटनं, तदर्थम् । प्रार्थना च प्रार्थितलाभेनैवापयाति । प्रार्थनाविमानने दोषमाह—प्रार्थनेत्यादि । प्रार्थनायाः सम्यग्धारणं प्रार्थनासन्धारणम् । एतच्च स्तोकक्रमेणापि प्रार्थितादाने सति भवति, यथोक्तविधिना वा हितादाने सति इच्छा मनाक् समग्रा वा खण्डिता भवति । इच्छाविघातश्च मनःक्षोभकरभयादिवद्वातप्रकोपको भवति । आपद्यमानस्येत्यनेन गर्भस्यातितरुणत्वेन मनागपि वातक्षोभासहत्वं दर्शयति । वैरूप्यविनाशविकल्पस्तु वातप्रकोपप्रकर्षापकर्षकृतो ज्ञेयः ॥ १९ ॥

चतुर्थे मासि स्थिरत्वमापद्यते गर्भः, तस्मात्तदा गर्भिणी गुरुगात्रत्वमधिकमापद्यते विशेषेण ॥ २० ॥

तृतीयमासानुपूर्वीकथनप्रस्तावागतं गर्भस्य विशेषमभिधाय क्रमागतां चतुर्थमासानुपूर्वीमाह—चतुर्थ इत्यादि । स्थिरत्वमिति निबिडत्वम् । अत एव निबिडेन गुरुतरेण गर्भेणाक्रान्ता गर्भिणी गुरुगात्रा भवतीति युक्तम् ॥ २० ॥

पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्मात्तदा गर्भिणी कार्श्यमापद्यते विशेषेण ॥ २१ ॥

अधिकमन्येभ्य इत्यनेन मासान्तरेष्वपि स्तोकक्रमेण मांसादिवृद्धिं दर्शयति । येन शारीरेण भावेन गर्भ उपचीयते, तेन गर्भिणी हीयत इति युक्तमेव । यतो गर्भमांसादिपोषणेनैव क्षीण आहाररसो न मातृमांसादि सम्यक् पोषयति ॥ २१ ॥

षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्मात्तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण ॥ २२ ॥

बलवर्णयोरुपचयो बलवर्णोपचयः; किंवा, उपचयो धातुपुष्टिः ॥ २२ ॥

सप्तमे मासि गर्भः सर्वैर्भावैराप्याय्यते, तस्मात्तदा गर्भिणी सर्वाकारैः क्लान्ततमा भवति ॥ २३ ॥

सर्वभावैरिति मांसशोणितादिभिः । युगपदेव सर्वैः सप्तमे गर्भ आप्याय्यते, पूर्वेषु तु मासेषु न सर्वैर्युगपदिति विशेषः । सर्वाकारैरिति सर्वमांसशोणितादिजन्यरूपैः । क्लान्ततमेति हीनतमा ॥ २३ ॥

अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिर्मुहुर्मुहुरोजः परस्परत आददाते गर्भस्यासंपूर्णत्वात् । तस्मात्तदा गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च म्लाना, तथा गर्भः; तस्मात्तदा गर्भस्य जन्म व्यापत्तिमद्भवत्योज-

१ 'उपचारसंबोधनं' इति पा० । २ 'धावनादिकाः' इति पा० ।

१ 'गर्भे मांसादिपोषणेनैव क्षीण आहाररसे' इति पा० । २ 'रसवाहिनीभिः' इति पा० । ३ 'गर्भस्य संपूर्णत्वात्' इति पा० । ४ 'भवत्यधिकं' इति पा० ।

**सोऽनवस्थितत्वात् । तं चैवार्थमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः ॥ २४ ॥**

अष्टम इत्यादि । रसवाहिनीभिरिति मातृहृदये गर्भनाभ्यां च संबद्धाभी रसवाहिनीभिः । परस्परत ओज आददाते इति मातुरोजो गर्भ आदत्ते, गर्भस्य चौजो माता आदत्ते । ओजोऽनवस्थाने हेतुमाह—गर्भस्यासंपूर्णत्वादिति । यस्माद्गर्भोऽसंपूर्णः, तस्मादनिष्पन्नाश्रयं गर्भौजोऽनवस्थितं भवति । मातुरोजो गर्भं गच्छतीति यदुच्यते, तन्मौज एव मातृसंबद्धं सन्मात्रोज इति व्यपदिश्यते; यदि तु मातुरेव यदोजस्तद्गर्भं गच्छतीत्यर्थः स्यात्, तदा गर्भस्यासंपूर्णत्वादिति हेतुः संपूर्णमातृदेहस्थितस्यौजसो गमनेऽसङ्गतः स्यात्; तथा, यथा गर्भौजसो मातर्यवस्थानसमये जन्म गर्भमरणकरं भवति, तथा मातुरोजसो गर्भावस्थाने सति यद्गर्भजन्म, तत्र मातुरपि मरणं स्यात्; न चैतदिष्टं, येनोभयथाऽपि गर्भस्यैवात्र मरणमुच्यते न मातुः, 'तदा गर्भस्य जन्म व्यापत्तिमद्भवति' इतिवचनेन । जतूकर्णेऽप्यष्टमे जन्म गर्भविनाशायैव दर्शितम् । यदुक्तं—"स्त्रीगर्भावन्योन्यस्य ओज आददातेऽष्टमे, तस्मात्तदा प्रसूतिर्गर्भविनाशायैव" इति । अन्ये तु वर्णयन्ति—यत्—"सत्यपि मातुरोजसो गर्भगमने जन्मादृष्टवशादेव गर्भस्यैव मरणाय भवति, न मातुः" इति । सुश्रुतव्याख्यातारस्तु—"अष्टममासे नैर्ऋतभागत्वाच्च गर्भस्य सत्यप्योजोऽनवस्थाने तुल्ये गर्भस्यैव नाशो न मातुः" इति वर्णयन्ति । गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवतीति गर्भौजोयोगाद्धर्षयुक्ता भवति, ओजोविगमनात्तु मुहुर्मुहुर्ग्लाना भवतीति योज्यम् । तथा गर्भ इति गर्भिणीवद्गर्भोऽपि मुहुर्मुहुर्मुदायुक्तो भवति, मुहुर्मुहुर्ग्लानो भवति । तस्मादिति पूर्वोक्तं गर्भव्यापत्तिहेतुं साक्षाद्ब्रूते । ओजसोऽनवस्थितत्वादिति एतच्च व्याकृतमेव । अष्टममासस्य विशेषान्तरमाह—तं चैवेत्यादि । तं चैवार्थमिति गर्भव्यापत्तिरूपमर्थम् । अगण्यमिति न गणनया गर्भिण्यां प्रतिपादनीयम् । यदि हि गर्भिणी गण्यमानमष्टमं मासं गर्भजन्मव्यापत्तिकरं शृणुयात् ततो भीता स्यात्, तद्भयाच्च गर्भस्य वातक्षोभाद् व्यापत् स्यादिति भावः ॥ २४ ॥

**तस्मिन्नेकदिवसातिक्रान्तेऽपि नवमं मासमुपादाय प्रसवकालमित्याहुरादशमान्मासात् । एतावान् प्रसवकालः, वैकारिकमतः परं कुक्षाववस्थानं गर्भस्य ॥ २५ ॥**

तस्मिन्निति अष्टमे मासि । आदशमादिति वचनं प्रशस्ततरप्रसवकालाभिप्रायेण । सुश्रुते द्वादशमासपर्यन्तं सम्यक्प्रसवकालाभिधानं स्तोकदोषयोरेकादशद्वादशमासयोरल्पदोषत्वेनादोषपक्ष एव निक्षेपाद् बोद्धव्यम् ॥ २५ ॥

**एवमनयाऽऽनुपूर्व्याऽभिनिर्वर्तते कुक्षौ ॥ २६ ॥**

दत्तमुत्तरमुपसंहरति—एवमित्यादि ॥ २६ ॥

१ 'अत ऊर्ध्वमवस्थानं' इति पा० ।



**मात्रादीनां खलु गर्भकराणां भावानां संपदस्तथा वृत्तस्य सौष्ठवान्मातृतश्चैवोपस्नेहोपस्वेदाभ्यां कालपरिणामात् स्वभावसंसिद्धेश्च कुक्षौ वृद्धिं प्राप्नोति ॥ २७ ॥**

'यथाऽस्य वृद्धिहेतुः' इति प्रश्नस्योत्तरं—मात्रादीनामित्यादि । आदिग्रहणात् पित्रात्मसात्म्यरससत्त्वानि "मातृजश्चायं" ( शा. अ. ४ ) इत्यादिग्रन्थोक्तानि गृह्यन्ते । वृत्तस्य मातुराचाररूपस्य सौष्ठवं सुष्ठुत्वं वृत्तसौष्ठवम् । मातृत इति पदं वृत्तसौष्ठवेन तथा उपस्नेहोपस्वेदाभ्यां च संबध्यते । रससात्म्यसौष्ठवं तु मात्रादिसंपदा लब्धमेव । उपस्नेहो धातुनिष्यन्दसंबन्धः, उपस्वेदः शरीरस्योष्मणा परं गर्भस्य स्वेदनम्; उपस्वेदश्च गर्भवृद्धिकरो भवत्येव, यथा—अण्डजानां पक्षतेरुपस्वेदनं वृद्धिकरं दृष्टम् । कालपरिणामादिति यथा यथा कालप्रकर्षस्तथा तथा वर्धते गर्भः । वृद्धिहेत्वन्तरमाह—स्वभावसंसिद्धेश्चेति । स्वभावेनैव कर्मजन्येन गर्भो भवति वर्धिष्णुरित्यर्थः । कर्मणा हि भोगलक्षणशरीरनिर्वर्तकेनारभ्यमाणं गर्भशरीरं वर्धिष्णुस्वभावमेवारब्धं, तेन वर्धत एव ॥ २७ ॥

**मात्रादीनामेव तु खलु गर्भकराणां भावानां व्यापत्तिनिमित्तमस्याजन्म भवति ॥ २८ ॥**

'कुतश्चास्याजन्म भवति' इत्यस्योत्तरं—मात्रेत्यादि । व्यापत्तिनिमित्तमिति व्यापत्तिकारणकं; तत्र मातुर्व्यापच्छोणितगर्भाशयादिदुष्टिः, पितुर्व्यापच्छुक्रदुष्टिरित्याद्यनुसरणीयम् ॥ २८ ॥

**ये ह्यस्य कुक्षौ वृद्धिहेतुसमाख्याता भावास्तेषां विपर्ययादुदरे विनाशमापद्यते, अथवाऽप्यचिरजातः स्यात् ॥ २९ ॥**

'यतश्च जायमानः' इत्यादिप्रश्नस्योत्तरं—ये ह्यस्येत्यादि । वृद्धिहेतुसमाख्याता भावाः "मात्रादीनां तु खलु गर्भकराणां भावानां संपदः" इत्यादिग्रन्थोक्ताः । अथवाऽप्यचिरजात इति यदा मात्रादीनां सर्वथा दोषवत्त्वेन विपर्ययो भवति, तदा विनाशमापद्यते गर्भः; यदा त्वल्पदोषवत्तया मनाग्विपर्ययो भवति, तदा अचिरजातो विपद्यत इति ज्ञेयम् ॥ २९ ॥

**यतस्तु कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते, तदनुव्याख्यास्यामः—यदा स्त्रिया दोषप्रकोपणोक्तान्यासेवमानाया दोषाः प्रकुपिताः शरीरमुपसर्पन्तः शोणितगर्भाशयावुपपद्यन्ते, न च कार्त्स्न्येन शोणितगर्भाशयौ दूषयन्ति, तदेयं गर्भं लभते स्त्री; तदा तस्य गर्भस्य मातृजानामवयवानामन्यतमोऽवयवो विकृतिमापद्यत एकोऽथवाऽनेके, यस्य यस्य ह्यवयवस्य बीजे बीजभागे वा दोषाः प्रकोपमापद्यन्ते, तं तमवयवं विकृतिराविशति । यदा ह्यस्याः शोणिते**

१ 'भोगक्षमशरीरनिर्वर्तकेन' इति पा० । २ 'अथवा स गर्भोऽचिरकालाज्जायते' इति गङ्गाधरः । ३ 'शोणितगर्भाशयोपघातायोपपद्यन्ते' इति पा० । ४ 'तदा यं' इति पा० ।

**गर्भाशयबीजभागः प्रदोषमापद्यते, तदा वन्ध्यां जनयति; यदा पुनरस्याः शोणिते गर्भाशयबीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजां जनयति; यदा त्वस्याः शोणिते गर्भाशयबीजभागावयवः स्त्रीकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते, तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं वार्तां नाम जनयति, तां स्त्रीव्यापदमाचक्षते ॥ ३० ॥**

अवशिष्टप्रश्नस्योत्तरं दर्शयितुमाह—यतस्त्वित्यादि । अत्रा-विनश्यन्नित्यत्र विनाशेन विकृतिरभिप्रेता, विकृतावपि विनाशशब्दो दृष्टः; यथा—असच्छीलत्वेन विकृते पुरुषे 'विनष्टोऽयम्' इति व्यपदेशः; एवं च सत्येकदेशेनापि विकृतौ विनाशशब्ददर्शने कार्त्स्न्येनेति विशेषणं युक्तं भवति । दोषप्रकोपणेनैव दोषप्रकोपणसेवायां लब्धायां पुनर्दोषप्रकोपणोक्तान्यासेवमानाया इति पदं दोषाणां स्वहेतुसेवया बलवन्तं प्रकोपं दर्शयितुं, परहेतुसेवयाऽपि हि स्तोकमात्रया अनुबन्धरूपदोषप्रकोपो भवति; यथा—अम्लेन पित्तं जन्यमानं श्लेष्मानुगतं जन्यते । 'नतु कार्त्स्न्येन दूषयन्ति' इति वचनेन कार्त्स्न्येन दुष्टौ गर्भजन्मैव न भवतीति दर्शयति । मातृजानामिति त्वग्लोहितादीनाम् । अन्यतम इति जातावेकवचनम् । तत्रैकोऽप्यवयवोऽन्यतमः, तथा अनेकेऽवयवा अन्यतमशब्देन प्रोक्ताः । अत एव 'एकोऽथवाऽनेके' इत्यन्यतमविवरणमुपपन्नं भवति । अन्यथा त्वन्यतमपदेनैकस्यैवावयवस्य गृहीतत्वात् 'अनेके' इति विवरणमसङ्गतं स्यात् । कुतः पुनरेकस्यानेकस्य वा विकृतिर्भवतीत्याह—यस्येत्यादि । बीज इति कृत्स्न एवारम्भके बीजे । बीजभागे चेत्यवयवबीजस्यैकदेशे । एतां विकृतिमेव श्रद्धग्राहिकतया वक्तुमाह—यदेत्यादि । शोणित इति आर्तवे । गर्भाशयजनको बीजभागो गर्भाशयबीजभागः; किंवा गर्भाशयस्य तथा बीजस्य चार्तवरूपस्य जनको भागः । गर्भाशयार्तवे च मातृजावयवमध्ये पतिते शोणितजन्ये एव; तेन, आर्तवेतरबीजभागस्य दुष्टिरुपपन्ना । आर्तवं च यद्यपि द्वादशवर्षादूर्ध्वं व्यज्यते, तथाऽपि आर्तवोत्पत्तिर्गर्भकाल एव भवति । येन सतामेवार्तवदन्तश्मश्रुप्रभृतीनां काले व्यक्तिर्भवति; तेन, आर्तवारम्भकस्यापि बीजस्य गर्भकाले प्रदोष उपपन्नः । प्रदोष इत्यत्र प्रशब्देन दुष्टिप्रकर्षं प्रकृष्टवन्ध्यतारूपकार्यजनकं दर्शयति । गर्भाशयस्य तथाऽऽर्तवस्य चोपघातेन स्त्रिया वन्ध्यत्वं व्यक्तमेव । गर्भाशयबीजभागावयव इत्यत्रापि पूर्ववद्व्याख्येयम् । अवयवशब्देन गर्भाशयस्यार्तवस्य चैकदेश इहोच्यते । पूतिप्रजामिति म्रियमाणापत्याम्; अन्ये तु क्लिन्नाङ्गप्रत्यङ्गां पूतिमाहुः । स्त्रीकराणां शरीरबीजभागानामिति स्त्रीत्वव्यञ्जकस्तनोपस्थलोमराज्यादिजनकबीजभागानाम् । अस्त्रियमिति असंपूर्णस्त्रीलक्षणाम् । वार्तां नामेति वार्तासंज्ञा शास्त्रसमयकृता । स्त्रीव्यापदिति स्त्रीनिमित्ताऽऽर्तवदोषकृता व्यापत् । एवं तां पुरुषव्यापदमाचक्षते इत्यत्रापि पुरुषव्यापद्व्याख्येया ॥ ३० ॥

**एवमेव पुरुषस्य यदा बीजे बीजभागः प्रदोषमापद्यते, तदा वन्ध्यं जनयति; यदा पुनरस्य बीजे बीजभागावयवः प्रदोषमापद्यते, तदा पूतिप्रजं जनयति; यदा त्वस्य बीजे बीजभागावयवः पुरुषकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते, तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपुत्रिकं नाम जनयति; तां पुरुषव्यापदमाचक्षते ॥ ३१ ॥**

बीजे इति शुक्रे । शुक्ररूपबीजजनको भागो बीजभागः । तदा वन्ध्यमित्यनेन पुरुषवन्ध्यं ब्रूते, इहापि प्रदोषव्याख्या पूतिप्रजाव्याख्या च पूर्ववत् । अपुरुषमिति असमस्तपुरुषलक्षणयुक्तम् । तृणपुत्रिकसंज्ञाऽपि शास्त्रसमयसिद्धैव । वार्तातृणपुत्रिकयोर्व्यवायेच्छा परं भवति, नतु व्यवायसामर्थ्यमिति ब्रुवते ॥ ३१ ॥

**एतेन मातृजानां पितृजानां चावयवानां विकृतिव्याख्यानेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता भवति ॥ ३२ ॥**

एवं मातापितृजावयवैकदेशविकृतिवत् सात्म्यरससत्त्वजावयवविकृत्यतिदेशार्थमाह—एतेनेत्यादि । सात्म्यविभ्रमात्तु सात्म्यजानामारोग्यानालस्यादीनामन्यतमेन हीयते । एवं रससत्त्वयोरप्युन्नेयम् ॥ ३२ ॥

**निर्विकारः परस्त्वात्मा सर्वभूतानां निर्विशेषः; सत्त्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः ॥ ३३ ॥**

आत्मजोऽप्ययं गर्भ उक्तः, तत् कथमिह तद्विकृत्या विकृतिर्गर्भस्य नोच्यत इत्याह—निर्विकार इत्यादि । पर इत्यनेन मनःशरीरादिसमुदायादात्मानं व्यवच्छिनत्ति । सर्वभूतानां निर्विशेष इति सर्वेषु भूतेषु वर्तमानोऽप्ययं परमात्मा तुल्य एव । यस्तु तत्र सुखदुःखादिविशेषं उपलभ्यते, स शरीरविशेषस्य तथा मनोविशेषस्य च सुखदुःखादिविशेषकारणस्य विशेषादुपलभ्यते; एतदेव 'शरीरसत्त्वयोस्तु' इत्यादिनोक्तम् । सुखादयस्तु न परमात्मविकाराः, किंतु बुद्धिधर्मा एवेति दर्शितमेव । यानि चात्मजत्वेन गर्भे "तासु तासु योनिषूत्पत्तिः" ( शा. अ. ३ ) इत्यादिना ग्रन्थेन दर्शितानि, तान्यपि परमात्मविकारा न भवन्ति, किंतु सत्त्वरजस्तमःप्रबलतारूपविकारजमनोविकारजन्यधर्माधर्मजन्यान्येव । तेन, सूक्ष्मचिन्तायामात्म-

१ 'रान्तां' इति पा० । २ 'स्वस्तं' इति पा० । ३ 'भ्राशाः' इति पा० । ४ 'कन्योत्पत्तिसमकालमेव भवति' इति पा० । ५ 'उत्पन्नः' इति पा० ।

१ 'एवमेव पुरुषस्य बीजदोषे पितृजावयवविकृतिं विद्यात् । यदा ह्यस्य बीजे बीजभागावयवः' इति पा० । २ 'तृणपूलिकं' इति पा० । ३ 'तृणपूलीकसंज्ञा' इति पा० । ४ 'यस्तु तथाभूते ज्ञानादिविशेष' इति पा० । ५ 'ज्ञानदुःखादिविक्षेपकारणस्य' इति पा० ।

जानि यान्युक्तानि, तान्यपि सत्त्वजान्येव । ततश्चेहात्मजावयवविकारोऽपि सत्त्वजावयवविकार एव बोद्धव्य इति भावः ॥ ३३ ॥

**तत्र त्रयः शरीरदोषा वातपित्तश्लेष्माणः, ते शरीरं दूषयन्ति; द्वौ पुनः सत्त्वदोषौ रजस्तमश्च, तौ सत्त्वं दूषयतः । ताभ्यां च सत्त्वशरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते, नोपजायते चाप्रदुष्टाभ्याम् ॥ ३४ ॥**

'शरीरसत्त्वयोस्तु' इत्यादिना शरीरमनसी दुःखरूपविकारेऽपि कारणमुक्ते; तत्रैव च यैर्दोषैः शरीरं, मनश्च याभ्यां दोषाभ्यां युक्तं दुःखकारणं भवति, तानाह-तत्र त्रय इत्यादि । विकृतिरुपजायत इति शारीरमानसरोगरूपा विकृतिरुपजायते ॥ ३४ ॥

**तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे ॥ ३५ ॥**

संप्रति, शरीरसत्त्वयोस्तु विशेषादित्यनेन दर्शिताञ् शरीरसत्त्वविशेषानेवाह-तत्रेत्यादि । चतुर्विधमिति जरायुजाण्डजोद्भिज्जसंस्वेदजम् । अग्रे इति खुड्डिकायाम् ॥ ३५ ॥

**त्रिविधं खलु सत्त्वं-शुद्धं, राजसं, तामसमिति । तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात्, राजसं सदोषमाख्यातं रोषांशत्वात्, तामसमपि सदोषमाख्यातं मोहांशत्वात् । तेषां तु त्रयाणामपि सत्त्वानामेकैकस्य भेदाग्रमपरिसङ्ख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च । शरीरं ह्यपि सत्त्वमनुविधीयते, सत्त्वं च शरीरम् । तस्मात् कतिचित्सत्त्वभेदाननूकाभिनिर्देशेन निदर्शनार्थमनुव्याख्यास्यामः ॥ ३६ ॥**

कल्याणांशत्वादिति शुभरूपांशत्वात्[1] । मनो हि कल्याणभाग-रोषभाग-मोहभागैस्त्रिभागं; तत्र रोषांशमोहांशौ सदोषौ, अधर्महेतुतया । भेदाग्रमिति भेदप्रमाणम् । तरतमयोगादिति शुचितर-शुचितममनोभेदयोगात् । शरीरविशेषा बाल-युव-स्थविरादिविशेषाः, योनिविशेषास्तु मनुष्यपश्वादिजातिविशेषाः; किंवा, शरीरस्य नरपश्वादिजातिकृता विशेषाः शरीरयोनिविशेषाः, तेभ्यः । अथ शरीरभेदात् कथं मनोभेदो भवतीत्याह—अन्योन्यानुविधानाच्च । एतदेव विभजते-शरीरं ह्यपीत्यादि । सत्त्वानुरूपं शरीरं भवति, यदि शुद्धसत्त्वं भवति तदा देवादिशरीरं भवतीत्यादि; तथा शरीरानुरूपं च सत्त्वं भवति; यथा—पशुशरीरे तामसं, मनुष्यशरीरे राजसं, देवशरीरे सात्त्विकमित्यादि ज्ञेयम् । किंवा, अन्योन्यानुविधानादिति सत्त्वरजस्तमसां परस्परानुविधानादित्यर्थः । अस्मिन् पक्षे 'शरीरं ह्यपि सत्त्वमनुविधीयते' इत्यादिना ग्रन्थेन व्यवहितमपि शरीरानुविधानं मनसो दुर्बोधत्वाद् व्याक्रियत इति व्याख्येयम् । सत्त्वभेदानिति मनोभेदान् । अनूकाभिनिर्देशेन सादृश्यनिर्देशेन ॥ ३६ ॥

१ 'शुभरूपभागत्वात्' इति पा० ।

**तद्यथा—शुचिं सत्याभिसन्धं जितात्मानं संविभागिनं ज्ञानविज्ञानवचनप्रतिवचनसंपन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याहर्षामर्षापेतं समं सर्वभूतेषु ब्राह्मं विद्यात् ॥ (१) ॥**

**इज्याध्ययनव्रतहोमब्रह्मचर्यपरमतिथिव्रतमुपशान्तमदमानरागद्वेषमोहलोभरोषं प्रतिभावचनविज्ञानोपधारणशक्तिसंपन्नमार्षं विद्यात् ॥ (२) ॥**

**ऐश्वर्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेतमक्लिष्टकर्माणं दीर्घदर्शिनं धर्मार्थकामाभिरतमैन्द्रं विद्यात् ॥ (३) ॥**

**लेखास्थवृत्तं प्राप्तकारिणमसंप्रहार्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्यलम्भिनं[1] व्यपगतरागेर्ष्याद्वेषमोहं याम्यं विद्यात् ॥ (४) ॥**

**शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्माणं स्थानकोपप्रसादं वारुणं विद्यात् ॥ (५) ॥**

**स्थानमानोपभोगपरिवारसंपन्नं धर्मार्थकामनित्यं शुचिं सुखविहारं व्यक्तकोपप्रसादं कौबेरं विद्यात् ॥ (६) ॥**

**प्रियनृत्यगीतवादित्रोल्लापकश्लोकाख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारकामनित्यमनसूयकं गान्धर्वं विद्यात् ॥ (७) ॥**

**इत्येवं शुद्धस्य सत्त्वस्य सप्तविधं भेदांशं विद्यात् कल्याणांशत्वात्; तत्संयोगात्तु ब्राह्ममत्यन्तशुद्धं व्यवस्येत् ॥ ३७ ॥**

संविभागिनमिति सम्यक्फलविभजनशीलम् । अतिथौ यथोचितमर्घ्यादियुक्तं[2] व्रतमाचरतीति अतिथिव्रतः । लेखा कर्तव्याकर्तव्यमर्यादा, तत्र स्थितं वृत्तं यस्य स लेखास्थवृत्तः, तम्; अलङ्घितकर्तव्याकर्तव्यमित्यर्थः । असंप्रहार्यमिति अशक्यवारणम् । ऐश्वर्यं लभत इति ऐश्वर्यलम्मी । स्थाने उचिते कोपः प्रसादश्च यस्य स स्थानकोपप्रसादः । सुखविहारमिति सुखक्रीडनम् । उल्लापः स्तोत्रम् । विहारः क्रीडा, किंवा स्त्रीभिः समं विहरणं स्त्रीविहारः । गान्धर्वमिति गान्धर्वसत्त्वम् । एवं ब्राह्ममित्यादावपि ज्ञेयम् । एवं च ब्राह्मादिभिः सत्त्ववाचकैः पदैर्वंशवद्प्रत्ययसृष्टैः सत्त्वस्य सप्तविधभेदकथनं समानकारणाद्युपपन्नं[3] भवति । शुद्धस्येति सत्त्वगुणबहुलस्य । अथ कथमेते ब्राह्मादयः शुद्धसत्त्वस्यैव भेदा इत्याह—कल्याणांशत्वादिति । तत्संयोगादिति कल्याणांशसत्त्वस्य सम्यग्योगात् ॥ ३७ ॥

**शूरं चण्डमसूयकमैश्वर्यवन्तमौपधिकं[4] रौद्रमननुक्रोशमात्मपूजकमासुरं विद्यात् ॥ (१) ॥**

**अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारा-**

१ 'ऐश्वर्यालम्बिनं' इति पा० । २ 'यथोचितसपर्यादियुक्तम्' इति पा० । ३ 'सामानाधिकरण्यादुपपन्नं' इति पा० । ४ 'औदरिकं' इति पा० ।

तिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात् ॥ (२) ॥

महाशनं स्त्रैणं स्त्रीरहस्कामसमशुचिं शुचिद्वेषिणं भीरुं भीषयितारं विकृतविहाराहारशीलं पैशाचं विद्यात् ॥ (३) ॥

क्रुद्धशूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं संत्रस्तगोचरमाहारविहारपरं सार्पं विद्यात् ॥ (४) ॥

आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपमकर्मशीलं प्रैतं विद्यात्(५)

अनुपक्ककाममजस्रमाहारविहारपरमनवस्थितममर्षणमसंचयं शाकुनं विद्यात् ॥ (६) ॥

इत्येवं खलु राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्यात्, रोषांशत्वात् ॥ ३८ ॥

औपधिकमिति छद्मप्रचारिणम् । अननुक्रोशमिति निर्दयम् । स्त्रिया समं रहसि स्थातुमिच्छतीति स्त्रीरहस्कामः । क्रुद्धशूरमक्रुद्धभीरुमिति क्रोधे सति शूरं, क्रोधेऽसति भीरुम् । गोचरशब्देन गोचरे विषये प्रचारो लक्ष्यते, तेन सन्त्रस्तगोचरमिति संत्रस्तविषयप्रचारम् । पिशाचाद्भिन्न एव यथोक्ताचारः प्रेतः, तेन प्रैतमपि सत्त्वं पृथगुक्तम् ॥ ३८ ॥

निराकरिष्णुममेधसं जुगुप्सिताचाराहारं मैथुनपरं स्वप्नशीलं पाशवं विद्यात् ॥ (१) ॥

भीरुमबुधमाहारलुब्धमनवस्थितमनुपक्ककामक्रोधं सरणशीलं तोयकामं मात्स्यं विद्यात् ॥(२)॥

अलसं केवलमभिनिविष्टमाहारे सर्वबुद्ध्यङ्गहीनं वानस्पत्यं विद्यात् ॥ (३) ॥

इत्येवं तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यान्मोहांशत्वात् ॥ ३९ ॥

सरणशीलमिति गमनशीलम् । बुद्ध्यङ्गानि ऊहापोहविचारस्मृत्यादीनि उक्तानि ॥ ३९ ॥

इत्यपरिसंख्येयभेदानां त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः; शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षिशक्रयमवरुणकुबेरगन्धर्वसत्त्वानुकारेण, राजसस्य षड्विधो दैत्यपिशाचराक्षससर्पप्रेतशकुनिसत्त्वानुकारेण, तामसस्य त्रिविधः पशुमत्स्यवनस्पतिसत्त्वानुकारेण, कथं च यथासत्त्वमुपचारः स्यादिति ॥ ४० ॥

सुखसरणार्थं शुद्धादिभेदेन वैन्धीकृत्य सत्त्वभेदानाह— शुद्धस्येत्यादि । वनस्पतिसत्त्वानुकारेणेत्यन्तो ग्रन्थो भेदैकदेशो व्याख्यात इत्यनेन संयोजनीयः, क्रियान्तराभावात् । एते च सत्त्वभेदाः प्रायेण भवन्ति मनुष्येष्विति कृत्वा एत एवोदाहरणार्थमुक्ताः; एवमनुक्ता अपि विष्णु-शङ्कर-व्याघ्रादिसत्त्वानुकारेण सत्त्वभेदा बोद्धव्या एवेति दर्शयति । कथमित्यादि कथं नाम यथासत्त्वं सर्वप्राणिमनोभिर्मनुष्याणामुपचारः स्यादित्येतदर्थमुदाहरणरूपा अमी सत्त्वभेदा व्याख्याता इति वाक्यार्थः ॥ ४० ॥

केवलश्चायमुद्देशो यथोद्देशमभिनिर्दिष्टो भवति गर्भावक्रान्तिसंप्रयुक्तः; तस्य चार्थस्य विज्ञाने सामर्थ्यं गर्भकराणां च भावानामनुसमाधिः, विघातश्च विघातकराणां भावानामिति ॥ ४१ ॥

यथाप्रतिज्ञं व्याख्यातार्थमुपसंहरति—केवल इत्यादि । केवलः कृत्स्नः । उद्देश इति 'यतश्चायं गर्भः' इत्यादिग्रन्थकृतः । यथोद्देशमिति उद्देशक्रमानतिक्रमेण । सामर्थ्यमिति प्रयोजनम् । अनुसमाधिः अनुष्ठानम् । विघातः वर्जनम् । विघातकराणामिति गर्भविघातकराणाम् ॥ ४१ ॥

तत्र श्लोकाः—

निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च ।
वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसंज्ञिताः ॥ ४२ ॥
अजन्मनि च यो हेतुर्विनाशे विकृतावपि ।
इमांस्त्रीनशुभान् भावानाहुर्गर्भविघातकान् ॥ ४३ ॥
शुभाशुभसमाख्यातानष्टौ भावानिमान् भिषक् ।
सर्वथा वेद यः सर्वान् स राज्ञः कर्तुमर्हति ॥ ४४ ॥
अवाप्त्युपायान् गर्भस्य स एवं ज्ञातुमर्हति ।
ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधीः ॥४५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने महतीगर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथैतेषु मध्ये के ते गर्भस्य शुभा ये गर्भेऽनुष्ठेयाः, के वा अशुभा ये वर्जनीया इत्याह—निमित्तमित्यादि । निमित्तमिति 'यतश्च गर्भः संभवति' इति ग्रन्थोद्दिष्टोऽर्थः । आत्मेति गर्भरूप आत्मा 'यस्मिंश्च गर्भसंज्ञा' इति ग्रन्थोद्दिष्टोऽर्थः । प्रक्रियतेऽस्माद्गर्भ इति प्रकृतिः 'यद्विकारश्च गर्भः' इति ग्रन्थोद्दिष्टोऽर्थः । वृद्धिः कुक्षौ क्रमेण चेति 'ययाऽनुपूर्व्या कुक्षावभिनिर्वर्तते गर्भः' इति ग्रन्थोद्दिष्टोऽर्थः । वृद्धिहेतुरिति 'यश्चास्य वृद्धिहेतुः' इत्यादिनोद्दिष्टोऽर्थः । अजन्मनि च यो हेतुरित्यनेन 'यतश्चास्याजन्म भवति' इत्युद्दिष्टोऽर्थो गृह्यते । विनाशे च यो हेतुरित्यनेन 'यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति' इत्युक्तोऽर्थो गृह्यते । विकृतावपाये हेतुरित्यनेन 'यतश्च कार्त्स्न्येन'. इत्यादिनोक्तार्थसंग्रहः । गर्भविघातत्वेनोक्ता गर्भविघातोक्ताः ॥ ४२—४५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां शारीरस्थाने महतीगर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

१ 'महालसं' इति पा० । २ 'भग्नसुगोचरं' इति पा० । ३ 'निरलङ्करिष्णुं' इति पा० । ४ 'बहोकुल' इति पा० ।

१ 'गर्भावक्रान्तिसंप्रयुक्तस्यार्थस्य विज्ञाने' इति पा० ।

## पञ्चमोऽध्यायः।

अथातः पुरुषविचयं शारीरं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्यायेऽभिहितं "यावन्तो हि लोके भावास्तावन्तः पुरुषे" ( शा. अ. ४ ) इति, तच्च न प्रपञ्चितं बहुवाच्यत्वात्; अतः प्रपञ्चाभिधानार्थं पुरुषविचयं ब्रूते। पुरुषस्य विचयनं लोकसामान्येन गणनं पुरुषविचयः, तमधिकृत्य कृतोऽध्यायः पुरुषविचयः ॥ १ ॥ २ ॥

'पुरुषोऽयं लोकसंमितः' इत्युवाच भगवान् पुनर्वसुरात्रेयः। यावन्तो हि लोके (मूर्तिमन्तो) भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके; इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—नैतावता वाक्येनोक्तं वाक्यार्थमवगाहामहे, भगवता बुद्ध्या भूयस्तरमतोऽनुव्याख्यायमानं शुश्रूषामह इति ॥ ३ ॥

तमुवाच भगवानात्रेयः—अपरिसंख्येया लोकावयवविशेषाः, पुरुषावयवविशेषा अप्यपरिसंख्येयाः; तेषां यथास्थूलं कतिचिद्भावान् सामान्यमभिप्रेत्योदाहरिष्यामः, तानेकमना निबोध सम्यगुपवर्ण्यमानानग्निवेश!। षड्धातवः समुदिताः'पुरुष' इति शब्दं लभन्ते; तद्यथा—पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमिति, एत एव च षड्धातवः समुदिताः 'पुरुष' इति शब्दं लभन्ते ॥ ४ ॥

संमितः तुल्यः। लोकसंमितत्वमेव विभजते—यावन्तो हीत्यादि। भगवता बुद्ध्याऽनुव्याख्यायमानमिति योजना। लोकस्य तरुतृणपश्वादिरूपा अवयवाः, तथा पुरुषस्य च स्नायुकण्डराधमन्यादिरूपा अवयवा अपरिसंख्येयाः; तेन, कार्त्स्न्याभिधानमशक्यम्; अतो ये ये लोकपुरुषयोः स्थूला अवयवाः, ते ते सामान्यप्रतिपादनार्थमुच्यन्त इति वाक्यार्थः। ब्रह्मणो विवरणम्—अव्यक्तमिति ॥ ३ ॥ ४ ॥

तस्य पुरुषस्य पृथिवी मूर्तिः, आपः क्लेदः, तेजोऽभिसन्तापः, वायुः प्राणः, वियत् सुषिराणि, ब्रह्म अन्तरात्मा। यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः, ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वं, यस्त्विन्द्रो लोके स पुरुषेऽहङ्कारः, आदित्यस्त्वादानं, रुद्रो रोषः, सोमः प्रसादः, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थाश्च, तमो मोहः, ज्योतिर्ज्ञानं, यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानं, यथा कृतयुगमेवं बाल्यं, यथा त्रेता तथा यौवनं, यथा द्वापरस्तथा स्थाविर्यं, यथा कलिरेवमातुर्यं, यथा युगान्तस्तथा मरणमिति। एवमेतेनानुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश! सामान्यं विद्यादिति ॥ ५ ॥

तस्येत्यादिना पुरुषे षड्धातून् दर्शयति। मूर्तिः काठिन्यम्। लोके षड्धातवो व्यक्ता एवेति न पुनर्विवेचिताः। ब्राह्मीति आत्मविशेषस्य जगत्स्रष्टुर्विभूतिः। प्रजापतिः दक्षनामा। आदानं ग्रहणम्; आदित्योऽप्याददातीत्यादानसाम्यमादित्यस्य। इह च मनःप्रभृतिषु प्राजापत्यादिरूपता आगमसिद्धैव ज्ञेया। सर्वेन्द्रियार्थो विश्वेदेवा एव। सर्गादिरिति प्रलयानन्तरः कालः। अनुक्तानामित्यनेन मतिः बृहस्पतिः, कामः गन्धर्वः, इत्यादि सामान्यमूह्यम् ॥ ५ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—एवमेतत् सर्वमनपवादं यथोक्तं भगवता लोकपुरुषयोः सामान्यम्। किन्त्वस्य सामान्योपदेशस्य प्रयोजनमिति ॥ ६ ॥

भगवानुवाच—शृण्वग्निवेश! सर्वलोकमात्मन्यात्मानं च सर्वलोके सममनुपश्यतः सत्या बुद्धिः समुत्पद्यते। सर्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्ता नान्य इति। कर्मात्मकत्वाच्च हेत्वादिभिर्युक्तः सर्वलोकोऽहमिति विदित्वा ज्ञानं पूर्वमुत्थाप्यतेऽपवर्गायेति। तत्र संयोगापेक्षी लोकशब्दः। षड्धातुसमुदायो हि सामान्यतः सर्वलोकः ॥ ७ ॥

अनपवादमिति अबाध्यमानम्। किन्त्वस्य प्रयोजनमिति आयुर्वेदे किमप्येतत् साम्यकथने प्रयोजनमित्यर्थः। सत्या बुद्धिरुत्पद्यते इति अस्य योजनायां 'किंचास्याः प्रयोजनम्' इति शेषो ज्ञेयः। यथा च लोकपुरुषसाम्यं सत्यबुद्धिजनकं भवति तदाह—सर्वलोकं हीत्यादि। आत्मनि पश्यत इति आत्मनोऽभेदेन पश्यतः। आत्मशब्देन षड्धातुसमुदायात्मकः पुरुष इहोच्यते; तेन, यत्किञ्चिल्लोकगतं सुखदुःखजनकं, तदात्मरूपमेव; तेन बाह्यलोककृतमपि आत्मकृतमेव वैषयिकं नित्यदुःखानुसक्तं हेयं सुखं, तथा निसर्गहेयं दुःखं च पश्यन् रागद्वेषनिर्मुक्तः सन् सत्यज्ञानवान् भवतीति भावः। अथ सत्यज्ञानस्यापि किं प्रयोजनमित्याह—कर्मेत्यादि। लोकपुरुषसाम्यज्ञानेऽपि सत्यज्ञानस्यापवर्गानुष्ठानं प्रयोजनमिति वाक्यार्थः। अत्र कर्मात्मकत्वादिति कर्माधीनत्वात्। हेत्वादयोऽग्रे वक्ष्यमाणाः। कर्मपरवशः सन् हेत्वादिभिर्युक्तोऽयमात्मा प्रवर्तते, तत् कर्म तत्त्वज्ञानात् प्रवृत्त्युपरमे सति कारणाभावान्नोपपद्यते; उत्पन्नं च कर्म अरब्धस्य तत्त्वज्ञानेन, अदृष्टसं

१ 'लोकसाम्येन' इति पा०। २ 'मूर्तिमन्तः' इति गङ्गाधरसंमतः पाठः।

१ 'तस्मात्सबुद्धिः' इति पा०। २ 'व्याक्रियमाणाः' इति पा०।

चोपभोगात्, आत्यन्तिककर्मक्षयादात्यन्तिककर्मफलाभावरूपो मोक्षो भवतीति भावः। संयोगापेक्षीति षड्धातुमेलके पुरुषरूपे वर्तते इत्यर्थः। लोकशब्देनेह प्रकरणे लोकत इति कृत्वा पुरुष एवोच्यते, न जगद्रूपो लोकः। यतः, हेत्वादयो येऽत्र कर्मपरवशत्वेन लोके वक्तव्याः, ते पुरुष एव संभवन्ति। सर्वशब्देन सर्वप्राणिनो ग्राहयति ॥ ६ ॥ ७ ॥

**तस्य हेतुः, उत्पत्तिः, वृद्धिः, उपप्लवः, वियोगश्च। तत्र हेतुरुत्पत्तिकारणं, उत्पत्तिर्जन्म, वृद्धिराप्यायनम्, उपप्लवो दुःखागमः, षड्धातुविभागो वियोगः सजीवापगमः स प्राणनिरोधः स भङ्गः स लोकस्वभावः। तस्य मूलं सर्वोपप्लवानां च प्रवृत्तिः, निवृत्तिरुपरमः। प्रवृत्तिर्दुःखं, निवृत्तिः सुखमिति यज्ज्ञानमुत्पद्यते तत् सत्यम्। तस्य हेतुः सर्वलोकसामान्यज्ञानम्। एतत्प्रयोजनं सामान्योपदेशस्येति ॥ ८ ॥**

हेत्वादिपञ्चकं निर्दिश्य विभजते—तस्य हेतुरित्यादि। तस्य मूलमिति तस्य जीवापगमस्य कारणम्। सर्वोपप्लवानां चेति सर्वदुःखानाम्। प्रवृत्तिः रागद्वेषमूला प्रवृत्तिः। निवृत्तिरिति अप्रवृत्तिः। उपरमशब्दस्तु तस्येत्यनेन तथा सर्वोपप्लवानां चेत्यनेन च संबध्यते। तेन दुःखानां मरणस्य चोपरमो निवृत्तिकृत एव; निवृत्तिजन्यत्वेन च कार्यकारणयोरभेदोपचारादुपरमोऽपि निवृत्तिशब्देन सामानाधिकरण्येनोच्यते। प्रवृत्तिर्दुःखमिति च तथा निवृत्तिः सुखमिति च कार्यकारणयोरभेदोपचाराद्बोद्धव्यम्। सत्यज्ञानस्वरूपमाह—इति यज्ज्ञानमित्यादि। इतीति पूर्वप्रत्यवमर्शकम्। एतस्मिन् सत्यज्ञाने लोकपुरुषसामान्यज्ञानस्य हेतुत्वं दर्शयन्नाह—तस्येत्यादि ॥ ८ ॥

**अथाग्निवेश उवाच—किंमूला भगवन्! प्रवृत्तिः, निवृत्तौ च क उपाय इति ॥ ९ ॥**

**भगवानुवाच—मोहेच्छाद्वेषकर्ममूला प्रवृत्तिः। तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपातविप्रत्ययाविशेषानुपायास्तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यैवोत्तिष्ठन्ते; यैरभिभूतो न सत्तामतिवर्तते। तत्रैवंजातिरूपवित्तवृत्तबुद्धिशीलविद्याभिजनवयोवीर्यप्रभावसंपन्नोऽहमित्यहङ्कारः, यन्मनोवाक्कायकर्म नापवर्गाय स सङ्गः, कर्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति वा नेति संशयः, सर्वावस्थास्वनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसंप्लवः, मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्यवपातः, कार्याकार्यहिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः, ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्च सामान्यदर्शनमविशेषः, प्रोक्षणानशनाग्निहोत्रत्रिषवणाभ्युक्षणावाहनयाजनयजनयाचनसलिलहुताशनप्रवेशादयः समारम्भाः प्रोच्यन्ते ह्यनुपायाः। एवमयमधीधृतिस्मृतिरहङ्काराभिनिविष्टः सक्तः ससंशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथादृष्टिरविशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्वशरीरदोषमूलानां सर्वदुःखानां भवति। एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिं, सा च मूलमघस्य ॥ १० ॥**

प्रवृत्तेः संसाररूपायाः, तथा निवृत्तेर्मोक्षरूपायाः कारणमुपायं च पृच्छति—किंमूलेत्यादि। मोहेत्याद्युत्तरम्। मोहेच्छाद्वेषकर्ममूलेति मोहान्मिथ्याज्ञानरूपादिच्छाद्वेषौ, तयोश्च धर्माधर्मरूपं कर्म, तच्च मूलं संसारस्येत्यर्थः। कथमेते मोहादयः संसारकारणमित्याह—तज्जा हीत्यादि। अत्र चाहङ्कारादौ यथायोग्यतया मोहादीनां कारणत्वं ज्ञेयम्। अहङ्कारादयश्चाग्रेऽवग्रे वक्ष्यमाणा ज्ञेयाः। अवतत्येति व्याप्य। न सत्तामतिवर्तते इति न संसारे स्थितिमतिवर्तते। अत्राद्युक्तमहङ्कारं विवृणोति—तत्रैवमित्यादि। जात्यादिभिः प्रभावान्तैः संपन्न उत्कृष्टोऽहमिति ज्ञानमहङ्कारः। यदित्यादि सङ्गविवरणम्। कर्मफलादयः सन्ति न वेति यज्ज्ञानं, तत् संशयः। अभिसंप्लवमाह—सर्वेत्यादि। आत्मनोऽभिमत अनात्मन्यभिसंप्लवोऽभिसंप्लवः; आत्मनोऽनात्मगोचरतया आत्मबुद्धिरित्यर्थः। सर्वावस्थास्विति सर्वासु शरीरावस्थासु षड्धातुसमुदायरूप एवानन्य इति यज्ज्ञानं तदिह ज्ञेयं; परमात्मनस्तु सर्वावस्थास्वनन्यत्वमिति यज्ज्ञानं, तत् सम्यग्ज्ञानमेव। एवमहं स्रष्टाऽहं स्वभावसंसिद्ध इत्यत्रापि शरीर एवाहङ्कारविषयो ज्ञेयः। अहं शरीरेन्द्रियबुद्धिविशेषराशिरित्यत्र शरीरादिष्वचेतनेष्वहङ्कारास्पदत्वेन चेतनत्वाभिमानो विरुद्ध इति ज्ञेयम्। ममेत्यादिना अभ्यवपातमाह; अभ्यवपातः परमार्थतोऽनात्मीये ममता। कार्येत्यादिना विप्रत्ययं ब्रूते। विपरीताभिनिवेशो विपर्ययेण ज्ञानं; यथा—कार्ये अकार्यम्, अकार्ये कार्यमित्यादि। ज्ञाज्ञयोरित्यादिनाऽविशेषमाह। अविशेषो विशेषाप्रतीतिः, विप्रत्ययस्तु विशेषाणां विपर्ययेण ग्रहणमिति भेदः। प्रोक्षणेत्यादिना अनुपायमाह। अनुपाया इति अन्योपायाः सन्तोऽपि परमपुरुषार्थे मोक्षे अनुपायाः। त्रिषवणं त्रिसंध्यस्नानम्। संप्रत्यहङ्कारादीनां धीधृतिस्मृतिविभ्रंशमूलत्वेनाधीधृतिस्मृत्यभिधानपूर्वकं संसाररूपप्रवृत्तिनित्यानुबन्धशारीरमानसदुःखकारणत्वं व्युत्पादितानामहङ्कारादीनां संक्षिप्याह—एवमित्यादिना। निवासवृक्ष इव निवासवृक्षः; तेन यथा निवासवृक्षः पक्षिणां नित्यमाश्रयो भवति, एवमहंकारादियुक्तोऽपि रोगस्य निवासो भवतीति दर्शयति। भ्राम्यमाण इति पुनः पुनरपि

१ 'तत्त्वज्ञानरूपमाह' इति पा०।

१ 'प्रवृत्तिहेतुं नातिक्रामति' इति पा०। २ 'एवाहमसीति' इति पा०।

शरीरान्तराणि नीयमानः। नातिवर्तते प्रवृत्तिमिति संसारं न परित्यजति। एवं मोहेच्छाजन्यकर्ममूलतां प्रवृत्तेर्दर्शयित्वा, प्रवृत्तेरपि कर्मकारणतामाह—सा च मूलमघस्येति। प्रवृत्तिरपि धर्माधर्मरूपस्याघस्य मूलम्; इह च धर्माधर्मावविशेषेण संसारदुःखकारणतया अघशब्देनोक्तौ ॥ ९ ॥ १० ॥

**निवृत्तिरपवर्गः; तत् परं प्रशान्तं तत्तदक्षरं तद्ब्रह्म स मोक्षः ॥११॥**

**तत्र मुमुक्षूणामुदयनानि व्याख्यास्यामः। तत्र लोकदोषदर्शिनो मुमुक्षोरादित एवाचार्याभिगमनं, तस्योपदेशानुष्ठानम्, अग्नेरेवोपचर्या, धर्मशास्त्रानुगमनं, तदार्थावबोधः, तेनावष्टम्भः, तत्र यथोक्ताः क्रियाः, सतामुपासनम्, असतां परिवर्जनम्, असङ्गतिर्दुर्जनेन, सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनं, सर्वप्राणिषु चात्मनीवावेक्षा, सर्वासामस्मरणमसङ्कल्पनमप्रार्थनमनभिभाषणं च स्त्रीणां, सर्वपरिग्रहत्यागः, कौपीनं प्रच्छादनार्थं, धातुरागनिवसनं, कन्थासीवनहेतोः सूचीपिप्पलकं, शौचाधानतोर्जलकुण्डिका, दण्डधारणं, भैक्षचर्यार्थं पात्रं, प्राणधारणार्थमेककालमग्राम्यो यथोपपन्नोऽभ्यवहारः, श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं, ध्यानहेतोः कायनिबन्धनं, वनेष्वनिकेतवासः, तन्द्रानिन्द्रालस्यादिकर्मवर्जनं, इन्द्रियार्थेष्वनुरागोपतापनिग्रहः, सुप्तस्थितगतप्रेक्षिताहारविहारप्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृतिपूर्विका प्रवृत्तिः, सत्कारस्तुतिगर्हावमानक्षमत्वं, क्षुत्पिपासायासश्रमशीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं, शोकदैन्यमानोद्वेगमदलोभरागेर्ष्याभयक्रोधादिभिरसंचलनम्, अहङ्कारादिषूपसर्गसंज्ञा, लोकपुरुषयोः सर्गादिसामान्यावेक्षणं, कार्यकालात्ययभयं, योगारम्भे सततमनिर्वेदः, सत्त्वोत्साहः, अपवर्गाय धीधृतिस्मृतिबलाधानं; नियमनमिन्द्रियाणां चेतसि, चेतस आत्मनि, आत्मनश्च; धातुभेदेन शरीरावयवसंख्यानमभीक्ष्णं, सर्वं कारणवद्दुःखमस्वमनित्यमित्यभ्युपगमः, सर्वप्रवृत्तिष्वघसंज्ञा, सर्वसंन्यासे सुखमित्यभिनिवेशः; एष मार्गोऽपवर्गाय, अतोऽन्यथा वध्यते; इत्युदयनानि व्याख्यातानि ॥ १२ ॥**

संप्रति निवृत्तावुपायं वक्तुं निवृत्तिमेव तावदुपादेयताप्रतिपादकपर्यायैराह—निवृत्तिरित्यादि। 'उत्' इत्यव्ययं मोक्ष इत्यर्थे; उदयनानि हि मोक्षोपाया इत्यर्थः। लोकदोषदर्शिन इति हेतुगर्भं विशेषणं; तेन नित्यं दुःखाक्रान्तलोकदर्शनाद्विरक्तस्य सत इति दर्शयति। आचार्य इह मोक्षशास्त्रोपदेष्टा। तेनावष्टम्भ इति शास्त्रावबोधेन धैर्यं करणीयं, मनागपि तत्र कथंता न कर्तव्येत्यर्थः। यथोक्ताः क्रियाः 'कर्तव्याः' इति शेषः। आत्मनीवावेक्षेति यथा आत्मन्यनपकार्यताबुद्धिस्तथा सर्वप्राणिषु कर्तव्या। असङ्कल्पनमिति अभावनम्। कौपीनं प्रच्छादनार्थमिति कटिवेष्टनार्थं; किंवा कौपीनार्थं प्रच्छादनार्थं च। सूचीपिप्पलकं सूचीस्थापनपात्रम्। भैक्षचर्यार्थं पात्रं भिक्षापात्रमित्यर्थः। प्राणयात्रार्थमित्यनेन यावन्मात्रेणाहारेण प्राणयात्रा भवति तावन्मात्र आहारः कर्तव्यः, न तु रागादिति दर्शयति। एवं श्रमापनयनार्थमित्यादावपि तावन्मात्रप्रयोजनता व्याख्येया। कायनिबन्धनं योगपट्टम्। अनिकेतवास इति अगृहवासः, एतेन वनेऽपि न गृहं कृत्वा स्थातव्यमिति दर्शयति। इन्द्रियार्थेषु शब्दादिषु अनुरागस्य तथोपतापस्य च द्वेषरूपस्य निग्रहः कर्तव्यः। स्मृतिपूर्विका प्रवृत्तिरिति कोऽहं, किमर्थं रागत्यागादिकमारभ्यते, इत्यादि सर्वदा स्मर्तव्यमित्यर्थः। सत्कारः पूजा, सत्कारे स्तुतौ च सत्यामहृष्टत्वं, तथा गर्हायामवमाने च निर्द्वेषत्वं सत्कारादिक्षमित्वं ज्ञेयम्। क्षुधादिषु चानुद्वेगः क्षुधादिसहत्वम्। असंचलनम् असंवासः। अहङ्कारादयोऽष्टाविहैवोक्ताः। उपसर्गसंज्ञेति अनर्थहेतुत्वभावना। लोकपुरुषयोः सर्गादिसामान्यावेक्षणमिति यथा इहैव लोकपुरुषयोरादिसर्गतः प्रभृति सामान्यमुक्तं, तथाऽवेक्षणमित्यर्थः। कार्यकालात्ययभयमिति मोक्षानुगुणकर्तव्यस्य कालातिपातभयं करणीयम्। नियमनमिन्द्रियाणां चेतसीति इन्द्रियाणि बाह्यविषयनिवृत्तानि मनस्येव नियतानि कर्तव्यानि; चेतसश्चिन्त्यादिविषयेभ्यो व्यावृत्तस्य परमात्मन्यात्मज्ञानार्थं नियमनं कर्तव्यम्; आत्मनश्चात्मनि नियमनमिति योजना। तेन, आत्माऽपीन्द्रियादिविषयेभ्यो व्यावर्त्यात्मनि नियन्तव्यः। धातुभेदेन शरीरावयवसंख्यानमिति शरीरस्य रसमलस्नाय्वादिरूपतया ज्ञानम्। शरीरं हि रसमलस्नाय्वादिरूपतया भाव्यमानं वैराग्यहेतुर्भवति; यथा—"मज्जाऽस्था रजसा प्लीहा यकृता शक्रताऽपि च। पूर्णाः स्नायुसिराभिश्च स्त्रियश्चर्मप्रसेविकाः" इत्यादिका वैराग्यभावना। कारणवदित्यनेन नित्यात्मव्यतिरिक्तं सर्वमनित्यं दर्शयति। दुःखमिति दुःखहेतुः। अस्वमिति आत्मव्यतिरिक्तमनात्मीयं च। सर्वसंन्यासे सर्वप्रवृत्त्युपरमे ॥ ११ ॥ १२ ॥

**भवन्ति चात्र—**

**एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति।**
**मृज्यमान इवादर्शस्तैलचेलकचादिभिः ॥ १३ ॥**
**ग्रहाम्बुदरजोधूमनीहारैरसमावृतम्।**
**यथाऽर्कमण्डलं भाति भाति सत्त्वं तथाऽमलम् ॥१४॥**
**ज्वलत्यात्मनि संरुद्धं तत् सत्त्वं संवृतायने।**
**शुद्धः स्थिरः प्रसन्नार्चिर्दीपो दीपाशये यथा ॥१५॥**

१ 'दुःखसंज्ञा' इति पा०। २ 'उदयनम् ऊर्ध्वगमनमार्गः मोक्षोपाय इत्यर्थः' इति योगीन्द्रनाथसेनः।

१ 'किमर्थं आगतादिप्रारम्भः' इति पा०। २ 'बाह्यविषयपरावृत्या' इति पा०। ३ 'परमात्मदर्शनार्थं' इति पा०।

अविमलमिति क्रियाविशेषणम् । ग्रहः राहुः । सत्त्वस्य पञ्चेन्द्रियाणि ज्ञानावरकाणि भवन्तीति कृत्वा सूर्यस्यापि पञ्चैव ग्रहादयश्चावरका उक्ताः । ज्वलतीति केवलात्मज्ञानजनकत्वेन प्रकाशते । आत्मनि संरुद्धमिति इन्द्रियेभ्यो व्यावृत्त्यात्मनियतम् । संवृतायन इति आत्मपक्षेऽपि संवृतेन्द्रियरूपच्छिद्रे आत्मनीति ज्ञेयम् । दीपाशयः दीपधारिका, गृहं वा ॥ १३–१५॥

**शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते ।**
**यया भिनत्त्यतिबलं महामोहमयं तमः ॥ १६ ॥**
**सर्वभावस्वभावज्ञो यया भवति निःस्पृहः ।**
**योगं यया साधयते सांख्यः संपद्यते यया ॥ १७ ॥**
**यया नोपैत्यहङ्कारं नोपास्ते कारणं यया ।**
**यया नालम्बते किंचित् सर्वं संन्यस्यते यया ॥ १८॥**
**याति ब्रह्म यया नित्यमजरं शान्तमव्ययम् ।**
**विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानं च सा मता ॥१९॥**

शुद्धसत्त्वमभिधाय तज्जन्यां मोक्षसाधनत्वेनात्यर्थोपादेयां सत्यां बुद्धिं विविधैरुपयुक्तैः स्वरूपैराह—शुद्धेत्यादि । महामोहः अनादिमिथ्याज्ञानम् । निःस्पृह इति उपादित्साजिहासाशून्यः । योगमिति विषयव्यावृत्तस्य मनस आत्मन्येव परं योगम् । संख्या तत्त्वज्ञानं, तया वर्तत इति सांख्यः । नोपास्ते कारणमिति न सुखदुःखकारणं सेवते । नालम्बते किञ्चिदिति क्वचिदप्यास्थानं न करोति । संन्यस्यत इति सर्वत्रोदासीनो भवति । ब्रह्मेति मोक्षम् । विद्यासिद्ध्यादयश्च यद्यपि ज्ञानविशेषेऽपि प्रसिद्धाः, तथाऽपीह प्रकरणात् तत्त्वज्ञानपरा एव ज्ञेयाः ॥ १६–१९ ॥

**लोके विततमात्मानं लोकं चात्मनि पश्यतः ।**
**परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥ २० ॥**

लोके विततमात्मानमिति लोकरूपमात्मानं, तथा लोकं चात्मनि शरीरात्ममेलकरूपे पश्यतः, 'व्यवस्थितं' इति शेषः । परावरदृश इति परम् आत्मानम्, अवराणि आत्मव्यतिरिक्तानि प्रवृत्त्यादीनि, यः पश्यति तस्य परावरदृशः । ज्ञानमूलेत्यनेन मोहमूलामस्थिरां शान्तिं निरस्यति ॥ २० ॥

**पश्यतः सर्वभावान् हि सर्वावस्थासु सर्वदा ।**
**ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥ २१ ॥**

अथ जीवन्मुक्तस्य किमिति सुखदुःखहेतुधर्माधर्मसंयोगो न भवतीत्याह—पश्यत इत्यादि । पश्यत इति पश्यत एव परं, न तु रज्यतो नापि द्विषत इत्यर्थः । ब्रह्मभूतस्येति ब्रह्मसदृशस्य जीवन्मुक्तस्येति व्याख्येयं; सर्वथा मुक्ते हि ज्ञानमपि नास्ति, तेन पश्यत इति न स्यात् । संयोग इति धर्माधर्मसंबन्धः ॥ २१ ॥

१ 'कृत्वा दृष्टान्तः । सूर्यस्यापि पञ्चैवोदयावरका उक्ताः' इति पा० । २ 'इन्द्रियव्यावृत्त्याऽऽत्मनियतम्' इति पा० । ३ 'शान्तमक्षरम्' इति पा० । ४ 'क्वचिदप्यास्थां' इति पा० । ५ 'न तत्र' इति पा० ।

**नात्मनः करणाभावाल्लिङ्गमप्युपलभ्यते ।**
**स सर्वकरणायोगान्मुक्त इत्यभिधीयते ॥ २२ ॥**

अथ मुक्तात्मनः किं लक्षणमित्याह—नेत्यादि । आत्मन इति मुक्तात्मनः । करणाभावादिति मनःप्रभृतिकरणाभावात् । उक्तं हि—"करणानि मनोबुद्धिर्बुद्धिकर्मेन्द्रियाणि च" ( शा. अ. १ ) इति, मनःप्रभृत्यभावाच्च शरीराभावोऽप्यर्थलब्ध एव; सर्वाभावाच्चात्मनि किमपि लक्षणं नास्ति, स्वरूपेण चात्माऽतीन्द्रिय एव; तेन आत्मा उपलब्धियोग्यताभावाच्चोपलभ्यते, तल्लिङ्गान्यप्यभावादेव नोपलभ्यन्त इति भावः ॥ २२ ॥

**विपापं विरजः शान्तं परमक्षरमव्ययम् ।**
**अमृतं ब्रह्म निर्वाणं पर्यायैः शान्तिरुच्यते ॥ २३ ॥**
**एतत्तत् सौम्य ! विज्ञानं यज्ज्ञात्वा मुक्तसंशयाः ।**
**मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥ २४ ॥**

विपापमित्यादिना मोक्षस्वरूपप्रकाशकान् पर्यायानाह । यज्ज्ञात्वेति ज्ञानं प्राप्येत्यर्थः; किंवा, स्वप्रकाशकत्वाज्ज्ञानस्य ज्ञानमपि ज्ञेयं भवतीति बोद्धव्यम् ॥ २३ ॥ २४ ॥

**तत्र श्लोकौ—**

**सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च ।**
**सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ॥ २५ ॥**
**शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी ।**
**विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥ २६ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

संग्रहे शुद्धसत्त्वसमाधानमित्यनेन 'एतैरविमलं' इत्यादिना 'दीपाशये यथा' इत्यन्तेन ग्रन्थेनोक्तार्थः संगृहीतः । 'शुद्धसत्त्वस्य' इत्यादिना सत्या बुद्धिरुक्ता । नैष्ठिकीति सत्याबुद्धेरेव विशेषणं; नैष्ठिकी मोक्षसाधिका; निष्ठा मोक्षः ॥ २५ ॥ २६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां शारीरस्थाने पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

**अथातः शरीरविचयं शारीरं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**शरीरविचयः शरीरोपकारार्थमिष्यते । ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते । तस्माच्छरीरविचयं प्रशंसन्ति कुशलाः ॥ ३ ॥**

पुरुषविचयं मोक्षोपयुक्तत्वेन पुरुषोपकारकमभिधाय, व्याक्रियमाणचिकित्सोपयुक्तं शरीरोपकारकं शरीरविचयं ब्रूते । शरीरस्य विचयनं विचयः शरीरस्य प्रविभागेन ज्ञानमित्यर्थः । शरीरोपकारार्थमिति शरीरारोग्यार्थम् । अथ कथं शरीर-

१ 'व्यवक्ष्यमाणचिकित्सोपयुक्तशरीरोपकारकं' इति पा० ।

ज्ञानं शरीरोपकारकमित्याह—ज्ञात्वा हीत्यादि । शरीरस्य रक्तादिरूपस्य स्वभावरूपं तत्त्वं ज्ञात्वैव इदमस्य वृद्धस्य धातोरसमानगुणतया ह्रासकत्वेनोपकारकमिति, तथोक्तविपर्ययाच्चापकारकमिति ज्ञानं जायते, नोपकार्यशरीरतत्त्वज्ञानेऽसतीति वाक्यार्थः ॥ १–३ ॥

**तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकं समयोगवाहि । यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदा क्लेशं विनाशं वा प्राप्नोति । वैषम्यगमनं हि पुनर्धातूनां वृद्धिह्रासगमनमकार्त्स्न्येन प्रकृत्या च ॥ ४ ॥**

समुदितस्यैव तावच्छरीरस्य स्वरूपमाह—तत्रेत्यादि । चेतनाशब्देन ज्ञानकारणमात्मोच्यते, भूतशब्द उपमाने; तेन, चेतनाया आत्मसंबन्धिन्याः शरीरे एवोपलम्भादात्मनः शरीरमधिष्ठानमिति भवति; परमार्थस्तु चेतना आत्माश्रया, आत्मा च निराश्रय एव; किंवा चेतनस्यात्मनोऽधिष्ठानभूतमिति चेतनाधिष्ठानभूतम् । पञ्चानां महाभूतानां विकारा रसादयः शरीरारम्भकाः, तेषां समुदायो मेलकः, स आत्मा स्वरूपं यस्य तत्तथा । समुदायशब्देन च समुदायारम्भका धातव एवोच्यन्ते; तेन, न संयोगमात्रस्य शरीरत्वप्रसक्तिः । किंवा, समुदायः संयोग एवोच्यतां, तथाऽपि समुदाय आत्मा कारणं यस्य शरीरस्य द्रव्यरूपस्य तत् पञ्चमहाभूतविकारसमुदायात्मकं शरीरमेव । समेन उचितप्रमाणेन धातूनां मेलकेन सम्यङ्नीरोगतया वहतीति समयोगवाहि । यदा तु धातूनां न्यूनातिरिक्तत्वेन विषमो मेलको भवति, तदा असमयोगवाहीति दर्शयन्नाह—यदा हीत्यादि । लघुना वैषम्येण रोगमात्रजनकेन क्लेशं, महता त्वसाध्यरोगजनकेन वैषम्येण विनाशं मरणं प्राप्नोति शरीरम् । अथ किं तद्वैषम्यमित्याह—वैषम्यगमनमित्यादि । वैषम्यगमनं वैषम्यावस्थाप्राप्तिः, वैषम्यमेव कादाचित्कमित्यर्थः; यदि हि वैषम्यमित्येव ब्रूयात्, तदा सहजसिद्धमपि धातूनां यन्न्यूनातिरिक्तत्वेन वैषम्यं तदपि शिष्येण गृह्येत; तेन, गमनपदप्रक्षेपात् सहजं वैषम्यं परित्यज्य स्वप्रमाणापेक्षयैव कदाचिदुत्पद्यमानं वैषम्यं दर्शयति । वृद्धिह्रासगमनं चेह व्यस्तं समस्तं च वैषम्यं ज्ञेयम् । वृद्धिह्रासस्यैव विशेषानाह—अकार्त्स्न्येन प्रकृत्या चेति; अकार्त्स्न्येति एकदेशेन, प्रकृत्येति सकलेन स्वभावेन । एतेन च रसादीनां चांशेन वृद्धिह्रासौ, तथा कार्त्स्न्येन वृद्धिह्रासावुपगृहीतौ भवतः । अन्ये तु, 'अकार्त्स्न्येन' इतिपदं क्लेशं विनाशं वा प्राप्नोतीत्यनेन समं योजयन्ति । तेन, यदाऽपि धातवो वैषम्यमापद्यन्ते, तदाऽपि नावश्यं क्लेशविनाशौ भवतः, अकार्त्स्न्येनेतिपदेन क्लेशविनाशव्यभिचारस्याभिहितत्वात्; दृष्टं चैतत्, यथा—वृष्यप्रयोगाच्छुक्रवृद्धौ सत्यामपि न क्लेशविनाशौ भवतः, तथा बालस्य वर्धमानधातोरपि गुण एव परं दृश्यते । तच्च नातिसुन्दरं, यतो बालस्य वर्धमानधातोरपि वयोऽनुरूपाः प्राकृतमानस्थिता एव धातवो भवन्ति, तेन न ते प्राकृतमाना वृद्धा उच्यन्ते; या तु वृष्यप्रयोगजा शुक्रवृद्धिः, सा यदि विकारकारिका न भवति तदा तु प्राकृतमानान्तर्गतैव । एतदेव धातूनां प्राकृतमानं—यदविकारकारित्वम् । अञ्जल्यादिमानं तु अदूरान्तरेणाभिहितमपि नित्यपरोक्षतया पुनः स्वाभाविकधातुलक्षणैरेव ज्ञातव्यं; तस्माच्छुक्रस्य यावती वृद्धिरदोषा, तावती प्राकृतमानावस्थारूपैव । प्राकृतमानातिरिक्तौ चेह वृद्धिह्रासौ वैषम्यगमनशब्देनोच्येते, तस्मादाद्यैव व्याख्या । तथा न केवलं वृद्धिह्रासगमनमेव वैषम्यगमनं, किंतु प्रकृत्या च वैषम्यगमनं धातूनां भवतीति व्याख्यानयन्ति; तथाहि—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये" ( सू. अ. १७ ) इत्यादौ प्रकृतिस्थस्यापि दोषस्य विकारकर्तृत्वमुच्यते, विकारकारकस्य च दोषस्य प्रकृतिस्थताऽपि वैषम्यार्थक्रियाकारित्वेन वैषम्यशब्देनोच्यते । तदपि नातिसुन्दरम् । येन, प्रदेशान्तरेष्वपि त्रिविधां गतिं प्रतिपाद्य प्रकृतिस्थता धातूनां निर्विकारा एवोक्ता; यथा—"क्षीणा जहति लिङ्गं स्वं, स्वमाः स्वं कर्म कुर्वते । दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्" ( सू. अ. १७ ); तथा "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते । सुखसंज्ञकमारोग्यं विकारो दुःखमेव च" ( सू. अ. ९ ) एवमादिषु । यत्तु "प्रकृतिस्थं यदा पित्तं" इत्यादौ स्वमानावस्थितस्यापि पित्तादेर्विकारकर्तृत्वं, तच्छरीरप्रदेशान्तरनीतस्य पित्तादेस्तत्र तत्र प्रदेशे वृद्धस्यैव विकारकर्तृत्वं; स्वमानस्थितोऽपि दोषः प्रदेशान्तरं नीतः सन् तत्प्रदेशस्थदोपापेक्षया वृद्ध एव भवति, तेन तत्रापि वृद्धस्यैव विकारकर्तृत्वं, प्रपञ्चितश्चायमर्थस्तत्रैव ग्रन्थे । यत्रापि स्वमानस्थितानामेव रक्तादीनां वातादिदुष्ट्या विकारकर्तृत्वं, तत्रापि वातादय एव वृद्धाः प्राधान्येन विकारकराः, रक्तादयोऽपि तत्र दुष्टदोषसंबन्धाधीनस्वगुणा वृद्धस्वगुणा वा भवन्ति, ततो गुणहानिवृद्धिभ्यां वृद्धिह्रासौ दूष्येऽपि तिष्ठत एवेति न प्रकृतिस्थस्य विकारकारित्वमिति पश्यामः ॥ ४ ॥

**यौगपद्येन तु विरोधिनां धातूनां वृद्धिह्रासौ भवतः । यद्धि यस्य धातोर्वृद्धिकरं तत्ततो विपरीतगुणस्य धातोः प्रत्यवायकरं संपद्यते ॥ ५ ॥**

उपयुक्तभेषजेन यथा वृद्धिह्रासौ भवतस्तदाह—यौगपद्येनेत्यादि । विरोधिनामिति परस्परविरुद्धगुणानाम् । एतदेवोपपत्त्या साधयन्नाह—यद्धीत्यादि । यद्धि भेषजं, यथा—क्षीरं कफशुक्रादिवृद्धिकरं, तत् कफशुक्रादेर्विपरीतगुणस्य वातादेः प्रत्यवायकरं भवति, ह्रासकरं भवतीत्यर्थः । विपरीतस्येति कर्तव्ये यद्विपरीतगुणस्येति करोति, तेन जातिवैपरीत्याद्गुणवैपरीत्यमेव ह्रासकारणं प्राधान्येन दर्शयति । तेन, गोमूत्रं द्रवत्वेन जात्या समानमपि कटूष्णरूक्षादिविपरीतगुणयोगात् कफस्यापहारकमेव ॥ ५ ॥

१ 'समयोगवाहिनो यदा ह्यस्मिन्' इति पा० ।

**तदेव तस्माद्भेषजं सम्यगवचार्यमाणं युगपन्न्यूनातिरिक्तानां धातूनां साम्यकरं भवति, अधिकमपकर्षति न्यूनमाप्याययति ॥ ६ ॥**

उपपादितं यौगपद्येन धातूनां वृद्धिह्रासगमनमुपसंहरन्नाह—तदेवेत्यादि । सम्यगुपचर्यमाणमित्यनेन उचितमात्रादिप्रयोगं, तथा धातुसाम्यावधिभेषजप्रयोगं च दर्शयति; मात्रादिविगुणं[1] हि भेषजं न स्वोचितां क्रियां करोति; यथा—वृद्धस्य कफस्य क्षीणस्य च पित्तस्य क्षयवृद्धिभ्यां साम्यार्थं यदुपयुज्यते कट्वादि तत् साम्यापत्त्युत्तरकालमप्युपयुज्यमानं पित्तवृद्ध्या कफक्षयेण च पुनर्वैषम्यमावहति; तस्मादेतद्दोषव्यावृत्त्यर्थं सम्यगुपचर्यमाणमिति कृतम् । ननु, पूर्वमुक्तं भेषजेन विरोधिनां धातूनां वृद्धिह्रासौ भवतः, उपसंहारे तु धातूनां साम्यकरं भेषजं भवतीत्युच्यते, तत्कथं नार्थभेद इत्याशंक्य वृद्धिह्रासकरमेव धातुसाम्यकरं भवतीति दर्शयन्नाह—अधिकमपकर्षति, न्यूनमाप्याययतीति । एवंभूतं च धातुसाम्यकरणं यत्रैव विरोधिनां वृद्धिह्रासौ विद्येते तत्रैव ज्ञेयं, न सर्वत्र । तेन यत्र वृद्धिरेव परं दोषाणां न क्षयः कस्यचित्, तत्र यथा वृद्धस्य दोषस्य क्षयाधानमुक्तं[2] न तथा क्षीणस्य वर्धनमिति ज्ञेयम् ॥ ६ ॥

**एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठाने च यावद्धातूनां साम्यं स्यात् । स्वस्था ह्यपि धातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्यायेणेच्छन्त्युपयोक्तुं सात्म्यसमाज्ञातान्; एकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरसमाज्ञातया[3] चेष्टया सममिच्छन्ति कर्तुम् ॥ ७ ॥**

उक्तधातुसाम्यस्योपादेयतां दर्शयितुं भेषजप्रयोगस्य तथा स्वस्थवृत्तानुष्ठानस्य धातुसाम्यातिरिक्तं फलं निषेधयन्नाह—एतावदेवेत्यादि । एतावदेवेत्यनेन वक्ष्यमाणधातुसाम्यं प्रत्यवमृशति । धातुसाम्यात्मको रोगप्रशमो हि भेषजसाध्यो न धातुसाम्यादतिरिच्यते, तथा स्वस्थस्योजस्कररसायनेनापि धातुसाम्यमेव विशिष्टमाधीयते; तेन धातुसाम्यादतिरिक्तमायुर्वेदसाध्यं नास्तीति भावः । उक्तं च—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" ( सू. अ. १ ) इति । ननु स्वस्थे धातुसाम्यं सिद्धमेव, न च सिद्धं साध्यते, तत् कथं स्वस्थवृत्तानुष्ठानेऽपि धातुसाम्यमेव फलमित्याह—स्वस्था ह्यपीत्यादि । साम्यानुग्रहार्थमिति सत एव साम्यस्य परापरसाम्योत्पादेन परिपालनार्थम् । रसा मधुरादयः । गुणा गुर्वादयः । आहारविकाराः आद्यखाद्यलेह्यपेयरूपा यवाग्वादयः । पर्यायेणेति उचितेन क्रमेण; स च क्रमो यथा—मधुरमुपयुज्य तज्जन्यकफवृद्ध्यादिप्रतिबन्धार्थं कट्वाद्युपयोज्यमित्यादिरसक्रमः, तथा गुरुमुपयुज्य तत्कार्यप्रतिबन्धार्थं लघूपयोग इत्येवंप्रकारो गुणानामुपयोगक्रमः, आहारविकारेष्वपि खाद्याद्युपयुज्य तत्पाकार्थं पेयोपयोग इत्यादिकः क्रमः । गुणशब्देन च रसा अपि प्राप्यन्ते, तथाऽपि रसाः प्राधान्यात् पृथगुक्ताः । सात्म्यसमाज्ञातानिति रसगुणानित्यस्य तथा आहारविकारांश्चेत्यस्य विशेषणम् । सात्म्याश्च ते अभ्यासेन तथा समत्वेन च स्वाभाविकपथ्यत्वेनाज्ञाता इति सात्म्यसमाज्ञाताः, समशब्देन ह्यत्र पथ्यमुच्यते; किंवा सर्वदा सात्म्यत्वेन समाज्ञाताः सात्म्यसमाज्ञाताः; तेन, असात्म्यानां रसादीनामुपयोगमेव प्रतिक्षिपति । अथ यत्र तावद्रसादयः पर्यायेणोपयुज्यन्ते तत्र साधु, यत्र त्वेकप्रकारा एव रसादयः कुतश्चिद्धेतोरभ्यस्यन्ते तत्र को विधिरित्याह-एकप्रकारेत्यादि । तत उपयुक्तैकप्रकाररसादिभूयिष्ठाद् रसादेर्विपरीतमर्थं करोतीति तद्विपरीतकरी समाज्ञाता चेष्टा, तया चेष्टया समं कर्तुमिच्छन्तीति । एकप्रकारभूयिष्ठाद्युपयोगेनाधीयमानवैषम्यं शरीरं समं समधातुं कर्तुमिच्छन्ति । एतदुदाहरणं यथा—मधुरप्रकारभूयिष्ठं य आहारप्रकारमुपयुङ्क्ते तस्य मधुरसमानकफादिवृद्धिमाशंक्य कफादिकर्मक्षयकरी या व्यायामादिचेष्टा तया साम्यमाधीयते । किंवा, तद्विपरीतकरी तथा समत्वेन च आज्ञाता या चेष्टा सा तद्विपरीतकरसमाज्ञाता, तेन क्रियमाणमतियोगादि निषेधयति ॥ ७ ॥

**देशकालात्मगुणविपरीतानां हि कर्मणामाहारविकाराणां च क्रियोपयोगः[2] सम्यक्, सर्वातियोगसन्धारणम्, असन्धारणमुदीर्णानां च गतिमतां, साहसानां च वर्जनं, स्वस्थवृत्तमेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते ॥ ८ ॥**

संप्रति प्रस्तावागतं[3] स्वस्थवृत्तं समासेनाह—देशेत्यादि । देशादिभिर्गुणशब्दः संबध्यते । आत्मशब्देनेह शरीरमुच्यते । देशविपरीतं कर्म यथा—मरौ स्वप्नः, कालविपरीतं कर्म यथा—वसन्ते व्यायामः, आत्मविपरीतं कर्म यथा—स्थूलशरीरे व्यायामजागरणादि । एवमाहारप्रभेदाश्च देशकालादिविपरीता उन्नेयाः । कर्मणां क्रिया, आहारविकाराणां चोपयोग इति यथासंख्यं योजनीयम् । सम्यगिति क्रियया उपयोगेन च समं ज्ञेयम् । अतिक्रान्तो योगमित्यतियोगो मिथ्यातियोगायोगरूपो ज्ञेयः; तेन, सर्वेषां कालबुद्धीन्द्रियार्थमिथ्यायोगादीनां वर्जनं सर्वातियोगसन्धारणम् । कालमिथ्यायोगादेस्तु दुष्परिहरस्य प्रतिक्रियैव वर्जनम् । गतिमतामिति पुरीषादीनां बहिर्गमनशीलानाम् । साहसानाम् अयथाबलमारम्भादीनाम् ॥ ८ ॥

**धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाऽप्याहारविकारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति, ह्रासं तु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाऽप्याहारैरभ्यस्यमानैः ॥ ९ ॥**

---

१ 'मात्रादिगुणहीनं' इति पा० । २ 'क्षयाधानमात्रं धातुसाम्यकरणमिति ज्ञेयम्' इति पा० । ३ 'विपरीतकरणलक्षणसमाज्ञातया' इति पा० ।

१ 'सर्वथा' इति पा० । २ 'क्रमेणोपयोगः, सम्यक् सर्वाभियोगः, अनुदीर्णानां संधारणं' इति पा० । ३ 'योगादिप्रस्तावागतं' इति पा०

अथ रसादिधातूनां वृद्धिह्रासावुक्तौ यादृशाभ्यामाहाराभ्यां क्रियेते तद्दर्शयितुमाह—धातव इत्यादि। शारीरा इति पदेनाध्यात्मिकान् बुद्ध्यादीन् व्यवच्छिनत्ति, यतो न बुद्ध्यादयः समानगुणाद्वर्धन्ते, असमानगुणाद्वा ह्रसन्ति। समाना एव परं गुणा यस्य तत्समानगुणं, यथा—मांसं मांसस्य; समानगुणभूयिष्ठं यदल्पसमानगुणं, यथा—शुक्रस्य क्षीरं; क्षीरस्यातिद्रवत्वाच्छुक्रेऽल्पसमानगुणम्। अभ्यस्यमानैरित्यनेन सकृदुपयोगाद् वृद्धिं ह्रासं च निषेधयति। विपरीता एव परं गुणा यस्य तद्विपरीतगुणम्। अल्पसमानगुणं तु विपरीतगुणभूयिष्ठम्॥ ९॥

**तत्रेमे शरीरधातुगुणाः संख्यासामर्थ्यकराः; तद्यथा—गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवाः। तेषु ये गुरवस्ते गुरुभिराहारविकारगुणैरभ्यस्यमानैराप्याय्यन्ते, लघवश्च ह्रसन्ति; लघवस्तु लघुभिराप्याय्यन्ते, गुरवश्च ह्रसन्ति। एवमेव सर्वधातुगुणानां सामान्ययोगाद्वृद्धिः, विपर्ययाद्ध्रासः। तस्मान्मांसमाप्याय्यते मांसेन भूयस्तरमन्येभ्यः शरीरधातुभ्यः, तथा लोहितं लोहितेन, मेदो मेदसा, वसा वसया, अस्थि तरुणास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण, गर्भस्त्वामगर्भेण॥ १०॥**

अथ के ते शरीरधातुगुणा ये भेषजगुणैः समाना असमाना वा उच्यन्त इत्याह—तत्रेत्यादि। शरीरधातुगुणा इति विशेषणेनाप्रस्तुतत्वेनानभिधेयानात्मगुणान् बुद्ध्यादीन् निरस्यति। परादयस्तु यद्यपि शरीरधातुगुणा भवन्ति, तथाऽपि ते वृद्धिं ह्रासं च प्रत्यनतिप्रयोजनत्वादिहानुक्ताः। रसस्तु प्रधानत्वेन प्रकरणान्तरोक्त एवेति नेहोक्तः। स्पर्शस्तु शीतोष्णसंगृहीत एव। शब्दरूपगन्धास्तु परादिवद् वृद्धौ ह्रासे च नातिप्रयोजना इति नोक्ताः। संख्या ज्ञानं गणना वा, तत्र सामर्थ्यं कुर्वन्तीति संख्यासामर्थ्यकराः। एते हि गुर्वादयो ज्ञाता विंशतिर्गुर्वादयो भवन्तीति यज्ज्ञानं संख्यासामर्थ्यरूपं तत् कुर्वन्ति। परस्परविपर्ययात्मकान् द्वन्द्वान् दशगुणान् दर्शयित्वा तेषां च द्रव्यसंबद्धानां भ्रङ्गमाहिकया कर्माह—तेष्वित्यादि। लघवश्च ह्रसन्तीति च्छेदः। शेषशीतादिगुणानां वृद्धिमतिदेशेनाह—एवमित्यादि। सामान्ययोगादिति समानैकरूमार्थयोगात्। तच्च सामान्यं सर्वथा समानगुणजातिरूपं भवति; यथा—पोष्यपोषकयोर्मांसयोः। क्वचिच्च विजातीयेऽपि गुणा एव पोष्यपोषकवृत्तयो भवन्ति; यथा—क्षीरशुक्रयोः। तत्रात्यर्थवृद्धिकर्तृत्वेन प्रथमं जातिरूपमेव सामान्यं सर्वगुणसामान्ययुक्तमुदाहरति—तस्मादित्यादि। भूयस्तरमन्येभ्य इत्यनेन मांसेन समानगुणभूयिष्ठतया रक्तादिवृद्धिरपि क्रियते, भूयसी तु सर्वथा सामान्ययोगान्मांसस्य वृद्धिः क्रियत इति दर्शयति। लोहितं लोहितेनेत्येवमादौ 'भूयस्तरमन्येभ्यः' इत्यनुवर्तनीयम्। गर्भस्त्वामगर्भेणेत्यत्र आमगर्भेणाण्डादिरूपेण समुदितानां मांसादीनां सम्यगनिष्पन्नानां च वृद्धिरुच्यते॥ १०॥

**यत्र त्वेवंलक्षणेन सामान्येन सामान्यवतामाहारविकाराणामसान्निध्यं स्यात्, सन्निहितानां वाऽप्ययुक्तत्वान्नोपयोगो घृणित्वादन्यस्माद्वा कारणात्, स च धातुरभिवर्धयितव्यः स्यात्, तस्य ये समानगुणाः स्युराहारविकारा असेव्याश्च, तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामप्याहारविकाराणामुपयोगः स्यात्। तद्यथा—शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धशीतसमाख्यातानां चापरेषां द्रव्याणां, मूत्रक्षये पुनरिक्षुरसवारुणीमण्डद्रवमधुराम्ललवणोपक्लेदिनां, पुरीषक्षये कुल्माषमाषकुष्कुण्डाजमध्ययवशाकधान्याम्लानां, वातक्षये कटुकतिक्तकषायरूक्षलघुशीतानां, पित्तक्षयेऽम्ललवणकटुकक्षारोष्णतीक्ष्णानां, श्लेष्मक्षये स्निग्धगुरुमधुरसान्द्रपिच्छिलानां द्रव्याणाम्। कर्मापि यद्यस्य धातोर्वृद्धिकरं तत्तदासेव्यम्। एवमन्येषामपि शरीरधातूनां सामान्यविपर्ययाभ्यां वृद्धिह्रासौ यथाकालं कार्यौ। इति सर्वधातूनामेकैकशोऽतिदेशतश्च वृद्धिह्रासकराणि व्याख्यातानि भवन्ति॥ ११॥**

संप्रति समानगुणभूयिष्ठेन विजातीयेन वृद्धिमाह—यत्रेत्यादि। एवंलक्षणेनेति तुल्यजातिरूपेण। उक्तार्थं विवृणोति—घृणित्वादित्यादि। अन्यस्माद्वा कारणादित्यभक्ष्यामगर्भशुक्रादिभक्षणजन्याधर्मोत्पत्तेः। तत्रेत्यनेन असन्निहितान् घृणया कारणान्तरेण च सन्निहितानप्यसेव्यान् प्रत्यवमृशति। अन्यप्रकृतीनामिति विजातीयानाम्। अत्रोदाहरणमाह—तद्यथेत्यादि। शुक्रे क्षीणे यदि शुक्रान्तरं न प्राप्यते, प्राप्तं वा घृणादिवशादनुपयोज्यं स्यात्, तदा समानगुणभूयिष्ठानां क्षीरादीनामुपयोगः कर्तव्य इत्यर्थः। मूत्रादावपि घृणादिना सजातीयप्रयोगाविषये समानगुणभूयिष्ठप्रयोगमाह—मूत्रेत्यादि। कुष्कुण्डं पललादिच्छत्रिका। अजमध्यं छागान्तराधिः। द्रव्याणामुपयोग इति योजना। आहारं वृद्धिकरमभिधाय विहारमपि वृद्धिकरमाह—कर्मेत्यादि। कर्मशब्देनेहास्यचिन्तादयोऽपि गृह्यन्ते। कर्म तु प्रायः प्रभावादेव वृद्धिकरं भवतीति कृत्वाऽत्र समानगुणतापरिग्रहो न कृतः। साक्षादनुक्तानामपि धातूनामुक्तन्यायानुसारेण वृद्धिह्रासमभिदर्शयति—

१ "संख्या समानतद्विपरीतत्वेन संख्यानं, वृद्धिह्रासहेतुत्वेन सामान्यविपर्ययोरिह प्रकृतत्वात्; तत्र सामर्थ्यं कुर्वन्तीति संख्यासामर्थ्यं कराः" इति योगीन्द्रनाथसेनः। २ 'समानैकार्थयोगात्' इति पा०। ३ 'सर्वगुणभूयिष्ठसामान्ययुक्तं' इति पा०।

१ 'अनुकार्यं' इति पा०। २ 'कार्यकरं' इति पा०।

एवमित्यादि । यथाकालमिति क्रियाकालानतिपातेन । उक्तं प्रकरणमुपसंहरति—इति सर्वेत्यादि । एकैकश इत्यनेन मांसमाप्याय्यते मांसेनेत्यादिनोक्तं गृह्णाति । अतिदेशतश्चेत्यनेन एवमन्येषामपि धातूनामित्यादिनोक्तं गृह्णाति ॥ ११ ॥

**कात्स्न्र्येन शरीरवृद्धिकरास्त्विमे भावा भवन्ति; तद्यथा-कालयोगः, स्वभावसंसिद्धिः, आहारसौष्ठवम्, अविघातश्चेति ॥ १२ ॥**

वृद्धिप्रस्तावात् सर्वशरीरवृद्धिकरानाह—कात्स्न्र्येनेत्यादि । कालयोग इति वृद्धिकारकयौवनादिकालयोगः । यौवनादौ हि सप्तदशवत्सरादिकाललक्षणे कालमहिम्नैव वृद्धिर्भवति । स्वभावशब्देनादृष्टमुच्यते । तेन स्वभावसंसिद्धशरीरवृद्धिहेतुरदृष्टम् । आहारसौष्ठवमिति आहारसंपत् । अविघातश्चेति शरीरवृद्धिविघातकरातिव्यवायमनोभिघातादिविरहः ॥ १२ ॥

**बलवृद्धिकरास्त्विमे भावा भवन्ति । तद्यथा—बलवत्पुरुषे देशे जन्म बलवत्पुरुषे काले च, सुखश्च कालयोगः, बीजक्षेत्रगुणसंपच्च, आहारसंपच्च, शरीरसंपच्च, सात्म्यसंपच्च, सत्त्वसंपच्च, स्वभावसंसिद्धिश्च, यौवनं च, कर्म च, संहर्षश्चेति ॥ १३ ॥**

वृद्धिप्रस्तावाच्च बलवृद्धिकरान् भावानाह—बलेत्यादि । देशमहिम्ना बलवन्तः पुरुषा यस्मिन् देशे सैन्धवादौ स बलवत्पुरुषो देशः, तत्र जातो देशमहिम्नैव बलवान् भवति; यथा-सैन्धवा बलवन्तः पुरुषाः । परिणामस्यापि प्रशस्तस्य हेतुतामाह—बलवत्पुरुषे काले चेति । कालो हेमन्तशिशिरादिरूपः । हेमन्ते शिशिरे वा काले जायमानस्य स कालो बलं जनयति । सुखश्च कालयोग इति साधारणकालयोगः । बीजस्य शुक्ररूपस्य, तथा क्षेत्रस्यार्तवगर्भाशयरूपस्य, गुणानां प्रशस्तधर्माणां संपत् बीजक्षेत्रगुणसंपत् । अत्र बीजक्षेत्रयोर्निर्दोषताऽपि संपत् स्यात्, तेन निर्दोषतातिरिक्तसारत्वादिबीजक्षेत्रगुणप्राप्त्यर्थं गुणग्रहणं ज्ञेयम् । सत्त्वसंपच्चेति सत्त्वसंपदाऽपि शरीरे बलं भवतीति ज्ञेयम् । वचनं हि—"शरीरं ह्यपि सत्त्वमनुविधीयते" (शा.अ.४) इति । स्वभावसंसिद्धिः बलजनककर्मसंसिद्धिः । कर्म व्यायामादि कर्मेत्यर्थः; व्यायामादिकर्माभ्यासाद्धि बलं भवति ॥ १३ ॥

**आहारपरिणामकरास्त्विमे भावा भवन्ति । तद्यथा—ऊष्मा, वायुः, क्लेदः, स्नेहः, कालः, समयोगश्चेति ॥ १४ ॥**

प्रशस्तगुणाभिधानप्रस्तावादाहारपरिणामस्यापि प्रशस्तस्य हेतुतामाह—आहारेत्यादि । काल इति पाककालो निशावसानादिरूपः । समयोग इति आहारस्य प्रकृत्याद्यष्टाहारविधिविशेषायतनसम्यग्योगः ॥ १४ ॥

**तत्र तु खल्वेषामूष्मादीनामाहारपरिणामकराणां भावानामिमे कर्मविशेषा भवन्ति । तद्यथा—ऊष्मा पचति, वायुरपकर्षति, क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः पर्याप्तिमभिनिर्वर्तयति, समयोगस्त्वेषां परिणामधातुसाम्यकरः संपद्यते ॥ १५ ॥**

अत्र चाहारपरिणामकरेषु ऊष्मैव साक्षात् पाके व्याप्रियते; वाय्वादयस्तु तस्य पचतो व्यापारविशेषेण सहायतां यान्तीति दर्शयन्नाह—तत्रेत्यादि । वायुरपकर्षतीति ऊष्मस्थानाद् विदूरस्थितमन्नमूष्मसमीपं नयति । यदुक्तम्—"अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति" (चि. अ. १५) इति । वायुरपकर्षतीत्युपलक्षणं, तेन अग्न्युत्तेजनमपि समानाख्यस्य वायोर्बोद्धव्यम् । उक्तं हि—"समानेनावधूतोऽग्निः...पचति" (चि. अ. १५) इति । पर्याप्तिमिति पाकनिष्पत्तिं; सत्यप्यूष्मादिव्यापारे कालवशादेव पाको भवति, नोष्मादिव्यापारमात्रादिति भावः । समयोगस्त्वेषामिति एषामाहारद्रव्याणां प्रकृत्यादीनां यः समयोगः, स परिणामकरो धातुसाम्यकरश्च भवति; यदा हि प्रकृत्यादिविरुद्ध आहारो भवति, तदा प्रकृत्यादिदोषादेव न सम्यक्परिणामो भवति । एतदूष्मादिव्यापारप्रतिपादकं ग्रन्थान्तरं यथा—"अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति । तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥ समानेनावधूतोऽग्निरुदर्यः पवनेन तु । काले पक्वं समं सम्यक् पचत्यायुर्विवृद्धये" (चि. अ. १५) इति ॥ १५ ॥

**परिणमतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमविरुद्धाः; विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरम् ॥ १६ ॥**

अथ कया परिपाट्या परिणाममापद्यमान आहारो धातुसाम्यकरो भवतीत्याह—परिणमत इत्यादि । परिणमत इति वर्तमाननिर्देशेन यो यथा यथा आहारांशः परिणमते स तथा तथा शरीरगुणरूपतां याति, न कृत्स्नाहारपरिणाममपेक्षत इति दर्शयति । यथास्वमविरुद्धा इति ये आहारगुणा यस्मिन् शरीरगुणेऽविरुद्धास्त एव तद्रूपतां यान्ति । यथा—आहारस्य कठिनो भागो मांसास्थ्यादिकठिनभागपोषको भवति, द्रवांशस्तु शोणितादिरूपो भवतीत्यादि । विरुद्धाश्च विहन्युरिति शरीरगुणविरुद्धास्तु आहारगुणा विहन्युः ह्रासयेयुरित्यर्थः । अथ ते शरीरगुणा आहारगुणविहताः सन्तः किं कुर्वन्तीत्याह—विहता इत्यादि । विहतास्तु विरोधिभिः शरीरं विहन्युरिति योजना; विरोधिभिरिति विपरीतैराहारगुणैः, विहता इति क्षयं नीताः । किंवा विरोधिभिरिति यथा दुग्धमत्स्यादिविरुद्धाहारैर्विहताः शरीरगुणाः शरीरं हन्युः; चकाराद् विरुद्धगुणैश्च क्षयं नीताः शरीरं हन्युरिति दर्शयति ॥ १६ ॥

---

१ 'शरीरपुष्टिकरास्त्विमे' इति पा० । २ 'संयोगश्च' इति पा० ।

१ 'व्यापारविशेषणमुपयान्तीत्याह' इति पा० । २ 'सत्यप्यूष्मव्यापारे कालवशादेव सम्यक्परिणामो भवति' इति पा० ३ 'नोष्मव्यापारमात्रात्' इति पा० । ४ 'परिणमतः' इति पा० ।

**शरीरगुणाः पुनर्द्विविधाः संग्रहेण—मलभूताः, प्रसादभूताश्च । तत्र मलभूतास्ते ये शरीरस्याबाधकराः स्युः । तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः, परिपक्काश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणः, ये चान्येऽपि केचिच्छरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते, सर्वांस्तान्मले संचक्ष्महे; इतरांस्तु प्रसादे, गुर्वादींश्च द्रवान्तान् गुणभेदेन, रसादींश्च शुक्रान्तान् द्रव्यभेदेन ॥ १७ ॥**

अथ कतिप्रकारास्ते शरीरगुणा इत्याह—शरीरेत्यादि । संग्रहेण संक्षेपेण; तेन विस्तरेण धातूपधात्वादिविभागेन बहवश्च भवन्ति । भूतशब्दः स्वरूपे । आबाधकरा इति पीडाकरा इत्यर्थः । पृथग्जन्मान इति पिचोलिकासिङ्घाणकादिभेदेन नानारूपाः । बहिर्मुखा इत्यनेन य एव च्छिद्रमलाः प्रभूततया बहिर्निःसरणाभिमुखाः, त एव पीडाकर्तृत्वेन मलाख्याः; ये तु स्रोतउपलेपमात्रकारकास्ते गुणकर्तृतया न मलाख्याः । परिपक्काश्च धातव इति पाकात् पूयतां गताश्च शोणितादयोऽपि मलाख्याः; किंवा 'अपरिपक्का' इति पाठः, तदा सामा धातवो मलाख्या इति ज्ञेयम् । कुपिताश्चेति पदेन वातादयः सामान्येन क्षीणा वृद्धा वा गृह्यन्ते; विकृतिमात्रं हि वातादीनां कोपः । ये चान्येऽपीत्यादिना विमार्गगतान् पीडाकारकान् शरीरधातून् तथाऽजीर्णादीन् ग्राहयन्ति । मल इति एकवचनं जातौ । इतरानिति अविकारकरान् ख(स)मानस्थितपुरीषवातादीन्; पुरीषवातादयोऽपि शरीरावष्टम्भकाः प्रसादा एव, गुणकर्तृत्वात् । मलप्रसादभेदेन शरीरगतभावानभिधाय पुनर्द्रव्यगुणभेदानाह—गुर्वादींश्चेत्यादि । गुर्वादयो द्रवान्ताः पश्चादुक्ता एव । अत्र च ये मला उपधातवश्च नोक्तास्ते गुर्वादिगुणाधारत्वेन ग्राह्याः; किंवा, इतरांस्तु निराबाधान् मलादीन् प्रसादे संचक्ष्महे, तथा गुर्वादींश्च (तथा रसादींश्च) निर्विकारान् द्रव्यगुणरूपान् प्रसादे संचक्ष्महे इति व्याख्येयम् ॥ १७ ॥

**तेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति, दोषस्वभावात् । वातादीनां पुनर्धात्वन्तरे कालान्तरे प्रदुष्टानां विविधाशितपीतीयेऽध्याये विज्ञानान्युक्तानि । एतावत्येव दुष्टदोषगतिर्यावत् संस्पर्शनाच्छरीरधातूनाम् । प्रकृतिभूतानां तु खलु वातादीनां फलमारोग्यम् । तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिरिति ॥ १८ ॥**

अथ यदेतत् पुरीषादीनां मलत्वं तद्दूषणाद्भवति, तेन तेषां दूषकहेतुमाह—तेषामित्यादि । तेषामिति पुरीषादीनां रसादीनां च । दुष्टा इति स्वहेतूपचिताः, क्षीणास्तु नान्यदुष्टिं दोषाः कुर्वन्तीति प्रतिपादितमेव । अथ धात्वन्तराश्रयिणां वातादीनां दुष्टानां किं लक्षणं, येन ते ज्ञातव्या इत्याह—वातादीनामित्यादि । विज्ञानानीति लक्षणानि; रसाद्याश्रयदुष्टवातादिलक्षणं तावद्विविधाशितपीतीये प्रोक्तम् । "केशमूत्रनखाद्याश्रयदुष्टदोषलक्षणं तु यद(त्त)त्र नोक्तं तत् कथं ज्ञेयमित्याह—एतावत्येवेत्यादि । केशादौ दुष्टानामपि वातादीनां गतिर्नास्तीति वाक्यार्थः । यावत् संस्पर्शनादिति स्पर्शनेन्द्रियं व्याप्य, तेन शरीरधातूनां दूषणे स्पर्शनेन्द्रियपर्यन्तमेव दुष्टदोषगतिर्भवति; तेन न केशादिषु दुष्टदोषगतिः । यत्तु पलितादिकेशे मृतनखे वा पुष्पं तत् स्पर्शवच्छरीरसंस्थितेनैव दोषेण कृतं, न पुनर्मृतनखे केशेष्वपि स्वमार्गचारी दोषः प्रचरति" इति ब्रुवते । वयं तु ब्रूमः—विविधाशितपीतीयोक्तदुष्ट्या सर्वदुष्ट्युपसंग्रहो भवतीति दर्शयन्नाह—एतावत्येवेत्यादि । यावत् संस्पर्शनादिति स्पर्शसंबन्धात्; तेन, शरीरधातूनां यावत् स्पर्शनाद्दुष्टदोषगतिर्भवति, सा च सर्वा विविधाशितपीतीयोक्तैव, न ततोऽधिका दुष्टिर्देहस्यास्ति । तत्र हि "मलानाश्रित्य दुष्टास्तु भेदशोषप्रदूषणम्" (सू. अ. २८) इति ग्रन्थेन कृत्स्नमलग्रहणात् केशनखौ मलौ गृहीतावेव । एतेन तु नखाग्रकेशाग्रस्फुटनादिमृतनखाग्रकेशाग्रगतेन दोषेणैव कृतं भवति । अथ दुष्टा वातादयो दुष्टिलक्षणानि कुर्वन्ति, प्रकृतिस्थास्तु किं कुर्वन्तीत्याह—प्रकृतिभूतानामित्यादि ॥ १८ ॥

**भवति चात्र—**

**शरीरं सर्वथा सर्वं सर्वदा वेद यो भिषक् ।**
**आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम् ॥ १९ ॥**

संप्रत्युक्तप्रकरणजन्यशरीरज्ञानस्य फलमाह—शरीरमित्यादि ॥ १९ ॥

**एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—श्रुतमेतद्यदुक्तं भगवता शरीराधिकारे वचः । किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्तते कुक्षौ, कुतोमुखः कथं चान्तर्गतस्तिष्ठति, किमाहारश्च वर्तयति, कथंभूतश्च निष्क्रामति, कैश्चायमाहारोपचारैर्जातः सद्यो हन्यते, कैरव्याधिरभिवर्धते, किं चास्य देवादिप्रकोपनिमित्ता विकाराः संभवन्ति आहोस्विन्न, किंचास्य कालाकालमृत्य्वोर्भावाभावयोर्भगवानध्यवस्यति, किंचास्य परमायुः, कानि चास्य परमायुषो निमित्तानीति ॥ २० ॥**

शरीरविचायकं प्रकरणं समाप्य गर्भशरीरविचायकं प्रकरणमारभते—एवंवादिनमित्यादि । कुक्षावित्यन्तेनैकः प्रश्नः, कुतोमुखः कथं चान्तर्गतस्तिष्ठतीति द्वितीयः, निष्क्रामतीत्यन्तेन तृतीयः, कैश्चायमाहारोपचारैर्जातः सद्यो हन्यत इति चतुर्थः, कैरव्याधिरभिवर्धत इति पञ्चमः, आहोस्वित्-

१ 'शरीरधातव' इति पा० । २ 'मलाख्यान्' इति पा० । ३ 'प्रसादाख्यान्' इति पा० । ४ 'प्रवर्धमानाः' इति पा० । ५ 'पीडाकारकान्' इति हस्तलिखितपुस्तके नोपलभ्यते । ६ 'तथा रसादींश्च' इति हस्तलिखितपुस्तके न पठ्यते । ७ 'तत्र' इति पा० ।

१ 'तमेवमुक्तवन्तं' इति पा० । २ 'शरीरविचारकं' इति पा० ।

ल्लन्तः षष्ठः। शेषं प्रश्नत्रयं पूर्वप्रश्नद्वयस्य व्यवच्छेदकमेव, एवं नव प्रश्नाः। अध्यवस्यतीति निश्चिनोति ॥ २० ॥

तमेवमुक्तवन्तमग्निवेशं भगवान् पुनर्वसुरात्रेय उवाच—पूर्वमुक्तमेतद्गर्भावक्रान्तौ यथाऽयमभिनिर्वर्तते कुक्षौ, यच्चास्य यदा संतिष्ठतेऽङ्गजातम्। विप्रतिवादास्त्वत्र बहुविधाः सूत्रकृतामृषीणां सन्ति सर्वेषां; तानपि निबोधोच्यमानान्—शिरः पूर्वमभिनिर्वर्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति, सर्वेन्द्रियाणां तदधिष्ठानमिति कृत्वा; हृदयमिति काङ्कायनो वाह्लीकभिषक्, चेतनाधिष्ठानत्वात्; नाभिरिति भद्रकाप्यः, आहारागम इति कृत्वा; पक्वाशयगुदमिति भद्रशौनकः, मारुताधिष्ठानत्वात्; हस्तपादमिति वडिशः, तत्करणत्वात् पुरुषस्य; इन्द्रियाणीति जनको वैदेहः, तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा; परोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः; सर्वाङ्गाभिनिर्वृत्तिर्युगपदिति धन्वन्तरिः; तदुपपन्नं, सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तत्वाद्धृदयप्रभृतीनाम्। सर्वाङ्गानां ह्यस्य हृदयं मूलमधिष्ठानं च केषाञ्चिद्भावानाम्, नच तस्मात् पूर्वाभिनिर्वृत्तिरेषां; तस्माद्धृदयप्रभृतीनां सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तिः, सर्वे भावा ह्यन्योन्यप्रतिबद्धाः; तस्माद्यथाभूतदर्शनं साधु ॥ २१ ॥

यथाक्रममुत्तराण्याह—पूर्वमित्यादि।—पूर्वमुक्तमिति यच्चास्य यदा संतिष्ठतेऽङ्गजातं तदपि गर्भावक्रान्तौ "एवमस्य युगपदिन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्तेऽन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते" (शा. अ. ४) इत्यादिना ग्रन्थेनोक्तम्। यद्यपि 'कथमभिनिर्वर्तते कुक्षौ' इति नेह पृष्टं, तथाऽप्यभिनिर्वृत्तिक्रमोपदर्शनेन 'किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्तते' इति प्रश्नस्य यथोक्तोत्पादक्रमोपदर्शनादुत्तरत्वं भवतीति मैत्वोक्तं—उक्तमेतद्गर्भावक्रान्तौ यथाऽयमभिनिर्वर्तते कुक्षाविति। उक्तमपि युगपदङ्गाभिनिर्वृत्तिं मतान्तरोद्धारेण स्थिरीकर्तुमाह—विप्रतिवादास्त्वत्रेत्यादि। पक्वाशयश्च गुदं चेति पक्वाशयगुदं; किंवा पक्वाशयसमीपस्थं गुदं पक्वाशयगुदम्, उत्तरगुदमित्यर्थः। इन्द्रियाणीति इन्द्रियाधिष्ठानानि नयनगोलकादीनि। तदुपपन्नमिति धन्वन्तरिवचनमुपपन्नम्; अत्र हेतुमाह—सर्वाङ्गानामित्यादिना हृदयप्रभृतीनामित्यन्तेन। अत्र च प्रतिज्ञाहेत्वोरेकत्वं नाशङ्कनीयं; धन्वन्तरिवचनमुपपन्नमिति प्रतिज्ञा, तदभिहितार्थस्य युगपदङ्गाभिनिर्वृत्तिरूपस्य सिद्धत्वादिति हेत्वर्थः प्रतिज्ञार्थाद्भिन्न एव। ये तु 'तुल्यकालाभिवृद्धत्वात्' इति पठन्ति, तेषां हेत्वर्थो व्यक्त एव। येन, उत्तरकालमपि सर्वाङ्गानां युगपद्वृद्धिदर्शनं; समानकालवर्धमानानां फलानामिव समानकालमेव जन्मानुमीयते, असमानकालजातानां हि न समानकाला समा वृद्धिर्भवति। पूर्वपक्षिणां मतानि हृदयपूर्वाभिनिर्वृत्तिदूषणेनैव समानन्यायाद्दूषयन्नाह—सर्वाङ्गानां ह्यस्येत्यादि। मूलमिव मूलं, तदुपघातेन सर्वाङ्गोपघातात्। अधिष्ठानमिति आश्रयः। तत्रौजःप्रभृतीनामधिष्ठानं हृदयं भवति; न च तस्मात् पूर्वाभिनिर्वृत्तिरिति न च तथाविधमूलत्वान्नाप्यधिष्ठानत्वाच्च पूर्वाभिनिर्वृत्तिर्भवति। यदि हि मूलं कारणमिति मतं स्यात्, तदा कार्येभ्योऽङ्गेभ्यः प्राक् हृदयं स्यादपि; न चेहाङ्गानां हृदयं कारणं किं तु प्रधानं, प्राधान्यं च तदुपघातेन सर्वोपघातादिति। यश्चाप्याश्रयाश्रयिभावः, स चापि सहोत्पन्नत्वादेव हृदयमाश्रयि तदाश्रितौजःप्रभृतीनां भवतीति भावः। तदेवं चेद्धृदयस्य प्रधानस्यापि पूर्वोत्पादो नास्ति, तदा शिरःप्रभृतीनामपि पूर्वोत्पादो नास्त्येवेति कृत्वोपसंहरन्नाह—तस्मादित्यादि। युगपदभिनिर्वृत्तौ हेत्वन्तरमाह—सर्वभावा हीत्यादि। भावा इति शारीरा भावाः। अन्योन्यप्रतिबद्धा इति यस्मात् सर्वभावाः परस्परप्रतिबद्धा एव सिरास्नाय्वादिभिर्जायन्ते, तेन समाननिबन्धनत्वाद् युगपदेव भवन्ति। यथाभूतदर्शनमिति यथार्थदर्शनं, तच्च धन्वन्तरिमतमेव ॥ २१ ॥

गर्भस्तु खलु मातुः पृष्ठाभिमुख ऊर्ध्वशिराः सङ्कुच्याङ्गान्यास्तेऽन्तःकुक्षौ ॥ २२ ॥

गर्भस्त्वित्यादि द्वितीयप्रश्नस्योत्तरम् ॥ २२ ॥

व्यपगतपिपासाबुभुक्षस्तु खलु गर्भः परतन्त्रवृत्तिर्मातरमाश्रित्य वर्तयत्युपस्नेहोपस्वेदाभ्यां गर्भाशये सदसद्भूताङ्गावयवः, तदनन्तरं ह्यस्य कश्चिल्लोमकूपायनैरुपस्नेहः कश्चिन्नाभिनाड्ययनैः। नाभ्यां ह्यस्य नाडी प्रसक्ता, नाड्यां चापरा, अपरा चास्य मातुः प्रसक्ता हृदये, मातृहृदयं ह्यस्य तामपरामभिसंप्लवते सिराभिः स्यन्दमानाभिः; स तस्य रसो बलवर्णकरः संपद्यते, स च सर्वरसवानाहारः। स्त्रिया ह्यापन्नगर्भायास्त्रिधा रसः प्रतिपद्यते—स्वशरीरपुष्टये, स्तन्याय, गर्भवृद्धये च। स तेनाहारेणोपष्टब्धः (परतन्त्रवृत्तिर्मातरमाश्रित्य) वर्तयत्यन्तर्गतः ॥ २३ ॥

व्यपगत इत्यादि 'किमाहारश्च वर्तयति' इति प्रश्नस्योत्तरम्। परतन्त्रवृत्तिरिति मात्राधीनवृत्तिः। एतदेव विवृणोति—मातरमित्यादि। उपस्नेहः निस्यन्दः। सदसद्भूताङ्गावयव इति च्छेदः। तदनन्तरमिति अङ्गप्रत्यङ्गव्यक्तौ सत्याम्। नाभिसंसक्ता नाडी

१ 'पूर्वं च प्रश्नद्वयं' इति पा०। २ 'हृदयपूर्वाणां' इति पा०। ३ 'मन्वानेन' इति पा०। ४ 'पक्वगुदं' इति पा०। ५ 'तुल्यकालाभिनिर्वृत्तत्वात्' इति पा०।

१ 'युगपद्वृद्धिदर्शनात्' इति पा०। २ 'पूर्वपक्षिणां' इति पा०। ३ 'सङ्कुच्याङ्गान्यास्ते जरायुवृतः कुक्षौ' इति पा०। ४ 'संस्पन्दमानाभिः' इति पा०।

नाभिनाडी। अयनैरिति मार्गैः। अपरा गर्भस्य नाभिनाडीप्रतिबद्धा 'अमरा' इति लोके ख्याता। अभिसंप्लवते इति व्याप्नोति। एतच्चापरादिजन्म गर्भादृष्टवशाद्भवति ॥ २३ ॥

**स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्त्यावाक्शिरा निष्क्रामत्यपत्यपथेन, एषा प्रकृतिः, विकृतिः पुनरतोऽन्यथा। परं त्वतः स्वतन्त्रवृत्तिर्भवति ॥ २४ ॥**

कथंभूतः स निष्क्रामतीत्यस्योत्तरं—स चोपस्थितकाल इत्यादि।—उपस्थितकाल इति प्रत्यासन्नकाले। विकृतिः पुनरतोऽन्यथेत्यनेन विकृत्याचरणेनापि निर्गमो भवतीति दर्शयति। स्वतन्त्रवृत्तिर्भवतीति स्वयंकृतेन स्तन्यपानादिना वर्तते, न गर्भस्थ इव मातुरेवाहारेण परं वर्तत इत्यर्थः ॥ २४ ॥

**तस्याहारोपचारौ जातिसूत्रीयोपदिष्टावविकारकरौ चाभिवृद्धिकरौ भवतः ॥ २५ ॥**

**ताभ्यामेव च विषमसेविताभ्यां जातः सद्य उपहन्यते तरुरिवाचिरव्यपरोपितो वातातपाभ्यामप्रतिष्ठितमूलः ॥ २६ ॥**

कैश्चायमित्यादिप्रश्नस्योत्तरं—तस्येत्यादि। जातिसूत्रीयोपदिष्टाविति अनागतावेक्षणेनानागते भूतवत्प्रयोगाद्बोद्धव्यम्। अचिरव्यपरोपितः अदीर्घकालारोपितः ॥ २५ ॥ २६ ॥

**आप्तोपदेशादद्भुतरूपदर्शनात् समुत्थानलिङ्गचिकित्सितविशेषाच्चादोषप्रकोपानुरूपा देवादिप्रकोपनिमित्ता विकाराः समुपलभ्यन्ते ॥ २७ ॥**

किञ्चास्येत्यादिप्रश्नस्योत्तरम्—आप्तोपदेशादित्यादि। आप्तोपदेशोऽत्र कुमारतन्त्रोपदेशो ब्रह्मादिप्रणीतः। तत्र हि कुमाराणां देवादिनिमित्तविकाराः प्रतिपाद्यन्ते; देवादिग्रहणेन च तदनुचरा अपि गृह्यन्ते। स्कन्दग्रहादयः सुश्रुतोक्ता देवादयश्चाष्टौ। यदुक्तं—"देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः। तथैव रक्षांसि पिशाचजातिरेषोऽष्टको देवगणो ग्रहाख्यः" (सु. उ. अ. ६०) इति। अनुमानमप्यत्राह—अद्भुतेत्यादि। न यद्भवति तदद्भुतम्, आश्चर्यमिति यावत्; तच्चामानुषवलज्ञानशोभादि ज्ञेयं; एतद्धि दोषाजन्यत्वाद् देवादिकारणं गमयति। समुत्थानादिविशेष आगन्तूनामागन्तुविकारेषु स्फुट एव। अदोषप्रकोपानुरूपा इति दोषप्रकोपजन्यरोगविधर्माणः ॥ २७ ॥

**कालाकालमृत्य्वोस्तु खलु भावाभावयोरिदमध्यवसितं नः—"यः कश्चिन् म्रियते स काल एव म्रियते, न हि कालच्छिद्रमस्ति" इत्येके भाषन्ते। तच्चासम्यक्। न ह्यच्छिद्रता सच्छिद्रता वा कालस्योपपद्यते, कालस्वलक्षणस्वभावात्। तत्राहुरपरे—यो यदा म्रियते स तस्य नियतो मृत्युकालः; स सर्वभूतानां सत्यः, समक्रियत्वादिति। एतदपि चान्यथाऽर्थग्रहणम्। न हि कश्चिन्न म्रियत इति समक्रियः। कालो ह्यायुषः प्रमाणमधिकृत्योच्यते। यस्य चेष्टं यो यदा म्रियते स तस्य मृत्युकाल इति, तस्य सर्वे भावा यथास्वं नियतकाला भविष्यन्ति; तच्च नोपपद्यते, प्रत्यक्षं ह्यकालाहारवचनकर्मणां फलमनिष्टं, विपर्यये चेष्टं; प्रत्यक्षतश्चोपलभ्यते खलु कालाकालव्यक्तिस्तासु तास्ववस्थासु तं तमर्थमभिसमीक्ष्य, तद्यथा—कालोऽयमस्य व्याधेराहारस्यौषधस्य प्रतिकर्मणो विसर्गस्य, अकालो वेति। लोकेऽप्येतद्भवति—काले देवो वर्षत्यकाले देवो वर्षति, काले शीतमकाले शीतं, काले तपत्यकाले तपति, काले पुष्पफलमकाले च पुष्पफलमिति। तस्मादुभयमस्ति—काले मृत्युरकाले च; नैकान्तिकमत्र। यदि ह्यकाले मृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्वं स्यात्; एवं गते हिताहितज्ञानमकारणं स्यात्, प्रत्यक्षानुमानोपदेशाश्चाप्रमाणानि स्युर्ये प्रमाणभूताः सर्वतन्त्रेषु, यैरायुष्याण्यनायुष्याणि चोपलभ्यन्ते। वाग्वस्तुमात्रमेतद्वादमृषयो मन्यन्ते—नाकाले मृत्युरस्तीति ॥ २८ ॥**

कालाकालेत्यादौ इदमध्यवसितमित्यनेन प्रकरणव्यवस्थापनीयोऽयमर्थः: 'तस्मादुभयमस्ति काले मृत्युरकाले च' इति ग्रन्थवक्ष्यमाणं प्रत्यवमृशति। एकीयमतमाह—यः कश्चिदित्यादि। न हि कालच्छिद्रमस्तीति कालरहितः कश्चिदवकाशोऽस्ति, यं कालशून्यमवकाशमासाद्याकालमृत्युः स्यादिति भावः। एतद्दूषयति—तच्चेत्यादिना। सान्तरं यदवयवि द्रव्यं तत् सच्छिद्रमित्युच्यते, यच्च निरन्तरं तदच्छिद्रम्। तेन कालस्य निरवयवस्य सच्छिद्रताऽच्छिद्रता वा न संभवति; तेन यदुच्यते—'कालस्याच्छिद्रत्वान्नाकालमृत्युरस्ति' इति, तदयुक्तमिति भावः। यत्त्वकालमृत्युव्यापकत्वेन कालस्योपचरितच्छिद्रत्वं तदुत्तरवक्ष्यमाणैकीयमतदूषणेनैव दूषितम्। कालस्वलक्षणस्वभावादिति कालस्वलक्षणे सच्छिद्रताया अच्छिद्रतायाश्चाभावादित्यर्थः। एकीयमतान्तरमाह—तत्राहुरित्यादि। यो यदा म्रियते स एव तस्य नियतो मृत्युकाल इति कथं ज्ञायते इत्याह—स सर्वभूतानां सत्यः समक्रियत्वादिति। यस्मात् कालः सर्वभूतानामविशेषेण मारकतया समक्रियः, न रागात् किंचिद्भूतं न मारयति, न द्वेषाद्वा किंचिद्धन्ति, किन्तु सर्वाण्येव निहन्ति, तेन सर्वभूतानामयं सत्यो रागद्वेषशून्य इत्यर्थः। ततश्च

१ 'परिवृत्त्यार्वाक्शिरा' इति पा०। २ 'परं ततः' इति पा०। ३ 'प्रतिरोपितः उत्खातारोपितः' इति पा०।

१ 'यत्र सकलमृत्युव्यापकत्वेन कालस्योपचरितमच्छिद्रत्वं' इति पा०। २ 'तदुत्तरग्रन्थवक्ष्यमाणैकीयमतदूषणेनैव दूषितम्' इति पा०। ३ 'तच्छिद्रतायास्तदच्छिद्रतायाश्चाभावादित्यर्थः' इति पा०। ४ 'रागद्वेषशून्यतया' इति पा०।

रागद्वेषशून्यतया उचितकाले एव परं मारयति, नानुचित इति भावः। दूषयति–एतदपीत्यादिना। न हि कश्चिन्न म्रियत इति कृत्वा समक्रियः कालो भवत्येव। यत्तु शतवर्षादिलक्षणमायुःप्रमाणमधिकृत्य भवता समक्रियः कालोऽभिधीयते; यदि शतवर्षायायुःप्रमाणेऽपि समक्रियः स्यात्, तदा न शतवर्षादर्वागूर्ध्वं वा कश्चिन्म्रियेत, दृश्यते चैतत्; तस्मादेवंभूतसमक्रियत्वे कालस्य उचितशतवर्षायायुःप्राप्तेरर्वाङ्मरणमकालमृत्युशब्दाभिधेयमिहायुर्वेदे तन्निरस्तं भवतीति भावः। अकालमृत्युप्रतिषेधे दूषणान्तरमाह—यस्येत्यादि। सर्वभावा इति मृत्युव्यतिरिक्ता अप्याहारवचनादयः। प्रत्यक्षमिति सुव्यक्तप्रमाणेनेत्यर्थः। कालाकालव्यक्तिस्तासु तास्ववस्थास्विति तास्ता अवस्थाः शरीरादेस्तं तं व्याध्याहारादिकमर्थं बुद्धिस्थीकृत्य कालाकालशब्देनोच्यन्त इत्यर्थः। तत्र तृतीयदिनज्वरयुक्तायां तृतीयज्वरिणोऽवस्थायां तृतीयज्वरं प्रति कालोऽयमस्येति व्यपदिश्यते, विपर्यये चाकाल इति व्यपदेशः; तथा ग्लान्यादियुक्तायां शरीरावस्थायामाहाररूपमर्थमुद्दिश्य कालोऽयमाहारस्येति ज्ञानं भवति, विपर्यये चाकालोऽयमित्युदाहरणमूह्यम्। विसर्गस्येति व्याधिमोक्षस्य। इह प्रकरणे कालशब्देनोचितः कालोऽभिधीयते, अकालशब्देनानुचितः कालः; न तु कालविरहः। सिद्धान्तमुपसंहरति—तस्मादित्यादि। नैकान्तिकमिति कालमृत्युरेव परं भवति, किंवा अकालमृत्युरेव परं भवतीत्यैकान्तिकपक्षो नास्ति। अकालमृत्योरभावपक्षे दूषणान्तरमाह—यदि हीत्यादि। हिताहितज्ञानमकालमृत्युप्रतिषेधार्थं विधीयते, स एव चेदकालमृत्युर्नास्ति तदा हिताहितज्ञानं निष्प्रयोजनं स्यादित्यर्थः। प्रत्यक्षानुमानोपदेशाश्चाप्रमाणानि स्युरिति आयुर्वेदसंबद्धाः प्रत्यक्षादय आयुष्यानायुष्योपदर्शका आयुष्यानायुष्यार्थाभावादप्रमाणभूताः स्युरिति भावः। दूषितं पक्षं निःसारतया दर्शयन्नाह—वागित्यादि ॥ २८ ॥

**वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले ॥ २९ ॥**

'किंचास्य परमायुः' इत्यस्य प्रश्नस्योत्तरमाह—वर्षशतमित्यादि। अस्मिन् काले इति कलौ ॥ २९ ॥

**तस्य निमित्तं प्रकृतिगुणात्मसंपत् सात्म्योपसेवनं चेति ॥ ३० ॥**

शेषप्रश्नस्योत्तरं–तस्येत्यादि। प्रकृतिगुणात्मसंपदिति प्रकृतिसंपत्, गुणसंपत्, आत्मसंपत्। तत्र प्रकृतिसंपत् समवातादिप्रकृतिता, समप्रकृतिर्हि चिरायुर्भवति; गुणसंपत्तु सारसंहननादिभिरायुष्मल्लक्षणैर्योगः, किंवा प्रकृतेर्मातृपित्राद्युपकरणस्य गुणसंपत् सा प्रकृतिगुणसंपत्; आत्मनस्तु चिरायुष्ट्वकारकधर्मयुक्तता संपत् ॥ ३० ॥

१ 'न तु' इति पा०। २ आयुर्वेदार्थदर्शकाः' इति पा०। ३ 'मातृपित्रादिमेलककारणस्य गुणसंपत्' इति, 'मातापित्रादिमेलककारणप्रकृतिगुणसंपत्' इति च पा०।

तत्र श्लोकाः—

**शरीरं यद्यथा तच्च वर्तते क्लिष्टमामयैः।**
**यथा क्लेशं विनाशं च याति ये चास्य धातवः ॥ ३१ ॥**
**वृद्धिह्रासौ यथा तेषां क्षीणानामौषधं च यत्।**
**देहवृद्धिकरा भावा बलवृद्धिकराश्च ये ॥ ३२ ॥**
**परिणामकरा भावा या च तेषां पृथक् क्रिया।**
**मलाख्याः संप्रसादाख्या धातवः प्रश्न एव च ॥ ३३ ॥**
**नवैको निर्णयश्चास्य विधिवत् संप्रकाशितः।**
**तथ्यः शरीरविचये शारीरे परमर्षिणा ॥ ३४ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने शरीरविचयशारीरं नाम षष्ठोऽध्यायः ॥ ६ ॥**

संग्रहे ये चास्य धातव इति यादृशाश्चास्य धातव इत्यर्थः। एतच्च 'वैषम्यगमनं पुनर्धातूनां' इत्यादिग्रन्थेन धातुधर्मप्रकाशकत्वेनोक्तं ज्ञेयम्। अन्ये तु ये चास्य धातव इत्यनेन 'मांसं मांसेन वर्धते' इत्यादि धातुरूपाणां पुनर्मांसादीनां संग्रहोऽयमिति वदन्ति। वृद्धिह्रासौ यथा तेषामित्यनेन 'धातवः पुनः' इत्यादिग्रन्थार्थं गृह्णाति। क्षीणानामौषधं च यदिति मांसमाप्यायते मांसेनेत्यादि संगृह्णाति। या च तेषां पृथक् क्रियेत्यनेन तेषामाहारपरिणामकराणामूष्मप्रभृतीनां पृथक्कर्म यदुक्तं 'ऊष्मा पचति' इत्यादिना ग्रन्थेन तद्गृह्यते ॥ ३१–३४ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शरीरविचयशारीरं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

**अथातः शरीरसंख्याशारीरं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**
**शरीरसंख्यामवयवशः कृत्स्नं शरीरं प्रविभज्य सर्वशरीरसंख्यानप्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ ॥ ३ ॥**

पूर्वाध्याये धातुभेदेन शरीरमभिधाय एतदेव शरीरमवयवसंख्याभेदेन प्रतिपादयितुं शरीरसंख्याध्यायोऽभिधीयते। अवयवसंख्याभेदेन च शरीरज्ञानं प्राधान्येन साक्षात् साधनं चिकित्सोपयुक्तं कथयिष्यत्यध्यायान्ते 'शरीरसंख्यां यो वेद' इत्यादिना। अवयवशः शरीरं प्रविभज्य शरीरसंख्यां पप्रच्छेति योजना। पृच्छाप्रयोजनमाह—सर्वशरीरसंख्यानप्रमाणज्ञानहेतोरिति।—संख्यानस्य प्रमाणमियत्ता संख्यानप्रमाणं, तच्च

१ 'यथावच्च' इति पा०। २ 'सप्रसादाख्याः' इति पा०। ३ 'दशकः' इति पा०। ४ 'शरीरसंख्यां नाम शारीरं' इति पा०। ५ 'मोक्षसाधनं कथयिष्यति' इति पा०।

'षट् त्वचः' इत्यादिग्रन्थवाच्यं; किंवा संख्यानं च प्रमाणं च संख्यानप्रमाणं; तत्र 'षट् त्वचः' इत्यादि संख्यानं, 'दशोदकाञ्जलयः' इत्यादि शरीरावयवप्रमाणं; किंवा 'संख्या-नाम-प्रमाणज्ञानहेतोः' इति पाठः, तत्र संख्यानस्य प्रमाणस्य च दत्तमेवोदाहरणं, नामज्ञानं तु 'एका गोजिह्विका' इत्यादिग्रन्थेन भवतीति व्याख्यानयन्ति ॥ १–३ ॥

**तमुवाच भगवानात्रेयः—शृणु मत्तोऽग्निवेश! सर्वशरीरमाचक्षाणस्य यथाप्रश्नमेकमना यथावत्। शरीरे षट् त्वचः; तद्यथा—उदकधरा त्वग्बाह्या, द्वितीया त्वसृग्धरा, तृतीया सिध्मकिलाससंभवाधिष्ठाना, चतुर्थी दद्रूकुष्ठसंभवाधिष्ठाना, पञ्चमी त्वलजीविद्रधिसंभवाधिष्ठाना, षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि च; इति षट् त्वचः। एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ॥ ४ ॥**

आचक्षाणस्येत्यत्र 'मतं' इति शेषः; तेन सर्वं शरीरमाचक्षाणस्य मे मतं शृण्विति योजना। ततश्च 'नटस्य शृणोति' इतिवदनुपयोगे षष्ठी। किं च 'मे वचनं शृणु' इत्यनेन मतान्तरमप्यस्ति शरीरावयवसंख्यान इति सूचयति। ततश्च सुश्रुते—"सप्त त्वचः, त्रीण्यस्थिशतानि" (सु. शा. अ. ५) इत्यादिना यदिह प्रतिपादितसंख्याविरुद्धमुच्यते, तच्छल्यशास्त्रोपयुक्तत्वादिति दर्शयति। यदुक्तं सुश्रुते—"त्रीणि सषष्टीनि शतान्यस्थ्नां वेदविदो भाषन्ते, शल्यतन्त्रे तु त्रीण्येव शतानि" (सु. शा. अ. ५) इति। अनेन वचनेन योऽन्योऽपि त्वगादिसंख्याभेदश्चरकसुश्रुतयोः स स्वतन्त्रोपयुक्तसंख्योपादानादुन्नेयः। सिध्मकिलाससंभवाधिष्ठानेति सिध्मकिलासौ यतो दोषात् संभवतस्तस्य दोषस्याधिष्ठानभूता; एवमुत्तरत्रापि व्याख्येयम्। ताम्यतीत्यस्य विवरणम्—'अन्ध इव तमः प्रविशति' इति; किंवा ताम्यतीति तमोयुक्त इव चेष्टते। अरूंषीति व्रणानि। पर्वस्विति अवयवसन्धिषु ॥ ४ ॥

**तत्रायं शरीरस्याङ्गविभागः; तद्यथा—द्वौ बाहू, द्वे सक्थिनी, शिरोग्रीवम्, अन्तराधिः, इति षडङ्गमङ्गम् ॥ ५ ॥**

षडङ्गतामुक्तां शरीरस्य विभजते—तत्रायमित्यादि। शिरश्च ग्रीवा च शिरोग्रीवम्; एतच्चैक्यविवक्षया ज्ञेयम्। अन्तराधिः मध्यम् ॥ ५ ॥

**त्रीणि सषष्टीनि शतान्यस्थ्नां सह दन्तोलूखलनखेन। तद्यथा—द्वात्रिंशद्दन्ताः, द्वात्रिंशद्दन्तोलूखलानि, विंशतिर्नखाः, षष्टिः पाणिपादाङ्गुल्यस्थीनि, विंशतिः पाणिपादशलाकाः, चत्वारि पाणिपादशलाकाधिष्ठानानि, द्वे पार्ष्ण्योरस्थिनी, चत्वारः पादयोर्गुल्फाः, द्वौ मणिकौ हस्तयोः, चत्वार्यरत्न्योरस्थीनि, चत्वारि जङ्घयोः, द्वे जानुनी, द्वे जानुकपालिके, द्वावूरुनलकौ, द्वौ बाहुनलकौ, द्वावंसौ, द्वे अंसफलके, द्वावक्षकौ, एकं जत्रु, द्वे तालुके, द्वे श्रोणिफलके, एकं भगास्थि, पञ्चचत्वारिंशत् पृष्ठगतान्यस्थीनि, पञ्चदश ग्रीवायां, चतुर्दशोरसि, द्वयोः पार्श्वयोश्चतुर्विंशतिः पर्शुकाः, तावन्ति स्थालकानि, तावन्ति चैव स्थालकार्बुदानि, एकं हन्वस्थि, द्वे हनुमूलबन्धने, एकास्थि नासिकागण्डकूटललाटं, द्वौ शङ्खौ, चत्वारि शिरःकपालानीति; एवं त्रीणि सषष्टीनि शतान्यस्थ्नां सह दन्तोलूखलनखेनेति ॥ ६ ॥**

सषष्टीनीति षष्ट्याऽधिकानि। दन्तानामुलूखला यत्राश्रिता दन्ताः। यद्यपि नखा विविधाशितपीतीये मलभागपोष्यत्वेन मले एव प्रक्षिप्ताः, तथाऽपीहास्थितारूपयोगस्यापि विद्यमानत्वादस्थिगणनायां पठिताः। प्रत्यङ्गुलि पर्वत्रयं, तेन विंशत्यङ्गुलिगतमस्थ्नां विंशतित्रयं भवति। वृद्धाङ्गुष्ठे यद्धस्तपादप्रविष्टं तत्तृतीयं पर्व ज्ञेयम्। वृद्धाङ्गुष्ठशलाकाऽपि स्वल्पप्रमाणा ज्ञेया। अङ्गुलीनां शलाका यत्र संलग्नास्तच्छलाकाधिष्ठानम्। जानु जङ्घोर्वोः सन्धिः। अक्षकौ अर्वाक् जत्रुसन्धेः कीलकौ। तालुके तात्वस्थिनी। भगास्थि अभिमुखं कटीसन्धानकारकं तिर्यगस्थि। स्थालकानीति पर्शुकानां मूलस्थानलग्नानि। स्थालकार्बुदानि तु पर्शुकामूलान्यर्बुदाकाराण्यस्थीनि। नासिकागण्डकूटललाटानामेकमूलत्वादेकमेवास्थि गणनीयं, ये तु पृथग्गणनां कुर्वन्ति तेषां नासागण्डकूटललाटानां त्रयाणां त्रीण्येवास्थीनीति न संख्यापूरणम् ॥ ६ ॥

**पञ्चेन्द्रियाधिष्ठानानि; तद्यथा—त्वग्, जिह्वा, नासिका, अक्षिणी, कर्णौ च। पञ्च बुद्धीन्द्रियाणि; तद्यथा—स्पर्शनं, रसनं, घ्राणं, दर्शनं, श्रोत्रमिति। पञ्च कर्मेन्द्रियाणि; तद्यथा—हस्तौ, पादौ, पायुः, उपस्थः, जिह्वा चेति ॥ ७ ॥**

**हृदयं चेतनाधिष्ठानमेकम् ॥ ८ ॥**

अक्षिणी कर्णौ च पृथक्त्वेऽपि एकैकेन्द्रियाधिष्ठानत्वेनैकत्वेनैव ग्राह्ये। एवं हस्तौ पादौ च एकतया ग्राह्यौ ॥ ७ ॥ ८ ॥

१ 'सर्वशरीरमभिसंचक्षाणात्' इति पा०। २ 'शल्यशास्त्रोपयुक्तमतभेदात्' इति पा०। ३ 'स्वतन्त्रानुपयुक्तसंख्यापरित्यागादुपयुक्तसंख्योपादानाच्चोन्नेयः' इति पा०। ४ 'अथ' इति पा०। ५ 'एतदेकमेव षड्विवक्षायां' इति पा०। ६ 'दन्तोलूखलनखैः' इति पा०।

१ 'चत्वार्यधिष्ठानान्यासां' इति पा०। २ 'मणिबन्धकौ' इति पा०। ३ 'अस्थिरूपयोग्यताया अपि' इति पा०। ४ 'मूलस्थानानि निम्नानि' इति पा०। ५ 'पर्शुकासु मध्ये स्थितान्यर्बुदाकाराण्यस्थीनि' इति पा०। ६ 'नासिकागण्डकूटललाटैर्मिलित्वा एकमेवास्थि गणनीयं' इति पा०। ७ 'त्रीण्येवास्थीनि, एकत्वेन तु संख्यापूरणम्' इति पा०।

**दश प्राणायतनानि; तद्यथा—मूर्धा, कण्ठः, हृदयं, नाभिः, गुदं, वस्तिः, ओजः, शुक्रं, शोणितं, मांसमिति। तेषु षट् पूर्वाणि मर्मसंख्यातानि ॥ ९ ॥**

इह दशप्राणायतनेषु दशप्राणायतनीयोक्तौ शङ्खौ परित्यज्य नाभिर्मांसं च गृहीतं, तेन नाभिमांसयोरपि प्राणायतनत्वं तथा शङ्खयोश्च पाठद्वयदर्शनाद्बोद्धव्यम्। यदुक्तं दशप्राणायतनीये—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" (सू. अ. २९) इति ॥ ९ ॥

**पञ्चदश कोष्ठाङ्गानि; तद्यथा—नाभिश्च, हृदयं च, क्लोम च, यकृच्च, प्लीहा च, वृक्कौ च, वस्तिश्च, पुरीषाधारश्च, आमाशयश्च, पक्वाशयश्च, उत्तरगुदं च, अधरगुदं च, क्षुद्रान्त्रं च, स्थूलान्त्रं च, वपावहनं चेति ॥ १० ॥**

क्लोम पिपासास्थानम्। वस्तिः मूत्राशयः। उत्तरगुदः यत्र पुरीषमवतिष्ठते, येन तु पुरीषं निष्क्रामति तदधरगुदम्। वपावहनं मेदःस्थानं 'तैलवर्तिका' इति ख्यातम् ॥ १० ॥

**षट्पञ्चाशत् प्रत्यङ्गानि षट्स्वङ्गेषूपनिबद्धानि, यान्यपरिसंख्यातानि पूर्वमङ्गेषु परिसंख्यायमानेषु, तान्यन्यैः पर्यायैरिह प्रकाश्यानि भवन्ति। तद्यथा—द्वे जङ्घापिण्डिके, द्वे ऊरुपिण्डिके, द्वौ स्फिचौ, द्वौ वृषणौ, एकं शेफः, द्वे उखे, द्वौ वङ्क्षणौ, द्वौ कुकुन्दरौ, एकं वस्तिशीर्षम्, एकमुदरं, द्वौ स्तनौ, द्वौ श्लेष्मभुवौ, द्वे बाहुपिण्डिके, चिबुकमेकं, द्वावोष्ठौ, द्वे सृक्कण्यौ, द्वौ दन्तवेष्टकौ, एकं तालु, एका गलशुण्डिका, द्वे उपजिह्विके, एका गोजिह्विका, द्वौ गण्डौ, द्वे कर्णशष्कुलिके, द्वौ कर्णपुत्रकौ, द्वे अक्षिकूटे, चत्वार्यक्षिवर्त्मानि, द्वे अक्षिकनीनिके, द्वे भ्रुवौ, एकाऽवटुः, चत्वारि पाणिपादहृदयानि ॥ ११ ॥**

षट्पञ्चाशत् प्रत्यङ्गानीति 'तद्यथा—द्वे जङ्घापिण्डिके' इत्यादिग्रन्थवक्ष्यमाणानि। यानीत्यादि यानि वक्ष्यमाणानि षट्पञ्चाशत् प्रत्यङ्गानि, पूर्वमङ्गेषु हस्तादिषु षट्सु, परिसंख्यायमानेष्वपरिसंख्यातानि, तान्यन्यैः पर्यायैः प्रकाश्यानि भवन्तीति योजना। पर्यायाश्च जङ्घापिण्डिकादयः शब्दा एव। एतेन हस्तादिषडङ्गकथनेनैव तदाश्रिता अपि जङ्घापिण्डिकादय उक्ता एव, संप्रति त्ववयवैविशेषव्यवहारार्थं जङ्घापिण्डिकादयः पृथगुक्ता इति वाक्यार्थः। 'पूर्वमङ्गेषु' इत्यस्य स्थाने 'पूर्वमन्येषु' इति वा पाठः; तत्राप्यन्यशब्देन हस्तादीनि षडङ्गानि प्राह्याणि। उखे इति कक्षशिरोपार्श्वयोर्निम्नभागौ। कुकुन्दरौ स्फिचोरुपरि उन्नतभागौ। वस्तिशिरो नाभेरधः। श्लेष्मभुवौ कण्ठस्य पार्श्वयोर्व्यवस्थितौ कठिनौ भागौ। सृक्कण्यौ वदनान्ते। द्वे उपजिह्विके इति जिह्वाया अधोगता जिह्वा तथा उपरिगता ग्राह्या। एका गोजिह्विकेति गौर्वाक्, तस्याः कारणभूता जिह्वा गोजिह्वा; तेन वचनकारणभूता प्रधानजिह्वैव गृह्यते। कर्णशष्कुलिके कर्णगतावर्तकौ। कर्णपुत्रकौ तु बाह्यकर्णावेव। अक्षिकूटके अक्षिगोलके। द्वे अक्षिकनीनिके इत्यत्र कनीनिकाशब्देन नासायाः सममक्षिसन्धिरभिधीयते। अवटुः घाटा। चत्वारि पाणिपादहृदयानीति पाण्योः पादयोश्च तलानि मध्यानि चत्वारीत्यर्थः। एतावतैव षट्पञ्चाशत् प्रत्यङ्गानि पूर्यन्ते ॥ ११ ॥

**नव महन्ति छिद्राणि—सप्त शिरसि, द्वे चाधः १२ एतावद्दृश्यं शक्यमपि निर्देष्टुम् ॥ १३ ॥**

नव महान्ति छिद्राणीति ग्रन्थं व्याकरोति—सप्त शिरसि द्वे चाध इति। एतावद्दृश्यमिति एतावत्त्वगादि दृश्यं प्रायः प्रत्यक्षोपलब्धिविषयमित्यर्थः ॥ १२ ॥ १३ ॥

**अनिर्देश्यमतः परं तर्क्यमेव। तद्यथा—नव स्नायुशतानि, सप्त सिराशतानि, द्वे धमनीशते, चत्वारि पेशीशतानि, सप्तोत्तरं मर्मशतं, द्वे सन्धिशते, एकोनत्रिंशत्सहस्राणि नव च शतानि षट्पञ्चाशत्कानि सिराधमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणं, तावन्ति चैव केशश्मश्रुलोमानीति। एतद्यथावत्संख्यातं त्वक्प्रभृति दृश्यं, तर्क्यमतः परम्। एतदुभयमपि न विकल्पते, प्रकृतिभावाच्छरीरस्य ॥ १४ ॥**

अतः परं तर्क्यमेवेति अतस्त्वगादेः परं यत् स्नाय्वादि तत् प्रायस्तर्क्यमेव अनुमानगम्यमेवेत्यर्थः। यद्यपि स्नाय्वाद्यपि प्रत्यक्षं भवति, तथाऽपीह वक्ष्यमाणसंख्यायुक्तं सर्वं स्नाय्वादि न प्रत्यक्षेण सुकरग्रहमिति तर्क्यमित्युक्तम्। स्नाय्वादिभेदानेवाह—नव स्नायुशतानीत्यादि। अणुशः प्रविभज्यमानानामिति अणुप्रभेदेन भिद्यमानानाम्। मुखाग्रपरिमाणमिति मुखरूपस्याग्रस्य परिमाणम्। अत्र यान्येव सप्त सिराशतानि धमनीशतद्वयं चोक्तं तदेव सूक्ष्मप्रतानाग्रभेदगणनया एकोनत्रिंशत्सहस्राणि नव च शतानि षट्पञ्चाशत्कानि भवन्ति, स्थूलगणनतया तु पूर्वसंख्या सिराधमन्यन्तर्भवतीति न विरोधः। तावन्ति चैव केशश्मश्रुलोमानीति एकोनत्रिंशत्सहस्राणि नवशतानि षट्पञ्चाशत्कानि केशश्मश्रुलोम्नां भवन्तीत्यर्थः। एतच्च केशादिसंख्यानं स्थूलसिरामुखगतकेशादिविभागेन ज्ञेयं, सूक्ष्मतमविभागेन तु केशादीनां बहुत्वमपि शास्त्रान्तरोक्तं भवतीति ज्ञेयम्। एतत्

---

१ 'प्रकाश्य व्याख्यातानि' इति पा०। २ 'द्वौ भुजौ' इति पा०। ३ 'जङ्घादिषु' इति पा०। ४ 'जङ्घादिषडङ्गकथनेनैव' इति पा०। ५ 'त एव विशेषव्यवहारार्थं' इति पा०। ६ 'जङ्घादीनि' इति पा०।

१ 'पञ्च पेशीशतानि' इति पा०। २ 'एकोनत्रिंशच्छतसहस्राणि' इति पा०। ३ 'एके तदुभयमपि न विकल्पयन्ते प्रकृतिभावाच्छरीरस्य' इति, 'त्वक्प्रभृति दृश्यं तर्क्यमेवेत्येके, तदुभयमपि न विकल्पते प्रकृतिभावाच्छरीरस्य' इति च पा०। ४ 'पूर्वसिरासंख्या धमन्यन्तर्गता भवतीति न विरोधः' इति पा०।

त्वक्प्रभृति दृश्यं तर्क्यं च स्नाय्वादि यथावत् संख्यातमिति योजना। संप्रति यथोक्तं त्वगादीनां मानं प्रकृतिस्थे शरीरे न व्यभिचरतीति दर्शयन्नाह—एतदुभयमित्यादि। उभयमिति दृश्यं तर्क्यं च। प्रकृतिभावादिति अविकृतत्वाच्छरीरस्य। यत्र तु शरीरं विकृतं भवति तत्र यथोक्तं त्वगादिमानमपि विकृतं भवतीति भावः। किंवा, एतद्यथावत्संख्यातमिति छेदः। एकीयमतमाह—'त्वक्प्रभृति दृश्यं तर्क्यमेव चैके' इति पाठः। अर्थस्तु—त्वक्प्रभृति यदुक्तं दृश्यं तदपि तर्क्यमेवेत्येके आचार्या ब्रुवते, तदुभयमिति तदेकीयमतमसन्मतं च, न विकल्पते इति यथोक्तावयवसंख्या(व्य)तिरेकेण न व्यवस्थाप्यते; प्रकृतिभावाच्छरीरस्येति पूर्ववद् व्याख्येयम्। एतेन यत्त्वगादि तर्क्यमेव वा भवतु, दृश्यं तर्क्यभेदभिन्नं वा भवतु, तथाऽपि यथोक्तां संख्यां नातिक्रामतीति वाक्यार्थः॥ १४॥

**यत्त्वञ्जलिसंख्येयं तदुपदेक्ष्यामः; तत् परं प्रमाणमभिज्ञेयं, तच्च वृद्धिह्रासयोगि, तर्क्यमेव। तद्यथा—दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन, यत्तु प्रच्यवमानं पुरीषमनुबध्नात्यतियोगेन तथा मूत्रं रुधिरमन्यांश्च शरीरधातून्, यत्तु सर्वशरीरचरं बाह्या त्वग्बिभर्ति, यत्तु त्वगन्तरे व्रणगतं लसीकाशब्दं लभते, यच्चोष्मणाऽनुबद्धं लोमकूपेभ्यो निष्पतत् स्वेदशब्दमवाप्नोति, तदुदकं दशाञ्जलिप्रमाणं; नवाञ्जलयः पूर्वस्याहारपरिणामधातोः, यं 'रस' इत्याचक्षते; अष्टौ शोणितस्य, सप्त पुरीषस्य, षट् श्लेष्मणः, पञ्च पित्तस्य, चत्वारो मूत्रस्य, त्रयो वसायाः, द्वौ मेदसः, एको मज्जायाः, मस्तिष्कस्यार्धाञ्जलिः, शुक्रस्य तावदेव प्रमाणं, तावदेव[१] श्लैष्मिकस्यौजस इति। एतच्छरीरतत्त्वमुक्तम्॥१५॥**

ननु यथा प्रकृतिस्थे शरीरे यथोक्तं मानं त्वगादि न व्यभिचरति, तथा किं प्रकृतिस्थे शरीरे तदुदकाद्यपि यथोक्तं मानं न व्यभिचरतीत्याह—यत्त्वञ्जलीत्यादि। यत्तु उदकादि अञ्जलिसंख्येयमग्रे वक्ष्यमाणं, तदुदकादेः परमुत्कृष्टं प्रमाणम्। तेन प्रकृतिस्थेऽपि शरीरे उदकादि वृद्धिह्रासयोगि भवतीति तर्क्यमेव। एतेन, यदुदकादेरिह प्रमाणमभिधातव्यं तत् प्रकृष्टस्योदकादेः प्रमाणं; तेनोक्तप्रमाणात् किञ्चिन्न्यूनमपि तथाऽधिकमपि यदुदकादिमानं तदपि प्रकृतमानमेव। दशोदकाञ्जय इत्यादावभिधायापि तदुदकं दशाञ्जलिप्रमाणमिति पुनर्यत् करोति, तेन मध्यग्रन्थकृतलसीकास्वेदादिसंज्ञया उदकस्यानन्यतां दर्शयति। पूर्वस्येति प्रथमस्य। वसा मांसस्नेहः। मस्तिष्कः शिरोगतस्नेहः। श्लैष्मिकस्यौजस इत्यनेन यदोजोऽष्टबिन्दुकं तद्व्यतिरिक्तस्यौजस ओजोवहधमनीवाह्यस्य विशुद्धश्लेष्मसमानगुणस्यार्धाञ्जलिप्रमाणतां दर्शयति। ओजो हि परावरभेदेन द्विविधमर्थेदशमहामूलीये दर्शितमेव॥ १५॥

**तत्र यद्विशेषतः स्थूलं स्थिरं मूर्तिमद्गुरुखरकठिनमङ्गं नखास्थिदन्तमांसचर्मवर्चःकेशश्मश्रुलोमकण्डरादि तत् पार्थिवं गन्धो घ्राणं च; यद्द्रवसरमन्दस्निग्धमृदुपिच्छिलं रसरुधिरवसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनं च; यत् पित्तमूष्मा च यो या च भाः शरीरे तत् सर्वमाग्नेयं रूपं दर्शनं च; यदुच्छ्वासप्रश्वासोन्मेषनिमेषाकुञ्चनप्रसारणगमनप्रेरणधारणादि तद्वायवीयं स्पर्शः स्पर्शनं च; यद्विविक्तं यदुच्यते महान्ति चाणूनि स्रोतांसि तदान्तरीक्षं शब्दः श्रोत्रं च; यत् प्रयोक्तृ तत् प्रधानं बुद्धिर्मनश्च। इति शरीरावयवसंख्या यथास्थूलभेदेनावयवानां निर्दिष्टा॥ १६॥**

शरीरावयवसंख्यां प्रमाणतोऽभिधाय पार्थिवादिभेदेनावयवानभिधातुमाह—तत्रेत्यादि। सरं किंचिद्गतिमत्। मन्दं मन्दक्रियम्। विविक्तमिति विभक्तम्। यदुच्यत इति वचनमित्यर्थः। शब्दग्रहणेनेह वचनव्यतिरिक्तः शब्दः शारीरो गृह्यते, वचनस्य यदुच्यत इतिपदेनैव गृहीतत्वात्। प्रयोक्तृ इति यच्छरीरादिप्रेरकं चेतनम्। यथास्थूलभेदेनेति वचनात् सूक्ष्मावयवभेदेन परमाणुरूपेणासंख्येयतां वक्ष्यमाणां सूचयति। अतिबहुत्वादित्यनेनातिबहुत्वमपि गङ्गावालुकानामिवासंख्यातहेतुर्भवतीति दर्शयति॥ १६॥

**शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति, अतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्च। तेषां संयोगविभागे परमाणूनां कारणं वायुः कर्मस्वभावश्च॥ १७॥**

अतिसौक्ष्म्यादिति अतिसूक्ष्मबुद्धिबोध्यत्वात्। अतीन्द्रियत्वं च परमाणूनां स्वभावसिद्धमेवास्मदादीन् प्रति। यत्तु सूक्ष्ममतीन्द्रियं वा तत् परिसंख्यातुं नितरामेव दुःशकं भवतीति युक्तं हेतुत्रयमपरिसंख्याने। अथैते विषयकलिताः परमाणवः कथं शरीरारम्भे संयुज्यन्ते, शरीरविनाशे च वियुज्यन्त इत्याह—तेषामित्यादि। ननु यदि वायुः कारणं परमाणूनां संयोगविभागे, तत् किमिति सर्वदा तौ न करोतीत्याह—कर्मस्वभावश्चेति। न केवलो वायुः किन्तु कर्मस्वभावपरिगृहीत एव। तेन यदा संयोजकस्वभावेन कर्मणा परिगृहीतो वायुर्भवति तदा परमाणूनां संयोगं कुर्वंश्छरीरमारभते; यदा तु वियोजनस्वभावेन कर्मणा वायुः परिगृहीतो भवति तदा विभागं परमाणूनां विनाशरूपं जनयतीत्यर्थः॥ १७॥

**तदेतच्छरीरं संख्यातमनेकावयवं दृष्टमेकत्वेन सङ्गः, पृथक्त्वेनापवर्गः। तत्र प्रधानमसक्तं सर्वसत्तानिवृत्तौ[१] निवर्तते इति॥ १८॥**

इदानीं शरीरसंख्यानफलमाह—तदेतदित्यादि। परमार्थ-

---

१ 'तावदेव चौजसः, स्त्रीणामार्तवस्य चत्वारोऽञ्जलयः' इति पा०।

१ 'सर्वसंताननिवृत्तौ' इति पा०।

तोऽनेकावयवमपि त(स)च्छरीरं संख्याने मोहादेकत्वेन दृष्टं संग उच्यते सङ्गहेतुर्भवतीत्यर्थः। एकत्वेन हि शरीरं पश्यन् तदुपकाराय प्रवर्तमानो रागद्वेषाभ्यां सक्तो भवति। अपवर्ग इति अपवर्गहेतुरित्यर्थः। शरीरं हि पृथगवयवभेदेन भाव्यमानं न ममतास्पदं भवति, ममताभावाच्च न तदुपकारकापकारकेषु रागद्वेषौ भवतः, तदभावाच्च प्रवृत्त्युपरमे सति धर्माधर्माभावादपवर्गो भवतीत्यर्थः। शरीरपृथक्त्वसंख्याने यथा मोक्षो भवति तदाह—तत्रेत्यादि। प्रधानम् आत्मा। तत्रेति शरीरपृथक्त्वभावनायाम्। असक्तमिति यथोक्तक्रमेण रागद्वेषरहितम्। सर्वसत्तानिवृत्ताविति सर्वत्रोपकारके वाऽपकारके च भावे आस्थानिवृत्तौ सत्याम्। निवर्तत इति संसारो निवर्तते॥ १८॥

तत्र श्लोकौ—

**शरीरसंख्यां यो वेद सर्वावयवशो भिषक्।**
**तदज्ञाननिमित्तेन स मोहेन न युज्यते॥ १९॥**
**अमूढो मोहमूलैश्च न दोषैरभिभूयते।**
**निर्दोषो निःस्पृहः शान्तः प्रशाम्यत्यपुनर्भवः॥ २०॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने शरीरसंख्याशारीरं नाम सप्तमोऽध्यायः॥ ७॥**

इममेव गद्योक्तमर्थं श्लोकेनाह—शरीरेत्यादि। तदज्ञाननिमित्तेनेति शरीरैकतारूपमिथ्याज्ञानजन्येन। मोहेनेति 'अहं स्थिरशरीरी एको, ममेदमुपकारकं, ममेदमपकारकम्' इत्यादिरूपेण मोहेन। मोहमूलैरिति मोहकारणकैः। दोषैरिति रागद्वेषैः; निर्दोषत्वेन निःस्पृहो भवति, रागद्वेषमूला हीच्छा तदभावान्न भवति, निःस्पृहश्च सन् सर्वक्रियोपरमाच्छान्तो भवति, शान्तश्च सन् प्रशाम्यति संसरणे विश्राम्यति; ततश्च नास्य पुनर्भवो जन्मरूपो भवतीति॥ १९॥ २०॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शारीरस्थाने शरीरसंख्याशारीरं नाम सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

**अथातो जातिसूत्रीयं शारीरं व्याख्यास्यामः॥ १॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

संप्रति पारिशेष्याज्जातिसूत्रीय उच्यते। जातिशब्देन जन्मकारणमुच्यते, तस्य सूत्रं जन्मोपायकथनं, तदधिकृत्य कृतोऽध्यायो जातिसूत्रीयः॥ १॥ २॥

**स्त्रीपुंसयोरव्यापन्नशुक्रशोणितगर्भाशययोः श्रेयसीं प्रजामिच्छतोस्तदर्थाभिनिर्वृत्तिकरं[1] कर्मोपदेक्ष्यामः॥ ३॥**

स्त्रीपुंसयोरिति क्रमनिर्देशं कृत्वा 'अव्यापन्नशोणितगर्भाशयशुक्रयोः' इति निर्देशो यथाक्रमानुरोधाद्यद्यपि युज्यते, तथाऽप्यल्पाक्षरं पूर्वं निपततीति न्यायमाश्रित्य क्रमभेदेन निर्देशः कृतः। श्रेयसीं प्रजामिच्छतोरित्यत्र श्रेयसी प्रजा गुणवान् पुत्रो गुणवती च कन्याऽभिप्रेता, यतोऽत्र कन्योत्पादविधानमपि लेशतः करिष्यति; तेन निर्गुणयोः कन्यापुत्रयोस्तथा नपुंसकस्य चाश्रेयस्त्वेन व्युदासः; अन्ये तु पुत्रमेव श्रेयसीं प्रजामाहुः; यतोऽत्र सर्वं पुत्रमेवोद्दिश्य विधानं प्रायः करिष्यति। तदर्थाभिनिर्वृत्तिकरमिति श्रेयःप्रजारूपप्रयोजननिष्पादकम्॥ ३॥

**अथाप्येतौ स्त्रीपुंसौ स्नेहस्वेदाभ्यामुपपाद्य, वमनविरेचनाभ्यां संशोध्य, क्रमेण प्रकृतिमापादयेत्। संशुद्धौ चास्थापनानुवासनाभ्यामुपाचरेत्; उपाचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं, स्त्रियं तु तैलमाषाभ्याम्॥ ४॥**

अथापीत्यादौ अथशब्दोऽधिकारे, अपिशब्दो विशेषार्थः। तेनाव्यापन्नशुक्रशोणितगर्भाशययोरपि स्त्रीपुंसयोः श्रेयःप्रजाजनकगुणाधानार्थं स्नेहादिकर्मकरणमिति दर्शयति। यद्यप्येताविति पदेनैवाधिकृतौ स्त्रीपुंसौ लब्धौ, तथाऽपि पुनर्यतः स्त्रीपुंसाविति करोति तेन युगपदेव स्त्रीपुंसौ स्नेहनादिवक्ष्यमाणकर्मणा योज्याविति दर्शयति। क्रमेणेति पेयादिक्रमेण। स च क्रमो वमने विरेचने च पृथक् पृथक् प्रदेशान्तरोक्तक्रमन्यायेन बोद्धव्यः। पुनः 'संशुद्धौ च' इति वचनात् सम्यक्शुद्धयोरेवास्थापनानुवासने कर्तव्ये, नासम्यक्शुद्धयोरिति दर्शयति। मधुरौषधशब्देन सर्वमधुरौषधग्रहणं, मधुरस्य विशेषेण शुक्रवृद्धिकरत्वात्; अन्ये तु मधुरौषधशब्देन जीवनीयगणमिच्छन्ति॥ ४॥

**ततः पुष्पात् प्रभृति त्रिरात्रमासीत ब्रह्मचारिण्यधःशायिनी, पाणिभ्यामन्नमजर्जरपात्राद्[1] भुञ्जाना, न च काञ्चिन्मृजामापद्येत। ततश्चतुर्थेऽहन्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत् पुरुषं च। ततः शुक्लवाससौ स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेयातां स्नानात् प्रभृति युग्मेष्वहःसु पुत्रकामौ, अयुग्मेषु दुहितृकामौ॥ ५॥**

**न च न्युब्जां पार्श्वगतां वा संसेवेत। न्युब्जाया वातो बलवान् स योनिं पीडयति, पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा स च्युतः पिदधाति गर्भाशयं, वामे पार्श्वे पित्तं तदस्याः पीडितं विदहति रक्तं शुक्रं च, तस्मादुत्ताना बीजं गृह्णीयात्; तथाहि यथास्थानमवतिष्ठन्ते दोषाः। पर्याप्ते चैनां शीतो-**

[1] 'तन्निर्वृत्तिकरं' इति पा०।

[1] 'अजर्जरपात्रे' इति पा०।

दकेन परिषिञ्चेत् । तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्ता क्रुद्धाऽन्यं च पुमांसमिच्छन्ती मैथुने चातिकामा वा न गर्भं धत्ते, विगुणां वा प्रजां जनयति । अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्जयेत् । पुरुषेऽप्येत एव दोषाः । अतः सर्वदोषवर्जितौ स्त्रीपुरुषौ संसृज्येयाताम् ॥ ६ ॥

संजातहर्षौ मैथुने चानुकूलाविष्टगन्धं स्वास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा नात्यशितौ दक्षिणपादेन पुमानारोहेत् वामपादेन स्त्री ॥ ७ ॥

तत्र मन्त्रं प्रयुञ्जीत—"अहिरसि आयुरसि सर्वतः प्रतिष्ठाऽसि धाता त्वा ददतु विधाता त्वा दधातु ब्रह्मवर्चसा भव"इति ।

"ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाऽश्विनौ ।
भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम्"

इत्युक्त्वा संवसेयाताम् ॥ ८ ॥

पुष्पादिति आर्तवदर्शनात् । ब्रह्मचारिणीति अधःशायिनीति च त्रिरात्रमित्यनेन संबध्यते । अधःशायिनीति नोच्चशय्याशायिनी । पाणिभ्यामन्नमजर्जरपात्राद्भुञ्जानेति पाण्योरुपर्यस्फुटितं पात्रं दत्त्वा तत्रस्थमन्नं भुञ्जाना । न च कांचिन्मृजामिति शरीरावयवेषु कृत्स्नशरीरे वा मार्जनम् । पुरुषं च चतुर्थेऽहनि उत्साद्येत्यादिग्रन्थोक्तक्रियया योजयेदिति योजना । स्नानात् प्रभृतीति संवसेयातामित्यनेन संबध्यते । तेन स्नानात् प्रभृति मैथुनं विधीयते न तु स्नानदिनात् प्रभृति, पुत्रकामयोर्युग्मदिनविधानात् । युग्मदिनं तु प्रथमर्तुदिनात् प्रभृत्येव गणनीयम् । यदुक्तं हारीते—"चतुर्थीषष्ठ्यष्टमीद्वादशीषु गुणवन्तमायुष्मन्तं पुत्रं जनयति, पञ्चमीनवम्येकादशीषु कन्यां गुणवतीं, सप्तम्यां दुर्भगां कन्याम्" इति । न्युब्जामिति अधोमुखीम् । पर्याप्ते इति समाप्ते मैथुने । मैथुने चातिकामेति निवृत्तेच्छेऽपि पुरुषे मैथुनमिच्छन्ती । अन्येन वा विकारेणेति कुष्ठादिना जुगुप्सितेन रोगेण । आरोहेत् शयनमिति संबन्धः । 'अहिरसि' इत्यादि 'ददतु मे सुतम्' इत्यन्तो मन्त्रः ॥ ५–८ ॥

सा चेदेवमाशासीत—बृहन्तमवदातं हर्यक्षमोजस्विनं शुचिं सत्त्वसंपन्नं पुत्रमिच्छेयमिति, शुद्धस्नानात् प्रभृत्यस्यै मन्थमवदातयवानां मधुसर्पिर्भ्यां संसृज्य श्वेताया गोः सरूपवत्सायाः पयसाऽऽलोड्य राजते कांस्ये वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय । प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत, तथा सायमवदातशरणशयनासनपानवसनभूषणा च स्यात् । सायं प्रातश्च शश्वच्छ्वेतं महान्तं वृषभमाजानेयं वा हरिचन्दनाङ्गदं पश्येत् । सौम्याभिश्चैनां कथाभिर्मनोनुकूलाभिरुपासीत । सौम्याकृतिवचनोपचारचेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत् । सहचर्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुस्तथा भर्ता । न च मिश्रीभावमापद्येयातामिति । अनेन विधिना सप्तरात्रं स्थित्वाऽष्टमेऽहन्याप्लुत्याद्भिः सशिरस्कं सह भर्त्रा अहतानि वस्त्राण्याच्छादयेदवदातानि, अवदाताश्च स्रजो भूषणानि च बिभृयात् ॥ ९ ॥

हर्यक्षं सिंहविक्रमं; हर्यक्षता सामुद्रकैः स्तुता, तेनोपादेया । इच्छेयमित्यनेकार्थत्वाद्धातूनां लभेयमित्यर्थः; तेन 'आशासीत' इत्यस्य 'इच्छेयं' इत्यनेन न पौनरुक्त्यमिति व्याख्यानयन्ति । काले काले इति सायंप्रातः । अत्र च मन्थपानस्य तथा शालियवान्नभोजनस्य च विहितत्वादुभावपि काले काले मात्रया करणीयौ । शरणं गृहम् । आजानेयम् उत्तमकुलजातमश्वम् । हरिचन्दनशब्देन श्वेतचन्दनं विवक्षितं, हरिशब्दस्यानेकार्थत्वात्; हरिशब्देनं श्वेतस्यैव ग्रहणं, प्रशस्तत्वात्; अङ्गदः अङ्गरागः; किंवा अङ्गदः बाहुभूषणम् । पश्येदिति उपलभेत; तेन श्रोत्रमनोभ्यामपि अवदातत्वग्रहणं लभ्यते ॥ ९ ॥

तत ऋत्विक् प्रागुत्तरस्यां दिश्यगारस्य प्रागप्रवणमुदक्प्रवणं वा प्रदेशमभिसमीक्ष्य, गोमयोदकाभ्यां स्थण्डिलमुपलिप्य, प्रोक्ष्य चोदकेन, वेदीमस्मिन् स्थापयेत् । तां पश्चिमेनाहतवस्त्रसंचये श्वेतार्षभे वाऽप्यजिन उपविशेद् ब्राह्मणप्रयुक्तः, राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्यानडुहे वा, वैश्यप्रयुक्तस्तु रौरवे बास्ते वा । तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय,कुशैः परिस्तीर्य,परिधिभिश्च परिधाय, लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपकिरेत् । तत्र प्रणीयोदपात्रं पवित्रपूतमुपसंस्कृत्य सर्पिराज्यार्थं यथोक्तवर्णानाजानेयादीन् समन्ततः स्थापयेत् ॥ १० ॥

ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपविश्यान्वालभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना । ततस्तस्या आशासानाया ऋत्विक् प्रजापतिमभिनिर्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्वर्तयेद् 'विष्णुर्योनिं कल्पयतु' इत्यनयर्चा । ततश्चैवाज्येन स्थालीपाकमभिघार्य त्रिर्जु-

१ 'पुत्रं वीरं दधातु मे' इति पा० ।

१ 'चानुपानस्य' इति पा० । २ 'शालियवादिभोजनस्य' इति पा० । ३ 'सर्वस्य च श्वेतस्यैव' इति पा० ।

हुयाद्यथाम्नायम् । मन्त्रोपमन्त्रितमुदपात्रं तस्यै दद्यात् सर्वोदकार्थान् कुरुष्वेति । ततः समाप्ते कर्मणि पूर्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनुपरिक्रामेत् सह भर्त्रा । ततो ब्राह्मणान् स्वस्ति वाचयित्वाऽऽज्यशेषं प्राश्नीयात् पूर्वं पुमान्, पश्चात् स्त्री; न चोच्छिष्टमवशेषयेत् । ततस्तौ सह संवसेयातामष्टरात्रं, तथाविधपरिच्छदावेव च स्यातां, तथेष्टपुत्रं जनयेताम् ॥ ११ ॥

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुं च पुत्रमाशासीत, या वा कृष्णं कृष्णमृदुदीर्घकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम्; एष एवानयोरपि होमविधिः । किन्तु परिबर्हो वर्णवर्जं स्यात् । पुत्रवर्णानुरूपस्तु यथाशीरेव तयोः परिबर्होऽन्यः कार्यः स्यात् ॥ १२ ॥

शूद्रा तु नमस्कारमेव कुर्यात् (देवाग्निद्विजगुरुतपस्विसिद्धेभ्यः) ॥ १३ ॥

या या च यथाविधं पुत्रमाशासीत तस्यास्तस्यास्तां तां पुत्राशिषमनुनिशम्य तांस्ताञ्जनपदान्मनसाऽनुपरिक्रामयेत् । ततो या या येषां येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानां मनुष्याणामाहारविहारोपचारपरिच्छदाननुविधत्स्वेति वाच्या स्यात् । इत्येतत् सर्वं पुत्राशिषां समृद्धिकरं कर्म व्याख्यातं भवति ॥ १४ ॥

स्थण्डिलं पूजनस्थानम् । वेदीं पिण्डिकाम् । तां पश्चिमेनेति वेदिकायाः पश्चिमे । श्वेतार्षभे वाऽप्यजिने इति श्वेतवृषभचर्मणि वेत्यर्थः । ब्राह्मणप्रयुक्त इति यदि ब्राह्मणेन पुत्रेष्ट्यर्थं प्रयुक्तः स्यात् तदा स ऋत्विक् श्वेतवस्त्रसञ्चये श्वेतवृषभचर्मणि वा उपविशेत् । राजन्यप्रयुक्तस्तु वैयाघ्रादिचर्मणि 'उपविशेत्' इति शेषः । रुरुः हरिणविशेषः । परिधिभिरिति चतुर्भिः पलाशवृक्षदण्डैः । परिधायेति वेष्टयित्वा । पवित्रमेव पूतं मन्त्रेण पवित्रपूतं, तच्चोदपात्रविशेषणम् । उपसंस्कृत्येति तदुदपात्रमेव संस्कारमन्त्रैरुपसंस्कृत्य । सर्पिराज्यार्थमिति नवनीतं घृतार्थं; किंवा सर्पिर्घृतमेव, आज्यार्थमिति मन्त्रपूतघृतकरणार्थम्; आज्यशब्देन मन्त्राभिमन्त्रितं घृतमुच्यते । पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमिति यथा पूर्वेणाग्निर्वामे च ब्राह्मणो भवति तथेत्यर्थः । अनुलभेतेति ऋत्विक्प्रयुक्ता ऋत्विग्विधानमनुकुर्यादित्यर्थः । प्रजापतिमभिनिर्दिश्येति ब्रह्माणमभिमन्त्र्य । योनौ कामपूरणार्थमन्यामिष्टिं निर्वपेत् इष्टिं कुर्यात् । विष्णुर्योनिमित्यादिका इष्टिसाधिका ऋक् । पाकमिति चरुम् । अभिघार्येति मिश्रीकृत्य । यथाम्नायमिति यथावेदम् । किन्तु परिबर्हो वर्णवर्जमिति परिबर्हः शयनासनपुष्पादिपरिच्छदः; तेन यथाविधा पुत्रेच्छा तथावर्णः परिबर्हः कर्तव्य इति वाक्यार्थः । शूद्राविधानमाह—शूद्रा त्वित्यादि । नमस्कारमेव कुर्यादिति शूद्राया मन्त्रे होमे चानधिकारात् नमस्कारमात्रकरणम् ॥ १०–१४ ॥

न खलु केवलमेतदेव कर्म वर्णवैशेष्यकरं भवति । अपि तु तेजोधातुरप्युदकान्तरिक्षधातुप्रायोऽवदातवर्णकरो भवति, पृथिवीवायुधातुप्रायः कृष्णवर्णकरः, समसर्वधातुप्रायः श्यामवर्णकरः ॥ १५ ॥

वर्णविशेषकरं हेत्वन्तरमाह—न तु खल्वित्यादि । तेजोधातुः कृष्णवर्णे श्यामवर्णे च वर्तते ॥ १५ ॥

सत्त्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्त्वान्यन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितं च कर्म सत्त्वविशेषाभ्यासश्चेति ॥ १६ ॥

वर्णविशेषहेतुमभिधाय सत्त्वभेदहेतुमाह—सत्त्वेत्यादि । मातापितृसत्त्वानीति मातापित्रनुकारेण सत्त्वानि प्रायः प्रभावादेव भवन्ति । अन्तर्वत्नी गर्भिणी । श्रुतयश्चाभीक्ष्णमिति यथा गर्भिणी गीतादि शृणोति, तथासत्त्वमपत्यं जनयति । स्वोचितं च कर्मेति गर्भेणोपार्जितं कर्म स्वफलानुरूपं सत्त्वं जनयति । सत्त्वविशेषाभ्यासश्चेति यथाविधं सत्त्वं पुरुषोऽभ्यस्यति जन्मान्तरे तथासत्त्व एव जायते । वचनं हि—"जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नरः"—इति ॥ १६ ॥

यथोक्तेन विधिनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोर्मिश्रीभावमापन्नयोः शुक्रं शोणितेन सह संयोगं समेत्याव्यापन्नमव्यापन्नेन योनावनुपहतायामप्रदुष्टे गर्भाशये गर्भमभिनिर्वर्तयत्येकान्तेन । यथा—निर्मले वाससि सुपरिकल्पिते रञ्जनं समुदितगुणमुपनिपातादेव रागमभिनिर्वर्तयति, तद्वत्; यथा वा क्षीरं दध्नाऽभिषुतमभिषवणाद्विहाय स्वभावमापद्यते दधिभावं, शुक्रं तद्वत् ॥ १७ ॥

संप्रति गर्भोत्पत्तिक्रममाह—यथोक्तेनेत्यादि । यथोक्तेन विधिनेति पञ्चकर्मोक्तेन । रञ्जनं रागद्रव्यम् । दध्यभिषुतमिति दध्ना स्तोकमात्रेण मिश्रितम् । आपद्यते दधिभावमिति दधित्वमापद्यते । तद्वदिति यथा क्षीरं दधि भवति, रञ्जनं रागो वा भवति, तथा शुक्रं गर्भमभिनिर्वर्तयति । शुक्रं यथोक्तं शोणितयुक्तमित्यर्थः ॥ १७ ॥

एवमभिनिर्वर्तमानस्य गर्भस्य स्त्रीपुरुषत्वे हेतुः

१ 'ततोऽनुपरिक्रम्य' इति पा० । २ 'सह भर्त्राऽऽज्यशेषं' इति पा० । ३ स्यातामिति हस्तलिखितपुस्तके न पठ्यते । ४ योगीन्द्रनाथसेनस्त्वमुं पाठं न पठति । ५ 'तानुनुपरिक्रम्य' इति पा० । ६ 'पूजादिस्थलम्' इति पा० । ७ 'पुत्रोत्पत्त्यर्थं' इति पा० ।

१ 'आगमादि' इति पा० ।

पूर्वमुक्तः । यथा हि बीजमनुपतप्तमुप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वं तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयेते ॥ १८ ॥

यथोक्तं हेतुविभागमनुविधीयेते इति "रक्तेन कन्यामधिकेन पुत्रं शुक्रेण" ( शा. अ. २ ) इत्यादिग्रन्थोक्तविभागं स्त्रीपुरुषजनकमनुविधीयेते ॥ १८ ॥

तयोः कर्मणा वेदोक्तेन विवर्तनमुपदिश्यते[1] प्राग्व्यक्तीभावात् प्रयुक्तेन सम्यक् । कर्मणां हि देशकालसंपदुपेतानां नियतमिष्टफलत्वं, तथेतरेषामितरत्वम् । तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग्व्यक्तीभावाद्गर्भस्य पुंसवनमस्यै दद्यात्। गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां संपदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्येण पिबेत्, तथैवापराञ्जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाऽप्युपसंस्कृत्य पयसा, कुड्यकीटकं मत्स्यकं वोदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्, तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णानणुप्रमाणान् दध्नि पयस्युदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण, पुष्येणैव च शालिपिष्टस्य पच्यमानस्योष्माणमुपाघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहल्यामुपनिधाय[2] दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना। यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा स्त्रियः पुंसवनमिष्टं तच्चानुष्ठेयम्। इति पुंसवनानि ॥ १९ ॥

संप्रति स्त्रीत्वे पुरुषत्वे च रक्ताधिकत्वं तथा शुक्राधिकत्वं च पूर्वोक्तं हेतुमनूद्य वैदिकं पुत्रजनकं विधानान्तरमाह—तयोरित्यादि । वेदोक्तेनेति आयुर्वेदोक्तेन । प्राग्व्यक्तीभावादिति यावन्न स्त्रीत्वं पुंस्त्वं वा गर्भस्य व्यक्तं भवति तावदेव तद्वक्ष्यमाणं कर्म लिङ्गपरिवृत्तिकरं[3] भवति । व्यक्तिस्तु द्वितीये मासे भवति; यदुक्तं—"द्वितीये मासे घनः संपद्यते" ( शा. अ. ४ ) इत्यादि; किंवा तृतीये मासे अङ्गप्रत्यङ्गाभिव्यक्तेर्व्यक्तीभावो ज्ञेयः, द्वितीये तु मासे ग्रन्थ्यादिरूपे गर्भे प्रत्यङ्गव्यक्तीभावो न व्यक्तः; तेन वक्ष्यमाणं कर्म मासद्वयं यावत् कर्तव्यम् । प्रयुक्तेनेति पूर्वेण संबध्यते । नियतं निश्चितम् । तथेतरेषामितरत्वमिति कर्मणां देशकालविगुणानामनिष्टफलं निश्चितमित्यर्थः । पुंसवनमिति पुंस्त्वकारकं कर्म । गोष्ठः गवां विश्रामस्थानम् । अत्र च स्थानादिविशेषपरिग्रह एव फलदो भवतीति वचनादुन्नीयते, नात्रासादृशां युक्तयः प्रभवन्ति । धान्यमाषशब्देन व्रीहिमाषं प्राहयन्ति, सुवर्णमाषं च व्यावर्तयन्ति । गौरसर्षपः श्वेतसर्षपः । पुष्येणेति पुष्यनक्षत्रेण । यथेष्टमित्यनेन द्विशस्त्रिशो वा पिबेदित्यपि दर्शयति । कुड्यकीटः 'कवडिगणा'[1] इति ख्यातः; किंवा ज्येष्ठी कुड्यकीटः । जतूकर्णेऽप्यत्र प्रयोगे 'भित्तिमत्स्यः' इति पठ्यते, भित्तिमत्स्यशब्देन च पाश्चात्त्ये 'ज्येष्ठी' उच्यते । मत्स्यकः ह्रस्वमत्स्यः । देहली गृहद्वाराधःकाष्ठं, तत्रोपनिधाय 'शिर' इति शेषः; किंवा आत्मानमेव देहल्यामुपनिधायेति मन्तव्यम् । यदुक्तं जतूकर्णे—"देहल्यामासीना" इति ॥ १९ ॥

अत ऊर्ध्वं गर्भस्थापनानि व्याख्यास्यामः—ऐन्द्री ब्राह्मी शतवीर्या सहस्रवीर्याऽमोघाऽव्यथा शिवाऽरिष्टा वाट्यपुष्पी विष्वक्सेनकान्ता चेत्यासामोषधीनां शिरसा दक्षिणेन वा पाणिना धारणं, एताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम्, एताभिश्चैव पुष्ये पुष्ये स्नानं, सदा च ताः[2] समालभेत । तथा सर्वासां जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिः । इति गर्भस्थापनानि व्याख्यातानि भवन्ति ॥ २० ॥

संप्रति स्थितस्य गर्भस्य गर्भोपघातैकभावप्रभावखण्डकत्वेन[3] यत् पुनः स्थितिकारकं तद्गर्भस्थापनमुच्यते—अत ऊर्ध्वमित्यादिना । ऐन्द्री गोरक्षकर्कटी । शतवीर्यासहस्रवीर्ये दूर्वाद्वयम् । अमोघा पाटला । अव्यथा गुडूची । अरिष्टा कटुरोहिणी । वाट्यपुष्पी पीतबला । विष्वक्सेनकान्ता प्रियङ्गुः ॥ २० ॥

गर्भोपघातकरास्त्विमे भावा भवन्ति; तद्यथा—उत्कटविषमकठिनासनसेविन्या[4] वातमूत्रपुरीषवेगानुपरुन्धत्या दारुणानुचितव्यायामसेविन्यास्तीक्ष्णोष्णातिमात्रसेविन्याः प्रमिताशनसेविन्या गर्भो म्रियतेऽन्तः कुक्षेः, अकाले वा स्रंसते, शोषी वा भवति; तथाऽभिघातप्रपीडनैः श्वभ्रकूपप्रपातदेशावलोकनैर्वाऽभीक्ष्णं मातुः प्रपतत्यकाले गर्भः, तथाऽतिमात्रसंक्षोभिभिर्यानैर्यानेन, अप्रियातिमात्रश्रवणैर्वा । प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्टयति, विवृतशायिनी नक्तंचारिणी चोन्मत्तं जनयति, अपस्मारिणं पुनः कलिकलहशीला, व्यवायशीला दुर्वपुषमह्रीकं स्त्रैणं वा, शोकनित्या भीतमपचितमल्पायुषं वा, अभिध्यात्री[5] परोपतापिनमीर्ष्युं स्त्रैणं वा, स्तेना

१ 'विवर्तनम् अन्यथात्वेन प्रवर्तनम्' इति गङ्गाधरः । २ 'देहलीमुपधाय' इति पा० । ३ 'लिङ्गपरावृत्तिकारकम्' इति पा० ।

१ 'करडिकाणा' इति पा० । २ 'सदा चैताभिः' इति पा० । ३ 'गर्भोपघातकभावखण्डकत्वेन' इति पा० । ४ 'उत्कटविषमस्थानकठिनासनसेविन्याः' इति पा० । ५ 'अभिध्यायिनी' इति पा० ।

त्वायासबहुलमतिद्रोहिणमकर्मशीलं वा, अमर्षिणी चण्डमौपधिकमसूयकं वा, स्वप्ननित्या तन्द्रालुमबुधमल्पाग्निं वा, मद्यनित्या पिपासालुमल्पस्मृतिमनवस्थितचित्तं वा, गोधामांसप्राया शार्करिणमश्मरिणं शनैर्मेहिणं वा, वराहमांसप्राया रक्ताक्षं क्रथनमतिपरुषरोमाणं वा, मत्स्यमांसनित्या चिरनिमेषं स्तब्धाक्षं वा, मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा, अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा, लवणनित्या शीघ्रवलीपलितं खालित्यरोगिणं वा, कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा, तिक्तनित्या शोषिणमबलमनुपचितं वा, कषायनित्या श्यावमानाहिनमुदावर्तिनं वा, यद्यच्च यस्य यस्य व्याधेर्निदानमुक्तं तत्तदासेवमानाऽन्तर्वत्नी तन्निमित्तविकारबहुलमपत्यं जनयति। पितृजास्तु शुक्रदोषा मातृजैरपचारैर्व्याख्याताः। इति गर्भोपघातकरा भावा भवन्त्युक्ताः। तस्मादहितानाहारविहारान् प्रजासंपदमिच्छन्ती स्त्री विशेषेण वर्जयेत्। साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्यामिति॥ २१॥

बालस्याचिरजातस्यापि गर्भव्यपदेशो भवति, तेन कुक्षेर्बहिरपि मैरणसद्भावे अन्तःकुक्षेरिति विशेषणमुपपन्नम्। प्रततोत्तानशायिनी उत्तानशयनशीला। विवृते अनावृते देशे शयनशीला विवृतशायिनी। विवृतशायिनी तथा नक्तचारिणी च रक्षःप्रभृतिभूताभिगमनीया भवति; ततश्च भूतैरभिभूतो गर्भ उन्मत्तो भवतीति युक्तम्। कलिः वाचिकः, कलहस्तु शारीरकः। क्लैब्यं क्लीवत्वम्। अभिध्यात्री मनसा द्रोहणशीला। औपधिकं छद्मप्रचारिणम्। क्रथनम् अकस्मादुच्छ्वासावरोधः, तद्वानपि 'क्रथन'इत्युच्यते। मधुरनित्येह गर्भिणीविहितं क्षीरं विहायान्यमधुरानुसेविनी बोद्धव्या; क्षीरस्य तु विहितत्वेन प्राशस्त्यम्। तत्र षण्णामपि रसानामत्यर्थोपयोगे दोषमभिधाय यत् पुनर्मधुरादीनामत्यर्थसेवने पृथग्दोषं ब्रूते, तद्द्रव्यप्रभावस्य दोषविशेषाभिधानार्थमिति ज्ञेयम्। यद्वस्तुसेवया ये विकारा इह गर्भस्योचितनिदाना दृश्यन्ते ते तावदुचितोत्पादा एव। यथा—निद्रातिसेवया तन्द्रालुः, मधुरसेवया मेही, अम्लेन रक्तपित्तादियुक्त इत्यादि। ये तु हेत्वसदृशा विकारा गर्भस्य दृश्यन्ते, यथा—गोधामांसेन शर्कराश्मरीत्यादि, तेऽपि द्रव्यप्रभावादेव ज्ञेयाः। यद्यपि गर्भग्रहणात् प्रागपि स्त्रिया अपथ्यसेवाऽऽर्तवदुष्टिद्वारा गर्भे विकारं जनयति, तथा पुरुषस्यापथ्यसेवा शुक्रदुष्टिद्वारा गर्भे दुष्टिं जनयतीति इहैव 'पितृजास्तु' इत्यादिना ग्रन्थेन वक्तव्यं, तथाऽपि गृहीतगर्भायाः स्त्रिया अपचारविशेषेणाव्यवधानाद्गर्भदुष्टिकरा भवन्तीति कृत्वा 'तत्तदासेवमानाऽन्तर्वत्नी' इत्युक्तम्। मातृजैरपचारैर्व्याख्याता इति यथा मातुरपचारानुरूपा गर्भव्याधयो भवन्ति; एवं पितुरपि व्यवायात् प्रागपचारेण शुक्रदुष्ट्याऽपचारानुरूपा व्याधयो भवन्तीत्यर्थः। स्त्री विशेषेणेत्यनेन पुरुषोऽपि वर्जयेदिति दर्शयति। साध्वाचारेति मङ्गलाचारशीला॥ २१॥

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत्, न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेत्, न रक्तमवसेचयेत्, सर्वकालं च नास्थापनमनुवासनं वा कुर्यादन्यत्रात्ययिकाद्व्याधेः। अष्टमं मासमुपादाय वमनादिसाध्येषु पुनर्विकारेष्वात्ययिकेषु मृदुभिर्वमनादिभिस्तदर्थकारिभिर्वोपचारः स्यात्। पूर्णमिव तैलपात्रमसंक्षोभयताऽन्तर्वत्नी भवत्युपचर्या॥ २२॥

सा चेदपचाराद् द्वयोस्त्रिषु वा मासेषु पुष्पं पश्येन्नास्या गर्भः स्थास्यतीति विद्यात्; अजातसारो हि तस्मिन् काले भवति गर्भः॥ २३॥

सा चेच्चतुष्प्रभृतिषु मासेषु क्रोधशोकासूयेर्ष्याभयत्रासव्यवायव्यायामसंक्षोभसंधारणविषमाशनशयनस्थानक्षुत्पिपासातियोगात् कदाहाराद्वा पुष्पं पश्येत्, तस्या गर्भस्थापनविधिमुपदेक्ष्यामः। पुष्पदर्शनादेवैनां ब्रूयात्—शयनं तावन्मृदुसुखशिशिरास्तरणसंस्तीर्णमीषदवनतशिरस्कं प्रतिपद्यस्वेति। ततो यष्टीमधुकसर्पिर्भ्यां परमशिशिरवारिणि संस्थिताभ्यां पिचुमाप्लाव्योपस्थसमीपे स्थापयेत्तस्याः, तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्यामधोनाभेः सर्वतः प्रदिह्यात्, सर्वतश्च गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा न्यग्रोधादिकषायेण वा परिषेचयेदधो नाभेः, उदकं वा सुशीतमवगाहयेत्, क्षीरिणां कषायद्रुमाणां च स्वरसपरिपीतानि चेलानि ग्राहयेत्, न्यग्रोधादिशुङ्गासिद्धयोर्वा क्षीरसर्पिषोः पिचुं ग्राहयेत्, अतश्चैवाक्षमात्रं प्राशयेत्, प्राशयेद्वा केवलं क्षीरसर्पिः, पद्मोत्पलकुमुदकिञ्जल्कांश्चास्यै समधुशर्करान् लेहार्थं दद्यात्, शृङ्गाटकपुष्करबीजकशेरुकान् भक्षणार्थं, गन्धप्रियङ्ग्वसितोत्पलशालूककोदुम्बरशलाटुन्यग्रोधशुङ्गानि वा पाययेदेनामाजेन पयसा, पयसा चैनां बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन समधुशर्करं रक्तशालीनामोदनं मृदुसुरभिशीतलं भोजयेत्, लावकपिञ्जलकुरङ्गशम्बरशशहरिणैणकालपुच्छकरसेन वा घृतसुसंस्कृतेन सुखशिशिरोपवातदेशस्थां भोजयेत्, क्रोधशोकायासव्य-

१ 'गोधामांसप्रिया' इति पा०। २ 'व्याख्याताः' इति पा०। ३ 'गर्भमरणसद्भावे' इति पा०। ४ 'शारीरकलहः' इति पा०।

१ 'असंक्षोभ्यान्तर्वत्नी' इति पा०। २ 'तैलानि' इति पा०।

वायव्यायामेभ्यश्चाभिरक्षेत्, सौम्याभिश्चैनां कथाभिर्मनोनुकूलाभिरुपासीत; तथाऽस्या गर्भस्तिष्ठति ॥ २४ ॥

मृदुभिर्वमनादिभिरिति मृदुद्रव्यकृतैरल्पमात्रैश्च वमनादिभिरित्यर्थः । तदर्थकारिभिर्वेति यथा वमनार्थकारि निष्ठीवनं, विरेचनार्थकारिणी फलवर्तिः, इत्यादिभिरुपचारः कर्तव्यः । संधारणं वेगसंधारणम् । कदाहारः कुत्सिताहारः । शिशिरं शीतम् । यष्टीमधुकसिद्धं सर्पिः यष्टीमधुकसर्पिः । चेलानि ग्राहयेदित्यत्र 'योनिं' इति शेषः । अतश्चैवेति न्यग्रोधादिशुङ्गात् । किंवा 'क्षीरसर्पिषः' इत्यस्मिन् पाठे क्षीरोत्थितं सर्पिः क्षीरसर्पिः ॥ २२—२४ ॥

यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात्, प्रायस्तस्यास्तद्गर्भोपघातकरं भवति, विरुद्धोपक्रमत्वात्तयोः ॥ २५ ॥

यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति संजातसारे गर्भे पुष्पदर्शनं स्यादन्यो वा योनिस्रावस्तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात्; स कालमवतिष्ठतेऽतिमात्रं, तमुपविष्टकमित्याचक्षते केचित् । उपवासव्रतकर्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वातप्रकोपणोक्तान्यासेवमानाया गर्भो वृद्धिं न प्राप्नोति परिशुष्कत्वात्; स चापि कालमवतिष्ठतेऽतिमात्रम्, अस्पन्दनश्च भवति, तं तु नागोदरमित्याचक्षते ॥ २६ ॥

आमान्वयादिति आमजनकहेतोः सकाशादित्यर्थः । विरुद्धोपक्रमत्वादिति गर्भस्रावे हि स्तम्भनं कर्तव्यं, तच्च शीतं मृदु मधुरं च; तच्चामविरुद्धम्, आमजनकत्वात्; इति विरुद्धोपक्रमता । अन्यो वेति आर्तवलक्षणव्यतिरिक्तः । यद्यपि केचिदित्युक्तं, तथाऽप्यप्रतिषेधादाचार्यस्याप्येतत् संमतम् ॥ २५ ॥ २६ ॥

नार्योस्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः—भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धानां सर्पिषां पयसामामगर्भाणां चोपयोगो गर्भवृद्धिकरः; तथा संभोजनमेतैरेव सिद्धैश्च घृतादिभिः सुभिक्षायाः, अभीक्ष्णं यानवाहनापमार्जनावजृम्भणैरुपपादनमिति ॥ २७ ॥

यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते तां श्येनमत्स्यगवयशिखिताम्रचूडतित्तिरिणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा मूलकयूषेण वा रक्तशालीनामोदनं मृदुमधुरशीतलं भोजयेत् । तैलाभ्यङ्गेन चास्या अभीक्ष्णमुदरवस्तिवंक्षणोरुकटीपार्श्वपृष्ठप्रदेशानीषदुष्णेनोपचरेत् ॥ २८ ॥

यस्याः पुनरुदावर्तविबन्धः स्यादष्टमे मासे न चानुवासनसाध्यं मन्येत ततस्तस्यास्तद्विकारप्रशमनमुपकल्पयेन्निरूहम् । उदावर्तो ह्युपेक्षितः सहसा सगर्भां गर्भिणीं गर्भमथवाऽतिपातयेत् । तत्र वीरणशालिषष्टिककुशकाशेक्षुवालिकावेतसपरिव्याधमूलानां भूतीकानन्ताकाश्मर्यपरूषकमधुकमृद्वीकानां च पयसाऽर्धोदकेनोद्गमय्य रसं प्रियालबिभीतकमज्जतिलकल्कसंप्रयुक्तमीषल्लवणमनत्युष्णं च निरूहं दद्यात् । व्यपगतविबन्धां चैनां सुखसलिलपरिषिक्ताङ्गीं स्थैर्यकरमविदाहिनमाहारं भुक्तवतीं सायं मधुरकसिद्धेन तैलेनानुवासयेत् । न्युब्जां त्वेनामास्थापनानुवासनाभ्यामुपचरेत् ॥ २९ ॥

चिकित्सितविशेषमित्यत्र विशेषशब्देन गर्भव्याध्यन्तरापेक्षया चिकित्सितविशेषो ज्ञेयः; उपविष्टकनागोदरयोस्तु विशिष्टैवेह चिकित्सा वक्तव्या; किंवा 'यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते' इत्यादिना योऽवस्थायां विशेषो वक्तव्यस्तमपेक्ष्योक्तं—चिकित्सितविशेषमिति । भौतिकं भूतोपघातहितं वचागुग्गुल्वादि; किंवा महापैशाचिकं घृतं वक्ष्यमाणं द्रष्टव्यम् । सुभिक्षाया इति सुबुभुक्षायाः । न चानुवासनसाध्यं मन्येतेति सामत्वादुदावर्तस्य नानुवासनसाध्यता भवतीति ज्ञेयम् । तद्विकारप्रशमनमिति उदावर्तप्रशमनमित्यर्थः । तदुदावर्तप्रशमनं निरूहमाह—तत्रेत्यादि । परिव्याधो वेतसभेदः । उद्गमय्य रसमिति क्वाथं निष्पाद्य । क्वाथादिपरिमाणं च निरूहपरिमाणपरिभाषयैव कर्तव्यम् । न्युब्जामिति अधोमुखीम् ॥ २७–२९ ॥

यस्याः पुनरतिमात्रदोषोपचयाद्वा तीक्ष्णोष्णातिमात्रसेवनाद्वा वातमूत्रपुरीषवेगविधारणैर्वा विषमाश(स)नशयनस्थानसंपीडनाभिघातैर्वा क्रोधशोकेर्ष्याभयत्रासादिभिर्वा साहसैर्वाऽपरैः कर्मभिरन्तःकुक्षेर्गर्भो म्रियते, तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः, शूलमधिकमुपजायते, न चाव्यः प्रादुर्भवन्ति, योनिर्न प्रस्रवति, अक्षिणी चास्याः स्रस्ते भवतः, ताम्यति, व्यथते, भ्रमते, श्वसिति, अरतिबहुला च भवति, न चास्या वेगप्रादुर्भावो यथावदुपलभ्यते; इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात् ॥ ३० ॥

अश्मान्तर्गतमिवेति अन्तर्गतप्रस्तरमिवेत्यर्थः । आवी प्रसवकालशूलम् ॥ ३० ॥

तस्य गर्भशल्यस्य जरायुप्रपातनं कर्म संशमनमित्याहुरेके, मन्त्रादिकमथर्ववेदविहितमित्येके, परिदृष्टकर्मणा शल्यहर्त्रा हरणमित्येके । व्यपगतगर्भशल्यां तु स्त्रियमामगर्भां सुरासीध्वरिष्टमधुमदिरासवानामन्यतममग्रे सामर्थ्यतः पाययेद्गर्भकोष्ठशु-

१ 'कालान्तरं' इति पा० । २ 'सुबुभुक्षायां' इति पा० ।

१ 'गर्भं सगर्भां गर्भिणीं वा निपातयेत्' इति पा० । २ 'अन्तःकुक्षौ' इति पा० ।

द्ध्यर्थमर्तिविस्मरणार्थं प्रहर्षणार्थं च, अतः परं संप्रीणनैर्बलानुरक्षिभिरस्नेहसंप्रयुक्तैर्यवाग्वादिभिर्वा तत्कालयोगिभिराहारैरुपचरेद्दोषधातुक्लेदविशोषणमात्रं कालम् । अतः परं स्नेहपानैर्बस्तिभिराहारविधिभिश्च दीपनीयजीवनीयबृंहणीयमधुरवातहरसमाख्यातैरुपचरेत् । परिपक्वगर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहोपचारः स्यात् ॥ ३१ ॥

'एके' इति वचनेन अप्रतिषेधेन च जरायुपातनकर्मादीनां त्रयाणामपि मृतगर्भापहरणं प्रति सम्यक्साधनता नास्तीति दर्शयति । दोषधातुक्लेदविशोषणमात्रं कालमित्यनेन दोषधातुक्लेदविशोषणावधितां यथोक्तक्रमस्य दर्शयति ॥ ३१ ॥

परमतो निर्विकारमाप्याय्यमानस्य गर्भस्य मासे मासे कर्मोपदेक्ष्यामः । प्रथमे मासे शङ्किता चेद्गर्भमापन्ना क्षीरमनुपस्कृतं मात्रावच्छीतं काले काले पिबेत्, सात्म्यमेव च भोजनं सायं प्रातश्च भुञ्जीत; द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धं; तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य; चतुर्थे मासे क्षीरनवनीतमक्षमात्रमश्नीयात्; पञ्चमे मासे क्षीरसर्पिः; षष्ठे मासे क्षीरसर्पिर्मधुरौषधसिद्धं; तदेव सप्तमे मासे । तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते; तन्नेति भगवानात्रेयः, किन्तु गर्भोत्पीडनाद्वातपित्तश्लेष्माण उरः प्राप्य विदाहं जनयन्ति, ततः कण्डूरुपजायते, कण्डूमूला च किक्किसावाप्तिर्भवति । तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रं काले कालेऽस्यै पानार्थं दद्यात्, चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्नीयात्, शिरीषधातकीसर्षपमधुकचूर्णैर्वा, कुटजार्जकबीजमुस्तहरिद्राकल्कैर्वा, निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा, पृषतहरिणशशरुधिरयुतया त्रिफलया वा; करवीरपत्रसिद्धेन तैलेनाभ्यङ्गः; परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा; जातकण्डूश्च कण्डूयनं वर्जयेत्त्वग्भेदवैरूप्यपरिहारार्थम्, असह्यायां तु कण्डूवामुन्मर्दनोद्घर्षणाभ्यां परिहारः स्यात्; मधुरमाहारजातं वातहरमल्पमस्नेहलवणमल्पोदकानुपानं च भुञ्जीत । अष्टमे तु मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत्; तन्नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेदिति; अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्वसुरात्रेयः, न त्वेवैतन्न कार्यम्; एवं कुर्वती ह्यरोगाऽऽरोग्यबलवर्णस्वरसंहननसंपदुपेतं ज्ञातीनामपि श्रेष्ठमपत्यं जनयति । नवमे तु खल्वेनां मासे मधुरौषधसिद्धेन तैलेनानुवासयेत् । अतश्चैवास्यास्तैलात् पिचुं योनौ प्रणयेद्गर्भस्थानमार्गस्नेहनार्थम् । यदिदं कर्म प्रथमं मासं समुपादायोपदिष्टमानवमान्मासात्तेन गर्भिण्या गर्भसमये गर्भधारिणीकुक्षिकटीपार्श्वपृष्ठं मृदूभवति, वातश्चानुलोमः संपद्यते, मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गमनुपद्येते, चर्मनखानि च मार्दवमुपयान्ति, बलवर्णौ चोपचीयेते; पुत्रं चेष्टं संपदुपेतं सुखिनं सुखेनैषा काले प्रजायत इति ॥ ३२ ॥

गर्भस्य प्रतिमासिकं कर्माह—परमत इत्यादि । तन्नेति भगवानात्रेय इति युगपदेव तृतीये मासेऽङ्गप्रत्यङ्गनिष्पत्तेः केशा अपि तदैव जाताः क्रमेण वर्धन्ते न सप्तमे मासे इति भावः अथ कथं तर्हि सप्तमे मासि विशेषेण कण्डूर्भवतीत्याह—गर्भोत्पीडनादित्यादि । किक्किसः चर्मविदरणम् । स्तनावुदरं च स्तनोदरम् । कोलं बदरी । परिहारः 'कण्ड्वाः' इति शेषः । पैङ्गल्यं पिङ्गलनेत्रता । सा च यद्यपि पित्तकृता, यदुक्तं शालाक्ये— "पित्तेऽत्यर्थप्रदुष्टे तु नेत्रयोः पिङ्गलाक्षिता" इति; तथाऽपीहाष्टममासीयगर्भे क्षीरयवाग्वाहारसंबन्धप्रभावादेव पैङ्गल्यं भवतीति ज्ञेयम् । न त्वेवैतच्च कार्यमिति पैङ्गल्यस्याल्पदोषत्वादुत्तरकालं सुकरप्रतिक्रियत्वाच्च क्षीरयवाग्ववचारणे बहुगुणलाभात् कर्तव्यमेव क्षीरयवागूसेवनमिति भावः । अतश्चैवेति मधुरौषधसिद्धतैलात् । गर्भधारिणी अपरा । अत्र पुत्रमिति प्रशस्तत्वेनोक्तं, तेन कन्यां चेति बोद्धव्यम्; अतो न प्रतिमासीयेन कर्मणा पुत्रजन्मैव परं भवतीति व्याकृतम् ॥ ३२ ॥

प्राक् चैवास्या नवमान्मासात् सूतिकागारं कारयेदपहृतास्थिशर्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा बैल्वानां काष्ठानां तैन्दुकैङ्गुदकानां भाल्लातकानां वार(रु)णानां खादिराणां वा; यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदस्तेषां; वसनालेपनाच्छादनापिधानसंपदुपेतं वास्तुविद्याहृदययोगाग्निसलिलोदूखलवर्चःस्थानस्नानभूमिमहानससमृतुसुखं च ॥ ३३ ॥

यत्र गर्भिणी प्रसूता यत्र च तिष्ठति तत् सूतिकागारमुच्यते । बिल्वादीनां काष्ठानामगारं कारयेदिति संबन्धः । वारणः पुन्नागः, वरुणो वा । वसनं वस्त्रम्, आच्छादनम् आस्तरणम्, अपिधानं कपाटम् । वास्तुविद्याहृदयं वास्तुविद्यातत्त्वं, तद्योगादग्न्यादीनां स्थानं यत्र गृहे तत्तथा; वास्तुविन्मतेन विभक्ताग्न्यादिस्थानं तद्गृहं कर्तव्यमित्यर्थः । वर्तमानर्तुमपेक्ष्य सुखमृतुसुखम् ॥ ३३ ॥

तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकालविडल-

१ 'बृंहणैः' इति पा० ।

१ 'गर्भधारणे' इति पा० । २ 'सुखप्रतिक्रियत्वाच्च' इति पा० ।

वणविडङ्गकुष्ठकिलिमनागरपिप्पलीपिप्पलीमूलहस्तिपिप्पलीमण्डूकपर्ण्येलालाङ्गलीवचाचव्यचित्रकचिरबिल्वहिङ्गुसर्षपलशुनकतककणकणिकानीपातसीवल्वजभूर्जकुलत्थमैरेयसुरासवाः सन्निहिताः स्युः; तथाऽश्मानौ द्वौ, द्वे कु(च)ण्डमुसले, द्वे उदूखले, खरवृषभश्च, द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ, शस्त्राणि च तीक्ष्णायसानि, द्वौ च बिल्वमयौ पर्यङ्कौ, तैन्दुकैङ्गुदानि च काष्ठान्यग्निसन्धुक्षणानि, स्त्रियश्च बह्व्यो बहुशः प्रजाताः सौहार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिन्योऽभिमताः, ब्राह्मणाश्चाथर्ववेदविदः; यच्चान्यदपि तत्र समर्थं मन्येत, यच्चान्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत् कार्यम् ॥ ३४ ॥

सर्पिस्तैलादीनां चात्र गृहे स्थापनीयानां वक्तव्य एव तावदुपयोगः; बहुत्वेन येषां तु न वक्तव्यस्तेपामप्ययमुपयोग उन्नेयः। किलिमं देवदारु। कणः 'कुण्डक' इति ख्यातः; कणिका तु कुण्डकात् स्थूलास्तण्डुलावयवा उच्यन्ते। तण्डुला येन कुट्यन्ते तन्मुसलम्। कुण्डमुसले इति ह्रस्वमुसले, किंवा 'चण्डमुसले' इति पाठः; तदा गुरुतरमुसले इत्यर्थः। यद्यपि मुसलग्रहणं निषिद्धं, तथाऽप्युत्तरकालं द्वारे मुसलस्थापनं वक्तव्यमिति साधु मुसलोपादानम्। सूच्याकारे शस्त्रे सूचीपिप्पलकौ; किंवा सूची यत्र स्थाप्यते स सूचीपिप्पलकः। पर्यङ्कः खट्वा। समर्थं मन्येतेति उपयुक्तं मन्येत ॥ ३४ ॥

ततः प्रवृत्ते नवमे मासे पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते प्रशस्ते भगवति शशिनि कल्याणे कल्याणे च करणे मैत्रे मुहूर्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकं चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वोदकपूर्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत्। ततः पुण्याहशब्देन गोब्राह्मणं समनुवर्तमाना प्रदक्षिणं प्रविशेत् सूतिकागारम्। तत्रस्था च प्रसवकालं प्रतीक्षेत ॥ ३५ ॥

शान्तिं कृत्वेति शान्तिहोमं कृत्वा। नान्दीमुखानि च फलानि नान्दीमुखश्राद्धाय हितानि फलानि; किंवा नान्दी मुरजः, तन्मुखाकृतीनि फलानि खर्जूरादीनि। पुण्याहशब्दो मङ्गलशब्दः। प्रदक्षिणं यथा भवति तथा गोब्राह्मणं समनुवर्तमाना ॥ ३५ ॥

तस्यास्तु खल्विमानि लिङ्गानि प्रजननकालमभितो भवन्ति; तद्यथा—क्लमो गात्राणां, ग्लानिराननस्य, अक्ष्णोः शैथिल्यं, विमुक्तबन्धनत्वमिव वक्षसः, कुक्षेरवस्रंसनम्, अधोगुरुत्वं, वंक्षणबस्तिकटीकुक्षिपार्श्वपृष्ठनिस्तोदः, योनेः प्रस्रवणम्, अनन्नाभिलाषश्चेति; ततोऽनन्तरमावीनां प्रादुर्भावः, प्रसेकश्च गर्भोदकस्य ॥ ३६ ॥

आवीप्रादुर्भावे तु भूमौ शयनं विदध्यान्मृद्वास्तरणोपपन्नम्। तदध्यासीतैनां सा। तां ततः समन्ततः परिवार्य यथोक्तगुणाः स्त्रियः पर्युपासीरन्नाश्वासयन्त्यो वाग्भिर्ग्राहिणीयाभिः सान्त्वनीयाभिश्च॥३७॥

सा चेदावीभिः संक्लिश्यमाना न प्रजायेतार्थैनां ब्रूयात्—उत्तिष्ठ, मुसलमन्यतरं गृह्णीष्व, अनेनैतदुलूखलं धान्यपूर्णं मुहुर्मुहुरभिजहि मुहुर्मुहुरवजृम्भस्व चङ्क्रमस्व चान्तराऽन्तरेति; एवमुपदिशन्त्येके। तन्नेत्याह भगवानात्रेयः। दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते, विशेषतश्च प्रजननकाले प्रचलितसर्वधातुदोषायाः सुकुमार्या नार्या मुसलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यात्, दुष्प्रतीकारतमा हि तस्मिन् काले विशेषेण भवति गर्भिणी; तस्मान्मुसलग्रहणं परिहार्यमृषयो मन्यन्ते, जृम्भणं चङ्क्रमणं च पुनरनुष्ठेयमिति। अथास्यै दद्यात् कुष्ठैलालाङ्गलिकीवचाचित्रकचिरबिल्वचव्यचूर्णमुपघ्रातुं, सा तन्मुहुर्मुहुरुपजिघ्रेत्, तथा भूर्जपत्रधूमं शिंशपासारधूमं वा। तस्याश्चान्तराऽन्तरा कटीपार्श्वपृष्ठसक्थिदेशानीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्नीयात्। अनेन कर्मणा गर्भोऽवाक् प्रतिपद्यते ॥ ३८ ॥

स यदा जानीयाद्विमुच्य हृदयमुदरमस्यास्त्वाविशति, बस्तिशिरोऽवगृह्णाति, त्वरयन्त्येनामाव्यः, परिवर्ततेऽधो गर्भ इति; अस्यामवस्थायां पर्यङ्कमेनामारोप्य प्रवाहयितुमुपक्रमेत। कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत्—

'क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः।
सगर्भां त्वां सदा पान्तु वैशल्यं च दिशन्तु ते ॥
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम्' इति॥३९॥

ताश्चैनां यथोक्तगुणाः स्त्रियोऽनुशिष्युः—अनागतावीर्मा प्रवाहिष्ठाः; या ह्यनागतावीः प्रवाहते व्यर्थमेवास्यास्तत् कर्म भवति, प्रजा चास्या विकृता विकृतिमापन्ना च, श्वासकासशोषप्लीहप्रसक्ता वा

१ 'खरो वृषभश्च' इति पा०। २ 'व्यक्तः' इति पा०। ३ 'अन्वावर्तमाना प्रविशेद' इति पा०। ४ 'तुलेति' इति पा०। ५ 'अन्वावर्तमाना' इति पा०।

१ 'अक्ष्णोर्विमुक्तबन्धनत्वमिव' इति पा०। २ 'तदध्यासीनां तां ततः' इति पा०। ३ 'ग्राहिणीयाभिरुपदिष्टवदर्थाभिधायिनीभिः' इति पा०। ४ 'अनुसुखं' इति पा०। ५—६ 'अवाग्गर्भः' इति पा०। ७ 'इन्द्रः' इति पाठः। ८ 'यद्यनागतावीः' इति पा०।

भवति। यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान् प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण वाऽप्यवाप्नोति, तथाऽनागतकालं गर्भमपि प्रवाहमाणा; यथा चैषामेव क्षवथ्वादीनां सन्धारणमुपघातायोपपद्यते, तथा प्राप्तकालस्य गर्भस्याप्रवाहणमिति। सा यथानिर्दिष्टं कुरुष्वेति वक्तव्या स्यात्। तथा च कुर्वती शनैः पूर्वं प्रवाहेत, ततोऽनन्तरं बलवत्तरम्। तस्यां च प्रवाहमाणायां स्त्रियः शब्दं कुर्युः—'प्रजाता प्रजाता धन्यं धन्यं पुत्रम्' इति। तथाऽस्या हर्षेणाप्याय्यन्ते प्राणाः ॥ ४० ॥

उपदेष्टव्यार्थाभिधायिनी वाक् ग्राहणीया। अवजृम्भस्वेति गात्राणि प्रसारयस्व। अन्तरं लब्ध्वेति हेतुमासाद्य ॥ ३६-४० ॥

यदा च प्रजाता स्यात्तदैवैनामवेक्षेत—काचिदस्या अपरा प्रपन्ना न वेति। तस्याश्चेदपरा न प्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवन्निपीड्य सव्येन पाणिना पृष्ठत उपसंगृह्य तां सुनिर्धूतं निर्धुनुयात्। अथास्याः पार्ष्ण्या श्रोणीमाकोटयेत्। अस्याः स्फिचावुपसंगृह्य सुपीडितं पीडयेत्। अथास्या बालवेण्या कण्ठतालु परिमृशेत्। भूर्जपत्रकाचमणिसर्पनिर्मोकैश्चास्या योनिं धूपयेत्। कुष्ठतालीसकल्कं बल्वजयूषे मैरेयसुरामण्डे तीक्ष्णे कौलत्थे वा यूषे मण्डूकपर्णीपिप्पलीसंपाके वा संप्लाव्य पाययेदेनाम्। तथा सूक्ष्मैलाकिलिमकुष्ठनागरविडङ्गपिप्पलीकालागुरुचव्यचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य वा जीवतो दक्षिणं कर्णमुत्कृत्य दृषदि जर्जरीकृत्य बल्वजक्वाथादीनामाप्लावनानामन्यतमे प्रक्षिप्याप्लाव्य मुहूर्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम्। शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत्। अतश्चैवानुवासयेत्। एतैरेव चाप्लावनैः फलजीमूतेक्ष्वाकुधामार्गवकुटजकृतवेधनहस्तिपिप्पल्युपहितैरास्थापयेत्। तदास्थापनमस्याः सह वातमूत्रपुरीषैर्निर्हरत्यपरामासक्तां वायोरेवाप्रतिलोमगत्वात्। अपरां हि वातमूत्रपुरीषाण्यन्यानि चान्तर्बहिर्मार्गाणि सज्जन्ति ॥ ४१ ॥

सुनिर्धूतमिति क्रियाविशेषणम्। आकोटयेदिति पीडयेत्। बालकृता वेणी बालवेणी। बल्वजयूषः बल्वजक्वाथः। मण्डूकपिप्पली मण्डूकपर्णी; किंवा मण्डूका मण्डूकपर्णी, पिप्पली पिप्पल्येव, तयोः संपाकः क्वाथ इत्यर्थः। तथेत्यनेन बल्वजयूषादौ सूक्ष्मैलादीनां पानं विधीयते। खरवृषभश्चण्ड-बलीबर्दः। एतैरेव चेति बल्वजयूषादिभिः। अन्तर्बहिर्मार्गाणि सज्जन्तीति बहिर्गमनशीलानि पुरीषादीनि, अन्तः अभ्यन्तरदेशे संसक्तानि भवन्ति ॥ ४१ ॥

तस्यास्तु खल्वपरायाः प्रपतनार्थे कर्मणि क्रियमाणे जातमात्रस्यैव कुमारस्य कार्याण्येतानि कर्माणि भवन्ति; तद्यथा—अश्मनोः संघट्टनं कर्णयोर्मूले, शीतोदकेनोष्णोदकेन वा मुखपरिषेकः, तथा स क्लेशविहतान् प्राणान् पुनर्लभेत। कृष्णकपालिकाशूर्पेण चैनमभिनिष्पुणीयुर्यद्यचेष्टः स्याद् यावत् प्राणानां प्रत्यागमनम् ( तत्तत् सर्वमेव कार्यम् )। ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणाभ्यामुपपादयेत् ॥ ४२ ॥

अथास्य ताल्वोष्ठकण्ठजिह्वाप्रमार्जनमारभेताङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानकार्पासपिचुमत्या। प्रथमं प्रमार्जितास्यस्य चास्य शिरस्तालु कार्पासपिचुना स्नेहगर्भेण प्रतिसंछादयेत्। ततोऽस्यानन्तरं सैन्धवोपहितेन सर्पिषा कार्यं प्रच्छर्दनम् ॥ ४३ ॥

शीतोदकेनोष्णोदकेन वेति विकल्पो ऋतुभेदेन ज्ञेयः; ग्रीष्मकाले शीतोदकेन, शीतकाले तूष्णोदकेनेत्यर्थः। क्लेशविहतानिति योनियन्त्रपीडनादिक्लेशपराहतान्। कृष्णकपालिका ईषिका नलमुञ्जवंशादिभवा, तत्कृतः शूर्पः कृष्णकपालिकाशूर्पः; तेन निष्पुणीयुः वीजयेयुरित्यर्थः। अथ कियन्तं कालं तद्वीजनमित्याह—यावत् प्राणानां प्रत्यागमनमिति। उदकग्रहणं मलमार्गशौचार्थम्। उपधानम् आवरणं, तच्चेहाङ्गुल्या कार्पासपिचुनैव ॥ ४२ ॥ ४३ ॥

ततः कल्पनं नाड्याः। अतस्तस्याः कल्पनविधिमुपदेक्ष्यामः—नाभिबन्धनात् प्रभृत्यष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानां छेदनानामन्यतमेनार्धधारेण छेदयेत्। तामग्रे सूत्रेणोपनिबध्य कण्ठेऽस्य शिथिलमवसृजेत्। तस्य चेन्नाभिः पच्येत, तां लोध्रमधुकप्रियङ्गुसुरदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यज्यात्, एषामेव तैलौषधानां चूर्णेनावचूर्णयेत्। इति नाडीकल्पनविधिरुक्तः सम्यक् ॥ ४४ ॥

अष्टाङ्गुलमभिज्ञानं कृत्वेति अष्टाङ्गुले चिह्नं कृत्वा। अर्धधारः तिर्यग्धारः शस्त्रविशेषः। तामिति च्छिन्नावशिष्टाङ्गुलां नाडीम्। कण्ठेऽवसृजेदिति नाड्यप्रबद्धं सूत्रं कुमारस्य कण्ठे निबध्नीयात् ॥ ४४ ॥

असम्यक्कल्पने हि नाड्या आयामव्यायामोत्तुण्डिता-पिण्डलिका-विनामिका-विजृम्भिकाबाधेभ्यो

१ 'वा लभते' इति पा०। २ 'बल्वजक्वाथे' इति पा०। ३ 'खरस्य वृषस्य वा जरतो दक्षिणं पर्णमुत्कृत्य' इति पा०। ४ 'बल्वजयूषादीनामन्यतमे' इति पा०। ५ 'वायोरनुलोमगमनात्' इति पा०। ६ 'चान्तर्बहिर्मुखानि' इति पा०।

१ 'मुखेन परिषेकः' इति पा०। २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। ३ 'तीक्ष्णे काले' इति पा०। ४ 'प्रत्यागमनात्' इति पा०। ५ 'ऊर्ध्वधारेण इति पा०।

भयम्। तत्राविदाहिभिर्वातपित्तप्रशमनैरभ्यङ्गोत्सादनपरिषेकैः सर्पिर्भिश्चोपक्रमेत गुरुलाघवमभिसमीक्ष्य ॥ ४५ ॥

नाड्या अविधिकल्पने दोषमाह—असम्यगित्यादि। आयामो दैर्घ्यं, व्यायामो विस्तारः, ताभ्यामुत्तुण्डिता आयामव्यायामोत्तुण्डिता, दीर्घपीनत्वयुतेत्यर्थः; पिण्डलिका परिमण्डलयुता; विनामिका अन्तोच्छ्रना मध्यनिम्ना; विजृम्भिका तु मुहुर्मुहुर्वृद्धिमती। गुरुलाघवमभिसमीक्ष्येति नाडीपाककारकपित्ते तथा वाते चायामव्यायामोत्तुण्डितादिविकारचतुष्टयकारके यो दोषो गुरुः स उपचरितव्यस्त्वरयेत्यर्थः ॥ ४५ ॥

अतोऽनन्तरं जातकर्म कुमारस्य कार्यम्। तद्यथा—मधुसर्पिषी मन्त्रोपमन्त्रिते यथाम्नायं प्रथमं प्राशितुं दद्यात्। स्तनमत ऊर्ध्वमेतेनैव विधिना दक्षिणं पातुं पुरस्तात् प्रयच्छेत्। अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितम् ॥ ४६ ॥

जातमात्रस्य वेदोक्तं कर्म जातकर्म। यथाम्नायमिति यथागमं मन्त्रोपमन्त्रिते। एतेनैव विधिनेति स्तन(न्य)मप्यभिमन्त्रितं पाययेदित्यर्थः ॥ ४६ ॥

अथास्य रक्षां विदध्यात्—आदानीखदिरकर्कन्धुपीलुपरूषकशाखाभिरस्या गृहं समन्ततः परिवारयेत्। सर्वतश्च सूतिकागारस्य सर्षपातसीतण्डुलकणकणिकाः प्रकिरेयुः। तथा तण्डुलबलिहोमः सततमुभयकालं क्रियेतानामकर्मणः। द्वारे च मुसलं देहलीमनु तिरश्चीनं न्यसेत्। वचाकुष्ठक्षौमकहिङ्गुसर्षपातसीलशुनकणकणिकानां रक्षोघ्नसमाख्यातानां चौषधीनां पोट्टलिकां बद्ध्वा सूतिकागारस्योत्तरदेहल्यामवसृजेत्, तथा सूतिकायाः कण्ठे सपुत्रायाः, स्थाल्युदककुम्भपर्यङ्केष्वपि, तथैव च द्वयोर्द्वारपक्षयोः। कणककण्टकेन्धनवानग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात्। स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुर्दशाहं द्वादशाहं वा। अनुपरतप्रदानमङ्गलाशीःस्तुतिगीतवादित्रमन्नपानविशदमनुरक्तप्रहृष्टजनसंपूर्णं च तद्वेश्म कार्यम्। ब्राह्मणश्चाथर्ववेदवित् सततमुभयकालं शान्तिं जुहुयात् स्वस्त्ययनार्थं कुमारस्य तथा सूतिकायाः। इत्येतद्रक्षाविधानमुक्तम् ॥ ४७ ॥

आदानी घोषकभेदः। तण्डुलबलिहोमः कियत्कालं कर्तव्य इत्याह—आनामकर्मण इति।—दशाहं यावदित्यर्थः; दशाहे तु नामकर्म भविष्यति। जतूकर्णेऽप्युक्तं—"तण्डुलबलिहोमो द्विकालमादशाहम्" इति। रक्षोघ्नसमाख्यातानामित्यनेन गुग्गुल्वादीन् ग्राहयति। उत्तरदेहल्यामिति द्वारोपरि; अन्ये तु देहलीं द्वाराधःकाष्ठमाहुः ॥ ४७ ॥

सूतिकां तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यीभावमभिसमीक्ष्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरचूर्णसहितम्। स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महताऽच्छेन वाससा; तथा तस्या न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्। जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेत्। उभयतःकालं चोष्णोदकेन च परिषेचयेत् प्राक् स्नेहयवागूपानाभ्याम्। एवं पञ्चरात्रं सप्तरात्रं वाऽनुपाल्य क्रमेणाप्याययेत्। स्वस्थवृत्तमेतावत् सूतिकायाः ॥४८॥

कुमारस्य जातकर्माभिधाय सूतिकायाः कर्तव्यमाह—सूतिकां त्वित्यादि। बुभुक्षितामित्यनेन यावता कालेन बुभुक्षिता भवति तदा स्नेहपानं कर्तव्यम्। परमया शक्त्येति उत्तमया शक्त्या लक्षिता स्नेहं पिबेत्; 'यावता स्नेहेन बलविरोधो न भवति तावन्मात्रं स्नेहं पिबेत्' इत्यध्याहर्तव्यम्। सात्म्यीभावमभिसमीक्ष्येति सर्पिरादिषु यद्यस्याः सात्म्यं तत् तस्यै देयम्। अच्छेनेति निर्मलेन। उभयतःकालमिति पदमुष्णोदकेन परिषेचयेदित्यनेन योज्यम्। तदेव कालद्वयमाह—प्रागित्यादि। पौर्वाह्णिकः स्नेहपानपरिषेकः कारयितव्यः, तथा जीर्णे स्नेहे परिषेचितां यवागूः पाययितव्येत्यर्थः। अयं तु व्यवहारो नानूपदेशे प्रबलकफत्वात् प्राणिनां, किंतु जाङ्गलदेशव्यवहार इति ज्ञेयम् ॥ ४८ ॥

तस्यास्तु खलु यो व्याधिरुत्पद्यते स कृच्छ्रसाध्यो भवत्यसाध्यो वा, गर्भवृद्धिक्षयितशिथिलसर्वधातुत्वात्, प्रवाहणवेदनाक्लेदनरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च; तस्मात्तां यथोक्तेन विधिनोपचरेत्; भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोत्सादनपरिषेकावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेत्; विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ॥ ४९ ॥

सूतिकाया मिथ्योपचारेण व्याधिर्भवन् कृच्छ्रसाध्योऽसाध्यो वा यथा भवति तथा दर्शयन् यथोक्तक्रमस्यावधानेन कर्तव्यतां दर्शयितुमाह—तस्यास्त्वित्यादि। गर्भवृद्ध्या धात्वन्तरापोषणेन क्षयिताश्च शिथिलीकृताश्च सर्वे धातवो यस्याः सा तथा। गर्भव्यपगम एतावच्छरीरशून्यत्वे हेतुः तथा प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिश्च विशेषेण हेतुरित्याह—प्रवाहणेत्यादि। यथोक्तेनेति स्नेहपानादिना। एतेन यथोक्तविधिकरणमेव बुधिक्रित्स्यस्य सूतिकाव्याधेर्निदानवर्जनरूपमुत्तमं भेषजमिति दर्श-

१ 'अन्तःस्थूला' इति पा०। २ 'अथास्य' इति पा०। ३ 'उभयतःकालं' इति पा०। ४ 'प्राङ्नामकर्मणः' इति पा०।

१ 'अन्ये तु देहलीशब्देन द्वारपक्षौ(क्षं) वर्णयन्ति' इति पा०। २ 'मात्रां' इति पा०। ३ 'रक्षाविधानमभिधाय' इति पा०। ४ 'न व्यवहरत्यानूपदेशे' इति पा०। ५ 'यथोक्तक्रमस्याभिधानेन' इति पा०।

यति। यत्तूत्पन्ने व्याधौ विहितं भेपजं तत् प्रायो न सिध्यतीति कृत्वा नेहोक्तम्। भौतिकं भूतहरम् ॥ ४९ ॥

दशमे त्वहनि सपुत्रा स्त्री सर्वगन्धौषधैर्गौरसर्षपलोध्रैश्च स्नाता लघ्वहतशुचिवस्त्रं परिधाय पवित्रेष्टलघुविचित्रभूषणवती च संस्पृश्य मङ्गलान्युचितामर्चयित्वा च देवतां शिखिनः शुक्लवाससोऽव्यङ्गांश्च ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमहतानां च वाससां संचये प्राक्शिरसमुदक्शिरसं वा संवेश्य देवतापूर्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामनी कारयेन्नाक्षत्रिकं नामाभिप्रायिकं च। तत्राभिप्रायिकं घोषवदाद्यन्तस्थान्तमूष्मान्तं वाऽवृद्धं त्रिपुरुषानूकमनवप्रतिष्ठितं, नाक्षत्रिकं तु नक्षत्रदेवतासमानाख्यं द्व्यक्षरं चतुरक्षरं वा ॥ ५० ॥

उचितामिति या यस्य देवता सदा पूज्यत्वेनोचिता तामर्चयित्वा। शिखिन इति पावकान्; किंवा शिखा चूडा तद्वतो ब्राह्मणानसुण्डान्। नक्षत्रदेवतासंयुक्तमिति यस्मिन् नक्षत्रे कुमारो जातस्तस्य नक्षत्रस्य या देवता ज्योतिःशास्त्रे, तस्या नाम कर्तव्यमित्यर्थः। किंवा 'द्वे नामनी कारयेत्तन्नाक्षत्रिकमाभिप्रायिकं च' इत्यादिपाठः। तत्रापि नाक्षत्रिकं व्याख्यातमेव; आभिप्रायिकेषु घोषवदित्यादि विशेषणम्। घोषा वर्गचतुर्था 'घझढधभाः', अन्तस्था 'यरलवाः', 'शषसहा' ऊष्माणः ॥५०॥

वृत्ते च नामकर्मणि कुमारं परीक्षितुमुपक्रमेतायुषः प्रमाणज्ञानहेतोः। तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि भवन्ति। तद्यथा—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते, स्थिरा बहला त्वक्, प्रकृत्याऽतिसंपन्नमीषत्प्रमाणातिवृत्तमनुरूपमातपत्रोपमं शिरः, व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्ध्वव्यञ्जनसंपन्नमुपचितं चलिभमर्धचन्द्राकृति ललाटं, बहलौ विपुलसमपीठौ समौ नीचैर्वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुत्रकौ महाच्छिद्रौ कर्णौ, ईषत्प्रलम्बिन्यावसंगते समे संहते महत्यौ भ्रुवौ, समे समाहितदर्शने व्यक्तभागविभागे बलवती तेजसोपपन्ने स्वङ्गापाङ्गे चक्षुषी, ऋज्वी महोच्छ्वासा वंशसंपन्नेषदवनताग्रा नासिका, महदृजुसुनिविष्टदन्तमास्यम्, आयामविस्तारोपपन्ना श्लक्ष्णा तन्वी प्रकृतिवर्णयुक्ता जिह्वा, श्लक्ष्णं युक्तोपचयमूष्मोपपन्नं रक्तं तालु, महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः, नातिस्थूलौ नातिकृशौ विस्तारोपपन्नावास्यप्रच्छादनौ रक्तावोष्ठौ, महत्यौ हनू, वृत्ता नातिमहती ग्रीवा, व्यूढमुपचितमुरः, गूढं जत्रु पृष्ठवंशश्च, विप्रकृष्टान्तरौ स्तनौ, असंपातिनी स्थिरे पार्श्वे, वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च, महदुपचितं पाणिपादं, स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्माकाराः करजाः, प्रदक्षिणावर्ता सोत्सङ्गा च नाभिः, उरस्त्रिभागहीना समा समुपचितमांसा कटी, वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचौ, अनुपूर्वं वृत्तावुपचययुक्तावूरू, नात्युपचिते नात्यपचिते एणीपदे प्रगूढसिरास्थिसन्धी जङ्घे, नात्युपचितौ नात्यपचितौ गुल्फौ, पूर्वोपदिष्टगुणौ पादौ कूर्माकारौ, प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि तथा स्वप्रजागरणायासस्मितरुदितस्तनग्रहणानि, यच्च किञ्चिदन्यदप्यनुक्तमस्ति तदपि सर्वं प्रकृतिसंपन्नमिष्टं, विपरीतं पुनरनिष्टम्। इति दीर्घायुर्लक्षणानि ॥ ५१ ॥

नामकर्मणीति नामकरणसमयक्रियमाणहोमादिकर्मणि, नासैव वा कर्म नामकर्म। स्थिरेति अश्लथा। ईषत्प्रमाणातिवृत्तं शिर इति उत्सर्गापवादन्यायेन बोद्धव्यम्। तेन यदुक्तं पूर्वं—"षडङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिरः" एतच्चाभिधायोक्तं—"तत्रायुर्बलं" इत्यादि यावत् "प्रमाणवंति शरीरे; विपर्ययस्तु हीनेऽधिके वा" ( वि. अ. ८ ) इति; तत्र शिरसि किंचित्प्रमाणाधिकता एतद्वचनादपवादभूताऽप्यतीव प्रशस्ता भवतीति ज्ञेयम्। एवं 'महदुपचितं पाणिपादम्' इत्यत्रापि व्याख्येयम्। अनुरूपमित्यनेन शरीरानुरूपतां शिरसो दर्शयन्नुक्तलक्षणादनतिवृद्धिं शिरसो दर्शयति; अतिवृद्धं हि शरीराननुरूपं भवति, तच्चाप्रशस्तमेव। ऊर्ध्वव्यञ्जनमिति ऊर्ध्वरेखात्रयरूपलक्षणयुक्तं; जतूकर्णे हि त्रिरेखं ललाटमुक्तम्। नीचैर्वृद्धाविति अनुन्नतौ सन्तावनुक्रमवृद्धौ। असङ्गते दूरान्तरे। व्यक्तभागविभागे इति प्रव्यक्तकृष्णशुक्लादिविभागे। शोभनानि वर्त्मादीनि अङ्गानि अपाङ्गे च ययोस्ते स्वङ्गापाङ्गे। अत्र अङ्गग्रहणेनैव अपाङ्गस्य लब्धस्यापि पुनः करणं विशेषेणापाङ्गशोभोपदर्शनार्थम्। आस्यप्रच्छादनौ आस्यं प्रच्छादयितुं क्षमौ मुखावरकौ। पृष्ठवंशश्च गूढ इति योजनीयम्। असंपातिनी अनिर्गते, किंवा अलक्ष्ये। प्रकृतियुक्तेति देहानुरूपा। एणीपदे इति एणीजङ्घासदृशे। प्रकृतियुक्तानीति नातिबहूनि नात्यल्पानि च ॥ ५१ ॥

अतो धात्रीपरीक्षामुपदेक्ष्यामः। अथ ब्रूयात्—धात्रीमानय समानवर्णां यौवनस्थां निभृतामनातु-

१ 'व्याधाविह' इति पा०। २ 'दशम्यां निष्क्रान्तायाम्' इति पा०। ३ 'लघ्वहतवस्त्रपरिहिता' इति पा०। ४ 'कुमारमहतेन वाससाऽऽच्छादयेत् प्राक्शिरसमुदक्शिरसं वा संवेश्य' इति पा०। ५ 'वृद्धत्रिपुरुषान्तरं' इति पा०। ६ 'नक्षत्रदेवतासंयुक्तं कृतं' इति पा०। ७ 'कृते' इति पा०। ८ 'प्रमाणातिरिक्तं' इति पा०। ९ 'प्रकृतियुक्ता पाटलवर्णा' इति पा०।

१ 'अपाङ्गशोभनत्वोपदर्शनार्थम्' इति पा०।

राममव्यङ्गामव्यसनामविरूपामजुगुप्सितां देशजातीयामक्षुद्रामक्षुद्रकर्मिणीं कुले जातां वत्सलामरोगां जीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामनुच्चारशायिनीमनन्त्यावसायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्यसंपदुपेतामिति ॥ ५२ ॥

समानवर्णामिति तुल्यजातीयाम् । यौवनस्थामित्यनेन बालावृद्धयोरसंपूर्णक्षीणधातुत्वेन तयोर्निरासं करोति । निभृतामिति विनीताम् । अविरूपामिति अविकृतावयवाम् । अव्यङ्गामिति अहीनाङ्गीम् । देशजातीयां समानदेशजाम् । अनन्त्यावसायिनीमिति शूद्राभिप्रायेण, शूद्रस्य हि सवर्णत्वेन चाण्डालादिस्त्री प्रसक्ता, सा च निषिध्यते; ब्राह्मणादीनां त्वसवर्णत्वेनैव सा निरस्ता; किंवा ब्राह्मणादीनामपि पतितब्राह्मण्याद्या अनन्त्यावसायिनीमितिशब्देन क्षिप्यते ॥ ५२ ॥

तत्रेयं स्तनसंपत्—नात्यूर्ध्वौ नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति ( स्तनसंपत् ) ॥ ५३ ॥

युक्तपिप्पलकाविति उच्चैःस्तनवृन्तौ ॥ ५३ ॥

स्तन्यसंपत्तु प्रकृतिवर्णगन्धरसस्पर्शम्, उदपात्रे च दुह्यमानमुदकं व्येति प्रकृतिभूतत्वात्; तत् पुष्टिकरमारोग्यकरं चेति(स्तन्यसंपत्) ॥ ५४ ॥

अतोऽन्यथा व्यापन्नं ज्ञेयम् । तस्य विशेषाः—श्यावारुणवर्णं कषायानुरसं विशदमनालक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्शनं वातविकाराणां कर्तृ वातोपसृष्टं क्षीरमभिज्ञेयं; कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णं पित्तविकाराणां कर्तृ च पित्तोपसृष्टं क्षीरमभिज्ञेयम्, अत्यर्थशुक्लमतिमाधुर्योपपन्नं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीदच्छ्लेष्मविकाराणां कर्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेयम् ॥ ५५ ॥

उदकं व्येतीति उदकं विशेषेण एति व्याप्नोतीत्यर्थः । जतूकर्णेऽप्युक्तम्—"उदके विसर्पत् क्षीरं प्रशस्तम्" इति । वातादिदुष्टक्षीरलक्षणान्याह—श्यावेत्यादि । लवणानुरसमिति श्लेष्मदुष्टे क्षीरे दोषदूष्यसंमूर्च्छनप्रभावाज्ज्ञेयं, येन श्लेष्मदुष्टे लवणरसता भवति; एतत्पृथग्लक्षणयोगाच्च द्वन्द्वसन्निपातदुष्टिरप्युन्नेया ॥ ५४.॥ ५५ ॥

तेषां तु त्रयाणामपि क्षीरदोषाणां प्रतिविशेषमभिसमीक्ष्य यथास्वं यथादोषं च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय भवन्ति । पानाशनविधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्गहरेणुककुलत्थसुरासौवीर-

१ 'अविजुगुप्सामजुगुप्सितां' इति पा० । २ 'अनुद्धतां' इति पा० । ३ 'क्षीरमिति ज्ञेयम्' इति पा० ।

कमैरेयमेदकलशुनकरञ्जप्रायः स्यात् । क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्यं स्यात् । पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तकटुकरोहिणीसारिवाकषायाणां च पानं प्रशस्यते, तथाऽन्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोगः क्षीरविकारविशेषानभिसमीक्ष्य मात्रां कालं च । इति क्षीरविशोधनानि ॥५६॥

चिकित्सामाह—तेषामित्यादि । प्रतिविशेषमभिसमीक्ष्येति प्रति प्रति वातादीनां कोष्ठाश्रयित्वोदीर्णत्वादिशोधनानुगुणं विशेषमभिवीक्ष्य । यथास्वमित्यनेन श्लेष्मणि वमनं, पित्ते विरेचनं, वायावास्थापनानुवासने, इत्यात्मीयमात्मीयं संशोधनं दर्शयति । यथादोषमित्यनेन प्रवृद्धे दोषेऽतिमात्रं संशोधनं, स्तोके स्तोकमात्रं दर्शयति । विभज्येति यथास्वमित्यनेन योज्यम् । 'प्रकृतिविशेषम्' इति यदा पाठस्तदा प्रकृतिविशेषमपि धात्र्या अवेक्ष्य वमनादीनां बहुत्वाल्पत्वविशेषः कर्तव्य इत्यर्थः । तत्तद्विधानं कार्यं स्यादिति तत्तद्दुष्टदोषप्रतिकूलमाहारविधानं कार्यं स्यात् । कषायाणामिति बहुवचनाद् व्यस्तसमस्तानां पाठादीनां कषाया गृह्यन्ते ॥ ५६ ॥

क्षीरजननानि तु मद्यानि सीधुवर्ज्यानि, ग्राम्यानूपौदकानि च शाकधान्यमांसानि, द्रवमधुराम्ललवणभूयिष्ठाश्चाहाराः, क्षीरिण्यश्चौषधयः, क्षीरपानमनायासश्च, वीरणषष्टिकशालीक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटमूलकषायाणां च पानमिति ( क्षीरजननानि ) ॥ ५७ ॥

क्षीरिण्यश्च दुग्धिकाकाकलम्बिकादयो दृश्यमानक्षीराः ॥ ५७ ॥

धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात्तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं शतवीर्यां सहस्रवीर्याममोघामव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तां वा बिभ्रत्योषधिं कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् । इति धात्रीकर्म ॥ ५८ ॥

अमोघादयोऽनन्तरं व्याकृता एव । अव्यथा गुडूची ॥ ५८ ॥

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः—वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिकपतङ्गं सुविभक्तसलिलोलूखलमूत्रवर्चःस्थानस्नानभूमिमहानसमृतुसुखं यथर्तुशयनासनास्तरणसंपन्नं कुर्यात्; तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसंपूर्णम् । इति कुमारागारविधिः ॥ ५९ ॥

शयनासनास्तरणप्रावरणानि कुमारस्य मृदुल-

१ 'तिक्तकषायकटुकप्रायाणां' इति पा० । २ 'विष्वक्सेनकान्तामिति बिभ्रत्योषधीः' इति पा० ।

शुशुचिसुगन्धीनि स्युः; स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्यानि स्युः; असति संभवेऽन्येषां तान्येव च सुप्रक्षालितोपधानानि सुधूपितानि शुद्धशुष्काण्युपयोगं गच्छेयुः ॥ ६० ॥

सुप्रक्षालितोपधानानीति सुधौतोत्तरप्रच्छादनानि । शुद्धशुष्काणीति धौतान्यपि यदा मलादिरागेणापि रहितानि भवन्ति शुष्काणि च तदैवोपयोज्यानि; सुधौतं ह्यार्द्रमपि स्यात्, तथा गाढराग(गि)मलादिभावितं धौतमप्यशुद्धं स्यात्, तस्मादुक्तं—शुद्धशुष्काणीति ॥ ५९ ॥ ६० ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानां च यवसर्षपातसीहिङ्गुगुग्गुलुवचाचोरकवयःस्थागोलोमीजटिलापलङ्कपाशोकरोहिणीसर्पनिर्मोकाणि घृतयुक्तानि स्युः ॥ ६१ ॥

वयःस्था ब्राह्मी, गोलोमी श्वेतदूर्वा, जटिला मांसी ॥ ६१ ॥

मणयश्च धारणीयाः कुमारस्य खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः; ऐन्द्र्याद्याश्चौषधयो जीवकर्षभकौ च, यानि चान्यान्यपि ब्राह्मणाः प्रशंसेयुरथर्ववेदविदः ॥ ६२ ॥

मणय इति मुक्तादिमणयः, अथर्ववेदोक्ताश्च । खड्गादीनां शृङ्गाग्राणि धारणीयानि स्युरिति योजना। उक्तं हि जतूकर्णे—"रुरुखड्गादीनां जीवतां दक्षिणशृङ्गाग्राणि निकृत्तानि धारयेत्" इति। जीवकर्षभकौ प्रजास्थापनोक्तौ । ओषधय ऐन्द्र्याद्या दश तत्रैवोक्ताः ॥ ६२ ॥

क्रीडनकानि खलु कुमारस्य विचित्राणि घोषवन्त्यभिरामाणि चागुरूणि चातीक्ष्णाग्राणि चानास्यप्रवेशीनि चाप्राणहराणि चावित्रासनानि स्युः॥६३॥

न ह्यस्य वित्रासनं साधु। तस्मात्तस्मिन् रुदत्यभुञ्जाने वाऽन्यत्र विधेयतामगच्छति राक्षसपिशाचपूतनाद्यानां नामान्याह्वयता कुमारस्य वित्रासनार्थे नामग्रहणं न कार्यं स्यात् ॥ ६४ ॥

यदि त्वातुर्यं किञ्चित् कुमारमागच्छेत्, तत् प्रकृतिनिमित्तपूर्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्वविशेषानातुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरस्निग्धमृदुलघुसुरभिशीतशङ्करं कर्म प्रवर्तयन् । एवंसात्म्या हि कुमारा भवन्ति। तथा ते शर्म लभन्ते चिराय । अरोगे त्वरोगवृत्तमातिष्ठेद्देशकालात्मगुणविपर्ययेण वर्तमानः, क्रमेणासात्म्यानि परिवर्ज्योपयुञ्जानः सर्वाण्यहितानि वर्जयेत् । तथा बलवर्णशरीरायुषां संपदमवाप्नोतीति ॥ ६५ ॥

एवमेनं कुमारमायौवनप्राप्तेर्धर्मार्थकौशलागमनाच्चानुपालयेत् ॥ ६६ ॥

प्रकृतीत्यादौ प्रकृतिः वातादयः, निमित्तं बाह्यं रूक्षादि वातादिकारणम्[1] । सर्वविशेषानित्यादौ आतुरशब्देनातुर्यहेतुर्व्याधिरुच्यते, आश्रयशब्देन तु शरीरम् । शं कल्याणं करोतीति शङ्करम् । देशकालेत्यादौ आत्मशब्देन शरीरमुच्यते, तेन देशस्य तथा कालस्य तथा शरीरस्य च यो गुणः शीतादिस्तद्विपरीताहाराचारादिसेवायां वर्तमानः स्वस्थवृत्तं कुर्यात् । अन्यत्रापि स्वस्थवृत्ते प्रोक्तं—"देशकालादिगुणविपरीतानामाहारविहाराणां क्रियोपयोगः सम्यक्" (शा. अ. ६) इति । स्वस्थवृत्तान्तरमाह—क्रमेणेत्यादि । क्षीरतः क्षीरान्ने, ततोऽन्नमेव । तत्राप्यन्ने मधुरादि यद्बालानां सात्म्यं भवति तेन क्रमेण नवेगान्धारणीयोक्तेन "उचितादहिताद्धीमान् क्रमशो विरमेन्नरः" (सू. अ. ७) इत्यादिस्वस्थवृत्तोक्तेन क्रमेणोपयुञ्जान इत्यर्थः । तथा, वस्त्वन्तरसात्म्यसेवायामपि बालस्यैवमेव व्याख्यानम् । स्वस्थवृत्ताचरणफलमाह—तथेत्यादि ॥ ६३–६६ ॥

इति पुत्राशिषां समृद्धिकरं कर्म व्याख्यातम् । तदाचरन् यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयक इति ॥ ६७ ॥

तत्र श्लोकौ—

पुत्राशिषां कर्म समृद्धिकारकं
यदुक्तमेतन्महदर्थसंहितम् ।
तदाचरन् ज्ञो विधिभिर्यथातथं
पूजां यथेष्टं लभतेऽनसूयकः ॥ ६८ ॥

शरीरं चिन्त्यते सर्वं दैवमानुषसंपदा ।
सर्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते ॥ ६९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने जातिसूत्रीयं शारीरं नामाष्टमोऽध्यायः ॥ ८ ॥

पुत्राशिषां समृद्धिकरमिति पुत्रप्रार्थनानुरूपफलकरमित्यर्थः। पुत्राशिषामित्यध्यायार्थसंग्रहश्लोकः। ज्ञ इति पुरुषविशेषणं प्राधान्यात् कृतम् । तेन पुरुषपुत्रलाभेन नार्या अपि पुत्रलाभोऽर्थादेव लभ्यते । अनुरूपपुत्रलाभे कथं मे पुत्रः स्यादित्यसूयां न वहतीत्यनसूयकः । केचिच्छारीरस्थानशब्दव्युत्पत्तिदर्शकं श्लोकं पठन्ति—शरीरमित्यादि । स च व्यक्तार्थ एव ॥ ६७–६९ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शारीरस्थाने जातिसूत्रीयं शारीरं नामाष्टमोऽध्यायः ॥ ८ ॥

## शारीरस्थानं संपूर्णम् ।

---

[1] 'साक्षाद्वातादिकारणम्' इति पा० ।

## प्रथमोऽध्यायः।

**अथातो वर्णस्वरीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

शारीरे चिकित्साधिकरणं शरीरं प्रतिपाद्य चिकित्सा वक्तव्या, सा च साध्य एव रोगे वक्तव्या नासाध्यरोगे, यदुक्तं—"अर्थविद्यायशोहानिमुपक्रोशमसंग्रहम्। प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्" ( सू. अ. १० ) इति; न च रिष्टप्रतिपत्तिमन्तराऽसाध्यत्वप्रतिपत्तिरिति रिष्टप्रतिपादकमिन्द्रियस्थानमेव चिकित्सास्थानात् प्रागुच्यते। इन्द्रशब्देन प्राण उच्यते, तस्यान्तगतस्य लिङ्गं रिष्टाख्यमिन्द्रियं; यदुक्तं व्याकरणे—"इन्द्रियमिन्द्रलिङ्गं (पा. अ.५.२. ९३ )" इत्यादि; तस्येन्द्रियस्य स्थानमिन्द्रियस्थानम्। तत्रापि चेन्द्रियस्थाने वक्तव्ये व्यक्ततमरिष्टाभिधायकतया वर्णस्वरीयमिन्द्रियमुच्यते, अत्र हि यानि रिष्टानि वक्तव्यानि तानीतररिष्टेभ्यश्चक्षुरादिग्राह्यतया व्यक्ततमानि। वर्णस्वरावधिकृत्य कृतो वर्णस्वरीयः, इन्द्रियस्य रिष्टरूपस्य प्रतिपादकोऽध्याय इन्द्रियः, तं व्याख्यास्यामः। एवमन्यत्रापि पुष्पितकमित्याद्यपीन्द्रियविशेषणं व्याख्येयम् ॥ १ ॥ २ ॥

**इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रं च घ्राणं च रसनं च स्पर्शनं च सत्त्वं च भक्तिश्च शौचं च शीलं चाचारश्च स्मृतिश्चाकृतिश्च प्रकृतिश्च विकृतिश्च बलं च ग्लानिश्च मेधा च हर्षश्च रौक्ष्यं च स्नेहश्च तन्द्रा चारम्भश्च गौरवं च लाघवं च गुणाश्चाहारश्च विहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च व्याधिपूर्वरूपं च वेदनाश्चोपद्रवाश्च च्छाया च प्रतिच्छाया च स्वप्नदर्शनं च दूताधिकारश्च पथि चौत्पातिकं चातुरकुले भावावस्थान्तराणि च भेषजसंवृत्तिश्च भेषजविकारयुक्तिश्चेति परीक्ष्याणि प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणावशेषं जिज्ञासमानेन भिषजा ॥ ३ ॥**

इन्द्रियस्थानप्रतिपाद्यं कृत्स्नं विषयमाह—इहेत्यादि। इह इन्द्रियस्थाने। खलुशब्दो वाक्यालङ्कारे। इह च यद्यपीन्द्रियाण्येव विषयवर्णादिग्राहकतया अग्रे वक्तुं युज्यन्ते, तथाऽपि तेषामतीन्द्रियत्वेन तदाश्रयरिष्टानामव्यक्तत्वं; तेन, प्रव्यक्तानि वर्णादीन्येव प्रव्यक्तरिष्टाधिकरणान्यग्रेऽभिधीयन्ते। वर्णादिष्वपि च यथा व्यक्तत्वं तथा पूर्वनिपातः। मेघादिशब्दस्तु यद्यपि वर्णादपि व्यक्तस्तथाऽपि शब्दविशेष एवेह ताल्वादिसंपायः स्वरशब्दाभिधेयो रिष्टाधिकरणत्वेनाभिमतः, स च वर्णापेक्षयाऽव्यक्त एव। इहेत्यादावसमासेन प्रत्येकमपि वर्णादीनां रिष्टाधिकरणत्वं दर्शयति; समासे हि समुदायस्यैव रिष्टाधिकरणकतया परीक्षितव्यत्वं शङ्क्येत। वर्णशब्देन च वर्णसहचरिताश्चक्षुर्ग्राह्या रौक्ष्यादयोऽपि गृह्यन्ते; अत एव वर्णप्रस्ताव एव वक्ष्यति–यत्—"वर्णग्रहणेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः" इति। स्वरादिग्रहणेन च स्वराद्यभावोऽपि गृह्यते, तेनाङ्गुलिपर्वशब्दाभाव-गन्धाभावादयोऽपि रिष्टान्यवरुध्यन्ते। स्पर्शग्रहणेन च स्पर्शोपलभ्यकाठिन्याद्यवरोधः। सत्त्वं मनः; सत्त्वविकृतेरुदाहरणं यथा—"औत्सुक्यं भजते सत्त्वं चेतो सीरावियालपि" ( इं. अ. १२ ) इत्यादि। भक्तिः इच्छा। शीलं सहजं वृत्तम्। आचारः शास्त्रशिक्षाकृतो व्यवहारः। भक्त्यादयो यद्यपि सत्त्वविकारत्वेन सत्त्वग्रहणेनैव लभ्यन्ते; यदुक्तं—"भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो‌ऽमात्सर्यं भयं क्रोधस्तन्द्रोत्साहतैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्वमित्येवमादयः सत्त्वविकाराः (शा. अ.३)" इति; तथाऽपि भक्त्यादीनामपि पृथगरिष्टाधिकरणत्वेनेह पृथक्करणम्। निद्रादौर्बल्यात्तन्द्रेति तन्द्राशब्देन निद्रोच्यते; अत्र च रिष्टमुक्तं यथा—"निद्रा नित्या भवति वा न वा" ( इं. अ. ११ ) इति। आरम्भ इति अरिष्टव्याध्युत्पादारम्भः; यदुक्तं—"श्वयथुर्यस्य कुक्षिस्थो हस्तपादं प्रधावति" इं. अ. ९ ) इत्यादि। गौरवे रिष्टं यथा—"निष्ठ्यूतं च पुरीषं च रेतश्चाम्भसि मज्जति" (इं. अ. ९)' इत्यादि। लाघवे रिष्टं—गुरूणामङ्गानां लाघवं ज्ञेयम्। गुणरिष्टं यथा—"गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः। विपर्यासेन लक्ष्यन्ते स्थानेष्वन्येषु तद्विधाः" ( इं. अ. १२ ) इति। आहाररिष्टं यथा—"आहारमुपयुञ्जानो भिषजा सूपकल्पितम्" ( इं. अ. १२ ) इत्यादि। आहारपरिणामरिष्टं यथा—"दुर्बलो बहु भुङ्क्ते यो प्रागभुक्त्वाऽन्नमातुरः। अल्पमूत्रपुरीषश्च" ( इं. अ. ७ ) इति। उपाय उपगमनं व्याधिमेलक इत्यर्थः; यदुक्तं—"सहसा ज्वरसंतापस्तृष्णा मूर्च्छा बलक्षयः। विश्लेषणं च सन्धीनां" (इं. अ. ८) इति। व्याध्यपगमनमपायः; यदुक्तं—"यं नरं सहसा रोगो दुर्बलं परिमुञ्चति" ( इं. अ. ९ ) इत्यादि। व्याधिश्चेति व्याधिरेव रिष्टं यथा—"वाताष्ठीला सुसंवृत्ता दारुणा हृदि तिष्ठति" ( इं. अ. १० ) इति। छाया भौतिकी पञ्चरूपा, प्रतिच्छाया तु देहच्छाया; प्रतिच्छायया च नेत्रकुमारिकाऽपि प्रतिच्छायारूपा ग्रहीतव्या। अयं च छायादिभेदः पञ्चरूपीयेन्द्रिये दर्शयितव्यः। आतुरकुले भावावस्थारिष्टं यथा—"अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च।

१ 'तेनासाध्यरोगख्यापकारिष्टप्रतिपादकमिन्द्रियस्थानमेव चिकित्सास्थानात् प्रागुच्यते' इति पा०। २ 'भेषजं च भेषजप्रवृत्तिश्च भेषजाधिकारे युक्तिश्च' इति पा०। ३ 'अवक्तव्यत्वं' इति पा०।

१ 'ग्लानिदौर्बल्यं, निद्रा०' इति पा०। २ 'व्याध्युत्पादारम्भः' इति पा०। ३ 'वक्तव्यः' इति पा०।

भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति" ( इं. अ. १२ ) इत्यादि । भेषजसंवृत्तौ[1] रिष्टं यथा—"यमुद्दिश्यातुरं वैद्यः संवर्तयितुमौषधम् । यतमानो न शक्नोति दुर्लभं तस्य जीवितम्" (इं. अ. १२) इति । भेषजस्य विकारेण समं युक्तिर्भेषजविकारयुक्तिः; तत्र रिष्टं यथा—"विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् । न सिध्यत्यौषधं यस्य तस्य[2] नास्ति चिकित्सितम्" ( इं.अ. १२ ) इति । शेषं[3] तु रिष्टोदाहरणं व्यक्तम् । इति समासौ । प्रत्यक्षपूर्वकत्वात् सर्वप्रमाणानामिहादौ प्रत्यक्षं कृतम् । यद्यपि वर्णादय आयुर्लक्षणप्रतिपादिता[4] दीर्घायुःप्रमाणजिज्ञासायामपि परीक्ष्यन्ते, तथाऽपीह रिष्टप्रकरणे आयुःप्रमाणावशेषज्ञानार्थमेव परीक्षणीयाः, अत उक्तं—प्रमाणावशेषं जिज्ञासमानेनेति ॥ ३ ॥

**तत्र तु खल्वेषां परीक्ष्याणां कानिचित् पुरुषमनाश्रितानि, कानिचिच्च पुरुषसंश्रयाणि । तत्र यानि पुरुषमनाश्रितानि तान्युपदेशतो युक्तितश्च परीक्षेत, पुरुषसंश्रयाणि पुनः प्रकृतितो विकृतितश्च ॥ ४ ॥**

पुरुषमनाश्रितानि दूताद्याश्रयाणि रिष्टानि । युक्तितश्चेत्यनुमानत इत्यर्थः, अत्र[5] युक्तेरपि रिष्टत्वावधारणे क्षमत्वात् । प्रत्यक्षं हि दूतादीनां स्वरूपमात्रं गृह्णाति, रिष्टं तु दूतादीनामागमादेव ज्ञायते । पुरुषाश्रयिवर्णादिगतरिष्टग्रहणे तु प्रत्यक्षमपि तत्तद्रिष्टविशेषग्रहणे तत्तद्विशेषेण व्याप्रियत इति मत्वाऽत्र तत्प्रतिषिद्धम् । अनुमानं तु रिष्टत्वेन प्रतिपादितमनिमित्तत्वादिधर्मविचारे व्याप्रियते, एवं सर्वत्र । प्रकृतितश्चेति पुरुषाश्रयविकृतिज्ञानहेतुतया प्रकृती रिष्टज्ञाने व्याप्रियते, यतः प्रकृतिज्ञानाधीनं विकृतिज्ञानं भवति; प्रकृतिविकृतिपरीक्षा त्वत्राधिकृतैः प्रसिद्धैः प्रत्यक्षादिभिरेव ज्ञेया ॥ ४ ॥

**तत्र प्रकृतिर्जातिप्रसक्ता च, कुलप्रसक्ता च, देशानुपातिनी[6] च, कालानुपातिनी च, वयोऽनुपातिनी च, प्रत्यात्मनियता चेति । जातिकुलदेशकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति ॥ ५ ॥**

प्रकृतिं विभजते—तत्रेत्यादि । जातिप्रसक्ता यथा—ब्राह्मणजातौ शौचं, कुलप्रसक्ता यथा—किञ्चिदेव कुलं शुच्याचारवद्भवति, देशानुपातिनी यथा—अन्तर्वेदिवासिनः शुचयो भवन्ति, कालानुपातिनी यथा—कृतयुगे शौचं, वयोऽनुपातिनी यथा—बाल्येऽशौचं, प्रत्यात्मनियता यथा—कश्चिदेव पुरुषः प्रकृत्या शुचिर्भवति; इत्याद्युदाहरणीयम् । कुतः पुनर्जात्यादिनियता प्रकृतिर्भवतीत्यत्र हेतुमाह—जातिकुलेत्यादि । ते ते भावविशेषा इति शुचित्वाशौचादयः[1] ॥ ५ ॥

**विकृतिः पुनर्लक्षणनिमित्ता च, लक्ष्यनिमित्ता च, निमित्तानुरूपा च ॥ ६ ॥**

रिष्टाधिकाराधिकृतां विकृतिं विवेचयितुं सर्वानेव विकृतिभेदानाह—विकृतिरित्यादि ॥ ६ ॥

**तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति दैवात्; लक्षणानि हि कानिचिच्छरीरोपनिबद्धानि भवन्ति, यानि हि तस्मिंस्तस्मिन् काले तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति ॥ (१) ॥**

हेतुभूतानीति हेतुसदृशानि । तेन दैवमेव नखरेखापद्मादिसामुद्रिकोक्तलक्षणयुक्ते शरीरे राज्यधनगमनवधबन्धनादिरूपविकृतिप्राप्तौ हेतुः, लक्षणानि तु दैवनिमित्तानि बोधकमात्राणि, अत एव दैवादित्युक्तं; दैवं च प्राक्तनं कर्मोच्यते[2] । विकृतिमुत्पादयन्तीत्यत्रापि दैवादिति योजनीयं; तेन, दैवबलादेव लक्षणानां राज्यधनवधबन्धनादिरूपविकृतिकर्तृत्वम् । तस्मिंस्तस्मिन् काले इत्यनेन लक्षणसूचितादृष्टपरिपाककाले नियतत्वं विकृतेर्दर्शयति । लक्षणासूचिताश्च[3] राज्यादय इह पुरुषस्य कदाचिद्भवन्तोऽस्वाभाविका एवेति कृत्वा विकृतिशब्देनोच्यन्ते ॥ (१) ॥

**लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं[4] निदानेषु ॥ (२) ॥**

यथोक्तं निदानेष्विति यथा—रूक्षादिसेवया वातादिप्रकोपरूपा विकृतिर्निदानोक्तेत्यर्थः ॥ (२) ॥

**निमित्तानुरूपा तु निमित्तार्थानुकारिणी या, तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपां, यामायुषोऽन्तर्गतस्य[5] ज्ञानार्थमुपदिशन्ति धीराः । यां चाधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणान्युपदेक्ष्यामः । इत्युद्देशः । तं विस्तरेणानुव्याख्यास्यामः ॥ ७ ॥**

निमित्तानुरूपेति निमित्तसदृशी । तदेव स्फोटयति—निमित्तार्थानुकारिणीति ।—निमित्तस्य योऽर्थः कार्यजननरूपः कार्यबोधनरूपो वा तमनुकरोतीति निमित्तार्थानुकारिणी । रिष्टाख्या हि विकृतिर्मरणे तस्यैवावबोधने वा निमित्तं भवति । अपरमपि निमित्तानुरूपाया विकृतेर्विशेषमाह—तामित्यादि । अनिमित्तामिति तदात्वेऽनुपलभ्यमाननिमित्तां, न तु पुनः सर्वथैवा-

१ 'भेषजप्रवृत्तौ' इति पा० । २ 'यथा प्रेतस्तथैव सः' इति पा० । ३ 'शेषे तु बहुरिष्टोदाहरणमुक्तम्' इति पा० । ४ 'आयुष्मल्लक्षणप्रवृत्तिप्रतिपादिताः' इति पा० । ५ 'अत्र यद्यपि रिष्टज्ञानाधिकारे प्रत्यक्षादिप्रमाणजन्यतयाऽनन्तरं युक्तिः, तथाऽपि पुरुषानाश्रयिरिष्टावधारणे प्रत्यक्षं निराशं दर्शयति । प्रत्यक्षस्यात्र रिष्टावधारणेऽक्षमत्वात्' इति पा० । ६ 'दशानुपातिनी' इति गङ्गाधरसंमतः पाठः ।

१ 'शुचित्वगौरवादयः' इति पा० । २ 'दैवकर्तृत्वं चात्रोच्यते' इति पा० । ३ 'लक्षणसूचिताश्च' इति पा० । ४ 'यथोक्तेषु' इति पा० । ५ 'अन्तर्गतस्य लक्षणलक्ष्याभ्यामविज्ञेयस्य' इति गङ्गाधरः; 'अन्तगतस्य' इति पा० ।

हेतुकीं, यत 'आयुषः क्षयनिमित्ताम्' इत्यनन्तरमस्य विशेषणं कथयिष्यति; रिष्टस्य हि न रौक्ष्यादिना शरीरसंबन्धादि निमित्तमुपलभ्यते। यद्वा, आयुःक्षयरूपं यन्निमित्तं तद्विद्यमानमपि नान्यैरुपलभ्यते, किन्तु तदेव हि रिष्टादुन्नीयते; तेन, अव्यक्तनिमित्तत्वमिहानिमित्तत्वं ज्ञेयम्। अत्र गतायुष्ट्वमेवं सकलपुरुषसंश्रितरिष्टव्यापकं कारणं साधु। यत्तु वक्ष्यति—"क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः। चिह्नं कुर्वन्ति यद्दोषास्तदरिष्टं प्रचक्षते" (इं. अ. ११) इति, तद्दूतादिगतरिष्टाव्यापकतया पुरुषाश्रयिरिष्टमात्राभिप्रायेण ज्ञेयम्। आयुषः प्रमाणज्ञानस्येति आयुःशेषप्रमाणज्ञानस्येत्यर्थः। भूय इति अत्यर्थम्। तेनात्यर्थमायुःक्षयनिमित्तां प्रत्यासन्नायुःक्षयजन्यामिति यावत्। यामिति क्षीणायुःकार्याम्। प्रेतलिङ्गानुरूपामिति प्रेतसदृशीं; "मला दन्तेषु जायन्ते प्रेताकृतिरुदीर्यते" (इं. अ. १२) इत्यादिग्रन्थवक्ष्यमाणाम्। इमां हि विकृतिमायुषोऽन्तर्ग(ग)तस्य ज्ञानार्थं वदन्ति। या त्वन्या प्रेतलिङ्गाननुरूपा वर्णाश्रया सा प्रत्यासन्नमरणबोधिका; तेन सा नात्यर्थनात्यर्थक्षीणायुःकार्येत्यर्थः। एवं 'भूयश्च'इत्यादिना 'धीराः'इत्यन्तेन निमित्तानुरूपविकृतिविशेषस्य कार्यविशेषं मरणलक्षणमभिधाय पुनः सामान्येनानिमित्ताया धर्मान्तरमाह—यामधिकृत्येत्यादि। पुरुषसंश्रयाणीति विशेषणेन पुरुषानाश्रितदूतादिरिष्टे नावश्यमनिमित्तताऽस्तीति दर्शयति। यतो दूताधिकारादौ यानि रिष्टानि तानि दृश्यमाननिमित्तान्यप्यागमादेव रिष्टत्वेनावधार्यन्ते। यथा—"मुक्तकेशेऽथवा नग्ने रुदत्यप्रयतेऽथवा। भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत्" (इं. अ. १२) इति। अत्र च भिषजो मुक्तकेशवचनादृश्यत एव कारणं, तथा दूतागमने चातुरस्य प्रेरणादि कारणमस्त्येव, तेनानिमित्तत्वमातुराश्रयिरिष्ट एव। अन्ये तु, एवंभूतवैद्यदूतसमागमः परिहर्तव्यत्वेन ज्ञातः सन् यदा दैवाद्भवति, तदा दैवनिमित्तः सन् रिष्टं भवति; तेन, सर्वरिष्टव्यापिकैवेयमनिमित्तता; भूयश्चेत्यादिग्रन्थेन तु प्रेतलिङ्गानुरूपां विकृतिं भूय आयुषोऽन्तर्ग(ग)तस्य ज्ञानार्थमुपदिशन्ति, तथा पुरुषसंश्रयाणि भूय उपदेक्ष्यन्ते, पुरुषानाश्रयाणि तु खल्पग्रन्थेनोपदेक्ष्यन्ते इति व्याख्यानयन्ति। इत्युद्देश इन्द्रियस्थानार्थोद्देश इत्यर्थः॥ ७॥

**तत्रादित एव वर्णाधिकारः। तद्यथा—कृष्णः, श्यामः, श्यामावदातः, अवदातश्चेति प्रकृतिवर्णाः शरीरस्य भवन्ति; यांश्चापरानुपेक्षमाणो विद्यादनूकतोऽन्यथा वाऽपि निर्दिश्यमानांस्तज्ज्ञैः॥ ८॥**

प्रकृतिज्ञानान्तरीयकत्वाद्विकृतिज्ञानस्य प्रकृतिवर्णानेव तावदाह—कृष्ण इत्यादि। अवदातो गौरः। इह च प्रायेण ये वर्णाः प्रकृत्या भवन्ति ते प्रकृतिवर्णा उच्यन्ते, ये तु प्रायेण विकृत्या भवन्ति ते विकृतिवर्णा उच्यन्ते, इति ज्ञेयम्। तेन प्रकृतिवर्णा अपि कदाचिद्विकृतिवर्णा भवन्ति, तथा विकृतिवर्णा अपि जन्मप्रभृतिजायमानतया कदाचित् प्रकृतिवर्णा भवन्तीति ज्ञेयम्। अनुक्तप्रकृतिवर्णातिदेशार्थमाह—यांश्चेत्यादि। उपेक्षईक्षमाण इति उपेक्षमाणः। अनूकत इति सादृश्यतः; अनेन च श्यामेत्यादिवर्णशब्देन निर्दिश्यमानान् विद्यादिति योजना। तज्ज्ञैरिति वर्णभेदनामज्ञैः॥ ८॥

**नीलश्यावताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति; यांश्चापरानुपेक्षमाणो विद्यात् प्राग्विकृतानभूत्वोत्पन्नान्। इति प्रकृतिविकृतिवर्णा भवन्त्युक्ताः शरीरस्य॥ ९॥**

नीलेत्यादिना (विकृतिजायमानतया) विकृतिवर्णानाह। इह, 'अपरान्' इति वचनेन विकृतिवर्णसङ्करजा वर्णा ज्ञेयाः। विकृतिवर्णान्तरमाह—प्रागित्यादि। प्राग्विकृतानिति पूर्ववर्णादन्यथाभूतानित्यर्थः। तेनापि, येन श्यामेन सता रसायनोपयोगाद्गौरवर्णत्वं प्राप्तं, स च त्यक्तरसायनः कालवशात् पुनः श्यामवर्णो भवति तस्यापि पूर्वगौरवर्णाद्विकृतिः श्यामवर्णो भवन् रिष्टं स्यादित्याह—अभूत्वोत्पन्नानिति; तेन नायं दोषः; अत्र हि पूर्वभूत एव वर्णः पुनर्भवति, तेन न रिष्टम्॥ ९॥

**तत्र प्रकृतिवर्णमर्धशरीरे विकृतिवर्णमर्धशरीरे, द्वावपि वर्णौ मर्यादाविभक्तौ दृष्ट्वा; यद्येवं सव्यदक्षिणविभागेन, यद्येवं पूर्वपश्चिमविभागेन, यद्युत्तराधरविभागेन, यद्यन्तर्बहिर्विभागेन, आतुरस्यारिष्टमिति विद्यात्; एवमेव वर्णभेदो मुखेऽप्यन्यत्र वर्तमानो मरणाय भवति॥ ९॥**

मर्यादाविभक्ताविति समसीमाव्यवस्थापितौ। पूर्वपश्चिमविभागेनेति अभिमुखपृष्ठभागेनेत्यर्थः। अन्तर्बहिर्विभागेनेति अत्रान्तर्गतो वर्णो मुखनासाकर्णश्रोत्रान्तर्गततया उन्नेयः। अन्यत्रेति अवान्तरे हस्तपादादौ॥ ९॥

**वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः॥१०॥**

वर्णभेदेनेति यथा वर्णविभागेन रिष्टं, तथा ग्लान्यादिविभागेनापीत्यर्थः। हर्ष इहोपचयो ज्ञेयः, मानसहर्षस्येह चाक्षुषाधिकारेऽसङ्गतत्वात्॥ १०॥

**तथा पिप्लुव्यङ्गतिलकालकपिडकानामन्यतमस्यानने जन्मातुरस्यैवमेवाप्रशस्तं विद्यात्॥ ११॥**

तथेत्यादौ पिप्लुप्रभृतीनामपि वर्णवत् सव्यदक्षिणादिविभागेन जन्म रिष्टं भवतीत्येवमेवशब्देनोच्यते॥ ११॥

---

१ 'नान्यत उपलभ्यते' इति पा०। २ 'अन्तगतायुष्ट्वमेव' इति पा०। ३ 'भिषजो मुक्तकेशत्वादौ केशखनादि दृश्यत एव कारणम्' इति पा०। ४ 'कृष्णश्यामः' इति पा०। ५ 'अवेक्ष्यमाणानपि' इति पा०।

१ 'कदाचिद्विकृत्या भवन्ति' इति पा०। २ 'अवेक्ष्यमाणानपि' इति पा०। ३ 'प्राग्विकृतात्' इति पा०। ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते। ५ कृष्णश्यामादिवर्णमिश्रतया ये वर्णास्ते कृष्णादिसादृश्यतया च ग्राह्या इति दर्शयति।' इति पा०। ६ 'मुखस्यान्तर्गतः' इति पा०।

नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिष्वपि च वैकारिकोक्तानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य भवति ॥ १२ ॥

नखेत्यादौ बलहान्याद्यभावे सति न रिष्टम् ॥ १२ ॥

यच्चान्यदपि किंचिद्वर्णवैकृतमभूतपूर्वं सहसोत्पद्येतानिमित्तमेव हीयमानस्यातुरस्य शश्वत्, तद्रिष्टमिति विद्यात्। इति वर्णाधिकारः ॥ १३ ॥

यच्चेत्यादिनाऽनुक्तवर्णरिष्टं संगृह्णाति। अभूतपूर्वमिति पूर्वव्याकृतरसायनविहितवर्णप्रादुर्भावव्युदासार्थम्। सहसोत्पद्येत इत्यनेन रिष्टानां शीघ्रस्वभावं दर्शयति। अनिमित्तमिति पूर्वोक्तार्थमेव। हीयमानस्य शश्वदिति स्वभावकथनं, रिष्टोत्पत्त्या हीयमानता शश्वदवश्यं भवति ॥ १३ ॥

स्वराधिकारस्तु—हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतजर्जरानुकाराः प्रकृतिस्वरा भवन्ति; यांश्चापरानुपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वाऽपि निर्दिश्यमानांस्तज्ज्ञैः। एडकैकलग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्त्वातुराणां स्वरा वैकारिका भवन्ति; यांश्चापरानुपेक्षमाणोऽपि विद्यात् प्राग्विकृतानभूत्वोत्पन्नान्। इति प्रकृतिविकृतिस्वरा व्याख्याता भवन्ति ॥ १४ ॥

क्रमागतं स्वरमाह—स्वरेत्यादि। जर्जरः वाद्यभाण्डविशेषः। यांश्चेत्यादि पूर्ववद् व्याख्येयम्। एडको मेषः, किंवा अरण्यच्छागलः; कलः सूक्ष्मः; ग्रस्तः सर्वथाऽनुच्चारः; क्षामः रूक्षः; दीनः दुःखोच्चार्यमाणस्वरः; अनुकीर्णं उपर्युपर्युच्चार्यमाणः॥१४॥

तत्र प्रकृतिवैकारिकाणां स्वराणामाश्वभिनिर्वृत्तिः स्वरानेकत्वमेकस्य चानेकत्वमप्रशस्तम्। इति स्वराधिकारः ॥ १५ ॥

इति वर्णस्वराधिकारौ यथावदुक्तौ मुमूर्षतां लक्षणज्ञानार्थमिति ॥ १६ ॥

प्रकृतेर्वैकारिका अन्यथाभूता इति प्रकृतिवैकारिकाः। स्वरानेकत्वमिति कदाचिदेडकस्वरत्वं, कदाचित् कलस्वरत्वमित्यादि। एकस्य चानेकत्वमिति एकस्यैव स्वरस्य चानेकत्वमिव प्रतिभाति। अनिमित्तमिति सर्वत्र संबध्यते ॥ १५ ॥ १६ ॥

भवन्ति चात्र—

यस्य वैकारिको वर्णः शरीर उपपद्यते।
अर्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः॥१७॥
नीलं वा यदि वा श्यावं ताम्रं वा यदि वाऽरुणम्।
मुखार्धमन्यथा वर्णो मुखार्धेऽरिष्टमुच्यते ॥ १८ ॥
स्नेहो मुखार्धे सुव्यक्तो रौक्ष्यमर्धमुखे भृशम्।
ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम् ॥ १९ ॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः।
आतुरस्याशु जायन्ते मुखे प्राणान् मुमुक्षतः ॥ २० ॥
पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंश्रितः।
चूर्णको वाऽपि दन्तेषु लक्षणं मरणस्य तत् ॥ २१ ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत् ॥ २२ ॥
यस्य नीलावुभावोष्ठौ पक्वजाम्बवसन्निभौ।
मुमूर्षुरिति तं विद्यान्नरो धीरो गतायुषम् ॥ २३ ॥
एको वा यदि वाऽनेको यस्य वैकारिकः स्वरः।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः ॥ २४ ॥
यच्चान्यदपि किञ्चित् स्याद्वैकृतं स्वरवर्णयोः।
बलमांसविहीनस्य तत् सर्वं मरणोदयम् ॥ २५ ॥

तत्र श्लोकः—

इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम्।
यस्तौ सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने वर्णस्वरीयमिन्द्रियं नाम प्रथमोऽध्यायः ॥ १ ॥

अयमेवार्थो गद्योक्तः स्पष्टार्थं सुखग्रहणार्थं च श्लोकेनोच्यते—यस्येत्यादिना। तिलका इत्यादौ मुखे इति मुखार्धे। ओष्ठाविति द्विवचनमुक्त्वाऽपि यत् 'उभौ' इति करोति, तेन सकलौष्ठव्याप्तिं दर्शयति। मुमूर्षुरित्युक्त्वाऽपि यत् 'गतायुषं' इति करोति, तेन रिष्टयुक्तो मुमूर्षुर्गतायुरिति दर्शयति; अजातरिष्टस्तु प्रतिक्रियाभावान्मुमूर्षुरगतायुरपि भवति। मरणोदयमिति मरणकारणमिति ज्ञानार्थम् ॥ १७–२६ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने वर्णस्वरीयमिन्द्रियं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

अथातः पुष्पितकमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पुष्पं यथा पूर्वरूपं फलस्येह भविष्यतः।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः ॥ ३ ॥

वर्णस्वरानन्तरं गन्धस्याधिकृतत्वान्निर्दिष्टत्वाच्च तदाश्रयिरिष्टप्रतिपादकं पुष्पितकमुच्यते—पुष्पं यथेत्यादि। प्रकरणार्थो यद्यपि सकलेन्द्रियसाधारणतया प्रथमाध्याय एव वक्तुं युज्यते,

---

१ 'अनेक्षमाणान्' इति पा०। २ 'शुककलग्रहग्रस्ताव्यक्त०' इति पा०। ३ 'अवेक्ष्यमाणानपि' इति पा०। ४ 'प्राग्विकृतात्' इति पा०। ५ 'स्वराणामेकत्वं' इति पा०।

१ 'रौक्ष्यमर्धे तथा भृशम्' इति पा०। २ 'तद्गतायुषः' इति पा०। ३ 'मरणाय हि' इति पा०। ४ 'वस्तु' इति पा०।

तथाऽपीह पुष्पानुकारेण गन्धाश्रयिरिष्टस्यं वाच्यत्वात् पुष्पं प्रकृतं, तत्प्रसङ्गाच्च रिष्टस्य पुष्पधर्मख्यापकमपि प्रकरणमिहोच्यते। पुष्पं यथेत्यादौ अव्यभिचरितफलसंबन्धमेव पुष्पं ज्ञेयम्, अत एव 'अप्येवं तु' इत्यादिना फलपुष्पयोः परस्परव्यभिचारं दर्शयति ॥ १-३ ॥

**अप्येवं तु भवेत् पुष्पं फलेनाननुबन्धि यत्।**
**फलं चापि भवेत् किञ्चिद्यस्य पुष्पं न पूर्वजम्[१] ॥ ४ ॥**
**न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते।**
**मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥ ५ ॥**

पुष्पफलदृष्टान्तेन रिष्टमरणयोर्दुर्बोधत्वात् पुष्पफलव्यभिचारमपि शिष्यो गृह्णीयादिति तन्निरासार्थमाह—अप्येवमित्यादि। फलेनाननुबन्धीति यथा—वेतसपुष्पम्। यस्य पुष्पं न पूर्वजमिति यथा—अश्वत्थादिफलम्। जातस्येति संपूर्णस्य, किञ्चिदुदिते ह्यरिष्टेऽसंपूर्णे नावश्यं मृत्युः। अन्ये तु जातस्य नियतस्येति वर्णयन्ति; द्विविधं हि रिष्टं—नियतं चानियतं च; तत्र नियतं "मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः" ( इं. अ. ७ ) इत्यादि, अनियतं यथा—"संशयप्राप्तमात्रेयो मन्यते तस्य जीवितम्" ( इं. अ. ९ ), "अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते" ( इं. अ. ५ ) इति; तथाऽनियतारिष्टाभिप्रायेणैव सुश्रुतेऽप्युक्तं—"ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायनतपोजप्यतत्परैर्वा निवार्यते" इति। ( सु. सू. अ. ) एतच्चान्ये न मन्यन्ते, आचार्येण रिष्टमरणयोरव्यभिचारस्य महता प्रयत्नेन दर्शितत्वात्। संशयप्राप्तमिति वचनं मरणप्रतिपादकमेवाचार्येण भङ्ग्यन्तरेणोक्तं, यथाऽऽचार्यस्य रिष्टार्थस्तथा तद्ग्रन्थ एव व्याख्यास्यामः। यत्तु रसायनादिना वार्ध्यत्वं रिष्टस्य तदनुमतमेव, रसायनमहेश्वरप्रसादादयो हि सर्वलोकमर्यादामपि हन्तुं क्षमाः, अतस्तेन तद्व्यभिचारमवेक्ष्येह ग्रन्थः क्रियते; महेश्वरो हि भस्मीभूतं कामं पुनर्जीवयति स्म, तपसा च रामेण मृतोऽपि विप्रपुत्रः पुनर्जीवित इत्याद्यनुसरणीयम्। अन्ये तु कालमृत्यावेव रिष्टपूर्वकं मरणं भवतीति वर्णयन्ति, वदन्ति च—"यद्यकालमृत्यौ रिष्टं भवति तदा वर्णायं मृत्युप्रदं रिष्टं तद्विफलं स्यात्, येनै कालमृत्यावनुचिताचरणेऽपि परं मृत्युर्भवति नाकालमृत्यौ, तत्र रिष्टे जाते यद्युचिता क्रिया क्रियते न तदा मृत्युर्भवितुमर्हति; तेन कालमृत्युगतमेव रिष्टम्" इति। तच्च न, अविशेषेण कालाकालमरणे रिष्टसद्भावनियमाभिधानात्। अकालमृत्यौ च यदैव क्रियापथमतिक्रान्तोऽपचारजनितो व्याधिर्भवति, तदैव परं रिष्टं भवति, अत एवोक्तं—"क्षणेन हि रिष्टानि प्रादुर्भवन्ति" इति। यश्चैनं (वं) न स्वीकरोति तस्य नियतायुषोऽपचारजन्यव्याधेरसाध्यता कदाऽपि न स्यात्; येन, यथा—अपचारजा दोषा अतिशयप्रमादादसाध्यव्याधिजनका भवन्ति, तथा मरणपूर्वरिष्टजनका अपि भवन्ति ॥ ४ ॥ ५ ॥

**मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता।**
**अरिष्टं वाऽप्यसंबुद्धमेतत् प्रज्ञापराधजम् ॥ ६ ॥**

यत्र कुत्रचिद्रिष्टमरणव्यभिचारिज्ञानं भवति तद्भ्रान्तमिति दर्शयन्नाह—मिथ्येत्यादि। अरिष्टाभमिति अरिष्टसदृशम्। मिथ्यादृष्टमिति रिष्टत्वेन ज्ञातम्; एतदनरिष्टे रिष्टज्ञानं प्रज्ञापराधजं; तथा रिष्टमपि सूक्ष्मरूपतया मारके व्याधावसंबन्धं भवति, एतदपि प्रज्ञापराधजं मिथ्याज्ञानम्। तेन रिष्टे सत्यपि मरणं न भवतीति ज्ञानं भ्रान्तं, तथा रिष्टं विनाऽपि क्वचिन्मरणं भवतीति ज्ञानं भ्रान्तम्। ततश्च सिद्धोऽव्यभिचारो मरणरिष्टयोरिति वाक्यार्थः ॥ ६ ॥

**ज्ञानसंबोधनार्थं तु लिङ्गैर्मरणपूर्वजैः।**
**पुष्पितानुपदेक्ष्यामो नरान् बहुविधैर्बहून्[२] ॥ ७ ॥**

ज्ञायते मरणमनेनेति ज्ञानं रिष्टं, तस्य सम्यगवबोधनं ज्ञानसंबोधनम्। मरणपूर्वजैरिति मरणपूर्वभाविभिः। पुष्पिता यथा वृक्षादयो गन्धवन्तो भवन्ति तथा रिष्टगन्धप्रयुक्ता ये भवन्ति ते पुष्पिताः, तान् पुष्पितान्। बहुविधैर्लिङ्गैर्बहून् पुष्पितानिति योजना ॥ ७ ॥

**नानापुष्पोपमो गन्धो यस्य भाति[३] दिवानिशम्।**
**पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥ ८ ॥**
**तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः।**
**स नो[४] संवत्सरादेहं जहातीति विनिश्चयः ॥ ९ ॥**
**एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत्।**
**इष्टैर्वा यदि वाऽनिष्टैः स च पुष्पित उच्यते ॥ १० ॥**
**समासेनाशुभान् गन्धानेकत्वेनाथवा पुनः।**
**आजिघ्रेदस्य गात्रेषु तं विद्यात् पुष्पितं भिषक् ॥ ११ ॥**
**आप्लुतानाप्लुते काये यस्य गन्धाः शुभाशुभाः।**
**व्यत्यासेनानिमित्ताः स्युः स च पुष्पित उच्यते १२**
**तद्यथा-चन्दनं कुष्ठं तगरागुरुणी मधु।**
**माल्यं मूत्रपुरीषे च मृतानि[५] कुणपानि च ॥ १३ ॥**
**ये चान्ये विविधात्मानो गन्धा विविधयोनयः।**
**तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गताः ॥ १४ ॥**
**इदं चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम्।**
**वक्ष्यामो यदभिज्ञाय भिषङ्मरणमादिशेत् ॥ १५ ॥**
**वियोनिर्विंदुरो[६] गन्धो यस्य गात्रेषु जायते।**
**इष्टो वा यदि वाऽनिष्टो न स जीवति तां समाम् १६**
**एतावद्गन्धविज्ञानं,**

वनस्येत्युक्तेऽपि यत् 'नानाद्रुमलतावतः' इति करोति, तेन भिन्नजातीयं वनं ग्राहयति; वनं हि स्वजातीयवृक्षाणामपि

१ 'गन्धान्वयिरिष्टस्य' इति पा०। २ 'पुष्पधर्मिताख्यापकमपि' इति पा०। ३ 'जायते' इति पा०। ४ 'रसायनादिबाध्यत्वम्' इति पा०। ५ 'यत्र' इति पा०।

१ 'मरणपूर्वरूपरिष्टजनका' इति पा०। २ 'बहुविधान् बहून्' इति पा०। ३ 'भाति' इति पा०। ४ 'स वै' इति पा०। ५ 'भूतानि' इति पा०। ६ 'विस्वरो यस्य गन्धो गात्रेषु' इति पा०।

स्यात्, यथा—चम्पकवनमशोकवनमित्यादि; नानात्वं च पुष्पाणामेकजातीयानामपि कलिकाद्यवस्थाभेदादपि स्यात्, तस्मात् साधु विशेषणं—नानाद्रुमलतावत इति। मरणलक्षणैर्यथोक्तैर्गन्धैस्तं पुष्पितमाहुरिति योज्यम्। संवत्सरादिति संवत्सराभ्यन्तरे। एवमिति दिवानिशम्। समासेनेत्यादिना पुष्पव्यतिरिक्तशवाद्यशुभगन्धयोगेनापि पुष्पितत्वं, 'परिभाष्यते' इति शेषः; समासेनेति नेल्केन। आप्लुतेत्यादौ आप्लुतानाप्लुतविशेषव्यत्यासः, तथा शुभाशुभगन्धानां व्यत्यासश्च ज्ञेयः। पुष्पितत्वाभिधानं च यत्र यत्र, तत्र तत्र संवत्सरान्तं जीवितं पूर्ववचनाद्भवति। तद्यथेत्यादिना शुभाशुभद्रव्याण्याह। मृतानीति मानुषव्यतिरिक्तानि गवादीनि मृतानि, कुणपानि तु मानुषशरीराणि। विविधयोनय इत्यनेन नानाद्रव्यकृतधूपवर्त्यादिगन्धान् ग्राहयति; विविधात्मान इत्यनेन तु अकृत्रिमनानाद्रव्यगन्धा उच्यन्ते। अनेनानुमानेनेति 'आप्लुतानाप्लुते' इत्यादिग्रन्थोक्तरिष्टानुसारेण। अतिदेशार्थमिति अनुक्तज्ञानार्थम्। वियोनिरिति निर्हेतुकः। विदूर इति स्थायी ॥ ८–१६ ॥—

रसज्ञानमतः परम्।
आतुराणां शरीरेषु वक्ष्यते विधिपूर्वकम् ॥ १७ ॥
यो रसः प्रकृतिस्थानां नराणां देहसंभवः।
स एषां चरमे काले विकारं भजते द्वयम् ॥ १८ ॥
कश्चिदेवास्यवैरस्यमत्यर्थमुपपद्यते।
स्वादुत्वमपरश्चापि विपुलं भजते रसः ॥ १९ ॥
तमनेनानुमानेन विद्याद्विकृतिमागतम्।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥ २० ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह।
विरसादपसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥ २१ ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः ॥ २२ ॥

वैरस्यमिति अनिष्टरसताम्। कथमिति आक्षेपे; तेन न कथमपीत्यर्थः। अवाप्नुयादिति जानीयात्। अत्यर्थरसिकमिति अतिस्वादुरसम्। कालपक्वस्येति पूर्णकालस्य। सर्वश इति सर्वगात्रेषु ॥ १७–२२ ॥

तत्र श्लोकः—
सामान्येन मयोक्तानि लिङ्गानि रसगन्धयोः।
पुष्पितस्य नरस्यैतत्फलं मरणमादिशेत् ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
इन्द्रियस्थाने पुष्पितकमिन्द्रियं नाम
द्वितीयोऽध्यायः ॥ २ ॥

संग्रहश्लोके सामान्येन पुष्पितस्येति वचनाद्रसरिष्टेऽपि पुष्पितत्वमस्य विवक्षितं, तेन रसरिष्टेऽपि संवत्सराभ्यन्तरे मरणमिति फलति ॥ २३ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने पुष्पितकमिन्द्रियं नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः।

अथातः परिमर्शनीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक्।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत ॥ ३ ॥

इन्द्रियार्थानुगतरिष्टपारिशेष्यात् स्पर्शगतरिष्टाभिधायकं परिमर्शनीयमिन्द्रियमुच्यते; इममेव चाध्यायसंबन्धं दर्शयन्नाह—वर्णे स्वरे चेत्यादि ॥ १–३ ॥

स्पर्शप्राधान्येनैवातुरस्यायुषः प्रमाणावशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना शरीरमस्य केवलं स्पृशेत्, परिमर्शयेद्वाऽन्येन। परिमृशता तु खल्वातुरशरीरमिमे भावास्तत्र तत्रावबोद्धव्या भवन्ति। तद्यथा—सततं स्पन्दमानानां शरीरदेशानामस्पन्दनं, नित्योष्मणां शीतीभावः, मृदूनां दारुणत्वं, श्लक्ष्णानां खरत्वं, सतामसद्भावः, सन्धीनां स्रंसभ्रंशच्यवनानि; मांसशोणितयोर्वीतीभावः, दारुणत्वं, स्वेदानुबन्धः, स्तम्भो वा; यच्चान्यदपि किञ्चिदीदृशं स्पर्शानां लक्षणं भृशविकृतमनिमित्तं स्यात्। इति लक्षणं स्पृश्यानां भावानामुक्तं समासेन ॥ ४ ॥

स्पर्शेनेति वक्तव्ये यत् 'स्पर्शप्राधान्येन' इति करोति, तेन अस्पर्शग्राह्यमपि चक्षुर्लोहितत्वादि रिष्टमिह स्पर्शपरीक्ष्यमध्ये ओघादायातं वक्तव्यमिति दर्शयति। प्रकृतिस्थेनेति नात्युष्णशीतेन। केवलमिति कृत्स्नम्। गुरुदारादेः स्वयं स्पर्शो यदा न युज्यते तदा कर्तव्यमाह—परिमर्शयेद्वाऽन्येनेति। सतामसद्भाव इति अत्र च वृषणादीनां सतामिति ज्ञेयं, स्थूलावयवानां रिष्टेऽप्यभावदर्शनात्। स्रंसः मनागगमनं, भ्रंशस्तु सुदूराधोगमनं, धावनं तु पार्श्वतो गमनम्। वीतीभावः अतिक्षीणत्वम्। लक्षणमिति मरणलक्षणम्। समासेनेति च्छेदः ॥ ४ ॥

तद्व्यासतोऽनुव्याख्यास्यामः—तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिग्गुदरपार्श्वपृष्ठेपिण्डिकापाणिग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं स्तब्धं दारुणं वीतमांसशोणितं वा स्यात्, परासुरयं पुरुषो न चिरात् कालं मरिष्यतीति विद्यात्। तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवङ्क्षणगुदवृषणमेढ्रनाभ्यंसस्तनमणिकपर्शुकाहनुनासिकाकर्णाक्षिभ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्कन्नानि वा स्युः, परासुरयं पुरुषोऽचिरात् कालं मरिष्यतीति विद्यात् ॥ ५ ॥

१ 'स्पर्शप्रामाण्येन' इति पा०। २ 'प्रमाणविशेषं' इति पा०। ३ 'स्थूलानां वृषणादीनां सतामसद्भावः' इति पा०। ४ 'प्रसृतं' इति पा०। ५ 'कालं करिष्यति' इति पा०। ६ 'स्कन्नानि' इति हस्तलिखितपुस्तके न पठ्यते। ७ 'करिष्यति' इति पा०।

तथाऽस्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीरालक्षयेत् । तस्य चेदुच्छ्वासोऽतिदीर्घोऽतिह्रस्वो वा स्यात्, परासुरिति विद्यात् । तस्य चेन्मन्ये परिमृश्यमाने न स्पन्देयातां, परासुरिति विद्यात् । तस्य चेद्दन्ताः परिकीर्णाः श्वेता जातशर्कराः स्युः, परासुरिति विद्यात् । तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः, परासुरिति विद्यात् । तस्य चेच्चक्षुषी प्रकृतिहीने, विकृतियुक्ते—अत्युत्पिण्डिते, अतिप्रविष्टे, अतिजिह्मे, अतिविषमे, अतिमुक्तबन्धने, अतिप्रस्रुते, सततोन्मिषिते, सततनिमिषिते, निमिषोन्मेषातिप्रवृत्ते, विभ्रान्तदृष्टिके, विपरीतदृष्टिके, हीनदृष्टिके, व्यस्तदृष्टिके,[1] नकुलान्धे, कपोतान्धे, अलातवर्णे, कृष्णपीतनीलश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनाभिप्लुते वा स्यातां, तदा परासुरिति विद्यात् । अथास्य केशलोमान्यायच्छेत्, तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन् न चेद्वेदयेयुस्तं परासुरिति विद्यात् । तस्य चेदुदरे सिराः प्रकाशेरन् श्यावताम्रनीलहारिद्रशुक्ला वा स्युः, परासुरिति विद्यात् । तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः, परासुरिति विद्यात् । अथास्याङ्गुलीरायच्छेत्; तस्य चेदङ्गुलय आयम्यमाना न स्फुटेयुः, परासुरिति विद्यात् ॥ ६ ॥

पृष्ठेषिका पृष्ठवंशः । पृथक्त्वेनेति एकैकश्येन । मणिकः करबाहुसन्धिः । मन्ये गलपार्श्वगते धमन्यौ । उच्छ्वासदैर्घ्यह्रासौ नासाग्रदत्तकरस्पर्शादुपलभ्येते । परिकीर्णा इति मललिप्ताः । दन्तादिश्वेतत्वं चक्षुर्ग्राह्यमपि स्पर्शपरीक्षणीयदन्तधर्मप्रस्तावादुच्यते । चक्षुषी प्रकृतिहीने विकृतियुक्ते इति सामान्यवचनं; तस्य विवरणम्—अत्युत्पिण्डिते इत्यादि । अत्युत्पिण्डिते इति अत्यर्थनिर्गते । अतिजिह्मे अतिकुटिले । अतिविषमे इति एकं संवृतम्, अपरं विस्तृतमिति । निमेषोन्मेषक्रियायामत्यर्थं प्रवर्तेते इति निमेषोन्मेषातिप्रवृत्ते । विपरीतदृष्टिके इति केयूरदृष्टिके; किंवा विपरीतदृष्टिके अन्यथाग्राहिणी । हीनदृष्टिके अदूरदर्शिनी, नष्टदृष्टिके वा । नकुलान्धकपोतान्धलक्षणे ग्रन्थः—"नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति । कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति" इति । अलातस्तु तप्ताङ्गारः । इह चक्षुर्गतारिष्टाभिधानप्रस्तावादस्पर्शग्राह्यमपि चक्षुषोरलातवर्णत्वादिकमुच्यते । उदरानुगताः सिरास्त्विह स्पर्शनग्राह्या भवन्तीति उक्ताः; तत्प्रसङ्गाच्चक्षुर्ग्राह्याः सिरावर्णा अप्युक्ताः । आयच्छेदिति स्फोटयेत् । नखाङ्गुलिगतारिष्टपरीक्षायां तु स्पर्शोऽपि व्याप्रियत एवेति कृत्वा तदरिष्टमपीहोक्तम् ॥ ६ ॥

१ 'व्यस्तदृष्टिके' इत्यनन्तरं 'विस्तृतदृष्टिमण्डले' इत्यधिकः पाठः क्वचिदुपलभ्यते । २ 'अत्यर्थमुन्नते' इति पा० ।

तत्र श्लोकः—

एतान् स्पृश्यान् बहून् भावान् यः स्पृशन्नवबुध्यते ।
आतुरे न स संमोहमायुर्ज्ञानस्य गच्छति ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने परिमर्शनीयमिन्द्रियं नाम तृतीयोऽध्यायः ॥ ३ ॥

एतान् स्पृश्यानिति बाहुल्यादुक्तम्; एवं स्पृशन्नित्येतदपि बाहुल्यादुक्तम् । 'आयुर्ज्ञानस्येति' पाठपक्षे षष्ठी संबन्धविवक्षायाम् ॥ ७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने परिमर्शनीयमिन्द्रियं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

उद्देशक्रमानुरोधादिन्द्रियगोचरारिष्टाभिधानार्थमिन्द्रियानीकमुच्यते । इन्द्रियाणामनीकं समूहः, तमधिकृत्य कृतमिन्द्रियानीकम् ॥ १ ॥ २ ॥

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित् ।
ज्ञातुमिच्छन् भिषज्ज्ञानमायुषस्तन्निबोधत[1] ॥ ३ ॥
अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः ।
अद्धा हि विदितं[2] ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥ ४ ॥

दर्शनं चक्षुः; दर्शनादीनि चक्षुरादीनि पञ्चेन्द्रियाणि । इन्द्रियाणां परीक्षा न प्रत्यक्षेणेत्याह—अद्धा हीत्यादि । अद्धेति अवितथम् । इन्द्रियाणामतीन्द्रियत्वादनुमानेनैव परीक्षणमिति शेषः[3] ॥ ३ ॥ ४ ॥

स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंश्रयम्[4] ।
आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत् ॥ ५ ॥
इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम् ।
तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ६ ॥

स्वस्थेभ्य इति प्रकृतिस्थेभ्य इन्द्रियेभ्यः; 'उत्पन्नम्' इति शेषः । इन्द्रियसंश्रयमिति बाह्येन्द्रियजन्यम् । अनिमित्तेनेति विकृतिज्ञानजनकबाह्यहेतुव्यतिरेकेण; इन्द्रियगतिकृतज्ञानजनकदोषनिरासस्तु 'स्वस्थेभ्यः' इति विशेषणेनैव कृतः । अशुभो-

१ 'आयुःप्रमाणं जिज्ञासुर्भिषक् तन्नो निबोधत' इति पा० । २ 'वितथं' इति पा० ३ 'वाक्यार्थः' इति पा० । ४ 'ज्ञानमिन्द्रियसंभवम्' इति पा० ।

दयमिति मरणकारणम् । पुनःशब्दः प्रकाशने, यथा—"दोषाः पुनस्त्रयः"(वि.अ.१) इति । भूयःशब्दः पुनःपुनरर्थे, किंवा भूयःशब्दो महदर्थः; तेन, पुनर्भूयःशब्दयोर्भिन्नार्थत्वम् ॥५॥६॥

घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।
विगीतमुभयं ह्येतत् पश्यन् मरणमृच्छति ॥ ७ ॥

घनीभूतमिति कठिनतां गतं; किंवा भूतशब्दः कृतार्थे, यथा—उपधानीभूतम् । तेन, इवशब्दश्चोपमाने भवति । अन्ये तु घनीभूतं पृथिवीरूपतां यातं वदन्ति । आकाशमिव मेदिनीमिति शून्यरूपां मेदिनीम् । विगीतमिति विपरीतत्वेन ज्ञातम् । उभयमित्यनेन यौगपद्येन पृथिव्याकाशविपरीतोपलम्भो रिष्टं, नैकैकश्येन । अयं चारिष्टमहिमा यदेवंरूपमेव रिष्टं भवति, एवमुक्तारिष्टेषु तथा तयोत्पादः स्वमहिम्नैव ज्ञेयः । एतानि चारिष्टानि सामान्येनैवेन्द्रियारिष्टाभिधायकप्रकरणलब्धान्यपि प्रायोभावित्वेन शृङ्गग्राहिकयाऽभिधीयन्ते ॥ ७ ॥

यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति चादीप्तस्तस्यायुःक्षयमादिशेत् ॥ ८ ॥

दर्शनमिति चक्षुर्गोचरताम् । अम्बरगोचर इत्यनेन भूमिष्ठदेवतारूपवातदर्शनं निषेधयति । एतेन 'एष वायुः, इत्याकारवान्' इतीति मारुतप्रत्यक्षज्ञानमरिष्टम् । नायाति दर्शनमिति संबन्धः ॥ ८ ॥

जले सुविमले जालमजालावतते नरः ।
स्थिते गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते[१] ॥ ९ ॥

स्थिते इति स्थिरे । गच्छति वहमाने । येषु चेह रिष्टेषु मरणकालनियमो नोक्तस्तत्र संवत्सरमवधिर्भवति, ततः परेण हि रिष्टे मरणानभिधानात् ॥ ९ ॥

जाग्रत् पश्यति यः प्रेतान् रक्षांसि विविधानि च ।
अन्यद्वाऽप्यद्भुतं किञ्चिन्न स जीवितुमर्हति[२] ॥ १० ॥

प्रेतानित्यादिबहुवचनान्नैकप्रेतादिदर्शनं रिष्टमिति भावः ॥ १० ॥

योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम् ।
कृष्णं वा यदि वा शुक्लं निशां व्रजति सप्तमीम् ॥ ११ ॥

प्रकृतिवर्णस्थमिति वैवर्ण्यविकृत्यादिकारकसविषान्नवर्णादिविरहेण स्वीय एव लोहितकपिले वर्णे व्यवस्थितम् । सप्तमीं निशां व्रजति, तेनाष्टाहान्मरणम् ॥ ११ ॥

मरीचीनसतो मेघान्मेघान् वाऽप्यसतोऽम्बरे ।
विद्युतो वा विना मेघैः पश्यन् मरणमृच्छति ॥ १२ ॥

मरीचीनसत इत्यत्र प्रकरणान्मरीचिशब्देन मेघज्योतिरुच्यते । मरीचीनां विशेषणम्—असत इति । विद्युतो वा विना मेघादिति अभ्रान्तच्छटा एव सर्वदा मेघसंबन्धोपलभ्यमाना ग्राह्या, नान्या विद्युदिति; ता हि विना मेघदर्शनमपि सुदूरात् स्वस्थैरप्युपलभ्यन्ते ॥ १२ ॥

मृन्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ १३ ॥
अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम् ।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ १४ ॥
नक्तं सूर्यमहश्चन्द्रमनग्नौ धूममुत्थितम् ।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १५ ॥
प्रभावतः प्रभाहीनान्निष्प्रभांश्च प्रभावतः ।
नरा विलिङ्गान् पश्यन्ति भावान्[१] भावाञ्जिहासवः १६
व्याकृतीनि विवर्णानि विसंख्योपगतानि च ।
विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥ १७ ॥
यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति ।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥ १८ ॥

शुद्धमिति मेघानन्तरितम् । रात्रावित्यनेन दिवा वह्निनिष्प्रभत्वदर्शनमरिष्टं नैवेति दर्शयति । विलिङ्गानिति विगतसहजलिङ्गान् । तेन प्रभाव्यतिरिक्ताञ्जनादि(?)लिङ्गविपर्यये रिष्टं भवति । भावानिति प्राणान्; किंवा भावानिति पञ्चमहाभूतानि शरीररूपाणि । व्याकृतीनीति विविधाकृतीनि । विवर्णानीति विरुद्धवर्णानि । विसंख्योपगतानीति विपरीतसंख्यायुक्तानि । विनिमित्तानीति विगतनिमित्तानि । व्याकृत्यादिकारकहेतुव्यतिरेकेण व्याकृत्यादियुक्तरूपदर्शनमरिष्टमित्यर्थः । रूपाणीति रूपवन्ति द्रव्याणि ॥ १३–१८ ॥

अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता[२] ॥ १९ ॥
संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति गतासुं तं बुद्धिमान् परिवर्जयेत् ॥ २० ॥

अशब्दस्येत्यादिना श्रोत्रारिष्टमाह । ज्वालायाः शब्द इव शब्दो ज्वालाशब्दः, तम् ॥ १९ ॥ २० ॥

विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न वा तान् सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥ २१ ॥

विपर्ययेणेत्यादिना घ्राणारिष्टमुच्यते । न वा तान् सर्वशो विद्यादिति सर्वथैव गन्धाञ्छुभानशुभान् वा न वेत्ति ॥ २१ ॥

यो रसान्न विजानाति न वा जानाति तत्त्वतः ।
मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ २२ ॥

तत्त्वत इति स्वकीयेन रूपेण । मुखपाकशब्दो रसनादोषोपलक्षणं; तेन, पित्तदुष्टरसनत्वादसाम्यथात्वग्राहकस्य व्युदासोऽवरुध्यते । पक्वमिति संपूर्णायुःकालम् ॥ २२ ॥

---

१ 'किञ्चिज्जीविताद् स विमुच्यते' इति पा० । २ 'यः पश्यति स नश्यति' इति पा० ।

१ 'प्राणान्' इति पा० । २ 'द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता' इति पा० । ३ 'तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम्' इति पा० । ४ 'न चैतान्' इति पा० ।

उष्णाञ्छीतान् खराञ्छ्लक्ष्णान्मृदूनपि च दारुणान् ।
स्पृश्यान् स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥२३॥

ततोऽन्यत्वमिति उष्णे शीतत्वं, श्लक्ष्णे खरत्वमित्यादि मन्यते ॥ २३ ॥

अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति ॥ २४ ॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थानदोषजान् ।
नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति ॥२५॥

संप्रति सर्वेन्द्रियरिष्टं सामान्येन ब्रूते—अन्तरेणेत्यादि । अन्तरेणेति विना । योगमित्यस्य विशेषणं—विधिपूर्वकमिति; अनेन यथाविधिकृतस्यैव योगस्यातीन्द्रियज्ञाने समर्थत्वमुक्तम् । अधिकमिति अस्मदादीन्द्रियाविषयम् । पञ्चत्वमिति मरणम् । दृष्टिः उपलब्धिः, तया दृष्ट्या दृष्टिशक्तिरुपचारादुच्यते; तेन ऋते दृष्टिमिति उपलब्धिं विना; ततश्चेन्द्रियाणामुपलब्धिशक्तिं विना य इन्द्रियैरुपलब्धुमशक्यान् पश्येदिन्द्रियैः, न स जीवति । अदोषजानित्यनेन च दोषस्वभावादिन्द्रियाशक्यार्थग्रहणं निराकरोति । यथा—अङ्गुलियन्त्रितं चक्षुर्वातदुष्ट्याऽऽसन्नवस्तुद्वयमिन्द्रियाविषयं पश्यति, तथा पित्तदुष्टरसनं गुडं न मधुरं प्रत्येतीत्यादि बोध्यम् ॥ २४ ॥ २५ ॥

स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम् ।
पश्यन्ति येऽसद्बहुशस्तेषां मरणमादिशेत् ॥ २६ ॥

स्वस्था इति अविकृतेन्द्रियमनसः । प्रज्ञाविपर्यासैरिति शेपीभूतात्प्रभावकृतः प्रज्ञाविपर्यासः । असदिति अयथाभूतम् । बहुश इत्यनेन सकृद्दर्शनस्य नारिष्टत्वम् ॥ २६ ॥

तत्र श्लोकः—

एतदिन्द्रियविज्ञानं यः पश्यति यथातथम् ।
मरणं जीवितं चैव स भिषक् ज्ञातुमर्हति ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने इन्द्रियानीकमिन्द्रियं नाम चतुर्थोऽध्यायः ॥ ४ ॥

इन्द्रियविज्ञानमिन्द्रियगतरिष्टविज्ञानम् । जीवितज्ञानं चेह रिष्टशून्येन्द्रियज्ञाने सति भवतीति ज्ञेयम् ॥ २७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने इन्द्रियानीकमिन्द्रियं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातः पूर्वरूपीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

इन्द्रियगतरिष्टमभिधाय सत्त्वादीनामग्रे सूचितानामरिष्टमग्रे वक्तुं युज्यते; तत्त्वल्पवक्तव्यत्वादुल्लङ्घ्य बहुवक्तव्यं पूर्वरूपरिष्टमभिधातुं पूर्वरूपीयोऽभिधीयते, प्रथमाध्याये तु सत्त्वादीनामग्रेऽभिधानमिन्द्रियैः समं बुद्धिसाधनत्वादिप्रसङ्गागतं ज्ञेयम् । व्याधिस्तु यद्यपि बहुवक्तव्यः कतमानिशरीरीयेऽग्रे सूत्रितश्च, तथाऽपि पूर्वरूपपूर्वकत्वाद् व्याधेः पूर्वं पूर्वरूपनिरूपणमिह; सूत्रे त्वग्रे व्याधिवचनेन पूर्वं रूपाद् व्याधेः पूर्वरूपबोध्यस्य प्राधान्यं दर्शयति ॥ १ ॥ २ ॥

पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।
भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये ॥ ३ ॥
पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ ४ ॥
अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।
विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम् ॥ ५ ॥

भिन्नाभिन्नानीति साधारणासाधारणानि । तत्र 'पूर्वरूपाणि' इत्यादिना 'तस्यापि मरणं ध्रुवम्' इत्यन्तेन सर्वव्याधिपूर्वरूपरिष्टं साधारणमुक्तं, 'पूर्वरूपैकदेशांस्तु' इत्यादिना तु प्रतिव्याधिभिन्नपूर्वरूपारिष्टमुच्यते । अन्ये तु भिन्नाभिन्नानीति उक्तानुक्तानीति ब्रुवते; तत्र ज्वरादिपूर्वरूपाण्युक्तानि, 'श्वभिरुष्ट्रैः खरैः' इत्यादि तु पूर्वरूपमनुक्तम् । सर्वाणीति समस्तानि । अतिमात्रयेति अत्युल्बणत्वेन । ज्वरपुरःसर इति ज्वरानन्तरभावी । अनेन कल्पेनेत्यनेन सर्वाणि चातिमात्रया चेति दर्शयति ॥ ३–५ ॥

पूर्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान् सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥ ६ ॥
बलं च हीयते यस्य प्रतिश्यायश्च वर्धते ।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ७ ॥
श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति ॥ ८ ॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
सुघोरं ज्वरमासाद्य जीवितं स विमुञ्चति ॥ ९ ॥

रोगाननुबध्नन्तीति रोगेण पश्चाद्भाविनाऽवश्यं युज्यन्ते । मृत्युर्यैरनुबध्यते इति यै रोगैर्मृत्युरनुबध्यते । एतेनैतत् फलति—पूर्वरूपाणां यैर्व्याधिभिर्नियतः संबन्धस्तेऽवश्यं मारका भवन्तीत्यर्थः । "श्वोष्ट्रवराहखरैर्यानं ( नि. अ. ६ )" इत्यादि शोषनिदानेऽप्युक्तं, तेन दक्षिणदिशागमनविशेषितमेव तद्रिष्टम् ॥ ६–९ ॥

लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥ १० ॥
रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥ ११ ॥

---

१ 'इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान्न पश्यति। विपर्ययेण यो विद्यात्तं विद्याद्विगतायुषम्' इति पा० । २ 'ये सुबहुशस्तेषां' इति पा० ।

१ 'मृत्युर्यैरनुबध्यते' इति पा० । २ 'नीयते' इति पा० ।

अन्तिकादिति समीपात् । रक्तं प्राप्येति रक्तपित्तं प्राप्य । सीदति म्रियते ॥ १० ॥ ११ ॥

शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥ १२ ॥
लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥ १३ ॥

आटोपः कुक्षौ शब्दवद्वातभ्रमणम् । गृह्यते अनेनेति ग्रहो लिङ्गमित्यर्थः ॥ १२ ॥ १३ ॥

कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥ १४ ॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥ १५ ॥

संस्पृष्टमिति शस्त्रतृणादिसंस्पृष्टम् ॥ १४ ॥ १५ ॥

स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्नन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥ १६ ॥
स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १७ ॥

यद्यपि स्नातानुलिप्तगात्रे इत्यादिरिष्टं पुष्पितके "अपि स्नातानुलिप्तस्य" ( इं. अ. २ ) इत्यादिनोक्तं, तथाऽपीह प्रमेहेण मरणोपदर्शनार्थं पुनरुच्यते । तत्र च यदा प्रमेहपूर्वरूपान्तराणि भवन्ति, एतच्च लक्षणं भवति, तदा प्रमेहेण मृत्युः; यदा तु प्रमेहपूर्वरूपाणि न भवन्ति, तदा येन केनापि व्याधिना मृत्युर्ज्ञेयः ॥ १६ ॥ १७ ॥

ध्यानायासौ तथोद्वेगौ मोहश्चास्थानसंभवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥ १८ ॥
आहारद्वेषिणं पश्यन् लुप्तचित्तमुदर्दितम् ।
विद्याद्धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १९ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणम् ॥ २० ॥
नृत्यन् रक्षोगणैः साकं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भृशमुन्मादं याति लोकमतः परम् ॥ २१ ॥
असत्तमः पश्यति यः शृणोत्यप्यसतः स्वनान् ।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण बध्यते ॥ २२ ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ॥
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २३ ॥

उदर्दितमिति उदर्दयुक्तं; यद्वा, उदर्दितम् ऊर्ध्ववातार्दितम् । आविध्येति अधःशिरसं कृत्वा ॥ १८-२३ ॥

स्तभ्येते प्रतिबुद्धस्य हनू मन्ये तथाऽक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥ २४ ॥

१ 'मज्जति' इति पा० ।

शष्कुलीर्वाऽप्यपूपान् वा स्वप्ने खादति यो नरः ।
स चेत्ताद्दक्छर्दयति प्रतिबुद्धो न जीवति ॥ २५ ॥

तादृगिति अपूपशष्कुलीरूपम् ॥ २४ ॥ २५ ॥

एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धं च फलं च ज्ञातुमर्हति ॥ २६ ॥

एषामनुबन्धमिति एतत्पूर्वरूपोत्तरकालभाविनं व्याधिम् । फलं चैषां मृत्युरूपम् ॥ २६ ॥

इमांश्चाप्यपरान् स्वप्नान् दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ २७ ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ॥ २८ ॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते ।
रक्षःप्रेतपिशाचस्त्रीचण्डालद्रविडान्ध्रकैः ॥ २९ ॥
वंशवेत्रलतापाशतृणकण्टकसङ्कटे ।
संसज्जति हि यः स्वप्ने यो गच्छन् प्रपतत्यपि ॥ ३० ॥
भूमौ पांशूपधानायां वल्मीके वाऽथ भस्मनि ।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि ॥ ३१ ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसाऽऽवृते ।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥ ३२ ॥
स्नेहपानं तथाऽभ्यङ्गः प्रच्छर्दनविरेचने ।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ॥ ३३ ॥
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥ ३४ ॥
दन्तचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥ ३५ ॥
रक्तपुष्पं वनं भूमिं पापकर्मालयं चिताम् ।
गुहान्धकारसंबाधं स्वप्ने यः प्रविशत्यपि ॥ ३६ ॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम् ।
दारुणामटवीं स्वप्ने कपियुक्तेन याति वा ॥ ३७ ॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥ ३८ ॥
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ३९ ॥
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ॥ ४० ॥

क्लेशाय महतेऽपि वेत्यत्रारोगिणां क्लेशाय महत इति बोद्धव्यं, रोगिणां तु मरणायैव; यत उत्तरत्रोपसंहारे 'इत्येते दारुणाः स्वप्नाः' इत्यादौ यथोक्तमेव विभागं करिष्यति ।

१ 'स चेत् प्रच्छर्दयेत्ताद्दक्' इति पा० । २ '°द्रवितान्धकैः' इति पा० । ३ 'प्रमुह्यति' इति पा० । ४ 'लगति' इति पा० । ५ 'प्रविशत्यपि' इति पा० । ६ 'नीयते' इति पा० । ७ 'चन्द्रतारार्कनक्षत्र°' इति पा० । ८ 'पापाननाचारा' इति पा० ।

वयांसीति पक्षिणः। गृध्रादिकाकान्तैः परिवार्यत इति संबन्धः। संसज्जतीति संयुक्तो भवति। किंवा, 'प्रमुह्यति' इति पाठः; तत्र प्रमुह्यतीति वंशादिसङ्कटे लग्नः सन्न निर्गममार्गमासादयति। प्रपतत्यपीति भूमावित्यादिना योज्यम्। पांशूपधानायामिति धूलिसंयुक्तायाम्। किंवा, भूमावित्यादि प्रपततीत्यनेन योज्यम्। उपानत् पादत्राणम्। रक्तपुष्पमिति वनविशेषणम्। गुहान्धकारसंबाधमिति गुहान्धकाररूपं कष्टकारकम्। दिग्वासा नग्नः सन्। कपियुक्तेन 'यानेन' इति शेषः। कश्चिदेव प्रमुच्यत इति अरोगान् प्रति नैतत् स्वप्नानां रिष्टत्वं; तेन, अरोगेष्वेतेषां मरणव्यभिचारेण नैकान्तत्वेन रिष्टत्वमिति वदन्ति ॥ २७–४० ॥

**मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः।**
**स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे॥४१॥**
**नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा।**
**इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा ॥ ४२ ॥**

यथैतत् स्वप्रदर्शनं भवति तदाह—मनोवहानामित्यादि। मनोवहानि स्रोतांसि यद्यपि पृथङ्नोक्तानि, तथाऽपि मनसः "केवलं चेतनावच्छरीरमयनभूतं" (वि. अ. ५) इत्यभिधानात् सर्वशरीरस्रोतांसि गृह्यन्ते, विशेषेण तु हृदयाश्रितत्वान्मनसस्तदाश्रिता दश धमन्यो मनोवहा अभिधीयन्ते। त्रिभिरिति त्रिभिरपीत्यर्थः; तेन, पृथगपि दोषैः पूरणं ज्ञेयम्। नातिप्रसुप्त इति नातिनिद्राभिभूत इत्यर्थः। इन्द्रियेशेनेति इन्द्रियप्रेरकेण ॥ ४१ ॥ ४२ ॥

**दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा।**
**भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः ॥ ४३ ॥**

स्वप्नानां फलवत्त्वमफलवत्त्वं चोक्तं, तद्दर्शयितुं स्वप्नप्रकारानाह—दृष्टमित्यादि। दृष्टमिति चक्षुषा। अनुभूतं तु शेषेन्द्रियज्ञातम्। कल्पितमिति मनसा भावितम्। प्रार्थितं याञ्चाविषयीकृतम्। भाविकमिति भाविशुभाशुभफलसूचकम्। दोषजमिति उल्वणवातादिदोषजन्यम् ॥ ४३ ॥

**तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत्।**
**दिवास्वप्नमतिह्रस्वमतिदीर्घं च बुद्धिमान् ॥ ४४ ॥**
**दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो[१] भवेत्।**
**न स्वपेद्यं पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ४५ ॥**
**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।**
**पश्येत् सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम्॥४६**

**तत्र श्लोकः—**

**पूर्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान्।**
**न स मोहादसाध्येषु कर्माण्यारभते भिषक् ॥ ४७ ॥**

१ 'हृदयस्थानत्वात्' इति पा०। २ 'तथैव च' इति पा०। ३ 'अल्पबलः' इति पा०।

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने पूर्वरूपीयमिन्द्रियं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

पूर्वं दृष्टादिकल्पितान्तं पञ्चविधस्वप्नमफलम्। अफलस्वप्नान्तरमाह—दिवास्वप्नमित्यादि। दिवादृष्टं सर्वं स्वप्नं, तथा रात्रिदृष्टमपि अतिदीर्घमतिह्रस्वं च स्वप्नमफलं विद्यात्, फलशून्यत्वादिति। पारिशेष्याद्भाविकं दोषजन्यं च सफलम्। तत्र भाविकं शुभाशुभरूपतया शुभाशुभफलप्रदं, यत्तु दोषजन्यं तद्दोषप्रकोपजन्यव्याधिरूपफलसूचकतया सफलम्। अत्र चाध्याये येषामेव स्वप्नरूपविशिष्टरिष्टसंभवस्त एवोक्ताः; तेन ग्रहण्यादीनां किमिति स्वप्नारिष्टानि नोक्तानीति न वाच्यं; तत्र विशिष्टरिष्टासंभवादेवानभिधानं ज्ञेयम्। 'दृष्टः प्रथमयामे यः' इत्यादिग्रन्थं केचिदत्र पठन्ति। स व्यक्तार्थ एव ॥ ४४–४७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने पूर्वरूपीयमिन्द्रियं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

**अथातः कतमानिशरीरीयमिन्द्रियं व्याख्यास्यामः १**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

संप्रति पूर्वरूपीयानन्तरं भाविव्याध्याश्रयारिष्टाभिधानार्थं कतमानिशरीरीयमिन्द्रियमुच्यते। कतमानि शरीराण्यधिकृत्य कृतं कतमानिशरीरीयम् ॥ १ ॥ २ ॥

**कतमानि शरीराणि व्याधिमन्ति महामुने!।**
**यानि वैद्यः परिहरेद्येषु कर्म न सिध्यति ॥ ३ ॥**
**इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः सुदुर्वचम्[१]।**
**आचचक्षे यथा तस्मै भगवांस्तन्निबोधत ॥ ४ ॥**
**यस्य[२] वै भाषमाणस्य रुजत्यूर्ध्वमुरो भृशम्।**
**अन्नं च च्यवते भुक्तं स्थितं चापि न जीर्यति ॥ ५ ॥**
**बलं च हीयते शीघ्रं तृष्णा चातिप्रवर्धते।**
**जायते हृदि शूलं च तं भिषक् परिवर्जयेत् ॥ ६ ॥**

प्रश्नमिति पृच्छाविषयम्। ऊर्ध्वमुर इति उरऊर्ध्वभाग इत्यर्थः। एतदध्यायप्रतिपाद्यानां चासाध्यव्याधीनां मरणसूचकेन रिष्टेन समं मरणसूचकतया साधर्म्यादनरिष्टानामपि व्याधीनामभिधानमिति ब्रुवते। यदि एत एवासाध्यव्याधयो मरणपूर्वरूपतया रिष्टरूपा एव भवन्ति तथाऽपि[३] न काचित् क्षतिः। तेनारिष्टाधिकारादरिष्टत्वमेव एतदध्यायवाच्यानां व्याधीनामिच्छामः ॥ ३–६ ॥

**हिक्का गम्भीरजा यस्य शोणितं चातिसार्यते।**
**न तस्मै भेषजं दद्यात् स्मरन्नात्रेयशासनम् ॥ ७ ॥**

१ 'इत्यग्निवेशेन गुरुः प्रश्नं पृष्टः पुनर्वसुः' इति पा०। २ 'यस्य' इति पा०। ३ 'तदाऽपि' इति पा०।

आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम् ।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥ ८ ॥
आनाहश्चातितृष्णा च यमेतौ दुर्बलं नरम् ।
विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ॥ ९ ॥
ज्वरः पौर्वाह्णिको यस्य शुष्ककासश्च दारुणः ।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ १० ॥

गम्भीरजा इति गम्भीरनाभ्यादिदेशजा, न तु गम्भीरा; तस्याः स्वरूपत एवासाध्यत्वेनोक्तत्वात् 'शोणितं चातिसार्यते' इति विशेषणमनर्थकं स्यात्। व्याधितमित्यनेन हि आनाहातिसारातिरिक्तव्याधिगृहीतमिति दर्शयति । आनाहातिसारयो रोगत्वे सिद्धेऽपि 'रोगौ' इति विशेषेण रुजाकर्तृत्वोपदर्शनार्थम्। इहालभ्य एव जीविते 'दुर्लभम्' इत्युक्तं; यथा—सर्वथाऽलभ्ये दुर्लभमिति । अन्ये तु दुर्लभभाषया अनियतं मरणे रिष्टमिति ब्रुवते, एवम् "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" ( इं. अ. ९ ) इत्यादावपि व्याख्यानयन्ति। अनियतरिष्टताऽस्वारस्यं त्वस्माभिः पुष्पितक एवोक्तम्। "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इत्यस्य चार्थं यस्यश्यावनिमित्तीये वक्ष्यामः ॥ ७–१० ॥

यस्य मूत्रं पुरीषं च ग्रथितं संप्रवर्तते ।
निरूष्मणो जठरिणः श्वसनो न स जीवति ॥११॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ।
ज्ञातिसङ्घं स संक्लेश्य तेन रोगेण हन्यते ॥ १२ ॥
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।
सीदतश्चाप्युभे जङ्घे तं भिषक् परिवर्जयेत् ॥ १३ ॥
शूलहस्तं शूलपादं शूलगुह्योदरं नरम् ।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १४ ॥

मूत्रं ग्रथितमिति घनीभूतं ज्ञेयम्। ज्ञातिसङ्घं स संक्लेश्येतिवचनेन चिरमस्य रोगोऽनुवर्तते, ततः प्रत्याशया ज्ञातयस्तत्प्रतीकारार्थं क्लिश्यन्ति, ततस्तु म्रियत एव न प्रतिकर्तुं पार्यते । पिण्डिके इति जङ्घामांसपिण्डिके ॥ ११–१४ ॥

उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः ।
सततं च्यवते यस्य दूरात्तं परिवर्जयेत् ॥ १५ ॥
हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः ।
क्षीणमांसो नरो दूराद्वर्ज्यो वैद्येन जानता ॥ १६ ॥
त्रयः प्रकुपिता यस्य दोषाः कोष्ठाभिलक्षिताः ।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥१७॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण नरस्यान्ताय जायते ॥ १८ ॥
पाण्डुरश्च कृशोऽत्यर्थं तृष्णयाऽभिपरिप्लुतः ।
डम्बरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता ॥१९॥

१ 'शुष्क' इति पा० । २ 'उरोमुक्तः' इति पा० । ३ 'शुष्ककासज्वरार्दितः' इति पा० । ४ 'कोष्ठेऽभिलक्षिताः' इति, 'कण्ठाभिलक्षिताः' इति च पा० ।

उरोयु(मु)क्त इति उरःप्रभवत्वेनानुमीयमानः। कष्ठाभिलक्षिता इति दुरुपक्रमत्वेन ज्ञाताः। किंवा 'कोष्ठा(ष्ठे)भिलक्षिता' इति पाठः, स व्यक्त एव। डम्बरी स्तब्धाक्षावलोकी; किंवा डम्बरी संरम्भवान् । कुपित उच्छ्वासो यस्य स कुपितोच्छ्वासः ॥ १५–१९ ॥

हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया ।
प्राणाश्चोरसि वर्तन्ते यस्य तं परिवर्जयेत् ॥ २० ॥

प्राणाश्चोरसि वर्तन्त इति वायव उरसि प्रकुपिता वहन्ति; यदि तु जीवितं प्राणा इहोच्यन्ते, तदा तस्योरसि वर्तन्ते, मृत एव पुरुषो भवति, ततश्च तस्मिन् काले रिष्टेनासाध्यतां ज्ञात्वा रोगिपरित्यागे वैद्यस्याप्रसिद्धिर्भवत्येवेति कृत्वा प्राणा वायव इहोच्यन्ते इति ब्रुवते; वयं तु ब्रूमः—सद्योमरणीयारिष्टवदेतत् प्रत्यासन्नमृत्युगमकमेव भविष्यतीति ॥ २० ॥

ताम्यत्यायच्छते शर्म न किञ्चिदपि विन्दति ।
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥ २१ ॥
विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।
वर्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ २२ ॥
बलं विज्ञानमारोग्यं ग्रहणी मांसशोणितम् ।
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते ॥ २३ ॥
आरोग्यं हीयते यस्य प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २४ ॥

तत्र श्लोकः—

इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत् ।
न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमात् ॥२५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने कतमानिशरीरीयमिन्द्रियं नाम षष्ठोऽध्यायः ॥ ६ ॥

आयच्छते अङ्गानि क्षिपति । विरुद्धयोनय इति परस्परविरुद्धधर्मार्णः। विरुद्धयोनयोऽपि स्वल्पतयैकदूष्यतया वा अविरुद्धोपक्रमा अपि भवन्तीत्यत उक्तं—विरुद्धोपक्रमा इति । आरोग्यं हीयत इति अत्रोक्तरोगव्यतिरिक्तरोगवृद्ध्या आरोग्यहानिर्बोध्या । प्रकृतिः परिहीयत इति स्वभावः सुशीलत्वादिरूपः क्षीयते; किंवा, प्रकृतिर्जन्मप्रतिबद्धा श्लेष्मप्रकृत्यादिरूपा हीयते ॥ २१–२५ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने कतमानिशरीरीयमिन्द्रियं नाम षष्ठोऽध्यायः ॥ ६ ॥

१ 'भवन्ति' इति पा० । २ 'व्यायच्छते ताम्यति च शर्म किंचिन्न विन्दति' इति पा० । ३ 'विकारा यस्य वर्धन्ते' इति पा० । ४ 'मांससारिणी' इति पा० । ५ 'हीयन्ते' इति पा० । ६ 'विकारा यस्य वर्धन्ते' इति पा० । ७ 'व्यायच्छते' इति पा० । ८ 'परस्परविरुद्धकर्माणः' इति पा० ।

## सप्तमोऽध्यायः।

**अथातः पन्नरूपीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

व्याधिरूपानन्तरं वेदनोपद्रवौ उद्दिष्टौ, तौ च पूर्वाध्याय एव "शूलाटोपान्त्रकूजाश्च" (इं. अ. ५) इत्यादिना तथा अन्यत्र "आनाहश्चातिसारश्च" (इं. अ. ६) इत्यादिना रिष्टरूपतया उक्तावेवेति कृत्वा छायाप्रतिच्छायारूपारिष्टस्य क्रमप्राप्तस्याभिधायकं पन्नरूपीयमुच्यते। पन्नरूपामधिकृत्य कृतं पन्नरूपीयम् ॥ १ ॥ २ ॥

**दृष्ट्यां यस्य विजानीयात् पन्नरूपां कुमारिकाम्।**
**प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥३॥**

पन्नरूपामिति नष्टरूपाम्। कुमारिकामिति पुरुषान्तरनयनगतां कुमारिकां; किंवा, आतुरनयनगतामेव। यदुक्तं हारीते—"अदर्शनमसंघाते नेत्रे नष्टकुमारिके" इति। प्रतिच्छायामयीमिति प्रतिच्छायारूपाम् ॥ ३ ॥

**ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि।**
**अङ्गेषु विकृता यस्य च्छाया प्रेतस्तथैवं सः ॥ ४ ॥**

अन्यत्रापि छायाविकृतिमाह—ज्योत्स्नेत्यादि। अङ्गेषु विकृतेति शिरोबाहुजङ्घादिषु छायाधिकरणभूतेषु भवन्ती प्रतिच्छाया यस्य विकृता भवतीत्यर्थः। तेन व्यस्तसमस्ताङ्गविकृताऽपि छाया गृह्यते। अन्ये तु—विभक्तिविपरिणामादङ्गानामिति व्याख्यानयन्ति; तथा च सुगम एवार्थः ॥ ४ ॥

**छिन्ना भिन्नाऽऽकुला च्छाया हीना वाऽप्यधिकाऽपि वा।**
**नष्टा तन्वी द्विधा च्छिन्ना विकृता विशिरा च या ॥५॥**
**एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः।**
**सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ६ ॥**

एतानेव छायाविकृतिभेदानाह—छिन्नेत्यादि। आकुलेति अनिश्चितप्रतिबिम्बा। विकृता विकृतानुकारिणी। यद्यप्यरिष्टाधिकारेऽनिमित्तमेव यद्भवति तदरिष्टमुक्तं, तथाऽपि पुनः स्पष्टार्थं 'न चेल्लक्ष्यनिमित्तजाः' इत्युक्तम् ॥ ५ ॥ ६ ॥

**संस्थानेन प्रमाणेन वर्णेन प्रभया तथा।**
**छाया विवर्तते यस्य स्वस्थोऽपि प्रेत एव सः ॥ ७ ॥**

संप्रति छायारूपं सामान्येन दर्शयञ्छायाश्रयारिष्टमाह—संस्थानेनेत्यादि। एतच्च छायाप्रतिच्छाययोः समानं सूत्रम्। तत्र संस्थानेन प्रमाणेन च प्रतिच्छायाः स्वरूपकथनं, तथा वर्णेन प्रभया च छायायाः स्वरूपकथनम्। तत्र संस्थानेन प्रमाणेन च सदृशी छाया प्रतिच्छाया ज्ञेया; वर्णेन प्रभया च लक्षिता वर्णप्रभाश्रयाऽग्रे वक्ष्यमाणा पञ्चविधा च्छाया ज्ञेया। अत्र यत्तदोर्नित्याभिसंबन्धात् 'सा' इत्यध्याहार्यते। तेन संस्थानादिभिर्या छाया प्रतिच्छायारूपा, सा यस्य विवर्तते अन्यथा भवति, स प्रेत एवेति योजना ॥ ७ ॥

**संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च सा।**
**मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥ ८ ॥**
**प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु।**
**छाया या सा प्रतिच्छाया च्छाया वर्णप्रभाश्रया ॥९॥**

प्रतिच्छायाकारणभूते संस्थानप्रमाणे एव विवृणोति—संस्थानमित्यादि। आकृतिः आकारः। प्रतीत्यादि प्रतिच्छायाविवरणं, 'छाया वर्णप्रभाश्रया' इत्यादि तु छायाविवरणं भविष्यति। प्रतिप्रमाणसंस्थानेत्यत्र प्रति सादृश्ये; तेन प्रमाणसदृशी, संस्थानसदृशी च। प्रमाणसंस्थानसदृशतया जलादिषु या छाया, सा प्रतिच्छाया। छाया तु या पञ्चविधा सा वर्णप्रभाश्रयां वर्णप्रभासहचरितोपलभ्यत इत्यर्थः ॥ ८ ॥ ९ ॥

**खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः।**
**नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥ १० ॥**
**रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा।**
**विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ११ ॥**
**शुद्धवैदूर्यविमला सुस्निग्धा चाम्भसी मता।**
**स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी**
**वायवी गर्हिता त्वासां चतस्रः स्युः सुखोदयाः।**
**वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥ १२ ॥**

खादीनामित्यादिना छायां विभजते। सप्रभेति दीप्ताभा। वायवी गर्हितेति वायवी रिष्टाय प्रायो भवति। यस्य जन्मप्रभृति वायवी, स चापि प्रभूतक्लेशभाग्भवतीत्याह—वायवीत्यादि। विनाशायेति अकस्मादुत्पन्ना विनाशाय, सहजा तु वायवी क्लेशायेति ज्ञेयम् ॥ १०—१३ ॥

**स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता।**
**रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता १४**
**तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः।**
**ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः॥१५॥**

संप्रति छायाश्रयत्वेन वर्णभेद उक्तः, तत्र वर्णभेदास्तदरिष्टं च प्रथमाध्याय एवोक्तं; प्रभायास्तु भेदं रिष्टं चाह—स्यात्तैजसीत्यादि। प्रभा च यद्यपि प्रथमाध्याये संग्रहे नोक्ता; तथाऽपि तत्र च्छायाश्रयत्वेन वर्णभेदा उक्ताः, तत्र वर्णभेदास्तदरिष्टं च प्रथमाध्याये संग्रहेणोक्तं, छायाश्रयत्वेन तत्र प्रभाऽपि सूचितेति ज्ञेयम्। अशुभोदया इति अकस्मादुत्पादे मरणोदयाः, सहजोत्पादे तु बहुदुःखरूपा अशुभोदया इति ज्ञेयम् ॥ १४ ॥ १५ ॥

**वर्णमाक्रामति च्छाया भास्तु वर्णप्रकाशिनी।**
**आसन्ना लक्ष्यते च्छाया भाः प्रकृष्टा प्रकाशते ॥१६॥**

---

१ 'प्रेतस्तथाविधः' इति पा०। २ 'विकृताङ्गानुसारिणी' इति पा०।

१ स्निग्धाऽऽयता' इति पा०। २ 'शुभोदयाः' इति पा०। ३ 'अकस्मादुद्भूता' इति पा०। ४ 'संक्षिप्ता' इति पा०। ५ 'प्रभा' इति पा०। ६ 'विकृष्टा भाः' इति पा०।

नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले छायाप्रभाश्रयाः ॥ १७ ॥

प्रभाच्छाययोर्दुर्लक्ष्यत्वेन भेदकं लक्षणमाह—वर्णमित्यादि । वर्णमाक्रामतीति छायाक्रान्तो वर्णो नोपलभ्यते सम्यक् । आसन्ना लक्ष्यते च्छाया, यथा—चित्रगता छाया प्रत्यासन्नैव लक्ष्यते । भाः प्रकृत्या प्रकाशते; यथा—मणिमौक्तिकादीनां प्रभा दूरादुपलभ्यत इत्यर्थः । विशेषा इति छायाप्रभयोः शुभाशुभरूपविशेषाः । चिह्नयन्तीति गमयन्ति । काले इति परिपाककाले ॥ १६ ॥ १७ ॥

कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।
संत्रासश्चोष्णगात्रत्वं यस्य तं परिवर्जयेत् ॥ १८ ॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः ।
मुहुर्मुहुर्न सप्ताहं स जीवति विकत्थनैः ॥ १९ ॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ।
व्यापन्ना ग्रहणी प्रायः सोऽर्धमासं न जीवति ॥२०॥

कामलाऽक्ष्णोरिति कामलिन इव पीताक्षत्वम् । विकत्थन इति निन्दापरः । संसृष्टा इति परस्परसंबद्धाः, किंवा संसृष्टदोषजन्याः । प्रतिलोमानुलोमगा इति अधोमार्गोर्ध्वमार्गगताः । व्यापन्ना ग्रहणीति च्छेदः; किंवा, व्यापन्ना ग्रहणी यस्य स 'व्यापन्नग्रहणी' इति पाठः । प्रायः सोऽर्धमासं न जीवतीति अनेनार्धमासमतिक्रम्यापि मरणं भवति, न तु मरणव्यभिचारः ॥ १८–२० ॥

उपरुद्धस्य रोगेण कर्शितस्याल्पमश्नतः ।
बहु मूत्रपुरीषं स्याचस्य तं परिवर्जयेत् ॥ २१ ॥
दुर्बलो बहु भुङ्क्ते यः प्राग्भुक्तादन्नमातुरः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ २२ ॥
इष्टं च गुणसंपन्नमन्नमश्नाति यो नरः ।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥ २३ ॥
प्रकूजति प्रश्वसिति शिथिलं चातिसार्यते ।
बलहीनः पिपासार्तः शुष्कास्यो न स जीवति ॥२४॥
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥ २५ ॥
ऊर्ध्वं च यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।
हीनवर्णबलाहारो यो नरो न स जीवति ॥ २६ ॥

प्राग्भुक्तादिति यावदन्नं भुङ्क्ते स पूर्वदिनेषु ततो बहु भुङ्क्ते इत्यर्थः । इष्टमिति इष्टरसम् । गुणसंपन्नमिति पथ्यम् । शिथिलमिति पूर्वेण संबध्यते, तेन श्लथ इव प्रकूजति । प्रश्वसितीति अन्तः श्वासं नयति । व्याविद्धमिति कुटिलम् ॥ २१–२६ ॥

ऊर्ध्वाग्रे नयने यस्य मन्ये चारतकम्पने ।
बलहीनः पिपासार्तः शुष्कास्यो न स जीवति ॥२७॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म न सिध्यति ॥२८॥
व्यावृत्तमूर्धजिह्वास्यो भ्रुवौ यस्य च विच्युते ।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २९ ॥
शेफश्चात्यर्थमुत्सिक्तं निःसृतौ वृषणौ भृशम् ।
अतश्चैव विपर्यासो विकृत्या प्रेतलक्षणम् ॥ ३० ॥
निचितं यस्य मांसं स्यात्त्वगस्थिष्वेव दृश्यते ।
क्षीणस्यानश्नतस्तस्य मासमायुः परं भवेत् ॥ ३१ ॥

तत्र श्लोकः—
इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान् ।
आयुर्वेदविदित्याख्यां लभते कुशलो जनः ॥ ३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः ॥ ७ ॥

ऊर्ध्वाग्रे इति ऊर्ध्वमुखे । आरतकम्पने अविश्रान्तकम्पने । उत्सिक्तमिति अन्तःप्रविष्टम् । अतश्चैव विपर्यास इति शेफोऽतिनिःसृतं, वृषणौ चातिप्रविष्टौ । विकृत्येति स्वभावं विना; तेन स्वभावोत्सिक्तशेफादि न रिष्टं, किन्त्वनिमित्तं कादाचित्कं सदेव रिष्टम् । निचितमिति क्षीणं, निशब्दस्य प्रतिषेधार्थत्वात् । एवं च तथा मांसं क्षीणं भवति, यथा त्वगस्थिष्वेव लग्नं दृश्यते; किंवा निचितमुपचितं मांसं स्यात्, त्वगस्थिष्वेव दृश्यते त्वगस्थिमात्रावशेषो वा भवतीति यावत् ॥ २७–३२ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातोऽवाक्शिरसीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

उक्तानुक्तरिष्टपरिग्राहकेऽध्यायद्वये वक्तव्ये छायरिष्टाभिधायकत्वसाधर्म्यादवाक्शिरसीयोऽभिधीयते ॥ १ ॥ २ ॥

अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम् ॥३॥
जटीभूतानि पक्ष्माणि दृष्टिश्चापि निगृह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ ४ ॥
यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदिह्येते यथा प्रेतस्तथैव सः ॥ ५ ॥

---

१ 'छायाप्रतिच्छाययोः' इति पा० । २ 'संत्रासश्चोष्णता चाक्ष्णे' इति पा० । ३ 'कथंचन' इति पा० । ४ 'प्राग्भुक्त्वाऽन्नमातुरः' इति पा० । ५ 'वर्धिष्णुगुणसंपन्नं' इति पा० ।

१ 'यस्यानारतकम्पने' इति पा० । २ 'व्यावृत्तमुखजिह्वस्य' इति पा० । ३ 'तु त्वगस्थि चैव' इति पा० । ४ 'न गृह्यते' इति पा० । ५ 'चोददह्येते' इति पा० ।

भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्तकान् बहून् ।
अपूर्वानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत् ॥ ६ ॥
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः ।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥ ७ ॥

अवाक्शिरा इति ऊर्ध्वपादः । एतच्छायाप्रकरणवक्तव्यमपि शीघ्रमारकत्वख्यापनार्थमिह शीघ्रमारकरिष्टेषु पठितम् । अत्र ह्यरिष्टानि त्र्यहादिमारकाणि वक्तव्यानि । न समायान्तीति न परस्परं मिलन्ति । अपूर्वानिति असहजान् । अकृतानिति प्रयत्नेनाकृतान् ॥ ३–७ ॥

आयम्योत्पाटितान् केशान् यो नरो नावबुध्यते ।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्तते[1] ॥ ८ ॥
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसन्निभाः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ९ ॥

आयम्येति बलादाकृष्य । यद्यपि "तस्य केशलोमानि" ( इं. अ. ३ ) इत्यादिनैव एतदरिष्टमित्युक्तं, तथाऽपीहातुरस्वस्थविषयप्रतिपादनार्थं पुनरभिधानम् । किंच, तत्र 'प्रलुच्येरन्' इति पदेन केशानामनुत्पाटनमुक्तं,नेह तथेति विशेषः ॥ ८ ॥ ९ ॥

ग्लायेते[2] नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसंकाशः प्रत्याख्येयः स जानता ॥ १० ॥
अत्यर्थविवृता यस्य यस्य चात्यर्थसंवृता ।
जिह्वा वा परिशुष्का वा नासिका न स जीवति ॥ ११ ॥
मुखं शब्दश्रवावोष्ठौ[3] शुक्लश्यावातिलोहितौ ।
विकृत्या यस्य वा नीलौ न स रोगाद्विमुच्यते ॥ १२ ॥

ग्लायत इति दौर्बल्यं भजते । अशून इति परमार्थतोऽशूनः । विवृतेति निर्गता । संवृतेति प्रविष्टा । शब्दश्रवौ कर्णौ । विकृत्येति सहजं विना, तथा हेतुं विनेत्यर्थः ॥ १०–१२ ॥

अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृत्या न स रोगं तं विहायारोग्यमश्नुते ॥ १३ ॥
स्तब्धा निश्चेतना गुर्वी कण्टकोपचिता भृशम् ।
श्यावा शुष्काऽथवा शूना प्रेतजिह्वा विसर्पिणी ॥ १४ ॥
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निःश्वस्य ताम्यति ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ १५ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम् ।
भवत्यायुःक्षये क्रूरमथवाऽपि भवेन्मृदु ॥ १६ ॥
घट्टयञ्जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १७ ॥
दन्तैश्छिन्दन्नखाग्राणि नखैश्छिन्दञ्छिरोरुहान् ।
काष्ठेन भूमिं विलिखन्न रोगात् परिमुच्यते ॥ १८ ॥
दन्तान् खादति यो जाग्रदसाम्ना विरुदन् हसन् ।
विजानाति न चेद्दुःखं न स रोगाद्विमुच्यते ॥ १९ ॥

मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ।
उच्चैश्छिद्राणि[1] विमृशन्नातुरो न स जीवति ॥ २० ॥

अस्थिवच्छ्वेता अस्थिश्वेताः । विसर्पिणी बहिर्निर्गता । निःश्वस्येति अन्तरोच्छ्वासं नीत्वा । अपास्यति मुहुरिति मुखमाक्षिपति । असाम्ना इति उच्चैः । उच्चैश्छिद्राणीति नासाकर्णाक्षिस्रोतांसि ॥ १३–२० ॥

यैर्विन्दति पुरा भावैः समेतैः परमां रतिम् ।
तैरेवारममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ २१ ॥
न बिभर्ति शिरो ग्रीवा न पृष्ठं भारमात्मनः ।
न हनू पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २२ ॥
सहसा ज्वरसंतापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ २३ ॥
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २४ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च ।
आयुष्यन्तं गते जन्तोर्बलं च परिहीयते ॥ २५ ॥
शिरो विक्षिपते कृच्छ्रान्मुञ्चयित्वा प्रपाणिकौ ।
ललाटप्रुतस्वेदो मुमूर्षुश्च्युतबन्धनः[2] ॥ २६ ॥

तत्र श्लोकः—

इमानि लिङ्गानि नरेषु बुद्धिमान्
विभावयेतावहितो मुमूर्षुषु ।
क्षणेन भूत्वा ह्युपयान्ति कानिचि-
न्नचाफलं लिङ्गमिहास्ति किञ्चन ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थानेऽवाक्शिरसीयमिन्द्रियं नामाष्टमोऽध्यायः ॥ ८ ॥

ग्लास्नोरिति क्षीयमाणस्य । भारमात्मन इति ऊर्ध्वशरीरम् । पृष्ठमिति शरीराधोभागः । गोसर्गे इति प्रत्यूषे । लेपज्वरः स्वल्पशीतयुक्तः कफज्वरः । कृच्छ्रादिति अशीघ्रं मुञ्चयित्वा, प्रपाणिकौ मणिबन्धादूर्ध्वं कूर्परपर्यन्तं ( शिरो विक्षिपति ) ॥ २१–२७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानेऽवाक्शिरसीयमिन्द्रियं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातो यस्यश्यावनिमित्तीयमिन्द्रियं[3] व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः[4] ॥ २ ॥

---

१ 'नातिवर्तते' इति पा० । २ 'ग्लायतो नासिकावंशः' इति पा० । ३ 'मुखशब्दस्रवावोष्ठौ' इति पा० ।

१ 'मुहुश्छिद्राणि' इति पा० । २ 'मुमूर्षुः श्लथबन्धनः' इति पा०। ३ अयं पाठो हस्तलिखितपुस्तके न पठ्यते । ४ 'यस्यश्यावीयं' इति पा० ।

यस्य श्यावनिमित्तीयोऽपि उक्तानुक्तरिष्टाभिधायकतया उच्यते। यस्य श्यावशब्देन लक्षणया 'यस्य श्यावे' इत्यादिग्रन्थोक्तं रिष्टं ग्राह्यम्। तेन, यस्यश्यावरूपनिमित्तं रिष्टमधिकृत्य कृतोऽध्यायो यस्यश्यावनिमित्तीयः ॥ १ ॥ २ ॥

यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥ ३ ॥
निःसंज्ञः परिशुष्कास्यः संमूढो[1] व्याधिभिश्च यः।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥ ४ ॥
हरिताश्च[2] सिरा यस्य लोमकूपाश्च संवृताः।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ ५ ॥
शरीरान्ताश्च शोभन्ते शरीरं चोपशुष्यति।
बलं च हीयते यस्य राजयक्ष्मा हिनस्ति तम् ॥ ६ ॥
अंसाभितापो हिक्का च छर्दनं शोणितस्य च।
आनाहः पार्श्वशूलं च भवत्यन्ताय शोषिणः ॥ ७ ॥
वातव्याधिरपस्मारी कुष्ठी शोफी तथोदरी।
गुल्मी च मधुमेही च राजयक्ष्मी[3] च यो नरः॥ ८ ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्जयेत् ॥ ९ ॥
विरेचनहृतानाहो यस्तृष्णानुगतो नरः।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥ १० ॥
पेयं पातुं न शक्नोति कण्ठस्य च मुखस्य च।
उरसश्च विशुष्कत्वाद्यो नरो न स जीवति ॥ ११ ॥[4]
स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥ १२ ॥
ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम्।
शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ॥ १३ ॥

समूढ उपचितः। शरीरान्ता हस्तपादादयः। शोभन्त इति राजन्ते, किंवा शोभायुक्ता भवन्ति। वात एव व्याधिर्यस्य रोगिणः स वातव्याधिः। तानिति बलमांसक्षययुक्तान्। विरेचनेन हृत आनाहो यस्य स तथा। अयुक्त्येति अनुचितरूपेण ॥ ३-१३ ॥

अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः।
श्रोतारं चाप्यशब्दस्य दूरतः परिवर्जयेत् ॥ १४ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १५ ॥
अथ चेज्ज्ञातयस्तस्य याचेरन् प्रणिपाततः।
रसेनाद्यादिति ब्रूयांन्नास्मै दद्याद्विशोधनम् ॥ १६ ॥
मासेन चेन्न दृश्येत विशेषस्तस्य शोभनः।
रसैश्चान्यैर्बहुविधैर्दुर्लभं तस्य जीवितम् ॥ १७ ॥

अपस्वरमिति विकृतस्वरं यथा भवति तथा भाषमाणम्। किं भाषमाणमित्याह—मरणमात्मन इति; मरिष्यामि मरिष्यामीति भाषमाणमित्यर्थः। श्रोतारं चेत्यादि रिष्टानन्तरं 'संशयप्राप्तमात्रेयः' इत्यादौ अनियतारिष्टतया आत्रेयस्यात्र मरणं प्रति संदेह इति ब्रूते। तच्च न, रिष्टस्य मरणाव्यभिचारित्वमाचार्येण प्रयत्नेनोक्तं, व्युत्पादितं चास्माभिः; किञ्च न च वीतसंशयस्यात्रेयस्य संशयोऽस्ति; तेन शिष्यव्युत्पत्त्यर्थमयमाचार्यः संशयं दर्शयति, तथा निर्णयं करोति; यथा—"दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्द्विविधो विचारः" ( चि. अ. ६ ) इत्यादौ संशयं दर्शयित्वा निर्णयं दर्शितवान्; तथेहापि दुर्बलस्य सहसा रोगमुक्तौ रिष्टं वा स्यात्, सर्वथा सन्तर्पणाद्याधिक्षयो वा स्यादिति संदेहः; रिष्टपक्षे तु मरणं, तत्र 'अथ चेत्' इत्यादिना परीक्षामारभते; परीक्षायां च मांसरसेन विशेषालाभे रिष्टत्वावधारणं भवतीति सुव्यवस्थोऽयं ग्रन्थः। दुर्लभमिति अप्राप्यम् ॥ १४-१७ ॥

निष्ठ्यूतं च पुरीषं च रेतश्चाम्भसि मज्जति।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥ १८ ॥
निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक्।
तच्च सीदत्यपः प्राप्य न स जीवितुमर्हति[1] ॥ १९ ॥
पित्तमूष्मानुगं यस्य शङ्खौ प्राप्य विमूर्च्छति[2]।
स रोगः शङ्खको नाम्ना त्रिरात्राद्धन्ति जीवितम् २०
सफेनं रुधिरं यस्य मुहुरास्यात् प्रसिच्यते।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयस्तथाविधः ॥ २१ ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ॥२२॥

निष्ठ्यूत इत्यादौ बहुविधवर्णयोगः पूर्वारिष्टाद्विशेषः। सीदतीति मज्जति। "यस्य पित्तं" ( सू. अ. १८ ) इत्यादिना सूत्रस्थानोक्तोऽपि शङ्खक इह मरणसूचकतया रिष्टत्वेनोच्यते ॥ १८-२२ ॥

तत्र श्लोकौ—

विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते।
भवन्त्येतानि संपश्येदन्यान्येवंविधानि च ॥ २३ ॥
तानि सर्वाणि लक्ष्यन्ते न तु सर्वाणि मानवम्।
विशन्ति विनशिष्यन्तं तस्माद्बोध्यानि सर्वतः ॥ २४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने यस्यश्यावनिमित्तीयमिन्द्रियं नाम नवमोऽध्यायः ॥ ९ ॥

विज्ञानानीति लक्षणानि नयनादिवैकृतानि ज्ञेयानि। सर्वाणि लक्ष्यन्त इति नानापुरुषेषु लक्ष्यन्ते। न तु

१ 'संविद्धः' इति पा०। २ 'हरितामाः' इति पा०। ३ 'रक्ती' इति पा०। ४ 'पेयं पातुं न शक्नोति शुष्कत्वादास्यकण्ठयोः। उरसश्च विबद्धत्वाद्यो नरो न स जीवति' इति पा०।

१ 'तच्च सीदेत् पयः प्राप्य दुर्लभं तस्य जीवितम्' इति पा०। २ 'विशुष्यते' इति पा०।

सर्वाणि मानवं विशन्तीति एकपुरुषं न सर्वाणि विशन्तीति ॥ २३ ॥ २४ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां यस्यश्यावनिमित्तीयमिन्द्रियं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः।

अथातः सद्योमरणीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

व्यवहितमरणप्रतिपादकमरिष्टमभिधाय प्रत्यासन्नमरणप्रतिपादकं रिष्टं वक्तुं सद्योमरणीयोऽभिधीयते। सद्यःशब्देनेह केचित् सप्तरात्रमिच्छन्ति, अपरे त्रिरात्रम् ॥ १ ॥ २ ॥

सद्यस्तितिक्षतः प्राणाँल्लक्षणानि पृथक् पृथक्।
अग्निवेश ! प्रवक्ष्यामि संस्पृष्टो यैर्न जीवति ॥ ३ ॥
वाताष्ठीला सुसंवृद्धा तिष्ठन्ती दारुणा हृदि।
तृष्णयाऽभिपरीतस्य सद्यो मुष्णाति जीवितम् ॥ ४ ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम्।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम् ॥ ५ ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम् ॥ ६ ॥
क्षीणशोणितमांसस्य वायुरूर्ध्वगतिश्चरन्।
उभे मन्ये समे यस्य सद्यो मुष्णाति जीवितम् ॥ ७ ॥
अन्तरेण गुदं गच्छन् नाभिं च सहसाऽनिलः।
कृशस्य वंक्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥ ८ ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः।
स्तिमितस्यायताक्षस्य सद्यो मुष्णाति जीवितम् ॥ ९ ॥
हृदयं च गुदं चोभे गृहीत्वा मारुतो बली।
दुर्बलस्य विशेषेण सद्यो मुष्णाति जीवितम् ॥ १० ॥
वंक्षणं च गुदं चोभे गृहीत्वा मारुतो बली।
श्वासं संजनयञ्जन्तोः सद्यो मुष्णाति जीवितम् ॥ ११ ॥
नाभिं मूत्रं वस्तिशीर्षं पुरीषं चापि मारुतः।
प्रच्छिन्नं जनयञ्छूलं सद्यो मुष्णाति जीवितम् ॥ १२ ॥
भिद्येते वंक्षणौ यस्य वातशूलैः समन्ततः।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणाञ्जहाति सः ॥ १३ ॥
आप्लुतं मारुतेनेह शरीरं यस्य केवलम्।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥ १४ ॥
शरीरं शोफितं यस्य वातशोफेन देहिनः।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥ १५ ॥
आमाशयसमुत्थाना यस्य स्यात् परिकर्तिका।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणाञ्जहाति सः ॥ १६ ॥
पक्वाशयसमुत्थाना यस्य स्यात् परिकर्तिका।
तृष्णा गुदग्रहश्चोग्रः सद्यो जह्यात् स जीवितम् ॥ १७ ॥
पक्वाशयमधिष्ठाय हत्वा संज्ञां च मारुतः।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥ १८ ॥
दन्ताः कर्दमदिग्धाभा मुखं चूर्णकसन्निभम्।
सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥ १९ ॥
तृष्णाश्वासशिरोरोगमोहदौर्बल्यकूजनैः।
स्पृष्टः प्राणाञ्जहात्याशु शकृद्भेदेन चातुरः ॥ २० ॥

तितिक्षत इति तितिक्षत इव; प्राणानां प्रियत्वेन स्वयं हननायोग्यत्वात्। पिण्डिके इति जङ्घापिण्डिके। अन्तरेण गुदं नाभिं चेति गुदनाभिमध्ये। हृदयं गृहीत्वेति हृदयं स्वविकारेण प्राप्य। वस्तिशीर्षमिति वस्त्यूर्ध्वभागम्। प्रच्छिन्नमिति प्रच्छिन्नमिव प्रच्छिन्नं, छेदनाकारवेदनायुक्तत्वात्। आप्लुतमिति व्याप्तम्। शोफितमिति शोफयुक्तम्। परिकर्तिका परिकर्तनाकारा वेदना। घुर्घुरकमिति घुर्घुरकमित्याकारं शब्दं, स कफावरुद्धेन श्वासेन भवति। मुखं चूर्णकसन्निभं श्वैत्यात्। सिप्रायन्त इति सिप्रा नदी, तद्वत् स्वेदातिप्रादुर्भावादाचरन्तीति सिप्रायन्ते; किंवा सिप्रायन्त इति शिथिलीभवन्ति, अनेकार्थत्वाद्धातूनाम् ॥ ३–२० ॥

तत्र श्लोकः—

एतानि खलु लिङ्गानि यः सम्यगवबुध्यते।
स जीवितं च मर्त्यानां मरणं चावबुध्यते ॥ २१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने सद्योमरणीयमिन्द्रियं नाम दशमोऽध्यायः ॥ १० ॥

स जीवितं चावबुध्यत इति यथोक्तरिष्टाभावेन जीवितं बुध्यते, रिष्टसद्भावे च मरणं बुध्यत इति ॥ २१ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थाने सद्योमरणीयमिन्द्रियं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः।

अथातोऽणुज्योतीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

सद्यःकालनियतं रिष्टमभिधाय कालविशेषनियतारिष्टाभिधायकमणुज्योतीयमुच्यते। अणुज्योतिश्चेह यथाश्रुतं रोगं वर्जयित्वा संज्ञायामनुक्रियते ॥ १ ॥ २ ॥

---

१ 'गुदं नाभिं चान्तरेण गृह्णाति' इति पा०। २ 'गृह्णाति' इति पा०। ३ 'नाभिं वस्तिशिरो मूत्रं' इति पा०। ४ 'विवध्य' इति पा०।

१ 'आमाशयमधिष्ठाय' इति पा०। २ 'गृह्णाति' इति पा०। ३ 'प्राप्नोतीति' इति पा०।

 

अणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा।
रतिं न लभते याति परलोकं समान्तरम् ॥ ३ ॥

ज्योतिः सकलशरीरान्तर्गतं तेजः, अणुज्योतिर्मन्दाग्निः। अनेकाग्रः व्याकुलचित्तः, दुर्मना इत्यनेन तु मनोदौर्बल्यमुच्यते; तेन न पौनरुक्त्यम्। समान्तरमिति समामध्ये ॥ ३ ॥

बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते।
लोकान्तरगतः पिण्डं भुङ्क्ते संवत्सरेण सः ॥ ४ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम्।
संवत्सरान्ते जन्तुः स संपश्यति महत्तमः ॥ ५ ॥
विकृत्या विनिमित्तं यः शोभामुपचयं धनम्।
प्राप्नोत्यतो वा विभ्रंशं समान्तं तस्य जीवितम् ॥६॥

बलिमिति वायसानां विधिवद्दत्तमन्नम्। महत्तम इति मरणरूपं तमः। विकृत्येति प्रसिद्धं धनादिकारणं विना। विनिमित्तमिति शरीरसंबद्धधनादिसूचकलक्षणं विना; शरीरसंबद्धलक्षणवशादेव कस्मिंश्चित्काले धनादि तदपचयो वा भवति; तच्च लक्षणनिमित्तत्वादरिष्टमिति प्रथमाध्याय एवोक्तम्। उपचयमिति शरीर एवोपचयम्। अतो विभ्रंशमिति शोभाद्यभावम् ॥ ४–६ ॥

भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ७ ॥

भक्तिः इच्छा। अहेतुकमिति क्रियाविशेषणम्। संख्येयनिर्देशादेव षट्त्वे लब्धे पुनः षडिति पदं षण्णां समुदितानामेव निवृत्तिररिष्टमिति दर्शयितुम् ॥ ७ ॥

धमनीनामपूर्वाणां जालमत्यर्थशोभनम्।
ललाटे दृश्यते यस्य षण्मासान्न स जीवति ॥ ८ ॥
लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥ ९ ॥

जालमिति जालाकारम्। चन्द्रवक्राभिरिति बालचन्द्रवक्राभिः ॥ ८ ॥ ९ ॥

शरीरकम्पः संमोहो गतिर्वचनमेव च।
मत्तस्येवोपलभ्यन्ते यस्य मासं न जीवति ॥ १० ॥
रेतोमूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि।
स मासात् स्वजनद्वेष्टा मृत्युवारिणि मज्जति ॥ ११ ॥

रेत इत्याद्यरिष्टं 'निष्ठ्यूतं च पुरीषं च' (इं. अ. ९) इत्यादिना यद्यप्युक्तं, तथाऽपीह समासवचनात् समुदितानामेव रेतःप्रभृतीनां मज्जनं स्वजनद्वेषे सति मारकं भवतीति ज्ञेयम् ॥ १० ॥ ११ ॥

हस्तपादं मुखं चोभे विशेषाद्यस्य शुष्यतः।
शूयेते वा विना देहात् स च मासं न जीवति ॥१२॥

१ 'गन्ता' इति पा०। २ 'तच्चानिमित्तलक्षणत्वात्' इति पा०। ३ 'मासाद्विनश्यति' इति पा०।

ललाटे मूर्ध्नि बस्तौ वा नीला यस्य प्रकाशते।
राजी बालेन्दुकुटिला न स जीवितुमर्हति ॥ १३ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः।
उत्पद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥१४॥
ग्रीवावमर्दो बलवाञ्जिह्वाश्वयथुरेव च।
ब्रध्नास्यगलपाकश्च यस्य पक्षं तमादिशेत् ॥ १५ ॥
संभ्रमोऽतिप्रलापोऽतिभेदोऽस्थ्नामतिदारुणः।
कालपाशपरीतस्य त्रयमेतत् प्रवर्तते ॥ १६ ॥
प्रमुह्य लुञ्चयेत् केशान् परिगृह्णात्यतीव च।
नरः स्वस्थवदाहारमबलः कालचोदितः ॥ १७ ॥

उभे इति वचनं समुदितहस्तादिशोषमेव दर्शयति। प्रवालकृतगुटिकावदाभासन्त इति प्रवालगुटिकाभासाः। कालपाशपरीतस्येति शीघ्रं मरिष्यतः। परिगृह्णाति स्वस्थवदाहारमिति योजना, अबलः सन् स्वस्थवदाहारमत्यर्थं करोतीत्यर्थः ॥ १२–१७ ॥

समीपे चक्षुषोः कृत्वा मृगयेताङ्गुलीकरम्।
स्मयतेऽपि च कालान्ध ऊर्ध्वगानिमिषेक्षणः ॥ १८ ॥
शयनादासनादङ्गात् काष्ठात् कुड्यादथापि वा।
असन्मृगयते किञ्चित् स मुह्यन् कालचोदितः ॥१९॥

समीप इत्यादि। चक्षुषोः समीपेऽङ्गुलीकरं कृत्वा तत् पश्यन् मृगयते प्रार्थयते, स्मयते च विस्मितो भवति। ऊर्ध्वगमनिमिषं च ईक्षणं यस्य स तथा। असत् अविद्यमानं शयनासनादि मृगयते प्रार्थयते ॥ १८ ॥ १९ ॥

अहास्यहासी संमुह्यन् प्रलेढि दशनच्छदौ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥२०॥
आह्वयंस्तं समीपस्थं स्वजनं जनमेव वा।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥ २१ ॥

अहास्यहासीति अहास्यविषये हास्यवान्। दशनच्छदौ ओष्ठौ। शीतशब्द उच्छ्वासान्तैः संबध्यते। जनमिति गोबलीवर्दन्यायेन स्वजनम् ॥ २० ॥ २१ ॥

अयोगमतियोगं वा शरीरे मतिमान् भिषक्।
खादीनां युगपद्दृष्ट्वा भेषजं नावचारयेत् ॥ २२ ॥

खादीनामिति खादिकार्याणां धातूनां, किंवा खादिकार्याणां श्रोत्रादीनाम्। योग्यविषयाग्रहणमयोगः। अविद्यमानविषयग्रहणमतियोगः ॥ २२ ॥

१ 'विलीयन्ते' इति पा०। २ 'पर्वभेदश्च दारुणः' इति पा०। ३ 'परान् गृह्णात्यतीव च' इति पा०। ४ 'स्वस्थवदाहारवचनः' इति पा०। ५ 'ऊर्ध्वाक्षोऽनिमिषेक्षणः' इति पा०। ६ 'यो लेढि' इति पा०।

अतिप्रवृद्ध्या रोगाणां मनसश्च बलक्षयात्।
वासमुत्सृजति क्षिप्रं शरीरी देहसंज्ञकम् ॥ २३ ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम्।
हीयतेऽसुक्षये निद्रा नित्या भवति वा न वा ॥ २४ ॥

वासमिव वासं, शरीरमात्मनो गृहमिव भवति। न वा भवतीति सर्वथा न भवतीत्यर्थः ॥ २३ ॥ २४ ॥

भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये।
वशगाः सर्व एवैते बोद्धव्याः समवर्तिनः ॥ २५ ॥
एतेषु रोगः क्रमते भेषजं प्रतिहन्यते।
नैषामन्नानि भुञ्जीत न चोदकमपि स्पृशेत् ॥ २६ ॥

समवर्तिन इति यमस्य; अन्ये तु समवर्तिशब्देन कालमृत्युं ब्रुवते, चशब्देनोक्तवक्ष्यमाणसकलारिष्टग्रहणं कुर्वन्ति; तेन सर्वमेव रिष्टं कालमृत्योः परं भवतीति वर्णयन्ति। अत्र च द्वेषमनु रोगक्रमणं निष्फलो भेषजप्रयोगश्चापि स्यादित्याह—एतेष्वित्यादि। भेषजं प्रतिहन्यत इति सम्यक्कृतमपि भेषजं हन्यत इत्यर्थः। नैषामन्नानि भुञ्जीतेति प्रायेण तदन्नस्याविशुद्धत्वात्। एवमुदकप्रतिषेधेऽपि बोध्यम् ॥ २५ ॥ २६ ॥

पादाः समेताश्चत्वारः संपन्नाः साधकैर्गुणैः।
व्यर्था गतायुषो द्रव्यं विना नास्ति गुणोदयः ॥ २७ ॥

पादा भिषगादयः। साधकैर्गुणैरिति "श्रुते पर्यवदातत्वं" (सू. अ. ९) इत्यादिभिः षोडशगुणैः संपन्नाः। कस्माद्वैद्यादयो गतायुषो रोगान्न साधयन्तीत्याह—द्रव्यं विना नास्ति गुणोदय इति।—द्रव्यं कारणं विना आरोग्यलक्षणो गुणोदयो नास्ति। कारणं चेहारोग्योत्पत्तावगतायुष्ट्वं, तच्च नास्तीति भावः ॥ २७ ॥

परीक्ष्यमायुर्भिषजा नीरुजस्यातुरस्य च।
आयुर्ज्ञानफलं कृत्स्नमायुर्ज्ञे ह्यनुवर्तते ॥ २८ ॥

आयुर्ज्ञानफलं विद्यमानायुषि भेषजदानम् ॥ २८ ॥

तत्र श्लोकः—

क्रियापथमतिक्रान्ताः केवलं देहमाप्लुताः।
चिह्नं कुर्वन्ति यद्दोषास्तदरिष्टं निरुच्यते ॥ २९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थानेऽणुज्योतीयमिन्द्रियं नामैकादशोऽध्यायः ॥ ११ ॥

रिष्टलक्षणमाह—क्रियापथमतिक्रान्ता इत्यादि। अतिक्रान्ता इति गताः। दूतादिगतरिष्टलक्षणमेतन्न भवति, किन्तु शरीरगतरिष्टलक्षणं; तेन नाव्याप्तिर्लक्षणस्य वाच्या। सर्वरिष्टव्यापकं तु लक्षणं यथा—आयुषोऽन्तर्ग(ग)तस्य लिङ्गमिति। तच्च इन्द्रियपदेनैवोक्तमिति प्रथमाध्याय एव इन्द्रियपदव्याख्यायां प्रोक्तम्। ननु निर्निमित्तं रिष्टमित्युक्तम्, इह दोषजन्यत्वं रिष्टानामुच्यत इति न कथं विरोधः ? । न, निर्निमित्तत्वं ह्यनुपलभ्यमाननिमित्तत्वमुक्तं; तेन रूक्षादिहेतुप्राप्तिमन्तरेण प्रत्यासन्नमरणप्रभावकुपितदोषजन्यत्वं तत्तदरिष्टानामुच्यते, तेनेहाप्युपलभ्यमानव्यक्तनिमित्ततासद्भावान्न विरोधः ॥ २९ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायामिन्द्रियस्थानेऽणुज्योतीयमिन्द्रियं नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

अथातो गोमयचूर्णीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पारिशेष्याद्गोमयचूर्णीयमुच्यते ॥ १ ॥ २ ॥

यस्य गोमयचूर्णाभं चूर्णं मूर्धनि जायते।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ ३ ॥
निकषन्निव यः पादौ च्युतांसः परिधावति।
विकृत्या न स लोकेऽस्मिंश्चिरं वसति मानवः ॥ ४ ॥
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम्।
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ॥ ५ ॥
यमुद्दिश्यातुरं वैद्यः संवर्तयितुमौषधम्।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ ६ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम्।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥ ७ ॥
आहारमुपयुञ्जानो भिषजा सूपकल्पितम्।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥ ८ ॥

चूर्णमित्यस्य विशेषणं—सस्नेहमिति। निकषन्निवेति घर्षन्निव। विकृत्येत्यनेन सहजं पादघर्षणादि निषेधति। पूर्वमुरः शुष्यतीत्यभिधानादेव शेषगात्रार्द्रतायां लब्धायां पुनः 'आर्द्रेषु सर्वगात्रेषु' इति वचनाद्विशेषेणापरगात्राणामार्द्रतां दर्शयति। यमुद्दिश्येति यस्यार्थे। सिद्धमिति अनेन रूपेण बहुशो ज्ञातम्। आहारमित्यायरिष्टं रोगिविषयं, तेन "इष्टं च गुणसंपन्नं" (इं. अ. ७) इत्यादिग्रन्थोक्तेन स्वस्थविषयेणारिष्टेन समं न पौनरुक्त्यम् ॥ ३-८ ॥

दूताधिकारे वक्ष्यामो लक्षणानि मुमूर्षताम्।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्यायादसंशयम् ॥ ९ ॥
मुक्तकेशोऽथवा नग्नो रुदत्यप्रयतोऽथवा।
भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥ १० ॥
सुप्ते भिषजि ये दूताश्छिन्दत्यपि च भिन्दति।
आगच्छन्ति भिषक् तेषां न भर्तारमनुव्रजेत् ॥ ११ ॥
जुह्वत्यग्निं तथा पिण्डान् पितृभ्यो निर्वपत्यपि।
वैद्ये दूता य आयान्ति ते घ्नन्ति प्रजिघांसवः ॥ १२ ॥

---

१ 'निर्घर्षन्निव' इति पा०। २ 'संपादयितुमौषधम्' इति पा०।
३ 'आहारमपि भुञ्जानः' इति पा०

कथयत्यप्रशस्तानि चिन्तयत्यथवा पुनः ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ १३ ॥
मृतदग्धविनष्टानि भजति व्याहरत्यपि ।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १४ ॥
विकारसामान्यगुणे देशे कालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १५ ॥
दीनभीतद्रुतत्रस्तमलिनामसतीं स्त्रियम् ।
त्रीन् व्याकृतींश्च पण्डांश्च दूतान् विद्यान्मुमूर्षताम् १६
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा ।
संप्रेक्ष्य चोग्रकर्माणं न वैद्यो गन्तुमर्हति ॥ १७ ॥
आतुरार्थमनुप्राप्तं खरोष्ट्ररथवाहनम् ।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम् ॥ १८ ॥
पलालबुसमांसास्थिकेशलोमनखद्विजान् ।
मार्जनीं मुसलं शूर्पमुपानच्चर्म विच्युतम् ॥ १९ ॥[1]
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्टमश्म च ।
तत्पूर्वदर्शने दूता व्याहरन्ति मुमूर्षताम् ॥ २० ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ २१ ॥
तथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा ।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ २२ ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुलः क्रूरो यद्वाऽन्यदशुभं भवेत् ॥२३॥
तत्पूर्वममितो वाक्यं वाक्यकालेऽथवा पुनः ।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत् ॥ २४ ॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम् ।

अप्रयते इति अपवित्रे । सुप्ते इति निद्राणे । न भर्तारमिति न दूतप्रेषकमातुरमित्यर्थः । दूताश्च यद्यपि रोगिहितमिच्छन्ति, न प्रजिघांसवश्च भवन्ति, न च स्वभावाद् दूताः प्रजिघांसवो घ्नन्ति, तथाऽपि यथाऽऽतुरस्य विनाशो भवति तथा दैवप्रेरिताः सन्त आगच्छन्तो दूताः प्रजिघांसव इव तथा घ्नन्तीति कृत्वा 'प्रजिघांसवो घ्नन्ति'इत्युच्यन्ते । तेनात्र इवशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । चिन्तयत्यप्रशस्तानीति संबन्धः । व्याहरत्यपि वैद्ये मृतदग्धविनष्टानीति योजना । विकारसामान्यगुणो देशो यथा—रक्तपित्ते ज्वलनसन्निहितो देशः, विकारसामान्यगुणः कालो यथा—रक्तपित्ते मध्याह्न इत्यादि ज्ञेयम् । त्रीनिति त्रिसंख्या एव दूता अप्रशस्ताः । पण्डा नपुंसकाः । अङ्गव्यसनी छिन्ननासादिः । उग्रकर्मा मारणाद्यकार्यप्रवृत्तः । पलालेत्यादौ तृणकाष्ठादिपरिस्पृशो दूताः । तत्पूर्वदर्शने इति वैद्यपूर्वदर्शने, पलालबुसादीनि स्पृशन्त आतुरस्य मुमूर्षतां व्याहरन्तीति योजना । प्रेतालङ्कारमेव चेत्यन्तं यं पश्येत् तं च नानुव्रजेदिति संबन्धः । तद्वादीनि भिन्नादिवादीनि । तीव्र इति इन्द्रियोद्वेजकः । स्पर्शो विपुलो यथा तीव्रोष्णादिस्पर्शः । तत्पूर्वमिति दूतवचनात् पूर्वम् । अभितो वाक्यमिति सर्वभूतकालवचनम् । व्याहृतमिति आतुरावस्थाकथनम् ॥ ९–२४ ॥—

पथ्यातुरकुलानां च वक्ष्याम्यौत्पातिकं पुनः ॥ २५ ॥
अवक्षुतमथोत्क्रुष्टं स्खलनं पतनं तथा ।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम् ॥ २६ ॥
वस्त्रोष्णीषोत्तरासङ्गच्छत्रोपानद्युगाश्रयम् ।
व्यसनं दर्शनं चापि मृतव्यसनिनां तथा ॥ २७ ॥
चैत्यध्वजपताकानां पूर्णानां पतनानि च ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांशुभिः ॥ २८ ॥
पथच्छेदो बिडालेन शुना सर्पेण वा पुनः ।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति ॥ २९ ॥
शयनासनयानानामुत्तानानां च दर्शनम् ।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः ॥ ३० ॥
एतानि पथि वैद्येन पश्यताऽऽतुरवेश्मनि ।
शृण्वता च न गन्तव्यं तदागारं विपश्चिता ॥ ३१ ॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम् ।

औत्पातिकमिति अरिष्टसूचकनिमित्तम् । अवक्षुतं छिक्का । उत्क्रुष्टं संत्रस्तरुतम् । प्रतिषेधः 'मा गच्छ' इत्येवंरूपः । व्यसनं वस्त्रादीनां यत् स्फुटनादि । व्यसनीति व्यङ्गः, कलहवान् वा । पूर्णाः पूर्णकुम्भादयः । दूषणं भस्मपांशुभिरिति भस्मपांश्ववकिरणम् । पथच्छेद इति बिडालादिभिर्मार्गलङ्घनम् । मृगद्विजाः क्रूराः शृगालगृध्रादयः । दीप्ता दिक् यस्यां सूर्यो वर्तते, किंवा दक्षिणा दिक् दीप्तोच्यते । शयनं खट्वादि, आसनं पीठादि ॥ २५–३१ ॥—

इमामपि च बुध्येत गृहावस्थां मुमूर्षताम् ॥ ३२ ॥
प्रवेशे पूर्णकुम्भाग्निमृद्बीजफलसर्पिषाम् ।
वृषब्राह्मणरत्नान्नदेवतानां च निर्गतिम् ॥ ३३ ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ।
भिषङ् मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥ ३४ ॥
छिन्नभिन्नानि दग्धानि भग्नानि मृदितानि च ।
दुर्बलानि च सेवन्ते मुमूर्षोर्वैश्मिका जनाः ॥ ३५ ॥
शयनं वसनं यानं गमनं भोजनं रुतम् ।
श्रूयतेऽमङ्गलं यस्य नास्ति तस्य चिकित्सितम् ॥ ३६ ॥
शयनं वसनं यानमन्यं वाऽपि परिच्छदम् ।
प्रेतवद्यस्य कुर्वन्ति सुहृदः प्रेत एव सः ॥ ३७ ॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैवोपशाम्यति ।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ॥३८॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ ३९ ॥

विशिखानीति खण्डितानि; किंवा 'वशिकानि' इति पाठः,

[1] 'मार्जनीसूर्पमुसलान्युपानद्भ्रविच्युते' इति पा० ।

तदा शून्यानीत्यर्थः । वैदिमिका जना इति गृहप्रतिष्ठिता जनाः । प्रेतवत् मृतस्य यथा क्रियते शयनादि तथा । सुहृद इति वचनेनासुहृद्भिर्द्वेषादमङ्गलार्थं कृतं प्रेतवच्छयनादि निषेधयति । ज्योतिः अग्निः, निवाते सेन्धनश्च सन् यदि निर्वाति तदा रिष्टम् । अमत्राणीति शरावस्थाल्यादीनि ॥ ३२-३९ ॥

भवन्ति चात्र—

यद्द्वादशभिरध्यायैर्व्यासतः परिकीर्तितम् ।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत् ॥ ४० ॥
तत् समासेन वक्ष्यामः पर्यायान्तरमाश्रितम् ।
पर्यायवचनं ह्यर्थविज्ञानायोपपद्यते ॥ ४१ ॥
अत्यर्थं पुनरेवेयं विवक्षा नो विधीयते ।
तस्मिन्नेवाधिकरणे यत् पूर्वमभिशब्दितम् ॥ ४२ ॥

संप्रति द्वादशाध्यायोक्तं रिष्टं दुरधिगमार्थं संग्रहेण स्पष्टीकरणार्थमाह—द्वादशभिरित्यादि । पर्यायायान्तरमाश्रितमिति संज्ञान्तरेण कीर्तितम् । अर्थविज्ञानायेति पूर्वाभिधाने शब्दस्थानेकार्थाभिधायित्वादिना यत्र संदेहो मिथ्याज्ञानं वा भवति, तस्य शब्दान्तरेणाभिधानाद् व्यक्तोऽर्थो भवतीति दर्शयति ॥ ४०-४२ ॥

वसतां चरमं कालं शरीरेषु शरीरिणाम् ।
अभ्युग्राणां विनाशाय देहेभ्यः प्रविवत्सताम् ॥४३॥
इष्टांस्तितिक्षतां प्राणान् कान्तं वासं जिहासताम् ।
तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम् ॥ ४४ ॥
विनाशायेह रूपाणि यान्यवस्थान्तराणि च ।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम् ॥ ४५ ॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते ।
वमन्ति वलमङ्गानि चेष्टा व्युपरमन्ति च ॥ ४६ ॥
इन्द्रियाणि विनश्यन्ति खिलीभवति चेतना ।
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि ॥ ४७ ॥
स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः ।
उपप्लवन्ते पाप्मान ओजस्तेजश्च नश्यति ॥ ४८ ॥
शीलं व्यावर्ततेऽत्यर्थं भक्तिश्च परिवर्तते ।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं प्रति ॥४९॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः ।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगपि क्षयम् ॥५०॥
ऊष्माणः प्रलयं यान्ति विश्लेषं यान्ति सन्धयः ।
गन्धा विकृतिमायान्ति भेदं वर्णस्वरौ तथा ॥ ५१ ॥
वैवर्ण्यं भजते कायः कायच्छिद्रं विशुष्यति ।
धूमः संजायते मूर्ध्नि दारुणाख्यश्च चूर्णकः ॥ ५२ ॥
सततस्पन्दना देशाः शरीरे येऽभिलक्षिताः ।
ते स्तम्भमुपगताः सर्वे न चलन्ति कथंचन ॥ ५३ ॥
गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः ।
विपर्यासेन वर्तन्ते स्थानेष्वन्येषु तद्विधाः ॥ ५४ ॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते ।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्धनि ॥५५॥
भेषजानि न संवृत्तिं प्राप्नुवन्ति यथारुचि ।
यानि चाप्युपपद्यन्ते तेषां वीर्यं न सिध्यति ॥ ५६ ॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः ।
क्षिप्रं समभिवर्तन्ते प्रतिहत्य बलौजसी ॥ ५७ ॥
शब्दः स्पर्शो रसो रूपं गन्धश्चेष्टा विचिन्तितम् ।
उत्पद्यन्तेऽशुभान्येव प्रतिकर्मप्रवृत्तिषु ॥ ५८ ॥
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ।
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ॥ ५९ ॥
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्धते ।
कृत्स्नमौत्पातिकं घोरमरि(नि)ष्टमुपलक्ष्यते ॥ ६० ॥
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ।
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ॥ ६१ ॥

अभ्युग्राणामिति अभ्युद्गतानाम् । प्रविवत्सतामिति प्रवस्तुमुद्यतानाम् । कान्तं वासमित्यनेन सर्वप्राणिनामेव सर्वावस्थासु शरीरं काम्यं भवतीति दर्शयति । कान्तमपि शरीररूपं वासो जीवितं वा बलादेव स्वकर्मणा त्यज्यमानमपि इहोपचारादिवशब्दलोपाद्वा स्वातन्त्र्येण निर्दिश्यते; यथा—जिहासतामिति, तथ तितिक्षतामिति । तन्त्रं शरीरं, तस्य यन्त्रं सिरास्नाय्वादिरूपं तन्त्रयन्त्रम् । तमोऽन्त्यमिति मरणरूपं तमः । विनाशायेह रूपाणीति प्राणसमुपतापादीनि । खिलीभवतीति अपथग्राहिणी भवति । पाप्मान इति पापजनितरोगाः, अधर्म्याश्च क्रियाः । छायाश्च विकृतिं प्रति 'गच्छन्ति' इति शेषः, तेन प्रत्येकं छाया विकृतिं गच्छतीत्यर्थः । धूमः संजायते मूर्ध्नीति प्रकृतं बाष्पनिर्गमं विना बहलो धूम इव शिरसि भवति । दारुणाख्यश्च चूर्णक इति "यस्य गोमयचूर्णाभं" इत्यादिग्रन्थोक्तचूर्णकः । स्थानेष्वन्येषु तद्विधा इति शरीरदेशान्तरेषु । बहुवचनेन स्नेहादयो विपर्यासेन वर्तन्त इत्यर्थः । संवृत्तिमिति निष्पत्तिम् । उपपद्यन्ते सिध्यन्ति । नानाप्रकृतय इति परस्परं विरुद्धस्वभावाः । प्रतिकर्मप्रवृत्तिः चिकित्साप्रवृत्तिः । औत्पातिकमिति आकस्मिकं; तस्य विशेषणं—अरिष्टमिति; तेन रिष्टसूचकमौत्पातिकमिति फलति ॥ ४३-६१ ॥

मरणायेह रूपाणि पश्यताऽपि भिषग्विदा ।
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ॥ ६२ ॥

१ 'गृहप्रतिबद्धाः' इति पा० । २ 'समुपरुध्यन्ते' इति पा० । ३ 'वेदना' इति पा० । ४ 'क्रोधः' इति पा० ।

१ 'कर्म' इति पा० । २ विचेष्टितम्' इति पा० । ३ 'अयार्थग्राहिणी' इति पा० ।

पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम्।
आतुरस्य भवेद्दुःखमथवाऽन्यस्य कस्यचित् ॥ ६३ ॥
अब्रुवन्मरणं तस्य नैनमिच्छेच्चिकित्सितुम्।
यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक् ॥६४॥

संप्रति ज्ञातस्य रिष्टस्य यथाऽप्रकाश्यत्वं तदाह—मरणायेत्यादि। आतुरस्योपघातकमिति योज्यम्। भवेद्दुःखमन्यस्येति संबन्धः ॥ ६२–६४ ॥

लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता।
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम् ॥६५॥
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः।
आतुराचारशीलेष्टद्रव्यसंपत्तिलक्षणैः ॥ ६६ ॥

हन्त मरणं चेदातुरस्य भावि नोच्यते, तत् किमारोग्यमपि भावि न वक्तव्यमेवेत्याह—लिङ्गेभ्य इत्यादि। मरणमाख्यापयन्तीति मरणाख्यानि, तेभ्यो विपरीतानि आरोग्यसूचकानि। आगन्त्विति पश्चात्कालभावि। औत्पातिकैर्भावैरिति शुभसूचनार्थमकस्मादुत्पन्नैर्भावैः; सामान्येन शुभाशुभसूचकं यदकस्माद्भवति तदौत्पातिकमुच्यते। द्रव्यसंपत्तिलक्षणैरित्यन्तैरारोग्यमागन्तु वक्तव्यमिति योजना ॥ ६५ ॥ ६६ ॥

स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम्।
अमुण्डमजटं दूतं जातिवेशक्रियासमम् ॥ ६७ ॥
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च।
अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च ॥ ६८ ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम्।
मध्याह्नमर्धरात्रं च भूकम्पं राहुदर्शनम् ॥ ६९ ॥
विना देशमशस्तं चाशस्तौत्पातिकलक्षणम्।
दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ॥ ७० ॥

शुभभवनलक्षणं स्वाचारमित्यादिना ब्रूते। अमुण्डमिति असशिखकृतवपनोऽभिप्रेतः। जात्यादिभिरातुरेण सह समो जातिवेशक्रियासमः। अग्रहेष्विति अप्रशस्तस्थानस्थितक्रूरग्रहानधिष्ठितेषु कालेष्वित्यर्थः। अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु चेति दारुणानीति तीक्ष्णानि, यदुवाच वराहः—"मूलशिवशक्रभुजगाधिपानि तीक्ष्णानि" (बृ. सं. अ. ९८) इति; शिव आर्द्रा, शक्रो ज्येष्ठा, भुजगाधिप आश्लेषा। उग्राणि च वराहोक्तानि यथा—"उग्राणि पूर्वभरणीपित्र्याणि" (बृ. सं. अ. ९८) इति। तत्र पूर्वशब्देन पूर्वफाल्गुनी, पूर्वाषाढा, पूर्वभाद्रपदा च। पित्र्यं मघा। वराहोक्तदारुणादीनि नक्षत्राणि वर्जयित्वाऽन्येषु नक्षत्रेषु दूता आगताः शुभा भवन्ति। रिक्तामिति चतुर्थ्यादिविशेषणम्। चतुर्थी नवमी चतुर्दशी च रिक्तोच्यते। तथा रिक्तेति विशेषणेन चतुर्थ्यादीनां निष्फलत्वसूचनेन कर्मारम्भं प्रत्यनुपादेयतोपदिश्यते। अशस्तमौत्पातिकमाकस्मिकं लक्षणं यस्य तच्छस्तौत्पातिकलक्षणम् ॥ ६७–७० ॥

१ "श्रीण्युत्तराणि तेभ्यो रोहिण्यश्च ध्रुवाणि" इति (बृ. सं. अ. ९८)। उत्तराणि उत्तरफाल्गुनी, उत्तराषाढा, उत्तरभाद्रपदा च।

दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ॥ ७१ ॥
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च।
सुरध्वजपताकानां फलानां यावकस्य च ॥ ७२ ॥
कन्यापुंवर्धमानानां बद्धस्यैकपशोस्तथा।
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ७३ ॥
मोदकानां सुमनसां शुक्लानां चन्दनस्य च।
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ॥ ७४ ॥
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रियास्तथा।
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ॥ ७५ ॥
हंसानां शतपत्राणां चाषाणां शिखिनां तथा।
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ॥ ७६ ॥
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम्।
गन्धः सुरभिर्वर्णश्च सुशुक्लो मधुरो रसः ॥ ७७ ॥
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभाः।
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ७८ ॥
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ७९ ॥
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम्।

दध्यक्षतेत्यादिना मार्गादिषु प्रशस्तदर्शनान्याह। सुरध्वजः शक्रध्वजः। कन्यापुंवर्धमानानामिति अङ्कारोपिताः कुमार्यः कुमाराश्च वर्धमानाः, पुरुषोत्तमवत् समासः; अन्ये तु वर्धमानाः शरावा इत्याहुः; ते चालेपनादिना मण्डिता इति बोद्धव्यम्। एकपशुः श्रेष्ठपशुरित्यर्थः। शकटस्य पूर्णस्य नृभिरिति संबन्धः। वडवायाः स्त्रियाश्च सवत्साया इति योजना। जीवञ्जीवकः पक्षी स्वनामप्रसिद्धः। प्रियवादी चातकः ॥७१–७९॥—

मङ्गलाचारसंपन्नः सातुरो वैश्मिको जनः ॥ ८० ॥
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः।
धनैश्वर्यसुखावाप्तिरिष्टलाभः सुखेन च ॥ ८१ ॥
द्रव्याणां तत्र योग्यानां योजना सिद्धिरेव च।
गृहप्रासादशैलानां नागानामृषभस्य च ॥ ८२ ॥
हयानां पुरुषाणां च स्वप्ने समधिरोहणम्।
सोमार्काग्निद्विजातीनां गवां नृणां पयस्विनाम् ॥८३॥
अर्णवानां प्रतरणं वृद्धिः संबाधनिःसृतिः।
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ॥ ८४ ॥
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च।
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः ॥ ८५ ॥

१ 'पावकस्य' इति पा०। २ 'मांसस्य च' इति पा०। ३ 'पुरुषान्तरस्कन्धारोपिता कन्या वर्धमाना, एवं पुंवर्धमानोऽपि' इति पा०।

स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ।
अश्वगोरथयानं च यानं पूर्वोत्तरेण च ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ८६ ॥

योजनायां सत्यां सिद्धिः योजनासिद्धिः । संबाधनिःसृतिः सङ्कटनिस्तरणम् । द्विषतां चावमर्दनमित्यन्तं स्वप्ने ज्ञेयम् ॥ ८०-८६ ॥

सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।
साध्यत्वं न च निर्वेदस्तदारोग्यस्य लक्षणम् ॥ ८७ ॥
आरोग्याद्बलमायुश्च सुखं च लभते महत् ।
इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणः ॥ ८८ ॥

सत्त्वस्य गुणस्य लक्षणैः सह संयोगः सत्त्वलक्षणसंयोगः । न च निर्वेद इति आत्मन्यनवज्ञेत्यर्थः ॥ ८७ ॥ ८८ ॥

तत्र श्लोकौ—

उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ।
दूतस्वप्नातुरोत्पातयुक्तिसिद्धिव्यपाश्रयम् ॥ ८९ ॥

उक्तमित्याद्यध्यायसंग्रहः । दूतादिषु पृथङ्मरणारोग्यलक्षणमिहोक्तं व्यक्तमेव । युक्त्याश्रयं मरणलक्षणं यथा—'यमुद्दिश्यातुरं वैद्यः संपादयितुमौषधम्' इत्यादिग्रन्थोक्तम् । सिद्ध्याश्रयं मरणलक्षणं यथा—'विज्ञातं' इत्यादिग्रन्थोक्तम् । आरोग्यलक्षणं युक्त्याश्रयं सिद्ध्याश्रयं च यथा—'इष्टलाभः सुखेन च' इति ग्रन्थोक्तम् ॥ ८९ ॥

इतीदमुक्तं प्रकृतं यथातथं
तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धिं च यशश्च शाश्वतं
स सिद्धकर्मा लभते धनानि च ॥ ९० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने गोमयचूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः ॥ १२ ॥

इतीत्यादिनेन्द्रियस्थानोक्तं प्रमेयजातं महाफलत्वेनावश्यबोध्यतयोपदर्शयन्नुपसंहरति ॥ ९० ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायामिन्द्रियस्थाने गोमयचूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः ॥ १२ ॥

इन्द्रियस्थानं संपूर्णम् ।

१ 'इति अनवसाद इत्यर्थः' इति पा० ।

## प्रथमोऽध्यायः ।

### रसायनाध्याये प्रथमः पादः ।

**अथातोऽभयामलकीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वस्थानोक्तलक्षणाभावेनावधारितायुष्मद्भावेन चिकित्सा धर्मार्थयशस्करी कर्तव्येत्यनन्तरं चिकित्साभिधायकं स्थानमुच्यते । रसायनवाजीकरणसाधनमपि यथा चिकित्सोच्यते, तथाऽनन्तरमेव वक्ष्यति । तत्रापि ज्वरादिचिकित्सायाः प्राग्रसायनवाजीकरणयोर्महाफलत्वेनादावभिधानम् । तयोरपि च रसायनमेव वर्षसहस्रायुष्ट्वादिकारणतया महाफलमिति तदभिधीयते, तत्रापि चाभयामलकीयश्चिकित्सास्थानार्थसूत्राभिधायकतयाऽग्रेऽभिधीयते ॥ १ ॥ २ ॥

**चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।**
**प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥ ३ ॥**
**विद्याद्भेषजनामानि,**

तत्रादौ व्यवहारार्थं स्थानाभिधेयस्य भेषजस्य पर्यायानाह—चिकित्सितमित्यादि । करोति चैवमादौ प्रधानाभिधेयपर्यायाभिधानं, यथा—निदाने हेतुरूपादिपर्यायकथनम् । एतच्च पर्यायाभिधानं प्राधान्येन चतुष्पादस्यैव भेषजस्य, यदुक्तं—"चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते" ( सू. अ. १० ) इति । एवंभूतभेषजाङ्गरूपतया तु स्थावरजङ्गमद्रव्यरूपस्य भेषजस्य भेषजत्वमेवान्तरव्यवहारकृतं ज्ञेयम् । प्रायश्चित्तमिति भेषजसंज्ञा प्रायश्चित्तवद्भेषजस्याधर्मकार्यव्याधिहरत्वेन ॥ ३ ॥—

**भेषजं द्विविधं च तत् ।**
**स्वस्थस्योर्जस्करं किञ्चित् किञ्चिदार्तस्य रोगनुत् ॥४॥**

द्वैविध्यं विवृणोति—स्वस्थस्येत्यादि । किञ्चिदिति न सर्वम् । स्वस्थत्वेन व्यवह्रियमाणस्य पुंसो जरादिस्वाभाविकव्याधिहरत्वेन तथाऽप्रहर्षव्यायक्षयित्वानुपचितशुक्रत्वाद्यप्रशस्तशारीरभावहरत्वेन ऊर्जः प्रशस्तं भावमादधातीति स्वस्थस्योर्जस्करम् । आर्तस्य रोगनुदिति विशेषणेन ज्वरादिनाऽऽर्तस्य ज्वरादिहरम् । रोगनुदिति वचनेनैवार्तविशेषतायां[1] लब्धायां यत् 'आर्तस्य' इति करोति, तेन सहजजरादिकृतां पीडामनुद्वेजिकां परित्यज्य ज्वरादिनाऽस्वाभाविकेन रोगेण पीडितस्येति दर्शयति ॥ ४ ॥

**अभेषजं च द्विविधं बाधनं सानुबाधनम् ।**

भेषजप्रसङ्गादभेषजद्वैविध्यमाह—अभेषजमित्यादि । बाधनमिह तदात्वमात्रबाधकं, यथा—स्वल्पमपथ्यम् । सानुबाधनं च दीर्घकालावस्थायिकुष्ठादिविकारकारि ॥—

**स्वस्थस्योर्जस्करं यत्तु तद्वृष्यं तद्रसायनम् ॥ ५ ॥**
**प्रायः, प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।**
**प्रायःशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ६ ॥**

द्विविधं भेषजमुक्तं विभजते—स्वस्थस्येत्यादि । तद्वृष्यं तद्रसायनं प्राय इति च्छेदः । यद्वृष्यं प्रायो भवति, तथा रसायनं यत् प्रायो भवति, आर्तस्य रोगहरं यद्बाहुल्येन, तत् स्वस्थोर्जस्करमुच्यते; यत्तु द्वितीयमार्तरोगहरं, तत् प्रायेण ज्वरादिशमनं रसायनं वाजीकरणं च भवति; यथा—क्षतक्षीणोक्तं सर्पिर्गुडादि रसायनं वृष्यं च भवति, तथा पाण्डुरोगोक्तो योगराजो रसायनत्वेनोक्तः, तथा कासाधिकारेऽगस्त्यहरीतकी रसायनत्वेनोक्तेत्याद्यनुसरणीयम् । रसायनोक्तानां च ज्वरादिहरत्वमत्र सुव्यक्तमेव रसायनग्रन्थेषु । अन्ये तु ब्रुवते—यद्व्याधिमात्रहरं न तद्रसायनं, किन्तु शरीरसंयोगदार्ढ्याद्दीर्घायुःकर्तृत्वसाधारणधर्मयोगादुपचरितव्याधिहरं रसायनमिहोच्यत इति । ननु यदि स्वस्थोर्जस्करमपि व्याधिहरं, व्याधिहरं च स्वस्थोर्जस्करं, तत् किं किञ्चिदिति पदेन भेषजकर्मव्यवस्थादर्शकेन क्रियते ? ब्रूमः—बाहुल्येन स्वस्थोर्जस्करत्वं व्याधिहरत्वं च व्यवस्थाप्यते, न चेह सर्वार्तरोगहरस्य स्वस्थोर्जस्करत्वमिति प्रतिज्ञायते, येन पाठासप्तपर्णादीनामपि रसायनत्वं साधनीयशक्तित्वादार्तरोगहरत्वेन[1] यदुच्यते तदपि रसायनं वाजीकरणं च भवतीति लवमात्रोपदर्शनं क्रियते, तत् स्वस्थार्तयोरुभयार्थकर्तृत्वम् । प्रायःशब्दतात्पर्यं विवृणोति—प्राय इत्यादि । विशेषार्थं इति बाहुल्यार्थ इत्यर्थः ॥ ५ ॥ ६ ॥

**दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।**
**प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम् ॥ ७ ॥**
**वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात् ।**
**लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ ८ ॥**

रसायनकार्यमाह—दीर्घमित्यादि । प्रभादीनां त्रयाणामौदार्यं योजनीयम् । वाक्सिद्धिः यदुच्यते तदवश्यं भवतीत्यर्थः । प्रणतिः लोकवन्द्यता । कथमेतद्रसायनेन क्रियत इत्याह—लाभेत्यादि । रसादिग्रहणेन स्मृत्यादयोऽपि गृह्यन्ते ॥७॥८॥

१ 'आर्तविशेषणतायां' इति पा० ।

१ 'साधनीयशक्तित्वार्तियोगहरत्वेन' इति पा० । २ 'वृपतां' इति पा० ।

अपत्यसंतानकरं यत् सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः ॥ ९ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
जीर्यतोऽप्यक्षयं शुक्रं फलवद्येन दृश्यते ॥ १० ॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान् ।
भवत्यर्च्यो बहुमतः प्रजानां सुबहुप्रजः ॥ ११ ॥
संतानमूलं येनेह प्रेत्य चानन्त्यमश्नुते ।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत् ॥ १२ ॥

वाजीकरणकार्यमाह—अपत्येत्यादि । अपत्यसन्तानः अपत्यपरम्परा, तेन पुत्रपौत्रकरमित्यर्थः; वाजीकरणजनिताच्छुक्राजातः पुत्रः पुत्रजननसमर्थो भवतीत्यर्थः । अतिप्रियत्वं चेहोपचितशुक्रतया निरन्तरव्यवायकर्तृत्वात्; यदुक्तं—"विरूपमपि योद्धारं भृत्यमिच्छन्ति पार्थिवाः । व्यवायव्यायतं मूर्खं धृष्टं पतिमिव स्त्रियः" इति । उपचीयत इति पुष्टिं प्राप्नोति । अक्षयमिवाक्षयम् । फलवदिति गर्भजनकम् । चैत्यो देवतायतनम् । अर्च्यः अर्चनीयः । आनन्त्यमिवानन्त्यं; दीर्घसन्तानतामित्यर्थः ॥ ९–१२ ॥

स्वस्थस्योर्जस्करं त्वेतद्द्विविधं प्रोक्तमौषधम् ।
यद्व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते ॥ १३ ॥
चिकित्सितार्थ एतावान् विकाराणां यदौषधम् ।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥ १४ ॥

चिकित्सित इति ज्वरादिचिकित्सिते । ननु रसायनवाजीकरणे अपि ज्वरादिचिकित्सिते एव, तत् किं विशिष्योच्यते—'वक्ष्यते तच्चिकित्सिते' इत्याह—चिकित्सितार्थ इत्यादि । सत्यं, रसायनं वाजीकरणं च ज्वरादिव्याधिहरत्वाच्चिकित्सितशब्देनोच्यत इत्यर्थः । अथ व्याधिहरत्वाच्चिकित्सिते वक्तव्यत्वाच्च रसायनवाजीकरणे क्व तु वक्तव्ये इत्याह—रसायनेत्यादि । विधिः विधानं रसायनाभिधानमित्यर्थः । अग्रे इति अनन्तरम् । वाजीकरणं चाग्रे 'अभिधास्यते' इति शेषः ॥ १३ ॥ १४ ॥

अभेषजमिति ज्ञेयं विपरीतं यदौषधात् ।
तदसेव्यं निषेव्यं तु प्रवक्ष्यामि यदौषधम् ॥ १५ ॥

अभेषजमपि पूर्वोद्दिष्टं विवृणोति—अभेषजमित्यादि । विपरीतं रोगजननलक्षणार्थकारि ॥ १५ ॥

रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं चैव वातातपिकमेव च ॥ १६ ॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ॥ १७ ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्वोत्तरस्यां च सुभूमौ कारयेत् कुटीम् ॥१८॥

१ 'भवत्यर्च्यो बहुमतः' इति, 'भवत्यसौ बहुमतः' इति च पा० । २ 'अर्चणीयः स्तुत्यः' इति पा० । ३ 'च' इति पा० । ४ 'रसायनविधानमित्यर्थः' इति पा० ।



विस्तारोत्सेधसंपन्नां त्रिगर्भां सूक्ष्मलोचनाम् ।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥ १९ ॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥ २० ॥
अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ।
मुहूर्तकरणोपेते प्रशस्ते कृतवापनः ॥ २१ ॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन् ॥२२॥
देवताः पूजयित्वाऽग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥२३॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत तत्प्रवक्ष्यामि शोधनम् ॥ २४ ॥

कुटीप्रवेशेन यत् क्रियते तत् कुटीप्रावेशिकम् । वातातपसेवयाऽपि यत् क्रियते तद् वातातपिकम् । त्रिगर्भां प्रथममेकं गृहं, तस्याभ्यन्तरे द्वितीयम्, एवं त्रिगर्भास्त्रयो गर्भा अन्तराणि यस्यां सा; त्रिगर्भामिति अन्तस्त्रिप्रकोष्ठाम् । सूक्ष्मलोचनामिति अल्पद्वारजालकाम् । शुक्ले शुक्लपक्षे । सज्जा वैद्यादयो यस्यां सा तथा । तिथिनक्षत्रपूजित इति शुभतिथिनक्षत्रयोगात् पूजिते । कृतवापन इति कृतक्षौरः । मानसान् दोषानिति कामक्रोधादीन् । संशोधनैरिति वमनविरेचनास्थापनशिरोविरेचनैः । सुखीति अरोगः । जातबल इति संशोधनापहृतमलतया संसर्जनादिक्रमेण पुनर्जातबलः । यद्यपीह संशोधनैरिति बहुवचनप्रयोगात् सर्वाण्येव संशोधनानि संमतानि, तथाऽपीह रसायने विशेषेण यौगिकत्वाद्धरीतक्यादिप्रयोग एवोक्तः; अन्ये तु हरीतक्यादिप्रयोगेणैव परं संशोधनं कर्तव्यमित्याहुः, संशोधनैरिति बहुवचनं पुनर्यावच्छुद्धेर्हरीतक्यादिप्रयोगस्यैव करणं दर्शयति ॥ १६–२४ ॥

हरीतकीनां चूर्णानि सैन्धवामलके गुडम् ।
वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम् ॥ २५ ॥
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ।
तेन शुद्धशरीराय कृतसंसर्जनाय च ॥ २६ ॥
त्रिरात्रं यावकं दद्यात् पञ्चाहं वाऽपि सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः ॥ २७ ॥
शुद्धकोष्ठं तु तं ज्ञात्वा रसायनमुपाचरेत् ।
वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद्भवेत् ॥ २८ ॥

यावकमिति यवान्नम् । त्रिरात्रादिविकल्पत्रयं हीनमध्योत्तमशुद्धिविषयम् ॥ २५–२८ ॥

हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।
दोषानुलोमनीं लघ्वीं विद्याद्दीपनपाचनीम् ॥ २९ ॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम् ।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥ ३० ॥

१ 'सक्त०' इति पा० । २ 'ततो वक्ष्यामि' इति पा० ।

कुष्ठं गुल्ममुदावर्तं शोषं पाण्ड्वामयं मदम्।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम् ॥ ३१ ॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम्।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥ ३२ ॥
कफप्रसेकं वैस्वर्यं वैवर्ण्यं कामलां क्रिमीन्।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम् ॥ ३३ ॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः।
स्मृतिबुद्धिप्रमोहं च जयेच्छीघ्रं हरीतकी ॥ ३४ ॥
(अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्शिताः।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये ॥ ३५ ॥)
तान् गुणांस्तानि कर्माणि विद्यादामलकीष्वपि।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्ययः ॥ ३६ ॥
अतश्चामृतकल्पानि विद्यात् कर्मभिरीदृशैः।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥ ३७ ॥

यद्यपि द्रव्यान्तराणि दशवर्षशतायुष्कररसायनाधिकृतानि सन्ति, तथाऽपि हरीतक्यामलके एव रोगहरत्वायुष्करत्वरूपोभयधर्मयोगादध्यायादौ गुणकर्मभ्यामुच्येते; तत्रापि यद्यपि "आमलकं वयःस्थापनानाम्" ( सू. अ. २५ ) इत्युक्तम्, तथाऽपि रोगहरत्वे हरीतकी प्रकर्षवतीति कृत्वा हरीतक्यग्रेऽभिहिता। हरीतक्यादिषु पञ्चरसत्वाद्युत्पादोऽदृष्टवशाद्भूतसन्निवेशविशेषप्रभावकृतः; तेन नात्रोपपत्तयः क्रमन्ते। शिवामिति कल्याणकारिणीं, प्रशस्तगुणयुक्तत्वात्। सर्वरोगप्रशमनीमिति संयोगसंस्कारादिना। सर्वरोगहरत्वमभिधायापि कुष्ठादिहन्तृत्वाभिधानं विशेषेण कुष्ठादिहन्तृत्वोपदर्शनार्थम्। प्रवर्तकत्वेऽप्यतीसारग्रहणीहरत्वं विबद्धदोषप्रवर्तकतया ज्ञेयं; यदुक्तं—"स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते। अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत्" इति। बुद्धिस्मृतिप्रदत्वमभिधायापि स्मृतिबुद्धिप्रमोहहरत्वाभिधानं तत्र विशिष्टशक्त्युपदर्शनार्थम्। वीर्यस्य तु विपर्यय इत्यनेनामलकस्य शीतवीर्यत्वमुक्तम्। शस्यानीति अस्थिरहितानि फलानि ॥ २९-३७ ॥

ओषधीनां परा भूमिर्हिमवाञ्छैलसत्तमः।
तस्मात्फलानि तज्जानि ग्राहयेत्कालजानि तु ॥ ३८ ॥
आपूर्णरसवीर्याणि काले काले यथाविधि।
आदित्यपवनच्छायासलिलप्रीणितानि च ॥ ३९ ॥
यान्यजग्धान्यपूतीनि निर्व्रणान्यगदानि च।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म चोत्तमम् ॥ ४० ॥

यद्यपि "हिमवानौषधभूमीनाम्" ( सू. अ. २५ ) इत्युक्तं, तथाऽपि रसायने हिमवत्प्रभवाण्येव भेषजानि ग्राह्याणीति दर्शयितुमोषधीनामित्याद्यभिधानम्। काले काले इति फलपाककाले इत्यर्थः। यथाविधीति यथा भेषजग्रहणं मङ्गलदेवतार्चनादिपूर्वकं स्यात्तथाऽवश्यं रसायने कर्तव्यम्। अगदानीत्यनेन पवनदहनाद्यदोषं फलस्य दर्शयति ॥ ३८-४० ॥

पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान्।
हरीतकीसहस्रं च त्रिगुणामलकं नवम् ॥ ४१ ॥
विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम्।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥ ४२ ॥
बिल्वाग्निमन्थश्योनाकं काश्मर्यमथ पाटलाम्।
पुनर्नवां शूर्पपर्ण्यौ बलामेरण्डमेव च ॥ ४३ ॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम्।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥ ४४ ॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्।
भागान् यथोक्तांस्तत्सर्वं साध्यं दशगुणेऽम्भसि ४५
दशभागावशेषं तु पूतं तं ग्राहयेद्रसम्।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च ॥ ४६ ॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्चनैः।
विनीय तस्मिन्निर्यूहे चूर्णानीमानि दापयेत् ॥ ४७ ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च।
मुस्तानां सविडङ्गानां चन्दनागुरुणोस्तथा ॥ ४८ ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ४९
सितोपलासहस्रं च चूर्णितं तुलयाऽधिकम्।
तैलस्य चाढकं तत्र दद्यात्त्रीणि च सर्पिषः ॥ ५० ॥
साध्यमौदुम्बरे पात्रे तत् सर्वं मृदुनाऽग्निना।
ज्ञात्वा लेह्यमदग्धं[1] च शीतं क्षौद्रेण संसृजेत् ॥ ५१ ॥
क्षौद्रप्रमाणं स्नेहार्धं तत् सर्वं घृतभाजने।
तिष्ठेत्संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत् ॥ ५२ ॥
या नोपरुन्ध्यादाहारमेकं[2] मात्रा जरां प्रति।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ ५३ ॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः।
रसायनमिदं प्राश्य[3] बभूवुरमितायुषः ॥ ५४ ॥
मुक्त्वा जीर्णं वपुश्चाग्र्यमवापुस्तरुणं वयः।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥ ५५ ॥
मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः।
ब्राह्मं तपो ब्रह्मचर्यं चेरुश्चात्यन्तनिष्ठया ॥ ५६ ॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत्।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥ ५७ ॥

( इति ब्राह्मरसायनम् )

पञ्चानामित्यादौ प्रतिद्रव्यं दशपलभागग्रहणम्[4], उक्तं हि जतूकर्णे—"इति पञ्च पञ्चमूलानि, तेषां प्रतिद्रव्यं दशपलानि" इति। हरीतकीसहस्रमिति हरीतकीफलसहस्रम्। शूर्पपर्ण्यौ

१ योगीन्द्रनाथसेनसंमतोऽयं पाठः। २ 'दशवर्षसहस्रायुष्कररसायनाधिकृतानि' इति पा०। ३ 'यान्यदग्धानि' इति पा०।

१ 'लेहमदग्धं' इति पा०। २ '०दाहारमेवं' इति पा०। ३ 'प्राप्य' इति पा०। ४ 'दशाक्षग्रहणम्' इति पा०।

मुद्गमाषपर्ण्यौ। वीरा जालन्धरं शाकम्। कूर्चनं जर्जरीकरणसाधनं शिलापुत्रकमुसलादि। विनीयेति प्रक्षिप्य। प्लवः कैवर्तमुस्तकम्। कनकं नागकेशरम्। त्वक् गुडत्वक्। औडुम्बरे इति ताम्रमये। स्नेहार्धमिति सर्पिस्तैलार्धम्। एकम् अनपराह्णिकमाहारम्॥ ४१-५७॥

यथोक्तगुणानामामलकानां सहस्रं पिष्टस्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रस्वरसपरिपीतं स्थिरापुनर्नवाजीवन्तीनागबलाब्रह्मसुवर्चलामण्डूकपर्णीशतावरीशङ्खपुष्पीपिप्पलीवचाविडङ्गस्वयङ्गुप्तामृताचन्दनागुरुमधुकमधूकपुष्पोत्पलपद्ममालतीयुवतीयूथिकाचूर्णाष्टभागसंयुक्तं पुनर्नागबलासहस्रपलस्वरसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेदन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेदविदा, पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य, जीर्णे च षष्टिकं पयसाससर्पिष्कमुपसेवमानो यथोक्तान् गुणान् समश्नुत इति॥ ५८॥

भवन्ति चात्र—

इदं रसायनं ब्राह्मं महर्षिगणसेवितम्।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः॥ ५९॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः।
श्रुतं धारयते सत्त्वमार्षं चास्य प्रवर्तते॥ ६०॥
धरणीधरसारश्च वायुना समविक्रमः।
स भवत्यविषं चास्य गात्रे संपद्यते विषम्॥ ६१॥

( इति द्वितीयं ब्राह्मरसायनम्। )

पिष्टस्वेदनविधिनेति यथा पिष्टकं तोयपरिपूरितपात्रोपरिदत्ततृणादिसंस्थितं स्वेद्यते, तथा तत् स्वेदनीयमित्यर्थः। स्वरसपरिपीतमिति स्वरसभावितम्। ब्रह्मसुवर्चलायौषधान्यायुर्वेदसमुत्थानीये वक्ष्यमाणानि। युवतिः नवमालिका। अष्टमो भागोऽष्टभागः। क्षुद्रगुडाकृतिमिति फाणिताकृतिम्। अर्धकर्षवृद्ध्येति अर्धकर्षात्प्रभृति वर्धयेत्। यथोक्तविधिनेति कुटीप्रावेशिकेन विधिना। यथोक्तान् गुणानिति पूर्वप्रयोगफलश्रुतिपठितान्। धरणीधरसार इति उपग्रमुखवत्; तेन धरणीधराः पर्वताः, तेषां सारो लौहं, तद्वत्सार इत्यर्थः[1]। अविषमिति विषमविकारि॥ ५८-६१॥

बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलिर्बला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम्॥ ६२॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी॥ ६३॥
मुस्तं पुनर्नवा मेदा सैला चन्दनमुत्पलम्।
विदारी वृषमूलानि काकोली काकनासिका॥ ६४॥
एषां पलोन्मितान् भागाञ्छतान्यामलकस्य च।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत्॥ ६५॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः॥ ६६॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्धतुलां भिषक्।
मत्स्यण्डिकायाः पूतायाः लेहवत्साधु साधयेत्॥ ६७॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्याः पिप्पलीद्विपलं तथा॥ ६८॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः॥ ६९॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्धनः॥ ७०॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति॥ ७१॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥ ७२॥
मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं
वर्णप्रसादं पवनानुलोम्यम्॥ ७३॥
रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य सर्वं
बिभर्ति रूपं नवयौवनस्य॥ ७४॥

( इति च्यवनप्राशः। )

पर्ण्यश्चतस्र इति शालपर्णी, पृश्निपर्णी, मुद्गपर्णी, माषपर्णी च। तामलकी भूम्यामलकी। काकनासा नासाफला, 'काकतुण्डक' इत्यन्ये। गतरसत्वमिह द्रव्याणां चतुर्भागस्थितजले भवति। निष्कुलमिति निरस्थि। तैलसर्पिषोरिति समासनिर्देशाद्द्वाभ्यामेव द्वादशपलानि, न पृथक् पृथक्। मत्स्यण्डिका खण्डसंहतिः। अत्र षट्पलत्वेन समयोरपि मधुसर्पिषोर्द्रव्यान्तरयुक्तत्वेनाविरुद्धत्वम्॥ ६२-७४॥

अथामलकहरीतकीनामामलकविभीतकानां हरीतकीविभीतकानामामलकहरीतकीविभीतकानां वा पलाशत्वगवनद्धानां मृदाऽवलिप्तानां कुकूलस्विन्नानामकुलकानां[1] पलसहस्रमुलूखले संपोथ्य दधिघृतमधुपललतैलशर्करासंयुक्तं भक्षयेदन्नमनुयथोक्तेन विधिना; तस्यान्ते यवाग्वादिभिः प्रत्यव-

---

[1] 'तत्सार इत्यर्थः' इति पा०।

[1] 'मकुलकानां' इति पा०।

स्थापनम्, अभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्च, अयं च रसायनप्रयोगप्रकर्षो द्विस्तावदग्निबलमभिसमीक्ष्य, प्रतिभोजनं यूषेण पयसा वा षष्टिकः ससर्पिष्कः, अतः परं यथासुखविहारः कामभक्ष्यः स्यात्। अनेन प्रयोगेणर्षयः पुनर्युवत्वमवापुर्बभूवुश्चानेकवर्षशतजीविनो निर्विकाराः परं शरीरबुद्धीन्द्रियबलसमुदिताश्चेरुश्चात्यन्तनिष्ठया तपः ॥ ७५ ॥

(इति चतुर्थामलकरसायनम्।)

कुकूलकः करीषाग्निः। अकुलकानामिति अनस्थ्नाम्। दैव्यादीनामत्र मानं नोक्तं, तेन प्रधानस्य चूर्णस्य दध्यादिभिर्मिलितैः समानमानत्वं; किंवा प्रत्येकमेव दध्यादीनां चूर्णसमत्वम्। पललं तिलचूर्णम्। भक्षयेदिति वचनं लेह्येऽपि अल्पाभ्यवहरणमात्रार्थत्वादुपपन्नम्। अनन्नभुगिति सर्वथाऽऽहारान्तराभुक्। तस्यान्त इति एतत्प्रयोगपरित्यागकाले। प्रत्यवस्थापनमिति यवागवादिक्रमविशेषणं; तेन प्रयोगान्ते यदा अन्नसंसर्जनं कर्तव्यं, तदा यवागवादिक्रमेणेत्युक्तस्यार्थस्य प्रत्यवस्थापनं क्रियत इत्यर्थः। यूषेण पयसा वेति विकल्पोऽग्निबलापेक्षया ॥ ७५ ॥

हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्यूहे पिप्पलीमधुकमधूककाकोलीक्षीरकाकोल्यात्मगुप्ताजीवकर्षभकक्षीरशुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिषः कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलसमां मात्रां जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नञ्जराव्याधिपापाभिचारव्यपगतभयः शरीरेन्द्रियबुद्धिबलमतुलमुपलभ्याप्रतिहतसर्वारम्भः परमायुरवाप्नुयात् ॥ ७६ ॥

(इति पञ्चमो हरीतकीयोगः।)

अत्र हरीतक्यादौ क्षीरशुक्ला क्षीरविदारिका। अत्र हरीतक्यादिक्राथस्य त्वेको भागः, क्षीरस्याष्टौ भागाः, सर्पिष एको भागः। कुम्भो द्रोणद्वयम्। वचनं हि—"द्रोणस्तु द्विगुणः सूर्पो विज्ञेयः कुम्भ एव च" इति ॥ ७६ ॥

हरीतक्यामलकविभीतकहरिद्रास्थिराबलाविडङ्गामृतवल्लीविश्वभेषजमधुकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्कराभ्यामपि च सन्नीयामलकस्वरसशतपरिपीतमामलकचूर्णमयश्चूर्णचतुर्भागसंप्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथोक्तेन विधिना सायं मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टिकान्नमश्नीयात्, त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति, श्रुतमवतिष्ठते, सर्वामयाः प्रशाम्यन्ति, विषमविषं भवति गात्रे, गात्रमश्मवत् स्थिरीभवति, अधृष्यो भूतानां भवति ॥ ७७ ॥

भवन्ति चात्र—

यथाऽमराणाममृतं यथा भोगवतां सुधा।
तथाऽभवन्महर्षीणां रसायनविधिः पुरा ॥ ७८ ॥
न जरां न च दौर्बल्यं नातुर्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥ ७९ ॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते।
गतिं स देवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाक्षयम् ॥ ८० ॥

अमृतवल्ली गूडूची। सोमवल्कः विट्खदिरः। क्षीरसर्पिः क्षीरसमुत्थितसर्पिः। अयश्चूर्णस्य चतुर्थो भागः, यत एतदयश्चूर्णं चतुर्थभागमत एवास्मिन् प्रयोगे जतूकर्णेन "अयश्चूर्णपादयुक्तम्" इति कृतम्। अमराणाममृतं जरादिहरं, नागानां च सुधा जरामरणहरी, इत्युभयोपादानं दृष्टान्ते। ब्रह्म मोक्षः। मोक्षसाधनत्वं चेह रसायनस्य विशुद्धसत्त्वकर्तृतयोच्यते ॥ ७७–८० ॥

तत्र श्लोकः—

अभयामलकीयेऽस्मिन् षड्योगाः परिकीर्तिताः।
रसायनानां सिद्धानामायुर्यैरनुवर्तते ॥ ८१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने रसायनाध्यायेऽभयामलकीयो नाम रसायनपादः प्रथमः ॥ १ ॥

अभयेत्यादिना संदेहनिरासार्थमुक्तप्रयोगसंख्यां दर्शयति। एवमन्यत्रापि संख्याप्रणयनमन्ते ज्ञेयम् ॥ ८१ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने रसायनाध्यायेऽभयामलकीयो नाम रसायनपादः प्रथमः ॥ १ ॥

---

## रसायनाध्याये द्वितीयः पादः।

अथातः प्राणकामीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वपादे ह्यामलकरसायनान्युक्तानि, इहाप्यामलकरसायनानि सन्तीति प्राणकामीयमनन्तरमुच्यते। प्राणकामशब्दमधिकृत्य कृतमिति प्राणकामीयम् ॥ १ ॥ २ ॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्बल्यापहरमनिलकफपित्तसाम्यकरं स्थैर्यकरमव-

---

१ 'द्विस्तावद् प्रयोगकालाद् द्विगुणकालं प्रतिभोजनं यवागूः यूषेण पयसा वा ससर्पिष्कः षष्टिकः षष्टिकान्नं' इति योगीन्द्रनाथसेनः। २ 'दध्यादीनां' इति पा०। ३ 'अन्नसेवा कर्तव्या' इति पा०। ४ 'प्रयुञ्जीताग्निबलं समवेक्ष्य, जीर्णे च' इति पा०। ५ 'वचा' इति पा०।

१ 'चाक्षरम्' इति पा०।

द्धमांसहरमन्तरग्निसन्धुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम्। अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुर्नारीणां चेष्टतमा बभूवुः, स्थिरसमसुविभक्तमांसाः, सुसंहतस्थिरशरीराः, सुप्रसन्नबलवर्णेन्द्रियाः, सर्वत्राप्रतिहतपराक्रमाः, क्लेशसहाश्च। सर्वे शरीरदोषा भवन्ति ग्राम्याहारादम्ललवणकटुकक्षारशुष्कशाकमांसतिलपललपिष्टान्नभोजिनां विरूढनवशूकशमीधान्यविरुद्धासात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्युषितभोजिनां विषमाध्यशनप्रायाणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोधशोकलोभमोहायासबहुलानाम्; अतोनिमित्तं हि शिथिलीभवन्ति मांसानि, विमुच्यन्ते सन्धयः, विदह्यते रक्तं, विष्यन्दते चानल्पं मेदः, न सन्धीयतेऽस्थिषु मज्जा, शुक्रं न प्रवर्तते, क्षयमुपैत्योजः; स एवंभूतो ग्लायति, सीदति, निद्रातन्द्रालस्यसमन्वितो निरुत्साहः श्वसिति, असमर्थश्चेष्टानां शारीरमानसीनां, नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्वमायुरवाप्नोति। तस्मादेतान् दोषानवेक्षमाणः सर्वान् यथोक्तानहितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हतीत्युक्त्वा भगवान् पुनर्वसुरात्रेय उवाच—॥ ३ ॥

निद्राहरत्वं रसायनस्य वैकारिकनिद्राहरत्वेन, किंवा देववत् सर्वदा प्रबुद्धो निद्रारहितो भवति। तन्द्रालक्षणं तन्त्रान्तरे—"इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः। निद्रार्तस्येव यस्यैते तस्य तन्द्रां विनिर्दिशेत्" (सु. शा. अ. ४) इति। अबद्धमांसम् अनिबिडमांसम्। उत्तमानि प्रभादीनि करोतीति प्रभावर्णस्वरोत्तमकरम्। एवंजातीयश्च पूर्वनिपातानियमोऽप्रतिबन्धेन चरकेऽस्ति, स मयूरव्यंसकादिपाठाद्द्रष्टव्यः। अनेन हीत्यादिना पुरावृत्तकथनेन रसायनानि वक्ष्यमाणानि प्रवृत्त्यर्थं स्तौति। रसायनप्रयोगे वर्जनीयं ग्राम्याहारादि दूषणत्वेन निर्दिशन्नाह—सर्वे इत्यादि। तिलस्तु अचूर्णितस्तिलः, पललं तिलचूर्णम्। अतोनिमित्तमिति ग्राम्याहारादिकारणकम्। शुक्रं न प्रवर्तत इति नोत्पद्यते शुक्रमित्यर्थः॥ ३ ॥

आमलकानां सुभूमिजानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाणवीर्याणां स्वरसेन पुनर्नवाकल्कपादसंप्रयुक्तेन सर्पिषः साधयेदाढकम्, अतः परं विदारीस्वरसेन जीवन्तीकल्कसंप्रयुक्तेन, अतः परं चतुर्गुणेन पयसा बलातिबलाकषायेण शतावरीकल्कसंयुक्तेन; अनेन क्रमेणैकैकं शतपाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्; तद्यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत्, जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात्। अस्य प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति, श्रुतमवतिष्ठते, सर्वामयाः प्रशाम्यन्ति, अप्रतिहतगतिः स्त्रीषु, अपत्यवान् भवतीति॥ ४॥

भवतश्चात्र—

बृहच्छरीरं गिरिसारसारं
स्थिरेन्द्रियं चातिबलेन्द्रियं च।
अधृष्यमन्यैरतिकान्तरूपं
प्रशस्तिपूजासुखचित्तभाक् च॥ ५॥
बलं महद्वर्णविशुद्धिरग्र्या
स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरं च
समश्नतो योगमिमं नरस्य॥ ६॥

(इत्यामलकघृतम्।)

एकैकशः शतपाकमित्यर्थः। एकैकपाकसाधनं पृथक् कर्तव्यं; तेन त्रिशतधा पाको भवति। अत्र च कल्कोपलेपादिनोपक्षीणमपि यदवशिष्टं भवति तदेव ग्राह्यं, वचनबलात्। सौवर्णादिपात्रेषु यथापूर्वं वरगुणत्वम्, अन्यथा समानगुणत्वे सर्वेषां मृत्पात्रस्य सुलभत्वेनातिदुर्लभतरं सौवर्णपात्रं नोपदेशमर्हति। यथोक्तेन विधिनेति कुटीप्रावेशिकेन। गिरिसारः लोहम्॥ ४—६॥

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुणक्षारोदकोत्तरं तिष्ठेत्, तदनुगतक्षारोदकमनातपशुष्कमनस्थि चूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भागसंप्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेः। तस्योत्तरकालमग्निबलसमां मात्रां खादेत्, पौर्वाह्णिकः प्रयोगो नापराह्णिकः, सात्म्यापेक्षश्चाहारविधिः। अस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण॥ ७॥

(इत्यामलकावलेहः।)

पलाशतरुणः तरुणपलाशः; अनेन बालवृद्धपलाशवर्जनं सूच्यते। क्षारोदकोत्तरमिति यथा क्षारोदकं भाव्यादुपरि भवति तथा कर्तव्यमिति दर्शयति। चतुर्भागः पादः। समानं पूर्वेणेति पूर्वयोगफलश्रुत्यैतदपि युक्तमित्यर्थः॥ ७॥

आमलकचूर्णाढकमेकविंशतिरात्रमामलकस्वरसपरिपीतं मधुघृताढकाभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्कराचूर्णचतुर्भागसंप्रयुक्तं घृत-

१ 'भाप' इति पा०। २ 'अतो निमित्तादि' इति पा०। ३ 'यस्येहा' इति पा०।

१ 'आमलकादुपरि' इति पा०।

भाजनस्थं प्रावृषि भस्मराशौ निदध्यात्; तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत्; अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ ८ ॥

(इत्यामलकचूर्णम् ।)

वर्षान्ते वर्षाकालान्ते ॥ ८ ॥

विडङ्गतण्डुलचूर्णानामाढकमाढकं पिप्पलीतण्डुलानामध्यर्धाढकं सितोपलायाः सर्पिस्तैलमध्वाढकैः षड्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशाविति सर्वं समानं पूर्वेण यावदाशीः ॥ ९ ॥

(इति विडङ्गावलेहः ।)

यावदाशीरिति आशीः फलश्रुतिः; तेन 'तद्वर्षान्ते' इत्यादिग्रन्थोक्तविधिविधानं दर्शयति ॥ ९ ॥

यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्, तानि सुस्विन्नशीतान्युद्धृतकुलकान्यापोथ्याढकेन पिप्पलीचूर्णानामाढकेन च विडङ्गतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्कराया द्वाभ्यां द्वाभ्यामाढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रम्, अत ऊर्ध्वं प्रयोगः; अस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण ॥ १० ॥

(इत्यामलकावलेहोऽपरः ।)

पूर्वेणेति पूर्वयोगफलश्रुतिपर्यन्तं पूर्वयोगेनास्य समानमित्यर्थः ॥ १० ॥

धन्वनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षणवल्मीकश्मशानचैत्योषरावसथवर्जिते देशे यथर्तुसुखपवनसलिलादित्यसेविते जातान्यनुपहतान्यनध्यारूढान्यबालान्यजीर्णान्यधिगतवीर्याणि शीर्णपुराणपर्णान्यसंजातान्यपर्णानि तपसि तपस्ये वा मासे शुचिः प्रयतः कृतदेवार्चनः स्वस्ति वाचयित्वा द्विजातीन् चले सुमुहूर्ते नागबलामूलान्युद्धरेत्, तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रयोजयेत्, चूर्णीकृतानि वा पिबेत् पयसा, मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत्, जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् । संवत्सरप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ ११ ॥

(इति नागबलारसायनम् ।)

धन्वनीति जाङ्गलदेशे । कर्षणं हलादिना । अनध्यारूढानीति न महता पार्श्वस्थेन वृक्षेणाक्रान्तानि । तपसि माघे । तपस्ये इति फाल्गुने । चले सुमुहूर्ते इति इन्द्रे मुहूर्ते । आम्रमात्रमिति पलपरिमाणम् ॥ ११ ॥

बलातिबलाचन्दनागुरुधवतिनिशखदिरशिंशपासनस्वरसाः पुनर्नवान्ताश्चौषधयो दश नागबलया व्याख्याताः । स्वरसानामलाभे त्वयं स्वरसविधिः—चूर्णानामाढकमाढकमुदकस्याहोरात्रस्थितं मृदितपूतं स्वरसवत् प्रयोज्यम् ॥ १२ ॥

पुनर्नवान्ता दश षड्विरेचनशताश्रितीये "अमृताऽभया धात्री मु(यु)क्ता श्रेयसी श्वेताऽतिरसा मण्डूकपर्णी स्थिरा पुनर्नवा" (सू.अ. ४) इति सर्वा वयःस्थापनोक्ताः । नागबलया व्याख्याता इति नागबलावत्तेषामपि प्रयोगः । बलादीनां स्वरसेनैव विधानम् । नागबलावद्भोजनादिकं ज्ञेयम् । स्वरसालाभेऽनुकल्पमाह—स्वरसानामित्यादि ॥ १२ ॥

भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्ले माषपल्ले वा निधापयेत्, तानि चतुर्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृतशरीरः । पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत्, तेषां रसमष्टभागावशेषं पूतं सपयस्कं पिबेत् सर्पिषाऽन्तर्मुखमभ्यज्य । तान्येकैकभल्लातकोत्कर्षापकर्षेण दशभल्लातकान्यात्रिंशतः प्रयोज्यानि, नातः परमुत्कर्षः । प्रयोगविधानेन सहस्रपर एव भल्लातकप्रयोगः । जीर्णे च ससर्पिषा पयसा शालिषष्टिकाशनमुपचारः, प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः । तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ १३ ॥

(इति भल्लातकक्षीरम् ।)

शुचिः ज्येष्ठः, शुक्रस्तु आषाढः, सह आग्रहायणः, सहस्यः पौषः । एतच्च भल्लातकं मासचतुष्टयस्थितं यवपल्लादौ उद्धृतमात्रं न प्रयोज्यं, किंतु यथोक्त एव काले शीतगुणयुक्ते । मुखदाहपरिहारार्थं सर्पिषाऽन्तर्मुखमभ्यज्येति । नातः परमिति त्रिंशतः परेण प्रयोगो न भल्लातकस्य । सहस्रपरो भल्लातकप्रयोग इति उपयुक्तभल्लातकसंपिण्डनया यदा सहस्रं पूर्यते तदैवोपरमः कर्तव्यः, सहस्रादर्वागपि च प्रयोगपरित्यागः प्रकृत्याद्यपेक्षया भवत्येव । सहस्रसंख्यापूरणं चेहैकेन वर्धनह्रासक्रमेण न भवति, तेन पुनरावृत्त्या च त्रिंशत्पर्यन्तं प्रयोगः कर्तव्यः, यथा हि भल्लातकप्रयोगाभ्यासेन सहस्रसंख्यापूरणं भवति तथा कृत्वा परित्यागः कर्तव्यः । अन्ये तत्र सुश्रुते अर्शश्चिकित्सितोक्तशतपर्यन्तं भल्लातकप्रयोगेण समं विरोधं पश्यन्तः सुश्रुतप्रयोगस्याप्यन्यथा व्याख्यानेन त्रिंशत्कमात्रं प्रयोगमिच्छन्ति; तच्च

१ 'असञ्जातफलानि' इति पा० । २ गङ्गाधरस्तु 'बले मुहूर्ते' इति पठित्वा 'बलवति सुमुहूर्ते' इति व्याख्यानयति । ३ 'पयसा ससर्पिष्कं' इति पा० ।

१ 'दश या वयःस्थापना व्याख्यातास्तासां स्वरसा नागबलावद्' इति पा० । २ 'यवपर्णादौ' इति पा० । ३ 'त्रिंशद्गुडकमात्रं' इति पा० ।

व्याख्यानं नातिसङ्गतम् । किंच सहस्रद्वयस्य तत्रोपयोगो विहितः, अत्र सहस्रपर्यन्तः प्रयोगः; तेन व्याधिविषयोऽन्य एव स प्रयोगः, अयं तु रसायनविषयः ॥ १३ ॥

भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठं निखातस्य स्नेहभावितस्य दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिरुपस्वेदयेत्; तेषां यः स्वरसः कुम्भं प्रपद्येत, तमष्टभागमधुसंप्रयुक्तं द्विगुणघृतमद्यात्; तत्प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥ १४ ॥ ( इति भल्लातकक्षौद्रम् । )

पिष्टस्वेदनं तत्, यत्रस्थं पिष्टकमुपस्वेद्यते; तदुपरि यत् पिधानपात्रं तच्चेह सच्छिद्रं ग्राह्यम्, अन्यथोपरिस्थभल्लातकता-पाच्च्युतः स्नेहो नाधो याति ॥ १४ ॥

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्यादिति समानं पूर्वेण ॥ १५ ॥ ( इति भल्लातकतैलम् । )

भल्लातकतैलमिति अनन्तरोक्तविधानेन गृहीतो भल्लातक-स्नेहः ॥ १५ ॥

भल्लातकसर्पिः, भल्लातकक्षीरं, भल्लातकक्षौद्रं, गुडभल्लातकं, भल्लातकयूषः, भल्लातकतैलं, भल्लातकपललं, भल्लातकसक्तवः, भल्लातकलवणं, भल्लातकतर्पणम्, इति भल्लातकविधानमुक्तं भवति ॥ १६ ॥

भल्लातकसर्पिरित्यादयो दशप्रयोगाः । अत्र च यथायोग्यतया भल्लातकेन सर्पिरादीनां संस्कारः संयोगश्च ज्ञेयः । यदुक्तं जतूकर्णे—"भल्लातकसंयुक्तसंस्कृतानि च घृतक्षीरक्षौद्रगुडयूषतैलपललसक्तुलवणतर्पणानि" इति । एवं च सर्पिःक्षीरयूषतैलानां संस्कारो यथान्यायं भल्लातकेन, क्षौद्रपललसक्तुतर्पणानां भल्लातकेन योगः, गुडलवणयोस्तु संस्कारः संयोगो वा । लवणे संस्कारपक्षे हि लवणसमं भल्लातकमन्तर्धूमदग्धं ग्राह्यम् । अन्ये तु सर्पिरादीनां सर्वेषामेव भल्लातकेन संस्कारं व्याख्यानयन्ति । इह सक्तुप्रयोगोऽद्रवोत्तरत्वादिविशेषकर्मणा भेदनीयः ॥ १६ ॥

भवन्ति चात्र—

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ १७ ॥
एते दशविधास्त्वेषां प्रयोगाः परिकीर्तिताः ।
रोगप्रकृतिसात्म्यज्ञस्तान् प्रयोगान् प्रकल्पयेत् ॥१८॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रं मेधाग्निवर्धनम् ॥ १९ ॥
( इति भल्लातकविधिः । )

प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥ २० ॥
ब्राह्मं तपो ब्रह्मचर्यमध्यात्मध्यानमेव च ।
दीर्घायुषो यथाकामं संभृत्य त्रिदिवं गताः ॥ २१ ॥
तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत्सुसमाहितैः ॥ २२ ॥

अग्निसमानीति दाहस्फोटकर्तृतया । संभृत्येति निष्पाद्य ॥ १७-२२ ॥

तत्र श्लोकः—

रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।
निर्दिष्टाः प्राणकामीये सप्तत्रिंशन्महर्षिणा ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने रसायनाध्याये प्राणकामीयो नाम रसायनपादो द्वितीयः ॥ २ ॥

पादानुसंग्रहे सप्तत्रिंशत्प्रयोगा उक्ताः; तत्र बलादिभिरष्टाभिः पुनर्नवान्तैश्च दशभिरष्टादशप्रयोगाः, अपरे तु व्याहृता व्यक्ता एव ॥ २३ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थाने रसायनाध्याये प्राणकामीयो नाम रसायनपादो द्वितीयः ॥ २ ॥

---

## रसायनाध्याये तृतीयः पादः ।

अथातः करप्रचितीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

आमलकरसायनत्वसाम्यादनन्तरं करप्रचितीय उच्यते ॥ १॥२

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां पुनर्माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढकमेकं ग्राहयेत्, अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां शुक्रजननानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधगणानां चन्दनागुरुधवतिनिशखदिरशिंशपासनसाराणां चाणुशः कृत्तानामभयाबिभीतकपिप्पलीवचाचव्यचित्रकविडङ्गानां च समस्तानामाढकमेकं दशगुणेनाम्भसा साधयेत्, तस्मिन्नाढकावशेषे रसे सुपूते तान्यामलकचूर्णानि दत्त्वा गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेद्यावदपनयाद्रसस्य, तमनुपदग्धमुपहृत्यायसीषु

१ योगीन्द्रनाथसेनस्तु 'एवं गुडभल्लातकं, भल्लातकयूषो, भल्लातकसर्पिः, भल्लातकपललं' इत्यादिपाठं पठति ।

१ 'ज्ञानं' इति पा० । २ 'सप्त नैवं दशर्षिणा' इति पा० । ३ 'षड्विरेचनशतीयोक्तानां' इति पा० । ४ 'खण्डशः कृत्तानां' इति पा० ।

पात्रीष्वास्तीर्य शोषयेत्, सुशुष्कं तत् कृष्णाजिनस्योपरि दृषदि श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत् सम्यक्, तच्चूर्णमयश्चूर्णाष्टभागसंप्रयुक्तं मधुसर्पिर्भ्यामग्निवलमभिसमीक्ष्य प्रयोजयेदिति ॥ ३ ॥

भवन्ति चात्र—

एतद्रसायनं पूर्वं वसिष्ठः कश्यपोऽङ्गिराः।
जमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः ॥ ४ ॥
प्रयुज्य प्रयता मुक्ताः श्रमव्याधिजराभयात्।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः ॥ ५ ॥
इदं रसायनं चक्रे ब्रह्मा वार्षसहस्रिकम्।
जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ ६ ॥

( इत्यामलकायसं ब्राह्मरसायनम् ॥ )

करप्रचितानामितिपदं स्वयंपतितग्रहणं निषेधयति। माघे फाल्गुने वेतिग्रहणवचनात्तथैव गृहीतानामधिकार इत्यागमादुन्नीयते। स्वरस इहामलकस्यैव भवति, अधिकारात्। शाकः बृहत्पत्रस्तरुः। कृत्तानामिति च्छिन्नानाम्। इह गोमयाग्न्याद्युपकरणनियमेनैव शक्त्युत्कर्षो भवतीति ऋषिवचनादुन्नीयते। यदुक्तं—"ऋषयस्त्वेव जानन्ति योगसंयोगजं फलम्" इति। एवमन्यत्रापि इतिकर्तव्यतानियमो व्याख्येयः। कृष्णाजिनस्येति कृष्णसाराजिनस्य ॥ ३–६ ॥

तपसा ब्रह्मचर्येण ध्यानेन प्रशमेन च।
रसायनविधानेन कालयुक्तेन चायुषा ॥ ७ ॥
स्थिता महर्षयः पूर्वं, नहि किञ्चिद्रसायनम्।
ग्राम्यानामन्यकार्याणां सिध्यत्यप्रयतात्मनाम् ॥ ८ ॥

संप्रति रसायनस्य तपोब्रह्मचर्यध्यानादियुक्तस्यैव महाफलत्वं भवतीति दर्शयन्नाह—तपसेत्यादि। कालयुक्तेन चायुषेति अनियतकालयुक्तेन चायुषेत्यर्थः, नियतकालायुषं प्रति तु न रसायनं फलवदित्युक्तमेव। स्थिता इति दीर्घकालजीविनः। विपर्ययेण तपःप्रभृतिविरहे रसायनस्याफलतामाह—न हीत्यादि ॥ ७ ॥ ८ ॥

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत् सदा।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी यतेन्द्रियः ॥ ९ ॥
संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम्।
त्र्यहोपवासी शुक्लस्य प्रविश्यामलकीवनम् ॥ १० ॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम्।
गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्मामृतागमात् ॥ ११ ॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणम्।
शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च ॥ १२ ॥
भवन्त्यमृतसंयोगात्तानि यावन्ति भक्षयेत्।
जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः ॥ १३ ॥
सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः।
स्वयं चास्योपतिष्ठन्ते श्रीर्वेदा वाक् च रूपिणी ॥ १४ ॥

( इति केवलामलकरसायनम्। )

ब्रह्मचारित्वेनेन्द्रियनियमे लब्धेऽपि यतेन्द्रियपदसंबन्ध इन्द्रियनियमातिशयोपदर्शनार्थः। पौषादिषु संवत्सरान्तत्वं नियमदिनादारभ्य वर्षपूरणेन ज्ञेयम्। फाल्गुनीमित्यस्यान्ते प्राप्येति शेषः। "न द्रुममारोहेत्" ( सू. अ. ८ ) इत्यस्येह आरुह्य द्रुममिति वचनेनापवादः। जपन् ब्रह्मेति ओङ्कारं जपन्। अमृतागमादिति अमृतागमपर्यन्तम्। सौहित्यमेषामिति करणे षष्ठी। वाग्रूपिणीति तदधिष्ठात्री देवता ॥ ९–१४ ॥

त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥ १५ ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि साधयेत्[1]।
चतुरङ्गुलदीर्घाणि तिलोत्सेधतनूनि[2] च ॥ १६ ॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेनामलकस्य च ॥ १७ ॥
युक्तानि लेहवत् कुम्भे स्थितानि घृतभाविते।
संवत्सरं निधेयानि यवपल्ले तथैव च ॥ १८ ॥
दद्यादालोडनं मासे सर्वत्रालोडयन् बुधः।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥ १९ ॥
प्रातः प्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम्।
एष एव च लौहानां प्रयोगः संप्रकीर्तितः ॥ २० ॥
नाभिघातैर्न चातङ्कैर्जरया न च मृत्युना।
स धृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः ॥ २१ ॥
धीमान् यशस्वी वाक्सिद्धः[3] श्रुतधारी महाधनः[4]।
भवेत् समां प्रयुञ्जानो नरो लौहरसायनम् ॥ २२ ॥
अनेनैव विधानेन हेम्नश्च रजतस्य च।
आयुःप्रकर्षकृत्सिद्धः प्रयोगः सर्वरोगनुत् ॥ २३ ॥

( इति लौहादिरसायनम्। )

क्षार इति परिस्रावितक्षारोदके। क्षारे लावण इति ज्योतिष्मत्याः क्षारे। साधयेदिति निर्वापयेत्। लौहानामित्यनेनैव लोहान्तर्निविष्टयोः सुवर्णरजतयोर्ग्रहणे सिद्धे पुनस्तयोर्वचनं तयोर्विशेषेणादरोपदर्शनार्थम्। रसायनप्रभावादेव महाधनत्वमिति ज्ञेयम् ॥ १५–२३ ॥

ऐन्द्री मत्स्याख्यको ब्राह्मी वचा ब्रह्मसुवर्चला।
पिप्पल्यो लवणं हेम शङ्खपुष्पी विषं घृतम् ॥ २४ ॥
एषां त्रियवकान् भागान् हेमसर्पिर्विषैर्विना।
द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद्विषस्य च ॥ २५ ॥
सर्पिषश्च पलं दद्यात्तदैकध्यं प्रयोजयेत्।
घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते ॥ २६ ॥

१ 'वापयेत्' इति पा०। २ 'तिलोत्सेधसमानि' इति पा०। ३ 'वाग्मी च' इति पा०। ४ 'महाबलः' इति पा०।

जराव्याधिप्रशमनं स्मृतिमेधाकरं परम् ॥
आयुष्यं पौष्टिकं धन्यं स्वरवर्णप्रसादनम् ॥ २७ ॥
परमोजस्करं चैतत् सिद्धमैन्द्रं रसायनम् ॥
नैनत् प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक् ॥ २८ ॥
श्वित्रं सकुष्ठं जठराणि गुल्माः
प्लीहा पुराणो विषमज्वरश्च ।
मेधास्मृतिज्ञानहराश्च रोगाः
शाम्यन्त्यनेनातिबलाश्च वाताः ॥ २९ ॥
( इत्यैन्द्रं रसायनम् । )

मत्स्याख्यको 'मच्छु' इति[१] लोके ख्यातः; अन्ये तु ऐन्द्रीभेदं मत्स्याख्यकमाहुः । त्रियवकानिति त्रियवप्रमाणान्[२] । घृतप्रभूतमित्यन्नविशेषणम् । कृत्या अभिचारः ॥ २४–२९ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥ ३० ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण च शङ्खपुष्पी ॥ ३१ ॥
( इति मेध्यरसायनानि । )

मण्डूकपर्ण्या इत्यादयश्चत्वारो योगाः ॥ ३० ॥ ३१ ॥

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ३२ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाऽग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ३३ ॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ॥
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयान् ॥ ३४ ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोफं गुल्मं वातबलासकम् ॥ ३५ ॥
( इति पिप्पलीरसायनम् । )

पञ्चेत्यादौ संख्याव्यतिक्रमेणानुक्तसंख्यानामपि पिप्पलीनामुपयोगं सूचयति । यद्यपि "त्रीणि द्रव्याणि नात्युपयुञ्जीत पिप्पलीं क्षारं लवणम्" (वि.अ.१) इत्युक्तं, तथाऽपीह द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासो न विरुद्धः; किंवा, उक्तपिप्पलीरसायनव्यतिरेकेणोत्सर्गापवादन्यायात् स निषेधो ज्ञेयः । किंशुकः पलाशः ॥ ३२–३५ ॥

क्रमवृद्ध्या दशाहानि दशपैप्पलिकं[१] दिनम् ।
वर्धयेत् पयसा सार्धं तथैवापनयेत् पुनः ॥ ३६ ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ ३७ ॥
पिष्टास्ता बलिभिः सेव्याः, शृता मध्यबलैर्नरैः ।
चूर्णीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥ ३८ ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्तितः[२] ।
प्रयोगो यस्त्रिपर्यन्तः स कनीयान् स चावलैः ॥ ३९ ॥
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥ ४० ॥
( इति पिप्पलीवर्धमानं[३] रसायनम् । )

पिप्पलीवर्धमानमाह—क्रमवृद्ध्येत्यादि । दशपिप्पल्यो यत्र वर्धन्ते तद्दिनं दशपैप्पलिकं, तेन प्रत्यहं दशपिप्पल्यो वर्धनीया इत्यर्थः; ततश्चोनविंशतिदिनैर्वृद्धिहानिक्रमेणैकेनैव सहस्रं पूर्णं भवति । 'चूर्णीकृता' इत्यत्र 'शीतीकृता' इति वा पाठः । पिप्पलीवर्धमानक्रममुक्तमुत्कृष्टं दर्शयन्नपरमपि वर्धमानक्रमद्वयं मध्यमत्वावरत्वाभ्यामाह—दशेत्यादि । षट् प्रकीर्तित इति षड्वृद्ध्या पूर्वाचार्यैरुक्तः । त्रिपर्यन्त इत्यस्यान्ते पिप्पलीत्रयावस्थानात् पिप्पलीत्रिकेणैव वृद्धिर्भवति, ततो दशपिप्पलीके दशैवान्ते भवन्ति ॥ ३६–४० ॥

जरणान्तेऽभयामेकां प्राग्भुक्ताद् द्वे बिभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥ ४१ ॥
प्रयोजयन् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ४२ ॥
( इति त्रिफलारसायनम् । )
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥ ४३ ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥ ४४ ॥
( इति त्रिफलारसायनमपरम् । )
मधुकेन तुगाक्षीर्या पिप्पल्या क्षौद्रसर्पिषा ।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम् ॥ ४५ ॥
( इति त्रिफलारसायनमपरम् । )
सर्वैर्लौहैः[४] सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ ४६ ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुःप्रदा धन्या जरारोगनिबर्हणी ॥ ४७ ॥
( इति त्रिफलारसायनमपरम् । )

जरणान्त इत्यादौ मधुसर्पिर्भ्यामिति अभयां बिभीतके आमलकानीत्यनेन च युज्यते । मधुकेनेत्यादिरेकः प्रयोगः । सर्वैर्लौहैरित्यापरः । लौहैरित्युक्ते सुवर्णे प्राप्ते सुवर्णेनेतिपदं लोहत्वेनाभिप्रसिद्धस्याग्रहणनिरासार्थम् ॥ ४१–४७ ॥

१ 'मत्स्याक्षको 'मछेछी' इति लोके' इति पा० । २ 'त्रियवप्रमाणतुल्यान्' इति पा० । ३ 'दशपिप्पलीकं' इति पा० ।

१ 'शीतीकृताः' इति पा० । २ 'षट् षट्पैपलिकः योगः' इति योगीन्द्रनाथसेनः । 'षट् प्रकीर्तिता यत्र स षट्प्रकीर्तितः' इति गङ्गाधरः । ३ 'वर्धमानपिप्पलीरसायनम्' इति पा० । ४ 'सर्वैर्लौहैः पञ्चभिर्लौहैः त्रपुसीसताम्ररूप्यकृष्णलोहैः' इति योगीन्द्रनाथसेनः ।

अनम्लं च कषायं च कटु पाके शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य संभवः ॥ ४८ ॥
हेम्नश्च रजतात्ताम्राद्वरात् कृष्णायसादपि ।
रसायनं तद्विधिभिस्तद्वृष्यं तच्च रोगनुत् ॥ ४९ ॥
वातपित्तकफघ्नैश्च निर्यूहैस्तत् सुभावितम् ।
वीर्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥ ५० ॥

शिलाजतुरसायनं दर्शयितुं शिलाजतुनोऽभ्यर्हितस्य गुणानेव तावदाह—अनम्लमित्यादि । वरादिति श्रेष्ठात् । सुश्रुते यद्यपि त्रपुसीसभवं प्रक्षिप्य षड्विधशिलाजतु सामान्येन रोगे रसायनाधिकारे चोक्तं, तथाऽपीह रसायनाधिकारे तदधिकृतचतुर्विधमेवोक्तम् ॥ ४८–५० ॥

प्रक्षिप्तोद्धृतमप्येनत् पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥ ५१ ॥
पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह ।
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम् ॥ ५२ ॥
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ।
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत् ॥ ५३ ॥
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः ।
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ॥ ५४ ॥
पलमर्धपलं कर्षो मात्रा तस्य त्रिधा मता ।

शिलाजतुभावनाविधिमाह—प्रक्षिप्तेत्यादि । प्रक्षिप्तानन्तरमुद्धृतं प्रक्षिप्तोद्धृतम् । लौहैः सहेति भागानियमे लोहसमानभागता शिलाजतुनः । प्रयोगः सप्तसप्ताहा इति सप्तसप्ताहव्यापकप्रयोग इत्यर्थः; एवं त्रयश्चैकश्च सप्तक इत्यत्रापि बोद्धव्यम् ॥ ५०–५४ ॥—

जातेर्विशेषं सविधिं तस्य वक्ष्याम्यतः परम् ॥ ५५ ॥
हेमाद्याः सूर्यसंतप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदु मृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥५६॥
मधुरश्च सतिक्तश्च जपापुष्पनिभश्च यः ।
कटुर्विपाके शीतश्च स सुवर्णस्य निस्रवः ॥ ५७ ॥
रूप्यस्य कटुकः श्वेतः शीतः स्वादु विपच्यते ।
ताम्रस्य बर्हिकण्ठाभस्तिक्तोष्णः पच्यते कटु ॥ ५८ ॥
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः ।
कटुर्विपाके शीतश्च सर्वश्रेष्ठः स चायसः ॥ ५९ ॥
गोमूत्रगन्धयः सर्वे सर्वकर्मसु यौगिकाः ।
रसायनप्रयोगेषु पश्चिमस्तु विशिष्यते ॥ ६० ॥
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ।
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः ॥ ६१ ॥

सविधिमिति विधानसहितम् । शिलाजतुविधानं च यथाक्रमं 'वातपित्ते' इत्यादिग्रन्थेन वक्तव्यम् । हेमादिशब्देनेह हेमादिसंभवस्थानभूतशिलोच्यते, यतो न साक्षात् सुवर्णादिभ्य एव शिलाजतु स्रवति । मृत्स्नं मसृणम्, अच्छं स्वच्छम् । यस्तु रूप्यभवे कटुरसे विरुद्धः स्वादुः पाक उक्तः स उत्सर्गापवादन्यायेन ज्ञेयः । वीर्यं तु ताम्रभवस्योष्णस्य तथा त्रयाणां च शीतत्वयुक्तानामत्युष्णशीतवीर्यताया अवकाशो नास्ति, अतः सामान्यगुणकथने नात्युष्णशीतमितिपदेन उष्णस्य शीतस्य च वीर्यस्य प्रकर्षो निषिध्यते; तेनानुष्णाशीतत्वं विधीयते; ततश्च शिलाजतुनि वीर्यं शीतमुष्णं वाऽभिहितमपि न बलवद्भवतीति लभ्यते ॥ ५५–६१ ॥

शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्वकालं तु कुलत्थान् परिवर्जयेत् ॥ ६२ ॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् ।
लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥ ६३ ॥
पयांसि तक्राणि रसाः सयूषा-
स्तोयं समूत्रा विविधाः कषायाः ।
आलोडनार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्यम् ॥ ६४ ॥
न सोऽस्ति रोगो भुवि साध्यरूपः
शिलाह्वयं यं न जयेत् प्रसह्य ।
तत् कालयोगैर्विधिभिः प्रयुक्तं
स्वस्थस्य चोर्जां विपुलां ददाति ॥ ६५ ॥

( इति शिलाजतुरसायनम् । )

तत्र श्लोकः—
करप्रचितिके पादे दश षट् च महर्षिणा ।
रसायनानां सिद्धानां संयोगाः समुदाहृताः ॥ ६६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने रसायनाध्याये करप्रचितीयो नाम रसायनपादस्तृतीयः ॥ ३ ॥

शिलाजतुप्रयोगेष्विति बहुवचनमालोडनादिभेदेन प्रयोगभेदं बुद्धिस्थीकृत्य ज्ञेयम् । शिलाजतुप्रयोगे गुरुनिषेधेऽपि विशेषवचनात् क्षीरादिप्रयोगः । सर्वकालमिति यावद्रसायनाहिता गुणाः सन्ति । केचित्तु यावज्जीवं कुलत्थवर्जनमाहुः; यदुक्तं सुश्रुते—"तद्भावितः कपोतांश्च कुलत्थांश्च विवर्जयेत्" (सु. चि. अ. १३ ) इति । शिलाजतुप्रयोगं स्तौति—न सोऽस्तीत्यादि ॥ ६२–६६ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने रसायनाध्याये करप्रचितीयो नाम रसायनपादस्तृतीयः ॥ ३ ॥

---

## रसायनाध्याये चतुर्थः पादः ।

अथात आयुर्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

---

१ 'वरं' इति पा० । २ 'शिलाजतु कोष्णे वातहरादिकाथे प्रक्षिप्य अथैनं रौद्रे शोषयेत् । पीततत्काथमुद्धृतं पुनरपि तद् रसे काथे प्रक्षिपेद । अनेन विधिना सप्ताहं (सप्तवारान्) तस्य भावना' इति गङ्गाधरः । ३ 'श्लेष्मपित्ते' इति पा० ।

१ 'गुरुः' इति पा० । २ 'कुलखान्' इति पा० । ३ 'शुक्तानि' इति पा० ।

आयुर्वेदसमुत्थानीयो नाम रसायनपादः पारिशेष्यादुच्यते। आयुर्वेदसमुत्थानमस्मिन्नस्तीति मत्वर्थीयच्छप्रत्ययेणायुर्वेदसमुत्थानीयः ॥ १ ॥ २ ॥

**ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः सांपन्निका मन्दचेष्टा नातिकल्याश्च प्रायेण बभूवुः। ते सर्वासामितिकर्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतमात्मदोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुर्भृग्वङ्गिरोऽत्रिवसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतमप्रभृतयो महर्षयः ॥ ३ ॥**

ऋषीणां शालीनत्वं यायावरत्वं च कर्मविशेषपरिग्रहात्। संपन्नमनु उपयुज्यन्त इति सांपन्निकाः। नातिकल्या इति नातिनीरोगाः। इतिकर्तव्यता व्यापारः। इन्द्रपर्यायकथनं स्तुत्यर्थं; स्तुतिश्चेयमिन्द्रस्यायुर्येदप्रकाशकत्वात् ॥ ३ ॥

**तानिन्द्रः सहस्रदृगमरगुरुरब्रवीत्—स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणाम्। अस्ति ननु वो ग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यं च ग्राम्यवासकृतमसुखमसुखानुबन्धं च; ग्राम्यो हि वासो मूलमशस्तानां, तत् कृतः पुण्यकृद्भिरनुग्रहः प्रजानां, स्वशरीरमवेक्षितुं कालः कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणाम्; आत्मनः प्रजानां चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रायच्छतां, प्रजापतिरश्विभ्यां, प्रजापतये ब्रह्मा, प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धमल्पत्वादल्पतपोदमनियमदानाध्ययनसंचयं मत्वा पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनमूर्जस्करममृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हताथोपधारयितुं प्रकाशयितुं च प्रजानुग्रहार्थमार्षं ब्रह्म च प्रति मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति ॥ ४ ॥**

**तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः, प्रहृष्टाश्च तद्वचनमभिननन्दुश्चेति॥५॥**

असुखानुबन्धमिति रोगरूपमसुखमनुबध्नातीत्यसुखानुबन्धम्। मूलमिति कारणम्। कृतः प्रजानामनुग्रह इति ग्रामे स्थित्वा आयुर्वेदोक्तारोग्यसाधनधर्मादिप्रकाशनेन प्रजानुग्रहः कृत एवेत्यर्थः। अयं शब्द उभाभ्यां कालशब्दाभ्यां योजनीयः। प्रजापतये ब्रह्मेति च्छेदः। प्रजानामल्पादिकमायुर्मत्त्वेति योजना। अल्पत्वात् 'आयुष' इति शेषः। अल्पस्तपःप्रभृतीनां संचयोऽस्मिन् अल्पे आयुषि तत् तथा। प्रतिशब्दो मैत्र्यादिभिः प्रत्येकं संबध्यते। अथशब्दश्चाधिकारे। तेन, मैत्रीकारुण्यादीन्यधिकृत्य यं ब्रह्मा प्रजापतयेऽदात्, तमनुश्रोतुमर्हतेति योजना। यद्यपि च ऋषयो भरद्वाजद्वारा इन्द्रादधिगतायुर्वेदाः, तथाऽपि ग्राम्यवासकृतमनोग्लान्या न तथा स्फुटार्थो वर्तत इति शङ्कया पुनरिन्द्रस्तानुपदिशति ॥ ४ ॥ ५ ॥

१ 'शालप्रवेशमर्हन्तीति शालीनाः; गृहं निर्माय एकत्र कृतावस्थानाः। यायावराः पुनः पुनर्गमनशीलाः। अर्थादिसंपत्त्या संपन्ना एव सांपन्निकाः' इति योगीन्द्रनाथसेनः। २ 'स्वशरीरसंरक्षिभिः, कालश्चायं' इति पा०। ३ 'रोगरूपमनर्थमनुबध्नातीत्यसुखानुबन्धम्' इति पा०।

**अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाच—एतत् सर्वमनुष्ठेयम्, अयं च शिवः कालो रसायनानां, दिव्याश्चौषधयो हिमवत्प्रभवाः प्राप्तवीर्याः; तद्यथा—ऐन्द्री, ब्राह्मी, पयस्या, क्षीरपुष्पी, श्रावणी, महाश्रावणी, शतावरी, विदारी, जीवन्ती, पुनर्नवा, नागबला, स्थिरा, वचा, छत्रा, अतिच्छत्रा, मेदा, मेहामेदा, जीवनीयाश्चान्याः पयसा प्रयुक्ताः षण्मासात् परमायुर्वयश्च तरुणमनामयत्वं स्वरवर्णसंपदमुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः ॥ ६ ॥( इतीन्द्रोक्तं रसायनम्।)**

महाश्रावणी अलम्बुषा। अतिच्छत्रा मधुरिका ॥ ६ ॥

**ब्रह्मसुवर्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा, आदित्यपर्णी नामौषधिर्या 'सूर्यकान्ता' इति विज्ञायते सुवर्णक्षीरा सूर्यमण्डलाकारपुष्पा च, नारीनामौषधिः 'अश्वबला' इति विज्ञायते या वल्वजसदृशपत्रा, काष्ठगोधा नामौषधिर्गोधाकारा, सर्पानामौषधिः सर्पाकारा, सोमो नामौषधिराजः पञ्चदशपर्वा स सोम इव हीयते वर्धते च, पद्मा नामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा च, अजा नामौषधिः 'अजश्रृङ्गी' इति विज्ञायते, नीला नामौषधिस्तु नीलक्षीरा नीलपुष्पा लताप्रतानबहुलेति; आसामोषधीनां यां यामेवोपलभेत तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां दिग्वासाः शयीत, तत्र प्रलीयते, षण्मासेन पुनः संभवति, तस्याजं पयः प्रत्यवस्थापनं; षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः, स्वयं चास्य सर्ववाचोगतानि प्रादुर्भवन्ति, दिव्यं चास्य चक्षुः श्रोत्रं च भवति, गतिर्योजनसहस्रं, दशवर्षसहस्राण्यायुरनुपद्रवं चेति ॥ ७ ॥**

ब्रह्मसुवर्चलाप्रभृतयो यथोक्तलक्षणा दिव्यौषधयो नातिप्रसिद्धाः। आदित्यपर्णी सूर्यावर्तमेव देशविशेषजातं केचिद्वर्ण-

१ 'हिमवतः प्रभावात्' इति पा०। २ 'पुनरजसदृशपत्रा' इति पा०। ३ 'पञ्चदशपर्णः' इति पा०।

यन्ति। अश्ववलेति ज्ञायत इति ऋषिभिरेवानेन नाम्ना ज्ञायते, न लौकिकैः, लोकाप्रसिद्धत्वात्। सोम इव वर्धते हीयत इति यथा सोमवृद्धिक्षयौ, तथा तत्कालमेव तस्य वृद्धिक्षयौ भवतः। प्रलीयत इति द्रुतो भवति, अन्ये तु मूर्च्छतीति वर्णयन्ति। प्रत्यवस्थापनमिति आहारसेवायां योज्यमित्यर्थः। सर्ववाचोगतानि सर्ववाक्यविशेषाः ॥ ७ ॥

भवन्ति चात्र—

दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः।
शक्यः सोढुमशक्यस्तु स्यात् सोढुमकृतात्मभिः॥८॥
ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्मणि।
भवतां निखिलं श्रेयः सर्वमेवोपपत्स्यते ॥ ९ ॥
वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः॥१०॥

एतद्दिव्यं रसायनमृषिभिस्तद्विधैर्वा सेव्यमिति दर्शयन्नाह— दिव्यानामित्यादि। विषयाभिजा इति स्वोचितपुण्यदेशे जाता इत्यर्थः, अपुण्ये तु देशे दिव्यौषधिजन्मैव न भवति, भवन्त्योऽपि निर्वीर्या भवन्तीति भावः ॥ ८–१० ॥

यास्तु क्षेत्रगुणैस्तेषां मध्यमेन च कर्मणा।
मृदुवीर्यतरास्तासां विधिर्ज्ञेयः स एव तु ॥ ११ ॥
पर्येष्टुं ताः प्रयोक्तुं वा येऽसमर्थाः सुखार्थिनः।
रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥ १२ ॥

संप्रति ब्रह्मसुवर्चलादीनां यथा मृदुवीर्यत्वं भवति, तदाह— यास्त्वित्यादि। क्षेत्रगुणैरिति हिमालयादिप्रशस्तदेशव्यतिरिक्तक्षेत्रधर्मैः। तेषामिति ऋषिव्यतिरिक्तानां वानप्रस्थादीनाम्। मध्यमेन च कर्मणेति असम्यक्प्रयोगेण; किंवा, अनतिमहताऽदृष्टेन ॥ ११ ॥ १२ ॥

वल्यानां जीवनीयानां बृंहणीयाश्च या दश।
वयसः स्थापनानां च खदिरस्यासनस्य च ॥ १३ ॥
खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च।
मृद्वीकानां विडङ्गानां वचायाश्चित्रकस्य च ॥ १४ ॥
शतावर्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च।
ऋद्ध्या नागवलायाश्च द्वारदाया धवस्य च ॥ १५ ॥
त्रिफलाकण्टकार्योश्च विदार्याश्चन्दनस्य च।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥ १६ ॥
रसाः पृथक् पृथग्ग्राह्याः पलाशक्षार एव च।
एषां पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम्१७
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः।
तत् साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥ १८ ॥
तत्रामलकचूर्णानामाढकं शतभावितम्।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥ १९ ॥

१ 'तालु' इति पा०।

शर्कराचूर्णपात्रं च प्रस्थमेकं प्रदापयेत्।
तुगाक्षीर्याः सपिप्पल्याः स्थाप्यं संमूर्च्छितं च तत्॥
सुचौक्षे मार्तिके कुम्भे मासार्धं घृतभाविते।
मात्रामग्निसमां तस्य तत ऊर्ध्वं प्रयोजयेत् ॥ २१ ॥
हेमताम्रप्रवालानामयसः स्फटिकस्य च।
मुक्तावैदूर्यशङ्खानां चूर्णानां रजतस्य च ॥ २२ ॥
प्रक्षिप्य षोडशीं मात्रां विहायायासमैथुनम्।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ २३ ॥
सर्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम्।
सत्त्वस्मृतिशरीराग्निबुद्धीन्द्रियबलप्रदम् ॥ २४ ॥
परमूर्जस्करं चैव वर्णस्वरकरं तथा।
विषालक्ष्मीप्रशमनं सर्ववाचोगतप्रदम् ॥ २५ ॥
सिद्धार्थतां चाभिनवं वयश्च
प्रजाप्रियत्वं च यशश्च लोके।
प्रयोज्यमिच्छद्भिरिदं यथाव-
द्रसायनं ब्राह्ममुदारवीर्यम् ॥ २६ ॥

( इतीन्द्रोक्तरसायनमपरम्। )

बल्यानामित्यादौ जोङ्गकम् अगुरु। द्वारदा शाकतरुः, कपिकच्छुर्वा। श्रीपर्णी गाम्भारी। पलाशक्षारः पलाशक्षारोदकम्। सुचौक्षे इति सुविशुद्धे। अग्निसमामिति अभ्यनुरूपाम्। षोडशीं मात्रामिति आमलकादिचूर्णयुक्तघृतापेक्षया षोडशभागो हेमादिचूर्णाद्ग्राह्यः ॥ १३–२६ ॥

समर्थानामरोगाणां धीमतां नियतात्मनाम्।
कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ॥ २७ ॥
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः।
तयोः श्रेष्ठतरः पूर्वो विधिः स तु सुदुष्करः ॥ २८ ॥
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ २९ ॥

कुटीप्रावेशिकरसायनविषयान् वातातपिकरसायनविषयांश्च पुरुषानाह—समर्थानामित्यादि। क्षणिनामिति कृतक्षणानाम्। सूर्यमारुतसेवयाऽपि क्रियत इति सौर्यमारुतिकः ॥ २७–२९ ॥

सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात्।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥ ३० ॥
जपशौचपरं धीरं दाननित्यं तपस्विनम्।
देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ॥ ३१ ॥
आनृशंस्यपरं नित्यं नित्यं करुणवेदिनम्।
समजागरणस्वप्नं नित्यं क्षीरघृताशिनम् ॥ ३२ ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम्।
शस्ताचारमसंकीर्णमध्यात्मप्रवणेन्द्रियम् ॥ ३३ ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम्।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥ ३४ ॥

१ 'क्षमिणां' इति पा०। २ 'कारुण्यवेदिनम्' इति पा०।

गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम् ।
रसायनगुणान् सर्वान् यथोक्तान् स समश्नुते ॥ ३५ ॥
( इत्याचाररसायनम् । )

सामान्येन रसायनविषयपुरुषगुणानाह—सत्यवादिनमित्यादि । करुणया सत्त्वानि पश्यतीति करुणवेदी । असंकीर्णः असंकीर्णभोजी । नित्यं रसायनप्रयोगो यस्य स नित्यरसायनः ॥ ३०–३५ ॥

यथास्थूलमनिर्वाह्य दोषाञ्छारीरमानसान् ।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ ३६ ॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिबर्हणाः ।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम् ॥ ३७ ॥
तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मसु ।
अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु नास्ति च ३८

मनःशुद्धयैव प्रयतात्मतायां लब्धायां पुनस्तदभिधानमितरमानसगुणेषु प्रयतात्मताया अभ्यर्हिततोपदर्शनार्थम् । अरुजेभ्योऽद्विजातिभ्यो येषु च पुरुषेषु शुश्रूषा नास्ति तेषु चैतन्न वाच्यमिति योजना ॥ ३६–३८ ॥

ये रसायनसंयोगा वृष्ययोगाश्च ये मताः ।
यच्चौषधं विकाराणां सर्वं तद्वैद्यसंश्रयम् ॥ ३९ ॥
प्राणाचार्यं बुधस्तस्माद्धीमन्तं वेदपारगम् ।
अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ ४० ॥
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
यज्ञस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥ ४१ ॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥ ४२ ॥
चिकित्सितश्च शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमाभिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥ ४३ ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥ ४४ ॥
एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥ ४५ ॥
ग्रहाः स्तोत्राणि मन्त्राणि तथा नानाहवींषि च ।
धूम्राश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥ ४६ ॥
प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते ।
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते ॥ ४७ ॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ।
स्तूयन्ते वेदवाक्येषु न तथाऽन्या हि देवताः ॥ ४८ ॥
अजरैरमरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥ ४९ ॥
मृत्युव्याधिजराबश्यैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥ ५० ॥
शीलवान्मतिमान् युक्तो द्विजातिः शास्त्रपारगः ।
प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्यः स हि स्मृतः ॥ ५१ ॥

संप्रति रसायनादिसिद्धिर्वैद्याधीना, तेन वैद्यस्तुतिमारभते—य इत्यादि । प्राणाचार्यमित्यत्र 'प्राणिवर्यं' इति वा पाठः; तत्र प्राणिनां वर्यः श्रेष्ठः प्राणिवर्यः । यज्ञं वहत इति यज्ञवाहौ । एतद्यज्ञवाहत्वमेव दर्शयति—दक्षस्य हीत्यादि । पूष्णः सूर्यस्य, भगोऽपि सूर्यभेदः । सोमाभिपतित इति सोमाभिपतनयोगेन पीडित इत्यर्थः; 'सोमातिपचित' इति वा पाठः, तत्राप्यतिपचनेन सोमपानातियोगं दर्शयति । ग्रहाः सोमपानपात्राणि । स्तोत्राणि स्तवाः स्तावकवा(ऋ)चः; शस्त्राणीति केचित्, संशस्यतेऽनेनेति कृत्वा सामऋग्व्यतिरिक्तं स्तोत्रमाहुः; शस्त्राणि अस्त्राण्येव, वषट्युक्तानि शस्त्राणि च यज्ञे कल्प्यन्त एव । धूम्राश्च पशव इति धूम्रवर्णपशवः; एवंवर्णाश्च पशवः श्रेष्ठा भवन्ति । सवन इति यज्ञस्थाने । सौत्रामणी यज्ञविशेषः । अतिशक्तित इति निजशक्तेरप्यतिरेकेण ॥ ३९–५१ ॥

विद्यासमाप्तौ भिषजो द्वितीया जातिरुच्यते ।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥ ५२ ॥
विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा ।
ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः ॥ ५३ ॥
नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् ॥ ५४ ॥

वैद्यशब्दद्विजशब्दयोः प्रवृत्तिनिमित्तमाह—विद्येत्यादि । तेन विद्यायोगाद् वैद्यत्वं तथा विद्यासमाप्तिलक्षणजन्मना द्विजत्वं भवतीत्युक्तं भवति । ब्राह्मं वा आर्षं वा इति विकल्पो वैद्यविशेषाभिप्रायाद्भवति; तयोर्यो नैष्ठिकचिकित्सार्थस्तस्य ब्राह्मम्, इतरस्य तु लोकानुग्राहिण आर्षमिति व्यवस्था ॥ ५२–५४ ॥

चिकित्सितस्तु संश्रुत्य यो वाऽसंश्रुत्य मानवः ।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ॥ ५५ ॥
भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम् ॥ ५६ ॥
धर्मार्थं चार्थकामार्थमायुर्वेदो महर्षिभिः ।
प्रकाशितो धर्मपरैरिच्छद्भिः स्थानमक्षरम् ॥ ५७ ॥
नार्थार्थं नापि कामार्थमथ भूतदयां प्रति ।
वर्तते यश्चिकित्सायां स सर्वमतिवर्तते ॥ ५८ ॥
कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥ ५९ ॥

---

१ 'असंकीर्णः कुलजः' इति पा० । २ 'नित्यं योगेन' इति पा० । ३ 'अरजोभ्यः' इति, 'अजरेभ्यः' इति च पा० । ४ 'तथाऽन्यानि हवींषि च' इति पा० । ५ 'धूमाश्च' इति पा० ।

१ 'त्रिजातिः' इति पा० । २ 'भिषजस्तृतीया' इति पा० । ३ 'वैद्यस्त्रिजः' इति पा० । 'प्रथमा जातिः मातृगर्भतो जन्म, द्वितीया जातिरुपनयनात्, तृतीया तु वैद्यविद्यासमाप्तौ; अतः शास्त्रपारगो वैद्यः विद्यासमाप्तिलक्षणतृतीयजन्मना त्रिज उच्यते' इति योगीन्द्रनाथसेनः । ४ 'वैद्याभिप्रायविशेषाद्भवति' इति पा० । ५ 'यो मानवो वैद्येन चिकित्सितो रोगमुक्तः सन् वैद्यं संश्रुत्य प्रतिश्रुत्य प्रतिज्ञाय असंश्रुत्य वा नोपाकरोति धनादिकं न ददाति इह लोके परत्रापि च तस्य निष्कृतिः निस्तारो नास्ति' इति योगीन्द्रनाथसेनः । ६ 'नार्थकामार्थं' इति पा० ।

दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम् ।
छित्त्वा वैवस्वतान् पाशान् जीवितं यः प्रयच्छति ६०
धर्मार्थदाता सदृशस्तस्य नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते ॥ ६१ ॥
परो भूतदया धर्म इति मत्वा चिकित्सया ।
वर्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥ ६२ ॥

संश्रुत्येति प्रतिज्ञाय । चिकित्सैव पण्यं विक्रेतव्यमिति चिकित्सापण्यम् । ते हित्वेत्यादौ धर्मार्थं क्रियमाणचिकित्सा महाफलत्वेन काञ्चनराशितुल्या, इतरा त्वसारकल्पा पांशुराशितुल्या । वैवस्वतक्षयमिति यमगृहम् ॥ ५५-६२ ॥

तत्र श्लोकौ—
आयुर्वेदसमुत्थानं दिव्यौषधिविधिं शुभम् ।
अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम् ॥ ६३ ॥
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः ।
आयुर्वेदसमुत्थाने तत् सर्वं संप्रकाशितम् ॥ ६४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रसायनाध्याये आयुर्वेदसमुत्थानीयो नाम रसायनपादश्चतुर्थः ॥ ४ ॥

संग्रहे रत्नरसायनमिति हेमादिरत्नसंयुक्तं रसायनम् । आयुर्वेदसमुत्थाने प्रकाशिततया दिव्यौषधिविध्यादि यदुवाच ब्रह्मचारिभ्योऽमरेश्वरः, तत् संप्रकाशितमिति योजना ॥६३॥६४॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां रसायनाध्याये आयुर्वेदसमुत्थानीयो नाम रसायनपादश्चतुर्थः ॥ ४ ॥

समाप्तश्चायं रसायनाध्यायः ॥ १ ॥

---

## द्वितीयोध्यायः ।

### वाजीकरणाध्याये प्रथमः पादः ।

अथातः संयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

स्वस्थोर्जस्करत्वसामान्यात् रसायनमनु वाजीकरणं वाच्यं, तत्रापि वाजीकरणे प्रवृत्त्युपदर्शकप्रकरणयुक्तत्वादादौ संयोगशरमूलीय उच्यते । संयोगः शरमूलानामस्मिन्नस्तीति संयोगशरमूलीयः ॥ १ ॥ २ ॥

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान् ।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यश एव च ॥ ३ ॥
पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः ।

अवाजी वाजीवात्यर्थं मैथुने शक्तः क्रियते येन तद्वाजीकरणम् । उक्तं हि—"वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियम्" इत्यादि । अन्विच्छेदिति रसायनान्महाफलात् तदपेक्षयाऽल्पफलं वाजीकरणं पश्चादिच्छेत् । पुरुष इति पदेन तरुणपुरुषग्राहिणा बालवृद्धौ निषिद्धव्यवायौ निराकरोति । उक्तं हि—"अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियो व्रजन् । उपतप्येत सहसा तडागमिव काजलम् ॥ शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम् । स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजन्" इति । नित्यमित्यनेन न रसायनवत् सकृत्प्रयोगो वृष्यस्य, किन्त्वाहारवत् सर्वदोपयोग इति दर्शयति । आत्मवानित्यनेन दुरात्मनो वृष्यकरणं निषेधति, स हि वृष्योपयोगादुपचितधातुः सन्नगम्यागमनमपि कुर्यात् । धर्मादयो वृष्यायत्ता एव यथा भवन्ति तदाह—पुत्रस्येत्यादि । आयतनं कारणम् । एते गुणा इति धर्मादयः; वृष्यप्रयोगजनितः पुत्रो धर्मादीन् पितुः संपादयतीत्यर्थः । वाजीकरणसेवया चेह युक्त्यैव ऋतुकाले च मैथुनं प्राधान्येनाभिप्रेतं, तेन तिस्रैषणीये त्रय उपस्तम्भाः ( सू. अ. ११ ) इत्यादिग्रन्थेन ब्रह्मचर्यं यदुक्तं, तद् ऋतुकाले यथाविधिकृतमैथुनाप्रतिषेधकमिति न विरोधः ॥ ३ ॥—

वाजीकरणमग्र्यं च क्षेत्रं स्त्री या प्रहर्षिणी ॥ ४ ॥
इष्टा ह्येकैकशोऽप्यर्था परं प्रीतिकरा स्मृताः ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥ ५ ॥
( सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते । )
स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकम् ।
स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ॥ ६ ॥
धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ।
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ॥ ७ ॥
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ।

सर्ववाजीकरणेभ्यः प्रधानरूपं वाजीकरणमाह—वाजीत्यादि । क्षेत्रमिव क्षेत्रं, तत्र शुक्ररूपबीजप्ररोहणात् । अर्था इति शब्दादयः, ते च स्त्रीगताधररस-कलविङ्करुत-रूपादयः प्रसिद्धा एव । धर्मार्थौ स्त्रीष्विति सहैव पत्न्या धर्मश्चर्य इत्याद्युपदेशाद्धर्मः, तथाऽनुरक्ता गृहिणी अर्थरक्षणादि करोतीत्यर्थं इत्यर्थः । स्त्रिया लक्ष्म्याः संयोगे धनसंपद्भवतीति स्त्रीषु लक्ष्मीः प्रतिष्ठितेत्यर्थः । वश्या आयत्ता । शिक्षितेति कामशास्त्रोक्तगीतवादित्रलास्यादिचतुःषष्टिकलाशिक्षिता ॥ ४-७ ॥—

नानाभक्त्या तु लोकस्य दैवयोगाच्च योषिताम् ॥ ८ ॥
तं तं प्राप्य विवर्धन्ते नरं रूपादयो गुणाः ।
वयोरूपवचोहावैर्या यस्य परमाङ्गना ॥ ९ ॥
प्रविशत्याशु हृदयं दैवाद्वा कर्मणोऽपि वा ।
हृदयोत्सवरूपा या या समानमनःशया ॥ १० ॥
समानसत्त्वा या वश्या या यस्य प्रीयते प्रियैः ।
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ॥ ११ ॥
यया वियुक्तो निःस्त्रीकमरतिर्मन्यते जगत् ।
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ॥ १२ ॥
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ।
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम् १३

अपूर्वामिव यां याति नित्यं हर्षातिवेगतः।
गत्वा गत्वाऽपि बहुशो यां तृप्तिं नैव गच्छति ॥१४॥
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः।
अतुल्यगोत्रां वृष्यां च प्रहृष्टां निरुपद्रवाम् ॥ १५ ॥
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः।

रूपादिव्यतिरेकेणापि काचित् कस्यचित् कर्मवशाद्वृष्या स्त्री भवतीति दर्शयन्नाह—नानेत्यादि। दैवयोगादिति प्राक्तनकर्मवशात्। विवर्धन्त इति वृष्यत्वं संपादयन्ति। हावो नरं प्रति स्त्रीणां शृङ्गारचेष्टाविशेषः। उक्तं च भरतेन—"प्रकाशरूपकं सत्त्वं सत्त्वोत्थवाः समुद्गताः। तेभ्यो हावादिनिष्पत्तिरित्याहुः परमर्षयः" इति। दैवादिति प्राक्तनकर्मणः। कर्मण इति ऐहिकाद्वशीकरणादिकर्मणः। मनःशयः कामः। पाशभूतेति मनइन्द्रियबन्धहेतुत्वात्। 'नानाभावा हि मानवाः' इत्यनेन रूपादिगुणयोगेन (न) सर्वपुरुषान् प्रति स्त्रीणां प्रियत्वमिति दर्शयति ॥ ८–१५ ॥—

अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ॥ १६ ॥
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः।
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ॥ १७ ॥
निष्प्रजस्तृणपूलीति मन्तव्यः पुरुषाकृतिः।
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ॥ १८ ॥
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते।
बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ॥ १९ ॥
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः।
मङ्गल्योऽयं प्रशस्योऽयं धन्योऽयं वीर्यवानयम् ॥२०॥
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः।
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विपुलं कुलम् ॥ २१ ॥
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः।
तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ॥२२॥
वाजीकरणनित्यः स्यादिच्छन् कामसुखानि च।
उपभोगसुखान् सिद्धान् वीर्यापत्यविवर्धनान् ॥२३॥
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम्।

संप्रति वृष्यप्रयोगसाध्यस्य पुत्रस्योपादेयतां दर्शयन्नाह—अच्छाय इत्यादि। एकशाख इति एकस्वरूप इत्यर्थः। चित्रलिखितो दीपश्चित्रदीपः। अधातुर्धातुसन्निभ इति असुवर्णादिरूपः सुवर्णादिवदाभासते यो जातुषकङ्कणादिः। पूली नपुंसकधर्मित्वात्। तृणपूली पुरुषाकृतिरिति भाषया पुरुषार्थक्रियाविरहित्वं दर्शयति। कामसुखानि चेत्यनेन पुत्रोत्पादातिरिक्तं नातिश्लाघ्यं फलं दर्शयति। कामसुखानि हि ऐहिकान्येव परं न पुत्रवद्उभयलोकोपकारकाणि। उपभोगे मैथुने सुखं कुर्वन्तीत्युपभोगसुखाः; किंवा, उपभोक्तुं सुखा उपभोगसुखाः। वीर्यं शुक्रम् ॥ १६–२३ ॥—

१ 'विभवः' इति पा०। २ 'बीजं' इति पा०।

शरमूलेक्षुमूलानि काण्डेक्षुः सेक्षुवालिका ॥ २४ ॥
शतावरी पयस्या च विदारी कण्टकारिका।
जीवन्ती जीवको मेदा वीरा चर्षभको बला ॥ २५ ॥
ऋद्धिर्गोक्षुरकं रास्ना आत्मगुप्ता पुनर्नवा।
एषां त्रिपलिकान् भागान् माषाणामाढकं नवम् २६
विपाचयेज्जलद्रोणे चतुर्भागं च शेषयेत्।
तत्र पेष्याणि मधुकं द्राक्षा फल्गूनि पिप्पली ॥२७॥
आत्मगुप्ता मधूकानि खर्जूराणि शतावरी।
विदार्यामलकेक्षूणां रसस्य च पृथक् पृथक् ॥ २८ ॥
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणं च तद्भिषक्।
साधयेद्घृतशेषं च सुपूतं योजयेत् पुनः ॥ २९ ॥
शर्करायास्तुगाक्षीर्याश्चूर्णैः प्रस्थोन्मितैः पृथक्।
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च ॥ ३० ॥
त्वगेलाकेशराणां च चूर्णैरर्धपलोन्मितैः।
मधुनः कुडवाभ्यां च द्वाभ्यां तत्कारयेद्भिषक् ॥३१॥
पलिका गुलिकास्त्यानास्ता यथाग्नि प्रयोजयेत्।
एष वृष्यः परं योगो बृंहणो बलवर्धनः ॥ ३२ ॥
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत्।
(इति बृंहणीगुटिका।)

काण्डेक्षुः बृहदिक्षुः। इक्षुवालिका खरगालिका। पयस्या क्षीरविदारी। वीरा क्षीरकाकोली। फल्गुः काष्ठोदुम्बरिका। शतावरीत्यन्तेन कल्कच्छेदः। वंशरोचना तुगाक्षीरी, अन्ये वंशरोचनानुकारि पार्थिवद्रव्यं तालीधीति वदन्ति। स्त्याना इति घनाः ॥ २४–३२ ॥—

माषाणामात्मगुप्ताया बीजानामाढकं नवम् ॥ ३३ ॥
जीवकर्षभकौ वीरां मेदामृद्धिं शतावरीम्।
मधुकं चाश्वगन्धां च साधयेत् कुडवोन्मिताम् ३४
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः।
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ॥ ३५ ॥
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत्।
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ३६
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम्।
पलं पूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ॥ ३७ ॥
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम्।
(इति वाजीकरणं घृतम्।)

द्वितीयप्रयोगे रसे इति क्वाथे ॥ ३३–३७ ॥

शर्करा माषविदलास्तुगाक्षीरी पयो घृतम् ॥ ३८ ॥
गोधूमचूर्णषष्ठानि सर्पिष्युत्कारिकां पचेत्।
तां नातिपक्वां मृदितां कौक्कुटे मधुरे रसे ॥ ३९ ॥

१ 'पृथक् त्रिपलिकान् कृत्वा' इति पा०। २ 'कृत्वा' इति पा०। ३ 'तालधीक्षी' इति पा०।

सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ।
एष पिण्डरसो वृष्यः पौष्टिको बलवर्धनः ॥ ४० ॥
अनेनाश्व इवोदीर्णो[1] बली लिङ्गं समर्पयेत् ।
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ।
बलवर्णस्वरकरः पुमांस्तेन वृषायते ॥ ४१ ॥
( इति वाजीकरणपिण्डरसाः । )

उत्कारिका मूषिकोत्कराकारा (?) । शिखितित्तिरिहंसानां पिण्डरसैर्व्यस्तसमस्ताश्चत्वारः पिण्डरसाः ॥ ३८–४१ ॥

घृतं माषान् सबस्ताण्डान् साधयेन्माहिषे रसे ।
भर्जयेत्तं रसं पूतं फलाम्लं नवसर्पिषि ॥ ४२ ॥
ईषत्सलवणं युक्तं धान्यजीरकनागरैः ।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥ ४३ ॥
( इति वृष्यमाहिषरसः । )
चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे ।
कुक्कुटान् बार्हिणरसे हांसे बार्हिणमेव च ॥ ४४ ॥
नवसर्पिषि संतप्तान् फलाम्लान् कारयेद्रसान् ।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्धनान् ४५
( इत्यन्ये वृष्यरसाः । )
तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः ।
न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥४६॥
( इति वृष्यमांसम् । )
माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम् ।
पयः पिबति रात्रिं स कृत्स्नां जागर्ति वेगवान् ४७
( इति वृष्यमाषयोगः । )
न नां स्वपिति रात्रिषु नित्यस्तब्धेन[3] शेफसा ।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥ ४८ ॥
( इति वृष्यः कुक्कुटमांसप्रयोगः । )
निष्क्वाथ्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ॥४९॥
हंसबर्हिणदक्षाणामेवमण्डानि भक्षयेत् ॥
( इति वृष्योऽण्डरसः । )

निशीत्यनेन सकलनिशामैथुनेऽपीति दर्शयति । हंसेत्यादि हंसबर्हिदक्षाणामण्डप्रयोगा यद्यपि भिन्नाः, तथाऽपि प्रयोगापेक्षया एक एवायं प्रयोगः । एवं संग्रहोक्ताः हंसबर्हिदक्षाणामेकप्रयोगेण पञ्चदशप्रयोगाः पूर्यन्ते ॥ ४२–४९ ॥

भवतश्चात्र—

स्रोतःसु शुद्धेष्वमले शरीरे
वृष्यं यदा नां मितमत्ति काले ।
वृषायते तेन परं मनुष्य-
स्तद्बृंहणं चैव बलप्रदं च ॥ ५० ॥

तस्मात् पुरा शोधनमेव कार्यं
बलानुरूपं न हि वृष्ययोगाः ।
सिध्यन्ति देहे मलिने प्रयुक्ताः
क्लिष्टे[1] यथा वाससि रागयोगाः ॥ ५१ ॥

वृष्ययोगाश्च शुद्धदेहैरेव कर्तव्या इति दर्शयन्नाह—स्रोतःस्वित्यादि । मितमिति मात्रावत् । क्लिष्टे इति म्लाने ॥५०॥५१॥

तत्र श्लोकौ—

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री यस्य चैव या ।
ये दोषा निरपत्यानां गुणाः पुत्रवतां च ये ॥ ५२ ॥
दश पञ्च च संयोगा वीर्यापत्यविवर्धनाः ।
उक्तास्ते शरमूलीये पादे पुष्टिबलप्रदाः ॥ ५३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने वाजीकरणाध्याये संयोगशरमूलीयो नाम वाजीकरणपादः प्रथमः ॥ १ ॥

संग्रहे यस्य चैव येति यस्य या वृष्येत्यर्थः ॥ ५२ ॥ ५३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सितस्थाने वाजीकरणाध्याये संयोगशरमूलीयो नाम वाजीकरणपादः प्रथमः ॥ १ ॥

---

## वाजीकरणाध्याये द्वितीयः पादः ।

अथात आसिक्तक्षीरिकं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

आसिक्तक्षीरिकं वृष्यपादाभिधानप्रसङ्गात् पदान्तस्य विशिष्टसंबन्धावयवतयोच्यते । (आसिक्तक्षीरमिति पदमस्त्यस्मिन्निति) आसिक्तक्षीरी, तत्र स्वार्थिकः कप्रत्ययः; किंवा, ढक्प्रत्ययेन वैशेषिकशब्दवत् 'आसिक्तक्षीरिक' इति साधनीयम् ॥ १ ॥ २ ॥

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम् ।
उदूखले समापोथ्य पीडयेत् क्षीरमर्दितम्[2] ॥ ३ ॥
गृहीत्वा तं रसं पूतं गव्येन पयसा सह ।
बीजानामात्मगुप्ताया धान्यमाषरसेन च ॥ ४ ॥
बलायाः शूर्पपर्ण्योश्च जीवन्त्या जीवकस्य च ।
ऋद्ध्यर्षभककाकोलीश्वदंष्ट्रामधुकस्य च[3] ॥ ५ ॥
शतावर्या विदार्याश्च द्राक्षाखर्जूरयोरपि ।
संयुक्तं मात्रया वैद्यः साधयेत्तत्र चावपेत् ॥ ६ ॥
तुगाक्षीर्याः समाषाणां शालीनां षष्टिकस्य च ।
गोधूमानां च चूर्णानि यैः स सान्द्रीभवेद्रसः ॥ ७ ॥

---

१ 'इवोदीर्णबलः' इति पा० । २ 'वाजाकरी लम्बिका' इति पा० । ३ 'निस्तब्धेन च' इति पा० । ४ 'वृष्यशुक्ररसः' इति पा० । ५ 'यदाद्यं' इति पा० ।

१ 'म्लिष्टे' इति पा० । २ 'क्षुण्णं विमर्दितं क्षीरे पीडयेत् सुसमाहितः' इति पा० । ३ 'ऋषभस्य च काकोलीमधुकानां रसेन च' इति पा० ।

सान्द्रीभूतं च कुर्यात् प्रभूतमधुशर्करम्।
गुलि(टि)का बदरैस्तुल्यास्ताश्च सर्पिषि भर्जयेत्॥८॥
ता यथाग्नि प्रयुञ्जानः क्षीरमांसरसाशनः।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम्॥ ९॥
(इत्यपत्यकरी षष्टिकादिगुटिका।)

आसिक्तक्षीरमिति क्षीरसेकवृद्धम्। यदुक्तं जतूकर्णे—"क्षीरसेकवृद्धं षष्टिकं पक्वं" इत्यादि। शुद्धषष्टिकमिति गौरषष्टिकम्। अत्र बलादिरसानां तुल्यमानता; किंवा, मात्राशब्दस्याल्पवचनत्वाद्बलादिरसानामल्पमात्रत्वम्। प्रक्षेप्यचूर्णप्रमाणमाह—यैः स सान्द्रीभवेद्रस इति; यावन्मानेन चूर्णेन रसस्य सान्द्रता भवति तावन्मात्रं चूर्णं ग्राह्यम्। प्रभूतत्वं मधुशर्करयोर्यावताऽत्यर्थमधुरत्वं स्यात्तावज्ज्ञेयम्। अत्र च प्रयोगमहिम्नैव मधुयुक्तस्यापि प्रयोगस्य भर्जनक्रियायामग्निसंयोगो न विरोधमावहति; तथा हि सुश्रुतेऽपि त्रिफलायस्कृतौ मधुनोऽग्निसंबन्धो भवत्येव। आत्मजमिति हर्षभूतात्मजं, शुक्रमिति यावत्॥ ३—९॥

चटकानां सहंसानां दक्षाणां शिखिनां तथा।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत्॥१०॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि।
षष्टिकानां च चूर्णानि चूर्णं गोधूमकस्य च[1]॥ ११॥
एभिः पूपलिकाः कार्याः शष्कुल्यो वर्तिकास्तथा।
पूपा धानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः॥१२॥
एषां प्रयोगाद्भक्ष्याणां स्तब्धेनापूर्णरेतसा।
शेफसा वाजिवद्याति यावदिच्छं स्त्रियो नरः॥१३॥
(इति वृष्यपूपलिकादियोगाः।)

आत्मगुप्ताफलं माषान् खर्जूराणि शतावरीम्।
शृङ्गाटकानि मृद्वीकां साधयेत् प्रसृतोन्मितम्॥१४॥
क्षीरप्रस्थं जलप्रस्थमेतत् प्रस्थावशेषितम्।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः॥ १५॥
शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च।
तत् पाययेत सक्षौद्रं षष्टिकान्नं च भोजयेत्॥ १६॥
जरापरीतोऽप्यबलो योगेनानेन विन्दति।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति॥ १७॥
(इत्यपत्यकरः स्वरसः।)

दक्षः कुक्कुटः। शुक्राणीति यद्यप्युक्तं, तथाऽपि चटकादिशुक्रग्रहणस्याशक्यत्वात् समानगुणानि तदण्डान्यपीह गृह्यन्ते। वर्तिका वर्त्याकारा भक्ष्याः। धाना इति धानाकारा भक्ष्याः। अयं तुल्यद्रव्यतया विविधभक्ष्यरूपोऽप्येक एव योगः॥ १०—१७॥

खर्जूरीमस्तकं माषान् पयस्यां च शतावरीम्।
खर्जूराणि मधूकानि मृद्वीकामजडाफलम्॥ १८॥
पलोन्मितानि मतिमान् साधयेत् सलिलाढके।
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत्॥ १९॥
क्षीरशेषेण तेनाद्याद् घृताढ्यं षष्टिकौदनम्।
सशर्करेण संयोग एष वृष्यः परं स्मृतः॥ २०॥
(इति वृष्यक्षीरम्)

अजडा शूकशिम्बी॥ १८—२०॥

जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम्।
खर्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम्॥ २१॥
शृङ्गाटकं विदारीं च नवं सर्पिः पयो जलम्।
सिद्धं घृतावशेषं तच्छर्कराक्षौद्रपादिकम्॥ २२॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथाबलम्।
वृष्यं बल्यं च वर्ण्यं च कण्ठ्यं बृंहणमुत्तमम्॥ २३॥
(इति वृष्यघृतम्।)

जीवकेत्यादौ विदार्यन्तैः कल्कैः क्षीरजलाभ्यां घृतं साधनीयम्॥ २१—२३॥

दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्जितम्।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्या च बुद्धिमान्॥ २४॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे[2] शुचौ पटे।
मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने॥ २५॥
पिबेन्मात्रां रसालायास्तं भुक्त्वा षष्टिकौदनम्[3]।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते॥ २६॥
(वृष्यो दधिसरप्रयोगः।)

युक्त्येति यथा कटुत्वाद्यधिकं न भवति तथा मरिचादियोगः कर्तव्यः। मार्जितमिति सुघृष्टम्। रसालालक्षणं—"सचातुर्जातकाजाजि सगुडार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि" इति॥ २४—२६॥

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम्।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते॥ २७॥
(इति वृष्यः षष्टिकौदनप्रयोगः।)

तप्ते सर्पिषि नक्राण्डं ताम्रचूडाण्डमिश्रितम्।
युक्तं षष्टिकचूर्णेन सर्पिषाऽभिनवेन च॥ २८॥
पक्त्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः।
य इच्छेदश्ववद्गन्तुं प्रसेक्तुं गजवच्च यः॥ २९॥
(इति वृष्यपूपलिकाः।)

चन्द्रांशुकल्पमिति अत्यर्थशुक्लम्॥ २७—२९॥

भवतश्चात्र—

एतैः प्रयोगैर्विधिवद्वपुष्मान्
वीर्योपपन्नो[4] बलवर्णयुक्तः।
हर्षान्वितो वाजिवदष्टवर्षो
भवेत् समर्थश्च वराङ्गनासु॥ ३०॥

१ 'गौधूमिकं तथा' इति पा०।

१ 'सर्वाणि' इति पा०। २ 'कुण्डे' इति पा०। ३ 'तमद्यादुपरिष्टाच रसालां मात्रया पिबेत्' इति पा०। ४ 'स्नेहोपपन्नः' इति पा०।

यच्च किञ्चिन्मनसः प्रियं स्या-
द्रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यं
प्रिया वयस्याश्च तदत्र योग्यम्[1] ॥ ३१ ॥

अत्र योग्यमिति वृष्यप्रयोगसमर्थम् ॥ ३० ॥ ३१ ॥

तत्र श्लोकः—

आसिक्तक्षीरिके पादे ये योगाः परिकीर्तिताः ।
अपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥ ३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने वाजीकरणाध्याये आसिक्तक्षीरिको नाम वाजीकरणपादो द्वितीयः ॥ २ ॥

पौरुषार्थिभिरिति शुक्रार्थिभिः ॥ ३२ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने वाजीकरणाध्याये आसिक्तक्षीरिको नाम वाजीकरणपादो द्वितीयः ॥ २ ॥

---

## वाजीकरणाध्याये तृतीयः पादः ।

अथातो माषपर्णभृतीयं वाजीकरणपादं
व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

माषपर्णभृतीयसंबन्धोऽपि पूर्ववत् ॥ १ ॥ २ ॥

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम् ।
समानवर्णवत्सां च जीवद्वत्सां च बुद्धिमान् ॥ ३ ॥
रोहिणीमथवा कृष्णामूर्ध्वशृङ्गीमदारुणाम् ।
इक्ष्वादामर्जुनादां वा सान्द्रक्षीरां च धारयेत् ॥ ४ ॥
केवलं तु पयस्तस्याः शृतं वाऽशृतमेव वा ।
शर्कराक्षौद्रसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम् ॥ ५ ॥

गृष्टिम् एकवारप्रसूताम् । चतुःस्तनीमित्यनेन संपूर्णचतुःस्तनीं दर्शयति । रोहिणीमिति लोहितवर्णाम् । ऊर्ध्वशृङ्गत्वं विशुद्धबहुक्षीराया एव भवतीति वचनाज्ज्ञेयम् । इक्ष्वादेति इक्षुदण्डभक्षा । अर्जुनादा अर्जुनवृक्षपत्रभक्षा । इक्ष्वादा वा, अर्जुनादा वा, माषपर्णभृता वेति विकल्पत्रयम् । पयः शृतमशृतं वेति द्वौ योगौ । शर्कराक्षौद्रसर्पिर्भिर्युक्तं तदिति तृतीयः । एतत्प्रयोगोऽपि जतूकर्णे—"तस्याः क्षीरं शर्कराक्षौद्रयुक्तं वा केवलं शृतमशृतं वा" इति ॥ ३—५ ॥

शुक्लैर्जीवनीयैश्च बृंहणैर्बलवर्धनैः ।
क्षीरसंजननैश्चैव पयः सिद्धं पृथक् पृथक् ॥ ६ ॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम् ॥ ७ ॥

पर्यायेणेति पृथक् पृथक् प्रयोक्तव्यं; तेन पञ्चभिर्गणैः पञ्च योगा भवन्ति ॥ ६ ॥ ७ ॥

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
श्वदंष्ट्रां क्षीरिकां माषान् गोधूमाञ्छालिषष्टिकान् ॥ ८ ॥
पयस्यर्धोदके पक्त्वा कार्षिकानाढकोन्मिते ।
विवर्जयेत् पयःशेषं तत् पूतं क्षौद्रसर्पिषा ॥ ९ ॥
युक्तं सशर्करं पीत्वा वृद्धः सप्ततिकोऽपि वा ।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति ॥ १० ॥

विवर्जयेदिति मेदादिकल्कं वर्जयेत् । वृद्धः सप्ततेरर्वागिति ज्ञेयम् । सप्ततिकस्य तु यद्यपि शुक्रनिवृत्तिरुक्ता, तथाऽपि वृष्यप्रभावाद्भवतीति विज्ञेयम् ॥ ८—१० ॥

मण्डलैर्जातरूपस्य तस्या एव पयः शृतम् ।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम् ॥ ११ ॥

जातरूपस्येति सुवर्णस्य; मण्डलरूपाऽऽकृतिरिह सुवर्णस्य प्रभावाद्वृष्यप्रयोगोपकारिणी भवतीति वचनाज्ज्ञेयम् । तस्या एवेति माषपर्णभृतधेन्वाः ॥ ११ ॥

त्रिंशत् सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः ।
भृष्टाः सशर्कराक्षौद्राः क्षीरधारावदोहिताः ॥ १२ ॥
पीत्वा यथाबलं चोर्ध्वं षष्टिकं क्षीरसर्पिषा ।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति ना क्षरत् ॥ १३ ॥
(इति वृष्यः पिप्पलीयोगः ।)
श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥ १४ ॥
( इति वृष्यपायसयोगः । )

प्रकुञ्चं पलम् । क्षीरधारावदोहिता इति पिप्पलीकल्कादुपरि क्षीरधारावदोहः कर्तव्यः; क्षीरं च तावद्दोह्यं यावता पानयोग्याः पिप्पल्यो भवन्ति ॥ १२—१४ ॥

फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुडवश्चूर्णितानां स्यात् स्वयङ्गुप्ताफलस्य च ॥ १५ ॥
कुडवश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः ।
गोधूमशालिचूर्णानां कुडवः कुडवो भवेत् ॥ १६ ॥
सर्पिषः कुडवश्चैकस्तत् सर्वं क्षीरमर्दितम्[2] ।
पक्त्वा पूपलिकाः खादेद्बह्व्यः स्युर्यस्य योषितः ॥ १७ ॥
( इति वृष्यपूपलिकाः । )

फलानामित्यादि । फलानामिति जीवनीयानामित्यादिभिस्त्रिभिः प्रत्येकमभिसंबध्यते । जीवनीयानामिति षट्ककषायवर्गोक्तानां जीवकर्षभादीनां दशानाम् । स्निग्धानामिति स्नेहोपगानां मृद्वीकादीनां दशानां सप्तककषायवर्गोक्तानाम् । तथा रुचिकारिणामिति चतुष्ककषायवर्गोक्तानामाम्रादीनां हृद्यानां दशानामिति । एषां जीवनीयप्रभृतीनां फलानां चूर्णितानां मिलित्वा

---

१ 'योज्यम्' इति पा० ।

१ 'सिद्धान्' इति पा० २ 'सर्पिषः कुडवश्चैव क्षीरेण मृदितं च तत्' इति पा० ।

कुडवो ग्राह्यः। अन्यदतिरोहितार्थम्। तथा ह्ययं प्रयोगो जतूकर्णे च पठ्यते—"द्राक्षाखर्जूरमाषाजडागोधूमशालिघृतानां कुडवः, तिलमुद्गौ द्विकौडविकौ चूर्णयित्वा" इत्यादि ॥ १५–१७ ॥

घृतं शतावरीगर्भे क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुत्तमम् ॥ १८ ॥
( इति वृष्यं शतावरीघृतम्। )

घृतं शतावरीत्यादौ शर्करादीनां प्रक्षेप्याणामन्यतोदृष्टन्यायाद्घृतात् पादिकत्वं ( घृतस्य प्रास्थिकत्वम् ) ॥ १८ ॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम्।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत् ॥ १९ ॥
( इति वृष्यमधुकयोगः। )

कर्षमित्यादिकान्ताः पञ्चदश प्रयोगाः ॥ १९ ॥

घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥ २० ॥
कृतैककृत्याः सिद्धार्था ये चान्योऽन्यानुवर्तिनः।
कलासु कुशलास्तुल्याः सत्त्वेन वयसा च ये ॥ २१ ॥
कुलमाहात्म्यदाक्षिण्यशीलशौचसमन्विताः।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥ २२ ॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियंवदाः।
तैर्नरः सह विस्रब्धः सुवयस्यैर्वृषायते ॥ २३ ॥
अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥ २४ ॥
विहङ्गानां रुतैरिष्टैः स्त्रीणां चाभरणस्वनैः।
संवाहनैर्वरस्त्रीणामिष्टानां च वृषायते ॥ २५ ॥

घृतक्षीराशन इत्यादिना तु वृष्यत्वार्थिन आहाराचाराभिधानम्। नित्यमित्यनेन व्यवायनित्यतया शुक्रमार्गानवरोधेन व्यवायशक्तिं दर्शयति। कृतमेकं कृत्यं यैस्ते तथा, एतच्च अन्योऽन्यार्थरागकारणम्। सिद्धार्था इति सिद्धसाध्याः, असिद्धार्था हि व्याकुलमनसो न कामक्षमाः। वृषायत इति उपचितप्रवृत्त्युन्मुखशुक्रो भवति ॥ २०–२५ ॥

मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च ॥ २६ ॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः।
उन्नतिर्नीलमेघानां, रम्यचन्द्रोदया निशाः ॥ २७ ॥
वायवः सुखसंस्पर्शाः कुमुदाकरगन्धिनः।
रतिभोगक्षमा रात्र्यः सङ्कोचागुरुवल्लभाः ॥ २८ ॥

'मत्तद्विरेफाचरिताः' इत्यादि 'गृहाणि च' इत्यन्तं योग्यतया ऋतुविभागेनानुक्तमपि ग्रीष्म एव ज्ञेयं, तथा 'मेघानां' इत्यन्तं प्रावृषि, तथा 'गन्धिनः' इत्यन्तं शरदि, 'वल्लभाः' इत्यन्तं च विधानं हेमन्तशिशिरयोर्ज्ञेयम्। सङ्कोचं कुङ्कुमं, सङ्कोचागुरुणोः समालभनार्थं वल्लभा यासु निशासु तास्तथा ॥ २६–२८ ॥

सुखाः सहायाः परपुष्टघुष्टाः
फुल्ला वनान्ता विशदान्नपानाः।
गान्धर्वशब्दाश्च सुगन्धयोगाः
सत्त्वं विशालं निरुपद्रवं च ॥ २९ ॥
सिद्धार्थता चाभिनवश्च कामः
स्त्री चायुधं सर्वमिहात्मजस्य।
वयो नवं जातमदश्च कालो
हर्षस्य योनिः परमा नराणाम् ॥ ३० ॥

तत्र श्लोकः—

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च।
माषपर्णभृतीयेऽस्मिन् पादे शुक्रबलप्रदाः ॥ ३१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने वाजीकरणाध्याये माषपर्णभृतीयो नाम वाजीकरणपादस्तृतीयः ॥ ३ ॥

सुखा इत्यादिग्रन्थविधानं तु वसन्ताभिप्रायविहितमन्यत्राप्यविरुद्धम्। आत्मजस्येति मन्मथस्य। जातमदः कालो वसन्तादिः ॥ २९–३१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने वाजीकरणाध्याये माषपर्णभृतीयो नाम तृतीयः पादः ॥ ३ ॥

---

## वाजीकरणाध्याये चतुर्थः पादः।

अथातः पुमाञ्जातबलादिकं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पारिशेष्यात् पुमाञ्जातबलादिक उच्यते। पुमाञ्जातबलादयः शब्दा अस्मिन् विद्यन्त इति पुमाञ्जातबलादिकः; आसिक्तक्षीरिकवच्छब्दसिद्धिः ॥ १ ॥ २ ॥

पुमान् यथा जातबलो यावदिच्छं स्त्रियो व्रजेत्।
यथा चापत्यवान् सद्यो भवेत्तदुपदेक्ष्यते ॥ ३ ॥
न हि जातबलाः सर्वे नराश्चापत्यभागिनः।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः ॥ ४ ॥
सन्ति चाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः।
प्रकृत्या चाबलाः सन्ति सन्ति चामयदुर्बलाः ॥ ५ ॥
नराश्चटकवत् केचिद् व्रजन्ति बहुशः स्त्रियम्।
गजवच्च प्रसिञ्चन्ति केचिन्न बहुगामिनः ॥ ६ ॥

---

१ अयं पाठो हस्तलिखितपुस्तके न पठ्यते। २ 'घृतक्षौद्रसमन्वितम्' इति पा०। ३ 'पयोऽनुपानं यो लिह्यात्' इति पा०। ४ 'नार्यः' इति पा०।

१ 'पुष्टिबलप्रदाः' इति पा०। २ 'चाल्पबलाः' इति पा०।

कालयोगबलाः केचित् केचिदभ्यसनध्रुवाः ।
केचित् प्रयत्नैर्व्यज्यन्ते[1] वृषाः केचित् स्वभावतः ॥ ७ ॥
तस्मात् प्रयोगान् वक्ष्यामो दुर्बलानां बलप्रदान् ।
सुखोपभोगान् बलिनां भूयश्च बलवर्धनान् ॥ ८ ॥
पूर्वं शुद्धशरीराणां निरूहैः[2] सानुवासनैः ।
बलापेक्षी प्रयुञ्जीत शुक्रापत्यविवर्धनान् ॥ ९ ॥
घृततैलरसक्षीरशर्करामधुसंयुताः ।
बस्तयः संविधातव्याः क्षीरमांसरसाशिनाम् ॥ १० ॥

जातबलत्वे सत्यपि नावश्यमपत्यभागित्वं भवतीति कृत्वा 'यथा जातबलः' इत्युक्तेऽपि 'यथा चापत्यवान् भवेत्' इत्युक्तम्। तदेव शुक्रवैचित्र्यं स्फोटयति—न हीत्यादि। 'न हि जातबलाः सर्वे' इत्येकः पक्षः, तथा 'नरा नापत्यभागिनः सर्वे' इति द्वितीयः पक्षो ज्ञेयः। एतच्छुक्रबलभेदप्रसङ्गादपरानपि शुक्रबलविशेषानाह—बृहच्छरीरा इत्यादि। अल्पाश्रया अल्पशरीराः, एते च शुक्रसारत्वेन नारीषु बलवन्तो बहुप्रजाश्च भवन्ति। गजवत् प्रसिञ्चन्तीति शुक्रं बहु विसृजन्ति। कालयोगेन हेमन्तादिकालसंबन्धेन व्यवाये बलवन्तो भवन्तीति कालयोगबलाः। अभ्यसनध्रुवा इति व्यवायाभ्यासेनैव व्यवायसमर्था भवन्ति। एवं प्रयत्नैर्व्यज्यन्त इति वृष्यप्रयोगैः स्त्रीषु प्रवर्तन्ते। सुखोपभोगानिति सुखानुष्ठानान्। निरूहानुवासनशुद्धानां[3] वृष्यप्रयोगाः फलदा भवन्तीति निरूहानुवासनाभिधानम् ॥ ३-१० ॥

पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ।
कोलवद्गुलिकाः कृत्वा तप्ते सर्पिषि वर्तयेत्[4] ॥ ११ ॥
वर्तनैस्तम्भितास्ताश्च[5] प्रक्षेप्याः कौक्कुटे रसे ।
घृताढ्ये गन्धपिशुने दधिदाडिमसारिके ॥ १२ ॥
यथा न भिन्द्याद्गुलि(टि)कास्तथा तं साधयेद्रसम् ।
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम् ॥ १३ ॥
मांसानामेवमन्येषां मेद्यानां कारयेद्भिषक् ।
गुटिकाः सरसास्तासां प्रयोगः शुक्रवर्धनः ॥ १४ ॥
( इति वृष्या मांसगुटिकाः । )

वर्तनस्तम्भिता इति वर्तनेन कठिनीकृताः। दधिदाडिमसाराभ्यां संस्कृतं दधिदाडिमसारिकम्। दाडिमसारश्च दाडिमरसः। मांसानामित्यादि अतिदेशयोगो द्वितीयः। मेद्यानामिति मेदुराणाम् ॥ ११-१४ ॥

माषानङ्कुरिताञ्छुद्धान् वितुषान् साजडाफलान् ।
घृताढ्ये माहिषरसे दधिदाडिमसारिके ॥ १५ ॥
प्रक्षिपेन्मात्रया युक्तो धान्यजीरकनागरैः ।
भुक्तः पीतश्च स रसः कुरुते शुक्रमक्षयम् ॥ १६ ॥
( इति वृष्यो माहिषरसः । )

अजडा शूकशिम्बी। भुक्तः पीतश्चेति पूर्वयोगवद्घनभागस्य भोजनं, द्रवस्य च पानं ज्ञेयम् ॥ १५ ॥ १६ ॥

आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥ १७ ॥
घृतभृष्टान् रसे च्छागे रोहितान् फलसारिके ।
अनुपीतरसान् स्निग्धानपत्यार्थी प्रयोजयेत् ॥ १८ ॥
( इति वृष्यघृतभृष्टमत्स्यमांसानि । )

मत्स्यशब्देन प्रधानकल्पनया रोहितं वदन्ति। फलसारिकमिति दाडिमामलकादिफलसारसंस्कृतम् ॥ १७ ॥ १८ ॥

कुट्टकं[1] मत्स्यमांसानां हिङ्गुसैन्धवधान्यकैः ।
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत् ॥ १९ ॥
माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत् ।
रसे चानुगते मांसं पोथयेत्तत्र चावपेत् ॥ २० ॥
मरिचं जीरकं धान्यमल्पं हिङ्गु नवं घृतम् ।
माषपूपलिकानां तद्गर्भार्थमुपकल्पयेत् ॥ २१ ॥
एतौ पूपलिकायोगौ बृंहणौ बलवर्धनौ ।
हर्षसौभाग्यदौ पुंस्यौ परं शुक्राभिवर्धनौ ॥ २२ ॥

कुट्टकमिति कुट्टनेनाणुशः कृतम् ॥ १९-२२ ॥

( इति वृष्यौ पूपलिकायोगौ । )

माषात्मगुप्तागोधूमशालिषष्टिकपैष्टिकम् ।
शर्करायाः विदार्याश्च चूर्णमिक्षुरकस्य च ॥ २३ ॥
संयोज्य मसृणे क्षीरे घृते पूपलिकाः पचेत् ।
पयोऽनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां पराम् ॥ २४ ॥
( इति वृष्या माषादिपूपलिकाः । )

शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः ।
प्रस्थो विदार्याश्चूर्णस्य पिप्पल्याः प्रस्थ एव च ॥ २५ ॥
अर्धाढकं तुगाक्षीर्याः क्षौद्रस्याभिनवस्य च ।
तत्सर्वं मूर्च्छितं तिष्ठेन्मार्तिके घृतभाजने ॥ २६ ॥
मात्रामग्निसमां तस्य प्रातः प्रातः प्रयोजयेत् ।
एष वृष्यः परं योगो बल्यो बृंहण एव च ॥ २७ ॥

इक्षुरकः कोकिलाक्षः ॥ २३-२७ ॥

शतावर्या विदार्याश्च तथा माषात्मगुप्तयोः ।
श्वदंष्ट्रायाश्च निष्क्वाथाञ्जलेषु[2] च पृथक् पृथक् ॥ २८ ॥
साधयित्वा घृतप्रस्थं पयस्यष्टगुणे पुनः ।
शर्करामधुयुक्तं तदपत्यार्थी प्रयोजयेत् ॥ ॥ २९ ॥
( इत्यपत्यकरं घृतम् । )

शर्करामधुसंयुक्तमित्यत्र प्रक्षेपन्यायात् पादिकत्वं शर्करामधुनोः ॥ २८ ॥ २९ ॥

घृतपात्रं शतगुणे विदारीस्वरसे पचेत् ।
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत् ॥ ३० ॥

---

१ 'प्रयत्नैर्वाञ्छन्ते' इति पा०। २ 'निरूहान् सानुवासनान्' इति पा०। ३ 'निरूहानुवासनाभिधाना बस्तयः' इति पा०। ४ 'भर्जयेत्' इति पा०। ५ 'भर्जनस्तम्भिताः' इति पा०।

१ 'कुट्टितम्' इति पा०। २ 'निष्क्वाथनल्वणेषु पृथक् पृथक्' इति पा०।

शर्करायास्तुगाक्षीर्याः क्षौद्रस्येक्षुरकस्य च ।
पिप्पल्याः साजडायाश्च भागैः पादांशिकैर्युतम् ३१
गुलि(टि)काः कारयेद्वैद्यो यथा स्थूलमुदुम्बरम् ।
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति ॥ ३२ ॥
(इति वृष्यगुटिकाः ।)

पादांशिकैरिति घृतापेक्षया पादप्रमाणैः ॥ ३०-३२ ॥

सितोपलापलशतं तदर्धं नवसर्पिषः ।
क्षौद्रपादेन संयुक्तं साधयेज्जलपादिकम् ॥ ३३ ॥
सान्द्रं गोधूमचूर्णानां पादं स्तीर्णे शिलातले ।
शुचौ श्लक्ष्णे समुत्कीर्य मर्दनेनोपपादयेत् ॥ ३४ ॥
शुद्धा उत्कारिकाः कार्याश्चन्द्रमण्डलसन्निभाः ।
तासां प्रयोगाद्गजवन्नारीः संतर्पयेन्नरः ॥ ३५ ॥
(इति वृष्योत्कारिका ।)

समुत्कीर्येति विस्तीर्य । उत्कारिकाः कार्या इत्यत्र पुनः पाकेनैवोत्कारिकाकरणम् ॥ ३३-३५ ॥

यत् किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ ३६ ॥
द्रव्यैरेवंविधैस्तस्माद्भावितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३७ ॥
गत्वा स्नात्वा पयः पीत्वा रसं वाऽनु शयीत ना ।
तथाऽस्याप्यायते भूयः शुक्रं च बलमेव च ॥ ३८ ॥
यथा मुकुलपुष्पस्य सु(स्व)गन्धो नोपलभ्यते ।
लभ्यते तद्विकाशात्तु तथा शुक्रं हि देहिनाम् ॥३९॥
नर्ते वै षोडशाद्वर्षात् सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥ ४० ॥

अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन् ।
उपशुष्येत सहसा तडागमिव काजलम् ॥ ४१ ॥
शुष्कं रूक्षं यथा काष्ठं जन्तुदग्धं विजर्जरम् ।
स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियो व्रजन् ॥४२॥
जरया चिन्तया शुक्रं व्याधिभिः कर्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥४३॥
क्षयाद्भयादविश्रम्भाच्छोकात् स्त्रीदोषदर्शनात् ।
नारीणामरसज्ञत्वादविचारादसेवनात् ॥ ४४ ॥
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ।
देहसत्त्वबलापेक्षी हर्षः शक्तिश्च हर्षजा ॥ ४५ ॥

अनुक्तवाजीकरणं संगृह्णन्नाह—यत्किञ्चिदित्यादि । भावित इति वचनात् प्रयोगेण शरीरभावनायां सत्यां स्त्रीसेवा संभवतीति दर्शयति । आत्मवेगेनेति सङ्कल्पजातेनात्मवेगेन । बालस्य तडागदृष्टान्तेन पुनरपि शुक्रसद्भावं कफप्राधान्यं च दर्शयति; वृद्धस्य तु जन्तुजग्धत्वादिदृष्टान्तेन विनष्टस्यापुनर्भावं शुक्रस्य तथाऽभूयिष्ठतां च दर्शयति । ननु तृप्तस्य शरीरबलं भवत्येव, तत् किं तृप्तस्य स्त्रियो गन्तुमसामर्थ्यमित्याह—देहेत्यादि । एतेन सत्यपि तृप्तिजनिते बले क्षयादिना देहमनसोरुपहतत्वाद्धर्षो न भवति, हर्षाभावाद् व्यवायशक्तिर्न भवतीत्युक्तं भवति ॥ ३६-४५ ॥

रस इक्षौ यथा दध्नि सर्पिस्तैलं तिले यथा ।
सर्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा ॥ ४६ ॥
तत् स्त्रीपुरुषसंयोगे चेष्टासंकल्पपीडनात् ।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव ॥ ४७ ॥
हर्षात्तर्षात् सरत्वाच्च पैच्छिल्याद्गौरवादपि ।
अणुप्रवणभावाच्च द्रुतत्वान्मारुतस्य च ॥ ४८ ॥
अष्टाभ्य एभ्यो हेतुभ्यः शुक्रं देहात् प्रसिच्यते ।
चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते ॥ ४९ ॥

संप्रति, संभवति शुक्रं यथा देहे, स्थितं यथा च प्रवर्तते, तदाह—रस इत्यादि । इक्ष्वादिदृष्टान्तत्रयेणानतिप्रयत्नाल्पप्रयत्नमहाप्रयत्नवाह्यशुक्रान् पुरुषान् यथाक्रमं दर्शयति । संस्पर्शन इति संस्पर्शनवति, तेन केशादौ संस्पर्शनाव्याप्तेः शुक्रमपि नास्तीति दर्शयति । स्त्रीपुरुषसंयोगो मिश्रीभावः । चेष्टा व्यवायचेष्टा, सङ्कल्पो योषिदनुरागः, पीडनं नारीपुरुषयोः परस्परसंमूर्च्छनम्; अत्र च नारीपुरुषसंयोगः प्रधानं कारणं, तत्सहकारीणि चेष्टादीनि । आर्द्रपटदृष्टान्तेनाश्रयानुपघातेन शुक्रस्रवणं दर्शयति । अपरमपि शुक्रप्रवृत्तिहेतुमाह—हर्षादित्यादि । हर्षः सङ्कल्पपूर्वकशुक्रोद्रेकध्वजोच्छ्रायादिकारीच्छा । तर्षः वनिताभिलाषः । सरत्वम् अस्थैर्यम् । अणुप्रवणभावः अणुत्वे सति बहिर्निर्गमनस्वभावः । द्रुतत्वान्मारुतस्य चेति शुक्रप्रेरकस्य वायोरभिद्रवणशीलत्वादित्यर्थः । एते च यद्यपि हेतवस्तथाऽपि प्राधान्यात् प्रथमप्रतिपादितस्त्रीपुरुषसंयोगादिरूपहेतूनां समष्टौ नैवामी गणिताः । चरत इति नानामानुषपश्वादिजातिषु भ्रमतः । विश्वरूपस्येति आत्मनः । तथा ह्यात्मपर्यायेषूक्तं—"स विश्वकर्मा स च विश्वरूपः" (शा. अ. २) इति । रूपद्रव्यमिति रूपप्राक्तनकारणम् । एतेन, अव्यक्तस्यात्मनो व्यक्तशरीरनिर्वृत्तौ शुक्रं हेतुरित्युक्तं भवति । शुक्रं चेह प्रकरणागतत्वेनोक्तं; तेन आर्तवमप्यात्मनो रूपद्रव्यं ज्ञेयम् ॥ ४६-४९ ॥

बहलं मधुरं स्निग्धमविस्रं गुरु पिच्छिलम् ।
शुक्लं बहु च यच्छुक्रं फलवत्तदसंशयम् ॥ ५० ॥

प्रशस्तशुक्रगुणानाह—बहलमित्यादि ॥ ५० ॥

येन नारीषु सामर्थ्यं वाजीवल्लभते नरः ।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् ॥ ५१ ॥

वाजीकरणशब्दनिरुक्तिमाह—येनेत्यादि । व्रजेच्चाभ्यधिकमिति पुनः पुनर्गच्छेत्; 'व्यज्यते' इति वा पाठः, तत्रापि भूयो गमनेन नारीषु पुंस्त्वेन व्यज्यते । 'व्यज्यात्' इति पाठेऽपि स एवार्थो विद्वद्भिः सुचिन्तनीयः । अनेन निरुक्तेन त्रिविधमपि

१ 'वाजीव लभते' इति पा० ।

वृष्यमवरुध्यते; यथा—शुक्रवृद्धिकरं च माषादि, तथा स्रुतिकरं सङ्कल्पादि, शुक्रस्रुतिवृद्धिकरं क्षीरादि। यदुक्तमन्यत्र—"शुक्रस्रुतिकरं किंचित् किंचिच्छुक्रविवर्धनम्। स्रुतिवृद्धिकरं किंचित् त्रिविधं वृष्यमुच्यते" इति। त्रिविधमपि हीदं व्यवाये बलवत्त्वं पुनः पुनर्व्यवायशक्तिं च करोति ॥ ५१ ॥

तत्र श्लोकौ—

**हेतुर्योगोपदेशस्य योगा द्वादश चोत्तमाः।**
**यत् पूर्वं मैथुनात् सेव्यं सेव्यं यन्मैथुनादनु ॥ ५२ ॥**
**यदा न सेव्याः प्रमदाः कृत्स्नः शुक्रविनिश्चयः।**
**निरुक्तं चेह निर्दिष्टं पुमाञ्जातबलादिके ॥ ५३ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने वाजीकरणाध्याये पुमाञ्जातबलादिको नाम वाजीकरणपादश्चतुर्थः ॥ ४ ॥**

**समाप्तश्चायं द्वितीयो वाजीकरणाध्यायः ॥ २ ॥**

हेतुरित्यादि। संग्रहो व्यक्तः ॥ ५२ ॥ ५३ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने वाजीकरणाध्याये पुमाञ्जातबलादिको नाम वाजीकरणपादश्चतुर्थः ॥४॥

इति वाजीकरणाध्यायो द्वितीयः ॥ २ ॥

---

## तृतीयोऽध्यायः।

**अथातो ज्वरचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

स्वस्थोर्जस्करमभिधाय व्याधिनिर्घातकरचिकित्सितं वक्तव्यम्। सर्वरोगप्रधानत्वेन ज्वरस्यैवादौ चिकित्सितं तत्रोच्यते। ज्वरस्य च यथा प्राधान्यं तथाऽत्रैव वक्ष्यति। ज्वरचिकित्सिताभिधायकोऽध्यायो ज्वरचिकित्सितमुच्यते, अभिधानाभिधेययोरभेदोपचारात्। एवमुत्तराध्यायेष्वपि व्याख्येयम् ॥१॥२॥

**विज्वरं ज्वरसंदेहं पर्यपृच्छत् पुनर्वसुम्।**
**विविक्ते शान्तमासीनमग्निवेशः कृताञ्जलिः ॥ ३ ॥**

विज्वरमिति विज्वरशब्दो नीरोगोपदर्शकः[२]; यतो ज्वरशब्देन चात्र सामान्येन रोगोऽभिमतः, यथा—"ज्वरो विकारो रोगश्च" इत्यादि। नीरोगत्वेनेह रोगप्रशमनपृच्छाश्रयतां गुरोर्ब्रवीति। ज्वरसंदेहमिति ज्वरनिदानोक्तातिरिक्तज्वरधर्मविषयं संदेहम्। विविक्त इत्यादिना एवं गुरवः प्रष्टव्या इति दर्शयति ॥ ३ ॥

**देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली।**
**ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥ ॥ ४ ॥**
**तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये।**
**प्रकृतिं च प्रवृत्तिं च प्रभावं कारणानि च ॥ ५ ॥**
**पूर्वरूपमधिष्ठानं बलकालात्मलक्षणम्।**
**व्यासतो विधिभेदाच्च[१] पृथग्भिन्नस्य चाकृतिम् ॥६॥**
**लिङ्गमामस्य जीर्णस्य सौषधं च क्रियाक्रमम्।**
**विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथक् ॥ ७ ॥**
**ज्वरावसृष्टो रक्ष्यश्च यावत्कालं यतो यतः।**
**प्रशान्तः कारणैर्यैश्च पुनरावर्तते ज्वरः ॥ ८ ॥**
**याश्चापि पुनरावृत्तं क्रियाः प्रशमयन्ति तम्।**
**जगद्धितार्थं तत् सर्वं भगवन्! वक्तुमर्हसि ॥ ९ ॥**
**तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।**
**ज्वराधिकारे यद्वाच्यं तत् सौम्य! निखिलं शृणु १०**

देहेन्द्रियमनस्तापीत्यादि हेतुगर्भं ज्वरप्रधानत्वे विशेषणम्। केचिद्देहमात्रतापिनोऽर्बुदादयः, केचिन्मनस्तापिन एवातत्त्वाभिनिवेशादयः, केचिदिन्द्रियतापिन एव तिमिरादयः; अयं तु त्रितयतापी। वक्ष्यति हि—"ज्वरेणाविशता भूतं न हि किंचिन्न तप्यते" इति। तत्र शरीरतापित्वं संतापादिना, मनइन्द्रियतापित्वं च "वैचित्त्यं" इत्यादिना वक्ष्यति। सर्वरोगाग्रज इति शारीरसर्वरोगाग्रजः; मानसास्तु रोगा ज्वरादेः प्रागवस्थिता एव सत्ययुगादावपि। बलित्वं चास्य भूरिविकारकर्तृत्वात्। प्रधानत्वं च देहमनस्तापित्वादिधर्मयोगात्। प्राणिसपत्नस्येति मारकत्वेन प्राणिशत्रोः। ध्रुवस्येति अवश्यम्भाविनः। प्रलयोदये मरणे जन्मनि च। अत्र च तमोरूपो ज्वरो ज्ञेयः। वक्ष्यति हि—"ज्वरप्रभावो जन्मादौ निधने च महत्तमः" इति। प्रकृत्यादयः समस्ताध्यायव्याकरणीया यथावसरं व्याख्येयाः। बलं च कालश्चात्मलक्षणं चेति बलकालात्मलक्षणमिति द्वन्द्वः। व्यासतो विधिभेदाच्चेति प्रपञ्चेन विधिभेदात्। यत इति येभ्यो व्यवायादिभ्यो रक्ष्यः। द्वितीयो यतःशब्दो येन हेतुना रक्षणीय इत्यर्थः। जगद्धितार्थमित्यनेन यच्च श्रुत्वा जगद्धितं चिकित्साप्रवर्तनं करिष्यामीत्यग्निवेशः कारुणिकतां शिष्यगुणेपूपादेयामात्मनो दर्शयति। ज्वराधिकारे इत्यादिर्निर्देशग्रन्थः ॥४–१०॥

**ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च।**
**एकोऽर्थो[२] नामपर्यायैर्विविधैरभिधीयते ॥ ११ ॥**

ज्वरो विकार इत्यादि। प्रश्नग्रन्थासूचितस्यापि पर्यायकथनं वृत्तमेव, तथाऽपि पुनः प्रकरणवशादभिधानमिति न पुनरुक्तदोष इति ब्रुवते; किंवा ज्वरस्यैवाधिकृतस्यैतत्पर्यायकथनम्। विकारादयश्च यद्यपि सामान्येन रोगाभिधायिनः, तथाऽपि प्रकरणादिह ज्वर एव विशिष्टे व्याधौ वर्तन्ते। यथा—ब्राह्मणं भोजयेदित्यत्र भोजनप्रकरणात् सामान्योऽपि ब्राह्मणशब्द आमन्त्रितब्राह्मणे वर्तते। तस्मिंश्च व्याख्याने ज्वरादिपर्यायाभिधेयरूपा विवृतिः 'ज्वरो विकारः' इत्यादिना उच्यत इति नापि पुनरुक्तिशङ्का। नामशब्दः प्रकाशने, तेन एकोऽर्थो नाम ज्वरलक्षणो रोगलक्षणो वा पर्यायैरुच्यत इत्यर्थः। पर्याया एकार्थाभिधा-

---

१ 'स्रुतिकरं' इति पा०। २ 'विज्वरमिति गुरोर्नीरोगोपदर्शिका स्तुतिः' इति पा०।

१ 'विधिभेदं च' इति पा०। २ 'एकार्थैर्नामपर्यायैः' इति पा०।

यिनो भिन्नजातीयाः शब्दाः; किंवा, नामपर्यायैरिति नामरूपैः पर्यायैः; व्यवह्रियमाणैः पर्यायैरित्यर्थः । यतः पर्यायोऽव्यवह्रियमाणोऽपि भवति, यथा—आयुषि नित्यगानुबन्धशब्दरूपौ पर्यायावुक्तौ ॥ ११ ॥

**तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः ।**
**देहिनं न हि निर्दोषं ज्वरः समुपसेवते ॥ १२ ॥**

प्रकृतिशब्देनेह स्वभावः, तथा यत्कारणमयं कार्यं भवति तदुच्यते; तत्र प्रत्यासन्नकारणरूपां प्रकृतिमाह—तस्येत्यादि । उद्दिष्टेति संक्षेपादभिहिता । दोषाणां ज्वरप्रकृतित्वे हेतुमाह—देहिनमित्यादि । सर्वदोषाव्यभिचाराज्ज्वरस्य दोषप्रकृतित्वं सिद्धमिति भावः । देहिशब्देन शरीरवान् पुरुषोऽभिप्रेतो न केवल आत्मा, तस्य निर्विकारत्वात् । 'समुपसेवते' इति भाषया भूतविशेषरूपस्य ज्वरस्यावेशं दर्शयति; विग्रहश्च ज्वरस्य स्वतन्त्रे वक्तव्य एव—'ज्वरस्त्रिपादस्त्रिशिराः' इत्यादिनोक्तः ॥ १२ ॥

**क्षयस्तमो ज्वरः पाप्मा मृत्युश्चोक्ता यमात्मकाः ।**
**पञ्चत्वप्रत्ययान्नॄणां क्लिश्यतां स्वेन कर्मणा ॥ १३ ॥**
**इत्यस्य प्रकृतिः प्रोक्ता,**

स्वभावरूपां ज्वरप्रकृतिमाह—क्षय इत्यादि । देहक्षयहेतुत्वात् क्षयः, मोहकर्तृत्वात्तमः, पापनिर्वर्त्यत्वात् पाप्मा, मृत्युकारणत्वान्मृत्युर्ज्वर एवोच्यते । अत्र च 'उक्ताः' इति तथा 'यमात्मकाः' इति बहुवचनमेकस्मिन्नर्थे ज्वरे क्षयकर्तृत्वादिधर्मभेदविवक्षया ज्ञेयम् । यमात्मका इति यमस्वरूपाः; यमो हि यथा मारकः, तथाऽमी मारका इत्यतो यमात्मका इत्यर्थः । किंवा 'यमात्मजाः' इति पाठः; अत्रापि यमपुत्रत्वेन पितृसमानक्रियाकर्तृत्वमुच्यते । किञ्च क्षयादयः स्वनामप्रसिद्धा यमस्वरूपा भिन्ना एव ज्वरात्, इह तु ज्वरस्य यमात्मकत्वाभिधानप्रसङ्गात्तेऽप्युच्यन्ते । अस्मिन् व्याख्याने मृत्युशब्देन मृत्युसूचकं रिष्टमुच्यते, यतो न मृत्युरेव मृत्युकरो भवति । यमात्मकत्वे हेतुमाह—पञ्चत्वप्रत्ययान्नॄणां क्लिश्यतां स्वेन कर्मणेति । एतेन, यथा यमः स्वकर्मभिःक्लिश्यमानानां प्राणिनां पञ्चत्वे हेतुर्भवति, तथा क्षयादयोऽपि प्राक्तनकर्मणा क्लिश्यमानान् मारयन्तीत्यर्थः । 'पञ्चत्वप्रत्यया' इति वा पाठः, तथाऽपि स एवार्थो ज्ञेयः ॥ १३ ॥—

**प्रवृत्तिस्तु परिग्रहात् ।**
**निदाने पूर्वमुद्दिष्टा रुद्रकोपाच्च दारुणात् ॥ १४ ॥**

क्रमागतां प्रवृत्तिमाह—प्रवृत्तिस्त्वित्यादि । प्रवृत्तिः प्रथमाविर्भावः । परिग्रहादिति जनपदोद्ध्वंसनीये "भ्रश्यति तु कृतयुगे" ( वि. अ. ३ ) इत्यादिना परिग्रहाज्ज्वरादिप्रवृत्तिमुक्तां स्मारयति । तथा रुद्रकोपाद्दारुणाद्या प्रवृत्तिर्ज्वरस्य, सा निदाने पूर्वमुद्दिष्टा; "ज्वरस्तु खलु महेश्वरकोपप्रभवः" (नि. अ. १) इति ग्रन्थेन निदाने संक्षेपेणोक्तेत्यर्थः । पूर्वमिति पदेन रुद्रकोपप्रभवा प्रथमा, परिग्रहप्रभवा तु द्वितीया प्रवृत्तिरिति दर्शयति ॥ १४ ॥

**द्वितीये हि युगे शर्वमक्रोधव्रतमास्थितम् ।**
**दिव्यं सहस्रं वर्षाणामसुरा अभिदुद्रुवुः ॥ १५ ॥**
**तपोविघ्नाशनाः कर्तुं तपोविघ्नं महात्मनः ।**
**पश्यन् समर्थश्चोपेक्षां चक्रे दक्षः प्रजापतिः ॥ १६ ॥**
**पुनर्माहेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।**
**यज्ञे न कल्पयामास प्रोच्यमानः सुरैरपि ॥ १७ ॥**
**ऋचः पशुपतेर्याश्च शैव्य आहतयश्च याः ।**
**यज्ञसिद्धिप्रदास्ताभिर्हीनं चैव स इष्टवान् ॥ १८ ॥**
**अथोत्तीर्णव्रतो देवो बुद्ध्वा दक्षव्यतिक्रमम् ।**
**रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥ १९ ॥**
**सृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान् प्रभुः ।**
**बालं क्रोधाग्निसन्तप्तमसृजत् सत्रनाशनम् ॥ २० ॥**
**ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।**
**दाहव्यथापरीताश्च भ्रान्ता भूतगणा दिशः ॥ २१ ॥**
**अथेश्वरं देवगणः सह सप्तर्षिभिर्विभुम् ।**
**तमृग्भिरस्तुवन् यावच्छैवे भावे शिवः स्थितः ॥२२॥**
**शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ।**
**भिया भस्मप्रहरणस्त्रिशिरा नवलोचनः ॥ २३ ॥**
**ज्वालामालाकुलो रौद्रो ह्रस्वजङ्घोदरः क्रमात् ।**
**क्रोधाग्निरुक्तवान् देवमहं किं करवाणि ते ॥ २४ ॥**
**तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ।**
**जन्मादौ निधने च त्वमपचारान्तरेषु च ॥ २५ ॥**

यतश्च परिग्रहभवत्वं विस्तरोक्तं रुद्रकोपभवत्वं च संक्षेपोक्तम्, अतो रुद्रकोपोद्भवत्वमेव विवृणोति—द्वितीये हीत्यादि । विना क्रोधं चर्यते यत् तदक्रोधव्रतम् । तपोविघ्नाशनाः तपोविघ्नोपजीविनः । ध्रुवमिति अवश्यदेयम् । सत्रनाशनमिति यज्ञनाशनम् । शैवे इति कल्याणकरे । अपचारान्तरेष्विति ज्वरनिदानसेवासु । अत्र च सत्ययुगेऽपि जन्ममरणयोर्मोहरूपज्वरस्य विद्यमानत्वाद् द्वितीययुगेऽपि जन्ममरणयोर्भवनं न ज्वरस्यानुपपन्नम् । तेन, यो जन्मादौ निधने च व्यवस्थितः स इदानीमपचारान्तरेषु भविष्यसीति योजनीयम् । किंवा, सत्ययुगे च जन्ममरणयोर्मोहरूपज्वरो निष्कल्मषाणां पुरुषाणां नासीदेवेति मन्तव्यम् । कल्याणकरस्वरूपस्यापि शिवस्य प्राणिपीडाकरज्वरविसर्गः प्राणिनामेवाधर्मप्रभावादवश्योपभोग्यां पीडां दृष्ट्वेति मन्तव्यम् ॥ १५–२५ ॥

**संतापः सारुचिस्तृष्णा साङ्गमर्दो हृदि व्यथा ।**
**ज्वरप्रभावो, जन्मादौ निधने च महत्तमः ॥ २६ ॥**
**प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः ।**

संताप इत्यादिना प्रभावमाह । प्रभावश्चानौपाधिका शक्ति-

---

१ 'मृत्युश्चोक्तोऽयमात्मजः' इति पा० । २ 'नेयः' इति पा० ।

१ 'ततो विघ्नं शमीकर्तुं' इति पा० । २ 'स्रष्टा' इति पा० ।

रुच्यते, तेन संतापादीनां प्रभावव्यपदेशः। यतश्चायं रोगप्रभावः, ततो वातश्लेष्मकृतेऽपि ज्वरेऽनुष्णरूपस्तापो भवति, तथा जन्मादौ निधने च महत्तमोरूपत्वं ज्वरप्रभाव इत्यर्थः। प्रकृतिश्चेत्यादिना प्रकरणसंग्रहं करोति, 'इत्यस्य प्रकृतिः प्रोक्ता' इत्यनेन तु प्रस्तावसंग्रहः कृतः, अध्यायान्ते त्वध्यायार्थसंग्रहं करिष्यति। एतच्च पुनः पुनः संग्रहकरणं तन्त्रधर्मत्वाच्छिष्यबुद्धिसमाधानार्थं कृतं ज्ञेयम् ॥ २६ ॥

**निदाने कारणान्यष्टौ पूर्वोक्तानि विभागशः ॥ २७ ॥**

निदान इत्यादिना कारणमाह। अष्टौ कारणानीति रूक्षादयस्त्रयो ज्वरारम्भकत्वातादिकर्तृत्वेनोक्ताः, तथा "यथोक्तानां हेतूनां मिश्रीभावात्" (नि. अ. १) इत्यादिना तु द्वन्द्वानां सन्निपातस्य च कारणमुक्तं, तथा आगन्तोः कारणं तत्र कण्ठरवेणैवोक्तम्। अन्ये तु वातादीनेव ज्वरारम्भकसंप्राप्तिप्राप्तान् "इह खल्वष्टाभ्यः कारणेभ्यो ज्वरः संजायते (नि. अ. १)" इत्यादिग्रन्थेन निदानोक्तान् कारणानीति पदेन ग्राहयन्ति; प्रकृतिशब्देन तु बीजभूता अव्यवहितसंबद्धा दोषा गृह्यन्ते, रूक्षादयस्तु दोषप्रकोपकारणभूता न ज्वरकारणानीति वदन्ति। तस्मिन् पक्षे रूक्षादीनां ज्वरहेतुभूतानामिहाग्रहणं स्यात्; रूक्षादीनां तु ज्वरे हेतुत्वं दोषप्रकोपावान्तरव्यापारत्वेन भवत्येव, यथा—यागस्य स्वर्गकर्तृत्वम्। द्विविधं च कारणं रोगाणां—व्यवहितं रूक्षादि, प्रत्यासन्नं च दोषा इति शास्त्रसिद्धान्त एव। 'निदाने' इति पदेनैव पूर्वत्वे लब्धे, पूर्वोक्तानीति पदमिह वक्तव्यज्वरनिदानव्युदासार्थम् ॥ २७ ॥

**आलस्यं नयने सास्रे जृम्भणं गौरवं क्लमः।**
**ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ ॥ २८ ॥**
**अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः।**
**शीलवैकृतमल्पं च ज्वरलक्षणमग्रजम् ॥ २९ ॥**

यद्यपि निदानेऽपि पूर्वरूपाण्युक्तानि, तथाऽपीह प्रकरणवशात्तानि प्रायः प्रादुर्भवन्ति, तानि पठ्यन्ते—आलस्यमित्यादि ॥ २८ ॥ २९

**केवलं समनस्कं च ज्वराधिष्ठानमुच्यते।**
**शरीरं, बलकालस्तु निदाने संप्रदर्शितः ॥ ३० ॥**

केवलमिति कृत्स्नं, तेन बाह्येन्द्रियाणामप्यवरोधः। अनेन देहमनसी अप्यवश्यं ज्वरेण तप्येते इत्युक्तम्। बलस्याभिवृद्धिलक्षणस्य ज्वराभ्यागमनलक्षणस्य वा कालो बलकालः, स च निदाने "दिवसान्ते घर्मान्ते जरणान्ते वा ज्वरागमनमभिवृद्धिर्वा (नि. अ. १)" इत्येवंप्रकारग्रन्थेनोक्तः ॥ ३० ॥

**ज्वरप्रत्यात्मिकं लिङ्गं संतापो देहमानसः।**
**ज्वरेणाविशता भूतं न हि किंचिन्न तप्यते ॥ ३१ ॥**

१ 'तुच्छरूपस्तापः' इति पा०। २ 'पूर्वमुक्तानि भागशः' इति पा०।

ज्वरप्रत्यात्मिकं लिङ्गमित्यादिनाऽऽत्मलक्षणमाह। आत्मलिङ्गमिति अव्यभिचारिलक्षणम्। इह संतापशब्देन सामान्येन पीडा वक्तव्या, सा च देहविशेषणाभिधानात्तापलक्षणैव भवति, मनसि तु तथा चेन्द्रियेषु देहगुणगृहीतेषु वैचित्त्यादिरूपा "वैचित्त्यं" इत्यादिग्रन्थवक्तव्या ज्ञेया। ज्वरप्रभावे संतापोऽचिन्त्यकार्यतयोक्तः, इह तु ज्वराव्यभिचारित्वेनेति विशेषः। अन्ये तु, अरुच्यादियुक्तः संतापः प्रभावो भवति, अरुच्यादिरहितस्त्वात्मलक्षणं भवति। संतापस्य प्रत्यात्मलक्षणत्वे हेतुमाह—ज्वरेणेत्यादि। भूतशब्देन सर्वप्राणिन उच्यन्ते। ततश्च ज्वरेण भूतमाविशता न किंचिन्मनुष्यादि न तप्यते, किन्तु तप्यत एव, ततो ज्वराव्यभिचारितया ज्वरात्मलक्षणमेव तदुपपन्नमिति भावः। अत्र पक्षे गजादिष्वपि कूटपाकलादिशब्दाभिधेयेषु ज्वरेष्वन्तर्दाहरूपा वेदना भवतीति ज्ञेयम्। किंवा, अत्र देहसंतापौ मिलितौ वा पर्यायेण वा ज्वरात्मलिङ्गं भवेतां; न तावत् पर्यायेण, तथा हि सति क्वचिज्ज्वरे देहसन्ताप एव क्वचिज्ज्वरे मनःसन्ताप एव भवतीति वाच्यं, ततश्चानयोर्व्यभिचारान्नाव्यभिचारिलिङ्गत्वं; तस्मान्मिलितावेव देहमनःसन्तापावात्मलक्षणं ज्वरस्येति वाच्यम्; एवं व्यवस्थिते कस्मात् सर्वज्वरेषु देहमनस्तापौ भवत इत्याह—ज्वरेणेत्यादि। ज्वरेण भूतमाविशता नहि किंचिच्छरीरं मनो वा न तप्यते, किन्तु तप्यत एव; अतो देहमनस्तापः सर्वज्वरेषूपपन्न इत्यर्थः। अस्मिंश्च पक्षे शारीरमानसज्वरभेदोपदर्शने "शारीरो जायते पूर्वं देहे" इत्यादिना शारीरस्य यद्देहमात्राश्रयत्वं मानसस्य यन्मनोमात्राश्रयत्वं वक्तव्यं तत् सूक्ष्मकालाभिप्रायेण; तस्मिंश्च सूक्ष्मकाले ज्वर उभयातापकोऽप्यनन्तरोत्पद्यमानोभयतापित्वधर्मापेक्षया भवत्येव देहमनस्तापी, यथा प्रथमक्षणोत्पन्नं द्रव्यं निर्गुणम्, अनन्तरोत्पद्यमानं सगुणं द्रव्यमुक्तं द्रव्यलक्षणे ॥ ३१ ॥

**द्विविधो विधिभेदेन ज्वरः शारीरमानसः।**
**पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव वा ॥ ३२ ॥**
**अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते।**
**प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च ॥ ३३ ॥**
**पुनः पञ्चविधो दृष्टो दोषकालबलाबलात्।**
**संततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ३४ ॥**
**पुनराश्रयभेदेन धातूनां सप्तधा मतः।**
**भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥ ३५ ॥**

द्विविध इत्यादिना विधिभेदमाह। एते च भेदा विवरणे व्यक्ता भविष्यन्ति। सौम्य इति शीतकारणारब्धत्वेन सोमदेवताकः, आग्नेयोऽप्युष्णकारणारब्धत्वेनाग्निदेवताकः। पुनः पञ्चविधो दृष्ट इत्यत्र न पञ्चविधेन भेदेन सर्वज्वरव्याप्तिः, यतः "प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः" इति वक्ष्यति। ततश्च केवलवातादिज्वराणां न संततादिभेदेन ग्रहणं;

१ 'यावदुक्तम्' इति पा०।

तथा संततादीनां कालनियमो वक्तव्यः, ततश्च ये कालानियतास्ते संततादिभिन्ना एव; तस्माद्दोषकालबलाबलाद्वे ज्वरा भवन्ति, ते पञ्चविधा एवेति वाक्यार्थः। दोषकालबलाबलादिति दोषकृतात् कालबलाबलात्; कालबलाबले ज्वरकालप्रकर्षाप्रकर्षौ। तत्र संतते ज्वरे बलवता दोषेण सप्ताहादिः प्रकृष्टत्वाद्बलवान् कालो नियम्यते, सततके तु संततकालपेक्षया हीनबलेन दोषेणाबलो ज्वरकालः, स ह्यहोरात्रे द्विकालेनात्र व्यापको भवति, तथाऽयमेव सततकज्वरकालो हीनबलकालान्येद्युष्कापेक्षया बलवान् भवति; एवमन्येद्युष्कादिज्वरकालोऽपि व्याख्येयः। किंवा, दोषकालो दुष्टिकालो ज्वरकाल इत्यर्थः, तस्य बलाबलात् प्रकर्षाप्रकर्षादित्यर्थः। कालप्रकर्षाप्रकर्षनियमाश्च व्याख्याता एव। अन्ये तु, दोषश्च कालश्च दोषकालौ, तयोर्बलाबलादिति वदन्ति। तत्र दोषबलात् कालबलाच्च सन्ततो भवति; यदुक्तं—"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि संततम्" इत्यादिना। दोषकालबलत्वमबलत्वं च विवरणग्रन्थेनोक्तं; तथा दोषस्याबलत्वं सप्रत्यनीकतया सततकादिषु भवति, तथा ज्वरवेगविगमे च सततकादौ कालस्याबलत्वं भवति। अत्र पक्षे दोषकालबलाबलाभ्यां सर्वज्वरा व्याप्यन्ते, ततश्च संततादिपञ्चज्वरनियमो दुर्घटः स्यात्। अन्ये तु व्युत्क्रमाभिधानेन 'दोषबलाबलकालात्' इति कृत्वा व्याख्यानयन्ति। एतच्चाशब्दं व्याख्यानम्। तृतीयकचतुर्थकाविति समासनिर्देशेन तृतीयचतुर्थकयोरागन्त्वनुबन्धत्वादिसाधारणधर्मयोगितां दर्शयति॥ ३२-३५॥

**शारीरो जायते पूर्वं देहे, मनसि मानसः।**
**वैचित्त्यमरतिर्ग्लानिर्मनसस्तापलक्षणम्॥ ३६॥**
**इन्द्रियाणां च वैकृत्यं ज्ञेयं संतापलक्षणम्।**

'पृथग्भिन्नस्य चाकृतिम्' इति प्रश्नस्य क्रमागतमुत्तरं—शारीर इत्यादि। पूर्वमिति वचनादुत्तरकालं शारीरो ज्वरो मनस्यपि भवति, एवं मानसो मनस्युत्पादानन्तरं देहेऽपि भवतीति ज्ञेयम्। एवं च यद्यपि सर्वज्वराणां देहमनोधिष्ठानत्वं, तथाऽपि यो देहाश्रयी प्रथमं शारीरदोषेण बलवता प्रारब्धः स्यात् स तद्दोषचिकित्सयैव चिकित्स्यः; एवं मानसोऽपि मानसदोषचिकित्सयैव चिकित्स्य इति दर्शयितुं शारीरमानसभेदोपदर्शनं साधु। ननु शारीरस्य ज्वरस्य संतापलक्षणं व्यक्तं, मानसस्य तु ज्वरस्य कथं संतापः, यत्तस्य लक्षणं भवतीत्याह—वैचित्त्यमित्यादि। वैचित्त्यादयो मानससंतापशब्देनोच्यन्ते, तापशब्दस्य पीडावचनत्वादित्यर्थः। मनस्तापप्रस्तावेन 'देहेन्द्रियमनस्तापी' इत्यत्र य इन्द्रियतापो ज्वरस्योक्तस्तं च व्याचक्षते—इन्द्रियाणां चेत्यादि। वैकृत्यमिति स्वभावान्यथात्वं, तच्चार्थाग्रहणाद्यनुमेयम्॥ ३६॥—

१ 'एवमन्येद्युष्काद्यपि व्याख्येयम्' इति पा०। २ 'देहसंतापलक्षणम्' इति पा०।

**वातपित्तात्मकः शीतमुष्णं वातकफात्मकः॥ ३७॥**
**इच्छत्युभयमेतत्तु ज्वरो व्यामिश्रलक्षणः।**

सौम्याग्नेयभेदयोः प्रतिलोमव्याख्याक्रमेण विवरणं—वातपित्तात्मक इत्यादि। वातापित्तात्मक इति वातपित्तकारणकः। अत्र च केवलवातारब्धः, तथा केवलकफारब्धश्च शीतस्वभावकारणतया सौम्यत्वेनोष्णमिच्छति, तथा वातकफात्मकोऽप्युपलभ्यते, तथा केवलपित्तात्मकोऽप्याग्नेयत्वादनुष्णाभिप्राय इति व्यक्तं, तेनेदानीं वातपित्तात्मकः शीतेन वातेन पित्तेन चोष्णेन कृतस्तस्य दुरुपपन्नायामाग्नेयतायां ब्रुवते—वातपित्तात्मकः शीतमिति। एवं व्यवस्थिते वातपित्तज्वरे चेद्वायुः संयोगमहिम्ना विपरीतानुकारी दृष्टः, तत् किं कफसंयुक्तोऽपि वायुर्विपरीतमर्थं करोतीत्याशङ्क्याह—उष्णं वातकफात्मक इति; वातकफात्मको विशेषेणोष्णमिच्छतीत्यर्थः। व्यामिश्रलक्षण इति उक्तव्यामिश्रदोषलक्षणज्वरव्यतिरिक्तः कफपैत्तिकः सान्निपातिकश्च, स चोष्णशीताभिप्रायतया सौम्याग्नेयराशिद्वयातिरिक्त एव ज्वरः; यथा—अङ्गुलीद्वयव्यतिरिक्तं त्र्यङ्गुलम्। एवं शारीरमानसमिश्रीभावेऽपि चिन्तनीयम्। ज्वर इच्छतीति वचनं ज्वरयुक्तपुरुषेच्छाया ज्वरे उपचाराज्ज्ञेयम्॥ ३७॥—

**योगवाहः परं वायुः संयोगादुभयार्थकृत्॥ ३८॥**
**दाहकृत्तेजसा युक्तः, शीतकृत् सोमसंश्रयात्।**

वातपित्तज्वरे शीताभिप्रायतामुपपादयितुं वायोर्योगवाहितामाह—योगवाह इत्यादि। योगाद्योगिनो गुणं वहतीति योगवाहः। परमिति अत्यर्थम्। संयोगादिति उष्णेन शीतेन च संयोगात्। उभयार्थकृदिति यथासंख्यमिह उष्णशीतार्थकारी। एतदेव विभजते—दाहकृदित्यादि। 'पित्तेन' इति वक्तव्ये यत् 'तेजसा' इति करोति, तेन बाह्येनाप्यातपादिना युक्तो वायुर्दाहं करोतीति लोकप्रसिद्धमर्थं दृष्टान्तार्थं सूचयति। शीतकारित्वं तु वायोः शीतत्वेनैव यत् सिद्धं तत् सोमरूपकफपानीयादियोगाद्विशेषेण भवतीति ज्ञेयम्॥ ३८॥—

**अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः॥३९॥**
**सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः।**
**अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत्॥ ४०॥**
**संतापोऽभ्यधिको बाह्यस्तृष्णादीनां च मार्दवम्।**
**बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च॥ ४१॥**

अन्तर्दाह इत्यादिना अन्तर्वेगबहिर्वेगविवरणम्॥३९-४१॥

**प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः।**
**उष्णमुष्णेन संवृद्धं पित्तं शरदि कुप्यति॥ ४२॥**
**चितः शीते कफश्चैवं वसन्ते समुदीर्यते।**
**वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा॥ ४३॥**

१ 'सौम्याग्नेयज्वरद्वयातिरिक्त एव' इति पा०।

**संचितं पित्तमुद्रिक्तं शरद्यादित्यतेजसा।**
**ज्वरं संजनयत्याशु तस्य चानुबलः कफः॥ ४४॥**
**प्रकृत्यैव विसर्गस्य तत्र नानशनाद्भयम्।**
**अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः॥ ४५॥**
**हेमन्ते, सूर्यसंतप्तः स वसन्ते प्रकुप्यति।**
**वसन्ते श्लेष्मणा तस्माज्ज्वरः समुपजायते॥ ४६॥**
**आदानमध्ये तस्यापि वातपित्तं भवेदनु।**

प्राकृत इत्यादिना प्रकरणेन प्राकृतवैकृतविवरणम्। तत्रेह कालस्वभावप्रकुपितो दोषः प्रकृतिरुच्यते, तज्जातीयाच्च दोषादुद्भूतो ज्वरः प्राकृत उच्यते। यद्वक्ष्यति—"कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः" इति। एवमपि वर्षाकालप्रकृतिभूतेन वातेन कृतो ज्वरः प्राकृतः स्यात्, तन्निषेधायाह—सुखसाध्यस्तु वसन्तशरदुद्भव इति। तुशब्दोऽवधारणे। तेन, य एव सुखसाध्यो वसन्तशरदुद्भवः प्राकृतः स एवेह प्राकृतशब्देनोच्यत इत्यर्थः; वर्षाकालभववातिकस्तु न सुखसाध्य इति, तेन नासौ प्राकृत उच्यते। प्राकृतवैकृतसंज्ञाव्यवहारो हि यथाक्रमं सुखसाध्य-कृच्छ्रसाध्यबोधप्रयोजनकः; तद्यदि कृच्छ्रेऽपि वातजे प्राकृतत्वं स्यात्तदा किं प्राकृतव्यवहारेण। यतश्च वसन्तशरदुद्भवावेव प्राकृतौ, तेन तयोरेव 'उष्णं' इत्यादिना ग्रन्थेन विवरणं प्रपञ्चेन करिष्यति न वातिकस्येति। अत्रार्थे जतूकर्णे—"सौम्याग्नेयावुष्णशीतकामौ, जीर्णत्रयोदशे। दिने, वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः" इति। यद्यपि वसन्तजः पूर्वमुक्तस्तथाऽपि प्रतिलोमव्याख्यया 'उष्णं' इत्यादिना शरदुद्भवं निर्दिशति। उष्णं पित्तं चितं वर्षासु शरद्युदीर्णेनातपेन कुप्यतीति विज्ञेयम्। शीते इति हेमन्ते। उष्णमित्यादिना निर्दिष्टस्य वर्षास्वित्यादि भाष्यम्। ननु यदि वर्षास्वम्लविपाकित्वं सर्वासामोषधीनां, तदा प्रतिद्रव्याभिहितविपाकस्याव्यवस्था स्यात्, तस्य कालवशेनाम्लत्वदर्शनात्। मैवं, यथा निष्ठापाकेन यन्मधुरं द्रव्यं, तद्यथाऽऽवस्थिकेन पाकेनाम्लं भवति, यदुक्तं—"परं तु पच्यमानस्य विदग्धस्याम्लभावतः (चि. अ. १५)" इत्यादिना, तथेहापि कालमहिम्नाऽम्लविपाकित्वमपि भविष्यति; एवं हेमन्ते यन्मधुरपाकित्वमोषधीनां तत्रापि व्याख्येयम्। अन्ये तु, वर्षासु वह्निमान्द्याद्विदाहनिमित्तमोषधीनामम्लविपाकित्वमिति ब्रुवते। यदुक्तं-"वर्षासु विदहत्यन्नं……। तदा हि सर्वमेवान्नं प्रायो यस्य विदह्यते" इति। एवमपि तैर्हेमन्ते मधुरपाकित्वं नोक्तमेव; तस्मात् कालमहिम्नैव पाकान्तरमोषधीनां साधु। आश्विति पित्तस्याशुकारित्वाच्छीघ्रं जनयति। अनुबल इति अनुबन्धरूपः कफो भवति। एवं ज्वरस्य लङ्घनीयतामाह—प्रकृत्यैवेत्यादि। विसर्गस्य प्रकृत्येति विसर्गरूपकालजया प्रकृत्या सौम्यादिरूपयाऽनशनाद्भयं न भवति। विसर्गो हि सौम्यः स्निग्धः, तत्र बलवन्तश्च पुरुषाः, तेन तत्रोत्पन्नो ज्वर आमाशयसमुत्पन्नत्वेन लङ्घनार्हो लङ्घनीय एव। किंवा, 'प्रकृत्यैव विसर्गाच्च' इति पाठः। तदा प्रकृत्येति ज्वरकारणेन कफपित्तरूपेण लङ्घनहेतुना, तथा विसर्गाच्च कालाल्लङ्घने भयं नास्ति। उक्तं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति। हेमन्ते चितः कफो वसन्ते कुप्यतीति युक्तमेव, यतो दोषचयादिक्रमे शिशिरो नास्त्येव। आदानमध्ये तस्यापि वातपित्तं भवेदन्विति तस्यापि वसन्तजकफज्वरस्य वातपित्तम् अन्विति अनुबन्धरूपं भवति। तत्र वसन्तादौ दुर्बलं वातपित्तं, मध्ये तु मध्यं, अन्ते तु प्रबलं भवति; एवं शरद्यपि कफो भवति॥ ४२-४६॥—

**आदावन्ते च मध्ये च बुद्ध्वा दोषबलाबलम्॥ ४७॥**
**शरद्वसन्तयोर्विद्वाञ्ज्वरस्य प्रतिकारयेत्।**

तदेतान् विशेषान् बुद्ध्वा चिकित्सा कर्तव्येति दर्शयन्नाह—आदावित्यादि। शरद्वसन्तयोरादौ मध्ये चान्ते च ज्वरस्य दोषबलाबलं बुद्ध्वेति योजना॥ ४७॥—

**कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः॥ ४८॥**
**प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः।**
**हेतवो विविधास्तस्य निदाने संप्रदर्शिताः॥ ४९॥**

कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वर इति प्राकृतज्वरबोधिका परिभाषा। कालप्रकृतिमिति कालस्वभावसंबद्धं दोषम्; उद्दिश्येति कारणत्वेन लक्ष्यीकृत्य। नन्वेवमपि वर्षाकालप्रकृतिना वातेन कृतो ज्वरः प्राकृतः स्यादित्याह—प्रायेणानिलजो दुःख इति; अनिलजो ज्वरः कालप्रकृतिसमानोऽपि दुःखो भवति, विरुद्धोपक्रमत्वात्। यतो ज्वरस्यामाशयोत्थत्वेन लङ्घनादि पथ्यं, तच्च वायोरपथ्यमिति विरुद्धोपक्रमत्वाद्दुःखत्वेन न प्राकृतत्वं वातिकस्य; यतः प्राकृतत्वेऽपि यः सुखसाध्यः स एव प्राकृत उच्यत इति भावः। एवं तावत् सर्वो वातजो वैकृतः, तथा वसन्तशरद्व्यतिरिक्तकालभवः कफजस्तथा पैत्तिकोऽपि वैकृत एवेति दर्शयन्नाह—कालेष्वन्येषु वैकृत इति; 'कफजः पित्तजो वा' इति शेषः। अथ वैकृतस्य ज्वरस्य को हेतुरित्याह—हेतव इत्यादि। अन्ये तु ब्रुवते—वर्षाकाले वातजोऽपि प्राकृतः, किंत्वयं कृच्छ्रः, वसन्तशरदुद्भवस्तु प्राकृतः सुखसाध्यो भवतीति विशेषः; तथा च वाग्भटेन "प्राकृतश्चानिलोद्भवः" (वा. नि. अ. २) इति कृतमिति॥ ४८॥४९॥

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः।**

बलवत्स्वित्यादिना सुखसाध्यज्वरविवरणम्। ज्वरोपद्रवा यद्यपि साक्षान्न पठिताः, तथाऽपि सामान्योपद्रवलक्षणयुक्ता

१ 'पित्तमुद्दिष्टं' इति पा०। २ 'तत्प्रकृत्या विसर्गाच्च' इति पा०। ३ 'प्रकृतिर्गृह्यते' इति पा०। ४ 'सुखसाध्यासाध्यबोधप्रयोजनकः' इति पा०। ५ 'कालवशेनान्यत्वदर्शनात्' इति पा०। ६ 'हेमन्ते' इति पा०।

१ 'स्निग्धो बलवत्पुरुषश्च' इति पा०। २ 'तत्प्रकृत्या विसर्गाच्च' इति पा०। ३ 'वातप्रकृतिसमानोऽपि' इति पा०। ४ 'वसन्तशरद्व्यतिरिक्तमकालभवः' इति पा०। ५ 'पित्तजश्च' इति पा०। ६ 'सामान्योपद्रवोक्तलक्षणयुक्ताः' इति पा०।

रोगा इह ज्ञेयाः; यदुक्तम्—"उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा, रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः" ( चि. अ. २१ ) इति; तन्त्रान्तरे च—"हिक्काश्वासकासतृष्णाच्छर्द्यतीसारमूर्च्छाङ्गभेदारोचकाः कृच्छ्रविकृता चेति दशोपद्रवा ज्वरमुपद्रवन्ति" इत्युक्ताः ॥—

**हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ॥ ५० ॥**
**ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ।**

नन्वु बलिभिर्बहुभिश्च हेतुभिर्जातो बहुलक्षण एव भविष्यति, तत् किं 'बहुलक्षणः' इति पदेन ? उच्यते—पुरुषस्याग्निबलादिविशेषेण[1] दोषहेतवो यथोक्तदोषगुणा अपि[2] न बहुलक्षणं रोगं कुर्वन्ति, तथा संप्राप्तिविशेषाभावाच्च न बहुलक्षणत्वं भवति । यदुक्तम्—"एकं द्वौ त्रीन् बहून् वाऽपि देहे धात्वादियोगतः । दर्शयन्ति विकारांस्तु कुपिताः पवनादयः" इति । शीघ्रमिति उत्पन्नमात्र एव ॥ ५० ॥—

**सप्ताहाद्वा दशाहाद्वा द्वादशाहात्तथैव च ॥ ५१ ॥**
**सप्रलापभ्रमश्वासस्तीक्ष्णो हन्याज्ज्वरो नरम् ।**

सप्ताहाद्वेत्यादि । सप्ताहाद्वातोत्तरः सप्रलापभ्रमश्वासस्तीक्ष्णो हन्ति, एवंगुण एव पैत्तिको दशाहात्, तथैवंगुण एव कफजो द्वादशाहाद्धन्ति, शीघ्रतम-शीघ्रतर-शीघ्रविकारकारित्वाद्वातपित्तकफानामिति वर्णयन्ति । वाशब्दश्च विकल्पार्थः; तेन सप्ताहादिष्वप्यर्वागपि परेण वा हननं लक्ष्यते । अन्ये तु सप्ताहात् सप्रलापः, दशाहात् सभ्रमः, द्वादशाहात् सश्वासो हन्तीति व्याख्यानयन्ति ॥ ५१ ॥—

**ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ॥ ५२ ॥**
**असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ।**

गम्भीरः अन्तर्वेगः; किंवा, गम्भीरधातुस्थः[3] । दैर्घरात्रिकः दीर्घकालानुबन्धी; किंवा दीर्घां रात्रिं मरणरूपां करोतीति दैर्घरात्रिकः ॥ ५२ ॥—

**स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ॥ ५३ ॥**
**सर्वदेहानुगाः स्तब्धा ज्वरं कुर्वन्ति सन्ततम् ।**
**दशाहं द्वादशाहं वा सप्ताहं वा सुदुःसहः ॥ ५४ ॥**
**स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ।**
**कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् ॥ ५५ ॥**
**निष्प्रत्यनीकः कुरुते तस्माज्ज्ञेयः सुदुःसहः ।**
**यथा धातूंस्तथा[4] मूत्रं पुरीषं चानिलादयः ॥ ५६ ॥**
**युगपच्चानुपद्यन्ते[5] नियमात् सन्तते ज्वरे ।**
**स शुद्ध्या वाऽप्यशुद्ध्या वा रसादीनामशेषतः ॥ ५७ ॥**
**सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ।**
**यदा तु नातिशुध्यन्ति न वा शुध्यन्ति सर्वशः ॥ ५८ ॥**
**द्वादशैते समुद्दिष्टाः सन्ततस्याश्रयास्तदा ।**
**विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणम् ॥ ५९ ॥**
**दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते ।**
**इति बुद्ध्वा ज्वरं वैद्य उपक्रामेत्तु सन्ततम्[1] ॥ ६० ॥**
**क्रियाक्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ।**

स्रोतोभिरित्यादिना संततादिभेदमाह । गुरव इति वृद्धाः । दशाहमित्यादि दशाहादीन् व्याप्य । सुदुःसहः 'भवति' इति शेषः । शीघ्रमिति दशाहादय एव प्रभूततरकालान्तरापेक्षया शीघ्रशब्दवाच्याः । दशाहादिविकल्पश्च यथाक्रमं पित्तकफानिलोत्तरसन्निपातारब्धत्वात् सन्ततज्वरस्य ज्ञेयः । यदुक्तमन्यत्रापि—"पित्तकफानिलवृद्ध्या दशदिवस-द्वादशाह-सप्ताहात् । हन्ति विमुञ्चति वाऽऽशु त्रिदोषजो धातुमलपाकात्" इति । तथा "दश-द्वादश-सप्ताहैः पित्तश्लेष्मानिलाधिकः । दग्ध्वोष्मणा[2] धातुमलान् हन्ति मुञ्चति वा ज्वरः" इति । हननमोचनविकल्पस्तु रसादीनामप्यशुद्ध्या शुद्ध्या च वक्तव्यः । कस्मादेवमयं दुःसहः शीघ्रकारी च सन्ततो भवतीत्याह—कालेत्यादि । कालः वर्षादिः, दूष्यः रसादिः, प्रकृतिः देहप्रकृतिः श्लेष्मप्रकृत्यादिका । ननु कालादितुल्यता दोषस्य कदाचिदेव संभवति, यथा—वसन्ते, श्लेष्मप्रकृतौ, मेदसि दूष्ये, कफो दोषः; एवं शरदि पित्तमपि ज्ञेयम्; इतरेषां तु त्रिदोषादीनां कालादितुल्यत्वं दुष्प्रापम्; अतस्तत्कृतसंततः कथं भवतु, संततश्च द्वादशाश्रयत्वेन त्रिदोषज एव वक्तव्यः । उच्यते—तुल्य इत्यभिधायापि यत् 'निष्प्रत्यनीकः' इति करोति, तेन कालाद्यनुगुणतामेव कालादितुल्यतां स्फोटयति[3] । कालादीनां चासमानानामपि बलवता दोषेण परिगृहीतानां प्रतीपार्थकरणासामर्थ्येनानुगुणतैव[4] भवति; यथा—बलवतो राज्ञो हृदयेन प्रतिकूला अपि क्षुद्रराजानोऽनुगुणा एव भवन्ति । किञ्च, त्रिदोषारब्ध एवास्मन्मते संततः, तस्य चान्यतरं दोषं[5] प्रति कालादीनां तुल्यत्वं संभवत्येव । अत्रैके 'तस्माज्ज्ञेयः सुदुःसहः' इत्यतोऽनन्तरं 'यथा धातून्' इत्यादि पठन्ति, इतश्च 'प्रायः प्रागपतर्पणैः' इत्यन्तं पठित्वा 'रक्तधात्वाश्रयः' इत्यादिना सततकादिलक्षणं पठन्ति । अन्ये तु—'सुदुःसहः' इति पठित्वा सततान्येद्युष्कलक्षणे पठन्ति, तदनु 'यथा धातून्' इत्यादिग्रन्थं, ततः पुनराचार्यान्तरमतेनान्येद्युष्कादिज्वरत्रयलक्षणं पठन्ति । तत्र प्रथमपाठक्रमे 'यथा धातून्' इत्यादिना सन्ततस्योत्पादादिक्रमं ब्रुवते । धातूनिति रसादिधातुसप्तकम् । रसदुष्ट्यभिधानेन विशेषेण[6] रसदुष्टिर्ज्ञेया । यथेति येन प्रकारेण गुरुत्वस्तब्धत्वादिना । युगपदिति एककालम् । नियमादिति सर्वानेव धात्वादीन् सर्व एव दोषाश्चानुपद्यन्ते । स शुद्ध्या वेत्यादि । स संततः; यदा सर्वे

१ 'पुरुषस्याग्निबलादिभेदेन' इति । २ 'वाऽपि' इति पा० । ३ 'गम्भीरधातुदूषकः' इति पा० । ४ 'धातुं' इति पा० । ५ 'अनुबध्नन्ति युगपदवश्यं' इति पा० ।

१ 'सन्ततं समुपाचरेत्' इति पा० । २ 'देहोष्मणा' इति, 'पक्त्वोष्मणा' इति च पा० । ३ 'स्फोरयति' इति पा० । ४ 'प्रतीपार्थकरणासमर्थता' इति पा० । ५ 'इमं च' इति पा० । ६ 'रसदुष्ट्यभिधानत्वविशेषेण' इति पा० ।

रसादयः सर्वथा विशुद्धा भवन्ति तदा प्रशाम्यति सप्ताहादिषु, यदा रसादयः सर्वे सर्वथा वाऽविशुद्धा भवन्ति तदा हन्तीत्यर्थः। अथ यदा स्तोका शुद्धिस्तदा का विधेत्याह—यदा त्वित्यादि। नातिशुध्यन्तीति सर्वं एव नातिविशुद्धा भवन्ति सावशेषदोषा भवन्तीत्यर्थः। न वा शुध्यन्ति सर्वेश इति रसादिषु मध्ये कतिचिच्छुध्यन्ति, कतिचिच्चाविशुद्धा वर्तन्त इत्यर्थः। द्वादशेति सप्त धातवस्त्रयो दोषा मूत्रं पुरीषं च। दोषाणां चेह शुद्धिः प्रकृतिगमनेन ज्ञेया। द्वादशाश्रयत्वेन संततस्यैकदोषारब्धत्वं यदुच्यते, तच्चिरन्तमेव ज्ञेयम्। विसर्गमिति परित्यागम्। विसर्गस्वरूपमाह—अव्यक्तलक्षणमिति; अव्यक्तं लक्षणं यस्य तमव्यक्तलक्षणं विसर्गम्; एतेन, तदाऽपि ज्वरो लीनोऽस्त्येव, परं लक्षणानि तस्य व्यक्तानि न भवन्तीति दर्शयति; तदनु त्रयोदशदिनादारभ्य दीर्घकालमनुवर्तते, तैतो दुर्लभोपशमो भवतीति युक्तमुक्तम्। एभिश्च धात्वादिद्वादशाश्रयित्व-दशाहादिव्यापकत्वादिभिर्धर्मैः संततो भिन्न एव वातादिज्वरेभ्यः कालानियमेन द्वित्र्यादिदिनेषु व्यवच्छेदेनानुसक्तेभ्यः। यस्तु तन्त्रान्तरे "तथा संतत एवान्यः स्वल्पदुर्बलकारणः। एकदोषो द्विदोषो वा स्वल्पोपद्रवलक्षणः॥ अतुल्यदृष्यप्रकृतिः" इत्यादिना ग्रन्थेनोच्यते, सोऽस्मादन्य एवेति तन्त्रान्तरेऽप्यन्यशब्दप्रयोगात् प्रतिपादितमिति न विरोधः॥ ५३–६०॥—

**रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्॥ ६१॥**
**सप्रत्यनीकः कुरुते कालवृद्धिक्षयात्मकम्।**
**अहोरात्रे सततको द्वौ कालावनुवर्तते॥ ६२॥**

सततकं विवृणोति—रक्तधात्वाश्रय इत्यादि। प्रायोग्रहणात् सततको रक्तव्यतिरिक्तं मांसादिधातुमप्याश्रयत इति दर्शयति। सप्रत्यनीक इति कालादिषु मध्येऽन्यतमः प्रत्यनीकः। कालवृद्धिक्षयात्मकमिति काले वृद्धिक्षयोचिते काले वृद्धिः क्षयश्च यस्य स कालवृद्धिक्षयात्मा। तेर्न, दोषानुगुणे काले ज्वरो भवति, दोषाननुगुणकालव्यतिरिक्ते च काले क्षयो भवति। ज्वरस्य कालप्रकृतिदूष्याणां मध्येऽन्यतमाद्बलप्राप्तौ सत्यामपि दोषसंप्राप्तिमहिम्ना हि कालभावित्वनियमो ज्ञेयः॥ ६१॥६२॥

**कालप्रकृतिदूष्याणां प्राप्यैवान्यतमाद्बलम्।**
**अन्येद्युष्कं ज्वरं दोषो रुद्ध्वा मेदोवहाः सिराः॥ ६३॥**
**सप्रत्यनीको जनयत्येककालमहर्निशि।**
**दोषोऽस्थिमज्जगः कुर्याच्चतीयकचतुर्थकौ॥ ६४॥**
**गतिर्द्व्येकान्तराऽन्येद्युर्दोषस्योक्ताऽन्यथा परैः।**
**अन्येद्युष्कं ज्वरं कुर्यादपि संश्रित्य शोणितम्॥ ६५॥**
**मांसस्रोतांस्यनुगतो जनयेत्तु तृतीयकम्।**
**संश्रितो मेदसो मार्गं दोषश्चापि चतुर्थकम्॥ ६६॥**
**अन्येद्युष्कः प्रतिदिनं दिनं हित्वा तृतीयकः।**
**दिनद्वयं यो विश्रम्य प्रत्येति स चतुर्थकः॥ ६७॥**

मेदोवहा इत्यत्र मेदोवहनाडीरोधादेव मेदोदुष्टिर्ज्ञेया। उक्तं हि—"तेषां स्रोतसां रोधात् स्थानस्थाश्चैव मार्गगाश्च शरीरधातवः प्रकोपमापद्यन्ते" (वि. स्था. अ. ५) इति। 'मांसस्रोतांस्यनुसृतः' इत्यादि तृतीयकचतुर्थकलक्षणं केचित् पठन्ति। अत्रापि स्रोतोदुष्ट्या धातुदुष्टिरवगन्तव्या। ये तु तृतीयकचतुर्थकयोर्दूष्यप्रतिपादकं ग्रन्थं न पठन्ति, तेषां तन्त्रान्तरप्रत्यया-दूष्यावरोधः। तृतीयकचतुर्थकसंज्ञयैव तृतीयदिनचतुर्थदिनभावित्वं ज्ञेयम्॥ ६३–६७॥

**अधिशेते यथा भूमिं बीजं काले च रोहति।**
**अधिशेते तथा धातुं दोषः काले च कुप्यति॥६८॥**
**स वृद्धिं बलकालं च प्राप्य दोषस्तृतीयकम्।**
**चतुर्थकं च कुरुते प्रत्यनीकबलक्षयात्॥ ६९॥**

ज्वराणां विच्छेदौभ्यागमे दृष्टान्तमाह—अधिशेते इत्यादि। अधिशेते इति अधिष्ठाय तिष्ठति। धातुमिति सततकादिदूष्यत्वेन पठितं रक्तादिधातुम्। काले इति स्वकाले। यदि स्वकाले ज्वरं करोति दोषः, तदा तृतीयकचतुर्थकयोः किमिति विश्रामदिनेऽपि दोषानुगुणे पूर्वाह्णादिकाले न करोतीत्याह—स वृद्धिं चेत्यादि। न केवलं कालमात्रमपेक्षते, किन्तु वृद्धिमप्यपेक्षते तृतीयकादिकरणे दोषः; सा च वृद्धिस्तृतीयके त्र्यहेण, चतुर्थके चतुरहेणैव भवतीति भावः। प्रत्यनीकस्य कालप्रकृत्यादेर्दोषविरुद्धस्य बलक्षयः; तेन दोषवृद्ध्या यदा प्रत्यनीकस्य क्षयो भवति तदा ज्वरयतीत्यर्थः॥ ६८॥ ६९॥

**कृत्वा वेगं गतबलाः स्वे स्वे स्थाने व्यवस्थिताः।**
**पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः॥ ७०॥**

अथ सततकादौ यथा वृद्धो दोषो ज्वरवेगं जनयति, तस्य यथोपशमो भवति, तदाह—कृत्वेत्यादि। सततकादौ दोषा वेगं कृत्वा गतबला भवन्ति, गतबलाश्च पुनः स्वे स्वे रक्तादौ स्थाने स्थिता भवन्ति, पुनस्त एव वृद्धाः स्वे काले ज्वरयन्ति॥ ७०॥

**कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।**
**वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः॥७१॥**
**चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।**
**जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः॥७२॥**

दोषोद्रेकविशेषेण तृतीयकचतुर्थकयोः प्रभावमाह—कफपित्तादित्यादि। पृष्ठमभीति पृष्ठात्, पृष्ठग्राहीत्यर्थः; किंवा, पृष्ठादिति ल्यब्लोपे पञ्चमी, तेन पृष्ठमधिष्ठायेत्यर्थः। जङ्घाभ्यां पूर्वमिति

१ 'निवर्तन्ते' इति पा०। २ 'स च' इति पा०। ३ 'विशिष्टद्वादशाश्रयित्व' इति पा०। ४ 'तेनानुगुणे काले' इति पा०। ५ 'कालः प्रधान इति नियमो ज्ञेयः' इति, 'कालप्रधानाविर्भावित्वनियमो ज्ञेयः' इति च पा०। ६ 'अन्येद्युः अन्येद्युष्के ज्वरे। यत्तदुपलक्षणं, तृतीयचतुर्थकयोरपि' इति योगीन्द्रनाथसेनः।

१ 'गतिर्द्व्येकान्तरा' इत्यादिकं 'दोषश्चापि चतुर्थकम्' इत्यन्तं पाठं गङ्गाधरो न पठति। २ 'प्रकोपात्' इति पा०। ३ 'विच्छेदोत्पादे' इति पा०।

जङ्घयोः प्रथमं पीडां करोति। अत्र च न खेप्रधानः पैत्तिकश्चतुर्थकः पित्तग्रहसीवद्धवखेवानभिधानादिति मन्तव्यं; हारीते तु पित्तजन्यत्वं यदुक्तं तदनुबन्धरूपपित्तजन्यत्वं, पृथक्प्रभावाकर्तृत्वात्; न हि प्रभावश्चतुर्थकाभ्युपगमविरोधी ॥ ७१ ॥ ७२ ॥

**विषमज्वर एवान्यश्चतुर्थकविपर्ययः।**
**त्रिविधो धातुरेकैको द्विधातुस्थः करोति यम् ॥७३॥**

संप्रति मध्ये अहनी ज्वरयत्यादावन्ते च यो मुञ्चति स चतुर्थकविपर्ययत्वेन चतुर्थकग्रहणगृहीत एवेति दर्शयन्नाह—विषमेत्यादि। त्रिविधो धातुरिति वातादिः। द्विधातुस्थ इति अस्थिमज्जगतः। अयं च विषमज्वर इवेति सामान्येनोक्तं, तथाऽपि चैतुर्थकस्य प्रकाररूपविषमज्वर एवेति मन्तव्यम्। अत्र तन्त्रान्तरम्—"अस्थिमज्जोभयगते चतुर्थकविपर्ययः। त्र्यहाद्द्व्यहं ज्वरयति ह्यादावन्ते च मुञ्चति" इति ॥ ७३ ॥

**प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः।**
**सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः ॥७४॥**

चतुर्थकविपर्ययेण संयुक्तपञ्चविधज्वराणां समानं धर्ममाह—प्रायश इत्यादि। प्रायशोग्रहणात् सततकादीनां द्वन्द्वादिजन्यत्वमपि सूचयति। ननु, यदि सन्निपातारब्धत्वमेषां तर्हि यदुच्यते चतुर्थके श्लैष्मिकत्वादि, तत् कथमित्याह—सन्निपाते तु यो भूयानित्यादि; यत 'आगन्तुरनुबन्धो हि प्रायशो विषमज्वर' इति ग्रन्थेन भूतानुबन्धो वक्तव्यः; जतूकर्णेऽपि तृतीयकचतुर्थकविपर्ययावुक्त्वाऽभिहितं—"विषमज्वरास्त्रिदोषजत्वेऽप्यधिकदोषलब्धाख्याः" इति। एते पञ्चापि ज्वराः केषाञ्चिद्विषमर्ज्वरत्वेन संमताः। तथाहि—विषमत्वं विषम(वेग)कालत्वेन भवति; यदुक्तमन्यत्र—"विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्" ( वा. नि. अ. २ ) इति। संतते तु द्वादशाहविसर्गेण त्रयोदशाहे पुनरनुबन्धात् कालवैषम्यमस्ति, तेन सोऽपि विषम इति। अन्ये तु, संततं परित्यज्य सततकादींश्चतुरो विषमज्वरानिच्छन्ति; यतः संतते कालवैषम्यं तादृशं नास्ति; उक्तं च खरनादेन—"ज्वराः पञ्च मयोक्ता ये पूर्वं संततकादयः। चत्वारः संततं हित्वा ज्ञेयास्ते विषमज्वराः" इति। अन्ये तु—तृतीयकचतुर्थकावेव विषमौ, विषमाणां चिरेणोत्पादात्; यदाह दारुवाहः—"सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च। दोषो रक्तादिमार्गेषु शनैरल्पं चिरेण यत् ॥ याति देहं न वा(ऽ)शेषं भूयिष्ठं प्रतिपद्यते। क्रमोऽयं तेन विच्छिन्नसन्तापो लक्ष्यते ज्वरे" इत्याहुः ॥ ७४ ॥

१ 'पित्तप्रधानः' इति पा०। २ 'चतुर्थकः प्रभावाभ्युपगमविरोधि' इति पा०। ३ 'त्र्यहं' इति पा०। ४ 'चतुर्थकविधारूपविषमज्वर एव' इति पा०। ५ 'तदनर्थकमित्याह' इति पा०। ६ 'विषमत्वेन' इति पा०। ७ 'देहं च नाशेषं भूयिष्ठं दोषजेऽपि च' इति पा०। ८ 'क्रमाद्यत्तेन' इति पा०।

**ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्।**
**कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥ ७५ ॥**
**गुरुत्वं दैन्यमुद्वेगः सदनं छर्द्यरोचकौ।**
**रसस्थिते बहिस्तापः साङ्गमर्दो विजृम्भणम् ॥७६॥**
**रक्तोष्णाः पिडकास्तृष्णा सरक्तं ष्ठीवनं मुहुः।**
**दाहरागभ्रममदप्रलापा रक्तसंस्थिते ॥ ७७ ॥**
**अन्तर्दाहः सतृण्मोहः सग्लानिः सृष्टविट्कता।**
**दौर्गन्ध्यं गात्रविक्षेपो ज्वरे मांसस्थिते भवेत् ॥७८॥**
**स्वेदस्तीव्रा पिपासा च प्रलापो वम्यभीक्ष्णशः।**
**स्वगन्धस्यासहत्वं च मेदःस्थे ग्लान्यरोचकौ ॥७९॥**
**विरेकवमने चोभे सास्थिभेदं प्रकूजनम्।**
**विक्षेपणं च गात्राणां श्वासश्चास्थिगते ज्वरे ॥८०॥**

१ "एषां च ज्वराणामृत्वादिहेत्वन्तरलाभादन्यथाभावोऽपि दृश्यते; तथथा—सन्ततः स्वरूपं त्यक्त्वा सततकादीनामन्यतमत्वं प्रतिपद्यते, तथा चतुर्थकस्तृतीयकादिरूपत्वम्। यदाह चरकः—"ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्। कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते" इति। अस्यार्थः—बलाबलादिति ऋत्वादिमनोन्तेन संबध्यते; बलं चाबलं च बलाबलम्, अर्थशब्दोऽत्र प्राक्तनकर्मवाची, तं तं कालं सततकाद्युक्तं, ज्वरः प्रपद्यते इति योजना। उदाहरणं च—ऋत्वहोरात्रबलाबलाद्यथा—यदा निदाघोत्पन्नो वातप्रधानश्चतुर्थको वर्षासमयमाप्नोति तदा तेनर्तुनाऽऽप्यायितबलस्तृतीयकादीनामन्यतमत्वं प्राप्नोत्युत्कर्षात्; एवं वर्षासमुत्पन्नः सन्ततः शरदं प्राप्यापकृष्टबलः सततकादीनामन्यत्वमेत्यपकर्षात्; एवं पित्तकफयोरप्युत्कर्षापकर्षौ ऋतुकृतौ व्याख्येयौ। अहोरात्रशब्देन कतिपयान्यहोरात्राणि गृह्यन्ते, न ह्येकस्मिन्नहोरात्रे सन्ततादीनामुत्कर्षापकर्षाभ्यामन्यथाभाव उपपद्यते, किन्तु कतिपयैरेव। यदा वर्षाशरद्वसन्तप्रारम्भे वातादयो ज्वरं चतुर्थकमारभन्ते, तदा मध्यानि कतिपयदिनान्यवाप्य स एव तृतीयपूर्वकत्वेन विपरिणमत उत्कर्षात्, अपकर्षात्तु यदाऽन्त्यानि दिनान्याप्नोति, तदा सन्ततो वातारब्धः प्रावृषः पित्तारब्धः शरदो वसन्तस्य च श्लेष्मारब्धः प्रतनुकत्वाद्दोषस्य सततकादीनामन्यतमत्वेन विपरिणमत इति। दोषबलाबलाद्यथा—यदा सततकादीनामन्यतमकारी दोषः श्लेष्मा मधुरस्निग्धादीन् दिवास्वप्नादींश्च हेतूनाप्नोति तदा संततं करोति; एवं वातपित्तयोरप्युदाहार्यम्। मनोबलाबलाद्यथा—यदा सन्ततज्वरी सत्त्वगुणोद्रेकात् प्रहर्षावष्टम्भबहुलो भवति, तदा सततकादीनामन्यतमत्वं प्राप्नोति; यदा चतुर्थकज्वरी तमोगुणभूयिष्ठत्वाद्विषादादिभिरभिभूयते तदा तृतीयकादीनामन्यतमो भवति, "विषादो रोगवर्धनानाम्" (च. सू.अ. २५) इत्यागमात्। अन्ये तु, मनःशब्देन बुद्धिं व्याख्यानयन्ति, कारणे कार्योपचारात्; तस्याश्च बलाबलं यथा—यदा चतुर्थकज्वरी प्रज्ञापराधाद्देवतादीनभिभूयाहितान्याचरति तदा तृतीयकपूर्वेषामन्यतमत्वमाप्नोति, यदा तु शुद्धसत्त्वोत्कर्षाद्विवेकिन्या बुद्ध्या युक्तः स्यात्तदा शुभानि देवताराधनेष्टिबल्युपहारादीन्याचरति, तदा सन्ततज्वरी सततकादीनामन्यतमत्वं प्राप्नोति। अर्थवशाद्यथा—सन्ततज्वरिणोऽपि यदि चतुर्थकवेदनीयं कर्म स्यात्तदा सन्ततोऽपि चतुर्थकत्वेन विपरिणमते, अथ चतुर्थकादिज्वराविष्टस्य यदि तत्कालपरिपाकि कर्म बलीयो भवति, तदा सन्ततत्वेन परिणमते; एतच्च कर्मवशात्वमृत्वहोरात्रदोषबलाबलेष्वपि बोद्धव्यं, तदनन्तरं तन्निर्देशात्" इति माधवनिदानटीकायां विजयरक्षितः।

हिका श्वासस्तथा कासस्तमसश्चातिदर्शनम् ।
मर्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥ ८१ ॥
शुक्रस्थानगतः शुक्रमोक्षं कृत्वा विनाश्य च ।
प्राणं वाय्वग्निसोमैश्च सार्धं गच्छत्यसौ विभुः ॥८२॥
रसरक्ताश्रितः साध्यो मेदोमांसगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थो नैव सिद्ध्यति ॥८३॥

संप्रति संततज्वर एव यथा सततकादिरूपो भवति, तथा सततकादयः सन्ततादिरूपा भवन्ति, तदाह—ऋत्वहोरात्रेत्यादि । बलाबलादिति मनोऽन्तेन संबध्यते, बलं चाबलं च बलाबलम् । अथर्ववशादिति कर्मवशात् । ऋत्वादीनां बलात्तथा ऋत्वाद्यबलाज्ज्वरस्तं तं सततादिज्वरोक्तं कालं प्रपद्यते । तत्र ऋतुबलाद्वातोत्तरः सततको वर्षाकालजः प्रत्यनीकां शरदं प्राप्य अन्येद्युष्कादिरूपो भवति । अहोरात्रबलाबलावलात् कालविशेषप्राप्तिर्यथा—वसन्तस्य मध्येष्वहोरात्रेषु वातिकश्चातुर्थिको जातो यः स वसन्तस्य पश्चिमान्यहोरात्राणि रूक्षाणि प्राप्य बलवान् तृतीयकादिरूपो भवति, तथोक्तदिनेष्वेव श्लैष्मिकः सततको जातः शेषदिनेषु श्लेष्मप्रत्यनीकेषु अन्येद्युष्कादिरूपो भवति । दोषबलाबलाद्दुष्टहेतुसेवाभूताज्ज्वरपरावृत्तिर्युक्तैव । मनोबलात् सततज्वरी मनोनिवृत्त्यादिना अन्येद्युष्कादिज्वरवान् भवति; मनोदौर्बल्याद्भयादिना चतुर्थकादिज्वरी तृतीयकादिज्वरवान् भवति । कर्मवशाज्ज्वरपरावृत्तौ शुभकर्मणा दुःखज्वरपरावृत्त्या यो यः सुखः स भवति; पापकर्मणा तु दुःखज्वरो भवतीति ज्ञेयम् ॥ ७५–८३ ॥

हेतुभिर्लक्षणैश्चोक्तः पूर्वमष्टविधो ज्वरः ।
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ॥ ८४ ॥
शिरोरुक् पर्वणां भेदो दाहो रोम्णां प्रहर्षणम्[१] ।
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमोऽरुचिः ८५
स्वप्ननाशोऽतिवाग्जृम्भा वातपित्तज्वराकृतिः ।
शीतको गौरवं तन्द्रा स्तैमित्यं पर्वणां च रुक् ॥८६॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम्[२] ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ८७ ॥
मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भो मुहुर्मुहुः ।
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्तनम् ॥८८॥
लिप्ततिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः ।
इत्येते द्वन्द्वजाः प्रोक्ताः

संप्रत्यष्टविधज्वराकृतौ वक्तव्यानाह—हेतुभिरित्यादि । हेतवोऽपि ज्वरविशेषगमकत्वेनाकृतिरूपा भवन्त्येवेति कृत्वा हेतुकथनमपि यत् कृतं तदप्युचितम् । पूर्वमिति निदाने । समासेनोपदिष्टस्येति ये निदाने द्वान्द्विकसान्निपातिकागन्तवः समासेनोक्ताः, तेषामिह विस्तरेण लक्षणं श्रृण्विति; ये पुनरेकदोषजन्या वातज्वरादयस्ते तत्रैव प्रपञ्चेनोक्ता इति नेह पुनर्वक्तव्याः ।

भ्रमः येन चक्रस्थितमिवात्मानं मन्यते, किंवा भ्रमः भ्रान्तिः । शीतकः शीतता । स्तैमित्यमिति वस्त्रावगुण्ठितत्वमिव । संतापो मध्यवेग इति नातितीव्रः संतापः । स्वेदस्तम्भ इति स्वेदाप्रवर्तनम् ॥ ८४–८८ ॥—

सन्निपातज उच्यते ॥ ८९ ॥

सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य हि ।
प्राक्सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ॥९०॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।
वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥ ९१ ॥
शैत्यं कासोऽरुचिस्तन्द्रापिपासादाहरुग्व्यथाः ।
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः ॥९२॥
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥ ९३ ॥
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ।
वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ९४
रक्तविण्मूत्रता दाहः स्वेदस्तृड् बलसंक्षयः ।
मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥९५॥
आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः ।
कफोल्बणं सन्निपातं तन्द्राकासेन चादिशेत् ॥९६॥
प्रतिश्या छर्दिरालस्यं तन्द्राऽरुच्यग्निमार्दवम् ।
हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम् ॥९७॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ ९८ ॥
शिरोरुग्वेपथुः श्वासः प्रलापश्छर्द्यरोचकौ ।
हीनपित्ते मध्यकफे लिङ्गं स्यान्मारुताधिके ॥ ९९ ॥
शीतको गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ।
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥१००॥
श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम् ॥१०१॥
वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः ।
कफहीने वातमध्ये लिङ्गं पित्ताधिके विदुः ॥१०२॥
सन्निपातज्वरस्योर्ध्वमतो वक्ष्यामि लक्षणम् ।
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ॥१०३॥
सास्रावे कलुषे रक्ते निर्भुग्ने चापि दर्शने[१] ।
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ॥ १०४ ॥
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ।
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥१०५॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ।
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ॥१०६॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ।
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥ १०७ ॥

---

१ 'रोमहर्षश्च दाहश्च पर्वभेदः शिरोरुजा' इति पा० । २ 'स्वेदः स्तम्भः' इति पा० ।

१ 'पर्वभेदः' इति पा० । २ 'लोचने' इति पा० ।

कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ।
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥ १०८ ॥
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ।

सन्निपातज्वरस्योर्ध्वमिति अत्रोर्ध्वशब्देनाधिकवाचिना प्रकृतिसमसमवायारब्धसन्निपातज्वरायान्यधिकानि विकृतिविषमसमवायारब्धज्वरस्य लक्षणानि, तानि वक्ष्यामीत्यर्थं इति केचिद्व्याख्यानयन्ति; यदिह सास्रावकलुषनिर्भुग्नलोचनत्वादि वक्तव्यं न तत् पृथग्वातादिज्वरोक्तलक्षणमेलके भवति, किन्तु विकृतिविषमसमवायारब्धे ज्वरे संयोगमहिम्ना भवतीति । वयं तु ब्रूमः —यद्यूर्ध्वशब्देन विकृतिविषमसमवायारब्धज्वरलक्षणाभिधानमिह प्रतिज्ञायते, तदा यत् प्रत्येकदोषलक्षणमेलकेनोपपन्नं लक्षणं 'क्षणे दाहः क्षणे शीतं' इत्यादि, तदिहानभिहितं स्यात्; सामान्येन यान्यत्र प्रायः प्रादुर्भवन्ति तानि विकृतिविषमसमवायारब्धानि तथा प्रकृतिसमसमवायारब्धानि च लक्षणान्युच्यन्ते; अत ऊर्ध्वमिति पदस्य चातः परेणेत्यर्थः । निर्भुग्ने इति अतिकुटिले । परिदग्धा दग्धवत् कृष्णवर्णा । खरस्पर्शा गोजिह्वावत् । स्रस्ताङ्गता निःसहावयवता । ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन खल्पोद्गिरणम् । शिरसो लोठनमिति इतस्ततो नयनम् । कृशत्वं नातिगात्राणां दोषपूर्णत्वेन । प्रततं निरन्तरम् । कोठो भालुकीये—"वरटीदष्टसङ्काशः कण्डूमांल्लोहितोऽसकफपित्तात् । क्षणिकोत्पादविनाशः 'कोठ' इति निगद्यते तज्ज्ञैः" इति । मूकत्वं मन्दवचनत्वम्, अवचनता वा ॥८९-१०८॥—

दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥ १०९ ॥
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ।

सन्निपातस्यासाध्यताकृच्छ्रसाध्यतालक्षणमाह—दोष इत्यादि । अत्र दोषशब्दो विवृद्धोपपदान्मले वर्तते । नष्टेऽग्नाविति इतरज्वरापेक्षयाऽधिकतया नष्टेऽग्नावित्यर्थः । सर्वाणि च संपूर्णानि बलीयांसि लक्षणानि यस्य स सर्वसंपूर्णलक्षणः । असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति दर्शितम् । यदुक्तं—"सन्निपातो दुःश्चिकित्स्यानां" ( सू. अ. २५ ) इति, तथा च भालुकिना—"मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता" इति ॥ १०९ ॥—

निदाने त्रिविधा प्रोक्ता या पृथग्जज्वराकृतिः ॥११०॥
संसर्गसन्निपातानां तया चोक्तं स्वलक्षणम् ।

निदान इत्यादि । निदाने ज्वरनिदाने, प्रोक्ता "तत्र यथोक्तानां लिङ्गानां" ( नि. अ. १ ) इत्यादिना ग्रन्थेन प्रागुक्तेत्यर्थः; पुनः प्रकरणागतत्वादुच्यत इति न पौनरुक्त्यम् । तया चोक्तं स्वलक्षणमिति तया द्वन्द्वरूपया द्वन्द्वलक्षणं, तथा सन्निपातरूपया सन्निपातलक्षणमुक्तमित्यर्थः ॥ ११० ॥—

आगन्तुरष्टमो यस्तु स निर्दिष्टश्चतुर्विधः ॥ १११ ॥
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ।
शस्त्रलोष्टकशाकाष्ठमुष्ट्यरत्नितलद्विजैः ॥ ११२ ॥
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः ।
तत्राभिघातजे वायुः प्रायो रक्तं प्रदूषयन् ॥ ११३ ॥
सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरम् ।

आगन्तुं चतुर्विधं विभजन्नाह—आगन्तुरित्यादि । कशा 'सार' इति ख्याता, मुष्टिः 'कील' इति ख्यातः । हते अभिहते । प्रायो रक्तमिति अस्यर्थं रक्तं दूषयन् मांसादि चाल्पं दूषयतीत्यर्थः । यद्यपि निदानेऽपि "तत्राभिघातजेन वायुना दुष्टशोणिताधिष्ठानेन" ( नि. अ. १ ) इत्युक्तं, तथाऽपीह रक्तस्य साक्षाद्दुष्टिः, तथा मांसादीनां मनाग्दुष्टिः सूच्यत इति विशेषः ॥ १११-११३ ॥—

कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः ॥ ११४ ॥
सोऽभिषङ्गाज्ज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ।
कामशोकभयाद्वायुः, क्रोधात् पित्तं, त्रयो मलाः ११५
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ।
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम् ॥ ११६ ॥
विषवृक्षानिलस्पर्शात्तथाऽन्यैर्विषसंभवैः ।
अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम् ॥ ११७ ॥
चिकित्सया विषघ्नैव स शमं लभते नरः ।
अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्तते ॥११८॥
सन्निपातज्वरो घोरः स विज्ञेयः सुदुःसहः ।
सन्निपातज्वरस्योक्तं लिङ्गं यत्तस्य तत् स्मृतम् ११९
चित्तेन्द्रियशरीराणामर्तयोऽन्याश्च नैकशः ।
प्रयोगं त्वभिचारस्य दृष्ट्वा शापस्य चैव हि ॥ १२० ॥
स्वयं श्रुत्वाऽनुमानेन लक्ष्यते प्रशमेन वा ।
वैविध्यादभिचारस्य शापस्य च तदात्मके ॥ १२१ ॥
यथाकर्मप्रयोगेण लक्षणं स्यात् पृथग्विधम् ।
ध्याननिःश्वासबहुलं लिङ्गं कामज्वरे स्मृतम् ॥ १२२
शोकजे बाष्पबहुलं त्रासप्रायं भयज्वरे ।
क्रोधजे बहुसंरम्भं भूतावेशे त्वमानुषम् ॥ १२३ ॥
मूर्च्छामोहमदग्लानिभूयिष्ठं विषसंभवे ।
केषाञ्चिदेषां लिङ्गानां संतापो जायते पुरः ॥ १२४॥
पश्चात्तुल्यं तु केषाञ्चिदेषु कामज्वरादिषु ।
कामादिजानामुद्दिष्टं ज्वराणां यद्विशेषणम् ॥ १२५॥
कामादिजानां रोगाणामन्येषामपि तत् स्मृतम् ।
मनस्यभिहते पूर्वं कामाद्यैर्न तथा बलम् ॥ १२६ ॥
ज्वरः प्राप्नोति वाताद्यैर्देहो यावन्न दूष्यति ।
देहे चाभिह(द्रु)ते पूर्वं वाताद्यैर्न तथा बलम् ॥ १२७
ज्वरः प्राप्नोति कामाद्यैर्मनो यावन्न दूष्यति ।

अभिषङ्गज्वरेषु दोषानुबन्धविशेषानाह—कामेत्यादि । ननु

१ °मेलकेनोपदिष्टं' इति० । २ 'तथा' इति पा० । ३ 'सन्निपतिततया' इति पा० ।

१ कशा अश्वादेश्चालनार्थं ताडनसाधने पदार्थे 'चाबुक' इति ख्याते । २ 'लक्ष्येत' इति पा० ।

निदाने—"अभिषङ्गजः पुनर्वातपित्ताभ्यामनुबध्यते" ( नि. अ. १ ) इत्युक्तं, तत् किमिह भूताभिषङ्गजस्य त्रिदोषानुबन्ध उच्यते—न, तत्र कामाद्यभिषङ्गजो यः प्रायो भवति, तदभिप्रायेणोक्तं "वातपित्ताभ्यामनुबध्यते" ( नि. अ. १ ) इति; कामादिकेषु हि क्वचिद्वातः क्वचित् पित्तमिति वातपित्तानुबन्धो ज्ञेयः। भूतसामान्यलक्षणा इति देवादयोऽष्टौ उन्मादे भूता उक्ताः, तेषां मध्ये आवेशकर्तृभूतस्य यल्लक्षणं तेन समान्यत्र दोषलक्षणानि भूतज्वरे भवन्ति। अत्र काश्मीराः "विषवृक्षानिलस्पर्शात्" इत्यादिग्रन्थं विषज्वराभिधायकं पठन्ति, विषजोऽप्यभिषङ्गज एव प्रविशति। ये तु न पठन्ति, तन्मतेऽप्यभिषङ्गजे एव विषौषधिगन्धजस्याप्यवरोधः। अन्ये तु विषजं विषजनितपित्तकृतत्वेन दोषज एव क्षिपन्ति । अभिचारः हिंसार्थोऽथर्वमन्त्रहोमादिः । अभिशापः अभिशपनमेव । सिद्धा मन्त्रौषधतपःशमादिसिद्धाः । 'सन्निपातज्वरस्योक्तं' इत्यादिग्रन्थमत्र काश्मीराः पठन्ति, स च नातिप्रसिद्धः ॥११४-१२७॥

**तं पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ॥ १२८॥**
**हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः।**

आगन्तोर्निजाद्भेदकं धर्ममाह—तं पूर्वमित्यादि। केवला इति निजदोषरहिताः। निजैरिति निजदोषलक्षणैः। हेत्वौषधविशिष्टा इति निजज्वराद्विशिष्टहेतवो विशिष्टौषधाश्च भवन्ति; तत्र विशिष्टो हेतुरभिघातादिः, भेषजं च परिषेकमन्त्रादि ॥१२८॥—

**संसृष्टाः सन्निपतिताः पृथग्वा कुपिता मलाः १२९**
**रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च।**
**स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम् १३०**
**स्रोतांसि रुद्ध्वा संप्राप्ताः केवलं देहमुल्बणाः।**
**संतापमधिकं देहे जनयन्ति नरस्तदा ॥ १३१ ॥**
**भवत्यत्युष्णसर्वाङ्गो ज्वरितस्तेन चोच्यते।**

संसृष्टा इत्यादिना सर्वज्वरसाधारणां संप्राप्तिमन्ते ब्रूते। संप्राप्तिरपि हि सर्वज्वराणामाकृतिरेव, तेन नोत्सूत्रमस्याभिधानम्। किंवा, क्रमप्राप्ते सामज्वरलक्षणे वक्तव्येऽरुच्यादीनां सामज्वरलक्षणानामुत्पादे उपपत्तिं दर्शयितुं संप्राप्तिरुच्यते। संसृष्टा इति युग्मभूताः। सन्निपतिता इति त्रयोऽपि मिलिताः। पक्तिमिति पक्तिहेतुतया जाठराग्निं ब्रूते । स्थानादिति ग्रहण्याः, ग्रहणी हि जाठराग्निस्थानम् । स्वेनेति दोषोष्मणा; तेनेति जाठराग्न्यूष्मणा । देहोष्मण इति सकलदेहचारिणः प्राकृतोष्मणः । वातश्लेष्मणोस्तु यद्यपि पित्तवदुष्मा नास्ति, तथाऽपि तयोर्भूतत्वेन ऊष्मा योऽस्ति, स इह ग्राह्यः; वक्तव्यं हि ग्रहण्यध्याये—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" ( चि. अ. १५ ) इति। किंवा, तेनेत्यनेन दिव्यरूपज्वराधिष्ठानप्रभावकृतं दोषाणामूष्माणं ग्राहयति; किंवा, ज्वरसामान्यसंप्राप्तिप्राप्तपित्तोष्माणं निदर्शयति, सर्वत्र हि ज्वरे पित्तमवश्यं भवति; यदुक्तं—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" ( वा. चि. अ. १ ) इति । केवलमिति समस्तम् ॥ १२९-१३१ ॥—

**स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति १३२**
**स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे।**

स्वेदं ना नाधिगच्छतीत्यत्र प्राय इति योज्यं, क्वचिज्ज्वरे स्वेदस्याप्यभिहितत्वात्। ना इति पुरुषः ॥ १३२ ॥—

**अरुचिश्चाविपाकश्च गुरुत्वमुदरस्य च ॥ १३३ ॥**
**हृदयस्याविशुद्धिश्च तन्द्रा चालस्यमेव च।**
**ज्वरोऽविसर्गी बलवान् दोषाणामप्रवर्तनम् ॥ १३४ ॥**
**लालाप्रसेको हृल्लासः क्षुन्नाशो विरसं मुखम्।**
**स्तब्धसुप्तगुरुत्वं च गात्राणां बहुमूत्रता ॥ १३५ ॥**
**न विड् जीर्णा न च ग्लानिर्ज्वरस्यामस्य लक्षणम्।**
**ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥१३६॥**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्।**

अविसर्गीति नित्यानुषक्तः । दोषाणामिति मलसंबद्धानां दोषाणाम्। अप्रवर्तनम् अविसर्गः। क्षुन्नाश इति बुभुक्षाभावः। न विड् जीर्णेति न पुरीषं पक्वम्। न च ग्लानिरिति न क्षीणमांसता ॥ १३३—१३६ ॥—

**क्षुत् क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ॥१३७॥**
**दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम्।**

क्षुत् क्षामतेत्यादिना निरामज्वरलक्षणमाह। अत्र च क्षुदादयो दोषपाकाद्भवन्तो विनाऽप्यष्टाहं निरामदोषारब्धज्वरलक्षणं भवन्ति। अष्टाहस्तु क्षुदादीन् विना दोषपाकेऽसत्यपि भेषजदानयोग्यां ज्वरस्य व्याधेर्निरामतां ब्रूते, अत एव "पाचनं शमनीयं वा कषायं पाययेत्तु तम्" इति विकल्पद्वयेन यदाऽष्टाहे क्षुदादिदोषपाकलक्षणानुदयस्तदा दोषपाकार्थं पाचनीयं देयम्, अथ क्षुधादिसमुदयोऽपि जातस्तदा शमनीयं देयं सर्वथा निरामत्वाज्ज्वरस्य। एतामेव सर्वथानिरामतामुपदिशता खरनादेनोक्तं यत्—"न च निःसप्ततैवैका निरामज्वरलक्षणम्। चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः॥ सप्तरात्रातिवृत्तिं च क्षामतादि च लक्षणम्। तस्मादेतद्द्वयं दृष्ट्वा निरामं ज्वरमादिशेत्" इति। अष्टाहादर्वाग्दोषपाकजनितक्षुदादिदर्शनान्निरामता सुश्रुतेनाष्टाहादर्वाग्भेषजदानं

१ 'पक्तिस्थानात्' इति पा०। २ 'नासूत्रमस्याभिधानम्' इति पा०।

१ 'निर्दिशति' इति, 'निर्देशयति' इति च पा०। २ 'ऽविशदं' इति पा०। ३ 'दोषपाके सत्यपि' इति पा०।

दर्शयता प्रतिपादिता। यदुक्तम्—"अर्वागपि च देयं स्याद्भेषजं दोषपाकतः" ( सु. उ. अ. ३९ ) इति। तस्मात् क्षुदादयोऽष्टाहश्च व्यस्तं समस्तं च लक्षणं यथोक्तन्यायाज्ज्ञेयम् ॥ १३७ ॥—

**नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम् ॥ १३८ ॥**
**क्रोधप्रवातव्यायामान् कषायांश्च विवर्जयेत्।**

सौषधं च क्रियाक्रममिस्यनेन यद्यप्यौषधमादावुक्तं, तथाऽपि तस्य क्रियाक्रमविशेषणतया अप्राधान्यमिति कृत्वा औपधमतिक्रम्य 'नवज्वरे' इत्यादिना क्रियाक्रमं ब्रूते। क्रियायाश्चिकित्सायाः क्रमः परिपाटी। तत्राप्यहितस्यैव प्रथमं निषेधः। अन्नशब्देन गुर्वन्नमभिधत्ते। हारीतेन हि—"नवज्वरे व्यवायादि प्रत्येकं दोषकोपनम्। गुर्वन्नभोजनाच्चापि विष्टम्भो दोषकोपनम्" इत्युक्तम्। कषायांश्चेति जातौ बहुवचनं; तेन कषायं वर्जयेदित्यर्थः। उक्तं ह्यत्र जतूकर्णेन—"कषायरसगुरूष्णस्निग्धान्नस्नानाभ्यङ्गान् नवज्वरे वर्जयेत्" इति ॥१३८॥—

**ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ॥ १३९ ॥**
**क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्।**

ज्वरे इत्यादि। लङ्घनशब्देनेहानशनं विवक्षितं, यद्यपि "चतुष्प्रकारा संशुद्धिः" ( सू. अ. २२ ) इत्यादिना लङ्घनबृंहणीये दशविधमेव लङ्घनमुक्तं, तथाऽपि तेषामिहावस्थाविशेषेण विनियोगाल्लङ्घनमेवेति नियमोऽपवादविषयं त्यक्त्वा समुच्चीयमानावधारणे ज्ञेयः, यथा—"नरं च नारायणमेव चोभौ स्वतः सुतौ संजनयांबभूव" इत्यत्र। तेनावस्थायां वमनमपि भवति वक्ष्यमाणम्। यत्तु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वोक्तं—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" ( सू. अ. २२ ) इति, तत्र भेषजप्रयोगस्यादौ पाचनं कर्तव्यमिति ब्रूते, न ज्वरादौ; तेनेहादौ लङ्घनाभिधानं न विरुध्यते। हारीते तु "पित्तश्लेष्मविशुद्ध्यर्थं कुर्याद्वमनमादितः" इति यदुक्तं, तत् 'कफप्रधानान्' इत्यादिवक्ष्यमाणावस्थायां ज्ञेयम्। क्षयशब्देन धातुक्षयकृतं ज्वरं किंवा राजयक्ष्मज्वरं गृह्णाति, अनिलशब्देन निरामानिलग्रहणं; किंवा क्षयानिलशब्देन धातुक्षयकुपितानिलग्रहणम्। यदुक्तं—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" ( चि. अ. २८ ) इति। यस्तु मार्गावरणेन वायुः कुप्यति, स आवरकधर्मितया प्रायेण सामो भवति, तत्र च लङ्घनं मात्रया कर्तव्यमेव। यदुक्तं—"सामे वातेऽपि लङ्घनम्। कुर्यादेवामपक्त्यर्थं युक्त्या, न तु यथा कफे" इति। अनिलज्वरमुक्त्वाऽपि कामादिज्वराभिधानं तेषु कालान्तरेण वातसंबन्धो भवति, तेन प्रथममपि वातासंबन्धे कामादिज्वराणामलङ्घनीयत्वोपदर्शनार्थम् ॥ १३९ ॥—

**लङ्घनेन क्षयं नीते दोषे संधुक्षितेऽनले ॥ १४० ॥**
**विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते।**
**प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ॥ १४१ ॥**
**बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः।**

लङ्घनफलमाह—लङ्घनेनेत्यादि। प्राणाविरोधिनेति बलाविरोधिना, विरोधश्चातिक्षयकरत्वेनेहोच्यते। आरोग्यं बलवत एव भवतीति बलाधिष्ठानमारोग्यमुक्तम्। यदित्यनेनारोग्यं प्रत्यवमृशति ॥ १४० ॥ १४१ ॥—

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ॥ १४२ ॥**
**पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे।**

प्रकृतस्य लङ्घनस्य पाचनतां दर्शयन्नपराण्यपि स्वेदादीनि पाचनान्याह—लङ्घनमित्यादि। काल इति अष्टाहः। तिक्तको रसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः, स्वतन्त्रभेषजप्रयोगस्तरुणे निषिद्ध एव। उक्तं हि—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" इति। 'अविपक्वानां दोषाणाम्' इति कृत्वाऽपि 'तरुणे ज्वरे' इति यत् करोति, तेनाष्टाहादूर्ध्वमतरुणे ज्वरेऽपक्वेषु दोषेषु प्राधान्येन कषायपानं पाचनमधिकृतं, न लङ्घनादय इति दर्शयति ॥ १४२ ॥—

**तृष्यते सलिलं चोष्णं दद्याद्वातकफज्वरे ॥ १४३ ॥**
**मद्योत्थे पैत्तिके चाथ शीतलं तिक्तकैः शृतम्।**
**दीपनं पाचनं चैव ज्वरघ्नमुभयं हि तत् ॥ १४४ ॥**
**स्रोतसां शोधनं बल्यं रुचिस्वेदकरं शिवम्।**

---

१ 'गुर्वन्नभोजनं चापि विष्टम्भि दोषकोपनम्' इति पा०। २ "आमाशयसमुत्थानां पूर्वं लङ्घनमौषधम्" इत्युक्तं, ज्वरोऽप्यामाशयसमुत्थः, अतस्तत्र लङ्घनमुपदिशति—ज्वरे लङ्घनमित्यादि। यद्यपि लङ्घनबृंहणीये "चतुष्प्रकारा संशुद्धिः" इत्यादिना दशविधमेव लङ्घनमुक्तं; तथाऽपि व्यायामप्रवातयोर्वर्जनीयत्वेनैवोक्तत्वात्, संशोधनादीनां चावस्थाविशेषनियतत्वात्, पारिशेष्यादत्रोपवास एव लङ्घनशब्देनोच्यते। अत एव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते। तेन ज्वरस्य पूर्वरूपे यल्लध्वशनादिविधानं, तस्य न निषेधः। वाग्भटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम्" ( वा. चि. अ. १ ) इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परिशेषलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते। किंवा चरकेण निदानस्थाने "हितं लध्वशनमपतर्पणं वा" ( नि. अ. १ ) इति यदुक्तं तत् पूर्वरूपावस्थायां, व्यक्तायां तु लङ्घनमेवेत्येवकारेण लध्वशनमपि निषिध्यते इति ज्ञेयम्। ननु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वोक्तं—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" (च.सू.अ. २२) इति, इह तु लङ्घनमेवादावित्यतो विरोधः। नैवं, तत्र भेषजप्रयोगस्यादौ पाचनं, न तु ज्वरस्यादावित्यवगम्यते; किंवा, आदावेव लङ्घनं कार्यमिति योज्यं, तेन जीर्णज्वरे न लङ्घनं कार्यमिति बोधयति। उक्तं हि वाग्भटे—"शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम्। नेष्यते तेष्वभिहितं शमनं यन्न कर्शनम्" ( वा. चि. अ. १ ) इति। हारीतेन तु "पित्तश्लेष्मविशुद्ध्यर्थं कुर्याद्वमनमादितः" इति यदुक्तं, तत् "कफप्रधानान्" इत्यादिवक्ष्यमाणावस्थायां ज्ञेयम्" इति शिवदाससेनः। ३ 'योभौ' इति पा०।

१ 'आवरकसाधर्म्यतया' इति पा०। २ 'लाघवं च शरीरस्य क्षुच्चैवास्योपजायते' इति पा०। ३ 'यवागूपानीयादिसंस्कारे' इति पा०। ४ 'वातकफात्मके' इति पा०।

लङ्घनादिकाले एव अवस्थाविशेषे देयं जलमाह—तृष्यत इत्यादि। वातकफज्वरे इति वातज्वरे, कफज्वरे, वातकफज्वरे च। मद्योत्थे कफादिज्वरेऽपि शीतलं जलं ज्ञेयम्। तिक्तकैः शृतमिति वक्ष्यमाणमुस्तादिभिः शृतम्। उभयमिति उष्णं तथा तिक्तकशृतशीतं च। त्रिदोषकफपित्तज्वरयोस्तु यद्यपीह पानीयं नोक्तं; तथाऽपि सामान्येन विमानस्थाने यदुक्तं—"किन्तु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छन्ति" (वि. अ. ३) इत्यादिना, तत्प्रामाण्यादुष्णमेव जलं देयं; वातपैत्तिके तु ज्वरेऽत्यर्थदाहादिकारके शीतलमेव देयमित्यपि विमान एव "अत्यर्थोत्सन्नपित्ते" (वि. अ. ३) इत्यादिना ग्रन्थेन सूचितम् ॥ १४३ ॥ १४४ ॥—

**मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ॥ १४५ ॥**
**शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये।**

मुस्तेत्यादिः पानीयसाधकैः षडङ्गप्रयोगः। अत्र शुण्ठी अतिक्ताऽप्यामाशयदुष्टिकारकज्वरहितत्वाद्विहिता; अत्र शृतशीतं जलं दद्यादिति जलसंस्कारश्रुत्या न क्वाथपरिभाषया क्वाथकरणं, किंतु जलसंस्कारपरिभाषया। परिभाषा च स्वतन्त्रानुक्ताऽपि वृद्धव्यवहारसिद्धा प्रमाणीभूतैव। सा च "यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते। कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि॥ अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति; परिभाषार्थश्च व्यक्त एव ॥ १४५ ॥—

**कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान् १४६**
**बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्।**

अविशेषेण तरुणातरुणज्वरेऽवस्थाविधेयं वमनमाह—कफप्रधानानित्यादि। कफः प्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टानिति हृल्लासादिना बहिर्गमनोन्मुखान्। आमाशयस्थितानित्यनेन सर्वशरीरं परित्यज्यामाशयगमनं दर्शयति। ज्वरकरानित्यनेन ज्वरकरान् हि दोषानेवंविधानेव नवज्वरे वमनैर्हरेत्, नान्यथेति दर्शयति। काले इति यथोक्तायामवस्थायाम्। वमनैरिति बहुवचनेन प्रकृत्याद्यपेक्षया बहूनां वमनद्रव्ययोगानां प्रयोगं दर्शयति। वम्यानामित्यनेन अवम्यगर्भिण्यादिषु वमनं निषेधयति। अत्र च वमने स्वयमेवोत्क्लिष्टत्वाद्दोषस्य दोषोत्क्लेशप्रयोजनकौ स्नेहस्वेदौ न क्रियेते, अल्पौ वा क्रियेते॥ १४६ ॥—

**अनुपस्थितदोषाणां वमनं तरुणे ज्वरे ॥ १४७ ॥**
**हृद्रोगं श्वासमानाहं मोहं च जनयेद्भृशम्।**
**सर्वदेहानुगाः सामा धातुस्था असुनिर्हराः ॥१४८॥**
**दोषाः फलानामामानां स्वरसा इव सात्ययाः।**

१ 'अवस्थादेयं' इति पा०। २ 'पाचनीयसाधकः' इति पा०। ३ 'दत्वा' इति पा०। ४ 'कासं च कुरुते भृशम्' इति पा०। ५ 'दुःखनिर्हराः' इति पा०। ६ 'फलेभ्य आमेभ्यः' इति पा०।

उक्तावस्थाव्यतिरेकेण वमने दोषमाह—अनुपस्थितेत्यादि। सर्वदेहानुगा इति सूक्ष्मसिरात्वगाद्यनुगताः। सामा इति सामत्वेन स्त्याना अप्रचलाश्च। धातुस्था इति धातुषु अत्यन्तानुप्रवेशाव्यवस्थिताः। न सुखेन निह्रियन्ते इति असुनिर्हराः; किंवा, असून् प्राणान् निर्हरन्तीति असुनिर्हराः। अत्रार्थे फलानामित्यादिना दृष्टान्तमाह। आमानां फलानां यथा स्वरसा निर्हरणे सात्यया भवन्ति, तथा यथोक्ता अपि दोषा इत्यर्थः; सात्यया इति सव्यापदः ॥ १४७ ॥ १४८ ॥—

**वमितं लङ्घितं काले यवागूभिरुपाचरेत् ॥ १४९ ॥**
**यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः।**
**यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः ॥ १५० ॥**
**तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः।**
**ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ॥ १५१ ॥**
**वातमूत्रपुरीषाणां दोषाणां चानुलोमनाः।**
**स्वेदनाय द्रवोष्णत्वाद्द्रवत्वात्तृट्प्रशान्तये ॥ १५२ ॥**
**आहारभावात् प्राणाय सरत्वाल्लाघवाय च।**
**ज्वरघ्न्यो ज्वरसात्म्यत्वात्तस्मात् पेयाभिरादितः ॥**
**ज्वरानुपचरेद्धीमानृते मद्यसमुत्थितात्।**
**मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके ॥ १५४ ॥**
**ऊर्ध्वगे रक्तपित्ते च यवागूर्न हिता ज्वरे।**

वमनलङ्घनयोरनन्तरं यद्विधेयं तदाह—वमितमित्यादि। वमितं लङ्घितमिति अवस्थावशात् कदाचिद्वमितं, कदाचिल्लङ्घितं, कदाचिच्च वमितलङ्घितम्। वमनानन्तरं हि यदा सम्यग्विशुद्धिर्न भूता तदा तदहर्लङ्घनमपि क्रियते। काले इति अन्नदानयोग्ये काले। यथास्वौषधसिद्धाभिरिति यथाविषयं यस्यां यवाग्वां यद्भेषजं पिप्पलीनागरादि वक्तव्यं, तत्सिद्धाभिः; किंवा, यस्मिञ्ज्वरे यद्भेषजं पाचनं वक्तव्यं, तत्सिद्धाभिः। उक्तं हि सुश्रुते—"अन्नकाले हिता पेया यथास्वं पाचनैः कृता" (सु. उ. अ. ३९) इति। मण्डपूर्वाभिरिति मण्डप्रधानाभिः। तत्र प्रथमं मण्डं पीत्वा तदनु तनुपेयाभागो योज्यः। यावज्ज्वरमृदूभावादिति यावज्ज्वरस्य दोषपाकात्तीक्ष्णता निवर्तते; असति ज्वरमृदुभावेऽपि षडहं यावत्। अयं च षडहः किं पेयादिनात् प्रभृति आहोस्विज्ज्वरोत्पाददि-

१ 'सूक्ष्मसिरात्वाग्वाद्यनुगताः' इति पा०। २ 'अत्ययदाः' इति पा०। ३ 'विबन्धस्यानुलोमिकाः' इति पा०। ४ 'तस्मात् पूर्वं समाचरेत्' इति पा०। ५ 'यवागूभिर्ज्वरान् विद्वानृते' इति पा०। ६ 'मण्डपूर्वाभिरादित इति मण्डः पूर्वः प्रधानोऽच्छतया यासां ताभिरित्यर्थः; एतेन पेयाया ग्रहणं, तस्या एव बहुद्रवत्वेन मण्डप्रधानत्वात्; विलेप्यास्तु निरासः, तस्या अल्पद्रवत्वेन मण्डप्रधानत्वाभावात्। अन्ये तु—मण्डः पूर्वः प्रधानाभ्यवहार्यो यासां ता इत्याहुः; तेन, प्रथमं स्वच्छभागं खादित्वा ततो घनभागः खाद्य इत्यर्थः' इति शिवदाससेनः। ७ 'घनभागः' इति पा०।

नादिति पक्षद्वयमुत्तरत्र 'ज्वरितं षडहेऽतीते' इत्यत्र निर्लोचयिष्यामः। खेदनायेत्यादौ 'भवन्ति' इति शेषः। ज्वरसात्म्यत्वमभिधाय यवागूनामविषयं ज्वरितमाह—ऋत इत्यादि। ऋते मद्यसमुत्थितादिति मद्यकारणे ज्वरे निषेधः। तथा मदात्ययेऽपि व्याधावन्यहेतुजोऽपि यो ज्वरः, तथा ग्रीष्मे, तथा पित्तकफाधिके यो ज्वरः, तथोर्ध्वरक्तपित्तिनो यो ज्वरः, तेषु सर्वेषु पेया न देया। इह मदात्ययादीनां पेयार्हेषु जातोऽपि ज्वरः पेयानर्हः। 'पित्तकफाधिके' इत्यनेन पित्तकफयोरतिमात्रोद्गमे सति पेयाया अदानं बोधयति। तेन, कफजे ज्वरे पित्तजे ज्वरेऽनुद्धृतदोषे च पेया दातव्या। तथा हि तन्त्रान्तरे—"कफजेऽपि यदा क्षीणो लङ्घनादिक्रमात् कफः। शस्ता एव यवाग्वस्तु तथा पित्तेऽप्ययं क्रमः" इति। तथाऽत्रैव—"पैत्तिको वाऽथ शीतां मधुयुतां पिबेत्। लाजपेयां" इत्यनेन पित्तेऽपि यवागूं वक्ष्यति। यत्तु—"पांशुधाने यथा वृष्टिः क्लेदयत्याति कर्दमम्। तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्धनी" इति हारीतेनोक्तं, तदतिवृद्धकफविषयं ज्ञेयम्। अन्ये तु मिलितपित्तकफाधिकेषु पुरुषेषु यवागूप्रतिषेधमिच्छन्ति। यदि तु 'ऊर्ध्वगे कफपित्ते च' इति पाठस्तदा वातज्वरिणोऽपि यदा ऊर्ध्वगं कफपित्तं वमनेनायाति स्वयं तदाऽपि पेया न देयेत्यर्थः। सुश्रुते तु "कफपित्तपरीतस्य ऊर्ध्वास्रक्पित्तिनस्तथा। मद्यनित्यस्य न हिता यवागूः" ( सु. उ. तं अ. ३९ ) इत्युक्तं, तेन 'ऊर्ध्वगे रक्तपित्ते' इति पाठो युक्तः॥ १४९–१५४॥—

**तत्र तर्पणमेवाग्रे प्रयोज्यं लाजसक्तुभिः॥ १५५॥**
**ज्वरापहैः फलरसैर्युक्तं समधुशर्करम्।**

'ऊर्ध्वगे तर्पणं पूर्वं' ( चि. अ. ४ ) इति वचसा यवागूं बाधित्वा ऊर्ध्वगे रक्तपित्ते तर्पणं यद्यपि विहितमेव, तथाऽप्यूर्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमविधानमेतत्। तर्पणं तोयपरिप्लुताः सक्तवः। ज्वरापहानि फलानि द्राक्षादाडिमादीनि। वचनं हि—"द्राक्षादाडिमखर्जूरप्रियालैः सपरूषकैः। तर्पणार्हेषु कर्तव्यं तर्पणं ज्वरनाशनम्" इति॥ १५५॥—

**ततः सात्म्यबलापेक्षी भोजयेज्जीर्णतर्पणम्॥ १५६॥**
**तनुना मुद्गयूषेण जाङ्गलानां रसेन वा।**
**अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम्॥ १५७॥**
**योऽस्य वक्त्ररसस्तस्माद्विपरीतं प्रियं च यत्।**
**तदस्य मुखवैशद्यं प्रकाङ्क्षां चान्नपानयोः॥ १५८॥**
**धत्ते रसविशेषाणामभिज्ञत्वं करोति यत्।**
**विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत्॥ १५९॥**
**मस्त्विक्षुरसमद्याद्यैर्यथाहारमवाप्नुयात्।**

जीर्णं तर्पणं यस्य तं जीर्णतर्पणम्। मुद्गयूषस्य जाङ्गलरसस्य च विकल्पः सात्म्यापेक्षो बलापेक्षश्च ज्ञेयः। दुर्बलो हि दुर्बलाग्निः प्रायो भवति, तस्य च मुद्गयूषो लघुत्वेन देयः, इतरस्य तु जाङ्गलो रसः॥ १५६–१५९॥—

**पाचनं शमनीयं वा कषायं पाययेद्भिषक्॥ १६०॥**
**ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम्।**

संप्रति कषायपानविषयमाह—पाचनमित्यादि। पाचनमिति आमदोषपाचनम्। शमनीयमिति पक्वदोषोपशमनम्। एतच्च विकल्पद्वयं योग्यतया यथाक्रममामदोषविषयं तथा पक्वदोषविषयं ज्ञेयम्। षडहेऽतीते इति ज्वराहादारभ्य षडहेऽतिक्रान्ते; अतः सप्तमेऽहनि लघ्वन्नं मात्रया स्वरूपेण च यत्, तत्प्रतिभोजितं ज्वरितमष्टमेऽहनि कषायं पाययेदिति वाक्यार्थः।

एवं च पूर्वोक्ताष्टाहकृतनिरामताव्यवस्थायाः पाचनस्य शमनीयस्य वा उपयोग उपपन्नो भवति। ननु पेयाप्रयोगे "यावज्ज्वरमृदुभावात् षडहं वा विचक्षणः" इत्युक्तं, ततश्च पेययैव तावत् षडहो व्याप्यते, पूर्वं च ज्वरादौ लङ्घनमुक्तं, तच्चानिर्दिष्टकालमपि 'लङ्घनेन क्षयं नीते' इत्यादिग्रन्थोक्तलङ्घितफलं यावता कालेन भवति तावत्कालं कर्तव्यं; हारीतेन तु कालोऽपि दर्शितः, यथा—"लङ्घनं लङ्घनीयानां कुर्याद्दोषानुरूपतः। त्रिरात्रमेकरात्रं वा षड्रात्रमथवा ज्वरे" इति; तेन ज्वरलङ्घनदिनैस्तथा षडहेन च समं ज्वराहादारभ्याष्टाहातिक्रमोऽपि भवति, ततश्च ज्वराहादारभ्याष्टाहे पाचनशमनीयकषायो भवतु, तस्मात् पेयाप्रयोगषडहेऽतीते "पाचनं शमनीयं वा कषायं पाययेत्" इत्यभिप्रायः, तथा 'ज्वरे पेयाः कषायाश्च क्षीरं सर्पिर्विरेचनम्। षडहे षडहे देयं वीक्ष्य दोषबलाबले' ( चि. अ. ३० ) इत्यनेन ग्रन्थेनापि पेयाप्रयोगषडहादूर्ध्वं कषायषडह उक्तः, न तु ज्वरोत्पादादिषडहादूर्ध्वम्। अत्र ब्रूमः;—"यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाददिनादारभ्य षडहपर्यन्तं पेयाप्रयोग उच्यते, पेया हि ज्वरे प्राधान्येन दोषपाचनार्थं प्रयुज्यते। यदुक्तं—"लङ्घनं खेदनं कालो यवाग्वस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे" इति। लङ्घनादिपाचनीयत्वं दोषाणामष्टाहादर्वागेव, अष्टाहादूर्ध्वं तु कषायेणैव पाचनमुक्तम्। तत्रालङ्घनीये वातज्वरे आदिदिनात् प्रभृति पेया षडहमपि व्याप्नोति, एकद्वित्रिदिनलङ्घिते ज्वरे पेया पञ्चचतुस्त्रिदिनप्रयोगेण ज्वरदिनादारभ्य षडहपर्यन्तं कर्तव्या। यत्र तु दोषाणामपि सामतया सन्निपातज्वरे वा लङ्घनमेव षड्रात्रं षड्रात्रादिक्रमेण वा क्रियते, तत्र प्रादेशिके विधौ नायं पेयाषड्रात्रनियम औत्सर्गिकः प्रवर्तते। किञ्चातिमात्रलङ्घनप्रयोगे पेया न दोषपाचनार्थं क्रियते, किंतु भूरिलङ्घनक्षयि-

१ 'जत्रूर्ध्वगं' इति पा०। २ 'ग्रीष्मेऽसृक्पित्तिनस्तथा' इति पा०। ३ 'प्रदेयं' इति पा०। ४ 'जीर्णस्तर्पणो यस्य' इति पा०।

१ 'इत्यर्थो न्याय्यः' इति पा०। २ 'कालं वीक्ष्यामयस्य तु' इति पा०। ३ 'पाचनं युक्तम्' इति पा०। ४ 'प्राप्नोति' इति पा०। ५ '०लङ्घितेन' इति पा०।

ताग्नेः सन्धुक्षणार्थं, तत्राग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति । "ज्वरे पेयाः कषायाश्च" ( चि. अ. ३० ) इत्यादौ पेया समानकार्याणां लङ्घनादीनामुपलक्षणभूता; ततश्च पेया यत्र प्रतिषिद्धा मद्योत्थज्वरादौ तत्र तर्पणादिक्रमेणापि षडहो ग्राह्यः । तेन, प्रथमषडहे उत्सर्गतो लङ्घनादिपाचनं कर्तव्यमिति पेया षडहे देयेति; वचनमप्यत्रोच्यते, तथाहि सुश्रुते—"लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते । तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ॥ कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" ( सु. उ. तं. अ. ३९ ) इत्युक्त्वा, कषायपानकालनियमे प्रोक्तं—"सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" ( सु. उ. तं अ. ३९ ) इत्यादि । ततश्च लङ्घनादिषडहेऽतिक्रान्ते सप्तरात्राद्भेषजदानं सुश्रुतेनास्थाप्याप्रतिषेधादनुमतमेव । तथा चरके "लङ्घनं स्वेदनं" इत्यादिना तरुणज्वरे लङ्घनादि विहितं, तरुणता च ज्वरस्य सप्ताहमात्रं भवति । यदुक्तं पुष्कलावते—"आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः । मध्यं द्वादशरात्रं तु, पुराणमत उत्तरम्" इति । सप्ताहादूर्ध्वमतरुणे ज्वरे उत्सर्गतस्तावल्लङ्घनपेयादि न विहितमेव चरकेणापि, तथा हारीतेनापि लङ्घनोष्णोदकसुस्तादिशृतजलपानपेयाभिधानानन्तरमुक्तम्—"एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि । पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान्[2]" इति । तथा खरनादेनापि—"लङ्घितालङ्घितं तस्माद्वमितं वा ज्वरार्दितम् । तत्सात्म्यत्वादतस्त्रिरात्रादौ ज्वरमुपाचरेत् ॥ यवागूभिर्यथादोषं" इत्यादिना[3] तर्पणादिक्रमं चाभिधायोक्तम्—"इति षड्रात्रिकः प्रोक्तो नवज्वरहरो विधिः । ततः परं पाचनीयं शमनं वा ज्वरे हितम्" इति । तन्त्रान्तरे च यदेतत् सप्तमेऽहनि कषायपानविधानं, तदष्टाहे विहितकषायपानेन सममदूरान्तरत्वान्न विरोधीति मन्तव्यं, तस्माज्ज्वराहादारभ्य षडहेऽतीते लब्धान्नप्रतिभोजिते कषायपानं, तथा षडहं यावत् यवागूपचार इति, तथा "ज्वरे पेयाः कषायाश्च ( चि. अ. ३० )" इत्यादय उत्सर्गविधयः, तेनैषां क्वचिद्बाधनमपि भवतीति युक्तमेव ॥ १६० ॥—

**स्तम्भ्यन्ते न[4] विपच्यन्ते कुर्वन्ति विषमज्वरम्॥१६१॥**
**दोषा बद्धाः कषायेण स्तम्भित्वात्तरुणे ज्वरे ।**
**न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते ॥ १६२ ॥**
**यः कषायकषायः[5] स्यात् स वर्ज्यस्तरुणज्वरे ।**

संप्रति कषायशब्दसामान्येन नवज्वरनिषिद्धकषायस्य महात्ययकारकस्य नवज्वरे प्रयोगे दोषमाह—स्तम्भ्यन्त इत्यादि । स्तम्भ्यन्त इति अविचलधर्माणो[6] भवन्ति । न विपच्यन्त इति चिरेणापि न सुखं पच्यन्ते[1] । स्तम्भित्वादिति स्तम्भनस्वभावत्वात् । उक्तं हि—"कषायः स्तम्भनः शीतः" ( सू.अ.२६ ) इति । अयमर्थो हारीतेऽप्युक्तः—"न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे । कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः" इति । पूर्वं षड्विरेचनशताश्रितीये पञ्चरसकृतेष्वपि स्वरसादिषु कषायशब्द उक्तः, तदिह यदि कषायशब्देन सामान्येन मधुरादिकृतानां स्वरसादीनां प्रतिषेधः स्यात्, तदा षडङ्गपानीयस्य पञ्चविधकल्पनायामवश्यनिवेशनीयस्य तथा यवागूसाधनार्थस्य च पाठेन तत्तद्द्रवस्य[2] निषेधः स्यात्; येन, षडङ्गस्य तथा यवागूसाधनद्रवस्य च प्रयोगोऽत्र पञ्चविधकल्पनायामन्तर्भावनीयः, भेषजप्रयोगस्य पञ्चविधकल्पनार्थेऽन्तर्भावात्; अतः सर्वकल्पनाकषायप्रतिषेधो मा स्यादित्याह—न त्वित्यादि । नतु कल्पमुद्दिश्येति स्वरसकल्कशृतशीतफाण्टरूपकल्पनं लक्ष्यीकृत्य; यः कषायकषाय इति यः कषायैरामलकादिभिः कृतः स्वरसादिरूपः कषायः स निषिध्यत इत्यर्थः । न चानेन कषायरसकृतस्वरसादिनिषेधेन मधुरादिकृतस्वरसादीनां तरुणज्वरे प्रयोगो भवति, स्वरसादिभेषजस्यातिगुरोस्तरुणज्वरेऽविधानात् । तेन, कषायकषायप्रतिषेधेन तिक्तद्रव्यकृतषडङ्गादिकल्पनाकषायस्य विहितस्याविरोधः साध्यते, न त्वविहितस्वरसादिविधानं क्रियते । स्वरसादिगुरुभेषजस्य तरुणज्वरे निषेधवचनं—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" ( सु. उ. तं. अ. ३९ ) इति । अन्ये तु ब्रुवते—यत्—षड्रात्रात् परतः सप्तमे दिवसे कषायपानं विहितं "पाचनं शमनीयं च' इत्यादिना स्वतन्त्रेण; तत्र सप्तमे दिवसे तरुण एव ज्वरो भवति, तरुणे च ज्वरे कषायपानं निषिद्धमिति विरोधं पश्यन् मधुरादिद्रव्यकृतकषायस्य सप्तमेऽह्न्यप्रतिषेधः, कषायकषायस्य तु सप्तमेऽह्नि प्रतिषेध इत्युपदर्शनार्थं 'न तु कल्पनमुद्दिश्य' इत्यादि कृतं; ततश्च ज्वरादिषडहे सर्वकषायप्रतिषेध एव, सप्तमदिवसप्राप्ते तु तरुणे कषायद्रव्यकृतकषायमात्रप्रतिषेध[3] इति वाक्यार्थो भवति ॥ १६१ ॥ १६२ ॥—

**यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः ॥ १६३ ॥**
**दशाहं यावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ।**

यवागूत्तरकालं भोजनसाधनमाह—यूषैरित्यादि । यदि कफप्रबलता बलवदग्निश्च[4] तदा यूषैः, वातप्राबल्ये तु दुर्बलत्वे च रसैरिति व्यवस्था । अम्लविकल्पोऽपि सात्म्यापेक्षयाऽन्यपेक्षया च ज्ञेयः । वक्ष्यति हि—"मन्दाग्नयेऽम्लसात्म्याय तत्साम्लमपि कल्पयेत्" इति । अम्लं चात्र ज्वरघ्नं दाडिमाद्येव कार्यम् । लघ्विति मात्रालघु प्रकृतिलघु च रक्तशाल्यादिकम् ॥१६३॥—

१ 'लङ्घनान्ते' इति पा० । २ 'सिद्धसाधितान्' इति पा० ।
३ 'इत्यादि । जतूकर्णेनापि यवाग्वादिक्रममभिधायोक्तम्' इति पा० ।
४ 'न च्यवन्ते च' इति पा० । ५ 'कषायः कषायः' इति पा० ।
६ ' अविचलितधर्माणः' इति पा० ।

१ 'सुचिरेणापि न सुपच्यन्ते' इति पा० । २ 'द्रव्यस्य' इति पा० ।
३ 'सर्वकषायद्रव्यकृतकषायमात्रप्रतिषेधः' इति पा० । ४ 'बलवलानिश्च' इति पा० ।

**अत ऊर्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे ॥ १६४ ॥**
**परिपक्वेषु दोषेषु सर्पिष्पानं यथाऽमृतम् ।**

दशाहात् परतः प्रायः कर्तव्यमाह—अत इत्यादि । कफे मन्दे इति मन्देऽपि कफे; यदि कफो नास्त्येव दोषरूपस्तदा सर्पिर्वातपित्तोत्तरे ज्वरे देयमित्यर्थः । परिपक्वेष्विति सर्वथा पक्वेषु । सर्पिरिति वक्तव्ये अधिकपानग्रहणेनानुवासनाभ्यञ्जादिना सर्पिष उपयोगमस्मिन् काले निषेधयति । अनुवासनाभ्यञ्जौ हि पश्चात्कालवक्तव्यौ । इयं च मन्दकफवातपित्तोत्तरत्वरूपाऽवस्था प्रायेण दशाहादूर्ध्वं कालमहिम्नैव सर्वज्वरे व्यक्ता भवति; यथा—वृद्धे पुरुषे प्रबलवातत्वं, तरुणज्वरे सामदोषता, तथाऽऽमाशयसमुत्थतया कफप्रबलत्वं भवति; दशाहादुत्तरं तु लङ्घनादिना कफः क्षीणो भवति, ज्वरसन्तापेन च रूक्षेण धातुशोषणाच्च वातपित्ते वर्धेते । यत्तु पेयाकषायसर्पिःक्षीरविरेचनानां षडहे षडहे देयत्वं तत् प्रायिकम् । तेन दशाहादूर्ध्वं द्वितीयषडह एवावस्थाविशेषप्राप्तौ[१] सर्पिर्दानं न विरोधि ॥ १६४ ॥—

**निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ॥ १६५ ॥**
**न सर्पिः पाययेद्वैद्यः कषायैस्तमुपाचरेत्[२] ।**
**यावल्लघुत्वादशनं दद्यान्मांसरसेन च ॥ १६६ ॥**
**बलं ह्यलं निग्रहाय दोषाणां, बलकृच्च तैत्[३] ।**

उक्तसर्पिष्पानापवादविषयमाह—निर्दशाहमित्यादि । निर्गतो दशाहो यस्य स निर्दशाहः । अलङ्घितमिति असंजातलङ्घितलक्षणम्, इयं चावस्था प्रबलसामदोषारब्धत्वाज्ज्वरस्य[४] तथाऽसम्यगुपचाराच्च भवतीति ज्ञेयम् । कषायैस्तं कफोत्तरमलङ्घितं चोपाचरेत् । यावल्लघुत्वादिति च्छेदः । लघुत्वे तु जाते कफोत्तरताऽलङ्घितता च नापयाति न तदा सर्पिष्पानमेवानुवृत्तं कर्तव्यमित्यर्थः । कफोत्तरेऽलङ्घितेऽपि निर्दशाहज्वरे मांसरसेन किमर्थमेवमशनं कफविरुद्धं देयमित्याह—बलं हीत्यादि । बलकृच्च तदिति मांसरसेनाशनं बलकारकमित्यर्थः ॥ १६५ ॥ १६६ ॥—

**दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् ॥ १६७ ॥**
**बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ।**

दाहेत्यादिना क्षीरावस्थामाह । बद्धप्रच्युतदोषं वेत्यत्र बद्धदोषत्वम् अप्रवर्तमानदोषत्वं, प्रच्युतदोषत्वं तु स्तोकेन प्रवर्तमानदोषत्वम् । तत्र क्षीरं तावद् यथा बद्धे प्रवर्तकं भवति, तथा प्रच्युतेऽपि सविबन्धदोषप्रवर्तकतयोपकारकं भवति, अत एव क्षीरगुणेषु—"पुरीषे ग्रथिते पथ्यं," तथा "अतीसारे च पथ्यं" (सू. अ. १) इत्युक्तम् । किंवा, बद्धदोषे गव्यं क्षीरं सरत्वाद्देयं, प्रच्युते तु संग्राहित्वाच्छागं देयम् ॥ १६७ ॥—

**क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः १६८ ॥**
**अक्षीणबलमांसाग्नेः[१] शमयेत्तं विरेचनैः ।**

'आभिः क्रियाभिर्यदा न प्रशमं याति ज्वरस्तदा विरेचनैः शमयेत्' इति भाषया विरेचनस्य बहुव्यापकतया इतरकर्मासिद्धावेव कर्तव्यतां दर्शयति । विरेचनैरिति बहुवचनेन वमनविरेचने अपि गृह्येते; यदुक्तं—"उभयमपि दोषमलविरेचनाद्विरेचनशब्दं लभते" ( क. अ. १ ) इति, तथा विरेचनयोगविवरणे वमनविरेचनयोगानेवाभिधास्यति ॥ १६८ ॥—

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ॥ १६९ ॥**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ।**
**निरूहो बलमग्निं च विज्वरत्वं मुदं रुचिम् ॥ १७० ॥**
**परिपक्वेषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ।**

ज्वरेणाक्षीणस्य शोधनमुक्त्वा ज्वरक्षीणस्य शोधनमाह—ज्वरक्षीणस्येत्यादि । पयसेति पयःपानेन । पयस्त्वनुलोमकतया दोषहरं भवति । अनुलोमकत्वं च विरेचनत्वेन व्यवह्रियत इति विरेचनादेयत्वे क्षीरमुक्तम् । अत्र क्षीरस्य पूर्वोक्तविषयेणैव गुणानां लब्धत्वादवशिष्टं निरूहगुणमाह—निरूह इत्यादि ॥ १६९ ॥ १७० ॥—

**पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ॥ १७१ ॥**
**स्रंसनं, त्रीन्मलान् बस्तिर्हरेत् पक्वाशयस्थितान् ।**

विरेचनास्थापनयोर्दोषभेदेन स्थानभेदेन च विषयमाह—पित्तमित्यादि । वमनस्य तु दोषभेदेन स्थानभेदेन च विषयः 'कफप्रधानान्' इत्यादिनैवोक्त इति नेह पुनरुच्यते; परं पूर्वमवस्थाविहितं वमनं स्वयमुत्क्लिष्टदोषे ज्ञेयम्, एतच्च जीर्णज्वरविहितं वमनं स्नेहस्वेदाभ्यां दोषमुत्क्लेश्य कर्तव्यमिति विशेषः । पित्ताशय आमाशयाधोभाग एव । स्रंसनमिति च्छेदः ॥ १७१ ॥—

**ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये ॥ १७२ ॥**
**रूक्षबद्धपुरीषाय प्रदद्यादनुवासनम् ।**

अनुवासनविषयमाह—ज्वर इत्यादि । प्रकरणागततायामपि पुराणतायां 'पुराणे' इति पदमत्यर्थपुराणतामाह ॥ १७२ ॥—

**गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ॥ १७३ ॥**
**जीर्णज्वरे रुचिकरं कुर्यान्मूर्धविरेचनम् ।**

गौरव इत्यादिना शिरोविरेचनविषयमाह । शिरस इति पूर्वेणोत्तरेण च योज्यम् । इन्द्रियाणां विबन्धः स्वविषयप्रवृत्तौ जाड्यम् ॥ १७३ ॥—

**अभ्यङ्गांश्च प्रदेहांश्च परिषेकावगाहने ॥ १७४ ॥**
**विभज्य शीतोष्णकृतं[२] कुर्याज्जीर्णे ज्वरे भिषक् ।**
**तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः ॥ १७५ ॥**
**लभन्ते सुखमङ्गानि बलं वर्णश्च वर्धते ।**

१ 'अवस्थाविशेषप्राप्त्या' इति पा० । २ 'शमनैस्तमुपाचरेत्' इति पा० । ३ 'बलं ह्यलं दोषहरं, परं तच्च बलप्रदम्' इति पा० । ४ 'प्रबलसामावस्थावज्ज्वरस्य' इति पा० ।

१ 'अक्षीणबलमांसस्य' इति पा० । २ 'शीतोष्णतया' इति पा० ।

अन्तःपरिमार्जनमभिधाय वहिःपरिमार्जनमाह—अभ्यङ्गांश्चेत्यादि। प्रदेहः सामान्येन वहलोऽवहलश्च लेप इह गृह्यते। ये तु सुश्रुतमतेन वहलं विशोषिणं प्रदेहं ग्राहयन्ति, तन्मतेन दाहप्रशमने लेपो वहलः कर्तव्यः स्यात्, स च तनुरेव कर्तव्यः, उक्तं हि—"श्लक्ष्णपिष्टघनो लेपश्चन्दनस्यापि दाहकृत्" ( चि. अ. ३० ) इत्यादि। विभज्य शीतोष्णकृतमिति उष्णाभिप्रायं शीताभिप्रायं च विभज्य यथासंख्यं शीतकृतान् तथोष्णकृतान्; वक्ष्यति हि—"अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्। यथाभिलापं शीतोष्णं विभज्य द्विविधं ज्वरम्" इति। शीतोष्णता च द्रव्यमहिम्ना संस्कारेण च ज्ञेया ॥ १७४ ॥ १७५ ॥—

धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम् ॥१७६॥
त्वङ्मात्रशेषा येषां च भवत्यागन्तुरन्वयः।

त्वङ्मात्रशेषा इति धात्वन्तरत्यागेन त्वङ्मात्रावस्थितदोषजन्याः, येषां चागन्तुर्भूतरूपोऽन्वयः कारणं भवति ज्वराणां, ते धूपादिना शमं यान्ति ॥ १७६ ॥—

इति क्रियाक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः १७७
येषां त्वेष क्रमस्तानि द्रव्याण्यूर्ध्वमतः शृणु।
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ॥१७८॥
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः।

क्रमप्राप्तौषधप्रश्नस्योत्तरार्धमाह—येषामित्यादि। 'रक्तशाल्यादयः शस्ताः शालयः षष्टिकैः सह' इति केचित् पठन्ति, अत्र 'शालयः' इति पदेन यवकादीनां निरासः क्रियते। केचित्तु 'रक्तशाल्यादयः शस्ताः पुराणाः' इति पठन्ति, तत्र यद्यपि 'शूकधान्यं शमीधान्यं समातीतं प्रशस्यते' ( सू. अ. २७ ) इत्युक्तमेव, तथाऽपि प्रमादादपुराणग्रहणनिषेधार्थं 'पुराणाः' इति पदम्[१] ॥ १७७ ॥ १७८ ॥—

लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ॥१७९॥
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः।
अम्लाभिलाषी तामेव दाडिमाम्लां सनागराम् ॥
सृष्टविट् पैत्तिको वाऽथ शीतां मधुयुतां पिबेत्।
पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि ॥१८१॥
श्वदंष्ट्राकण्टकारिभ्यां सिद्धां ज्वरहरां पिबेत्।
ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ॥
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः।
शृतां विदारीगन्धाद्यैर्दीपनीं स्वेदनीं नरः ॥ १८३ ॥
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिबेत्।
विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् १८४
सर्पिष्मतीं पिबेत् पेयां ज्वरी दोषानुलोमनीम्।
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ॥१८५॥
मृद्वीकापिप्पलीमूलचव्यामलकनागरैः।
पिबेत् सबिल्वां पेयां वा ज्वरे सपरिकर्तिके ॥१८६॥
बलावृक्षाम्लकोलाम्लकलशीधावनीशृताम्।
अस्वेदनिद्रस्तृष्णार्तः पिबेत् पेयां सशर्कराम् ॥१८७॥
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम्।

लाजपेयामित्यादिका दश यवाग्वः। तत्र प्रथमा श्लेष्मणीति हरिचन्द्रः; किंवा लाजपेयां सुखजरामित्येका, तथा पिप्पलीनागरैः शृतामिति द्वितीया, एवं शेषाभिः सममेकादश पेयाः। सनागरां सृष्टविट् पिबेदिति योजना, सनागरामेव शीतां मधुयुतां पिबेत् पैत्तिक इत्यपरा। शुण्ठ्यास्तु मधुरपाकित्वेन पाचनत्वेन च पित्ते प्रयोगः। इह विदारीगन्धाद्यं ह्रस्वपञ्चमूलम्। सयवामिति पदेन षष्टितण्डुलकार्यां पिबेदिति। सबिल्वामित्यादिना धावनीशृतामित्यन्तेन चैका यवागूः। परिकर्तिका कर्तिकाकारा वेदना। कलशी सिंहपुच्छी। धावनी कण्टकारी। अत्र च यवागूनां साधनद्रव्यजलतण्डुलपरिमाणे वृद्धवैद्यव्यवहाराः पूजिताः प्रमाणीकर्तव्याः। अत्राग्निवेशसंहितायामधीयते—"क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके। पादशेषेण तेनाथ यवागूरुपकल्पयेत्॥ कर्षार्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्। विनीय पाचयेद् युक्त्या वारिप्रस्थेन चापराम्" इति[१]। अपरामिति क्वाथसाध्ययवाग्वा उक्ताया भिन्नां कल्कसाध्यामित्यर्थः। एवं च कल्कपलेन या तत्र यवागूसाधनपरिभाषा, सा इहापि द्रव्यपलकल्केन यवागूसाधनमुप-

१ 'पुनरुक्तशाल्य इति पदेन' पा०। २ "तथाऽपि प्रमादावतिनवस्य तथाऽपिपुराणस्य ग्रहणं मा भूदित्येतदर्थं 'पुराणा' इत्युक्तम्" इति शिवदाससेनः॥

१ "कल्कसाध्ययवागूसाधनार्थं परिभाषामाह—कर्षार्धं वेत्यादि। कर्षार्धं वेति कर्षार्धं प्रत्येकं; त्रिविधं हि भेषजद्रव्यं वीर्यभेदात्। यथा—तीक्ष्णवीर्यं शुण्ठ्यादि, मध्यवीर्यं बिल्वाग्निमन्थादि, मृदुवीर्यमामलकादि। तत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं, तेन तीक्ष्णद्रव्यमात्रस्यैव कर्षप्रमाणमिति ज्ञापितं; कल्कद्रव्यस्य वा पलमिति मृदुवीर्यद्रव्योपलक्षणं, तेन अन्यस्यापि मृदुवीर्यद्रव्यस्यामलकादेः पलप्रमाणमिति ज्ञापयति। एतेन, तीक्ष्णमृदुद्रव्ययोः कर्षपलमानव्यवस्थया मध्यवीर्यस्य बिल्वाग्निमन्थादेरनुक्तमप्यर्धपलमानं सामर्थ्यादेव ज्ञेयम्। यत् पुनर्मध्यवीर्यस्य षडङ्गादेः कर्षप्रमाणमुक्तं, तन्मन्दानलपुरुषाभिप्रायेणेत्युक्तमेव। विनीयेति कल्कीकृत्य, प्रक्षिप्येति वा। अपरामिति अन्याम्, अन्यत्वं च कषायसाध्ययवागूमपेक्ष्य, तेन कल्कसाध्यामित्यर्थः। एवं च तीक्ष्णद्रव्यापेक्षया कर्षप्रमाणं, मध्यद्रव्यापेक्षयाऽर्धपलप्रमाणं, मृदुद्रव्यापेक्षया पलप्रमाणं द्रव्यं विनीय कल्कसाध्यां यवागूं वारिप्रस्थेन द्रव्यद्वैगुण्याच्छरावचतुष्टयमानेन साधयेदिति योजना। ननु प्रबलानलबलादौ पुरुषे बहुयवाग्वादि विधेयं तत्र कथं वारिप्रस्थेन यवागूसाधनं भविष्यतीत्याह—युक्त्येति। एतेन यत्र उत्तमबलानले बहुयवागूर्विधेया तत्र युक्त्या जलप्रस्थद्वयं त्रयं वा तण्डुलानुरूपं दत्त्वा यवागूं साधयेत्, अल्पबलानले तु वारिप्रस्थेनेत्यर्थः। 'अपरान्' इति पाठे यूषादीन्। तेन पेयासाधनरीत्या यूषादयोऽपि साधनीया इति प्रतिपादितम्" इति शिवदाससेनः।

दिशताऽनुमतैव, तथाहि जीवन्त्यादियवागवामष्टभिर्द्रव्यैः कोलप्रमाणैः साधनमुक्तम् । यत्तु तत्र वृक्षाम्लयुक्तेत्याद्युक्तं, तैदम्लतामात्रार्थं वृक्षाम्लदानं, न तदष्टमाषकप्रमाणं; किंवा, तदप्यष्टमाषकमानप्रमाणमस्तु, तथाऽप्यदूरान्तरार्थतया कल्कपलसाधनोपदेशिका परिभाषाऽनुमतैव भवत्यष्टमाषकाधिकपलकल्कसाधनोपदेशेन; उक्तं हि—"जीवन्त्यजाजीशठिपुष्कराह्वैः सकारवीदीप्यकबिल्वमध्यैः । सयावशूकैर्बदरप्रमाणैर्वृक्षाम्लयुक्ता घृततैलभृष्टा ॥ अर्शोतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः ॥ या पञ्चकोलैर्विधिनैव तेन सिद्धा भवेत् साऽपि समा तयैव ( चि. अ. १२ )" इति; तस्मादेतद्यवागूक्रमानलिङ्गदर्शनात् कल्कपलसाध्ययवागवभिधायिका परिभाषाऽनुमतैव, तदन्या तत्सहचरिता कर्षार्धकणाशुण्ठीमानदर्शिकाऽनुमतैव । क्वाथसाध्ययवाग्वादिद्रव्यमाने तु वृद्धव्यवहारपूजितेयं परिभाषा—"यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥ अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति । आदिशब्देनात्र यूषरसादिग्रहणम् । "क्वाथ्यद्रव्याञ्जलिं क्षुण्णं" इत्यादिपरिभाषायास्तथाऽनुक्तपरिभाषायाश्च कर्तव्यव्यवस्था, तथा सकलयवागूसाधनतण्डुलजलादिमानव्यवस्थाविचारश्चापामार्गतण्डुलीय ( सू.अ.४ ) एव निर्लोचितोऽनुसरणीयः ॥ १७९–१८७ ॥—

**मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् १८८॥**
**यूषार्थं यूषसात्म्यानां ज्वरितानां प्रदापयेत् ।**

मुद्गानित्यादिर्ज्वरहितयूषद्रव्यसंग्रहः । यूषकरणं च यवागूसाधनवत् । मुद्गः स्वनामप्रसिद्धः ॥ १८८ ॥—

**पटोलपत्रं सफलं कुलकं पापचेलिकम् ॥ १८९ ॥**
**कर्कोटकं कठिल्लं च विद्याच्छाकं ज्वरे हितम् ।**

कुलकं कारवेल्लकम् । पापचेलिकं पाठाशाकम् । कठिल्लकं रक्तपुनर्नवा ॥ १८९ ॥—

**लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान् ॥१९०॥**
**कुरङ्गान् कालपुच्छांश्च हरिणान् पृषताञ्छशान् ।**
**प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान् ॥१९१॥**
**ईषदम्लाननम्लान् वा रसान् काले विचक्षणः ।**
**कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्तकान् ॥ १९२ ॥**
**गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ।**
**लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् ॥ १९३ ॥**
**भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित् ।**

कपिञ्जलः गौरतित्तिरिः । एणः कृष्णसारः । उपचक्रकः चकोरः । कालपुच्छः हरिणविशेषः । हरिणः ताम्रवर्णः । पृषतः विन्दुचित्रितो हरिणः । रसकरणे सूदशास्त्रं—"पलानि द्वादश प्रस्थे घनेऽथ तनुके तु षट् । मांसस्य वष्टनं कुर्यात् पलमच्छतरे रसे" इति । यत्र तु रसस्य द्रव्यान्तरेण साधनं, तत्र यवागूवत् साधनं व्याख्येयम् । मात्राविकल्पज्ञ इत्यनेन तावत्या मात्रया, तेन च संस्कारकृतेन विकल्पेनानुष्णलघुना लावादयो देयाः, येन गौरवादमिवधमुष्णत्वाद्वा ज्वरावृत्तिं न जनयन्तीति दर्शयति ॥ १९०–१९३ ॥—

**घर्माम्बु चानुपानार्थं तृषिताय प्रदापयेत् ॥ १९४ ॥**
**मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम् ।**

घर्माम्बु उष्णाम्बु । घर्माम्ब्वादिश्लोकं चैकेऽनार्षं वदन्ति; तच्च, अनुपानव्यवस्थायामुष्णपानीयमद्ययोर्हितत्वं पूर्वमनुक्तमेवेति तदुपादानं; तथाच तन्त्रान्तरे—"ज्वरे पिबेदनुष्णाम्बु मद्यसात्म्यस्तु यो भवेत् । तस्मै दोषबलं दृष्ट्वा युक्त्या मद्यं विधीयते" इति ॥ १९४ ॥—

**गुरूष्णस्निग्धमधुरान् कषायांश्च नवज्वरे ॥ १९५ ॥**
**आहारान् दोषपक्त्यर्थं प्रायशः परिवर्जयेत् ।**
**अन्नपानक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः ॥ १९६ ॥**

गुरूष्णेत्यादिना गुरूष्णादिनिषेधः; पूर्वं तु कषायनिषेधो यद्यपि सामान्येन कृतः, तथाऽपीहान्नप्रतिषेधप्रस्तावादस्य हितप्रतिषेधाच्च पुनः क्रियते ॥ १९५ ॥ १९६ ॥

**अत ऊर्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः ।**
**पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत् ॥ १९७ ॥**
**सनागरं पर्पटकं पिबेद्वा सदुरालभम् ।**
**किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम् ॥ १९८ ॥**
**पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये ।**
**ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः ॥ १९९ ॥**
**तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः ।**

पाक्यमिति शृतम् । शीतकषायस्तु द्रव्यं संक्षुण्णमुष्णोदके प्रक्षिप्य निशास्थितम् । अत्र शीतकषायपरिभाषा—"द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात् । यः कषायोऽभिनिर्याति स शीतः समुदाहृतः" (सू. अ. ४) इति । अत्रापि यद्यपि द्रव्यस्य पानीयस्य च मानं नोक्तं, तथाऽपि क्वाथ्यद्रव्यसमं द्रव्यं ग्राह्यं, पानीयं तु यावन्मानः पेयः क्वाथो भवति तावन्मानं ग्राह्यं, नह्यत्र पानीयह्रासोऽस्ति; किंवा परिभाषयैव जलं देयं—"षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः । आप्लुतं भेषजपलं रसाख्यायां पलद्वयम्" इति । शीतकषायः स्वल्पवीर्यतया तथा शैत्यगुणयोगाच्चाल्पबलदोषे दाहाभिभूते च देयः । पर्पटकं

१ 'जीवन्त्यादिभिरष्टभिर्द्रव्यैः पलप्रमाणैः' इति पा० । २ 'तदम्लतागत्यर्थं' इति पा० । ३ 'दत्त्वा' इति पा० । ४ 'इत्यादिपरिभाषयां तथाऽनुक्तपरिभाषया च' इति पा० । ५ '°मानव्यवस्थाव्यभिचारश्च' इति पा० । ६ 'यूषसात्म्याय ज्वरिताय' इति पा० । ७ 'मात्राविकल्पज्ञ इति विकल्पो विशिष्टकल्पना संस्कार इत्यर्थः । तेन तावती मात्रा कर्तव्या, तादृशश्च संस्कारः कार्यः, यथा लघुत्वानुष्णत्वे भवत इत्यर्थः' इति शिवदाससेनः ।

१ 'हितत्वं पूर्वमुक्तमेवेति' इति पा० ।

सद्दुरालभं वेति तृतीयो योगो मन्दाग्निपित्तकफे। किराततिक्तादिश्चतुर्थो वातकफे । पाठादिश्च पित्ते। किराततिक्तादिना च मेलके सति पाठासप्तकं जतूकर्णप्रत्ययात् कफपित्ते भवति। उक्तं हि तत्र—"भूनिम्बघनगुडूचीशुण्ठ्युदीच्योशीराह्वयपाठाः" इति। अत्र क्वाथकरणे द्रव्यादिमानस्यानुक्तत्वाच्यायतो मानव्यवस्था। तत्रेह यद्यपि क्वाथसंविधानं विशेषेण नोक्तं, तथाऽपि व्याधितरूपीये यत् क्वाथकरणसंविधानमुक्तं,—"छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा, प्रक्षाल्य, पानीयेनाभ्यासिच्येत्" इत्यादिना "गतरसेष्वौषधेषु स्थालीमवतार्य परिपूतं कषायं" ( वि. अ. ७ ) इत्यन्तेन, तदेव सर्वकषायकरणसंविधानं ज्ञेयम्। तत्र हि यद्यपि क्वाथ्यद्रव्यमानं तथा द्रवमानं स्थाप्यकषायमानं च नोक्तं, तथाऽपि यावद्द्रव्यं यावता जलेन पक्वं सत् गतरसं भवति, तावति जले तावद्द्रव्यं देयमिति लभ्यते; तथा यावता क्वाथशेषेण गतरसान्यौषधानि भवन्ति तावान् क्वाथः स्थाप्यत इति च लभ्यते; एतच्चौषधानां गतरसत्वं द्रवभागत्रयक्षय एव भवतीति दृश्यते, तेन चतुर्भागावशिष्टता सर्वक्वाथे विशेषवचनं विना कर्तव्या। क्वाथार्थजलदानं तु द्रव्यापेक्षया भवति । तत्र मृदुनि द्रव्ये चतुर्गुणेन जलेन, कठिनेऽष्टगुणेन, कठिनतरे तु षोडशगुणेन पाके सति चतुर्भागावशेषे गतरसत्वं भवति; एतदपि दृश्यते—स्नेहादिसाधनकभूरिक्वाथकरणे इयं प्रयुज्यते; यत्र स्वल्पं क्वाथ्यद्रव्यं तत्र यथा यथाऽल्पत्वं भवति तथा तथा मृदुन्यल्पेऽपि द्रव्ये भूरिजलं दीयते, स्तोकेन जलेन क्वाथ्यद्रव्यस्य गतरसत्वाभावात्[१] । तेन, कर्षादारभ्य पलपर्यन्तक्वाथे मृदुन्यपि षोडशगुणं जलं दीयते, पलादूर्ध्वं तु कुडवपर्यन्तमष्टगुणं जलं दीयते। तदेवमनिर्दिष्टद्रव्यजलशेषमानमप्याचार्येण गतरसत्वाभिधानात् सर्वकषायद्रव्यादिपरिमाणमुक्तम्। यदि हि द्रव्यादीनां नियतं प्रमाणं ब्रूयात्, तदा द्रव्यापेक्षया तथा स्नेहादिसाधनापेक्षया देयक्वाथ्यापेक्षया च यद्भिन्नं परिमाणं तन्न गृहीतं स्यात्। तदर्थाभिधायिकाश्च स्वतन्त्रान्तरपरिभाषा लिख्यन्ते। पातव्यकषाये कृष्णात्रेयः—"क्वाथ्यद्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम्" इति; अन्यत्राप्युक्तं—"क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते" इति; तथा "कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम्। ततस्तु कुडवं यावत्तोयमष्टगुणं भवेत्" इति; सुश्रुते च स्नेहादिक्वाथपरिभाषा—"चतुर्गुणेनाष्टगुणेन षोडशगुणेन वाऽम्भसाऽभ्यासिच्य चतुर्भागावशिष्टं क्वाथयित्वाऽवतारयेत्[२]" ( सु. चि. अ. ३१ ); इत्यादिपाठभेदाच्चतुर्गुणाष्टगुणषोडशगुणजलदापिकाः श्रूयन्ते, ताः कठिनादिद्रव्यभेदाद्बोद्धव्याः । यदुक्तं—"मृदौ चतुर्गुणं देयं, कठिनेऽष्टगुणं तथा। कठिनात् कठिनतरे देयं षोडशिकं जलम्" इति।

एवं तन्त्रान्तरपरिभाषायां[१] च व्यवस्था वक्तव्या। अग्निवेशे हि श्रूयते—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम्। पादशेषं च कर्तव्यमेष क्वाथविधिः स्मृतः॥ चतुर्गुणेनाम्भसा वा द्वितीयः समुदाहृतः" इति; अत्र मध्यविधयाऽष्टगुणत्वमपि पानीयस्य लभ्यते; तेनाप्युक्तं—"द्रव्याणां मध्यपाकार्थं यत्र मात्रा न दर्शिता। पादांशादौषधात्तत्र जलं दद्याच्चतुर्गुणम्॥ चतुर्भागावशिष्टं च कषायं कारयेद्भिषक्" इति। एवमन्या अपि तन्त्रान्तरपरिभाषा अविरोधेन नेयाः। अत्रैके वदन्ति—यदेतद्व्याधितरूपीये कषायकरणमुद्दिष्टं तच्चिरुहाधिकारे, तद्विशिष्टार्थविषय एव, तथाविधकषायकरणं नान्यत्र; यथा बलातैले—"बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम्। जलाढकशते पक्त्वा" (चि. अ. २८) इत्याद्युक्तं मानं न क्वाथान्तरे याति, किन्तु तत्रैव नियमितमिति। मैवं, विषयविशेषोद्देशविहितोऽपि विधिर्विषयान्तरेऽपि वृद्धवैद्यव्यवहारानुमत्या तथा तन्त्रान्तरपरिभाषासंवादेन च विषमतन्त्रं वा दृष्ट्वा समानत्वेनैव व्यवस्थाप्यते; यथा इक्ष्वाकुकल्पे उक्तं—"यावत् स्यात्तन्तुमत्तोये पतितं तु न शीर्यते" ( क. स्था. अ. ३ ) इत्यादि लेहपाकलक्षणं विषयविशेषोक्तं विषयान्तरेऽपि साधारणं भवति। अत्र पेयक्वाथमात्राऽपि तु इयत्तया नोक्ता, तस्याः पुरुषाद्यपेक्षया नानात्वात्; सामान्येन च यदुक्तं—"दोषप्रमाणानुरूपो हि भैषज्यप्रमाणविकल्पो बलप्रमाणविशेषापेक्षो भवति" ( वि. अ. ८ ) इति; एतेन, यावन्मात्रमौषधं बलाभ्याद्यपेक्षयोपपद्यते यस्य पुरुषस्य, तावन्मात्रमौषधं तस्य देयमित्युक्तं भवति। उक्तं चान्यत्र—"मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः। व्याधिं द्रव्यं च कोष्ठं च वीक्ष्य मात्रां प्रयोजयेत्" इति। तत्रादूरान्तरा मध्यपुरुषाभिप्रायेण या मात्रा भवति, सा सूचितैव तन्त्रकर्त्रा "पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत्" ( चि. अ. १९ ) इत्यादिना, तथा पटोलाद्येऽपि "पलं तथैषां सह चूर्णितानां जले शृतं दोषहरं पिबेच्च" इत्यादिना। सुश्रुतेऽप्युक्तं—"व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते" ( सु. सू. अ. ३९ ) इति, पले च क्वाथ्ये षोडशपलस्य पादशेषतायां चतुःपलरूपोऽञ्जलिरेव भवति। दारुकोऽप्याह—"जघन्या द्विपला प्रोक्ता मात्रा, मध्या चतुष्पला। उत्तमा षट्पला प्रोक्ता क्वाथस्नेहौषधेषु तु" इति। अन्यत्र चोक्तम्—"उत्तमस्य पलं मात्रा, त्रिभिश्चाक्षैश्च मध्यमा। जघन्यस्य पलार्धं तु स्नेहक्वाथ्यौषधेषु च" इति। एताश्चादूरान्तरार्था बलाभ्यादिमानेन व्यवह्रियमाणा एव परिभाषाः। अन्यच्चिन्त्यते—यदेतच्चतुर्गुणत्वादिना जलमुक्तं, तत् किं कृतद्वैगुण्यं सर्वत्र ग्रहीतव्यम्, उक्तं हि—"शुष्कद्रव्येष्विदं मानं द्विगुणं तद्द्रवार्द्रयोः" इति; मैवं, सुनिषण्णकादेर्घृतद्रव्यस्य द्वात्रिंशत्पलपरिमाणे द्रवप्रस्थे सिद्धेऽपि यदयं—"त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः"

१ 'स्तोकद्रव्यस्य' इति पा०। २ 'अपहरेत्' इति पा०।

१ 'तन्त्रान्तरपरिभाषाणां' इति पा०।

( चि. अ. १४ ) इति करोति, तेन तन्त्रान्तरपरिभाषानुमतं कुडवादावेव माने द्वैगुण्यं भवति, कुडवपूर्वमाने तु द्रवार्द्राणां द्वैगुण्यं नास्तीति दर्शयति । येन, पूर्वपरिभाषयैव द्वैगुण्ये लब्धे यत् पुनर्द्वात्रिंशत्पलप्रस्थकीर्तनं, तत् पूर्वपरिभाषाव्यभिचारे सति क्वचिद्द्वैगुण्यं दर्शयति । तेन, रक्तिकादौ तत्परिभाषार्थव्यभिचारस्तन्त्रान्तरप्रमाणादुन्नीयते । तथाचात्रेयः—"द्वैगुण्यं कुडवादौ तु शुष्कमानाद्द्रवस्य हि । आर्द्रस्याल्पल्पवीर्यत्वाज्ज्ञेयमन्यत्र तत् समम्" इति; तथा जतूकर्णेऽप्युक्तम्—"आर्द्राणां च द्रवाणां च द्विगुणाः कुडवादयः" इति; अन्यत्राप्युक्तं—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् । शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्तितम्" इति । एवं च कुडवादिमानयोग्यस्यापि यत्र द्रव्यस्य पलोल्लेखेन[1] मानं गृह्यते, तत्रापि न द्वैगुण्यम् । तेन "रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत्" ( चि. अ. २८) इत्यादिषु पलोल्लेखेन जलं गृह्यमाणं न द्विगुणं भवति । क्वचित् पलोल्लेखमानविधानेऽपि तन्त्रान्तरदर्शनात् कुडवादिविवक्षां कृत्वा पलोल्लेखागतेऽपि द्रवे द्वैगुण्यं भवति । यथा क्षतक्षीणचिकित्सिते "मधुकाष्टपलद्राक्षाप्रस्थक्वाथे" ( चि. अ. ११ ) इत्यादिना यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षायाः प्रस्थः, मधुकस्यार्धक्वाथः" इत्यादिना ग्रन्थेन पठितः; तेन, जतूकर्णे मधुकस्यार्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव द्रवं भवति, तत्प्रत्ययाच्चेहापि मधुकाष्टपलोल्लेखविहितक्वाथ्ये कुडवद्वयविवक्षया कृतद्वैगुण्यमेव जलं देयम् । एवमन्यत्राप्यनुसरणीयम् । अन्ये तु, "कुडवादावित्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा कुडवे न द्वैगुण्यमस्ति" इति ब्रुवते; ततश्च सुश्रुते "स्नेहकुडवे साध्ये भेषजपलं पिष्टं कल्कं" (सु. चि. अ. ३१) इत्युक्तं, तत् कुडवे स्नेहचतुःपले भेषजपलं भवतीति कृत्वा स्नेहप्रस्थेऽष्टपलकल्कदानव्यवहार उपपन्नः; यदि तु कुडवेनाष्टौ पलानि स्नेहस्य गृह्यन्ते, तदा प्रस्थे चतुःपलकल्कदानमव्यवहारसिद्धं स्यात्; एतन्नातिसाधु; यतस्तत्रैव स्नेहकुडवे साध्ये क्वाथ्यद्रव्यप्रस्थो विधेय इत्युक्तं, तत्र यदि कुडवेन स्नेहपलचतुष्टयं गृह्यते तदा चतुःपले स्नेहे षोडशपलक्वाथ्यग्रहणं स्यात्, न च तथा व्यवहरति, क्वाथ्यषोडशपलं हि अष्टपले स्नेह एव गृह्यते, तस्मादसाधकमेतत् कुडवाद्वैगुण्यस्येति । द्वैगुण्यं कुडवे युक्तं, यथाऽगस्त्यहरीतक्यां मधुनः कुडवं यदिहोक्तं, तत्तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते; तथा तन्त्रान्तरे—"त्रायमाणा चतुःपलं दशकेऽम्भसि शेषिते । कुडवे कुडवान् सर्पिःक्षीरधात्रीरसान् पचेत्" इति श्रूयते; तत्र यदि चतुःपलः कुडवः स्यात्, तदाऽत्रोक्तत्रायमाणाघृतेन सह विरोधः स्यात्; उक्तं हि—"जले दशगुणे साध्यं त्रायमाणाचतुःपलम्" इत्यादि, यावत् "रसस्यामलकानां च क्षीरस्य च घृतस्य च । पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत्" ( चि. अ. ५ ) इति, तथाऽन्यत्राप्युक्तम्—"आर्द्रद्रव्यद्रवद्रव्यपलैरष्टभिरेव च । शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः" इति; तस्मात् कुडवे द्वैगुण्यं साधु । आर्द्रद्वैगुण्ये तु, येषां द्रव्याणां शुष्काणामुपयोग उक्तस्तेषामार्द्रप्रयोगे द्वैगुण्यं भवति; ये तु नित्यमार्द्रा एवोपयुज्यन्ते, न तेषां द्वैगुण्यम् । यदुक्तं—"वासाकुटजकूष्माण्डशतपत्रीसहाचराः । नित्यमार्द्राः प्रयोक्तव्या न तेषां द्विगुणं भवेत्" इति । एतत् सर्वं पेयक्वाथप्रसङ्गेनोक्तं स्नेहपाकेऽपि चिन्तनीयम् । स्नेहपाके तु स्नेहात् पादिकः कल्को देयः, तथाहि वक्ष्यति—"जलस्नेहौषधानां तु प्रमाणं यत्र नेरितम् । तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम्" ( क. अ. १२ ) इति । चतुर्गुण एव स्नेहो द्रवत्वेऽपि न द्वैगुण्यात् कल्कादष्टगुणो भवति । अन्यत्राप्युक्तं—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः" इति । यत्तु, अष्टपल एव स्नेहे कल्कस्य पलमानत्वं, तदागमसिद्धमपि न व्यवह्रियते; उक्तं हि कृष्णात्रेये—"स्नेहपाकविधौ यत्र प्रमाणं नोदितं क्वचित् । स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन तु" इति । तथा सुश्रुतेऽपि स्नेहकुडवे कल्कपलमुक्तम् । तदेतदकल्कसाध्यत्वं स्नेहस्य स्वरसेनातिगुरुणा साध्ये स्नेहे पुष्पकल्कसाध्ये वा व्यवस्थापनीयम् । द्रव्यस्य हि ससारत्वनिःसारत्वाभ्यां कल्कस्याल्पत्वभूयस्त्वे दृष्टे । यदुक्तं शौनकवचनमनुवदता वाग्भटेन—"स्नेहे सिध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्" इति; तथा "शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः । कल्काद्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम्" इति । अत्र स्नेहप्रस्थापेक्षया चतुःपलः कल्कः स्नेहादष्टमभाग एव भवतीत्यादिविशेषवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहति । भवतु, अलमतिप्रपञ्चेन, सर्वथा व्यवहारानुगतमेव शास्त्रं प्रमाणीकर्तव्यम्[2] ॥ १९७–१९९ ॥—

**कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ॥ २०० ॥**
**पटोलः सारिवा मुस्तं पाठा कटुकरोहिणी ।**
**निम्बः पटोलस्त्रिफला मृद्वीका मुस्तवत्सकौ ॥ २०१ ॥**
**किराततिक्तममृता[1] चन्दनं विश्वभेषजम् ।**
**गुडूच्यामलकं मुस्तमर्धश्लोकसमापनाः ॥ २०२ ॥**
**कषायाः शमयन्त्याशु पञ्च पञ्चविधाञ्ज्वरान् ।**
**संततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ २०३ ॥**

१ 'पलोल्लेख्यं' इति पा० ।

१ '०सहामृताः । प्रसारिण्यश्वगन्धा च शतपुष्पा सहाचरा' इति पा० । २ 'वस्मांनुसरणीयमस्माभिः' इति चक्रदत्तसंग्रहव्याख्यायां शिवदाससेनः ।

पञ्च पञ्चविधं ज्वरमिति यथासंख्यं सन्ततादिषु कलिङ्गादयो ज्ञेयाः। अन्ये तु पञ्चसु पञ्चैव यौगिकानाहुः ॥ २००-२०३ ॥

**वत्सकारग्वधौ पाठां षड्ग्रन्थां कटुरोहिणीम्।**
**मूर्वां सातिविषां निम्बं पटोलं धन्वयासकम्॥२०४॥**
**वचां मुस्तमुशीरं च मधुकं त्रिफलां बलाम्।**
**पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥ २०५ ॥**
**मधूकमुस्तमृद्वीकाकाश्मर्याणि परूषकम्।**
**त्रायमाणामुशीरं च त्रिफलां कटुरोहिणीम् ॥२०६॥**
**पीत्वा निशिस्थितं जन्तुर्ज्वराच्छीघ्रं विमुच्यते।**

वत्सकारग्वधमित्यादिना बलामित्यन्तेन केचिद्योगत्रयं, केचिदेकमेव योगं वदन्ति । निशि स्थितमिति शीतकषायम् ॥ २०४-२०६ ॥—

**जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ॥ २०७ ॥**
**विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत्।**
**त्रिफलां त्रायमाणां च मृद्वीकां कटुरोहिणीम् ॥ २०८॥**
**पित्तश्लेष्महरस्त्वेष कषायो ह्यानुलोमिकः।**
**त्रिवृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः ॥ २०९ ॥**

जातीत्यादौ जातीपल्लवाः। सगुडं पिबेदित्यत्र गुडस्य प्रक्षेप्यत्वेन क्वाथ्यद्रव्यापेक्षया पादिकत्वम्। एवमन्यत्रापि प्रक्षेपे बोद्धव्यम् ॥ २०७-२०९ ॥

**बृहत्यौ वत्सकं मुस्तं देवदारु महौषधम्।**
**कोलवल्ली च योगोऽयं संनिपातज्वरापहः ॥ २१० ॥**
**शटी पुष्करमूलं च व्याघ्री शृङ्गी दुरालभा।**
**गुडूची नागरं पाठा किराततं कटुरोहिणी ॥ २११ ॥**
**एष शट्यादिको वर्गः सन्निपातज्वरापहः।**
**कासहृद्ग्रहपार्श्वार्तिश्वासतन्द्रासु शस्यते ॥ २१२ ॥**
**बृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरालभा।**
**वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥ २१३ ॥**
**बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः।**
**कासादिषु च सर्वेषु दद्यात् सोपद्रवेषु च ॥ २१४॥**

अत्र कषायप्रकरणागतत्वात् सन्निपातचिकित्सावसरमप्युल्लङ्घ्य सन्निपातहरौ शट्यादिबृहत्यादिप्रयोगौ पठति २१०-२१४

**कषायाश्च यवागूश्च पिपासाज्वरनाशनाः।**
**निर्दिष्टा भेषजाध्याये भिषक्तानपि योजयेत् ॥२१५॥**

भेषजाध्याये भेषजचतुष्के; चतुष्केऽपि हि 'अधीयन्ते अस्मिन्नर्था' इति कृत्वा अध्यायशब्दो वर्तत एव। योगमात्रेण तु तत्र षड्विरेचनशताश्रितीयेऽध्याये ( सू.अ.४)ज्वरघ्नतृष्णघ्नौ महाकषायौ प्रोक्तौ; तयोश्च प्रत्येकद्रव्यकृताः कषाया बहवो भवन्तीति कषाया इति बहुवचनं साधु । यवागवश्च अपामार्गतण्डुलीये (सू. अ. २) प्रोक्ताः ॥ २१५ ॥

**ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।**
**रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम्॥२१६॥**
**रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च।**
**यः स्यादनुबलो धातुः स्नेहवध्यः स चानिलः ॥२१७॥**

इदानीं सर्पिःप्रयोगानभिधातुं सर्पिषो विषयमाह—ज्वरा इत्यादि। वमनैरित्यनेनेहावस्थाविधेयवमनप्रयोगान् सर्पिःषडहभाविनो दर्शयति। लङ्घनवचनेन च लङ्घनसमानकालाः खेदादयो गृह्यन्ते । रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि सामतानुबन्धात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति तत्र सर्पिर्न दातव्यमिति दर्शयति। अत्र कषायैरित्याद्यसमासनिर्देशेन व्यस्तैः समस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्तव्यमिति दर्शयति । नन्वविशेषेण सर्वज्वरेषु कषायानन्तरं सर्पिरुच्यते, तत्कथमुपपन्नं भवतीत्याह—रूक्षं तेज इत्यादि। तत्र तेजःशब्दो यद्यपि पित्तानलस्नेहशक्तिद्युतिषु ग्रीष्मे च वर्तते, तथाऽपीह तेजःशब्देनोष्माऽभिधीयते; तेन रूक्षस्वरूप ऊष्मा सर्वत्र ज्वरकर इत्युक्तं भवति। स चोष्मा आमाशयविक्षिप्तस्याग्नेस्तथा देहभवो ज्वरप्रभावकृतश्च ज्वररूपो ज्ञेयः। यदुक्तं—"स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम्। संतापमधिकं देहे जनयन्ति" इत्यादि। अयं च ऊष्मा सूक्ष्मविचारे यद्यपि पित्तस्य भवति,यदुक्तं—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" ( वा. चि. अ. १ ) इति, पित्तं च यद्यपि "सस्नेहमुष्णं तीक्ष्णं च" (सू.अ.१०) इत्यादिना ग्रन्थेन स्निग्धमुक्तं, तथाऽप्यवस्थावशात् पित्तं निरामं सत् निःस्नेहं भवति, स्नेहश्च पित्तगुणो द्रवयोगनिमित्तको न सांसिद्धिकः; तेन स्नेहापगमः पित्तस्योद्धते एवावस्थायां; तेन निःस्नेहस्य पित्तस्योष्मा रूक्ष एव भवति। इयं च व्याध्यवस्था व्याधिप्रभावादेव जीर्णावस्थायां भवति, यथा—मदात्ययस्यान्ते वातपित्तत्वं; यदुक्तं "पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः" ( चि. अ. २४ ) इति। क्षारपाणिनाऽप्युक्तं—"ज्वरोष्मणा रूक्षितेषु धातुषु बलवान् मारुतो ज्वरानुबन्धं विषमज्वराणामन्यतमं वा कुर्यात्" इत्यादि । तत्र रूक्षेण तेजसा ज्वरकालसंबन्धाद्रूक्षितस्य ज्वरिणो योऽनुबन्धो धातुरनिलः स्यात् स च स्नेहवध्य इति सर्पिःकृतस्नेहगुणवध्य इत्यर्थः; चकाराद्रूक्षं तेजो यज्ज्वरकरं तदपि सर्पिःकृतस्नेहवध्यमिति समुच्चिनोति। धातुरिति विशेषणेन वायोर्धारणात्मकता उच्यते; ततश्च धारणात्मकस्य वायोः प्रकोपो महात्यय इति सूचयति। अनु

१ 'विषमज्वरचिकित्सामाह—कलिङ्गका इत्यादि। एते पञ्च योगाः सन्ततसततकान्येद्युष्कतृतीयचतुर्थकेषु यथासंख्यं ज्ञेयाः; अन्ये तु सर्व एव योगाः सर्वत्रेत्याहुः। तत्र यथासंख्यमेव युक्तं, सततोल्लेखेन पटोलादियोगस्य, तथा निम्बादेश्चान्येद्युष्कोल्लेखेन, गुडूच्यादेश्च चातुर्थकोल्लेखेन क्षारपाणौ दृष्टत्वात्' इति शिवदाससेनः। २ 'क्वाथद्रव्यापेक्षया' इति पा०।

१ 'स्नेहसाध्यः' इति पा० २ 'विशेषमाह' इति पा०। ३ 'अवस्थाविशेषात्' इति पा०। ४ 'पित्तस्योपपद्यते' इति पा०।

पश्चाद्बलं भवति यस्य सोऽनुबलः । तेन सर्वज्वरेषु कषायादिना द्वादशाहेन च कालेन कफांशविक्षये सति ज्वरोष्मा वृद्धो भवति, तद्विरूक्षणाच्च वायुरपि वृद्धो भवति । अत्र ज्वरोष्मणि पित्तधर्मे सर्पिस्तावच्छैत्याद्धितं भवतीति प्रसिद्धत्वान्नोक्तं; स्नेहांशेनैव तु सर्पिर्यथा पित्तोष्माणं ज्वरकरं रूक्षस्वरूपं तथा वातं च स्नेहाच्छमयति, तत् 'रूक्षं तेज' इत्यादिना श्लोकेनोक्तं भवति । अन्ये तु तेजःशब्देनेह पित्तमेव ग्राहयन्ति । पित्तं हि द्विविधं—सद्रवं निर्द्रवं च । यत् सद्रवं तत् सस्नेहं, यत्तु लङ्घनादिना क्षपितार्द्रभागं निर्द्रवं तद्रूक्षं भवति, तदिह 'रूक्षं तेज' इत्यनेन गृह्यते । अन्ये तु 'यः स्यादनुबलो धातुः' इत्यनेनानुबन्धरूपं कफं ग्राहयन्ति, ततोऽनुबन्धः कफो रूक्षं पित्तं वातश्च स्नेहसाध्यो भवतीत्यर्थः; स्नेहशब्देन च प्रकरणात् सर्पिरुच्यते, सर्पिश्च कफजित् संस्काराद्भवति; यदुक्तं—"घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्" इति ( नि. अ. १ ); किंच "अत ऊर्ध्वं कफे मन्दे" इत्यादिना त्रिष्वपि दोषेषु सर्पिःप्रयोगोऽनुमतः; तदिहापि त्रय एव दोषा यथोक्तव्याख्यया सर्पिर्विषयाः प्रतिपादिता भवन्तीति । अस्माकं तु पूर्वं एव व्याख्याने स्वरसः । अन्ये तु 'रूक्षे तेजो ज्वरकरं' इति पठन्ति । तत्र रूक्षे इति कषायादिभी रूक्षीकृतशरीरे इति ज्ञेयं, शेषं च पूर्ववत् । अयं च पाठः पूर्वटीकाकृद्भिर्भासदत्त-स्वामिदासाषाढवर्म-ब्रह्मदेवप्रभृतिभिरपि व्याख्यातत्वान्न प्रतिक्षेपणीयः । खरनादेनापि समानोऽयं पाठः । उक्तं हि तत्र—"कषायपानाद्वमनाल्लङ्घनाल्लघुभोजनात् । रूक्षितानां ज्वरो मोक्षे सर्पिःपानमुदीक्षते ॥ रूक्षतेजोऽधिके देहे"इत्यादिना ॥ २१६ ॥ २१७ ॥

**कषायाः सर्व एवैते सर्पिषा सह योजिताः ।**
**प्रयोज्या ज्वरशान्त्यर्थमग्निसंधुक्षणाः शिवाः ॥२१८॥**

संप्रति सर्पींषि प्राह—कषाया इत्यादि । य एते ज्वरघ्ना कषाया उक्तास्ते सर्पिषा सह योजिताः सर्पिःसाधनत्वेन प्रयुक्ताः प्रयोज्याः; यथोक्तकषायद्रव्यैः स्वविषय एव सर्पींषि साधयित्वा प्रयोज्यानीति वाक्यार्थः । अन्ये तु कषायाणां सर्पिषा मिश्रीकृतानामनेन वचसा प्रयोगमिच्छन्ति ॥ २१८ ॥

**पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।**
**कलिङ्गकास्तामलकी सारिवाऽतिविषा स्थिरा २१९**
**द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ।**
**सिद्धमेतैर्घृतं सद्यो जीर्णज्वरमपोहति ॥ २२० ॥**
**क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।**
**अंसाभितापमग्निं च विषमं संनियच्छति ॥ २२१ ॥**

पिप्पल्य इत्यादि । पिप्पल्यादौ घृते पिप्पल्यादीनां विशेषानुक्तेः कषायत्वं कल्कत्वं चैके ब्रुवते, अन्ये तु कल्कमेवेच्छन्ति । द्रवकार्यं तु द्रवस्यानुक्तत्वात्तोयेनैव कर्तव्यं, "द्रवकार्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम्" ( क. अ. १२ ) इति वचनात् । ननु यत्र कल्कत्वेन द्रव्यश्रुतिः, द्रवं च न श्रुतं, तत्र जलं ग्रहीतव्यं, यथा—"त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात् पले । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत्" ( चि. अ. १५ ) इति; यत्र तु कषायत्वं कल्कत्वं वा नोक्तं तत्र क्वाथकल्कावेव कर्तव्यौ, यदुक्तं सुश्रुते—"कल्कक्वाथावनिर्देशे गणात्तस्मात् प्रयोजयेत्" ( सु. चि. अ. ३१ ) इति । मैवं, सुश्रुतोक्तपरिभाषा हीयं गणविषया एव, 'गणात्तस्मात् प्रयोजयेत्' इति वचनात्; न च पिप्पल्यादयोऽमी गणत्वेनोक्ताः, गणोऽपि यत्राधिकरणेन श्रुतस्तत्रैव क्वाथकल्ककरणं; यदुक्तमन्यत्र—"यत्राधिकरणेनोक्तिर्गणस्य स्नेहसंविधौ । तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिभिः" इति; किंच सामान्येन द्रव्यस्य स्नेहसाधनाभिधाने यदि कल्ककषायत्वं स्यात्तदा बलातैलादौ "बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत्" ( चि. अ. २९ ) इति न कुर्यात् कल्ककषाययोरुपादानं, सामान्यसाधनवचनेनैव लब्धत्वात्, तस्मात् कल्कमात्रेणैव पिप्पल्यादिद्रव्यं जलं च चतुर्गुणं देयम्; एवमन्यत्रापि बोद्धव्यम् । अत्र च पक्तव्यघृतस्य प्रमाणानिर्देशादव्यवस्थितमानमेव सर्पिरिच्छातः पक्तव्यं, यत्र तु प्रस्थादिमाननिर्देशं करोति तत्र तावन्मात्रेणैव स्नेहसाध्यरोगोपशमो भवतीति ज्ञेयम् । तथाहि वातव्याधौ प्रभूतस्नेहसाध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति, प्रपौण्डरीकाद्ये नस्ययोगितया कुडवमानं स्नेहं वक्ष्यति, कुष्ठोक्ततिक्तकषट्पलादौ अत्यल्पपाकसंविधानेन पक्वस्य घृतस्य कार्यकर्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्बोधयति । तत्र यदि कुष्ठस्य वीर्धरोगतया भूयो भूयस्तिक्तषट्पलप्रलेपेन प्रयोजनं तदा पुनः पुनः षट्पलमानं पक्तव्यं घृतं, "यथा कुर्वन्ति स उपाय" ( सू. अ. २६ ) इति वचनात् । एवमगस्त्यहरीतक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम् । तस्मान्न यादृच्छिकं क्वचिदाचार्यस्य मानाभिधानमनभिधानं च । तामलकी 'भूम्यामलकी' इति ख्याता । हलीमकं कामलाभेदम् । संनियच्छति समीकरोति ॥ २१९–२२१ ॥

**वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ।**
**पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥ २२२ ॥**
**पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।**
**कल्कीकृतैश्च विपचेद्घृतं जीर्णज्वरापहम् ॥ २२३ ॥**

वासाद्ये घृते क्वाथस्य परिमाणं यद्यपि नोक्तं, तथाऽपि द्विगुण एव क्वाथो ग्राह्यः; स्नेहपाके चतुर्गुण एव द्रवः, "स्नेहात्तोयं चतुर्गुणम्" ( क. अ. १२ ) इति वचनात्; जलशब्दश्चात्र द्रवोपलक्षणः । अत्र च "द्वाभ्यामपि चातुर्गुण्यम्" इति परिभाषया यद्यपि क्षीरं कषायवद्द्विगुणमत्र लभ्यते, तथाऽपि त्रिविधशिष्यबुद्धिहिताय स्पष्टार्थं क्षीरद्वैगुण्याभिधानमिति ब्रुवते । तत्र क्षीरस्य

१ 'एवं पाठीयकल्पना' इति पा० ।

मानानुक्तौ "क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कश्च स्नेहपादिकः" इति वचनात् क्षीरस्य द्रवान्तरसंस्त्वे सति स्नेहसमत्वमेव स्यात्; ततश्च कषायभागत्रयं क्षीरं चैकभागमिति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषा स्यात्; तस्मात् कर्तव्यं क्षीरद्वैगुण्यवचनम्। अन्ये तु—"द्वाभ्यामपि चातुर्गुण्यमिति परिभाषया प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति, ततश्चेह कषायस्य चातुर्गुण्यं क्षीरस्य तु द्वैगुण्यं भवति। तत्र "एकेनापि चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः समम्" इति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहचातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कर्तव्यं यथा स्नेहाच्चतुर्गुणं स्यात्, तच्च मिलितैव चातुर्गुण्यं भवति न प्रत्येकम्। चतुर्गुणद्रवपरिभाषा तु पञ्चप्रभृतिद्रवसान्निध्ये विशेषवचनाद्बाध्यते । वचनं हि—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् स्यात्तु चतुर्गुणम्" इति ॥ २२२ ॥ २२३ ॥

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ २२४ ॥
कृत्वा कषायं पेय्यार्थं दद्यात्तामलकीं शटीम्।
द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ २२५ ॥
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम्।
क्षयकासशिरःशूलपार्श्वशूलांसतापनुत् ॥ २२६ ॥

बलादावपि क्वाथपयसोः पूर्वोक्तक्वाथक्षीरसाहचर्यात् प्रत्येकं द्विगुणत्वं ज्ञेयम् ॥ २२४–२२६ ॥

ज्वरिभ्यो बहुदोषेभ्य ऊर्ध्वं चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २२७ ॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥ २२८ ॥
क्षौद्राम्बुना रसेनेक्षोरथवा लवणाम्बुना।
ज्वरे प्रच्छर्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥ २२९ ॥
मृद्वीकामलकानां वा रसं प्रस्कन्दनं पिबेत्।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ २३० ॥
लिह्याद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा।
पिबेद्वा क्षौद्रमावाप्य सघृतं त्रिफलारसम् ॥ २३१ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् २३२
ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम्।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥ २३३ ॥

संप्रति क्रमसूचितवमनविरेचनयोगानाह—ज्वरिभ्य इत्यादिना। बहुदोषेभ्य इत्यनेन अल्पदोषेषु संशोधनं निषिद्धमिति स्फोरयति । काल इति यथोक्तवमनविरेचनयोग्यज्वरावस्थायाम्। कल्प इति कल्पस्थाने । मदनपिप्पलीयुक्तं कफे, कलिङ्गयुक्तं पित्तश्लेष्मणि, मधुकयुक्तं तु दाहप्राये। क्षौद्रयोगान्मधुरीकृतमम्बु क्षौद्राम्बु। सैन्धवयोगाल्लवणीकृतमम्बु लवणाम्बु। प्रस्कन्दनमिति विरेचनम्। आवाप्येति उपयोज्य ॥ २२७–२३३ ॥

कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ २३४ ॥
एरण्डमूलोत्कथितं ज्वरात् सपरिकर्तिकात्।
पयो विमुच्यते पीत्वा तद्वद्बिल्वशलाटुभिः ॥ २३५ ॥
त्रिकण्टकबलाव्याघ्रीगुडनागरसाधितम्।
वर्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥ २३६ ॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम्।
शृतं पयः सखर्जूरं पिपासाज्वरनाशनम् ॥ २३७ ॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥ २३८ ॥
जीर्णज्वराणां सर्वेषां पयः प्रशमनं परम्।
पेयं तदुष्णं शीतं वा यथास्वं भेषजैः शृतम् ॥ २३९ ॥

पाठक्रमागतक्षीरप्रयोगानाह—कासादित्यादि । अत्र पञ्चमूल्यादिद्रव्यस्य तथा क्षीरस्य पानीयस्य च मानानुक्तौ वृद्धवैद्यव्यवहारसिद्धया परिभाषया मानकल्पना; यदुक्तं—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः" इति। एतच्च द्रव्यस्यार्धपलं, क्षीरं पलचतुष्टयं, पानीयं पलानि षोडश दत्त्वा, क्षीरावशेषः पाकः कर्तव्यः; एवंप्रकारा मानव्यवस्था । यत्र तु माषपर्णीभृतीये "मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् । श्वदंष्ट्रां क्षीरिकां माषान् गोधूमांश्छालिषष्टिकान् ॥ पयस्यर्धोदके पक्त्वा कार्षिकानाढकोन्मिते । विवर्जयेत् क्षीरशेषं" (चि. अ. २) इत्यादिना क्षीरद्रव्यादिमानमुक्तं तत्तत्रैव विषये ज्ञेयं, तत्रान्तरपरिभाषागृहीतत्वादस्य मानस्य। प्रदेशान्तरयोगोक्तं हि मानं तदेव प्रदेशान्तरेऽपि मानलिङ्गं भवति यत् परिभाषानुगतं, यत्तु परिभाषान्तरबाधकं मानं तत् स्वविषय एवावतिष्ठते; यथा—"साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम्। क्षीरे जलाष्टगुणिते क्षीरशेषं च ना पिबेत्" (चि. अ. ५) इति; एवमन्यदपि तन्त्रान्तरे यत् परिभाषाविरुद्धमानकथनं तत्तत्रैव प्रयोगे व्यवस्थितं ज्ञेयम्। परिकर्तिका परिकर्तनाकारा गुदादिवेदना। नागरमित्यादौ क्षौद्रस्य पाकानर्हत्वेनोत्तरकालं द्रव्यान्तरतुल्यमानस्यैव प्रक्षेपो ज्ञेयः। उष्णं शीतं चेति विकल्प इच्छाविशेषकृतः; प्रवले वाते उष्णं, पित्ते त्वतिबले शीतम् ॥ २३४–२३९ ॥

प्रयोजयेज्ज्वरहरान्निरूहान् सानुवासनान्।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २४० ॥

१ 'द्रवान्तसांनिध्ये' इति पा०। २ 'तृष्णाकास' इति पा०।

१ 'दाहशान्त्यै' इति पा०।

पटोलारिष्टपत्राणि सोशीरश्चतुरङ्गुलः।
ह्रीवेरं रोहिणी तिक्ता श्वदंष्ट्रा मदनानि च ॥ २४१ ॥
स्थिरा बला च तत् सर्वं पयस्यर्धोदके शृतम्।
क्षीरावशेषं निर्यूहं संयुक्तं मधुसर्पिषा ॥ २४२ ॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च।
वत्सकस्य च संयुक्तं वस्तिं दद्याज्ज्वरापहम् ॥ २४३ ॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः ॥ २४४ ॥
आरग्वधमुशीरं च मदनस्य फलं तथा।
चतस्रः पर्णिनीश्चैवं निर्यूहमुपकल्पयेत् ॥ २४५ ॥
प्रियङ्गुर्मदनं मुस्तं शताह्वा मधुयष्टिका।
कल्कः सर्पिर्गुडः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः ॥ २४६ ॥
गुडूचीं त्रायमाणां च चन्दनं मधुकं वृषम्।
स्थिरां बलां पृश्निपर्णीं मदनं चेति साधयेत् ॥ २४७ ॥
रसं जाङ्गलमांसस्य रसेन सहितं भिषक्।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च ॥ २४८ ॥
ईषत्सलवणं युक्त्या निरूहं मधुसर्पिषा।
ज्वरप्रशमनं दद्याद्बलखेदरुचिप्रदम् ॥ २४९ ॥

निरूहविधौ ज्वरहरानिति वचनेन ज्वरहरैर्द्रव्यैर्निरूहानुवासनकल्पनां दर्शयति। पटोलाद्ये निरूहे पयस्यर्धोदके शृतमिति वचनेन क्षीरतुल्यस्य जलस्य ग्रहणमर्धशब्दस्य समविभागवचनत्वाज्ज्ञेयम्। अत्र च क्वाथकल्कस्नेहादिमानव्यवस्था सिद्धिस्थाने वक्तव्यैव बोद्धव्या। गुडूच्यादौ साधयेद्रसमिति क्वाथं कुर्यात्। ईषत्सलवणमिषत्क्षौद्रसर्पिषा युक्तमिति योज्यम् ॥ २४०-२४९ ॥

जीवन्तीं मधुकं मेदां पिप्पलीं मदनं वचाम्।
ऋद्धिं रास्नां बलां विल्वं शतपुष्पां शतावरीम् २५०
पिष्ट्वा क्षीरं जलं सर्पिस्तैलं च विपचेद्भिषक्।
आनुवासनिकं स्नेहमेतं विद्याज्ज्वरापहम् ॥ २५१ ॥
पटोलपिचुमर्दाभ्यां गुडूच्या मधुकेन च।
मदनैश्च शृतः स्नेहो ज्वरघ्नमनुवासनम् ॥ २५२ ॥
चन्दनागुरुकाश्मर्यपटोलमधुकोत्पलैः।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रशस्यते ॥ २५३ ॥

जीवन्त्याद्येऽनुवासने यमके क्षीरं स्नेहसमं, जलं तु त्रिगुणमिति स्नेहाच्चातुर्गुण्यं द्रवस्य कार्यम्। मदनैश्च शृतः स्नेह इत्यत्रानन्तरोक्तः सर्पिस्तैलरूप एव यमकस्नेहो ज्ञेयः। एवं 'सिद्धः स्नेह' इत्यत्रापि ज्ञेयम् ॥ २५०-२५३ ॥

यदुक्तं भेषजाध्याये विमाने रोगभेषजे।
शिरोविरेचनं कुर्याद्युक्तिज्ञस्तज्ज्वरापहम् ॥ २५४ ॥
यच्च नावनिकं तैलं याश्च प्राग्धूमवर्तयः।
मात्राशितीये निर्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि २५५

यदुक्तमित्यादिना शिरोविरेचनद्रव्यमाह। भेषजाध्याये इति अपामार्गतण्डुलीये (सू. अ. २)। यच्च नावनिकं तैलमिति अणुतैलम् ॥ २५४ ॥ २५५ ॥

अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम् २५६

अभ्यङ्गांश्चेत्यादिना क्रमागतं बहिःपरिमार्जनमाह। यथाभिलाषमिति यथेच्छम्। शीतोष्णं विभज्येति शीतसमुत्थं ज्वरमुष्णसमुत्थं च ज्वरं विभज्य; तत्र शीतसमुत्थे उष्णाभ्यङ्गादयः, उष्णे च शीताः कर्तव्याः ॥ २५६ ॥

सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम्।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक् ॥ २५७ ॥

अत्र च प्रतिलोमव्याख्यया शीताभिप्रायिणोऽभ्यञ्जादीनाह—सहस्रेत्यादि। सहस्रशब्दो विपुलार्थः; तेनानेकधा धौतं सर्पिरित्यर्थः सूचितः ॥ २५७ ॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः—चन्दनभद्रश्रीकालानुसार्यकालीयकपद्मापद्मकोशीरसारिवामधुकप्रपौण्डरीकनागपुष्पोदीच्यवन्यपद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रबिसमृणालशालूकशैवालकशेरुकानन्ताकुशकाशेक्षुदर्भशरनलशालिमूलजम्बुवेतसवानीरगुन्द्राककुभासनाश्वकर्णस्यन्दनवातपोथशालतालधवतिनिशखदिरकदरकदम्बकाश्मर्यफलसर्जप्लक्षवटकपीतनोदुम्बराश्वत्थन्यग्रोधधातकीदूर्वेत्कटशृङ्गाटकमञ्जिष्ठाज्योतिष्मतीपुष्करवीजक्रौञ्चादनबदरीकोविदारकदलीसंवर्तकारिष्टशतपर्वाशीतकुम्भिकाशतावरीश्रीपर्णीश्रावणीमहाश्रावणीरोहिणीशीतपाक्योदनपाकीकालाबलापयस्याविदारीजीवकर्षभकमेदामहामेदामधुरसर्ष्यप्रोक्तातृणशून्यमोचरसाटरूपकबकुलकुटजपटोलनिम्बशाल्मलीनारिकेलखर्जूरमृद्वीकाप्रियालप्रियङ्गुधन्वनात्मगुप्तामधूकानामन्येषां च शीतवीर्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण द्विगुणितपयसा तेषामेव च कल्केन कषायार्धमात्रं मृद्वग्निना साधयेत्तैलम्। एतत्तैलमभ्यङ्गात् सद्यो दाहज्वरमपनयति। एतैरेव चौषधैः श्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत्। एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥ २५८ ॥

इति चन्दनाद्यं तैलम्।

१ 'पर्णीश्चतस्रो मधुकं' इति पा०। २ 'विल्वं' इति पा०। १ '०श्वेतकुम्भिका०' इति पा०।

**मध्वारनालक्षीरदधिघृतसलिलसेकावगाहाश्च सद्यो दाहज्वरमपनयन्ति शीतस्पर्शत्वात् ॥ २५९ ॥**

सूचितं चन्दनाद्यं तैलं ब्रूते—अथेत्यादि । अथशब्दोऽधिकारे । चन्दनाद्येन द्रव्येण संस्कृतं तैलमपि चन्दनाद्यमुच्यते । चन्दनं रक्तचन्दनं, भद्रश्रियं श्वेतचन्दनं, कालानुसार्यं शीतलं, नलिनं पद्मभेदः, विसं मृणालसूत्रं, वेतसः सुगन्धिमूलं, वानीरस्तद्भेदोऽप्यसुगन्धिमूलः, अश्वकर्णः शालभेदः, अरिष्टः पर्वतीयनिम्बः, स्यन्दनः नेमिवृक्षः, वातपोथः पलाशः, तिनिशः वञ्जुलः, कदरः विट्खदिरः, कपीतनः 'गन्धमुण्ड' इति ख्यातः, वटः निष्प्ररोहो वटः, न्यग्रोधस्तु प्ररोहवान्, ज्योतिष्मती काङ्गणिका, संवर्तकः विभीतकः, शतपर्वा श्वेतदूर्वा, शीतं[1]कुम्भिका काष्ठपाटला, महाश्रावणी अलम्बुषा स्थूलफला, शीतपाकी गण्डदूर्वा, ओदनपाकी नीलभेण्डी, काला काकोली, ऋष्यप्रोक्ता ऋद्धिः, तृणशून्यं केतकी । यथालाभमित्यनेन दुःखप्राप्यभेषजपरित्यागेनापि चन्दनादिपाकं दर्शयति । द्विगुणं पयो यस्मिन् क्वाथे तेन द्विगुणपयसा क्वाथेन । अत्र कल्कमानानिर्देशेऽपि स्नेहपादिकत्वं कल्कस्य, "कल्कश्च स्नेहपादिकः" इति वचनात् । अत्र यद्यपि तैलमुष्णं घृतं च शीतलं, शीतं च दाहप्रशमने प्रशस्तं, तथाऽपि सूक्ष्ममार्गानुसारितया व्यवायितया तथा [2]स्पर्शनेनाधिकवातहरतया तैलमेवाभ्यङ्गप्रस्तावे चन्दनाद्यं कृतं न घृतम्; अन्ये घृतादपि तैलं संस्कारवाहितरमिति कृत्वा तैलमिहोक्तमिति ब्रुवते । ननु चन्दनाद्यमिति संज्ञाकरणेन किं ? प्रदेशान्तरे व्यवहारार्थमिति चेत्; न, विनाऽपि संज्ञाकरणे प्रदेशान्तरे यौगिकसंज्ञया व्यवहारो दृष्टः, यथा—"षट्पलं पाययेत् सर्पिः" (चि. अ. ५), तथा "[3]वासाघृतं दाधिकं च पिबेत्र्यूषणमेव च" (चि. अ. १७) इत्यादौ; तथा कृतायामपि संज्ञायां व्यवहारो न दृश्यते, यथा—"एतत् प्रायोगिकं सर्पिः पारूषकमिति स्मृतम्" (चि. अ. २९) इति, तथा पञ्चाङ्गकषायकादिसंज्ञां कृत्वा न च ताभिः प्रदेशान्तरे व्यवहारः कृतः । नैवं पारूषकादिसंज्ञया यद्यपि शास्त्रे व्यवहारो नास्ति, तथाऽपि तद्विद्यानां वैद्यानां तया संज्ञया व्यवहारो भविष्यति, एतदर्थं संज्ञाकरणम् । संज्ञानां च प्रयोगकथनसमयेऽकरणेऽपि योगसिद्धाः संज्ञा भवन्त्येव षट्पलादिकाः । तेन प्रदेशान्तरेऽपि यौगिकसंज्ञाव्यवहारो भवति क्वचित्, क्वचिच्चान्यथोपादेयतया वैद्यप्रसिद्ध्या च प्रयोगसमय एव संज्ञा क्रियत इति न काचित् क्षतिः । एवमन्यत्रापि संज्ञाकरणे व्याख्येयम् । अश्लक्ष्णपिष्टैरिति वचनेन श्लक्ष्णपिष्टलेपस्य दाहकर्तृतां सूचयति; यदुक्तं—"श्लक्ष्णपिष्टघनो लेपश्चन्दनस्यापि दाहकृत् । त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः' ( चि. अ. ३० ) इति ॥ २५८ ॥ २५९ ॥

१ 'श्वेतकुम्भिका' इति पा० । २ 'स्पर्शनेन्द्रियाधिकवातहरतया' इति पा० । ३ 'त्र्यूषणं दाधिकं वाऽपि पिबेद्वासाघृतं तथा' इति पा० ।

भवन्ति चात्र—

**पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च ।**
**कदलीनां च पत्रेषु क्षौमेषु विमलेषु च ॥ २६० ॥**
**चन्दनोदकशीतेषु [2]शीते धारागृहेऽपि वा ।**
**हिमाम्बुसिक्ते सदने [1]दाहार्तः संविशेत् सुखम् २६१**
**हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च ।**
**चन्दनोदकशीतानां संस्पर्शानुरसान्[3] स्पृशेत् २६२**
**स्रग्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि ।**
**शीतवातावहैर्व्यजनै[4]श्चन्दनोदकवर्षिभिः ॥ २६३ ॥**
**नद्यस्तडागाः पद्मिन्यो ह्रदाश्च विमलोदकाः ।**
**अवगाहे हिता दाहतृष्णाग्लानिज्वरापहाः ॥२६४॥**
**प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः ।**
**सान्त्वयेयुः परैः कामैर्मणिमौक्तिकभूषणाः ॥२६५॥**
**शीतानि चान्नपानानि शीतान्युपवनानि च ।**
**वायवश्चन्द्रपादाश्च शीता दाहज्वरापहाः ॥ २६६ ॥**

संस्पर्शानुरसान् स्पृशेदिति वचनान्न चिरं धारयेदिति दर्शयति; चिरधारणे हि तेषामप्युष्णता स्यात् । वायवश्चन्द्रपादाश्च शीता इति अत्र शीता इति विशेषणं वायोः; न चन्द्रपादानां, तेषां सर्वदा शीतत्वात्; किंवा चन्द्रपादा अपि उष्णकाले उष्णसंपर्कादुष्णा भवन्ति, तन्निरासार्थं शीता इति ॥ २६०–२६६ ॥

**अथोष्णाभिप्रायिणां ज्वरितानामभ्यङ्गादीनुपक्रमानुपदेक्ष्यामः—अगुरुकुष्ठतगरपत्रनलदशैलेयध्यामकहरेणुकास्थौणेयकक्षेमकैलावराङ्गदलपुरतमालपत्रभूतीकरोहिषसरलशल्लकीदेवदार्वग्निमन्थबिल्वस्योनाककाश्मर्यपाटलापुनर्नवावृश्चीरकण्टकारीबृहतीशालपर्णीपृश्निपर्णीमाषपर्णीमुद्गपर्णीगोक्षुरकैरण्डशोभाञ्जनकवरुणार्कचिरविल्वतिल्वकशटीपुष्करमूलगण्डीरोरुबूकपत्तूराक्षीवाश्मान्तकशिग्रुमातुलुङ्गपीलुकमूलकपर्णीतिलपर्णीपीलुपर्णीमेषशृङ्गीहिंस्रादन्तशठैरावतकभल्लातकास्फोतका[5]ण्डीरात्मजैकैषीकाकरञ्जधान्यकाजमोदपृथ्वीकासुमुखसुरसं[6]कुठेरककालमालकपर्णासक्षवकफणिज्झकभूस्तृणशृङ्गवेरपिप्पलीसर्षपाश्वगन्धारास्नारुहा[7]रोहावचाबलातिबलागुडूचीशतपुष्पाशीतवल्लीनाकुलीगन्धनाकुलीश्वेताज्योतिष्मतीचित्रकाध्यण्डाम्लचाङ्गेरीतिलबदरकुलत्थमाषाणामेवंविधानामन्येषां चोष्णवीर्याणां यथालाभमौषधानां कषायं कारयेत्, तेन कषायेण तेषामेव च कल्केन**

१ 'सुप्याद्दाहार्दितः सुखम्' इति पा० । २ 'शीते धारागृहेऽपि वा' इति पा० । ३ 'संस्पर्शानुरसा' इति पा० । ४ 'शीतवातकरैर्वीज्यः' इति पा० । ५ '°काण्डीरात्मगुप्ताकाकाण्डैषीका°' इति पा० । ६ '°सुरसकरककण्डीरकुठेरक°' इति पा० । ७ '°रुहावरोहा°' इति पा० ।

सुरासौवीरकतुषोदकमैरेयमेदकदधिमण्डारनालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितमभ्यञ्ज्यात्, तथा शीतज्वरः प्रशाम्यति; एतैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत्, एतैरेव च शृतं सुखोष्णं सलिलमवगाहनार्थं परिषेकार्थं च प्रयुञ्जीत शीतज्वरप्रशमार्थम् ॥ २६७ ॥ इत्यगुर्वाद्यं तैलम्।

अगुर्वाद्ये क्षेमकः चोरकः, रौहिषः 'रामकर्पूर' इति ख्यातः, शिग्रुः शोभाञ्जनभेदः, मूलकपर्णी गुग्गुलुः, तिलपर्णी 'हुल्हुल' इति ख्याता, पीलुपर्णी मोरटा, मूर्वेत्यन्ये, गण्डीरः शमठभेदः, स हि जलस्थलजभेदाद्द्विविधः, आत्मजा पुत्रञ्जीवख्याता, एकैषिका अम्बष्ठा, सुमुखादयः पर्णासभेदाः, रुहा वृक्षरुहा, रोहा अञ्जलिकारिका, शीतपर्णी वृक्षकलम्बुका, नाकुली चविका, गन्धनाकुली रास्नाभेदः, अध्यण्डा शूकशिम्बी। अन्येषां चेत्यनेन रोगभिषग्जितीयाद्युक्तोष्णद्रव्याणि ग्राहयति। सौवीरतुषोदके त्रिवृत्कल्पे वक्ष्यमाणे, मैरेयं सुराकृता सुरा, मेदको जगलः, कट्वरं सस्नेहदधिद्रवः। पात्रम् आढकम्। अत्र कषायादीनि द्रवद्रव्याणि स्नेहसमानि प्रत्येकं कर्तव्यानि; यदुक्तं—"पञ्चप्रसृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुः" इति ॥ २६७ ॥

भवन्ति चात्र—

त्रयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥ २६८ ॥
सा कुटी तच्च शयनं तच्चावच्छादनं ज्वरम्।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः ॥ २६९ ॥
चारूपचितगात्र्यश्च तरुण्यो यौवनोष्मणा।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरज्वरम् ॥ २७० ॥
स्वेदनान्यन्नपानानि वातश्लेष्महराणि च।
शीतज्वरं जयन्त्याशु संसर्गबलयोजनात् ॥ २७१ ॥

स्वेदाध्याये त्रयोदशविधस्योक्तत्वात् पुनस्त्रयोदशविधवचनं सर्वेषामेव करणार्थं; किंवा अधिकानग्निस्वेदनिषेधार्थम्। त्रयोदशविधस्वेदान्तर्गताऽपि कुटी विशेषेण हितत्वात् पुनरुच्यते। तच्च शयनमिति कुटीपरिकरतया प्रतिपादितं शयनम्; एवमाच्छादनमपि। एतच्च शयनाच्छादनं पृथगप्यत्र हितमिति पृथक्पाठाद्दर्शयति। घना इति बहलाः। स्वेदनानि उष्णानि कुक्कुटमदिराकुलत्थादीनि। संसर्गबलयोजनादित्यत्र अनन्तरोक्त एवोष्णाभिप्रायज्वरकरो वातकफसंसर्गः संसर्गशब्देन गृह्यते; तेन वातकफसंसर्गे यदा वातो बलवान् तदा गुरूष्णस्निग्धभूयिष्ठमन्नपानं, यदा तु कफो बलवांस्तदा लघूष्णरूक्षप्रायं विधेयमित्यर्थः। अयं च वातकफजो ज्वरो विशेषेण वायोर्योगवाहितया शीतो भवतीति कृत्वेहोक्तः[1]; तेन केवलकफजः केवलवातजोऽपि शीताभिप्रायो ज्ञेय एव ॥ २६८–२७१ ॥

वातजे श्रमजे चैव पुराणे क्षतजे ज्वरे।
लङ्घनं न हितं विद्याच्छमनैस्तानुपाचरेत् ॥ २७२ ॥
विक्षिप्यामाशयोष्माणं यस्माद्गत्वा रसं नृणाम्।
ज्वरं कुर्वन्ति दोषास्तु हीयतेऽग्निबलं ततः ॥ २७३ ॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि।
न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥ २७४ ॥
पक्तिस्थानात्तथा दोषैरूष्मा क्षिप्तो बहिर्नृणाम्।
न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु ॥ २७५ ॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः।
सप्ताहेन हि पच्यन्ते सप्तधातुगता मलाः ॥ २७६ ॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि।
उदीर्णदोषस्त्वल्पाग्निरश्नन् गुरु विशेषतः ॥ २७७ ॥
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः।
एतस्मात्कारणाद्विद्वान् वातिकेऽप्यादितो ज्वरे २७८
नाति गुर्वीति वा स्निग्धं भोजयेत् सहसा नरम्।
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ॥ २७९ ॥
कुर्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान्।
पाययित्वा कषायं च भोजयेद्रसभोजनम् ॥ २८० ॥
जीर्णज्वरहरं कुर्यात् सर्वशश्चाप्युपक्रमम्।
श्लेष्मलानामवातानां ज्वरोऽनुष्णः कफाधिकः २८१॥
परिपाकं न सप्ताहेनापि याति मृदूष्मणाम्।
तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना ॥ २८२ ॥
आदशाहमुपक्रम्य कषायैरुपाचरेत्।

संप्रति वातजादीनां ज्वराणां पूर्वं निषिद्धं लङ्घनमपकृष्य विशेषचिकित्सामाह—वातज इत्यादि। शमनैरिति कषायसर्पिःपानादिभिः शमनैः ॥ २७२–२८२ ॥—

सामा ये ये च कफजाः कफपित्तज्वराश्च ये ॥ २८३ ॥
लङ्घनं लङ्घनीयोक्तं तेषु कार्यं प्रति प्रति।

संप्रति वातजादीनामप्यवस्थायां लङ्घनं, तथा कफजादीनामपि स्वरूपेणैव सामान्येन लाघवकरं लङ्घनमाह—सामा इत्यादि। सामा इत्यनेन वातिकस्यापि सामस्य लङ्घनीयत्वं ब्रूते। उक्तं ह्यन्यत्र—"सामे वातेऽपि लङ्घनम्" इति। कफजे तु निरामेऽपि लङ्घनं शस्यते। कफपित्तजशब्देन कफयुक्तपित्तजस्यैव लङ्घनीयत्वं न केवलं निरामपित्तजस्य, सामपित्तजस्य तु आमक्षयार्थं लङ्घनं शस्यत एव। यदुक्तमन्यत्र—"सामे पित्तेऽपि लङ्घनम्। कुर्यादेवामपक्त्यर्थं" इति। यत्तूक्तं—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति; तदपि सामत्वेन सद्रवपित्तापेक्षया, क्षीणद्रवांशे तु पित्ते लङ्घनं न कर्तव्यमेव। लङ्घनीयोक्तमितिवचनेन लङ्घनबृंहणीयोक्तं दशविधं लङ्घनमवस्थानिषिद्धवमनादिसर्वथानिषिद्धव्यायामादिरहितं च ग्राह्यम् ॥ २८३ ॥—

1 'कृत्वेहोक्तिः' इति पा०। 1 'ज्वरो' इति पा०।

**वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ॥ २८४ ॥**
**ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान् ।**

पूर्वं यद् 'वमनैर्हरेत्' इत्युक्तं तत्संसृष्टदोषेषु ज्वरेषु कफाधिक्येन, संप्रति तु एकैकदोषजे वमनैश्चेत्यादिना वमनादीनि प्राहेति न पौनरुक्त्यम् ॥ २८४ ॥—

**संसृष्टान् सन्निपतितान् बुद्ध्वा तरतमैः समैः ॥२८५॥**
**ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत् ।**
**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ॥ २८६ ॥**
**कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ।**

संसर्गसन्निपातचिकित्सासूत्रमाह—संसृष्टानित्यादि । तरतमैः समैरिति संसर्गे एकोल्बणे उल्बणतरैः; सन्निपाते च वृद्धतरवृद्धतमदोषारब्धे दोषानुसारेणैव; तथा द्युल्बणतरेऽपि सन्निपाते द्वौ दोषौ तरेणैव ज्ञेयौ, वृद्धवृद्धतरवृद्धतमदोषारब्धे च त्रिदोषेऽत्यर्थंवृद्धा दोषास्तमैर्ज्ञेयाः । येन 'त्रिषु तमः' इति यदुक्तं तत्रिषु मध्ये एकस्य प्रकर्षावधारणे भवति; यदा तु त्रिषु द्वौ प्रकृष्टौ विवक्षितौ तदा एकप्रकृष्टापेक्षया 'द्वयोस्तरः' इत्यस्यैव विषयः । समैस्तु समदोषारब्धसंसर्गः सन्निपातश्च ज्ञेयः । दोषक्रमापेक्षीति दोषापेक्षीत्यनेन अनेकसकलदोषगतवृद्धवृद्धतरत्वादिविशेषे चिकित्सितोपयुक्ते अपेक्षणीयत्वमुक्तं, क्रमापेक्षीत्यनेन च ज्वरितचिकित्सितोक्तलङ्घनादिक्रमापेक्षा दर्शिता । यथोक्तैरौषधैरिति लङ्घनादिभिरञ्जनपर्यन्तैः । ननु त्रिदोषजे ज्वरे चिकित्सा नोपपद्यते, यतो न त्रिदोषशमनं प्रायो द्रव्यं भवति, यद्धि वातस्य पथ्यं तच्छ्लेष्मण्यपथ्यं, यत् पित्ते पथ्यं तच्च प्रायः श्लेष्मण्यपथ्यं; यथा हि तिक्तकषायं कफपित्तहरं तद्वातकरं, यच्च मधुरं वातपित्तहरं तत् कफकरं, यत्तु त्रिदोषहरमामलकादि तत् स्तोकं प्रतिनियतरोगविषयं नावश्यं ज्वरैर्यौगिकं च, सन्निपातश्चायं महात्ययिकः, तत् कथमस्य चिकित्सा कर्तव्येत्याह—वर्धनेनेत्यादि । पञ्चविंशतिप्रकारोऽत्र सन्निपात उच्यते"द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्" ( सू. अ. १७ ) इत्यादिना; तत्र स्वमैते क्षीणद्वादशसु सन्निपातेषु ज्वरारम्भकत्वं नास्ति, क्षीणा हि दोषाः स्वलिङ्गहानिमात्रविकारा नाधिकं ज्वरादिकं कर्तुं समर्थाः; शेषेषु तु त्रयोदशसु त्रिदोषहरद्रव्यस्याभावादभ्यर्हितदोषापेक्षया चिकित्सोच्यते, गत्यन्तराभावात् । तत्र वर्धनेनैकदोषस्येत्यनेनैकदोषस्य वर्धनेनापीत्यर्थः; एकशब्देन च द्वित्रिवृद्धो दोष एवापेक्षितो न वृद्धतरो नापि वृद्धतमः । तयोर्हि अतिवृद्धयोर्वर्धनेनातिमात्रवृद्ध्याऽत्यहितमेव स्यात् । वर्धनेनैकदोषस्येत्यनेन वृद्धतरवृद्धतमदोषद्वयक्षपणकेनैकदोषवर्धनेन; यथा—वृद्धे कफे वृद्धतरयोश्च वातपित्तयोर्मधुरं, तद्धि वृद्धतरवातपित्तद्वयहन्तृतया कफं क्षीणं वर्धयदपि ज्वरं बलवद्दोषहन्तृतया हरति; तथा वृद्धे कफे वृद्धतरे च पित्ते मधुरप्रयोगो ज्ञेयः । एवमुदाहरणान्तराणि ज्ञेयानि । अतश्च वर्धनेनैकदोषस्येत्यनेन द्युल्बणानां त्रयाणां तथा हीनमध्याधिकदोषाणां सन्निपातानां चिकित्सोक्ता । क्षपणेनैकदोषस्येत्यनेन च क्षीणद्वयसंवर्धकमपि यन्महात्ययवृद्धतरवृद्धतमदोषक्षयकरं भवति तद्भेषजं कर्तव्यं; वृद्धतमो ह्यप्रतिकृतः सद्यो हन्ति, तत्प्रतिक्रियायां च क्षीणयोर्वृद्धिरल्पात्यया, सा क्रमेण प्रतिकर्तव्येति भावः । अनेनैकोल्बणास्त्रयः सन्निपाताश्चिकित्सिताः । अस्मिन्नर्थे तन्त्रान्तरं "न्यूनैकदोषसंवृद्धिरेवं वृद्धजयोऽपि वा । सन्निपाते तु कर्तव्यः सन्निपातवशेन तु" इति । परिशिष्टसमसन्निपातचिकित्सामाह—कफस्थानानुपूर्व्या वेति । वाशब्दो व्यवस्थितविकल्पवाची, कफस्य स्थानं कफस्थानम्, आमाशयोर्ध्वभाग इत्यर्थः; आनुपूर्वी अनुक्रमः; तेन कफस्थानानुपूर्व्या जयेदिति कफस्थानं प्रथमं जयेत्, स्थानग्रहणेन स्थानिनः कफस्यापि ग्रहणम् । कफजयस्तु साक्षान्नोक्तः, तत्स्थानस्यैवामाशयस्य ज्वरारम्भकदोषेण दुष्टस्य चिकित्स्यत्वोपदर्शनार्थम् । उक्तं हि—"ज्वरो ह्यामाशयसमुत्थः" (वि.अ.३) इति । एवं च समा अपि दोषा ज्वरारम्भका यस्मादामाशयं विशेषेण दूषयित्वा ज्वरं कुर्वन्ति, तस्मात् स्थानानुगुणैव ज्वरे प्रथमं चिकित्सा कर्तव्या । स्थानिदोषापेक्षया हि स्थानमेव प्रथमं चिकित्स्यम् । यदुक्तं—"स्थानं जयेद्धि पूर्वं" इति । कफस्य स्थानं कफस्थानम् । तत्र लङ्घनपाचनादिक्रिया ज्वरे प्रथमं प्रतिपादिताः क्रियन्ते । एतच्च यद्यपि सर्वज्वरसाधारणं चिकित्सितं, तथाऽपि सन्निपाते बलवत्तरवातचिकित्सापूर्वकज्वरचिकित्साप्रसक्तिनिरासार्थं समसन्निपाते प्रोच्यते । ज्वरादन्यत्र हि सन्निपाते सम एव वातः पूर्वं चिकित्स्यते; उक्तं हि—"वातस्यानुजयेत् पित्तं, पित्तस्यानु जयेत् कफम्" इत्यादि । कफस्थानानुपूर्व्या चिकित्सिते क्रियमाणे यो दोष उल्बणो भवति तत्र 'वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा' इति चिकित्सा कार्या । एतदेव भेलेनोक्तं—"सन्निपातज्वरे पूर्वं कुर्यादामकफापहम् । पश्चाच्छ्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ" इति । अन्ये कफस्थानमामाशयरूपं स्थानं यस्य तत् कफस्थानं पित्तमिति पश्चात्पदलोपाद्दुष्प्रसुखवद्बहुव्रीहिं वदन्ति, ततश्च पित्तानुपूर्व्या जयेदित्यर्थः । तदर्थानुवादकं च सुश्रुतवचनं पठन्ति—"शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु । दुर्निवारतरं तद्धि ज्वरार्तेषु विशेषतः" ( सु. चि. अ. ३९) इति । तैत्रैवं तर्हि स्पष्टार्थं 'पित्तानुपूर्व्या' इत्येवमेव पठेत् । सुश्रुतवचनं हि जीर्णत्रिदोषाभिप्रायेण ज्ञेयम्, एतच्च प्रथमो-

१ '°क्रमोऽपेक्षणीय इति दर्शितम्' इति पा० । २ 'रक्षायौगिकं' इति पा० । ३ 'स्वमानक्षीणेषु' इति पा० । ४ 'त्रिदोषहरद्रव्यसौकर्याभावाद्' इति पा० । ५ 'सतोर्वृद्धयोः' इति पा० ।

१ 'चिकित्सोपदर्शनार्थम्' इति पा० । २ 'स्थानस्थदोषापेक्षया' इति पा० । ३ 'तस्य कफस्थानस्य' इति पा० । ४ 'तत्र, एवं तर्हि' इति पा० ।

त्वन्नसन्निपातज्वरचिकित्सितं कफस्थानानुपूर्व्या ज्ञेयम्। ये तु कफश्च स्थानं चेति द्वन्द्वं कुर्वते, तेषां मते कफस्यामाशयस्यापि च ज्वरस्थानस्य पूर्वं जयः कर्तव्य इत्यर्थः, स च षष्ठीतत्पुरुषेऽपि स्थानस्यामाशयस्य स्थानिकफापेक्षया क्रियमाणचिकित्सया लभ्यत एवेति नार्थविरोधः। इयं चैकदोषवर्धनादिरूपा सन्निपातचिकित्सा यद्यपि न विशुद्धा, यदुक्तं—"प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत्। नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्" (नि. अ. ८) इति, तथाऽपि सन्निपातचिकित्सायां गत्यन्तरासंभवे सति अल्पदोषबहुगुणतया क्रियत इति ज्ञेयम्। अन्ये तु 'वर्ध' च्छेदने, इत्यस्माद्धर्धनेनेति साधयन्ति, वर्धनशब्देन च मूलच्छेदकारकं संशोधनमुच्यते; एकग्रहणेन च न युगपद्वातादीनां वस्त्यादिशोधनं कर्तव्यं, किंत्वेकैकेनेति दर्शयति; क्षपणेनोच्छ्रितस्येत्यनेन संशोधनविषये संशमनमुच्यते; शेषस्य तु व्याख्या पूर्ववत्। अनेन श्लोकेन त्रयोदशविधसंन्निपातारब्धज्वरचिकित्सितमुक्तं भवति। क्षीणवृद्धदोषविकल्पकृतषड्विधसन्निपातेषु यो ज्वरस्तत्र न केवलं वृद्धस्य दोषद्वयस्यैकस्य वा वृद्धस्य ज्वरारम्भकस्य चिकित्सा कार्या, किंतु समानक्षीणवर्धनमपि तत्र कर्तव्यं भवति; समानक्षीणद्वादशसन्निपातस्य तु ज्वरानारम्भकत्वमेव ॥ २८५ ॥ २८६ ॥—

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥ २८७ ॥**
**शोथः संजायते तेन कश्चिदेव प्रमुच्यते।**
**रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत् ॥ २८८॥**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः।**

सन्निपातप्रस्तावात्तज्जं त्रिशोथीयोक्तशोथमनूद्य चिकित्सामाह—सन्निपातेत्यादि। कश्चिदेव प्रमुच्यते इत्यनेन दारुणत्वमस्य दर्शयति; "सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः। ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः" (सू. अ. १८); किंवा साध्य एवायं प्रायो भवति, कदाचिच्च कृच्छ्रसाध्य इति। ननु त्रिशोथीये "ज्वरान्ते दुर्जयोऽन्ताय शोफस्तस्योपजायते" (सू. अ. १८) इत्यनेनानुपक्रमणीयत्वमस्योक्तम्, इह तु कश्चिदेव प्रमुच्यत इति कथं न विरोधः? मैवं, तत्रापि दुर्जयो भवति, अन्ताय वेत्यर्थः; अतो न विरोधः ॥२८७॥२८८॥—

**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति २८९**
**शाखानुसारी रक्तस्य सोऽवसेकात् प्रशाम्यति।**

शाखानुसारीत्यत्र यद्यपि "शाखा रक्तादयो धातवः" (सू. अ. ११) इत्युक्तं, तथाऽपीह रक्तदूषको विशेषेण ज्वरो ज्ञेयः, रक्ताश्रये एव दोषे रक्तमोक्षस्य विशेषेण समर्थत्वात्। रक्तमोक्षस्थानं च बाहुमध्यं ज्ञेयं; यदुक्तमन्यत्र—"शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति। शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमात् सिराः" इति। शीतोष्णादिसेवावचनात् सकलदोषानुरूपचिकित्साक्रमे सति रक्तदुष्ट्यैव प्रायो ज्वरानुबन्धो भवतीति दर्शयति ॥ २८९ ॥—

**विसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः ॥ २९० ॥**
**तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत्।**

विकारान्तरानुबन्धज्वरचिकित्सामाह—विसर्पेणेत्यादि। कफोत्तरश्च पित्तोत्तरश्चेति कृत्वैकशेषात् कफपित्तोत्तरत्वं ज्ञेयं; किंवा कफपित्तयोर्मिलितयोरुत्तरत्वं ज्ञेयम्। तेनानूर्ध्वगे पित्ते देयमेव सर्पिः ॥ २९० ॥—

**दौर्बल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्तते ॥ २९१ ॥**
**बल्यैः संबृंहणैस्तस्मादाहारैस्तमुपाचरेत्।**

दौर्बल्यादित्यादौ देहग्रहणेनात्मादितो व्यावृत्य रसादिषु धातुशब्दं प्रवर्तयति, रसादय एव हि विशेषेण देहधारकाः। बृंहणं पुष्टिजननम् ॥ २९१ ॥—

**कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ ॥ २९२ ॥**
**आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे।**
**वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः ॥ २९३ ॥**
**स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम्।**
**विरेचनेन पयसा सर्पिषा संस्कृतेन च ॥ २९४ ॥**
**विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत्।**
**वमनं पाचनं रूक्षमन्नपानं विलङ्घनम् ॥ २९५ ॥**
**कषायोष्णं च विषमे ज्वरे शस्तं कफोत्तरे।**

भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह—कर्मेत्यादि। कर्म साधारणमिति भूतानुबन्धे दोषे च साधारणी चिकित्सा दैवव्यपाश्रया बल्यादिरूपा, युक्तिव्यपाश्रया दोषानुरूपकषायपानादिरूपा च। विषमज्वरशब्देन तृतीयचतुर्थकावेवाभिमतौ, चतुर्थकेन चतुर्थकविपर्ययोऽपि गृह्यते। तिक्तशीतैरन्नपानैर्भेषजैश्चेति विज्ञेयम्। कषायोष्णमिति उष्णाः कषायाः ॥ २९२–२९५ ॥—

**योगाः परंः प्रवक्ष्यन्ते विषमज्वरनाशनाः ॥२९६॥**
**प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ते।**
**सुरा समण्डा पानार्थे भक्ष्यार्थे चरणायुधः ॥२९७॥**
**तित्तिरिश्च मयूरश्च प्रयोज्या विषमज्वरे।**
**पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत् ॥ २९८॥**
**त्रिफलायाः कषायं वा गुडूच्या रसमेव वा।**
**नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम् ॥२९९॥**
**पिबेज्ज्वरागमे युक्त्या स्नेहस्वेदोपपादितः।**
**सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः॥३००॥**

१ 'तस्याशु मुञ्चेद्बाह्वोः क्रमात् सिराम्' इति योगीन्द्रनाथसेनसंमतः पाठः।

१ 'कुर्यात्तृतीयकचतुर्थके' इति पा०। २ 'परं' इति पा०।

उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत्।
सान्नं मद्यं प्रभूतं वा पीत्वा स्वप्याज्ज्वरागमे ॥३०१॥
आस्थापनं यापनं वा कारयेद्विषमज्वरे।
पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् ॥ ३०२ ॥
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम्।
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ॥३०३॥
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे।
रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम् ॥ ३०४ ॥
मेद्यानामुष्णवीर्याणामामिषाणां च भक्षणम्।
हिङ्गुतुल्या तु वैयाघ्री वसा नस्यं ससैन्धवा ॥३०५॥
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा।
सैन्धवं पिप्पलीनां च तण्डुलाः समनःशिलाः ॥
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे।
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥ ३०७ ॥
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्।
ये धूमा धूपनं यच्च नावनं चाञ्जनं च यत् ॥ ३०८ ॥
मनोविकारे निर्दिष्टं कार्यं तद्विषमज्वरे।
मणीनामोषधीनां च मङ्गल्यानां विषस्य च ॥३०९॥
धारणादगदानां च सेवनाच्च भवेज्ज्वरः।

दोषादीन् प्रविभज्येति दोषकालदेशप्रकृत्यादीनपेक्ष्य यद्यत्र यौगिकं तत्तत्र कार्यमित्यर्थः। षट्पलमिति गुल्मे वक्ष्यमाणम्। नीलिनी नीलिका, नीलबुह्वा वा। नीलिन्यादिश्च विरेचनयोगो ज्वरागमनदिने विरेकात् कार्यकरो भवति प्रभावात्। महती मात्रा अहोरात्रपरिणमनीयाः अन्यत्र तु षट्पली मात्रा महती मात्रोक्ता। अन्यत्र "अन्येद्युष्को ग्रहग्राही तृतीयकचतुर्थकौ" इत्यारभ्य यावत् "अनागते चिकित्सास्ते बलकालौ विजानता" इत्यन्तेन वेगदिनात् प्राग् या चिकित्सोक्ता सेहोत्कवमनादिव्यतिरिक्ता ज्ञेया। वमनादयस्त्विह प्रकोपदिने क्रियमाणाः प्रकुपितस्य दोषस्य कोष्ठमागतस्य सम्यक् सद्योहा भवन्तीति कृत्वा क्रियन्ते इति ज्ञेयम्। सान्नं प्रभूतं मद्यं पीत्वा पुनरुल्लिखेदिति योजना, तथा मद्यं सान्नं पीत्वा तदहः स्वपेदिति योजना। यापना मुस्तादिका वस्तयो वक्ष्यमाणाः। वृषदंशो विडालः। वृषस्येत्यत्रापि शकृदिति संबन्धः। मेद्यानामिति मेदुराणां, किंवा मेध्यानां पवित्राणाम्। वैय्याघ्रीत्यत्र पुंलिङ्गमेव प्रयोजकं वचनादुन्नीयते। सिंहो व्याघ्र एवेति वदन्ति। 'अञ्जु' व्यक्तिम्रक्षणगतिषु, इति पाठान्म्रक्षणमात्रेऽप्यञ्जनं स्यादित्यत आह—नेत्राञ्जनमिति। मनोविकारे उन्मादेऽपस्मारे च। धारणादिति च्छेदः; अगदानां च सेवनादिति योजना ॥ २९६–३०९ ॥—

१ 'शकृद्वेगागमे' इति पा०। २ 'वाऽथ सैन्धवम्' इति पा०।
३ 'सम्यक्सिद्धा' इति पा०।

सोमं सानुचरं देवं समातृगणमीश्वरम् ॥ ३१० ॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्।
विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ॥ ३११ ॥
स्तुवन्नामसहस्रेण ज्वरान् सर्वानपोहति।
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ॥ ३१२ ॥
गङ्गां मरुद्गणांश्चेष्ट्या पूजयञ्जयति ज्वरान्।
भक्त्या मातुः पितुश्चैव गुरूणां पूजनेन च ॥ ३१३ ॥
ब्रह्मचर्येण तपसा सत्येन नियमेन च।
जपहोमप्रदानेन वेदानां श्रवणेन च ॥ ३१४ ॥
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च।
ज्वरे रसस्थे वमनमुपवासं च कारयेत् ॥ ३१५ ॥
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च।
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ॥ ३१६ ॥
अस्थिमज्जगते देया निरूहाः सानुवासनाः।

दैवव्यपाश्रयचिकित्सामाह—सोममित्यादि। सह उमयेति सोमः, तम्। सानुचरमिति नन्द्यादिगणयुक्तम्। समातृगणमिति समातृसमूहम्। प्रयतः पवित्रः। सहस्रमूर्धानमिति "सहस्रशीर्षा" इत्यादि वेदप्रतिपादितम्। नामसहस्रेणेत्यादि महाभारतोक्तनामसहस्रेण। इष्ट्येति यज्ञेन ॥ ३०९–३१६ ॥—

शापाभिचाराद्भूतानामभिषङ्गाच्च यो ज्वरः ॥३१७॥
दैवव्यपाश्रयं तत्र सर्वमौषधमिष्यते।
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ॥३१८॥
रक्तावसेकैर्मद्यैश्च सात्म्यैर्मांसरसौदनैः।
सानाहो मद्यसात्म्यानां मदिरारसभोजनैः ॥३१९॥
क्षतानां व्रणितानां च क्षतव्रणचिकित्सया।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥ ३२० ॥
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः।
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ॥ ३२१ ॥
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुत्थितः।
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ॥
याति ताभ्यामुभाभ्यां च भयशोकसमुत्थितः।

शापेत्यादिनाऽऽगन्तुज्वरचिकित्सामाह। नश्येदिति प्रशाम्यतीत्यर्थः। सानाह इति अभिघातज्वर एव सानाहः। क्षतानामिति उरःक्षतिनाम्। क्षतचिकित्सया व्रणचिकित्सया च व्रणिनां ज्वरोऽपैतीत्यर्थः। अयं ह्युपद्रवरूपो ज्वरः; उपद्रवश्च मूलव्याधिचिकित्सयैव शाम्यतीति भावः। वायोः प्रशमनेनेति कामादिज्वरेषु वातानुबन्धाद्युपपन्नम्। सद्वाक्यैरिति शोभनैर्वचनैः। कामादीनां प्रतिद्वन्द्वेन चिकित्सामाह—कामादित्यादि ॥ ३१७–३२२ ॥—

१ 'मरुद्गणांश्चेष्टान्' इति पा०। २ 'न स्यात्' इति पा०।
३ 'मेद्यैश्च' इति पा०।

ज्वरस्य वेगं कालं च चिन्तयञ्ज्वर्यते तु यः ॥३२३॥
तस्येष्टैस्तु विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ।

ज्वरवेगकालचिन्ताजोऽपि ज्वरः कामादिवन्मानसापचाराद्भवतीति तच्चिकित्सामाह—ज्वरस्येत्यादि ॥ ३२३ ॥—

ज्वरप्रमोक्षे पुरुषः कूजन् वमति चेष्टते ।
श्वसन्विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः ॥३२४॥
प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्ष्यते ॥ ३२५॥
सदोषशब्दं च शकृद्द्रवं स्रवति वेगवत् ।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः॥३२६॥
बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः ।
सत्क्रियादोषपक्त्या चेद्विमुञ्चति सुदारुणम् ॥३२७॥
कृत्वा दोषवशाद्वेगं क्रमादुपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम्॥३२८॥

संप्रत्यौषधमभिधाय 'विमुञ्चति' इत्यादिप्रश्नस्योत्तरमाह—ज्वरप्रमोक्षे इत्यादि । लीयत इति मुह्यति । उष्णसर्वाङ्गः शीतसर्वाङ्गश्च भवत्यपीति उष्णसर्वाङ्गो वा शीतसर्वाङ्गो वा भवतीत्यर्थः । सदोषशब्दमिति सदोषं सशब्दं च । एतानि च लक्षणानि सन्निपातज्वरे एव भवन्तीति ज्ञेयं; नान्यत्र, अदर्शनादेव । अत एव बहुदोषस्य बलिन इत्यादि ग्रन्थं केचित् पठन्त्येवात्र । एतानि लक्षणानि ज्वरमोक्षकाले क्षीणेनापि दोषेण क्रियन्ते, यथा-निर्वाप्यता प्रदीपेनालोको महान् क्रियते ॥ ३२४-३२८ ॥

विगतक्लमसंतापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥ ३२९॥

संप्रति प्रशान्तज्वरलक्षणप्रश्नस्योत्तरं—विगतेत्यादि । प्रकृतिसत्त्वेनेति सहजसत्त्वेन ॥ ३२९ ॥

सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धानि च वर्जयेत्॥३३०॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च ।
तथा ज्वरः शमं याति प्रशान्तो जायते न च॥३३१॥
व्यायामं च व्यवायं च स्नानं चङ्क्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥३३२॥

'ज्वरावशिष्टो रक्ष्यश्च यावत्कालं यतो यतः' इति प्रश्नस्योत्तरं—सज्वर इत्यादि । 'तथा ज्वरः शमं याति प्रशान्तो जायते न च' इत्यनेन 'यतः' इति प्रश्नस्य ज्वरमुक्तासेव्यहेतुप्रश्नरूपस्योत्तरं ज्ञेयम् । 'व्यवायमतिचेष्टाश्च' इत्यत्र व्यवायं कृत्वाऽपि पुनः 'व्यायामं च' इत्यादौ व्यवायपाठेन व्यवायस्यात्यन्तनिषिद्धतोच्यते; अन्ये तु प्रमादपाठ एवायमित्याहुः । स्नानमूर्जस्करमपि प्रभावाज्ज्वरं प्रत्यानयति; यदुक्तमन्यत्र—"स्नानमाशु ज्वरं कुर्याज्ज्वरमुक्तस्य देहिनः । तस्मान्मुक्तज्वरः स्नानं विषवत् परिवर्जयेत्" इति ॥ ३३०-३३२ ॥

असंजातबलो यस्तु ज्वरमुक्तो निषेवते ।
वर्ज्यमेतन्नरस्तस्य पुनरावर्तते ज्वरः ॥ ३३३ ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्तते ।
स्वल्पेनाप्यपचारेण तस्य व्यावर्तते पुनः ॥३३४ ॥
चिरकालपरिक्लिष्टं दुर्बलं हीनतेजसम् ।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥ ३३५ ॥
अथवाऽपि परीपाकं धातुष्वेव क्रमान्मलाः ।
यान्ति ज्वरमकुर्वन्तस्ते तथाऽप्यपकुर्वते ॥ ३३६ ॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम् ।
कण्डूरुत्कोठपिडकाः कुर्वन्त्यग्निं च ते मृदुम्॥३३७॥
एवमन्येऽपि च गदा व्यावर्तन्ते पुनर्गताः ।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥ ३३८ ॥
निर्वृत्तेऽपि ज्वरे तस्माद्यथावस्थं यथाबलम् ।
यथाप्राणं हरेद्दोषं प्रयोगैर्वा शमं नयेत् ॥ ३३९ ॥
मृदुभिः शोधनैः शुद्धिर्यापना वस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः॥३४०॥
अभ्यङ्गोद्वर्तनस्नानधूपनान्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥ ३४१ ॥
गुर्वभिष्यन्द्यसात्म्यानां भोजनात् पुनरागते ।
लङ्घनोष्णोपचारादिः क्रमः कार्यश्च पूर्ववत् ॥३४२॥
किराततिक्तकं तिक्ता मुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्तकं ज्वरम् ३४३

अनन्तरम् 'असंजातबलो यस्तु' इत्यादि ग्रन्थं काश्मीराः पठन्ति; ते च प्रकृत्यादिसूत्रेऽप्यस्य ग्रन्थस्यानुगुणं प्रश्नग्रन्थं पठन्ति ॥ ३३३-३४३ ॥

तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्यात्तत्तच्चिकित्सितम् ॥३४४॥

उक्तानुक्तचिकित्सापरिग्रहार्थमाह—तस्यामित्यादि ॥३४४॥

रोगराट् सर्वभूतानामन्तकृद्दारुणो ज्वरः ।
तस्माद्विशेषतस्तस्य यतेत प्रशमे भिषक् ॥ ३४५ ॥

ज्वरचिकित्सायां यत्नं कारयितुमाह—रोगराडित्यादि ३४५

तत्र श्लोकः—

यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम् ।
आत्रेयेणाग्निवेशाय भूतानां हितकाम्यया ॥ ३४६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने ज्वरचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

यथाक्रममिति अध्यायार्थसंग्रहश्लोकः । भूतानां हितकाम्ययेत्यनेन सर्वभूतहितेयं चिकित्सेति दर्शयति ॥ ३४६ ॥

इति श्रीचक्रपाणिदत्तकृतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने ज्वरचिकित्सिताध्यायस्तृतीयः ॥ ३ ॥

१ 'वीक्षते' इति पा० । २ 'बलिनः' इति पा० । ३ 'स क्रियादोषपक्त्या' इति पा० ।

१ 'दीनचेतसम्' इति पा० । २ 'अथवा विपरीपाकं' इति पा० ।

## चतुर्थोऽध्यायः ।

**अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

आद्युत्पत्तौ ज्वरसंतापाद्रक्तपित्तोत्पत्तेर्ज्वरचिकित्सितमनु रक्तपित्तचिकित्सितमभिधीयते ॥ १ ॥ २ ॥

**विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम् ।**
**प्रणम्योवाच निर्मोहमग्निवेशोऽग्निवर्चसम् ॥ ३ ॥**
**भगवन् रक्तपित्तस्य हेतुरुक्तः सलक्षणः ।**
**वक्तव्यं यत् परं तस्य वक्तुमर्हसि तद्गुरो ॥ ४ ॥**

पञ्चगङ्गः देशविशेषः । वक्तव्यं यत् परमिति उक्तरक्तपित्तहेतुलक्षणातिरिक्तं चिकित्सितमित्यर्थः ॥ ३ ॥ ४ ॥

**गुरुरुवाच—**

**महागदं महावेगमग्निवच्छीघ्रकारि च ।**
**हेतुलक्षणविच्छीघ्रं रक्तपित्तमुपाचरेत् ॥ ५ ॥**
**तस्योष्णं तीक्ष्णमम्लं च कटूनि लवणानि च ।**
**घर्मश्चान्नविदाहश्च हेतुः पूर्वं निदर्शितः ॥ ६ ॥**

निदाने यद्यपि रक्तपित्तस्य हेतुलक्षणानि प्रतिपादितान्येव, तथाऽपीह चिकित्सा[१]परिकरतया प्रकरणवशाद्धेतवः संक्षेपेण लक्षणानि च प्रायःप्रादुर्भावीनि पुनः कथ्यन्ते । घर्मं आतपः । अन्नविदाहस्तु स्वरूपविदाहिद्रव्यभक्षणाद्भवति, तथा पित्तेनान्नवहस्रोतसो दुष्टत्वादविदाहिभोजनेनापि भवति । यदुक्तमन्यत्र—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" ( सु. सू. अ. ४६ ) इति ॥ ५ ॥ ६ ॥

**तैर्हेतुभिः समुत्क्लिष्टं पित्तं रक्तं प्रपद्यते ।**
**तद्योनित्वात् प्रपन्नं च वर्धते तत् प्रदूषयत् ॥ ७ ॥**
**तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।**
**स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥ ८ ॥**

तैर्हेतुभिरित्यादिना संप्राप्तिमाह । रक्तं प्रपद्यते रक्तं गच्छतीत्यर्थः । यद्यपि "पित्तं स्वेदो रसो लसीका रुधिरमामाशयश्च पित्तस्थानानि, तत्राप्यामाशयो विशेषेण पित्तस्थानम्" ( सू. अ. २० ) इति वचनेन स्वभावादेव रक्तं याति, तथाऽपि रक्तपित्तसंप्राप्तौ प्रधानस्थानादामाशयरूपात् पित्तस्येह रक्तगमनं ज्ञेयं; रक्तगमनं च पित्तस्य संप्राप्तिमहिम्ना भवति । तद्योनित्वादिति तद्योनित्वं हेतुः रक्त[२]प्रपन्नस्य पित्तस्य वर्धने ज्ञेयं; तेन यस्माद्रक्तयोनि पित्तं तस्माद्रक्तं प्राप्य वर्धत इत्यर्थः । उक्तं हि—"अस्रजः पित्तं" ( चि. अ. १५ ) इति । तदिति रक्तं प्रदूषयत् । द्रवो धातुरिति द्रवरूपोंऽशः । धातोर्धातोरिति मांसादेः । स्विद्यतः प्रसिच्यते अतिक्षरति; तेन पित्तोष्मणा स्विद्यमानधातुभ्यश्च्युतेन द्रवरूपेण धातुना युक्तं सपित्तं भूयोऽतितरां वृद्धिं गच्छतीति योजना ॥ ७ ॥ ८ ॥

**संयोगाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः ।**
**रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥ ९ ॥**

रक्तपित्तसंज्ञानिमित्तमाह—संयोगादित्यादि । रक्तस्य संयोगात्तथा रक्तस्य दूषणात्तथा रक्तस्य गन्धवर्णयोः पित्ते सामान्यात् पित्तं रक्तपित्तमुच्यते इति वाक्यार्थः ॥ ९ ॥

**प्लीहानं च यकृच्चैव तदधिष्ठाय वर्तते ।**
**स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥१०॥**

रक्तपित्तस्य स्थानमाह—प्लीहानं चेत्यादि । वर्तते ऊर्ध्वमधश्च याति; 'वर्धते' इति वा पाठः । कस्माद्यकृत्प्लीह्नोरेव तद्वर्तत इत्याह—स्रोतांसीत्यादि । यस्माद्रक्तस्यापि यकृत्प्लीहानावेव प्रधानं स्थानं, तेन रक्तसंयोगादिनिष्पन्नस्य रक्तपित्तस्य तदेव स्थानमिति भावः ॥ १० ॥

**सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।**
**श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ११ ॥**
**रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।**
**मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ १२ ॥**
**संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ।**

तस्य दोषसंवन्धविशेषेण लिङ्गान्याह—सान्द्रमित्यादि । कषायवदाभा यस्य तत् कषायाभं, पाटलमित्यर्थः । कृष्णस्य वस्त्रादेः ससारगन्धकादिभिर्मसृणीकृतस्य यो वर्णः स मेचकः । ननु पित्तमेव रक्तपित्तमित्युक्तं, तत् कथं श्लैष्मिकं भवति ? उच्यते—सामान्यसंप्राप्तौ पित्तमेव रक्तपित्तनिर्वर्तकं, यथा—सर्वगुल्मेषु वायुः, यथा—सर्वज्वरेषु पित्तमारम्भकं; तदेव यदोल्वणेन कफेन स्वलक्षणकारिणा युक्तं रक्तपित्तकरं भवति, तदा सामान्यसंप्राप्तिसंप्राप्तं पित्तमुत्सृज्य श्लेष्मणैव सान्द्रत्वादिस्वलक्षणकारिणा व्यपदिश्यते—श्लैष्मिकं रक्तपित्तमिति; यथा-श्लैष्मिके गुल्मे सामान्यसंप्राप्त्यागतवातं परित्यज्य श्लेष्मणैव व्यपदेशो भवति, यथा वा कफज्वरे सर्वज्वरानपायिकारणमनादृत्य विशेषलक्षणकारिणा श्लेष्मणैव व्यपदेशो भवति; एवं वातिकेऽपि रक्तपित्ते व्याख्येयम् । यत्तु कफवातविरहितेन केवलेनैव पित्तेन वलवता जनितं रक्तपित्तं पैत्तिकरक्तपित्तलक्षणं भवति तत् पैत्तिकं रक्तपित्तमित्युच्यते । लक्षणेनैव दोषव्यपदेशो भवति; तेन यद्यद्दोषजनितलक्षणयुक्तं रक्तपित्तं भवति तत्तद्दोषजं[१]मिति व्यपदिश्यते । श्लैष्मिकादिरक्तपित्तापेक्षया पैत्तिके रक्तपित्तेऽत्युल्वणं पित्तं भवति, यतस्तत्रैव पित्तं स्वलक्षणानि करोति, नान्यत्र; एवं व्यवस्थिते यदुच्यते—केवलंपैत्तिकस्य

---

१ 'चिकित्सापरिवारतया' इति पा० । २ 'रक्तप्रवृत्तस्य' इति, 'रक्तप्रयातस्य' इति च पा० ।

१ 'तज्जनितमिति' इति पा० ।

रक्तपित्तस्य मार्गो नास्ति, यतो वातरक्तमधो याति, कफारब्धमूर्ध्वमिति प्रतिपादितं; तदपि न, यतः पैत्तिकस्याप्यूर्ध्वगमनमधोगमनं वा भवत्येव; परं पैत्तिकं यदूर्ध्वं याति तन्मार्गमहिम्ना कफसंयुक्तं भवति, यच्चाधो याति तद्वातस्थानसंबन्धाद्वातानुगतं भवति । मार्गसंबन्धानुगतश्च दोषः स्वलक्षणकारकत्वाभावादनुबन्धः, तेनासौ पैत्तिके रक्तपित्तेऽपि 'एकदोषानुगं साध्यं' इत्यादिवचनेषु न गृह्यते । यतः स्वतन्त्रो व्यक्तलिङ्गश्च दोषोऽनुबन्ध्यः; तद्विपरीतस्तु अनुबन्धः; तेन यथोक्तलक्षणकारिणा दोषेणानुबन्ध्येन वातिकत्वादिव्यपदेशो रक्तपित्तेषु, न मार्गसंबन्धानुगतेनास्वलक्षणकारिणाऽनुबन्धरूपेणेति । अन्ये तु "प्रदेशान्तरचितेन पित्तेन यदोत्तरकालं रक्तपित्तस्य संबन्धो भवति तदैव पैत्तिकं रक्तपित्तं भवति" इति ब्रुवते ॥ ११ ॥ १२ ॥—

**एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥ १३ ॥**
**यत्त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।**
**व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १४ ॥**

संप्रति साध्यासाध्यविभागमाह—एकेत्यादि । एकदोषानुगमिति उक्तैकदोषलक्षणयुक्तम्, एवं द्विदोषमपि दोषद्वयलक्षणयुक्तम्, एवं त्रिदोषमपि ज्ञेयम् । न तु मार्गसंबन्धानुगतमपि दोषं प्रक्षिप्य द्विदोषत्वं त्रिदोषत्वं वा गणनीयं, तथाहि सति केवलं रक्तपित्तं न स्यादेव; तथा संप्राप्तिसंप्राप्तं दोषं गृहीत्वा मार्गसंबन्धानुगतेन वायुना कफेन वा योगाद्विदोषजत्वमेव सर्वदा स्यात्, न 'एकदोषानुगं साध्यं' इति यदुक्तं तत् स्यात्; तस्माद्यथोक्तमेव साधु । मन्दाग्नेरतिवेगवदिति पृथगेवासाध्यलक्षणं, व्याधिभिः क्षीणदेहस्येत्यादि च पृथगेव ॥ १३ ॥ १४ ॥

**गतिरूर्ध्वमधश्चैव रक्तपित्तस्य दर्शिता ।**
**ऊर्ध्वा सप्तविधद्वारा द्विद्वारा त्वधरा गतिः ॥ १५ ॥**
**सप्त च्छिद्राणि शिरसि द्वे चाधः, साध्यमूर्ध्वगम् ।**
**याप्यं त्वधोगं, मार्गौ तु द्वावसाध्यं प्रपद्यते ॥ १६ ॥**
**यदा तु सर्वच्छिद्रेभ्यो रोमकूपेभ्य एव च ।**
**वर्तते तामसङ्ख्येयां गतिं तस्याहुरान्तिकीम् ॥ १७ ॥**
**यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्तते ।**
**तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥ १८ ॥**
**संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत्[१] ।**
**यच्चाप्युपद्रवैः सर्वैर्यथोक्तैः समभिद्रुतम् ॥ १९ ॥**
**हारिद्रनीलहरितताम्रैर्वर्णैरुपद्रुतम् ।**
**क्षीणस्य कासमानस्य यच्च तच्च न सिध्यति ॥ २० ॥**
**यद्द्विदोषानुगं यद्वा शान्तं शान्तं प्रकुप्यति[२] ।**
**मार्गान्मार्गं चरेद्यद्वा याप्यं पित्तमसृक् च तत् ॥ २१ ॥**

गतिकृतं साध्यादिभेदं दर्शयितुं गतिभेदमेवाह—गतिरूर्ध्वमित्यादि । गतिप्रकारान्तरमप्यसाध्यस्याह—यदा तु सर्वच्छिद्रेभ्य इत्यादि । यच्चोभयाभ्यामित्यादिना कृष्णमतीव चेत्यन्तेनासाध्यतालक्षणमाह । अत्र मार्गाभ्यामित्यनेन न यौगपद्येन मार्गप्रवृत्तिर्व्यवस्थिता, किंतु प्रत्येकं, मार्गद्वयप्रवृत्तस्यासाध्यत्वेन पूर्वमेवोक्तत्वात् । कुणपगन्धेनेति शवगन्धेन । कण्ठे सज्जतीति कण्ठाद्बहिर्न याति । यथोक्तैरिति निदानोक्तैः; तत्र हि उपद्रवाः खलु दौर्बल्यारोचकादयः स्वरभेदान्ता उक्ताः । हारिद्रवर्णादिभिर्युक्तं क्षीणस्य कासिनो न सिध्यतीति ज्ञेयम् । यद्विदोषानुगमित्यनेनानुबन्धरूपदोषद्वययोगाद्याप्यत्वमुच्यते; यत्तु पूर्वं द्विदोषजं याप्यमित्युक्तं तदनुबन्ध्यदोषद्वयजन्याभिप्रायेणेति न पौनरुक्त्यम् । मार्गान्मार्गं चरेदिति ऊर्ध्वगं मुखं परित्यज्य नासां यातीत्यादि ज्ञेयम्, ऊर्ध्वगस्य त्वधोगमनेऽधोगत्वादेव याप्यत्वं भवति, अधोगं तु मार्गान्तरमगच्छदपि स्वत एव याप्यं; तस्मान्नोर्ध्वाधोमार्गपरिवर्तोऽत्र विवक्षितः ॥ १५–२१ ॥

**एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।**
**रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ २२ ॥**

एकमार्गमित्यादिना साध्यलक्षणम् । एकमार्गमिति सामान्यवचनेऽप्यूर्ध्वमार्गमेव लभ्यते, अधोगस्यैकमार्गगस्यापि याप्यत्वात् । सुखे काले इति हेमन्ते शिशिरे च । अत्र मार्गेण तथा दोषेण तथा लक्षणेन साध्यासाध्ययाप्यभेदाः पृथगुक्ताः । तत्र च साध्यलक्षणयाप्यलक्षणमेलके याप्यत्वमेव; याप्यासाध्यमेलकेऽसाध्यत्वमेव, यथा—एकदोषं यदधोगतं तदेकदोषत्वात् साध्यं किंत्वधोगतत्वाद्याप्यं; यत्त्रिदोषमधोगतं तदधोगतत्वेन याप्यं, किंतु त्रिदोषत्वादसाध्यमेवेति ज्ञेयम् । यदुक्तं—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्" ( नि. अ. ८ ) इति; "साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा" ( नि. अ. ८ ) इति च ॥ २२ ॥

**स्निग्धोष्णमुष्णरूक्षं च रक्तपित्तस्य कारणम् ।**
**अधोगस्योत्तरं प्रायः, पूर्वं स्यादूर्ध्वगस्य तु ॥ २३ ॥**
**ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ।**
**द्विमार्गं कफवाताभ्यामुभाभ्यामनुबध्यते ॥ २४ ॥**

स्निग्धोष्णमित्यादि निदानोक्तमपि प्रायिकत्वाद्विशेषोपदर्शनार्थं पुनरिहोच्यते । प्रायःशब्देन कदाचिद्रूक्षोष्णमपि ऊर्ध्वगस्य हेतुर्भवति, तथा स्निग्धोष्णमपि अधोगस्येति दर्शयति । एवं च निदानमार्गानियमे सति 'मार्गौ दोषानुबन्धं च निदानं प्रसमीक्ष्य च' इत्यत्र मार्गादि पञ्च (यच्च) पठितं······। यद्यप्यधोगे रूक्षोष्णमेव परं हेतुस्तथाऽपि स्निग्धोष्णं कदाचित् कारणं भवति, स्निग्धकृतश्च कफोऽप्यधोगे भवति; एवमूर्ध्वगेऽपि चिन्तनीयम् । ऊर्ध्वगं कफसंसृष्टमित्यादावपि प्रायःशब्दसंबन्धाद्व्यभिचारो ज्ञेयः ॥ २३ ॥ २४ ॥

**अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः ।**
**तद्दोषदुष्टमुत्क्लिष्टं नादौ स्तम्भनमर्हति ॥ २५ ॥**

१ 'यच्च कण्ठेऽवसज्जति' इति पा० । २ 'भूयः प्रवर्तते' इति पा० ।

गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम्।
गुल्मं प्लीहानमानाहं किलासं कृच्छ्रमूत्रताम् ॥२६॥
कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम्।
बुद्धीन्द्रियोपरोधं च कुर्यात् सम्भितमादितः ॥२७॥
तस्मादुपेक्ष्यं बलिनो बलदोषविचारिणा।
रक्तपित्तं प्रथमतः प्रवृद्धं सिद्धिमिच्छता ॥ २८ ॥

अश्नत इत्यनेन संतर्पणोत्थितं दर्शयति। उत्क्लिष्टमिति प्रवृत्त्युन्मुखम्, आमदोषाश्रितत्वात्। बलदोषविचारिणेति यदैव बलह्रासं संपश्येद्धीनदोषत्वं वा तदैव स्तम्भनं कार्यम् ॥ २५-२८ ॥

प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम्।
वृद्धिं प्रयाति पित्तासृक्तस्मात्तल्लङ्घ्यमादितः ॥ २९ ॥
मार्गौ दोषानुबन्धं च निदानं प्रसमीक्ष्य च।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत् ॥ ३० ॥

संप्रति कृत्स्नं लङ्घनहेतुमाह—मार्गावित्यादि। तत्रोर्ध्वमार्गः, सामं पित्तं, कफो दोषः, स्निग्धोष्णं च निदानं लङ्घनप्रयोजकं; तद्व्यतिरिक्तं तु मार्गादि भोजनरूपतर्पणप्रयोजकम्। तर्पयतीति तर्पणमशनम्। तेन यवागूस्तर्पणं च ग्राह्यम्। ये तु तर्पणशब्देन सक्तुतर्पणमेव ग्राहयन्ति तेषां यवागूदानपक्षो न संगृहीतः स्यात् ॥ २९ ॥ ३० ॥

ह्रीबेरचन्दनोशीरमुस्तपर्पटकैः शृतम्।
केवलं शृतशीतं वा दद्यात्तोयं पिपासवे ॥ ३१ ॥
ऊर्ध्वगे तर्पणं पूर्वं पेयां पूर्वमधोगते।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृतिकल्पवित् ३२
जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थे सशर्करम् ॥ ३३ ॥
तर्पणं सघृतक्षौद्रं लाजचूर्णैः प्रदापयेत्।
ऊर्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥ ३४ ॥
मन्दाग्नेरम्लसात्म्याय तत् साम्लमपि कल्पयेत्।
दाडिमामलकैर्विद्वानम्लार्थं चानुदापयेत् ॥ ३५ ॥

केवलमिति ह्रीबेरादिरहितं; जलमेवैकं केवलमौषधद्वेषिणे पुरुषाय देयम्। पूर्वमिति पदेन पश्चाद्बलह्रासकारकं निषेधयति। कालः हेमन्तादिः, अनुबन्धः दोषानुबन्धः। प्रकृतिः स्वाभाविकी द्रव्याणां गुरुलाघवादिरूपा, कल्पनं कल्पः संस्कार इत्यर्थः। एतेन कालं दोषानुबन्धं च ज्ञात्वा यस्य यत्स्वभावं द्रव्यं युक्तं भवति तेन तर्पणं यवाग्वा कार्येत्यर्थः। खर्जूरादिना जलं षडङ्गविधानेनैव कर्तव्यम्। एतच्च जलमत्र मधुरमप्यूर्ध्वगे कफसंसृष्टेऽपि रक्तपित्ते यौगिकं भवति, रक्तपित्तव्याधिप्रत्यनीकत्वात् ॥ ३१-३५ ॥

शालिषष्टिकनीवारकोरदूषप्रशान्तिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥ ३६ ॥
मुद्गा मसूराश्चणकाः समकुष्ठाढकीफलाः।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥३७॥
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः।
किराततिक्तकं शाकं गण्डीरः सकठिल्लकः ॥ ३८ ॥
कोविदारस्य पुष्पाणि काश्मर्यस्याथ शाल्मलेः।
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत् ॥ ३९ ॥
शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम्।
स्विन्नं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम् ॥ ४० ॥
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्तकान्।
शशान् कपिञ्जलानेणान् हरिणान्कालपुच्छकान् ४१
रक्तपित्ते हितान् विद्याद्रसांस्तेषां प्रयोजयेत्।
ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् ॥४२॥
कफानुगे यूषशाकं दद्याद्वातानुगे रसम्।
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ॥ ४३ ॥
पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुका।
जले साध्या रसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ४४
चन्दनोशीरलोध्राणां रसे तद्वत् सनागरे।
किराततिक्तकोशीरमुस्तानां तद्वदेव च ॥ ४५ ॥
धातकीधन्वयासाम्बुबिल्वानां वा रसे शृता।
मसूरपृश्निपर्ण्योर्वा स्थिरामुद्गरसेऽथ वा ॥ ४६ ॥
रसे हरेणुकानां वा सघृते सबलारसे।
सिद्धाः पारावतादीनां रसे वा स्युः पृथक्पृथक् ४७
इत्युक्ता रक्तपित्तघ्न्यः शीताः समधुशर्कराः।
यवाग्वः कल्पना चैषा कार्या मांसरसेष्वपि ॥ ४८ ॥

शालीत्यादिनाऽन्नमाह। प्रशान्तिका जलमध्ये प्रायो भवति। प्रियङ्गुः कङ्गुः। कोरदूषस्य रक्तपित्तहेतुत्वं निष्पावमाषसूपादियुक्तस्यैव संयोगमहिम्ना निदाने प्रोक्तम्, अयं तु कषायमधुरलघुत्वात् कोरदूषः केवलो रक्तपित्तहर एवेतीह पठ्यते। एवं गण्डीरोऽपि निदाने सुरासौवीरकादियुक्त एव हेतुत्वेनोक्तः, स तु केवलो हित एव; किंवा स्थलजजलजभेदेन गण्डीरो द्विविधः; तत्र हरितवर्गपठितो यः स निदानं भवति, इतरस्तु जलजः शाकवर्गे पठितो यः स इह कफाधिके रक्तपित्ते ज्ञेयः। यूषवद्वा विपाचितमिति यूषो यथा दाडिमाद्यम्लद्रव्ययुक्तो जले विपाच्यते तथाऽयमपीत्यर्थः; किंवा यूषयुक्तं यथा भवति तथा विपाचितमित्यर्थः। रक्ताक्षः चकोरकः। यूषश्च शाकं चेति यूषशाकम् ॥ ३६-४८ ॥

शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम्।
वातोल्बणे तित्तिरिः स्यादुदुम्बररसे शृतः ॥ ४९ ॥

---

१ 'बलदोषौ प्रपश्यता' इति पा०। २ 'प्रवृत्तं' इति पा०। ३ 'दाडिमामलकौ' इति पा०।

१ 'गण्डीरं सकठिल्लकम्' इति पा०।

मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः।
रसे विल्वोत्पलादीनां वर्तकक्रकरौ हितौ ॥ ५० ॥
तृष्यते तिक्तकैः सिद्धं तृष्णाघ्नं वा फलोदकम्।
सिद्धं विदारिगन्धाद्यैरथवा शृतशीतलम् ॥ ५१ ॥

आवस्थिकं भोजनमाह—शश इत्यादि। अत्र शशः कषायत्वाद्रक्तपित्तहरो भवत्येव, विवन्धहरेण वास्तुकेन संस्कृतत्वाद्विवन्धहरोऽपि भवति। एवं तित्तिरिमयूरादयो यद्यप्युष्णत्वेन वातहरास्तथाऽपि रक्तपित्ते न हिता उष्णत्वेन; ततश्च तेषां साधने उदुम्बररसादयो रक्तपित्तहरा नियुज्यन्ते; तथा सति वातं रक्तपित्तं च घ्नन्ति। प्रतिनियतसाधकद्रव्योपन्यासात् संयोगमहिम्नैव कार्यकरा भवन्तीति ज्ञायते। न शशः कषायोऽपि विवन्धं करोति, वास्तुकसंस्कारात्; न तित्तिरिप्रभृतयो रक्तपित्तं कोपयन्ति, उदुम्बररसादिसंस्कारात्; एवं विपरीतफलसंभवो नास्ति, संयोगशक्तेरचिन्त्यत्वात्। वास्तुकरसे एव शशस्य साधनप्रयोगः, इतरसाहचर्यात्। उक्तं हि—"विपचेत्तु वास्तुकरसे शशं विवन्धे पुरीषस्य" इति। सिद्धं विदारिगन्धाद्यैरिति शालिपर्ण्यादिपञ्चमूलशृतमुदकम् ॥ ४९–५१ ॥

ज्ञात्वा दोषावनुवलौ वलमाहारमेव च।
जलं पिपासवे दद्याद्विसर्गादल्पशोऽपि वा ॥ ५२ ॥

संप्रति पानीयदानविषयप्रकारमाह—ज्ञात्वेत्यादि। दोषाविति वातकफौ, पित्तं तु नायकमेव नानुवलम्। विसर्गादिति विरतेः, यावदिच्छमित्यर्थः। पक्षान्तरमाह—अल्पशोऽपि वा, स्तोकं स्तोकमित्यर्थः। अत्र यदि वलवानग्निः शरीरं च महत्तदा विसर्गपर्यन्तं जलं देयं; विपर्यये तु पानीयं नातिपथ्यं, तेनाल्पशो देयम् ॥ ५२ ॥

निदानं रक्तपित्तस्य यत्किंचित् संप्रकाशितम्।
जीवितारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः ॥ ५३ ॥
इत्यन्नपानं निर्दिष्टं क्रमशो रक्तपित्तनुत्।

रक्तपित्तनिदानवर्जनार्थमाह—निदानमित्यादि ॥ ५३ ॥—

वक्ष्यते वहुदोषाणां कार्यं वलवतां च यत् ॥ ५४ ॥
अक्षीणवलमांसस्य यस्य संतर्पणोत्थितम्।
वहुदोषं वलवतो रक्तपित्तं शरीरिणः ॥ ५५ ॥
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम्।
विरेचनेनोर्ध्वभागमधोगं वमनेन च ॥ ५६ ॥
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा।
त्रायमाणां गवाक्ष्या वा मूलमामलकानि वा ॥ ५७ ॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम्।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः ॥ ५८ ॥

वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः।
सशर्करं वा सलिलमिक्षूणां रस एव वा ॥ ५९ ॥
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु।
अधोवहे रक्तपित्ते वमनं परमुच्यते ॥ ६० ॥
ऊर्ध्वगे शुद्धकोष्ठस्य तर्पणादिः क्रमो हितः।
अधोगते यवाग्वादिर्न चेत्स्यान्मारुतो वली ॥ ६१ ॥

वक्ष्यते इत्यादिना संशोधनानि प्रधानभेषजत्वादुच्यन्ते। अक्षीणवलमांसस्येत्यनेन सहजा वलाहानिरुच्यते, वलवत इत्यनेन कालकृतं वलमुच्यते। काले संशोधनयोग्येऽनत्युष्णशीतकाले। निरुपद्रवमिति क्रियाविशेषणं, किंवा रक्तपित्तविशेषणम्। विरेचनेनोर्ध्वभागमित्यादिना अनुलोमहरणं रक्तपित्ते निषेधयति। उक्तं च—"प्रतिमार्गं च हरणं रक्तपित्ते विधीयते" (नि. अ.२) इति। रक्तपित्ते विशेषत इत्यनेन रक्तपित्तादन्यत्र कल्कादयोऽप्येषां भवन्ति। वमनमिति वमनकारको योगो वमनमुच्यते। मदनस्य दोषाद्यपेक्षया कर्षादिका मात्रा कल्पे वक्ष्यमाणा ज्ञेया। सशर्करे सलिले तथेक्षुरसे मदनयोगादेव वमनकर्तृत्वं ज्ञेयम्। अधोवहे इत्यत्रापि शुद्धकोष्ठस्येति योज्यम्। न चेत् स्यान्मारुतो वलीत्यनेन यदि मारुतो वली स्यात्तदा मांसौदन एव देय इति ज्वरोक्तं विधिं सूचयति ॥ ५४–६१ ॥

वलमांसपरिक्षीणं शोकभाराध्वकर्शितम्।
ज्वलनादित्यसंतप्तमन्यैर्वा क्षीणमामयैः ॥ ६२ ॥
गर्भिणीं स्थविरं वालं रूक्षाल्पप्रमिताशिनम्।
अवम्यमविरेच्यं वा यं पश्येद्रक्तपित्तिनम् ॥ ६३ ॥
शोषेण सानुवन्धं वा तस्य संशमनी क्रिया।
शस्यते रक्तपित्तस्य परं साऽथ प्रवक्ष्यते ॥ ६४ ॥
अटरूपककमृद्वीकापथ्याक्वाथः सशर्करः।
मधुमिश्रः श्वासकासरक्तपित्तनिवर्हणः ॥ ६५ ॥
अटरूपकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने।
विनीय लोध्रं क्षौद्रं च रक्तपित्तहरं पिवेत् ॥ ६६ ॥
पद्मकं पद्मकिञ्जल्कं दूर्वां वास्तूकमुत्पलम्।
नागपुष्पं च लोध्रं च तेनैव विधिना पिवेत् ॥ ६७ ॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे।
यवासभृङ्गराजसोमूलं वा गोशकृद्रसे ॥ ६८ ॥
विनीय रक्तपितघ्नं पेयं स्यात्तण्डुलाम्बुना।
युक्तं वा मधुसर्पिर्भ्यां लिह्याद्घोश्वशकृद्रसम् ॥ ६९ ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः।
पुष्पचूर्णानि मधुना लिह्यात्रा रक्तपित्तिकः ॥ ७० ॥
शृङ्गाटकानां लाजानां मुस्तखर्जूरयोरपि।
लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च ॥ ७१ ॥

१ 'विसोत्पलादीनां' इति पा०। २ 'शृतशीतमथापि वा' इति पा०। ३ 'वहुशो वाऽ°' इति पा०।

१ 'अधोगे रक्तपित्ते तु' इति पा०।

**धन्वजानामसृग्लिह्यान्मधुना मृगपक्षिणाम् ।**
**सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावतं शकृत् ॥७१॥**

संशमनविषयमाह—चलमांसेत्यादि । शोषेणेति राजयक्ष्मणा । अटरूषकमृद्वीकेत्यादि कामलाहरं केचिदाहुः । अटरूषकनिर्यूह इत्यादौ प्रियङ्ग्वादीनां मिलितानां कल्कः कर्षः, क्षौद्रस्य च कर्षो ग्राह्यः, परिभाषावलात् । उक्तं चाग्निवेशेन—"कर्षश्चूर्णस्य कल्कस्य गुडिकानां च सर्वशः । मात्रा क्षौद्रघृतादीनां क्वाथक्लेहेषु चूर्णवत्" इति । अन्ये तु ब्रुवते—चूर्णादीनां कर्षमानत्वं स्वतन्त्रप्रयोगे भवति । अत्र चाटरूषक्वाथः क्वाथपरिभाषया कार्यः, कल्कश्च कल्कपरिभाषया कार्यः । प्रियङ्ग्वादीनां प्रत्येकं कर्षमानत्वे भेषजभूयस्त्वं भवति, तेनात्र मिलितैः कर्षमानस्य कर्तव्यता युक्ता । तेनैव विधिनेति अटरूषकनिर्यूहक्षौद्रयुतम् । खदिरस्येत्यादौ पुष्पचूर्णानीति बहुवचनत्वाद्रक्तपित्तनुदिति विशेषणं पुरुषस्य ज्ञेयम् । धन्वजानामिति जाङ्गलानाम् ॥ ६२–७२ ॥

**उशीरकालीयकलोध्रपद्मक-**
**प्रियङ्गुकाकट्फलशङ्खगैरिकाः ।**
**पृथक् पृथक् चन्दनतुल्यभागिकाः ।**
**सशर्करास्तण्डुलधावनाप्लुताः ॥ ७३ ॥**
**रक्तं सपित्तं तमकं पिपासां**
**दाहं च पीताः शमयन्ति सद्यः ।**
**किराततिक्तं क्रमुकं समुस्तं**
**प्रपौण्डरीकं कमलोत्पले च ॥ ७४ ॥**
**ह्रीवेरमूलानि पटोलपत्रं**
**दुरालभा पर्पटको मृणालम् ।**
**धनञ्जयोदुम्बरवेतसत्वङ्-**
**न्यग्रोधशालेययवासकत्वक् ॥ ७५ ॥**
**तुगालतावेतसतण्डुलीयं**
**ससारिवं मोचरसः समङ्गा ।**
**पृथक् पृथक् चन्दनयोजितानि**
**तेनैव कल्पेन हितानि तत्र ॥ ७६ ॥**
**निशि स्थिता वा स्वरसीकृता वा**
**कल्कीकृता वा मृदिताः शृता वा ।**
**एते समस्ता गणशः पृथग्वा**
**रक्तं सपित्तं शमयन्ति योगाः ॥ ७७ ॥**

उशीरेत्यादौ पृथक् पृथगिति वीप्सायां, तेन प्रत्येकमुशीरादीनां चन्दनसमानां प्रयोगं दर्शयति; तथा चाष्टौ प्रयोगा भवन्ति । सशर्करा इति वचनेनात्र शर्करा समभागैव देया; उक्तं ह्यग्निवेशे—"माषिकं हिङ्गु, सिन्धूत्थलवणाद्यास्तु शाणिकाः । सितोपलागुडक्षाराः समा, एषा प्रकल्पना" इति । यत्र शर्करायाः प्रक्षेप्यत्वं तत्र प्रक्षेपन्यायेनैव शर्करा देया । किराततिक्तेऽपि पृथक् पृथक् चन्दनयोजितानीत्यनेन समचन्दनत्वं प्रत्येकं द्रव्यप्रयोगाणाम् । तेनैव कल्पेनेत्यनेन सशर्करत्वं तण्डुलधावनाप्लुतत्वं चोच्यते । क्रमुकं पट्टिकालोध्रम् । धनञ्जयः अर्जुनः । लता प्रियङ्गुः । समङ्गा वराहक्रान्ता, 'लज्जालुः' इति लोके । निशिस्थिता इत्यादिना किराततिक्तादीनां कल्पनामाह । निशिस्थिता वेत्यनेन शीतकषाय उच्यते । मृदिता इति फाण्टीकृताः; कल्कग्रहणेन चूर्णस्यापि ग्रहणं क्रियते, यतः सुश्रुते षडेव कल्पाः पाठभेदात् पठ्यन्ते—"क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव फाण्टः । कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः ( सु. सू. अ. ४४ )" इति । अन्ये तु चूर्णमपि फाण्टशब्देन गृह्यते इति ब्रुवते । यदा तत्र फाण्टग्रहणादेव स पाठः सुश्रुते प्रमाणं, तदा चूर्णशब्देन च कल्पान्तरमेवोच्यते (?) । इह तु फाण्टस्य श्रुतत्वात् कृष्णात्रेयादिपठित एव फाण्टो ग्राह्यः । यदुक्तं—"क्षुण्णस्य सलिले तप्ते मृदितस्योद्धृतस्य च । यो रसो गृह्यते तज्ज्ञैः स फाण्टः संप्रकीर्तितः" इति । तेनेह निर्द्रवः कल्क एव चूर्णशब्देनोच्यते । संप्रति व्यस्तसमस्तप्रयोगमेषामाह—एते इत्यादि । गणश इति उशीरादिगणशः, किराततिक्तादिगणशः, तुगादिगणशश्चेति । अत्र च प्रत्येकप्रयोगे समचन्दनत्वं श्रुतं, यदा गणशः प्रयोगो भवति तदाऽपि चन्दनस्य समो भागो देय इति व्याख्यानयन्ति वृद्धाः ॥ ७३–७७ ॥

**मुद्गाः सलाजाः सयवाः सकृष्णाः**
**सोशीरमुस्ताः सह चन्दनेन ।**
**बलाजले पर्युषिताः कषाया**
**रक्तं सपित्तं शमयन्त्युदीर्णम् ॥ ७८ ॥**

बलाजल इति बलासाधितशीतजले । पर्युषिताः कषाया इति शीतकषायाः ॥ ७८ ॥

**वैदूर्यमुक्तामणिगैरिकाणां**
**मृच्छङ्खहेमामलकोदकानाम् ।**
**मधूदकस्येक्षुरसस्य चैव**
**पानाच्छमं गच्छति रक्तपित्तम् ॥ ७९ ॥**
**उशीरपद्मोत्पलचन्दनानां**
**पक्वस्य लोष्टस्य च यः प्रसादः ।**
**सशर्करः क्षौद्रयुतः सुशीतो**
**रक्तातियोगप्रशमाय देयः ॥ ८० ॥**
**प्रियङ्गुकाचन्दनलोध्रसारिवा-**
**मधूकमुस्ताभयधातकीजलम् ।**
**समृत्प्रसादं सह यष्टिकाम्बुना**
**सशर्करं रक्तनिबर्हणं परम् ॥ ८१ ॥**

१ 'एतच्च व्याख्यानं 'रक्तपित्तनुत्' इति पाठाभिप्रायेण ज्ञेयं; वर्तमानप्रतिषु तु 'रक्तपित्तिकः' इत्येव पाठ उपलभ्यते । २ '°केशरतण्डुलीयं' इति पा० । ३ योगीन्द्रनाथसेनस्तु 'कल्कीकृताः' इत्यत्र 'फाण्टीकृताः' इति पठति, 'मृदिताः' इत्यस्य 'चूर्णीकृताः' इति च व्याख्यानं करोति । ४ 'शमन्त्युदीर्णम्' इति पा० ।

१ 'फाण्टग्रहणेन' इति पा० । २ 'चूर्णमेव फाण्टस्थाने ब्रुवते' इति पा० । ३ 'यष्टिकाम्बुना' इति पा० ।

वैदूर्यादिभिः सह स्थितं जलं वैदूर्यादिजलं ज्ञेयम्। उशीरेत्यादौ शीतकषाये प्रसाद इति प्रसन्नं जलं ग्राह्यम् । प्रियङ्ग्वादौ अभयम् उशीरम् । समृत्प्रसादमित्यत्र मृत्प्रसादोऽप्यनन्तरं प्रक्षेप्यः; एवं यष्टिकाप्रयोगेऽपि ॥ ७९–८१ ॥

कषाययोगैर्विविधैर्यथोक्तै-
र्दीप्तेऽनले श्लेष्मणि निर्जिते च।
यद्रक्तपित्तं प्रशमं न याति
तत्रानिलः स्यादनु तत्र कार्यम् ॥ ८२ ॥
छागं पयः स्यात् परमं प्रयोगे
गव्यं शृतं पञ्चगुणे जले वा।
सशर्करं माक्षिकसंप्रयुक्तं
विदारिगन्धादिगणैः शृतं वा ॥ ८३ ॥
द्राक्षाशृतं नागरकैः शृतं वा
बलाशृतं गोक्षुरकैः शृतं वा।
सजीवकं सर्षभकं ससर्पिः
पयः प्रयोज्यं सितया शृतं वा ॥ ८४ ॥

तत्रानिलः स्यादिति तत्र बलवान् वातः स्यात्। प्रयोग इति अभ्यासे। सजीवकमित्यादौ सजीवकं सर्षभकं च शृतं यत् पयस्तत् ससर्पिस्तथा सितया च युक्तं प्रयोज्यं पेयमिति ज्ञेयम् ॥ ८२–८४ ॥

शतावरीगोक्षुरकैः शृतं वा
शृतं पयो वाऽप्यथ पर्णिनीभिः।
रक्तं निहन्त्याशु विशेषतस्तु
यन्मूत्रमार्गात् सरुजं प्रयाति ॥ ८५ ॥

पर्णिनीभिरिति पर्णिन्यः पर्णिनीचतुष्टयम् ॥ ८५ ॥

विशेषतो विट्पथसंप्रवृत्ते
पयो मतं मोचरसेन सिद्धम्।
वटावरोहैर्वटशुङ्गकैर्वा
ह्रीवेरनीलोत्पलनागरैर्वा ॥ ८६ ॥
कषाययोगान् पयसा पुरा वा
पीत्वाऽनु चाद्यात् पयसैव शालीन्।
कषाययोगैरथवा विपक्व-
मेतैः पिबेत् सर्पिरतिस्रवे च ॥ ८७ ॥

वटशुङ्गा अविकसितनववटपल्लवाः। कषाययोगानिति अटरूषकादीन् कल्कीकृतान् पयसा पीत्वेत्यर्थः। एतैरिति वक्ष्यमाणैः; किंवा एतैरेव कषाययोगैर्यथायोग्यतया सर्पिः साधनीयम्। अतिस्रवे इति अतिमात्ररक्तपित्तस्रुतौ ॥ ८६ ॥ ८७ ॥

वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेद्धृतं तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥ ८८ ॥

इति वासाघृतम्।

आर्द्राया एव वासाया विधानानुकथनान्न द्वैगुण्यम्। वासाकुसुमकल्के च केचित् पुष्पकल्कस्यातीव बाहुल्यं भवतीति कृत्वा प्रस्थे घृते चतुष्पलं पुष्पकल्कं वदन्ति। सक्षौद्रमिति वचनेन घृतात् पादिकत्वं तन्त्रान्तरप्रत्ययाज्ज्ञेयम्; उक्तं हि—"स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे" इति । अग्निवेशेऽप्युक्तं—"मात्रा क्षौद्रघृतानां च स्नेहकार्येषु पूर्ववत्" इति। पूर्ववदिति पादिका ॥ ८८ ॥

पलाशवृन्तस्वरसेन सिद्धं
तस्यैव कल्केन मधुद्रवेण।
लिह्याद्धृतं वत्सककल्कसिद्धं
तद्वत् समङ्गोत्पललोध्रसिद्धम् ॥ ८९ ॥
त्रायमाणाविधिरेष एव
सोदुम्बरे चैव पटोलपत्रे।
सर्पींषि पित्तज्वरनाशनानि
सर्वाणि शस्तानि च रक्तपित्ते ॥ ९० ॥

मधुद्रवेणेति पादिकेन मधुना द्रवीकृतम्। त्रायमाणाया एवं सर्पिः पूर्ववत् पक्तव्यम्; उदुम्बरपटोलपत्राभ्यां चापरम् । पित्तज्वरनाशनानीत्यनेन सकलचिकित्सितवाच्यानि पित्तज्वरहराणि ज्ञेयानि, ज्वरचिकित्सिते तु घृतानि जीर्णज्वरहन्तृतयोक्तानि न पित्तज्वरहन्तृतया; अन्ये तु यान्येव जीर्णज्वरहराणि घृतानि तान्येव पित्तज्वरहराणि भवन्ति, तेषां तु "रूक्षं तेज" ( चि. अ. ३ ) इत्यादिना ज्वरविषयतया समानत्वेन निर्दिष्टं पित्तविषयत्वम्। प्रदेशान्तरेऽपि "जले दशगुणे साध्यं त्रायमाणाचतुःपलम्" इत्यादि यावत् "पित्तरक्तभवं गुल्मं विसर्पं पैत्तिकं ज्वरम्" (चि. अ. ५) इति, तथा "त्रायन्तिका" इत्यादि यावत् "वातरक्ते क्षतक्षीणे विसर्पे पैत्तिके ज्वरे" (चि. अ. २९) इत्यादीनि सकलचिकित्सिते पठितानि पित्तज्वरहरघृतानि कर्तव्यानि ॥ ८९ ॥ ९० ॥

अभ्यङ्गयोगाः परिषेचनानि
सेकावगाहाः शयनानि वेश्म।
शीतो विधिर्बस्तिविधानमग्र्यं
पित्तज्वरे यत् प्रशमाय दिष्टम् ॥ ९१ ॥
तद्रक्तपित्ते निखिलेन कार्यं
कालं च मात्रां च पुरा समीक्ष्य।
सर्पिर्गुडा ये च हिताः क्षतेभ्य-
स्ते रक्तपित्तं शमयन्ति सद्यः ॥ ९२ ॥

अभ्यङ्गयोगा इत्यादिना सर्वे ये दाहज्वरहरा उक्ताः पित्तज्वरप्रशमनकत्वेन तानतिदिशति ॥ ९१ ॥ ९२ ॥

कफानुबन्धे रुधिरे सपित्ते
कण्ठागते स्याद्ग्रथिते प्रयोगः।

युक्तस्य युक्त्या मधुसर्पिषोश्च
क्षारस्य चैवोत्पलनालजस्य ॥ ९३ ॥
मृणालपद्मोत्पलकेशराणां
तथा पलाशस्य तथा प्रियङ्गोः ।
तथा मधूकस्य तथाऽसनस्य
क्षाराः प्रयोज्या विधिनैव तेन ॥ ९४ ॥

रुधिरे सपित्ते इति रक्तपित्ते । युक्त्या युक्तस्येति मात्रया युक्तस्य क्षारस्य प्रयोगः; युक्तिशब्दोऽत्र मात्रावचनः । यद्यपि क्षारस्तीक्ष्ण उक्तस्तथाऽपि कण्ठस्थकफविलयनार्थमुत्पलनालादिकृतगुणानुविधानात् क्षारो दीयत एव रक्तपित्ते; रक्तपित्तहरत्वप्रभावादुत्पलनालादिक्षारो भवत्येव रक्तपित्तहरः, येन तीक्ष्णानि द्रव्याणि परित्यज्योत्पलनालादीन्येव क्षारार्थमाह । ननु, उत्पलादीनामग्निदाहाच्छीतत्वमपयात्येव, उक्तं च वार्तिके क्षीरस्वामिदत्तेन—"शीतं जहति भूयिष्ठं दग्धं सपदि सोमताम्" इति चेद्दृष्टो हि भस्मन्यपि गुणोदय इति ॥ ९३ ॥ ९४ ॥

शतावरीदाडिमतिन्तिडीकं
काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं ज्ञः ॥ ९५ ॥
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं च घृतं निहन्यात् ।
यत् पञ्चमूलैरथ पञ्चभिर्वा
सिद्धं घृतं तच्च तदर्थकारि ॥ ९६ ॥

इति शतावर्यादिघृतम् ।

फलपूरको बीजपूरकः । पञ्च पञ्चमूलानि रसायनोक्तानि । तदर्थकारीति अनन्तरोक्तशतावर्यादिघृतानुकारि ॥९५॥९६॥

कषाययोगा य इहोपदिष्टा-
स्ते चावपीडे भिषजा प्रयोज्याः ।
घ्राणात् प्रवृत्तं रुधिरं सपित्तं
यदा भवेन्निःसृतदुष्टदोषम् ॥ ९७ ॥
रक्ते प्रदुष्टे ह्यवपीडबन्धे
दुष्टप्रतिश्यायशिरोविकाराः ।
रक्तं सपूयं कुणपश्च गन्धः
स्याद् घ्राणनाशः क्रमयश्च दुष्टाः ॥ ९८ ॥
नीलोत्पलं गैरिकशङ्खयुक्तं
सचन्दनं स्यात्तु सिताजलेन ।
नस्यं तथाऽऽम्रास्थिरसः समङ्गा
सधातकीमोचरसः सलोध्रः ॥ ९९ ॥

द्राक्षारसस्येक्षुरसस्य नस्यं
क्षीरस्य दूर्वास्वरसस्य चैव ।
यवासमूलानि पलाण्डुमूलं
नस्यं तथा दाडिमपुष्पतोयम् ॥ १०० ॥
प्रियालतैलं मधुकं पयश्च
सिद्धं घृतं माहिषमाजिकं वा ।
आम्रास्थिपूर्वैः पयसा च नस्यं
ससारिवैः स्यात् कमलोत्पलैश्च ॥ १०१ ॥

घ्राणप्रवृत्तरक्तपित्तचिकित्सितमाह—कषाययोगा इत्यादि । कषाययोगा इति उशीरकालीयकेत्यादिना ये कषाययोगा उक्तास्ते घ्राणप्रवृत्ते रक्तपित्ते प्रदेयाः । अवपीडश्च द्रव्यमापोथितं कृत्वा पीडयित्वा रसो दीयते यः स उच्यते; अयं च निःसृते रक्तदोषे सति देयः; विपर्यये दोषमाह—रक्त इत्यादि । सिताजलेनेति शर्कराजलेन । नीलोत्पलादीनि कल्कीकृत्य अवपीडो देयः । प्रियालतैलमित्यादौ मधुककल्केन पयसा द्रवेण साध्यं प्रियालतैलं घृतं माहिषमाजं वा । आम्रास्थिपूर्वैरिति 'नस्यं तथाऽऽम्रास्थिरसः समङ्गा' इत्यादियोगोक्तैः । सारिवाकमलोत्पलानि च कल्कः, पयो द्रव इति ज्ञेयम् ॥ ९७–१०१ ॥

भद्रश्रियं लोहितचन्दनं च
प्रपौण्डरीकं कमलोत्पले च ।
उशीरवानीरजलं मृणालं
सहस्रवीर्या मधुकं पयस्या ॥ १०२ ॥
शालीक्षुमूलानि यवासगुन्द्रा-
मूलं नलानां कुशकाशयोश्च ।
कुचन्दनं शैवलमप्यनन्ता
कालानुसार्या तृणमूलमृद्धिः ॥ १०३ ॥
मूलानि पुष्पाणि च वारिजानां
प्रलेपनं पुष्करिणीमृदश्च ।
उदुम्बराश्वत्थमधूकलोध्राः
कषायवृक्षाः शिशिराश्च सर्वे ॥ १०४ ॥
प्रदेहकल्पे परिषेचने च
तथाऽवगाहे घृततैलसिद्धौ ।
रक्तस्य पित्तस्य च शान्तिमिच्छन्
भद्रश्रियादीनि भिषक् प्रयुञ्ज्यात् ॥ १०५ ॥
धारागृहं भूमिगृहं सुशीतं
वनं च रम्यं जलवातशीतम् ।
वैडूर्यमुक्तामणिभाजनानां
स्पर्शाश्च दाहे शिशिराम्बुशीताः ॥ १०६ ॥
पत्राणि पुष्पाणि च वारिजानां
क्षौमं च शीतं कदलीदलानि ।
प्रच्छादनार्थं शयनासनानां
पद्मोत्पलानां च दलाः प्रशस्ताः ॥ १०७ ॥

१ 'कुणपैः सगन्धं' इति पा० ।

प्रियङ्गुकाचन्दनरूषितानां
स्पर्शाः प्रियाणां च वराङ्गनानाम् ।
दाहे प्रशस्ताः सजलाः सुशीताः
पद्मोत्पलानां च कलापवाताः ॥ १०८ ॥
सरिद्ध्रदानां हिमवद्दरीणां
चन्द्रोदयानां कमलाकराणाम् ।
मनोऽनुकूलाः शिशिराश्च सर्वाः
कथाः सरक्तं शमयन्ति पित्तम् ॥ १०९ ॥

भद्रश्रियादीनि प्रलेपार्थमाह । वानीरम् उशीरभेद एव सुगन्धिमूलम् । कालानुसार्या शीतलम् । शिशिराश्च सर्वे इत्यन्तेन लेपविधानम् । पद्मोत्पलानां च कलापवाता इति पद्मोत्पलसमूहकृतवाता इत्यर्थः ॥ १०२-१०९ ॥

तत्र श्लोकौ—
हेतुं वृद्धिं संज्ञां स्थानं लिङ्गं पृथक् प्रदुष्टस्य ।
मार्गौ साध्यमसाध्यं याप्यं कार्यक्रमं चैव ॥ ११० ॥
पानान्नमिष्टमेव च वर्ज्यं संशोधनं च शमनं च ।
गुरुरुक्तवान्यथावच्चिकित्सिते रक्तपित्तस्य ॥ १११ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रक्तपित्तचिकित्सितं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

हेतुमित्यादिनाऽध्यायार्थसंग्रहो व्यक्त एव ॥ ११० ॥ १११ ॥

इति श्रीचक्रपाणिदत्तकृतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने रक्तपित्तचिकित्सितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

निदानोक्तक्रमानुरोधाद्रक्तपित्तमनु गुल्मचिकित्सितं ब्रूते ॥ १ ॥ २ ॥

सर्वप्रजानां पितृवच्छरण्यः
पुनर्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं
प्रोवाच सिद्धं वदतां वरिष्ठः ॥ ३ ॥

सर्वप्रजानामित्यादिना गुरोः स्तुतिर्धर्मजनकतया तथोत्तरग्रन्थश्रद्धेयतया । भूते भविष्ये चाव्याहतज्ञानतया प्रभुरेव भवतीति भूतभविष्यदीशः । सिद्धमिति साध्याव्यभिचारि सर्वमेव चिकित्सितं यद्यपि सिद्धमेव वक्तव्यं, तथाऽप्यत्र प्रकरणे स्तुत्यर्थं सिद्धपदं ज्ञेयम् ॥ ३ ॥

विट्श्लेष्मपित्तातिपरिस्रवाद्वा
तैरेव वृद्धैः परिपीडनाद्वा ।
वेगैरुदीर्णैर्विहतैरधो वा
बाह्याभिघातैरतिपीडनैर्वा ॥ ४ ॥
रूक्षान्नपानैरतिसेवितैर्वा
शोकेन मिथ्याप्रतिकर्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः
कोष्ठे प्रकोपं समुपैति वायुः ॥ ५ ॥

अत्र यद्यपि निदाने एव गुल्मस्य हेतुलक्षणान्युक्तानि, तथाऽपि प्रकरणवशात् पुनरुक्तान्यभिधीयन्ते; निदानोक्ताद्विशेषश्च कश्चिदुच्यते । निदाने वायोरेव कोपेन वृद्धैर्हेतुभिरावरणमुक्तम्, अतिपीडनैर्वेत्यनेन तदेवोच्यते । तैरेवेति विट्श्लेष्मपित्तैः । मिथ्याप्रतिकर्म मिथ्याकृतं वमनादिकं पञ्चकर्म ॥ ४ ॥ ५ ॥

कफं च पित्तं च स दुष्टवायु-
रुद्धूय मार्गान् विनिबद्ध्य ताभ्याम् ।
हृन्नाभिपार्श्वोदरवस्तिशूलं
करोत्यथो याति न बद्धमार्गः ॥ ६ ॥
पक्वाशये पित्तकफाशये वा
स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वा-
द्गुल्मो यथादोषमुपैति नाम ॥ ७ ॥

कफं च पित्तं चेत्यादिना संप्राप्तिमाह । इयं च शोणितजगुल्मव्यतिरिक्तानां चतुर्णां संप्राप्तिः । तत्र कफं च पित्तं चेति कदाचित् पित्तं कदाचित् कफः । तत्र कफजे स्वतन्त्रो वृद्धः कफः, पित्तजे स्वहेतुवृद्धं स्वतन्त्रं पित्तं, सन्निपाते च यथोक्तगुणौ पित्तकफौ, उद्धूय वायुः गुल्मं करोति; वातगुल्मे तु स्वतन्त्रः प्रकुपितो वायुः प्रकृतिस्थौ पित्तकफावुद्धूय गुल्मं करोतीति ज्ञेयम् । मार्गानिति ऊर्ध्वाधस्तिर्यङ्मार्गान् । अधो न यातीति अत्र चकारो लुप्तनिर्दिष्टः; तेनोर्ध्वं न याति तिर्यक् च न यातीति ज्ञेयम् । किंवा वायोः कोष्ठस्याधोगमनमेव प्रायो भवति, तेन तन्निषेधः साक्षादुक्तः, इतरमार्गगमननिषेधस्तु समानन्यायतया लभ्यते । पक्वाशये इति पित्ताशयामाशययोरधोभागे एव । स्वतन्त्र इति वातगुल्मे, परसंश्रय इति पक्वाशये । पित्तकफाशययोः कफजः पैत्तिको निचयगुल्मश्च परसंश्रयो भवतीति ज्ञेयम् । परिपिण्डितत्वाद्गुल्म इत्यनेन यथा अज्ञा अपि लतासमूहादौ संघातेनावस्थिते 'गुल्म' इति व्यपदिशन्ति, तथेहापि संघातेनावस्थानाद्गुल्मेत्यभिधानं प्राप्नोति । यथादोषमिति यथोल्बणं दोषम् । नामेति च संज्ञा; वातजोऽयं, पित्तजोऽयमित्यादिका ॥ ६ ॥ ७ ॥

---

१ 'स दूषयित्वा प्रोद्धूय' इति पा० ।

वस्तौ च नाभ्यां हृदि पार्श्वयोर्वा
स्थानानि गुल्मस्य भवन्ति पञ्च ।

गुल्मस्थानान्याह—वस्ताविल्यादि । वस्तौ नाभ्यां हृदि पार्श्वयोर्वा गुल्मस्य पञ्च स्थानानि भवन्ति । यद्यपि वस्त्यादीनि पञ्चैव, तथाऽपि पञ्चग्रहणमधिकस्थाननिषेधार्थम् । रौधिरस्यापि गुल्मस्य गर्भाशयपार्श्वस्थितत्वेन पार्श्वे एवाशये भवतः । अन्ये तु रौधिरव्यतिरिक्तानामेतत् पञ्चस्थानत्वं, रौधिरस्य तु गर्भाशय एव विशिष्टं स्थानं भवति ॥—

पञ्चात्मकस्य प्रभवं तु तस्य
वक्ष्यामि लिङ्गानि चिकित्सितं च ॥ ८ ॥
रूक्षान्नपानं विषमातिमात्रं
विचेष्टितं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च
निरन्नता चानिलगुल्महेतुः ॥ ९ ॥
यः स्थानसंस्थानरुजां विकल्पं
विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरं च
हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥ १० ॥
करोति जीर्णेऽभ्यधिकं प्रकोपं
भुक्ते मृदुत्वं समुपैति यश्च ।
वातात् स गुल्मो न च तत्र रूक्षं
कषायतिक्तं कटु चोपशेते ॥ ११ ॥

संप्रति पृथक्त्वेन हेतुलिङ्गचिकित्साभिधानं प्रतिजानीते—पञ्चात्मकस्येत्यादि । पञ्चात्मकस्य पञ्चस्वरूपस्य । प्रभवत्यस्मादिति प्रभवः कारणं; कारणानि पञ्च वातपित्तकफसन्निपातरूपाणि । तिष्ठत्यस्मिन्निति स्थानं बस्त्यादि, संस्थानमाकृतिः, रुजा पीडा, एषां विकल्पः क्षणे क्षणेऽन्यथात्वम् । शिशिरज्वरः शीतज्वरः । करोतीति पूर्वेण संबध्यते । जीर्णेऽभ्यधिकं प्रकोपं समुपैति यश्च । न चोपशेते इति न सुखं जनयति ॥ ८–११ ॥

कट्वम्ललतीक्ष्णोष्णविदाहिरूक्ष-
क्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो[1] रुधिरं च दुष्टं
पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥ १२ ॥
ज्वरः पिपासा वदनाङ्गरागः
शूलं महज्जीर्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः
स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ १३ ॥

कट्वम्लेत्यादिना पित्तगुल्ममाह । आमाभिघातशब्देनामाभिघातः पित्तजनको ज्ञेयः । रुधिरं च दुष्टमित्यनेन दुष्टाद्रुधिरान्मलभूतस्य पित्तस्य जन्म दर्शयति ॥ १२ ॥ १३ ॥

[1] 'भ्रमाभिघातौ' इति पा० ।

शीतं गुरु स्निग्धमचेष्टनं च
संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसंभवस्य
सर्वस्तु दिष्टो निचयात्मकस्य ॥ १४ ॥

शीतमित्यादिना कफगुल्महेतुलक्षणकथनम् । अत्रान्तरे हेतुत्रयकथनावसाने दोषत्रयमेलकस्य कार्यमाह—सर्वस्तु दिष्टो निचयात्मकस्येति ।—निचयात्मकः सान्निपातिकः । सान्निपातिकश्च निचयरूपगुल्मजन्मतया व्यपदेशेन विकृतिविषमसमवायात् संयोगमहिम्ना च दर्शयति ॥ १४ ॥

स्तैमित्यशीतज्वरगात्रसाद-
हृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं
गुल्मस्य रूपाणि कफात्मकस्य ॥ १५ ॥

औत्पादिकं[1] निचयगुल्ममभिधाय प्रकृतश्लेष्मगुल्मलक्षणमाह—स्तैमित्येत्यादि ॥ १५ ॥

निमित्तलिङ्गान्युपलभ्य गुल्मे
द्विदोषजे दोषबलाबलं च ।
व्यामिश्रलिङ्गानपरांस्तु गुल्मां-
स्त्रीनादिशेदौषधकल्पनार्थम् ॥ १६ ॥

द्विदोषजगुल्महेतुलिङ्गातिदेशार्थमाह—निमित्तेत्यादि । दोषबलाबलं चेत्यनेनैकोल्वणं द्वन्द्वं ग्राहयति । त्रीनिति च वातपित्तज-पित्तकफज-वातश्लेष्मजान् । औषधकल्पनार्थमित्यनेन प्रकृतिसमसमवायत्वात् स्वविलक्षणकार्याकर्तृतया प्रत्येकदोषे द्वन्द्वजगुल्मा अभिनिविष्टा एव, प्रत्येकोक्तचिकित्सामेलकेन चिकित्स्या इत्येतन्मात्रोपदर्शनार्थं तेषामभिधानम् । एतेनाष्टोत्तरीयोक्तपञ्चसंख्याविरोधोऽपि न भवति, द्वान्द्विकगुल्मभेदस्याप्रयोजकत्वात्; सन्निपातगुल्मे तु प्रत्येकदोषजलक्षणादतिरिक्तानि लक्षणानि तत्प्रभावश्चासाध्यत्वादिर्वक्तव्य एवेति युक्तं तस्य भेदेनोपादानम् । ज्वरेऽपि द्वन्द्वज्वराणां पृथग्लक्षणयोगेन द्वान्द्विकत्वं युक्तमिति ज्ञेयम् ॥ १६ ॥

महारुजं दाहपरीतमश्मव-
द्घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनःशरीराग्निबलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ १७ ॥

महारुजमित्यादिना सन्निपातजलक्षणान्याह । केचिदेतल्लक्षणव्यतिरिक्तलक्षणस्तु यः प्रत्येकदोषजोक्तसंसर्गमात्रलक्षणः प्रकृतिसमवायसन्निपातजन्यः स साध्य एव गुल्म इति वदन्ति ॥ १७ ॥

[1] 'औत्पत्तिकं' इति पा० ।

ऋतावनाहारतया भयेन
विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषै-
र्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति ॥ १८ ॥
यः स्पन्दते पिण्डित एव नाङ्गै-
श्चिरात् सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो
मासे व्यतीते दशमे चिकित्स्यः ॥ १९ ॥

ऋतावित्यादिना शोणितगुल्ममाह । ऋताविति पुष्पदर्शनकाले । स्त्रियमित्यनेन कुमारीमतिवृद्धां च निषेधयति । पिण्डित एवेति गर्भस्त्वङ्गैः स्पन्दते । समगर्भलिङ्ग इति स्तनपीनत्वादि गर्भसमानं लिङ्गं भवति । स्त्रीभव एवेति अनेन पुरुषस्य रक्तगुल्मोत्पत्तिं निषेधयति । मासे व्यतीते दशमे चिकित्स्य इति प्रभावाद्दशममासातिक्रमे एवास्य सुखा चिकित्सा भवति, अर्वाक् चिकित्सायां तु शोणितातिस्रुतिगर्भाशयोपघातादि स्यात् । यदुच्यते—गर्भसमानलिङ्गत्वेनास्य दशममासादूर्ध्वं रुधिरगुल्मावधारणं भवति, तेनार्वाक्चिकित्साऽत्र नोक्तेति; तन्न, दशममासातिक्रमेऽपि गर्भावस्थानदर्शनात् । उक्तं हि—"पुष्टो यदा वर्षगणैरपि स्यात्" (शा.अ.२), तथा संपिण्डितत्वं गर्भलक्षणाद्विरुद्धलक्षणमुक्तं; तेन दशममासादर्वागपि शोणितगुल्मावधारणं भवत्येव; तस्मात् पूर्वोक्तमेव साधु ॥ १८ ॥ १९ ॥

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्ध्वं च योगान् गुल्मनिबर्हणान् ॥ २० ॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् ॥ २१ ॥
भोजनाभ्यञ्जनैः पानैर्निरूहैः सानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्तव्यो गुल्मशान्तये ॥ २२ ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २३ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।
पक्वाशयगते बस्तिरुभयं जठराश्रये ॥ २४ ॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः ।
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥ २५ ॥
पुनः पुनः स्नेहपानं निरूहाः सानुवासनाः ।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥ २६ ॥

अत ऊर्ध्वमिति क्रियाक्रमाभिधानादुत्तरम् । स्नेहैरिति चतुर्भिरपि स्नेहैः । स्नेहोपयोगानाह—भोजनेत्यादि । विशेषेणेति वचनेन न सर्वं सर्वत्र; विशेषतस्तु स्नेहपानं नाभेरूर्ध्वं जाते गुल्मे । पक्वाशयगत इति पक्वाशयसंगताधोभागे । बस्तिरिति निरूहोऽनुवासनं च । जठराश्रय इति नाभिगते नाभिपार्श्वगते च । उभयमिति निरूहस्नेहबस्ती । वातगुल्मेष्विति वचनाद्वातप्रधानेषु गुल्मेष्वपि यथोक्तं कर्तव्यं दर्शयति । उक्तं हि "गुल्मिनामनिलशान्तिरुपायैः" ( नि. अ. ३ ) इत्यादि । कफपित्तानुरक्षिणेति तथा स्नेहः कर्तव्यो यथा कफपित्ते न वर्धेते ॥ २०-२६ ॥

कफो वाते जितप्राये पित्तं शोणितमेव वा ।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥ २७ ॥
यथोल्बणस्य दोषस्य तत्र कार्यं भिषग्जितम् ।
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥ २८ ॥

वातचिकित्सया वृद्धकफपित्तरक्तचिकित्सामाह—कफो वाते इत्यादि । जितप्राय इति वचनात् कफाद्यवृद्ध्या वातो यथा जितप्रायो भवति तथा वातचिकित्सा कार्या । यथोल्बणस्येति वातचिकित्सया य उल्बणो दोषो भवति कफादिः, तस्य चिकित्सा कर्तव्या । तस्यामपि चिकित्सायां वातवृद्धिर्यथा न भवति तथा कर्तव्यमिति दर्शयन्नाह—आदावित्यादि ॥ २७ ॥ २८ ॥

वातगुल्मे कफो वृद्धो हत्वाऽग्निमरुचिं यदि ।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम् ॥ २९ ॥
शूलानाहविबन्धेषु गुल्मे वातकफोल्बणे ।
वर्तयो गुटिकाश्चूर्णं कफवातहरं हितम् ॥ ३० ॥
पित्तं वा यदि संवृद्धं संतापं वातगुल्मिनः ।
कुर्याद्विरेच्यः स भवेत् सस्नेहैरानुलोमिकैः ॥ ३१ ॥

गुल्मे यद्यपि वमनं निषिद्धं, तथाऽप्यवस्थायां वमनं तदपवादरूपं दर्शयन्नाह—वातगुल्म इत्यादि । वर्तय इति फलवर्तयः । आनुलोमिकैरिति वचनेन तीव्रविरेचनं वातकोपनं निषेधयति ॥ २९-३१ ॥

गुल्मो यद्यनिलादीनां कृते सम्यग्भिषग्जिते ।
न प्रशाम्यति रक्तस्य सोऽवसेकात् प्रशाम्यति ॥ ३२ ॥

रक्तस्रावणं गुल्मप्रदेशे एव शृङ्गादिना, रक्ताधिष्ठानत्वाद्गुल्मस्य; बाहुसिराव्यधेन रक्तस्रावणं गुल्मस्येतरचिकित्सयाऽप्रशमे ज्ञेयम् । रक्ताधिष्ठानत्वं च गुल्मपाकप्रस्तावे दर्शनीयम् ॥ ३२ ॥

स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।
रूक्षोष्णेन तु संभूते सर्पिः प्रशमनं परम् ॥ ३३ ॥
पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम् ।
कालविन्निर्हरेत् सद्यः सतिक्तैः क्षीरबस्तिभिः ॥ ३४ ॥
पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत् ।
भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा ॥ ३५ ॥

रूक्षोष्णेन तु संभूते पैत्तिके इति योज्यम् । रूक्षोष्णतयैव पित्तं वृद्धं भवति । तैल्वकं सर्पिरुदरे वक्तव्यम् ॥ ३३-३५ ॥

तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्दवे ।
गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत् ॥ ३६ ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।
रक्तं हि व्यम्लतां याति, तच्च नास्ति न चास्ति रुक् ॥ ३७ ॥

तृष्णाज्वरेत्यादिना गुल्मविदाहे उपक्रममाह । रक्तावसेचनं कृतं चेच्छिन्नमूला गुल्मा न विदह्यन्ते; छिन्नमूला इति छिन्नशोणिता इत्यर्थः । छिन्नमूलत्वमेव स्फोरयति—रक्तं हीत्यादि । व्यम्लतां विदाहम् । तच्च नास्तीति शोणितमवसेकान्नास्तीत्यर्थः । तस्य रक्तस्याभावाद्रुगपि नास्ति ॥ ३६ ॥ ३७ ॥

**हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।**
**समाश्वस्तं सशेषार्तिं सर्पिरभ्यासयेत् पुनः ॥ ३८ ॥**

हृतदोषमिति शोणितावसेकेन हृतदोषं, परिम्लानमिति क्षीणकायम् ॥ ३८ ॥

**रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य च ।**
**यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥ ३९ ॥**

क्रियामिति शोणितावसेकरूपां क्रियाम् । विदह्येत पच्यते ॥ ३९ ॥

**गुरुः कठिनसंस्थानो गूढमांसान्तराश्रयः ।**
**अविवर्णः स्थिरश्चैव ह्यपक्वो गुल्म उच्यते ॥ ४० ॥**

गुरुः कठिनेत्यादिनाऽपक्वपच्यमानपक्वगुल्मलक्षणमाह । गूढमांसश्चासौ अन्तराश्रयश्चेति गूढमांसान्तराश्रयः । स्थिर इति उन्नतः ॥ ४० ॥

**दाहशूलार्तिसंक्षोभस्वप्ननाशारतिज्वरैः ।**
**विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत् ॥ ४१ ॥**

तमुपनाहयेदिति उष्णद्रव्यकृतं लेपं पाचनार्थं दद्यादित्यर्थः ॥ ४१ ॥

**विदाहलक्षणे गुल्मे बहिस्तुङ्गे समुन्नते ।**
**श्यावे सरक्तपर्यन्ते संस्पर्शे बस्तिसंनिभे ॥ ४२ ॥**
**निपीडितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीडनात् ।**
**तत्रैव पिण्डिते शूले संपक्वं गुल्ममादिशेत् ॥ ४३ ॥**
**तत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ ।**
**वैद्यानां कृतयोग्यानां व्यधशोधनरोपणे ॥ ४४ ॥**
**अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ।**
**हृत्क्रोडशूनताऽन्तःस्थे बहिःस्थे पार्श्वनिर्गतिः ॥ ४५ ॥**

विदाहलक्षणे इति दाहादिष्वित्यर्थः । बहिस्तुङ्गे इति बाह्यत उन्नते । समुन्नते इति समत्वेनोन्नते, न निम्नोच्चविभागेन । निपीडितानन्तरमुन्नते निपीडितोन्नते । स्तब्धे इति वर्तुले । सुप्ते इति मन्दवेदने इत्यर्थः । धान्वन्तरीयाणामिति धन्वन्तरितन्त्राध्यायिनां शल्यविदामित्यर्थः । कृता शस्त्रकर्मणि योग्या यैस्ते कृतयोग्याः । गुल्मस्य च पाकः सुश्रुते निषिद्धः—"स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः । अन्तःसरति यस्माच्च न पाकमुपयात्यतः" ( उ. तं. अ. ४२ ) इति; तथाऽपीह कृतवास्तुपरिग्रहस्य गुल्मस्य पाक उच्यते, यस्तु अकृतवास्तुपरिग्रहः स न पच्यत इतीहाप्यनुमतं; यस्तु कृतवास्तुपरिग्रहतया पच्यत इति उच्यते तस्य विद्रधित्वेन पाको जायत इति संज्ञामात्रेण विसंवादः । अन्तर्भागस्येति कोष्ठमध्यस्थितस्य । यद्यपि सर्वे एव गुल्माः कोष्ठस्थास्तथाऽपीह यो बहिरुन्नतश्चितो न भवति स इह तत्स्थोऽभिप्रेतः । हृत्क्रोडशूनताऽन्तःस्थे इति अन्तःस्थपाके हृत्क्रोडस्य शूनता भवति; बहिःस्थे पार्श्वनिर्गतिः, पार्श्वनिर्गतिर्गुल्म एव दृश्यते । केचित्तु श्लोकमेनं न पठन्ति ॥ ४२–४५ ॥

**पक्वः स्रोतांसि संक्लेद्य व्रजत्यूर्ध्वमधोऽपि वा ।**
**स्वयंप्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥ ४६ ॥**
**दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।**
**अत ऊर्ध्वं हितं पानं सर्पिषः सविशोधनम् ॥ ४७ ॥**
**शुद्धस्य तिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ।**

व्रजत्यूर्ध्वमिति सशब्देनान्तःस्थेनाभिप्रेतः । उपेक्षेत हिताशनैरिति हिताशनस्तिष्ठेत् न किंचिद्भेषजं कुर्यात् । रक्षन्नुपद्रवानिति उपद्रवेभ्यो ज्वरादिभ्यो रक्षन्नित्यर्थः । सविशोधनमिति विशेषेण शोधनं सर्पिःपानम् । तिक्तमिति तिक्तद्रव्यसाधितम् ॥ ४६ ॥ ४७ ॥—

**शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके ॥ ४८ ॥**
**अवम्यस्याल्पकायाग्नेः कुर्याल्लङ्घनमादितः ।**
**मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ॥ ४९ ॥**
**सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ।**
**उष्णैरेवोपचर्यश्च कृते वमनलङ्घने ॥ ५० ॥**
**योज्यश्चाहारसंसर्गो भेषजैः कटुतिक्तकैः ।**
**सानाहं सविबन्धं च गुल्मं कठिनमुन्नतम् ॥ ५१ ॥**
**दृष्ट्वाऽऽदौ स्वेदयेद्युक्त्या स्विन्नं च विलयेद्भिषक् ।**
**लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ॥ ५२ ॥**
**कफगुल्मी पिबेत् काले सक्षारकटुकं घृतम् ।**
**स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ॥ ५३ ॥**
**सस्नेहैर्बस्तिभिर्वाऽपि शोधयेद्दाशमूलिकैः ।**
**मन्देऽग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ॥ ५४ ॥**
**गुटिकाचूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम् ।**
**कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ॥ ५५ ॥**
**जयेत्कफकृतं गुल्मं क्षारारिष्टाग्निकर्मभिः ।**

शीतलैरित्यादिना कफगुल्ममनुसृत्य चिकित्साक्रममाह । सक्षारकटुकमिति क्षारकटुद्रव्यसाधितम् । अपसृतमिति चलि-

१ 'तत्रैव पिण्डितं विद्रधिनियतत्वाच्छेषाङ्गाव्यापनशीलं, तथाविधे शूले सति; तथा तस्य विद्रधेः पार्श्वपीडनेन पुरुषस्य स्तम्भे लब्धे सुखेन निद्रायां प्राप्तायां' इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः । २ 'हृत्क्रोडशूलमन्तःस्थे' इति पा० ।

१ 'हिताशिनः' इति पा० ।

तम्। दाशमूलिकैरिति दशमूलकृतवस्तयो वस्तिसूत्रीये ( सि. अ. ३ ) वक्तव्याः। मूढे इति संमूर्च्छिते, आवृते इति यावत्। गुडिकाचूर्णनिर्यूहा इति वक्तव्या गुटिकादयः। क्षारारिष्टाग्निकर्मभिरित्यत्र क्षारस्यात्राप्रस्तुतया शल्यतन्त्रे एव तावद्विस्तरेणाभिधानम्, अत्रापि च ग्रहण्यध्याये क्षारा वक्तव्याः; अग्निकर्मात्रापि संक्षेपेण गुल्मस्थाने वक्तव्यं, पराधिकारे विस्तारानभिधानात्॥ ४८-५५॥—

दोषप्रकृतिगुल्मर्तुयोगं बुद्ध्वा कफोल्वणे॥ ५६॥
बलदोषप्रमाणज्ञः क्षारं गुल्मे प्रयोजयेत्।
एकान्तरं द्व्यन्तरं वा त्र्यहं विश्रम्य वा पुनः॥ ५७॥
शरीरबलदोषाणां वृद्धिक्षपणकोविदः।
श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः॥ ५८॥
छित्त्वा छित्त्वाऽऽशयात् क्षारः क्षरत्वात् क्षारयत्यधः
मन्देऽग्नावरुचौ सात्म्ये मद्ये सस्नेहमश्नताम्॥५९॥
प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम्।

क्षारस्य महात्ययत्वेन दोषादिज्ञानपूर्विकामन्तराऽन्तरा प्रवृत्तिमाह—दोषेत्यादि। तत्र क्षारानुगुणो दोषः कफः, प्रकृतिः श्लैष्मिकी, गुल्मश्च स्थिरः, ऋतुर्हेमन्तः शिशिरो वा। एकान्तरमित्यादि। दोषादिषु सर्वेषु क्षारानुगुणेष्वेकान्तरं विश्रम्य, अन्यतमानुगुण्ये द्व्यन्तरं त्र्यहं वा विश्रम्य; बलदोषापेक्षया वा विकल्पः। शरीरबलदोषाणां वृद्धिक्षपणकोविद इति शरीरबलवृद्धौ दोषस्य च क्षपणे पण्डितः। मांसक्षीरघृताशिन इत्यनेन मांसादिभोजनेन क्षारप्रयोगे शरीरबलरक्षा कर्तव्येति दर्शयति॥ ५६-५९॥—

लङ्घनोल्लेखनैः स्वेदैः सर्पिःपानैर्विरेचनैः॥ ६०॥
वस्तिभिर्गुटिकाचूर्णक्षारारिष्टगणैरपि।
श्लैष्मिकः कृतमूलत्वाद्यस्य गुल्मो न शाम्यति॥६१॥
तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः।
औष्ण्यात्तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ॥६२॥
तयोः शमाच्च संघातो गुल्मस्य विनिवर्तते।
दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम्॥ ६३॥
क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम्।

शरलोहादिभिरित्यनेन रूक्षदाहं दर्शयति। दाहश्च गुल्मदेशे एव कर्तव्यः। दाहक्षारयोः पराधिकारत्वेन परबलस्याभिप्रेयत्वं, तेन तत्परेणैव दाहक्षारयोगमाह—दाह इत्यादि। क्षारतन्त्रस्याद्यै पृथगनभिधानाच्छल्यतन्त्रमेवाशुशस्त्रक्षारविधायकं क्षारतन्त्रमुच्यते॥ ६०-६३॥—

व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः॥ ६४॥

व्यामिश्रदोषे इति संसर्गजे सन्निपातजे च व्यामिश्रः॥६४॥

सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिबर्हणान्।
त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः॥ ६५॥
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत्।

इति त्र्यूषणादिघृतम्।

संप्रति सिद्धान् योगानाह—सिद्धानित्यादि। सिद्धानिति वक्ष्यमाणयोगस्तुतिः शिष्यप्रवर्तिका। त्र्यूषणाद्ये द्रवान्तरानभिधानात् क्षीरमेव चतुर्गुणं भवति॥ ६५॥—

एत एव च कल्काः स्युः कषायः पञ्चमूलिकः[1]॥६६॥
द्विपञ्चमूलिको वाऽपि तद्धृतं गुल्मनुत् परम्।

इति त्र्यूषणादिघृतमपरम्।

(षट्पलं वा पिबेत् सर्पिर्यदुक्तं राजयक्ष्मणि॥६७॥)
प्रसन्नया वा क्षीरार्थं[2] सुरया दाडिमेन वा।
दध्नः सरेण वा कार्यं घृतं मारुतगुल्मनुत्॥ ६८॥

एत एवेति त्र्यूषणेत्याद्युक्ताः। प्रसन्ना मद्यविशेषः। क्षीरार्थमिति क्षीरस्थाने प्रसन्ना देया, एवं स्वरसादिभिरपि क्षीरार्थो व्याख्येयः॥ ६६-६८॥

हिङ्गुसौवर्चलाजाजीविडदाडिमदीप्यकैः।
पुष्करव्योषधन्याकवेतसक्षारचित्रकैः॥ ६९॥
शटीवचाजगन्धैलासुरसैश्च विपाचितम्।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम्॥ ७०॥

इति हिङ्गुसौवर्चलाद्यं घृतम्।

हिङ्ग्वाद्ये हिङ्ग्वादीनां कल्कः; दधि चतुर्गुणं, द्रवत्वात्॥ ६९॥ ७०॥

हपुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्धृतम्॥ ७१॥
सकोलमूलकरसं सक्षीरदधिदाडिमम्।
तत् परं वातगुल्मघ्नं शूलानाहविमोक्षणम्॥ ७२॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान्।
वस्तिहृत्पार्श्वशूलं च घृतमेतद्व्यपोहति॥ ७३॥

इति हपुषाद्यं घृतम्।

हपुषादिकल्कः, कोलरसादीनि पञ्चद्रवाणि स्नेहसमानि, "पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमानि" इति वचनात्; दाडिमस्यापि रसान्तरसान्निध्याद्द्रव एव ग्राह्यः; उक्तं हि विश्वामित्रे—"पृथ्वीकाजीरकव्योषहपुषाजाजिसैन्धवैः। सचव्यपिप्पलीमूलैर्वह्निदीप्यकसंयुतैः॥ दाडिमकोलमूलानां रसे दध्नि पयस्यपि। सिद्धं घृतं जयेद्गुल्मं वह्निसंदीपनं परम्" इति॥ ७१-७३॥

पिप्पल्या पिचुरध्यर्धो दाडिमाद्द्विपलं पलम्।
धान्यात्पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ७४
सिद्धमेतैर्घृतं सद्यो वातगुल्मं व्यपोहति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम्॥ ७५॥

इति पिप्पल्याद्यं घृतम्।

१ 'पाञ्चमूलिकः' इति पा०। २ 'क्षीरोत्थं' इति पा०।

पिचुः कर्षः, तेनाध्यर्धपिचुरिति सार्धः कर्षः । अत्र च घृते कल्कभूयस्त्वं भवन्नपि कल्पनीयं, वचनादेव। उक्तं हि न्यायविद्भिः—"निर्देशः श्रूयते नूनं द्रव्याणां यत्र यादृशः। तस्मिन् स संविधातव्यः शब्दाभावे प्रसिद्धितः" इति । अत्र पुनर्घृतं सिद्धमिति पिप्पल्यादीनां लेहत्वेन प्रयोगनिरासार्थं घृतसाधनार्थं चोक्तम् ॥ ७४ ॥ ७५ ॥

घृतानामौषधगणा य एते परिकीर्तिताः।
ते चूर्णयोगा वर्त्यस्ताः कषायास्ते च गुल्मिनाम् ७६
कोलदाडिमघर्माम्बुसुरामण्डाम्लकाञ्जिकैः ।
शूलानाहहरी पेया बीजपूररसेन वा ॥ ७७ ॥
चूर्णानि मातुलुङ्गस्य भावितानि रसेन वा ।
कुर्याद्वर्तीः सगुटिका गुल्मानाहार्तिशान्तये ॥ ७८ ॥

घृतोक्तभेषजानां चूर्णादिष्वपि प्रयोगमाह—घृतानामित्यादि । वर्त्य इति फलवर्त्यः । उक्तद्रव्याणां चूर्णत्वे कृतेऽनुपानार्थं द्रवाण्याह—कोलेत्यादि । कषायकरणपक्षे विशेषविधानानुक्तेः सामान्यविधिनैव कषायकरणं ज्ञेयम् ॥ ७६-७८ ॥

हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥ ७९ ॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्र चूर्णयेत् ॥ ८० ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥ ८१ ॥
पार्श्वहृद्बस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे[1] ॥ ८२ ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥ ८३ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिकाः कार्याः कार्मुकाः स्युस्ततोऽधिकम् ॥
इति हिङ्ग्वादिचूर्णं गुटिका च ।

हिङ्ग्वादौ अजमोदादीनि ख्यातानि । द्वौ क्षारौ सर्जिकायावशूकजौ । प्राग्भक्तमिति भोजनस्य प्राक्; परिणामेन वा यथा भोजनात् प्रत्यासन्नं भवति । बहुश इति सप्ताहं, "सप्ताहं तेन भावना" इति वचनात् । कार्मुका इति कर्मणि समर्थाः ॥ ७९-८४ ॥

मातुलुङ्गरसो हिङ्गु दाडिमं विडसैन्धवे ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ८५ ॥
शटीपुष्करहिङ्ग्वम्लवेतसक्षारचित्रकान् ।
धान्यकं च यवानीं च विडङ्गं सैन्धवं वचाम् ॥८६॥
सचव्यपिप्पलीमूलामजगन्धां सदाडिमाम् ।
अजाजीं चाजमोदां च चूर्णं कृत्वा प्रयोजयेत् ॥८७॥
रसेन मातुलुङ्गस्य मधुशुक्तेन वा पुनः ।
भावितं गुटिकां कृत्वा सुपिष्टां कोलसंमिताम् ॥८८॥
गुल्मं प्लीहानमानाहं श्वासं कासमरोचकम् ।
हिक्कां हृद्रोगमर्शांसि विविधां शिरसो रुजम् ॥८९॥
पाण्ड्वामयं कफोत्क्लेशं सर्वजां च प्रवाहिकाम् ।
पार्श्वहृद्बस्तिशूलं च गुटिकैषा व्यपोहति ॥ ९० ॥
नागरार्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च ।
तिलस्यैकं गुडपलं क्षीरेणोष्णेन ना पिबेत् ॥ ९१ ॥
वातगुल्ममुदावर्तं योनिशूलं च नाशयेत् ।
पिबेदेरण्डजं तैलं वारुणीमण्डमिश्रितम् ॥ ९२ ॥
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ।
श्लेष्मण्यनुबले पूर्वं हितं पित्तानुगे परम् ॥ ९३ ॥

लुञ्चितस्येति निस्तुषीकृतस्य । अत्र चौषधयोगो व्याधिमहिम्नैव भवतीति ज्ञेयम् । पूर्वमिति पूर्वयोगोक्तमेरण्डतैलम् । परमिति उत्तरयोगोक्तमेरण्डतैलं पयोयुक्तं पाययेदित्यर्थः॥८५-९३॥

साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम् ।
क्षीरोदकेऽष्टगुणिते[1] क्षीरशेषं च ना पिबेत् ॥ ९४ ॥
वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम् ।
हृद्रोगं विद्रधिं शोथं साधयत्याशु तत्पयः ॥ ९५ ॥
इति लशुनक्षीरम् ।

साधयेदित्यादौ शुद्धशुष्कस्य निस्तुषीकृतस्य आपूर्णवीर्यस्य च क्षीरोदकेऽष्टगुणिते इत्यत्र "भागेऽनुक्ते समानं" इति वचनात् क्षीरं चतुर्गुणं ( षोडशपलानि ) जलं च चतुर्गुणमिति मिलित्वाऽष्टगुणितं क्षीरावशिष्टं साधयेत्; गुल्मस्य बहुभेषजसाध्यतया षोडशपलक्षीरमानं न दोषावहं भवति । क्षीररसोनयोश्च यद्यपि सहोपयोगो विरुद्धः, तथाऽपि व्याधिमहिम्ना महर्षिवचनादविवादः ॥ ९४ ॥ ९५ ॥

तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजम् ।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ९६ ॥
इति तैलपञ्चकम् ।

तैलं प्रसन्नेत्यादौ यौगिकत्वाज्जतूकर्णसंवादाच्चैरण्डतैलं ज्ञेयम् । उक्तं हि—"आरनालमूत्रक्षारैः संयोज्य तैलमैरण्डम्" इत्यादि ॥ ९६ ॥

पञ्चमूलीकषायेण सक्षारेण[2] शिलाजतु ।
पिबेत्तस्य प्रयोगेण वातगुल्मात् प्रमुच्यते ॥ ९७ ॥
इति शिलाजतुप्रयोगः ।

पञ्चमूलीत्यत्र प्रथमकल्पनया शालपर्ण्यादिपञ्चमूलीग्रहणं ज्ञेयम् ॥ ९७ ॥

१ 'गुदयोनिरुजासु च' इति पा० ।

१ 'क्षीरे जलाष्टगुणिते' इति पा० । २ 'सक्षीरेण' इति पा० ।

वात्यं पिप्पलीयूषेण मूलकानां रसेन वा ।
भुक्त्वा स्निग्धमुदावर्ताद्वातगुल्माद्विमुच्यते ॥ ९८ ॥

पिप्पलीप्रधानो यूषः पिप्पलीयूषः ॥ ९८ ॥

शूलानाहविबन्धार्तं स्वेदयेद्वातगुल्मिनम् ।
स्वेदैः स्वेदविधावुक्तैर्नाडीप्रस्तरसङ्करैः ॥ ९९ ॥
वस्तिकर्म परं विद्याद्गुल्मघ्नं तद्धि मारुतम् ।
स्वे स्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥ १०० ॥
तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥ १०१ ॥
गुल्मघ्ना विविधा दिष्टाः सिद्धाः सिद्धिषु वस्तयः ।

नाडीप्रस्तरसंकरैरित्यनेन गुल्मे स्वेदान्तरस्यायौगिकत्वं सूचयति ॥ ९९-१०१ ॥—

गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके ॥ १०२ ॥
तानि मारुतजे गुल्मे पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित्परम्[1] ॥ १०३ ॥
नीलिनीचूर्णसंयुक्तं पूर्वोक्तं घृतमेव[2] ।
समलाय प्रदातव्यं शोधनं वातगुल्मिने ॥ १०४ ॥

आशु सिध्यन्तीति शीघ्रं गुल्मं जयन्ति । तत्र हेतुमाह— तैलं ह्यनिलजित् परमिति; यस्मात्तैलं वातजित् तस्माद्वातगुल्मं वातविकारं शीघ्रं जयति । अन्ये तु तैलं त्वनिलजित्वरं नीलिनीचूर्णसंयुक्तं समलाय दातव्यं, तथा पूर्वोक्तं च त्र्यूषणाद्यं घृतं नीलिनीचूर्णसंयुक्तं दातव्यमिति योजयन्ति । प्रथमव्याख्याने तु घृतमेवेत्यनेन पूर्वोक्तत्र्यूषणघृतादिकं नीलिनीचूर्णसंयुक्तं देयमित्यर्थो ज्ञेयः ॥ १०२-१०४ ॥

नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविडक्षारनागरम् ॥ १०५ ॥
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडङ्गं व्याघ्रीं च पलिकानि जलाढके ॥ १०६ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ १०७ ॥
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ।
जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ॥ १०८ ॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ।
श्वित्रं प्लीहानमुन्मादं घृतमेतद्व्यपोहति ॥ १०९ ॥

इति नीलिन्याद्यं घृतम् ।

नीलिनीत्यादौ कल्को न श्रूयते, कल्काभावे च पाकज्ञानं नास्ति, पाकस्य हि मृद्वादिना त्रैविध्यमुक्तं, तस्मात् कल्कानभिधानेऽपि पाकज्ञानार्थमपि कल्को देयः; स च क्वाथद्रव्यैरेव योग्यतया सान्निध्याच्च देय इति वदन्ति । मैवं, विचित्रत्वाद्घृतादिसाधनशक्तेः यथोक्ते यथोक्तमेव परं ज्ञे(दे)यं नत्वनुक्तं कल्पनीयं; कल्पनायां च युक्तिर्नास्त्येव, यतो विनाऽपि कल्कदानं क्वाथादिद्रवेण स्नेहपाको भवत्येव, विनाऽपि कल्कं स्नेहपाकज्ञानस्योक्तत्वात्; तस्मादाचार्येण यथोक्तं तथैव कार्यम् । अत्र विरिक्तस्य पेयादिक्रममौत्सर्गिकं बाधयित्वा रसभोजनं प्रयोगसात्म्यत्वादुच्यते; यथा—आवर्तकीघृतविरिक्तस्य काञ्जिककोद्रवान्नभोजनम् ( अष्टाङ्गसंग्रहे, चिकित्सास्थाने, २१ अध्याये ) ॥ १०५-१०९ ॥

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्तकाः ।
शालयो मदिरा सर्पिर्वातगुल्मभिषग्जितम् ॥ ११० ॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।
समण्डवारुणीपानं पक्वं वा धान्यकैर्जलम् ॥ १११ ॥
मन्देऽग्नौ वर्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति ।
तस्मान्ना नातिसौहित्यं कुर्यान्नातिविलङ्घनम् ॥ ११२ ॥
सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते ११३

कुक्कुटेत्यादिना गुल्मिनेऽन्नपानं विधीयते । अतिसौहित्यमतिलङ्घनं चोभयोरप्यग्निवधहेतुतया वर्जितम् । यदुक्तं—"नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात्" ( चि. अ. १५ ) इत्यादि ॥ ११०-११३ ॥

भिषगात्ययिकं बुद्ध्वा पित्तगुल्ममुपाचरेत् ।
वैरेचनिकसिद्धेन सर्पिषा तिक्तकेन वा ॥ ११४ ॥
रोहिणीकटुकानिम्बमधुकत्रिफलात्वचः ।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतोः पले ॥ ११५ ॥
द्वे पले च मसूराणां साध्यमष्टगुणेऽम्भसि[1] ।
शृताच्छेषं घृतसमं सर्पिषश्च चतुष्पलम् ॥ ११६ ॥
पिबेत् संमूर्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलं च भ्रमो मूर्छाऽरुचिस्तथा ११७

इति रोहिण्याद्यं घृतम् ।

रोहिणी कटुका कटुरोहिणी । कर्षांशा इति कर्षप्रमाणाः । पटोलत्रिवृतोः पले इति वचनात् प्रत्येकं पलम् । अष्टगुणे इति घृतादष्टगुणे । घृतसममिति घृतं चतुष्पलमत्रोक्तं; तेन क्वाथघृताभ्यामष्टपलं पेयम्; अष्टपली च मात्रा गुल्मोक्तत्वादेव भवति । यदुक्तं—"गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये । तेषां मात्रा विनिर्दिष्टा पलान्यष्टौ विशेषतः" इति ॥ ११४-११७ ॥

जले दशगुणे साध्यं त्रायमाणाचतुष्पलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥ ११८ ॥

---

१ 'ह्यनिलजित्वरम्' इति पा० । २ 'घृतमेव वेति वाशब्देन वक्ष्यमाणनीलिनीत्रिवृतेत्याद्युक्तद्रव्यैः सिद्धं घृतं देयमित्यर्थो ज्ञेयः' इति पा० ।

१ 'पयसाऽपि वा' इति पा० ।

रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा ।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥ ११९ ॥
रसस्यामलकानां च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥ १२० ॥
पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलां कुष्ठं हन्यादेतद्घृतोत्तमम् ॥ १२१ ॥
इति त्रायमाणाद्यं घृतम् ।

चतुष्पलायां त्रायमाणायां दशगुणं जलं चत्वारिंशत्पलानि देयम् । कल्कैरिति तामलक्यादिकल्कैः, कटुरोहिण्यादीनां च कल्कैरिति योजनीयम् ॥ ११८–१२१ ॥

रसेनामलकेक्षूणां घृतपादं विपाचयेत् ।
पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ॥ १२२ ॥
इत्यामलकाद्यं घृतम् ।

घृतपादमिति समुदितामलकेक्षुरसापेक्षया घृतस्य पादिकत्वम् । पथ्यापादमित्यत्र हरीतक्या गुरुत्वेन घृतापेक्षया पादत्वेनाष्टमो भागो भवति; एके तु "यतश्च पादनिर्देशश्चतुर्भागस्तत्र सः" ( क. अ. १२ ) इति वचनाच्चतुर्थमेव भागं प्रस्थे घृतेऽष्टपलरूपं वदन्ति ॥ १२२ ॥

द्राक्षां मधूकं खर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत्पलसंमितम् ॥ १२३ ॥
जलाढके पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥ १२४ ॥
साधयेत्तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ॥ १२५ ॥
इति द्राक्षाद्यं घृतम् ।

द्राक्षां मधूकमित्यादौ क्वाथशेषस्य प्रस्थस्य साहचर्याद्घृतादीनामपि प्रस्थमानत्वम् ॥ १२३–१२५ ॥

वृषं समूलमापोथ्य पचेदष्टगुणे जले ।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥ १२६ ॥
तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत् ।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम् ॥ १२७ ॥
इति वासाघृतम् ।

वृषं समूलमित्यादौ क्वाथस्याष्टगुणजलदानेऽष्टभागशेषत्वमिति रक्तपित्तोक्तवासाघृताद्विशेषः । तत्र हि सामान्यपरिभाषया वृषाच्चतुर्गुणं जलं चतुर्भागावशिष्टं च गृह्यते । तेन प्रयोगान्तरत्वाद्रक्तपित्तोक्तवासाघृतातिदेशो न कृतः । सक्षौद्रमित्यनेन प्रक्षेपन्यायात् पादिकत्वं मधुनः ॥ १२६ ॥ १२७ ॥

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥ १२८ ॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ १२९ ॥

यथाबलमिति यथा विरेचनातियोगो न भवति ॥ १२८ ॥ १२९ ॥

१ 'घृतप्रस्थं' इति पा० ।

द्राक्षाभयारसं गुल्मे पैत्तिके सगुडं पिबेत् ।
लिह्यात्कम्पिल्लकं वाऽपि विरेकार्थं मधुद्रवम् ॥ १३० ॥

कम्पिल्लकं गुण्डारोचनिकाम् ॥ १३० ॥

दाहप्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम् ।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥ १३१ ॥

तैलेन मधुकस्य वेति मधुकसाधितेन तैलेन ॥ १३१ ॥

ये च पित्तज्वरहराः सतिक्ताः क्षीरबस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु १३२
शालयो जाङ्गलं मांसं गव्याजे पयसी घृतम् ।
खर्जूरामलकं द्राक्षां दाडिमं सपरूषकम् ॥ १३३ ॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बलाविदारीगन्धाद्यैः पित्तगुल्मचिकित्सितम् १३४
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खडैर्यूषैः संधुक्ष्योऽग्निर्विलङ्घिते ॥ १३५ ॥
शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् ॥ १३६ ॥

ये च पित्तज्वरहरा इत्यादौ यद्यपि पित्तज्वरहरत्वेन साक्षाद्बस्तयो नोक्ताः, तथाऽपि पटोलादय एव ये तिक्ता बस्तय उक्तास्त एव पित्तज्वरहरा भवन्तीति कृत्वेहोक्तं—पित्तज्वरहरा इति । पित्तहरा ये च सिद्धौ वक्तव्यास्तेऽप्यत्र ज्ञेयाः ॥ १३२–१३६ ॥

वमनं वमनार्हाय प्रदद्यात् कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥ १३७ ॥
परिवेष्ट्य प्रदीप्तांस्तु बल्वजानथवा कुशान् ।
भिषक्कुम्भे समावाप्य गुल्मं घटमुखे न्यसेत् ॥ १३८ ॥
संगृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा भिन्द्याद्गुल्मं प्रमाणवित् १३९
विमार्गाजपदादर्शैर्यथालाभं प्रपीडयेत् ।
मृद्नीयाद्गुल्ममेवैकं न त्वन्त्रंहृदयं स्पृशेत् ॥ १४० ॥

१ 'पित्तज्वरार्तानां' इति पा० । २ 'स गृहीतो यदा' इति पा० । ३ 'च्छिन्द्याद्गुल्मं प्रमाणवित् । विमार्गजं यदा पश्येत्' इति गङ्गाधरसंमतः पाठः । ४ 'न त्वत्र हृदयं' इति पा० । "स्निग्धस्विन्नशरीरस्य गुल्मिनः गुल्मे शैथिल्यं शिथिलतामागते प्राप्ते सति, प्रमाणवित् कुम्भादीनां तत्रोचितप्रमाणज्ञः भिषक्, प्रदीप्तान् बल्वजानुलपान् अथवा कुशान्, कुम्भे घटीयन्त्रमध्ये, परिवेष्ट्य समावाप्य प्रक्षिप्य वेष्टनेन अन्तःप्रवेशं कारयित्वा, तस्य घटस्य मुखे गुल्मं न्यसेत् प्रज्वलितकुशादिगर्भं तं घटं गुल्मे लागयेत्, अथ स गुल्मः यदा तेन घटेन गृहीतः अन्तःसंगृहीतः, तदा तं घटमुद्धरेत् बलादपसारयेत्, भिन्द्याद्वा उद्धरणाशक्तौ । ततो गुल्मं वस्त्रान्तरं वस्त्रव्यवहितं कृत्वा; विमार्गः, अजपदं, आदर्शो दर्पणश्च ते; विमार्गश्चर्मकाराणां चर्मणि रेखाकरणदारुमययन्त्रविशेषः, अजपदस्य प्रान्तं क्रियायोगि, आदर्शस्य धारा क्रियायोगिनी, तैर्यथालाभं विमार्गादिषु यो लभ्यते तेन, एकं केवलं गुल्ममेव प्रपीडयेन्मृद्नीयात् प्रमृज्याच्च । अत्र प्रपीडने हृदयं तु नैव स्पृशेत्, किंतु हृदयं वर्जयेत् अन्त्रं च वर्जयेत्' इति योगीन्द्रनाथसेनः ।

तिलैरण्डातसीबीजसर्षपैः परिलिप्य च।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् १४१

शैथिल्यमागत इति शिथिलदोषतया शस्त्रनिर्हार्यदोषतामापन्ने गुल्मे तं घटमुखे न्यसेत्। घटमन्थनयन्त्रेण सम्यग्गृहीत्वा प्रपीडयेद् भिन्यादिति योजना। अन्त्रहृदयस्य त्यागः स्फुटनादिभयात् ॥ १३७–१४१ ॥

सव्योषक्षारलवणं दशमूलीशृतं घृतम्।
कफगुल्मं जयत्याशु सहिङ्गुविडदाडिमम् ॥ १४२ ॥

इति दशमूलीघृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके ॥१४३॥
पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचाम्।
विडङ्गं सैन्धवं हिङ्गु यावशूकं विडं शटीम् ॥१४४॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक्।
प्रस्थं च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥१४५॥
एतद्भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ १४६ ॥

इति भल्लातकाद्यं घृतम्।

सव्योषेत्यादौ दशमूलस्य क्वाथे व्योषादीनां शेषाणां कल्कैः साधितं घृतं कफगुल्मं जयतीत्यर्थः ॥ १४२–१४६ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥ १४७ ॥
क्षीरप्रस्थं च तत् सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ १४८ ॥

इति क्षीरषट्पलकं घृतम्।

पिप्पल्याद्युक्तं षट्पलं घृतं समेनैव दुग्धेन श्रपणीयम्। "चतुर्गुणे द्रवे साध्यं" इति वचनादत्र त्रिगुणं जलं ज्ञेयम् ॥ १४७ ॥ १४८ ॥

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥१४९॥
सर्पिरेरण्डजं तैलं क्षीरं चैकत्र साधयेत्।
स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत् १५०
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च।
प्रयोज्यो मिश्रकः स्नेहो योनिशूलेषु चाधिकम् १५१

इति मिश्रकः स्नेहः।

त्रिवृतामित्यादौ पञ्चदशपलानि क्वाथ्यानि; तत्र चतुर्गुणं जलं देयं, पलोल्लेखविहितत्वात् षष्टिपलानि भवन्ति; क्षीरमपि साहचर्यात् पञ्चदशपलम्; एतदुभयद्रवपादः स्नेहोऽत्र पक्तव्यः। किंवा "स्नेहसमं क्षीरं" इति वचनात् स्नेहसमेन क्षीरेण क्वाथेन च पञ्चदशपलेन पञ्चपलः स्नेहो द्रवपादिकः कर्तव्यः। जतूकर्णाभिप्रायात्तु त्रिवृतादिपञ्चदशपले प्रस्थमानोल्लेखेन प्रस्थचतुष्टयं जलस्य देयम्। यतस्तेन सामान्येनैवोक्तं—"त्रिवृतादन्तीत्रिफलादशमूलैः समैरुरुबूकतैलं सर्पिश्च शृतं पयसा समगुदावर्तशूलादौ" इति ॥ १४९–१५१ ॥

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम्।
द्विगुणं तद्विरेकार्थं प्रयोज्यं कफगुल्मिनाम् ॥१५२॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम्।
कार्षिकं मधुसर्पिभ्यां लीढ्वा साधु विरिच्यते १५३

द्विगुणमिति द्विपलप्रमाणं, तत्र हि घृतपलं पेयमुक्तम् ॥ १५२ ॥ १५३ ॥

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥१५४॥
अष्टभागावशेषं तु रसं पूतमधिक्षिपेत्।
दन्तीसमं गुडं पूतं क्षिपेत्तत्राभयाश्च ताः ॥ १५५ ॥
तैलार्धकुडवं चैव त्रिवृतायाश्चतुष्पलम्।
चूर्णितं पलमेकं तु पिप्पलीविश्वभेषजम् ॥ १५६ ॥
तत् साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु।
क्षिपेच्चूर्णपलं चैकं त्वगेलापत्रकेशरात् ॥ १५७ ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयम् ॥१५८॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम्।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम् ॥ १५९ ॥
कुष्ठं प्लीहानमानाहमेषा हन्त्युपसेविता।
निरत्ययः क्रमश्चास्या द्रवो मांसरसौदनः ॥ १६० ॥

इति दन्तीहरीतकी।

तैलार्धकुडवमिति तैलं चतुष्पलम्। लेहवदिति लेहपाकलक्षणेन पक्तव्यमित्यर्थः। इह चतुर्जातकान्मिलितात् पलम्। दोषप्रस्थमिति सार्धत्रयोदशपलं; उक्तं हि भोजेन—"वमने च विरेके च तथा शोणितमोक्षणे। सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति ॥ १५४–१६० ॥

सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम्।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥१६१॥
यच्चूर्णं गुटिका याश्च विहिता वातगुल्मिनाम्।
द्विगुणक्षारहिङ्ग्वम्लवेतसास्ताः कफे हिताः॥१६२॥
य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम्।
सिद्धा निरत्ययाः शस्ता दाहस्त्वन्ते प्रशस्यते १६३
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च ॥१६४॥

१ 'लीढं साधु विरेचयेत्' इति पा०। २ 'चार्धपलिकं' इति पा०।

शुष्कमूलकयूषश्च विल्वस्य वरुणस्य च ।
चिरविल्वाङ्कुराणां च यवान्याश्चित्रकस्य च ॥१६५॥
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमैः ।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत् ॥ १६६ ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत्काले जीर्णं माध्वीकमेव वा ॥१६७॥
यवानीचूर्णितं तक्रं विडेन लवणीकृतम् ।
पिबेत् संदीपनं वातकफमूत्रानुलोमनम् ॥ १६८ ॥

ग्रहण्यर्शश्चिकित्सिते निर्दिष्टा इत्यर्थः । दाहस्त्वन्ते इति वचनेन दाहस्य क्रियान्तरासिद्धावन्ते एव कर्तव्यतामाह ॥१६१–१६८॥

संचितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः सिरानद्धो यदा कूर्म इवोन्नतः ॥ १६९ ॥
दौर्बल्यारुचिहृल्लासकासवम्यरतिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥१७०॥
गृहीत्वा सज्वरश्वासं वम्यतीसारपीडितम् ।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् ॥१७१॥

संचित इत्यादिना क्रमादसाध्यताप्राप्तं गुल्ममाह । महावास्तुपरिग्रह इति भूरिदेशव्यापकः ॥ १६९–१७१ ॥

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात् स्नेहविरेचनम् ॥१७२॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत्॥१७३॥
प्रभिद्येत न यद्येवं दद्याद्योनिविशोधनम् ।
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः ॥ १७४ ॥
आभ्यां वा भावितान् दद्याद्योनौ कटुकमत्स्यकान् ।
वराहमत्स्यपित्ताभ्यां लक्तकान् वा सुभावितान् ॥
अधोहरैश्चोर्ध्वहरैर्भावितान् वा समाक्षिकैः ।
किण्वं वा सगुडक्षारं दद्याद्योनिविशोधनम् ॥१७६॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ।
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत्॥१७७॥
वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम् ।
अदृश्यमाने रुधिरे दद्याद्गुल्मप्रभेदनम् ॥ १७८ ॥
प्रवर्तमाने रुधिरे दद्यान्मांसरसौदनम् ।
घृततैलेन चाभ्यङ्गं पानार्थं तरुणीं सुराम् ॥१७९ ॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरीः क्रियाः ।
कार्या वातरुगार्तायाः सर्वा वातहरीः पुनः ॥ १८० ॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान् ।
सुरां समण्डां पूर्वं च पानमम्लस्य सर्पिषः ॥१८१॥

---

१ 'तरुणस' इति पा० । २ 'वातमूत्रवर्चोऽनुलोमनम्' इति पा० । ३ 'दौर्वर्ण्यारुचि०' इति पा० । ४ '०विरेचनम्' इति पा० ।

प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा ।
अतिप्रवृत्ते रुधिरे सतिक्तेनानुवासनम् ॥ १८२ ॥

गर्भकालव्यतिक्रमे इति दशममासरूपस्य गर्भकालस्य व्यतिक्रमे । क्षारपात्रे इति क्षारोदकस्याढकद्वयम् । मात्रामिति योग्यप्रमाणम् । पललं तिलपिष्टम् । क्षारश्चात्र पलाशक्षार एव, प्रकृतत्वात् । ताभ्यामिति क्षारसुधाक्षीराभ्याम् । कटुकमत्स्यः शफरी शुष्कमत्स्यः । लक्तकान् वस्त्रावयवान् । किण्वं सुराबीजम् । रक्तपित्तहरं क्षारमिति नीलोत्पलक्षारम् । अम्लस्य सर्पिषः अम्लद्रव्यसाधितस्य घृतस्य । उत्तरं भोजनोत्तरकालं पानं, किंवोत्तरवस्तिः । जीवनीयं सर्पिर्वातरक्ते वक्तव्यम् । सतिक्तेन तिक्तद्रव्यसाधितेनानुवासनमिति ॥ १७२–१८२ ॥

तत्र श्लोकाः—

स्नेहः स्वेदः सर्पिर्वस्तिश्चूर्णानि बृंहणं गुडिकाः ।
वमनविरेकौ मोक्षः क्षतजस्य च वातगुल्मवताम् ॥
सर्पिः सतिक्तसिद्धं क्षीरं प्रस्रंसनं निरूहाश्च ।
रक्तस्य चावसेचनमाश्वासनसंशमनयोगाः ॥१८४॥
उपनाहनं सशस्त्रं पक्वस्याभ्यन्तरप्रभिन्नस्य ।
संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य ॥ १८५ ॥
स्नेहः स्वेदो भेदो लङ्घनमुल्लेखनं विरेकश्च ।
सर्पिर्वस्तिर्गुटिकाश्चूर्णमरिष्टाश्च सक्षाराः ॥१८६ ॥
गुल्मस्यान्ते दाहः कफजस्याग्रेऽपनीतरक्तस्य ।
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवस्योक्तः १८७
पथ्यान्नपानसेवा हेतूनां वर्जनं यथास्वं च ।
नित्यं चाग्निसमाधिः स्निग्धस्य च सर्वकर्माणि १८८
हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यता न योगाश्च ।
गुल्मचिकित्सितसंग्रह एतावान् व्याहृतोऽग्निवेशस्य

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने गुल्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

स्नेह इत्यादिना पुनः संक्षेपेण संग्रहं करोति । योगाश्चेत्यनेन प्रत्येकं वातादिगुल्मचिकित्सिते संगृहीता अपि पुनः संग्रहाभिधानेन संगृहीताः ॥ १८३–१८९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सितस्थाने गुल्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

निदानोक्तसंबन्धक्रमादेव गुल्मचिकित्सितादनु मेहचिकित्सितमुच्यते ॥ १ ॥ २ ॥

निर्मोहमानानुशयो निराशः
पुनर्वसुर्ज्ञानतपोविशालः।
कालेऽग्निवेशाय सहेतुलिङ्गा-
नुवाच मेहाञ्शमनं च तेषाम् ॥ ३ ॥

निर्गता मोहादयो यस्य स तथा; अनुशयः कोपः। निर्गता आशा यस्य स निराशः नीरागः। निदानोक्तमपि हेतुलिङ्गादि पुनः प्रकरणवशात् सकलमुच्यते ॥ ३ ॥

आस्यासुखं स्वप्नसुखं दधीनि
ग्राम्यौदकानूपरसाः पयांसि।
नवान्नपानं गुडवैकृतं च
प्रमेहहेतुः कफकृच्च सर्वम् ॥ ४ ॥

आस्यासुखमिति सुखजनिका आस्या न दुःखजनिका, एवं स्वप्नसुखं च ज्ञेयं; शय्यादिदोषेण दुःखस्वप्नं दुःखास्या च न प्रमेहहेतुः। गुडवैकृतं गुडकृता भक्ष्याः ॥ ४ ॥

मेदश्च मांसं च शरीरजं च
क्लेदं कफो बस्तिगतं प्रदूष्य।
करोति मेहान् समुदीर्णमुष्णै-
स्तानेव पित्तं परिदूष्य चापि ॥ ५ ॥
क्षीणेषु दोषेष्ववकृष्य बस्तौ
धातून् प्रमेहाननिलः करोति।
दोषो हि बस्तिं समुपेत्य मूत्रं
संदूष्य मेहाञ्जनयेद्यथास्वम् ॥ ६ ॥

मेदश्च मांसं चेत्यादिना कफजादिमेहसंप्राप्तिः। कफजा एव मेहा भूयस्त्वेन साध्यत्वेन चादावुच्यन्ते। क्षीणेष्विति कफपित्तेषु, द्वयोश्च बहुवचनं व्यक्त्यपेक्षया ज्ञेयम्; क्षीणेष्विति वृद्धवातापेक्षया क्षीणेषु; तेन वृद्धे कफे पित्ते वा यो वायुः क्रमेण वृद्धो भवति स नेहासाध्यमेहचतुष्टयकरणे विवक्षित इति दर्शयति, तत्र चिकित्साविधानात् साध्यत्वमस्ति—"या वातमेहान् प्रतिपूर्वमुक्ता वातोल्वणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्शितानां कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता" इति। धातूनिति मज्जौजोलसीकाख्यान्। सर्वमेहानां सामान्यसंप्राप्तिमाह—दोषो हीत्यादि ॥ ५ ॥ ६ ॥

साध्याः कफोत्था दश, पित्तजाः षट्
याप्या, न साध्यः पवनाच्चतुष्कः।
समक्रियत्वाद्विषमक्रियत्वा-
न्महात्ययत्वाच्च यथाक्रमं ते ॥ ७ ॥

समक्रियत्वादिति कफस्य दोषस्य दूष्यस्य मेदःप्रभृतेः समानत्वात् कटुतिक्तादिक्रियायाः। विषमक्रियत्वादिति पित्तस्य संशमनचिकित्सायाः कट्वादिरूपाया विषमत्वात्। महात्ययत्वादिति मज्जादिगम्भीरधात्वपकर्षकत्वेन महाव्यापत्तिकर्तृकत्वादाशुकारित्वाच्च; चकारान्निदानोक्तं विषमक्रियत्वं वातात्मकानां समुच्चिनोति। यथाक्रममिति यथासंख्यम् ॥ ७ ॥

कफः सपित्तः पवनश्च दोषा
मेदोऽस्रशुक्राम्बुवसालसीकाः।
मज्जा रसौजः पिशितं च दूष्याः
प्रमेहिणां, विंशतिरेव मेहाः ॥ ८ ॥

कफ इत्यादिना सर्वमेहानां दोषदूष्यसंग्रहमाह। रसश्च ओजश्चेति रसौजः, ओजसोऽपि मधुमेहे दूष्यत्वात्। यद्यपि मेदःप्रभृतयो दूष्या इह उच्यन्ते, तथाऽपि मेदोमांसशरीरक्लेदानामवश्यम्भावितया परिग्रहः। मज्जादयश्च सर्वमेहे न पुनरवश्यं दूष्यन्ते, स्तोकं वा दुष्टा भवन्ति; किंवा सर्वमेहानामेव त्रिदोषत्वं तथा सकलदूष्यत्वं च 'कफः सपित्त' इत्यादिना ग्रन्थेनोच्यते; मेदोमांसादीनि त्वत्यर्थदूष्योपदर्शनार्थं पृथगुक्तानि; यतः कियन्तःशिरसीये सकलमेहवाचकं मधुमेहं कथयता दोषत्रयप्रकोपोऽप्युक्तः। तथाहि—"समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः। दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः" (सू. अ. १७) इत्युक्तं; तथा सुश्रुतोऽप्याह—"वातपित्तमेदोभिरन्वितः श्लेष्मा मेहाञ्जनयति" (सु. नि. अ. ६) इति। कफादीनां सुल्वणादिसंसर्गस्यानन्त्येनाधिकप्रमेहसंख्याप्रसक्तिनिरासार्थमाह—विंशतिरेव मेहा इति ॥ ८ ॥

जलोपमं चेक्षुरसोपमं वा
घनं घनं चोपरि विप्रसन्नम्।
शुक्लं सशुक्रं शिशिरं शनैर्वा
लालेव वा वालुकया युतं वा ॥ ९ ॥
विद्यात् प्रमेहान् कफजान् दशैतान्
क्षारोपमं कालमथापि नीलम्।
हारिद्रमाञ्जिष्ठमथापि रक्त-
मेतान् प्रमेहान् षडुशन्ति पित्तात् ॥ १० ॥
मज्जौजसा वा वसयाऽन्वितं वा
लसीकया वा सततं विबद्धम्।
चतुर्विधं मूत्रयतीह वाता-
च्छेषेषु धातुष्वपकर्षितेषु ॥ ११ ॥

जलोपममित्यादिना दशभिः श्लेष्मगुणैः कृतान् दशप्रमेहानाह। एतच्च निदाने स्फुटमनुसर्तव्यम्। घनं चोपरि विप्रसन्न-

१ 'क्षीणेषु प्रवृद्धत्वेनैव क्षीणेषु, न तु स्वमानापेक्षया क्षीणेषु; अनेन वृद्धे कफे पित्ते वा यो वायुर्लङ्घनादिना क्रमेण वृद्धो भवति, स नेहासाध्यमेहचतुष्टयप्रकरणे विवक्षित इति सूच्यते' इति माधवनिदानटीकायां श्रीकण्ठदत्तः।

१ 'विषमक्रियत्वादिति पित्तस्य मेहप्रधानदूष्यस्य च मेदःप्रभृतेरन्योन्यविपरीतक्रियत्वात्; पित्तहरं हि मधुरादि मेदस्करं, मेदोहरं च कट्वादि पित्तकरमिति क्रियावैषम्यम्' इति माधवनिदानटीकायां श्रीकण्ठदत्तः। २ 'दूष्यं' इति पा०। ३ 'मूत्रयतेऽनिलेन' इति पा०।

मित्यनेन सान्द्रप्रसादमेहमाह । मज्जया मज्जमेहः, ओजसा मधुमेहः, वसया वसामेहः, लसिकया हस्तिमेह इति ज्ञेयाः । शेषेष्विति मेदःप्रभृतिषु रसाद्युक्तधातुव्यतिरिक्तेषु । अपकर्षितेष्विति क्षीणेषु; क्षयस्तेषां प्रमेहारम्भकेण वातेनैव, उपोषणादिभिः कर्शनाद्वा क्रियते ॥ ९-११ ॥

वर्णं रसं स्पर्शमथापि गन्धं
यथास्वदोषं भजते प्रमेहः ।
श्यावारुणो वातकृतः सशूलो
मज्जादिसाद्गुण्यमुपैत्यसाध्यः ॥ १२ ॥

संक्षेपेण कफजादिप्रमेहलक्षणमाह—वर्णमित्यादि । तत्र कफजे श्वेतो वर्णो, मधुरो रसः, शीतः स्पर्शः, आमश्च गन्धो भवति । एवं पित्तमेहेऽपि ज्ञेयाः । वायोस्त्वतिनिर्वर्णत्वेन प्राभाविकं कायवर्णमाह—श्यावारुण इत्यादि । मज्जादिसाद्गुण्यं मज्जलसीकादिसमानगुणतां याति । यद्यपि वातिको मेहोऽसाध्य एवोक्तस्तथाऽपि पुनरिहासाध्यवचनेन य एव उत्पत्तितः प्रभूताकृतिः स एव श्यावारुणत्वादि सकलं लक्षणं बिभर्ति; यस्तूत्तरकालं चानुबद्धः स साध्यो भवति; तत्र मज्जादिसाद्गुण्यं नावश्यं भवतीति दर्शयति । किंवोत्तरकालमेव ये वातानुबन्धाः श्यावारुणवर्णादियुक्ता भवन्ति तेऽप्यसाध्या भवन्तीति । तथा कफपित्तजा अपि मज्जादियोगादसाध्या एव; उक्तं च—"सर्वं एव प्रमेहास्तु कालेनाप्रतिकारिणः । मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि" ( सू. नि. अ. ६ ) ॥ १२ ॥

स्वेदोऽङ्गगन्धः शिथिलाङ्गता च
शय्यासनस्वप्नसुखे रतिश्च ।
हृन्नेत्रजिह्वाश्रवणोपदेहो
घनाङ्गता केशनखातिवृद्धिः ॥ १३ ॥
शीतप्रियत्वं गलतालुशोषो
माधुर्यमास्ये करपाददाहः ।
भविष्यतो मेहगदस्य रूपं
मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ १४ ॥

स्वेदोऽङ्गगन्ध इत्यादिना पूर्वरूपमाह ॥ १३ ॥ १४ ॥

स्थूलः प्रमेही बलवानिहैकः
कृशस्तथैकः परिदुर्बलश्च ।
संबृंहणं तत्र कृशस्य कार्यं
संशोधनं दोषबलाधिकस्य ॥ १५ ॥
स्निग्धस्य योगा विविधाः प्रयोज्याः
कल्पोपदिष्टा मलशोधनाय[१] ।
ऊर्ध्वं तथाऽधश्च मलेऽपनीते
मेहेषु संतर्पणमेव कार्यम् ॥ १६ ॥

गुल्मः क्षयो मेहनबस्तिशूलं
मूत्रग्रहश्चाप्यपतर्पणेन ।
प्रमेहिणः स्युः, परितर्पणानि[१]
कार्याणि तस्य प्रसमीक्ष्य वह्निम् ॥ १७ ॥

परिदुर्बलः हीनबलः । कृशस्य इति मांसक्षयस्य । दोषबलाधिकस्य दोषेण बलेन चाधिकस्य । क्षयः धातुक्षयः ॥१५-१७॥

संशोधनं नार्हति यः प्रमेही
तस्य क्रिया संशमनी प्रयोज्या ।
मन्थाः कषाया यवचूर्णलेहाः
प्रमेहशान्त्यै लघवश्च भक्ष्याः ॥ १८ ॥
ये विष्किरा ये प्रतुदा विहङ्गा-
स्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः ।
यवौदनं रूक्षमथापि वाट्यं-
मद्यात् ससक्तूनपि चाप्यपूपान् ॥ १९ ॥
मुद्गादियूषैरथ तिक्तशाकैः
पुराणशाल्योदनमाददीत ।
दन्तीङ्गुदीतैलयुतं प्रमेही
तथाऽतसीसर्षपतैलयुक्तम् ॥ २० ॥
सषष्टिकं स्याच्चृणधान्यमन्नं
यवप्रधानस्तु भवेत् प्रमेही ।
यवस्य भक्ष्यान् विविधांस्तथाऽद्यात्
कफप्रमेही मधुसंप्रयुक्तान् ॥ २१ ॥
निशिस्थितानां त्रिफलाकषाये
स्युस्तर्पणाः क्षौद्रयुता यवानाम् ।
तान् सीधुयुक्तान् प्रपिबेत् प्रमेही
प्रायोगिकान्मेहवधार्थमेव ॥ २२ ॥
ये श्लेष्ममेहे विहिताः कषाया-
स्तैर्भावितानां च पृथग्यवानाम् ।
सक्तूनपूपान् सगुडान् सधानान्
भक्ष्यांस्तथाऽन्यान् विविधांश्च खादेत् ॥ २३ ॥
खराश्वगोहंसपृषङ्कृतानां
तथा यवानां विविधाश्च भक्ष्याः ।
देयास्तथा वेणुयवा यवानां
कल्पेन गोधूममयाश्च भक्ष्याः ॥ २४ ॥

क्षुण्णशुष्कयवानां मण्डरहित ओदनो यवौदनः । वाट्यैः स एव समण्डो निस्तुषेद्दलितानां यवानां भवति । अतसी ख्याता, ये तिलातसीति पठन्ति तेषां मते तिलरूपाऽतसी(?) विवक्षिता । तृणधान्यानि श्यामाकादीनि । अपूपान् यवपिष्टकृतान् । धानान् भृष्टयवान् । वेणुयवा यवाकाराणि वंशबीजानीत्यर्थः ॥१८-२४॥

१ 'मलशोधना ये' इति पा० ।

१ 'परिबृंहणानि' इति पा० । २ 'तस्मात्' इति पा० । ३ 'वाट्यं मद्यान्' इति पा० । ४ 'वाट्यो यवमण्डः' इति गङ्गाधरः ।

संशोधनोल्लेखनलङ्घनानि
काले प्रयुक्तानि कफप्रमेहान् ।
जयन्ति पित्तप्रभवान् विरेकः
संतर्पणः संशमनो विधिश्च ॥ २५ ॥

संशोधनग्रहणेनैवोल्लेखने प्राप्ते पुनर्वमनस्य कफजयप्रधानत्वख्यापनार्थमुल्लेखनपदेन कथनम्; अन्ये तूल्लेखनं कफमेहेषु लङ्घनं वदन्ति । पित्तमेहानां याप्यत्वात् 'जयन्ति' इति पदेन पित्तजानां यापनमेवोच्यते; किंवाऽत्यन्तदुष्टे मेदसि पित्तजानामसाध्यत्वं, 'साध्यास्तु मेदो यदि न प्रदुष्टम्' इत्यनेन ये वक्तव्यास्तान् प्रति जयन्तीति साधु ॥ २५ ॥

दार्वीं सुराह्वां त्रिफलां समुस्तां
कषायमुत्क्वाथ्य पिबेत् प्रमेही ।
क्षौद्रेण युक्तामथवा हरिद्रां
पिबेद्रसेनामलकीफलानाम् ॥ २६ ॥
हरीतकीकट्फलमुस्तलोध्रं
पाठाविडङ्गार्जुनधन्वनाश्च ।
उभे हरिद्रे तगरं विडङ्गं
कदम्बशालार्जुनदीप्यकाश्च ॥ २७ ॥
दार्वी विडङ्गं खदिरो धवश्च
सुराह्वकुष्ठागुरुचन्दनानि ।
दार्व्यग्निमन्थौ त्रिफला सपाठा
पाठा च मूर्वा च तथा श्वदंष्ट्रा ॥ २८ ॥
यवान्युशीराण्यभयागुडूची-
चव्याभयाचित्रकसप्तपर्णाः ।
पादैः कषायाः कफमेहिनां ते
दशोपदिष्टा मधुसंप्रयुक्ताः ॥ २९ ॥
उशीरलोध्राञ्जनचन्दनाना-
मुशीरमुस्तामलकाभयानाम् ।
पटोलनिम्बामलकामृतानां
मुस्ताभयापद्मकवृक्षकाणाम् ॥ ३० ॥
लोध्राम्बुकालीयकधातकीनां
निम्बार्जुनाम्रातनिशोत्पलानाम् ।
शिरीषसर्जार्जुनकेशराणां
प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥ ३१ ॥
अश्वत्थपाठासनवेतसानां
कटङ्कटेर्युत्पलमुस्तकानाम् ।
पैत्तेषु मेहेषु दश प्रदिष्टाः
पादैः कषाया मधुसंप्रयुक्ताः ॥ ३२ ॥

सर्वेषु मेहेषु मतौ तु पूर्वौ
कषाययोगौ विहितास्तु सर्वे ।
मन्थस्य पाने यवभावनायां
स्युर्भोजने पानविधौ पृथक् च ॥ ३३ ॥
सिद्धानि तैलानि घृतानि चैव
देयानि मेहेष्वनिलात्मकेषु ।
मेदः कफश्चैव कषाययोगैः
स्नेहैश्च वायुः शममेति तेषाम् ॥ ३४ ॥

दार्वीमित्याद्युक्तं योगद्वयं सर्वमेहेषु । सुराह्वः देवदारु । हरीतक्यादयो दश यथासंख्यं कफमेहेषु; किंवा सर्वे सर्वकफमेहेषु, उशीराद्युक्ताश्च पित्तमेहेषु सर्वेषु ज्ञेयाः । कटङ्कटेरी दारुहरिद्रा । मन्थस्य पाने इति मन्थपानार्थं, भोजने इति भोज्यसंस्कारे, एवं पानसंस्कारेऽपि । सिद्धानि तैलानीति एतैरेव कषायैः सिद्धानि । अनिलात्मकेष्विति कफपित्तमेहेष्वेव वातानुबन्धेषु, उत्पत्तिविशिष्टानिलजानामसाध्यत्वेनाचिकित्स्यत्वात् ॥ २६–३४ ॥

कम्पिल्लसप्तच्छदशालजानि
वैभीतरौहीतककौटजानि ।
कपित्थपुष्पाणि च चूर्णितानि
क्षौद्रेण लिह्यात् कफपित्तमेही ॥ ३५ ॥
पिबेद्रसेनामलकस्य चापि
कल्कीकृतान्यक्षसमानि काले ।
जीर्णे च भुञ्जीत पुराणमन्नं
मेही रसैर्जाङ्गलजैर्मनोज्ञैः ॥ ३६ ॥

कफपित्तमेहीति कफमेही पित्तमेही च । कल्कीकृतानीति कम्पिल्लकादीन्येव कल्कीकृतानि ॥ ३५ ॥ ३६ ॥

दृष्ट्वाऽनुबन्धं पवनात् कफस्य
पित्तस्य वा स्नेहविधिर्विकल्प्यः ।
तैलं कफे स्यात् स्वकषायसिद्धं
पित्ते घृतं पित्तहरैः कषायैः ॥ ३७ ॥
त्रिकण्टकाश्मन्तकसोमवल्कै-
र्भल्लातकैः सातिविषैः सलोध्रैः ।
वचापटोलार्जुननिम्बमुस्तै-
र्हरिद्रया पद्मकदीप्यकैश्च ॥ ३८ ॥
मञ्जिष्ठया चागुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद्, घृतं तु
पैत्तेषु, मिश्रं त्रिषु लक्षणेषु ॥ ३९ ॥

१ 'किंवा नात्यन्तदुष्टे मेदसि पित्तजा अपि साध्याः, 'साध्यास्तु मेदो यदि न प्रदुष्टम्' इति चरकवचनात्' इति श्रीकण्ठदत्तः । २ 'अश्वत्थयासासनवेतसानां' इति पा० ।

१ 'योज्यानि' इति पा० । २ 'पाठापटोलार्जुननिम्बमुस्तैः' इति पा० ।

फलत्रिकं दारुनिशां विशालां
मुस्तां च निःक्वाथ्य निशां सकल्काम्।
पिबेत् कषायं मधुसंप्रयुक्तं
सर्वप्रमेहेषु समुद्धतेषु ॥ ४० ॥

अनुबन्धमिति पश्चादनुगतम्। तैलं कफे स्यात् सकषायसिद्धमिति कफे कफानुबन्धे च कफघ्नौषधकषायैः सिद्धं तैलं स्यात्, एवं पित्ते पित्तानुबन्धे च पित्तघ्नौषधकषायसिद्धं घृतं देयं स्यात्। सर्वैरित्युक्ते पृथगपि सर्वैः स्नेहसाधनं स्यादत आह—समस्तैरिति; मिलितैरित्यर्थः। मिश्रमिति तैलघृतयमकम्। त्रिषु लक्षणेष्विति त्रिदोषलक्षणमेलके सति; त्रिदोषजत्वमनुबन्ध्यानुबन्धकृतं कफपित्तजमेहेष्वेव मन्तव्यं; किंच सर्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतत्रिदोषजत्वं कदाचिद्भवतीति ज्ञेयम्॥३७-४०॥

लोध्रं शटीं पुष्करमूलमेलां
मूर्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां
किराततिक्तं कटुरोहिणीं च ॥ ४१ ॥
भार्ङ्गीं नतं चित्रकपिप्पलीनां
मूलं सकुष्ठातिविषं सपाठम्।
कलिङ्गकान् केशरमिन्द्रसाह्वां
नखं सपत्रं मरिचं प्लवं च ॥ ४२ ॥
द्रोणेऽम्भसः कर्षसमानि पक्त्वा
पूते चतुर्भागजलावशेषे
रसेऽर्धभागं मधुनः प्रदाय
पक्षं निधेयो घृतभाजनस्थः ॥ ४३ ॥
मध्वासवोऽयं कफपित्तमेहान्
क्षिप्रं निहन्याद्विपलप्रयोगात्।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या
दोषं किलासं विविधं च कुष्ठम् ॥ ४४ ॥
इति मध्वासवः।

लोध्रमित्यादौ क्रमुकं पट्टिकालोध्रं पूगं वा। इन्द्रसाह्वाम् इन्द्रवारुणीम् ॥ ४१-४४ ॥

क्वाथः स एवाष्टपलं च दन्त्या
भल्लातकानां च चतुष्पलं स्यात्।
सितोपला त्वष्टपला विशेषः
क्षौद्रं च तावत् पृथगासवौ तौ ॥ ४५ ॥

क्वाथः स एवेति तावन्मानजलेनैव दन्त्यष्टपलं भल्लातकचतुःपलं लोध्रादीनि च कर्षमानानि दत्त्वा क्वाथः कर्तव्य इत्यर्थः। क्षौद्रं च तावदिति क्वाथापेक्षयाऽष्टभागमित्यर्थः ॥ ४५ ॥

सारोदकं वाऽथ कुशोदकं वा
मधूदकं वा त्रिफलारसं वा।
सीधुं पिबेद्वा निगदं प्रमेही
माध्वीकमग्र्यं चिरसंस्थितं वा ॥ ४६ ॥
मांसानि शूल्यानि मृगद्विजानां
खादेद्यवानां विविधांश्च भक्ष्यान्।
संशोधनारिष्टकषायलेहैः
संतर्पणोत्थाञ् शमयेत् प्रमेहान् ॥ ४७ ॥
भृष्टान् यवान् भक्षयतः प्रयोगाच्छुष्कांश्च सक्तून्न भवन्ति मेहाः।
श्वित्रं च कृच्छ्रं कफजं च कुष्ठं
तथैव मुद्गामलकप्रयोगात् ॥ ४८ ॥

सारोदकमिति सारैः खदिरादिसारैः षडङ्गविधिना कृतमुदकं सारोदकं ज्ञेयम्, एवं कुशोदकं ज्ञेयम्। मधुना मधुरीकृतमुदकं मधूदकम्। शूल्यानीति शूलपक्वानीत्यर्थः। मृगद्विजानामित्यत्र यौगिकत्वाज्जाङ्गलमृगद्विजानामिति ज्ञेयम्। प्रयोगादिति अभ्यासात् ॥ ४६-४८ ॥

संतर्पणोत्थेषु गदेषु योगा
मेदस्विनां ये च मयोपदिष्टाः।
विरूक्षणार्थं कफपित्तजेषु
सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥ ४९ ॥

संतर्पणोत्थेषु गदेषु योगा संतर्पणीयाध्याये "त्रिफलारग्वधं पाठां" ( सू. अ. २३ ) इत्याद्युक्ताः ॥ ४९ ॥

व्यायामयोगैर्विविधैः प्रगाढैरुद्वर्तनैः स्नानजलावसेकैः।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः ॥ ५० ॥

सेव्यम् उशीरम्। चन्दनाद्यैरित्यत्र आदिग्रहणेन हि शैलेयादीनां ग्रहणं स्यात् ॥ ५० ॥

क्लेदश्च मेदश्च कफश्च वृद्धः
प्रमेहहेतुः प्रसमीक्ष्य तस्मात्।
वैद्येन पूर्वं कफपित्तजेषु
मेहेषु कार्याण्यपतर्पणानि ॥ ५१ ॥

संप्रत्युत्सर्गतः कफपित्तप्रमेहाणामपतर्पणमाह—क्लेदश्चेत्यादि। यद्यप्यपतर्पणेन गुल्मादिदोषो भवति, तथाऽपि गुल्मादिप्रादुर्भावो यथा न भवेत्तथाऽपतर्पणं कर्तव्यमिति क्लेदश्च मेदश्चेत्यादिना दर्शयति ॥ ५१ ॥

१ 'समस्तैरिति सर्वैर्यथोक्तैः समुदितैरेव, न यथालाभेन स्नेहं विपचेदित्यर्थः' इति श्रीकण्ठदत्तः। २ 'लोध्रासवोऽयं' इति पा०।

१ 'शूलभृतानीत्यर्थः' इति पा०। २ 'विलेपनैश्च प्रशमन्ति' इति पा०।

या वातमेहान् प्रति पूर्वमुक्ता
वातोल्वणानां विहिता क्रिया सा ।
वायुर्हि मेहेष्वतिकर्शितानां
कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥ ५२ ॥

पूर्वं चिकित्सिते यानि "सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु" इत्यादिनोक्तानि, तानि वातानुबद्धमेहविषयाणीति दर्शयन्नाह—या वातमेहानित्यादि । वातोल्वणत्वमेव कुतः कफजेषु पित्तजेषु च भवतीत्याह—वायुरित्यादि । असाध्यानिति उत्पत्तितः ॥ ५२ ॥

यैर्हेतुभिर्ये प्रभवन्ति मेहा-
स्तेषु प्रमेहेषु न ते निषेव्याः ।
हेतोरसेवा विहिता यथैव
जातस्य रोगस्य भवेच्चिकित्सा ॥ ५३ ॥

यैर्हेतुभिरित्यादिश्लोकार्थपरिभाषा सर्वरोगेष्वेवानुमता, इह प्रमेहस्य चिरकालानुबन्धितया हेतुसेवानिरासार्थमुच्यते ॥ ५३ ॥

हारिद्रवर्णं रुधिरं च मूत्रं
विना प्रमेहस्य हि पूर्वरूपैः ।
यो मूत्रयेत्तं न वदेत् प्रमेहं
रक्तस्य पित्तस्य हि स प्रकोपः ॥ ५४ ॥

संप्रति प्रमेहलक्षणस्य रक्तपित्तलक्षणसाम्ये रक्तपित्ते प्रमेहचिकित्सा मा भूदिति कृत्वा प्रमेहरक्तपित्तभेदकं लक्षणमाह—हारिद्रवर्णमित्यादि ॥ ५४ ॥

दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्याद्द्विविधो विचारः ।
क्षीणेषु दोषेष्वनिलात्मकः स्यात्
संतर्पणाद्वा कफसंभवः स्यात् ॥ ५५ ॥

दृष्ट्वेत्यादि । क्षीणेषु दोषेष्विति क्षीणेषु कफमेदःप्रभृतिषु । दोषत्वं चेह दूष्ये मेदआदावविवक्षितं, तथाऽपि दोषसंबन्धाद्दोषशब्दोऽत्र ज्ञेयः; किंवा दोषेष्विति कफपित्तेषु; द्वयोश्च बहुवचनं व्यक्त्यपेक्षया बहुत्वात् । यदि हि वातिकः स्यात्तदा हेत्वभावात् कफोऽवृद्धः स्यादित्यर्थः; संतर्पणात्तु यदि ज्ञातं तर्पणजनितकफवृद्धत्वं, तदा वातनिदानाभावान्नायं वातजः किंतु कफज इत्यवधार्यत इति भावः ॥ ५५ ॥

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते, पित्तकृतास्तु याप्याः,
साध्यास्तु मेदो यदि न प्रदुष्टम् ॥ ५६ ॥

संप्रत्युक्तानुक्तप्रमेहाणां साध्यासाध्ययाप्यत्वोपदर्शनार्थमाह—सपूर्वरूपा इत्यादि । सह पूर्वरूपेण "स्वेदोऽङ्गगन्धः" इत्यादिना वर्तन्त इति सपूर्वरूपाः । तत्र कफमेहाः साध्या उक्तास्ते पूर्वरूपेण सह वर्तमाना असाध्या भवन्ति, पित्तमेहा याप्या उक्तास्ते प्रत्याख्येया भवन्ति । साध्यावस्थायामपि पूर्वरूपयोगेन यद्यपि सर्वरोगाणामसाध्यत्वमुक्तम्, उक्तं च यथा—"अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" ( इ. अ. ५ ) इति; तत्र सर्वपूर्वरूपानुबन्धे सर्वरोगाणामसाध्यत्वमुक्तम्, इह तु असमस्तपूर्वरूपानुबन्धेऽप्यसाध्यत्वं भवतीति विशेषवचनाल्लभ्यते । तथा क्रमेण च ये वातकृतास्ते पूर्वरूपरहिता अप्यसाध्याः । क्रमेणेति यथोक्तनिदानक्रमेण । एतेन य एव निदानोक्तहेत्वादियोगेन वातजाश्चत्वारो जायन्ते ते मेहा असाध्याः; ये तु कफजाः पित्तजा वा वातानुबन्धत्वेन वातजास्ते साध्या याप्या वा । अत एव तान् प्रति "सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु" इत्यनेन चिकित्सोक्ता । पूर्वरूपराहित्येन पित्तकृते प्रमेहे कदाचित् साध्यत्वमपि भवतीत्यपवादविधिं दर्शयितुमुत्सर्गप्राप्तां पैत्तिकयाप्यतामनुवदति—पित्तकृतास्तु याप्या इति । अवस्थासाध्यान् पैत्तिकानाह—साध्यास्त्वित्यादि । न प्रदुष्टमिति न प्रकर्षेण दुष्टम्; अदुष्टमेदसः पैत्तिकाः साध्या भवन्तीत्यर्थः । किंवा प्रदुष्टाः कफपित्तमेहास्तावदसाध्याः, तथा कफपित्तमेहा ये धात्वपकर्षणाद्वातकृता भवन्ति तेऽपि सपूर्वरूपाः सन्तोऽसाध्या भवन्ति । ये तु पूर्वरूपत्वेन कियन्तःशिरसीयोक्तं प्रमेहं विंशतिप्रमेहातिरिक्तं वर्णयन्ति, ते "विंशतिरेव मेहाः" इति संख्यानियमेनैव प्रत्यादिष्टाः ॥ ५६ ॥

जातः प्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि बीजदोषात् ।
ये चापि केचित् कुलजा विकारा
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥ ५७ ॥

मेहानामसाध्यताप्रकारान्तरमाह—जात इत्यादि । प्रमेही यः प्रमेहिणो जातः सोऽप्यसाध्यो भवति । अत्रापि हेतुमाह—स हि बीजदोषादिति;प्रमेहारम्भकदोषदुष्टबीजजातप्रमेहित्वात् । मधुमेहशब्देनात्र मेहमात्रमुच्यते, यदि तु वातिक उपेक्षितो वा मेहो मधुमेह उच्यते, तदेतरप्रमेहयुक्तमातापितृजनितप्रमेहिणो नासाध्यत्वं स्यात् । किंच मधुमेहिनो जनितस्य मधुमेहित्वमेव कारणानुरूपतया युक्तम् । ततश्च मधुमेही मधुमेहिनो वा जातो न साध्य इति वक्तुमुचितम् । तस्मादपत्ये सामान्येन प्रमेहवचनेनापि तत्कारणे पितरि कार्यानुरूपः प्रमेहो मधुमेहशब्दवाच्यो ज्ञेयः । मेहशब्दोऽयं सामान्येन सर्वमेहेषु वर्तत एव, यतः कियन्तःशिरसीये या पिडका मधुमेहसंबन्धित्वेनोक्तास्ता इह "प्रमेहिणां या पिडका" इत्यनेन सामान्यप्रमेहसंबन्धितयाऽनुदिताः, तस्मान्मधुमेहशब्दः सर्वप्रमेहे मधुमेहविशेषे च वर्तते; यथा तृणशब्दः सर्वतृणे तृणविशेषे च वर्तते । प्रपञ्चितश्चायमर्थः कियन्तःशिरसीये इति नेह प्रतन्यते । कुलजप्रमेहासाध्यताप्रसंगेनापरेषामप्यसाध्यतामाह—ये चापीत्यादि । कुलजा इति पितृपितामहादिकारणोद्भूताः । अनेनैव सामान्येन

फलत्रिकं दारुनिशां विशालां
मुस्तां च निःक्वाथ्य निशां सकल्काम्।
पिबेत् कषायं मधुसंप्रयुक्तं
सर्वप्रमेहेषु समुद्धतेषु ॥ ४० ॥

अनुबन्धमिति पश्चादनुगतम् । तैलं कफे स्यात् स्वकषायसिद्धमिति कफे कफानुबन्धे च कफघ्नौषधकषायैः सिद्धं तैलं स्यात्, एवं पित्ते पित्तानुबन्धे च पित्तघ्नौषधकषायसिद्धं घृतं देयं स्यात् । सर्वैरित्युक्ते पृथगपि सर्वैः स्नेहसाधनं स्यादत आह—समस्तैरिति; मिलितैरित्यर्थः । मिश्रमिति तैलघृतयमकम् । त्रिषु लक्षणेष्विति त्रिदोषलक्षणमेलके सति; त्रिदोषजत्वमनुबन्ध्यानुबन्धकृतं कफपित्तजमेहेष्वेव मन्तव्यं; किंच सर्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतत्रिदोषजत्वं कदाचिद्भवतीति ज्ञेयम्॥३७-४०॥

लोध्रं शटीं पुष्करमूलमेलां
मूर्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां
किराततिक्तं कटुरोहिणीं च ॥ ४१ ॥
भार्ङ्गीं नतं चित्रकपिप्पलीनां
मूलं सकुष्ठातिविषं सपाठम् ।
कलिङ्गकान् केशरमिन्द्रसाह्वां
नखं सपत्रं मरिचं प्लवं च ॥ ४२ ॥
द्रोणेऽम्भसः कर्षसमानि पक्त्वा
पूते चतुर्भागजलावशेषे
रसेऽर्धभागं मधुनः प्रदाय
पक्षं निधेयो घृतभाजनस्थः ॥ ४३ ॥
मध्वासवोऽयं कफपित्तमेहान्
क्षिप्रं निहन्याद्द्विपलप्रयोगात् ।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या
दोषं किलासं विविधं च कुष्ठम्॥ ४४ ॥
इति मध्वासवः ।

लोध्रमित्यादौ क्रमुकं पट्टिकालोध्रं पूगं वा । इन्द्रसाह्वाम् इन्द्रवारुणीम् ॥ ४१-४४ ॥

क्वाथः स एवाष्टपलं च दन्त्या
भल्लातकानां च चतुष्पलं स्यात् ।
सितोपला त्वष्टपला विशेषः
क्षौद्रं च तावत् पृथगासवौ तौ ॥ ४५ ॥

क्वाथः स एवेति तावन्मानजलेनैव दन्त्यष्टपलं भल्लातकचतुःपलं लोध्रादीनि च कर्षमानानि दत्त्वा क्वाथः कर्तव्य इत्यर्थः । क्षौद्रं च तावदिति क्वाथापेक्षयाऽष्टभागमित्यर्थः ॥ ४५ ॥

सारोदकं वाऽथ कुशोदकं वा
मधूदकं वा त्रिफलारसं वा ।
सीधुं पिबेद्वा निगदं प्रमेही
माध्वीकमग्र्यं चिरसंस्थितं वा ॥ ४६ ॥
मांसानि शूल्यानि मृगद्विजानां
खादेद्यवानां विविधांश्च भक्ष्यान् ।
संशोधनारिष्टकषायलेहैः
संतर्पणोत्थाञ् शमयेत् प्रमेहान् ॥ ४७ ॥
भृष्टान् यवान् भक्षयतः प्रयोगा-
च्छुष्कांश्च सक्तून्न भवन्ति मेहाः ।
श्वित्रं च कृच्छ्रं कफजं च कुष्ठं
तथैव मुद्गामलकप्रयोगान् ॥ ४८ ॥

सारोदकमिति सारैः खदिरादिसारैः षडङ्गविधिना कृतमुदकं सारोदकं ज्ञेयम्, एवं कुशोदकं ज्ञेयम् । मधुना मधुरीकृतमुदकं मधूदकम् । शूल्यानीति शूलपक्वानीत्यर्थः । मृगद्विजानामित्यत्र यौगिकत्वाज्जाङ्गलमृगद्विजानामिति ज्ञेयम् । प्रयोगादिति अभ्यासात् ॥ ४६-४८ ॥

संतर्पणोत्थेषु गदेषु योगा
मेदस्विनां ये च मयोपदिष्टाः ।
विरूक्षणार्थं कफपित्तजेषु
सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥ ४९ ॥

संतर्पणोत्थेषु गदेषु योगा संतर्पणीयाध्याये "त्रिफलारग्वधं पाठां" ( सू. अ. २३ ) इत्याद्युक्ताः ॥ ४९ ॥

व्यायामयोगैर्विविधैः प्रगाढै-
रुद्वर्तनैः स्नानजलावसेकैः ।
सेव्यत्वगेलागुरुचन्दनाद्यै-
र्विलेपनैश्चाशु न सन्ति मेहाः ॥ ५० ॥

सेव्यम् उशीरम् । चन्दनाद्यैरित्यत्र आदिग्रहणेन हि शैलेयादीनां ग्रहणं स्यात् ॥ ५० ॥

क्लेदश्च मेदश्च कफश्च वृद्धः
प्रमेहहेतुः प्रसमीक्ष्य तस्मात् ।
वैद्येन पूर्वं कफपित्तजेषु
मेहेषु कार्याण्यपतर्पणानि ॥ ५१ ॥

संप्रत्युत्सर्गतः कफपित्तप्रमेहाणामपतर्पणमाह—क्लेदश्चेत्यादि । यद्यप्यपतर्पणेन गुल्मादिदोषो भवति, तथाऽपि गुल्मादिप्रादुर्भावो यथा न भवेत्तथाऽपतर्पणं कर्तव्यमिति क्लेदश्च मेदश्चेत्यादिना दर्शयति ॥ ५१ ॥

१ 'समस्तैरिति सर्वैर्यथोक्तैः समुदितैरेव, न यथालाभेन स्नेहं विपचेदित्यर्थः' इति श्रीकण्ठदत्तः । २ 'लोध्रासवोऽयं' इति पा० ।

१ 'शूलभृतानीत्यर्थः' इति पा० । २ 'विलेपनैश्च प्रशमन्ति' इति पा० ।

या वातमेहान् प्रति पूर्वमुक्ता
वातोल्वणानां विहिता क्रिया सा ।
वायुर्हि मेहेष्वतिकर्शितानां
कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥ ५२ ॥

पूर्वचिकित्सिते यानि "सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु" इत्यादिनोक्तानि, तानि वातानुबद्धमेहविषयाणीति दर्शयन्नाह—या वातमेहानित्यादि । वातोल्वणत्वमेव कुतः कफजेषु पित्तजेषु च भवतीत्याह—वायुरित्यादि । असाध्यानिति उत्पत्तितः ॥ ५२ ॥

यैर्हेतुभिर्ये प्रभवन्ति मेहा-
स्तेषु प्रमेहेषु न ते निषेव्याः ।
हेतोरसेवा विहिता यथैव
जातस्य रोगस्य भवेच्चिकित्सा ॥ ५३ ॥

यैर्हेतुभिरित्यादिश्लोकार्थपरिभाषा सर्वरोगेष्वेवानुमता, इह प्रमेहस्य चिरकालानुबन्धितया हेतुसेवानिरासार्थमुच्यते ॥५३॥

हारिद्रवर्णं रुधिरं च मूत्रं
विना प्रमेहस्य हि पूर्वरूपैः ।
यो मूत्रयेत्तं न वदेत् प्रमेहं
रक्तस्य पित्तस्य हि स प्रकोपः ॥ ५४ ॥

संप्रति प्रमेहलक्षणस्य रक्तपित्तलक्षणसाम्ये रक्तपित्ते प्रमेहचिकित्सा मा भूदिति कृत्वा प्रमेहरक्तपित्तभेदकं लक्षणमाह—हारिद्रवर्णमित्यादि ॥ ५४ ॥

दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्याद्द्विविधो विचारः ।
क्षीणेषु दोषेष्वनिलात्मकः स्यात्
संतर्पणाद्वा कफसंभवः स्यात् ॥ ५५ ॥

दृष्ट्वेत्यादि । क्षीणेषु दोषेष्विति क्षीणेषु कफमेदःप्रभृतिषु । दोषत्वं चेह दूष्ये मेदआदावविवक्षितं, तथाऽपि दोषसंबन्धाद्दोषशब्दोऽत्र ज्ञेयः; किंवा दोषेष्विति कफपित्तेषु; द्वयोश्च बहुवचनं व्यक्त्यपेक्षया बहुत्वात् । यदि हि वातिकः स्यात्तदा हेत्वभावात् कफोऽवृद्धः स्यादित्यर्थः; संतर्पणात्तु यदि ज्ञातं तर्पणजनितकफवृद्धत्वं, तदा वातनिदानाभावान्नायं वातजः किंतु कफज इत्यवधार्यत इति भावः ॥ ५५ ॥

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते, पित्तकृतास्तु याप्याः,
साध्यास्तु मेदो यदि न प्रदुष्टम् ॥ ५६ ॥

संप्रत्युक्तानुक्तप्रमेहाणां साध्यासाध्ययाप्यत्वोपदर्शनार्थमाह—सपूर्वरूपा इत्यादि । सह पूर्वरूपेण "स्वेदोऽङ्गगन्धः" इत्यादिना वर्तन्त इति सपूर्वरूपाः । तत्र कफमेहाः साध्या उक्तास्ते पूर्वरूपेण सह वर्तमाना असाध्या भवन्ति, पित्तमेहा याप्या उक्तास्ते प्रत्याख्येया भवन्ति । साध्यावस्थायामपि पूर्वरूपयोगेन यद्यपि सर्वरोगाणामसाध्यत्वमुक्तम्, उक्तं च यथा—"अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" ( इ. अ. ५ ) इति; तत्र सर्वपूर्वरूपानुबन्धे सर्वरोगाणामसाध्यत्वमुक्तम्, इह तु असमस्तपूर्वरूपानुबन्धेऽप्यसाध्यत्वं भवतीति विशेषवचनाल्लभ्यते । तथा क्रमेण च ये वातकृतास्ते पूर्वरूपरहिता अप्यसाध्याः । क्रमेणेति यथोक्तनिदानक्रमेण । एतेन य एव निदानोक्तहेत्वादियोगेन वातजाश्चत्वारो जायन्ते ते मेहा असाध्याः; ये तु कफजाः पित्तजा वा वातानुबन्धत्वेन वातजास्ते साध्या याप्या वा । अत एव तान् प्रति "सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु" इत्यनेन चिकित्सोक्ता । पूर्वरूपराहित्येन पित्तकृते प्रमेहे कदाचित् साध्यत्वमपि भवतीत्यपवादविधिं दर्शयितुमुत्सर्गप्राप्तां पैत्तिकयाप्यतामनुवदति—पित्तकृतास्तु याप्या इति । अवस्थासाध्यान् पैत्तिकानाह—साध्यास्त्वित्यादि । न प्रदुष्टमिति न प्रकर्षेण दुष्टम्; अदुष्टमेदसः पैत्तिकाः साध्या भवन्तीत्यर्थः । किंवा प्रदुष्टाः कफपित्तमेहास्तावदसाध्याः, तथा कफपित्तमेहा ये धात्वपकर्षणाद्वातकृता भवन्ति तेऽपि सपूर्वरूपाः सन्तोऽसाध्या भवन्ति । ये तु पूर्वरूपत्वेन कियन्तःशिरसीयोक्तं प्रमेहं विंशतिप्रमेहातिरिक्तं वर्णयन्ति, ते "विंशतिरेव मेहाः" इति संख्यानियमेनैव प्रत्यादिष्टाः ॥ ५६ ॥

जातः प्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि बीजदोषात् ।
ये चापि केचित् कुलजा विकारा
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥ ५७ ॥

मेहानामसाध्यताप्रकारान्तरमाह—जात इत्यादि । प्रमेही यः प्रमेहिणो जातः सोऽप्यसाध्यो भवति । अत्रापि हेतुमाह—स हि बीजदोषादिति;प्रमेहारम्भकदोषदुष्टबीजजातप्रमेहित्वात् । मधुमेहशब्देनात्र मेहमात्रमुच्यते, यदि तु वातिक उपेक्षितो वा मेहो मधुमेह उच्यते, तदेतरप्रमेहयुक्तमातापितृजनितप्रमेहिणो नासाध्यत्वं स्यात् । किंच मधुमेहिनो जनितस्य मधुमेहित्वमेव कारणानुरूपतया युक्तम् । ततश्च मधुमेही मधुमेहिनो वा जातो न साध्य इति वक्तुमुचितम् । तस्मादपत्ये सामान्येन प्रमेहवचनेनापि तत्कारणे पितरि कार्यानुरूपः प्रमेहो मधुमेहशब्दवाच्यो ज्ञेयः । मेहशब्दोऽयं सामान्येन सर्वमेहेषु वर्तत एव, यतः कियन्तःशिरसीये या पिडका मधुमेहसंबन्धित्वेनोक्तास्ता इह "प्रमेहिणां या पिडका" इत्यनेन सामान्यप्रमेहसंबन्धितयाऽनुदिताः, तस्मान्मधुमेहशब्दः सर्वप्रमेहे मधुमेहविशेषे च वर्तते; यथा तृणशब्दः सर्वतृणे तृणविशेषे च वर्तते । प्रपञ्चितश्चायमर्थः कियन्तःशिरसीये इति नेह प्रतन्यते । कुलजप्रमेहासाध्यताप्रसंगेनापरेषामप्यसाध्यतामाह—ये चापीत्यादि । कुलजा इति पितृपितामहादिकारणोद्भूताः । अनेनैव सामान्येन

वचनेन प्रमेहस्यापि कुलजस्यासाध्यतायां सिद्धायां पुनरुद्वचनं संतानानुबन्धित्वोपदर्शनार्थम्। उक्तं हि—"प्रमेहोऽनुसङ्गिनाम्" ( सू. अ. २५ ) इति ॥ ५७ ॥

प्रमेहिणां याः पिडका मयोक्ता
रोगाधिकारे पृथगेव सप्त।
ताः शल्यविद्भिः कुशलैश्चिकित्स्याः
शस्त्रेण संशोधनरोपणैश्च ॥ ५८ ॥

प्रमेहपिडकाचिकित्सासूत्रमाह—प्रमेहिणामित्यादि। रोगाधिकारे इति रोगचतुष्के। अत्र शल्याधिकारत्वेन "अन्याधिकारेषु न विस्तरोक्तिः" ( चि. अ. २६ ) इति वचनान्न विस्तरः कृतः ॥ ५८ ॥

तत्र श्लोकाः—

हेतुर्दोषो दूष्यं मेहानां साध्यतानुरूपश्च।
मेही द्विविधस्त्रिविधं भिषग्जितमतिक्षपणदोषः ॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च।
तैलघृतलेहयोगा भक्ष्याः प्रवरासवाः सिद्धाः ॥६०॥
व्यायामविधिर्विविधः स्नानान्युद्वर्तनानि गन्धाश्च।
मेहानां प्रशमार्थं चिकित्सिते दिष्टमेतावत् ॥ ६१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने प्रमेहचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

हेतुरित्यादिः संग्रहः। त्रिविधं भिषग्जितमिति संशोधनं, संशमनं, निदानवर्जनं च। आद्या इति भक्षणीयाः। शेषं सुगमम् ॥ ५९–६१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने प्रमेहचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

हविष्प्राशान्मेहकुष्ठयोर्जन्म उक्तं, तेन मेहमनु कुष्ठचिकित्सितमुच्यते ॥ १ ॥ २ ॥

हेतुं द्रव्यं लिङ्गं कुष्ठानामाश्रयं प्रशमनं च।
शृण्वग्निवेश! सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥३॥

निदाने हेत्वादय उक्ता अपि चिकित्सोपकरणतया किंचिद्विशेषप्रतिपादनार्थं पुनरुच्यन्ते। आश्रयमिति आधारम्। प्रशमनं चेति चकारात् पूर्वरूपसंप्राप्त्योर्वक्ष्यमाणयोर्ग्रहणं; किंवा लिङ्गेन पूर्वरूपं, हेतुना च संप्राप्तिर्बोद्धव्या। अन्यान्यपि पिप्लुव्यङ्गादीनि स्पर्शनघ्नानि सन्ति, तेन विशेषतो यानि कुष्ठानि स्पर्शनघ्नानि तेषां हेत्वादीनि शृणु; किंवा कुष्ठानामानन्त्याद्यानि विशेषतः स्पर्शनघ्नान्यष्टादश तेषां हेत्वादि शृण्विति योजना। उक्तं हि—"कुष्ठानि सप्तविधान्यष्टादशविधान्यपरिसंख्येयविधानि च" ( नि. अ. ५ ) इति ॥ ३ ॥

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च।
भजतामागतां छर्दिं वेगांश्चान्यान्प्रतिघ्नताम् ॥ ४ ॥
व्यायाममतिसंतापमतिभुक्त्वोपसेविनाम्।
शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम्॥५॥
घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम्।
अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम् ॥ ६ ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम्।
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥ ७ ॥
व्यवायं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा।
विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ॥ ८ ॥

विरोधीन्यात्रेयभद्रकाप्यीये—"न मत्स्यान् पयसाऽभ्यवहरेत्" (सू. अ. २६) इत्यादिनोक्तानि। शीतोष्णेत्यादि। शीतोष्णादीनां यथाक्रमेण सेव्यत्वमुक्तं, तद्विपरीतेन सेविनाम्; एवं लङ्घनाहारयोरपि ज्ञेयम्। घर्मादिभिरार्तत्वे सति द्रुतमविश्रम्य शीताम्बुसेविनामिति योज्यम्। अजीर्णाध्यशिनामिति अजीर्णम् आममन्नम्, अपक्वमिति यावत्; तद्भुञ्जानानाम्। अध्यशिनामिति आहारेऽपरिणते भुञ्जानानाम्। पञ्चकर्मापचारिणामिति पञ्चकर्मणि क्रियमाणेऽपचारिणां निषिद्धसेविनाम्। व्यवायं चाप्यजीर्णे इति विदग्धादिरूपेऽन्नाजीर्णे स्त्रीसेवनं कुर्वताम्। पापं कर्म च कुर्वतामिति पापकर्मणैव विप्रादिधर्षणे लब्धे पुनरुद्वचनं विशेषहेतुत्वोपदर्शनार्थम् ॥ ४–८ ॥

वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ९ ॥
अतः कुष्ठानि जायन्ते सप्त चैकादशैव च।
न चैकदोषजं किञ्चित् कुष्ठं समुपलभ्यते ॥ १० ॥

दोषदूष्यसंग्रहमाह—वातादय इत्यादिना। वातादीनां त्रित्वे सिद्धेऽपि त्रय इति वचनं सर्वकुष्ठेषु त्रयाणामपि दुष्टिदर्शनार्थम्। द्रव्यसंग्रह इति द्रव्यमारम्भकं कारणमुच्यते। अर्थलब्धमपि सप्तकमितिपदं सर्वत्र सप्तकनियमार्थं पुनरुच्यते। यद्यपि विसर्पाणामुत्पादे एतान्येव सप्त कारणानि, यदुक्तं—"रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः" ( चि. अ. २१ ) इति; तथाऽपि कुष्ठं चिरक्रियैः स्थिरैर्दोषैर्जन्यते, विसर्पस्तु विसरणशीलैरिति विशेषः। अन्ये तु विसर्पा वातादिभिरेकैकशोऽपि भवन्तीत्याहुः; यदुक्तं—"पृथक् त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः" ( चि.

२ 'द्विविधं' योगीन्द्रनाथसेनसंमतः पाठः।

अ० २१ ) इति; तत्र, त्रिदोषजत्वेऽपि विसर्पाणामेकदोषजकुष्ठवदेकदोषजत्वादिव्यपदेशस्तत्रोच्यते । सप्त चैकादशैव चेति विच्छेदपाठेन सप्तानां कुष्ठानां महाकुष्ठत्वम्, एकादशानां च क्षुद्रकुष्ठत्वमिति बोधयति । निदानेऽनभिहितानामपि क्षुद्रकुष्ठानामिह चिकित्सार्थं विधानम् ॥ ९ ॥ १० ॥

**स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः ।**
**कोठानां लोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥ ११ ॥**
**व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।**
**दाहः सुप्ताङ्गता चेति कुष्ठलक्षणमग्रजम् ॥ १२ ॥**

स्पर्शेत्यादि पूर्वरूपम् । न वा स्वेद इति संबन्धः । अस्वेदातिस्वेदौ तु स्वेदवहस्रोतोऽवरोधानवरोधकृतौ ज्ञेयौ । शीघ्रोत्पत्तिश्चिरस्थितिश्च व्रणानामेव ॥ ११ ॥ १२ ॥

**अत ऊर्ध्वमष्टादशानां कुष्ठानां कपालोदुम्बरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणकैककुष्ठचर्माख्यकिटिमविपादिकालसकदद्रुचर्मदलपामाविस्फोटकशतारुर्विचर्चिकानां लक्षणान्युपदेक्ष्यामः ॥ १३ ॥**

**कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।**
**कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १४ ॥**
**दाहकण्डूरुजारागपरीतं लोमपिञ्जरम् ।**
**उदुम्बरफलाभासं कुष्ठमौदुम्बरं विदुः ॥ १५ ॥**
**श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।**
**कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ १६ ॥**
**कर्कशं रक्तपर्यन्तमन्तः श्यावं सवेदनम् ।**
**यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १७ ॥**
**सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ।**
**सोत्सेधं च सदाहं च पुण्डरीकं तदुच्यते ॥ १८ ॥**
**श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।**
**अलाबूपुष्पवर्णं तत् सिध्मं प्रायेण चोरसि ॥ १९ ॥**
**यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।**
**त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति ॥ २० ॥**

**इति सप्तमहाकुष्ठानि ।**

कपालः घटखर्परः । विषमं दुश्चिकित्स्यम् । लोमपिञ्जरमिति रोमभिः पिञ्जरं कपिलम् । उत्सन्नमण्डलमिति उन्नतमण्डलम् । ऋष्यः नीलाण्डो हरिणः, ऋष्यजिह्वासंस्थानमिति तज्जिह्वाकारम् । प्रायेण चोरसीति उरसि बाहुल्येन भवति, श्लेष्मप्रधानत्वात्; कदाचिदन्यत्रापि भवतीति भावः । काकणन्तिका गुञ्जा । कुष्ठत्वेनैव त्रिदोषलिङ्गत्वे सिद्धे पुनस्तद्वचनं प्रबलत्रिदोषलिङ्गत्वोपदर्शनार्थम् ॥ १३–२० ॥

**अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।**
**तदेककुष्ठं, चर्माख्यं बहलं हस्तिचर्मवत् ॥ २१ ॥**
**श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ।**
**वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥ २२ ॥**
**कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ।**
**सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम् ॥ २३ ॥**
**रक्तं सकण्डु सस्फोटं सरुग्दलति चापि यत् ।**
**तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ २४ ॥**
**पामा श्वेतारुणश्यावाः कण्डूलाः पिडका भृशम् ।**
**स्फोटाः श्वेतारुणाभासो विस्फोटाः स्युस्तनुत्वचः ॥**
**रक्तं श्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ।**
**सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका ॥**

**इत्येकादश क्षुद्रकुष्ठानि ।**

महावास्त्विति महास्थानम् । मत्स्यशकलोपममिति मत्स्यत्वक्सदृशम् । किणवत् खरः स्पर्शो यस्य तत् किणखरस्पर्शम्; किणः व्रणस्थानम् ॥ २१–२६ ॥

**वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे ।**
**पित्ते त्वौदुम्बरं विद्यात् काकणं तु त्रिदोषजम् ॥२७॥**
**वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके ।**
**ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठं च जायते ॥ २८ ॥**
**चर्माख्यमेककुष्ठं च किटिमं सविपादिकम् ।**
**कुष्ठं चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥ २९ ॥**
**पामा शतारुर्विस्फोटं दद्रुश्चर्मदलं तथा ।**
**पित्तश्लेष्माधिकं प्रायः कफप्राया विचर्चिका ॥३०॥**

चिकित्सार्थं वाताद्याधिक्यं कुष्ठेष्वाह—वात इत्यादि । ऋष्यजिह्वादिषु वातपित्ताधिक्यादि यथासंख्यं ज्ञेयम् ॥ २७–३० ॥

**सर्वं त्रिदोषजं कुष्ठं दोषाणां तु बलाबलम् ।**
**यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥ ३१ ॥**
**दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।**
**तस्यैव शमं कुर्यात्ततः परं चानुबन्धस्य ॥ ३२ ॥**

उक्तैकदोषजत्वादिना कुष्ठेष्वविरोधं दर्शयन्नाह—सर्वमित्यादि । त्रिदोषजत्वं सर्वेषु कुष्ठेषु व्यवस्थितमेव; दोषबलाबलविवक्षया चिकित्सार्थमेकदोषजत्वादिव्यपदेश इति भावः । अनुबन्धस्येति अप्रधानस्य ॥ ३१ ॥ ३२ ॥

**कुष्ठविशेषैर्दोषा दोषविशेषैः पुनश्च कुष्ठानि ।**
**ज्ञायन्ते तैर्हेतुर्हेतुस्तांश्च प्रकाशयति ॥ ३३ ॥**

संप्रति दोषविशेषजातस्य कुष्ठविशेषस्य तथा कुष्ठजनकस्य च हेतोः परस्परबोधकत्वमाह—कुष्ठविशेषैरित्यादि । कुष्ठविशेषै-

१ 'सुप्तत्वमङ्गे दाहश्च' इति पा० । २ 'यदृष्यमुद्गिरते रजः' इति पा० । ३ 'खर्परकशकलः' इति पा० । ४ 'रोमाणि पिञ्जराणीव यस्मिन् तत् रोमपिञ्जरं, रोमराजिभिरान्वितमित्यर्थः' इति योगीन्द्रनाथसेनः ।

१ 'रक्तं सशूलं कण्डूमत् सस्फोटं यद्दलत्यपि' इति पा० । २ 'ते हेतुं हेतुस्तांश्च' इति पा० ।

श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
व्रध्नभगन्दरपिडकाकण्डूकोठांश्च विनिहन्ति ॥६७॥

इति मुस्तादिचूर्णम् ।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकमूर्वाविशालानाम् ॥ ६८॥
भूनिम्बपलाशानां दद्याद्द्विपलं ततस्त्रिवृद्द्विगुणा ।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुप्तिनुत् परमम् ॥ ६९ ॥

तर्पणभागैरिति सक्तुभागैः । प्रायोगिकमिति सततोपयोज्यम् । केचित्त्रिफलेत्यादि योगं न पठन्ति ॥ ६५-६९ ॥

लेलीतकप्रयोगो रसेन जात्याः समाक्षिकः परमः ।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥ ७० ॥
श्रेष्ठं गन्धकयोगात् सुवर्णमाक्षिकप्रयोगाद्वा ।
सर्वव्याधिनिबर्हणमद्यात् कुष्ठी रसं च निगृहीतम् ॥
वज्रशिलाजतुसहितं सहितं वा योगराजेन ।
सर्वव्याधिप्रशमनमद्यात्कुष्ठी निगृह्य नित्यं च ॥७२॥

लेलीत(ह)कः पाषाणभेद औत्तरापथिकः,उच्यते हि निघण्टौ —"आसीद्दैत्यो महाबाहुर्लेलिहानो महासुरः । योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति ॥ विष्णुचक्रेण संछिन्नो पपात धरणीतले । वसा तस्य समाख्याता लेलीह(त)क इति क्षितौ" इत्यादि । जात्या इति आमलक्याः ॥ ७०-७२ ॥

खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थः ।
क्षौद्रप्रस्थे कार्यः कार्ये ते चाष्टपलिके च ॥ ७३ ॥
तत्रायश्चूर्णानामष्टपलं प्रक्षिपेत्तथाऽमूनि ।
त्रिफलैले त्वङ्मरिचं पत्रं कनकं च कर्षांशम् ॥७४॥
मत्स्यण्डिका मधुसमा तन्मासं जातमायसे भाण्डे ।
मध्वासवमाचरतः कुष्ठकिलासे शमं यातः ॥ ७५ ॥

इति मध्वासवः ।

कार्ये ते चाष्टपलिके इति खदिरसुरदारुसारे अष्टपलमाने कर्तव्ये । कनकं नागकेशरम् ॥ ७३-७५ ॥

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य ।
द्रव्याणि चूर्णितानि च षट्पलिकान्यत्र देयानि ७६
त्रिफलाव्योपविडङ्गरजनीमुस्ताटरूषकेन्द्रयवाः ।
सौवर्णी च तथा त्वक् छिन्नरुहा चेति तन्मासम् ७७
निदधीत धान्यमध्ये प्रातः प्रातः पिबेत्ततो युक्त्या।
मासेन महाकुष्ठं हन्त्येवाल्पं तु पक्षेण ॥ ७८ ॥
अर्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च ।
ना भवति कनकवर्णः पीत्वाऽरिष्टं कनकबिन्दुम् ७९

इति कनकबिन्द्वरिष्टम् ।

कुष्ठेष्वनिलकफकृतेष्वेवं पेयस्तथाऽपि पैत्तेषु ।
कृतमालकाथश्चाप्येष विशेषात् कफकृतेषु ॥ ८० ॥

कनकबिन्दौ मधुशर्करे विना आसवानिष्पत्तेः पूर्वानुसारोक्तमाने मधुशर्करे इहापि ज्ञेये । सौवर्णीत्वक् दारुहरिद्रात्वक् । केचित् कनकबिन्दुं पठित्वा मध्वासवं पठन्ति ॥ ७६-८० ॥

त्रिफलासवश्च गौडः सचित्रकः कुष्ठरोगविनिहन्ता ।
क्रमुकदशमूलदन्तीवराङ्गमधुयोगसंयुक्तः ॥ ८१ ॥

त्रिफलासवश्च गौड इत्यादौ गौड इति शर्करास्थाने गुडेन कृतो गौडः । क्रमुकं ह्रस्वपूगफलं, वराङ्गं गुडत्वक् । अत्र त्रिफलादीनां मानेऽनुक्तेऽपि आसवान्तरोक्तद्रव्यमानविभागेन मानं ग्राह्यम् ॥ ८१ ॥

लघूनि चान्नानि हितानि विद्यात्
कुष्ठेषु शाकानि च तिक्तकानि ।
भल्लातकैः सत्रिफलैः सनिम्बै-
र्युक्तानि चान्नानि घृतानि चैव ॥ ८२ ॥
पुराणधान्यान्यथ जाङ्गलानि
मांसानि मुद्गाश्च पटोलयुक्ताः ।
शस्ता, न गुर्वम्लपयोदधीनि
नानूपमत्स्या न गुडस्तिलाश्च ॥ ८३ ॥

लघूनीत्यादिना सेव्यमाहारमाह । भल्लातकादीनामन्नसंस्कारकत्वं घृतसाधकत्वं च यथाशास्त्रपरिभाषया ज्ञेयम् । न गुर्वित्यादिना निषेध्यमाह ॥ ८२ ॥ ८३ ॥

एला कुष्ठं दार्वी शतपुष्पा चित्रको विडङ्गश्च ।
कुष्ठालेपनमिष्टं रसाञ्जनं चाभया चैव ॥ ८४ ॥
चित्रकमेलां बिम्बीं वृषकं त्रिवृदर्कनागरकम् ।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥ ८५ ॥
क्षारेण गवां मूत्रस्रुतेन तेनास्य मण्डलान्याशु ।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ ८६ ॥
मांसी मरिचं लवणं रजनी तगरं सुधा गृहाद्धूमः ।
मूत्रं पित्तं क्षारः पालाशः कुष्ठहा लेपः ॥ ८७ ॥
त्रपु सीसमयश्चूर्णं मण्डलनुत् फल्गुचित्रकौ बृहती ।
गोधारसः सलवणो दारु च मूत्रं च मण्डलनुत् ८८
कदलीपलाशपाटलिनिचुलक्षाराम्भसा प्रसन्नेन ।
मांसेषु तोयकार्यं कार्ये पिष्टे च किण्वे च ॥ ८९ ॥
तैर्मेदकः सुजातः किण्वैर्जनितं प्रलेपनं शस्तम् ।
मण्डलकुष्ठविनाशनमातपसंस्थं कृमिघ्नं च ॥ ९० ॥
मुस्तं मदनं त्रिफला करञ्ज आरग्वधकलिङ्गयवाः ।
दार्वी ससप्तपर्णा स्नानं सिद्धार्थकं नाम ॥ ९१ ॥

१ 'नवनीतकप्रयोगः' इति पा० । २ 'एवं' इति पा० । ३ 'विष्णुना चक्रसंच्छिन्नः' इति पा० ।

१ 'सौवर्णीत्वक् आरग्वधत्वक्' इति योगीन्द्रनाथसेनः । २ 'निम्बं' इति पा० । ३ 'गोः पित्तं च' इति पा० । ४ 'छिन्ने' इति पा० ।

एष कषायो वमनं विरेचनं वर्णकस्तथोद्वर्षः।
त्वग्दोषकुष्ठशोफप्रवाधनः पाण्डुरोगघ्नः ॥ ९२ ॥
कुष्ठं करञ्जबीजान्येडगजः कुष्ठसूदनो लेपः।
प्रपुन्नाडबीजसैन्धवरसाञ्जनकपित्थलोध्राश्च ॥ ९३॥
श्वेतकरवीरमूलं कुटजकरञ्जयोः फलं त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ९४ ॥
लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य।
कल्कश्च मालतीनां कुष्ठेषून्मर्दनालेपौ ॥ ९५ ॥
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठनुल्लेपः ॥ ९६ ॥
इति लेपाः।

एलेत्यादिना लेपानाह। बिम्बी अष्ठोपमफला। अर्कः कुरुविन्दो मणिविशेषः, ताम्रमित्यन्ये। विलयन्तीति अपयान्ति। मांसेषु तोयकार्यमिति मांसप्रक्षालनोदके तथा पिष्टे तथा किण्वे च तोयकार्यं कार्यम्। तोयकार्यं क्षाराम्भसा कार्यमिति योज्यम्। अत्र मांसपिष्टाभ्यां किण्वं कार्यं, किण्वैश्च मेदकः साधनीयः। मेदकः जगलः। सुजातः सञ्जनितः, प्रलेपनमिति योज्यम्। मुस्तमित्यादौ वर्णक इति वर्णकरमालेपनम्। त्वग्दोषशब्देन गोबलीवर्दन्यायेन किलासव्यङ्गादीनां ग्रहणम्। कुष्ठमित्यादिको योगो जलपिष्टो ज्ञेयः। तेनारग्वधीयोक्ते "करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टं च परः प्रदेहः" (सू. अ. ३) इत्यत्र गोमूत्रपिष्टत्वं विशेषः, तेन न पौनरुक्त्यम्। उद्वर्तनालेपावित्यादौ उन्मर्दनम् उद्वर्तनं ज्ञेयम्। शैरीषी त्वगित्यादौ प्रत्येकद्रव्यकृतत्वेन चतुर्भिर्द्रव्यैश्चतुर्विधो लेपो ज्ञेयः। अन्ये तु चतुर्भिरपि मिलितैरवचूर्णनोद्वर्तनजलपिष्टलेपनरसक्रियालेपनभेदेनेह चतुर्विधलेपं वदन्ति। एतच्चतुर्विधाचतुष्टयमारग्वधीयप्रयोगेषु यद्यपि दृश्यते, तथाऽप्यालेपनेन सिद्धत्वान्नातिरमणीयम् ॥ ८४-९६ ॥

दार्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥ ९७ ॥
इति षट् कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य।
स्नाने पाने च हितास्तथाऽष्टमश्चाश्वमारस्य ॥ ९८ ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ ९९ ॥
त्रिफला निम्बपटोलं मञ्जिष्ठा रोहिणी वचा रजनी।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् १००
एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम्।
एष च कल्पो दिष्टः खदिरासनदारुनिम्बानाम् १०१

दार्व्या इत्यादौ दार्वीसंबन्धिनो रसाञ्जनस्यैको योगः; शेषास्तु षट्, सप्तमस्तिनिशस्य, अष्टमोऽश्वमारस्य। अश्वमारस्तु यद्यपि मूलविषत्वेनोक्तस्तथाऽपि कुष्ठेषु विषप्रयोगस्यापि हितत्वात् साधुः ॥ ९७-१०१ ॥

कुष्ठार्कतुत्थकट्फलमूलकबीजानि रोहिणी कटुका।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकासीसम् १०२॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गश्च।
तिक्तालाबुकबीजं कम्पिल्लकसर्षपौ वचा दार्वी १०३
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष चालेपः।
उद्वर्तनं प्रघर्षणमवचूर्णनमेष एवेष्टः ॥ १०४ ॥

कुष्ठार्केत्यादौ एतैस्तैलं सिद्धमित्यत्र प्राधान्यात्तिलतैलं ज्ञेयं; यत्र तु विशेषस्तत्र 'कनकक्षीरी शैला' इत्यादौ 'सार्षपमथवा तैलम्' इत्युक्तम्; अन्ये तु कुष्ठेष्वालेपे सार्षपं ग्राहयन्ति, पाने तु विशेषानुक्तौ तिलतैलमेव भवति ॥ १०२-१०४ ॥

श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गश्च।
कुष्ठेषु तैलयोगः सिद्धोऽयं संमतो भिषजाम् ॥ १०५॥
इति श्वेतकरवीराद्यं तैलम्।

श्वेतकरवीररस इत्यादौ करवीररसगोमूत्रयोर्द्रवत्वं, शेषस्य कल्कत्वम् ॥ १०५ ॥

श्वेतकरवीरपल्लवमूलत्वग्वत्सको विडङ्गश्च।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणी कटुका ॥ १०६ ॥
एतैस्तैलं सिद्धं कल्कैः पादांशिकैर्गवां मूत्रम्।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात् कुष्ठकण्डूघ्नम् ॥ १०७ ॥
इति श्वेतकरवीरपल्लवाद्यं तैलम्।

श्वेतकरवीरपल्लवेत्यादौ करवीररसस्य गोमूत्रस्य च साम्यम् ॥ १०६ ॥ १०७ ॥

तिक्तालाबुकबीजं द्वे तुत्थे रोचना हरिद्रे द्वे।
बृहतीफलमेरण्डः सविशालश्चित्रको मूर्वा ॥ १०८॥
कासीसहिङ्गुशिग्रुत्र्यूषणसुरदारुतुम्बुरुविडङ्गम्।
लाङ्गलकं कुटजत्वक् कटुकाख्या रोहिणी चैव १०९
सर्षपतैलं कल्कैरेतैर्मूत्रे चतुर्गुणे साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गान्मारुतकफहन्तृ ॥ ११० ॥
इति तिक्तेक्ष्वाकादितैलम्।

द्वे तुत्थे इति मयूरतुत्थं खर्परिकातुत्थं च ॥ १०८-११० ॥

कनकक्षीरी शैला भार्गी दन्त्याः फलानि मूलं च।
जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक् ॥ १११ ॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः।
गुञ्जैरण्डं बृहतीमूलकसुरसार्जकफलानि ॥ ११२ ॥
कुष्ठं पाठा मुस्तं तुम्बुरुमूर्वावचाः सषड्ग्रन्थाः[1]।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥ ११३ ॥
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासंज्ञः।
सौराष्ट्री कासीसं दार्वीत्वक् सर्जिकालवणम् ॥ ११४ ॥

१ 'कुष्ठं तुम्बरु पाठा मूर्वा मुस्तं वचाऽथ षड्ग्रन्था' इति पा०।

कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये ।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥ ११५ ॥
स्थाप्यं कटुकालाबुनि तत्सिद्धं तेन मण्डलान्याशु ।
भिन्द्याद्भिपगभ्यङ्गात्कृमींश्च कण्डूं च विनिहन्यात् ॥

इति कनकक्षीरीतैलम् ।

कनकक्षीरी 'कङ्कुष्ठ' इति ख्याता । अवाक्पुष्पी अपामार्गः; किंवा 'हेद्वाडुली' इति ख्याता । अमृतासंज्ञः खर्परिकातुत्थम् ॥ १११-११६ ॥

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकासीसम् ।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ११७ ॥
तेनालिप्तं सिध्मं सप्ताहाद्व्येति तिष्ठतो घर्मे ।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः ११८

इति सिध्मे लेपः ।

व्येति अपयाति । घर्मे इति आतपे। स्नानं मुक्त्वेति स्नानं धर्जयित्वाऽयं प्रयोगः कर्तव्यः ॥ ११७ ॥ ११८ ॥

सर्षपकरञ्जकोपातकीनां तैलान्यथेङ्गुदीनां च ।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरसारस्य॥११९॥

सर्षपकरञ्जेत्यादिना कुष्ठेष्वन्नपानसाधने सार्षपतैलादीनि देयानीति दर्शयति; अन्ये तु कुष्ठेषु सामान्येन तैलश्रुतौ सार्षपादीन्येव देयानि न तिलतैलमित्यनेन दर्शितमिति वर्णयन्ति ॥ ११९ ॥

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकः पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः॥१२०॥
देयः समधूच्छिष्टो विपादिका तेन शाम्यतेऽभ्यक्ता ।
चर्मैककुष्ठकिटिमं कुष्ठं शाम्यत्यलसकं च ॥ १२१ ॥

इति विपादिकाहरघृततैले ।

किण्वं वराहरुधिरं पृथ्वीका सैन्धवं च लेपः स्यात् ।
लेपो योज्यः कुस्तुम्बुरूणि कुष्ठं च मण्डलनुत्॥१२२
पूतीकदारुजटिलाः पक्वसुरा क्षौद्रमुद्गपर्ण्यौ च ।
लेपः सकाकनासो मण्डलकुष्ठापहः सिद्धः॥ १२३ ॥
चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥१२४॥
लाक्षारसाञ्जनैलाः पुनर्नवा चेति कुष्ठिनो लेपाः ।
दधिमण्डयुताः सर्वे देयाः षण्मारुतकफकुष्ठघ्नाः ॥
एडगजकुष्ठसैन्धवसौवीरकसर्षपैः कृमिघ्नैश्च ।
कृमिकुष्ठमण्डलाख्यं दद्रूकुष्ठं च शममुपैति ॥ १२६ ॥
एडगजः सर्जरसो मूलकबीजं च सिध्मकुष्ठानाम् ।
काञ्जिकयुक्तं तु पृथक्प्रतमिदमुद्वर्तनं लेपाः ॥ १२७ ॥

वासा त्रिफला पाने स्नाने चोद्वर्तने प्रलेपे च ।
बृहतीसेव्यपटोलाःससारिवा रोहिणी चैव ॥ १२८ ॥
खदिरावघातककुभरोहीतकलोध्रकुटजधवनिम्बाः ।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥ १२९ ॥
जलवाप्यलोहकेशरपत्रप्लवचन्दनं मृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ १३० ॥
यष्ट्याह्वलोध्रपद्मकपटोलपिचुमर्दचन्दनरसाश्च ।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः॥१३१
आलेपनं प्रियङ्गुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च ससेव्या सचन्दना रोहिणी कटुका ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ १३३ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्मदले ।
शीताः प्रदेहसेका व्यधो विरेको घृतं तिक्तम्॥१३४॥

घृततैलपाक इति यमकपाकः । अत्र च सिद्धे स्नेहे क्षेप्ययोः सर्जरसमधूच्छिष्टयोरपि कल्कार्थोपात्तजीवन्तीमञ्जिष्ठादिद्रव्यैः समानत्वं साहचर्याज्ज्ञेयं; किंवा स्नेहादष्टमो भागः सर्जरसमधूच्छिष्टयोः, अन्यत्र दृष्टत्वात्; तथाहि "समूलादेरण्डात्" इत्यादौ द्विप्रस्थस्नेहपरिमाणे मधूच्छिष्टपलान्यष्टावुक्तानि । पूतीकेत्यादौ पक्वसुरा गोरक्षकर्कटी, क्षौद्रवल्ली गुडूची । षण्मारुतकफकुष्ठघ्ना इति किण्वं वराहरुधिरमित्याद्युक्ताः षड् भवन्ति । अन्ये चित्रकादीनेव श्लोकपादोक्तान् षड् वर्णयन्ति । अवघातः कर्णिकारः । रोहीतकः 'रोहिडा' इति ख्यातः । वाप्यं कुष्ठं, लोहमगुरु, प्लवं कैवर्तमुस्तकम् । भागोत्तराणि यथोत्तरमेकभागवृद्धानि । रसा इति क्वाथाः । तैलैरित्यादौ चन्दनादीनां तैलसाधनरूप एव योगो ज्ञेयः ॥ १२०-१३४ ॥

खदिरघृतं निम्बघृतं दार्वीघृतमुत्तमं पटोलघृतम् ॥
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥ १३५ ॥

खदिरघृतमित्यादौ खदिरादिभिर्घृतानि साध्यानि; तत्र च खदिरस्य सारं, निम्बस्य त्वक्, पटोलस्य च पत्रं ग्राह्यं, वृद्धव्यवहारात् । उक्तं च-"सारः स्यात् खदिरादीनां, निम्बादीनां त्वचस्तथा । फलं तु दाडिमादीनां, पटोलादेर्दलं तथा" इति॥१३५॥

त्रिफलात्वचोऽर्धपलिकाः पटोलपत्रं च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा यष्ट्याह्वा त्रायमाणा च ॥ १३६ ॥
एष कषायः साध्यो दत्त्वा द्विपलं मसूरविदलानाम् ।
सलिलाढकेऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥१३७॥
ते च कषायेऽष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत्स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥ १३८ ॥

१ 'सप्ताहाद्घर्मसेविनो व्येति' इति पा० । २ 'क्लिन्नं' इति पा० ।

१ 'पक्वसुरा पक्वान्नसंधानसंजाता सुरा, क्षौद्रं मधु' इति योगीन्द्रनाथसेनः । २ 'तत्र' ति पा० ।

तद्वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम्।
ज्वरदाहगुल्मविद्रधिविभ्रमविस्फोटकान् हन्ति ॥

त्रिफलात्वच इत्यादौ प्रत्येकं हरीतक्यादीनामर्धपलं, पटोलपत्रं चार्धपलं; शेषाः कटुरोहिण्यादयः । मसूरविदलानामिति निस्तुषमसूराणां, न तु मसूरविदलाऽत्र श्यामा; उक्तं हि जतूकर्णे पुंलिङ्गेन—"मसूरविदलात् पलम्" इति । अष्टभागे शेषे इति षोडशपले; अत एवोक्तं 'तत्र कषायेऽष्टपले' इति प्रथमाद्विवचनान्तं, तेन षोडशपलमाह । अत्र चाष्टाविंशत्युत्तरपलशतमानस्याष्टभागशेषे षोडशपलानि भवन्ति, तच्च द्रवषोडशपलमष्टपलशब्देनाकृतद्वैगुण्येनैवोच्यते; पलेऽपि यदि द्रवद्वैगुण्यं स्यात्तदा षोडशपलेन द्वात्रिंशत्पलानि स्युः, न चेहाढकाष्टभागशेषे द्वात्रिंशत्पलत्वं, किंतु षोडशपलमेव; तेनैतस्मादेवाष्टपलशब्देनाकृतद्वैगुण्याद्द्रवषोडशपलग्रहणादुन्नीयते यत्—पलोल्लेख्यमाने द्वैगुण्यं नास्ति; किंच कुडवादावेव द्रवद्वैगुण्यमिहानुमतं तन्त्रान्तरेणाप्यनुमतमिति । यावत् स्यादष्टपलमित्यनेन कषायचतुष्पलेन संयुतस्याष्टपलं स्थाप्यमिति दर्शयति । एषा च मात्रा कुष्ठिनां भूरिमात्रद्रव्यसाध्यत्वेनोत्तमा ज्ञेया ॥ १३६–१३९ ॥

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्यादर्धपलांशं पर्पटकं त्रायमाणां च ॥ १४० ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तकमागधिकास्त्रायमाणां च १४१
मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान्।
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ १४२ ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहारि।
पामाविसर्पपिडकाकण्डूमदगण्डनुत्सिद्धम्॥ १४३ ॥
इति तिक्तषट्पलकं घृतम्।

निम्बमित्यादिना तिक्तषट्पलकमाह। "सर्पिश्चाप्यनवं हितम्" इति वचनस्य बाधकमिह योगमहिम्ना सर्पिषो नवत्वं ज्ञेयम्। प्रथमं 'सर्पिषः' इति पदं मानार्थं, द्वितीयं तु 'घृतं' इति पदं पेयत्वोपदर्शनार्थं; तथा प्रथमं सिद्धमिति पक्वं, द्वितीयं तु प्रसिद्धिख्यापकम् ॥ १४०–१४३ ॥

सप्तच्छदं प्रतिविषां शम्पाकं तिक्तरोहिणीं पाठाम्।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम्॥१४४॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे।
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे॥१४५॥
वत्सकबीजं यासं मूर्वाममृतां किराततिक्तं च।
कल्कान् कुर्यान्मतिमान्यष्ट्याह्वं त्रायमाणां च ॥१४६॥

१ 'एव सलिलाढकेऽष्टशरावे द्वैगुण्याभावविवक्षातः साध्यः। अष्टभागेऽष्टपले शेषे पूतो वस्त्रपूतं कृत्वा रसो ग्राह्यः। तत्र शरावमिते कषाये घृतस्य चतुष्पलं पक्तव्यं, शेषं तु अष्टपलं कार्यम्' इति गङ्गाधरः। २ 'तिक्तं' इति पा०। ३ 'वासां' इति पा०।

कल्कश्चातुर्भागो जलमष्टगुणं रसोऽमृतफलानाम्।
द्विगुणो घृतात्प्रदेयस्तत्सर्पिः पाययेत्सिद्धम् ॥१४७॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि।
वीसर्पमम्लपित्तं वातासृक् पाण्डुरोगं च ॥ १४८ ॥
विस्फोटकान्सपामानुन्मादं कामलां ज्वरं कण्डूम्।
हृद्रोगगुल्मपिडका असृग्दरं गण्डमालां च ॥१४९॥
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः।
योगशतैरप्यजितान्महाविकारान्महातिक्तम्॥१५०॥
इति महातिक्तकं घृतम्।

सप्तच्छदमित्यादिना महातिक्तघृतमाह। शम्पाक आरग्वधः। कल्कश्चातुर्भाग इति घृताच्चतुर्थो भागः; एतच्च सामान्यपरिभाषासिद्धमपि स्पष्टार्थमुच्यते। अमृतफलानामिति आमलकानाम्। अत्रापि त्रिसर्पिर्वचने एकं कल्कादिभागार्थं, द्वितीयं पेयत्वोपदर्शनार्थं, तृतीयं महातिक्तकसंज्ञादर्शनार्थम् ॥ १४४–१५० ॥

दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने।
स्नेहे च कालयुक्ते न कुष्ठमनुवर्ततेऽसाध्यम्॥१५१॥

न कुष्ठमनुवर्तत इति साध्यमेवेत्यर्थः ॥ १५१ ॥

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले।
तुलार्धाः सर्वं एवैते करञ्जारिष्टवेतसाः ॥ १५२ ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥ १५३ ॥
सप्तपर्णश्च संक्षुण्णा दशद्रोणेषु वारिणः।
अष्टभागावशेषं तु कषायमवतारयेत् ॥ १५४ ॥
धात्रीरसं च तुल्यांशं सर्पिषश्चाढकं पचेत्।
महातिक्तककल्कैस्तु यथोक्तैः पलसंमितैः ॥ १५५ ॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात्।
महाखदिरमित्येतत् परं कुष्ठविकारनुत् ॥ १५६ ॥
इति महाखदिरं घृतम्।

खदिरस्य तुला इत्यादिकं केचिदनार्षं वदन्ति। साधयेदित्यत्र 'सर्पिः' इति शेषः। तत्र घृतमानानुक्तौ क्वाथशेषस्याढकाधिकद्रोणस्य नियतत्वात् तत्क्वाथचतुर्थभागं प्रस्थाधिकाढकमानं घृतं साध्यम् ॥ १५२–१५६ ॥

प्रपतत्सु लसीकाप्रस्रुतेषु गात्रेषु जन्तुजग्धेषु।
मूत्रं निम्बविडङ्गे स्नानं पानं प्रदेहश्च ॥ १५७ ॥
वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च।
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥ १५८ ॥

१ 'कल्कश्चतुर्थभागः' इति पा०। २ 'वीसर्परक्तपित्तं' इति पा०। ३ 'वमने' इति पा०। ४ 'अतिवर्तते' इति पा०।

पानाहारविधाने प्रसेचने धूपने प्रदेहे च।
कृमिनाशनं विडङ्गं विशिष्यते कुष्ठहा खदिरः १५९
एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम्।
उद्दालनं[1] श्वदन्ता गोश्वखराहोष्ट्रदन्ताश्च ॥ १६० ॥
एडगजः सविडङ्गो द्वे च निशे राजवृक्षमूलं च।
कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम् ॥ १६१ ॥

खदिर इति कुष्ठहन्तृत्वेन खदिरो द्रव्यान्तरेषु विशिष्यते प्रकर्षवान् भवतीत्यर्थः। श्वदन्ता इति कुक्कुरदन्ताः। उद्दालनमिति प्रशमनम्। पाकलं कुष्ठम् ॥ १५७–१६१ ॥

श्वित्राणां सविशेषं योक्तव्यं सर्वतो विशुद्धानाम्।
श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुडः ॥ १६२ ॥
तं पीत्वा सुस्निग्धो यथाबलं सूर्यपादसंतापम्।
संसेवेत विरिक्तस्त्र्यहं पिपासुः पिबेत् पेयाम् ॥ १६३ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान्भिन्द्यात्।
स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत् पक्षम् ॥ १६४ ॥
मलपूमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ १६५ ॥
यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्वमेव तच्छस्तम्।
खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यं वा ॥ १६६ ॥
समनःशिलं विडङ्गं कासीसं रोचनां कनकपुष्पीम्।
श्वित्राणां प्रशमार्थं[2] ससैन्धवं लेपनं दद्यात् ॥ १६७ ॥
कदलीक्षारयुतं वा खरास्थि दग्धं गवां रुधिरयुक्तम्।
हस्तिमदाध्युषितं वा मालत्याः कोरकक्षारम् ॥ १६८ ॥
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा।
मूलकबीजावल्गुजलेपः पिष्टो गवां मूत्रे ॥ १६९ ॥
काकोदुम्बरिका वा सावल्गुजचित्रका गवां मूत्रे।
पिष्टा मनःशिला वा संयुक्ता बर्हिपित्तेन ॥ १७० ॥
लेपः किलासहन्ता बीजान्यावल्गुजानि लाक्षा च।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥ १७१ ॥
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम्।
श्वित्रं कस्यचिदेव प्रणश्यति क्षीणपापस्य ॥ १७२ ॥

त्वग्दोषाधिकारात्तुपञ्चात्त्वग्दोषविशेषस्य श्वित्रस्य चिकित्सामाह—श्वित्राणामित्यादि। नन्वपररोगाणां निदानाद्यभिधाय चिकित्सोच्यते, श्वित्रस्य तु प्रथमं चिकित्सा पश्चाद्धेत्वादीति कोऽभिप्रायः? उच्यते—येयं कुष्ठचिकित्सोक्ता सा श्वित्राणामपि विधेया; तद्यदि निदानादि श्वित्रस्योच्यते तदा सा चिकित्सा व्यवहिता स्यात्, तेन चिकित्सैव तावदुच्यते। श्वित्राणां सविशेषं प्रयोक्तव्यमिति यदेतत् कुष्ठोद्दालनमुक्तं तच्छ्वित्राणां सविशेषं गाढतरं कर्तव्यमित्यर्थः। सर्वतो विशुद्धानामिति वमनादिभिः शुद्धानाम्। मलपूः काकोदुम्बरिका। श्वित्रेऽङ्गे इति श्वित्रयुक्तेऽङ्गे। कनकपुष्पी सुवर्णक्षीरी। मालत्याः कोरकक्षारमिति मालतीमुकुलक्षारं, कोरको मुकुल उच्यते। अञ्जने द्वे इति सौवीरं रसाञ्जनकं च। कस्यचिदेव प्रशाम्यतीत्यनेन श्वित्राणां दुरपगमतामाह ॥ १६२–१७२ ॥

दारुणं चारुणं[1] श्वित्रं किलासं नामभिस्त्रिभिः।
विज्ञेयं त्रिविधं तच्च[2] त्रिदोषं प्रायशश्च तत् ॥ १७३ ॥
दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते।
श्वेतं मेदःश्रिते श्वित्रं गुरु तच्चोत्तरोत्तरम् ॥ १७४ ॥
यत् परस्परतोऽभिन्नं बहु यद्रक्तलोमवत्।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥ १७५ ॥
अरक्तलोम तनु यत् पाण्डु नातिचिरोत्थितम्।
मध्यावकाशे चोच्छूनं श्वित्रं तत्साध्यमुच्यते १७६

नामभिरिति उक्तदारुणादिभिरेव। प्रायःशब्देनैकदोषं द्विदोषं च भवति। दोषे इत्यादिनोक्तं त्रैविध्यं विभजति। सुश्रुते तु "त्वग्गतमेव किलासम्" ( नि. अ. ५ ) इत्युक्तं, तच्च न कुष्ठवद्रक्तादिगतकुष्ठलक्षणकारकं श्वित्रमित्यभिप्रायेणोक्तम्। इह तु यद्रक्ताद्याश्रयित्वं श्वित्रस्योच्यते, तद्रक्तादिदोषमात्राभिप्रायेण न रक्तादिगतसमस्तकुष्ठलक्षणकारितया; तेनात्रापि त्वङ्मात्रविकृतिकारकत्वं श्वित्रस्य संमतमेवेति न विरोधः[3]। गुर्विति असुपक्रमम्। अरक्तेत्यादिना साध्यकिलासलक्षणमाह ॥ १७३–१७६ ॥

वचांस्यतथ्यानि कृतघ्नभावो
निन्दा सुराणां[4] गुरुधर्षणं च।
पापक्रिया पूर्वकृतं च कर्म
हेतुः किलासस्य विरोधि चान्नम् ॥ १७७ ॥

वचांसीत्यादिना त्वैहिकं वाङ्मानसं पापं कर्मोक्तं, पापक्रियेत्यनेन जन्मान्तरकृतमधर्मं ग्राहयति ॥ १७७ ॥

तत्र श्लोकाः—

हेतुर्द्रव्यं लिङ्गं विविधं ये येषु चाधिका दोषाः।
कुष्ठेषु दोषलिङ्गं समासतो दोषनिर्देशः ॥ १७८ ॥

---

१ 'उद्दालनं निविडत्वक्त्याजनं' इति योगीन्द्रनाथसेनः। २ 'प्रशमार्थं' इति पा०।

१ 'दारणं चारणं' इति पा०। २ 'यदुच्यते तत्त्रिविधं' इति पा०। ३ 'यदोक्तरक्तादिगतसमस्तकुष्ठलक्षणजनकतया धातूनवगाहते तदा न तत् किलासं, किंतु कुष्ठजनकहेत्वन्तरबृंहितदोषोपप्लवाद्धातून् दूषयद्धेतुलक्ष्यलक्षणमरुणादिकुष्ठं तत्; अन्यथेतररक्तादिगतकुष्ठलिङ्गव्यतिरिक्तमुत्पादसमकालभाविरक्तताम्रादिवर्णतामात्रकारकं रक्तादिगत दोषजन्यं किलासमेव, अन्यथा रक्तादिगतकिलासलक्षणेन चरकोक्तेन विरोधः स्यात्। चरके हि किलासस्यैव धातुत्रयसंबन्धकृतवर्णेन दारुणादिसंज्ञान्तरमात्रं कृतं, सुश्रुतेऽपि त्वग्गतमेवेत्यनेन रक्तादिदुष्ट्या विशिष्टरक्तादिगतमहाकुष्ठलिङ्गरहितत्वं, तथा कुष्ठवद्युगपद्रक्तलसीकात्वङ्मांसदूषकत्वविरहः ख्याप्यते' इति माधवनिदानव्याख्यायां श्रीकण्ठदत्तः। ४ 'गुरूणां' इति पा०।

साध्यमसाध्यं कृच्छ्रं कुष्ठं कुष्ठापहाश्च ये योगाः।
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं तथा शान्तिः॥
इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये।
स्मृतिबुद्धिवर्धनार्थं शिष्याय हुताशवेशाय ॥१८०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने कुष्ठचिकित्सितं नाम सप्तमोऽध्यायः॥ ७॥

हेतुर्द्रव्यमित्यादिना संग्रहः। येषु येषु कपालादिषु ये ये चाधिका दोषास्तेषां निर्देशः समासतो दोषनिर्देश इति। 'रौक्ष्यं शोषस्तोदः' इत्यादिनोक्तं दोषलिङ्गम्। गुरुलाघवमिति 'श्वित्रं गुरु तच्चोत्तरोत्तरम्' इत्यनेनोक्तम्॥ १७८–१८०॥

इति श्रीचक्रपाणिदत्तकृतायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने कुष्ठचिकित्सितं नाम सप्तमोऽध्यायः॥ ७॥

## अष्टमोऽध्यायः।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

त्रिदोषजत्वसामान्यात् कुष्ठमनु राजयक्ष्मचिकित्सितमुच्यते। उन्मादापस्मारौ दक्षाध्वरोद्ध्वंसोत्पन्नावप्यागन्तुत्वानुबन्धत्वात् पश्चादुक्तौ॥ १॥ २॥

दिवौकसां कथयतामृषिभिर्वै श्रुता कथा।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति॥ ३॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात्॥ ४॥
दुहितृणामसंभोगाच्छेषाणां च प्रजापतेः।
क्रोधो निःश्वासरूपेण मूर्तिमान् निःसृतो मुखात्॥ ५
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान्।
भार्यार्थे प्रतिजग्राह न च सर्वास्ववर्तत॥ ६॥
गुरुणा तमवध्यातं भार्यास्वसमवर्तिनम्।
रजःपरीतमवलं यक्ष्मा शशिनमाविशत्॥ ७॥
सोऽभिभूतोऽतिमहता गुरुक्रोधेन[1] निष्प्रभः।
देवदेवर्षिसहितो जगाम शरणं गुरुम्॥ ८॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्सितः॥ ९
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः।
ओजसा[2] वर्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च॥१०॥

१ 'ऽतिगुरुणा' इति, 'ऽतिबलिना' इति च पा०। २ 'तेजसा' इति पा०।

क्रोधो यक्ष्मा ज्वरो रोग एकार्थो दुःखसंज्ञकः।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः॥११॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः।
लब्ध्वा चतुर्विधं हेतुं समाविशति मानवान्॥१२॥

दिवौकसामित्यादिना प्रागुत्पत्तिं यक्ष्मणो दर्शयति। एतया च प्रागुत्पत्त्या धातुक्षयो राजयक्ष्मणः प्रधानं कारणं, तथा भार्यास्वसमवर्तितयाऽधर्मश्च कारणं भवतीति दर्श्यते। कामव्यसनसंयुक्ता स्त्रीपुंसङ्गसंबन्धा[1]। देहः स्नेहपरिक्षयादिति देहसारक्षयात्; स्नेहशब्देन हि सारवाचिना शुक्रौजसी ग्राह्ये। अवध्यातमिति कोपेन चिन्तितम्। गुरुक्रोधेनेति यक्ष्मरूपेण। शुद्धां मतिं बुद्ध्वेति स्वापराधजनितमात्मनः क्षयं बुद्ध्वा चन्द्रमसः स्वदोषपरिहारार्थं[2] शुद्धां बुद्धिं ज्ञात्वा। विमुक्तग्रह इति ग्रहेण यक्ष्माख्येन विमुक्तः। सत्त्वं मनः। शुद्धमिति निर्दोषम्॥ ३–१२॥

अयथाबलमारम्भं वेगसंधारणं क्षयम्।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम्॥ १३॥

अयथाबलमारम्भादियक्ष्महेतुत्रये विहाररूपे आहाररूपतया भिन्नजातीयत्वाद्विषमाशनं 'चतुर्थं विषमाशनम्' इति पृथक् पठितम्। निर्देशादेव चतुष्के लब्धे चतुर्थमिति पदं साहसादीनां प्रभेदानां बहुत्वेऽपि साहसादिचतुर्विधानतिक्रमोपदर्शनार्थम्[3]॥ १३॥

युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः।
पतनैरभिघातैर्वा साहसैर्वा तथाऽपरैः॥ १४॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते।
वायुः प्रकुपितो दोषावुदीर्यौभौ प्रधावति॥ १५॥
स शिरःस्थः शिरःशूलं करोति गलमाश्रितः।
कण्ठोद्ध्वंसं च कासं च स्वरभेदमरोचकम्॥ १६॥
पार्श्वशूलं च पार्श्वस्थो वर्चोभेदं गुदे स्थितः।
जृम्भां ज्वरं च सन्धिस्थ उरःस्थश्चोरसो रुजम्॥१७॥
क्षणनादुरसः कासात् कफं ष्ठीवेत् सशोणितम्।
जर्जरेणोरसा कृच्छ्रमुरःशूलातिपीडितः[4]॥ १८॥
इति साहसिको यक्ष्मा रूपैरेतैः प्रपद्यते।
एकादशभिरात्मज्ञो भजेत्तस्मान्न साहसम्[5]॥ १९॥

निदानोक्तमपि राजयक्ष्महेत्वादि पुनः प्रकरणवशात् किञ्चिन्निदानोक्तविशेषविधित्सयोच्यते। उक्तं कारणचतुष्कं प्रपञ्च-

१ 'स्त्रीप्रसङ्गसंबद्धा' इति पा०। २ 'स्वभावदोषपरिहारार्थं शुद्धबुद्धिमुपेलेति ज्ञातव्यम्' इति पा०। ३ '°चतुर्जात्यनतिक्रमोपदर्शनार्थम्' इति पा०। ४ 'क्षणनाच्चोरसो रक्तं कासमानः कफानुगम्। जर्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति' इति पा०। ५ 'सेवेतातो न साहसम्' इति पा०।

यति—युद्धेत्यादि। सहसा शक्तिमनालोच्य यानि क्रियन्ते तानि साहसानि। उभाविति कफपित्ते। क्षणनादित्यादिना रक्तकफनिष्ठीवनमेकमेव लक्षणम् 'उरःशूलातिपीडितः' इत्यन्तेनोच्यते। उरःशूलम् उरोरुक्, रक्तनिष्ठीवनविशेषणमेव; तेनैकादशरूपत्वं पूर्यते एव ॥ १४-१९ ॥

ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम्।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥ २० ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन्।
ऊर्ध्वं तिर्यगधश्चैव विकारान् कुरुतेऽनिलः ॥ २१ ॥
प्रतिश्यायं च कासं च स्वरभेदमरोचकम्।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्दनम् ॥ २२ ॥
अङ्गमर्दं मुहुश्छर्दिं वर्चोभेदं त्रिलक्षणम्।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥२३॥

ह्रीमत्त्वादित्यादिना वेगसंधारणजमाह। वर्चोभेदं त्रिलक्षणमिति पृथग्वातादिजनितत्रिदोषलिङ्गयुक्तमित्यर्थः ॥२०-२३॥

ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्शनात्।
अतिव्यवायानशनाच्छुक्रमोजश्च हीयते ॥ २४ ॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषावुदीरयन्।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥ २५ ॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम्।
करोति चांससंतापमेकादशगदानिमान् ॥ २६ ॥
लिङ्गान्यावेदयन्त्येतान्येकादश महागदम्।
संप्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयप्रदम् ॥ २७ ॥

ईर्ष्येत्यादिना धातुक्षयजमाह। ओज इति रसः, रसेऽप्योजःशब्दो वर्तते; यदुक्तं—"मलीभवति तत् प्रायः कल्पते किंचिदोजसे" इति; किंवा ओजो देहस्य सारम्। स्नेहक्षयादिति देहसारशुक्रौजःक्षयात्। क्षयात् प्राणक्षयप्रदमित्यत्र क्षयहेतुत्वात् क्षयः; 'प्राणक्षयावहम्' इति वा पाठः ॥ २४-२७ ॥

विविधान्यन्नपानानि वैषम्येण समश्नतः।
जनयन्त्यामयान् घोरान्विषमान्मारुतादयः ॥ २८ ॥
स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः।
रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥२९॥
प्रतिश्यायं प्रसेकं च कासं छर्दिमरोचकम्।
ज्वरमंसाभितापं च छर्दनं रुधिरस्य च ॥ ३० ॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि च।
कफपित्तानिलकृतं लिङ्गं विद्याद्यथाक्रमम् ॥ ३१ ॥

१ 'एकादशमहागदः' इति पा०।

इति व्याधिसमूहस्य रोगराजस्य हेतुजम्।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥ ३२ ॥

विविधानीत्यादिना विषमाशनजमाह। वैषम्येणेति प्रकृतिकरणाद्यष्टाहारविधिवैषम्येण। वैषम्यादतिप्रवृद्धा वातादयो विषममुन्मार्गेण गताः सन्तः रुधिरादीनां स्रोतांसि रुद्ध्वा रोगाय यक्ष्मरूपाय कल्पन्त इति योजना। यथाक्रममिति प्रतिश्यायमित्यादिप्रथमश्लोकार्धविहितं कफकृतं, द्वितीयश्लोकार्धविहितं पित्तकृतं, शेषं तु वातकृतम्। अत्र प्रत्येकमेकादशलक्षणपाठेन एकादशलक्षणयोगेनैव राजयक्ष्मणः संपूर्णत्वं प्रायो भवतीति दर्शयति। यत्तु षड्लक्षणत्वं त्रिलक्षणत्वं वा यक्ष्मणो वक्ष्यति, तदसंपूर्णलक्षणस्यैव ज्ञेयम्। ननु शोषाणामयथाबलमारम्भादिजत्वभेदेन चातुर्विध्यकथनेन किं? यतस्तानि तान्येव लक्षणानि सर्वत्र भवन्ति; तथाच सर्वेऽपि त्रिदोषजाः, तेनैकरूपत्वाभिधानमेव युक्तम्; उक्तं च शल्ये—"एकादशानामेकत्र सांनिध्यात्तन्त्रयुक्तितः। क्रियाणां चाविभागेन प्रागेकोत्पादनेन च ॥ एक एव मतः शोषः सन्निपातात्मको गदः" ( सु. उ. अ. ४१ ) इति, इहापि चोक्तं—"सर्वस्त्रिदोषजो यक्ष्मा" इत्यादि। मैवं, हेतुलक्षणचिकित्सितेन चतुर्णामपि भेदाद्भिन्न एवेति युक्तम्। तत्र हेतवोऽयथाबलमारम्भादय उक्ता एव; लिङ्गं च भिन्नं साहसजे कण्ठोद्ध्वंस उरोरुक् जृम्भा च; वेगसंधारणजे च अङ्गमर्दो मुहुश्छर्दिस्तथा वर्चोभेदस्त्रिलक्षणः, अन्यत्र हि वर्चोभेदस्त्रिलक्षणो न भवति; क्षयजे श्वासपार्श्वशूलांससंतापाः; विषमाशनजे छर्दनं रुधिरस्य; साहसजे प्रतिश्यायाभावः, शेषेषु प्रतिश्याय इत्यादिलक्षणभेदः। चिकित्सितभेदस्तु असाधारणलक्षणे चिकित्साभेदकृत एव; तस्माद्भेदो यक्ष्मणां युक्त एव; तन्त्रान्तरे तु स्थूलदृष्ट्या अभेद उक्तः; इहापि स्थूलदृशा "सर्वस्त्रिदोषजो ज्ञेयः" इत्यादिनाऽभेद उक्त एव; सूक्ष्मचिन्तायां त्वयमेव भेदः उक्तो ज्ञेयः। पुनश्च "कासोऽङ्गताप" इत्यादिना दोषलक्षणानि वक्ष्यति, तत् सामान्येन यक्ष्मणः प्रायोभाविलक्षणं चतुर्ष्वपि समुच्चित्योक्तमिति ज्ञेयं; तेन न पौनरुक्त्यम् ॥ २८-३२ ॥

पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम्।
अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥ ३३ ॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥ ३४ ॥
मक्षिकाघुणकेशानां तृणानां पतनानि च।
प्रायोऽन्नपाने केशानां नखानां चाभिवर्धनम् ॥३५॥
पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ॥३६॥

१ 'रोगेशस्य समुत्थितम्' इति पा०। २ 'भेदो युक्तया' इति पा०।

जलाशयानां शैलानां वनानां ज्योतिषामपि।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम् ॥ ३७ ॥
प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः।

संप्रति चतुर्णामपि साधारणं पूर्वरूपमाह—पूर्वरूपमित्यादि। प्रतिश्यायश्च रूपे पठितः; तेन प्रतिश्यायः पूर्वरूपान्तरसहितः पूर्वरूपं भवति, रूपान्तरसहितस्तु रूपमिति विशेषः। न चैक एव प्रतिश्यायः पूर्वरूपार्थोऽपि व्याध्यवस्थायां वर्तमानत्वादरिष्टं भवति, "पूर्वरूपाणि सर्वाणि" (इ. अ. ५) इत्यादिना सर्वपूर्वरूपानुवर्तनं व्याधौ रिष्टमुक्तम्। काये बीभत्सदर्शनमिति विकृतिदर्शनम्। मक्षिकादीनामन्नपाने च पतनानीति योज्यम्। पतत्र्यादिभिरभिधर्षणं स्वप्ने ज्ञेयं; पतत्रिणः पक्षिणः, श्वापदा व्याघ्रादयः। केशास्थिराशीनामित्यादौ यच्च दर्शनमित्यन्तं 'स्वप्ने' इत्यनुवर्तते ॥ ३३–३७ ॥—

रूपं त्वस्य यथोद्देशं निर्देक्ष्यामि सभेषजम् ॥ ३८ ॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुतः ॥ ३९ ॥
स्रोतसां संनिरोधाच्च रक्तादीनां च संक्षयात्।
धातूष्मणां चापचयाद्राजयक्ष्मा प्रवर्तते ॥ ४० ॥
तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम्।
मलीभवति तत् प्रायः कल्पते किंचिदोजसे ॥ ४१ ॥
तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः।
सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ॥ ४२ ॥
रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते।
स ऊर्ध्वं कासवेगेन बहुरूपः प्रवर्तते ॥ ४३ ॥
जायन्ते व्याधयश्चातः षडेकादश वा पुनः।
येषां संघातयोगेन राजयक्ष्मेति कथ्यते ॥ ४४ ॥
कासोंऽसतापो वैस्वर्यं ज्वरः पार्श्वशिरोरुजा।
छर्दनं रक्तकफयोः श्वासवर्चोगदोऽरुचिः ॥ ४५ ॥
रूपाण्येकादशैतानि यक्ष्मणः षडिमानि वा।
कासो ज्वरः पार्श्वशूलं स्वरवर्चोगदोऽरुचिः ॥ ४६ ॥
सर्वैरर्धैस्त्रिभिर्वाऽपि लिङ्गैर्मांसबलक्षये।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ४७

संप्रति यक्ष्मरूपाणि प्रपञ्चेन व्याख्यातुमाह—रूपं त्वस्येत्यादि। निर्देक्ष्यामीति प्रपञ्चेन कथयिष्यामि। तत्र रूपव्याकरणे कर्तव्ये रूपिण एव तावद् यक्ष्मणः शरीरधातुपोषणविरोधकस्य उत्पादक्रमं शरीरधातुपोषणक्रमकथनपूर्वमाह—यथास्वेनेत्यादि। यथास्वेन यथात्मीयेन, ऊष्मणा रसाग्न्यादिरूपेण त्रयोदशविधेन। धातुः पुष्यति धातुनेति धातुना रसेन, धातू रक्तादिरूपः; किंवा क्रमपरिणामपक्षे रसेन रक्तं, रक्तेन मांसं पुष्यतीति ज्ञेयम्। एवं धातुपोषणक्रमं दर्शयित्वा यक्ष्मणि तद्विरोधमाह—स्रोतसामित्यादि। सन्निरोधादिति यक्ष्मकारकदोषेणावरुद्धत्वात्; रक्तादिसंक्षयोऽपि स्रोतोवरोधात्तथा पोषकरसाप्राबल्याच्च ज्ञेयः; धातूष्मापचयोऽपि धातुक्षयाद्दोषप्रभावाच्च ज्ञेयः। यथा धातुपोषकरसहानिर्भवति तथाऽऽह—तस्मिन्नित्यादि। ओजसे इति सारभागाय, रसायेति यावत्। विशेषाद्राजयक्ष्मिण इतिवचनेनान्येषामपि दुर्बलानां पुरीषं रक्ष्यमिति सूचयति। विड्बलमिति विडाधारम्। यद्यपि रस उत्पद्यते स च धातून् पुष्णाति, किंतु स्वस्थानस्थो विदह्यते; स्वस्थानस्थ इति हृदयस्थः। सर्वैरिति एकादशभिः। अर्धैरिति षड्भिः, एकादशस्य ज्येष्ठभागपरिग्रहात् षडेवार्धं भवति; दृष्टा चैषा विधा, यथा—"त्रिंशन्मताः कर्मसु बस्तयो हि, कालस्ततोऽर्धेन ततश्च योगः" (सि. अ. १) इत्यादौ, त्रिंशद्वस्त्यर्धरूपः कालः श्रेष्ठभागपरिग्रहात् षोडशबस्तिरूप एव, "काले त्रयोऽन्ते पुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट् स्युः" (सि. अ. १) इत्यनेनोक्तः। त्रिभिरित्यत्र यानि कानि त्रीणि यक्ष्मणो रूपाणि ज्ञेयानि, ग्रहणग्राहिकयाऽनिर्देशात्। अन्ये तु 'अंसपार्श्वाभितापश्च' इत्यादिवक्ष्यमाणलक्षणत्रयं वर्णयन्ति। केचित्तु 'अंसपार्श्वाभितापश्च' इत्यादिकं यक्ष्मसंबन्धिज्वरलक्षणं वदन्ति। अन्यथेति बलमांसयोगे सति ॥ ३८–४७ ॥

घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा।
मारुताध्मातशिरसो मारुतं श्यायते प्रति ॥ ४८ ॥
प्रतिश्यायस्ततो घोरो जायते देहकर्शनः।
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः ॥ ४९ ॥
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः।
इन्द्रियाणामसामर्थ्यं यक्ष्मा चातः प्रजायते ॥ ५० ॥

प्रतिश्यायं विवृणोति—घ्राणेत्यादि। मारुताध्मातशिरसो मारुतपूर्णशिरसः। मारुतं प्रति श्यायते गच्छतीत्यर्थः। मारुतानुगतं घ्राणात् स्रवति। घ्राणविप्लवः गन्धाघ्राणादिरूपः। यक्ष्मा चातः प्रजायत इति अनेनोक्तलक्षणप्रतिश्यायस्यैव पूर्वरूपतामपि सूचयति ॥ ४८–५० ॥

पिच्छिलं बहलं विस्रं हरितं श्वेतपीतकम्।
कासमानो रसं यक्ष्मी निष्ठीवति कफानुगम् ॥ ५१ ॥

स ऊर्ध्वं कासवेगेन बहुरूपः प्रवर्तते इति यदुक्तं यक्ष्मरूपं तद्विवृणोति—पिच्छिलमित्यादि ॥ ५१ ॥

अंसपार्श्वाभितापश्च संतापः करपादयोः।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ५२ ॥

---

१ 'परं शृणु' इति पा०। २ 'विवर्धते' इति पा०।

१ 'षडेषामर्धं' इति पा०। २ 'चाथ प्रवर्तते' इति पा०। ३ 'व्यापन्नं ष्ठीवति रसं कासन् यक्ष्मी' इति पा०। ४ 'तापः पादकरस्य च' इति पा०।

राजयक्ष्मणो ज्वरस्य विशिष्टं लक्षणमाह—अंसेत्यादि। लक्षणं राजयक्ष्मण इति अंसपार्श्वाभितापकरपादसंतापरूपः सर्वाङ्गगज्वरो राजयक्ष्मलक्षणमित्यर्थः ॥ ५२ ॥

**वातात्पित्तात्कफाद्रक्तात् कासवेगात् सपीनसात्।**
**स्वरभेदो भवेद्वाताद्रूक्षः क्षामश्चलः स्वरः ॥ ५३ ॥**
**तालुकण्ठपरिप्लोषः पित्ताद्वक्तुमसूयते।**
**कफाद्भेदो विबद्धश्च स्वरः खुरखुरायते ॥ ५४ ॥**
**सन्नो रक्तविबद्धत्वात् स्वरः कृच्छ्रात् प्रवर्तते।**
**कासातिवेगात् कपणः पीनसात्कफवातिकः ॥५५॥**
**पार्श्वशूलं त्वनियतं संकोचायामलक्षणम्।**
**शिरःशूलं ससंतापं यक्ष्मिणः स्यात्सगौरवम् ॥५६॥**

स्वरभेदं विभजते—वातादित्यादि। वक्तुमसूयत इति वक्तुं नेच्छति। खुरखुरायत इति खुरखुराशब्दं करोति। सन्नः अवसन्नः। कपण इति कण्ठं कपति, हिनस्तीति यावत्। पार्श्वशूलं त्वनियतमिति न संकोचरूपेण नियतं, किन्तु कदाचिदायामरूपं कदाचित् संकोचरूपं, न सर्वदाभावि। शिरःशूलत्वेन वायुः, ससंतापत्वेन पित्तं, सगौरवत्वेन श्लेष्मा, एवं त्रिदोषजन्यत्वं ज्ञेयम् ॥ ५३–५६ ॥

**अभिसन्ने शरीरे तु यक्ष्मिणो विषमाशनात्।**
**कण्ठात्प्रवर्तते रक्तं श्लेष्मा चोत्क्लिष्टसंचितः ॥५७॥**

सरक्तं कफमस्यतीति यदुक्तं तल्लक्षणं विवृणोति—अभिसन्न इत्यादि। अभितः सन्नोऽभिसन्नः। 'अभिष्यन्दे' इति पाठपक्षेऽभिष्यन्दगृहीत इत्यर्थः; किंत्वभिपूर्वस्यन्दतेः कथं रूपसिद्धिर्भवतीति चिन्तनीयम्। संचितोत्क्लिष्टमिति वक्तव्ये पूर्वनिपातनियमादुत्क्लिष्टसंचित इति कृतम् ॥ ५७ ॥

**रक्तं विबद्धमार्गत्वान्मांसादीन्नानुपद्यते।**
**आमाशयस्थमुत्क्लिष्टं बहुत्वात् कण्ठमेति च ॥५८॥**
**वातश्लेष्मविबद्धत्वादुरसः श्वासमृच्छति।**
**दोषैरुपहते चाग्नौ सपिच्छमतिसार्यते ॥ ५९ ॥**

केवलरुधिरच्छर्दनेन युक्तं विवृणोति—रक्तमित्यादि। विबद्धमार्गत्वादिति रक्तस्य मांसाद्यभिगमे यो मार्गस्तन्निरोधान्मांसादमभिगच्छद्रक्तं मांसाशये एव कृताधिष्ठानं प्रस्रवणजलमिव विबद्धमार्गत्वाद्बहु भवति, बहुत्वेनोत्क्लिष्टं द्वारान्तरागमनात् कण्ठमेति। एवं रक्तस्य पोषकरसेनासंबन्धात् क्षीयमाणस्यामाशये एव बहुत्वं ज्ञेयम्। तेन रक्तादीनां च संक्षयादित्यनेन रक्तक्षयो य उक्तः स उपपन्न एव ॥ ५८ ॥ ५९ ॥

**पृथग्दोषैः समस्तैर्वा जिह्वाहृदयसंश्रितैः।**
**जायतेऽरुचिराहारे द्विष्टैरर्थैश्च मानसैः ॥ ६० ॥**

१ 'कफान्मन्दः' इति पा०। २ 'खुनखुनायते' इति पा०। ३ 'करणः' इति पा०। ४ 'अतिखिन्ने' इति पा०। ५ 'नोपपद्यते' इति पा०।

**कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात्।**
**वाताद्यैररुचिं जातां मानसीं दोषदर्शनात् ॥ ६१ ॥**

रोगाधिकारे "पञ्च भक्तस्यानशनस्थानानीति वातपित्तकफद्वेषायासाः" ( सू. अ. १९ )इत्यनेन यद्यपि त्रिदोषजाऽरुचिर्नोक्ता, तथाऽपि चिकित्सार्थं द्वन्द्वजगुल्मवत्रिदोषजाऽरुचिरुच्यते। वक्ष्यति—"चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान्" इति। इयं च त्रिदोषजाऽरुचिः प्रकृतिसमवायारब्धा, तेन रोगाधिकारे प्रत्येकदोषजारुचिग्रहणेनैव गृहीता। प्रकृतिसमसमवायारब्धत्वेनैव त्रिदोषजारुचेः पृथग्लक्षणं नोक्तम्; अतो वातादिलक्षणमेलकमेव तस्या लक्षणम्। कषायमुखरसता वातजायां, तिक्तमुखरसता पित्तजायां, मधुरमुखरसता कफजायां, त्रिदोषजायां तु त्रिदोषमुखरसतोज्ञेया। दोषदर्शनादिति द्विष्टदर्शनात् ॥ ६० ॥ ६१ ॥

**अरोचकात् कासवेगाद्दोषोत्क्लेशाद्भयादपि।**
**छर्दिर्या सा विकाराणामन्येषामप्युपद्रवः ॥ ६२ ॥**

छर्दिं विभजते—अरोचकादित्यादि। विकाराणामन्येषामप्युपद्रव इति एवंभूता छर्दिर्न यक्ष्ममात्रनियता, किंत्वन्येषामपि विकाराणामेवंभूता छर्दिरुपद्रवरूपा भवति; किंवा एवंभूता या छर्दिः सा यक्ष्मिण उपद्रवो भवति, तथाऽरोचकादिभ्य उत्थिता च्छर्दिरन्येषामपि हिक्कादीनामुपद्रवो भवतीत्यर्थः ॥ ६२ ॥

**सर्वस्त्रिदोषजो यक्ष्मा दोषाणां तु बलाबलम्।**
**परीक्ष्यावस्थिकं वैद्यः शोषिणं समुपाचरेत् ॥ ६३ ॥**
**प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये।**
**पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु ६४**

संप्रति सर्वेषां यक्ष्मणां सामान्यरूपं त्रिदोषजत्वं प्रतिपाद्य, दोषबलाबलभेदेन च भेदं सूचयित्वा, सामान्यां विशेषां च चिकित्सां सूचयन्नाह—सर्व इत्यादि। विविधा इति भिन्नाः, साधारणीरित्यनेनाभिन्नाश्च शृण्विति योज्यम्। तत्र विविधाः प्रत्येकं पीनसादिविहिता ज्ञेयाः, साधारणीस्तु षडङ्गाजरसादिरूपाः साधारणविहिता ज्ञेयाः ॥ ६३ ॥ ६४ ॥

**पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च।**
**परिषेकावगाहांश्च यावकं वाट्यमेव च ॥ ६५ ॥**
**लवणाम्लकटूष्णांश्च रसान् स्नेहोपबृंहितान्।**
**लावतित्तिरिदक्षाणां वर्तकानां च कल्पयेत् ॥ ६६ ॥**
**सपिप्पलीकं सयवं सकुलत्थं सनागरम्।**
**दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥ ६७ ॥**
**तेन षड्विनिवर्तन्ते विकाराः पीनसादयः।**
**मूलकानां कुलत्थानां यूषैर्वा सूपकल्पितैः ॥ ६८ ॥**

१ 'पानकं' इति पा०। २ 'सूपसंस्कृतैः' इति पा०।

यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ।
पिबेत्प्रसादं वारुण्या जलं वा पाञ्चमूलिकम् ॥ ६९ ॥
धान्यनागरसिद्धं वा तामलक्याऽथवा शृतम् ।
पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत् ॥ ७० ॥

सपिप्पलीकमित्यादिके रसे यवागूसाधनवद्द्व्यादिमानं ज्ञेयं; मांसमानं तु पलानि द्वादश । सूपसंस्कृतैरिति सुष्ठूपसंस्कृतैः । तेनेति पञ्चमूल्यादिसंस्कृतजलेन ॥ ६५–७० ॥

कृशरोत्कारिकामाषकुलत्थयवपायसैः ।
संकरस्वेदविधिना कण्ठं पार्श्वमुरः शिरः ॥ ७१ ॥
स्वेदयेत् पत्रभङ्गेण शिरश्च परिषेचयेत् ।
वलागुडूचीमधुकक्वथितैर्वा वारिभिः सुखैः ॥ ७२ ॥
वस्तमत्स्यशिरोभिर्वा नाडीस्वेदं प्रयोजयेत् ।
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ॥७३॥
औदकानूपमांसानि सलिलं पाञ्चमूलिकम् ।
सस्नेहमारनालं वा नाडीस्वेदे प्रयोजयेत् ॥ ७४ ॥
जीवन्त्याः शतपुष्पाया वलाया मधुकस्य च ।
वचाया वेशवारस्य विदार्या मूलकस्य च ॥ ७५ ॥
औदकानूपमांसानामुपनाहाः सुसंस्कृताः ।
शस्यन्ते सचतुःस्नेहाः शिरःपार्श्वांसशूलिनाम् ७६

तिलतण्डुलमाषैस्तु कृशरा ज्ञेया । पत्रभङ्गेनेति पत्रभङ्गक्वाथेन; पत्रभङ्गाश्च वातहरपल्लवाः । सवातिकैरिति वातिकोत्तरवातिकैः; तन्त्रान्तरे तु वातिकान्युत्तरवातिकानि च गणेन पठितानि; यथा—"बिल्वोऽग्निमन्थः काश्मर्यं श्रेयसी पाटला बला । शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥ वर्धमानो मूलकं च वातिकान्यवतारयेत् । करमर्द सबदरं कुलत्थाः शुष्कमूलकम् ॥ श्वदंष्ट्रा वेणुपर्णी च साश्वगन्धा शतावरी । ऋष्यप्रोक्ता गुडूची च मधुकं शिग्रुरेव च ॥ यवान्यारग्वधश्चैव यच्चान्यत्किंचिदीदृशम् । सर्वमेतद्विजानीयाद्भिषगुत्तरवातिकम्" इति । नाडीस्वेदं प्रयोजयेदिति नाडीस्वेदं यथायोग्यतया प्रयोजयेत् । जीवन्त्यादीनां प्रत्येकमुपनाहा ज्ञेयाः । वेसवारो यथा—"निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् । कृष्णामरीचसंयुक्तं वेसवार इति स्मृतः" इति ॥ ७१–७६ ॥

शतपुष्पा समधुकं कुष्ठं तगरचन्दने ।
आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत् ॥७७॥
वला रास्ना तिलाः सर्पिर्मधुकं नीलमुत्पलम् ।
पलङ्कषा देवदारु चन्दनं केशरं घृतम् ॥ ७८ ॥
वीरा वला विदारी च कृष्णगन्धा पुनर्नवा ।
शतावरी पयस्या च कत्तृणं मधुकं घृतम् ॥ ७९ ॥
चत्वार एते श्लोकार्धैः प्रदेहाः परिकीर्तिताः ।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्॥८०॥

नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः ।
तैलान्यभ्यङ्गयोगीनि[1] वस्तिकर्म तथा परम् ॥ ८१ ॥

पलङ्कषा गुग्गुलुः । पयस्या क्षीरकाकोली । शिरःपार्श्वांसशूलिनां शस्ता इति योज्यम् ॥ ७७–८१ ॥

शृङ्गालावुजलौकोभिः प्रदुष्टं व्यधनेन वा ।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत् ॥ ८२ ॥
प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः ।
दूर्वामधुकमञ्जिष्ठाकेशरैर्वा घृताप्लुतैः ॥ ८३ ॥
प्रपौण्डरीकनिर्गुण्डीपद्मकेशरमुत्पलम्[2] ।
कशेरुकाः पयस्या च ससर्पिष्कं प्रलेपनम् ॥ ८४ ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
अभ्यङ्गः, पयसा सेकः शस्तश्च मधुकाम्बुना ॥८५॥
माहेन्द्रेण सुशीतेन चन्दनादिशृतेन वा ।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया ॥ ८६ ॥

शृङ्गालावुजलौकोभिरित्यत्र पित्तदुष्टे जलौका, कफदुष्टे रक्तेऽलावु ज्ञेयं; यदुक्तं—"पित्तान्वितं जलौकोभिरलाब्वा तु कफान्वितम् । शोणितं वातदुष्टं तु विषाणेनाशु निर्हरेत्" इति । व्यधनं तु सिराव्यधरूपम् ॥ ८२–८६ ॥

दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यच्च कर्शनम् ॥ ८७ ॥
शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि ।
अवलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥ ८८ ॥

यच्च कर्शनमित्यनेन मृदुवमनविरेचनं यच्च कर्शनायेति दर्शयति ॥ ८७ ॥ ८८ ॥

योगान् संशुद्धकोष्ठानां कासे श्वासे स्वरक्षये ।
शिरःपार्श्वांसशूलेषु सिद्धानेतान्प्रयोजयेत् ॥ ८९ ॥
वलाविदारिगन्धाद्यैर्विदार्या मधुकेन वा[3] ।
सिद्धं सलवणं सर्पिर्नस्यं स्यात्स्वर्यमुत्तमम् ॥ ९० ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती वला ।
क्षीरं सर्पिश्च तत्सिद्धं स्वर्यं स्यान्नावनं परम्[4] ॥ ९१ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिवर्हणम् ।
प्रयुज्यमानं वहुशो घृतं चौत्तरभक्तिकम् ॥ ९२ ॥
दशमूलेन पयसा सिद्धं मांसरसेन च ।
वलागर्भं घृतं सद्यो रोगानेतान् प्रवाधते ॥ ९३ ॥

१ 'तैलान्यभ्यङ्गयोगश्च' इति पा० । २ 'प्रपौण्डरीकं पद्मस्य केशरं नीलमुत्पलम्' इति पा० । ३ 'वलाविदारीगन्धाभ्यां पिप्पल्या' इति पा० । ४ 'साधितं क्षीरसर्पिश्च तत् स्वर्यं नावनं परम्' इति पा० ।

भक्तस्योपरि मध्ये वा यथाऽग्न्यभ्यवचारितम् ।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥ ९४ ॥
लेहान् कासापहान् स्वर्यान् श्वासहिक्कानिबर्हणान् ।
शिरःपार्श्वांसशूलघ्नान् स्नेहांश्चातः परं शृणु ॥९५॥
घृतं खर्जूरमृद्वीकाशर्कराक्षौद्रसंयुतम् ।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ ९६ ॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥ ९७ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियाद्घृतम् ॥ ९८ ॥
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥ ९९ ॥
खर्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा ।
त्रिफला पिप्पली मुस्तं शृङ्गाटगुडशर्कराः ॥ १०० ॥
वीरा शटी पुष्कराख्यं सुरसः शर्करा गुडः ।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥१०१॥
श्लोकार्धैर्विहितानेताँल्लिह्यात्ता मधुसर्पिषा ।
कासश्वासापहान्स्वर्यान्पार्श्वशूलापहांस्तथा ॥१०२॥

प्रपौण्डरीकमित्यादौ क्षीरं द्रवम् । ये तु 'क्षीरसर्पिः' इत्येकपदेन पठन्ति, ते क्षीरोत्थं सर्पिर्जलेनैव पाचयन्ति । घृतं चौत्तरभक्तिकमिति उक्तमेव घृतं भक्तोत्तरं शिरःशूलादिहरं भवति । दशमूलेनेति अत्रावान्तरसाहचर्याद्दशमूलस्य क्वाथो ज्ञेयः, बलाया एव कल्कः; किंवा 'दाशमूलेन पयसा' इति पाठः; तेन दशमूलसिद्धेन क्षीरेणेत्यर्थः । रास्नाघृतं वा रास्नाक्षीरं वा रोगानेतान् प्रबाधत इति योजना; तथा बलाघृतं बलाक्षीरं च प्रबाधते इति योजना। कासे वक्ष्यमाणं यद् रास्नाघृतं, बलाघृतं च वातरक्ते वक्ष्यमाणं, तत् क्षीरेण सहोपयुक्तमेतान् रोगान् प्रबाधत इत्याचार्यो वक्ष्यति । सपिप्पलीकं सक्षौद्रमित्यत्र पिप्पलीक्षौद्रयोः प्रक्षेप्यत्वं ज्ञेयम् । पञ्चभिः पञ्चमूलैर्वा यद्घृतमुदियात्तत् सपिप्पलीकं सक्षौद्रं स्वरबोधनमित्यादियोजना । पञ्चानामित्यादिना योगान्तरमाह । रसे क्षीरचतुर्गुण इति पञ्चानां पञ्चमूलीनां क्वाथस्त्रिगुणः, घृतसमं च क्षीरं ज्ञेयम् । उक्तं हि जतूकर्णे—"दशमूलशृतक्षीराज्जातं सर्पिर्नवं पिप्पलीमधुयुक्तं यत्, पञ्चपञ्चमूलक्वथितादुत्थितं च यत् त्रिभागक्वथिततुल्यपयस्के पक्वम्" इति । फलश्रुतौ 'यक्ष्मणः सप्तकं बलम्' इत्यनेन 'स्वरभेदं' इत्यादिना ये सप्त गदाः पठितास्ते ज्ञेयाः; तेषु च हिक्का पठिता, सा च राजयक्ष्मलक्षणेषु यद्यपि न पठिता, तथाऽप्युपद्रवरूपा ज्ञेया । पुष्कराख्यं पुष्करमूलम् ॥ ८९–१०२ ॥

सितोपलां तुगाक्षीरीं पिप्पलीं बहुलां त्वचम् ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ १०३ ॥
चूर्णितं प्राशयेद्वा तच्छ्वासकासकफातुरम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥ १०४ ॥

सितोपलादावन्त्यादूर्ध्वं द्विगुणितमिति अन्त्यायास्त्वच एको भागः, बहुलाया भागद्वयं, पिप्पल्या भागचतुष्टयं, तुगाक्षीरी वंशलोचनानुकारि पार्थिवं द्रव्यं, तस्याष्टभागाः, सितोपलायास्तु षोडश । ऊर्ध्वशब्देन चेहातीतमुच्यते, विवक्ष्यमाणोर्ध्वाधोभागस्यास्थानात्; तेन क्वचित् ऊर्ध्वमित्यादावागतोऽपि ऊर्ध्वशब्दश्चरति ॥ १०३ ॥ १०४ ॥

हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्ध्वगे ।
वासाघृतं शतावर्या सिद्धं वा परमं हितम् ॥ १०५ ॥

हस्तेत्यादौ वासाघृतं रक्तपित्तोक्तं गुल्मोक्तं च; शतावरीघृतं योनिव्यापच्चिकित्सितवक्ष्यमाणम् ॥ १०५ ॥

दुरालभां श्वदंष्ट्रां च चतस्रः पर्णिनीर्बलाम् ।
भागान्पलोन्मितान् कृत्वा पलं पर्पटकस्य च ॥१०६॥
पचेद्दशगुणे तोये दशभागावशेषिते ।
रसे सुपूते द्रव्याणामेषां कल्कान् समावपेत् ॥१०७॥
शट्याः पुष्करमूलस्य पिप्पलीत्रायमाणयोः ।
तामलक्याः किराततानां तिक्तस्य कुटजस्य च॥१०८॥
फलानां सारिवायाश्च सुपिष्टान् कर्षसंमितान् ।
ततस्तेन घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥ १०९ ॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम् ।
तृष्णां छर्दिमतीसारमेतत् सर्पिर्व्यपोहति ॥ ११० ॥

दुरालभाद्ये पचेद्दशगुणे तोये इत्यनेन घृताद्दशगुणतोयेनेति ज्ञेयं, द्रव्याद्दशगुणतोयेन क्वाथस्याल्पत्वं स्यात्; प्रस्थघृतात्तु दशगुणतोये दशभागावशिष्टे प्रस्थमानत्वं कषायस्य भवति, तच्च जतूकर्णानुमतम् ॥ १०६–११० ॥

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीं पुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥१११॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीं च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥११२॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ११३ ॥

जीवन्त्यादौ पूर्वयोगोक्तं क्षीरयुक्तमेव क्वाथं द्रवमिच्छन्ति; टीकाकृतस्तु बहवो जलमेव द्रवं वदन्ति ॥ १११–११३ ॥

बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम् ।
साधयित्वा रसे तस्मिन्पयो गव्यं सनागरम् ॥११४॥

१ 'खर्जूरमृद्वीकामधुकैः सपरूषकैः । सपिप्पलीकैः' इति पा० ।

१ 'श्वासकासज्वरापहम्' इति पा० ।

द्राक्षाखर्जूरसर्पिर्भिः पिप्पल्या च शृतं सह ।
सक्षौद्रं ज्वरकासघ्नं स्वर्यं चैतत् प्रयोजयेत् ॥ ११५ ॥
आजस्य पयसश्चैवं प्रयोगो जाङ्गला रसाः ।
यूषार्थे चणका मुद्गा मकुष्ठाश्चोपकल्पिताः ॥ ११६ ॥

बलामित्यादि । अत्र घृते क्षीरक्काथकल्कसाध्ये क्काथक्षीरे मिलित्वा चतुर्गुणे, कल्कद्रव्यं चाष्टभागेन ज्ञेयं, मधु च प्रक्षेपार्थे योज्यम् ॥ ११४–११६ ॥

ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥ ११७ ॥
कफप्रसेके बलवाञ् श्लैष्मिकश्छर्दयेन्नरः ।
पयसा फलयुक्तेन माधुकेन रसेन वा ॥ ११८ ॥
सर्पिष्मत्या यवाग्वा वा वमनीयोपसिद्धया ।
वान्तोऽन्नकाले लघ्वन्नमाददीत सदीपनम् ॥११९॥
यवगोधूममाध्वीकसिध्वरिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत् १२०
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णेनैव निर्जयेत् ॥१२१
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥ १२२ ॥
प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते ।
प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति ॥ १२३ ॥
तस्याग्निदीपनान् योगानतीसारनिवर्हणान् ।
वक्त्रशुद्धिकरान् कुर्यादरुचिप्रतिबाधकान् ॥ १२४ ॥
सनागरानिन्द्रयवान् पाययेत्तण्डुलाम्बुना ।
सिद्धां यवागूं जीर्णे च चाङ्गेरीतक्रदाडिमैः ॥ १२५ ॥
पाठा बिल्वं यमानी च पातव्यं तक्रसंयुतम् ।
दुरालभा शृङ्गवेरं पाठा च सुरया सह ॥ १२६ ॥
जम्ब्वाम्रमध्यं बिल्वं च सकपित्थं सनागरम् ।
पेयामण्डेन पातव्यमतीसारनिवृत्तये ॥ १२७ ॥
एतानेव च योगांस्त्रीन् पाठादीन् कारयेत् खडान् ।
संसूप्यधान्यान्सस्नेहान् साम्लान्संग्रहणान् परम् ॥
वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ।
श्रीपर्ण्या मदयन्त्याश्च यूथिकायाश्च पल्लवान् ॥१२९॥
मातुलुङ्गस्य धातक्या दाडिमस्य च कारयेत् ।
स्नेहाम्ललवणोपेतान् खडान् सांग्राहिकान् परम् ॥
चाङ्गेर्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् ।
खडान्दधिसरोपेतान् ससर्पिष्कान्सदाडिमान् ॥१३१
मांसानां लघुपाकानां रसाः सांग्राहिकैर्युताः ।
व्यञ्जनार्थं प्रशस्यन्ते भोज्यार्थं रक्तशालयः ॥१३२॥

स्थिरादिपञ्चमूलेन पाने शस्तं शृतं जलम् ।
तक्रं सुरा सचुक्रीका दाडिमस्याथवा रसः ॥१३३॥
इत्युक्तं भिन्नशकृतां दीपनं ग्राहि भेषजम् ।

ज्वराणामित्यादिनाऽऽवस्थिकं विधिमाह । वामनीयानि मदनफलादीनि । सदीपनमिति दीपनशुण्ठ्यादिसाधितम् । वम्यां सैव प्रशस्यत इत्यत्र कफप्रसेको द्विविधः—स्वतन्त्रः कफकृतः, तथा वातपराधीनोक्तः; एवं छर्दिमपि द्विधा विभज्य कफप्रसेकक्रियानुसारेण श्लेष्मप्रधानायां वमनादि, वातप्रधानायां स्निग्धोष्णसेवानुरूपा क्रिया शस्यत इति योज्यम् । खडो व्याकृतः । अन्येऽपि वदन्ति—"पिशितेन रसस्तत्र, यूपो धान्यैः, खलः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः" इति ॥ ११७–१३३ ॥—

परं मुखस्य वैरस्यनाशनं रोचनं शृणु ॥ १३४ ॥
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनम् ।
तद्वत् प्रक्षालयेदास्यं धारयेत् कवलग्रहान् ॥१३५॥
पिबेद्धूमं ततो मृष्टमद्याद्दीपनपाचनम् ।
भेषजं पानमन्नं च हितमिष्टोपकल्पितम् ॥ १३६ ॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकं त्वचम् ।
दार्वीत्वचो यवानी च तेजोह्वा पिप्पली तथा ॥१३७
यवानी तिन्तिडीकं च पञ्चैते मुखधावनाः ।
श्लोकपादेष्वभिहिता रोचना मुखशोधनाः ॥१३८॥
गुटिकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम् ।
एषामालोडितानां वा धारयेत् कवलग्रहान् ॥१३९॥
सुरामाध्वीकसीधूनां तैलस्य मधुसर्पिषोः ।
कवलान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च ॥१४०॥

द्वौ कालाविति सायंप्रातः । दन्तपवनमिति करञ्जकरवीरादिभिस्तिक्तकटुकैः । तद्वदिति तिक्तकटुकतैर्जलैः । तेजोह्वा चविका । मुखशोधना इति मुखगतदोषशोधनाः ॥ १३४–१४० ॥

यवानीं तिन्तिडीकं च नागरं साम्लवेतसम् ।
दाडिमं बदरं चाम्लं कार्षिकं चोपकल्पयेत् ॥१४१॥
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ।
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ॥१४२॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥ १४३ ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ १४४ ॥

इति यवानीषाडवम् ।

१ 'मधुरेण' इति पा० । २ 'सचुक्रधान्यान्' इति पा० ।

१ 'वक्ष्याम्यूर्ध्वं रुचिकरं मुखवैरस्यनाशनम्' इति पा० ।

यवानीषाडवे वराङ्गं त्वक् । पिप्पलीनामेकं शतमिति आकृतिमानात् ॥ १४१-१४४ ॥

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥ १४५ ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥ १४६ ॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ।
वम्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥ १४७ ॥
कल्पयेद्गुटिकां चैतच्चूर्णं पक्त्वा सितोपलाम् ।
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ॥१४८॥
इति तालीशाद्यं चूर्णं गुटिकाश्च ।

तालीशाद्ये शुभा इति विशेषणं पिप्पल्याः । उक्तं हि हारीते—"तालीशं मरिचं शुण्ठी पिप्पल्यो भागवर्धिताः । त्वगेलेऽर्धांशके दद्याच्छर्कराऽष्टपलं भवेत्" इत्यादि । तथा जतूकर्णः—"तालीशमरिचनागरकृष्णाः कर्षाः, त्वगेले अर्धांशे, द्विकुडवा सिता, गुटिका विपाच्यताम्" इति । त्वगेलयोरर्धभागत्वम् । गुटिकापक्षे जलेन सितोपलां पक्त्वा गुडिकाः कुर्वन्ति वृद्धाः ॥ १४५-१४८ ॥

शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥ १४९ ॥
शोषिणे बर्हिणं दद्याद्बर्हिशब्देन चापरान् ।
गृध्रानुलूकांश्चाषांश्च विधिवत् सूपकल्पितान्॥१५०॥
काकांस्तित्तिरिशब्देन वर्मिशब्देन चोरगान् ।
भृष्टान् मत्स्यान्त्रशब्देन दद्याद्गण्डूपदानपि ॥ १५१ ॥
लोपाकान् स्थूलनकुलान् बिडालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥१५२॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥१५३॥
गजखड्गितुरङ्गाणां वेशवारीकृतं भिषक् ।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये ॥ १५४ ॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम् ।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान्मृगपक्षिणाम् १५५
मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत् ।
तेषूपधा, सुखं भोक्तुं तथा शक्यानि तानि हि १५६
जानञ्जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् ।
तस्माच्छद्मोपसिद्धानि मांसान्येतानि दापयेत् १५७
बर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः ।
खरगोमहिषाणां च मांसं मांसकरं परम् ॥ १५८ ॥
योनिरष्टविधा चोक्ता मांसानामन्नपानिके ।
तां परीक्ष्य भिषग्विद्वान् दद्यान्मांसानि शोषिणे१५९

प्रसहा भूशयानूपवारिजा वारिचारिणः ।
आहारार्थं प्रदातव्या मात्रया वातशोषिणे ॥ १६० ॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः ।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥१६१॥
विधिवत्सूपसिद्धानि मनोज्ञानि मृदूनि च ।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥१६२॥
मांसमेवाश्नतः शोषो माध्वीकं पिबतोऽपि च ।
नियतानल्पचित्तस्य चिरं काये न तिष्ठति ॥ १६३ ॥
वारुणीमण्डनित्यस्य बहिर्मार्जनसेविनः ।
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ॥ १६४ ॥
प्रसन्नां वारुणीं सीधुमरिष्टानासवान्मधु ।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ॥ १६५ ॥
मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् स्रोतसां मुखम् ।
प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ॥१६६
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति ।
मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ॥ १६७ ॥
सक्षौद्रं, पयसा सिद्धं सर्पिर्दशगुणेन वा ।
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायकैः ॥ १६८ ॥
क्षीरमांसरसोपेतैर्घृतं शोषहरं परम् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ १६९ ॥
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ।
रास्नाबलागोक्षुरकस्थिरावर्षाभुसाधितम् ॥ १७० ॥
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद्घृतम् ।
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह १७१
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ।
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ॥ १७२ ॥

कल्पितानीति सम्यक् संस्कारेण संस्कृतानि । वर्मिशब्देन सर्पाकारो दीर्घो मत्स्यविशेषो ग्राह्यः । गण्डूपदः भूमिलता । लोपाकः अल्पशृगालो लाङ्गूलप्रधानः । संप्रत्ययस्यान्यमांसप्रयोगमाह—मांसानीत्यादि । अनभ्यासादिति अभक्ष्यत्वेन । उपधेति अन्यशब्देन दानमिति यावत् । तथेति संज्ञान्तरेण दाने सुखं यथा भवति तथा भोक्तुं शक्यते । अभक्ष्यत्वे तु ज्ञाते दोषमाह—जानन्नित्यादि । योनिरष्टविधेति "प्रसहा" ( सु. सू. अ. २७ ) इत्यादिना प्रोक्ता । सक्षौद्रमिति च्छेदः । पयसेत्यादि द्वितीयं घृतम् । मधुरकाणि यानि तानि चेह कल्कार्थम् । पिप्पलीत्यादिनाऽनियतमानं घृतं चतुर्गुणेन क्षीरेण साध्यते, षट्पलेकद्रव्यघृतमानवत् ॥ १४९-१७२ ॥

बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतः परं विधिः ।
स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ॥ १७३ ॥

स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव च।
उत्तीर्णं मिश्रकैः स्नेहैः पुनराक्तैः सुखैः करैः॥ १७४॥
मृद्नीयात् सुखमासीनं सुखं चोत्सादयेच्चरम्।
जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम्॥ १७५॥
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम्।
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम्॥ १७६॥
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत्।
यवचूर्णत्रिगुणितं दध्ना युक्तं समाक्षिकम्॥ १७७
एतदुत्सादनं कार्यं पुष्टिवर्णबलप्रदम्।
गौरसर्षपकल्केन कल्कैश्चापि सुगन्धिभिः॥ १७८॥
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः।

उत्तीर्णमित्यादौ पुनराक्तैरिति मिश्रकस्नेहैराक्तैः करैः पुनः पुनः मर्दयेत्; पुनराक्तमिति पाठे तु पुनर्मिश्रकैः स्नेहैराक्तमित्यर्थः। उत्सादयेदिति उद्वर्तयेत्। विकसा मञ्जिष्ठा। तर्कारी जया। समाक्षिकमिति ईषन्माक्षिकम्॥ १७३–१७८॥—

गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः॥ १७९॥
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः।
इष्टवर्णरसस्पर्शगन्धवत् पानभोजनम्॥ १८०॥
इष्टमिष्टैरुपहितं सुखमद्यात् सुखप्रदम्।
समातीतानि धान्यानि कल्पनीयानि शुष्यताम्॥१८१॥
लघून्यहीनवीर्याणि स्वादूनि गन्धवन्ति च।
यानि प्रहर्षकारीणि तानि पथ्यतमानि हि॥ १८२॥
यच्चोपदेक्ष्यते पथ्यं क्षतक्षीणचिकित्सिते।
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये॥१८३॥
अभ्यङ्गोत्सादनैश्चैव वासोभिरहतैः प्रियैः।
यथर्तुविहितैः स्नानैरवगाहैर्विमार्जनैः॥ १८४॥
बस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः।
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः॥ १८५॥
सुहृदां रमणीयानां प्रमदानां च दर्शनैः।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च॥ १८६॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः॥ १८७॥
सत्येनाचारयोगेन मङ्गल्यैरप्यहिंसया।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्तते॥ १८८॥
यया प्रयुक्तया चेष्टया राजयक्ष्मा पुरा जितः।
तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत्॥ १८९॥

अतः परं मनस आनुकूल्यं यक्ष्मारम्भकदोषं हन्तीत्यतो सर्वासु चेष्टासु सदैव मनोनुकूलं स्यात्तथैव वर्तनीयं, यया च युक्त्या दैवव्यपाश्रयचिकित्सा कर्तव्या तदाह—गन्धैरित्यादि॥ १७९–१८९॥

१ 'हितमद्यात्' इति पा०। २ 'किञ्चित्' इति पा०। ३ 'आरोग्यार्थं' इति पा०।

तत्र श्लोकौ—
प्रागुत्पत्तिर्निमित्तानि प्राग्रूपं रूपसंग्रहः।
समासाद् व्यासतश्चोक्तं भेषजं राजयक्ष्मणः॥१९०॥
नामहेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते॥१९१॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः॥ ८॥

प्रागुत्पत्तिरित्यादिसंग्रहः। नामहेतुरिति "स राज्ञः पूर्वमासीद्धि राजयक्ष्मा ततो मतः" इति॥ १९०॥ १९१॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सितस्थाने राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

अथात उन्मादचिकित्सितं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

इदानीमुपोद्घातितं राजयक्ष्मचिकित्सितमभिधाय क्रमप्राप्तमुन्मादचिकित्सितं ब्रूते। अयं क्रमश्चरकसंस्कृतां पञ्चाध्यायीमर्शोतीसारवीसर्पमदात्ययद्विव्रणीयरूपां परित्यज्य ज्ञेयः॥ १॥ २॥

बुद्धिस्मृतिज्ञानतपोनिवासः
पुनर्वसुः प्राणभृतां शरण्यः।
उन्मादहेत्वाकृतिभेषजानि
कालेऽग्निवेशाय शशंस पृष्टः॥ ३॥

बुद्धिः ऊहापोहवती, स्मृतिः अतीतार्थविषयज्ञानं, तपः चान्द्रायणादि, तेषां निवास आश्रय इत्यर्थः। उन्मादहेत्वादीत्यादौ हेतुग्रहणेनात्र वक्तव्याः संप्राप्तिस्थितिरूपकाला उन्मादगम्यहेतुविषयतया गृह्यन्ते। आकृतिग्रहणेनाभिधेयस्योन्मादस्वरूपस्य ग्रहणं ज्ञेयम्॥ ३॥

विरुद्धदुष्टाशुचिभोजनानि
प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्वो
मनोऽभिघातो विषमाश्च चेष्टाः॥ ४॥

संप्रत्युन्मादहेतुमाह—विरुद्धेत्यादि। विरुद्धं पयःसंयुक्तमत्स्यादि, दुष्टं गरादि अत्यर्थदोषजनकं च, अशुचि अपवित्रम्। भयहर्षपूर्वो मनोऽभिघात इति अत्र पूर्वशब्दः कारणवाची, तेन भयहर्षकारणको मनोऽभिघात इत्यर्थः। एतद्विरुद्धाहारादि यथासंभवं कारणं ज्ञेयम्। भयहर्षावुपलक्षणौ, तेन क्रोधादयोऽपि मनोभिघातका अत्र ज्ञेयाः। क्रोधादिना प्रत्याहते मनसि भयहर्षपूर्वक एवोन्मादो भवति॥ ४॥

तैरल्पसत्त्वस्य मलाः प्रदुष्टा
बुद्धेर्निवासं हृदयं प्रदूष्य।
स्रोतांस्यधिष्ठाय मनोवहानि
प्रमोहयन्त्याशु नरस्य चेतः ॥ ५ ॥

तैरित्यादिना संप्राप्तिमाह। अल्पसत्त्वस्य अल्पसत्त्वगुणस्य। हृदयं यद्यपि बुद्धिनिवासत्वेनार्थेदशमहामूलीयादौ प्रतिपादितमेव; तथाऽपि बुद्धिनिवासत्वोपदर्शनमिह कृतं, हृदयोपघाताद्बुद्ध्युपघातो वक्ष्यमाणो युक्त एव; आश्रयोपघातेनाश्रितस्योपघातः सिद्ध एव। स्रोतांसि च मनोवहानीत्यनेन हृदयदेशसंबन्धिधमन्यो विशेषेण मनोवहा दर्शयति; किंवा केवलमेव शरीरं मनोऽभ्यनुस्यूतं जग्राह। उक्तं हि—"केवलमेवास्य मनसः शरीरमधिष्ठानभूतं" (वि. अ. ५) इति। चेत इति मनः ॥ ५ ॥

धीविभ्रमः सत्त्वपरिप्लवश्च
पर्याकुला दृष्टिरधीरता च।
अबद्धवाक्त्वं हृदयं च शून्यं
सामान्यमुन्मादगदस्य लिङ्गम् ॥ ६ ॥
स मूढचेता न सुखं न दुःखं
नाचारधर्मौ कुत एव शान्तिम्।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो
भ्रमत्ययं चेत इतस्ततश्च ॥ ७ ॥

धीविभ्रम इत्यादिना सामान्यमुन्मादपूर्वरूपमाहेत्येके। धीविभ्रमादि त्विह सामान्यमुन्मादलिङ्गमेवोक्तम्। कुत एव शान्तिमिति कुतोऽपि शान्तिं निवृत्तिं न विन्दति। संज्ञा नामोल्लेखेन ज्ञानम्। भ्रमत्ययं चेत इति अश्वान् रथिरिव भ्रामयति; अत्र णिजर्थोऽन्तर्भूतः ॥ ६ ॥ ७ ॥

समुद्भ्रमं बुद्धिमनःस्मृतीना-
मुन्मादमागन्तुनिजोत्थमाहुः।

उन्मादसंज्ञाव्युत्पत्तिमाह—समुद्भ्रममित्यादि। समुद्भ्रम उन्माद इत्येकोऽर्थः। मनोविभ्रमोऽचिन्त्यार्थचिन्तनादिना ज्ञेयः। निदानोक्तसंज्ञादिविभ्रमोऽपि मनोविभ्रम एवान्तर्भावनीय इह, संज्ञादिविभ्रमस्यापि मनोविभ्रमजन्यत्वात् ॥—

तस्योद्भवं पञ्चविधं पृथक् तु
वक्ष्यामि लिङ्गानि चिकित्सितं च ॥ ८ ॥
रूक्षाल्पशीतान्नविरेकधातु-
क्षयोपवासैरनिलोऽतिवृद्धः।
चिन्तादिजुष्टं[1] हृदयं प्रदूष्य
बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥ ९ ॥
अस्थानहासस्मितनृत्यगीत-
वागङ्गविक्षेपणरोदनानि।
पारुष्यकार्श्यारुणवर्णताश्च
जीर्णे बलं चानिलजस्य रूपम् ॥ १० ॥

तस्योद्भवमित्यादौ यद्यपि पञ्चानां मध्येऽसाध्यस्य सान्निपातिकस्य चिकित्सितं न वक्तव्यं, तथाऽपि छत्रिणो गच्छन्तीति न्यायेन बाहुल्यमाश्रित्य चिकित्सितं वक्ष्यामीत्युक्तम्। चिन्तेत्यादि चिन्ता आदिः येषां ते, तेन कामक्रोधादयो गृह्यन्ते; आदिशब्दोऽत्र प्रकारवाची। अस्थाने अविषये हासादीन्यस्थानहासस्मितादीनि ॥ ८–१० ॥

अजीर्णकट्वम्लविदाह्यशीतै-
र्भोज्यैश्चितं पित्तमुदीर्णवेगम्।
उन्मादमत्युग्रमनात्मकस्य
हृदि श्रितं पूर्ववदाशु कुर्यात् ॥ ११ ॥
अमर्षसंरम्भविनग्नभावाः
संतर्जनातिद्रवणौष्ण्यरोषाः[1]।
प्रच्छायशीतान्नजलाभिलाषाः
पीता च भाः पित्तकृतस्य लिङ्गम् ॥ १२ ॥

अजीर्णेत्यादिना पित्तोन्मादमाह। चितमित्यनेन चयपूर्वकत्वेन पित्तस्य महान्तं कोपं दर्शयति, चयपूर्वको हि दोषकोपो बलवत्त्वान्महान्भवति। अन्ये त्विह चितशब्देन प्रकोपमिच्छन्ति। अत्युग्रमिति तीव्रवेगम्। पूर्ववदित्यनेन वातोन्मादवच्चिन्तादिजुष्टमित्यादिग्रन्थोक्तां संप्राप्तिमतिदिशति। अमर्षः अक्षान्तिः, संरम्भ आरभटी, विनग्नभावः अवस्त्रत्वम्। अतिद्रवणं त्वरितगमनम्। प्रच्छायः प्रवृद्धच्छायो देशः ॥ ११ ॥ १२ ॥

संपूरणैर्मन्दविचेष्टितस्य
सोष्मा कफो मर्मणि संप्रवृद्धः।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं
प्रमोहयन् संजनयेद्विकारम् ॥ १३ ॥
वाक्चेष्टितं मन्दमरोचकश्च
नारीविविक्तप्रियताऽतिनिद्रा।
छर्दिश्च लाला च बलं च भुक्ते
नखादिशौक्ल्यं च कफात्मकस्य ॥ १४ ॥

संपूरणैरित्यादिना कफोन्मादमाह। सोष्मा कफ इति सह ऊष्मणा कफ उन्मादं करोति न केवल इति, उन्मादकरणे कफस्य ऊष्मसहितत्वरूपं स्वभावं दर्शयति; किंवोष्मशब्देन वीर्यं शक्तिरूपमुच्यते, तेन सोष्मा कफ इति उत्क्लिष्टशक्तिकः कफ इत्यर्थः। मर्मणीति हृदये। नारीविविक्तयोः प्रियता नारीविविक्तप्रियता; विविक्तं विजनम् ॥ १३ ॥ १४ ॥

यः सन्निपातप्रभवोऽतिघोरः
सर्वैः समस्तैः स च हेतुभिः स्यात्।
सर्वाणि रूपाणि बिभर्ति ताह-
ग्विरुद्धभैषज्यविधिर्विवर्ज्यः ॥ १५ ॥

य इत्यादिना सान्निपातिकमाह। सर्वैरित्युक्ते प्रत्येकमपि सर्वहेतूनां जनकत्वं स्यादत आह—समस्तैरिति। विरुद्धभैष-

१ 'चिन्तादिदुष्टं' इति पा०।

१ '°भिद्रवणौ°' इति पा०।

ज्यविधित्वाद्विवर्ज्यः। केचिदत्र तादृक्शब्देन य एव समस्तहेतुजः सर्वलक्षणश्च स एव वर्ज्यो न त्वल्पहेतुलक्षण इति वदन्ति ॥ १५ ॥

देवर्षिगन्धर्वपिशाचयक्ष-
रक्षःपितृणामभिधर्षणानि।
आगन्तुहेतुर्नियमव्रतादि
मिथ्याकृतं कर्म च पूर्वदेहे ॥ १६ ॥

देवर्षीत्यादिनाऽऽगन्तून्मादमाह। इह येऽसुरादयः सुश्रुतोक्तास्तेऽनाविष्कृततमा विज्ञेयाः। वक्ष्यति च—"इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याता" इति। अत्र च रक्षःशब्देन राक्षसब्रह्मराक्षसयोर्ग्रहणं, तेन विवरणे ब्रह्मराक्षसोन्मत्तोऽप्युक्तः। अभिधर्षणम् आवेशः। नियमेत्यादिना ऐहिकं कर्म देवाद्यावेशकारणं ब्रूते; मिथ्याकृतं कर्म चेत्यनेन पूर्वजन्मकृतं कर्म आह ॥ १६ ॥

अमर्त्यवाग्विक्रमवीर्यचेष्टो
ज्ञानादिविज्ञानबलादिभिर्यः।
उन्मादकालोऽनियतश्च यस्य
भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १७ ॥

अमर्त्येत्यादिनाऽऽगन्तूनां सामान्यलिङ्गान्याह। अमर्त्यैः अमानुषैर्वागादिभिर्लक्षितं भूतोत्थमुदाहरेत्। अनियत इति वातिकादिवन्न आहारजीर्णादिकालनियतः; ये तु 'नियत' इति पठन्ति, तेषां वक्ष्यमाणनियततिथ्यादीनां ग्रहणमभिप्रेतम् ॥ १७ ॥

अदूषयन्तः पुरुषस्य देहं
देवादयः स्वैस्तु गुणप्रभावैः।
विशन्त्यदृश्यास्तरसा यथैव
च्छायातपौ दर्पणसूर्यकान्तौ ॥ १८ ॥

अदूषयन्त ईषद्दूषयन्तः। गुणप्रभावैरिति अणिमादिगुणप्रभावैः। तरसा अतिवेगेन। दृष्टान्तद्वयमाह—छायेत्यादि। छाया यथा दर्पणम्, आतपः सूर्यकान्तम्, अदूषयन्नेवादृश्यमानगुणप्रभावेणाविशति, तथा देवादयोऽपि देहं विशन्तीत्यर्थः ॥ १८ ॥

आघातकालो हि स पूर्वरूपः
प्रोक्तो निदानेऽथ सुरादिभिश्च।
उन्मादरूपाणि पृथङ्निबोध
कालं च यस्मात् पुरुषांश्च तेषाम् ॥ १९ ॥

आघातकाल इति आवेशावकाशः; स च निदाने "तद्यथा—पापस्य कर्मणः समारम्भे" (नि. अ. ७) इत्यादिनोक्तः। कालं तिथिरूपम् ॥ १९ ॥

तद्यथा—सौम्यदृष्टिं गम्भीरमधृष्यमकोपनमस्वप्नभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्तं विद्यात्; गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूपचेष्टाहारव्याहारं तैरुन्मत्तं विद्यात्; अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषमरोचकाविपाकपरीतं च पितृभिरुन्मत्तं विद्यात्; (चण्डं साहसिकं तीक्ष्णं गम्भीरमधृष्यं) मुखवाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरतिं रक्तवस्त्रबलिकर्महास्यकथानुयोगप्रियं शुभगन्धं च गन्धर्वोन्मत्तं विद्यात्; असकृत्स्वप्नरोदनहास्यं नृत्यगीतवाद्यपाठकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणं च यक्षोन्मत्तं विद्यात्; नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्यतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं संतर्जकं च राक्षसोन्मत्तं विद्यात्; प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिः स्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीडनेन च ब्रह्मराक्षसोन्मत्तं विद्यात्; अस्वस्थचित्तं स्थानमलभमानं नृत्यगीतहासिनं बद्धाबद्धप्रलापिनं संकरकूटमलिनरथ्याचेलतृणाश्मकाष्ठाधिरोहणरतिं भिन्नरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्टस्मृतिं च पिशाचोन्मत्तं विद्यात् ॥ २० ॥

स्वप्नभोजनाभिलाषी न भवतीति अस्वप्नभोजनाभिलाषी। देवादिशब्देनेह सुश्रुतमताद्देवाद्यनुकारिणस्तदनुचरा ज्ञेयाः। उक्तं हि सुश्रुतेन—"न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः ॥ तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः ॥ असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति" ( सु. उ. अ. ६० ) इति। ऋषिसधर्मतया गुर्वादीनामसूत्रितानामप्युदाहरणम्। गुर्वाद्यभिशापादयो यादृशेनाभिप्रायेण भवन्ति तदनुरूपचेष्टादयोऽपि तैरुन्मत्तस्य भवन्तीति गुर्वादिग्रन्थार्थः। अनन्नाभिलाषः अन्नाप्रार्थना, अरोचकस्तु प्रार्थितेऽप्युपयोगसमयेऽनभिलाषः। चण्डमिति मारणात्मकम्। स्तुतिः स्तावको ग्रन्थः। उदाहरणमिति पठनं स्तुत्यादीनामेव। स्थानमलभमानमिति स्थानमेव नास्तीति भाषमाणम्। बद्धाबद्धत्वं संबद्धासंबद्धत्वम्। संकरः तृणादिचय इत्यर्थः ॥ २० ॥

---

१ 'वक्ष्यमाणतिथयोऽभिप्रेताः' इति पा०।

१ "॰वाचं' इति पा०। २ अयं पाठो बहुषु पुस्तकेषु नोपलभ्यते। ३ "॰रोदनहासिनं' इति पा०। ४ 'भिन्नरूक्षवर्णस्वरं' इति पा०।

तत्र चौक्षाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्यां च छिद्रमवेक्ष्याभिधर्षयन्ति देवाः, स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिवाक्यकुशलं प्रायः षष्ठ्यां नवम्यां चर्षयः, मातृपितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावस्यायां च पितरः, गन्धर्वाः स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं चौक्षाचारं प्रायो द्वादश्यां चतुर्दश्यां च, सत्त्वबलरूपगर्वशौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्करणं प्रायः शुक्लैकादश्यां सप्तम्यां च यक्षाः, स्वाध्यायतपोनियमोपवासब्रह्मचर्यदेवयतिगुरुपूजाऽरतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्राह्मणवादिनं शूरमानिनं देवागारसलिलक्रीडनरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः, रक्षःपिशाचास्तु हीनसत्त्वं पिशुनं स्त्रैणं लुब्धं शठं प्रायो द्वितीयातृतीयाष्टमीषु; इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याताः ॥ २१ ॥

तत्र चौक्षाचारमित्यादिनाऽभिगमनीयपुरुषान् कालं च पृथगाह। चौक्षः शुचिः आचारो यस्य स चौक्षाचारः। चौक्षाचारादिशुभकर्मयुक्ताः शुभकर्मतया यद्यपि उन्मादानर्हास्तथाऽपि प्राक्तनकर्मवशात्ते देवादिभिरुन्माद्यन्त इति ज्ञेयम्। अतिवाक्करणमिति अतिभाषमाणम्। छिद्रमिति उच्छिष्टावस्थानादिरूपमपचारम्। संप्रति भूतविद्याधिकारत्वाद्भौतिकोन्मादस्य लेशकथनमिहाशून्यतार्थं, तेन परेऽप्युन्मादकभूताः सन्तीति दर्शयन्नाह—अपरिसंख्येयानामित्यादि ॥ २१ ॥

सर्वेष्वपि तु खल्वेषु यो हस्तावुद्यम्य रोषसंरम्भान्निःशङ्कमन्येष्वात्मनि वा निपातयेत् स ह्यसाध्यो ज्ञेयः; तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्रुतनासिकश्छिद्यमानचर्माऽप्रतिहन्यमानवाणिः सततं विकूजन् दुर्वर्णस्तृपार्तः पूतिगन्धश्च स हिंसार्थिनोन्मत्तो ज्ञेयः; तं परिवर्जयेत् ॥ २२ ॥

असाध्यभूतजोन्मादमाह—सर्वेष्वित्यादि। हिंसार्थी मारात्मकः। अप्रतिहन्यमानवाणिरिति नित्यवागित्यर्थः। त्रिविधो भूतो भवति रत्यर्चनहिंसाभेदेन। तत्र हिंसार्थिना गृहीतोऽसाध्यो भवति, अत एवासाध्यभूतोन्मादे उक्तं—हिंसार्थिनोन्मत्त इति ॥ २२ ॥

१ 'देवा धर्षयन्ति' इति पा०। २ 'अतिवाक्प्रवणं' इति पा०। ३ 'स्तेन' इति पा०। ४ 'प्रायश्छिद्रमवेक्ष्याभिधर्षयन्ति' इति पा०। ५ 'दुर्वदनः' इति पा०। ६ 'द्रोही मारात्मक'। अन्ये तु द्रोहेन दण्डेन साध्यत इति व्याख्यानयन्ति' इति पा०।

रत्यर्चनाकामोन्मादिनौ तु भिषगभिप्रायाचाराभ्यां बुद्ध्वा तदङ्गोपहारबलिमिश्रेण। मन्त्रभैषज्यविधिनोपक्रमेत् ॥ २३ ॥

रत्यर्चनार्थिभूतगृहीतचिकित्सामाह—रत्यर्चनेत्यादि। रतिकामोऽर्चनाकामश्च रत्यर्चनाकामौ, ताभ्यामुन्मादितौ रत्यर्चनाकामोन्मादितौ। अभिप्रायाचाराभ्यां बुद्ध्वेति अभिप्रायेण यः काम्यमर्थमिच्छति स रतिकामः, यस्तु पूजामिच्छति स अर्चनाकामः; एवमाचारेण यः काम्यार्थप्राप्त्यर्थं चेष्टते स रतिकामः, योऽर्चनार्थं पुष्पधूपादिकमन्विष्यति सोऽर्चनाकामः, इति बुद्ध्वा तदङ्गरत्युपहारादि कर्तव्यं; तस्या रतेरर्चनायाश्च यदङ्गसाधनं तत्तदर्तनेन तत्तदङ्गोपहाररूपबलिना भैषज्यमन्त्रविधिना चोपचारः कर्तव्य इति वाक्यार्थः ॥ २३ ॥

तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः समासविस्तराभ्यां भेषजविधिमनुव्याख्यास्यामः ॥२४॥

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित्।
कुर्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ २५ ॥
कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम्।
स्निग्धस्विन्नस्य कर्तव्यं शुद्धे संसर्जनक्रमः ॥ २६ ॥
निरूहं स्नेहबस्तिं च शिरसश्च विरेचनम्।
ततः कुर्याद्यथादोषं तेषां भूयस्त्वमाचरेत् ॥ २७ ॥
हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः।
मनःप्रसादमाप्नोति स्मृतिं संज्ञां च विन्दति ॥२८॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताडनं च मनोबुद्धिदेहसंवेजनं हितम् ॥ २९ ॥
यः सक्तोऽविनये पट्टैः संयम्य सुदृढैः सुखैः।
अपेतलोहकाष्ठाद्ये संरोध्यश्च तमोगृहे ॥ ३० ॥
तर्जनं त्रासनं दानं हर्षणं सान्त्वनं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ३१ ॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानं च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥ ३२ ॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः।

तत्रेत्यादिना भेषजविधानमाह। विशेषविदिति वातस्य निरावरणरूपं विशेषं जानन् स्नेहपानं वातजे दद्यादिति दर्शयति, सावरणे तु तन्निषिद्धमेव; यदुक्तं—"मेदःकफाभ्यामनिलो निरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति। स्नेहं नियुञ्जन्नबुधस्तु तस्मै

१ 'अभिचाराभिशापाभ्यां' इति पा०। २ 'संगृह्णाति' इति पा०। ३ 'मनोबुद्धिदेहसंतर्जनं' इति पा०। ४ योगीन्द्रनाथसेनस्तु 'यः शक्तो विनये' इति पठति; 'य उन्मादी विनये शक्तः विनीतः विधेयत्वं गच्छति' इति च व्याख्यानयति। ५ 'भेषजविधानं सप्रतिज्ञमाह' इति पा०।

संवर्धयत्येव हि तान् विकारान्" (सि. अ. १) इति। इहाप्तमार्गे कुर्यादित्यादिना विशेषमाह। सस्नेहमिति ईषत्स्नेहम्। कफपित्तोद्भवे इति कफोद्भवे पित्तोद्भवे च; तत्र कफोद्भवे वमनं, पित्तोद्भवे विरेचनम्। तेषामिति वस्त्यादीनाम्। भूयस्त्वं पुनः पुनः प्रयोगमाचरेत्; यथादोषमित्यनेन दोषभूयस्त्वे सति पुनः पुनरपि प्रयोगं कुर्यात्। शोधनफलमाह—हृदित्यादि। हृदयादिशुद्ध्या च मनःप्रसादाद्यपि भवत्येव;तथा चोक्तं—"शरीरमपि सत्त्वमनुविधीयते" (शा. अ. ५) इत्यादि। संवेजनमिति उद्वेजनम्। अविनये इति परिजनमारणादावविनये। पट्टैरित्यनेन पट्टबन्धनं न व्रणकारी भवतीति दर्शयति। संयम्येति यथा निःसर्तुं न शक्नोति तथा स्थापनीयः। लोहाद्यपनयनं तमोगृहे आत्मवधनिषेधार्थं; तमोगृहं च शून्यगृहतयोन्मादनिदानोक्तमपि रोगमहिम्नाऽवस्थायां हितं भवति। तर्जनं वाचा, त्रासनं राजपुरुषादिभिः। विस्मृतेर्हेतोरिति उन्मादहेतुभयहर्षादिविस्मारकतया प्रभावान्मनः प्रकृष्टं स्वभावं नयति; यथा–विषमज्वरे ज्वरकालास्मरणं ज्वरहरणम्॥ २४–३२॥—

अतः सिद्धतमान्योगाञ्छृणून्मादविनाशनान्॥३३॥
हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ ३४॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरा नतं रजन्यौ द्वे सारिवे द्वे प्रियङ्गुका॥ ३५॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम्।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम्॥ ३६॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः॥ ३७॥
चतुर्गुणे जले सम्यग्घृतप्रस्थं विपाचयेत्।
अपस्मारे ज्वरे कासे शोषे मन्देऽनले क्षये॥ ३८॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके।
छर्द्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च॥ ३९॥
कण्डूपाण्ड्वामयोन्मादविषमेहगदेषु च।
भूतोपहतचित्तानां गद्गदानामचेतसाम्॥ ४०॥
शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम्।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम्॥ ४१॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च।

इति कल्याणकं घृतम्।

विशालेत्यादावष्टाविंशतिकत्वं कल्कद्रव्याणां पाठादेव सिद्धं, तत् किमुच्यतेऽष्टाविंशतिभिः कल्कैरिति? उच्यते—अत्र यद्यपि त्रिफलायाः प्रत्येकमेको भागो गृह्यते उत्सर्गतः,तथाऽपि त्रिफलायाः प्रत्येकभागग्रहणदार्ढ्यार्थमष्टाविंशतिभिरित्युक्तम्। सुश्रुते—"हरीतक्यामलकविभीतकानि त्रिफला (सु. सू. अ. ३८) इति परिभाषया त्रिफलाशब्देन हरीतक्यादय उच्यन्ते, तथाऽपि "जरणान्तेऽभयामेकां प्राग्भुक्ताद्वे बिभीतके। भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च॥ प्रयोजयेत् समामेकां त्रिफलाया रसायनम्" (चि. अ. १) इति वचनाद्धरीतक्यादिषु त्रिफलासंज्ञा दर्शिता; तेन त्रिफलाशब्देन द्रव्यत्रयमुच्यते; यथा दशमूलशब्देन दश भेषजानि, पञ्चमूलशब्देन पञ्च, यथा वा "नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम्" इति पदेन षड्द्रव्याण्युच्यन्ते। मानं चोपदिश्यमानं प्रत्येकद्रव्यापेक्षयेह भवति; यथा गुल्मचिकित्सिते—"नीलिनीं त्रिफलां" इत्यादि यावत् "व्याघ्रीं पलिकानि जलाढके" (चि. अ. ५)इति; तथाऽगस्त्यहरीतक्यां दशमूल्यादीनां द्विपलं प्रत्येकमेव भवति, यतो द्रव्यप्राधान्येनोपदिश्यमानं भागमानं प्रयोगेषु प्रतिद्रव्येष्वेव भवति न समुदाये। यदा तु मानप्राधान्येन निर्देशस्तदा समुचितस्यैव द्रव्यस्य मानग्रहणं; यथा—"लशुनस्यापिनिष्टस्य तुलार्धं निस्तुषीकृतम्। तदर्धं दशमूलस्य द्व्याढके पाचयेदपाम्" इत्यत्र षष्ठ्यन्तत्वाद्दशमूलस्याप्राधान्यं, यथा—'राज्ञः पुरुषः' इत्यत्राप्राधान्यं; तेनेह लशुनस्य विशेष्यतया प्रधानं मानं तद्विशेषणभूतं च दशमूलमप्रधानम्, अप्रधानत्वाच्च न प्रत्येकं नियतभागाः; तेन लशुनार्धमानत्वमेव दशमूलस्य भवति। यथा वा "द्विपञ्चमूलतुलार्धरसेन" इत्यत्रापि द्विपञ्चमूलस्य समुदितस्यैव तुलार्धविशेषणीभूतस्य क्वाथार्थं तुलार्धभागो गृह्यते, एवं "त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च" (चि. अ. १६) इत्यत्रापि समुदितादेव त्रयो भागा नतु प्रत्येकं,तथा हि नवभागाः स्युः। तथा "त्र्यूषणत्रिफलाकल्के बिल्वमात्रे" (चि. अ. १५) इत्यत्र तु कल्कविशेषणीभूतत्वेन त्र्यूषणत्रिफलाकल्कस्यैव बिल्वमानत्वं, न प्रत्येकं शुण्ठ्यादीनां हरीतक्यादीनां च कल्कीकृतानां बिल्वमानत्वम्। एवमन्यत्रापि समुदायभागप्रमाणे आचार्याभिप्रायविशेष उन्नेयः। द्रव्यप्रधाननिर्देशे तु प्रत्येकद्रव्याणि गणो वा पठ्यतां तथाऽपि प्रत्येकमेव भागो भवति, अवयवप्रधानत्वान्निर्देशस्य। यदा समुदायप्रधाननिर्देशो विशेषाल्लिख्यते, तदा प्रत्येकनिर्दिष्टलिङ्गानामपि समुदायस्य भागो भवति; "पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्" (चि. अ. १, पा. १) इत्यत्र चतुर्भ्योऽप्येकमेव पलं गृह्यते न प्रत्येकम्। तथा "तैलसर्पिषोः। पलद्वादशके मृष्टा" (चि. अ. १, पा. १) इत्यत्र तैलसर्पिषोर्मिलितयोरेव द्वादशपलं न प्रत्येकमिति प्रत्येकं द्रव्यप्रमाणानि तथा मानपूर्वनिर्देशं व्युत्पादयता संक्षेपेण दर्शितमेव। एवं व्यवस्थितेऽपि महानीलोक्तपृथक्शब्देन सिद्धस्यापि त्रिफलापृथग्भागं दर्शयति। यथा "पिप्पलीं नागरं पाठां श्वदंष्ट्रां च

---

१ 'पारयति' इति पा०। २ 'कान्ता' इति पा०। ३ 'चतुर्गुणं जलं दत्त्वा' इति पा०।

१ 'त्रिफला हरीतक्यामलकविभीतकानि। एषां च प्रत्येकमक्षभागता, द्रव्यप्रधानत्वान्निर्देशस्य। यत्र हि द्रव्यप्रधानो निर्देशस्तत्र प्रत्येकमेव भागपरिग्रहः। यथा—"त्रिफला दशमूलानि पलिकानि" इति। यत्र द्रव्यस्य षष्ठ्यन्तनिर्देशान्मानं प्रधानं, तत्र समुदितस्य भागः। यथा—"त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च" इति वृन्दमाधवव्याख्यायां श्रीकण्ठदत्तः। २ 'सिद्धमपि' इति पा०।

पृथक्पृथक्। भागान् त्रिपलिकान् कृत्वा" इत्यत्र पृथक्पृथगिति त्रिपलं करोति; तथा परिभाषासिद्धस्यापि स्नेहपादिककल्कभागस्याभिधानं तत्र तत्र तैले घृते च करोति । त्रिफलाशब्देन यद्यपि द्राक्षाकाश्मर्यपरूषकाणि चोच्यन्ते; यदुक्तमन्यत्र—"पथ्यामलकधात्रीभिस्त्रिफला महती स्मृता । चक्षुष्या सर्वदोषघ्नी स्रंसनी बृंहणी च सा ॥ ह्रस्वा काश्मर्यमृद्वीकापरूषकफलैर्भवेत्" इति, तथाऽपीह हरीतक्यादित्रिफलाया एव प्रधानतयोत्सर्गतो ग्रहणं भवति । अन्ये तु तालीशपत्रमित्यत्र तालीशं च पत्रं चेति द्रव्यद्वयग्रहणशङ्का स्यात्, तेनाष्टाविंशतिपदेन सा न भवत्वेतदर्थमष्टाविंशतिभिरिति कृतं, त्रिफलायाः प्रत्येकं ग्रहणं न्यायसिद्धमेवेति वदन्ति । अन्ये त्वष्टाविंशत्यौषधमिष्यत इत्यादावष्टाविंशत्यौषधसंज्ञया व्यवहारोऽस्य भवतीत्येतदर्थमष्टाविंशतिभिरिति कृतम् । चतुर्गुणवचनमिह परिभाषया शुद्धजलाच्चतुर्गुणदानार्थम् ॥ ३३–४१ ॥—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ॥४२॥
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरे चतुर्गुणे ।
वीरार्द्धमाषकाकोलीस्वयंगुप्तर्षभर्धिभिः ॥ ४३ ॥
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ।
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ ४४ ॥

इति महाकल्याणकं घृतम् ।

स्थिरादीनीत्युक्ते विदारीगन्धादिपञ्चमूलमपि स्यादत आह—एकविंशतिमिति । तेन कल्याणोक्ता एकविंशतिर्गृह्यते । गृष्टिरेकवारप्रसूता गौः । अत्र क्षीरेणैव चातुर्गुण्ये प्राप्तेऽयं कषायः "एकेनापि चातुर्गुण्यम्" इत्यादिपरिभाषाया अविषयत्वेन चातुर्गुण्यपरिभाषया क्षीरमानसाहचर्याद्वा चतुर्गुणो ज्ञेयः । केचित्त्वेकविंशतिपदेनैकविंशतिवारान् सर्पिस्तयैव विधया पक्तव्यमिति वदन्ति । तन्न, यतो जतूकर्णे "काथे कृमिहरान्तानां चतुःपष्टिपले पयसि च पचेत् सर्पिः" इत्यनेन उत्सर्गत एक एवास्य पाक उक्तः । विडङ्गान्तशब्देन च कल्याणोक्तैकविंशतिस्थिरादिद्रव्यग्रहणमेव भवति । आर्द्रमाषः अशुष्कमाषः; 'द्विमाष' इति वा पाठः, तत्र माषराजमाषयोर्ग्रहणम् ॥ ४२–४४ ॥

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम् ।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम् ॥४५॥
वयःस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम् ।
महापुरुषदन्तां च कायस्थां नाकुलीद्वयम् ॥ ४६ ॥
कटम्भरां वृश्चिकालीं स्थिरां चाहृत्य तैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥ ४७ ॥
महापैशाचिकं नाम घृतमेतद्यथाऽमृतम् ।
बुद्धिस्मृतिकरं चैव बालानां चाङ्गवर्धनम् ॥ ४८ ॥

इति महापैशाचिकं घृतम् ।

जटिलामित्यादि । जटिला मांसी । पूतना हरीतकी । केशी भूतकेशी । चारटी कुम्भी, 'ब्रह्मयष्टिका' इत्यन्ये । मर्कटी शूकशिम्बी । जया जयन्ती । वीरा क्षीरकाकोली, 'शालपर्णी' इत्यपरे । चोरकः चण्डालकः । वयःस्था ब्राह्मी गुडूची वा । शूकरी 'वाराहीकन्द' इति ख्याता । छत्रा मधुरिका, अतिच्छत्रा शतपुष्पा; किंवा छत्रातिच्छत्रे द्रोणपुष्पीद्वयम् । पलङ्कषा गुग्गुलुः । महापुरुषदन्ता शतावरी । ( अन्ये तु विष्णुक्रान्तां वदन्ति, जटिलां शतावरीमाहुः) । कायस्था सूक्ष्मैला । नाकुलीद्वयं रास्नाद्वयम् । कटम्भरा कटभी । वृश्चिकाली 'वृश्चिकपत्री' इति ख्याता । अल्पपैशाचिकस्याभावान्महापैशाचिकमित्यत्र महच्छब्दः पूजावचनः ॥ ४५–४८ ॥

लशुनानां शतं त्रिंशदभयाश्च्यूषणात् पलम् ।
गवां चर्ममसीप्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥ ४९ ॥
पुराणसर्पिषः प्रस्थ एभिः सिद्धं प्रयोजयेत् ।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम् ॥ ५० ॥
तद्दोषागन्तुसंभूतानुन्मादान् विषमज्वरान् ।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः ॥ ५१ ॥

इति लशुनाद्यं घृतम् ।

लशुनस्याविनष्टस्य तुलार्धं निस्तुषीकृतम् ।
तदर्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत् ॥ ५२ ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा ।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः ॥ ५३ ॥
दाडिमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्धिकैः ।
साधयेत्त्रिफलादारुलवणव्योषदीप्यकैः ॥ ५४ ॥
यवानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्धिकैः ।
सिद्धमेतत् पिबेच्छूलगुल्मार्शोजठरापहम् ॥ ५५ ॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरकृमीन् ।
वातश्लेष्मामयान् सर्वानुन्मादांश्चापकर्षति ॥ ५६ ॥

इत्यपरं लशुनाद्यं घृतम् ।

लशुनानां शतमित्यत्र लशुनकन्दानां शतपलमानम् । तदर्धं दशमूलस्येति पञ्चविंशतिपलानि । त्र्यूषणात् पलमित्यत्र समुदितात् पलम् । मधुमाणिकामिति द्रवत्वाद् द्वैगुण्येन माणिकाया द्विकुडवरूपायाः षोडशपलं भवति । लशुनरसादीनां प्रत्येकं प्रस्थमानत्वं ज्ञेयम् ॥ ४९–५६ ॥

हिङ्गुना हिङ्गुपर्ण्या च सकायस्थवयःस्थया ।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिङ्गुचोरकैः ॥ ५७ ॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद्घृतम् ।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद्गृहेऽपि वा ॥५८॥
विशेषतः पुराणं च घृतं तं पाययेद्भिषक् ।
त्रिदोषघ्नं पवित्रत्वाद्विशेषाद्ग्रहनाशनम् ॥ ५९ ॥

१ अयं पाठः क्वचित्पुस्तके नोपलभ्यते ।

गुणकर्माधिकं पानादाखादात् कटुतिक्तकम् ।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ॥ ६० ॥
लाक्षारसनिभं शीतं तद्धि सर्वग्रहापहम् ।
मेध्यं विरेचनेष्वग्र्यं प्रपुराणमतः परम् ॥ ६१ ॥
नासाध्यं नाम तस्यास्ति यत् स्याद्वर्षशतस्थितम् ।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्वग्रहापहम् ॥ ६२ ॥
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः ।

हिङ्गुना हिङ्गुपर्ण्या चेत्येकं घृतम् । सकायस्थवयःस्थयेति द्वितीयम् । वयःस्थेत्यादिना तृतीयम् । हिङ्गुपर्णी वंशपत्रिका, अन्ये तु 'हिङ्गुपर्णी' इति ख्यातामाहुः । वयःस्था ब्राह्मी । कायस्था सूक्ष्मैला । उग्रगन्धमित्यादिकं केचिदनार्षं वदन्ति । केवलम् एतद्घृतमसाधितम् । एतैरिति अनन्तरोक्तघृतसाधनद्रव्यैः ॥ ५७–६२ ॥—

एतानौषधयोगान् वा विधेयत्वमगच्छति ॥ ६३ ॥
अञ्जनोत्सादनालेपनावनादिषु योजयेत् ।
शिरीषो मधुकं हिङ्गु लशुनं तगरं वचा ॥ ६४ ॥
कुष्ठं च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ।
तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः ॥ ६५ ॥
शिरीषबीजं चोन्मादग्रहापस्मारनाशनम् ।
पिष्ट्वा तुल्यमपामार्गं हिङ्ग्वालं हिङ्गुपत्रिकाम्[१] ॥ ६६ ॥
वर्तिः स्यान्मरिचार्धांशा पित्ताभ्यां गोशृगालयोः ।
तयाऽञ्जयेदपस्मारभूतोन्मादज्वरार्दितान् ॥ ६७ ॥
भूतार्तानमरार्तांश्च नरांश्चैव दृगामये ।
मरिचं चातपे मासं सपित्तं स्थितमञ्जनम् ॥ ६८ ॥
वैकृतं पश्यतः कार्यं दोषभूतहतस्मृतेः ।
सिद्धार्थको वचा हिङ्गु करञ्जो देवदारु च ॥ ६९ ॥
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ।
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ॥ ७० ॥
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ।
नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा ॥ ७१ ॥
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ॥ ७२ ॥
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ।
प्रसेके पीनसे गन्धैर्धूमवर्तिं कृतां पिबेत् ॥ ७३ ॥
वैरेचनिकधूमोक्तैः श्वेताद्यैर्वा सहिङ्गुभिः ।
शल्लकोलूकमार्जारजम्बूकवृकवस्तजैः ॥ ७४ ॥
मूत्रपित्तशकृल्लोमनखैश्चर्मभिरेव च ।
सेकाञ्जनं प्रधमनं नस्यं धूमं च कारयेत् ॥ ७५ ॥
वातश्लेष्मात्मके प्रायः

१ '°मपामार्गहिङ्गुनी' इति पा० ।

एतानिति वक्ष्यमाणान् शिरीषादीन् । नावनं चाञ्जनं चेति नावनाञ्जनम् । हिङ्ग्वालमिति अत्रालं हरितालम् । अमरार्ताश्चेति देवगृहीतान् । दोषेण भूतेन वा हता स्मृतिर्यस्य स दोषभूतहतस्मृतिः । अगद इति विषहरः । कृत्या अभिचारः । राजद्वारे च शस्यत इति वशीकरणत्वात् । गन्धैरिति अगुर्वाद्यैस्तगरवर्जितैः, उक्तं हि सूत्रस्थाने धूमविधौ—"गन्धाश्चागुरुपत्राद्याः" (सू. अ. ५) इति । श्वेताद्यैरिति "श्वेता ज्योतिष्मती चैव हरितालं मनःशिला" ( सू. अ. ५ ) इति सूत्रस्थान एवोक्तैः । शल्लकादीनां यथासंभवं मूत्रादीनि ग्राह्याणि ॥ ६३–७५ ॥—

पैत्तिके तु प्रशस्यते ।
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ॥ ७६ ॥
शीतानि चान्नपानानि मधुराणि मृदूनि[१] च ।
शङ्खकेशान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् सिराम् ।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥ ७७ ॥

तिक्तकं महातिक्तकम् । जीवनीयं सर्पिर्वातरक्ते वक्ष्यते । मिश्रकः स्नेहः गुल्मचिकित्सितोक्तः । शङ्खेन केशान्तेन च समं सन्धिः शङ्खकेशान्तसन्धिः; तत्र च प्रत्यासन्नमर्मपरित्यागेन सुश्रुतोक्तं सिराविभागमवलोक्य सिराव्यधः कर्तव्यः ॥ ७६ ॥ ७७ ॥

घृतमांसवितृप्तं वा निवाते स्थापयेत् सुखम् ।
त्यक्त्वा मतिस्मृतिभ्रंशं संज्ञां लब्ध्वा प्रमुच्यते[२] ७८

मांसं च यद्यपि "निवृत्तामिषमद्यो यः" इत्यादिनोन्मादे निषिद्धं, तथाऽप्येवंविधप्रयोगेण मांसस्य यौगिकत्वमाह । यथा—भयहर्षयोरुन्मादकारणत्वेऽपि तौ पुनरुन्मादे विधेयत्वेनोच्येते, "सान्त्वनं हर्षणं भयम्" इत्यादिना । अन्ये तु निवृत्तमांसत्वमागन्तून्मादप्रशमनमिति व्याख्यानयन्ति; तेनेह निजे मांसविधाने भिन्नविषयतया न विरोध इति वर्णयन्ति[३] । किंतु निदानोक्तस्यापि मांसस्य यत् स्वजन्यव्याधिप्रशमकत्वं तदप्यतिदृष्टत्वादविरुद्धमेव, तेन पूर्वमेव[४] समाधानमत्र समीचीनमिति पश्यामः ॥ ७८ ॥

आश्वासयेत् सुहृद्वा तं वाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥ ७९ ॥
बद्धं सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे ।
कपिकच्छ्वाऽथवा तप्तैर्लोहतैलजलैः स्पृशेत् ॥ ८० ॥
कशाभिस्ताडयित्वा वा सुबद्धं विजने गृहे ।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य तथा शमम् ८१
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥ ८२ ॥

१ 'लघूनि' इति पा० । २ 'प्रबुध्यते' इति पा० । ३ 'अन्ये तु मांससेवयोन्मादो भवतीति निवृत्तामिषमद्यो य इत्यनेनोच्यते । सोपदंशं तु मांसमुन्मादप्रशमनमिति भिन्नविषयतया न विरोध इति वर्णयन्ति' इति पा० । ४ 'पूर्वं एवात्र समाधिः साधुः' इति पा० ।

अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ८३ ॥
देहदुःखभयेभ्यो हि परं प्राणभयं स्मृतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ८४ ॥

ब्रूयादिष्टविनाशमित्यादिनोद्भ्रान्तचित्तस्य पुनश्चिन्ताकारणैः स्वदेशानयनमेवाह, दृश्यते च घट्टनचलितस्य पुनर्घट्टनेनैव सम्यक्स्थापनं,तद्वदिहापि ज्ञेयम् । सिंहैरिति व्याघ्रैः । दान्तैरिति शिक्षितैः । बहिरिति ग्रामाद्बहिः । देहदुःखभयेभ्य इति कपिकच्छुलेपनताडनादिभ्यो देहदुःखकारणेभ्यः ॥ ७९–८४ ॥

इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः शमं नयेत् ॥८५॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ८६ ॥

इष्टद्रव्येत्यादिना पूर्वमसूत्रितोऽप्ययमुन्मादः प्रकरणाच्चिकित्स्यते; यथा तृष्णाध्याये पञ्च तृष्णाः प्रतिपाद्य गुर्वन्नजाया अधिकायाश्चिकित्सोच्यत इत्याहुः; किंतु चिन्तादिदुष्टहृदय इत्यादिनोक्तसामान्योन्मादेन गृहीत एवायमर्थोऽत्र चिकित्सिते इति पश्यामः । पञ्चोन्मादव्यवस्थायामस्य वातिके एवावरोध उचितः, इष्टद्रव्यविनाशस्य वातप्रकोपकारित्वात् । एवं कामादिभवेष्वपि वाच्यम् ॥ ८५–८६ ॥

बुद्ध्वा देशं वयः सात्म्यं दोषं कालं बलाबले ।
चिकित्सितमिदं कुर्यादुन्मादे भूतदोषजे ॥ ८७ ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ॥ ८८ ॥
सर्पिष्पानादि तस्येह मृदु भैषज्यमाचरेत् ।
पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥ ८९ ॥
शान्तिकर्मेष्टिहोमांश्च जपस्वस्त्ययनानि च ।
वेदोक्तान् नियमांश्चापि प्रायश्चित्तानि चाचरेत् ९०
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥ ९१ ॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजां च कुर्वाण उन्मादेभ्यः प्रमुच्यते ॥ ९२ ॥
बलिभिर्मङ्गलैर्होमैरोषध्यगदधारणैः ।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ॥ ९३ ॥
देवगोब्राह्मणानां च गुरूणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥ ९४ ॥
यच्चोपदेक्ष्यते किंचिदपस्मारचिकित्सिते ।
उन्मादे तच्च कर्तव्यं सामान्याद्धेतुदूष्ययोः ॥ ९५ ॥

क्रूरकर्मेति ताडनादिकम् । शान्तिकर्मेत्यादिना दैवव्यपाश्रयचिकित्सामाह । सामान्याद्धेतुदूष्ययोरिति उन्मादेनापस्मारेण च समो हेतुर्मनोभिघातादिः, दूष्यं च हृदयं समानमित्यर्थः ॥ ८७–९५ ॥

निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्त्ववान् न स युज्यते ॥९६॥

निवृत्तामिष इत्यादिर्व्याख्यात एव पूर्वम् ॥ ९६ ॥

प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ९७ ॥

क्रियमाणोन्मादचिकित्सायाः कशाताडनादिरूपत्वेनातिकष्टायाः स्फोटनार्थं विगतोन्मादलक्षणमाह—प्रसाद इत्यादि ॥ ९७ ॥

तत्र श्लोकः—

उन्मादानां समुत्थानं लक्षणं सचिकित्सितम् ।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः ॥९८॥

उन्मादानामित्यादिः संग्रहः ॥ ९८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलपूरिते चिकित्सास्थाने उन्मादचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने उन्मादचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अथातोऽपस्मारचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

आद्युत्पत्तावुन्मादेन सहोत्पन्नत्वादुन्मादमनु अपस्मारचिकित्सितमुच्यते ॥ १ ॥ २ ॥

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशं बीभत्सचेष्टं धीसत्त्वसंप्लवात् ॥ ३ ॥

स्मृतेरपगम इत्यादिनाऽपस्मारसंज्ञां व्युत्पादयन्नपस्मारस्वरूपमाह । स्मृतेरपगममेव विशिनष्टि–तमःप्रवेशमिति । बीभत्सचेष्टमिति तमःप्रवेशेन ज्ञानाभावत्वाद्बीभत्सचेष्टा फेनवमनाङ्गविक्षेपणादिका यस्मिन्नपगते तं बीभत्सचेष्टम् । बीभत्सचेष्टे स्मृत्यपगमादौ च हेतुमाह—धीसत्त्वसंप्लवादिति । संप्लवः विभ्रमः, स्वरूपान्यथात्वमिति यावत् ॥ ३ ॥

विभ्रान्तबहुदोषाणामहिताशुचिभोजनात्[२] ।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि ॥ ४ ॥

१ 'बीभत्सविचेष्टनवद्वदनाङ्गविक्षेपणादनुमितं बीभत्सचेष्टम्' इति पा० । २ '०महिताशुचिभोजिनाम्' इति पा० ।

चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा ।
मनस्यभिहते नृणामपस्मारः प्रवर्तते ॥ ५ ॥

यादृशानामपस्मारो भवति तानाह—विभ्रान्तेत्यादि । विभ्रान्ता उन्मार्गगामिनो बहवश्च दोषा येषां तेषां विभ्रान्तबहुदोषाणाम् । विहते सत्त्वे इति सत्त्वाख्यगुणे विहते; न तु सत्त्वशब्देन मन उच्यते, तस्य 'मनस्यभिहते' इत्यनेन ग्रहणं करिष्यति ॥ ४ ॥ ५ ॥

धमनीभिः श्रिता दोषा हृदयं पीडयन्ति हि ।
संपीड्यमानो व्यथते मूढो भ्रान्तेन चेतसा ॥ ६ ॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि ।
जिह्वाक्षिभ्रूः स्रवल्लालो हस्तौ पादौ च विक्षिपन्॥७॥
दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते ।

धमनीभिरिति यद्यपि सामान्येनोक्तं, तथाऽपि हृदयपीडायोग्यतया हृदयाश्रिता एव धमन्यो विशेषेण गृह्यन्ते । अत्र च वातादीनां प्रकोपे पृथक् पृथक् हेतुर्नोक्तः, तस्योन्मादसाधारणत्वेन लब्धत्वात् । उक्तं हि—"यच्चोपदेक्ष्यते किंचिदपस्मारचिकित्सिते । उन्मादे तच्च कर्तव्यं सामान्याद्धेतुदूष्ययोः" ( चि. अ. ९ ) इति । यस्त्वपस्मारस्य विशिष्टो हेतुरुन्मादात् स "अहिताशुभोजनात्" इत्यादिनोक्त एव ॥ ६ ॥ ७ ॥—

पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्विधः ॥ ८ ॥
कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥ ९ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ।
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ १० ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतो हृष्टाङ्गजो गुरुः ।
पश्यञ्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात्११
सर्वैरेतैः समस्तैस्तु लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः॥१२॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम् ॥ १३ ॥

पृथगित्यादिना चतुर्विधापस्मारलक्षणमाह । पीतासृग्रूपदर्शन इति पीतलोहितरूपदर्शी । सतृष्णोष्णेत्यादि सतृष्णोष्णश्वासावनलव्याप्तलोकदर्शी चेति समासः । शुक्लेत्यादिना श्लैष्मिक उच्यते । हृष्टाङ्गजः हृष्टरोमा । चिरादिति वचनेन वातपित्तयोरचिरेण मोक्षं सूचयति । क्षीणस्यानवश्च यः स एकदोषजोऽप्यसाध्य इति भावः । पक्षाद्वेत्यादौ व्युत्क्रम्य वेगकालनिर्देशेन उक्तकालादूर्ध्वमर्वागपि चापस्मारवेगो भवतीति सूचयति । किंचिदथान्तरमिति किंचित्कालान्तरं वेगं कुर्वन्ति, स्तोककालान्तरमिति यावत् ॥ ८–१३ ॥

१ 'सतृष्णोष्माऽनलव्याप्तलोकदर्शी' इति पा० ।

तैरावृतानां हृत्स्रोतोमनसां संप्रबोधनम् ।
तीक्ष्णैरादौ भिषक् कुर्यात् कर्मभिर्वमनादिभिः॥१४॥
वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ १५ ॥

तैरित्यादिना चिकित्सामाह । प्रबोधनमिति दोषविरहितत्वेन सम्यक्स्वव्यापारकरम् । प्राय इत्यादौ प्रायःशब्दो विशेषार्थः; तेनान्याऽपि भवति सूचिता ॥ १४ ॥ १५ ॥

सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनाञ्छृणु ॥ १६ ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम् ॥ १७ ॥

इति पञ्चगव्यं घृतम् ।

आश्वासितस्येति आप्यायितबलस्य । गोशकृदित्यादौ दध्यादिभिरपि गोशब्दो योज्यः; तेन पञ्चगव्यमिदमल्पं भवति । साम्यं चात्र गोशकृद्रसादीनां परिभाषासिद्धमपि स्पष्टार्थमुच्यते ॥ १४–१७ ॥

द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ १८ ॥
शम्पाकं फल्गुमूलं च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥ १९ ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥ २० ॥
द्वे सारिवे रोहिषं च भूतीकं मदयन्तिकाम् ।
क्षिपेत्पिष्ट्वाऽक्षमात्राणि तेन प्रस्थं घृतात् पचेत् ॥२१॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत्तदमृतोपमम् ॥ २२ ॥
अपस्मारे तथोन्मादे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥ २३ ॥
शस्यते घृतमेतत्तु प्रयोक्तव्यं दिने दिने ।
अलक्ष्मीग्रहरोगघ्नं चातुर्थकविनाशनम् ॥ २४ ॥

इति महापञ्चगव्यं घृतम् ।

द्वे पञ्चमूल्यावित्यादौ निर्दिष्टं पञ्चमूलद्वयं दशमूलाख्यं ग्राह्यम् । नीलिनी नीलिका । शम्पाक आरग्वधः । फल्गुः काष्ठोदुम्बरिका । द्विपलत्वं यथा प्रत्येकं दशमूल्यादीनां तत्प्रतिपादितमेवोन्मादे । निचुलो हिज्जलः । श्रेयसी हस्तिपिप्पली । द्वे सारिवे इति श्यामलताऽनन्तमूली च ॥ १८–२४ ॥

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं घृतमुन्मादालक्ष्म्यपस्मारपाप्मनुत् ॥ २५ ॥
घृतं सैन्धवहिङ्गुभ्यां वार्षे वास्ते चतुर्गुणे ।
मूत्रे सिद्धमपस्मारहृद्ग्रहामयनाशनम् ॥ २६ ॥

१ 'तैः प्रस्थं सर्पिषः पचेत्' इति पा० । २ 'ज्वरे कासे' इति पा० ।

वचाशम्पाककैटर्यवयःस्थाहिङ्गुचोरकैः।
सिद्धं पलङ्कषायुक्तैर्वातश्लेष्मात्मके घृतम्॥ २७॥

ब्राह्मीत्यादौ पुराणमिति घृतविशेषणं, तेन पुराणं घृतमत्र साध्यं भवति। वार्ये वास्ते इति वृषच्छागभवे मूत्रे। अत्र च यद्यपि "स्त्रीणां तीक्ष्णं गवां मूत्रं न तु पुंसां तथाविधम्। पित्तांशिकास्त्रियो यस्मात् सौम्यास्तु पुरुषा स्मृता" इत्यनेन स्त्रिया मूत्रं प्रशस्तमुक्तं, तथाऽपीह विशेषपरिग्रहात् पुंलिङ्गयोरेव मूत्रं यौगिकमिति। कैटर्यः पार्वतो निम्बः। वयःस्था गुडूची। वातश्लेष्मातके इति द्वन्द्वापस्मारगनिर्देशाद्वातात्मके श्लेष्मात्मके चेति ज्ञेयम्; अन्ये तु गुल्मवदनुक्तमपि प्रकृतिसमसमवायारब्धद्वन्द्वजं 'वातश्लेष्मात्मके' इत्यनेन सूचितमपस्मारं वदन्ति॥ २५-२७॥

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम्॥ २८॥
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे।
कार्षिकैर्जीवनीयैश्च घृतप्रस्थं विपाचयेत्॥ २९॥
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति।
तद्वत् काशविदारीक्षुकुशकाथशृतं घृतम्॥ ३०॥
मधुकद्विपले कल्के द्रोणे चामलकीरसात्।
तद्वत् सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम्॥ ३१॥

तैलप्रस्थमित्यादौ पलोन्मितैः कल्कैरिति भवति, द्रवस्थाने क्षीरस्यैव विद्यमानत्वात्। कंसे इति आढके। काश्मर्ये इति गम्भारीभवे। रसे इति काथे। तद्वदित्यनेन पूर्वयोगफलश्रुतिं दर्शयति। तद्वत्सिद्धो घृतप्रस्थः इत्यनेन पूर्वयोगोक्तं 'क्षिप्रं' इत्याकर्षति, तेन क्षिप्रं पित्तापस्मारभेषजं भवतीति फलति॥ २८-३१॥

अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च॥ ३२॥
कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थं प्रशस्यते॥ ३३॥

अभ्यङ्ग इत्यादिनाऽकल्कमेव तैलं पक्तव्यम्। गोशकृदित्यादौ गोशकृतोत्सादनं, गोमूत्रेण च योग्यतया स्नानम्। कटभीत्यादौ कटभ्यादीनां चतुर्णामपि त्वचं गृहीत्वा क्वाथः स्नेहत्रिगुणः कर्तव्यः, चतुर्थस्तु मूत्रभागेनैव स्नेहसमेन पूर्यते॥ ३२॥३३॥

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः॥ ३४॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे॥ ३५॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम्।
पतैश्चैवौषधैः कार्यं धूपनं समलेपनम्॥ ३६॥

पलङ्कषेत्यादौ पूतनापूर्वा या केशी पूतनाकेशी गोलोमीत्यर्थः। तथा हि जतूकर्णे पूतनाकेशीत्यत्र गोलोमी पठ्यते। उक्तं हि—"वृश्चिकालीपथ्यागोलोमीनाकुलीलशुनकुष्ठैः, सर्षपजटिलाचोरकहिङ्गुवचामधुकचित्रकार्कैः, मांसादपक्षिपुरीषैर्वस्तमूत्रे शृतैरेतदभ्यञ्जे" इति। अतिरसा जलजं यष्टीमधु॥ ३४-३६॥

पिप्पलीं लवणं चित्रां हिङ्गु हिङ्गुशिवाटिकाम्।
काकोलीं सर्षपान् काकनासां कैटर्यचन्दने॥ ३७॥
शुनःस्कन्धास्थिनखरान् पर्शुकां चेति पेषयेत्।
वस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात् सधूपनः॥ ३८॥

चित्रा दन्ती। हिङ्गुशिवाटिका वंशपत्रिका। स्कन्धास्थीति स्कन्धस्यास्थि। पुष्यर्क्षपेषणेन नक्षत्रयोगकृतं संस्कारमुपदिशति॥ ३७॥ ३८॥

अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम्॥ ३९॥
जलौकःशकृता तद्वद्गन्धैर्वा वस्तरोमभिः।
खरास्थिभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः॥ ४०॥

अपेतराक्षसी खरसः। जलौकःशकृतेत्यादौ तद्वदिति उत्सादनम्॥ ३९॥ ४०॥

कपिलानां गवां मूत्रं नावनं परमं हितम्।
श्वशृगालविडालानां सिंहादीनां च शस्यते॥ ४१॥
भार्गी वचा नागदन्ती श्वेता श्वेतां विषाणिका।
ज्योतिष्मती नागदन्ती पादोक्ता मूत्रपेषिताः॥ ४२॥
योगास्त्रयोऽतः षड् बिन्दून् पञ्च वा नावयेद्भिषक्।
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः॥ ४३॥
श्यामापामार्गकारञ्जफलैर्मूत्रेऽथ वस्तजे।
साधितं नावनं तैलमपस्मारविनाशनम्॥ ४४॥
पिप्पली वृश्चिकाली च कुष्ठं च लवणानि च।
भार्गी च चूर्णितं नस्तः कार्यं प्रधमनं परम्॥ ४५॥

कपिलानां गवां मूत्रे विशेषकरी शक्तिर्भवतीति आप्तवचनादुन्नीयते। सिंहादीनां च शस्यते इत्यत्र मूत्रमिति योज्यम्। भार्गीत्यादौ नागदन्ती काष्ठपाटला। श्वेता श्वेतापराजिता श्वेतस्यन्दा। श्वेतां विषाणिका शतावरी। त्रिफलेत्यादौ पीतद्रु देवदारु। लवणानि सैन्धवादीनि पञ्च, किंवा लवणवर्गोक्तानि सर्वाण्येव यथालाभं ग्राह्याणि॥ ४१-४५॥

कायस्थां शारदान्मुद्गान्मुस्तोशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्तीः प्रकल्पयेत्॥४६॥

१ 'शिग्रु' इति पा०। २ 'पित्तं' इति पा०। ३ 'शतविषाणिका' इति पा०। ४ 'पित्ते' इति पा०। ५ 'पित्तमिति' इति पा०।

अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ४७ ॥
मुस्तं वयःस्थां त्रिफलां कायस्थां हिङ्गु शाद्वलम्।
व्योषं माषान् यवान्मूत्रैर्वास्तमैषार्षभैस्त्रिभिः ॥४८॥
पिष्ट्वा कृत्वा च तां वर्तिमपस्मारे प्रयोजयेत्।
किलासे च तथोन्मादे ज्वरेषु विषमेषु च ॥ ४९ ॥

कायस्थामित्यादौ शारदान्मुद्गानिति हरितमुद्गान्, ते हि प्रायः शरदि भवन्ति। वर्तिः नेत्राञ्जनवर्तिः। विषपीते इति पीतविषे। जलमज्जनेन मृत इव इति जलमृतः, तस्य लक्षणं—"विष्टब्धपायुमूर्धाक्षमाध्मातोदरमेहनम्। विद्याज्जलमृतं जन्तुं शीतपादकराननम्" इति। बास्तमैषार्षभैरिति छागमेषवृषभसंभवैः ॥ ४६–४९ ॥

पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥ ५० ॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ ५१ ॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते।
स्रोतांसि चापि शुध्यन्ति ततः संज्ञां स विन्दति ५२

पुष्योद्धृतमिति पुष्यनक्षत्रे गृहीतम्। कीटः वृश्चिकादिः ॥ ५०–५२ ॥

यस्यानुबन्धस्त्वागन्तुर्दोषलिङ्गाधिकाकृतिः।
दृश्येत तस्य कार्यं स्यादागन्तून्मादभेषजम् ॥ ५३ ॥

संप्रत्यपस्मारे सूत्रेणानुबन्धलिङ्गचिकित्सामाह—यस्येत्यादि। दोषलिङ्गाधिकाकृतिरिति अपस्मारोक्तदोषलिङ्गेभ्योऽधिकाऽऽगन्तून्मादसदृशी आकृतिर्यस्य स तथा; तेनागन्तुलिङ्गं दोषजेषु भवति, नच दोषलिङ्गं विनाऽऽगन्तुलिङ्गता संभवति; ततश्चागन्त्वपस्मारः पृथङ् न भवति, किंतु दोषजस्यानुबन्धरूपः पश्चात्कालीनः स आगन्तुः; तेन "चत्वारोऽपस्माराः" (सू. अ.१९) इति यदुक्तं तस्यागन्तुरनुबन्धो भवत्येव कदाचिदिति। अनेनानुबन्धरूपतैव भूतापस्मारे दर्शिता; न तून्मादवत् स्वातन्त्र्येण कर्तव्यं भूतानाम्। अन्यत्राप्युक्तम्—"अपस्मारो महाव्याधिः स स्याद्दोषत एव तु" इति। अन्ये तु भीमदन्तादयः स्वतन्त्रागन्त्वपस्मारलक्षणचिकित्सानिर्देशार्थमत्र ग्रन्थं वर्णयन्ति; न संख्यानियमश्च दोषजापस्माराणामेवं भवति ॥ ५३ ॥

अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः।
भगवन्! प्राक् समुद्दिष्टः श्लोकस्थाने महागदः॥५४॥
अतत्त्वाभिनिवेशो यस्तद्धेत्वाकृतिभेषजम्।
तत्र नोक्तमतः श्रोतुमिच्छामि तदिहोच्यताम् ५५
शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्वसुः।
महागदं सौम्य! शृणु सहेत्वाकृतिभेषजम् ॥ ५६ ॥

मलिनाहारशीलस्य वेगान् प्राप्तान्निगृह्णतः।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ॥ ५७ ॥
हृदयं समुपाश्रित्य मनोबुद्धिवहाः सिराः।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः ॥५८॥
रजस्तमोभ्यां वृद्धाभ्यां बुद्धौ मनसि चावृते।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ॥ ५९ ॥
विषमां कुरुते बुद्धिं नित्यानित्ये हिताहिते।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ॥ ६० ॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः।
कृतसंसर्जनं मेध्यैरन्नपानैरुपाचरेत् ॥ ६१ ॥
ब्राह्मीस्वरसयुक्तं यत् पञ्चगव्यमुदाहृतम्।
तत् सेव्यं शङ्खपुष्पी च यच्च मेध्यं रसायनम् ॥६२॥
सुहृदश्चानुकूलास्तं स्वाप्ता धर्मार्थवादिनः।
संयोजयेयुर्विज्ञानधैर्यस्मृतिसमाधिभिः ॥ ६३ ॥

अस्मिन् प्रदेशे सैन्धवाः काश्मीराश्च 'भगवन्' इत्यादिनाऽतत्त्वाभिनिवेशस्य लक्षणचिकित्साग्रन्थं पठन्ति; स चानार्ष इति वृद्धाः ॥ ५४–६३ ॥

प्रयुञ्ज्यात्तैललशुनं पयसा वा शतावरीम्।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ ६४ ॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी कृतास्पदः।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥ ६५ ॥

तैललशुनादयः पञ्च योगाः। अनेन चिरकारिणीं चिकित्सां दर्शयति ॥ ६४ ॥ ६५ ॥

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा।
रक्षेदुन्मादिनं चैव सद्यः प्राणहरा हि ते ॥ ६६ ॥

जलाग्नीत्यादिना जलादिसान्निध्ये यदि वेगो भवत्यपस्मारस्य तदा मरणमेव भवतीति दर्शयति ॥ ६६ ॥

तत्र श्लोकौ—
हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषां च भेषजम्॥६७॥
महागदसमुत्थानं लिङ्गं चोवाच सौषधम्।
मुनिर्व्याससमासाभ्यामपस्मारचिकित्सिते ॥ ६८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थानेऽपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

संग्रहे कुर्वन्तीत्यादिना संग्रहं गृह्णाति ॥ ६७ ॥ ६८ ॥

इति श्रीचक्रपाणिदत्तकृतायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थानेऽपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

---

१ 'ऊर्णैः' इति पा०। २ 'स्मृतिं सज्ञां च' इति पा०।

१ 'सत्त्वे' इति पा०। २ 'मूढाल्पचेतसः' इति पा०। ३ 'विज्ञानं' इति पा०। ४ 'महागदः' इति पा०। ५ 'प्रजाहितार्थं भगवानपस्मारचिकित्सिते' इति पा०।

## एकादशोऽध्यायः ।

अथातः क्षतक्षीणचिकित्सितं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

अपस्माररोगेण विषमोच्चपतनादिभ्य उरःक्षतोऽपि भवति, ततः क्षतक्षीणो भवति, तत्संबन्धादपस्मारमनु क्षतक्षीणचिकित्सितमुच्यते । तत्र क्षतक्षीणरूपाद् वक्ष्यमाणस्त्रीसेवादिकारणकशुक्रौजःक्षयाच्च जातो व्याधिः प्रधानम् 'उरो विरुज्यते' इत्यादिना वक्ष्यमाणलक्षणकः कारणे कार्योपचारात् 'उरःक्षत' इत्युच्यते; यद्वा 'क्षीणक्षत' इति पाठस्तदाऽपि क्षीणशब्देन शुक्रौजःक्षययुक्तः पुरुष उच्यते; तथा क्षीणे च पुरुषे क्षतं भवतीति हेतोः 'क्षतक्षीण' इत्युच्यते । अन्ये तु क्षतश्च क्षयश्च इति क्षतक्षय इत्याहुः; तेन रोगद्वयमेतत् । तथा 'उरोरुक् शोणितच्छर्दिः' इत्यादिना क्षतस्य क्षीणस्य च लक्षणं करिष्यति; तस्मिन् पक्षे 'अव्यक्तं लक्षणं तस्य' इति, तथा 'साध्यो बलवतो नवः' इत्यादावेकवचननिर्देशोऽनुपपन्नः, तेनैकस्यैव क्षतक्षीणस्य हेतुकृतं लक्षणद्वैविध्यं; किंवा क्षतक्षयकारणयोः क्षतधातुक्षययोस्त्द्विधलक्षणकारणाभिधानं पूर्वरूपावस्थायां व्याधिप्रतिक्रियार्थं ज्ञेयम् ॥ १ ॥ २ ॥

उदारकीर्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ ३ ॥

ब्रह्मर्षिरित्यनेन देवर्षित्वराजर्षित्वे आत्रेयस्य निषेधति । चिकित्सार्थमिति प्रतिक्रियार्थम् । चिकित्सितं चिकित्साभिधायकग्रन्थम् ॥ ३ ॥

धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
पततो विषमोच्चेभ्यो बलिभिः सह युध्यतः ॥ ४ ॥
वृषं हयं वा धावन्तं दम्यं वाऽन्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ५
अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो हयैर्वा सह धावतः ॥ ६ ॥
सहसोत्पततो दूरं तूर्णं चातिप्रनृत्यतः ।
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य च ॥ ७ ॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ ८ ॥

चिकित्सा च निदानादिना ज्ञातस्यैव व्याधेर्भवति, तेन क्षतनिदानमेव तावदाह—धनुषेत्यादि । आयस्यत इति शरीरमायासयतः । बलिभिरिति स्वापेक्षया बलाधिकैः । निगृह्णत इति वारयतः । निर्घातः अस्त्रविशेषः, किंवा निर्घातः शिलादीनां प्रेरणविशेषोऽतिबलसंपादितः । अभ्याहतस्य परैरभिहतस्य । व्याधिरिति वक्ष्यमाणलक्षणः क्षतक्षयाख्यो व्याधिः; अन्ये तु व्याधिशब्देन क्षतमेवाहुः, "दोषादिष्वपि व्याधिशब्दो वर्तते" इति वचनात् । न चास्मिन् राजयक्ष्मरूपता शङ्कनीया, यत उरःक्षतस्त्रिदोषजन्य एव, भिन्नसंप्राप्तिश्च "अयथाबलमारम्भैर्जन्तोरुरसि विक्षते । वायुः प्रकुपितो दोषावुदीर्योभौ विधावति" ( चि. अ. ८ ) इत्यादिनोक्ता, लक्षणानि भिन्नान्येव "उरो विरुज्यते" इत्यादिना वक्ष्यमाणलक्षणेभ्य उक्तानि । अत एवैहानयोर्भेदं वक्ष्यति "उपेक्षिते भवेदस्मिन्ननुबन्धो हि यक्ष्मणः" इति । स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः बलवान् व्याधिः समुदीर्यत इति संबन्धः । प्रमिताशनम् एकरसाभ्यासः, किंवाऽतीतकालभोजनम् ॥ ४–८ ॥

उरो विरुज्यते तस्य भिद्यतेऽथ विभज्यते ।
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥ ९ ॥
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधादपि ॥१०॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य च श्लेष्मा सरक्तः संप्रवर्तते ॥ ११ ॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।

क्षतक्षयलक्षणमाह—उर इत्यादिना । भिद्यत इति विदीर्यते । अग्निवधादपीति अत्राग्निवधं विना व्याधिमहिम्ना विड्भेदो भवतीति दर्शयति । अन्ये तु 'विड्भेदोऽग्निवधस्तथा' इति पठन्ति । दुष्टः व्यापन्नः । क्षीयत इति धातुक्षयवान् भवति; न केवलं क्षतादेव क्षीयते, किंतु अतिस्त्रीसेवादिना कृताच्छुक्रौजःक्षयादपि क्षीयते इतरधातुक्षयवान् भवति ॥ ९–११ ॥—

अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥ १२ ॥
उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥ १३ ॥

पूर्वरूपमाह—अव्यक्तमित्यादि । अव्यक्तमिति अल्पत्वेन यथोक्तलक्षणतोऽसंपूर्णम् । उरोरुगित्यादिग्रन्थस्तु प्रायेण व्याकृतः । कासो वैशेषिक इति विशिष्टः, स च विशेषो 'दुष्टः श्यावः' इत्यादिना प्रोक्तो ज्ञेयः; किंवा वैशेषिकोऽधिको ज्ञेयः । क्षीणे इति शुक्रौजसी क्षीणे । अन्ये तु उरोरुगित्यादिनाऽवस्थाद्वयस्य लक्षणद्वयमेतद्वर्णयन्ति ॥ १२ ॥ १३ ॥

अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥ १४ ॥

चिकित्साप्रवृत्त्यर्थं साध्यादिविभागमाह—अल्पेत्यादि । परिसंवत्सरः वर्षातीतः ॥ १४ ॥

उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।
सद्य एव पिबेज्जीर्णे पयसाऽद्यात् सशर्करम् ॥१५॥

१ 'अपसारवेगेन' इति पा० । २ 'ऽत्यर्थ' इति पा० ।

१ 'चात्यर्थं श्लेष्मा सास्रः प्रवर्तते' इति पा० ।

पार्श्ववस्तिरुजी चाल्पपित्ताग्निस्तां सुरायुताम् ।
भिन्नविड्कः समुस्तातिविषापाठां सवत्सकाम् ॥१६॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।
त्वक्क्षीरीं समितां क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥
इक्ष्वालिकाबिसग्रन्थिपद्मकेशरचन्दनैः ।
श्रुतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ १८ ॥
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ।
ज्वरे दाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ॥१९॥
मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ।
कासी पार्श्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः ॥२०॥

ज्ञातरोगविशेषेण कर्तव्यां चिकित्सामाह—उरो मत्वेत्यादि। उरसः सद्यः क्षतं मत्वा लाक्षां पिबेदिति योजना। सशर्करमिति शर्करासहितमन्नम् । भिन्नविड्कः समुस्तातिविषापाठां लाक्षां पिबेत्। अत्र ये 'द्विवत्सकाम्' इति पठन्ति ते वत्सकभागद्वयं ग्राहयन्ति; किंवा वत्सकद्वयमेव द्विवत्सकशब्देन गृह्यते; तथा हि—"बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत् । श्यामा चारुणपुष्पा स्त्री फलपुष्पैस्तथाऽणुभिः" ( क. अ. ५ ) इति कल्पे कुटजः स्त्रीपुरुषविभागेन द्विविध उक्तः । संधानार्थमिति क्षतोरःसंधानार्थम् । मधूकशब्देनेह मधूकपुष्पं ग्राह्यम् ॥ १५–२० ॥

एलापत्रत्वचोऽर्धाक्षाः पिप्पल्यर्धपलं तथा ।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ २१ ॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥ २२ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ २३ ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयम् ।
गुटिका तर्पणी वृष्या रक्तपित्तं च नाशयेत् ॥ २४ ॥
इत्येलादिगुटिका ।

एलापत्रत्वच इत्यादिना एलादिगुटिकामाह। युक्त्येति यावता मधुना गुटिका भवन्ति तावन्मानं मधु देयम् ॥ २१–२४ ॥

रक्तेऽतिवृत्ते दक्षाण्डं यूषैस्तोयेन वा पिबेत् ।
चटकाण्डरसं वाऽपि रक्तं वा छागजाङ्गलम् ॥ २५ ॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥ २६ ॥

दक्षः गोष्ठकुक्कुटः । छागजाङ्गलमिति छागभवं जाङ्गलहरिणादिभवं वा। चूर्णं पौनर्नवमित्यादौ सिद्धमिति साधितम्। चूर्णसाधनं द्राक्षारसादिद्रवेण अग्निसंयोगात् कर्तव्यम्। उक्तं हि जतूकर्णे—"पुनर्नवारक्तशालीद्राक्षासिताचूर्णं पयोघृतयुतं सिद्धम्" इति ॥ २५ ॥ २६ ॥

मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।
मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥ २७ ॥
क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनिले ।
शृतक्षीरसरेणाद्यात् सक्षौद्रघृतशर्करम् ॥ २८ ॥
शर्करां यवगोधूमौ जीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः ॥ २९ ॥
क्रव्यादमांसनिर्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ॥ ३० ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ।
तालमस्तकजम्ब्वत्वक्प्रियालैश्च सपद्मकैः ॥ ३१ ॥
साश्वकर्णैः शृतात् क्षीराद्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥ ३२ ॥
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते शुभम् ॥ ३३ ॥
कोललाक्षारसे तद्वत् क्षीराद्द्विगुणसाधितम् ।
कल्कैः कङ्कङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥ ३४ ॥

मधूकेत्यादौ मधूकमधुककल्केन क्षीरेण समं साधितं तण्डुलीयकशाकम्। सबले इति बलवत्यनिले। क्रव्यादाः मांसभुजो मृगपक्षिणः । क्षीराज्जातेनेति क्षीरावस्थायामेव गृहीतेन । यष्ट्याह्वेत्यादौ समक्वाथक्षीराभ्यां घृताच्चातुर्गुण्यम्। वांशी वंशलोचना। कोलेत्यादौ तद्वदिति क्षते हितम्; अत्र कोललाक्षारसस्य च घृताच्चातुर्गुण्यं, क्षीरं चाद्विगुणं वदन्ति; किंवा कोललाक्षारसयोः समत्वमेव क्षीरेण; अयं च न्यायोऽपस्माराध्याये निर्दिष्टः ॥ २७–३४ ॥

जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीम् ।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ॥३५॥
पुनर्नवे द्वे मधुकमात्मगुप्तां शतावरीम् ।
ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा ॥ ३६ ॥
शृङ्गाटकं तामलकीं पयस्यां पिप्पलीं बलाम् ।
बदराक्षोटखर्जूरवातामाभिषुकाण्यपि ॥ ३७ ॥
फलानि चैवमादीनि कल्कान् कुर्वीत कार्षिकान् ।
धात्रीरसविदारीक्षुच्छागमांसरसं पयः ॥ ३८ ॥
कुर्यात् प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत् ।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलां तथा ॥ ३९ ॥
द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च ।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः ॥४०॥
अमृतप्राशमित्येतन्नराणाममृतं घृतम् ।
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥ ४१ ॥

१ 'पलार्धकं च मरिचत्वगेलापत्रकेशरात्' इति पा० ।

नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥४२॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत् ।
पुत्रदं वमिमूर्च्छाहृद्योनिमूत्रामयापहम् ॥ ४३ ॥
इत्यमृतप्राशघृतम् ।

द्वे निदिग्धिके इति वचनेन बृहती क्षुद्रा च ग्राह्या । पयस्या क्षीरविदारी । वाताभिमुकाणि तु औत्तरापथिकानि फलानि । एवमादीनि एवंप्रकाराण्यन्यानि वातपित्तहराणि । धात्रीरसानां च यद्यपि "पञ्चप्रसृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुः" इति वचनेन प्रस्थमानत्वं सिद्धं, तथाऽपि एतत्परिभाषार्थदार्ढ्यार्थमेवैतन्मानकथनं ज्ञेयम् । पलार्धकत्वमिह मरिचादीनां मिलितानां, समाहारप्रधानत्वान्निर्देशस्य; वृद्धास्तु प्रत्येकमेव पलार्धकत्वं वदन्ति । सुधा भौमी भोज्या, अमृतं तु देवभोज्यम् ॥ ३५-४३ ॥

श्वदंष्ट्रोशीरमञ्जिष्ठावलाकाश्मर्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिराम् ॥ ४४ ॥
पलिकं साधयेत्तेषां रसे क्षीरचतुर्गुणे ।
कल्कः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥ ४५ ॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द(द्ध)वशूलनुत् ॥४६॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ ४७ ॥
इति श्वदंष्ट्रादिघृतम् ।

श्वदंष्ट्रेत्यादौ क्वाथ्यद्रव्यपरिमाणानुसारेण पादोनप्रस्थत्रयं जलं दत्त्वा चतुर्भागावशेषेण चतुश्चत्वारिंशत्क्वाथफलानि भवन्ति । क्षीरं चात्र चतुर्गुणं घृतात्; किंवा क्वाथचतुर्गुणं क्षीरम् ॥ ४४-४७ ॥

मधुकाष्टपलद्राक्षाप्रस्थक्वाथे घृतं पचेत् ।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥ ४८ ॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।
समसक्तु क्षतक्षीणे रक्तगुल्मे च तद्धितम् ॥ ४९ ॥

मधुकेत्यादावपि क्वाथ्यमानानुसारेण क्वाथस्य सार्धप्रस्थो भवति । समसक्तु इति समसक्तुघृतम् ॥ ४८ ॥ ४९ ॥

धात्रीफलविदारीक्षुजीवनीयरसैर्घृतम् ।
अजागोपयसोश्चैव सप्त प्रस्थान् पचेद्भिषक् ॥ ५० ॥
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेच्च तत् ।
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥ ५१ ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।
घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ५२
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम् ।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ ५३ ॥
क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।
त्वक्क्षीरीशर्करालाजचूर्णैः स्त्यानानि योजयेत्[१]५४॥
सर्पिर्गुडान् समध्वंशाञ्जग्ध्वा चानु पयः पिबेत् ।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ५५ ॥
इति सर्पिर्गुडाः ।

घृतं त्वित्यादिना लेहयोग्यानि यानि शर्करादियोगाद्घृतान्युक्तानि तानि पित्ते लेह्यतया कर्तव्यानि, यानि तु शर्करादिरहितत्वेन पानयोग्यानि तानि वाते कर्तव्यानीति दर्शयति; किंवा स्त्यानावस्थायोगीनि उपयोगाल्लेह्यतया पित्ते प्रयोक्तव्यानि, तान्येव विलीनावस्थामापन्नानि वायौ प्रयोक्तव्यानि । घृतलेहस्य घृतपानस्य च पृथक् फलमाह—निर्वापयेदित्यादि । अल्पत्वादिति लेहत्वेनैवाल्पत्वात्, लेहस्य कर्षमानत्वेनोक्तत्वात् । आक्रमतीति जयति । निरुणद्धीति प्रतिहन्ति; 'न रुणद्धि' इति केचित् पठन्ति । क्षामेत्यादौ क्षामः क्लान्तदेहः, क्षीणः दुर्बलः, कृशः हीनमांसः । त्वक्क्षीर्यादीनां तावन्मानं ज्ञेयं यावता घृतस्य स्त्यानत्वम् । समध्वंशानित्यनेन मधुनः त्वक्क्षीर्यादिसमानतामाह ॥ ५०-५५ ॥

बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टयंशका अपि ॥५६॥
एषां कषाये द्विक्षीरे विदार्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढकम् ॥ ५७ ॥
सितापलानि पूते च शीते द्वात्रिंशतं क्षिपेत् ।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ ५८ ॥
समाक्षिकं कौडविकं तत् सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥५९॥
ताञ्जग्ध्वा पलिकान् क्षीरं मद्यं वाऽनुपिबेत् कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥ ६० ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥ ६१ ॥
इति द्वितीयसर्पिर्गुडाः ।

बलेत्यादि । क्षीरिवृक्षा वटोदुम्बराश्वत्थप्लक्षकपीतनाः । उक्तं च शालाक्ये "उदुम्बरो वटोऽश्वत्थो मधूकः प्लक्ष एव च । पञ्चैते क्षीरिणो वृक्षा अस्मिंस्तन्त्रे प्रकीर्तिताः" इति । मुष्टयंशका इति पलमानाः । अत्र च बलादीनां त्रयोदशपलोपनीतानामष्टगुणे जले क्वाथश्चतुर्थांशावशेष इति षड्विंशतिक्वाथपलानि, एतत्कषायाद्द्विगुणं क्षीरं, विदारीरसश्छागमांसरसश्च कषायसमः; एवं त्रिंशत्पलाधिकं पलशतमिह घृताढके पक्तव्यं

१ 'त्वक्क्षीरीपिप्पलीलाजचूर्णैः' इति पा० ।

भवति । अन्ये तु क्वाथ्यात् षोडशगुणजलदानपरिभाषया साधिते क्वाथे द्विपञ्चाशत्क्वाथपलान्याहुः; एतदनुसारेण क्षीरादिमानमप्यधिकं भवतीत्याहुः । किंतु क्वाथत्रयोदशपलेऽत्र पानीयं तथा पक्तव्यं यथा घृतसमः क्वाथो भवति । क्वाथो ह्यत्र चतुर्गुणद्रवसाध्ये घृते स्नेहसम एव भवति । एतत्क्वाथद्विगुणं क्षीरं समश्च विदारीरसश्छागमांसरसश्च देयः; किंवा विदार्याजमांसरसयोर्मिलित्वा ह्याढकांशो देयः । उक्तं हि जतूकर्णे—"वृश्चीवं पञ्चमूलं बलां विदारीं वटादिशुङ्गांश्च । निष्क्वाथ्य द्विक्षीरे छागविदारीरसे च समे । जीवनीयगणकल्कैः पक्त्वा घृताढकं" इति । अत्र हि क्वाथ्यद्रव्यमानमनियतमिति विशेषः, क्वाथस्तु स्नेहसम एव । खजः मन्थानदण्डः, दशाङ्गुलो वा हस्तः । भूर्जपत्रवेष्टनं च शक्त्युत्कर्षार्थम् ॥ ५६-६१ ॥

त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः ।
वीरर्धिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥ ६२ ॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतात् पचेत् ॥ ६३ ॥
शर्करार्धतुलां शीते क्षौद्रार्धप्रस्थमेव च ।
दत्त्वा सर्पिर्गुडान् कुर्यात्कासहिक्काज्वरापहान् ॥ ६४ ॥
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ॥ ६५ ॥
इति तृतीयाः सर्पिर्गुडाः ।

त्वक्क्षीरीत्यादौ श्रावणी मुण्डितिका, वीरा विदारीकन्दः ॥ ६२-६५ ॥

नवमामलकं द्राक्षामात्मगुप्तां पुनर्नवाम् ।
शतावरीं विदारीं च समङ्गां पिप्पलीं तथा ॥ ६६ ॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात् ।
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ॥ ६७ ॥
क्षीरतैलघृतानां च त्र्याढके शर्कराशते ।
क्वथिते तानि चूर्णानि दत्त्वा विल्वसमान् गुडान् ॥ ६८ ॥
कुर्यात्तान् भक्षयेत् क्षीणः क्षतः शुष्कश्च मानवः ।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति ॥ ६९ ॥
इति चतुर्थसर्पिर्गुडाः ।

द्राक्षामित्यादौ यष्ट्याह्वसौवर्चलयोर्मिलित्वा द्विपलम् । मरिचस्य 'द्विपलं' इति शेषः । उक्तं हि जतूकर्णे—"घृततैलपयस्त्र्याढके सितां च तुलां प्रपाच्य द्राक्षाविदारीवृश्चीवशतावरीकृष्णाशुण्ठीबलाधात्रीश्च दशपलिकाः प्रपाचयेत्, यष्ट्याह्वं रुचकं च पलिकम्" इत्यादि । क्वथित इति भाषया क्षीणे एव क्षीरे चूर्णप्रक्षेपं दर्शयति ॥ ६६-६९ ॥

गोक्षीरार्धाढकं सर्पिः प्रस्थमिक्षुरसाढकम् ।
विदार्याः स्वरसात्प्रस्थं रसात्प्रस्थं च तैत्तिरात् ॥ ७० ॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ।
मधूकपुष्पकुडवं प्रियालकुडवं तथा ॥ ७१ ॥
कुडवार्धं तुगाक्षीर्याः खर्जूराणां च विंशतिम् ।
पृथग्विभीतकानां च पिप्पल्याश्च चतुर्थिकाम् ॥ ७२ ॥
त्रिंशत्पलानि खण्डाच्च मधुकात् कर्षमेव च ।
तथाऽर्धपलिकान्यत्र जीवनीयानि दापयेत् ॥ ७३ ॥
सिद्धेऽस्मिन् कुडवं क्षौद्रं शीते क्षिप्त्वाऽथ मोदकान् ।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ ७४ ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥ ७५ ॥
कृशदुर्बलवृद्धानां पुष्टिवर्णबलार्थिनाम् ।
योनिदोषकृतस्रावहतानां चापि योषिताम् ॥ ७६ ॥
गर्भार्थिनीनां गर्भश्च स्रवेद्यासां म्रियेत वा ।
धन्या बल्या हितास्ताभ्यः शुक्रशोणितवर्धनाः ॥ ७७ ॥
इति पञ्चमसर्पिर्मोदकाः ।

गोक्षीरेत्यादौ गोक्षीरं कारणतयोच्यते न घृतपाकार्थं, तथाहि सति प्रक्षेप्यचूर्णेन मोदका न भवेयुः । चतुर्थिकां पलम् ॥ ७०-७७ ॥

बस्तिदेशे विकुर्वाणे स्त्रीप्रसक्तस्य मारुते ।
वातघ्नान् बृंहणान् वृष्यान् योगांस्तस्य प्रयोजयेत् ॥ ७८ ॥
शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च ।
संयुक्तं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ॥ ७९ ॥
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम् ।
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम् ॥ ८० ॥
सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ।
यवान्नसात्म्यो[1] दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ॥ ८१ ॥
जीवनीयोपसिद्धं वा जाङ्गलं घृतभर्जितम् ।
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ॥ ८२ ॥
गोमहिष्यश्वनागाजैः क्षीरैर्मांसरसैस्तथा ।
यवान्नं भोजयेद्यूषैः फलाम्लैर्घृतसंस्कृतैः ॥ ८३ ॥
दीप्तेऽग्नौ[2] विधिरेषः स्यान्मन्दे दीपनपाचनः ।
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चेष्यते ॥ ८४ ॥

विकुर्वाणे इति शूलादिविकारं कुर्वाणे । शर्करेत्यादौ प्रक्षेपन्यायेन क्षीरे शर्करादिप्रक्षेपः । वस्त्रपूतानामिति वस्त्रान्तरालपतितानाम् । मन्देऽग्नौ यक्ष्मिणां यो विहितः भिन्ने शकृति च यो ग्राही स विधिरिष्यत इति ज्ञेयम् ॥ ७८-८४ ॥

पलिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले ।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमर्जकात् ॥ ८५ ॥

१ 'यवान्न सात्म्यः' इति पा० । २ 'यथाग्नि' इति पा० ।

एकैकं मरिचाजाज्योर्धान्यकाद्वे चतुर्थिके ।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ ८६ ॥
कृत्वा चूर्णमतो मात्रामन्नपाने प्रयोजयेत् ।
रोचनं दीपनं वल्यं पार्श्वार्तिश्वासकासनुत् ॥ ८७ ॥
इति सैन्धवादिचूर्णम् ।

पलिकमिति पलमानम् ॥ ८५-८७ ॥

एका षोडशिका धान्याद्वे द्वेऽजाज्यजमोदयोः ।
ताभ्यां दाडिमवृक्षाम्लं द्विर्द्विः सौवर्चलात्पलम् ८८
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च ।
तच्चूर्णं षोडशपले शर्कराया विमिश्रयेत् ॥ ८९ ॥
षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ।
मन्दानले शकृद्भेदे यक्ष्मिणामग्निवर्धनः ॥ ९० ॥
इति षाडवः ।

षोडशिका पलम् । दाडिमवृक्षाम्लं द्विर्द्विरिति पूर्वद्विपलापेक्षया द्विगुणं प्रत्येकं चतुःपलमिति दर्शयति । पूर्ववदित्यनेन पूर्वयोगसमानफलमाह । अत्र जतूकर्णः—"पलिके धान्यकरुचके द्वौ जीरकदीप्यकौ शुण्ठ्याश्च पलं कपित्थदाडिमवृक्षाम्लानां कुडवम्" इत्यादि ॥ ८८-९० ॥

पिबेन्नागवलामूलमर्धकर्षविवर्धितम्[1] ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥ ९१ ॥
एष प्रयोगः पुष्ट्यायुर्वलारोग्यकरः परः ।
मण्डूकपर्ण्याः कल्पोऽयं शुण्ठीमधुकयोस्तथा ॥९२॥

नागवलेत्यादौ अर्धकर्षविवर्धितमिति अर्धकर्षेणैव वर्धितं पलं मासमेकं पेयं केवलं क्षीरवर्तिना । उक्तं हि जतूकर्णे—"नागबलामूलमर्धकर्षवृद्ध्या पलमानं मासं पेयं क्षीरमात्रवृत्तिना" इति ॥ ९१ ॥ ९२ ॥

यद्यत् संतर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यं तत्क्षतक्षीणैः सुखार्थिभिः ॥ ९३ ॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम् ।
तच्च कुर्यादवेक्ष्याग्निं व्याधिं सात्म्यं वलं तथा ॥९४॥

शीतं चापि स्पर्शे शान्तिकारि विदाहि भवति, तदर्थमविदाहीत्युक्तम् ॥ ९३ ॥ ९४ ॥

उपेक्षिते भवेत्तस्मिन्ननुवन्धो हि यक्ष्मणः ।
प्रागेवागमनात्तस्य तस्मात्तं त्वरया जयेत् ॥ ९५ ॥

क्षतक्षीणस्य त्वरया प्रतिकर्तव्यतामाह—उपेक्षिते इत्यादि । तस्येति यक्ष्मणः ॥ ९५ ॥

तत्र श्लोकौ—

क्षतक्षयसमुत्थानं सामान्यपृथगाकृतिम् ।
असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिमेव च ॥९६॥

[1] 'अर्धकर्षविवर्धनम्' इति पा० ।

उक्तवाञ्छिष्टशिष्याय क्षतक्षीणचिकित्सिते ।
तत्त्वार्थविद्वीतरजस्तमोदोषः पुनर्वसुः[1] ॥ ९७ ॥

इत्यग्निवेशकृते तन्त्रेऽप्राप्ते दृढवलपूरिते
चिकित्सितस्थाने क्षतक्षीणचिकित्सितं
नामैकादशोऽध्यायः ॥ ११ ॥

संग्रहे सामान्यपृथगाकृतिमिति क्षतोत्थस्य क्षयोत्थस्य च 'उरो विरुज्यत' इत्यादि पृथग्लक्षणं कृतम् ॥ ९६ ॥ ९७ ॥

इति श्रीचक्रपाणिदत्तकृतायां चरकतात्पर्यव्याख्यायामायुर्वेददीपिकायां चिकित्सास्थाने क्षतक्षीणचिकित्सितं नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

क्षतक्षीणे मर्मोपघातो भवति, शोथेऽपि मर्मोपघातः कारणं, तेन समानहेतुतया क्षतक्षयमनु शोथचिकित्सितमुच्यते ॥ १ ॥ २ ॥

भिषग्वरिष्ठं सुरसिद्धजुष्टं
मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत्
प्रकोपरूपप्रशमानपृच्छत् ॥ ३ ॥

जुष्टमिति सेवितम् । प्रकोपयतीति प्रकोपो हेतुरित्यर्थः, किंवा कार्यकारणयोरभेदोपचारात् प्रकोपशब्देन श्वयथुकारणमुच्यते; रूपशब्देन रूपपूर्वरूपयोर्ग्रहणं; शमनेन चिकित्सोच्यते ॥ ३ ॥

तस्मै जगादागदवेदसिन्धु-
प्रवर्तनाद्रिप्रवरोऽत्रिजस्तान् ।
वातादिभेदात्त्रिविधस्य सम्य-
ङ्निजानिजैकाङ्गजसर्वजस्य ॥ ४ ॥

अगदार्थं आरोग्यार्थो यो वेदः सोऽगदवेदः, स एव गम्भीरप्रसन्नत्वात् सिन्धुरिव सिन्धुः, तस्य प्रवर्तनेऽद्रिप्रवरो हिमालय इवेत्यर्थः; यथा हिमालयो गङ्गायाः प्रवर्तकस्तथाऽत्रिजोऽपि आयुर्वेदप्रवर्तक इत्यर्थः । तानिति प्रकोपादीन् याम् शिष्यः पृष्टवान् । एकाङ्गजसर्वजस्येत्यत्र सर्वजशब्देन सर्वशरीरजस्य ग्रहणम्, एकाङ्गजशब्देन च सामान्येन शरीराव्यापकस्य ग्रहणं; तेन सर्वार्धगात्रावयवाश्रितत्वेन यत्त्रैविध्यं वक्तव्यं तत्रैकाङ्गजेनार्धगात्राश्रितावयवाश्रितयोरिह ग्रहणं ज्ञेयम् ॥ ४ ॥

[1] 'द्वीतरजस्तमोमोहः' इति पा० ।

शुद्ध्यामयाभक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा।
दध्याममृच्छाकविरोधिदुष्ट-
गरोपसृष्टान्ननिषेवणं च ॥ ५ ॥
अर्शांस्यचेष्टा न च देहशुद्धि-
र्मर्मोपघातो विषमा प्रसूतिः।
मिथ्योपचारः प्रतिकर्मणां च
निजस्य हेतुः श्वयथोः प्रदिष्टः ॥ ६ ॥

शुद्धिः वमनादिशोधनम्, आमया ज्वरादयः, अभक्तम् अभोजनं विगुणं च भोजनं, तैः कृशानामबलानां च क्षारादिसेवा निजस्य श्वयथोर्हेतुरिति योज्यम्। दध्यादि तु स्वतन्त्रमेव हेतुः। आमम् अपक्वं, दुष्टं दोषकारकं नवोदकादि, गरः संयोगजं विषम्। नच देहशुद्धिरिति शोधनार्हेऽपि देहे देहाशुद्धिः। मर्मोपघात इह दोषकृत एव ज्ञेयः; बाह्यहेतुजस्तु मर्मोपघात आगन्तुहेतुरेव। विषमा प्रसूतिः अकालगर्भपतनादिका। प्रतिकर्मणामिति वमनादीनां; मिथ्योपचार इति असम्यक्करणमसम्यगुपचारश्च ॥ ५ ॥ ६ ॥

बाह्यास्त्वचो दूषयिताऽभिघातः
काष्ठाश्मशस्त्राग्निविषायसाद्यैः[1]।
आगन्तुहेतुः

बाह्या इत्यादिनाऽऽगन्तुशोथहेतुमाह। बाह्या इति अगम्भीराः; एतेन गम्भीरत्वग्दूषकत्वं शोथस्य न भवति। त्वच इति कर्मपदं हलन्तम्। दूषयिता अभिघातविशेषेण। काष्ठाश्मशस्त्राग्निविषायसाद्यैरिति काष्ठादिकारणकः; आदिशब्दो हि कारणवाची, तेन काष्ठादिकारणकोऽभिघात इत्यर्थः। काष्ठादयश्चेह संक्षेपेणोक्ता दन्तादीनामप्युपलक्षणा ज्ञेयाः। किंवा आदिशब्दः प्रकारवाची, तेन काष्ठादिकृतोऽभिघातः काष्ठादिशब्देनोच्यत इति कृत्वाऽभिघातेन समं सामानाधिकरण्यं ज्ञेयम्। आगन्तुहेतुरिति च्छेदः ॥—

त्रिविधो निजश्च
सर्वार्धगात्रावयवाश्रितत्वात् ॥ ७ ॥

त्रिविध इति सर्वार्धगात्रावयवाश्रितत्वेन निजस्त्रिविधः; चकारादागन्तुरपि यथोक्तभेदात्त्रिविध इत्यर्थः ॥ ७ ॥

बाह्याः सिराः प्राप्य यदा कफासृक्-
पित्तानि संदूषयतीह वायुः।
तैर्बद्धमार्गः स तदा विसर्प-
न्नुत्सेधलिङ्गं श्वयथुं करोति ॥ ८ ॥

बाह्याः सिरा इत्यादिसंप्राप्तिकथनम्। बाह्या इति अगभीराः। सिराशब्देन स्रोतसां सामान्येन ग्रहणम्। बद्धमार्ग इति आवृतमार्गः। उत्सेधेनाव्यभिचारिणा लिङ्ग्यत इति उत्सेधलिङ्गः ॥ ८ ॥

उरःस्थितैरूर्ध्वमधस्तु वायोः
स्थानस्थितैर्मध्यगतैस्तु मध्ये[1]।
सर्वाङ्गगः सर्वगतैः क्वचित्स्थै-
र्दोषैः क्वचित् स्याच्छ्वयथुस्तदाख्यः ॥ ९ ॥

उरःस्थितैरित्यादिना विशिष्टशोथानां संप्राप्तिविशेषमाह। ऊर्ध्वमिति उरःप्रभृत्यूर्ध्वशरीरे। अध इति पक्वाशयप्रभृतौ। वायोः स्थानं पक्वाशयः। मध्यगतैरिति उरःपक्वाशयमध्यगतैः। क्वचिदिति कण्ठताल्वादिदेशे। तदाख्य इति 'गलशोथ' इत्यादिशब्दाख्य इति; किंवा ऊर्ध्वशोथाधःशोथ इत्यादिशब्दाख्य इति सर्वत्र योजनीयम् ॥ ९ ॥

ऊष्मा तथा स्याद्दवथुः सिराणा-
मायाम इत्येव च पूर्वरूपम्।

ऊष्मेत्यादिना पूर्वरूपमाह। दवथुः उपतापश्चक्षुरादौ। सिराणामायाम इति सिराप्रसरणम् ॥—

सर्वेस्त्रिदोषोऽधिकदोषलिङ्गै-
स्तच्छब्दमभ्येति भिषग्जितं च ॥ १० ॥

सर्वशोथानां त्रिदोषजत्वेऽपि वातजादिव्यपदेशो वातजादिचिकित्सा च यथा भिन्ना भवति तदाह—सर्व इत्यादि। अधिकानि अधिकस्य वा दोषस्य लिङ्गानीति अधिकदोषलिङ्गानि, तैः अधिकदोषलिङ्गैः[2]। तच्छब्दमिति अधिकदोषशब्दं वातजोऽयमित्यादिकं प्राप्नोति; तथा भिषग्जितं चाधिकदोषलिङ्गैः प्राप्नोति, अधिकदोषलिङ्गप्रयुक्तं चिकित्सितभेदं प्राप्नोतीत्यर्थः ॥ १० ॥

सगौरवं स्यादनवस्थितत्वं
सोत्सेधमुष्माऽथ सिरातनुत्वम्।
सलोमहर्षाऽङ्गविवर्णता च
सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥ ११ ॥

सगौरवमित्यादिना सामान्यलिङ्गं पठति ॥ ११ ॥

चलस्तनुत्वक्परुषोऽरुणोऽसितः
प्रसुप्तिहर्षार्तियुतोऽनिमित्ततः।
प्रशाम्यति प्रोन्नमति प्रपीडितो
दिवाबली च श्वयथुः समीरणात् ॥ १२ ॥

चल इत्यादिना वातजशोथलिङ्गमाह। तनुत्वगिति अबहलत्वक्। असित इति कृष्णः। सुप्तिः स्पर्शाज्ञानं; हर्षः 'झणझणिका' इति ख्याता वेदना, किंवा रोमहर्षः। अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन कदाचिन्निमित्तं विनाऽपि लीनो भवतीत्यर्थः। केचित् 'निमित्ततः' इति पठन्ति, तेन "स्नेहोष्णमर्दनाभ्यां च प्रणश्येत् स च वातिकः" (सू. अ. १८) इति यदुक्तं तदेवेदमुच्यते। प्रोन्नमतीति संपीडनानन्तरमेवोन्नमति ॥ १२ ॥

मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः।

---

१ 'काष्ठाग्निशल्याश्मविषायसाद्यैः' इति पा०।

१ 'ऊर्ध्वं स्थितैः' इति पा०। २ 'अधिकदोषसंज्ञा' इति पा०।

य उच्यते स्पर्शरुगक्षिरागकृत्
स पित्तशोथो भृशदाहपाकवान् ॥ १३ ॥

मृद्वित्यादिना पित्तशोथमाह । उच्यत इति दह्यते । स्पर्शरुगिति स्पर्शनं न सहते ॥ १३ ॥

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत् ।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिवली कफात्मकः ॥ १४ ॥

गुरुरित्यादिना कफशोथमाह । अरोचकान्वित इति अरोचकव्याधिसहचारी । कृच्छ्रजन्मप्रशम इति चिरोत्पत्तिविनाशः । रात्रिवली कफात्मक इति रात्रौ स्रोतोरोधजेन देहक्लेदेनाचेष्टया च कफस्य वृद्धत्वात् तज्जनितशोथो बलवान् भवति, दिवा तु स्फुटस्रोतसि शरीरे चेष्टायुक्ते न कफो बलीभवति किन्तु वायुः; तेन वातशोथो दिवा बलीभवति, कफशोथस्तु हीयते ॥ १४ ॥

कृशस्य रोगैरबलस्य यो भवे-
दुपद्रवैर्वा वमिपूर्वकैर्युतः ।
स हन्ति मर्मानुगतोऽथ राजिमान्
परिस्रवेद्धीनबलस्य सर्वगः ॥ १५ ॥

संप्रत्यसाध्यत्वमाह—कृशस्येत्यादि । वमिपूर्वकैरिति त्रिशोथीये "छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च । सुप्तिः शोफैः सदौर्बल्यः शोथोपद्रवसंग्रहः" ( सू. अ. १८ ) इत्यनेनोक्तैः । मर्मानुगतो राजिमानिति च पृथग्लक्षणं, परिस्रवेदित्यादि च पृथक् पृथगसाध्यलक्षणम् ॥ १५ ॥

अहीनमांसस्य य एकदोषजो
नवो बलस्थस्य सुखः स साधने ।

अहीनेत्यादिना सुखसाध्यलक्षणमुच्यते । कृच्छ्रसाध्यलक्षणं च सुखसाध्यलक्षणासंपूर्णतायां ज्ञेयम् । श्वयथोश्च हेतुलक्षणानि त्रिशोथीयोक्तान्यपि प्रकरणात् संक्षेपेणेहोच्यन्ते ॥—

निदानदोषर्तुविपर्ययक्रमै-
रुपाचरेत्तं बलदोषकालवित् ॥ १६ ॥

सामान्येन चिकित्सासूत्रमाह—निदानेत्यादि । निदानादिविपरीतक्रमैः लङ्घनादिभिरुपाचरेदित्यर्थः । बलदोषकालविदित्यनेन निदानादेर्विपरीता क्रियोक्ता; बलं तथा दोषमामादिभेदभिन्नं तथा कालं च व्याध्यवस्थारूपं विदित्वा या युज्यते सा कर्तव्येति दर्शयति । निदानेत्यादौ दोषशब्देन वातादयो गृह्यन्ते, ऋतुशब्देन च नित्यगः कालः । तेनैव तद्विशिष्टवाचकतया बलदोषकालविदिति वचनं न पुनरुक्तम् । अन्ये तु प्रथमेन दोषशब्देन दूष्यधातुग्रहणं, द्वितीयेन तु वातादिग्रहणमित्याहुः; प्रथमव्याख्याने तु दोषशब्देनैव दूष्यस्यापि दोषाधारस्य ग्रहणं ज्ञेयम् ॥ १६ ॥

अथामजं लङ्घनपाचनक्रमै-
र्विशोधनैरुल्वणदोषमादितः ।
शिरोगतं शीर्षविरेचनैरधो
विरेचनैरूर्ध्वहरैस्तथोर्ध्वजम् ॥ १७ ॥
उपाचरेत् स्नेहभवं विरूक्षणैः
प्रकल्पयेत् स्नेहविधिं च रूक्षजे ।
विबद्धविट्केऽनिलजे निरूहणं
घृतं तु पित्तानिलजे सतिक्तकम् ॥ १८ ॥
पयश्च मूर्च्छारतिदाहतर्षिते
विशोधनीये तु समूत्रमिष्यते ।
कफोत्थितं क्षारकटूष्णसंयुतैः
समूत्रतक्रासवयुक्तिभिर्जयेत् ॥ १९ ॥

आमजमिति आमदोषजनितम्, अपक्वता च प्रायो दोषाणां प्रथमदुष्टौ भवति । क्रमैरिति उपक्रमैः । अध इति अधोभागजं, विरेचनैरुपाचरेत् । ऊर्ध्वहरैरिति वमनैः, ऊर्ध्वजमिति ऊर्ध्वभागजम् । सतिक्तकं घृतमिति तिक्तद्रव्यसाधितं घृतम् । पित्तानिलजे इति वातपित्तजद्वन्द्वे । मूर्च्छादय इह संजाता यस्य तस्मिन् मूर्च्छारतिदाहतर्षिते । विशोधनीये इति मूर्च्छायुक्ते एव विशोधनीये । समूत्रेत्यादि मूत्रसमभागैस्तक्रासवयोगैः ॥ १७–१९ ॥

ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि तिलकृतं विज्जलं मद्यमम्लम् ।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नं चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च ॥२०॥

ग्राम्येत्यादिना निदानत्वेनैव प्राप्तनिषेधानपि महात्ययावहत्वादल्पार्थनिषेधोपदर्शनार्थमाह । गौडमिति गुडविकारं, तस्य विकारे अण् । धाना अङ्कुरितभृष्टयवाः । वल्लूरं शुष्कमांसम् । समशनं पथ्यापथ्ययोरेकत्र भोजनम् ॥ २० ॥

व्योषं त्रिवृच्चित्रककरोहिणी च
सायोरजस्का त्रिफलारसेन ।
पीतं कफोत्थं शमयेच्च शोफं
गव्येन मूत्रेण हरीतकी च ॥ २१ ॥
हरीतकीनागरदेवदारु
सुखाम्बुयुक्तं सपुनर्नवं वा ।
सर्वं पिबेत्त्रिष्वपि मूत्रयुक्तं
स्नातश्च जीर्णे पयसाऽन्नमद्यात् ॥ २२ ॥

अत्र कफदोषस्यैव प्रथमं चिकित्स्यत्वेन व्योषमित्यादिना कफशोथचिकित्सामाह । सायोरजस्केति अनेन मारितमेवात्र अयोरज इच्छन्ति, रसायनेऽपि मृतायोरजस एव प्रयोगोपदेशात् । अयोरजो न समं तुल्यमानम्, अयो हि दुष्परिणामं,

१ 'ऽस्पर्शसहोऽक्षिरागकृद्' इति पा० । २ 'अस्पर्शसह' इति पा० । ३ 'सप्तकोऽयं सदौर्बल्यः' इति पा० ।

१ गङ्गाधरस्तु 'अधोविरेचनैरूर्ध्वमधस्तथोर्ध्वगं' इति पठति, 'ऊर्ध्वगं शोथमधोविरेचनैरुपाचरेत्, तथाऽधःशोथमूर्ध्वविरेचनैरुपाचरेत्' इति च व्याख्यानयति । २ 'सलवणं' इति, 'सकृशरं' इति च पा० । ३ विज्जलं पिच्छिलं द्रव्यम् ।

तेनायःप्रयोगेऽल्पमेव लोहं मात्रानुसारेण ज्ञेयम् । हरीतक्यादीनां कल्कः सुखाम्बुना पेयः । सपुनर्नवं वा सर्वमिति हरीतक्यादि । त्रिष्वपि वातादिजेषु । स्नातश्चेत्यादिविधिरन्ते उक्तत्वादुक्तसर्वप्रयोगेषु ज्ञेयः ॥ २१–२२ ॥

पुनर्नवानागरमुस्तकल्कान्
प्रस्थेन धीरः पयसाऽक्षमात्रान् ।
मयूरकं मागधिकां समूलां
सनागरां वा प्रपिबेत् सवाते ॥ २३ ॥
दन्तीत्रिवृद्व्यूषणचित्रकैर्वा
पयः शृतं दोषहरं पिबेद्वा ।
द्विप्रस्थमात्रं तु पलार्धिकैस्तै-
रर्धावशिष्टं पवने सपित्ते ॥ २४ ॥
सशुण्ठिपीतद्रुरसं प्रयोज्यं
श्यामोरुबूकोषणसाधितं वा ।
त्वग्दारुवर्षाभुमहौषधैर्वा
गुडूचिकानागरदन्तिभिर्वा ॥ २५ ॥
सप्ताहमौष्ट्रं त्वथवाऽपि मासं
पयः पिबेद्भोजनवारिवर्जी ।
गव्यं समूत्रं महिषीपयो वा
क्षीराशनो मूत्रमथो गवां वा ॥ २६ ॥
तक्रं पिबेद्वा गुरुभिन्नवर्चाः
सव्योषसौवर्चलमाक्षिकं च ।
गुडाभयां वा गुडनागरं वा
सदोषभिन्नामविबद्धवर्चाः ॥ २७ ॥
विड्वातसङ्गे पयसा रसैर्वा
प्राग्भक्तमद्यादुरुबूकतैलम् ।
स्रोतोविबन्धेऽग्निरुचिप्रणाशे
मद्यान्यरिष्टांश्च पिबेत् सुजातान् ॥ २८ ॥

पुनर्नवेत्यादौ प्रस्थमानं क्षीरमतिबहुत्वात्तदर्धावशिष्टं पक्त्वा पेयम् । मयूरकमित्यादावपि पूर्वयोगोक्तं क्षीरं द्रव्यमानं च ज्ञेयम् । पलार्धिकैरिति द्विकर्षमानैः । अत्र च भेषजापेक्षया क्षीरस्य बहुत्वात् स्तोकक्षीरदानं केचिदिच्छन्ति साधनत्वेन कर्तव्यमिति, 'यथा कुर्वन्ति स उपायः' ( सू. अ. २६ ) इति वचनात् । पीतद्रुः देवदारुः । ऊषणं मरिचम् । भोजनवारिवर्जीति भोजनं वारि च त्यक्तव्यमित्यर्थः । गव्यमित्यादावपि गवां मूत्रमित्यन्तेन सप्ताहं मासं वेति तथा भोजनवारिवर्जीति चानुवर्तयन्ति । समूत्रमित्यत्र मूत्रसमं क्षीराशनमिति संबध्यते ॥ २३–२८ ॥

गण्डीरभल्लातकचित्रकांश्च
व्योषं विडङ्गं बृहतीद्वयं च ।
द्विप्रस्थिकं गोमयपावकेन
द्रोणे पचेत् कूर्चिकमस्तुनस्तु ॥ २९ ॥
त्रिभागशेषं च सुपूतशीतं
द्रोणेन तत् प्राकृतमस्तुना च ।
सितोपलायाश्च शतेन युक्तं
लिप्ते घटे चित्रकपिप्पलीनाम् ॥ ३० ॥
वैहायसे स्थापितमादशाहात्
प्रयोजयंस्तद्विनिहन्ति शोफान् ।
भगन्दरार्शःक्रिमिकुष्ठमेहान्
वैवर्ण्यकार्श्यानिलहिक्कनं च ॥ ३१ ॥

इति गण्डीराद्यरिष्टः ।

कूर्चिकमस्तुन इत्यत्र दध्ना सह पयसि पक्वं यन्मस्तु तत् कूर्चिकमस्तु, केवलस्य दध्नो यन्मस्तु तत् प्राकृतमस्तु । वैहायसे इति अन्तरिक्षे ॥ २९–३१ ॥

काश्मर्यधात्रीमरिचाभयाक्ष-
द्राक्षाफलानां च सपिप्पलीनाम् ।
शतं शतं जीर्णगुडात्तुलां च
संक्षुद्य कुम्भे मधुना प्रलिप्ते ॥ ३२ ॥
सप्ताहमुष्णे द्विगुणं तु शीते
स्थितं जलद्रोणयुतं पिबेद्वा ।
शोफान् विबन्धान् कफवातजांश्च
निहन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥ ३३ ॥

इत्यष्टशतोऽरिष्टः ।

काश्मर्येत्यादौ उष्णे इति उष्णकाले । द्विगुणमिति द्विसप्ताहं, शीतकाले स्थाप्यम् । अष्टशत इति संज्ञा काश्मर्यादिसप्तशतं मिलित्वा कृतत्वाज्ज्ञेया ॥ ३२ ॥ ३३ ॥

पुनर्नवे द्वे च बले सपाठे
दन्तीं गुडूचीमथ चित्रकं च ।
निदिग्धिकां च त्रिपलानि पक्त्वा
द्रोणावशेषे सलिले ततस्तम् ॥ ३४ ॥
पूत्वा रसं द्वे च गुडात् पुराणा-
त्तुले मधुप्रस्थयुतं सुशीतम् ।
मासं निदध्याद्घृतभाजनस्थं
पल्ले यवानां परतस्तु मासात् ॥ ३५ ॥
चूर्णीकृतैरर्धपलांशिकैस्तं
पत्रत्वगेलामरिचाम्बुलोहैः ।
गन्धान्वितं क्षौद्रघृतप्रदिग्धे
जीर्णे पिबेद् व्याधिबलं समीक्ष्य ॥ ३६ ॥
हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं
प्लीहज्वरारोचकमेहगुल्मान् ।

१ 'प्रागुक्तमद्या०' इति पा० । २ 'काञ्जिकमस्तुनस्तु' इति पा० ।

१ 'क्षुद्राफलानां' इति पा० । २ 'क्षुद्रगुडात् पुराणात्तुलां तु' इति पा० । ३ 'वासां' इति पा० । ४ 'हेमत्वगेलामरिचाम्बुपत्रैः' इति पा० ।

भगन्दरं षड्जठराणि कासं
श्वासं ग्रहण्यामयकुष्ठकण्डूः ॥ ३७ ॥
शाखानिलं बद्धपुरीषतां च
हिक्कां किलासं च हलीमकं च ।
क्षिप्रं जयेद्वर्णबलायुरोज-
स्तेजोन्वितो मांसरसान्नभोजी ॥ ३८ ॥

इति पुनर्नवाद्यरिष्टः ।

पुनर्नवे द्वे इत्यादौ प्रत्येकं द्रव्याणां द्विपलिकत्वम् । द्रोणा-वशेषविधानाच्च चतुर्द्रोणं जलस्य ज्ञेयम् । तथा सति चतुर्भागा-वशेषेण द्रोणः क्काथो भवति । पल्ले यवानामिति यवराशौ, क्षौद्रघृतप्रदिग्धे कुम्भे कृत्वा मासं स्थाप्यमिति ज्ञेयं; किंवा क्षौद्रघृतप्रलिप्ते सुगन्धे भाजने कृत्वा पचेत् । षड्जठराणीति भेषजासाध्यौ छिद्रोदकदरौ वर्जयित्वा ॥ ३४-३८ ॥

फलत्रिकं दीप्यकचित्रकौ च
सपिप्पलीलोहरजो विडङ्गम् ।
चूर्णीकृतं कौडविकं द्विरंशं
क्षौद्रं पुराणस्य तुलां गुडस्य ॥ ३९ ॥
मासं निदध्याद्घृतभाजनस्थं
यवेषु तानेव निहन्ति रोगान् ।
ये चार्शसां पाण्डुविकारिणां च
प्रोक्ता हिताः शोफिषु तेऽप्यरिष्टाः ॥ ४० ॥

इति त्रिफलाद्यरिष्टः ।

फलत्रिकमित्यादौ द्विप्रस्थे त्रिफलादीनां चतुर्गुणं जलं दत्त्वा पादावशेषः कषाय आसवान्तरे दृष्टत्वाज्ज्ञेयः । चूर्णीकृतमिति कषायार्थं जर्जरीकृतम् । अन्ये तु चूर्णे एव द्रोणार्धं परं जलं ददति; किंवा कुडवमानत्वं चूर्णस्य देयं, तेन द्विरंशं क्षौद्रमिति द्विकुडवमिति यावत् ॥ ३९ ॥ ४० ॥

कृष्णा सपाठा गजपिप्पली च
निदिग्धिका चित्रकनागरे च ।
सपिप्पलीमूलरजन्यजाजी-
मुस्तं च चूर्णं सुखतोयपीतम् ॥ ४१ ॥
हन्यात्त्रिदोषं चिरजं च शोफं
कल्कश्च भूनिम्बमहौषधस्य ।
अयोरजत्र्यूषणयावशूक-
चूर्णं च पीतं त्रिफलारसेन ॥ ४२ ॥

पिप्पल्याद्ये चूर्णे त्रिदोषमिति प्रत्येकं मिलितैर्वा वातादिभि-र्जनितमिति ज्ञेयम्; न चात्र त्रिदोषस्यासाध्यत्वं युक्तम् ॥ ४१ ॥ ४२ ॥

क्षारद्वयं स्याल्लवणानि चत्वा-
र्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं
मुस्ताजमोदामरदारुबिल्वम् ॥ ४३ ॥
कलिङ्गकाश्चित्रकमूलपाठे
यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गुकर्षं त्वणुशुष्कचूर्णं
द्रोणं तथा मूलकशुण्ठकानाम् ॥ ४४ ॥
स्याद्भस्मनस्तत् सलिलेन साध्य-
मालोड्य यावद्धनमप्रदग्धम् ।
स्त्यानं ततः कोलसमां तु मात्रां
कृत्वा सुशुष्कां विधिनोपयुञ्ज्यात् ॥ ४५ ॥
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोषशोफान् ।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासाः प्रणुदेत् सकुष्ठाः ॥ ४६ ॥

इति क्षारगुडिका ।

चत्वारि लवणानि सामुद्रवर्जं दीर्घञ्जीवितीयोक्तानि । अणु-शुष्कचूर्णमिति सूक्ष्मचूर्णं ग्राह्यम् । अत्र जलमानमपि चूर्णचतु-र्गुणं देयम् । स्त्यानमिति घनम् ॥ ४३-४६ ॥

प्रयोजयेदार्द्रकनागरं वा
तुल्यं गुडेनार्धपलाभिवृद्ध्या ।
मात्रा परं पञ्चपलानि मासं
जीर्णे पयो यूषरसाश्च भक्तम् ॥ ४७ ॥
गुल्मोदरार्शःश्वयथुप्रमेहान्
श्वासप्रतिश्यालसकाविपाकान् ।
सकामलाशोषमनोविकारान्
कासं कफं चैव जयेत् प्रयोगः ॥ ४८ ॥

आर्द्रकनागरमिति अशुष्कनागरम् । अर्धपलाभिवृद्धिश्च इह गुडनागराभ्यां ज्ञेया, अन्यथा केवलार्द्रकवृद्ध्या पञ्चपलमाने गुडेन समं दशपलतायां भूरिमात्रतयाऽग्निवधादिदोषकारकं स्यात्; अर्धपलादारभ्य प्रतिदिनमर्धपलवृद्ध्या दशभिर्दिनैः पञ्चपलं भवति; ततस्तु पञ्चपलस्य यावन्मासमुपयोगः ॥ ४७ ॥ ४८ ॥

रसस्तथैवार्द्रकनागरस्य
पेयोऽथ जीर्णे पयसाऽन्नमद्यात् ।
जत्वश्मजं[1] च त्रिफलारसेन
हन्यात्त्रिदोषं श्वयथुं प्रसह्य ॥ ४९ ॥

इति शिलाजतुप्रयोगः ।

रसस्तथैवेत्यादौ पूर्वयोगवदर्धपलाभिवृद्धिः गुडयुक्तत्वं चेत्यादि सर्वं तथैवेति पदेन गृह्यते ॥ ४९ ॥

द्विपञ्चमूलस्य पचेत् कषाये
कंसेऽभयानां च शतं गुडस्य ।
लेहे सुसिद्धेऽथ विनीय चूर्णं
व्योषं त्रिसौगन्ध्यमुषास्थिते च ॥ ५० ॥

१ 'शिलाह्वयं' इति पा० ।

प्रस्थार्धमात्रं मधुनः सुशीते
किंचिच्च चूर्णादपि यावशूकात्।
एकामयां प्राश्य ततश्च लेहा-
च्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥ ५१ ॥
श्वासज्वरारोचकमेहगुल्म-
प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्त-
वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ५२ ॥

इति कंसहरीतकी।

द्विपञ्चमूलस्येत्यादौ निर्दिष्टत्वात् कंसः क्वाथाद्भवति, तावन्मानं दशमूलं चतुःषष्टिपलं ग्राह्यम्। अन्ये तु 'द्विपञ्चमूलस्य तुलाकषाये कंसोऽभयानां च शतं गुडस्य' इति पठन्ति। व्योषत्रिसौगन्ध्ययोः मानानिर्देशेन अन्यत्र लेहान्तरोक्तचूर्णमानानुसारेण मानं ज्ञेयम्। अगस्त्यहरीतक्यां गुडतुलायां पिप्पलीचूर्णपलचतुष्टयमुक्तं, तथा च्यवनप्राशे मत्स्यण्डिकार्धतुलायां पिप्पलीचूर्णपलद्वयमुक्तं, तद्वदिहापि गुडशते व्योषस्य कटुद्रव्यस्य पलचतुष्टयं; तथा च्यवने चातुर्जातकस्य गन्धार्थस्य पलमुक्तं, तदनुसारेणेह द्विपलं त्रिसौगन्ध्यम्। किंचिच्छब्दस्याल्पवचनत्वादत्रोक्तनागरादिचूर्णादर्धमानं यावशूकस्य ज्ञेयं, केचित्तु किंचिच्छब्दं कर्षपर्यायं वदन्ति; तन्त्रान्तरप्रत्ययात्। जतूकर्णसंवादात् त्रिसौगन्ध्यस्य प्रत्येकं कर्षमानत्वं, त्र्यूषणयवक्षाराणां तु प्रत्येकं पलम्। यदुक्तम्—"दशमूलकषायस्य कंसे पथ्याशतं गुडात्। तुलां पचेत्ततो दद्याद् व्योषक्षारचतुःपलम्। त्रिसुगन्धस्य कर्षांशं प्रस्थार्धं मधुनो हिमे" इत्यादि ॥ ५०–५२ ॥

पटोलमूलामरदारुदन्ती-
त्रायन्तिपिप्पल्यभयाविशालाः।
यष्ट्याह्वयं तिक्तकरोहिणी च
सचन्दना स्यान्निचुलानि दार्वी ॥ ५३ ॥
कर्षोन्मितैस्तैः क्वथितः कषायो
घृतेन पेयः कुडवेन युक्तः।
वीसर्पदाहज्वरसन्निपात-
तृष्णाविषाणि श्वयथुं च हन्ति ॥ ५४ ॥

पटोलमूलेत्यादौ क्वाथ्यद्रव्यपलत्रयमष्टगुणजलपरिभाषया क्वथनीयं; ततश्चतुर्भागावशेषेण षट्पलमानः कषायो भवति। उक्तं हि—"कर्षादौ तु पलं यावत् दद्यात् षोडशकं जलम्। ततश्च कुडवं यावत्तोयमष्टगुणं भवेत्" इति ॥ ५३ ॥ ५४ ॥

सचित्रकं धान्ययवान्यजाजी-
सौवर्चलं त्र्यूषणवेतसाम्लम्।

बिल्वात् फलं दाडिमयावशूकौ
सपिप्पलीमूलमथापि चव्यम् ॥ ५५ ॥
पिष्ट्वाऽक्षमात्राणि जलाढकेन
पक्त्वा घृतप्रस्थमथ प्रयुञ्ज्यात्।
अर्शांसि गुल्मं श्वयथुं च कृच्छ्रं
निहन्ति वह्निं च करोति दीप्तम् ॥ ५६ ॥
पिबेद्घृतं वाऽष्टगुणाम्बुसिद्धं
सचित्रकक्षारमुदारवीर्यम्।
कल्याणकं वाऽपि सपञ्चगव्यं
तिक्तं महद्वाऽप्यथ तिक्तकं वा ॥ ५७ ॥

सचित्रकेत्यादौ केचित् 'बिल्वात् पलं' इति पठन्ति; तन्मते बिल्वं पलमानं, शेषं तु कार्षिकम् ॥ ५५–५७ ॥

क्षीरं घटे चित्रककल्कलिप्ते
दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलगर्भं
तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥ ५८ ॥
अर्शोऽतिसारानिलगुल्ममेहां-
श्चैतन्निहन्त्यग्निबलप्रदं च।
तक्रेण चाद्यात् सघृतेन तेन
भोज्यानि सिद्धामथवा यवागूम् ॥ ५९ ॥

इति चित्रकघृतम्।

दध्यागतमिति दधिभावेन परिणतम्। तक्रेणेति यथोक्तदधिमथनजातेन तक्रेण ॥ ५८ ॥ ५९ ॥

जीवन्त्यजाजीशटिपुष्कराह्वैः
सकारवीचित्रकबिल्वमध्यैः।
सयावशूकैर्बदरप्रमाणै-
र्वृक्षाम्लयुक्ता घृततैलभृष्टा ॥ ६० ॥
अर्शोऽतिसारानिलगुल्मशोफ-
हृद्रोगमन्दाग्निहिता यवागूः।
या पञ्चकोलैर्विधिनैव तेन
सिद्धा भवेत् सा च समा तयैव ॥ ६१ ॥
कुलत्थयूषश्च सपिप्पलीको
मौद्गश्च सत्र्यूषणयावशूकः।
रसस्तथा विष्किरजाङ्गलानां
सकूर्मगोधाशिखिशल्लकानाम् ॥ ६२ ॥
सुवर्चला गृञ्जनकं पटोलं
सवायसीमूलकवेत्रनिम्बम्।
शाकार्थिनां शाकमिति प्रशस्तं
भोज्ये पुराणश्च यवः सशालिः ॥ ६३ ॥

१ 'यवानिकाचित्रकधान्यपाठाः सदीप्यकत्र्यूषणवेतसाम्लाः' इति पा०।

१ 'अर्शांसि सामानिलगुल्ममेहांस्तद्धन्ति दीप्तं च करोति वह्निम्' इति पा०। २ 'पञ्चमूलैः' इति पा०।

जीवन्तीत्यादौ बदरप्रमाणैरिति द्विशाणिकैः। विधिनैव तेनेत्यत्र बदरमानत्वं द्रव्याणां ज्ञेयम्। सकूर्मेत्यादौ कूर्मविधानं मत्स्यमांसनिषेधेऽप्यपवादरूपं ज्ञेयम्। शल्लकः शललीसंज्ञः। सुवर्चिका सूर्यावर्तः। गृञ्जनकं रसोनकसदृशं; किंवा गृञ्जनकं शोभाञ्जनम्। वायसी काकमाची ॥ ६०–६३ ॥

आभ्यन्तरं भेषजमुक्तमेत-
द्बहिर्हितं यच्छृणु तद्यथावत्।
स्नेहान् प्रदेहान् परिषेचनानि
स्वेदांश्च वातप्रबलस्य कुर्यात् ॥ ६४ ॥

शैलेयकुष्ठागुरुदारुकौन्ती-
त्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसी-
तालीशपत्रप्लवपत्रधान्यैः ॥ ६५ ॥

श्रीवेष्टकध्यामकपिप्पलीभिः
स्पृक्कानखैश्चैव यथोपलाभम्।
वातान्विते‍ऽभ्यङ्गमुशन्ति तैलं
सिद्धं सुपिष्टैरपि च प्रदेहम् ॥ ६६ ॥

जलैश्च वासार्ककरञ्जशिग्रु-
काश्मर्यपत्रार्जकजैश्च सिद्धैः।
स्विन्नो मृदूष्णै रवितप्ततोयैः
स्नातश्च गन्धैरनुलेपनीयः ॥ ६७ ॥

शैलेयेत्यादौ तैलं सिद्धं सुपिष्टैरिति शैलेयादिभिः सुपिष्टैस्तैलं सिद्धमिति वदन्ति; तथा तैरेव सुपिष्टैः प्रदेहं कथयन्ति। रविणा सूर्येण तप्ततोयैः स्नातो गन्धैरगुर्वादिभिरालेपनीयः ॥६४–६७॥

सवेतसाः क्षीरवतां द्रुमाणां
त्वचः समञ्जिष्ठलतामृणालाः।
सचन्दनाः पद्मकवालकौ च
पैत्ते प्रदेहस्तु सतैलपाकः ॥ ६८ ॥

आकस्य तेनाम्बु रविप्रतप्तं
सचन्दनं साभयपद्मकं च
स्नाने हितं क्षीरवतां कषायः
क्षीरोदकं चन्दनलेपनं च ॥ ६९ ॥

सवेतसा इत्यादिना पैत्ते प्रदेहमाह। क्षीरिद्रुमा अश्वत्थादयः। सतैलपाक इति मञ्जिष्ठादिभिरेव क्वाथकल्केन स्नेहः पक्तव्यः। सचन्दनमित्यादौ अभयम् उशीरम् ॥ ६८ ॥ ६९ ॥

कफे तु कृष्णासिकतापुराण-
पिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेक-
श्चण्डागुरुभ्यामनुलेपनं च ॥ ७० ॥

विभीतकानां फलमध्यलेपः
सर्वेषु दाहार्तिहरः प्रदिष्टः।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः
सचन्दनैस्तत्पिडकासु लेपः ॥ ७१ ॥

रास्नावृषार्कत्रिफलाविडङ्गं
शिग्रुत्वचो मूषिकपर्णिका च
निम्बार्जकौ व्याघ्रनखः सदूर्वा
सुवर्चला तिक्तकरोहिणी च ॥ ७२ ॥

सकाकमाची बृहती सकुष्ठा
पुनर्नवा चित्रकनागरे च।
उन्मर्दनं शोफिषु मूत्रपिष्टं
शस्तस्तथा मूलकतोयसेकः ॥ ७३ ॥

सिकता वालुका। शिग्रोस्त्वक्। अनुलेपनं स्नानानन्तरमनुलेपनम्। तत्पिडकास्विति दाहादियुक्तपिडिकासु। रास्नेत्यादिना सर्वशोथेषून्मर्दनसेकौ ब्रूते। व्याघ्रनखं नखी। मूषिकपर्णी 'पुत्रश्रेणी' इति ख्याता ॥ ७०–७३ ॥

शोफास्तु गात्रावयवाश्रिता ये
ते स्थानदूष्याकृतिनामभेदात्।
अनेकसंख्याः कतिचिच्च तेषां
निदर्शनार्थं गदतो निबोध ॥ ७४ ॥

शोफास्त्वित्यादि। स्थानं गलादि, दूष्या रक्तादयः, आकृतिः आकारो दीर्घत्वादिः, नामभेदस्तु शल्यादिषु विस्तरेणोक्तोऽपि 'कण्ठशालूक' इत्यादिना लेशेनाभिहितः; एवं स्थानादिभेदकृतादतिबहुत्वाद्बहुसंख्या ज्ञेया इति योज्यम् ॥ ७४ ॥

दोषास्त्रयः स्वैः कुपिता निदानैः
कुर्वन्ति शोफं शिरसः सुघोरम्।

शिरसः सुघोरमित्यत्र लक्षणं त्रिदोषकृतं, नाम च 'शिरःशोथ' इति विज्ञेयं, तन्त्रान्तरेऽयम् 'उपशीर्षक' इत्युक्तः ॥—

अन्तर्गले घुर्घुरिकान्वितं च
शालूकमुच्छ्वासनिरोधकारि ॥ ७५ ॥

घुर्घुरिकान्वितमिति घुर्घुराकारशब्देन वेदनया वा युक्तम् ॥ ७५ ॥

गलस्य सन्धौ चिबुके गले च
सदाहरागः श्वसनासु चोग्रः।
शोफो भृशार्तिस्तु विडालिकां स्या-
द्धन्याद्गले चेद्वलयीकृता सा ॥ ७६ ॥

गलस्य संधाविति गलवदनसन्धौ। श्वसनास्विति श्वासवहनाडीषु। विडालिकायां त्रिदोषाश्रयः कारणत्वेनानुवर्तते।

१ 'जलैस्तथैरण्डवृषार्कशिग्रु' इति पा०। २ 'स्विन्नः कवोष्णैः' इति पा०।

१ 'शोफा बहुत्वादतिवृत्तसंख्यास्तेषां तु कांश्चिच्छृणु चोच्यमानान्' इति पा०। २ 'श्वसनोच्छ्वसोग्रः' इति गङ्गाधरसंमतः पाठः। ३ 'वितानिका' इति पा०।

वलयीकृता सेति कृत्स्नगलवेष्टकत्वेन वलयाकारा स्यात्। सुश्रुतेऽप्युक्तं—"तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति" ( सु. नि अ. १६ ) इति। इयं च त्रिदोषजाऽपि रक्तपित्ताधिका ज्ञेया ॥ ७६ ॥

स्यात्तालुविद्रध्यपि दाहराग-
पाकान्वितस्तालुनि सा त्रिदोषात्।
जिह्वोपरिष्टादुपजिह्विका स्यात्
कफादधस्तादधिजिह्विका च ॥ ७७ ॥
यो दन्तमांसेषु तु रक्तपित्तात्
पाको भवेत् सोपकुशः प्रदिष्टः।
स्याद्दन्तविद्रध्यपि दन्तमांसे
शोफः कफाच्छोणितसंचयोत्थः ॥ ७८ ॥

उपजिह्विकेह त्रिशोथीयोक्ताऽपि तत्रानुक्ताधिजिह्विकाप्रसंगेनोक्ता ॥ ७७ ॥ ७८ ॥

गलस्य पार्श्वे गलगण्ड एकः
स्याद्गण्डमाला बहुभिस्तु गण्डैः।
साध्याः स्मृताः पीनसपार्श्वशूल-
कासज्वरच्छर्दियुतास्त्वसाध्याः ॥ ७९ ॥
तेषां सिराकायशिरोविरेका
धूमः पुराणस्य घृतस्य पानम्।
स्याल्लङ्घनं वक्त्रभवेषु चापि
प्रघर्षणं स्यात् कवलग्रहश्च ॥ ८० ॥

साध्याः स्मृता इत्यादि। पीनसादिरहिताः साध्याः। साध्यासाध्यविभागादिभेदाः शिरःशोथादिषु सर्वेष्वेव ज्ञेयाः। सिरेति सिराव्यधः। विशेषचिकित्सा तु सुश्रुते प्रतिपत्तव्या ॥ ७९ ॥ ८० ॥

अङ्गैकदेशेष्वनिलादिभिः स्यात्
स्वरूपधारी स्फुरणः सिराभिः।
ग्रन्थिर्महान्मांसभवस्त्वनर्ति-
र्मेदोभवः स्निग्धतमश्चलश्च ॥ ८१ ॥
संशोधिते स्वेदितमश्मकाष्ठैः
साङ्गुष्ठदण्डैर्विलयेदपक्वम्।
विपाट्य चोद्धृत्य भिषक् सकोशं
शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत् ॥ ८२ ॥
अदग्ध ईषत् परिशेषितश्च
प्रयाति भूयोऽपि शनैर्विवृद्धिम्।
तस्मादशेषः कुशलैः समन्ता-
च्छेद्यो भवेद्वीक्ष्य शरीरदेशान् ॥ ८३ ॥
शेषे कृते पाकवशेन शीर्या-
त्ततः क्षतोत्थः प्रसरेद्विसर्पः।
उपद्रवं तं प्रविचार्य तज्ज्ञ-
स्तैर्भेषजैः पूर्वतरैर्यथोक्तैः ॥ ८४ ॥
निवारयेदादित एव यत्ना-
द्विधानवित् स्वस्वविधिं विधाय।
ततः क्रमेणास्य यथाविधानं
व्रणं व्रणज्ञस्त्वरया चिकित्सेत् ॥ ८५ ॥
विवर्जयेत् कुक्ष्युदराश्रितं च
तथा गले मर्मणि संश्रितं च।
स्थूलः खरश्चापि भवेद्विवर्ज्यो
यश्चापि बालस्थविराबलानाम् ॥ ८६ ॥

अङ्गैकदेशेत्यादिना ग्रन्थीनाह। स्वरूपधारीति वातेन वातलक्षणधारी, पित्तेन पित्तलक्षणधारी, कफेन कफलक्षणधारी च। ग्रन्थिसंज्ञया ग्रन्थ्याकारत्वं दर्शयति। स्फुरणः वेपमान इत्यर्थः। मेदोभवोऽनर्तिर्भवति। महान् ग्रन्थिर्मांसभवो भवति। संशोधिते इति कृतशोधने पुरुषे। विलयेदिति विम्लापयेत्। सकोशमिति कोशसहितमुद्धृत्य ततो दग्ध्वा व्रणवच्चिकित्सेत्। असम्यग्दग्धे परिशेषिते च ग्रन्थौ दोषमाह—अदग्ध इत्यादि। स्वैर्भेषजैरिति विसर्पभेषजैः। विवर्जयेदित्यादिनाऽसाध्यग्रन्थिभेदानाह ॥ ८१–८६ ॥

ग्रन्थ्यर्बुदानां च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद्भिषगर्बुदानि
विधानविद्ग्रन्थिचिकित्सितेन ॥ ८७ ॥

अर्बुदचिकित्सातिदेशार्थमाह—ग्रन्थ्यर्बुदानामित्यादि। अविशेष इव अविशेष इह ज्ञेयः। सुश्रुतेऽप्यर्बुदलक्षणमुक्तं—"गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमभिप्रदूष्य। वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥ कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति" ( सु. नि. अ. ११ ) इति; तस्मात् स्तोकविशेषे सत्यपि स्वावयविशेषाद्ग्रन्थिविशेषचिकित्सैवातिदिश्यतेऽर्बुदे ॥ ८७ ॥

ताम्रा सशूला पिडका भवेद्या
सा चालजी नाम परिस्रुताग्रा।
शोफोऽक्षतश्चर्मनखान्तरे स्या-
न्मांसास्रदूषी भृशशीघ्रपाकः ॥ ८८ ॥
ज्वरान्विता वङ्क्षणकक्षजा या
वर्तिर्निरर्तिः कठिनायता च।
विदारिका सा कफमारुताभ्यां
तेषां यथादोषमुपक्रमः स्यात् ॥ ८९ ॥

१ 'स्वैर्भेषजैः' इति पा०। २ अयमर्धश्लोकः क्वचित्पुस्तके न पठ्यते। ३ 'अपरिशोधिते' इति पा०। ४ गङ्गाधरस्तु 'समूला' इति पठति, 'समूला न या चलति प्रपीडनेन सा समूला पीडका' इति च व्याख्यानयति। ५ 'रोगः क्षतः' इति पा०।

विस्रावणं पिण्डिकयोपनाहः
पक्वेषु चैव व्रणवच्चिकित्सा ।

चर्मनखान्तर इति चर्मनखसंधौ । विदारिकेह कफवाताभ्यामुच्यते, सुश्रुते विदारिका "सर्वजां सर्वलक्षणाम्" ( सु. नि. अ. १३ ) इति पठिता, तेनेहापि कफवाताधिका हीनपित्ता च विज्ञेया । तेषामित्यनेन अलज्यक्षतविदारिकारोगान् प्रत्यवमृशति । विस्रावणमिति रक्तविस्रावणम् । पिण्डिकयेति पिण्डिकाखेदेन ॥ ८८ ॥ ८९ ॥—

विस्फोटकाः सर्वशरीरगास्तु
स्फोटाः सरागज्वरतर्षयुक्ताः ॥ ९० ॥
यज्ञोपवीतप्रतिमाः प्रभूताः
पित्तानिलाभ्यां जनितास्तु कक्षाः ।
याश्चापराः स्युः पिडकाः प्रकीर्णाः
स्थूलाणुमध्या अपि पित्तजास्ताः ॥ ९१ ॥
क्षुद्रप्रमाणाः पिडकाः शरीरे
सर्वाङ्गगाः सज्वरदाहतृष्णाः ।
कण्डूयुताः सारुचिसप्रसेका
रोमान्तिकाः पित्तकफात् प्रदिष्टाः ॥ ९२ ॥
याः सर्वगात्रेषु मसूरमात्रा
मसूरिकाः पित्तकफात् प्रदिष्टाः ।
वीसर्पशान्त्यै विहिता क्रिया या
तां तेषु कुष्ठे च हितां विदध्यात् ॥ ९३ ॥

स्फोटा इह कक्षोक्तस्फोटाश्चिरस्थायिनः । यज्ञोपवीतप्रतिमा इति यज्ञोपवीतव्याप्यस्थानमात्रव्यापकाः स्फोटा एव, कक्षा इति कक्षाशब्दाख्याः । प्रकीर्णा इति बहुविधजातिकाः । विसर्पेत्यादौ तेष्विति विस्फोट-कक्षा-मसूरिकाख्येषु विदारिकान्तरोक्तेष्वित्यर्थः ॥ ९०–९३ ॥

ब्रध्नोऽनिलाद्यैर्वृषणे स्वलिङ्गै-
रन्त्रं निरेति प्रविशेन्मुहुश्च ।
मूत्रेण पूर्णं मृदु मेदसा चेत्
स्निग्धं च विद्यात् कठिनं च शोथम् ॥ ९४ ॥
विरेचनाभ्यङ्गनिरूहलेपाः
पक्वेषु चैव व्रणवच्चिकित्सा ।
स्यान्मूत्रसेकः कफजं विपाट्य
विशोध्य सीव्येद्व्रणवच्च पक्वम् ॥ ९५ ॥

ब्रध्न इत्यादौ वृषणे इति जातावेकवचनं, तेन वृषणयोरपि ग्रहणम् । स्वलिङ्गैरिति वातादिलिङ्गैः । वातलिङ्गेन वातिकः, पित्तलिङ्गेन पैत्तिकः, कफलिङ्गेन कफजो ब्रध्नो ज्ञेय इत्यर्थः । अन्त्रं मुहुर्निरेति स्वस्थानाद् वृषणं प्रविशेच्चेति अन्त्रवृद्धिलक्षणम् । मूत्रेण तु यद्ब्रध्नं तत् पूर्णं मृदु च भवति । मेदसा तु कृतं स्निग्धं कठिनं च । एवं षड्विधो ब्रध्न उक्तः । सुश्रुते तु रक्तजोऽपि ब्रध्न उक्तः, स इह पित्तजे एवान्तर्भावनीयः । विरेचनेत्यादिना सामान्यचिकित्सासूत्रमाह । कफजानां वैशेषिकी चिकित्सोच्यते—विपाट्य विशोध्य च सीव्येद् विपक्वं ब्रध्नं, व्रणवच्चोपचरेदिति भावः ॥ ९४ ॥ ९५ ॥

क्रिम्यस्थिसूक्ष्मक्षणनव्यवाय-
प्रवाहणान्युत्कटकाश्वपृष्ठैः ।
गुदस्य पार्श्वे पिडका भृशार्तिः
पक्वप्रभिन्ना तु भगन्दरः स्यात् ॥ ९६ ॥
विरेचनं चैषणपाटनं च
विशुद्धमार्गस्य च तैलदाहः ।
स्यात् क्षारसूत्रेण सुपाचितेन
छिन्नस्य चास्य व्रणवच्चिकित्सा ॥ ९७ ॥

क्रिम्यस्थीत्यादिना भगन्दरं पञ्चविधमपीह संक्षेपात् सामान्येनाह । एषणं शलाकया गत्यवेक्षणम् । क्षारसूत्रेण सुपाचितेन छिन्नस्येत्यनेन शल्यतन्त्रोक्तं क्षारसूत्रविधानं दर्शयति; प्रपञ्चस्त्विह पराधिकारत्वेन न कृतः; सुपाचितेनेति सम्यक्परिपाचितक्षारेण ॥ ९६ ॥ ९७ ॥

जङ्घासु पिण्डीप्रपदोपरिष्टात्
स्याच्छ्लीपदं मांसकफास्रदोषात् ।
सिराकफघ्नश्च विधिः समग्र-
स्तत्रेष्यते सर्षपलेपनं च ॥ ९८ ॥

जङ्घास्विति बहुवचनं व्यक्त्यपेक्षया; किंवा बहुवचनेन जङ्घादिष्वित्यादिपदलोपो ज्ञेयः । उक्तं हि—"शिश्नौष्ठनासास्वपि केचिदाहुः" इत्यादि । तथाहि पुष्कलावतः—"ग्रीवावंक्षणजङ्घौष्ठपादकर्णकराश्रयम् । श्लीपदं मांसमेदोभ्यां विद्यात्" इति । पिण्डीति मांसपिण्डी । प्रपदं पादाग्रम् ॥ ९८ ॥

मन्दास्तु पित्तप्रबलाः प्रदुष्टा
दोषाः सुतीव्रं तनुरक्तपाकम् ।
कुर्वन्ति शोथं ज्वरतर्षयुक्तं
विसर्पणं जालकगर्दभाख्यम् ॥ ९९ ॥
विलङ्घनं रक्तविमोक्षणं च
विरूक्षणं कायविशोधनं च ।
धात्रीप्रयोगाञ् शिशिरान् प्रदेहान्
कुर्यात् सदा जालकगर्दभस्य ॥ १०० ॥

१ 'स्फोटाः सदाहा ज्वरतर्षयुक्ताः' इति पा० । २ 'कक्ष्याः' इति पा० । ३ 'ताश्च' इति पा० । ४ 'वृद्धे' इति पा० । ४ 'स्यान्मूत्रमेदःकफजं' इति पा० ।

१ 'मूत्रमेदःकफजानां' इति पा० । २ 'क्रिमेस्तृणादिक्षणनव्यवाय०' इति पा० । ३ 'सुपाटितस्य भिन्नस्य' इति पा० । ४ 'जङ्घासु पिण्डीषु पदोपरिष्टात्' इति पा० ।

मन्दा इत्यादौ मन्दा इति अल्पवृद्धाः; मन्दा इति बहुवचनं व्यक्त्यपेक्षया। पित्तं प्रवलं येषां ते पित्तप्रवलाः। तनुः रक्तपाको यस्मिन् तत् तनुरक्तपाकं; सुश्रुते हि अपाकशब्देन ईषत्पाक उक्तः "अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः" (सु. नि. अ. १३) इति। रक्तस्य पाकेन युक्तं रक्तपाकं, नतु रक्तवर्णमात्रम्॥ ९९॥ १००॥

एवंविधांश्चाप्यपरान् परीक्ष्य
शोथप्रकाराननिलादिलिङ्गैः।
शान्तिं नयेद्दोषहरैर्यथास्व-
मालेपनच्छेदनभेददाहैः॥ १०१॥

अत्रानुक्तशोथप्रकारसंग्रहार्थमाह—एवंविधानित्यादि १०१

प्रायोऽभिघातादनिलः सरक्तः
शोथं सरागं प्रकरोति तत्र।
वीसर्पवन्मारुतरक्तवच्च
कार्यं विषघ्नं विषजे च कर्म॥ १०२॥

आगन्तुशोथचिकित्सामाह—प्राय इत्यादि। विषजे शोथे इति संबन्धः॥ १०२॥

तत्र श्लोकः—

त्रिविधस्य दोषभेदात् सर्वार्धावयवगात्रभेदाच्च।
श्वयथोर्द्विविधस्य[1] तथा लिङ्गानि चिकित्सितं चोक्तम्

इत्यग्निवेशकृते तन्त्रेऽप्राप्ते दृढबलसंपूरिते
चिकित्सास्थाने श्वयथुचिकित्सितं
नाम द्वादशोऽध्यायः॥ १२॥

संग्रहे सर्वार्धगात्रावयवभेदाच्च त्रिविधस्येति संबन्धः। द्विविधस्येति निजागन्तुभेदेन॥ १०३॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया-
मायुर्वेददीपिकायां शोथचिकित्सितं नाम
द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

अथात उदरचिकित्सितं व्याख्यास्यामः॥ १॥

इति ह स्माह भगवानात्रेयः॥ २॥

शोथभेदत्वादुदरस्य शोथचिकित्सानन्तरमुदरचिकित्सितमुच्यते॥ १॥ २॥

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे।
तप्यमानं तपस्तीव्रं साक्षाद्धर्ममिव स्थितम्॥ ३॥
आयुर्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्तकम्।
पुनर्वसुं जितात्मानमग्निवेशोऽब्रवीद्वचः॥ ४॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः।
शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः॥ ५॥
प्रनष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत्॥ ६॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजम्।
यथावच्छ्रोतुमिच्छामि गुरुणा सम्यगीरितम्॥ ७॥
सर्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः।
सर्वभूतहितं वाक्यं व्याहर्तुमुपचक्रमे॥ ८॥

आयुर्वेदविदामिति भिषग्वेदविदाम्। दुःखैरिति दुःखकारणैः। तेषामिति उदराणाम्। आयतनमिति कारणम्। संख्या च यद्यपि रोगाधिकारे "अष्टावुदराणि" (सू. अ. १९) इत्यनेनोक्ता, तथाऽपि गुल्मकुष्ठयोः संख्यातिक्रमदर्शनात् पुनरत्र संख्याप्रश्नः; किंवा प्रकरणागतत्वात् संख्योक्ताऽपि पुनरुच्यते॥ ३-८॥

अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः।
मलवृद्ध्या प्रवर्तन्ते विशेषेणोदराणि तु॥ ९॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसंचयः।
प्राणाग्न्यपानान् संदूष्य मार्गान्रुद्ध्वाऽधरोत्तरान् १०
त्वङ्मांसान्तरमागम्य कुक्षिमाध्मापयन् भृशम्।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम्॥ ११॥

अग्निदोषोऽत्राग्निमान्द्यमेव विवक्षितं; तस्यैवेहोदरकारणदोषत्रयकर्तृत्वमुक्तं—"वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः" (सू. अ. ६) इति। मला वातादयः पुरीषादयश्च। मलिनैरिति दोषकारकैर्विरुद्धाहारादिभिः। यद्यपि मन्दाग्नित्वमलिनान्नयोः प्रत्येकमपि दोषत्रयकर्तृत्वमुक्तं, तथाऽपीहोभयजनकत्वेन प्रकर्षो दृश्यते, अत एव च प्रकर्षार्थं 'संचय' इति संपूर्वं कृतवान्। प्राणेत्यादौ पुनरग्निदूषणाभिधानेन मन्दस्य वह्नेः पुनर्दोषकृतं नितरां मान्द्यं दर्शयति। दोषसंचयकृतेन वायुना प्राणापानयोर्दूषणमविरुद्धमेव; यतो वायुनाऽपि वायुदुष्टिर्भवत्येव। त्वङ्मांसान्तरमिति त्वङ्मांसमध्यम्॥ ९-११॥

अत्युष्णलवणक्षारविदाह्यम्लगराशनात्।
मिथ्यासंसर्जनाद्रूक्षविरुद्धाशुचिभोजनात्॥ १२॥
प्लीहार्शोग्रहणीदोषकर्शनात् कर्मविभ्रमात्।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात्॥ १३॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात्।
अर्शोबालशकृद्रोधादन्त्रस्फुटनभेदनात्॥ १४॥
अतिसंचितदोषाणां पापं कर्म च कुर्वताम्।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः॥ १५॥

अत्युष्णेत्यादिना हेतुमाह। कर्मविभ्रमादिति वमनादीनामसम्यक्करणात्। क्लिष्टानामप्रतीकारादिति प्लीहादिरोगैः क्लिष्टानामप्रतिक्रिययेत्यर्थः। रौक्ष्याद्युत्पत्तिः रौक्ष्यस्य प्रतिक्रियाभावेना-

---

[1] 'विविधस्य' इति पा०।

नुवर्तनात्। आमादिति आमानुबन्धात्। पापं कर्म च कुर्वतामित्यनेनास्य महादुःखरूपस्य प्रबलाधर्मजन्यतामाह। मन्दाग्नीनां विशेषत इति अत्यन्तोपहताग्नीनाम् ॥ १२-१५ ॥

क्षुन्नाशः स्वाद्वतिस्निग्धगुर्वन्नं पच्यते चिरात्।
भुक्तं विदह्यते सर्वं जीर्णाजीर्णं न वेत्ति च ॥ १६ ॥
सहते नातिसौहित्यमीषच्छोफश्च पादयोः।
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासमृच्छति १७॥
वृद्धिः पुरीषनिचयो रूक्षोदावर्तहेतुका।
वस्तिसन्धौ रुगाध्मानं वर्धते पाट्यतेऽपि च ॥ १८॥
आतन्यते च जठरमपि लघ्वल्पभोजनात्।
राजीजन्म वलीनाश इति लिङ्गं भविष्यताम् ॥ १९॥

क्षुन्नाश इत्यादिना पूर्वरूपाभिधानम्। स्वाद्वादीनां यद्यपि कट्वाद्यपेक्षया चिरेणैव पाको भवति, तथाऽपीह चिरादिति पदेनात्यर्थं चिरादित्यभिधीयते। जीर्णाजीर्णं न वेत्ति चेति वातजन्यत्वाज्ज्ञेयम्। 'रूक्षोदावर्तहेतुका' इत्यत्र 'बद्धोदावर्तहेतुका' इति वा पाठः। वस्तिसन्धाविति वस्तिना समं यत्र शरीरेतरदेशसंबन्धस्तत्र। आतन्यते इति विस्तीर्यते। राजी व्यक्ता सिरा ॥ १६-१९ ॥

रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥२०॥
कुक्षेराध्मानमाटोपः शोफः पादकरस्य च।
मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यं चोदरलक्षणम्२१
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः।
संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ २२ ॥

रुद्ध्वेत्यादिना चतुर्णां दोषजन्यानामुदराणां सामान्यात् संप्राप्तिमाह; "पूर्वं या संप्राप्तिरुक्ता सा सर्वोदराणाम्" इत्येके वदन्ति; "रुद्ध्वेत्यादिना पूर्वं संप्राप्त्यनुक्तस्य स्वेदाम्बुवाहिस्रोतोदुष्टिरूपस्याभिधानादपौनरुक्त्यम्" इत्यन्ये। "स्वेदवहस्रोतसां मेदोमूलं रोमकूपाश्च, उदकवहस्रोतसां तालु मूलं क्लोम च" (वि. अ.५) इत्यनेन भेद उक्तो ज्ञेयः। उदराणां सामान्यरूपमाह—कुक्षेरित्यादि। मन्दोऽग्निर्यद्यपि कारणं, तथाऽप्ययं मन्दाग्निरिह लक्षणे ज्ञेयः। श्लक्ष्णगण्डत्वमिति मसृणकपोलत्वम्। तेषां लिङ्गमित्यत्र लिङ्गशब्देन वक्ष्यमाणहेतुसंप्राप्ती अपि व्याधिगमकतया संगृह्यीते ज्ञेये। इह संप्राप्तिः कारणानि वा वक्तव्यानि विशेषस्यैव, तेन न सर्वसाधारणोक्तहेतुसंप्राप्त्या पुनरुक्तत्वम् ॥ २०-२२ ॥

रूक्षाल्पभोजनायासवेगोदावर्तकर्शनैः।
वायुः प्रकुपितः कुक्षिहृद्वस्तिगुदमार्गगः ॥ २३ ॥
हत्वाऽग्निं कफमुद्धूय तेन रुद्धगतिस्ततः।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः ॥ २४॥

तस्य रूपाणि—कुक्षिपाणिपादवृषणश्वयथुः, उदरविपाटनम्, अनियतौ च वृद्धिह्रासौ, कुक्षिपार्श्वशूलोदावर्ताङ्गमर्दपर्वभेदशुष्ककासकार्श्यदौर्बल्यारोचकाविपाकाः, अधोगुरुत्वं, वातवर्चोमूत्रसङ्गः, श्यावारुणत्वं च नखनयनवदनत्वङ्मूत्रवर्चसाम्, अपि चोदरं तन्वसितराजीसिरासंततम्, आहतमाध्मातदृतिशब्दवद्भवति, वायुश्चोर्ध्वमधस्तिर्यक् च सशूलशब्दश्चरति, एतद्वातोदरमिति विद्यात् २५

कर्शनैरिति कृशत्वकारणैर्लङ्घनादिभिः। गुदस्य मार्गो गुदमार्गः। कफमुद्धूयेति अत्र कफस्याप्राधान्यं, तेन कफेनोदरव्यपदेशोऽत्रासमीचीन इति दर्शयति। अनियतौ च वृद्धिह्रासौ 'उदरस्य' इति शेषः। असिता राज्यः सिराश्च ताभिः संततं व्याप्तम्। आध्मातदृतिशब्दवदिति वातपूर्णचर्मशब्दवत् ॥ २३-२५ ॥

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः।
विदाह्यध्यशनाजीर्णैश्चाशु पित्तं समाचितम् ॥ २६॥
प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम्।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः ॥ २७ ॥

तस्य रूपाणि—दाहज्वरतृष्णामूर्च्छातीसारभ्रमाः, कटुकास्यत्वं, हरितहारिद्रत्वं च नखनयनवदनत्वङ्मूत्रवर्चसाम्, अपि चोदरं नीलपीतहारिद्रहरितताम्रराजीसिरावनद्धं, दह्यते, दूयते, धूप्यते, ऊष्मायते, स्विद्यते, क्लिद्यते, मृदुस्पर्शं क्षिप्रपाकं च भवति; एतत् पित्तोदरमिति विद्यात् ॥ २८ ॥

कट्वित्यादिना पित्तोदरमाह। अत्रापि अनिलकफावप्रधानौ, पित्तं तु प्रधानम्। निहन्त्यामाशये वह्निमित्यनेन स्थानान्तरस्थधात्वग्निवधं कृत्वा। हारिद्रं हरिद्राभम्। दूयत इति व्यथते। धूप्यत इति धूममिव उद्वमति। ऊष्मायत इति पार्श्वस्थेनैव वह्निना दह्यते। स्विद्यत इति घर्माक्तं भवति। क्षिप्रपाकं भवतीति शीघ्रपाकाज्जलोदरतां याति ॥ २६-२८ ॥

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः।
दधिदुग्धौदकानूपमांसैश्चाप्यतिसेवितैः ॥ २९ ॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वावृतेष्वावृतोऽनिलः।
तमेव पीडयन् कुर्यादुदरं बहिरन्तगः ॥ ३० ॥

तस्य रूपाणि—गौरवारोचकाविपाकाङ्गमर्दाः, सुप्तिः, पाणिपादमुष्कोरुशोफः, उत्क्लेशनिद्राकासश्वासाः, शुक्लत्वं च नखनयनवदनत्वङ्मूत्रवर्च-

१ 'पुरीषनिचये' इति पा०। २ 'जठरं लघ्वल्पैर्भोजनैरपि' इति पा०।

१ 'पीतत्वं' इति पा०। २ 'बहिरन्तरम्' इति पा०।

साम्; अपि चोदरं शुक्लराजीसिरासंततं, गुरु, स्तिमितं, स्थिरं, कठिनं च भवति; एतच्छ्लेष्मोदरमिति विद्यात् ॥ ३१ ॥

अव्यायामेत्यादिना कफोदरमाह । वहिरन्त्रग इति अन्त्राद्वाह्यगः ॥ २९-३१ ॥

दुर्बलाग्नेरपथ्यामविरोधिगुरुभोजनैः ।
स्त्रीदत्तैश्च रजोरोमविण्मूत्रास्थिनखादिभिः ॥ ३२ ॥
विषैश्च मन्दैर्वाताद्याः कुपिताः संचयं त्रयः ।
शनैः कोष्ठे प्रकुर्वन्तो जनयन्त्युदरं नृणाम् ॥ ३३ ॥

तस्य रूपाणि—सर्वेषामेव दोषाणां समस्तानि लिङ्गान्युपलभ्यन्ते, वर्णाश्च सर्वे नखादिषु, उदरमपि नानावर्णराजीसिरासंततं भवति; एतत् सन्निपातोदरमिति विद्यात् ॥ ३४ ॥

दुर्बलाग्नेरित्यादिना सन्निपातोदरमाह । स्त्रीदत्तैरिति स्त्रीभिरज्ञानात् सौभाग्यार्थं रजःप्रभृतिदान प्रायो भवतीति; स्त्रीणामभिधानमुपलक्षणार्थं, तेनान्यदत्तानामपि रजःप्रभृतीनां ग्रहणं भवत्येव । विषैश्च मन्दैरिति दूषीविषैः, दूषीविषाण्येव हि मन्दानि भवन्ति । त्रय इति पदेन वातादीनां त्रयाणामपि स्वातन्त्र्येण ग्रहणं करोति । वर्णाश्च सर्वेषां दोषाणामिति संवन्धः । इह सकललक्षणमेलकाभिधानेनैव नखादिवर्णाः सर्वाश्च नानावर्णा राजयश्च यद्यपि गृहीतास्तथाऽपि तदभिधानमवश्योत्पाददर्शनार्थम् ॥ ३२-३४ ॥

अशितस्यातिसंक्षोभाद्यानयानातिचेष्टितैः ।
अतिव्यवायभाराध्ववमनव्याधिकर्शनैः ॥ ३५ ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ॥ ३६ ॥

तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्धमानः कच्छपसंस्थान उपलभ्यते; स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधिष्ठानं च परिक्षिपन्नुदरमभिनिर्वर्तयति ॥ ३७ ॥

तस्य रूपाणि—दौर्बल्यारोचकाविपाकवर्चोमूत्रग्रहतमःप्रवेशपिपासाङ्गमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वासमृदुज्वरानाहाग्निनाशकार्श्यास्यवैरस्यपर्वभेदकोष्ठवातशूलानि, अपि चोदरमरुणवर्णं विवर्णं वा नीलहरितहारिद्रराजिमद्भवति; एवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्यात्, तुल्यहेतुलिङ्गौषधत्वात्तस्य प्लीहजठर एवावरोध इति; एतत् प्लीहोदरमिति विद्यात् ॥ ३८ ॥

प्लीहवृद्धिर्द्विविधा-संक्षोभादिच्युतस्य वा वृद्धिः, अच्युतस्य वा शोणितवृद्ध्या वृद्धिर्भवति । वामपार्श्वाश्रित इति प्लीहस्वरूपकथनम् । शोणितं वा रसादिभ्य इति अत्रादिशब्दः प्रकारवाची; तेन रसस्य कारणस्य वृद्ध्या कार्यस्य रक्तस्य वृद्धिस्तथा मांसादिभ्योऽपि रक्तवृद्धिर्भवति; तेनाहारविहारेभ्यो रक्तवृद्धिरुक्ता भवति । प्रथमं या च्युतस्य वृद्धिरुक्ता सा वातादिसन्निपातत्वेन चतुर्विधा ज्ञेया; तेन रक्तजप्लीहवृद्ध्या समं पञ्च प्लीहदोषा ये उक्तास्ते संगता भवन्ति । उक्तं हि—"पञ्च प्लीहदोषा इति गुल्मैर्व्याख्याताः" ( सू. अ. १९ ) इति । अष्ठीला दीर्घो लोहमयो ग्रन्थिर्लोहकारेषु प्रसिद्धः । कुक्षिः पार्श्वदेशः । दक्षिणपार्श्वस्थमिति स्थाननिर्देशः । यकृज्जन्मन उदरस्य पृथङ्नाम आख्याय तस्य प्लीहोदर एवावरोधमाह-तुल्येत्यादिना ॥ ३५-३८ ॥

पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्तैस्तथाऽर्शोभिरन्त्रसंमूर्च्छनेन वा ॥ ३९ ॥
अपानो मार्गसंरोधाद्धत्वाऽग्निं कुपितोऽनिलः ।
वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥ ४० ॥

तस्य रूपाणि—तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्बल्यारोचकाविपाकवर्चोमूत्रसङ्गाध्मानच्छर्दिक्षवथुशिरोहृन्नाभिगुदशूलानि, अपि चोदरं मूढवातं स्थिरमरुणं नीलराजि सिरावनद्धराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनिर्वर्तत इति; एतद्बद्धगुदोदरमिति विद्यात् ॥ ४१ ॥

पक्ष्मबालैरित्यादिना बद्धगुदोदरमाह । बद्धायने इति बद्धमार्गे । उदावर्तैरित्यादावपि 'बद्धायने गुदे' इत्यनुवर्तनीयम् । अन्त्रसंमूर्च्छनेन अन्त्रपरिवर्तनेन । पक्ष्मवालैरित्यादिना अनेकहेतुकृतो गुदनिरोधः; तेन गुदनिरोधकत्वरूपेणैकरूपमेव बद्धगुदोदरं जनयति; तेन पक्ष्मादिगुदनिरोधहेतुपञ्चकजन्यत्वाद् बद्धगुदोदराणां पञ्चत्वं नोद्यम् ॥ ३९-४१ ॥

शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयाऽत्यशनेन वा ॥ ४२ ॥
पाकं गच्छेद्रसस्तेभ्यश्छिद्रेभ्यः प्रस्रवद्बहिः ।
पूरयन् गुदमन्त्रं च जनयत्युदरं ततः ॥ ४३ ॥

तस्य रूपाणि-तदधो नाभ्याः प्रायोऽभिवर्धमानमुदकोदरं भवति, यथाबलं च दोषाणां रूपाणि दर्शयति, अपि चातुरः सलोहितनीलपीतपिच्छिलकुणपगन्ध्याममवर्चं उपवेशते, हिक्काश्वासकासतृष्णाप्रमेहारोचकाविपाकदौर्बल्यपरीतश्च भवति; एतच्छिद्रोदरमिति विद्यात् ॥ ४४ ॥

शर्करेत्यादिना क्षतोदरमाह । शर्करादिभिरभ्याहतमन्त्रं भिद्येतेति योजना । पाकं गच्छेदिति भिन्नमेवान्तः पाकं गच्छति । बहिरिति बहिर्भागे अन्त्रं गुदं च पूरयन् स एव

१ 'नीरुजः' इति पा० ।

रसोऽन्नपाकप्रसुत उदरं जनयति । तदधो नाभेः प्रायोऽभिवर्धमानं द्रवस्योदरारम्भकस्याधोगामित्वाद् दकोदरं भवतीति उदरान्तरापेक्षया शीघ्रगतिर्भवतीत्यर्थः । 'उदकोदरस्य दोषाणां च' इति वा पाठः । तत्र उदकोदरस्य रूपाणि दर्शयति, दोषाणां च यथाबलं रूपाणि दर्शयतीति योजना । यथाबलमिति यो बलवान् दोषो भवति तस्य रूपाणि दर्शयति ॥ ४२-४४ ॥

**स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा ।**
**अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः॥४५॥**
**स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः ।**
**वर्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ ॥ ४६ ॥**

**तस्य रूपाणि—अनन्नकाङ्क्षापिपासागुदस्रावशूलश्वासकासदौर्बल्यानि, अपि चोदरं नानावर्णराजिसिरासंततमुदकपूर्णदृतिक्षोभसंस्पर्शं भवति, एतदुदकोदरमिति विद्यात् ॥ ४७ ॥**

**तत्र अचिरोत्पन्नमनुपद्रवमनुदकमप्राप्तमुदरं त्वरमाणश्चिकित्सेत्; उपेक्षितानां ह्येषां दोषाः स्वस्थानादपवृत्ता परिपाकाद्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति, स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति; तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरु स्तिमितमाकोठितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं नाभ्यामेवोपसर्पति । ततोऽनन्तरमुदकप्रादुर्भावः । तस्य रूपाणि—कुक्षेरतिमात्रवृद्धिः, सिरान्तर्धानगमनम्, उदकपूर्णदृतिसंक्षोभसंस्पर्शत्वं च ॥ ४८ ॥**

**तदाऽऽतुरमुपद्रवाः स्पृशन्ति—छर्द्यतीसारतमकतृष्णाश्वासकासहिक्कादौर्बल्यपार्श्वशूलारुचिस्वरभेदमूत्रसङ्गादयः; तथाविधमचिकित्स्यं विद्यादिति ॥ ४९ ॥**

स्नेहेत्यादिना उत्पत्तिविशिष्टं जलोदरमाह । क्लोम हृदयावयवविशेषः । वर्धयेतामिति यथोक्तौ कफमारुतौ । तयोश्चाम्बुवर्धकत्वं पिपासाजननेनाम्बुपानादेरिति ज्ञेयम् । साध्यासाध्यविभागमाह—तत्रेत्यादि । अनुदकप्राप्तमिति अजातोदकरूपदोषावस्थं; परिपाकेनात्र दोषाणां द्रवत्वं स्वभावादेव ज्ञेयम् । बाह्येषु स्रोतःसु प्रतिहतगतिरिति बहिर्गन्तुमसमर्थः । अत्र जलजन्मपूर्वरूपं पिच्छोत्पद्यते, तेन पिच्छोत्पत्तिलक्षणमेव तावदाह । पिच्छासदृशो भागः पिच्छा; अन्ये तु भक्तमण्डसदृशीं पिच्छामाहुः । सर्पतीति चलति । उदकपूर्णदृतिवत् संक्षोभः मांसस्य पिच्छोदकरूपं प्राप्तस्य । तमकः श्वासविशेषः । अचिकित्स्यमिति विषप्रयोगशस्त्रप्रणिधानादिदारुणकर्मव्यतिरिक्तक्रियया अचिकित्स्यं विद्यात् ॥ ४५-४९ ॥

भवन्ति चात्र—

**वातात्पित्तात्कफात् प्लीह्नः सन्निपातात्तथोदकात् ।**
**परं परं कृच्छ्रतरमुदरं भिषगादिशेत् ॥ ५० ॥**
**पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा ।**
**प्रायो भवत्यभावाय च्छिद्रान्त्रं चोदरं नृणाम् ॥५१॥**

परं परं कृच्छ्रतरमिति यथा यथा परत्वनिर्देशस्तथा तथा कृच्छ्रसाध्यत्वम् । बद्धच्छिद्रदकोदराणां विशेषमाह—पक्षादित्यादि । बद्धगुदमुदरं पक्षादूर्ध्वं विनाशाय प्रायो भवति; कदाचित् पक्षादूर्ध्वमप्यभावाय न भवतीति प्रायःशब्देनाह । जातोदकं छिद्रान्त्रं च प्रायो विनाशाय भवति; कदाचिद् विषशस्त्राभिमतचिकित्सया जातोदकं छिद्रं बद्धगुदं च सिध्यतीति प्रायःशब्देन दर्शयति ॥ ५० ॥ ५१ ॥

**शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।**
**बलशोणितमांसाग्निपरिक्षीणं च वर्जयेत् ॥ ५२ ॥**
**श्वयथुः सर्वमर्मोत्थः श्वासो हिक्काऽरुचिः सतृट् ।**
**मूर्च्छा च्छर्दिरतीसारो निहन्त्युदरिणं नरम् ॥५३॥**
**जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।**
**बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ ५४ ॥**

शूनाक्षमित्यादिना साध्योक्तानामप्यसाध्यतामाह । कुटिलोपस्थमिति वक्रोपस्थम् । उपक्लिन्ना तन्वी च त्वग्यस्य स तथा । अग्निक्षयश्चोदरे प्रथमत एव यद्यपि भवति, तथाऽपि असाध्यलक्षणेषु विशेषेणाग्निक्षयो लक्षणान्तरयुक्तश्च भवतीति ज्ञेयम् । जन्मनैवेति उत्पत्तिमात्रेण ॥ ५२-५४ ॥

**अजातशोथमरुणं सशब्दं नातिभारिकम्[1] ।**
**सदा गुडगुडायच्च[2] सिराजालगवाक्षितम् ॥ ५५ ॥**
**नाभिं विष्टभ्य पायौ तु वेगं[3] कृत्वा प्रणश्यति ।**
**हृन्नाभिवङ्क्षणकटीगुदप्रत्येकशूलिनः ॥ ५६ ॥**
**कर्कशं सृजतो वातं नातिमन्दे च पावके ।**
**लौल्यस्याविरसे[4] चास्ये मूत्रेऽल्पे संहते विषि॥५७॥**
**अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः ।**
**उपाक्रमेद्भिषग्दोषबलकालविशेषवित् ॥ ५८ ॥**

अजाताम्बुलक्षणमाह—अजातशोथमित्यादि । नातिभारिकमिति नातिगुरुणा भारेण युतम् । नाभिं विष्टभ्येति नाभिं स्तम्भयित्वा । कृत्वा वेगमिति पुरीषवातवेगं कृत्वा, वातपुरीषं विसृज्येति यावत् । प्रणश्यतीति लीनं भवति । कर्कशमिति वेगवन्तं; सृजत इति वातं सरतः ॥ ५५-५८ ॥

**वातोदरं बलमतः पूर्वं स्नेहैरुपाचरेत् ।**
**स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम्॥५९॥**

१ 'सशोथमरुणाभासं' इति पा० । २ 'गुडगुडावन्तं' इति पा० । ३ 'वायुस्तु' इति पा० । ४ 'लालया विरसे' इति पा० ।

हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
तथाऽस्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥६०॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात्।
संभवत्युदरं तस्मान्नित्यमेव विरेचयेत् ॥ ६१ ॥
शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत्तु तम्।
प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात् पयः ॥६२॥
यूषै रसैर्वा मन्दाम्ललवणैरेधितानलम्।
सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ॥ ६३ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत् ॥ ६४ ॥
तीक्ष्णाधोभागयुक्तोऽस्य निरूहो दाशमूलिकः।
वातघ्नाम्लशृतैरेण्डतिलतैलानुवासनम् ॥ ६५ ॥
अविरेच्यं तु यं विद्याद्दुर्बलं स्थविरं शिशुम्।
सुकुमारं प्रकृत्याऽल्पदोषं वाऽथोल्बणानिलम् ॥६६॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः।
बस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद्बुधः ॥ ६७ ॥

वातोदरमित्यादिना चिकित्सामाह । परिम्लानमिति क्षीणम् । तथेति वस्त्रवेष्टनेन । उदरे पुनः शोधनोपपत्तिमाह—दोषेत्यादि । स्रोतोमार्गनिरोधनादिति स्रोतोमुखनिरोधनादित्यर्थः; मार्गशब्दोऽत्र मुखवाची । संसृज्येत्यत्र पेयादिक्रमेणोपपाद्य । प्रागुत्क्लेशादिति उत्क्लेशे दृश्यमाने । उत्सर्गतस्तु बलजनककार्यं कृत्वा पयो निवर्तनीयम् । वातघ्नादिभिः शृतैरेण्डतैलं तिलतैलं वाऽनुवासनं स्यात् । अनुवासैरिति अनुवासनैः ॥ ५९–६७ ॥

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरबस्तिना ॥ ६८ ॥
संजातबलकायाग्निं पुनः स्निग्धं विरेचयेत्।
पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥ ६९ ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥ ७० ॥
पुनः क्षीरप्रयोगं च बस्तिकर्म विरेचनम्।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥ ७१ ॥

सातला चर्मकषा । क्षीरबस्तिरिति क्षीरप्रधानो बस्तिः । सकफे इति कफयुक्ते पित्ते । समूत्रेणेत्यत्र 'पयसा' इत्यनुवर्तते । सवाते पित्ते तिक्तसर्पिषा विरेचनं त्रिवृतादिद्रव्ययुक्तेन कर्तव्यम् । क्रमेणेति क्षीरप्रयोगादिक्रमेण पित्तोदरं जयेदिति योजना ॥ ६८–७१ ॥

स्निग्धं स्विन्नं विशुद्धं तु कफोदरिणमातुरम्।
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥ ७२ ॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा।
सक्षारैस्तैलपानैश्च शमयेत्तु कफोदरम् ॥ ७३ ॥

विशुद्धमित्यत्र वमनं विना विशुद्धो ज्ञेयः, वमनस्योदरे निषिद्धत्वात् । चूर्णयुक्ता अयस्कृतयः चूर्णायस्कृतयः "नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा" ( चि. अ. १६ ) इत्याद्युक्ताः; किंवा चूर्णान्यत्रैव वक्ष्यमाणानि, अयस्कृतयस्तु रसायनोक्तलोहप्रयोगे ज्ञेयाः ॥ ७२ ॥ ७३ ॥

सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः।
सोपद्रवं तु निर्वृत्तं प्रत्याख्येयं विजानता ॥ ७४ ॥

सर्वा यथोक्ता इति प्रत्येकं वातादिविहिताः सर्वा एव सन्निपातोदरे कर्तव्याः । सोपद्रवं तु निर्वृत्तमिति सोपद्रवतयोत्पन्नम् ॥ ७४ ॥

उदावर्तरुजानाहैर्दाहमोहतृषाज्वरैः।
गौरवारुचिकाठिन्यैश्चानिलादीन् यथाक्रमम् ॥७५॥
लिङ्गैः प्लीह्न्यधिकान् दृष्ट्वा रक्तं चापि स्वलक्षणैः[1]।
चिकित्सां संप्रकुर्वीत यथादोषं यथाबलम् ॥ ७६ ॥
स्नेहं स्वेदं विरेकं च निरूहमनुवासनम्।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेत् सिराम् ॥७७॥
षट्पलं पाययेत् सर्पिः पिप्पलीर्वा प्रयोजयेत्।
सगुडामभयां वाऽपि क्षारारिष्टगणांस्तथा ॥ ७८ ॥
एष क्रियाक्रमः प्रोक्तो योगान् संशमनाञ्छृणु।
पिप्पली नागरं दन्ती चित्रकं द्विगुणाभयम् ॥ ७९ ॥
विडङ्गांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत्।
विडङ्गं चित्रकं शुण्ठीं सघृतां सैन्धवं वचाम् ॥८०॥
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत्।
रोहीतकलतानां तु काण्डकानभयाजले ॥ ८१ ॥
मूत्रे वा सुनुयात्तच्च सप्तरात्रस्थितं पिबेत्।
कामलागुल्ममेहार्शःप्लीहसर्वोदरक्रिमीन् ॥ ८२ ॥
स हन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम्।
रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम् ॥ ८३ ॥
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत्।
पलिकैः पञ्चकोलैस्तु तैः सर्वैश्चापि तुल्यया ॥ ८४ ॥
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत्।
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ॥ ८५ ॥
तथा गुल्मोदरश्वासक्रिमिपाण्डुत्वकामलाः।
अग्निकर्म च कुर्वीत भिषग्वातकफोल्बणे ॥ ८६ ॥
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः।
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ॥ ८७ ॥
यूषैर्मांसरसैश्चापि दीपनीयसमायुतैः।
यकृति प्लीहवत् सर्वं तुल्यत्वाद्भेषजं मतम् ॥ ८८ ॥
लघून्यन्नानि संसृज्य दद्यात् प्लीहोदरे भिषक्।

[1] 'प्लीह्न्यधिका तृष्णा रक्तं च पित्तलक्षणैः । विद्यात् समस्तैः सर्वैस्तु सन्निपातं तथा भिषक्' इति पा० ।

प्लीहोदरचिकित्सामाह—उदावर्तेत्यादि। अनिलादीन् यथाक्रममिति उदावर्तरुजानाहैर्वातं, दाहमोहतृषाज्वरैः पित्तं, शेषैः कफं, दृष्ट्वा चिकित्सां कुर्वीत; किंच बाधितं रक्तं तल्लक्षणैर्दृष्ट्वा चिकित्सां कुर्वीत। तत्र रक्तस्य लक्षणानि विधिशोणितीयोक्तानि, तन्त्रान्तरे "विदाहं तृष्णां वैरस्यं गात्रगौरवं मूर्च्छा" इत्यादीनि ज्ञेयानि। प्लीहीति प्लीहोदरे। यथादोषमिति उल्वणदोषप्रशमनीम्। वामे बाहौ सिराव्यधः सामान्योक्तोऽपि सुश्रुतप्रत्ययात् कूर्परास्यसिराव्यधो ज्ञेयः। पिप्पलीर्वा प्रयोजयेदिति रसायनोक्तपिप्पलीवर्धमानं प्रयोजयेत्। क्षारारिष्टगणानिति ग्रहण्यर्शोवक्ष्यमाणक्षारारिष्टसमूहान्; इहापि च विडङ्गमित्यादिना क्षारं, तथा रोहितकलतेत्यादिनाऽरिष्टं च वक्ष्यति। द्विगुणाभयमिति द्विभागाभयम्। रोहितकलता 'रोहितक' इति ख्याता। काण्डका इति खल्पप्रमाणाः खण्डाः। आसुनुयादिति द्रवे मग्नाः कृत्वा संधानार्थं स्थापयेत्। रोहितकेत्यादौ सप्तपञ्चाशत्पले क्वाथ्येऽष्टगुणमुदकं दत्त्वा पादावशेषेण द्विपलोपेतचतुर्दशशरावमानः क्वाथो भवति। सर्वैस्तैश्चापि तुल्ययेति रोहितकत्वचः पञ्चपलानीत्यर्थः। पिष्टैरित पञ्चकोलैः पिष्टैः, तथा विभक्तिविपरिणामाद्रोहितकत्वचा पिष्टयेति ज्ञेयम्। अग्निकर्मेति गुल्मवदत्राप्यग्निकर्म वदन्ति; तच्च वातकफोल्बणे प्लीहोदरे एव ज्ञेयम्। दीपनीयसमायुतैरिति पिप्पल्यादिदीपनीयगणसंस्कृतैरित्यर्थः॥ ७५-८८ ॥—

स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम्॥ ८९ ॥
सतैललवणं दद्यान्निरूहं सानुवासनम्।
परिस्रंसीनि चान्नानि तीक्ष्णं चैव विरेचनम्॥ ९० ॥
उदावर्तहरं कर्म कार्यं वातघ्नमेव च।
छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत्॥ ९१ ॥
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक्।
तृष्णाकासज्वरार्तं तु क्षीणमांसाग्निभोजनम्॥ ९२ ॥
वर्जयेच्छ्वासिनं तद्वच्छूलिनं दुर्बलेन्द्रियम्।

निरूहस्योत्सर्गत एव सतैललवणत्वे सिद्धे सतैललवणमिति पदं तैललवणयोरत्राधिकदानोपदर्शनार्थम्। बद्धच्छिद्रदकोदरिणां च यद्यप्यास्थापनं निषिद्धं, तथाऽपि तदेकसाध्यायामवस्थायां निरूहानुवासनमिह ज्ञेयम्। परिस्रंसीनीति अनुलोमनानि। छिद्राख्यं चोदरं तृणामित्यत्र यद्यप्यसाध्यत्वमुक्तं, तथाऽपि तत्र प्रायःशब्दनिवेशादसाध्यताव्यभिचारोऽपि दर्शितः; तेनेह तच्चिकित्सोच्यते, उत्तरत्रापि च पिपीलिकादंशादिना छिद्रोदरचिकित्सोच्यते, तथा 'हन्ति सर्वोदराण्येतच्चूर्णं' इत्यनेन सर्वोदरचिकित्सा वक्तव्या। अन्ये तु सर्वोदरहन्तृत्वकथनं न पारमार्थिकमिति वदन्ति। ऋते स्वेदादित्यनेन स्वेदस्य छिद्रोदरे उदककारतया निषेधं दर्शयति। तृष्णेत्यादिना प्रत्याख्येयं छिद्रोदरमाह॥ ८९-९२ ॥—

अपां दोषहराण्यादौ प्रदद्यादुदकोदरे॥ ९३ ॥
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च।
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत्॥ ९४ ॥
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्वशः।

अपां दोषहराणीत्यादिना उत्पत्तिविशिष्टदकोदरचिकित्सामाह। उदकादिभ्य इति उदकप्रकारेभ्यो द्रवान्तरेभ्यः। नियच्छेदिति निवर्तयेत्। अनुपूर्वश इति क्रमेण निवर्तयेत्॥ ९३॥ ९४॥—

सर्वमेवोदरं प्रायो दोषसङ्घातजं मतम्॥ ९५ ॥
तस्मात्त्रिदोषशमनीं क्रियां सर्वत्र कारयेत्।
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति॥ ९६ ॥
तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च।
रक्तशालीन् यवान्मुद्गाञ्जाङ्गलांश्च मृगद्विजान्॥९७॥
पयोमूत्रासवारिष्टान्मधुसीधुं तथा सुराम्।
यवागूमोदनं वाऽपि यूषैरद्याद्रसैरपि॥ ९८ ॥
मन्दाम्लस्नेहकटुभिः पञ्चमूलोपसाधितैः।
औदकानूपजं मांसं शाकं पिष्टकृतं तिलान्॥ ९९ ॥
व्यायामाध्वदिवास्वप्नं यानयानं च वर्जयेत्।
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च॥१००॥
नाद्यादन्नानि जठरी तोयपानं च वर्जयेत्।

अत्र सर्वोदरसाधारणीं चिकित्सां वक्तुमाह—सर्वमित्यादिना। भोज्यानि पुनर्भोज्यानीति भोक्तव्यान। मन्दाम्लेत्यादौ मन्दशब्दोऽल्पवचनः। यानयानमिति अश्वादिना यानम्॥९५-१००॥—

नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम्॥ १०१ ॥
त्र्यूषणक्षारलवणैर्युक्तं तु निचयोदरी।
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम्॥ १०२ ॥
शर्करामधुकोपेतं स्वादु पित्तोदरी पिबेत्।
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी॥ १०३ ॥
पिबेन्मधुयुतं तक्रं कवोष्णं नातिपेलवम्।
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः॥ १०४ ॥
युक्तं प्लीहोदरी जातं सव्योषं तूदकोदरी।
बद्धोदरी तु हपुषायवान्यजाजिसैन्धवैः॥ १०५ ॥
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम्।
गौरवारोचकार्तानां समन्दाग्न्यतिसारिणाम्॥१०६॥
तक्रं वातकफार्तानाममृतत्वाय कल्पते।

स्वाद्विति सद्यो मथितं मधुरं जातम्। अपेलवमिति उद्धृतस्नेहम्। कवोष्णमिति ईषदुष्णम्॥ १०१-१०६ ॥—

१ 'शर्करामरिचोपेतं' इति पा०। २ 'व्यक्ताम्लं' इति पा०।
३ 'यवानीहपुषाजाजीसैन्धवैर्मथितोदरी' इति पा०।

शोफानाहार्तितृण्मूर्च्छापीडिते कारभं पयः ॥१०७॥
शुद्धानां क्षामदेहानां गव्यं छागं समाहिपम् ।
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥ १०८ ॥
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ।
वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम् ॥१०९॥
भूतीकं नागरं धान्यं जले पक्त्वाऽवसेचयेत् ।
पलाशं कतृणं रास्नां तद्वत् पक्त्वाऽवसेचयेत् ११०
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।

उत्क्वाथ्येति जले पक्त्वा । अवसेचयेदित्यत्र 'उदरं' अत्रानुवर्तते ॥ १०७–११० ॥—

रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् १११
दीपनीयानि सर्पींषि जठरघ्नानि चक्ष्महे ।

'दीपनीयानि' इत्यत्र केचित् 'स्नेहनीयानि' इति पठन्ति ॥ १११ ॥—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ ११२ ॥
सक्षारैरर्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ।
कल्कैर्द्विपञ्चमूलस्य तुलार्धस्वरसेन च ॥ ११३ ॥
दधिमण्डाढकोपेतं तत् सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ११४
नागरत्रिफलाप्रस्थं घृततैलात्तथाऽऽढकम् ।
मस्तुनः साधयित्वैतत् पिबेत् सर्वोदरापहम् ११५
कफमारुतसंभूते गुल्मे चैतत् प्रशस्यते ।

पिप्पलीत्यादौ 'सक्षारैरर्धपलिकैर्द्विः प्रस्थं सर्पिषः पचेत्' इति पाठे द्विशब्दः प्रस्थेन तथाऽर्धपलिकैरित्यनेन च योज्यः; एतेन पिप्पल्यादीनां द्विरिति द्विगुणार्धपलैः षट्पलानि भवन्ति, प्रस्थेन च द्विशब्दयोजनाद्धृतप्रस्थद्वयं भवति । काश्मीरे तु "पलिकैः पिप्पलीक्षारैर्द्विप्रस्थं सर्पिषः पचेत्" इत्येव पठ्यते । जतूकर्णोऽप्याह—"दशमूलतुलार्धरसे सक्षारैः पञ्चकोलकैः सार्धं घृतार्धप्रस्थं सदधिमस्त्वाढकमुदरघ्नम्" इति ॥ ११२–११५ ॥—

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ॥ ११६ ॥
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ।
यवकोलकुलत्थानां पञ्चमूलरसेन च ॥ ११७ ॥
सुरासौवीरकाभ्यां च सिद्धं वाऽपि पिबेद्घृतम् ।

चतुर्गुणे इत्यादौ सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलं देयम् । उक्तं ह्यन्यत्र—"अग्निक्षारपलाभ्यां हि मूत्रचतुर्गुणं घृतप्रस्थम्" इति ॥ ११६ ॥ ११७ ॥—

एभिः स्निग्धाय संजाते बले शान्ते च मारुते ११८
स्रस्ते दोषाशये दद्यात् कल्पदिष्टं विरेचनम् ।

स्रस्ते दोषाशय इति दोषे स्नेहेन विमुक्तबन्धनत्वात् स्रस्ते इत्यर्थः ॥ ११८ ॥—

पटोलमूलं रजनीं विडङ्गं त्रिफलात्वचम् ॥ ११९ ॥
कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ।
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ॥
कृत्वा चूर्णमतो मुष्टिं गवां मूत्रेण ना पिबेत् ।
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलै रसैः ॥ १२१ ॥
मण्डं पेयां च पीत्वा ना सव्योषं षडहं पयः ।
शृतं पिबेत्ततश्चूर्णं पिबेदेवं पुनः पुनः ॥ १२२ ॥
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।
कामलां पाण्डुरोगं च श्वयथुं चापकर्षति ॥ १२३ ॥
पटोलाद्यमिदं चूर्णमुदरेषु प्रपूजितम् ।

पटोलेत्यादौ षडाद्यान् कार्षिकानित्यनेन पटोलमूलादीनां त्रिफलायाः समं षण्णां प्रत्येकं कार्षिकत्वं, कम्पिल्लकादीनां यथाक्रमं द्वित्रिचतुर्गुणत्वम् । मुष्टिमिति पलम् । सव्योषं षडहं शृतं पयः पिबेदिति विरेचनदिने मण्डपेयाविलेपीनामन्यतममभ्यपेक्षया कर्तव्यम्, ऊर्ध्वं यथोक्तपयोवृत्तिना भवितव्यं, ततः पुनः सप्तमे पटोलादिचूर्णं पेयम्; ईदृशं पुनः पुनः कर्तव्यम् ॥ ११९–१२३ ॥—

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ॥
पिबेद्द्राक्षाम्बुगोमूत्रकोलकर्कन्धुसीधुभिः ।
यवानी हपुषा धान्यं त्रिफला चोपकुञ्चिका ॥१२५॥
कारवी पिप्पलीमूलमजगन्धा शटी वचा ।
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ॥१२६॥
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ।
विडङ्गं च समांशानि दन्त्या भागत्रयं तथा ॥१२७॥
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ।
एतन्नारायणं नाम चूर्णं रोगगणापहम् ॥ १२८ ॥
नैनत् प्राप्यातिवर्तन्ते रोगा विष्णुमिवासुराः ।
तक्रेणोदरिभिः पेयं गुल्मिभिर्बदराम्बुना ॥ १२९ ॥
आनद्धवाते सुरया वातरोगे प्रसन्नया ।
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसैः ॥ १३० ॥
परिकर्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ।
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे ॥ १३१ ॥
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ।
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ॥ १३२ ॥
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ।

इति नारायणचूर्णम् ।

शङ्खिनी श्वेतभल्लातकी (?) । कोलकर्कन्धूनां रसा एव ज्ञेयाः । यवानीत्यादौ उपकुञ्चिका कृष्णजीरकम् । अजमोदा उग्रगन्धा ।

१ 'वर्षाभूं' इति पा० ।

कारवी अल्पजीरकं, जीरकशब्देन तु महाजीरकम्। दन्त्या भागात्त्रयः गृहीतभागापेक्षया, एवं त्रिवृद्विशाल्योरपि आद्य-भागापेक्षया द्वैगुण्यम्। नारायणसंज्ञानिमित्तमाह—नैनदित्यादि। एतेन नारायणसधर्मित्वात् नारायणसंज्ञेत्युक्तं भवति ॥ १२४–१३२ ॥—

हपुषां काञ्चनक्षीरीं त्रिफलां कटुरोहिणीम् ॥१३३॥
नीलिनीं त्रायमाणां च सातलां त्रिवृतां वचाम्।
सैन्धवं काललवणं पिप्पलीं चेति चूर्णयेत् ॥१३४॥
दाडिमत्रिफलामांसरसमूत्रसुखोदकैः।
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ॥ १३५ ॥
श्वित्रे कुष्ठे सरुजके सवाते विषमाग्निषु।
शोथार्शःपाण्डुरोगेषु कामलायां हलीमके ॥ १३६ ॥
वातं पित्तं कफं चाशु विरेकात् संप्रसाधयेत्।

इति हपुषाद्यं चूर्णम्।

नीलिनीं निचुलं व्योषं द्वौ क्षारौ लवणानि च १३७
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत्।

इति नीलिन्याद्यं चूर्णम्।

हपुषेत्यादौ काललवणं विडलवणमेव; अन्ये तु सौवर्चलाकारं लवणमाहुः। दाडिमादिभिः सर्वैरपि 'पेयः' इति संबध्यते ॥ १३३–१३७ ॥—

क्षीरद्रोणं सुधाक्षीरप्रस्थार्धसहितं दधि ॥ १३८ ॥
जातं विमथ्य तद्युक्त्या त्रिवृत्सिद्धं पिबेद्घृतम्।
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ॥ १३९ ॥
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च।
गुल्मानां गरदोषाणामुदराणां च शान्तये ॥ १४० ॥

इति स्नुहीक्षीरघृतम्।

क्षीरद्रोणमित्याद्युक्तानि घृतानि तुल्यकर्माणि। तत्र च प्रथमे घृते द्रवानुक्ते जलेन किंवा प्रकृतदधिमथितेनोद्धृतघृतेनैव पाकः। तथेत्यादिना षट्पलेन चेत्यन्तेन द्वितीयं घृतम्। तथेति पूर्वप्रकारोत्थितं घृतमेव। एवमुत्तरे घृते तद्वच्छब्दार्थं वर्णयन्ति ॥ १३८–१४० ॥

दधिमण्डाढके सिद्धात् स्नुक्क्षीरपलकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥ १४१ ॥
एषां चानु पिबेत् पेयां पयो वा स्वादु वा रसम्।
घृते जीर्णे विरिक्तस्तु कोष्णं नागरकैः श्रृतम् १४२
पिबेदम्बु ततः पेयां यूषं कौलत्थकं ततः।
पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वा प्रतिभोजितः ॥ १४३ ॥
पुनः पुनः पिबेत् सर्पिरानुपूर्व्या तयैव च।
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ॥
गुल्मानां गरदोषाणामुदराणां च शान्तये।
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ॥ १४५ ॥
गुल्मघ्नं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत्।

पेयादीनां त्रयाणामम्ब्वानुपानत्वं कफपित्तवातेषु; किंवा प्रकृत्यग्न्यपेक्षयाऽनुपानभेदः कल्पनीयः। नागरकैः श्रृतमित्यत्र षडङ्गविधिना जलसाधनम्। द्वितीये दिवसे पेया, यूषं कौलत्थिकं तत इति तृतीये दिवसे; उक्तं हि—"प्रथमे नागरयूषं; परेऽहनि पेयां, तृतीये कुलत्थोदकम्" इति। रूक्ष इति पुनः पुनः पिबेदित्यनेन संबध्यते; तेन रूक्षस्यैतत् स्नेहविरेचनं कर्तव्यं, स्निग्धो नाधिकारीति दर्शयति; स्निग्धे तु इदमेव नागरादिश्रृतपानीयादिनोपपादितं बलापेक्षया देयम्। भूयो वा प्रतिभोजित इति अधिकानि वा दिनानि मात्रया भोजितः सन् पुनः पुनः पिबेदिति योज्यम्। गुल्मघ्नमिति गुल्महरत्वेनोक्तं गुल्माध्याये, मिश्रकं गुल्मोक्तमेव ॥ १४१–१४५ ॥—

क्रमाद्विर्हृतदोषाणां जाङ्गलप्रतिभोजिनाम् ॥ १४६ ॥
दोषशेषनिवृत्त्यर्थं योगान् वक्ष्याम्यतः परम्।
चित्रकामरदारुभ्यां कल्कं क्षीरेण ना पिबेत् १४७
मासं युक्तस्तथा हस्तिपिप्पली विश्वभेषजम्।
विडङ्गं चित्रकं दन्ती चव्यं व्योषं च तैः पयः १४८
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत्।
पिबेत् कषायं त्रिफलादन्तीरोहितकैः श्रृतम् १४९
व्योषक्षारयुतं जीर्णे रसैरद्यात्तु जाङ्गलैः।
मांसं वा भोजनं भोज्यं सुधाक्षीरघृतान्वितम् १५०
क्षीरानुपानां गोमूत्रेणाभयां वा प्रयोजयेत्।
सप्ताहं माहिषं मूत्रं क्षीरं चानन्नभुक् पिबेत् ॥१५१॥
मासमौष्ट्रं पयश्छागं त्रीन्मासान् व्योषसंयुतम्।
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु ॥ १५२ ॥
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत्।
श्रृङ्गवेरार्द्रकरसः पाने क्षीरसमो हितः ॥ १५३ ॥
तैलं रसेन तेनैव सिद्धं दशगुणेन वा।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम् ॥ १५४ ॥
शूलानाहविबन्धेषु मस्तुयूषरसादिभिः।
सरलामधुशिग्रूणां बीजेभ्यो मूलकस्य च ॥ १५५ ॥
तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे।
स्तैमित्यारुचिहृल्लासे मन्देऽग्नौ मद्यपाय च ॥१५६॥
अरिष्टान् दापयेत् क्षारान् कफस्त्यानस्थिरोदरे।
श्लेष्मणो विलयार्थं तु दोषं वीक्ष्य भिषग्वरः १५७
पिप्पलीं तिल्वकं हिङ्गु नागरं हस्तिपिप्पलीम्।
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ॥ १५८ ॥
देवदारु हरिद्रे द्वे सरलातिविषे वचाम्[3]।

१ 'पयोऽन्नं' इति पा०।

१ 'जाङ्गलप्रतिभोजनम्' इति पा०। २ 'तिन्दुकं' इति पा०। ३ 'सिराम्' इति पा०।

कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्प्य च ॥ १५९ ॥
दधिसर्पिर्वसामज्जतैलयुक्तानि दाहयेत् ।
अन्नादूर्ध्वममतः क्षाराद्विडालकपदं पिबेत् ॥ १६० ॥
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ।
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शोजठराणि च ॥ १६१ ॥
विसूचिकामुदावर्तं वाताष्ठीलां च नाशयेत् ।
क्षारं चाजकरीषाणां स्रुतं मूत्रैर्विपाचयेत् ॥ १६२ ॥
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ।
पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम् १६३
द्वौ क्षारौ सातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम् ।
कोलप्रमाणां वटिकां पिबेत् सौवीरसंयुताम् ॥१६४॥
श्वयथावविपाके च प्रवृद्धे च दकोदरे ।
भावितानां गवां मूत्रे षष्टिकानां तु तण्डुलैः ॥१६५॥
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ।
पिबेदिक्षुरसं चानु जठराणां निवृत्तये ॥ १६६ ॥
स्वं स्वं स्थानं व्रजन्त्येवं तथा पित्तकफानिलाः ।
शङ्खिनीस्नुक्त्रिवृद्दन्तीचिरविल्वादिपल्लवैः ॥ १६७ ॥
शाकं गाढपुरीषाय प्राग्भक्तं दापयेद्भिषक् ।
ततोऽस्मै शिथिलीभूतवर्चोदोषाय शास्त्रवित् ॥१६८॥
दद्यान्मूत्रयुतं क्षीरं दोषशेषहरं शिवम् ।
पार्श्वशूलमुपस्तम्भं हृद्ग्रहं चापि मारुतः ॥ १६९ ॥
जनयेद्यस्य तं तैलं विल्वक्षारेण पाययेत् ।
तथाऽग्निमन्थस्योनाकपलाशतिलनालजैः ॥ १७० ॥
बलाकदल्यपामार्गक्षारैः प्रत्येकशः स्रुतैः ।
तैलं पक्त्वा भिषग्दद्यादुदराणां प्रशान्तये ॥ १७१ ॥
निवर्तते चोदरिणां हृद्ग्रहश्चानिलोद्भवः ।

चित्रकेत्यादौ मासं युक्त इति च्छेदः । तथा हस्तिपिप्पलीत्यादौ क्षीरेण पिबेदिति संबध्यते । विडङ्गादिभिः क्षीरमष्टपलं चतुर्गुणजलेन साधनीयम् । पिबेत् कषायमित्यादौ व्योषक्षारयोः प्रक्षेप्यत्वम् । मासं वेत्यादौ सुधाक्षीरसाधितं घृतं पूर्वोक्तं ज्ञेयम् । अनन्नभुगिति गोमूत्रेत्यादियोगत्रयेऽपि योज्यम् । क्षीराशीति क्षीरेण समं शिलाजतवश्नीयात् । शिलाजतुविधानेनेत्यनन्तरोक्तशिलाजतुविधानमेव क्षीराशीत्यनेनोक्तं गृह्यते न रसायनोक्तं, व्यवहितत्वात् । शृङ्गवेरार्द्रकशब्देन शुष्कार्द्रकस्य क्वाथनिष्पन्नं रसं निषेधयति । दूष्योदरं सान्निपातिकमुदरम् । सरला त्रिवृत् । अरिष्टान् पाययेदिति च्छेदः । पिप्पलीत्यादिके क्षारे दध्यादीनां द्रवाणां चूर्णपिण्डताकरणयोग्या मात्रा ज्ञेया । विडालपदकः कर्षः । क्षारं चाजकरीषाणामित्यादौ अजपुरीषक्षारं षड्गुणमूत्रेणैकविंशतिवारं स्रावयित्वा क्षारद्रवस्तावद् ग्राह्यः, स च यावच्चूर्णसमुदायाद्द्रवत्वेन कृतद्वैगुण्यः सन्नष्टगुणो भवति । पार्श्वेत्यादौ उपस्तम्भमिति उपशब्दः समीपवाची । विल्वक्षारेणेति विल्वफलदाहात् कृतेन क्षारेण श्वेतेन सिद्धं तैलं पाययेत् । तिलनालजैः क्षारैः सिद्धं तैलं पाययेदिति संबन्धः ॥ १४६–१७१ ॥—

कफे वातेन पित्तेन ताभ्यां वाऽप्यावृतेऽनिले ॥१७२॥
बलिनः स्रौषधयुतं तैलमेरण्डजं हितम् ।
सुविरिक्तो नरो यस्तु पुनराध्मापितो भवेत् ॥१७३॥
सुस्निग्धैरम्ललवणैर्निरूहैस्तमुपाचरेत् ।
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम् ॥१७४
तीक्ष्णैः सक्षारगोमूत्रैर्बस्तिभिस्तमुपाचरेत् ।

कफे इत्यादौ कफे वातेनावृते, कफे पित्तेनावृते, ताभ्यां कफपित्ताभ्यां वा वाते आवृते इत्यर्थः । स्रौषधयुतमिति आवरकदोषहरौषधयुतमित्यर्थः । सुविरिक्त इत्यादौ विरिक्तस्याध्मानं रिष्टमिति ज्ञेयम् । तेनेहानिर्जिते वाते पुनराध्मानं न रिष्टं, अतस्तच्चिकित्सोपदेशोऽत्र युज्यते; किंवा उपस्तम्भायुक्तं सत् पुनराध्मानं रिष्टमित्यादायेह 'सोपस्तम्भ' इति कृतं, सोपस्तम्भ इति सावरणः ॥ १७२–१७४ ॥—

क्रियातिवृत्ते जठरे त्रिदोषे चाप्रशाम्यति ॥ १७५ ॥
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान्नृपतीन् गुरून् ।
अनुज्ञाप्य भिषक् कर्म विदध्यात् संशयं ब्रुवन् ॥१७६॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ।
एवमाख्याय तस्येदमनुज्ञातः सुहृद्गणैः ॥ १७७ ॥
पानभोजनसंयुक्तं विषमस्मै प्रयोजयेत् ।
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम् १७८
भोजयेत्तदुदरिणं प्रविचार्य भिषग्वरः ।
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ॥१७९
विषेणाशुप्रमाथित्वादाशु भिन्नः प्रवर्तते ।
विषेण हृतदोषं तं शीताम्बुपरिषेचितम् ॥ १८० ॥
पाययेत भिषग्दुग्धं यवागूं वा यथाबलम् ।
त्रिवृन्मण्डूकपर्ण्योश्च शाकं सयववास्तुकम् ॥ १८१ ॥
भक्षयेत् कालशाकं वा स्वरसोदकसाधितम् ।
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ॥ १८२ ॥
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत् ।
एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः ॥ १८३ ॥
दुर्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः ।

क्रियातिवृत्त इत्यनेन जातोदकतां दर्शयति, तत्र हि क्रिया निषिद्धा "अजातोदकं" इत्यादिना । त्रिदोषे इत्यनेनापि जातो-

१ 'त्रिवृताशङ्खिनीदन्तीसुधापूतीकपल्लवैः । शाकं पक्त्वा प्रयुञ्जीत प्राग्भक्तं गाढवर्चसि' इति पा० । २ 'क्षारं' इति पा०

१ 'सोपष्टम्भ इति एवमुपष्टम्भयुक्तः क्रियारम्भयुक्तोऽपि' इति गङ्गाधरः । २ गङ्गाधरस्तु 'सुरसोदकसाधितं' इति पठित्वा, 'सुरसस्य पर्णासस्य क्वाथसाधितं' इति व्याख्यानयति ।

दक एव त्रिदोषज इति ज्ञेयम्; अजातोदके त्रिदोषेऽपि क्रिया उक्तैव । एवंभूतत्रिदोषस्य तु क्रियातिवृत्तपदेनैव लाभेऽपि त्रिदोषे इति पदं त्रिदोषस्य जातोदकस्याप्यत्र क्रियोपदर्शनार्थम् । ज्ञात्यादिसंमतिग्रहणादिना विपर्ययेऽयशोनिषेधः । अनुज्ञात इति अनुमतो विषादिप्रयोगे वैद्यः । यस्मिन् फले विषं विसृजेत् तत् फलं प्रयोजयेदिति संबन्धः । विषं चात्र दंष्ट्राविषमेव ज्ञेयम् । उक्तं हि—"दूष्योदरे बद्धगुदे क्षतान्त्रे च जलोदरे । अपि दंष्ट्राविषस्यैव प्रयोगो वै विशोधने" इति । स्थिर इति अचपलः । लीन इति धात्वन्तरगतः । प्रमाथित्वादिति क्षोभकारित्वात् । कालशाकं प्रसिद्धम् । खरसोदकाभ्यां साधितम् । ततश्चैव खरसमिति कालशाकखरसम् ॥ १७५–१८३ ॥—

इदं तु शल्यहर्तॄणां कर्म स्याद्दृष्टकर्मणाम् ॥ १८४ ॥
वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम् ।
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ॥ १८५ ॥
विपाट्यान्त्रं ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः ।
सर्पिषाऽभ्यज्य केशादीनवमृज्य विमोक्षयेत् ॥ १८६ ॥
मूर्च्छनाद्यच्च संमूढमन्त्रं तच्च विमोक्षयेत् ।
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ॥ १८७ ॥
बहुशः संगृहीतानि ज्ञात्वा च्छित्वा पिपीलिकान् ।
प्रतियोगैः प्रवेश्यान्त्रं प्रेयैः सीव्येद्व्रणं ततः ॥ १८८ ॥

नाभ्यधश्चतुरङ्गुलमिति नाभेरधो यथा भवति तथा चतुरङ्गुलं वामकुक्षिं मापयित्वा उदरमध्याच्चतुरङ्गुलं त्यक्त्वा वामकुक्षौ नाभ्यधस्तात् पाटनं कर्तव्यम् । विपाट्य चोदरं बद्धक्षतोदरयोः, अन्त्रं वीक्ष्य यथोचितक्रियार्थं, तत उदरे पाटनं केशादिमार्जनं संमूढान्त्रमोक्षश्च कर्तव्यः । छिद्रान्त्रस्य तु अन्त्रच्छिद्राणि पिपीलिकैरन्त्रच्छिद्रप्रदेशे दंशयित्वा, संगृहीतानि यथाऽन्त्रच्छिद्राणि भवन्ति तथा ज्ञात्वा, पिपीलिकाशिरश्छेदः कार्यः । ततस्तूभयोरपि बद्धछिद्रान्त्रयोः निःसृतान्त्रप्रवेशविधिः प्रतियोगैरित्यनेनोक्तः कर्तव्यः ॥ १८४–१८८ ॥

तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक् ।
वामपार्श्वे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत् १८९
विस्राव्य च विमृद्यैतद्वेष्टयेद्वाससोदरम् ।
तथा वस्तिविरेकाद्यैर्म्लानं सर्वं च वेष्टयेत् ॥ १९० ॥
निःस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत् ।
अतः परं तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः ॥ १९ ॥

१ 'प्रतीपोग्रैः' इति पा० । २ प्रेयैः सूच्यग्रैः; 'प्रेयैः' इति पा० । ३ 'केशादिमार्जनं कृत्वा संमूढमन्त्रं द्राङ् मोक्षयेत्' इति पा० । ४ 'अन्त्ररन्ध्राणि' इति पा० । ५ 'स्यूतयोरपि' इति पा० । ६ 'प्रतीपोग्रैरित्यनेनोक्तः कर्तव्यः । प्रतीपा यैरन्त्रं प्रतीपं कुर्वन्ति तानि पक्वतिन्तिडीफलादीनि, उग्रैरिति वचादिभिः; वचादिभिराघ्रातैरन्त्रं प्रविशति' इति पा० । ७ 'वामभागे' इति पा० ।

त्रीन् मासान् पयसा पेयां पिबेत्त्रींश्चापि भोजयेत् ।
श्यामाकं कोरदूषं वा क्षीरेणालवणं लघु ॥ १९२ ॥
नरः संवत्सरेणैवं जयेत् प्राप्तं जलोदरम् ।
प्रयोगाणां च सर्वेषामनु क्षीरं प्रयोजयेत् ॥ १९३ ॥
दोषानुबन्धरक्षार्थं बलस्थैर्यार्थमेव च ।
प्रयोगापचिताङ्गानां हितं क्षुदरिणां पयः ।
सर्वधातुक्षयार्तानां देवानाममृतं यथा ॥ १९४ ॥

तथेत्यादिना जातोदकविधिमाह । व्यधयेदिति नाभ्याश्चतुरङ्गुले इत्यर्थः । अतः परमिति अलवणपेयापानादूर्ध्वं षण्मासान् क्षीरवृत्तिः स्यात्, ततः क्षीरमात्रवृत्तिषण्मासादूर्ध्वं त्रीन्मासान् पयसा सह पेयां पिबेत्, ततश्चोर्ध्वं त्रीन् मासान् 'श्यामाकं कोरदूषं' इत्यादिग्रन्थोक्तं क्षीरेण भोजयेत्; एवं संवत्सरेणेति यदुक्तं तत् पूर्यते । प्रयोगापचिताङ्गानामिति प्रयोगैः क्षीणदेहानाम् ॥ १८९–१९४ ॥

तत्र श्लोकौ—
हेतुं प्राग्रूपमद्यानां लिङ्गं व्याससमासतः ।
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च ॥ १९५ ॥
जाताजाताम्बुलिङ्गानि चिकित्सां चोक्तवानृषिः ।
समासव्यासनिर्देशैरुदराणां चिकित्सिते ॥ १९६ ॥

इत्यग्निवेशकृते तन्त्रेऽप्राप्ते दृढबलपूरिते चिकित्सास्थाने उदरचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

हेतुमित्यादिना संग्रहं ब्रूते । संग्रहार्थश्चाध्यायोक्तोऽनुसरणीयः ॥ १९५ ॥ १९६ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सास्थाने उदरचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातोऽर्शश्चिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

उदरार्शसोस्त्रिदोषजत्वसामान्याद् बद्धगुदोदरकारणत्वाच्चानन्तरमर्शसां चिकित्सितमुच्यते ॥ १ ॥ २ ॥

आसीनं मुनिमव्यग्रं कृतजाप्यं कृतक्षणम् ।
पृष्टवानर्शसां युक्तमग्निवेशः पुनर्वसुम् ॥ ३ ॥

आसीनमित्यादि । कृतक्षणमिति कृतावसरम् । युक्तमुचितं प्रकोपहेत्वादि पप्रच्छेति योजना; किंवा युक्तमिति व्याख्यानोद्युक्तमिति भावः ॥ ३ ॥

१ 'सकोरदूषं श्यामाकं पयसाऽलवणं नरः' इति पा० । २ 'मुक्तिमग्निवेशः' इति पा० ।

**प्रकोपहेतुं संस्थानं स्थानं लिङ्गं चिकित्सितम्। साध्यासाध्यविभागं च तस्मै तन्मुनिरब्रवीत्॥ ४॥**

प्रकोपस्य रोगोत्पादस्य हेतुः; तथाह्यत्र प्रकोपशब्देन रोगोत्पादं वक्ष्यति; यथा—'पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम्' इति; संस्थानम् आकारः, संस्थानं यद्यपि लिङ्गे एव प्रविशति, तथाऽपीह बहुप्रपञ्चवक्तव्यत्वान् संस्थानं पृथगुक्तम्॥४॥

**इह खल्वग्निवेश! द्विविधान्यर्शांसि—कानिचित् सहजानि, कानिचिज्जातस्योत्तरकालजानि। तत्र बीजं गुदवलिबीजोपतप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो बीजोपतप्तौ हेतुः—मातापित्रोरपचारः, पूर्वकृतं च कर्म; तथाऽन्येषामपि सहजानां विकाराणाम्। तत्र सहजानि सह जातानि शरीरेण, अर्शांसीत्यधिमांसविकाराः॥ ५॥**

इहेत्यादिना द्विविधान्यर्शांसि प्रतिपाद्य सहजानि हेत्वादिना प्राह—तत्र बीजमित्यादि। बीजमिह शुक्रशोणितम्। तच्च गुदवल्यारम्भकेण बीजेनोपतप्तं सत् सहजानां कारणं भवति। गुदवल्यारम्भकेण च दुष्टेन बीजेन शरीरारम्भकस्य बीजस्यायमेवोपतापो यत् स्वयमदुष्टस्य दुष्टेन संबन्धः। ततश्च गुदवलीबीजदोषाद् गुदवलीष्वेवार्शोजन्म भवति, शेषावयवारम्भकं बीजमदुष्टत्वान्न विकारं जनयति। न बीजदुष्टेः सर्वथाऽनारम्भकत्वं, सर्वथा बीजानुपघातात्; उक्तं च "यस्य यस्य ह्यङ्गावयवस्य बीजे बीजभाग उपतप्तो भवति तस्य तस्य ह्यङ्गावयवस्य विकृतिरुपजायते" (शा. अ. ४) इत्यादि। अन्ये तु आहिताग्निपाठात् पूर्वनिपातानियमेन उपतप्तं गुदवलीबीजं यस्मिन् तद्गुदवलीबीजोपतप्तमितिपदं कृतमित्याहुः। अपचार इति अनुचिताहारविहाररूपः शुक्रशोणितभागविशेषदूषकः। पूर्वकृतं च कर्मेति जायमानस्य सहजार्शोऽभिनिर्वर्तकं जन्मान्तरीयं कर्म। तच्च कर्म दुर्बलं सन्मातापित्रपचारसहितं बीजदूषकं भवति, बलवत्तु विनाऽपचारजनकमेव भवतीति ज्ञेयम्। यथोक्तहेतुद्वयमन्यत्रापि सहजे गदेऽतिदिशति—तथेत्यादिना। तत्रेत्यादिना सहजशब्दार्थं व्याकरोति। अर्शःशब्दाभिधेयमाह—अर्शांसीत्यादि। अधिमांसविकारा इति अधिमांसविशेषाः॥ ५॥

**सर्वेषां चार्शसां क्षेत्रं—गुदस्यार्धपञ्चमाङ्गुलावकाशे त्रिभागान्तरास्तिस्रो गुदवलयः क्षेत्रमिति; केचित्तु भूयांसमेव देशमुपदिशन्त्यर्शसां—शिश्नमपत्यपथं गलतालुमुखनासिकाकर्णाक्षिवर्त्मानि त्वक् चेति। तदस्त्यधिमांसदेशतया, गुदवलिजानां त्वर्शांसीति संज्ञा तन्त्रेऽस्मिन्[1]। सर्वेषां चार्शसामधिष्ठानं—मेदो मांसं त्वक् च॥ ६॥**

त्रिभागान्तरा इति अर्धपञ्चाङ्गुलस्य सार्धाङ्गुलरूपतृतीयभागावकाशाः। गुदवलय इति गुदस्य मांसवलयः। अस्मिंश्च विभागेऽर्धपञ्चाङ्गुले गुदे गुदौष्ठेन गृहीतमर्धाङ्गुलं बाह्यवल्या परिगृह्यते। क्षेत्रं देशः; अर्शःप्ररोहप्रदेश इत्यर्थः। केचिदित्यनेन तन्त्रान्तरेऽपत्यपथादिगतानामपि अधिमांसानां 'अर्शांसि' इति संज्ञा भण्यते इति सूचयति। अधिष्ठानमिति दूष्यम्॥ ६॥

**तत्र सहजान्यर्शांसि कानिचिदणूनि, कानिचिन्महान्ति, कानिचिद्दीर्घाणि, कानिचिद्ध्रस्वानि, कानिचिद्वृत्तानि, कानिचिद्विषमविसृतानि, कानिचिदन्तःकुटिलानि, कानिचिद्बहिःकुटिलानि, कानिचिज्जटिलानि, कानिचिदन्तर्मुखानि, यथास्वं दोषानुबन्धवर्णानि॥ ७॥**

तत्र सहजानीत्यादिना संस्थानलिङ्गे प्राह। जटिलानीति तृणाङ्कुराकाराणि। दोषानुबन्धवर्णानीति दोषानुरूपवर्णानि॥ ७॥

**तैरुपहतो जन्मप्रभृति भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः शर्कराश्मरीमान्, तथाऽनियतविबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तराऽन्तरा श्वेतपाण्डुहरितपीतरक्तारुणतनुसान्द्रपिच्छिलकुणपगन्ध्यामपुरीषोपवेशी, नाभिवस्तिवंक्षणोद्देशे प्रचुरपरिकर्तिकान्वितः, सगुदशूलप्रवाहिकापरिहर्षप्रमेहप्रसक्तविष्टम्भान्त्रकूजोदावर्तहृदयेन्द्रियोपलेपः प्रचुरविबद्धतिक्ताम्लोद्गारः, सुदुर्बलः, सुदुर्बलाग्निः, अल्पशुक्रः, क्रोधनो, दुःखोपचारशीलः, कासश्वासतमकतृष्णाहृल्लासच्छर्द्यरोचकाविपाकपीनसक्षवथुपरीतः, तैमिरिकः, शिरःशूली, क्षामभिन्नसन्नसक्तजर्जरस्वरः, कर्णरोगी, शूनपाणिपादवदनाक्षिकूटः, सज्वरः, साङ्गमर्दः, सर्वपर्वास्थिशूली च, अन्तराऽन्तरा पार्श्वकुक्षिवस्तिहृदयपृष्ठत्रिकग्रहोपतप्तः, प्रध्यानपरः, परमालसश्चेति; जन्मप्रभृत्यस्य गुदजैरावृतो मार्गोपरोधाद्वायुरपानः[2] प्रत्यारोहन् समानव्यानप्राणोदानान् पित्तश्लेष्माणौ च प्रकोपयति, एते सर्वे एव प्रकुपिताः पञ्च वायवः पित्तश्लेष्माणौ चार्शसमभिद्रवन्त एतान् विकारानुपजनयन्ति; इत्युक्तानि सहजान्यर्शांसि॥ ८॥**

अनियतत्वं विबद्धमुक्तत्वादिविरुद्धधर्मयुग्मत्रये ज्ञेयम्। अन्तराऽन्तरेति कदाचित्, न सर्वदा। प्रचुरो विबद्धत्वादिगुणयुक्त उद्गारो यस्य स तथा। दुःखोपचारशील इति दुःखोपचारहेतुरित्यर्थः। प्रध्यानं घूर्णनम्। कस्मात् पुनरयं सहजार्शोयुक्त ईदृग्व्याधिपरिगृहीतो भवतीत्याह—जन्मेत्यादि। प्रत्यारोहन्निति

१ 'गुदवलिजानि' इति पा०।

१ 'तन्त्रेऽस्मिन्नितिवचनेन तन्त्रान्तरे नासादिगतान्यर्शांसीति भण्यन्त इति सूचयति' इति पा०। २ 'गुदमार्गोपरोधात्' इति पा०।

ऊर्ध्वं गच्छन्। अत्र क्रमेण पञ्चवातप्रकोपो भवति। सर्वथा वायुर्विगुणो भवति; तेन सर्वत्र वातविकाराः प्रायो भवन्ति; पित्तश्लेष्मप्रकोपाच्च तद्विकारा अपि भवन्तीति युक्तमेव। अर्शःसमिति अर्शोयुक्तं पुरुषम् ॥ ८ ॥

अत ऊर्ध्वं जातस्योत्तरकालजानि व्याख्यास्यामः—गुरुमधुरशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशनासात्म्यभोजनाद्गव्यमात्स्यवाराहमाहिषाजाविकपिशितभक्षणात् कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरदधिमण्डतिलगुडविकृतिसेवनान्माषयूषेक्षुरसपिण्याकपिण्डालुकशुष्कशाकशुक्तलशुनकिलाटतक्रपिण्डकबिसमृणालशालूककौञ्चादनकशेरुकशृङ्गाटकतरूटविरूढनवशूकशमीधान्यामममूलकोपयोगाद्गुरुफलशाकरागहरितकमर्दकवसाशिरस्पदपर्युषितपूतिशीतसंकीर्णान्नाभ्यवहारान्मन्दकातिक्रान्तमद्यपानाद्व्यापन्नगुरुसलिलपानादतिस्नेहपानादसंशोधनाद्वस्तिकर्मविभ्रमादव्यायामादव्यवायाद्दिवास्वप्नात् सुखशयनासनस्थानसेवनाच्चोपहताग्नेर्मलोपचयो भवत्यतिमात्रं, तथोत्कटकविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रयानादतिव्यवायाद्वस्तिनेत्रासम्यक्प्रणिधानाद्गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेललोष्टतृणादिघर्षणात् प्रततातिनिर्वाहणाद्वातमूत्रपुरीषवेगोदीरणात् समुदीर्णवेगविनिग्रहात् स्त्रीणां चामगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्तं मलमुपचितमधोगमासाद्य गुदवलिष्वाधत्ते, ततस्तास्वर्शांसि प्रादुर्भवन्ति ॥ ९ ॥

गुरुशीतेत्यादौ प्रमितम् अल्पम्। कृशं दुर्बलप्राणिभवम्। परमान्नं पायसः। पिण्याकं तिलकल्कः, किलाटो नष्टक्षीरपिण्डः, तक्रपिण्डस्तु तक्रजो घनभागः, बिसं स्थूलं मृणालं तनु, तरूटं त्रिरूढारकः, कौञ्चादनं घेञ्चुलिकेति ख्यातः। संकीर्णं मांसभक्तादि मिश्रप्रकृतिकमन्नम्। अतिक्रान्तमद्यं व्यापन्नमद्यम्। अव्यवायः अधिव्यवायः(?), स चेहाव्यवायविषमव्यवायादिर्ज्ञेयः। प्रततातिनिर्वाहणाद् दीर्घातिमात्रप्रवाहणात् ॥ ९ ॥

सर्षपमसूरमाषमुद्गमकुष्ठकयवकलायपिण्डिटिण्टिकेरकेबुकतिन्दुककर्कन्धुकाकणन्तिकाबिम्बीवदरकरीरोदुम्बरखर्जूरजाम्बवगोस्तनाङ्गुष्ठकशेरुशृङ्गाटकशृङ्गीदक्षशिखिशुकतुण्डजिह्वापद्ममुकुलकर्णिकासंस्थानानि सामान्याद्वातपित्तकफप्रबलानि ॥ १० ॥

टिण्टिकेरं करीरफलं, दक्षः कुक्कुटः। सामान्याद् वातपित्तकफप्रबलानीत्यनेन सर्वेदोषैरर्शसां नानाकृतिं दर्शयति ॥ १० ॥

तेषामयं विशेषः—शुष्कम्लानकठिनपरुषरूक्षश्यावानि, तीक्ष्णाग्राणि, वक्राणि, स्फुटितमुखानि, विषमविसृतानि, शूलाक्षेपतोदस्फुरणचिमिचिमासंहर्षपरीतानि, स्निग्धोष्णोपशयानि, प्रवाहिकाध्मानशिश्नवृषणवस्तिवङ्क्षणहृद्ग्रहाङ्गमर्दहृदयद्रवप्रबलानि, प्रततविबद्धवातमूत्रवर्चांसि, ऊरुकटीपृष्ठत्रिकपार्श्वकुक्षिवस्तिशूलशिरोऽभितापक्षवथूद्गारप्रतिश्यायकासोदावर्तायामशोषशोथमूर्च्छारोचकमुखवैरस्यतैमिर्यकण्डूनासाकर्णशङ्खशूलस्वरोपघातकराणि, श्यावारुणपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य वातोल्बणान्यर्शांसीति विद्यात् ॥ ११ ॥

भवतश्चात्र—

कषायकटुतिक्तानि रूक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥ १२ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च।
शोको वातातपस्पर्शौ हेतुर्वातार्शसां मतः ॥ १३ ॥

लिङ्गादिसामान्ये वातजादीनां किं विशेषनिश्चायकमित्याह—तेषामयं विशेष इति। अयमिति वक्ष्यमाणलिङ्गहेतुभेदरूपो विशेषो वातजादिव्यवच्छेदक इत्यर्थः। यद्यपि विशेषाभिधाने हेतुरेवाग्रेऽभिधातुं युज्यते, तथाऽपि संस्थानरूपलिङ्गाभिधानानुपन्नात् प्रतिलोमव्याख्यानाद्वा लिङ्गमेवाग्रेऽभिधीयते—शुष्कम्लानेत्यादिना, तदनु कषायेत्यादिना हेतुं वक्ष्यति; एवं पित्तकफजयोरपि व्यतिक्रमेण हेतुलिङ्गाभिधानं ज्ञेयम्। प्रमिताशनमत्र अत्यल्पाशनम्। आतपस्पर्शौ यद्यप्युष्णस्तथाऽपि रूक्षतया वातजनकः; उक्तं हि—"आतपः कटुको रूक्षः" इत्यादि ॥ ११-१३ ॥

मृदुशिथिलसुकुमाराण्यस्पर्शसहानि, रक्तपीतनीलकृष्णानि, स्वेदोपक्लेदबहुलानि, विस्रगन्धितनुपीतरक्तस्राविणि, रुधिरवहानि, दाहकण्डूशूलनिस्तोदपाकवन्ति, शीतोपशयानि, संभिन्नपीतहरितवर्चांसि, पीतविस्रगन्धिप्रचुरविण्मूत्राणि, पिपासाज्वरतमकसंमोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरीषस्य पित्तोल्बणान्यर्शांसीति विद्यात् ॥ १४ ॥

भवतश्चात्र—

कट्वूष्णलवणक्षारव्यायामाग्न्यातपप्रभाः।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ १५ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम्।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ १६ ॥

मृद्वित्यादिना पित्तजं प्राह। शिथिलानि कोमलानि। सुकुमाराणि अकर्कशानि। रक्तपीतस्राविणीति अत्र रक्तशब्देन लोहितवर्ण उच्यते। रुधिरवहानीति पदेन रक्तस्रुतिरेवोच्यते। प्रथमं विस्रगन्धीति रक्तविशेषणं, द्वितीयं विस्रगन्धीति विण्मूत्र-

१ 'विस्रगन्धीनि' इति पा०। २ 'कट्वम्ललवण०' इति पा०।

विशेषणम्। प्रथमं पीताभिधानं वर्चसो हरितपीतोपदेशार्थं, द्वितीयं तु विस्रगन्धेन सह पीतवर्णतोपदेशार्थं, तृतीयं तु पीतनखेत्यादौ केवलं पीतवर्णतोपदर्शनार्थम्। कट्वम्लेत्यादौ प्रथमसुष्णपदमुष्णस्पर्शोपदेशार्थं, द्वितीयमुष्णपदमुष्णवीर्योपदर्शनार्थम्। 'कट्वम्ललवणक्षार' इति वा पाठः ॥ १४–१६ ॥

तत्र यानि प्रमाणवन्ति, उपचितानि, श्लक्ष्णानि, स्पर्शसहानि, स्निग्धश्वेतपाण्डुपिच्छिलानि, स्तब्धानि, गुरूणि, स्तिमितानि, सुप्तसुप्तानि, स्थिरश्वयथूनि, कण्डूबहुलानि, बहुप्रततपिञ्जरश्वेतरक्तपिच्छास्राविणि, गुरुपिच्छिलश्वेतमूत्रपुरीषाणि, रूक्षोष्णोपशयानि, प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति, परिकर्तिकाहृल्लासनिष्ठीविकाकासारोचकप्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्रशोषशोथपाण्डुरोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियोपलेपास्यमाधुर्यप्रमेहकराणि, दीर्घकालानुबन्धीनि, अतिमात्रमग्निमार्दवक्लैब्यकराणि, आमविकारप्रबलानि, शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्वणान्यर्शांसीति विद्यात् ॥ १७ ॥

भवतश्चात्र—

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च।
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥१८॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम्।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ॥ १९ ॥

तत्र यानीत्यादिना कफजमाह। प्रमाणवन्तीति महाप्रमाणानि। सुप्तसुप्तानीति अत्यर्थं निश्चेतनानि। दीर्घकालानुशयानीति दीर्घकालानुबन्धीनि ॥ १७–१९ ॥

हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्वणानि च।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ २० ॥

हेतुलक्षणेत्यादौ उल्वणपदेन द्वन्द्वजे तृतीयोऽपि दोषो जनकोऽस्त्येव, परं सोल्वणो न भवतीति दर्शयति। सर्वो हेतुरिति यथोक्तसर्वहेतुः, सहजैः लक्षणैः सह सर्वो हेतुस्त्रिदोषाणां भवति; तेन त्रिदोषे सर्वहेतुत्वात् सहजानि लक्षणानि भवन्तीत्यर्थः ॥ २० ॥

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥२१
ग्रहणीदोषपाण्ड्वर्तेराशङ्का चोदरस्य च।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ २२ ॥

विष्टम्भः अप्रचलत्वम्। आटोपः गुडगुडाशब्दः ॥ २१ ॥ २२ ॥

अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः।
दोषैर्दोषविशेषात्तु विशेषः कल्प्यतेऽर्शसाम् ॥२३॥

अर्शसां त्रिदोषजन्यत्वेऽपि एकदोषजत्वादिव्यपदेशमाह—अर्शांसीत्यादि। यद्यपि सन्निपतितैरित्युक्ते त्रयाणां मेलको लभ्यते, तथाऽपि त्रिभिरिति पदं त्रयाणामप्यत्रानुबन्धत्वख्योपदर्शनार्थम्। दोषविशेषादिति उल्वणरूपवातादिविशेषात्। विशेष इति वातजोऽयं, पित्तजोऽयमित्यादिको विशेषः ॥ २३ ॥

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम्।
सर्वं एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ २४ ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ २५ ॥

पञ्चात्मेति प्राणापानव्यानोदानसमानरूपः ॥ २४ ॥ २५ ॥

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग् ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ २७ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा २९
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥३०॥
बाह्यायां तु वलौ जातान्येकदोषोल्वणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥३१॥
तेषां प्रशमने यत्नमाशु कुर्याद्विचक्षणः।
तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ३२ ॥

हस्तेत्यादिना साध्यासाध्यविभागमाह। अङ्गस्य रुगिति सर्वाङ्गरुक्। शेषत्वादायुष इति आयुषः शेषत्वे सतीत्यर्थः। समन्वित इति भावे क्तः; तेन चतुःपादसमन्वये सतीत्यर्थः ॥२६–३२॥

तत्राहुरेके शस्त्रेण कर्तनं हितमर्शसाम्।
दाहं क्षारेण चाप्येके, दाहमके तथाऽग्निना ॥ ३३ ॥
अस्त्येतद्भूरितन्त्रेण धीमता दृष्टकर्मणा।
क्रियते त्रिविधं कर्म भ्रंशस्तत्र सुदारुणः ॥ ३४ ॥
पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः।
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्तनम् ॥ ३५ ॥
पुनर्विरोहो रूढानां क्लेदो भ्रंशो गुदस्य च।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥ ३६ ॥
यत्तु कर्म सुखोपायमल्पभ्रंशमदारुणम्।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥ ३७ ॥

तत्रेत्यादिना चिकित्सामाह। कर्तनं छेदनम्। भूरि तन्त्राणि

१ 'स्पर्शसुखानि' इति पा०। २ 'दीर्घकालानुशयानि' इति पा०।

१ 'अस्त्येतद्भू' इति पा०।

अधीतानि येन स भूरितन्त्रः। अयं प्रकरणार्थः—शिक्षितेनैव शस्त्रकर्म विधानतः कर्तव्यम्। पुनर्विरोहः पुनरुत्पत्तिः; रूढानां रूढव्रणानाम् ॥ ३३–३७ ॥

वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः।
प्रस्राविणि तथाऽऽर्द्राणि रक्तपित्तोल्वणानि च॥३८॥
तत्र शुष्कार्शसां पूर्वं प्रवक्ष्यामि चिकित्सितम्।
स्तब्धानि स्वेदयेत् पूर्वं शोफशूलान्वितानि च ॥३९॥
चित्रकक्षारविल्वानां तैलेनाभ्यज्य बुद्धिमान्।
यवमाषकुलत्थानां पुलाकानां च पोट्टलैः ॥ ४० ॥
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैस्तथा।
वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ॥ ४१ ॥
शक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा।
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः ॥४२॥
रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हापुषैरपि।
इष्टकस्य खराह्वायाः शाकैर्गृञ्जनकस्य वा ॥ ४३ ॥
अभ्यज्य कुष्ठतैलेन स्वेदयेत् पोट्टलीकृतैः।
वृषार्कैरण्डविल्वानां पत्रोत्क्वाथैश्च सेचयेत् ॥ ४४ ॥
मूलकत्रिफलार्काणां वेणूनां वरुणस्य च।
अग्निमन्थस्य शिग्रोश्च पत्राण्यश्मन्तकस्य च ॥ ४५ ॥
जलेनोत्क्वाथ्य शूलार्तं स्वभ्यक्तमवगाहयेत्।
कोलोत्क्वाथेऽथवा कोष्णे सौवीरकतुषोदके ॥ ४६ ॥
विल्वक्वाथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके।
गोमूत्रे वा सुखोष्णे तं स्वभ्यक्तमवगाहयेत् ॥ ४७॥
कृष्णसर्पवराहोष्ट्रजतुकावृषदंशजाम्।
वसामभ्यञ्जने दद्याद्धूपनं चार्शसां हितम् ॥ ४८ ॥
नृकेशाः सर्पनिर्मोको वृषदंशस्य चर्म च।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥ ४९ ॥
तुम्बुरूणि विडङ्गानि देवदार्वक्षता घृतम्।
बृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ५०
वराहवृषविट् चैव धूपनं सक्तवो घृतम्।
कुञ्जरस्य पुरीषं तु घृतं सर्जरसस्तथा ॥ ५१ ॥
हरिद्राचूर्णसंयुक्तं सुधाक्षीरं प्रलेपनम्।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥५२॥
शिरीषबीजं कुष्ठं च पिप्पल्यः सैन्धवं गुडः।
अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम् ॥ ५३ ॥
पिप्पल्यश्चित्रकः श्यामा किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुटशकृद्धरिद्रागुडसंयुतः ॥ ५४ ॥
दन्ती श्यामाऽमृतासङ्गः पारावतशकृद्गुडः।
प्रलेपः स्याद्गजास्थीनि निम्बो भल्लातकानि च ॥५५॥
प्रलेपः स्यादलं कोष्णं वासन्तकवसायुतम्।
शूलश्वयथुहृद्युक्तं चुल्लूकीवसयाऽथवा ॥ ५६ ॥
आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः।
करञ्जो वस्तमूत्रं च लेपनं श्रेष्ठमर्शसाम् ॥ ५७ ॥
अभ्यङ्गाद्याः प्रदेहान्ता य एते परिकीर्तिताः।
स्तम्भश्वयथुकण्ड्वर्तिशमनास्तेऽर्शसां मताः ॥ ५८ ॥
प्रदेहान्तैरुपक्रान्तान्यर्शांसि प्रस्रवन्ति हि।
संचितं दुष्टरुधिरं ततः संपद्यते सुखी ॥ ५९ ॥
शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति।
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ॥ ६० ॥
जलौकोभिस्तथा शस्त्रैः सूचीभिर्वा पुनः पुनः।
अवर्तमानं रुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥ ६१ ॥

वातश्लेष्मोल्वणानीत्यत्र यद्यपि कफजे स्राव उक्तः, तथाऽपि स पिच्छारूपानुबन्धः न तु रक्तस्रावः, तेन शुष्कार्शोग्रहणं; पिच्छास्रावस्तु शुष्कार्द्रकारणमेलकेऽपि भवति। चित्रकक्षारविल्वानां तैलेनेति चित्रकादिसिद्धेन तैलेन। पुलाकं तुच्छधान्यम्। कार्ष्णगन्धिकैरिति शोभाञ्जनकृतैः। खराह्वाया अजमोदायाः। कुष्ठतैलेनेति कुष्ठसिद्धतैलेन। जतुका चर्मचटिका। वृषदंशः विडालः। अक्षता इति अखण्डिता यवाः। घृतपादान्ताश्चत्वारो धूपाः; हस्तिमलसर्जरसाभ्यां च पञ्चमो धूपः। किण्वं सुराबीजम्। मदनतण्डुला मदनफलशस्यम्। दन्ती निकुम्भा। अमृतासङ्गः मयूरतुत्थम्। अलं हरितालम्। वासन्तकवसा उष्ट्रवसा। कटुकालाबुः तिक्तकालाबुः। जलौकोभिरित्यादौ अवर्तमानं रुधिरं प्रवाहयेदिति योज्यम्। विल्वपेशिका विल्वमध्यम् ॥ ३८–६१ ॥

गुदश्वयथुशूलार्तं मन्दाग्निं पाययेत्तु तम्।
त्र्यूषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम् ॥ ६२ ॥
सौवर्चलं पुष्कराख्यमजाजीं विल्वपेषिकाम्।
विडं यवानीं हपुषां विडङ्गं सैन्धवं वचाम् ॥ ६३ ॥
तिन्तिडीकं च मण्डेन मद्येनोष्णोदकेन वा।
तथाऽर्शोग्रहणीदोषशूलानाहाद्विमुच्यते ॥ ६४ ॥
पाचनं पाययेद्वा तद्यदुक्तं ह्यातिसारिके।
सगुडामभयां वाऽपि प्राशयेत् पौर्वभक्तिकीम् ६५
पाययेद्वा त्रिवृच्चूर्णं त्रिफलारससंयुतम्।
हृते गुदाश्रये दोषे गच्छन्त्यर्शांसि संक्षयम् ॥ ६६ ॥
गोमूत्राध्युषितां दद्यात् सगुडां वा हरीतकीम्।
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥ ६७ ॥
सनागरं चित्रकं वा सीधुयुक्तं प्रयोजयेत्।
दापयेच्चव्ययुक्तं वा सीधुं साजाजिचित्रकम् ॥ ६८ ॥
सुरां सहपुषापाठां दद्यात् सौवर्चलान्विताम्।
दधित्थविल्वसंयुक्तं युक्तं वा चव्यचित्रकैः ॥ ६९ ॥

१ 'अर्कपत्रं' इति पा०। २ 'यद्वक्ष्याम्यतिसारिणे' इति पा०।
३ 'गुदजा यान्ति' इति पा०।

भल्लातकयुतं वाऽपि प्रदद्यात्तक्रतर्पणम्।
बिल्वनागरयुक्तं वा यवान्या चित्रकेण च ॥ ७० ॥
चित्रकं हपुषां हिङ्गुं दद्याद्वा तक्रसंयुतम्।
पञ्चकोलयुतं वाऽपि तक्रमस्मै प्रदापयेत् ॥ ७१ ॥

गोमूत्राध्युषितामिति रात्रौ गोमूत्रस्थापिताम्। भल्लातकयुतमित्यत्र भल्लातकचूर्णस्य सक्त्वपेक्षया दशमो भागः। उक्तं हि—"चूर्णं तर्पणभागैर्नवभिः संयोजितं देयम्" इति; अन्ये तु तर्पणभल्लातकचूर्णयोः समानयोः श्लोकस्य प्रयोगमाहुः। ॥ ६२-७१ ॥

हपुषां कुञ्चिकां धान्यमजाजीं कारवीं शटीम्।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥७२॥
यवानीं चाजमोदां च चूर्णितं तक्रसंयुतम्।
मन्दाम्लकटुकं विद्वान् स्थापयेद्घृतभाजने ॥ ७३ ॥
व्यक्ताम्लकटुकं जातं तक्रारिष्टं मुखप्रियम्।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु ॥ ७४ ॥
दीपनं रोचनं वर्ण्यं कफवातानुलोमनम्।
गुदश्वयथुकण्ड्वर्तिनाशनं बलवर्धनम् ॥ ७५ ॥
इति तक्रारिष्टः।

तक्रारिष्टे तु ग्रहणीचिकित्सायां "यवान्यामलकं पथ्या मरीचं त्रिपलांशिकम्। लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥ तक्रे तदासुतं जातं तक्रारिष्टं पिबेन्नरः" (चि. अ. १५) इत्युक्ततक्रारिष्टानुसारेणेहापि तक्रचूर्णमानव्यवस्था। एतदनुसारप्रक्षिप्तेनैव चात्र हपुषादिचूर्णेन मन्दाम्लकटुकं भवतीत्युक्तं; मन्दाम्लकटुकं स्थापयेत्, व्यक्ताम्लकटुकमिति जातलक्षणं; व्यक्ताम्लं कटु चेति व्यक्ताम्लकटुकं; न तु कटुत्वमपि व्यक्तमत्र, सन्धानेन व्यक्तकटुतानुत्पादात्। अन्नस्य त्रिषु कालेष्विति भोजनादिमध्यान्तेषु। सस्नेहं तक्रं वाते, कफे रूक्षम् ॥ ७१-७२ ॥

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ७६ ॥
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्।
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ॥ ७७ ॥
सप्ताहं वा दशाहं वा पक्षं मासमथापि वा।
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत् ॥ ७८ ॥
अत्यर्थमृदुकायाग्नेस्तक्रमेवावचारयेत्।
सायं वा लाजशक्तूनां दद्यात्तक्रावलेहिकाम् ॥ ७९ ॥
जीर्णे तक्रे प्रदद्याद्वा तक्रपेयां ससैन्धवाम्।
तक्रानुपानं सस्नेहं तक्रौदनमतः परम् ॥ ८० ॥
यूषैर्मांसरसैर्वाऽपि भोजयेत्तक्रसंयुतैः।
यूषे रसेन वाऽप्यूर्ध्वं तक्रसिद्धेन भोजयेत् ॥ ८१ ॥

कालक्रमज्ञः सहसा न च तक्रं निवर्तयेत्।
तक्रप्रयोगो मासान्तः क्रमेणोपरमो हितः ॥ ८२ ॥
अपकर्षो यथोत्कर्षो न त्वन्नादपकृष्यते।
शक्त्यागमनरक्षार्थं दार्ढ्यार्थमनलस्य च ॥ ८३ ॥
बलोपचयवर्णार्थमेष निर्दिश्यते क्रमः।
रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ॥ ८४ ॥
तक्रं दोषाग्निबलवित्त्रिविधं तत् प्रयोजयेत्।
हतानि न विरोहन्ति तक्रेण गुदजानि तु ॥ ८५ ॥
भूमावपि निषिक्तं तद्दहेत्तक्रं तृणोलुपम्।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः ॥ ८६ ॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥ ८७ ॥
वातश्लेष्मविकाराणां शतं चापि निवर्तते।
नास्ति तक्रात् परं किंचिदौषधं कफवातजे ॥ ८८ ॥

तक्रप्रयोगः—पूर्वाह्णे तक्रमेव केवलं पेयं, तत्रात्यर्थं मृद्वग्निना सायमपि तक्रमेव सेव्यम्, एतत् 'अत्यर्थमृदुकायाग्नेस्तक्रमेवावचारयेत्' इत्यनेनोक्तम्। किंचित्प्रवृद्धेऽग्नौ प्रातस्तक्रमेव पेयं, सायं तु लाजसक्तूनां तक्रयुक्ताऽवलेहिका देया। ततस्तु क्रमेणाग्नौ वृद्धे तक्रपेया तक्रौदनं तक्रसंस्कृतयूषादिभोजनानि सायं देयानि, प्रातस्तु तक्रमेव, सप्ताहादिस्तक्रकालो ज्ञेयः[1]। अत्र जतूकर्णः—"प्रातस्तक्रप्रयोगः, क्रमेणोत्कर्षापकर्षौ, जीर्णे च सैन्धवान्विततक्रेणौदनं वा, अतिमन्दाग्नेस्तक्रमेव" इति। सहसेति एकदा। मासान्ते इति मासे नातिक्रामति। अपकर्षो यथोत्कर्ष इति येन क्रमेण तक्रं वृद्धं तेनैव मात्राक्रमेण तक्रमपकृष्यत इति। तक्रप्रयोगह्रासे सति अन्नसमुदायाद्ध्रासो न कर्तव्यः, योंऽशस्तक्रस्यापकृष्टः स अन्नान्तरेण पूरणीय इत्यर्थः। कस्मादयं तक्रप्रयोगक्रम इत्याह—शक्तीत्यादि। रूक्षमित्यादिनोक्तं त्रिविधं तक्रं कफपित्तवातेषु दोषेषु, मन्दतम-मन्दतर-मन्देष्वग्निषु, बलेषु चाधममध्यमोत्तमेषु, यथासंख्यं ज्ञेयम्। भूमावपीत्यादि केचित् पठन्ति। शतमिति विंशतिः श्लेष्मविकाराः, अशीतिर्वातविकारा इति मिलित्वा विकाराणां शतम् ॥ ७६-८८ ॥

पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
शृङ्गवेरमजाजीं च कारवीं धान्यतुम्बुरु ॥ ८९ ॥
बिल्वं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत्।
फलाम्लां यमकैर्भृष्टां तां दद्याद्गुदजापहाम् ॥ ९० ॥
एतैश्चैव खडान् कुर्यादेतैश्च विपचेज्जलम्।
एतैश्चैव घृतं साध्यमर्शसां विनिवृत्तये ॥ ९१ ॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा।
दद्याद्यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥ ९२ ॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा।
दधित्थबिल्वयूषं वा सकुलत्थमकुष्ठकम् ॥ ९३ ॥

१ अयमर्धश्लोकः क्वचित्पुस्तके न प्रदृश्यते।

[1] 'सप्ताहादितक्रकालं यावद्देयम्' इति पा०।

छागलं वा रसं दद्याद्यूषैरेभिर्विमिश्रितम् ।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ॥९४॥
रक्तशालिर्महाशालिः कलमो लाङ्गलः सितः ।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम् ॥ ९५ ॥
इत्युक्तो भिन्नशकृतामर्शसां च क्रियाक्रमः ।

बिल्वं बालबिल्वम् । फलाम्लामिति फलैर्दाडिमादिभिरम्लाम् । ग्राहिभिर्युतमिति वर्चोग्राहिद्रव्यसंस्कृतम् । रक्तशाल्यादयोऽन्नपानव्याकृताः ॥ ८९–९५ ॥—

येऽत्यर्थं गाढशकृतस्तेषां वक्ष्यामि भेषजम् ॥ ९६ ॥
सस्नेहैः शक्तुभिर्युक्तां प्रसन्नां लवणीकृताम् ।
दद्यान्मत्स्यण्डिकां पूर्वं भक्षयित्वा सनागराम् ॥९७॥
गुडं सनागरं पाठां फलाम्लं पाययेच्च तम् ।
गुडं घृतयवक्षारयुक्तं वाऽपि प्रयोजयेत् ॥ ९८ ॥
यवानीं नागरं पाठां दाडिमस्य रसं गुडम् ।
सतक्रलवणं दद्याद्वातवर्चोऽनुलोमनम् ॥ ९९ ॥
दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा ।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥१००॥
प्राग्भक्तं यमके भृष्टान् सक्तुभिश्चावचूर्णितान् ।
करञ्जपल्लवान् दद्याद्वातवर्चोऽनुलोमनान् ॥ १०१ ॥
मदिरां वा सलवणां सीधुं सौवीरकं तथा ।
गुडनागरसंयुक्तं पिबेद्वा पौर्वभक्तिकम् ॥ १०२ ॥

यवानीनागरमित्यादौ यवान्यादीनि समानि तक्रेण पेयानि; लवणं तावद्यावल्लवणरसता भवति ॥ ९६–१०२ ॥

पिप्पलीनागरक्षारकारवीधान्यजीरकैः ।
फाणितेन च संयोज्य फलाम्लं दापयेद्घृतम् ॥१०३॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
शृङ्गवेरयवक्षारौ तैः सिद्धं वा पिबेद्घृतम् ॥ १०४ ॥
चव्यचित्रकसिद्धं वा गुडक्षारसमन्वितम् ।
पिप्पलीमूलसिद्धं वा सगुडक्षारनागरम् ॥ १०५ ॥
पिप्पलीपिप्पलीमूलदधिदाडिमधान्यकैः ।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविबन्धनुत् ॥ १०६ ॥
चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यवानीं पिप्पलीमूलमुभे च बिडसैन्धवे ॥ १०७ ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥ १०८ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवङ्क्षणशूलं च घृतमेतद्व्यपोहति ॥ १०९ ॥

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ॥११०॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥ १११ ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ॥ ११२ ॥
पिप्पलीं नागरं पाठां श्वदंष्ट्रां च पृथक् पृथक् ।
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ॥११३॥
गण्डीरं पिप्पलीमूलं व्योषं चव्यं च चित्रकम् ।
पिष्ट्वा कषाये विनयेत् पूते द्विपलिकं भिषक् ॥११४॥
पलानि सर्पिषस्त्रिंशच्चत्वारिंशत् प्रदापयेत् ।
चाङ्गेरीस्वरसं तुल्यं सर्पिषा दधि षड्गुणम् ॥ ११५॥
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत् ।
तदाहारे विधातव्यं पाने प्रायोगिके विधौ ॥ ११६ ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ११७ ॥
कासहिक्कारुचिश्वासदूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसंदीपनं परम् ॥ ११८ ॥

पिप्पलीनागरेत्यादौ अपक्वमेव केचिद्घृतमिच्छन्ति । गुडक्षारसमन्वितमित्यत्र घृते सिद्धे गुडादीनां प्रक्षेप्यत्वं ज्ञेयम् । पिप्पलीपिप्पलीमूलेत्यादौ दधि द्रवं, शेषाणां कल्कः । जाते दध्नीति सुजाते । नागरमित्यादिके घृते चाङ्गेरीस्वरसस्यापि चतुर्गुणेन दध्ना चेति चकाराच्चातुर्गुण्यम् । पिप्पलीमित्यादौ भूरिमानसान्निध्ये क्वाथस्यानुक्तमानत्वात् स्नेहसमत्वमेव; तेन द्वादशपलेऽपि क्वाथ्यद्रव्ये त्रिप्रस्थं पानीयं दत्त्वा चत्वारिंशत्पलानि स्थाप्यानि । गण्डीरमित्यादिना कल्कद्रव्याण्याह ॥ १०३–११८ ॥

सगुडां पिप्पलीयुक्तां घृतभृष्टां हरीतकीम् ।
त्रिवृद्दन्तीयुतां वाऽपि भक्षयेदानुलोमिकीम् ॥११९॥
विड्वातकफपित्तानामानुलोम्येऽथ निर्वृते ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्धते ॥ १२० ॥
बर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ।
दक्षाणां वर्तकानां च दद्याद्विड्वातसंग्रहे ॥ १२१ ॥
त्रिवृद्दन्तीपलाशानां चाङ्गेर्याश्चित्रकस्य च ।
यमके भर्जितं दद्याच्छाकं दधिसमन्वितम् ॥ १२२ ॥
उपोदिकां तण्डुलीयं वीरां वास्तुकपल्लवान् ।
सुवर्चलां सलोणीकां यवशाकमवल्गुजम् ॥ १२३ ॥
काकमाचीं रुहापत्रं महापत्रं तथाऽम्लिकाम् ।
जीवन्तीं शटिशाकं च शाकं गृञ्जनकस्य च ॥१२४॥

१ 'घृतं' इति पा० । २ 'प्राग्भक्तान्' इति पा० । ३ 'सगुडामभयां वाऽथ प्राशयेत्' इति पा० । ४ 'गुडक्षारसमन्वितम्' इति पा० । ५ '°नागरधान्यकैः' इति पा० ।

१ 'पूतेऽर्धपलिकं' इति पा० । २ 'आनुलोम्येन निर्मले' इति पा० ।

दधिदाडिमसिद्धानि यमके भर्जितानि च ।
धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥१२५॥
गोधालोपाकमार्जारश्वाविदुष्ट्रगवामपि ।
कूर्मशल्लकयोश्चैव साधयेच्छाकवद्रसान् ॥ १२६ ॥
रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये ।

आनुलोमिकानि शाकान्याह—उपोदिकामित्यादि । सुवर्चला सूर्यावर्ता । रुहापत्रम् उदग्रशाकम् । महापत्रः श्योनाकः । दधिदाडिमादि संस्कारद्रव्यम् ॥ ११९–१२६ ॥—

ज्ञात्वा वातोल्वणं रूक्षं मन्दाग्निं गुदजातुरम् १२७
मदिरां शार्करं जातं सीधुं तक्रं तुषोदकम् ।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् ॥१२८॥
कण्टकार्या शृतं वाऽपि शृतं नागरधान्यकैः ।
अनुपानं भिषग्दद्याद्वातवर्चोऽनुलोमनम् ॥ १२९ ॥

शार्करमिति शर्कराकृतम् । अरिष्टं वक्ष्यमाणम् ॥१२७–१२९॥

उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः ।
विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम् ॥१३०॥
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥ १३१ ॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन च ।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥ १३२ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥ १३३ ॥
पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ॥ १३४ ॥

पिप्पल्याद्ये तैले केचित् तन्त्रान्तरदर्शनात्तोयमपि चतुर्गुणं वदन्ति; तन्न, तन्त्रान्तरोक्तं योगान्तरमेव पश्यामः ॥ १३०–१३४ ॥

आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः ।
दार्वन्तैः स्तब्धशूलानि गुदजानि प्रलेपयेत् ॥१३५॥
दिग्धास्तैः प्रस्रवन्त्याशु श्लेष्मपिच्छां सशोणिताम् ।
कण्डूः स्तम्भः सरुक् शोफः स्रुतानां विनिवर्तते ॥

आनुवासनिकैरिति अनुवासनतैलसाधनार्थमुक्तैः पिप्पल्यादिभिः । षड्विरेचनाशताश्रितीयोक्तानुवासनोपदर्शककषायग्रहणप्रतिषेधार्थं दार्वन्तैरिति विशेषणं; तेन दार्वन्तेनोक्तान्येव गृह्यन्ते ॥ १३५ ॥ १३६ ॥

निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम् ।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ॥ १३७ ॥

दाशमूलिकमिति दशमूलकषाययुतम् । फलादिभिरिति मदनफलादिभिरास्थापनयौगिकैः ॥ १३७ ॥

हरीतकीनां प्रस्थार्धं प्रस्थमामलकस्य च ।
स्यात् कपित्थाद्दशपलं ततोऽर्धा चेन्द्रवारुणी १३८
विडङ्गं पिप्पली लोध्रं मरिचं सैलवालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ १३९ ॥
द्रोणशेषे रसे तस्मिन् पूते शीते समावपेत् ।
गुडस्य द्विशतं तिष्ठेत्तत् पक्षं घृतभाजने ॥ १४० ॥
पक्षादूर्ध्वं भवेत् पेया ततो मात्रा यथाबलम् ।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम् १४१
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः ।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्धनः ॥ १४२ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ।
कृमिग्रन्थ्यर्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत् ॥ १४३ ॥
इत्यभयारिष्टः ।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् १४४
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ।
रसे चतुर्थशेषे तु पूते शीते समावपेत् ॥ १४५ ॥
तुलां गुडस्य तत्तिष्ठेन्मासार्धं घृतभाजने ।
तन्मात्रया पिबन्नित्यमर्शोभ्यो विप्रमुच्यते ॥ १४६॥
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनं चारुचिघ्नं च दन्त्यरिष्टमिमं विदुः ॥ १४७ ॥
इति दन्त्यरिष्टः ।

हरीतकीफलप्रस्थं प्रस्थमामलकस्य च ।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः ॥१४८॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम् ।
पादावशेषे पूते च रसे तस्मिन् प्रदापयेत् ॥ १४९॥
गुडस्यैकां तुलां वैद्यस्तत् स्थाप्यं घृतभाजने ।
पक्षस्थितं पिबेदेनं ग्रहण्यर्शोविकारवान् ॥ १५० ॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ।
वर्चोमूत्रानिलकृतान् विबन्धानग्निमार्दवम् ॥ १५१ ॥
कासं गुल्ममुदावर्तं फलारिष्टो व्यपोहति ।
अग्निसंदीपनो ह्येष कृष्णात्रेयेण भाषितः ॥ १५२ ॥
इति फलारिष्टः ।

दुरालभायाः प्रस्थः स्याच्चित्रकस्य वृषस्य च ।
पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥ १५३ ॥
दन्त्याश्च द्विपलान् भागाञ्जलद्रोणे विपाचयेत् ।
पादावशेषे पूते च सुशीते शर्कराशतम् ॥ १५४ ॥

१ 'द्विगुणक्षीरसंयुतम्' इति पा० । २ 'दर्व्या तैरौषधैर्दिग्धाः स्तब्धाः शूना गुदेरुहाः' इति पा० ।

१ 'शीते च पूते तस्मिन् सिताशतम्' इति पा० ।

प्रक्षिप्य स्थापयेत् कुम्भे मासार्धं घृतभाविते ।
प्रलिप्ते पिप्पलीचव्यप्रियङ्गुक्षौद्रसर्पिषा ॥ १५५ ॥
तस्य मात्रां पिबेत् काले शार्करस्य यथाबलम् ।
अर्शांसि ग्रहणीदोषमुदावर्तमरोचकम् ॥ १५६ ॥
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् ।
हृद्रोगं पाण्डुरोगं च सर्वमेतेन साधयेत् ॥ १५७ ॥
इति द्वितीयफलारिष्टः ।

नवस्यामलकस्यैकां कुर्याज्जर्जरितां तुलाम् ।
कुडवांशाश्च पिप्पल्यो विडङ्गं मरिचं तथा ॥ १५८ ॥
पाठां च पिप्पलीमूलं क्रमुकं चव्यचित्रकौ ।
मञ्जिष्ठैल्वालुकं लोध्रं पलिकानुपकल्पयेत् ॥ १५९ ॥
कुष्ठं दारुहरिद्रां च सुराह्वं सारिवाद्वयम् ।
इन्द्राह्वं भद्रमुस्तं च कुर्यादर्धपलोन्मितम् ॥ १६० ॥
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च ।
द्रोणाभ्यामम्भसो द्वाभ्यां साधयित्वाऽवतारयेत् ॥
पादावशेषे पूते च शीते तस्मिन् प्रदापयेत् ।
मृद्वीकाद्याढकरसं शीतं निर्यूहसंमितम् ॥ १६२ ॥
शर्करायाश्च भिन्नाया दद्याद्द्विगुणितां तुलाम् ।
कुसुमस्य रसस्यैकमर्धप्रस्थं नवस्य च ॥ १६३ ॥
त्वगेलाम्बुपत्राम्बुसेव्यक्रमुककेशरान् ।
चूर्णयित्वा तु मतिमान् कार्षिकानत्र दापयेत् १६४
तत् सर्वं स्थापयेत् पक्षं सुचौक्षे घृतभाजने ।
प्रलिप्ते सर्पिषा किंचिच्छर्करागुरुधूपिते ॥ १६५ ॥
पक्षादूर्ध्वमरिष्टोऽयं कनको नाम विश्रुतः ।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः ॥ १६६ ॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम् ।
हृद्रोगं पाण्डुतां शोथं गुल्मं वर्चोविनिग्रहम् १६७
कासं श्लेष्मामयांश्चोग्रान् सर्वानेवापकर्षति ।
वलीपलितखालित्यं दोषजं च व्यपोहति ॥ १६८ ॥
इति कनकारिष्टः ।

पत्रभङ्गोदकैः शौचं कुर्यादुष्णेन वाऽम्भसा ।
इति शुष्कार्शसां सिद्धमुक्तमेतच्चिकित्सितम् १६९

हरीतकीनामित्यादिना अभयारिष्टादयः पञ्चारिष्टा उच्यन्ते । त्रिफलाया इति मिलितत्रिफलाया एव पलत्रयं, निर्देशस्य मानप्रधानत्वात् । हरीतक्यादौ फलशब्देन निरस्थिहरीतकीं ग्राहयति, तेन हरीतकीप्रस्थार्धं; किंतु जतूकर्णेऽयं योगो द्विगुणमानेन पठितः; यथा "हरीतकीफलप्रस्थः, द्विगुणा ह्यामलककपित्थपाठेन्द्राः सचित्रकाः, गुडस्य च शतद्वयम्" इति । क्रमुकं पूगः पट्टिकालोध्रो वा । सुराह्वा गोरक्षकर्कटिका । अत्र यद्यपि आमलकादिद्रव्यद्याढकमानं भवति, तत्र च सामान्यपरिभाषयैव द्विद्रोणजलदानमर्धद्रोणावस्थानं च लभ्यते, तथाऽपि स्पष्टार्थं जलक्वाथाभिधानं ज्ञेयम् । मृद्वीकाद्याढकरसमिति वचनेन मृद्वीकाया आढकद्वये द्रोणद्वयं जलं दत्त्वा क्वाथ्यसमं जलं स्थाप्यमिति दर्शयति; अन्ये तु द्राक्षाखरसद्रवौ तुल्याविति व्याख्यानं कृतवन्तः । उक्तं हि जतूकर्णे—"धात्री तुला, कौडविकं पिप्पली मरिचं क्रमिघ्नं च, इन्द्राह्वं सारिवाद्वयं दारुनिशा सुरदारु घनं कुष्ठं चार्धपलिकं, पलिकं मञ्जिष्ठापाठातिल्वकग्रन्थिकैल्वालुकचव्यकमुकविल्वं साग्निकं पाक्यं, द्राक्षाद्वयं च पृथक्पृथक् क्वाथौ विमिश्रितौ द्वौ, सितातुले द्वे, मधु द्विकुडवं च" इत्यादि । अत्रापि च सामान्यपरिभाषा चरकोक्तमानसमाना एव । भिन्नाया इति चूर्णीकृतायाः । कुसुमस्वरसो मधु ॥ १३८–१६९ ॥

चिकित्सितमिदं सिद्धं स्राविणां शृण्वतः परम् ।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च ॥१७०॥
विट् श्यावं कठिनं रूक्षं चाधो वायुर्न वर्तते ।
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ॥ १७१ ॥
कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥ १७२ ॥
शिथिलं श्वेतपीतं च विट् स्निग्धं गुरु शीतलम् ।
यद्यर्शसां घनं चासृक् तन्तुमत् पाण्डु पिच्छिलम्॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥१७४॥
स्निग्धशीतं हितं वाते रूक्षशीतं कफानुगे ।
चिकित्सितमिदं तस्मात् संप्रधार्य प्रयोजयेत् १७५
पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ।
स्रवणं चाप्युपेक्षेत लङ्घनैर्वा समाचरेत् ॥ १७६ ॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान् ।
शोणितं दोषमनिलं तद्रोगाञ्जनयेद्बहून् ॥ १७७ ॥
रक्तपित्तं ज्वरं तृष्णामग्निसादमरोचकम् ।
कामलां श्वयथुं शूलं गुदवङ्क्षणसंश्रयम् ॥ १७८ ॥
कण्ड्वरुःकोठपिडकाः कुष्ठं पाण्ड्वाह्वयं गदम् ।
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम् ॥ १७९ ॥
स्तैमित्यं गुरुगात्रत्वं तथाऽन्यान् रक्तजान् गदान् ।
तस्मात् स्रुते दुष्टरक्ते रक्तसंग्रहणं हितम् ॥ १८० ॥
हेतुलक्षणकालज्ञो बलशोणितवर्णवित् ।
कालं तावदुपेक्षेत यावन्नात्ययमाप्नुयात् ॥ १८१ ॥
अग्निसंदीपनार्थं च रक्तसंग्रहणाय च ।
दोषाणां पाचनार्थं च परं तिक्तैरुपाचरेत् ॥ १८२ ॥

१ 'शार्करोऽरिष्टः' इति पा० । २ 'यवासः' इति पा० ।

१ 'चिकित्सितमतः सिद्धं स्राविणां संप्रचक्ष्महे' इति पा० ।

यत्तु प्रक्षीणदोषस्य रक्तं वातोल्बणस्य च।
वर्तते स्नेहसाध्यं तत् पानाभ्यङ्गानुवासनैः॥ १८३॥
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते।
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम्॥ १८४॥

संप्रति रक्तार्शसां वातकफानुबन्धं लक्षणं च दर्शयन् भिन्नां चिकित्सामाह—चिकित्सितमित्यादि। अत्र च तन्त्रे पित्तजस्यैव रक्तजान्यर्शांसि दुष्टस्रावयुक्तानि स्रावीणीति ज्ञेयानि। विद्ध श्यावमिति निर्देशाद्विद्धशब्दो नपुंसकलिङ्गोऽप्यस्तीत्युन्नीयते। मलिनमिति अत्यर्थदुष्टम्। हेत्वादिविशेषज्ञेन स्रावस्योपेक्षा कार्येति सूचयति। वर्तते इति प्रवर्तते। वातेऽनुबले स्नेहनं, कफेऽनुबले तूपेक्षणं लङ्घनादि वा कार्यमिति भावः॥ १७०–१८४॥

कुटजत्वङ्निर्यूहः सनागरः स्निग्धरक्तसंग्रहणः।
त्वग्दाडिमस्य तद्वत् सनागरश्चन्दनरसश्च॥ १८५॥

चन्दनकिराततिक्तक-
धन्वयवासाः सनागराः क्वथिताः।
रक्तार्शसां प्रशमना
दार्वीत्वगुशीरनिम्बाश्च॥ १८६॥
सातिविषा कुटजत्वक्
फलं च सरसाञ्जनं मधुयुतानि।
रक्तापहानि दद्यात्
पिपासवे तण्डुलजलेन॥ १८७॥

कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन।
यावत्स्याद्गतरसं तद्द्रव्यं पूतो रसस्ततो ग्राह्यः १८८

मोचरसः ससमङ्गः
फलिनी च समांशिकैस्त्रिभिस्तैश्च।
वत्सकबीजं तुल्यं
चूर्णितमत्र प्रदातव्यम्॥ १८९॥

पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम्॥
छगलीपयसा पीता पेयामण्डेन वा यथाग्निबलम्।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत॥१९१॥
रक्तार्शांस्यतिसारं रक्तं सासृग्रुजो निहन्त्याशु।
बलवच्च रक्तपित्तं रसक्रियैषा जयत्युभयभागम्॥

इति कुटजादिरसक्रिया।

सनागर ईषन्नागरः। स्निग्धस्य रक्तस्य संग्रहणः स्निग्धरक्तसंग्रहणः। तद्वदित्यनेन पूर्वयोगफलं विधिं च दर्शयति। कुटजत्वच इत्यादौ पलशतं तुला, जलद्रोणेन साध्यम्, अष्टभागावशेषः कषायो ग्राह्यः। तन्त्रान्तरेऽप्युक्तं—"द्रोणेऽम्भसः पलशतं कुटजत्वचोऽष्टभागशेषम्" इति। महेन्द्रसलिलम् आन्तरिक्षं जलम्। दर्वीप्रलेपनो ग्राह्य इति यस्यामवस्थायां दर्वीप्रलेपो भवति तस्यामवतारणीयः। उभयभागरक्तपित्तस्यासाध्यत्वादुभयभागशब्देन केवलोर्ध्वगं केवलाधोगं चेष्यते; तत्राप्यधोगस्य याप्यत्वात्तद्यापनमेवेह निहन्त्यादिति पदेनोच्यते॥ १८५–१९२॥

नीलोत्पलं समङ्गा मोचरसश्चन्दनं तिला लोध्रम्।
पीत्वा च्छगलीपयसा भोज्यं पयसैव शाल्यन्नम्॥
छागलिपयः प्रयुक्तं निहन्ति रक्तं सवास्तुकरसं च।
धन्वविहङ्गमृगाणां रसो निरम्लः कदम्लो वा १९४
पाठा वत्सकबीजं रसाञ्जनं नागरं यवान्यश्च।
बिल्वमिति चार्शसैश्चूर्णितानि पेयानि शूलेषु १९५
दार्वी किराततिक्तं मुस्तं दुःस्पर्शकश्च रुधिरघ्नम्।
रक्तेऽतिवर्तमाने शूले च घृतं विधातव्यम्॥१९६॥
कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा॥ १९७॥
सर्पिः सदाडिमरसं सयावशूकं शृतं जयत्याशु।
रक्तं सशूलमथवा निदिग्धिकादुग्धिकासिद्धम् १९८

कदम्ल ईषदम्लः। कुटजफलवल्कशब्देन इन्द्रयवाः कुटजत्वक् चोच्यते। सदाडिमरसमित्यत्र सिद्धं सर्पिः॥१९३–१९८॥

लाजापेया पीता सचुक्रिका केशरोत्पलैः सिद्धा।
हन्त्याश्वस्रस्रावं तथा बलापृश्निपर्णीभ्याम्॥१९९॥
ह्रीवेरबिल्वनागरनिर्यूहे साधितां सनवनीताम्।
वृक्षाम्लदाडिमाम्लामम्लीकाम्लां सकोलाम्लाम्॥
गृञ्जनकसुरासिद्धां दद्याद्यमकेन भर्जितां पेयाम्।
रक्तातिसारशूलप्रवाहिकाशोथनिग्रहणीम्॥२०१॥
काश्मर्यामलकानां सकर्बुदारान् फलाम्लांश्च।
गृञ्जनकशाल्मलीनां क्षीरिण्याश्चुक्रिकायाश्च॥२०२॥
न्यग्रोधशुङ्गकानां खण्डांस्तथा कोविदारपुष्पाणाम्।
दध्नः सरेण सिद्धान् दद्याद्रक्ते प्रवृत्तेऽति॥ २०३॥
सिद्धं पलाण्डुशाकं तक्रेणोपोदिकां सबदराम्लाम्।
रुधिरस्रवे प्रदद्यान्मसूरसूपं च तक्राम्लम्॥ २०४॥
पयसा शृतेन यूषैर्मसूरमुद्गाढकीमकुष्ठानाम्।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम्॥२०५॥
शशहरिणलावमांसैः कपिञ्जलैणेयकैः सुसिद्धैश्च।
भोजनमद्यादम्लैर्मधुरैरीषत् समरिचैर्वा॥ २०६॥

दक्षशिखितित्तिरिरसै-
र्द्विककुदलोपाकजैश्च मधुराम्लैः।
अद्याद्रसैरतिवहे-
ष्वर्शःस्वनिलोल्बणशरीरः॥ २०७॥

रसखडयूषयवागूसंयोगतः केवलोऽथवा जयति।
रक्तमतिवर्तमानं वातं च पलाण्डुरुपयुक्तः॥२०८॥

१ 'पलांशिकैः' इति पा०। २ 'ह्युभयभागम्' इति पा०।

१ 'सकर्बुदारफलाम्लानाम्' इति पा०। २ 'सतीनमुद्गाढकी-मसूराणाम्' इति पा०। ३ 'रसखडशाकयवागूसंयोगतः' इति पा०।

छागान्तराधि तरुणं
सरुधिरमुपसाधितं बहुपलाण्डु ।
व्यत्यासान्मधुराम्लं
विट्शोणितसंक्षये देयम् ॥ २०९ ॥
नवनीततिलाभ्यासात्
केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासा-
दर्शांस्यपयान्ति रक्तानि ॥ २१० ॥
नवनीतघृतं छागं मांसं च सषष्टिकः शालिः ।
तरुणश्च सुरामण्डस्तरुणी च सुरा निहन्त्यस्रम् ॥

गृञ्जनकेत्यादिना योगान्तरं, गृञ्जनकः पलाण्डुभेदः । कर्बुदारः काञ्चनभेदः । भोजनमित्यादौ भोजनमथादिति योज्यम् । द्विककुद् उष्ट्रः । अन्तराधि शरीरमध्यं, तच्च तरुणच्छागस्यैवाद्यात् । मधुराम्लं प्रथमं मधुरं, पश्चात्किंचिदम्लम् । दधिसरस्य मथितं दधिसरमथितम् । नवनीतघृतं सद्यस्कनवनीतघृतम्; अन्ये तु नवनीतं घृतं च छागं वदन्ति; यतो अजा रक्तस्तम्भनात्मिका प्रोक्ता ॥ १९९-२११ ॥

प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते ।
दुष्टेऽपि च कफपित्ते तस्मादनिलोऽधिको ज्ञेयः २१२
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पं च ।
शीता क्रिया प्रयोज्या यथेरिता वक्ष्यते चान्या २१३
मधुकं सपञ्चवल्कं बदरीत्वगुदुम्बरं धवपटोलम् ।
परिषेचने विदध्याद्वृषककुभयवासनिम्बांश्च ॥२१४॥
रक्तेऽतिवर्तमाने दाहे क्लेदेऽवगाहयेच्चापि ।
मधुकमृणालपद्मकचन्दनकुशकाशनिष्क्वाथे ॥२१५॥
इक्षुरसमधुकवेतसनिर्यूहे शीतले पयसि वा तम् ।
अवगाहयेत् प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥ २१६ ॥
दत्त्वा घृतं सशर्करमुपस्थदेशे गुदे त्रिकदेशे च ।
शिशिरजलस्पर्शसुखा धारा प्रस्तम्भनी योज्या ॥
कदलीदलैरभिनवैः पुष्करपत्रैश्च शीतजलसिक्तैः ।
प्रच्छादनं मुहुर्मुहुरिष्टं पद्मोत्पलदलैश्च ॥ २१८ ॥
दूर्वाघृतप्रदेहः शतधौतसहस्रधौतमपि सर्पिः ।
व्यजनपवनः सुशीतो रक्तस्रावं जयत्याशु ॥ २१९ ॥
समङ्गामधुकाभ्यां
तिलमधुकाभ्यां रसाञ्जनघृताभ्याम् ।
सर्जरसघृताभ्यां वा
निम्बघृताभ्यां मधुघृताभ्यां वा ॥ २२० ॥
दार्वीत्वक्सर्पिर्भ्यां
सचन्दनाभ्यामथोत्पलघृताभ्याम् ।
दाहे क्लेदे च गुद-
भ्रंशे गुदजाः प्रतिसारणीयाः स्युः ॥ २२१ ॥

यवासः दुरालभा । शिशिरेण तैलेनेति शीतलद्रव्यसाधितेन तैलेन । शिशिरेत्यादि शिशिरजला च सुखस्पर्शा च; तेन तीव्रशीतत्वं निवारयति ॥ २१२-२२१ ॥

आभिः क्रियाभिरथवा शीताभिर्यस्य तिष्ठति न रक्तम्
तं काले स्निग्धोष्णैर्मांसरसैस्तर्पयेन्मतिमान् ॥२२२॥
अवपीडकसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाऽभ्यङ्गैः ।
क्षीरघृततैलसेकैः कोष्णैस्तमुपाचरेदाशु ॥ २२३ ॥

अधुना अशक्यरक्तस्रुतौ क्षीणधातुतर्पणार्थं बृंहणमाह—आभिरित्यादि । अवपीडकसर्पिः भोजनस्योर्ध्वं यत् पीयते; किंवा भूरिमात्रं सर्पिरवपीडकमुच्यते । तमिति स्रवद्रक्तं पुरुषम् ॥ २२२ ॥ २२३ ॥

कोष्णेन वातप्रबले घृतमण्डेनानुवासयेच्छीघ्रम् ।
पिच्छाबस्तिं दद्यात् काले तस्याथवा सिद्धम् ॥२२४॥
यवासकुशकाशानां मूलं पुष्पं च शाल्मलम् ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥२२५॥
त्रिप्रस्थं सलिलस्यैतत् क्षीरप्रस्थं च साधयेत् ।
क्षीरशेषं कषायं च पूतं कल्कैर्विमिश्रयेत् ॥ २२६ ॥
कल्काः शाल्मलिनिर्याससमङ्गाचन्दनोत्पलम् ।
वत्सकस्य च बीजानि प्रियङ्गुः पद्मकेशरम् ॥२२७॥
पिच्छाबस्तिरयं सिद्धः सघृतक्षौद्रशर्करः ।
प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः ॥ २२८ ॥
प्रपौण्डरीकं मधुकं पिच्छाबस्तौ यथेरितान् ।
पिष्ट्वाऽनुवासनं स्नेहं क्षीरद्विगुणितं पचेत् ॥ २२९ ॥

इति पिच्छाबस्तिः ।

पिच्छाबस्तिमाह—यवासेत्यादि । यवासः दुरालभा । अत्र च कल्कादिमानं बस्तिवद्विज्ञेयम् ॥ २२४-२२९ ॥

ह्रीवेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम् ।
पाठा सातिविषा बिल्वं धातकी देवदारु च ॥२३०॥
दार्वीत्वङ् नागरं मांसी मुस्तं क्षारो यवाग्रजः ।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥ २३१ ॥
एकध्यं साधयेत् सर्वं तत् सर्पिः परमौषधम् ।
अर्शोतिसारग्रहणीपाण्डुरोगे ज्वरेऽरुचौ ॥ २३२ ॥
मूत्रकृच्छ्रे गुदभ्रंशे बस्त्यानाहे प्रवाहणे ।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत्त्रिदोषनुत् २३३

इति ह्रीवेरादिघृतम् ।

यवाग्रजः क्षारः यवक्षारः । चाङ्गेरीस्वरसोऽत्र चतुर्गुणो ग्राह्यः, द्रवान्तरासान्निध्यात् ॥ २३०-२३३ ॥

१ 'याऽन्या' इति पा० ।

१ 'पेष्यान् बस्तौ' इति पा० ।

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकः।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः २३४
कषाय एषां पेष्यास्तु जीवन्ती कटुरोहिणी।
पिप्पली पिप्पलीमूलं नागरं सुरदारु च ॥ २३५ ॥
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमुत्पलम्[1]।
कट्फलं चित्रको मुस्तं प्रियङ्ग्वतिविषास्थिराः २३६
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका।
बिल्वं मोचरसः पाठा भागाः कर्षसमन्विताः २३७
चतुष्प्रस्थे शृतं प्रस्थं कषायमवतारयेत्।
त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः २३८
सुनिषण्णकचाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ २३९ ॥
एतदर्शःस्वतीसारे रक्तस्रावे त्रिदोषजे।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ २४० ॥
उत्थाने चातिबहुशः शोथशूले गुदाश्रये।
मूत्रग्रहे मूढवाते मन्देऽग्नावरुचावपि ॥ २४१ ॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्धनम्।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ २४२ ॥
इति सुनिषण्णकचाङ्गेरीघृतम्।

अवाक्पुष्पी अधःपुष्पी। अत्र क्वाथ्यद्रव्यं षोडशपलम्। यद्यप्यत्रोत्सर्गतश्चतुष्प्रस्थमेव जलं देयं, तथा शेषचतुर्भागः प्रस्थ एव भवति, तथाऽपि चतुर्गुणजलदानस्य चतुर्थभागशेषतया स्थाप्यकषायस्य उत्सर्गविधौ सूचनार्थमिदं चरकवचनम्। तथा 'त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः' इत्यपि वचनं परिभाषासिद्धार्थाभिधायकं विज्ञेयम्। अत एव दृढबलसंस्कारेऽपि द्रवद्वैगुण्याभिधानं भविष्यति। त्रिंशत्पलविशेषणतया द्विपलाधिकानीति निर्देशे प्राप्ते प्रस्थविवक्षया पुंल्लिङ्गैकवचननिर्देशो ज्ञेयः ॥ २३४–२४२ ॥

भवन्ति चात्र—

व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत्।
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान् ॥ २४३ ॥

व्यत्यासात् परस्परपरिवर्तनेन मधुराम्लयोः शीतोष्णयोश्च योजना ॥ २४३ ॥

त्रयो विकाराः प्रायेण ये परस्परहेतवः।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥ २४४ ॥
एषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः।
तस्मादग्निबलं रक्ष्यमेषु त्रिषु विशेषतः ॥ २४५ ॥
भृष्टैः शाकैर्यवागूभिर्यूषैर्मांसरसैः खडैः।
क्षीरतक्रप्रयोगैश्च विविधैर्गुदजाञ्जयेत् ॥ २४६ ॥

अर्शःसु अग्निरक्षामभिधातुमन्यत्रापि यत्राग्निरक्षा विशेषेण कर्तव्या तानाह—त्रय इत्यादि। वृद्धे परिक्षयः अग्निबले वृद्धे विनाशः। त्रिषु विशेषत इत्यनेनान्यत्राप्यग्निरक्षणं कार्यमिति दर्शयति ॥ २४४–२४६ ॥

यद्वायोरानुलोम्याय यदग्निबलवृद्धये।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥ २४७ ॥
यदतो विपरीतं स्यान्निदाने यच्च दर्शितम्।
गुदजाभिपरीतेन तत् सेव्यं न कदाचन ॥ २४८ ॥

यद्वायोरित्यादिना पूर्वोक्तचिकित्सां सारोद्धारेणाह ॥ २४७ ॥ २४८ ॥

तत्र श्लोकाः—

अर्शसां द्विविधं जन्म पृथगायतनानि च।
स्थानसंस्थानलिङ्गानि साध्यासाध्यविनिश्चयः २४९
अभ्यङ्गाः स्वेदनं धूमाः सावगाहाः प्रलेपनाः।
शोणितस्यावसेकश्च योगा दीपनपाचनाः ॥ २५० ॥
पानान्नविधिरग्र्यश्च वातवर्चोऽनुलोमनः।
योगाः संशमनीयाश्च सर्पींषि विविधानि च ॥ २५१ ॥
वस्तयस्तक्रयोगाश्च वरारिष्टाः सशर्कराः।
शुष्काणामर्शसां शस्ताः[1] स्राविणां लक्षणानि च २५२
द्विविधं सानुबन्धानां तेषां चेष्टं यदौषधम्।
रक्तसंग्रहणाः क्वाथाः पेयाश्च विविधात्मकाः २५३
स्नेहाहारविधिश्चाग्र्यो योगाश्च प्रतिसारणाः।
प्रक्षालनावगाहाश्च प्रदेहाः सेचनानि च ॥ २५४ ॥
अतिप्रवृत्तस्य रक्तस्य विघातव्यं यदौषधम्।
तत्सर्वमिह निर्दिष्टं गुदजानां चिकित्सिते ॥ २५५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थानेऽर्शश्चिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अर्शसां द्विविधमित्यादिना अध्यायार्थसंग्रहः। अरिष्टग्रहणेनैव शार्करस्यापि ग्रहणे प्राप्ते शार्करस्य पृथगभिधानं गुडकृतेभ्यो भेदेन व्यवहारार्थं, तथाऽनुपानाभिधानार्थं पृथक्कृतम् ॥ २४९–२५५ ॥

इति श्रीचक्रपाणिदत्तकृतायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थानेऽर्शश्चिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः।

अथातो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः १
इति ह स्माह भगवानात्रेयः ॥ २ ॥

---

१ 'चन्दनमञ्जनम्' इति पा०।

१ 'शुष्कार्शसां प्रशमनाः' इति पा०।

अर्शःकार्यत्वाद्ग्रहणीदोषस्य अर्शश्चिकित्सितमनु ग्रहणीचिकित्सितं ब्रूते। ग्रहणीमाश्रितोऽग्निदोषो ग्रहणीदोषः, एवं चाश्रयाश्रयिणोरभेदोपचाराद् ग्रहणीदोषशब्देन ग्रहण्याश्रितोऽग्निदोषोऽपि गृह्यते ॥ १ ॥ २ ॥

**आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा।**
**ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः ॥३॥**
**शान्तेऽग्नौ म्रियते, युक्ते चिरं जीवत्यनामयः।**
**रोगी स्याद्विकृते, मूलमग्निस्तस्मान्निरुच्यते ॥ ४ ॥**

तत्र ग्रहणीदोषनिर्दिष्टाग्निदोषे वक्तव्ये प्रकृतिज्ञानानन्तरत्वाद्विकृतिज्ञानस्य प्रथमं तावदविकृतस्याग्ने रूपमाह—आयुरित्यादि। आयुः चेतनानुवृत्तिः। वर्णः गौरादिः। बलं शक्तिः व्यायामाद्यनुमेया। स्वास्थ्यशब्देनैव वर्णादिग्रहणं यद्यपि लभ्यते, तथाऽपि "स्वस्थस्यौजस्करं यत्तु तद्वृष्यं तद्रसायनम्" ( चि. अ. १, पा. १ ) इति; तेन वर्णादीनामविकारत्वं नावश्यं स्वस्थे भवतीति वर्णादीनां पृथगुपादानं कृतम्। उत्साहः दुष्करेष्वपि कार्येष्वध्यवसायः, उपचयः देहपुष्टिः। ओजः हृदयस्थं सर्वधातुसाररूपम्। तेजः देहोष्मा शुक्रं वा; यदुक्तं शालाक्ये—"दृष्टिस्तेजोमयी प्रोक्ता शुक्रं तेजश्च केवलम्। तस्माद्दृष्टिबलापेक्षी तेजोवृद्धिं समाचरेत्" इति। अग्नय इति भूताग्नयः पञ्च, धात्वग्नयः सप्त, इति द्वादशाग्नयः। प्राणा इति प्राणापानोपलक्षिताः पञ्चापि वायवः; किंवा प्राणवायुरेव 'प्राणाः' इति शब्देन नित्यं बहुवचनान्तेनोच्यते; यथा—अप्सरश्शब्देन एकाऽपि विद्याधरी कीर्त्यते। देहाग्निहेतुका इति देहपोषकप्रधानजाठराग्निकारणकाः। शान्ते इत्युत्सन्ने। युक्ते इति समे। विकृते इति मन्दे विषमे तीक्ष्णे वा। मूलमग्निस्तस्मादिति तस्मात् प्राशस्त्यादन्वयव्यतिरेकविधानादायुर्वर्णादीनामग्निर्मूलं प्रधानं कारणमित्यर्थः। निरुच्यते इति निश्चयेनोच्यते ॥ ३ ॥ ४ ॥

**यदन्नं देहधात्वोजोबलवर्णादिपोषकम्।**
**तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५ ॥**

सामान्यकारणमुक्त्वा, अग्नेः साक्षात्कारणत्वं व्युत्पादयन्नाह—यदन्नमित्यादि। बाह्या अपि गैरिकादयो धातुशब्देनोच्यन्ते इति तद्व्यवच्छेदार्थं धातोर्देहविशेषणम्। अथाहोरात्रजन्येषु देहधात्वादिषु कथमग्नेः कारणत्वमित्याह—आहारादिति।—एतेनाहारमप्यपेक्ष्यैव रसादीञ्जनयति। आदिग्रहणेन रक्तादीनि संगृह्यन्ते ॥ ५ ॥

**अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति।**
**तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥ ६ ॥**
**समानेनावधूतोऽग्निरुदर्यः पवनोद्वहः।**
**काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥ ७ ॥**
**एवं रसमलायान्नमाशयस्थमधःस्थितः।**
**पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम् ॥ ८ ॥**

संप्रति संप्राप्तस्यान्नस्याग्निना यथा पाको भवति, यथा च पच्यमानमन्नं देहधात्वादिरूपतामापद्यते, तदाह—अन्नमित्यादि। मुखप्रवेशादारभ्यान्नस्य व्यापार इहोच्यते। आदानमाहारप्रणयनं कर्म यस्य स तथा, प्रकर्षतीति नयति। द्रवैरिति पानीयादिभिः। भिन्नसंघातमिति अवयवशैथिल्यमापन्नम्। काले इति बुभुक्षाकाले। भुक्तं सममिति मात्राप्रकृत्यादिसमम्। समानेनावधूत इति अग्निपार्श्वस्थितेन समानेन संधुक्षितः, अयं च समानः प्राकृतत्वाद् बाह्यो वायुरिव अग्नेः संधुक्षणो भवति न वैषम्यकरः; विकृतस्तु वैषम्यं करोति; तेन वातेन विषमोऽग्निर्भवतीति चोपपन्नं भवति। एते च द्रवादयः पाचकस्याग्नेः सहाया भवन्तीत्यनेन ग्रन्थेनोच्यते; "आहारपरिणामकरास्त्विमे भावा भवन्ति; तद्यथा—ऊष्मा, वायुः, क्लेदः, स्नेहः, कालः, समयोगश्च" (शा. अ. ६) इति। उदर्यः पाचक इत्यर्थः। 'पवनोद्वह' इत्यग्निविशेषणं केचित् पठन्ति। सम्यगिति भुक्तविशेषणं केचित् पठन्ति; तदा सम्यगित्यनेन मात्रासाम्यमुच्यते। सम्यग्ग्रहणेन तु प्रकृत्यादिसंपदुच्यते। आयुर्विवृद्धये इति शरीरेन्द्रियसत्त्वात्मसंयोगानुवर्तनाय तद्विवृद्धये च। रसमलायेति तादर्थ्ये चतुर्थी। आशयस्थमिति आमाशयस्थम्। अधःस्थित इत्यनेन अग्नेरूर्ध्वज्वलनस्वभावतया ऊर्ध्वस्थान्नपाके सामर्थ्यं सूचयति। अत्रार्थे यथेत्यादिना दृष्टान्तमाह ॥ ६–८ ॥

**अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः।**
**मधुराद्यात् कफो भावात् फेनभूत उदीर्यते ॥ ९ ॥**
**परं तु पच्यमानस्य विदग्धस्याम्लभावतः।**
**आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ १० ॥**
**पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वह्निना।**
**परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः ॥ ११ ॥**

एवं स्थूलपाकक्रममभिधाय, अवान्तरमणुपाकक्रममाह—अन्नस्येत्यादि। भुक्तमात्रस्येति भुक्तानन्तरमेव। षड्रसस्येति प्राशस्त्येनाभिधानं, किंवा षड्रसस्यापि प्रथमं मधुरता निरुक्ता भवतीति दर्शयति। प्रपाकत इति प्रथमपाकतः; प्रशब्द आदिकर्मणि। मधुरश्चासौ आद्यश्चेति मधुराद्यः; किंवा 'मधुरात् प्राक् कफो भावात्' इति पाठः। फेनभूत इति फेनसदृशोऽघन इत्यर्थः। परमिति आद्यमधुरपाकानन्तरम्। विदग्धस्येति पक्वापक्वस्य। अम्लभावत इति जाताम्लस्वरूपतः। आशयात् आमाशयात्। च्यवमानस्य अधोभागं वायुना नीयमानस्य,

१ अत्रान्तरा किञ्चिद्ग्रन्थत्रुटितः प्रतिभाति। २ 'साक्षात्कार्यकारणत्वं' इति पा०। ३ 'आहारोऽप्यग्निपाकमपेक्ष्यैव' इति पा०। ४ 'उदीर्णः पवनेन तु' इति पा०।

१ 'आहारप्रकर्षणं' इति पा०। २ 'द्रवैः क्लेदकश्लेष्मद्रवैः' इति जल्पकल्पतरौ गङ्गाधरः। ३ 'फेनभावः' इति पा०।

अनेन च पित्तस्थानसंबन्धं विदग्धाहारस्य दर्शयति। अच्छमिति अघनम्। उदीर्यते इति पित्तमुत्पद्यते; अम्लं च पित्तमम्लभावादाहारस्य उत्पद्यत इति युक्तमेव। पक्वाशयं तु प्राप्तस्येति मलरूपतया पक्वाशयं गतस्य। शोष्यमाणस्य वह्निनेति यद्यप्यूर्ध्वदाहक्षमो वह्निः, तथाऽप्यस्याधोगतस्य वह्निना शोष्यमाणत्वं पक्वाशयगतस्याप्युपपन्नम्। यतश्चाधोगमने सम्यग्वह्निव्यापारो नास्ति, अतः 'पच्यमानस्य' इति पदं परित्यज्य 'शोष्यमाणस्य' इति कृतम्। परिपिण्डितपक्वस्येति परिपिण्डितरूपतया मलरूपतया पक्वस्य। वायुः स्यात् कटुभावत इति परिपिण्डितावस्थोद्भूतकटुता वायोरुत्पद्यते। एवमीदृशः षड्रसाहारस्यावस्थापाको भवति। ननु यद्यत्रावस्थापाकवशात् षण्णामेव रसानां कफादिकर्तृत्वमुच्यते, तदा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः" (सू. अ. २६) इत्यादिना यो विपाक उच्यते स विरुध्यते, अवस्थापाकेनैव बाधितत्वात्; मैवं, नह्यवस्थापाकोऽयं रसस्वभावं निष्ठापाकं बाधते, किंत्ववस्थायां स्वकार्यं करोति; तेन रसादयोऽपि स्वकार्यं कुर्वन्ति, अवस्थापाकोऽपि स्वकीयं कार्यं करोति; यथा—मधुरतिक्तादिषड्रसेऽन्ने उपयुक्ते मधुरोऽपि स्वकार्यं करोति, तिक्तादयश्च स्वकार्यं कुर्वन्ति; अयं तु विशेषः—यन्मधुराद्यस्यावस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अनुगुणा भवन्ति तदा स बहुश्लेष्माणं जनयति, यदा त्ववस्थापाको विपरीतकटुकादिपरिगृहीतो भवति तदा स्तोकमात्रं कफं जनयति; एवं पित्तजनकेऽवस्थापाकेऽपि वाच्यम्। "कटुतिक्तकषायाणां" (सू. अ. २६) इत्यादिनोक्तस्त्रिधा विपाकस्तु रसमलविवेकसमकालो भिन्नकाल एवावस्थापाकैः सममिति न विरोधः। स च भिन्नकालोऽप्यवस्थापाककार्यदोषानुगुणतयाऽननुगुणतया वा अवस्थापाकाहितदोषाणां वर्धनं क्षपणं वा करोतीति तस्याभिधानं शास्त्रे प्रयोजनवदेव। यद्यपि सर्वमन्नमवस्थायां विदह्यते, तथाऽपि येऽत्यर्थं विदाहिनस्त एव 'विदाहिनः' इत्युच्यन्ते, विशेषविदाहकर्तृत्वात्। अन्ये त्वाहुः—न षड्रसादप्यन्नात् सामान्येनावस्थापाके कफाद्युत्पत्तिः, किंतु षड्रसादन्नात् प्रथमे पाके मधुरोऽयमुद्भूतो रसः स कफं जनयति, तथा पित्तं विदाहावस्थायामुद्भूतादम्लरसादुत्पद्यते, एवं वायुरपि आहारकटुतावस्थायां भवतीति। अन्ये त्वाहुः—यत्—नान्नस्याग्निसंयोगान्मधुराद्यावस्थिकं भवति, किंतु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति, ते चान्नं स्वस्वभावं नीत्वा कफादीञ्जनयन्ति। उक्तं हि तन्त्रान्तरे—"मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः। ततः संवर्धते श्लेष्मा शरीरबलवर्धनः॥ नाभीहृदयमध्ये च रसस्त्वम्लो व्यवस्थितः। स्वभावेन मनुष्याणां ततः पित्तं विवर्धते॥ अधो नाभ्यास्तु खल्वेकः कटुकोऽवस्थितो रसः। प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्धतेऽनिलः॥ तस्माद्विपाकस्त्रिविधो रसानां नात्र संशयः" इति। इह तु तन्त्रेत्यादिग्रन्थार्थालोचनया यथोक्त एव ग्रन्थार्थो न्याय्यः। तन्त्रान्तरे तु श्लेष्मपित्तगतमधुराम्लरसौ वर्णयन्ति, ते कफाद्यधिगता रसा अस्माकमपि पाकसहकारितया अनुमता एव। यत्तु श्लेष्मजनकांशस्यैवावस्थापाके श्लेष्मकर्तृत्वमित्युक्तं, तदनुमतमेव; एवं यः श्लेष्मजनकोंऽश आहारगतः स स्थानमहिम्ना तदाहारस्य मधुरतामापाद्य श्लेष्माणं विशेषेण जनयतीति ब्रूमः। यत्तु, अनेनावस्थापाकेन कफपित्तयोरीरणमात्रं क्रियते न तु वृद्धिः, वृद्धिः निष्ठापाके एव भवतीति वदन्ति, तदुपपत्तिशून्यं भाति; किंच, अवस्थापाकात् कफपित्तयोर्वृद्धिः, तथा निष्ठापाकाच्च मलरूपतया उत्पाद इति युक्तं पश्यामः॥ ९-११॥

**अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक्।**
**देहे प्रीणाति गन्धादीन् घ्राणादीनीन्द्रियाणि च १२**

कर्मान्तरेणाप्यन्नस्य पाकः संपद्यते, तमाह—अन्नमित्यादि। अन्नमिष्टं ह्युपहितमिति हिशब्दोऽवधारणे; इष्टशब्देनेह प्रियं हितं चोच्यते न प्रियमात्रम्, अहितस्य प्रियमात्रस्य न देहव्यवस्थितिः गन्धादितर्पकत्वं च भवति; उपहितमिति उपयुक्तम्। इष्टैरिति प्रियहितैः गन्धरसरूपस्पर्शशब्दैः। अत्र यद्यपि हितत्वमेव गन्धादीनामाहारगतानां देहगतगन्धादिपोषणे प्रधानं, तथाऽपि प्रियत्वमप्याहारगतगन्धादीनां तदात्वोपकारकतया ग्रहीतुं प्रियत्वहितत्वयोर्द्वयोरप्युपादानं कृतम्। देहे प्रीणाति गन्धादीनिति देहाश्रितान् गन्धादीन् पोषयति। तथा घ्राणादीनि च घ्राणदर्शनरसनस्पर्शनश्रोत्राणि इष्टैर्गन्धादिभिः प्रीणाति तर्पयति, पोषयतीति यावत्। इन्द्रियाण्यपि हि पाञ्चभौतिकान्यस्मद्दर्शने; तानि च प्रतिक्षणं क्षीयमाणानि॥ १२॥

**भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः।**
**पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्ति हि १३**

भौतिकवह्निव्यापारमाह—भौमेत्यादि। भौमादयः पञ्चोष्माणः पार्थिवादिद्रव्यव्यवस्थिता जाठराग्निसंधुक्षितबला अन्तरीयं द्रव्यं पचन्तः स्वान् स्वान् पार्थिवादीन् पूर्वपार्थिवगन्धत्वाद्यविलक्षणान् गुणान् निर्वर्तयन्ति। एतदेव "विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्निसंधुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं" (सू. अ. २८) इत्यादिना सूत्रस्थानेऽप्युक्तम्। यद्यपि भूताग्निना पार्थिवादिद्रव्यं पच्यते, तथाऽपि पार्थिवादिद्रव्याणां पाकेनैतदेव जननं यद्विशिष्टगुणयुक्तत्वं, तेन पाकेन जन्यमानेऽपि द्रव्ये गुणा एव जन्यन्त इत्यभिप्रायेण पार्थिवादीनाहारगुणाञ्जनयन्तीत्युच्यते। अनेन गुणजननमेवाग्निनोच्यते, न द्रव्यजननम्। किंवा आहाराश्च गुणाश्चेति विग्रहादाहारशब्देन आहाराधिकरणरूपं द्रव्यमपि गृह्यते। पार्थिवादीनिति पार्थिवाप्यतैजसवायवीयनाभसान्। तत्र जाठराग्निः

१ 'ह्युपकृत°' इति पा०। २ 'घ्राणादीनिन्द्रियाणि' इति पा०।

सर्वानेवाहाररसमलविपाकान् पचति, भौतिकास्त्वग्नयः स्वान् स्वान् गुणाञ्जनयन्ति । उक्तं च-"जाठरेणाग्निना पूर्वं कृते संघातभेदे पश्चाद्भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति" इति। अयं च भूताग्निव्यापारो धातुष्वप्यस्ति, यतो धातुष्वपि पञ्चभूतानि सन्ति, तत्रापि धात्वग्निव्यापारो भूताग्निव्यापारश्च जाठराग्निक्रमेणैवोक्तो ज्ञेयः ॥ १३ ॥

**यथास्वं स्वं च पुष्णन्ति देहे द्रव्यगुणाः पृथक् ।**
**पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः ॥१४॥**

अग्निपक्वानाहारगुणानाह—यथास्वमित्यादि । यथास्वमिति यद्यस्यात्मीयं; सजातीया द्रव्यगुणा सजातीयान् द्रव्यगुणान् पुष्णन्ति। तेन द्रव्याणि पार्थिवादिद्रव्यरूपाणि देहधातुदोषमलाख्यानि पुष्णन्ति, गुणास्तु पाकस्थितगन्धस्नेहौष्ण्यगौरवादयः देहगन्धस्नेहौष्ण्यगौरवादीन् पुष्णन्ति । यथास्वमित्यादिशब्दार्थं स्फोरयति-पार्थिवा इत्यादि। पार्थिवा आहारद्रव्यगुणा देहगतान् पार्थिवानेव द्रव्यगुणान् पुष्णन्ति । आहारद्रव्यगुणा इत्यत्र द्रव्यगतगुणा एव उच्यन्ते । द्रव्यपोषणं तु गुणपोषणेन लभ्यते, गुणपोषणं द्रव्यपोषणमन्तरा कर्तुमशक्यत्वात् ॥ १४ ॥

**सप्तभिर्देहधातारो धातवो द्विविधं पुनः ।**
**यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥ १५ ॥**

भूताग्निव्यापारं दर्शयित्वा धात्वग्निव्यापारं दर्शयन्नाह—सप्तभिरित्यादि । देहधातार इति विशेषेण देहधारकाः । द्विविधमिति द्विप्रकारं पाकम् । तदेव प्रकारद्वयमाह—किट्टप्रसादवदिति; किट्टप्रसादरूपमित्यर्थः । शुक्रस्य यद्यपि किट्टवान् पाको न भवति, तथाऽपि बहूनां किट्टवत्त्वाद् द्विविधमिति निर्देशश्छत्रिणो गच्छन्तीति न्यायाज्ज्ञेयः । पुनरिति जाठराग्निपाकानन्तरम् ॥ १५ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।**
**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः ॥१६॥**

पाकजन्यानां रसादीनामुत्पादं क्रमेणाह—रसादित्यादि । रसाद्रक्तं प्रसादजं, ततो रक्तान्मांसं प्रसादजं, मांसान्मेदः प्रसादजमित्यादि यावच्छुक्राद्गर्भः प्रसादज इति । प्रसादजशब्देन रसादिभ्यः प्रसादांशजन्या रक्तादयः, किट्टांशजन्यास्तु वक्ष्यमाणाः कफादय इति । शुक्रात्तु निर्मलतया प्रसादज एव गर्भो भवति, न तु मलजन्यं किंचित् । केचित्तु शुक्रमलतया श्मश्रूणि वदन्ति; तन्न, तन्त्रेऽनभिधानात् । तथा शुक्रमलं यदि श्मश्रूणि स्युस्तदा स्त्रीणामपि सशुक्रतया श्मश्रूणि भवेयुः; स्त्रियश्च सशुक्रा एव, परं तासां शुक्रं गर्भारम्भकं न भवतीत्यादि प्रतिपादितं प्राक् । अन्ये तु गर्भप्रसादजशब्देन नपुंसकेन ओजोऽभिदधति । प्रसादज इत्यत्र जातशब्दः पोषण एव वर्तते, नापूर्वोत्पादे; रक्तादयो हि गर्भोत्पत्तिप्रभृत्येवोत्पन्ना रसादिभिः पोष्यन्ते; रक्तादयो हि गर्भप्रभृत्येव पोष्यन्ते । तत्र च त्रिधातूत्पादे व्याख्यातारो वर्णयन्ति—तत्र रसः स्वाग्निपच्यमानो रक्ततां याति, रक्तं मांसतामित्यादि पूर्वपूर्वधातुपरिणामाद्युत्तरोत्तरधातूत्पादः; यथा क्षीराद्दधि भवति, दध्नो नवनीतं, नवनीताद्घृतं, घृताद् घृतमण्डः, इत्येकः पक्षः । किंवा रस एव रक्तं प्रथमं प्लावयति, तत्र च रक्तस्थानसंबन्धाद्रक्तसादृश्यमनुभवति, रक्तं च रक्तसमानेनांशेन पोषयति; ततो रक्तमाप्लाव्य मांसमाप्लावयति, तत्रापि मांसपोषणं करोति, मांससादृश्यतामनुभवति; एवं उत्तरोत्तरधातून् रस एवाप्लावयति वर्धयति च; यथा केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीं तर्पयित्वा क्रमेण केदारिकान्तराणि आप्लावयति । किंवा आहाररस उत्पन्नो भिन्नैरेव मार्गैः रसरुधिरादीनि समानेनांशेन तर्पयति, तत्र च यः प्रत्यासन्नो धातुस्तत्पोषको धातुभागस्तं शीघ्रं पुष्णाति, यस्तु विदूरो धातुस्तस्य विदूरमार्गतया चिरेण पोषणं भवति, एवं भिन्नैरेव मार्गैर्धातूनां पोषणं भवति; यथा खले उत्पतितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण च गमनं भवति, तद्वत् । इति क्षीरदधिन्याय-केदारीकुल्यान्याय-खलेकपोतन्यायात्त्रेधा धातुपोषणक्रमः । तत्रेह शब्दार्थपर्यालोचनया केदारीकुल्यान्यायः क्षीरदधिन्यायो वा संगत एवः, खलेकपोतन्यायस्तु मनागदुर्घटः । तस्मिन् हि पक्षे रसाद्रक्तं प्रसादजमित्यर्थव्युत्पादनं दुःशकं, प्रपञ्चितं चैतद्विविधाशितपीतीये, तत्रैवानुसरणीयः प्रपञ्चः । ननु, विविधाशितपीतीये आहाररसाद्रसादिपुष्टिरुक्ता "पुष्यन्ति त्वाहाररसाद्रसरुधिर°" (सू. अ. २८) इत्यादिना; तत्र रसद्वयं स्वीकृतम्, इह त्वेक एव रक्तपोषको रस इति कथं न विरोधः ? । मैवं, तत्रापि आहाररसशब्देन आहारजः प्रसादोऽभिधीयते, स च रसग्रहणगृहीत एव । यतो द्विविधो रसः—स्थायी, पोषकश्चेति; तेन तत्र धातुपोषकपोष्यरसांशयोर्भेदविवक्षया भेद उक्तः; इह स्थायीपोषकरसांशावप्येकतया निर्दिष्टौ, स्थायिरसपोषकरसभागयोः स्थानभेदाद्यभावादेकत्वम्; एवं कृत्वा सप्तधातुकं शरीरमुच्यते । एतदपि विविधाशितपीतीये एव प्रपञ्चितम् ॥ १६ ॥

**रसात् स्तन्यं ततो रक्तमसृजः कण्डराः सिराः ।**
**मांसाद्वसा त्वचः षट् च मेदसः स्नायुसंभवः ॥१७॥**

धातूनां पोषणमभिधायोपधातुपोषणमाह—रसात् स्तन्यमित्यादि । रसात् स्तन्यं प्रसादजं, तथा रक्तमपि रजःसंज्ञं रसादेव प्रसादभागजन्यम्; उक्तं च सुश्रुते—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते" (सु. सू. अ. १४) इति। एतच्च रजो रसजन्यमपि सूक्ष्मतया चिरेणैव जायते; यदुक्तं सुश्रुते—"एवं मासेन रसः शुक्रीभवति, स्त्रीणां चार्तवम्" (सु. सू. अ. १४) इति। असृजः कण्डराः स्थूल-

१ 'किट्टप्रसादतः' इति पा० ।

१ 'स्त्रियाः' इति पा० । २ 'स्नायुसंधयः' इति पा० ।

स्नायवः, मेदसस्तु सूक्ष्मस्नायुपोषणं 'मेदसः स्नायुसंभवः' इत्यनेन वक्तव्यम्। इह हि कण्डराशब्देन स्थूलस्नायुरुच्यते, सुश्रुते तु स्थूलसिरा। ते च स्तन्यादयो धात्वन्तरापोषणाच्छरीरपोषका अप्युपधातुशब्देनोच्यन्ते, रसादयस्तु शरीरधारकतया धात्वन्तरपोषकतया च धातुशब्देनोच्यन्ते; उक्तं च भोजे— "सिरास्नायुरजःस्तन्यत्वचो गतिविवर्जिताः। धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः" इति। अत्रापि हि 'धातुभ्यश्चोपजायन्ते' इत्यनेन जायन्त एव, परं न जनयन्तीत्युक्तम्। शुक्रं तु ओजोजनकत्वाद् धात्वन्तर्गतमेव। ओजस्तु इह न धातुषु नाप्युपधातुषु पठितं, तस्य सप्तधातुसाररूपतया सप्तधात्वन्तरगतत्वादेव, अत एव तस्याग्निरपि पृथङ्नोक्तः ॥ १७ ॥

किट्टमन्नस्य विण्मूत्रं, रसस्य तु कफोऽसृजः।
पित्तं, मांसस्य खमला, मलः स्वेदस्तु मेदसः ॥ १८ ॥
स्यात्किट्टं केशलोमास्थ्नो, मज्ज्ञः स्नेहोऽक्षिविट् त्वचाम्।
प्रसादकिट्टे धातूनां पाकादेवंविधच्छतः[1] ॥ १९ ॥ [2]
परस्परोपसंस्तब्धा धातुस्नेहपरंपरा।

प्रसादभागोत्पादमभिधाय मलभागोत्पादमाह—किट्टमित्यादि। रसस्य कफ इति रसे पच्यमाने किट्टं कफो भवति, प्रसादश्च रक्तं; एवं रक्तादिमलेऽपि ज्ञेयम्। मांसस्य खमला इति कर्णाक्षिनासास्यप्रजननमलाः। मलः स्वेदस्तु मेदस इति स्वेदो यद्यपि उदकविशेष एव उक्तस्तथाऽपि तस्य मेदोमलत्वेनैवोत्पत्तिः; किंवा, उदकादपि स्वेदो भवति मेदोमलतया च भवति, यथा—कफोऽवस्थापाकाद् रसमलतया च भवति। अस्थिमलं नखोऽपि सुश्रुतप्रामाण्यादुन्नेयः। तत्र हि "नखलोम च" (सु. सू. अ. ४६) इत्यनेनास्थिमलत्वं नखस्योक्तम्। उक्तं च विविधाशितपीतीये—"किट्टात् केशनखादयः पुष्यन्ति" (सू.अ. २८) इति; किंतु शारीरेऽस्थिगणनायां "विंशतिर्नखा" (शा. अ. ७) इत्यनेनास्थित्वेन प्रोक्ताः। एवमुक्तेन क्रमेण प्रसादकिट्टे द्विधा ऋच्छतो भवत इत्यर्थः। संप्रति पोष्येणापि रक्तेन रसस्याप्यायनं क्रियते, तथा मांसेनापि रक्तस्येत्यादि परस्परं धातूनामुपस्पादकत्वमाह—परस्परेत्यादि। धातुस्नेहपरंपरा परस्परोपसंस्तब्धेति अन्योन्यमुपस्नेहेन संस्तब्धत्वात् संतर्पितेति यावत् ॥ १८ ॥ १९ ॥—

वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि ॥ २० ॥
षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्तनम्।
संतत्या भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥ २१ ॥
(इत्युक्तवन्तमाचार्यं[3] शिष्यस्त्विदमचोदयत्।
रसाद्रक्तं विसदृशात्[4] कथं देहेऽभिजायते ॥ २२ ॥

रसस्य च न रागोऽस्ति स कथं याति रक्तताम्।
द्रवाद्रक्तात्स्थिरं मांसं कथं तज्जायते नृणाम् ॥२३॥[1]
द्रवधातोः स्थिरान्मांसान्मेदसः संभवः कथम्।
श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु ॥२४॥
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा।
मज्ज्ञश्च परिणामेन यदि शुक्रं प्रवर्तते ॥ २५ ॥
सर्वदेहगतं शुक्रं प्रवदन्ति मनीषिणः।
तथाऽस्थिमध्यमज्ज्ञश्च शुक्रं भवति देहिनाम् ॥२६॥
छिद्रं न दृश्यतेऽस्थ्नां च तन्निःसरति वा कथम्।
एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ॥ २७ ॥
तेजो रसानां सर्वेषां मनुजानां यदुच्यते।
पित्तोष्मणः स रागेण रसो रक्तत्वमृच्छति ॥ २८ ॥
वाय्वम्बुतेजसा रक्तमूष्मणा चाभिसंयुतम्।
स्थिरतां प्राप्य मांसं स्यात् स्वोष्मणा पक्वमेव तत्[2] २९
स्वतेजोऽम्बुगुणस्निग्धोद्रिक्तं मेदोऽभिजायते।
पृथिव्यग्न्यनिलादीनां संघातः स्वोष्मणा[3] कृतः ॥३०॥
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम्।
करोति तत्र सौषिर्यमस्थ्नां मध्ये समीरणः ॥ ३१ ॥
मेदसस्तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः।
तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं संजायते ततः ॥ ३२ ॥
वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु।
तेन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम् ॥३३॥
स्रोतोभिः स्यन्दते देहात् समन्ताच्छुक्रवाहिभिः।
हर्षेणोदीरितं वेगात् संकल्पाच्च मनोभवात् ॥ ३४ ॥
विलीनं घृतवद्व्यायामोष्मणा स्थानविच्युतम्।
वस्तौ संभृत्य[4] निर्याति स्थलान्निम्नादिवोदकम् ॥३५॥)

वृष्यादिद्रव्याणां धातुपरंपराक्रमेण शुक्रजननादिकार्यं निषेधयन्नाह—वृष्यादीनामित्यादि। आदिशब्देन बल्यभेदनादीनि ग्राहयति। वृष्यादीनां क्षीरादिद्रव्याणां प्रभावो बलं शीघ्रं पुष्णाति, ततस्ते क्षीरादयः प्रभाववर्धितबलाः शीघ्रमेवात्मकार्यं शुक्रजननादि कुर्वन्ति, न यथोक्तधातुक्रमेणेत्यर्थः। किंवा वृष्यादीनां क्षीरादिद्रव्याणां यः प्रभावः स आशु बलं पुष्णाति स्वजन्यानां शुक्रादीनामित्यर्थः; हिशब्दोऽवधारणे; एवं वृष्यादीनां प्रभावाच्छुक्राद्युत्पत्तिः शीघ्रं भवति। अथोत्सर्गतः कियता कालेन धातुपरिवृत्तिर्भवतीत्याह—षड्भिरित्यादि। षड्भिरहोरात्रै रसस्य शुक्ररूपतया परिवर्तनं भवतीति केचिदिच्छन्ति। तत्रोत्पन्नो रसो रक्तमेकेनाहोरात्रेण याति, एवं रसोत्पत्तिदिनं परित्यज्य

---

१ 'पाकादेवाविगर्हितः' इति पा०। २ 'परस्परोपसंस्तम्भाद्धत्तो देहे परस्परम्' इति पा०। ३ 'इत्युक्तवन्तं' इत्यादिः 'स्थलान्निम्नादिवोदकं' इत्यन्तः पाठश्चक्रपाणिदत्तेनाव्याख्यातत्वादनार्ष इति प्रतिभाति। ४ 'प्रविशतः' इति गङ्गाधरसंमतः पाठः।

१ 'रसाद्रक्तात्तथा मांसान्मेदसः श्वेतता कथम्' इति पा०। २ "शोणितं स्वाग्निना पक्वं वायुना च घनीकृतम्। तदेव मांसं जानीयात् स्थिरं भवति देहिनाम् ॥" इति पा०। ३ 'श्लेष्मणा वृतः' इति पा०। ४ 'समेतं' इति पा०।

पड्हेन शुक्रता भवति; यदा तु रसोत्पत्तिदिनमपि प्रक्षिप्यते तदा पञ्चिर्दिनैरतिक्रान्तैः सप्तमे शुक्रभावतया परिवर्तनं भवतीति ज्ञेयम् । उक्तं हि पराशरे—"आहारोऽद्यतनः श्वो हि रसत्वं गच्छति नृणाम् । शोणितत्वं तृतीयेऽह्नि, चतुर्थे मांसतामपि ॥ मेदस्त्वं पञ्चमे, षष्ठे त्वस्थित्वं, सप्तमे त्वियात् । मज्जतां, शुक्रतां याति नियमादष्टमे नृणाम्" इति । एतदप्युपयोगादिनं संपूर्णं परित्यज्यैव व्याख्यातव्यमित्याहुः । किंच रसधातोः रक्तधातुरूपतया च परिणमनं यत्तदपि पञ्चदिननिर्वर्त्यमेवेति । यदुक्तं सुश्रुते—"स खल्वाप्यो रस एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राण्यवतिष्ठति दश च कलाः, एवं मासेन रसः शुक्रीभवति" (सु. सू. अ. १४) इति । तेनैतत्पक्षद्वयमपि केचिदित्यादिना दर्शयति । खमतमाह— संततेत्यादि । भोज्ये उपयुक्ते सति धातूनां रसादीनां चक्रवत् परिवृत्तिर्भवति अविश्रान्ता समुत्पत्तिर्धातूनां भवति । चक्रदृष्टान्तेन तु परिवृत्तिकालानियमं दर्शयति; यथा चक्रं पानीयोद्धारणार्थं नियुक्तं वाह्यमानं वाहुवलप्रकर्षात् कदाचिदाश्वेव परिवर्तते, कदाचिद् वाहुवलमान्द्याच्चिरेण; एवं धातवोऽपि अग्न्यादिसौष्ठवाच्छीघ्रमेव परिवर्तन्ते, अग्न्यादिवैगुण्ये चिरेण परिवर्तन्ते इति; एवं सुश्रुतेनापि "शब्दार्चिर्जलसंतानवदणुना विशेषेणानुधावत्येव शरीरं केवलम्" ( सु. सू. अ. १४ ) इत्यत्र दृष्टान्तत्रयेण रसपरिणामोऽपि अग्न्यादिभेदेन प्रकृष्टाप्रकृष्टकालज उक्त एव । तत्र हि जलसंतानदृष्टान्तेन चिरेण मासपर्यन्तेन शुक्रतापत्ती रसस्योक्ता, शब्दसंतानदृष्टान्तेन तु नातिशीघ्रं नातिचिराच्च शुक्रोत्पत्तिरुक्ता, अर्चिःसंतानदृष्टान्तेन त्वतिशीघ्रं शुक्रोत्पत्तिरुक्ता । तथाऽन्यत्राप्युक्तं—"केचिदाहुरहोरात्रात्, षड्रात्रादपरे, परे। मासेन याति शुक्रत्वमन्नं पाकक्रमादिति" । तदेतत् सकलं चक्रदृष्टान्तेन गृहीतं ज्ञेयम् ॥ २०-३५ ॥

**व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।**
**युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ३६ ॥**
**क्षिप्यमाणः खवैगुण्याद्रसः सज्जति यत्र सः ।**
**करोति विकृतिं तत्र खे वर्षमिव तोयदः ॥ ३७ ॥**
**दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ।**

अथ कोऽन्नरसं रक्तादिधातुपोषकं प्रेरयति; येन तत्र तत्र रसः सर्पतीत्याह—व्यानेनेत्यादि । रसरूपो धातुः, किंवा रसतीति रसो द्रवधातुरुच्यते, तेन रुधिरादीनामपि द्रवाणां ग्रहणं भवति; विक्षेपः उचितं प्राकृतं कर्म यस्य स विक्षेपोचितकर्मा; तेन व्यानेन, युगपदिति एककालं, सर्वत इति सर्वस्मिन् देहे, विक्षिप्यते इति नीयते, अजस्रमिति अविश्रान्तं विक्षिप्यते, सदेति सर्वकालम् । नन्वेवं सर्वत्र रसविक्षेपे कथमेकदेशे रसादौ विकाराश्रयो दृश्यत इत्याह—क्षिप्यमाण इत्यादि । खवैगुण्यादिति स्रोतोवैगुण्यात् । सज्जतीति तिष्ठति । विकारं कुरुते इति रसाश्रयिविकारं कुरुते; रसोऽपि हि विकारकरणे आश्रयतया व्याप्रियते, तेनेह तस्य कर्तृत्वं युक्तम् । खे वर्षमिव तोयद इति यथा चण्डेन वायुना नीयमानो मेघो यत्र सक्तो भवति तत्रैव वर्षं करोति, तथा रसोऽपीत्यर्थः । यथा रस एकदेशे विकारं करोति, एवं दोषा अप्येकदेशविकारं कुर्वन्तीत्याह—दोषाणामित्यादि । सुश्रुतोऽप्याह—"कुपितानां हि दोषाणां शरीरे परिधावताम् । यत्र संगः खवैगुण्याद्व्याधिस्तत्रोपजायते" ( सु. सू. अ. २४ ) इति ॥ ३६ ॥ ३७ ॥—

**इति भौतिकधात्वन्नपक्तॄणां कर्म भाषितम् ॥ ३८ ॥**
**अन्नस्य पक्ता सर्वेषां पक्तॄणामधिपो मतः ।**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥ ३९ ॥**
**तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।**
**पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥४०॥**
**यो हि भुङ्क्ते विधिं त्यक्त्वा ग्रहणीदोषजान् गदान् ।**
**स लौल्याल्लभते शीघ्रं, वक्ष्यन्तेऽतः परं तु ते ॥४१॥**

उक्तमग्नीनां कर्म उपसंहरति—इति भौतिकेत्यादि । भौतिकाः पञ्च, धात्वग्नयः सप्त, अन्नपक्तैकः । अत्र च यान्यग्न्यन्तराणि उपधातुमलादिगतानि तान्यप्यवरुद्धानि भूताग्निष्वेव; किंवा, अप्राधान्यादन्यान्यकिंचित्कराणि नोक्तानि । सर्वाग्निषु जाठराग्नेः प्राधान्यमाह—अन्नस्येत्यादि । प्राधान्ये हेतुमाह—तन्मूला इत्यादि । तन्मूलत्वे हेतुगर्भविशेषणमाह—तद्वृद्धीत्यादि । तस्य जाठराग्नेः वृद्ध्या वृद्ध्यात्मकाः क्षयेण च क्षयात्मका यस्मादिहाग्नयस्तस्मादन्वयव्यतिरेकार्थविधायित्वात्तन्मूला इत्यर्थः । यतश्चायमन्तरग्निर्मूलं सर्वत्र तस्मात्तं पालयेदिति योज्यम् । विधिवद्युक्तैरित्यत्र आहारविधियोगादुपयुक्तैः । आयुर्बलस्थितिरिति अन्नपाचकाग्निस्थितौ आयुर्बलस्थित्या अन्येऽप्यतिप्रेया वर्णादयो लक्षणीयाः । विपर्यये दोषमाह—यो हीत्यादि । ग्रहणीदोषजानिति ग्रहण्याश्रितदोषजान् । एतेन वक्ष्यमाणलक्षणाश्चत्वारो ग्रहणीविकारा विशेषेण ग्रहणीदोषशब्दवाच्या गृह्यन्ते, तथाऽग्निमान्द्याजीर्णादयश्च ग्रहण्याश्रिता रोगा गृह्यन्ते । अग्निमान्द्याजीर्णादयस्तु यद्यपि ग्रहण्याश्रितत्वेन ग्रहणीरोगा एव, तथाऽपीह ग्रहणीरूपनाडीव्यापारवैपरीत्येन ये जायन्ते त एव मुख्यग्रहणीशब्दवाच्याश्चत्वारो रोगाः । यतो 'अधस्तु पक्कमामं वा' इत्यादिना ग्रहणीगदसामान्यलक्षणविशिष्टमेव ग्रहणीगदं ग्रहणीप्राकृतव्यापारोपमर्देन जायमानं वक्ष्यति । वक्ष्यति च ग्रहण्या दुष्टमदुष्टं च रूपं "अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः । सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति" इति । न चेयं पक्वान्नविमोक्षलक्षणा दुष्टिरग्निदोषे आमाद्यजीर्णे वा । अनेन विशेषाभिधेयग्रहणीश-

१ 'स्यात्तस्मिन् विकारान् कुरुते विवर्षमिव तोयदः' इति पा० ।
२ 'स्यात्तत्र देशे प्रकोपणम्' इति पा० ।

न्दत्वं ग्रहण्याश्रितदोषजन्यग्रहणीगदस्यैवेहोच्यते; अग्निदोषाणां न विशेषाद्ग्रहणीगदत्वम्; अतिसारे यद्यपि पक्वान्नमुञ्चनमस्ति, तथाऽपि तस्य भिन्नसंप्राप्तिकत्वात् तथा चिकित्साभेदाद् ग्रहणीदोषादन्यत्वमुक्तम् ॥ ३८-४१ ॥

**अभोजनादजीर्णातिभोजनाद्विषमाशनात्।**
**असात्म्यगुरुशीतातिरूक्षसंदुष्टभोजनात् ॥ ४२ ॥**
**विरेकवमनस्नेहविभ्रमाद्व्याधिकर्षणात्।**
**देशकालर्तुवैषम्याद्वेगानां च विधारणात् ॥ ४३ ॥**
**दुष्यत्यग्निः, स दुष्टोऽन्नं न तत् पचति लघ्वपि।**
**अपच्यमानं शुक्तत्वं यात्यन्नं विषरूपताम् ॥ ४४ ॥**

एवं व्यवस्थिते सामान्येन ग्रहणीदोषविकाराणां हेत्वादीन्याह—अभोजनादित्यादि । कालशब्देन च संवत्सरात्मकः काल उच्यते। देशवैषम्यं देशव्यापत्; सा च जनपदोद्धंसनीये प्रोक्ता। ऋतुशब्देन तु शिशिराद्यृतुः । कालवैषम्येण सर्वेषामृतूनां वैषम्यं गृह्यते, ऋतुवैषम्येण त्वेकर्तुवैषम्यमिति विशेषः । शुक्तत्वमिति अम्लताम् । विषरूपतामिति यथा विषं बहुविकारकारि भवति तथा तद्रूपताम्, अनेन सर्वं एवाजीर्णभेदा अवरुद्धा ज्ञेयाः, ये तन्त्रान्तरे "आमं विदग्धं विष्टब्धं कफपित्तानिलैः क्रमात्। अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः" ( सु. सू. अ. ४६ ) इत्यनेनोक्ताः ॥ ४२-४४॥

**तस्य लिङ्गमजीर्णस्य विष्टम्भः सदनं तथा।**
**शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटिग्रहः ॥४५॥**
**जृम्भाऽङ्गमर्दस्तृष्णा च ज्वरश्छर्दिः प्रवाहणम्।**
**अरोचकोऽविपाकश्च, घोरमन्नविषं च तत्[१] ॥ ४६ ॥**
**संसृज्यमानं पित्तेन दाहं तृष्णां मुखामयान्[२]।**
**जनयत्यम्लपित्तं च पित्तजांश्चापरान् गदान् ॥४७॥**
**यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतम्।**
**करोति वातसंसृष्टं वातजांश्च[३] गदान् बहून् ॥ ४८ ॥**
**मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम्।**
**रसादिभिश्च संसृष्टं कुर्याद्रोगान् रसादिजान् ४९**

तस्येति सामान्याजीर्णस्य लक्षणम्। विष्टम्भ इति विष्टम्भोऽप्रचलनरूपतयाऽवस्थानम्। घोरमन्नविषं च तत् पित्तेन संसृज्यमानमित्यादिना पित्तादिदुष्टस्याजीर्णस्य लक्षणमाह । एतच्च पित्तादिसंसर्गकृतं लक्षणम्, अजीर्णस्य कोष्ठमात्रगतत्वेन यक्ष्मादिविकारकरणेऽसामर्थ्योपलब्धेः। अम्लपित्तं चेति अम्लगुणोद्रिक्तं पित्तम्। अस्य तन्त्रान्तरे लक्षणमुक्तं—"अविपाकक्लमोत्क्लेदतिक्ताम्लोद्गारगौरवैः। हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं विनिर्दिशेत्" इति। यक्ष्मणस्त्रिदोषजत्वेऽपि स्रोतोऽवरोधे कफव्यापारप्राधान्यादिह कफजत्वमुक्तम्। किट्टधातुयोगेन रसशेषाजस्य गदानाह—मूत्ररोगांश्चेत्यादि । रसादिजानित्यत्र ये रसादिजा अरुच्यादय उक्तास्ते भवन्तीति ज्ञेयम् ॥ ४५-४९ ॥

**विषमो धातुवैषम्यं करोति विषमं पचन्।**
**तीक्ष्णो मन्देन्धनो धातून् विशोषयति पावकः ५०**

अजीर्णलक्षणमभिधाय अग्निदोषलक्षणमाह—विषम इत्यादि। तीक्ष्णाग्निकार्यमाह—तीक्ष्णमित्यादि। अत्र मन्देन्धन इत्यनेन तीक्ष्णोऽपि यदि शुचीन्धनो भवति तदा धातुपोषणं भवतीति दर्शयति ॥ ५० ॥

**युक्तं भुक्तवतो युक्तो धातुसाम्यं समं पचन्।**

अग्निप्रसंगात् समाग्नेः कार्यमाह—युक्तमित्यादि। युक्त इति समः। युक्तमन्नं पचन् धातुसाम्यं करोतीत्यर्थः। समशब्देन समानो वायुरग्निसहायो गृह्यते । किंवा युक्तवायुतया धातुसाम्यं करोति, युक्तशब्देन च कफपित्तसाम्यसमौ गृह्यते। यतः "समः समैः" ( वा. सू. अ. १ ) इति वचनेन दोषाणां समत्वेनैव समाग्नित्वमुक्तम् ॥—

**दुर्बलो विदहत्यन्नं तद्यात्यूर्ध्वमधोऽपि वा ॥ ५१ ॥**
**अधस्तु पक्वमामं वा प्रवृत्तं ग्रहणीगदः।**
**उच्यते सर्वमेवान्नं प्रायो ह्यस्य विदह्यते ॥ ५२ ॥**
**अतिसृष्टं विबद्धं वा द्रवं तदुपदिश्यते।**
**तृष्णारोचकवैरस्यप्रसेकतमकान्वितः॥ ५३ ॥**
**शूनपादकरः सास्थिपर्वरुक् छर्दनं ज्वरः।**
**लोहामगन्धिस्तिक्ताम्ल[१] उद्गारश्चास्य जायते ॥५४॥**

मन्दाग्निव्यापारमाह—दुर्बल इत्यादि। उक्तविकारेषु प्रधानत्वेन अध्यायप्रकृतं ग्रहणीदोषविकारं निर्धारयन्नाह—अधस्त्वित्यादि। पक्वमामं वेति वाशब्दः समुच्चये; तेन किंचित्पक्वं किंचिदपक्वं च । कुतः पक्वापक्वं सृजतीत्याह—सर्वमेवान्नं प्रायो ह्यस्य विदह्यते इति; पक्वापक्वं भवति। अतिसृष्टमिति विमुक्तम्। तम एव तमकः ॥ ५१-५४ ॥

**पूर्वरूपं तु तस्येदं तृष्णाऽऽलस्यं बलक्षयः।**
**विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ५५**

पूर्वरूपे विदाहोऽन्नस्येति विशिष्टो दाहो विदाहः ॥ ५५ ॥

**अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता।**
**नाभेरुपर्यह्यग्निबलेनोपष्टब्धोपबृंहिता[२] ॥ ५६ ॥**
**अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः।**
**दुर्बलाग्निबला दुष्टा[३] त्वाममेव विमुञ्चति ॥ ५७ ॥**

संप्रति ग्रहणीदोषस्य सुखप्रतिपत्त्यर्थं ग्रहण्याः स्वरूपं प्राकृतं कर्म चाह—अग्न्यधिष्ठानमित्यादि । अग्न्यधिष्ठानम् अग्नेराश्रय

१ 'विषतां च तत्' इति पा०। २ 'पित्तेन सह संसृष्टं तृष्णादाहमुखामयान्' इति पा०। ३ 'वातजांश्चापरान् गदान्' इति पा०।

१ 'लोहानुगन्धिः' इति पा०। २ 'नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता' इति पा०। ३ 'दुर्बलाग्निबलादुष्टा' इति पा०।

इत्यर्थः । ग्रहणीसंज्ञानिमित्तमाह—अन्नस्येत्यादि । ग्रहणादिति धारणात्, नाभेरुपर्यन्नस्य धारणादित्यर्थः । किंवा नाभेरुपरि अग्नेरूर्ध्वज्वलनेन बलेनोपस्तम्भिता उपबृंहिता च सति अपक्वमन्नं धारयति, पक्वं च पार्श्वतः सृजतीति वामपार्श्वतः सृजति; यतः ग्रहणीगुदौ वामपार्श्वाश्रयौ, तेन वामे पार्श्वे पक्वं सृजतीति युक्तम् । उपस्तम्भिता इति अग्निना पित्तव्यापारकरणेन अनुकूलिता, उपबृंहितेति अग्निना बृंहणव्यापारकरणेन सशक्तीकृता; किंवा उपस्तम्भत्वेन उपबृंहिता, अत्र पक्षे उपस्तम्भसाधार्म्यं ग्रहण्या आह । ग्रहण्याः प्राकृतं कर्माभिधाय वैकृतं कर्माह—दुर्बलेत्यादि । दुर्बलाग्निश्च अबला चेति, किंवा दुर्बलमग्निबलं यस्याः सा दुर्बलाग्निबला । दुष्टा इति दोषदुष्टा । आमं विमुञ्चतीति अपक्वमेवान्नं विमुञ्चति । पूर्वंरूपे पक्वमामं वा विमुञ्चतीत्यनेन विदग्धरूपमाममेवोक्तम्, इह त्वामं नियमेन विमुञ्चतीति न विरोधः ॥ ५६ ॥ ५७ ॥

वातात् पित्तात् कफाच्च स्याद्रोगस्त्रिभ्य एव च ।
हेतुं लिङ्गं रूपभेदाञ्छृणु तस्य पृथक् पृथक् ॥ ५८ ॥
कट्वतिक्तकषायातिरूक्षशीतलभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥ ५९ ॥
करोति कुपितो मन्दमग्निं संछाद्य मारुतः[३] ।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥ ६० ॥
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुजोऽभीक्ष्णं विसूचिका ॥ ६१ ॥
हृत्पीडा कार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥ ६२ ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ ६३ ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥ ६४ ॥
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
अग्निमाप्लावयद्धन्ति जलं तप्तमिवानलम्[४] ॥ ६५ ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ ६६ ॥
गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ ६७ ॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्यकासष्ठीवनपीनसाः ॥ ६८ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ ६९ ॥

भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ ७० ॥
यश्चाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः ।
तं चापि ग्रहणीदोषं समवर्जं प्रचक्ष्महे ॥ ७१ ॥
पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेत्तेषां भेषजं शृण्वतः परम्[१] ॥ ७२ ॥

वातपित्तकफसंनिपातजान् ग्रहणीभेदान् तेषां पृथग्घेत्वादींश्चाह—वातादित्यादि । त्रिभ्य इति सन्निपातात् । रूपभेदानिति ग्रहणीदोषलिङ्गत्वेन वक्ष्यमाणान् । शुक्तमिवान्नस्य पाकः शुक्तपाकः । गृद्धिः सर्वरसानामिति सप्तम्यर्थे षष्ठी । जीर्णे जीर्यति 'अन्ने' इति शेषः । गुल्मादिशङ्कित्वं गुल्मादिसदृशपीडायुक्तत्वेन भवति । पैत्तिकग्रहण्यां पित्तस्याग्निसमानतया वर्धनमेव युक्तमित्याशङ्क्य पित्तस्य द्रवत्वेनाग्निहननं क्रियते इति दर्शयन्नाह—आप्लावयद्धन्त्यनलमिति; आप्लावनं द्रवेणार्द्रीकरणम् । उष्णस्यापि द्रवतया अग्निनिर्वापणे दृष्टान्तमाह—जलं तप्तमित्यादि । दौर्बल्यं बलहानिः । यश्चाग्निरित्यादिश्लोकं केचिद्वैशेषिकग्रहणीदोषव्यतिरिक्ताग्निदोषत्रयस्य ग्रहणीरोगान्तर्निवेशनमसंगतमिति कृत्वाऽनार्षं वदन्ति, किंतु तं चापीतिपदेनाऽग्निमान्द्यादीनां प्राकृतानां सामान्यग्रहणीदोषाबाधे सति न किंचिद्विरोधं पश्यामः; सामान्यग्रहणीदोषेऽपि अग्निमान्द्यादय उक्ता एवेति दर्शितमेव । समवर्जमिति समप्रकृतिपुरुषगतत्वेनोक्ताग्निवर्जम् ॥ ५८–७२ ॥

ग्रहणीमाश्रितं दोषं विदग्धाहारमूर्च्छितम् ।
सविष्टम्भप्रसेकार्तिविदाहारुचिगौरवैः ॥ ७३ ॥
आमलिङ्गान्वितं दृष्ट्वा सुखोष्णेनाम्बुनोद्धरेत् ।
फलानां वा कषायेण पिप्पलीसर्षपैस्तथा ॥ ७४ ॥
लीनं पक्वाशयस्थं वाऽऽप्यामं स्राव्यं सदीपनैः ।
शरीरानुगते सामे रसे लङ्घनपाचनम् ॥ ७५ ॥
विशुद्धामाशयायास्मै पञ्चकोलादिभिः शृतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान् ॥ ७६ ॥
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ।
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ॥ ७७ ॥
किंचित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ।
द्व्यहं त्र्यहं वा संस्नेह्य स्विन्नाभ्यक्तं निरूहयेत् ॥ ७८ ॥
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ।
सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत् ॥ ७९ ॥
शुद्धं रूक्षाशयं बद्धवर्चसं चानुवासयेत्[२] ।
दीपनीयाम्लवातघ्नसिद्धतैलेन मात्रया ॥ ८० ॥

१ 'अतीवाममुञ्चनेन समं न विरोधः' इति पा० । २ 'चिकित्सां च' इति पा० । ३ 'मारुतः कुपितो वह्निं संछाद्य कुरुते गदान्' इति पा० । ४ 'आप्लावयद्धन्त्यनलं' इति पा० ।

१ 'तेषामतो वक्ष्यामि भेषजम्' इति पा० । २ 'व्यक्ताः' इति पा० ।

निरूढं च विरिक्तं च सम्यक् चैवानुवासितम्।
लघ्वन्नं प्रतिसंभुक्तं सर्पिरभ्यासयेत् पुनः ॥ ८१ ॥

ग्रहणीमाश्रितमित्यादौ दोषमिति सामान्यवचनाद्वातादीनां त्रयाणामपि ग्रहणम्। आमस्यापक्वस्य लिङ्गैरन्वितमिति आमलिङ्गान्वितम्। उद्धरेदिति वमेत्। फलानामिति मदनफलानाम्। लीनमिति अनुत्क्लिष्टम्। पक्वाशयस्थमिति अधोगतत्वेन पक्वाशयसमीपगतम्। स्राव्यमिति विरेचनीयम्। सदीपनैरिति दीपनद्रव्यसंयुक्तैर्विरेचनप्रयोगैः। शरीरानुगते इति शरीरव्यापके। सामे रसे इति अपक्वे रसे; आमश्चात्रापक्वरसरूप एवेष्टः, आहाररसस्य रससंबन्धेन शरीरव्यापकतया दुर्घटत्वात्। लङ्घनम् अनशनं, पाचनं यवाग्वादि। विशुद्धामाशये इत्यत्र विशुद्धिर्हि विरेचनलङ्घनैर्यथायोग्यतया ज्ञेया। दीपनीययुतमिति षड्विरेचनशताश्रितीयोक्तदीपनीयगणसाधितम्। स्विन्नाभ्यक्तमिति स्विन्नं चाभ्यक्तं चेति स्विन्नाभ्यक्तम्। स्रस्तदोषमिति निरूहेण स्रस्तदोषम् ॥ ७३–८१ ॥

द्वे पञ्चमूले सरलं देवदारु सनागरम्।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥८२॥
शणबीजं यवान् कोलान् कुलत्थान् सुषवीं तथा।
पाचयेदारनालेन दध्ना सौवीरकेण वा ॥ ८३ ॥
चतुर्भागावशेषेण पचेत्तेन घृताढकम्।
स्वर्जिकायावशूकाख्यौ क्षारौ दत्त्वा च युक्तितः ८४
सैन्धवौद्भिदसामुद्रविडानां रोमकस्य च।
ससौवर्चलपाक्यानां भागान्द्विपलिकान् पृथक् ८५
विनीय चूर्णितान् तस्मात् पाययेत् प्रसृतं बुधः।
करोत्यग्निं बलं वर्णं वातघ्नं भुक्तपाचनम् ॥ ८६ ॥
इति दशमूलाद्यं घृतम्।

द्वे पञ्चमूले इत्यादौ सुषवीस्वरसो जलस्थानीयः, आरनालादि क्वाथ्यं च मिलित्वा द्रोणं मानं ग्राह्यम्। क्षारौ दत्त्वा च युक्तित इत्यनेन क्षारयोरल्पमानत्वमुच्यते, किंतु प्रक्षेप्यान्यतमलवणमानेन पृथक् क्षारौ देयौ; युक्तित इत्यनेन तु योग्ये काले क्षारयोगमाह, स च योग्यकालोऽत्र घृतावतारणकाल एव। यदाह जतूकर्णः—"दशमूलं पञ्चकोलं कुलत्थं सुरभिं यवम्। देवदारुं च सरलं शणबीजं च साधयेत् ॥ दध्ना सौवीरकेणैव तेन पक्वे घृताढके। द्वौ क्षारौ सप्तलवणान्यावपेद् द्विपलानि तु" इति। औद्भिदम् उत्कारिकालवणम्। रोमकं रुमाद्भवम्। पाक्यं पाकजम् ॥ ८२–८६ ॥

त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात् पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ८७
इति त्र्यूषणाद्यं घृतम्।

बिल्वमात्रे इति पलमाने कल्के, अष्टपलमानमेवात्र सर्पिः पक्तव्यं महर्षिवचनेन फलदायित्वात् ॥ ८७ ॥

पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवैः।
रास्नाक्षारद्वयाजाजीविडङ्गशटिभिर्घृतम् ॥ ८८ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च।
शुष्कमूलककोलाम्बुचुक्रिकादाडिमस्य च ॥ ८९ ॥
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः।
काञ्जिकेन च तत् पक्वमग्निदीप्तिकरं परम् ॥ ९० ॥
शूलगुल्मोदरश्वासकासानिलकफापहम्।
सबीजपूरकरसं सिद्धं वा पाययेद्घृतम् ॥ ९१ ॥
सिद्धमभ्यञ्जनार्थं च तैलमेतैः प्रयोजयेत्।
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ॥ ९२ ॥
वाते श्लेष्मावृते सामे कफे वा वायुनोद्धते।
दद्याच्चूर्णं पाचनार्थमग्निसन्दीपनं परम् ॥ ९३ ॥
इति पञ्चमूलाद्यं घृतं चूर्णं च।

पञ्चमूलाद्ये शुक्तादित्रयोदशद्रवाणां प्रत्येकं स्नेहसमत्वम्। सबीजपूरकरसमित्यत्रापि पञ्चमूल्यादीनि कल्कत्वेनेच्छन्ति; किंवा पूर्वमेव घृतं बीजपूररससंयुक्तं पेयमित्यर्थः। तैलमित्यादौ एतैः पञ्चमूल्यादिभिः सिद्धं तैलमभ्यञ्जनार्थं योज्यं, तथा एतेषामेव कल्कोक्तानां पञ्चमूल्यादीनां चूर्णं सुखाम्बुना पेयम्। चूर्णविषयमाह—वाते इत्यादि। वातश्लेष्मावृते ग्रहणीगदे तथा सामे ग्रहणीगदे; केचित् "सामे पुरीषे" इति वदन्ति; आमं चानेकविधमाहुः, यदुच्यते—"आममन्नरसं केचित् केचित्तु मलसंचयम्। प्रथमां दोषदुष्टिं च केचिदामं प्रचक्षते" इति। भोजोऽप्याह—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः। आद्य आहारधातुर्यः स आम इति संज्ञितः" इति। ईश्वरसेनोऽप्याह—"एवमामाशयेऽप्यन्नं बहु सम्यङ्न जीर्यति। चीयमानं तदेवान्नं कालेनामत्वमाप्नुयात्" इत्यादि। तदिहापि तद्वचनप्रामाण्यादामव्यवस्था कर्तव्या ॥ ८८–९३ ॥

मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले।
विनाऽतिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥ ९४ ॥
परीक्ष्यैवं पुरा सामं निरामं चामदोषिणम्।
विधिनोपाचरेत् सम्यक् पाचनेनेतरेण वा ॥ ९५ ॥

सामनिरामग्रहणीगदज्ञानार्थं सामनिरामविड्लक्षणमाह—मज्जतीत्यादि। आमेति आमाश्रिता। गुरुत्वादिति आमाहितगुरुत्वात्। पक्वेति निरामा; उपसंहरिष्यत्यामपक्वलक्षणान्ते 'परीक्ष्यैवं पुरा सामं निरामं वा' इति। द्वयोरपि आमपक्वलक्षणयोरपवादमाह—विनाऽतिद्रवेत्यादि। अतिद्रवत्वादामाऽपि प्लवते, अतिसंहता तु पक्वाऽपि अतिसंघातादेव मज्जति, शैत्यश्लेष्मप्रदूषणाच्च कफयोगाहितगौरवा पक्वाऽपि मज्जति गुरुत्वादेव न

१ 'स्रुद्धदोषमिति' इति पा०। २ 'सुरभिं' इति पा०। ३ 'सुरभिस्वरसः' इति पा०।

ग्रुवते। ननु सविष्टम्भप्रसेकार्त्यादिनैव सामस्योक्तत्वात् किमनेन सामतालक्षणेन पुनरुक्तेन ?। उच्यते—वातकफाधिकारात्तदुक्तम्, इदं तु विडामताज्ञानार्थमुक्तमिति विशेषः। परीक्ष्येत्यादौ निरामं चामदोषिणमिति कथं, यावता न निरामतायामामदोषत्वमस्ति ? न, आमदोषशब्देन ग्रहणीदोषिणोऽभिप्रेतत्वात्। इतरेणेति ग्रहणीदोषशमनेन ॥ ९४-९५ ॥

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषं हिङ्ग्वजमोदां च चव्यं चैकत्र चूर्णयेत् ९६
गुटिका मातुलुङ्गस्य दाडिमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चालनम् ॥ ९७ ॥
इति चित्रकाद्या गुटिका।

चित्रकेत्यादौ लवणानि चेत्यत्र कपिञ्जलाधिकरणन्यायेन लवणत्रयमिच्छन्ति; किंत्वनियते स न्यायो भवति, इह तु पञ्चलवणानां प्राधान्येन दीर्घंजीवितीये निर्दिष्टत्वात् पञ्चलवणस्य च शक्योपादानत्वात् पञ्चैव लवणानि ग्राह्याणि ॥९६-९७॥

नागरातिविषामुस्तक्वाथः स्यादामपाचनः।
मुस्तान्तकल्कः पथ्या वा नागरं चोष्णवारिणा ॥९८
देवदारुवचामुस्तनागरातिविषाभयाः।
वारुण्यामास्तुतास्तोये कोष्णे वाऽलवणाः पिबेत्९९
वर्चस्यामे सशूले च पिबेद्वा दाडिमाम्बुना।
विडेन लवणं पिष्टं बिल्वं चित्रकनागरम् ॥ १०० ॥
सामे वा सकफे वाते कोष्ठशूलकरे पिबेत्।
कलिङ्गहिङ्ग्वतिविषावचासौवर्चलाभयाः ॥ १०१ ॥
छर्द्यर्शोग्रन्थिशूलेषु पिबेदुष्णेन वारिणा।
पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ॥ १०२ ॥
अभयां पिप्पलीमूलं वचां कटुकरोहिणीम्।
पाठां वत्सकबीजानि चित्रकं विश्वभेषजम् ॥१०३॥
पिबेन्निष्क्वाथ्य चूर्णं वा कृत्वा कोष्णेन वारिणा।
पित्तश्लेष्माभिभूतायां ग्रहण्यां शूलनुद्धितम् ॥१०४॥
सामे सातिविषं व्योषं लवणक्षारहिङ्गु च।
निःक्वाथ्य पाययेच्चूर्णं कृत्वा वा कोष्णवारिणा १०५
पिप्पलीं नागरं पाठां सारिवां बृहतीद्वयम्।
चित्रकं कौटजं बीजं लवणान्यथ पञ्च च ॥ १०६ ॥
तच्चूर्णं सयवक्षारं दध्युष्णाम्बुसुरादिभिः।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं नरः ॥ १०७ ॥
मरिचं कुञ्चिकाम्बष्ठावृक्षाम्लाः कुडवाः पृथक्।
पलानि दश चाम्लस्य वेतसस्य पलार्धिकम् ॥१०८॥
सौवर्चलं विडं पाक्यं यवक्षारः ससैन्धवः।

१ 'विडेन लवणेन लवणं कृत्वा' इति गङ्गाधरः। २ 'दशाम्लवेतसपलानिमांश्चापि पलांशिकान्' इति पा०।

शटीपुष्करमूलानि हिङ्गु हिङ्गुशिवाटिका ॥ १०९ ॥
तत् सर्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत्।
हितं वाताभिभूतायां ग्रहण्यामरुचौ तथा ॥ ११० ॥
इति मरिचाद्यं चूर्णम्।

मुस्तान्तकल्क इति पथ्याद्युक्तनागरादिकल्क इत्यर्थः। अर्शोग्रन्थिः अर्शोऽनुग्रथितवर्चस्त्वम्। मरिचसंयुतमिति पर्यन्तं 'चूर्णं कृत्वा पिबेत्' इत्यनुवर्तते। सामे दोषे सति पिप्पलीमूलादिषु अतिविषादि प्रक्षिप्य चूर्णं कर्तव्यमित्यर्थः। सुरादिभिरित्यत्रादिशब्देन काञ्जिकसौवीरादिग्रहणम् ॥ ९८-११० ॥

चतुर्णां प्रस्थमम्लानां त्र्यूषणस्य पलत्रयम्।
लवणानां च चत्वारि शर्करायाः पलाष्टकम्।
संचूर्ण्य शाकसूपान्नरागादिष्ववचारयेत् ॥ १११ ॥
कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत्।

चतुर्णां प्रस्थमम्लानामित्यत्र चतुरम्लं द्रव्यवर्गे प्रथमोक्तं वृक्षाम्लाम्लवेतसदाडिमबदररूपमाहुः; अन्ये तु चव्यत्वगित्यादिप्रयोगवक्ष्यमाणकपित्थचुक्रिकावृक्षाम्लदाडिमानां ग्रहणमाहुः। तन्त्रान्तरे तु "वृक्षाम्लमातुलुङ्गाम्लबदराम्लाम्लवेतसैः। चतुरम्लमिदं प्रोक्तं पञ्चाम्लं तु सदाडिमम्" इत्युक्तम्। त्र्यूषणाच्च पलत्रयमिति मिलितात् पलत्रयम्। रागः कपित्थादिद्रव्यकृतो व्यञ्जनविशेषः ॥ १११ ॥—

चव्यत्वक्पिप्पलीमूलधातकीव्योषचित्रकान् ११२
कपित्थं बिल्वमम्बष्ठां शाल्मलं हस्तिपिप्पलीम्।
शिलोद्भेदं तथाऽजाजीं पिष्ट्वा बदरसंमितम् ॥११३॥
परिभर्ज्य घृते दध्ना यवागूं साधयेद्भिषक्।
रसैः कपित्थचुक्रीकावृक्षाम्लैर्दाडिमस्य च ॥११४॥
सर्वातिसारग्रहणीगुल्मार्शःप्लीहनाशिनी।
पञ्चकोलकयूषश्च मूलकानां च सोषणः ॥ ११५ ॥
स्निग्धो दाडिमतक्राम्लो जाङ्गलः संस्कृतो रसः।
क्रव्यादस्वरसः शस्तो भोजनार्थे सदीपनः ॥ ११६ ॥
तक्रारनालमद्यानि पानायारिष्ट एव च।

चव्येत्यादौ शाल्मलं शाल्मलीवेष्टकम्। शिलोद्भवं शैलजम्। चुक्रिका चाङ्गेरी। सोषण इति समरिचः ॥ ११२ ॥ ११६ ॥—

तक्रं तु ग्रहणीदोषे दीपनग्राहिलाघवात् ॥ ११७ ॥
श्रेष्ठं मधुरपाकित्वान्न च पित्तं प्रकोपयेत्।
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम् ११८
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत्।
तस्मात् तक्रप्रयोगा ये जठराणां तथाऽर्शसाम् ११९
विहिता ग्रहणीदोषे सर्वशस्तान् प्रयोजयेत्।
यवान्यामलके पथ्या मरिचं त्रिपलांशिकम् ॥१२०॥
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्।

तक्रे तदासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम् ॥ १२१ ॥
इति तक्रारिष्टः।

तक्रमित्यादिना तक्रगुणाभिधानम्। मधुरपाकित्वाच्च पित्तप्रकोपणम्; अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति, नापि पित्तं प्रशमयतीत्याहुः। सद्यस्कमविदाहीति सद्यो मथितमेव तक्रं पच्यमानावस्थायां विदाहकृन्न भवति, किंचित्कालस्थितं तु विदाही भवत्येव। यवानीत्यादौ तक्रे तदासुतमिति तक्राढके आसुतम्। जातमिति अम्लरसतया जातम् ॥ ११८–१२१ ॥

स्वस्थानगतमुत्क्लिष्टमग्निनिर्वापकं भिषक्।
पित्तं ज्ञात्वा विरेकेण निर्हरेद्वमनेन वा ॥ १२२ ॥
अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः।
जाङ्गलानां रसैर्यूषैर्मुद्गादीनां खडैरपि ॥ १२३ ॥
दाडिमाम्लैः ससर्पिष्कैर्दीपनग्राहिसंयुतैः।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भिश्चापि तिक्तकैः ॥१२४॥

वमनेन वेत्यूर्ध्वगपित्तापेक्षया ज्ञेयम्। सर्पिर्भिश्चापि तिक्तकैरित्यत्र जात्याख्यायां बहुवचनं; किंवा कुष्ठोक्तं तिक्तघृतद्वयमन्यच्च तिक्तसाधितं घृतमिति बहुवचनं साधु ॥ १२२–१२४ ॥

चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम्।
षड्ग्रन्थासारिवास्फोतासप्तपर्णाटरूषकान् ॥१२५॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनान्।
कटुकां रोहिणीं मुस्तं निम्बं च द्विपलांशिकम् १२६
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत्।
किराततिक्तेन्द्रयववीरामागधिकोत्पलैः ॥ १२७ ॥
कल्कैरक्षसमैः पेयं तत् पित्तग्रहणीगदे।
तिक्तकं यद्घृतं चोक्तं कौष्ठिके तच्च दापयेत् ॥१२८॥
इति चन्दनाद्यं घृतम्।

कुटन्नटं कैवर्तमुस्तकम्। षड्ग्रन्था वचा। आस्फोता 'अस्फुरमल्लिका' इति लोके ख्याता। कपीतनः 'गन्धमुण्ड' इति ख्यातः ॥ १२५–१२८ ॥

नागरातिविषे मुस्तं धातकीं च रसाञ्जनम्।
वत्सकत्वक्फलं बिल्वं पाठां कटुकरोहिणीम् ॥१२९॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ १३० ॥
अर्शांसि च गुदे शूलं जयेच्चैव प्रवाहिकाम्।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ १३१ ॥
इति नागराद्यं चूर्णम्।

नागराद्ये सक्षौद्रमिति मधुप्रक्षेपयुक्तम्। तण्डुलाम्बुनेति तण्डुलधावनाम्बुना; अन्ये तु तण्डुलाद्द्विगुणमम्लं तण्डुलेन समं चिरं स्थितं तत्तण्डुलाम्बु वदन्ति। कृष्णात्रेयेण पूजितत्वोपदर्शनादस्य सिद्धयोगत्वं दर्श्यते; कृष्णात्रेयः पुनर्वसोरभिन्न एवेति वृद्धाः ॥ १२९–१३१ ॥

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान्।
द्वौ चित्रकाद्वत्सकत्वग्भागान् षोडश चूर्णयेत् १३२
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत्।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ॥ १३३ ॥
इति भूनिम्बाद्यं चूर्णम्।

भूनिम्बाद्ये गुडयुतं शीताम्बु गुडशीताम्बु; गुडश्चात्र गुडवर्णतामाधुर्यापत्तिमात्रो देयः ॥ १३२ ॥ १३३ ॥

वचामतिविषां पाठां सप्तपर्णं रसाञ्जनम्।
स्योनाकोदीच्यकट्वङ्गवत्सकत्वग्दुरालभाः ॥ १३४ ॥
दार्वीं पर्पटकं पाठां यवानीं मधुशिग्रुकम्।
पटोलपत्रं सिद्धार्थान् यूथिकां जातिपल्लवान् ॥१३५॥
जम्ब्वाम्रबिल्वमध्यानि निम्बशाकफलानि च।
तद्रोगशममन्विच्छन् भूनिम्बाद्येन योजयेत् ॥१३६॥
किराततिक्तः षड्ग्रन्था त्रायमाणा कटुत्रिकम्।
चन्दनं पद्मकोशीरं दार्वीत्वक् कटुरोहिणी ॥ १३७॥
कुटजत्वक्फलं मुस्तं यवानी देवदारु च।
पटोलनिम्बपत्रैलासौराष्ट्र्यतिविषात्वचः ॥ १३८ ॥
मधुशिग्रोश्च बीजानि मूर्वा पर्पटकस्तथा।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥ १३९ ॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान्।
कामलां सन्निपातं च मुखरोगांश्च नाशयेत् ॥१४०॥
इति किराताद्यं चूर्णम्।

वचामित्यादौ स्योनाककट्वङ्गशब्दाभ्यां द्वावपि पृथुशिम्बाल्पशिम्बौ स्योनाकौ गृह्येते। तद्रोगशममन्विच्छन्निति भूनिम्बाद्युक्तग्रहणीदोषादिरोगशान्तिं काङ्क्षन्। भूनिम्बाद्येनेति भूनिम्बाद्युक्तद्रव्यगणेन यथोक्तमानेन योजयद् वचादीन्; अपरे तु भूनिम्बाद्येनेति वचनेनात्र भूनिम्बाद्युक्तगुडशीताम्बुपेयतामस्याप्यतिदिशतीति वदन्ति ॥ १३४–१४० ॥

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्धयेत् ॥ १४१ ॥
पलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकीम्।
पिप्पलीं पिप्पलीमूलं पाठां नागरधान्यकम् ॥१४२॥
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषितम्।
पानीयार्थं प्रयुञ्जीत यवागूं तैश्च साधयेत् ॥ १४३ ॥

१ 'तक्रं सासुतं' इति पा०।

शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः ।
कट्वम्लक्षारपटुना लघून्यन्नानि भोजयेत् ॥ १४४ ॥
अम्लं चानु पिबेत्तक्रं तक्रारिष्टमथापि वा ।
मदिरां मध्वरिष्टं वा निगदं सीधुमेव वा ॥ १४५ ॥

पानीयार्थं पानाय । कट्वम्लक्षारपटुनेति कट्वादियोगात् पटुना इन्द्रियोत्तेजकेनेत्यर्थः । कफग्रहण्यां सद्यस्कमेव यद्यपि कषायत्वात्तक्रमुचितं, तथाऽपि अग्निदीपनतया अम्लमेव तक्रं 'अम्लं चानुपिबेत्' इत्यनेनैवोक्तम् । निगदं सीधुमिति निर्दोषं सीधुम् ॥ १४१–१४५ ॥

द्रोणं मधूकपुष्पाणां विडङ्गानां ततोऽर्धतः ।
चित्रकस्य ततोऽर्धं स्यात्तथा भल्लातकाढकम् ॥१४६॥
मञ्जिष्ठाष्टपलं[१] चैव त्रिद्रोणेऽपां विपाचयेत् ।
द्रोणशेषं तु तच्छीतं मध्वर्धाढकसंयुतम् ॥ १४७ ॥
एलामृणालागुरुभिश्चन्दनेन च रूषिते ।
कुम्भे मासस्थितं जातमासवं तं प्रयोजयेत् ॥१४८॥
ग्रहणीं दीपयत्येव बृंहणः[२] कफपित्तजित् ।
शोथं कुष्ठं किलासं च प्रमेहांश्च प्रणाशयेत् ॥१४९॥
इति मधूकासवः ।

मधूकपुष्पस्वरसं शृतमर्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्ववत् सन्निधापयेत् ॥ १५० ॥
तं पिबन् ग्रहणीदोषाञ्जयेत् सर्वान् हिताशनः ।
तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासुतान्[३] पिबेत् ॥ १५१ ॥

अर्धक्षयीकृतमिति पाकादर्धावशिष्टं कृतम् । पूर्ववत्संनिधापयेदिति एलादिलिप्ते कुम्भे संस्थापयेत् ॥ १४६–१५१ ॥

प्रस्थौ दुरालभाया द्वौ प्रस्थमामलकस्य च ।
दन्तीचित्रकमुष्टी[४] द्वे प्रत्यग्रं चाभयाशतम् ॥ १५२ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा शीतं द्रोणावशेषितम् ।
सगुडद्विशतं पूतं मधुनः कुडवायुतम् ॥ १५३ ॥
तद्वत् प्रियङ्गोः पिप्पल्या विडङ्गानां च चूर्णितैः ।
कुडवैर्घृतकुम्भस्थं पक्षाज्जातं ततः पिबेत् ॥ १५४ ॥
ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत् ।
स्वरवर्णकरश्चैव रक्तपित्तकफापहः ॥ १५५ ॥
इति दुरालभासवः ।

हरिद्रा पञ्चमूले द्वे वीरर्षभकजीवकम् ।
एषां पञ्चपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् १५६
द्रोणशेषे रसे पूते गुडस्य द्विशतं भिषक् ।
चूर्णितान् कुडवार्धांशान् प्रक्षिपेच्च समाक्षिकान्[५]१५७

प्रियङ्गुमुस्तमञ्जिष्ठाविडङ्गमधुकप्लवान् ।
लोध्रं शावरकं चैव मासार्धस्थं पिबेत्तु तम् ॥१५८॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तजित् ।
आनाहकफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥ १५९ ॥
इति मूलासवः ।

दन्तीचित्रकमुष्टी द्वे इति चित्रकदन्त्योर्मिलित्वा द्विपलम् । तद्वदिति एलादिना लिप्तवृहत्कुम्भस्थम् ॥ १५२–१५९ ॥

प्रास्थिकं[१] पिप्पलीं पिष्ट्वा गुडं मध्यं विभीतकात् ।
उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥ १६० ॥
तस्मात् पलं सुजातात्तु सलिलाञ्जलिसंयुतम् ।
पिबेत्पिण्डासवो ह्येष रोगानीकविनाशनः ॥१६१॥
स्वस्थोऽप्येनं पिबेन्मासं नरः स्निग्धरसाशनः ।
इच्छंस्तेषामनुत्पत्तिं रोगाणां येऽत्र कीर्तिताः ॥१६२॥
इति पिण्डासवः ।

प्रास्थिकमित्यादौ पिप्पलीगुडविभीतकमज्जानः प्रत्येकं प्रस्थमानाः । स्निग्धरसाशन इति स्नेहवन्मांसरसभोजनः ॥ १६०–१६२ ॥

नवे पिप्पलिमध्वाक्ते कलसेऽगुरुधूपिते ।
मध्वाढकं जलसमं चूर्णानीमानि दापयेत् ॥ १६३ ॥
कुडवार्धं विडङ्गानां पिप्पल्याः कुडवं तथा ।
चतुर्थिकांशां त्वक्क्षीरीं केशरं मरिचानि च ॥१६४॥
त्वगेलापत्रकशटीक्रमुकातिविषाघनान् ।
हरेण्वेल्वालुतेजोह्वापिप्पलीमूलचित्रकान् ॥ १६५ ॥
कार्षिकांस्तत् स्थितं मासमत ऊर्ध्वं प्रयोजयेत् ।
मन्दं संदीपयत्यग्निं करोति विषमं समम् ॥ १६६ ॥
हृत्पाण्डुग्रहणीरोगकुष्ठार्शःश्वयथुज्वरान् ।
वातश्लेष्मामयांश्चान्यान्मध्वरिष्टो व्यपोहति ॥१६७॥
इति मध्वरिष्टः ।

नवे इत्यादौ त्वगेलादीनां कार्षिकत्वम् ॥ १६३–१६७ ॥

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ॥ १६८ ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्धनम् ॥ १६९ ॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ।
गौल्मिके षट्पलं प्रोक्तं भल्लातकघृतं च यत्[२] ॥१७०॥

समूलां पिप्पलीमिति पिप्पलीं पिप्पलीमूलं च । भल्लातकघृतं च गुल्मोक्तमिति ज्ञेयम् ॥ १६८–१७० ॥

१ 'मञ्जिष्ठात्रिपलं' इति पा० । २ 'बृंहणोऽनिलरोगजित्' इति पा० । ३ 'द्राक्षेक्षुकाश्मर्यस्वरसा०' इति पा० । ४ 'मुष्टी चित्रकदन्त्योर्द्वे' इति पा० । ५ 'पृथक्' इति पा० ।

१ 'प्रास्थिकीं' इति पा० । २ 'सिद्धं रसायनम्' इति पा० ।

विडं कालोत्थलवणं सर्जिकायवशूकजम् ।
सप्तलां कण्टकारीं च चित्रकं चेति दाहयेत् ॥१७१॥
सप्तकृत्वः स्रुतस्यास्य क्षारस्यं ह्याढकेन तु ।
आढकं सर्पिषः पक्त्वा पिबेदग्निविवर्धनम् ॥ १७२ ॥
इति क्षारघृतम् ।

समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम् ।
चित्रकातिविषे हिङ्गु श्वदंष्ट्रां कटुरोहिणीम् ॥ १७३ ॥
वचां च कार्षिकं पञ्चलवणानां पलानि च ।
दध्नः प्रस्थद्वये तैलसर्पिषोः कुडवद्वये ॥ १७४ ॥
खण्डीकृतानि निष्क्वाथ्य शनैरन्तर्गते रसे ।
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम् ॥१७५॥
पिबेत् पाणितलं तस्मिञ्जीर्णे स्यान्मधुराशनः ।
वातश्लेष्मामयान्सर्वान्हन्याद्विषगरांश्च सः ॥ १७६ ॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ १७७ ॥
स क्षारः सर्पिषा पीतो भोज्ये वाऽप्यवचूर्णितः ।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्तशूलनुत् ॥ १७८ ॥

विडं कालोत्थलवणमिति विडं विडलवणं, काललवणं तु सौवर्चललवणमित्यर्थः । खण्डीकृतानीति खण्डं खण्डं कृतानि । अनुगते रसे इति निपीते द्रवे । पाणितलमिति कर्षः । मधुराशनत्वमिह क्षारप्रयोगाभिच्छेदकत्वहन्तृतया यौगिकत्वाज्ज्ञेयम् ॥ १७१-१७८ ॥

दुरालभां करञ्जौ द्वौ सप्तपर्णं सवत्सकम् ।
षड्ग्रन्थां मदनं मूर्वां पाठामारग्वधं तथा ॥ १७९ ॥
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत् ।
दग्ध्वा च तं पिबेत् क्षारं ग्रहणीबलवर्धनम् ॥१८०॥

गोमूत्रेण समांशानीति गोमूत्रेण मिलितं चूर्णं तुल्यम् । अस्य च पानं पूर्वक्षारवत् सर्पिषा ज्ञेयम् ॥ १७९ ॥ १८० ॥

भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्धनः ॥ १८१ ॥
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ।
मुस्तं च वस्तमूत्रेण दहेत् क्षारोऽग्निवर्धनः ॥ १८२॥

माहिषमूत्रेणेत्यादौ चूर्णसमत्वं माहिषमूत्रस्य, पूर्वप्रयोगदृष्टत्वात् ॥ १८१ ॥ १८२ ॥

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ।
वार्ताकीकुडवं चार्कादष्टौ द्वे चित्रकात् पले ॥१८३॥
दग्धानि वार्ताकुरसे गुटिका भोजनोत्तराः ।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः॥१८४॥

१ 'क्षारस्याधाढकेन' इति पा० ।

विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ।
इत्येषा क्षारगुटिका कृष्णात्रेयेण कीर्तिता ॥ १८५ ॥
इति क्षारगुडिका ।

वत्सकातिविषे पाठां दुःस्पर्शां हिङ्गु चित्रकम् ।
चूर्णीकृत्य पलाशाग्रक्षारे मूत्रस्रुते पचेत् ॥ १८६ ॥
आयसे भाजने सान्द्रात्तस्मात् कोलं सुखाम्बुना ।
मद्यैर्वा ग्रहणीदोषशोथार्शःपाण्डुमान् पिबेत् ॥१८७॥
इति चतुर्थक्षारः ।

चतुष्पलमित्यादौ, 'चतुष्पलं सुधाकाण्डात्त्रिफलालवणानि च' इति ये पठन्ति, ते त्रिफलालवणैर्मिलित्वा चतुष्पलं वदन्ति । दग्धानि वार्ताकुरसे इति क्षारीभूतानि पुनर्वार्ताकुरसे गुटिकाः कर्तव्याः ॥ १८३-१८७ ॥

त्रिफलां कटभीं चव्यं बिल्वमध्यमयोरजः ।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठां च हिङ्गु च ॥ १८८ ॥
मधुकं मुष्ककयवक्षारौ त्रिकटुकं वचाम् ।
विडङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ ॥ १८९॥
मूर्वाजमोदेन्द्रयवान् गुडूचीं देवदारु च ।
कार्षिकं लवणानां च पञ्चानां पलिकान्पृथक्॥१९०॥
भागान् दध्नि त्रिकुडवे घृततैलेन मूर्च्छितम् ।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात् पाणितलं पिबेत्१९१॥
सर्पिषा कफवातार्शोग्रहणीपाण्डुरोगवान् ।
प्लीहमूत्रग्रहश्वासहिक्काकासक्रिमिज्वरान् ॥ १९२॥
शोषातिसारौ श्वयथुं प्रमेहानाहहृद्ग्रहान् ।
हन्यात् सर्वविषं चैव क्षारोऽग्निजननो वरः ॥१९३॥
जीर्णे रसैर्वा मधुरैरश्नीयात् पयसाऽपि वा ।
इति पञ्चमक्षारः ।

त्रिफलामित्यादौ मुष्ककं घण्टापाटलकम् । घृततैलेनेत्यत्र दधिसाहचर्याद्घृततैलस्यापि मिलितस्य कुडवत्रयम् ॥ १८८-१९३ ॥—

त्रिदोषे विधिवद्वैद्यः पञ्च कर्माणि कारयेत् ॥१९४॥
घृतक्षारासवारिष्टान् दद्याच्चाग्निविवर्धनान् ।
क्रिया या चानिलादीनां निर्दिष्टा ग्रहणीं प्रति१९५॥
व्यत्यासात्तां समस्तां वा कुर्याद्दोषविशेषवित् ।

त्रिदोषे पञ्चकर्माणीत्यत्र शिरोविरेचनस्यायौगिकत्वेऽप्यत्र भूयसां कर्मणां यौगिकत्वात् पञ्चकर्माणीति कृतं, किंवा शिरोरोगादिसद्भावे शिरोविरेचनमप्यत्र देयमेव । व्यत्यासात्तां समस्तां चेति उक्तवातादिक्रियां व्यत्यासादेकैकदोषक्रियापरिवर्तनेन कुर्यात्, किंवा मिलितैरपि क्रिया एककालं कर्तव्या; क्रियामेलनं च वातादिद्रव्यमेलनादेव भवति ॥ १९४ ॥ १९५ ॥—

स्नेहनं स्वेदनं शुद्धिर्लङ्घनं दीपनं च यत् ॥ १९६ ॥

१ 'सान्द्रं' इति पा० । २ 'सर्वविषाणां च क्षारोऽयं शमनो वरः' इति पा० ।

चूर्णानि लवणक्षारमध्वरिष्टसुरासवाः ।
विविधास्तक्रयोगाश्च दीपनानां च सर्पिषाम् ॥१९७॥
ग्रहणीरोगिभिः सेव्याः,

स्नेहनमित्यादिना ग्रहणीदोषभेषजं संकलय्याह ॥ १९६ ॥ १९७ ॥—

क्रियां चावस्थिकीं शृणु ।
ष्ठीवनं श्लैष्मिके रूक्षं दीपनं तिक्तसंयुतम् ॥ १९८॥
सकृद्रूक्षं सकृत्स्निग्धं कृशे बहुकफे हितम् ।
परीक्ष्यामं शरीरस्य दीपनं स्नेहसंयुतम् ॥ १९९ ॥
दीपनं बहुपित्तस्य तिक्तं मधुरसंयुतम् ।
बहुवातस्य तु स्नेहलवणाम्लयुतं हितम् ॥ २०० ॥
सन्धुक्षति तथा वह्निरेषां विधिवदिन्धनैः ।

क्रियां चावस्थिकीमिति ग्रहणीदोष एव अवस्थाविशेषे कर्तव्यां क्रियां शृणु । सकृद्रूक्षं सकृत्स्निग्धं कृश इति यदि रूक्षमेव क्रियते तदा कृशस्य बलहानिः स्यात्, अथ स्निग्धमेव क्रियते तदा बहुकफे कफवृद्धिः स्यात्, तेनोभयापेक्षया अन्तरा रूक्षमन्तरा च स्निग्धं कर्तव्यमित्यर्थः । स्नेहलवणाम्लयुतमिति दीपनमित्यर्थः । संधुक्षति विधिवदिन्धनैरिति यथाविधानदीपित इत्यर्थः ॥ १९८–२०० ॥—

स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ २०१ ॥
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ।
मन्दाग्निरविपक्वं तु पुरीषं योऽतिसार्यते ॥ २०२ ॥
दीपनीयौषधैर्युक्तां घृतमात्रां पिबेत्तु सः ।
तया समानः पवनः प्रसन्नो मार्गमास्थितः ॥२०३॥
अग्नेः समीपचारित्वादाशु प्रकुरुते बलम् ।
काठिन्याद्यः पुरीषं तु कृच्छ्रान्मुञ्चति मानवः॥२०४॥
सघृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ।
रौक्ष्यान्मन्दे पिबेत्सर्पिस्तैलं वा दीपनैर्युतम् ॥२०५॥

उक्तानुक्तस्नेहफलमवधारयन्नाह—स्नेहमेवेत्यादि । परमिति श्रेष्ठम् । स्नेहस्य दीपनश्रेष्ठत्वे हेतुमाह—नालमित्यादिना । नालमिति न समर्थम् । स्नेहसमिद्धस्येति स्नेहदीप्तस्य । स्नेहशब्देनात्र सामान्यवाचिना सर्पिरेवोच्यते, सर्पिष एवात्राधिकारात् । मन्दाग्निरित्यादौ अविपक्वमिति पुरीषविशेषणं; तेनाविपक्वशब्देनेह रसामस्य ग्रहणं न भवति, रसामे "जठरामगरार्दिताः" (सू. अ. १३) इत्यत्र स्नेहो निषिद्धः, स्नेहापक्वपुरीषं प्रति स्नेहप्रयोगो विरुद्ध एव; किंच दीपनीयौषधसंस्कारादपि स्नेहस्य संस्कारगुणाविघातादेव अपक्वपुरीषं प्रति हितत्वं भवति; स्नेहांशस्तु वातप्रगुणताकरणत्वेन सहायतया उपादीयते, अत एवोक्तं—तया समान इत्यादि । प्रसन्न इति दुष्टिविरहतः । मार्गमास्थित इति स्वाभाविकमार्गमापन्नः । समीपचारित्वादिति प्रसन्नत्वादिगुणयोगे सति अग्निपार्श्वस्थितत्वाद्बलमेव वह्नेः करोति न वैषम्यम्, अग्निदीप्तिकरत्वस्वभावादित्यर्थः । अन्नावग्रहमिति अन्नेनावग्रहोऽस्येति अन्नावग्रहः; अन्नमध्यप्रयुक्तमित्यर्थः ॥ २०१–२०५ ॥

अतिस्नेहात्तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः ।
भिन्ने गुदोपलेपात्तु मले तैलसुरासवाः ॥ २०६ ॥
उदावर्तात्तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः ।
दोषवृद्ध्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत्॥२०७॥
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम् ।
उपवासाच्च मन्देऽग्नौ यवागूभिः पिबेद्घृतम् ॥२०८॥
अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ।
दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान्नरान् ॥ २०९ ॥
प्रसहानां रसैः साम्लैर्भोजयेत् पिशिताशिनाम् ।
लघु, तीक्ष्णोष्णशोधित्वाद्दीपयन्त्याशु तेऽनलम्॥२१०
मांसोपचितमांसत्वात्तथाऽऽशुतरबृंहणाः ।

अतिस्नेहान्मन्देऽग्नौ सति चूर्णारिष्टादीनि योज्यानि । भिन्ने इति विशिष्टगुदोपलेपादग्नौ मन्दे, तैलसुरासवा देया इति वाक्यार्थः । दोषविधिं चरेदिति अग्निमान्द्यकारकदोषौषधविधिं कुर्यात् । अन्नावपीडितं यथा भवति तथा यवागूभिर्घृतं पिबेत्; अन्नावपीडितं च मध्यभोजनपीतं घृतं भवति । दीर्घकालेत्यादौ क्षामो व्यवसायशून्यः, क्षीणो दुर्बलः, कृशो हीनमांसः । प्रसहानां द्वैविध्यान्मांसाशिनामिति विशेषणं, तेन तृणादप्रसहानां गवादीनां निषेधः । ननु प्रसहाः "गुरूष्णस्निग्धमधुरा" ( सू. अ. २७ ) इत्यन्नपाने उक्तं, इह तु लघुतीक्ष्णेत्यादिना कथं लाघवमुच्यते तेषां ? मैवं, भोजयेल्लध्विति योजनात्; तेन प्रसहानां मध्ये ये लघवस्तेषां रसेनात्र लघ्वन्नं भोजयेत् । तीक्ष्णेत्यादिना प्रसहगुणाभिधानम् । अन्ये तु प्रसहान्तरापेक्षया ये प्रसहा लघवस्तेषामिह लघुशब्देनोपादानम्, तथाऽन्ये अम्लादियोगात् संस्कारेणेह लाघवं साधयन्ति; एतेन राजयक्ष्मचिकित्सितेऽपि प्रसहगुणास्तीक्ष्णोष्णलघुत्वादय उक्तास्ते न्याय्या एव ॥ २०६–२१० ॥—

नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ॥२११॥
यथा निरिन्धनो वह्निरल्पो वाऽतीन्धनावृतः ।
स्नेहान्नविधिभिश्चित्रैश्चूर्णारिष्टसुरासवैः ॥ २१२ ॥
सम्यक्प्रयुक्तैर्भिषजा बलमग्नेः प्रवर्धते ।
यथा हि सारदार्वेग्निः स्थिरः संतिष्ठते चिरम्॥२१३॥
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत् स्थिरः ।
हितं जीर्णे मितं चाश्नंश्चिरमारोग्यमश्नुते ॥ २१४ ॥
अवैषम्येण धातूनामग्निवृद्धौ यतेत ना ।
समैर्दोषैः समो मध्ये देहस्योष्माऽग्निसंस्थितः॥२१५॥
पचत्यन्नं तदारोग्यपुष्ट्यायुर्बलवृद्धये ।

१ 'प्रशान्तः' इति पा० ।

१ 'अव्यवसायशून्यः' इति पा० । २ 'स्नेहान्नपानैर्विधै०' इति पा० ।

दोषैर्मन्दोऽतिवृद्धो वा विषमैर्जनयेद्गदान् ॥ २१६ ॥
वाच्यं मन्दस्य तत्रोक्तमतिवृद्धस्य वक्ष्यते ।

नाभोजनेनेत्यादिना अभोजनातिभोजननिरासं कृत्वाऽनसम्यक्प्रयोगस्याग्निजनकतामाह । अभोजनेनेत्यनेनाभोजनमल्पभोजनं च गृह्यते । अल्पो वा अतीन्धनावृतो वा न दीप्यते इति योजना । सारदार्वग्निरिति सारदार्वाश्रयोऽग्निः सारदार्वग्निः । स्नेहवदन्नं स्नेहान्नम् । मितमिति मात्रावत्, यद्यपि च हितमिताशिनोऽपि कालविपर्ययादिना रोगा भवन्त्येव, तथाऽपि हितमिताशिनां नाहारजरोगोत्पत्तिर्भवतीति दर्शयति । चिरमारोग्यमश्नुते इति आहारजरोगं न प्राप्नोतीति भावः । अवैषम्येण धातूनामिति धातुसाम्येन क्रियमाणायामग्निवृद्धौ यतेत; एतेन दोषवैषम्येण पित्तोद्रेकरूपेण याऽग्निवृद्धिरत्यग्निरूपा, तां निषेधयति । समैरित्यादिनाऽग्निभेदान् समाग्निपरिपालनार्थमाह । मध्ये इति नातिसमीपे । अग्निसंज्ञित इति भाषया ऊष्मारूपे जाठराग्नौ बाह्याग्निना साम्यं निषेधयति । दोषैरिति सामान्योक्तेऽपि योग्यतया कफपित्तवातैर्यथाक्रममेव मन्दतीक्ष्णविषमत्वानि ज्ञेयानि । वाच्यमिति प्रतिक्रियार्थं वचनीयं चिकित्सितमिति यावत् ॥ २११-२१६ ॥—

नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ॥ २१७ ॥
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ।
तदा लब्धबलो देहे विरूक्षे सानिलोऽनलः ॥२१८॥
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ।
पक्त्वाऽन्नं स ततो धातूञ्छोणितादीन् पचत्यपि२१९
ततो दौर्बल्यमातङ्कान्मृत्युं चोपनयेन्नरम् ।
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति ॥२२०॥
तृट्श्वासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसंभवाः ।
तमत्यग्निं गुरुस्निग्धशीतैर्मधुरविज्जलैः ॥ २२१ ॥
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ।
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ २२२ ॥
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ।
पायसं कृशरां स्निग्धं पैष्टिकं गुडवैकृतम् ॥ २२३ ॥
अद्यात्तथौदकानूपपिशितानि भृतानि च ।
मत्स्यान्विशेषतः श्लक्ष्णान्स्थिरतोयचरांस्तथा २२४
आविकं च भृतं मांसमद्यादत्यग्निनाशनम् ।
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत् ॥२२५॥
गोधूमचूर्णमन्थं वा व्यधयित्वा सिरां पिबेत् ।
पयो वा शर्करासर्पिर्जीवनीयौषधैः श्रृतम् ॥ २२६ ॥
फलानां तैलयोनीनामुत्कुञ्चाश्च सशर्कराः ।
मार्दवं जनयन्त्यग्नेः स्निग्धा मांसरसास्तथा ॥२२७॥
पिबेच्छीताम्बुना सर्पिर्मधूच्छिष्टेन संयुतम् ।
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः ॥ २२८ ॥

१ 'आहारोपबाधजरोगं' इति पा० । २ '°दलमग्निरावलम्' इति पा० । ३ 'तैलयोनीनां मृत्कुञ्चाः' इति पा० ।

आनूपरससिद्धान् वा त्रीन् स्नेहांस्तैलवर्जितान् ।
पयसा संमितं चापि घनं त्रिस्नेहसंयुतम् ॥ २२९ ॥
नारीस्तन्येन संयुक्तां पिबेदौदुम्बरीं त्वचम् ।
ताभ्यां वा पायसं सिद्धमद्यादत्यग्निशान्तये ॥२३०॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ।
असकृत् पित्तशान्त्यर्थं पायसप्रतिभोजनम् ॥२३१॥
प्रसमीक्ष्य भिषक् प्राज्ञस्तस्मै दद्याद्विधानवित् ।
यत्किञ्चिन्मधुरं मेद्यं श्लेष्मलं गुरुभोजनम् ॥२३२॥
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ।
मेद्यान्यन्नानि योऽत्यग्नावप्रतान्तः समश्नुते ॥२३३॥
न तन्निमित्तं व्यसनं लभते पुष्टिमेव च ।
कफे वृद्धे जिते पित्ते मारुते चानलः समः ॥२३४॥
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ।

पित्तं पावकस्थाने कुपितमिति संबन्धः । तच्च पित्तं मारुतानुगैतत्वादत्यग्निकरं भवति; एवं धर्मभेदाद्विरुद्धकार्यकरं ज्ञेयम् । पित्तोष्मरूपस्यापि च वह्नेः प्रादेशिकपित्तोष्मणो हानिजनकत्वं जन्यजनकयोर्भेदत्वादुपपन्नमेव ज्ञेयम् । स्थिरतोयचरानित्यनेन स्थिरतोयचारिणां निष्क्रियतया गौरवातिशयं दर्शयति । तिलवातामादीनां दृषदि पिष्टानामुष्णोदकमृदिता पिण्डा उत्कुञ्चा उच्यन्ते, 'उत्कारिका' इत्यन्ये । घनं त्रिस्नेहसंयुतमित्यत्र घनशब्देन दध्युच्यते । पायसेन प्रतिभोजनं यस्मिन् पित्तहरणे तत् पायसप्रतिभोजनम् । मेद्यमिति मेदुरं मेदोजनकं वा । अप्रतान्त इति अबुभुक्षितः । व्यसनं मरणमित्यर्थः । पुष्टिमेव च लभते इति योज्यम् ॥ २१७-२३४ ॥

भवन्ति चात्र—

पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ॥ २३५ ॥
विषमं बहु वाऽल्पं वाऽप्यप्राप्तातीतकालयोः ।
भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम् ॥ २३६ ॥
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन्सृजन्ति वा ।
प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ॥२३७॥
दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ।
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः २३८
व्यायामाच्च विहाराच्च विक्षिप्तत्वाच्च चेतसः ।
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ॥ २३९ ॥
अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु न दुष्यति ।
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम् ॥ २४० ॥
नैव दूष्यति तेनैव समं संपद्यते यथा ।
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ।
यान्ति कोष्ठे परिक्लेदं संवृते देहधातवः ॥ २४१ ॥

१ 'पयसा समितां चापि घनां त्रिस्नेहसंयुताम्' इति पा० । २ '°वप्रशान्तः' इति पा० । ३ 'मारुतानुगतत्वादिधर्मयुक्तमत्यग्निकरं' इति पा० । ४ 'हानिजननं' इति पा० । ५ 'मरणमनर्थं वा लभते' इति पा० ।

क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयःस्वन्यत् पयस्तप्तमिवार्पितम् ॥ २४२ ॥
नैशेष्वाहारजातेषु नाविपक्वेषु बुद्धिमान् ।
तस्मादन्यत्समश्नीयात्पालयिष्यन्बलायुषी ॥ २४३ ॥

संप्रति प्रागुक्तसमशनादिलक्षणमाह—पथ्यापथ्यमित्यादि । पथ्यापथ्यं किंचिदेकत्र मिलितं, यथा—रक्तशाल्यन्नं यवकान्नं च मिलितम् । बहुभुक्तमल्पभुक्तं वा तथाऽप्राप्तमतीतकालं च भुक्तं विषममुच्यते । पूर्वान्नेत्यादि दिवा भुक्तस्योपरि तदहरेव पुनर्भुज्यते तदध्यशनं; तन्निषेधयन्नाह—प्रातराशे इत्यादि । अशनमाशो भोजनमित्यर्थः । कस्मान्न दूष्यतीत्याह—दिवेत्यादि । स्फुटत्वमिति विवृतत्वं, विवृतत्वाच्च स्रोतसां स्रोतोभिर्विहनेन रसोऽव्याहतगतिर्भवति, ततश्च न क्लेदं स्रोतांसि यान्ति; तथा व्यायामादिभिश्च शोष्यमाणानि न क्लेदमुपयान्ति स्रोतांसि । व्यायामो गमनादिः, विहारः अङ्गक्षेपणादिका चेष्टा । स्रोतोऽक्लेदे किं भवतीत्याह—अक्लिन्नेष्वित्यादि । आसिक्तमिति प्रक्षिप्तम् । अविदग्धे इत्यादिनाऽत्र दृष्टान्तमाह । म्लाने इति संकुचिते । अपक्वेष्विति अन्येषु । उपसंहरति—नैशेष्वित्यादिना । नान्यत् समश्नीयादिति योजना ॥ २३५–२४३ ॥

तत्र श्लोकाः—

अन्तरग्निगुणा देहं यथा धारयते च सः ।
यथाऽन्नं पच्यते यांश्च यथाऽऽहारः करोत्यपि २४४
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान् ।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥२४५॥
वृष्याणामाशुकृद्धेतुर्धातुकालोद्भवक्रमः ।
रोगैकदेशकृद्धेतुरन्तरग्निर्यथाऽधिकः ॥ २४६ ॥
प्रदुष्यति यथा दुष्टो यान् रोगाञ्जनयत्यपि ।
ग्रहणी या यथा यच्च ग्रहणीदोषलक्षणम् ॥ २४७ ॥
पूर्वरूपं पृथक् चैव व्यञ्जनं सचिकित्सितम् ।
चतुर्विधस्य निर्दिष्टं तथा चावस्थिकी क्रिया ॥२४८॥
जायते च यथाऽत्यग्निर्यच्च तस्य चिकित्सितम् ।
उक्तवानिह तत् सर्वं ग्रहणीदोषके मुनिः ॥ २४९ ॥

इत्यग्निवेशकृते तन्त्रेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने ग्रहणीचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

अन्तरग्निरित्यादिना अध्यायसंग्रहं ब्रूते । येऽग्नय इति 'भौमाप्याग्नेय[1]' इत्यादिनोक्ताः । यांश्चेति 'पञ्चाहारगुणान्' इत्याद्युक्तमर्थं संगृह्णाति । पुष्यन्ति यावन्त इति 'यथास्वं स्वं' इत्याद्युक्तं संगृह्णाति । ये पचन्ति यानिति 'सप्तभिर्देहधातारः' इत्याद्युक्तसंग्रहः । आशुकारित्वेन हेतुना आशुकृद्धेतुः । शेषं व्यक्तम् ॥ २४४–२४९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने ग्रहणीचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

१ 'समासाच्च' इति पा० ।

## षोडशोऽध्यायः ।

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

ग्रहणीदोषचिकित्सिते क्रियमाणे तीक्ष्णादिना[1] पित्तजननाद्ग्रहणीचिकित्सितानन्तरं पित्तप्रधानपाण्डुरोगचिकित्सितमुच्यते । पाण्डुना वक्ष्यमाणहरितादिवर्णेभ्यः प्रधानेन वर्णेनोपलक्षितो रोगः पाण्डुरोगः । उक्तं हि सुश्रुते—"सर्वेषु चैतेषु हि पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः" ( सु. उ. अ. ४४ ) इति । कामला-हलीमकादिचिकित्सा च पाण्डुरोगभेदत्वादेव तेषामिह वक्तव्या; किंवा 'पाण्डुरोगादीनां चिकित्सितं पाण्डुरोगचिकित्सितम्' इति परिग्रहात् कामलादिचिकित्सितमपि प्रतिज्ञातमेव ॥ १ ॥ २ ॥

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ ३ ॥

त्रिशोथीये यद्यपि पाण्डुरोगः पञ्चसंख्याक उक्तस्तथाऽपीह पुनस्तदनुवादेन सुश्रुतोक्तचतुःसंख्यात्वं निषेधयति । उक्तं हि सुश्रुते—"पाण्ड्वामयोऽष्टार्धविधः प्रदिष्टः पृथक्समस्तैर्युगपच्च दोषैः" ( सु. उ. अ. ४४ ) इति । तत्र हि मृद्भक्षणजः सन्निपातजे एवावरुद्धः ॥ ३ ॥

दोषाः पित्तप्रधानास्तु यस्य कुप्यन्ति धातुषु ।
शैथिल्यं तस्य धातूनां गौरवं चोपजायते ॥ ४ ॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः ।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात् ॥ ५ ॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः ।
वैवर्ण्यं भजते, तस्य हेतुं शृणु सलक्षणम् ॥ ६ ॥

दोषा इत्यादिना संप्राप्तिमाह । पित्तं प्रधानं यथोक्ते पित्तप्रधानाः; बहुवचनं च व्यक्तिबहुत्वापेक्षया, नतु पारमार्थिकम् । गौरवं क्रियाखसामर्थ्यात्; गौरवं पाण्डुरोगिणो निःसारधातुत्वादिति ब्रुवते । ओजसो गुणा इति ओजसो रक्तधातुरूपस्य ये गुणाः; किंवा ओजस एव ये दशगुणाः क्षीरसमाना उक्तास्ते ज्ञेयाः । ओजसः क्षयेनैव स्नेहक्षये लब्धे पुनः स्नेहक्षयाभिधानं विशेषक्षयाभिधानार्थम् । दोषैर्दूष्याणां प्रकृष्टाद्दूषणादिति दोषदूष्यप्रदूषणात् । निःसारः अपगतधातुसारः; "अष्टौ साराः" (वि. अ. ८ ) इत्यादिना प्रोक्तसारविरहित इत्यर्थः । शिथिलेन्द्रियः दुर्बलेन्द्रियः । स इति पुमान् । यद्यपि रक्तपित्तयोरेकयोनित्वात् पित्तेनेह रक्तवृद्धिर्भाव्या, तथाऽपीह रक्तक्षयो रक्तपोषकरसस्य पित्तेन क्षपणाद् रक्तपोषकसारभागानुत्पादाच्च । यद्यपि पित्तं तेजोरूपतया वर्णकरमिहोच्यते, यदुक्तं—"तेजोधातुरप्युदकान्तरीक्षधातुप्रायोऽवदातवर्णकरः" ( शा. अ. ८ ) इति, तथाऽपि विकृतत्वात् पित्तमिह विकृतवर्णकृदेव भवति ॥ ४–६ ॥

१ 'तीक्ष्णादिना' इति पा० ।

क्षाराम्ललवणात्युष्णविरुद्धासात्म्यभोजनात्।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥ ७ ॥
विदग्धेऽन्ने दिवास्वप्नाद्व्यायामान्मैथुनात्तथा।
प्रतिकर्मर्तुवैषम्याद्वेगानां च विधारणात् ॥ ८ ॥
कामचिन्ताभयक्रोधशोकोपहतचेतसः।
समुदीर्णं यदा पित्तं हृदये समवस्थितम् ॥ ९ ॥
वायुना बलिना क्षिप्तं संप्राप्य धमनीर्दश।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरमाश्रितम् ॥ १० ॥
प्रदूष्य कफवातासृक्त्वङ्मांसानि करोति तत्।
पाण्डुहारिद्रहरितान् वर्णान् बहुविधांस्त्वचि ॥११॥
स पाण्डुरोग इत्युक्तः

क्षारेत्यादिना समानं हेतुमाह। निष्पावः शिम्बः। व्यायाममैथुने विदग्धेऽन्ने एव क्रियमाणे रोगहेतुनी। प्रतिकर्मणां धमनादीनामृतूनां च वैषम्यं प्रतिकर्मर्तुवैषम्यम्। धमनीर्दश इति हृदयाश्रिता दश धमनीः। केवलमिति कृत्स्नम्। 'प्रदूष्य कफवातासृक्' इति पाठे विक्षिप्तस्य वायोः पित्तेन दूषणं, यदा तु 'कफपित्तासृक्' इति पाठस्तदा पित्तेन हृदयस्थेन स्थानान्तरस्थस्य पित्तस्य दुष्टिर्ज्ञेया। समुदीर्णमित्यादिना चेयं संप्राप्तिः पूर्वोक्तसामान्यसंप्राप्तेरेव प्रपञ्चः ॥ ७–११ ॥—

तस्य लिङ्गं भविष्यतः।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥ १२ ॥

तस्येत्यादिना पूर्वरूपमाह। 'स्वेदाबाधः' इति केचित् पठन्ति ॥ १२ ॥

संभूतेऽस्मिन् भवेत् सर्वः कर्णक्ष्वेडी हतानलः।
दुर्बलः सदनोऽन्नद्विट् श्रमभ्रमनिपीडितः ॥ १३ ॥
गात्रशूलज्वरश्वासगौरवारुचिमान्नरः।
मृदितैरिव गात्रैश्च पीडितोन्मथितैरिव ॥ १४ ॥
शूनाक्षिकूटो हरितः शीर्णलोमा हतप्रभः।
कोपनः शिशिरद्वेषी निद्रालुः ष्ठीवनोऽल्पवाक् १५
पिण्डिकोद्वेष्टकट्यूरुपादरुक्सदनानि च।
भवन्त्यारोहणायासैर्विशेषश्चास्य वक्ष्यते ॥ १६ ॥

संभूतेऽस्मिन्निति उत्पन्ने पाण्डुरोगे। कर्णक्ष्वेडीत्यादि सामान्यं लक्षणं; कर्णक्ष्वेडी कर्णनादवान्। अन्नद्विडित्यनेन अन्नाग्रह उच्यते, अरुचिमानित्यनेन प्रार्थितान्नभक्षणासामर्थ्यमुच्यते। शिशिरद्वेषीति शीतद्वेषी; शिशिरद्वेषिता च पित्तरोगेऽप्यस्मिन् रोगमहिम्ना भवति। पिण्डिकोद्वेष्टनं पिण्डिकापीडा। आरोहणेनायासैरिति केचिद्विभागं वर्णयन्ति। विशेषश्चास्य वक्ष्यते इति पाण्डुरोगस्य वातजत्वादिविशेषगतो हेतुलिङ्गविशेषो वक्ष्यत इत्यर्थः ॥ १३–१६ ॥

१ 'स्वुरध्वारोहणायासैः' इति पा०।

आहारैरुपचारैश्च वातलैः कुपितोऽनिलः।
जनयेत्कृष्णपाण्डुत्वं तथा रूक्षारुणाङ्गताम् ॥ १७ ॥
अङ्गमर्दं रुजं तोदं कम्पं पार्श्वशिरोरुजम्।
वर्चःशोषास्यवैरस्यशोफानाहबलक्षयान् ॥ १८ ॥

आहारैरित्यादिना वातजस्य हेतुलक्षणे प्राह। सामान्यलक्षणानि सर्वत्र भवन्ति, विशेषलक्षणैस्तु विशेषावगतिः॥१७–१८॥

पित्तलस्याचितं पित्तं यथोक्तैः स्वैः प्रकोपणैः।
दूषयित्वा तु रक्तादीन् पाण्डुरोगाय कल्पते ॥ १९ ॥
स पीतो हरिताभो वा ज्वरदाहसमन्वितः।
तृष्णामूर्च्छापिपासार्तः पीतमूत्रशकृन्नरः ॥ २० ॥
स्वेदनः शीतकामश्च न चान्नमभिनन्दति।
कटुकास्यो न चास्योष्णमुपशेतेऽम्लमेव च ॥ २१ ॥
उद्गारोऽम्लो विदाहश्च विदग्धेऽन्नेऽस्य जायते।
दौर्गन्ध्यं भिन्नवर्चस्त्वं दौर्बल्यं तम एव च ॥ २२ ॥

पित्तलस्येत्यादिना पैत्तिकमाह। सर्वोऽपि पाण्डुरोगः पित्तजः, तथाऽप्ययं विशेषेण दोषान्तरासंपृक्तप्रबलपित्तजन्यत्वात् पैत्तिक इत्युच्यते; यथा पैत्तिकं रक्तपित्तम्; अत एवात्र पित्तातिप्रबलतोपदर्शनार्थं पित्तलस्येत्यनेन पित्तप्रकृतिताऽपि कारणत्वेनोक्ता, नान्यत्र 'वातलस्य, श्लेष्मलस्य' इति वा कृतम्। यथोक्तैरिति यो ह्यम्लेत्यादिनोक्तैरिहैव। रक्तादीनिति रक्तप्रकारान्, तेन बलवातादीनामपि ग्रहणम्। तृष्णामूर्च्छापिपासार्त इत्यत्र तृष्णानिमित्ता मूर्च्छा तृष्णामूर्च्छा, तेन पिपासया समं न पौनरुक्त्यम्; अन्ये तु तृष्णामिह क्षुधामाहुः, केचित् 'तृष्णामूर्च्छापरीतस्य' इति पठन्ति ॥ १९–२२ ॥

विवृद्धः श्लेष्मलैः श्लेष्मा पाण्डुरोगं स पूर्ववत्।
करोति गौरवं तन्द्रां छर्दिं श्वेतावभासताम् ॥ २३ ॥
प्रसेकं लोमहर्षं च सादं मूर्च्छां भ्रमं क्लमम्।
श्वासं कासं तथाऽऽलस्यमरुचिं वाक्स्वरग्रहम् ॥२४॥
शुक्लमूत्राक्षिवर्चस्त्वं कटुरूक्षोष्णकामताम्।
श्वयथुं मधुरास्यत्वमिति पाण्ड्वामयः कफात् ॥ २५ ॥

विवृद्ध इत्यादिना कफजमाह। पूर्ववदिति रक्तादीन् संदूष्य ॥ २३–२५ ॥

सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम्।
त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम् ॥ २६ ॥

सर्वान्नेत्यादिना सान्निपातिकं व्याकरोति। त्रिदोषलिङ्गमिति प्रत्येकदोषलिङ्गसमुदाययुक्तम् ॥ २६ ॥

१ 'कृच्छ्रपाण्डुत्वं तथा रूक्षारुणाभताम्' इति पा०। २ 'छर्दिमूर्च्छापिपासार्तः' इति पा०। ३ 'लवणास्यत्वमिति' इति पा०।

मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः।
कषाया मारुतं, पित्तमूषरा, मधुरा कफम् ॥ २७ ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं विरूक्षयेत्।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च ॥ २८ ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ २९ ॥
शूनगण्डाक्षिकूटभ्रूः शूनपान्नाभिमेहनः।
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक् कफान्वितम् ॥

मृत्तिकेत्यादिना मृद्भक्षणजमाह । अत्र च दोषसंबन्धे सत्यपि मृदेव व्यपदेशिका न दोषाः, तस्या एव चिकित्साभेदलिङ्गभेदकर्तृत्वात्। कषाया मारुतमित्यादिना मृदोऽपि वातादिगतलिङ्गं दर्शयति। ऊषरेति क्षारानुरसा । रसादीन् भुक्तं च विरूक्षयेदिति योज्यम् । अविपक्वैवेति स्वरूपावस्थितैव केवलं स्रोतांसि पूरयति रुणद्धि च; स्रोतोविरोधेन रसादीनां न सम्यग्बलं भवति । बलवर्णाग्निनाशनमित्यनेन बलादिहानिं दर्शयति ॥ २७-३० ॥

पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति।
कालप्रकर्षाच्छूनो ना यश्च पीतानि पश्यति ॥ ३१ ॥
बद्धाल्पविट्कं सकफं हरितं योऽतिसार्यते।
दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृषार्दितः ॥ ३२ ॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात्।
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम् ॥ ३३ ॥

पाण्डुरोग इत्यादिनाऽसाध्यलक्षणमाह। खरीभूत इति अत्यर्थरूक्षः। कालेत्यादिनाऽपरमसाध्यलक्षणम्। श्वेतातिदिग्धाङ्ग इति श्वेतवर्णलिप्ताङ्ग इत्यर्थः ॥ ३१-३३ ॥

पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृग्मांसं दग्ध्वा रोगाय कल्पते ॥ ३४ ॥
हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ ३५ ॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥ ३६ ॥
कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला।
कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ॥ ३७ ॥
सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति।
दाहारुचितृषानाहतन्द्रामोहसमन्वितः ॥ ३८ ॥
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते।

पाण्डुरोगीत्यादिना कामलामाह । पाण्डुरोगीति वचनात् पाण्डुरोगस्यैव हेतुविशेषेण कामलादिरूपाऽवस्था उत्पद्यते; अत एव च हारीते कामलादीनामपि पाण्डुरोगत्वमेवोक्तम्। वचनं हि—"वातेन पित्तेन कफेन चैव त्रिदोषमृद्भक्षणसंभवे च। द्वे कामले चैव हलीमकश्च स्मृतोऽष्टधैवं खलु पाण्डुरोगः" इति; अन्या तु सुश्रुतोक्ता कामला भिन्ना भवति, "यो ह्यामयान्ते सहसाऽम्लमन्नमद्यादपथ्यान्यपि तस्य पित्तम्। करोति पाण्डुं वदनं विशेषात् पूर्वेरितौ तन्द्रिबलक्षयौ च" (सु. उ. अ. ४४) इत्यादिना पृथक्कामलाहेतुरुक्तः; वाग्भटेऽपि—"भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च" (वा. नि. अ. १३) इति; इह तु पाण्डुरोगेऽपि भवेत् पाण्डुरोगाद्विनाऽपि भवेत्, यथा प्रमेहाश्रिताः पिडिकाः प्रमेहेषु भवन्ति विना प्रमेहमपि भवन्ति; तथा पाण्डुरोगिणोऽप्युक्ता कामला पृथगपि भवति। कोष्ठशाखाश्रया बहुपित्ता पाण्डुरोगपूर्विका भवति, या तु केवलं शाखाश्रया अल्पपित्ता च वक्तव्या सा स्वतन्त्राऽपि भवतीति केचित्, अत एव तस्या रूक्षशीतेत्यादिना पृथगेव हेतुं लिङ्गं चाध्यायशेषे वक्ष्यति। बहुपित्तेत्यनेन केवलं शाखाश्रयाया अल्पपित्तत्वं सूचयति; अम्लकटुतीक्ष्णोपयोगं शाखाश्रयिपित्तस्य कोष्ठानयनार्थं वक्ष्यति। खरीभूतेति कठोरतामुपगता। कुम्भकामलेति अवस्थाभेदेन कोष्ठगतकामलायाः संज्ञा; कुम्भः कोष्ठः, तदाश्रया कामला कुम्भकामला। अस्यां च शोथोऽपि लक्षणं भवति। उक्तं हि सुश्रुते—"भेदस्तु तस्याः खलु कुम्भसाह्वः शोथो महांस्तत्र च पर्वभेदः" (सु. उ. अ. ४४) इति ॥ ३४-३८ ॥—

साध्यानामितरेषां तु प्रवक्ष्यामि चिकित्सितम् ३९
तत्र पाण्ड्वामयी स्निग्धस्तीक्ष्णैरूर्ध्वानुलोमिकैः।
संशोध्यो मृदुभिस्तिक्तैः कामली तु विरेचनैः ॥४०॥
ताभ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत्।
शालीन् सयवगोधूमान् पुराणान् यूषसंहितान् ४१
मुद्गाढकीमसूरैश्च जाङ्गलैश्च रसैर्हितैः।
यथादोषं विशिष्टं च तयोर्भैषज्यमाचरेत् ॥ ४२ ॥
पञ्चगव्यं महातिक्तं कल्याणकमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥ ४३ ॥

तत्रेत्यादिना चिकित्सामाह। ऊर्ध्वानुलोमिकैरित्यनेन ऊर्ध्वहरानुलोमनवमनविरेचनयोरपि ग्रहणमुक्तं; यतः पाण्डुरोगेऽपि "कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम्" इत्यादिना विरेचनं वक्ष्यति। ताभ्यामिति पाण्डुरोगकामलाभ्याम्। 'ताभ्यां संशुद्धकोष्ठाय' इति पाठपक्षे ताभ्यामिति वमनविरेचनाभ्याम्। विशिष्टमित्यादि विशिष्टभैषज्यमिहैव कामलायां पाण्डुरोगे च वक्ष्यमाणं ज्ञेयम् ॥ ३९-४३ ॥

दाडिमात् कुडवो धान्यात् कुडवार्धं पलं पलम्।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ॥ ४४ ॥

१ 'विरूक्ष्य च' इति पा०। २ 'शूनगण्डाक्षिकूटभ्रूनाभिपादाङ्गमेहनः' इति पा०। ३ 'कालप्रकर्षाच्छूनाङ्गः' इति पा०। ४ 'कृष्णमूत्रशकृन्नेत्रः' इति पा०।

तैः कल्कैर्विंशतिपलं घृतस्य सलिलाढके।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्तिनुत् ॥ ४५ ॥
दीपनं श्वासकासघ्नं मूढवाते च शस्यते।
दुःखप्रसविनीनां च वन्ध्यानां चैव गर्भदम् ॥ ४६ ॥
इति दाडिमाद्यं घृतम्।

कटुका रोहिणी मुस्तं हरिद्रे वत्सकात् पलम्।
पटोलं चन्दनं मूर्वा त्रायमाणा दुरालभा ॥ ४७ ॥
कृष्णा पर्पटको निम्बो भूनिम्बो देवदारु च।
तैः कार्षिकैर्घृतप्रस्थः सिद्धः क्षीरचतुर्गुणः ॥ ४८ ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम्।
अर्शांस्यसृग्दरं चैव हन्ति विस्फोटकांस्तथा ॥ ४९ ॥
इति कटुकाद्यं घृतम्।

दाडिमेत्यादौ अष्टमिका द्विकर्षमुक्तम्। उक्तं हि—"द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिकाऽपि च (क. अ. १२)" इति ॥ ४४–४९ ॥

पथ्याशतरसे पथ्यावृन्तार्धशतकल्कवान्।
प्रस्थः सिद्धो घृतात् पेयः स पाण्ड्वामयगुल्मनुत् ५०
इति पथ्याघृतम्।

पथ्याशतेन क्वाथः कर्तव्यः; अत्र च तथा क्वाथार्थं जलं देयं यथा चतुर्भागावशिष्टं सद्घृतचतुर्गुणं भवति; अत एव द्रोणमानं जलं देयम्। पथ्यावृन्तार्धशतं हरीतकीफलवन्धनार्धशतम्; अन्ये तु पथ्यावृन्तचूर्णं हरीतकीफलस्यैव चूर्णं, तदस्थिशून्यमित्याहुः ॥ ५० ॥

दन्त्याश्चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः।
तद्वत्प्रस्थो घृतात्सिद्धः प्लीहपाण्ड्वर्तिशोफजित् ५१
इति दन्तीघृतम्।

दन्तीत्यादौ दन्त्याः क्वाथो घृताच्चतुर्गुणः स्थाप्यः; तन्त्रान्तरदर्शनात् प्रस्थमान एवात्र क्वाथो भवति। उक्तं ह्यन्यत्र—"निकुम्भकुडवक्वाथे प्रस्थे तत्कल्कसंयुतम्। सर्पिःप्रस्थं पचेत् प्लीहकामलापाण्डुरोगनुत्" इति ॥ ५१ ॥

पुराणसर्पिषः प्रस्थो द्राक्षार्धप्रस्थसाधितः।
कामलागुल्मपाण्ड्वर्तिज्वरमेहोदरापहः ॥ ५२ ॥
इति द्राक्षाघृतम्।

पुराणेत्यादौ जलमनुक्तद्रवत्वाद्भवति। द्राक्षाप्रस्थार्धं तु कल्कः ॥ ५२ ॥

हरिद्रात्रिफलानिम्बवलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ ५३ ॥
इति हरिद्रादिघृतम्।

हरिद्रेत्यादौ द्रवान्तराभावात् क्षीरमेव चतुर्गुणम् ॥ ५३ ॥

गोमूत्रे द्विगुणे दार्व्याः कल्काक्षद्वयसाधितः।
दार्व्याः पञ्चपलक्वाथे कल्के कालीयके परः ॥ ५४ ॥
माहिषात् सर्पिषः प्रस्थः पूर्वः पूर्वे परे परः।

दार्व्याः कल्काक्षद्वयसाधितो माहिषसर्पिषः प्रस्थ इति योज्यम्। दार्व्याः पञ्चपलक्वाथे इत्यत्रापि पूर्वघृतानुसारात् पञ्चपलदार्वीक्वाथोऽपि घृताद्द्विगुण एव कर्तव्यः। कालीयककल्कोऽपि पूर्ववदक्षद्वयमान एव। पूर्वः पूर्वे इति पूर्वे पाण्डुरोगे, दार्वीकल्कगोमूत्रसिद्धो घृतप्रस्थः; परे तु कामलाख्ये, परः दार्वीक्वाथकालीयकल्कसिद्धः; 'देयः' इति शेषः ॥ ५४ ॥—

स्नेहैरेभिरुपक्रम्य स्निग्धं मत्वा विरेचयेत् ॥ ५५ ॥
पयसा मूत्रयुक्तेन बहुशः केवलेन वा।
दन्तीफलरसे कोष्णे काश्मर्याञ्जलिना शृतम् ॥ ५६ ॥
द्राक्षाञ्जलिं मृदित्वा वा दद्यात् पाण्ड्वामयापहम्।
द्विशर्करं त्रिवृच्चूर्णं पलार्धं पैत्तिकः पिबेत् ॥ ५७ ॥
कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम्।
आरग्वधं रसेनेक्षोर्विदार्यामलकस्य च ॥ ५८ ॥
सत्र्यूषणं बिल्वपत्रं पिबेन्ना कामलापहम्।
दन्त्यर्धपलकल्कं वा द्विगुडं शीतवारिणा ॥ ५९ ॥
कामली त्रिवृतां वाऽपि त्रिफलाया रसैः पिबेत्।
विशालात्रिफलामुस्तकुष्ठदारुकलिङ्गकान् ॥ ६० ॥
कार्षिकानर्धकर्षांशां कुर्यादतिविषां तथा।
कर्षौ मधुरसाया द्वौ सर्वमेतत् सुखाम्बुना ॥ ६१ ॥
मृदितं तं रसं पूतं पीत्वा लिह्याच्च मध्वनु।
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम् ॥ ६२ ॥
गुल्मानाहामवातांश्च रक्तपित्तं च नाशयेत्।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥
शीतं मधुयुतं प्रातः कामलार्तः पिबेन्नरः।
क्षीरमूत्रं पिबेत् पक्षं गव्यं माहिषमेव वा ॥ ६४ ॥
पाण्डुर्गोमूत्रयुक्तं वा सप्ताहं त्रिफलारसम्।
तरुजान् ज्वलितान्मूत्रे निर्वाप्यामृद्य चाङ्कुरान् ६५
मातुलुङ्गस्य तत् पूतं पाण्डुशोथहरं पिबेत्।
स्वर्णक्षीरी त्रिवृच्छ्यामे भद्रदारु सनागरम् ॥ ६६ ॥
गोमूत्राञ्जलिना पिष्टं मूत्रे वा क्वथितं पिबेत्।
क्षीरमेभिः शृतं वाऽपि पिबेद्दोषानुलोमनम् ॥ ६७ ॥
हरीतकीं प्रयोगेण गोमूत्रेणाथवा पिबेत्।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ६८ ॥
सप्तरात्रं गवां मूत्रे भावितं वाऽप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेद्भिषक् ॥ ६९ ॥

१ 'गोमूत्रयुक्तां क्लिन्नां' इति पा०। २ 'आरग्वधरसेने०' इति पा०। ३ 'सर्वं चूर्णं' इति पा०।

काश्मर्यं गम्भारीफलम् । शृतमिति फाण्टकषायविधिना प्रक्षिप्तं, द्राक्षाञ्जलिं मृदित्वेत्यनेन स्फुटमेव फाण्टकषायं दर्शयति । द्विशर्करमित्यादौ त्रिवृच्चूर्णं पलार्धं द्विशर्करयुक्तं सत् सार्धपलमानं भवति । गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्नां कल्कीकृतां तथा गोमूत्रेण युक्तामालोडितां पिबेत् । अन्ये तु आरग्वधरसेन हरीतकीं पिबेदिति योजयन्ति, इक्ष्वादिरसेन सत्रिकटुं बिल्वपत्रं पिबेदिति योजयन्ति । आरग्वधं सत्रिकटुकं विदार्या आमलकस्य च रसेन पिबेदित्यपरोऽर्थः । विशालेत्यादौ फाण्टकषायवद्द्रव्यात् पलमानात् चतुष्पलं द्रवं वदन्ति वृद्धाः ॥ ५५-६९ ॥

त्र्यूषणत्रिफलामुस्तविडङ्गचित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं क्षौद्रसर्पिषा ॥ ७० ॥
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम् ॥ ७१ ॥

इति नवायसचूर्णम् ।

नवायोरजसो भागा इति एकभागापेक्षया नवगुणत्वमयोरजसः; तेन त्र्यूषणादीनां मिलितानां चूर्णेन सममयोरजः ॥ ७० ॥ ७१ ॥

गुडनागरमण्डूरतिलांशान्मानतः समान् ।
पिप्पलीद्विगुणां कुर्याद्गुटिकां पाण्डुरोगिणे ॥ ७२ ॥
त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥ ७३ ॥
एतान् द्विपलिकान्भागांश्चूर्णं कुर्यात् पृथक् पृथक् ।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥ ७४ ॥
गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत्ततः ।
उदुम्बरसमान्कृत्वा वटकांस्तान् यथाग्नि ना ॥ ७५ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ ७६ ॥
कुष्ठान्यजीर्णकं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥ ७७ ॥

इति मण्डूरवटकाः ।

ताप्याद्रिजतुरूप्यायोमलाः पञ्चपलाः पृथक् ।
चित्रकत्रिफलाव्योषविडङ्गैः पलिकैः सह ॥ ७८ ॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाऽऽप्लुताः ।
अभ्यस्यास्त्वक्षमात्रा हि जीर्णे हितमिताशिना ७९
कुलत्थकाकमाच्यादिकपोतपरिहारिणा ।

मण्डूरं पुराणं लोहकिट्टम् ॥ ७२-७९ ॥—

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ॥ ८० ॥
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ।
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ॥ ८१ ॥
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ।
अष्टौ भागाः सितायाश्च तत्सर्वं सूक्ष्मचूर्णितम् ८२
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ।
उदुम्बरसमां मात्रां ततः खादेद्यथाग्नि ना ॥ ८३ ॥
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम् ।
वर्जयित्वा कुलत्थानि काकमाचीं कपोतकम् ॥ ८४ ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं शिवम् ॥ ८५ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ।
कुष्ठान्यजीर्णकं मेहं शोषं श्वासमरोचकम् ॥ ८६ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ।

इति योगराजः ।

त्रिफलेत्यादौ रौप्यमलं रूप्यस्य यत् किट्टं भवति तज्ज्ञेयम् । माक्षिकस्येति माक्षिकधातोः । अश्मजत्वादीनां चतुर्णां पञ्च-भागाः प्रत्येकं; किंवा पञ्चाश्मजतुनो भागाः, तथा रूप्यमलस्य चेति रूप्यमलस्येति शिलाजतुविशेषणं; तेन रूप्यमलरूपं यदुक्तं शिलाजतु "राजतं कटुकं" ( चि. अ. १, पा. ३ ) इत्यादिना, तदिह गृह्यते ॥ ८०-८६ ॥—

कौटजत्रिफलानिम्बपटोलघननागरैः ॥ ८७ ॥
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ।
शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥ ८८ ॥
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्या पलोन्मिता ।
निदिग्ध्याः फलमूलाभ्यां पलं युक्त्या त्रिगन्धकम् ॥
चूर्णितं मधुनः कुर्यात्त्रिपलेनाक्षिकान् गुडान् ।
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान् ॥ ९० ॥
तान् भक्षयित्वाऽनुपिबेन्निरन्नो भुक्त एव वा ।
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरान् ॥ ९१ ॥
पूतिहृच्छुक्रमूत्राग्निदोषशोषगरोदरान् ।
कासासृग्दरपित्तासृक्शोथगुल्मगलामयान् ॥ ९२ ॥
ते च सर्वव्रणान् हन्युः सर्वरोगहराः शिवाः ।

इति शिलाजतुवटकाः ।

पुनर्नवा त्रिवृद्व्योषविडङ्गं दारु चित्रकम् ॥ ९३ ॥
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकाः ।
पिप्पली पिप्पलीमूलं मुस्तं चेति पलोन्मितम् ॥ ९४ ॥
मण्डूरं द्विगुणं चूर्णाद्गोमूत्रे ह्याढके पचेत् ।
कोलवद्गुटिकाः कृत्वा तक्रेणालोड्य ना पिबेत् ९५
ताः पाण्डुरोगान् प्लीहानमर्शांसि विषमज्वरम् ।
श्वयथुं ग्रहणीदोषं हन्युः कुष्ठं क्रिमींस्तथा ॥ ९६ ॥

इति पुनर्नवमण्डूरम् ।

---

१ 'हृद्रोगशुक्र°' इति पा० । २ 'कटुका' इति पा० ।

दार्वीत्वक् त्रिफला व्योषं विडङ्गमयसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥९७॥
तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा।
चूर्णिताः कामली लिह्याद्गुडक्षौद्रेण वाऽभयाः ॥९८॥
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः।
चूर्णितं क्षौद्रसर्पिर्भ्यां स लेहः कामलापहः ॥ ९९ ॥

भावितानीत्यादि । द्विगुणत्रिगुणदशाहानि भावितानि । रसैरिति कौटजादिकाथैः । कौटजं कुटजफलम् । अत्र भावना शिलाजतूक्तेनैव विधिना कर्तव्या; काथ्यकाथमाने च तत्रान्तरं—"तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं काथ्यम्। तत्काथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥ तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः" इति; एवं चान्यत्रापि भावनाविधौ काथ्यकाथमानौ ज्ञेयौ । फलमूलाभ्यां पलमिति मिलित्वा पलम् । युक्त्या त्रिगन्धकमिति यावता त्रिगन्धेन साधुगन्धो भवति तावन्मात्रं त्रिगन्धं ज्ञेयं; त्रिगन्धं च पत्रत्वगेला उच्यन्ते, "त्रिगन्धं तु समाख्यातं त्वगेलापत्रकैः समैः । तदेव तु समाख्यातं चातुर्जातं सकेसरम्" इति । पूत्यादिभिर्दोषशब्दः प्रत्येकं संबध्यते ॥ ८७–९९ ॥

द्विपलांशां तुगाक्षीरीं नागरं मधुयष्टिकाम्।
प्रास्थिकीं पिप्पलीं द्राक्षां शर्करार्धतुलां शुभाम् १००
धात्रीफलरसद्रोणे चूर्णितं लेहवत् पचेत्।
शीतं मधुप्रस्थयुतं लिह्यात् पाणितलं ततः ॥ १०१ ॥
हन्त्येष कामलां पित्तं पाण्डुं कासं हलीमकम्।
इति धात्र्यवलेहः।

द्विपलांशामित्यादौ द्राक्षा प्रास्थिकी। धात्रीफलरसः धात्रीस्वरसः ॥ १०० ॥ १०१ ॥—

त्र्यूषणं त्रिफला चव्यं चित्रको देवदारु च ॥१०२॥
विडङ्गान्यथ मुस्तं च वत्सकं चेति चूर्णयेत्।
मण्डूरतुल्यं तच्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥ १०३ ॥
शनैः सिद्धास्तथा शीताः कार्याः कर्षसमा गुडाः।
यथाग्नि भक्षणीयास्ते प्लीहपाण्ड्वामयापहाः ॥१०४॥
ग्रहण्यर्शोनुदश्चैव तक्रवाट्याशिनः स्मृताः।
इति मण्डूरवटकाः।

त्र्यूषणादीनामष्टाविंशतिपलानि, मण्डूरं च द्विगुणं, समुदितं चूर्णं चतुरधिकाशीतिपलमानं भवति। पृथगिति पाठान्मण्डूरचूर्णमेव पृथङ्मूत्रे पक्तव्यं, तस्मिन् सिध्यति त्र्यूषणादीनां चूर्णं प्रक्षेप्यम्। शुद्धमितिपदेन मण्डूरस्य ध्मापनगोमूत्रनिर्वापणादिना शुद्धिं दर्शयति। केचित्तु गोमूत्रमष्टगुणं प्रत्यासन्नमण्डूरादेव वदन्ति; अयमेव पक्षः साधु प्रतिभाति ॥ १०२–१०४ ॥—

मञ्जिष्ठा रजनी द्राक्षा बलामूलान्ययोरजः ॥ १०५॥
लोध्रं चैतेषु गौडः स्यादरिष्टः पाण्डुरोगिणाम्।
इति गौडोऽरिष्टः।

बीजकात्षोडशपलं त्रिफलायाश्च विंशतिः ॥१०६॥
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे जलस्य तत्।
साध्यं पादावशेषे तु पूतशेषे समावपेत् ॥ १०७ ॥
शर्करायास्तुलां प्रस्थं माक्षिकस्य च कार्षिकम्।
व्योषं व्याघ्रनखोशीरं क्रमुकं सैलवालुकम् ॥१०८॥
मधुकं कुष्ठमित्येतच्चूर्णितं घृतभाजने।
यवेषु दशरात्रं तद्ग्रीष्मे द्विः शिशिरे स्थितम् १०९
पिबेत्तद्ग्रहणीपाण्डुरोगार्शःशोथगुल्मनुत्।
मूत्रकृच्छ्राश्मरीमेहकामलासन्निपातजित् ॥ ११० ॥
बीजकारिष्ट इत्येष आत्रेयेण प्रकीर्तितः।
इति बीजकारिष्टः।

बीजकात् षोडशपलमित्यत्र केचित् 'द्विर्बीजकपलान्यष्टौ' इति पठन्ति, तत्रापि स एवार्थः। बीजकः असनः। व्याघ्रनखः नखीभेद एव। द्विः शिशिरे इति विंशतिरात्रस्थितम् ॥ १०५–११० ॥—

धात्रीफलसहस्रे द्वे पीडयित्वा रसं तु तम् ॥१११॥
क्षौद्राष्टांशेन संयुक्तं कृष्णार्धकुडवेन च।
शर्करार्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम् ॥११२॥
प्रपिबेन्मात्रया प्रातर्जीर्णे हितमिताशनः।
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान् ॥ ११३ ॥
कासहिक्कारुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत्।
इति धात्र्यरिष्टः।

धात्रीत्यादौ धात्रीफलसहस्रद्वयस्य स्वरस एव ग्राह्यः ॥ १११–११३ ॥—

स्थिरादिभिः श्रृतं तोयं पानाहारे प्रशस्यते ॥११४॥
पाण्डूनां, कामलार्तानां मृद्वीकामलकीरसः।

कामलार्तानां मृद्वीकामलकीरसः पानाहारे प्रशस्यत इत्यर्थः ॥ ११४ ॥—

पाण्डुरोगप्रशान्त्यर्थमिति प्रोक्तं महर्षिणा ॥ ११५ ॥
विकल्प्यमेतद्भिषजा पृथग्दोषबलं प्रति।
वातिके स्नेहभूयिष्ठं, पैत्तिके तिक्तशीतलम् ॥ ११६ ॥
श्लैष्मिके कटुतिक्तोष्णं, विमिश्रं सान्निपातिके।

विकल्प्यमित्यनेनोक्तं विकल्पविधिमाह—वातिके इत्यादि। ॥११५॥११६॥—

निपातयेच्छरीरात्तु मृत्तिकां भक्षितां भिषक् ११७
युक्तिज्ञः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम्।
शुद्धकायस्य सर्पींषि बलाधानानि योजयेत् ॥११८॥
व्योषं बिल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥ ११९ ॥

१ 'कटुरूक्षोष्णं' इति पा०।

वृश्चिकाली च भार्गी च सक्षीरैस्तैः[1] समैर्घृतम् ।
साधयित्वा पिबेद्युक्त्या नरो मृद्दोषपीडितः ॥१२०॥
तद्वत् केशरयष्ट्याह्वपिप्पलीक्षारशाद्वलैः ।
मृद्भक्षणादातुरस्य लौल्यादविनिवर्तिनः ॥ १२१ ॥
द्रव्यार्थं भावितां कामं दद्यात्तद्दोषनाशनैः ।
विडङ्गैलातिविषया निम्बपत्रेण पाठया ॥ १२२ ॥
वार्ताकैः कटुरोहिण्या कौटजैर्मूर्वयाऽपि वा ।

निपातयेदित्यादिना मृज्जपाण्डुरोगचिकित्सामाह । शाद्वलं दूर्वा । मृद्भक्षणादविनिवर्तिनः सक्तस्येत्यर्थः । भावितामिति तद्दोषनाशनैर्द्रव्यैः संस्कृताम् । मूर्वयाऽपि वेत्यन्तो ग्रन्थः पूर्वेण संबध्यते ॥ ११७–१२२ ॥—

यथादोषं प्रकुर्वीत भैषज्यं पाण्डुरोगिणाम् ॥१२३॥
क्रियाविशेष एषोऽस्य मतो हेतुविशेषतः ।

पाण्डुरोगोक्तं दोषविशेषचिकित्सितं मृज्जेऽप्यतिदिशति—यथादोषमित्यादि । एष इति मृज्जे पाण्डुरोगे प्रोक्तः ॥१२३॥—

तिलपिष्टनिभं यस्तु वर्चः सृजति कामली ॥१२४॥
श्लेष्मणा रुद्धमार्गं तत् पित्तं कफहरैर्जयेत् ।
रूक्षशीतगुरुस्वादुव्यायामैर्वेगनिग्रहैः ॥ १२५ ॥
कफसंमूर्च्छितो वायुः स्थानात् पित्तं क्षिपेद्बली ।
हारिद्रनेत्रमूत्रत्वक् श्वेतवर्चास्तदा नरः ॥ १२६ ॥
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ।
दौर्बल्याल्पाग्निपार्श्वार्तिहिक्काश्वासारुचिज्वरैः १२७
क्रमेणाल्पेऽनुसज्येत[2] पित्ते शाखासमाश्रिते ।

तिलपिष्टनिभमित्यादिना शाखाश्रयकामलाचिकित्सितं लक्षणपूर्वकमाह । श्लेष्मणा रुद्धमार्गमिति कोष्ठस्थेन श्लेष्मणा शाखाश्रयि पित्तं कामलाजनकं रुद्धमार्गं कोष्ठगमनार्थं निषिद्धमार्गमिति यावत् । एतदेव रूक्षेत्यादिना विस्तरेणाह । श्वेतवर्चा इति कोष्ठस्थपित्तस्य मलरञ्जकस्य बहिर्निर्गमाद्धेन श्लेष्मणा श्वेतवर्चा भवति । क्रमेणेति ज्वरान्तैरनुषज्यते । अल्पे पित्ते शाखाश्रिते इति संबन्धः ॥ १२४–१२७ ॥—

बर्हितित्तिरिदक्षाणां रूक्षाम्लैः कटुकै रसैः ॥१२८॥
शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ।
मातुलुङ्गरसं क्षौद्रपिप्पलीमरिचान्वितम् ॥ १२९ ॥
सनागरं पिबेत् पित्तं तथाऽस्यैति स्वमाशयम् ।

बर्हीत्यादिना कफहरं पित्तवृद्धिकरं च समं चिकित्सितं प्राह, यतः शाखाश्रयदोषस्य वृद्धिः कोष्ठानयनार्थम्; उक्तं हि—"वृद्ध्याऽभिष्यन्दनात् पाकात् स्रोतोमुखविशोधनात् । शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्" (सू. अ. २८) इति ॥-१२८ ॥ १२९ ॥—

कटुतीक्ष्णोष्णलवणैर्भृशाम्लैश्चाप्युपक्रमः ॥ १३० ॥
आपित्तरागाच्छकृतो[3] वायोश्चाप्रशमाद्भवेत् ।
स्वस्थानमागते पित्ते पुरीषे पित्तरञ्जिते ॥ १३१ ॥
निवृत्तोपद्रवस्य स्यात् पूर्वः कामलिको विधिः ।

आपित्तरागाच्छकृत इति यावत् कोष्ठमार्गस्थो मलो न रज्यते तावत् पित्तवर्धनम् । पूर्वं इति पूर्वोक्तः । कामलिको विधिरिति कोष्ठाश्रयिकामलाचिकित्सितं कर्तव्यमित्यर्थः ॥१३०॥१३१॥—

यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः ॥१३२॥
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ।
स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासस्तृष्णाऽरुचिर्भ्रमः १३३
हलीमकं तदा तस्य विद्यादनिलपित्ततः ।

यदेत्यादिना हलीमकमाह । अयमेव तन्त्रान्तरे लाघवसंज्ञया अलससंज्ञया चोच्यते । उक्तं हि सुश्रुते—"ज्वराङ्गमर्दभ्रमदाहतन्द्राक्षयान्वितो लाघवकोऽलसश्च । तं वातपित्ताद्धरिपीतनीलं हलीमकं केचिदुदाहरन्ति" (सु. उ. अ. ४४) इति । यच्चापि तत्र भिन्नवर्चस्त्वं सा चापि कामलावस्थैव न पृथग्रोगः । उक्तं हि तन्त्रान्तरे—"संतापो भिन्नवर्चस्त्वं बहिरन्ते च पीनता । पाण्डुता नेत्ररागश्च पानकीलक्षणं मतम्" इति ॥ १३२ ॥ १३३ ॥—

गुडूचीस्वरसक्षीरसाधितं माहिषं घृतम् ॥ १३४ ॥
स पिबेत्त्रिवृतां स्निग्धो रसेनामलकस्य तु ।
विरिक्तो मधुरप्रायं भजेत् पित्तानिलापहम् ॥१३५॥
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ।
यापनान् क्षीरबस्तींश्च शीलयेत्सानुवासनान् १३६
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याऽग्निवृद्धये ।
कासिकं चाभयालेहं पिप्पलीं मधुकं बलाम् ॥१३७॥
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ।

गुडूचीत्यादिना हलीमकचिकित्सामाह । द्राक्षालेहं च पूर्वोक्तमिति 'द्विपलांशां तुगाक्षीरीं' इत्यादिग्रन्थोक्तमिहैव । यापनाबस्तयः सिद्धिस्थाने प्रोक्ताः । कासिकं चाभयालेहमिति अगस्त्यहरीतकीम् ॥ १३४–१३७ ॥—

तत्र श्लोकौ—

पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम् ॥ १३८ ॥
कामला द्विविधा तेषां साध्यासाध्यत्वमेव च ।
तेषां विकल्पो यश्चान्यो महाव्याधिर्हलीमकः ।
तस्य चोक्तं समासेन व्यञ्जनं सचिकित्सितम् १३९

इत्यग्निवेशकृते तन्त्रेऽप्राप्ते दृढबलसंपूरिते
चिकित्सास्थाने पाण्डुरोगचिकित्सितं
नाम षोडशोऽध्यायः ॥ १६ ॥

पाण्डोः पञ्चविधस्येत्यादिना संग्रहमाह । स च व्यक्त एव ॥ १३८ ॥ १३९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने पाण्डुरोगचिकित्सितं नाम षोडशोऽध्यायः ॥ १६ ॥

१ 'सक्षारैः' इति पा० । २ 'क्रमेणाल्पेन सज्येत' इति पा० । ३ गङ्गाधरस्तु 'आपित्तरोगात्' इति पठित्वा 'उक्तहारिद्रनेत्रत्वादिरोगसद्भावपर्यन्तं' इति व्याख्यानयति ।

## सप्तदशोऽध्यायः।

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्यामः १

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पाण्डुरोगकारणत्वाद्धिक्काश्वासयोः पाण्डुरोगानन्तरमभिधानम्। वक्ष्यति हि—"पाण्डुरोगाद्विषाच्चैव प्रवर्तेते गदाविमौ" इति। हिक्काश्वासौ च समानकारणचिकित्सितत्वादेकाध्याये एवोक्तौ ॥ १ ॥ २ ॥

वेदलोकार्थतत्त्वज्ञमात्रेयमृषिमुत्तमम्।
अपृच्छत् संशयं धीमानग्निवेशः कृताञ्जलिः ॥ ३ ॥
य इमे द्विविधाः प्रोक्तास्त्रिदोषास्त्रिप्रकोपणाः।
रोगा नानात्मकास्तेषां कस्को भवति दुर्जयः ॥ ४ ॥
अग्निवेशस्य तद्वाक्यं श्रुत्वा मतिमतां वरः।
उवाच परमप्रीतः परमार्थविनिश्चयम् ॥ ५ ॥
कामं प्राणहरा रोगा बहवो न तु ते तथा।
यथा श्वासश्च हिक्का च प्राणानाशु निकृन्ततः ॥ ६ ॥
अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः।
अन्ते संजायते हिक्का श्वासो वा तीव्रवेदनः ॥ ७ ॥

वैदिकं लौकिकं च अर्थतत्त्वं जानातीति वेदलोकार्थतत्त्वज्ञः। द्विविधा इति सामान्यासामान्यभेदेन; किंवा मृदुदारुणभेदेन, निजानिजभेदेन च। त्रिदोषा इति वातादिभिः पृथङ्मिलितैर्वा। त्रिप्रकोपणा इति असात्म्येन्द्रियार्थसंयोग-परिणाम-प्रज्ञापराधकारणकाः। काममिति अनुमतौ। बहव इति ज्वर-शङ्खक-रोहिण्यादयः। यथा श्वासश्च हिक्का चेत्यनेन शीघ्रं प्राणहारित्वं हिक्काश्वासयोर्दर्शयति। अन्ते इति मरणसमये। संजायते इति अवश्यं हिक्काश्वासयोरन्यतरो जायते ॥ ३–७ ॥

कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ।
हृदयस्य रसादीनां धातूनां चोपशोषणौ ॥ ८ ॥
तस्मात् साधारणावेतौ मतौ परमदुर्जयौ।
मिथ्योपचरितौ क्रुद्धौ हत आशीविषाविव ॥ ९ ॥

पित्तस्थानसमुद्भवावित्यनेन पित्तस्योर्ध्वस्थानसंबन्ध एव, नतु वातकफवदारम्भकत्वमिति दर्शयति; पित्तस्थानशब्देनामाशयोऽभिप्रेतः। साधारणाविति प्रायस्तुल्यचिकित्स्यत्वात्। आशीविषाविव दृष्टिनिःश्वासविषसर्पाविव। मिथ्योपरितोऽन्योऽपि रोगो हन्ति, तदिहाशीविषदृष्टान्तेन मिथ्योपचारे सति शीघ्रहन्तृत्वमाह ॥ ८ ॥ ९ ॥

पृथक् पञ्चविधावेतौ निर्दिष्टौ रोगसंग्रहे।
तयोः शृणु समुत्थानं लिङ्गं च सभिषग्जितम् ॥ १० ॥
रजसा धूमवाताभ्यां शीतस्थानाम्बुसेवनात्।
व्यायामाद्ग्राम्यधर्माध्वरूक्षान्नविषमाशनात् ॥ ११ ॥
आमप्रदोषादानाहाद्रौक्ष्यादत्यपतर्पणात्।
दौर्बल्यान्मर्मणो घाताद्द्वन्द्वाच्छुद्ध्यतियोगतः ॥ १२ ॥
अतीसारज्वरच्छर्दिप्रतिश्यायक्षतक्षयात्।
रक्तपित्तादुदावर्ताद्विसूच्यलसकादपि ॥ १३ ॥
पाण्डुरोगाद्विषाच्चैव प्रवर्तेते गदाविमौ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥ १४ ॥
पिष्टशालूकविष्टम्भिविदाहिगुरुभोजनात्।
जलजानूपपिशितदध्यामक्षीरसेवनात् ॥ १५ ॥
अभिष्यन्द्युपचाराच्च श्लेष्मलानां च सेवनात्।
कण्ठोरसः प्रतीघाताद्विबन्धैश्च पृथग्विधैः ॥ १६ ॥

पृथगिति प्रत्येकं पञ्चविधौ। रोगसंग्रहे इति अष्टोदरीये। अत्र च रजसेत्यादिना प्रायो वातप्रकोपकगणो विच्छिद्योक्तः प्रवर्तेते गदाविमावित्यन्तेन, निष्पावेत्यादिना कफकारणतया हिक्काश्वासयोः कफप्रकोपकहेतुगणोऽभिहितः; तदनेन वातजनककफजनकहेतुवर्गद्वयविच्छेदपाठेन वातकफयोरत्र स्वहेतुकुपितत्वेन स्वातन्त्र्यं दर्शयति, नानुबन्धरूपत्वम् ॥ १०–१६ ॥

मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति।
उरःस्थः कफमुद्धूय हिक्काश्वासान् करोति सः ॥ १७ ॥
घोरान् प्राणोपरोधाय प्राणिनां पञ्च पञ्च च।

मारुतः प्राणवाहीनीत्यादिना संप्राप्तिमाह। इयं हिक्काश्वासयोः साधारणी संप्राप्तिः, वैशेषिकी चाग्रे वक्ष्यति। प्राणोपरोधायेति प्रायः प्राणहरणायेत्यर्थः। पञ्च पञ्च चेति हिक्काः पञ्च, श्वासाः पञ्च, इत्यर्थः ॥ १७ ॥—

उभयोः पूर्वरूपाणि शृणु वक्ष्याम्यतः परम् ॥ १८ ॥
कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता।
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ १९ ॥
आनाहः पार्श्वशूलं च पीडनं हृदयस्य च।
प्राणस्य च विलोमत्वं श्वासानां पूर्वलक्षणम् ॥ २० ॥

लक्षणग्रहणगृहीतं पूर्वरूपं हिक्कानां 'कण्ठोरसोः' इत्यादिना, श्वासानाम् 'आनाहः' इत्यादिनाऽऽह। विलोमत्वमिति पर्याकुलत्वम् ॥ १८–२० ॥

प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः।
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु २१
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः।
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम् ॥ २२ ॥
करोति सततं हिक्कामेकद्वित्रिगुणां तथा।
प्राणः स्रोतांसि मर्माणि संरुध्योष्माणमेव च ॥ २३ ॥
संज्ञां मुष्णाति गात्राणां स्तम्भं संजनयत्यपि।
मार्गं चैवान्नपानानां रुणद्ध्युपहतस्मृतेः ॥ २४ ॥

साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः ।
सक्तजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः ॥ २५ ॥
महामूला महावेगा महाशब्दा महाबला ।
महाहिक्केति सा नृणां सद्यः प्राणहरा मता ॥ २६ ॥
इति महाहिक्का ।

प्राणोदकेत्यादिना विशिष्टहिक्कासंप्राप्तिमाह । क्षीणमांसबलप्राणतेजस इति अत्र प्राणो वायुः, उत्साहो वा; तेजोऽग्निः । उच्चैर्गृहीत्वा घोषवतीमिति योज्यम् । द्विसंततां त्रिसंततामनेकगुणां वा करोति; तत्र द्विसंतता एकोपक्रमे वारद्वयं भवति । संरुध्योष्माणमिति देहोष्माणम् । संसक्तवचनतया प्रलापो यस्य स सक्तजल्पप्रलापः । महामूलेति गम्भीराश्रयदोषमूला । महाशब्दत्वं च उच्चैर्घोषवतीमित्यनेनैवोक्तमपि महाहिक्कासंज्ञोपादानार्थमिह पुनरुक्तं, तेन 'महाहिक्का' इति संज्ञा ॥२१-२६॥

हिक्कते यः प्रवृद्धस्तु कृशो दीनमना नरः ।
जर्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् ॥ २७ ॥
संजृम्भन् संक्षिपंश्चैव तथाऽङ्गानि प्रसारयन् ।
पार्श्वे चोभे समायम्य कूजन् स्तम्भरुगर्दितः ॥२८॥
नाभेः पक्वाशयाद्वाऽपि हिक्का चास्योपजायते ।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः ॥ २९ ॥
रुणद्ध्युच्छ्वासमार्गं तु प्रनष्टबलचेतसः ।
गम्भीरा नाम सा तस्य हिक्का प्राणान्तिकी मता ३०
इति गम्भीरा हिक्का ।

तत्र हिगिति कायति शब्दं करोतीति हिक्का । गम्भीरमनुनादयन्निति हिक्काया अनु गम्भीरं शब्दं कुर्वन् । संक्षिपन्नङ्गानीति योज्यम् । गम्भीरदेशभवत्वाद् 'गम्भीरा' इति संज्ञा ॥ २७-३० ॥

व्यपेता जायते हिक्का याऽन्नपाने चतुर्विधे ।
आहारपरिणामान्ते भूयश्च लभते बलम् ॥ ३१ ॥
प्रलापवम्यतीसारतृष्णार्तस्य विचेतसः ।
जृम्भिणो विप्लुताक्षस्य शुष्कास्यस्य विनामिनः ३२
पर्याध्मातस्य हिक्का या जत्रुमूलादसन्तता ।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी ॥ ३३॥
इति व्यपेता हिक्का ।

व्यपेता परिणतेत्यर्थः । आहारपरिणामान्ते इति आहारपरिणामे वृत्ते; एतेनाहारेऽपि उत्पद्यते, अन्ते बलवती भवति तां 'व्यपेता' इति संज्ञया दर्शयति । विनामिन इति शरीरविनामकस्य । असंततेति अनतिदीर्घा ॥ ३१-३३ ॥

१ 'अव्यक्तजल्पस्य अव्यक्तानर्थकप्रलापस्य' इति गङ्गाधरः ।

क्षुद्रवातो यदा कोष्ठाद्व्यायामपरिघट्टितः ।
कण्ठे प्रपद्यते हिक्कां तदा क्षुद्रां करोति सः ॥ ३४ ॥
अतिदुःखा न सा चोरःशिरोमर्मप्रबाधिनी ।
न चोच्छ्वासान्नपानानां मार्गमावृत्य तिष्ठति ॥३५॥
वृद्धिमायस्यतो याति भुक्तमात्रे च मार्दवम् ।
यतः प्रवर्तते पूर्वं तत एव निवर्तते ॥ ३६ ॥
हृदयं क्लोम कण्ठं च तालुकं च समाश्रिता ।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्तिता ॥३७॥
इति क्षुद्रहिक्का ।

क्षुद्रेत्यादिना क्षुद्रहिक्कामाह । क्षुद्रवातः अल्पवातः; केचित् क्षुद्रवातमुदानमाहुः । आयस्यत इति आयासं कुर्वतः मार्दवं यातीति संबन्धः । यतः प्रवर्तते पूर्वं तत एव निवर्तत इति उत्पद्यमानैव निवर्तमानवेगा भवति; महाहिक्कादिवदनुबद्धा न भवति; उत्पादकहेतोर्व्यायामादेरेव निवर्तते, व्यायामादिना हिक्काजनकवातस्य क्षुद्रस्य विक्षेपात् संप्राप्तिभङ्गेनेति भावः । क्षुद्रवातजनितत्वात् क्षुद्रा हिक्का ॥ ३४-३७ ॥

सहसाऽत्यभ्यवहृतैः पानान्नैः पीडितोऽनिलः ।
ऊर्ध्वं प्रपद्यते कोष्ठान्मद्यैर्वाऽतिमदप्रदैः ॥ ३८ ॥
तथाऽतिरोषभाष्याध्वहास्यभारातिवर्तनैः ।
वायुः कोष्ठगतो धावन् पानभोज्यप्रपीडितः ॥३९॥
उरःस्रोतः समाविश्य कुर्याद्धिक्कां ततोऽन्नजाम् ।
तथा शनैरसंबन्धं क्षुवंश्चापि स हिक्कते ॥ ४० ॥
न मर्मबाधाजननी नेन्द्रियाणां प्रबाधिनी ।
हिक्का पीते तथा भुक्ते शमं याति च साऽन्नजा ४१
इत्यन्नजा हिक्का ।

सहसेत्यादिनाऽन्नजामाह । इयं च यद्यपि अन्नजा उक्ता, तथाऽपि दोषादिजनितैव । पानभोज्यप्रपीडित इत्यनेनान्नस्य कारणत्वेनोक्तत्वादियम् 'अन्नजा' इतिसंज्ञा ॥ ३८-४१ ॥

अतिसंचितदोषस्य भक्तच्छेदकृशस्य च ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥४२॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् ।
यमिका च प्रलापार्तितृष्णामोहसमन्विता ॥ ४३ ॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ४४

अतीत्यादिना साध्यासाध्यविभागमाह । अतिशयेन संचिता दोषा यस्य स तथा । भक्तच्छेदकृशस्येति अभोजनदुर्बलस्य । आसां पञ्चानां या हिक्का अतीत्यादिना प्रोक्तलक्षणस्य पुरुषस्य भवति सा जीवितं हन्ति । यमिका चेत्यनेन क्षुद्रा अन्नजा च या साध्यत्वेनोक्ता सा यमलवेगेन जायमाना यमिका

ज्ञेया; पूर्वोक्तानुवेगेन या जायमाना सा महाहिक्का, सा स्वरूपेणैवासाध्या, तस्या अतीसारादियोगेनासाध्यताविधानमनर्थकम्। तथा महत्यादिहिक्कानां तिसृणामसंपूर्णलक्षणानां साध्यत्वं, क्षुद्राऽन्नजयोस्तु संपूर्णलक्षणयोरपि साध्यत्वं, महाहिक्कादित्रयं निसर्गत एवासाध्यम्। अन्ये तु ब्रुवते—महाहिक्कादयोऽपि कदाचित् साध्या भवन्त्येव, तत्र प्राणान्तिकेति वचनं प्रायः प्राणहरा इत्यभिप्रायेणोक्तम्। तथाहि जतूकर्णे—"आद्या दुःसाध्या, यमिका तृष्णामोहवतां सद्यःप्राणहृत्, गम्भीरा व्यपेते च" इत्युक्तम्। अक्षीण इति अक्षीणमांसः ॥ ४२–४४ ॥

यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः।
विष्वग्व्रजति संरुद्धस्तदा श्वासान्करोति सः ॥४५॥

यदेत्यादिना श्वाससंप्राप्तिमाह। स्रोतांसीति प्रकृतत्वात् प्राणोदकवाहीनि स्रोतांसि। कफपूर्वक इति कफप्रधानः। विष्वग्व्रजति सर्वतो गच्छति ॥ ४५ ॥

उद्धूयमानवातो यः शब्दवद्दुःखितो नरः।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥ ४६ ॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः।
विकृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥ ४७ ॥
दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम्।
महाश्वासोपसृष्टः स क्षिप्रमेव विपद्यते ॥ ४८ ॥

इति महाश्वासः।

उद्धूयमानेत्यादिना महाश्वासलक्षणमाह। उद्धूयमान इति ऊर्ध्वं धूयमानवातः। उच्चैरिति दीर्घम्। मत्तर्षभः मत्तबलीवर्दः। दीन इति दीनवत्। 'दीनं प्रश्वसितं' इति वा पाठः; तदा हि प्रश्वसितस्य दीनत्वे 'दूराद्विज्ञायते' इति यद्वक्ष्यति तदनुपपन्नं स्यात् ॥ ४६–४८ ॥

दीर्घं श्वसिति यस्तूर्ध्वं न च प्रत्याहरत्यधः।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ ४९ ॥
ऊर्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः।
प्रमुह्यन् वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥ ५० ॥
ऊर्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते।
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥५१॥

इत्यूर्ध्वश्वासः।

दीर्घमित्यादिनोर्ध्वश्वासमाह। दीर्घं श्वसिति श्वासस्य बहिर्निर्गमनं दीर्घकालं करोति। न च प्रत्याहरत्यध इति श्वासमधो न नयति। क्रुद्धगन्धवहः दुष्टवायुः। श्वासस्य दीर्घकालमुद्धूयने अधोऽनयने चोक्ते हेतुमाह—ऊर्ध्वश्वासे इत्यादिना ॥४९–५१॥

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः।
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥ ५२ ॥
आनाहस्वेदमूर्च्छार्तो दह्यमानेन बस्तिना।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ ५३ ॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं प्रजहात्यसून् ५४

इति छिन्नश्वासः।

यस्त्वित्यादिना छिन्नश्वासलक्षणमाह। श्वसिति विच्छिन्नमिति निःश्वस्य पुनः क्षणान्तेन श्वसिति। न वा श्वसिति न श्वासं लभते। मर्मच्छेदरूपा रुक्। बस्तिनिरोधः मूत्रनिरोध इत्यर्थः। रक्तैकलोचनत्वमिह व्याधिप्रभावात्। विच्छिन्नः विमुक्तसंधिबन्धः। एते त्रयः श्वासा निसर्गतोऽसाध्याः ॥ ५२–५४ ॥

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ ५५ ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा।
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ ५६ ॥
प्रताम्यत्यतिवेगाच्च कासते संनिरुध्यते।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ ५७ ॥
श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः।
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥ ५८ ॥
अथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्।
न चापि निद्रां लभते शयानः श्वासपीडितः ॥५९॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः।
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥ ६० ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान्।
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते[1] ॥ ६१ ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्चाभिवर्धते।
स याप्यस्तमकश्वासः साध्यो वा स्यान्नवोत्थितः ६२

इति तमकश्वासः।

प्रतिलोममित्यादिना तमकश्वासमाह। श्लेष्माणं समुदीर्य चेत्यनेन सामान्यसंप्राप्त्युक्तस्यापि श्लेष्मणः पुनरभिधानादिह विशेषेण कारणत्वं दर्शयति। घुर्घुरकमिति कण्ठे घुर्घुरकशब्दम्। संनिरुध्यते इति निश्चेष्टो भवति। तस्यैव चेति 'श्लेष्मणः' इति शेषः। आसीन उपविष्टः। उच्छ्रिताक्ष इति उच्छूनाक्षः। मुहुश्चैवावधम्यते इति क्षणं क्षणं श्वसनेन वायुनाऽवधम्यते ॥ ५५–६२ ॥

ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकं तु तम्।
उदावर्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥ ६३ ॥
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति।
मज्जतस्तमसीवाऽस्य विद्यात् संतमकं तु तम् ॥ ६४ ॥

इति प्रतमकसंतमकश्वासौ।

१ 'प्रवृत्ते तु यश्चाधःश्वासरोधमाह' इति पा०।

१ 'मुहुश्चावधम्यते गजारूढ इव शरीरचालनवान् भवति' इति गङ्गाधरः।

पित्तसंबन्धाज्ज्वरादियोगेन तमकस्यैव प्रतमकसंज्ञां दर्शयन्नाह—ज्वरेत्यादि । उदावर्तेत्यादिना प्रतमकहेतुलक्षणे प्राह । प्रतमक एव संतमकः । रजो धूलिः, कायनिरोधो वेगानां निरोधः; किंवा क्लिन्नकायो वृद्धः, निरोधः वेगनिरोधः । तमसेति अन्धकारेण, किंवा तमसा तमोगुणेन । यद्यपि तमकस्य शीतेन वृद्धिरुक्ता, तथाऽपि प्रतमकस्य पित्तसंबन्धत्वात् 'शीतैश्चाशु प्रशाम्यति' इति यदुक्तं तदुपपन्नं भवति; किंवा यथा मद्योत्थविकारस्य मद्यं प्रशमनं भवति, तथा शीतसमुत्थस्यापि तदात्वमात्रे शीतैः प्रशमनं ज्ञेयम् । प्रतमकस्तमकभेद एवेति कृत्वा श्वासानां पञ्चसंख्यासिद्धिः ॥ ६३ ॥ ६४ ॥

**रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ।**
**क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रवाधकः ॥ ६५ ॥**
**हिनस्ति न स गात्राणि न च दुःखो यथेतरे ।**
**न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ ६६ ॥**
**नेन्द्रियाणां व्यथां नापि कांचिदापादयेद्रुजम् ।**
**स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः॥६७॥**
**इति श्वासाः समुद्दिष्टा हिक्काश्चैव स्वलक्षणैः ।**

रूक्षेत्यादिना क्षुद्रश्वासमाह । रूक्षादायासाच्च उद्भवो यस्य स रूक्षायासोद्भवः । क्षुद्रवात इति स्वल्पवातः । न सोऽत्यर्थमिति नात्यर्थं दुःखकरः । न दुःख इति न दुःखसाध्यः । सर्वे चाव्यक्तलक्षणा इत्यनेन साध्यत्वेनोक्तानां महाश्वासादीनां व्यक्तसर्वलक्षणताव्यतिरिक्तायामेवावस्थायां साध्यतां प्रतिपादयति ॥ ६५-६७ ॥—

**एषां प्राणहरा वर्ज्या घोरास्ते ह्याशुकारिणः ॥ ६८ ॥**
**भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत् ।**
**उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलः ॥ ६९ ॥**

प्राणहरा महाश्वासादयः संपूर्णलक्षणा वर्ज्याः । साध्ययाप्यानिति बहुवचनं साध्ययाप्यभेदबहुत्वाज्ज्ञेयम् ॥ ६८ ॥ ६९ ॥

**कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।**
**द्वयोरपि यथाद्दष्टमृषिभिस्तन्निबोधत ॥ ७० ॥**
**हिक्काश्वासार्दितं स्निग्धैरादौ स्वेदैरुपाचरेत् ।**
**आक्तं लवणतैलेन नाडीप्रस्तरसंकरैः ॥ ७१ ॥**
**तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वभिविलीयते ।**
**खानि मार्दवमायान्ति ततो वातानुलोमता ॥ ७२ ॥**
**यथाऽद्रिकुञ्जेष्वर्कांशुतप्तं विष्यन्दते हिमम् ।**
**श्लेष्मा तप्तः स्थिरो देहे स्वेदैर्विष्यन्दते तथा ॥७३॥**
**स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत् स्निग्धमोदनम् ।**
**मत्स्यानां शूकराणां वा रसैर्दध्युत्तरेण वा ॥ ७४ ॥**
**ततः श्लेष्मणि संवृद्धे वमनं पाययेत्तु तम् ।**
**पिप्पलीसैन्धवक्षौद्रैर्युक्तं वाताविरोधि यत् ॥ ७५ ॥**
**निर्हृते सुखमाप्नोति स कफे दुष्टविग्रहे ।**
**स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥ ७६ ॥**

संप्रति भिन्नयोरपि हिक्काश्वासयोर्यथा समानं चिकित्सितं भवति तथा दर्शयन् समानं चिकित्सितमाह—कारणेत्यादि । कारणं वाह्यकारणं, स्थानं नाभ्यादि, मूलं दोषः । स्निग्धैरिति स्वेदैरित्यस्य विशेषणम्; अन्ये तु स्निग्धमिति पठन्ति । लवणवत्तैलं लवणतैलम् । कुञ्जेष्विति विटपेषु[1] । मत्स्यादीनामित्यादौ मत्स्यादीनामपि रसः स्वरसः कल्केन कर्तव्यः । दध्युत्तरं दधिसरः । ईदृशं च भोजनं वमनानुगुणकफवृद्ध्यर्थम् । उक्तं हि—"श्लेष्मोत्तरश्छर्दयति ह्यदुःखम्" (सि. अ. १) इति । वाताविरोधीत्यनेन अन्नं रूक्षं, तीक्ष्णं च वमनं, निषेधयति । दुष्टः विग्रहो यस्य स दुष्टविग्रहः ॥ ७०–७६ ॥

**लीनश्चेद्दोषशेषः स्याद्धूमैस्तं निर्हरेद्बुधः ।**
**हरिद्रां पत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥ ७७ ॥**
**सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ।**
**तां घृताक्तां पिबेद्धूमं यवैर्वा घृतसंयुतैः ॥ ७८ ॥**
**मधूच्छिष्टं सर्जरसं घृतं मल्लकसंपुटे ।**
**कृत्वा धूमं पिबेच्छृङ्गं वालं वा स्नायु वा गवाम् ७९**
**स्योनाकवर्धमानानां नाडीं शुष्कां कुशस्य वा ।**
**पद्मकं गुग्गुलं लोहं शल्लकीं वा घृताप्लुतम् ॥ ८० ॥**

वमनशेषदोषहरणार्थं धूममाह—लीन इत्यादिना । एतेन धूमो वमनं विनाऽपि स्वल्पदोषे कर्तव्य एव, तत्रापि धूमविषयदोषस्य विद्यमानत्वात् । अलं हरितालम् । धूमवर्तिस्तु तस्याशीतीयोक्तधूमवर्तिविधानेन कर्तव्या । अत्र च धूमपाननलिकामानं वक्ष्यमाणकासहरधूमनलिकामानसमानमिच्छन्ति, हिक्काश्वासयोरपि काससमानत्वात् । मधूच्छिष्टं सिक्थकम् । मल्लकसंपुटे चात्रानुक्तमपि पातव्यधूमनिर्गमार्थमूर्ध्वं च्छिद्रं कर्तव्यम् । पद्मकादिष्वपि मल्लकेत्याद्यनुवर्तते । वर्धमान एरण्डः । लोहः अगरुः । शल्लकी स्वनामख्याता ॥ ७७–८० ॥

**स्वरक्षीणातिसारासृक्पित्तदाहानुबन्धजान् ।**
**मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥ ८१ ॥**

शीताद्यैरित्यादिशब्देन पित्तहरपिच्छिलादिग्रहणम् ॥ ८१ ॥

**न स्वेद्याः पित्तदाहार्ता रक्तस्वेदातिवर्तिनः ।**
**क्षीणधातुबला रूक्षा गर्भिण्यश्चापि पित्तलाः ॥ ८२ ॥**
**कोष्णैः काममुरःकण्ठं स्नेहसेकैः सशर्करैः ।**
**उत्कारिकोपनाहैश्च स्वेदयेन् मृदुभिः क्षणम् ॥ ८३ ॥**
**तिलोमामापगोधूमचूर्णैर्वातहरैः सह ।**
**स्नेहैश्चोत्कारिका साम्लैः सक्षीरैर्वा कृता हिता ८४**

---

[1] 'विटपः संमताच्छतादिभिराच्छादिते मध्यशून्ये पर्वतादेः स्थानभेदे' इति शब्दस्तोममहानिधौ ।

नवज्वरामदोषेषु रूक्षस्वेदं विलङ्घनम्।
समीक्ष्योल्लेखनं वाऽपि कारयेल्लवणाम्बुना ॥ ८५ ॥
अतियोगोद्धतं वातं दृष्ट्वा वातहरैर्भिषक्।
रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥ ८६ ॥
उदावर्ते तथाऽऽध्माने मातुलुङ्गाम्लवेतसैः।
हिङ्गुपीलुविडैश्चान्नं युक्तं स्यादनुलोमनम् ॥ ८७ ॥

पित्तदाहार्ता इति पित्तार्ता दाहार्ताश्च। रक्तं स्वेदश्चातिवर्तमानौ येषां ते रक्तस्वेदातिवर्तिनः। पित्तलाः पित्तप्रकृतयः। कोष्णैरित्यादिना स्वेद्यानां स्थानविशिष्टं स्वेदमाह। काममिति इच्छायां सत्याम्, उत्कारिकोपनाहैः स्वेदयेत्। उल्लेखनं वमनम्। अतियोगोद्धतमिति वमनाद्यतियोगवृद्धं; किंवा अतियोगेन अतिमात्रोद्धतम् ॥ ८२–८७ ॥

हिक्काश्वासामयी ह्येको बलवान् दुर्बलोऽपरः।
कफाधिकस्तथैवैको रूक्षो बह्वनिलोऽपरः ॥ ८८ ॥
कफाधिके बलस्थे च वमनं सविरेचनम्।
कुर्यात् पथ्याशिने धूमलेहादिशमनं ततः ॥ ८९ ॥
वातिकान् दुर्बलान् बालान् वृद्धांश्चानिलसूदनैः।
तर्पयेदेव शमनैः स्नेहयूषरसादिभिः ॥ ९० ॥

चिकित्साभेदार्थं हिक्काश्वासिनोऽवस्थाभेदमाह—हिक्केत्यादि। एताश्चतस्रोऽवस्थाः साक्षादुक्ताः—बलवान्, दुर्बलः, वाताधिकः, कफाधिकश्चेति; रूक्षबह्वनिलविशेषणेनापि रूक्षस्निग्धावस्थाद्वयम्। तत्र बहुकफे बलरूपसूचिते चावस्थाद्वये क्रियां ब्रूते—कफाधिके इत्यादि। तत इति वमनविरेचनानन्तरम्। तथा चापरेऽवस्थाद्वये समानचिकित्सितमाह—वातिकानित्यादि। बालवृद्धयोश्चात्रासंपूर्णक्षीणधातुत्वेन दुर्बलयोर्दुर्बलोदाहरणार्थमेवोपादानम्। एतच्च संक्षेपेण चिकित्सासूत्रमुक्तम्। तेन बलवान् वाताधिक इत्याद्यवस्थायां मिश्रितायामुक्तचिकित्साया अपि मिश्रणं कल्पनीयं; यथा—प्रत्येकदोषोक्तचिकित्सा दोषसंसर्गे विकल्प्यते ॥ ८८–९० ॥

अनुत्क्लिष्टकफास्विन्नदुर्बलानां विशोधनात्।
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥ ९१ ॥
दृढान् बहुकफांस्तस्माद्रसैरानूपवारिजैः।
तृप्तान्विशोधयेत्स्विन्नान् बृंहयेदितरान् भिषक् ९२
बर्हितित्तिरिदक्षाश्च जाङ्गलाश्च मृगद्विजाः।
दशमूलीरसे सिद्धाः कौलत्थे वा रसे हिताः ॥९३॥

अविषयप्रविष्टशोधने दोषमाह–अनुत्क्लिष्टेत्यादिना। मर्म इति हृदयादीनि। दृढानिति बलवतः। रसैरानूपवारिजैस्तृप्तानित्यनेन कफोत्क्लेशकरणे तृप्तिं दर्शयति। स्विन्नानिति स्वेदितान्। इतरानिति दुर्बलान् बहुवातांश्च। कफाधिकायामवस्थायां तर्पणरूपविपरीतक्रियाकरणेऽनुक्तेऽपि कफवृद्ध्या दोषोत्क्लेश एव ज्ञेयः। इह दशमूलरसादौ बर्हितित्तिरादीनां सिद्धिः रसविधानेनैव ज्ञेया ॥ ९१–९३ ॥

निदिग्धिकां बिल्वमध्यं कर्कटाख्यां दुरालभाम्।
त्रिकण्टकं गुडूचीं च कुलत्थांश्च सचित्रकान् ॥९४॥
जले पक्त्वा रसः पूतः पिप्पलीघृतभर्जितः।
सनागरः सलवणः स्याद्यूषो भोजने हितः ॥ ९५ ॥
रास्नां बलां पञ्चमूलं ह्रस्वं मुद्गान् सचित्रकान्।
पक्त्वाऽम्भसि रसे तस्मिन् यूषः साध्यश्च पूर्ववत् ९६
पल्लवान्मातुलुङ्गस्य निम्बस्य कुलकस्य च।
पक्त्वा मुद्गांश्च सव्योषान् क्षारयूषं विपाचयेत् ॥९७॥
दत्त्वा सलवणं क्षारं शिग्रूणि मरिचानि च।
युक्त्या संसाधितो यूषो हिक्काश्वासविकारनुत् ९८
कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च।
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥ ९९ ॥
सदधिव्योपसर्पिष्को यूषो वार्ताकजो हितः।
शालिषष्टिकगोधूमयवान्नान्यनवानि च ॥ १०० ॥
हिङ्गुसौवर्चलाजाजीविडपौष्करचित्रकैः।
सिद्धा कर्कटशृङ्ग्या च यवागूः श्वासहिक्किनाम् १०१
दशमूलीशटीरास्नापिप्पलीमूलपौष्करैः।
शृङ्गीतामलकीभार्गीगुडूचीनागराम्बुभिः ॥ १०२ ॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः।
कासहृद्ग्रहपार्श्वार्तिहिक्काश्वासप्रशान्तये ॥ १०३ ॥
पुष्कराह्वशटीव्योषमातुलुङ्गाम्लवेतसैः।
योजयेदन्नपानानि ससर्पिर्विडहिङ्गुभिः ॥ १०४ ॥

निदिग्धिकामित्यादि। यूषविधानसामान्यपठितस्यापि कुलत्थस्य यूषप्रकृतित्वाद्यूषसाधनोपयौगिकं मानं गृह्यते; शेषद्रव्यं तु यूषसाधनमानेन गृह्यते। पिप्पलीसाधिते घृते पिप्पलीयुक्ते घृते वा भर्जित इति पिप्पलीघृतभर्जितः। एवं रास्नामित्यादौ रसस्य प्राधान्यम्। पूर्ववदित्यनेन पिप्पलीघृतभर्जनादिकमतिदिशति। क्षारेण युक्तो यूषः क्षारयूषः, क्षारः अपामार्गादिः। कासमर्दादीनां यथायोग्यतया प्रक्षेपः। जलमानादिना संस्कार उन्नेयः। दशमूलीत्यादौ कषायशब्दः पानीयस्थानविहितत्वादर्धशृते जले एव वर्तते ॥ ९४–१०४ ॥

दशमूलस्य वा क्वाथमथवा देवदारुणः।
तृषितो मदिरां वाऽपि हिक्काश्वासी पिबेन्नरः ॥१०५॥
पाठां मधुरसां रास्नां सरलं देवदारु च।
प्रक्षाल्य जर्जरीकृत्य सुरामण्डे निधापयेत् ॥ १०६ ॥
तं मन्दलवणं कृत्वा भिषक् प्रसृतसंमितम्।
पाययेत्तु ततो हिक्का श्वासश्चैवोपशाम्यति ॥१०७॥
हिङ्गु सौवर्चलं कोलं समङ्गां पिप्पलीं बलाम्।
मातुलुङ्गरसे पिष्टमारनालेन वा पिबेत् ॥ १०८ ॥

सौवर्चलं नागरं च भार्गीं द्विशर्करायुतम् ।
उष्णाम्बुना पिबेदेतद्धिक्काश्वासविकारनुत् ॥ १०९ ॥
भार्गीनागरयोः कल्कं मरिचक्षारयोस्तथा ।
पीतद्रुचित्रकास्फोतामूर्वाणां चाम्बुना पिबेत् ११०
मधूलिका तुगाक्षीरी नागरं पिप्पली तथा ।
उत्कारिका घृते सिद्धा श्वासे पित्तानुबन्धजे १११
श्वाविधं शशमांसं च शल्लकस्य च शोणितम् ।
पिप्पलीघृतसिद्धानि श्वासे वातानुबन्धजे ॥ ११२ ॥
सुवर्चलारसो दुग्धं घृतं त्रिकटुकान्वितम् ।
शाल्योदनस्यानुपानं वातपित्तानुगे हितम् ॥ ११३ ॥
शिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः ।
पिप्पलीमधुसंयुक्तः कफपित्तानुगे मतः ॥ ११४ ॥
मधुकं पिप्पलीमूलं गुडो गोश्वशकृद्रसः ।
घृतं क्षौद्रं कासश्वासहिक्काभिष्यन्दिनां शुभम् ॥
खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च ।
शकृद्रसं बहुकफे चैकैकं मधुना पिबेत् ॥ ११६ ॥
क्षारं चाप्यश्वगन्धाया लिह्याद्वा क्षौद्रसर्पिषा ।
मयूरपादनालं वा शकलं शल्लकस्य वा ॥ ११७ ॥
श्वाविड्जाण्डकचाषाणां रोमाणि कुररस्य वा ।
शृङ्ग्येकद्विशफानां वा चर्मास्थीनि खुरांस्तथा ११८
सर्वाण्येकैकशो वाऽपि दग्ध्वा क्षौद्रघृतान्वितम् ।
चूर्णं लीढ्वा जयेत् कासं हिक्कां श्वासं च दारुणम् ॥
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुद्ध्यर्थं देया लेहा न निष्कफे ॥ १२० ॥

आस्फोता अपरमल्लिकेति ख्याता । मधूलिका अल्पगोधूमाः । श्वाविधमिति शल्लकस्य मांसम् । मयूरपादनालमिति नालं मयूरपिच्छस्यैव नालम् । घृतमत्र प्रस्थमानम् । शकलमिति मत्स्यशकलाकारम् । जाण्डकः मरुदेशोद्भवः प्राणी पृष्ठमात्रे संकोचमुपयाति । एकोऽद्विविधाभिन्नः शफो येषां ते एकशफा अश्वादयः, द्विशफा हरिणादयः । तन्मार्गशुद्ध्यर्थमिति प्राणमार्गशुद्ध्यर्थम् ॥ १०५–१२० ॥

कासिने च्छर्दनं दद्यात् स्वरभङ्गे च बुद्धिमान् ।
वातश्लेष्महरैर्युक्तं तमके तु विरेचनम् ॥ १२१ ॥
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।
यथा तथाऽनिलस्तस्य मार्गं नित्यं विशोधयेत् १२२

कासिन इति हिक्काश्वासयुक्त एव कासी । उदीर्यत इत्यादौ अनिलः कफमार्गनिरोधादुदीर्यत इति दर्शयति ॥१२१॥१२२॥

शटीचोरकजीवन्तीत्वङ्मुस्तं पुष्कराह्वयम् ।
सुरसं तामलक्येला पिप्पल्यगुरु नागरम् ॥ १२३ ॥

१ 'गोशकृतो रसः' इति पा० । २ 'श्वाविद्गोहकचाषाणां' इति, 'श्वाविज्जाहकचाषाणां' इति च पा० । ३ 'एकद्विशफशृङ्गाणि' इति पा० । ४ '°प्राणप्रकोपहाः' इति पा० ।

वालकं च समं चूर्णं कृत्वाऽष्टगुणशर्करम् ।
सर्वथा तमके श्वासे हिक्कायां च प्रयोजयेत् १२४

शटीत्यादिके समं चूर्णमिति वालकान्तं द्रव्यं समम् । अष्टगुणशर्करमिति एकभागापेक्षयाऽष्टगुणशर्करम् । सर्वथेति पानभोजनलेहादिषु ॥ १२३ ॥ १२४ ॥

मुक्ताप्रवालवैदूर्यशङ्खस्फटिकमञ्जनम् ।
ससारगन्धकाचार्कसूक्ष्मैलालवणद्वयम् ॥ १२५ ॥
ताम्रायोरजसी रूप्यं ससौगन्धिकसीसकम् ।
जातीफलं शणाद्बीजमपामार्गस्य तण्डुलाः ॥ १२६ ॥
एषां पाणितलं चूर्णं तुल्यानां क्षौद्रसर्पिषा ।
हिक्कां श्वासं च कासं च लीढमाशु नियच्छति १२७
अञ्जनात्तिमिरं काचं नीलिकां पुष्पकं तमः ।
मल्यं कण्डूमभिष्यन्दमर्म चैव प्रणाशयेत् ॥ १२८ ॥
इति मुक्ताद्यं चूर्णम् ।

मुक्तेत्यादौ ससारः स्फटिक एव । लवणद्वयं सौवर्चलं सैन्धवं च । सौगन्ध्यं माणिक्यभेदः । सीसकं सौवीराञ्जनं, केचित् कसेरुकमिषन्नीलपीतमणिमाहुः । पाणितलं कर्षः । मल्यमिति मलदिग्धाक्षिताम् ॥ १२५–१२८ ॥

शटीपुष्करमूलानां चूर्णमामलकस्य च ।
मधुना संयुतं लेह्यं चूर्णं वा काललोहजम् ॥१२९॥
सशर्करां तामलकीं द्राक्षां गोश्वशकृद्रसम् ।
तुल्यं गुडं नागरं च प्राशयेन्नावयेत्तथा ॥ १३० ॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ।
नावयेच्चन्दनं वाऽपि नारीक्षीरेण संयुतम् ॥ १३१ ॥
सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम् ।
नावयेन्माक्षिकीं विष्ठामलक्तकरसेन वा ॥ १३२ ॥
नारीक्षीरेण सिद्धं वा सर्पिर्मधुरकैरपि ।
पीतं नस्तो निषिक्तं वा सद्यो हिक्कां नियच्छति १३३
सकृदुष्णं सकृच्छीतं व्यत्यासाद्धिक्किनां पयः ।
पाने नस्तःक्रियायां वा शर्करामधुसंयुतम् ॥ १३४ ॥

काललोहो लोह एव, केचित्तीक्ष्णं लोहं वर्णयन्ति । गृञ्जनकं लोहितपलाण्डुः । माक्षिकीमिति मक्षिकाभर्वाम् । मधुरकैरिति जीवनीयैः । सकृदिति कदाचित् । व्यत्यासादिति विपर्यासात्; उष्णं पयः कृत्वा शीतं कर्तव्यम् । मधुसंयोगश्चात्र विरुद्धत्वादुष्णे न कर्तव्यः १२९–१३४ ॥

अधोभागैर्घृतं सिद्धं सद्यो हिक्कां नियच्छति ।
पिप्पलीमधुयुक्तौ वा रसौ धात्रीकपित्थयोः १३५
लाजालाक्षामधुद्राक्षापिप्पल्यश्वशकृद्रसान् ।
लिह्यात् कोलमधुद्राक्षापिप्पलीनागराणि वा १३६

१ 'सक्षारगन्धकाचार्क°' इति, 'सक्षारगन्धकाचानि' इति च पा० । २ 'सौगन्धिककसेरुकम्' इति पा० । ३ 'पिष्टं' इति पा० ।

शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम् ।
क्रोधहर्षप्रियोद्वेगा हिक्काप्रच्यावना मताः ॥ १३७ ॥
हिक्काश्वासविकाराणां निदानं यत् प्रकीर्तितम् ।
वर्ज्यमारोग्यकामैस्तद्धिक्काश्वासविकारिभिः ॥ १३८ ॥
हिक्काश्वासानुबन्धा ये शुष्कोरःकण्ठतालुकाः ।
प्रकृत्या रूक्षदेहाश्च सर्पिर्भिस्तानुपाचरेत् ॥ १३९ ॥
दशमूलरसे सर्पिर्दधिमण्डे च साधयेत् ।
कृष्णासौवर्चलक्षारवयःस्थाहिङ्गुचोरकैः ॥ १४० ॥
कायस्थया च तत् पानाद्धिक्काश्वासौ प्रणाशयेत् ।

अधोभागैरिति विरेचनद्रव्यैः । दशमूलीत्यादौ दधिमण्डः मस्तुः । दशमूलक्वाथदधिमण्डानां च मिलित्वा चातुर्गुण्यम् । वयस्था ब्राह्मी । कायस्था सुरसा ॥ १३५–१४० ॥

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ १४१ ॥
भूतीकं पौष्करं मूलं पलाशश्चित्रकः शटी ।
सौवर्चलं तामलकी सैन्धवं बिल्वपेशिका ॥ १४२ ॥
तालीसपत्रं जीवन्ती वचा तैरक्षसंमितैः ।
हिङ्गुपादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे ॥ १४३ ॥
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः ।
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव च ॥ १४४ ॥

इति तेजोवत्यादिघृतम् ।

तेजोवत्यादौ तेजोवती चविका । हिङ्गुपादैरित्यत्र हिङ्गुपादशब्देन हिङ्गु एककर्षापेक्षया शाणमानं गृह्यते । तथाहि अयमेव योगो हारीतेन "तेजोवती" इत्यादिना पठित्वा उक्तः—"कल्कैस्तैरक्षसंमितैः । हिङ्गुशाणेन संयुक्तैर्घृतप्रस्थं विपाचयेत्" इत्यादि ॥ १४१–१४४ ॥

मनःशिलासर्जरसलाक्षारजनिपद्मकैः ।
मञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृताद्धितः ॥ १४५ ॥
जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद्घृतम् ।
त्र्यूषणं दाधिकं वाऽपि पिबेद्वासाघृतं तथा ॥ १४६ ॥

इति मनःशिलादिघृतम् ।

वासाघृतमिति गुल्मोक्तम् । त्र्यूषणमिति "त्र्यूषणं त्रिफलां" ( चि. अ. १८ ) इत्यादिना त्र्यूषणसंज्ञयैव कासचिकित्सिते वक्ष्यमाणम् ॥ १४५ ॥ १४६ ॥

यत्किंचित् कफवातघ्नमुष्णं वातानुलोमनम् ।
भेषजं पानमन्नं वा तद्धितं श्वासहिक्किने ॥ १४७ ॥
वातकृद्वा कफहरं कफकृद्वाऽनिलापहम् ।
कार्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम् ॥
सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ।
नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्शने ॥ १४९ ॥

तस्माच्छुद्धानशुद्धांश्च शमनैर्बृंहणैरपि ।
हिक्काश्वासार्दिताञ्जन्तून् प्रायशः समुपाचरेत् १५० ॥

अनुक्तचिकित्सापक्षग्रहणार्थमाह—यत्किंचिदित्यादि । अनैकान्तिकं कर्तव्यविधिमाह—वातकृदित्यादि । अत्र हिक्काश्वासयोश्चिकित्सिते विधित्रयं–तत्र तावत् कफवातहरं प्रधानमेवोक्तं, यत्तु अवशिष्टं तत्र दोषस्य विद्यमानतया अनैकान्तेन करणं ज्ञेयम्, एवमुक्तेऽपि अनैकान्तेन चिकित्साद्वयकरणे वातहरस्यैव प्राधान्यं ज्ञेयम् । ताभ्यामित्यादि । अनिलापहं च बृंहणं समानं भवति । तत्रोपपत्तिमाह—सर्वेषामित्यादिना । गदान्तरानपि ज्वरादीन् हिक्काश्वासवद्बृंहणार्हानाह—बृंहणे क्रियमाणे ह्यल्पोऽपायो भवति; शक्यः प्रतीकारो भवति, बृंहणजनितबलानां सुखजयव्यापत्तिकत्वादिति भावः । शमने तु नात्यर्थमपायो भवति । कर्शने तु क्रियमाणेऽशक्योऽपायो भवति भृशश्च भवति । अशक्य इति असाध्यः । एतदपि कर्शनेन अल्पबले पुरुषे भेषजादिना रोगजयस्य दुःशकत्वादिति ज्ञेयम् । अत एव शमनैर्बृंहणैरिति उपसंहारं करिष्यति । किंवा बृंहणरूपे शमने क्रियमाणे नावश्यमपायो भवति, भवन्नपि अल्पः शक्यश्च भवति, कर्शने तु क्रियमाणे अपायो भवतीति योज्यम् । न्यायोपपादितं बृंहणशमनं बृंहणं वा प्रायः कर्तव्यतयोपसंहरन्नाह—तस्मादित्यादि । अत्र शमनमशुद्धविषयं, बृंहणं च शुद्धविषयं केचिदाहुः; शमनस्यैव तु बृंहणत्वं केचिदुदाहरन्ति ॥ १४७–१५० ॥

तत्र श्लोकः—

दुर्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम् ।
लिङ्गं पथ्यं च हिक्कानां श्वासानां चेह दर्शितम् ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

दुर्जय इत्यादिकोऽध्यायार्थसंग्रहो व्यक्तः ॥ १५१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

अथातः कासचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

हिक्काश्वासानन्तरं समानचिकित्सितत्वात् तथा हिक्काश्वासकासानां परस्परानुबन्धित्वाच्च कासचिकित्सितमुच्यते ॥ १ ॥ २ ॥

तपसा यशसा धृत्या धिया च परयाऽन्वितः ।
आत्रेयः कासशान्त्यर्थं प्राह सिद्धं चिकित्सितम् ३

---

१ 'शुष्कक्षीणकफोरस्काहिक्काश्वासानुबन्धिनः' इति पा० । २ °शाखानिलार्शो° इति पा० । ३ 'नावश्यं' इति पा० ।

वातादिजास्त्रयो ये च क्षतजः क्षयजस्तथा ।
पञ्चैते स्युर्नृणां कासा वर्धमानाः क्षयप्रदाः ॥ ४ ॥

अत्र चात्रेयस्याभिधानादेव शिष्यप्रश्नोऽनुमीयते, नापृष्टा गुरवो वदन्तीति न्यायात् । क्षयज इति क्षयो धातुक्षयः; तेन राजयक्ष्मसंबन्धानां क्षीणधातुपुरुषभवानां तथा जराकासस्य च धातुक्षयजस्य क्षयजशब्देन ग्रहणं भवति । क्षतजेन उरःक्षतपूर्वकयक्ष्मभवस्य तथा क्षतक्षीणस्य च कासस्य ग्रहणं भवति । पञ्चेति संख्यया सकलकासावरोधमत्रैव यथोक्तव्याख्यानेन दर्शयति । क्षयप्रदा इति देहक्षयप्रदाः, मारका इति यावत्; किंवा धातुक्षयप्रदाः, क्षयजोऽपि कासः पुनर्विशिष्टक्षयप्रदो भवति, यथा—ज्वरोत्पन्नं रक्तपित्तं पुनर्ज्वरकरं भवति; उक्तं हि—"ज्वरसंतापाद्रक्तमुदीर्यते । रक्तपित्ताज्ज्वरः" ( नि. अ. ८ ) इति ॥ ३ ॥ ४ ॥

पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ५ ॥

पूर्वरूपमाह—पूर्वेत्यादि । शूकैरिव पूर्णः शूकपूर्णः गल आस्यं च यस्य तस्य भावः शूकपूर्णगलास्यता । भोज्यानामवरोधः अरुचिः, अशक्तिर्वाऽभ्यवहरणे ॥ ५ ॥

अधःप्रतिहतो वायुरूर्ध्वस्रोतःसमाश्रितः ।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥ ६ ॥
आविश्य शिरसः खानि सर्वाणि प्रतिपूरयन् ।
आभञ्जन्नाक्षिपन् देहं हनुमन्ये तथाऽक्षिणी ॥ ७ ॥
नेत्रे पृष्ठमुरःपार्श्वे निर्भुज्य स्तम्भयंस्ततः ।
शुष्को वा सकफो वाऽपि कसनात्कास उच्यते ॥८॥

संप्राप्तिमाह—अध इत्यादि । उदानभावमापन्न इति ऊर्ध्वगतिस्वभावमापन्नः । खानीति स्रोतांसि । निर्भुज्येति आक्षिप्य । स्तम्भयन् नेत्रादीन्येव । कसनादितीति यथोक्तगतिमत्त्वात् तथा उरःप्रभृतिघातनाच्च 'कास' इत्यन्वर्थसंज्ञयोच्यते । 'कस' गतिशातनयोः, इत्यस्य धातोरयं प्रयोगः ॥ ६–८ ॥

प्रतिघातविशेषेण तस्य वायोः सरंहसः ।
वेदनाशब्दवैशिष्ट्यं[१] कासानामुपजायते ॥ ९ ॥

एवं सामान्योक्तस्य कासस्य भेदहेतुमाह—प्रतीघातेत्यादि । प्रतीघात इत्यावरणं, स च कफादि । सरंहसः सवेगस्य । वेदना पीडा, शब्दः कासशब्दः, संज्ञा वा; तयोर्वैशिष्ट्यं विशिष्टत्वं भिन्नत्वमिति यावत् ॥ ९ ॥

रूक्षशीतकषायाल्पप्रमितानशनं स्त्रियः ।
वेगधारणमायासो वातकासप्रवर्तकाः ॥ १० ॥
हृत्पार्श्वोरःशिरःशूलस्वरभेदकरो भृशम् ।
शुष्कोरःकण्ठवक्त्रस्य हृष्टलोम्नः प्रताम्यतः ॥ ११ ॥
निर्घोषदैन्यस्तननदौर्बल्यक्षोभमोहकृत् ।
शुष्ककासः कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ॥ १२ ॥
स्निग्धाम्ललवणोष्णैश्च भुक्तपीतैः प्रशाम्यति ।
ऊर्ध्ववातस्य जीर्णेऽन्ने वेगवान्मारुतो भवेत् ॥ १३ ॥

रूक्षेत्यादिना वातजस्य हेतुलक्षणे आह । प्रताम्यत इति तमसीव प्रविशतः । ऊर्ध्ववातस्येति ऊर्ध्वगतया प्रकुपितवातस्य ॥ १०–१३ ॥

कटुकोष्णविदाह्यम्लक्षाराणामतिसेवनम् ।
पित्तकासकरं क्रोधः संतापश्चाग्निसूर्यजः ॥ १४ ॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः ।
उरोधूमायनं तृष्णा दाहो मोहोऽरुचिर्भ्रमः ॥ १५ ॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति ।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥ १६ ॥

कट्वित्यादिना पित्तकासहेतुलिङ्गे प्राह । अग्निसूर्यज इति अग्निसूर्यभवः संताप इत्यर्थः । उरोधूमायनमिति उरसो धूमोद्गमनमिव । पित्तजेऽप्यस्मिन् श्लेष्मनिष्ठीवनं व्याधेरुरःप्रभृतिकफस्थानभूतत्वेन श्लेष्मपित्तसंसर्गजतयेति ज्ञेयम् ॥ १४–१६ ॥

गुर्वभिष्यन्दिमधुरस्निग्धस्वप्नाविचेष्टनैः ।
वृद्धः श्लेष्माऽनिलं रुद्ध्वा कफकासं[१] करोति हि॥१७॥
मन्दाग्नित्वारुचिच्छर्दिपीनसोत्क्लेशगौरवैः ।
लोमहर्षास्यमाधुर्यक्लेदसंसदनैर्युतम् ॥ १८ ॥
बहुलं मधुरं स्निग्धं निष्ठीवति घनं कफम् ।
कासमानो ह्यरुग् वक्षः संपूर्णमिव मन्यते ॥ १९ ॥

गुर्वित्यादिना श्लेष्मजमाह ॥ १७–१९ ॥

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत् ॥ २० ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
कण्ठेन रुजताऽत्यर्थं विरुग्णेनेव चोरसा ॥ २१ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ २२ ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवाकूजन् कासवेगात्क्षतोद्भवात् ॥ २३ ॥

अतिव्यवायेत्यादिना क्षतजमाह । उरः क्षतं गृहीत्वेति क्षतमुरः प्राप्येत्यर्थः । अयं च कासः साहसजयक्ष्मरूपेऽप्युक्तो ज्ञेयः ॥ २०–२३ ॥

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः २४
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ।
दुर्गन्धं हरितं रक्तं ष्ठीवेत् पूयोपमं कफम् ॥ २५ ॥

१ 'वेदनाशब्दवैषम्यं' इति, 'वेदनाशब्दवैशेष्यं' इति च पा० ।

१ 'कफकासमुदीरयेत्' इति पा० ।

स्थानादुत्कासमानश्च हृदयं मन्यते च्युतम् ।
अकस्मादुष्णशीतार्तो बह्वाशी दुर्बलः कृशः ॥ २६ ॥
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनः ।
पाणिपादतलैः श्लक्ष्णैः सततासूयको घृणी ॥ २७ ॥
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः ।
भिन्नसंहतवर्चस्त्वं स्वरभेदोऽनिमित्ततः ॥ २८ ॥
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥
नवौ कदाचित् सिध्येतामेतौ पादगुणान्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः ३०

विषमेत्यादिना क्षयजमाह । अत्र च विषमासात्म्यभोज्येन तथा व्यवायेन तथा वेगनिग्रहेण विषमाशनज--धातुक्षयज--वेगसंधारणजानां यक्ष्मणां लक्षणभूतैकासहेतुत्रयं पृथगुक्तं भवति। अत्र प्रसन्नदृष्टित्वादि व्याधिप्रभावाद्भवति । मिश्राकृतिरिति मिश्रदोषलिङ्गो ज्वरो भवति । भिन्नेत्यादि भिन्नवर्चस्त्वमनिमित्ततो भवति, तथा स्वरभेदोऽप्यनिमित्तो भवति । देहनाशन इति असाध्य इत्यर्थः । पादगुणान्विताविति वैद्यादिपादचतुष्टयगुणवन्तौ । न चात्र कदाचित्सिध्येतामित्यभिधानेन याप्यत्वसाध्यत्वानामेकविषयत्वं; यतो नवयोरेव चतुष्पादसंपत्त्या साध्यत्वमुक्तम्, अतोऽन्यथा क्षतजो याप्य उक्त इति भिन्नविषयता । क्षयजकासभेदं याप्यतया दर्शयन्नाह—स्थविराणामित्यादि । स्थविराणामित्युक्त्वाऽपि जराकास इति वचनेन स्थविराणां यो जरया देहक्षयकारिकया कृतः स याप्यः, यस्तु दोषकृतः स साध्य एव भवतीति दर्शयति । अन्ये तु जराकासं दोषकृतेष्वेवान्तर्भावयन्ति ॥ २४-३० ॥

त्रीन्साध्यान्साधयेत्पूर्वान् पथ्यैर्याप्यांश्च यापयेत् ।
चिकित्सामत ऊर्ध्वं तु शृणु कासनिबर्हिणीम् ॥३१॥

त्रीन् पूर्वानिति दोषजान् । साध्यानिति साध्यत्वेनोक्तान् । याप्यानिति बहुवचनं व्यक्त्यपेक्षया, किंवा क्षयजक्षतजकासाभिप्रायेण ज्ञेयम् ॥ ३१ ॥

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत् ।
सर्पिर्भिर्बस्तिभिः पेयायूषक्षीररसादिभिः ॥ ३२ ॥
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः ।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ॥३३॥
बस्तिभिर्बद्धविड्वातं शुष्कोर्ध्वं चोर्ध्वभक्तिकैः ।
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः ॥ ३४ ॥

रूक्षस्येत्यादिना चिकित्सामाह । शुष्क ऊर्ध्वः देहो यस्य स शुष्कोर्ध्वस्तं, शुष्ककासगृहीतं वा; सपित्तमूर्ध्वभक्तिकैर्घृतैर्जयेत्, शुष्कोर्ध्वमेव सकफं स्नेहविरेचनैर्जयेत् ॥ ३२-३४ ॥

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ ३५ ॥

इति कण्टकारीघृतम्

कण्टकारीत्यादौ रसे इति क्वाथे ॥ ३५ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
धान्यपाठावचारास्नायष्ट्याह्वक्षारहिङ्गुभिः ॥ ३६ ॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढके ।
सिद्धाच्चतुर्थिकां पीत्वा पेयामण्डं पिबेदनु ॥ ३७ ॥
तच्छ्वासकासहृत्पार्श्वग्रहणीदोषगुल्मनुत् ।
पिप्पल्याद्यं घृतं चैतदात्रेयेण प्रकीर्तितम् ॥ ३८ ॥

इति पिप्पल्यादिघृतम् ।

चतुर्थिकामिति पलम् ॥ ३६-३८ ॥

त्र्यूषणं त्रिफलां द्राक्षां काश्मर्याणि परूषकम् ।
द्वे पाठे देवदार्वृद्धि स्वगुप्तां चित्रकं शटीम् ॥ ३९ ॥
ब्राह्मीं तामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टकं विदारीं च पिष्ट्वा कर्षसमं घृतात् ॥४०॥
प्रस्थं चतुर्गुणे क्षीरे सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥ ४१ ॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
त्र्यूषणं नाम विख्यातमेतद्घृतमनुत्तमम् ॥ ४२ ॥

इति त्र्यूषणाद्यं घृतम् ।

त्र्यूषणाद्ये 'द्वे पाठे' इत्यनेन स्वल्पपत्रां द्वितीयां पाठां प्राहुः । स्वगुप्ता शूकशिम्बी ॥ ३९-४२ ॥

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ।
पलिकां माणिकांशांस्तु कुलत्थान्बदरान्यवान् ४३
तुलार्धं चाजमांसस्य पादशेषेण तेन च ।
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥ ४४ ॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः ।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥ ४५ ॥
पञ्चकासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम् ।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलाञ्जयेत् ॥ ४६ ॥

इति रास्नाघृतम् ।

द्रोणेऽपामित्यादौ वक्ष्यमाणानि अजमांसान्तानि क्वाथ्यानि द्रोणे एव साध्यानि । माणिका अष्टौ पलानि । जीवनीयानीति जीवन्त्यादीनि दश षड्विरेचनशताश्रितीयोक्तानि ॥४३-४६॥

विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।
भार्गी क्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥ ४७ ॥

१ 'कासमानश्च हृदयं स्थानभ्रष्टं स मन्यते' इति पा० । २ 'प्रसन्नस्निग्धवदनः श्रीमद्दर्शनलोचनः' इति पा० । ३ 'घृणावानभ्यसूयकः' इति पा० । ४ 'स्वरभेदोऽनिमित्तश्च भिन्नवृत्तपुरीषता' इति पा० । ५ 'क्षयभूतकासहेतुत्रयं' इति पा० ।

१ 'ब्याघ्रीं' इति पा० ।

सकफेऽनिलजे कासे श्वासहिक्काहताग्निषु ।
द्वौ क्षारौ पञ्चकोलानि पञ्चैव लवणानि च ॥ ४८ ॥
शटीनागरकोदीच्यकल्कं वा वस्त्रगालितम् ।
पाययेत घृतोन्मिश्रं वातकासनिवर्हणम् ॥ ४९ ॥
दुरालभां शटीं द्राक्षां शृङ्गवेरं सितोपलाम् ।
लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे ॥ ५० ॥
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकीं शटीम् ।
पुराणगुडतैलाभ्यां चूर्णितं वाऽपि लेहयेत् ॥ ५१ ॥
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम् ।
मधुसर्पिर्युतं कासहिक्काश्वासं जयेल्लिहन् ॥ ५२ ॥

घृतमात्रयेति चूर्णालोडनौचितया घृतमात्रया । वस्त्रगालितमिति वस्त्रपूतम् । कर्कटकीमिति कर्कटशृङ्गीम् ॥ ४७–५२ ॥

चित्रकं पिप्पलीमूलं व्योषं हिङ्गु दुरालभाम् ।
शटीं पुष्करमूलं च श्रेयसीं सुरसां वचाम् ॥ ५३ ॥
भार्गीं छिन्नरुहां रास्नां शृङ्गीं द्राक्षां च कार्षिकान् ।
कल्कानर्धतुलाक्काथे निदिग्ध्याः पलविंशतिम्[२] ५४
दत्त्वा मत्स्यण्डिकायाश्च घृताच्च कुडवं पचेत् ।
सिद्धं शीतं पृथक् क्षौद्रपिप्पलीकुडवान्वितम् ॥५५॥
चतुष्पलं तुगाक्षीर्याश्चूर्णितं तत्र दापयेत् ।
लेहयेत् कासहृद्रोगश्वासगुल्मनिवारणम् ॥ ५६ ॥
इति चित्रकादिलेहः ।

चित्रकमित्यादौ श्रेयसीमिति हस्तिपिप्पलीम् । अर्धतुलाक्काथ इति अत्र तुलार्धशब्दोल्लेखेन क्रियमाणत्वाद् द्रोणार्धजलेन क्काथः कर्तव्यः ॥ ५३–५६ ॥

दशमूलीं स्वयङ्गुप्तां शङ्खपुष्पीं शटीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ ५७ ॥
भार्गीं पुष्करमूलं च द्विपलांशं यवाढकम् ।
हरीतकीशतं चैकं जले पञ्चाढके पचेत् ॥ ५८ ॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम् ।
पचेद्गुडतुलां दत्त्वा कुडवं च पृथग्घृतात् ॥ ५९ ॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ।
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥ ६० ॥
तद्वलीपलितं हन्ति वर्णायुर्बलवर्धनम् ।
पञ्चकासान् क्षयं श्वासं हिक्कां च विषमज्वरम् ६१
हन्यात्तथाऽर्शोग्रहणीहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम् ॥ ६२ ॥
इत्यगस्त्यहरीतकी ।

दशमूलीत्यादौ हरीतकीशतमिति हरीतकीफलशतम् । यवैः स्विन्नैरिति यवा यदा स्विन्ना भवन्ति तदा तं कषायं पूतं गृहीत्वा हरीतकीशतं च तदेव गृहीत्वा गुडतुलां च दत्त्वा पुनः पाकः कर्तव्यः । यवानां च स्विन्नता चतुर्भागावशेष एव कषाये भवतीति कृत्वा चतुर्भागावशिष्टमेवात्र कषायं कुर्वन्ति । घृततैलकुडवे चात्राष्टपलमाने एव, कुडवेऽपि द्वैगुण्यस्य प्रतिपादितत्वात्; तन्त्रान्तरे चात्रैव योगे "मधुनश्च पलाष्टकम्" इत्युक्तम् । तुल्यमानत्वेऽपि चात्र घृतमधुनोर्द्रव्यान्तरयोगस्य विद्यमानत्वान्न विरुद्धत्वम्; द्रव्यान्तरयोगे सति मधुघृतयोस्तुल्यमानताऽपि न विरुद्धा भवति । अत्र च हरीतकीफलं स्विन्नं घृततैले प्रथमं मनाग्भर्जयन्ति अवयवदार्ढ्यार्थं, ततः क्काथादिप्रक्षेपः, अवतारसमये च पिप्पलीचूर्णप्रक्षेपः, शीतीभूते च मधु यम्, इदं वृद्धवैद्यानां कर्माहुः । लिह्यादिति एतं प्रकृतं लेहं लिह्यात् । द्वे चाभये अतो रसायनात् खादेत् । नित्यं निरन्तरमित्यर्थः; किंवा द्वे अभये लिह्यात् तथा द्वे चाभये खादेत्, इत्यनेन अभयाद्वयसंबद्धलेह्यभागं लिह्यात् ततस्तदभयाद्वयं खादेदित्यर्थः । अगस्त्यविहितमित्यनेनास्य महाजनसंप्रदायागतत्वेनात्यर्थसिद्धत्वमुच्यते ॥ ५७–६२ ॥

सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम् ।
दाडिमाम्लेन कोष्णेन भार्गीनागरमम्बुना ॥ ६३ ॥
पिबेत् खदिरसारं[१] वा मदिरादधिमस्तुभिः ।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ ६४ ॥

खदिरसारमिति खदिरकाष्ठसारम् । ससैन्धवमिति ईषत्सैन्धवेन, अव्यक्तलवणमिति यावत् । अत्र मदिरादिभिः 'पिबेत्' इत्यनुवर्तते ॥ ६३ ॥ ६४ ॥

शिरसः पीडने स्रावे नासाया हृदि ताम्यति ।
कासप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ ६५ ॥
दशाङ्गुलोन्मितां नाडीमथवाऽष्टाङ्गुलोन्मिताम् ।
शरावसंपुटच्छिद्रे कृत्वा जिह्मां विचक्षणः ॥ ६६ ॥
वैरेचनं मुखेनैव कासवान् धूममापिबेत् ।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत् पुनः ॥ ६७ ॥
स ह्यस्य तैक्ष्ण्याद्विच्छिद्य श्लेष्माणमुरसि स्थितम् ।
निष्कृष्य शमयेत् कासं वातश्लेष्मसमुद्भवम् ॥६८॥

शिरस इत्यादिना धूमयोग्यावस्थोपदर्शनपूर्वकं धूममाह—शिरसः पीडने इत्यादि । शूलगौरवादिना शिरसः पीडने । दशाङ्गुलोन्मितामित्यादिना सूत्रस्थानोक्तधूमपानविशिष्टनलिकादिविधानमिह कासे विधीयते । अयं च धूमस्तथा वमनार्थश्च धूमस्तन्त्रान्तरे पृथगेवोक्तः, तथाहि पञ्च धूमाः स्नेहन–प्रायोगिक–वैरेचनिकाः कासघ्नो वामनीयश्च सुश्रुते प्रोक्ताः; तथाऽपीह कासघ्नवामनीययो रेचनकारकतया विरेचनीय एवावरोधो ज्ञेयः; परंतु विरेचनीयत्वेऽपि कासघ्नस्यायं नलिकामानादिभेद उक्त इति विशेषो ज्ञेयः । छिद्रे इति उपरि नलिकामाने च्छिद्रे । जिह्मामिति वक्राम् । मुखेनैवेति वचनेन प्रागुक्तनासापानं निषेधति ॥ ६५–६८ ॥

१ 'हिक्काश्वासेषु कासे च लिह्याद् क्षौद्रघृतप्लुतम्' इति पा० ।
२ 'कल्कान् निदिग्ध्यर्धतुलां निष्काथ्य पलविंशतिम्' इति पा० ।

१ 'पिबेद्बदरसारं' इति पा० ।

मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुडं पिबेत् ॥ ६९ ॥
एष कासान् पृथग्दोषसन्निपातसमुद्भवान् ।
धूमो हन्यादसंसिद्धानन्यैर्योगशतैरपि ॥ ७० ॥
प्रपौण्डरीकं मधुकं शार्ङ्गेष्टां समनःशिलाम् ।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥ ७१ ॥
कृत्वा वर्तिं पिबेद्धूमं क्षौमचेलानुवर्तिताम् ।
घृताक्तामनु च क्षीरं गुडोदकमथापि वा ॥ ७२ ॥
मनःशिलैलामरिचक्षाराञ्जनकुटन्नटैः ।
वंशलेखनसेव्यालक्षौमलक्तकरोहिषैः ॥ ७३ ॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते ।
मनःशिलाले तद्वच्च पिप्पलीनागरैः सह ॥ ७४ ॥
त्वगैङ्गुदी बृहत्यौ द्वे तालमूली मनःशिला ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ७५

मनःशिलेत्यादौ अलं हरितालम्, इङ्गुदः पुत्रजीवकः । अस्य च धूमस्य पश्चात् क्षीरपानं तीक्ष्णेनानेन धूमेन क्रियमाणौजःक्षयादिभयपरिहारार्थम् । सन्निपातजश्च कासो यद्यप्यत्र नोक्तस्तथाऽपि प्रकृतिसमसन्निपातकृतस्तु कासो भवत्येवेति वचनादुन्नीयते; किंवा सान्निपातिकः क्षयजकासः । वक्ष्यते हि—"सन्निपातभवो ह्येष क्षयकासः सुदारुणः । सन्निपातहितं तस्मात् कार्यमत्र भिषग्जितम्" इति । प्रपौण्डरीकेत्यादौ शार्ङ्गेष्टा गुञ्जा । कृत्वा वर्तिमिति मात्राशितीयोक्तविधानेन वर्तिं कृत्वा । क्षौमस्य चेलः क्षौमचेलः । वंशलेखनं वंशनीलिका । आलं हरितालम् । सेव्यम् उशीरम् । रोहिषं गन्धतृणम् । पूर्वकल्पेन पूर्वोक्तविधिना । नागरैरित्यन्तेनैको योगः ॥ ६९–७५ ॥

ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ ७६ ॥
यवानीपिप्पलीविल्वमध्यनागरचित्रकैः ।
रास्नाजाजीपृथक्पर्णीपलाशशटिपौष्करैः ॥ ७७ ॥
स्निग्धाम्ललवणां सिद्धां पेयामनिलजे पिबेत् ।
कटीहृत्पार्श्वकोष्ठार्तिश्वासहिक्काप्रणाशिनीम् ॥ ७८ ॥
दशमूलरसे तद्वत्पञ्चकोलगुडान्विताम् ।
सिद्धां समतिलां दद्यात्क्षीरे वाऽपि ससैन्धवाम् ७९
मात्स्यकौक्कुटवाराहैरामिषैर्वा घृतान्विताम् ।
सिद्धां ससैन्धवां पेयां वातकासी पिबेन्नरः ॥ ८० ॥
वास्तुको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥ ८१ ॥
दध्यारनालाम्लफलप्रसन्नापानमेव च ।
शस्यते वातकासे तु स्वाद्वम्ललवणानि च ॥ ८२ ॥

इति वातकासचिकित्सा ।

आत्मगुप्तानामिति शूकशिम्बीफलानाम् । पञ्चकोलगुडान्वितामिति प्रक्षिप्तपञ्चकोलगुडाम् । समतिलामिति समतिलतण्डुलसाधिताम् । आमिषैरिति मत्स्याद्यामिषैः सतण्डुलैः सिद्धाम् । वायसी काकमाची ॥ ७६–८२ ॥

पैत्तिके सकफे कासे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्यमधुककथितैर्जलैः ॥ ८३ ॥
यष्ट्याह्वफलकल्कैर्वा विदारीक्षुरसायुतैः ।
हृतदोषस्ततः शीतं मधुरं च क्रमं भजेत् ॥ ८४ ॥
पैत्ते तनुकफे कासे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥ ८५ ॥
स्निग्धशीतस्तनुकफे रूक्षशीतः कफे घने ।
क्रमः कार्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते ॥ ८६ ॥
शृङ्गाटकं पद्मबीजं नीलीसाराणि पिप्पली ।
पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधम् ॥ ८७ ॥
लाजाऽमृतफला द्राक्षा त्वक्क्षीरी पिप्पली सिता ।
पिप्पलीपद्मकद्राक्षा बृहत्याश्च फलाद्रसः ॥ ८८ ॥
खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते ।
घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम् ८९
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ।
पैत्ते, समुस्तमरिचः सकफे, सघृतोऽनिले ॥ ९० ॥
मृद्वीकार्धशतं त्रिंशत्पिप्पलीः शर्करापलम् ।
लेहयेन्मधुना गोर्वा क्षीरपं च शकृद्रसम् ॥ ९१ ॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।
लाजामुस्तशटीरास्नाधात्रीफलविभीतकैः ॥ ९२ ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनः ।
श्वासं हिक्कां क्षयं चैव हृद्रोगं च प्रणाशयेत् ॥ ९३ ॥
पिप्पल्यामलकं द्राक्षां लाक्षां लाजां सितोपलाम् ।
क्षीरे पक्त्वा घनं शीतं लिह्यात् क्षौद्राष्टभागिकम् ९४
विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम् ।
पिबेद्वा मधुसंयुक्तं पित्तकासहरं परम् ॥ ९५ ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ९६ ॥
घनश्लेष्मणि लेहास्तु तिक्तका मधुसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥ ९७ ॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षूणां रसाः पयः ।
सर्वं च मधुरं शीतमविदाहि प्रशस्यते ॥ ९८ ॥
काकोलीबृहतीमेदायुग्मैः सवृषनागरैः ।
पित्तकासे रसान् क्षीरं यूषांश्चाप्युपकल्पयेत् ॥ ९९ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥ १०० ॥
स्थिरासितापृश्निपर्णीश्रावणीबृहतीयुगैः ।
जीवकर्षभकाकोलीतामलक्यृद्धिजीवकैः ॥ १०१ ॥

---

१ 'वंशलोचनशैवाल०' इति पा० । २ 'अनन्तरोक्तधूमविधिना' इति पा० । ३ 'ससैन्धवां पाययेत यवागूं वातकासिनम्' इति पा० ।

१ 'क्षीरे पक्त्वा शकृद्रसम्' इति पा० ।

शृतं पयः पिबेत् कासी ज्वरी दाही क्षतक्षयी ।
तज्जं वा साधयेत् सर्पिः सक्षीरेक्षुरसं भिषक् ॥१०२॥
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः ।
कल्कैस्त्रिकार्षिकैः सिद्धे पूतशीते प्रदापयेत् ॥१०३॥
शर्करापिप्पलीचूर्णं त्वक्क्षीर्या मरिचस्य च ।
शृङ्गाटकस्य चावाप्य क्षौद्रगर्भान्पलोन्मितान् १०४
गुडान् गोधूमचूर्णेन कृत्वा खादेद्धिताशनः ।
शुक्रासृग्दोषशोषेषु कासे क्षीणक्षतेषु च ॥ १०५ ॥
शर्करानागरोदीच्यं कण्टकारीं शटीं समम् ।
पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्च्छितम् ॥ १०६ ॥
माहिष्यजाविगोक्षीरधात्रीफलरसैः समैः ।
सर्पिः सिद्धं पिबेद्युक्त्या पित्तकासनिबर्हणम् ॥१०७॥
इति पित्तकासचिकित्सा ।

वमनं सर्पिषेति वमनद्रव्ययुक्तेन सर्पिषा वमनं कर्तव्यम् । यष्ट्याह्वफलकल्कैरिति अत्र फलं मदनफलम् । पित्तकासे एव कासवेगनिःसार्यमाणस्य कफस्य तनुतायां घनतायां च पृथक् चिकित्सामाह—पैत्ते इत्यादि । तिक्तकैर्युतां त्रिवृतामिति संबन्धः । क्रम इति पेयादिक्रमः । परमिति पेयादिक्रमादूर्ध्वम् । शस्यत इत्यत्र 'उपचारः' इति शेषः । नीलीसारमिति नीलिनीफलसारम् । अमृतफलम् आमलकम् । शर्करादिः केवलः केवले पैत्ते, सकफे पैत्ते समुस्तमरिचः, सघृतस्तु शर्करादिरनिलानुबन्धे पैत्ते ज्ञेयः । मृद्वीकार्धशतं त्रिंशत्पिप्पलीश्च व्यक्ते, संख्यापरिग्रहात् । गोः क्षीरपमिति क्षीरमात्राशनम् । पिप्पल्यामलकमित्यादौ घनश्लेष्मणीति घनतामापन्नकफे । काकोलीत्यादौ प्रत्येकं युग्मैरिति संबध्यते । शरादिपञ्चमूली तृणपञ्चमूलम् । अभिषुकादय औत्तरापथिका वातपित्तहरा "वातामाभिषुकाक्षोडमुकूलकनिकोचकाः" (सू. अ. २७) इति ग्रन्थोक्ताश्चत्वारो ज्ञेयाः । जीवकादयश्च जीवनीयगणोक्ताः । शर्करादीनां च क्षयोक्तसर्पिर्गुडोक्तमानानुसारेण मानमत्र ज्ञेयम् । शर्करेत्यादौ रसमिति कल्कस्यैव रसम् ॥ ८३–१०७ ॥

बलिनं वमनैरादौ शोधितं कफकासिनम् ।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥ १०८॥
पिप्पलीक्षारिकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥ १०९ ॥
धान्वबैलरसैः स्नेहैस्तिलसर्षपबिल्वजैः ।
मध्वम्लोष्णाम्बुतक्रं वा मद्यं वा निगदं पिबेत् ११०
पौष्करारग्वधं मूलं पटोलं तैर्निशास्थितम् ।
जलं मधुयुतं पेयं कालेष्वन्नस्य वा त्रिषु ॥ १११ ॥

बलिनमित्यादिना कफकासचिकित्सामाह । पिप्पलीक्षारिकैरिति पिप्पलीक्षारसंस्कृतैः । धान्वबैलरसैरिति धन्वजबिलेशयरसैः । कालेष्वन्नस्य च त्रिष्विति भोजनादिमध्यावसानेषु ॥ १०८–१११ ॥

कट्फलं कत्तृणं भार्गीं मुस्तं धान्यं वचाभये ।
शुण्ठीं पर्पटकं शृङ्गीं सुराह्वं च शृतं जले ॥ ११२ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूने श्वासहिक्काज्वरेषु च ॥ ११३ ॥
पाठां शुण्ठीं शटीं मूर्वां गवाक्षीं मुस्तपिप्पलीम् ।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतां पिबेत् ११४
नागरातिविषे मुस्तं शृङ्गीं कर्कटकस्य च ।
हरीतकीं शटीं चैव तेनैव विधिना पिबेत् ॥ ११५ ॥
तैलभृष्टं च पिप्पल्याः कल्काक्षं ससितोपलम् ।
पिबेद्वा श्लेष्मकासघ्नं कुलत्थरससंयुतम् ॥ ११६ ॥
कासमर्दाश्वविट्भृङ्गराजवार्ताकजो रसः ।
सक्षौद्रः कफकासघ्नः सुरसस्यासितस्य च ॥ ११७॥
देवदारु शटी रास्ना कर्कटाख्या दुरालभा ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥११८॥
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥११९॥
पथ्या तामलकी धात्री भद्रमुस्ता च पिप्पली ।
देवदार्वभया मुस्तं पिप्पली विश्वभेषजम् ॥ १२० ॥
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत् ।
चतुरो मधुना लेहान् कफकासहरान् भिषक् १२१
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम् ।
चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ॥ १२२ ॥

मधुहिङ्गुयुतमित्यत्र 'माक्षिकं हिङ्गुसिन्धूत्थ' इत्यादिवचनानुसारेण हिङ्गुमधुनी प्रक्षेप्तव्ये । तेनैव विधिनेति उष्णोदकेन हिङ्गुसैन्धवोपेतं पिबेदित्यर्थः । सुरसस्यासितस्य कृष्णपर्णाशस्य । मधुना लेहानिति अत्रार्धश्लोकोक्ता लेहा ज्ञेयाः ॥ ११२–१२२ ॥

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीबिल्वसुरसव्योषहिङ्गुभिः ॥ १२३ ॥
पेयानुपानं तत् पेयं कासे वातकफात्मके ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ १२४ ॥
इति दशमूलादिघृतम् ।

दशमूलाढके इति दशमूलस्य क्वाथ्यस्याढकमानत्वं, तेन "क्वाथः क्वाथ्यसमो मतः" इति वचनात् क्वाथोऽप्याढकमानो भवति ॥ १२३ ॥ १२४ ॥

समूलफलपत्रायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशटिचित्रकैः ॥ १२५ ॥
सौवर्चलयवक्षारपिप्पलीमूलपौष्करैः ।
वृश्चीरबृहतीपथ्यायवानीदाडिमर्धिभिः ॥ १२६ ॥

१ 'पैत्ते एव अनिले अनुबन्धरूपे ज्ञेयः' इति पा० ।

द्राक्षापुनर्नवाचव्यदुरालम्भाम्लवेतसैः ।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥ १२७ ॥
कल्कैस्तत् सर्वकासेषु हिक्काश्वासेषु शस्यते ।
कण्टकारीघृतं ह्येतत् कफव्याधिनिसूदनम् ॥ १२८ ॥

इति कण्टकारीघृतम् ।

कुलत्थरसयुक्तं वा पञ्चकोलशृतं घृतम् ।
पाययेत् कफजे कासे हिक्काश्वासे च शस्यते ॥१२९॥

इति कुलत्थादिघृतम् ।

कण्टकारीघृते बलादिकल्कद्रव्यस्य मिलित्वा कुडवमानत्वम् ॥ १२५–१२९ ॥

धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम् ।
कोशातकीफलान्मध्यं पिबेद्वा समनःशिलम् १३०

कोशातकी घोषकः ॥ १३० ॥

तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजः ।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ १३१ ॥
वाते कफानुबन्धे तु कुर्यात् कफहरीं क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥१३२॥
आर्द्रे विरूक्षणं, शुष्के स्निग्धं, वातकफात्मके ।
कासेऽन्नपानं कफजे सपित्ते तिक्तसंयुतम् ॥१३३॥

इति कफजकासचिकित्सा ।

तमकः कासोपद्रवरूपः । कफोऽनुबन्धोऽस्येति कफानुबन्धः, तस्मिन् कफानुबन्धे पवने । पित्तानुबन्धयोरित्यत्रापि वातकफयोरनुबन्धत्वं, पित्तस्य तु प्राधान्यम्; अत एव पित्तनाशिनी क्रियोक्ता तत्र । आर्द्रे इति तनुकफे ॥ १३१–१३३ ॥

कासमात्ययिकं मत्वा क्षतजं त्वरया जयेत् ।
मधुरैर्जीवनीयैश्च बलमांसविवर्धनैः ॥ १३४ ॥
पिप्पली मधुकं पिष्टं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाजं च क्षीरमिक्षुरसस्तथा ॥ १३५ ॥
यवगोधूममृद्वीकाचूर्णमामलकाद्रसः ।
तैलं च प्रसृतांशानि तत् सर्वं मृदुनाऽग्निना ॥१३६॥
पचेल्लेहं घृतक्षौद्रयुक्तः स क्षतकासहा ।
श्वासहृद्रोगकार्श्येषु हितो वृद्धेऽल्परेतसि ॥ १३७॥

कासमित्यादिना क्षतजकासचिकित्सामाह । पिप्पल्यादिके लेहे यवादयस्तैलान्ताः प्रत्येकं प्रसृतमानाः ॥ १३४–१३७ ॥

क्षतकासाभिभूतानां वृत्तिः स्यात् पित्तकासिकी ।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम् ॥ १३८ ॥
वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः ।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना ॥ १३९ ॥
हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ।
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनले ॥ १४० ॥

मांसोचितेभ्यः क्षामेभ्यो लावादीनां रसा हिताः ।
तृष्णार्तानां पयश्छागं शरमूलादिभिः शृतम् १४१
रक्ते स्रोतोभ्य आस्याद्वाऽप्यागते क्षीरजं घृतम् ।
नस्यं पानं यवागूर्वा श्रान्ते क्षामे हतानले ॥ १४२ ॥
स्तम्भायामेषु महतीं मात्रां वा सर्पिषः पिबेत् ।
कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥ १४३ ॥
निवृत्ते क्षतदोषे तु कफे वृद्ध उरः[1] क्षते ।
दाल्यते कासिनो यस्य स धूमान्वा पिबेदिमान् १४४
द्वे मेदे मधुकं द्वे च बले तैः क्षौमलक्तकैः ।
वर्तितैर्धूममापीय जीवनीयघृतं पिबेत् ॥ १४५ ॥
मनःशिलापलाशाजगन्धात्वक्क्षीरिनागरैः ।
भावयित्वा पिबेत् क्षौममनु चेक्षुगुडोदकम् ॥१४६॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ।
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनम् ॥ १४७ ॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतैः ।
क्षौमं धूमं पिबेत् क्षीरं शृतं चायोगुडैरनु ॥ १४८ ॥

इति क्षतजकासचिकित्सा ।

वृत्तिरिति चिकित्सा । संसर्गे त्विति वातपित्तादिसंसर्गे । विशेषणमिति चिकित्साविशेषो 'वातपित्तार्दिते' इत्यादिना वक्ष्यमाणो ज्ञेयः । वातपित्तार्दित[2] इत्यादिना क्षतकासे एवावस्थिकीं चिकित्सामाह । जीवनीयं सर्पिर्वातरक्ते वक्ष्यमाणम् । महतीं मात्रामिति अहोरात्रेण परिणमनीयां प्रायोऽष्टपलप्रमाणाम् । निवृत्ते क्षतदोषे इति क्षतव्रणे प्रशान्ते । क्षौमलक्तकैर्वर्तितैरिति यथोक्तौषधेन क्षौमलेपाद्वर्तीकृतैः । पिबेत् क्षौममित्यत्र क्षौमं भावयित्वा धूमं पिबेदित्यर्थः । तित्तिरिप्रतिभोजनमिति तित्तिरिरसानुपानम् । क्षौमं धूमं पिबेदिति क्षौमं दग्ध्वा धूमं पिबेत् । अयोगुडैरिति लोहगुडैः शृतं क्षीरम् ॥ १३८–१४८ ॥

संपूर्णरूपं क्षयजं दुर्बलस्य विवर्जयेत् ।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम् १४९
तस्मै बृंहणमेवादौ कुर्यादग्नेश्च दीपनम् ।
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम् ॥ १५० ॥
शम्पाकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥ १५१ ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ।
( हितं तद्देहबलयोरस्य संरक्षणं मतम् ॥ १५२ ॥ )[3]
पित्ते कफे च संक्षीणे परिक्षीणेषु धातुषु ।
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ १५३ ॥
विदारीभिः कदम्बैर्वा तालसस्यैस्तथा शृतम् ।
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ १५४ ॥

१ 'उरः शिरः' इति पा० । 'क्षते क्षतस्थाने उरः दाल्यते' इति गङ्गाधरः । २ 'वातपित्तावृते' इति पा० । ३ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

शूले सवेदने मेढ्रे पायौ सश्रोणिवंक्षणे ।
घृतमण्डेन मधुनाऽनुवास्यो मिश्रकेण वा ॥ १५५ ॥
जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः ।
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः १५६
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।
कफं, शुद्धैश्च तैः पुष्टिं कुर्यात्सम्यग्वहन्रसः ॥१५७॥

प्रत्याख्यायाचरेत् क्रियामित्यनेन उक्तलक्षणेऽपि क्षयजे कादाचित्कीं सिद्धिं दर्शयति । शम्पाक आरग्वधः । कर्कटकी कर्कटशृङ्गी । तालसस्यं तालफलम् । घृतमण्डो घृतोपरिस्थान-भागः । औष्ण्यादित्यादौ कफमिति च्छेदः । शुद्धैश्च तैरिति शुद्धैः स्रोतोभिः ॥ १४९–१५७ ॥

द्विपञ्चमूलीत्रिफलाचविकाभार्गीचित्रकैः ।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ १५८ ॥
शृतैर्नागरदुःस्पर्शापिप्पलीशटिपौष्करैः ।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् १५९
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः १६०
इति द्विपञ्चमूलादिघृतम् ।

द्विपञ्चमूलीत्यादौ क्षारलवणानां च युक्त्या दानवचनेन स्तोक-मात्रं दानं लवणीकरणप्रयोजनार्थं दर्शयति ॥ १५८–१६० ॥

गुडूचीं पिप्पलीं मूर्वां हरिद्रां श्रेयसीं वचाम् ।
निदिग्धिकां कासमर्दं पाठां चित्रकनागरम् ॥१६१॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत्समम् ।
सिद्धं सर्पिः पिबेद्गुल्मश्वासार्तिक्षयकासनुत् ॥१६२॥
इति गुडूच्यादिघृतम् ।

गुडूचीत्यादौ श्रेयसी रास्ना । तत्सममिति क्वाथसमम् ॥ १६१ ॥ १६२ ॥

कासमर्दाभयामुस्तपाठाकट्फलनागरैः ।
पिप्पलीकटुकाद्राक्षाकाश्मर्यसुरसैस्तथा ॥ १६३ ॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ।
पचेच्छोपज्वरप्लीहसर्वकासहरं शिवम् ॥ १६४ ॥
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाऽप्यवचूर्णितम् ।
द्विगुणे दाडिमरसे विपक्वं व्योषसंयुतम् ॥ १६५ ॥
पिबेदुपरि भक्तस्य यवक्षारघृतं नरः ।
पिप्पलीगुडसिद्धं वा च्छागक्षीरयुतं घृतम् ॥ १६६ ॥
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ।
स्युर्दोषबद्धकोष्ठोरःस्रोतसां च विशुद्धये ॥ १६७ ॥

क्षीरसिद्धैरिति क्षीरस्विन्नैः । यवक्षारसाधितं घृतं यवक्षार-घृतम् ॥ १६३–१६७ ॥

१ 'लशुना' इति पा० ।

हरीतकीर्यवक्वाथद्व्याढके विंशतिं पचेत् ।
स्विन्ना मृदित्वा तास्तस्मिन् पुराणं गुडषट्पलम् १६८
दद्यान्मनःशिलाकर्षं कर्षार्धं च रसाञ्जनात् ।
कुडवार्धं च पिप्पल्याः स लेहः श्वासकासनुत् १६९
इति हरीतकीलेहः ।

श्वाविधः सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।
श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा ॥ १७० ॥
एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम् ।
लिह्यादेतेन विधिना सुरसैरण्डपत्रजम् ॥ १७१ ॥
द्राक्षापद्मकवार्ताकपिप्पलीः क्षौद्रसर्पिषा ।
लिह्यात्त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा ॥ १७२ ॥
चित्रकं त्रिफलाजाजी कर्कटाख्या कटुत्रिकम् ।
द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्याद्दद्याद्गुडेन वा ॥१७३॥
पद्मकं त्रिफलां व्योषं विडङ्गं सुरदारु च ।
बलां रास्नां च तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
सर्वैरेभिः समं चूर्णैः पृथक्क्षौद्रं घृतं सिताम् ।
विमथ्य लेहयेल्लेहं सर्वकासहरं शिवम् ॥ १७५ ॥
जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम् ।
मुस्तैले पद्मकं द्राक्षां द्वे बृहत्यौ वितुन्नकम् ॥१७६॥
सारिवां पौष्करं मूलं कर्कटाख्यां रसाञ्जनम् ।
पुनर्नवां लोहरजस्त्रायमाणां यवानिकाम् ॥ १७७ ॥
भार्गीं तामलकीमृद्धिं विडङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥ १७८ ॥
चूर्णीकृत्य समांशानि लेहयेत् क्षौद्रसर्पिषा ।
चूर्णात्पाणितलं पञ्च कासानेतद् व्यपोहति ॥१७९॥
इति पद्मकादिलेहः ।

एतेन विधिनेति व्योषतैलगुडान्वितम् । वितुन्नकं सुनिष-ण्णकम् । पाणितलं कर्षः ॥ १६८–१७९ ॥

लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ।
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ॥ १८० ॥
स्वरभेदे च कासे च लेहमेतं प्रयोजयेत् ।
पत्रकल्कं घृतैर्भृष्टं तिल्वकस्य सशर्करम् ॥ १८१ ॥
पेया चोत्कारिका च्छर्दितृड्कासामातिसारनुत् ॥
गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान् ।
साभयान् साधयेत्तोये यवागूं तेन चाम्भसा ॥१८२॥
ससर्पिर्लवणां काले हिक्काश्वासे सपीनसे ।
पाण्ड्वामये क्षये शोथे कर्णशूले च दापयेत् ॥१८३॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्वकासभिषग्जितम् १८४

१ 'स्वरोपघाते' इति पा० । २ 'शोषे' इति पा० ।

व्रातघ्नौषधनिष्क्वाथं क्षीरं यूषान् रसानपि ।
वैष्किरप्रतुदान् वैलान् दापयेत् क्षयकासिने ॥१८५॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत् ॥ १८६ ॥

पत्रकल्कं तिल्वकस्येति संबन्धः । उत्कारिकेति 'पत्रकल्कं' इत्यादिनोक्ता उत्कारिका । गण्डीरः शमठः । गौरामलक आर्द्रामलकः । साम्ल इति दाडिमादियोगादम्लः ॥ १८०-१८६ ॥

दीपनं बृंहणं चैव स्रोतसां च विशोधनम् ।
व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं हितं भवेत् १८७
सन्निपातभवोऽप्येष क्षयकासः सुदारुणः ।
सन्निपातहितं तस्मात् सदा कार्यं भिषग्जितम् ॥१८८॥
दोषानुबलयोगाच्च हरेद्रोगबलाबलम् ।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम् ॥ १८९ ॥

व्यत्यासादिति क्रियापरिवर्तनात् । क्षयजकासस्य सन्निपातोद्भव इत्यादिना सान्निपातिकत्वमभिधाय, दोषोद्रेकविशेषानुबन्धरूपेण चिकित्साविशेषसूत्रमाह—दोषानुबन्धयोगाच्च हरेद्रोगबलाबलमिति; अत्र 'बुद्ध्वा' इत्यध्याहार्यम् । दोषाणामनुबन्धः उत्कर्षापकर्षादिना संबन्धः, तदपेक्षो योगः; अत्र पञ्चमी हेतौ; तेन दोषानुबन्धरूपेण भेषजयोगेन रोगस्य क्षयकासस्य बलवन्तमबलं च दोषं हरेत् । अन्ये तु 'दोषानुबन्धयोगाच्च कुर्याद्रोगबलाबलम्' इति पठन्ति । तत्र दोषानुबन्धयोगाद्रोगबलाबलं बुद्ध्वा कुर्याद्भिषग्जितमिति संबन्धः । कासेष्विति वातपित्तकफक्षतक्षयजेषु ॥ १८७-१८९ ॥

भोज्यं पानानि सर्पींषि लेहाश्च सह पानकैः ।
क्षीरं सर्पिर्गुडा धूमाः कासभैषज्यसंग्रहः ॥ १९० ॥

विस्तरोक्तं कासभेषजं संगृह्णाति—भोज्यमित्यादि ॥ १९० ॥

तत्र श्लोकः—

संख्या निमित्तं रूपाणि साध्यासाध्यत्वमेव च ।
कासानां भेषजं प्रोक्तं गरीयस्त्वं च कासिनः १९१

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने कासचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

संख्येत्यादिरध्यायार्थसंग्रहः सुगमः ॥ १९१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने कासचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

१ 'हरेद्दोषबलाबलम्' इति पा० । २ 'लेहाः पाचनकानि च' इति पा० ।

## एकोनविंशोऽध्यायः ।

अथातोऽतीसारचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

अग्निबलहानिसामान्याद् ग्रहणीदोषचिकित्सितमनु अतीसारचिकित्सिते वक्तव्ये उपोद्घातायातैः पाण्डुरोगादिभिर्व्यवधानं कृतं, संप्रति तु यथोक्तोपोद्घातायातपाण्डुरोगादीनभिधाय प्रकृतमेवातीसारचिकित्सितमुच्यते ॥ १ ॥ २ ॥

भगवन्तं खल्वात्रेयं कृताह्निकं हुताग्निहोत्रमासीनमृषिगणपरिवृतमुत्तरे हिमवतः पार्श्वे विनयादुपेत्याभिवाद्य चाग्निवेश उवाच—भगवन् ! अतीसारस्य प्रागुत्पत्तिनिमित्तलक्षणोपशमनानि प्रजानुग्रहार्थमाख्यातुमर्हसीति ॥ ३ ॥

प्रागुत्पत्तिरिति प्राक्कालोत्पत्तिः ॥ ३ ॥

अथ भगवान् पुनर्वसुरात्रेयस्तदग्निवेशवचनमनुनिशम्योवाच—श्रूयतामग्निवेश ! सर्वमेतदखिलेन व्याख्यायमानम् । आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुर्नालम्भाय प्रक्रियन्ते स्म । ततो दक्षयज्ञं प्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुनृगशर्यात्यादीनां क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमवापुः । अतश्च प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण यजता पशूनामलाभाद्गवामालम्भः प्रवर्तितः । तं दृष्ट्वा प्रव्यथिता भूतगणाः, तेषां चोपयोगादुपाकृतानां गवां गौरवादौष्ण्यादसात्म्यत्वादशस्तोपयोगाच्चोपहताग्नीनामुपहतमनसां चातीसारः पूर्वमुत्पन्नः पृषध्रयज्ञे ॥ ४ ॥

आदिकाले इति कृतयुगे । समालभनीया इति मन्त्रेण अभिमन्त्र्यैव परित्याज्या बभूवुः; न आलम्भार्थं प्रक्रियन्ते स्म इति आलम्भाय मारणाय न प्रक्रियन्ते स्म न संस्क्रियन्ते स्म इत्यर्थः । नरिष्यन्नाभागादिमनुपुत्रेष्वेकमेव मनुपुत्रमुदाहार्य यद्यादिशब्दः क्रियते तदा तेषां क्वचिदन्यत्र समुदायेन पाठात् बुद्धिभ्रमः स्यात्, तेन साक्षाज्ज्ञानार्थं कतिपये पठिताः; अपठिताश्चादिशब्देन प्रकारवाचिना इतिहासज्ञानार्थं पुराणेषूह्येयाः । पशूनामभ्यनुज्ञानादिति पशूनामेव प्रेरणया; प्रेरणा चैषां विशिष्टापूर्वोत्पादार्थमेवोच्यते आगमेषु—'क्रत्वर्थहिंसायां वधकवध्ययोरुभयोरपि महत्पुण्यमुत्पद्यते' इति; किंवा पशूनामेवाभ्यनुज्ञानादिति वेदे पशूनां वध्यत्वेनाभ्यनुज्ञानात् । प्रोक्षणमिति विधिपूर्वकं मारणम् । पृषध्रः राजविशेषः । दीर्घसत्रेणेति दीर्घकाल-

---

१ 'अग्निबलहानिजन्यत्वसामान्यात्' इति पा० । २ गङ्गाधरस्तु अस्यामे 'स्वाद्वपयोगाच' इत्यधिकं पठति । ३ 'नालम्भाय' इति पा० ।

निर्वलेन। व्यथिता इति अदृष्टपूर्वं गवां वधं दृष्ट्वा दुःखिताः सन्तः। उपाकृतानामिति अभिमन्त्र्य हतानाम्। उक्तं हि—"उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः" इति। अनेन च प्रागुत्पत्तिनिदर्शनेन मानसोपघातो गुर्वादिसेवा चातीसारकारणं भवतीत्युपदर्श्यते ॥ ४ ॥

अथावरकालं वातलस्य वातातपव्यायामातिमात्रनिषेविणो रूक्षाल्पप्रमिताशिनस्तीक्ष्णमद्यव्यवायनित्यस्योदावर्तयतश्च वेगान् वायुः प्रकोपमापद्यते, पक्ता चोपहन्यते; स वायुः कुपितोऽग्नावुपहते मूत्रस्वेदौ पुरीषाशयमुपहृत्य, ताभ्यां पुरीषं द्रवीकृत्य, अतीसाराय प्रकल्पते। तस्य रूपाणि—विज्जलमामं विप्लुतमवसादि रूक्षं द्रवं सशूलमामगन्धमीषच्छब्दमशब्दं वा विवद्धमूत्रवातमतिसार्यते पुरीषं, वायुश्चान्तःकोष्ठे सशब्दशूलस्तिर्यक् चरति विवद्ध इत्यामातिसारो वातात्। पक्वं वा विवद्धमल्पाल्पं सशब्दं सशूलफेनपिच्छापरिकर्तिकं हृष्टरोमा विनिःश्वसन् शुष्कमुखः कट्यूरुत्रिकजानुपृष्ठपार्श्वशूली भ्रष्टगुदो मुहुर्मुहुर्विग्रथितमुपवेश्यते पुरीषं वातात्; तमाहुरनुग्रथितमित्येके, वातानुग्रथितवर्चस्त्वात् ॥ ५ ॥

अथेत्यादिना वातातीसारादीनां पृथङ्निमित्तलक्षणे ब्रूते। वातलस्येत्यनेन वातप्रकृतिं प्राप्य वातातपादीनां वातातीसारजनने सामर्थ्यातिशयो दर्श्यते; तेनान्यप्रकृतेरपि वातातपादयोऽतीसारस्य कारणं भवन्तीति ज्ञेयम्। एवं पित्तलश्लेष्मलशब्दयोरपि तात्पर्यं व्याख्येयम्। प्रमिताशनम् अतीतकालाशनम्। वेगानुदावर्तयत इति उद्वृत्तमावर्तयतो वेगानित्यर्थः। पुरीषाशयमुपहृत्येति पक्वाशयं नीत्वा। ताभ्यामिति मूत्रस्वेदाभ्याम्। तस्य रूपाणीत्यादिना आमवातातीसारलक्षणमाह। आममिति आमानुगतम्। विप्लुतमिति प्रसरणशीलम्। अवसादीति भूमौ पतितं लीनं भवति। पक्वं वेत्यादिना पक्ववातातिसारमाह। विनिःश्वसन्निति शब्दं कुर्वन्। तमाहुरनुग्रथितमिति विग्रथितपुरीषातिसारावस्थां प्राप्तं वातातिसारम्। वातग्रथितवर्चस्त्वादित्यनेन यत्र पक्ववातातिसारेऽपि वातानुग्रथितवर्चस्त्वं न भवति नासावनुग्रथितसंज्ञ इति दर्शयति ॥ ५ ॥

पित्तलस्य पुनरम्ललवणकटुकक्षारोष्णतीक्ष्णातिमात्रनिषेविणः प्रतताग्निसूर्यसंतापोष्णमारुतोपहतगात्रस्य क्रोधेर्ष्याबहुलस्य पित्तं प्रकोपमापद्यते। तत् प्रकुपितं द्रवत्वादूष्माणमुपहत्य पुरीषाशयविसृतमौष्ण्याद् द्रवत्वात् सरत्वाच्च भित्त्वा पुरीषमतिसाराय प्रकल्पते। तस्य रूपाणि—हारिद्रं हरितं नीलं कृष्णं रक्तपित्तोपहितमतिदुर्गन्धमतिसार्यते पुरीषं, तृष्णादाहस्वेदमूर्च्छाशूलब्रध्नसंतापपाकपरीत इति पित्तातिसारः ॥ ६ ॥

पित्तलस्येत्यादिना पित्तातिसारमाह। द्रवत्वादूष्माणमुपहत्येति यद्यपि पित्तमुष्णमग्नेः समानतया वर्धकं भवतीति युज्यते, तथाऽपि द्रवत्वादूष्माणमग्निरूपं हन्तीत्यर्थः। पुरीषाशयविसृतमिति पुरीषाशयगतं पित्तम्। ब्रध्नः गुदः ॥ ६ ॥

श्लेष्मलस्य तु गुरुमधुरशीतस्निग्धोपसेविनः संपूरकस्याचिन्तयतो दिवास्वप्नपरस्यालसस्य श्लेष्मा प्रकोपमापद्यते। स स्वभावाद् गुरुमधुरशीतस्निग्धः स्रस्तोऽग्निमुपहत्य सौम्यस्वभावात् पुरीषाशयमुपहत्योपक्लेद्य पुरीषमतिसाराय कल्पते। तस्य रूपाणि—स्निग्धं श्वेतं पिच्छिलं तन्तुमदामं गुरु दुर्गन्धं श्लेष्मोपहितमनुवद्धशूलमल्पाल्पमभीक्ष्णमतिसार्यते सप्रवाहिकं, गुरूदरगुदवस्तिवंक्षणदेशः कृतेऽप्यकृतसंज्ञः सलोमहर्षः सोत्क्लेशो निद्रालस्यपरीतः सदनोऽन्नद्वेषी चेति श्लेष्मातिसारः ॥ ७ ॥

श्लेष्मलस्येत्यादिना श्लेष्मातिसारमाह। संपूरकस्येति अतिमात्राशनशीलस्य। श्लेष्मणोऽग्न्युपघाते हेतुमाह—सौम्यस्वभावादिति; सौम्यस्याग्नेर्विरुद्धत्वादुपघातं करोतीति युक्तमेवेति भावः। पुरीषाशयमुपहत्येति पुरीषाशयं गत्वा, हन्तेर्गतिहिंसार्थकत्वादत्र गत्यर्थता; किंवा पुरीषाशयशब्देन स्थानेन स्थानिन उपचारात् पुरीषमेवोच्यते, यथा—'मञ्चाः क्रोशन्ति' इतिवत्, ततश्च पुरीषमुपहत्येति संबन्धः। कृतेऽप्यकृतसंज्ञ इति कृतेऽपि वेगे न वेगं कृतं बुध्यत इत्यर्थः। अत्र च पित्तातिसारे श्लेष्मातिसारे च सामतालक्षणं यद्यपि नोक्तं, तथाऽपि सामवातातीसारसंबन्धकृतविज्जलत्वामगन्धित्वप्रकारैर्लक्षणैस्तयोरप्यामातिसाररूपाऽवस्था ज्ञेयैव। तथाहि चिकित्सावसरे 'पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयं विदित्वा' इत्यादिनाऽऽमातिसारे पृथक् चिकित्सां वक्ष्यति, श्लेष्मातिसारे तु सामे निरामे च रूक्षोष्णादिरूपा चिकित्सा समानैवेति कृत्वा पृथगामश्लेष्मातीसारचिकित्सा नोक्ता; क्षारपाणिना सर्वातिसाराणामेव सामता पृथगुक्ता; वचनं हि—"वातातिसारः सामश्च सशूलः फेनिलस्तनुः। श्यावः सशब्दो दुर्गन्धो

१ 'योऽभिधार्य' इति पा०। २ 'आमतां गतं' इति पा०।

१ 'रक्तपित्तोपगतं' इति पा०।

विवद्धोऽल्पाल्प एव च ॥ एवं पित्तकफे साममतीसारं विनिर्दिशेत्" इति । अत्रापि प्रास्तयोगिकायां सिद्धौ (सि.अ.८) सर्वदोषाणामेवामसंबन्धात् पृथग्भेदा उक्ताः ॥ ७ ॥

**अतिशीतस्निग्धरूक्षोष्णगुरुखरकठिनविषमविरुद्धासात्म्यभोजनादभोजनात् कालातीतभोजनाद् यत्किंचिदभ्यवहरणात् प्रदुष्टमद्यपानीयपानादतिमद्यपानादसंशोधनात् प्रतिकर्मणां विषमगमनादनुपचाराज्ज्वलनादित्यपवनसलिलातिसेवनादस्वप्नादतिस्वप्नाद्वेगविधारणादृतुविपर्ययादयथावलमारम्भाद्भयशोकचित्तोद्वेगातियोगात् कृमिशोषज्वरार्शोविकारातिकर्षणाद्वा व्यापन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्य पक्वाशयमनुप्रविश्यातीसारं सर्वदोषलिङ्गं जनयन्ति ॥ ८ ॥**

अतिशीतेत्यादिना त्रिदोषजातीसारमाह । अत्र च शीतादीनां यथासंभवं वातादिकर्तृत्वं ज्ञेयं; किंवा सर्वेषामेव त्रिदोषकर्तृत्वं ज्ञेयम् । उक्तं हि—"शमप्रकोपौ सर्वेषां दोषाणामग्निसंश्रितौ" (चि. अ. ५) इति । यत्किंचिदभ्यवहरणादिति पथ्यापथ्यभोजनात् । अनुपचारादिति प्रतिकर्मणामेवासम्यगुपचारादित्यर्थः । सलिलातिसेवनादित्यत्र अवगाहादिना बाह्यसेवनं सलिलस्योच्यते, अतिपानं तु प्रागेवोक्तम् । व्यापन्नाग्नेरिति वचनाद्यथोक्तहेतूनामग्निवधद्वारैव प्रायस्त्रिदोषकर्तृत्वं दर्शयति ॥ ८ ॥

**अपि च शोणितादीन् धातूनतिप्रकृष्टं दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णानुपदर्शयन्ति । तत्र शोणितादिषु धातुष्वतिप्रदुष्टेषु[1] हारिद्रहरितनीलमाञ्जिष्ठमांसधावनसन्निकाशं रक्तं कृष्णं श्वेतं वराहमेदःसदृशमनुबद्धवेदनमवेदनं वा समासव्यत्यासादुपवेश्यते शकृद् ग्रथितमामं सकृत्, सकृदपि पक्वमनतिक्षीणमांसशोणितबलो मन्दाग्निर्विहतमुखरसश्च; तादृशमातुरं कृच्छ्रसाध्यं विद्यात् । एभिर्वर्णैरतिसार्यमाणं सोपद्रवमातुरमसाध्योऽयमिति प्रत्याचक्षीत; तद्यथा—पक्वशोणिताभं[2] यकृत्खण्डोपमं मेदोमांसोदकसन्निकाशं दधिघृतमज्जतैलवसाक्षीरवेसवाराभमतिनीलमतिरक्तमतिकृष्णमुदकमिवाच्छं पुनर्मेचकाभमतिस्निग्धं हरितनीलकपायवर्णं कर्बुरमाविलं पिच्छिलं तन्तुमदामं चन्द्रकोपगतमतिकुणपपूतिपूयगन्ध्यामाममत्स्यगन्धि मक्षिकाकान्तं[3] कुथितबहुधातुस्रावमल्पपुरीषमपुरीषं वाऽतिसार्यमाणं तृष्णादाहज्वरभ्रमतमकहिक्काश्वासानुबन्धमतिवेदनमवेदनं वा स्रस्तपक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणवलमांसशोणितं सर्वपर्वास्थिशूलिनमरोचकारतिप्रलापसंमोहपरीतं सहसोपरतविकारमतिसारिणमचिकित्स्यं विद्यात् । इति सन्निपातातिसारः ॥ ९ ॥**

अपिचेत्यादिना विकृतिविषमसमवायारब्धत्रिदोषजलक्षणमाह । अतिप्रकृष्टं प्रदूषयन्त इति अतिप्रकृष्टं यथा भवति तथा प्रदूषयन्त इत्यर्थः । मांसधावनं मांसप्रक्षालनोदकम् । समासव्यत्यासादुपवेश्यत इति समासः यथोक्तलक्षणानां मेलकः, व्यत्यासः अमेलकः । सकृदिति कदाचित् । विगतरसं मुखं यस्य स विरसमुखः । एभिः वक्ष्यमाणैः । वेसवाराभं वेसवारसदृशं; तल्लक्षणं च "निरस्थि पिशितं पिष्टं" (सु.सू.अ.४६) इत्यादिनोक्तम् । मेचकाभमिति स्निग्धकृष्णम् । मक्षिकाकान्तमिति मक्षिकाप्रियं, 'मक्षिकाक्रान्तं' इति पाठे मक्षिकापरीतमित्यर्थः । तृष्णेत्यादिना सोपद्रवमित्यनेन सूचितानुपद्रवानाह । मुक्तनालमिति मुक्तगुदम् । सहसोपरतविकारत्वं यद्यपि रिष्टे संशयितमरणमुक्तं, तथाऽपीहातीसारं प्राप्य निश्चितमरणज्ञापकत्वेनोच्यते ॥ ९ ॥

**तमसाध्यतामसंप्राप्तं चिकित्सेद् यथाप्रधानोपक्रमेण हेतूपशयदोषविशेषपरीक्षया चेति ॥ १० ॥**

यथाप्रधानोपक्रमेणेति दोषत्रये यः प्रधानो भवति तस्योपक्रमेणेत्यर्थः । हेत्वादिपरीक्षा चेहोत्तरकालभाविनी, तेनात्र विशिष्टा चिकित्सैवोच्यते ॥ १० ॥

**आगन्तू द्वावतीसारौ मानसौ भयशोकजौ ।**
**तत्तयोर्लक्षणं वायोर्यदतीसारलक्षणम् ॥ ११ ॥**

आगन्तू इत्यादिना भयशोकजावतीसारौ प्राह । आगन्तू इति आगन्तुहेतुजनितभयशोकजौ । मानसाविति मानसदोषभयशोकजनितौ । एतेन मानसत्वमागन्तुत्वं चानयोर्न विरोधि भवति । अनयोर्लक्षणमतिदेशेनाह—तत्तयोर्लक्षणमित्यादिना ११

**मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति ।**
**तयोः क्रिया वातहरी हर्षणाश्वासनानि च ॥ १२ ॥**
**इत्युक्ताः षडतीसाराः, साध्यानां साधनं त्वतः ।**
**प्रवक्ष्याम्यनुपूर्वेण यथावत्तन्निबोधत ॥ १३ ॥**

कस्मात् पुनर्वातातिसारलक्षणमनयोर्भवतीत्याह—मारुत इत्यादि । यस्माद् भयशोकजनितोऽत्र मारुतः कारणं भवति, तस्माद्वातातीसारलक्षणानि भवन्तीति युक्तमित्यर्थः । न चानयोर्वातजन्यत्वेन वातजलक्षणयुक्तत्वेन वातजेनैव ग्रहणमस्त्विति वाच्यं; यतोऽनयोर्वातजाद्भिन्नाऽपि चिकित्सा भविष्यति हर्षणाश्वासनरूपा, चिकित्साभेदार्थमेव व्याधीनां भेदोऽभिधीयते । किंच, लक्षणभेदोऽप्यत्र 'मारुतः शीघ्रं हि परिकुप्यति' इत्यनेनोक्तः । यतो भयशोकजेऽतीसारे शीघ्रकारी वायुर्भवतीति शीघ्रं कुप्यतीति पदेनोच्यते; तेन निदानानन्तरं

१ '°नतिप्रदुष्टान्' इति पा० । २ 'कायशोणिताभं' इति पा० । ३ 'मक्षिकाक्रान्तं' इति पा० ।

झटिति उत्पाद एवात्र विशिष्टमपि लक्षणम्। सन्निपातातिसारे भयशोकौ कारणत्वेनोक्तौ, तौ हि हेत्वन्तरसहितौ तत्र कारणं भवत इति नैककारणता त्रिदोषजभयशोकजानाम्। भयशोकजयोश्च यद्यपि तुल्यं लक्षणमिहोक्तं, तथाऽपि चिकित्साभेदात्तयोर्भेद उक्तः; तथाहि—भयजे आश्वासनं, शोकजे हर्षणमिति चिकित्साभेदः। सुश्रुते तु—"तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पोष्मा वै वह्निमाविश्य जन्तोः" ( सु. उ. त. अ. ४० ) इत्यादिना शोकजः प्रबन्धेनोक्तः, स इहोक्तशोकजादन्य एव विशिष्टहेतुजन्यः, इह त्वसौ सान्निपातिकेऽवरुद्धो ज्ञेयः। तथाहि—तत्र बाष्पोष्मणोऽपि कारणत्वमुक्तं, तेन शोकानशनतो वायुः बाष्पोष्मणा च पित्तकफावपि तत्र कारणत्वेन दर्शितौ, अत एव च तस्यासाध्यत्वमपि तत्रोक्तम्; अत्रापि च त्रिदोषजे शोकोऽपि कारणत्वेनोक्तः। यस्तु सुश्रुते "अन्नाजीर्णात् प्रद्रुताः" (सु. उ. त. अ. ४०) इत्यादिनाऽजीर्णजः पृथगुक्तः, तस्येहोक्तत्रिदोषजेऽवरोधो व्यक्त एव; यतस्तत्रैव 'दोषाः' इति बहुवचनेन अन्नाजीर्णस्य त्रिदोषकारणत्वमुक्तं, इहापि च 'व्यापन्नेऽग्नौ' इत्यनेन अग्निमान्द्यजनिताजीर्णस्य त्रिदोषजातिसारे कारणत्वमुक्तमेव; तेन सुश्रुतोक्तसर्वातिसारावरोधोऽत्र ज्ञेयः ॥ १२ ॥ १३ ॥

**दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।**
**अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्तयेत् ॥ १४ ॥**
**न तु संग्रहणं देयं पूर्वमामातिसारिणे।**
**विबध्यमानाः प्राग्दोषा जनयन्त्यामयान् बहून् ॥ १५ ॥**
**दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा।**
**शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ॥ १६ ॥**
**तस्मादुपेक्षेतोत्क्लिष्टान् वर्तमानान् स्वयं मलान्।**
**कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्तिनीम् ॥ १७ ॥**
**तया प्रवाहिते दोषे प्रशाम्यत्युदरामयः।**
**जायते देहलघुता जठराग्निश्च वर्धते ॥ १८ ॥**
**प्रमथ्यां मध्यदोषाणां दद्याद्दीपनपाचनीम्।**
**लङ्घनं चाल्पदोषाणां प्रशस्तमतिसारिणाम् ॥ १९ ॥**

दोषाः सन्निचिता इत्यादिना चिकित्सामाह। विदग्धशब्देनात्रापक्वाहारवाचिना चतुर्विधमप्यामं, विदग्धं, विष्टब्धं, रसशेषं चाजीर्णं गृह्यते। संप्रवर्तयेदित्यनेन प्रवर्तमानस्योपेक्षया प्रवर्तनं, तथा स्तोकं वहतां विरेचनयोगात् प्रवर्तनं; यद्वक्ष्यति— 'कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्तिनीम्' इति। न तु संग्रहणं पूर्वं देयमामातिसारिणे इत्यत्र पूर्वमिति विशेषणेनोत्तरकालं देयमामातीसारे संग्रहणं दर्शयति। प्रथमं चामातीसारस्योपेक्षया विरेचनदानेन प्रवर्तनमुक्तमिति विरोधे इयं व्यवस्था—यत् प्रवृद्धे आमे बलवति च पुरुषे प्रवर्तनमेव कर्तव्यं, यदा तु दुर्बलः पुमान् क्षीणश्चामस्तदा प्रथममुपेक्षया प्रवर्तनं कृत्वा संग्रहणं कर्तव्यं; तस्यां ह्यवस्थायामसंग्रहणे आतुरस्य बलभ्रंशान्मरणमेव स्यात्। अन्ये तु पूर्वं संग्रहणं न देयमिति प्रधानमम्बष्ठाशाल्मलकुटजत्वगादिसंग्रहणं न देयं, मुस्तोदीच्यादि तु पाचनसंग्रहणं देयमिति वर्णयन्ति। इयं चामातिसारचिकित्सा सर्वामातिसाराणां साधारणी ज्ञेया। कृच्छ्रं वा वहतामिति सविबन्धं वहताम्। प्रमथ्यामिति पाचनदीपनीयं कषायं; प्रमथ्याशब्दो हि वृद्धपरंपरया पाचनदीपनकषाये वैद्यकशास्त्रे परिभाषितः श्रूयते; यथा—विडङ्गकषायः शैखरिककषायशब्देन वैद्यैरुच्यते। बहुदोषे प्रवर्तनं, तथा मध्यदोषे प्रमथ्योक्ता, अल्पदोषे च सामे प्रथमकर्तव्यमाह—लङ्घनमित्यादि ॥ १४–१९ ॥

**पिप्पली नागरं धान्यं भूतीकमभया वचा।**
**ह्रीवेरं भद्रमुस्तानि बिल्वं नागरधान्यकम् ॥ २० ॥**
**पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका।**
**तिस्रः प्रमथ्या विहिताः श्लोकार्धैरतिसारिणाम् ॥**
**वचाप्रतिविषाभ्यां वा मुस्तपर्पटकेन वा।**
**ह्रीवेरशृङ्गवेराभ्यां पक्वं वा पाययेज्जलम् ॥ २२ ॥**

तिस्रः प्रमथ्या इति यथाक्रमं कफपित्तवातेषु विभज्य देया इति वदन्ति; तथा वचाप्रतिविषादिविहितानि त्रीण्यपि जलानि कफपित्तवातेषु यथाक्रमं वदन्ति। षडङ्गविधिनाऽत्र जलसाधनं ज्ञेयम् ॥ २०–२२ ॥

**युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत्।**
**तथा स शीघ्रमाप्नोति रुचिमग्निबलं बलम् ॥ २३ ॥**
**तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा।**
**सुरया मधुना चादौ यथासात्म्यमुपाचरेत् ॥ २४ ॥**
**यवागूभिर्विलेपीभिः खडैर्यूषै रसौदनैः।**
**दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम् ॥ २५ ॥**

युक्तेऽन्नकाले इति सम्यग्बुभुक्षाकाले। अवन्तिसोमं काञ्जिकम्। काञ्जिकतक्रादीनां च द्रवाणां तर्पणालोडनार्थमिहाभिधानम्। यवागूर्विरलद्रवा विलेपी बहुसिक्था च; । दीपनग्राहिगणौ षड्विरेचनशताश्रितीयोक्तौ। अतः परमिति यवाग्वाद्युपचारानन्तरम् ॥ २३–२५ ॥

**शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम्।**
**बलां श्वदंष्ट्रां बिल्वानि पाठां नागरधान्यकम् ॥२६॥**
**शटीं पलाशं हपुषां वचां जीरकपिप्पलीम्।**
**यवानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥२७॥**
**वृक्षाम्लं दाडिमाम्लं च सहिङ्गु विडसैन्धवम्।**
**प्रयोजयेदन्नपाने विधिना सूपकल्पितम् ॥ २८ ॥**
**वातश्लेष्महरो ह्येष गणो दीपनपाचनः।**
**ग्राही बल्यो रोचनश्च तस्माच्छस्तोऽतिसारिणाम् ॥**

१ 'आमजः' इति पा०।

शालिपर्ण्यादिना यवाग्वादिसंस्कारद्रव्याण्याह ॥२६-२९॥

आमे परिणते यस्तु विवद्धमतिसार्यते ।
सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकम् ॥ ३० ॥
यूषेण मूलकानां तं बदराणामथापि वा ।
उपोदिकायाः क्षीरिण्या यवान्या वास्तुकस्य वा ॥
सुवर्चलायाश्चञ्चोर्वा शाकेनावल्गुजस्य वा ।
शट्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भटस्य वा ॥
लोणिकायाः सपाठायाः शुष्कशाकेन वा पुनः ।
दधिदाडिमसिद्धेन बहुस्नेहेन भोजयेत् ॥ ३३ ॥

सप्रवाहिकमित्यत्र प्रवाहिकालक्षणं "वायुर्विवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य । प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः" (सु. उ. तं. अ. ४०) इत्यनेन सुश्रुतोक्तं ज्ञेयम् । क्षीरिणी दुग्धिका, सुवर्चला सूर्यभक्ता, चञ्चुः नाडीचः, कर्कारुः कूष्माण्डभेदः, चिर्भटः कर्कटी, लोणिका खनामख्याता; शुषा कासमर्दः, रूक्षदेशजं शाकमित्येके ॥ ३०-३३॥

कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लस्नेहाढ्यः खडो हन्यात् प्रवाहिकाम् ॥
यवानां मुद्गमाषाणां शालीनां च तिलस्य च ।
कोलानां बालबिल्वानां धान्ययूषं प्रकल्पयेत् ॥३५॥
ऐकध्यं यमके भृष्टं दधिदाडिमसारिकम् ।
वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३६ ॥
दध्नः सरं वा यमके भृष्टं सगुडनागरम् ।
सुरां वा यमके भृष्टां व्यञ्जनार्थे प्रदापयेत् ॥ ३७ ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ।
लोपाकरसमम्लं वा स्निग्धाम्लं कच्छपस्य वा ॥३८॥
बर्हितित्तिरिदक्षाणां वर्तकानां तथा रसाः ।
स्निग्धाम्लाः शालयश्चाग्र्या वर्चःक्षयरुजापहाः ३९
अन्तराधिरसं पूत्वा रक्तं मेषस्य चोभयम् ।
पचेद्दाडिमसाराम्लं सधान्यस्नेहनागरम् ॥ ४० ॥
ओदनं रक्तशालीनां तेनाद्यात् प्रपिबेच्च तत् ।
तथा वर्चःक्षयकृतैर्व्याधिभिर्विप्रमुच्यते ॥ ४१ ॥

कल्कः स्यादित्यादिना खडः । धान्ययूषमिति धान्यप्रधानं यूषं यथोक्तमेव । यमके इति घृततैले । दधिदाडिमसाराभ्यां संस्कृतं दधिदाडिमसारिकम् । शालीनां यद्यपि बद्धवर्चस्त्वमुक्तं, तथाऽपीह खडयूषरसविशेषयुक्तानां संयोगशक्त्या वर्चःक्षये हितत्वं दर्शयन्नाह—स्निग्धाम्लाः शालयश्चाग्र्या वर्चःक्षयरुजापहा इति । तेनाद्यात् प्रपिबेच्च तमिति उक्तान्तराधिरसाधिकृतेन द्रवेग संधीयाद्यान पृथक् च द्रवं पिबेत् । वर्चःक्षयकृतैः मुखशोषदौर्बल्योदावर्तादिभिः ॥ ३४-४१ ॥

१ 'भोजनं' इति पा० ।

गुदनिःसरणे शूले पानमम्लस्य सर्पिषः ।
प्रशस्यते निरामाणामथवाऽप्यनुवासनम् ॥ ४२ ॥
चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्कथितं पेयं गुदभ्रंशरुजापहम् ॥ ४३ ॥

इति चाङ्गेरीघृतम् ।

सचव्यपिप्पलीमूलं सव्योपविडदाडिमम् ।
पेयमम्लं घृतं युक्त्या सधान्याजाजिचित्रकम् ॥४४॥

इति गुदभ्रंशे चव्यादिघृतम् ।

सूत्रितमम्लघृतमाह—चाङ्गेरीत्यादि । अत्र चाङ्गेरीरसकोलरसदध्नां द्रवत्वं, नागरक्षारयोश्च कल्कत्वम् । पेयमम्लं घृतमित्यत्र अम्लार्थमनन्तरोक्तमेव द्रवं चाङ्गेरीस्वरसादि देयं, चव्यादयश्च दश कल्काः; उक्तं च तन्त्रान्तरे—"पञ्चकोलविडाजाजीधान्यदाडिमवेतसैः । पचेदम्लं घृतं तद्वन्नागरक्षारसंयुतम्" इति ॥ ४२-४४ ॥

दशमूलोपसिद्धं वा सबिल्वमनुवासनम् ।
शटीशताह्वाबिल्वैर्वा वचया चित्रकेण वा ॥ ४५ ॥

इति गुदभ्रंशेऽनुवासनम् ।

दशमूलोपसिद्धमित्यादौ अनुवासनमिति अनुवासनस्नेहः । अत्रानुवासने स्नेहस्तु प्रायोदर्शनात्तैलमेव; अन्ये तु घृतस्य प्रक्रान्तत्वाद्घृतमेवाहुः । शटीत्यादिनाऽप्यनुवासनस्नेहत्रयमुच्यते ४५

स्तब्धभ्रष्टगुदे पूर्वं स्नेहस्वेदौ प्रयोजयेत् ।
सुस्विन्नं तं मृदूभूतं पिचुना संप्रवेशयेत् ॥ ४६ ॥

पिचुना संप्रवेशयेदिति पिचुनाऽऽच्छादितं पीडयित्वा प्रवेशयेत् । पिचुः स्थूलकर्पटिका ॥ ४६ ॥

विवद्धवातवर्चास्तु बहुशूलप्रवाहिकः ।
सरक्तपिच्छस्तृष्णार्तः क्षीरसौहित्यमर्हति ॥ ४७ ॥
यमकस्योपरि क्षीरं धारोष्णं वा पिबेन्नरः ।
शृतमेरण्डमूलेन बालबिल्वेन वा पयः ॥ ४८ ॥
एवं क्षीरप्रयोगेण रक्तं पिच्छा च शाम्यति ।
शूलं प्रवाहिका चैव विबन्धश्चोपशाम्यति ॥ ४९ ॥

सौहित्यं तृप्तिः ॥ ४७-४९ ॥

पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत् । तृष्यतस्तु मुस्तपर्पटकोशीरसारिवाचन्दनकिराततिक्तकोदीच्यवारिभिरुपचारः । लङ्घितस्य चाहारकाले बलातिबलासूर्पपर्णीशालपर्णीपृश्निपर्णीबृहतीकण्टकारिकाशतावरीश्वदंष्ट्रानिर्यूहसंयुक्तेन यथासात्म्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः । मुद्गमसूरहरेणुमकुष्ठकाढकीयूषैर्वा लावकपिञ्जलशशहरिणैणकालपुच्छकरसैरीषदम्लैरन-

१ 'पुनः' इति पा० ।

म्लैर्वा क्रमशोऽग्निं सन्धुक्षयेत् । अनुबन्धे त्वस्य दीपनीयपाचनीयोपशमनीयसंग्रहणीयान् योगान् संप्रयोजयेदिति ॥ ५० ॥

आमान्वयमिति आमयुक्तम्। लङ्घनपाचनाभ्यामुपाचरेदित्यनेन यत् पूर्वमामातिसारे सामान्यविधानमुक्तं तदिह नानुमन्यते; पित्तं हि सरं, तत्र च प्रवर्तने क्रियमाणेऽतियोगभयं स्यादिति भावः। यत्तु विरेचनमिह वक्तव्यं तत् सामग्रीविशेषसंपत्तावेव। लङ्घितस्य चेत्यादौ सूर्पपर्णी मुद्गमाषपर्ण्यौ । निर्व्यूहशब्देन च षडङ्गविधानसिद्धं जलमुच्यते, यवाग्वादिसाधने तस्यैवाधिकारात् । अनुबन्धे त्वस्येति पित्तातिसारानुबन्धे । इमानिति वक्ष्यमाणान् ॥ ५० ॥

सक्षौद्रातिविषं पिंष्ट्वा वत्सकस्य फलत्वचम् ।
पिबेत् पित्तातिसारघ्नं तण्डुलोदकसंयुतम् ॥ ५१ ॥
किराततिक्तको मुस्तं वत्सकः सरसाञ्जनः ।
विल्वं दारुहरिद्रा त्वक् ह्रीवेरं सदुरालभम् ॥ ५२ ॥
चन्दनं च मृणालं च नागरं लोध्रमुत्पलम् ।
तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम् ॥५३॥
उत्पलं धातकीपुष्पं दाडिमत्वङ्महौषधम् ।
कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभाः ॥५४॥
योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः ।
पेयाः पित्तातिसारघ्नाः श्लोकार्धेन निदर्शिताः ॥५५॥
जीर्णौषधानां शस्यन्ते यथायोगं प्रकल्पितैः ।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः ॥ ५६ ॥

फलत्वचमिति फलं च त्वक् चेति फलत्वचम्। मृणालम् उशीरम् । समङ्गा खादिरी; 'वराहक्रान्ता' इत्यन्ये ॥ ५१-५६ ॥

पित्तातिसारो दीप्ताग्नेः क्षिप्रं समुपशाम्यति ।
अजाक्षीरप्रयोगेण बलं वर्णश्च वर्धते ॥ ५७ ॥
वृद्धदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति ।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत् ॥ ५८ ॥
पलाशफलनिर्यूहं पयसा सह पाययेत् ।
ततोऽनुपाययेत् कोष्णं क्षीरमेव यथाबलम् ॥ ५९ ॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधिनी ॥६०॥
सांसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्तते ।
स्रुतदोषस्य तं शीघ्रं यथावदनुवासयेत् ॥ ६१ ॥
शतपुष्पावरीभ्यां च पयसा मधुकेन च ।
तैलपादं घृतं सिद्धं सविल्वमनुवासनम् ॥ ६२ ॥

न तिष्ठति न निवर्तते । पलाशवदिति उक्तपलाशफलविधानेन । सांसर्ग्यामिति पेयादिक्रमे । शतपुष्पेत्यादौ वरी शतावरी । अनुवासनं 'दद्यात्' इति शेषः ॥ ५७-६२ ॥

कृतानुवासनस्यास्य कृतसंसर्जनस्य च ।
वर्तते यद्यतीसारः पिच्छावस्तिरतः परम् ॥ ६३ ॥
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः ।
कृष्णमृत्तिकयाऽऽलिप्य स्वेदयेद्गोमयाग्निना ॥ ६४ ॥
सुशुष्कां मृत्तिकां ज्ञात्वा तानि वृन्तानि शाल्मलेः ।
शृते पयसि मृद्नीयादापोथ्योलूखले ततः ॥ ६५ ॥
पिण्डं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषोः ।
स्नेहितं[1] मात्रया युक्तं कल्केन मधुकस्य च ॥६६॥
वस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः ।
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा ॥ ६७ ॥
पित्तातिसारज्वरशोथगुल्म-
जीर्णातिसारग्रहणीप्रदोषान् ।
जयत्ययं शीघ्रमतिप्रवृद्धान्
विरेचनास्थापनयोश्च वस्तिः ॥ ६८ ॥

परिवेष्ट्येत्यादिना पिच्छावस्तिमाह । शृते पयसीत्यत्र पानीयमात्रेणैव पयः शृतं ज्ञेयम् । प्रस्थ इति शृते पयसीत्यस्य विशेषणम् । वृन्तानि शाल्मलेः उलूखले आपोथ्य तत आपोथितात् पिण्डं मुष्टिसमं शृते प्रस्थे पयसि मृद्नीयादिति योजना । मात्रयेति वचनात् तैलसर्पिषोरत्र तावती मात्रा यावत्या स्नेहनमात्रं भवति, तथा यष्टीमधुकल्कस्यापि तावती मात्रा यावत्या घनो वस्तिर्भवति ॥ ६३-६८ ॥

पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते ।
पित्तलान्यन्नपानानि तस्य पित्तं महाबलम् ॥ ६९ ॥
कुर्याद्रक्तातिसारं तु रक्तमाशु प्रदूषयेत् ।
तृष्णां शूलं विदाहं च गुदपाकं च दारुणम् ॥ ७० ॥

पित्तातिसारीत्यादिना पित्तातिसारस्यैव हेतुविशेषकृतावस्थाभेदरूपं रक्तातिसारं दर्शयति । अयं च रक्तातिसारो यद्यपि पित्तातिसारोत्तरकालभावितयेहोक्तः, तथाऽपि पित्तातिप्रकोपेण रक्तदुष्ट्या च प्रथममपि भवत्येवायं दृष्टत्वादिति ज्ञेयम् । तेनैात्रोत्पत्तिक्रमाभिधानमतन्त्रतम्[3] । यथा "पाण्डुरोगी तु योऽत्यर्थं" ( चि. अ. १६ ) इत्यादिनोक्तकामलोत्पादे यथोक्तक्रमं विनाऽपि कामला भवति । एवमपि चास्य रक्तातीसारस्य पित्तजन्यत्वात् पैत्तिके एवावरोधः; तेन षट्संख्या न व्याहन्यते । अतीसारस्य यत् प्रसृतायां सिद्धौ आमरक्तशकृत्पित्तवातकफानतीसारकारकानभिधायोक्तं-"षण्णामेषां द्विसंसर्गास्त्रिंशद्भेदा भवन्ति ते । केवलैः सह षट्त्रिंशत्" ( सि. अ. ८ ) इति, तदप्यत्रैव षट्केऽन्तर्भावनीयं, तत्र सूक्ष्मभेदगणनया स भेदः कृत इत्यविरोधः ॥ ६९ ॥ ७० ॥

तत्र च्छागं पयः शस्तं शीतं समधुशर्करम् ।
पानार्थं भोजनार्थं च गुदप्रक्षालने तथा ॥ ७१ ॥

१ 'योजितं' इति पा० । २ 'वृत्तिः' इति पा० । ३ 'तेनात्रोत्क्रमाभिधान°' इति पा० ।

ओदनं रक्तशालीनां पयसा तेन भोजयेत् ।
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः ॥ ७२ ॥
शशपक्षिमृगाणां च शीतानां धन्वचारिणाम् ।
रसैरनम्लैः सघृतैर्भोजयेत्तं सशर्करैः ॥ ७३ ॥
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते ।
काश्मर्यफलयूषो वा किंचिदम्लः सशर्करः ॥ ७४ ॥
नीलोत्पलं मोचरसं समङ्गा पद्मकेशरम् ।
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम् ॥ ७५ ॥
दुर्बलं पाययित्वा वा तस्यैवोपरि भोजयेत् ।
प्राग्भक्तं नवनीतं वा दद्यात् समधुशर्करम् ॥ ७६ ॥

तत्र छागमित्यादौ व्यञ्जनार्थमिति भोज्योपकरणार्थम् । पयसा तेनेति छागेन पयसा । मृगस्येदं मार्गम्, अजस्येदमाजं, रुधिरमिति योजना ॥ ७१–७६ ॥

प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः ।
त्र्यहादारोग्यमाप्नोति पयसा क्षीरभुक् तथा ॥ ७७ ॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत् ।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ ७८ ॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम् ।
पेयं तस्यातु पातव्या पेया रक्तोपशान्तये ॥ ७९ ॥

प्राश्येत्यादौ क्षीरोत्थितं सर्पिः पयसा प्राश्येति संबन्धः । कपिञ्जलः गौरतित्तिरिः । क्षीरं भुङ्क्ते इति क्षीरभुक् । तयेति शतावर्या । यवागूमण्डेन पेयमिति संबन्धः ॥ ७७–७९ ॥

त्वक् च दारुहरिद्रायाः कुटजस्य फलानि च ।
पिप्पली शृङ्गवेरं च द्राक्षा कटुकरोहिणी ॥ ८० ॥
षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम् ।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ८१ ॥

षड्भिरेतैरितिपदं यथालाभनिषेधार्थम् ॥ ८० ॥ ८१ ॥

कृष्णमृन्मधुकं शङ्खं रुधिरं तण्डुलोदकम् ।
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ॥ ८२ ॥
पीतः प्रियङ्गुकाकल्कः सक्षौद्रस्तण्डुलाम्भसा ।
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ॥ ८३ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ८४ ॥

कृष्णमृदित्यादौ रुधिरं शोणितं, केचित् कुङ्कुममाहुः । शर्करापञ्चभागिक इति अत्र शर्करायाः पञ्चमेन भागेन कृष्णतिलदानम्; उक्तं हि जतूकर्णे—"कृष्णतिलान् शर्करापादिकाञ्छागीपयसा" इति ॥ ८२–८४ ॥

पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ८५ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्भसा ।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ ८६ ॥

पलमित्यादौ रसमिति क्वाथम् । रसाशीति मांसरसेन भुञ्जानः ॥ ८५ ॥ ८६ ॥

गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते ।
सेचयेत्तं सुशीतेन पटोलमधुकाम्बुना ॥ ८७ ॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः ।
छागैर्गव्यैः पयोभिर्वा शर्कराक्षौद्रसंयुतैः ॥ ८८ ॥

क्षौद्रसंयुतैरित्यन्तं सेचयेदित्यनुवर्तते ॥ ८७ ॥ ८८ ॥

प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत् ।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥ ८९ ॥
धातकीलोध्रचूर्णैर्वा समांशैः प्रतिसारयेत् ।
तथा स्रवति नो रक्तं गुदं तैः प्रतिसारितम् ॥ ९० ॥
पक्वता प्रशमं याति वेदना चोपशाम्यति ।
यथोक्तैः सेचनैः शीतैः शोणितेऽतिस्रवत्यपि ॥९१॥
गुदवङ्क्षणकट्यूरु सेचयेद्घृतभावितम् ।
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ॥ ९२ ॥
कार्पाससंगृहीतेन सेचयेद्गुदवङ्क्षणम् ।

प्रक्षालनानामिति प्रक्षालनार्थमुक्तानां पटोलमधुकादीनाम् । प्रतिसारयेत् अवचूर्णयेत् ॥ ८९–९२ ॥—

अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ॥ ९३ ॥
यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ।
पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत् ॥ ९४ ॥
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत् ।
प्रायशो दुर्बलगुदाश्चिरकालातिसारिणः ॥ ९५ ॥
तस्मादभीक्ष्णशस्तेषां गुदे स्नेहं प्रयोजयेत् ।

पिच्छावस्तिं तदा तस्य यथोक्तमिति अत्रैव 'परिवेष्ट्य' इत्यादिग्रन्थोक्तम् । गुदे स्नेहं प्रयोजयेदिति अत्र स्नेहभावितपिचुप्रणयनेन गुदे स्नेहप्रयोगमिच्छन्ति; अन्ये तु प्रकृतत्वादनुवासनेनैवात्र प्रयोगमाहुः ॥ ९३–९५ ॥—

पवनोऽतिप्रवृत्तो हि स्वे स्थाने लभतेऽधिकम् ९६
बलं तस्य सपित्तस्य जयार्थं बस्तिरुत्तमः ।
रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ॥ ९७ ॥
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ।
शर्करार्धांशिकं लीढं नवनीतं नवोद्धृतम् ॥ ९८ ॥
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत् ९९
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ।
तदर्धशर्करायुक्तं लिह्यात् सक्षौद्रपादिकम् ॥ १०० ॥
अधो वा यदि वाऽप्यूर्ध्वं यस्य रक्तं प्रवर्तते ।

स्वे स्थाने इति पक्वाशयकट्यादौ । बस्तिरिति सामान्यवचनादनुवासनं निरूहश्च ज्ञेयः । शतावरीघृतमिति "शतावरीमूलतुलाश्चतस्रः" (चि. अ. ३०) इत्यादिना योनिव्यापदुक्तं शतावरीघृतम् । विकारमिति 'रक्तं सविट्' इत्यादिनोक्तम् ॥ ९६–१०० ॥—

१ 'क्षीरेण' इति पा० ।

यस्त्वेवं दुर्बलो मोहात् पित्तलान्येव सेवते ॥१०१॥
दारुणं स वलीपाकं प्राप्य शीघ्रं विपद्यते ।

वलीपाकमिति गुदवलीपाकम् ॥ ९६-१०१ ॥—

श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् ॥ १०२ ॥
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ।
लङ्घितस्यानुपूर्व्या च कृतायां न निवर्तते ॥ १०३ ॥
कफजो यद्यतीसारः कफघ्नैस्तमुपाचरेत् ।

दीपनो गण इति 'शालिपर्णी पृश्निपर्णी' इत्यादिनोक्तः । ॥ १०२ ॥ १०३ ॥—

बिल्वं कर्कटिका मुस्तमभया विश्वभेषजम् ॥ १०४ ॥
वचा विडङ्गं भूतीकं धान्यकं देवदारु च ।
कुष्ठं सातिविषा पाठा चव्यं कटुकरोहिणी ॥ १०५ ॥
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ।
योगाञ्छ्लोकार्धविहितांश्चतुरस्तान् प्रयोजयेत् १०६
शृताञ्छ्लेष्मातिसारेषु कायाग्निबलवर्धनान् ।
अजाजीमसितां पाठां नागरं मरिचानि च ॥ १०७ ॥
धातकीद्विगुणं दद्यान्मातुलुङ्गरसाप्लुतम् ।
रसाञ्जनं सातिविषं कुटजस्य फलानि च ॥ १०८ ॥
धातकीद्विगुणं दद्यात् पातुं सक्षौद्रनागरम् ।
धातकी नागरं बिल्वं लोध्रं पद्मस्य केशरम् ॥ १०९ ॥
जम्बूत्वङ्नागरं धान्यं पाठा मोचरसो बला ।
समङ्गा धातकी बिल्वमध्यं जम्ब्वाम्रयोस्त्वचः ११०
कपित्थानि विडङ्गानि नागरं मरिचानि च ।
चाङ्गेरीकोलतक्राम्लांश्चतुरस्तान् कफोत्तरे ॥ १११ ॥
श्लोकार्धविहितान् दद्यात् सस्नेहलवणान् खडान् ।
कपित्थमध्यं लीढ्वा तु सव्योषक्षौद्रशर्करम् ॥ ११२ ॥
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ।

कफघ्नैस्तमुपाचरेदित्युक्तं, तेन कफघ्नान् बिल्वकर्कटकेत्यादिना योगानाह । धातकीद्विगुणमिति एकद्रव्यापेक्षया द्विगुणया धातक्या युक्तम् । अजाजीमित्यादौ असितामिति पिप्पलीम् । जतूकर्णे ह्ययं योगः "पाठाऽजाजीव्योषफलपूरं धातकीद्विगुणम्" । इत्युक्तः ॥ १०४-११२ ॥—

कणां मधुयुतां पीत्वा तक्रं पीत्वा सचित्रकम् ॥११३॥
जग्ध्वा वा बालबिल्वानि मुच्यते जठरामयात् ।
बालबिल्वं गुडं तैलं पिप्पलीं विश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥ ११४ ॥
भोज्यं मूलकषायेण वातघ्नैश्चोपसेवनैः ।
वातातिसारविहितैर्यूषैर्मांसरसैः खडैः ॥ ११५ ॥
पूर्वोक्तमम्लसर्पिर्वा षट्पलं वा यथाबलम् ।
पुराणं वा घृतं दद्याद्यवागूमण्डमिश्रितम् ॥ ११६ ॥

कणां मधुयुतामित्यत्र कणा पिप्पली; अन्ये 'कणान्' इति पठन्ति, कणानित्यनेन च षष्टिकतण्डुलान् ग्राहयन्ति । वाते प्रतिहते इति बद्धे वाते । उपसेवनैरिति व्यञ्जनैः । पूर्वोक्तमम्लसर्पिरिति "चाङ्गेरीकोलदध्यम्ल०" इत्यादिनोक्तम् ॥ ११३-११६ ॥

वातश्लेष्मविबन्धे वा कफे वाऽतिस्रवत्यपि ।
शूले प्रवाहिकायां वा पिच्छाबस्तिं प्रयोजयेत् ११७
पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरपि ।
कल्कैः सलवणैर्युक्तं पूर्वोक्तं सन्निधापयेत् ॥ ११८ ॥
प्रत्यागते सुखं स्नातं कृताहारं दिनात्यये ।
बिल्वतैलेन मतिमान्सुखोष्णेनानुवासयेत् ॥ ११९ ॥
वचान्तैरथवा कल्कैस्तैलं पक्त्वाऽनुवासयेत् ।
बहुशः कफवातार्तस्तथा स लभते सुखम् ॥ १२० ॥

पिच्छाबस्तिं प्रयोजयेदिति यदुक्तं तत्र पिच्छाबस्तेर्विशेषमाह—पिप्पलीत्यादि । पूर्वोक्तमिति अत्रैव पूर्वोक्तं पिच्छाबस्तिं पिप्पल्यादिकल्कैर्युक्तं, सन्निधापयेदिति दापयेत् । बिल्वतैलेनेति सिद्धौ "दशमूलं बला रास्ना" ( सि. अ. ४ ) इत्यादिना वक्ष्यमाणबिल्वतैलेन । वचान्तैरिति "पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरपि" इत्यत्रोक्तैर्वचान्तैः ॥ ११७-१२० ॥

स्वे स्थाने मारुतोऽवश्यं वर्धते कफसंक्षये ।
स वृद्धः सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥ १२१ ॥

संप्रति सर्वातिसारेषु पक्वाशयव्यापकत्वेन वायुरवश्यं वृद्धो भवति, स चाशुकारितया त्वरया जेतव्य इति दर्शयन्नाह—स्वे स्थाने इत्यादि । कफसंक्षयादित्यनेन कफसंक्षये रूक्षशरीरतया वायुः कुप्यति, श्लेष्मशोणिते वृद्धे तदुपस्नेहितशरीरे वायुर्निवृत्तप्रसरो भवतीति ॥ १२१ ॥

वातस्यानु जयेत् पित्तं, पित्तस्यानु जयेत् कफम् ।
त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तमः ॥ १२२ ॥

पूर्वं ज्वराध्याये सन्निपातचिकित्सायां "कफस्थानानुपूर्व्या वा" ( चि. अ. ३ ) इत्यनेन कफपित्तवातानां क्रमेण चिकित्सोक्ता अतीसारेऽपि त्रिदोषजे कदाचित् स्यादित्याशङ्क्यात्र विशिष्टं क्रममाह—वातस्येत्यादि । अयं च क्रमो निरामसन्निपातातिसारे एव ज्ञेयः; सामे तु प्रथममामस्यैव चिकित्सितं कर्तव्यम् । समत्रिदोषातिसारचिकित्साक्रममभिधाय विषमत्रिदोषातिसारचिकित्साक्रममाह—त्रयाणामित्यादि ॥ १२२ ॥

तत्र श्लोकः—

प्रागुत्पत्तिनिमित्तानि लक्षणं साध्यता न च ।
क्रिया चावस्थिकी सिद्धा निर्दिष्टा ह्यतिसारिणाम् ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थानेऽतिसारचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

प्रागुत्पत्तीत्यादिनाऽध्यायार्थसंग्रहः ॥ १२३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थानेऽतीसारचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

१ 'उपसेचनैः' इति पा० ।

## विंशोऽध्यायः ।

अथातश्छर्दिचिकित्सितं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

शरीरे मार्गद्वयं प्रधानम्—अधो गुदम्, ऊर्ध्वं च मुखं; तदधोमार्गातिप्रवृत्तदोषमतीसारमभिधाय, ऊर्ध्वातिदोषप्रवृत्तिरूपा छर्दिरुच्यते, इति छर्द्यध्यायसंबन्धः ॥ १ ॥ २ ॥

यशस्विनं ब्रह्मतपोद्युतिभ्यां
ज्वलन्तमग्न्यर्कसमप्रभावम् ।
पुनर्वसुं भूतहिते निविष्टं
पप्रच्छ शिष्योऽत्रिजमग्निवेशः ॥ ३ ॥

ब्रह्मणः तत्त्वज्ञानस्य तपसश्च द्युती ब्रह्मतपोद्युती, ताभ्यां ज्वलन्तम् ॥ ३ ॥

याश्छर्दयः पञ्च पुरा त्वयोक्ता
रोगाधिकारे भिषजां वरिष्ठ ! ।
तासां चिकित्सां सनिदानलिङ्गां
यथावदाचक्ष्व नृणां हितार्थम् ॥ ४ ॥
तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
याश्छर्दयः पञ्च पुरा मयोक्ता-
स्ता विस्तरेण ब्रुवतो निबोध ॥ ५ ॥

रोगाधिकारे इति अष्टोदरीये ( सू. अ. १९ ) ॥ ४ ॥५॥

दोषैः पृथक्त्रिप्रभवाश्चतस्रो
द्विष्टार्थयोगादपि पञ्चमी स्यात् ।

पृथक् वातादिषु त्रिषु मिलितेषु च प्रभव उत्पत्तिर्यासां ताः पृथक्त्रिप्रभवाश्चतस्रः । द्विष्टार्थयोगादपीत्यत्र द्विष्टशब्देन प्रतीपाशुचिपूत्यादयोऽपि द्वेष्यतया गृह्यन्ते । द्विष्टप्रतीपेत्यादौ वक्ष्यमाणद्विष्टार्थच्छर्दिनिदाने द्विष्टशब्देन गोवलीवर्दन्यायात् प्रतिपुरुषनियतद्विष्टत्वमुच्यते, तेनेहोक्तार्थशब्देन प्रतिपादिता छर्दिरुच्यते ।—

तासां हृदुत्क्लेशकफप्रसेकौ
द्वेषोऽशने चैव हि पूर्वरूपम् ॥ ६ ॥

यद्यपि हेत्वभिधानपूर्वकं पूर्वरूपाभिधानं युज्यते, हेतूत्तरकालभावित्वादेव पूर्वरूपस्य; तथाऽप्यल्पवक्तव्यत्वात् तासामित्यादिना पूर्वरूपमाह । पूर्वरूपं लिङ्गाल्पत्वादुच्यते, एवमन्यत्रापि साक्षात्सूचितपूर्वरूपाभिधाने ज्ञेयम् ॥ ६ ॥

व्यायामतीक्ष्णौषधशोकरोग-
भयोपवासाद्यतिकर्शितस्य ।
वायुर्महास्रोतसि संप्रवृद्ध
उत्क्लेश्य दोषांस्तत ऊर्ध्वमस्यन् ॥ ७ ॥
आमाशयोत्क्लेशकृतां च मर्म
प्रपीडयंश्छर्दिमुदीरयेत्तु ।
हृत्पार्श्वपीडामुखशोषमूर्ध-
नाभ्यर्तिकासस्वरभेदतोदैः ॥ ८ ॥
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगे-
नार्तोऽनिलाच्छर्दयतीह दुःखम् ॥ ९ ॥

व्यायामेत्यादिना वातजाया हेतुलक्षणे प्राह । महास्रोतसीति कोष्ठे । दोषानिति बहुवचनं बहूनामुत्क्लेशनीयानां विद्यमानत्वात्, तथा रक्तादेरपि छर्द्यादौ दोषशब्देनाभिधानात् । ऊर्ध्वक्षेपणमामाशयोत्क्लेशेनोदीरितो वायुरेव करोति । किंवा आमाशयोद्वेगकृतानिति द्वितीयाबहुवचनं दोषानित्यस्य विशेषणम् । मर्मेति हृदयम् । कषायमिति कषायरसं कषायवर्णं वा ॥ ७–९ ॥

अजीर्णकट्वम्लविदाह्यशीतै-
रामाशये पित्तमुदीर्णवेगम् ।
रसायनीभिर्विसृतं प्रपीड्य
मर्मोर्ध्वमागम्य वमिं करोति ॥ १० ॥
मूर्च्छापिपासामुखशोषमूर्ध-
ताल्वक्षिसंतापतमोभ्रमार्तः ।
पीतं भृशोष्णं हरितं सतिक्तं
धूम्रं च पित्तेन वमेत् सदाहम् ॥ ११ ॥

अजीर्णेत्यादिना पित्तजाया हेतुलक्षणे ब्रूते । अजीर्णेति अजीर्णे भोजनम् । रसायनीभिरिति स्रोतोभिः । मूर्धेत्यादि संतापेन संबध्यते । धूम्रं धूम्रवर्णम् ॥ १० ॥ ११ ॥

स्निग्धातिगुर्वामविदाहिभोज्यैः
स्वप्नादिभिश्चैव कफोऽतिवृद्धः ।
उरः शिरो मर्म रसायनीश्च
सर्वाः समावृत्य वमिं करोति ॥ १२ ॥
तन्द्रास्यमाधुर्यकफप्रसेक-
संतोषनिद्रारुचिगौरवार्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेत्तु ॥ १३ ॥

स्निग्धेत्यादिना कफजामाह । संतोषोऽत्र तृप्तिः, अन्ये तु संतोषो मानस एवात्र व्याधिप्रभावाद्भवति । अल्परुजमिति क्रियाविशेषणम् ॥ १२ ॥ १३ ॥

---

१ 'पृथक् त्रिप्रभवा चतुर्थी' इति पा० । २ 'साक्षात्सूचितपूर्वाभिधाने' इति पा० ।

१ "क्रुद्धो महास्रोतसि मातरिश्वा दोषान्समुत्क्लिश्य तदूर्ध्वमस्यन् । आमाशयोद्रेककृतां च मर्म प्रपीडयन् छर्दिमुदीरयेच्च ॥" इति पा० ।

समश्नतः सर्वरसान् प्रसक्त-
मामप्रदोषर्तुविपर्ययैश्च ।
सर्वे प्रकोपं युगपत् प्रपन्ना-
श्छर्दिं त्रिदोषां जनयन्ति दोषाः ॥ १४ ॥
शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबला प्रसक्तम् ।
छर्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥ १५ ॥

समश्नत इत्यादिना त्रिदोषजामाह । समश्नतः सर्वरसानिति पथ्यापथ्यमेलकरूपतया भजतः, उक्तं हि—"पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम्" ( चि. अ. १५ ) इत्यत्र; न तु सर्वरसान् भुञ्जानस्येत्यर्थः; सर्वरसभोजनं हि पथ्यमेव, तेनेह तस्य त्रिदोषकर्तृत्वं न स्यात् । प्रसक्तमिति निरन्तरम् । आमस्य प्रदोषः आमप्रदोषः ॥ १४ ॥ १५ ॥

विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥ १६ ॥
विण्मूत्रयोस्तत् समवर्णगन्धं
तृट्श्वासहिक्कार्तियुतं प्रसक्तम् ।
प्रच्छर्दयेद्दुष्टमिहातिवेगा-
त्तयाऽर्दितश्चाशु विनाशमेति ॥ १७ ॥

विट्स्वेदेत्यादिना उपद्रवयुक्तां छर्दिमुपद्रववादसाध्यामाह । विण्मूत्रयोस्तत्समगन्धवर्णं छर्दयतीति वायुना विण्मूत्रस्रोतसां दूषितत्वाज्ज्ञेयम् ॥ १६ ॥ १७ ॥

द्विष्टप्रतीपाशुचिपूत्यमेध्य-
बीभत्सगन्धाशनदर्शनैश्च ।
यच्छर्दयेत्तप्तमना मनोघ्नै-
र्द्विष्टार्थसंयोगभवा मता सा ॥ १८ ॥

द्विष्टेत्यादिना द्विष्टार्थजामाह । द्विष्टादयो गन्धेनाशनेन दर्शनेन च यथायोग्यतया संबध्यन्ते । अशनं भक्षणम् । द्विष्टं प्रतिपुरुषाप्रीतिजनकं, प्रतीपं वचादि, केचित् प्रतीपं वातमाहुः[1], अशुचि उच्छिष्टादि, अमेध्यं मलिनं, बीभत्सं जुगुप्सितम् । मनोघ्नैरित्यनेन द्विष्टादीनां मध्ये यत्किंचित् अशुच्यादि यं पुरुषं प्राप्य मनोघ्नं न भवति तं प्रति तच्छर्दिकारकं न भवति, मनोऽनुपघातकत्वादिति सूचयति ॥ १८ ॥

क्षीणस्य या छर्दिरतिप्रवृद्धा
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां
साध्यां चिकित्सेदनुपद्रवां च ॥ १९ ॥

असाध्यलक्षणयुक्तां छर्दिं परित्यागार्थमाह—क्षीणस्येत्यादि । अतिप्रवृद्धेति सदाऽनुबद्धा । सोपद्रवेत्यत्र विट्स्वेदेत्यादिना रोगोपद्रवा ज्ञेयाः । सचन्द्रिकामिति धातुस्नेहमण्डलाकारयुक्ताम् ॥ १९ ॥

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक्कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ २० ॥
चूर्णानि लिह्यान्मधुनाऽभयानां
हृद्यानि वा यानि विरेचनानि ।
मद्यैः पयोभिश्च युतानि युक्त्या
नयन्त्यधो दोषमुदीर्णमूर्ध्वम् ॥ २१ ॥
वल्लीफलाद्यैर्वमनं पिबेद्वा
यो दुर्बलस्तं शमनैश्चिकित्सेत् ।
रसैर्मनोज्ञैर्लघुभिर्विशुष्कै-
र्भक्ष्यैः सभोज्यैर्विविधैश्च पानैः ॥ २२ ॥

आमाशयेत्यादिना साध्यानां चिकित्सामाह । यस्मादामाशयोत्क्लेशात् सर्वाश्छर्दयो भवन्ति, आमाशयोत्थे च रोगे लङ्घनादि कफहरं भेषजं युक्तं, तस्माल्लङ्घनमेव कर्तव्यमिति भावः । लङ्घनमल्पदोषविषयं, शोधनं च बहुदोषविषयमिति व्यवस्था । संशोधनशब्देन चेह विरेचनवमने अपि गृह्येते; अन्ये त्वत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति । संशोधनयोगानाह—चूर्णानीत्यादि । फलाद्यैरिति फलानि जीमूतेक्ष्वाकुप्रभृतीनि फलमात्रासिद्धि( सि. अ. ११)-पठितानि, तैः । शमनैरिति दोषनिर्हरणं विना दोषसाम्यकरैः; उक्तं हि पुष्कलावते—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति विषमांस्तत् संशमनमुच्यते" इति ॥ २०—२२ ॥

सुसंस्कृतास्तित्तिरिवर्हिलाव-
रसा व्यपोहन्त्यनिलप्रवृत्ताम् ।
छर्दिं तथा कोलकुलत्थधान्य-
बिल्वादिमूलाम्लयवैश्च यूषः ॥ २३ ॥
वातात्मिकायां हृदयद्रवार्तो
नरः पिबेत् सैन्धववद्घृतं तु ।
सिद्धं तथा धान्यकनागराभ्यां
दध्ना च तोयेन च दाडिमस्य ॥ २४ ॥
व्योषेण युक्तां लवणैस्त्रिभिश्च
घृतस्य मात्रामथवा विदध्यात् ।
स्निग्धानि हृद्यानि च भोजनानि
रसैः सयूषैर्दधिदाडिमाम्लैः ॥ २५ ॥

---

१ 'प्रतीपं सात्म्यविपरीतम्' इति गङ्गाधरः ।

१ 'उक्तोपद्रवा' इति पा० । २ 'मेदःप्रभृतिधातुर्मयूरपुच्छचन्द्रकवत् प्रतिभाति, सा चन्द्रिका, तद्युक्ताम्' इति गङ्गाधरः । ३ 'वातात्मके हृद्रवकासयुक्तः' इति पा० ।

सुसंस्कृता इत्यादिना वैशेषिकी वातजाचिकित्सोच्यते। हृदयद्रव इति परिश्रान्तस्येव हृदयक्षोभः। सैन्धववदिति सैन्धवप्रक्षेपं; केचित् सैन्धववत् सिद्धमिति योजयन्ति। तोयेन च दाडिमस्येति दाडिमरसेन। व्योषेणेत्यादौ व्योषादीनां पेयघृतमात्रायां प्रक्षेप्यत्वम् ॥ २३–२५ ॥

पित्तात्मिकायामनुलोमनार्थं
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात्।
कफाशयस्थं त्वतिमात्रवृद्धं
पित्तं हरेत् स्वादुभिरूर्ध्वमेव ॥ २६ ॥
शुद्धाय काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वाऽपि पेयाम्।
प्रदापयेन्मुद्गरसेन वाऽपि
शाल्योदनं जाङ्गलजै रसैर्वा ॥ २७ ॥
सितोपलामाक्षिकपिप्पलीभिः
कुल्माषलाजायवसक्तुगृञ्जान्।
खर्जूरमांसान्यथ नारिकेलं
द्राक्षामथो वा बदराणि लिह्यात् ॥ २८ ॥
स्रोतोजलाजोत्पलकोलमज्ज-
चूर्णानि लिह्यान्मधुनाऽभयां च।
कोलास्थिमज्जाञ्जनमक्षिकाविड्-
लाजासितामागधिकाकणान् वा ॥ २९ ॥
द्राक्षारसं वाऽपि पिबेत् सुशीतं
मृद्भृष्टलोष्टप्रभवं जलं वा।
जम्ब्वाम्रयोः पल्लवजं कषायं
पिबेत् सुशीतं मधुसंयुतं वा ॥ ३० ॥
निशि स्थितं वारि समुद्गकृष्णं
सोशीरधान्यं चणकोदकं वा।
गवेधुकामूलजलं गुडूच्या
जलं पिबेदिक्षुरसं पयो वा ॥ ३१ ॥
सेव्यं पिबेत् काञ्चनगैरिकं वा
सवालकं तण्डुलधावनेन।
धात्रीरसेनोत्तमचन्दनं वा
तृष्णावमिघ्नानि समाक्षिकाणि ॥ ३२ ॥
कल्कं तथा चन्दनचव्यमांसी-
द्राक्षोत्तमावालकगैरिकाणाम्।
शीताम्बुना गैरिकशालिचूर्णं
मूर्वां तथा तण्डुलधावनेन ॥ ३३ ॥

कफाशयस्थमिति कफस्थानमामाशयोर्ध्वभागो वक्षः, तत्स्थम्। हरेदूर्ध्वमेवेति वमनेनैव हरेत्। यदि वाऽपि पेयामिति मन्दाग्निं प्रति पेया ज्ञेया। कुल्माषा उत्स्विन्नयवपिष्टकृता भक्ष्याः; पारियात्रास्तु मुद्गान्मसूरानुत्स्विन्नमृदितान् कुल्माषानाहुः। गृञ्जः समण्डो यवौदनः। खर्जूरमांसानीति खर्जूरफलसस्यानि। खर्जूरेत्यादौ लिह्यादित्यत्र 'सितोपलामाक्षिकपिप्पलीभिः' इत्यनुवर्तनीयम्। स्रोतोजं स्रोतोञ्जनम्। कोलमज्जा कोलाभ्यन्तरम्। अभयां वेत्यत्रापि 'मधुना लिह्यात्' इति संबध्यते। कोलास्थीत्यादावपि 'मधुना लिह्यात्' इत्यनुवर्तते। मृद्भृष्टलोष्टप्रभवं जलं वेति मृन्मयलोष्टनिर्वापणभवं जलमित्यर्थः। समुद्गकृष्णं पिप्पलीमुद्गसहितम्। निशि स्थितमित्यादौ सोशीरधान्यमिति द्वितीयः, चणकोदकं वेति तृतीयो योगः। तथा गवेधुकादियोगद्वयेऽपि शीतकषायविधिर्ज्ञेयः। काञ्चनगैरिकमिति गैरिकं दाक्षिणात्यप्रसिद्धं काञ्चनवर्णम्। सवालकं तण्डुलधावनेनेति विधानं 'सेव्यं पिबेत्' इत्यनेन तथा 'काञ्चनगैरिकं वा' इत्यनेन च द्वितीययोगेन संबध्यते। द्राक्षोत्तमा गोस्तनी द्राक्षेत्यर्थः। उत्तमचन्दनं धवलचन्दनम् ॥ २६–३३ ॥

कफात्मिकायां वमनं प्रशस्तं
सपिप्पलीसर्षपनिम्बतोयैः।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
र्वम्यां कफामाशयशोधनार्थम् ॥ ३४ ॥
गोधूमशालीन् सयवान् पुराणान्
यूषैः पटोलामृतचित्रकाणाम्।
व्योषस्य निम्बस्य च तक्रसिद्धै-
र्यूषैः फलाम्लैः कटुभिस्तथाऽद्यात् ॥ ३५ ॥
रसांश्च शूल्यानि च जाङ्गलानां
मांसानि जीर्णान्मधुसीध्वरिष्टान्।
रागांस्तथा षाडवपानकानि
द्राक्षाकपित्थैः फलपूरकैश्च ॥ ३६ ॥
मुद्गान्मसूरांश्चणकान् कलायान्
भृष्टान् युतान्नागरमाक्षिकाभ्याम्।
लिह्यात्तथैव त्रिफलाविडङ्ग-
चूर्णं विडङ्गप्लवयोरथो वा ॥ ३७ ॥
सजाम्बवं वा बदराम्लचूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसंप्रयुक्तां
लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥ ३८ ॥
मनःशिलायाः फलपूरकस्य
रसैः कपित्थस्य च पिप्पलीनाम्।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं
लिहञ्जयेच्छर्दिमुदीर्णवेगाम् ॥ ३९ ॥

१ 'खर्जूरफलमज्जा' इति पा०। २ 'उत्तमद्राक्षा श्वेतद्राक्षेत्यर्थः' इति पा०। ३ 'विडङ्गप्लवयोरसं वा' इति पा०। ४ 'बदररस चूर्णं' इति पा०।

समाक्षिकाणीति पश्चादुक्तयोगत्रयद्रव्याणि समाक्षिकाणि कर्तव्यानि । पिण्डीतकैरिति मदनैः । कफस्यामाशयस्य च शोधनार्थं कफामाशयशोधनार्थम् । यद्यपि गोधूमयवौ मधुरत्वयोगात् कफकरौ, तथाऽपि पुराणतया न कफकराविति कृत्वा कफच्छर्द्यां विहितौ । उक्तं हि—"प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाच्च शाल्यिवगोधूमात्" (सू. अ. २७) इति । रागाः कपित्थादिद्रव्यकृताः । मनःशिलायाश्चूर्णं मरिचैश्च युक्तं क्षौद्रेण युतं फलपूरकरसैर्लिहन्, तथा कपित्थस्य रसैः पिप्पलीनां चूर्णं मरिचैश्च युक्तं क्षौद्रेण युतं लिहन्निति योज्यम् ॥ ३४-३९ ॥

यैषा पृथक्त्वेन मया क्रियोक्ता
तां सन्निपातेऽपि समस्य बुद्ध्या ।
दोषर्तुरोगाग्निबलान्यवेक्ष्य
प्रयोजयेच्छास्त्रविदप्रमत्तः ॥ ४० ॥

यैषेत्यादिना सान्निपातिक्याश्चिकित्सोच्यते । समस्येति एकीकृत्य । दोषर्तुरोगाग्निबलान्यवेक्ष्येति दोषादीनां बलं वीक्ष्य यद्बलवत् तत्प्रधाना चिकित्सा कर्तव्या । रोगः छर्दिरेव ॥ ४० ॥

मनोभिघाते तु मनोनुकूला
वाचः समाश्वासनहर्षणानि ।
लोकप्रसिद्धाः श्रुतयो वयस्याः
शृङ्गारिकाश्चैव हिता विहाराः ॥ ४१ ॥
गन्धा विचित्रा मनसोऽनुकूला
मृत्पुष्पशुक्ताम्लफलादिकानाम् ।
शाकानि भोज्यान्यथ पानकानि
सुसंस्कृताः षाडवरागलेहाः ॥ ४२ ॥
यूषा रसाः काम्बलिका खडाश्च
मांसानि धाना विविधाश्च भक्ष्याः ।
फलानि मूलानि च गन्धवर्ण-
रसैरुपेतानि वमिं जयन्ति ॥ ४३ ॥
गन्धं रसं स्पर्शमथापि शब्दं
रूपं च यद्यत् प्रियमप्यसात्म्यम् ।
तदेव दद्यात् प्रशमाय तस्या-
स्तज्जो हि रोगः सुख एव जेतुम् ॥ ४४ ॥

मनोभिघाते इति मनोविघातजच्छर्द्याम् । लोकप्रसिद्धाः श्रुतय इति लौकिकार्थानुगता आख्यायिकेतिहासाः । विहाराः क्रीडाः । लेहा इति व्यञ्जनरूपा लेहाः । रागादीनां लक्षणमसकृदुक्तम् । गन्धवर्णरसैरुपेतानीति प्रशस्तगन्धादियुतानि । गन्धमित्यादिना आत्ययिकच्छर्दिप्रशमार्थमसात्म्यदानमप्यभिधत्ते । प्रशमे हि तस्या इति गन्धादीनां प्रियाणामुपयोगेन छर्द्याः प्रशमे सति, तज्जो हि रोग इति गन्धादीनामसात्म्यजनितरोगो जेतुं सुख एव सुखोपाय एव भवति, मूलव्याधेर्महात्ययस्य जितत्वादित्यभिप्रायः । 'सुखमेव जेतुम्' इति पाठे सुखं यथा भवति तथा जेतुं 'पार्यते' इति शेषः ॥ ४१-४४ ॥

छर्द्युत्थितानां च चिकित्सितात् स्वा-
च्चिकित्सितं कार्यमुपद्रवाणाम् ।
अतिप्रवृत्तासु विरेचनस्य
कर्मातियोगे विहितं विधेयम् ॥ ४५ ॥

अतिप्रवृत्तास्वित्यादि । अतिप्रवृत्तासु छर्दिषु विरेचनस्यातियोगे यत्कर्म विहितं संशोधनव्यापत्तिसिद्धौ (सि. अ. ६) तदिह विधेयमित्यर्थः ॥ ४५ ॥

वमिप्रसङ्गात् पवनोऽप्यवश्यं
धातुक्षयाद्वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि
कार्याण्युपस्तम्भनबृंहणानि ॥ ४६ ॥
सर्पिर्गुडाः क्षीरविधिर्घृतानि
कल्याणकत्र्यूषणजीवनानि ।
वृष्यास्तथा मांसरसाः सलेहा-
श्चिरप्रसक्तां च वमिं जयन्ति ॥ ४७ ॥

वमिप्रसङ्गात् छर्द्यनुबन्धात् पवनस्य वृद्धिर्भवति; तत्रोपस्तम्भनं छर्दीनां पवनस्य वा, बृंहणं धातूनाम् । लेहाः च्यवनप्राशादयः ॥ ४६ ॥ ४७ ॥

तत्र श्लोकः—

हेतुं संख्यां लक्षणमुपद्रवान् साध्यतां न योगांश्च ।
छर्दीनां प्रशमार्थं प्राह चिकित्सितं मुनिवर्यः ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने छर्दिचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

हेतुमित्यादिना संग्रहः । उपद्रवानिति विड्स्वेदेत्यादिनोक्तानुपद्रवान् । मुनिवर्य इति मुनिश्रेष्ठः ॥ ४८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने छर्दिचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ।

अथातो विसर्पचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वाध्याये छर्दिवेगविघाताद्विसर्पाणामुत्पत्तेश्छर्द्यनन्तरं विसर्पस्य चिकित्सितमुच्यते । छर्देश्च रक्तदूषकत्वं विधिशोणितीये "छर्दिवेगप्रतीघातात्" (सू. अ. २८) इत्यादिना "शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति" (सू. अ. २८) इत्यन्तेनोक्तम् ॥ १ ॥ २ ॥

---

१ 'समीक्ष्य' इति पा० । २ 'विचार्य' इति पा० ।

कैलासे किन्नराकीर्णे बहुप्रस्रवणौषधे।
पादपैर्विविधैः स्निग्धैर्नित्यं कुसुमसंपदा ॥ ३ ॥
वमद्भिर्मधुरान् गन्धान् सर्वतः स्वभ्यलङ्कृते।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥ ४ ॥
महर्षिभिः परिवृतं सर्वभूतहिते रतम्।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥ ५ ॥
भगवन्! दारुणं रोगमाशीविषविषोपमम्।
विसर्पन्तं शरीरेषु देहिनामुपलक्षये ॥ ६ ॥
सहसैव नरास्तेन परीताः शीघ्रकारिणा।
विनश्यन्त्यनुपक्रान्तास्तत्र नः संशयो महान् ॥ ७ ॥
स नाम्ना केन विज्ञेयः संज्ञितः केन हेतुना।
कतिभेदः कियद्धातुः किंनिदानः किमाश्रयः ॥ ८ ॥
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः।
कथं कैर्लक्षणैः किं च भगवन्! तस्य भेषजम् ॥९॥
तदग्निवेशस्य वचः श्रुत्वाऽऽत्रेयः पुनर्वसुः।
यथावदखिलं सर्वं प्रोवाच मुनिसत्तमः ॥ १० ॥

कैलासे इत्यादि। प्रश्नोऽत्र देशगुणोपदर्शनपरः, शोभने हि देशे सुमनसो गुरवः शिष्यैः पृष्टाः सम्यग्वदन्ति। कुसुमसंपदा पुष्पफलसंपत्त्या। मधुरान् गन्धान् इष्टान् गन्धान्। विहरन्तं विचरन्तम्। जितात्मानं जितेन्द्रियम्। आशीविषाः सर्पाः। उपलक्षये पश्यामि। अनुपक्रान्ता गदाः केचिद्विनश्यन्ति, यथा—व्यङ्गतिलकादयः; केचित्तु उपक्रान्ता अपि चिरेण घ्नन्ति, यथा—मेहगुल्मादयः; अनेन तु गृहीताः शीघ्रमेव विनश्यन्तीति त्वराविशेषं चिकित्सिते दर्शयति। संज्ञितः केन हेतुनेति कस्माद्धेतोर्वक्ष्यमाणविसर्पो विसर्पसंज्ञया आख्याता इत्यर्थः। कियद्धातुरिति कतिधातुकारणकः। कथं कैर्लक्षणैरिति कथंभूतैः कैर्लक्षणैर्ज्ञेय इत्यर्थः ॥ ३–१० ॥

विविधं सर्पति यतो विसर्पस्तेन स स्मृतः।
परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात् ॥ ११ ॥

विविधमित्यादिना यथाक्रमं प्रश्नानामुत्तरमाह। विविधं सर्पतीति अध ऊर्ध्वं तिर्यक् तथा स्फोटशोफादिभिः प्रसरतीति विसर्पः। परिसर्पशब्दार्थं व्याकरोति—परिसर्पोऽथवेत्यादि। परितः सर्वतः, परिशब्दः सर्वतोऽर्थे इत्यर्थः; किंवा परिसर्पणशब्देन सर्पणमात्रमुच्यते, सर्वतःशब्देन परिशब्दार्थो व्याक्रियते, तेनोक्तं—सर्वतः परिसर्पणादिति ॥ ११ ॥

स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः।
पृथक् त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः ॥ १२ ॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः।
चत्वार एते विसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥ १३ ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः स पित्तकफसंभवः ॥ १४ ॥

सप्तविधो दोषैरिति दोषभेदात् सप्तविधो भवति। एतेन साध्यासाध्यभेदोऽप्यस्य संभवतीति दर्शयति ॥ १२–१४ ॥

रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥ १५ ॥

पृथगित्यादिना निर्दिष्टं सप्तविधत्वं दर्शयति। रक्तमित्यादिना सप्तधातुत्वं स्फुटयति। रक्तादिदोषत्वं कुष्ठे यद्यप्यस्ति, तथाऽपि विसर्पणशीलैर्दोषैर्विसर्पाः, कुष्ठानि तु चिरक्रियैर्दोषैर्जायन्त इत्यादि कुष्ठचिकित्सिते एव प्रपञ्चितमनुसरणीयम्। दोषास्त्रयो मला इत्यत्र दोषशब्देनैव वातादिप्राप्तौ मला इति अन्यर्थबुद्ध्या शरीरमलिनीकरणत्वं प्रतिपादयितुमुक्तम्। उक्तं चान्यत्र—"शरीरदूषणाद्दोषा मलिनीकरणान्मलाः। धारणाद्धातवश्च स्युर्वातपित्तकफास्त्रयः" इति ॥ १५ ॥

लवणाम्लकटूष्णानां रसानामतिसेवनात्।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च ॥ १६ ॥
व्यापन्नबहुमद्योष्णरागषाडवसेवनात्।
शाकानां हरितानां च सेवनाच्च विदाहिनाम् ॥१७॥
कूर्चिकानां किलाटानां सेवनान्मन्दकस्य च।
दध्नः शाण्डाकिपूर्वाणामासुतानां च सेवनात् ॥१८॥
तिलमाषकुलत्थानां तैलानां पैष्टिकस्य च।
ग्राम्यानूपौदकानां च मांसानां लशुनस्य च ॥ १९ ॥
प्रक्लिन्नानामसात्म्यानां विरुद्धानां च सेवनात्।
अत्यादानाद्दिवास्वप्नादजीर्णाध्यशनात् क्षतात् ॥२०॥
क्षतबन्धप्रपतनाद्धर्मकर्मातिसेवनात्।[1]
विषवाताग्निदोषाच्च विसर्पाणां समुद्भवः ॥ २१ ॥
एतैर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः।
दूष्यान् संदूष्य रक्तादीन् विसर्पन्त्यहिताशिनाम् ॥

जायते कैश्च हेतुभिरित्यस्योत्तरं—लवणाम्लेत्यादि। उष्णानामिति उष्णवीर्याणां, सैन्धवामलकादीनां लवणाम्लकटूनामपि शीतवीर्यत्वादुष्णानामिति कृतम्। हरितानामिति हरितशाकवर्गपठितानामार्द्रकादीनाम्। कूर्चिका दधिकूर्चिका तक्रकूर्चिका च, किलाटः नष्टक्षीरपिण्डः। मन्दकस्येति मन्दजातस्य दध्नः। शाण्डाकिपूर्वाणामिति शाण्डाकीसंधानानाम्। अजीर्णेऽशनमजीर्णाशनं, किंवा अजीर्णस्यापरिणतस्याशनम्; अविदग्धे पूर्वदिनान्नेऽशनमध्यशनम्। व्यामिश्रैः संमिश्रैः ॥ १६–२२ ॥

बहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः।
विसर्पो बलमेतेषां ज्ञेयं गुरु यथोत्तरम् ॥ २३ ॥
बहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम्।
विसर्पं दारुणं विद्यात् सुकृच्छ्रं त्वन्तराश्रयम् ॥२४॥
अन्तःप्रकुपिता दोषा विसर्पन्त्यन्तराश्रये।
बहिर्बहिःप्रकुपिताः सर्वत्रोभयसंश्रिताः ॥ २५ ॥

[1] 'वधबन्धप्रपतनाद्दंष्ट्रादन्तनखक्षतात्' इति पा०।

साध्यासाध्यविभागज्ञानार्थं शाखाश्रितत्वादीनाह—बहिरित्यादि। यथोत्तरमिति बहिःश्रितादन्तःश्रितः, अन्तःश्रितादुभयाश्रितो गुरुरित्यर्थः। अन्तराश्रये इति अन्तःशरीरे, बहिरिति शाखायां, सर्पति ॥ २३–२५ ॥

मर्मोपघातात् संमोहादयनानां विघट्टनात्।
तृष्णातियोगाद्वेगानां विषमाणां प्रवर्तनात् ॥ २६ ॥
विद्याद्विसर्पमन्तर्जमाशु चाग्निबलक्षयात्।
अतो विपर्ययाद्बाह्यमन्यैर्विद्यात् स्वलक्षणैः ॥ २७ ॥

अन्तराश्रयादिविसर्पलक्षणमाह—मर्मोपघातादित्यादि। मर्मेति हृदयम्। विद्यात् स्वलक्षणैरिति वक्ष्यमाणविसर्पलक्षणैः ॥ २६ ॥ २७ ॥

यस्य सर्वाणि लिङ्गानि बलवद्यस्य कारणम्।
यस्य चोपद्रवाः कष्टा मर्मगो यश्च हन्ति सः ॥२८॥

यस्य सर्वाणीति अन्तराश्रयबहिराश्रयविसर्पलक्षणानि ॥२८॥

रूक्षोष्णैः केवलो वायुः पूरणैर्वा समावृतः।
प्रदुष्टो दूषयन् दूष्यान् विसर्पति यथाबलम् ॥ २९ ॥

तस्य रूपाणि—भ्रमदवथुपिपासानिस्तोदशूलाङ्गमर्दोद्वेष्टनकम्पज्वरतमककासास्थिसंधिभेदविश्लेषणवेपनारोचकाविपाकाश्चक्षुषोराकुलत्वमस्रागमनं पिपीलिकासंचार इव चाङ्गेषु, यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशः श्यावारुणाभासः श्वयथुमान् निस्तोदभेदशूलायामसंकोचहर्षस्फुरणैरतिमात्रं प्रपीड्यते, अनुपक्रान्तश्चोपचीयते शीघ्रभेदैः स्फोटकैस्तनुभिररुणाभैः श्यावैर्वा तनुविशदारुणाल्पास्रावैः, विबद्धवातमूत्रपुरीषश्च भवति, निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति वातविसर्पः ॥ ३० ॥

रूक्षोष्णैरित्यादिना पृथग्घेतुलक्षणमाह। अत्र च रूक्षादिभिः स्वतन्त्रः, पूरणेन च मार्गावरोधात् कुपितः परतन्त्रो वायुर्ज्ञेयः। उष्णं च यद्यपि न साक्षाद्वातजनकं तथाऽपि रूक्षसंबन्धादुष्णं वातं करोति। उष्णसंबद्धत्वसामान्यसंप्राप्तिसंप्राप्तमिह यत् पित्तं तज्जन्यत इति ज्ञेयम्। दवथुः चक्षुरादिष्वलर्थतापः, दवथुश्च पैत्तिकोऽप्यत्र उत्सर्गसिद्धविसर्पार्थगामिपित्तरक्तसंभवाद्भवति ॥ २९ ॥ ३० ॥

पित्तमुष्णोपचारेण विदाह्यम्लाशनैश्चितम्।
दूष्यान् संदूष्य धमनीः पूरयन् वै विसर्पति ॥ ३१ ॥

तस्य रूपाणि—ज्वरस्तृष्णा मूर्च्छा मोहश्छर्दिररोचकोऽङ्गभेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वमस्वप्नमरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं हरितहारिद्रनेत्रमूत्रवर्चस्त्वं हरितहारिद्ररूपदर्शनं च, यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहरितहारिद्रनीलकृष्णरक्तानां वर्णानामन्यतमं पुष्यति, सोत्सेधैश्चातिमात्रं दाहसंभेदनपरीतैः स्फोटकैरुपचीयते तुल्यवर्णास्रावैश्चिरपाकैश्च, निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति पित्तविसर्पः ॥ ३२ ॥

पित्तमित्यादिना पैत्तिकमाह। धमनीः पूरयन्निति पदं यद्यपि पैत्तिके एवोक्तं, तथाऽपि 'समानेष्वर्थेष्वेकत्राभिहितो विधिरन्यत्राप्यनुसंजनीयः' इति न्यायादन्यविसर्पेष्वपि ज्ञेयम्। अयं च समानो विधिः पित्तप्रधानत्वाद्विसर्पाणां पित्तविकारे एवोक्तः। शीतवातशीततोययोस्तृष्णा शीतवातवारितर्षः। अवकाशे इति देशे ॥ ३१ ॥ ३२ ॥

स्वाद्वम्ललवणस्निग्धगुर्वन्नस्वप्नसंचितः।
कफः संदूषयन् दूष्यान् कृच्छ्रमङ्गे विसर्पति ॥ ३३ ॥

तस्य रूपाणि—शीतकः शीतज्वरो गौरवं निद्रा तन्द्राऽरोचको मधुरास्यत्वमास्योपलेपो निष्ठीविका छर्दिरालस्यं स्तैमित्यमग्निनाशो दौर्बल्यं च, यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशः श्वयथुमान् पाण्डुर्नातिरक्तः स्नेहसुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैश्चिरकारिभिर्बहुलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते, प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद्घनमनुबद्धं स्निग्धमास्रावं स्रवति, ऊर्ध्वं च गुरुभिः स्थिरैर्जालावततैः स्निग्धैर्बहुलत्वगुपलेपैर्व्रणैरनुबध्यतेऽनुषङ्गी च भवति, श्वेतनखनयनवदनत्वङ्मूत्रवर्चस्त्वं, निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मविसर्पः ॥ ३४ ॥

स्वाद्वम्लेत्यादिना कफजमाह। हेत्वन्तरेष्वपि श्लेष्मणो विद्यमानेषु स्वाद्वादीनामभिधानमेषामेव प्रायो विसर्पजनकत्वात्। एवं वातपित्तजनकहेत्वभिधानेऽपि वर्णनीयम्। कृच्छ्रमङ्गे विसर्पति शीघ्रं शरीरे न विसर्पति। शीतकः शीतम्। ऊर्ध्वमिति अत ऊर्ध्वकालम्; किंवा ऊर्ध्वकाये, श्लेष्मण ऊर्ध्वकाये एवावस्थानात्। जालावततैरिति जालावततैरिवेत्यर्थः। अनुषङ्गी चिरकालस्थायी ॥ ३३ ॥ ३४ ॥

वातपित्तं प्रकुपितमतिमात्रं स्वहेतुभिः।
परस्परं लब्धबलं दहद्गात्रं विसर्पति ॥ ३५ ॥

तदुपतापादातुरः सर्वशरीरमङ्गारैरिवाकीर्यमाणं मन्यते, छर्द्यतीसारमूर्च्छादाहमोहज्वरतमकारोचकास्थिसंधिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते, यं यं चावकाशं विसर्पोऽनुसर्पति सोऽ-

१ 'अनुसर्पति' इति पा०। २ 'मार्गाश्च' इति पा०।

वकाशः शान्ताङ्गारप्रकाशोऽतिरक्तो वा भवति, अग्निदग्धप्रकारैश्च स्फोटैरुपचीयते, स शीघ्रगत्वादाश्वेव मर्मानुसारी भवति, मर्मणि चोपतप्ते पवनोऽतिबलो भिनत्त्यङ्गान्यतिमात्रं प्रमोहयति संज्ञां, हिक्काश्वासौ जनयति, नाशयति निद्रां, स नष्टनिद्रः प्रमूढसंज्ञो व्यथितचेता न क्वचन सुखमुपलभते, अरतिपरीतः स्थानादासनाच्छय्यां क्रान्तुमिच्छति, क्लिष्टभूयिष्ठश्चाशु निद्रां भजति, दुर्बलो दुःखप्रबोधश्च भवति; तमेवंविधमग्निविसर्पपरीतमचिकित्स्यं विद्यात् ॥ ३६ ॥

वातपित्तमित्यादिनाऽग्निविसर्पलक्षणमाह । परस्परं लब्धबलमिति वातपित्तं चान्योन्यं वर्धितशक्तिकम् । शान्ताङ्गारप्रकाश इति निर्वाणाङ्गारसदृशः कृष्ण इत्यर्थः । स्थानात् ऊर्ध्वावस्थानात् । क्रान्तुं गन्तुम् । एवंविधमित्यनेन अग्निविसर्पस्य 'अनुपद्दते मर्मणि' इत्यादिना साध्यत्वेन वक्ष्यमाणाऽवस्था व्यवस्थिता ॥ ३५ ॥ ३६ ॥

कफपित्तं प्रकुपितं बलवत् स्वेन हेतुना ।
विसर्पत्येकदेशे तु प्रक्लेदयति देहिनम् ॥ ३७ ॥

तद्विकाराः—शीतज्वरः शिरोगुरुत्वं दाहः स्तैमित्यमङ्गावसदनं निद्रा तन्द्रा मोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणां प्रायोपवेशनमङ्गविक्षेपोऽङ्गमर्दोऽरतिरौत्सुक्यं चोपजायते, प्रायश्चामाशये विसर्पत्यलसक एकदेशग्राही च, यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशो रक्तपीतपाण्डुपिडकावकीर्ण इव मेचकाभः कालो मलिनः स्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाको निरास्रावः शीघ्रक्लेदः स्विन्नक्लिन्नपूतिमांसत्वक् क्रमेणाल्परुक् परामृष्टोऽवदीर्यते कर्दम इवावपीडितोऽन्तरं प्रयच्छत्युपक्लिन्नपूतिमांसत्यागी सिरास्नायुसंदर्शी कुणपगन्धी च भवति संज्ञास्मृतिहन्ता च; तं कर्दमविसर्पपरीतमचिकित्स्यं विद्यात् ॥ ३८ ॥

कफपित्तमित्यादिना कर्दमविसर्पमाह । प्रायश्चामाशये विसर्पतीति कर्दमस्य कफपित्तजन्यत्वात् कफपित्तयोश्च आमाशयस्थितत्वादिति भावः । अलसक इति मन्दविसर्पी । एकदेशग्राही न सर्वशरीरव्यापकः । मलिनः मलदिग्धः । स्तिमितवेदन इति मन्दवेदनः । गम्भीरपाकः अन्तःपाकः । अन्तरं प्रयच्छतीति अवकाशं ददाति । एतस्य कर्दमसारूप्यात् कर्दमसंज्ञा ज्ञेया । तं कर्दमविसर्पपरीतमचिकित्स्यं विद्यादिति यथोक्तसर्वलक्षणं कर्दममसाध्यं विद्यात्; असंपूर्णलक्षणं प्रति तु चिकित्सां वक्ष्यत्येव ॥ ३७ ॥ ३८ ॥

स्थिरगुरुकठिनमधुरशीतस्निग्धान्नपानाभिष्यन्दिसेविनामव्यायामादिसेविनामप्रतिकर्मशीलानां श्लेष्मा वायुश्च प्रकोपमापद्यते, तावुभौ दुष्टप्रवृद्धावतिबलौ प्रदूष्य दूष्यान् विसर्पाय कल्पेते; तत्र वायुः श्लेष्मणा विबद्धमार्गस्तमेव श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां कृच्छ्रपाकसाध्यां कफाशये संजनयति, उत्सन्नरक्तस्य वा प्रदूष्य रक्तं सिरास्नायुमांसत्वगाश्रितं ग्रन्थीनां मालां कुरुते तीव्ररुजानां स्थूलानामणूनां वा दीर्घवृत्तरक्तानां, तदुपतापाज्ज्वरातिसारकासहिक्काश्वासशोषप्रमोहवैवर्ण्यारोचकाविपाकप्रसेकच्छर्दिमूर्च्छाङ्गभङ्गनिद्रारतिसदनाद्याः प्रादुर्भवन्त्युपद्रवाः; स एतैरुपद्रुतः सर्वकर्मणां विषयमतिपतितो विवर्जनीयो भवतीति ग्रन्थिविसर्पः ॥ ३९ ॥

स्थिरेत्यादिना ग्रन्थिविसर्पमाह । दुष्टप्रवृद्धाविति परस्परदूषकत्वेन प्रवृद्धौ । कृच्छ्रपाकसाध्यामिति च कृच्छ्रपाकां कृच्छ्रसाध्यां च; कृच्छ्रपाकता च चिरेण पाकाज्ज्ञेया । उत्सन्नरक्तस्येति वृद्धरक्तस्य । सिरास्नायुमांसेत्यादौ ग्रन्थिविसर्पं कुरुत इति योज्यं; तेन तीव्ररुजादियुक्तानां ग्रन्थीनामाश्रयं ग्रन्थिविसर्पं कुरुत इत्यर्थः । तदुपतापादिति तेन ग्रन्थिविसर्पेण पीडनात् । सर्वकर्मणां विषयमतिपतितो भवतीति सर्वचिकित्साविषयतामतिक्रान्तो भवतीत्यर्थः । सशब्देन चेह यथोक्तोपद्रवयुक्त एव ग्रन्थिविसर्पः प्रत्यवमृश्यते । अयं च ग्रन्थिविसर्पस्तन्त्रान्तरे अपचीसंज्ञया कथ्यत इत्याहुः ॥ ३९ ॥

उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा, रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः । तत्र प्रधानो व्याधिः, व्याधेर्गुणभूत उपद्रवः, तस्य प्रायः प्रधानप्रशमे प्रशमो भवति । स तु पीडाकरतरो भवति पश्चादुत्पद्यमानो व्याधिपरिक्लिष्टशरीरत्वात्; तस्मादुपद्रवं त्वरमाणोऽभिबाधेत ॥ ४० ॥

विसर्पाणां बहूपद्रवतया अनुषङ्गादिहैवोपद्रवस्वरूपं व्याकरोति—उपद्रवस्त्वित्यादि । तुशब्दः मूलव्याधिव्यवच्छेदे, अथवा तुशब्दः प्रकाशने । रोगोत्तरकालज इति रोगमध्यकालजः; एतेन रोगसहोत्पन्नस्य लिङ्गस्य व्यवच्छेदः । यानि च लिङ्गान्यपि कदाचिद्रोगोत्तरकालजानि भवन्ति तानि रोगेण सह प्राय उत्पद्यमानतया न रोगोत्तरकालजान्येव, तेन न तेषामुपद्रवत्वम् । रोगाश्रय इति रोगारम्भकदोषप्रकोपजन्यतया

१ 'आमाशयस्थानत्वात्' इति पा० ।

१ 'तीव्ररुजानामित्यादौ' इति पा० । २ 'गुणीभूतः' इति पा० ।

रोगेण समं तुल्यकारणः। एतेन गलगण्डे जाते स्वहेतूत्पन्नानां ज्वरादीनां रोगोत्तरकालजानामप्युपद्रवत्वं निषेधयति। रोग एवेत्यनेन मूलव्याधेः पृथग्रोगशब्देन व्यवह्रियमाणमुपद्रवं ग्राहयति; तेन व्याध्यवस्थाया रोगोत्तरकालजाया व्यवच्छेदं करोति। ततश्च शोथस्य या व्रणरूपाऽवस्था तस्या व्युदासः, तथा सर्वासामपि व्याध्यवस्थानामवस्थालक्षणयुक्तानां व्युदासः कृतो भवति; अवस्था व्याधेरवश्यंभाविता मूलव्याधिस्वरूपा एव, उपद्रवस्तु नावश्यं भवति। यद्यपि केचिन्महाबलदोषारब्धा व्याधय उपद्रवयुक्ता एवोत्पद्यन्ते, सहोत्पन्ने चोपद्रवार्थो नास्ति, तथाऽपि ये गदा उपद्रवरूपा जायन्ते ते तत्र सहोत्पन्ना अपि योग्यतया उपद्रवा भण्यन्ते। परमार्थतस्तु सहभाविनो नोपद्रवलक्षणयुक्ताः, किंतु रोगसंकरत्वेन तत्र जायन्त इति। एतदुपद्रवलक्षणार्थं एव सुश्रुतः—"तत्रौपसर्गिको नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः" (सु. सू. अ. ३५) इति। उपद्रवप्रकारमाह—स्थूलोऽणुर्वेति। उपद्रवसंज्ञानिरुक्तिमाह—पश्चाजायत इति उपद्रवसंज्ञ इति। एतेन उपद्रवति व्याध्युत्पादसमीपे उपैतीति उपद्रवः, इति निरुक्तिः कृता भवति। व्याधेर्गुणभूत इति मूलव्याध्यपेक्षयाऽप्रधानमित्यर्थः। गुणभूतत्वे एव हेतुमाह—तस्य प्रायः प्रधानप्रशमे शम इति।—मूलव्याधिप्रशमाधीनप्रशमत्वादुपद्रवस्याप्राधान्यमित्यर्थः। प्रायःशब्देन च व्यभिचारवाचिना क्वचिदुपद्रवस्य स्वतन्त्रा चिकित्साऽप्युक्ता। उपद्रवस्य आशुचिकित्स्यत्वं व्युत्पादयन्नाह—स त्वित्यादि। व्याधिपरिक्लिष्टशरीरत्वादिति दिग्योगे पञ्चमी; तेन व्याधिपरिक्लिष्टस्य पश्चादुत्पद्यमानतया पीडाकरतरो भवतीति वाक्यार्थः। उपसंहरति–तस्मादित्यादि। अभिबाधेतेति त्वरया चिकित्सेत्; सा च चिकित्सा मूलव्याधिप्रशमनेन तथा स्वतन्त्राऽपि भवतीत्युक्तमेव॥ ४०॥

**सर्वायतनसमुत्थं सर्वलिङ्गव्यापिनं सर्वधात्वनुसारिणमाशुकारिणं महात्ययिकमिति सन्निपातविसर्पमचिकित्स्यं विद्यात्॥ ४१॥**

संप्रति प्रक्रान्तं सन्निपातविसर्पमाह—सर्वेत्यादि। सर्वायतनसमुत्थमिति सर्वहेतुभवम्। सर्वलिङ्गव्यापिनमिति वातादिजोक्तसर्वलक्षणयुक्तम्। सर्वधात्वनुसारिणमिति विसर्पाश्रयत्वेनोक्तानामनुक्तानामपि च धातूनामाश्रयित्वं दर्शयति। तथा हि मसूरिकाया विसर्परूपाया एव तन्त्रान्तरे सकलधात्वाश्रयत्वमुक्तं, तदुत्सर्गतो विसर्पाणां दोषातिमात्रदुष्ट्या सप्तधातुकेतरधातुदुष्टिरपि भवतीति॥ ४१॥

**तत्र वातपित्तश्लेष्मनिमित्ता विसर्पास्त्रयः साध्या भवन्ति; अग्निकर्दमाख्यौ पुनरनुपसृष्टे मर्मणि अनुपगते वा सिरास्नायुमांसक्लेदे साधारणक्रियाभिरुभावेवाभ्यस्यमानौ प्रशान्तिमापद्येयाताम्, अनादरोपक्रान्तः पुनस्तयोरन्यतरो हन्याद्देहमाश्वेवाशीविषवत्; तथा ग्रन्थिविसर्पमजातोपद्रवमारभेत चिकित्सितुम्, उपद्रवोपद्रुतं त्वेनं परिहरेत्; सन्निपातजं तु सर्वधात्वनुसारित्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्चासाध्यं विद्यात्॥ ४२॥**

मर्माणीति हृदयादिप्रधानमर्माणि। साधारणक्रियाभिरिति आरम्भकदोषयोः समानाभिः क्रियाभिः। अभ्यस्यमानाविति सततमुपचर्यमाणौ। अनादरोपक्रान्त इति असम्यगुपक्रान्तः। तेन पूर्वं सर्वथाऽनुपक्रमे "ये हन्युरनुपक्रान्ताः" (सू.अ.१८) इत्यनेन मारकत्वमुक्तम्, इह तु असम्यगुपक्रमे इति विशेषः॥ ४२॥

**तत्र साध्यानां साधनमनुव्याख्यास्यामः॥ ४३॥**
**लङ्घनोल्लेखने शस्ते तिक्तकानां च सेवनम्।**
**कफस्थानगते सामे रूक्षशीतैः प्रलेपयेत्॥ ४४॥**
**पित्तस्थानगतेऽप्येतत् सामे कुर्याच्चिकित्सितम्।**
**शोणितस्यावसेकं च विरेकं च विशेषतः॥ ४५॥**
**मारुताशयसंभूतेऽप्यादितः स्याद्विरूक्षणम्।**
**रक्तपित्तान्वयेऽप्यादौ स्नेहनं न हितं मतम्॥ ४६॥**
**वातोल्बणे तिक्तघृतं पैत्तिके च प्रशस्यते।**
**लघुदोषे, महादोषे पैत्तिके स्याद्विरेचनम्॥ ४७॥**
**न घृतं बहुदोषाय देयं यन्न विरेचयेत्।**
**तेन दोषो ह्युपष्टब्धस्त्वङ्मांसरुधिरं पचेत्॥ ४८॥**
**तस्माद्विरेकमेवादौ शस्तं विद्याद्विसर्पिणः।**
**रुधिरस्यावसेकं च तद्ध्यस्याश्रयसंज्ञितम्॥ ४९॥**

तत्र साध्यानामित्यादिना चिकित्सामाह। उल्लेखनं वमनम्। कफस्थानगत इति ऊर्ध्वकायगते। पित्तस्थानत्वेन मध्यशरीरं, मारुताशयशब्देन च पक्वाशयाधःशरीरं गृह्यते। वातोल्बणे तिक्तघृतं पैत्तिके च प्रशस्यते लघुदोषे इति च्छेदः; तेन लघुदोषे पैत्तिके इति योज्यम्। बहुदोषायेति पित्तस्य प्रकृतत्वाद् बहुपित्तायेत्यर्थः। तेनेति अविरेचनघृतेन। तद्ध्यस्याश्रितसंज्ञितमिति तत् शोणितमस्य विसर्पस्य आश्रयत्वेन कथितं, तेन शोणितावसेकादाश्रयोच्छेदेन विसर्पोच्छेदो भवतीत्यर्थः॥ ४३–४९॥

**इति वीसर्पनुत् प्रोक्तं समासेन चिकित्सितम्।**
**एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते॥ ५०॥**
**मदनं मधुकं निम्बं वत्सकस्य फलानि च।**
**वमनं संप्रदातव्यं विसर्पे कफपित्तजे॥ ५१॥**

१ 'स्वराचिकित्स्यत्वं' इति पा०।

१ 'तं च' इति पा०।

पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥ ५२ ॥
यांश्च योगान् प्रवक्ष्यामि कल्पेषु कफपित्तिनाम्।
विसर्पिणां प्रयोज्यास्ते दोषनिर्हरणाः शिवाः ॥ ५३ ॥

व्यासत इति विस्तरेण। कफपित्तजे इति व्यस्तसमस्तकफपित्तजे ॥ ५०-५३ ॥

मुस्तनिम्बपटोलानां चन्दनोत्पलयोरपि।
सारिवामलकोशीरमुस्तानां वा विचक्षणः ॥ ५४ ॥
कषायान् पाययेद्वैद्यः सिद्धान् वीसर्पनाशनान्।
किराततिक्तकं लोध्रं चन्दनं सदुरालभम् ॥ ५५ ॥
नागरं पद्मकिञ्जल्कमुत्पलं सविभीतकम्।
मधुकं नागपुष्पं च दद्याद्वीसर्पशान्तये ॥ ५६ ॥
प्रपौण्डरीकं मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं च लोध्रं च तेनैव विधिना पिबेत् ॥ ५७ ॥
द्राक्षां पर्पटकं शुण्ठीं गुडूचीं धन्वयासकम्।
निशापर्युषितं दद्यात्तृष्णावीसर्पशान्तये ॥ ५८ ॥
पटोलं पिचुमर्दं च दार्वीं कटुकरोहिणीम्।
यष्ट्याह्वां त्रायमाणां च दद्याद्वीसर्पशान्तये ॥ ५९ ॥
पटोलादिकषायं वा पिबेत्त्रिफलया सह।
मसूरविदलैर्युक्तं घृतमिश्रं प्रदापयेत् ॥ ६० ॥
पटोलपत्रमुद्गानां रसमामलकस्य च।
पाययेत घृतोन्मिश्रं नरं वीसर्पपीडितम् ॥ ६१ ॥

किराततिक्तादिरपि कषाययोग एव। तेनैव विधिनेति मुस्तादियोगोक्तकषायविधिना। निशापर्युषितमिति शीतकषायम्। अयं च शीतकषायविधिः पटोलमित्यादावपि योज्यः। मसूरविदलैरिति मसूराणां विदलैः; न चात्र विदला श्यामा, तस्याः स्त्रीलिङ्गत्वात् ॥ ५४-६१ ॥

यच्च सर्पिर्महातिक्तं पित्तकुष्ठनिवर्हणम्।
निर्दिष्टं तदपि प्राज्ञो दद्याद्वीसर्पशान्तये ॥ ६२ ॥
त्रायमाणाघृतं सिद्धं गौल्मिके यदुदाहृतम्।
विसर्पाणां प्रशान्त्यर्थं दद्यात्तदपि बुद्धिमान् ॥ ६३ ॥
त्रिवृच्चूर्णं समालोड्य सर्पिषा पयसाऽपि वा।
घर्माम्बुना वा संयोज्य मृद्वीकानां रसेन वा ॥ ६४ ॥
विरेकार्थं प्रयोक्तव्यं सिद्धं वीसर्पनाशनम्।
त्रायमाणाशृतं वाऽपि पयो दद्याद्विरेचनम् ॥ ६५ ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरनाशनम् ॥ ६६ ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत्।
स एव गुरुकोष्ठाय त्रिवृच्चूर्णयुतो हितः ॥ ६७ ॥
दोषे कोष्ठगते भूय एतत् कुर्याच्चिकित्सितम्।

त्रिफलारसेत्यादौ त्रिफलारसादिभिः समं मिश्रितं घृतं देयम्। गुरुकोष्ठायेति क्रूरकोष्ठाय; अन्ये दोषपूर्णकोष्ठं गुरुकोष्ठमाहुः। दोषे कोष्ठगते भूय इत्यत्र भूयःशब्दः प्रायोवाची। ॥ ६२-६७ ॥—

शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥ ६८ ॥
भिषग्वातान्वितं रक्तं विषाणेन विनिर्हरेत्।
पित्तान्वितं जलौकोभिः, कफान्वितमलाबुभिः ६९
यथासन्नं विकारस्य व्यधयेदाशु वा सिराम्।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ७० ॥

शाखाश्रयदोषैर्दुष्टे रक्ते चिकित्सामाह—शाखादुष्ट इत्यादि। शाखादुष्टे रक्ते दोषविशेषेण रक्तावसेकोपायमाह—वातान्वितमित्यादि। रक्तावसेकविधानं चेह पराधिकारत्वान्नोक्तं, तच्च सुश्रुते ज्ञेयम्। यथासन्नमिति या विकारप्रत्यासन्ना सिरा तां व्यधयेत्। सिराव्यधश्च सर्वसाधारणः। रक्तानपहरणे दोषमाह—त्वङ्मांसेत्यादि ॥ ६८-७० ॥

अन्तःशरीरे संशुद्धे दोषे त्वङ्मांससंश्रिते।
आदितो वाऽल्पदोषाणां[1] क्रिया बाह्या प्रवक्ष्यते ७१
उदुम्बरत्वङ्मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः ॥ ७२ ॥
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥ ७३ ॥
कालीयं मधुकं हेम वन्यं चन्दनपद्मकौ।
एला मृणालं फलिनी प्रलेपः स्याद्घृताप्लुतः ॥ ७४ ॥
शाद्वलं च मृणालं च शङ्खं चन्दनमुत्पलम्।
वेतसस्य च मूलानि प्रदेहः स्यात् सतण्डुलः ॥ ७५ ॥
सारिवा पद्मकिञ्जल्कमुशीरं नीलमुत्पलम्।
मञ्जिष्ठा चन्दनं लोध्रमभया च प्रलेपनम् ॥ ७६ ॥
नलदं च हरेणुश्च लोध्रं मधुकपद्मकौ।
दूर्वा सर्जरसश्चैव सघृतं स्यात् प्रलेपनम् ॥ ७७ ॥
यावकाः सक्तवश्चैव सर्पिषा सह योजिताः।
प्रदेहो मधुकं वीरा सघृता यवसक्तवः ॥ ७८ ॥
बलामुत्पलशालूकं वीरामगुरुचन्दनम्।
कुर्यादालेपनं वैद्यो मृणालं च विसान्वितम् ॥ ७९ ॥
यवचूर्णं समधुकं सघृतं च प्रलेपनम्।
हरेणवो मसूराश्च समुद्गाः श्वेतशालयः ॥ ८० ॥
पृथक् पृथक् प्रदेहाः स्युः सर्वे वा सर्पिषा सह।
पद्मिनीकर्दमः शीतो मौक्तिकं पिष्टमेव वा ॥ ८१ ॥
शङ्खः प्रवालः शुक्तिर्वा गैरिकं वा घृताप्लुतम्।
( पृथगेते प्रदेहाश्च हिता ज्ञेया विसर्पिणाम्[3] )।
प्रपौण्डरीकं मधुकं[2] बला शालूकमुत्पलम् ॥ ८२ ॥

१ 'एवं निर्हृतदोषाणाम्' इति पा०। २ 'मधुकमुत्पलम्' इति पा०। ३ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते।

न्यग्रोधपत्रदुग्धीके सघृतं स्यात् प्रलेपनम्।
बिसानि च मृणालं च सघृताश्च कशेरुकाः ॥ ८३ ॥
शतावरीविदार्योश्च कन्दौ धौतघृताप्लुतौ।
शैवालं नलमूलानि गोजिह्वा वृषकर्णिका ॥ ८४ ॥
इन्द्राणिशाकं सघृतं शिरीषत्वग्बलाघृतम्।
न्यग्रोधोदुम्बरप्लक्षवेतसाश्वत्थपल्लवैः ॥ ८५ ॥
त्वक्कल्कैर्बहुसर्पिर्भिः शीतैरालेपनं हितम्।
प्रदेहाः सर्व एवैते वातपित्तोल्बणे शुभाः ॥ ८६ ॥
सकफे तु प्रवक्ष्यामि प्रदेहानपरान् हितान्।
त्रिफलां पद्मकोशीरं समङ्गां करवीरकम् ॥ ८७ ॥
नलमूलान्यनन्तां च प्रदेहमुपकल्पयेत्।
खदिरं सप्तपर्णं च मुस्तमारग्वधं धवम् ॥ ८८ ॥
कुरण्टकं देवदारु दद्यादालेपनं भिषक्।
आरग्वधस्य पत्राणि त्वचं श्लेष्मातकस्य च ॥ ८९ ॥
इन्द्राणिशाकं काकाह्वां शिरीषकुसुमानि च।
शैवालं नलमूलानि वीरां गन्धप्रियङ्गुकाम् ॥ ९० ॥
त्रिफलां मधुकं वीरां शिरीषकुसुमानि च।
प्रपौण्डरीकं ह्रीबेरं दार्वीत्वङ्मधुकं बलाम् ॥ ९१ ॥
पृथगालेपनं कुर्याद्द्वन्द्वशः सर्वशोऽपि वा।
प्रदेहाः सर्व एवैते देयाः स्वल्पघृताप्लुताः ॥ ९२ ॥
वातपित्तोल्बणे ये तु प्रदेहास्ते घृताधिकाः।
घृतेन शतधौतेन प्रदिह्यात् केवलेन वा ॥ ९३ ॥
घृतमण्डेन शीतेन पयसा मधुकाम्बुना।
पञ्चवल्ककषायेण सेचयेच्छीतलेन वा ॥ ९४ ॥
वातासृक्पित्तबहुलं विसर्पं बहुशो भिषक्।
सेचनास्ते प्रदेहा ये त एव घृतसाधनाः ॥ ९५ ॥
ते चूर्णयोगा वीसर्पव्रणानामवचूर्णनाः।
दूर्वास्वरससिद्धं च घृतं स्याद्व्रणरोपणम् ॥ ९६ ॥
दार्वीत्वङ्मधुकं लोध्रं केशरं चावचूर्णनम्।
पटोलः पिचुमर्दश्च त्रिफला मधुकोत्पले ॥ ९७ ॥
एतत् प्रक्षालनं सर्पिर्व्रणचूर्णं प्रलेपनम्।

संशुद्धे इति विरेचनशोणितमोक्षणाभ्याम्। आदित इति उत्पत्तावेव। बाह्या इति आलेपपरिषेकादिकाः। न्यग्रोधपादा इति वटप्ररोहाः। कदलीगर्भः गर्भस्था कदली। कालेयं कालेयककाष्ठमिति ख्यातम्। हेम इति नागकेशरचूर्णम्। वन्यं कैवर्तमुस्तकम्। शाद्वलं दूर्वा। मृणालम् उशीरम्⁴। वीरा विदारीकन्दः। हरेणवः वर्तुलकलायाः। श्वेतशालयः अकण्डितशुक्लधान्यानि। दुग्धिका स्वनामख्याता। मृणालं पद्मनालिका। वृषकर्णी मूषिकपर्णिका। काकाह्वा काष्ठोदुम्बरिका। इन्द्राणिः निर्गुण्डी। बलाघृतमिति छेदः। प्लक्षः अल्पदीर्घपत्रः पर्कटी। प्रदेहानपरानित्यनेन पूर्वोक्तप्रदेहा अपि सकफे हिता इति सूचयतीत्येके; पूर्वोक्तप्रदेहापेक्षयैव 'अपरान्' इति पदं कृतं, तेन पूर्वोक्तप्रदेहानां भिन्नविषयाणां कफेऽनधिकार इति पश्यामः। अनन्ता उत्पलसारिवा। कुरण्टकः अम्लानकः। श्लेष्मातकः 'बहुवारक' इति प्रसिद्धः। इन्द्राणीशाकं केचित् मत्स्याक्षकमाहुः, निर्गुण्डीमेवापरे। गन्धप्रियङ्गुः प्रियङ्गुरेव। शैवालमित्यादिर्व्यस्तसमस्तयोगः। सर्व एवेत्यत्र एते इति कफविहिताः प्रदेहाः। वातपित्तोल्बणे इत्यत्र यद्यपि वातोल्बणे साक्षात् प्रदेहा न विहिताः, तथाऽपि रक्तपित्तोल्बणे ये विहिताः कफे वा, तत्रैव द्रव्यगुणमालोच्य ये वातहरद्रव्यकृता लक्ष्यन्ते त एवाधिकर्तव्या इति ज्ञेयम्। घृतमण्डः घृतसंतानिका घृतोपरिभवा। पञ्चवल्कं तन्त्रान्तरे—"न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः। सर्वैरेकत्रसंयुक्तैः पञ्चवल्कलमुच्यते" इत्यनेनोक्तम्। अन्ये तु वेतसस्थाने गन्धमुण्डमत्र ग्राहयन्ति। प्रदेहार्थोक्तद्रव्याण्येव परिषेचने घृतसाधने व्रणावचूर्णनेऽपि विदध्यात्। दार्वीत्वादौ एतत्प्रक्षालनमिति एतैर्दार्व्यादिभिः प्रक्षालनार्थक्वाथः कर्तव्यः, तथा घृतं चैतैरेव साधनीयं, तथा चूर्णं च प्रलेपनं कर्तव्यम् ॥ ७१-९७ ॥—

१ 'देयं वा दाहशान्तये' इति पा०। २ 'रक्तपित्तोल्बणे हिताः' इति पा०। ३ 'कफजे' इति पा०। ४ अस्याग्रे हस्तलिखितपुस्तके "एरका 'होंगल' इति ख्याता। चौक्षा इति विशुद्धाः" इत्यधिकः पाठ उपलभ्यते।

प्रदेहाः सर्व एवैते कर्तव्याः संप्रसादनाः¹ ॥ ९८ ॥
क्षणे क्षणे प्रयोक्तव्याः पूर्वमुद्धृत्य लेपनम्।
अधावनोद्धृते पूर्वं प्रदेहा बहुशोऽघनाः ॥ ९९ ॥
देयाः प्रदेहाः कफजे पर्याधानोद्धृते घनाः।
त्रिभागाङ्गुष्ठमात्रः स्यात् प्रलेपः कल्कपेषितः ॥१००॥
नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः।
न च पर्युषितं लेपं कदाचिदवचारयेत् ॥ १०१ ॥
न च तेनैव लेपेन पुनर्जातु प्रलेपयेत्।
क्लेदवीसर्पशूलानि सोष्णाभावात् प्रवर्तयेत् ॥१०२॥
लेपो ह्युपरि पट्टस्य कृतः स्वेदयति व्रणम्।
स्वेदजाः पिडकास्तस्य कण्डूश्चैवोपजायते ॥ १०३ ॥
उपर्युपरि लेपस्य लेपो यश्चावचार्यते।
तानेव दोषाञ्जनयेत् पट्टस्योपरि यान् कृतः ॥ १०४॥
अतिस्निग्धोऽतिद्रवश्च लेपो यश्चावचार्यते।
त्वचि न स्निह्यते सम्यङ्न दोषं शमयत्यपि ॥ १०५॥
तन्वालिप्तं न कुर्वीत संशुष्को ह्यपुटायते।
न चौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति १०६
तन्वालिप्तेन ये दोषास्तानेव जनयेत्कृशम्।
संशुष्कः पीडयेद्व्याधिं निःस्नेहो ह्यवचारितः॥१०७॥

संप्रसादना इति सवर्णकराः, सवर्णत्वे साध्ये कर्तव्या इत्यर्थः; किंवा संप्रसादना इति रक्तपित्तप्रसादनाः; तेनाय-

१ गङ्गाधरस्तु 'संप्रधावनाः' इति पठित्वा "यस्मिन् विसर्पे ये प्रदेहास्ते सर्वं एव क्वाथयित्वा संप्रधावनाः कर्तव्याः, ते संप्रधावनाः पूर्वं प्रलेपनमुद्धृत्य क्षणे क्षणे प्रयोक्तव्याः। पूर्वं प्रलेपने अधावनोद्धृते धावनेनानुद्धृते बहुशोऽघनाः तनुद्रवप्रदेहा देयाः। कफजे विसर्पे पर्याधानस्य चतसृषु दिक्षु लिप्तस्य लम्बस्योद्धृते घनाः प्रदेहा देयाः" इति व्याख्यानयति।

र्थः-य एते रक्तपित्ते प्रदेहाः कर्तव्या उक्तास्ते क्षणे क्षणे पूर्वं लेपनमुद्धृत्य प्रयोक्तव्याः, न चिरेण नापि पूर्वप्रलेपनोपरीत्यर्थः। अशुष्कावस्थायां पूर्वलेपे उद्धृते सति बहुशः अघना प्रतनुकाश्च कर्तव्याः। कफप्रदेहानां विशेषमाह—देया इत्यादि। पर्योधानोद्धृत इति शुष्कोद्धृते ॥ ९८-१०७ ॥

अन्नपानानि वक्ष्यामि विसर्पाणां निवृत्तये।
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः ॥१०८॥
मधुरः किंचिदम्लो वा दाडिमामलकान्वितः।
सपरूषकमृद्वीकः सखर्जूरः शृताम्बुना ॥ १०९ ॥
तर्पणैर्यवशालीनां सस्नेहा चावलेहिका।
जीर्णे पुराणशालीनां यूपैर्भुञ्जीत भोजनम् ॥ ११० ॥
मुद्गान्मसूरांश्चणकान् यूषार्थमुपकल्पयेत्।
अनम्लान् दाडिमाम्लान् वा पटोलामलकैः सह ॥
जाङ्गलानां च मांसानां रसांस्तस्योपकल्पयेत्।
रूक्षान् परूषकद्राक्षादाडिमामलकान्वितान् ॥११२॥
रक्ताः श्वेता महाह्वाश्च शालयः षष्टिकैः सह।
भोजनार्थे प्रशस्यन्ते पुराणाः सुपरिस्रुताः ॥ ११३ ॥
यवगोधूमशालीनां सात्म्यान्येव प्रदापयेत्।
येषां नात्युचितः शालिर्नरा ये च कफाधिकाः ११४

भेषजमभिधायान्नपानमाह—अन्नपानानीत्यादि। जीर्णे इति अवलेहिकारूपेऽन्ने जीर्णे। जाङ्गलानामित्यादौ रूक्षानित्यनेन रससंस्कारकस्नेहविरहेण मत्स्याद्यतिस्निग्धमांसापेक्षया रूक्षमांसकृतत्वेन रूक्षत्वं ज्ञेयम्। रक्ता श्वेता महाह्वाश्चेति रक्तशालयः श्वेतशालयो महाशालयश्च; श्वेतशालिर्मागधे 'पुण्डरीकशालिः' इति ख्यातः। यवगोधूमेत्यादि यवगोधूमसात्म्यानां तावत् सात्म्यं यवगोधूममेव प्रयोजयेत्। येषां च शालिर्नात्युचितो नाभ्यस्तस्तेषां यवगोधूमावेव देयौ, तयोः कफविरुद्धत्वाद् विसर्पहितत्वाच्च। उक्तं हि—"सर्वं मधुरं कफकरमन्यत्र पुराणाच्छालियवगोधूमात्" (सू. अ. २७) इति ॥ १०८-११४ ॥

विदाहीन्यन्नपानानि विरुद्धं स्वपनं दिवा।
क्रोधव्यायामसूर्याग्निप्रवातांश्च विवर्जयेत् ॥ ११५ ॥

विसर्पे वर्ज्यान्याह—विदाहीनीत्यादि ॥ ११५ ॥

कुर्याच्चिकित्सितादस्माच्छीतप्रायाणि पैत्तिके।
रूक्षप्रायाणि कफजे स्नैहिकान्यनिलात्मके ॥ ११६ ॥
वातपित्तप्रशमनमग्निवीसर्पणे हितम्।
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञिते ॥ ११७ ॥

विसर्पे दोषभेदेन चिकित्सामाह—कुर्यादित्यादि ११६॥११७॥

रक्तपित्तोत्तरं दृष्ट्वा ग्रन्थिवीसर्पमादितः।
रूक्षणैर्लङ्घनैः सेकैः प्रदेहैः पाञ्चवल्कलैः ॥ ११८ ॥
सिरामोक्षैर्जलौकोभिर्वमनैः सविरेचनैः।
घृतैः कषायतिक्तैश्च कालज्ञः समुपाचरेत् ॥ ११९ ॥
ऊर्ध्वं चाधश्च शुद्धाय रक्ते चाप्यवसेचिते।
वातश्लेष्महरं कर्म ग्रन्थिवीसर्पणे हितम् ॥ १२० ॥
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते।
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिवीसर्पशूलिनाम् ॥ १२१ ॥
दशमूलोपसिद्धेन तैलेनोष्णेन सेचयेत्।
कुष्ठतैलेन चोष्णेन पाक्यक्षारयुतेन च ॥ १२२ ॥
गोमूत्रैः पत्रनिर्यूहैरुष्णैर्वा परिषेचयेत्।
सुखोष्णया प्रदिह्याद्वा पिष्टया चाश्वगन्धया १२३
शुष्कमूलककल्केन नक्तमालत्वचाऽपि वा।
विभीतकत्वचां वाऽपि कल्केनोष्णेन लेपयेत् १२४
बलां नागबलां पथ्यां भूर्जग्रन्थिं विभीतकम्।
वंशपत्राण्यग्निमन्थं कुर्याद्ग्रन्थिप्रलेपनम् ॥ १२५ ॥
दन्ती चित्रकमूलत्वक् सुधार्कपयसी गुडः।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥
वह्निर्मार्गस्थितं ग्रन्थिं किं पुनः कफसंभवम्।
दीर्घकालस्थितं ग्रन्थिं भिन्द्याद्वा भेषजैरिमैः ॥१२७॥
मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः।
गोधूमान्नैर्यवान्नैर्वा ससीधुमधुशर्करैः ॥ १२८ ॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः।
त्रिफलायाः प्रयोगैश्च पिप्पलीक्षौद्रसंयुतैः ॥ १२९ ॥
मुस्तभल्लातशक्तूनां प्रयोगैर्माक्षिकस्य च।
देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ॥ १३० ॥
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः।
अयोलवणपाषाणहेमताम्रप्रपीडनैः ॥ १३१ ॥
आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बली स्थिरः।
ग्रन्थिः पाषाणकठिनो यदा नैवोपशाम्यति ॥१३२॥
अथास्य दाहः क्षारेण शरैर्हेम्नाऽथ वा हितः।
पाकिभिः पाचयित्वा वा पाटयित्वा समुद्धरेत् ॥
मोक्षयेद्बहुशश्चास्य रक्तमुत्क्लेशमागतम्।
पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ १३४ ॥
धूमो विरेकः शिरसः स्वेदनं परिमर्दनम्।
अप्रशाम्यति दोषे च पाचनं वा प्रशस्यते ॥ १३५ ॥
प्रक्लिन्नं दाहपाकाभ्यां भिषक् शोधनरोपणैः।
बाह्यैश्चाभ्यन्तरैश्चैव व्रणवत् समुपाचरेत् ॥ १३६ ॥
कम्पिल्लकं विडङ्गानि दार्वीं कारञ्जकं फलम्।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥१३७॥

१ 'शृतैः' इति पा०। २ 'विभीतकस्य ग्रन्थिं वा' इति पा०। ३ 'शरैर्लौहेन वा' इति पा०। ४ 'पुनश्चास्य हृते' इति पा०। ५ 'दाहेन पाटनं' इति पा०।

द्विव्रणीयोपदिष्टेन कर्मणा चाप्युपाचरेत् ।
देशकालविभागज्ञो व्रणान् वीसर्पजान् बुधः ॥१३८॥

इति ग्रन्थिविसर्पचिकित्सा ।

ग्रन्थिविसर्पचिकित्सामाह—रक्तपित्तोत्तरमित्यादि । उत्कारिकाभिरित्यादिनोपनाहमाह । उपनाह उष्णो बहलो लेपः । पाक्यक्षारयुतेनेति पाकेन सुश्रुताद्युक्तविधानेन कृतः क्षारः पाक्यक्षारः, किंवा 'यवक्षारयुतेन' इति पाठः । गोमूत्रैरित्यादौ पत्रम् एरण्डादिपत्रम् । नक्तमालः करञ्जः । विभीतकत्वचामित्यत्र कल्केनेति योज्यम् । दन्तीत्यादौ यो लेपो शिलामपि भिन्द्यात् स कफग्रन्थिं नितरामेव भिन्द्यादिति भावः । इमैरिति वक्ष्यमाणैः । गिरिजं शिलाजतु; गिरिजप्रयोगश्च रसायनोक्तो ज्ञेयः । मुस्तसक्तवः "मुस्तं व्योषं" ( चि. अ. ७ ) इत्यादिना कुष्ठोक्ताः । भल्लातकसक्तवः रसायनोक्ताः । माक्षिकस्येति धातुमाक्षिकस्य । पूर्वोक्तैर्गुल्मभेदनैरिति विमार्गाजपदादर्शैः । अयोलवणेत्यादि तप्तायःप्रभृतिभिः पीडनैरित्यर्थः । शरैर्हेम्नेति शरेण हेम्ना वा तापितेन । पाकिभिरिति पाचनपिण्डैः । पुनश्चेत्यादिना उक्ता अपि धूमादयः पुनरपनीतग्रन्थिविषयतया विधीयन्ते, तेन चेह न पुनरुक्तिः ॥ ११८–१३८ ॥

य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये ।
स एव गलगण्डानां कफजानां निवृत्तये ॥ १३९ ॥
गलगण्डास्तु वातोत्था ये कफानुगता नृणाम् ।
घृतक्षीरकषायाणामभ्यासात्त्र भवन्ति ते ॥ १४० ॥

ग्रन्थिचिकित्सितमुक्तं गलगण्डगण्डमालायामप्यतिदिशन्नाह—य एवेत्यादिना । गलगण्डानामिति वचनाद् गण्डमालाऽपि विवक्षिता ॥ १३९ ॥ १४० ॥

यानीहोक्तानि कर्माणि विसर्पाणां निवृत्तये ।
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः ॥ १४१ ॥
विसर्पो न ह्यसंसृष्टो रक्तपित्तेन जायते ।
तस्मात् साधारणं सर्वमुक्तमेतच्चिकित्सितम् ॥१४२॥
विशेषो दोषवैषम्यान्न च नोक्तः समासतः ।
समासव्यासनिर्दिष्टां क्रियां विद्वानुपाचरेत् ॥१४३॥

विसर्पे रक्तमोक्षणस्तुतिमाह—यानीत्यादि । रक्तमोक्षणमेव कृतः प्रधानमित्याह—विसर्पो नेत्यादि । साधारणमिति वातकफविसर्पे रक्तपित्तहरं चिकित्सितम् । न च नोक्त इति उक्त इत्यर्थः ॥ १४१–१४३ ॥

तत्र श्लोकाः—

निरुक्तं नामभेदाश्च दोषा दूष्याणि हेतवः ।
आश्रयो मार्गतश्चैव विसर्पगुरुलाघवम् ॥ १४४ ॥

लिङ्गान्युपद्रवा ये च यल्लक्षण उपद्रवः ।
साध्यत्वं, न च, साध्यानां साधनं च यथाक्रमम् ॥
इति पिप्रक्षवे सिद्धिमग्निवेशाय धीमते ।
पुनर्वसुरुवाचेदं विसर्पाणां चिकित्सितम् ॥ १४६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने विसर्पचिकित्सितं नामैकविंशोऽध्यायः ॥२१॥

निरुक्तमित्यादिसंग्रहः । यल्लक्षण उपद्रव इति यादृग्लक्षण उपद्रवः । न चेति न साध्यमित्यर्थः । पिप्रक्षवे प्रष्टुमिच्छवे ॥ १४४–१४६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने विसर्पचिकित्सितं नामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः ।

अथातस्तृष्णाचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

विसर्पे प्रायेण तृष्णा उपद्रवरूपा भवतीति विसर्पानन्तरं तृष्णाचिकित्सितमुच्यते ॥ १ ॥ २ ॥

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥३॥

ज्ञानेत्यादौ ज्ञानं तत्त्वज्ञानं, प्रशमः शान्तिः, तपः चान्द्रायणादि । चिकित्सितं चिकित्साविधायको ग्रन्थः; निदानाद्यभिधानं च चिकित्सार्थमेव, निदानादिज्ञानपूर्वकत्वाच्चिकित्सायाः । पञ्चानामिति वचनेन पञ्चानामपि चिकित्साविषयत्वं दर्शयति, नहि कासश्वासवदस्यासाध्यत्वं कस्याश्चिदत्रेत्यर्थः, तथा सुश्रुतोक्तातिरिक्ततृष्णाद्वयान्तर्भावं पञ्चस्वेव सूचयति । उक्तं हि सुश्रुते—"तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च । स्यात् सप्तमी भक्तनिमित्तजा च" ( सु. उ. अ. ४८ ) इति ॥ ३ ॥

क्षोभाद्भयाच्छ्रमादपि शोकात्क्रोधाद्विलङ्घनान्मद्यात् ।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥४॥
धातुक्षयगदकर्षणवमनाद्यतियोगसूर्यसंतापैः ।
पित्तानिलौ प्रवृद्धौ सौम्यान्धातूंश्च शोषयतः ॥ ५ ॥
रसवाहिनीश्च नालीर्जिह्वामूलगलतालुकक्लोम्नः ।
संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ॥६॥

---

१ 'कफानुबन्धाः' इति पा० । २ 'समासव्यासनिर्दिष्टैरुक्तैतच्चिकित्सितम्' इति पा० ।

१ 'निदानविज्ञानपूर्वकत्वात्' इति पा० । २ 'धमनीः' इति पा० ।

**पीतं पीतं हि जलं शोषयतस्तावतो न याति शमम्।**
**घोरव्याधिकृशानां प्रभवत्युपसर्गभूता सा ॥ ७ ॥**

क्षोभादित्याद्युक्तनिदानस्य यथायोग्यतया वातकर्तृत्वं वातपित्तकर्तृत्वं चोन्नेयम्। पित्तानिलावित्यादिः सर्वतृष्णासंप्राप्तिग्रन्थः। सौम्यान् धातूनिति कफरसोदकानि सोमगुणातिरिक्तानि। प्रदूषयत इति शोषणेन दूषयतः। क्लोम्न इति द्वितीयाबहुवचनान्तम्। देहे इत्यनेन एतासां तृष्णानां शारीरत्वं दर्शयति। या हि मानसी तृष्णा सा शारीरे "इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्तते" (शा. अ. १) इत्यादावुक्ता; इयं तु देहाश्रयदोषकारणा सती देहजैवेति भावः। स्वाभाविकतृष्णायामपि वातपित्ते आरम्भके एव तत् किं साऽप्यत्र न गृह्यते ? । मैवं, तस्या उचितद्रवपानेनैवाभिप्रेतेन प्रशमादिह अस्वाभाविकव्याधिप्रकरणे नाधिकार इति हृदि कृत्वा। स्वाभाविकतृष्णाकरवातपित्ताभ्यां वक्ष्यमाणतृष्णारम्भकवातपित्तयोर्विशेषमाह—पीतं पीतमित्यादि। प्रकृततृष्णारम्भकौ पित्तवातौ पीतं पीतं जलं शोषयतः, अतो जलशोषणत्वाद्धेतोर्न शमं याति पुरुषः; स्वाभाविक्यां जलं पीत्वा शान्तिमधिगच्छतीति भावः। उपद्रवरूपतृष्णोत्पादमाह—घोरेत्यादि। उपसर्गभूता इति उपद्रवरूपा[1] ॥ ४–७ ॥

**प्राग्रूपं मुखशोषः, स्वलक्षणं सर्वदाऽम्बुकामित्वम्।**
**तृष्णानां सर्वासां लिङ्गानां लाघवमपायः ॥ ८ ॥**

तृष्णाप्राग्रूपमाह—प्राग्रूपमित्यादि। प्राग्रूपकथने एव मध्ये तृष्णानामव्यभिचारिलक्षणमाह—स्वलक्षणमित्यादि। स्वलक्षणमिति अव्यभिचारिलक्षणं; यथा—ज्वरस्य संतापः, श्वयथोरुत्सेधः। पुनः प्रकृतं प्राग्रूपमाह—लिङ्गानां लाघवमपाय इति।—लिङ्गानां वक्ष्यमाणवातादिजतृष्णालिङ्गानां लाघवमल्पत्वं केषांचिच्चाभावः पूर्वरूपं तृष्णानामित्यर्थः। तेन पूर्वरूपावस्थायां वक्ष्यमाणलक्षणानि कानिचिन्न भवन्त्येव, यानि च भवन्ति तान्यल्पतयाऽस्फुटानि भवन्ति। उक्तं च—"अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्" (चि.अ.११) इति। किंवा यदेतत् प्राग्रूपं मुखशोषः, स्वलक्षणं सर्वदाम्बुकामित्वं, एतत् प्राग्रूपं स्वलक्षणं च तृष्णानां; तेन मुखशोषाम्बुकामित्वे स्वलक्षणे तथा पूर्वरूपे च भवतः, पूर्वरूपावस्थायां त्वप्रबले मुखशोषाम्बुकामित्वे ज्ञेये। ये तु 'प्राग्रूपं मुखशोषः स्वरक्षयः सर्वदाऽम्बुकामित्वम्' इति पठन्ति, तेषां मते तृष्णायाः स्वलक्षणं नोक्तं स्यात्। उक्तं च हारीतेऽपि तृष्णास्वलक्षणं—"स्वलक्षणं तु तृष्णानां सर्वदाऽम्बुपिपासिता" इति। किंवा मुखशोषस्वरक्षये एव पूर्वरूपं, सर्वदाऽम्बुकामित्वं च स्वलक्षणं, लिङ्गानां च लाघवं रोगरूपायास्तृष्णाया अपायो गमनमित्यर्थः; अयमेव तृष्णाव्युपरमो यद्वक्ष्यमाणलिङ्गानामल्पत्वं, सर्वथोच्छेदो हि तृष्णालक्षणानां न भवत्येव, सहजतृष्णाग्रस्तत्वेनैतल्लक्षणानामल्पमात्रतयाऽवस्थानात्। कैश्चित्तु लिङ्गानां लाघवमाद्यूपादः, स च अपायो मरणमिति कृत्वा तृष्णानामसाध्यतालक्षणमिदमुच्यते, तन्नातिमनोहरम् ॥ ८ ॥

**मुखशोषस्वरभेदभ्रमसंतापप्रलापसंस्तम्भान्।**
**ताल्वोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशं च ॥ ९ ॥**
**जिह्वानिर्गममरुचिं बाधिर्यं मर्मदूयनं सादम्।**
**तृष्णोद्भूता कुरुते, पञ्चविधां लिङ्गतः शृणु ताम् १०**

सर्वतृष्णानामुपद्रवानाह—मुखशोषेत्यादि। उद्भूतेति वृद्धा। ये तु मुखशोषादीनि लक्षणान्याहुस्तन्मते तृष्णोपद्रवानामभिधानं न स्यात्, उपद्रवाश्चाध्यायसंग्रहे संगृहीताः; तेनातिशयवृद्धा मुखशोषादय उपद्रवाः, वृद्धास्तु लिङ्गमिति व्यवस्था ॥ ९ ॥ १० ॥

**अब्धातुं देहस्थं कुपितः पवनो यदा विशोषयति।**
**तस्मिञ्शुष्के शुष्यत्यबलस्तृष्यत्यथ विशुष्यन् ॥११॥**

अब्धातुमित्यादिना पञ्चानां संप्राप्त्याद्याह। देहस्थमिति देहे नानारसादिरूपतया स्थितम्। शुष्केऽब्धातौ शुष्यतीति योज्यम् ॥ ११ ॥

**निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता च**
**स्रोतोऽवरोध इति च स्याल्लिङ्गं वाततृष्णायाः १२**

स्रोतोवरोध इति अंत्युपघातः[1] ॥ १२ ॥

**पित्तं मतमाग्नेयं कुपितं चेत्तापयत्यपां धातुम्।**
**संतप्तः स हि जनयेत्तृष्णां दाहोल्बणां नृणाम् ॥१३॥**
**तिक्तास्यत्वं शिरसो दाहः शीताभिनन्दता मूर्च्छा।**
**पीताक्षिमूत्रवर्चस्त्वमाकृतिः पित्ततृष्णायाः ॥१४॥**

पित्तमित्यादिना पित्तजामाह। शरीरसंख्याचारीरे पित्तमाप्यमुक्तं "यद्द्रवसरस्निग्धमन्दमृदुपिच्छिलं रसरुधिरवसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनं च" (शा. अ. ७) इत्यनेन, तथा तत्रैव "यत् पित्तमूष्मा यो, या च शरीरे भाः, तत् सर्वमाग्नेयम्" इत्यनेन द्व्यात्मकत्वं पित्तस्य यद्यप्युक्तं, तथाऽप्याग्नेयाकारत्वाद् बाहुल्यात् पित्तमाग्नेयमेवेति दर्शयन्नाह—पित्तं मतमाग्नेयमिति; द्व्यात्मकत्वेऽपि च पित्तस्याग्नेयांशप्राधान्यादन्यत्रापि सौम्याग्नेयवायव्यविकारभेदे पैत्तिकविकारा आग्नेयत्वेन गृहीता एव। संतप्तः स हीति अब्धातुः संतप्तः। 'संतप्तं हि' इति पाठपक्षे पित्तमेव जनयेदिति योज्यम्। यदाऽब्धातुर्जनयति तदा पित्तसंतप्त एव जनयतीति पित्तस्यैव कर्तृत्वम् ॥ १३ ॥ १४ ॥

**तृष्णा याऽऽमप्रभवा साऽप्याग्नेयाऽऽमपित्तजनितत्वात्।**[2]
**लिङ्गं तस्याश्चारुचिराध्मानकफप्रसेकौ च ॥ १५ ॥**

तृष्णेत्यादिनाऽऽमजामाह। आमशब्देन चेह लक्षणया आमसमानचिकित्सित आमसमानलक्षणश्च कफोऽपि गृह्यते। तेना-

१ 'न्त्युपसर्गरूपा' इति पा०।

१ 'अन्त्युपघातः' इति पा०। २ 'आग्नेयग्रहणगृहीता एव' इति पा०। ३ 'साऽप्याग्नेयी न पित्तजनितत्वात्' इति पा०।

मप्रभवाया व्युत्पादनेन कफजाऽपि सुश्रुतोक्ता गृहीतैवेह। साऽप्याग्नेयेत्यनेन पूर्वपरिज्ञातं सर्वासां वातपित्तजन्यत्वं समुन्नयति। वातश्च तृष्णाकारणत्वेनोक्तोऽप्यत्राप्रधानं, पित्तमेव तु प्रधानमितीह वाताकथनादुन्नीयते। अन्यत्राप्युक्तं—"दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम्। प्रभाप्रसादौ मेधा च पित्तकर्माविकारजम्" (सू. अ. १८) इति। आमपित्तजनितत्वादिति आमावरोधवृद्धपित्तजनितत्वादित्यर्थः ॥ १५ ॥

**देहो रसजोऽम्बुभवो रसश्च तस्य क्षयाच्च तृष्येद्धि।**
**दीनस्वरः प्रताम्यन् संशुष्कहृदयगलतालुः[१] ॥ १६ ॥**

देहो रसज इत्यादिना क्षयजामाह। आहाररसात् सर्वधातुपोषको धातुरस उत्पद्यते, स च रसो देहपोषकोऽम्बुभव इति आप्य इत्यर्थः। तस्य क्षयादिति रसक्षयात् तृष्यते; रसक्षयादम्बुक्षयो भवति, तेन चाम्बुक्षयेण पुरुषः पानीयप्रार्थनारूपतृष्णया युक्तो भवतीति युक्तमिति दर्शयति। उक्तं हि सुश्रुते—"दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः। स्वयोनिवर्धनं यत्तदन्नपानं प्रकांक्षति" (सु. सू. अ. १५) इति; इहापि चोक्तं 'तस्य क्षयाच्च तृष्येद्धि' इति ॥ १६ ॥

**भवति खलु योपसर्गात्तृष्णा सा शोषिणी कष्टा।**
**ज्वरमेहक्षयशोषश्वासाद्युपसृष्टदेहानाम्[२] ॥ १७ ॥**

भवतीत्यादिनोपसर्गजामाह। उपसर्गादिति ज्वराद्युपद्रवात्, ज्वराद्युपद्रवरूपतयेति यावत्। कष्टेति कष्टसाध्या। एवं प्राक्सूत्रितवातपित्तामाम्बुक्षयोपसर्गात्मिकाः पञ्च तृष्णा व्याहृताः। अत्रैव सुश्रुतोक्ता कफजा आमजायामवरुद्धा, क्षतजा उपसर्गात्मिकायामवरुद्धा, अन्नजा चामजायामेवान्तर्भावनीया ॥ १७ ॥

**सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम्।**
**घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥ १८ ॥**

इदानीं तृष्णानामसाध्यतालक्षणमाह—सर्वास्त्वित्यादि। घोरोपद्रवयुक्तेति पीडाकरोपद्रववती ॥ १८ ॥

**नाग्निं विना हि तर्षः पवनाद्वा तौ हि शोषणे हेतू।**
**अब्धातोरतिवृद्धावपां क्षये तृष्यते नरो हि ॥ १९ ॥**
**गुर्वन्नपयःस्नेहैः संमूर्च्छद्भिर्विदाहकाले च।**
**यस्तृष्येद्धृतमार्गे तत्राप्यनिलानलौ हेतू ॥ २० ॥**
**तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति।**
**शोषयतोऽपां धातुं तावेव हि मद्यशीलानाम् ॥२१॥**
**तप्तास्विव सिकतासु हि तोयमाशु शुष्यति क्षिप्तम्।**
**तेषां संतप्तानां हिमजलपानाद्भवति शर्म ॥ २२ ॥**

संप्रति तृष्णान्तराणामुक्ततृष्णास्वेवान्तर्भावं दर्शयन्नुक्तवक्तव्यतृष्णानामपि वात-पित्त-क्षयजन्यत्वमाह—नाग्निमित्यादि। कस्मात् पुनरग्निवातौ विना तर्षो न भवतीत्याह—तौ हीत्यादि। तौ हि अतिवृद्धौ पित्तवातरूपौ अग्निपवनौ अब्धातोः शोषणे हेतू, तस्मान्नाग्निवातौ विना तर्ष इत्युक्तमित्यर्थः। एवमग्निवाताभ्यां कृतेऽपां क्षये स्वरूपादेव नरस्तृष्यति। एवं पित्तवातकृताब्धातुक्षयजतृष्णाभेदमभिधाय अन्तर्भावनीयतृष्णाभेदानाह-गुर्वन्नेत्यादि। संमूर्च्छद्भिरिति एकतां गच्छद्भिः। अत्र वातो वृद्धः संमूर्च्छनेऽन्नस्य तृष्णाकरः, विदाहकाले च या तृष्णा तत्र पित्तं तृष्णाकरम्। मद्यजामप्यन्तर्भावयन्नाह-तीक्ष्णोष्णेत्यादि। सिकतासु वालुकासु। तेषामित्युपशमकथनम्। शर्मेति सुखम् ॥ १९-२२ ॥

**शिशिरस्नातस्योष्मा रुद्धः कोष्ठं प्रपद्य तर्षयति।**
**तस्मात्तोष्णक्लान्तो भजेत सहसा जलं शीतम्[१] २३**

शीतम्लानजामन्तर्भावयन्नाह—शिशिरेत्यादि। शिशिरं शीतम्। ऊष्मा रुद्ध इति शीतस्पर्शजलेन बहिरनिर्गच्छन् रोमकूपैरूष्माऽवरुद्धः प्रतीपीकृतः, एतेन एतस्यापि पित्तजत्वमुक्तम्। न सहसेत्यनेन विश्रम्य शीतजलसेवायां न तथाविधा तृष्णा भवतीति दर्शयति ॥ २३ ॥

**लिङ्गं सर्वास्वेतास्वनिलक्षयपित्तजं[२] भवत्यथ तु।**
**पृथगागमाच्चिकित्सितमतः प्रवक्ष्यामि तृष्णानाम्**

संप्रति अन्नसंमूर्च्छनादिना यथोक्तक्रमेण अनिल-क्षय-पित्तजावरोधमभिधाय सर्वासामेवानिल-क्षय-पित्तजत्वमुपदर्शयन्नाह-लिङ्गं सर्वास्वित्यादि। अनिल-क्षय-पित्तजमित्यत्र क्षयजमिति अब्धातुक्षयजमेव। सामान्येऽपि तृष्णानां भेदेन चिकित्साभिधाने हेतुमाह-अथ त्वित्यादि। पृथगागमादिति पृथग्घेतुत्वात्, आगच्छत्यस्मादिति आगमो हेतुः; वातादिहेतुभेदाच्चिकित्सितभेदं वक्ष्यामीत्यर्थः। किंवा पृथक् चिकित्सितं वक्ष्यामि, आगमादिति आयुर्वेदागमप्रामाण्यात्; आगमे तृष्णानां भेदेन चिकित्साभिधानादहमपि पृथक् चिकित्सां वक्ष्यामीत्यर्थः ॥ २४ ॥

**अपां क्षयाद्धि तृष्णा संशोष्य नरं प्रणाशयेदाशु।**
**तस्मादैन्द्रं तोयं समधु पिबेत्तद्गुणं वाऽन्यत् ॥ २५ ॥**
**किञ्चित्तुवरानुरसं तनु लघु शीतलं सुगन्धि**
**सुरसं च।**
**अनभिष्यन्दि च यत्तत्क्षितिगतमप्यैन्द्रवज्ज्ञेयम् २६**

अपां क्षयादित्यादिना चिकित्सामाह। ऐन्द्रमिति आन्तरिक्षम्। तद्गुणं वाऽन्यदिति यदुक्तं तत्राह-किंचिदित्यादि। किंचिदिति मनाक्। तुवरोऽनुरसतया रस्यते आस्वाद्यते यस्मिन् तत्तुवरानुरसम्। अन्तरिक्षं जलं ह्यव्यक्तसर्वरसयुक्तम्[३] "अव्यक्तीभावस्तु रसानां प्रकृतौ भवत्यनुरससमन्विते वा द्रव्ये" (चि. अ. सू. २६) इति। ऐन्द्रवदित्यनेन अन्तरिक्षानुकारि क्षितिसमावद्धं भवति। अन्ये तु तुवरशब्देन कषायमाहुः, तेन किंचित्कषायानुरसमित्यर्थः। तन्विति

१ 'दीनः संशुष्कगलताल्वः' इति पा०। २ '°कास°' इति पा०।

१ 'तस्माद्भजेत सहसा नोष्णः स्नाने जलं शीतम्' इति पा०। २ '°स्त्वनिलक्षयात् पित्तजं' इति पा०। ३ 'यद्यपि जलं सर्वमव्यक्तरसमेव भवति, तथाऽप्यनुरसतायामेव मधुरस्य प्रकारोऽभिधीयते। तेन किंचित्तुवरानुरसमित्यर्थः।' इति पा०।

स्वच्छम्। सुगन्धीति अनिष्टगन्धरहितम्; उक्तं हि सुश्रुते—"अनिष्टगन्धता गन्धदोषः" (सु. सू. अ. ४५) इति। अप्रातिकूल्येन रसनया आस्वाद्यते इति सुरसं; न तु व्यक्तसुष्ठुरसं सुरसम्; उक्तं हि सुश्रुते—"व्यक्तरसता रसदोषः" इति (सु. सू. अ. ४५) ॥ २५ ॥ २६ ॥

शृतशीतं ससितोपलमथवा शरपूर्वपञ्चमूलेन।
लाजासक्तुसिताह्वमधुयुतमैन्द्रेण वा मन्थम् ॥२७॥
वाट्यं वाऽऽमयवानां शीतं मधुशर्करायुतं दद्यात्।
पेयां वा शालीनां दद्याद्वा कोरदूषाणाम् ॥ २८ ॥
पयसा शृतेन भोजनमथवा मधुशर्करायुतं योज्यम्।
पारावतादिकरसैर्घृतभृष्टैर्वाऽप्यलवणाम्लैः ॥ २९ ॥
तृणपञ्चमूलमुञ्जातकैः प्रियालैश्च जाङ्गलाः सुकृताः।
शस्ता रसाः पयो वा तैः सिद्धं शर्करामधुमत् ॥३०॥
शतधौतघृतेनाक्तः पयः पिबेच्छीततोयमवगाह्य।
मुद्गमसूरचणकजा रसास्तु भृष्टा घृते देयाः ॥३१॥
मधुरैः सजीवनीयैः शीतैश्च सतिक्तकैः शृतं क्षीरम्।
पानाभ्यञ्जनसेकेष्विष्टं मधुशर्करायुक्तम् ॥ ३२ ॥
तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात्।
नारीपयः सशर्करमुष्णा अपि नस्यमिक्षुरसः ॥३३॥

शरपूर्वपञ्चमूलेनेति "शरेक्षुदर्भकाशानां शालीनां मूलमेव च" (चि. अ. १, पा. १) इत्यत्रोक्तेन शरादिपञ्चमूलेन। आमयवानां वाट्यमिति ईषद्भृष्टयवदलितयवमण्डः। मुञ्जातक उत्तरापथप्रसिद्धः। सुकृता इति सुसंस्कृताः। तैरिति तृणपञ्चमूल्यादिभिः। मधुरैरिति मधुररसैः। शीतैरिति शीतवीर्यैः। तज्जमिति मधुरादिशृतक्षीरजम् ॥ २७–३३ ॥

क्षीरेक्षुरसगुडोदकसितोपलाक्षौद्रसीधुमार्द्वीकैः।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः ॥ ३४ ॥
जम्ब्वाम्रातकबदरीवेतसपञ्चवल्कपञ्चाम्लैः।
हृन्मुखशिरःप्रदेहाः सघृता मूर्च्छाभ्रमतृष्णाघ्नाः स्युः
दाडिमदधित्थलोध्रैः सविदारीबीजपूरकैः शिरसः।
लेपो गौरामलकैर्घृतारनालायुतैश्च हितः ॥ ३६ ॥
शैवलपङ्काम्बुरुहैः साम्लैः सघृतैश्च शक्तुभिर्लेपः।
मस्त्वारनालार्द्रवसनकमलमणिहारसंस्पर्शाः ॥३७॥
शिशिराम्बुचन्दनार्द्रस्तनतटपाणितलगात्रसंस्पर्शाः
क्षौमार्द्रनिवसनानां वराङ्गनानां प्रियाणां च ॥ ३८ ॥
हिमवद्दरीवनसरित्सरोऽम्बुजपवनेन्दुपादशिशिराणाम्।
रम्यशिशिरोदकानां स्मरणं कथाश्च तृष्णाघ्नाः ॥

मार्द्वीकं मृद्वीकारसकृतं मद्यम्। गण्डूषः मुखपूरको द्रवः। पञ्चाम्लं "कोलाम्लं चुक्रिकाम्लं च मातुलुङ्गाम्लवेतसम्। चतुरम्लमिति प्रोक्तं पञ्चाम्लं तु सदाडिमम्" इति वचनाज्ज्ञेयम्। दधित्थः कपित्थः। गौरामलकैरिति आर्द्रतया गौरवर्णैरामलकैः। मस्त्वारनालस्तिमितं वसनं मस्त्वारनालवसनम्। इन्दुपादाः चन्द्ररश्मयः ॥ ३४–३९ ॥

वातघ्नमन्नपानं मृदु लघु शीतं च वाततृष्णायाम्।
क्षयकासनुच्छृतं क्षीरघृतमूर्ध्ववाततृष्णाघ्नम् ॥४०॥
स्याज्जीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे।

वातघ्नेत्यादिना तृष्णानां वैशेषिकीं चिकित्सामाह। क्षयकासहरैः शृतं क्षयकासनुच्छृतम्। ऊर्ध्ववातः श्वासः। वातपित्तजे तर्षे इत्यत्र संसर्गजा तृष्णा असूत्रिताऽपि असूत्रितद्वन्द्वजगुल्माभिधानन्यायेनोच्यते ॥ ४० ॥—

पैत्ते द्राक्षाचन्दनखर्जूरोशीरमधुयुतं तोयम् ॥४१॥
लोहितशालितण्डुलखर्जूरपरूषकोत्पलद्राक्षाः।
मधु पक्वलोष्टमेव च जले स्थितं शीतलं पेयम् ॥४२॥
लोहितशालिप्रस्थः सलोध्रमधुकाञ्जनोत्पलः क्षुण्णः
पक्वामलोष्टजलमधुसमायुतो मृन्मये पेयः ॥ ४३ ॥
वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः।
सिद्धेऽम्भस्यग्निनिभां कृष्णमृदं कृष्णसिकतां वा ॥
तप्तानि नवकपालान्यथवा निर्वाप्य पाययेताच्छम्।
आपाकशर्करं वाऽमृतवल्ल्युदकं तृषां हन्ति ॥ ४५ ॥
क्षीरवतां मधुराणां शीतानां शर्करामधुविमिश्राः।
शीतकषाया मृद्भृष्टसंयुताः पित्ततृष्णाघ्नाः ॥ ४६ ॥

पैत्ते इत्यत्र 'तर्षे' इति शेषः। लोहितशालिप्रस्थ इत्यादौ लोध्रादीनां मिलितानां चतुष्पलं, प्रक्षेप्यन्यायात् पादिकं मधु, पक्वामलोष्टप्रसादनं (चैलोडनयोग्यमात्रं) दत्त्वा शालितण्डुलप्रस्थः क्षपायां स्थाप्यते, तदन्नं (तर्षे पानयोग्यमात्रमधुप्रक्षेपं) मृन्मये पात्रे पीयत इति वृद्धैरुपदर्शितः कर्ममार्गः। नवकपालानि नूतनशरावादिखण्डान्। आपाकशर्करमिति पाकनिमित्तशर्करासहितम्। अमृतवल्ली गुडूची। मृद्भृष्टसंयुता इति भृष्टमृद्युक्ताः ॥ ४१–४६ ॥

व्योषवचाभल्लातकतिक्तकषायास्तथाऽऽमतृष्णाघ्नाः
यच्चोक्तं कफजायां वम्यां तच्चैव कार्यं स्यात् ॥ ४७ ॥
स्तम्भारुच्यविपाकालस्यच्छर्दिषु कफानुगां तृष्णाम्।
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ४८
दाडिममम्लफलं वाऽप्यन्यत् सकषायमथ लेहम्।
पेयमथवा प्रदद्याद्रजनीशर्करायुक्तम् ॥ ४९ ॥

१ 'लाजानां सक्तूनां समधुसितं मन्थमैन्द्रेण' इति पा०। २ 'घृतभर्जिताः' इति पा०। ३ '°माध्वीकैः' इति पा०। ४ 'रम्योदकशिशिराणां' इति पा०।

१ 'क्षीरघृतं वाततृष्णाघ्नम्' इति पा०। २ 'पक्त्वाऽऽमलोष्टमधुजलसमायुतः' इति पा०। ३–४ अयं पाठो हस्तलिखितपुस्तके न पठ्यते। ५ 'हरिद्राम्बुशर्कराक्षौद्रसंयुक्तम्' इति पा०।

क्षयकासेन तु तुल्या क्षयतृष्णा सा गरीयसी नृणाम्।
क्षीणक्षतशोपहितैस्तस्मात्तां भेषजैः शमयेत् ॥ ५० ॥
पानतृषार्तः पानं त्वर्धोदकमम्ललवणगन्धाढ्यम्।
शिशिरस्नातः पानं मद्याम्बु गुडाम्बु वा तृषितः ॥
भक्तोपरोधतृषितः स्नेहतृषार्तोऽथवा तनुयवागूम्।
प्रपिबेद्गुरुणा तृषितो भुक्तेन तदुद्धरेद्भुक्तम् ॥ ५२ ॥
मद्याम्बु वाऽम्बु कोष्णं बलवांस्तृषितः समुल्लिखेत् पीत्वा।
मागधिकाविशदमुखः सशर्करं वा पिबेन्मन्थम् ५३
बलवांस्तु तालुशोषे पिबेद्घृतं तृष्यमद्याच्च।
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबलः स्निग्धान् ॥ ५४ ॥
अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ ५५ ॥
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत्।
तर्षं मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात् ॥ ५६ ॥

अन्यत् सकषायमिति आमलादिसकषायलेहम्। पानतृषार्त इति अतिशयमद्यपानजतृद्पीडितः। भक्तोपरोधः भक्तच्छेदः। मागधिकाविशदमुख इत्यत्र मुखवैशद्यमात्रकारिका पिप्पली प्रयोक्तव्या। तालुशोषे यद्यपि घृतं निषिद्धं "तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः" ( सू. अ. १३ ) इति, तथाऽपीह बलवत्तृष्यानुयुक्तं घृतपानं विशिष्टत्वान्न विरोधि। स्निग्धेऽन्ने भुक्ते या तृष्णा तत्र यद्यपि गुडाम्बु स्निग्धगुणयुक्तत्वाच हितम्, उक्तं हि—"यदाहारगुणैः पानं विपरीतं तदिष्यते" ( सू. अ. २७ ) इति; तथाऽपि मधुररसतया तृष्णाहरत्वात् प्रभावाद्वोपयुज्यते। तर्षं मूर्च्छेत्यादिना औपसर्गिकतृष्णाचिकित्सोच्यते ॥ ४७–५६ ॥

तृड्दाहमूर्च्छाभ्रमक्लममदात्ययास्रविषपित्ते।
शस्तं स्वभावशीतं, शृतशीतं सन्निपातेऽम्भः ॥५७॥
हिक्काश्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे।
कफवातकृते स्त्याने सद्यःशुद्धे च हितमुष्णम् ॥५८॥
पाण्डूदरपीनसमेहगुल्ममन्दानलातिसारेषु।
प्लीह्नि च तोयं न हितं काममसह्ये पिबेदल्पम् ॥५९॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं काङ्क्षन्।
न लभेत स चेन्मरणमाश्वेवाप्नुयाद्दीर्घरोगं वा ॥६०॥
तस्माद्धान्याम्बु पिबेत्तृष्यन् रोगी सशर्कराक्षौद्रम्।
यद्वा तस्यान्यत्स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥६१॥
तस्यां विनिवृत्तायां तज्जन्य उपद्रवः सुखं जेतुम्।
तस्मात्तृष्णां पूर्वं जयेद्बहुभ्योऽपि रोगेभ्यः ॥ ६२ ॥

शीतमुष्णं च जलं कुत्र देयं वर्ज्यं वा कुत्रेत्याह—तृडित्यादि। विषपित्ते इति विषे पित्ते च। संनिपाते इति संनिपातज्वरोद्भूततृष्णायाम्। न हितमिति पाण्ड्वादिरोगे तृष्णायामपि तोयं न हितम्। असह्ये 'तर्षे' इति शेषः। एवमसह्यतृष्णायां जलादाने दोषमाह—पूर्वेत्यादि। पूर्वामयातुर इति पूर्वोत्पन्नगदपीडितः। तज्जन्योपद्रव इति तृष्णाप्रशमनार्थं पीयमानपानीयजः। सुखं जेतुमिति महात्ययकरीं तृष्णामपेक्ष्य जेतुं सुखोपायो भवतीत्यर्थः ॥ ५७–६२ ॥

तत्र श्लोकः—
हेतू यथाऽग्निपवनौ कुरुतः सोपद्रवां च पञ्चानाम्।
तृष्णानां पृथगाकृतिरसाध्यता साधनं चोक्तम् ६३

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने तृष्णारोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

हेतुरित्याद्यध्यायसंग्रहः। अग्निपवनौ इति यथाऽग्निपवनौ कुरुतः सोपद्रवां 'तृष्णां' इति शेषः। उपद्रवाश्च मुखशोषादयः पूर्वमुक्ताः ॥ ६३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सितस्थाने तृष्णाचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः।

अथातो विषचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
प्रागुत्पत्तिं गुणान् योनिं वेगाँल्लिङ्गान्युपक्रमान्।
विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥ ३ ॥

शीतोपशमप्राधान्यसामान्यात्तृष्णाचिकित्सितमनु विषचिकित्सितमुच्यते—प्रागित्यादि। प्रागुत्पत्तिः आद्योत्पत्तिः। योनिरिति अधिष्ठानम्। लिङ्गानीति देहसंबन्धिविषस्य लिङ्गानि, तथा अन्नादिगतस्य च लिङ्गानि। अत्र नापृष्टा गुरवो वदन्तीति न्यायाच्छिष्यप्रश्न उन्नेयः। विषं च यद्यपि रोगाधिकारे न सूत्रितं साक्षात्, तथाऽपि विषजमदाभिधानात्तत्कारणतया सूत्रितमेव रोगाधिकारे ज्ञेयं; तेन नोत्सूत्रमिह विषाभिधानमिति ॥ १–३ ॥

अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ ४ ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशोऽनलेक्षणः।
जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ ५ ॥

अमृतार्थमित्यादिना प्रागुत्पत्त्यभिधानं विषस्य महाप्रभावदर्शनार्थम्। हरिकेश इति पिङ्गलकेशः। स पुरुषः विषमुच्यते विषादनाद्धेतोः; एवं च विषशब्दनिरुक्तिरुक्ता भवति ॥ ४ ॥ ५ ॥

---

१ 'अभक्तच्छन्दः' इति पा०। २ 'छर्द्यम्लदाहमूर्च्छा' इति पा०।

१ 'पवातिवृद्धावुक्ताः' इति पा०। २ 'विषं स तु विषादनात्' इति पा०। ३ 'विषशब्दनिरुक्तं घटितं' इति पा०।

**जङ्गमस्थावरायां तद्योनौ ब्रह्मा न्ययोजयत् ।**
**तदम्बुसंभवं तस्माद्विविधं पावकोपमम् ॥ ६ ॥**
**अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम् ।**

तदम्बुसंभवं तस्माद् द्विविधमिति तदम्बुसंभवं समुद्रोत्पन्नं, तस्मात् समुद्रत उत्पन्नत्वादम्बुसंभवं, तथा तस्माद् ब्रह्मणा योनिद्वयनियुक्तत्वाद् द्विविधमित्यर्थः । अम्बुसंभवत्वेन चास्य वर्षाप्रकोपित्वं वक्ष्यमाणं युक्तम्; अम्बुयोनिभूतत्वेन चास्य जलेन प्रभावात् प्रशमनं क्रियत इति ज्ञेयम् । उक्तं हि भगवता व्यासेन—"अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । तस्मात् सर्वत्रगं तेजः स्वासु योनिषु शाम्यति" इति । अष्टवेगमिति मनुष्यापेक्षयाऽष्टवेगम्[1] । दशगुणास्त्वग्रे वक्ष्यमाणम् । उपक्रमाः चिकित्सानुष्ठानभेदाः ॥ ६ ॥—

**तद्वर्षास्वम्बुयोनित्वात् संक्लेदं गुडवद्गतम् ॥ ७ ॥**
**सर्पत्यम्बुधरापाये तदगस्त्यो हिनस्ति च ।**
**प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ॥ ८ ॥**

विषस्य वर्षासु विशेषप्रकोपे शरदि चोपशमे हेतुमाह—तद्वर्षास्वित्यादि । गुडो यथा पिण्डितोऽम्बुयोनित्वाद्वर्षासु संक्लेदं याति, तथा विषमपि क्लिन्नं विसर्पति उत्क्लिष्टशक्तिकं[2] च भवति, अत एव दूषीविषार्ता अतिपीडिता भवन्ति; अम्बुधराणां वृद्धिकारणं वर्षागमः; अगस्त्यप्रभावश्च तं हिनस्ति ॥ ७ ॥ ८ ॥

**सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः ।**
**जलौकामत्स्यमण्डूकाः कणभाः[3] सकृकण्टकाः ॥ ९ ॥**
**श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ।**
**दंष्ट्रिणो[4] ये विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥ १० ॥**

पराधिकारत्वाद्विषस्य सर्पा इत्यादिना जङ्गमस्थावरयोनिद्वयं संक्षेपादेवाह । यद्यपि विषगुणा अग्रे उद्दिष्टाः, तथाऽपि गुणानां गुण्यपेक्षत्वादग्रे विषस्य गुणिनः स्थावरजङ्गमभेदभिन्नस्याभिधानम्; उद्देशे तु प्रथमं गुणाभिधानं विषस्य कार्यकरणे गुणप्राधान्यख्यापनार्थम् । सर्पादीनां भेदा अग्रे एव वक्तव्याः, तेन तत्रैव व्याकर्तव्याः । आदिग्रहणादुच्चिटिङ्गादीनां तन्त्रान्तरोक्तानां ग्रहणम् । अत्र अदंष्ट्रिणोऽपि दंष्ट्रिसर्पप्राधान्याद्दंष्ट्रिण इत्युक्ताः; तथा दंष्ट्रोत्थमिति दंष्ट्रोत्थस्य सर्वविषप्राधान्याददंष्ट्रोत्थानामपि उन्दुरुविषादीनां ग्रहणम् । उक्तं ह्यन्यत्र "जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश । तत्र दृष्टिदंष्ट्रानिःश्वासनखमूत्रपुरीषशुक्रलालार्तवमुखसंदंशविशर्धितगुदास्थिपित्तशूकशवानि" ( सु. क. अ. ३ ) इति । तथाऽन्यत्रापि "शुक्रमूत्रपुरीषाणि देहे निपतितानि तु । दारुणं गरमित्याहुः" इति ॥ ९ ॥ १० ॥

**मुस्तकं[1] पौष्करं क्रौञ्चं वत्सनाभं वलाहकम् ।**
**कर्कटं कालकूटं च करवीरकसंज्ञकम् ॥ ११ ॥**
**पालकेन्द्रायुधं तैलं मेघकं कुशपुष्पकम् ।**
**रोहिषं पुण्डरीकं च लाङ्गलक्यञ्जनाभकम् ॥ १२ ॥**
**सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा ।**
**एवमादीनि चान्यानि मूलजानि स्थिराणि च ॥ १३ ॥**

स्थावरजे विषे मूलजानीति पदं मूलजस्य बहुत्वात् प्राधान्याच्च । तेन पत्रपुष्पादिजानामपि विषाणां ग्रहणं; यदुक्तं सुश्रुते—"मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च ॥ निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" (सु.क.अ.२) इति । कन्दस्त्विह मूलविशेषत्वान्मूलशब्देनैव गृहीतः । एतेषां च संज्ञासंबन्धे शबरकिरातादय एव तद्विदः प्रमाणं, ते हि गुरुपरंपरया व्याख्यानयन्ति ॥ ११–१३ ॥

**गरसंयोगजं[2] चान्यद्गरसंज्ञं गदप्रदम् ।**
**कालान्तरविपाकित्वान्न तदाशु हरत्यसून् ॥ १४ ॥**

स्थावरजङ्गमारब्धमेव तृतीयं विषमाह—गरसंयोगजमित्यादि । गरार्थः संयोगो येषां ते गरसंयोगा द्रव्यभेदाः, तेभ्यो जातं गरसंयोगजम् । 'गर' इति तन्त्रे संज्ञा यस्य तद् गरसंज्ञम् । तच्च चिरकारिरोगजनकमप्राणहरम्[3] । एतदेवाह—कालान्तरेत्यादि । सुश्रुतेऽपि त्रिविधमेव विषमुक्तं—"स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम्" ( सु. क. अ. २ ) इत्यनेन । यत्तु दूषीविषमग्रे वक्ष्यति तत् त्रिविधान्तर्गतं दर्शयिष्यामः । गरं तु द्विविधं—निर्विषद्रव्यसंयोगकृतं, तथा सविषद्रव्यसंयोगकृतं च; तत्राद्यं गरसंज्ञम्, उत्तरं तु कृत्रिममिति व्यवस्था । तेनेमामेव व्यवस्थां गृहीत्वोक्तं रसायने—"दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे" ( चि. अ. १, पा. ) इति । तथा वृद्धकाश्यपेऽप्युक्तं—"संयोगजं च द्विविधं तृतीयं विषमुच्यते । गरं स्यादविषं तत्र सविषं कृत्रिमं मतम्" इति ॥ १४ ॥

**निद्रां तन्द्रां क्लमं दाहं सपाकं[4] लोमहर्षणम् ।**
**शोफं चैवातिसारं च जनयेज्जङ्गमं[5] विषम् ॥ १५ ॥**
**स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।**
**फेनवम्यरुचिश्वासमूर्च्छाश्च जनयेद्विषम् ॥ १६ ॥**
**जङ्गमं[6] स्यादधोभागमूर्ध्वभागं तु मूलजम् ।**
**तस्माद्दंष्ट्राविषं[7] मौलं हन्ति मौलं च दंष्ट्रजम्[8] ॥ १७ ॥**

निद्रामित्यादिना जङ्गमविषस्य तथा ज्वरमित्यादिना स्थावरविषस्य लिङ्गानि सर्ववेगगतानि प्राह । जङ्गमस्थावरयोः पर-

---

१ 'मनुष्येषु वक्ष्यमाणाष्टवेगम्' इति पा० । २ 'उत्कृष्टशक्तिकं' इति पा० । ३ 'शलभाः' इति पा० । ४ 'दंष्ट्रिणोऽमी' इति पा० ।

१ 'मुस्तकादीनां' इति पा० । २ 'परे संयोगजं' इति, 'गरं संयोगजं' इति च पा० । ३ 'चिरकारित्वयोगजनकं' इति पा० । ४ 'दाहमपाकं' इति पा० । ५ 'जनयेत्क्रमम्' इति पा० । ६ गङ्गाधरस्तु 'जङ्गमं स्यादूर्ध्वभागमधोभागं तु मूलजम्' इति पठति । ७ 'तस्माद्दंष्ट्रिविषं' इति पा० । ८ 'दंष्ट्रिजम्' इति पा० ।

स्परोपघातात्मकधर्ममभिधातुं हेतुमत्परस्परोपघातकत्वमेवाह— जङ्गममित्यादि। तस्मादिति परस्परं विरुद्धमार्गगामित्वात्। एतेन च यद्वक्ष्यति—"विषपानं दष्टानां विषपीते दंशनं चान्ते" इति, तदुपपन्नं भवति। ननु "विषं विषघ्नमुक्तं यत् प्रभावस्तत्र कारणम्" (सू. अ. २६) इति आत्रेयभद्रकाप्यीये प्रभावेण विषस्य विषहरणाभिधानोपपत्तिवर्णनं तद्विरुध्यते; मैवं, यदि द्रव्यप्रभावः कारणं न स्यात् तदा यत्किंचिदूर्ध्वभागं मदनफलादि तदंष्ट्राविषहरं स्यात्, यच्चाधोभागं त्रिवृतादि तन्मौलविषं निहन्यात्; नचैतद्दृष्टं, तस्मात् प्रभावस्यैवात्मगुणतामात्रकारणमेतदधोभागत्वमूर्ध्वभागत्वं चेति॥ १५-१७॥

तृण्मोहदन्तहर्षप्रसेकवमथुक्लमा भवन्त्याद्ये।
वेगे रसप्रदोषादसृक्प्रदोषाद्द्वितीये तु॥ १८॥
वैवर्ण्यभ्रमवेपथुमूर्च्छाजृम्भाङ्गचिमिचिमातमकाः।
दुष्टपिशिताचृतीये मण्डलकण्डूश्वयथुकोठाः॥१९॥
वातादिजाश्चतुर्थे दाहच्छर्द्यङ्गशूलमूर्च्छाद्याः।
नीलादीनां तमसश्च दर्शनं पञ्चमे वेगे॥ २०॥
षष्ठे हिक्का, भङ्गः स्कन्धस्य तु सप्तमेऽष्टमे मरणम्।
नृणां, चतुष्पदां स्याच्चतुर्विधः, पक्षिणां त्रिविधः॥
सीदत्याद्ये भ्रमति च, चतुष्पदो वेपते, ततः शून्यः।
मन्दाहारो म्रियते श्वासेन हि चतुर्थवेगे तु॥ २२॥
ध्यायति विहगः प्रथमे वेगे, प्रभ्राम्यति द्वितीये तु।
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम्॥ २३॥

तृण्मोहेत्यादिना क्रमेणाष्टविषवेगलक्षणमाह। सुश्रुते एकैककलातिक्रमेण सप्तवेगा उदीरिताः; इह कलालङ्घनेनैव सप्तवेगाः, अष्टमे तु सप्तकलालङ्घनोत्तरकालं मारको वेगो दष्टस्य दंशदेशगमनाय पीतविषस्य हृदयगमनाय भवतीति सुश्रुतेन सममविरोधः। वातादिजा इति यथायोग्यतया उद्धतान्यतरैकदोषद्विदोषत्रिदोषजाः। मूर्च्छाद्या इत्यत्रादिशब्दः प्रकारवाची। चतुर्थादिवेगेष्वनुक्तमपि मेदआदिदूष्यमुन्नेतव्यं, सुश्रुतवचनात्। नीलादीनामित्यत्र आदिशब्देन प्रधानवाचिना नीलप्रधानेतरवर्णदर्शनं भवति। षष्ठे हिक्केति च्छेदः। विषवेगप्रस्तावाच्चतुष्पादपक्षिणोऽपि विषवेगानाह। एतद्विषवेगाभिधाने च प्रयोजनं–यद्विषवेगमृतस्यापि मांसमुपयोज्यं पीतविषस्य हृदयं दष्टस्य च दंशदेशं मुक्त्वेत्याद्युक्तविधानेन, वेगज्ञानेनाप्राप्तनैष्ठिकवेगस्य यथोक्तविधिना मांसं नोपादेयं, यतस्तस्य विषार्दितस्य सर्वं शरीरं विषवद्भवति। चतुष्पदादीनामल्पवेगत्वं सत्त्वाल्पत्वात्। अवसीदतीत्यादि द्वितीये, शून्य इत्यादि तृतीये॥ १८-२३॥

लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकासि सूक्ष्मं च।
उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः॥ २४॥
रौक्ष्याद्वातमशैत्यात्पित्तं सौक्ष्म्यादसृक् प्रकोपयति।
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्तते शीघ्रम्॥२५॥
शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं देहम्।
तीक्ष्णत्वान्मर्मघ्नं प्राणघ्नं तद्विकासित्वात्॥ २६॥
दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषम्।
दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति॥ २७॥

विषगुणानाह—लघ्वित्यादि। प्रत्येकं गुणानां कार्यमाह— रौक्ष्यादित्यादि। अशैत्यादिति उष्णत्वात्। सौक्ष्म्यादसृक्प्रकोपणमसृजोऽपि सूक्ष्ममार्गानुसारित्वात्। अव्यक्तरसत्वं च कफकोपनाय अव्यक्तरसत्वकफयोरेकजलरूपकार्यत्वाद्भवति। अन्नरसांश्चानुवर्तते इति अव्यक्तरसत्वेन जलं यथा गन्धग्रहणे योगवाहि भवति, तथा विषमपि अन्नरसान् झटित्यनुगतं भवति, ततः शीघ्रं तेन भावितमन्नं भवति। शीघ्रेत्यादौ शीघ्रत्वादाशु व्याप्नोति, व्यवायित्वात् केवलं देहं व्याप्नोतीति ज्ञेयम्। व्यवायित्वं सर्वतः प्रसरणशीलत्वं पानीयपतिततैलवत्। तीक्ष्णत्वान्मर्मघ्नमिति मर्मणां सौम्यानां मृदूनां तीक्ष्णेन विरुद्धत्वं बोद्धव्यम्। विकासित्वादिति हिंसनशीलत्वात्; विपूर्वो हि कसतिर्हिंसार्थः। लघुत्वादिति अनवस्थितत्वात्; यस्य चानवस्थितत्वं तस्य भेषजेनासंबन्धादुपक्रमणमकिंचित्करम्। असक्ता अविश्रान्ता दोषेषु गतिर्यस्य तत् असक्तगतिदोषं, विशदं हि पिच्छाभागरहितत्वात् क्वचिन्न सज्जति। अत्र च गुणानां प्रतिनियमेन विरुद्धकर्मकरणे विषस्याशिवत्वमेव नियामकं ज्ञेयं; तेन रौक्ष्यादिभिः श्लेष्मक्षयादि नाशङ्कनीयम्। सुश्रुते च विषगुणे यत् पाकित्वमुक्तं, तदाशुकारिविषे निष्प्रयोजनमिति नेहोक्तं; तथाहि–विषं नैतावन्तं कालमपेक्षते येन यावत्तस्य पाको भवत्यविचार्यः। सुश्रुते च कालान्तरप्रकोपित्वमपि दूषीविषगोचरतयोक्तं, तदिहापि दूषीविषे चिन्तनीयमिति॥ २४-२७॥

स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु।
तृण्मोहारतिमूर्च्छागलग्रहच्छर्दिफेनादि॥ २८॥
पित्ताशयस्थितं पैत्तिकस्य कफवातयोर्विषं तद्वत्।
तृड्कासज्वरवमथुक्लमदाहतमोतिसारादि॥ २९॥
कफदेशगं कफस्य च दर्शयेद्वातपित्तयोश्चेषत्।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि॥ ३०॥

संप्रति स्थानविशेषेण प्रकृतिविशेषप्राप्त्या च लिङ्गविशेषानाह—वातिकस्येत्यादि। विषं मद्यं च यद्यपि त्रिदोषकोपनं, तथाऽपि स्थानप्रकृतिविशेषप्राप्त्या तदनुगुणदोषप्रकोपमधिकं करोति, शेषयोस्तु मनागित्यर्थः। वातिकस्येति वातप्रकृतेः।

१ 'तज्ज्ञाः' इति पा०। २ 'शूलः' इति पा०। ३ 'आद्ये वेगे पक्षी भ्राम्यति द्वितीयवेगे तु' इति पा०। ४ 'विषमारितस्य' इति पा०।

१ 'अनुरसांश्चानुवर्तते' इति पा०। २ 'हृन्मोहारुचि०' इति पा०। ३ 'कफपित्तयो०' इति पा०। ४ 'तृद्पाकज्वरशोषक्लम०' इति पा०। ५ 'कफाधिकस्य वातपित्तयोश्च दर्शयति' इति पा०।

वातस्थाने पक्वाशयादौ । कफपित्तलिङ्गमीषदिति वचनाद् वातलिङ्गं बलवद्भवति, तच्च तृण्मूर्च्छेत्यादिनोक्तं ज्ञेयम्; एवमुत्तरत्रापि योज्यम् । कफवातयोरल्पवदिति ईषदित्यर्थः; तृडादि तु बलवल्लिङ्गं, तत् पित्तस्येत्यर्थः । कफेत्यादौ चकारात् कफप्रकृतेरित्यर्थः । ईषद्वातपित्तयोरिति योज्यम् ॥ २८-३० ॥

**दूषीविषं तु शोणितदुष्ट्यरुःकिटिमकोठलिङ्गं च ।**
**विषमेकैकं दोषं संदूष्य हरत्यसूनेवम् ॥ ३१ ॥**

दूषीविषलक्षणमाह—दूषीत्यादि । कोठः वरटीदंशशोथाकारः । कालान्तरप्रकोपि विषं दूषीविषम् । उक्तं चान्यत्र "दूषितं देशकालादिदिवास्वप्नैरभीक्ष्णशः । यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम्" इति । एवंभूतं च गरमेव प्रायो भवति, तथा स्थावरं जङ्गमं च भवति । यदुक्तं सुश्रुते—"जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा । स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति" ( सु. क. अ. २ ) इति । इहापि दूषीविषाः कीटा हीनवीर्यविषा वक्तव्याः । विषमेकैकमित्यादिना स्याद्वातिकस्येत्यादिना यदुक्तं तस्यैकैकदोषस्यात्यर्थकोपमाह । संदूष्येति अत्यर्थं दूषयित्वा ॥ ३१ ॥

**क्षरति विषतेजसाऽसृक्**
**तत् खानि निरुध्य मारयति जन्तुम् ।**
**पीतं मृतस्य हृदि तिष्ठति**
**दष्टविद्धयोर्दंशदेशे स्यात् ॥ ३२ ॥**

अनुक्तप्राणहरणसामग्रीमाह—क्षरतीत्यादिना । पीतं विषं विशेषेण मृतस्य हृदि तिष्ठति । दष्टविद्धयोश्च दंशदेशे विषं स्यात् । विद्धः दिग्धविद्धः । अत्र कश्चिन्मृत इव भवति, कश्चिच्च पवनादमृत इव । यदुक्तं काश्यपे—"मृत इव चेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च । स जीवयितुं शक्यः कृता चैतस्य हृदयरक्षा चेत्" इति ॥ ३२ ॥

**नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः ।**
**शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी स्यात् ३३**
**क्षतजं क्षताच्च नायात्येतानि भवन्ति मरणलिङ्गानि ।**
**एभ्योऽन्यथा चिकित्स्यास्तेषां चोपक्रमाञ्छृणु मे ३४**

एतद्विशेषज्ञानार्थं लक्षणमाह—नीलौष्ठेत्यादि । दण्डराजिः दण्डाकारा रेखा ॥ ३३ ॥ ३४ ॥

**मन्त्रारिष्टोत्कर्तननिष्पीडनचूषणाग्निपरिषेकाः ।**
**अवगाहरक्तमोक्षणवमनविरेकोपधानानि ॥ ३५ ॥**
**हृदयावरणाञ्जननस्यधूमलेहौषधप्रशमनानि ।**
**प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः ॥ ३६ ॥**
**मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः ।**
**स्युरुपक्रमा यथा ये यत्र योज्याः शृणु तथा तान् ३७**

मन्त्रेत्यादि । मन्त्रस्य विषहरेषु श्रेष्ठत्वादग्रेऽभिधानं; यदुक्तं "विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः । यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः" ( सु.क.अ.५ ) इति । अरिष्टा द्विविधा—मन्त्रेण रज्ज्वादिभिर्वा विशेषपरिबन्धः । उपधानं विषसंक्रमणार्थं मस्तके भेषजदानम् । हृदयावरणं हृदयरक्षाकरमौषधम् । प्रतिविषं विषान्तरप्रयोगः । मृतसंजीवनं विषेण मृतस्यामृत इव संजीवनकरं भेषजम् । शेषं व्यक्तं विवरणग्रन्थेन स्फुटं भविष्यति ॥ ३५-३७ ॥

**दंशात्तु विषं दष्टस्याविसृतं वेणिकां भिषग्बद्ध्वा ।**
**निष्पीडयेद्भृशं दंशमुद्धरेन्मर्मवर्जं वा ॥ ३८ ॥**
**तं दंशं वा चूषेन्मुखेन यवचूर्णपांशुपूर्णेन ।**

अविसृतमिति अव्याप्तशरीरम् । वेणिकां बद्ध्वेति विषवा(धा)रणिकां बद्ध्वा । अनेन च सामान्याभिधानेन मन्त्रव्यापारोऽप्यरिष्टानां कथितः, मन्त्राद्भिन्ना चारिष्टोक्ता । उक्तं चान्यत्र—"अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविदः । सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता" ( सु. क. अ. ५ ) इति । निष्पीडयेदिति निष्पीडनेन विषं गालयेत् । उद्धरेदिति उत्कृत्यापहरेत् । मर्मवर्ज्यमिति मर्मण्युपघातं निषेधयत्यत्रणे । यवचूर्णेन पांशुना वा मुखपूरणं विषसंबन्धपरिहारार्थम् ॥ ३८ ॥—

**प्रच्छनशृङ्गजलौकाव्यधनैः स्राव्यं ततो रक्तम् ॥३९॥**
**रक्ते विषप्रदुष्टे दुष्येत् प्रकृतिस्ततस्त्यजेत् प्राणान् ।**
**तस्मात् प्रघर्षणैरसृगवर्तमानं प्रवर्त्यं स्यात् ॥ ४० ॥**
**त्रिकटुगृहधूमरजनीपञ्चलवणरोचनाः सवार्ताकाः ।**
**घर्षणमतिप्रवृत्ते वटादिभिः शीतलैर्लेपः ॥ ४१ ॥**
**रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत् ।**
**शीतैः स्कन्दति तस्मिन् स्कन्ने व्यपयाति विषवेगः॥**
**विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्तन्ते ।**
**शीतैर्निवर्तयेत्तान् वीज्यश्चालोमहर्षात् स्यात् ॥४३॥**

प्रच्छनादिभी रक्तमोक्षणमुपक्रममाह । उपक्रमाणां च व्यतिक्रमाभिधानेन नियमेन क्रमयोगं निषेधयति । रक्तस्रावणोपपत्तिमाह—रक्ते इत्यादि । प्रकृतिरिति देहधात्वादिस्वभावः । प्रघर्षणैरिति प्रघर्षणैरपि, प्रच्छनादिभिः प्रघर्षणेन चेत्यर्थः । प्रघर्षणं पत्रादिभिः । प्रघर्षणेन प्रतिसारणमुपक्रमेषूक्तम् । घर्षणमिति छेदः । विषाधानमिति विषस्य प्रसारकम् । स्कन्दति स्थिरं भवति । स्कन्ने इति स्थिरे । वीज्यः व्यजनपवनैः ॥ ३९-४३ ॥

**तरुरिव मूलच्छेदाद्दंशच्छेदान्न वृद्धिमेति विषम् ।**
**आचूषणमानयनं जलस्य सेतुर्यथा तथाऽरिष्टाः ४४**
**त्वङ्मांसगतं दाहो दहति विषं स्रावणं हरति रक्तात् ।**
**पीतं वमनैः सद्यो हरेद्विरेकैर्द्वितीये तु ॥ ४५ ॥**

१ 'यच्च दूषयते' इति पा० । २ 'स्वगुणैर्न युक्तं' इति पा० । ३ 'दण्डाकारः शोथः' इति पा० । ४ '०प्रधमनानि' इति पा० ।

१ 'तथा नान्यैरुपक्रमैः' इति पा० । २ '०पञ्चलवणचोरकाः' इति पा० । ३ 'रक्तं विषादनं हि' इति पा० । ४ 'न वीज्यश्च लोमहर्षः स्यात्' इति गङ्गाधरसंमतः पाठः ।

तद्दरिवेत्यादिना छेदादीनां विषहरणोपपत्तिमाह । सेतुर्यथेति प्रसरनिरोधक इत्यर्थः । द्वितीये 'वेगे' इति शेषः ॥४४॥४५॥

आदौ हृदयं रक्ष्यं तस्यावरणं पिबेद्यथालाभम् ।
मधुसर्पिर्मज्जपयोगैरिकमथ गोमयरसं वा ॥ ४६ ॥
इक्षुं सुपक्वमथवा काकं निष्पीड्य तद्रसं वरणम् ।
छागादीनां वाऽसृग्भस्म मृदं वा पिबेदाशु ॥ ४७ ॥
क्षारागदस्तृतीये शोफहरैर्लेखनं समध्वम्बु ।
गोमयरसश्चतुर्थे वेगे सकपित्थमधुसर्पिः ॥ ४८ ॥
काकाण्डशिरीषाभ्यां स्वरसेनाश्च्योतनाञ्जने नस्यम् ।
स्यात्पञ्चमेऽथ षष्ठे संज्ञायाः स्थापनं कार्यम् ॥ ४९ ॥
गोपित्तयुता रजनी मञ्जिष्ठामरिचपिप्पलीपानम् ।
विषपानं दष्टानां विषपीते दंशनं चान्ते ॥ ५० ॥

आदाविति सर्वोपक्रमादौ । तस्येति हृदयस्य । यथालाभमिति वक्ष्यमाणहृदयावरणयोगेषु यथाप्राप्तिहृदयावरणम् । क्षारागदो वक्ष्यमाणः । तृतीये 'वेगे' इति शेषः । काकाण्डा शिम्बीभेदः । गोपित्तयुता रजनी आश्च्योतनादिषु ज्ञेया । अन्ते इति सर्वोपक्रमशेषे सप्तमे वेगे सर्पेण दंशनं कार्यम् ॥ ४६-५० ॥

शिखिपित्तार्धयुतं स्यात् पलाशबीजमगदो मृतेषु वरः
वार्ताकुफाणितागारधूमगोपित्तनिम्बं वा ॥ ५१ ॥
गोपित्तयुतैर्गुटिकाः सुरसाग्रन्थिद्विरजनीमधुककुष्ठैः
शस्ताऽमृतेन तुल्या शिरीषपुष्पकाकाण्डकरसैर्वा ॥ ५२
काकाण्डसुरसगवाक्षीपुनर्नवावायसीशिरीषफलैः ।
उद्बन्धविषजलमृते लेपौषधिनस्यपानानि ॥ ५३ ॥

अष्टमे तु वेगे शिखिपित्तेत्यादिना मृतसंजीवनयोगानाह । मृतं इति मृत इव । उद्बन्धेत्यादौ मृते इति उद्बन्धादिभिस्त्रिभिः संबध्यते । लेपौषधिनस्यपानानीति लेपादयश्चामी उद्बन्धादिषु यथायोग्यतया ज्ञेयाः । लेपौषधीत्यादौ उपधिर्यो मूर्ध्नि काकपदं कृत्वा विषहरणाय दीयते ॥ ५१-५३ ॥

स्पृक्काप्लवस्थौणेयकांक्षीशैलेयरोचनातगरम् ।
ध्यामककुङ्कुममांसीसुरसाग्रैलालकुष्ठघ्नम् ॥ ५४ ॥
बृहती शिरीषपुष्पं श्रीवेष्टकपद्मचारटिविशालाः ।
सुरदारुपद्मकेशरसावरकमनःशिलाकौन्त्यः ॥ ५५ ॥
जात्यर्कपुष्परसरजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।
जलमुद्गपर्णिचन्दनमधुकमदनसिन्धुवाराश्च ॥ ५६ ॥
शम्पाकलोध्रमयूरकगन्धफलानाकुलीविडङ्गाश्च ।
पुष्ये संहृत्य समं पिष्ट्वा गुटिका विधेयाः स्युः ५७
सर्वविषघ्नो जयकृद्विषमृतसंजीवनो ज्वरनिहन्ता ।
घ्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥ ५८ ॥
भूतविषजन्त्वलक्ष्मीकार्मणमन्त्राग्न्यशन्यरीन् हन्यात्
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम् ॥ ५९ ॥
धनधान्यकार्यसिद्धिः श्रीपुष्ट्यायुर्विवर्धनो धन्यः ।
मृतसंजीवन एष प्रागमृताद्ब्रह्मणा विहितः ॥ ६० ॥

इति मृतसंजीवनोऽगदः ।

स्पृक्केत्यादौ कांक्षी सौराष्ट्रिका । कुष्ठघ्नः खदिरः । सावरकं लोध्रम् । कौन्ती रेणुका । मयूरकः अपामार्गः, गन्धफला प्रियङ्गुः, नाकुली रास्ना । धारणशब्देन शरीरे धारणं ब्रूते; धारणं चौषधशब्देनोपक्रमेषु प्रविशति । गृहस्थ इति गृहेऽवतिष्ठन् । कार्मणः परद्रोहार्थो मन्त्रादियोगः, मन्त्रः अभिचारमन्त्रः । स्त्रीदोषानिति स्त्रीदत्तगरादिदोषान् । प्रागमृतादिति अमृतोत्पत्तेः प्राक्; एतेन चामृतसमानत्वमस्य दर्शयते ॥ ५४-६० ॥

मन्त्रैर्धमनीबन्धोऽवमार्जनं कार्यमात्मरक्षा च ।
दोषस्य विषं यस्य स्थाने स्यात्तं जयेत्पूर्वम् ॥ ६१ ॥
वातस्थाने स्वेदो दध्ना नतकुष्ठकल्कपानं च ।
घृतमधुपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे ॥६२॥
क्षारागदः कफस्थानगते स्वेदस्तथा सिराव्यधनम् ।
दूषीविषेऽथ रक्तस्थिते सिराकर्म पञ्चविधम् ॥६३॥
भेषजमेवं कल्प्यं भिषग्विदाऽऽलक्ष्य सर्वदा सर्वम् ।
स्थानं जयेद्धि पूर्वं स्थानस्थस्याविरुद्धं च ॥ ६४ ॥

मन्त्रैरित्यादौ अवमार्जनमिति विषस्य प्रतिलोमेन मार्जनं मन्त्रैरेव कार्यम् । आत्मरक्षा भूतावेशनिषेधार्थम् । जयेदिति स्थानिनं दोषं जयेत् । स्वेदो यद्यपि प्रतिषिद्धः स्वेदाध्याये, तथाऽप्यवस्थाविशेषे 'वातस्थाने' इत्यादिना विधीयते । स्वेदस्तु पेयादिभोजनादिविधानवदस्य प्रयोगाच्चतुर्विंशत्युपक्रमेषु नोक्तः; किंवा अग्निशब्देन स्वेदोऽपि गृह्यते, पेयादि चोपशमनशब्देनावश्यं बोद्धव्यम् । पित्तस्थे इति पित्तस्थानस्थे । दूषीविष इत्यादौ सिरा इति सिराव्यधः, कर्म पञ्चविधं वमनादि; किंवा सिराकर्म पञ्चविधमिति पञ्चसिराव्यधः । स्थानमिति स्थानगतवातादि । स्थानस्थस्येति स्थानगतविषस्याविरुद्धं च 'कुर्यात्' इति शेषः ॥ ६१-६४ ॥

विषदूषितकफमार्गः स्रोतःसंरोधरुद्धवायुस्तु ।
मृत इव श्वसेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च ६५
चर्मकषायाः कल्कं बिल्वसमं मूर्ध्नि काकपदमस्य ।
कृत्वा दद्यात्कटभीकटुकट्फलप्रधमनं च ॥ ६६ ॥

१ 'र्मज्जानं गैरिकमथ' इति पा० । २ 'दक्षं सपक्षमथवा' इति पा० । ३ 'शोथहरैश्छर्दनं' इति पा० । ४ 'सुरसोग्राद्विरजनी°' इति पा० । ५ 'लेपाञ्जननस्यपानानि' इति पा० ।

छागं गव्यं माहिषं वा मांसं कौक्कुटमेव वा।
दद्यात् काकपदे तस्मिंस्ततः संक्रमते विषम् ॥ ६७ ॥
नासाक्षिकर्णजिह्वाकण्ठनिरोधेषु कर्म नस्तः स्यात्।
वार्ताकुबीजपूरज्योतिष्मत्यादिभिः पिष्टैः ॥ ६८ ॥
अञ्जनमक्ष्युपरोधे कर्तव्यं वस्तमूत्रपिष्टैस्तु।
दार्व्व्योषहरिद्राकरवीरकरञ्जनिम्बसुरसैस्तु ॥ ६९ ॥
श्वेता वचाऽश्वगन्धा
हिङ्ग्वमृता कुष्ठसैन्धवे लशुनम्।
सर्षपकपित्थमध्यं
टुंण्टुककरञ्जबीजानि ॥ ७० ॥
द्योषं शिरीषपुष्पं द्विरजन्यौ वंशलोचनं च समम्।
पिष्ट्वाऽजस्य मूत्रेण गोश्वपित्तेन सप्ताहम् ॥ ७१ ॥
व्यत्यासभावितोऽयं
निहन्ति शिरसि स्थितं विषं क्षिप्रम्।
सर्वज्वरभूतग्रह-
विसूचिकाजीर्णमूर्च्छार्तीः ॥ ७२ ॥
उन्मादापस्मारौ काचपटलनीलिकाशिरोदोषान्।
शुष्काक्षिपाकपिल्लार्बुदार्मकण्डूतमोदोषान् ॥ ७३ ॥
क्षयदौर्बल्यमदात्ययपाण्डुगदांश्चाञ्जनात्तथा मोहान्।
लेपाद्विषदिग्धक्षतलीढदष्टपीतविषघाती ॥ ७४ ॥
अर्शःस्वानद्धेषु च गुदलेपो योनिलेपनं स्त्रीणाम्।
मूढे गर्भे दुष्टे ललाटलेपः प्रतिश्याये ॥ ७५ ॥
वृद्धौ किटिभे कुष्ठे श्वित्रविचर्चिकादिषु लेपः।
गज इव तरून् विषगदान्निहन्त्यगदगन्धहस्त्येषः ७६
इति गन्धहस्तीनामाऽगदः।

स्रोतःसंरोधेन रुद्धो वायुरुच्छ्वासनिश्वासलक्षणो यस्य स तथा। असाध्यलिङ्गैरिति प्रागुक्तनीलोष्ठादिभिः। चर्मकषाया इति चर्मचटिकायाः, किंवा सप्तलायाः। काकपदमिति काकपदाकारं व्रणम्। कटभीत्यादौ कटुकफला तिक्तालाबुः, किंवा कटु त्रिकटु। ज्योतिष्मतीत्यादीनि पदविरेचनशताश्रितायोक्तानि शिरोविरेचनानि। दार्वीत्यादौ श्वेता कटभी। व्यत्यासभावित इति गोपित्तेन भावयित्वा अश्वपित्तेन भावितः, तथा अश्वपित्तेन भावयित्वा गोपित्तेन भावितः ॥ ६५–७६ ॥

पत्रागुरुमुस्तैला निर्यासाः पद्म चन्दनं स्पृक्का।
त्वङ्नलदोत्पलवालकहरेणुकोशीरवन्यनखाः ७७
सुरदारुकनककुङ्कुमध्यामककुष्ठप्रियङ्गवस्तगरम्।
पञ्चाङ्गानि शिरीषाद्व्योषालमनःशिलाजाज्यः ॥ ७८ ॥
श्वेतकटभीकरञ्जौ रक्षोघ्नी सिन्धुवारिका रजनी।
सुरसाञ्जनगैरिकमञ्जिष्ठानिम्बनिर्यासाः ॥ ७९ ॥
वंशत्वगश्वगन्धाहिङ्गुदधित्थाम्लवेतसं लाक्षा।
मधुमधुकसोमराजीवचारुहारोचनातगरम् ॥ ८० ॥
अगदोऽयं वैश्रवणायाख्यातस्त्र्यम्बकेण पष्ट्यङ्गः।
अप्रतिहतप्रभावः ख्यातो महागन्धहस्तीति ॥ ८१ ॥
पित्तेन गवां पेष्यो गुटिकाः कार्यास्तु पुष्ययोगेन।
पानाञ्जनप्रलेपैः प्रसाधयेत् सर्वकर्माणि ॥ ८२ ॥
पिल्लं कण्डूं तिमिरं रात्र्यान्ध्यं काचमर्बुदं पटलम्।
हन्ति सततप्रयोगाद्धितमितपथ्याशिनां पुंसाम् ८३
विषमज्वरानजीर्णान्दद्रुं कण्डूं विसूचिकां पामाम्।
विषमूषिकलूतानां सर्वेषां पन्नगानां च।
आशु विषं नाशयति समूलजमथ कन्दजं सर्वम् ॥८४॥
एतेन लिप्तगात्रः सर्पान् गृह्णाति भक्षयेच्च विषम्।
कालपरीतोऽपि नरो जीवति नित्यं निरातङ्कः ॥८५॥
आनद्धे गुदलेपो योनौ लेपश्च मूढगर्भाणाम्।
मूर्च्छार्तिषु च ललाटे प्रलेपनमाहुः प्रधानतमम् ८६
भेरीमृदङ्गपटहाञ्छत्राण्यमुना तथा ध्वजपताकाः।
लिप्त्वाऽहिविषनिरस्त्यै प्रध्वनयेद्दर्शयेन्मतिमान् ८७
यत्र च सन्निहितोऽयं न तत्र बालग्रहा न रक्षांसि।
न च कार्मणवेताला वहन्ति नाथर्वणा मन्त्राः ॥८८॥
सर्वग्रहा न तत्र प्रभवन्ति न चाग्निशस्त्रनृपचौराः।
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यस्ति ॥ ८९ ॥
पिष्यमाण इमं चात्र सिद्धं मन्त्रमुदीरयेत्।
'मम माता जया नाम जयो नामेति मे पिता ॥९०॥
सोऽहं जयजयापुत्रो विजयोऽथ जयामि च।
नमः पुरुषसिंहाय विष्णवे विश्वकर्मणे ॥ ९१ ॥
सनातनाय कृष्णाय भवाय विभवाय च।
तेजो वृषाकपेः साक्षात्तेजो ब्रह्मेन्द्रयोर्यमे ॥ ९२ ॥
यथाऽहं नाभिजानामि वासुदेवपराजयम्।
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥ ९३ ॥
अनेन सत्यवाक्येन सिध्यतामगदो ह्ययम्।
हिलिमिलिसंस्पृष्टे रक्ष सर्वभेषजोत्तमे स्वाहा ॥९४॥
इति महागन्धहस्तीनामाऽगदः।

ऋषभकजीवकभार्गीमधुकोत्पलधान्यकेशराजाज्यः।
ससितगिरिकोलमध्याः पेयाः श्वासज्वरादिहराः ॥

१ 'छागगव्यमाहिषाविककौक्कुटाब्जमांसानि च। दद्यात् काकपदोपरि मन्ते विषेणैव च सहसा' इति पा०। २ 'विडङ्गं' इति पा०। ३ 'बन्धूककरञ्जबीजानि' इति पा०। ४ 'बृहती' इति पा०। ५ 'वंशलेखनं' इति पा०। ६ 'गोश्च पित्तेन' इति पा०। ७ 'दद्रौ' इति, 'कण्ड्वां' इति च पा०। ८ 'श्वेता कटभी करञ्जो' इति पा०।

१ 'कालातीतोऽपि हि' इति पा०। २ 'कार्मणमन्त्रा भजन्ति' इति। ३ 'विजयो नाम मे पिता' इति पा०। ४ 'हिलि हिलि मिलि मिलि संसृष्टे रक्ष रक्ष सर्वभेषजोत्तमे स्वाहा' इति पा०।

हिङ्गु च कृष्णायुक्तं कपित्थरसयुक्तमग्र्यलवणं च ।
समधुसितौ पातव्यौ ज्वरहिक्काश्वासकासघ्नौ ॥ ९६ ॥
लेहः कोलास्थ्यञ्जनलाजोत्पलमधुघृतैर्वमथ्याम् ।
बृहतीद्वयाढकीपत्रधूमवर्तिस्तु हिक्काघ्नी ॥ ९७ ॥
शिखिवर्हिवलाकास्थीनि सर्षपाश्चन्दनं च घृतयुक्तम् ।
धूमो गृहशयनासनवस्त्रादिषु शस्यते विषनुत् ॥ ९८ ॥
घृतयुक्ते नतकुष्ठे भुजगपतिशिरः शिरीषपुष्पं च ।
धूमागदः स्मृतोऽयं सर्वविषघ्नः श्वयथुहृच्च ॥ ९९ ॥
जतुसेव्यपत्रगुग्गुलुभल्लातककुभपुष्पसर्जरसाः ।
श्वेता च धूम उरगाखुकीटवस्त्रक्रिमिनुदग्र्यः ॥ १०० ॥
तरुणपलाशक्षारं स्रुतं पचेच्चूर्णितैः सह समांशैः ।
लोहितमृद्रजनीद्वयशुक्लसुरसमञ्जरीमधुकैः ॥ १०१ ॥
लाक्षासैन्धवमांसीहरेणुहिङ्गुद्विसारिवाकुष्ठैः ।
सव्योषैर्वाहीकैर्दर्वीविलेपनं वर्तयेच्चावत् ॥ १०२ ॥
सर्वविषशोथगुल्मत्वग्दोषार्शोभगन्दरप्लीह्नः ।
शोथापस्मारक्रिमिभूतस्वरभेदपाण्डुगदान् ॥ १०३ ॥
मन्दाग्नित्वं कासं सोन्मादं नाशयेयुरथ पुंसाम् ।
गुटिकाश्छायाशुष्काः कोलसमास्ताः समुपयुक्ताः ॥
इति क्षारागदः ।

ऋषभकेत्यादिना विषोपद्रवश्वासादिचिकित्सोच्यते । सितगिरिः श्वेताऽपराजिता, कोलमध्यं बदरमज्जा । भुजगपतिशिर इति द्विमुखसर्पशिरः । वस्त्रक्रमिः यूका । पलाशक्षारं स्रुतमिति सुश्रुतोक्तक्षारपरिस्रावणविधिना स्रावितम् । लोहितमृत् गैरिकम् । सुरसमञ्जरी पर्णासभेदः ॥ ७७–१०४ ॥

विषपीतदष्टविद्धेष्वेतद्दिग्धे च वाच्यमुद्दिष्टम् ।
सामान्यतः, पृथक्त्वान्निर्देशमतः शृणु यथावत् ॥ १०५ ॥
रिपुयुक्तेभ्यो नृभ्यः स्वेभ्यः स्त्रीभ्योऽथवा भयं नृपतेः ।
आहारविहारगतं तस्मात् प्रेष्यान् परीक्षेत ॥ १०६ ॥
अत्यर्थशङ्कितः स्याद्बहुवागथवाऽल्पवाग्विगतलक्ष्मीः
प्राप्तः प्रकृतिविकारं विषप्रदाता नरो ज्ञेयः ॥ १०७ ॥
दृष्ट्वैवं न तु सहसा भोज्यं कुर्यात्तदन्नमग्नौ तु ।
सविषं हि प्राप्यान्नं बहून्विकारान् भजत्यग्निः ॥ १०८ ॥
शिखिवर्हविचित्रार्चिस्तीक्ष्णाक्षमरूक्षकुणपधूमश्च ।
स्फुटति च सशब्दमेकावर्तो विहतार्चिरपि च
स्यात् ॥ १०९ ॥
पात्रस्थं च विवर्णं भोज्यं स्यान्मक्षिकांश्च मारयति ।
क्षामस्वरांश्च काकान् कुर्याद्विरजेच्चकोराक्षि ॥ ११० ॥

पाने नीला राजी वैवर्ण्यं स्वां च नेक्षते छायाम् ।
पश्यति विकृतामथवा लवणाक्ते फेनमाला स्यात् ॥
पानान्नयोः सविषयोर्गन्धेन शिरोरुग्घृदि च मूर्च्छा च
स्पर्शेन पाणिशोथः सुप्त्यङ्गुलिदाहतोदनखभेदाः ।
मुखगे त्वोष्ठचिमिचिमा जिह्वा शूना जडा विवर्णा च
द्विजहर्षहनुस्तम्भास्यदाहलालागलविकाराः ॥ ११३ ॥
आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः ।
दृष्टिहृदयोपरोधो बिन्दुशतैश्चीयते चाङ्गम् ॥ ११४ ॥
पक्वाशयं तु याते मूर्च्छामदमोहदाहबलनाशाः ।
तन्द्रा कार्श्यं च विषे पाण्डुत्वं चोदरस्थे स्यात् ११५
दन्तपवनस्य कूर्चो विशीर्यते दन्तौष्ठमांसशोफश्च ।
केशच्युतिः शिरोरुग्ग्रन्थयश्च सविषेऽथ शिरोऽभ्यङ्गे
दुष्टेऽञ्जनेऽक्षिदाहस्रावात्युपदेहशोथरागाश्च ।
खाद्यैरादौ कोष्ठः स्पृश्यैस्त्वग्दूष्यते दुष्टैः ॥ ११७ ॥
स्नानाभ्यङ्गोत्सादनवस्त्रालङ्कारवर्णकैर्दुष्टैः ।
कण्डूर्तिकोठपिडकारोमोद्गमचिमिचिमा शोथाः ।
एते करचरणदाहतोदक्लमाविपाकाश्च ।
भूपादुकाश्वगजवर्मकेतुशयनासनैर्दुष्टैः ॥ ११९ ॥
माल्यमगन्धं म्लायति शिरोरुजालोमहर्षकरम् ।
स्तम्भयति खानि नासामुपहन्ति दर्शनं च धूमः ॥
कूपतडागादिजलं दुर्गन्धं सकलुषं विवर्णं च ।
पीतं श्वयथुं कोठान् पिडकाश्च करोति मरणं च ॥
आदावामाशयगे वमनं त्वक्स्थे प्रदेहसेकादि ।
कुर्याद्भिषक् चिकित्सां दोषबलं चैव हि समीक्ष्य ॥
इति मूलविषविशेषाः प्रोक्ताः

पृथक्त्वान्निर्देशमतः शृण्विति नानाविधविषस्य लक्षणं भेषजस्य पृथङ्निर्देशं च शृण्विति । रिपुयुक्तेभ्य इति शत्रुप्रयुक्तेभ्यः । स्त्रीभ्य इति सौभाग्यार्थमभक्ष्यदानेऽप्यज्ञानात् प्रवृत्ताभ्यः स्त्रीभ्यः । आहारविहारगत इति आहारविहारौ सेवमानः । प्रेष्यानिति सूपकारादीन् । परीक्षोपायमाह–अत्यर्थेत्यादि । विगतलक्ष्मीः निःशोभः । भोज्यमिति भोक्तव्यम् । कुर्यात् तदन्नमग्नौ प्रक्षिपेत् । पात्रस्थमित्यादावपि 'सविषं' इत्यनुवर्तते । विरज्येत चकोराक्षीति सविषमन्नं दृष्ट्वा चकोराक्षि विरज्यते । काकांश्च क्षामस्वरान् दर्शनेनैव कुर्यादिति ज्ञेयम् । पाने इति मद्यादौ पेये । छायामिति प्रतिबिम्बम् । लवणाक्ते इति पानविशेषणम् । मुखगे इत्यादिना मुखादिसंबन्धिविषलक्षणम् । बिन्दुः बिन्द्वाकारा त्व-

१ 'शुक्लमञ्जरी' इति पा० । २ 'तदन्नमग्नौ तु' इति पा० । ३ 'तीक्ष्णाक्षमकुणपगन्धिश्च' इति, 'तीक्ष्णः सरूक्षकुणपगन्धिश्च' इति च पा० ।

१ 'मुखतात्वोष्ठचिमिचिमा' इति पा० । २ 'विशिरश्च कूर्च इत्यत्र कूर्चः कङ्कतिका, विशिरस्तु दीपदन्तकः; विशिरः शीर्णशिरः इत्यन्ये' इति पा० ।

विकृतिः । दन्तेत्यादिना दन्तधावनकूर्चादीनां विषदुष्टानामेव लक्षणं प्रकारणाज्ज्ञेयम् । दन्तपवनस्य कूर्चः दन्तमलशोधनकूर्चः । विशीर्यत इति शीर्णः स्यात् । खाद्यैरिति भोज्यैः । स्पृश्यैरिति अभ्यङ्गादिभिः । माल्यमिति विषदुष्टं माल्यम् । नासामुपहन्तीति च्छेदः । दर्शनमिति चक्षुः । किंवा स्तम्भयतीत्यादि धूमस्यैव कार्यम् ॥ ९५–१२३ ॥

शृणु जङ्गमस्यातः ।
सविशेषचिकित्सितमेवादौ तत्रोच्यते तु सर्पाणाम् ॥
इह दर्वीकरः सर्पो मण्डली राजिमानिति ।
त्रयो यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः ॥ १२४ ॥
दर्वीकरः फणी ज्ञेयो मण्डली मण्डलाफणः ।
विन्दुलेखविचित्राङ्गः पन्नगः स्यात्तु राजिमान् १२५
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम् ।
विषं यथाक्रमं तेषां तस्माद्वातादिकोपनम् ॥ १२६ ॥
दर्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोऽसितः ।
निरुद्धरक्तः कूर्माभो वातव्याधिकरो मतः ॥ १२७ ॥
पृथ्वर्पितः सशोथश्च दंशो मण्डलिना कृतः ।
पीताभः पीतरक्तश्च सर्वपित्तविकारकृत् ॥ १२८ ॥
कृतो राजिमता दंशः पिच्छिलः स्थिरशोफकृत् ।
स्निग्धः पाण्डुश्च सान्द्रासृक् श्लेष्मव्याधिसमीरणः ॥

मण्डलीति मण्डलयुक्तः । विन्दुना लेखया च विचित्रमङ्गं यस्य स विन्दुलेखविचित्राङ्गः । दर्वीकरादीनां प्रपञ्चस्त्विह पराधिकारत्वेन न कृतः । विशेषादित्यादौ रूक्षमधिकं दर्वीकराणाम्, अम्लोष्णं मण्डलिनां, स्वादुशीतं राजिमतां, त्रिदोषकोपनत्वेऽपि वातादिकोपनं विशेषादिह ज्ञेयम् । विषं च यद्यप्यव्यक्तरसयुक्तं, तथाऽपीह कट्वादिरसाभिधानमनुरसाभिप्रायेण ज्ञेयं, यथा–आतपे कटुकत्वं, तद्वदिहापि; किंवा अव्यक्तरसतायामेव मनाक्कट्वादीनामधिकत्वं ज्ञेयम् । पृथ्वर्पित इति अवगाढदंष्ट्रापदः ॥ १२३–१२९ ॥

वृत्तभोगो महाकायः श्वसन्नूर्ध्वेक्षणः पुमान् ।
स्थूलमूर्धा समाङ्गश्च स्त्री त्वतः स्याद्विपर्ययात् १३०
क्लीवस्त्वसत्यधोदृष्टिः स्वरहीनः प्रकम्पते ।
स्त्रिया दष्टो विपर्यस्तैरेतैः पुंसा नरो मतः ॥ १३१ ॥
व्यामिश्रलिङ्गैरेतैस्तु क्लीवदष्टं नरं वदेत् ।
इत्येतदुक्तं सर्पाणां स्त्रीपुंक्लीवनिदर्शनम् ॥ १३२ ॥
पाण्डुवक्त्रस्तु गर्भिण्या शूनौष्ठोऽप्यसितेक्षणः ।
जृम्भाक्रोधोपजिह्वार्तः सूतया रक्तमूत्रवान् ॥१३३॥
सर्पो गौधेर(य)को नाम गोधायां स्याच्चतुष्पदः ।
कृष्णसर्पेण तुल्यः स्यान्नाना स्युर्मिश्रजातयः ॥१३४॥
गूढसंपादितं वृत्तं पीडितं लम्बितार्पितम् ।
सर्पितं च भृशाबाधं, दंशा येऽन्ये न ते भृशाः १३५

वृत्तभोग इत्यादिना सर्पाणां पुरुषादिभेदं विपरीतत्रादिज्ञानार्थं तत्कृतचिकित्साभेदज्ञानार्थं चाह । स च भेद इहानुक्तोऽपि तन्त्रान्तराज्ज्ञेयः । तथाहि—"सावित्रे पच्यते, रात्रौ स्त्रियः स्तीव्रविषाः, तथाऽह्नि पुरुषाः सदा" इति । तथा—"क्लीदष्टे भिषजा कार्यः सूपचारस्त्वनारम्भे" इति । महाकायः बहुलशरीरः । क्लीवः नपुंसकः । गाढसंपादितम् अतिमात्रावगाढम् । ऊर्ध्वं परिवृत्तमुद्वृत्तम् । पीडितम् अतिमात्ररुजाकरम् । लम्बितार्पितम् अर्पितसकलदंष्ट्राप्राप्तलक्षणम् ॥ १३०–१३५ ॥

तरुणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा ।
राजिमन्तो वयोमध्ये भवन्त्याशीविषोपमाः ॥१३६॥

वयोभेदेन दर्वीकरादीनां तीव्रतामाह—तरुणा इत्यादि । सर्पितं यदनतिमग्नदंष्ट्रापदम् । आशीविषोपमा इति आशीविषा दृष्टिनिःश्वासविषाः ॥ १३६ ॥

सर्पदंष्ट्राश्चतस्रस्तु तासां वामाधरा सिता ।
पीता वामोत्तरा दंष्ट्रा रक्तश्यावाऽधरोत्तरा ॥१३७॥
यन्मात्रः पतते विन्दुर्गोवालात् सलिलोद्धृतात् ।
वामाधरायां दंष्ट्रायां तन्मात्रं स्यादहेर्विषम् ॥१३८॥
एकद्वित्रिचतुर्वृद्धविषभागोत्तरोत्तराः ।
सवर्णास्तत्कृता दंशा बहूत्तरविषा भृशाः ॥ १३९ ॥

सर्पदंष्ट्रा इत्यादिना दंष्ट्राभेदं दंशविषज्ञानार्थमाह । रक्तश्यावाऽधरोत्तरेति दक्षिणाधरा रक्ता, दक्षिणोत्तरा तु श्यावा । एकद्वित्रिचतुर्वृद्धविषभागोत्तरोत्तरा इति एकद्वित्रिचतूरूपेण वृद्धो विषभाग उत्तरोत्तरं यास्विति वाक्यार्थः । सवर्णा यथास्वदंष्ट्रासमानवर्णाः । बहूत्तरविषा इति उत्तरोत्तरं बहुविषाः । भृशा इति दुःखसाध्याः । दुःखसाध्यत्वमपि यथोत्तरं ज्ञेयम् । ननु, पूर्वं दर्वीकरादीनां दंशस्य वर्णभेद उक्तः, इदानीं तु दंष्ट्राभेदेन वर्णभेद उच्यते, तेन सर्वत्रैव दर्वीकरादौ सर्ववर्णोपपत्तिः, ततश्च पूर्वोक्तदंशवर्णविरोधः; उक्तं चात्रैवार्थे आषाढवर्मणा यत्—"दर्वीकरमण्डलिनोरसितः पीतश्च वर्णतो दंशः" इति लक्षणेन, यस्मादनेकवर्णास्तु दंशाः" (?) । अत्रोच्यते—दंष्ट्रानुकारिवर्णता दंशमात्रस्थिते विषे भवति, दर्वीकराद्युल्लेखविहितस्तु यो वर्णो दोषकृतः स प्रविसृते विषे भवतीति अवस्थाभेदान्न विरोधः । उक्तं च परिहारवार्तिके "दंशे त्वेते वर्णाः, सावर्ण्यं दोषजे विसृते" इति ॥ १३७–१३९ ॥

सर्पाणामेव विण्मूत्रात् कीटाः स्युः कीटसंमताः ।
दूषीविषाः प्राणहरा इति संक्षेपतो मताः ॥ १४० ॥
गात्रं रक्तं सितं कृष्णं श्यावं वा पिडकान्वितम् ।
सकण्डूदाहवीसर्पपाकि स्यात् कुथितं तथा ॥१४१॥
कीटैर्दूषीविषैर्दष्टं लिङ्गं प्राणहरं शृणु ।
सर्पदष्टे यथा शोथो वर्धते सोग्रगन्ध्यसृक् ॥१४२॥

१ 'दर्वीकरा मण्डलिनो राजिमन्तस्तथैव च । सर्पा यथाक्रमं' इति पा० । २ 'अवगाढदंष्ट्रार्पितः' इति पा० । ३ 'क्लीवः, स्वस्तस्वधोदृष्टिः' इति पा० ।

१ 'रक्तश्यावेऽधरोत्तरे' इति, 'रक्तश्यावे तथाऽपरे' इति च पा० । 'अनेकवर्णास्त्रयो दंष्ट्राः' इति पा० ।

दंशोऽक्षिगौरवं मूर्च्छा स रुगार्तः श्वसित्यपि।
तृष्णारुचिपरीतश्च भवेद्दूषीविषार्दितः॥ १४३॥

कीटान् व्याकर्तुमाह-सर्पाणामित्यादि। विण्मूत्रादिति कीटशब्दनिरुक्त्यर्थमनयोरुपादानं, तेनान्यान्यपि सर्पशुक्रशवपूलण्डानि कीटकारणानि भवन्तीति ज्ञेयम्। उक्तं हि सुश्रुते—"सर्पाणां शुक्रविण्मूत्रशवपूलण्डसंभवाः। वाय्वग्न्यम्बुप्रकृतयः कीटास्तु वि(त्रि)विधाः स्मृताः" (सु. क. अ. ८) इति। कीटाश्च यद्यपि सुश्रुते वातपित्तकफसन्निपातकोपनाः कुम्भीनसादयः सप्तषष्टिः प्रतिपादिताः, तथाऽपीह संज्ञेयाभिधित्सया दूषीविषप्राणहरभेदेनैवोच्यन्ते; एवं लूतादिष्वपि संज्ञेयभेदाद्वैविध्योक्तिर्ज्ञेया। दूषीविषाः चिरकारिविषाः, प्राणहराः झटिति प्राणहरविषाः। सह उग्रगन्ध्यसृजा वर्तत इति सोग्रगन्ध्यसृक् सोग्रगन्धि लोहितम्॥ १४०–१४३॥

दंशस्य मध्ये यत् कृष्णं श्यावं वा जालकावृतम्।
दग्धाकृति भृशं पाकि क्लेदशोथज्वरान्वितम्॥ १४४
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्दिशेत्।
सर्वासामेव तासां च दंशे लक्षणमुच्यते॥ १४५॥
शोफः श्वेतासिता रक्ताः पीता वा पिडका ज्वरः।
प्राणान्तिको भवेच्छ्वासो दाहहिक्काशिरोग्रहाः॥ १४६

दंशस्य मध्य इत्यादिना दूषीविषलूतादष्टलक्षणम्। लूताश्चान्याऽष्टौ साध्या असाध्याश्चाष्टौ त्रिमण्डलासौवर्णिकादय उक्तास्तासां तथा मूषिककृकण्टकवृश्चिकोच्चिटिङ्गमण्डूकमत्स्यजलौकाशतपदीमशकमक्षिकाणां सुश्रुतादिषु प्रपञ्चार्थिभिः प्रपञ्चोऽनुसरणीयः; इह तु तन्त्रकारेण पराधिकारत्वात् प्रपञ्चो न क्रियते॥ १४४–१४६॥

आदंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते॥ १४७॥
मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः।
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः॥ १४८
श्यावत्वमथ कार्ष्ण्यं वा नानावर्णत्वमेव वा।
मोहः पुरीषभेदश्च दष्टे स्यात् कृकलासकैः॥ १४९॥
दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति॥ १५०॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून्॥ १५१॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्यते॥ १५२॥
हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान्।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते॥ १५३॥

एकदंष्ट्रार्दितः शूलः सरुक् स्यात् पीतकः सतृट्।
छर्दिर्निद्रा च मण्डूकैः सविषैर्दष्टलक्षणम्॥ १५४॥
मत्स्यास्तु सविषाः कुर्युर्दाहशोफरुजस्तथा।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥ १५५
दाहतोदस्वेदशोथकरी तु गृहगोधिका।
दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम्॥ १५६॥
कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः।
असाध्यकीटसदृशमसाध्यमशकक्षतम्॥ १५७॥
सद्यःप्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता।
पीडका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत्॥ १५८

आदंशादित्यादि आखुविषलक्षणम्। कणभश्च कीटविशेष इति सुश्रुते कीटमध्ये एव पठितः। एकदंष्ट्रार्पित इति एकयैव दंष्ट्रया कृत इत्यर्थः। मत्स्यास्तु पित्तास्थ्यारविषा उक्ताः। जलौकसश्च षट् सविषाः कृष्णाकर्बुरादय उक्ताः संदंशविषाः। गृहगोधिकां ज्येष्ठामित्याहुः; अन्ये तु सरटमाहुः। शतपदी कारुण्डा। असाध्यमशकक्षतमिति पञ्चसु मशकेषु पार्वतीयकृतमसाध्यमाहुः। उक्तं हि सुश्रुते "पार्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः" (सु. क. अ. ८) इति। स्थगिकाऽसुहृदिति कान्तारिकादिषु सुश्रुतोक्तषण्मक्षिकासु स्थगिकाख्या मक्षिका प्राणहरीत्यर्थः॥ १४७–१५८॥

श्मशानचैत्यवल्मीकयज्ञाश्रमसुरालये।
पक्षसन्धिषु मध्याह्ने सार्धरात्रेऽष्टमीषु च॥ १५९॥
न सिद्ध्यन्ति नरा दष्टाः पाषण्डायतनेषु च।
दृष्टिश्वासमलस्पर्शविषैराशीविषैस्तथा॥ १६०॥
विनश्यन्त्याशु संप्राप्ता दष्टाः सर्वेषु मर्मसु।

संप्रति स्थानकालस्वभावप्रदेशैः सर्पदष्टानामसाध्यतामाह—श्मशानेत्यादि। चैत्यः ग्रामदेवताश्रयो महातरुः। पक्षसंधिष्विति अमावास्यापौर्णमासीषु। पाषण्डाः कापालिकादयः। आशीविषैरित्यस्यैव लक्षणं—दृष्टिश्वासमलस्पर्शविषैरिति। उक्तं हि तन्त्रान्तरे—"दृष्टिश्वासादिभिर्दिव्याः सर्पा आशीविषाः, आशुघातित्वात्" इति॥ १५९॥ १६०॥—

(येन केनापि सर्पेण संभवः सर्व एव च)॥१६१॥
भीतमत्तावलोष्णक्षुत्तृषार्ते वर्धते विषम्।
विषं प्रकृतिकालौ च तुल्यौ प्राप्याल्पमन्यथा॥ १६२
वारिविप्रहताः क्षीणा भीता नकुलनिर्जिताः।
वृद्धा बालास्त्वचो मुक्ताः सर्पा मन्दविषाः स्मृताः॥
सर्वदेहाश्रितं क्रोधाद्विषं सर्पो विमुञ्चति।
तदेवाहारहेतोर्वा भयाद्वा न प्रमुञ्चति॥ १६४॥

विषवृद्धिहेतुमाह—भीतेत्यादि। प्रकृतिकालौ तुल्यौ विषस्य, यथा—प्रबलपित्तप्रकृतिरुष्णश्च काल इति ज्ञेयम्। अल्पमन्यथेति

१ 'कीटोत्पत्तिमाह' इति पा०। २ 'दग्धाकृति भृशं पाकक्लेदशोथज्वरान्वितम्' इति पा०। ३ 'हृद्घ्राण°' इति पा०।

१ 'विदाहं श्वयथुं तोदं स्वेदं तु गृहगोधिका' इति पा०। २ 'प्राणाद्दपमन्यथा' इति पा०।

भीतत्वादिविपर्यये अल्पं विषं भवति। वारील्यादौ वृद्धा इति गोनसवर्जं ज्ञेयाः, गोनसस्य तु वार्धक्ये एव वृद्धविषत्वं प्रागुक्तम्। सर्वदेहाश्रितं क्रोधादिति सर्वदेहाश्रितमपि दंष्ट्रास्वेव विषं विशेषेण ज्ञेयं; यथा—शुक्रं सर्वशरीरगमपि वृषणयोरेव विशेषेणावतिष्ठति ॥ १६१–१६४ ॥

वातोल्वणविषाः प्राय उच्चिटिङ्गाः सवृश्चिकाः।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः॥
यस्य यस्य हि दोषस्य लिङ्गाधिक्यानि लक्षयेत्।
तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम्॥ १६६॥
हृत्पीडोर्ध्वानिलः स्तम्भः सिरायामोऽस्थिपर्वरुक्।
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे॥ १६७॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता।
दंशावदरणं शोथो रक्तपीतश्च पैत्तिके॥ १६८॥
वम्यरोचकहृल्लासप्रसेकोत्क्लेशगौरवैः।
सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषम्॥ १६९॥

चिकित्सार्थं वातोल्वणविषत्वादिभेदेनोच्चिटिङ्गादीनाह—वातोल्वणेत्यादि। हृत्पीडेत्यादिना विषगताधिकवातादिलिङ्गमाह ॥ १६५–१६९ ॥

खण्डेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके।
स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः॥ १७०॥
सुशीतैः स्तम्भयेत् सेकैः प्रदेहैश्चापि पैत्तिकम्।
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत्॥ १७१॥
विषेष्वपि च सर्वेषु सर्वस्थानगतेषु च।
अवृश्चिकोच्चिटिङ्गेषु प्रायः शीतो विधिर्हितः॥१७२॥
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च।
सेकांश्चोष्णान् प्रयुञ्जीत भोज्यं पानं च सर्पिषः १७३
पतदेवोच्चिटिङ्गेऽपि प्रतिलोमं च पांशुभिः।
उद्वर्तनं सुखाम्बूष्णैस्तथाऽवच्छादनं घनैः॥ १७४॥

वातादिभेदेन चिकित्सामाह—खण्डेनेत्यादि। पुलाकः तुच्छधान्यम्। घनैरिति पांशुभिरेव घनैः ॥ १७०–१७४ ॥

श्वा त्रिदोषप्रकोपात्तु तथा धातुविपर्ययात्।
शिरोऽभितापी लालास्राव्यधोवक्त्रस्तथा भवेत् १७५
अन्येऽप्येवंविधा व्यालाः कफवातप्रकोपणाः।
हृच्छिरोरुग्ज्वरस्तम्भतृषामूर्च्छाकरा मताः॥१७६॥
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदोपशोषणम्।
विदाहरागरुक्पाकाः शोफो ग्रन्थिनिकुञ्चनम् १७७
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च।
ज्वरश्च सविषे लिङ्गं विपरीतं तु निर्विषे॥ १७८॥
तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः।
पूर्वोक्ता विधिमन्यं च यथावद्ब्रुवतः शृणु॥ १७९॥

हृद्विदाहे प्रसेके वा विरेकवमनं भृशम्।
यथावस्थं प्रयोक्तव्यं शुद्धे संसर्जनक्रमः॥ १८०॥
शिरोगते विषे नस्तः कुर्यान्मूलानि बुद्धिमान्।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च॥१८१॥
दक्षकाकमयूराणां मांसासृङ्मस्तके क्षते।
उपधेयमधोदष्टस्योर्ध्वंदष्टस्य पादयोः॥ १८२॥
पिप्पलीमरिचक्षारवचासैन्धवशिग्रुकाः।
पिष्ट्वा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात्॥ १८३॥
कपित्थमामं ससिताक्षौद्रं कण्ठगते विषे।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात्॥१८४॥
विषे पक्वाशयगते पिप्पलीं रजनीद्वयम्।
मञ्जिष्ठां च समं पिष्ट्वा गोपित्तेन नरः पिबेत्॥१८५॥
रक्तं मांसं च गोधायाः शुष्कं चूर्णीकृतं हितम्।
विषे रसगते पानं कपित्थरससंयुतम्॥ १८६॥
शेलोर्मूलत्वगग्राणि बादरौदुम्बराणि च।
कटभ्याश्च पिबेद्रक्तगते, मांसगते पिबेत्॥ १८७॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा।
सर्वेषु च बले द्वे तु मधूकं मधुकं नतम्॥ १८८॥

श्वा त्रिदोषेत्यादि सविषकुक्कुरादिलक्षणम्। यत्रैव च शुनस्त्रिदोषकोपो भवति दैवादलर्कग्रहावेशात् तत्रैव सविषशिरोभितापित्वादि भवतीति ज्ञेयम्। केचित्तु शिरोभितापादि यथोक्तं कुक्कुरे तथा तद्दष्टे च भवतीति वदन्ति। विस्तरश्चास्य सुश्रुत एव। अन्येऽप्येवंविधा इति अन्येऽपि शृगालतरक्ष्वादय एवंविधाः सन्तः कृच्छ्रशिरोरोगादिकरा भवन्तीत्यर्थः। उक्तं हि सुश्रुते—"श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदाऽनिलः। श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः" ( सु. क. अ. ७ ) इति। कण्डूनिस्तोद इत्यादिना सामान्येन सविषकीटादिदंशलिङ्गमविषप्राणिदंशलिङ्गं चोच्यते। कर्णिका मांसकन्दी। सर्वे इति चतुर्विंशतिरपि यथोक्तोपक्रमाः। पूर्वोक्तमित्यत्र वक्ष्यमाणचिकित्सितं पूर्वोक्तविधावपि अवस्थाविशेषविधेयतया कर्तव्यमित्यर्थः; यदा 'पूर्वोक्ता' इति पाठः, तदा उपक्रमा इत्यस्य विशेषणमेतत्। ऊर्ध्वं दष्टस्य पादयोरित्यत्रापि क्षतयोरेव पादयोर्विषसंक्रमणार्थं मांसासृग्दानं ज्ञेयम्। ताभ्यामिति सिताक्षौद्राभ्याम्। नतं तगरम्। शेलुः श्लेष्मातकः। मांसगते इत्युत्तरेण संबध्यते। खदिरश्चारिष्टश्चेति खदिरारिष्टः, किंवा खदिरकृतोऽरिष्टः। समधुकं नतमिति च्छेदः ॥ १७५–१८८ ॥

पिप्पलीं नागरं क्षारं नवनीतेन मूर्च्छितम्।
कफे भिषगुदीर्णे तु विदध्यात्प्रतिसारणम्॥ १८९॥
मांसीकुङ्कुमपत्रत्वग्रजनीनतचन्दनैः।
मनःशिलाव्याघ्रनखसुरसैरम्बुपेषितैः॥ १९०॥

१ 'मांसावदरणं' इति पा०। २ 'यथादोषं' इति पा०।

१ 'मूर्ध्नि देय०' इति पा०। २ 'पूर्वोक्तो विधिरपि' इति पा०। ३ 'मरिचं' इति पा०।

पाननस्याञ्जनालेपाः सर्वशोथविषापहाः ।
चन्दनं तगरं कुष्ठं हरिद्रे द्वे त्वगेव च ॥ १९१ ॥
मनःशिला तमालश्च रसः कैशर एव च ।
शार्दूलस्य नखश्चैव सुपिष्टं तण्डुलाम्बुना ॥ १९२ ॥
हन्ति सर्वविषाण्येव वज्रिवज्रमिवासुरान् ।
रसे शिरीषपुष्पस्य सप्ताहं मरिचं सितम् ॥ १९३ ॥
भावितं सर्पदष्टानां नस्यपानाञ्जने हितम् ।
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ॥ १९४ ॥
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ।
सिन्धुवारस्य मूलं च श्वेता च गिरिकर्णिका १९५
पानं दर्वीकरैर्दष्टे नस्यं समधु पाकलम् ।
मञ्जिष्ठा मधुयष्टी च जीवकर्षभकौ सिता ॥ १९६ ॥
काश्मर्यं वटशुङ्गानि पानं मण्डलिनां विषे ।
व्योषं सातिविषं कुष्ठं गृहधूमो हरेणुका ॥ १९७ ॥
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् ।
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ॥ १९८ ॥
अपि वासुकिना दष्टः पिबेन्मधुघृताप्लुतम्[1] ।

पिप्पलीत्यादिप्रतिसारणं दंशे एव । मरिचं सितमिति शोभाञ्जनकबीजम् । श्वेता चेति गिरिकर्णिकाविशेषणं, तेन श्वेताऽपराजिता गृह्यते । केचिद्गिरिकर्णिकां स्यन्दनामाहुः । पाकलं कुष्ठम् ॥ १८९–१९८ ॥—

क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥ १९९ ॥
मुक्तालेपो वरः शोथदाहतोदज्वरापहः ।
चन्दनं पद्मकोशीरं शिरीषः सिन्धुवारिका ॥ २०० ॥
क्षीरशुक्ला नतं कुष्ठं पाटलोदीच्यसारिवाः ।
शेलुस्वरसपिष्टोऽयं लूतानां सार्वकार्मिकः ॥ २०१ ॥
( यथायोगं प्रयोक्तव्यः समीक्ष्यालेपनादिषु ) ।
मधूकं मधुकं कुष्ठं शिरीषोदीच्यपाटलाः ।
सनिम्बसारिवाक्षौद्राः पानं लूताविषापहम् ॥ २०२ ॥
कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट् ।
दन्ती त्रिवृत्सैन्धवं च कर्णिकापातनं तयोः ॥ २०३ ॥
कटभ्यर्जुनशैरीषशेलुक्षीरिद्रुमत्वचः ।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ २०४ ॥
त्वचं च नागरं चैव समांशं श्लक्ष्णपेषितम् ।
पेयमुष्णाम्बुना सर्वं मूषिकाणां विषापहम् ॥ २०५ ॥
कुटजस्य फलं पिष्टं तगरं जालमालिनी ।
तिक्तेक्ष्वाकुश्च योगोऽयं पानप्रधमनादिभिः ॥ २०६ ॥
वृश्चिकोन्दुरुलूतानां सर्पाणां च विषं हरेत् ।
समानो ह्यमृतेनायं गराजीर्णं च नाशयेत् ॥ २०७ ॥
सर्वेऽगदा यथादोषं प्रयोज्याः स्युः कृकण्टके ।
कपोतविण्मातुलुङ्गं शिरीषकुसुमाद्रसः ॥ २०८ ॥

शङ्खिन्यार्कं पयः शुण्ठी करञ्जो मधु वार्श्चिके ।
शिरीषस्य फलं पिष्टं स्नुहीक्षीरेण दार्दुरे ॥ २०९ ॥
मूलानि श्वेतभण्डीनां व्योषं सर्पिश्च मत्स्यजे ।
कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥
वातपित्तहरी चापि क्रिया प्रायः प्रशस्यते ।
वार्श्चिको ह्युच्चिटिङ्गस्य कणभस्यौ[1]न्दुरोऽगदः ॥ २११ ॥

मुक्ता मौक्तिकम् । क्षीरशुक्ला विदारी । कर्णिकापतनं तयोरिति अनन्तरोक्तकीटलूतादंशयोर्या कर्णिका तस्याः पातनमित्यर्थः । जालमालिनी देवडताकः । तिक्तेक्ष्वाकुः कटुकालाबूः । वार्श्चिके इति वृश्चिकविषे । दुर्दुरः भेकः । श्वेतभण्डी अपराजिता । वार्श्चिके इत्यादि उच्चिटिङ्गस्य विषे वार्श्चिके यो योग उक्तः स कर्तव्यः । एवं कणभस्यापि विषे औन्दुरे यो योग उक्तः स कर्तव्यः ॥ १९९–२११ ॥

वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ।
द्वे वले नाकुलीं कुष्ठं शिरीषं रजनीद्वयम् ॥ २१२ ॥
गुहामतिगुहां श्वेतामजगन्धां शिलाजतु ।
कच्चूर्णं कटभीं क्षारं गृहधूमं मनःशिलाम् ॥ २१३ ॥
रोहीतकस्य पित्तेन पिष्ट्वा तु परमोऽगदः ।
नस्याञ्जनादिलेपेषु हितो विश्वम्भरादिषु ॥ २१४ ॥
स्वर्जिकाऽजशकृत्क्षारः सुरसाऽथाक्षिपीडकैः[2] ।
मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥ २१५ ॥
कपित्थमक्षिपीडोऽर्कबीजं त्रिकटुकं तथा ।
करञ्जो द्वे हरिद्रे च गृहगोधाविषं[3] जयेत् ॥ २१६ ॥
काकाण्डरससंयुक्तो[4] विषाणां तण्डुलीयकः ।
प्रधानो बर्हिपित्तेन तद्वद्वायसपीलुकः ॥ २१७ ॥
शिरीषफलमूलत्वक्पुष्पपत्रैः समैर्धृतैः ।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो वधे ॥ २१८ ॥

इति पञ्चशिरीषोऽगदः ।

नाकुली रास्ना । गुहा पृश्निपर्णी, अतिगुहा शालपर्णी । अजगन्धा फोकान्धेति ख्याता । पित्तेनेति गोपित्तेन । विश्वम्भरादयः कीटा एव श्लेष्मकोपनाः सुश्रुतोक्ताः । अक्षपीडकः श्वेतपीतशिम्बीभेदः । वायसी काकमाची । श्रेष्ठः पञ्चशिरीषोऽयमिति पदं त्रिशिरीषाद्यपेक्षया पञ्चशिरीषस्य श्रेष्ठत्वं ब्रूते, प्रवर इति पदं विषहरयोगान्तरेषु श्रेष्ठतामाह, तेन न पुनरुक्तिः; किंवा श्रेष्ठ इति श्रेष्ठशिरीषफलादिकृतः ॥ २१२–२१८ ॥

चतुष्पद्भिर्द्विपद्भिर्वा नखदन्तक्षतं तु यत् ।
शूयते पच्यते चापि स्रवति ज्वरयत्यपि ॥ २१९ ॥

---

१ 'दधिघृताप्लुतम्' इति पा० ।

१ 'शलभस्यौ°' इति पा० । २ 'अक्षिपीडकः पीडयित्वा यद्रसोऽक्षिण दीयते सोऽवपीडोऽक्षिपीडकः' इति गङ्गाधरः । ३ 'गलगोड्या विषं' इति पा० । ४ 'काकाण्डयुक्तः सर्वेषां' इति पा० ।

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ २२० ॥

द्विपदा वनमानुषमर्कटादयः । अश्वकर्णः सर्जभेदः ॥ २१९ ॥ २२० ॥

दुरन्धकारे विद्धस्य केनचिद्विषशङ्कया ।
विषोद्वेगाज्ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ॥
ग्लानिर्मोहोऽतिसारश्चाप्येतच्छङ्काविषं मतम् ।
चिकित्सितमिदं तस्य कुर्यादाश्वासयन् बुधः २२२
सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ।
पानं समन्त्रपूताम्बु प्रोक्षणं सान्त्वहर्षणम् ॥ २२३ ॥

दुरन्धकारे इत्यादिना शङ्काविषमाह । केनचिदिति निर्विषेणापि । विषशङ्कया विषोद्वेगादिति विषशङ्कयैव विषप्रादुर्भावादित्यर्थः; शङ्का चेयं प्रभावादेव विषजनिका । वैगन्धिकः गन्धक एव शोधितः ॥ २२१–२२३ ॥

शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ।
भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् ॥२२४॥
तण्डुलीयकजीवन्तीवार्ताकसुनिषण्णकाः ।
चुच्चूर्मण्डूकपर्णी च शाकं च कुलकं हितम् ॥२२५॥
धात्री दाडिममम्लार्थे यूषा मुद्गहरेणुभिः ।
रसाश्चैणशिखिश्वाविल्लावतैत्तिरपार्षताः ॥ २२६ ॥
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः ।
अविदाहीनि चान्नानि विषार्तानां भिषग्जितम् २२७
विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् ।
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥ २२८ ॥

कोरदूषः कोद्रवः । कुलकं कारवेल्लकम्; अन्ये पटोलभेदमाहुः ॥ २२४–२२८ ॥

मुहुर्मुहुः शिरोन्यासः शोथः स्रस्तौष्ठकर्णता[1] ।
ज्वरः स्तब्धाक्षिगात्रत्वं हनुकम्पोऽङ्गमर्दनम् २२९
रोमापगमनं ग्लानिररतिर्वेपथुर्भ्रमः ।
चतुष्पदां भवत्येतद्दष्टानामिह लक्षणम् ॥ २३० ॥
देवदारु हरिद्रे द्वे सरलं[3] चन्दनागुरु ।
रास्ना गोरोचनाऽजाजी गुग्गुल्विक्षुरसो नतम् २३१
चूर्णं ससैन्धवानन्तं गोपित्तमधुसंयुतम् ।
चतुष्पदानां दष्टानामगदः सार्वकार्मिकः ॥ २३२ ॥
सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान्मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥२३३॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ।
मर्मप्रधमनाध्मानं श्वयथुं हस्तपादयोः ॥ २३४ ॥

जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः[1] ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥२३५॥
स्वप्ने मार्जारगोमायुव्यालान् सनकुलान् कपीन् ।
प्रायः पश्यति नद्यादीञ्शुष्कांश्च सवनस्पतीन् २३६
कालश्च गौरमात्मानं स्वप्ने गौरश्च कालकम् ।
विकर्णनासिकं वाऽपि प्रपश्येद्विहतेन्द्रियः[2] ॥२३७॥
तमवेक्ष्य भिषक् प्राज्ञः पृच्छेत् किं कैः कदा सह ।
ज्ञात्वमित्यवगम्याशु प्रदद्याद्वमनं भिषक् ॥ २३८ ॥
सूक्ष्मं ताम्ररजस्तस्मै सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥२३९॥
हेम सर्वविषाण्याशु गरांश्च विनियच्छति ।
न सज्जते हेमपाङ्गे विषं पद्मदलेऽम्बुवत् ॥ २४० ॥
नागदन्तीत्रिवृद्दन्तीद्रवन्तीस्नुक्पयःफलैः ।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् २४१
सर्पकीटविषार्तानां गरार्तानां च शान्तये ।

अन्नमिश्रितानिति भक्ष्यमिश्रितान् । गरश्चास्योपजायत इति वक्ष्यमाणमर्मप्रधमनादिलक्षणो व्याधिर्जायते । विहतेन्द्रिय इति रोगोपहतेन्द्रियः । पृच्छेदित्यादौ पृच्छायां गरावधारणमेव फलमवगम्यते । अवगम्येति गरकारणमवगम्य । सूक्ष्ममित्यादौ अमृतताम्रचूर्णं माषमानं यावद्देयम्, अमृतेनैव वमनं भवति । हेमप इति हेम यः पिबतीति स हेमपः । नागदन्ती दन्तीभेदः । फलं मदनफलं, न तु 'पलैः' इति पाठः । अयं योगो जतुकर्णे पठ्यते—"नागदन्तीस्नुक्क्षीरफलैर्गोमूत्रसिद्धं माहिषं घृतं पाययेत्" इति ॥ २२९–२४१ ॥—

शिरीषत्वक् त्रिकटुकं त्रिफलां चन्दनोत्पले ॥२४२॥
द्वे बले सारिवास्फोतासुरभीनिम्बपाटलाः ।
बन्धुजीवाढकीमूर्वावासासुरसवत्सकान् ॥ २४३ ॥
पाठाङ्कोलाश्वगन्धार्कमूलयष्ट्याह्वपद्मकान् ।
विशालां बृहतीं लाक्षां कोविदारं शतावरीम् २४४
कटभीदन्त्यपामार्गान् पृश्निपर्णीं रसाञ्जनम् ।
श्वेतभण्डाश्वखुरकौ कुष्ठदारुप्रियङ्गुकान् ॥ २४५ ॥
विदारीं मधुकात् सारं करञ्जस्य फलत्वचौ ।
रजन्यौ लोध्रमक्षांशं पिष्ट्वा साध्यं घृताढकम् २४६
तुल्याम्बुच्छागगोमूत्रत्र्याढके तद्विषापहम् ।
अपस्मारक्षयोन्मादभूतग्रहगरोदरम् ॥ २४७ ॥
पाण्डुरोगक्रिमीगुल्मप्लीहोरुस्तम्भकामलाः ।
हनुस्कन्धग्रहादींश्च पानाभ्यञ्जननावनैः ॥ २४८ ॥
हन्यात् संजीवयेच्चापि विषोद्बन्धमृतान्नरान् ।
नास्मेदमसृतं सर्वविषाणां स्याद्घृतोत्तमम् ॥ २४९ ॥
इत्यमृतघृतम् ।

१ 'दष्टस्य' इति पा० । २ 'शुष्कौष्ठकण्ठता' इति पा० । ३ 'सुरसं' इति पा० ।

१ 'जठरं ग्रहणीरोगं यक्ष्माणं विषमज्वरम्' इति पा० । २ 'प्रपश्येदहतेन्द्रियः' इति पा० ।

शिरीषत्वगित्यादौ आस्फोता अपरमल्लिका। सुरभी पर्णासभेदः। बन्धुजीवः पुत्रजीवकः। अश्वखुरकः स्यन्दनः; किंवा कोकिलाक्षः॥ २४२-२४९॥

भवन्ति चात्र—

छत्री झर्झरपाणिश्च चरेद्रात्रौ तथा दिवा।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः २५०
दष्टमात्रो दशेदाशु तं सर्पं लोष्टमेव वा।
उपर्यरिष्टां बध्नीयाद्दंशं छिन्द्याद्दहेत्तथा॥ २५१॥
वज्रं मरकतः सारः पिचुको विषमूषिका।
कर्केतनः सर्पमणिर्वैडूर्यं गजमौक्तिकम्॥ २५२॥
धार्यं गरमणिर्याश्च वरौषध्यो विषापहाः।
खगाश्च शारिकाक्रौञ्चशिखिहंसशुकादयः॥ २५३॥

छत्रीत्यादौ छत्री दिवा, रात्रौ झर्झरपाणिश्चरेदिति वदन्ति; अन्ये तूभयत्राप्युभयं ब्रुवते। झर्झरकः 'खुर्खुरक'इति ख्यातः। छायाशब्दौ यथासंख्यं छत्रझर्झरयोः। ताभ्यां तदात्वे वित्रस्ताः। दंशकाले कर्तव्यमाह-दष्टमात्र इत्यादि। धारणादेव विषापहमाह-वज्रमित्यादि। सार इति सरजूविशेषणम् (?)। पिचुको मणिरुत्तरापथे प्रसिद्धः। विषमूषिका विषमणिः। कर्केतनमणिः पद्मरागः। गरमणिशब्देन नानामणीनां ग्रहणम्। वरौषध्य इति तन्त्रान्तरोक्ताः अक्षीवजातपिप्पलाजरुहाकायोषी (?) प्रभृतयः; उक्तं च—"अक्षीवजातस्य पिप्पलस्य मणिः सर्वविषापहः" इत्यादि॥ २५०-२५३॥

तत्र श्लोकः—

इतीदमुक्तं द्विविधस्य विस्तरै-
र्बहुप्रकारं विषरोगभेषजम्।
अधीत्य विज्ञाय तथा प्रयोजयन्
व्रजेद्विषाणामविषह्यतां बुधः॥ २५४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सास्थाने विषचिकित्सितं नाम त्रयोविंशोऽध्यायः॥ २३॥

---

इतीदमित्यादिसंग्रहः। व्रजेद्विषाणामविषह्यतामिति विषाणि तं सोढुं न पारयन्तीति भावः॥ २५०-२५४॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने विषचिकित्सितं नाम त्रयोविंशोऽध्यायः॥ २३॥

---

## चतुर्विंशोऽध्यायः।

अथातो मदात्ययचिकित्सितं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥

मोहजनकत्वसामान्यात् तथा विषसमानगुणजन्यत्वाच्च विषचिकित्सितमनु मदात्ययस्य चिकित्सितमुच्यते॥ १॥ २॥

सुरैः सुरेशसहितैर्या पुरा परिपूजिता।
सौत्रामण्यां हूयते या कर्मिभिर्या प्रतिष्ठिता॥ ३॥
यज्ञौही या यया शक्रः सोमातिपतितो भृशम्।
निरोजस्तमसाऽऽविष्टस्तस्माद्दुर्गात् समुद्धृतः॥ ४॥
विधिभिर्वेदविहितैर्वा यजद्भिर्महात्मभिः।
इज्या स्पृह्या प्रकल्प्या च यज्ञीया यज्ञसिद्धये॥ ५॥

सुरैरित्यादिना मदिरास्तुत्या तथा वक्ष्यमाणनिन्दया विधिना पीयमानसुरायाः शुभफलमविधिपानाचात्यर्थनिन्दितफलवत्त्वं दर्शयति। या पुरा परिपूजितेत्यनेन प्रथमं देवैरेवेयं परिपूजिता, ततः सुरयोगात् सुरेति चोपदिष्टेति दर्शयति। सौत्रामणिः सुराहविर्यज्ञान्तर्निविष्टो यज्ञविशेषः; तस्यां हूयते सुरा। कर्मिभिर्या प्रतिष्ठितेति याज्ञिकैरभिषवणादिभिः प्रतिष्ठिता प्रतिष्ठां प्रापिता। यज्ञं वहतीति यज्ञौही; अनेन च लौकिकयज्ञान्तराण्यपि सुरया क्रियन्त इत्युच्यते; सौत्रामणिहोमे तु तस्या एव प्रधानाङ्गतोच्यते। शक्रश्च सोमातिपतित इति 'शक्रोऽतिपीतेन सोमेन क्षपितबलो निरोजस्को निर्वीर्यीभूतः स किल पुनराप्याय्य निजं वीर्यमापादितः' इत्येषा श्रुतिः; अतिपानेन पतितः अतिपतितैः। प्रकल्प्या इति अभिषोतव्या संधानायेति यावत्। यज्ञीया यज्ञसिद्धय इति यज्ञविधौ कानिचित् क्रत्वर्थानि यूपबर्ह्यादीनि, कानिचित्तु पुरुषार्थानि वासगर्भादीनि, कानिचिद् यज्ञार्थानि पुरुषार्थानि च यथा सर्पिरिष्टकादीनि, तदिह सुरा 'यज्ञीया' इत्यनेन वासनादिवत् 'पुरुषार्था' इत्युच्यते, यज्ञसिद्धये भवतीत्यनेन यूपादिवद् यज्ञार्थत्वं सुराया उच्यते॥ ३-५॥

योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या।
भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात्॥ ६॥

योनीत्यादौ विशेषशब्दः प्रत्येकमभिसंबध्यते। योनिः कारणं, तद्विशेषाः—धान्यफलमूलसारपुष्पपत्रकाण्डत्वचः शर्करानवमाः सूत्रस्थानोक्ताः। संस्कारोऽपि बहुप्रकारसंस्कारयोगः। नामविशेषाः सुरामधुमैरेयादयः। आदिग्रहणात् प्रभावगुणादीनां ग्रहणम्। मदो लक्षणं यस्य तस्मान्मदलक्षणात् सामान्यात् मद्यस्वरूपात्॥ ६॥

या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या।
सोमो भूत्वा द्विजातीन् या युङ्क्ते श्रेयोभिरुत्तमैः ७

अमृतं भूत्वेत्यादौ सुराधिष्ठात्री देवता अमृतादिरूपेण देवादीन् तर्पयतीति दर्शयति। श्रेयोभिरिति महत्कल्याणैः॥ ७॥

---

१ 'सुरा' इति पा०। २ 'अतियोगेन परितोऽतिपरितः' इति पा०।

आश्विनं या महत्तेजो बलं सारस्वतं च या ।
वीर्यमैन्द्रं च या सिद्धा सोमः सौत्रामणौ च या ॥८॥
शोकारतिभयोद्वेगनाशिनी या महाबला ।
या प्रीतिर्या रतिर्या वाग्या पुष्टिर्या च निर्वृतिः ॥९॥
या सुरा सुरगन्धर्वयक्षराक्षसमानुषैः ।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत् ॥१०॥

आश्विनं या महत्तेज इत्यादावपि सुराधिष्ठातृदेवताया एव तेजोवीर्यादिकारणत्वात्तद्रूप्यं ज्ञेयम् । तेजः सर्वदेवतादिगं, तथा सारस्वतं बलं मन्त्रबलम् । सोमः सौत्रामणौ च येत्यनेन सोमरूपतोच्यते, पूर्वं सौत्रामण्यां हूयत इत्युक्तमिति न पौनरुक्त्यम् । या प्रीतिरित्यादौ प्रीत्यादिकारणत्वेन प्रीत्यादिरूपतया निर्देशो ज्ञेयः ॥ ८-१० ॥

शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान् ।
प्रावृतो निर्मलैर्वस्त्रैर्यथर्तूद्दामगन्धिभिः ॥ ११ ॥
विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन् संपूज्य स्पृष्ट्वा मङ्गलमुत्तमम् ॥ १२ ॥
देशे यथर्तुके शस्ते कुसुमप्रकरीकृते ।
सरसासंमते मुख्ये धूपसंमोदबोधिते ॥ १३ ॥
सोपधाने सुसंस्तीर्णे विहिते शयनासने ।
उपविष्टोऽथवा तिर्यक् स्वशरीरसुखे स्थितः ॥ १४ ॥
सौवर्णै राजतैश्चापि तथा मणिमयैरपि ।
भाजनैर्विमलैश्चान्यैः सुकृतैश्च पिबेत् सदा ॥ १५ ॥
रूपयौवनमत्ताभिः शिक्षिताभिर्विशेषतः ।
वस्त्राभरणमाल्यैश्च भूषिताभिर्यथर्तुकैः ॥ १६ ॥
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः ।
संवाह्यमान इष्टाभिः पिबेन्मद्यमनुत्तमम् ॥ १७ ॥
मद्यानुकूलैर्विविधैः फलैर्हरितकैः शुभैः ।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्तुकैः ॥ १८ ॥
भृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम् ।
पौरोगवर्गविहितैर्भक्ष्यैश्च विविधात्मकैः ॥ १९ ॥
पूजयित्वा सुरान् पूर्वमाशिषः प्राक् प्रयुज्य च ।
प्रदाय सजलं मद्यमर्थिभ्यो वसुधातले ॥ २० ॥

विधिना पिबेदित्यत्रोक्तविधिमाह—शरीरेत्यादि । शरीरे स्नानवस्त्रादिभिर्बाह्य आभ्यन्तरश्च प्रकृत्याद्यपेक्षया स्निग्धोष्णादिभिः कृतः संस्कारो येन स शरीरकृतसंस्कारः । शुचिरिति मनःशुचिः । यथर्तूद्दामगन्धिभिरिति ऋत्ववस्थानुगुणतया विहितैः । यथर्तुके सर्वर्तुसुखे । कुसुमप्रकरीकृते विसृजत्कुसुमे । सरसाः प्रियाः, तासां संमते । स्वशरीरसुखे स्थित इति यथाशरीरसुखं स्थितः । सुकृतैरिति संस्कृतैः । शिक्षिताभिरिति अभ्यस्तोपचाराभिः । गन्धपिशुनैरिति गन्धाढ्यैः । अम्बरचारिणः श्येनादयः । पौरोगवर्गो इति सूदशास्त्राभिज्ञाः । अर्थिभ्य इति अर्थिनो बलदेव-चण्डी-यक्षादयः, तेभ्यः ॥ ११-२० ॥

अभ्यङ्गोत्सादनस्नानवासोधूपानुलेपनैः ।
स्निग्धोष्णैर्भावितश्चान्नैर्वातिको मद्यमाचरेत् ॥२१॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ।
पैत्तिको भावितश्चान्नैः पिबन्मद्यं न सीदति ॥ २२ ॥
उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।
श्लैष्मिको धन्वजैर्मांसैर्मद्यं मारिचकैः सह ॥ २३ ॥
विधिर्वसुमतामेष भविष्यद्विभवाश्च ये ।
यथोपपत्ति तैर्मद्यं पातव्यं मात्रया हितम् ॥ २४ ॥
वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम् ।
कफपित्ताधिकेभ्यस्तु मार्द्वीकं माधवं च यत् ॥२५॥

सामान्यं विधिमुक्त्वा वातिकादीनां पानविधिमाह—अभ्यङ्गेत्यादि । मारिचकैरिति मरिचसंस्कृतैः । वसुमतामिति धनवताम् । भविष्यद्विभवा उत्पद्यमानधनाः । यथोपपत्ति यथापरिच्छदोपपत्ति । कफपित्ताधिकेभ्य इत्यादौ विपर्ययतन्त्रयुक्त्या कफाधिकेभ्यो माधवं, पित्ताधिकेभ्यस्तु मार्द्वीकं; मार्द्वीकं मृद्वीकाकृतं, मधुकृतं तु माधवम् ॥ २१-२५ ॥

बहुद्रव्यं बहुगुणं बहुकर्म मदात्मकम् ।
गुणैर्दोषैश्च तन्मद्यमुभयं चोपलक्ष्यते ॥ २६ ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ २७ ॥
यथोपेतं पुनर्मद्यं प्रसङ्गादेन पीयते ।
रूक्षव्यायामनित्येन विषवद्याति तस्य तत् ॥ २८ ॥

बहुद्रव्यमिति नानाविधद्रव्यसंपादितम् । बहुगुणमिति भूरि वक्ष्यमाणलघ्वादिगुणम् । बहुकर्मेति लेखनदीपनादिबहुकर्मकरम् । मदात्मकमिति मदस्वभावम् । यस्मादेवं स्वभावं तस्माद्गुणदोषे च तं मद्यमपेक्षेते; किंचित् पुरुषमपेक्ष्य यौगिकत्वाद्गुणकरं, किंचित्त्वयौगिकत्वाद्दोषकरं; यथा—प्रथमे मदे गुणकरं, दोषकरं च द्वितीयमदे इति भावः । विधिनेति यथोक्तविधिना । काले इति यस्य मद्यस्य य उचितो विपरीतगुणः कालस्तस्मिन् । हितैरन्नैरिति मद्यहितैरन्नैः । यथोपेतमिति यदेव मद्यमहितमभ्युपगतम् । प्रसंगादिति अतियोगेन । विषवदिति मोहादिकर्तृत्वात् ॥ २६-२८ ॥

मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥२९॥
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुगमेव च ।
रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥ ३० ॥

१ 'संवाससंमते' इति पा० । २ 'संचार्यमाणमिष्टाभिः' इति पा० । ३ 'पिबेत् संपूज्य विबुधानाशिषः संप्रयुज्य च । प्रदाय यजनं चाग्रे त्वर्थिभ्यः पृथिवीतले' इति पा० ।

गुरु शीतं मृदु श्लक्ष्णं बहलं मधुरं स्थिरम् ।
प्रसन्नं पिच्छिलं स्निग्धमोजो दशगुणं स्मृतम् ॥३१॥
गुरुत्वं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ।
माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसादं चाशुभावनात् ॥३२॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि ।
विकासिभावात्पैच्छिल्यं वैशद्यात्सान्द्रतां तथा ३३
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान् ।
सत्त्वं तदाश्रयं चाशु संक्षोभ्य जनयेन्मदम् ॥ ३४ ॥
रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥ ३५ ॥
अतिपीतेन मद्येन विहतेनौजसा च तत् ।
हृदयं याति विकृतिं तत्रस्था ये च धातवः ॥ ३६ ॥

मद्यं यथा मदयति तथा प्राह—मद्यमित्यादि । दशभिरिति लंघ्वादिभिर्गुणैः, दशापि गुर्वादीनोजोगुणान् संक्षोभ्य, न द्वित्रादिकैः, चेतो विक्रियां नयति विकृतं करोति । येन गुणेन मद्यस्य ओजोगुणक्षोभो भवति तदाह—गुरुत्वं लाघवादित्यादि । प्रसादं चाशुभावनादिति प्रसादाख्यगुणमाशुगत्वाद्धन्ति; आशुगत्वं च यद्यपि प्रसादविरुद्धं न भवति, तथाऽपि मद्यमेव प्रतिकूलतया ओजःप्रसादं हन्ति, तत्राशुगुण आहनने व्याप्रियत इति ज्ञेयम् । व्यवायित्वात् स्थिरत्वमिति व्यवायित्वं व्यापकत्वं, तच्च स्थिरत्वं तद्विपरीतत्वादेव हन्ति; आशुगत्वव्यवायित्वयोश्चायं विशेषः— यदाशुगं शीघ्रं गच्छति, व्यवायि तु सर्वव्यापकम् । विकासित्वं विकसनशीलत्वं सरत्वमिति यावत्; तच्च श्लक्ष्णविपरीतत्वादेव श्लक्ष्णतां हन्ति । सान्द्रता घनता । एते विकासित्वाशुगत्वादयो गुणा यद्यपि विंशतिगुणगणनायां न पठितास्तथाऽप्यसंख्येयत्वाद्गुणानामेषामपि गुणत्वं सिद्धं; ये तु तत्र पठितास्ते तावदाविष्कृततमा ज्ञेयाः । आश्रयोपघातादाश्रितोपघातो भवतीति दर्शयन्नाह—सत्त्वमित्यादि । सत्त्वस्य च ओज आश्रयः, ओज उपकार्यम्; यथा—राजाश्रितः पुरुषः । रसवातेत्यादि । रसवातादिवहानां दशधमनीनां हृदयं स्थानं, रसवहा एव या दश धमन्यो हृदयाश्रया उक्तास्ता एव वातादिवहाः । यदुक्तं— "वातपित्तश्लेष्मणां सर्वशरीरचराणां सर्वाणि स्रोतांस्ययनभूतानि ( वि. अ. ५ )" इति; रक्तादीनां तु सर्वशरीरचराणामपि विशेषेण हृदयं स्थानमुक्तं—"षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थ-पञ्चकम् । आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संश्रितम्' ( सू. अ. ३० ) इति । धातव इति सत्त्वबुद्धीन्द्रियादयः ॥२९-३६॥

ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते ।
मध्यमो विहतेऽल्पे च विहते तूत्तमो मदः ॥ ३७ ॥

१ 'रसधात्वादिमार्गाणां' इति पा० । २ 'ओजः प्रत्याहन्ति' इति पा० ।

नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः ।
विकाशिरूक्षविशदा गुणास्तत्र हि नोल्बणाः ॥३८॥

मद्यं चेतो विक्रियां नयतीत्युत्सर्गविधेः प्रथममदेऽपवादमाह—ओजस्यविहते इत्यादि । हृदयाश्रितबुद्ध्यादौ प्रतिबोधिते, हृदयशब्देनेह तत्स्थोपचाराद्धृदयाश्रिता बुद्ध्यादयोऽभिधीयन्ते, यथा—मञ्चाः क्रोशन्तीति; बुद्ध्यादिबोधनं प्रथममदकार्यं मद्यस्य प्रभावात् । मध्यमोत्तममदोपपत्तिसामग्रीमाह—मध्यम इत्यादि । विहते इति विघाते; ओजसः अल्पे विघाते मध्यमो मदो भवति । विहते इति विशेषेण अत्यर्थं हते, उत्तम इति तृतीयः ॥ ३७ ॥ ३८ ॥

हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ।
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः ॥३९॥
जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् ।
स मद्यविभ्रमो नाम्ना 'मद' इत्यभिधीयते ॥ ४० ॥

हृदीत्यादिना सामान्येन मदलक्षणमाह । तर्षः अभिलाषः । यथासत्त्वमिति प्रकृत्या राजसे सत्त्वे राजसाः, तामसे च तामसाः । चित्रा इति नानाप्रकाराः । मोहनिद्रान्ता इति मोहनिद्रावसानाः ॥ ३९ ॥ ४० ॥

पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः ।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रचक्ष्महे ॥४१॥
प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः ।
वाद्यगीतप्रहासानां कथानां च प्रवर्तकः ॥ ४२ ॥
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः ।
सुखनिद्राप्रबोधश्च प्रथमः सुखदो मदः ॥ ४३ ॥
मुहुः स्मृतिर्मुहुर्मोहो(ऽ)व्यक्ता सज्जति वाङ्मुहुः ।
युक्तायुक्तप्रलापश्च प्रचलायनमेव च ॥ ४४ ॥
स्थानपानान्नसांकथ्ययोजना सविपर्यया ।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥ ४५ ॥
मध्यमं मदमुत्क्रम्य मदमाप्राप्य चोत्तमम् ।
न किंचिन्नाशुभं कुर्युर्नरा राजसतामसाः ॥ ४६ ॥
को मदं तादृशं विद्वानुन्मादमिव दारुणम् ।
गच्छेदध्वानमस्वन्तं बहुदोषमिवाध्वगः ॥ ४७ ॥
तृतीयं तु मदं प्राप्य भग्नदार्विव निष्क्रियः ।
मदमोहावृतमना जीवन्नपि मृतैः समः ॥ ४८ ॥
रमणीयान् स विषयान्न वेत्ति न सुहृज्जनम् ।
यदर्थं पीयते मद्यं रतिं तां च न विन्दति ॥ ४९ ॥
कार्याकार्यं सुखं दुःखं लोके यच्च हिताहितम् ।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद्बुधः ॥५०॥
स दूष्यः सर्वभूतानां निन्द्यश्चाग्राह्य एव च ।
व्यसनित्वादुदर्के च स दुःखं व्याधिमश्नुते ॥ ५१ ॥

प्रथमादिमदानां लक्षणमाह—प्रहर्षण इत्यादि । पानान्नगुणदर्शक इति पानान्नगुणान् सम्यग्बोधयतीत्यर्थः । विषये-

१ 'व्यक्ताऽव्यक्ता च' इति पा० । २ 'मदमप्राप्य' इति पा० ।

ष्विति विषयसेवासु, न चाक्षम इति नाक्षमताकर इत्यर्थः। युक्तायुक्तप्रलाप इति संबद्धासंबद्धवचनः। प्रचलायनं घूर्णनम्। योजना सविपर्ययेति स्थानादीनां सम्यग्योजना कदाचिद्भवति, कदाचिच्च स्थानादियोजनाविपर्ययोऽसम्यग्योजनारूपो भवतीत्यर्थः। मध्यमं मदमुत्क्रम्येत्यादि। यद्यपि त्रिविधो मद उक्तः, तथाऽपि द्वितीयमदावसाने तृतीयमदाप्राप्त्यवस्थाया एव अत्यर्थनिन्द्यतां दर्शयन् तृतीयमदस्यात्यन्तनिन्द्यतां दर्शयति; येन तस्य तृतीयमदस्य पूर्वरूपावस्थैव सर्वाशुभकरणादिहेतुतया नितान्तं निन्द्येति भावः। इयं च मध्यमदातिक्रमतृतीयमदाप्राप्तिशब्दाभिधेयाऽप्यवस्था मध्यममदान्ततृतीयमदाद्यरूपावस्थाभिधायिकैव; यथा—"कुम्भमीनयोर्मध्ये यदा चरति चन्द्रमा" इत्यत्र मध्येपदेन कुम्भान्तमीनादिरेवोच्यते, परमार्थतस्तयोर्मध्यस्याभावात्; तथेहापि परमार्थतोऽन्यमदकालाभावाद् द्वितीयान्ततृतीयमदाद्यभिधानमेवात्र तृतीयमदात्यर्थनिन्दार्थं, न चतुर्थमदोपदर्शनम्। अशस्तमिति अशोभनान्तम्। भग्नदार्विवेति भग्नवृक्ष इव पतितस्तिष्ठति। उदर्कम् उत्तरकालम्। स दुःखं व्याधिमिति मदात्ययम्॥ ४१-५१॥

**प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षे च यत् परम्।**
**मनःसमाधौ तत् सर्वमायत्तं सर्वदेहिनाम्॥ ५२॥**
**मद्येन मनसश्चास्य संक्षोभः क्रियते महान्।**
**महामारुतवेगेन तटस्थस्येव शाखिनः॥ ५३॥**
**मद्यप्रसक्तं तं चाज्ञा महादोषं महागदम्।**
**सुखमित्यधिगच्छन्ति रजोमोहपराजिताः॥ ५४॥**
**मद्योपहतविज्ञाना वियुक्ताः सात्त्विकैर्गुणैः।**
**श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मदलालसाः॥ ५५॥**
**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रितः।**
**सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः॥ ५६॥**
**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधुवत्।**
**इत्येवं मद्यदोषज्ञा मद्यं गर्हन्ति यत्नतः॥ ५७॥**
**सत्यमेते महादोषा मद्यस्योक्ता न संशयः।**
**अहितस्यातिमात्रस्य पीतस्य विधिवर्जितम्॥ ५८॥**
**किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्।**
**अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम्॥ ५९॥**
**प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्।**
**विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्॥ ६०॥**

प्रेत्य चेहेत्यादिना एकीयमतं मद्यनिन्दकं दर्शयति। प्रेत्येति जन्मान्तरे। तटस्थस्येति वचनेन वाताक्षोभ्यतां दर्शयति। सत्यमित्यादिना स्वमतमाह। एते दोषाः मद्यस्यैकीयमतोक्ता अहितादिधर्मयुक्तस्यैव भवन्ति, न हिताल्पमात्रविधिपीतस्येति भावः। विधिवर्जितमिति क्रियाविशेषणम्। मद्यस्यान्नसारूप्यदर्शनेन विधिवदुपयोगे गुणवत्तामविध्युपयोगे च दोषवत्तामाह—किंत्वित्यादि। युक्त्या देशकालमात्राद्यपेक्षया योजनया युक्तं शुभम्, अशुभं चायुक्तियुक्तम्। युक्तेरन्वयव्यतिरेकाभ्यां कार्यमाह—प्राणा इत्यादि। प्राणहेतुत्वात् प्राणाः। अयुक्तियुक्तमिति अविधिप्रयुक्तम्। युक्तियुक्तं रसायनमिति यथा "विषस्य तु तिलं दद्यात्" (चि. अ. १) इत्यादिप्रयोगे तिलमानस्य रसायनत्वं, तथा ज्ञेयम्॥ ५२-६०॥

**हर्षमूर्जं मुदं पुष्टिमारोग्यं पौरुषं परम्।**
**युक्त्या पीतं करोत्याशु मद्यं सुखमदप्रदम्॥ ६१॥**

विधिपीतमद्यगुणानाह—हर्षमित्यादि। हर्षम् उत्साहं कायिकम्। मुदमिति मनःसंतोषम्। पौरुषमिति शुक्रम्। आश्विति वचनेन शीघ्रं हर्षादीनि करोति न परिणामं यावदपेक्षते। सुखमदप्रदमिति सुखप्रदमदं, प्रथमं मदमिति यावत्। अन्ये तु 'मदसुखप्रदम्' इति पठन्ति; तत्रापि मदसुखं प्रथममदारम्भ एव॥ ६१॥

**रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्।**
**प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम्॥ ६२॥**
**स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम्।**
**बोधनं चातिनिद्राणां विबद्धानां विबन्धनुत्॥ ६३॥**
**वधबन्धपरिक्लेशदुःखानां चाप्यबोधनम्।**
**मद्योत्थानां च रोगाणां मद्यमेव प्रबाधकम्॥ ६४॥**
**रतिर्विषयसंयोगे प्रीतिसंयोगवर्धनम्।**
**अपि प्रवयसां मद्यमुत्सवामोदकारकम्॥ ६५॥**
**पञ्चस्वर्थेषु कान्तेषु या रतिः प्रथमे मदे।**
**यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ६६**
**बहुदुःखहतस्यास्य शोकेनोपहतस्य च।**
**विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम्॥ ६७॥**

रोचनमित्यादिना मद्यगुणानाह। स्वापनं नष्टनिद्राणां तथा बोधनं चातिनिद्राणामिति कार्यद्वयकरणमुचितनिद्राकरत्वप्रभावादेव; किंवा नष्टनिद्राणां निद्राभिघातहेत्वतिचिन्तनादिविस्मारकतया निद्राकरं भवति, अतिनिद्राणां निद्राहेतुमनोवहस्रोतोरोधादिहन्तृतया प्रबोधकं भवतीति ज्ञेयम्। मद्योत्थानां च रोगाणां मद्यमेव प्रबाधकमिति हेतुविपरीतार्थकारिताप्रभावादित्यर्थः। रतिरिति रतिकारकमित्यर्थः। विषयसंयोगे प्रीतिसंयोगवर्धनमिति विषयाणां शब्दादीनां संयोगे प्रीतिं संयोगं च वर्धयति; पीतमद्यो यदा विषयैः शब्दादिभिः संयुज्यते तदा तेष्वपि प्रीतिमान् भवति, प्रीतश्च सुखाकांक्षी सन् पुनस्तेषु संयुज्यते। प्रवयसामिति वृद्धानाम्। उत्सवः औत्सुक्यं विषयाभिलाष इति यावत्, आमोदो हर्षः। ननु विषये स्वभावादेव प्रीतिर्भवति,

१ 'तेनेहापि' इति पा०।

१ 'बलम्' इति पा०।

तत् किं मद्येन क्रियते? इत्याशंक्य प्रथममदस्य विशिष्टरतिकर्तृत्वमाह—पञ्चस्वित्यादि। रतिश्चेह अत्यर्थसुखजनकत्वादेवोपादेयेति विज्ञेयम्। विश्राम इति दुःखार्तविश्रामहेतुः। जीवलोक इति जीवमानलोकः ॥ ६२–६७ ॥

अन्नपानवयोव्याधिबलकालत्रिकाणि षट्।
त्रीन्दोषांस्त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिबेत्सदा ॥६८॥
तेषां त्रिकाणामष्टानां योजना युक्तिरुच्यते।
यया युक्त्या पिबन्मद्यं मद्यदोषैर्न युज्यते ॥ ६९ ॥
मद्यस्य च गुणान् सर्वान् यथोक्तान् स समश्नुते।
धर्मार्थयोरपीडायै नरः सत्त्वगुणोच्छ्रितः ॥ ७० ॥
सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे।
द्वितीयेऽव्यक्ततां यान्ति मध्ये चोत्तममध्ययोः ७१
सस्यसंबोधकं वर्षं, हेमप्रकृतिदर्शकः।
हुताशः, सर्वसत्त्वानां मद्यं तूभयकारकम् ॥ ७२ ॥
प्रधानावरमध्यानां रूपाणां व्यक्तिदर्शकः।
यथाऽग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥ ७३ ॥

युक्त्या निषेवितमित्यत्रोक्तां मद्यपानयुक्तिमाह—अन्नपानेत्यादि। तत्रान्नं त्रिविधं वातपित्तकफकरम्, एवं पानमपि त्रिविधं, बाल्यादिभेदाद्वयोऽपि त्रिविधं, व्याधिरपि मृदुमध्यतीव्रभेदेन त्रिविधः, किंवा सौम्याग्नेयवायव्यभेदेन त्रिविधः, बलं प्रवरावरमध्यभेदात्त्रिविधं, कालस्तु शीतोष्णवर्षालक्षणस्त्रिविधः, त्रिविधं सत्त्वं शुद्धं राजसं तामसं च। योजनेति सम्यग्योजनारूपा। युक्तिं फलेनावधारयति—यया युक्त्येत्यादिना। सत्त्वगुणोच्छ्रितो मद्यगुणान् समश्नुते इति योज्यम्। तत्रान्नापेक्षया युक्तिर्यथा—वातकरमन्नमुपयुज्य वातहरं मद्यं पेयम्, एवं पित्तकरकफकरत्वेऽपि पित्तकफहरान्नोपयोगः। एवं पानाद्यपेक्षयाऽपि योजना व्याख्याता भवति। वयस्त्रिकेऽपि बाल्ये स्थविरे च तीक्ष्णं मद्यं न पेयं, यौवने तु तीक्ष्णमपीति। व्याध्यपेक्षयाऽपि योजना यथा-मृदुव्याधौ तीक्ष्णोष्णं, उष्णे च शीतमधुरं, वर्षाकाले तु स्निग्धं दीपनं च मद्यम्। दोषभेदेन तु मद्यं वाते स्निग्धोष्णं गौडिकादि, पित्ते शीतमधुरं शार्करादि, कफे रूक्षतीक्ष्णं माधवादि। उक्तं हि—"वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम्। कफपित्ताधिकेभ्यस्तु फालमाधवशार्करम्" इति। दोषग्रहणेनैव वातलादिप्रकृतिरपि गृहीता। सत्त्वभेदेनापि सात्त्विकेन तु बह्वपि मद्यं पातव्यं, राजसतामसैस्तु स्वल्पमेव। सत्त्वानीति मनांसि। अव्यक्तताम् ईषद्व्यक्ततां, मध्ये चाव्यक्ततां यान्तीत्यर्थः, उत्तमे तु सर्वथाऽप्यव्यक्तं भवतीति भावः। केचित्तु 'सस्यसंबोधकं वर्षं' इत्यादि श्लोकं पठन्ति। तत्र हेमप्रकृतिदर्शको हुताशो यथा सुवर्णस्य शुद्धाशुद्धतां दर्शयति, तथा मद्यं तूभयकारकमिति मनःप्रबोधकं मनोगुणदर्शकं च। रूपाणामिति हेमरूपाणां; किंवा 'रुक्माणां' इति पाठः। व्यक्तिदर्शक इति आकारदर्शकः ॥ ६८–७३ ॥

सुगन्धिमाल्यगन्धर्वं सुप्रणीतममाकुलम्।
मिष्टान्नपानविशदं सदा मधुरसंकथम् ॥ ७४ ॥
सुखप्रपानं सुमदं हर्षप्रीतिविवर्धनम्।
स्वन्तं सात्त्विकमापानं न चोत्तममदप्रदम् ॥ ७५ ॥
वैगुण्यं सहसा यान्ति मद्यदोषैर्न सात्त्विकाः।
मद्यं हि बलवत्सत्त्वं गृह्णाति सहसा न तु ॥ ७६ ॥
सौम्यासौम्यकथाप्रायं विशदाविशदं क्षणात्।
चित्रं राजसमापन्नं प्रायेणास्वन्तकाकुलम् ॥ ७७ ॥
हर्षप्रीतिकथापेतमतुष्टं पानभोजने।
संमोहक्रोधनिद्रान्तमापानं तामसं स्मृतम् ॥ ७८ ॥

सात्त्विकादिभेदेन पानं त्रिविधमाह—सुगन्धीत्यादि। शोभनो गन्धो यस्य तत् सुगन्धि, गन्धर्वः गानम्। शोभनोऽन्तो यस्य तत् स्वन्तम्। सुमदमिति सममदम्। न चोत्तममदप्रदमिति नोत्तममदकरं, कदाचिदपि मद्यपानात्तृतीयमदाशङ्का न भवति; उत्तममदः सात्त्विके न भवतीत्यर्थः। उत्तममदाप्राप्तौ हेतुमाह—वैगुण्यमित्यादि। सत्त्वसंयोगादिति सत्त्वाख्यगुणयोगात्; सत्त्वाख्यो हि गुणः प्रकाशकतया न मदेन मोहकेनाभिभूयत इति भावः। एतदेवाह—सहसेत्यादि। राजसपानमाह—सौम्यासौम्येत्यादि। सौम्यकथा सौम्यसंबन्धा, तद्विपरीता असौम्या। विशदाविशदमिति प्रसन्नाप्रसन्नम्। चित्रमिति संबद्धासंबद्धवाक्यादियोगान्नानाप्रकारकम्। तथेत्यादिना तामसमाह। संमोहः क्रोधो निद्रा च अन्ते यस्य तत् संमोहक्रोधनिद्रान्तम् ॥ ७४–७८ ॥

आपाने सात्त्विकान् बुद्ध्वा तथा राजसतामसान्।
जह्यात्सहायान् यैः पीत्वा मद्यदोषानुपाश्नुते ॥७९॥

यैरित्यनेन राजसतामसाः प्रत्यवमृश्यन्ते, तैः समं पिबन् तत्प्रसक्त्या स्वयमप्यतिपिबन् मद्यदोषान् द्वितीयतृतीयमददोषान् प्राप्नोति ॥ ७९ ॥

सुखशीलाः सुसंभाषाः सुमुखाः संमताः सताम्।
कलास्वबाह्या विशदा विषयप्रवणाश्च ये ॥ ८० ॥
परस्परविधेया ये येषामैक्यं सुहृत्तया।
प्रहर्षप्रीतिमाधुर्यैरापानं वर्धयन्ति ये ॥ ८१ ॥
उत्सवादुत्सवतरं येषामन्योन्यदर्शनम्।
ते सहायाः सुखाः पाने तैः पिबन्सह मोदते ॥८२॥
रूपगन्धरसस्पर्शैः शब्दैश्चापि मनोरमैः।
पिबन्ति सुसहाया ये ते वै सुकृतिभिः समाः ॥८३॥
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः।
देशे काले पिबेन्मद्यं प्रहृष्टेनान्तरात्मना ॥ ८४ ॥

१ 'जीवबान् लोकः' इति पा०। २ 'रुक्माणां' इति पा०।

१ 'सुखप्रमाणं' इति पा०। २ 'सहसा नावगृह्णाति मद्यं सत्त्वबलाधिकम्' इति पा०। ३ '°रिष्टैरुपेतो मनसः' इति पा०।

स्थिरसत्त्वशरीरा ये पूर्वाद्या मद्यपान्वयाः।
बहुमद्योचिता ये च माद्यन्ति सहसा न ते ॥ ८५ ॥
क्षुत्पिपासापरीताश्च दुर्बला वातपैत्तिकाः।
रूक्षाल्पप्रमिताहारा विष्टब्धाः सत्त्वदुर्बलाः॥ ८६ ॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः।
स्वल्पेनापि मदं शीघ्रं यान्ति मद्येन मानवाः ॥८७॥

उपादेयान् सात्त्विकानाह—सुखशीला इत्यादि। सुमुखा इति प्रियाकाराः। विशदा इति अवामाः। आपानं वर्धयन्तीति आपाने प्रसादं वर्धयन्ति न पानप्रसक्तिं वर्धयन्तीत्यर्थः, तस्या निन्दितत्वात्। मनोरमैरित्यत्र 'साधीयांसैः' इति शेषः। सुकृतिभिः समा इति एवंभूतपानस्य सुकृतिलभ्यत्वात्। स्थिरसत्त्वेत्यादौ पूर्वाद्या इति मद्यपानात् पूर्वमुपयुक्ताद्याः। मद्यपान्वया इति मद्यपवंशजाः, तेषां मद्यपानं मद्यसात्म्यत्वादेव न विकारकरं भवति, विषकन्याया विषमिव ॥ ८०–८७ ॥

ऊर्ध्वं मदात्ययस्यातः संभवं स्वलक्षणम्।
अग्निवेश! चिकित्सां च प्रवक्ष्यामि यथाक्रमम् ८८
स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्शितः।
रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया ॥ ८९ ॥
रूक्षं परिणतं मद्यं निशि निद्रां विहत्य च।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ॥ ९० ॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ ९१ ॥
तीक्ष्णोष्णं मद्यमम्लं च योऽतिमात्रं निषेवते।
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः ९२
तस्योपजायते पित्ताद्विशेषेण मदात्ययः।
स तु वातोल्बणस्याशु प्रशमं याति हन्ति वा ॥९३॥
तृष्णादाहज्वरस्वेदमूर्च्छातीसारविभ्रमैः।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ ९४ ॥
तरुणं मधुरप्रायं गौडं पैष्टिकमेव वा।
मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया ॥ ९५ ॥
अव्यायामदिवास्वप्नशय्यासनसुखे रतः।
मदात्ययं कफप्रायं स शीघ्रमधिगच्छति ॥ ९६ ॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ ९७ ॥

मद्यपानदोषगुणानभिधाय मदात्ययान् हेत्वादिभिराह—ऊर्ध्वमित्यादि। संभवमिति कारणम्। वातप्रायमित्यादौ प्रायःशब्देनाधिकवाचिना वक्ष्यमाणानां सर्वमदात्ययानां त्रिदोषजन्यत्वं दर्शयति। स तु वातेत्यादौ स त्विति पैत्तिकः; वातोल्बणस्य पैत्तो मदात्ययो वातपित्तसंयोगकृततया बाह्य इवाग्निर्वायुयुक्तः शीघ्रकारी भवति। तत्रेयं व्यवस्था—यत्र सद्यःफला क्रिया तत्र शीघ्रमेव शाम्यति, अक्रियायां च शीघ्रं हन्ति, शङ्खकरोहिण्यादिवत् ॥ ८८–९७ ॥

विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपणाः।
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥ ९८ ॥
हन्त्याशु हि विषं किंचित् किंचिद्रोगाय कल्पते।
यथा विषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः ॥ ९९ ॥
तस्मात् त्रिदोषजं लिङ्गं सर्वत्रापि मदात्यये।
दृश्यते रूपवैशेष्यात् पृथक्त्वं चास्य लक्ष्यते ॥१००॥

मद्यस्य त्रिदोषकरत्वे हेतुमाह—विषस्येत्यादि। यद्यपि मद्यमम्लं, विषं त्वव्यक्तमधुरं, तथाऽपि बहुगुणसामान्यात् त एव मद्ये दृश्यन्त इत्युक्तम्। तथैवान्त्यो मद इति प्राणहरो रोगकरश्चेत्यर्थः। पृथक्त्वमिति वातिकत्वादिना पार्थक्यम्॥९८–१००॥

शरीरदुःखं बलवत् संमोहो हृदयव्यथा।
अरुचिः प्रततं तृष्णा ज्वरः शीतोष्णलक्षणः॥१०१॥
शिरःपार्श्वास्थिसन्धीनां विद्युत्तुल्या च वेदना।
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः॥ १०२॥
उरोविबन्धः कासश्च हिक्का श्वासः प्रजागरः।
शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहः ॥ १०३ ॥
छर्द्यतीसारहृल्लासा वातपित्तकफात्मकाः।
भ्रमः प्रलापो रूपाणामसतां चैव दर्शनम् ॥ १०४॥
तृणभस्मलतापर्णपांशुभिश्चावपूरणम्।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥ १०५ ॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च।
मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत् ॥१०६॥

शरीरदुःखमित्यादिना सर्वमदात्ययस्य सामान्यं लक्षणं ब्रूते, किंवा त्रिदोषमदात्ययस्यैव लक्षणं; यतो रोगसंग्रहे वातपित्तकफसन्निपातैश्चत्वारो मदा उक्ताः। "यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः। सर्वे एते मदा नर्ते वातपित्तकफत्रयात्" (सू. अ. २४) इत्यनेन मदस्य वातादिजत्वेन चातुर्विध्यमुक्तम्। तेन मदात्ययस्य चातुर्विध्यं मदचातुर्विध्यात्; यतो मद एव आत्ययिको मदात्ययं इति निरुच्यते। विद्युत्तुल्येति विद्युल्लक्षणस्थायिनी। स्फुरणं किंचित्कम्पनं, वेपनमेकदेशे व्यक्तकम्पनम् ॥ १०१–१०६ ॥

सर्वं मदात्ययं विद्यात् त्रिदोषमधिकं तु यम्।
दोषं मदात्यये पश्येत् तस्यादौ प्रतिकारयेत् ॥१०७॥

१ 'प्रांशवश्चाः क्षुत्पिपासार्ता' इति पा०। २ 'लक्षणानि भवन्त्यस्य यानि तानि निबोध मे' इति पा०।

१ 'चापि' इति पा०। २ 'संततं' इति पा०। ३ 'प्रमोहः' इति पा०। ४ 'वेदना विक्षते यथा' इति पा०।

कफस्थानानुपूर्व्या च क्रिया कार्या मदात्यये ।
पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः ॥ १०८ ॥
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते ।
समपीतेन तेनैव स मद्येनोपशाम्यति ॥ १०९ ॥
जीर्णममद्यदोपाय मद्यमेव प्रदापयेत् ।
प्रकाङ्क्षालाघवे जाते यद्यदस्मै हितं भवेत् ॥ ११० ॥
सौवर्चलानुसंविद्धं शीतं सबिडसैन्धवम् ।
मातुलुङ्गार्द्रकोपेतं जलयुक्तं प्रमाणवित्[१] ॥ १११ ॥

उद्रेकविशेषेण चिकित्सामाह—सर्वमित्यादि । समसर्वदोषे चिकित्सामाह—कफस्थानेत्यादि । कफस्थानानुपूर्व्या चात्र चिकित्सा कफस्थानोद्भूततया प्रथमं कफसंबन्धात् सन्निपातज्वर इव ज्ञेया । आदौ कफप्रबलतामेवाह—पित्तमारुतपर्यन्त इति; अनेन चार्थात् कफादित्वं लम्भयति । समपीतेन तेनैवेति यज्जातीयेन मद्येन मदात्ययो जनितः नितरां तज्जातीयेनैव शाम्यति । यथा विषं मौलं दंष्ट्रीयेण शाम्यति, तथा मद्यमपि विजातीयेन मद्येन शाम्यतीत्येके; किंतु तेनैवेत्यनेन तामेव मद्यजातिं प्रत्यवमृशति, तेनावश्यं तज्जातीयमेव मद्यं ज्ञेयम् । यतोऽनन्तरं वक्ष्यति—'यच्च यस्मै हितं भवेत्' इति । तथा 'दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये' इत्यनेन येन केनचिन्मद्येनोद्भूते वातमदात्यये पैष्टिकमुक्तं, तथा 'सशर्करं शार्करं वा' इत्यादि विशेषविधानं बहु करिष्यति; तेन तज्जातीयमन्यजातीयं च मद्यं मदात्यये देयम् ॥ १०७-१११ ॥

तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ।
मद्येनान्नरसोत्क्लेदो विदग्धः क्षारतां गतः ॥ ११२ ॥
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम् ।
जनयत्याशु तच्छान्त्यै मद्यमेव प्रदापयेत् ॥ ११३ ॥
क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः ।
श्रेष्ठमम्लेषु मद्यं च यैर्गुणैस्तान् परं शृणु ॥ ११४ ॥
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः ।
मधुरश्च कषायश्च तिक्तः कटुक एव च ॥ ११५ ॥
गुणाश्च दश पूर्वोक्तास्तैश्चतुर्दशभिर्गुणैः ।
सर्वेषां मद्यमम्लानामुपर्युपरि तिष्ठति ॥ ११६ ॥

अन्नरसोत्क्लेद इत्यत्र 'अम्लरसक्लेदः' इति केचित् पठन्ति । क्षारमाधुर्याय यदाऽम्लमद्यदानं, तदा किमिति अन्यदम्लं न दीयते इत्याह—क्षारो हीत्यादि । उपर्युपरीति उपरिष्टादप्युपरि अत्यर्थं श्रेष्ठमित्यर्थः ॥ ११२-११६ ॥

मद्योत्क्लिष्टेन दोषेण रुद्धः[२] स्रोतःसु मारुतः ।
करोति वेदनां तीव्रां शिरस्यस्थिषु सन्धिषु ॥११७॥
दोषविष्यन्दनार्थं हि तस्मै[३] मद्यं विशेषतः ।
व्यवायितीक्ष्णोष्णतया देयमम्ले(न्ये)षु सत्स्वपि ११८

स्रोतोविबन्धनुन्मद्यं मारुतस्यानुलोमनम् ।
रोचनं दीपनं चाग्नेरभ्यासात् सात्म्यमेव च ॥११९॥
रुजः स्रोतःस्वरुद्धेषु[१] मारुते चानुलोमिते ।
निवर्तन्ते विकाराश्च शाम्यन्त्यस्य मदोदयाः ॥१२०॥
बीजपूरकवृक्षाम्लकोलदाडिमसंयुतम् ।
यवानीहपुषाजाजीशृङ्गवेरावचूर्णितम् ॥ १२१ ॥
सस्नेहैः शकुभिर्युक्तमवदंशैर्विरोचितम्[२] ।
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये ॥ १२२ ॥
दृष्ट्वा वातोल्वणं लिङ्गं रसैश्चैनमुपाचरेत् ।
लावतित्तिरदक्षाणां स्निग्धाम्लैः शिखिनामपि १२३
पक्षिणां मृगमत्स्यानामानूपानां च संस्कृतैः ।
भूशयप्रसहानां च रसैः शाल्योदनेन च ॥ १२४ ॥
स्निग्धोष्णलवणाम्लैश्च[३] वेशवारैर्मुखप्रियैः ।
चित्रैर्गौधूमिकैश्चान्नैर्वारुणीमण्डसंयुतैः ॥ १२५ ॥
पिशितार्द्रकगर्भाभिः स्निग्धाभिः पूपवर्तिभिः ।
माषपूपलिकाभिश्च वातिकं समुपाचरेत् ॥ १२६ ॥
नातिस्निग्धं न चाम्लेन युक्तं समरिचार्द्रकम् ।
मेध्यं प्रागुदितं मांसं दाडिमस्वरसेन वा ॥ १२७ ॥
पृथक्त्रिजातकोपेतं सधान्यमरिचार्द्रकम् ।
रसप्रलेपि[४] संपूपैः सुखोष्णैः संप्रदापयेत् ॥ १२८ ॥
भुक्ते[५] तु वारुणीमण्डं दद्यात् पातुं पिपासवे ।
दाडिमस्य रसं वाऽपि जलं वा पाञ्चमूलिकम् १२९
धान्यनागरतोयं च दधिमण्डमथापि वा ।
अम्लकाञ्जिकमण्डं वा शुक्तोदकमथापि वा ॥१३०॥
कर्मणाऽनेन सिद्धेन विकार उपशाम्यति ।
मात्राकालप्रयुक्तेन बलं वर्णश्च वर्धते ॥ १३१ ॥
रागषाडवसंयोगैर्विविधैर्भक्तरोचनैः ।
पिशितैः शाकपिष्टान्नैर्यवगोधूमशालिभिः ॥ १३२ ॥
अभ्यङ्गोत्सादनैः स्नानैरुष्णैः प्रावरणैर्घनैः ।
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः ॥ १३३ ॥
नारीणां यौवनोष्णानां निर्दयैरुपगूहनैः ।
श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखावहैः ॥ १३४ ॥
शयनाच्छादनैरुष्णैरुष्णैश्चान्तर्गृहैः सुखैः ।
मारुतप्रबलः शीघ्रं प्रशाम्यति मदात्ययः ॥ १३५ ॥

मदोदया इति मदनिमित्तास्तर्षादयः[६]; केचित्तु 'ज्वरादयः' इति पठन्ति, तत्र ज्वरप्रधानास्तर्षादय इत्यर्थं उन्नेयः । अवदंशो यमुपयुज्य मद्यं पीयते । दक्षः कुक्कुटः । वेशवारः

१ 'प्रमाणवत्' इति पा० । २ 'क्रुद्धः' इति पा० । ३ 'विष्यन्दनार्थं दोषस्य तस्य' इति पा० ।

१ 'उरःस्रोतःसु शुद्धेषु' इति पा० । २ '°श्चिरोत्थितम्' इति पा० । ३ 'स्निग्धै°' इति पा० । ४ 'रसप्रलेहयूपैश्च' इति पा० । ५ 'मुक्तेन' इति पा० । ६ 'मदनिमित्ता अन्तर्दाहादयः' इति पा० ।

खानिष्कः, स चोक्तलक्षणोऽसकृत्। पूपवर्तिः वर्त्याकारा पूपलिका। रसप्रलेपीति रसप्रलेपनरूपतया निर्वृत्तं 'रसप्रलेह' इति यावत्। अगुरुपङ्कैरिति अगुरुलेपैः। घनैरिति बहलैः। संरोधोष्णसुखावहैरिति संरोधजनितोष्मणा सुखकारकैः॥ ११७-१३५॥

भव्यखर्जूरमृद्वीकापरूषकरसैर्युतम्।
सदाडिमरसं शीतं सक्तुभिश्चावचूर्णितम्॥ १३६॥
सशर्करं शार्करं वा मार्द्वीकमथवाऽपरम्।
दद्यादुदकं काले पातुं पित्तमदात्यये॥ १३७॥
शशान् कपिञ्जलानेणाँल्लावानसितपुच्छकान्।
मधुराम्लान् प्रयुञ्जीत भोजने शालिषष्टिकान्॥१३८॥
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम्।
सतीनमुद्गमिश्रं वा दाडिमामलकान्वितम्॥ १३९॥
द्राक्षामलकखर्जूरपरूषकरसेन वा।
कल्पयेत्तर्पणान् यूषान् रसांश्च विविधात्मकान्१४०
आमाशयस्थमुत्क्लिष्टं कफपित्तं मदात्यये।
विज्ञाय बहुदोषस्य दह्यमानस्य तृष्यतः॥ १४१॥
मद्यं द्राक्षारसं तोयं दत्त्वा तर्पणमेव वा।
निःशेषं वामयेच्छीघ्रमेवं रोगाद्विमुच्यते॥ १४२॥
काले पुनस्तर्पणाद्यं क्रमं कुर्यात् प्रकाङ्क्षिते।
तेनाग्निर्दीप्यते तस्य दोषशेषान्नपाचकः॥ १४३॥
कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च।
तृष्यते सविदाहे च सोत्क्लेशे हृदयोरसि॥ १४४॥
गुडूचीभद्रमुस्तानां पटोलस्याथवा भिषक्।
रसं सनागरं दद्यात् तित्तिरिप्रतिभोजनम्॥१४५॥
तृष्यते चातिबलवद्वातपित्ते समुद्धते।
दद्याद्द्राक्षारसं पातुं शीतं दोषानुलोमनम्॥ १४६॥
जीर्णे समधुराम्लेन छागमांसरसेन तम्।
भोजनं भोजयेन्मद्यमनुतर्षं च पाययेत्॥ १४७॥
अनुतर्षस्य मात्रा सा यया नो दूष्यते मनः।
तृष्यते मद्यमल्पाल्पं प्रदेयं स्याद्दुदकम्॥ १४८॥
तृष्णा येनोपशाम्येत मदं येन च नाप्नुयात्।
परूषकाणां पीलूनां रसं शीतमथापि वा॥ १४९॥
पर्णिनीनां चतसृणां पिबेद्वा शिशिरं जलम्।
मुस्तदाडिमलाजानां तृष्णाघ्नं वा पिबेद्रसम्॥१५०॥
कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति १५१
शीतलान्यन्नपानानि शीतशय्यासनानि च।
शीतवातजलस्पर्शाः शीतान्युपवनानि च॥ १५२॥

१ 'मद्यं' इति पा०। २ 'तृड्विदाहान्वितस्य च' इति पा०। ३ 'तैत्तिरैः प्रतिभोजनम्' इति पा०। ४ 'नो हन्यते' इति, 'नोद्धसते' इति च पा०। ५ 'शीतमथाम्बु वा' इति पा०। ६ 'मुद्गदाडिमलाजानां' इति पा०। ७ 'शीतानि सदनानि च' इति पा०।

क्षौमपद्मोत्पलानां च मणीनां मौक्तिकस्य च।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः॥१५३॥
हेमराजतकांस्यानां पात्राणां शीतवारिभिः।
पूर्णानां हिमपूर्णानां दृतीनां पवनाहताः॥ १५४॥
संस्पर्शाश्चन्दनार्द्राणां नारीणां च समारुताः।
चन्दनानां च मुख्यानां शस्ताः पित्तमदात्यये॥१५५॥
शीतवीर्यं यदन्यच्च तत् सर्वं विनियोजयेत्।
कुमुदोत्पलपत्राणां सिक्तानां चन्दनाम्बुना॥१५६॥
हिताः स्पर्शा मनोज्ञानां दाहे मद्यसमुत्थिते।
कथाश्च विविधाः शस्ताः शब्दाश्च शिखिनां शिवाः॥
तोयदानां च शब्दा हि शमयन्ति मदात्ययम्।
जलयन्त्राभिवर्षीणि वातयन्त्रवहानि च॥ १५८॥
कल्पनीयानि भिषजा दाहे धारागृहाणि च।
फलिनीसेव्यलोध्राम्बुहेमपत्रं कुटन्नटम्॥ १५९॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्।
बदरीपल्लवोत्थश्च तथैवारिष्टकोद्भवः॥ १६०॥
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं शुभम्।
सुरा समण्डा दध्यम्लं मातुलुङ्गरसो मधु॥ १६१॥
सेके प्रदेहे शस्यन्ते दाहघ्नाः साम्लकाञ्जिकाः।
परिषेकावगाहेषु व्यञ्जनानां च सेवने॥ १६२॥
शस्यते शिशिरं तोयं दाहतृष्णाप्रशान्तये।
मात्राकालप्रयुक्तेन कर्मणाऽनेन शाम्यति॥ १६३॥
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययः।

भव्येत्यादिना पैत्तिके विधिमाह। भव्यम् औत्तरापथिकम्, अन्ये कर्मरङ्गमाहुः। मार्द्वीकमिति मृद्वीकारसकृतम्। सतीनः वर्तुलकलायः। रोगाद्विमुच्यत इति प्रकृतपित्तमदात्ययाद्विमुच्यत इत्यर्थः। क्रममिति वमनानन्तरोक्तमन्नसंसर्जनक्रमम्। दोषशेषः कोष्ठोपलपको ऽत्र ज्ञेयः। गुडूचीत्यादौ रसमिति क्वाथम्। तित्तिरिः प्रतिभोजनं पश्चाज्जीर्णे भोजनं यस्मिन् रसे तं तित्तिरिप्रतिभोजनम्। अनुतर्षं च पाययेदिति भोजनसमये तृषां लक्षीकृत्य पाययेत्; अनुपानं दापयेदिति यावत्। एतदनुपानस्य मात्रामाह—अनुतर्षस्येत्यादि। अनुतर्षस्येति मुहुर्मुहुर्दीयमानानुपानस्य। ययाऽस्य मनो न दूष्यत इति न विकृतिं याति; एतेन तृषायां मनोदैन्यमात्रहन्तृ यन्मद्यं भवति तदनुतर्षसंज्ञं भवति, नतु मदपर्यन्तं मद्यं देयमित्यर्थः। तृष्णाघ्नमिति शीतकषायरूपं रसम्। चुक्रीका चाङ्गेरी। बदरीत्यादौ बदर्यादिपत्राणि मथित्वा तज्जः फेनो ग्राह्यः। अरिष्टकः निम्बः॥ १३६-१६३॥—

उल्लेखनोपवासाभ्यां जयेत् कफमदात्ययम्॥१६४॥
तृष्यते सलिलं चास्मै दद्याद्धीबेरसाधितम्।
बलया पृश्निपर्ण्या वा कण्टकार्याऽथवा शृतम्॥१६५

१ 'संस्पर्शाश्चन्दनार्द्राणां स्त्रीणां पित्तमदात्यये' इति पा०। २ 'चित्राः' इति पा०। ३ 'कर्मणाऽनेन सिद्धेन विकार उपशाम्यति' इति पा०।

सनागराभिः सर्वाभिर्जलं वा शृतशीतलम् ।
दुःस्पर्शेन समुस्तेन मुस्तपर्पटकेन वा ॥ १६६ ॥
जलं मुस्तैः शृतं वाऽपि दद्याद्दोषविपाचनम् ।
एतदेव च पानीयं सर्वत्रापि मदात्यये ॥ १६७ ॥
निरत्ययं पीयमानं पिपासाज्वरनाशनम् ।
निरामं काङ्क्षितं काले सक्षौद्रं पाययेत्तु तम् ॥१६८॥
शार्करं मधु वा जीर्णमरिष्टं सीधुमेव वा ।
रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम् ॥ १६९ ॥
यावगौधूमिकं चान्नं रूक्षयूषेण भोजयेत् ।
कुलत्थानां सुशुष्काणां मूलकानां रसेन वा ॥१७०॥
तनुनाऽल्पेन लघुना कट्वम्लेनाल्पसर्पिषा ।
पटोलयूपमम्लं वा यूपमामलकस्य वा ॥ १७१ ॥
प्रभूतकटुसंयुक्तं सयवान्नं प्रदापयेत् ।
व्योपयूपमथाम्लं वा यूपं वा साम्लवेतसम् ॥१७२॥
छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम् ।
स्थाल्यां वाऽथ कपाले वा भृष्टं निर्द्रववर्तितम् १७३
कट्वम्ललवणं मांसं भक्षयन् वृणुयान्मधु ।
व्यक्तमारीचकं मांसं मातुलुङ्गरसान्वितम् ॥ १७४ ॥
प्रभूतकटुसंयुक्तं यवानीनागरान्वितम् ।
भृष्टं दाडिमसाराम्लमुष्णपूपोपवेष्टितम् ॥ १७५ ॥
यथाग्नि भक्षयेत् काले प्रभूतार्द्रकपेशिकम् ।
पिबेच निगदं मद्यं कफप्राये मदात्यये ॥ १७६ ॥
सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥ १७७ ॥
एतल्लवणमष्टाङ्गमग्निसंदीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥१७८॥
एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम् ।
गोधूमान्नयवान्नानां मांसानां चातिरोचनम् ॥१७९॥
पेषयेत् कटुकैर्युक्तां श्वेतां बीजविवर्जिताम् ।
मृद्वीकां मातुलुङ्गस्य दाडिमस्य रसेन वा ॥ १८० ॥
सौवर्चलैलामरिचैरजाजीभृङ्गदीप्यकैः ।
स रागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः ॥ १८१ ॥
मृद्वीकाया विधानेन कारयेत् कारवीमपि ।
शुक्तमत्स्यण्डिकोपेतं रागं दीपनपाचनम् ॥ १८२ ॥
आम्रामलकपेशीनां रागान् कुर्यात् पृथक् पृथक् ।
धान्यसौवर्चलाजाजीकारवीमरिचान्वितान् ॥१८३॥
गुडेन मधुयुक्तेन व्यक्ताम्ललवणीकृतान् ।
तैरन्नं रोचते दिग्धं सम्यग्भुक्तं च जीर्यति ॥१८४॥

१ 'पाययेद्बहुमाक्षिकम्' इति पा०। २ 'रूक्षं तर्पणसंयुक्तं यवान्नं वा प्रदापयेत्' इति पा०। ३ 'नीरसवर्तितम्' इति पा०। ४ 'रोचनदीपनम्' इति पा०। ५ 'गुडेन मधुयुक्तेन व्यक्ताम्लमधुरीकृतान्' इति पा०।

रूक्षोष्णेनान्नपानेन स्नानेनाशिशिरेण च ।
व्यायामलङ्घनाभ्यां च युक्त्या जागरणेन च ॥१८५॥
कालयुक्तेन रूक्षेण स्नानेनोद्वर्तनेन च ।
प्राणवर्णकराणां च प्रघर्षाणां च सेवया ॥ १८६ ॥
सेवया वसनानां च गुरूणामगुरोरपि ।
संकोचोष्णसुखाङ्गीनामङ्गनानां च सेवया ॥ १८७ ॥
सुखशिक्षितहस्तानां स्त्रीणां संवाहनेन च ।
मदात्ययः कफप्रायः शीघ्रमेवोपशाम्यति ॥ १८८ ॥

उल्लेखनेत्यादिना कफमदात्ययचिकित्सितम् । तृष्यते सलिलमित्यादौ षडङ्गविधिना जलसाधनं साध्विति । मधुप्रकृतिकं माधवम् । व्योषप्रधानो यूषो व्योषयूषः । नीरसवर्तितमिति अनतिद्रववर्तितं शुष्काख्यं व्यञ्जनमित्यर्थः । वृणुयादिति व्याप्नुयात् । आर्द्रकपेशिका आर्द्रकदीर्घखण्डानि; 'प्रभूतार्द्रकपेषितम्' इति वा पाठः । सौवर्चलमित्यादौ त्वगेलामरिचादीनां प्रत्येकमेव भागार्धत्वम् । शर्कराभागः पूर्वैकद्रव्यभागः । कटुकैर्युक्तामिति किंचिदूषणाम् । श्वेतामिति मृद्वीकां, श्वेता च द्राक्षा काश्मीरभवा ज्ञेया । कारवीमिति स्वल्पद्राक्षाम् । आम्रामलकयोः पेशीत्वेनेन फलगतं सस्यं गृह्यते । संकोचोष्णसुखाङ्गीनां संकोचेन संश्लेषेण उष्णसुखमङ्गं यासां तासां; केचित्तु संकोचं कुङ्कुममाहुः ॥ १६४–१८८ ॥

यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति ।
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा ॥ १८९ ॥
यस्तु दोषविकल्पज्ञो यश्चौषधिविकल्पवित् ।
स साध्यान्साधयेद्व्याधीन् साध्यासाध्यविभागवित् ॥१९०॥

यदिदमित्यादिना सान्निपातिकमदात्ययचिकित्सामाह । यद्यपि त्रयोदशविधः सन्निपातो वृद्धदोषाणामुक्तस्तथाऽपि सर्वमदात्ययानां त्रिदोषजत्वाद् यदेतद्वातादिमदात्ययचिकित्सितमुक्तं तदेकदोषोल्वणसन्निपातजमदात्ययचिकित्सितं भवति, तेन द्व्युल्वणहीनमध्याधिकभेदसमसन्निपातैर्ये दशावशिष्टाः सन्निपातास्तानभिप्रेत्येदमुक्तं–सन्निपाते दशविधे तद्विकल्प्यमिति; हीनमध्याधिकदोषत्रयोद्भूतमदात्ययेषु हीनमध्याधिकदोषभेदेन विकल्प्य चिकित्सा कर्तव्या; समसन्निपाते तु त्रयाणामपि मिलित्वा चिकित्सा कर्तव्या ॥ १८९ ॥ १९० ॥

वनानि रमणीयानि सपद्माः सलिलाशयाः ।
विशदान्यन्नपानानि सहायाश्च प्रहर्षणाः ॥ १९१ ॥
माल्यानि गन्धयोगाश्च वासांसि विमलानि च ।
गान्धर्वशब्दाः कान्ताश्च गोष्ठ्यश्च हृदयप्रियाः १९२
संकथाहास्यगीतानां विशदाश्चैव योजनाः ।
प्रियाश्चानुगता नार्यो नाशयन्ति मदात्ययम् ॥१९३॥
नाक्षोभ्य हि मनो मद्यं शरीरमविहत्य च ।
कुर्यान्मदात्ययं तस्माद्देष्टव्या हर्षणी क्रिया ॥१९४॥

१ 'रूक्षाम्लेनान्नपानेन' इति पा०। २ 'स्नानवर्णकवासानां' इति पा०।

आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः।
न चेन्मद्यविधिं मुक्त्वा क्षीरमस्य प्रयोजयेत् ॥१९५॥
लङ्घनैः पाचनैर्दोषशोधनैः शमनैरपि।
विमद्यस्य कफे क्षीणे जाते दौर्बल्यलाघवे ॥ १९६ ॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च।
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥ १९७ ॥
पयसाऽभिहते रोगे बले जाते निवर्तयेत्।
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ १९८॥

मदात्ययस्य प्रहर्षजनिका क्रिया कर्तव्येत्याह—वनानीत्यादि। कस्मात् पुनर्मदात्यये प्रहर्षिणी चिकित्सा कार्येत्याह—नाक्षोभ्येत्यादि। मनःप्रीत्या शरीरप्रशमार्थं प्रहर्षणी क्रिया कर्तव्येति भावः। उक्तक्षीरप्रयोगस्य विषयं गुणं चाह—लङ्घनैरित्यादि। तत्र कार्यक्षीरवृत्तिक्रमं पुनर्मद्याभ्यासक्रमं चाह—पयसाऽभिहते इत्यादि। क्रमेणेति कालक्रमेण। अल्पाल्पमिति स्तोकं स्तोकम् ॥ १९१–१९८ ॥

विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते।
ध्वंसको विक्षयश्चैव रोगस्तस्योपजायते ॥ १९९ ॥
व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ हि तौ।
तयोर्लिङ्गं चिकित्सा च यथावदुपदेक्ष्यते ॥ २०० ॥
श्लेष्मप्रसेकः कण्ठास्यशोषः शब्दासहिष्णुता।
तन्द्रानिद्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ २०१ ॥
हृत्कण्ठरोगः संमोहश्छर्दिरङ्गरुजा ज्वरः।
तृष्णा कासः शिरःशूलमेतद्विक्षयलक्षणम् ॥ २०२॥
तयोः कर्म तदेवेष्टं वातिके यन्मदात्यये।
तौ हि प्रक्षीणदेहस्य जायेते दुर्बलस्य वै ॥ २०३ ॥
वस्तयः सर्पिषः पानं प्रयोगः क्षीरसर्पिषोः।
अभ्यङ्गोद्वर्तनस्नानान्यन्नपानं च वातनुत् ॥ २०४ ॥
ध्वंसको विक्षयश्चैव कर्मणाऽनेन शाम्यति।
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ॥ २०५॥

एतद्विपर्ययेण मद्यसेवायां दोषमाह–विच्छिन्नेत्यादि। ध्वंसकविक्षयौ वक्ष्यमाणलक्षणौ। ध्वंसकविक्षयौ चेमौ सुश्रुतेनाप्युक्तौ। केचित्तु "विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते। तस्य पानात्ययोद्दिष्टा विकाराः संभवन्ति हि" इति ग्रन्थेन ध्वंसकविक्षयावरोधं वर्णयन्ति। एतयोश्चिकित्सामाह–तयोरित्यादि। कर्मेति चिकित्सा। तौ हीत्यादिना प्रक्षीणदुर्बलतया ध्वंसकविक्षययोर्वातप्रधानतां दर्शयति। युक्तमद्यस्येति यथोक्तविधिना मद्यमाचरतः ॥ १९९–२०५ ॥

निवृत्तः सर्वमद्येभ्यो नरो यश्च जितेन्द्रियः।
शारीरमानसैर्धीमान् विकारैर्न स युज्यते ॥ २०६ ॥

१ 'ध्वंसो विक्षेपकश्चैव' इति पा०।

सर्वथा मद्यपरित्यागफलमाह–निवृत्त इत्यादि। जितेन्द्रिय इति विशेषणं मद्यनिवृत्तावेव प्रयोजकम्। शारीरमानसैर्विकारैरिति योग्यतया मद्यव्यापत्तिजन्यैरेव शारीरमानसैर्विकारैः; अन्यहेतुजान् शारीरमानसविकारान् प्रति मद्यनिवृत्तिरकिंचित्करीति भावः। न युज्यत इति शारीरमानसविकारैर्मद्यनिवृत्त्या न युक्तो भवति ॥ २०६ ॥

तत्र श्लोकाः—

यत्प्रभावा भगवती सुरा पेया यथा च सा।
यद्द्रव्या यस्य या चेष्टा योगं चापेक्षते यथा ॥२०७॥
यथा मदयते यैश्च गुणैर्युक्ता महागुणा।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः ॥ २०८॥
ये च मद्यकृता दोषा गुणा ये च मदात्मकाः।
यच्च त्रिविधमापानं यथासत्त्वं च लक्षणम् ॥ २०९॥
ये सहायाः सुखाः पाने चिरक्षिप्रमदा नराः।
मदात्ययस्य यो हेतुर्लक्षणं यद् यथा च यत् ॥२१०॥
मद्यं मद्योत्थितान् रोगान् हन्ति यश्च क्रियाक्रमः।
सर्वं तदुक्तमखिलं मदात्ययचिकित्सिते ॥ २११ ॥

यत्प्रभावेत्यादिरध्यायसंग्रहः। संग्रहार्थो व्यक्त एव ॥२०७–२११ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते
चिकित्सास्थाने मदात्ययचिकित्सितं
नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने मदात्ययचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः।

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

मद्यमत्तस्य संप्रहारादिना व्रणोत्पत्तौ व्रणचिकित्सार्थं द्विव्रणीय उच्यते ॥ १ ॥ २ ॥

परावरज्ञमात्रेयं गतमानमदव्यथम्।
अग्निवेशो गुरुं काले विनयादिदमब्रवीत् ॥ ३ ॥
भगवन्! पूर्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे।
तयोर्लिङ्गं चिकित्सां च वक्तुमर्हसि शर्मद! ॥ ४ ॥

परः मोक्षः, अवरं द्रव्यादि, तज्जानातीति परावरज्ञः। तयोर्लिङ्गं चिकित्सां चेत्यत्र हेतोरपि व्याधिगमकतया लिङ्गेनैव ग्रहणम् ॥ ३ ॥ ४ ॥

१ 'ये च' इति पा०। २ 'अपरो मुद्रादितो जातः' इति पा०।

इत्यग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यौ व्रणौ पूर्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥ ५ ॥
श्रूयतां विधिवत् सौम्य ! तयोर्लिङ्गं च भेषजम् ।
निजः शारीरदोषोत्थ आगन्तुर्बाह्यहेतुजः ॥ ६ ॥
वधबन्धप्रपतनाद्दंष्ट्रादन्तनखक्षतात् ।
आगन्तवो व्रणास्तद्वद्विषस्पर्शाग्निशस्त्रजाः ॥ ७ ॥
मन्त्रागदप्रलेपाद्यैर्भेषजैर्हेतुभिश्च ते ।
लिङ्गैकदेशैर्निर्दिष्टा विपरीता निजैर्व्रणैः ॥ ८ ॥

दोषा यद्यपि शारीरा एव, तथाऽपीह शारीरपदं स्नायुक्लेदादिष्वपीह प्रयुक्तदोषव्युदासार्थम् । निजागन्तुव्रणभेदमाह—मन्त्रेत्यादि । निजैः सममागन्तवो व्रणा विपरीता मन्त्रादिभिर्भेषजैश्च, तथा हेतुभिश्च वधबन्धनादिभिः, तथा लिङ्गैकदेशैश्च; स च लिङ्गैकदेशो यथा—आगन्तुर्व्यथापूर्वमुदेति पश्चाद्वातादीन् कोपयति, निजे तु पूर्वं वातादयः प्रकुप्यन्ति पश्चाद्व्रणोत्पद्यते । यदुक्तं—"आगन्तुर्व्यथापूर्वमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति" ( सू. अ. २० ) इति ॥५–८॥

व्रणानां निजहेतूनामागन्तूनामशाम्यताम् ।
कुर्याद्दोषबलापेक्षी निजानामौषधं यथा ॥ ९ ॥

आगन्तुव्रणस्य भिन्नविषयतया विस्तर इह न वक्तव्यः; तेन तस्य चिकित्सामपि समासादेवाह—व्रणानामित्यादि । आगन्तूनां व्रणानां निजहेतूनां सतां मन्त्रादिचिकित्सया अशाम्यतां निजानां यथौषधं वक्ष्यमाणं तथैव दोषबलापेक्षी सन् कुर्यादिति योजना । आगन्तूनां चेहागन्तुचिकित्सयाऽप्रशमनं निजदोषानुबन्धादेव ज्ञेयम्; अत एवेह निजहेतूनामिति कृतम् ॥ ९ ॥

यथास्वैर्हेतुभिर्दुष्टा वातपित्तकफा नृणाम् ।
बहिर्मार्गं समाश्रित्य जनयन्ति निजान् व्रणान् ॥१०॥

यथास्वैरित्यादिना निजव्रणहेतुसंप्राप्त्यादिकथनम् । अत्र यथास्वैर्हेतुभिरिति वचनेन वातादीनां स्वातन्त्र्येण प्रकोपं दर्शयति, स्वहेतुदुष्टे हि दोषः स्वतन्त्रो भवति; किंच यथास्वैर्हेतुभिरिति वचनेन य एव वातादिकोपहेतवस्त एवात्र निजव्रणकारका भवन्ति, न पुनर्व्रणानां विशिष्टो हेतुरस्ति; सामान्यवातादिहेतोस्तु विशिष्टव्रणलक्षणकार्योत्पत्तिः संप्राप्तिभेदाद्भवतीति ज्ञेयम् ॥१०॥

स्तब्धः कठिनसंस्पर्शो मन्दस्रावोऽतितीव्ररुक् ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसंभवः ॥ ११ ॥
संपूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः ।
प्रदेहैः परिषेकैश्च वातव्रणमुपाचरेत् ॥ १२ ॥
तृष्णामोहज्वरस्वे(क्ले)ददाहदुष्ट्यवदारणैः ।
व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः ॥ १३ ॥

शीतलैर्मधुरैस्तिक्तैः प्रदेहपरिषेचनैः ।
सर्पिष्पानैर्विरेकैश्च पैत्तिकं शमयेद्व्रणम् ॥ १४ ॥
बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरकारी कफव्रणः ॥ १५ ॥
कषायकटुरूक्षोष्णैः प्रदेहपरिषेचनैः ।
कफव्रणं प्रशमयेत्तथा लङ्घनपाचनैः ॥ १६ ॥

स्तब्ध इत्यादिना वातादिव्रणानां लक्षणानि तथा चिकित्सासूत्रं चाह । प्रदेहैः परिषेकैश्चेत्यत्र 'स्निग्धैः' इत्यनुवर्तते । चिरं विकारं करोतीति चिरकारी । चिकित्सासमासाभिधानं च सुखग्रहणार्थमेव ॥ ११–१६ ॥

तौ द्वौ नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ।
तेषां परीक्षा त्रिविधा, प्रदुष्टा द्वादश स्मृताः ॥१७॥
स्थानान्यष्टौ तथा गन्धाः, परिस्रावाश्चतुर्दश ।
षोडशोपद्रवा दोषाश्चत्वारो विंशतिस्तथा ॥ १८ ॥
तथा चोपक्रमाः सिद्धाः षट्त्रिंशत् समुदाहृताः ।
विभज्यमानाञ्छृणु मे सर्वानेतान् यथेरितान् ॥१९॥

तौ द्वावित्यादि । नानात्वकारको भेदो नानात्वभेदः । प्रकर्षेण दुष्टाः प्रदुष्टाः ॥ १७–१९ ॥

कृत्योत्कृत्यस्तथा दुष्टोऽदुष्टो मर्मस्थितो न च ।
संवृतो दारुणः स्रावी सविषो विषमस्थितः ॥२०॥
उत्सङ्ग्युत्सन्न एषां च व्रणान् विद्याद्विपर्ययात् ।
इति नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ॥ २१ ॥

एते च व्रणभेदादयोऽग्रे कृत्योत्कृत्य इत्यादिना व्याक्रियन्ते । तत्र कृत्यः छेदनाद्युपक्रमोपक्रमणीयः, उत्कृत्यस्य तु नात्र किंचित्करणीयमस्ति परं रोपणीय एव; किंवा कृत्यः साध्यः, अकृत्यस्त्वसाध्यः । कृत्यादयः षट् सविपर्यया एवोक्ताः, संवृतादयस्तु समोद्दिष्टाः सविपर्ययाः संतश्चतुर्दश । उत्सन्न उद्गतमांसः । उत्सङ्गी स्थूलपर्यन्तः, किंवा व्रणाद्बहिः पूयावकाशरूपोत्सङ्गवानुत्सङ्गी । सुश्रुते तु "तत्रातिसंवृतोऽतिविवृतः" ( सु. सू. अ. २२ ) इत्यादिना यद्दुष्टव्रणलक्षणमुक्तं तदतिसंवृतादिविषयम्, इह तु संवृतत्वविवृतत्वमात्रमुच्यते, तेनेह दुष्टव्रणेन संवृतस्य ग्रहणमुद्भावनीयम् ॥ २० ॥ २१ ॥

दर्शनप्रश्नसंस्पर्शैः परीक्षा त्रिविधा स्मृता ।
वयोवर्णशरीराणामिन्द्रियाणां च दर्शनात् ॥ २२ ॥
हेत्वर्तिसात्म्याग्निबलं परीक्ष्यं वचनाद्बुधैः ।
स्पर्शान्मार्दवशैत्ये च परीक्ष्ये सविपर्यये ॥ २३ ॥

परीक्षात्रैविध्यमुक्तं विभजते—दर्शनेत्यादि । इन्द्रियाणि च यद्यप्यतीन्द्रियत्वादनुमानगम्यानि, तथाऽपीह तदधिष्ठानानामिन्द्रियशब्देनोपादानम् । अग्निश्च यद्यपि "अग्निं जरणशक्त्या"

१ 'सभेषजम्' इति पा० । २ 'निजैर्व्रणाः' इति पा० । ३ 'विशिष्टेह वक्तव्या' इति पा० । ४ 'महारुजः' इति पा० ।

१ 'स्निग्धैः' इति पा० । २ 'लङ्घनशोधनैः' इति पा० । ३ 'विभाव्यमानान्' इति पा० । ४ 'कृत्याकृत्यः' । ५ 'भिन्नाः स्युर्विंशतिर्व्रणाः' इति पा० । ६ 'ग्रहणं नोद्भावनीयम्' इति पा० ।

(वि. अ. ४) इति वचनादनुमानविषय उक्तस्तथाऽपि प्रश्नेनाभिरवगम्यत एवेति कृत्वेह वचनपरीक्षणीयतैवोक्ता वह्नेः। सविपर्यये इति काठिन्यौष्ण्ये। अनुमानं च यद्यपि परीक्षाधिकारे प्रोक्तं "द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं च" (वि. अ. ४) इत्यादिना, तथाऽप्यत्रानुमानस्य प्रायो व्यापाराभावादनुपादानमिति ब्रूते; किंतु दर्शनादिपूर्वकत्वादनुमानस्य दर्शनादिना अनुमानमप्यतीन्द्रियादिषु ग्राहकं संगृहीतमिति युक्तं पश्यामः। दर्शनशब्दश्चात्र साक्षादुपलब्धिवचनः, तेन व्रणगतगन्धेनापि व्रणपरीक्षणं संगृहीतं भवति। दर्शनशब्देन च गृहीतोऽपि स्पर्श इह भूयसा व्याप्रियमाणत्वात् पुनरुक्तः॥ २२॥ २३॥

**श्वेतोऽवसन्नवर्त्माऽतिस्थूलवर्त्माऽतिपिञ्जरः।**
**नीलः श्यावोऽतिपिडको रक्तः कृष्णोऽतिपूतिकः२४**
**रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश व्रणाः।**
**चतुर्विंशतिरुद्दिष्टा दोषाः कल्पान्तरेण वै॥ २५॥**

श्वेतोऽवसन्नेत्यादिना प्रदुष्टव्रणानाह। रोप्यलक्षणं तन्त्रान्तरादवगन्तव्यं, तथाहि भोजः—"रूढा रूढाः प्रकुप्यन्ति सान्तर्दोषाः पुनः पुनः। बहिः शुद्धा इवाभान्ति रोप्यास्ते संप्रकीर्तिताः" इति। एतेषामेव श्वेतादीनां भेदकारणान्तरभेदेन चतुर्विंशतित्वं भवतीति दर्शयन्नाह—चतुर्विंशतिरित्यादि। कल्पान्तरेणेति व्रणदुष्टिकारककारणयोगभेदेन स्नायुक्लेदादिना भिद्यमानाश्चतुर्विंशतिभेदा भवन्तीत्यर्थः॥ २४॥ २५॥

**त्वक्सिरामांसमेदोऽस्थिस्नायुमर्मान्तराश्रयाः।**
**व्रणस्थानानि निर्दिष्टान्यष्टावेतानि संग्रहे॥ २६॥**

त्वगित्यादिना स्थाननिर्देशः। अन्तराश्रयः कोष्ठः॥ २६॥

**सर्पिस्तैलवसापूयरक्तश्यावाम्लपूतिकाः।**
**व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्तिताः॥ २७॥**

सर्पिरित्यादिना गन्धनिर्देशः। श्यावगन्धं दध्यादेस्ताम्रघृष्टसमानं गन्धमाहुः; केचित्तु 'शावं' इति पठन्ति; शवस्य गन्धः शावः। अम्लसहचरितगन्धोऽम्लगन्ध उच्यते॥ २७॥

**लसीकाजलपूयासृग्घारिद्रारुणपिञ्जराः।**
**कषायनीलहरितस्निग्धरूक्षसितासिताः॥ २८॥**
**इति रूपैः समुद्दिष्टा व्रणस्रावाश्चतुर्दश।**
**विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः॥ २९॥**
**मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः।**
**कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः॥ ३०॥**
**षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः।**

लसीकेत्यादिना स्रावानाह॥ २८—३०॥—

**स्नायुक्लेदात्सिराक्लेदाद्गाम्भीर्यात्कृमिभक्षणात्॥३१॥**
**अस्थिभेदात् सशल्यत्वात् सविषत्वाच्च सर्पणात्।**
**नखकाष्ठप्रभेदाच्च चर्मलोमातिघट्टनात्॥ ३२॥**
**मिथ्याबन्धादतिस्नेहादतिभैषज्यकर्षणात्।**
**अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात्॥ ३३॥**
**शोकात् क्रोधाद्दिवास्वप्नाद्व्यायामान्मैथुनात्तथा।**
**व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम्॥३४॥**
**परिस्रावाच्च गन्धाच्च दोषाच्चोपद्रवैः सह।**
**व्रणानां बहुदोषाणां कृच्छ्रत्वं चोपजायते॥ ३५॥**

प्रकारान्तरोद्दिष्टांश्चतुर्विंशतिदोषानाह—स्नायुक्लेदादित्यादि। अत्र नखकाष्ठप्रभेद एकमेव कारणम्। चर्मलोमातिघट्टनं तु कारणद्वयम्। चिकित्सावर्जनीयत्वं निष्क्रियत्वम्॥ ३१—३५॥

**त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः।**
**धीमतोऽभिनवः काले सुखसाध्यः स्मृतो व्रणः ३६**
**गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः।**
**सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः॥ ३७॥**

असाध्यो निरुपक्रम इति असाध्यत्वमभिधायापि निरुपक्रमताभिधानेन सोपक्रमसाध्यं याप्यं निषेधयति॥ ३६॥ ३७॥

**व्रणानामादितः कार्यं यथासन्नं विशोधनम्।**
**ऊर्ध्वभागैरधोभागैः शस्त्रैर्वस्तिभिरेव च॥ ३८॥**
**सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः।**

अवसरप्राप्तायां षट्त्रिंशदुपक्रमरूपायां चिकित्सायां वक्तव्यायां संशोधनस्य प्राधान्योपदर्शनार्थं पृथगग्रेऽभिधानं—व्रणानामित्यादिना॥ ३८॥—

**यथाक्रममतश्चोर्ध्वं शृणु सर्वानुपक्रमान्॥ ३९॥**
**शोफघ्नं षड्विधं चैव शस्त्रकर्मावपीडनम्।**
**निर्वापणं ससन्धानं स्वेदः शमनमेषणम्॥ ४०॥**
**शोधनौ रोपणीयौ च कषायौ सप्रलेपनौ।**
**द्वे तैले तद्वुणे पत्रं छादने द्वे च बन्धने॥ ४१॥**
**भोज्यमुत्सादनं दाहो द्विविधः सावसादनः।**
**काठिन्यमार्दवकरे धूपनालेपने शुभे॥ ४२॥**
**व्रणावचूर्णनं वर्ण्यं रोपणं लोमरोहणम्।**
**इति षट्त्रिंशदुद्दिष्टा व्रणानां समुपक्रमाः॥ ४३॥**

उपक्रमानाह—शोफघ्नमित्यादिना। शोफघ्न उपक्रमो रक्तावसेकादिर्वक्ष्यमाणः। षड्विधं शस्त्रकर्मेति पाटनादि; अत्रैवाहरणमेषणं च शल्यतन्त्रोक्तमधिकं कर्मद्वयमन्तर्भावनीयं; किंत्वेषणं शस्त्रकर्माङ्गं न शस्त्रकर्म, तत्तु पृथगेव। अवपीडनं कल्कादिना आलेपनं पूयनिर्गमनार्थं वक्ष्यति। निर्वापणं दाहौष्ण्यशमनम्।

१ 'श्वेतोऽवसन्नचर्मा च स्थूलचर्माऽतिपिञ्जरः' इति गङ्गाधरसंमतः पाठः। २ गङ्गाधरस्त्वेतमर्धश्लोकं "षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः" इत्यनन्तरं पठति।

१ 'सिराच्छेदात्' इति पा०। २ 'सविषत्वादतर्कणात्' इति पा०। ३ 'मर्मलोमाभिघट्टनात्' इति पा०। ४ 'भूर्युपद्रवः' इति पा०। ५ 'द्वे तैले च घृते' इति पा०।

शोधनौ रोपणीयौ च कषायौ सप्रलेपनौ इति शोधनरोपणकषायौ तथा शोधनरोपणालेपौ । द्वे तैले तद्गुणे इत्यत्र घृतस्यापि स्नेहत्वसामान्यात् तैलेनैव ग्रहणं; तेन यद्यपि चत्वारि तैलघृतानि प्रत्येकशोधनरोपणभेदाद्वक्ष्यति, तथाऽपि शोधनरोपणकर्मद्वयकर्तृतया द्वित्वमेवात्र तैलघृतयोर्गणनीयम् । काश्मीरास्तु "द्वौ स्नेहौ तद्गुणौ" इति पठन्ति । पत्रं छादने इति पत्रमेक उपक्रमः, छादनं तु द्विविधं बाह्यान्तरभेदेन वक्ष्यमाणम् । उत्सादनं निम्नव्रणोत्थापनम् । अवसादनम् उत्सन्नव्रणमांसक्षयकरम् । काठिन्यमार्दवकरे धूपनालेपने इति काठिन्यकरं धूपनं, मार्दवकरं धूपनं चेति; एवमालेपनमपि द्विविधं ज्ञेयम् । व्रणावचूर्णनं द्विविधं वदन्ति त्वग्वर्णकररोमजनकभेदेन । एवं षट्त्रिंशदुपक्रमा भवन्ति; शल्यतन्त्रे तु षष्टिरुपक्रमा उक्तास्तेऽप्यत्रैवान्तर्भावनीयाः ॥ ३९-४३ ॥

पूर्वरूपं भिषग्बुद्ध्वा व्रणानां शोफमादितः ।
रक्तावसेचनं कुर्यादजातव्रणशान्तये ॥ ४४ ॥
शोधयेद्बहुदोषांस्तु स्वल्पदोषान् विलङ्घयेत् ।
पूर्वं कषायसर्पिर्भिर्जयेद्वा मारुतोत्तरान् ॥ ४५ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रलेपः स्याच्छोफनिर्वापणः परम् ॥ ४६ ॥
विजया मधुकं वीरा बिसग्रन्थिः शतावरी ।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात् सचन्दनः ॥ ४७ ॥
सक्तवो मधुकं सर्पिः प्रदेहः स्यात् सशर्करः ।
अविदाहीनि चान्नानि शोफे भेषजमुत्तमम् ॥ ४८ ॥

अथ यथावस्थं व्रणोपक्रमानाह—पूर्वरूपमित्यादि । शोथस्तु व्रणपूर्वरूपं, शोथचिकित्साऽनागतव्रणविहितत्वाद्व्रणोपक्रमत्वेनोक्ता । कषायपानैः सर्पिर्भिश्चेति कषायसर्पिर्भिः । विजया बला ॥ ४४-४८ ॥

स चेदेवमुपक्रान्तः शोफो न प्रशमं व्रजेत् ।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥ ४९ ॥
तैलेन सर्पिषा वाऽपि ताभ्यां वा सक्तुपिण्डिका ।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥ ५० ॥
सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ ५१ ॥
रुग्दाहरागतोदैश्च विदग्धं शोफमादिशेत् ।
जलबस्तिसमस्पर्शं संपक्वं पीडितोन्नतम् ॥ ५२ ॥
उमाऽथो गुग्गुलुः सौधं पयो दक्षकपोतयोः ।
विट् पलाशभवः क्षारो हेमक्षीरी मुकूलकः ॥ ५३ ॥
इत्युक्तो भेषजगणः पक्वशोथप्रभेदनः ।
सुकुमारस्य, कृच्छ्रस्य शस्त्रं तु परमुच्यते ॥ ५४ ॥

उपनाहैरिति सोष्णबहललेपैः । किण्वं सुराबीजम् । उमा अतसी । सौधं पयः स्नुहीक्षीरम् । हेमक्षीरी कङ्कुष्ठम् । मुकूलकः दन्ती । सुकुमारस्येति च्छेदः । कृच्छ्रस्येति असुकुमारस्य, शस्त्रं परं भेदनमिति संबन्धः ॥ ४९-५४ ॥

पाटनं व्यधनं चैव छेदनं लेपनं तथा ।
प्रच्छनं सीवनं चैव षड्विधं शस्त्रकर्म तत् ॥ ५५ ॥

पाटनमित्यादिना प्रोक्ते षड्विधशस्त्रकर्मणि तिस्रैषणीयोक्ताधिकदारणादिशस्त्रकर्मावरोधो बोद्धव्यः, तेन न विरोधः ॥ ५५ ॥

नाडीव्रणाः पक्वशोथास्तथा क्षतगुदोदरम् ।
अन्तःशल्याश्च ये शोफाः पाट्यास्ते तद्विधाश्च ये ।
दकोदराणि संपक्वा गुल्मा ये ये च रक्तजाः ।
व्यध्याः शोणितरोगाश्च विसर्पपिडकादयः ॥ ५७ ॥
उद्वृत्तान् स्थूलपर्यन्तानुत्सन्नान् कठिनान् व्रणान् ।
अर्शःप्रभृत्यधीमांसं छेदनेनोपपादयेत् ॥ ५८ ॥
किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् ।
वातासृग्ग्रन्थिपिडकाः सकोठा रक्तमण्डलम् ॥ ५९ ॥
कुष्ठान्यभिहतं चाङ्गं शोथांश्च प्रच्छयेद्भिषक् ।
सीव्यं कुक्ष्युदराद्यं तु गम्भीरं यद्विपाटितम् ॥ ६० ॥
इति षड्विधमुद्दिष्टं शस्त्रकर्म मनीषिभिः ।

पाटनादीनां पृथग्विषयमाह—नाडीव्रणा इत्यादि । संपक्व गुल्मा ये ते व्यध्याः । तथा ये च रक्तजा इति रक्तगुल्माः । शोणितरोगा विधिशोणितीयोक्ताः । व्यध्या इति सिराव्यधादिसाध्याः । लेख्यानीति लेखनावस्थाप्राप्तानि ॥ ५६-६० ॥—

सूक्ष्माननाः कोषवन्तो ये व्रणास्तान्प्रपीडयेत् ६१
कलायाश्च मसूराश्च गोधूमाः सहरेणवः ।
कल्कीकृताः प्रशस्यन्ते निःस्नेहा व्रणपीडने ॥ ६२ ॥

व्रणपीडने इति व्रणपीडनश्च लेपो निःस्नेहो व्रणमुखं वर्जयित्वा कर्तव्यः ॥ ६१ ॥ ६२ ॥

शाल्मलीत्वग्बलामूलं तथा न्यग्रोधपल्लवाः ।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि वा ॥ ६३ ॥
आलेपनं निर्वपणं तद्विद्यात्तैश्च सेचनम् ।
सर्पिषा शतधौतेन पयसा मधुकाम्बुना ॥ ६४ ॥
निर्वापयेत् सुशीतेन रक्तपित्तोत्तरान् व्रणान् ।

न्यग्रोधादिकमिति न्यग्रोधोदुम्बराश्वत्थेत्यादिनोक्तमत्रैव । बलादिकं 'विजया मधुकं वीरा' इत्यादिना शोथहरोपक्रमोपदिष्टम् ॥ ६३ ॥ ६४ ॥—

लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥ ६५ ॥
संदधीत समं वैद्यो बन्धनैश्चोपपादयेत् ।
तान्समान्सुस्थिताञ्ज्ञात्वा फलिनीलोध्रकट्फलैः ॥

१ 'देशाः' इति पा० । २ 'तद्विधान्यैश्च' इति पा० ।

समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ।
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ॥ ६७ ॥
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ।

लम्बानीत्यादिना संधानोपक्रममाह । शुक्तिः बदरिका ॥ ६५-६७ ॥—

अस्थिभग्नं च्युतं सन्धिं संदधीत समं पुनः ॥ ६८ ॥
समेन सममङ्गेन कृत्वाऽन्येन विचक्षणः ।
स्थिरैः कवलिकाबन्धैः कुशिकाभिश्च संस्थितम् ॥
पट्टैः प्रभूतसर्पिष्कैर्बध्नीयादचलं सुखम् ।
अविदाहिभिरन्नैश्च पैष्टिकैस्तमुपाचरेत् ॥ ७० ॥
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ।
विच्युताभिहताङ्गानां विसर्पादीनुपद्रवान् ॥ ७१ ॥
उपाचरेद्यथाकालं कालज्ञः स्वाच्चिकित्सितात् ।

समेन सममङ्गेन कृत्वेति समेनाविकृतेनान्येनाङ्गेन समं सदृशं कृत्वा संदधीतेति योज्यम् । कवलिकाकुशिकाबन्धौ सुश्रुते द्रष्टव्यौ । विच्युताभिहताङ्गानामित्यादौ 'आनाहादीनुपक्रमान्' इति केचित् पठन्ति । स्वाच्चिकित्सितादिति विसर्पादिचिकित्सितात् ॥ ६८-७१ ॥—

शुष्का महारुजः स्तब्धा ये व्रणा मारुतोत्तराः ।
स्वेद्याः सङ्करकल्पेन ते स्युः कृशरपायसैः ॥ ७२ ॥
ग्राम्यवैलाम्बुजानूपैर्वैशवारैश्च संस्कृतैः ।
उत्कारिकाभिश्चोष्णाभिः सुखी स्याद्व्रणितस्तथा ७३
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः ।
तेषामुमां तिलांश्चैव भृष्टान् पयसि निर्वृतान् ॥७४॥
तेनैव पयसा पिष्ट्वा कुर्यादालेपनं भिषक् ।
बला गुडूची मधुकं पृश्निपर्णी शतावरी ॥ ७५ ॥
जीवन्ती शर्करा क्षीरं तैलं मत्स्यवसा घृतम् ।
संसिद्धा समधूच्छिष्टा शूलघ्नी स्नेहशर्करा ॥ ७६ ॥
द्विपञ्चमूलकथितेनाम्भसा पयसाऽथवा ।
सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ॥ ७७ ॥
यवचूर्णं समधुकं सतिलं सह सर्पिषा ।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥ ७८ ॥
उपनाहश्च कर्तव्यः सतिलो मुद्गपायसः ।
रुग्दाहयोः प्रशमनो व्रणेष्वेष विधिर्हितः ॥ ७९ ॥

बला गुडूचीत्यादि । अत्र बलादीनि पिष्टानि शर्कराक्षीरमधूच्छिष्टतैलादिभिः समैरुत्करिकां कृत्वा स्वेदः कर्तव्यः; अन्ये तु बलादिकल्केन तैलादिस्नेहं चतुर्गुणे क्षीरे साधयित्वा स्नेहपाकिं मधूच्छिष्टप्रक्षेपमाहुः । स्नेहस्यात्र संहतावस्थितत्वात् मधुशर्करावत् 'स्नेहशर्करा' इति व्यपदेशः । द्विपञ्चमूलकथितेनेति अम्भसा पयसा सर्पिषा तैलेन वेति योजनीयम् ॥ ७२-७९ ॥

सूक्ष्मानना बहुस्रावाः कोषवन्तश्च ये व्रणाः ।
न च मर्माश्रितास्तेषामेषणं हितमुच्यते ॥ ८० ॥
द्विविधामेषणीं विद्यान्मृद्वीं च कठिनामपि ।
औद्भिदैर्मृदुभिर्नालैर्लौहानां वा शलाकया ॥ ८१ ॥
गम्भीरे मांसले देशे पाट्यं लौहशलाकया ।
एष्यं विद्याद्व्रणं नालैर्विपरीतमतो भिषक् ॥ ८२ ॥

द्विविधामित्यादौ औद्भिदैर्मृदुभिर्नालैः मृद्वीं, लोहैः कठिनाम् । पाट्यमिति एषणीयं पाट्यं च ॥ ८०-८२ ॥

पूतिगन्धान् विवर्णांश्च बहुस्रावान्महारुजः ।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥ ८३ ॥
त्रिफला खदिरो दार्वी न्यग्रोधादिर्बला कुशः ।
निम्बकोलकपत्राणि कषायाः शोधना मताः ॥ ८४ ॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम् ।
मधुकं निम्बपत्राणि प्रलेपो व्रणशोधनः ॥ ८५ ॥

निम्बकोलकपत्राणीत्यत्र निम्ब एव मृदुर्निम्बकोलक उच्यते; किंवा कुलकेति पाठः, कुलकः पटोलः ॥ ८३-८५ ॥

नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक् ।
न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ८६
न्यग्रोधोदुम्बराश्वत्थकदम्बप्लक्षवेतसाः ।
करवीरार्ककुटजाः कषाया व्रणरोपणाः ॥ ८७ ॥
चन्दनं पद्मकिञ्जल्कं दार्वीत्वङ्नीलमुत्पलम् ।
मेदे मूर्वा समङ्गा च यष्ट्याह्वं व्रणरोपणम् ॥ ८८ ॥
प्रपौण्डरीकं जीवन्ती गोजिह्वा धातकी बला ।
रोपणं सतिलं दद्यात् प्रलेपं सघृतं व्रणे ॥ ८९ ॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमर्दं च लोध्रं मुस्तं प्रियङ्गुकम् ॥ ९० ॥
खदिरं धातकीं सर्जमेलामगुरुचन्दने ।
पिष्ट्वा साध्यं भवेत्तैलं तत् परं व्रणरोपणम् ॥ ९१ ॥
प्रपौण्डरीकं मधुकं काकोल्यौ द्वे च चन्दने ।
सिद्धमेतैः समैस्तैलं परं स्याद्व्रणरोपणम् ॥ ९२ ॥
दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ९३ ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं दृष्ट्वा रोपणीयं व्रणं भिषक् ॥ ९४ ॥

नातिरक्त इत्यादिना शुद्धव्रणलक्षणमभिधाय रोपणमाह— न्यग्रोधेत्यादि । कषाया इति बहुवचननिर्देशादयो कृव्यस्तसमस्तप्रयोगान् सूचयति । दार्व्यास्त्वक् दार्वीत्वक् व्रणशोधनी रोपणी च । घृतं तैरेव साधयेदिति यथोक्ततैलद्रव्यैरेव साधयेदिति । घृतविषयमाह—रक्तपित्तोत्तरमित्यादि । रोपणीयमिति वचनाद्

१ 'उपक्रमे०' इति पा० । २ 'अनुसर्तव्यौ' इति पा० । ३ अस्याग्रे 'सुश्रुतानुमतश्चायं पाठः' इत्यधिकं पठ्यते हस्तलिखितपुस्तके । ४ 'मस्तुनाऽथवा' इति पा० ।

१ 'न्यग्रोधोऽतिबला' इति पा० ।

रोपणमेव घृतं कर्तव्यं, नतु शोधनार्थं घृतं कर्तव्यमित्यर्थः ॥ ८६–९४ ॥

कदम्बार्जुननिम्बानां पाटल्याः पिप्पलस्य च ।
व्रणप्रच्छादने विद्वान् पत्राण्यर्कस्य चादिशेत् ॥९५॥
वार्क्षोऽथवाऽऽजिनः क्षौमः पट्टो व्रणहितः स्मृतः ।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥९६॥

वार्क्ष इत्यादौ वृक्षभवं वल्कलं वार्क्षम् । सव्यदक्षिण इति वामदक्षिणः; वामपरिक्षेपः सव्यः, दक्षिणपरिक्षेपो दक्षिणः । अत्रैव शल्योक्तचतुर्दशबन्धावरोधः कार्यः ॥ ९५ ॥ ९६ ॥

लवणाम्लकटूष्णानि विदाहीनि गुरूणि च ।
वर्जयेदन्नपानानि व्रणी मैथुनमेव च ॥ ९७ ॥
नातिशीतगुरुस्निग्धमविदाहि यथाव्रणम् ।
अन्नपानं व्रणहितं हितं चास्वपनं दिवा ॥ ९८ ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च ।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ९९
भूर्जग्रन्थ्यश्मकासीसमधोभागानि गुग्गुलुः ।
व्रणावसादनं तद्वत् कलविङ्ककपोतविट् ॥ १०० ॥

स्तन्यानि षड्विरेचनशताश्रितीयोक्तानि । अश्मकासीसं धातुकासीसम् । अधोभागानि त्रिवृतादीनि विरेचनद्रव्याणि ॥ ९७–१०० ॥

रुधिरेऽतिप्रवृत्ते तु छिन्ने च्छेद्येऽधिमांसके ।
कफग्रन्थिषु गण्डेषु वातस्तम्भानिलार्तिषु ॥ १०१ ॥
गूढपूयलसीकेषु गम्भीरेषु स्थिरेषु च ।
क्लृप्तेषु[1] चाङ्गदेशेषु कर्माग्नेः संप्रशस्यते ॥ १०२ ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः ।
तप्तैर्वा विविधैर्लोहैर्दहेद्दाहविशेषवित् ॥ १०३ ॥
रूक्षाणां सुकुमाराणां गम्भीरान्मारुतोत्तरान् ।
दहेत् स्नेहमधूच्छिष्टैर्लोहैः क्षौद्रैस्ततोऽन्यथा ॥१०४॥
बालदुर्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम् ।
तृष्णाज्वरपरीतानामबलानां विषादिनाम् ॥ १०५ ॥
नाग्निकर्मोपदेष्टव्यं स्नायुमर्मव्रणेषु च ।
सविषेषु च शल्येषु नेत्रकुष्ठव्रणेषु च ॥ ॥ १०६ ॥

छेद्ये इति छेदनार्हे । क्लृप्तेष्विति कर्तितेषु । रूक्षस्निग्धदाहभेदविषयं दाहकवस्तुभेदं च दर्शयन्नाह—सुकुमाराणामित्यादिना । दाहविशेषविदिति दाहानां विशेषं स्निग्धरूक्षादिरूपं तथा बिन्दुवल्यादिरूपं जानातीति दाहविशेषवित् । विषादिनामिति भक्षितविषाणाम् ॥ १०१–१०६ ॥

रोगदोषबलापेक्षी मात्राकालाग्निकोविदः ।
शस्त्रकर्माग्निकृत्येषु क्षारमप्यवचारयेत् ॥ १०७ ॥
कठिनत्वं व्रणा यान्ति गन्धैः सारैश्च धूपिताः ।
सर्पिर्मज्जवसाधूपैः शैथिल्यं यान्ति हि व्रणाः १०८
रुजः स्रावाश्च गन्धाश्च क्रमयश्च व्रणाश्रिताः ।
शैथिल्यं मार्दवं चापि धूपनेनोपशाम्यति ॥ १०९ ॥

यद्यप्युपक्रमेषु क्षारः पृथङ्न पठितः, तथाऽपि शस्त्राग्निव्यापारकर्तृत्वाच्छस्त्राग्न्युपक्रमगृहीत एवेति कृत्वा क्षारमप्यवचारयेदिति वचनेन क्षारोऽपि विहितः ॥ १०७–१०९ ॥

लोध्रन्यग्रोधशुङ्गानि खदिरस्त्रिफला घृतम् ।
प्रलेपो व्रणशैथिल्यसौकुमार्यप्रसाधनः ॥ ११० ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः ।
यवचूर्णैः ससर्पिष्कैर्बहुशस्तान् प्रलेपयेत् ॥ १११ ॥
मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम् ।
सघृतैर्जीवनीयैर्वा तर्पयेत्तानभीक्ष्णशः ॥ ११२ ॥

तर्पयेदिति तर्पणार्थं लेपं कारयेत् ॥ ११०–११२ ॥

ककुभोदुम्बराश्वत्थलोध्रजाम्बवकट्फलैः ।
त्वचमाश्वेव गृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥११३॥
मनःशिलैला[1] मञ्जिष्ठा लाक्षा च रजनीद्वयम् ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ॥ ११४ ॥
अयोरजः सकासीसं त्रिफलाकुसुमानि च ।
करोति लेपः कृष्णत्वं[2] सद्य एव नवत्वचि ॥ ११५ ॥
कालीयकनताम्रास्थिहेमकान्तारसोत्तमैः[3] ।
लेपः सगोमयरसः सवर्णीकरणः परः ॥ ११६ ॥
श्यामकाश्वत्थनिचुलमूलं लाक्षा सगैरिका ।
सहेमश्चामृतासङ्गः कासीसं चेति वर्णकृत् ॥११७॥
चतुष्पदानां त्वग्लोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेल्लोमवती पुनः ॥ ११८ ॥
षोडशोपद्रवा ये च व्रणानां परिकीर्तिताः ।
तेषां चिकित्सा निर्दिष्टा यथास्वं स्वे चिकित्सिते ॥

ककुभेत्यादिप्रकरणेन त्वग्जननं तथा सवर्णकरणं तथा रोमजननमिति उपक्रमत्रयमाह । त्वचमाश्वेव गृह्णन्तीति सत्वचो भवन्ति । त्रिफलाकुसुमानीति त्रिफलावृक्षपुष्पाणि । लता प्रियङ्गुः । कान्ता मञ्जिष्ठा । रसोत्तमः पारदः, घृतं वा । अमृतासङ्गः कर्परिकातुत्थम् ॥ ११३–११९ ॥

तत्र श्लोकौ—

द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च ।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः ॥

१ 'सुप्तेषु' इति पा० ।

१ 'मनःशिलाले' इति पा० । २ 'प्रलेपः कुरुते कार्ष्ण्यं' इति पा० । ३ '°कालायसोत्तमाः' इति पा० ।

व्रणाधिकारे सप्रश्नमेतन्नवकमुक्तवान् ।
मुनिर्व्याससमासाभ्यामग्निवेशाय धीमते ॥ १२१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते दृढबल-संपूरिते चिकित्सास्थाने द्विव्रणीयचिकित्सितं नाम पञ्चविंशोऽध्यायः ॥२५॥

द्वौ व्रणावित्याद्यध्यायसंग्रहो व्यक्तः ॥ १२० ॥ १२१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने द्विव्रणीयचिकित्सितं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ।

अथातस्त्रिमर्मीयचिकित्सितमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

द्विव्रणीये द्विसंख्यावच्छिन्नरोगचिकित्साभिधानानन्तरं त्रिसंख्यावच्छिन्नशिरोबस्तिहृदयमर्मरोगचिकित्साभिधानार्थं त्रिमर्मीयचिकित्सित उच्यते । त्रिमर्मशब्देन हि त्रिमर्माश्रिता रोगास्तस्योपचारश्चाभिधीयते; तेन त्रिमर्मीयरोगानधिकृत्य कृतं चिकित्सितं त्रिमर्मीयचिकित्सितम् ॥ १ ॥ २ ॥

सप्तोत्तरं मर्मशतं यदुक्तं
शरीरसंख्यामधिकृत्य तेभ्यः ।
मर्माणि बस्तिं हृदयं शिरश्च
प्रधानभूतानि वदन्ति तज्ज्ञाः ॥ ३ ॥
प्राणाश्रयात्, तानि हि पीडयन्तो
वातादयोऽसूनपि पीडयन्ति ।
तत्संश्रितानामनुपालनार्थं
महागदानां शृणु सौम्य रक्षाम् ॥ ४ ॥

प्रकृतप्रधानमर्मत्रयमवधारयति—सप्तोत्तरमित्यादि । शरीरसंख्यामधिकृत्येति शरीरसंख्याशारीरे (शा. अ. ७) उक्तमधिकृत्येत्यर्थः । हृदयादिमर्मप्राधान्ये हेतुमाह—प्राणाश्रयादिति । हृदयादीनां प्राणाश्रयत्वे एवोपपत्तिमाह—तानीत्यादि । हृदयाद्युपघातेन यस्माद्विशेषतः प्राणोपघातो भवति, तस्माद् हृदयाद्याश्रिताः प्राणा उच्यन्ते; यथा भित्त्युपघातोपहन्यमानं चित्रं भित्त्याश्रयमुच्यते । तत्संश्रितानामिति प्राणाश्रयाणां हृदयादीनां; संश्रितशब्देन हि संश्रय उच्यते । महान्तो गदा येषु भवन्ति तेषां महागदानां बस्त्यादीनामनुपालनार्थं रक्षां शृणु; किंवा तत्संश्रितानामिति बस्त्यादिसंश्रितानां प्राणानामनुपालनार्थं, महागदानां महामर्मबस्त्यादिव्यापकोदावर्तादीनां, रक्षामिति चिकित्साम् ॥ ३ ॥ ४ ॥

कषायतिक्तोषणरूक्षभोज्यैः
संधारणाभोजनमैथुनैश्च[1] ।
पक्वाशये कुप्यति चेदपानः
स्रोतांस्यधोगानि बली स रुद्ध्वा ॥ ५ ॥
करोति विण्मारुतमूत्रसङ्गं
क्रमादुदावर्तमतः सुघोरम् ।
रुग्बस्तिहृत्कुक्ष्युदरेष्वभीक्ष्णं
सपृष्ठपार्श्वेष्वतिदारुणा स्यात् ॥ ६ ॥
आध्मानहृल्लासविकर्तिकाश्च
तोदोऽविपाकश्च सबस्तिशोथः ।
वर्चोऽप्रवृत्तिर्जठरे च गण्डा-
न्यूर्ध्वश्च वायुर्विहतो गुदे स्यात्[2] ॥ ७ ॥
कृच्छ्रेण शुष्कस्य चिरात् प्रवृत्तिः
स्याद्वा तनुः स्यात् खररूक्षशीता ।
ततश्च रोगा ज्वरमूत्रकृच्छ्र-
प्रवाहिकाहृद्ग्रहणीप्रदोषाः ॥ ८ ॥
वम्यान्ध्यबाधिर्यशिरोऽभिताप-
वातोदराष्ठीलमनोविकाराः ।
तृष्णास्रपित्तारुचिगुल्मकास-
श्वासप्रतिश्यार्दितपार्श्वरोगाः ॥ ९ ॥
अन्ये च रोगा बहवोऽनिलोत्था
भवन्त्युदावर्तकृताः सुघोराः ।
चिकित्सितं चास्य यथावदूर्ध्वं
प्रवक्ष्यते तच्छृणु चाग्निवेश ! ॥ १० ॥

बस्त्यादिजानां यथाक्रमं हेत्वादिमाह—कषायेत्यादि । ऊषणः कटुकः । पक्वाशये इत्यादिना उदावर्तसंप्राप्तिलिङ्गचिकित्सितानि प्राह । ननु कथमपानः कुपितोऽपानस्यैव सङ्गं करोतीति मारुतसंगशब्देनोच्यते ? ब्रूमः—आत्मनैवायं दुष्टः सम्यगप्रवर्तमान आत्मनः सङ्गं करोतीत्युच्यते, यथा मन एवं मनोनिग्रहं करोति । उक्तं च "इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः" ( शा. अ. १ ) इति । ऊर्ध्वश्चेति ऊर्ध्वगमनस्वभावः ॥ ५–१० ॥

तं तैलशीतज्वरनाशनाक्तं
स्वेदैर्यथोक्तैः प्रविलीनदोषम् ।
उपाचरेद्वर्तिनिरूहबस्ति-
स्नेहैर्विरेकैरनुलोमनान्नैः ॥ ११ ॥
श्यामात्रिवृन्मागधिकां सदन्तीं
गोमूत्रपिष्टां दशभागमाषाम् ।
सनीलिकां द्विलवणां गुडेन
वर्तिं कराङ्गुष्ठनिभां विदध्यात् ॥ १२ ॥

---

[1] 'संधारणोदीरणमैथुनैश्च' इति पा० । [2] 'जठरे गण्डो मूर्ध्व च वायौ विहते गुदे स्याद्' इति गङ्गाधरसंमतः पाठः ।

पिण्याकसौवर्चलहिङ्गुभिर्वा
सर्सर्षपत्र्यूषणयावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनीभिः
सुधार्कजक्षीरगुडैर्युताभिः ॥ १३ ॥
स्यात् पिप्पलीसर्षपराढवेश्म-
धूमैः सगोमूत्रगुडैश्च वर्तिः ।
श्यामाफलालावुकपिप्पलीनां
नाड्याऽथवा तत् प्रधमेत्तु चूर्णम् ॥ १४ ॥
रक्षोघ्नतुम्बीकरहाटकृष्णा-
चूर्णं सजीमूतकसैन्धवं वा ।
स्निग्धे गुदे तान्यनुलोमयन्ति
नरस्य वर्चोऽनिलमूत्रसङ्गम् ॥ १५ ॥
तेषां विघाते तु भिषग्विदध्यात्
स्वभ्यक्तसुस्विन्नतनोर्निरूहम् ।
ऊर्ध्वानुलोमौषधमूत्रतैल-
क्षाराम्लवातघ्नयुतं सुतीक्ष्णम् ॥ १६ ॥
वातेऽधिकेऽम्लं लवणं सतैलं,
क्षीरेण पित्ते तु, कफे समूत्रम् ।
स मूत्रवर्चोऽनिलसङ्गमाशु
गुदं सिराश्च प्रगुणीकरोति ॥ १७ ॥

तैलज्वरनाशनाक्तमिति शीतज्वरनाशनागुर्वाद्युक्तम् । श्यामेत्यादिफलवर्तौ श्यामा त्रिवृद्भेदः । दशभागा माषस्य यस्यां सा दशभागमाषा । द्विर्लवणमिति द्विभागलवणम् । गुडेनेतिवचनेन यावता गुडेन वर्तिः कर्तुं युज्यते तावन्मानो गुडो देयः । यावशूकैरित्यन्तेन द्वितीया वर्तिर्गुडेनैव[1] कर्तव्या । शङ्खिनी श्वेतबुहा । राढः मदनफलम् । वेश्मधूमः अगारधूमः । रक्षोघ्नः सर्षपः । करहाटः मदनः । तेषां विघाते इति फलवर्तिचूर्णानामुक्तानां कार्याकरणे । ऊर्ध्वानुलोमौषधं वमनविरेचनौषधम् । वातेऽधिक इत्यादिना दोषभेदेन बस्तावावापमाह । उदावर्ते पित्तकफौ वातकोपितावेव ज्ञेयौ । स इति पूर्वोक्तो बस्तिः ॥ ११-१७ ॥

त्रिवृत्सुधापत्रतिलादिशाक-
ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भि-
रद्यात् प्रसन्नागुडसीधुपायी ॥ १८ ॥

प्रसन्ना मद्योपरि स्वच्छो भागः । गुडकृतः सीधुः गुडसीधुः ॥ १८ ॥

भूयोऽनुबन्धे तु भवेद्विरेच्यो
मूत्रप्रसन्नादधिमण्डशुक्तैः ।
स्वस्थं तु पश्चादनुवासयेत्तं
रौक्ष्याद्धि सङ्गोऽनिलवर्चसोश्चेत् ॥ १९ ॥

भूयोऽनुबन्धे इति बस्तिप्रयोगे सत्यप्युदावर्तानुबन्धे । एतच्च विरेचनं बस्तिदानात् सप्ताहादूर्ध्वम् । यदुक्तं—"नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनान्यवश्यम् । शुद्धो निरूहेण विरेचनं च" ( सि. अ. १ ) इति ॥ १९ ॥

द्विरुत्तरं हिङ्गु वचाग्निकुष्ठं
सुवर्चिका चैव विडङ्गचूर्णम् ।
सुखाम्बुनाऽऽनाहविसूचिकार्ति-
हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ २० ॥
वचाभयाचित्रकयावशूकान्
सपिप्पलीकातिविषान् सकुष्ठान्[1] ।
उष्णाम्बुनाऽऽनाहविमूढवातान्
पीत्वा जयेदाशु रसौदनाशी ॥ २१ ॥
हिङ्ग्वग्रगन्धाविडशुण्ठ्यजाजी-
हरीतकीपुष्करमूलकुष्ठम् ।
यथोत्तरं भागविवृद्धमेतत्
प्लीहोदराजीर्णविसूचिकासु[2] ॥ २२ ॥

द्विरुत्तरेत्यादौ यथोत्तरं द्रव्याणां द्वैगुण्यम् । सुवर्चिका स्वर्जिकाक्षारः । सुखाम्बुना 'पीतम्' इति शेषः । उग्रगन्धा अजमोदा ॥ २०-२२ ॥

स्थिरादिवर्गस्य पुनर्नवायाः
शम्पाकपूतीककरञ्जयोश्च ।
सिद्धः कषाये द्विपलांशिकानां
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते ॥ २३ ॥

स्थिरादिवर्गस्येति अल्पपञ्चमूलस्य । शम्पाकपूतीककरञ्जयोश्चेत्यत्र पूतीकशब्दः करञ्जविशेषणम् । तथाहि जतूकर्णः—"आरग्वधपूतिकपुनर्नवास्थिरादैर्घृतं सिद्धम्" इत्यादि ॥ २३ ॥

फलं च मूलं च विरेचनोक्तं
हिङ्ग्वर्कमूलं दशमूलमग्र्यम् ।
स्नुक् चित्रकश्चैव पुनर्नवा च
तुल्यानि सर्वैर्लवणानि पञ्च ॥ २४ ॥
स्नेहैः समूत्रैः सह जर्जराणि
शरावसन्धौ विपचेत् सुलिप्ते ।
पक्वं सुपिष्टं लवणं तदन्नैः
पानैस्तथाऽऽनाहरुजाघ्नमद्यात् ॥ २५ ॥

फलं च मूलं च विरेचनोक्तमिति दीर्घञ्जीवितीये (सू.अ.१) मूलिनीफलिनीविरेचनकर्मण्युक्तं; किंवा कल्पे विरेचनयोगेषु वक्ष्यमाणम् ॥ २४ ॥ २५ ॥

१ 'माषगुडेनैव' इति पा० ।

१ 'वचा सकृष्णा' इति पा० । २ '०विलम्बिकार्शो०' इति पा० ।

हृत्स्तम्भमूर्धामयगौरवाभ्या-
मुद्गारसङ्गेन सपीनसेन।
आनाहमामप्रभवं जयेत्तु
प्रच्छर्दनैर्लङ्घनपाचनैश्च ॥ २६ ॥
(गुल्मोदरब्रध्नार्शःप्लीहोदावर्तयोनिशुक्रगदे।
मेदःकफसंसृष्टे मारुतरक्तेऽवगाढे च ॥ २७ ॥
गृध्रसिपक्षवधादिषु विरेचनार्हेषु वातरोगेषु।
वाते विबद्धमार्गे मेदःकफपित्तरक्तेन ॥ २८ ॥
पयसा मांसरसैर्वा त्रिफलारसयूषमूत्रमदिराभिः।
दोषानुबन्धयोगात् प्रशस्तमेरण्डजं तैलम् ॥ २९ ॥
तद्वाततनुत्वभावात् संयोगवशाद्विरेचनाच्च जयेत्।
मेदोसृक्पित्तकफोन्मिश्रानिलरोगजित्तस्मात् ३०
बलकोष्ठव्याधिवशादापञ्चपला भवेन्मात्रा।
मृदुकोष्ठाल्पबलानां सह भोज्यं तत्प्रयोज्यं स्यात्३१)

इत्युदावर्तचिकित्सा।

हृदित्यादिना उदावर्तस्यैव हेतुलक्षणविशेषकृतामानाहसंज्ञां प्रदर्श्य तत्र भेषजमाह ॥ २६-३१ ॥

व्यायामतीक्ष्णौषधरूक्षमद्य-
प्रसङ्गनित्यद्रुतपृष्ठयानात्।
आनूपमत्स्याध्यशनादजीर्णात्
स्युर्मूत्रकृच्छ्राणि नृणामिहाष्टौ ॥ ३२ ॥
पृथङ्मलाः स्वैः कुपिता निदानैः
सर्वेऽथवा कोपमुपेत्य वस्तौ।
मूत्रस्य मार्गं परिपीडयन्ति
यदा तदा मूत्रयतीह कृच्छ्रात् ॥ ३३ ॥
तीव्रा रुजो वङ्क्षणवस्तिमेढ्रे
स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतं सरक्तं सरुजं सदाहं
कृच्छ्रान्मुहुर्मूत्रयतीह पित्तात् ॥ ३४ ॥
वस्तेः सलिङ्गस्य गुरुत्वशोथौ
मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्वाणि रूपाणि तु सन्निपाता-
द्भवन्ति तत् कृच्छ्रतमं हि कृच्छ्रम् ॥ ३५ ॥

व्यायामेत्यादिना बस्त्याश्रयरोगेषु मूत्रकृच्छ्राण्याह। पृथगित्यादिना वातपित्तकफसन्निपातजानां मूत्रकृच्छ्राणां संप्राप्तिमाह। तीव्रा हि रुगित्यादिना चतुर्णां प्रत्येकं रूपमाह ॥ ३२-३५ ॥

विशोषयेद्वस्तिगतं सशुक्रं
मूत्रं सपित्तं पवनः कफं वा।
यदा तदाऽश्मर्युपजायते तु
क्रमेण पित्तेष्विव रोचना गोः ॥ ३६ ॥

विशोषयेदित्यादिना चतुष्प्रकारानप्यश्मरीरोगानाह। तत्रान्तरेऽश्मर्यस्तु वातपित्तकफशुक्रजा उक्ताः; यद्यपि सर्वाश्मरीषु दोषत्रयजन्यत्वमस्ति, "संहन्त्यापो यथा दिव्या मारुतोऽग्निश्च वैद्युतः। तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः" (सु. नि. अ. ३) इति सुश्रुते प्रतिपादितं; तथाऽप्युत्कटैकदोषाभिप्रायेण वातजादिव्यपदेशो ज्ञेयः। वातजायामश्मर्यां प्रबलेन वायुना मूत्रशोषे क्रियमाणे तद्गतः कफ एवाश्मरीरूपः क्रियते, एवं पित्ताश्मर्यामपि ज्ञेयम्, अत एव सुश्रुते श्लेष्माधिष्ठानाः सर्वा एवाश्मर्य उक्ताः। अश्मर्युत्पादे दृष्टान्तमाह-पित्तेष्विव रोचना गोरिति; पित्तेष्विति बहुवचनं पित्तबहुलतापेक्षया[1] ॥ ३६ ॥

कदम्बपुष्पाकृतिरश्मतुल्या
श्लक्ष्णा त्रिपुट्यप्यथवाऽपि मृद्वी।
मूत्रस्य चेन्मार्गमुपैति रुद्ध्वा
मूत्रं रुजं तस्य करोति वस्तौ ॥ ३७ ॥
ससेवनीमेहनवस्तिशूलं
विशीर्णधारं च करोति मूत्रम्।
मृद्नाति मेढ्रं स तु वेदनार्तो
मुहुः शकृन्मुञ्चति मेहते च ॥ ३८ ॥
क्षोभात् क्षते मूत्रयतीह सासृक्
तस्याः सुखं मेहति च व्यपायात्।

कदम्बपुष्पाकृत्यादयो विशेषा यथायोग्यतया दोषभेदाद्विज्ञेयाः। तत्र वातेन कदम्बपुष्पाकृतिस्त्रिपुटी च, पित्तेनाश्मतुल्या श्लक्ष्णा, मृद्वी कफेन शुक्रेण च। क्षोभात् क्षत इति अश्मरीक्षोभान्मूत्रमार्गे बस्तौ वा क्षते। तस्या इति अश्मर्याः। व्यपायादिति मूत्रमार्गापगमात्। सुखमिति निर्वेदनम् ॥ ३७-३८ ॥—

एषाऽश्मरी मारुतभिन्नमूर्तिः
स्याच्छर्करा मूत्रपथात् क्षरन्ती ॥ ३९ ॥
(रेतोऽभिघाताभिहतस्य पुंसः
प्रवर्तते यस्य तु मूत्रकृच्छ्रम्।
स्याद्वेदना वङ्क्षणवस्तिमेढ्रे
तस्यातिशूलं वृषणातिवृत्ते ॥ ४० ॥
शुक्रेण संरुद्धगतिप्रवाहो
मूत्रं स कृच्छ्रेण विमुञ्चतीह।
तमण्डयोः स्तब्धमिति ब्रुवन्ति
रेतोऽभिघातात् प्रवदन्ति कृच्छ्रम्[2] ॥४१॥)

एषेत्यादिना शर्करामाह। भिन्नमूर्तिरिति अणुरूपतया भेदितमूर्तिः। अत एव मूत्रपथात् क्षरन्तीत्युक्तम्। तेन वातेन द्विधा त्रिधा भिन्नाऽनेकधा वाऽश्मरी मूत्रपथेन क्षरन्ती शर्करेव भवति ॥ ३९-४१ ॥

१. चक्रपाणिगङ्गाधराभ्यामव्याख्यातत्वादयं पाठः प्रक्षिप्त इति प्रतिभाति।

१ 'बहुशोगतपित्तबहुत्वापेक्षया' इति पा०। २ अयं पाठोऽनार्ष इति प्रतिभाति।

शुक्रं मलाश्चैव पृथक् पृथग्वा
मूत्राशयस्थाः प्रतिवारयन्ति ।
तद्व्याहतं मेहनवस्तिशूलं
मूत्रं सशुक्रं कुरुते विबद्धम् ॥ ४२ ॥
स्तब्धश्च शूनो भृशवेदनश्च
तुद्येत वस्तिर्वृषणौ च तस्य ।

शुक्रं मला इत्यादिना शुक्रजमूत्रकृच्छ्रलक्षणम् । मूत्राशयस्था इति मूत्रमार्गस्थिताः ॥ ४२ ॥—

क्षताभिघातात् क्षतजं क्षयाद्वा
प्रकोपितं वस्तिगतं विबद्धम् ॥ ४३ ॥
तीव्रार्तिं मूत्रेण सहाश्मरीत्व-
मायाति तस्मिन्नतिसंचिते च ।
आध्माततां विन्दति गौरवं च
बस्तेर्लघुत्वं च विनिःसृतेऽस्मिन् ॥ ४४ ॥
इति मूत्रकृच्छ्रनिदानम् ।

क्षतेत्यादिना रक्तजं मूत्रकृच्छ्रमाह । क्षतजमिति रक्तम् । क्षयाद्वा प्रकोपितमिति अतिव्यवायाच्छुक्रक्षये सति वायुनोदीर्य बस्तिमानीतम् । आध्माततामिति वस्तिपूर्णताम् । तस्मिन्निति रक्ते अतिसंचिते । एवं सूत्रस्थानोद्दिष्टा अष्टौ मूत्राघाता मूत्रकृच्छ्रशब्देनेह निर्दिश्य व्याकृताः । ये तु त्रिमर्मीयसिद्धौ त्रयोदश मूत्राघाता वक्तव्यास्ते सूत्रस्थानेऽसूत्रिता अपि एकादशक्षुद्रकुष्ठवदन्तर्भावनीयाः । मूत्राघातमूत्रकृच्छ्रयोश्चायं विशेषः—यन्मूत्रकृच्छ्रे मूत्रं कृच्छ्रेण वहति, मूत्राघाते मूत्रं शोष्यते प्रतिहन्यते वा; सुश्रुतेऽपि च मूत्रकृच्छ्रमूत्राघातयोर्विशेषोऽध्यायभेदेनैवोक्तः । अन्ये तु मूत्रकृच्छ्रविशेषानेव मूत्राघातानाहुः, यथायोग्यतया वातपित्तादिचतुर्षु मूत्रकृच्छ्रेषु मूत्राघातानन्तर्भावयन्ति; तेन न पृथङ्मूत्राघाताभिधानम् ॥ ४३ ॥ ४४ ॥

अभ्यञ्जनस्नेहनिरूहवस्ति-
स्नेहोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान्
दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ ४५ ॥
पुनर्नवैरण्डशतावरीभिः
पत्तूरवृश्चीरबलाश्मभिद्भिः ।
द्विपञ्चमूलेन कुलत्थकोल-
यवैश्च तोयोत्कथिते कषाये ॥ ४६ ॥
तैलं वराहर्क्षवसा घृतं च
तैरेव कल्कैर्लवणैश्च साध्यम् ।
तन्मात्रयाऽऽशु प्रतिहन्ति पीतं
शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥ ४७ ॥
एतानि चान्यानि वरौषधानि
पिष्टानि शस्तान्यपि चोपनाहे ।
स्युर्लाभतस्तैलफलानि चैव
स्नेहाम्लयुक्तानि सुखोष्णवन्ति ॥ ४८ ॥

मूत्रकृच्छ्रे चिकित्सामाह—अभ्यञ्जनेत्यादि । स्थिरादिभिः पञ्चमूलैः । वातहरैरिति तत्र तत्र वातहरत्वेन प्रतिपादितैः । पत्तूरः शालिञ्चिका । अश्मभित् पाषाणभेदः । अन्यानीति एवंगुणान्येवान्यानि । तैलफलानि तिलोमास्फोतादीनि ॥ ४५–४८ ॥

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविरेकाः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्याः ॥ ४९ ॥
शतावरीकाशकुशश्वदंष्ट्रा-
विदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्कराभ्यां
युक्तं पिबेत् पैत्तिकमूत्रकृच्छ्री ॥ ५० ॥
पिबेत् कषायं कमलोत्पलानां
शृङ्गाटकानामथवा विदार्याः ।
दण्डैरकाणामथवाऽपि मूलं[1]
पूर्वेण कल्पेन तथाऽम्बु शीतम् ॥ ५१ ॥

ग्रैष्मो विधिरिति तस्याशीतीयोक्तो ग्रीष्मविधिः । तत्र शिशिरावेव सेकावगाहौ यद्यप्युक्तौ, तथाऽपि विशेषेण शिशिरसेकावगाहकरणार्थं पुनरभिधानम् । दण्डैरका 'होग्गल' इति ख्याता । पूर्वेण कल्पेनेति क्वाथेन मधुशर्करयोर्योगेन च ॥ ४९–५१ ॥

एर्वारुबीजं त्रपुषात् कुसुम्भात्
सकुङ्कुमः स्याद्वृषकश्च पेयः ।
द्राक्षारसेनाश्मरिशर्करासु
सर्वेषु कृच्छ्रेषु प्रशस्त एषः ॥ ५२ ॥
एर्वारुबीजं मधुकं सदारु[2]
पैत्ते पिबेत्तण्डुलधावनेन ।
दार्वीं तथैवामलकीरसेन
समाक्षिकां पित्तकृते तु कृच्छ्रे ॥ ५३ ॥

त्रपुषात् कुसुम्भादित्यत्र बीजमिति संबध्यते ॥ ५२ ॥ ५३ ॥

क्षारोष्णतीक्ष्णौषधमन्नपानं
स्वेदो यवान्नं वमनं निरूहाः ।
तक्रं सतिक्तौषधसिद्धतैल-
मभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ५४ ॥
व्योषं श्वदंष्ट्रात्रुटिसारसास्थि
कोलप्रमाणं मधुमूत्रयुक्तम् ।
पिबेत्त्रुटिं क्षौद्रयुतां कदल्या
रसेन कैडर्यरसेन वाऽपि ॥ ५५ ॥

१ 'दण्डोत्पलानां' इति पा० । २ 'सदार्विं' इति पा० । 'कृमिमारकास्थि' इति पा० ।

तक्रेण युक्तं शितिवारकस्य
बीजं पिबेत् कृच्छ्रविनाशहेतोः ।
पिबेत्तथा तण्डुलधावनेन
प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ ५६ ॥
सप्तच्छदारग्वधकेबुकैला-
धवं करञ्जं कुटजं गुडूचीम् ।
पक्त्वा जले तेन पिबेद्यवागूं
सिद्धं कषायं मधुसंयुतं वा ॥ ५७ ॥

क्षारोष्णेत्यादि । कफकृच्छ्रे क्षारादिभिर्युक्तं भेषजमन्नपानं च प्रयोज्यम् । व्योषं त्रिकटुकम् । त्रुटिः एला । सारसः पक्षी खनामख्यातः । कोलप्रमाणमिति अष्टमाषकमानम् । कैटर्यः पार्वतो निम्बः । शितिवारकः शालिञ्चः ॥ ५४-५७ ॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ ५८ ॥
इति मूत्रकृच्छ्रचिकित्सा ।

सर्वमित्यादि । एतदेव वातादिभेषजं मिलितं त्रिदोषप्रभवे कृच्छ्रे कर्तव्यम् । तच्च समेष्वपि दोषेषु वायोः स्थानानुपूर्व्या चिकित्सितं कर्तव्यं, न ज्वर इव त्रिदोषभवे कफस्थानानुपूर्व्या कर्तव्यं; मूत्रकृच्छ्रस्य समत्रिदोषारब्धत्वेऽपि वातस्थानभवत्वेन वायुरेव प्रथमं चिकित्स्य इति भावः । विषमसन्निपातारब्धे क्रियामाह—त्रिभ्योऽधिके इत्यादि । त्रिभ्योऽधिके इति ग्रन्थः कफे तथा पित्ते तथा पवने इत्यनेन च क्रमेण संबध्यते ॥५८॥

क्रिया हिता साऽश्मरिशर्कराभ्यां
कृच्छ्रे यथैवेह कफानिलाभ्याम् ।
कार्याऽश्मरीभेदनपातनाय
विशेषयुक्तं शृणु कर्म सिद्धम् ॥ ५९ ॥
पाषाणभेदं वृषकं श्वदंष्ट्रा-
पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराश्वाशितिवारकाणा-
मेर्वारुकाणां त्रपुषस्य बीजम् ॥ ६० ॥
उत्कुञ्चिका हिङ्गु सवेतसाम्लं
स्याद्वे बृहत्यौ हपुषा वचा च ।
चूर्णं पिबेदश्मरिभेदपक्वं
सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥ ६१ ॥
मूलं श्वदंष्ट्रेक्षुरकोरुवूकात्
क्षीरेण पिष्टं बृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयं
दिनानि सप्ताश्मरिभेदनाय ॥ ६२ ॥

पुनर्नवायोरजनीश्वदंष्ट्रा-
फल्गुप्रवालाश्च सदर्भपुष्पाः ।
क्षीराम्बुमद्येक्षुरसैः सुपिष्टं
पेयं भवेदश्मरिशर्करासु ॥ ६३ ॥
त्रुटिं सुराह्वं लवणानि पञ्च
यवाग्रजं कुन्दुरुकाश्मभेदौ ।
कम्पिल्लकं गोक्षुरकस्य बीज-
मेर्वारुबीजं त्रपुषस्य बीजम् ॥ ६४ ॥
चूर्णीकृतं चित्रकहिङ्गुमांसी-
यवानितुल्यं त्रिफलाद्विभागम् ।
अम्लैरशुक्तै रसमद्ययूपैः
पेयं हि गुल्माश्मरिभेदनार्थम् ॥ ६५ ॥
बिल्वप्रमाणो घृततैलभृष्टो
यूषः कृतः शिग्रुकमूलकल्कात् ।
शीतोऽश्मभित् स्याद्दधिमण्डयुक्तः
पेयः प्रकामं लवणेन युक्तः ॥ ६६ ॥
जलेन शोभाञ्जनमूलकल्कः
शीतो हितश्चाश्मरिशर्करासु ।
सितोपला वा समयावशूका
कृच्छ्रेषु सर्वेष्वपि भेषजं स्यात् ॥ ६७ ॥
पीत्वाऽथ मद्यं निगदं रथेन
हयेन वा शीघ्रजवेन यायात् ।
तैः शर्करा प्रच्यवतेऽश्मरी तु
शाम्येन्न चेच्छल्यविदुद्धरेत्ताम् ॥ ६८ ॥
रेतोभिघातप्रभवे तु कृच्छ्रे
समीक्ष्य दोषं प्रतिकर्म कुर्यात् ।
कार्पासमूलं वृषकाश्मभेदौ
बला स्थिरादीनि गवेधुका च ॥ ६९ ॥
वृश्चीर ऐन्द्री च पुनर्नवा च
शतावरी मध्वसनाख्यपर्ण्यौ ।
तत्क्वाथसिद्धः पवने रसः स्यात्
पित्तेऽधिके क्षीरमथापि सर्पिः ॥ ७० ॥
कफे च यूषादिकमन्नपानं
संसर्गजे सर्वहितः क्रमः स्यात् ।
एवं न चेच्छाम्यति तस्य युञ्ज्यात्
सुरां पुराणां मधुकासवं वा ॥ ७१ ॥
विहङ्गमांसानि च बृंहणाय
वस्तींश्च शुक्राशयशोधनार्थम् ।
शुद्धस्य तृप्तस्य च वृष्ययोगैः
प्रियानुकूलाः प्रमदा विधेयाः ॥ ७२ ॥

१ 'खराह्वा°' इति पा० ।

१ 'शताह्वां' इति पा० ।

क्रिया हिता सेति या कफमारुतोत्थे कृच्छ्रे विहिता सा मिलितैव शर्करायामश्मर्यां च कर्तव्या। खराश्वा अजमोदा। चूर्णं पिबेदित्यत्र जलेनैव पानम्। इक्षुरकः कोकिलाक्षः। कुन्दुरुः ख्यातः। त्रिफलाद्विभागमिति त्रिफलायाः प्रत्येकं मूलभागाद् भागद्वयम्। अम्लैरिति काञ्जिकादिभिः। अशुक्तैरिति शुक्तवर्जितैः। मद्यं चात्राम्लग्रहणगृहीतमपि वस्तिशोधनत्वादश्मरीभेदकत्वप्रकर्षख्यापनार्थं पुनरुच्यते। अश्मभिदिति अश्मरीभेदी। सितोपला शर्करा। शल्यविदुद्धरेदिति शल्यशास्त्रवेत्ता तदुक्तविधानेनाश्मरीमाकर्षेत्। समीक्ष्य दोषमिति दोषमुल्वणं समीक्ष्य। प्रतिकर्म कुर्यात् प्रतिकर्म चिकित्सितम्। मध्वसनाख्यपर्ण्यौ मधुपर्णी गुडूची, असनपर्णी अपराजिता, 'दारुपर्णी'त्यपरे। संसर्गजे इति त्रिदोषानुगते। विहङ्गः पक्षी॥ ५९–७२॥

रक्तोद्भवे तूत्पलनालताल-
कासेक्षुवालेक्षुकशेरुकाणि।
पिबेत् सिताक्षौद्रयुतानि खादे-
दिक्षुं विदारीं त्रपुषाणि चैव॥ ७३॥
घृतं श्वदंष्ट्रास्वरसेन सिद्धं
क्षीरेण चैवाष्टगुणेन पेयम्।
स्थिरादिकानां कतकादिकाना-
मेकैकशो वा विधिनैव तेन॥ ७४॥
क्षीरेण वस्तिर्मधुरौषधैः स्या-
त्तैलेन वा स्वादुफलोत्थितेन।
यन्मूत्रकृच्छ्रे विहितं तु पैत्ते
कार्यं तु तच्छोणितमूत्रकृच्छ्रे॥ ७५॥

खादेदिति असिद्धान्येव खादेत्। घृतं श्वदंष्ट्रेत्यादौ साहचर्यात् केचिच्छ्वदंष्ट्रास्वरसमप्यष्टगुणं वदन्ति; तन्न, स्वरसः स्नेहसम एव स्नेहेषु भवति, उक्तं हि जतूकर्णे—"कल्काच्चतुर्गुणः स्नेहः, स्वरसः स्नेहसंमितः" इति; तेन क्षीरवत् सर्वस्नेहेषु स्वरसविधानं ज्ञेयम्। स्थिरादिकानामित्यादौ कतकादिः मधुरस्कन्धे ( वि. अ. ८ ) "°कतककाश्मर्य°" इत्यादिनोक्तो गणो ज्ञेयः[1]। विधिनैव तेनेति पूर्वघृतविधिनैव; तेन श्वदंष्ट्रास्थाने स्थिरादीनि प्रत्येकं कल्पनीयानि। स्वादुफलोत्थितेनेति मधूकाक्षोटादिफलनिष्पन्नेन तैलेन॥ ७३–७५॥

व्यायामसंधारणशुष्करूक्ष-
पिष्टान्नवातार्ककरव्यवायान्।
खर्जूरशालूककपित्थजम्बू-
बिसं कषायं न रसं भजेत॥ ७६॥
इत्यश्मरीचिकित्सा।

व्यायामेत्यादिना मूत्रकृच्छ्रेऽपथ्यान्याह॥ ७६॥

१ 'कालङ्कतककाश्मर्येत्यादिनोक्तो गणो ज्ञेयः। कालङ्कतको विकङ्कतकः' इति पा०।

व्यायामतीक्ष्णातिविरेकवस्ति-
चिन्ताभयत्रासगदातिचाराः।
छर्द्यामसंधारणकर्शनानि
हृद्रोगकर्तॄणि तथाऽभिघातः॥ ७७॥
वैवर्ण्यमूर्च्छाज्वरकासहिक्का-
श्वासास्यवैरस्यतृषाप्रमोहाः।
छर्दिः कफोत्क्लेशरुजोऽरुचिश्च
हृद्रोगजाः स्युर्विविधास्तथाऽन्ये॥ ७८॥
हृच्छून्यभावद्रवशोषभेद-
स्तम्भाः समोहाः पवनाद्विशेषः।
पित्तात्तमोदूयनदाहमोहाः
संत्रासतापज्वरपीतभावाः॥ ७९॥
स्तब्धं गुरु स्यात् स्तिमितं च मर्म
कफात् प्रसेकज्वरकासतन्द्राः।
विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं
तीव्रार्तितोदं कृमिजं सकण्डूम्॥ ८०॥

निदानादिक्रमेण हृद्रोगचिकित्सामाह। गदातिचार इति रोगाणामसम्यगुपचारः। हृद्रोगकर्तॄणीति यथा "भीष्मः कुरूणां भयशोकहर्ता", तेन "तृजकाभ्यां कर्तरि" (पा. अ. २।२।१५) इत्यनेनात्र समासः। वैवर्ण्येत्यादौ हृद्रोगजा इति वचनाद्धृद्रोगानन्तरकालभावितया वैवर्ण्यादीनामुपद्रवत्वमिच्छन्ति; ये तु वैवर्ण्यादीनां सामान्यहृद्रोगलक्षणत्वमाहुः, ते हृद्रोगेण समं जायन्ते इति हृद्रोगजा इति विग्रहाल्लिङ्गत्वं व्युत्पादयन्ति। हृद्रोगाश्च कियन्तःशिरसीये ( सू. अ. १७ ) विस्तरेणोक्ता अपि चिकित्साप्रकरणादिह संक्षेपेणाभिधीयन्ते। मर्मेति हृदयम्॥ ७७–८०॥

तैलं ससौवीरकमस्तुतक्रं
वाते प्रपेयं लवणं सुखोष्णम्।
मूत्राम्बुसिद्धं लवणैश्च तैल-
मानाहगुल्मार्तिहृदामयघ्नम्॥ ८१॥
पुनर्नवां दारु सपञ्चमूलं
रास्नां यवान् बिल्वकुलत्थकोलम्।
पक्त्वा जले तेन विपाच्य तैल-
मभ्यङ्गपानेऽनिलहृद्गदघ्नम्॥ ८२॥
हरीतकीनागरपुष्कराह्वै-
र्वयःकयस्थालवणैश्च कल्कैः।
सहिङ्गुभिः साधितमग्र्यसर्पि-
र्गुल्मे सहृत्पार्श्वगदेऽनिलोत्थे॥ ८३॥
सपुष्कराह्वं फलपूरमूलं
महौषधं शट्यभया च कल्काः।
क्षाराम्बुसर्पिर्लवणैर्विमिश्राः
स्युर्वातहृद्रोगविकर्तिकाघ्नाः॥ ८४॥

काथः कृतः पौष्करमातुलुङ्ग-
पलाशभूतीकशटीसुराह्वैः ।
सनागराजाजिवचायवानी-
क्षारः सुखोष्णो लवणश्च पेयः ॥ ८५ ॥
पथ्याशटीपौष्करपञ्चकोलात्
समातुलुङ्गाद्यमकेन कल्कः ।
गुडप्रसन्नालवणैश्च भृष्टो
हृत्पार्श्वपृष्ठोदरयोनिशूले ॥ ८६ ॥
स्याद्व्यूषणं द्वे त्रिफले सपाठे
निदिग्धिकागोक्षुरकौ बले द्वे ।
ऋद्धिस्त्रुटिस्तामलकी स्वगुप्ता
मेदे मधूकं मधुकं स्थिरा च ॥ ८७ ॥
शतावरी जीवकपृश्निपर्ण्यौ
द्रव्यैरिमैरक्षसमैः सुपिष्टैः ।
प्रस्थं घृतस्येह पचेद्विधिज्ञः
प्रस्थेन दध्ना त्वथ माहिषेण ॥ ८८ ॥
मात्रां पलं चार्धपलं पिचुं वा
प्रयोजयेन्माक्षिकसंप्रयुक्ताम् ।
श्वासे सकासे त्वथ पाण्डुरोगे
हलीमके हृद्ग्रहणीप्रदोषे ॥ ८९ ॥

तैलमित्यादिना यथाक्रमं चिकित्सामाह । तैलादीनामत्र समभागानां पेयत्वं ज्ञेयम् । वयःकयस्थेति वयःस्थाकायस्थयोर्गुडूच्यामलकयोः स्वरसग्रहणम् । अभ्यसर्पिरिति अत्राभ्यपदमस्य सर्पिषः प्राधान्यख्यापनार्थम् । विकर्तिकेह हृदयपरिकर्तिकाकारा वेदना । क्वाथः कृत इत्यादौ नागरादीनां कल्कं पौष्करादिक्काथे प्रक्षेपमाहुः । पथ्याशटीत्यादौ यमकेन भृष्टः कल्कः गुडप्रसन्नालवणैश्च पेय इति व्याख्येयम् । द्वे त्रिफले इत्यत्र द्राक्षाकाश्मर्यपरूषकाणि द्वितीया त्रिफला । त्रुटिः सूक्ष्मैला ॥ ८१–८९ ॥

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्या-
च्छुद्धे तु पित्तापहमन्नपानम् ॥ ९० ॥
यष्ट्याह्विकातिक्तकरोहिणीभ्यां
कल्कं पिबेच्चापि सिताजलेन ।
क्षते च सर्पींषि हितानि सर्पि-
र्गुडाश्च ये तान् प्रसमीक्ष्य सम्यक् ॥ ९१ ॥
दद्याद्भिषग्धन्वरसांश्च गव्य-
क्षीराशिनां पित्तहृदामयेषु ।
तैरेव सर्वे प्रशमं प्रयान्ति
पित्तामयाः शोणितसंश्रया ये ॥ ९२ ॥
द्राक्षाबलाश्रेयसिशर्कराभिः
खर्जूरवीरर्षभकोत्पलैश्च ।
काकोलिमेदायुगजीवकैश्च
क्षीरेण सिद्धं महिषीघृतं स्यात् ॥ ९३ ॥
कशेरुकाशैवलशृङ्गवेर-
प्रपौण्डरीकं मधुकं विसस्य ।
ग्रन्थिश्च सर्पिः पयसा पचेत्तैः
क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥ ९४ ॥
स्थिरादिकल्कैः पयसा च सिद्धं
द्राक्षारसेनेक्षुरसेन वाऽपि ।
सर्पिर्हितं स्वादुफलेक्षुजाश्च
रसाः सुशीता हृदि पित्तदुष्टे ॥ ९५ ॥

शीता इत्यादि पित्तहृद्रोगचिकित्सितम् । क्षते इति क्षतक्षीणचिकित्सिते । श्रेयसी रास्ना । खर्जूरं खर्जूरफलम् । क्षौद्रान्वितमिति साधनोत्तरकालं पादिकमधुयुक्तम् । स्वादुफलेत्यादौ स्वरसा इति रसाः ॥ ९०–९५ ॥

खिन्नस्य वान्तस्य विलङ्घितस्य
क्रिया कफघ्नी कफमर्मरोगे ।
कौलत्थधान्यैश्च रसैर्यवान्नं
पानानि तीक्ष्णानि च शङ्कराणि ॥ ९६ ॥
मूत्रे श्रृताः कट्फलशृङ्गवेर-
पीतद्रुपथ्यातिविषाः प्रदेयाः ।
कृष्णाशटीपुष्करमूलरास्ना-
वचाभयानागरचूर्णकं च ॥ ९७ ॥
उदुम्बराश्वत्थवटार्जुनाख्ये
पालाशरौहीतकखादिरे च ।
काथे त्रिवृत्त्र्यूषणचूर्णसिद्धो
लेहः कफघ्नोऽशिशिराम्बुयुक्तः ॥ ९८ ॥
शिलाह्वयं वा भिषगप्रमत्तः
प्रयोजयेत् कल्पविधानदिष्टम् ।
प्राशं तथाऽऽगस्त्यमथापि लेहं
रसायनं ब्राह्ममथामलक्याः ॥ ९९ ॥

खिन्नस्येत्यादि कफजहृद्रोगचिकित्साधिकारः । शङ्कराणीति कल्याणकराणि । उदुम्बरेत्यादौ उदुम्बरादिकाथे भागत्रये त्रिवृत्त्र्यूषणचूर्णं पादिकं प्रक्षेप्यम् । अशिशिराम्बुयुक्त इति उष्णसलिलानुपानः । कल्पविधानदिष्टमिति रसायने विहितम्;

१ 'पिब्रा पिबेच्चापि सिताजलेन यष्ट्याह्वयं तिक्तकरोहिणीं च' इति पा० ।

१ 'सशर्कराणि' इति पा० । २ 'तथा शटीशुण्ठीवचोपकुल्यारास्नावचापुष्करमूलचूर्णम्' इति पा० । ३ 'तथाऽगस्त्यहरीतकीं च' इति पा० ।

कल्पशब्देन च क्षुद्ररसायनमुच्यते। प्राश इति च्यवनप्राशः। आगस्त्यमिति लेहविशेषणम् ॥ ९६–९९ ॥

त्रिदोषजे लङ्घनमादितः स्या-
दन्नं च सर्वेषु हितं विधेयम्।
हीनातिमध्यत्वमवेक्ष्य चैव
कार्यं त्रयाणामपि कर्म शस्तम् ॥ १०० ॥

त्रिदोषजे आदौ लङ्घनविधानं हृदयस्य कफस्थानतया तद्गते त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोषजे तूल्वणदोषचिकित्सासूत्रमाह–हीनातीत्यादि। हीनत्वमधिकत्वं मध्यमत्वं च दोषाणामवेक्ष्य यत् कर्म शस्तमधिकदोषविजेतृतया तत् कार्यमिति वाक्यार्थः ॥ १०० ॥

भुक्तेऽधिकं जीर्यति शूलमल्पं
जीर्णे स्थितं चेत् सुरदारुकुष्ठम्।
सतिल्वकं द्वे लवणे विडङ्ग-
मुष्णाम्बुना सातिविषं पिबेत् सः ॥१०१॥
जीर्णेऽधिके स्नेहविरेचनं स्यात्
फलैर्विरेच्यो यदि जीर्यति स्यात्।
त्रिष्वेव कालेष्वधिके तु शूले
तीक्ष्णं हितं मूलविरेचनं स्यात् ॥ १०२ ॥
प्रायोऽनिलो रुद्धगतिः प्रकुप्य-
त्यामाशये शोधनमेव तस्मात्।
कार्यं तथा लङ्घनपाचनं च

भुक्तेऽधिकमित्यादिना सान्निपातिकहृद्रोगे प्रायोभाविशूलं लक्षणभेदेन विभजन्निकित्सति। भुक्तेऽधिकमित्यादिना श्लेष्मशूलमुच्यते। स्थितमिति प्रशान्तम्। जीर्णेऽधिकमित्यादिना अनिलशूलं, जीर्यत्यधिकमित्यनेन च पैत्तिकं ब्रूते। फलैरिति द्राक्षाकाश्मर्यादिभिः। त्रिष्वेवेत्यादिना सान्निपातिकशूलमाह। मूलविरेचनं त्रिवृन्मूलादिभिर्विरेचनम्। अत्र विरेचनोपपत्तिमाह–प्रायोऽनिल इत्यादि। अत्र चानिलकोपे यद्यपि वस्तिरुचितः, तथाऽप्यामाशयापेक्षयाऽऽमाशयशोधनं विरेचनमेव देयम्। ॥ १०१ ॥ १०२ ॥—

सर्वं कृमिघ्नं कृमिहृद्गदे च ॥ १०३ ॥
इति हृद्रोगचिकित्सा।

कृमिघ्नमिति व्याधितरूपीये ( वि. अ. ७ ) कृमिहरत्वेनोक्तं विधानम् ॥ १०३ ॥

संधारणाजीर्णरजोतिभाष्य-
क्रोधर्तुवैषम्यशिरोभितापैः।
प्रजागरातिस्वपनाम्बुशीतै-
रवश्यया मैथुनबाष्पधूमैः ॥ १०४ ॥
संस्त्यानदोषे शिरसि प्रवृद्धो
वायुः प्रतिश्यायमुदीरयेत्तु।
घ्राणार्तितोदौ क्षवथुर्जलाभः
स्रावोऽनिलात् सस्वरमूर्धरोगः ॥ १०५ ॥
नासाग्रपाकज्वरवक्त्रशोष-
तृष्णोष्णपीतस्रवणानि पित्तात्।
कासारुचिस्रावघनप्रसेकाः
कफाद्गुरुः स्रोतसि चापि कण्डूः ॥ १०६ ॥
सर्वाणि रूपाणि तु सन्निपातात्
स्युः पीनसे तीव्ररुजेऽतिदुःखे[1]।

क्रमागतशिरोरोगचिकित्सायां वक्तव्यायां शिरोरोगप्रधानत्वाद्भूरिशिरोरोगहेतुत्वाच्च प्रतिश्यायमेव तावदाह। शालाक्येऽप्युक्तं–"भूयिष्ठं व्याधयः सर्वे प्रतिश्यायनिमित्तजाः। तस्माद्रोगः प्रतिश्यायः पूर्वमेवोपदिश्यते" इति। यद्यपि राजयक्ष्मचिकित्सिते प्रतिश्याय उक्त एव, तथाऽपि तत्र यक्ष्मपूर्वरूपतयोक्तः, इह तु स्वतन्त्रः प्रतिश्याय उच्यत इति विशेषः। रजः धूलिः। अतिस्वप्नः दिवास्वप्नः। अवश्यायः तुषारः। संस्त्यानदोषे इति घनीभूतदोषे। घ्राणार्तीत्यादिना वातादिप्रतिश्यायानां चतुर्णां क्रमाल्लक्षणमाह। सस्वरमूर्धरोग इति स्वररोगः स्वरभेदः। कफाद्गुरुरित्यादौ गुरुशब्दः कण्डूविशेषणम्। स्रोतसीति नासास्रोतसि ॥ १०४–१०६ ॥—

सर्वोऽतिवृद्धोऽहितभोजनात्तु
दुष्टप्रतिश्याय उपेक्षितः स्यात् ॥ १०७ ॥
ततस्तु रोगाः क्षवथुश्च नासा-
शोषः प्रतीनाहपरिस्रवौ च।
घ्राणस्य पूतित्वमपीनसश्च
सपाकशोथार्बुदपूयरक्ताः ॥ १०८ ॥
अरूंषि शीर्षश्रवणाक्षिरोग-
खालित्यहर्यर्जुनलोमभावाः।
तृट्श्वासकासज्वररक्तपित्त-
वैस्वर्यशोषाश्च ततो भवन्ति ॥ १०९ ॥

सर्वोऽतिवृद्ध इत्यादिना प्रतिश्यायजान् क्षवथ्वादीनाह। अत्र मुखरोगं ये न पठन्ति ते शिरोरोगग्रहणेनैव मुखरोगस्य ग्रहणमिति मन्यन्ते। एषां तु दुष्टप्रतिश्यायक्षवथ्वादीनां शालाक्यादिषु विस्तरः, अत्र तु पराधिकारत्वात् संक्षेप एव ॥ १०७–१०९ ॥

रोधाभिघातस्रवशोषपाकै-
र्घ्राणं युतं यश्च न वेत्ति गन्धम्।
दुर्गन्धि चास्यं बहुशःप्रकोपि
दुष्टप्रतिश्यायमुदाहरेत्तम् ॥ ११० ॥
संस्पृश्य मर्माण्यनिलस्तु मूर्ध्नि
विष्वक्पथस्थः क्षवथुं करोति।

[1] 'ऽतीव रुजोऽतिदुःखे' इति पा०।

क्रुद्धः स संशोष्य कफं तु नासा-
शृङ्गाटकघ्राणविशोषणं च ॥ १११ ॥
उच्छ्वासमार्गं तु कफः सवातो
रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ।
यो मस्तुलुङ्गाद्धनपीतपक्वः
कफः स्रवेदेष परिस्रवस्तु ॥ ११२ ॥
वैवर्ण्यदौर्गन्ध्यमुपेक्षया तु
स्यात् पूतिनस्यं श्वयथुर्भ्रमश्च ।
आनह्यते यस्य विशुष्यते च
प्रक्लिद्यते धूप्यति चापि नासा ॥ ११३ ॥
न वेत्ति यो गन्धरसांश्च जन्तु-
र्जुष्टं व्यवस्येत्तमपीनसेन ।
तं चानिलश्लेष्मभवं विकारं
ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥ ११४ ॥
सदाहरागः श्वयथुः सपाकः
स्याद् घ्राणपाकोऽपि च रक्तपित्तात् ।
घ्राणाश्रितासृक्प्रभृतीन् प्रदूष्य
कुर्वन्ति नासाश्वयथुं मलाश्च ॥ ११५ ॥
घ्राणे तथोच्छ्वासगतिं निरुध्य
मांसास्रदोषादपि चार्बुदानि ।
घ्राणात् स्रवेद्वा श्रवणान्मुखाद्वा
पित्ताक्तमस्रं त्वपि पूयरक्तम् ॥ ११६ ॥
कुर्यात् सपित्तः पवनस्त्वगादीन्
संदूष्य चारूंषि सपाकवन्ति ।
नासा प्रदीप्तेव नरस्य यस्य
दीप्तं तु तं रोगमुदाहरन्ति ॥ ११७ ॥

इति नासारोगनिदानम् ।

रोधाभिघातेत्यादिना दुष्टप्रतिश्यायादीनामर्जुनलोमपर्यन्तानां क्रमेण लक्षणान्याह । क्रुद्ध इत्यादौ स इति अनिलः । मस्तुलुङ्गादिति मस्तिष्कात् । कुर्यात् सपित्त इत्यादिना अरुंषिकामाह; सा तु शिरोभवा ज्ञेया ॥ ११०-११७ ॥

भृशार्तिशूलं स्फुरतीह वातात्
पित्तात् सदाहार्ति कफाद्गुरु स्यात् ।
सर्वैस्त्रिदोषं क्रिमिभिस्तु कण्डू-
दौर्गन्ध्यतोदार्तियुतं शिरः स्यात् ॥ ११८ ॥

इति शिरोरोगनिदानम् ।

भृशार्तीत्यादिना यद्यपि प्रतिश्यायोत्पन्नत्वेन शिरोरोगाणां लक्षणमुच्यते, तथाऽपि स्वतन्त्रोत्पन्नानामपि शिरोरोगाणामेतदेव लक्षणं ज्ञेयम् । एवं मुखरोगादिलक्षणेष्वपि वाच्यम् । सर्वैस्त्रिदोषमिति वातादिलक्षणैर्मिलितैस्त्रिदोषं स्यादित्यर्थः ॥ ११८ ॥

मुखामये मारुतजे तु शोष-
कार्कश्यरौक्ष्याणि चला रुजश्च ।
कृष्णारुणं निष्पतनं सशीतं
प्रस्रंसनस्पन्दनतोदभेदाः ॥ ११९ ॥
तृष्णाज्वरस्फोटकतालुदाहा
धूमायनं चाप्यवदीर्णता च ।
पित्तात् समूर्च्छा विविधा रुजश्च
वर्णाश्च शुक्लारुणवर्णवर्ज्याः ॥ १२० ॥
कण्डूर्गुरुत्वं सितविज्जलत्वं
स्नेहोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानलता च तन्द्रा
रुजश्च मन्दाः कफवक्त्ररोगे ॥ १२१ ॥
सर्वाणि रूपाणि तु वक्त्ररोगे
भवन्ति यस्मिन् स तु सर्वजः स्यात् ।
संस्थानदूष्याकृतिनामभेदा-
च्चैते चतुःषष्टिविधा भवन्ति ॥ १२२ ॥
शालाक्यतन्त्रेऽभिहितानि तेषां
निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशं तु चतुर्विधस्य
क्रियां प्रवक्ष्यामि मुखामयस्य ॥ १२३ ॥

इति मुखरोगनिदानम् ।

निष्पतनमिति मुखस्रावः । तृष्णेत्यादि पित्तजमुखरोगलक्षणम् । शालाक्ये प्रपञ्चोक्तमुखरोगाणामत्रैव चतुर्विधमुखरोगेऽन्तर्भावं दर्शयन्नाह—संस्थानेत्यादि । संस्थानं स्थानमोष्ठादि, दूष्यं रक्तादि, आकृतिः लिङ्गं, नाम शीतादादि, एषां भेदाद् विकल्पाच्चतुःषष्टिविधा भवन्ति, ते च शालाक्ये एवोन्नेयाः । सुश्रुते पञ्चषष्टिमुखरोगा उक्ताः, तथाऽपीह वैदेहमतानुसारेणादूरान्तरेणेयं चतुःषष्टिः । यथाप्रदेशमिति यथाचिकित्साप्रदेशम् ॥ ११९-१२३ ॥

वातादिभिः शोकभयातिलोभ-
क्रोधैर्मनोघ्नाशनगन्धरूपैः ।
अरोचकाः स्युः परिहृष्टदन्तः
कषायवक्त्रश्च मतोऽनिलेन ॥ १२४ ॥
कट्वम्लमुष्णं विरसं च पूति
पित्तेन विद्याल्लवणं च वक्त्रम् ।
माधुर्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसंबद्धयुतं कफेन ॥ १२५ ॥
अरोचके शोकभयानिलोभ-
क्रोधाद्यहृद्याशनगन्धजे स्यात् ।

१ 'घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत्तम्' इति पा० ।

१ 'तृष्णाज्वरस्फोटकदाहपाकाः' इति पा० । २ 'विबद्धसंस्तम्भयुतं' इति पा० ३ । 'क्रोधाद्यहृद्याशुचिगन्धजे' इति पा० ।

स्वाभाविकं वक्त्रमथारुचिश्च
त्रिदोषजे नैकरसं भवेत्तु ॥ १२६ ॥
इत्यरोचकनिदानम् ।

आस्यरोगान्तर्निविष्टत्वादेवारोचकानाह । यद्यपि राजयक्ष्मचिकित्सितेऽप्यरोचका उक्ताः, तथाऽपि शोषोक्तारोचकेभ्यः पृथगुत्पन्ना एवारोचका अभिधीयन्त इति न पौनरुक्त्यम्। अतिलोभेनात्रारुचिरुच्यते, तत्रातिलोभेन कृतं सतताभ्यासमरुचिकारणं दर्शयति । विवद्धसंवद्ध्युतमिति वन्ध्ययुक्तमित्यर्थः । नैकरसमिति अनेकरसम् ॥ १२४–१२६ ॥

नादोऽतिरुक्कर्णमलस्य शोषः
स्रावस्तनुश्चाश्रवणं च वातात् ।
शोफः सरागो दरणं विदाहः
सपीतपूतिश्रवणं च पित्तात् ॥ १२७ ॥
वैश्रुत्यकण्डूस्थिरशोफशुक्ल-
स्निग्धश्रुतिः श्लेष्मभवेऽल्परुक् च ।
सर्वाणि रूपाणि तु सन्निपातात्
स्रावश्च तत्राधिकदोषवर्णः ॥ १२८ ॥
इति कर्णरोगनिदानम् ।

नादोऽतिरुगित्यादिना कर्णरोगानाह । एते च शालाक्ये यद्यप्यष्टाविंशतिरुक्ताः, तथाऽपीह चतुर्ष्वेव कर्णरोगेषु शेषाणामप्यवरोधो व्याख्येयः, शेषाणामपि वातादिजन्यत्वात् ॥ १२७ ॥ १२८ ॥

अल्पस्तु रागोऽनुपदेहवांश्च
सतोदभेदोऽनिलजाक्षिरोगे ।
पित्तात् सदाहोऽतिरुजः सरागः
पीतोपदेहः सुभृशोष्णवाही ॥ १२९ ॥
शुक्लोपदेहं बहुपिच्छिलाश्रु
नेत्रं कफात् स्याद्गुरुता सकण्डुः ।
सर्वाणि रूपाणि तु सन्निपाता-
न्नेत्रामयाः षण्णवतिस्तु भेदात् ॥ १३० ॥
तेषामभिव्यक्तिरभिप्रदिष्टा
शालाक्यतन्त्रेषु चिकित्सितं च ।
पराधिकारे तु न विस्तरोक्तिः
शस्तेति तेनात्र न नः प्रयासः ॥ १३१ ॥
इति नेत्ररोगनिदानम् ।

अल्पस्तु राग इत्यादिना चत्वारोऽक्षिरोगा अभिधीयन्ते । उपदेहः दूषिका । सुभृशोष्णवाहीति अत्यर्थोष्णस्रावी । अनुक्तनेत्रामयानां संख्यामाह—नेत्रामयाः षण्णवतिरिति । नेत्रामयेषु आचार्याणां विप्रतिपत्तिः; नेत्ररोगाणां षट्सप्ततिं विदेहः प्राह, करालस्तु षण्णवतिम्, अशीतिं सात्यकिः प्राह । तेषु करालमतेनैवैतदभिधानम्, उक्तं च तत्र—"विंशतिः सप्त वर्त्मस्था, नव संधौ प्रकीर्तिताः । त्रयोदश तु शुक्लस्थाः, षड्रोगाः कृष्णभागजाः ॥ विंशतिः पञ्च दृष्टिस्थाः, षोडशैव च सर्वगाः" इति । एतेषां ज्ञानोपायमाह—तेषामित्यादि । अभिव्यक्तिरिति लक्षणम् । नेत्ररोगप्रपञ्चानभिधाने हेतुमाह—पराधिकारेष्वित्यादि ॥ १२९–१३१ ॥

तेजोऽनिलाद्यैः सह केशभूमिं
दग्ध्वाऽऽशु कुर्यात् खलतिं नरस्य ।
किंचित्तु दग्ध्वा पलितानि कुर्या-
द्धरिप्रभत्वं च शिरोरुहाणाम् ॥ १३२ ॥
इत्यूर्ध्वजत्रूत्थगदैकदेश-
स्तन्त्रे निबद्धोऽयमशून्यतार्थम् ।
अतः परं भेषजसंग्रहं तु
निबोध संक्षेपत उच्यमानम् ॥ १३३ ॥
इति खालित्यरोगनिदानम् ।

तेज इत्यादिना खालित्यलक्षणमाह । तेजःशब्देन देहोष्माऽभिमतः; स वाताद्यैर्युक्तः खालित्यादि करोतीति योजनीयम् । ये तु 'तेजः सवातं' इति पठन्ति, ते तेजःशब्देन पित्तमपि वर्णयन्ति । हरिप्रभत्वमिति कपिलत्वम् । शिरोरुहाणामिति केशानाम् । अशून्यतार्थमिति अस्य कायचिकित्साशास्त्रस्य शालाक्याभिधेयरोगैरशून्यतार्थम् । भेषजसंग्रहमिति भेषजाभिधायकं ग्रन्थम् ॥ १३२ ॥ १३३ ॥

वातात् सकासवैस्वर्ये सक्षारं पीनसे घृतम् ।
पिबेद्रसं पयश्चोष्णं स्नैहिकं धूममेव वा ॥ १३४ ॥
शतावरी त्वग्बला मूलं स्योनाकैरण्डबिल्वजम् ।
सारग्वधं पिबेद्वर्तिं मधूच्छिष्टवसाघृतैः ॥ १३५ ॥
अथवा सघृतान् सक्तून् कृत्वा मल्लकसंपुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १३६ ॥
शङ्खमूर्धललाटार्तौ पाणिस्वेदोपनाहनम् ।
स्वभ्यक्ते क्षवथुस्रावरोधादौ संकरादयः ॥ १३७ ॥
श्रेयाश्च रोहिषाजाजीवचातर्कारिचोरकाः ।
त्वक्पत्रमरिचैलानां चूर्णा वा सोपकुञ्चिकाः ॥१३८॥
स्रोतःशृङ्गाटनासाक्षिशोषे तैलं च नावनम् ।
प्रभाव्याजे तिलान् क्षीरे तेन पिष्टांस्तदूष्मणा १३९
मन्दस्विन्नान् सयष्ट्याह्वचूर्णांस्तेनैव पीडयेत् ।
दशमूलस्य निष्क्वाथे रास्नामधुककल्कवत् ॥ १४० ॥
सिद्धं ससैन्धवं तैलं दशकृत्वोऽणु तत् स्मृतम् ।
स्निग्धस्यास्थापनैर्दोषं निर्हरेद्वातपीनसे ॥ १४१ ॥

१ 'अल्पाश्रुरागानुपदेहताश्च प्रस्पन्दतोदातिरुजश्च वातात्' इति पा० ।

१ 'प्रोक्तश्चिकित्सां तु परं निबोध । विस्तारतः संग्रहतश्च सम्यग्यथाक्रमं सौम्य मयोच्यमानाम्' इति पा० ।

स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां रसैर्हितम्।
उष्णाम्बुना स्नानपाने निवातोष्णप्रतिश्रयः ॥१४२॥
चिन्ताव्यायामवाक्चेष्टाव्यवायविरतो भवेत्।
वातजे पीनसे धीमानिच्छन्नेवात्मनो हितम् ॥१४३॥

अथैतेषां क्रमाच्चिकित्साऽभिधीयते । प्रतिश्याये धूमस्य निषेधो वैरेचनिकधूमाभिप्रायेण कृतः, तेनेह स्नैहिकधूमाभिधानं न विरोधि। पाणिस्वेदं च उपनाहनं चेति पाणिस्वेदोपनाहनम्। क्षवथुस्रावरोधादावित्यत्र रोधशब्देन प्रतीनाहोऽभिधीयते। संकरादयः संकरप्रस्तरादयः स्वेदाध्यायोक्ताः स्वेदाः। तर्कारी जयन्ती । स्रोतःशृङ्गाटनासाक्षिशोषे इति घ्राणश्रोत्राक्षितर्पणीनां सिराणां सन्निपातः शृङ्गाटकः। नावनं तैलमुक्तमाह—प्रभाव्याज्जे इत्यादि । तद्वष्मणेति अजाक्षीरोष्मणा पिष्टस्वेदने मन्दोत्स्विन्नात्। सयष्ट्याह्वचूर्णानिति यष्ट्याह्वचूर्णस्याप्रधानत्वात् तिलचूर्णात् पादिकत्वम्। तेनैव पीडयेदिति अजाक्षीरेण। एवं निष्पन्नतैलस्य दशमूलनिष्क्वाथादिभिर्दशकृत्वः पाकात् सिद्धं तैलमणुतैलं स्यात्; अणुता चास्य अणुस्रोतोनुसारित्वात्, तच्चेह भावनया पाकभूयस्त्वेन निष्पीडनविशेषेण च क्रियते। उक्तं हि विदेहे—"भावनात् पाचनाद्वाऽपि तैलानामणुतैलता। मर्दनादपि सर्वेषां देहानामणुतैलता" इति। सिद्धाम्लेत्यादिना आहाराचारावाह। निवातोष्णप्रतिश्रय इति निवातोष्णगृहस्थायी ॥ १३४–१४३ ॥

पैत्ते सर्पिः पिबेत् सिद्धं शृङ्गवेरशृतं पयः।
पाचनार्थं पिबेत् पक्वे कार्यं मूर्धविरेचनम् ॥ १४४ ॥
पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः।
दन्त्या च साधितं तैलं नस्यं स्यात् पक्वपीनसे १४५
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च।
पाकदाहाढ्यरूक्षेषु शीता लेपाः ससेचनाः ॥१४६॥
श्रेयर्नस्योपचाराश्च कषायाः स्वादुशीतलाः।
मन्दपित्ते प्रतिश्याये स्निग्धैः कुर्याद्विरेचनम् ॥१४७॥
घृतं क्षीरं यवाः शालिर्गोधूमा जाङ्गला रसाः।
शीताम्लास्तिक्तशाकानि यूषा मुद्गादिभिर्हिताः १४८

पैत्ते सर्पिः पिबेत् सिद्धमित्यत्र शृङ्गवेरसिद्धमेव सर्पिर्देयम्। रक्तपित्तघ्ना इति रक्तपित्तचिकित्सोक्ताः। मन्दपित्ते इति ईषत्पित्ते ॥ १४४–१४८ ॥

गौरवारोचकेष्वादौ लङ्घनं कफपीनसे।
स्वेदाः सेकाश्च पाकार्थं लिप्ते शिरसि सर्पिषा १४९
लशुनं मुद्गचूर्णेन व्योषक्षारघृतैर्युतम्।
देयं कफघ्नवमनमुत्क्लिष्टश्लेष्मणे हितम् ॥ १५० ॥

अपीनसे पूतिनस्ये घ्राणस्रावे सकण्डुके।
धूमः शस्तोऽवपीडश्च कटुभिः कफपीनसे ॥ १५१ ॥
मनःशिला वचा व्योषं विडङ्गं हिङ्गु गुग्गुलुः।
चूर्णो श्रेयः प्रधमनं कटुभिश्च फलैस्तथा ॥ १५२ ॥
भार्गीमदनतर्कारीसुरसादिविपाचिते।
मूत्रे लाक्षा वचा लम्बा विडङ्गं कुष्ठपिप्पली ॥१५३॥
कृत्वा कल्कं करञ्जं च तैलं तैः सार्षपं पचेत्।
पाकान्मुक्ते घने नस्यमेतन्मेदोनिभे कफे ॥ १५४ ॥
स्निग्धस्य व्याहते वेगे च्छर्दनं कफपीनसे।
वमनीयशृतक्षीरतिलमाषयवागुना ॥ १५५ ॥
वार्ताककुलकव्योषकुलत्थाढकिमुद्गजाः।
यूषाः कफघ्नमन्नं च शस्तमुष्णाम्बुसेच(व)नम् १५६
सर्वजित् पीनसे दुष्टे कार्यं शोफे च शोफजित्।
क्षारोऽर्बुदाधिमांसेषु क्रिया शेषेष्ववेक्ष्य च ॥१५७॥

इति पीनसनासारोगचिकित्सा।

देयं कफघ्नवमनमिति कफघ्नद्रव्यकृतं वमनं देयमित्यर्थः। कटुभिः फलैरिति मरिचपिप्पल्यादिभिः । पाकान्मुक्ते इति पाकवसानाच्युते। व्याहते वेग इति पीनसस्य वेगे मन्दीभूते। शोफे चेति नासाशोफे ॥ १४९–१५७ ॥

वातिके शिरसो रोगे स्नेहान् स्वेदान् सनावनान्।
पानान्नमुपनाहांश्च कुर्याद्वातामयापहान् ॥ १५८ ॥
तैलभृष्टैरगुर्वाद्यैः सुखोष्णैरुपनाहनम्।
जीवनीयैः सुमनसा मत्स्यैर्मांसैश्च शस्यते ॥ १५९ ॥
रास्नास्थिरादिभिः सिद्धं सक्षीरं नस्यमर्तिनुत्।
तैलं रास्नाद्विकाकोलीशर्कराभिरथापि वा ॥ १६० ॥
बलामधूकयष्ट्याह्वविदारीचन्दनोत्पलैः।
जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः ॥ १६१ ॥
प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्धतुलारसे।
नस्यं सर्वोर्ध्वजत्रुत्थवातपित्तामयापहम् ॥ १६२ ॥
दशमूलबलारास्नात्रिफलामधुकैः सह।
मयूरं पक्षपित्तान्त्रशकृत्तुण्डाङ्घ्रिवर्जितम् ॥ १६३ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् १६४
कर्णाक्षिनासिकाजिह्वाताल्वास्यगलरोगनुत्।
मायूरमितिविख्यातमूर्ध्वजत्रुगदापहम् ॥ १६५ ॥

इति मायूरघृतम्।

दशमूलेत्यादौ दशमूलादिभिः प्रत्येकं त्रिपलमानैः समं मयूरं पक्षादिवर्जितं जलद्रोणे एव पचेत्। जलद्रोणो ह्यत्र क्वाथार्थं पादावशेषः सन् घृतप्रस्थाच्चतुर्गुणो भवति। किंच दशमूलादीनां चत्वारिंशत्पलेन मयूरेणैकेन समसद्भूरान्तरं चतुःषष्टिपलं

१ 'पिबेत्तिक्तं' इति पा०। २ 'पाकदाहाभरुक्षेषु' इति पा०। ३ 'सेकाः प्रलेपनाः' इति पा० । ४ 'स्नेहनस्योपचाराश्च' इति पा०।

१ 'समममयूरं व्यक्तिपरिम्यक्तिपरिग्रहाद् पक्षादिवर्जितं' इति पा०।

क्काथ्यं द्रोणमाने जले देयम्। किंवा दशमूलादीनां मयूरेण च मिलित्वा यावत् क्काथ्यं भवति तच्चतुर्गुणं जलमुत्सर्गपरिभाषयैव देयम्। मधुरैरिति जीवनीयगणोक्तैर्दशभिः, जीवनीयानि हि मधुरत्वप्रकर्षादिह मधुरशब्देनोच्यन्ते ॥ १५८-१६५ ॥

एतेनैव कषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ॥ १६६ ॥
जीवन्तीत्रिफलामेदामृद्वीकर्धिपरूपकैः।
समङ्गाचविकाभार्गीकाश्मरीसुरदारुभिः ॥ १६७ ॥
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः।
मृणालविसशालूकश्रृङ्गीजीवकपद्मकैः ॥ १६८ ॥
शतावरीविदारीक्षुबृहतीसारिवायुगैः।
मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककसेरुकैः ॥ १६९ ॥
रास्नास्थिरातामलकीसूक्ष्मैलाशटिपौष्करैः।
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥ १७० ॥
खर्जूराक्षोटवातामसुञ्जाताभिपुकैरपि।
द्रव्यैरेभिर्यथालाभं पूर्वकल्पेन साधितम् ॥ १७१ ॥
नस्ये पाने तथाऽभ्यङ्गे वस्तौ चैव प्रयोजयेत्।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥ १७२ ॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथाऽर्दिते।
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥ १७३ ॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते।
महामायूरमित्येतद्घृतमात्रेयपूजितम् ॥ १७४ ॥

इति महामायूरघृतम्।

आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्पेनानेन विपचेत् सर्पिरूर्ध्वगदापहम् ॥ १७५ ॥

एतेनैवेति दशमूलादिमयूरक्काथेन यथोक्तविधानकृतेन। द्वितीयखर्जूरशब्देन खर्जूरफलं गृह्यते। अक्षोटवातामादीनि औत्तरापथिकानि। पूर्वयोगोक्तक्काथविधानं यद्यप्येतेनैव कषायेणेत्यादिना सिद्धं, तथाऽपि पुनः पूर्वकल्पेनेति वचनेन यथालाभमितिपदेन च यथालाभं करणीयत्वं कल्क एव, न क्काथे इति दर्शयति। अत्र प्रयोगभेदे जतूकर्णः—"तत्क्काथोचितशिखिनं दशमूलश्रेयसीबलामधुकैस्त्रिपलैः सह सर्पिषा जीवनीयकर्षैः पचेत् पयसा क्काथेऽस्मिन्नेव चतुष्के प्रस्थं घृतं यथालाभं जीवनबृंहणवातामाक्षोटत्रिफलापूगमधुकैः खर्जूरतालमस्तकत्वगेलापौष्करश्वदंष्ट्रातामलकीविसभार्गीकसेरुशृङ्गाटकमृणालरास्नास्थिरासमङ्गाश्लक्ष्णजडाभिः सह तु मायूरं चतुष्प्रयोगादूर्ध्वजत्रुगदेष्वमृतवत्" इति। अत्र मयूरस्थाने मूषकादीन् दर्शयन्नाह—आखुभिरित्यादिना। आखुना मयूरापेक्षया स्वल्पमानेनाप्यत्रैकेनापि साधनं कर्तव्यमित्याहुः ॥ १६६-१७५ ॥

पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नं चापि पित्तनुत् १७६
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम् ॥ १७७ ॥
त्वक्पत्रशर्कराकल्कः सुपिष्टस्तण्डुलाम्बुना।
कार्योऽवपीडः सर्पिश्च नस्यं तस्यातु पैत्तिके ॥ १७८ ॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम्।
नावनं शर्कराद्राक्षामधूकैर्वाऽपि पित्तजे ॥ १७९ ॥

शृतैर्वेत्यत्र क्षीरशृतैः। सर्पिश्च नस्यमित्यत्र अवपीडस्य पश्चात् सर्पिषा नस्यं देयम् ॥ १७६-१७९ ॥

कफजे स्वेदितं धूमनस्यप्रधमनादिभिः।
शुद्धं प्रलेपपानान्नैः कफघ्नैः समुपाचरेत् ॥ १८० ॥
पुराणसर्पिषः पानैस्तीक्ष्णैर्वस्तिभिरेव च।
कफानिलोत्थिते दाहः शेषयो रक्तमोक्षणम् ॥ १८१ ॥
एरण्डनलदक्षौमगुग्गुल्वगुरुचन्दनैः।
धूमवर्तिं पिवेद्गन्धैरकुष्ठतगरैस्तथा ॥ १८२ ॥
सन्निपातभवे कार्या सन्निपातहिता क्रिया।
क्रिमिजे चैव कर्तव्यं तीक्ष्णं मूर्धविरेचनम् ॥ १८३ ॥
त्वग्दन्तीव्याघ्रकरजविडङ्गनवमालिकाः।
अपामार्गफलं बीजं नक्तमालशिरीषयोः।
क्षवकोऽश्मन्तको विल्वं हरिद्रा हिङ्गु यूथिका १८४
फणिज्झकश्च तैस्तैलमविमूत्रे चतुर्गुणे।
सिद्धं स्यान्नावनं चूर्णं चैषां प्रधमनं हितम् ॥ १८५ ॥
फलं शिग्रुकरञ्जाभ्यां सव्योषं चावपीडकः।
कषायः स्वरसः क्षारश्चूर्णं कल्कोऽवपीडकः ॥ १८६ ॥
शुक्ततिक्तकटुक्षौद्रकषायैः कवलग्रहः।

इति शिरोरोगचिकित्सा।

कफानिलोद्भवे दाह इत्यत्र कफोद्भवे अनिलोद्भवे च सुश्रुतवचनाल्ललाटशङ्खदेशे दाहः कर्तव्यः। उक्तं हि सुश्रुते—"शिरोरोगाधिमन्थप्रभृतिषु भ्रूललाटशङ्खप्रदेशेषु दहेत्" ( सु. सू. अ. १२ ) इति। गन्धैरकुष्ठतगरैरिति अगुर्वादिगन्धैः, कुष्ठतगरवर्जनं चात्र मस्तुलुङ्गस्राववर्जनार्थम्। उक्तं च शालाक्ये—"नतकुष्ठे स्रावयतो धूमवर्तिप्रयोजिते। मस्तुलुङ्गं प्रकर्षेण तस्मात्ते नैव योजयेत्" इति। व्याघ्रकरजः नखी। क्षवथुः छिक्काकारकः ॥ १८०-१८६ ॥—

धूमः प्रधमनं शुद्धिरधश्छर्दनलङ्घनम् ॥ १८७ ॥
भोज्यं च मुखरोगेषु यथास्वं दोषनुद्धितम्।
पिप्पल्यगुरुदार्वीत्वग्यवक्षाररसाञ्जनम् ॥ १८८ ॥
पाठां तेजोवतीं पथ्यां समभागं विचूर्णयेत्।

१ "खर्जूरमधुकैश्च सजीरकैः" इति पा०। २ "मधूकाक्षोट" इति पा०।

मुखरोगेषु सर्वेषु सक्षौद्रं तद्विधारयेत् ॥ १८९ ॥
सीधुमाधवमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः ।
तेजोह्वामभयामेलां समङ्गां कटुकां घनम् ॥ १९० ॥
पाठां ज्योतिष्मतीं लोध्रं दार्वीं कुष्ठं च चूर्णयेत् ।
दन्तानां घर्षणं रक्तस्रावकण्डूरुजापहम् ॥ १९१ ॥
पञ्चकोलकतालीसपत्रैलामरिचत्वचः ।
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ॥ १९२ ॥
गुडे पुराणे द्विगुणे क्वथिते गुटिकाः कृताः ।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥ १९३ ॥
कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ।
गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम् ॥ १९४ ॥
तेजोह्वा त्रिफला लोध्रं चित्रकश्चेति चूर्णितम् ।
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम् ॥ १९५ ॥
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ।

इति कालकचूर्णम् ।

मनःशिला यवक्षारो हरितालं ससैन्धवम् ॥१९६॥
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ।
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ॥ १९७ ॥
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्तितम् ।

इति पीतकचूर्णम् ।

मृद्वीका कटुका व्योषं दार्वीत्वक् त्रिफला घनम् १९८
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
पाठा रसाञ्जनं मूर्वा तेजोह्वेति च चूर्णितम् ॥१९९॥
क्षौद्रयुक्तं विधातव्यं गलरोगे भिषग्जितम् ।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ॥२००॥
कटुकातिविषापाठादार्वीमुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥ २०१ ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥ २०२ ॥
तालुशोषे त्वतृष्णस्य[1] सर्पिरौत्तरभक्तिकम् ।
नावनं मधुराः स्निग्धाः शीताश्चैव रसा हिताः २०३
मुखपाके सिराकर्म शिरःकायविरेचनम् ।
मूत्रतैलघृतक्षौद्रक्षीरैश्च कवलग्रहाः ॥ २०४ ॥
सक्षौद्रास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
कषायतिक्तकाः शीताः क्वाथाश्च मुखधावनाः २०५

शुक्तेत्यादि मुखरोगचिकित्सितम् । शुद्धिरध इति विरेचनम् । दार्वीत्वगिति दार्व्यास्त्वग् । रुजापहमिति रोगपीडाहरम् । पञ्चकोलेत्यादौ चूर्णसमुदायाद्गुडो द्विगुणः । कर्कन्धूमात्रा इति अष्टमाषकमानाः । केचिद् रोध्रस्थाने लोहं पठन्ति; उक्तं हि शालाक्ये—"पाठा रसाञ्जनं व्योषं तेजोह्वा त्रिफलाऽग्निकः । गृहधूमो यवक्षारो दार्व्यं चूर्णं तु कालकम्" इति । वातपित्तकफापहा इति प्रत्येकमेव कालादयस्त्रयो योगास्त्रिदोषहराः । रसक्रियेति घनीभूतरसस्य संज्ञा । तालुशोषे इत्यादौ अतृष्णस्येतिपदेन तृष्णायुक्तस्य तालुशोषे औत्तरभक्तिकमपि सर्पिःपानं निषेधयति । तालुशोषे च "तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिणः" ( सू. अ. १३ ) इत्यादिना यद्यपि स्नेहपानं निषिद्धं, तथाऽपीह औत्तरभक्तिकं सर्पिर्विशेषविधानात् कर्तव्यमेव । सिराकर्मेति सिराव्यधनं; तच्च सुश्रुतवचनात् तालुनि जिह्वायां च कर्तव्यम् ॥ १८७–२०५ ॥

तुलां खदिरसारस्य द्विगुणामरिमेदसः ।
प्रक्षाल्य जर्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् ॥२०६॥
द्रोणशेषं कषायं तं पूत्वा भूयः पचेच्छनैः ।
ततस्तस्मिन् घनीभूते चूर्णीकृत्याक्षभागिकम् ॥२०७॥
चन्दनं पद्मकोशीरं मञ्जिष्ठा धातकी घनम् ।
प्रपौण्डरीकं यष्ट्याह्वत्वगेलापद्मकेशरम् ॥ २०८ ॥
लाक्षां रसाञ्जनं मांसीत्रिफलालोध्रवालकम् ।
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम् २०९
यवासागुरुपत्तङ्गगैरिकाञ्जनमावपेत् ।
लवङ्गनखकक्कोलजातिकोशान् पलोन्मितान् ॥२१०॥
कर्पूरकुडवं चापि क्षिपेच्छीतेऽवतारिते ।
ततस्तु गुटिकाः कार्याः शुष्काश्चास्येन धारयेत् २११
तैलं चानेन कल्केन कषायेण च साधयेत् ।
दन्तानां चलनभ्रंशशौशिर्यक्रिमिरोगनुत् ॥ २१२ ॥
मुखपाकास्यदौर्गन्ध्यजाड्यारोचकनाशनम् ।
स्रावोपलेपपैच्छिल्यवैस्वर्यगलशोषनुत् ॥ २१३ ॥
दन्तास्यगलरोगेषु सर्वेष्वेतत् परायणम् ।
खदिरादिगुटीकेयं तैलं च खदिरादिकम् ॥ २१४ ॥

इति खदिरादिगुटिका तैलं च ।

तुलामित्यादिना खदिरादिगुटिकामाह । द्विगुणामरिमेदस इति विद्खदिरस्य तु तुले द्वे एव । पत्तङ्गं रक्तचन्दनम् । लवङ्गादीनामत्र पलमानत्वम् । दन्तास्यगलरोगाः शालाक्योक्ता ज्ञेयाः । परायणमिति परमयनं श्रेष्ठं भेषजमिति यावत् । इति मुखरोगचिकित्सा ॥ २०६–२१४ ॥

अरुचौ कवलग्राहा धूमाः समुखधावनाः ।
मनोज्ञमन्नपानं च हर्षणाश्वासनानि च ॥ २१५ ॥
कुष्ठसौवर्चलाजाजीशर्करामरिचं विडम् ।
धात्र्येलापद्मकोशीरपिप्पल्युत्पलचन्दनम् ॥ २१६ ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाडिमनिर्यासश्चाजाजीशर्करायुतः ॥ २१७ ॥

[1] 'सतृष्णस' इति, 'सुतृप्तस्य' इति च पा० ।

सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान् ॥२१८॥
कारवीमरिचाजाजीद्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलं गुडः क्षौद्रं सर्वारोचकनाशनम् ॥ २१९ ॥
वस्तिं समीरणे, पित्ते विरेकं, वमनं कफे ।
कुर्याद्धृद्यानुकूलानि हर्षणं च मनोघ्नजे ॥ २२० ॥
इत्यरोचकचिकित्सा ।

अरोचकचिकित्सामाह—अरुचावित्यादि । कुष्ठेत्यादिना अर्धश्लोकोक्ताश्चत्वारो योगा वातपित्तकफसन्निपातजेष्वरोचकेषु क्रमाज्ज्ञेयाः ॥ २१५–२२० ॥

कर्णशूले तु वातघ्नी हिता पीनसवत् क्रिया ।
प्रदेहाः पूरणं नस्यं पाकस्रावे व्रणक्रियाः ॥ २२१ ॥
भोज्यानि च यथादोषं कुर्यात् स्नेहांश्च पूरणान् ।
हिङ्गुतुम्बरुशुण्ठीभिस्तैलं तु सार्षपं पचेत् ॥ २२२ ॥
एतद्धि पूरणं श्रेष्ठं कर्णशूलनिवारणम् ।
देवदारुवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ २२३ ॥
तैलं सिद्धं वस्तमूत्रे कर्णशूलनिवारणम् ।
वराटकान् समाहृत्य दहेन्मृद्भाजने नवे ॥ २२४ ॥
तद्भस श्च्योतयेत्तेन गन्धतैलं विपाचयेत् ।
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत् २२५
शुष्कमूलकशुण्ठानां क्षारो हिङ्गु महौषधम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥ २२६ ॥
सौवर्चलयवक्षारस्वर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिर्विडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ २२७ ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च ।
सर्वैरेतैर्यथोद्दिष्टैः क्षारतैलं विपाचयेत् ॥ २२८ ॥
बाधिर्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
क्रिमयः कर्णशूलं च पूरणादस्य नश्यति ॥ २२९ ॥
मुखकर्णाक्षिरोगेषु यथोक्तं पीनसे विधिम् ।
कुर्याद्भिषक् समीक्ष्यादौ दोषकालबलाबलम् २३०
इति कर्णरोगचिकित्सा ।

वराटकानित्यादौ तद्भस्मेति वराटकदाहभस्म । श्च्योतयेत् गालयेत् । गन्धतैलमिति सुगन्धद्रव्यकल्कयुक्तं तैलं, किंवा गन्धद्रव्याधिवासितं तिलोद्भवं तैलम् । शुष्कमूलकेत्यादिके क्षारतैले मधुशुक्तं चतुर्गुणमिति मधुप्रधानं शुक्तं चतुर्गुणम् । शुक्तं च "यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रनागरम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इति । मातुलुङ्गकदलीरसौ तैलसमौ । अन्ये तु मधुशुक्तावुभावपि दापयन्ति; तत्र मधु तैलसमं, शुक्तं तु चतुर्गुणमिति वदन्ति; तच्चातिहृदयङ्गमं, यतो जतूकर्णे मधु न पठ्यत एव, मधुनः शुक्तग्रहणेनैव गृहीतत्वात् । उक्तं च—"मूलकभस्मशताह्वाद्विक्षारवचाचतुर्लवणकुष्ठदारुरसाञ्जननागरशोभाञ्जनहिङ्गुघनभूर्जैर्मातुलुङ्गकदलीरसैश्चतुर्गुणशुक्तैस्तैलं विपक्वं श्रुतिनादबाधिर्यशूलजन्तुघ्नम्" इति ॥ २२१–२३० ॥

उत्पन्नमात्रे तरुणे नेत्ररोगे विडालकः ।
कार्यो दाहोपदेहाश्रुशोफरागनिवारणः ॥ २३१ ॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया ।
निघृष्टं वातिके तद्वन्मधुसैन्धवगैरिकम् ॥ २३२ ॥
तथा शावरकं लोध्रं घृतभृष्टं विडालकः ।
तद्वत् कार्यो हरीतक्या घृतभृष्टो रुजापहः ॥ २३३ ॥
पैत्तिके चन्दनानन्तामञ्जिष्ठाभिर्विडालकः ।
कार्यः पद्मकयष्ट्याह्वमांसीकालीयकैस्तथा ॥ २३४ ॥
गैरिकं सैन्धवं मुस्तं रोचना च रसक्रिया ।
कफे कार्या तथा क्षौद्रं प्रियङ्गुः समनःशिला ॥२३५॥
सन्निपाते तु सर्वैः स्याद्बहिरक्ष्णोः प्रलेपनम् ।
पक्ष्माण्यस्पृश्यता कार्यं संपक्वे त्वञ्जनं त्र्यहात् २३६
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ।
कोष्णः सैरण्डतर्कारीबृहतीमधुशिग्रुभिः ॥ २३७ ॥
पृथ्वीकादार्विमञ्जिष्ठालाक्षाद्विमधुकोत्पलैः ।
क्वाथः सशर्करः शीतः पूरणं रक्तपित्तनुत् ॥ २३८ ॥
नागरत्रिफलामुस्तनिम्बवासारसः कफे ।
कोष्णमाश्च्योतनं मिश्रैरोषधैः सान्निपातके ॥२३९॥
बृहत्यैरण्डमूलत्वक् शिग्रोः पुष्पं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्तिर्वाताक्षिरोगनुत् ॥ २४० ॥
सुमनःकोरकाः शङ्खस्त्रिफला मधुकं बला ।
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥२४१॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत्॥२४२॥
अमृताह्वा बिसं बिल्वं पटोलं छागलं शकृत् ।
प्रपौण्डरीकं यष्ट्याह्वं दार्वी कालानुसारिवा ॥२४३॥
एषामष्टपलान् भागान् सुधौताञ्जर्जरीकृतान् ।
तोये पक्त्वा रसे पूते भूयः पक्वे रसे घने ॥ २४४ ॥
कर्षं च श्वेतमरिचाज्जातीपुष्पान्नवात् पलम् ।
चूर्णं क्षिप्त्वा कृता वर्तिः सर्वघ्नी दृक्प्रसादनी २४५
शङ्खप्रवालवैदूर्यलौहताम्रप्लवास्थिभिः ।
स्रोतोजश्वेतमरिचैर्वर्तिः सर्वाक्षिरोगनुत् ॥ २४६ ॥

१ 'स्रावयेत्' इति पा० । २ 'बालमूलकशुण्ठानां' इति पा० । ३ 'तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्' इति पा० । ४ 'पूरणादस्य तैलस्य क्रिमयः कर्णमाश्रिताः । क्षिप्रं प्रणाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ॥ क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्' इति पा० ।

१ 'रोचनामुस्तलवणगैरिकैश्च' इति पा० । २ 'प्रक्षाल्य स्पृशता कार्यं सम्यङ्नाञ्जनं त्र्यहात्' इति पा० । ३ '०निम्बवासालोध्ररसः कफे' इति पा० । ४ सर्वघ्नीति त्रिदोषघ्नी । 'दोषघ्नी' इति पा० ।

शाणार्धं मरिचाद्द्वौ च पिप्पल्यर्णवफेनयोः।
शाणार्धं सैन्धवाच्छाणा नव सौवीरकाञ्जनात् २४७
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम्।
कण्डूकाचकफार्तानां मलानां च विशोधनम्॥।२४८
वस्तमूत्रे त्र्यहं स्थाप्यमेलाचूर्णं सुभावितम्।
चूर्णाञ्जनं हि तैमिर्यक्रिमिपिल्लमलापहम्॥ २४९॥
सौवीरमञ्जनं तुत्थं ताप्यो धातुर्मनःशिला।
चक्षुष्या मधुकं लोहा मणयः पौष्पमञ्जनम्॥२५०॥
सैन्धवं शौकरी दंष्ट्रा कतकं चाञ्जनं शुभम्।
तिमिरादिषु चूर्णं वा वर्तिर्वैयमनुत्तमा॥ २५१॥
कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला॥२५२॥
कुक्कुटाण्डकपालानि वर्तिरेषा व्यपोहति।
तिमिरं पटलं काचं मलं चाशु सुखावती॥ २५३॥
इति सुखावती वर्तिः।
त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसो रजः।
नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः॥२५४॥
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्तयेत्॥२५५॥
एषा दृष्टिप्रदा वर्तिरन्धस्याभिन्नचक्षुषः।
इति दृष्टिप्रदा वर्तिः।
वदने कृष्णसर्पस्य निहितं मासमञ्जनम्॥ २५६॥
ततस्तस्मात् समुद्धृत्य सुशुष्कं चूर्णयेद्बुधः।
सुमनःकोरकैः शुष्कैरर्धांशैः सैन्धवेन च॥ २५७॥
एतन्नेत्राञ्जनं कार्यं तिमिरघ्नमनुत्तमम्।
पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम् २५८
जीर्णं घृतं च सर्वाक्षिरोगघ्नी स्याद्रसक्रिया।
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया॥२५९॥
शस्ता सर्वाक्षिरोगेषु काचार्बुदमलेषु च।
धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया॥ २६०॥
पित्तरक्ताक्षिरोगघ्नी तैमिर्यपटलापहा।
धात्रीसैन्धवपिप्पल्यः स्युरल्पमरिचाः समाः २६१
क्षौद्रयुक्ता निहन्त्यान्ध्यं पटलं च रसक्रिया।
इति नेत्ररोगचिकित्सा।

उत्पन्नमात्रे इत्यादिना नेत्ररोगचिकित्सितमाह। विडालकः नेत्रबहिर्लेपः शालाक्ये उच्यते। निघृष्टमित्यादौ तद्वदिति रसक्रियेत्यर्थः। हरीतकी तद्वदिति हरीतकीघृतयुक्तो विडालकः। सन्निपाते तु सर्वैरिति प्रत्येकवाताद्युक्तविडालकद्रव्यैः प्रलेपनं कार्यमित्यर्थः। नेत्राञ्जनं त्र्यहादित्यत्र प्रायोऽक्षिरोगाणां त्र्यहेण पाकात् त्र्यहादित्युक्तम्। पाकलक्षणं तन्त्रान्तरे—"प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता। मन्दवेदनता कण्डूः पक्वाक्षिगदलक्षणम्" इति। आश्च्योतनम् अक्षिसेकः। सुमनःकोरकाः जातीमुकुलकाः। श्वेतमरिचं शोभाञ्जनबीजम्। प्लवः पक्षिविशेषः प्रसेवकगलः। द्वौ च पिप्पल्यर्णवफेनयोरिति शाणाविसर्थः। चित्रायामिति चित्रानक्षत्रे। ताप्यो धातुः तापीनदीभवो माक्षिकधातुः। चक्षुष्या वनकुलत्थिका। पौष्पमञ्जनं पुष्पाञ्जनम्। अभिन्नचक्षुष इति अभिन्नतारकस्य। कृष्णसर्पस्येति मृतकृष्णसर्पस्य॥ २३१–२६१॥—

खालित्ये पलिते वल्यां हरिलोम्नि च शोधितम्॥
नस्यैस्तैलैः शिरोवक्त्रप्रलेपैश्चाप्युपाचरेत्।
सिद्धं विदारीगन्धाद्यैर्जीवनीयैरथापि च॥ २६३॥
नस्यं स्यादणुतैलं वा खालित्यपलितापहम्।
क्षीरात् सहचराद्भृङ्गराजाच्च सौरसाद्रसात् २६४
प्रस्थैस्तु कुडवस्तैलाद्यष्ट्याह्वपलकल्कितः।
सिद्धः शिलासमे भाण्डे मेषशृङ्गादिषु स्थितः २६५
नस्यं स्याद्भिषजा सम्यग्योजितं पलितापहम्।
भिषजा क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ॥ २६६॥
उत्पाट्य पलिते देयौ तावुभौ पलितापहौ।
मार्कवस्वरसात् क्षीराद्विप्रस्थं मधुकात् पलम् २६७
तैः पचेत् कुडवं तैलात्तन्नस्यं पलितापहम्।
आदित्यवल्ल्या मूलानि कृष्णशैरेयकस्य च॥२६८॥
सुरसस्य च पत्राणि फलं कृष्णशणस्य च।
मार्कवः काकमाची च मधुकं देवदारु च॥ २६९॥
पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाऽञ्जनम्।
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् २७०
आम्रास्थि कर्दमः कृष्णो मृणालं रक्तचन्दनम्।
नीली भल्लातकास्थीनि कासीसं मदयन्तिका २७१
सोमराज्यसनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ।
पुष्कराज़ुनकाश्मर्याण्याम्रजम्बूफलानि च॥ २७२॥
पृथक् पञ्चपलांशानि तैः पिष्टैराढकं पचेत्।
बैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम्॥ २७३॥
कुर्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः।
लोहपात्रे ततः पूतं संशुद्धमुपयोजयेत्॥ २७४॥
पाने नस्यक्रियायां च शिरोभ्यङ्गे तथैव च।
एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत्॥ २७५॥
महानीलमिति ख्यातं पलितघ्नमनुत्तमम्।
इति महानीलतैलम्।
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः॥ २७६॥

१ 'स्थाप्यं विडचूर्णं' इति पा०।

१ 'फलं' इति पा०।

कापिंकैस्तैलकुडवो द्विगुणामलकीरसः ।
सिद्धः स प्रतिमर्शः स्यात् सर्वमूर्धगदापहः ॥२७७॥
( पलितघ्नो विशेषेण कृष्णात्रेयेण भाषितः । )
क्षीरं प्रियालयष्ट्याह्वे जीवकाद्यो गणस्तिलाः ॥२७८॥
कृष्णा चक्रे प्रलेपः स्याद्धरिलोमनिवारणः ।
तिलाः सामलकाश्चैव किञ्जल्को मधुकं मधु २७९
बृंहयेद्रञ्जयेच्चैतत् केशान्मूर्धप्रलेपनात् ।
पचेत्सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ॥ २८० ॥
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशि ।
तत् प्रातस्त्रिफलाधौतं स्यात् कृष्णमृदुमूर्धजम् ॥
अयश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः ।
कुर्याच्छेषेषु रोगेषु क्रियां स्वां स्वाचिकित्सितात् ।
शेषेष्वादौ च निर्दिष्टा सिद्धौ चान्या प्रवक्ष्यते २८२
इति खालित्यादिचिकित्सा ।

खालित्ये इत्यादिना खालित्यादिचिकित्सितमाह । हरिलोम्नीति कपिललोम्नी । सहचरः झिण्टी । शिलासमे भाण्डे इति अश्ममये पात्रे वा मेषशृङ्गे संस्थितः । आदित्यपर्ण्या मूलानीति आदित्यपर्णी सूर्यावर्तः । कृष्णसैरीयकः कृष्णझिण्टी । सोमराजी वाकुची । शस्त्रं कृष्णं लोहम् । कृष्णपिण्डितचित्रकाविति कृष्णमदनकृष्णचित्रकौ । आदित्यपाकमिति आदित्यरश्मिसंबन्धादेव पक्कम् । अत्र भागैरिति बहुवचनात् पृथग्भागे सिद्धेऽपि पृथगिति पदं न्यायसिद्धस्यापि त्रिफलापृथग्भागस्य द्योतनार्थम् । कल्कभूयस्त्वं चात्र वचनादेव भवत्यपि कल्पनीयम् । तिलाः सामलका इत्यादियोगाः केशरञ्जकाः । पचेत् सैन्धवेत्यादौ सैन्धवायश्चूर्णतण्डुलानां समत्वम् । शुद्धमिति प्रक्षालितम् । शेषेषु रोगेष्विति तृट्श्वासकासज्वररक्तपित्तशोषेषु पीनसोपद्रवतयोक्तेषु । शेषेष्वादौ च निर्दिष्टा इत्यत्र शेषशब्देन अनुक्तत्रिमर्मजरोगग्रहणम् । आदौ निर्दिष्टा इति सामान्यादिहैव दोषानुल्लेखेन त्रिमर्मजरोगोद्दिष्टा चिकित्सा ज्ञेया । सिद्धौ चान्या प्रवक्ष्यते इति त्रिमर्मीयायां सिद्धौ वक्ष्यते २६२–२८२

सर्पींष्युपरिभक्तानि स्वरभेदेऽनिलात्मके ।
तैलैश्चतुष्प्रयोगैश्च बलारास्नामृताह्वयैः ॥ २८३ ॥
बर्हितित्तिरिदक्षाणां पञ्चमूलशृतान् रसान् ।
मायूरं क्षीरसर्पिर्वा पिबेत्र्यूषणमेव वा ॥ २८४ ॥
पैत्तिके तु विरेकः स्यात् पयश्च मधुरैः शृतम् ।
सर्पिर्गुडा घृतं तिक्तं जीवनीयं वृषस्य वा ॥ २८५ ॥
कफजे स्वरभेदे तु तीक्ष्णं मूर्धविरेचनम् ।
विरेको वमनं धूमो यवान्नकटुसेवनम् ॥ २८६ ॥
चव्यभार्ग्यभयाव्योषक्षारमाक्षिकचित्रकान् ।
लिह्याद्वा पिप्पलीपथ्ये तीक्ष्णं मद्यं पिबेच्च सः २८७

रक्तजे स्वरभेदे तु सघृता जाङ्गला रसाः ।
द्राक्षाविदारीक्षुरसाः सघृतक्षौद्रशर्कराः ॥ २८८ ॥
यच्चोक्तं क्षयकासघ्नं तच्च सर्वं चिकित्सितम् ।
पित्तजस्वरभेदघ्नं सिरावेधश्च रक्तजे ॥ २८९ ॥
सन्निपाते हिताः सर्वाः क्रिया न तु सिराव्यधः ।
इत्युक्तं स्वरभेदस्य समासेन चिकित्सितम् ॥२९०॥
इति स्वरभेदचिकित्सा ।

सर्पींष्युपरिभक्तानीत्यादिना स्वरभेदचिकित्सामाह । वातादिस्वरभेदलक्षणं यद्यपीह नोक्तं, तथाऽपि राजयक्ष्मचिकित्सोक्तमेव बोद्धव्यम् । यद्यपि तत्र चिकित्सोक्ता, तथाऽपीह स्वरभेदस्याधिकृतत्वात् पुनरप्युच्यते । चतुष्प्रयोगैरिति पानाभ्यञ्जगण्डूषवस्तिप्रयोगैः । बलारास्नामृताह्वयतैलानि वातव्याधौ वक्ष्यमाणानि । त्र्यूषणं कासिके प्रोक्तम् । जीवनीयघृतं वातरक्ते वक्ष्यमाणम् । वृषघृतं रक्तपित्तचिकित्सोक्तम् । पित्तजस्वरभेदघ्नं चिकित्सितमिति संबन्धः । इति स्वरभेदचिकित्सा ॥२८३–२९०॥

भवन्ति चात्र—

वातपित्तकफा नृणां बस्तिहृन्मूर्धसंश्रयाः ।
तस्मात्तत्स्थानसामीप्याद्धर्तव्या वमनादिभिः २९१

उक्तानुक्तचिकित्सार्थमाह—वातपित्तकफा इत्यादि । बस्तिहृन्मूर्धसंश्रया इति यथासंख्येन । तत्स्थानसामीप्यादिति वातादिस्थानेषु बस्त्यादिषु च वमनादीनां कर्मणां मध्ये यस्य कर्मणः समीपदोषहरणरूपं सामर्थ्यं भवति तेन कर्मणा हर्तव्या इति ॥ २९१ ॥

अध्यात्मलोको वाताद्यैर्लोको वातरवीन्दुभिः ।
पीड्यते धार्यते चैव विकृताविकृतैस्तथा ॥ २९२ ॥

वातादीनामेव विकृताविकृतानां देहपीडकधारकत्वं सदृष्टान्तमाह—अध्यात्मेत्यादि । अध्यात्मलोकः चेतनलोकः । लोक इति जगत् । अत्र दृष्टान्ते इन्दुस्थानीयः श्लेष्मा, रविस्थानीयं पित्तम् । विकृतैः पीड्यते, अविकृतैर्धार्यते इति व्यवस्था ॥२९२॥

विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव ॥२९३॥

दोषाणां परस्परगुणविरोधात् संभूय कार्यकरणे यथा विरोधो न भवति तदाह—विरुद्धैरपीति ।—परस्परविरुद्धैरपि, यथा—श्लेष्मणः स्नेहपैच्छिल्यगौरवादीनां वातगुणै रौक्ष्यलाघवादिभिर्विपरीतानां च परस्परोपघातकत्वं यद्दृष्टं तदिह दोषसंसर्गे न भवति । कुतो न घ्नन्तीत्याह—सहजसात्म्यत्वादिति; स्वाभाविकसात्म्यीभावादित्यर्थः, सात्म्यीभावोऽनुपघातकत्वम् । अयं च स्वभावः कर्मजन्यो वा भवतु वस्तुस्वभावाधीनो वा उभयथा वा भवतु, तथाऽप्यचिन्त्य एव; दृष्टत्वाच्च नात्र युक्तिबाधा प्रभवति; तेन परस्परगुणोपघातव्यभिचारश्चन्द्रिकाकृता सुश्रुते

१ अयमर्धश्लोकः कचित्पुस्तके न पठ्यते । २ 'यद्याहतिलकिञ्जल्कक्षौद्रमामलकानि च' इति पा० ।

१ 'संस्कृताः' इति पा० । २ 'विस्तरेणोच्यते' इति पा० ।

प्रपश्चितः स न भवति। विरुद्धस्याप्यनुपघाते दृष्टान्तमाह—घोरं विषमहीनिवेति ॥ २९२ ॥ २९३ ॥

तत्र श्लोकः—

त्रिमर्मजानां रोगाणां निदानाकृतिभेषजम्।
विस्तरेण पृथग्दिष्टं त्रिमर्मीये चिकित्सिते ॥ २९४ ॥

त्रिमर्मजानामिति संग्रहो व्यक्तः ॥ २९४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने त्रिमर्मीयचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने त्रिमर्मीयचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः।

अथात ऊरुस्तम्भचिकित्सितं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

त्रिमर्मीये च बहून् रोगान् पञ्चकर्मसाध्यान् दृष्ट्वा पञ्चकर्मासाध्ये ऊरुस्तम्भे जातस्मरण आचार्य ऊरुस्तम्भचिकित्सितमेवाह; भवति हि विरोधिदर्शनात् तद्विरोधिस्मरणं, यथा नकुलस्मरणात् सर्पस्मरणम् ॥ १ ॥ २ ॥

श्रिया परमया ब्राह्म्या परया च तपःश्रिया।
अहीनं चन्द्रसूर्याभ्यां सुमेरुमिव पर्वतम् ॥ ३ ॥
धीधृतिस्मृतिविज्ञानज्ञानकीर्तिक्षमालयम्।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥ ४ ॥
भगवन् पञ्च कर्माणि समस्तानि पृथक् तथा।
निर्दिष्टान्यामयानां हि सर्वेषामेव भेषजम् ॥ ५ ॥
दोषजोऽस्त्यामयः कश्चिद्यस्य तानि भिषग्वर!।
न स्युः शक्तानि शमने साध्यस्य क्रियया सतः ॥ ६
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम्।
सलिङ्गभेषजं भूयः पृष्टस्तेनाब्रवीद्गुरुः ॥ ७ ॥
स्निग्धोष्णलघुशीतानि जीर्णाजीर्णे समश्नतः।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥ ८ ॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥ ९ ॥
स्नेहाच्चामं चितं कोष्ठे वातादीन्मेदसा सह।
रुद्ध्वाऽऽशु गौरवादूरू यात्यधोगैः सिरादिभिः ॥१०॥

पूरयन् सक्थिजङ्घोरु दोषो मेदोबलोत्कटः।
अविधेयपरिस्पन्दं जनयत्यल्पविक्रमम् ॥ ११ ॥
महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥ १२ ॥
गौरवायाससङ्कोचदाहरुक्सुप्तिकम्पनैः।
भेदस्फुरणतोदैश्च युक्तो देहं निहन्त्यसून् ॥ १३ ॥
ऊरू श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु।
स्तम्भयेत्स्थैर्यशैत्याभ्यामूरुस्तम्भस्ततस्तु सः ॥१४॥
प्राग्रूपं ध्याननिद्रातिस्तैमित्यारोचकज्वराः।
लोमहर्षश्च छर्दिश्च जङ्घोर्वोः सदनं तथा ॥ १५ ॥

अहीनमिति सर्वदा युक्तम्। समस्तानीति मिलितानि। दोषज इति पदं मानसागन्तुनिरासार्थं; तन्निरासस्तु तयोः पञ्चकर्माविषयतया प्रसिद्धत्वात्। तथा दोषजस्याप्यसाध्यस्य साधने पञ्चकर्माणि न समर्थानीति तन्निरासार्थमाह—साध्यस्येत्यादि। साध्यस्य सत इति संबन्धः। भूय ऊरुस्तम्भस्य कारणादीनि पृष्टो गुरुरब्रवीदिति संबन्धः। जीर्णाजीर्णे इति स्तोकजीर्णेशेषाजीर्णे इत्यर्थः। आमं चितमिति रसशेषरूपं, कोष्ठोपलेपेनाप्यामं संचितं, मेदसा सहेति मेदःसहितमामं वातादीनां रोधकं ज्ञेयम्। आमं च ऊरुं गच्छत् त्रिदोषसहितमेव याति। सिरादिभिरिति सिराधमनीस्रोतोभिः। दोषो मेदोबलोत्कट इति दोष आमसंरुद्धो वातादिः। यदा 'दोषमेदोत्कट' इति पाठः, तदाऽऽमस्य विशेषणम्। सक्थिग्रहेणैव यद्यपि जङ्घोर्वोर्ग्रहणं प्राप्तं, तथाऽपि तयोरभिधानं विशेषेण तत्पूरणोपदर्शनार्थम्। अविधेयपरिस्पन्दमिति अस्वाधीनेन्द्रियम्, अल्पविक्रममिति अल्पक्रियमक्रियं वा करोतीत्यर्थः। महासरसीत्यादिदृष्टान्तेन ऊरुस्तम्भारम्भकप्रधानस्य कफस्य प्रबलतामाह। यद्यपि, ऊरुस्तम्भस्य त्रिदोषजन्यत्वमिह तथा सूत्रस्थानेऽपि "एक ऊरुस्तम्भ आमत्रिदोषसमुत्थानः" (सू. अ. १९) इत्यनेनोक्तं, तथाऽपि कफप्राधान्यादत्र कफ उपदिष्टः। अत एवाग्रे ऊरु श्लेष्मेत्यादिना ऊरुस्तम्भशब्दनिरुक्तिमुत्पादसामग्रीं चाह। स्थैर्यशैत्याभ्यामित्यनेन स्तम्भनक्रियायां स्थैर्यशैत्ययोः कफगुणयोः कारणतां दर्शयति ॥ ३-१५ ॥

वातशङ्किभिरज्ञानात्तस्य स्यात् स्नेहनात् पुनः।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ १६ ॥

ऊरुस्तम्भे स्नेहप्रयोगजं दोषमाह—वातशङ्किभिरित्यादि। वातशङ्का चास्मिन् सुप्तिसंकोचादिवातसमानलिङ्गदर्शनाद्भवति। अस्य संस्नेहनदोषाः कृच्छ्रादुद्धरणं तथेत्यन्तेनोक्ताः ॥ १६ ॥

जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदना।
पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ १७ ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते ॥ १८ ॥

१ 'अहीनपूर्वं चन्द्रार्कादिभ्यो मेरुमिवाचलम्' इति पा०। २ 'अग्निवेशोऽत्रिजं' इति पा०। ३ 'स्निग्धोष्णगुरुशीतानि' इति पा०।

१ '°याम°' इति पा०।

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥ १९ ॥

जङ्घोरुग्लानिरित्यादि तु लक्षणं भिन्नसामग्रीकं ब्रूते । अन्ये तु सर्वमेवैतदूर्ध्वाधःकृतस्नेहनप्रयोगदोषकृतमसाध्यलक्षणमाहुः । शश्वचादाहवेदनेति ईषद्दाहवेदना, अन्ये तु दाहवर्जितवेदनामाहुः ॥ १७–१९ ॥

तस्य न स्नेहनं कार्यं न बस्तिर्न विरेचनम् ।
न चैव वमनं यस्मात्तन्निबोधत कारणम् ॥ २० ॥
वृद्धये श्लेष्मणो नित्यं स्नेहनं बस्तिकर्म च ।
तत्स्थस्योद्धरणे चैव न समर्थं विरेचनम् ॥ २१ ॥
कफं कफस्थानगतं पित्तं च वमनात् सुखम् ।
हर्तुमामाशयस्थौ च स्रंसनात्ताबुभावपि ॥ २२ ॥
पक्वाशयस्थाः सर्वेऽपि बस्तिभिर्मूलनिर्जयात् ।
शक्या न त्वाममेदोभ्यां स्तब्धा जङ्घोरुसंस्थिताः २३
वातस्थाने हि तच्छैत्याद्द्वयोः स्तम्भाच्च तद्गताः ।
न शक्याः सुखमुद्धर्तुं जलं निम्नादिव स्थलात् २४

संप्रति स्नेहवस्त्यादिप्रतिषेधोपपत्तिमाह—तस्येत्यादि । स्नेहस्य दोषो यद्यपि प्रागेवोक्तः, तथाऽपीदानीं यथा तद्दोषकारकं स्नेहनं भवति तथा प्रतिपाद्यते । शिरोविरेचनं चात्र सर्वथैवासंभाव्यमानत्वादेव नोपन्यस्तमिति ज्ञेयम् । स्नेहनमिति पानाभ्यञ्जनाभ्यां स्नेहनम् । बस्तिकर्म चेति स्नेहबस्तिकर्म, तस्यैव श्लेष्मवृद्धिकरत्वात् । किंवा बस्तिकर्मविशेषणं स्नेहनमिति पदं, तेनानुवासनमेव लभ्यते; निरूहस्तु विरेचनशब्देनैव शोधनाभिधायिना गृहीतः; अत एव ऊरुस्तम्भदोषोद्धरणासमर्थशोधनविवरणे एव निरूहोऽप्यत्रोक्तः । उक्तदोषहरणासामर्थ्यं वमनविरेचननिरूहाणां क्रमेण विवृण्वन्नाह—श्लेष्मस्थानगत इत्यादि । हर्तुं सुखमिति विभक्तिलिङ्गविपरिणामाद्वक्ष्यमाणेऽपि योजनीयम् । ताबुभाविति निर्हर्तुमसुखाविति पूर्ववद्योजनीयम् । सर्वेऽपि वातपित्तश्लेष्माणः । मूलनिर्जयादितिपदं वमनादिस्नेन तथा बस्तिभिरित्यनेन च योज्यं; मूलनिर्जयादिति मूलच्छेदात् । वमनादीनां साध्यं विषयं दर्शयित्वा असाध्यं विषयमाह—शक्या इत्यादि । तथाऽऽममेदसः स्तब्धत्वेन वमनादीनां जङ्घोरुस्थानेऽसमर्थत्वं ज्ञेयम् । ऊरुस्तम्भदोषस्य वमनाद्यहार्यत्वे हेत्वन्तरमाह—वातस्थाने इत्यादि । वातस्थाने इति जङ्घोरुरूपे वातस्थाने । तच्छैत्यादिति वातशैत्यात् ॥ २०–२४ ॥

तस्य संशमनं नित्यं क्षपणं शोषणं तथा ।
युक्त्यपेक्षी भिषक् कुर्यादधिकत्वात्कफामयोः ॥२५॥[१]
सदा रूक्षोपचाराय यवश्यामाककोद्रवान् ।
शाकैरलवणैर्दद्याज्जलतैलोपसाधितैः ॥ २६ ॥

सुनिषण्णकनिम्बार्कवेत्राग्रग्वधपल्लवैः ।
वायसीवास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ॥ २७ ॥
क्षारारिष्टप्रयोगाश्च हरीतक्यास्तथैव च ।
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ॥ २८ ॥
समङ्गां शाल्मलीं बिल्वं मधुना सह ना पिबेत् ।
तथा श्रीवेष्टकोदीच्यदेवदारुनतान्यपि ॥ २९ ॥
चन्दनं धातकीं कुष्ठं तालीसं नलदं तथा ।

चिकित्सामाह—तस्येत्यादि । तस्योरुस्तम्भस्य शमनं कर्तव्यं न शोधनमित्यर्थः । क्षपणं शोषणमामकफयोः कुर्यादिति योजना; तत्र क्षपणं सर्वथोच्छेदेन, शोषणं द्रवभागविशोषणम् । वायसी काकमाची । कुलकं कारवेल्लकम् । शाल्मलं शाल्मलीवेष्टकम् । एतानि मधुना पिबेदिति संबन्धः ॥ २५–२९ ॥—

मुस्तं हरीतकीं लोध्रं पद्मकं तिक्तरोहिणीम् ॥ ३० ॥
देवदारु हरिद्रे द्वे वचां कटुकरोहिणीम् ।
पिप्पलीं पिप्पलीमूलं सरलं देवदारु च ॥ ३१ ॥
चव्यं चित्रकमूलानि देवदारु हरीतकीम् ।
भल्लातकं समूलां च पिप्पलीं पञ्च तान् पिबेत् ३२
सक्षौद्रानर्धश्लोकोक्तान् कल्कानूरुग्रहापहान् ।

मुस्तमित्यादिकाः पञ्च योगा अर्धश्लोकोक्ता ऊरुग्रहापहाः ॥ ३०–३२ ॥—

शार्ङ्गेष्टां मदनं दन्तीं वत्सकस्य फलं वचाम् ॥ ३३ ॥
मूर्वामारग्वधं पाठां करञ्जं कुलकं तथा ।
पिबेन्मधुयुतं तुल्यं चूर्णं वा वारिणाऽऽप्लुतम् ॥३४॥
सक्षौद्रं दधिमण्डैर्वाऽप्यूरुस्तम्भविनाशनम् ।
मूर्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ॥ ३५ ॥
पूर्ववद्गुग्गुलुं मूत्रे रात्रिस्थितमथापि वा ।[२]
स्वर्णक्षीरीमतिविषां मुस्तं तेजोवतीं वचाम् ॥ ३६ ॥
सुराह्वं चित्रकं कुष्ठं पाठां कटुकरोहिणीम् ।[३]
लेहयेन्मधुना चूर्णं सक्षौद्रं वा जलाप्लुतम् ॥ ३७ ॥
फलीं व्याघ्रनखं हेम पिबेद्वा मधुसंयुतम् ।
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम् ॥३८॥
लिह्याद्वा मधुना चूर्णमूरुस्तम्भार्दितो नरः ।

शार्ङ्गेष्टा गुञ्जा । स्वादुकण्टकं विकङ्कतम् । पूर्ववदिति पूर्वेण संबध्यते । गुग्गुलुं च मूत्रे उषितं पिबेदिति योज्यम् । जलाप्लुतं 'पिबेत्' इति शेषः । फली न्यग्रोधः । हेम नागकेशरम् ॥ ३३–३८ ॥—

अपतर्पणजश्चेत् स्याद्दोषः संतर्पयेद्धि तम् ॥ ३९ ॥
युक्त्या जाङ्गलजैर्मांसैः पुराणैश्चैव शालिभिः ।
रूक्षणाद्वातकोपश्चेन्निद्रानाशार्तिपूर्वकः ॥ ४० ॥

१ 'तयोः' इति पा० । २ 'आधिक्यादामकफयोर्युक्त्यपेक्षः सदा भिषक्' इति पा० ।

१ 'त्वचां' इति पा० । २ 'पूर्ववद्वा पिबेत्तोये' इति पा० । ३ 'कट्फलं' इति पा० ।

स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः।
पीलुपर्णी पयस्या च रास्ना गोक्षुरको वचा ॥ ४१ ॥
सरलागुरुपाठाश्च तैलमेभिर्विपाचयेत्।
सक्षौद्रं प्रसृतं तस्मादञ्जलिं वाऽपि ना पिबेत् ॥४२॥
कुष्ठश्रीवेष्टकोदीच्यसरलं दारु केशरम्।
अजगन्धाऽश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥४३॥
सक्षौद्रं मात्रया तच्चाप्यूरुस्तम्भार्दितः पिबेत्।
(रौक्ष्यान्मुक्त ऊरुस्तम्भात्ततश्च स विमुच्यते ॥४४॥)
द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात्।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाऽऽढके ॥४५॥
आरनालात् पचेत् प्रस्थं तैलस्यैतैरपत्यदम्।
गृध्रस्यूरुग्रहार्शोर्तिसर्ववातविकारनुत् ॥ ४६ ॥
पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥ ४७ ॥
इत्यष्टकट्वरतैलम्।

आवस्थिकं क्रममाह—अपतर्पणज इत्यादिना। रूक्षणादित्यादिना स्नेहविधानमावस्थिकं, तेन सामान्येनात्र विहितस्नेहनिषेधेन समं न विरोधः, अस्य विधेरपवादत्वात्। पीलुपर्णी मोरटः, रास्नाभेद इत्यन्ये। सक्षौद्रमिति पादिकक्षौद्रम्। अजगन्धा अजमोदा। भल्लातकास्थीनि विंशतिरिति आकृतिमानेन। पलाभ्यामिति पिप्पल्यादिसमुदायात् पलाभ्याम्। अष्टकट्वर इति तैलादष्टगुणं कट्वरं यस्मिन् तैलप्रस्थे स अष्टकट्वरः; कट्वरं तक्रम् ॥ ३९–४७ ॥

इत्याभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम्।
श्लेष्मणः क्षपणं त्वन्यद्बाह्यं शृणु चिकित्सितम् ॥४८॥
वल्मीकमृत्तिका मूलं करञ्जस्य फलं त्वचम्।
इष्टकानां ततश्चूर्णैः कुर्यादुत्सादनं भृशम् ॥ ४९ ॥
मूलैर्वाऽप्यश्वगन्धाया मूलैरर्कस्य वा भिषक्।
पिचुमर्दस्य वा मूलैरथवा देवदारुणः ॥ ५० ॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक्।
गाढमुत्सादनं कुर्यादूरुस्तम्भे प्रलेपनम् ॥ ५१ ॥
दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान्।
तर्कारीशिग्रुसुरसाविश्ववत्सकनिम्बजैः ॥ ५२ ॥
पत्रमूलफलैस्तोयं शृतमुष्णं च सेचनम्।
पिष्टं तु सर्षपं मूत्रेऽभ्युषितं स्यात् प्रलेपनम् ॥ ५३ ॥
वत्सकः सुरसं कुष्ठं गन्धास्तुम्बुरुशिग्रुकौ।
हिंस्रार्कमूलवल्मीकमृत्तिकाः सकुठेरकाः ॥ ५४ ॥
दधिसैन्धवसंयुक्तं कार्यमेतैः प्रलेपनम्।
(ऊरुस्तम्भविनाशाय भिषजा जानता क्रमम् ॥५५॥)

१ अयमर्धश्लोकः क्वचित्पुस्तके न पठ्यते। २ 'हिङ्ग्वर्कमूल०' इति पा०। ३ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते।

श्योनाकं खदिरं बिल्वं बृहत्यौ सरलासनौ।
शोभाञ्जनकतर्कारीश्वदंष्ट्रासुरसार्जकान् ॥ ५६ ॥
अग्निमन्थकरञ्जौ च जलेनोत्क्वाथ्य सेचयेत्।
प्रलेपो मूत्रपिष्टैर्वाऽप्यूरुस्तम्भनिवारणः ॥ ५७ ॥
कफक्षयार्थं शक्येषु व्यायामेष्वनुयोजयेत्।
स्थलान्याक्रामयेत् कल्यं शर्कराः सिकतास्तथा ५८
प्रतारयेत् प्रतिस्रोतो नदीं शीतजलां शिवाम्।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ ५९ ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत्।

पिचुमर्दः निम्बः। द्रवन्ती दन्तीभेदः। तर्कारी जयन्ती। गन्धा इति अगुर्वाद्युक्ता इह ग्राह्याः। कुठेरकः पर्णासः। शक्येषु वोढुं शक्येषु। कल्यमिति प्रातः। शिवामिति हिंस्रजलजन्तुरहितां सुगम्यां च। ननु जलप्रतरणं कथमस्य श्लेष्मक्षयकरं भवति? यस्माज्जलसंबन्धमात्रेण श्लेष्मवृद्धिरेव प्राप्ता। उच्यते—जलेन बहिर्निर्गच्छदूष्मणो निरुद्धत्वान्तःप्रवेशाच्छ्लेष्मसंघातभेदनं भवति, तथा प्रतरणक्रियया श्लेष्मा विच्छिद्यते, समानाभिमता क्रियाऽप्यत्र योग्यत्वात् क्रियत एव। उक्तं हि—"भवेत् कदाचित् कार्याऽपि विरुद्धाभिमता क्रिया" (चि. अ. ३०) इति ॥ ४८–५९ ॥—

श्लेष्मणः क्षपणं यत् स्यान्न च मारुतमावहेत् ॥६०॥
तत् सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम्।
शरीरं बलमग्निं च कार्यैषा रक्षता क्रिया ॥ ६१ ॥

अनुक्तचिकित्सापरिग्रहार्थमाह—श्लेष्मण इत्यादि ६०।६१

तत्र श्लोकः—

हेतुः प्राग्रूपलिङ्गानि कर्मायोग्यत्वकारणम्।
द्विविधं भेषजं चोक्तमूरुस्तम्भचिकित्सिते ॥ ६२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने ऊरुस्तम्भचिकित्सितं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

हेतुरित्यादिसंग्रहः। कर्मायोग्यत्वकारणमिति पञ्चकर्मायोग्यत्वे हेतुः 'वृद्धये श्लेष्मण' इत्यादिनोक्तो ज्ञेयः। द्विविधमिति आन्तरं बाह्यं च। भेषजमिति औषधम् ॥ ६२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सितस्थाने ऊरुस्तम्भचिकित्सितं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

१ 'व्यायामेष्वेनं शक्येषु च त्वजेत्' इति पा०। २ 'निरुद्धत्वान्तःप्रवेशादिह श्लेष्मा विच्छिद्यते' इति पा०। ३ 'मारुतकोपनम्' इति पा०।

## अष्टाविंशोऽध्यायः ।

**अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

ऊरुस्तम्भभेषजेन विरूक्षणाद्वातप्रकोपो भवतीति संबन्धादूरुस्तम्भानन्तरं वातव्याधिचिकित्सितमुच्यते। तत्र वात एव व्याधिर्वातव्याधिरिति पक्षे वात एव तत्तद्दूष्यसंप्राप्तः सर्वाङ्गैकाङ्गरूपतामापन्नो विविधपीडाकर्तृत्वाद्वातव्याधिरुच्यते; यदा तु वाताद्व्याधिर्वातव्याधिरिति पक्षस्तदा वातदोषाद् दोषदूष्यसंमूर्च्छनविशेषरूपः सर्वाङ्गैकाङ्गरूपो व्याधिर्वातव्याधिरुच्यते । ज्वरादयस्तु यद्यपि वातादुत्पद्यन्ते, तथाऽपि ते दोषान्तरेणापि वातं विना भवन्तीति कृत्वा नात्र शास्त्रे वातव्याधिशब्देनोच्यन्ते। येऽपि चात्र कफपित्तावृतवातविकारा वातव्याधित्वेन वक्तव्याः, तेऽपि प्रधानं वातं विना न भवन्तीति कृत्वा वातव्याधिरूपा एव। न च वाच्यं यथा वातिका नानात्मजा व्याधयः पृथक् चिकित्सयोच्यन्ते, तथा पित्तजाः कफजाश्च चिकित्स्यन्तामिति; यतः पित्तकफकृतानां नानात्मजानां व्याधीनां न तथा प्राधान्यं यथा वातजानां; तेन वातजानामेवाविष्कृततमानां पृथक् चिकित्सोच्यते, कफपित्तजानां त्वविष्कृतानां वमनविरेचनादिका कफपित्तचिकित्सेति ज्ञेयम् ॥ १ ॥ २ ॥

**वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ।**
**वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्तितः ॥ ३ ॥**

वायोर्विकारान् ज्ञापयितुं स्वभावज्ञानानन्तरीयकत्वाद्विकृतिज्ञानस्य स्वभावमेव तावदाह—वायुरित्यादि। यद्यपि शरीरेन्द्रियसत्त्वात्मसंयोग आयुः, तथाऽपि तादृशसंयोगे प्रधानत्वात् प्रकृतिस्थो वायुरप्यायुरुच्यते। एवं बलस्यापि हेतुर्वायुरिति कृत्वा शरीराधारतया बलाधारहेतुर्वायुरेव बलमित्युक्तः । विश्वता प्रभुता च वायोर्वातकलाकलीये प्रतिपादितैव ॥ ३ ॥

**अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।**
**वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ४**

वायोरायुर्हेतुत्वं दर्शयन्नाह—अव्याहतेत्यादि । अव्याहतगतिः अपरित्यक्तस्वमार्गः। स्थानस्थ इति न विमार्गः। प्रकृतौ स्थित इति अक्षीणवृद्धः। वीतरोग इति नीरोगः ॥ ४ ॥

**प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा ।**
**देहं तन्त्रयते सम्यक् स्थानेष्वव्याहतश्चरन् ॥ ५ ॥**
**स्थानं प्राणस्य मूर्धोरःकण्ठजिह्वास्यनासिकाः ।**
**ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म च ॥ ६ ॥**
**उदानस्य पुनः स्थानं नाभ्युरः कण्ठ एव च ।**
**वाक्प्रवृत्तिः प्रयत्नौर्जोबलवर्णादि कर्म च ॥ ७ ॥**
**स्वेददोषाम्बुवाहीनि स्रोतांसि समधिष्ठितः ।**
**अन्तरग्नेश्च पार्श्वस्थः समानोऽग्निबलप्रदः ॥ ८ ॥**
**देहं व्याप्नोति सर्वं तु व्यानः शीघ्रगतिर्नृणाम् ।**
**गतिप्रसारणाक्षेपनिमेषादिक्रियः सदा ॥ ९ ॥**
**वृषणौ वस्तिमेढ्रं च नाभ्यूरू वंक्षणौ गुदम् ।**
**अपानस्थानमन्त्रस्थः शुक्रमूत्रशकृन्ति च ॥ १० ॥**
**सृजत्यार्तवगर्भौ च युक्ताः स्थानस्थिताश्च ते ।**
**स्वकर्म कुर्वते देहो धार्यते तैरनामयः ॥ ११ ॥**

प्राणोदानेत्यादिना व्यवहारार्थं संज्ञोपदर्शनपूर्वकं प्राणादीनां स्थानं कर्म चाह। देहं तन्त्रयते इति धारयते । स्थानेष्विति वक्ष्यमाणात्मीयस्थानेषु। आहारादीत्यत्र आदिग्रहणादन्नविधारणादीनि गृह्यन्ते। कर्म चेति प्राणस्य वायोरित्यर्थः। प्राणोदानयोर्यद्यपि समानमुरःस्थानं, तथाऽपि कर्मभेदाद्भेद एव; यथैकगृहस्थितमालाकारकुम्भकारयोः । प्रयतनं प्रयत्नः, ऊर्जं उत्साहः; प्रयत्नादिकर्मत्वेन प्रयत्नौर्जोबलवर्णनिष्पादनमुच्यते। स्वेददोषाम्बुवाहीनीत्यादौ स्वेदवाहीनि तथा अम्बुवाहीनि च स्रोतांसि स्रोतोविमाने ( वि. अ. ५ ) पृथगेवोक्तानि ज्ञेयानि, दोषवहानि च स्रोतांसि सर्वशरीरचराण्येव, उक्तं हि "वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांस्ययनभूतानि" ( वि. अ. ५ ) इति। गतीत्यादौ आदिशब्देनाकुञ्चनप्रसारणादीनां च ग्रहणम्। अन्त्रस्थ इति अन्त्राणि चापानस्थानमित्यर्थः। सृजतीति निःसारयतीति यावत् । आर्तवगर्भौ च सृजतीति संबन्धः। एतानि कर्माणि यादृशाः कुर्वन्ति तदाह—युक्ता इत्यादि; युक्ता इति अव्यापन्नाः। स्थानस्थिता इति यथोक्तस्थानस्थिताः । यस्मादेवंभूता अतो देहो धार्यते तैरनामयः ॥ ५–११ ॥

**विमार्गस्था ह्ययुक्ता वा रोगैः स्वस्थानकर्मजैः ।**
**शरीरं पीडयन्त्येते प्राणानाशु हरन्ति च ॥ १२ ॥**
**सङ्ख्यामप्यतिवृत्तानां तज्जानां हि प्रधानतः ।**
**अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः ॥ १३ ॥**
**तानुच्यमानान् पर्यायैः सहेतूपक्रमाञ्छृणु ।**
**केवलं वायुमुद्दिश्य स्थानभेदात्तथाऽऽवृतम् ॥ १४ ॥**

वातानां वैगुण्यकार्यमाह— विमार्गस्था इत्यादि। स्वस्थानकर्मजैरिति यस्य वायोर्यत् स्थानमुक्तं तत्स्थानगतैः, तथा ष्ठीवनादि यद्वायोः कर्मोक्तं तज्जैश्च रोगैः शरीरं पीडयन्ति प्राणान् वा महता रोगेण हरन्ति च। अत्र च वायोरेव भूरिप्रधानरोगकर्तृतया भिन्नचिकित्साप्रयोजकाः पञ्चभेदा उक्ता न पित्तकफयोः, अनतिप्रयोजनत्वात्। तथा हि तन्त्रान्तरे पित्तमपि पाचक-रञ्जक-साधकालोचक-भ्राजकभेदात् पञ्चविधमुक्तं; तेषां च यथाक्रमं जठरहृदयदृष्टित्वक्स्थानत्वमुक्तं; तथा श्लेष्माऽपि बोधक-श्लेष्मक-तर्पकावलम्बक-क्लेदकभेदात् पञ्चविधः, तेषां च

---

१ 'वातव्याधित्वेनोच्यन्ते' इति पा०। २ 'अनावृतमार्गः' इति पा०। ३ 'मूर्धोरःकर्णजिह्वास्यनासिकाः' इति पा०।

१ 'शुक्रमूत्रशकृन्ति' इति पा०।

स्थानानि यथाक्रमं हृदयामाशयजिह्वाशिरःसंधयः, कर्माणि च यथाक्रममवलम्बन-क्लेदन-रसबोधनाक्षतर्पण-संधिसंश्लेषाणि पृथगुक्तानि। प्रकृतवातव्याधिकथनायात्र संख्यादिनिर्देशः। तज्जानामिति पञ्चवातजानाम्। सूत्रे इति महारोगाध्याये (सू. अ. २०)। उच्यमानानिति नखभेदादीन् यथास्थूलमुच्यमानान्। पर्यायैरिति संज्ञान्तरैः। कथं पुनस्तेऽशीतिनखभेदाद्या उपदिष्टाः ? उच्यते—केवलं वायुमुद्दिश्य केचिन्नदा वेपथ्वादय उक्ताः, तथा चावृतं वातमुद्दिश्य केचिदुक्ताः "लिङ्गं पित्तावृते दाहस्तृष्णा" इत्यादिना ॥ १२-१४ ॥

**रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः।**
**विषमादुपचाराच्च दोषासृक्स्रवणादति ॥ १५ ॥**
**लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः।**
**धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥ १६ ॥**
**दुःखशय्यासनात् क्रोधाद्दिवास्वप्नाद्भयादपि।**
**वेगसंधारणादामादभिघातादभोजनात् ॥ १७ ॥**
**मर्माघाताद्गजोष्ट्राश्वशीघ्रयानापतंसनात्।**
**देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ॥१८॥**
**करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रितान्।**

संप्रति निदानमाह—रूक्षेत्यादि। विषमादुपचारादिति उपचारवैरूप्यात्। दोषासृगित्यादौ दोषशब्देन पुरीषमपि गृह्यते। अपतंसनं गजादिभ्यः पतनं, किंवा अवतंसनं धातूनां कर्षणम्; उक्तं हि खरनादे—"विलिखत्यतितैक्ष्ण्यायत् स्मृतमुल्लेखनं हि तत्। विकर्षत्यतिधातून् यत्तच्चोक्तमव(प)तंसनम्" इति। रिक्तानीति तुच्छानि, स्नेहादिगुणशून्यानीत्यर्थः ॥१५-१८॥—

**अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ॥ १९ ॥**
**आत्मरूपं तु तद्व्यक्तमपायो लघुता पुनः।**

अव्यक्तं लक्षणमित्यादिना पूर्वरूपमाह। आत्मरूपमिति वर्तमानरोगरूपम्। अपायो[1] लघुता पुनरिति वातव्याधीनामपायोऽपगमनं शरीरस्य लघुता वातव्याधिलिङ्गविगमेन, शरीरकल्यतेति यावत्; किंवा अपायो लघुता न सर्वथा वातलिङ्गाभावः, येन प्रकृतलिङ्गानि सन्त्येव ॥ १९ ॥—

**सङ्कोचः पर्वणां स्तम्भो भेदोऽस्थ्नां पर्वणामपि ॥२०॥**
**लोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः।**
**खाञ्ज्यपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ॥ २१ ॥**
**गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता।**
**शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ॥२२॥**
**भेदस्तोदार्तिराक्षेपो मोहश्चायास एव च।**

१ 'अत्र वैशेषिकं पूर्वरूपं निषेधयति' इति पा०। २ 'अपायो बायोश्चलत्वेन वातव्याधिलिङ्गानामपगतत्वमिव, लघुता च शरीरस्य' इति पा०।



**एवंविधानि रूपाणि करोति कुपितोऽनिलः ॥ २३ ॥**
**हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत्।**

कुपितानां कार्यमाह—संकोच इत्यादि। एते च संकोचादयो व्याधयोऽपि भवन्ति; उक्तं हि—"व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः" (नि. अ. ८) इति। हुण्डनं शिरःप्रभृतीनामन्तःप्रवेशः; अन्ये तु केशभूमिस्फुटनं शङ्खललाटभेदश्च शिरोहुण्डनं, नासाहुण्डनं घ्राणनाशः, अक्षिहुण्डनम् अक्षिण्युदासः, जत्रुहुण्डनं वक्षउपरोधः, ग्रीवाहुण्डनं ग्रीवास्तम्भः। वातव्याधिविशेषोत्पादे हेतुमाह—हेतुस्थानविशेषादित्यादि। हेतुविशेषः पित्तावरणादिः, स्थानविशेषः कोष्ठादिः, किंवा हेतुकृतः स्थानविशेषः; उक्तं हि—"प्रकुपितास्तु प्रकोपणविशेषाद् दूष्यविशेषात् दूषयन्तः" (वि. अ. ६) इत्यादि। केचित्तु 'देहे स्थानविशेषाच्च' इति पठन्ति ॥ २०-२३ ॥—

**तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ॥ २४ ॥**
**ब्रध्नहृद्रोगगुल्मार्शःपार्श्वशूलं च मारुते।**
**सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जने ॥ २५ ॥**
**वेदनाभिः परीतश्च स्फुटन्तीवास्य सन्धयः।**
**ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ॥२६॥**
**जङ्घोरुत्रिकपात्पृष्ठरोगशोषौ[1] गुदस्थिते।**
**हृन्नाभिपार्श्वोदररुक्तृष्णोद्गारविसूचिकाः ॥ २७ ॥**
**कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते।**
**पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ॥ २८ ॥**
**कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम्।**
**श्रोत्रादिष्विन्द्रियवधं कुर्याद्दुष्टसमीरणः ॥ २९ ॥**
**त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते।**
**आतन्यते सरागा च पर्वरुक् त्वक्स्थितेऽनिले ॥३०॥**
**रुजस्तीव्राः ससंतापा वैवर्ण्यं कृशताऽरुचिः।**
**गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥३१॥**
**गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं तथा।**
**सरुक् श्रमितमत्यर्थं[2] मांसमेदोगतेऽनिले ॥ ३२ ॥**
**भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः।**
**अस्वप्नः संतता रुक् च मज्जास्थिकुपितेऽनिले ॥३३॥**
**क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा।**
**विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥ ३४ ॥**
**बाह्याभ्यन्तरमायामं खल्लिं कुब्जत्वमेव च।**
**सर्वाङ्गैकाङ्गरोगांश्च कुर्यात् स्नायुगतोऽनिलः ॥ ३५ ॥**
**शरीरं मन्दरुक्शोफं शुष्यति स्पन्दते तथा।**
**सुप्तास्तन्व्यो महत्यो वा सिरा वाते सिरागते ॥३६॥**

१ '०रोगशोषौ' इति पा०। २ 'स्तिमितमत्यर्थं' इति पा०।

वातपूर्णदृतिस्पर्शः शोथः सन्धिगतेऽनिले ।
प्रसारणाकुञ्चनयोः प्रवृत्तिश्च सवेदना ॥ ३७ ॥
( इत्युक्तं स्थानभेदेन वायोर्लक्षणमेव च । )

स्थानविशेषकृतमेव व्याधिभेदमाह—तत्र कोष्ठाश्रिते इत्यादि । सर्वाङ्गकुपिते इति कृत्स्नदेहकुपिते । गुदस्थिते इति उत्तरगुदस्थिते । आतन्यते विस्तार्यते । भुक्तस्य स्तम्भ इति भुक्तवतो गात्रस्तम्भो भवतीति । गुर्वङ्गमित्यादि मांसगे मेदोगे च लक्षणं समानं, तथा मेदोऽस्थिपर्वणामित्यादि अस्थिमज्जगयोः समानं लक्षणम् । समानेऽपि लक्षणे विविधाशितपीतीयोक्तविशिष्टधातुलक्षणैर्विशेष उन्नेयः । संततेति सानुबन्धा । क्षिप्रं मुञ्चति बध्नातीति व्यवायकाले क्षिप्रं मुञ्चति वा चिरं धारयते, तथा गर्भमपि क्षिप्रं मुञ्चति वा चिरं धारयति । विकृतमिति व्यङ्गत्वादिनानाविकारयुक्तं गर्भं जनयति । वाह्येत्यादिना स्नायुगतवातलक्षणत्वेनोक्तानि वहिरायामादीन्यग्रे वक्तव्यानि । मन्दरुक्शोफमिति मन्दरुजं मन्दशोफं च । सुप्ता इति निःस्पन्दाः ॥ २४–३७ ॥—

अतिवृद्धः शरीरार्धमेकं वायुः प्रपद्यते ।
यदा तदोपशोष्यासृग्बाहुं पादं च जानु च ॥ ३८ ॥
तस्मिन् सङ्कोचयत्यर्धे मुखं जिह्मं करोति च ।
वक्रीकरोति नासाभ्रूललाटाक्षिहनूस्तथा ॥ ३९ ॥
ततो वक्रं व्रजत्यास्ये भोजनं वक्रनासिकम् ।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ॥ ४० ॥
दीना जिह्वा समुत्क्षिप्ता कला सज्जति चास्य वाक् ।
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ॥ ४१ ॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डरुक् ।
अर्धे तस्मिन्मुखार्धे वा केवले स्यात्तदर्दितम् ॥ ४२ ॥

इदानीमतिबलान् वातविकारानभिधातुमुद्यतोऽर्दितमाह—अतिवृद्ध इत्यादि । अतिवृद्धग्रहणेन वायोर्बलवत्प्रकोपमाह । एकमिति वामं दक्षिणं वा संकोचयति बाहुं, पादं, जानु च; वक्रं च जिह्मं करोति । वक्रं व्रजति भोजनमिति न समं मुखेन खादति, किंतु वक्रैकदेशेन । दीनेति अगम्भीरा । जिह्मेति कुटिला । समुत्क्षिप्तेति अतित्वरिता । कलेति अव्यक्ता । बाध्येते श्रवणाविति यद्यपि एकपार्श्वाश्रयो विकारोऽयं, तथाऽपि प्रभावात् कर्णयोर्बाधाऽत्र भवति । केवल इति अर्धे एव न कृत्स्ने । ननु यदा देहार्धव्यापित्वमर्दितस्य तदाऽर्दितेन अर्धाङ्गस्य को भेदः ? ब्रूमः—अर्दितो वेगितया न सर्वकालं भवति, अर्धाङ्गस्तु सर्वकालं व्याप्य भवति; उक्तं हि—"स्वस्थः स्यादर्दितादीनां मुहुर्वेगागमे गते" इति । किंवा यथोक्तविशिष्टलक्षणोऽर्दितः, अर्धाङ्गे तु नैतानि सर्वाणि भवन्ति ॥ ३८–४२ ॥

मन्ये संश्रित्य वातोऽन्तर्यदा नाडीः प्रपद्यते ।
मन्यास्तम्भं तदा कुर्यादन्तरायामसंज्ञितम् ॥ ४३ ॥
अन्तरायम्यते ग्रीवा मन्या च स्तभ्यते भृशम् ।
दन्तानां दंशनं लाला पृष्ठायामः शिरोग्रहः ॥ ४४ ॥
जृम्भा वदनसङ्गश्चाप्यन्तरायामलक्षणम् ।
( इत्युक्तस्त्वन्तरायामो

मन्ये इत्यादिना अन्तरायाममाह । अन्तर्यदा नाडीः प्रपद्यते इति मन्यासंबद्धा एव अन्तर्गताः सिराः प्रपद्यत इत्यर्थः । अन्तरायामसंज्ञितमिति एवंविधो मन्यास्तम्भ अन्तरायाम उच्यते; अपरस्तु मन्यास्तम्भो वक्ष्यमाणवहिरायाम इति वक्तव्यः । तत्रान्तरे तु मन्यास्तम्भ आयामयोः पूर्वरूपत्वेनोक्तः । अन्तरायम्यत इति अन्तः आकृष्यते । पृष्ठायाम इति पृष्ठवहिर्निर्गतिः ॥ ४३ ॥ ४४ ॥—

वहिरायाम उच्यते ॥ ४५ ॥ )
पृष्ठमन्याश्रिता बाह्याः शोषयित्वा सिरा वली ।
वायुः कुर्याद्धनुस्तम्भं वहिरायामसंज्ञकम् ॥ ४६ ॥
चापवन्नाम्यमानस्य पृष्ठतो नीयते शिरः ।
उर उत्क्षिप्यते मन्या स्तब्धा ग्रीवाऽवमृद्यते ॥ ४७ ॥
दन्तानां दशनं जृम्भा लालास्रावश्च वाग्ग्रहः ।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥ ४८ ॥

पृष्ठेत्यादि वहिरायामलक्षणम् । पृष्ठमन्याश्रिता इति पृष्ठानुगतमन्यासंबद्धाः । बाह्या इति सिराविशेषणम् । बाह्याश्च सिराः पृष्ठगता एव । केचित्तु पृष्ठमन्याश्रित इति वातविशेषणं पठन्ति । पृष्ठतो नीयते इति पृष्ठं प्रति आकृष्यते । जातवेग इति उद्वेगैः । एतौ चायामौ "बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च । सर्वैकाङ्गरोगांश्च कुर्यात् स्नायुगतोऽनिलः" इत्यनेन स्नायुगतानिलजन्यावुक्तौ, इह च सिरागतवातजन्यत्वेनोक्तौ, तेनोभयवचनात् सिरास्नायुगतवातजन्यावेव भवतः । उक्तं ह्यन्यत्र—"महाहेतुर्वली वायुः सिराः सस्नायुकण्डराः । मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद्बहिः" इत्यादि ४५–४८

हनुमूले स्थितो बन्धात् संस्रयत्यनिलो हनू ।
विवृतास्यत्वमथवा कुर्यात् स्तब्धमवेदनम् ॥ ४९ ॥
हनुग्रहं च संस्तभ्य हनुं(नू)संवृतवक्त्रताम् ।

हनुस्तम्भसंकोचयोर्लक्षणमाह—हनुमूले स्थित इत्यादि । संस्रयतीति च्यावयति । विवृतास्यत्वमथवेति अत्राथवाशब्देन

१ 'अप्रवृत्तिः' इति पा० । २ अयमर्धश्लोकः कस्मिंश्चित्पुस्तके न पठ्यते । ३ 'अनुबद्धा' इति पा० । ४ 'व्याकर्तव्यानि' इति पा० । ५ 'वक्रदर्शिनः' इति पा० । ६ 'ऽवला' इति, 'ऽफला' इति च पा० । ७ 'पार्श्व०' इति पा० ।

१ 'पृष्ठाक्षेपः' इति पा० । २ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते । ३ 'अभ्यन्तरेण' इति पा० । ४ 'अतिवेगः' इति पा० । ५ 'कुर्यात् संवृतमाननम्' इति पा० ।

संवृतवक्त्रता पाक्षिकी चापेक्षते। संस्तम्भयेति निश्चलीकृत्य संवृतमुखतां करोति। एतद्द्वयमपि हनुस्तम्भ एव ॥ ४९ ॥—

**मुहुराक्षिपति क्रुद्धो गात्राण्याक्षेपकोऽनिलः ॥ ५० ॥**
**पाणिपादं च संशोष्य सिराः सस्नायुकण्डराः।**

मुहुरित्यादि आक्षेपलक्षणम् ॥ ५० ॥—

**पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः ॥ ५१ ॥**
**दण्डवत्स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः।**

पाणिपादं च संशोष्येत्यादि दण्डाक्षेपकसंप्राप्तिकथनम्। पाणिपादशिर इत्यादि दण्डकलक्षणम् ॥ ५१ ॥—

**स्वस्थः स्यादर्दितादीनां मुहुर्वेगे गतेऽगते ॥ ५२ ॥**
**पीड्यते पीडनैस्तैस्तैर्भिषगेतान् विवर्जयेत्।**

अर्दितादीनां दण्डकान्तानां समानं रूपमाह—स्वस्थः स्यादित्यादि। अर्दितहनुस्तम्भादिषु यत्र मुहुर्मुहुर्वेगित्वं दृश्यते तदर्दितान्तर्गतमेव ज्ञेयम् ॥ ५२ ॥—

**हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा ॥ ५३ ॥**
**कुर्याच्चेष्टानिवृत्तिं हि रुजं वाक्स्तम्भमेवं च।**[1]
**गृहीत्वाऽर्धं शरीरस्य सिराः स्नायूर्विशोष्य च ॥५४॥**
**पादं संकोचयत्येकं हस्तं वा तोदशूलकृत्।**
**एकाङ्गरोगं तं विद्यात् सर्वाङ्गं सर्वदेहजम् ॥ ५५ ॥**[2]

हत्वैकमित्यादि पक्षवधलक्षणम्। गृहीत्वाऽर्धमित्यादि एकाङ्गलक्षणम्। सर्वाङ्गं सर्वदेहजमिति सर्वाङ्गलक्षणम् ॥५३–५५॥

**स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्।**
**गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ ५६ ॥**
**वाताद्वातकफात्तन्द्रागौरवारोचकान्विता।**
**खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥ ५७ ॥**

स्फिक्पूर्वेत्यादि। प्रथमं स्फिचं स्तम्भरुक्तोदैर्गृह्णाति, पश्चात्तु[4] कटिपृष्ठोरुजानुजङ्घापदं गृह्णाति सा गृध्रसी वातात्; वातकफात्तु सा पूर्वोक्तलक्षणा[5] सती तन्द्राद्यन्विता भवति; एवं गृध्रसीद्वयं "द्वे गृध्रस्यौ वाताद् वातकफाच्च" (सू. अ. १९) इत्यनेनोक्तं विवृतं भवति ॥ ५६ ॥ ५७ ॥

**स्थानानामनुरूपैश्च लिङ्गैः शेषान् विनिर्दिशेत्।**

अनुक्तनखभेदादिपरिग्रहार्थमाह—स्थानानामित्यादि। शेषान् नखभेदादीन् नखगुल्फादीनामनुरूपैर्लिङ्गैर्भेदशूलादिभिर्निर्दिशेदिति ज्ञेयम्। केचित् 'स्थाननामानुरूपैः' इति पठन्ति। तत्र नखस्थानानुरूपं भेदसंज्ञानुरूपं च लिङ्गं नखस्फुटनरूपं भवति। एवं चापरवातविकारेष्वपि महारोगोक्तेषु स्थानानुरूपलिङ्गयोगोऽनुसर्तव्यः।—

**सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ ५८ ॥**
**वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च (वा)।**
**वातपित्तकफा देहे सर्वस्रोतोऽनुसारिणः ॥ ५९ ॥**
**वायुरेव हि सूक्ष्मत्वाद्द्वयोस्तत्राप्युदीरणः।**[1]
**कुपितस्तौ समुद्धूय तत्र तत्र क्षिपन् गदान् ॥ ६० ॥**
**करोत्यावृतमार्गत्वाद्रसादींश्चोपशोषयेत्।**

वातस्य पित्तादिसंसर्गं ज्ञापयन्नाह—सर्वेष्वित्यादि। पित्ताद्यैरिति पित्तकफरक्तपुरीषादिभिः। अथावृतस्य वायोः कथं कुपितत्वं भवति यावता आवृतो दुर्बल एव भवतीत्याह—वायोरित्यादि। धातुक्षयादिति सारक्षयात्। मार्गावरणेन वेगप्रतिबन्धादेव कुपितो भवति। अथ भवतु मार्गरोधाद्वातकोपः, आवरकेण तु पित्तेन कफेन चास्य कथं न संबन्धो भवतीत्याह—वातपित्तेत्यादि। त्रितयमेलकेऽपि वायोः प्राधान्यमाह—वायुरेव हि सूक्ष्मत्वादिति; सूक्ष्ममार्गानुसारितया प्रेरकत्वात्। तस्मात् त्रिष्वपि दोषेषु वायुरेवोक्तन्यायेन प्रधानम्, अतः कुपितः पित्तकफौ समुद्धूय ताभ्यामावृतमार्गोऽपि तत्र तत्र प्रदेशे गदान् करोति; तथा रसादींश्च तत्र तत्र क्षिपन् संशोषयेत् ॥ ५८–६० ॥—

**लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ ६१ ॥**
**कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता।**
**शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥ ६२ ॥**
**लङ्घनायासरूक्षोष्णकामिता च कफावृते।**
**रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजो भृशम् ॥६३॥**
**भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च।**
**कठिनाश्च विवर्णाश्च पिडकाः श्वयथुस्तथा ॥ ६४ ॥**
**हर्षः पिपीलिकानां च संचार इव मांसगे।**
**चलः स्निग्धो मृदुः शीतः शोफोऽङ्गेष्वरुचिस्तथा ६५**
**आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽऽवृतः।**
**स्पर्शमस्थ्नाऽऽवृते तूष्णं पीडनं चाभिनन्दति ॥६६॥**
**संभज्यते सीदति च सूचीभिरिव तुद्यते।**
**मज्जावृते विनामः स्याज्जृम्भणं परिवेष्टनम् ॥ ६७ ॥**[3]
**शूलं तु पीड्यमाने च पाणिभ्यां लभते सुखम्।**
**शुक्रावेगोऽतिवेगो वा निष्फलत्वं च शुक्रगे ॥६८॥**
**भुक्ते कुक्षौ च रुग्जीर्णे शाम्यत्यन्नावृतेऽनिले।**
**मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृतेऽनिले ॥ ६९ ॥**
**वर्चसोऽतिविबन्धोऽधः स्वे स्थाने परिकृन्तति।**
**व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ७० ॥**
**चिरात् पीडितमन्नेन दुःखं शुष्कं शकृत् सृजेत्।**
**श्रोणीवंक्षणपृष्ठेषु रुग्विलोमश्च मारुतः ॥ ७१ ॥**

१ 'मुहुर्वेगागमे गते' इति पा०। २ 'वाक्सङ्गमेव च' इति पा०। ३ 'पवनात् कुशलो भिषक्। सर्वाङ्गरोगं तद्वच्च सर्वदेहानुगेऽनिले' इति पा०। ४ 'क्रमात्तु' इति पा०। ५ 'यथोक्तलक्षणा' इति पा०।

१ '०द्वायोस्तत्राप्युदीरणः' इति पा०। २ 'क्रमः' इति पा०। ३ 'विनमति जृम्भते परिचेष्टते' इति पा०।

अस्वस्थं हृदयं चैव वर्चसा त्वावृतेऽनिले ।

आवरणकृतं वातकोपं दर्शयित्वा आवरणविशेषकृतं लिङ्गमाह—लिङ्गं पित्तावृते इत्यादि । कट्वाद्युपशय इति कट्वूष्णादिकफविपरीतैरुपशयः । अधिकमिति वातहरैरप्युपशयो नाधिको भवतीति दर्शयति । मांसगे इति मांसावृते । मांसगतस्य रक्तादिगतस्य च वातस्य पूर्वमेव लक्षणमुक्तम्, इह तु रक्ताद्यावृतस्य लक्षणमुच्यत इति विशेषः । आढ्यवातेति आयुर्वेदसंज्ञेयं मेदसाऽऽवृतवातस्य । स्वस्थाने इति पक्वाशये । परिकृन्ततीति परिकर्तिकां जनयति ॥ ६१–७१ ॥—

सन्धिच्युतिर्हनुस्तम्भः कुञ्चनं कुब्जताऽर्दितः ॥७२॥
पक्षाघातोऽङ्गसंशोषः पङ्गुत्वं खुडवातता ।
स्तम्भनं चाढ्यवातश्च रोगा मज्जास्थिगाश्च ये ॥७३॥
एते स्थानस्य गाम्भीर्याद्यत्नात् सिध्यन्ति वा न वा ।
नवान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ॥ ७४ ॥

साध्यासाध्यविभागमाह—सन्धिच्युतिरित्यादि । अत्र कुब्जत्वपङ्गुत्वादयो यद्यपि साक्षान्न प्रपञ्चितास्तथाऽपि शेषातिदेशेनैव तल्लक्षणं ज्ञेयम् । खुडवातता गुल्फवातता, किंवा संधिगतवातता । मज्जास्थिगा इति मज्जास्थ्यावृतमज्जास्थिगतवातजन्या इत्यर्थः । स्थानस्य गाम्भीर्यादिति गम्भीरस्थानाश्रितत्वात्; अन्ये तु गाम्भीर्यं कृतास्पदत्वमाहुः । यत्नात् सिध्यन्ति वा नवेति पाक्षिकसिद्धिवचनमितरवैद्याभिप्रायेण ज्ञेयम्; आचार्यस्तु आचार्यप्रख्यो वा वैद्यः साधयत्येव बलात्, इतरवैद्यस्तु नावश्यं सर्वत्राव्याहतज्ञानो भवति, तेन संशयाभिधानं; ततश्च न पारमार्थिकी संदिग्धता एतादृशानां साध्यतां प्रतीति ज्ञेयम् । नवानामप्येषां निरुपद्रवतया साध्यतामाह—नवानित्यादि । उपद्रवाश्चात्र शूलग्राहिकयाऽनुक्ता अपि सामान्योपद्रवलक्षणयुक्ता एव केचिद्वदा विज्ञेयाः; किंवा अध्यायशेषे 'हृद्रोगो विद्रधिः' इत्यादिना वक्ष्यमाणा उपद्रवा ज्ञेयाः ॥ ७२–७४ ॥

क्रियामतः परं सिद्धां वातरोगापहां शृणु ।
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ॥ ७५ ॥
वायुं सर्पिर्वसातैलमज्जपानैर्नरं ततः ।
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः ॥७६॥
यूषैर्ग्राम्याम्बुजानूपरसैर्वा स्नेहसंयुतैः ।
पायसैः कृशरैः साम्ललवणैरनुवासनैः ॥ ७७ ॥
नावनैस्तर्पणैश्चान्नैः सुस्निग्धं स्वेदयेत्ततः ।
स्वभ्यक्तं स्नेहसंयुक्तैर्नाडीप्रस्तरसङ्करैः ॥ ७८ ॥
तथाऽन्यैर्विविधैः स्वेदैर्यथायोगमुपाचरेत् ।
स्नेहाक्तं स्विन्नमङ्गं तु वक्रं स्तब्धमथापि वा ॥ ७९ ॥
शनैर्नामयितुं शक्यं यथेष्टं शुष्कदारुवत् ।
हर्षतोदरुगायामशोथस्तम्भग्रहादयः ॥ ८० ॥
स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ।
स्नेहश्च धातून्संशुष्कान् पुष्णात्याशु प्रयोजितः ॥८१॥
बलमग्निबलं पुष्टिं प्राणांश्चाप्यभिवर्धयेत् ।
असकृत्तं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत् ॥ ८२ ॥
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ।

अवसरप्राप्तां क्रियामाह—क्रियामत इत्यादि । केवलमित्यादौ केवलमिति असंसृष्टम् । निरुपस्तम्भमिति अनावृतम् । कैः? स्नेहैः । कथं चोपाचरेदित्याह—सर्पिर्वसातैलमज्जपानैरिति । स्नेहपानप्रयोगानन्तरं कर्तव्यमाह—नरं ततः स्नेहक्लान्तमित्यादि । स्नेहक्लान्तमिति स्नेहपानोद्विग्नं स्नेहग्लानं च । समाश्वास्येति विश्रमयित्वा । स्नेहयेदितिपदं तर्पणैः पानैरित्यन्तं यावदनुवर्तते । अन्यैरिति कुटीभूस्वेदादिभिः । यथायोगमिति सर्वथा स्नेहपूर्वकस्वेदम् । स्नेहपूर्वकस्वेदगुणमाह—स्नेहाक्तं स्विन्नमित्यादि । स्वेदाध्याये "स्नेहपूर्वं प्रयुक्तेन" ( सू. अ. १४ ) इत्यादिनोक्तोऽप्ययं स्नेहपूर्वकस्वेदगुणः पुनः प्रकरणागतत्वादुच्यते । आशु प्रयोजित इति पदं पुष्णातीत्यनेन संबध्यते । अनिलामया न तिष्ठन्ति न स्थायिनो भवन्तीत्यर्थः ॥७५–८२॥—

यद्यनेन सदोषत्वात् कर्मणा न प्रशाम्यति ॥ ८३ ॥
मृदुभिः स्नेहसंयुक्तैरौषधैस्तं विशोधयेत् ।
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥ ८४ ॥
पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम् ।
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ८५ ॥
स्रोतो बद्ध्वाऽनिलं रुन्ध्यात्तस्मात्तमनुलोमयेत् ।
दुर्बलो योऽविरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ ८६ ॥
पाचनैर्दीपनीयैर्वा भोजनैस्तद्युतैर्नरम् ।
संशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ ८७ ॥
स्वाद्वम्ललवणस्निग्धैराहारैः सततं पुनः ।
नावनैर्धूमपानैश्च सर्वानेवोपपादयेत् ॥ ८८ ॥
इति सामान्यतः प्रोक्तं वातरोगचिकित्सितम् ।

यद्यनेन सदोषत्वादित्यादि । अत्र केवलो निरुपस्तम्भश्च वायुश्चिकित्स्यत्वेनाधिकृतः, तस्य सदोषत्वमनुपपन्नं; ततः सदोषत्वं कर्मणि योजनीयं; तेन कर्मणोऽविशुद्धत्वाद् वायुर्न प्रशाम्यति, कर्मणश्चोक्तस्याप्यत्राशुद्धिर्मलजनकत्वात्; वक्ष्यति हि "स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः" इत्यादि । किंवा सदोषत्वादित्यनेनोत्तरकालीनं वायोः संशमनमुच्यते, असंसृष्टत्वमनुपस्तम्भत्वं च यदुक्तं तदुपक्रमारम्भकाले ज्ञेयम् । सदोषत्वं च स्नेहप्रयोगेणानुपशमे संशोधनकरणे च हेतुः । समलत्वमेवोत्तरकालीनं कुतो भवतीत्याह—स्निग्धेत्यादि । दुर्बलो योऽविरेच्य

१ 'गात्रस्रेषः' इति पा० । २ 'सन्धिच्युतिः पक्षवधः' इति पा० । ३ '°श्चान्यैः' इति पा० । ४ 'स्नेहार्द्रं' इति पा० ।

१ 'विश्वासयित्वा' इति पा० । २ 'बध्नाति तं रुद्ध्वा' इति पा० ।

इति दुर्बलत्वप्रकर्षेणाविरेच्य इत्यर्थः। तथा हि "अनास्थाप्यास्त्वजीर्णी" (सि. अ. २) इत्यादौ अतिदुर्बलः पठितः। अत्यर्थं दुर्बलतया वस्त्यनर्हेऽपि विधिमाह—पाचनदीपनीयैश्चेति। पाचनं किंचिन्न दीपनं, यथा पटोलं दीपनं; दीपनं किंचिन्न पाचनं यथा त्रिफला; उक्तं हि सुश्रुते—"त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी। चक्षुष्या दीपनी च" (सु. सू. अ. ३८) इति; अतः पाचनैरित्यस्य दीपनैरिति विशेषणं कृतम्। भोज्यैर्वा तद्युतैरिति पाचनदीपनसंयुक्तैर्भोज्यैः। उत्थिते चाग्नौ इति दीप्ते वह्नौ ॥ ८३–८८ ॥—

विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ ८९ ॥
पाचनैर्दीपनैर्युक्तैरम्लैर्वा पाचयेन्मलान्।
गुदपक्वाशयस्थे तु कर्मोदावर्तनुद्धितम् ॥ ९० ॥
आमाशयस्थे शुद्धस्य यथादोषहरीः क्रियाः।
सर्वाङ्गकुपितेऽभ्यङ्गो वस्तयः सानुवासनाः ॥ ९१ ॥
स्वेदाभ्यङ्गावगाहाश्च हृद्यं चान्नं त्वगाश्रिते।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ९२ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ ९३ ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं दृष्ट्वा वा शुक्रं दद्याद्विरेचनम् ॥ ९४ ॥
विरिक्तप्रतिभुक्तस्य पूर्वोक्तां कारयेत् क्रियाम्।
गर्भे शुष्के तु वातेन बालानां चापि शुष्यताम् ९५
सिताकाश्मर्यमधुकैर्हितमुत्थापने पयः।
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ॥ ९६ ॥
मत्स्यान्नाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः।
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ॥ ९७ ॥
तैलं संकुचितेऽभ्यङ्गो माषसैन्धवसाधितम्।
बाहुशीर्षगते नस्यं पानं चौत्तरभक्तिकम् ॥ ९८ ॥
वस्तिकर्म त्वधो नाभेः शस्यते चावपीडकः।

स्थानविशेषेण क्रियाविशेषमाह—विशेषतस्त्वित्यादिना अधो नाभेः शस्यते चावपीडक इत्यन्तेन। क्षारं यवक्षारम्, उक्तं हि "यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां" (सू. अ. २५); किंवा क्षारमिति ग्रहण्यादिनिर्दिष्टं दीपनक्षारम्। उदावर्तनुत्कर्म त्रिमर्मीये "तं तैलशीतज्वरनाशनाक्तं" (चि. अ. २६) इत्यादिनोक्तं ज्ञेयम्। स्वेदा इत्यादि त्वग्गतानिलचिकित्सितम्। प्रहर्षः मनोहर्षणम्। विरेचनानन्तरं प्रतिभोजितो विरिक्तप्रतिभुक्तः। पूर्वोक्तामिति शुक्रजननहर्षिणीं क्रियाम्। उत्थापने इति पुष्टिजनने सितादिभिः सिद्धं पयो हितम्। अंशुमती शालपर्णी। मत्स्यानिति नाभिप्रदेशे कुपिते वाते मत्स्या बिल्वशलाटुभिः समं सिद्धा देयाः। नाभिप्रदेशकोपश्च वातस्यानुक्तोऽपीह तत्र भवशूलतोदादिभिर्ज्ञेयः। वेष्ट्यमान इति अवमोट्यमाने। उपनाहनं च वातहरद्रव्यैरेव कर्तव्यम्। नस्ये पाने च औत्तरभक्तिकं माषसैन्धवसाधितमेव तैलं ज्ञेयम्। तत्र च माषस्य क्वाथः, सैन्धवस्य कल्कः। सर्पिषोऽवपीडकः यत्र सर्पिः पीत्वा तत्पीडकमन्नं भुज्यते ॥ ८९–९८ ॥—

अर्दिते नावनं मूर्ध्नि तैलं तर्पणमेव च ॥ ९९ ॥
नाडीस्वेदोपनाहाश्चाप्यानूपपिशितैर्हिताः।
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ १०० ॥
अन्तराकण्डरागुल्फं सिरा वस्त्यग्निकर्म च।
गृध्रसीषु प्रयुञ्जीत खल्ल्यां तूष्णोपनाहनम् ॥ १०१ ॥
पायसैः कृशरैर्मांसैः शस्तं तैलघृतान्वितैः।
व्यात्ताननेऽहनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च ॥१०२॥
प्रदेशिनीभ्यां चोन्नाम्य चिबुकोन्नामनं हितम्।
स्रस्तं स्वं गमयेत्स्थानं स्तब्धं स्विन्नं विनामयेत् १०३

अर्दितादिचिकित्सामाह—अर्दिते इत्यादि। तर्पणमिति नावनविशेषणं; किंवा तर्पणं संतर्पणमेव। अन्तराकण्डरागुल्फं सिरेति कण्डरागुल्फयोर्मध्ये सिराव्यधनं कर्तव्यम्। गृध्रसीष्विति बहुवचनं व्यक्तिभेदतया। व्यात्ताननमिति विवृतास्यम्। प्रदेशिनी अङ्गुष्ठानन्तराऽङ्गुली ॥ ९९–१०३ ॥

प्रत्येकं स्थानदूष्यादिक्रियावैशेष्यमाचरेत्।

अनुक्तविशेषचिकित्सोपग्रहणार्थमाह—प्रत्येकमित्यादि। स्थानं पक्वाशयादि, दूष्यं रसरक्तादि, आदिग्रहणादावरणग्रहणम्। स्थानदूष्यापेक्षः क्रियाविशेषस्तु 'कोष्ठस्थे' इत्यादिनैवोक्तः ॥—

सर्पिस्तैलवसामज्जसेकाभ्यञ्जनवस्तयः ॥ १०४ ॥
स्निग्धाः स्वेदा निवातं च स्थानं प्रावरणानि च।
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च १०५
बृंहणं यच्च तत् सर्वं प्रशस्तं वातरोगिणाम्।

सर्ववातविकारसमानं चिकित्सितमाह—सर्पिस्तैलमित्यादि ॥ १०४ ॥ १०५ ॥—

बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ॥ १०६ ॥
अजशीर्षाम्बुजानूपमांसादपिशितैः पृथक्।
साधयित्वा रसान् स्निग्धान्दध्यम्लव्योषसंस्कृतान् ॥
भोजयेद्वातरोगार्तं तैर्व्यक्तलवणैर्नरम्।
एतैरेवोपनाहांश्च पिशितैः संप्रकल्पयेत् ॥ १०८ ॥
घृततैलयुतैः साम्लैः क्षुण्णस्विन्नैरनस्थिभिः।
पत्रोत्क्वाथपयस्तैलद्रोण्यः स्युरवगाहने ॥ १०९ ॥

१ 'क्षीरं' इति पा०। २ 'पाचनीयै रसैर्युक्तैरन्यैर्वा' इति पा०।

१ 'कण्डराङ्गुल्योः' इति पा०। २ 'व्यादितास्ये' इति पा०। ३ '°क्रियां सर्वत्र कारयेत्' इति पा०। ४ 'पानाभ्यञ्जन°' इति पा०।

खञ्जकानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम् ।
आनूपौदकमांसानि दशमूलं शतावरीम् ॥ ११० ॥
कुलत्थान् बदरान्माषांस्तिलात्रास्नां यवान् बलाम् ।
वसादध्यारनालाम्लैः सह कुम्भ्यां विपाचयेत् १११
नाडीस्वेदं प्रयुञ्जीत पिष्टैश्चाप्युपनाहनम् ।
तैश्च सिद्धं घृतं तैलमभ्यङ्गं पानमेव च ॥ ११२ ॥
मुस्तं किण्वं तिलाः कुष्ठं सुराह्वं लवणं नतम् ।
दधिक्षीरचतुःस्नेहैः सिद्धं स्यादुपनाहनम् ॥ ११३ ॥
उत्कारिकावेसवारक्षीरमाषतिलौदनैः ।
एरण्डबीजगोधूमयवकोलस्थिरादिभिः ॥ ११४ ॥
सस्नेहैः सरुजं गात्रमालिप्य बहलं भिषक् ।
एरण्डपत्रैर्बध्नीयाद्रात्रौ कल्यं विमोक्षयेत् ॥ ११५ ॥
क्षीराम्बुना ततः सिक्तं पुनश्चैवोपनाहितम् ।
मुञ्चेद्रात्रौ दिवाबद्धं चर्मभिश्च सलोमभिः ॥ ११६ ॥
फलानां तैलयोनीनामम्लपिष्टान् सुशीतलान् ।
प्रदेहानुपनाहांश्च गन्धैर्वातहरैरपि ॥ ११७ ॥
पायसैः कृशरैश्चैव कारयेत् स्नेहसंयुतैः ।

बलाया इत्यादौ पृथक्शब्दाद् बलादयस्त्रयः साधनद्रव्यप्रयोगाः, तेष्वजशीर्षादयश्चत्वारः पृथक् साध्याः, एवं द्वादश रसा भवन्ति । कल्यमिति प्रभाते । फलानां तैलयोनीनामिति तिलातस्यादीनाम् । प्रदेहानुपनाहांश्चेत्यत्र प्रदेह उपनाहापेक्षया तनुर्लेपः । गन्धैरिति अगुर्वाद्यैः ॥ १०६-११७ ॥—

रूक्षशुद्धानिलार्तानामतः स्नेहान् प्रचक्ष्महे ॥ ११८ ॥
विविधान् विविधव्याधिप्रशमायामृतोपमान् ।
द्रोणेऽम्भसः पचेद्भागान् दशमूलाच्चतुष्पलान् ११९
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ।
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः ॥ १२० ॥
तथा खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः ।
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत् ॥ १२१ ॥
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनबस्तिषु ।
चित्रकं नागरं रास्नां पौष्करं पिप्पलीं शटीम् १२२
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम् ।
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ॥ १२३ ॥
तस्य शुक्तिः प्रकुञ्चो वा नस्यं मूर्धगतेऽनिले ।
ग्राम्यानूपौदकानां तु भित्त्वाऽस्थीनि पचेज्जले १२४
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ।
जीवकर्षभकास्फोताविदारीकपिकच्छुभिः ॥ १२५ ॥
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ।
तत्सिद्धं नावनाभ्यञ्जात्तथा पानानुवासनात् १२६
सिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ।
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ॥ १२७ ॥
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ।
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा ॥ १२८ ॥
प्रत्यग्रा विधिनाऽनेन नस्यपानेषु शस्यते ।
प्रस्थः स्यात्त्रिफलायास्तु कुलत्थकुडवद्वयम् ॥ १२९ ॥
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् ।
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ॥ १३० ॥
जलद्रोणे पचेत् पादशेषे प्रस्थोन्मितं पृथक् ।
सुरारनालदध्यम्लसौवीरकतुषोदकम् ॥ १३१ ॥
कोलदाडिमवृक्षाम्लरसं तैलं वसां घृतम् ।
मज्जानं च पयश्चैव जीवनीयपलानि षट् ॥ १३२ ॥
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ।
सिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ॥ १३३ ॥
वेपनाक्षेपशूलेषु तदभ्यङ्गे प्रयोजयेत् ।
निर्गुण्ड्या मूलपत्राभ्यां गृहीत्वा स्वरसं ततः १३४
तेन सिद्धं समं तैलं नाडीकुष्ठानिलार्तिषु ।
हितं पामापचीनां च पानाभ्यञ्जनपूरणम् ॥ १३५ ॥
कार्पासास्थिकुलत्थानां रसे सिद्धं च वातनुत् ।

रूक्षशुद्धेत्यादौ शुद्धानिलार्ताः केवलवातपीडिताः । घृतमण्डः घृतस्योपरितनो भागः । शुक्तिः अर्धपलं, प्रकुञ्चः पलम् । तद्वत्सिद्धेति बलाबिल्वप्रभृतिशृतक्षीरसिद्धा । चुलुकी शिशुमारः । प्रत्यग्रेति अभिनवा । नस्यपानेष्विति नस्येषु पानेषु च । कृष्णगन्धात्वक् शोभाञ्जनत्वक् । महास्नेहमिति चतुःस्नेहम् । तेन सिद्धं तैलमित्यत्र सममिति निर्गुण्डीरससमं, नतु समशब्दः सहार्थः; सहार्थस्य तृतीययैवोक्तत्वात् । नाडी नाडीव्रणः; नाडीव्रणस्य सुश्रुतादिषु पञ्चविधत्वमुक्तं ज्ञेयम् । अपची च हन्वस्थिकक्षादिदेशभवा ॥ ११८-१३५ ॥—

मूलकस्वरसे क्षीरसमे स्थाप्यं त्र्यहं दधि ॥ १३६ ॥
तस्याम्लस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत् ।
यष्ट्याह्वशर्करारास्नालवणार्द्रकनागरैः ॥ १३७ ॥
सुपिष्टैः पलिकैः पानात्तदभ्यङ्गाच्च वातनुत् ।

मूलकस्वरस इत्यादौ मूलकस्वरसे समक्षीरे दधि स्थाप्यं; तस्याम्लस्येति मूलरसादेरम्लतां गतस्य । अत्र च त्रिभिः प्रस्थैरिति वचनात् मूलकरसादीनां प्रत्येकं प्रस्थमानत्वम् । उक्तं हि जतूकर्णे—"विपचेद् दधिमूलकरसपयसा" इत्यादि ॥ १३६ ॥ १३७ ॥—

१ एतदनन्तरं 'ग्राम्येत्याद्युक्तप्रयोगानन्तरं तद्वत्सिद्धा वसा नक्रेत्यादिग्रन्थं पूर्वंव्याख्यातमिति पठन्ति' इत्यधिकः पाठ उपलभ्यते हस्तलिखितपुस्तके ।

पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम् ॥ १३८ ॥
पक्त्वा तस्य रसं पूत्वा तैलप्रस्थं विपाचयेत् ।
पयसाऽष्टगुणेनैतत् सर्ववातविकारनुत् ॥ १३९ ॥
संसृष्टे श्लेष्मणा चैतद्वाते शस्तं विशेषतः ।
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात् ॥१४०॥
बिल्वाच्चाञ्जलिमेकैकं द्रवैरम्लैर्विपाचयेत् ।
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा ॥ १४१ ॥
पिष्टैः सिद्धं महावातैरार्तः शीते प्रयोजयेत् ।

पञ्चमूलकषायेणेत्यादौ पञ्चमूलीकषायं तथा पिण्याकक्कथितं जलं च पृथग्देयमिति केचिद्वदन्ति, वयं तु पञ्चमूलीकषायेणैव जलस्थानीयेन साधितपिण्याकस्य रसमत्रेच्छामः । पाठश्च 'पञ्चमूलीकषायेण पिण्याकं बहुवार्षिकम् । पक्त्वा तस्य रसं पूत्वा' इत्यादि पठ्यते; जातूकर्णेऽपि "पिण्याकं बहुवार्षिकं स्थिरादिसलिले पचेत्, रसेऽस्मिन्नष्टगुणेन पयसा तैलं साध्यम्" इति । द्रवैरम्लैरिति काञ्जिकतक्रादिभिः । फलाम्लैरिति अम्लफलैर्दाडिमादिभिः ॥ १३८–१४१ ॥—

सर्ववातविकाराणां तैलान्यन्यान्यतः शृणु ॥ १४२ ॥
चतुष्प्रयोगाण्यायुष्यबलवर्णकराणि च ।
रजःशुक्रप्रदोषघ्नान्यपत्यजननानि च ॥ १४३ ॥
निरत्ययानि सिद्धानि सर्वदोषहराणि च ।
सहाचरतुलायाश्च रसे तैलाढकं पचेत् ॥ १४४ ॥
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ।
सिद्धेऽस्मिञ्छर्कराचूर्णादद्याद्दशपलं भिषक् ॥१४५॥
विनीय दारुणेष्वेतद्वातव्याधिषु योजयेत् ।
श्वदंष्ट्राखरसप्रस्थौ द्वौ समौ पयसा सह ॥ १४६ ॥
षट्पलं शृङ्गवेरस्य गुडस्याष्टपलं तथा ।
तैलप्रस्थं विपक्वं तैर्दद्यात् सर्वानिलार्तिषु ॥ १४७ ॥
जीर्णे तैले च दुग्धेन पेयाकल्पः प्रशस्यते ।
बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम् ॥१४८॥
जलाढकशते पक्त्वा दशभागस्थिते रसे ।
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः ॥ १४९ ॥
पचेत् साजपयोऽर्धांशैः कल्कैरेभिः पलोन्मितैः ।
शटीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ १५० ॥
पद्मकातिविषामुस्तसूर्पपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ १५१ ॥
पलाशरसकस्तूरीनलिकाजातिकोषकैः ।
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः ॥ १५२ ॥
त्वचाकुन्दुरुकर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकक्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ १५३ ॥
स्थौणेयतगरध्यामवचामदनपल्लवैः ।
सनागकेशरैः सिद्धे क्षिपेच्चात्रावतारिते ॥ १५४ ॥
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजयेत् ।
श्वासं कासं ज्वरं हिक्कां छर्दिं गुल्मान् क्षतं क्षयम् ॥
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ १५६ ॥
( अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् । )

इति बलातैलम् ।

चतुष्प्रयोगाणीति पानाभ्यञ्जननस्यानुवासनयोगीनि । सहाचरेत्यादौ मूलकल्काद्दशपलमित्यनेन सहचरमूलादेव दशपलः कल्को देयः; जतूकर्णे त्वत्र मूलकस्यैव कल्क उक्तः । जीर्णे तैले इत्यादि पीते तैले जीर्णे सति । क्षीरेण पेयाविधानमत्र प्रयोगसात्म्यत्वात् । गुडूच्याः पादमिति पञ्चविंशतिपलानि । रास्नाष्टभागिकमिति गतापेक्षया रास्नाया अष्टभागेनार्धत्रयोदशपलानि भवन्ति । साजपयोऽर्धांशमिति छागक्षीरार्धयुक्तम् । सूर्पपर्ण्यौ मुद्गमाषपर्ण्यौ । रसः गन्धरसः । नलिका खनामख्याता । कटुफला लताकस्तूरी, अन्ये सुगन्धि दक्षिणापथप्रसिद्धं पयल(?)माहुः । तुरुष्कः सिल्हकः । नखी खल्पनखी । पत्रकल्कमिति सुगन्धित्वादस्य तैलस्य गन्धशास्त्रपरिभाषया पत्रकल्को देय इत्युच्यते; गन्धशास्त्रे च "चूर्णखरसपुष्पाणां सिद्धशीतेऽवतारिते । दीयते गन्धवृद्ध्यर्थं पत्रकल्को मनीषिभिः" इति; तेनात्र कर्पूरादिपत्रकल्कोऽवतारिते एव देयः ॥ १४२–१५६ ॥—

अमृतायास्तुलाः पञ्च द्रोणेष्वष्टस्वपां पचेत् ॥१५७॥
पादशेषे समक्षीरं तैलस्य द्व्याढकं पचेत् ।
पलामांसीनतोशीरसारिवाकुष्ठचन्दनैः ॥ १५८ ॥
वेलातामलकीमेदाशतपुष्पर्धिजीवकैः ।
काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः ॥१५९॥
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः ।
शतावरीमहामेदाकर्कटाख्याहरेणुभिः ॥ १६० ॥
वचागोक्षुरकैरण्डरास्नाकालासहाचरैः ।
वीराशल्लकिमुस्तत्वक्पत्रर्षभकबालकैः ॥ १६१ ॥
सहैलाकुङ्कुमस्पृक्कात्रिदशाह्वैश्च कार्षिकैः ।
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च ॥ १६२ ॥
कल्कैस्तत् क्षीणवीर्याग्निबलसंमूढचेतसः ।
उन्मादारत्यपस्मारैरार्तांश्च प्रकृतिं नयेत् ॥ १६३ ॥
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम् ।
( कृष्णात्रेयेण गुरुणा भाषितं वैद्यपूजितम् ॥१६४॥ )

इत्यमृताद्यं तैलम् ।

१ 'पक्त्वाऽम्भसि रसे तस्मिन्' इति पा० । २ 'त्वकुचन्दनैलाकर्पूर°' इति पा० ।

१ 'मुर्च्छा' इति पा० । २ 'शतपुष्पाबलामेदामहामेदर्धिजीवकैः' इति पा० । अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

अमृताया इत्यादौ महाश्रावणी बृहन्मुण्डितिका । काला कालानुसारिवा । त्रिदशाह्वः देवदारुः ॥ १५७–१६४ ॥

रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्तिनुत् ॥ १६५ ॥
कल्पोऽयमश्वगन्धायां प्रसारण्यां बलाद्वये ।
क्वाथकल्कपयोभिर्वा बलादीनां पचेत् पृथक् ॥१६६॥
इति रास्नातैलम् ।

रास्नासहस्रनिर्यूहे इत्यादौ हैमवतैरिति हिमालयभूतैः अगरुकुष्ठक्षेमकादिभिः । एलाद्यैरिति अमृताद्ये एलामांसीनतेलादिनोक्तैः । एष कल्प इत्यनन्तरोक्तरास्नाकल्पो बलादिष्वपि वक्तव्यः । बलादीनामिति अनन्तरोक्तानां बलाप्रसारण्यश्वगन्धानाम् ॥ १६५ ॥ १६६ ॥

मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥१६७॥
पिप्पल्यतिविषारास्नाचविकागुरुशिग्रुकैः ।
भल्लातकवचाकुष्ठश्वदंष्ट्राविश्वभेषजैः ॥ १६८ ॥
पुष्कराह्वशटीबिल्वशताह्वानतदारुभिः ।
तत्सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान्॥
इति मूलकाद्यं तैलम् ।

वृषमूलगुडूच्योश्च द्विशतस्य शतस्य च ।
चित्रकात् साश्वगन्धाच्च क्वाथे तैलाढकं पचेत् १७०
सक्षीरं वायुना भग्ने दद्याज्जर्जरिते तथा ।
प्राक्तैलावापसिद्धं च भवेदेतद्गुणोत्तरम् ॥ १७१ ॥
इति वृषमूलादितैलम् ।

वृषमूलेत्यादौ अश्वगन्धाचित्रकाभ्यां मिलिताभ्यां तुला । प्राक्तैलावापसिद्धमिति मूलकस्वरसमित्याद्युक्ततैलकल्केन समं वृषमूलादिक्वाथेन च सिद्धम् । भवेत्तद्द्विगुणोत्तरमिति पाठे वृषमूलादिक्वाथसिद्धात्तैलाद् द्विगुणं श्रेष्ठम् ॥ १६७–१७१ ॥

रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृताः ॥ १७२ ॥
स्योनाकदारुशम्पाकहयगन्धात्रिकण्टकाः ।
एषां दशपलान् भागान् कषायमुपकल्पयेत् ॥१७३॥
ततस्तेन कषायेण सर्वगन्धैश्च कार्षिकैः ।
दध्यारनालमाषाम्बुमूलकेक्षुरसैः शुभैः ॥ १७४ ॥
पृथक् प्रस्थोन्मितैः सार्धं तैलप्रस्थं विपाचयेत् ।
प्लीहमूत्रग्रहश्वासकासमारुतरोगनुत् ॥ १७५ ॥
एतन्मूलकतैलाख्यं वर्णायुर्बलवर्धनम् ।
इति मूलकतैलम् ।

यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः ।
रसेन मूलकानां च तैलं दधिपयोन्वितम् ॥ १७६ ॥
साधयित्वा भिषग्दद्यात् सर्ववातामयापहम् ।
लशुनस्वरसे सिद्धं तैलमेभिश्च वातनुत् ॥ १७७ ॥
तैलान्येतान्यृतुस्नातामङ्गनां पाययेत च ।
पीत्वाऽन्यतममेषां हि वन्ध्याऽपि जनयेत् सुतम् ॥
यच्च शीतज्वरे तैलमगुर्वाद्यमुदाहृतम् ।
अनेकशतशस्तच्च सिद्धं स्याद्वातरोगनुत् ॥ १७९ ॥
वक्ष्यन्ते यानि तैलानि वातशोणितकेऽपि च ।
तानि चानिलशान्त्यर्थं सिद्धिकामः प्रयोजयेत् १८०
नास्ति तैलात् परं किंचिदौषधं मारुतापहम् ।
व्यवाय्युष्णगुरुस्नेहात् संस्काराद्बलवत्तरम् ॥१८१॥
गणैर्वातहरैस्तस्माच्छतशोऽथ सहस्रशः ।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान् गदान्१८२

सर्वगन्धैश्चेति बलातैलोक्तैः सर्वगन्धैः । सार्धमिति सहितम् । मूलकतैलाख्यमितिसंज्ञया तत्र रास्नादीनां मूलेनैव क्वाथसाधनं दर्शयति । लशुनस्वरसे इत्यादौ एभिश्चेति यवादिक्वाथैरनन्तरोक्तैः । अनेकशतशस्तच्च सिद्धमिति अनेकशतशस्तेनैव विधानेन साधितं सदित्यर्थः ॥ १७२–१८२ ॥

क्रिया साधारणी सर्वा संसृष्टे चापि शस्यते ।
वाते पित्तादिभिः स्रोतःस्वावृतेषु विशेषतः ॥१८३॥
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम् ।
व्यत्यासात् कारयेत् सर्पिर्जीवनीयं च शस्यते १८४
धन्वमांसं यवाः शालिर्यापनाः क्षीरवस्तयः ।
विरेकः क्षीरपानं च पञ्चमूलीबलाशृतम् ॥ १८५ ॥
मधुयष्टिबलातैलघृतक्षीरैश्च सेचनम् ।
पञ्चमूलकषायेण कुर्याद्वा शीतवारिणा ॥ १८६ ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥१८७॥
जीर्णं सर्पिस्तथा तैलं तिलसर्षपजं हितम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥१८८॥

संप्रति दोषान्तरादिसंसृष्टवातचिकित्सामाह—क्रिया साधारणी त्यादि । साधारणीति या वाते सा संसर्गिणि च पित्तादौ समाना संसर्गहितेति यावत्; न केवलं संसृष्टे वायौ साधारणी, किंतु वातपित्तादिभिः स्रोतःस्वावृतेष्वपि साधारणी कर्तव्या । वातेन वातावरणमग्रे वक्ष्यति । केचित्तु 'वाते पित्तादिभिः' इति पठन्ति; अयं पाठः सुगमः । विशिष्टसूत्रितां क्रियामाह—पित्तावृते इत्यादि । व्यत्यासादिति परिवर्तनेन शीतां कृत्वोष्णाम्, उष्णां च कृत्वा शीतां कुर्यादित्यर्थः । यापना वस्तयः सिद्धौ वक्ष्यमाणाः । पित्तमादौ विनिर्जयेदिति वचनेन कफापेक्षया पित्तस्याशुकारितया पित्तजयमेवोपदिशति ॥ १८३–१८८ ॥

१ "°माषाम्ल°" इति पा० । २ 'प्लीहपार्श्वग्रहश्वास°' इति पा० । ३ 'रास्नातैलमिति स्यात्' इति पा० ।

आमाशयगतं मत्वा कफं वमनमाचरेत् ॥ १८९ ॥
पक्वाशये विरेकं तु पित्ते सर्वत्रगे तथा।
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशये स्थितः १९०
पित्तं वा दर्शयेल्लिङ्गं वस्तिभिस्तौ विनिर्हरेत्।
श्लेष्मणाऽनुगतं वातमुष्णैर्गोमूत्रसंयुतैः ॥ १९१ ॥
निरूहैः पित्तसंसृष्टं निर्हरेत् क्षीरसंयुतैः।
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत् ॥ १९२ ॥
शिरोगते तु सकफे धूमनस्यादि कारयेत्।
हृते पित्ते कफे यः स्यादुरःस्रोतोऽनुगोऽनिलः १९३
सशेषः स्यात् क्रिया तत्र कार्या केवलवातिकी।
शोणितेनावृते कुर्याद्वातशोणितकीं क्रियाम् ॥१९४॥
प्रमेहवातमेदोघ्नीमामवाते प्रयोजयेत्।
स्वेदाभ्यङ्गरसक्षीरस्नेहा मांसावृते हिताः ॥ १९५ ॥
महास्नेहोऽस्थिमज्जस्थे पूर्ववद्रेतसाऽऽवृते।
अन्नावृते तदुल्लेखः पाचनं दीपनं लघु ॥ १९६ ॥
मूत्राणि तु मूत्रेण स्वेदाः सोत्तरवस्तयः।
शकृता तैलमैरण्डं स्निग्धोदावर्तवत्क्रिया ॥ १९७ ॥
स्वस्थानस्थो बली दोषः प्राक् तं स्वैरौषधैर्जयेत्।
वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा ॥ १९८ ॥
(इत्युक्तमावृते वाते पित्तादिभिर्यथायथम्।)

आमाशयगतं मत्वा कफमिति वातानुबन्धिकफस्यैवेयं चिकित्सा। पक्वाशये विरेकं विवत्र 'कफे' इत्यनुवर्तते। सर्वत्रगे इति अन्यस्थानगतेऽपि पित्ते। यद्यपि दोषान्तरस्थानगते तद्दोषप्रधानमेव कर्म वमनं वस्तिर्वा युक्तः, तथाऽप्यनेन विरेचनमपि तत्र यौगिकमिति दर्शयति। सकफे इति सकफे वाते। 'उरःस्रोतोगते' इति केचित् पठन्ति, तत्र सूक्ष्मस्रोतोऽनुगते इत्यर्थः। प्रमेहवातमेदोघ्नीमिति प्रमेहघ्नीं वातघ्नीं मेदोघ्नीं च। महास्नेह इति चतुःस्नेहोऽत्रैवोक्तः। पूर्ववद्रेतसाऽऽवृते इति शुक्रस्थे वाते या क्रिया पूर्वमुक्ता सा रेतसाऽऽवृतेऽपि वाते कार्या। उल्लेख इति उल्लेखनं वमनम्। मूत्रलानीति मूत्रवैरेचनिकानि। शकृता इति मलेन। स्वस्थानस्थ इत्यादि स्वस्थानस्थो यस्मात् स्थानोपबृंहणाद्बली दोषो भवति तस्मात् प्राक् स्वैरौषधैर्जयेत्। कतमैः स्वैरौषधैरित्याह—वमनैरित्यादि। शमनेनेति कफादिशमनेनैव; शमनं च शोधनानन्तरं शोधनानर्हे वा ज्ञेयम् ॥१८९-१९८॥

मारुतानां हि पञ्चानामन्योन्यावरणे शृणु ॥ १९९ ॥
लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ!।
प्राणो वृणोत्युदानादीन् प्राणं वृण्वन्ति तेऽपि च २००
उदानाद्यास्तथाऽन्योन्यं सर्व एव यथाक्रमम्।
विंशतिर्वरणान्येतान्युल्वणानां परस्परम् ॥ २०१ ॥
मारुतानां हि पञ्चानां तानि सम्यक् प्रतर्कयेत्।
सर्वेन्द्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम् २०२
व्याने प्राणावृते लिङ्गं कर्म तत्रोर्ध्वजत्रुकम्।
स्वेदोऽत्यर्थं लोमहर्षस्त्वग्दोषः सुप्तगात्रता ॥ २०३ ॥
प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम्।
प्राणावृते समाने स्युर्जडगद्गदमूकताः ॥ २०४ ॥
चतुष्प्रयोगाः शस्यन्ते स्नेहास्तत्र सयापनाः।
समानेनावृतेऽपाने ग्रहणीपार्श्वहृद्गदाः ॥ २०५ ॥
शूलं चामाशये तत्र दीपनं सर्पिरिष्यते।

मारुतानामन्योन्यावरणमाह—मारुतानामित्यादि। यद्यपि चेह वायोरमूर्तत्वं वातकलाकलीये प्रोक्तं, तथाऽपीदममूर्तत्वमकठिनवाचकं न त्ववयवप्रतिषेधकं; तेन वायोः वाय्वन्तरेण गतिहननरूपमावरणमुपपन्नमेव; दृष्टा च वायुना वाय्वन्तरेणोपहतेन वातकुण्डलिता बहिरपि, तेनोपपन्नमावरणं वातानां परस्परम्। प्राणो वृणोत्युदानादीनित्यादिना विंशत्यावरणान्युक्तानि। प्राणो वृणोत्युदानादीनित्यनेन चत्वार्यावरणानि, प्राणं वृण्वन्ति तेऽपि चेत्यनेन च चत्वारि, उदानाद्यास्तथाऽन्योन्यमित्यनेन द्वादशावरणान्युच्यन्ते। तत्रोदानेन व्यानादीनां त्रयाणामावरणे त्रीणि, तथा व्यानाद्यैश्चोदानावरणे त्रीणि, तथा व्यानेन समानापानावरणे द्वे, ताभ्यां च व्यानावरणे द्वे, परिशिष्टयोश्चान्योन्यावरणे द्वे, एवं द्वादशावरणानि पूर्वाष्टकयुक्तानि विंशतिर्भवन्ति। उल्वणानामिति वृद्धानां; किंवा उल्वणानामिति आविष्कृततमानां मिलितानां पञ्चानां; तेनैतेषामेकद्वित्र्यादिसंसर्गेणावार्यावरकतया भेदाद्बहुविधमावरणं भवतीति दर्शयति ॥ १९९-२०५ ॥—

शिरोग्रहः प्रतिश्यायो निःश्वासोच्छ्वाससंग्रहः२०६
हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते।
तत्रोर्ध्वभागिकं कर्म कार्यमाश्वासनं तथा ॥ २०७ ॥
कर्मौजोबलवर्णानां नाशो मृत्युरथापि वा।
उदानेनावृते प्राणे तं शनैः शीतवारिणा ॥ २०८ ॥
सिञ्चेदाश्वासयेच्चैनं सुखं चैवोपपादयेत्।
ऊर्ध्वगेनावृतेऽपाने छर्दिश्वासादयो गदाः ॥ २०९ ॥
स्युर्वाते तत्र वस्त्यादि भोज्यं चैवानुलोमनम्।
मोहोऽल्पोऽग्निरतीसार ऊर्ध्वगेऽपानसंवृते ॥२१०॥
वाते स्याद्वमनं तत्र दीपनं ग्राहि चाशनम्।
वम्याध्मानमुदावर्तगुल्मार्तिपरिकर्तिकाः ॥ २११ ॥
लिङ्गं व्यानावृतेऽपाने तं स्निग्धैरनुलोमयेत्।
अपानेनावृते व्याने भवेद्विण्मूत्ररेतसाम् ॥ २१२ ॥

१ 'दृष्ट्वा' इति पा०। २ 'सर्वेषां' इति पा०। ३ 'माढ्यवाते' इति पा०। ४ 'तु वमनं' इति पा०। ५ 'वस्तिः स्नेहाश्च मेदिनः' इति पा०। ६ अयमर्धश्लोको हस्तलिखितपुस्तकेषु न पठ्यते।

१ 'विंशत्यावरणान्ये०' इति पा०। २ 'समानेनावृते प्राणे ग्रहणीपार्श्ववेदना' इति पा०।

अतिप्रवृत्तिस्तत्रापि सर्वं संग्रहणं मतम् ।
मूर्च्छा तन्द्रा प्रलापोऽङ्गसादोऽग्न्योजोबलक्षयः २१३
समानेनावृते व्याने व्यायामो लघुभोजनम् ।
स्तब्धताऽल्पाग्निताऽस्वेदश्चेष्टाहानिर्निमीलनम् २१४
उदानेनावृते व्याने तत्र पथ्यं मितं लघु ।
पञ्चान्योन्यावृतानेवं वातान् बुध्येत लक्षणैः ॥ २१५ ॥
एषां स्वकर्मणां हानिर्वृद्धिर्वाऽऽवरणे मता ।
यथास्थूलं समुद्दिष्टमेतदावरणेऽष्टकम् ॥ २१६ ॥
सलिङ्गभेषजं सम्यग्बुधानां बुद्धिवृद्धये ।

शिरोग्रह इत्यादिना अष्टावावरणानि प्रायोभावीनि अनुक्तशेषोपग्रहणार्थमाह । ऊर्ध्वभागिकं कर्मेति उपर्युक्तस्नेहपानस्यादिकम् । श्वासादय इति श्वासहिक्कादयः । ऊर्ध्वगेनेति उदानेन । अनुक्तज्ञानार्थमावरणस्वरूपमाह—एषां स्वकर्मणामित्यादि । अत्र आवार्याणां बलीयसाऽऽवरणात् स्वकर्महानिर्भवति, आवरकस्य तूत्सर्गतः स्वकर्मवृद्धिर्भवति, तथा आवरणेन च आवार्यः प्रकुपितो भवति तदा स्वकर्मणां वृद्धिर्भवतीति व्यवस्था; अन्ये तु आवरणीयस्य स्वकर्महानिः, आवरकस्य तूत्सर्गतो वृद्धिर्भवतीति व्यवस्थामाहुः ॥ २०६–२१६ ॥—

स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम् २१७
द्वादशावरणान्यन्यान्यभिलक्ष्य भिषग्जितम् ।
कुर्यादभ्यञ्जनस्नेहपानबस्त्यादि सर्वशः ॥ २१८ ॥
क्रममुष्णमनुष्णं वा व्यत्यासादवचारयेत् ।

अनुक्तावरणलक्षणज्ञानोपायमाह—स्थानान्यवेक्ष्येत्यादि । कर्मवृद्धिहानिव्याख्यानमत्रापि पूर्ववत् । स्थानान्यवेक्ष्येत्यनेन वातानामुक्तस्थानगतविकारेण च वातविकृतिर्ज्ञातव्येति दर्शयति । उष्णं क्रममनुष्णं चेत्यत्र यद्यप्युष्ण एव क्रमो वाते युज्यते, तथाऽपि स्थानापेक्षया रक्तादिदूष्यं क्रमविपर्ययस्य कारणं ज्ञेयम् ॥ २१७ ॥ २१८ ॥—

उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ २१९ ॥
समानं शमयेच्चैव त्रिधा व्यानं तु योजयेत् ।
प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवा २२०
स्वं स्थानं गमयेदेवं वृतानेतान् विमार्गगान् ।

विकृतवातानां प्रकृतिस्थापनमाह—उदानं योजयेदूर्ध्वमित्यादि । एतच्च स्वमार्गयोजनं वातानां यथोक्तवमनादिक्रियायोगविधानेन कर्तव्यम् । समानं शमयेदिति देहमध्यस्थितं कुर्यादित्यर्थः । त्रिधा व्यानं तु योजयेदिति ऊर्ध्वमधो मध्ये त्रिधा योजयेत् । प्राणो रक्ष्य इति स्थाने एव यापनीयः । चतुर्भ्योऽपीत्यनेन इतरवातेभ्योऽस्यात्यर्थरक्षणीयतामाह । कुतोऽयं विशेषरक्षणीय इत्याह—स्थाने त्वस्य स्थितिर्ध्रुवेति; अस्य प्राणस्य, स्थाने सम्यगवस्थाने सति, स्थितिः जीवनरूपा, ध्रुवा निश्चिता ॥ २१९ ॥ २२० ॥—

मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामिता २२१
छर्दनं च विदग्धस्य प्राणे पित्तसमावृते ।
ष्ठीवनं क्षवथूद्गारनिःश्वासोच्छ्वाससंग्रहः ॥ २२२ ॥
प्राणे कफावृते रूपाण्यरुचिश्छर्दिरेव च ।
मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसः क्लमः २२३
ओजोभ्रंशश्च सादश्चाप्युदाने पित्तसंवृते ।
आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः ॥ २२४ ॥
दौर्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते ।
अतिस्वेदस्तृषा दाहो मूर्च्छा चारुचिरेव च ॥ २२५ ॥
पित्तावृते समाने स्यादुपघातस्तथोष्मणः ।
अस्वेदो वह्निमान्द्यं च लोमहर्षस्तथैव च ॥ २२६ ॥
कफावृते समाने स्याद्गात्राणां चातिशीतता ।
व्याने पित्तावृते तु स्याद्दाहः सर्वाङ्गगः क्लमः ॥ २२७ ॥
गात्रविक्षेपसङ्गश्च ससंतापः सवेदनः ।
गुरुता सर्वगात्राणां सर्वसन्ध्यस्थिजा रुजः ॥ २२८ ॥
व्याने कफावृते लिङ्गं गतिसङ्गस्तथाऽधिकः ।
हारिद्रमूत्रवर्चस्त्वं तापश्च गुदमेढ्रयोः ॥ २२९ ॥
लिङ्गं पित्तावृतेऽपाने रजसश्चातिवर्तनम् ।
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ २३० ॥
श्लेष्मणा संवृतेऽपाने कफमेहस्य चागमः ।

प्राणादीनां पित्तेन कफेन तथा पित्तकफाभ्यां चावरणलक्षणान्याह—मूर्च्छा दाहो भ्रम इत्यादि । मूर्च्छाद्यानि मूर्च्छा दाह इत्यादिना प्रागुक्तानि । उपघातस्तथोष्मण इति अत्र पित्तेनाप्यावृते समाने अग्न्युत्तेजनाभावादूष्मण उपघातो ज्ञेयः । गात्रविक्षेपसंगः गात्रविक्षेपणोपरमः । रजस इति आर्तवस्य ॥ २२१–२३० ॥—

लक्षणानां तु मिश्रत्वं पित्तस्य च कफस्य च ॥ २३१ ॥
उपलक्ष्य भिषग्विद्वान् मिश्रमावरणं वदेत् ।
यद्यस्य वायोर्निर्दिष्टं स्थानं तत्रेतरौ स्थितौ ॥ २३२ ॥
दोषौ बहुविधान् व्याधीन् दर्शयेतां यथानिजान् ।
आवृतं श्लेष्मपित्ताभ्यां प्राणं चोदानमेव च ॥ २३३ ॥
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः ।
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम् ॥ २३४ ॥
स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।
सर्वेऽप्येतेऽपरिज्ञाताः परिसंवत्सरास्तथा ॥ २३५ ॥
उपेक्षणादसाध्याः स्युरथवा दुरुपक्रमाः ।

१ 'स्नेहनसपानादि' इति पा० । २ 'पालनीयः' इति पा० ।

१ 'चारतिरेव च' इति पा० । २ 'रुजः' इति पा० । ३ 'दुरुपक्रमाद्' इति पा० ।

मिश्रमावरणमिति मिश्रितकफपित्तावरणम् । यथानिजानिति यथात्मीयान् । गरीयस्त्वेनेति अधिकत्वेन । एतद्गरीयस्त्वे हेतुमाह—विशेषादित्यादि । संश्रितमिति अधीनम् । अपरिज्ञाता इति याथातथ्येनाज्ञाताः । सम्यग्ज्ञाता अप्युपेक्षणाद्, याथातथ्येन ज्ञाता अपि परिसंवत्सरास्तथेति योजनीयम् ॥२३१-२३५॥—

हृद्रोगो विद्रधिः प्लीहा गुल्मोऽतीसार एव च॥२३६॥
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ।
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत् ॥ २३७ ॥
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणाऽपि वा ।
भिषग्जितमतः सम्यगुपलक्ष्य समाचरेत् ॥ २३८ ॥
अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारकैः ।
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ॥ २३९ ॥
सर्वस्थानावृतेऽप्याशु तत् कार्यं मारुते हितम् ।
यापना वस्तयः प्रायो मधुराः सानुवासनाः ॥२४०॥
प्रसमीक्ष्य बलाधिक्यं मृदु वा स्रंसनं हितम् ।
रसायनानां सर्वेषामुपयोगः प्रशस्यते ॥ २४१ ॥
शैलस्य जतुनोऽत्यर्थं पयसा गुग्गुलोस्तथा ।
लेहं वा भार्गवप्रोक्तमभ्यसेत् क्षीरभुङ्नरः ॥ २४२ ॥
अभयामलकीयोक्तमेकादशसिताशतम्[१] ।
अपानेनावृते सर्वं दीपनं ग्राहि भेषजम् ॥ २४३ ॥
वातानुलोमनं यच्च पक्वाशयविशोधनम् ।
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम्॥२४४॥
प्राणादीनां भिषक् कुर्याद्वितर्क्य स्वयमेव तत् ।
पित्तावृते तु पित्तघ्नैर्मारुतस्याविरोधिभिः ॥
कफावृते कफघ्नैस्तु मारुतस्यानुलोमनैः ॥ २४५ ॥

हृद्रोगेत्यादिना उपद्रवानाह । पञ्चात्मकस्येति प्राणादिभेदेन पञ्चस्वरूपस्य । प्रसमीक्ष्येत्यादौ बलाधिक्ये सति स्रंसनं मृदु कर्तव्यमित्यभिप्रायः । अत्यर्थं प्रशस्यत इति संबन्धः । लेहं वा भार्गवप्रोक्तमिति च्यवनप्राशं, च्यवनो हि भार्गव उच्यते । उक्तं हि आयुर्वेदसमुत्थाने "भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः" ( चि. अ. १, पा. ४) इति । वातस्यानुलोमनं चिकित्सितं कुर्यादिति नियोजनीयम् ॥ २३६-२४५ ॥

लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वातस्य पित्तस्य च कफस्य च ॥ २४६ ॥

वातादीनां दुर्विज्ञेयतां दृष्टान्तेन दर्शयति—लोक इत्यादि । ॥ २४६ ॥

क्षयं वृद्धिं समत्वं च तथैवावरणं भिषक् ।
विज्ञाय पवनादीनां न प्रमुह्यति कर्मसु ॥ २४७ ॥

क्षयमित्यादौ आवरणमपि क्षयवृद्धिसंबन्धान्तर्निर्दिष्टमेव, तथाऽप्यावरणस्य विशेषलक्षणचिकित्सार्थं पृथगभिधानम् । कर्मस्विति चिकित्सासु ॥ २४७ ॥

तत्र श्लोकौ—

पञ्चात्मनः स्थानवशाच्छरीरे
स्थानानि कर्माणि च देहधातोः ।
प्रकोपहेतुः कुपितश्च रोगान्
स्थानेषु चान्येषु वृतोऽवृतश्च ॥ २४८ ॥
प्राणेश्वरः प्राणभृतां करोति
क्रिया च तेषामखिला निरुक्ता ।
तां देशसात्म्यर्तुबलान्यवेक्ष्य
प्रयोजयेच्छास्त्रमतानुसारी ॥ २४९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने वातव्याधिचिकित्सितं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

पञ्चात्मन इत्यादिसंग्रहे पञ्चात्मनः स्थानवशादिति च्छेदः । देहधातोरिति देहधारकरूपस्य वायोरविकृतस्येत्यर्थः । उक्तचिकित्साकरणापेक्षणीयं संग्रहेणाह—तामित्यादि । देशाद्यपेक्षा सूत्रस्थानेऽस्माभिर्विवृता देशादिभेदेन प्रतर्कणीया, विस्तरभीत्या तु न प्रपञ्च्यते ॥ २४८ ॥ २४९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया-
मायुर्वेददीपिकायां चिकित्सास्थाने वातव्याधिचिकि-
त्सितं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

वातव्याधिप्रभेदादेव वातव्याधिचिकित्सितानन्तरं वातरक्तचिकित्सितमुच्यते । वातरक्ताभ्यां जनितो व्याधिः वातरक्तं, किंवा वातरक्ते एव अवस्थान्तरप्राप्ते वातरक्तम् ॥ १ ॥ २ ॥

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्वसुम् ।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्चसम् ॥ ३ ॥
अग्निमारुततुल्यस्य संसर्गस्यानिलासृजोः ।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत् ॥ ४ ॥
लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ ५ ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ ६ ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिष्टान्नसुखभोजिनाम्[१] ॥ ७ ॥

---

१ 'अभयामलकीयोक्तानेकादश सिताशनः' इति गङ्गाधरः पठति ।

१ 'मिष्टान्नरसभोजिनाम्' इति, 'मिथ्याहारविहारिणाम्' इति च पा० ।

अचङ्क्रमणशीलानां कुप्यते वातशोणितम् ।
अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम् ॥ ८ ॥
कषायकटुतिक्ताल्परूक्षाहारादभोजनात् ।
हयोष्ट्रयानयानाम्बुक्रीडाप्लवनलङ्घनैः ॥ ९ ॥
उष्णे चात्यध्ववैषम्याद्व्यवायाद्वेगनिग्रहात् ।
वायुर्विवृद्धो वृद्धेन रक्तेनावारितः पथि ॥ १० ॥
कृत्स्नं संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ।
खुडं वातबलासाख्यमाढ्यवातं च नामभिः ॥ ११ ॥

अग्निमारुततुल्यस्येत्यनेन वातरक्तस्य दुर्निवारत्वं शीघ्रकारित्वं चाह । लवणेत्यादिना हेतुमाह । प्रायशः सुकुमाराणामित्यनेन सुकुमारशरीरे लवणादिहेतुसेवया शीघ्रं दुष्टं वातास्रं वातशोणितं भवतीति दर्शयति । मिष्टमन्नं सुखेन भुञ्जते तेषां मिष्टान्नसुखभोजिनाम् । अत्र लवणादि यद्यपि वातशोणितहेतुतयोक्तं तथाऽपि शोणितदुष्टिकारणमेतत् प्राधान्याज्ज्ञेयं, वातदुष्टिकारणं तु कषायेत्यादिनोक्तं, ततश्च लवणादि कषायादि च मिलितं सद् वातशोणितोत्पादकं भवति । यत्तु 'जायते वातशोणितम्' इत्यनेन लवणादीनां वातशोणितकारणत्वमुक्तं, तद्वातशोणितजनकशोणितदुष्टिकारणद्वारा ज्ञेयम् । अशुद्ध्येति शुद्धिकालेऽसंशोधनात् । केचित् 'अभिघातादशुद्ध्या च' इत्यस्य स्थाने 'अशुद्ध्या वातवैषम्यात्' इति पठन्ति । अशुद्ध्या चेति चकारेण लवणादि प्रजागरैरित्यन्तं शोणितदुष्टिकारणं समुच्चिनोति । अत्र शोणितवातस्य विच्छिद्य हेतुबहुपाठेन द्वयोरप्यत्र स्वतन्त्रं प्रकोपं दर्शयति । हयोष्ट्ररूपेण यानेन यानं हयोष्ट्रयानयानम् । उष्णे चात्यध्ववैषम्यादिति उष्णे काले अत्यध्वजनिताद्धातुवैषम्यात् । वायुरित्यादिना संप्राप्तिमाह । पथीति वायुवहनस्रोतसि । क्रुद्ध इति वृद्धोऽपि स्वहेतोर्वायुः पुनः शोणितेनावरणाद्विशेषेण क्रुद्धः । व्यवहारार्थं तन्त्रान्तरप्रसिद्धसंज्ञाभेदानप्याह—खुडमित्यादि । खुडदेशप्राप्त्या खुडः, खुडशब्देन संधिरुच्यते; वातस्यावरणेन बलमस्त्यस्मिन् शोणिते इति वातबलाशः; आढ्यानां प्रायो भवतीति आढ्यरोगः ॥ ३–११ ॥

तस्य स्थानं करौ पादावङ्गुल्यः सर्वसन्धयः ।
कृत्वाऽऽदौ हस्तपादे तु मूलं देहे विधावति ॥ १२ ॥
सौक्ष्म्यात् सर्वसरत्वाच्च पवनस्यासृजस्तथा ।
तद्द्रवत्वात् सरत्वाच्च देहं गच्छन् सिरायनैः ॥ १३ ॥
पर्वस्वभिहतं क्षुब्धं वक्रत्वादवतिष्ठते ।
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः ॥ १४ ॥
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु ।
भवन्ति वेदनास्तास्ता अत्यर्थं दुःसहा नृणाम् ॥ १५ ॥

वातशोणितस्य वैशेषिकं स्थानमाह । तस्य स्थानमित्यादि । करपादग्रहणेनैव अङ्गुलीनां ग्रहणे प्राप्ते अङ्गुलीनां बहुपर्वतया विशेषेणाधिष्ठानत्वोपदर्शनार्थं पुनरभिधानम् । मूलमास्थायेति आस्पदं कृत्वा । देहधावने हेतुमाह—सौक्ष्म्यादित्यादि ।—सूक्ष्ममार्गानुसारित्वात् । वातशोणितस्य देहं सर्वतो विशेषेण पर्वावस्थानं सहेतुकमाह—तद्द्रवत्वादित्यादि । सिरायनैरिति सिरारूपैर्मार्गैः । वक्रत्वादिति पर्वणां वक्रत्वात् । पित्तादिसंसृष्टमिति पित्तेन कफेन च हेत्वन्तरागतेन वायुना च युक्तम् । तस्मादिति सन्धिष्ववस्थानात् ॥ १२–१५ ॥

स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥ १६ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ १७ ॥
कण्डूः संधिषु रुग्भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ १८ ॥

स्वेदोऽत्यर्थमित्यादिना पूर्वरूपमाह । स्वेदोऽत्यर्थं नवेति च यद्यपि कुष्ठपूर्वरूपेऽप्युक्तं, तथाऽप्यसमानभूरिपूर्वरूपसंबन्धादन्यतरयोगपूर्वरूपत्वे निश्चयः ॥ १६–१८ ॥

उत्तानमथ गम्भीरं द्विविधं तत् प्रचक्षते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥ १९ ॥
कण्डूदाहरुगायामतोदस्फुरणकुञ्चनैः ।
अन्विता श्यावरक्ता त्वग्बाह्ये ताम्रा तथेष्यते ॥ २० ॥
गम्भीरे श्वयथुः स्तब्धः कठिनोऽन्तर्भृशार्तिमान् ।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥ २१ ॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु ।
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ॥ २२ ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ।
सर्वैर्लिङ्गैश्च विज्ञेयं वातासृगुभयाश्रयम् ॥ २३ ॥

वातशोणितस्य अवगाढानवगाढभेदं चिकित्सार्थमाह—उत्तानमित्यादि । अन्तराश्रयमिति त्वङ्मांसव्यतिरिक्तगम्भीरधात्वाश्रयम् । सर्वैर्लिङ्गैरिति उत्तानगम्भीरवातरक्तोक्तैर्मिलितैः । अयं च तृतीयः प्रकारो बाह्याभ्यन्तरप्रकारोक्तप्रकारगृहीत एवेति कृत्वा रोगसंग्रहे द्विविधं वातशोणितमुक्तम् । "द्विविधं वातशोणितमुत्तानमवगाढं चेत्येके भाषन्ते; तत्तु न सम्यक्, कस्मात्? कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढीभवति" ( सु चि.अ.५ ) इत्यनेन सुश्रुतेन यद्द्वैविध्यं खण्डितं तदाचार्ययोः परमात्मनोः सुश्रुताग्निवेशयोरेकस्याप्यप्रामाण्यं न संगतमिति कृत्वा अविरोधमेवात्र व्याख्यानयामः; तथाहि—सुश्रुतेन उत्तानं वातशोणितं कुष्ठवद्गम्भीरं भवतीत्युच्यते, न तु सर्वमेवोत्तानं भूत्वा गम्भीरं भवतीति प्रतिज्ञायते; तेन यो ब्रूते—उत्तानमेवावतिष्ठते, तं प्रति सुश्रुतवचनं बाधकं; तन्न, चरके उत्तानमेवावतिष्ठते इति नोच्यत

१ 'हयोष्ट्रखरयानाम्बु०' इति पा० । २ 'चात्यध्वगमनात्' इति पा० । ३ 'वायोरप्यत्र' इति पा० ।

१ 'हेत्वन्तरयुक्तेन' इति पा० ।

एव, किंतु प्रथमोत्पत्तौ किंचिदुत्तानमुत्पद्यते, किंचित्तु गम्भीरमिति, तेन न विरोधश्चरकसुश्रुतयोः ॥ १९-२३ ॥

**तत्र वातेऽधिके वा स्याद्रक्ते पित्ते कफेऽपि वा।**
**संसृष्टेषु समस्तेषु यच्च तच्छृणु लक्षणम् ॥ २४ ॥**
**विशेषतः सिरायामशूलस्फुरणतोदनम्।**
**शोथस्य कार्ष्ण्यं रौक्ष्यं च श्यावतावृद्धिहानयः॥२५॥**
**धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।**
**कुञ्चनस्तम्भने शीतप्रद्वेषश्चानिलेऽधिके ॥ २६ ॥**
**श्वयथुर्भृशरुक् तोदस्ताम्रश्चिमिचिमायते।**
**स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितोऽसृजि॥२७॥**
**विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः।**
**रागः पाकश्च भेदश्च शोषश्चोक्तानि पैत्तिके ॥ २८ ॥**
**स्तैमित्यं गौरवं स्नेहः सुप्तिर्मन्दा च रुक् कफे।**
**हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वत्रिदोषजम् ॥ २९ ॥**

तत्र वातेऽधिके इत्यादौ रक्ते पित्ते कफे वा 'अधिके' इत्यनुवर्तनीयं; तेन पित्तवृद्धिः, शोणितवृद्धिः, कफवृद्धिश्च ज्ञेया। संसृष्टेष्विति द्वित्रिषु मिलितेषु, समस्तेष्विति चतुर्ष्वपि मिलितेष्वधिकेषु। सिरायामेत्यादिना वाताद्युल्बणानां चतुर्णां लक्षणमाह। आयामः विस्तरणम्। श्यावता श्याववर्णत्वम्। श्वयथुरित्यादिना असृजीत्यन्तेन उद्रिक्तरक्तस्य लक्षणम्। द्वन्द्वत्रिदोषजमित्यत्र अधिकशोणितानुबन्धोऽपि ग्रहीतव्यः; तेन वातादिचतुष्टयाधिकमेलकमपि वातशोणितं ज्ञेयम्। अत एव एकद्वित्रिसर्वाधिकभेदाद् द्विविधस्यापि वातशोणितस्य पूर्वटीकाकृद्भिः पञ्चचत्वारिंशद्भेदा उक्ताः। खरनादेन तु प्रकरणान्तरेण षट्त्रिंशद्विधमुक्तम्। उक्तं हि—"वातोत्तरं प्रवृद्धासृक् पञ्चत्रिंशद्विधं मतम्। पित्तात्त्रिंशद्विधं योगात् कफाद्दशविधं मतम्" इति। एते भेदा अनतिप्रयोजनत्वान्न विवृताः ॥ २४-२९ ॥

**एकदोषानुगं साध्यं नवं, याप्यं द्विदोषजम्।**
**त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ ३० ॥**
**अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः।**
**मूर्च्छायमदरुक्तृष्णाज्वरमोहप्रवेपकाः ॥ ३१ ॥**
**हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः।**
**अङ्गुलीवक्रता स्फोटा दाहमर्मग्रहार्बुदाः ॥ ३२ ॥**
**एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वाऽपि यत्।**
**संप्रस्रावि विवर्णं च स्तब्धमर्बुदकृच्च यत् ॥ ३३ ॥**
**वर्जयेच्चैव संकोचकरमिन्द्रियतापनम्।**
**अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥३४ ॥**

साध्यादिविभागमाह—एकदोषानुगमित्यादि। यस्य च स्युरुपद्रवा इति साध्यत्वेनोक्तस्यापि वक्ष्यमाणोपद्रवयोगादसाध्यता। त्रिदोषस्यासाध्यत्वेऽपि यद्वक्ष्यति 'खजेन मथिता पेया वातरक्ते त्रिदोषजे' इति, तदसंपूर्णलक्षणाभिनवत्रिदोषजाभिप्रायेण। मूर्च्छायः मूर्च्छा। पाङ्गुल्यं पङ्गुता। मोहेनैकेनेति इतरोपद्रवाणां मेलकादसाध्यत्वं, मोहस्तु एक एव असाध्यताकर इत्यर्थः; ये तु 'मेहेनैकेन' इति पठन्ति, ते मेहवातशोणितयोर्विरुद्धोपक्रमतया मेहयोगेनासाध्यतामाहुः; वातशोणितस्य हि प्रायेण मधुरशीतोपक्रमः, तद्विपरीतस्तु मेहस्येति विरुद्धोपक्रमता। विवर्णमिति विपरीतवर्णं; विवर्णत्वमात्रं तु सर्ववातानुगतोपद्रवः ॥ ३०-३४ ॥

**रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।**
**निविश्यान्योन्यमावार्य वेदनाभिर्हरेदसून् ॥ ३५ ॥**
**तत्र मुञ्चेदसृक् शृङ्गजलौकःसूच्यलाबुभिः।**
**प्रच्छनैर्वा सिराभिर्वा यथादोषं यथाबलम् ॥ ३६ ॥**
**रुग्दाहशूलतोदार्तादसृक् स्राव्यं जलौकसा।**
**शृङ्गैस्तुम्बैर्हरेत् सुप्तिकण्डूचिमिचिमायनात् ॥३७॥**
**देशाद्देशं व्रजत् स्राव्यं सिराभिः प्रच्छनेन वा।**
**अङ्गग्लानौ न तु स्राव्यं रूक्षे वातोत्तरे च यत्॥३८॥**
**गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुसिरामयान्।**
**ग्लानिं चापि ससङ्कोचां कुर्याद्वायुरसृक्क्षयात्॥३९॥**
**खाञ्ज्यादीन् वातरोगांश्च मृत्युं चात्यवसेचनात्।**
**कुर्यात्तस्मात् प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत् ॥४०॥**

वातशोणितस्य रक्तहरणार्थं रूपमाह—रक्तमार्गमित्यादि। रक्तस्य मार्गं मारुतो निहन्ति शाखासन्धिषु निविश्येति शाखासन्धिषु स्थित्वा, ततश्च वायुना रक्तनिरोधात्, अन्योन्यमावार्येति रक्तेन वातं वातेन च रक्तमावार्य, वातरक्तं वेदनाभिर्हरेदसूनिति योज्यम्। अत एवात्र वातशोणिते असृग्विमुञ्चेदिति भावः। असृङ्मोक्षणेन आवरणव्यपगमाद्वायुरपि प्रसन्नो भवति, ततश्च व्याध्युपरम इति भावः। देशाद्देशं व्रजदिति स्थानान्तरप्रसरणशीलम्। अङ्गग्लानाविति अङ्गशोषे। स्रावणार्हे शोणितेऽप्यतिस्रावणाद्दोषमाह—गम्भीरमित्यादि। खाञ्ज्यादीनिति खाञ्ज्यपाङ्गुल्यकुब्जत्वादीन् वातरोगान्। कुर्यादिति च्छेदः। प्रमाणेनेति अविकारिमात्रया ॥ ३५-४० ॥

**विरेच्यः स्नेहयित्वाऽऽदौ स्नेहयुक्तैर्विरेचनैः।**
**रूक्षैर्वा मृदुभिः शस्तमसकृद्बस्तिकर्म च ॥ ४१ ॥**
**सेकाभ्यङ्गप्रदेहान्नस्नेहाः प्रायोऽविदाहिनः।**
**वातरक्ते प्रशस्यन्ते**

विरेचनविधाने स्नेहयुक्तै रूक्षैर्वेति विकल्पद्वये स्नेहयुक्तविरेच-

१ '°तोदस्फुरणभेदनम्' इति पा०। २ 'रक्ते शोथोऽतिरुक्' इति पा०। ३ 'भृशम्' इति पा०। ४ 'रक्तोत्तरस्य' इति पा०।

१ 'सर्ववातानुषङ्गोपद्रवः' इति पा०। २ 'विहन्त्याशु' इति पा०। ३ 'आवाध्य' इति पा०। ४ 'रुग्दाहतोदरागार्ताद°' इति पा०। ५ 'रूक्षं वातोत्तरं च यद्' इति पा०।

नमीषत्स्निग्धविषयं, रूक्षैस्तु विरेचनमतिस्निग्धविषयम्। मृदुभिरित्यनेन वातक्षोभभयादत्र तीक्ष्णविरेचनं निषेधयति। बस्तिकर्मेति अनुवासननिरूहरूपम्। प्रायोऽविदाहिन इति नितरामविदाहिनः ॥ ४१ ॥—

विशेषं तु निबोध मे ॥ ४२ ॥

बाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥ ४३ ॥
सर्पिस्तैलवसामज्जापानाभ्यञ्जनबस्तिभिः।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत् ॥ ४४ ॥
विरेचनैर्घृतक्षीरपानैः सेकैः सबस्तिभिः।
शीतैर्निर्वापणैश्चापि रक्तपित्तोत्तरं जयेत् ॥ ४५ ॥
वमनं मृदु नात्यर्थं स्नेहसेकौ विलङ्घनम्।
कोष्णा लेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥ ४६ ॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते।
दाहशोथरुजाकण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ४७ ॥
रक्तपित्तोत्तरे चोष्णैर्दाहः क्लेदोऽवदारणम्।
भवेत्तस्माद्भिषग्दोषबलं बुद्ध्वाऽऽचरेत्क्रियाम् ॥ ४८ ॥

विशेषमिति विशिष्टचिकित्सितम्। बाह्यमिति उत्तानम्। मृद्विति वमनविशेषणम्। कफोत्तरे वातोत्तरे च शीतप्रलेपदोषमाह—कफवातोत्तरे इत्यादि। शीतलेपेन विदाहोऽत्र ऊष्मरोधाद्भवतीति ज्ञेयम्। पित्तोत्तरे रक्तोत्तरे च उष्णप्रलेपैर्दोषमाह—रक्तपित्तोत्तरे इत्यादि। दोषबलं बुद्ध्वा आचरेदिति दोषबलं बुद्ध्वा अनुगुणमेव क्रियामाचरेत्; वातकफोत्तरे उष्णां, रक्तपित्तोत्तरे शीतां, मिश्रे च मिश्रामिति भावः ॥ ४२-४८ ॥

दिवास्वप्नं ससंतापं व्यायामं मैथुनं तथा।
कट्वूष्णं गुर्वभिष्यन्दि लवणाम्लं च वर्जयेत् ॥ ४९ ॥
पुराणा यवगोधूमनीवाराः शालिषष्टिकाः।
भोजनार्थं रसार्थं वा विष्किरप्रतुदा हिताः ॥ ५० ॥
आढक्यश्चणका मुद्गा मसूराः समकुष्ठकाः।
यूषार्थं बहुसर्पिष्काः प्रशस्ता वातशोणिते ॥ ५१ ॥
सुनिषण्णकवेत्राग्रकाकमाचीशतावरी-।
वास्तुकोपोदिकाशाकं शाकं सौवर्चलं तथा ॥ ५२ ॥
घृतमांसरसैर्भृष्टं शाकसात्म्याय दापयेत्।
व्यञ्जनार्थं, तथा गव्यं माहिषाजं पयो हितम् ॥ ५३ ॥
इति संक्षेपतः प्रोक्तं वातरक्तचिकित्सितम्।
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते ॥ ५४ ॥

नीवारः उडिका। सौवर्चलमिति सूर्यावर्तशाकम्। व्यञ्जनार्थमिति भोजनसाधनतया व्यज्यते इति व्यञ्जनम्। एतदेवेति संक्षिप्तप्रयोगकथनम्। व्यासतः प्रपञ्चेन ॥ ४९-५४ ॥

श्रावणीक्षीरकाकोलीजीवकर्षभकैः समैः।
सिद्धं समधुकैः सर्पिः सक्षीरं वातरक्तनुत् ॥ ५५ ॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम्।
काकोलीं क्षीरकाकोलीं रास्नामृद्धिं च पेषयेत् ॥ ५६ ॥
घृतं चतुर्गुणक्षीरं तैः सिद्धं वातरक्तनुत्।
हृत्पाण्डुरोगवीसर्पकामलाज्वरनाशनम् ॥ ५७ ॥
त्रायन्तिकातामलकीद्विकाकोलीशतावरी-।
कशेरुकाकषायेण कल्कैरेभिः पचेद्धृतम् ॥ ५८ ॥
दत्त्वा परूषकाद्राक्षाकाश्मर्येक्षुरसान् समान्।
पृथग्विदार्याः स्वरसं तथा क्षीरं चतुर्गुणम् ॥ ५९ ॥
एतत् प्रायोगिकं सर्पिः पारूषकमिति स्मृतम्।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥ ६० ॥

इति पारूषकं घृतम्।

श्रावणी मुण्डितिका। सक्षीरमित्यनेन द्रवान्तराभावाच्चतुर्गुणक्षीरमेव घृताद्भवति। त्रायन्तिकेत्यादौ कल्कैरेभिरित्यनेन शतावर्यन्तानां कल्कत्वं, कशेरुकाकषायः, परूषकरसादीनां प्रत्येकं घृतसमानत्वं, विदारीरसस्यापि तथावचनात् समत्वम्। अत्र जतूकर्णः—"तुल्यरसैः परूषककाश्मर्यककशेरुकाविदरीद्राक्षेक्षूणां चतुष्के पयसि द्विकाकोलीतामलकीशतावर्यः पिष्ट्वा पचेद् घृतं, प्रयोगेण तद्वातास्रवीसर्पज्वरजित् सर्पिः पारूषकं नाम" इति। प्रायोगिकमिति अभ्यासोपयोज्यम् ॥ ५५-६० ॥

द्वे पञ्चमूले वर्षाभूमेरण्डं सपुनर्नवम्।
मुद्गपर्णीं महामेदां माषपर्णीं शतावरीम् ॥ ६१ ॥
शङ्खपुष्पीमवाक्पुष्पीं रास्नामतिबलां बलाम्।
पृथग्द्विपलिकं कृत्वा जलद्रोणे विपाचयेत् ॥ ६२ ॥
पादशेषे समान् क्षीरधात्रीक्षुच्छागलान् रसान्।
घृताढकेन संयोज्य शनैर्मृद्वग्निना पचेत् ॥ ६३ ॥
कल्कानावाप्य मेदे द्वे काश्मर्यफलमुत्पलम्।
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ॥ ६४ ॥
नागरं क्षीरकाकोलीं पद्मकं बृहतीद्वयम्।
वीरां शृङ्गाटकं भव्यमुरुमाणं निकोचकम् ॥ ६५ ॥
खर्जूराक्षोटवातामामुञ्जाताभिषुकांस्तथा।
एतैर्घृताढके सिद्धे क्षौद्रं शीते प्रदापयेत् ॥ ६६ ॥
सम्यक् सिद्धं च विज्ञाय सुगुप्तं संनिधापयेत्।
कृतरक्षाविधिं चौक्षे प्राशयेदक्षसंमितम् ॥ ६७ ॥
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम्।
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम् ॥ ६८ ॥
क्षतशोषमपस्मारमश्मरीं शर्करां तथा।
सर्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गं च नाशयेत् ॥ ६९ ॥
बलवर्णकरं धन्यं वलीपलितनाशनम्।
जीवनीयमिदं सर्पिर्वृष्यं वन्ध्यासुतप्रदम् ॥ ७० ॥

द्वे पञ्चमूले इत्यादौ वर्षाभूः श्वेतपुनर्नवा। अवाक्पुष्पी 'अधःपुष्पी' इति ख्याता। [illegible] स्नेहसमत्वम्। वीरा वृद्धिः।

भव्यादय औत्तरापथिकाः। सुगुप्तमिति वातायस्पर्शनीयं यथा भवति। चौक्षे इति शुचौ॥ ६१-७०॥

द्राक्षामधु(धू)कतोयाभ्यां सिद्धं वा ससितोपलम्।
पिबेद्धृतं तथा क्षीरं गुडूचीस्वरसे शृतम्॥ ७१॥
जीवकर्षभकौ मेदामृष्यप्रोक्तां शतावरीम्।
मधुकं मधुपर्णीं च काकोलीद्वयमेव च॥ ७२॥
मुद्गमाषाख्यपर्णिन्यौ दशमूलं पुनर्नवाम्।
बलामृताविदारीश्च साश्वगन्धाश्मभेदकाः॥ ७३॥
एषां कषायकल्काभ्यां सर्पिस्तैलं च साधयेत्।
लाभतश्च वसामज्जधान्वप्रातुदवैष्किरम्॥ ७४॥
चतुर्गुणेन पयसा तत् सिद्धं वातशोणितम्।
सर्वदेहाश्रितं हन्ति व्याधीन् घोरांश्च वातजान्॥ ७५॥

द्राक्षेत्यादौ ससितोपलमिति प्रक्षिप्तशर्करम्। ऋष्यप्रोक्ता अतिबला। काला मञ्जिष्ठा। मधुपर्णी विकङ्कतः। धान्वप्रातुदवैष्किरमिति वसामज्जविशेषणम्॥ ७१-७५॥

स्थिरा श्वदंष्ट्रा बृहती सारिवा सशतावरी।
काश्मर्याण्यात्मगुप्ता च वृश्चीरो द्वे बले तथा॥७६॥
एषां क्वाथे चतुःक्षीरं पृथक् तैलं पृथग्घृतम्।
मेदाशतावरीयष्टिजीवन्तीजीवकर्षभैः॥ ७७॥
पक्त्वा मात्रा ततः क्षीरत्रिगुणाऽध्यर्धशर्करा।
खजेन मथिता पेया वातरक्ते त्रिदोषजे॥ ७८॥
तैलं पयः शर्करां च पाययेद्वा सुमूर्च्छितम्।
सर्पिस्तैलसिताक्षौद्रैर्मिश्रं वाऽपि पिबेत् पयः॥७९॥
अंशुमत्या शृतः प्रस्थः पयसो द्विसितोपलः।
पाने प्रशस्यते तद्वत् पिप्पलीनागरैः शृतः॥ ८०॥
बलाशतावलीरास्नादशमूलैः सपीलुभिः।
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः॥ ८१॥
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्।
पिबेद्वा सत्रिवृच्चूर्णं पित्तरक्तावृतानिलः॥ ८२॥
क्षीरेणैरण्डतैलं वा प्रयोगेण पिबेन्नरः।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः॥ ८३॥
कषायमभयानां[1] वा घृतभृष्टं पिबेन्नरः।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा॥ ८४॥
काश्मर्यं त्रिवृतां द्राक्षां त्रिफलां सपरूषकाम्।
शृतं पिबेद्विरेकाय लवणक्षौद्रसंयुतम्॥ ८५॥
त्रिफलायाः कषायं वा पिबेत् क्षौद्रेण संयुतम्।
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिकः॥ ८६॥
योगैश्च कल्पविहितैरसकृत्तं विरेचयेत्।
मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वातं मलावृतम्॥ ८७॥

स्थिरेत्यादौ चतुःक्षीरमिति चतुर्गुणं क्षीरम्। पृथक् तैलं पृथग्घृतमित्यनेन संमिश्रपाकं निषेधयति। क्षीरत्रिगुणा सार्धभागा शर्करा यस्यां मात्रायां सा क्षीर त्रिगुणाऽध्यर्धशर्करा। खजः पञ्चाङ्गुलो हस्तः, मन्थानं वा। मात्रा चात्र मिलितयोस्तैलसर्पिषोर्ग्राह्या। अंशुमती शालपर्णी। द्विसितोपल इति शर्करापलद्वययुक्तः। इयं च क्षीरमात्रा उत्तमाग्नीन् प्रति। धारोष्णमिति दोहकालधारापतितमग्नियोगाद्विना उष्णीभूतम्। मूत्रं चात्र क्षीरसमम्। सत्रिवृच्चूर्णं धारोष्णं क्षीरमिति संबन्धः। प्रयोगेणेति अभ्यासेन। क्षीरप्रधानो वस्तिः क्षीरवस्तिः॥ ७६-८७॥

निर्हरेद्वा मलं तस्य सघृतैः क्षीरबस्तिभिः।
न हि बस्तिसमं किंचिद्वातरक्तचिकित्सितम्॥८८॥
बस्तिवंक्षणपार्श्वोरुपर्वास्थिजठरार्तिषु।
उदावर्ते च शस्यन्ते निरूहाः सानुवासनाः॥ ८९॥
दद्यात्तैलानि चेमानि बस्तिकर्मणि बुद्धिमान्।
नस्याभ्यञ्जनसेकेषु दाहशूलोपशान्तये॥ ९०॥
मधुयष्ट्यास्तुलायास्तु कषाये पादशेषिते।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः॥९१॥
शतपुष्पावरीमूर्वापयस्यागुरुचन्दनैः।
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः[1]॥ ९२॥
काकोलीक्षीरकाकोलीतामलक्यृद्धिपद्मकैः।
जीवकर्षभजीवन्तीत्वक्पत्रनखवालकैः॥ ९३॥
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः।
चतुष्प्रयोगात्तद्धन्ति तैलं मारुतशोणितम्॥ ९४॥
सोपद्रवं साङ्गशूलं सर्वगात्रानुगं तथा।
वातासृक्पित्तदाहार्तिज्वरघ्नं बलवर्णकृत्॥ ९५॥

इति मधुपर्ण्यादितैलम्।

मधुयष्ट्या इत्यादौ मधुकतुलायां जलद्रोणं दत्त्वा तैलाढकमानः क्वाथो भवति। वरी शतावरी। हंसपदी खनामख्याता। पयस्या अर्कपुष्पी। वितुन्नकं धान्यकम्। चतुष्प्रयोगादिति पानाभ्यञ्जबस्तिनस्यप्रयोगात्॥ ८८॥-९५॥

मधुकस्य शतं द्राक्षा खर्जूराणि परूषकम्।
मधूकौदनपाक्यौ च प्रस्थं मुञ्जातकस्य च॥ ९६॥
काश्मर्याढकमित्येतच्चतुर्द्रोणे पचेदपाम्।
शेषेऽष्टभागे पूते च तस्मिंस्तैलाढकं पचेत्॥ ९७॥
तथाऽऽमलककाश्मर्यविदारीक्षुरसैः समैः।
चतुर्द्रोणेन पयसा कल्कं दत्त्वा पलोन्मितम्॥ ९८॥
कदम्बामलकाक्षोटपद्मबीजकशेरुकम्।
शृङ्गाटकं शृङ्गवेरं लवणं पिप्पलीं सिताम्॥ ९९॥
जीवनीयैश्च संसिद्धं क्षौद्रप्रस्थेन संसृजेत्।
नस्याभ्यञ्जनपानेषु वस्तौ चापि नियोजयेत्॥१००॥
वातव्याधिषु सर्वेषु मन्यास्तम्भे हनुग्रहे।

१ 'कषायमसृतानां' इति पा०।

१ 'मधुपर्ण्याः' इति पा०।

सर्वाङ्गैकाङ्गवाते च क्षतक्षीणे क्षतज्वरे ॥ १०१ ॥
सुकुमारकमित्येतद्वातास्रामयनाशनम् ।
स्वरवर्णकरं तैलमारोग्यबलपुष्टिदम् ॥ १०२ ॥
इति सुकुमारकतैलम् ।

गुडूचीं मधुकं ह्रस्वं पञ्चमूलं पुनर्नवाम् ।
रास्नामेरण्डमूलं च जीवनीयानि लाभतः ॥ १०३ ॥
पलानां शतकैर्भागैर्बलापञ्चशतं तथा ।
कोलबिल्वयवान्माषान्कुलत्थांश्चाढकोन्मितान् १०४
काश्मर्याणां सुशुष्काणां द्रोणं द्रोणशतेऽम्भसि ।
साधयेज्जर्जरं धौतं चतुर्द्रोणं च शेषयेत् ॥ १०५ ॥
तैलद्रोणं पचेत्तेन दत्त्वा पञ्चगुणं पयः ।
पिष्ट्वा त्रिपलिकं चैव चन्दनोशीरकेशरम् ॥ १०६ ॥
पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिकाम् ।
मञ्जिष्ठाष्टपलं चैव तत् सिद्धं सार्वयौगिकम् ॥१०७॥
वातरक्ते क्षतक्षीणे भारार्ते क्षीणरेतसि ।
वेपनाक्षेपभग्नानां सर्वाङ्गैकाङ्गरोगिणाम् ॥ १०८ ॥
योनिदोषमपस्मारमुन्मादं खञ्जपङ्गुताम् ।
हन्यात् प्रसवनं[1] चैतत्तैलाग्र्यममृताह्वयम् ॥ १०९ ॥
इत्यमृताद्यं तैलम् ।

गुडूचीत्यादौ गुडूच्यादीनां प्रत्येकं शतपलत्वं, कोलादीनां प्रत्येकमाढकमानत्वम् । काश्मर्याणामिति गम्भारीफलानाम् । सार्वयौगिकमिति पानादिचतुष्प्रयोगे यौगिकम् । प्रसवनमिति प्रसूतिकारकम् ॥ ९६–१०९ ॥

पद्मवेतसयष्ट्याह्वफेनिलापद्मकोत्पलैः ।
पृथक्पञ्चपलैर्दर्भबलाचन्दनकिंशुकैः ॥ ११० ॥
जले शृतैः पचेत्तैलप्रस्थं सौवीरसंमितम् ।
लोध्रकालीयकोशीरजीवकर्षभकेशरैः ॥ १११ ॥
मदयन्तीलतापत्रपद्मकेशरपद्मकैः ।
प्रपौण्डरीककाश्मर्यमांसीमेदाप्रियङ्गुभिः ॥ ११२ ॥
कुङ्कुमस्य पलार्धेन मञ्जिष्ठायाः पलेन च ।
महापद्ममिदं तैलं वातासृग्ज्वरनाशनम् ॥ ११३ ॥
इति महापद्मं तैलम् ।

पद्मवेतसेत्यादौ फेनिला उपोदिका । सौवीरसंमितमिति स्नेहसमं सौवीरकम् । लोध्रादिभिः कार्षिकैः, कुङ्कुमं च द्विकार्षिकम् ॥ ११०–११३ ॥

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् ।
स्यात् पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ॥११४॥
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत् ।
इति खुड्डाकपद्मकं तैलम् ।

खुड्डाकपद्मकमिति अल्पपद्मकसंज्ञं; संज्ञा चैषा वैद्यव्यवहारार्था ॥ ११४ ॥—

शतेन यष्टिमधुकात् साध्यं दशगुणं पयः ॥ ११५ ॥
तस्मिंस्तैले चतुर्द्रोणे मधुकस्य पलेन तु ।
सिद्धं मधुककाश्मर्यरसैर्वा वातरक्तनुत् ॥ ११६ ॥
मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे ।
क्षीरे साध्यं शतं कृत्वा तदेवं मधुकाच्छते ॥ ११७ ॥
सिद्धं देयं त्रिदोषे स्याद्वातास्रे श्वासकासनुत्[1] ।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥ ११८ ॥
इति शतपाकं मधुकतैलम् ।

शतेन यष्टिमधुकादित्यादौ यष्टीमधुपलशतं दशगुणेन क्षीरेण साध्यं, तेन चतुर्भागस्थितेन क्षीरेण तैलं पक्तव्यम् । तदेवं मधुकाच्छते सिद्धमिति शतधापाकेन मधुकपलशतात् सिद्धमित्यर्थः । अनेन च मधुकपलशतसाधनोपदेशेन शतं कृत्वेत्यत्र शतशब्दस्य विपुलवाचितां निषेधयति ॥ ११५–११८ ॥

बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत् ।
सहस्रं शतवारं वा[2] वातासृग्वातरोगनुत् ॥ ११९ ॥
रसायनमिदं श्रेष्ठमिन्द्रियाणां प्रसादनम् ।
जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ १२० ॥
इति सहस्रपाकं शतपाकं वा बलातैलम् ।

बलाकषायेत्यादिनोक्तशतसहस्रपाके अत्यर्थपाकात् स्नेहक्षयं पश्यन्तः शतगुणेन सहस्रगुणेन वा द्रवेणैकदैव पाकं व्याख्यानयन्ति; किंतु तावती स्नेहमात्राऽत्र पक्तव्या या पाकोपक्षयेण निःशेषा न भवति, क्षीरं चात्र स्नेहवर्धकमस्ति, तेन यथाश्रुतमेवात्राचार्यवचनं प्रमाणमिति पश्यामः । किंच प्रत्यासत्ते एव पाके सद्रवे स्नेहकल्कोद्धरणमत्र कर्तव्यं, तेन स्नेहापेपक्षयेऽपि[3] मात्राऽनेन भवति ॥ ११९ ॥ १२० ॥

गुडूचीरसदुग्धाभ्यां तैलं द्राक्षारसेन वा ।
सिद्धं मधुककाश्मर्यरसैर्वा वातरक्तनुत् ॥ १२१ ॥
आरनालाढके तैलं पादसर्जरसं शृतम् ।
प्रभूते खजितं तोये ज्वरदाहार्तिनुत् परम् ॥ १२२ ॥

गुडूचीत्यादौ द्रवात् पादिकः स्नेह इति न्यायात् प्रस्थं तैलस्य भवति । खजितमिति मथितम् ॥ १२१ ॥ १२२ ॥

समधूच्छिष्टमाञ्जिष्ठं ससर्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ १२३ ॥
इति पिण्डतैलम् ।

समधूच्छिष्टेत्यादौ मधूच्छिष्टादीनि कल्कः, जलं च द्रवं देयम् । पिण्डतैलभाषया चात्र वस्त्रपूतमेवैतत्तैलं कर्तव्यमि-

1 'पुंसवनं' इति पा० ।

1 'विषोन्मादवातास्रश्वासकासनुत्' इति पा० । 2 'सहस्रशतपाकं वा' इति पा० । 3 'स्नेहोपक्षयाऽपि' इति पा० ।

त्याहुः । किंतु, आरनालाढकसाध्यतैले एव सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपात् पिण्डतैलमनेनोच्यत इति जतूकर्णवचनादुच्यते; उक्तं हि तत्र—"काञ्जिकसर्जरसशृतं खजितं बहुना जलेन सिक्थकंसर्जरसंर्युक्तमभ्यञ्जनम्" इति ॥ १२३ ॥

दशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥१२४॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलैः ॥ १२५ ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।
काथैर्वा जीवनीयानां पञ्चमूलस्य वा भिषक् ॥१२६॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ।
सेकार्थे तण्डुलक्षौद्रशर्करांम्बु च शस्यते ॥ १२७ ॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः ।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥ १२८ ॥
चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे ।
शयने पुलिनस्पर्शशीतमारुतवीजिते ॥ १२९ ॥
चन्दनार्द्रस्तनकराः प्रिया नार्यः प्रियंवदाः ।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् १३०
सरागे सरुजे दाहे रक्तं विस्राव्य लेपयेत् ।
मधुकाश्वत्थत्वङ्मांसीवीरोदुम्बरशाद्वलैः ॥ १३१ ॥
जलजैर्यवचूर्णैर्वा सयष्ट्याह्वपयोघृतैः ।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽतिदाहनुत् ॥ १३२ ॥
तिलाः प्रियालो मधुकं बिसं मूलं च वेतसात् ।
आजेन पयसा पिष्टः प्रलेपो दाहरागनुत् ॥ १३३ ॥
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ।
सितोपलैरकासक्तुमसूरोशीरपद्मकैः ॥ १३४ ॥
लेपो रुग्दाहवीसर्परागशोफनिवारणः ।
पित्तरक्तोत्तरे त्वेते, लेपान् वातोत्तरे शृणु ॥१३५॥
वातघ्नैः साधितः स्निग्धः सक्षीरमुद्गपायसः ।
तिलसर्षपपिण्डैर्वाऽप्युपनाहो रुजापहः ॥ १३६ ॥
औदकप्रसहानूपवेशवाराः सुसंस्कृताः ।
जीवनीयौषधैः स्नेहयुक्ताः स्युरुपनाहने ॥ १३७ ॥
स्तम्भतोदरुगायामशोथाङ्गग्रहनाशनाः ।
जीवनीयौषधैः सिद्धा सपयस्का वसाऽपि वा १३८
घृतं सहचरान्मूलं जीवन्ती च्छागलं पयः ।
लेपः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥१३९॥

क्षीरपिष्टमुमालेपमेरण्डस्य फलानि च ।
कुर्याच्छूलनिवृत्त्यर्थं शताह्वामनिलेऽधिके ॥ १४० ॥
समूलाग्रच्छदैरण्डकाथे द्विप्रास्थिकं पृथक् ।
घृतं तैलं वसा मज्जा चानूपमृगपक्षिणाम् ॥ १४१ ॥
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम् ।
हरिद्रोत्पलकुष्ठैलाशताह्वाश्वहनच्छदान् ॥ १४२ ॥
बिल्वमात्रान् पृथक् पुष्पं काकुमं चापि साधयेत् ।
मधूच्छिष्टपलान्यष्टौ दद्याच्छीतेऽवतारिते ॥ १४३ ॥
शूलेनैषोऽर्दिताङ्गानां लेपः सन्धिगतेऽनिले ।
वातरक्ते च्युते भग्ने खञ्जे कुब्जे च शस्यते ॥ १४४ ॥
शोफगौरवकण्ड्वाढ्यैर्युक्ते त्वस्मिन् कफोत्तरे ।
मूत्रक्षारसुरापक्वं घृतमभ्यञ्जने हितम् ॥ १४५ ॥
पद्मकं त्वक् समधुकं सारिवा चेति तैर्घृतम् ।
सिद्धं समधुशुक्तं स्यात् सेकाभ्यङ्गे कफोत्तरे ॥१४६॥
क्षौरस्तैलं गवां मूत्रं जलं च कटुकैः शृतम् ।
परिषेके प्रशंसन्ति वातरक्ते कफोत्तरे ॥ १४७ ॥
लेपः सर्षपनिम्बार्कहिंस्राक्षीरतिलैर्हितः ।
श्रेष्ठः सिद्धैः कपित्थत्वग्घृतक्षीरैः ससक्तुभिः १४८
गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ १४९ ॥
तगरं त्वक् शताह्वैला कुष्ठं मुस्तं हरेणुका ।
दारु व्याघ्रनखं चाम्लपिष्टं वातकफास्रनुत् ॥ १५० ॥
मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ।
मुहूर्तं लिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरम् ॥ १५१ ॥
त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम् ।
विडङ्गं पिप्पलीमूलं रोमशं वृषकत्वचम् ॥ १५२ ॥
ऋद्धिं तामलकीं चव्यं समभागानि पेषयेत् ।
कल्यं लिप्तेऽयस्पात्रे मध्याह्ने भक्षयेत्ततः ॥ १५३ ॥
वर्जयेद्दधिशुक्तानि क्षारं वैरोधिकानि च ।
वातास्रे सर्वदोषेऽपि हितं शूलार्दिते परम् ॥ १५४ ॥
बुद्ध्वा स्थानविशेषांश्च दोषाणां च बलाबलम् ।
चिकित्सितमिदं कुर्यादूहापोहविकल्पवित् ॥ १५५ ॥

मधुरसिद्धैरिति जीवनीयसिद्धस्नेहैः । तण्डुलेत्यादौ प्रत्येकं त्रिभिरम्बुशब्दः संबध्यते । शीततोयानुगैरिति शीततोयसिक्तैः । चन्द्रपादाम्बुसंसिक्ते इति तुषारजलसिक्ते । पुलिनं नदीतटः, पुलिनस्पर्शेन शीतो मारुतः, तेन वीजिते शयने, 'शयानस्य' इति शेषः । एरका होग्गलः । पयसि निर्वृता इति

१ 'एलाप्रियालमधुकबिसं' इति पा० । २ 'कृसरो मुद्गपायसः' इति पा० ।

१ '°वरुणच्छदान्' इति पा० । २ 'क्षीरं तैलं' इति पा० । ३ 'घृतं' इति पा० । ४ 'सक्तुघृतक्षीरकपित्थत्वग्भिरेव च' इति पा० । ५ 'कल्कैर्लिप्त्वाऽऽयसीं पात्रीं' इति पा० ।

क्षीरे निर्वापिताः। उमा अतसी। अग्रच्छदाः तरुणपत्राणि। मूत्रक्षारेत्यादौ क्षारः क्षारोदकम्। अम्लैरिति काञ्जिकादिभिः। रोमशं कासीसम्। कल्यमिति प्रातः। अवस्थाकर्तव्यमाह—बुद्ध्वेत्यादि। ऊहापोहविकल्पविदिति पूर्वोक्तचिकित्सितस्य ऊहापोहविकल्पज्ञः॥ १२४-१५५॥

**कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।**
**अतिवृद्ध्याऽनिले नादौ शस्तं स्नेहनबृंहणम्॥ १५६॥**
**व्यायामशोधनारिष्टमूत्रपानैर्विरेचनैः।**
**तक्राभयाप्रयोगैश्च क्षपयेत् कफमेदसी॥ १५७॥**
**बोधिवृक्षकषायं तु प्रपिबेन्मधुना सह।**
**वातरक्तं जयत्याशु त्रिदोषमपि दारुणम्॥ १५८॥**
**पुराणयवगोधूमसीध्वरिष्टसुरासवैः।**
**शिलाजतुप्रयोगैश्च गुग्गुलोर्माक्षिकस्य च॥ १५९॥**

कुपित इत्यादि। मेदसः कफस्य वा अतिवृद्ध्या कृतात् मार्गसंरोधादनिले कुपिते सति आदौ स्नेहनं तथा बृंहणं च न शस्तमिति श्लोकार्थः। अत्र स्नेहनबृंहणनिषेधे सति कर्तव्यमाह—व्यायामेत्यादिना माक्षिकस्य चेत्यन्तेन॥ १५६-१५९॥

**गम्भीरे रक्तमाक्रान्तं स्याच्चेत्तद्वातवर्जयेत्।**
**पश्चाद्वाते क्रियां कुर्याद्वातरक्तप्रसादनीम्॥ १६०॥**

गम्भीरे इति अवगाढे अनुत्ताने वातरक्ते। रक्तमाक्रान्तमिति अभिभूतं वायुना वातवर्जयेदिति। एतत्क्रियोत्तरकालीनं कर्तव्यमाह—पश्चाद्वातेत्यादि। कफमेदोवृते एव निर्जितकफमेदसि वाते वातरक्तप्रसादिनी क्रिया अत्रैवोक्तस्नेहप्रयोगादिका कार्या; वातविकारत्वाद् वातव्याधिचिकित्सितेन जयेत्। एतच्च वातेन रक्ताभिभवनं गम्भीर एव वातरक्ते प्रायो भवतीति दर्शयितुं 'गम्भीरे' इति कृतम्। गम्भीरानुगते हि वातरक्ते रक्तं बहु नास्ति, यतो रक्तस्य द्वितीया रक्तधरा त्वक् स्थानं; तेनोत्ताने एव रक्तं बलवत्, बाह्यस्थानत्वाद्रक्तस्य॥ १६०॥

**रक्तपित्तातिवृद्ध्या तु पाकमाशु नियच्छति।**
**भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा॥ १६१॥**
**तयोः क्रिया विधातव्या भेदशोधनरोपणैः।**
**कुर्यादुपद्रवाणां च क्रियां स्वां स्वाच्चिकित्सितात् १६२**

आवस्थिकं विधिमाह—रक्तेत्यादि। रक्तवृद्ध्या पित्तवृद्ध्या चेति रक्तपित्तातिवृद्ध्या। पाकं नियच्छति 'वातरक्तम्' इति शेषः। तयोरित्यादि वृद्धपित्तवृद्धरक्तकृतपाकयोर्वातरक्तयोः। उपद्रवचिकित्सामतिदिशन्नाह—कुर्यादित्यादि॥ १६१॥ १६२॥

तत्र श्लोकाः—
**हेतुः स्थानानि मूलं च यस्मात् प्रायेण सन्धिषु।**
**कुप्यति प्राक् च यद्रूपं द्विविधस्य च लक्षणम् १६३**
**पृथग्भिन्नस्य लिङ्गं च दोषाधिक्यमुपद्रवाः।**
**साध्यं याप्यमसाध्यं च क्रिया साध्यस्य चाखिला॥**
**वातरक्तस्य निर्दिष्टा समासव्यासतस्तथा।**
**महर्षिणाऽग्निवेशाय तथैवावस्थिकी क्रिया॥१६५॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सितस्थाने वातशोणितचिकित्सितं नामैकोनत्रिंशोऽध्यायः॥ २९॥**

हेतुः स्थानानीत्यादिसंग्रहे दोषाधिक्यमुपद्रवाः साध्यं याप्यमसाध्यं चेति अननुक्रमेण संग्रहं करोति, उपद्रवाणामभावसद्भावत्रोकभावैः साध्यत्वासाध्यत्वयाप्यत्वख्यापनार्थम्॥ १६३-१६५॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने वातरक्तचिकित्सितं नामैकोनत्रिंशोऽध्यायः॥ २९॥

---

## त्रिंशोऽध्यायः।

**अथातो योनिव्यापच्चिकित्सितं व्याख्यास्यामः॥१॥**
**इति ह स्माह भगवानात्रेयः॥ २॥**

वातरक्तचिकित्सानन्तरं पारिशेष्याद् वातकृतत्वाच्च योनिव्यापच्चिकित्सितमुच्यते। उक्तं हि—"न हि वाताद्दते योनिर्नारीणां संप्रदुष्यति" इति॥ १॥ २॥

**द्विव्यतीर्थौषधिमतश्चित्रधातुशिलावतः।**
**पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते॥ ३॥**
**विहरन्तं तपोयोगात्तत्त्वज्ञानार्थदर्शिनम्।**
**पुनर्वसुं जितात्मानमग्निवेशोऽनु पृष्टवान्॥ ४॥**
**भगवन्! यदपत्यानां मूलं नार्यः परं नृणाम्।**
**तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः॥ ५॥**
**तस्मात्तेषां समुत्पत्तिमुत्पन्नानां च लक्षणम्।**
**सौषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया॥ ६॥**
**इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽत्रिजः।**
**विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे॥ ७॥**
**मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च।**
**जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक्॥ ८॥**

---

१ 'वरुणच्छदा वरुणपत्राणि' इति पा०। २ 'अतिवृद्धे' इति पा०। ३ 'भ्यधशोधरोपणैः' इति, 'भेदशोधनदारणैः' इति च पा०।

१ 'कृष्णात्रेयं' इति पा०।

दिव्यानि तीर्थानि गङ्गादीनि, दिव्याश्चौषध्यो ब्रह्मसुवर्चलैन्द्रीप्रभृतयो यस्मिन् तस्य दिव्यतीर्थौषधिमतः । चित्रधातुः नानावर्णधातुः । तत्त्वज्ञानेन सम्यग्ज्ञानेन अर्थान् द्रष्टुं शीलं यस्य तं तत्त्वज्ञानार्थदर्शिनम् । मूलमिति कारणम् । तद्विघात इति अपत्यकारणविघातः । तेषामिति योनिगदानाम् । समुत्पत्तिमिति उत्पत्तिकारणं, कार्ये कारणोपचारात् । रोगसंग्रहे इति अष्टोदरीये ( सू. अ. १९ ) । मिथ्याचारेण असम्यगाहाराचारेण, प्रदुष्टेनार्तवेनेति दुष्टार्तवेन, योनिव्यापद्भवति । बीजदोषादिति आर्तवगतबीजदुष्टेः, सा पश्चाद्वक्तव्या । दैवादिति प्राक्तनाधर्मवशात् । एतेषां च यथायोग्यतया कारणत्वमग्रे वक्ष्यमाणकारणत्वभेदेन योनिव्यापत्सून्नेयं, दैवं तु सर्वत्रैव साधारणकारणं विशिष्टदृष्टकारणादर्शने सति कार्यदर्शनादुन्नेयम् ॥ ३-८ ॥

वातलाहारचेष्टाया वातलायाः समीरणः ।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम् ॥ ९ ॥
स्तम्भं पिपीलिकासृप्तिमिव कर्कशतां तथा ।
करोति सुप्तिमायासं वातजांश्चापरान् गदान् ॥१०॥
सा स्यात् सशब्दरुक्फेनतनुरूक्षार्तवाऽनिलात् ।
व्यापत्कट्वम्ललवणक्षाराद्यैः पित्तजा भवेत् ॥ ११ ॥
दाहपाकज्वरोष्णार्ता नीलपीतासितार्तवा ।
भृशोष्णकुणपस्रावा योनिः स्यात्पित्तदूषिता ॥१२॥
कफोऽभिष्यन्दिभिर्वृद्धो योनिं चेद्दूषयेत् स्त्रियाः ।
स कुर्यात् पिच्छिलां शीतां कण्डुग्रस्ताल्पवेदनाम् १३
पाण्डुवर्णां तथा पाण्डुपिच्छिलार्तववाहिनीम् ।
समश्नन्त्या रसान् सर्वान्दूषयित्वा त्रयो मलाः ॥१४॥
योनिगर्भाशयस्थाः स्वैर्योनिं युञ्जन्ति लक्षणैः ।
सा भवेद्दाहशूलार्ता श्वेतपिच्छिलवाहिनी ॥ १५ ॥

वातलेत्यादौ वातलाया इति विशेषेण वातिकयोनिव्यापदुत्पादोपदर्शनार्थम् । पिपीलिकासृप्तिमिति पिपीलिकापरिसर्पणाकारां वेदनाम् । सशब्दरुक्फेनतनुरूक्षार्तवेति अवृतावप्येवंभूतार्तवा भवति, तेन वातिकप्रदररूपेयं योनिव्यापत्; एवमेव पैत्तिकश्लैष्मिक-सान्निपातिक-योनिव्यापदामपि पैत्तिक-कफज-सान्निपातिकप्रदरत्वं वर्णयन्ति । रक्तयोनिरिह असृग्दरसंज्ञया चिकित्साप्रस्तावे वक्तव्या; तेन सैव प्रदररूपा । ये तु एतद्यापदां प्रदरं भिन्नमेव मन्यन्ते, ते प्रदरचिकित्सार्थं प्रकरणान्तरमत्राध्याये पठिष्यन्ति । समश्नन्त्या इति पथ्यापथ्यमेलकेनोपयुञ्जन्त्याः ॥ ९-१५ ॥

रक्तपित्तकरैर्नार्या रक्तं पित्तेन दूषितम् ।
अतिप्रवर्तते योन्यां लब्धे गर्भेऽपि सासृजा ॥ १६ ॥
योनिगर्भाशयस्थं चेत् पित्तं संदूषयेदसृक् ।
साऽरजस्का मता कार्श्यवैवर्ण्यजननी भृशम् ॥१७॥

रक्तपित्तकरैरित्यादौ गर्भे लब्धेऽपि रक्तमतिप्रवर्तते, तेनास्या गर्भो न तिष्ठति; सासृजा रक्तयोनिरित्यर्थः । ये तु 'साऽप्रजा' इति पठन्ति, ते "यस्यां लब्धेऽपि गर्भे असृग्गतिप्रवर्तते, सा तादृशरक्तस्रुत्या अप्रजा भवति; इयं च रक्तयोनिरुच्यत इति रक्तातिस्रुत्यैव लभ्यते" इति व्याख्यानयन्ति । योनौ गर्भाशये च तिष्ठतीति योनिगर्भाशयस्थं पित्तम् । अरजस्केति अनार्तवा ॥ १६ ॥ १७ ॥

योन्यामधावनात् कण्डूं जाताः कुर्वन्ति जन्तवः ।
सा स्यादचरणा कण्ड्वा तयाऽतिनरकाङ्क्षिणी ॥१८॥

अचरणेति धावनाचरणादचरणा । कण्ड्वा तयेति कृमिजनितयोनिकण्ड्वा ॥ १८ ॥

पवनोऽतिव्यवायेन शोफसुप्तिरुजः स्त्रियाः ।
करोति कुपितो योनौ सा चातिचरणा मता ॥१९॥

व्यवायस्यातिचरणेनोत्पन्ना व्यापदतिचरणा ॥ १९ ॥

मैथुनादतिबालायाः पृष्ठकट्यूरुवंक्षणम् ।
रुजन् दूषयते योनिं वायुः प्राक्चरणा हि सा २०

रुजन्निति दुःखयन् । उचितव्यवायकालात् प्राक् व्यवायाचरणात् प्राक्चरणा उच्यते ॥ २० ॥

गर्भिण्याः श्लेष्मलाभ्यासाच्छर्दिनिःश्वासनिग्रहात् ।
वायुः क्रुद्धः कफं योनिमुपनीय प्रदूषयेत् ॥ २१ ॥
पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम् ।
कफवातामयव्याप्ता सा स्याद्योनिरुपप्लुता ॥ २२ ॥

गर्भिण्या इत्यादौ आस्रावमिति श्लेष्मविलक्षणमास्रावम् । कफवातामयैरुपप्लुतत्वात् 'उपप्लुता' इत्युच्यते ॥ २१ ॥ २२ ॥

पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥ २३ ॥
शूना स्पर्शाक्षमा सार्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणिवंक्षणपृष्ठार्तिज्वरार्तायाः परिप्लुता ॥ २४ ॥

नृसंवासे इति रमणसमये । सर्वतो वातपित्तविकारोपप्लुतत्वात् परिप्लुता ॥ २३ ॥ २४ ॥

वेगोदावर्तनाद्योनिमुदावर्तयतेऽनिलः ।
सा रुगार्ता रजः कृच्छ्रेणोदावृत्तं विमुञ्चति ॥ २५ ॥
आर्तवे सा विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्ध्वं ज्ञेयोदावर्तिनी बुधैः ॥ २६ ॥

१ 'प्रदुष्टेनार्तवेनेति असृजा; आर्तवदुष्टिरपि कारणं भवति' इति पा० । २ 'साऽप्रजा' इति पा० ।

१ 'योनिकृमिजकण्ड्वा' इति पा० । २ 'वायुर्वृद्धः' इति पा० । ३ 'कृच्छ्रेणोदावृत्त्य' इति पा० ।

योनिमुदावर्तयते इति योनिमुदावर्तवातां करोति । उदावृत्तमिति ऊर्ध्वं नीतम् । विकारेण रजस ऊर्ध्वगमनात् 'उदावर्तिनी' इत्युच्यते ॥ २५ ॥ २६ ॥

**अकाले वाहमानाया गर्भेण पिहितोऽनिलः ।**
**कर्णिकां जनयेद्योनौ श्लेष्मरक्तेन मूर्च्छितः ॥ २७ ॥**
**रक्तमार्गावरोधिन्या सा तया कर्णिनी मता ।**

अकाले वाहमानाया इत्यादि अप्राप्ते गर्भनिष्क्रमणकाले प्रवाहणं कुर्वन्त्याः । कर्णिकामिति कर्णिकाकारं ग्रन्थिम् ॥२७॥—

**रौक्ष्याद्वायुर्यदा गर्भं जातं जातं विनाशयेत् ॥ २८ ॥**
**दुष्टशोणितजं नार्याः पुत्रघ्नी नाम सा मता ।**

रौक्ष्यादिति रूक्षगुणोत्कर्षात् । दुष्टशोणितजमिति वचनादिह वायुनाऽऽर्तवदुष्टिरपि क्रियते इति दर्शयति । अत्र च यद्यपि सामान्येनैव गर्भविनाश उक्तः, तथाऽपि पुत्रस्यैव प्राधान्यात् 'पुत्रघ्नी' इति व्यपदेशो ज्ञेयः ॥ २८ ॥—

**व्यवायमतितृप्ताया भजन्त्यास्त्वन्नपीडितः ॥ २९ ॥**
**वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ।**
**वक्रयत्याननं योन्याः साऽस्थिमांसानिलार्तिभिः ३०**
**भृशार्तिर्मैथुनाशक्ता योनिरन्तर्मुखी मता ।**

व्यवायमतितृप्ताया इत्यादौ अतितृप्ताया व्यवायं भजन्त्याः व्यवायकाले मिथ्यास्थिताङ्गाया अन्नपीडितो वायुर्योनेराननमन्तर्मुखं वक्रयति; वक्रयतीतिपदेन वक्रतयाऽन्तर्मुखनयनमभिप्रेतम् ॥ २९ ॥ ३० ॥—

**गर्भस्थायाः स्त्रिया रौक्ष्याद्वायुर्योनिं प्रदूषयन् ॥३१॥**
**मातृदोषादणुद्वारां कुर्यात् सूचीमुखी तु सा ।**

गर्भस्थाया इत्यादौ रौक्ष्यादिति रूक्षगुणात् । मातृदोषादिति मातुर्गर्भकाले वातप्रकोपहेतुसेवारूपापचारात् ॥ ३१ ॥—

**व्यवायकाले रुन्धन्त्या वेगान् प्रकुपितोऽनिलः ३२**
**कुर्याद्विण्मूत्रसङ्गार्तिं शोषं योनिमुखस्य च ।**

शोषं योनिमुखस्येत्यनेन योनिमुखशोषाच्छुष्कयोनिसंज्ञा व्याकृता भवति ॥ ३२ ॥—

**षडहात् सप्तरात्राद्वा शुक्रं गर्भाशयं गतम् ॥ ३३ ॥**
**सरुजं नीरुजं वाऽपि या स्रवेत् सा तु वामिनी ।**

षडहादित्यादिना शुक्रवमनाद्‌ 'वामिनी' इत्युच्यते ॥३३॥—

**बीजदोषात्तु गर्भस्थमारुतोपहताशया ॥ ३४ ॥**
**नृद्वेषिण्यस्तनी चैव षण्ढी स्यादनुपक्रमा ।**

बीजदोषादिति सामान्यवचनेनापि आर्तवरूपबीजदोष एव ज्ञेयः, तद्दोषस्यैव गर्भाशयोपघातकरत्वात् । उक्तं हि—"यदा ह्यस्याः शोणिते गर्भाशयबीजभागः प्रदोषमापद्यते तदा वन्ध्यां जनयति" ( शा. अ. ४ ) इति । मारुतोपहताशयेति मारुतोपहतगर्भाशया । अस्तनी ईषत्स्तनी ॥ ३४ ॥—

**विषमं दुःखशय्यायां मैथुनात् कुपितोऽनिलः ॥३५॥**
**गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ।**
**असंवृतमुखी सार्ता रूक्षफेनास्रवाहिनी ॥ ३६ ॥**
**मांसोत्सन्ना महायोनिः पर्ववंक्षणशूलिनी ।**

विषममिति क्रियाविशेषणं, विषमं यथा भवति तथा मैथुनादित्यर्थः । विष्टम्भयेदिति विस्तारयेत् । मांसोत्सन्नेति उत्सन्नमांसा ॥ ३५ ॥ ३६ ॥—

**इत्येतैर्लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ॥ ३७ ॥**
**न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता ।**
**तस्माद्गर्भं न गृह्णाति स्त्री गच्छत्यामयान् बहून् ३८**
**गुल्मार्शःप्रदरादींश्च वाताद्यैश्चातिपीडनम् ।**

दोषैर्योनिरुपद्रुतेत्यनेन दोषशब्देन योनिदूषका यथोक्ता गदा उच्यन्ते; उक्तं हि—"रोगा ह्यपि दोषशब्दं लभन्ते" ( वि. अ. ६ ) इति । तस्मादिति योन्युपद्रवात् । प्रदरादींश्चेत्यत्र योनिव्यापद्विशेषमेव प्रदरमाहुः, तेन योनिव्यापत्प्रकारं प्रदररूपं दोषोत्पादं वर्णयन्ति; ये तु योनिव्यापद्भिन्नमेव प्रदरमिच्छन्ति, तेषामत्र प्रदरपाठे विरोधो नास्त्येव ॥ ३७ ॥ ३८ ॥—

**आसां षोडश यास्त्वन्त्या आद्ये द्वे पित्तदोषजे ३९**
**परिप्लुता वामिनी च वातपित्तात्मिके मते ।**
**कर्णिन्युपप्लुते वातकफाच्छेषास्तु वातजाः ॥ ४० ॥**
**देहं वातादयस्तासां स्वैर्लिङ्गैः पीडयन्ति हि ।**

संप्रति आद्यव्यापच्चतुष्टयं त्यक्त्वा शेषषोडशव्यापत्सु वातादिलिङ्गचिकित्साज्ञानार्थं दोषविभागं दर्शयन्नाह—आसामित्यादि । आद्ये द्वे इति रक्तयोन्यरजस्के । देहं वातादय इत्यादि । तासां वातादिविभागेनोक्तयोनिव्यापदां वातादयो देहं स्वैर्लिङ्गैः पीडयन्ति, तेन वाताद्यधिकत्वं तासामुपपन्नमिति भावः; अन्ये तु देहशब्देनात्र योनिस्थानमेवोच्यत इत्याहुः ॥ ३९ ॥ ४० ॥—

**स्नेहनस्वेदबस्त्यादि वातजास्वनिलापहम् ॥ ४१ ॥**
**कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ।**
**श्लेष्मजासु च रूक्षोष्णं कर्म कुर्याद्विचक्षणः ॥४२॥**
**सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत् ।**
**स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्पुनः ४३**
**पाणिना नामयेज्जिह्मां संवृतां वर्धयेत् पुनः ।**
**प्रवेशयेन्निःसृतां च विवृतां परिवर्तयेत् ॥ ४४ ॥**
**योनिः स्थानापवृत्ता हि शल्यभूता मता स्त्रियाः ।**
**सर्वां व्यापन्नयोनिं तु कर्मभिर्वमनादिभिः ॥ ४५ ॥**

---

१ 'तया कर्णिकयाऽन्विता । सा योनिः सर्वभिषजां नामतः कर्णिनी मता' इति पा० । २ 'योनेर्मुखं वक्रयति' इति पा० ।

१ 'सार्तिः सफेनार्तववाहिनी' इति पा० ।

मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत्।
सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ॥ ४६ ॥
वातव्याधिहरं कर्म वातार्तानां सदा हितम्।
औदकानूपजैर्मांसैः क्षीरैः सतिलतण्डुलैः ॥ ४७ ॥
सवातघ्नौषधैर्नाडीकुम्भीस्वेदैरुपाचरेत्।
अक्तां लवणतैलेन साश्मप्रस्तरसङ्करैः ॥ ४८ ॥
स्विन्नां कोष्णाम्बुसिक्ताङ्गीं वातघ्नैर्भोजयेद्रसैः।

लिङ्गानन्तरं चिकित्सामाह—स्नेहनेत्यादि। स्नेहनादीनामनिलापहत्वे सिद्धेऽपि अनिलापहमिति विशेषणं विशेषेणानिलापहद्रव्यकृतस्नेहनादिप्रतिपादनार्थम्। संस्थाप्यविति द्वन्द्वजासु। स्थापयेदिति सुस्थितां कृत्वा स्थापयेत्। दुःस्थितास्थापनप्रकारमाह—पाणिनेत्यादि। स्निग्धस्विन्नामिति सर्वत्रानुवर्तते। जिह्मामिति वक्राम्। विवृतामिति विवृतमुखीम्। परिवर्तयेदिति परितो वर्तनेन संवृतां कुर्यात्। पञ्चभिरितिपदं सकलकर्मणां मृदुतया कर्तव्योपदर्शनार्थम्। अत्र च वमनादीनां सर्वदेहोपकारकतया योनिगतरोगहरणेऽपि सामर्थ्यं भवत्येवेति ज्ञेयम्। शेषं कर्मेति वक्ष्यमाणम् ॥ ४१–४८ ॥—

बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ॥ ४९ ॥
स्थिरापयस्याजीवन्तीवीरर्षभकजीवकैः।
श्रावणीपिप्पलीमुद्गपीलुमाषाख्यपर्णिभिः ॥ ५० ॥
शर्कराक्षीरकाकोलीकाकनासाभिरेव च।
पिष्टैश्चतुर्गुणक्षीरे सिद्धं पेयं यथाबलम् ॥ ५१ ॥
वातपित्तकृतान् रोगान् हत्वा गर्भं दधाति तत्।
काश्मर्यत्रिफलाद्राक्षाकासमर्दपरूषकैः ॥ ५२ ॥
पुनर्नवाद्विरजनीकाकनासासहाचरैः।
शतावर्या गुडूच्याश्च प्रस्थमक्षसमैर्घृतात् ॥ ५३ ॥
साधितं योनिवातघ्नं गर्भदं परमं पिबेत्।
पिप्पलीकुञ्चिकाजाजीवृषकं सैन्धवं वचाम् ॥ ५४ ॥
यवक्षाराजमोदे च शर्करां चित्रकं तथा।
पिष्ट्वा सर्पिषि भृष्टानि पाययेत प्रसन्नया ॥ ५५ ॥
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये।
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ॥ ५६ ॥
पिबेत् सलवणैर्मद्यैः पिप्पलीकुञ्चिके तथा।
रास्नाश्वदंष्ट्रावृषकैः पिबेच्छूले शृतं पयः ॥ ५७ ॥
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचयेत्।
सैन्धवं तगरं कुष्ठं बृहती देवदारु च ॥ ५८ ॥

१ 'घृततैलाढकद्वयम्' इति पा०। २ 'सिद्धं पिबेद्वातयोनिदोषघ्नं गर्भदं परम्' इति पा०। ३ 'किंशुकाजाजी°' इति पा०। ४ 'प्रसन्नयाऽऽलोड्य घृतभृष्टानि दापयेद्' इति पा०।

समांशैः साधितं कल्कैस्तैलं धार्यं रुजापहम्।
गुडूचीमालतीरास्नाबलामधुकचित्रकैः ॥ ५९ ॥
निदिग्धिकादेवदारुयूथिकाभिश्च कार्षिकैः।
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत् ॥ ६० ॥
वातार्तायाः पिचुं दद्याद्योनौ च प्रणयेत्ततः।
वातार्तानां च योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥६१॥
(उष्णाः स्निग्धाः प्रकर्तव्यास्तैलानि स्नेहनानि च।)
हिंस्राकल्कं तु वातार्ता कोष्णमभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्ता श्यामादीनां कफातुरा ॥ ६२ ॥

बलाद्रोणद्वयेत्यादौ बलाद्रोणद्वयस्य क्वाथे इति, बलायाः द्रोणद्वयप्रमाणक्वाथे इति वा, उभयथाऽपि द्रोणद्वयमान एव क्वाथो भवति। पयस्या अर्कपुष्पी। मुद्गपीलुमाषाख्यैः पर्णीशब्दः प्रत्येकमभिसंबध्यते; तत्र पीलुपर्णी मोरटा, केचिन्मूर्वामाहुः। प्रसन्ना मदिराया उपरितनो भागः। शूले इति योनिशूले। तैलं धार्यमिति रुजार्तायां योनौ धार्यम्। योनौ च प्रणयेदिति योनावुत्तरवस्तिना प्रवेशयेत्। श्यामादीनामिति रोगभिषग्जितीये "श्यामात्रिवृच्चतुरङ्गुल०" (वि. अ. ८) इत्यादिनोक्तानाम् ॥ ४९–६२ ॥

पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्याः स्नेहनार्थं घृतानि च ६३
(पित्तघ्नौषधसिद्धानि कार्याणि भिषजा तथा।)
शतावरीमूलतुलाश्चतस्रः संप्रपीडयेत् ॥ ६४ ॥
रसेन क्षीरतुल्येन पचेत्तेन घृताढकम्।
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ॥ ६५ ॥
पिष्टैः प्रियालैश्चाक्षांशैर्द्वियष्टिमधुकैर्भिषक्।
सिद्धे शीते च मधुनः पिप्पल्याश्च पलाष्टकम् ॥६६॥
सिताद्शपलोन्मिश्राल्लिह्यात् पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं च तत् ॥ ६७ ॥
क्षतं क्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तं च वीसर्पं हृच्छिरोग्रहम् ॥ ६८ ॥
उन्मादार्त्यपस्मारान् वातपित्तात्मकाञ्जयेत्।

इति बृहच्छतावरीघृतम्।

एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम् ॥ ६९ ॥
गर्भदं पित्तलानां च योनीनां स्याद्भिषग्जितम्।

शतावरीमूलतुला इत्यादौ आर्द्रशतावरीमूलपीडनेन यावद्रसो भवति तेन समं क्षीरघृतं वक्ष्यमाणकल्कैः पाचनीयम्। द्वियष्टिमधुकैरिति द्विभागमधुयष्टिकैः, किंवा जलजस्थलजयष्टिमधुकद्वययुक्तैः। एवमेवेत्यादौ शतावरीचतुःशतरससमेनेत्यर्थः। क्षीरोत्थितं सर्पिः क्षीरसर्पिः। जीवनीयान्यत्र कल्कः ॥ ६३–६९ ॥—

१–२ अयमर्धः श्लोकः क्वचित्पुस्तके न पठ्यते।

योन्यां श्लेष्मप्रदुष्टायां वर्तिः संशोधनी हिता ॥७०॥
वाराहे बहुशः पित्ते भावितैर्लक्तकैः कृता ।
भावितं पयसाऽर्कस्य यवचूर्णं ससैन्धवम् ॥ ७१ ॥
वर्तिः कृता मुहुर्धार्या ततः सेच्या सुखाम्बुना ।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ॥ ७२ ॥
वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधनी ।

पयसाऽर्कस्येति अर्कक्षीरेण । सेच्येति परिषिञ्चनीया । प्रदेशिनीतुल्या प्रदेशिन्यङ्गुलीसमाना परिणाहेन दैर्घ्येण च ॥ ७०-७२ ॥—

उदुम्बरशलाटूनां द्रोणमब्द्रोणसंयुतम् ॥ ७३ ॥
सपञ्चवल्ककुलकमालतीनिम्बपल्लवम् ।
निशां स्थाप्य जले तस्मिंस्तैलप्रस्थं विपाचयेत् ॥७४॥
लाक्षाधवपलाशत्वङ्निर्यासैः शाल्मलेन च ।
पिष्टैः सिद्धस्य तैलस्य पिचुं योनौ निधापयेत् ॥७५॥
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम् ।
पिच्छिला विवृता कालदुष्टा योनिश्च दारुणा ॥७६॥
सप्ताहाच्छुध्यति क्षिप्रमपत्यं चापि विन्दति ।
उदुम्बरस्य दुग्धेन षट्कृत्वो भाविताात्तिलात् ॥७७॥
तैलं क्वाथेन तस्यैव सिद्धं धार्यं च पूर्ववत् ।
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ॥ ७८ ॥
जम्ब्वाम्रमध्यकासीसलोध्रकट्फलतिन्दुकैः ।
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः ॥ ७९ ॥
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ।
तैलप्रस्थं पिचुं दद्याद्योनौ च प्रणयेत्ततः ॥ ८० ॥
कटीपृष्ठत्रिकाभ्यङ्गं स्नेहवस्तिं च दापयेत् ।
पिच्छिला स्राविणी योनिर्विप्लुतोपप्लुता तथा ॥ ८१ ॥
उत्ताना चोन्नता शूना सिध्येत् सस्फोटशूलिनी ।
करीरधवनिम्बार्कवेणुकोशाम्रजाम्बवैः ॥ ८२ ॥
जिङ्गिनीवृषमूलानां क्वाथैर्माद्वीकसीधुभिः ।
सशुक्तैर्धावनं मिश्रैर्योन्यास्रावविनाशनम् ॥ ८३ ॥
कुर्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः ।

उदुम्बरशलाटूनामित्यादौ पञ्चवल्कादिसहितानामुदुम्बरशलाटूनां द्रोणं समभागजलं ग्रहीतव्यम् । निर्यासैरिति पलाशस्यैव निर्यासैः, लाक्षा च पलाशव्यतिरेकेण भवतीति ज्ञेयम् । सशर्करैः कषायैरिति उदुम्बरशलाट्वादिकृतकषायैरेवेत्यर्थः । कालदुष्टा चिरकालदुष्टा । उदुम्बरस्य दुग्धेनेति उदुम्बरक्षीरेण । क्वाथेन तस्यैवेति उदुम्बरस्य क्वाथेन । सौराष्ट्रिका तुवरी मृत्तिका । अजामूत्रे क्षीरे चेति अजामूत्रक्षीरे प्रत्येकं द्विगुणे । उत्तानेति उन्नता । करीरः मरुजद्रुमः । कोशाम्रः स्वनामख्यातः । जिङ्गिनी प्रसिद्धा ॥ ७३-८३ ॥—

पिप्पल्ययोरजःपथ्याप्रयोगा मधुना हिताः ॥ ८४ ॥
श्लेष्मलायां कटुप्रायाः समूत्रा वस्तयो हिताः ।
पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः ॥ ८५ ॥
सन्निपातसमुत्थायाः कर्म साधारणं हितम् ।

कर्मसाधारणं वातादिजयोनिदोषोक्तं मिलितं त्रिदोषजायां कर्तव्यम् ॥ ८४ ॥ ८५ ॥—

रक्तयोन्यामसृग्वर्णैरनुबन्धं समीक्ष्य च ॥ ८६ ॥
ततः कुर्याद्यथादोषं रक्तस्थापनमौषधम् ।
तिलचूर्णं दधि घृतं फाणितं शौकरी वसा ॥ ८७ ॥
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम् ।
वराहस्य रसो मेद्यः सकौलत्थोऽनिलाधिके ॥ ८८ ॥
शर्कराक्षौद्रयष्ट्याह्वनागरैर्वा युतं दधि ।
पयस्योत्पलशालूकबिसकालीयकाम्बुदम् ॥ ८९ ॥
सपयःशर्कराक्षौद्रं पैत्तिकेऽसृग्दरे पिबेत् ।

रक्तयोन्यामित्यादि । असृग्वर्णैरनुबन्धं वीक्ष्येति असृग्वर्णविशेषैर्दोषानुबन्धं परीक्ष्य ॥ ८६-८९ ॥—

पाठा जम्ब्वाम्रयोर्मध्यं शिलोद्भेदं रसाञ्जनम् ॥९०॥
अम्बष्ठा शाल्मलीश्लेषं समङ्गां वत्सकत्वचम् ।
वाह्लीकातिविषे बिल्वं मुस्तं लोध्रं सगैरिकम् ॥९१॥
कट्वङ्गं मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम् ।
कट्फलं वत्सकानन्ताधातकीमधुकार्जुनम् ॥ ९२ ॥
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ।
तानि क्षौद्रेण संयोज्य पिबेत्तण्डुलवारिणा ॥ ९३ ॥
अर्शःसु चातिसारेषु रक्तं यच्चोपवेश्यते ।
दोषागन्तुकृता ये च वालानां तांश्च नाशयेत् ॥९४॥
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ।
स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्तयेत् ॥ ९५ ॥
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ।

इति पुष्यानुगचूर्णम् ।

पाठेत्यादौ अम्बष्ठा पाठाभेदः; अन्ये तु पाठाभागद्वयग्रहणार्थं पुनः 'अम्बष्ठा' इति पदं वर्णयन्ति । उक्तं हि—"घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते । भागतो द्विगुणं तद्धि ग्रहणीयं मनीषिभिः" इति । शाल्मलीश्लेषमिति शाल्मलीवेष्टकम् । वाह्लीकमिति कुङ्कुमम् । पुष्येणेति पुष्यनक्षत्रेणोद्धृत्य; पुष्यनक्षत्रोद्धरणं चात्रादृष्टद्वारोपकारकं ज्ञेयम् । नीलं श्वेतं सपीतकमित्यादि रजोदोषविशेषणम् ॥ ९०-९५ ॥—

तण्डुलीयकमूलं तु सक्षौद्रं तण्डुलाम्बुना ॥ ९६ ॥

१ '°कट्वङ्ग' इति पा० । २ 'सप्ताहात् सिध्यति' इति पा० । ३ 'पिच्छिलस्राविणी' इति पा० ।

१ '°क्षौद्रमेकशोऽसृग्दरे' इति पा० ।

रसाञ्जनं च लाक्षां च छागेन पयसा पिबेत्।
पत्रकल्कौ घृते भृष्टौ राजादनकपित्थयोः ॥ ९७ ॥
पित्तानिलहरौ, पैत्ते सर्वथैवास्रपित्तजित्।
मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ॥ ९८ ॥
मद्यैर्निम्बगुडूच्यौ वा कफजेऽसृग्दरे पिबेत्।
विरेचनं महातिक्तं पैत्तिकेऽसृग्दरे पिबेत् ॥ ९९ ॥
हितं गर्भपरिस्रावे यच्चोक्तं तच्च कारयेत्।

विरेचनमित्यादौ विरेचनमेव त्रिवृतादि पिबेत्, तथा महातिक्तकं घृतं कुष्ठोक्तं पिबेदिति योज्यम्। गर्भपरिस्रावे यच्चोक्तमिति जातिसूत्रीये (वि. अ. ८) गर्भस्रावचिकित्सितं यदुक्तं तत् कारयेत् ॥ ९६-९९ ॥—

काश्मर्यकुटजक्वाथसिद्धमुत्तरवस्तिना ॥ १०० ॥
रक्तयोन्यरजस्कानां पुत्रघ्न्याश्च हितं घृतम्।
मृगाजाविवराहासृग्दध्यम्लफलसर्पिषा[1] ॥ १०१ ॥
अरजस्का पिबेत् सिद्धं जीवनीयैः पयोऽपि वा।
कर्णिन्यचरणादुष्टयोनिप्राक्चरणासु च ॥ १०२ ॥
कफवाते च दातव्यं तैलमुत्तरवस्तिना।
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ॥ १०३ ॥
मधुना किण्वचूर्णं वा दद्यादचरणापहम्।
स्रोतसां शोधनं कण्डूक्लेदशोफहरं च तत् ॥ १०४ ॥
वातघ्नैः शतपाकैश्च तैलैः प्रागतिचारिणी।
आस्थाप्या चानुवास्या च स्वेद्या चानिलसूदनैः ॥ १०५ ॥
स्नेहद्रव्यैस्तथाऽऽहारैरुपनाहैश्च युक्तितः।
शताह्वायवगोधूमकिण्वकुष्ठप्रियङ्गुभिः ॥ १०६ ॥
बलाखुपर्णिकाश्याह्वैः संयावो धारणः स्मृतः।
वामिन्युपप्लुतानां च स्नेहस्वेदादिकः क्रमः ॥ १०७ ॥
कार्यस्ततः स्नेहपिचुस्ततः संतर्पणं भवेत्।
शल्लकीजिङ्गिनीजम्बूधवत्वक्पञ्चवल्कलैः ॥ १०८ ॥
कषायैः साधितः स्नेहपिचुः स्याद्विप्लुतापहः।
कर्णिन्यां वर्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ॥ १०९ ॥
बस्तमूत्रकृता धार्या सर्वं च श्लेष्मनुद्धितम्।
त्रैवृतं स्नेहनं स्वेदो ग्राम्यानूपौदका रसाः ॥ ११० ॥
दशमूलपयोबस्तिश्चोदावर्तानिलार्तिषु।
त्रैवृतेनानुवास्या च बस्तिश्चोत्तरसंज्ञितः ॥ १११ ॥
एतदेव महायोन्यां स्रस्तायां च विधीयते।
वेसा ऋक्षवराहाणां घृतं च मधुरैः शृतम्[2] ॥ ११२ ॥
पूरयित्वा महायोनिं बध्नीयात् क्षौमलक्तकैः।
प्रस्रस्तां सर्पिषाऽभ्यज्य क्षीरस्विन्नां प्रवेश्य[3] च ११३
बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः।
यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत् ॥ ११४ ॥
सर्वव्यापत्सु मतिमान्महायोन्यां विशेषतः।
नहि वातादृते योनिर्नारीणां संप्रदुष्यति ॥ ११५ ॥
शमयित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम्।

मृगाजावीत्यादौ मृगादीनामसृक् दध्यम्लफलसर्पिषा पिबेदिति योज्यम्। 'अम्लक्षौद्रसर्पिषा' इति वा पाठः। तैलमुत्तरबस्तिनेत्यत्र जीवनीयसिद्धं तैलं योज्यम्। गोपित्ते इत्यादौ दद्यादिति योनौ दद्यादित्यर्थः। प्रागतिचारिणीति प्राक्चरणातिचरणे। संयाव उत्कारिका। धारणः स्मृत इति वामिन्या बीजधारणकारक इत्यर्थः। त्रैवृतं स्नेहनमिति सर्पिस्तैलवसास्नेहनम्। एतदेवेति त्रैवृतमेव अनुवासनबस्त्युत्तरबस्तिषु। आमूत्रकालत इति मूत्रकालपर्यंतं बन्धनं कुर्यात्। सर्वयोनिव्यापत्सु वातचिकित्साकरणे हेतुमाह—नहि वातादृत इत्यादि ॥ १००-११५ ॥—

रोहीतकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत् ॥ ११६ ॥
जलेनामलकीबीजं कल्कं वा ससितामधुम्।
मधुनाऽऽमलकाच्चूर्णं रसं वा लेहयेच्च ताम्[1] ॥ ११७ ॥
न्यग्रोधत्वक्कषायेण लोध्रकल्कं तथा पिबेत्।
आस्रावे क्षौमपट्टं वा भावितं तेन धारयेत् ॥ ११८ ॥
प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम्।
योन्या स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य वा ॥ ११९ ॥
धार्या मधुयुता वर्तिः कषायाणां च सर्वशः।
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ॥ १२० ॥
सरलागुग्गुलुयवैः सतैलकटुमत्स्यकैः।
कासीसं त्रिफला कांक्षी समङ्गाऽऽम्रास्थि धातकी ॥
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः।
पलाशसर्जजम्बुत्वक्समङ्गामोचधातकीः ॥ १२२ ॥
सपिच्छिलापरिक्लिन्नास्तम्भनः कल्क इष्यते।
स्तब्धानां कर्कशानां च कार्यं मार्दवकारकम् ॥ १२३ ॥
धारयेद्वेशवारं वा पायसं कृशरां तथा।
दुर्गन्धानां कषायः स्यात्तौवरः कल्क एव वा ॥ १२४ ॥
चूर्णं वा सर्वगन्धानां पूतिगन्धापकर्षणम्।
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ॥ १२५ ॥
अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति।

पाण्डुरे प्रदरे इति श्वेतप्रदरे। भावितं तेनेति न्यग्रोधत्वक्कषायेण भावितम्। कटुमत्स्यकः शफरी, शुष्कमत्स्यो वा। कांक्षी सौराष्ट्री मृत्। अदुष्टे इत्यादौ प्राकृते बीजे इति सहजगुणसंपन्ने शुक्रशोणितबीजे अदुष्टे सति; एवंभूतसंसर्गे जीवोपक्रमणे सत्येव गर्भं योषितः विन्दन्ति; जीवोपक्रमणं पूर्वकर्मप्रेरितात्[2] सुयोगाद्भवति ॥ ११६-१२५ ॥—

१ 'दध्यम्लक्षौद्रसर्पिषा' इति पा०। २ 'वराहकुक्कुटवसा' इति पा०। ३ 'संप्रवेश्य' इति पा०।

१ 'लेहयेद् सिते' इति पा०। २ 'पूर्वकर्मप्रेरितात् स्वविशेषाधिष्ठानम्' इति पा०।

पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥ १२६ ॥
परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ।

यस्मात् पुरुषस्य शुक्रमप्यत्र कारणं गर्भे, गर्भश्चापेक्षितः, तस्माच्छुक्रस्यापि परीक्षापूर्विकां चिकित्सामाह—पञ्चकर्मेत्यादि । इन्द्रियमिति शुक्रम् । परीक्षणाद्दोषाणां वातादीनां वर्णैर्यदि दुष्टं भवति तदा वातादिवर्णयोगाद्वातादिहरैर्भेषजैरुपाचरेदित्यर्थः ॥ १२६ ॥—

भवन्ति चात्र—
सलिङ्गा व्यापदो योनेः सनिदानचिकित्सिताः॥१२७
उक्ता विस्तरतः सम्यङ्मुनिना तत्त्वदर्शिना ।
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ॥ १२८ ॥
आत्रेयमुपसङ्गम्य शुक्रदोषास्त्वयाऽनघ ! ।
रोगाध्याये समुद्दिष्टा ह्यष्टौ पुंसामशेषतः ॥ १२९ ॥
तेषां हेतुं भिषक्श्रेष्ठ ! दुष्टादुष्टस्य चाकृतिम् ।
चिकित्सितं च कार्त्स्न्येन क्लैब्यं यच्च चतुर्विधम्॥१३०
उपद्रवेषु योनीनां प्रदरो यश्च कीर्तितः ।
तेषां निदानं लिङ्गं च चिकित्सां चैव तत्त्वतः॥१३१॥
समासव्यासभेदेन प्रब्रूहि[1] भिषजांवर ! ।
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः ॥ १३२ ॥

अत्रान्तरे 'पुनरेव' इत्यादिग्रन्थं शुक्रदोषादिलक्षणचिकित्साभिधायकं केचित् पठन्ति; तच्चान्ये अनार्षं वदन्ति, उपपत्तिं च वर्णयन्ति यत्—शुक्रदोषा वाजीकरणेनैव चिकित्सिताः, क्लैब्यं च शारीरे एव प्रतिपादितम्, अतः पुनर्नाभिधानमर्हति, प्रदरश्चैवेह योनिव्यापत्तौ चिकित्सित इति; ये तु पठन्ति ते पूर्वोक्तसंक्षेपस्य विस्तराभिधानमेतदिति वर्णयन्ति । एवमस्यार्षत्वविवादेऽपि काश्मीरादिदेशानुमतत्वात् किंचिद् व्याकरणं कुर्म एव ॥ १२७-१३२ ॥

बीजं यस्माद्व्यवाये[2] तु हर्षयोनिसमुत्थितम् ।
शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ॥ १३३॥
यथा बीजमकालाम्बुकृमिकीटाग्निदूषितम् ।
न विरोहति संदुष्टं तथा शुक्रं शरीरिणाम् ॥१३४॥
अतिव्यवायाद्व्यायामादसात्म्यानां च सेवनात् ।
अकाले वाऽप्ययोनौ वा मैथुनं न च गच्छतः १३५
रूक्षतिक्तकषायातिलवणाम्लोष्णसेवनात् ।
नारीणामरसज्ञानां[3] गमनाज्जरया तथा ॥ १३६ ॥

चिन्ताशोकादविस्रम्भाच्छस्त्रक्षाराग्निविभ्रमात् ।
भयात्क्रोधादभीचाराद्व्याधिभिः कर्शितस्य च १३७॥
वेगाघातात् क्षताच्चापि धातूनां संप्रदूषणात् ।
दोषाः पृथक् समस्ता वा प्राप्य रेतोवहाः सिराः ॥
शुक्रं संदूषयन्त्याशु

शुक्रगुणोपवर्णने हेतुमाह—बीजं यस्मादित्यादि । यस्माद्बीजभूतं गर्भस्य शुक्रं तस्माद्वक्ष्यामि । व्यवायेषु हर्ष एव योनिः कारणं तस्मादुत्थितम् । पौरुषमिति पुरुषचिह्नं, शुक्रेणैव हि पुरुषो व्यज्यते । मैथुनं न च गच्छत इति उचितमैथुनकाले मैथुनागमनं शुक्रवेगप्रतीघातादेव दर्शयति । अविस्रम्भादिति अविश्वासात् ॥ १३३-१३८ ॥—

तद्वक्ष्यामि विभागशः ।
फेनिलं तनु रूक्षं च विवर्णं पूति पिच्छिलम्॥१३९॥
अन्यधातूपसंसृष्टमवसादि तथाऽष्टमम् ।
फेनिलं तनु रूक्षं च कृच्छ्रेणाल्पं च मारुतात्॥१४०॥
भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते ।
सनीलमथवा पीतमत्युष्णं पूतिगन्धि च ॥ १४१ ॥
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ।
श्लेष्मणा बद्धमार्गं तु भवत्यत्यर्थपिच्छिलम् ॥१४२॥
स्त्रीणामत्यर्थगमनादभिघातात् क्षतादपि ।
शुक्रं प्रवर्तते जन्तोः प्रायेण रुधिरान्वयम् ॥ १४३ ॥
वेगसंधारणाच्छुक्रं वायुना विहतं पथि ।
कृच्छ्रेण याति ग्रथितमवसादि तथाऽऽष्टमम् १४४
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ।
स्निग्धं घनं पिच्छिलं च मधुरं चाविदाहि च१४५॥
रेतः शुद्धं विजानीयाच्छ्वेतं[2] स्फटिकसन्निभम् ।

वक्ष्यामीति दुष्टं शुक्रं वक्ष्यामि रुधिरान्वयमिति रुधिरयुक्तम् । शुक्राभिधानप्रसंगाद्विशुद्धशुक्रलक्षणमाह—स्निग्धमित्यादि ॥ १३९-१४५ ॥—

वाजीकरणयोगैस्तैरुपयोगसुखैर्हितैः ॥ १४६ ॥
रक्तपित्तहरैर्योगैर्योनिव्यापदिकैस्तथा[1] ।
दुष्टं यदा भवेच्छुक्रं तदा तत् समुपाचरेत् ॥१४७॥
घृतं च जीवनीयं यच्च्यवनप्राश एव च ।
गिरिजस्य प्रयोगश्च रेतोदोषानपोहति ॥ १४८ ॥
वातान्विते हिताः शुक्रे निरूहाः सानुवासनाः ।
अभयामलकीयं च पैत्ते शस्तं रसायनम्[3] ॥ १४९ ॥
मागध्यमृतलोहानां त्रिफलाया रसायनम् ।
कफोत्थितं शुक्रदोषं हन्याद्भल्लातकस्य च ॥ १५० ॥
यदन्यधातुसंसृष्टं शुक्रं तद्वीक्ष्य युक्तितः ।
यथादोषं प्रयुञ्जीत दोषधातुभिषग्जितम् ॥ १५१ ॥

१ 'ब्रूहि नो' इति पा० । २ 'व्यवायेषु' इति पा० । ३ 'अरसज्ञत्वात् स्रवणाज्ज° (सरणाज्ज°)' इति पा० ।

१ '°दतीसारा°' इति पा० । २ '°च्छुद्धस्फटिकसन्निभम्' इति पा० । ३ 'ब्राह्ममामलकीयं च पैत्ते शस्तं विरेचनम्' इति पा० ।

सर्पिः पयो रसाः शालिर्यवगोधूमषष्टिकाः।
प्रशस्ताः शुक्रदोषेषु बस्तिकर्म विशेषतः ॥ १५२ ॥
इत्यष्टशुक्रदोषाणां मुनिनोक्तं चिकित्सितम्।

मागध्यमृतेत्यादौ अमृता आमलकी। भल्लातकस्येत्यत्र रसायनमिति अनुवर्त्तते ॥ १४६–१५२ ॥—

रेतोदोषोद्भवं क्लैब्यं यस्माच्छुद्ध्यैव सिध्यति ॥१५३॥
ततो वक्ष्यामि ते सम्यगग्निवेश! यथातथम्।

शुद्ध्यैवेति रेतःशुद्ध्यैव; सिध्यति प्रशाम्यति ॥ १५३ ॥—

बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ॥१५४॥
क्लैब्यं संपद्यते तस्य शृणु सामान्यलक्षणम्।
सङ्कल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम्॥१५५॥
न याति लिङ्गशैथिल्यात् कदाचिद्याति वा यदि।
श्वासार्तः खिन्नगात्रश्च मोघसङ्कल्पचेष्टितः ॥ १५६॥
म्लानशिश्नश्च निर्बीजः[1] स्यादेतत् क्लैब्यलक्षणम्।
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ॥ १५७ ॥

संकल्पेत्यादौ लिङ्गशैथिल्यादिति लिङ्गानुत्थानात्। मोघे निष्फले संकल्पचेष्टिते यस्य सः ॥ १५४–१५७ ॥

शीतरूक्षाल्पसंक्लिष्टविरुद्धाजीर्णभोजनात्[2]।
शोकचिन्ताभयत्रासात् स्त्रीणां चात्यर्थसेवनात् ॥
अभिचारादविस्रम्भाद्रसादीनां च संक्षयात्[3]।
वातादीनां च वैषम्यात्तथैवानशनाच्छ्रमात् ॥१५९॥
नारीणामरसज्ञत्वात् पञ्चकर्मापचारतः।
बीजोपघाताद्भवति पाण्डुवर्णः सुदुर्बलः ॥ १६० ॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः।
हृत्पाण्डुरोगतमककामलाश्रमपीडितः ॥ १६१ ॥
छर्द्यतीसारशूलार्तः कासज्वरनिपीडितः।
बीजोपघातजं क्लैब्यं

वायोः क्षयाद् बीजक्षयाद्धुपपत्तेः वातादीनां च संक्षयादित्यत्र प्राकृतवातादिक्षये शरीरवैगुण्यादेव शुक्रानुत्पादो ज्ञेयः ॥ १५८–१६१ ॥—

ध्वजभङ्गकृतं शृणु ॥ १६२ ॥
अत्यम्ललवणक्षारविरुद्धासात्म्यभोजनात्।
अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् ॥१६३॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात्।
कन्यानां चैव गमनादयोनिगमनादपि ॥ १६४ ॥
दीर्घरोगां[4] चिरोत्सृष्टां तथैव च रजस्वलाम्।
दुर्गन्धां दुष्टयोनिं च तथैव च परिस्रुताम्[1] ॥ १६५ ॥
ईदृशीं प्रमदां मोहाद्यो गच्छेत् कामहर्षितः।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ॥ १६६ ॥
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात्।
काष्ठप्रहारनिष्पेषाच्छूकानां चातिसेवनात् ॥१६७॥
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्तते।
(भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम्।)[2]
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ॥ १६८ ॥
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि।
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि ॥ १६९ ॥
पुलाकोदकसङ्काशः स्रावः श्यावारुणप्रभः।
वलयीकुरुते चापि कठिनश्च परिग्रहः[3] ॥ १७० ॥
ज्वरस्तृष्णा भ्रमो मूर्च्छा च्छर्दिश्चास्योपजायते।
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम् ॥१७१॥
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः।
वस्तौ वृषणयोर्वाऽपि सीवन्यां वङ्क्षणेषु च ॥ १७२॥
कदाचित्पिच्छिलो वाऽपि पाण्डुः स्रावश्च जायते।
श्वयथुर्जायते मन्दः स्तिमितोऽल्पपरिस्रवः ॥१७३॥
चिराच्च पाकं व्रजति शीघ्रं वाऽथ प्रमुच्यते।
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च ॥१७४॥
विशीर्यते मणिश्चास्य मेढ्रं मुष्कावथापि च।
ध्वजभङ्गकृतं क्लैब्यमित्येतत् समुदाहृतम् ॥ १७५ ॥
एतं[4] पञ्चविधं केचिद्ध्वजभङ्गं प्रचक्षते।

शूकानां चातिसेवनादिति लिङ्गातिवृद्ध्यर्थं कृतशूकातियोगात्। एतं पञ्चविधं केचिद् ध्वजभङ्गं वदन्ति; तथोक्तेन वातपित्तकफरक्तसन्निपातभेदेन पञ्चविधत्वमित्यर्थः। तत्र श्वयथुर्वेदना मेढ्रे इत्यादि वातेन, स्फोटाश्चेत्यादिं पित्तेन, मांसवृद्धिरित्यादि कफेन, ज्वरस्तृष्णेत्यादि रक्तेन, अग्निनेवेत्यादि सन्निपातेन ॥ १६२–१७५ ॥—

क्लैब्यं जरासंभवं हि प्रवक्ष्याम्यथ तच्छृणु ॥ १७६ ॥
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते।
अतिप्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ॥१७७॥
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात्।
बलवीर्येन्द्रियाणां च क्रमेणैव परिक्षयात् ॥ १७८ ॥
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात् क्लमात्।
जरासंभवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ॥ १७९ ॥

---

१ 'निर्वीर्यः' इति पा०। २ 'विरुद्धालल्पसंक्लिष्टविषमासात्म्यभोजनात्' इति पा०। ३ एतद् व्याख्यानं 'रसादीनां च संक्षयात्' इत्यत्र 'वातादीनां च संक्षयात्' इति पाठं मत्वा चक्रपाणिदत्तेन कृतमिति प्रतीयते। ४ 'दीर्घरोम्णीं' इति पा०।

१ 'परिप्लुताम्' इति पा०। २ अयमर्धश्लोकः क्वचित्पुस्तके न पठ्यते। ३ 'परिग्रहः स्फीतदेशः शिश्ने वलयीकुरुते कठिनश्च भवति' इति गङ्गाधरः। 'वलयं कुरुते चापि कठिनं च परिग्रहम्' इति पा०। ४ 'एवं' इति पा०। 'एतं ध्वजभङ्गमुपदर्शं केचित् पञ्चविधं प्रचक्षते' इति गङ्गाधरः।

जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ।
विवर्णो दुर्बलो दीनः क्षिप्रं व्याधिमथाश्नुते ॥ १८० ॥
एतज्जरासंभवं हि

जघन्येत्यादौ प्रवरं वय इति वार्धक्यम् । प्रायश: क्षीयत इति वचनात् कदाचित् प्रवयसामपि शुक्रसाराणां वृष्यसेविनां च न क्षीयते शुक्रमिति दर्शयति । प्रवयसां शुक्रक्षये हेतुमाह—रसादीनामित्यादि । एते च रसक्षयादयो हेतवो वार्धक्यस्वभावादेव भवन्ति ॥ १७६–१८० ॥—

चतुर्थं क्षयजं शृणु ।
अतीव चिन्तनाच्चैव शोकात्क्रोधाद्भयात्तथा ॥१८१॥
ईर्ष्योत्कण्ठामदोद्वेगान् सदा विशति यो नरः ।
कृशो वा सेवते रूक्षमन्नपानं तथौषधम् ॥ १८२ ॥
दुर्बलप्रकृतिश्चैव निराहारो भवेद्यदि ।
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः॥१८३॥
रसः प्रधानधातुर्हि क्षीयेताशु ततो नृणाम् ।
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ॥ १८४ ॥
शुक्रावसानास्तेभ्योऽपि शुक्रं धाम परं मतम् ।
चेतसो वाऽतिहर्षेण व्यवायं सेवतेऽति यः ॥१८५॥
तस्याशु क्षीयते शुक्रं ततः प्राप्नोति संक्षयम् ।
घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ॥१८६॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ।
एवं निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥ १८७॥
केचित् क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ।
वदन्ति शेफसश्छेदाद्वृषणोत्पाटनेन च ॥ १८८ ॥
मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः ।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः सिराः ॥१८९॥
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ।
तत्र संपूर्णसर्वाङ्गः स भवत्यपुमान् पुमान् ॥ १९० ॥
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ।

केचिदित्यादौ ध्वजभङ्गक्षयोद्भवे वक्ष्यमाणविशिष्टध्वजभङ्गक्षयोद्भवे, ते चासाध्ये । वृषणोत्पाटनेन चेत्यन्तेन ध्वजभङ्ग उक्तः, क्षयजं तु मातापित्रोरित्यादिनोच्यते । स पुमान् स्त्रीषु पुरुषव्यापारकरणासमर्थत्वादपुमान् भवति ॥ १८१–१९० ॥—

चिकित्सितमतस्तूर्ध्वं समासव्यासतः शृणु ॥१९१॥
शुक्रदोषेषु निर्दिष्टं भेषजं यन्मयाऽनघ ! ।
क्लैब्योपशान्तये कुर्यात् क्षीणक्षतहितं च यत्॥१९२॥
वस्तयः क्षीरसर्पींषि वृष्ययोगाश्च ये मताः ।
रसायनप्रयोगाश्च सर्वानेतान् प्रयोजयेत् ॥ १९३ ॥
समीक्ष्य देहदोषाग्निबलं भेषजकालवित् ।
व्यवायहेतुजे क्लैब्ये तथा धातुविपर्ययात् ॥ १९४ ॥
दैवव्यपाश्रयं चैव भेषजं चाभिचारजे ।
समासेनैतदुद्दिष्टं भेषजं क्लैब्यशान्तये ॥ १९५ ॥

व्यवायहेतुजे इतिपदं बीजदोषोत्पन्नसहजव्युदासार्थम् । धातुविपर्ययादिति दोषवैषम्यात् । दैवव्यपाश्रयमित्यादिना अभिचारादिजक्लैब्यचिकित्सां ब्रूते । अभिचारादिजं च क्लैब्यं दैवव्यपाश्रयचिकित्साभिधानादेव स्वीकर्तव्यम् ॥१९१–१९५॥

विस्तरेण प्रवक्ष्यामि क्लैब्यानां भेषजं पुनः ।
सुस्विन्नस्निग्धगात्रस्य स्नेहयुक्तं विरेचनम् ॥ १९६ ॥
अन्नाशनं ततः कुर्यादथवाऽऽस्थापनं पुनः ।
प्रदद्यान्मतिमान् वैद्यस्ततस्तमनुवासयेत् ॥ १९७ ॥
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत्ततः ।
वाजीकरणयोगाश्च पूर्वं ये समुदाहृताः ॥ १९८ ॥
भिषजा ते प्रयोज्याः स्युः क्लैब्ये बीजोपघातजे ।
ध्वजभङ्गकृतं क्लैब्यं ज्ञात्वा तस्याचरेत् क्रियाम् १९९
प्रदेहान् परिषेकांश्च कुर्याद्वा रक्तमोक्षणम् ।
स्नेहपानं च कुर्वीत सस्नेहं च विरेचनम् ॥ २०० ॥
अनुवासं ततः कुर्यादथवाऽऽस्थापनं पुनः ।
व्रणवच्च क्रियाः सर्वास्तत्र कुर्याद्विचक्षणः ॥२०१॥
जरासंभवजे क्लैब्ये क्षयजे चैव कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥ २०२ ॥
क्षीरसर्पिर्वृष्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ॥ २०३ ॥
विस्तरेणैतदुद्दिष्टं क्लैब्यानां भेषजं मया ।

पलाशैरण्डमुस्ताद्यैरिति एरण्डपलाशाद्यैर्मुस्ताद्यैश्च व्यवस्थितैरित्यर्थः । तत्रैरण्डपत्रादिः "एरण्डमूलपलाशात्" (सि. अ. १२) इत्यादिना ग्रन्थे वक्ष्यमाणः सिद्धौ, मुस्तादिश्च यापनावस्तिः । वस्तिद्वयेऽप्यत्र बहुवचनं व्यक्तिसद्भावापेक्षया ज्ञेयम् ॥ १९६–२०३ ॥—

यः पूर्वमुक्तः प्रदरः शृणु हेत्वादिभिस्तु तम्॥२०४॥
याऽत्यर्थं सेवते नारी लवणाम्लगुरूणि च ।
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च॥२०५॥
ग्राम्यौदकानि मेद्यानि कृशरां पायसं दधि ।
शुक्तमस्तुसुरादीनि भजन्त्याः कुपितोऽनिलः२०६॥

---

१ 'ईर्ष्योत्कण्ठामनःक्षोभान् समाविशति' इति पा० । २ 'अथाल्पभोजनाच्चापि इति पा० ।

१ 'भेषजं धातुवर्धनम्' इति पा० । २ 'दैवव्यपाश्रयं तत्र भेषजं संप्रयोजयेत्' इति पा० । ३ 'अन्वासनं' इति पा० । ४ 'गुडम्' इति पा० ।

रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः सिराः।
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ॥ २०७ ॥
यस्माद्विवर्धयत्याशु रसभावाद्विमानता।
तस्मादसृग्दरं प्राहुरेतत्तन्त्रविशारदाः ॥ २०८ ॥
रजः प्रदीर्यते यस्मात् प्रदरस्तेन स स्मृतः।
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ॥ २०९ ॥
चतुर्विधं व्यासतस्तु वाताद्यैः सन्निपाततः।
अतःपरं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितम् ॥ २१० ॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्ववत्।
कुपितः प्रदरं कुर्याल्लक्षणं तस्य मे शृणु ॥ २११ ॥
फेनिलं तनु रूक्षं च श्यावं चारुणमेव च।
किंशुकोदकसङ्काशं सरुजं वाऽथ नीरुजम् ॥ २१२ ॥
कटिवङ्क्षणहृत्पार्श्वपृष्ठश्रोणिषु मारुतः।
कुरुते वेदनां तीव्रामेतद्वातात्मकं विदुः ॥ २१३ ॥
अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा।
पूर्ववत् प्रदरं कुर्यात् पैत्तिकं लिङ्गतः शृणु ॥ २१४ ॥
सनीलमथवा पीतमत्युष्णमसितं तथा।
नितान्तरक्तं स्रवति मुहुर्मुहुरथार्तिमत् ॥ २१५ ॥
दाहरागतृषामोहज्वरभ्रमसमायुतम्।
असृग्दरं पैत्तिकं स्याच्छ्लैष्मिकं तु प्रवक्ष्यते ॥ २१६ ॥
गुर्वादिभिर्हेतुभिश्च पूर्ववत् कुपितः कफः।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥ २१७ ॥
पिच्छिलं पाण्डुवर्णं च गुरु स्निग्धं च शीतलम्।
स्रवत्यसृक् श्लेष्मलं च घनं मन्दरुजाकरम् ॥ २१८ ॥
छर्द्यरोचकहृल्लासश्वासकाससमन्वितम्।
(वक्ष्यते क्षीरदोषाणां सामान्यमिह कारणम् २१९
यत्तदेव त्रिदोषस्य कारणं प्रदरस्य तु।)
त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम् ॥ २२० ॥
नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता।
सर्वहेतुसमाचारादतिवृद्धस्तदाऽनिलः ॥ २२१ ॥
रक्तमार्गेण सृजति प्रत्यनीकबलं कफम्।
दुर्गन्धं पिच्छिलं पीतं विदग्धं पित्ततेजसा ॥ २२२ ॥
वसां मेदश्च यावद्धि समुपादाय वेगवान्।
सृजत्यपत्यमार्गेण सर्पिर्मज्जवसोपमम् ॥ २२३ ॥
शश्वत् स्रवत्यथास्रावं तृष्णादाहज्वरान्विताम्।
क्षीणरक्तां दुर्बलां स तामसाध्यां विवर्जयेत् ॥ २२४ ॥

यः पूर्वमुक्तः प्रदर इत्यादौ उपद्रवरूपतया पूर्वमुक्तः प्रदर इति वदन्ति; किंतु रक्तयोनिचिकित्सिते असृग्दरसंज्ञयैव रक्तयोनिकथनेन निर्दिष्टदोषभेदेन च तत्रैव रक्तयोनिरसृग्दररूपा व्याकृ(हृ)ता, तेनेह पुनरसृग्दरलक्षणाभिधानं पूर्वटीकाकृतामसंमतम्। इह येऽप्यमुं ग्रन्थं पठन्ति, ते तस्यैवायं प्रभेदः प्रपञ्चो वाऽभिधीयत इति वर्णयन्ति। वयं तु भूरिपुस्तकेष्वेवं पाठदर्शनादस्य व्याख्यानं कुर्मः। गर्भाशयगता इति गर्भाशयसंबद्धाः। असृग्दरशब्दव्युत्पत्तिमाह—कुपितोऽनिल इत्यादि। रक्तं प्रमाणमुत्क्रम्य इति रक्तं प्रमाणाधिकं कृत्वा रक्तमादाय तद्रजो यस्माद्विवर्धयति (वृद्धेन रक्तेन योजयित्वा रजो विवर्धयति यस्मात्) पवनस्तस्मादसृग्रजोमेलकरूपत्वादयं व्याधिरसृग्दर इत्युच्यते। 'प्रदीर्यते इति विस्तारितो भवति' इति प्रदरः, 'असृग् दीर्यते यस्मिन्निति असृग्दर' इत्येषाऽपि निरुक्तिरत्र बोद्धव्या। नैकावस्थमिति वातकृतनानावस्थायुक्तम्। नारी त्वित्यादिना एतदनुबन्धकृतामवस्थामाह ॥ २०४–२२४ ॥

मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च।
नैवातिबहु नात्यल्पमार्तवं शुद्धमादिशेत् ॥ २२५ ॥
गुञ्जाफलसवर्णं च पद्मालक्तकसन्निभम्।
इन्द्रगोपकसङ्काशमार्तवं शुद्धमादिशेत् ॥ २२६ ॥
योनीनां वातलाद्यानां यदुक्तमिह भेषजम्।
चतुर्णां प्रदराणां च तत् सर्वं कारयेद्भिषक् ॥ २२७ ॥
रक्तातिसारिणां यच्च तथा शोणितपित्तिनाम्।
रक्तार्शसां च यत् प्रोक्तं भेषजं तच्च कारयेत् ॥ २२८ ॥

विशुद्धार्तवस्य विशुद्धार्तवकथनप्रसङ्गाल्लक्षणमाह—मासादित्यादि। पञ्चरात्रानुबन्धीति उद्धततया पञ्चरात्रमनुबध्नातीति पञ्चरात्रानुबन्धि, द्वादशरात्रानुबन्धित्वादार्तवकालस्य; किंवा द्वादशरात्रपर्यन्तं गर्भारम्भकत्वमार्तवस्य नतु प्रवृत्तिरिति ज्ञेयम्। गुञ्जाफलसवर्णमित्यादिना वर्णभेदश्चार्तवे प्रकृतिभेदादेव भवति ॥ २२५–२२८ ॥

धात्रीस्तनस्तन्यसंपदुक्ता विस्तरतः पुरा।
स्तन्यसंजननं चैव स्तन्यस्य च विशोधनम् ॥ २२९ ॥
वातादिदुष्टे लिङ्गं च क्षीणस्य च चिकित्सितम्।
तत्सर्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्तिताः ॥ २३० ॥
वातादिष्वेव तान् विद्याच्छास्त्रचक्षुर्भिषक्तमः।
त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ॥

संप्रति प्रदरं सचिकित्सितमभिधाय स्त्रीरोगाभिधानप्रसंगादपरमपि स्त्रीरोगं स्तन्यदोषमभिधित्सुराह—धात्रीस्तनस्तन्येत्यादि। वातादिदुष्टे इत्यादि वातादिविकारेष्वेवान्तर्निविष्टमित्यर्थः। त्रिविधास्तु यतो शिष्यास्ततो वक्ष्यामीति त्रिविधप्रभेदेषु शिष्येषु मन्दबुद्धिशिष्याणां सुखप्रतिपत्त्यर्थम् २२९–२३१

१ 'रक्तं प्रमाणादधिकं पूर्वं च कुपितोऽनिलः। रजोवहाः समाश्रित्य वर्धयत्याशु तद्रजः॥ तस्मादसृग्दरं' इति पा०। २ 'रसभावाद्विमार्गतः' इति, 'रक्तपित्तं समारुतम्' इति च पा०। ३ अयं श्लोको हस्तलिखितपुस्तके नोपलभ्यते। ४ 'प्रत्यनीकगुणं' इति पा०।

१ 'पाठदर्शनाल्लेशतः' इति पा०। २ अयं पाठः कचित्पुस्तके नोपलभ्यते। ३ 'पद्माऽलक्तक' इति पा०।

अजीर्णासात्म्यविषमविरुद्धात्यर्थभोजनात् ।
लवणाम्लकटुक्षारप्रक्लिन्नानां च सेवनात् ॥ २३२ ॥
मनःशरीरसंतापादस्वप्नान्निशि चिन्तनात् ।
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ॥ २३३ ॥
परमान्नं गुडकृतं कृशरां दधि मन्दकम् ।
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च २३४
भुक्त्वा भुक्त्वा दिवास्वप्नान्मद्यस्यातिनिषेवणात् ।
अनायासादभीघातात् क्रोधाच्चातङ्ककर्शनैः ॥ २३५ ॥
दोषाः क्षीरवहाः प्राप्य सिराः स्तन्यं प्रदूष्य च ।
कुर्युरष्टविधं भूयो दोषतस्तन्निबोध मे ॥ २३६ ॥
वैरस्यं फेनसङ्घातो रौक्ष्यं चेत्यनिलात्मके ।
पित्ताद्वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम् ॥२३७॥
कफाद्भवति रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ।
क्रुद्धः क्षीराशयं प्राप्य रसं स्तन्यस्य दूषयेत् ॥२३८॥
विरसं वातसंसृष्टं कृशीभवति तत् पिबन् ।
न चास्य स्वदते क्षीरं कृच्छ्रेण च विवर्धते ॥ २३९ ॥
तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन् ।
करोति फेनसङ्घातं तत्तु कृच्छ्रात् प्रवर्तते ॥ २४० ॥
तेन क्षामस्वरो बालो बद्धविण्मूत्रमारुतः ।
वातिकं शीर्षरोगं वा पीनसं वाऽधिगच्छति ॥२४१॥
पूर्ववत् कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः ।
रूक्षं तत् पिबतो रौक्ष्याद्बलह्रासः प्रजायते ॥२४२॥
पित्तमुष्णादिभिः क्रुद्धं स्तन्याशयमभिप्लुतम् ।
करोति स्तन्यवैवर्ण्यं नीलपीतासितादिकम् ॥२४३॥
विवर्णगात्रः स्विन्नः स्यात्तृष्णालुर्भिन्नविट् शिशुः ।
नित्यमुष्णशरीरश्च नाभिनन्दति तं स्तनम् ॥ २४४॥
पूर्ववत् कुपिते पित्ते दौर्गन्ध्यं क्षीरमृच्छति ।
पाण्ड्वामयस्तत्पिबतः कामला च भवेच्छिशोः २४५
क्रुद्धो गुर्वादिभिः श्लेष्मा क्षीराशयगतः स्त्रियाः ।
स्नेहान्वितत्वात्तत्क्षीरमतिस्निग्धं करोति तु ॥२४६॥
छर्दनः कुन्थनस्तेन लालालुर्जायते शिशुः ।
नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः ॥२४७॥
श्वासकासपरीतस्तु प्रसेकतमकान्वितः ।
अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा ॥२४८॥
लालालुः शूनवक्त्राक्षिर्जडः स्यात्तत् पिबञ्छिशुः ।
कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम् ॥२४९॥
करोति गुरु तत् पीत्वा बालो हृद्रोगमृच्छति ।
अन्यांश्च विविधान्रोगान्कुर्यात्क्षीरसमाश्रितान् २५०

१ 'मत्स्यकम्' इति पा० । २ 'अभिचारादनायासाद् व्याधिभिः कर्शनेन च' इति पा० । ३ 'स्तन्यं प्रदूषयेत्' इति पा० । ४ 'न चास्मै' इति पा० । ५ 'ततः' इति पा० । ६ '°र्निद्रालस्यसमन्वितः' इति पा० । ७ 'अतिस्नेहान्वितं' इति पा० ।

क्षीरे वातादिभिर्दुष्टे संभवन्ति तदात्मकाः ।
तत्रादौ स्तन्यशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम् ॥२५१॥
संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत् ।
वचाप्रियङ्गुयष्ट्याह्वफलवत्सकसर्षपैः ॥ २५२ ॥
कल्कैर्निम्बपटोलानां क्वाथैः सलवणैर्वमेत् ।
सम्यग्वान्तां यथान्यायं कृतसंसर्जनां ततः ॥२५३॥
दोषकालबलापेक्षी स्नेहयित्वा विरेचयेत् ।
त्रिवृतामभयां वाऽपि त्रिफलारससंयुताम् ॥२५४॥
पाययेन्मधुसंयुक्तामभयां वाऽपि केवलाम् ।
( पाययेन्मूत्रसंयुक्तां विरेकार्थं च शास्त्रवित् २५५ )
सम्यग्विरिक्तां मतिमान् कृतसंसर्जनां पुनः ।
ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् ॥ २५६ ॥
शालयः षष्टिका वा स्युः श्यामाका भोजने हिताः ।
प्रियङ्गवः कोरदूषा यवा वेणुयवास्तथा ॥ २५७ ॥
वंशवेत्रकलायाश्च शाकार्थं स्नेहसंस्कृताः ।
मुद्गान् मसूरान् यूषार्थं कुलत्थांश्च प्रकल्पयेत् २५८
निम्बवेत्राग्रकुलकवार्ताकामलकैः शृतान् ।
सव्योषसैन्धवान् यूषान्दापयेत्स्तन्यशोधनान् २५९
शशान् कपिञ्जलानेणान् संस्कृतांश्च प्रदापयेत् ।
शार्ङ्गेष्टासप्तपर्णत्वगश्वगन्धाशृतं जलम् ॥ २६० ॥
पाययेताथवा स्तन्यशुद्धये रोहिणीशृतम् ।
अमृतासप्तपर्णत्वक्क्वाथं चैव सनागरम् ॥ २६१ ॥
किराततिक्तकक्वाथं श्लोकपादेरितान् पिबेत् ।
त्रीनेतान्स्तन्यशुद्ध्यर्थमिति सामान्यभेषजम् २६२
कीर्तितं स्तन्यदोषाणां पृथगन्यं निबोधत ।
पाययेद्विरसक्षीरां द्राक्षामधुकसारिवाः ॥ २६३ ॥
श्लक्ष्णपिष्टां पयस्यां च समालोड्य सुखाम्बुना ।
पञ्चकोलकुलत्थैश्च पिष्टैरालेपयेत् स्तनौ ॥ २६४ ॥
शुष्कौ प्रक्षाल्य निर्दुह्यात्तथा स्तन्यं विशुध्यति ।
फेनसङ्घातवत्क्षीरं यस्यास्तां पाययेत् स्त्रियम् २६५
पाठानागरशार्ङ्गेष्टामूर्वाः पिष्ट्वा सुखाम्बुना ।
अञ्जनं नागरं दारु बिल्वमूलं प्रियङ्गवः ॥ २६६ ॥
स्तनयोः पूर्ववत् कार्यं लेपनं क्षीरशोधनम् ।
किराततिक्तकं शुण्ठीं सामृतां क्वाथयेद्भिषक् २६७
तं क्वाथं पाययेद्धात्रीं स्तन्यदोषनिबर्हणम् ।
स्तनौ चालेपयेत् पिष्टैर्यवगोधूमसर्षपैः ॥ २६८ ॥
षड्विरेकाश्रितीयोक्तैरौषधैः स्तन्यशोधनैः ।
रूक्षक्षीरा पिबेत् क्षीरं तैर्वा सिद्धं घृतं पिबेत् २६९

१ अयमर्धश्लोकः क्वचित्पुस्तके न पठ्यते । २ 'दोषविशेषघ्नै°' इति पा० । ३ 'सस्नेहा यूषसंस्कृताः' इति पा० । ४ 'धान्यनागर°' इति पा० । ५ 'तगरं' इति पा० । ६ 'गुरुक्षीरा' इति पा० ।

पूर्ववज्जीवकाद्यं च पञ्चमूलं प्रलेपनम् ।
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम् २७०
यष्टीमधुकमृद्वीकापयस्यासिन्धुवारिकाः ।
शीताम्बुना पिबेत्कल्कं क्षीरवैवर्ण्यनाशनम् ॥२७१॥
द्राक्षामधुककल्केन स्तनौ चास्याः प्रलेपयेत् ।
प्रक्षाल्य वारिणा चैव निर्दुह्यात्तौ पुनः पुनः ॥२७२॥
विषाणिकाजशृङ्ग्यौ च त्रिफलां रजनीं वचाम् ।
पिबेच्छीताम्बुना पिष्ट्वा क्षीरदौर्गन्ध्यनाशिनीम् ॥
लिह्याद्वाऽप्यभयाचूर्णं सव्योषं माक्षिकप्लुतम् ।
क्षीरदौर्गन्ध्यनाशार्थं धात्री पथ्याशिनी तथा २७४
सारिवोशीरमञ्जिष्ठाश्लेष्मातककुचन्दनैः ।
पत्रास्बुचन्दनोशीरैः स्तनौ चास्याः प्रलेपयेत् २७५
स्निग्धक्षीरा दारुमुस्तपाठाः पिष्ट्वा सुखाम्बुना ।
पीत्वा ससैन्धवाः क्षिप्रं क्षीरशुद्धिमवाप्नुयात् २७६
पाययेत् पिच्छिलक्षीरां शार्ङ्गेष्टामभयां वचाम् ।
मुस्तनागरपाठाश्च पीताः स्तन्यविशोधनाः ॥२७७॥
तक्रारिष्टं पिबेच्चापि यदुक्तं गुदजापहम् ।
विदारीबिल्वमधुकैः स्तनौ चास्याः प्रलेपयेत् २७८
त्रायमाणामृतानिम्बपटोलत्रिफलाशृतम् ।
गुरुक्षीरा पिबेदाशु स्तन्यदोषविशुद्धये ॥ २७९ ॥
पिबेद्वा पिप्पलीमूलचव्यचित्रकनागरम् ।
बलानागरशार्ङ्गेष्टामूर्वाभिर्लेपयेत् स्तनौ ॥ २८० ॥
पृश्निपर्णीपयस्याभ्यां स्तनौ चास्याः प्रलेपयेत् ।
अष्टावेते क्षीरदोषा हेतुलक्षणभेषजैः ॥ २८१ ॥
निर्दिष्टाः क्षीरदोषोत्थास्तथोक्ताः केचिदामयाः ।

क्काथं चैव सनागरमित्यत्र नागरकृत एव क्काथो ज्ञेयः । पूर्ववज्जीवकाद्यमित्यत्र जीवकाद्यं जीवनीयम् ॥२३२-२८१॥—

दोषदूष्यमलाश्चैव महतां व्याधयश्च ये ॥ २८२ ॥
त एव सर्वे बालानां मात्रा त्वल्पतरा मता ।
निवृत्तिर्वमनादीनां मृदुत्वं परतन्त्रताम् ॥ २८३ ॥
वाक्चेष्टयोरसामर्थ्यं वीक्ष्य बालेषु शास्त्रवित् ।
भेषजं स्वल्पमात्रं तु यथाव्याधि प्रयोजयेत् ॥ २८४ ॥
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च ।
प्रयोजयेद्भिषग्बाले मतिमानप्रमादतः ॥ २८५ ॥
अत्यर्थस्निग्धरूक्षोष्णमम्लं कटुविपाकि च ।
गुरु चौषधपानान्नमेतद्बालेषु गर्हितम् ॥ २८६ ॥
समासात् सर्वरोगाणामेतद्बालेषु भेषजम् ।
निर्दिष्टं शास्त्रविद्वैद्यः प्रविविच्य प्रयोजयेत् ॥२८७॥

दुष्टक्षीरसेवनादुत्पन्नबालविकाराणां स्वरूपं दर्शयित्वा यथाकर्तव्यं भेषजमाह—दोषेत्यादि । दोषा वातादयः, दूष्याणि रक्तादीनि, मलाः शकृन्मूत्रस्वेदादयः । एते दोषादयो य एव महतां त एव बालानामपि भवन्ति, किंतु बालान् प्राप्य तेषां दोषादीनां मात्रा त्वल्पतरेति विशेषः; तेन दोषादिमात्रापेक्षा भेषजमात्राऽप्यल्पा भवतीति भावः । निवृत्तिर्वमनादीनामित्यादि । द्विविधा बाला भवन्ति—स्वतन्त्रवृत्तयः, परतन्त्रवृत्तयश्च; तत्र परतन्त्रत्वं बालेषु वीक्ष्य वमनादीनां निवृत्तिः कर्तव्या, वाक्चेष्टयोश्च बालस्य सामर्थ्यं वीक्ष्य स्वतन्त्रतायां जातायां वमनादीनां मृदुत्वं शास्त्रविद्वैद्यः प्रयोजयेत्, तथा संशमनमपि भेषजमल्पमात्रं यथाव्याधि बालेषु प्रयोजयेदिति वाक्यार्थः; किंवा बालेषु मृदुत्वं परतन्त्रतां च वीक्ष्य वमनादीनां निवृत्तिर्विधातव्या, वाक्चेष्टयोश्च बालेषु सामर्थ्यं वीक्ष्य संशमनं भेषजमल्पमात्रं यथाव्याधि प्रयोजयेदिति योजनीयम् । मधुराणीत्यादिना बालेषु कर्तव्यं भेषजमाह । अत्यर्थमित्यादि प्रयोजयेदित्यन्तो ग्रन्थ आर्षत्वे सविवादः ॥ २८२-२८७ ॥

भवन्ति चात्र—

इति सर्वविकाराणामुक्तमेतच्चिकित्सितम् ।
स्थानमेतद्धि तन्त्रस्य रहस्यं परमुत्तमम् ॥ २८८ ॥

इति सर्वविकाराणामित्यादिना चिकित्सास्थानोक्तमर्थमुपसंगृह्णाति । सर्वविकाराणामिति वचनेन अनुक्तानामपि विकाराणामेतच्चिकित्सावीजसूत्रमिति दर्शयति । रहस्यमिति अत्यन्तोपयुक्तचिकित्साभिधायकतया गोप्यं, न कस्मैचित् पापिष्ठाय प्रकाशनीयमिति ॥ २८८ ॥

अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च ।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥ २८९ ॥
तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत् ।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ॥ २९० ॥

संप्रति दृढबलः स्वकीयसंस्कारविषयं दर्शयन्नाह—अस्मिन्नित्यादि । सप्तदशाध्याया इति चिकित्सास्थाने सप्तदशाध्यायाः; ते च चरकसंस्कृतान् यक्ष्मचिकित्सितान्तानष्टवध्यायान्, तथाऽर्शोऽतीसारविसर्पद्विव्रणीयमदात्ययोक्तान् विहाय ज्ञेयाः । (परिशिष्टसंस्कारस्यादृष्टातिशयसंपादकत्वादात्मनोऽदृष्टातिशयमेव दर्शयन्नाह—तच्छङ्करमित्यादि ) ॥ २८९-२९० ॥

रोगा येऽप्यत्र नोद्दिष्टा बहुत्वान्नामरूपतः ।
तेषामप्येतदेव स्याद्दोषादीन् वीक्ष्य भेषजम् २९१

संप्रति उक्तानुक्तरोगचिकित्सातिदेशार्थमाह—रोगा येऽप्यत्रेत्यादि । एतदेवेत्यादि एतच्चिकित्सास्थानाद्युक्तं भेषजम्; एतदेव हि भेषजं नामरूपादिना विशेषेणानुक्तानां सामान्यतश्च वातादिजन्यतयोक्तान् रोगानपेक्ष्य तथायुक्तं सद् भेषजं भवतीत्यर्थः । दोषादीनिति दोषदूष्यनिदानान्यग्रे वक्ष्यमाणानि; किंवा दोष-भेषज-देश-काल-बल-शरीराहार-सात्म्य-सत्त्व-प्रकृति-वयांसि सूत्रस्थानोक्तानि ॥ २९१ ॥

---

१ 'निर्दोग्धव्यौ' इति पा० । २ 'यवाम्बु०' इति पा० । ३ 'गुरुक्षीरा' इति पा० । ४ 'ज्ञेया बालानां विना बालग्रहान् बुधैः' इति पा० । ५ 'प्रविभज्य' इति पा० ।

१ 'परमुच्यते' इति पा० । २ एतद्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः ।

**दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम् ।**
**उक्तानुक्तान् गदान् सर्वान् सम्यग्युक्तं नियच्छति ॥**

अथ कथमेतद्भेषजमनुक्तानां गदानां भेषजं भवतीत्याह—दोषदूष्येत्यादि । दोषा वातादयः, दूष्याणि रक्तादीनि, निदानानि रूक्षादीनि, एषां व्यस्तानां समस्तानां वा यद् विपरीतं, हितमिति भेषजं, तत् सम्यग्युक्तं सदुक्तानुक्तान् गदान् ध्रुवं नियच्छति; उक्तानिति नामरूपादिभिः, अनुक्तानिति नामरूपादिविशेषेणानुक्तान् । एतेन यदेवैतद् दोषादिविपरीततया प्रतिपादितं भवति तदैवानुक्तानामपि गदानां दोषादीन् बुद्ध्वा सम्यग्युक्तं भेषजं भवतीति दर्शयति । यद्यपि च यन्निदानविपरीतं भेषजं तद्दोषविपरीतेनैव ग्रहीतुं पार्यते, यतो निदानेन दोषप्रकोपः क्रियते, तस्य च दोषस्य विपरीतं यथा रूक्षनिदानवृद्धे वायौ रूक्षे यो विपरीतः स्नेहः स निदानेऽपि विपरीत एव; तथाऽपि दोषस्यैवांशवैपरीत्येन भेषजप्रयोगोपदर्शनार्थं निदानविपरीतोपादानमिह । यथा—यदि वायुः सर्वात्मना प्रकुपितस्तदा तस्य वायोर्यद्विपरीतं तैलं तत् कर्तव्यं, यदा तु शीतेन वायुर्वृद्धस्तदा सर्वात्मना विरुद्धं तैलमुत्सृज्य यदेव शीतत्वे हितं तस्यैव शीतगुणस्य प्रशमार्थं हेतुविपरीतमुष्णं भेषजं प्रयुज्यते । अत एवोक्तं—"शीतेनोष्णकृतान् रोगान् शमयन्ति भिषग्विदः" ( वि. अ. ३ ) इत्यादि । इह तु दोषादीनां ग्रहणाद् दोषदूष्यसमुदायात्मा व्याधिरपि लभ्यते, तेन व्याधिविपरीतमपि भेषजमवरुद्धम् । विपरीतशब्देन चेह प्रतिकूलमुच्यते, न विपरीतगुणमात्रं; तेन विपर्यस्तार्थकारिणामपि भेषजानां ग्रहणं भवति । यत्तु समानमेव क्षीणानां दोषाणां धातूनां वा भेषजं भवति तद् दोषादिक्षयव्याधिवृद्धिजनकतया विपरीतमेव, येन तत्र न दोषादयः प्रतिकर्तव्याः किंतु तत्क्षयाः, तेन क्षये दोषादिविपरीतं सम्यग्युक्तं सद्दोषादीन् नियच्छतीत्युक्तं, ततो दोषादिसमानमेव विपरीतमिति न कश्चिद्दोषः ॥ २९२ ॥

**देशकालप्रमाणानां सात्म्यासात्म्यस्य चैव हि ।**
**सम्यग्योगोऽन्यथा ह्येषां पथ्यमप्यन्यथा भवेत् २९३**

अथ येन सम्यग्योगेन युक्तं भेषजं कार्यकरं भवति तमेव सम्यग्योगमाह—देशकालेत्यादि । एषां तु देशादियोगानामुदाहरणान्याचार्येणैव कृतानि 'आस्यादामाशयस्थान्' इत्यादिना 'नातिदोषं च बह्वपि' इत्यन्तेन । तत्र देश आतुररूप एवोक्तः, भूमिरूपदेशापेक्षा तु योजना सात्म्यापेक्षयोजनाभिधानेनैव गृहीता । कालः षड्विधो दिनातुरौषधादिभिः । तत्रौषधकालो दशविधः । प्रमाणमौषधस्य त्रिविधम्—अल्पं, बहु, समं च । सात्म्यं द्विविधं देशशरीरयोः; व्याधिसात्म्यं त्वौषधान्तर्निविष्टमेव; ऋतुसात्म्यं च कालगृहीतं; प्रमाणसात्म्यग्रहणं सम्यग्योगेनैव कृतम् । असात्म्यं यत् सात्म्यविपरीतम् । सम्यग्योगः यथावत्प्रयोगः । विपर्यये दोषमाह—अन्यथा ह्येषां पथ्यमप्यन्यथा भवेत्; एषां देशादीनाम्, अन्यथेति असम्यग्योगे, पथ्यमपीति भेषजं दोषादिविपरीतमपि, अन्यथेति अपथ्यं भवति । यानि चापराणि बलसत्त्वादीनि दशविधदोषाद्यन्तर्गतानि परीक्ष्याणि नेहोक्तानि तानि दोषादिष्वन्तर्भावनीयानि ॥ २९३ ॥

**आस्यादामाशयस्थान् हि रोगान् नस्तःशिरोगतान् ।**
**गुदात् पक्वाशयस्थांश्च हन्त्याशु दत्तमौषधम् ॥ २९४ ॥**
**शरीरावयवोत्थेषु विसर्पपिडकादिषु ।**
**यथादेशं प्रदेहादि शमनं स्याद्विशेषतः ॥ २९५ ॥**

शरीरापेक्षसम्यग्योगोदाहरणमाह—आस्यादित्यादि । आस्यादित्यादौ तृतीयास्थाने पञ्चमी; तेनास्येन दत्तमौषधं वमनाद्यामाशयस्थान् गदानाशुतरं निहन्ति । एवं नासया दत्तमौषधं शिरोगतान् हन्ति । गुदेन दत्तं पक्वाशयस्थान् हन्ति । बहिःपरिमार्जनभेषजप्रयोगं शरीरदेशापेक्षमाह—शरीरावयवोत्थेष्वित्यादि । यथादेशमिति व्याधिदेशे । प्रदेहादीनि प्रदेहपरिषेकोपनाहादीनि ॥ २९४ ॥ २९५ ॥

**दिनातुरौषधव्याधिजीर्णलिङ्गर्त्ववेक्षणम् ।**
**कालं विद्याद्दिनावेक्षः पूर्वाह्णे वमनं यथा ॥ २९६ ॥**
**रोग्यवेक्षो यथा प्रातर्निरन्नो बलवान् पिबेत् ।**
**भेषजं लघुपथ्यान्नैर्युक्तमद्यात्तु दुर्बलः ॥ २९७ ॥**
**भैषज्यकालो भुक्तादौ मध्ये पश्चान्मुहुर्मुहुः ।**
**सामुद्गं भक्तसंयुक्तं ग्रासग्रासान्तरे दश ॥ २९८ ॥**
**अपाने विगुणे पूर्वं, समाने मध्यभोजनम् ।**
**व्याने तु प्रातरशितमुदाने भोजनोत्तरम् ॥ २९९ ॥**
**वायौ प्राणे प्रदुष्टे तु ग्रासग्रासान्तरिष्यते ।**
**श्वासकासपिपासासु त्ववचार्यं मुहुर्मुहुः ॥ ३०० ॥**
**सामुद्गं हिक्किने देयं लघुनाऽन्नेन संयुतम् ।**
**संभोज्यं त्वौषधं भोज्यैर्विचित्रैररुचौ हितम् ॥ ३०१ ॥**
**ज्वरे पेयाः कषायाश्च क्षीरं सर्पिर्विरेचनम् ।**
**षडहे षडहे देयं कालं वीक्ष्यामयस्य च ॥ ३०२ ॥**
**क्षुद्वेगमोक्षौ लघुता विशुद्धिर्जीर्णलक्षणम् ।**
**तदा भेषजमादेयं स्याद्धि दोषवदन्यथा ॥ ३०३ ॥**
**चयादयश्च दोषाणां वर्ज्यं सेव्यं च यत्र यत् ।**
**ऋताववेक्ष्यं यत् कर्म पूर्वं सर्वमुदाहृतम् ॥ ३०४ ॥**
**( उपक्रमाणां करणं प्रतिषेधे च कारणम् ।**
**व्याख्यातमबलानां सविकल्पानामवेक्षणे ॥ ३०५ ॥**

१ 'वातस्य शैत्यं तस्यैव गुणस्य' इति पा० ।

१ 'अधस्ताद्गुदतो दत्तं हन्त्याशुतरमौषधम्' इति पा० । २ 'यथादोषं' 'यथाबलं', 'यथादेहं' इति च पा० । ३ बहुष्वादर्शपुस्तकेषु 'अवेक्षणम्' इत्यस्य स्थाने 'अपेक्षणम्' इति पठ्यते, एवमग्रेऽप्यस्मिन् प्रकरणे 'रोग्यवेक्षः' इत्यादि स्थाने 'रोग्यपेक्षः' इत्यादि पठ्यते । ४ 'व्यानेऽन्ते प्रातराशस्य' इति पा० । ५ एतच्छ्लोकद्वयं हस्तलिखितपुस्तके न पठ्यते ।

मुहुर्मुहुश्च रोगाणामवस्थामातुरस्य च।
अवेक्षमाणस्तु भिषक् चिकित्सायां न मुह्यति ३०६)
इत्येवं षड्विधं कालमनवेक्ष्य भिषग्जितम्।
प्रयुक्तमहिताय स्यात् सस्यस्याकालवर्षवत् ॥ ३०७॥
व्याधीनामृत्वहोरात्रवयसां भोजनस्य च।
विशेषो भिद्यते यस्तु कालावेक्षः स उच्यते ॥३०८॥
वसन्ते श्लेष्मजा रोगाः शरत्काले तु पित्तजाः।
वर्षासु वातिकाश्चैव प्रायः प्रादुर्भवन्ति हि ॥ ३०९॥
निशान्ते दिवसान्ते च वर्षान्ते वातजा गदाः।
प्रातः क्षपादौ कफजास्तयोर्मध्ये तु पित्तजाः ३१०
वयोन्तमध्यप्रथमे वातपित्तकफामयाः।
बलवन्तो भवन्त्येव स्वभावाद्वयसो नृणाम् ॥ ३११॥
जीर्णान्ते वातजा रोगा जीर्यमाणे तु पित्तजाः।
श्लेष्मजा भुक्तमात्रे तु लभन्ते प्रायशो बलम् ॥३१२॥

देशमनु कालापेक्षसम्यग्योगोदाहरणानि कालविभागपूर्वकमाह—दिनातुरौषधेत्यादि। दिनादिभिरवेक्षणशब्दः संबध्यते; अवेक्षणम् अवेक्षा। अत्र दिनावेक्षादिकालान् क्रमादुदाहरति—दिनावेक्ष इत्यादि। रोग्यवेक्ष इति रोगिणो विशेषं बलवत्त्वमबलवत्त्वं चावेक्ष्य भवतीत्यर्थः। निरन्न इति औषधमुपयुज्यापि उपक्षणमभुञ्जानः। औषधावेक्षानगदकालानाह—भैषज्यकाला इत्यादि। अत्र भुक्तादावित्यनेन कालद्वयमुच्यते; यथा प्रातरेव निरन्नं, तथा प्राग्भोजनं च। तथा पश्चादित्यनेन च कालद्वयमेव प्रातर्भोजनोत्तरकालं, अपरं तु सायं भोजनोत्तरकालम्। मध्येभुक्तं तु यदर्धं भुक्त्वोपयुज्यते, पश्चात् पुनरर्धं भुज्यते। मुहुर्मुहुर्भुक्तं नाम यद्भोजनसमये प्रतिक्षणं भुज्यते। सामुद्गं नाम यद्भक्तस्यादावन्ते च भुज्यते, तत्समुद्गवदाहारावरणात् 'सामुद्गं' इत्यभिधीयते। भुक्तमिति पदं भुक्तादावित्यादिभिः प्रत्येकं संबध्यते। अन्तराभक्तं नाम यदन्नेन संयोगात् संस्काराद्वा तद्विमिश्रितं भुज्यते। ग्रासग्रासान्तरं तु भुक्तं नाम यद् ग्रासानां मध्येषु भुज्यते। अन्ये तु 'ग्रासग्रासान्तरे' इति पठन्ति, एकं च भेषजकालं वदन्ति; भुक्तमितिपदेन च भेषजकालान्तरमभिधाय दशौषधकालपूरणं कुर्वन्ति। अत एव 'वायौ प्राणे प्रदुष्टे तु ग्रासग्रासान्तरिष्यते' इति वचनेन चाचार्येणैक एव काल उक्तः। तत्र ग्रासस्य ग्रासान्तरमध्ये यदौषधं तद् ग्रासग्रासान्तरमुच्यते। भुक्तमित्यस्य लक्षणं—भुक्तं लघुनाऽन्नेन संयुतमिति; लघुना पेयादिना अन्नेन संयुतं यद्भुज्यते तद्भक्तमुच्यते। संभोज्यं त्वौषधैरित्यादिना तु यदौषधसंस्कृतमन्नमुपयुज्यते अलघु लघु वा तत् संभुक्तशब्देनोच्यते। ये तु 'ग्रासे ग्रासान्तरे' इति पठन्ति, ते प्राणे प्रदुष्टे ग्रासे ग्रासान्तरे वा भेषजोपयोगेन कालद्वयं वर्णयन्ति, लघुनाऽन्नेन संयुतमितिपदं संभोज्यमित्यस्यैव विशेषणं वर्णयन्ति; भुक्तमिति तु पदं विवरणग्रन्थेऽपि सर्वात्मकालोपयोजनीयभेषजविशेषणमिति व्याख्यानयन्ति। एवं व्यवस्थिते 'अपाने विगुणे' इत्यादिभेषजकालविवरणं व्यक्तमेवेति न पुनर्व्याह्रियते। एते च काला यद्यपि रोगविशेषविषयतया विहिताः, तथाऽपि भेषजस्यैवामी विगुणापानादिविधेयस्य कालां भवन्ति। अपानवैगुण्यादयस्तु गदा इह भेषजविषयतयोपात्ताः। तेनापाने विगुणे यदौषधं तस्याप्येते काला इत्यादिनिबन्धो बोद्धव्यः। यस्तु व्याध्यवेक्षः कालः स व्याध्यवस्थारूप इह वक्तव्य इति विशेषः। औषधावेक्षं कालमभिधाय व्याध्यवेक्षं कालमाह—ज्वरे पेया इत्यादि। अत्र च पेयाकषायसर्पिःक्षीरविरेचनानामुत्सर्गविधया ज्वराहादारभ्य षडहे यथाक्रमं देयत्वमुच्यते। षडहातिक्रमे पेयादानं न विरोधमावहति; सामान्यविधेर्विरोधविधिना बाधनस्य सर्वत्रैवानुमतत्वात्। तेन लङ्घितस्य कषायषडहे पेयादानं यत् प्रसज्यते "लङ्घितं वमितं काले यवागूभिरुपाचरेत्" (चि. अ. ३) इति वचनेन, तदपि न विरोधि; तस्य च श्लोकस्य प्रपञ्चो ज्वरचिकित्सित एव कृत इति नेह क्रियते। कालं वीक्ष्यामयस्य त्विति अवस्थारूपं कालं ज्वरलक्षणस्यामयस्य वीक्ष्य षडहे पेया[1] देयेत्यर्थः। जीर्णलिङ्गापेक्षं कालमाह—क्षुद्वेगेत्यादि। क्षुदिति बुभुक्षा भवति, वेगमोक्ष इति पुरीषादिनिर्गमः। लघुता विशुद्धिरिति हृदयोद्गारविशुद्धिः। जीर्णलक्षणमिति जीर्णान्नलक्षणम्। एतच्च जीर्णलक्षणं यद्यपि रसविमानेऽप्यभिहितं, तथाऽपीह कालावेक्षया प्रकरणागतत्वादभिधानं न पुनरुक्तदोषकरम्। तदा भेषजमादेयमिति वचनेन प्रातर्यदौषधमनन्नं दीयते तद्भेषजं प्रत्यवमृशति, यदन्नोत्तरकालं तदजीर्णे एव प्रातराशे दीयते; किंवा भोजनोत्तरकालमपि यदौषधं दीयते तदपि दिनान्तरभुक्तेऽन्ने जीर्णे एव दीयते। अन्यथा स्याद्धि दोषवदित्यत्र केचिद् 'द्विदोषवत्' इति पठन्ति, तेन जीर्यति जीर्यमाणे च दोषद्वययुक्तं स्यादित्यर्थः। 'स्यात्तु दोषवदन्यथा' इति पाठ आकरः। ऋतुरूपकालावेक्षं सम्यग्योगं विभजते—चयादयश्चेत्यादि। चयादय इति चयप्रकोपप्रशमाः। ते च चयादयो यथा—कफस्य हेमन्ते चयः, प्रकोपो वसन्ते, ग्रीष्मे प्रशम इत्यादिस्वभावः। वर्ज्यं सेव्यं च ऋतावुक्तं, तत्रैव च गुर्वन्नादि वर्ज्यमुक्तं, तेन तत्रैव तज्ज्ञेयम्। उपक्रमाणामित्यादिकं सार्धं श्लोकं केचित् पठन्ति; तमनार्षं वदन्ति। उक्तषड्विधकालानवेक्षप्रयोगेऽनिष्टफलं सदृष्टान्तमाह—इत्येवमित्यादि। यथा सस्यस्याकालवर्षेण पीडा मरणं वा भवति, तद्वदौषधमपि षड्विधमकालानवेक्ष्योपयुक्तं क्लेशाय विनाशाय वा भवति। पुनरन्यथा कालावेक्षं योगं दर्शयन्तः केचित् पठन्ति—व्याधीनामृत्वहोरात्रनियमादिश्लोकचतुष्टयम्, एतदपि नातिप्रसिद्धम् ॥ २९६–३१२॥

[1] 'पेयादि देयमित्यर्थः' इति पा०।

नाल्पं हन्त्यौषधं व्याधिं यथाऽऽपोऽल्पा महानलम्।
दोषवच्चातिमात्रं स्यात्सस्यस्यात्युदकं यथा ॥३१३॥
संप्रधार्य बलं तस्मादामयस्यौषधस्य च।
नैवातिबहु नात्यल्पं भैषज्यमवचारयेत् ॥ ३१४ ॥

प्रमाणविशेषापेक्षं योगं दर्शयन्नाह—नाल्पमित्यादि। यद्यपि चेह भेषजस्य प्रमाणं शृङ्गग्राहिकया नोक्तं, तथाऽपीह "दोषप्रमाणानुरूपो हि भैषज्यप्रमाणविकल्पो बलप्रमाणविशेषापेक्षो भवति" (वि. अ. ८) इत्यादिनोक्तं मध्यभेषजप्रमाणं ज्ञेयम् ॥ ३१३ ॥ ३१४ ॥

औचित्याद्यस्य यत् सात्म्यं देशस्य पुरुषस्य च।
अपथ्यमपि नैकान्तात्तत्त्यजंल्लभते सुखम् ॥ ३१५ ॥
वाह्लीकाः पह्लवाश्चीनाः शूलीका यवनाः शकाः।
मांसगोधूममाध्वीकशस्त्रवैश्वानरोचिताः ॥ ३१६ ॥
मत्स्यसात्म्यास्तथा प्राच्याः क्षीरसात्म्याश्च सैन्धवाः।
अश्मकावन्तिकानां तु तैलाम्लं सात्म्यमुच्यते ३१७
कन्दमूलफलं सात्म्यं विद्यान्मलयवासिनाम्।
सात्म्यं दक्षिणतः पेया मन्थश्चोत्तरपश्चिमे ॥ ३१८॥
मध्यदेशे भवेत् सात्म्यं यवगोधूमगोरसाः।
तेषां तत्सात्म्ययुक्तानि भेषजान्यवचारयेत् ॥३१९॥
सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि।

अथ सात्म्यापेक्षं सम्यग्योगं विभजन्नाह—औचित्याद्यस्येत्यादि। औचित्यादिति अभ्यासात्, अपथ्यमपि यद्यस्य पुरुषस्य सात्म्यं तदेकान्तात् त्यजन् न सुखं लभते इति योजना। एकान्तात् झटिति सर्वथा च त्यजन्। एतेनापथ्यमपि सात्म्यमेकान्तात् त्यजतः सुखं न भवतीति दर्शयति; पथ्यस्य सात्म्यस्य परित्यागे तु नितरामेव दुःखं भवतीति दर्शयति। देशशब्देन चेह देशवाचिनो जनपदा अभिप्रेताः। तेन देशसात्म्यशब्देन तद्देशजातत्वेनैव पुरुषैर्यत् सेव्यते तत् साधारणं सात्म्यं गृह्यते। पुरुषसात्म्यग्रहणेन तु यत् प्रतिनियतपुरुषस्यैवाभ्यासात् सात्म्यतां याति तत् पुरुषप्रतिनियतं सात्म्यं गृह्यते। यत्तु पूर्वं "देशानामामयानां च विपरीतगुणं गुणैः। सात्म्यमिच्छन्ति" (सू. अ. ६) इत्यनेन देशसात्म्यमुक्तं, तद्देशविपरीतगुणत्वेन तद्देशनिवासिनां पुरुषाणां सात्म्यमुक्तम्; इदं तु देशविपरीतगुणं भवतु मा भवतु वा, तथाऽपि तद्देशनिवासिनामभ्यासेन सात्म्यं तदिह सात्म्यमुच्यत इति विशेषः। पुरुषसात्म्यस्य प्रायः प्रतिपुरुषं भिन्नत्वेनानियतत्वाच्छृङ्गग्राहिकया उदाहरणं न कृतम्। तेन देशाभ्याससात्म्यानि प्रसिद्धान्युदाहरति—वाह्लीका इत्यादि। वैश्वानरोचिता इति अत्रोचितशब्देनाभ्यास उच्यते। तैलं चाम्लं चेति तैलाम्लम्। दक्षिणत इति दक्षिणापथे। उत्तरे च पश्चिमे चेति उत्तरपश्चिमे। तेषामित्यत्र तच्छब्देन जनपदाः पुरुषाश्च गृह्यन्ते। तेन तत्सात्म्ययुक्तानीति उक्तदेशसात्म्ययुक्तपुरुषसात्म्ययुक्तानि। सात्म्योपयोगफलमाह—सात्म्यं ह्याशु बलमित्यादि। बह्वपीति अतिमात्रमपि ॥ ३१५-३१९ ॥—

योगैरेव चिकित्सन् हि देशाद्यज्ञोऽपराध्यति ३२०
वयोबलशरीरादिभेदा हि बहवो मताः।

उक्तदेशादिपरीक्षाव्यतिरेकेण केवलं यथोक्तयोगैरेव चिकित्सां कुर्वतो दोषमाह—योगैरेवेत्यादि। देशाद्यज्ञ इत्यनेन देशाद्यज्ञानाद् देशादिविगुणचिकित्साकारकं पुरुषं लक्षयति। अपराध्यति न ईप्सितं साधयति। देशाद्यज्ञ इत्यत्रादिशब्देन कालादीनामुक्तानां तथा प्रदेशान्तरोक्तवयो-बल-शरीर-प्रकृति-सत्त्वानां ग्रहणम्। देशाद्यज्ञः कुतोऽपराध्यतीत्याह—वयोबलेत्यादि। आदिशब्देन प्रकृतिसत्त्वादीनां ग्रहणम्। यस्माद्वयोबलादिभेदा बहवश्चिकित्सावेक्षणीयाश्चिकित्सकानां मताः सन्ति, तस्माद् देशादिनिरपेक्षा चिकित्सा क्रियमाणा न ईप्सितं साधयतीति भावः ॥ ३२० ॥—

तथाऽन्तःसन्धिमार्गाणां दोषाणां गूढचारिणाम्३२१
भवेत् कदाचित् कार्याऽपि विरुद्धाभिमता क्रिया।
पित्तमन्तर्गतं गूढं स्वेदसेकोपनाहनैः ॥ ३२२ ॥
नीयते बहिरुष्णैर्हि तथोष्णं शमयन्ति ते।
बाह्यश्च शीतैः सेकाद्यैरूष्माऽन्तर्याति पीडितः३२३
सोऽन्तर्गूढं कफं हन्ति शीतं शीतैस्तथा जयेत्।
श्लक्ष्णपिष्टो घनो लेपश्चन्दनस्यापि दाहकृत् ॥३२४॥
त्वग्गतस्योष्मणो रोधाच्छीतकृच्चान्यथाऽगुरोः।
छर्दिघ्नी मक्षिकाविष्ठा मक्षिकैव तु वामयेत् ॥३२५॥
द्रव्येषु स्विन्नजग्धेषु चैव तेष्वेव विक्रिया।

सामान्योक्तचिकित्सायाः प्रकारान्तरेणापि विशिष्टार्थकर्तृत्वमाह—तथाऽन्तरित्यादि। अन्तर्मार्गाः कोष्ठाश्रयिणः, सन्धिमार्गा मध्यमार्गाश्रयिणः। गूढचारिणामिति अन्तःसंधिगतत्वेनाव्यक्तगतीनां दोषाणां विरुद्धाभिमताऽपि क्रिया कदाचिद्भवति, विरुद्धाभिमता विपरीतत्वेन ख्याता। किंवा न केवलं वयोबलादिभेदा बहवो मताः किंतु अन्तःसंधिमार्गाणां दोषाणां गूढचारिणां भेदा बहवश्चिकित्सावेक्षणीया मता इति; ततो गूढचारिणो दोषभेदेन चिकित्साभेदो भवेत् कदाचिदित्यादि योजनीयम्। विरुद्धाभिमतक्रियाकरणोदाहरणमाह—पित्तमन्तर्गतमित्यादिना। नीयते बहिरिति बाह्यरोमकूपनिःसारणेन नीयते बहिरुष्णैः। तथेति तथा उक्तेन प्रकारेण उष्णं पित्तमुष्णैः स्वेदादिभिः शमयन्ति। संप्रति शीतेन चिकित्सितेन शीतश्लेष्मशमनोदाहर-

१ 'क्षारसात्म्यास्तथा प्राच्या मत्स्यसात्म्याश्च सैन्धवाः' इति पा०। २ 'अश्मकानर्तकानां' इति पा०। ३ 'शाकमूलफलं' इति पा०। ४ 'मण्ड०' इति पा०। ५ 'देशवासिनो जना अभिप्रेताः' इति पा०।

१ 'तेषां तत्सात्म्ययुक्ताश्च वयोवस्थायुतास्तथा। आयुर्बलशरीरादिभेदा हि बहवो मताः' इति गङ्गाधरसंमतः पाठः। २ 'अन्तर्गतं पित्तधातुं' इति पा०।

णमाह—बाह्यैश्चेत्यादि। पीडित इति बहिर्गच्छन् निरुद्धः। अथ प्रत्यनीकस्यापि कल्पनाविशेषादन्यथाकर्तृत्वमाह—श्लक्ष्णपिष्ट इत्यादि। त्वग्गतस्योष्मणो रोधादिति त्वङ्मार्गेण निर्गच्छत ऊष्मणो रोधात्। शीतकृच्चान्यथाऽगुरोरिति अगुरोरुष्णस्यापि पिष्टोऽघनश्च लेपः शीतकृत् स्यादित्यर्थः। विरुद्धक्रियाभिधानप्रसङ्गेन समुदायापेक्षयैकदेशस्य विरुद्धकार्यकरणोदाहरणमाह—छर्दिघ्नीत्यादि। द्रव्येषु खिन्नजग्धेष्वेवं तेष्वेव विक्रियेति अनेन मक्षिकाविष्ठारम्भकेषु द्रव्येषु मक्षिकाजठराग्निस्विन्नेषु एवं विक्रिया मक्षिकाशरीरगततया विष्ठागततया च विरुद्धा क्रिया यथोक्ता भवतीति वाक्यार्थः; खिन्नजग्धेष्विति खादितानन्तरमग्निपक्वेषु, विक्रियेति विरुद्धक्रिया। किंवा संस्कारेण पूर्वद्रव्यकार्यविरुद्धोदाहरणार्थमाह—द्रव्येष्वित्यादि। अस्मिन् पक्षे 'जग्धेषु' इत्यस्य स्थाने 'दग्धेषु' इति पठन्ति। तत्र लाजसक्तूनां सिद्धपिण्डेषु खिन्नतया लाजविपरीता गुरुत्वेनाग्निवधादिकारिका क्रिया; तथा उत्पलनालेषु दग्धेषु क्षारतया शीतविरुद्धा क्रिया छेदनादिक्रिया इत्याद्युदाहार्यम्। यदा 'यस्मिन् जग्धेषु' इति पाठः, तदाऽपि खिन्नानन्तरं जग्धेष्विति कृत्वा सक्तुसिद्धपिण्डक एवोदाहरणं ज्ञेयम् ॥ ३२१-३२५ ॥—

**तस्माद्दोषौषधादीनि परीक्ष्य दश तत्त्वतः ॥ ३२६ ॥**
**कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलम्।**

परीक्षाफलमुपसंहरति—तस्मादित्यादि। दोषौषधादीनि उपकल्पनीये ( सू. अ. १५ ) एकादश पठितानि, विमाने च द्वादश पठितानि, तेन तद्ग्रहणेनेहोक्तं दशसंख्यत्वं व्याहन्यते; तेन दृढबलेनैव निरूहप्रस्तावे यानि दोषौषधादीनि दश निर्दिष्टानि "समीक्ष्य दोषौषधदेशकालसात्म्याग्निसत्त्वौकवयोबलानि" ( सि. अ. ३ ) इत्यनेन, तान्येवात्र दश गृह्यन्ते। एतद्दशक एवोपकल्पनीयोक्तैकादशकस्य परीक्ष्यस्य तथा विमानोक्तद्वादशकस्य चावरोधः। तथाहि—उपकल्पनीये एतद्दशत अन्ये प्रकृतिशरीराहारा उक्ताः; तत्र शरीरस्य प्रकृतेश्च देशशब्देन भूम्यातुरग्राहिणा ग्रहणम्, उक्तं हि—"देशो भूमिरातुरश्च" ( वि. अ. ८ ) इति; आहारस्य तु सात्म्यग्रहणेनैव ग्रहणम्। विमाने च यो द्वादशो विकारः पठितः, स दोषग्रहणगृहीतः। एवं सर्वोपकल्पनीयाद्युक्तार्थोपग्रहो व्याख्येयः। यत्तु आषाढवर्मप्रभृतिभिरतद्गुणबहुव्रीहिपक्षाश्रयेणोपकल्पनीयोक्तानामेव दशत्वं व्याख्यातमिह, तद् ग्रन्थशब्दमसंगतं च। न योगैरेवेति न प्रयोगमात्रेण ॥ ३२६ ॥—

**निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना ३२७**
**क्षीणे मार्गीकृते देहे शेषः सूक्ष्म इवानलः।**
**तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना ॥ ३२८ ॥**
**सिद्ध्यर्थं प्राक्प्रयुक्तस्य सिद्धस्याप्यौषधस्य तु।**



संप्रति चिकित्सया निवृत्ते व्याधौ कर्तव्यं दर्शयन्नाह—निवृत्तोऽपि पुनरित्यादि। निवृत्त इव निवृत्तः, किंचिदवशिष्टदोषरूपमूलः; न तु सर्वथा निवृत्तः, तस्य तुल्यहेतुना प्रत्यागमनविरोधात्, तथा सूक्ष्मानलदृष्टान्तविसदृशत्वाच्च। क्षीणे अपचितमांसादिके। मार्गीकृते इति व्याध्यप्रतिबन्धकतया मार्गसदृशीकृते। शेष इति अनलविशेषणम्। अपिशब्देन निवृत्तोऽपि यदा स्वल्पेन हेतुना आयाति तदा प्रशमाभिमुखो नितरामेवायातीति दर्शयति। एवं व्यवस्थिते कर्तव्यमाह—तस्मादित्यादि। अनुबध्नीयात् प्रयोगेणेति पुनरप्यनुबन्धभेषजप्रयोगं कुर्यात्। अनपायिनेति रोगान्तराकारकेण। किमर्थमनुबध्नीयादित्याह—दार्ढ्यार्थमिति। प्रयुक्तसिद्धौषधकृतव्याधिनिवृत्तिलक्षणस्यार्थस्य दार्ढ्यार्थं, स्थैर्यार्थमिति यावत् ॥ ३२७ ॥ ३२८ ॥—

**काठिन्यादूनभावाद्वा दोषोऽन्तः कुपितो महान् ३२९**
**पथ्यैर्मृद्वल्पतां नीतो मृदुदोषकरो भवेत्।**
**पथ्यमप्यश्नतस्तस्माद्यो व्याधिरुपजायते ॥ ३३० ॥**
**ज्ञात्वैवं वृद्धिमभ्यासमथवा तस्य कारयेत्।**

अपरमपि प्रयोगानुबन्धविषयमाह—काठिन्यादित्यादि। काठिन्यादिति दोषचयरूपसंहतत्वात्। ऊनभावात् अचयप्रकोपात्; अचयेऽपि च दोषाणां प्रकोपो भवत्येव; यथा—बलवद्विग्रहादिभिर्वायोः, पित्तस्य क्रोधादिभिः, श्लेष्मणश्च दिवास्वप्नादिभिः; अयं चाचयप्रकोपो घनावयवोपचयाकर्तृत्वात् 'ऊनभावात् प्रकोप' इत्युच्यते। दोषोऽन्तःकुपितो महानित्यत्र काठिन्यात् कुपित ऊनभावाच्च कुपितो महान् भवतीति व्यवस्था। काठिन्याद्धि अचयकोपोऽन्तरेव प्रायो भवति, ऊनभावात्तु अचयप्रकोपः प्रसरणस्वभावत्वात्तु लघुचयबन्धसारो(?)ऽपि महान् भवति। मृद्वल्पतां नीत इति यथाक्रमं, तेन यः काठिन्यादन्तःकुपितः स मृदुतां नीतः, स्थूलभावान्महान् कुपितोऽल्पतां नीतः; मृदुदोषकर इति अल्पविकारकरः। किंवा काठिन्यादिति दोषदूष्यसंबन्धकृतस्थैर्यात्, ऊनभावादिति यथोक्तकाठिन्यं विना। अन्तरिति शरीरानुत्तानदेशे। महानिति च पदं द्वाभ्यामपि संबध्यते। एकस्य कारणप्रचयेन महत्त्वम्। पथ्यमप्यश्नत इति हितमपि भेषजमुपयुञ्जानस्य। उपजायत इति मृदुतया अल्पतया वा अनुवर्तते। ज्ञात्वैवमिति पथ्यमिदमस्य भेषजम्, अयं तु व्याधिरिति, महत्त्वाद्गम्भीरत्वाद्वा सर्वथा न निवर्तते मम:, एवं ज्ञात्वा तथैव पूर्वप्रयुक्तप्रयोगस्य वृद्धिं वा अभ्यासं वा कारयेत्, न तत्प्रयोगाश्रयप्रयोगान्तरं कुर्यात्; वृद्धिर्मात्राधिक्यम्, अभ्यासः सततोपयोगः। अयमर्थोऽन्यत्राप्युक्तः—"अभ्यस्यमानाः क्रमशस्तु योगा जयन्ति रोगान् बलिनः स्थिरांश्च। तस्मादखिन्नः पुरुषोऽभ्युपेयाद्योगप्रयोगान् समुदीर्णरोगे" इति ॥ ३२९ ॥ ३३० ॥—

**सातत्यात्स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम् ३३१**
**कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः।**

मनसोऽर्थानुकूल्याद्धि तुष्टिरूर्जा रुचिर्बलम् ॥ ३३२ ॥
सुखोपभोगता च स्याद्व्याधेश्चातो बलक्षयः ।
लौल्याद्दोषक्षयाद्व्याधेर्वैधर्म्याच्चापि या रुचिः ३३३
तासु पथ्योपचारः स्याद्योगेनाद्यं विकल्पयेत् ।

उक्तसततोपयोगे यदि पथ्यं सातत्यात् सततोपयोगाद्धेतोर्द्वेष्यत्वमागतं भवति, तथा स्वाद्वभावाद्वा अनिष्टत्वाद्द्वेष्यत्वमागतं भवति, तदाऽपि तदेव पथ्यं तैस्तैः कल्पनाविधिभिः स्वरसशृतकल्कादिभिः सूदशास्त्रोक्तैश्च विधानैः पुनरातुरस्य प्रियत्वमापादयेत् । स्वाद्वपि सततोपयोगादप्रियं भवतीति दृष्टम्, अस्वादु तु स्वभावादेवाप्रियम् । स्वादुशब्देनात्र प्रियो रसोऽभिधीयते । प्रियत्वापादनप्रयोजनमाह—मनसोऽर्थानुकूल्यादित्यादि ।—मनसोऽनुकूलभेषजादिरूपानुकल्पनात् । ऊर्जा मनोबलम् । सुखोपभोगता भेषजस्याप्रातिकूल्येनोपयोगः । अत्र चातितृष्णादिभ्यः सुखोपभोगान्ते विरेचने अरुचौ कर्तव्यमभिधाय रुचिविशेषे कर्तव्यतामाह—लौल्यादिति । अत्र लौल्यादेव हि कस्यचित्पुरुषस्य कस्मिंश्चिद्विशेषे रुचिर्भवति; दोषक्षयादपि क्वचिद्रुचिर्भवति; तथा व्याधियुक्तस्य च पेये रुचिर्भवति; व्याधिमहिम्ना क्वचिद्रुचिर्भवति, यथा—पाण्डुरोगे मृत्तिकायां; वैधर्म्याच्च रुचिर्भवति, यथा—स्निग्धस्य रूक्षे, मधुरस्य चाम्ले; यदुक्तम्—"अम्लेन केचिद्विहता मनुष्या माधुर्ययोगे प्रणयीभवन्ति"(सु.सू.अ.४६) इति; किंवा व्याधिवैधर्म्यादित्येक एव हेतुः; अत्रोदाहरणं यथा—श्लेष्मज्वरेऽम्लकटुकेच्छुता । एतैर्लौल्यादिभिः प्रत्येकं जनिता रुचिः, आसु रुचिषु लौल्यादिजनितासु पथ्योपचारः स्यात्, पथ्यमेव देयं नापथ्यमित्यर्थः । अत्र यदि पथ्यं च भवति रुचिविषयं च भवति तदा साध्वेव, यदा तु रुचिविषयमपथ्यं स्यात् तदा कर्तव्यमाह—योगेनाद्यं विकल्पयेदिति ।—भेषजयोगेनाद्यम् इच्छाविषयं भोज्यं संस्कृत्य दद्यादित्यर्थः । अन्यैस्तु लौल्यादिदोषजा त्रिविधाऽत्रारुचिरुच्यते; तत्र लौल्यजायामरुचौ पथ्योपचारः, दोषक्षयजायामरुचौ योगेनेति सम्यग्योगेनोपचारः, व्याधिवैधर्म्यजायां चाद्यमदनीयं व्याधिप्रत्यनीकप्रयोगैरुपकल्पयेदिति व्याख्यातम् । पूर्वमेव तु व्याख्यानमाद्रियामहे ॥ ३३१–३३३ ॥—

तत्र श्लोकाः—

विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च ॥ ३३४ ॥
चिकित्सा चापि निर्दिष्टा शिष्याणां हितकाम्यया ।
शुक्रदोषास्तथा चाष्टौ निदानाकृतिभेषजैः ॥ ३३५ ॥
क्लैब्यान्युक्तानि चत्वारि चत्वारः प्रदरास्तथा ।
तेषां निदानं लिङ्गं च भैषज्यं चैव कीर्तितम् ॥ ३३६ ॥
क्षीरदोषास्तथा चाष्टौ हेतुलिङ्गभिषग्जितैः ।
रेतसो रजसश्चैव कीर्तितं शुद्धिलक्षणम् ॥ ३३७ ॥
उक्तानुक्तचिकित्सा च सम्यग्योगस्तथैव च ।
देशादिगुणशंसा[1] च कालः षड्विध एव च ॥ ३३८ ॥
देशे देशे च यत् सात्म्यं यथा वैद्योऽपराध्यति ।
चिकित्सा चापि निर्दिष्टा दोषाणां गूढचारिणाम् ॥
यो हि सम्यङ् जानाति शास्त्रं शास्त्रार्थमेव च ।
न कुर्यात् स क्रियां चित्रमचक्षुरिव चित्रकृत् ॥ ३४० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने योनिव्यापच्चिकित्सितं नाम त्रिंशोऽध्यायः ॥ ३० ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
चिकित्सितमिदं स्थानं षष्ठं परिसमापितम् ॥ ३४१ ॥

विंशतिरित्यादिसंग्रहः सुबोध एव ॥ ३३४–३४१ ॥

इति श्रीनारायणदत्तात्मजश्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां चिकित्सास्थाने योनिव्यापच्चिकित्सितं नाम त्रिंशोऽध्यायः ॥ ३० ॥

१ 'देशादिगुणयोगाश्च' इति पा० ।



## प्रथमोऽध्यायः ।

**अथातो मदनकल्पं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

चिकित्सितस्थाने तु तत्र तत्र विहितवमनविरेचनयोः प्रयोगान् विस्तरेणाभिधातुं चिकित्साधिकृतयोगस्थानरूपकल्पस्थानमुच्यते । यद्यपि चिकित्सायां वस्तेरपि प्रतिपादितत्वाद्वस्त्यभिधायकं सिद्धिस्थानमपि चिकित्साङ्गतयाऽभिधातव्यं, तथाऽपि पञ्चकर्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्विकैव वस्तिकर्मप्रवृत्तिर्भवतीति कृत्वा वमनविरेचनाभिधायकं कल्पस्थानमेव वस्त्यभिधायकसिद्धिस्थानादग्रेऽभिधीयते । वमनविरेचनानां कल्पास्तिष्ठन्त्यस्मिन्निति कल्पस्थानम् । कल्पाभिधानेऽपि विरेचनस्यौत्सर्गिकप्रवृत्तौ वमनपूर्विकैव प्रवृत्तिर्भवतीति वमनपूर्वकत्वाद्विरेचनस्य वमनकल्पा एवाग्रेऽभिधातव्याः । वमनकल्पेष्वपि वमनद्रव्यश्रेष्ठत्वान्मदनफलस्यैवादौ कल्पोऽभिधीयते; श्रेष्ठत्वं च मदनफलस्य 'वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्' इत्यनेनात्रैव वक्ष्यति ॥१॥२॥

**अथ खलु वमनविरेचनार्थं वमनविरेचनद्रव्याणां सुखोपभोगतमैः सहान्यैर्द्रव्यैर्विविधैः कल्पनार्थं-भेदार्थं विभागार्थं चेत्यर्थः, तद्योगानां च क्रियाविधेः सुखोपायस्य सम्यगुपकल्पनार्थं कल्पस्थानमुपदेक्ष्यामोऽग्निवेश ! ॥ ३ ॥**

कल्पार्थं दर्शयन्नाह—अथ खल्वित्यादि । अथशब्दः प्राक्प्रस्तुते । खलुशब्दः प्रकाशने । वमनविरेचनार्थमिति वमननिमित्तं विरेचननिमित्तं च । वमनविरेचनद्रव्याणामिति मदनफलादित्रिवृदादीनाम् । अन्यैरिति सुरासौवीरकाद्यैः कोविदारादिप्रकारैश्च । अन्यैरित्यस्य विशेषणं—सुखोपभोगतमैरिति । अत्र सुखायोपभोगो येषां ते सुखोपभोगाः, न तदात्वसुख उपभोगो येषां ते सुखोपभोगाः; तथाहि तदात्वेऽसुखोपभोगानां कोविदारादीनामग्रहणं स्यात् । कल्पनार्थमिति पदस्य क्रियया संबन्धमदर्शयित्वैव तद्व्याख्यानप्रत्ययनार्थं व्याकरोति—भेदार्थं विभागार्थं चेत्यर्थ इति; तत्र भेदार्थमिति वमनविरेचनद्रव्यप्रयोगभेदार्थं, ते च प्रयोगभेदाः "त्रयस्त्रिंशद्योगशतं प्रणीतं फलेषु" ( सू. अ. ४ ) इत्यादिकाः; विभागार्थमिति अत्र 'फलपिप्पलीनां द्वौ भागौ कोविदारादिकषायेण, इत्यादिवक्ष्यमाणद्रव्यविभागार्थम् । उपोद्घातं समाप्य प्रकृतमाह—तद्योगानामिति; वमनविरेचनद्रव्यप्रयोगाणाम् । क्रियाया इतिकर्तव्यताया विधिः क्रियाविधिः, स्वरसादिरूपतया करणानीति यावत्; तस्य क्रियाविधेर्विशेषणं—सुखोपायस्येति; सुखार्थः सुखो वा उपायो यस्य स सुखोपायः, तस्य सम्यगुपकल्पनार्थमिति सम्यगुपदेशार्थम् ॥ ३ ॥

**तत्र दोषहरणमूर्ध्वभागं वमनसंज्ञकम्, अधोभागं विरेचनसंज्ञकम्; उभयं वा शरीरमलविरेचनाद्विरेचनसंज्ञां लभते ॥ ४ ॥**

वमनविरेचनशब्दार्थं विभजते—तत्रेत्यादि । ऊर्ध्वं मुखेन दोषनिर्हरणं भजत इति ऊर्ध्वभागम् । अधो गुदेन दोषनिर्हरणं भजत इति अधोभागम् । वमनविरेचनयोरपि कदाचिद्विरेचनसंज्ञां षड्विरेचनशताश्रितीयोक्तां दर्शयन्नाह—उभयमपीत्यादि । न चैवं सति वमनविरेचनवन्निरूहेऽपि विरेचनसंज्ञाप्रसक्तिरुद्भावनीया[1], यतः पङ्कजशब्दवदियं विरेचनसंज्ञा वमनविरेचनयोरेव योगरूढ्या वर्तते ॥ ४ ॥

**तत्रोष्ण-तीक्ष्ण-सूक्ष्म-व्यवायि-विकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य धमनीरनुसृत्य स्थूलाणुस्रोतोभ्यः केवलं शरीरगतं दोषसंघातमाग्नेयत्वाद् विष्यन्दयन्ति, तैक्ष्ण्याद् विच्छिन्दन्ति, स विच्छिन्नः परिप्लवन्[2] स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसज्जन्नणुप्रवणभावादामाशयमागम्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावादौषधस्योर्ध्वमुत्क्षिप्यते, सलिलपृथिव्यात्मकत्वादधोभागप्रभावाच्चौषधस्याधः प्रवर्तते, उभयतश्चोभयगुणत्वात् । इति लक्षणोद्देशः ॥ ५ ॥**

संप्रति द्वयोरपि वमनविरेचनद्रव्ययोः साधारणोष्णतीक्ष्णत्वादिगुणयोगकृतदोषविष्यन्दनादिसाधारणकार्यदर्शनपूर्वकमग्निवाय्वात्मकत्वादिविशिष्टधर्मयोगकृतं विशिष्टं च कार्यं वमनविरेचनरूपं दर्शयन्नाह—तत्रोष्णेत्यादि । उष्णमिति उष्णवीर्यम् । स्ववीर्येणेति स्वप्रभावेण । धमनीरनुसृत्येति सकलदेहगता धमनीरनुसृत्य; सकलदेहगतधमन्यनुसरणं च वीर्येण ज्ञेयं, न साक्षात् । आग्नेयत्वाद्विष्यन्दयन्तीति विलीनं कुर्वन्ति । विच्छिन्दन्ति छिन्नं कुर्वन्ति । परिप्लवन् इतस्ततो गच्छन् । असज्जन्निति न क्वचिदपि सङ्गं गच्छन् । अणुप्रवणभावादिति अणुत्वात् प्रवणभावाच्च; प्रवणत्वमिह कोष्ठगमनोन्मुखत्वम्, अणुत्वं च अणुमार्गसंचारित्वम् । उदानप्रणुन्न इति उदानवायु-

---

१ 'विरेचनाद्वमनस्य पूर्वत्वात्' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । ३ 'भेदार्थं विभागार्थं चेत्यर्थः' इति पाठः क्वचित्पुस्तके न पठ्यते । ४ 'तेन' इति पा० । ५ 'तदात्वसुखोपभोगानां कोविदारादीनां ग्रहणं स्याद्' इति पा० ।

[1] 'संभावनीया' इति पा० । [2] 'परिप्लुवः' इति पा० ।

प्रेरितः । अग्निवाय्वात्मकत्वादिति अग्निवायूत्कर्षवत्त्वात् । ऊर्ध्वभागप्रभावादिति ऊर्ध्वभागदोषहरत्वरूपप्रभावात् । एवं सलिलपृथिव्यात्मकत्वमपि व्याख्येयम् । उभयतश्चेति ऊर्ध्वमधश्च क्षिप्यत इत्यर्थः । उभयगुणत्वादिति अग्निवाय्वात्मकत्वात् सलिलपृथिव्यात्मकत्वादूर्ध्वाधोभागप्रभावाच्चेत्यर्थः । इति लक्षणोद्देश इति अनन्तरग्रन्थेन वमनविरेचनद्रव्यस्वरूपाभिधानं कृतमित्यर्थः । अत्र च प्रकरणे सामान्येनैव वमनविरेचनद्रव्याणाम् 'आग्नेयत्वाद्विष्यन्दयन्ति' इत्यनेनाग्नेयत्वं प्रतिपादितं; पुनश्च विशेषेण 'अग्निवाय्वात्मकत्वात्' इति पदेन वमनद्रव्यस्याग्न्यात्मकत्वं प्रतिपाद्यते; तेन, सामान्ये विशेषे च वमनद्रव्याणामाग्नेयत्वप्रतिपादनात् प्रकृष्टमाग्नेयत्वं भवति; विरेचनद्रव्याणां तु सामान्योक्ताग्नेयत्वसंबन्धाद् विशेषगुणकथनप्रस्तावे च सलिलपृथिव्यात्मकत्वाभिधानाद्वमनद्रव्यापेक्षयाऽपकृष्टमाग्नेयत्वं भवति । तथाहि सुश्रुतेऽपि वमनविरेचनयोरप्याग्नेयत्वमुक्तं— "सरत्व-सौक्ष्म्य-तैक्ष्ण्यौष्ण्य-विकाशित्वैर्विरेचनम् । वमनं च हरेद्दोषान् प्रकृत्या गतमन्यथा" ( सु. चि. अ. ३३ ) इत्यनेन । यच्चात्रोच्यते—वमनं यद्यूर्ध्वभागहरत्वप्रभावादूर्ध्वंयति, तदाऽग्निवाय्वात्मकत्वादिति हेतुवर्णनं न युज्यते; यतः, यत् सोपपत्तिकं कार्यं न भवति तत् प्रभावकृतमिति व्यपदिश्यते; उक्तं हि—"प्रभावोऽचिन्त्य उच्यते" ( सू. अ. २६ ) इति । तत्र, यतः प्रभावस्यैवेह वमनकार्ये वाय्वग्न्यात्मकगुणतया वाय्वग्न्यात्मकत्वं हेतुरुपद(दि)श्यते, न तु वाय्वग्न्यात्मकत्वं स्वतन्त्रो वमनहेतुः; तथाहि सति यदन्यदपि वाय्वग्न्यात्मकमूर्ध्वभागदोषहरत्वप्रभावरहितं, तदपि वमनकरं स्यात्; यथा— कटुकरसे द्रव्ये तत् स्यात्; तस्मात् प्रभावगुणतयैव हेतुवर्णनम् । एवं विरेचनद्रव्येऽपि पूर्वपक्षसिद्धान्तावनुसर्तव्यौ ॥५॥

**तत्र फल-जीमूतकेक्ष्वाकु-धामार्गव-कुटज-कृतवेधनानां, श्यामा-त्रिवृच्चतुरङ्गुल-तिल्वक-महावृक्ष-सप्तला-शङ्खिनी-दन्ती-द्रवन्तीनां च, नानाविधदेशकालसंभवास्वाद-रस-वीर्य-विपाक-प्रभावग्रहणाद् देह-दोष-प्रकृति-वयो-बलाग्नि-भक्ति-सात्म्य-रोगावस्थादीनां नानाप्रभाववत्त्वाच्च, विचित्रगन्ध-वर्ण-रस-स्पर्शानामुपयोगेसुखार्थमसंख्येयसंयोगानामपि च सतां द्रव्याणां विकल्पमार्गोपदर्शनार्थं षड्विरेचनयोगशतानि व्याख्यास्यामः ॥ ६ ॥**

संप्रति कल्पस्थानवक्तव्यतया षड्विरेचनप्रयोगशतान्यनतिसंक्षेपविस्तरप्रयोगोपदर्शनपूर्वकं प्रतिजानीते—तत्र फलेत्यादिना षड्विरेचनयोगशतानि व्याख्यास्याम इत्यन्तेन । तत्र कृतवेधनान्तानां विच्छेदपाठेन वमनप्रयोगप्रयोज्यत्वं, श्यामादीनां विरेचनप्रयोगप्रयोज्यत्वं च दर्शयति । अत्रैव वमने विरेचने चैकैकेषां पुनर्वस्तूनां मदनफलादीनां श्यामादीनां च बहवः प्रयोगा अभिधीयन्ते, न पुनरेकैकमेव द्रव्यं वमनकारकं विरेचनकारकं वा; स्वल्पसंख्याप्रयोगेण ग्रहणसुखता वमनविरेचनयोगस्य भवति, कार्यं च सिध्यतीत्याशङ्क्याह— नानाविधेत्यादि यावद्रोगावस्थादीनां नानाप्रभाववत्त्वाच्चेति । अस्यार्थः—यस्मान्नानाविधदेशकालसंभवाः, नानाविधास्वादाः, नानाविधवीर्याः, नानाविधविपाकाः, नानाविधप्रभावाश्च मदनफलादिका ओषध्यः, तथा तत्संस्कारकाः कोविदारादिका ओषध्य उपलभ्यन्ते; पुरुषाश्च देह-दोष-प्रकृति-वयो-बलाग्नि-भक्ति-सात्म्य-रोगावस्थाभिन्ना नानाविधा दृश्यन्ते; तेन नैकं द्रव्यं सर्वस्मिन् देहदोषादौ यौगिकं, सर्वत्र काले वा प्राप्यते सर्वत्र देशे वा; तस्माद्देहदोषादिना भेदवति पुरुषे बहून्येव द्रव्याणि बहुमिश्च प्रयोगैरुपकल्पितानि यथायोग्यतया यथाप्राप्ति च प्रयोक्तुं शक्यन्ते; अतो बहूनामेव मदनादिद्रव्याणां बहुप्रकारप्रयोगाणामुपन्यासो युक्त इति भावः । ग्रहणात् उपलम्भात् । देहो नाना स्थूलकृशादिभेदेन, भक्तिः इच्छा, अवस्थाशब्देनेह रोगावस्थैव ग्राह्या, आदिशब्देनेह सत्त्वाहारयोर्ग्रहणम् । भूरिविरेचनप्रयोगोपदर्शनप्रयोजनान्तरमप्याह—विचित्रेत्यादि । नानाविधगन्ध-वर्ण-रसतया प्रयोगे तत्कालमुत्तरकालं च सुखार्थमित्यर्थः । अथ किंप्रभेदान्मदनफलादीनां षट्प्रयोगशतानि भवन्ति, येनाधिकाः प्रयोगा नाभिधीयन्ते इत्याशङ्क्याह— असंख्येयेत्यादि । विकल्पमार्गोपदर्शनार्थमिति अधिकप्रयोगकल्पनासमर्थान् भिषजः प्रति एतत् षट्प्रयोगशतोपदर्शनं कर्तव्याधिकप्रयोगकल्पनामार्गोपदर्शकं, तेनापरेऽप्यत्र प्रयोगाः कल्पनीयाः; ग्रन्थे निःशेषप्रयोगानभिधानं प्रयोगाणामसंख्येयत्वेनाशक्यत्वादेव । अनतिविस्तरेण षट्प्रयोगशताभिधानं मन्दबुद्धिसंव्यवहारार्थमिति भावः । उक्तं ह्यन्यत्र—"एतावन्तो ह्यलमल्पबुद्धीनां व्यवहाराय, बुद्धिमतां च स्वालक्षण्यादनुमानयुक्तिकुशलानामनुक्तार्थज्ञानाय" ( सू. अ. ४ ) इति ॥ ६ ॥

**तानि तु द्रव्याणि देश-काल-गुण-भाजन-संपद्वीर्यबलाधानात् क्रियासमर्थतमानि भवन्ति ॥ ७ ॥**

संप्रति वमनविरेचनद्रव्याणां देशादिसंपत्त्या गुणोत्कर्षं दर्शयन्नाह—तानीत्यादि । देशादिभिश्चतुर्भिः संपच्छब्दः प्रत्येकमभिसंबध्यते । भाजनं भेषजस्थापनस्थानम् । वीर्यस्य बलं वीर्याधिकत्वमेव ॥ ७ ॥

**त्रिविधः खलु देशः—जाङ्गलः, आनूपः, साधारणश्चेति । तत्र जाङ्गलः पर्याकाशभूयिष्ठः, तरुभिरपि च कदर-खदिरासनाश्वकर्ण-धव-तिनिश-शल्लकी-साल-सोमवल्क-बदरी-तिन्दुकाश्वत्थ-वटामलकीवनगहनः, अनेकशमी-ककुभ-शिंशपाप्रायः, स्थिरशु-**

१ 'वमनविरेचनतद्द्रव्यस्वरूपाभिधानं' इति पा० । २ 'वमनं' इति पा० । ३ '°प्रभावग्रहणानां' इति पा० । ४ '°रोगावस्थादिनानात्मकत्वाच्च' इति पा० । ५ '°मुपभोगसुखार्थं' इति पा० ।

१ 'येन नाधिक्यं प्रयोगाणामभिधीयते' इति पा० ।

ष्कपवनबलविधूयमानप्रनृत्यत्तरुणविटपः, प्रततमृगतृष्णिकोपगूढतनुखरपरुषसिकताशर्करावहुलः, लावतित्तिरिचकोरानुचरितभूमिभागः, वातपित्तवहुलः, स्थिरकठिनमनुष्यप्रायो ज्ञेयः; अथानूपो हिन्तालतमालनारिकेलकदलीवनगहनः, सरित्समुद्रपर्यन्तप्रायः, शिशिरपवनबहुलः, वञ्जुलवानीरोपशोभिततीराभिः सरिद्भिरुपगतभूमिभागः, क्षितिधरनिकुञ्जोपशोभितः, मन्दपवनानुवीजितक्षितिरुहगहनः, अनेकवनराजीपुष्पितवनगहनभूमिभागः, स्निग्धतरुप्रतानोपगूढः, हंस-चक्रवाक-बलाका-नन्दीमुख-पुण्डरीक-कादम्ब-मद्गु-भृङ्गराज-शतपत्र-मत्तकोकिलानुनादिततरुविटपः, सुकुमारपुरुषः, पवनकफप्रायो ज्ञेयः; अनयोरेव द्वयोर्देशयोर्वीरुद्वनस्पतिवानस्पत्यशकुनिमृगगणयुतः स्थिरसुकुमारबलवर्णसंहननोपपन्नसाधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः ॥ ८ ॥

देशादि सम्यग् व्याकुर्वन्नाह—तत्र त्रिविध इत्यादि। अत्र केचिज्जाङ्गलादिदेशलक्षणग्रन्थं न पठन्ति, तच्च जनपदोद्ध्वंसनीये पठितमिति कृत्वेहानार्षं वदन्ति। यैस्तु जनपदोद्ध्वंसनीये जाङ्गलादिलक्षणं न पठ्यते, तैरत्र पठनीय एवायं ग्रन्थः ॥ ८ ॥

तत्र देशे साधारणे जाङ्गले वा यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशान-चैत्य-देवयजनागार-सभा-श्वभ्राराम-वल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमधुरमृत्तिके वा मृदावफालकृष्टेऽनुपहतेऽन्यैर्बलवत्तरैर्द्रुमैरौषधानि जातानि प्रशस्यन्ते ॥ ९ ॥

यथाकालमिति यथाकालं शिशिरादिभिः सेविते देशे। श्मशानादिभिः प्रत्येकं विरहितशब्दः संबध्यते। देवयजनेनागारशब्दः संबध्यते। सभा जनमेलकस्थानम्। न फालेन कृष्ट इति अफालकृष्टे ॥ ९ ॥

तत्र यानि कालजातान्युपागतसंपूर्णप्रमाण-रसवीर्य-गन्धानि कालातपाग्निसलिलपवनजन्तुभिरनुपहतगन्ध-वर्ण-रस-स्पर्श-प्रभावाणि प्रत्यग्राण्युदीच्यां दिशि स्थितानि; तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यं, ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानां, शरदि त्वक्कन्दक्षीराणि, हेमन्ते साराणि, यथर्तु पुष्पफलमिति; मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य देवता अश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् ॥ १० ॥

तत्र यानि कालजातानीत्यनेनैव कालसंपदुच्यते; कालजातानीति स्वकालभूतानि। उपागतसंपूर्णेत्यादिना प्रत्यग्राणीत्यन्तेन गुणसंपदुच्यते। प्रत्यग्राणीति संपूर्णगुणतया निष्पन्नानि। तेषां शाखापलाशमित्यादिना कालसंपदमुक्तां प्रपञ्चयति। शाखाग्रहणेनैव त्वगादीनामपि ग्रहणम्। शीर्णप्ररूढपर्णानामिति च्छेदः। ग्रीष्मे मूलानि शिशिरे वेति कथनेन यान्याग्नेयानि तेषां मूलानि ग्रीष्मे, यानि सौम्यानि तेषां मूलानि शिशिरे, ग्राह्याणीति व्यवस्थां सूचयति; उक्तं ह्यन्यत्र—"सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत, आग्नेयान्याग्नेयेषु" (सु. सू. अ. ३६) इति। भेषजग्रहणविधानमाह—मङ्गलेत्यादि ॥ १० ॥

गृहीत्वा चानुरूपगुणवद्भाजनस्थान्यागारेषु प्रागुदग्द्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मवत्सु, अग्नि-सलिलोपस्वेद-धूम-रजो-मूषक-चतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्येष्वासज्य स्थापयेत् ॥ ११ ॥

भाजनसंपदमाह—गृहीत्वेत्यादि। अनुरूपगुणवद्भाजनस्थानीति अनुरूपगुणवत्ता च भाजनस्य भेषजसमानगुणतयैव। स्ववच्छन्नानीति सम्यक्पिहितानि ॥ ११ ॥

तानि च यथादोषं प्रयुञ्जीत सुरा-सौवीरक-तुषोदक-मैरेय-मेदक-धान्याम्ल-फलाम्ल-दध्यम्लादिभिर्वाते, मृद्वीकामलक-मधु-मधुक-परूषक-फाणित-क्षीरादिभिः पित्ते, श्लेष्मणि तु मधु-मूत्र-कषायादिभिर्भावितान्यालोडितानि च; इत्युद्देशः। तं विस्तरेण द्रव्य-देह-दोष-सात्म्यादीनि प्रविभज्य व्याख्यास्यामः ॥ १२ ॥

संक्षेपेण मदनफलादीनां वातादिभेदेन भावनालोडनद्रव्याण्याह—तानि च यथादोषं प्रयुञ्जीतेत्यादि। धान्याम्लं काञ्जिकं, फलाम्लं दाडिमरसादि। श्लेष्मणीत्यादौ कषायशब्देन श्लेष्महरद्रव्यक्वाथोऽभिप्रेतः। उद्देश इति संक्षेपाभिधानमित्यर्थः। द्रव्य-देह-दोष-सात्म्यादीनीत्यत्र आदिशब्देन प्रकृतिबलादीनां ग्रहणम् ॥ १२ ॥

वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षते, अनपायित्वात्। तानि वसन्तग्रीष्मयोरन्तरे पुष्याश्वयुग्भ्यां मृगशिरसा वा गृह्णीयान्मैत्रे मुहूर्ते। यानि पक्वान्यकाणान्यहरितानि पाण्डून्यक्रिमीण्यपूतीन्य-

१ "मद्गुकोयष्टीभृङ्गराजपुंस्कोकिलानुनादितः" इति पा०। २ "न्यागतसंपूर्णप्रमाणरसवीर्यगन्धानि" इति पा०।

१ 'चानुरूपगुणवद्भाजने संस्थाप्यागारेषु' इति पा०। २ "धान्यफलदध्यम्लादिभिर्वाते" इति पा०। ३ 'मृद्वीकामधुमधुकफाणितक्षीरादिभिः' इति पा०। ४ 'द्रव्यदेहदोषसात्म्यादीन् वसन्तादींश्च' इति पा०। ५ "रन्तरा पुष्येऽश्वयुजि मृगशिरसि वा" इति पा०।

जन्तुजग्धान्यह्रस्वानि; तानि प्रमृज्य, कुशपुटे बद्ध्वा, गोमयेनालिप्य, यवतु(बु)षमाषशालिकुलत्थमुद्ग-पलानामन्यतमे निदध्यादष्टरात्रम्। अत ऊर्ध्वं मृदूभूतानि मधुविष्टगन्धान्युद्धृत्य शोषयेत्। सुशुष्काणां फलपिप्पलीरुद्धरेत्। तासां घृतदधिमधुपललविमृदितानां पुनः शुष्काणां नवं कलशं सुप्रमृष्टवालुकमरजस्कमाकण्ठं पूरयित्वा स्ववच्छन्नं स्वनुगुप्तं शिक्येष्वासज्य सम्यक् स्थापयेत् ॥ १३ ॥

वमनद्रव्याणामित्यादिना मदनफलस्य प्राधान्योपदर्शनपूर्वकं प्रयोगविधिमाह । अनपायित्वादिति वमनद्रव्यान्तरापेक्षयाऽल्पव्यापत्तिकत्वात् । अन्तरे इति मध्ये, स च ग्रीष्मवसन्तयोरन्तर्वर्तिकतिपयदिनान्येव मध्यो ज्ञेयः । अश्वयुक् अश्विनी । मैत्रे मुहूर्त इति शिवभुजगमित्रादीनां मध्ये मित्रदेवताके, एवं मैत्रे मुहूर्ते । पलानामिति राशीनाम् । मधुवदिष्टगन्धो येषां तानि, यानि मधुविष्टगन्धानि भवन्ति तानि ग्राह्याणीति दर्शयति । फलपिप्पलीरिति मदनफलमध्यगतानि पिप्पलीसंस्थानानि बीजानि । तासामित्यादि पूरणवाचकशब्दयोगात् करणे षष्ठी । स्वनुगुप्तमिति कृतरक्षाविधानम् ॥ १३ ॥

अथ च्छर्दनीयमातुरं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नं श्वश्छर्दयितव्यमिति ग्राम्यानूपौदकमांसरसक्षीर-दधि-माष-तिल-शाकादिभिः समुत्क्लेशितश्लेष्माणं व्युषितं जीर्णाहारं पूर्वाह्णे कृतबलिहोममङ्गलप्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्रां पीतवन्तं, तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत जर्जरीकृत्य यष्टिमधुकषायेण कोविदार-कर्बुदार-नीप-विदुल-बिम्बी-शणपुष्पी-सदापुष्पी-प्रत्यक्पुष्पी-कषायाणामन्यतमेन वा रात्रिमुषितं विमृद्य पूतं मधुसैन्धवयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणानेनाभिमन्त्रयेत्—

'ॐ ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥'

इत्येवमभिमन्त्र्योदङ्मुखं प्राङ्मुखं वाऽऽतुरं पाययेच्छ्लेष्मज्वरगुल्मप्रतिश्यायार्तं विशेषेण पुनः पुनरापित्तागमनात्, तेन साधु वमति; हीनवेगं तु पिप्पल्यामलक-सर्षप-वचाकल्कलवणोष्णोदकैः पुनः पुनः प्रवर्तयेदापित्तदर्शनात्। इत्येष सर्वेच्छर्दनयोगविधिः ॥ १४ ॥

द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नमित्यनेन अभ्यङ्गे क्रियमाणे स्नेहसहचरितस्वेदोपपादनं द्व्यहं त्र्यहं वा विधीयते, "त्र्यहावरं सप्तदिनं परं तु स्निग्धो नरः स्वेदयितव्य इष्टः" ( सि. अ. १ ) इत्यनेन पानप्रयुज्यमानस्नेहस्य सप्तरात्रं त्रिरात्रं वा प्रकर्ष उच्यते इति न विरोधः । एतच्चाभ्यङ्गस्वेदसहितस्नेहस्वेदकरणं पानस्नेहान्तदिवसमारभ्य क्रियते, तेन स्नेहपानविश्रामदिनेन समं द्व्यहत्र्यहपूरणमभ्यङ्गस्नेहसहितस्वेदप्रयोगस्य भवति । स्नेहपानाच्च यद्विश्रामदिनम्, "एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्" ( सू. अ. १३ ) इत्यनेनोक्तं, तथैवेहापि । कफोत्क्लेशकारिभोजनमाह—श्वश्छर्दयितव्यमित्यादिना । श्व इति परस्मिन्नह्नि । व्युषितमिति रात्रिमतिक्रान्तम् । निरन्नमिति पदच्छेदः । अनतिस्निग्धमित्यादिना वमनदिन एव घृतमात्रायुक्तयवागूपानपूर्वकं वमनमनतिस्निग्धपुरुषविषयं ब्रूते । अन्ये तु पूर्वदिन एवानतिस्निग्धस्य घृतमात्रां पीतवत एव यवाग्वाः पानमाहुः, "पेयाभिर्विविधैरन्नैर्दोषानुत्क्लेश्य देहिनः । स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्तते ॥ अथापरेद्युः पूर्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य" ( सु. चि. अ० ३३ ) इत्यादिसुश्रुतोक्तेः । अन्तर्नखमुष्टिमिति अन्तरीकृतनखमुष्टिपरिमाणम् । यावद्वा साधु मन्येतेत्यनेन मात्राया बलदोषादिभेदेनास्थिरत्वमित्याह । यष्टीमधुकस्य कोविदारादिषु विच्छेदपाठ उत्तरप्रयोगेषु कोविदारादेर्यष्टीमधुविरहितस्य ग्रहणार्थः । कोविदारः स्वनामख्यातः, स शरदि पुष्पति; कर्बुदारस्तु काञ्चनारः, स वसन्ते पुष्पति; नीपः कदम्बः, विदुलः वेतसः, शणपुष्पी घण्टारवा, सदापुष्पी अर्कपुष्पिका, प्रत्यक्पुष्पी अपामार्गः । रात्रिमुषितं विमृद्य पूतमिति श्रुतकषायात् कषायान्तरोपदर्शकं पक्षान्तरं; किंवा, कषायपान एव शीतकषायविधानमिहोच्यते । पूर्णं शरावमिति मङ्गलार्थं पूर्णकुम्भवत् । पुनः पुनरिति यावत् पित्तागमनं न भवति तावत् पुनः पुनः कषायं पिबेदित्यर्थः । अन्यत्राप्युक्तं—"पित्तान्तमिष्टं वमनं विरेकादर्धं" ( सि. अ. १ ) इत्यादि । वमनायोगकारकहीनवेगप्रवृत्तिप्रतिकारार्थमाह—हीनवेगमित्यादि ॥ १४ ॥

सर्वेषु तु मधुसैन्धवं कफविलयनच्छेदार्थं वमनेषु विदध्यात्। न चोष्णविरोधो मधुनश्छर्दनयोगयुक्तस्य, अविपक्वप्रत्यागमनाद्दोषनिर्हरणाच्च ॥ १५ ॥

यद्यपि च प्रेयादिवमनयोगेषु मधुसैन्धवयोगो न भवति, तथाऽपि 'सर्वेषु' इति पदं बाहुल्यार्थम् । वमनार्थकषाये उष्णे मधुप्रक्षेपो विरोधित्वान्न युज्यते, उक्तं हि—"मधूष्णमुष्णार्तमथवा" ( सू. अ. २७ ) इत्यादि, एवमाशङ्क्य समाधानमाह—न चोष्णविरोधो मधुन इत्यादि । अविपक्वप्रत्यागमनादित्यनेन

१ 'प्रगृह्य कुशमूलैर्बद्ध्वा' इति पा० । २ "मुद्गपर्णाना०" इति पा० । ३ 'फलानां पिप्पलीरुद्धरेत्' इति पा० । ४ "०स्ववसृज्य" इति पा० ।

१ 'घृतमात्रायुक्तयवागूपानमाहुः' इति पा० ।

पच्यमानं मधूष्णयुक्तं विरुध्येतेति दर्शयति । दोषनिर्हरणाचेति मधूष्णविरुद्धमपि वमनयोगे उष्णे इष्यते, तत्र दोषनिर्हरणादेव न विरोधो भवतीति दर्शयति । एवं बस्तिप्रयोगेऽपि मधुन उष्णाविरोधो वर्णनीयः । एतेन यष्टीमध्वादिनवद्रव्यकृतैर्नवभिः कषायैर्नवयोगाः ॥ १५ ॥

फलपिप्पलीनां द्वौ द्वौ भागौ कोविदारादिकषायेण त्रिःसप्तकृत्वः स्रावयेत्, तेन रसेन तृतीयं भागं पिष्ट्वा मात्रां हरीतकीभिर्विभीतकैरामलैर्वा तुल्यां वर्तयेत्, तासामेकां द्वे वा पूर्वोक्तानां कषायाणामन्यतमस्याञ्जलिमात्रेण विमृद्य वलयच्छ्लेष्मप्रसेकग्रन्थिज्वरोदरारुचिषु पाययेदिति समानं पूर्वेण ॥१६॥

फलपिप्पलीनां द्वौ भागावित्यादौ फलपिप्पलीनां भागत्रयं कर्तव्यं; तत्र भागद्वयं षड्गुणेन कोविदारादिकषायेण क्षारपरिस्रावणविधिवदेकविंशतिवारान् परिस्रावणीयम् । कोविदारादीनां चाष्टानामष्टौ कषायाः पृथक् परिस्रावणे प्रयोक्तव्याः । येन च कषायेण फलपिप्पलीभागद्वयं परिस्राव्य हरीतक्यादिपरिमाणा मात्रा तृतीयभागफलपिप्पलीकल्कस्य क्रियते तेनैव कषायेण मात्रायोगाः; एवमष्टौ हरीतक्यादिमात्रया निर्दिष्टाः फलपिप्पलीयोगा भवन्ति । मात्राविकल्पश्च दोषबलादिविकल्पकृतो ज्ञेयः । समानं पूर्वेणेति पूर्वयोगवदिह स्नेहस्वेदाभिमन्त्रणादिविधानं कर्तव्यमित्यर्थः । एवमन्यत्रापि पूर्ववच्छन्दार्थो ज्ञेयः ॥ १६ ॥

फलपिप्पलीक्षीरं, तेन वा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे च; तज्जस्य वा दध्न उत्तरकं कफच्छर्दितमकप्रसेकेषु; तस्य वा पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते उरःकण्ठहृदये च तनुकफोपदिग्धे, इति समानं पूर्वेण ॥ १७ ॥

फलपिप्पल्या क्षीरपाकविधिना साधितं क्षीरं फलपिप्पलीक्षीरम्; अयमेको योगः । तेनेति फलपिप्पलीसाधितक्षीरेण । तज्जस्येति फलपिप्पलीक्षीरजातस्य दध्नः । उत्तरकमिति सरम् । सन्तानिका क्षीरोपरिस्थः स्त्यानो भागः ॥ १७ ॥

फलपिप्पलीशृतक्षीराज्जवनीतमुत्पन्नं फलादिकल्ककषायसिद्धं कफाभिभूताग्निं विशुष्यद्देहं च मात्रया पाययेदिति समानं पूर्वेण ॥ १८ ॥

फलादीनि फल-जीमूतकेक्ष्वाकु-धामार्गव-कुटज-कृतवेधनानि षट् । एते क्षीरयोगचतुष्टयेन घृतयोगेन च समं पञ्च योगा अध्यायसंग्रहे वक्तव्याः ॥ १८ ॥

फलपिप्पलीनां फलादिकषायेण त्रिःसप्तकृत्वः सुपरिभावितेन पुष्परजःप्रकाशेन चूर्णेन सरसि संजातं बृहत्सरोरुहं सायाह्नेऽवचूर्णयेत्, तद्रात्रिव्युषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृसरक्षीरयवागूनामन्यतमं सैन्धवगुडफाणितयुक्तमाकण्ठं पीतवन्तमाघ्रापयेत् सुकुमारमुत्क्लिष्टपित्तकफमौषधद्वेषिणमिति समानं पूर्वेण ॥ १९ ॥

फलपिप्पलीनां फलादिकषायेणेत्यादिना एकं घ्रेययोगमाह । पुष्परजःप्रकाशेनेति पुष्पधूलिसदृशेन । हरिद्राभिधानः कृशरो हरिद्राकृशरः ॥ १९ ॥

फलपिप्पलीनां भल्लातकविधिपरिस्रुतं स्वरसं पक्त्वा फाणितीभूतमातन्तुलीभावाल्लेहयेत्; आतपशुष्कं वा चूर्णीकृतं जीमूतकादिकषायेण पित्ते कफस्थानगते पाययेदिति समानं पूर्वेण ॥ २० ॥

भल्लातकविधिपरिस्रुतमिति रसायनोक्तभल्लातकस्नेहग्रहणविधानेन परिस्रुतः स्वरसो ग्राह्यः । फाणितयोगोऽयमेकः । आतपशुष्कं वेत्यादिना चूर्णयोगोऽप्येकः ॥ २० ॥

फलपिप्पलीचूर्णानि पूर्ववत् फलादीनां षण्णामन्यतमकषायस्रुतानि वर्तिक्रियाः फलादिकषायोपसर्जनाः पेया इति समानं पूर्वेण ॥ २१ ॥

फलपिप्पलीचूर्णानीत्यादौ फलादिषट्कषायभेदेन कृतत्वात् षड् वर्तिप्रयोगा ज्ञेयाः । वर्तिक्रियायां चतुर्गुणेन क्वाथेन पाकाद्वर्त्याकारता कर्तव्या । अत्रापि च तथा लेहादौ च सामान्योक्तेन मधुप्रक्षेपो युक्तः; तं चैके मधुनः पाकविरोधान्नानुमन्यन्ते ॥ २१ ॥

फलपिप्पलीनामारग्वध-वृक्षक-स्वादुकण्टक-पाठा-पाटला-शार्ङ्गेष्टा-मूर्वा-सप्तपर्ण-नक्तमाल-पिचुमर्द-पटोल-सुषवी-गुडूची-सोमवल्क-द्वीपिकानां पिप्पली-पिप्पलीमूल-हस्तिपिप्पली-चित्रक-शृङ्गवेराणां चान्यतमकषायेण सिद्धो लेह इति समानं पूर्वेण॥ २२

फलपिप्पलीनामारग्वधेत्यादिना आरग्वधादिविंशतिद्रव्यक्वाथभेदेन कृतत्वाद्विंशतिर्लेहा ज्ञेयाः । वृक्षकः कुटजः, स्वादुकण्टकः विकङ्कतः, शार्ङ्गेष्टा गुञ्जा, सुषवी कारवेल्लकं, द्वीपिका हिंस्रा, 'कण्टकारी' इत्यन्ये ॥ २२ ॥

फलपिप्पलीस्त्वेला-हरेणुका-शतपुष्पा-कुस्तुम्बुरु-तगर-कुष्ठ-त्वक्-चोरक-मरुवकागुरु-गुग्गुल्वेलवालुक-श्रीवेष्टक-परिपेलव-मांसी-शैलेयक-स्थौणेयक-सरल-पारावतपद्यशोकरोहिणीनां विंशतेरन्यतमस्य कषायेण साधितोत्कारिका उत्कारिकाकल्पेन,

१ 'तैश्च कषायैः' इति पा० । २ 'तेनैव कषायेण मात्रायोगाः' इत्ययं पाठो हस्तलिखितपुस्तके न पठ्यते । ३ '०प्रसेकेषु पूर्णं शरावं' इति पा० । ४ 'विशुष्कदेहं विशुष्यमाणं च' इति पा० ।

१ 'संजातं' इति हस्तलिखितपुस्तके न पठ्यते । २ 'भल्लातकविधिस्रुतं इति पा० । ३ 'कोविदारादीनां' इति पा० । ४ 'कोविदारादिकषायोपसर्जनाः' इति पा० । ५ 'शलाकाकारवर्तिः' इति पा० । ६ 'फलपिप्पलीस्त्वा०' इति पा० ।

**मोदका वा मोदककल्पेन, यथादोषरोगभक्ति प्रयोज्या इति समानं पूर्वेण ॥ २३ ॥**

फलपिप्पलीष्वित्यादिनोत्कारिका मोदकाश्च प्रत्येकं विंशतिः। चोरकः गन्धद्रव्यं खनामख्यातं, परिपेलवं कैवर्तमुस्तकं, स्थौणेयकः ग्रन्थिपर्णकं, पारावतपदी ज्योतिष्मती, अशोकरोहिणी अशोकसदृशपत्रा लता, 'कटुरोहिणी' इत्यन्ये। केचिदत्र स्थौणेयकं परित्यज्यापाकीपाद्या विंशतिं पूरयन्ति, अपाकीपादी खनामख्याता। उत्कारिकाकल्पेनेति सूदशास्त्रोक्तोत्कारिकाविधानेन ॥ २३ ॥

**फलपिप्पलीखरसकषायपरिभावितानि तिलशालितण्डुलपिष्टानि तत्कषायोपसर्जनानि शष्कुलीकल्पेन वा शष्कुल्यः, पूपकल्पेन वा पूपाः, इति समानं पूर्वेण ॥ २४ ॥**

**एतेनैव च कल्पेन सुमुख-सुरसं-कुठेरक-काण्डीर-कालमालक-पर्णासक-क्षवक-फणिज्झक-गृञ्जन-कासमर्द-भृङ्गराजानां पोटेक्षुवालिका-कालङ्कतक-दण्डैरकाणां चान्यतमस्य कषायेण कारयेत् ॥ २५ ॥**

फलपिप्पलीखरसेनेत्यादिना शष्कुल्यपूपयोः पृथगेको योगः। एतेनैव च कल्पेनेत्यादिना सुमुखादिपञ्चदशद्रव्यकषायेण पृथक् शष्कुल्यपूपयोः करणात् पञ्चदश योगा भवन्ति। एवं मिलित्वा शष्कुलीपूपयोः पृथक् षोडशयोगा भवन्ति। पोटा इक्षुगन्धा; दण्डैरका गुन्द्राख्यगुल्मः, नलो वा ॥ २४ ॥ २५ ॥

**तथा बदरषाडव-राग-लेह-मोदकोत्कारिका-तर्पण-पानक-मांसरस-यूप-मद्यानां मदनफलान्यन्यतमेनोपसृज्य यथादोषरोगभक्ति दद्यात्; तैः साधु वमतीति ॥ २६ ॥**

तथा बदरषाडवेत्यादिना दश योगाः। बदरकृतः षाडवो बदरषाडवः ॥ २६ ॥

**मदनः करहाटश्च राठः पिण्डीतकः फलम्।**
**श्वसनश्चेति पर्यायैरुच्यते तस्य कल्पना ॥ २७ ॥**

मदनस्य व्यवहारार्थं पर्यायानाह—मदनः करहाटश्चेत्यादि। तस्य कल्पनेति य एवंभूतैः पर्यायैर्व्याख्यातस्तस्येयं कल्पना। अस्य च पर्यायाभिधानं भूरिप्रयोगेषु विहितत्वेनाभ्यर्हितत्वाज्ज्ञेयम्। एवमन्यत्रापि पर्यायाभिधाने प्रयोजनं वर्णनीयम् ॥ २७ ॥

**तत्र श्लोकाः—**

**नव योगाः कषायेषु, मात्रास्वष्टौ, पयोघृते।**
**पञ्च, फाणितचूर्णे द्वौ ज्ञेये, वर्तिक्रियासु षट् ॥२८॥**
**विंशतिर्विंशतिर्लेहमोदकोत्कारिकासु च।**
**शष्कुलीपूपयोश्चोक्ता योगाः षोडश षोडश ॥२९॥**

१ "यूपमद्यानि मदनफलफाणितेनोपसंसृज्य' इति पा०। २ 'वर्तिष्वष्टौ' इति पा०।

**दशान्ये षाडवाद्येषु त्रयस्त्रिंशदिदं शतम्।**
**योगानां विधिवद्दिष्टं फलकल्पे महर्षिणा ॥ ३० ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने मदनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥**

मदनफलयोगानां नवादिसंख्योत्कर्षनिरासार्थं सुखस्मरणार्थं च तान् संग्रहेणाह—नव योगा इत्यादि। अस्य चार्थो यथास्थानं व्याहृतः ॥ २८-३० ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कल्पस्थाने मदनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

**अथातो जीमूतककल्पं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

मदनकल्पानन्तरमनपायित्वेनेक्ष्वाक्वादिद्रव्येभ्यः प्राधान्याज्जीमूतकस्य जीमूतकल्पोऽभिधीयते। एवं यथायथैषामनपायित्वप्रकर्षः, तथा तथा पूर्वनिवेशनं ज्ञेयम्। तेनापरवमनकल्पानामप्यध्यायसंबन्धोऽत्रैवोक्तो ज्ञेयः। मदनफलस्य स्नेहस्वेदादिपूर्वकत्ववदिहापि क्रमोऽतिदेशादुन्नेतव्यः ॥ १ ॥ २ ॥

**कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु।**
**गरागरी च वेणी च तथा स्याद्देवताडकः ॥ ३ ॥**

फलपुष्पाश्रयमिति वचनेन जीमूतस्य पत्रनालादिषु वमनप्रयोगं निषेधयति। गरागरी चेत्यादि पर्यायकथनम्। जीमूतः पीतघोषकः ॥ ३ ॥

**जीमूतकं त्रिदोषघ्नं यथास्वौषधकल्पितम्।**
**प्रयोक्तव्यं ज्वरश्वासहिक्काद्येष्वामयेषु च ॥ ४ ॥**

त्रिदोषघ्नमिति यथास्वं वातहरादिद्रव्ययुक्तं, तथा वातादिहरद्रव्यकल्पितं च सत् त्रिदोषघ्नं भवति। हिक्काद्येष्विति आद्यशब्देन कासादीनामुरोगतदोषजन्यानां ग्रहणम् ॥ ४ ॥

**यथोक्तगुणयुक्तानां देशजानां यथाविधि।**
**पयः पुष्पेऽस्य, निर्वृत्ते फले पेया पयस्कृता ॥ ५ ॥**
**लोमशे क्षीरसंतानं, दध्युत्तरमलोमशे।**
**शृते पयसि दध्यम्लं जातं हरितपाण्डुके ॥ ६ ॥**
**जीर्णानां च सुशुष्काणां न्यस्तानां भाजने शुचौ।**
**चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥ ७ ॥**

यथोक्तयुक्तगुणयुक्तानामिति कालजत्व-संपूर्णरसत्वादिगुणयुक्तानि मदनफलोक्तगुणद्वाराऽनुसर्तव्यानि। देशजानामिति मदनकल्पोक्तप्रशस्तभूमिजातानाम्। यथाविधीति मदनकल्पोक्त-

१ 'पेयादिकल्पितं च' इति पा०। २ 'पयःपुष्पेषु निर्वृत्ते' इति पा०। ३ 'जाते' इति पा०।

विधानगृहीतानाम् । पयः पुष्पे इत्येको योगः । निर्वृत्ते इत्यादिको द्वितीयो योगः । निर्वृत्ते इति उत्पन्नमात्रे फले, तत्र फलैः क्षीरं साधयित्वा तेन क्षीरेण पेया साधनीया । रोमशे इत्यादि तृतीयः । रोमशे इति उपगतरोम्णि फले, अत्रापि रोमशफलसाधितक्षीरात् सन्तानिका ज्ञेया । दध्युत्तरमित्यादिकश्चतुर्थो योगः, अत्राप्युपगतरोमावस्थफलसाधितक्षीरसंभूतदधिसरो ज्ञेयः । शृते पयसीत्यादिकः पञ्चमः । दध्यम्लमिति अम्लावस्थं दधि जातम् । हरितपाण्डुके इति हरितपाण्डवस्थाप्राप्ते जीमूतकफले । जीर्णानामित्यादिकः षष्ठः क्षीरयोगः । एते च योगाः क्षीरसंबन्धेन अविधीयमानक्षीराकारा अपि क्षीरप्रयोगत्वेनैव संग्रहे 'षट् क्षीरे' इत्यनेन संग्रहीतव्याः ॥ ५-७ ॥

आसुत्य च सुरामण्डे मृदित्वा प्रस्रुतं पिबेत् ।
कफजेऽरोचके कासे पाण्डुरोगे सयक्ष्मणि ॥ ८ ॥
द्वे चापोथ्याथवा त्रीणि गुडूच्या[१] मधुकस्य वा ।
कोविदारादिकानां वा निम्बस्य कुटजस्य वा ॥ ९ ॥
कषायेष्वासुतं पूत्वा तेनैव विधिना पिबेत् ।
अथवाऽऽरग्वधादीनां सप्तानां पूर्ववत् पिबेत् ॥ १० ॥
एकैकस्य[२] कषायेण पित्तश्लेष्मज्वरार्दितः ।

आसुत्येत्यादिना मदिरायोग एक उच्यते । आसुत्येति निशापर्युषितं कृत्वा । अत्र योगे पक्वजीमूतकफलमेवाधिकृतं; तथा, उत्तरयोगेष्वपि पक्वमेव फलमधिकृतं ज्ञेयं, "फलं पर्यागतं ग्राह्यं" इत्यौत्सर्गिकवचनात् । द्वे चेत्यादिना द्वादशकषायभेदाद् द्वादशयोगा उच्यन्ते । तेनैव विधिनेति मदनकल्पोक्तेन साधनविधिना । अथवेत्यादौ आरग्वधादिसप्तद्रव्यकषायभेदात् सप्तयोगा भवन्ति । आरग्वधादयः आरग्वध-वृक्षक-स्वादुकण्टक-पाठा-पाटलि-शार्ङ्गेष्टा-मूर्वाः (क. अ. १) पूर्वाध्यायोक्ताः ॥ ८-१० ॥—

मात्राः स्युः फलवच्चाष्टौ कोलमात्रास्तु ता मताः ११

मात्राः स्युरित्यादिनाऽष्टौ मात्रायोगानाह । फलवदिति मदनफले यथा अष्टौ मात्रायोगा उक्तास्तथेहापि कर्तव्याः, विशेषतस्तु एताः कोलमात्राः कर्तव्याः, न तु फलवद्धरीतक्यादिप्रमाणाः कर्तव्या इत्यर्थः ॥ ११ ॥

जीवकर्षभकेक्षूणां शतावर्या रसेन वा ।
पित्तश्लेष्मज्वरे दद्याद्वातपित्तज्वरेऽथवा ॥ १२ ॥

जीवकेत्यादिना चतुरो योगाः पानसाधनकषायभेदात् ॥ १२ ॥

तथा जीमूतकक्षीरात् समुत्पन्नं पचेद्घृतम् ।
फलादीनां कषायेण श्रेष्ठं तद्वमनं मतम् ॥ १३ ॥

तथेत्यादिना घृतयोगमेकमाह ॥ १३ ॥

१ 'गुडूच्यामलकस्य वा' इति पा० । २ 'एकैकशः' इति पा० । ३ 'मर्त्यः' इति पा० ।



तत्र श्लोकौ—
षट् क्षीरे मदिरामण्डे एको द्वादश चापरे ।
सप्त चारग्वधादीनां कषायेऽष्टौ च वर्तिषु ॥ १४ ॥
जीवकादिषु चत्वारो घृतं चैकं प्रकीर्तितम् ।
कल्पे जीमूतकानां च योगास्त्रिंशन्नवाधिकाः ॥ १५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने जीमूतककल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

षट् क्षीरे इत्यादिना संग्रहार्थो व्याकृत एव यथास्थानम् ॥ १४ ॥ १५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कल्पस्थाने जीमूतककल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथात इक्ष्वाकुकल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥
सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते ।

उक्ताध्यायसंबन्धादिक्ष्वाकुकल्पोऽभिधीयते । येषां प्रशस्यते इक्ष्वाकुकल्पस्तान् वक्ष्यामीति योज्यम् ॥ १ ॥ २ ॥—

लम्बाऽथ[३] कटुकालाबूस्तुम्बी पिण्डफला तथा ॥ ३ ॥
इक्ष्वाकुः फलिनी चैव प्रोच्यते तस्य कल्पना ।

लम्बेत्यादि पर्यायकथनम् ॥ ३ ॥—

कासश्वासविषच्छर्दिज्वरार्ते कफकर्षिते ॥ ४ ॥
प्रताम्यति नरे चैव वमनार्थं तदिष्यते ।

तदिष्यते इति इक्ष्वाकुकल्पनमिष्यते ॥ ४ ॥—

अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमितम् ॥ ५ ॥
क्षीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे ।
पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा ॥ ६ ॥
योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ।
फलस्वरसभागं च त्रिगुणक्षीरसाधितम् ॥ ७ ॥
उरःस्थिते कफे दद्यात् स्वरभेदे च पीनसे ।
जीर्णे मध्योद्धृते[४] क्षीरं प्रक्षिपेत्तद्यदा दधि ॥ ८ ॥
जातं स्यात् सकफे कासे श्वासे वम्यां च तत् पिबेत् ।
अजाक्षीरेण बीजानि भावयेत् पाययेत च[५] ॥ ९ ॥
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ।
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ॥ १० ॥
तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ।

१ 'मदिरायोगे' इति पा० । २ 'षे' इति 'ते' इति च पा० । ३ 'लम्बा पिण्डफला तुम्बी कटुकालाबुकी च सा' इति पा० । ४ 'जीर्णे मध्योद्धृतं क्षीरे' इति पा० । ५ 'भावितानि प्रयोजयेत्' इति पा० ।

अपुष्पस्येत्यादिना एकः क्षीरयोगः। अपुष्पस्येति अनुत्पन्नपुष्पस्य। मुष्टिं प्रादेशसंमितमिति प्रदेशिन्या मूलपर्यन्तकृतमुष्टिपरिमाणम्; एवं च नात्र मुष्टिशब्दः पलवचनः। क्षीरप्रस्थे शृतमिति वचनात् क्षीरप्रस्थे यथोक्तमानमिक्ष्वाकुमावाप्य चतुर्गुणं पानीयं दत्त्वा क्षीरं साधनीयम्। पुष्पादिष्वित्यादिना चतुरः क्षीरयोगानाह। जीमूतके यथा "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता। रोमशे क्षीरसंतानं दध्युत्तरमरोमशे" (क. अ. २) इत्यनेनोक्तं, तथेहापि योगचतुष्टयं करणीयम्। हरितेत्यादिना सुरायोगमाह। हरितपाण्डूनामिक्ष्वाकुफलानां सुरामण्डे जीमूतकवद्योगः कर्तव्यः; जीमूतकविधानातिदेशेन "आसुत्य च सुरामण्डे मृदित्वा प्रस्रुतं पिबेत्" (क. अ. २) इति ग्रन्थोक्तविधानमिहापि भवति। फलस्वरसेत्यादिना षष्ठः क्षीरयोगोऽभिधीयते। त्रिगुणक्षीरसाधितमिति त्रिगुणेन क्षीरेण साधितं; तच्च चतुर्गुणेन तोयेन साधनीयम्। फलशब्देनात्रेक्ष्वाकुफलमुच्यते। जीर्णे इत्यादिना सप्तमः क्षीरयोगः। मध्योद्धृते इति उद्धृतमध्ये। अजाक्षीरेणेत्यादिनाऽष्टमः क्षीरयोगः। तेन तक्रमित्यादिना तक्रयोगः। तेनेति तुम्बीफलमध्येन ॥ ५-१० ॥—

**तुम्ब्या फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ॥ ११ ॥**
**छर्दयेन्माल्यमाघ्राय गन्धसंपत्सुखोचितः।**

तुम्ब्या इत्यादिना घ्रेययोगमाह। गन्धसंपत्सुखोचित इति गन्धसंपत् सुगन्धवत्त्वं, तया गन्धसंपदा सुखमुचितमभ्यस्तं येन सः; अवचूर्णितेक्ष्वाकुफलरसपुष्पं माल्यमाघ्रायैव वमत्यनभ्यस्तदुर्गन्ध इति भावः ॥ ११ ॥—

**भक्षयेत् फलमध्यं वा गुडेन पललेन च ॥ १२ ॥**
**इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्ववद्घृतम्।**

भक्षयेदित्यादिना वमनयोगमेकमाह। फलमध्यम् इक्ष्वाकुफलमध्यम्। इक्ष्वाकुफलकल्कसाधितं तैलमिक्ष्वाकुफलतैलम्; अयमेक एव तैलयोगः। पूर्ववदिति जीमूतकवत्, तेन "तथा जीमूतकक्षीरात्" (क. अ. २) इत्यादिनोक्तविधानेन जीमूतकस्थाने इक्ष्वाकुफलं दत्त्वेह घृतं साधनीयम् ॥ १२ ॥—

**पञ्चाशद्दशवृद्धानि फलादीनां यथोत्तरम् ॥ १३ ॥**
**पिबेद्विमृद्य बीजानि कषायेष्वाशतं पृथक्।**

पञ्चाशदित्यादिना षड् वर्धमानकयोगानाह। पञ्चाशदारभ्य दशकेन वृद्धैरिक्ष्वाकुबीजैः शतं पूरणीयम्। तेन षड्योगा भवन्ति। तानि च यथासंख्यं मदनफलादीनां षण्णामन्यतमकषायेष्वासुत्य विमृदितानि पातव्यानि। अन्ये तु दशबीजादारभ्य पञ्चाशद्बीजपर्यन्तं दोषाद्यपेक्षया पातव्यं; तत्र मदनादिकषायभेदादेव योगभेद इत्याहुः ॥ १३ ॥—

**यष्ट्याह्वकोविदाराद्यैर्मुष्टिमन्तर्नखं पिबेत् ॥ १४ ॥**

यष्ट्याह्वेत्यादिना नवकषाययोगानाह। तत्र यष्ट्याह्वमेकं, कोविदारादयो मदनकल्पोक्ता अष्टौ ॥ १४ ॥

**कषायैः कोविदाराद्यैर्मात्राश्चै फलवत् स्मृताः।**

कषायैरित्यादिना मदनफलसदृशविधा अष्टौ मात्रालक्षिताः प्रयोगा उच्यन्ते ॥—

**बिल्वमूलकषायेण तुम्बीबीजाञ्जलिं पचेत् ॥ १५ ॥**
**पूतस्यास्य त्रयो भागाश्चतुर्थः फाणितस्य तु।**
**सघृतो बीजभागश्च पिप्पल्यर्धांशिकांस्तथा ॥ १६ ॥**
**महाजालिनिजीमूतकृतवेधनवत्सकान्।**
**तं लेहं साधयेद्दर्व्या घट्टयन्मृदुनाऽग्निना ॥ १७ ॥**
**यावत् स्यात्तन्तुमत्तोये पतितं तु न शीर्यते।**
**तं लिहन्मात्रया लेहं प्रमथ्यां च पिबेदनु ॥ १८ ॥**
**कल्प एषोऽग्निमन्थादौ चतुष्के पृथगुच्यते।**

बिल्वेत्यादिना एको लेहः, तथा 'कल्प' इत्यादिना चत्वारो लेहा अन्ते द्रष्टव्याः, एवं पञ्च लेहाः। अञ्जलिः पलचतुष्टयम्। अत्र च "ततश्च कुडवं यावत्तोयमष्टगुणं भवेत्" इति वचनाद्बिल्वमूलकषायस्याष्टावञ्जलयो देयाः, ततश्चतुर्भागावशेषेण कुडवद्वयम्। फाणितम् अर्धशृत इक्षुरसः। 'चतुर्थः फाणितस्य च' इत्यस्य स्थाने 'त्र्यस्त्रिकटुकस्य च' इति केचित् पठन्ति। सघृत इति घृतस्यैको भागः। अर्धांशिकानिति एकभागार्धमानान् प्रत्येकं महाजालिन्यादीन्। महाजालिनी पीतकोषातकी, कृतवेधनः घोषकभेदः 'ज्योत्स्निका' इति ख्यातः। यावत् स्यात्तन्तुमदित्यादिना लेहपाकलक्षणमाह; एतच्च लक्षणं लेहान्तरेष्वपि पाचनीयेषु ज्ञेयम्। न शीर्यते न विस्तीर्यते। प्रमथ्यां च पिबेदन्विति अतीसारचिकित्सिते "पिप्पली नागरं धान्यं" (चि. अ. १९) इत्यादिनोक्तप्रमथ्यानां मध्येऽन्यतमप्रमथ्याकृतं कषायं पिबेदित्यर्थः। 'प्रमथ्यां च' इत्यस्य स्थाने केचित् 'मन्थं चापि' इति पठन्ति। अग्निमन्थादाविति प्रत्येकमग्निमन्थस्योनाक-पाटला-गम्भारीमूलचतुष्कं पञ्चमूलकथनप्रस्तावे रसायने कथितम् ॥ १५-१८ ॥—

**शक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः ॥ १९ ॥**
**कफजेऽथ ज्वरे कासे कण्ठरोगेष्वरोचके।**

शक्तुभिरित्यादिनैको मन्थयोगः ॥ १९ ॥—

**गुल्मे मेहे प्रसेके च कल्कं मांसरसैः पिबेत्।**
**नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ २० ॥**

गुल्मे ज्वर इत्यादिना रसैकयोगमाह। कल्कम् इक्ष्वाकुबीजकल्कम् ॥ २० ॥

**तत्र श्लोकाः—**

**पयस्यष्टौ सुरामण्ड-मस्तु-तक्रेषु च त्रयः।**
**घ्रेयं सपललं तैलं वर्धमानाः फलेषु षट् ॥ २१ ॥**

---

१ 'अवचूर्णितमिक्ष्वाकुफलरसभावितं' इति पा०। २ 'तेन मदनफलादीनां षण्णां कषाये आसुताः सन्तो विमृदिताः पातव्याः' इति पा०।

१ 'दर्तयः' इति पा०। २ 'भागास्त्रयस्त्रिकटुकस्य च' इति पा०। ३ 'पिप्पल्या ह्यर्धांशिकांस्तथा' इति पा०। ४ 'काले' इति पा०। ५ 'घ्रेयं' इति पा०।

घृतमेकं कषायेषु नवान्ये मधुकादिषु ।
अष्टौ वर्तिक्रिया लेहाः पञ्च मन्थो रसस्तथा ॥ २२ ॥
योगा इक्ष्वाकुकल्पे ते चत्वारिंशच्च पञ्च च ।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया ॥२३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने इक्ष्वाकुकल्पो नाम तृतीयोऽध्यायः ॥ ३ ॥

पयस्यष्टावित्यादिसंग्रहार्थो व्यक्त एव । अत्र फलेष्विति मदनफलादिषु । घृतं यद्यपि वर्धमानपूर्वपठितं, तथाऽपि छन्दोनुरोधादिह पश्चात् पठितम् ॥ २१–२३ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने इक्ष्वाकुकल्पो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथातो धामार्गवकल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

उक्तसंबन्धाद्धामार्गवकल्पोऽभिधीयते ॥ १ ॥ २ ॥

कर्कोटकी कोठफला महाजालिनिरेव च ।
धामार्गवस्य पर्याया राजकोशातकी तथा ॥ ३ ॥

तत्र कर्कोटकीत्यादिना पर्यायकथनम् । धामार्गवः पीतघोषकः ॥ ३ ॥

गरे गुल्मोदरे कासे वाते श्लेष्माशयस्थिते ।
कफे च कण्ठवक्त्रस्थे कफसंचयजेषु च ॥ ४ ॥
रोगेष्वेषु प्रयोज्यं स्यात् स्थिराश्च गुरवश्च ये ।

स्थिराश्च गुरवश्च ये इत्यत्र 'गदाः' इति शेषः ॥ ४ ॥—

फलं पुष्पं प्रवालं च विधिना तस्य संहरेत् ॥ ५ ॥

विधिनेति भेषजग्रहणोक्तेन विधिना ॥ ५ ॥

प्रवालस्वरसं शुष्कं कृत्वा चै गुलिकाः पृथक् ।
कोविदारादिभिः पेयाः कषायैर्मधुकस्य च ॥ ६ ॥

प्रवालेत्यादिना नवयोगानाह । प्रवालस्य स्वरसः प्रवालस्वरसः । अत्र कोविदारादिकषायैर्गुडिकाकरणं पानं च ज्ञेयम् ॥६॥

पुष्पादिषु पयोयोगाश्चत्वारः पञ्चमी सुरा ।
पूर्ववत्

पुष्पादिष्वित्यादिना जीमूतककल्पविधानेन निर्दिष्टाश्चत्वारः क्षीरप्रयोगाः, पञ्चमश्च सुरायोगोऽतिदिश्यते; ते च 'पयः पुष्पेऽस्य' (क. अ. २) इत्यादिनोक्ता ज्ञेयाः । पूर्ववदिति पूर्वेण संबध्यते ॥—

जीर्णशुष्काणामतः कल्पः प्रवक्ष्यते ॥ ७ ॥
मधुकस्य कषायेण बीजकण्ठोद्धृतं फलम् ।
सगुडं व्युषितं रात्रिं कोविदारादिभिस्तथा ॥ ८ ॥
दद्याद्गुल्मोदरार्तेभ्यो ये चाप्यन्ये कफामयाः ।

जीर्णशुष्काणामित्यादिना नवकषाययोगानाह, तथा 'जात्याः' इत्यादिना एकादश कषाययोगान् वक्ष्यति; एवं विंशतिः कषाययोगाः संग्रहे वक्ष्यमाणाः पूर्यन्ते । बीजकण्ठोद्धृतं फलमिति यत्र बीजानि बद्धानि सन्ति स बीजकण्ठ उद्धृतो यस्मिन् तद्बीजकण्ठोद्धृतं फलम् । अत्र च पूर्वनिपातानियम आहिताग्न्यादिपूर्वनिपातवद्बोध्यः । एवंभूतं च फलं कषायेण सगुडेन पूरितं रात्रिव्युषितं कर्तव्यम् । उक्तं हि जतूकर्णे— धामार्गवकल्पे—"धामार्गवफलेषूद्धृतबीजमध्येषु सगुडोषिताः कोविदारादिकषाया नव" इति । गुल्मिनां चावस्थायां वमनं हितमेव, तेनेह गुल्मविषयतया वमनोपदर्शनं न विरोधि ॥ ७ ॥ ८ ॥—

दद्यादन्नेन संयुक्तं छर्दिहृद्रोगशान्तये ॥ ९ ॥

दद्यादित्यादिना एकोऽन्नयोग उच्यते । अन्ने च धामार्गवस्य संयोगेनैको योगः ॥ ९ ॥

चूर्णैर्वाऽप्युत्पलादीनि भावितानि प्रभूतशः ।
रसक्षीरयवाग्वादितृप्तो घ्रात्वा वमेत् सुखम् ॥१०॥

चूर्णैरित्यादिना घ्रेये एकयोगमाह । उत्पलादीनां चात्र भेदोऽविवक्षितः । उत्पलस्यैक एव घ्रेययोगः । अत्र आदिशब्देन सौगन्धिकपद्मादीनां ग्रहणम् । प्रभूतशश्चूर्णैर्भावितानीति ज्ञेयम् ॥ १० ॥

चूर्णीकृतस्य वर्तिं वा कृत्वा बदरसंमिताम् ।
विनीयाञ्जलिमात्रे तु पिबेद्गोऽश्वशकृद्रसे ॥ ११ ॥
पृषतर्ष्यकुरङ्गाह्वगजोष्ट्राश्वतराविके ।
श्वदंष्ट्रखरखड्गानां चैवं पेया शकृद्रसे ॥ १२ ॥

चूर्णीकृतस्येत्यादिना गोऽश्वशकृद्रसे इति द्वौ योगौ । तथा पृषतेत्यादिदशयोगैः समं शकृद्रसयोगसंबन्धाद्द्वादश शकृद्योगा उच्यन्ते । पृषतः विन्दुचित्रितहरिणः; ऋष्यः नीलाण्डः, कुरङ्गः चञ्चलगतिः, अश्वतरः वेगसरः, श्वदंष्ट्रः चतुर्दंष्ट्रो मृगविशेषः ॥ ११ ॥ १२ ॥

जीवकर्षभकौ वीरामात्मगुप्तां शतावरीम् ।
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम् ॥१३॥
एकैकशोऽभिसंचूर्ण्य सह धामार्गवेण ते ।
शर्करामधुसंयुक्ता लेहा हृद्दाहकासिनाम् ॥ १४ ॥
सुखोदकानुपानाः स्युः पित्तोष्मसहिते कफे ।

जीवकेत्यादिना दश लेहानाह । मधूलिका 'मर्कटहस्त'

---

१ 'मन्थे रसे तथा' इति पा० । २ 'इक्ष्वाकुकल्पेऽस्मिन्' इति पा० । ३ 'कट्फला' इति पा० । ४ 'रोगेष्वेतत्' इति पा० । ५ 'कृताश्च' इति पा० । ६ 'प्रयोगाश्च' इति, 'यथायोगाः' इति च पा० ।

१ 'गोशकृतो रसे' इति पा० । २ 'पृषतर्ष्यकुरङ्गाश्वतरगोकर्णरासभे । हरिणाजश्वदंष्ट्राविसंभवे च शकृद्रसे' इति पा० ।

इति ख्यातां। अत्र लेहेषु धामार्गवादितरद्रव्यचूर्णस्य समानत्वं; मधुशर्करयोश्च तावती मात्रा यावत्या लेहत्वापत्तिर्भवति। पित्तोष्मसहिते कफे इति उद्यतोष्मगुणेन पित्तेन युक्ते कफे; अन्ये तु पित्तोष्मशब्देन पित्तोष्मणा कृतं ज्वरमाहुः ॥ १३ ॥ १४ ॥—

**धान्यतुम्बुरुयूषेण कल्कः सर्वविषापहः ॥ १५ ॥**

धान्येत्यादिनैकं कल्कयोगमाह। धान्यतुम्बरुक्वाथ एव धान्यतुम्बुरुयूषः। उक्तं हि जतूकर्णे—"धान्यतुम्बुरुरसेन कल्को विषनुत्" इति ॥ १५ ॥

**जात्याः सौमनसायिन्या रजन्याश्चोरकस्य च।**
**वृश्चीरस्य महाक्षुद्रसहाहैमवतस्य च ॥ १६ ॥**
**बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा पृथक्[१]।**
**पक्वं धामार्गवं द्वे वा कषाये परिमृद्य तु ॥ १७ ॥**
**पूतं मनोविकारेषु पिबेद्वमनमुत्तमम्।**

जात्या इत्यादिना एकादशकषाययोगानाह। जाती सौमनस्यायिनी, अन्ये यूथिकां वदन्ति। वृश्चीरः श्वेतपुनर्नवा। महासहा क्षुद्रसहा मुद्गमाषपर्ण्यौ। हैमवती वचा ॥ १६ ॥ १७ ॥—

**तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥१८॥**

तच्छृतेत्यादिनैकं घृतयोगमाह ॥ १८ ॥

**तत्र श्लोकौ—**

**पल्लवे नव चत्वारः क्षीर एकः सुरासवे।**
**कषाये विंशतिः कल्के दश द्वौ च शकृद्रसे ॥१९॥**
**अन्न एकस्तथा प्रेये दश लेहास्तथा घृतम्।**
**कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा ॥२०॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने धामार्गवकल्पो नाम चतुर्थोऽध्यायः ॥ ४ ॥**

पल्लवे नवेत्यादिसंग्रहे व्युत्क्रमसंग्रहाभिधानं छन्दोऽनुरोधात्। दश द्वौ चेति द्वादशेत्यर्थः ॥ १९ ॥ २० ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने धामार्गवकल्पो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

**अथातो वत्सककल्पं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

यथोक्तसंबन्धाद्वत्सककल्पाभिधानम् ॥ १ ॥ २ ॥

**अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा।**
**कल्पं चास्य प्रवक्ष्यामि विस्तरेण यथातथम् ॥ ३ ॥**
**वत्सकः कुटजः शक्रो वृक्षको गिरिमल्लिका।**
**बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥ ४ ॥**
**बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत्।**
**श्यामा चारुणपुष्पा स्त्री फलवृन्तैस्तथाऽणुभिः ॥५॥**
**रक्तपित्तकफघ्नस्तु सुकुमारेष्वनत्ययः।**
**हृद्रोगज्वरवातासृग्वीसर्पादिषु शस्यते ॥ ६ ॥**

वत्सकनामानि व्यवहारार्थं स्त्रीपुरुषभेदं चाह—अथेत्यादि। अत्र वत्सकस्त्रीपुरुषभेदेन यद्यपि गुणभेदः प्रयोगभेदो वा न प्रतिपादितः, तथाऽपि स्त्रीरूपवत्सकेऽपुष्पफलत्वादिविशिष्टलक्षणयुक्तेऽप्यविशेषेणोभाभ्यामेवामयनिवृत्तिः स्यादित्येतदर्थमुभयोरपि समानगुणता ज्ञातव्या ॥ ३–६ ॥

**काले फलानि संगृह्य तयोः शुष्काणि निक्षिपेत्[३]।**
**तेषामन्तर्नखं मुष्टिं जर्जरीकृत्य भावयेत्[४] ॥ ७ ॥**
**मधुकस्य कषायेण कोविदारादिभिस्तथा।**
**निशि स्थितं विमृद्यैतल्लवणक्षौद्रसंयुतम् ॥ ८ ॥**
**पिबेत्तद्वमनं श्रेष्ठं पित्तश्लेष्मनिबर्हणम्।**

काले इति उचिते काले। शुष्काणीति पक्वशुष्काणि। तेषामन्तर्नखमित्यादिना कषायैर्नवयोगानाह। क्षौद्रसैन्धवयोगो यद्यपि सर्ववमनेष्वेव सामान्येन विहितः, तथाऽपीह 'लवणक्षौद्रसंयुतम्' इति वचनादुत्कर्षो लवणसैन्धवयोरभिधीयते ॥ ७ ॥ ८ ॥—

**अष्टाहं पयसाऽऽर्केण तेषां चूर्णानि भावयेत् ॥ ९ ॥**
**जीवकस्य कषायेण ततः पाणितलं पिबेत्।**
**फलजीमूतकेक्ष्वाकुजीवन्तीनां पृथक् तथा ॥ १० ॥**
**सर्षपाणां मधूकानां लवणस्याथवाऽम्बुना।**

अष्टाहमित्यादिना पञ्च चूर्णयोगानाह ॥ ९ ॥ १० ॥—

**कृशरेणाथवा युक्तं विदध्याद्वमनं भिषक् ॥ ११ ॥**

कृशरेणेत्यादिना कृशरयोग उच्यते। अत्र च इन्द्रयवचूर्णमधिकृतत्वादेवोच्यते ॥ ११ ॥

**तत्र श्लोकः—**

**कषायैर्नव चूर्णैश्च पञ्चोक्ताः सलिलैस्त्रयः।**
**एकश्च कृशरायां स्याद्योगास्तेऽष्टादश स्मृताः ॥१२॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने वत्सककल्पो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

कषायैरित्यादिसंग्रहश्लोको व्याख्यातार्थ एव ॥ १२ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने वत्सककल्पो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

१ 'पित्तकृतं' इति पा०। २ 'पुनर्नवाकासमर्दबिम्बीहैमवतस्य च। महासहाक्षुद्रसहावृश्चीराणां पृथक् पृथक्' इति पा०। ३ 'निबोधेमं' इति पा०।

१ 'सितैः पुष्पैः' इति पा०। २ 'फलपुष्पैः' इति पा०। ३ 'संक्षिपेत्' इति पा०। ४ 'तेपयेत्' इति, 'तेमयेत्' इति च पा०। ५ 'जीमूतककषायेण' इति पा०। ६ 'कृशराऽष्टादशयोगा वत्सकस्य निदर्शिताः' इति पा०।

## षष्ठोऽध्यायः ।

**अथातः कृतवेधनकल्पं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

वमनकल्पपारिशेष्यात् कृतवेधनकल्पोऽभिधीयते ॥ १ ॥ २ ॥

**कृतवेधननामानि कल्पं चास्य निबोधत ।**
**क्ष्वेडः कोशातकी चोक्तं मृदङ्गफलमेव च ॥ ३ ॥**
**अत्यर्थकटुतीक्ष्णोष्णं गाढेष्विष्टं गदेषु च ।**
**कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४ ॥**

गाढेष्विति अत्यर्थंगाढेषु कुष्ठादिषु ॥ ३ ॥ ४ ॥

**क्षीरादि कुसुमादीनां[1] सुरा चैतेषु पूर्ववत् ।**

क्षीरादीत्यादिना क्षीरयोगा उच्यन्ते । क्षीरयोगचतुष्टयं मदिरायोगं च जीमूतककल्पविधानातिदेशेनाह । क्षीरादिशब्देन क्षीरकृतपेया-क्षीरसन्तानिका-दध्युत्तराणां ग्रहणम् । एते च संग्रहेऽक्षीररूपा अपि क्षीरविकारतया क्षीरशब्देनैव गृहीताः 'क्षीरे द्वौ द्वौ' इति वचनेन । कुसुमादीनामिति कृतवेधनस्य पुष्पादीनां "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता । लोमशे क्षीरसंतानं दध्युत्तरमलोमशे" ( क. अ. २ ) इति जीमूतकविधानोक्तानाम् । सुरा चैतेषु पूर्ववदिति यथा जीमूतककल्पविधानेन क्षीरादयः कर्तव्यास्तथा सुरा च कर्तव्या ॥—

**सुशुष्काणां तु जीर्णानामेकं[3] द्वे वा यथाबलम् ॥ ५ ॥**
**कषायैर्मधुकादीनां नवभिः फलवत् पिबेत् ।**
**क्काथयित्वा फलं[4] तस्य पूत्वा लेहं निधापयेत् ॥ ६ ॥**
**कृतवेधनकल्कांशं फलाद्यर्धांशसंयुतम्[5] ।**
**पृथक् चारग्वधादीनां त्रयोदशभिरासुतम् ॥ ७ ॥**

सुशुष्काणामित्यादिना नव कषाययोगानाह । फलवदिति मदनफलं यथा यष्टीमधुकादिभिः पीयते, तथैतदपि पातव्यमित्यर्थः । एके नवकषायप्रयोगेषु शेषविधिप्रत्यायकं लेहं पठन्ति—"क्काथयित्वा रसं तस्य पूत्वा लेहं निधापयेत्" इत्यादि, तच्च सङ्गतार्थम् । उक्तं च जतूकर्णे—"अत्र जीर्णबीजानां मदनफलवत् कषायैर्लेहा भवन्ति नव" इति । पृथगित्यादिना त्रयोदश कषाययोगानाह । एवं द्वाविंशतिः कषाययोगा भवन्ति । आरग्वधादयस्त्रयोदश मदनकल्पे "आरग्वधवृक्षक०" ( क. अ. १ ) इत्यादिना गुडूच्यन्तेनोक्ता ज्ञेयाः ॥ ५–७ ॥

**शाल्मलीमूलचूर्णानां[6] पिच्छाभिर्दशभिस्तथा ।**

शाल्मलीत्यादिना दश पिच्छायोगानाह । शाल्मलीमूलमादिः येषां ते शाल्मलीमूलाः शाल्मल्यादयो विमानपठिता दश शाल्मलीशाल्मलकभद्रपर्ण्येलापर्ण्युपोदिकोद्दालधन्वनराजादनोपचित्रागोप्यन्ताः (वि. अ. ८); एषां चूर्णानां पिच्छाभिर्युक्त्या कृतत्वेनैव दश योगा ज्ञेयाः । शाल्मलकः शाल्मलीभेदः, रोहितको वा; भद्रपर्णी गम्भारी; एलापर्णी नागबला, अहिंस्रेत्यन्ये; राजादनं क्षीरिका, उपचित्रा दन्ती, गोपी सारिवा ॥—

**वर्तिक्रियाः षट् फलवत्, फलादीनां घृतं तथा[1] ॥८॥**

वर्तिक्रियाः षट् फलवदिति "फलपिप्पलीचूर्णानि पूर्ववत्" (क. अ. १) इत्यादिना ग्रन्थेन या वर्तिक्रिया उक्ता मदनकल्पे, तद्वदिहापि कृतवेधनचूर्णानां षड्वर्तिक्रियाः कर्तव्याः । फलादीनां घृतं तथेत्यनेन कृतवेधनसाधितक्षीरादुत्थितं नवनीतं फलादिकषायेण साधनीयं मदनफलघृतवदित्यर्थः ॥ ८ ॥

**कोशातकानि पञ्चाशत् कोविदाररसे पचेत् ।**
**तं कषायं फलादीनां कल्कैर्लेहं पुनः पचेत् ॥ ९ ॥**
**क्ष्वेडस्य तत्र भागः स्याच्छेषाण्यर्धांशिकानि तु ।**
**कषायैः कोविदाराद्यैरेवं तत् कल्पयेत् पृथक्[2] ॥१०॥**

कोशातकानीत्यादि । अत्रैव क्काथपादिके कल्के कर्तव्ये क्ष्वेडस्य पूर्णो भागो देयः, फलादीनां च प्रत्येकं क्ष्वेडादर्धभागिकत्वम् ॥ ९॥ १० ॥

**कषायेषु फलादीनामानूपं पिशितं पृथक् ।**
**कोशातक्या समं पक्त्वा रसं सलवणं पिबेत् ॥११॥**
**फलादिपिप्पलीतुल्यं तद्वत् क्ष्वेडरसं पिबेत् ।**

कषायेष्वित्यादिना सप्त मांसयोगानाह । सममिति कोशातकीतुल्यं मांसम् । अत्र पिबेदित्यन्तेन षण्मांसरसाः, फलादीत्यनेन चैकः । फलादिपिप्पलीतुल्यं तद्वदित्यनेन फलादिभिः समं मांसम् । तद्वदिति वचनात् कोशातक्याः कषायेण साधनीयम् ॥ ११ ॥—

**क्ष्वेडं कासी[3] पिबेत् सिद्धं मिश्रमिक्षुरसेन च ॥१२॥**

इक्षुरसयोगमेकमाह—क्ष्वेडमित्यादि । सिद्धमिति इक्षुरसेन मिश्रितं सत् साधितं पिबेदित्यर्थः । उक्तं हि जतूकर्णे—"क्ष्वेडमिक्षुरसे शृतम्" इति ॥ १२ ॥

तत्र श्लोकौ—

**क्षीरे द्वौ द्वौ सुरा चैका क्काथा द्वाविंशतिस्तथा ।**
**दश पिच्छा घृतं चैकं षट् च वर्तिक्रियाः शुभाः १३**
**लेहेऽष्टौ सप्त मांसे च योग इक्षुरसेऽपरः ।**
**कृतवेधनकल्पेऽस्मिन् षष्टियोगाः प्रकीर्तिताः ॥१४॥**

१ 'जाली' इति पा० । २ 'क्षीरादिकुसुमादीति' इति पा० । ३ 'बीजानामेकं' इति पा० । ४ 'रसं तं च कृत्वा लेहं' इति, 'रसं तस्य पक्त्वा लेहं' इति च पा० । ५ 'फलार्धार्धांशसंयुतम्' इति पा० । ६ 'शाल्मलीमूलवृन्तानां' इति पा० ।

१ 'वर्तयः फलवत् षट् स्युः' इति पा० । २ 'कोविदाराद्यैरेभिस्तं पृथक् पिबेत्' इति पा० । ३ कासीति कासवानित्यर्थः ।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने कृतवेधनकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥

क्षीरे द्वौ द्वावित्यादिसंग्रहः । द्वौ द्वाविति चत्वारः ॥ १३ ॥ १४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकायामायुर्वेददीपिकायां कल्पस्थाने कृतवेधनकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातः श्यामात्रिवृत्कल्पं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

वमनार्थकल्पनानन्तरं विरेचनकल्पेषु वक्तव्येषु त्रिवृताया विरेचनद्रव्येषु सुखविरेचनतया प्रधानत्वात् त्रिवृत्कल्प एवाभिधीयते । त्रिवृताभेद एव च श्यामा, तेन श्यामायास्त्रिवृतायाश्च कल्पः श्यामात्रिवृत्कल्पः । यद्यपि चारुणमूलैव त्रिवृदत्रोत्कृष्टा वक्तव्या, तथाऽप्यध्यायसंज्ञायां श्यामाया अग्रे पाठेनाशुदोषहन्तृतया श्यामायाः प्रकर्षं दर्शयति । ये चात्र योगा वक्तव्यास्तेऽरुणया वा श्यामया वा उभाभ्यां वा दोषशरीरादिबलाबलमवेक्ष्य कर्तव्याः ॥ १ ॥ २ ॥

विरेचने त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः[१] ।
तस्याः संज्ञा गुणाः कर्म भेदः कल्पश्च वक्ष्यते ॥३॥

विरेचने इत्यादौ त्रिवृन्मूलशब्देन श्याममूलाया अरुणमूलायाश्च सामान्येन मूलं गृह्यते ॥ ३ ॥

त्रिभण्डी त्रिवृता चैवं श्यामा कूटरणा तथा ।
सर्वानुभूतिः सुवहा शब्दैः[२] पर्यायवाचकैः ॥ ४ ॥

पर्यायत्वेन वाचकैः पर्यायवाचकैः ॥ ४ ॥

कषाया मधुरा रूक्षा विपाके कटुका च सा ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ ५ ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य[३][४] सर्वरोगहरा भवेत् ॥ ६ ॥

सेदानीमित्यादि । वातापहौषधयोगेन वातहन्तृत्वमविद्यमानं भवति, कफपित्तहन्तृत्वं विद्यमानमधिकं भवतीति ज्ञेयम् । कल्पवैशेष्यमिति कल्पनाविशेषम् । सर्वरोगहरेति व्यस्तसमस्तसर्वदोषारब्धरोगहरा ॥ ५ ॥ ६ ॥

मूलं तु द्विविधं तस्याः श्यामं चारुणमेव च ।
तयोर्मुख्यतरं[५] विद्धि मूलं यदरुणप्रभम् ॥ ७ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तच्छुभम्[६] ।
मोहयेदाशुकारित्वाच्छ्यामा क्षिण्वीत मूर्च्छयेत्[७] ॥८॥
तैक्ष्ण्यात् कर्षति हृत्कण्ठमाशु दोषं हरत्यपि ।
शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः ॥ ९ ॥

त्रिवृतयोर्भेदमाह—मूलं तु द्विविधमित्यादि । मुख्यतरमिति विरेचनक्रियायामेवाव्यापत्तिकरत्वाच्छ्रेष्ठतरम् । सुकुमाराः शिशवश्च यद्यप्यविरेचनीया उक्तास्तथाऽपि तेषां विधीयमानविरेचने हितमिति ज्ञेयम् । मोहयेदित्यादिना श्याममूलाया गुणकर्मणी ब्रूते । क्षिण्वीतेति धातुक्षयं कुर्यात् ॥ ७-९ ॥

गुणवत्यां तयोर्भूमौ जातं मूलं समुद्धरेत् ।
उपोष्य प्रयतः शुक्ले शुक्लवासाः समाहितः ॥ १० ॥
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
तद्विपाट्योद्धरेद्गर्भं[१] त्वचं शुष्कां निधापयेत् ॥ ११ ॥

यद्यपि मदनकल्प एव गुणवद्भूमिजातत्वादि सामान्येन भेषजानामुक्तमेव, तथाऽपि गम्भीरानुगतत्वादिविशेषस्य तत्रानुक्तस्नेहाभिधाने सति तत्प्रसंगात् तत्किंचिदुच्यते—गुणवत्यामित्यादि । शुक्ले इति शुक्लपक्षे । गम्भीरानुगमिति दूरप्रविष्टम् । उद्धरेद्गर्भमिति मूलस्यास्थि उद्धरेत् । निधापयेदिति यथोक्तभैषज्यस्थापनविधानेन स्थापयेत् ॥ १० ॥ ११ ॥

स्निग्धस्विन्नो विरेच्यस्तु पेयामात्रोषितः[२] सुखम् ।

पेयामात्रोषित इति पूर्वदिने पेयामात्राहारतया उषितः; यद्यपि चान्यत्र विरेचनपूर्वदिनेषु तथैवाहारो नियमितः—"स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम्" (सू.अ.१३) इत्यनेन, तथाऽपि त्रिवृद्विरेचनप्रयोगे पूर्वदिने विशेषविधानात् पेयादानं ज्ञेयम् । किंचेयमेव तद्वचनात् स्निग्धोष्णमांसरससाधिता च क्रियमाणा न पूर्वोक्तस्नेहवद्द्रवौष्णमांसरसौदनविरुद्धा भवति ॥—

अक्षमात्रं तयोः पिण्डं विनीयाम्लेन ना पिबेत् १२
गोऽव्यजामहिषीमूत्रसौवीरकतुषोदकैः ।
प्रसन्नया त्रिफलया शृतया च पृथक् पिबेत् ॥ १३ ॥

अक्षमात्रमित्यादिना नवभिरम्लादिभिर्द्रव्यैर्नवयोगानाह । तयोरिति श्यामात्रिवृदरुणत्रिवृतयोः । एतयोश्च मिलितयोः प्रत्येकं च प्रयोगा इति प्रागेव प्रतिपादितम् । अम्लेनेति काञ्जिकेन ॥ १२ ॥ १३ ॥

एकैकं सैन्धवादीनां द्वादशानां सनागरम् ।
त्रिवृद्विगुणसंयुक्तं[३] चूर्णमुष्णाम्बुना पिबेत् ॥ १४ ॥

एकैकमित्यादिना सैन्धवादिभिर्द्वादशयोगानाह । सैन्धवादयश्च द्वादश रोगभिषग्जितीये ( वि. अ. ८ ) लवणस्कन्धोक्ता ज्ञेयाः । सनागरमिति नागरसहितं सत् प्रत्येकं सैन्धवादीनां चूर्णं द्विगुणत्रिवृताचूर्णयुक्तं पातव्यम् ॥ १४ ॥

---

१ '०मैहर्षयः' इति पा० । २ 'श्यामा सुवहा कोटरा तथा । त्रिवृद् सर्वानुभूतिश्च' इति पा० । ३ 'सरला' इति पा० । ४ 'कल्पे वैशेष्यमासाद्य' इति पा० । ५ 'तयोः श्रेष्ठतरं' इति पा० । ६ 'तद्धितम्' इति पा० । ७ 'श्यामा कण्ठं क्षिणोत्यपि' इति पा० ।

१ 'तद्विपोथ्योद्धरेद्गर्भं' इति पा० । २ 'पेयामात्रोचितः' इति, 'पेयामात्राशितः' इति च पा० । ३ 'त्रिवृत्त्रिगुणसंयुक्तं' इति पा० ।

पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।
सरलः किलिमं हिङ्गु भार्गी तेजोवती तथा ॥ १५ ॥
मुस्तं हैमवती पथ्या चित्रको रजनी वचा ।
स्वर्णक्षीर्यजमोदा च शृङ्गवेरं च तैः पृथक् ॥ १६ ॥
एकैकार्धांशसंयुक्तं पिबेद्गोमूत्रसंयुतम् ।

पिप्पलीत्यादिना पिप्पल्यादिद्रव्यभेदेन मूत्रेऽष्टादशयोगानाह ॥ १५ ॥ १६ ॥—

मधुकार्धांशसंयुक्तं शर्कराम्बुयुतं पिबेत् ॥ १७ ॥

मधुकेत्यादिनैकः प्रयोगः । अयं च संग्रहोक्तयोः 'यष्ट्यां द्वौ' इत्यनयोरेकतरः ॥ १७ ॥

जीवकर्षभकौ मेदां श्रावणीं कर्कटाह्वयाम् ।
मुद्गमाषाख्यपर्ण्यौ च महतीं श्रावणीं तथा ॥ १८ ॥
काकोलीं क्षीरकाकोलीमिन्द्रां छिन्नरुहां तथा ।
क्षीरशुक्लां पयस्यां च यष्ट्याह्वं विधिना पिबेत् ॥१९॥
वातपित्तहितान्येतान्यन्यानि तु कफानिले ।

जीवकेत्यादिना चतुर्दशयोगान् तथा यष्ट्याह्वमित्येकं चाह । अयं च संग्रहोक्तयोः 'यष्ट्यां द्वौ' इति द्वयोरन्यतरः । क्षीरशुक्ला क्षीरविदारी । इन्द्रा कोकिलाक्षः । पयस्या अर्कपुष्पी ॥१८॥१९॥

क्षीरमांसेक्षुकाश्मर्यद्राक्षापीलुरसैः पृथक् ॥ २० ॥
सर्पिषा वा तयोश्चूर्णमभयार्धांशिकं पिबेत् ।

क्षीरेत्यादिना क्षीरादौ सप्त योगानाह । पीलु औत्तरपथिकं फलम् ॥ २० ॥—

लिह्याद्वा मधुसर्पिर्भ्यां संयुक्तं ससितोपलम् ॥२१॥
अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत् ।
चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥२२॥
सन्निपातज्वरस्तम्भदाहतृष्णार्दितो नरः ।
श्यामात्रिवृत्कषायेण कल्केन च सशर्करम् ॥ २३ ॥
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः ।
सक्षौद्रां[1] शर्करां पक्त्वा कुर्यान्मृद्भाजने नवे ॥ २४ ॥
क्षिपेच्छीते[2] त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ।
मात्रया लेहयेदे[3]तदीश्वराणां विरेचनम् ॥ २५ ॥
कुडवांशान् रसानि[4]क्षुद्राक्षापीलुपरूषकात् ।
सितोपलापलं क्षौद्रात् कुडवार्धं च साधयेत् ॥२६॥
तं लेहं योजयेच्छीतं त्रिवृच्चूर्णेन शास्त्रवित् ।
ए[5]तदुत्सन्नपित्तानामीश्वराणां विरेचनम् ॥ २७ ॥
शर्करामोदकान् वर्तीर्गुलिकामांसपूपकान् ।

अनेन विधिना कुर्यात् पैत्तिकानां[1] विरेचनम् ॥२८॥
पिप्पलीं नागरं क्षारं श्यामां त्रिवृतया सह ।
लेहयेन्मधुना सार्धं श्लेष्मलानां विरेचनम् ॥ २९ ॥
मातुलुङ्गाभयाधात्रीश्रीपर्णीकोलदाडिमात् ।
सुभृष्टान् स्वरसांस्तैले साधयेत्तत्र चावपेत् ॥ ३० ॥
सहकारात् कपित्थाच्च मध्यमम्लं च यत् फलम् ।
पूर्ववद्बहलीभूते त्रिवृच्चूर्णं समावपेत् ॥ ३१ ॥
त्वक्पत्रकेशरैलानां चूर्णं मधु च मात्रया ।
लेहोऽयं कफपूर्णानामीश्वराणां विरेचनम् ॥ ३२ ॥

लिह्याद्वा मध्वित्यादिनाऽष्टौ लेहानाह । लिह्याद्वेत्यादिना प्रथमो लेहः । अजगन्धेत्यादिना द्वितीयः । अजगन्धा अजमोदा । श्यामात्रिवृदित्यादिना तृतीयो लेहः । अत्र शर्करात्रिवृच्चूर्णाभ्यां समाभ्यां क्वाथपादिकाभ्यां लेहः । सक्षौद्रामित्यादिना चतुर्थः । अत्र क्षौद्रपाको योगमहिम्ना । त्रिवृच्चूर्णमात्रापादिकत्वं त्वक्पत्रादीनां, सौगन्धमात्रप्रयोजनत्वात्[2] । ईश्वराणां विरेचनमिति वचनेन सुकुमारत्वादस्निग्धविषयतामस्य दर्शयति, ईश्वरा हि प्रायेण सुकुमाराः स्निग्धाश्च भवन्ति । कुडवांशानित्यादिः पञ्चमः । अत्र त्रिवृच्चूर्णमनिर्दिष्टमानं, तच्च प्रक्षेपन्यायाल्लेहात् पादिकं कर्तव्यम् । उत्सन्नपित्तानाम् उद्धृतपित्तानाम् । शर्करेत्यादिना सितायोगांश्चतुरोऽतिदेशानुगुण्याल्लेहानां मध्य एवाह । अत्र वर्त्यादयोऽपि शर्कराकृता एव ज्ञेयाः । अनेन विधिनेति इक्ष्वादिरससंस्कारेण त्रिवृच्चूर्णयोगेन च । पिप्पलीं नागरमित्यादिना षष्ठो लेहः । मध्यमिति अम्लकपित्थस्य मध्यं भागम् । अम्लं च यत् फलमिति मातुलुङ्गादि । पूर्ववदिति कौडविकत्वं मातुलुङ्गादिरसानां दर्शयति ॥ २१-३२ ॥

पानकानि रसान् यूषान्मोदकान् रागषाडवान् ।
अनेन विधिना कुर्याद्विरेकार्थे कफाधिके ॥ ३३ ॥

पानकानीत्यादिनाऽतिदेशानुगुण्यात् पानकादिपञ्चयोगानाह । रागप्रधानः षाडवो रागषाडवः । अनेन विधिनेति पूर्वलेहोक्तविधिना ॥ ३३ ॥

भृङ्गैलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ ३४ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ ३५ ॥

भृङ्गैलाभ्यामित्यादिना तर्पणयोगं प्रथममेवाह, द्वितीयस्तु तर्पणयोगो भविष्यतीति । भृङ्गं गुडत्वक् । तैश्च शर्करेति भृङ्गैलानीलीत्रिवृद्भिः । फलरसः दाडिमरसः ॥ ३४ ॥ ३५ ॥

शर्करात्रिफलाश्यामात्रिवृत्पिप्पलिमाक्षिकैः ।
मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः ॥ ३६ ॥

१ 'क्षुद्रां' इति, 'त्रिवां' इति च पा० । २ 'दद्याच्छीते' इति पा० । ३ 'लिह्यात्तं मात्रया लेहं' इति पा० । ४ 'रसान् कौडविकानिक्षु०' इति पा० । ५ 'एतदुत्कृष्टपित्ताना' इति पा० ।

१ 'श्लैष्मिकाणां' इति पा० । २ 'त्रिवृच्चूर्णमत्र पादिकं,त्वक्पत्रादीनि सौगन्धमात्रप्रयोजनत्वादल्पानि' इति पा० ।

शर्करेत्यादिना मोदकः प्रथमः। तत्र च "मोदके द्विगुणो गुडः" इति वचनात् गुडशर्करां चूर्णाद्विगुणामिच्छन्ति ॥३६॥

त्रिवृच्छाणा मतास्तिस्रस्तिस्रश्च त्रिफलात्वचः।
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥ ३७॥
लिह्यात् सर्पिर्मधुभ्यां च मोदकं वा गुडेन तु।
भक्षयेन्निष्परीहारमेतच्छोधनमुत्तमम् ॥ ३८ ॥
गुल्मं प्लीहोदरं श्वासं हलीमकमरोचकम्।
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥ ३९ ॥

त्रिवृच्छाणा इत्यादिनेह मोदके च यद्यपि पठ्यते योगः, तथाऽप्यस्य लेहेनैव ग्रहणादयमष्टमो लेहो भवति ॥ ३७–३९ ॥

विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान्।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ ४० ॥
लवणान्यजमोदां च चूर्णितं कार्षिकं पृथक्।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ ४१ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलां तथा।
पक्त्वा मृद्वग्निना खादेद्बदरोदुम्बरोपमान् ॥ ४२ ॥
गुडान् कृत्वा न चात्र स्याद्विहाराहारयन्त्रणा।
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम् ॥४३॥
अस्वप्नं गात्रशूलं च कासं श्वासं भ्रमं क्षयम्।
कुष्ठार्शःकामलामेहगुल्मोदरभगन्दरान् ॥ ४४ ॥
ग्रहणीपाण्डुरोगांश्च हन्युः पुंसवनाश्च ते।
कल्याणका इति ख्याताः सर्वेष्वृतुषु यौगिकाः ४५
इति कल्याणकगुडः।

विडङ्गेत्यादिना द्वितीयो मोदकः ॥ ४०–४५ ॥

व्योषत्वक्पत्रमुस्तैलाविडङ्गामलकाभयाः।
समभागा भिषग्दद्याद्द्विगुणं च मुकूलकम् ॥ ४६ ॥
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम्।
चूर्णितं गुडिकाः कृत्वा क्षौद्रेण पलसंमिताः ॥४७॥
भक्षयेत् कल्यमुत्थाय शीतं चानु पिबेज्जलम्।
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ॥४८॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता निर्यन्त्रणाशिनः।
योगः सर्वविषाणां च मतः श्रेष्ठो विरेचने ॥ ४९ ॥
मूत्रजानां च रोगाणां विधिज्ञेनावचारितः।

व्योषेत्यादिना तृतीयो मोदकः। अयं मोदकस्तन्त्रान्तरे 'अभयाद्य' इति ख्यातः। मुकूलकं दन्ती। अत्र मुकूलादीनामेकैकद्रव्यापेक्षया द्वैगुण्यादि भवति। मधु च तावन्मात्रं यावता मोदको भवति। केचिदत्र व्योषादिमिलितचूर्णाद्दन्त्यादीनां द्वैगुण्यं वदन्ति ॥ ४६–४९ ॥—

पथ्याधात्र्युरुबूकाणां प्रसृतौ द्वौ त्रिवृत्पलम् ॥ ५० ॥
दश तान्मोदकान् कुर्यादीश्वराणां विरेचनम्।

पथ्येत्यादिना चतुर्थः ॥ ५० ॥—

त्रिवृद्धैमवती श्यामा नीलिनी हस्तिपिप्पली ॥ ५१ ॥
समूला पिप्पली मुस्तमजमोदा दुरालभा।
कार्षिकं नागरपलं गुडस्य पलविंशतिम् ॥ ५२ ॥
चूर्णितं मोदकान् कुर्यादुदुम्बरफलोपमान्।
हिङ्गुसौवर्चलव्योषयवानीविडजीरकैः ॥ ५३ ॥
वचाजगन्धात्रिफलाचव्यचित्रकधान्यकैः।
मोदकान् वेष्टयेच्चूर्णैस्तान् सतुम्बुरुदाडिमैः ॥ ५४ ॥
त्रिकवङ्क्षणहृद्बस्तिकोष्ठार्शःप्लीहशूलिनाम्।
हिक्काकासारुचिश्वासकफोदावर्तिनां शुभाः ॥ ५५ ॥

त्रिवृद्धैमवतीत्यादिना पञ्चमो मोदकः पूर्यते। वेष्टयेदिति अवचूर्णयेत् ॥ ५१–५५ ॥

त्रिवृतां कौटजं बीजं पिप्पलीं विश्वभेषजम्।
क्षौद्रद्राक्षारसोपेतं वर्षास्वेतद्विरेचनम् ॥ ५६ ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम्।
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये ॥ ५७ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम्।
स्वर्णक्षीरीं च हेमन्ते पिष्ट्वा तूष्णाम्बुना पिबेत् ॥५८॥
शर्करा त्रिवृता तुल्या ग्रीष्मकाले विरेचनम्।
त्रिवृत्त्रायन्तिहपुषाः सातलां कटुरोहिणीम् ॥ ५९ ॥
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम्।
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ ६० ॥
त्रिवृच्छ्यामा दुरालम्भा वत्सकं हस्तिपिप्पली।
नीलिनी त्रिफला मुस्तं कटुका च सुचूर्णितम् ६१
सर्पिर्मांसरसोष्णाम्बुयुक्तं पाणितलं ततः।
पिबेत् सुखतमं ह्येतद्रूक्षाणामपि शस्यते ॥ ६२ ॥
त्र्यूषणं त्रिफला हिङ्गु कार्षिकं त्रिवृतापलम्।
सौवर्चलार्धकर्षं च पलार्धं चाम्लवेतसात् ॥ ६३ ॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिबेत्।
गुल्मपार्श्वार्तिनुत्सिद्धं जीर्णे चाद्याद्रसौदनम् ॥६४॥

त्रिवृतां कौटजमित्यादिना षडृतुविहितान् योगान् रूक्षाणामपि शस्यते इत्यन्तेनाह। सातला चर्मकशा। जलदात्यये शरदि। हेमन्ते यद्यपि प्रबलशीतवाते विरेचनं निषिद्धं, तथाऽपि व्याधिविषयविहितं विरेचनमेतज्ज्ञेयम्। सर्वर्तुकयोगौ

१ '०मेतच्छ्रेष्ठं विरेचनम्' इति पा०। २ 'कासं' इति पा०। ३ '०मलकान् समान्। त्रिवृतोऽष्टगुणं भागं' इति पा०। ४ 'श्रेष्ठं विरेचनम्' इति पा०।

१ 'हिताः' इति पा०। २ 'समृद्वीकारसक्षौद्रं' इति पा०। ३ 'हपुषां सप्तलां श्यामां द्रवन्तीं कटुरोहिणीम्' इति पा०। ४ 'पिबेदेतत्सर्वकालं' इति पा०।

अनुक्ते ऋतौ वसन्तादौ च ज्ञेयौ । त्रिवृच्छयामेत्यादिकोऽपि सर्वर्तुको योगः । त्र्यूषणमित्यादिश्चूर्णयोगो द्वितीयः ५६–६४ ॥

त्रिवृतां त्रिफलां दन्तीं सप्तलां व्योषसैन्धवम् ।
कृत्वा चूर्णं तु सप्ताहं भाव्यमामलकीरसे ॥ ६५ ॥
तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ।

त्रिवृतां त्रिफलामित्यादिकस्तर्पणयोगः । एवं सर्वर्तुकयोगेन समं द्वौ तर्पणयोगौ भवतः ॥ ६५ ॥—

तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ॥ ६६ ॥
श्यामात्रिवृतयोर्मूलं पचेदामलकैः सह ।
जले तेन कषायेण पक्त्वा सर्पिः पिबेन्नरः ॥ ६७ ॥
श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पिबेत्तथा ।
साधितं वा पयस्ताभ्यां सुखं तेन विरिच्यते ॥ ६८ ॥

तुल्याम्लमित्येकं घृतं, श्यामेत्यादि द्वितीयं, श्यामात्रिवृत्कषायेणेत्यादि तृतीयम् । साधितं चेत्यादिना क्षीरयोगमेकमाह । घृतेन क्षीरेण च घृतेन क्षीरेण वैकेन मिलित्वा चत्वारो घृतक्षीरैर्भवन्ति ॥ ६६–६८ ॥

त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत्[1] ।
पादशेषं कषायं तं पूतं गुडतुलायुतम् ॥ ६९ ॥
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ।
प्रलिप्ते मधुना मासं जातं तन्मात्रया पिबेत् ॥ ७० ॥
ग्रहणीपाण्डुरोगघ्नं गुल्मश्वयथुनाशनम् ।
सुरां वा त्रिवृतायोगकिण्वां तत्क्वाथसंयुताम् ॥ ७१ ॥

त्रिवृन्मुष्टीनित्यादिना प्रथमा सुरा, सुरां वेत्यादिना द्वितीया, एवं द्वौ सुरायोगौ भवतः । त्रिवृद्योगयुक्तं किण्वं यस्यां सा तथा ॥ ६९–७१ ॥

यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा ।
आसुतं षडहं पल्ले जातं सौवीरकं पिबेत् ॥ ७२ ॥
भृष्टान् वा सतुषान्क्षुण्णान् यवांस्तच्चूर्णसंयुतान् ।
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम् ॥ ७३ ॥

यवैरित्यादिना सौवीरकतुषोदके प्राह । एतौ द्वौ काञ्जिकयोगौ । कुल्माष उत्स्विन्नयवपिष्टकम् । पल्ले इति धान्यादिराशौ । तच्चूर्णसंयुतानिति त्रिवृच्चूर्णसंयुतान् । तद्वदिति षडहं पल्ले स्थितान् ॥ ७२ ॥ ७३ ॥

तथा मदनकल्पोक्तान् षाडवादीन् पृथग्दश ।
त्रिवृच्चूर्णेन संयोज्य विरेकार्थे प्रयोजयेत् ॥ ७४ ॥

तथेत्यादिना षाडवादियोगान् दशाह । दश षाडवादयो "बदरषाडवरागलेहमोदकोत्कारिकातर्पणशाकमांसरसयूषमद्यानां" ( क. अ. १ ) इति ग्रन्थेन मदनकल्पोक्ताः ॥ ७४ ॥

भवतश्चात्र—

त्वक्केशराम्रातकदाडिमैला-
सितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैस्तथाऽम्लैश्च मनोनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥ ७५ ॥
शीताम्बुना पीतवतश्च तस्य
सिञ्चेन्मुखं छर्दिविघातहेतोः ।
हृद्यांश्च मृत्पुष्पफलप्रवाला-
नम्लं च दद्यादुपजिघ्रणार्थम् ॥ ७६ ॥

संप्रति दशोत्तरं योगशतमभिधाय वान्तिनिरासार्थं कृत्यत्रयेण समं विरेचनप्रयोगानाह—त्वक्केशरेत्यादि ॥ ७५ ॥ ७६ ॥

तत्र श्लोकाः—

एकोऽम्लादिभिरष्टौ च दश द्वौ सैन्धवादिभिः ।
मूत्रेऽष्टादश यष्ट्यां[1] द्वौ जीवकादौ चतुर्दश ॥ ७७ ॥
क्षीरादौ सप्त लेहेऽष्टौ चत्वारः सितयाऽपि च ।
पानकादिषु पञ्चैव षड्ऋतौ पञ्च मोदकाः ॥ ७८ ॥
चत्वारश्च घृते क्षीरे द्वौ चूर्णे तर्पणे तथा ।
द्वौ मद्ये काञ्जिके द्वौ च दशान्ये षाडवादिषु ॥ ७९ ॥
श्यामायास्त्रिवृतायाश्च कल्पेऽस्मिन् समुदाहृतम् ।
शतं दशोत्तरं सिद्धं योगानां परमर्षिणा ॥ ८० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने श्यामात्रिवृत्कल्पो नाम सप्तमोऽध्यायः ॥ ७ ॥

एकोऽम्लादिभिरित्यादिसंग्रहो व्यक्तार्थः । यष्ट्यां द्वाविति 'यष्ट्याह्वं विधिना' इति जीवकादावेकः, मधुकेत्यादिना चापरः ॥ ७७–८० ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने श्यामात्रिवृत्कल्पो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातश्चतुरङ्गुलकल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

श्यामात्रिवृत्कल्पानन्तरं मृदुविरेचनत्वसामान्याच्चतुरङ्गुलकल्पोऽभिधीयते ॥ १ ॥ २ ॥

आरग्वधो राजवृक्षः शम्पाकश्चतुरङ्गुलः ।
प्रग्रहः कृतमालश्च कर्णिकारोऽवघातकः ॥ ३ ॥

व्यवहारार्थं पर्यायानाह—आरग्वध इत्यादि ॥ ३ ॥

---

१ 'निर्यूहेण तयोर्युक्त्या' इति पा० । २ 'जले द्रोणे त्रिवृन्मुष्टीनष्टौ तु सनखान् पचेत्' इति पा० । ३ 'विधिना' इति पा० । ४ 'त्रिवृताकिण्वां पिबेत्तत्क्वाथसंयुताम्' इति पा० । ५ 'क्षुण्णान्' इति पा० ।

१ 'यष्ट्या' इति पा० ।

ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ४ ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ५ ॥

अधिकं पथ्य इति ज्वरादिषु विशेषेण विरेचनप्रयोगे हितः ॥ ४ ॥ ५ ॥

फलकाले फलं तस्य ग्राह्यं परिणतं च यत् ।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥ ६ ॥
सप्तरात्रात् समुद्धृत्य शोषयेदातपे भिषक् ।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत् ॥ ७ ॥

फलकाले इति उचितफलकाले । तेषामिति फलानाम् । भारमिति भूरिद्रव्योपलक्षणम् । मज्जानमिति फलमज्जानम् ॥ ६ ॥ ७ ॥

द्राक्षारसयुतं दद्याद्दाहोदावर्तपीडिते ।
चतुर्वर्षमुखे बाले यावद्द्वादशवार्षिके ॥ ८ ॥
चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाऽथवाऽञ्जलिम् ।

द्राक्षेत्यादिः प्रथमो योगः । चतुर्वर्षमुखे बाले यावद्द्वादशवार्षिके इत्यनेनास्य प्रयोगस्य चतुर्वर्षादर्वागूर्ध्वं च द्वादशवर्षादवश्यतया यौगिकत्वं निषेधयति ॥ ८ ॥—

सुरामण्डेन संयुक्तमथवा कोलसीधुना ॥ ९ ॥
दधिमण्डेन वा युक्तं रसेनामलकस्य वा ।
कृत्वा शीतकषायं तं पिबेत् सौवीरकेण वा ॥१०॥

सुरामण्डेनेति द्वितीयः । अथवा कोलसीधुनेति तृतीयः । कोलकृतः सीधुः कोलसीधुः । सौवीरकेण वेत्यन्तेन योगत्रयमपरं व्यक्तम् ॥ ९ ॥ १० ॥

त्रिवृतो वा कषायेण मज्ज्ञः कल्कं तथा पिबेत् ।
तथा बिल्वकषायेण लवणक्षौद्रसंयुतम् ॥ ११ ॥

त्रिवृतो वा कषायेण मज्ज्ञः कल्कं तथा पिबेदिति सप्तमः । तथेत्यादिनाऽष्टमः । एतत्कल्ककषाययोर्द्वयं जतूकर्णेऽप्युक्तमेव—"त्रिवृद्बिल्वकषायाभ्यां सक्षौद्रलवणौ द्वौ" इति । तेनात्र पाठान्तरं न प्रमाणम् । संग्रहे च करिष्यति—'कषाये च त्रिवृतो बिल्वकस्य च' इति ॥ ११ ॥

कषायेणाथवा तस्य त्रिवृच्चूर्णं गुडान्वितम् ।
साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम् ॥ १२ ॥

कषायेणेत्यादिको लेहो नवमः ॥ १२ ॥

चतुरङ्गुलसिद्धाद्वा क्षीराद्यदुदियाद्घृतम् ।
मज्ज्ञः कल्केन धात्रीणां रसे तत्साधितं पिबेत् १३

चतुरङ्गुलेत्यादिना प्रथमं घृतम् । मज्ज्ञ इति चतुरङ्गुलमज्ज्ञः ॥ १३ ॥

तदेव दशमूलस्य कुलत्थानां यवस्य च ।
कषाये साधितं सर्पिः कल्कैः श्यामादिभिः पिबेत् ॥

तदेवेत्यादिना च द्वितीयं घृतम् । श्यामादिभिरिति मदनकल्पपठितैर्नवभिः 'श्यामात्रिवृद्दन्ती०' ( क. अ. १ ) इत्यादिभिः ॥ १४ ॥

दन्तीक्वाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुडस्य च ।
दत्वा मासार्धमासस्थमरिष्टं पाययेत च ॥ १५ ॥

दन्तीत्यादिनाऽरिष्टयोगमाह । गुडस्य चाञ्जलिमिति संवन्धः । मासार्धमासस्थमिति सार्धमासस्थम् ॥ १५ ॥

यस्य यत् पानमन्नं च हृद्यं स्वाद्वथ वा कटु ।
लवणं वा भवेत्तेन युक्तं दद्याद्विरेचनम् ॥ १६ ॥

यस्य यदित्यादिनाऽनुक्तमपरापरसाधनं विधत्ते । हृद्येन हि विरेचनयोगस्य प्रियता स्यात् । पानमन्नं चेति हृद्यमित्यादिभिः प्रत्येकं संबध्यते ॥ १६ ॥

तत्र श्लोकाः—
द्राक्षारसे सुरासीध्वोर्दध्नि चामलकीरसे ।
सौवीरके कषाये च त्रिवृतो बिल्वकस्य च ॥ १७ ॥
लेहेऽरिष्टे घृते द्वे च योगा द्वादश कीर्तिताः ।
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः सुखोदयाः ॥१८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने चतुरङ्गुलकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

द्राक्षेत्यादिसंग्रहो व्यक्तः ॥ १७ ॥ १८ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने चतुरङ्गुलकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातस्तिल्वककल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

चतुरङ्गुलवत्तिल्वकस्यानपायित्वाच्चतुरङ्गुलकल्पानन्तरं तिल्वककल्पोऽभिधीयते ॥ १ ॥ २ ॥

तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्जिताम् ॥ ३ ॥
चूर्णयेत्तु त्रिधा कृत्वा द्वौ भागौ श्च्योतयेत्ततः ।
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ४ ॥

१ 'देयः' इति पा० । २ 'रेचनार्थे परिणतं फलं तस्याहरेद्बुधः' इति पा० । ३ 'जातं' इति, 'सारं' इति च पा० । ४ 'सम्यक्' इति पा० । ५ 'वा' इति पा० । ६ 'त्रिवृन्मज्ज्ञोस्तथा कल्कं तत्कषायेण वा पिबेत्' इति पा० । ७ 'कषाये योगद्वयम्' इति पा० ।

१ 'पाययेद्भिषक्' इति पा० । २ 'पानमम्लं च' इति पा० । ३ 'सौवीरकेऽथ त्रिवृतः कषाये तिल्वकस्य च' इति, 'सौवीरके कषायाभ्यां बिल्वशम्पाकयोस्तथा' इति च पा० ।

भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ।
शुष्कं चूर्णं पुनः कृत्वा ततं ऊर्ध्वं प्रयोजयेत् ॥ ५ ॥

अन्तर्वल्कलवर्जितामिति तिल्वकस्यान्तर्वल्कलं कठिनं भवति, तदर्थं तद्वर्जनम् । स्रोतयेदिति वचनेन षड्गुणद्रवेणैकविंशतिवारान् स्रावयेदिति ज्ञेयं, मदनफलकल्पे एवंभूतस्यैव स्रावणस्य दृष्टत्वात् । भावनाविधिश्च निरन्तरं व्याकृत एव ॥ ३–५ ॥

दधितक्रसुरामण्डमूत्रैर्बदरसीधुना ।
रसेनामलकानां वा ततः पाणितलं पिबेत् ॥ ६ ॥

दधिमण्डेत्यादिना पिबेदित्यन्तेन पञ्च योगाः ॥ ६ ॥

मेषशृङ्ग्यभयाकृष्णाचित्रकैः सलिले शृते ।
मरुजान् सुनुयात्तच्च जातं सौवीरकं यदा ॥ ७ ॥
भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत् सदा ।

मेषशृङ्गीत्यादिना विशिष्टसौवीरकेण योग एकः । मरुजा मृष्टयवाः ॥ ७ ॥—

सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ॥ ८ ॥
दन्तीचित्रकयोर्द्रोणे सलिलस्याढकं पृथक् ।
समुत्क्वाथ्य गुडस्यैकां तुलां लोध्रस्य चाञ्जलिम् ॥९॥
आवपेत्तत् परं पक्षान्मद्यपानां विरेचनम् ।

सुरामित्यादिना सुरायोगमाह । दन्तीत्यादिनैकमरिष्टयोगमाह । दन्तीचित्रकयोराढकं पृथक् सलिलद्रोणे पचेत् । तिल्वकचूर्णमावापः ॥ ८ ॥ ९ ॥—

कम्पिल्लककषायेण दशकृत्वः सुभाविताम् ॥ १० ॥
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ।

कम्पिल्लकेत्यादिना कम्पिल्लकयोगमाह । कम्पिल्लकः गुण्डारोचनिका । मात्रामिति तिल्वकचूर्णमात्राम् ॥ १० ॥—

चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य एव च ॥ ११ ॥
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः ।
लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठो विरेचने ॥ १२ ॥
तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठो विरेचने ॥ १३ ॥

चतुरङ्गुलेत्यादिना प्रथमो लेहः । चतुरङ्गुलकल्पेनेति "कषायेणाथवा तस्य" ( क. स्था. अ. ८ ) इत्यादिनोक्तविधानेन । तेनात्र तिल्वकक्वाथेन गुडान्वितत्रिवृच्चूर्णं पक्त्वा लेहः कर्तव्यः । त्रिफलाया इत्यादिना द्वितीयो लेहः । तिल्वकस्येत्यादिना तृतीयः ॥ ११–१३ ॥

अष्टाष्टौ त्रिवृतादीनां मुष्टींस्तु सनखान् पृथक् ।
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत् १४
पिष्टैस्तैरेव बिल्वांशैः समूत्रलवणैरथ ।
ततो मात्रां पिबेत् काले श्रेष्ठमेतद्विरेचनम् ॥ १५ ॥

लोध्रकल्केन मूत्राम्ललवणैश्च पचेद्घृतम् ।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेत् ॥ १६ ॥

अष्टाष्टावित्यादिना प्रथमं घृतम् । सनखानिति विद्यमाननखान् । अत्र त्रिवृदादिगृहीतलोध्रस्य प्रधानत्वाद्द्विगुणो भागो भवति । उक्तं हि जतूकर्णे—"त्रिवृदादिद्विगुणो लोध्रक्वाथः" इति । समभागत्वे तु लोध्रप्रयोगत्वस्य केन विशेषः स्यात्, तस्माद् यथाव्याख्यातमेव साधु । लवणमप्यत्र पलांशमेव । लोध्रेत्यादि द्वितीयं घृतम् । चतुरङ्गुलेत्यादिना घृतद्वयमतिदिश्यते । एवं घृतेन चत्वारो योगा भवन्ति । चतुरङ्गुलघृते च "चतुरङ्गुलसिद्धात्" ( क. स्था. अ. ८ ) इत्यादिना, तथा "तदेव दशमूलस्य" ( क. स्था. अ. ८ ) इत्यादिना प्रोक्ते ज्ञेये; तथा च चतुरङ्गुलकल्पेन लोध्रादिना द्वे लोध्रघृते भवतः ॥१४–१६॥

तत्र श्लोकौ—

पञ्च दध्यादिभिस्त्वेका सुरा सौवीरकेण च ।
एकोऽरिष्टस्तथा योग एकः कम्पिल्लकेन च ॥ १७ ॥
लेहास्त्रयो घृतेनापि चत्वारः संप्रकीर्तिताः ।
योगास्ते लोध्रमूलानां कल्पे षोडश दर्शिताः ॥ १८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने तिल्वककल्पो नाम नवमोऽध्यायः ॥ ९ ॥

पञ्च दध्यादिभिरित्यादिसंग्रहो व्यक्तः ॥ १७ ॥ १८ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने तिल्वककल्पो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अथातः सुधाकल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

षोडशसंख्यप्रयोगाभिधायकतिल्वककल्पानन्तरं यथाक्रममधिकसंख्याप्रयोगाभिधानक्रमाद्विंशतियोगाभिधायकसुधाकल्पोऽभिधीयते; इतश्चानन्तरमतिरिक्तसंख्याभिधानक्रमेणैव ऊनचत्वारिंशत्प्रयोगाभिधायकसप्तलाशङ्खिनीकल्पोऽभिधास्यते ॥ १ ॥ २ ॥

विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता ।
सङ्घातं हि भिनत्त्याशु दोषाणां कष्टविभ्रमा ॥ ३ ॥
तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन ।
न दोषनिचये चाल्पे सति मार्गपरिक्रमे ॥ ४ ॥

विरेचनानामिति विरेचनद्रव्याणाम् । कष्टविभ्रमेति दुःखसाध्यविभ्रमजनिका । तस्मादिति अतितीक्ष्णत्वात् कष्टविभ्रम-

१ 'कषाये भावितं पुनः' इति पा० । २ 'स्निग्धस्विन्ने प्रदापयेत्' इति पा० । ३ 'दधिमण्डसुरामण्ड०' इति पा० । ४ 'मद्यपानाद्धि०' इति पा० । ५ 'तिल्वकस्य कषायेण' इति पा० । ६–७ 'श्रेष्ठं विरेचनम्' इति पा० ।

१ 'त्रिवृतादिगृहीते लोध्रे लोध्रस्य प्रधानत्वात्' इति पा० । २ 'चाल्पपरिक्रमे' इति पा० ।

त्वाच्च । सति मार्गपरिक्रम इति उपक्रममार्गान्तरे सति न सुधा प्रयोक्तव्या, तेन गत्यन्तरासंभव एव सुधा प्रयोक्तव्येत्यर्थः ॥ ३ ॥ ४ ॥

पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्दिते ।
श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि ॥ ५ ॥
रोगैरेवंविधैर्ग्रस्तं ज्ञात्वा सप्राणमातुरम् ।
प्रयोजयेन्महावृक्षं सम्यक् स ह्यवचारितः ॥ ६ ॥
सद्यो हरति दोषाणां महान्तमपि संचयम् ।

पाण्डुरोगेत्यादौ मधुमेहशब्देन प्रमेहा एवोच्यन्ते; विशिष्टस्तु वातिकमधुमेहोऽसाध्य एव, तेन तं प्रति विरेचनोपदेशोऽनर्थक एव स्यात्; मधुमेहशब्दश्च यथा प्रमेहमात्र एव वर्तते तद् प्रतिपादितमेव प्रमेहचिकित्सिते । दोषवृद्ध्या विभ्रान्तं चेतो यस्मिन् तस्मिन् दोषविभ्रान्तचेतसि उन्मादे । सप्राणमिति बलवन्तम् ॥ ५ ॥ ६ ॥—

द्विविधः स मतोऽल्पैश्च बहुभिश्चैव कण्टकैः ॥ ७ ॥
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।
स नाम्ना स्नुग्गुडा नन्दा सुधा निस्त्रिंशपत्रकः ॥८॥
तौ विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक् ।
द्विवर्षं वा त्रिवर्षं वा शिशिरान्ते विशेषतः ॥ ९ ॥

प्रवरो बहुकण्टक इति अनतितीक्ष्णतयाऽल्पकण्टकमहावृक्षतः श्रेष्ठ इत्यर्थः । ताविति स्वल्पकण्टकबहुकण्टकौ महावृक्षौ । यद्यपि मदनकल्पे "शरदि त्वक्कन्दक्षीराणि" ( क. स्था. अ. १ ) इत्युक्तं, तथाऽपि सुधाया अत्र शिशिरान्ते क्षीरग्रहणमपवादरूपं ज्ञेयम् । शिशिरस्य शेषा दिवसाः शिशिरान्ताः ॥ ७–९ ॥

बिल्वादीनां बृहत्या वा कण्टकार्यास्तथैकशः ।
कषायेण समांशं तं कृत्वाऽङ्गारेषु शोषयेत् ॥ १० ॥
ततः कोलसमां मात्रां पिबेत् सौवीरकेण वा ।
तुषोदकेन कोलानां रसेनामलकस्य वा ॥ ११ ॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ।

बिल्वादीनामिति बिल्वादिपञ्चमूलस्य । अङ्गारेषु शोषयेदिति अङ्गारोपरिस्थितपात्रस्थं तत् सुधाक्षीरं बिल्वादीनामन्यतमस्य कषायेण समानं शोषणेन कठिनं कुर्यात्; ततः कोलमात्रा गुटिकाः कार्याः, ततः सौवीरकादीनामन्यतमेन पातव्या । एवं सौवीरकादिभेदात् सप्त योगा भवन्ति; तथाऽत्र बिल्वादिकषायस्य भेदेन भेदो न विवक्षितः ॥ १० ॥ ११ ॥—

सातलां काञ्चनक्षीरीं श्यामादीनि कटुत्रिकम् ॥१२॥

१ 'नुदति' इति पा० । २ 'तं' इति पा० । ३ 'सुधां प्राप्य' इति पा० । ४ 'कोलप्रमाणां गुटिकां पिबेत् सौवीरकेण ताम्' इति पा० । ५ 'फलत्रिकम्' इति पा० ।

यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत् ।
कोलमात्रां घृतेनातः पिबेन्मांसरसेन वा ॥ १३ ॥

सातलामित्यादिना वातसाधनघृतमांसरसभेदाद्योगद्वयमाह । सातला चर्मकषा । श्यामादिग्रहणेनैव सातलायामपि लब्धायां पृथक् सातलाभिधानमेकयाऽपि सातलया कृतसुधायोगस्य प्राधान्यख्यापनार्थम् ॥ १२ ॥ १३ ॥

त्र्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा ।
स्नुक्क्षीरभावितं सम्यग्विदध्याद्गुडपानकम् ॥ १४ ॥

त्र्यूषणमित्यादिना पानकयोगमाह । गुडपानकमिति गुडसंस्कृतपानकम् ॥ १४ ॥

त्रिवृतारग्वधं दन्तीं शङ्खिनीं सप्तलां समम् ।
गोमूत्रे रजनीं कृत्वा शोषयेदातपे ततः ॥ १५ ॥
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः ।
सप्ताहं भावयेच्छुष्कं ततस्तेनापि भावितम् ॥ १६ ॥
गन्धमाल्यं तदाघ्राय प्रावृत्य पटमेव च ।
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥ १७ ॥

त्रिवृतेत्यादिना घ्रेययोगमाह । गोमूत्रे रजनीं कृत्वेति रजनीं व्याप्य गोमूत्रे स्थापयित्वा । पटमेवेति यथोक्तविधिभावितं पटमावृत्येत्यर्थः ॥ १५–१७ ॥

श्यामात्रिवृत्कषायेण स्नुक्क्षीरघृतफाणितैः ।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥ १८ ॥

श्यामेत्यादिना लेहयोगमाह । मात्रयेति अनपायिमात्रया ॥ १८ ॥

पाययेत्तु सुधाक्षीरं यूषैर्मांसरसैर्घृतैः ।

पाययेदित्यादिना पृथग्यूषमांसरसघृतैर्योगत्रयमाह ।—

भाविताञ्छुष्कमत्स्यान् वा मांसं वा भक्षयेन्नरः १९

भावितानित्यादिना शुष्कमत्स्यमांसयोगावाह ॥ १९ ॥

क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत् पचेत् ।
सुरां वा कारयेत् क्षीरे घृतं वा पूर्ववत् पचेत् ॥२०॥

क्षीरेणेत्यादिना एकं घृतम् । घृतं वेत्यादिना एकं वक्ष्यति । आमलकैश्चतुरङ्गुलवदिति वचनादामलकरसयुक्तं यच्चतुरङ्गुलकल्पे "चतुरङ्गुलसिद्धाद्वा" ( क. स्था. अ. ८ ) इत्यादिनोक्तं तस्य विधानमतिदिशति । सुरां वा कारयेत् क्षीरे इति स्नुक्क्षीरभावितमित्यादिविधिना सुरां कुर्यात् । घृतं वा पूर्ववत् पचेदित्यत्र पूर्ववदित्यनेन तिल्वककल्पे पूर्वं यत् "लोध्रकल्केन" ( क. स्था. अ. ९ ) इत्यादिग्रन्थविहितं, तद्विधिरेव प्रत्यासन्नत्वादतिदिश्यते ॥ २० ॥

तत्र श्लोकौ—

सौवीरकादिभिः सप्त सर्पिषा च रसेन च ।
पानकं घ्रेयलेहौ च योगा यूषादिभिस्त्रयः ॥ २१ ॥

१ 'निशि स्थितं गवां मूत्रे' इति पा० । २ 'समाघ्राय' इति पा० । ३ 'कृत्वा' इति पा० ।

द्वौ शुष्कमत्स्यमांसाभ्यां सुरैका द्वे च सर्पिषी।
महावृक्षस्य योगास्ते विंशतिः समुदाहृताः॥ २२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने सुधाकल्पो नाम दशमोऽध्यायः॥ १०॥

सौवीरकेत्यादिः संग्रहो व्याकृत एव॥ २१॥ २२॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने सुधाकल्पो नाम दशमोध्यायः॥ १०॥

---

## एकादशोऽध्यायः।

अथातः सप्तलाशङ्खिनीकल्पं व्याख्यास्यामः॥ १॥
इति ह स्माह भगवानात्रेयः॥ २॥
सप्तला चर्मसाह्वा च बहुफेनरसा च सा।
शङ्खिनी तिकला चैवं यवतिक्ताऽक्षि(क्ष)पीडकः ३

पूर्वाध्यायोक्तसंबन्धादेव सप्तलाशङ्खिनीकल्पोऽभिधीयते। इह चाध्याये ये योगा अभिधीयन्ते ते सप्तलया वा शङ्खिन्या वा उभाभ्यां वा संपाद्यन्ते श्यामात्रिवृद्योगवत्॥ १–३॥

ते गुल्मगरहृद्रोगकुष्ठशोफोदरादिषु।
विकासितीक्ष्णरूक्षत्वाद्योज्ये श्लेष्माधिकेषु तु॥४॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम्।
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत्॥ ५॥

ते गुल्मेत्यादि। ते सप्तलाशङ्खिन्यौ॥ ४॥ ५॥

अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम्।
हृद्रोगे कफवातोत्थे गुल्मे चैव प्रयोजयेत्॥ ६॥
प्रियालपीलुकर्कन्धुकोलाम्रातकदाडिमैः।
द्राक्षापनसखर्जूरबदराम्लपरूषकैः॥ ७॥
मैरेये दधिमण्डेऽम्ले सौवीरकतुषोदके।
सीधौ चाप्येष कल्पः स्यात् सुखं शीघ्रविरेचनः॥८॥

अक्षमात्रमित्यादिना कल्कस्य प्रसन्नालवणयुक्तस्य प्रियालादिकषायेषु षोडशयोगा भवन्ति। अत्र यद्यपि मैरेयैक्षवौ न कषायौ तथाऽपि बहुकषायान्तर्गतत्वात् कषायावेव वक्तव्यौ, संग्रहे 'कषाया दश षट्' इत्यनेन व्यपदिष्टौ। कषायशब्देन कल्ककषायोऽभिप्रेतः। कर्कन्धूकोलबदरशब्देन त्रिप्रकारबदरग्रहणम्॥ ६–८॥

तैलं विदारिगन्धाद्यैः पयसि क्वथिते पचेत्।
सप्तलाशङ्खिनीकल्के त्रिवृच्छ्यामार्धभागिके॥ ९॥
दधिमण्डेन सन्नीय सिद्धं तत् पाययेत च।
शङ्खिनीचूर्णभागौ द्वौ तिलचूर्णस्य चापरः॥ १०॥

हरीतकीकषायेण तैलं तत्पीडितं पिबेत्।
अतसीसर्षपैरण्डकरञ्जेष्वेष संविधिः॥ ११॥

तैलमित्यादिना प्रथमतैलयोगः। त्रिवृच्छ्यामार्धभागिके इति सप्तलाशङ्खिनीकल्कयोरर्धभागेन त्रिवृच्छ्यामाकल्को देयः। शङ्खिनीत्यादिना पञ्चतैलयोगानाह, एवं षट्तैलयोगा भवन्ति। तैलं तत्पीडितमिति शङ्खिनीचूर्णं तिलचूर्णं च हरीतकीकषायेण संधाय पीडितं तत् तैलं पिबेदिति। अतस्यादिष्वेषः संविधिरिति वचनेन तिलस्थानेऽतस्यादीनां प्रयोगं विधत्ते॥ ९–११॥

शङ्खिनीसप्तलासिद्धात् क्षीरादुदियाद्धृतम्।
कल्कभागे तयोरेव त्रिवृच्छ्यामार्धसंयुते॥ १२॥
क्षीरेणालोड्य संपक्वं पिबेत्तच्च विरेचनम्।
दन्तीद्रवन्त्योः कल्पोऽयमजशृङ्ग्यजगन्धयोः॥१३॥
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः।
मसूरविदलायाश्च प्रत्यक्पर्ण्यास्तथैव च॥ १४॥
द्विवर्गार्धांशकल्केन तद्वत् साध्यं घृतं पुनः।
शङ्खिनीसप्तलाधात्रीकषाये साधयेद्धृतम्॥ १५॥
त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च लोध्रवत्।
सुराकम्पिल्लयोर्योगः कार्यो लोध्रवदेव च॥ १६॥

शङ्खिनीसप्तलेत्यादि प्रथमं घृतम्। दन्तीद्रवन्त्योरित्यादिना द्विद्विद्रव्यकल्केन सप्तलाशङ्खिनीकल्कार्धेन पूर्वघृतवत्पाकाच्च पञ्चघृतयोगा अपरे। द्रवन्ती दन्तीभेदः। अजशृङ्गी विषाणिका। क्षीरिणी दुग्धिका। मसूरविदला श्यामलता। प्रत्यक्पर्णी मूषिकपर्णी। द्विवर्गार्धांशकल्केनेति दन्त्यादिद्विवर्गशङ्खिनीसप्तलार्धभागिकेन कल्केन। शङ्खिनीत्यादिना सप्तमं घृतं, त्रिवृत्कल्केनेत्यष्टमं घृतम्। अत्र त्वधिकृतत्वात् सप्तलाशङ्खिन्योर्द्विगुणः कषायो विधीयते। लोध्रवदिति लोध्रकल्पवत्; लोध्रकल्पे यथा त्रयो लेहाः "चतुरङ्गुलकल्पेन" (क. अ. ९) इत्यादिनोक्ताः, तेन लोध्रस्थाने सप्तलाशङ्खिनीयोगः कर्तव्यः। तथा सुरायोगः कम्पिल्लयोगश्च लोध्रवदिति अत्रापि लोध्रस्थाने सप्तलाशङ्खिनीप्रक्षेपः कर्तव्यः॥ १२–१६॥

दन्तीद्रवन्त्योः कल्पेन सौवीरकतुषोदके।
अजगन्धाजशृङ्ग्योश्च तद्वत् स्यातां विरेचने॥ १७॥

दन्तीद्रवन्त्योरित्यादिना संधानचतुष्टयमाह। एतत् संधानचतुष्टयं पूर्वसुरायोगेन समं 'पञ्च मद्ये' इति वचनेन संग्रहगृहीतं; सौवीरकादीनां च मद्यशब्देनाभिधानमिहासुतत्वसामान्याज्ज्ञेयम्। दन्तीद्रवन्त्योः कल्पेनेति अनागतावेक्षणेन दन्तीद्रवन्तीकल्पे सौवीरकतुषोदके ये वक्तव्ये तद्विधानमिहाप्यतिदिशति। तत्र "अजगन्धाकषायेण सौवीरकतुषोदके" (क. स्था. अ. १२)

---

१ 'तिक्तका ज्ञेया' इति, 'तिक्तनाला च' इति च पा०। २ 'हृद्रोगकफवातार्ते' इति पा०। ३ 'नीलीचूर्णस्य चापरः' इति पा०।

१ 'सन्नीय' इति पा०। २ 'विपचेत्' इति पा०। ३ 'स्याद् क्षीरिणीनीलिकयोः' इति पा०। ४ 'चापरं स्मृतम्' इति पा०। ५ 'पूर्ववत्' इति पा०। ६ 'कार्ये स्यातां' इति पा०।

इति वक्तव्यं, तेनेहाप्यजगन्धाकषाययुक्तसप्तलाशङ्खिन्योः सौवीरकतुषोदके कर्तव्ये। अत्र "तथा दन्तीद्रवन्त्योश्च कषाये साजगन्धयोः। गौडः कार्योऽजशृङ्ग्या च स वै सुखविरेचनः" (क. अ. १२) इत्यनेनोक्तस्य गौडारिष्टस्य दन्तीद्रवन्तीकल्पोक्तस्य विधानमतिदिशति ॥ १७ ॥

तत्र श्लोकौ—

**कषाया दश षट् चैव षट् तैलेऽष्टौ च सर्पिषि।**
**पञ्च मद्ये त्रयो लेहा योगः कम्पिल्लके तथा ॥ १८ ॥**
**सप्तलाशङ्खिनीभ्यां ते त्रिंशदुक्ता नवाधिकाः।**
**योगाः सिद्धाः समस्ताभ्यामेकशोऽपि च ते हिताः**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने सप्तलाशङ्खिनीकल्पो नामैकादशोऽध्यायः ॥ ११ ॥**

कषाया इत्यादिसंग्रहो व्याकृतः ॥ १८ ॥ १९ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने सप्तलाशङ्खिनीकल्पो नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

**अथातो दन्तीद्रवन्तीकल्पं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पारिशेष्यात् दन्तीद्रवन्तीकल्पोऽभिधीयते ॥ १ ॥ २ ॥

**दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः।**
**द्रवन्ती नामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥ ३ ॥**
**(तथा मूषिकपर्णी चाप्युपचित्रा च शम्बरी।**
**प्रत्यक्श्रेणी सुतश्रेणी दन्ती र(च)ण्डा च कीर्तिता ॥)[1]**

तयोः पर्यायानाह—दन्तीत्यादि ॥ ३ ॥

**तयोर्मूलानि संगृह्य स्थिराणि बहलानि च।**
**हस्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥ ४ ॥**

स्थिराणीति सारभूतानि। बहलानीति घनत्वकानि। हस्तिदन्तप्रकाराणीति अन्तपूर्वोपचितानि। श्यावताम्राणीति यथाक्रमेण दन्त्याः श्यावानि, द्रवन्त्यास्ताम्राणि ॥ ४ ॥

**पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे।**
**शोषयेदातपेऽग्न्यर्कौ हतो ह्येषां विकाशिताम् ॥ ५ ॥[2]**

स्वेदयेन्मृत्कुशान्तर इति पिप्पलीमधुककल्काभ्यां परिलिप्य कुशैः परिवेष्ट्य ततो मृदावलिप्तानि स्वेदयेत्। अग्निस्वेदातपशोषणफलमाह—अग्न्यर्कौ हतो ह्येषां विकाशितामिति।—एषां दन्तीद्रवन्तीमूलानां विकाशितालक्षणं गुणं स्वेदोपशोषणाभ्यामग्न्यर्कौ हतः; तेन नातिदोषाणि दन्तीद्रवन्तीमूलानि स्युरिति भावः ॥ ५ ॥

**तीक्ष्णोष्णान्याशुकारीणि विकाशीनि गुरूणि च।**
**विलाययन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥ ६ ॥**

तीक्ष्णोष्णानीत्यादिना तेषां गुणकथनम्। दोषौ द्वाविति पित्तश्लेष्माणौ ॥ ६ ॥

**दधितक्रसुरामण्डैः पिण्डमक्षसमं तयोः।**
**प्रियालकोलबदरपीलुशीधुभिरेव च ॥ ७ ॥**
**पिबेद्गुल्मोदरी दोषैरभिखिन्नश्च यो नरः।[1]**
**गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी ॥ ८ ॥**
**तयोः कल्के कषाये च दशमूलरसायुते।**
**कक्ष्यालजीविसर्पेषु दाहे च विपचेद्घृतम् ॥ ९ ॥[2]**
**तैलं मेहे च गुल्मे च सोदावर्ते कफानिले।**
**चतुःस्नेहं शकृच्छुक्रवातसङ्गानिलार्तिषु ॥ १० ॥**
**रसे दन्त्यजशृङ्ग्योश्च गुडक्षौद्रघृतान्वितः।**
**लेहः सिद्धो विरेकार्थं दाहसंतापमेहनुत् ॥ ११ ॥[3]**
**वाततर्षे ज्वरे पैत्ते स्यात् स एवाजगन्धया।**
**दन्तीद्रवन्त्योर्मूलानि पचेदामलकीरसे ॥ १२ ॥**
**त्रींस्तु तस्य कषायस्य भागौ द्वौ फाणितस्य च।**
**तत्ते सर्पिषि तैले वा भर्जयेत्तत्र चावपेत् ॥ १३ ॥**
**कल्कं दन्तीद्रवन्त्योश्च श्यामादीनां च भागशः।**
**तत्सिद्धं प्राशयेल्लेहं सुखं तेन विरिच्यते ॥ १४ ॥**

दधीत्यादिना सप्तभिर्द्रव्यैः सप्तप्रयोगानाह। शीधुशब्दः प्रियालादिभिश्चतुर्भिः पृथक् संबध्यते। अभिखिन्न इति आक्रान्तः। गोमृगाजरसैरित्यत्रापि 'पिण्डमक्षसमं तयोः' इत्यनुवर्तते। अत्रापि गवादिरसैस्त्रिभिस्त्रयः प्रयोगा भवन्ति। तयोरित्यादिना त्रीन् स्नेहयोगानाह। अनयोः कल्ककषायेण दशमूलरसतुल्यभागेन घृतं पचेद्विसर्पादिषु, तैलं तु पूर्ववन्मेहादिषु, चतुःस्नेहं तु शकृच्छुक्रवातसंगादिषु। रसे इत्यादिना एको लेहः! वाततर्षे इत्यादिना द्वितीयः। स एवाजगन्धयेत्यनेन पूर्वोक्तलेहे एवाजशृङ्गीस्थानेऽजगन्धादानं विशिष्टं ख्यापयति। दन्तीत्यादिना तृतीयो लेहः। भागश इति प्रत्येकभागग्रहणेन। एवमेतदन्तैः प्रयोगैराद्यः षोडशको भवेत् ॥ ७—१४ ॥

**रसे च दशमूलस्य तथा वैभीतके रसे।**
**हरीतकीरसे चैव लेहानेवं पचेत् पृथक् ॥ १५ ॥[4]**
**तयोर्बिल्वसमं चूर्णं तद्रसेनैव भावितम्।**
**अस्पृष्टे विशि वातोत्थे गुल्मे चाम्लयुतं शुभम् ॥ १६ ॥[5]**
**पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा।**
**स्वेदयित्वा ततः खादेत् सुखं तेन विरिच्यते ॥ १७ ॥**

---

१ अयं श्लोकः क्वचित्पुस्तके न पठ्यते। २ 'शोषयेदातपेऽर्काग्नी' इति पा०।

१ 'दोषैरभिष्यण्णश्च' इति पा०। २ 'विसर्पालजिकक्ष्यासु' इति पा०। ३ 'देयः संतापमेहनुत्' इति पा०। ४ 'भिषक्' इति पा०। ५ 'नरः' इति पा०।

मूलं दन्तीद्रवन्त्योश्च सह मुद्गैर्विपाचयेत्।
लाववर्तीरकाद्यैश्च ते रसाः स्युर्विरेचने ॥ १८ ॥
तयोर्वाऽपि कषायेण यवागूं जाङ्गलं रसम्।
माषयूषं च संस्कृत्य दद्यात्तैश्च विरिच्यते ॥ १९ ॥

रसे चेत्यादौ एवमित्यनेन पूर्वोक्तलेहत्रयमतिदिशति । तयोरित्यादिकश्चतुर्थः; तयोरिति दन्तीद्रवन्तीमूलयोः । अस्रष्टे इति विवद्धे । पाटयित्वेत्यादिना पञ्चमः । कल्केनालिप्य चान्तरेति दन्तीद्रवन्तीकल्केन पाटितेक्षुकाण्डमध्ये आलिप्य । मूलं दन्तीत्यादिनाऽष्टौ कृताकृतरसानाह । अत्र लाववर्तीरकादयः "लावो वर्तीरकश्चैव वार्तीकः सकपिञ्जलः । चकोरश्चोपचक्रश्च कङ्कुभो रक्तवर्त्मकः" ( सू. स्था. अ. २७ ) इति ग्रन्थेनाष्टावुक्ताः; तेषां प्रत्येकयोगादष्टौ रसा भवन्ति । तयोर्वाऽपीत्यादिना यवागूजाङ्गलरसयोगं माषयूषयोगं चाह । एवमेतैर्द्रवैः पूर्वयोगैश्च मिलित्वा द्वितीयः षोडशको भवेत् ॥ १५-१९ ॥

तत्कषायात्त्रयो भागा द्वौ सितायास्तथैव च।
एको गोधूमचूर्णानां कार्या चोत्कारिका शुभा २०
मोदको वाऽस्य कल्पेन कार्यस्तच्च विरेचनम्।
तयोश्चापि कषायेण मद्यान्यस्योपकल्पयेत् ॥ २१ ॥
दन्तीक्वाथेन चालोड्य दन्तीतैलेन साधितान्।
गुडलावणिकान् भक्ष्यान् विविधान् भक्षयेन्नरः ॥२२
दन्तीं द्रवन्तीं मरिचं यवानीमुपकुञ्चिकाम्।
नागरं हेमदुग्धां च चित्रकं चेति चूर्णितम् ॥ २३ ॥
सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः।
पिबेद्धृतेन जीर्णे तु विरिक्तश्चापि तर्पणम् ॥ २४ ॥
सर्वरोगहरं मुख्यं सर्वेष्वृतुषु यौगिकम्।
चूर्णं तदनपायित्वाद्बालवृद्धेषु पूजितम् ॥ २५ ॥
दुर्भक्ताजीर्णपार्श्वार्तिगुल्मप्लीहोदरेषु च।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥ २६ ॥
पलं चित्रकदन्त्योश्च हरीतक्याश्च विंशतिः।
त्रिवृत्पिप्पलिकर्षौ द्वौ गुडस्याष्टपलेन तत् ॥ २७ ॥
विनीय मोदकान् कुर्याद्दशैकं भक्षयेत्ततः।
उष्णाम्बु च पिबेच्चानु दशमे दशमेऽह्नि च ॥ २८ ॥
एते निष्परिहाराः स्युः सर्वरोगनिबर्हणाः।
ग्रहणीपाण्डुरोगार्शःकण्डूकोठानिलापहाः ॥ २९ ॥
दन्तीद्विपलनिर्यूहो द्राक्षार्धप्रस्थसाधितः।
विरेचनं पित्तकासे पाण्डुरोगे च शस्यते ॥ ३० ॥

१ 'लावतित्तिरिकाभ्यां च' इति पा० । २ 'मांसं यूषांश्च' इति पा० । ३ 'कार्यैषोत्कारिका' इति पा० । ४ 'कल्केन' इति पा० । ५ 'दन्तीकषायैर्लुलितान्' इति पा० । ६ 'चूर्णं' इति पा० । ७ 'गण्डमालास्ववाते च' इति पा० । ८ 'पिबेच्छेषान्' इति पा० । ९ 'द्राक्षार्धप्रस्थसंयुतः' इति पा० ।

दन्तीकल्कं समगुडं शीतवारियुतं पिबेत्।
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥ ३१ ॥
श्यामादन्तीरसे गौडः पिप्पलीफलचित्रकैः।
लिप्तेऽरिष्टोऽनिलश्लेष्मप्लीहपाण्डूदरापहः ॥ ३२ ॥
तथा दन्तीद्रवन्त्योश्च कषाये साजगन्धयोः।
गौडः कार्योऽऽजशृङ्ग्या वा स वै सुखविरेचनः ॥३३॥
तच्चूर्णक्वाथमाषाम्बुकिण्वतोयसमुद्भवा।
मदिरा कफगुल्मालपवह्निपार्श्वकटिग्रहे ॥ ३४ ॥
अजगन्धाकषायेण सौवीरकतुषोदके।
सुराकम्पिल्लके योगौ लोध्रवच्च तयोः स्मृतौ ॥३५॥

तत्कषायादित्यादिना उत्कारिकायोगं मोदकयोगं चाह । तत्कषायादिति दन्तीद्रवन्तीकषायात् । मोदककरणेऽपि तत्कषायात्त्रयो भागा इत्यादिविधानमनुवर्तते । तयोश्चापि कषायेण मद्यानीति तृतीयः । दन्तीत्यादिना भक्ष्ययोगश्चतुर्थः । दन्तीं द्रवन्तीं मरिचमित्यादिकः पञ्चमः । हेमदुग्धा स्वर्णक्षीरी । चूर्णितमित्यन्तं पिबेदिति संबन्धः । पलमित्यादिकः षष्ठः । हरीतक्याश्च विंशतिरिति आकृतिमानेन । अयं योगस्तन्त्रान्तरे 'अगस्त्यमोदक' इति ख्यातः । दन्तीद्विपलेत्यादिकः सप्तमः । अत्र दन्तीद्विपलद्राक्षार्धप्रस्थयोः क्वाथः कर्तव्यः । दन्तीकल्कमित्यादिकोऽष्टमः । श्यामेत्यादिको नवमः । गौड इति गुडप्रकृतिकः । लिप्ते इत्यत्र 'घटे' इति शेषः । तथा दन्तीद्रवन्त्योश्चेत्यादिको दशमः । तथेत्यनेन पूर्वयोगोक्तपिप्पल्यादिघटावलेप अतिदिश्यते । अजशृङ्ग्या वेत्यादिक एकादशः । तथा अजशृङ्ग्या दन्तीद्रवन्त्योश्च कषाये गौडोऽरिष्टः कार्य इति संबन्धः । तच्चूर्णेत्यादिको द्वादशः । अत्र तयोर्दन्तीद्रवन्त्योश्चूर्णक्वाथाभ्यां तथा माषाम्बुना किण्वकरणपूर्वकं या सुरा कृता तत्समुद्भवा मदिरा कर्तव्येति वाक्यार्थः । अजगन्धेत्यादिना योगद्वयमाह । तत्राजगन्धाकषायेण दन्तीद्रवन्तीभ्यां सौवीरकतुषोदके कर्तव्ये । सुरेत्यादिनाऽपरं योगद्वयमाह । लोध्रवच्च तयोरिति यथा लोध्रकल्पेषु "सुरा लोध्रकषायेण" इत्यादिना सुरा प्रोक्ता, तथा "कम्पिल्लककषायेण" (क. अ. ९) इत्यादिना कम्पिल्लकयोग उक्तः, तथा तयोरपि दन्तीद्रवन्त्योर्लोध्रस्थाने प्रक्षेपात् सुरायोगः सौवीरकतुषोदकविधानेनैव कर्तव्यः । इति तृतीयः षोडशकः ॥ २०-३५ ॥

तत्र श्लोकाः—

( दध्यादिषु त्रयः पञ्च प्रियालाद्यैस्त्रयो रसे।
स्नेहेषु वै त्रयो लेह्याः षट् चूर्णे त्वेक एव च ॥३६॥
इक्ष्वावेकस्तथा मुद्गमांसानां च रसास्त्रयः।
यवाग्वादौ त्रयश्चैव उक्त उत्कारिकाविधौ ॥ ३७ ॥
एकश्च मोदके मद्ये चैकस्तत्क्वाथतैलके।
चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥ ३८ ॥

१ 'एतद्विरेचनं मुख्यं' इति पा० । २ 'रसे' इति पा० ।

एकः सौवीरकेऽथैको योगः स्यात्तु तुषोदके।
एका सुरैकः कम्पिल्ले तथा पञ्च घृते स्मृताः ॥३९॥
दन्तीद्रवन्तीकल्पेऽस्मिन् प्रोक्ताः षोडशकास्त्रयः।
नानाविधानां योगानां भक्तिदोषामयान्प्रति ॥ ४० ॥

दन्तीत्याद्यध्यायार्थसंग्रहो व्यक्त एव। भक्तिदोषामयान् प्रति उक्तानां नानाविधानां योगानां त्रयः षोडशकाः प्रोक्ता इति योजना। भक्तिः इच्छा ॥ ३९–४० ॥

त्रिशतं पञ्चपञ्चाशद्योगानां वमने स्मृतम्।
द्वे शते नवकाः पञ्च योगानां तु विरेचने ॥ ४१ ॥
ऊर्ध्वानुलोमभागानामित्युक्तानि शतानि षट्।
प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च ॥४२॥

संप्रति कल्पस्थानार्थसंग्रहमाह—त्रिशतमित्यादिना। त्रिशतं पञ्चपञ्चाशदिति पञ्चपञ्चाशद्योगाधिकं त्रिशतम्। प्राधान्यतः समाश्रित्येति प्राधान्येन मदनफलादीनि द्रवन्तीपर्यन्तानि पञ्चदशद्रव्याणि योगव्यपदेशतयाऽऽश्रित्य ॥ ४१ ॥ ४२ ॥

भवन्ति चात्र—

यद्धि येन प्रधानेन द्रव्यं समुपसृज्यते।
तत्संज्ञकः स योगो वै भवतीति विनिश्चयः[1] ॥ ४३ ॥
फलादीनां प्रधानानां गुणभूताः सुरादयः।
ते हि तान्यनुवर्तन्ते मनुजेन्द्रमिवेतरे ॥ ४४ ॥

अथात्र वमनादियोगेषु द्रव्यान्तराणां सुरादीनामपि विद्यमानत्वात् कथं मदनफलाद्याश्रयवत्त्वेनैवामी योगा व्यपदिश्यन्त इत्याह—यद्धीत्यादि। यद्यपि मदनादिभिः सुरादिभिश्च मिलित्वैवामी योगाः क्रियन्ते, तथाऽपि फलादीनां प्राधान्यात् फलादीनां योगा एते इति व्यपदेशो भवति, न सुरादियोगा इति। गुणभूता इति अप्रधानभूताः। सुरादीनामप्राधान्य एव हेतुमाह—ते हि तान्यनुवर्तन्त इति; सुरादयो हि मदनादीनि वमनविरेचनप्रकारकार्यानुगुणतयाऽप्रतीघातेन चानुवर्तन्ते ॥ ४३ ॥ ४४ ॥

विरुद्धवीर्यमप्येषां प्रधानानामबाधकम्।
अधिकं तुल्यवीर्ये हि क्रियासामर्थ्यमिष्यते ॥ ४५ ॥

ननु ये तावदनुगुणा मदनादीनां ते गुणभूता भवन्तु, विपरीता ये दन्त्या उग्रताया मांसरसादयः, तथा एलादयो हृद्यतया वमनप्रतिकूला मदनादीनां ते कथं गुणभूता इत्याह—विरुद्धवीर्यमप्येषां प्रधानानामबाधकमिति। विरुद्धवीर्यमपीति विरेचनरूपकार्याप्रबाधकतया गुणभूतमित्यर्थः। यदि हि विरुद्धवीर्यं गुणभूतं न स्यात् तदा मदनादीनां कार्यं प्रतिहन्यात्; विरुद्धस्यापि च कार्याप्रतीघातोऽवश्यमबाधकत्वमेवेति भावः। विपरीतस्य कार्याबाधनरूपं साहाय्यमभिधाय तुल्यवीर्यस्य कार्यमाह—अधिकमित्यादि। तुल्यवीर्ये संयुक्ते सति क्रियासामर्थ्यमधिकं भवतीत्यर्थः ॥ ४५ ॥

इष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम्।
अतो विरुद्धवीर्याणां प्रयोग इति निश्चितम् ॥ ४६ ॥

अथ तुल्यवीर्यं तावत् क्रियासामर्थ्याधिक्यकारकं, तेन तत्संयोगोऽस्तु, विरुद्धवीर्यसंयोगास्तु किमर्थं क्रियन्त इत्याह—इष्टेत्यादि।—इष्टवर्णत्वादिसंपत्त्यर्थम्; अतो मदनफलादेर्विरुद्धवीर्याणां प्रयोगैस्तथा विरुद्धामयं च प्रति विरुद्धवीर्याणां प्रयोगो वमनविरेचनहर्तव्यामयविशेषे यौगिक इत्यर्थः ॥४६॥

भूयश्चैषां बलाधानं कार्यं स्वरसभावनैः।
सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्मकृत् ॥ ४७ ॥
स्वरसैस्तुल्यवीर्यैर्वा तस्माद्द्रव्याणि भावयेत्।

अथ मदनफलादीनां वीर्योत्कर्षादिके विधिमाह—भूयश्चैषामित्यादि। तुल्यवीर्यैर्वेति तुल्यवीर्यैः स्वरसैः क्वाथैर्वा ॥४७॥—

अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ॥ ४८ ॥
कुर्यात् संयोगविश्लेषकालसंस्कारयुक्तिभिः।

तुल्यातुल्यवीर्यसंयोगादिकार्यमाह—अल्पस्यापीत्यादि। तत्रात्पमात्रस्य समानवीर्यसंयोगान्महार्थत्वं भवति, तथा विरुद्धवीर्यसंयोगात् प्रभूतमात्रस्याप्यल्पकर्मता कर्तव्या। इयं चाल्पकर्मकता प्रभूतभेषजस्य दीप्तिकारणकोष्ठव्याध्यादिप्रयोजनात् क्रियते, तेन न निष्प्रयोजना। विश्लेषादप्यल्पस्य महार्थत्वं विरुद्धवीर्यविश्लेषाद्बोद्धव्यं; समाधिकविश्लेषात्तु प्रभूतस्याल्पकर्मता ज्ञेया। एवं संस्कारादपि समानासमानगुणान्महार्थत्वमल्पकर्मता वा युक्ता। अल्पस्यापि महार्थत्वं यथा स्निग्धेऽल्पमात्रमपि शोधनं बहुदोषहरणाय भवति, तद्विपर्ययेण प्रभूतस्याल्पकर्मता उदाहरणीया ॥ ४८ ॥—

प्रदेशमात्रमेतावद्द्रव्यमिह षट्शतम् ॥ ४९ ॥
स्वबुद्ध्यैवं सहस्राणि कोटीर्वाऽपि प्रकल्पयेत्।
बहुद्रव्यविकल्पत्वाद्योगसंख्या न विद्यते ॥ ५० ॥

संप्रति, उक्तप्रयोगषट्शतबीजेनानुक्तप्रयोगकल्पनं दर्शयन्नाह—प्रदेशेत्यादि। प्रदेश एकदेशः। अथ कस्मान्निःशेषेण नैव योगा अभिधीयन्त इत्याह–बहुद्रव्येत्यादि। असंख्यत्वान्निःशेषानभिधानमिति भावः॥ ४९ ॥ ५० ॥

तीक्ष्णमध्यमृदूनां तु तेषां शृणुत लक्षणम्।
सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्तते ॥ ५१ ॥

१ एतच्छ्लोकचतुष्टयं हस्तलिखितपुस्तके न पठ्यते। २ 'व्याहृत एव' इति पा०। ३ 'संयोगो भवतीति विनिश्चितम्' इति पा०। ४ 'मदनफलादीनामवयवत्त्वेनैवामी' इति पा०। ५ 'अप्रधानीभूताः' इति पा०। ६ 'समानवीर्ये त्वधिकं क्रियासामान्यमिष्यते' इति पा०।

१ 'महार्थत्वमभिधाय' इति पा०। २ 'क्रियासामान्याधिक्यकारकं' इति पा०। ३–४ 'योगः' इति पा०। ५ '°द्रव्यसंख्या' इति पा०।

**नातिग्लानिकरं पायौ हृदये न च रुक्करम् ।**
**अन्तराशयमक्षिण्वन् कृत्स्नं दोषं निरस्यति ॥ ५२ ॥**
**विरेचनं निरूहो वा तत्तीक्ष्णमिति निर्दिशेत् ।**

अथ वमनविरेचनानां तदुपोद्घाताच्च निरूहाणां तीक्ष्णमध्यमृदुताया लक्षणं कारणं चाह—तीक्ष्णेत्यादि । सुखमिति दुःखमकुर्वन् । असक्तमिति अप्रतिबद्धम् । नातिग्लानिकरं पायाविति विरेचनस्य निरूहस्य च, हृदये न च रुक्करमिति तु वमनस्य लक्षणं ज्ञेयम् । अक्षिण्वन्निति अपीडयन् । विरेचनमिति वमनं विरेचनं च; उक्तं हि—"उभयं हि शरीरदोषमलविरेचनाद्विरेचनशब्दं लभते" (क. स्था. अ. १) इति ॥५१॥५२॥—

**जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ॥ ५३ ॥**
**ईषन्मात्राधिकैर्युक्तं तुल्यवीर्यैः सुभावितम् ।**
**स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ॥ ५४ ॥**
**किंचिदेभिर्गुणैर्हीनं पूर्वोक्तैर्मात्रया तथा ।**
**स्निग्धस्विन्नस्य वा सम्यङ्मध्यं भवति भेषजम् ५५**
**मन्दवीर्यं विरूक्षस्य हीनमात्रं तु भेषजम् ।**
**अतुल्यवीर्यैः संयुक्तं मृदु स्यान्मन्दवेगवत् ॥ ५६ ॥**

जलाग्नीत्यादिना तीक्ष्णत्वे कारणमाह । देशकालगुणान्वितमिति अनुगुणदेशकालप्राप्त्योत्कृष्टगुणवत् । स्नेहस्वेदोपपन्नस्येति सुस्निग्धस्विन्नस्य । किंचिदित्यादिना मध्यस्य वमनादेः कारणलक्षणे आह । एभिर्गुणैरित्यनेन क्षिप्रत्वादि जलाग्निकीटास्पृष्टत्वादि च प्रत्यवमृष्यते । मन्दवीर्यमित्यादिना मृदूनां लक्षणं कारणं चाह । मन्दवेगवदिति लक्षणं, शेषं तु कारणम् ॥ ५३–५६ ॥

**अकृत्स्नदोषहरणादशुद्धी ते बलीयसाम् ।**
**मध्यावरबलानां तु प्रयोज्ये सिद्धिमिच्छता ॥ ५७ ॥**

तीक्ष्णादिशुद्धिविषयावचारणार्थमाह—अकृत्स्नेत्यादि । ते मध्याल्पशुद्धी बलीयसां पुरुषाणां कृत्स्नदोषं यस्माच्च निर्हरतः, तस्मादशुद्धी । अकृत्स्नदोषहरणादिति हेतुवर्णनेन यदा बलीयसोऽल्पदोषतया कृत्स्नदोषहरणकारिके मध्याल्पशुद्धी भवतः, तदा सम्यक्शुद्धी एव ते इति सूचयति । मध्येत्यादि मध्यबले मध्या, अवरबले तु मृद्वी शुद्धिः प्रयोज्येति वाक्यार्थः । तत्र प्रयोज्यभाषया असम्यक्शुद्धी अपि बलापेक्षया कर्तव्ये, मध्यावरौ प्रति तयोः सम्यक्शुद्धिकर्तृत्वं भवतीति दर्शयति ॥ ५७ ॥

**तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः ।**
**तीक्ष्णादीनि बलावेक्षी भेषजान्येषु योजयेत् ॥५८॥**

व्याधितीक्ष्णत्वादिविभागेन विशुद्धौ तीक्ष्णत्वादिविधानमाह—तीक्ष्णो मध्य इत्यादि । सर्वमध्याल्पलक्षण इति यथासंख्यं तीक्ष्णादिव्याधिलक्षणं; सर्वलक्षणः तीक्ष्णः, मध्यलक्षणः मध्यः, अल्पलक्षणः मृदुर्व्याधिः । बलावेक्षीत्यनेन व्याधेस्तीक्ष्णत्वे यदि बलं महद्भवति तदैव तीक्ष्णशोधनं कर्तव्यमिति दर्शयति ॥ ५८ ॥

**देयं त्वनिर्हृते पूर्वं पीते पश्चात् पुनः पुनः ।**
**भेषजं वमनार्थीयं प्राय आपित्तदर्शनात् ॥ ५९ ॥**

वमने क्रियमाणेऽवस्थाविशेषकर्तव्यमाह—देयमित्यादि । एवं पीते वमने सति अनिर्हृते दोषे पश्चात् पुनः पुनर्वमनार्थीयं भेषजं देयम् । आपित्तदर्शनादिति यावत् पित्तं न दृश्यते तावत् पुनः पुनर्वमनं देयम् । वमनं हि पित्तान्ततया सम्यग्युक्तं भवति । उक्तं हि—"पित्तान्तमिष्टं वमनं विरेकादर्धं" ( सि. स्था. अ. १ ) इति ॥ ५९ ॥

**बलत्रैविध्यमालक्ष्य[1] दोषाणामातुरस्य च[2] ।**
**पुनः प्रदद्याद्भैषज्यं सर्वशो वा विवर्जयेत् ॥ ६० ॥**

पुनः पुनर्भैषज्यप्रयोगस्यापवादविषयमुचितविषयं च दर्शयन्नाह—बलेत्यादि । बलवति दोषे, पुरुषेऽपि पुनः प्रयोज्यं भैषज्यं, हीनबले दोषे पुरुषे च सर्वशो वा भेषजं शोधनार्थं विवर्जयेत्, शोधनं न कुर्यादित्यर्थः । वाशब्देन च मध्यमबले पुरुषे दोषे च न सर्वथा विवर्जनेनैकवारप्रयोगं शोधनस्य दर्शयति ॥ ६० ॥

**निर्हृते वाऽपि जीर्णे वा दोषनिर्हरणे बुधः ।**
**भेषजेऽन्यत्प्रयुञ्जीत प्रार्थयन्सिद्धिमुत्तमाम् ॥ ६१ ॥**

निर्हृते इत्यादौ दोषनिर्हरणे इति दोषनिर्हरणकप्रयोजने भेषजे । निर्हृते इति दोषमनिर्हृत्यैव निर्गते । जीर्णे वेति येन वमनमधिकृत्यैतदुच्यते, तेन वमनस्य पाककालाप्रतीक्षैवेति 'अपक्वं वमनं' इत्यादिना वक्तव्यम् । जीर्णसदृशता च वमनस्य क्षोभाकर्तृतया पाकोन्मुखतया च ज्ञेया । अन्यत् प्रयुञ्जीतेति वमनार्थभेषजपानानन्तरं तदहरेव दद्यात् ॥ ६१ ॥

**अपक्वं वमनं दोषं पच्यमानं विरेचनम् ।**
**निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥ ६२ ॥**

वमनप्रयोगेष्वयोगप्रतीकारार्थं भेषजान्तरप्रयोगे कर्तव्ये पाककालप्रतीक्षणं सोपपत्तिकमाह—अपक्वमित्यादि ॥ ६२ ॥

**पीते प्रस्रंसने[3] दोषान्न निर्हृत्य जरां गते ।**
**वमिते चौषधे धीरः पाययेदौषधं पुनः ॥ ६३ ॥**

वमने आवश्यकं कर्तव्यमभिधाय विरेचनेऽप्याह—पीते प्रस्रंसने इत्यादि । वमिते चौषधे इति विरेचनौषधमात्रे वमिते । पुनरिति तदहरेव ॥ ६३ ॥

**दीप्ताग्निं बहुदोषं तु दृढस्नेहगुणं नरम् ।**
**दुःशुद्धं तदहर्भुक्तं श्वोभूते पाययेत् पुनः ॥ ६४ ॥**

१ 'भिषक् तेषु बलापेक्षी प्रयोजयेत्' इति पा० ।

१ 'बलं त्रिविधमालक्ष्य' इति पा० । २ 'दोषान्' इति पा० ।
३ 'प्रस्कन्दने' इति पा० ।

**दुर्बलो बहुदोषश्च दोषपाकेन यो नरः।**
**विरिच्यते शनैर्भोज्यैर्भूयस्तमनुसारयेत् ॥ ६५ ॥**

विरेचनेन स्तोकदोषहरणे सति कर्तव्यमाह—दीप्ताग्निमित्यादि। दृढस्नेहगुणमित्यनेन स्नेहलक्षणो गुणो देहे यदा दृढो नास्ति तदाऽस्य भेषजं न दातव्यं, किंतु स्नेह एव तावत् कर्तव्यः; असम्यक्स्निग्धे हि पुनरपि क्रियमाणं विरेचनमसम्यग्योगायैव भवति। दुःशुद्धमिति अयोगेनाविशुद्धम्। श्वोभूते, दिनान्तरे भूते, किंवा 'श्वो भूयः' इति पाठः। दोषपाकेनेति पक्वदोषेऽविबद्धत्वाद्बहुत्वाच्च शनैर्विरिच्यते। भोज्यैरिति अनुलोमनैः। अत्र च प्रवृत्तदोषेऽतियोगभयान्न पुनर्विरेचनप्रयोगमनुजानीते ॥ ६४ ॥ ६५ ॥

**वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः।**
**भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥ ६६ ॥**

वमनविरेचनाभ्यां किंचिच्छेषीकृतदोषप्रतीकारार्थमाह—वमनैश्चेत्यादि। अत्र बहुवचनं वेगबहुत्वापेक्षया। अप्रमाणत इति न निःशेषेण। तत्र भोजनं पाचनं यवाग्वादिभोजनम्। अन्तरपानं कषायपानम्। ये तु 'प्रमाणतः' इति पठन्ति, ते सम्यक्शुद्धावपि कोष्ठोपलेपकदोषप्रशमनार्थं भोजनान्तरपानं व्याख्यानयन्ति ॥ ६६ ॥

**दुर्बलं शोधितं पूर्वमल्पदोषं च मानवम्।**
**अपरिज्ञातकोष्ठं च पाययेतौषधं मृदु ॥ ६७ ॥**

मृदुशोधनोपपादनीयमाह—दुर्बलमित्यादि। शोधितं पूर्वमिति पूर्वशोधितस्य दुर्बलतया मृदु भेषजं देयं, तीक्ष्णेन हि बलभ्रंशोऽतियोगश्च स्यात् ॥ ६७ ॥

**श्रेयो मृद्वसकृत्पीतमल्पबाधं निरत्ययम्।**
**न चातितीक्ष्णं यत् क्षिप्रं जनयेत्प्राणसंशयम् ॥६८॥**

मृदुभेषजप्रयोगोपपत्तिमाह—श्रेय इत्यादि। असकृत्पीतमिति असकृत्पीतमल्पबाधं भवतीत्यर्थः। श्रेय इति श्रेयस्त्वं चास्यातिव्यापत्तिकरतीक्ष्णापेक्षया ज्ञेयम्। न चातितीक्ष्णमिति न चातितीक्ष्णं दुर्बलादीनां देयं; यस्मादतितीक्ष्णं दुर्बलादीन् प्राप्य क्षिप्रं प्राणसंशयं जनयेत् ॥ ६८ ॥

**दुर्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः।**
**मृदुभिर्भेषजैर्दोषा हन्युर्ह्येनमनिर्हृताः ॥ ६९ ॥**

दुर्बले बहुदोषे कर्तव्यमाह—दुर्बलोऽपीत्यादि। बहुशोऽल्पश इति पुनः पुनः स्तोकमात्रया। एवंभूतानां महादोषनिर्हरणे हेतुमाह—दोषा हन्युर्ह्येनमनिर्हृता इति ॥ ६९ ॥

**यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकम्।**
**वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥ ७० ॥**

**विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम्।**
**तेनाध्मानं तृषा च्छर्दिर्विबन्धश्चैव शाम्यति ॥ ७१ ॥**
**भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्तते।**
**सोद्गारं साङ्गशूलं च स्वेदं तत्रावचारयेत् ॥ ७२ ॥**

यस्येत्यादावानुलोमिकं विरेचनमौषधमूर्ध्वं याति यस्य, तं पाययेत् 'विरेचनमौषधम्' इति शेषः। कवलैः शुद्धमिति कवलैः शोधितमुखकण्ठम्। तेनेति उष्णजलेन पीतेन ॥ ७०–७२ ॥

**सुविरिक्ते तु सोद्गारमाश्वेवौषधमुल्लिखेत्।**
**अतिप्रवर्तनं जीर्णे सुशीतैः स्तम्भयेद्भिषक् ॥ ७३ ॥**

अतियोगशङ्कायां कर्तव्यमाह—सुविरिक्ते इत्यादि। सुविरिक्ते इति सम्यक्प्रमाणेन निर्हृते इत्यर्थः। सोद्गारमिति उद्गारेण पच्यमानावस्थाऽभिहिता। एतेन सम्यग्विरेचने भूतेऽपि यदौषधं तिष्ठति तत्तद्दिने एवोल्लिखेत्। तस्याप्यौषधैकदेशस्यापच्यमानतायां विरेचनातियोगः स्यादिति दर्शयति ॥ ७३ ॥

**कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम्।**
**क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत्प्रवर्तते ॥ ७४ ॥**

कदाचिदित्यादिना विरेचनस्याविक्रमत्वे हेतुमाह। अत्र कर्तव्यं यद्यपि नोक्तं, तथाऽपि श्लेष्मणा निरोधं भेषजस्य गौरवादिभिरुपलभ्य रात्रिपर्यन्तं भेषजस्यायोगप्रवृत्तिरुपेक्षणीयेति कर्तव्यमूहनीयम्। प्रवर्तते इति दोषसहितं भेषजं प्रवर्तते ॥७४॥

**रूक्षानाहारयोर्जीर्णे विष्टभ्योर्ध्वं गतेऽपि वा।**
**वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥ ७५ ॥**

रूक्षेत्यादावयोगाज्जीर्णे विष्टभ्य ऊर्ध्वं गते वा भेषजे अन्यद्विरेचनं सस्नेहलवणं दातव्यम् ॥ ७५ ॥

**तृण्मोहभ्रममूर्च्छायाः स्युश्चेज्जीर्यति भेषजे।**
**पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥ ७६ ॥**

तृण्मोहेत्यादिना पित्तावृतभेषजस्य लक्षणं चिकित्सितं चाह। स्युर्जीर्यतीति जीर्यति भेषजे तृडादयो भवन्तीत्यर्थः ॥ ७६ ॥

**लालाहृल्लासविष्टम्भलोमहर्षाः कफावृते।**
**भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम् ॥ ७७ ॥**

लालेत्यादिना कफावृतभेषजस्य लक्षणं चिकित्सितं चाह ॥७७

**सुस्निग्धं क्रूरकोष्ठं च लङ्घयेदविरेचितम्।**
**तेनास्य स्नेहजः श्लेष्मा सङ्गश्चैवोपशाम्यति ॥ ७८ ॥**

सुस्निग्धमित्यादौ अविरेचितमिति ईषद्विरेचितम्। स्नेहज इति स्नेहप्रयोगजनितः श्लेष्मा। सङ्गः दोषसङ्गः। तेन लङ्घनेन

१ 'सरैर्भोज्यैः' इति पा०। २ 'अयोगेन शुद्धं' इति पा०। ३ 'विशुद्धस्य प्रमाणतः। भोजमोत्तरपानाभ्यां' इति पा०। ४ 'पूर्वमल्पदोषं' इति पा०।

१ 'विबन्धेऽल्पं' इति पा०। २ 'सशूलं च' इति पा०। ३ 'सुविरिक्तस्तु' इति, 'सुविरिक्तस्य' इति च पा०। ४ 'अतिप्रवृत्तं जीर्णे तु' इति पा०। ५ 'अपच्यमानावस्था' इति पा०। ६ 'विरेचनस्याविरिक्तत्वे' इति पा०। ७ 'विरूक्षानाहयोर्जीर्णे' इति पा०। ८ 'स्युर्जीर्यति हि भेषजे' इति पा०। ९ '०शीतहर्षाः' इति पा०।

दोषपाकादेव प्रवलश्लेष्मोपशमो दोषसङ्गोपशमश्च क्रियत इत्यर्थः ॥ ७८ ॥

**रूक्ष-बह्वनिल-क्रूरकोष्ठ-व्यायामशालिनाम्।**
**दीप्ताग्नीनां च भैषज्यमविरिच्यैव जीर्यति ॥ ७९ ॥**
**तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद्दद्याद्विरेचनम्।**
**वस्तिप्रवर्तितं दोषं हरेच्छीघ्रं विरेचनम् ॥ ८० ॥**

रूक्षादीनां विरेचनप्रयोगे क्रमविशेषं सोपपत्तिकमाह— रूक्षेत्यादि। वस्तिं पुरा दत्त्वेत्यत्र वस्तिशब्देन स्नेहवस्तिमिच्छन्ति, निरूहस्तु वातकोपकतया तथा निरूहानन्तरं विरेचनस्य निषिद्धत्वादिह नेष्यते; उक्तं हि—"निरूहदानात् पवनाद्भयं स्यात्" ( सि.अ. १ ) इति, तथा "नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनान्यवश्यम्। शुद्धो निरूहेन विरेचनं तु" ( सि. अ. १ ) इति; किंतु वस्तिशब्देन निरूहः स्नेहवस्तिश्च गृह्यते; निरूहस्य यद्वातकर्तृत्वमुक्तं तदेकस्यैव स्नेहवस्तिरहितस्याभ्यासात्, उत्सर्गतस्तु वातहन्तृत्वं "वस्तिर्वातहराणां" ( सू. अ. २५ ) इत्यनेनैवोक्तम्। निरूहानन्तरं विरेचननिषेधस्त्वौत्सर्गिकः, तेन विशेषविधिना तस्यापवादो युज्यत एव; किंच, इह वस्त्यनन्तरं यद्विरेचनं विधीयते तच्च वस्तिदानादूर्ध्वं सप्ताहानन्तरमेव भविष्यतीति न कश्चिद्विरोधः। प्रवर्तितमिति प्रच्युत्युन्मुखीकृतम् ॥ ७९ ॥ ८० ॥

**रूक्षाशनाः कर्मनित्या ये नरा दीप्तपावकाः।**
**तेषां दोषाः क्षयं यान्ति कर्मवातातपाग्निभिः ॥८१॥**
**विरुद्धाध्यशनाजीर्णदोषानपि सहन्ति ते।**
**स्नेह्यास्ते मारुताद्रक्ष्या नाव्याधौ तान् विशोधयेत्॥**

रूक्षाशना इत्यादिना स्नेह्या अपि न व्याधिव्यतिरेकेण शोधनीया इत्याह। कर्मनित्या इति नित्यं व्यायामादिकर्मकराः। विरुद्धाध्यशनाजीर्णान् दोषान् सहन्तीति विरुद्धाशनादयो दोषरूपा न तेषां विकारं जनयन्तीत्यर्थः; विरुद्धाध्यशनादयश्च दोषजनकतया दोषशब्देनोच्यन्ते। नाव्याधाविति अविद्यमानसंशोधनैकसाध्ये व्याधौ न तान् विशोधयेदिति; अन्यत्राप्युक्तोऽयमर्थः—"अनीरितानां दोषाणामीरणं न प्रशस्यते। उपर्युपरि सक्तानामश्मनामिव ताडनम्" इति ॥ ८१ ॥ ८२ ॥

**नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम्।**
**स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ८३ ॥**
**एवं ज्ञात्वा विधिं धीरो देशकालप्रमाणवित्।**
**विरेचनं विरेच्येभ्यः प्रयच्छन्नापराध्यति ॥ ८४ ॥**
**विभ्रंशो विषवद्यस्य सम्यग्योगो यथाऽमृतम्।**
**कालेष्ववश्यं पेयं च तस्माद्यत्नात् प्रयोजयेत् ॥८५॥**

उक्तं विधिमुपसंहरन्नाह—एवं ज्ञात्वेत्यादि। विरेच्येभ्य इति विरेचनार्हेभ्यः। विभ्रंश इत्यादौ यस्येति संशोधनस्य। ननु विषतुल्यविभ्रंशमेतच्छोधनं तत्किमनेनाचरितेनेत्याह— कालेष्ववश्यं पेयं चेति; संशोधनसाध्यव्याधाववश्यं पेयम्। तेन, अवस्थाविशेषेऽवश्यकर्तव्यतया न शोधनं परिहर्तुं पार्यत इति भावः ॥ ८३–८५ ॥

**द्रव्यप्रमाणं तु यदुक्तमस्मि-**
**न्मध्येषु तत् कोष्ठवयोवलेषु।**
**तन्मूलमालम्ब्य भवेद्विकल्प्यं**
**तेषां विकल्प्योऽभ्यधिकोनभावः ॥ ८६ ॥**

संप्रति यदेतच्छोधनस्य क्वचित् कर्षादिमानमुक्तं न तत् सर्वपुरुषविषयं, किंतु मध्येषु कोष्ठवयोवलेषु तन्मानं ज्ञेयमिति दर्शयन्नाह—द्रव्येत्यादि। तन्मूलमालम्ब्येति उक्तप्रमाणमनुक्तप्रमाणानुमानवीजं कृत्वा। विकल्पार्थमाह—तेषां विकल्प्योऽभ्यधिकोनभाव इति; भेषजप्रमाणस्याधिकभाव ऊनभावश्च विकल्प्य इत्यर्थः ॥ ८६ ॥

**षड् ध्वंसयस्तु मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः।**
**अष्टौ ते सर्षपा रक्तास्तण्डुलश्चापि तद्द्वयम् ॥ ८७ ॥**
**धान्यमाषो भवेदेको धान्यमाषद्वयं यवः।**
**अण्डिका ते तु चत्वारस्ताश्चतस्रस्तु माषकः ॥८८॥**
**हेमश्च धान्यकश्चोक्तो भवेच्छाणस्तु ते त्रयः।**
**शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं वदरमेव च ॥ ८९ ॥**
**विद्याद्द्वौ द्रङ्क्षणौ कर्षं सुवर्णं चाक्षमेव च।**
**विडालपदकं चैव पिचुं पाणितलं तथा ॥ ९० ॥**
**तिन्दुकं च विजानीयात् कवलग्रहमेव च।**
**द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिका तथा ॥ ९१ ॥**
**द्वे पलार्धे पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका।**
**विल्वं षोडशिका चाम्रं द्वे पले प्रसृतं विदुः ॥ ९२ ॥**
**अष्टमानं तु विज्ञेयं कुडवौ द्वौ तु मानिका।**
**पलं चतुर्गुणं विद्यादञ्जलिं कुडवं तथा ॥ ९३ ॥**
**चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्।**
**पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकं तथा ॥ ९४ ॥**
**कंसश्चतुर्गुणो द्रोणश्चार्मणं नल्वणं च तत्।**
**स एव कलशः ख्यातो घटमुन्मानमेव च ॥ ९५ ॥**
**द्रोणस्तु द्विगुणः शूर्पो विज्ञेयः कुम्भ एव च।**
**गोणीं शूर्पद्वयं विद्यात् खारीं भारं तथैव च ॥९६॥**
**द्वात्रिंशतं विजानीयाद्वाहं शूर्पाणि बुद्धिमान्।**
**तुलां शतपलं विद्यात् परिमाणविशारदः ॥ ९७ ॥**
**शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्तितम्।**

प्रमाणोपोद्घातात् सर्वशास्त्रव्यवह्रियमाणं प्रमाणं निरूपयन्नाह—षड् ध्वंस इत्यादि। ध्वंसीं त्रसरेणुकं वदन्ति; अन्ये तु ध्वंसीं धूलिमाहुः। अष्टौ ते सर्षपा रक्तास्तण्डुला इत्यत्र रक्ता इति सर्षपाणां विशेषणम्। तद्द्वयं धान्यमाष इति तण्डुलद्वयं धान्यमाषो भवेत्। ते तु चत्वार इति यवचत्वारः; अन्ये तु माषाश्चत्वारः अण्डिका इति वदन्ति। त्रयो माषकाः शाणः। अत्र माने अष्टचत्वारिंशन्माषकमानं पलं भवति, तदेव दशर-

१ '°व्यायामशालिनाम्' इति पा०। २ 'वस्तिप्रचालितं' इति पा०। ३ 'वायुकर्माग्निभिस्तेषां यान्ति दोषाः क्षयं सदा' इति पा०। ४ 'विरेचयेत्' इति पा०। ५ 'घट्टनम्' इति पा०।

१ 'तन्मूलमालक्ष्य भवेद्विकल्पः' इति पा०।

क्तिमानेन चतुःषष्टिमाषकपलेन तुल्यं भवति, यतश्चतुर्विंशतिधान्यमाषैर्दशरक्तिकास्तुल्या भवन्ति; ततश्च दशरक्तिमानाश्चतुःषष्टिमाषकाश्चतुर्विंशतिधान्यमाषैर्गुणिताः षट्त्रिंशदधिकपञ्चदशशतधान्यमाषा एव भवन्ति; तेन दशरक्तिकचतुःषष्टिधान्यमाषपलमानेन सह द्वात्रिंशद्धान्यमापप्रमाणाष्टचत्वारिंशन्मान्यमाषपलमानस्य तुल्यता। सुश्रुतेऽपि "तत्र द्वादश धान्यमाषाः स्वर्णमापकः, ते च चतुःषष्टिः पलम्" (सु. चि. अ. ) इति व्यवस्थापितम्। तेन चतुःषष्टिमाषका द्वादशधान्यमाषैर्गुणिताः सन्तोऽष्टषष्ट्यधिकसप्तशतधान्यमाषा भवन्ति; एवं दृढवलोक्तमानादर्धेन सुश्रुतपलादिमानं भवति; एवं सुश्रुतेऽपि पञ्चरक्तिकमाषो भवति। दृढवलमानं मागधं, सुश्रुतमानं कालिङ्गमिति ब्रुवते। जतूकर्णे तु षड्गुञ्जको मापक उक्तः ॥८७-९७॥—

**द्विगुणं तद्द्रवेष्विष्टं तथा सद्योद्धृतेषु च ॥ ९८ ॥**

**[१]यद्धि मानं तुला प्रोक्ता पलं वा तत् प्रयोजयेत्।**

**अनुक्ते परिमाणे तु तुल्यं मानं प्रकीर्तितम् ॥ ९९ ॥**

द्विगुणं तद्द्रवेष्विष्टमित्यादि। अत्र यद्यपि सामान्येनैव द्रवस्य द्वैगुण्यमुक्तं, तथाऽपि तन्त्रान्तरदर्शनात् कुडवादावेव द्रवस्य द्वैगुण्यम्। उक्तं हि—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत्। शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्तितम्" इति। जतूकर्णेऽप्युक्तं—"द्विगुणाः कुडवादयो द्रवाणाम्" इति। इहापि सुनिषण्णकचाङ्गेरीघृते "त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः (चि. अ. १४)" इति वचनेन द्रवद्वैगुण्यं पारिभाषिकप्रस्थे द्रढयताऽऽचार्येण रक्तिकादौ द्वैगुण्यपरिभाषाव्यभिचारः सूच्यत इत्युपपादितमेव प्राक्। आर्द्रद्वैगुण्यं च तस्यैव भवति यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः संभवति, यच्च नित्यमार्द्रमेवोपयुज्यते न तत्र द्वैगुण्यम्। उक्तं ह्यन्यत्र—"वासाकुटजकूष्माण्डशतपत्रीसहामृताः। प्रसारण्यश्वगन्धा च शतपुष्पासहाचराः॥ नित्यमार्द्राः प्रयोक्तव्या न तेषां द्विगुणं भवेत्" इति। अन्येषां च द्वैगुण्यं कृत्वा मानस्य वारद्वयग्रहणं कर्तव्यमित्यर्थः ॥ ९८ ॥ ९९ ॥

**द्रवकार्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम्।**

**यतश्च पादनिर्देशश्चतुर्भागस्ततश्च सः ॥ १०० ॥**

परिभाषान्तरमाह—द्रवकार्येऽपीत्यादि। स्नेहादिसाधने द्रवसंपाद्ये यत्र द्रवं नोक्तं तत्र सलिलं देयमित्यर्थः। यतश्च पादनिर्देशश्चतुर्भागस्ततश्च स इति अस्यार्थो लोकत एव सिद्धः, तथाऽपि स्पष्टार्थं पुनरभिधीयते ॥ १०० ॥

**जलस्नेहौषधानां तु प्रमाणं यत्र [२]नेरितम्।**

**तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥१०१॥**

जलस्नेहौषधानामित्यादौ औषधात् स्नेहश्चतुर्गुण इति कल्कात् स्नेहश्चतुर्गुणः। स्नेहात्तोयं चतुर्गुणमिति तोयशब्दस्य द्रवोपलक्षणत्वाद्द्रवं चतुर्गुणमित्यर्थः। यत्र तु विशिष्टं मानं जलादीनामुक्तं तत्र तथैव कर्तव्यं, "निर्दिष्टे तत्तदेव तु" (सु. चि. अ. ३१) इतिवचनात् ॥ १०१ ॥

१ 'यत्र मानं तुलाकार्यं तत्रैवं संप्रयोजयेत्' इति पा०। २ 'नोदितम्' इति पा०।

**स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा।**

**तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ॥१०२॥**

**संयाव इव निर्यासे मध्यो दर्वीं विमुञ्चति।**

**शीर्यमाणे तु निर्यासे [१]वर्तमाने खरस्तथा ॥ १०३ ॥**

स्नेहपाकत्रैविध्यलक्षणमाह—स्नेहपाक इत्यादि। तुल्ये कल्केन निर्यास इति प्रथमप्रक्षिप्तकल्कतुल्यतां गते पाकेन निर्यासे सति। संयाव इवेति अत्र संयावशब्देन समघृतगुडगोधूमकणिकाकृतपिण्ड उच्यते। शीर्यमाणे इत्यादि खरपाकलक्षणम्। शीर्यमाणे इति अवसीदति। वर्तमाने अङ्गुलिपीडनाद्वर्तितां गच्छति ॥ १०२ ॥ १०३ ॥

**खरोऽभ्यङ्गे स्मृतः पाको, मृदुर्नस्तःक्रियासु च।**

**मध्यपाकं तु पानार्थे वस्तौ च विनियोजयेत् ॥१०४॥**

खरपाकादिविषयमाह—खर इत्यादि ॥ १०४ ॥

**मानं च द्विविधं प्राहुः कालिङ्गं मागधं तथा।**

**कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ १०५ ॥**

कालिङ्गमित्यादिकं श्लोकं केचित् पठन्ति, तं चानार्षं वदन्ति ॥ १०५ ॥

**तत्र श्लोकौ—**

**कल्पार्थः शोधनं संज्ञा पृथग्घेतुः प्रवर्तने।**

**देशादीनां फलादीनां गुणा योगशतानि षट् ॥१०६॥**

**विकल्पहेतुर्नामानि तीक्ष्णमध्यालपलक्षणम्।**

**विधिश्चावस्थिको मानं स्नेहपाकश्च दर्शितः ॥१०७॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने दन्तीद्रवन्तीकल्पो नाम द्वादशोऽध्यायः ॥ १२ ॥**

कल्पार्थ इत्यादिः स्थानार्थसंग्रहः। कल्पार्थः "कल्पार्थं भेदार्थं" (क. अ. १) इत्यादिनोक्तः। शोधनसंज्ञा—"उभयं वा शरीरमलविरेचनात्" (क. अ. १) इत्यादिनोक्ता। पृथग्घेतुः प्रवर्तने इति "तत्रोष्णतीक्ष्णविकाशी—" (क. अ. १) इत्यादिनोक्तः। देशादीनां गुणाः "तत्र देशस्तु" (क. अ. १) इत्यादिनोक्ताः। फलादीनां गुणाः मदनफलादिकल्प एवोक्ताः। योगशतानि षडिति "त्रिशतं पञ्चपञ्चाशत्" इत्यादिनोक्तम्। विकल्पहेतुः "उपभोगसुखार्थं" (क. अ. १) इत्यादिना प्रथमाध्याये प्रोक्तः। नामानि मदनफलादीनामेव, तानि च प्रत्यध्यायमुक्तानि। तीक्ष्णमध्यालपलक्षणमिति "सुखं क्षिप्रं महावेगं" (क. अ. १२) इत्यादिनोक्तम्। विधिश्चावस्थिकः "देयं ह्यनिर्गते पूर्वे" (क. अ. १२) इत्यादिनोक्तः। शेषं सुगमम् ॥ १०६ ॥ १०७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां कल्पस्थाने दन्तीद्रवन्तीकल्पो नाम द्वादशोऽध्यायः ॥ १२ ॥

**सप्तमं कल्पस्थानं समाप्तम्।**

१ 'वर्तमाने' इति पा०।

# सिद्धिस्थानम् ।

## प्रथमोऽध्यायः ।

**अथातः कल्पनासिद्धिं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

कल्पस्थानानन्तरं पारिशेष्यादेव सिद्धिस्थानमभिधीयते । सिद्धेरभिधायकं स्थानं सिद्धिस्थानम् । सिद्धिशब्देन चेह वमनादीनां वमनाद्यसम्यग्योगजन्यानां व्यापदां भेषजस्य साध्यतारूपा सिद्धिरुच्यते, एवंभूतसिद्धिकारणाभिधायकतया चैतत् सिद्धिस्थानमुच्यते; किंवा कार्यकारणयोरभेदोपचारात् सिद्धिशब्देनेह सिद्धिकारणान्येव वमनादीन्युच्यन्ते, उक्तं हि—"सम्यक्प्रयोगं चैव कर्मणां व्यापन्नानां च व्यापत्साधनानि सिद्धिषूपदेक्ष्यामः" (सू. अ. ४) इति । न चैवं सिद्धिस्थानसंज्ञाव्युत्पत्त्या चिकित्सास्थानादीनामपि सिद्धिस्थानसंज्ञाप्रसक्तिरुद्भावनीया, यत इयं संज्ञाऽत्रैव योगरूढ्या वर्तते नान्यत्र ॥ १ ॥ २ ॥

**का कल्पना पञ्चसु कर्मसूक्ता,**
**क्रमश्च कः, किं च कृताकृतेषु ।**
**लिङ्गं तथैवातिकृतेषु, संख्या**
**का, किंगुणः, केषु च कश्च वस्तिः ॥ ३ ॥**
**किं वर्ज्जनीयं प्रतिकर्मकाले,**
**कृते कियान् वा परिहारकालः ।**
**प्रणीयमानश्च न याति केन,**
**केनैति शीघ्रं, सुचिराच्च वस्तिः ॥ ४ ॥**
**[1]साध्या गदाः स्वैः शमनैश्च केचित्**
**कस्मात् प्रयुक्तैर्न शमं व्रजन्ति ।**
**[2]प्रचोदितः शिष्यवरेण सम्य-**
**गित्यग्निवेशेन भिषग्वरिष्ठः ॥ ५ ॥**
**पुनर्वसुस्तन्त्रविदाह तस्मै**
**सर्वप्रजानां हितकाम्ययेदम् ॥**

सिद्धिस्थानाभिधानेऽपि सकलसिद्धिस्थानापेक्षणीयपञ्चकर्मकल्पनाद्यभिधायकतया प्राधान्यादादौ कल्पनासिद्धिरेवोच्यते । अत्र 'का कल्पना' इत्यादीन् शिष्यस्य द्वादशप्रश्नानभिनिवेश्य तान् यथाक्रमं व्याचष्टे प्रश्नानुगुणगुरुबुद्धिप्रकाशार्थम् । यदुक्तं भरद्वाजेन—"अप्रदुष्टेन भावेन प्रसन्नेनान्तरात्मना । शिष्येण सम्यक् पृष्टस्य [3]गुरोर्बुद्धिः प्रकाशते" इति । अत्र 'का कल्पना पञ्चसु कर्मसूक्ता' इति प्रथमः प्रश्नः, 'क्रमश्च कः' इतिं द्वितीयः, 'किंच कृताकृतेषु लिङ्गं तथैवातिकृतेषु' इति तृतीयः, 'संख्या का' इति चतुर्थः, 'किंगुणो वस्तिः' इति पञ्चमः, 'केषु च कश्च वस्तिः' इति षष्ठः, 'किं वर्जनीयं प्रतिकर्मकाले' इति सप्तमः, 'कृते कियान् वा परिहारकालः' इत्यष्टमः, 'प्रणीयमानश्च न याति केन वस्तिः' इति नवमः, 'केनैति शीघ्रं' इति दशमः, 'सुचिराच्च केनैति' इत्येकादशः, 'साध्याः' इत्यादिको द्वादशः । साध्या इत्यादिप्रश्नस्य यद्यप्यवकाशो नास्ति, यतो हि नासाध्या गदाः प्रोक्तेन यथास्वं क्रियमाणेन भेषजेन प्रशाम्यन्ति, तथाऽप्यसम्यग्भेषजे एव यथास्वं भेषजाभिधानादयं प्रश्नो बोद्धव्यः ॥ ३–५ ॥—

**त्र्यहावरं सप्तदिनं परं तु**
**स्निग्धो नरः स्वेदयितव्य [1]उक्तः ॥ ६ ॥**
**नातः परं स्नेहनमादिशन्ति**
**सात्म्यीभवेत् सप्तदिनात् परं तु ।**

कल्पनाशब्देनेह पञ्चकर्माङ्गकल्पनोच्यते, तेन पञ्चकर्माङ्गस्नेहस्वेदप्रयोगमेव प्रागाह । त्र्यहावरमित्यादि प्रथमप्रश्नस्योत्तरम् । त्र्यहावरमिति त्र्यहेण त्र्यहं वा व्याप्य क्रियमाणस्नेहनेन अवरं यथा भवतीति त्र्यहावरं स्निग्धः । सप्तदिनमिति सप्तदिनं व्याप्य स्निग्धः । परमिति स्नेहप्रकर्षकालावधिना सप्तदिनं व्याप्य स्निग्धः । ततश्च कालोत्कर्षात् क्रियमाणशोधनाङ्गस्नेहनपक्षे सप्तदिनं यावत् स्निग्धः, कालाप्रकर्षपक्षे तु त्र्यहं स्निग्धः संस्वेदयितव्य इत्यर्थः । उक्तसप्तदिनस्नेहनकालानतिक्रमं सोपपत्तिकमाह—नातः परमित्यादि । अतः परमिति सप्तदिनात् परम् । कुतो नादिशन्तीत्याह—सात्म्यीभवेदित्यादि । सप्तदिनात् परेण क्रियमाणस्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वान्न स्नेहनमधिकं शरीरे करोतीत्यर्थः; तेन यावन्मात्रस्नेहप्रयोगेण [2]सप्तदिनोपयुक्तेन स्नेहनं वृत्तं, सा मात्रा सात्म्यीभूतैव; अधिकमात्रा या सात्म्यतां न गता सा सप्तरात्रात् परेणापि कर्तव्यैव; वैद्यास्तु सप्तरात्रादस्निग्धे पुरुषे किञ्चिद्विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुञ्जते । एतच्च त्र्यहस्नेहनं सप्तरात्रस्नेहनं च मृदुक्रूरकोष्ठविषयभेदेन । यदुक्तं—"मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया । स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः" (सू. अ. १३) इति । ननु यदि क्रूरकोष्ठस्तु सप्तरात्रेण स्निह्यतीति व्यवस्था, तत् कथमिह 'नातः परं स्नेहनमादिशन्ति' इत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते; ब्रूमः—सत्यं, क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति, [3]परं क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रा प्रयुज्यते, तदा सप्तरात्रेणापि न स्निह्यति ।

---

१ 'साध्या यथास्वं शमनैश्च केचित् कस्माद्गदा न प्रशमं व्रजन्ति' इति पा० । २ 'इत्यग्निवेशो भिषजां वरिष्ठं पप्रच्छ तस्मै स च सर्वमाह' इति पा० । ३ 'गुरोर्बुद्धिप्रकाशकः' इति पा० ।

१ 'इष्टः' इति पा० । २ 'सप्तदिनप्रयुक्तेन स्नेहनं न वृत्तं' इति पा० । ३ 'परन्तु' इति पा० ।

यत्तु तन्त्रान्तरे—"त्रिपञ्चनवरात्रेण स्नेहपानं विधीयते" इत्यनेन सप्तरात्रादूर्ध्वमपि स्नेहनं विहितं, तदाचार्यानभिमतमेव; किंवा, सप्तरात्रादूर्ध्वमसात्म्यीभूताधिकमात्राप्रयोगाभिप्रायेण तद्वर्णनीयम्। अत्र च सप्तरात्रादूर्ध्वं स्नेहप्रयोगस्य निषेधात्, त्र्यहादर्वाक् प्रयोगस्य वा निषेधात्, सद्यः स्नेहप्रयोगेणैकदिनेनापि स्नेहनमनुजानीत इति ब्रुवते। मध्यकोष्ठान्तरं प्रति स्नेहनप्रकर्षकालो यद्यपि नोक्तः, तथाऽपि मध्यविधया पञ्चदिनेन मध्यकोष्ठस्य स्नेहनं ज्ञेयम्। यत्तु कैश्चित् 'मृदुकोष्ठं प्रति त्र्यहादूर्ध्वं न स्नेहनं कर्तव्यं सात्म्यीभावादिति चार्थो लभ्यते' इति व्याख्यायते, तन्न नः प्रीणाति; यतः सात्म्यीभावः सप्तदिननिर्वर्त्यतयैवाचार्येणोक्तः, तेनात्यल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहावदि न स्निह्यति मृदुकोष्ठस्तदाऽधिकदिनान्यपि तत्र स्नेहः कर्तव्यः॥ ६ ॥—

**स्नेहोऽनिलं हन्ति मृदूकरोति**
**देहं मलानां विनिहन्ति सङ्गम्॥ ७॥**

संशोधनाङ्गस्नेहफलमाह—स्नेहोऽनिलं हन्तीत्यादि॥७॥

**स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं**
**स्वेदस्तु दोषं नयति द्रवत्वम्।**

स्नेहपूर्वकस्वेदफलमाह—स्निग्धस्येत्यादि। सूक्ष्मेष्विति सूक्ष्मेष्वपि॥—

**ग्राम्यौदकानूपरसैः समांसै-**
**रुत्क्लेशनीयः पयसा च वम्यः॥ ८॥**
**रसैस्तथा जाङ्गलजैः सयूषैः**
**स्निग्धैः कफावृद्धिकरैर्विरेच्यः।**

संप्रति स्निग्धस्य वामनीयस्य वमनानुगुणं विरेचनीयस्य च विरेचनानुगुणं भोजनं पृथगाह—ग्राम्यौदकेत्यादि। रसैस्तथेत्यादिना विरेचनीयस्याहारविधानम्। अत्र च उत्क्लेशनीय इति यदा संबन्धो भवेत्तदा उत्क्लेशनं पित्तस्यैव ज्ञेयं; किंवा 'उत्क्लेशनीयः' इति नानुवर्तत एव, तेन कफावृद्धिकरै रसैर्यूषैश्च 'भोजनीय' इति शेषः। एतद्विरेचनार्थं प्रतिभोजनं त्र्यहं ज्ञेयं, वमनार्थं तु प्रतिभोजनमेकाहमेव; उक्तं हि—"स्नेहात् प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्। स्नेहवद्द्रवमुष्णं च त्र्यहं भुक्त्वा रसौदनम्॥ एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्" (सू. अ. १३) इति॥ ८॥—

**श्लेष्मोत्तरश्छर्दयति ह्यदुःखं**
**विरिच्यते मन्दकफस्तु सम्यक्॥ ९॥**
**अधः कफेऽल्पे वमनं विरेचये-**
**द्विरेचनं वृद्धकफे तथोर्ध्वम्।**

वामनीयस्य श्लेष्मोत्तरत्वे कर्तव्ये विरेचनीयस्य चाल्पकफत्वे संपाद्ये उपपत्तिमाह—श्लेष्मोत्तर इत्यादि। उक्तविपर्यये हेतुमाह—अध इत्यादि। कफेऽल्पे सति वमनं पीतं वमनमकृत्वैवाधो याति; वृद्धे कफे तु विरेचनं प्रयुक्तमूर्ध्वं याति, वमनाय संपद्यत इत्यर्थः॥ ९॥—

**स्निग्धाय देयं वमनं यथोक्तं**
**वान्तस्य पेयादिरनुक्रमश्च॥ १०॥**
**स्निग्धस्य सुस्विन्नतनोर्यथाव-**
**द्विरेचनं योग्यतमं प्रयोज्यम्।**

संप्रति क्रमश्च क इति प्रश्नस्योत्तरमाह—स्निग्धाय देयं वमनमिति; वमनपानदिनेऽभ्यङ्गेन स्निग्धाय वमनं देयमित्यर्थः, पानजनितस्नेहस्तु पूर्वमेवोक्तत्वान्न पुनरभिधानमर्हति; अन्ये तु 'उपजातस्नेहगुणाय' इति वदन्ति। यथोक्तमिति मदनकल्पोक्तविधिना देयम्। वमनानन्तरं कर्तव्यमाह—वान्तस्येत्यादि। पेयादिः "पेयां विलेपीं" इत्यादिना वक्ष्यमाणः। वमनक्रममभिधाय विरेचनक्रममाह—स्निग्धस्येत्यादि। सुस्विन्नतनोरिति सम्यक्स्विन्नदेहस्य। अयं च विरेचनाङ्गः स्नेहस्वेदक्रमो वमनानन्तरभाविविरेचनेऽपि पेयादिक्रमोत्तरकालं कर्तव्यः; यदुक्तं—"विलेप्याः क्रमागतं चैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्य विरेचयेत्" इति। स्नेहानन्तरं च यत्त्र्यहं विरेचनार्थं प्रतिभोजनं, तदुपक्रमाभिधानानुषङ्गप्रतिपादितमेवेति न पुनरिह प्रतिपाद्यते। यथावदिति कल्पस्थानोक्तविधिना। योग्यतममिति शरीरदोषाद्यपेक्षया यद्विरेचनं यौगिकं भवति तद्देयम्॥ १०॥—

**पेयां विलेपीमकृतं कृतं च**
**यूषं रसं त्रिर्द्विरथैकशश्च॥ ११॥**
**क्रमेण सेवेत विशुद्धकायः**
**प्रधानमध्यावरशुद्धिशुद्धः।**

वमनविरेचनोत्तरभाविपेयादिक्रममाह—पेयां विलेपीमित्यादि। यवागूः बहुसिक्था। विलेपी विरलद्रवा। उक्तं हि—"सिक्थकै रहितो मण्डः, पेया सिक्थसमन्विता। यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा" इति। अत्र अकृतयूषः स्नेहलवणाद्यसंस्कृतः, कृतयूषः स्नेहलवणादिसंस्कृतः; एवं रसेऽपि कृताकृतव्यवस्था। यदुक्तं सूदशास्त्रे—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" इति। त्रिरिति अन्नकालत्रयं व्याप्य, द्विरिति अन्नकालद्वयम्, एकश इति एकान्नकालम्; एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः संबध्यते। एतच्च त्रिरित्यादि पक्षत्रयं प्रधानशुद्धिशुद्धाद्यपेक्षया यथाक्रमं ज्ञेयम्। तेन, प्रधानशुद्धिशुद्धे प्रत्येकं त्रिः पेयादि कर्तव्यं, तेनान्नकालत्रये पेया, ततः परेणान्नकालत्रये विलेपी, ततः परेणान्नकालत्रये कृताकृत-

१ 'सप्तदिनानि व्याप्य निवर्त्यतया' इति पा०। २ 'समांसैः' इति पा०। ३ 'स्निग्धः' इति पा०। ४ 'प्रसृष्टं' इति पा०। ५ 'विगच्छेत्' इति पा०।

१ 'स्निग्धस्य च स्विन्नवतश्च कार्यं विरेचनं योग्यतमं ततश्च। पेयां' इति पा०। २ 'विदध्यात्' इति पा०। ३ 'उपशान्तस्नेहगुणाय' इति पा०।

यूषसहितमन्नं, ततोऽपि च परेण कृताकृतरसेनान्नमन्नकालत्रये देयम्; एवं द्वादशभिरन्नकालैर्वमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयादिक्रमः। अयमेव क्रम उपकल्पनीयेऽपि—"ततः सायाह्ने लोहितशालितण्डुलानां" इत्यादिना, यावत् "द्वादशे चान्नकाले" ( सू. अ. १५ ) इत्यनेनोक्तः। अत्र यूषरसयोस्तु यद्यपि कालविभागो न प्रतिपादितस्तथाऽपि यूषकालत्रये रसकालत्रये च प्रथममकृतस्य उत्तरकाले च कृतस्य यूषस्य, एवं रसस्यापि कालविभागः कथनीयः। एवं द्विःपेयादिक्रमस्तथा एकशश्च पेयादिक्रमो वर्णनीय इति। एककाले तु पेयादिक्रमे यद्यपि कृताकृतयूषरसयोः कालविभागो न प्राप्यते, तथाऽप्येकस्मिन्नेव काले स्तोकसंस्कारेण यूषरसयोस्तत्र कृताकृतत्वं ज्ञेयम्। प्रधानशुद्धे भूरिदोषगमनक्षोभादग्निमान्द्यं संभवति, तेन तत्र पेयादिक्रमश्चिरं क्रियत इति ज्ञेयम्। प्रधानशुद्ध्यादिलक्षणं चाग्रे वक्ष्यमाणम् ॥ ११ ॥—

**यथाऽणुरग्निस्तृणगोमयाद्यैः**
**संधुक्ष्यमाणो भवति क्रमेण ॥ १२ ॥**
**महान् स्थिरः सर्वपचस्तथैव**
**शुद्धस्य पेयादिभिरन्तरग्निः।**

पेयादिक्रमस्य विशोधनमन्दीकृताग्नेर्दीपकत्वं दृष्टान्तेन दर्शयन्नाह—यथेत्यादि ॥ १२ ॥—

**जघन्यमध्यप्रवरे तु वेगा-**
**श्चत्वार इष्टा वमने षडष्टौ ॥ १३ ॥**
**दशैव ते द्वित्रिगुणा विरेके**
**प्रस्थस्तथा द्वित्रिचतुर्गुणश्च।**
**पित्तान्तमिष्टं वमनं विरेका-**
**दर्धे कफान्तं च विरेकमाहुः ॥ १४ ॥**
**द्वित्रान् सविट्कानपनीय वेगा-**
**न्मेयं विरेके वमने तु पीतम्।**

प्रधानशुद्ध्यादिलक्षणं प्राह—जघन्येत्यादि। चतुर्भिर्वेगैर्यच्छोधनं वमनं तज्जघन्यं, यत्तु षड्भिस्तन्मध्यमं, यत्त्वष्टाभिस्तत् प्रवरम्। विरेके जघन्ये दश, मध्ये तु विरेचने द्विगुणा दश विंशतिरित्यर्थः, प्रवरे तु विरेचने त्रिगुणा दश त्रिंशदित्यर्थः। वेगसंख्याविभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां यथाक्रममाह—प्रस्थस्तथेत्यादि। द्विगुणः प्रस्थो जघन्ये विरेचने, त्रिगुणश्च मध्यमे, चतुर्गुणस्तु प्रवरे। अत्र च प्रस्थशब्देन सार्धत्रयोदशपलान्युच्यन्ते; उक्तं हि तन्त्रान्तरे—"वमने च विरेके च तथा शोणितमोक्षणे। सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति। पित्तान्तमिष्टं वमनं विरेकादर्धमिति विरेके यन्मानं जघन्यमध्यप्रवरविभागे प्रोक्तं यथाक्रमं तथा वमनेऽपि जघन्यमध्यप्रवरविभागे तदर्धं ज्ञेयं; परं तु यत् पित्तान्तत्वं वमनस्य, कफान्तत्वं विरेकस्य, तत् त्रिविधशुद्धावयथोगतं ज्ञेयम्। यदा चतुर्भिर्वेगैः प्रस्थमाने दोषे गते पित्तान्तत्वं सम्यग्वमनशुद्धिजलक्षणमुपलभ्यते तदा जघन्या शुद्धिः, यदा च विरेके दशभिर्वेगैर्द्विप्रस्थमानदोषगमने कफान्तत्वं विरेचनसम्यग्योगलक्षणमुपलभ्यते तदा विरेचनस्य जघन्या शुद्धिर्भवति; एवं मध्यप्रवरशुद्धावपि वमने पित्तान्तत्वं, विरेचने कफान्तत्वं, सम्यग्योगलक्षणं ज्ञेयम्। वेगसंख्यादोषमानाभिधानानन्तरं सम्यक्शुद्धिलैङ्गिकशुद्धेः पित्तान्तत्वादिलक्षणप्रतिपादनार्थमिहाभिधानं, तेन यदुच्यते—आन्तिकी, वैगिकी, मानिकी, लैङ्गिकी चेति चतुर्विधा शुद्धिरिहोच्यते वमनविरेचनयोः, तदस्माकमसंमतमेव; किन्तु लैङ्गिकी चैका शुद्धिः। तत्र च पित्तान्तत्वं तथा 'क्रमात् कफः' इत्यादिग्रन्थवक्ष्यमाणं च लिङ्गं वमने, विरेचने च कफान्तत्वं तथा 'स्रोतोविशुद्धीन्द्रिय०' इत्यादिग्रन्थवक्ष्यमाणं च लिङ्गं ज्ञेयम्। तेन यदत्र **आषाढवर्मणा** "सम्यग्विशुद्धिलिङ्गं लक्षणतोऽथ मानाच्च वेगाच्च दोषागमनाच्चोक्तं, किमिदं व्यस्तं समस्तं वा" इत्यादिनाऽऽक्षिप्तं, तदनभ्युपगमनिरस्तमेव। अन्येषां त्वत्र परिहारा विस्तरभयान्न लिखिताः। जघन्यादिशुद्धित्रैविध्यं चात्र जघन्यमध्योत्कृष्टदोषविषयतया व्यवस्थापनीयम्। जघन्यादिशुद्धिलक्षणेऽपि यद्वेगेन जघन्यादिशुद्धिलक्षणाभिधानं, तत् प्रायोभावितया ज्ञेयम्। दोषमानभेदेन जघन्यादिमानभेदः पारमार्थिकः; तेन यत्र वमनेऽष्टाभिर्वेगैर्द्विप्रस्थदोषस्रुतिर्भवति तत्र प्रवरैव शुद्धिः, यत्र वमने षड्भिरेव वेगैः सार्धप्रस्थदोषस्रुतिर्भवति तत्र मध्यैव शुद्धिः, यत्र च चतुर्भिरपि वेगैरेकप्रस्थदोषस्रुतिस्तत्र जघन्यशुद्धिरेव; एवं विरेचनेष्वप्युदाहार्यम्। पित्तप्रवृत्तिरन्ते यस्मिन् तत् पित्तान्तम्, एवं कफान्तमपि व्याख्येयम्। तेन "क्रमात् कफः पित्तमथानिलश्च" इत्यनेन यत् सम्यग्वमनलक्षणं वक्तव्यं, तथा "प्राप्तिश्च विट्पित्तकफानिलानां" इत्यनेन च सम्यग्विरेचनलक्षणं यद्वक्तव्यं, तदनेन सहाविरुद्धं भवति। तत्र च यदनिलागमनमन्ते वक्तव्यं तत् पित्तान्तस्य कफान्तस्य च सूचकतया ज्ञेयं; निःशेषकृते ह्याशयगते पित्ते कफे च वायुः केवलः सरति; तेन च केवलवायुसरणेन पित्तान्तता कफान्तता च ज्ञायते। ननु यदि "क्रमात् कफः" इत्यादिनैव ग्रन्थेनायमर्थोऽभिहितस्तत् कथमिह पित्तान्तं च वमनं, कफान्तं च विरेकमाहुरिति कृतं? ब्रूमः—वेगसंख्यादोषमानभेदप्रतिपाद्यमानजघन्यादिशुद्धित्रये पित्तान्तत्वाद्यनुगतिप्रतिपादनार्थमिहाभिधानम्; एवं तद्वमनविरेचनसम्यग्योगलक्षणानभिधाने हि शिष्यस्य प्रबलदोषेऽपि पुरुषेऽयोगशुद्धावेव जघन्यशुद्धिगतवेगमानोदये सति अथ पित्तान्तरवाद्यनुदये जघन्यशुद्धिभ्रमः स्यात्

१ 'कृताकृतयूषयोरन्यतरेण सहितमन्नम्' इति पा०। २ शिवदाससेनस्तु "पेयाक्रमः समाप्यते, अन्नकालस्तूत्सर्गसिद्धः सायं प्रातश्च" इत्यधिकमाह। ३ 'इत्यनेन' इति पा०। ४ 'सर्वसहस्तथैव' इति पा०।

एवमन्यदप्युदाहार्यम् । वमने च विरेके च यथा दोषमापनं कर्तव्यं तदाह—द्वित्रानित्यादि । द्वित्रानित्यव्यवस्थितभाषणेन मलभागस्यामेयतां दर्शयति; वमने तु पीतमिति वमने पीतमौषधं वर्जयित्वा शेषो मेयः ॥ १३ ॥ १४ ॥—

**क्रमात् कफः पित्तमथानिलश्च**
**यस्यैति सम्यग्वमितः स इष्टः ॥ १५ ॥**
**हृत्पार्श्वमूर्धेन्द्रियमार्गशुद्धौ**
**तथा लघुत्वेऽपि च लक्ष्यमाणे ।**

संप्रति 'किं च कृताकृतेषु' इत्यादिप्रश्नस्योत्तरं यथाक्रममाह—क्रमादित्यादि । क्रमादित्यनेन वचनेन यथोक्तक्रमलङ्घनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति दर्शयति; यतः कफादूर्ध्वं गतं यदा पित्तं भवति तदा तु पित्तागमनेऽपि सति न शुद्धिः, किंतु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः, तत् पित्तानयनं च कफानयनानन्तरमेव भवति; एवं सम्यक्कृतविरेचनलक्षणेऽपि क्रमादितिपदस्यार्थोऽत्र व्याख्येयः ॥ १५ ॥—

**दुश्छर्दिते स्फोटककोठकण्डू-**
**हृत्खाविशुद्धिर्गुरुगात्रता च ॥ १६ ॥**

दुश्छर्दिते इत्याद्ययोगकृतवमनलक्षणम् ॥ १६ ॥

**तृण्मोहमूर्च्छानिलकोपनिद्रा-**
**बलादिहानिर्वमनेऽति च स्यात् ।**

तृण्मोहेत्याद्यतिकृतवमनलिङ्गम् । अत्रादिशब्देन वर्णस्वरादिग्रहणम् । निद्राहानिश्चात्रानिलकोपकृतैव ॥—

**स्रोतोविशुद्धीन्द्रियसंप्रसादौ**
**लघुत्वमूर्जोऽग्निरनामयत्वम् ॥ १७ ॥**
**प्राप्तिश्च विट्पित्तकफानिलानां**
**सम्यग्विरिक्तस्य भवेत् क्रमेण ।**

स्रोतोविशुद्धीत्यादि सम्यग्विरेचनलक्षणम् । ऊर्जोऽग्निरिति पटुरग्निः । अनामयत्वमिति विरेचनजेतव्यदोषजनितविकारव्यपगमः । प्राप्तिश्चेत्यादिग्रन्थार्थः स्थानान्तरे व्याख्यात एव ॥ १७ ॥—

**स्याच्छ्लेष्मपित्तानिलसंप्रकोपः**
**सादस्तथाऽग्नेर्गुरुता प्रतिश्या ॥ १८ ॥**
**तन्द्रा तथा च्छर्दिररोचकश्च**
**वातानुलोम्यं न च दुर्विरिक्ते ।**

स्यादित्याद्ययोगकृतविरेकलक्षणम् । न च वातानुलोम्यमित्यर्थः ॥ १८ ॥—

---

१ 'तत् पित्तागमनं च कफागमनानन्तरमेव भवति' इति पा० । २ 'बलातिहानिः' इति पा० । ३ 'ऊर्जोऽग्निरिति बलवदग्निः' इति पा० । ४ 'खेदोऽल्पवह्निर्गुरुगात्रता स्यात्' इति पा० । ५ 'न च वातानुलोम्यमिति वातविबन्ध इत्यर्थः' इति शिवदाससेनः ।

**कफास्रपित्तक्षयजानिलोत्थाः**
**सुप्त्यङ्गमर्दक्लमवेपनाद्याः ॥ १९ ॥**
**निद्राबलाभावतमःप्रवेशाः**
**सोन्मादहिक्काश्च विरेचितेऽति ।**

कफास्रेत्यादि विरेकातियोगलक्षणम् । क्षयशब्दः कफादिभिः प्रत्येकं संबध्यते ॥ १९ ॥—

**संसृष्टभक्तं नवमेऽह्नि सर्पि-**
**स्तं पाययेताप्यनुवासयेद्वा ॥ २० ॥**
**तैलाक्तगात्राय ततो निरूहं**
**दद्यात्त्र्यहान्नातिबुभुक्षिताय ॥**
**प्रत्यागते धन्वरसेन भोज्यः**
**समीक्ष्य वा दोषबलं यथार्हम् ॥ २१ ॥**
**नरस्ततो निश्यनुवासनार्हो**
**नात्याशितः स्यादनुवासनीयः ।**

वमनविरेचनकल्पनाप्रस्तावागतसम्यग्योगादिलक्षणमभिधाय बस्तिकल्पनामाह—संसृष्टभक्तमित्यादि । सप्तभिर्दिनैः कृतसंसर्जनक्रमस्याष्टमे भुक्तमुपयुक्तस्य नवमेऽह्नि सर्पिःपानमनुवासनं वा देयम्; अत्र विकल्पद्वये यदि वमनानन्तरं विरेचनं कर्तव्यं तदा नवमेऽह्नि सर्पिःपानम्, अथ विरेचनानन्तरं यदा बस्तिर्देयस्तदाऽनुवासनं नवमेऽह्नि देयमिति व्यवस्था । वमनानन्तरं नवमदिवसे सर्पिःपानं पूर्वं नोक्तं तेनेदानीं विरेचनानन्तरकर्तव्यनिरूहाङ्गानुवासनसमानकालतया सर्पिःपानमपि दर्शितं, तेन न निरूहाङ्गता सर्पिःपानस्य कल्पनीया । नवमश्च दिवसोऽत्र शोधनदिनमारभ्यैव ज्ञेयः; उक्तं च जतूकर्णे—"शोधनानन्तरं नवमेऽह्नि स्नेहपानमनुवासनं वा" इति, तथा सुश्रुतेऽप्युक्तं—"विरेचनात् सप्तरात्रे गते जातबलाय च । कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः" ( सु. चि. अ. ३७ ) इति । उत्तरबस्तिचिकित्सिते च यः पेयादिक्रमानन्तरं रससंसर्जनक्रम उक्तः, स सर्वकर्मावसाने प्रकृतिभोजनगमनार्थं कर्तव्यः, न वमनविरेचनकर्मपरिसमाप्तावेव, तेनेहाकृतरससंसर्गस्यैव नवमे दिने सर्पिःपानमनुवासनं चोपपन्नम् । यत्तु भद्रशौनके—"संसृष्टभक्तः सुमनाः स्नेहपीतो दृढानलः । संशुद्धः परतो मासादनुवास्यस्ततो नरः" इत्युक्तं, तत् प्रागनुवासनविषयं रोगविशेषविषयं वेति नैतद्विरुद्धं भवति; बहूनि चात्र व्याख्यानानि टीकाकृतामङ्गिरि-सैन्धव-जेज्जटेश्वरसेनादीनां सन्ति; अन्यैस्तु तद्व्याख्यानानि दोषोद्धारादेव निरस्तानि । तैलाक्तगात्रायेति वचनमभ्यङ्गेनापि स्नेहप्रयोगदर्शनार्थम् । खेदस्त्वत्र पञ्चकर्मपूर्वतया विहितोऽनुक्तोऽप्यायात्येव; यदुक्तं—"तान्युपस्थित-

---

१ 'प्रत्यागते मांसरसेन भोज्यः सायं च भुक्तोऽल्पमलोऽनुवास्यः' इति पा० । २ 'तेन निरूहाङ्गता' इति पा० ।

दोषाणां स्नेहस्वेदोपपादनैः। पञ्चकर्माणि कुर्वीत'' (सू. अ. २) इति। दद्याच्च्यहादिति अनुवासनदिनादूर्ध्वं त्र्यहात्, तेन यथावक्ष्यमाणक्रमेण एकाहाद् द्व्यहादधिकाद्वा स्नेहात्तदहर्वा निरूहो देयः। नातिबुभुक्षितायेत्यनेन अतिबुभुक्षितस्य निरूहोऽतियोगायोर्ध्वगमनाय च भवतीति सूचयति। तत्र धन्वरसेन प्रतिभोजनं विरेचनवदभिमान्द्याभावाद्बलावहत्वाच्च युक्तमेव; यदुक्तं भोजे—"आमत्वकाद्विशुद्धस्य निरूहेण रसादिकम्। किमर्थं विहितं भोज्यं संसर्गश्च विरिक्तवत्॥ विरेकः पावकं हन्ति तदधिष्ठानसंप्लवात्। न तु बस्तिस्तथा तस्माद्यथोन्नयति पावकम्'' इति। निरूह एव दोषाग्निबलापेक्षया रसादिना पेयादिना वा भोजनं दर्शयन्नाह—समीक्ष्य वा दोषबलं यथार्हमिति; बलमिति अग्निबलम्। नरस्तत इत्यादिना निरूढस्यानुवासनमाह। निशीत्यनेन निरूहानन्तरं तद्दिने क्रियमाणमनुवासनं निश्येव कर्तव्यमिति दर्शयति, न शीते वसन्ते च सद्योनिरूढस्य रात्रावेवानुवासनं न देयमिति। अन्ये तु निशीत्यनेन तदहरेव निरूढाय सायमनुवासनं देयमिति दर्शयति, तेन यथावक्ष्यमाणविभागेन रात्रौ दिवा वा देयमित्याहुः। अनुवासनार्ह इति वचनेन यदि सामता मन्दो वा पावको भवति तदा तदहरनुवासनं न देयमिति सूचयति। अत एव जतूकर्णे द्वितीयदिवस एवानुवासनमुक्तं—"ततस्त्र्यहान्निरूहे व्युषिते भुक्तवतोऽनुवासनम्'' इति; हारीतेऽपि—"व्युष्टं रजन्यां प्रसमीक्ष्य तस्माद्बलाबलं वाऽप्यनुवासनीयः'' इत्युक्तम्। "सद्यो निरूढोऽनुवास्यः स्यात्'' इति वचनं निरूहजनितवातक्षोभयुक्तपुरुषविषयम् ॥२०॥२१॥

शीते वसन्ते च दिवाऽनुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु ॥ २२ ॥
तानेव दोषान् परिरक्षता ये
स्नेहस्य पाने परिकीर्तिताः प्राक्।

निशीत्यनेन यन्निशासमीपेऽनुवासनं विहितं तदेव कालभेदेन भिन्नकालं दर्शयन्नाह—शीते इत्यादि। शीतशब्देन शिशिरहेमन्तयोरपि ग्रहणम्। दिवेति निशासमीपे दिवाभागे, रात्रावपि च दिनसमीपायां रात्रौ। दोषान् परिरक्षता दोषान् दृष्ट्वा,अन्तरं च दोषवर्जनेन परिरक्षता; ये स्नेहस्य पाने परिकीर्तिताः स्नेहाध्याये—"श्लेष्माधिको दिवा शीते'' (सू. अ. १३) इत्यादिना ग्रन्थेन, य एवाकालपीतस्नेहदोषा भवन्ति त एव यथोक्तकालविपर्ययकृतानुवासनेऽपि दोषा भवन्तीत्युक्तं भवति। स्नेहाध्याये यद्वातपित्ताधिकत्वादिविशेषेणापि रात्रौ दिवा च स्नेहपानं विहितं तदिहापि समानन्यायत्वादेकदेशाभिधानेनापरैकदेशानुमानाच्च ज्ञेयम् ॥ २२ ॥

प्रत्यागते चाप्यनुवासनीये
दिवा प्रदेयं व्युषिताय भोज्यम् ॥ २३ ॥

सायं च भोज्यं परतो द्व्यहे वा
त्र्यहेऽनुवास्योऽहनि पञ्चमे वा।
त्र्यहे त्र्यहे वाऽप्यथ पञ्चमे वा
दद्यान्निरूहादनुवासनं च ॥ २४ ॥

प्रत्यागते चेत्यादौ अनुवासनीये इति अनुवासनस्नेहे। व्युषितायेति निर्विकारं रात्रिव्युषिताय दिवा भोज्यं देयं, तथा सायं च भोज्यं देयम्। अनुवासनानन्तरं पुनरनुवासनकालमाह—त्र्यहे वेत्यादि। अत्रापि त्र्यहपञ्चाहव्यवस्था पूर्ववत्; अयं चानुवासनकालो निरूहदिन एव दातव्यानुवासने परिज्ञेयः। अन्ये तु पठन्ति यत्—'परतो द्व्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वा' इति; व्याख्यानयन्ति च—परतो द्व्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वेति; अत्र तु द्व्यहेऽनुवासनमतिप्रबलवातस्य, अनतिवृद्धवातस्य त्र्यहे, पञ्चमे तु प्रवृद्धकफपित्तस्येति व्यवस्था। द्वितीयदिनानुवासनं हारीतेऽप्युक्तं; वचनं हि—"दृष्ट्वाऽतिवृद्धं पवनस्य रूपं दिने दिने बस्तिमुदाहरन्ति'' इति; सुश्रुतेऽप्युक्तं—"रूक्षस्य बहुवातस्य स्नेहबस्तिं दिने दिने। दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात्त्र्यहात्'' (सु. चि. अ. ३७) इति। इहापि "रूक्षनित्यस्तु'' इत्यादिना, "°वातार्ताश्च दिने दिने'' (सि. अ. ४) इत्यन्तेन द्व्यहे दानं विधास्यति, तेन 'द्व्यहे वा त्र्यहे वा' इति पाठः साधुः; 'द्व्यहशब्देन चात्र दिनद्वयसंबन्धमात्रमुच्यते, न द्व्यहपूर्णं; तेन प्रथमदिवसदत्तानुवासनात् प्रभृति पूर्णे तृतीये दिवसेऽनुवासनं प्राप्नोति' इति यदुच्यते, तन्निरस्तम्; एवं त्र्यहेऽपि तृतीयाहसंबन्ध एव विवक्षितो ज्ञेय इति ॥ २३ ॥ २४ ॥

एकं तथा त्रीन् कफजे विकारे
पित्तात्मके पञ्च तु सप्त वाऽपि।
वाते नवैकादश वा पुनर्वा
बस्तीनयुग्मान् कुशलो विदध्यात् ॥ २५ ॥

संप्रति दोषभेदेनानुवासननियममाह—एकं तथा त्रीनित्यादि। एतच्च 'संख्याः कति' इति प्रश्नस्योत्तरम्; अपरं संख्याप्रश्नस्योत्तरं 'त्रिंशन्मताः कर्मसु' इत्यादिना भविष्यति। कफपित्तयोश्च यद्यप्यनुवासनं न विहितं, तथाऽपि वातानुगतकफपित्तविषयतयैतद्बोद्धव्यम्। पुनर्वेत्यनेन वाते नव एकादश वा कुर्यात्। अयुग्मानित्यनेन द्विचतुःषडादिसंख्यया युग्मदानं निषेधयति, अयुग्मदानं प्रभावादेवात्रोपकारीति महर्षिवचनाद्बोध्यं, यथा—"युग्मेष्वहःसु पुत्रकामौ संवसेताम्'' (शा. अ. ८) इति; उपपत्तिश्चात्रातिप्रसङ्गभीत्या न कथिताऽऽचार्येण। यत्तु—"त्रीन् पञ्च वाऽऽहुश्चतुरोऽथ षड् वा'' इत्यादिना युग्मबस्तिदानं वक्ष्यति, तन्निरूहाङ्गतया स्नेहनार्थक्रियमाणानुवासन-

१ 'मांसरसभोजनं' इति पा०।

१ 'प्रत्यागते चाप्युषितस्य काले भोज्यं दिवा सायमतः परं तु। त्र्यहे त्र्यहे वाऽप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनं तु' इति पा०। २ 'द्व्यहे त्र्यहे वाऽप्यथ' इति पा०। ३ 'कर्म तु' इति पा०।

विषययुग्मबस्तिदानं ज्ञेयम्, इह तु प्रधानतया क्रियमाणानुवासनविषयमयुग्मदानमिति न विरोधः। एतेन, यदुक्तमाषाढवर्मणा—"निरूहकार्यकारणमयुग्मदानमस्मिन्नोक्तं निषिद्धपूर्वं च, योगस्यान्ते क्रमादेकं तथा त्रीनित्यादीन् स्नेहान् आह" (?) इति, तन्निरस्तं ज्ञेयम्। किंच, अयुग्मानित्यनेन पुनर्वेल्लनेन च यत्रानुवृत्त्याऽनुवासनं देयं तत्रायुग्मकं निरूहान्तरितं च कर्तव्यमित्यर्थः, तेन यथोक्तसङ्ख्याकान्निरूहान् दत्त्वा यथोक्तसङ्ख्यया स्नेहो देयः। विषमसङ्ख्योपादानं तु मध्यविषयाऽपि द्व्यहचतुरह्णादिग्राहकं भवति, तेनोत्तरत्र वक्ष्यमाणसंख्यानुवासनं न विरोधीति ब्रूते। जतूकर्णेऽप्युक्तं—"निरूहे व्युषिते भुक्तवतोऽनुवासनं परं द्वितीयेऽहनि पञ्चमे वा तथैकादशाहेऽपकर्षतो द्वित्रिचतुरादि (?) वातादिपूच्यते" इति ॥ २५ ॥

नरो विरिक्तस्तु निरूहदानं
विवर्जयेत् सप्तदिनान्यवश्यम्।
शुद्धो निरूहेण विरेचनं च
तद्ध्यस्य शून्यं विकसेच्छरीरम् ॥ २६ ॥

संप्रति निरूहविरेचनयोरन्तरेऽवश्यपरिहर्तव्यकालमाह—नरो विरिक्तस्त्वित्यादि। अवश्यमिति वचनादेकाहसाध्येऽपि व्याधाववश्यं सप्तदिनच्छेदः कर्तव्य इति दर्शयति। यद्यपि विरेचनानन्तरं निषिद्ध एव निरूहः पञ्चकर्मीयायां सिद्धौ, तथा निरूढस्य विरेचनं निषिद्धं, तथाऽपि तत्कालमेव स निषेधः; तेन त्रिचतुरादिदिनेऽपि प्रसक्तिनिरासार्थमिदं वचनम्। यत्तु विरेचनानन्तरं नवमेऽह्न्यनुवासनकालात्तदुत्तरकालमेव निरूहविधानं, तेनार्वागवस्तेः प्रसक्तिरपि न स्यादित्युच्यते; तन्न, यतोऽनुवासनशुद्ध्यपेक्षसंसर्जनक्रमस्येयं विधा, यदाऽवरशुद्ध्या त्र्यहेणैव पेयादिक्रमः समाप्यते, तदा चतुर्थदिनेऽनुवासनदानात् पञ्चमे षष्ठे वा दिने निरूहः प्रसज्येत, अतस्तन्निरासार्थमेतद्वचनम्। निरूहानन्तरं तु संसर्जनक्रमो नास्त्येव, तेन त्र्यहं स्नेहं दत्त्वा विरेचनप्रसक्तिरस्त्येव। सप्ताहादर्वाक् सप्ताहं यावच्च निरूहविरेचनवर्जने हेतुमाह—तद्ध्यस्येत्यादि। विकसेदिति हिंस्यात्। शून्यमिति पूर्वशोधनशून्यशरीरं पुनः शोधनाद्धिंस्यादिति भावः। यत्तु "आसप्ताहाद्विरेको वा ततश्चापि निरूहणम्" इति तन्त्रान्तरे प्रोक्तं, तच्च संसर्गविधया क्रियमाणसंशोधनक्रमे ज्ञेयम्। तत्रापि च सप्ताहपूरणं संसर्जनस्नेहादीनामनुमतविकल्पपरिहाराद् व्याख्येयम् ॥ २६ ॥

बस्तिर्वयःस्थापयिता सुखायु-
र्बलाग्निमेधास्वरवर्णकृच्च।
सर्वार्थकारी शिशुवृद्धयूनां
निरत्ययः सर्वगदापहश्च ॥ २७ ॥
विट्श्लेष्मपित्तानिलमूत्रकर्षी
दार्ढ्यावहः शुक्रबलप्रदश्च ॥
विश्वक्स्थितं दोषचयं निरस्य
सर्वान् विकारान् शमयेन्निरूहः ॥ २८ ॥

'किंगुणो बस्तिः' इतिप्रश्नस्योत्तरं—बस्तिर्वयःस्थापयितेत्यादि। अयं चास्थापनगुणः, अनुवासनस्य तु 'देहे निरूहेण' इत्यादिना ग्रन्थेन गुणान् वक्ष्यति। वयः स्थापयतीति वयःस्थापयिता; वयःस्थापनत्वं चास्य स्रोतःशुद्धिकरत्वात्। सर्वार्थकारीति स्थिरत्वापकर्षादिविरुद्धार्थस्यापि भेषजविशेषयोगात्। शिशुवृद्धयूनां निरत्यय इत्यनेन वमनविरेचनाभ्यामुत्कर्ष उच्यते, ते हि शिशुवृद्धयोर्निषिद्धे। सर्वगदापहत्वं संशमनेन ज्ञेयं, सर्वान् विकारान् शमयेदित्यनेन दोषसंशोधनद्वारा सर्वगदापहत्वमुच्यत इति न पौनरुक्त्यं; किंवा सर्वान् विकारानिति सर्वावस्थान् विकारानिति विशेषः ॥ २७ ॥ २८ ॥

देहे निरूहेण विशुद्धमार्गे
संस्नेहनं वर्णबलप्रदं च।
न तैलदानात् परमस्ति किञ्चि-
द्द्रव्यं विशेषेण समीरणार्ते ॥ २९ ॥
स्नेहेन रौक्ष्यं लघुतां गुरुत्वा-
दौष्ण्याच्च शैत्यं पवनस्य हत्वा।
तैलं ददात्याशु मनःप्रसादं
वीर्यं बलं वर्णमथाग्निपुष्टिम् ॥ ३० ॥
मूले निषिक्तो हि यथा द्रुमः स्या-
न्नीलच्छदः कोमलपल्लवाग्र्यः।
काले महान् पुष्पफलप्रदश्च
तथा नरः स्यादनुवासनेन ॥ ३१ ॥

देहे इत्यादिनाऽनुवासनगुणमाह। निरूहेण विशुद्धमार्गे इति वचनान्निरूहशोधित एव मार्गे संसर्जदनुवासनं यथोक्तगुणकर्तृ भवतीति दर्शयति। न तैलदानादित्यत्र तैलशब्देन स्नेहोपलक्षणेन केचिद्घृतमपि ग्राहयन्ति, किन्तु तैलमेवात्र वातहरप्रधानतया ब्रूते इति युक्तं पश्यामः; तथा ह्यत्र औष्ण्याच्छैत्यमित्युक्तम्, औष्ण्यं च न सर्पिषीति; स्नेहा मज्जवर्जिता अनुवासनाधिकृता अप्यप्रधानत्वान्नात्र घृतमनुमन्यते। परमस्तीत्यादौ द्रव्यमिति कारणं, तच्च कारणमनिलप्रशमनेन ज्ञेयम्;

१ 'यथोक्तसंख्याततनिरूहं' इति, 'यथोक्तसंख्यान्ते निरूहं' इति च पा०। २ 'विषमसंख्योपादानं द्विचतुरादिबस्तेरपि मध्यविषया परिग्रहार्थम्' इति वृन्दमाधवटीकायां श्रीकण्ठदत्तः। ३ 'आपक्षात्' इति पा०। ४ 'पक्षपूरणं' इति पा०। ५ 'संसर्जनस्नेहनादीनामनुत्तमविकल्पपरिहारात्' इति पा०।

१ 'विट्श्लेष्मपित्तानिलमूत्रकर्षी स्थिरत्वकृत् शुक्रसुतप्रदश्च' इति, 'विट्पित्तखेटानिलमूत्रकर्षी' इति च पा०। २ 'सर्वगदापह इति मिलितसर्वदोषापहः; किंवा, त्रैदोषिकव्याधिहर इत्यन्ये व्याख्या; अन्यथा व्याख्याने तु 'श्लेष्मपित्तानिलकर्षी' इत्यनेन पौनरुक्त्यम्' इति शिवदाससेनः। ३ 'नान्वासनात् किञ्चिदिहास्ति कर्म परं विशेषेण समीरणार्ते' इति पा०। ४ 'स्नेहं' इति पा०। ५ '°मथाग्नि [illegible]' इति पा०।

'नान्वासनात् किञ्चिदिहास्ति कर्म' इति केचित् पठन्ति। तैल-कृत्यमेव सकारणं व्याकरोति—स्नेहेनेत्यादि। तैलं चानुवासने पक्वमेव ज्ञेयम्; अपक्वस्य तु "न चामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद्गुदम्" (सि. अ. ४) इत्यनेन निषिद्धत्वात्। अत्र तैलानिलयोर्विपरीतगुणयोर्मेलके द्रव्यप्रभावात्तैलमेव वातं हन्ति, न वातस्तैलम्; अणुत्वं गुणो यद्यपि तैले वाते चास्ति, तथाऽपीह प्रभावाद्वातसूक्ष्मावयवसंबंद्धं तैलं स्नेहादिना वातं जयति, तेन समानमप्यणुत्वमिह विरुद्धार्थकार्येवेति। तैलस्य यथोक्तकार्यकर्तृत्वे दृष्टान्तमाह—मूले इत्यादि। मूलदृष्टान्तेन चानुवासनेन साक्षात्तर्पणीयस्य गुदस्य देहमूलत्वं दर्शयति, उक्तं हि पराशरे—"मूलं गुदं शरीरस्य सिरास्तत्र प्रतिष्ठिताः। सर्वं शरीरं पुष्णन्ति मूर्धानं यावदाश्रिताः" इति; तथाऽनुवासनादपि नरो बलवीर्याद्युपेतोऽपत्यवांश्च स्यादित्यर्थः॥ २९–३१॥

स्तब्धाश्च ये सङ्कुचिताश्च येऽपि
ये पङ्गवो येऽपि च भग्नरुग्णाः।
येषां च शाखासु चरन्ति वाताः
शस्तो विशेषेण हि तेषु वस्तिः॥ ३२॥
आध्मापने विग्रथिते पुरीषे
शूले च भक्तानभिनन्दने च।
एवंप्रकाराश्च भवन्ति कुक्षौ
ये चामयास्तेषु च वस्तिरिष्टः॥ ३३॥
याश्च स्त्रियो वातकृतोपसर्गा
गर्भं न गृह्णन्ति नृभिः समेताः।
क्षीणेन्द्रिया ये च नराः कृशाश्च
वस्तिः प्रशस्तः परमं च तेषु॥ ३४॥

सामान्येन निरूहानुवासनयोर्गुणमाह—स्तब्धाश्च ये इत्यादि। भग्ना इति भग्नकायाः; रुग्णा इति सन्धिमुक्ताः। भक्तानभिनन्दने अरोचके। वातकृतोपसर्गा इति वातकृतोपद्रवाः। क्षीणेन्द्रिया इति अतिक्षीणशुक्राः। अत्र शुद्धवातादिष्वनुवासनं, भक्तानभिनन्दनप्रकारेषु च निरूह इत्याद्यर्थोऽनुसरणीयः॥ ३२–३४॥

उष्णाभिभूतेषु वदन्ति शीता-
ञ्छीताभिभूतेषु तथा सुखोष्णान्।
तत्प्रत्यनीकौषधसंप्रयुक्तान्
सर्वत्र वस्तीन् प्रविभज्य युञ्ज्यात्॥ ३५॥

संप्रति केषु च कश्च बस्तिरिति प्रश्नस्योत्तरम्—उष्णाभिभूतेष्वित्यादि। उष्णाभिभूते तथा शीताभिभूते इति वक्तव्ये, येन 'सर्वत्र' इति करोति, तेन स्निग्धरूक्षगुरुलघ्वभिभूतेऽपि तद्विपरीतौषधसंपादितो वस्तिर्देय इति दर्शयति॥ ३५॥

न बृंहणीयान् विदधीत वस्तीन्
विशोधनीयेषु गदेषु वैद्यः।
कुष्ठप्रमेहादिषु मेदुरेषु
नरेषु ये चापि विशोधनीयाः॥ ३६॥

नित्यविशोधनीयगदानाह—कुष्ठप्रमेहादिष्वित्यादि। अत्र, आदिशब्देनारोचकतन्द्राश्लीपदादीनां ग्रहणम्। मेदुरेष्विति मेदस्विषु॥ ३६॥

क्षीणक्षतानां न विशोधनीया-
न्न शोषिणां नो भृशदुर्बलानाम्।
न मूर्च्छितानां न विशोधितानां
येषां च दोषेषु निबद्धमायुः॥ ३७॥

क्षीणक्षतानां नेति क्षीणा राजयक्ष्मप्रभृतयो ज्ञेयाः। विशोधनीयानिति अपकर्षणकारकान्। येषां च दोषेषु निबद्धमायुरिति ये संशोधनहरणमात्रेणैव प्राणाञ्जहति॥ ३७॥

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च।
ये सन्ति तेषां न हि कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति॥ ३८॥
विण्मूत्रपित्तादिमलाशयानां
विक्षेपसंघातकरः स यस्मात्।
तस्यातिवृद्धस्य शमाय नान्य-
द्बस्तिं विना भेषजमस्ति किञ्चित्॥ ३९॥
तस्माच्चिकित्सार्धमिति ब्रुवन्ति
सर्वां चिकित्सामपि बस्तिमेके।

बस्तेर्बहुविषयां स्तुतिमाचक्षाणः 'किंगुणो बस्तिः' इति प्रश्नस्यैवोत्तरं पुनराह—शाखागता इत्यादि। शाखाकोष्ठमर्मगता इत्यनेन त्रिविधशाखादिरोगमार्गो गृहीतः; मर्मजशब्देन हि मध्यमरोगमार्गाश्रयिणां सन्धिजानामपि साहचर्याद्ग्रहणम्; इह मर्मास्थिसन्धयो हि मध्यमो रोगमार्ग उक्तः। ऊर्ध्वसर्वशब्देन च ऊर्ध्वाधस्तिर्यग्भेदादप्युक्तरोगमार्गत्रयग्रहणम्। सर्वावयवाङ्गजशब्देन च प्रादेशिकसर्वाङ्गभेदादप्युक्तग्रहणम्। वायोः परमिति वायोः परो न कश्चित् श्रेष्ठ इति यावत्। एतेन यद्यपि कफपित्ते अपि रोगकारणे भवतः, तथाऽपि वायुरेव श्रेष्ठ इत्युच्यते। वायोः श्रेष्ठत्व एव हेतुमाह—विण्मूत्रेत्यादि। पित्तादीत्यत्रादिशब्देन कफस्य ग्रहणं, (न च मलशब्देन कफस्य ग्रहणं,) मलशब्देन चेतरधातुमलानां खमलादीनां च ग्रहणम्। आशयशब्देन मलव्यतिरिक्तप्रसादाख्यानामाशयानां धातूनां च ग्रहणम्। विक्षेपसंघातकर इति वियोगमेलककरः; एतेन, यस्माद्वायुरेव दोषमलधातूनां संयोगविभागौ करोति, तेन

१ 'वातसूक्ष्मावयवसंबन्धकारकं' इति पा०। २ 'आध्मापिते' इति पा०। ३ 'वातकृतोपसर्गाद्गर्भं' इति पा०। ४ 'तेषां च वस्तिः परमः प्रदिष्टः' इति पा०। ५ 'भृष्टकायाः' इति पा०। ६ 'दद्यात्' इति पा०।

१ 'संशोधनहरणग्लानेव' इति पा०। २ '०मलाचयानां विक्षेपसंहारकरः' इति पा०। ३ 'परेण' इति पा०। ४ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते।

दोषदूष्यविण्मलमेलकरूपनिखिलव्याधिकरणे वायुरेव प्रधानं भवतीति भावः। किंवा आशयशब्दः प्रत्येकं विडादिभिः संबध्यते, स्थानेन च स्थानिनो लभ्यन्ते, विडादिसंयोगविभागेनैव च सर्वव्याधिकरणपरिग्रहो भवति। भवत्वेवं वातस्य प्राधान्यमतः किमित्याह—तस्येत्यादि। भेषजमिति प्रधानं भेषजं, यदुक्तं—"वस्तिर्वातहराणाम्" ( सू. अ. २५ ) इति। अतो वस्तावर्धचिकित्सारूपता तथा सर्वचिकित्सारूपता च युक्तैव ॥ ३८ ॥ ३९ ॥—

नाभिप्रदेशं कटिपार्श्वकुक्षिं
गत्वा शकृद्दोषचयं विलोड्य[१] ॥ ४० ॥
संस्नेह्य कायं सपुरीषदोषः
सम्यक् सुखेनैति च यः स वस्तिः[२]।

तत्र वस्तेः कृताकृतलक्षणानि क्रमेणाह—नाभीत्यादि। विलोड्येति संक्षोभ्य। संस्नेह्य कायमिति वीर्यरूपेण सारेण कायं व्याप्य, उक्तं हि—"वीर्येण वस्तिरादत्ते दोषानापादमस्तकात्" ( सु. चि. अ. ३५ ) इति। स्नेहशब्देन च सारोऽभिधीयते; यथा—"देहः स्नेहपरिक्षयात्" ( चि. अ. ८ ) इति। सम्यगिति निरवशेषेण। सुखेनेति विकारमकृत्वा ॥ ४० ॥—

प्रसृष्टविण्मूत्रसमीरणत्वं
रुच्यग्निवृद्ध्याशयलाघवानि ॥ ४१ ॥
रोगोपशान्तिः प्रकृतिस्थता च
वलं च तत् स्यात् सुनिरूढलिङ्गम्।

तादात्विकवस्तिसम्यग्योगलक्षणमभिधायोत्तरकालभवमाह—प्रसृष्टेत्यादि। 'आशयलाघवानि' इत्यत्र 'आमयलाघवानि' इति पाठे रोगोपशान्तिरित्यनन्तरं वाशब्दो ज्ञेयः, तेन रोगोपशान्तिरिह निरूहसाध्यविकाराणामुपशान्तिः ॥ ४१ ॥—

स्याद्रुक्छिरोहृद्गुदवस्तिलिङ्गे[३]
शोफः प्रतिश्यायविकर्तिके च ॥ ४२ ॥
हृल्लासिका मारुतमूत्रसङ्गः
श्वासो न सम्यक् च निरूहिते स्युः।

स्यादित्यादि वस्त्ययोगलक्षणम्। न सम्यङ्निरूहिते इति अयोगेन निरूहिते ॥ ४२ ॥—

लिङ्गं यदेवातिविरेचितस्य
भवेत्तदेवातिनिरूहितस्य[४] ॥ ४३ ॥

वस्त्यतियोगलक्षणमतिदेशेनाह—लिङ्गमित्यादि ॥ ४३ ॥

प्रत्येत्यसक्तं सशकृच्च तैलं
रक्तादिबुद्धीन्द्रियसंप्रसादः[१]।
स्वप्नानुवृत्तिर्लघुता वलं[२] च
सृष्टाश्च वेगाः स्वनुवासिते स्युः[३] ॥ ४४ ॥

अनुवासनसम्यग्योगलक्षणमाह—प्रत्येतीत्यादि। असक्तमिति सङ्गं विना। रक्तादयः धातवः। स्वप्नानुवृत्तिः निद्रानुवृत्तिः। सृष्टा इति अवद्धाः ॥ ४४ ॥

अधःशरीरोदरवाहुपृष्ठ-
पार्श्वेषु रुग्रूक्षखरं च गात्रम्।
ग्रहश्च विण्मूत्रसमीरणाना-
मसम्यगेतान्यनुवासितस्य ॥ ४५ ॥
हृल्लासमोहक्लमसादमूर्च्छा
विकर्तिका चात्यनुवासितस्य।

अथ इत्याद्यनुवासनायोगलक्षणम्। रूक्षखरता चात्र शरीरस्यास्नेहनादेव। हृल्लासादि अतियोगलक्षणम् ॥ ४५ ॥—

यस्येह यामाननुवर्तते त्रीन्
स्नेहो नरः स्यात् स विशुद्धदेहः ॥ ४६ ॥
आश्वागतेऽन्यस्तु पुनर्विधेयः
स्नेहो न संस्नेहयति ह्यतिष्ठन्।

उचितस्नेहप्रत्यागमनकालमाह—यस्येत्यादि। यामानिति प्रहरान्। स विशुद्धदेह इति स अनुवासनप्रयोगसम्यग्योगादनुवासनव्यापत्तिरहित इत्यर्थः। आश्वागते इति शीघ्रं प्रत्यागते, अन्यस्तु विधेय इति तदैवान्यः स्नेहो देयः। पुनः स्नेहदानोपपत्तिमाह—स्नेहो न संस्नेहयति ह्यतिष्ठन्निति ॥ ४६ ॥—

त्रिंशन्मताः कर्म[४] तु वस्तयो हि
कालस्ततोऽर्धेन ततश्च योगः ॥ ४७ ॥
सान्वासना द्वादश वै निरूहाः
प्राक् स्नेह एकः परतश्च पञ्च।
काले[५] त्रयोऽन्ते पुरतस्तथैकः
स्नेहा निरूहान्तरिताश्च षट् स्युः ॥ ४८ ॥
योगे[६] निरूहास्त्रय एव देयाः
स्नेहाश्च पञ्चैव परादिमध्याः।

संप्रति संख्याप्रश्नस्योत्तरविशेषमाह—त्रिंशदित्यादि। कर्मकालयोगसंज्ञा यथाक्रमं त्रिंशत्षोडशाष्टवस्तिसमुदयेषु ज्ञेया। कालस्ततोऽर्धेनेत्यत्र अर्धशब्दो न समप्रतिवचनः[७]; तेन त्रिंश-

१ 'निरस्य' इति, 'विपोथ्य' इति च पा०। २ 'नाभिप्रदेशं च कटिं च गत्वा कुक्षिं समालोड्य पुनश्च पृष्ठम्। संस्नेह्य कायं शिथिलांश्च कृत्वा दोषान् पुरीषं ग्रथितं विमथ्य॥ स्वसक्तवेगः सपुरीषदोषः प्रत्यागतो वस्तिरिति प्रशस्तः' इति पा०। ३ '°हृद्गुदकुक्षिलिङ्गे' इति पा०। ४ 'निरूहितस्य' इति पा०।

१ 'वक्त्रादिशुद्धीन्द्रियसंप्रसादः' इति पा०। २ 'वर्चः' इति पा०। ३ '°न्यनुवासिते स्युः' इति पा०। ४ 'कर्मसु' इति पा०। ५ 'कालस्त्रयोऽन्ते' इति पा०। ६ 'योगो निरूहास्त्रय एव' इति पा०। ७ 'समविभागप्रतिवचनः' इति पा०।

दर्धं षोडश भवन्ति। सान्वसना इत्यादिना कर्मादीनां निरूहानुवासनविभागमाह। एकमनुवासनं दत्त्वा दीयन्त इति सान्वसनाः, एवमनुवासनेन प्रत्येकं योगाद् द्वादश निरूहाश्चतुर्विंशतिर्बस्तयो भवन्ति। प्रागिति आरम्भे। परत इति द्वादशनिरूहोत्तरकाले। निरूहान्तरिताश्च षट् स्युरिति निरूहेणान्तरीकृताः, एवं च द्वादश बस्तयः पूरणीयाः। पञ्चैव परादिमध्या इति पञ्च स्नेहा अन्ते मध्ये आदौ च येषां विभक्तास्ते तथा; अत्र चादौ स्नेहद्वयम्, अन्ते च स्नेहद्वयं, निरूहत्रयमध्ये चैकमनुवासनम्, एवं पञ्च स्नेहा भवन्ति। ये तु निरूहदिन एवानुवासनं वदन्ति तन्मते आदावेक एव, अन्तेऽपि दिनान्तरे एकः, एवं पञ्च भवन्ति; एवं कर्मकालयोरपि निरूहदिन एव दिनान्तरे वाऽनुवासनं व्याख्येयम्। अत्र चैकस्नेहान्तरितानां निरूहाणां दाने वातक्षोभो नाशङ्कनीयः, कर्मादिषु निरूहा यापनावस्तिरूपा दीयन्ते, ते स्निग्धा एवेति कृत्वा न वातक्षोभका भवन्ति। एते च कर्मादयो यद्यपि शास्त्रप्रदेशेषु न व्यवह्रियन्ते, तथाऽपि तद्विधव्यवहारार्थमेवेयं कर्मादिसंज्ञा, यथा यमकमहाच्छपानादिसंज्ञा; तेन कर्मादिसंज्ञायाः शास्त्रे व्यवहारादर्शनात् कर्मादिप्रतिपादको ग्रन्थोऽनार्ष इति यदुच्यते, तन्निरस्तम्। कर्मादिसंज्ञा च तन्त्रान्तरेऽप्यस्ति। तथाहि जतूकर्णः—"बस्तयस्त्रिंशत् षोडशाष्टौ च कर्मकालयोगाः; निरूहाः स्नेहान्तरिता द्वादश षट् त्रयः; एकस्नेहारम्भाः पञ्चत्र्येकान्ताः" इति; हारीतेऽपि—"त्रिंशकं कर्म बुधा वदन्ति" इत्याद्युक्तम्। कर्मादीनां प्रयोगं केचिद्वातादिषु वदन्ति ॥ ४७ ॥ ४८ ॥—

त्रीन् पञ्च वाऽऽहुश्चतुरोऽथ षड्वा
वातादिकानामनुवासनीयान् ॥ ४९ ॥
स्नेहान् प्रदायाशु भिषग्विदध्यात्
स्रोतोविशुद्ध्यर्थमतो निरूहान्।

त्रीन् पञ्चेत्यादिना स्नेहनार्थमनुवासनमाह। अत्र ये 'वातादिकानां' इति पठन्ति, तेषामादिशब्देन पित्तकफयोरपि ग्रहणं; बहुवचनं तु तद्गुणसंविज्ञानबहुव्रीहिणा वातस्य ग्रहणाद्बहुत्वसंख्यायोगादुपपन्नम्। यथोक्तं कुष्ठनिदाने—"वातादिषु प्रदुष्टेषु" (नि. अ. ५) इति, तथा कियन्तःशिरसीयेऽपि "वातादीनां रसादीनां" (सू. अ. १७) इति बहुत्वं निर्दिष्टम्। अन्ये तु—'वाताधिकानां' इति पठन्ति। अत्र चतुर्णां षण्णां च स्नेहानां युग्मरूपाणामपि दानमविरुद्धमेव, एतदनुवासनस्य निरूहाङ्गतया स्नेहनार्थं क्रियमाणत्वात्; अयुग्मदानं तु 'बस्तीनयुग्मान्' इत्यनेन स्वप्रधानतयाऽनुवासनस्य विहितमिति भिन्नविषयतया न विरोधः; यतः स्नेहनप्रयोजनमनुवासनं स्नेहे भूत एवायुग्मदानेन निवर्तनीयं; किंवा, अयुग्मा तन्त्रेतो व्याख्यानेन संख्यैवोच्यते; तथाहि—त्रीन्, पञ्च, त्रीन् चतुर इति सप्त, पञ्च चतुर इति नव, पञ्च षडिस्येकादश, इति पञ्च विकल्पा इह विधीयन्ते। तन्त्रान्तरे स्नेहस्य युग्मदानमुक्तं, यथा—"रूक्षस्य बहुवातस्य द्वौ त्रीन् वाऽप्यनुवासनान्। दद्यात् स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत्" (सु. चि. अ. ३७) इति। स्रोतःशब्देन विबद्धसिराऽभिहिता ॥ ४९ ॥—

विशुद्धदेहस्य ततः क्रमेण
स्निग्धं तलस्वेदितमुत्तमाङ्गम् ॥ ५० ॥
विरेचयेत्त्रिर्द्विरथैकशो वा
बलं समीक्ष्य त्रिविधं मलानाम्।
उरःशिरोलाघवमिन्द्रियाच्छ्यं
स्रोतोविशुद्धिश्च भवेद्विशुद्धे ॥ ५१ ॥
गलोपलेपः शिरसो गुरुत्वं
निष्ठीवनं चाप्यथ दुर्विरिक्ते।
शिरोक्षिशङ्खश्रवणार्तितोदा-
वत्यर्थशुद्धे तिमिरं च पश्येत् ॥ ५२ ॥
स्यात्तर्पणं तत्र मृदु द्रवं च
स्निग्धस्य तीक्ष्णं तु पुनर्न योगे।

संप्रति क्रमागतशिरोविरेचनस्य कल्पनामसम्यग्योगायोगातियोगलक्षणं चाह—विशुद्धेत्यादि। विशुद्धदेहस्येति एतच्च पञ्चकर्मसंपादनीयत्वविषयत्वं शुद्धिपूर्वकत्वं शिरोविरेचनस्येहोच्यते; तेन वमनादिनाऽशुद्धेऽपि शिरोविरेचनैकसंपाद्ये पुरुषेऽयं क्रमो ज्ञेयः। स्निग्धमिति अभ्यङ्गशिरोबस्तिपानादिना। तलस्वेदितमिति हस्ततलस्वेदितम्। त्रिर्द्विरथैकश इति तद्दिन एव दोषाणामुत्कृष्टत्वादिबलत्रैविध्यमपेक्ष्य यथायोग्यतया योज्यम्। इन्द्रियाच्छ्यमिति चक्षुरादीनां स्वविषये पाटवम्। तिमिरं च पश्येदिति तमोव्याप्तं सर्वं पश्येदित्यर्थः। तस्यातियोगायोगयोश्चिकित्सितमैतु वक्तव्यतयाऽनुषङ्गतामाह—स्यात्तर्पणमित्यादि। मृदु द्रवं चेत्यनेनातियोगचिकित्सितम्। तीक्ष्णं तु पुनर्न योगे इति अयोगे शिरोविरेचनस्य पुनस्तीक्ष्णं शिरोविरेचनं देयम् ॥ ५०–५२॥—

इत्यातुरस्वस्थसुखः प्रयोगो
बलायुषोर्वृद्धिकृदामयघ्नः ॥ ५३ ॥

उक्तं पञ्चकर्मप्रयोगमुपसंहरति—इत्यातुरेत्यादि। आतुरस्वस्थसुख इति वचनेन आतुरे आमयस्यापहन्तृतया, स्वस्थे च बलायुर्वृद्धिकर्तृतया यथोक्तपञ्चकर्मप्रयोगः सुखहेतुर्भवतीति ज्ञेयम्। स्वस्थे च पञ्चकर्मप्रवृत्तिः "माधवप्रथमे मासि" (सू. अ. ७) इत्यादिना सूत्रस्थाने प्रोक्तैव ज्ञेया ॥ ५३ ॥

कालस्तु बस्त्यादिषु याति यावां-
स्तावान् भवेद्द्विः परिहारकालः।

---

१ 'वाताधिकेभ्यस्त्वनुवासनीयान्' इति पा०। २ अनेकोद्देशे सकृत्प्रवृत्तिस्तन्त्रता।

१ 'विशुद्धकायस्य' इति पा०। २ 'उरःशिरोलाघवमिन्द्रियाणां' इति पा०। ३ '०श्चिकित्सामन्यवक्तव्यतया' इति पा०। ४ 'प्रयोगे' इति पा०।

'कृते कियान् वा परिहारकालः' इत्यस्योत्तरमाह—कालस्त्वित्यादि। तावान् भवेद्धिः परिहारकाल इति बस्त्यादिप्रयोगे यावान् कालो व्याप्यते, ततः कालाद्द्विगुणं कालं यावत् परिहार्यत्वेनोक्तं परिहर्तव्यम्। अत्र आदिशब्देन वमनविरेचनशिरोविरेचनानां ग्रहणं, बस्तेस्त्वादौ व्युत्पादनेन प्राधान्यं दर्शयति ॥—

अत्यासनस्थानवचांसि यानं
स्वप्नं दिवा मैथुनवेगरोधान् ॥ ५४ ॥
शीतोपचारातपशोकरोषां-
स्त्यजेदकालाहितभोजनं च।

'किं वर्जनीयं' इति प्रश्नस्योत्तरम्—अत्यासनेत्यादि। आसनम् उपविष्टावस्थानम्। स्थानम् ऊर्ध्वतया स्थानम्। यानं रथाश्वादिना यानम्। एत आविष्कृततमा इहोक्ताः; तेन क्रोधातिचिन्तनादयो येऽप्युपकल्पनीयादौ वमनादिप्रयोगे निषिद्धास्तेऽपि न सेव्या एव ॥ ५४ ॥—

बद्धे प्रणीते विषमं च नेत्रे
मार्गे तथाऽर्शःकफविड्विबद्धे ॥ ५५ ॥
न याति बस्तिर्न सुखं निरेति
दोषावृतोऽल्पो यदि वाऽल्पवीर्यः।

'प्रणीयमानः' इत्यादि प्रश्नस्योत्तरं—बद्धे इत्यादि। नेत्रे बद्धे विषमं प्रणीते च गुदावयवरुद्धत्वान्न याति। तथा 'न सुखं निरेति'इत्यादिना 'सुचिराच्च केन' इति प्रश्नस्योत्तरम्। न सुखं निरेतीति चिरेण दुःखं कृत्वा चागच्छतीत्यर्थः। दोषावृत इति दोषेण बलीयसाऽवरुद्धः। अल्प इति अल्पमानः। अल्पवीर्य इति उष्णलवणाद्यभावान्मृदुवीर्यः ॥ ५५ ॥—

प्राप्ते तु वर्चोनिलमूत्रवेगे
वातेऽतिवृद्धेऽल्पबले गुदे वा ॥ ५६ ॥
अत्युष्णतीक्ष्णश्च मृदौ च कोष्ठे
प्रणीतमात्रः पुनरेति बस्तिः।

प्राप्ते चेत्यनेन शीघ्रागमनहेतुमाह। वातेऽतिवृद्धे स्नेहो गुदे वातेन प्रतिहतत्वान्न यात्याशयं, ततः शीघ्रमागच्छति; अल्पबले गुदे स्नेहं धारयितुं न शक्नोति पुरुषः, अल्पबलत्वं गुदस्य संवरणीवलीदौर्बल्यात् ॥ ५६ ॥—

मेदःकफाभ्यामनिलो निरुद्धः
शूलाङ्गसुप्तिश्वयथून् करोति ॥ ५७ ॥
स्नेहं तु युञ्जन्नबुधस्तु तस्मै
संवर्धयत्येव हि तान् विकारान्।
रोगास्तथाऽन्येऽप्यवितर्क्यमाणाः
परस्परेणावगृहीतमार्गाः ॥ ५८ ॥

संदूषिता धातुभिरेव चान्यैः
स्वैर्भेषजैर्नोपशमं व्रजन्ति।

'साध्याः' इत्यादि प्रश्नस्योत्तरं—मेदःकफाभ्यामित्यादि। मेदसा कफेन वेति मेदःकफाभ्याम्। अत्र शूलादीचिरीक्ष्य शुद्धवातभ्रान्त्या स्नेहं प्रयुङ्क्ते, नावरणं जानाति, अत एव'अबुधः' इति कृतम्। अन्यत्राप्युक्तं—"कुपिते मार्गसंरोधान्मेदसा वा कफेन वा। अतिवृद्धेऽनिले नादौ शस्तं स्नेहेन बृंहणम्" इति। अवितर्क्यमाणा इति असम्यग्ज्ञायमानाः। असम्यग्ज्ञायमानत्व एव हेतुमाह—परस्परेणेत्यादि। रोगशब्देनात्र दोषोऽभिप्रेतः। परस्परेण प्रतिबद्धमार्गा अतो दुर्ग्रहा भवन्ति, तथा धातुभिश्च रक्तादिभिः संदूषिताः संमूर्च्छिताः सन्तो दुर्ज्ञेया भवन्ति, अविज्ञाताश्च स्वैर्भेषजैर्न प्रशमं व्रजन्ति; स्वैर्भेषजैरिति मार्गावरोधादिकारणदोषधात्वन्तरनिरपेक्षकैरेकदोषभेषजैः; तद्धि तथाभूतानां भेषजं यौगिकं न भवत्येव, अतोऽनुपशमो युक्त एव; एवं च दोषाणां परस्परावरोधान् तथा धातुसंमूर्च्छनविशेषांश्चावगम्यैव व्याधौ प्रपञ्चोऽनुसरणीयः ॥ ५७ ॥ ५८ ॥—

सर्वं च रोगप्रशमाय कर्म
हीनातिमात्रं विपरीतकालम् ॥ ५९ ॥
मिथ्योपचाराच्च न तं विकारं
शान्तिं नयेत् पथ्यमपि प्रयुक्तम्।

अथ विज्ञातेऽपि व्याधौ भिषजाऽसम्यक्प्रयोगादिभिर्वर्धमानेऽसिद्धिमाह—सर्वं चेत्यादि। विपरीतकालमिति अनुचितकालकृतम्। मिथ्योपचाराच्चेति भेषजानां तथाऽकरणात्, यथा—भेषजस्य सम्यक्परिणामे सति भोक्तव्यम्। यद्यौगिकं भेषजं तत् सम्यक् प्रयुक्तं सिध्यतीति सिद्धान्तः ॥ ५९ ॥—

तत्र श्लोकः—

प्रश्नानिमान् द्वादश पञ्चकर्मा-
ण्युद्दिश्य सिद्धाविह कल्पनायाम् ॥ ६० ॥
प्रजाहितार्थं भगवान् महार्थान्
सम्यग्जगादर्षिवरोऽत्रिपुत्रः।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने कल्पनासिद्धिर्नाम प्रथमोऽध्यायः ॥ १ ॥

प्रश्नानित्यादिनाऽध्यायार्थं संगृह्णाति। संग्रहश्च व्यक्तः ॥ ६० ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने कल्पनासिद्धिर्नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ 'विषमे' इति पा०। २ 'तथाऽर्शःकफविड्विबन्धे' इति पा०। ३ 'वाते विरु(व)द्धे' इति पा०। ४ 'सुप्त्यङ्गमर्दश्वयथून्' इति पा०।

## द्वितीयोऽध्यायः ।

**अथातः पञ्चकर्मीयां सिद्धिं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

कल्पनासिद्धौ ज्ञातपञ्चकर्मोपयोगस्य कर्मप्रवृत्तिनिवृत्तिविषयकजिज्ञासा भवत्यतस्तदुपदर्शनार्थं पञ्चकर्मीयसिद्धिरुच्यते । पञ्चकर्मप्रवृत्तिनिवृत्तिविषयज्ञानार्थमधिकृत्य कृता सिद्धिः पञ्चकर्मीयसिद्धिः ॥ १ ॥ २ ॥

**येषां यस्मात् पञ्चकर्माण्यग्निवेश न कारयेत् ।**
**येषां च कारयेत्तानि तत् सर्वं संप्रवक्ष्यते ॥ ३ ॥**

येषामित्यादिनाऽध्यायार्थं सङ्कल्प्य प्रतिजानीते । पञ्चकर्माणि येषां न कार्याणीत्यनेन व्यस्तानि समस्तानि च येषां न कार्याणि, तानि पृथग्वक्ष्यन्ते ॥ ३ ॥

**चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।**
**सद्राजभिषजां द्वेष्टा तद्विष्टः शोकपीडितः ॥ ४ ॥**
**यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः ।**
**वैरी वैद्यविदग्धश्च श्रद्धाहीनः सुशङ्कितः ॥ ५ ॥**
**भिषजामविधेयश्च नोपक्रम्या भिषग्विदा ।**
**एतानुपचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ६ ॥**
**एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः ।**
**अवस्थां प्रविभज्यैषां वर्ज्यं कार्यं च वक्ष्यते ॥ ७ ॥**

चण्ड इत्यादिना सकलपञ्चकर्माविषयानाह । यद्यपि च विमाने जनपदोद्ध्वंसनीये ( वि. अ. ३ ) रोगभिषग्जितीये ( वि. अ. ८ ) च अनपवादप्रतीकारादयोऽनुपक्रमणीयत्वेनोक्ता एव, तथाऽपीह प्रकरणागतत्वात् पुनरुच्यन्ते । चण्डादिषु प्रवृत्तिर्भेषजस्याशक्यत्वान्निषिध्यते; कृतघ्नादिषु चाधर्मवशादेव भेषजं न सिध्यति, प्रत्युताधार्मिकप्रतिक्रिययाऽधर्म एव भवतीति निवृत्तिर्विधीयते । सतो राज्ञः भिषजश्च द्वेष्टीति सद्राजभिषजां द्वेष्टा, किंवा सदिति राज्ञो भिषजश्च विशेषणम् । तद्विष्ट इति सदादिद्वेष्यः । यादृच्छिकः नास्तिकः । विहीनः करणैरिति उपकरणैः । वैरी वैद्यापकारकः, वैद्यद्वेष्टा तु नापकारक इति विशेषः । वैद्यविदग्धः वैद्यमानी । भिषजामविधेय इति भिषजामनायत्तः । सर्वैरिति वमनादिभिरन्यैश्च संशमनादिभिः । एषामिति चण्डादिव्यतिरिक्तानाम् ॥ ४-७ ॥

**अवम्यास्तावत्-क्षतक्षीणातिस्थूलातिकृशबालवृद्धदुर्बलश्रान्तपिपासितक्षुधितकर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामगर्भिणीसुकुमारसंवृतकोष्ठदुश्छर्दनोर्ध्वरक्तपित्तप्रसक्तच्छर्दिरूर्ध्ववातास्थापितानुवासितहृद्रोगोदावर्तमूत्राघातप्लीहगुल्मोदराष्ठीलास्वरोपघाततिमिरशिरःशङ्खकर्णाक्षिशूलार्ताः ॥ ८ ॥**

**तत्र क्षतस्य भूयः क्षणनाद्रक्तातिप्रवृत्तिः स्यात्, क्षीणातिस्थूलकृशबालवृद्धदुर्बलानामौषधबलासहत्वात् प्राणोपरोधः, श्रान्तपिपासितक्षुधितानां च तद्वत्, कर्मभाराध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्याद्वातरक्तच्छेदक्षतभयं स्यात्, गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणा रोगप्राप्तिः, सुकुमारस्य हृदयापकर्षणादूर्ध्वमधो वा रुधिरातिप्रवृत्तिः, संवृतकोष्ठदुश्छर्दनयोरतिमात्रप्रवाहणाद्दोषाः समुत्क्लिष्टा अन्तःकोष्ठे जनयन्त्यन्तर्विसर्पं स्तम्भं जाड्यं वैचित्त्यं मरणं वा, ऊर्ध्वगरक्तपित्तिन उदानमुत्क्षिप्य प्राणान् हरेद्रक्तं चातिप्रवर्तयेत्, प्रसक्तच्छर्देस्तद्वत्, ऊर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः, हृद्रोगिणो हृदयोपरोधः, उदावर्तिनो घोरतर उदावर्तः स्याच्छीघ्रतरहन्ता, मूत्राघातादिभिरार्तानां तीव्रतरशूलप्रादुर्भावः, तिमिरार्तानां तिमिरातिवृद्धिः, शिरःशूलादिषु शूलातिवृद्धिः; तस्मादेते न वम्याः । सर्वेष्वपि तु खल्वेतेषु विषगरविरुद्धाजीर्णाभ्यवहारामकृतेष्वप्रतिषिद्धं शीघ्रतरकारित्वादेषामिति ॥ ९ ॥**

संप्रत्युपक्रमणीयानामेव रोगादियोगकृतावस्थाभेदेनाकर्तव्यपञ्चकर्मतां दर्शयन्नाह—अवम्यास्तावदित्यादि । अवम्यादौ तावदितिपदं प्राक्प्रस्तुतोपदर्शनार्थम् । प्रसक्तशब्दो मैथुनादिभिः प्रत्येकं संबध्यते । संवृतकोष्ठः वायुनाऽल्पीकृतकोष्ठः, 'वायुव्याप्तकोष्ठः' इत्येके । तत्र क्षतस्येत्यादिना यथोक्तवमनादाने हेतुमाह । प्राणोपरोधः मरणं, 'बलक्षयः' इत्यन्ये । श्रान्तादीनां विच्छेदपाठेन प्राणोपरोधस्य पूर्वापेक्षया हीनमात्रत्वं दर्शयति । वातरक्तच्छेदक्षतभयमित्यत्र रक्तच्छेदो रक्तमोक्षः । सुकुमारस्येति मृदुशरीरस्य । हृदयापकर्षणादिति हृदयहिंसनात् । तद्वदिति ऊर्ध्वरक्तपित्तिनामित्यत्रोक्तो दोषः । अवम्यानामवस्थायां वमनमाह—सर्वेष्वपीत्यादि । यद्यपि चात्राध्यायान्ते सर्वेष्वेव निर्दिष्टेष्ववस्थायां निषिद्धमपि वक्ष्यति, तथाऽपीह विधानेनात्रावश्यं कर्तव्यं वमनमिति बोध्यम् ॥ ८ ॥ ९ ॥

**शेषास्तु वम्याः; विशेषतस्तु पीनसकुष्ठनवज्वरराजयक्ष्मकासश्वासगलग्रहगलगण्डश्लीपदमेहमन्दाग्निविरुद्धाजीर्णान्नविसूचिकालसकविषगरपीतदष्टदिग्धविद्धाधःशोणितपित्तप्रसेक(दुर्नाम)हृल्लासारोचकाविपाकापच्यपस्मारोन्मादातिसार-**

१ 'पञ्चकर्मीयसिद्धिं' इति पा० । २ 'पञ्चकर्मप्रयोगस्य कर्मप्रवृत्तिनिवृत्तिविषयजिज्ञासामधिकृत्य' इति पा० । ३ 'सद्वैद्यनृपतिद्वेष्टा' इति पा० ।

१ 'हृदयविकर्षणात्' इति पा० । २ 'अन्तःकोष्ठे विसर्पन्तः स्तम्भं जाड्यं वैचित्त्यं मरणं वा जनयन्ति' इति पा० । ३ 'शीघ्रतरकारित्वाद्दोषाणाम्' इति पा० । ४ 'निषिद्धेष्ववस्थायां' इति पा० । ५ 'विशेषतस्तु' इति क्वचित्पुस्तके न पठ्यते । ६ 'दुर्नाम' इति हस्तलिखितपुस्तके न पठ्यते ।

**शोफपाण्डुरोगमुखपाकदुष्टस्तन्यादयः श्लेष्मव्याधयो विशेषेण महारोगाध्यायोक्ताश्च; एतेषु हि वमनं प्रधानतममित्युक्तं केदारसेतुभेदे शाल्याद्यशोषदोषविनाशवत् ॥ १० ॥**

शेषास्तु वम्या इत्यभिधायापि पीनसादीन् पुनर्वमनविषयतया दर्शयन् तेषु विशेषेण वमनस्य यौगिकतां दर्शयति; एवमुत्तरत्रापि पुनर्विरेचनादिविषयोपदर्शने व्याख्येयम् । प्रधानतममित्यनेन महारोगाध्याये "केदारसेतुभेदे" (सू. अ. २०) इत्यादिनैकदेशेनोक्तं प्राधान्यख्यापकं ग्रन्थं ग्राहयति; तेन यदुक्तं तत्र—"वमनं खलु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः, तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं श्लेष्ममूलमपकर्षति, तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते, यथा–भिन्ने केदारसेतौ शालिषष्टिकादीन्यभिष्यन्दमानान्यम्भसा प्रशोषमापद्यन्ते, तद्वत्" (सू. अ. २०) इति ग्रन्थखण्डकं, तदिह संबध्यते; एवं विरेचनप्राधान्ये तथा वस्तिप्राधान्येऽपि यदिहैकदेशं महारोगाध्यायोक्तप्राधान्यख्यापकग्रन्थखण्डकं वक्ष्यति, तत्र तद्ग्रन्थाध्याहारेण योजनीयम्[1] ॥ १० ॥

**अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभागरक्तपित्तिविलङ्घितदुर्बलेन्द्रियाल्पाग्निनिरूढकामादिव्यग्राजीर्णिनवज्वरिमदात्ययिताध्मातशल्यार्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ ११ ॥**

**तत्र सुभगस्य सुकुमारोक्तो दोषः स्यात्, क्षतगुदस्य क्षते गुदे प्राणोपरोधकरीं रुजां जनयेत्, मुक्तनालमतिप्रवृत्त्या हन्यात्, अधोभागरक्तपित्तिनं तद्वत्, विलङ्घितदुर्बलेन्द्रियाल्पाग्निनिरूढा औषधवेगं न सहेरन्, कामादिव्यग्रमनसो न प्रवर्तते कृच्छ्रेण वा प्रवर्तमानमयोगदोषान् कुर्यात्, अजीर्णिन आमदोषः स्यात्, नवज्वरिणोऽविपक्वान् दोषान् न निर्हरेद् वातमेव च कोपयेत्, मदात्ययितस्य मद्यक्षीणे देहे वायुः प्राणोपरोधं कुर्यात्, आध्मातस्याधमतो वा पुरीषकोष्ठे निचितो वायुर्विसर्पन् सहसाऽऽनाहं तीव्रतरं मरणं वा जनयेत्[2], शल्यार्दिताभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात्, अतिस्निग्धस्यातियोगभयं भवेत्, रूक्षस्य वायुरङ्गप्रग्रहं कुर्यात्, दारुणकोष्ठस्य विरेचनोद्धता दोषा हृच्छूलपर्वभेदानाहाङ्गमर्दच्छर्दिमूर्च्छाक्लमाञ्जनयित्वा प्राणान् हन्युः, क्षतादीनां गर्भिण्यन्तानां छर्दनोक्तो दोषः स्यात्; तस्मादेते न विरेच्याः ॥ १२ ॥**

विरेचनाविषयमाह—अविरेच्यास्त्वित्यादि । सुभगक्षतगुद इति सुभगगुदः, क्षतगुदश्च; अन्ये तु सुभगं सुखसंवर्धितमाहुः । मुक्तनालः असंवृतगुदः । क्षतादयश्च गर्भिण्यन्ता इति वमनाविषयमध्यपठिताः । रुजां जनयेद् 'विरेचनं' इति शेषः । अधोभागरक्तपित्तिनं तद्वदिति अतिप्रवृत्त्या हन्यादित्यर्थः । कामादीत्यादावादिशब्देन शोकक्रोधादीनां ग्रहणम् । अत्र चाप्रवृत्तिः स्तोकप्रवृत्तिश्चायोग एव; उक्तं हि—"अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम्" (सि. अ. ६) इति । अयोगदोषाश्च विभ्रंशहिक्कास्तम्भादयो वक्ष्यमाणाः । आमदोष इति आमदोषनिमित्तविसूचिकादिः । पुरीषकोष्ठ इति पुरीषाधारसक्तकोष्ठः । दुश्छर्दनोक्त इति प्राग्वमनोक्तदोषः स्यात् ॥ ११ ॥ १२ ॥

**शेषास्तु विरेच्याः; विशेषतस्तु कुष्ठज्वरमेहोर्ध्वरक्तपित्तभगन्दरोदरार्शोब्रध्नप्लीहगुल्मार्बुदगलगण्डग्रन्थिविसूचिकालसकमूत्राघातक्रिमिकोष्ठविसर्पपाण्डुरोगशिरःपार्श्वशूलोदावर्तनेत्रास्यदाहहृद्रोगव्यङ्गनीलिकानेत्रनासिकास्यस्रवणहलीमकश्वासकासकामलापच्यपस्मारोन्मादवातरक्तयोनिरेतोदोषतैमिर्यारोचकाविपाकच्छर्दिश्वयथूदरविस्फोटकादयः[1] पित्तव्याधयो विशेषेण महारोगाध्यायोक्ताश्च; एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युपशमेऽग्निगृहवत् ॥ १३ ॥**

विशेषेण विरेच्यानाह—कुष्ठेत्यादि । विसूचिकायां विरेचनमुत्तरकालं शेषदोषहरणार्थं ज्ञेयम् ॥ १३ ॥

**अनास्थाप्यास्तु–अजीर्ण्यतिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्बलक्षुत्तृष्णाश्रमार्तातिकृशभुक्तभक्तपीतोदकवमितविरिक्तकृतनस्तःकर्मक्रुद्धभीतमत्तमूर्च्छितप्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्काबद्धच्छिद्रोदकोदराध्मानालसकविसूचिकामप्रजातामातिसारमधुमेहकुष्ठार्ताः ॥ १४ ॥**

**तत्राजीर्ण्यतिस्निग्धपीतस्नेहानां दूष्योदरं मूर्च्छा श्वयथुर्वा स्यात्, उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः, यानक्लान्तस्य क्षोभव्यापन्नो वस्तिराशु देहं शोषयेत्, अतिदुर्बलक्षुत्तृष्णाश्रमार्तानां पूर्वोक्तो दोषः स्यात्, अतिकृशस्य कार्श्यं पुनर्जनयेत्, भुक्तभक्तपीतोदकयोरुत्क्लिश्योर्ध्वमधो वा वायुर्वस्तिमुत्क्षिप्य क्षिप्रं घोरान् विकाराञ्जनयेत्[2], वमितविरिक्तयोस्तु रूक्षं शरीरं निरूहः क्षतं क्षार इव दहेत्, कृतनस्तःकर्मणो विभ्रंशं भृशं संरुद्धस्रोतसः कुर्यात्[3], क्रुद्धभीतयोर्वस्तिरूर्ध्वमुपप्लवेत्, मत्तमूर्च्छितयो-**

---

१ 'महारोगाध्याहारेण योजनीयम्' इति पा० । २ 'आध्मातस्य पुरीषग्रथिते कोष्ठे' इति पा० ।

१ "नेत्रनासिकास्यश्रवणरोगगुदमेढ्पाक" इति पा० । २ 'ऊर्ध्वमधो वा क्षिप्रं वस्तिर्घोरान्' इति पा० । ३ 'भृशं संनिरुद्धस्रोतसं' इति पा० ।

भृशं विचलितायां संज्ञायां चित्तोपघाताद् व्यापत् स्यात्, प्रसक्तच्छर्दिर्निष्ठीविकाश्वासकासहिक्कार्तानामूर्ध्वीभूतो वायुरूर्ध्वं वस्तिं नयेत्, बद्धच्छिद्रोदकोदराध्मानार्तानां भृशतरमाध्याप्य वस्तिः प्राणान् हिंस्यात्, अलसकविसूचिकामप्रजातामातिसारिणामामकृतो दोषः स्यात्, मधुमेहकुष्ठिनोर्व्याधेः पुनर्वृद्धिः; तस्मादेते नास्थाप्याः ॥ १५ ॥

अनास्थाप्यानाह—अनास्थाप्यास्त्वित्यादि । मधुमेहशब्देन सर्वप्रमेहग्रहणम् । दूष्योदरमिति सन्निपातोदरम् । यानं रथादियानम् । दहेद् 'वस्तिः' इति शेषः । विभ्रंशमित्यत्र 'इन्द्रियाणाम्' इति शेषः । ऊर्ध्वमुपप्लवेदिति मुखादिभिरुद्गच्छेत् । मत्तमूर्च्छितयोर्व्यापत् स्यादिति मदमूर्च्छारूपा व्यापत् स्यादित्याहुः । बद्धोदरादावाध्मातानां वस्तिर्निषिध्यते; तेन "स्निग्धाय बद्धोदरिणे" इत्यादिना यावच्च "निरूहं सानुवासनम्" (चि. अ. १३) इति ग्रन्थेन निरूहविधानमविरुद्धं भवति; अन्ये तु उदराध्याय एव 'बद्धोदरिणे' इत्यनेन सविबन्धोदरिविषयं निरूहं वर्णयन्ति, तेनात्र सामान्येन बद्धोदरे निरूहनिषेधो न विरुद्धः ॥ १४ ॥ १५ ॥

शेषास्त्वास्थाप्याः; विशेषतस्तु सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्चोमूत्रशुक्रसङ्गबलवर्णमांसरेतःक्षयदोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्तशुद्धातिसारपर्वभेदाभितापप्लीहगुल्मशूलहृद्रोगभगन्दरोन्मादज्वरब्रध्नशिरःकर्णशूलहृदयपार्श्वपृष्ठकटीग्रहवेपनाक्षेपकगौरवातिलाघवरजःक्षयार्तविषमाग्निस्फिग्जानुजङ्घोरुगुल्फपार्ष्णिप्रपदयोनिबाह्वङ्गुलिस्तनान्तदन्तनखपर्वास्थिशूलशोषस्तम्भान्त्रकूजपरिकर्तिकाल्पाल्पसशब्दोग्रगन्धोत्थानादयो वातव्याधयो विशेषेण महारोगाध्यायोक्ताश्च; एतेष्वास्थापनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदवत् ॥ १६ ॥

विशेषेणास्थाप्यानाह—सर्वाङ्गेत्यादि । स्फिगादिभिः शूलशोषस्तम्भाः संबध्यन्ते ॥ १६ ॥

य एवानास्थाप्यास्त एवाननुवास्याः स्युः; विशेषतस्त्वभुक्तभक्तनवज्वरपाण्डुरोगकामलाप्रमेहार्शःप्रतिश्यायारोचकमन्दाग्निदुर्बलप्लीहकफोदरोरुस्तम्भवर्चोभेदविषगरपीतपित्तकफाभिष्यन्दगुरुकोष्ठश्लीपदगलगण्डापचिक्रिमिकोष्ठिनः ॥ १७ ॥

तत्राभुक्तभक्तस्यानावृतमार्गत्वादूर्ध्वमतिवर्तते स्नेहः, नवज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लिश्योदरं जनयेत्, अर्शसस्यार्शांस्यभिष्यन्द्याध्मानं कुर्यात्, अरोचकार्तस्यान्नगृद्धिं पुनर्हन्यात्, मन्दाग्निदुर्बलयोर्मन्दतरमग्निं कुर्यात्, प्रतिश्यायप्लीहादिमतां भृशमुत्क्लिष्टदोषाणां भूय एव दोषं वर्धयेत्; तस्मादेते नानुवास्याः ॥ १८ ॥

य एवास्थाप्यास्त एवानुवास्याः; विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्ताश्च; एतेषु ह्यनुवासनं प्रधानतममित्युक्तं मूले द्रुमप्रसेकवत् ॥१९॥

अननुवासनविषयोपदर्शने अनास्थाप्येषु भुक्तभक्तः पठितः, तद्व्युदासार्थमभुक्तभक्तोपादनम्; अनुवासनमभुक्तस्यानावृतत्वादूर्ध्वं याति, न तु निरूह इति विशेषः; अनुवासनं तु स्नेहस्य सूक्ष्मतया विसरणशीलं सायं दीयते; तेन तावत्कालमभोजनाच्छून्यशरीरस्योर्ध्वं याति । अनुवासनं च "शूले च भक्तानभिनन्दने च" (सि. अ. १) इत्यनेन यद्यपि विहितं, तथाऽपीह भक्तानभिनन्दनहेत्वन्तर्भूतायामरुचौ तन्निषेधो न विरुद्धः; अनभिनन्दनं ह्यश्रद्धामात्रं वातकृतम्, अरुचिस्तु सर्वदा अनिच्छा; केवलवातरोगश्चाश्रद्धा, शुद्धवातरोगयुक्तोऽनुवासनार्हः । निरूहप्राधान्यख्यापने वनस्पतिमूलोच्छेदनवदित्यनेन महारोगाध्यायोक्तवस्तिप्राधान्यख्यापनग्रन्थोपदर्शनं; "यथा वनस्पतेर्मूले च्छिन्ने स्कन्धशाखावरोहकुसुमफलपलाशादीनां नियतो विनाशस्तद्वत्" (सू. अ. २०) इति, मूले द्रुमप्रसेकवच्चेत्यनेन कल्पनासिद्ध्युक्तं—"मूले निषिक्तो हि यथा द्रुमः स्यात्" (सि. अ. १) इत्यादियथोक्तानुवासनप्राधान्यख्यापनग्रन्थग्रहणं करोति ॥ १७–१९ ॥

अशिरोविरेचनार्हास्तु अजीर्णिभुक्तभक्तपीतस्नेहमद्यतोयपातुकामाः स्नातशिराः स्नातुकामः क्षुत्तृष्णाश्रमार्तमत्तमूर्च्छितशस्त्रदण्डहतव्यवायव्यायामपानक्लान्तनवज्वरशोकाभितप्तविरिक्तानुवासितगर्भिणीनवप्रतिश्यायार्ताः, अनृतौ दुर्दिने चेति॥२०॥

तत्राजीर्णिभुक्तभक्तयोर्दोष ऊर्ध्ववहानि स्रोतांस्यावृत्य कासश्वासच्छर्दिप्रतिश्यायाञ्जनयेत्, पीतस्नेहमद्यतोयपातुकामानां कृते च पिबतां मुखनासास्रावाक्ष्युपदेहतिमिरशिरोरोगाञ्जनयेत्, स्नातशिरसः कृते च स्नानाच्छिरसः प्रतिश्यायं, क्षुधार्तस्य वातप्रकोपं, तृष्णार्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषं च, श्रमार्तमत्तमूर्च्छितानामास्थापनोक्तं दोषं जनयेत्, शस्त्रदण्डहतयोस्तीव्रतरां रुजं जनयेत्, व्यवायव्यायामपानक्लान्तानां शिरःस्कन्धनेत्रोरःपीडनं, नवज्वरशोकाभितप्तयोरूष्मा नेत्रनाडीरनुसृत्य तिमिरं ज्वरवृद्धिं च कुर्यात्, विरिक्तस्य वायुरिन्द्रियोपघातं कुर्यात्, अनुवासितस्य कफः शिरोगुरुत्वकण्डूक्रिमिदोषाञ्जनयेत्, गर्भिण्या गर्भं

१ "°बाह्वङ्गुलितलांसदन्तपार्श्वास्थिशूलशोष°" इति पा० । २ "°पीतकफाभिष्यन्द°" इति पा० ।

१ 'विसर्पणशीलतया' इति पा० । २ 'स्नातस्य प्रतिश्यायं' इति पा० ।

स्तम्भयेत् स काणः कुणिः पक्षहतः पीठसर्पी वा जायते, नवप्रतिश्यायार्तस्य स्रोतांसि व्यापादयेत्, अनृतौ दुर्दिने च शीतदोषान् पूतिनस्यं शिरोरोगं च जनयेत्; तस्मादेते न शिरोविरेचनार्हाः ॥ २१ ॥

अशिरोविरेचनार्हानाह—अशिरोविरेचनार्हा इत्यादि। पातुकाम इति स्नेहादिपानकामः, पानक्लान्तो दिनान्तरेऽपि पानजव्याधिपीडितः। अनृतौ शीतग्रीष्मवर्षासु। दुर्दिने इति मेघाच्छादितेऽह्नि। कृते पिबतामिति शिरोविरेचने कृते स्नेहान् पिबतामित्यर्थः। कुणिः कुब्जितकरः; पीठसर्पी पङ्गुः। अनृतौ दुर्दिने चेत्यादौ शीतदोषानित्यनेन शीतकाले दीयमानस्य दुर्दिने च कृतस्य पूतिनासाकर्तृत्वं, ग्रीष्मवर्षाकृतस्य तु शिरोरोगकर्तृत्वम्; अन्ये तु, अनृतुदुर्दिनमित्यनेन अवार्षिकं दुर्दिनमाहुः ॥ २० ॥ २१ ॥

शेषास्त्वर्हाः, विशेषतस्तु शिरोदन्तमन्यास्तम्भगलहनुग्रहपीनसगलशुण्डिकाशालूकशुक्रतिमिरवर्त्मरोगव्यङ्गोपजिह्विकार्धावभेदकग्रीवास्कन्धांसास्यनासिकाकर्णाक्षिमूर्धकपालशिरोरोगार्दितापतन्त्रकापतानकगलगण्डदन्तशूलहर्षचालाक्षिराज्यर्बुदस्वरभेदवाग्ग्रहगद्गदक्रथनादय ऊर्ध्वजत्रुगताश्च वातादिविकाराः परिपक्वाश्च; एतेषु शिरोविरेचनं प्रधानतममित्युक्तं, तद्ध्युत्तमाङ्गमनुप्रविश्य मुञ्जादीषिकामिवासक्तां केवलं विकारकरं दोषमपकर्षति ॥ २२ ॥

शिरोदन्तेत्यादिना विशेषेण शिरोविरेचनार्हानाह । शिरोदन्तमन्याभिः स्तम्भशब्दः संबध्यते । पीनसोऽत्र पक्वप्रतिश्यायः, तरुणे च प्रतिश्याये शिरोविरेकनिषेध इति न विरोधः। अपतन्त्रकः अपतानकभेद एव निःसंज्ञः; उक्तं हि—"निःसंज्ञः सोऽपतन्त्रकः" ( सि. अ. ९ ) इति। शूलहर्षचाला दन्तेन संबध्यन्ते। अक्षिराजी नेत्रराजी, नेत्ररोगविशेषः। वातविकारेऽप्यत्र विरेचनं स्थानसंबन्धागतश्लेष्मवातहन्तृत्वेनैवोपपन्नम्। मुञ्जादीषिकामिवासक्तामिति मुञ्जाच्छरावयवाद्यथा ईषिका शरिका आसक्ता आकृष्यते मुञ्जानुपघातेन, तथा शिरसि पक्वो दोषो ह्रियत इत्यर्थः ॥ २२ ॥

प्रावृट्शरद्वसन्तेतरेष्वात्ययिकेषु रोगेषु नावनं कुर्यात् कृत्रिमगुणोपधानात्; ग्रीष्मे पूर्वाह्णे, शीते मध्याह्ने, वर्षास्वदुर्दिने चेति ॥ २३ ॥

अनृतौ शिरोविरेचनं निषिद्धम्, अवस्थावशेन तद्विधानमाह—प्रावृडित्यादि। इतरेष्विति हेमन्तग्रीष्मवर्षासु। आत्ययिकेष्विति वचनादनात्ययिकेषु गदेषु निषेधयति। आत्ययिकेऽपि शीतादिप्रतीकारार्थमाह—कृत्रिमगुणोपधानादिति; कृत्रिमगुणोपधानं रोगभिषग्जितीयोक्तं कर्तव्यम्। ग्रीष्मादिष्वेव कालविशेषेणौष्ण्यादिप्रतिक्रियां दर्शयन्नाह—ग्रीष्मे पूर्वाह्ने इत्यादि ॥२३॥

१ 'नष्टकरः' इति पा०। २ 'रागो नेत्ररोगविशेषः' इति पा०।

तत्र श्लोकाः—

इति पञ्चविधं कर्म विस्तरेण निदर्शितम्।
येभ्यो यन्न हितं यस्मात् कर्म येभ्यश्च यद्धितम् ॥२४॥
न चैकान्तेन निर्दिष्टेऽप्यर्थेऽभिनिविशेद्बुधः।
स्वयमप्यत्र वैद्येन तर्क्यं बुद्धिमता भवेत् ॥ २५ ॥
उत्पद्येत हि साऽवस्था देशकालबलं प्रति।
यस्यां कार्यमकार्यं स्यात् कर्म कार्यं च वर्जितम् २६
छर्दिहृद्रोगगुल्मानां वमनं स्वे चिकित्सिते।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां बस्तिकर्म च ॥ २७ ॥
तस्मात् सत्यपि निर्देशे कुर्यादूह्य स्वयं धिया।
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने पञ्चकर्मीयसिद्धिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

अध्यायार्थसंग्रहमभिधाय वमनाद्यविषयत्वेन तथा वमनादिविषयत्वेन च प्रतिपादिते वमनादिनिवृत्तिप्रवृत्तिनिश्चयं निषेधयन्नाह—न चैकान्तेनेत्यादि । अभिनिविशेदिति निश्चयं कुर्यात्। तर्क्यमिति अनुक्तमप्यूहनीयम् । बुद्धिमतेतिवचनेन अबुद्धिमतामनुक्तोहं निषेधयति; उक्तं हि—"तस्माद्बुद्धिमतामूहापोहवितर्काः, अल्पबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः" (वि.अ.८) इति। अथ किमर्थं यथोक्तानुगमनमेव श्रेय इति, तथा किमर्थमेकान्तताऽवधारणं न कर्तव्यमित्याह—उत्पद्यते हीत्यादि। देशकालबलं प्रतीति देशादिभेदकृतेत्यर्थः। कार्यमकार्यं स्यादिति कर्तव्यतयोक्तमकरणीयं स्यादिति, तथा वर्जितं च यत् कर्म तत् कार्यं स्यादवस्थाविशेषात् । निषिद्धस्यैवावस्थावशात् क्रियमाणस्य वमनादेरुदाहरणमाह—छर्दिहृद्रोगेत्यादि। स्वे चिकित्सिते इति छर्दिचिकित्साध्याये । अवस्थां प्राप्य निर्दिष्टमित्यनेन अवस्थाविशेष एव निषिद्धविधानमुत्सर्गापवादत इत्यविरोधं दर्शयति; एवमन्यत्राप्यपवादविषये वमनादिविधानमवस्थाविशेषपरतया समाधेयम् । न्यायोपपादितमुक्तं चार्थमुपसंहरन्नाह—तस्मादित्यादि। शास्त्रोपदेशे सत्यपि स्वबुद्ध्यैव शास्त्रानुगतयाऽनुक्तमपि कर्तव्यं; यदुक्तं—"प्रचरणमिव भिक्षुकस्य बीजमिव कर्षकस्य सूत्रं बुद्धिमतामल्पमप्यनल्पज्ञानाय भवति" ( वि. अ. ८ ) इति ॥ २४–२८ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्यटीकायां सिद्धिस्थाने पञ्चकर्मीय-
सिद्धिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

१ 'न चैतदेवं निर्दिष्टमेकान्तेन समाश्रयेत्' इति पा० । २ 'भिषजा' इति पा० । ३ 'स्यादकार्यं कार्यमेव च' इति पा० । ४ 'कुष्ठार्ते' इति पा० । ५ 'यथोक्ताचरणमेव' इति पा० । ६ '०वस्थाविशेषे' इति पा० ।

## तृतीयोऽध्यायः ।

**अथातो वस्तिसूत्रीयां[1] सिद्धिं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

पूर्वाध्याये वमनादिप्रवृत्तिविषयादिक्रमभिधायें[2] कल्पनासिद्धुक्तवस्तिकल्पनायाः प्रपञ्चेनाभिधानार्थं वस्तिसूत्रीया सिद्धिरुच्यते । वस्तेरितिकर्तव्यताभिधायकसूत्रमधिकृत्य कृता सिद्धिर्वस्तिसूत्रीयसिद्धिः ॥ १ ॥ २ ॥

**कृतक्षणं शैलवरस्य रम्ये**
**स्थितं धनेशायतनस्य पार्श्वे ।**
**महर्षिसङ्घैर्वृतमग्निवेशः**
**पुनर्वसुं प्राञ्जलिरन्वपृच्छत् ॥ ३ ॥**
**वस्तिर्नरेभ्यः किमपेक्ष्य दत्तः**
**स्यात् सिद्धिमान् किम्मयमस्य नेत्रम् ।**
**कीदृक्प्रमाणाकृति किङ्गुणं च**
**केभ्यश्च किंयोनिगुणश्च वस्तिः ॥ ४ ॥**
**निरूहकल्पः प्रणिधानमात्रा**
**स्नेहस्य का वा शयने विधिः कः ।**
**के वस्तयः केषु हिता इतीदं**
**श्रुत्वोत्तरं प्राह वचो महर्षिः ॥ ५ ॥**

धनेशायतनस्येति हिमालयस्य । वस्तिर्नरेभ्य इत्यादयो दश प्रश्नाः । नेत्रं नलिका । किंयोनिगुणश्च वस्तिरित्यत्र वस्तिः वस्तिपुटकः, योनिः प्रभवस्थानम् । स्नेहस्य वा केति अनुवासनस्य का प्रणिधानमात्रा । अनुवासने[3]स्य चात्र प्रपञ्चोऽभिधातव्यः; तेनानुवासनस्य कल्पमात्रप्रश्नोऽत्र बोद्धव्यः; यदा तु 'स्नेहस्य वा कः' इति पाठः, तदा स्नेहस्य निरूहदिनदीयमानस्य को विधिरित्यर्थः, स चोत्तरग्रन्थेन सङ्गतार्थ एव । के वस्तयः केषु हिता इति केभ्यः पुरुषेभ्यः किंयोनयो हिता वस्तय इत्यर्थः ॥ ३–५ ॥

**[4]समीक्ष्य दोषौषधदेशकाल-**
**सात्म्याग्निसत्त्वादिवयोबलानि ।**
**वस्तिः प्रयुक्तो नियतं गुणाय**
**स्यात् सर्वकर्माणि च सिद्धिमन्ति ॥ ६ ॥**

समीक्ष्येत्यादि । अत्र दोषादयो ये दश परीक्षणीयाः प्रोक्तास्तेष्वेव उपकल्पनीयोक्तदोषभेषजाद्येकादशकस्य तथा रोगभिषग्जितीयोक्तदशपरीक्ष्यस्यावरोधो व्याख्येयः; अनुक्तावरोधश्चायं योनिव्यापत्तिक एवास्माभिरुक्तोऽनुसरणीयः । समीक्ष्येति ज्ञानपूर्वकमवेक्ष्य । सर्वकर्माणि चेति वमनादीनि च दोषादीनपेक्ष्य प्रयुक्तानि गुणकराणि भवन्ति ॥ ६ ॥

**सुवर्णरूप्यत्रपुताम्ररीति-**
**कांस्यास्थि[1]शस्त्रद्रुमवेणुदन्तैः ।**
**नलैर्विषाणैर्मणिभिश्च तैस्तै-**
**र्[2]नेत्राणि कार्याणि सु(त्रि)कर्णिकानि ॥ ७ ॥**

किम्मयमस्य नेत्रमित्यस्य प्रश्नस्योत्तरं—सुवर्णेत्यादि । त्रपु वङ्गं, रीतिः पित्तलम् । विषाणैरिति महिषादिशृङ्गैः । सुकर्णिकानीति सुसमाहितकर्णिकानि; 'त्रिकर्णिकानि' इति केचित् पठन्ति, त्रिकर्णिकत्वं चाग्रे वक्ष्यमाणम् ॥ ७ ॥

**षड्द्वादशाष्टाङ्गुलसंमितानि**
**षड्विंशतिद्वादशवर्षजानाम् ।**
**स्युर्मुद्गकर्कन्धुसतीनवाहि-**
**च्छिद्राणि वर्त्याऽपिहितानि चैव ॥ ८ ॥**
**यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां**
**मूलाग्रयोः स्युः परिणाहवन्ति ।**
**ऋजूनि गोपुच्छसमाकृतीनि**
**श्लक्ष्णानि च स्युर्गुडिकामुखानि ॥ ९ ॥**
**स्यात् कर्णिकैकाऽग्रचतुर्थभागे**
**मूलाश्रिते वस्तिनिबन्धने द्वे ।**

'कीदृक्प्रमाणाकृति'इत्यस्योत्तरं—षडित्यादि । तत्र षडङ्गुलमेकवर्षात् प्रभृति यावत् षड्वर्षं, द्वादशवर्षस्याष्टाङ्गुलं नेत्रं भवति, विंशतिवर्षस्य द्वादशाङ्गुलं नेत्रं भवति । अत्र व्युत्क्रमाभिधानेन षड्वर्षादर्वाग्विंशतिवर्षादूर्ध्वं च नेत्रमानविकल्पो नास्ति, षड्वर्षादूर्ध्वं नेत्रमानविकल्पोऽस्तीति दर्शयति; तेन षड्वर्षादूर्ध्वं प्रत्यब्दमङ्गुलतृतीयभागवृद्धिर्भवति, द्वादशादूर्ध्वं प्रत्यब्दमर्धाङ्गुलवृद्धिः, एवमुक्तमानपूरणं भवति । सुश्रुते नेत्रमानभेद उक्तः, स नातिविरोधकारितया उपेक्षणीय एव । उक्तं हि तत्र— "सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलं नेत्रं, पञ्चविंशतिवर्षादूर्ध्वं द्वादशाङ्गुलम्" ( सु. चि. अ. ३५ ) इति । मुद्गादिवाहिच्छिद्रत्वं यथासंख्यं षड्द्वादशाष्टाङ्गुलनेत्रेषु ज्ञेयम् । कर्कन्धुशब्देनेह शृगा[3]लबदरी स्वल्पा गृह्यते; उक्तं हि सुश्रुते— "कोलास्थिमात्रच्छिद्रं" ( सु. चि. अ. ३५ ) इति । बृहद्बदरी[4]ग्रहणे तु कनिष्ठाप्रमाणाग्रं तद्वहनं नार्हति; केचिदेवं विरोधं पश्यन्तो बदरास्थिमज्जानमिह कर्कन्धूशब्देन ग्राहयन्ति । सतीनः वर्तुलकलायः । वर्त्याऽपिहितानीति द्रव्यान्तरप्रवेशनिरासार्थं वर्त्याऽपिहितमुखानि कर्तव्यानि । यथावय इति यस्मिन् वयसि[5] नेत्रं विहितं, तद्वयःस्थस्यैवाङ्गुष्ठकनिष्ठाभ्यां यथासंख्यं मूलेऽग्रे च तुल्यपरिणाहं नेत्रं कर्तव्यम् । ऋजूनीत्यादिना नेत्रगुणानाह । श्लक्ष्णानीति अकर्कशानि । गुटिकामुखानीत्यनेन वर्तु-

---

१ 'वस्तिसूत्रीयसिद्धिं' इति पा० । २ 'वमनप्रवृत्तिविषयादिमभिधाय' इति पा० । ३ 'अनुवासनं चात्र प्रपञ्चेनाभिधातव्यं' इति पा० । ४ 'अपेक्ष्य' इति पा० ।

१ 'कांस्यायसास्थिद्रुमवेणुदन्तैः' इति पा० । २ 'नेत्राणि शृङ्गैर्मणिभिर्नलैश्च त्रिकर्णिकानि प्रवदन्ति तज्ज्ञाः' इति पा० । ३ 'तदस्थि' इति पा० । ४ 'बदरास्थिग्रहणे' इति पा० । ५ 'यन्नेत्रं' इति पा० ।

लमुखतयाऽतीक्ष्णमुखतां दर्शयति । एका कर्णिकाऽग्रे कर्तव्या नेत्रस्यान्तःप्रवेशनिरासार्थं, वस्तिनिबन्धने द्वे इति वस्तिनिबन्धनप्रयोजनके द्वे ॥ ८ ॥ ९ ॥—

जारद्गवो माहिषहारिणौ वा
स्याच्छौकरो वस्तिरजस्य वाऽपि ॥ १० ॥
दृढस्तनुर्नष्टसिरो विगन्धः
कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं
नेत्रेषु योज्यस्तु सुवद्धसूत्रः ॥ ११ ॥

केभ्यश्च किंयोनिगुणश्च वस्तिरित्यस्योत्तरं—जारद्गव इत्यादि ।—जारद्गवः वृद्धगोभवः । वस्तिरिति मूत्राशयपुटकम् । नष्टसिर इति समुद्धृतसिरासन्ततिः । विगतः पूतिगन्धो यस्य स विगन्धः । कषायरक्त इति कषायभावनया रक्तीकृतः । वयो वीक्ष्य यथानुरूपमिति वयोभेदेन यथोक्तेन यो वस्तिर्यस्योचितप्रमाणो भवति, स तस्य नेत्रे निबन्धनीयः । एतेन 'केभ्यः को वस्तिः' इत्यस्योत्तरं भवति ॥ १० ॥ ११ ॥

वस्तेरलाभे प्लवजो गलो वा
स्यादङ्कपादः सुघनः पटो वा ।

वस्त्यप्राप्तावनुकल्पविधिमाह—वस्तेरलाभे इत्यादि । प्लवज इति प्रसेवकगलः पक्षी 'प्लव' इति ख्यातः । अङ्कपादः चर्मचटकः, तस्य चर्म ग्राह्यं वस्त्यर्थम् ॥—

आस्थापनार्हं पुरुषं विधिज्ञः
समीक्ष्य पुण्येऽहनि शुक्लपक्षे ॥ १२ ॥
प्रशस्तनक्षत्रमुहूर्तयोगे
जीर्णान्नमेकाग्रमुपक्रमेत ।

'निरूहकल्पः' इत्यादिप्रश्नस्योत्तरम्—आस्थापनार्हमित्यादि । शुक्लपक्षे इति शुक्लपक्षस्य सर्वारम्भेषु प्रशस्तत्वात्, हारीतेन तु कृष्णपक्ष एवात्र विहितः; उक्तं हि—"कृष्णपक्षे कार्यं, जन्मनि सर्वरोगा हताः सुहता भवन्तीति वदन्ति शास्त्रज्ञाः; शुक्ले देवा जाताः, कृष्णेऽसुराश्च सर्वरोगाश्च; तस्माद्रोगचिकित्सा कृष्णे सदैव कर्तव्या" इति । एकाग्रमिति वस्तिप्रयोगैकमनसम् ॥ १२ ॥—

बलां गुडूचीं त्रिफलां सरास्नां
द्वे पञ्चमूले च पलोन्मितानि ॥ १३ ॥
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात् पचेदप्सु चतुर्थशेषम् ।

पूतं यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ॥ १४ ॥
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युतं सुखोष्णैस्तु पिचुप्रमाणैः ।
गुडात् पलं द्विप्रसृतां तु मात्रां
स्नेहस्य युक्त्या मधु सैन्धवं च ॥ १५ ॥
प्रक्षिप्य वस्तौ मथितं खजेन
सुबद्धमुच्छ्वास्य च निर्वलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय
नेत्राग्रसंस्थामपनीय वर्तिम् ॥ १६ ॥
तैलाक्तगात्रं कृतमूत्रविट्कं
नातिक्षुधार्तं शयने मनुष्यम् ।
समेऽथवेषन्नतशीर्षके वा
नात्युच्छ्रिते स्वास्तरणोपपन्ने ॥ १७ ॥
सव्येन पार्श्वेन सुखं शयानं
कृत्वर्जुदेहं स्वभुजोपधानम् ।
सङ्कोच्य सव्येतरदस्य सक्थि
वामं प्रसार्य प्रणयेत्ततस्तम् ॥ १८ ॥
स्निग्धे गुदे नेत्रचतुर्थभागं
स्निग्धं शनैर्ऋज्वनु पृष्ठवंशम् ।
अकम्पनावेपनलाघवादीन्
पाण्योर्गुणांश्चापि विदर्शयंस्तम् ॥ १९ ॥
प्रपीड्य चैकग्रहणेन दत्तं
नेत्रं शनैरेव ततोऽपकर्षेत् ।

बलामित्यादिना वस्तिविधानमाह । पलोन्मितत्वमिह त्रिफलापञ्चमूल्योरपि प्रतिद्रव्यम् । फलानीति मदनफलानि, तानि चाक्षत्वेवाष्टाविह । अत्र बलादीनामौषधानामौत्सर्गिकक्वाथविधिनाऽष्टमदनफलाधिकषद्पष्टिपलत्वं "क्वाथः क्वाथ्यसमः" इतिवचनाद् बहुक्वाथो भवति; वस्तौ च पुटत्रयदानेऽपि प्रतिपुटके दशपलक्वाथदाननियमात् त्रिंशत्पलानि परमुपयुज्यन्ते, शेषस्तु यद्यपि निष्प्रयोजनस्तथाऽपि महर्षिवचनाद्यावत्प्रमाणमुक्तं तावतैव क्रियमाणः क्वाथोऽत्र गुणवान् भवतीति, तेन न मीमांस्यमेतत्; उक्तं हि—"यथा कुर्वन्ति, स उपायः" ( सू. अ. २६); इति किंवा, उपर्युक्तक्वाथ्यद्रव्यमानविभागोदाहरणार्थमेतदुक्तं, तेन तदनुसारेणोपयुक्तक्वाथसाधनयोग्यमानमेव क्वाथ्यं ग्रहीतव्यम्। यवान्यादीनां प्रत्येकं प्रतिनिरूहं पिचुमानत्वं; पिचुः कर्षः । स्नेहस्येति घृततैलस्य, उक्तत्वात् । एतच्च स्नेहमानं प्रकृ-

१ 'सुबद्धः' इति पा० । २ 'अनुच्छूनसिरः' इति पा० । ३ 'कषायरक्त इति त्रिफलादिकषायद्रव्यभावनया रञ्जितः' इति शिवदाससेनः । ४ 'जीर्णान्नमेकाग्रमुपाचरेत्तम्' इति पा० ।

१ 'मधुसैन्धवादि' इति पा० । २ 'वस्तिं ततः सव्यकरे निधाय' इति पा० । ३ 'समेऽथवेषन्नतमस्तके वा' इति पा० । ४ 'निकुञ्च्य' इति पा० । ५ 'शनैर्मृद्वनुपृष्ठवंशम्' इति पा० । ६ 'हि दर्शयंस्तम्' इति पा० । ७ 'भागोदाहरणार्थं बलादिकं बस्तिमाह—बलामित्यादि' इति पा० । ८ 'क्वाथ्यात् क्वाथः समो मतः' इति पा० । ९ 'तथैव' इति पा० । १० 'उपयुक्तस्य' इति पा० । ११ 'पूर्वमुक्तत्वात्' इति पा० ।

तिस्थे पुरुषे वक्ष्यमाणव्यवस्थया ज्ञेयम् । 'युक्त्या मधुसैन्धवे च'इत्यनेन मधुसैन्धवयोः प्रकृत्याद्यपेक्षयाऽनियतं मानं दर्शयति; चकारो मांसरसक्षीरगोमूत्रादीनां चानियतं मानं दर्शयति; एषां च मानव्यवस्थामग्रे कषायमानप्रस्तावे दर्शयिष्यामः । उच्छ्वासेति उच्छ्वासनेन द्रव्याभिघातजनितवातनिर्गममिच्छति । निर्वलीकमिति क्रियाविशेषणम् । नेत्राग्रसंस्थामिति प्रथमं द्रवनिर्गमादिप्रतिषेधार्थं नलिकाग्रमुखदत्तां वर्तिम् । तैलाक्तगात्रमिति अभ्यङ्गसाहचर्यात् स्वेदोऽपि ज्ञेयः, तेनाभ्यक्तस्विन्नमित्यर्थः; उक्तं ह्यन्यत्र—"अनुवासितमास्थापयेदभ्यक्तस्विन्नशरीरम्" (सु. चि. अ. ३८) इति । प्रस्तावागतशयनविधिमाह—शयने मनुष्यमित्यादि । समेऽथवेषन्नतशीर्षके वेति विकल्पद्वयमातुरेच्छया कर्तव्यं; किंवा, उन्नतकटीदेशस्य पुरुषस्य समं, तुच्छकटीकस्योन्नतशीर्षं शयनं विधेयम्, एवं हि तयोः सम्यग्बस्तिर्देहानुसारी भवति । सव्येनेति वामेन; वामपार्श्वशयनप्रयोजनं 'वामाश्रये हि' इत्यादिना वक्ष्यमाणम् । मनुष्यं यथोक्तसर्वगुणं कृत्वा तं प्रणयेदिति संबन्धः । स्वभुजोपधानं यथा भवति तथा शयानम्; उपधानं गण्डुः । सव्येतरद् दक्षिणम् । सक्थि जङ्घा । वामं सक्थि प्रसार्य, तदुपरि दक्षिणं सक्थि सङ्कोच्य, विसृतसव्यसक्थिसंकुचितदक्षिणसक्थीत्यर्थः । स्निग्धे गुदे नेत्रचतुर्थभागमिति कर्णिकावच्छिन्नं सर्वं चतुर्थभागमिति । अनु पृष्ठवंशमिति पृष्ठवंशमनुगतं कृत्वा । अकम्पनेत्यादौ कम्पनं चलनं, वेपनं वेपथुः, लाघवं शीघ्रक्रियता; आदिशब्देन बस्तिग्रहणपीडनादि गृह्यते । विदर्शयन्निह संपादयन् । प्रपीड्य चैकग्रहणेन दत्तमित्यनेन विश्रम्य पुनः पीडनं वायुजनकं निषेधयति ॥ १३–१९ ॥—

तिर्यक् प्रणीते तु न याति धारा
गुदे व्रणः स्याच्चलिते तु नेत्रे ॥ २० ॥
दत्तः शनैर्नाशयमेति बस्तिः
कण्ठं प्रधावत्यतिपीडितश्च ।
शीतस्त्वतिस्तम्भकरो विदाहं
मूर्च्छां च कुर्यादतिमात्रमुष्णः ॥ २१ ॥
स्निग्धोऽतिजाड्यं पवनं तु रूक्ष-
स्तन्वल्पमात्रालवणस्त्वयोगम्[1] ।
करोति मात्राभ्यधिकोऽतियोगं
क्षामं तु सान्द्रः सुचिरेण चैति ॥ २२ ॥
दाहातिसारौ लवणोऽति कुर्या-
त्तस्मात् सुयुक्तं सममेव दद्यात् ।

तिर्यक्प्रणिधानादिदोषमाह—तिर्यगित्यादि । न याति धारेति तिर्यक्प्रणिधाने सति गुदवलीरोधो भवति, तेन धारा न याति । अतिस्तम्भकर इति बस्तिर्देहस्य स्तम्भं करोति । जाड्यमिति शरीरजडता । तन्वल्पमात्रालवणस्त्वयोगमिति तनुर्वा, अल्पमात्रलवणो वा । सान्द्रः तनुविपरीतः, क्षामं पुरुषं कुर्यात् । लवणोऽतीति अतिमात्रलवणः । तस्मादिति यथोक्तविधानेषु दोषनिदर्शनात् । सुयुक्तमिति तिर्यक्प्रणिधानादिरहितं, शीतत्वादिरहितं च ॥ २०–२२ ॥—

पूर्वं हि दद्यान्मधु सैन्धवं तु
स्नेहं विनिर्मथ्य ततोऽनु कल्कम् ॥ २३ ॥
विमथ्य संयोज्य पुनर्द्रवैस्तं
बस्तौ निदध्यान्मथितं खजेन[1] ।

'पूर्वं हि दद्याद्' इति ग्रन्थं केचिदनार्षमाहुः; तन्त्रान्तरेषु त्वस्यार्थस्य दृष्टत्वाद्युक्त एवायं पाठः; उच्यते हि सुश्रुते—"दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनश्च पलद्वयम्[2] । पात्रे तलेन मथ्नीयात्" (सु. चि. अ. ३८) इत्यादि । पुनर्द्रवैस्तमित्यत्र द्रवशब्देन क्वाथस्य[3] ग्रहणम् ॥ २३ ॥—

वामाश्रये[4] हि ग्रहणीगुदे च
तत् पार्श्वसंस्थस्य सुखोपलब्धिः[5] ॥ २४ ॥
लीयन्त एवं वलयश्च तस्मात्
सव्यं शयानोऽर्हति बस्तिदानम् ।

वामपार्श्वशयनं यदुक्तं तस्य प्रयोजनमाह—वामाश्रये इत्यादि । वामाश्रये यस्माद् ग्रहणीगुदे, तेन वामपार्श्वसुप्तस्य ग्रहणीगुदे प्रकृतिस्थे भवतः, प्रकृतिस्थे च गुदे गुदस्य बस्तिना सम्यगुपश्लेषाद्[6] व्याप्तिर्भवति, तथा[7] वलयश्च लीना भवन्ति, तेन सुखं बस्तिर्याति, ग्रहणीगुदयोः प्रकृतिस्थतया च बस्तिर्व्याप्य सुखं ग्रहणीं भावयतीति बोद्धव्यम् ॥ २४ ॥—

विड्वातवेगो यदि चार्धदत्ते
निष्कृष्य मुक्ते प्रणयेदशेषम्[8] ॥ २५ ॥
उत्तानदेहश्च कृतोपधानः
स्याद्वीर्यमाप्नोति तथाऽस्य देहम्[9] ।

विड्वातेत्यादौ निष्कृष्य मुक्ते इति नलिकामाकृष्य विड्वातवेगे मुक्ते । दत्ते तु बस्तौ उत्तानदेहः कृतोपधानश्च स्यात् । एतत्करणप्रयोजनमाह—वीर्यमाप्नोतीत्यादि ॥ २५ ॥—

एकोऽपकर्षत्यनिलं स्वमार्गात्
पित्तं द्वितीयस्तु कफं तृतीयः ॥ २६ ॥

एकोऽपकर्षतीत्यादि । एतद्वातादिभेदेन एकादिबस्तिदानविधानं; न तु त्रिदोषे प्रथमो वातं जयति, द्वितीयः पित्तं जयति, तृतीयः कफमित्यादि व्याख्येयं; यतः, "स्निग्धोष्ण एकः पवने

---

१ 'अल्पमात्रो वा अलवणो वा' इति पा० ।

१ 'निदध्याद्भिषगप्रमत्तः' इति पा० । २ 'मधुनः प्रसृतद्वयम्' इति पा० । ३ 'क्वाथस्याव्यवहितस्य' इति पा० । ४ 'वामाश्रये—स्तिर्ग्रहणी गुदं च' इति पा० । ५ 'वामाश्रयो यस्मादस्ति ग्रहणीगुदे च' इति पा० । ६ 'सम्यगुपलब्ध्या' इति पा० । ७ 'तथा द्रवमपि सुप्रसृतं भवति, तेन सुखं बस्तिर्याति, ग्रहण्याः प्रकृतिस्थतया बस्तिद्रव्यं सुखं ग्रहणीं भावयतीति बोद्धव्यम्' इति पा० । ८ 'प्रणयेत्त शेषम्' इति पा० । ९ 'देहः' इति पा० ।

समासः" इत्यादिना पवनादिभेदेनैव संख्यानियमं करिष्यति । एवं स्वमार्गाच्चानिलमेको बस्तिरपकर्षति, पित्तं द्वितीयस्तु स्वमार्गादिति पित्तं द्वावेव जयतः, कफं त्रय एव जयन्तीति ज्ञेयं; स्वमार्गादिति स्वस्थानात् । यद्यपि च बस्तिः पक्वाशयगतमेव दोषं जयतीत्युक्तं, तथाऽपि पित्तादिस्थानेऽपि विशेषवस्तिविधिसामर्थ्याद्दोषहरणमुच्यते; तेन, उत्सर्गतस्तद्गतदोषहरणं विशिष्टविधानेन च स्थानान्तरगतदोषहरणं भवति । अयमर्थो जतूकर्णेऽप्युच्यते—"बस्तिः कार्यः सकृद्बस्तिस्थानशक्त्याऽनिलादिषु" इति । अत्र द्वितीयः पित्तमपकर्षति, तृतीयः कफमपकर्षतीत्युच्यते; तथाऽपि प्रथमद्वितीययोरपि पित्तकफापहत्वमस्त्येव, परं द्वितीयेन पित्तापहरणं, तृतीयेन च कफापहरणं स्थानप्रत्यासत्त्या क्रियत इति कृत्वा द्वितीयः पित्तं हरति, तृतीयः कफं हरतीति चोक्तम् । पित्तकफयोश्च यद्यपि सुखं चिकित्सितं बस्तिर्न भवति, तथाऽपि वातावरके वातानुबन्धे वा पित्ते कफे चैतद्बस्तिदानं ज्ञेयम्; उक्तं हि सुश्रुते—"बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" (सु. चि. अ. ३५) इति ॥ २६ ॥

प्रत्यागते कोष्णजलावसिक्तः
शाल्यन्नमद्यात्तनुना रसेन ।
जीर्णे तु सायं लघु चाल्पमात्रं
भुक्तोऽनुवास्यः परिबृंहणार्थम् ॥ २७ ॥
निरूहपादांशसमेन तैले-
नाम्लानिलघ्नौषधसाधितेन ।
दत्त्वा स्फिचौ पाणितलेन हन्यात्
स्नेहस्य शीघ्रागमरक्षणार्थम् ॥ २८ ॥
ईषच्च पादाङ्गुलियुग्ममाञ्छे-
दुत्तानदेहस्य तलौ प्रमृज्यात् ।
स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च
ये चास्य गात्रावयवा रुगार्ताः ॥ २९ ॥
तांश्चावमृद्नीत सुखं ततश्च
निद्रामुपासीत कृतोपधानः ।

शाल्यन्नमित्यादौ जीर्णे इति आस्थापनोपलेपे कोष्ठस्थे जीर्णे । तनुमांसरसादिभोजनं चेह निरूहेण मनागुपहतस्य वह्नेः परिपालनार्थम् । पेयादिक्रमस्त्वत्र न क्रियते, विरेचनवदिहामस्याभावात्; अत एव सुश्रुते पेयादिक्रमं त्यक्त्वा रसादिक्रम उक्तः । परिबृंहणार्थमित्यनेन लेखनार्थं क्रियमाणे निरूहे परिबृंहणार्थमनुवासनं तदहः कर्तव्यमिति दर्शयति । अत एव कल्पनासिद्धावपि—"नरस्ततो निश्यनुवासनार्हः" (सि. अ. १) इत्यनेन तदहरनुवासनस्यावश्यकत्वमुक्तं; जतूकर्णेऽप्युक्तं—"जीर्णे सायं कृतान्नं च पुष्ट्यर्थमनुवासयेत्" इति । निरूहपादांशसमेन तैलेनेति निरूहपादप्रमाणेन, चतुर्विंशतिपले निरूहे षट्पलेन स्नेहेनेत्यर्थः; इयं चोत्तमा मात्राऽनुवासनस्य; उक्तं ह्यन्यत्र—"उत्तमा षट्पली प्रोक्ता मध्यमा त्रिपली भवेत् । कनीयसी सार्धपला त्रिधा मात्राऽनुवासने" इति; सुश्रुतेऽप्येतावन्मानमेव स्नेहस्यानुवासन-मात्राबस्तिविभागेनानुवासने उक्तम् । स्नेहशीघ्रागमनरक्षार्थं विधानमाह—ईषदित्यादि । तच्च पादाङ्गुल्योत्तानदेहस्य मात्राशतं स्थापनं कर्तव्यम् । निरूहे तु त्रिंशन्मात्राकालं यावदुत्तानस्य स्थापनं मन्यन्ते । पादाङ्गुलियुग्ममिति पर्वसन्धिः । आञ्छेदिति आकर्षेत् । निद्रामुपासीतेति वचनं क्रियान्तरस्य निषेधार्थम् ॥ २७–२९ ॥—

भागाः कषायस्य तु पञ्च, पित्ते
स्नेहस्य षष्ठः प्रकृतौ स्थिते च ॥ ३० ॥
वाते विवृद्धे तु चतुर्थभागो,
मात्रा निरूहेषु कफेऽष्टभागः ।

संप्रति त्रिविधो यो द्वादशप्रसृतो निरूहस्तस्य कषायस्नेहमात्रां निरूपयन्नाह—भागा इत्यादि । भागाः कषायस्य पञ्चेत्यनेन सर्वत्रैव दोषे स्वस्थे च पुरुषे द्वादशप्रसृतभागरूपे निरूहे पञ्चभागाः कषायस्य भवन्ति, तेन पञ्च प्रसृताः कषायस्य । स्नेहस्य च दोषभेदेन स्वस्थे च मानभेदमाह—पित्ते इत्यादि । पित्ते स्नेहस्य षष्ठः, तथा प्रकृतौ स्थिते च पुरुषे स्वस्थे षष्ठ इत्यर्थः; तत्र षण्णां पूरणः षष्ठः, तेन द्वादशप्रसृतस्य षष्ठो भागो द्विप्रसृतं भवति । स्नेहशब्देन घृततैलादिग्रहणम् । वाते तु वृद्धे चतुर्थो भागः; स्नेहचतुर्थो भागः प्रसृतत्रयम् । अष्टभाग इति सार्धः प्रसृतः । अस्मिन्नर्थे हारीतः—"क्वाथस्य पञ्चप्रसृता विभागाः, स्नेहस्य षष्ठो ह्यधिके तु पित्ते । स्वस्थे च तावत्, पवने चतुर्थः, कफेऽष्टमोऽत्यन्तगते(?)विकल्पः" इति । एषा स्नेहमात्रा हीनमात्रेऽपि निरूहे क्वाथस्नेहयोरुक्तमात्रानुसारेण योजनीया; शेषाणां तु मधुकल्कसैन्धवानामिह मात्रानियमो नोक्तः, तेषामपि प्रकृत्यादिभेदेनानियतत्वात्; तेन मध्वादीनां प्रकृत्याद्यनुसारेण प्रसृतमानेन द्वादशप्रसृतत्वं पूरणीयम् । तत्र जतूकर्णप्रत्ययात् सर्वत्र कल्कस्य पलद्वयं भवति ।

१ 'एवं च मार्गेऽपि एको बस्तिरनिलमपकर्षति' इति पा० । २ 'जयत इत्यादि ज्ञेयम्' इति पा० । ३ 'बस्तिना पक्वाशयगत एव दोषो ह्रियते' इति पा० । 'अनिलस्य पक्वाशयः स्थानं, तस्य च प्रत्यासन्नत्वादेक एव पुटो युक्तः, पित्ताशयस्थानस्यातिव्यवहितत्वाद्द्वितीयः, आमाशयस्यातिव्यवहितत्वात्तृतीयः' इति श्रीकण्ठदत्तः । ४ 'अत्र द्वितीयः पित्तमपकर्षति तृतीयो वातकफमपकर्षतीत्युच्यते, अत्रापि प्रथमद्वितीययोः पित्तकफापहत्वमस्त्येव; परं द्वितीयेन तृतीयेन च वातकफापहरणं स्थानप्रत्यासत्त्या क्रियत इति कृत्वा द्वितीयः पित्तं हरति, तृतीयः कफं हरतीति चोक्तम्' इति पा० । ५ 'ईषत् पदाङ्गुष्ठयुगं च कर्षे०' इति पा० ।

१ 'तदहरनुवासनं सार्वत्रिकमुक्तं' इति पा० । २ 'कनीयस्यर्धपला' इति पा० । ३ 'आञ्छेदिति प्रसारयेदित्यर्थः' इति पा० । ४ 'नियमयन्नाह' इति पा० ।

उक्तं हि तत्र—"चतुर्विंशतिके पुटके पेष्याणां द्विपलं, किञ्चिच्च मधुसैन्धवात्, स्नेहो वक्ष्यमाणः, शेषं कषायस्य; वाते तैलषट्पलं स्वस्थे च; चत्वारि पित्ते घृतस्य, कफे त्रीणि तैलस्य" इति; सैन्धवं तु कर्षप्रमाणमस्ति; यतः सुश्रुते—"सैन्धवाक्षं समादाय मधुनः प्रसृतद्वयम्" (सु. चि. अ. ३८) इत्याद्युक्तम्; हारीते तु—"क्षौद्रं तु देयं प्रसृतप्रमाणं द्वितीयमाहुर्लवणस्य चाक्षम्" इत्युक्तं; तेनानया दिशा सैन्धवमधुकल्पना। यथोक्तकषायस्नेहकल्कमधुसैन्धवापूरितांशपूरणं चावापेनैव कर्तव्यम्; आवापश्चात्रानुक्तोऽप्युत्तरत्र वक्ष्यमाणो वातादिभेदेन मांसरसक्षीरगोमूत्रादिको ज्ञेयः। वक्ष्यति हि—"स्निग्धोष्ण एकः पवने निरूहो, द्वौ स्वादुशीतौ पयसा च पित्ते। त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः" इति। हारीतेऽप्युक्तं—"स्नेहं गुडं मांसरसं पयश्च ह्यम्लानि मूत्राणि च सैन्धवं च। एतानि सर्वाण्यपि योजयीत निरूहयोगे मदनात् फलं च" इति। यत्तु तन्त्रान्तरे—द्वादशप्रसृतपूरणं प्रति प्रतिद्रव्यविभागेनोक्तं; यथा—"दत्त्वाऽऽदौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्। विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम्॥ एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत्। संमूर्च्छिते कषायं तु चतुःप्रसृतसंमितम्॥ वितरेच्च तदावापमन्ते[1] द्विप्रसृतोन्मितम्। एवं सुकल्पितो बस्तिर्द्वादशप्रसृतो भवेत्" (सु. चि. अ. ३८) इति; तद्वातविषयमेव, स्नेहस्य वातघ्नत्वात्; किंत्वत्र यच्चतुःप्रसृतं कषायस्य मन्यते, तदसत्तन्त्रानुमतमेव[2]। यत्त्वन्ये पठन्ति—"मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिणाम्॥ पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्[3]। षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्" इति; तदसत्तन्त्रानुगतत्वादनुमतमेव॥ ३०॥—

निरूहमात्रा प्रसृतार्धमाद्ये
वर्षे ततोऽर्धप्रसृताभिवृद्धिः॥ ३१॥
आद्वादशात् स्यात् प्रसृताभिवृद्धि-
रष्टादशाद् द्वादशतः परं स्युः।
आसप्ततेस्तद्विहितं[4] प्रमाण-
मतः परं षोडशवद्विधेयम्॥ ३२॥
निरूहमात्रा प्रसृतप्रमाणा
बाले च वृद्धे च मृदुर्विशेषः।

इदानीं वयोभेदेन निरूहप्रमाणं दर्शयन्नाह—निरूहेत्यादि। आद्ये वर्षे बालस्य पलमाने निरूहे क्काथादि यथोक्तमानानुसारेण वक्तव्यम्; अर्धप्रसृताभिवृद्धिः ततः प्रतिवर्षं भवति; तेन द्वादशवर्षे षट्प्रसृतो बस्तिर्भवति; द्वादशादूर्ध्वमष्टादशवर्षपर्यन्तं प्रतिवर्षं प्रसृतवृद्ध्या द्वादशप्रसृतपूरणं भवति; 'द्वादशतः परं स्युः' इत्यनेनाधिकप्रमाणबस्तिमानं महात्ययकरं कैश्चिदनुमतं निषेधयति; यथा हारीते एकीयमतं पठ्यते—"अर्धाढकं परमतं[1] प्रमाणम्" इति; तथा सुश्रुतेऽपि (?)—"द्वादशप्रसृतं केचित् त्रिंशत्पलमथाऽपरे" इत्यादि[2]। बस्तिमानं दर्शयितुमाह[3]—आसप्ततेरित्यादि। आसप्ततेस्तदिति द्वादशप्रसृतमानं सप्ततिं यावद्भवति। षोडशवदिति दशप्रसृतप्रमाणम्। बालवृद्धयोर्यथोक्तप्रसृतमानविषयं दर्शयन् तत्रान्यं विशेषमाह—निरूहमात्रेत्यादि। बालवृद्धयोर्यथोक्तैव निरूहमात्रा प्रसृतप्रमाणा कार्या, विशेषेण तयोर्बस्तिर्मृदुः कार्यः। तीक्ष्णत्वमार्दवकरं च विधानं वक्ष्यति; यथा—"तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः। प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा" (सि. अ. ७) इति॥ ३१॥ ३२॥—

नात्युच्छ्रितं नाप्यतिनीचपादं
सपादपीठं शयनं प्रशस्तम्॥ ३३॥
प्रधानमृद्वास्तरणोपपन्नं
प्राक्शीर्षकं शुक्लपटोत्तरीयम्।

संप्रति 'शयने विधिः कः' इति प्रश्नस्योत्तरमाह—नात्युच्छ्रितमित्यादि। पूर्वं यः शयनविधिरुक्तः स तात्कालिकः, अयं तूत्तरकालिक इति विशेषः। प्रधानं महन्मृदु चास्तरणं प्रधानमृद्वास्तरणं, तेनोपपन्नं युक्तम्। प्राक्शीर्षकमिति "प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं च प्राक्शिराः" (सु.सू. अ. १९) इति वचनात्॥ ३३॥—

भोज्यं पुनर्व्याधिमवेक्ष्य तद्वत्
प्रकल्पयेद्यूषपयोरसाद्यैः॥ ३४॥
सर्वेषु विद्याद्विधिमेतमाद्यं
वक्ष्यामि बस्तीनत उत्तरीयान्।

यूषादि भोज्यविधानं यथाक्रमं कफे, पित्ते, वाते; किंवा, अभ्यपेक्षं यथायोग्यतया व्याख्येयम्। यथोक्तविधानं वक्ष्यमाणविधिषु कर्तव्यतया दर्शयन्नाह—सर्वेष्वित्यादि। एतदाद्यमिति प्रधानम्, औत्सर्गिकमिति यावत्; तेन विशेषविधानेनापवादोऽप्यस्य भविष्यतीति सूचयति॥ ३४॥—

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वपेष्यः॥ ३५॥
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः।
स्थिरादिवर्गस्य बलापटोल-
त्रायन्तिकैरण्डयवैर्युतस्य॥ ३६॥

---

१ 'तथाऽऽवापमन्ते' इति पा०। २ 'तदसत्तन्त्रानुगतत्वादनुमतमेव' इति पा०। ३ 'पित्ते चत्वारि द्वे पञ्च चतुष्टयपलानि हि' इति पा०। ४ 'आसप्ततेरुक्तमिदं' इति पा०।

१ 'परमतं' इति पा०। २ अस्माग्रे हस्तलिखितपुस्तके 'तथाहि हारीते एकीयमतमप्यनुमतम्, 'अप्रतिषिद्धं परमतमनुमतम्' इति न्यायात्' इत्यधिकं पठ्यते। ३. 'दर्शयितुमेवान्यं' इति पा०। ४ 'सम्यक्' इति पा०।

प्रस्थो रसाच्छागरसार्धयुक्तः
साध्यः पुनः प्रस्थसमस्तु यावत् ।
प्रियङ्गुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च ॥ ३७ ॥
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चापि ददाति बस्तिः ।
एरण्डमूलं त्रिपलं पलाशा
ह्रस्वानि मूलानि च यानि पञ्च ॥ ३८ ॥
रास्नाश्वगन्धातिबलागुडूची-
पुनर्नवारग्वधदेवदारु ।
भागाः पलांशा मदनाष्टयुक्ता
जलद्विकंसे कथितेऽष्टशेषे ॥ ३९ ॥
पेष्याः शताह्वा हपुषा प्रियङ्गुः
सपिप्पलीकं मधुकं बला च ।
रसाञ्जनं वत्सकबीजमुस्तं
भागाक्षमात्रं लवणांशयुक्तम् ॥ ४० ॥
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्नृणां दीपनलेखनीयः ।
जङ्घोरुपादत्रिकपृष्ठशूलं
कफावृतिं मारुतनिग्रहं च ॥ ४१ ॥
विण्मूत्रवातग्रहणं सशूल-
माध्मानतामश्मरिशर्करे च ।
आनाहमर्शोग्रहणीप्रदोषा-
नेरण्डबस्तिः शमयेत् प्रयुक्तः ॥ ४२ ॥
चतुष्पले तैलघृतस्य भृष्टा-
च्छागाच्छतार्धो दधिदाडिमाम्लः ।
रसः सपेष्यो बलमांसवर्ण-
रेतोग्निदश्चान्ध्यशिरोर्तिशस्तः ॥ ४३ ॥
जलद्विकंसेऽष्टपलं पलाशात्
पक्त्वा रसोऽर्धाढकमात्रशेषः ।
कल्कैर्वचामागधिकापलाभ्यां
युक्तः शताह्वाद्विपलेन चापि ॥ ४४ ॥
ससैन्धवः क्षौद्रयुतः सतैलो
देयो निरूहो बलवर्णकारी ।
आनाहपार्श्वामययोनिदोषान्
गुल्मानुदावर्तरुजं च हन्यात् ॥ ४५ ॥

'के बस्तय' इत्यादिप्रश्नस्योत्तरं—द्विपञ्चमूलस्येत्यादि । अत्र मांसं दशमूलसमम् । रसः क्वाथः । अम्लं काञ्जिकादि । सपूर्वपेष्य इति बलाद्युक्तकल्कयुक्तः । त्रिस्नेहयुक्त इत्यनेन, मज्जपरित्यागं सर्वबस्तिसिद्धं स्मारयति; उक्तं ह्यन्यत्र—"विज्ञेयस्त्रिविधः स्नेहो बस्त्यर्थं मज्जवर्जितः" इति । स्थिरादिवर्गस्येलादौ मधुसैन्धवे यद्यपि सामान्येनोक्तबस्तिविधानलब्धे, तथाऽपि तैलादीनामत्राप्रकर्षार्थं पुनस्तयोरभिधानं, किंवा सामान्यविधिस्मरणार्थमत्राभिधानम्; एवमन्यत्रापि सामान्यविधिप्राप्तस्य पुनरभिधाने व्याख्येयम् । एरण्डमूलमित्यादौ पलाशा शटी । ह्रस्वानि मूलानीति स्थिरादिपञ्चमूलम् । कंस आढकः । भागाक्षमात्रमिति भागेनाक्षमात्रम् । छागाच्छतार्ध इति पञ्चाशत्पलो भवति । सपेष्य इति बलादिकस्य कल्कयुक्तः ॥ ३५–४५ ॥

यष्ट्याह्वयस्याष्टपलेन सिद्धं
पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधु वातरक्त-
वैस्वर्यवीसर्पहितो निरूहः ॥ ४६ ॥
यष्ट्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥ ४७ ॥
द्विकार्षिकाश्चन्दनपद्मकर्धि-
यष्ट्याह्वरास्नावृषसारिवाश्च ।
सलोध्रमञ्जिष्ठमथाप्यनन्ता-
बलास्थिरादितृणपञ्चमूलम् ॥ ४८ ॥
तोये समुत्क्वाथ्य रसेन तेन
शृतं पयोऽर्धाढकमम्बुहीनम् ।
जीवन्तिमेदर्धिशतावरीभि-
र्वीराद्विकाकोलिकशेरुकाभिः ॥ ४९ ॥
सितोपलाजीवकपद्मरेणु-
प्रपौण्डरीकैः कमलोत्पलैश्च ।
लोध्रात्मगुप्तामधुकैर्विदारी-
मुञ्जातकैः केशरचन्दनैश्च ॥ ५० ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्
क्षीरेण वाऽद्यात् परिषिक्तगात्रः ॥ ५१ ॥
दाहातिसारप्रदरास्रपित्त-
हृत्पाण्डुरोगान् विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन्
सर्वामयान् पित्तकृतान्निहन्ति ॥ ५२ ॥

१ 'सद्यः' इति पा० । २ 'पलानि' इति पा० । ३ 'मदनाष्टकं च' इति पा० । ४ 'वचा' इति पा० । ५ 'अक्षप्रमाणं' इतिपा० । ६ '०शिरोरुजाघ्नः' इति पा० । ७ '०र्बलामागधिकापलाभ्यां' इति पा० ।

१ 'यष्ट्याह्वमूलाष्टपलेन' इति पा० । २ 'सलोध्रमञ्जिष्ठबलायवासस्थिराशरादिद्वयपञ्चमूलम्' इति पा० ।

द्राक्षादिकाश्मर्यमधूकसेव्यैः
ससारिवाचन्दनशीतपाक्यैः ।
पयः शृतं श्रावणिमुद्गपर्णी-
तुगात्मगुप्तामधुयष्टिकल्कैः ॥ ५३ ॥
गोधूमचूर्णैश्च तथाऽक्षमात्रैः
सक्षौद्रसर्पिर्मधुयष्टितैलैः ।
पथ्याविदारीक्षुरसैर्गुडेन
वस्तिं युतं पित्तहरं विदध्यात् ॥ ५४ ॥
हृन्नाभिपार्श्वोत्तमदेहदाहे
दाहेऽन्तरस्थे च सकृच्छ्रमूत्रे ।
क्षीणे क्षते रेतसि चापि नष्टे
पैत्तेऽतिसारे च नृणां प्रशस्तः ॥ ५५ ॥

यष्ट्याह्वयस्येत्यादिकाश्चत्वारः पित्ते, पूर्वं तूक्ताः पञ्च वाते। अत्र पयःसाधनं क्षीरपाकपरिभाषयैव । यष्ट्याह्वलोध्रेत्यादिना जीवनीयमित्यन्तेनैको योगः । जीवनीयानामत्र कल्कः । सुशीतत्वमिह्यौत्सर्गिकं मृदुकोष्ठेष्वधिकं पित्तहितत्वात्; अनया च दिशाऽपरपित्तहरबस्तावपि शीतत्वं ज्ञेयम् । द्विकार्षिकमित्यादौ अनन्ता उत्पलसारिवा । तृणपञ्चमूलं—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" ( च. चि. अ. १ पा. १ ) इत्यादिनोक्तम् । अम्बुहीनमिति क्षीरावशेषपर्यन्तं शृतम् । राजकशेरुः कशेरुरेव । ससैन्धवमिति ईषत्सैन्धवम् । ससारिवेत्यादौ शीतपाकी शीतली । मधुयष्टितैलं मधुयष्टिसाधितं तैलम् । उत्तमदेहः मस्तकम् । ॥ ४६–५५ ॥

कोषातकारग्वधदेवदारु-
शार्ङ्गेष्टमूर्वाकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ ५६ ॥
तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
फलाह्वतैलस्य समाक्षिकस्य
क्षारस्य तैलस्य च सार्षपस्य ॥ ५७ ॥
दद्यान्निरूहं कफरोगिणे ज्ञो
मन्दाग्नये चाप्यशनद्विषे च ।
पटोलपथ्यामरदारुभिर्वा
सपिप्पलीकैः क्वथितैर्जलेऽग्नौ ॥ ५८ ॥
द्विपञ्चमूले त्रिफलां सबिल्वां
फलानि गोमूत्रयुतः कषायः ।

कलिङ्गपाठाफलमुस्तकल्कः
ससैन्धवः क्षारयुतः सतैलः ॥ ५९ ॥
निरूहमुख्यः कफजान् विकारान्
सपाण्डुरोगालसकामदोषान् ।
हन्यात्तथा मारुतमूत्रसङ्गं
वस्तेस्तथाऽऽटोपमथापि घोरम् ॥ ६० ॥
रास्नामृतैरण्डविडङ्गदार्वी-
सप्तच्छदोशीरसुराह्वनिम्बैः ।
शम्पाकभूनिम्बपटोलपाठा-
तिक्ताखुपर्णीदशमूलमुस्तैः ॥ ६१ ॥
त्रायन्तिकाशिग्रुफलत्रिकैश्च
क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीशताह्वा-
रसाञ्जनश्वेतवचाविडङ्गैः ॥ ६२ ॥
कलिङ्गपाठाम्बुदसैन्धवैश्च
कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेह-
ब्रध्नोदराजीर्णकफातुरेभ्यः ॥ ६३ ॥
रूक्षौषधैरप्यपतर्पितेभ्य
एतेषु रोगेष्वपि सत्सु दत्तः ।
निहत्य वातं ज्वलनं प्रदीप्य
विजित्य रोगांश्च बलं करोति ॥ ६४ ॥

कोषातकेत्यादिकाश्चत्वारः कफे बस्तयः । शार्ङ्गेष्टा गुञ्जा । अत्र क्वाथदशप्रसृतेन तथा कल्केन क्षौद्रादिना च यद्यपि मानमधिकं भवति, तथाऽप्येवमेव द्रव्यसंयोगं कृत्वा द्वादशप्रसृत एव बस्तिर्देयः, तदधिकमानस्य निषिद्धत्वात् । पटोलेत्यादौ पटोलादिपिप्पल्यन्तैस्तोयं साधयित्वा पूर्ववद् द्वितीयः, कफरोगिणे द्विपञ्चमूल्यादिभिस्तृतीयः कर्तव्यः । क्षारः यवक्षारः । रास्नेत्यादौ शम्पाकः चतुरङ्गुलः । तिक्ता कटुरोहिणी । अत्र पिण्डीतकक्वाथोऽप्यावापकल्पो येन प्रविशति; पिण्डीतकः मदनः । रूक्षौषधैरप्यपतर्पितेभ्योऽप्येतेषु कुष्ठादिरोगेष्वयं दत्तो बलं करोतीति योजना ॥ ५६–६४ ॥

पुनर्नवैरण्डवृषाश्मभेद-
वृश्चीरभूतीकबलापलाशाः ।
द्विपञ्चमूलं च पलांशिकानि
क्षुण्णानि धौतानि फलानि चाष्टौ ॥ ६५ ॥
बिल्वं यवान् कोलकुलत्थधान्य-
फलानि चैव प्रसृतोन्मितानि ।

१ 'तथा' इति पा० । २ 'हृन्नाभिपार्श्वोदरदेहदाहे' इति पा० । ३ 'मृदुकोष्ठसंबाधकं' इति, 'मृदुकोष्ठत्वबाधकं' इति च पा० । ४ '°देवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः' इति पा० । ५ 'क्षौद्रस तैलस्य फलाह्वयस्य' इति पा० ।

१ '°मतीव घोरम्' इति पा० । २ '°ऽस्वयवकल्पः' इति पा० । ३ '°धत्तूरवृश्चीरबलापलाशाः' इति पा० । ४ 'पलानि' इति पा० ।

पयोजलद्व्याढकवच्छृतं तत्
क्षीरावशेषं सितवस्त्रपूतम् ॥ ६६ ॥
वचाशताह्वामरदारुकुष्ठ-
यष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं
नात्युष्णशीतं गुडसैन्धवाक्तम् ॥ ६७ ॥
क्षौद्रस्य तैलस्य च सर्पिषश्च
तथैव युक्तं प्रसृतैस्त्रिभिश्च³ ।
दद्यान्निरूहं विधिना विधिज्ञः
स सर्वसंसर्गकृतामयघ्नः ॥ ६८ ॥

पुनर्नवेत्यादिकः सर्ववातादिसंसर्गविषयः । वृश्चीरः श्वेतपुनर्नवा । धान्यानि फलानि चेति धान्यफलानि । पयोजलद्व्याढकवदिति समजलक्षीरद्विप्रस्थयुक्तम् ॥ ६५–६८ ॥

स्निग्धोष्ण एकः पवने समांसो
द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः
कफे निरूहा न परं विधेयाः ॥ ६९ ॥

उक्तानां वातादिहरवस्तीनां संख्याकल्पनां विशिष्टां दर्शयन्नाह—स्निग्धोष्ण इत्यादि । एक इति एक एव पुटकः । पयसा चेति पयोयुक्तौ । कटुकोष्णतीक्ष्णत्वं कफहरद्रव्ययोगादेव ज्ञेयम् । न परं विधेया इत्यनेन तन्त्रान्तरविहितं चतुर्थवस्तिदानमत्यर्थशरीरहिंसकं निषेधयति; यथा सुश्रुते—"द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः । सम्यङ्निरूढलिङ्गे तु प्राप्ते बस्तिं निवर्तयेत्" ( सु. चि. अ. ३२ ) इत्यनेनोक्तं चतुर्थदानमिति ॥ ६९ ॥

रसेन वाते प्रतिभोजनं स्यात्
क्षीरेण पित्ते तु कफे च यूषैः ।
तथाऽनुवास्येषु च विल्वतैलं
स्याज्जीवनीयं फलसाधितं च ॥ ७० ॥
इतीदमुक्तं निखिलं यथाव-
द्वस्तिप्रदानस्य विधानमग्र्यम् ।
योऽधीत्य विद्वानिह वस्तिकर्म
करोति लोके लभते स सिद्धिम् ॥ ७१ ॥
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते
दृढबलसंपूरिते सिद्धिस्थाने वस्तिसूत्रीय-
सिद्धिर्नाम तृतीयोऽध्यायः ॥ ३ ॥

संप्रति वातादिभेदेन प्रतिभोजनं विशिष्टं तथाऽनुवासनं चाह—रसेन वाते इत्यादि । प्रतिभोजनं निरूहानन्तरभोजनम् । वाते विल्वतैलानुवासनं, पित्ते जीवनीयसाधितं, कफे च मदनफलसाधितम् । अत्र विल्वतैलादीनि वक्ष्यमाणानि व्याख्यानयन्ति; तेन स्नेहव्यापत्सिद्धौ यद् वक्ष्यति "दशमूलं" ( सि. अ. ४ ) इत्यादिना विल्वतैलं, जीवनीयं च "जीवन्ती मदनं" ( सि. अ. ४ ) इत्यादिना वक्ष्यमाणयमकं, तथा "मदनैर्वाऽम्लसंयुक्तैः" ( सि. अ. ४ ) इत्यादिना वक्ष्यमाणं मदनतैलं ज्ञेयम् ॥ ७० ॥ ७१ ॥

इति श्रीचक्रपाणिदत्तप्रणीतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने बस्तिसूत्रीयसिद्धिर्नाम तृतीयोध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

अथातः स्नेहव्यापत्सिद्धिं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वसिद्धौ विल्वतैलादीन्यभ्यङ्गसेवानुवासनार्थं निर्दिष्टानि, तदभिधायिका चेयं सिद्धिरित्यनन्तरं स्नेहव्यापत्सिद्धिरुच्यते; स्नेहानामनुवासनिकानां तद्व्यापदां च भेषजानामभिधायिका सिद्धिः ॥ १ ॥ २ ॥

स्नेहवस्तीन्निवोधेमान् वातपित्तकफापहान् ।
मिथ्याप्रणिहितानां च व्यापदः सचिकित्सिताः ३

अध्यायवक्तव्यमाह—स्नेहवस्तीनित्यादि । वस्तिप्रयोज्याः स्नेहा एतच्छ्लोकाभिहिता इत्यर्थः; प्रपञ्चानभिधेया ये त्वपरेऽत्रार्थाः "स्नेहवस्तिं निरूहं च" इत्यादिना वक्तव्याः, ते न प्रपञ्चवाच्या इति ते न प्रतिज्ञाताः ॥ ३ ॥

दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीकभार्गीवृषकरोहिषम् ॥ ४ ॥
शतावरीं सहचरं काकनासां पलांशिकम्³ ।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥ ५ ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
तैलाढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥ ६ ॥
अनुवासनमेतद्धि सर्ववातविकारनुत् ।
आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ७ ॥

दशमूलमित्यादौ भूतीकं कत्तृणं यवानिका वा; काकनासा वायसीफलम्, अन्ये तु वासाफलं 'कायुयाङ्टी' इति ख्यातं द्रव्यान्तरमेवाहुः । एतद् दशमूलस्थितविल्वेन विल्वतैलमिति वदन्ति ॥ ४–७ ॥

शताह्वायवविल्वाम्लैः सिद्धं तैलं समीरणे ।
सैन्धवेनाग्नितप्तेन तप्तं चानिलनुद्धृतम् ॥ ८ ॥

१ 'पयोजलद्व्याढकपाचितं' इति, 'पयोजलार्धाढकपाचितं' इति, 'पयोजलद्व्याढकयोः शृतं' इति च पा० । २ '°निल्व°' इति पा० । ३ 'प्रसृतित्रयेण' इति पा० ।

१ 'स्नेहव्यापदिकीं सिद्धिं' इति पा० । २ 'पूर्वाध्याये' इति पा० । ३ 'पलोन्मितम्' इति पा० । ४ 'पचेत्तैलाढकं क्षीरैः' इति पा० ।

आनूपानामित्यादौ तद्वदिति पूर्वक्काथेन साधिता। शताह्वेत्यादि योगान्तरम्। सैन्धवेनेत्यपि योगान्तरम् ॥ ७॥८॥

जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम्।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ९ ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम्।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत्तच्चतुर्गुणे ॥ १० ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम्।
मूत्ररेतोरजोदोषान् हरेत्तदनुवासनम् ॥ ११ ॥
लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम्।
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ १२ ॥

जीवन्तीमित्यादिना यमकमनुवासनम्। एतद्यमकं पूर्वाध्याये जीवनीयसंज्ञया व्यपदिष्टम्। लाभत इति यथालाभम्। चन्दनाद्यं ज्वरचिकित्सितोक्तम्। तैलं पादं यस्मिन् तत् तैलपादम् ॥ ९–१२ ॥

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारु सकट्फलम् ॥ १३ ॥
नागरं पुष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां हरेणुं नीलिनीं स्थिराम् ॥ १४ ॥
बिल्वाजमोदे कृष्णां च दन्तीं रास्नां च पेषयेत्।
साध्यमेरण्डजं तैलं तैलं वा कफरोगनुत् ॥ १५ ॥
वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीं चैव हन्यात्तदनुवासनात् ॥ १६ ॥
मदनैर्वाऽम्लसंयुक्तैर्बिल्वाद्येन गणेन वा।
तैलं कफहरैर्वाऽपि कफघ्नं कल्पयेद्भिषक् ॥ १७ ॥

मदनैर्वाऽम्लसंयुक्तैरित्यत्र मदनस्य कल्कत्वं, काञ्जिकादीनामम्लानां द्रवत्वम्। एतच्च मदनतैलमिति ख्यातम्। बिल्वाद्यो गणः दशमूलं; दशमूलं चात्र क्वाथकल्काभ्यामपि देयम्। उक्तं हि—"क्वाथकल्कावनिर्देशे गणात्तस्मात् समावपेत्" इति। कफहरैरिति पूर्वाध्यायोक्तकफहरभेषजैः, किंवा त्रिकटुकपञ्चकोलादिभिः ॥ १३–१७ ॥

विडङ्गैरण्डरजनीपटोलत्रिफलामृताः।
जातीप्रवालनिर्गुण्डीदशमूलाखुपर्णिकाः ॥ १८ ॥
निम्बपाठासहचरशम्पाककरवीरकाः।
एषां क्काथेन विपचेत्तैलमेभिश्च कल्कितैः ॥ १९ ॥
फलबिल्वत्रिवृत्कृष्णारास्नाभूनिम्बदारुभिः।
सप्तपर्णवचोशीरदार्वीकुष्ठकलिङ्गकैः ॥ २० ॥
लतागौरीशताह्वाग्निशटीचोरकपौष्करैः।
तत् कुष्ठानि क्रिमीन् मेहानर्शांसि ग्रहणीगदम् ॥२१॥
क्लीबतां विषमाग्नित्वं मलं दोषत्रयं तथा।
प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥ २२ ॥
व्याधिव्यायामकर्माध्वक्षीणाबलनिरोजसाम्।
क्षीणशुक्रस्य चातीव स्नेहबस्तिर्बलप्रदः ॥ २३ ॥
पादजङ्घोरुपृष्ठांसकटीनां स्थिरतां पराम्।
जनयेदप्रजानां च प्रजां स्त्रीणां तथा नृणाम् ॥२४॥

विडङ्गेत्यादौ एभिश्च कल्कितैरिति वक्ष्यमाणैः। लता मञ्जिष्ठा, गौरी हरिद्रा। स्नेहबस्तिर्बलप्रद इति एतैस्तैलैः कृतः स्नेहबस्तिरित्यर्थः ॥ १८–२४ ॥

वातपित्तकफात्यन्नपुरीषैरावृतस्य च।
अभुक्ते च प्रणीतस्य स्नेहबस्तेः षडापदः ॥ २५ ॥

वातपित्तेत्यादिना स्नेहबस्तेर्व्यापदः प्राह। एताश्च व्यापदो मिथ्यायोगेन स्नेहस्य क्रियमाणा उच्यन्ते; प्रतिज्ञातं हि 'मिथ्याप्रणिहितानां च व्यापद' इति, तेन स्नेहायोगातियोगजन्यव्यापदामिहानवसर एव; अनुवासनायोगातियोगजन्याश्च व्यापदः कल्पनासिद्धावेवोक्ताः; तद्भेषजं चातिस्नेहिते शोधनबस्तिः, अस्नेहिते पुनः स्नेहबस्तिदानमेव ज्ञेयम्। एतच्च "तस्मान्निरूढः संस्नेह्यो निरूह्यश्चानुवासितः" इत्यादिनोक्तत्वात् प्रसङ्गेनेहोक्तम् ॥ २५ ॥

शीतोऽल्पो वाऽधिके वाते पित्तेऽत्युष्णः कफे मृदुः।
अतिभुक्ते गुरुर्वर्चःसंचयेऽल्पबलस्तथा ॥ २६ ॥
दत्तस्तैरावृतः स्नेहो न यात्यभिभवादपि।
अभुक्तेऽनावृतत्वाच्च यात्यूर्ध्वं तस्य लक्षणम् ॥२७॥
अङ्गमर्दज्वराध्मानशीतस्तम्भोरुपीडनैः।
पार्श्वरुग्वेष्टनैर्विद्यात् स्नेहं वातावृतं भिषक् ॥ २८ ॥

यथाक्रमं षड्व्यापदां हेतुमाह—शीत इत्यादि। गुरुरिति गुरुत्वयुक्तः। वर्चःसंचयेऽल्पबल इति संचिते मले सति अल्पबलो वर्चःसंचयप्रवर्तनाक्षम इत्यर्थः। तैरावृत इति पदं प्रत्येकं वातादिषु पञ्चसु योजनीयम्। अभिभवादपीति वातादिनाऽऽवृतमार्गत्वान्न याति; तथा तेन वातादिनोल्बणेनाभिभूतगुणत्वाच्च न आयाति। अनावृतत्वादिति अन्नेनोर्ध्वमार्गस्यापिहितत्वात्। तस्य लक्षणमिति यथाक्रमं वाताद्यावृतस्य लक्षणं वक्ष्यमाणमङ्गमर्दादि। वेष्टनैरिति पार्श्ववेष्टनैरेव। एते च स्तम्भादयो वातावृतस्नेहमहिम्नैव जायन्ते, तेन स्नेहप्रयोगात् पूर्वं न भवन्त्येव ॥ २६–२८ ॥

---

१ 'पुंस्त्वं रेतोरजोदोषान् हरेत्तदनुवासनात्' इति पा०। २ 'तैलपात्रं' इति पा०। ३ 'वलाम्' इति पा०।

१ 'लतायष्टीशताह्वाग्निशटीसौराष्ट्रीपौष्करैः' इति पा०। २ 'प्रवाधनेनोक्तं' इति, 'प्रबन्धेनोक्तं' इति च पा०। ३ 'न यात्यभिभवादधः' इति पा०। ४ 'स्तम्भरुक्सदनाध्मानज्वरशूलाङ्गमर्दनैः' इति पा०। ५ 'गुरुणा युक्तः' इति पा०।

स्निग्धाम्ललवणोष्णैस्तं राज्ञापीतद्रुतैलिकैः ।
सौवीरकसुराकोलकुलत्थयवसाधितैः ॥ २९ ॥
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः ।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥३०॥
दाहरागतृषामोहतमकज्वरदूषणैः ।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ॥३१॥

रास्नातैलं "रास्नासहस्रनिर्यूहे" ( चि. अ. २८ ) इत्यादिना विहितं वातव्याधावुक्तम् । पीतद्रुतैलं च पीतद्रु-सौवीरकादि-द्रवेण साध्यमिति ब्रुवते । ताभ्यामिति रास्नापीतद्रुतैलाभ्याम् ॥ २९-३१ ॥

तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ।
संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥३२॥
कषायकटुतीक्ष्णोष्णैः सुरामूत्रोपसाधितैः ।
फलतैलयुतैः साम्लैर्वस्तिभिस्तं विनिर्हरेत् ॥ ३३ ॥

फलतैलं पूर्वव्याहृतमेव ज्ञेयम् ॥ ३२ ॥ ३३ ॥

छर्दिमूर्च्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥ ३४ ॥
कटूनां लवणानां च काथैश्चूर्णैश्च पाचनम् ।
विरेको मृदुरत्रामविहिता च क्रिया हिता ॥ ३५ ॥

आमलिङ्गैरिति आमलक्षणैरालस्यादिभिः । आमविहिता क्रियेति "आमं प्रदुष्टमर्चाभिभूतं पुनरुल्लिखेत्" ( वि. अ. २ ) इत्यादिना विहिताऽनुसर्तव्या ॥ ३४ ॥ ३५ ॥

विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ।
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ॥ ३६ ॥
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥ ३७ ॥

स्नेहं विडावृतमित्यादौ वर्तिभिरिति फलवर्तिभिः, केचित्तु 'वस्तिभिः' इति पठन्ति । श्यामाबिल्वादीनि च श्यामा च बिल्वादीनि दशमूलानि च श्यामाबिल्वादीनि; किंवा, श्यामादीन्यप्यत्र कल्पोक्तानि नव गृह्यन्ते; तैर्निरूहस्य तथाऽनुवासनस्य च साधनमिह ज्ञेयम् । उदावर्तहरेणेति त्रिमर्मीयोक्तोदावर्तचिकित्सितेन ॥ ३६ ॥ ३७ ॥

अभुक्ते शून्यपायौ वा वेगात् स्नेहोऽतिपीडितः ।
धावत्यूर्ध्वं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥३८॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैल इष्टोऽत्र निरूहः सानुवासनः ॥ ३९ ॥

कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कार्यं निवर्तनम् ॥४०॥

अभुक्ते इत्यादिहेतुत्रयं स्नेहवस्तेरूर्ध्वगमनकारणं ज्ञेयं; पूर्वं च यद्यप्यभोजनदानमेव कारणं प्रतिश्रुतं, तथाऽप्येककार्यतया चिकित्सितसामान्याच्च शून्यपायुत्वातिपीडने अप्यत्र हेतुत्वेनोक्ते; शून्यपायुत्वं चाधोनिरोधाकर्तृतया स्नेहमूर्ध्वं नयति । ऊर्ध्वेभ्यः खेभ्य इति मुखनासादिभ्यः । एतीति निर्गच्छति । अपिशब्दान्मुखादिनिर्गमनस्य कादाचित्कत्वं दर्शयति । तत्सिद्धतैल इति मूत्रश्यामादिसाधिततैलेन युक्तः । सानुवासन इति तत्सिद्धतैलेन चानुवासनं देयम् । आगच्छत इति आगमनसमय एव स्तम्भादि कर्तव्यम् । स्तम्भः व्यजनशीतजलसेकादिना; कण्ठग्रहः ऊर्ध्वगमनप्रतिषेधार्थं कण्ठपीडनम् । छर्दिघ्नीः क्रियाः छर्दिश्चिकित्सिते "मनोऽभिघाते तु मनोऽनुकूलाः" इत्यादिना "सुख एव जेतुम्" ( चि. अ. २० ) इत्यन्तेनोक्ता इहाभिप्रेता ज्ञेयाः ॥ ३८-४० ॥

यस्य नोपद्रवं कुर्यात् स्नेहवस्तिरनिःसृतः ।
सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥

वाताद्यावृतस्नेहप्रवर्तनमभिधाय अप्रवर्तनीयस्नेहमाह—यस्य नोपद्रवमित्यादि । नोपद्रवं कुर्यादिति अनिःसृतोऽपि स्तम्भरुगादीनूर्ध्वोक्तान्न कुर्यात् । अल्पो वाऽऽवृत इति स्तोकनिःसृतः, स्तोकश्च धृतः । धृतस्यापि स्तम्भाद्युपद्रवाकरणे हेतुमाह—रौक्ष्यादिति । तदाऽत्यर्थरूक्षतया शरीरस्य तिष्ठन्नपि स्नेहो न व्यापदमावहतीत्यर्थः । उपेक्ष्य इति न तत्र यथोक्तवातावृतस्नेहचिकित्सा कर्तव्येत्यर्थः; अन्यत्राप्युक्तम्—"अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दूष्यति । कुर्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्" ( सु. चि. अ. ३७ ) इति ॥ ४१ ॥

युक्तस्नेहं द्रवोष्णं च लघुपथ्योपसेवनम् ।
भुक्तवान् मात्रया भोज्यमनुवास्यस्त्र्यहाद्र्यहात् ४२
धान्यनागरसिद्धं हि तोयं दद्याद्विचक्षणः ।
व्युषिताय निशां कल्यमुष्णं वा केवलं जलम् ॥४३॥
स्नेहाजीर्णं जरयति श्लेष्माणं तद्भिनत्ति च ।
मारुतस्यानुलोम्यं च कुर्यादुष्णोदकं नृणाम् ॥ ४४ ॥
वमने च विरेके च निरूहे सानुवासने ।
तस्मादुष्णोदकं देयं वातश्लेष्मोपशान्तये ॥ ४५ ॥

उत्पन्नव्यापत्प्रतीकारमभिधायाव्यापन्नानुवासनानुगुणं भोजनमाह—युक्तस्नेहमित्यादि । युक्तस्नेहमिति अव्यापन्नस्नेहमिति भावः । उपसेवनं भोजनम् । त्र्यहादिति विधानं प्रायिकम् । धान्येत्यादौ षडङ्गविधिना तोयं साधनीयम् । कल्यमिति प्रभाते । स्नेहाजीर्णमिति स्नेहस्याजीर्णं कोष्ठोपलेपकमंशम् ॥ ४२-४५ ॥

१ 'रास्नापीतद्रुतिल्वकैः' इति पा० । 'पीतद्रुरत्र सरलः' इति इन्दुः । २ 'अभिहितं' इति पा० । ३ 'पीतद्रव्यसौवीरकादिद्रवेण' इति पा० । ४ 'कषायतिक्तकटुकैः' इति पा० । ५ 'छर्दितृष्णारुचिग्लानिज्वरशूलाङ्गमर्दनैः' इति पा० । ६ 'अलसीभूतं' इति त्रिविधकुक्षीये पाठः ।

१ 'सुगन्धिमालाग्रहणादिका इहोदन्तोपयुक्ताः' इति पा० । २ 'उपसेवनं व्यञ्जनम्' इति पा० । ३ 'त्र्यहादिविधानं' इति पा० ।

रूक्षनित्यस्तु दीप्ताग्निर्व्यायामी मारुतामयी।
वङ्क्षणश्रोण्युदावृत्तवाताश्चार्हा दिने दिने ॥ ४६ ॥
एषां चाशु जरां स्नेहो यात्यम्बु सिकतास्विव।
अतोऽन्येषां त्र्यहात् प्रायः स्नेहं पचति पावकः॥४७॥

प्रत्यहानुवासनीयानाह—रूक्षनित्यस्त्वित्यादि। वङ्क्षणश्रोणिगतश्च तथोदावृत्तश्च वातो येषां ते वङ्क्षणश्रोण्युदावृत्तवाताः। अर्हा इति अनुवासनार्हाः। उक्तं चान्यत्र—"रूक्षस्य बहुवातस्य स्नेहवस्तिं दिने दिने। दद्याद्वैद्यस्ततोऽन्येषामग्न्यावाधभयात्त्र्यहात्" (सु. चि. अ. ३७) इति। प्रत्यहदानत्र्यहदानोपपत्तिमाह—एषामित्यादि। त्र्यहात् स्नेहं पचतीति पक्वाशयोपलेपकं स्नेहं बहिर्निःसृतेनोष्मणा पचति; यद्यप्यत्राग्निनोर्ध्वस्थितेन तादृशः संबन्धः स्नेहस्य नास्ति, तथाऽपि जाठरस्यैव विमिश्रितैरवयवैस्तत्पाको वक्तव्यः। प्रायःशब्देन पञ्चाहपाकमपि दर्शयति, तेन पञ्चाहदानमप्यनुवासने मन्दाग्निं प्रति प्रागुक्तं ज्ञेयम्, उक्तं हि—"परतस्त्र्यहे वा द्व्यहेऽनुवास्योऽहनि पञ्चमे वा" (सि. अ. १) इति ॥ ४६ ॥ ४७ ॥

न त्वामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद्गुदम्।
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ ४८ ॥
न चैव गुदकण्ठाभ्यां दद्यात् स्नेहमनन्तरम्।
उभयस्मात् समं गच्छन् वातमग्निं च दूषयेत् ॥४९॥

आममिति अपक्वम्। प्रणयेदिति अनुवासनं दद्यात्। सावशेषं कुर्वीतेति न निःशेषं दद्यात्। गुदकण्ठाभ्यामिति अनुवासनपानाभ्याम्। अनन्तरमिति एककालम्। वातमग्निं च दूषयेदिति अत्र वातदूषणमजीर्णजनकतया वातावरणाच्च ज्ञेयम् ॥ ४८ ॥ ४९ ॥

स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।
उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद्भयम् ॥ ५० ॥
तस्मान्निरूढः संस्नेह्यो निरूह्यश्चानुवासितः।
स्नेहशोधनयुक्त्यैवं वस्तिकर्म त्रिदोषनुत् ॥ ५१ ॥

निरूहानुवासनयोः परस्पराव्यवधानदाने दोषमाह—स्नेहवस्तिं निरूहं वेत्यादि। एकमेवेति परस्परानन्तरितम्। उत्क्लेशः कफपित्तोत्क्लेशः। निरूहात् पवनाद्भयमिति निरन्तरनिरूहेण शरीरस्य शोधनातियोगात् पवनाद्भयं भवति। निरूढः संस्नेह्य इति निरूहेण स्रोतःसु शोधितेषु कफपित्तजये कृते स्नेहवस्तिरभ्यस्यः; तथाऽनुवासितश्च सम्यगनुवासनेन हि स्निग्धः सन्निरूह्य एव। एवं प्रयुज्यमानस्नेहनिरूहयोस्त्रिदोषहन्तृत्वं स्नेहेन वातजयान्निरूहेण कफपित्तजयाद्भवतीत्याह—स्नेहशोधनेत्यादि। शोधनमिह निरूहोऽभिप्रेतः ॥ ५० ॥ ५१ ॥

१ '०र्भृशं व्यायामपीडितः' इति पा०। २ 'कोष्ठो ह्युपलेपकस्नेहं' इति पा०। ३ 'जठरस्य बहिर्निःसृतेनैवोष्मणा' इति पा०। ४ 'संगतः स ह्युभयतो वाताग्नी दूषयेद समम्' इति पा०। ५ 'स्नेह्यः स्यात्' इति पा०।

कर्मव्यायामभाराध्वया(पा)नस्त्रीकर्षितेषु च।
दुर्बले वातभग्ने च मात्रावस्तिः सदा मतः ॥ ५२ ॥
यथेष्टाहारचेष्टस्य सर्वकालं निरत्ययः।
ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत्॥५३॥
बल्यं सुखोपचर्यं च सुखं सृष्टपुरीषकृत्।
स्नेहमात्राविधानं हि बृंहणं वातरोगनुत् ॥ ५४ ॥

अनुवासनविशेषस्य मात्रावस्तेर्विषयं प्रमाणं गुणांश्च यथाक्रममाह—कर्मेत्यादि। कर्मात्र कन्दुकचालनादि, व्यायामः धनुराकर्षणादिः। वातभग्ने वातेन पीडिते। सदेति प्रत्यहम्। ह्रस्वाया इति अर्धाहःपरिणमनीयायाः; उक्तं हि—"अहोरात्रमहः कृत्स्नं दिनार्धं च प्रतीक्षते। उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति" (सू. अ. १३) इति। तन्त्रान्तरे स्नेहमात्रात्रयं प्रमाणैरेवोक्तं; यथा—"षट्पली तु भवेज्ज्येष्ठा, मध्यमा त्रिपली भवेत्। कनीयसी सार्धपला त्रिधा मात्राऽनुवासने" इति। सुश्रुतेनापि वस्तिप्रमाणमुक्तं; यथा—अनुवासने—"तस्यापि विकल्पोऽर्धार्धमात्रावकृष्टोऽपरिहार्यो मात्रावस्तिः" (सु. चि. अ. ३५) इति। अनेन च सार्धपलमानो मात्रावस्तिरुक्तो भवति; तत्र हि षट्पलः स्नेहवस्तिरुक्तः, अनुवासनं तु त्रिपलम्। सुखोपचर्यमिति चेष्टाहारनियमाभावादेव ॥ ५२–५४ ॥

तत्र श्लोकौ—

वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः।
तेषां चाज्ञप्रयुक्तानां व्यापदः सचिकित्सिताः ॥५५॥
प्राग्भोज्यं स्नेहवस्तेर्यद् ध्रुवं येऽर्हास्त्र्यहाच्च ये
स्नेहवस्तिविधिश्चोक्तो मात्रावस्तिविधिस्तथा ॥ ५६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने स्नेहव्यापत्सिद्धिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

संग्रहे भोज्यग्रहणेन धान्यनागरजलाद्यपि संग्राह्यम्। ध्रुवं येऽर्हा इति प्रत्यहमनुवासनीयाः। विधिश्चोक्त इति 'न त्वामं प्रणयेत्' इत्यादिग्रन्थोक्तोऽर्थः ॥ ५५ ॥ ५६ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने स्नेहव्यापत्सिद्धिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः।

अथातो नेत्रवस्तिव्यापत्सिद्धिं व्याख्यास्यामः ॥ १॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

१ 'वातरुग्णे' इति पा०। २ 'कुद्दालपातनादि' इति पा०।
३ 'नेत्रव्यापदिकीं सिद्धिं' इति पा०।

**अथ नेत्राणि वस्तींश्च शृणु वर्ज्यानि कर्मसु।**
**नेत्रस्याशप्रणीतस्य व्यापदः सचिकित्सिताः॥ ३॥**

स्नेहव्यापत्सिद्ध्यभिधानप्रसङ्गात् स्नेहदानसाधननलिकादिव्यापत्प्रतीकारार्था नेत्रवस्तिव्यापत्सिद्धिरुच्यते। नेत्रगता तथा वस्तिपुटकगता च व्यापत् तथा नेत्रासम्यक्प्रणिधानजन्या च या व्यापदस्तासां सिद्धिः; तेन नेत्रवस्तिव्यापत्सिद्धिः दुष्टनेत्रवस्तिपुटकयोश्च व्यापत्सिद्धिः तयोः सदोषत्वेन ज्ञात्वा परिवर्जनम्॥ १-३॥

**ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्।**
**पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत्॥ ४॥**
**अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः।**
**गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम्॥ ५॥**

तदेवाह—ह्रस्वमित्यादि। नेत्रदोषकथने अष्टाविति पदमनुक्तकर्कशत्वादिदोषाणामत्रैवान्तर्भावोपदर्शनार्थम्। कर्कशत्वस्य जीर्णेन कर्तृत्वसाम्याद्ग्रहणम्। एवमन्यत्रापि संख्यावचने प्रयोजनमिह वर्णनीयम्। तनु कृशम्। अप्राप्त्यादि यथाक्रमं ह्रस्वनेत्रादिषु ज्ञेयम्। अतिगतिः दूरप्रवेशः। क्षोभः गुदप्रविष्टस्येतस्ततो गमनम्। गुदपीडेति पार्श्वच्छिद्रनिर्गतेन वस्तिद्रवेण योगाद्गुदपीडा। जिह्मेति कुटिला॥ ४॥ ५॥

**विषममांसलच्छिन्नस्थूलजालिकवातलाः।**
**स्निग्धः क्लिन्नश्च तानष्टौ वस्तीन् कर्मसु वर्जयेत्॥६॥**
**गतिवैषम्यविस्रत्वस्रावदौर्ग्राह्यनिस्रवाः।**
**फेनिलच्युत्यधार्यत्वं वस्तेः स्युर्वस्तिदोषतः॥ ७॥**

विषमः विषमसंस्थानः, स्थूलः अतिप्रमाणः, जालिकः सूक्ष्मानेकच्छिद्रः, वातलः वातदुष्टः, स चात्र विहितस्नेहादेः फेनिलत्वादिना निश्चीयते। स्निग्धः अतिस्निग्धः। क्लिन्नः शीर्णावयवः। गतिवैषम्यादयो यथाक्रमं विषमादिष्वष्टौ दोषाः। विस्रत्वम् आमगन्धता, दौर्ग्राह्यं दुर्ग्रहता, च्युतिः हस्ताद्भ्रंशः, अधार्यत्वं वस्तेरिति क्लिन्नत्वाद्धि धारणायोग्यत्वं वस्तिपुटकस्य॥ ६॥ ७॥

**सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकम्पिताः।**
**अतिबाह्यगमन्दातिवेगदोषाः प्रणेतृतः॥ ८॥**

सवातेत्यादयः प्रणेतृदोषजनिताः प्रणेतृदोषा उच्यन्ते। तत्र सवातता अनुच्छ्वास्य बद्धे वस्तौ तथा निःशेषं च दत्ते भवति। अतिद्रुतत्वमपि प्रणयने निर्गमनेन। उत्क्षिप्तत्वम् ऊर्ध्वक्षिप्तत्वम्। तिर्यगिति तिर्यक्प्रणिधानम्। उल्लुप्तत्वमिह पीडनदोषो यः पीडनविच्छेदं कृत्वा पुनः पीड्यते स ज्ञेयः। कम्पितत्वं नेत्रस्य। अतीति अतिप्रणयनं नेत्रस्य। बाह्यगं गुदे न प्रविष्टमौषधम्। मन्दत्वं च पक्वाशयाप्राप्तत्वम्, एतद्धि मन्दपीडनाद्भवति। अतिवेगः दूरप्रवेशाद्भवति, स चातिपीडनकृतः॥ ८॥

**अनुच्छ्वास्य च बद्धे वा दत्ते निःशेष एव वा।**
**प्रविश्य कुपितो वायुः शूलतोदकरो भवेत्॥ ९॥**
**तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च।**

एतद्व्यापदां चिकित्सितानि प्रत्येकमाह—अनुच्छ्वास्येत्यादि। एते चानुच्छ्वासनादयो यद्यपि पूर्वमेव निषिद्धाः "सुबद्धमुच्छ्वास्य च निर्वलीकं" (सि. अ. ३) इत्यादिनैव, तथाऽपि प्रमादात्तथाप्रयोगे सति जातव्यापदां चिकित्साभिधानार्थमस्मिन् प्रकरणे पुनरुक्ताः॥ ९॥—

**द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा॥ १०॥**
**स्यात् कटीगुदजङ्घार्तिवस्तिस्तम्भोरुवेदनाः।**
**भोजनं तत्र वातघ्नं स्नेहाः स्वेदाः सवस्तयः॥ ११॥**

द्रुतमित्यादि। उत्क्षिप्तमपि समानव्यापत्तिकरत्वैकग्रन्थेनैव पठ्यते। निष्कृष्टे सहसेति च्छेदः, उत्क्षेपस्त्वसहसाऽपि व्यापत्तिकर एव। वस्तेर्मूत्राशयस्य स्तम्भो वस्तिस्तम्भः। सवस्तय इति वातहरवस्तियुक्ताः॥ १०॥ ११॥

**तिर्यग्वल्यावृतद्वारे बद्धे वाऽपि न गच्छति।**
**नेत्रे तदृजु निष्कृष्य संशोध्य च प्रवेशयेत्॥ १२॥**

तिर्यक्प्रणिधानदोषेऽभिधातव्ये नलिकामुखरोधि द्रव्यान्तरं तत्समानव्यापत्तिकरत्वादुच्यते। तिर्यग्वल्यावृतद्वारे बद्धे वाऽपीति तिर्यक्प्रणिहिते नेत्रे वल्यावृतद्वारे सति तथा वस्तिद्रव्यगतसूत्रद्रव्यादिना विबद्धे नेत्रे वस्तिद्रव्यं न याति; तन्नेत्रं तिर्यक्प्रणिहितं निष्कृष्य ऋजु प्रवेशयेत्, बद्धद्वारं च संशोध्य प्रवेशयेदिति योज्यम्॥ १२॥

**पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः।**
**उरःशिरोऽर्तिमूर्वोश्च सदनं जनयेद्बली॥ १३॥**
**वस्तिः स्यात्तत्र बिल्वादिफलश्यामादिमूत्रवान्।**
**स्याद्दाहो दवथुः शोफः कम्पनाभिहते गुदे॥ १४॥**
**कषायमधुराः शीताः सेकास्तत्र सवस्तयः।**

अन्तरा मुक्ते मध्ये विच्छेदे कृते। गुदे प्रतिहतोऽनिल इति पीडनविच्छेदजनितो वायुर्गुदात् प्रत्याहतः। बिल्वादि दशमूलं; श्यामादि श्यामात्रिवृदादिविरेचनद्रव्यम्॥ १३॥ १४॥—

**अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः॥ १५॥**
**स्यात् सार्तिं दाहनिस्तोदगुदवर्चःप्रवर्तनम्।**
**तत्र सर्पिः पिचुः क्षीरं पिच्छावस्तिश्च शस्यते॥१६॥**

अतिमात्रप्रणीतेनेति पुनः पुनः प्रणीतेन; अन्ये तु दुष्प्रवे-

१ 'दोषांश्च सचिकित्सितान्' इति पा०। २ 'पार्श्वाश्रितं' इति पा०। ३ 'कर्कशशब्दस्य' इति पा०। ४ 'कर्तव्यसाम्यात्' इति पा०। ५ 'वै ग्राह्यं' इति पा०।

१ 'क्षुभितः' इति पा०। २ '°जङ्घोरुवस्तिस्तम्भार्तिभेदनम्' इति पा०। ३ 'उरःशिरोरुजं सादमूर्वोश्च' इति पा०। 'छर्दिदाह°' इति पा०। ५ 'दूरप्रवेशनं' इति पा०।

शनमतिमात्रप्रणीतमाहुः; अतिप्रणयनं यद्यपि प्रथितकर्णिकाया उपरि न भवति, तथाऽपि कर्णिकापीडया गुदपीडनादतिप्रवेशो ज्ञेयः। पिच्छावस्तिः वक्ष्यमाणः ॥ १५ ॥ १६ ॥

**नं भावयति मन्दस्तु वाह्यस्त्वाशु निवर्तते।**
**स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥१७॥**
**अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम्।**
**तत्र वस्तिर्विरेकश्च गलपीडादि कर्म च ॥ १८ ॥**

न भावयतीति पक्वाशयं न प्राप्नोति। अतिपीडने कोष्ठे वा तिष्ठतीति पक्षः मन्दादतिपीडनाद्वातावरणाच्च ज्ञेयः; गलगमनं तु तीव्रातिपीडनादनावरणाच्च भवति। इयं च व्यापत् पूर्वाध्याये आहारं विना दत्तानुवासनविषयतयोक्ता, इह तु निरूहस्यानुवासनस्य चातिपीडनजन्यतया वोध्यत इति विशेषः। इह वस्तिर्विरेको वा कोष्ठस्थेऽप्रवर्तमाने, कण्ठपीडनादि तु गलगते ज्ञेयम् ॥ १७ ॥ १८ ॥

**तत्र श्लोकः—**
**नेत्रवस्तिप्रणेतॄणां दोषानेतान् सभेषजान्।**
**वेत्ति यस्तेन मतिमान् वस्तिकर्माणि कारयेत् ॥१९॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने नेत्रवस्तिव्यापत्सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥**

संग्रहे तेनेति यथोक्तभेषजाभिज्ञभिषजा ॥ १९ ॥

इति श्रीचक्रपाणिदत्तप्रणीतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने नेत्रवस्तिव्यापत्सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

**अथाऽतो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः।**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

व्यापत्सिद्ध्यभिधानप्रसङ्गाद्वमनविरेचनयोरपि व्यापत्सिद्धिरुच्यते, वस्तिव्यापत्सिद्धिस्तु वमनविरेचनपूर्वकत्वाद्वस्तेः पश्चादभिधीयते; तेन वस्तिव्यापत्सिद्ध्यभिधानेन वस्तेरिह कर्मभ्यः प्राधान्यमपि द्योतितं; वस्तिप्राधान्यं "तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके" ( सि. अ. १ ) इत्यनेनोक्तम्। अत्र चानागतव्यापच्चिकित्सार्थत्वाद्वमनविरेचनयोः सम्यग्विध्यभिधानं, तेन नोत्सूत्रता वमनविरेचनविध्यभिधानस्य ॥ १ ॥ २ ॥

---

१ 'न वा वहति' इति, 'न च धावति' इति च पा०। २ 'चानागतव्यापच्चिकित्सार्थमेव वमन०' इति पा०।

**अथ शोधनयोः सम्यग्विधिमूर्ध्वानुलोमयोः।**
**असम्यक्कृतयोश्चैव दोषान् वक्ष्यामि सौषधान् ॥३॥**

अथेत्यादौ सम्यगिति विधिविशेषणम्। ऊर्ध्वानुलोमयोरिति वमनविरेचनयोः। दोषानिति व्यापदः। शोधनयोश्च विधिर्यद्यपि कल्पनासिद्ध्युपकल्पनीयादौ तत्र तत्राभिहितः, तथाऽप्यनुक्तविशेषप्रतिपादनार्थमभिधानं, तत्प्रसङ्गाच्च तत्राप्युक्तोऽर्थ उच्यते, सर्वथाऽनुक्ताभिधानं 'नातिस्निग्धान् विरेचयेत्' इत्यादि ज्ञेयम् ॥ ३ ॥

**अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः।**
**तदन्तरे प्रावृडाद्यास्तेषां साधारणास्त्रयः ॥ ४ ॥**

औत्सर्गिकं संशोधनयोग्यं कालं दर्शयन्नाह—अत्युष्णेत्यादि। अत्युष्णेत्यादि ग्रीष्मादिषु यथासंख्यं ज्ञेयम्। तदन्तरे इति ग्रीष्मादीनां मध्ये। प्रावृडाद्या इति प्रावृट्शरद्वसन्ताः। तेषां साधारणा इति उष्णवर्षशीतानां साधारणाः; अनुद्भूतोष्णवर्षशीता इति यावत् ॥ ४ ॥

**प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्जसहौ पुनः।**
**तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ॥ ५ ॥**
**एतानृतून् विकल्प्यैवं दद्यात् संशोधनं भिषक्।**
**स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ६ ॥**

प्रावृडादीन् मासविभागेन दर्शयन्नाह—प्रावृट् शुचिनभावित्यादि। शुचिनभौ आषाढश्रावणौ। ऊर्जसहौ कार्तिकमार्गशीर्षौ। तपस्यः फाल्गुनः। मधुः चैत्रः। शोधनं प्रतीति शोधने कर्तव्येऽयं यथोक्तः प्रावृडादिऋतुविभागो भवति; स्वस्थवृत्तौ रसोत्पत्तौ वा तस्याशितीयोक्त एव वर्षाशरद्धेमन्तशिशिरवसन्तग्रीष्मरूपः ऋतुक्रमो भवति। एतानृतूनिति प्रावृडादीनृतून्। विकल्प्यैवमिति यथोक्तमासविभागेन व्यवस्थाप्य संशोधनं दद्यात्। एतदुक्तसंशोधनाङ्गर्तुक्रमविभागेनैव **चरकसंस्कारे**ऽपि नवेगान्धारणीये "माधवप्रथमे मासि" (सू. अ. ७) इत्यादिना ग्रन्थेन चैत्रश्रावणाग्रहायणेषु वमनादिसंशोधनमुक्तं, तथा रोगभिषग्जितीये (वि. अ. ८) च शिशिरं परित्यज्य प्रावृडादिनैव ऋतुक्रमः संशोधनाङ्गतयोक्तः; तेन, रसवलोत्पादचिन्तायां स्वस्थवृत्तानुष्ठानेषु च शिशिरादिक्रमो भवति, संशोधनव्यवस्थायां तु प्रावृडादिरिति प्रावृडादिक्रमोऽयं संशोधनानुकूलतयाऽऽचार्येण कल्पितो न पारमार्थिकः। ये तु, प्रावृडादिक्रमं गङ्गाया दक्षिणे कूले, उत्तरेऽपि शिशिरादिक्रमं वदन्ति, तन्मते 'शोधनं प्रति' इति ग्रन्थोऽनुपपन्नः; तेन, "भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम्। तेन वर्षाप्रावृडाख्यौ ऋतू तेषां प्रकल्पितौ" इत्यादिना ग्रन्थेन

---

१ 'अन्तरेषु प्रावृडाद्या ज्ञेयाः साधारणास्त्रयः' इति पा०। २ 'एतानृतून् विनिश्चित्यैवं दद्यात्' इति, 'एतानृतून् विकल्प्याथ' इति च पा०। ३ 'प्रकीर्तितौ' इति पा०।

यदि नाम देशभेदेनापि ऋतुक्रमः पारमार्थिकोऽभिधीयते, तथाऽपि नासावाचार्यस्येहाभिमतः, प्रपञ्चितश्चायमर्थः सूत्रस्थान एव। अयं च शोधनकालोपदेशोऽनात्ययिके व्याधौ ज्ञेयः, आत्ययिके तु ऊष्मादिप्रतिकारं कृत्वा अत्युष्णेऽपि काले संशोधनप्रवृत्तिर्भवत्येव, उक्तो ह्ययमर्थो रोगभिषग्जितीये—"आत्ययिके तु पुनः कर्मणि काममृतुं विकल्प्य कृत्रिमगुणोपधानेन" ( वि. अ. ८ ) इत्यादिना ग्रन्थेन ॥ ५ ॥ ६ ॥

**कर्मणां वमनादीनामन्तरेष्वन्तरेषु च।**
**स्नेहस्वेदौ प्रयुञ्जीत स्नेहं चान्ते प्रयोजयेत् ॥ ७ ॥**

कर्मणामित्यादौ अन्तरेष्विति वमनानन्तरं विरेचने कर्तव्ये विरेचनानन्तरं वा वस्तौ कर्तव्ये स्नेहस्वेदौ यथोक्तविधानेन पुनः कर्तव्यौ, न सकृत्प्रयुक्तेनैव स्नेहस्वेदेन पञ्चकर्माणि कर्तव्यानीत्यर्थः। स्नेहं चान्ते प्रयोजयेदिति संशोधनकर्मपरिसमाप्तौ संशोधनजनितग्लानिपरिहारार्थं संशमनीयस्नेहं प्रयोजयेदित्यर्थः ॥ ७ ॥

**विसर्पपिडकाशोफकामलापाण्डुरोगिणः।**
**अभिघातविषार्तांश्च नातिस्निग्धान् विरेचयेत् ॥८॥**

नातिस्निग्धानिति अनतिस्निग्धकायान् नरान् ॥ ८ ॥

**नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम्।**
**स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ९ ॥**

अवश्यकर्तव्ये विरेचने सति अतिस्निग्धास्निग्धयोः सम्यग्योगकारकं विरेचनं दर्शयन्नाह—नातीत्यादि। स्नेहविरेचनमिति स्निग्धं विरेचनमित्यर्थः। अनतिस्निग्धे स्नेहविरेचनमनतिस्निग्धत्वेन क्रियमाणविरेचनायोगप्रतिषेधार्थम्; अतिस्निग्धस्य स्नेहविरेचनं स्नेहनप्रकर्षादतिवेगं गच्छन् प्रचलितानपि दोषान् निहन्तुं न शक्नोति, दोषास्तु तेन विरेचनेन स्वस्थानात् प्रच्याविता भूयः स्रोतःसु लीयन्ते, तत्प्रतिषेधार्थं रूक्षं विरेचनं सम्यग्योगकारकं दद्यादित्ययमाशयः ॥ ९ ॥

**स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम्।**
**एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ १० ॥**

सम्यग्योगकारिकां संशोधनसामग्रीमाह—स्नेहस्वेदोपपन्नेनेत्यादि। मात्रावदिति 'अल्पमात्रं महावेगं' इत्यादिना वक्ष्यमाणमल्पमात्रावत्त्वं ज्ञेयम्। एकाग्रमनसेति संशोधनैकचित्तेन, कामादिव्यग्रमनसो हि वेगविघातादयोगः स्यात् ॥ १० ॥

**स्निग्धात् पात्राद्यथा तोयमयत्नेन प्रणुद्यते।**
**कफादयः प्रणुद्यन्ते स्निग्धाद्देहात्तथौषधैः ॥ ११ ॥**
**आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्वतः।**
**तथा स्निग्धस्य वै दोषान् स्वेदो विष्यन्दयेत् स्थिरान् ॥**
**क्लिष्टं वासो यथोत्क्लेश्य मलः संशोध्यतेऽम्भसा।**
**स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः ॥ १३ ॥**

स्नेहस्वेदयोः फलं 'स्निग्धात् पात्रात्' इत्यादिना भूरिदृष्टान्तेन दर्शयन् स्नेहस्वेदयोरवश्यकर्तव्यतां सूचयति। अयत्नेनेति अल्पायासेन। प्रणुद्यन्ते इति आकृष्यन्ते। विष्यन्दयति सर्वत इति सर्वतः स्थितं द्रवमाकर्षति। अग्निदृष्टान्तेन स्निग्धगात्रस्य सम्यग्दोषहरणमुच्यते, तृतीयदृष्टान्तेन तु स्नेहस्वेदयोर्मिलितयोः फलमुच्यते। क्लिष्टमिति म्लानम्। उत्क्लेश्येति क्षारादिसंबन्धात् समुत्क्लेश्य ॥ ११–१३ ॥

**अजीर्णे वर्धते ग्लानिर्विबन्धश्चापि जायते।**
**पीतं संशोधनं चैव विपरीतं प्रवर्तते ॥ १४ ॥**

शोधनसम्यग्योगसामग्र्यभिधाने प्रोक्तस्नेहस्वेदयोः फलमभिधाय, क्रमागतस्य जीर्णे पीतमित्यस्य विपर्यये दोषमाह—अजीर्णे वर्धते ग्लानिरिति; अजीर्णावस्थायां पीते शोधने सति ग्लानिर्महती भवति। विपरीतं प्रवर्तते इति वमनमधो याति, विरेचनं चोर्ध्वं याति ॥ १४ ॥

**अल्पमात्रं महावेगं बहुदोषहरं सुखम्।**
**लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम् ॥ १५ ॥**
**अविकारि च व्यापत्तौ नातिग्लानिकरं च यत्।**
**गन्धवर्णरसोपेतं विद्यान्मात्रावदौषधम् ॥ १६ ॥**

मात्रावदिति यदुक्तं तद्विवृणोति—अल्पमात्रमित्यादि। अल्पमात्रं महावेगमिति अल्पमात्रत्वे सत्यपि प्रशस्तमहावेगम्। अविकारीति व्यापत्तावपि ईषद्विकारकारि। मात्रावदिति प्रशस्तमात्रावत्। यद्यपि च सुखास्वादादयो मात्रायाः फलं न भवन्ति, तथाऽपीह मात्रायाः प्रशस्तत्वेन द्रव्यसंस्कारादिविशेषाधीना अपि ते गृह्यन्ते; सुखाद्याश्रयद्रव्यगतत्वमपि हि मात्रायाः प्राशस्त्यमिह; किंवा, एवम्भूते एव संशोधने एतन्मात्रावत्त्वं परिभाषितं ज्ञेयम् ॥ १५ ॥ १६ ॥

**विधूय मानसान् दोषान् कामादीनशुभोदयान्।**
**एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥ १७ ॥**

एकाग्रमनसेति यदुक्तं तद्विवृणोति—विधूयेत्यादि ॥ १७ ॥

**नरः श्वो वमनं पाता भुञ्जीत कफवर्धनम्।**
**सुजरं द्रवभूयिष्ठं, लघ्वशीतं विरेचनम् ॥ १८ ॥**
**उत्क्लिष्टाल्पकफत्वेन क्षिप्रं दोषाः स्रवन्ति हि।**

वमनविरेचनयोः पूर्वदिने यथा भोक्तव्यं तदाह—नर इत्यादि। एतत् प्रागुक्तमपि प्रकरणवशाद्विशेषाभिधित्सयाऽभिधीयते। पातेति पातुकामः। द्रवभूयिष्ठमिति च्छेदः। विरेचनं पाता लघु अशीतं च भुञ्जीतेति संबन्धः। एवम्भूत-

१ 'मन्तरे चान्तरे पुनः' इति पा०। २ 'कुष्ठवीसर्पपिडकाकामलापाण्डुरोगिणः' इति पा०। ३ 'दद्याद्रूक्षं विरेचनम्' इति पा०। ४ 'अतिस्निग्धे चातियोगः शक्यते, तत्प्रतिषेधार्थं रूक्षविरेचनम्' इति पा०।

१ 'क्षारोत्क्लिष्टे यथा वस्त्रे मलः शुद्ध्यति वारिणा। स्नेहस्वेदैस्तथोत्क्लिष्टो दोषः शुद्ध्यति शोधनैः' इति पा०। २ 'कामक्रोधभयादिकान्' इति पा०।

भोजनोपपत्तिमाह—उत्क्लिष्टेत्यादि । उत्क्लिष्टाल्पकफत्वेनेति वमनं प्रति उत्क्लिष्टकफत्वेन, विरेचनं प्रति त्वल्पकफत्वेनेति विभागः ॥ १८ ॥—

**पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत् ॥१९॥**
**ऊर्ध्वं कफानुगे पित्ते विट्पित्तेऽनुकफे त्वधः ।**
**हृतदोषं वदेत् कार्श्यदौर्बल्ये चेत् सलाघवे ॥ २० ॥**

वमनविरेचनयोः शुद्धिलिङ्गानि यद्यपि प्रागुक्तानि, तथाऽपीह शेषौषधमलादिविशेषाभिधानार्थं पुनः पीतौषधस्येत्यादिना तान्यभिधत्ते । कफानुगे पित्ते ऊर्ध्वंहृतदोषं वदेत्, विट्पित्ते चानुकफे दृश्यमानेऽधोहृतदोषं वदेदिति योजना; एतत् कफान्तत्वं विरेचनस्य, वमनस्य च पित्तान्तत्वं पूर्वमेव व्याहृतम् । एतत् पित्तान्तत्वं कफान्तत्वं वाऽसम्यक्शुद्धेऽपि दोषस्यानुपूर्व्याऽवस्थानाद्भवतीति कृत्वा लक्षणान्तराण्यपि एतयोः साहचर्येणाह—कार्श्यदौर्बल्ये चेत् सलाघवे इति ॥ १९ ॥ २० ॥

**वामयेत्तु ततः शेषमौषधं न त्वलाघवे ।**
**स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत् ॥२१॥**
**आलाघवात्तनुत्वाच्च कफस्यापत् परं भवेत् ।**

विरेचनयोगे सावशेष एवौषधे शुद्धिलक्षणदर्शने सति कर्तव्यमाह—वामयेत्तु ततः शेषमौषधमिति; शुद्धिलक्षणे जाते शेषमौषधमुपलभ्य विरेचनातियोगप्रतिषेधार्थं वामयेदित्यर्थः । न त्वलाघवे इत्यनेन लाघवव्यतिरिक्तशेषशुद्धिलक्षणदर्शने सत्यपि न विरेचनशेषौषधवमिः कर्तव्या । वमनौषधप्रयोगे कर्तव्यमाह—स्तैमित्ये इत्यादि । वमनौषधप्रयोगे यावत् स्तैमित्यानिलसङ्गौ वर्तेते, तावन्निरुद्गारेऽपि भेषजे सति वमनं कारयितव्यम् । एतद्वमनावधिमाह—आलाघवात्तनुत्वाच्च कफस्येति । प्रमादाल्लाघवतनुत्वयोः परतः क्रियमाणवमनस्य दोषमाह—आपत् परं भवेदिति; आपदिति अतियोगलक्षणा । अन्ये तु, स्तैमित्ये इत्यादिनाऽपि विरेचनौषधस्यैवावस्थिकं वमनमुच्यते इत्याहुः ॥ २१ ॥—

**वमिते वर्धते वह्निः शमं दोषा व्रजन्ति हि ॥ २२ ॥**
**वमितं लङ्घयेत् सम्यग्जीर्णलिङ्गान्यलक्षयन् ।**
**तानि दृष्ट्वा तु पेयादिक्रमं कुर्यान्न लङ्घनम् ॥ २३ ॥**

यथोक्तवमनफलमाह—वमिते वर्धते इत्यादिना । सम्यग्जीर्णलिङ्गान्यलक्षयन्निति संशोधनभेषजस्य वक्ष्यमाणसम्यग्जीर्णलिङ्गान्यलक्षयन् । तानीति जीर्णौषधलिङ्गानि ॥ २२ ॥ २३ ॥

**संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः ।**
**यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥२४॥**

शुद्धस्य पेयादिक्रमोपपत्तिमाह—संशोधनाभ्यामित्यादि । यद्यपि निरूढस्याप्यग्निमान्द्यं भवति, तथाऽपि निरूढस्य तादृगग्निमान्द्यं न भवति येन पेयादिक्रमः क्रियते, अतो निरूहव्युदासार्थं संशोधनाभ्यामिति द्विवचनं कृतम् । या तु सम्यग्विरिक्तलक्षणे—"ऊर्जोऽग्निः" (सि. अ. १) इत्यनेनाग्निवृद्धिरुक्ता, सा च विरेचनौषधक्षोभातिसञ्जात् कृताऽग्निमान्द्यापेक्षयाऽग्निवृद्धिः; तेनेह यात्यग्निर्मन्दतामिति वचनेन समं न विरोधः ॥ २४ ॥

**कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके ।**
**तर्पणादिक्रमं कुर्यात् पेयाऽभिष्यन्दयेद्धि तान् ॥२५॥**

तर्पणादिविषयमाह—कफपित्ते इत्यादि । विशुद्धेऽल्पमिति असम्यग्विशुद्धे । तर्पणादिक्रमे च पेयायाः स्थाने स्वच्छतर्पणं, विलेप्याः स्थाने च घनतर्पणं देयम् ॥ २५ ॥

**अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णोर्जो मनस्विता ।**
**लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ २६ ॥**
**क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा ।**
**अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ २७ ॥**

जीर्णौषधलिङ्गान्याह—अनुलोम इत्यादि । ऊर्जः बलम् । इन्द्रियशुद्धिः इन्द्रियपाटवम् । उद्गारस्य चौषधगन्धादिविरहितत्वमेव शुद्धिः ॥ २६ ॥ २७ ॥

**अकालेऽल्पातिमात्रं च पुराणं न च भावितम् ।**
**असम्यक्संस्कृतं चैव व्यापद्येतौषधं द्रुतम् ॥ २८ ॥**

यादृशमौषधं व्यापद्यते तदाह—अकाले इत्यादि । अल्पं वा अतिमात्रं वाऽल्पातिमात्रम् । न च भावितमिति स्वरसैस्तुल्यवीर्यैर्वाऽभावितम् ॥ २८ ॥

**आध्मानं परिकर्तिश्च स्रावो हृद्गात्रयोर्ग्रहः ।**
**जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्लमः ॥२९॥**
**अयोगादतियोगाच्च दशैता व्यापदो मताः ।**
**प्रेष्यभैषज्यवैद्यानां वैगुण्यादातुरस्य च ॥ ३० ॥**

संशोधनायोगातियोगजन्या आविष्कृता व्यापदः प्राह—आध्मानमित्यादि । (आध्मानादयश्चामी नावश्यमयोगातियोगान्ते भवन्ति, तेनोपद्रवभूतत्वात् पृथगुक्ताः ।) एता व्यापदः प्रेष्यादिवैगुण्यादुत्पन्ना अयोगादतियोगाच्च भवन्तीति वाक्यार्थः । तत्राध्मानमयोगाद्भवति, परिकर्तिका त्वतियोगात्, स्रावोऽयोगात्, हृद्ग्रहोऽप्ययोगादेव, तथाऽङ्गग्रहोऽयोगाच्च भवति, जीवादानमतियोगात्; विभ्रंशस्तु गुदभ्रंश-संज्ञाभ्रंश-कण्ठ्वादिलक्षणभ्रंशभेदात्रिविधो वक्तव्यः; गुदभ्रंश-संज्ञाभ्रंशावतियोगजन्यौ, शेषस्तु विभ्रंशोऽयोगजन्यः; उपद्रवोऽप्ययोगजन्य एव, क्लमोऽप्ययोगजः । एतेषां चायोगातियोगजन्यत्वविभाग उत्तरग्रन्थे स्फुटो भविष्यति । यद्यपि चायोगातियोगमिथ्यायोगास्तत्र तत्र कारणत्वेनोक्ताः, तथाऽपीह वमनविरेचनयोर्मिथ्यायोगं नेच्छति;

१ 'ऊर्ध्वंकृतदोषं' इति पा० । २ 'अधःकृतदोषं' इति पा० । ३ 'लङ्घितस्य च' इति पा० । ४ 'यात्यग्निरणुतां' इति पा० ।

१ 'विरेचनौषधजन्याशयक्षोभकृताग्निमान्द्यापेक्षयौदर्याग्निवृद्धिः' इति शिवदाससेनः । २ 'दाहोऽङ्गमर्दश्च भ्रमो मूर्च्छाऽरुचिस्तथा' इति पा० । ३ अयं पाठः क्वचित्पुस्तके न पठ्यते ।

यतो दोषाणां चतुर्विधैव प्रवृत्तिर्भवति, यत्—अतिप्रवृत्तिः, अ-सम्यक्प्रवृत्तिर्वा, अप्रवृत्तिः, अल्पप्रवृत्तिर्वा; तत्राप्यप्रवृत्त्यल्पवृत्ती अयोगगृहीते एव; याऽपि चात्र प्रातिलोम्येन प्रवृत्तिः, साऽपि दोषस्यापेक्षितस्याप्रवर्तकत्वादयोगगृहीतैव; वक्ष्यति हि—"अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम्" इति ॥२९॥३०॥

**योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्तनम् ।**
**अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम् ॥३१॥**
**श्लेष्मोत्क्लिष्टेन दुर्गन्धमहृद्यमति वा बहु ।**
**विरेचनमजीर्णे च पीतमूर्ध्वं प्रवर्तते ॥ ३२ ॥**
**क्षुधार्तमृदुकोष्ठाभ्यां स्वल्पोत्क्लिष्टकफेन वा ।**
**तीक्ष्णं पीतं स्थितं क्षुब्धं वमनं स्याद्विरेचनम् ॥३३॥**
**प्रातिलोम्येन दोषाणां हरणात्ते ह्यकृत्स्नशः ।**
**अयोगसंज्ञे, कृच्छ्रेण याति दोषो नवाऽल्पशः ॥३४॥**

योगातियोगायोगस्वरूपमाह—योग इत्यादि । अतिवर्तनमिति संशोध्यातिरिक्तप्रवर्तनम् । प्रातिलोम्येनेति वमनस्य विरेचनेन, विरेचनस्य वमनेन प्रवर्तनम्; एतच्च प्रातिलोम्यप्रवर्तनं प्रायो विवक्षितदोषाप्रवर्तकतयैवायोगनिक्षिप्तम् । न चाल्पं वा प्रवर्तनमिति सर्वथाऽप्रवर्तनमल्पं वा प्रवर्तनमिति । स्थितमिति झटिति ऊर्ध्वं गच्छेत् । एतत्प्रातिलोम्यप्रवृत्त्या यथाऽयोगत्वं तदाह—प्रातिलोम्येनेत्यादि । प्रातिलोम्येनाकृत्स्नहरणात् अयोगसंज्ञे ते इति योज्यम् । प्रातिलोम्यहरणेऽकृत्स्नदोषहरणमेव दर्शयन्नाह—कृच्छ्रेणेत्यादि । प्रतिलोमहरणे कृत्स्नो दोषो न याति, अल्पशो वा यातीति भावः; तेनाकृत्स्नदोषहरणं प्रतिलोमहरणे उपपन्नमिति भावः । 'कृच्छ्रेण यदागच्छति चाल्पशः' इति पाठे, यच्छब्दो हेतौ; पूर्वत्र पाठे वा शब्दो हेतौ ॥ ३१–३४ ॥

**पीतौषधो न शुद्धश्चेज्जीर्णे तस्मिन् पुनः पिबेत् ।**
**औषधं न त्वजीर्णेऽन्यद्भयं स्यादतियोगतः ॥ ३५ ॥**
**कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च ।**
**अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा ॥ ३६ ॥**

आध्मानादीनामयोगातियोगौ कारणत्वेनोक्तौ, तेन कारणयोरयोगातियोगयोः प्रथमं हेतुलिङ्गचिकित्सितानि प्राह—पीतौषध इत्यादि । जीर्णे इति औषधे जीर्णे । पुनः पिबेदिति तद्धरेव । भयं स्यादतियोगत इति पूर्वाजीर्णौषधनवीनौषधाभ्यामतियोगः स्यात् । मृदु वा दद्यादित्यादौ गुरुकोष्ठे बलवति तीक्ष्णं, लघुकोष्ठे दुर्बले च मृदु दद्यादिति व्यवस्था ॥ ३५ ॥ ३६ ॥

**वमनं न तु दुश्छर्दं दुष्कोष्ठं न विरेचनम् ।**
**पाययेतौषधं भूयो हन्यात् पीतं पुनर्हि तौ ॥ ३७ ॥**

पुनर्वमनविरेचनादानविषयौ प्राह—वमनं न त्वित्यादि । पुनः पीतं तु हन्यादित्यर्थः ॥ ३७ ॥

**अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम् ।**
**दोषानुत्क्लिश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥ ३८ ॥**
**विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं भृशम् ।**
**पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ॥३९॥**

स्तोकप्रवृत्तिरूपमयोगं कारणभेदेनाह—अस्निग्धेत्यादि । अस्निग्धस्येति असम्यक्स्निग्धस्य । रूक्षस्येति न मनागपि स्निग्धस्य । अनवमिति जीर्णतया मन्दवीर्यम् । निर्हर्तुमिति निःशेषेण हर्तुम् । विभ्रंशमिति विपरीतप्रवृत्तिसामर्थ्यम् ॥ ३८ ॥ ३९ ॥

**स्निग्धस्विन्नस्य चात्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ।**
**शीतैर्वा स्तब्धमामे वा दोषानुत्क्लिश्य नाहरेत् ॥४०॥**
**तानेव जनयेद्रोगानयोगः सर्व एव सः ।**
**विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत् क्रियाम् ॥४१॥**
**तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।**
**पाययेत पुनर्जीर्णे समूत्रैर्वा निरूहयेत् ॥ ४२ ॥**
**निरूढं च रसैर्धान्वैर्भोजयित्वाऽनुवासयेत् ।**
**फलमागधिकादारुसिद्धतैलेन मात्रया ॥ ४३ ॥**
**स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।**
**न चातितीक्ष्णेन ततो ह्यतियोगस्तु जायते ॥ ४४ ॥**

अपरमयोगमाह—स्निग्धस्विन्नस्य चेत्यादि । जीर्णमिति अल्पत्वाद्दीप्ताग्नित्वाच्च जीर्णम् । आमे इति अपक्वे दोषे, 'पीतं' इति शेषः । एतेऽत्रायोगलक्षणत्रयेण ये प्रतिपादिता गदा न ते भिन्नसामग्रीजन्या भिन्नचिकित्सा वा, तेन न पूर्वमयोगजन्यव्यापत्तिप्रस्तावे पठिताः; एवमतियोगलक्षणतया वक्ष्यमाणगदेष्वपि वाच्यम् । यथोक्तमिति 'पीतौषधो न शुद्धश्चेत्' इत्यादिनोक्तं; किंवाऽग्रे 'तं तैल॰' इत्यादिग्रन्थेनोक्तम् । पाययेतेति संशोधनं पाययेत । धान्वैरिति धन्वमृगपक्षिमांसरसैः ॥४०–४४॥

**अतितीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ।**
**हृत्वाऽऽशु विट्पित्तकफान् धातून्विस्रावयेद्द्रवान् ॥**
**बलस्वरक्षयं दाहं कण्ठशोषं भ्रमं तृषाम् ।**
**कुर्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥ ४६ ॥**
**वमने तु विरेकः स्याद्विरेके वमनं पुनः ।**
**परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तत् ॥ ४७ ॥**
**कषायमधुरैः शीतैरन्नपानौषधैस्तथा ।**
**रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥ ४८ ॥**
**अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ।**
**लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ ४९ ॥**

१ 'यदा गच्छति चाल्पशः' इति, 'नवा गच्छति चाल्पशः' इति च पा० । २ 'स्थितं' इति पा० । ३ 'दुश्छर्द्यां मृदुकोष्ठे' इति पा० ।

१ 'पुनः पीतं भूयो हन्यादित्यर्थः' इति पा० । २ 'तृषां' इति पा० । ३ 'क्लमं' इति पा० । ४ 'मृदु' इति पा० ।

शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम्।
वर्चःसांग्राहिकैः सिद्धं क्षीरं भोज्यं च दापयेत्॥५०॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छावस्तिश्च शस्यते।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा॥ ५१॥

अतियोगस्य हेत्वादिकमाह—अतितीक्ष्णमित्यादि। इयं च सामग्री विरेचनातियोगस्यैव घटते; यतो मृदुकोष्ठे बुभुक्षिते च विट्पित्तकफहरणक्रमेण च सैवातियुज्यते; वमनातियोगसामग्री चानेनोदाहरणेनोन्नेया; किंवा, अतितीक्ष्णमिति पदेनैव वमनस्याप्यतितीक्ष्णत्वमतियोगकारणमुक्तं, विट्पित्तकफहरणं यथायोग्यतया क्रमेण विरेचने वमने च बोद्धव्यम्। शेषमौषधमुल्लिखेदिति तादात्विकी चिकित्सा। मृद्नीतिपदं वमनेन विरेचनेन च संबध्यते। वटादीनामिति न्यग्रोधोदुम्बराश्वत्थकपीतनानाम्। वर्चःसंग्राहिकाः षड्विरेचनशताश्रितीयोक्ताः प्रियङ्ग्वनन्तादयः॥ ४५–५१॥

वमनस्यातियोगे तु शीताम्बुपरिषेचितः।
पिबेत् कफहरैर्मन्थं सघृतक्षौद्रशर्करम्॥ ५२॥
सोद्गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम्॥ ५३॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः।
स्निग्धाम्ललवणैर्हृद्यैर्यूषक्षीररसैर्हिताः॥ ५४॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः।
निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत्॥ ५५॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम्।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च बुद्धिमान्॥५६॥

पुरतोऽम्लफलखादनं मुखस्रावणेन जिह्वास्तब्धत्वं हन्तुम्। अतियोगे निःसृतामिति जिह्वाविशेषणम्॥ ५२–५६॥

वमितश्च विरिक्तश्च मन्दाग्निश्च विलङ्घितः।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिकं भजेत्॥ ५७॥

अतियोगेऽपि यथा पेयादिक्रमो भवति तदाह—वमितश्चेत्यादि। अतिहरणादतिवमितोऽतिविरिक्तश्चेति बोद्धव्यम्॥५७॥

बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम्।
सोदावर्तस्य चोत्क्लिश्य दोषान्मार्गान्निरुध्य च॥५८॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम्।
श्वासविण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम्॥ ५९॥
अभ्यङ्गस्वेदवर्त्यादि सनिरूहानुवासनम्।
उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते॥ ६०॥

अयोगातियोगयोराध्मानादिव्यापदां यथाक्रमं हेतुलिङ्गचिकित्सादि निर्दिशन्नाह—बहुदोषस्येत्यादि। एताश्च व्यापदो नावश्यमतियोगायोगयोर्भवन्ति, उपद्रवभूतत्वात्; अत एवोपकल्पनीये—"अतियोगायोगनिमित्तानिमानुपद्रवान् विद्यात्—"आध्मानं परिकर्तिका" (सू. अ. १५) इत्यादिना ग्रन्थेन एता दश व्यापदः प्रतिपादिताः॥ ५८–६०॥

स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम्।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा॥ ६१॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च।
तीव्रशूलां सपिच्छास्रां करोति परिकर्तिकाम्॥६२॥
लङ्घनं पाचनं सामे रूक्षोष्णं लघुभोजनम्।
बृंहणीयो विधिः सर्वः क्षामस्य मधुरस्तथा॥ ६३॥

परिकर्तिकामाह—स्निग्धेनेत्यादि। पीतं गत्वा गुदमित्यादि विरेचनातियोगजन्यपरिकर्तिकायां सङ्गतं, न वमनातियोगजन्यपरिकर्तिकायाम्; उपकल्पनीये च साक्षाद्वमनायोगातियोगजन्यतयैवाध्मानादय उक्ताः, तेनानुक्तोऽपि वमनव्यापत्तौ परिकर्तोऽनेनोदाहरणेन कल्पनीयः; तन्त्रान्तरेऽप्युक्तं—"या तु परिकर्तिका विरेचने, तद्वमने कण्ठकर्षणं; योऽधःपरिस्रावो विरेचने, स वमने कफप्रसेकः" (सु. चि. अ. ३४) इति; तदनया दिशा आध्मानादीनि वमनविरेचनयोरयोगातियोगजन्यतया व्याख्यातानीत्येके। आशु दोषं निरस्येति वमनातियोगजन्येयं व्यापत्। अत्र लङ्घनादिक्रिया अतियोगे सत्यप्यामपाचनाय ज्ञेया। क्षामेण मृदुकोष्ठेनेत्यादिसंप्राप्तिजनितस्य क्षामपुरुषप्रभवस्य लङ्घनपाचनाद्यनुपक्रान्तमेव॥ ६१–६३॥

आमे जीर्णेऽनुबन्धश्चेत् क्षाराम्लं लघु शस्यते।
पुष्पकासीससमिश्रं वा क्षारेण लवणेन वा॥ ६४॥
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति।
दध्यम्लं भोजने पाने संयुक्तं दाडिमत्वचा॥ ६५॥
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत्।
अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः॥ ६६॥
कषायमधुरं शीतं पिच्छाबस्तिमथापि वा।
यष्टीमधुकसिद्धं वा स्नेहबस्तिं प्रदापयेत्॥ ६७॥

आमावस्थाकर्तव्यमाह—आमे जीर्णे इत्यादि। क्षाराम्लं लघु शस्यत इति अतीसारे यदुक्तं—"चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम्। घृतं" (चि. अ. १९) इति; लघुमात्रं च शस्यत इति ज्ञेयम्। पुष्पकासीसमित्यत्र पुष्पशब्देन केचित् सांग्राहिकानि धातकीकुसुमादीनि ग्राहयन्ति॥ ६४–६७॥

अल्पं तु बहुदोषस्य दोषमुत्क्लिश्य भेषजम्।
अल्पाल्पं स्रावयेत् कण्डूं शोफं कुष्ठानि गौरवम्॥ ६८

१ 'तदेवातियुज्यते' इति पा०। २ 'फलरसैर्मन्थं' इति पा०। ३ 'वाग्ग्रहानिलरोगेषु' इति पा०। ४ 'तन्वीं दद्याद्यवागूं च' इति पा०। ५ 'हन्याद्' इति पा०। ६ 'पेयादिमाचरेत्' इति पा०।

१ 'उपद्रवरूपत्वात्' इति पा०। २ 'दीपनं' इति पा०। ३ 'अनिलोदाहरणेन' इति, 'ऽनेहोदाहरणेन' इति च पा०। ४ 'दध्यन्नं भोजनं' इति पा०। ५ 'बस्तिं' इति पा०।

कुर्याच्चाग्निबलोत्क्लेशस्तैमित्यारुचिपाण्डुताः।
परिस्रावः स, तं दोषं शमयेद्वामयेदपि ॥ ६९॥
स्नेहितं वा पुनस्तीक्ष्णं पाययेत विरेचनम्।
शुद्धे चूर्णासवारिष्टान् संस्कृतांश्च प्रदापयेत् ॥७०॥

अल्पमित्यादिना परिस्रावमाह। शमयेद्वामयेदपीत्यादौ अल्पदोषे शमनं, बहुदोषे ऊर्ध्वगतदोषे तु वमनमिति व्यवस्था। वामयेदपीत्यत्रापि स्नेहितं पुनरिति संबध्यते। चूर्णासवारिष्टा ग्रहण्यर्शश्चिकित्सादिषु ज्ञेयाः ॥ ६८–७० ॥

पीतौषधस्य वेगानां निग्रहान्मारुतादयः।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥ ७१ ॥
स हिक्काकासपार्श्वार्तिदैन्यलालाक्षिविभ्रमैः।
जिह्वां खादति निःसंज्ञो दन्तान् किटिकिटापयन् ७२
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक्।
मधुरैः पित्तमूर्च्छार्तं कटुभिः कफमूर्च्छितम् ॥७३॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत्।
कायाग्निं च बलं चास्य क्रमेणोत्थापयेत्ततः ॥ ७४ ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते।
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफेऽन्यथा॥७५॥

पीतौषधस्येत्यादिना हृद्ग्रहमाह। न गच्छेद्विभ्रमं तत्रेति हृद्ग्रहपीडितोऽयं म्रियमाणो वाऽयमिति भ्रान्तिं न गच्छेदित्यर्थः। वमनं चात्र मूर्च्छिते दुःशकप्रयोगं, तेन मूर्च्छारम्भ एव वमनं कारयितव्यं; किंवा मूर्च्छायामप्यङ्गुलीप्रवेशादिना वमनं कारयितव्यम्। पित्तमूर्च्छार्तमिति पित्तप्रबलदोषजनितमूर्च्छार्तम्। अतिवमत इति वमनायातिप्रवाहणं कुर्वतः। पित्तकफेऽन्यथेति पित्ते कफे वा हृदयपीडाकरे स्निग्धाम्ललवणविपरीतं रूक्षतिक्तकटुकादिक्रमं कुर्यात् ॥ ७१–७५ ॥

पीतौषधस्य वेगानां निग्रहेण कफेन वा।
रुद्धोऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः॥७६॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टनमन्थनैः।
तत्र वातहरं सर्वं स्नेहस्वेदादि कारयेत् ॥ ७७ ॥

पीतौषधस्येत्यादिना अङ्गग्रहणमयोगजमतियोगजं चाह। कफेन वा रुद्धो दोषः पुनरङ्गानि निगृह्णाति; शुद्धस्य वा मारुतः कुपितोऽङ्गानि प्रतिगृह्णाति स्तम्भादिभिः ॥ ७६ ॥ ७७ ॥

अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम्।
दोषान् हृत्वा विनिर्मथ्य जीवं हरति शोणितम् ७८
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा।
भुङ्क्ते तच्चेद्वदेज्जीवं न भुङ्क्ते पित्तमादिशेत् ॥ ७९ ॥
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा।
प्रक्षालितं विवर्णं स्यात् पित्ते शुद्धं तु शोणिते॥८०॥
तृष्णामूर्च्छामदार्तस्य कुर्यादामरणात् क्रियाम्।
तस्य पित्तहरीं सर्वामतियोगे च या हिता ॥ ८१ ॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति ॥८२॥
तदेव दर्भमृदितं रक्तं बस्तिं प्रदापयेत्।
श्यामाकाश्मर्यबदरीदूर्वोशीरैः शृतं पयः ॥ ८३ ॥
घृतमण्डाञ्जनयुतं शीतं बस्तिं प्रदापयेत्।
पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥ ८४ ॥

अतितीक्ष्णमित्यादिना जीवादानमाह। लघुदोषस्येति स्वल्पदोषस्य। विनिर्मथ्येति शोणितमेव क्षोभयित्वा। जीवमिति जीवनहेतुधातुरूपं शोणितम्। शोणितं किञ्चिद्रक्तपित्तक्षोभाद्भवति, किञ्चिच्च जीवशोणितं भवति; तद्विशेषपरीक्षार्थमाह—तेनान्नमित्यादि। पित्तमादिशेदिति शोणितगतं पित्तमादिशेद् रक्तपित्तमिति यावत्। आवानमिति शुष्कम्। पित्ते इति रक्तपित्ते सति क्षालितं वस्त्रं विवर्णं भवति, जीवशोणिते तु सति शुद्धं वस्त्रं भवति। परीक्षा च चिकित्साभेदार्थमेव; रक्तपित्ते रक्तपित्तहरी क्रिया, जीवशोणितं तु दृष्ट्वा 'तृष्णामूर्च्छामदार्तस्य' इत्यादिनोक्ता कर्तव्या। अतियोगे च या हितेति अत्रैव 'परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम्' इत्यादिनोक्ता ज्ञेया। जीवं तद्ध्याशु गच्छतीति असृक्प्रभावादाश्वेव शोणितरूपतां याति सद्यस्कमसृक्। श्यामेत्यादौ श्यामा प्रियङ्गुः ॥ ७८–८४ ॥

गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत्।
साम गान्धर्वशब्दांश्च संज्ञानाशेऽस्य कारयेत् ॥८५॥
यदा विरेचनं पीतं विडन्तमवतिष्ठते।
वमनं भेषजान्तं वा दोषानुत्क्लिश्य नावहेत् ॥ ८५ ॥
तदा कुर्वन्ति कण्ड्वादीन् दोषाः प्रकुपिता गदान्।
स विभ्रंशो मतस्तत्र स्याद्यथाव्याधि भेषजम् ॥८७॥

गुदं भ्रष्टमित्यादिना गुदभ्रंशरूपं विभ्रंशमाह। कषायैरिति कषायरसैः। सामेत्यादिना संज्ञाविभ्रंशरूपविभ्रंशचिकित्सामाह। साम सान्त्वनम्। गान्धर्वशब्दो गीतम्। एतौ च विभ्रंशावतियोगजन्यौ। यदेत्यादिना तृतीयमयोगजन्यविभ्रंशमाह। विडन्तमवतिष्ठत इति मलमात्रमपहृत्यावतिष्ठते। भेषजान्तमिति भेषजमात्रं वमनेनावतिष्ठते। नावहेदिति नापहरति। एतद्व्यापदश्च विभ्रंशसंज्ञा पारिभाषिकी। यथाव्याधिभेषजमिति कण्ड्वादिविपरीतं भेषजम् ॥ ८५–८७ ॥

---

१ 'हिक्कापार्श्वरुजाकार्श्य०' इति पा०। २ 'क्रमेणाभिप्रवर्धयेत्' इति पा०। ३ 'रुद्धोऽतीव विशुद्धस्य' इति पा०। ४ 'ग्रसते' इति पा०।

१ 'पित्तं शुद्धं तु शोणितम्' इति पा०। २ 'मता' इति पा०। ३ 'पाययेताशु सन्धानं जीवो जीवेन गच्छति' इति पा०। ४ 'क्षोदयित्वा' इति पा०।

पीतं स्निग्धेन सस्नेहं तद्दोषैर्मार्दवाद्वृतम् ।
न वाहयति दोषांस्तु स्वस्थानात् स्तम्भयेच्च्युतान् ८८
वातसङ्गगुदस्तम्भशूलैः क्षरति चाल्पशः ।
तीक्ष्णं वस्तिं विरेकं वा सोऽर्हो लङ्घितपाचितः ८९

पीतं स्निग्धेनेत्यादिना स्तम्भमाह । मार्दवाद्वृतमिति भेषजस्य मृदुतया दोषैर्वृतम् । स्वस्थानाच्च्युतान् स्तम्भयेदिति योजनीयम् । सोऽर्ह इति लङ्घनपाचनानन्तरं तीक्ष्णं वस्तिं विरेकं वा तीक्ष्णमर्हतीत्यर्थः ॥ ८८ ॥ ८९ ॥

रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा ।
मारुतं कोपयित्वाऽऽशु कुर्याद्घोरानुपद्रवान् ॥९०॥
स्तम्भशूलानि घोराणि सर्वगात्रेषु मुह्यतः ।
स्नेहस्वेदादिकस्तत्र कार्यो वातहरो विधिः ॥ ९१ ॥

रूक्षमित्यादिना उपद्रवानाह । यद्यप्याध्मानादयोऽप्यमी उपद्रवा एव, तथाऽपि तेषां संज्ञान्तरेणैव गृहीतत्वाच्छूलादय एव उपद्रवशब्दाभिहिताः । शूलादयश्चामी प्रधानान्युत्तरकालभावित्वादनुपद्रवरूपा अप्युपद्रवशब्देनोच्यन्ते; यथा—"धूमः कुर्यादुपद्रवान्" ( सू. अ. ५ ) इति; किंवा, अयोगाख्यस्य व्याधेरमी उपद्रवा इति ज्ञेयम् ॥ ९० ॥ ९१ ॥

स्निग्धस्य मृदुकोष्ठस्य मृदूत्क्लिश्यौषधं कफम् ।
पित्तं वातं च संरुध्य सतन्द्रागौरवं क्लमम् ॥ ९२ ॥
दौर्बल्यं चाङ्गसादं च कुर्यादाशु तदुल्लिखेत् ।
लङ्घनं पाचनं चात्र स्निग्धं तीक्ष्णं च शोधनम् ॥९३॥

स्निग्धस्येत्यादिना क्लममाह । कफं पित्तं चोत्क्लिश्य वातं च ताभ्यामेव संरुध्य भेषजं तन्द्रादियुक्तं क्लमं कुर्यात् । तदुल्लिखेदिति तद् भेषजं कफपित्तं चोल्लिखेदित्यर्थः ॥ ९२ ॥ ९३ ॥

तत्र श्लोकौ—
इत्येता व्यापदः प्रोक्ताः सरूपाः सचिकित्सिताः ।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥ ९४ ॥
एता विज्ञाय मतिमानवस्थाश्चैव तत्त्वतः ।
दद्यात् संशोधनं सम्यगारोग्यार्थी नृणां सदा ॥९५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने वमनविरेचनव्यापत्सिद्धिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

इत्येता इत्यादिना अध्यायार्थसंग्रहं दर्शयित्वा व्यापदुत्पादहेतुमाह । दद्यात् संशोधनं सम्यगिति तथा संशोधनं दद्याद् यथा व्यापदो नोत्पद्यन्त एवेत्यर्थः ॥ ९४ ॥ ९५ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने वमनविरेचनव्यापत्सिद्धि-( संशोधनव्यापत्सिद्धि )र्नाम षष्ठोऽध्यायः ॥ ६ ॥

१ 'काले' इति पा० । २ 'विरेचनस्याकुशलैर्दत्तस्य वमनस्य च' इति पा० । ३ 'धीमान् विज्ञाय तास्तस्मादवस्थाश्चैव तत्त्वतः' इति पा० । ४ 'कुर्यांच्च' इति पा० । ५ 'सम्यगारोग्यार्थं' इति पा० ।

## सप्तमोऽध्यायः ।

अथातो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

वमनविरेचनानन्तरभावित्वाद्वस्तेः संशोधनव्यापत्सिद्धेरनन्तरं बस्तिव्यापत्सिद्धिरुच्यते; अत्र वस्तिशब्दो निरूह एव वर्तते, तद्व्यापदामेवात्र वक्तव्यत्वात् ॥ १ ॥ २ ॥

धीधैर्यौदार्यगाम्भीर्यक्षमादमतपोनिधिम् ।
पुनर्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥ ३ ॥
काः कति व्यापदो वस्तेः किंसमुत्थानलक्षणाः ।
का चिकित्सा इति प्रश्नाञ्छ्रुत्वा तानब्रवीद्गुरुः ॥४॥
नातियोगौ क्लमाध्माने हिक्का हृत्प्राप्तिरूर्ध्वता ।
प्रवाहिका शिरोङ्गार्तिः परिकर्तः परिस्रवः ॥ ५ ॥
द्वादश व्यापदो वस्तेरसम्यग्योगसंभवाः ।
आसामेकैकशो रूपं चिकित्सां च निबोधत ॥ ६ ॥

काः कतीत्यादि पञ्च प्रश्नाः । नातियोगावित्यादिना आद्यप्रश्नस्योत्तरम् । नातियोगाविति अयोगातियोगौ । एतद्वादशव्यापदां च विवरण एव स्फुटार्थो भविष्यति । असम्यग्योगसंभवा इति निरूहस्यायोगातियोगमिथ्यायोगरूपासम्यग्योगसंभवाः । अनेन च समुत्थानप्रश्नस्य सामान्यकारणाभिधानेनोत्तरं दत्तं भवति । अत्र वस्तिप्रयोगस्यासम्यग्योगेन निरूहकार्यदोषहरणस्यातियोगायोगौ व्यापत्तिरूपौ जन्येते, क्लमादयोऽपि चातियोगायोगजाता एव विशिष्टहेतुलक्षणचिकित्सिततया इहापि पृथगुच्यन्ते, यथा संशोधने आध्मानादयोऽयोगातियोगजाता अपि पृथगुक्ताः । केचित् 'नातियोगात् क्लमाध्माने' इत्यादि, तथा 'दशैता व्यापदो वस्तेः' इत्यादि पठन्ति; तत्र पूर्वाध्यायोक्तव्याख्यानादर्थो नेयः; किन्तु पूर्व एव पाठो निर्व्यूहः । आसामित्यादौ रूपशब्देनैव प्रति प्रति वक्ष्यमाणहेतुविशेषोऽवरुद्धो ज्ञेयः, येन हेतुरपि हि व्यासगमकतया रूपमेव ॥३–६॥

गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्वणेऽपि वा ।
शीतोऽल्पलवणस्नेहद्रवमात्रो घनोऽपि वा ॥ ७ ॥
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोति गुरुकोष्ठत्वं वातमूत्रशकृद्ग्रहम् ॥ ८ ॥
नाभिवस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे ।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम् ॥ ९ ॥
तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः ।
फलवर्त्योऽथवा कालं ज्ञात्वा शस्तं विरेचनम् ॥१०॥

१ 'परिकर्तिः' इति पा० । २ 'अर्थ उन्नेयः' इति पा० ।
३ 'शीतोऽल्पस्नेहलवणद्रव्यमात्रः' इति पा० ।

बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ।
सुरादिमूत्रवान् वस्तिः सप्राक्पेष्यस्तमानयेत् ११

गुरुकोष्ठे इति क्रूरकोष्ठे मलपूर्णकोष्ठे वा । अल्पशब्दो मात्रान्तैः प्रत्येकं संबध्यते । उष्णायाः प्रमथ्याया इति अतीसारोक्तप्रमथ्यानां या प्रमथ्या उष्णा तस्याः प्रयोगः; प्रमथ्येति प्राचनकषायस्यायुर्वेदसमयसिद्धसंज्ञेति प्रतिपादितमेवातीसारे । कालं ज्ञात्वेति विरेचनयोग्यावस्थां ज्ञात्वा । सुरादिमूत्रवानित्यत्र आदिशब्देन सौवीरकतुषोदकादीनां ग्रहणम् । सप्राक्पेष्य इति वस्तिसूत्रीयोक्तवलादिवस्त्युक्तकल्कयुक्तः । तमानयेदिति अयोगकारकं विबद्धं वस्तिं हरति ॥ ७–११ ॥

स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते ।
तस्य लिङ्गं चिकित्सा च शोधनाभ्यां समा भवेत् १२
पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकं बलाम् ।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने ॥ १३ ॥
द्राक्षायाः पक्वलोष्टस्य प्रसादे मधुकस्य च ।
विनीय सघृतं वस्तिं दद्याद्दाहेऽतियोगजे ॥ १४ ॥

अयोगमभिधायातियोगमाह—स्निग्धस्विन्ने इत्यादि । अतियुज्यते इति अतियोगकारको भवति । शोधनाभ्यां समा भवेदिति वमनविरेचनातियोगोक्तलिङ्गचिकित्सिताभ्यां समा भवेत् । वस्त्यतियोगजे दाहे विशिष्टचिकित्सामाह—पृश्निपर्णीमित्यादि । अत्र क्षीरादिषु पञ्चद्रवेषु कल्कस्य विलयनम् । द्राक्षादिप्रसादाः शीतकषायविधिकृता ज्ञेयाः ॥ १२–१४ ॥

आमशेषे निरूहेण मृदुना दोष ईरितः ।
मार्गं रुणद्धि वातस्य हन्त्यग्निं मूर्च्छयत्यपि ॥ १५ ॥
क्लमं विदाहं हृच्छूलं मोहवेष्टनगौरवम् ।
कुर्यात् स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत् ॥ १६ ॥
पिप्पलीकत्तृणोशीरदारुमूर्वाश्टतं जलम् ।
पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥ १७ ॥
वचानागरशठ्येला दधिमण्डेन मूर्च्छिताः ।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा ॥ १८ ॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम् ।
पिष्ट्वा कुष्ठं च मूत्रेण पिबेत् क्षारांश्च दीपनान् ॥ १९ ॥
वस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम् ।
समूत्रमथवा व्यक्तलवणं माधुतैलिकम् ॥ २० ॥

आमशेषे इत्यादिना क्रममाह । आमशेषे सति दत्तेन निरूहेण दोष ईरित इति योज्यम् । दोषशब्देन चात्र पित्तकफावामसहितौ मार्गावरकावुच्येते । मूर्च्छयतीति मार्गावरोधात् कोपयति । मार्गं रुणद्धीति देहे स्रोतांसि रुणद्धि । ये तु, दोषशब्देनेह कफमात्रं ग्राहयन्ति, तन्मते सदाहत्वं क्लमस्याप्यनुपपन्नम् । वचेत्यादौ मूर्च्छिता इति आलोडिताः । क्षारांश्च दीपनानिति ग्रहणीचिकित्साद्युक्तान् । दाशमूलिकमिति "द्विपञ्चमूलस्य रसोऽम्लयुक्तः" ( सि. अ. ३ ) इत्यादिनोक्तः; किंवा दशमूलक्काथकृतम् । माधुतैलिकः वक्ष्यमाणः ॥ १५–२० ॥

अल्पवीर्यो महादोषे रूक्षे क्रूराशये कृतः ।
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम् २१
स विमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ।
विदाहं गुरुकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥ २२ ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ।
श्यामाफलादिभिः कुष्ठकृष्णालवणसर्षपैः ॥ २३ ॥
धूममाषवचाकिण्वक्षारचूर्णगुडैः कृताम् ।
कराङ्गुष्ठनिभां वर्तिं यवमध्यां निधापयेत् ॥ २४ ॥
अभ्यक्तस्विन्नगात्रस्य तैलाक्तां स्नेहिते गुदे ।
अथवा लवणागारधूमसिद्धार्थकैः कृताम् ॥ २५ ॥
बिल्वादिना निरूहः स्यात् पीलुसर्षपमूत्रवान् ।
सरलामरदारुभ्यां सिद्धं चैवानुवासनम् ॥ २६ ॥

अल्पवीर्य इत्यादिना आध्मानमाह । रुद्धमार्ग इति निवारिताधोमार्गः; स चानिलं रुणद्धि, अनिलश्च रुद्धमार्गतया आध्मानं करोतीति । मर्मपीडनमित्याध्मानविशेषणम् । रुणद्धि हृदयं शूलैरिति शूलैर्हृदयं व्याप्नोति । श्यामाफलादिभिरिति श्यामादिभिर्नवभिः, फलादिभिश्च षड्भिः कल्पस्थानोक्तैः । धूमशब्देनेह गृहधूमग्रहणम् । गुडश्चात्र तावन्मात्रो भवति यावता वर्तिः कर्तुं युज्यते । कराङ्गुष्ठेत्यत्र करग्रहणं पादाङ्गुष्ठनिषेधार्थम् । अथवेत्यादिनोक्तद्वितीयवर्तावपि वर्तित्वसंपत्त्यर्थं गुडो देयः । बिल्वादिभिश्च निरूह इति "बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्" इत्यादिनोक्तः । सरलेत्यादौ सिद्धमित्यत्र 'तैलं' इति शेषः ॥ २१–२६ ॥

मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन् ।
कुर्याद्धिक्कां, हितं तस्मै हिक्काघ्नं बृंहणं च यत् ॥ २७ ॥
बलास्थिरादिकाश्मर्यत्रिफलागुडसैन्धवैः ।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वाऽनुवासयेत् ॥ २८ ॥
कृष्णालवणयोरक्षं पिबेदुष्णाम्बुना युतम् ।
धूमलेहरसक्षीरस्वेदाश्चान्नं च वातनुत् ॥ २९ ॥

मृद्वित्यादिना हिक्कामाह । अतिनिर्हरन्निति अतियोगेन दोषान्निर्हरन् । हिक्काघ्नमिति हिक्काचिकित्सोक्तं भेषजम् । हिक्कायां च

१ 'सुरामूत्रादिना' इति पा० । २ 'मधुकोत्पलम्' इति पा० । ३ '°दाहातियोगिने' इति पा० । ४ 'आमदोषे' इति पा० । ५ 'मूर्च्छयत्यनिलं मार्गं रुणद्ध्यग्निं हिनस्ति च' इति पा० । ६ 'सदाहं' इति पा० । ७ 'त्रिकण्टकं' इति पा० ।

१ 'वस्तिर्दोषावृतस्तूर्ध्वमधो रुन्ध्यात्' इति पा० । २ 'प्रवेशयेत्' इति पा० । ३ 'गुडस्यात्र पृथक् पलम्' इति पा० । ४ 'उष्णाम्बुनाऽक्षः पिप्पल्या हितो लवणसंयुतः' इति पा० ।

यद्यपि "प्रसक्तच्छर्दिनिष्ठीविकाकासश्वासहिक्कार्तानामूर्ध्वीभूतो वायुरूर्ध्वं वस्तिं नयेत्" ( सि. अ. २ ) इत्यनेन वस्तिर्निषिद्धः, तथाऽपीह विशिष्टहिक्कायामनुवासनस्य हितत्वात्, "बलास्थिरादि०" इत्यादिनोक्तमनुवासनमनवद्यम् । वातनुदिति पदं लिङ्गविपरिणामेन धूमादिभिश्च संबध्यते; तेन वातहितानामेवात्र धूमादीनां प्रयोगः ॥ २७–२९ ॥

**अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीडितः ।**
**घट्टयेद्धृदयं वस्तिस्तत्र काशकुशोत्कटैः ॥ ३० ॥**
**स्यात् साम्ललवणस्कन्धकरीरवदरीफलैः ।**
**शृतैर्वस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम् ॥ ३१ ॥**

अतितीक्ष्ण इत्यादिना हृत्प्राप्तिमाह । सवातत्वं बस्तेर्निःशेषदानादिना ज्ञेयम् । असम्यक्पीडितत्वमेव हृत्प्राप्तिजनकतया ज्ञेयम् । लवणस्कन्धः रोगभिषग्जितीयोक्तः । वातघ्नैरिति दशमूलादिभिः ॥ ३० ॥ ३१ ॥

**वातमूत्रपुरीषाणां दत्ते वेगान्निगृह्णतः ।**
**अति वा पीडितो वस्तिर्मुखेनायाति वेगवान् ॥ ३२ ॥**
**मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।**
**सिञ्चेत् पार्श्वोदरं चाधः प्रमृज्याद्वीजयेच्च तम् ३३**
**केशेष्वालम्ब्य चाकाशे धुनुयात्त्रासयेच्च तम् ।**
**गोखराश्वगजैः सिंहै राजप्रेष्यैस्तथोरगैः ॥ ३४ ॥**
**उल्काभिरेवमन्यैश्च भीतस्याधः प्रवर्तते ।**
**वस्त्रपाणिग्रहैः कण्ठं रुन्ध्यान्न म्रियते यथा ॥ ३५ ॥**
**प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गवान् ।**
**अपानः पवनो वस्तिं तमाश्वेवापकर्षति ॥ ३६ ॥**
**ततः क्रमुककल्काक्षं पाययेताम्लसंयुतम् ।**
**औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत् ।**
**पक्काशयस्थिते स्निग्धे निरूहो दाशमूलिकः ।**
**यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥ ३८ ॥**
**बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।**
**शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥ ३९ ॥**

वातमूत्रेत्यादिनोर्ध्वतामाह । दत्ते इति बस्तौ दत्ते । तस्योर्ध्वं गच्छतो बस्तेर्मूर्च्छारूपं विकारं दृष्ट्वा मुखसेचनादि कर्तव्यम् । आकाशे धुनुयादिति निरवलम्बं धुनुयात् । त्रासयेच्च गोखरादिभिरिति ज्ञेयम् । एवमन्यैरिति अनुक्तैरपि त्रासनप्रकारैः । कण्ठावरोधो यथा कर्तव्यस्तदाह—न म्रियते यथेति । कण्ठोपरोधप्रयोजनमाह—प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गवानित्यादि । कण्ठप्रग्रहेण प्राणोदाननिरोधात् प्रसिद्धतरमार्गवानपानो भवति, गुदप्रवर्तनखरूपो भवतीत्यर्थः; ततश्च बस्तिमूर्ध्वंक्षिप्तमधो नयति; प्राणोदाननिरोधेन तु प्राणोदानाभ्यां पीडितोऽपानः खमार्गगामी भवतीति ज्ञेयम् । केचित्तु 'यावत् प्राणोपरोधाद्धि' इति पठन्ति, तत्र प्राणोपरोधं यावत् कण्ठपीडनं कर्तव्यमित्यर्थः । क्रमुकं पूगफलम् । शिरःस्थ इति वस्त्येकदेशे शिरसि स्थिते सति । प्रच्छाद्यमिति आलेपनीयम् । ॥ ३२–३९ ॥

**स्निग्धखिन्ने महादोषे वस्तिर्मृद्वल्पभेषजः ।**
**उत्क्लिश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥ ४० ॥**
**स वस्तिपायुशोफेन जङ्घोरुसदनेन वा ।**
**निरुद्धमारुतो जन्तुरभीक्ष्णं संप्रवाहते ॥ ४१ ॥**
**खेदाभ्यङ्गान्निरूहांश्च शोधनीयानुलोमिकान् ।**
**विदध्याल्लङ्घयित्वा तु वृत्तिं कुर्याद्विरिक्तवत् ॥ ४२ ॥**

स्निग्धखिन्नेत्यादिना प्रवाहिकामाह । प्रवाहिकामतीसारोक्तलक्षणामुक्तां जनयति । शोधनीयानुलोमिकानित्यत्र शोधनीयानिति त्रिवृदादिशोधनद्रव्ययुक्तान्; आनुलोमिकानिति अनुलोमनक्षीरेक्षुरसयुक्तान् । वृत्तिमिति पेयादिक्रमम् ॥ ४०–४२ ॥

**दुर्बले क्रूरकोष्ठे च तीव्रदोषे तनुर्मृदुः ।**
**शीतोऽल्पश्चावृतो दोषैर्वस्तिस्तद्विहतोऽनिलः ॥ ४३ ॥**
**मार्गैर्गात्राणि सन्धावन्नूर्ध्वं मूर्ध्नि विहन्यते ।**
**ग्रीवां मन्ये च गृह्णाति शिरः कण्ठं भिनत्ति च ॥ ४४ ॥**
**बाधिर्यं कर्णनादं च पीनसं नेत्रविभ्रमम् ।**
**कुर्यादभ्यञ्जनं तैलैर्लवणेन यथाविधि ॥ ४५ ॥**
**युञ्ज्यात् प्रधमनैर्नस्यैर्धूमैरस्य विरेचयेत् ।**
**तीक्ष्णानुलोमिकेनाथ स्निग्धं भुक्तेऽनुवासयेत् ॥ ४६ ॥**

दुर्बले इत्यादिना शिरोर्तिमाह । तनुः अघनः । तद्विहत इति निरूहवस्तिप्रकोपितः । ऊर्ध्वं मूर्ध्नि विहन्यते इति ऊर्ध्वमनुसरन् मूर्ध्नि विहन्यते; ये तु 'ऊर्ध्वं विधावति' इति पठन्ति, तन्मते उपर्युपरि धावतीत्यर्थः । अस्य विरेचयेदिति अत्र 'शिर' इति शेषः, 'अनु विरेचयेत्' इति वा पाठः । तीक्ष्णानुलोमिकेऽन्ने भुक्ते सति अनुवासयेदिति योज्यम्; किंवा तीक्ष्णानुलोमिकेनैवानुवासनं साध्यमित्यर्थः ॥ ४३–४६ ॥

**स्नेहस्वेदैरनापाद्य गुरुस्तीक्ष्णोऽतिमात्रया ।**
**यस्य बस्तिः प्रयुज्येत सोऽतिमात्रं प्रवर्तयेत् ॥ ४७ ॥**
**स्रुतेषु तस्य दोषेषु निरूढस्यातिमात्रशः ।**
**स्तब्धोदावृतकोष्ठस्य वायुः संप्रतिहन्यते ॥ ४८ ॥**

१ 'चाकेशं धुनुयात्त्रासयेद्भृशम्' इति पा० । २ 'बस्तिं तस्यानयेदधः' इति पा० । ३ 'प्रसिद्धतरमार्गगः' इति पा० ।

१ 'मार्गैर्गात्राण्यनुसरन्नूर्ध्वं मूर्ध्नि विधावति' इति पा० । २ 'मूर्धन्युपाहितः' इति पा० । ३ 'संस्तम्य' इति पा० । ४ तैललवणेनावगाहयेत्' इति पा० । ५ 'धूमैरास्यविरेचनैः' इति पा० । ६ 'विरेचनैर्निरूहैश्च बस्तिभिश्चानुलोमिकैः' इति पा० । ७ 'सुस्निग्धस्विन्नदेहस्य यस्य बस्तिर्विधीयते । अतितीक्ष्णो गुरुश्चैव' इति, 'विरेचनैर्निरूहैश्च बस्तिभिश्चानुलोमिकैः । अतितीक्ष्णो गुरुश्चैवं' इति च पा० ।

विलोमनसमुद्भूतो रुजत्यङ्गानि देहिनः ।
गात्रवेष्टननिस्तोदभेदस्फुरणजृम्भणैः ॥ ४९ ॥
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा ।
एरण्डपत्रनिष्क्वाथैः प्रस्तरैश्चोपपादयेत् ॥ ५० ॥
यवान् कुलत्थान् कोलानि पञ्चमूले तथोभये ।
जलाढकद्वये पक्त्वा पादशेषेण तेन च ॥ ५१ ॥
कुर्यात् सबिल्वतैलोष्णलवणेन निरूहणम् ।
तं निरूढं समाश्वस्तं द्रोण्यां समवगाहयेत् ॥ ५२ ॥
ततो भुक्तवतस्तस्य कारयेदनुवासनम् ।
यष्टीमधुकतैलेन बिल्वतैलेन वा भिषक् ॥ ५३ ॥

स्नेहस्वेदैरित्यादिना अङ्गार्तिमाह । अनापाद्येति स्नेहस्वेदैः शरीरं नोपपाद्य । सोऽतिमात्रं प्रवर्तयेत् 'दोषान्' इति शेषः । ततः स्वब्धोदावृतकोष्ठस्य रुजां करोति । भुक्तवतो यद्यप्यनुवासनं सर्वत्र भवति, तथाऽपि भुक्तवत इति वचनेन भोजनानन्तरमेवानुवासनं दर्शयति ॥ ४७–५३ ॥

मृदुकोष्ठाल्पदोषस्य रूक्षस्तीक्ष्णोऽतिमात्रवान् ।
वस्तिर्दोषान्निरस्याशु जनयेत् परिकर्तिकाम् ॥ ५४ ॥
त्रिकवङ्क्षणवस्तीनां तोदं नाभेरधो रुजम् ।
विबन्धोऽल्पाल्पमुत्थानं वस्तिनिर्लेखनाद्भवेत् ॥५५॥
स्वादुशीतौषधैस्तत्र पय इक्ष्वादिभिः शृतम् ।
यष्ट्याह्वतिलकल्काभ्यां वस्तिः स्यात् क्षीरभोजिनः ॥
ससर्जरसयष्ट्याह्वजिङ्गिनीकर्दमाञ्जनम् ।
विनीय दुग्धे वस्तिः स्यात् व्यक्ताम्लमृदुभोजिनः ॥

मृद्वित्यादिना परिकर्तिकामाह । वस्तिनिर्लेखनादिति वायुना च तीक्ष्णेन वस्तिकर्षणात् । व्यक्ताम्ल इति वस्तिविशेषणम् ॥ ५४–५७ ॥

पित्तरोगेऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽथवा ।
वस्तिर्लिखति पायुं तु क्षिणोति विदहत्यपि ॥ ५८ ॥
स विदग्धः स्रवत्यस्रं पित्तं चानेकवर्णवत् ।
सार्यते बहुवेगेन मोहं गच्छति चासकृत् ॥ ५९ ॥
आर्द्रशाल्मलिवृन्तैस्तु क्षुण्णैराजं पयः शृतम् ।
सर्पिषा योजितं शीतं वस्तिमस्मै प्रदापयेत् ॥ ६० ॥
वटादिपल्लवेष्वेष कल्पो यवतिलेषु च ।
सुवर्चलोपोदिकयोः कर्बुदारे च शस्यते ॥ ६१ ॥
गुदे सेकाः प्रदेहाश्च शीताः स्युर्मधुराश्च ये ।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥ ६२ ॥

पित्तरोगे इत्यादिना परिस्रावमाह । क्षिणोतीति हिनस्ति । एष कल्प इति आर्द्रशाल्मलीवृन्तोक्तक्षीरसंस्कारकल्पः । सुवर्चलमिति सुनिषण्णकमाहुः । कर्बुदारः काञ्चनारः ॥५८–६२॥

तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा ॥ ६३ ॥

संप्रति तत्र तत्र वस्तीनां मृदुत्वं तीक्ष्णत्वं च विहितं; तेन तद्विज्ञानार्थं मार्दवतीक्ष्णत्वकारकद्रव्यगणमाह—तीक्ष्णत्वमित्यादि । पीलुः औत्तरपथिकं फलं; पीलुस्थाने केचिद् बिल्वं पठन्ति । प्राप्तकालमिति उक्तावस्थम् ॥ ६३ ॥

आपादतलमूर्धस्थान् दोषान् पक्वाशये स्थितः ।
वीर्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥ ६४ ॥

वस्तिप्रभावमाह—आपादेत्यादि । पक्वाशये स्थित इति पक्वाशयगत एव । आदत्ते वीर्येणेति शक्त्या स्वभावसंवद्धया । एवंभूतवीर्यं वस्तावेव; तेन पाचनादिप्रयोगाणां न वस्तिवत्तदहरेव सकलदेहगतदोषविजेतृत्वं भवति । खस्थ इति आकाशगतः । सुश्रुते तूक्तं—"वीर्येण वस्तिरादत्ते दोषानापादमस्तकात् । पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव" ( सु. चि. अ. ३५ ) इति ॥ ६४ ॥

यद्वत् कुसुम्भसंमिश्रात्तोयाद्रागं हरेत् पटः ।
तद्वद्द्रवीकृताद्देहान्निरूहो निर्हरेन्मलान् ॥ ६५ ॥

संप्रति वस्तेः शरीरे मलप्रसादसहितेऽपि यथा मलांशमात्रहारकत्वं भवति, तद्दृष्टान्तेन दर्शयन्नाह—यद्वदित्यादि । द्रवीकृतादिति स्नेहस्वेदाभ्यां विलायितात् । मलानिति दोषान् पुरीषं च ॥ ६५ ॥

तत्र श्लोकः—

इत्येता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः ।
बुद्ध्वा कार्त्स्न्येन तान् वस्तीन्नियुञ्जन्नापराध्यति ॥६६॥

इत्येता इत्यादिसंग्रहः । यस्मादेता व्यापदो वस्तिदुष्प्रयोगजन्या भवन्ति, तस्मात् कार्त्स्न्येन वस्तीन् बुद्ध्वा नियुञ्जन्नापराध्यति, वस्तिव्यापदं नासादयतीत्यर्थः ॥ ६६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने वस्तिव्यापत्सिद्धिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने वस्तिव्यापत्सिद्धिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'रुक्तोदकम्पसंस्तम्भसादवेपथुजृम्भणैः' इति पा० । २ 'यवकोलकुलत्थानां पञ्चमूलद्वयस्य च । जलद्रोणे समुत्क्वाथ्य कषायं सैन्धवेन तम् ॥ बिल्वतैलेन संयोज्य वस्तिं दद्याद्विकारवित् । तं निरूढसमाश्वस्तं' इति पा० । ३ 'स्नेहस्वेदरनापाद्य गुरुस्तीक्ष्णोऽतिमात्रया । यस्य वस्तिः प्रयुज्येत नातिमात्रं स युज्यते । स्तब्धोदावृतकोष्ठस्य रुद्धः स्रोतःसु मारुतः । प्रपन्नोऽङ्गरुजं कुर्यात्तं तैललवणान्वितम् । उष्णाम्बुप्रस्तरक्वाथैः स्वेदैः समुपपादयेत् ॥ सबिल्वतैललवणो निरूहस्तस्य शस्यते । तैलावगाहस्विन्नस्य कारयेदनुवासनम्' इति पा० । ४ 'वस्तिर्दोषान्निहत्याशु' इति पा० । ५ 'ऽल्पसमुत्थानं गुदनिर्लेखनं' इति पा० । ६ 'पित्तरक्ते' इति पा० । ७ 'बहुधा ह्यतिवेगेन' इति पा० ।

१ 'वस्तिव्यापदिकी सिद्धिर्नाम' इति पा० ।

## अष्टमोऽध्यायः ।

अथातः प्रासृतयोगीयां सिद्धिं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

संप्रति वस्तिव्यापत्प्रशमकवस्त्यभिधायकतयैव प्रासृतयोगीया सिद्धिरुच्यते । प्रसृतोपलक्षिता ये योगाः तानधिकृत्य कृता सिद्धिः; तेन प्रसृतालक्षिता अप्यत्र योगा वक्तव्या एव ॥१॥२॥

अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥ ३ ॥

इमानिति अग्रे वक्ष्यमाणान् । तेनाध्यायशेषवक्तव्यानां नावश्यं प्रसृतोपलक्षितविधानम् । सुकुमाराणामिति तन्वादिगुणसंबद्धं भवति ॥ ३ ॥

क्षीराद्धौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत् ॥ ४ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
विल्वादिमूलक्काथाद्धौ कौलत्थाद्धौ स वातनुत् ॥५॥
पञ्चमूलरसात् पञ्च द्वौ तैलात् क्षौद्रसर्पिषोः ।
एकैकः प्रसृतो वस्तिः स्नेहनीयोऽनिलापहः ॥ ६ ॥

प्रसृतं पलद्वयम् । मधुतैलघृतात्त्रय इति मिलितात् । अत्र च यथोक्तैरेव द्रव्यैर्वस्तिर्देयः; तेन नेतरवस्तिन्यायेनानुक्तकल्कादिकल्पना; यत्र नियतमानद्रव्यविभागेन बस्त्यभिधानं, तत्र सामान्यवस्तिद्रव्यमानानवकाशः; यत्र त्वेकदेशकथनं, तत्र निरूहयोगितयोक्तद्रव्यमानाधिकारः; सैन्धवप्रवेशस्त्वत्याज्य एव । विल्वादिमूलं दशमूलम् । स वातनुदिति स वस्तिर्वातं हन्तीति ॥ ४–६ ॥

सैन्धवार्धाक्ष एकैकः क्षौद्रतैलपयोघृतात् ।
प्रसृतो हपुषाकर्षो निरूहः शुक्रकृत् परम् ॥ ७ ॥

हपुषाकर्षः ॥ ७ ॥

पटोलनिम्बभूनिम्बरास्नासप्तच्छदाम्भसः ।
चत्वारः प्रसृता एको घृतात् सर्षपकल्कितः ॥ ८ ॥
निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दकुष्ठनुत् ।

पटोलेत्यादौ अम्भसः इति क्काथात् । सर्षपकल्कित इति अत्र यद्यपि कल्कमानं नोक्तं, तथाऽपि द्वादशप्रसृते निरूहे द्विपलकल्कस्य विहितत्वादिह पञ्चप्रसृते तदनुसारात् षड्भागोनं पलं भवति; एवमन्यत्राप्यनुक्तमानकल्कव्यवस्था ॥ ८ ॥—

विडङ्गत्रिफलाशिग्रुफलमुस्ताखुपर्णिजात् ॥ ९ ॥
कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान् ।
विडङ्गपिप्पलीकल्को निरूहः क्रिमिनाशनः ॥ १० ॥

विडङ्गेत्यादौ फलं मदनफलम् । आखुपर्णी दन्ती ॥९॥१०॥

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ।
एकैकः प्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत् ॥११॥
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ।
प्रसृताः सर्षपैः कल्कैर्विट्सङ्गानाहभेदनः ॥ १२ ॥

पयस्येत्यादौ यद्यपि पयस्यादीनां क्काथो न श्रूयते, तथाऽपि द्रवान्तरैः सममेकैकप्रसृतविधानात् प्रत्येकं पयस्यादिक्काथस्य प्रसृतमानत्वम् । वृषत्वकृदिति शुक्रवृद्धिकृत् ॥ ११ ॥ १२ ॥

श्वदंष्ट्राश्मभिदेरण्डरसात्तैलात् सुरासवात् ।
प्रसृताः पञ्च यष्ट्याह्वकौन्तीमागधिकासिताः ॥१३॥
कल्कः स्यान्मूत्रकृच्छ्रे तु सानाहे वस्तिरुत्तमः ।
एते सलवणाः कोष्णा निरूहाः प्रसृतैर्नव ॥ १४ ॥

श्वदंष्ट्रेत्यादौ श्वदंष्ट्रादिद्रव्यत्रयक्काथस्य प्रत्येकं प्रसृतमानत्वम्, एवं तैलसुरासवप्रसृताभ्यां सह पञ्चप्रसृताः पूरणीयाः; सुराकृत आसवः सुरासवः ॥ १३ ॥ १४ ॥

मृदुवस्तिजडीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते ।
तीक्ष्णैर्विकर्षिते स्वादु प्रत्यास्थापनमिष्यते ॥ १५ ॥

एतदुक्तमृदुवस्तिप्रयोगानामन्ते कर्तव्यमाह—मृद्वित्यादि । स्वादु प्रत्यास्थापनमिष्यत इत्यत्र स्वादु द्राक्षादिद्रव्यकृतम् । केचित्तदहरेव प्रत्यास्थापनमिच्छन्ति । आस्थापनं लक्ष्यीकृत्य दीयत इति प्रत्यास्थापनम् ॥ १५ ॥

वातोपसृष्टस्योष्णैः स्युर्गुदेदाहादयो यदि ।
द्राक्षाम्बुना त्रिवृत्कल्कं दद्याद्दोषानुलोमनम् ॥१६॥
तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकाञ्जयेत् ।
शुद्धश्चापि पिबेच्छीतां यवागूं शर्करायुताम् ॥१७॥

वातोपसृष्टस्येत्यादौ उष्णैरिति वस्तिविशेषणम् । दाहादयो दाहमोहतृडादयो वातपित्तजन्याः । द्राक्षाम्बुना त्रिवृत्पानस्य दाहादिकारके पित्ते वाते च हितत्वं दर्शयन्नाह—तद्धीत्यादि ॥ १६ ॥ १७ ॥

अथवाऽतिविरिक्तः स्यात् क्षीणविट्कः स भक्षयेत् ।
माषयूषेण कुल्माषान् पिबेन्मध्वथवा सुराम् ॥१८॥

कुल्माषा इति अर्धस्विन्नयवादिमयाः भक्ष्याः ॥ १८ ॥

---

१ 'प्रासृतयोगिकीं' इति पा० । २ 'प्रसृतोपलक्षिताः' इति पा० । ३ 'शोधनान्' इति पा० । ४ 'प्रसृतौ हपुषाक्षौद्रान्निरूहः' इति पा० । ५ 'मोहाभिष्यन्दकुष्ठनुत्' इति पा० ।

१ 'कषायाः' इति पा० । २ 'पिष्टै०' इति पा० । ३ 'कल्को बस्तिस्तु सानाहे मूत्रकृच्छ्रे परो मतः' इति पा० । ४ 'प्रत्यास्थापनमेव वा' इति पा० । ५ 'गेदा दाहादयो यदि' इति पा० । ६ 'पिबेद्दध्यथवा' इति पा० । ७ 'अर्धस्विन्नयवादिपिष्टमयाः' इति पा० ।

**सामं चेत् कुणपं शूलैरुपविशेदरोचकी।**
**स घनातिविषाकुष्ठनतदारुवचाः पिबेत्॥ १९॥**

वस्तिमिथ्याप्रयोगोदीरितानामतीसारभेदानां चिकित्सितमाह—सामं चेदित्यादि। सामं यथा स्यात् तथोपविशेदिति; तेन मलादिव्यतिरिक्तामामात्रोपवेशरूपोऽयमतीसारः केवलामशकृद्वातरक्तपित्तकफजन्यानामिह षण्णामतीसाराणां वक्तव्यानां प्रथम उक्तो भवति। कुणपमिति शवगन्धम्। शूलैः 'युक्त' इति शेषः। घनं मुस्तकम्॥ १९॥

**शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्यते।**
**पक्कं, तत्र स्ववर्गीयैर्वस्तिः श्रेष्ठं भिषग्जितम्॥ २०॥**

केवलशकृदादिजन्यांश्चातिसारानाह—शकृद्वातमित्यादि। पक्कमिति निरामम्। आमशब्देनेहाग्निदौर्बल्यादविपक्काहाररस एव कोष्ठोपलेपक आमो गृह्यते; यदुक्तमन्यत्र—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः। आद्य आहारधातुर्यः स आम इति संज्ञितः" इति। स्ववर्गीयैरिति पुरीषसंग्रहणवातघ्नशोणितास्थापनपित्तकफहरभेषजवर्गैः; किंवा उत्तरत्र प्रत्येकं शकृदादिवक्ष्यमाणभेषजैः २०॥

**षण्णामेषां द्विसंसर्गात् त्रिंशद्भेदा भवन्ति तु।**
**केवलैः सह षट्त्रिंशद्विद्यात् सोपद्रवानपि॥ २१॥**

अतीसारभेदानाह—षण्णामित्यादि। एषामिति एतदभिहितानाम्। अन्ये तु वस्तिविभ्रंशजाः षट्संख्या भवन्तीति वदन्ति; पूर्वव्याख्यानमेव साधु॥ २१॥

**शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान्।**
**तृष्णोष्णदाहमूर्च्छार्दीश्चैषां विद्यादुपद्रवान्॥ २२॥**

उपद्रवानेषामाह—शूलेत्यादि॥ २२॥

**तत्रामेऽन्तरपानं स्यात् व्योषाम्ललवणैर्युतम्।**
**पाचनं शस्यते वस्तिरामे हि प्रतिषिध्यते॥ २३॥**

यथोक्तातीसारेषु चिकित्सामाह—तत्रामे इत्यादि। अन्तरपानं पाचनमाहुः। पाचनमित्यनेन चेह पूर्वं 'स घनातिविषा' इत्याद्युक्तं पाचनं गृह्यते। व्योषाम्ललवणैर्युतमिति व्योषाम्ललवणयोगेन कृतम्॥ २३॥

**वातघ्नैर्ग्राहिवर्गीयैर्वस्तिः शकृति शस्यते।**

वातघ्नैरित्यादौ वातघ्नं दशमूलं; ग्राहिवर्गश्च पड्विरेचनशताश्रितीयोक्त एव। अत्र जतूकर्णः—"शकृति शोफघ्नग्राहिभिर्बस्तिः" इत्याह; शोफघ्नं च दशमूलमेव॥—

**स्वाद्वम्ललवणैः शस्तः स्नेहवस्तिः समीरणे॥ २४॥**

स्वाद्वम्ललवणैः शस्तः स्नेहबस्तिरिति स्वाद्वम्ललवणद्रव्यसाधितस्नेहकृतमनुवासनमित्यर्थः। समीरणे इति केवलवातातीसारे॥ २४॥

**रक्ते रक्तेन, पित्ते तु कषायस्वादुतिक्तकैः।**
**सार्यमाणे कफे वस्तिः कषायकटुतिक्तकैः॥ २५॥**

रक्ते रक्तेनेति सरक्तेऽतीसार्यमाणे रक्तेन बस्तिर्देयः। पित्ते त्विति पित्तेऽतीसार्यमाणे कषायादिकृतो वस्तिरेव॥ २५॥

**शकृता वायुना वाऽऽमे तेन वर्चस्यथानिले।**
**संसृष्टेऽन्तरपानं स्याद् व्योषाम्ललवणैर्युतम्॥२६॥**
**पित्तेनामेऽसृजा वाऽपि तयोरामेन वा पुनः।**
**संसृष्टयोर्भवेत् पानं सव्योषस्वादुतिक्तकम्॥ २७॥**
**तथाऽऽमे कफसंसृष्टे कषायव्योषतिक्तकम्।**
**आमेन तु कफे व्योषकषायलवणैर्युतम्॥ २८॥**
**वातेन विशि पित्ते वा विट्पित्ताभ्यां तथाऽनिले।**
**मधुराम्लकषायः स्यात् संसृष्टे वस्तिरुत्तमः॥२९॥**
**शकृच्छोणितयोः पित्तशकृतो रक्तपित्तयोः।**
**वस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः॥ ३०॥**
**कफेन विशि पित्ते वा कफे विट्पित्तशोणितैः।**
**व्योषतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः॥३१॥**
**स्याद्वस्तिर्व्योषतिक्ताम्लः संसृष्टे वायुना कफे।**
**मधुरव्योषतिक्तस्तु रक्ते कफविमूर्च्छिते॥ ३२॥**
**मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत्।**
**वस्तिर्वातेन पित्ते तु कार्यः स्वाद्वम्लतिक्तकः॥३३॥**

संसर्गे चिकित्सामाह—शकृतेत्यादि। शकृताऽऽमे प्रधाने संसृष्टे, तथा वायुना वाऽऽमे संसृष्टे; तेनेत्यामेनाप्रधानेन वर्चसि अनिले च पृथक् संसृष्टे, अत्र तेनेति पूर्ववद्व्याख्येयम्। अत्र संसर्गेषु तृतीयानिर्दिष्टमल्पमानतयाऽप्रधानं, सप्तमीनिर्दिष्टं बहुमानत्वात् प्रधानं ज्ञेयम्। तयोरिति पित्तासृजोः। संसृष्टयोरिति एकमानेन युक्तयोः। कफे व्योषकषायलवणैर्युतमित्यन्तं यावत् 'अन्तरपानं' इत्यनुवर्तते। वातेन विशीत्यादौ मधुराम्लकषायो वस्तिरिति मधुरादिद्रव्यक्काथादिकृतो वस्तिर्देय इत्यर्थः। शकृच्छोणितयोरित्यादौ अन्योन्यसंसर्गे सति शकृता शोणिते शोणितेन वा शकृति संसृष्टे; एवं पित्तशकृतोः रक्तपित्तयोश्च द्विविधः संसर्गो व्याख्येयः। विट्पित्तशोणितैरिति प्रत्येकं विडादिभिः कफे संसृष्टे। कफविमूर्च्छिते इति कफेनाप्रधानेन संसृष्टे इत्यर्थः॥ २६-३३॥

**त्रिचतुःपञ्चसंसर्गानेवमेव विकल्पयेत्।**
**युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपि स्मृता॥ ३४॥**

१ 'सामं चेदतिसार्येत पूति शूलैररोचकी' इति पा०। २ 'भवति' इति पा०। ३ 'पक्कस्तत्र' इति पा०। ४ 'तत्रामे वमनं कार्यं' इति पा०।

१ 'विट्पित्तास्रैः' इति पा०। २ 'रक्ते' इति पा०। ३ 'अनिलेन' इति पा०। ४ 'संसर्गेषु' इति पा०।

अनुक्तसंसर्गचिकित्सां सूत्रयन्नाह—त्रिचतुरित्यादि। त्रिचतुःपञ्चसंसर्गानिति आमादीनां त्रिक-चतुष्क-पञ्चकरूपान् संसर्गान्। एवमेव विकल्पयेदिति प्रधानादिमेलकेन विकल्पयेत्, तथा भेषजमपि तेषां यथोक्तभेषजानुसारेण कल्पयेदित्यर्थः। एते च भेदा लिख्यमाना अतिबहुप्रभेदतया ग्रन्थगौरवमापादयन्ति, स्वयं च बुद्धिमता सुकरविभागा एवेति न लिख्यन्ते। एवमादिसंसर्गकृतं रोगभेदमन्यत्रापि बुद्ध्या कर्तव्यतयाऽतिदिशन्नाह—सर्वरोगेष्वपि स्मृतेति। इयं व्यवस्था सर्वरोगेष्वेव यथासंभवमाचार्यानुमतेत्यर्थः। तत्र ग्रहणीगदे यत्र तु षडप्यामादयः संभवन्ति, तत्रैवं संसर्गाः प्रकल्प्यन्ते; यत्र च त्रयो दोषाः संभवन्ति, शोणितेन वा समं चत्वारः, तत्र तेषामेव परस्परसंसर्गो भेषजविभागार्थं कल्पनीयः ॥ ३४ ॥

**युगपत् षड्रसं षण्णां संसर्गे पाचनं भवेत्।**
**निरामाणां तु पञ्चानां वस्तिः षाड्रसिको मतः ॥३५॥**

आमादिषट्कसमुदयरूपसंसर्गे कार्यमाह—युगपदित्यादि। युगपदिति एकदैव मिलितानां षण्णामिति यावत्। षड्रसमिति मिलितषड्रसकृतम्। निरामाणामिति आमवर्जितानां शकृदादीनां पञ्चानाम्। षाड्रसिक इति षड्रसमेलकेन कृतः ॥ ३५ ॥

**उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः।**
**शङ्खं सर्जरसं लाक्षां कर्दमं च पलांशिकम् ॥ ३६ ॥**
**पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत्।**
**अतीसारेषु सर्वेषु पेयमेतद्यथाबलम् ॥ ३७ ॥**
**कच्छुराधातकीबिल्वसमङ्गारक्तशालिभिः।**
**मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः ॥ ३८ ॥**
**बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवैः।**
**मसूरधातकीपुष्पबलाभिश्च तथा भवेत् ॥ ३९ ॥**
**स्थिरादीनां बलादीनामिक्ष्वादीनामथापि वा।**
**क्वाथेषु समसूराणां यवाग्वः स्युः पृथक् पृथक् ४०**
**कच्छुरामूलशाल्यादितण्डुलैरुपसाधिताः।**
**दधितक्रारनालाम्लक्षीरेष्विक्षुरसेऽपि वा ॥ ४१ ॥**
**शीताः सशर्कराक्षौद्राः सर्वातीसारनाशनाः।**
**ससर्पिर्मरिचाजाज्यो मधुरा लवणाः शिवाः ॥४२॥**

सर्वातीसारसाधारणं भेषजमाह—उदुम्बरेत्यादि। 'रक्तशालिभिः' इत्यत्र 'रक्तमूलिभिः' इति पाठे 'रक्तमूली रक्तैरण्डम्' इत्यपरे। जले शृतैरिति षडङ्गविधानेन जले शृतैः। बालोदुम्बरम् उदुम्बरशलाटु। भवेदिति यवागूर्भवेत्। इक्ष्वादीनामिति तृणपञ्चमूलपठितानां शरवर्जितानामिक्षुकुशकाशशालिमूलानाम्। शाल्यादितण्डुलैरिति रक्तशालिकलमादितण्डुलैः। दध्यादिभिरत्र जलस्थानीयैर्यवागूः साधनीया ॥ ३६–४२ ॥

**भवन्ति चात्र श्लोकाः—**

**स्निग्धाम्ललवणमधुरं पानं वस्तिश्च मारुते कोष्णः।**
**शीतं तिक्तकषायं मधुरं पित्ते च रक्ते च ॥ ४३ ॥**
**तिक्तोष्णकषायकटु श्लेष्मणि संग्राहि वातनुच्छकृति**
**पाचनमामे पानं पिच्छास्रग्वस्तयो रक्ते ॥ ४४ ॥**
**अतिसारं प्रत्युक्तं मिश्रं द्वन्द्वादियोगजेष्वपि च।**
**तत्रोद्रेकविशेषाद्दोषेषूपक्रमः कार्यः ॥ ४५ ॥**

प्रपञ्चोक्तं भेषजं संग्रहेणाभिदधाति—भवन्ति चात्रेत्यादि। पानमिति पाचनपानम्। वस्तिश्चेति स्निग्धाम्ललवणमधुर एव वस्तिः। मारुते इति मारुतातिसारे; एवमन्यत्रापि पित्ते इत्यादौ पित्तादिजातिसारे इति ज्ञेयम्। संग्राहि वातनुदित्यत्र 'भेषजं' इति शेषः; तच्च भेषजं यथोक्तवस्त्यादिरूपमेव। पाचनमामे पानमिति पाचनघनातिविषादिद्रव्यकृतं पानमित्यर्थः। पिच्छावस्तयोऽस्रग्वस्तयश्चेति पिच्छास्रग्वस्तयः। उक्तमिति साक्षादतिदेशेन च त्रिकादिसंसर्गे प्रोक्तम्। मिश्रमिति एतदेव प्रत्येकं मिश्रीकृतम्। द्वन्द्वादियोगजेष्विति त्रिचतुष्कादिसंसर्गजेऽतिसारे। तत्रोद्रेकादिविशेषादिति संसर्ग एव बलाबलविशेषादुपक्रमस्यापि विशेषो भवति। एतदेव बलापेक्षं बहुदुर्बलाऽप्रत्यनीकं वस्त्येकभेषजमिति शेषः (?) ॥ ४३–४५ ॥

**तत्र श्लोकः—**

**प्रास्तृतिकाः सव्याप-**
**त्क्रिया निरूहास्तथाऽतिसारहिताः।**
**रसकल्पघृतयवाग्व-**
**श्चोक्ता गुरुणा प्रसृतसिद्धौ ॥ ४६ ॥**

प्रास्तृतिका इत्याद्यध्यायार्थसंग्रहः। सव्यापत्क्रिया इति व्यापदश्च मृदुवस्तिकृतजाड्यादिका उक्ताः, तथा क्रियाश्च तासामेव व्यापदामुक्ताः। निरूहाश्चातिसारचिकित्सिते प्रोक्ताः। रसकल्पश्चातीसारेषु रसोद्देशचिकित्सया कृतः। घृतं चोदुम्बरेत्यादिनोक्तम् ॥ ४६ ॥

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने प्रास्तृतयोगीयसिद्धिर्नामाष्टमोऽध्यायः ॥ ८ ॥**

इति श्रीचक्रपाणिदत्तप्रणीतायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने प्रास्तृतयोगीयसिद्धिर्नामाष्टमोऽध्यायः ॥ ८ ॥

---

१ 'भिषजा योगभेदार्थं' इति पा०। २ 'पिबेत्' इति पा०। ३ 'वटोदुम्बर°' इति पा०। ४ 'वटादीना°' इति पा०।

१ 'द्वन्द्वामजेष्वपि च' इति पा०। २ 'रसकल्कघृतयवाग्वः' इति पा०। ३ 'प्रास्तृतयोगिकी' इति पा०।

## नवमोऽध्यायः ।

**अथातस्त्रिमर्मीयां सिद्धिं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

प्रासृतयोगीयानन्तरं त्रिमर्मीया सिद्धिरुच्यते, त्रिमर्मजरोगाश्रयिव्यापदां बस्तिरूपचिकित्सोपदर्शनार्थं; व्यापत्प्रतीकारानन्तरं बस्तिप्रयोगाधिकारश्च पूर्वाध्यायादनुवर्तते; किंवा, बस्तिव्यापच्चिकित्सा पूर्वाध्यायादिकृता, बस्तिव्यापादाच्च त्रिमर्मजा अपि रोगा भवन्ति, तेन तेषां ज्ञानपूर्वकचिकित्सोपदर्शनार्थं त्रिमर्मीयसिद्धिरुच्यते । एतदध्यायवक्तव्याश्च गदास्त्रिमर्मीयचिकित्सितेऽध्यायविस्तरभयान्नोक्ताः, त इह प्रतिपाद्यन्ते । अत्रापि मर्मशब्देन मर्मगता गदा उच्यन्ते, तानधिकृता सिद्धिस्त्रिमर्मीयसिद्धिः ॥ १ ॥ २ ॥

**सप्तोत्तरं मर्मशतमस्मिञ्छरीरे स्कन्धशाखासमाश्रितमग्निवेश ! । तेषामन्यतमपीडायां समधिका पीडा भवति, चेतनानिबन्धवैशेष्यात् । तत्र शाखाश्रितेभ्यो मर्मभ्यः स्कन्धाश्रितानि गरीयांसि, शाखानां तदाश्रितत्वात्; स्कन्धाश्रितेभ्योऽपि हृद्बस्तिशिरांसि, तन्मूलत्वाच्छरीरस्य ॥ ३ ॥**

सप्तोत्तरं मर्मशतमिति शरीरसंख्यामिहितं; तच्च मांससिरास्नाय्वस्थिसन्धिषु निविष्टम् । स्कन्धशब्देनानन्तराधिरुच्यते; शाखाशब्देन चेह शाखेव शाखेति कृत्वा बाहुद्वयं जङ्घाद्वयं चोच्यते; नेह शाखाशब्देन रक्तादिधातूनां ग्रहणं, रक्तादिधातूनां स्कन्धेऽपि विद्यमानत्वात् । तत्र शाखाश्रितानि चतुश्चत्वारिंशन्मर्माणि, शेषं स्कन्धाश्रितम् । यदुक्तं सुश्रुते—"तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ; उदरोरसोर्द्वादश, चतुर्दश पृष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्तत्रिंशत्" ( सु. शा. अ. ६ ) इति; एतेषां च मर्मणां प्रत्येकं विभाग उक्तः सुश्रुते एव "तलहृदय" ( सु. शा. अ. ६ ) इत्यादिना प्रपञ्चतोऽनुसरणीयः । सप्तोत्तरशतमर्मणाममर्मशरीरदेशविलक्षणं धर्ममाह—तेषामित्यादि । चेतनानिबन्धवैशेष्यादिति यस्मान्मर्मसु चेतनाधातुर्विशेषेण निबद्ध इत्यर्थः; चेतनानिबन्धश्च मर्मत्वदृष्टकृत एव मर्मपीडया विशेषपीडादर्शनादुन्नीयते । शाखानां तदाश्रितत्वादिति यस्माच्छाखा अपि स्कन्धाश्रिताः, तेन स्कन्धाश्रितशाखाश्रितेभ्यः साक्षात् स्कन्धाश्रितं मर्म गरीयो भवतीत्यर्थः; स्कन्धाश्रितत्वं च शाखानां स्कन्धोपघातेन तदुपघातात्, तथा स्कन्धनिष्पन्नेनैव रसादिना तत्पोषणात्; किंच स्कन्धाश्रितान्येव मर्माणि सद्यःप्राणहराणि, न शाखाश्रयाणि; तेन च स्कन्धस्य प्राधान्यम् । यदुक्तं सुश्रुते—"शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम् । हृदयं बस्तिनाभी च घ्नन्ति सद्यो हतानि वै" ( सु. शा. अ. ६ ) इति । हृद्बस्तिशिरांसि गरीयांसीति संबन्धः । एतद्गरीयस्त्वे हेतुमाह—तन्मूलत्वाच्छरीरस्येति ।—तन्मूलत्वादिति तदाश्रितत्वात्, तथा च हृदयाश्रितत्वं शरीरस्य 'तत्र हृदये दश धमन्यः' इत्यादिना 'नाभ्यामरा इव' इत्यन्तेन दर्शयिष्यति । यद्यपि च मर्मान्तराण्यपि विशेषेण प्राणाश्रयाण्युक्तानि; यथा—'दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः । शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" ( सू. अ. २९ ) इत्यनेन, तथाऽपि शङ्खादीनि न शरीराश्रयभूतानि यथा हृदयादीनि; तेन प्राणायतनत्वे समानेऽप्युक्तशरीराश्रयत्वविशेषादिह हृदयादीनामेव प्राधान्यमुच्यते; किंच, प्राणाश्रयत्वमपि यथा हृदयादीनां न तथा शङ्खादीनाम्; उक्तं हि—"सप्तोत्तरं मर्मशतं यदुक्तं शरीरसंख्यामधिकृत्य तेषु । मर्माणि बस्तिं हृदयं शिरश्च प्रधानभूतान्यृषयो वदन्ति ॥ प्राणाश्रयात् तानपि पीडयन्तो वातादयोऽसूनपि पीडयन्ति" ( सु. शा. अ. ६ ) इति । अन्ये तु शङ्खादिप्राणाश्रयाणां हृदयादिष्वेव सामीप्यादन्तर्भावं दर्शयन्ति, तच्चामूलत्वादुपेक्षितम् ॥ ३ ॥

**तत्र हृदये दश धमन्यः प्राणापानौ मनो बुद्धिश्चेतना महाभूतानि च नाभ्यामरा इव प्रतिष्ठितानि, शिरसि इन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्यमिव गभस्तयः संश्रितानि, बस्तिस्तु स्थूलगुदमुष्कसेवनीशुक्रमूत्रवाहिनीनां नाडी(ली)नां मध्ये मूत्रधारोऽम्बुवहानां सर्वस्रोतसामुदधिरिवापगानां प्रतिष्ठा, बहुभिश्च तन्मूलैर्मर्मसंज्ञकैः स्रोतोभिर्गगनमिव दिनकरकरैर्व्याप्तमिदं शरीरम् ॥ ४ ॥**

**तेषां त्रयाणामन्यतमस्यापि भेदादाश्वेव शरीरभेदः स्यात्, आश्रयनाशादाश्रितस्यापि विनाशः; तदुपघातात्तु घोरतरव्याधिप्रादुर्भावः; तस्मादेतानि विशेषेण रक्ष्याणि बाह्याभिघाद्वातादिभ्यश्च ॥ ५ ॥**

दश धमन्य इति ओजोवहा दश धमन्यः, "अर्थे दश महामूलाः समासक्ताः" ( सू. अ. ३० ) इत्यादिना अर्थेदशमहामूलीये प्रतिपादिताः । प्राणापानाविति उच्छ्वासनिश्वासौ, केचित्तु प्राणापानौ यथोक्तावेव वातौ प्राहुः; तत्रापानो यद्यपि मेढ्रश्रोण्याद्याश्रय एवेत्याहुः, तथाऽपि हृदयाव्यतिरिक्तानुविधायित्वाद्धृदयाश्रित इत्युच्यते । मनः अन्तःकरणम् । बुद्धिः महच्छब्दाभिलप्या । चेतना बुद्धिवृत्तिभेदः । महाभूता-

१ 'पूर्वाध्यायेऽप्यनुवर्तते' इति पा० । २ 'तानधिकृत्य कृता' इति पा० ।

१ 'हृदि' इति पा० । २ 'प्राणोदानौ' इति पा० । ३ '०मूत्रवहानां' इति पा० । ४ 'प्रतिष्ठितः' इति पा० । ५ 'तदुपतापात्तु' इति पा० । ६ 'हृदयार्थस्य व्यतिरिक्तानुविधायित्वात्' इति पा० ।

नीति आत्मसंबद्धानि सूक्ष्ममहाभूतानि । एतत् सर्वं सांख्यदर्शने व्यवस्थापितं शारीरे च व्युत्पादितमनुसरणीयम् । प्रदेशान्तरे चोक्तं—"षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् । आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संस्थितम्" (सू. अ. ३०) इति; तेऽर्था एतच्छ्लोकोक्ताः, अधिकार्यानां च प्रोक्षेप्वेवावरोधो व्याख्येयः; किंवा इह शास्त्रोद्धारेणाभिधानम् । यथा हृदये दश धमन्यादीन्याश्रितानि, तद्दृष्टान्तेन दर्शयति—नाभ्यामरा इव प्रतिष्ठितानीति; नाभिः चक्रनाभिः, अराः चक्रनेमिमध्यस्थकाष्ठानि, यथा—चक्रनाभ्यां संबद्धा अरास्तदुपघातादुपहन्यन्ते, तन्मूलत्वेन तत्संबन्धा भवन्ति, एवं धमन्यादयोऽपीत्यर्थः । 'नाभ्यामपरा' इति वा पाठः, तेन गर्भनाभ्यामपरा इवेत्यर्थः (अरा इव अपरेति व्याख्यानयन्ति) । एतेन प्रदेशान्तरवर्तिनामपि धमन्यादीनां हृदयाश्रितत्वं सिद्धमिति भावः । शिरस आश्रयत्वमाह—शिरसीत्यादि । इन्द्रियप्राणवहानि स्रोतांसि यद्यपि प्रदेशान्तरेऽपि भवन्ति, तथाऽपि शिरसि विशेषेणैवैतानि प्रवद्धानीति सूर्यमिव गभस्तय इति दृष्टान्तेन दर्शयति । शिरआश्रयत्वं च यथोक्तस्रोतसां तदुपघातेन विशिष्टोपघातदर्शनादुन्नीयते । वस्तेः शरीराश्रयत्वमाह—बस्तिस्त्वित्यादि । स्थूलगुदादिमध्यस्थितत्वप्रतिपादनेनास्य स्थूलगुदादीनां वस्त्याश्रयत्वं दर्शयति । अम्बुवहानां स्रोतसां प्रतिष्ठेति स्थानमित्यर्थः, उदधिर्यथाऽऽपगानां पूरणीयस्थानं, तथा बस्तिरप्यम्बुवहस्रोतसां विश्रामस्थानम् । तन्मूलैरिति तत्संवद्धैर्मर्मसंज्ञकैः; नहि स्रोतसां मर्मत्वमस्ति; किंवा स्रोतोमर्मशब्देन सिरामर्मणां ग्रहणं; किंवा मर्मसंबद्धानि मर्मपोषकाणि वा स्रोतांसि मर्मसंज्ञकानि स्रोतांसि । आश्रयनाशादाश्रितस्य नाश इति आश्रयनाशादाश्रितस्य नाशो यस्माद्भवति, तस्माद्धृदयादीनामन्यतमस्य नाशाच्छरीरनाशो भवतीति युक्तम् । शरीरस्य हृदयाश्रितत्वं शरीरारम्भकप्रधानदशधमन्याद्याश्रयत्वेनैव ज्ञेयम् । उपघातादिति किञ्चिद्वैकृतात् ॥ ४ ॥ ५ ॥

**तत्र हृद्यभिहते कासश्वासवलक्षयकण्ठशोषक्लोमाकर्षणजिह्वानिर्गममुखतालुशोषापस्मारोन्मादप्रलापचित्तनाशादयः स्युः; शिरस्यभिहते मन्यास्तम्भार्दितचक्षुर्विभ्रममोहोद्वेष्टनचेष्टानाशकासश्वासहनुग्रहमूकगद्गदत्वाक्षिनिमीलनगण्डस्पन्दनजृम्भणलालास्रावस्वरहानिवदनजिह्मत्वादीनि; वस्तौ तु वातमूत्रवर्चोनिग्रहवङ्क्षणमेहनबस्तिशूलकुण्डलोदावर्तगुल्मानिलाष्ठीलोपस्तम्भनाभिकुक्षिगुदश्रोणिग्रहादयः; वाताद्युपसृष्टानां त्वेषां लिङ्गानि चिकित्सिते सक्रियाविधीन्युक्तानि ॥ ६ ॥**

हृदयाद्यभिघातभवान् व्याधीन् क्रमेणाह—तत्रेत्यादि । क्लोमापकर्षणं क्लोमापकर्षणाकारा वेदना । वेष्टनं शिरसि वेष्टनाकारा वेदना । कुण्डलं बस्तौ कुण्डलरूपा वेदना । उपस्तम्भः वस्तेरेव । चिकित्सिते इति त्रिमर्मीयचिकित्सिते । सक्रियाविधिनीति सचिकित्सितविधानानि ॥ ६ ॥

**किंत्वेतानि विशेषतोऽनिलाद्रक्ष्याणि, अनिलो हि पित्तकफसमुदीरणे हेतुः प्राणमूलं च, स बस्तिकर्मसाध्यतमः, तस्मान्न वस्तिसमं किञ्चित् कर्म मर्मपरिपालनमस्ति । तत्र षडास्थापनस्कन्धान् विमाने द्वौ चानुवासनस्कन्धाविह च विहितान् वस्तीन् बुद्ध्या विचार्य महामर्मपरिपालनार्थं प्रयोजयेद्वातव्याधिचिकित्सां च ॥ ७ ॥**

मर्मपरिपालने वस्तेः प्राधान्यं सोपपत्तिकमाह—किंत्वेतानीत्यादि । यस्मात् पित्तकफयोर्द्वयोरक्रिययोरीरणेऽनिल एव हेतुः, तेन कफपित्तजेऽपि विकारे वायुर्निमित्तं, वातजविकारेऽपि वायुः स्वतन्त्र एव कारणम्, अतः सर्वविकारेषु मर्माणि रक्षयता तत्कारणादनिलादेव मर्माणि रक्षणीयानि । तथा प्राणमूलं चेति जीवितहेतुश्चाविकृतो वायुः, विकृतश्च प्राणोपघातकः; तेन मर्माण्यपि प्राणरक्षार्थं वाताद्रक्ष्याणि । बस्तिसाध्यतम इति इतरचिकित्सापेक्षया बस्तिना साध्यतमः; उक्तं हि—"बस्तिर्वातहराणाम्" (सू. अ. २५) इति । द्वौ चानुवासनस्कन्धाविति रोगभिषग्जितीये "अनुवासनं तु स्नेह एव, स द्विविधः—स्थावरो जङ्गमश्च" (वि. अ. ८) इत्यनेनोक्तौ द्वावनुवासनस्कन्धौ ज्ञेयौ । इहेति सिद्धिस्थाने । बुद्ध्या विचार्येति दोषौषधादीनि दश बुद्ध्या विचार्य, वातव्याधिचिकित्सां च बुद्ध्या विचार्य प्रयोजयेदित्यर्थः ॥ ७ ॥

**भूयश्च हृद्युपसृष्टे हिङ्गुचूर्णं लवणानामन्यतमचूर्णसंयुक्तं मातुलुङ्गस्य रसेनान्येन वाऽम्लेन हृद्येन वा पाययेत्, स्थिरादिपञ्चमूलीरसः सशर्करः पानार्थं, बिल्वादिपञ्चमूलरससिद्धा च यवागूः, हृद्रोगविहितं च कर्म; मूर्ध्नि तु वातोपसृष्टेऽभ्यङ्गस्वेदनोपनाहस्नेहपाननस्तःकर्मावपीडनधूमादीनि; वस्तौ तु कुम्भीस्वेदः, वर्तयः, श्यामादिभिर्गोमूत्रसिद्धो निरूहः, बिल्वादिभिश्च सुरासिद्धः, शरकाशेक्षुदर्भगोक्षुरकमूलशृतक्षीरैश्च त्रपुसैर्वारुखराश्वाबीजयवर्षभकवृद्धिकल्कितो निरूहः, पीतदारुसिद्धतैलेनानुवासनं, तैल्वकं च सर्पिर्विरेकार्थं, शता-**

१ 'मूले(न) वा' इति पा० । २ अयं पाठो हस्तलिखितपुस्तके न पठ्यते । ३ 'भ्रमन्ति' इति पा० । ४ 'हृदयाद्याश्रितत्वं' इति पा० । ५ '°गुल्मव्रध्नानिल°' इति पा० ।

१ 'भूयश्च हृद्युपसृष्टे वातेन हिङ्गुचूर्णलवणानामन्यतमचूर्णसंयुक्तां पेयां मातुलुङ्गरसेनान्येन वाऽम्लेन हृद्येन वा पाययेत्' इति पा० । २ 'मातुलुङ्गरसेनाऽन्येन वा बिल्वादिस्थिरादिपञ्चमूलरससिद्धा यवागूः' इति पा० । ३ '°शृतक्षीरं च' इति पा० ।

वरीगोक्षुरकबृहतीकण्टकारिकागुडूचीपुनर्नवोशीरमधुकद्विसारिवालोध्रश्रेयसीकुशकाशमूलकषायक्षीरचतुर्गुणं बलावृषर्षभककराश्वोपकुञ्चिकावत्सकत्रपुसैर्वारुबीजशितिवारकमधुकवचाशतपुष्पाश्मभेदकवर्षाभूमदनफलकल्कसिद्धं तैलमुत्तरवस्तिर्निरूहो वा शुद्धस्निग्धस्विन्नस्य बस्तिशूलमूत्रविकारहर इति ॥ ८॥

विशेषेण मर्मभेदचिकित्सितमाह—भूयश्चेत्यादि । हृद्युपसृष्टे 'वातेन' इति शेषः । लवणानामिति निर्धारणे षष्ठी । अन्य एव अन्यतमः, यथा—श्रेष्ठतम इति । हृद्येनेति मनोऽनुकूलेन; यद् द्रव्यरसस्य हृदहिततयाऽहृद्यत्वं, तन्मनोऽननुकूलत्वमेव । हृद्रोगविहितं च कर्मेति त्रिमर्मीयचिकित्सिते । धूमादीनीति आदिशब्देन परिषेकोपनाहादिग्रहणम् । वस्तौ त्विति 'प्रदुष्टे वातेन' इति प्रकरणाज्ज्ञेयं; पित्तकफदुष्टौ च वायुरेव प्रधानमिति प्रागेव प्रतिपादितं; तेन कफपित्तदुष्टिरपि लभ्यते । वर्तय इति फलवर्तयः । श्यामादिभिरिति "श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनाम्" ( वि. अ. ८ ) इत्यादिना प्रागुक्तः श्यामादिः । बिल्वादिरिति बृहत्पञ्चमूलं; किंवा "बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्" ( सि. अ. ७ ) इत्यनेनोक्तो बिल्वादिर्ज्ञेयः । शरादिमूलशृतक्षीरहपुषादिकल्कोऽपरः । खराश्वा अजमोदा । पीतदारुसिद्धतैलेन साधितमनुवासनं यस्मिन्निरूहे स तथा । केचित्तु सरलसाराकृष्टतैलं पीतदारुसिद्धतैलमाहुः । तैल्वकसर्पिः तिल्वककल्पोक्तम् । शतावरीत्यादौ द्विसारिवेति अनन्तमूलश्यामे । श्रेयसी रास्ना । उपकुञ्चिका कृष्णजीरकम् । शितिवारकः शालिञ्चः । अश्मभेदकः पाषाणभेदकः । उत्तरवस्तिरिति वक्ष्यमाणोत्तरवस्तिविधानाद्देय इत्यर्थः । निरूहः निरूहस्थाने देय इत्यर्थः ॥ ८ ॥

भवन्ति चात्र श्लोकाः—

हृदये मूर्ध्नि वस्तौ च नृणां प्राणाः प्रतिष्ठिताः ।
तस्मात्तेषां सदा यत्नं कुर्वीत परिपालने ॥ ९ ॥
आबाधवर्जनं नित्यं स्वस्थवृत्तानुवर्तनम् ।
उत्पन्नार्तिविघातश्च मर्मणां परिपालनम् ॥ १० ॥

गद्योक्तमर्थं श्लोकेन दर्शयन्नधिकमप्याह किञ्चित्—हृदये इत्यादिना । आबाधवर्जनमिति मर्मोपघातकहेतुवर्जनम् । स्वस्थवृत्तानुवर्तनं च हृदयादिपोषकतयैव पालकं भवति । उत्पन्नार्तिविघात इति उत्पन्नमर्मरोगप्रतीकारः ॥ ९ ॥ १० ॥

अत ऊर्ध्वं विकारा ये त्रिमर्मीये चिकित्सिते ।
न प्रोक्ता मर्मजास्तेषां कांश्चिद्वक्ष्यामि सौषधान् ॥

मर्मपरिपालकवस्तिकथनप्रसङ्गादनुक्तमर्मगतरोगान् सचिकित्सितान् दर्शयन्नाह—अत ऊर्ध्वमित्यादि ॥ ११ ॥

क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ।
पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन् ॥१२॥
धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तथा ।
( नमयेच्चाक्षिपेच्चाङ्गान्युच्छ्वासं निरुणद्धि च ॥ )
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ।
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ॥१४॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ।
वायुना दारुणं प्राहुरेके तमपतानकम् ॥ १५ ॥

हृद्रोगमपतन्त्रकमाह—क्रुद्ध इत्यादि । स्थानादूर्ध्वमिति वातस्थानापेक्षया यदूर्ध्वम् । स्तब्धाक्षोऽथ निमीलन इति स्तब्धाक्षो वा भवति निर्मीलिताक्षो वा भवति । निःसंज्ञ इति व्याधिवेगकाले दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति, निःसंज्ञश्च भवति । मोहं वृते पुनरिति हृदये वृते पुनर्वायुना मोहं याति; वायुनेति कफयुक्तेन; एके तमपतानकमेवापतन्त्रकमाहुः । अत्र जतूकर्णः—"वातकफाभ्यां हृच्छिरःशङ्खपीडनानमनाङ्गाक्षेपप्रमोहाक्षिस्तम्भानिमीलनकृच्छ्रोच्छ्वासकूजनान्यपतन्त्रके" इति । किंवा अपतन्त्रकं द्विविधं वर्णयन्ति—वातात्, कफाच्च; तत्र 'निःसंज्ञः सोऽपतन्त्रकः' इत्यनेन कफज उच्यते; 'वायुना दारुणं प्राहुः' इत्यनेन वायुना जनितमपतन्त्रकमेवापतानकमाहुः । तस्य दारुणत्वं दारुणवातारब्धत्वादिति व्याख्येयम् । तथैव सुश्रुते वातव्याधावतन्त्रकः पठितः ॥ १२-१५ ॥

श्वसनं कफवाताभ्यां रुद्धं तस्य विमोक्षयेत् ।
तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति ॥१६॥
मरिचं शिग्रुबीजानि विडङ्गं च फणिज्झकम् ।
एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचनम् ॥ १७ ॥
तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।
यवक्वाथाम्बुना पेयं हृद्ग्रहे चापतन्त्रके ॥ १८ ॥
हिङ्ग्वम्लवेतसं शुण्ठीं ससौवर्चलदाडिमम् ।
पिबेद्वातकफघ्नं च कर्म हृद्रोगनुद्धितम् ॥ १९ ॥
शोधना वस्तयस्तीक्ष्णा न हितास्तस्य कृत्स्नशः ।
सौवर्चलाभयाव्योषैः सिद्धं तस्मै घृतं हितम् ॥ २० ॥

तास्विति चेतनावहासु धमनीषु । यवक्वाथाम्बुनेति यवैः षडङ्गविधिना शृतपानीयेन । हृद्रोगनुद् वातकफघ्नं यत् कर्म

१ 'मर्मभेदादिचिकित्सितमाह—' इति पा० । २ "विधानाज्ज्ञेयः' इति पा० । ३ 'यत्नात् कुर्वीत परिपालनम्' इति पा० ।

१ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते । २ 'उच्छ्वसिति च कृच्छ्रेण स्तब्धाक्षोऽथानिमीलनः' इति पा० । ३ 'वातकफाच्च' इति पा० । ४ 'वातिकः' इति पा० । ५ 'श्वसनः कफवाताभ्यां रुद्धस्तं च' इति पा० । ६ 'हिङ्गु तुम्बुरु पथ्या च' इति पा० । ७ 'हृत्पार्श्वार्तेऽपतन्त्रके' इति पा० । ८ 'शोधने' इति पा० ।

तद्धितमपतन्त्रके । शोधना इत्यादौ 'कृत्स्नशः शोधना न हिताः' इति वचनेन शोधनार्थंस्तोकनिरूहदानं, भूरिशोधननिरूहदाने तु वातक्षोभः स्यादिति भावः ॥ १६–२० ॥

मधुरस्निग्धगुर्वन्नसेवनाच्चिन्तनाच्छ्रमात् ।
शोकाद्व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः ॥ २१ ॥
यदाऽसौ समवस्कन्द्य हृदयं हृदयाश्रयान् ।
समावृणोति ज्ञानादींस्तदा तन्द्रोपजायते ॥ २२ ॥
हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम् ॥ २३ ॥
कफघ्नं तत्र कर्तव्यं शोधनं शमनानि च ।
व्यायामो रक्तमोक्षश्च भोज्यं च कटुतिक्तकम् ॥२४॥

मधुरस्निग्धेत्यादिना तन्द्रालक्षणं चिकित्सितं च केचित् पठन्ति ॥ २१–२४ ॥

मूत्रौकसादो जठरं कृच्छ्रमुत्सङ्गसंक्षयौ ।
मूत्रातीतोऽनिलाष्ठीला वातबस्त्युष्णमारुतौ ॥२५॥
वातकुण्डलिका ग्रन्थिर्विड्घातो बस्तिकुण्डलम् ।
त्रयोदशैते मूत्रस्य दोषास्ताँल्लिङ्गतः शृणु ॥ २६ ॥

हृद्रोगमभिधाय बस्तिरोगानाह—मूत्रौकसाद इत्यादि । एते च मूत्रदोषा मूत्रकृच्छ्राद्भिन्ना एवेति त्रिमर्मीय एव प्रतिपादितम् ॥ २५ ॥ २६ ॥

पित्तं कफो द्वावपि वा बस्तौ संहन्यते यदा ।
मारुतेन तदा मूत्रं रक्तं पीतं घनं सृजेत् ॥ २७ ॥
सदाहं श्वेतसान्द्रं वा सर्वैर्वा लक्षणैर्युतम् ।
मूत्रौकसादं तं विद्यात् पित्तश्लेष्महरैर्जयेत् ॥ २८ ॥

पित्तं कफ इत्यादिना मूत्रौकसादमाह । अयं च वातकफपित्तवात-त्रिदोषैर्जन्यत इत्युक्तं भवति । संहन्यते इति संहते रक्तपीतवर्णता पित्तेन, श्वेतवर्णता कफेन, कफपित्तलक्षणता कफपित्ताभ्यां, वायुस्तु सर्वानुगत एव । अत्र वायोरावरणकृत एव कोपः; तेन पित्तकफयोरेव चिकित्सोक्ता 'पित्तश्लेष्महरैर्जयेत्' इत्यनेन, वायोस्त्वावरणजयादेव जयो भवतीति भावः ॥ २७ ॥ २८ ॥

विधारणात् प्रतिहतं वातोदावर्तितं यदा ।
पूरयत्युदरं मूत्रं तदा तदनिमित्तरुक् ॥ २९ ॥
अपक्तिमूत्रविट्सङ्गैस्तन्मूत्रजठरं वदेत् ।
मूत्रवैरेचनीं तत्र चिकित्सां संप्रयोजयेत् ॥ ३० ॥
हिङ्गुद्विरुत्तरं चूर्णं त्रिमर्मीये प्रकीर्तितम् ।
हन्यान्मूत्रोदरानाहमाध्मानं गुदमेढ्रयोः ॥ ३१ ॥

अनिमित्तरुगिति अलक्ष्यमाणनिमित्तरुक् । मूत्रवैरेचनीमिति मूत्रविरेचनीयदशकप्रयोगरूपाम् । हिङ्गुद्विरुत्तरं तु "द्विरुत्तरं हिङ्गुवचा" ( चि. अ. २६ ) इत्यादिनोक्तं, हिङ्गु द्विरुत्तरं यस्मिन् तद्धिङ्गुद्विरुत्तरम् ॥ २९–३१ ॥

मूत्रितस्य व्यवायात्तु रेतो वातोद्धतं च्युतम् ।
पूर्वं मूत्रस्य पश्चाद्वा स्रवेत् कृच्छ्रं तदुच्यते ॥ ३२ ॥
खवैगुण्यानिलाक्षेपैः किञ्चिन्मूत्रं च तिष्ठति ।
मणिसन्धौ स्रवेत् पश्चात्तदरुग्वाऽथ चातिरुक् ३३
मूत्रोत्सङ्गः स विच्छिन्नमुच्छेषगुरुशेफसः ।
वाताकृतिभिर्वेद्धातान्मूत्रे शुष्यति संक्षयः ॥ ३४ ॥
चिरं धारयतो मूत्रं त्वरया नं प्रवर्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ३५ ॥
आध्मापयन् बस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् ।
कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥३६॥
मूत्रं धारयतो बस्तौ वायुः क्रुद्धो विधारणात् ।
मूत्ररोधार्तिकण्डूभिर्वातबस्तिः स उच्यते ॥ ३७ ॥
उष्मणा सोष्मकं मूत्रं शोषयन् रक्तपीतकम् ।
उष्णवातः सृजेत् कृच्छ्राद्बस्त्युपस्थार्तिदाहवान् ३८
गतिसङ्गादुदावृत्तः स मूत्रस्थानमार्गयोः ।
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डली ॥ ३९ ॥
मूत्रं विहन्ति संस्तम्भभङ्गगौरववेष्टनैः ।
तीव्ररुङ्मूत्रविट्सङ्गैर्वातकुण्डलिकेति सा ॥ ४० ॥
रक्तं वातकफाद्दुष्टं बस्तिद्वारे सुदारुणम् ।
ग्रन्थिं कुर्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥४१॥
अश्मरीसमशूलं तं रक्तग्रन्थिं प्रचक्षते ।
रूक्षदुर्बलयोर्वातेनोदावृत्तं शकृद्यदा ॥ ४२ ॥
मूत्रस्रोतः प्रपद्येत विट्संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥४३॥
द्रुताध्वलङ्घनायासादभिघातात् प्रपीडनात् ।
स्वस्थानाद्बस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥४४॥
शूलस्पन्दनदाहार्तो बिन्दुं बिन्दुं स्रवत्यपि ।
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥४५॥
बस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥ ४६ ॥
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ।
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ४७
श्लेष्मरुद्धबिलो बस्तिः पित्तोदीर्णो न सिध्यति ।
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ४८
स्याद्बस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ।

१ "°गुर्वम्ल°" इति पा० । २ "°द्व्ययात्" इति पा० । ३ 'मूत्रैकसादो' इति पा० । ४ 'द्वयं वाऽपि' इति पा० । ५ 'मूत्रैकसादं' इति पा० । ६ 'हन्यान्मूत्रादिसंघातं व्याधिं च गुदमेढ्रयोः' इति पा० ।

१ 'तच्छेषगुरुशेफसः' इति पा० । २ 'मूत्रमाधारयेद्बस्तौ' इति पा० । ३ 'चावृते' इति पा० । ४ 'तृण्मोहः' इति पा० ।

मूत्रितस्येति मूत्रवेगगतस्य, मूत्रवेगयुक्तस्येति यावत्। च्युतमिति स्वस्थानाच्युतम्। वातोद्धतमिति वातविक्षिप्तम्। एतल्लक्षणान्तरयुक्तमेव कृच्छ्रं; मूत्रकृच्छ्रमितोऽन्यदेव, भिन्नलक्षणत्वात्। किञ्चिदिति स्तोकम्। उच्छेषगुरुशेफस इति प्रवृद्धमूत्रावशेषेण स्थितेन गुरुशेफस इति। वाताकृतिरित्यादि संक्षेपलक्षणम्। वाताकृतिरिति वातलक्षणयुक्तः। विधारणादिति मूत्रवेगरोधात्। ऊष्मणेति पित्तोष्मणा। शोषयन्निति ऊष्मणा सहितो वात एव मूत्रं शोषयन्। गतिसङ्गादित्यादिना वातकुण्डलिकामाह। मूत्रस्य गतिसङ्गादुदावृत्तो वायुर्मूत्रस्थानमार्गयोर्भग्नव्याविद्धकुण्डली मूत्रयति; भग्नः प्रतिहतः, व्याविद्धः वक्री, कुण्डलीति आवर्तमानतया स्थितः; ईदृशं वायोरुपस्थानं मूत्रमार्ग एव भवति। वातकुण्डलिकालक्षणमाह—संस्तम्भेत्यादि। भङ्गः भङ्गाकारवेदना। रक्तं ग्रन्थिं कुर्यात् वातकफाभ्यां दुष्टमिति योज्यम्। विड्युक्तो विघातो विड्विघातः। द्रुताध्वेत्यादिना बस्तिकुण्डलमाह। उद्वृत्त इति परावृत्तमुखः। पीडित इति हस्तादिभिः। श्लेष्मरुद्धबिलो बस्तिर्न सिध्यति, तथा पित्तोदीर्णश्च न सिध्यति। अविभ्रान्तबिल इति अरुद्धद्वारः। कुण्डलीकृत इति वर्तुलीकृतः। वर्तुलीकृतस्यैव लक्षणान्याह—स्याद्बस्तावित्यादि॥ ३२-४८॥—

दोषाधिक्यमवेक्ष्यैतान् मूत्रकृच्छ्रहरैर्जयेत्॥ ४९॥
बस्तिमुत्तरबस्तिं च सर्वेषामेव दापयेत्।

चिकित्सामाह—दोषाधिक्यमित्यादि। मूत्रकृच्छ्रहरैः प्रयोगैर्दोषाधिक्यमवेक्ष्य प्रयुक्तैर्जयेदित्यर्थः॥ ४९॥—

पुष्पनेत्रं तु हैमं स्याच्छ्लक्ष्णमौत्तरबस्तिकम्॥ ५०॥
जात्यश्वहनवृन्तेन समं गोपुच्छसंस्थितम्।
रौप्यं वा सर्षपच्छिद्रं द्विकर्णं द्वादशाङ्गुलम्॥५१॥
तेनाजबस्तियुक्तेन स्नेहस्यार्धपलं नयेत्।
यथावयोविशेषेण स्नेहमात्रां विकल्प्य वा॥ ५२॥
स्नातस्य भुक्तभक्तस्य रसेन पयसाऽपि वा।
सृष्टविण्मूत्रवेगस्य पीठे जानुसमे मृदौ॥ ५३॥
ऋजोः सुखोपविष्टस्य हृष्टे मेढ्रे घृताक्तया।
शलाकयाऽन्विष्य गतिं यद्यप्रतिहता व्रजेत्॥५४॥
ततः शेफःप्रमाणेन पुष्पनेत्रं प्रवेशयेत्।
गुदवन्मूत्रमार्गेण प्रणयेदनु सेवनीम्॥ ५५॥
हिंस्यादतिगतं बस्तिमूने स्नेहो न गच्छति।
सुखं प्रपीड्य निष्कम्पं निष्कर्षेन्नेत्रमेव च॥ ५६॥
प्रत्यागते द्वितीयं च तृतीयं च प्रदापयेत्।
अनागच्छन्नुपेक्ष्यस्तु रजनीव्युषितस्य च॥ ५७॥

१ 'संक्षेपलक्षणम्' इति पा०। २ 'जातीपुष्पस्य वृन्तेन' इति पा०। ३ 'विसृष्टवर्चोमूत्रस्य' इति पा०। ४ 'हिंस्याद्बस्तिगतं' इति पा०।

उत्तरबस्तिं दापयेदित्युक्तं, तत उत्तरबस्तिविधिमाह—पुष्पनेत्रमित्यादि। पुष्पनेत्रमित्युत्तरबस्तिनेत्रस्य संज्ञा; उत्तरबस्तिसंज्ञा उत्तरमार्गदीयमानतया, किंवा श्रेष्ठगुणतया उत्तरबस्तिः। जात्यश्वहनवृन्तेन सममिति जातेरश्वहनस्य च पुष्पयोर्वृन्तेनाग्रे समम्; उक्तं हि हारीते—"कुन्दस्य वृन्तप्रतिमं तथाऽग्रे" इति; अश्वहनः करवीरः। सर्षपच्छिद्रमिति सर्षपवाहिच्छिद्रम्। द्विकर्णिकमिति नेत्रे बस्तिबन्धनार्थमेकतः कर्णिका, अपराऽग्रे शेफःप्रमाणषडङ्गुलादौ कर्णिका कर्तव्या। 'त्रिकर्णिकम्' इति वा पाठः। यथावयोविशेषेण स्नेहमात्रां विकल्प्य चेति यथोक्तस्नेहः पञ्चविंशतिवर्षस्य, ततस्त्वर्वाग्वयोभेदविकल्पेनापकर्षः कर्तव्यः; उक्तं हि सुश्रुते—"स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र कीर्तितः। पञ्चविंशतिवर्षाणामर्वाग्बुद्धिविकल्पितम्" (सु. चि. अ. ३७) इति। हृष्टे इति स्तब्धे, यद्यप्रतिहता व्रजेच्छलाका, तत्र पुष्पनेत्रं शेफःप्रमाणसमं प्रवेशनीयम्। शलाकया प्रथममन्वेषणं मार्गविज्ञानार्थम्। गुदवदिति गुदे यथा नेत्राकम्पनादिगुणयुक्तं प्रवेश्यते तथा मेढ्रेऽपि। अतिगतं लिङ्गप्रमाणातिरेकप्रविष्टं नेत्रं बस्तिं हिंस्यात्। ऊने इति लिङ्गमानस्तोकप्रविष्टे॥ ५०-५७॥

पिप्पलीलवणागारधूमापामार्गसर्षपैः।
वार्ताकुरसनिर्गुण्डीशम्पाकैः ससहाचरैः॥ ५८॥
मूत्राम्लपिष्टैः सगुडैर्वर्तिं कृत्वा प्रवेशयेत्।
अग्रे तु सर्षपाकारां पश्चार्धे माषसंमिताम्॥ ५९॥
नेत्रदीर्घां घृताभ्यक्तां सुकुमारामभङ्गुराम्।
नेत्रवन्मूत्रनाड्यां तु पायौ चाङ्गुष्ठसंमिताम्॥ ६०॥
स्नेहे प्रत्यागते ताभ्यामानुवासनिको विधिः।
परिहारश्च सव्यापत् ससम्यग्दत्तलक्षणः॥ ६१॥

पिप्पलीत्यादिना व्युषितेऽप्यनागच्छतः स्नेहस्य प्रवर्तिकां वर्तिमाह। इयं च वर्तिर्गुडपाकेन कठिना कर्तव्या यथा श्लक्ष्णा भवति। पश्चार्धे इति मूले; अङ्गुष्ठसन्निभामिति पायौ स्नेहप्रवृत्त्यर्थं दीयमानाऽङ्गुष्ठसमाना कर्तव्या। ताभ्यामिति मेढ्रगुदाभ्यां दत्तवर्तिभ्याम्। उत्तरबस्तेरनुवासनवत् सेव्यपरिहारव्यापत्सम्यग्दत्तलक्षणान्यतिदिशन्नाह—आनुवासनिको विधिरित्यादि॥ ५८-६१॥

स्त्रीणामार्तवकाले तु प्रतिकर्म तदाचरेत्।
गर्भासना सुखं स्नेहं तदाऽऽदत्ते ह्यपावृता॥ ६२॥
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते।
बस्तिजेषु विकारेषु योनिविभ्रंशजेषु च॥ ६३॥
योनिशूलेषु तीव्रेषु योनिव्यापत्स्वसृग्दरे।

१ 'पूर्णे(र्वे)' इति पा०। २ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते।

अप्रस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि ॥ ६४ ॥
विदध्यादुत्तरं वस्तिं यथास्वौषधसंस्कृतम्[1] ।

आर्तवकाले त्वौत्सर्गिकतयोक्तं[2] स्त्रीणामुत्तरवस्तिदानमार्तवकाले विधत्ते । आर्तवकालदाने हेतुमाह—गर्भासनेत्यादि । गर्भासना गर्भशय्या, गर्भाशय इत्यर्थः; अन्ये तु योनिमाहुः । आदत्त इति सम्यग् गृह्णाति । अपावृतेति अपगतसञ्चितरजोरूपावरणा ॥ ६२–६४ ॥—

पुष्पनेत्रप्रमाणं तु प्रमदानां दशाङ्गुलम् ॥ ६५ ॥
मूत्रस्रोतःपरीणाहं मुद्गस्रोतोऽनुवाहि[3] च ।
अपत्यमार्गे नारीणां विधेयं चतुरङ्गुलम् ॥ ६६ ॥
द्व्यङ्गुलं मूत्रमार्गे तु वालायास्त्वेकमङ्गुलम् ।
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ॥
अथास्याः प्रणयेन्नेत्रमनुवंशगतं सुखम् ।
द्विस्त्रिश्चतुरिति स्नेहानहोरात्रेण योजयेत् ॥ ६८ ॥
वस्तौ[4], वस्तौ प्रणीते च वर्तिः पीनतरा भवेत् ।
त्रिरात्रं कर्म कुर्वीत स्नेहमात्रां विवर्धयेत् ॥ ६९ ॥
अनेनैव विधानेन कर्म कुर्यात् पुनस्त्र्यहात् ।

पुष्पनेत्रप्रमाणं त्वित्यादि । मुद्गस्रोतोऽनुवाहीति मुद्गवाहिच्छिद्रम् । अपत्यमार्गे विधेयं चतुरङ्गुलमिति अपत्यमार्गे स्नेहयितव्ये चतुरङ्गुलप्रवेशनं[5] प्राप्तयौवनानामेव नारीणां कर्तव्यं, मूत्रमार्गे तु स्नेहयितव्ये द्व्यङ्गुलप्रवेशनं प्राप्तयौवनानामेव नारीणां कर्तव्यम् । वालायाः स्वल्पप्रमाणतया एकाङ्गुलप्रवेशनमेव मूत्रमार्गप्रयोगार्थं कर्तव्यं; वालानां त्वपत्यमार्गे न दीयत एव, तासामपत्यमार्गस्यावृतत्वात् । वर्तिः पीनतरा भवेदिति स्नेहप्रत्यागमनार्था वर्तिः पीनतरा कर्तव्या । स्नेहमात्रा चात्र "स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसंमितम्" ( सु. चि. अ. ३७ ) इत्यनेन सुश्रुतोक्ता ज्ञेया ॥ ६५–६९ ॥—

अतः शिरोविकाराणां कश्चिद्भेदः प्रवक्ष्यते ॥ ७० ॥
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम् ॥ ७१ ॥
स शिरो विषवद्वेगी निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको[6] नाम नामतः[7] ॥ ७२ ॥
परं[8] त्र्यहाज्जीवति चेत् प्रत्याख्यायाचरेत् क्रियाम् ।
शिरोविरेकसेकादि सर्वं वीसर्पनुच्च यत् ॥ ७३ ॥

क्रमागतशिरोविकारज्ञानार्थं त्रिमर्मीयाविस्तृतान् वक्तुमाह—अत इत्यादि । दारुण इति आशुकारी । परं त्र्यहाज्जीवतीत्यादिकः प्रभावोऽयं शङ्खकस्य । प्रत्याख्यायाचरेत् क्रियामित्यनेन उत्पन्नमात्र एव प्रत्याख्यानपूर्विका चिकित्सा कर्तव्याऽस्य ॥७०–७३॥

रूक्षात्यध्यशनात्[1] पूर्ववातावश्यायमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥ ७४ ॥
केवलः सकफो वाऽर्धं[2] गृहीत्वा शिरसस्ततः ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेऽतिवेदनाम् ॥ ७५ ॥
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः ।
नयनं वाऽथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥ ७६ ॥
चतुःस्नेहोत्तमा मात्रा शिरःकायविरेचनम् ।
नाडीस्वेदो घृतं जीर्णं वस्तिकर्मानुवासनम् ॥ ७७ ॥
उपनाहः शिरोवस्तिर्दहनं चात्र शस्यते ।
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम् ॥७८॥

रूक्षेत्यादिनाऽर्धावभेदकमाह । अवश्यायः हिमः । शस्त्रारणिनिभामिति शस्त्रच्छेदारणिमन्थननिभाम्; अरणिः अग्न्युत्थापनकाष्ठं; किंवा अरणिना कारणेनाग्निरेवात्र लक्ष्यते । चतुःस्नेहस्योत्तमा मात्रा; उत्तमा च मात्रा अहोरात्रपरिणमनीया । जीर्णं दशवर्षस्थितं घृतम् । उपनाहं केचिच्छिरोवस्तिभेदमाहुः, यो मास्तिष्क उच्यते; तन्त्रान्तरे हि मास्तिष्क उपनाहः शिरोवस्तिप्रकार उक्तः—"मास्तिष्केऽष्टाङ्गुलं पट्टं वस्तौ तु द्वादशाङ्गुलम्" इत्यादिना; शिरोवस्तिविधानं शालाक्ये ज्ञेयं; यथा—"द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम् । आकर्णबन्धनस्थाने ललाटे वस्त्रवेष्टिते ॥ चेलवेणिकया बद्ध्वा माषकल्केन लेपयेत् । ततो यथाव्याधिश्रृतं स्नेहं कोष्णं निवेशयेत् ॥ ऊर्ध्वं केशभुवो यावदङ्गुलं धारयेच्च तम् । आवक्त्रनासिकाक्लेदाद्दशाष्टौ षड्वातादिषु ॥ मात्रा सहस्राण्यरुजे त्वेकं स्कन्धादि मर्दयेत् । युक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम्" इति; तथा "आशिरोव्यायतं चर्म कृत्वाऽष्टाङ्गुलमुच्छ्रितम् । तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥ निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् । धारयेदारुजः शान्त्यै यामं यामार्धमेव वा ॥ शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम्" इत्यादि । दहनं वाऽस्येति तन्त्रान्तरप्रत्ययाद् द्व्यङ्गुलललाटशङ्खप्रदेशेषु शरकाण्डादिना दहनं ज्ञेयम् । यच्चोद्दिष्टं चिकित्सितमिति तच्चात्र शस्यते इति योज्यम् ॥ ७४–७८ ॥

सन्धारणादजीर्णाद्यैर्मस्तिष्कं रक्तमारुतौ ।
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम् ॥ ७९ ॥
सूर्योदयेंऽशुसंतापाद्द्रवं[3] विष्यन्दते शनैः ।

---

१ 'यथास्वौषधमिश्रितम्' इति पा० । २ 'त्वौत्सर्गिककालोक्तं' इति, 'त्वौत्सर्गिकं नोक्तं' इति च पा० । ३ 'मुद्गस्रोतोनुपाति च' इति पा० । ४ 'वस्तिं वस्तौ प्रणीते च वर्तिश्चानन्तरा भवेत्' इति पा० । ५ 'चतुरङ्गुलप्रवेशनमन्तः कर्तव्यम्' इति पा० । ६ 'शङ्खकोऽग्निनिभः क्षिप्रं विनाशयति मानवम्' इति पा० । ७ 'नामतः परम्' इति पा० । ८ 'जीवेत्त्र्यहं चेद्भैषज्यं प्रत्याख्याय समाचरेत्' इति पा० ।

१ 'रूक्षाशनादध्यशनात् प्राग्वातस्य च सेवनात्' इति पा० । २ 'वाऽपि गृहीत्वाऽर्धं शिरो बली' इति पा० । ३ '°द्रक्तं विष्यन्दयेच्छनैः' इति पा० ।

ततो दिने शिरःशूलं दिनवृद्ध्या विवर्धते ॥ ८० ॥
दिनक्षये ततः स्त्याने मस्तिष्के संप्रशाम्यति ।
सूर्यावर्तः स तत्र स्यात् सर्पिरौत्तरभक्तिकम् ॥ ८१ ॥
शिरःकायविरेकौ च मूर्ध्नो त्रिस्नेहधारणम्¹ ।
जाङ्गलैरुपनाहश्च घृतक्षीरैश्च सेचनम् ॥ ८२ ॥
बर्हितित्तिरिलावादिशृतक्षीरोत्थितं घृतम् ।
स्यान्नावनं² जीवनीयक्षीराष्टगुणसाधितम् ॥ ८३ ॥

मस्तिष्कं शिरःस्थो मज्जा । द्रवमिति द्रवं सत् । विष्यन्दते इति च्यवते । एतच्च सूर्यावर्तस्य रूपं दोषदूष्ययोर्विकृतिविषमसमवायाद्भवति; तेन नान्यविकार एवंभूतो भवति । तथा वेदना सूर्यतापे एवास्य वर्धते नाग्नितापे, इत्येतदपि प्रभावकृतमेव ज्ञेयम् । त्रिस्नेहधारणमिति पाठात् तैलघृतवसाधारणं वदन्ति । लावादयो विष्किरा अन्नपानोक्ताः ॥७९-८३॥

( उपवासातिशोकातिरूक्षशीताल्पभोजनैः । )
दुष्टा दोषास्त्रयो मन्यापश्चाद्घाटासु वेदनाम्⁵ ॥ ८४ ॥
तीव्रां कुर्वन्ति सा चाक्षिभ्रूशङ्खेष्ववतिष्ठते⁶ ।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥ ८५ ॥
सोऽनन्तवातस्तं हन्यात् सिराकार्वतनाशनैः ।
वातो रूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत् ॥८६॥
तत्रामृतावलारास्नामहाश्वेताश्वगन्धकैः ।
स्नेहस्वेदादि वातघ्नं शस्तं नस्यं च तर्पणम् ॥ ८७ ॥

मन्या ग्रीवासिराद्वयं, घाटा ग्रीवायाः पश्चाद्भागः, पश्चात् पृष्ठम् । सा चाक्षिभ्रूशङ्खेष्ववतिष्ठत इति शङ्खादीन् व्याप्य स्थिरा भवति । अनन्तवातमेनं तन्त्रान्तरे अन्यतोवातमाहुः । सिराकार्वतनाशनैरिति सिराव्यधैः, सूर्यावर्तनाशनैश्च भेषजैः ॥ ८४-८७ ॥

नस्तःकर्म च कुर्वीत शिरोरोगेषु शास्त्रवित् ।
द्वारं हि शिरसो नासा तेन तद् व्याप्य हन्ति तान् ८८

नस्तःकर्म चेति सर्वशिरोरोगसाधारणं चिकित्सितम् । शिरोरोगेषु नस्तःकर्मकरणे हेतुमाह—द्वारं हीत्यादि । तेन नासारूपेण मार्गेण । तदिति नस्तो दत्तमौषधम् । व्याप्येति शिरो व्याप्य । तानिति शिरोगदान् ॥ ८८ ॥

नावनं चावपीडश्च ध्मापनं धूम एव च ।
प्रतिमर्शश्च विज्ञेयं नस्तःकर्म तु पञ्चधा ॥ ८९ ॥

स्नेहनं शोधनं चैव द्विविधं नावनं स्मृतम् ।
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ॥९०॥
चूर्णस्याध्मापनं तद्धि देहस्रोतोविशोधनम्² ।
विज्ञेयस्त्रिविधो धूमः प्रागुक्तः शमनादिकः ॥ ९१ ॥
प्रतिमर्शो भवेत् स्नेहो निर्दोष उभयार्थकृत् ।
एवं तद्रेचनं कर्म तर्पणं शमनं त्रिधा ॥ ९२ ॥

शिरोरोगप्रस्तावागतानवश्यवक्तव्यनस्तःकर्मभेदानाह—नावनमित्यादि । नावनादयश्चिकित्सास्थानोक्ताः । अत्र सुश्रुते धूमं वर्जयित्वा पञ्चविधं नस्तःकर्मोक्तं—"तद्द्विविधमपि पञ्चविधविकल्पं; तद्यथा—नस्यं, शिरोविरेचनं, प्रतिमर्शः, अवपीडः, प्रधमनं च" ( चि. अ. ४० )। इति; इह तु नावनशब्देनैव शिरोविरेचनमपि गृहीतं; यदुक्तं—"स्नेहनं शोधनं चैव नावनं द्विविधं स्मृतम्" इति; तेन सुश्रुतोक्तोऽप्यर्थो गृहीत एव । शोधनः स्तम्भनश्च स्यादवपीड इत्यत्र संशमनमप्यवपीडस्य कर्मेच्छन्ति, तच्च स्तम्भने एवान्तर्भावनीयम् । अवपीड्य यत्र कल्कादीनि दीयन्ते इत्यवपीडः; अनेन शिरोविरेचनार्थं दीयमानसैन्धवपिप्पल्यादिकल्कस्याप्यवरोधः । ध्मापनं तद्धि देहस्रोतोविशोधनमिति वचनाद् ध्मापनं शिरोविरेचनप्रयोजनकमेवेति दर्शयति । शमनादिक इत्यत्र शमनशब्देन प्रायोगिकं गृह्णाति, तेन प्रायोगिकस्नैहिकवैरेचनिकधूमानां नासादीयमानानामिह ग्रहणं, मुखपेयस्तु धूमो न नस्यम् । उभयार्थकृदिति स्नेहनविरेचनार्थकृत् । प्रतिमर्शलक्षणमग्रे "नस्तः स्नेहाङ्गुलिं दद्यात्" इत्यादिना वक्ष्यमाणम् । उक्तपञ्चविधनस्तःकर्मणस्त्रैविध्यमाह—एवमित्यादि । कर्मेति नस्तःकर्म । शमनेन स्तम्भनस्यापि ग्रहणं; तर्पणे स्नेहनस्यावरोधः; अन्ये ये केचित् प्रभेदास्तन्त्रान्तरे प्रतिपादितास्तेऽप्यत्रैवान्तर्भवन्ति ॥८९-९२॥

स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः ।
शिरोविरेचनं तेषु नस्तःकर्म प्रशस्यते ॥ ९३ ॥
ये च वातात्मका रोगाः शिरःकम्पार्दितादयः ।
शिरसस्तर्पणं तेषु नस्तःकर्म प्रशस्यते³ ॥ ९४ ॥
रक्तपित्तादिरोगेषु शमनं नस्यमिष्यते ।
ध्मापनं धूमपानं च तथा योग्येषु शस्यते ॥ ९५ ॥
( दोषादिकं समीक्ष्यैव भिषक् सम्यक् च कारयेत्⁴ )

विरेचनादिकर्मत्रयस्य विषयमाह—स्तम्भेत्यादि । तर्पणमिति स्नेहेन तर्पणम् । तथा योग्येषु शस्यत इति ध्मापनधूमयोग्येषु शस्यते; तत्र धूमयोग्याः सूत्रस्थाने प्रतिपादिताः, ध्मापनयोग्यास्तु ध्मापनगुणकथने 'देहस्रोतोविशोधनम्' इतिपदेन येऽभिन्यासापस्मारादयः शोधनीयस्रोतस उक्तास्ते ज्ञेयाः ॥ ९३-९५ ॥

---

१ 'तु स्नेहधारणम्' इति पा० । २ 'नावनम्' इति पा० । ३ 'शिरसो मज्जा' इति पा० । ४ अयं पाठो हस्तलिखितपुस्तके न पठ्यते । ५ 'मन्यां पश्चाद्घाटासु' इति पा० । ६ 'नासाक्षिभ्रूशङ्खेष्ववतिष्ठते' इति पा० ।

१ 'च सः' इति पा० । २ 'देहश्लेष्मविशोधनम्' इति पा० । ३ 'प्रचक्षते' इति पा० । ४ 'कारयेत्' इति पा० । ५ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

फलादिभेषजं प्रोक्तं शिरसो यद्विरेचनम् ॥ ९६ ॥
तच्चूर्णं कल्पयेत्तेन पचेत् स्नेहं विरेचनम् ।
यदुक्तं मधुरस्कन्धे भेषजं तेन तर्पणम् ॥ ९७ ॥
साधयित्वा भिषक् स्नेहं नस्तः कुर्याद्विधानवित् ।

शिरोविरेचनचूर्णं विधिं चाह—फलादीत्यादि । फलादिभेषजमिति रोगभिषग्जितीयोक्तं फलपत्रमूलकन्दपुष्पनिर्यासत्वग्भेदात् सप्तविधमुक्तं शिरोविरेचनद्रव्यम् । चूर्णं कल्पयेदिति प्रधमनार्थमवपीडनार्थं च चूर्णं कल्पयेत् । मधुरस्कन्धोऽपि रोगभिषग्जितीय एवोक्तः ॥ ९६ ॥ ९७ ॥—

प्राक्सूर्ये मध्यसूर्ये वा प्राकृतावश्यकस्य च ॥ ९८ ॥
उत्तानस्य शयानस्य शयने स्वास्तृते सुखम् ।
प्रलम्बशिरसः किञ्चित् किञ्चित् पादोन्नतस्य च९९
दद्यान्नासापुटे स्नेहं तर्पणं बुद्धिमान् भिषक् ।
अनवाक्शिरसो नस्यं न शिरः प्रतिपद्यते ॥ १०० ॥
अत्यवाक्शिरसो नस्यं मस्तुलुङ्गेऽवतिष्ठति ।
अत एवंशयानस्य शुद्ध्यर्थं स्वेदयेच्छिरः ॥ १०१ ॥
संस्वेद्य नासामुन्नम्य वामेनाङ्गुष्ठपर्वणा ।
हस्तेन दक्षिणेनाथ कुर्यादुभयतः समम् ॥ १०२ ॥
प्रणाड्या पिचुना वाऽपि नस्तःस्नेहं यथाविधि ।
कृते च स्वेदयेद्भूय आकर्षेच्च पुनः पुनः ॥ १०३ ॥
तं स्नेहं श्लेष्मणा सार्कं तथा स्नेहो न तिष्ठति ।
स्वेदेनोत्क्लेशितः श्लेष्मा नस्तःकर्मण्युपस्थितः॥१०४॥
भूयः स्नेहस्य शैत्येन शिरसि स्त्यायते ततः ।
श्रोत्रमन्यागलाद्येषु विकाराय स कल्पते ॥ १०५ ॥
ततो नस्तःकृते धूमं पिबेत् कफविनाशनम् ।
हितान्नभुङ्निवातोष्णसेवी स्यान्नियतेन्द्रियः ॥ १०६॥
विधिरेषोऽवपीडस्य कार्यः प्रध्मापनस्य तु ।
तत् षडङ्गुलया नाड्या धमेच्चूर्णं मुखेन तु ॥ १०७॥
विरिक्तशिरसं तूर्णं पाययित्वाऽम्बु भोजयेत् ।
लघु त्रिष्वविरुद्धं च निवातस्थमतन्द्रितः ॥ १०८ ॥
विरेकशुद्धो दोषस्य कोपनं यस्य सेवते ।
स दोषो विचरंस्तत्र करोति स्वान् गदान् बहून्१०९
यथास्वं विहितां तेषु क्रियां कुर्याद्विचक्षणः ।
अकालकृतजातानां रोगाणामनुरूपतः ॥ ११० ॥

नस्तःकर्मविधिमाह—प्राक्सूर्ये इत्यादि । ग्रीष्मे प्राक्सूर्ये, शीते तु मध्यसूर्ये इति व्यवस्था । प्राकृतावश्यकस्य चेति प्राकृतावश्यकरणीयमलविसर्गादिकस्य । एवंशयानस्येति किञ्चिदवनतशिरस्कतया शयानस्य । कुर्यादुभयतः सममिति उभयनासापुटेनापि तुल्यं दद्यात् । प्रणाडी नस्यदाननलिका । यथाविधीति प्रमाणादिदोषरहितम् । कृतनस्यस्य धूमपानोपपत्तिवर्णनपूर्वकं धूमपानमाह—स्वेदनेत्यादि । प्रध्मापनस्य चोक्तो विधिस्तथा वक्ष्यमाणश्च 'षडङ्गुलया' इत्यादिना । विरिक्तशिरसमित्यादि सर्वविरेचनसाधारणम् । त्रिष्विति वातादिषु । विरेकशुद्ध इति शिरोविरेकशुद्धः । यस्य दोषस्य कोपनं सेवते इति योज्यम् । अकालकृतजातानां रोगाणामनुरूपत इति अकालकृतशिरोविरेचनजातानां रोगाणामनुरूपतश्चिकित्सां कुर्यादित्यर्थः ॥ ९८–११० ॥

अजीर्णे भोजने भुक्ते तोये पीतेऽथ दुर्दिने ।
प्रतिश्याये नवे स्नाते स्नेहपानेऽनुवासने ॥ १११ ॥
नावनं स्नेहनं रोगान् करोति श्लैष्मिकान् बहून् ।
तत्र श्लेष्महरः सर्वैस्तीक्ष्णोष्णादिर्विधिर्हितः॥११२॥
क्षामे विरेचिते गर्भे व्यायामाभिहते तृषि ।
वातो रूक्षेण नस्येन क्रुद्धः स्वाञ्जनयेद्गदान् ॥ ११३॥
तत्र वातहरः सर्वो विधिः स्नेहनबृंहणः ।
स्वेदादिः, स्याद्घृतं क्षीरं गर्भिण्यास्तु विशेषतः ११४
ज्वरशोकातितप्तानां तिमिरं मद्यपस्य तु ।
रूक्षैः शीताञ्जनैर्लेपैः पुटपाकैश्च साधयेत् ॥ ११५॥

नावनं स्नेहनमिति स्नेहनार्थं नस्यम् । स्वेदादिरिति च्छेदः । घृतं क्षीरमिति गर्भिण्या वातजयार्थं गर्भपुष्टये च । ज्वरेत्यादि । ज्वरादितप्तानां स्नेहनं नावनं तिमिरं कुर्यात्, तथा मद्यपस्य तिमिरं कुर्यात् । अत्र चिकित्सामाह—रूक्षैरित्यादि । शीताञ्जनं स्रोतोञ्जनं वदन्ति; किंवा तिक्तद्रव्यकृतमञ्जनं शीताञ्जनं; यदुक्तं शालाक्ये—"लेखनं रोपणं चैव प्रसादनमथापि च । तिक्तेन रोपणं कार्यं, मधुरेण प्रसादनम् ॥ कट्वम्ललवणाद्यैश्च लेखनं कारयेद्बुधः । शैत्यान्निर्वापयेत्तिक्तो रौक्ष्याद्रोपयति द्रुतम्" इति । रूक्षैरित्यञ्जनादिभिः संबध्यते । लेपः नयनालेपः; पुटपाकः अक्षितर्पणजविकारहरलेखनः शमनो वा ज्ञेयः; पुटपाको हि शालाक्ये स्नेहन-लेखन-प्रसादनभेदात् त्रिविध उक्तः; तद्विधिश्चेहान्याधिकारान्न प्रपञ्चितः ॥ १११–११५ ॥

स्नेहनं शोधनं चैव द्विविधं नावनं मतम् ।
प्रतिमर्शस्तु नस्यार्थं करोति न च दोषवान्॥११६॥
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ।
न चोच्छिङ्घेदरोगाणां प्रतिमर्शः स दार्ढ्यकृत्११७

१ 'सार्धं यथा' इति पा० । २ 'नस्तःकर्मण्युरःस्थितः' इति पा० । ३ 'स्त्यायते पुनः' इति पा० । ४ 'कफविशोधनम्' पा० । ५ 'षडङ्गुल्याऽथवा' पा० । ६ 'ततं' इति पा० ।

१ 'अजीर्णे भुक्तभक्ते च तोयपीतेऽथ दुर्दिने' इति पा० । २ 'स्नाते स्नेहपीतेऽनुवासिते' इति पा० । ३ 'जीर्णे' इति पा० । ४ 'शोधयेत्' इति पा० । ५ 'वदनालेपः' इति पा० । ६ 'नस्यमुच्यते' इति पा० ।

प्रतिमर्शस्य नावनसंपाद्योभयकर्मदर्शनार्थं नावनकर्म प्रागुक्तमनूद्यते—स्नेहनमित्यादि । अन्ये, सर्वनस्तःकर्मणामेवैतत् कर्मद्वयमनूद्यते, तत्र च स्नेहनशमनस्य प्रागुक्तस्यावरोध इति वदन्ति । तस्यार्थमिति स्नेहनं शोधनं च । न च दोषवानिति न व्यापत्तिमान् । प्रतिमर्शविधिमाह—नस्त इत्यादि । स्नेहाङ्गुलिमिति स्नेहपूरितामङ्गुलिम् । सर्वदेति सर्वर्तुषु । दार्ढ्यकृदिति शिरःकपालादिदार्ढ्यकृत् । अयं प्रतिमर्शः स्वल्पस्नेहप्रमाणोऽनुच्छिङ्घनश्च सार्वकालिको ज्ञेयः; यस्तु भूरिस्नेहमात्रो नासौ सार्वकालिकः । यदुक्तम्—"ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते । नस्तो निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः" इति; तथा "प्रतिमर्शं तु न पिबेत् कण्ठास्रावभयाचरः । यावत् स्नेहो व्रजेदास्यं तत्प्रमाणं च तस्य तु" इति ॥ ११६ ॥ ११७ ॥

तत्र श्लोकौ—

**त्रीणि यस्मात् प्रधानानि मर्माण्यमिहतेषु च ।**
**तेषु लिङ्गं चिकित्सां च रोगभेदाश्च सौषधाः ॥११८॥**
**विधिरुत्तरवस्तेश्च नस्तःकर्मविधिस्तथा ।**
**सव्यापद्भेषजं सिद्धौ मर्माख्यायां प्रकीर्तितम् ॥११९॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने त्रिमर्मीयसिद्धिर्नाम नवमोऽध्यायः ॥ ९ ॥**

त्रीणीत्यादिसंग्रहो व्यक्तार्थः ॥ ११८ ॥ ११९ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने त्रिमर्मीयसिद्धिर्नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

**अथातो वस्तिसिद्धिं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

त्रिमर्मीयायां बहुरोगप्रतिपादनाद्बहुरोगहितवस्तिप्रतिपादनार्थं वस्तिसिद्धिरुच्यते । अत्रैव वस्तिशब्देन सिद्धवस्तयो वक्ष्यमाणा अभिप्रेताः ॥ १ ॥ २ ॥

**सिद्धानां वस्तीनां शस्तानां तेषु तेषु रोगेषु ।**
**शृण्वग्निवेश ! गदतः सिद्धिं सिद्धिप्रदां भिषजाम् ३**

सिद्धानामिति प्रसिद्धफलानाम् । तेषु तेष्विति वक्ष्यमाणवातगदादिषु । सिद्धिमिति वस्तिनिष्पादिकां, किंवा वस्त्यभिधायकग्रन्थम् ॥ ३ ॥

**बलदोषकालरोगप्रकृतीः प्रविभज्य योजिताः सम्यक्**
**स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्नियच्छन्ति ॥४॥**

१ 'तान् तान्' इति पा० ।

**कर्मान्यद्वस्तिसमं न विद्यते शीघ्रसुखविशोधित्वात् ।**
**आश्वपतर्पणतर्पणयोगाच्च निरत्ययत्वाच्च ॥ ५ ॥**

वस्तेरितिकर्तव्यतां गुणांश्च प्रतिपादनीयवस्त्यङ्गभूतानाह—बलदोषेत्यादि । अत्र च बलादौ यथाप्रधानमिह गृहीते सर्वपरीक्षावरोधो व्याख्येयः; "परीक्ष्य दोषौषध०" (सि. अ. ३) इत्यादिनोक्तोऽप्ययमर्थः पुनः प्रकरणवशादुच्यते । स्वैः स्वैरौषधवर्गैरिति यथाव्याधिप्रतिपादितैरौषधैः । स्वान् स्वानिति तत्तद्वस्तिविधेयौषधप्रशमनीयान् । आश्वपतर्पणतर्पणयोगादिति अपतर्पणार्थप्रयुक्तो वस्तिरन्यापतर्पणभेषजेभ्यः शीघ्रमपतर्पणं करोति; एवं तर्पणद्रव्ययुक्तोऽपि वस्तिः शीघ्रमितरतर्पणापेक्षया तर्पणं करोति ॥ ४ ॥ ५ ॥

**सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादिभेषजादानात् ।**
**दुःखोद्गारोत्क्लेशाहृद्यत्वकोष्ठरुजा विरेके स्युः ॥ ६॥**
**अविरेच्यौ शिशुवृद्धौ तावप्राप्तप्रहीनधातुबलौ ।**
**आस्थापनमेव तयोः सर्वार्थकृदुत्तमं कर्म ॥ ७ ॥**
**बलवर्णहर्षमार्दवगात्रस्नेहान्नृणां ददात्याशु ।**

वस्त्यपेक्षया शोधनान्तरेण दोषहरणे दोषमाह—सत्यपीत्यादि । कटुकादिभेषजैर्विरेकदानाद्दुःखं चोद्गारश्चोत्क्लेशश्चाहृद्यत्वं च कोष्ठरुजाश्चैते सर्वे भवन्ति; तत्र दुःखं कटुकादिना रसेनोद्वेगादेव भवति; एते दोषा वस्तौ न संभवन्तीति भावः । विरेकशब्देन वमनविरेकावपि ग्राह्यौ; किंवा वमनं वस्तिना सममत्यन्तभिन्नविषयत्वादेव नोदाहृतं, विरेकस्तु पक्वाशयस्थेऽपि दोषे वस्तिविषये भवतीति कृत्वा विरेकमेव प्रति वस्तेः प्राधान्यमिहोच्यते । अविरेकादिविषये वस्तेर्यौगिकतया प्राधान्यमाह—अविरेच्यावित्यादि । तावित्यादौ यथासंख्यं व्याख्येयम्—अप्राप्तधातुरप्राप्तबलश्च बालः, प्रहीणधातुः प्रहीणबलश्च वृद्धः, एवम्भूतत्वाच्चाविरेच्यावेतौ । सर्वार्थकृदिति निरत्ययदोषहरणबृंहणादिकृत् ॥ ६ ॥ ७ ॥—

**अनुवासनं निरूहश्चोत्तरवस्तिश्च स त्रिविधः ॥ ८ ॥**
**शाखावातार्तानां सकुञ्चितस्तब्धभग्नरुग्णानाम् ।**
**विट्सङ्गाध्मानारुचिपरिकर्तिरुगादिषु च शस्तः॥९॥**
**उष्णार्तानां शीताञ्छीतार्तानां तथा सुखोष्णांश्च ।**
**तद्योग्यौषधयुक्तान् वस्तीन् संतर्क्य विनियुञ्ज्यात् १०**

वस्तेर्भेदानाह—अनुवासनमित्यादि । तद्योग्यौषधयुक्तानिति उष्णार्तिहरेण शीतार्तिहरेण वा औषधेन कल्पितान् ॥८–१०॥

**वस्तीन् बृंहणीयान् दद्याद् व्याधिषु विशोधनीयेषु ।**
**मेदस्विनो विशोध्या येऽपि नराः कुष्ठमेहार्ताः॥११॥**
**न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कदेहानाम् ।**
**युञ्ज्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥ १२॥**

१ 'समीक्ष्य' इति पा० । २ '०स्तब्धभग्नसन्धीनाम्' इति पा० ।
३ 'सर्वत्र' इति पा० । ४ 'व्याधिषु युञ्ज्याद्विशोधनीयेषु' इति पा० ।

विशोधनीयान् व्याधीनुदाहरति—मेदस्विन इत्यादि । विशोध्या येऽपीति भूरिदोषत्वेन ये शोधनार्हा इत्यर्थः । दोषनिबद्धायुष इति दोषे मलादिरूपे देहस्थे निबद्धमायुर्येषां शोष्यतिदुर्बलप्रभृतीनां ते तथा; उक्तं हि—"शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि । अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते" ( चि. अ. ८ ) इति ॥ ११ ॥ १२ ॥

**वाजीकरणेऽसृक्पित्तयोश्च मधुघृतपयोयुक्ताः ।**
**शस्ताः सतैलमूत्रारनाललवणाश्च कफवाते ॥ १३ ॥**
**युञ्ज्याद्द्रव्याणि वस्तिष्वम्लं मूत्रं पयः सुरां क्वाथान् ।**
**अविरोधाद्धातूनां रसयोनित्वाच्च जलमुष्णम् ॥१४॥**

कार्यविशेषापेक्षया वस्तीनां संस्कारविशेषानाह—वाजीकरणे इत्यादि । मधुप्रक्षेपो वस्तौ पूर्वोक्तसामान्यविधानलब्धोऽप्यधिकमात्रया प्रक्षेपार्थमवश्यप्रक्षेपार्थं चेहोच्यते । अविरोधाद्धातूनामिति पूर्वेण संबध्यते, तेन यस्मिन् संस्कारे अम्लादिषु मध्ये यद्धातुविरोधि न भवति तद्देयं, यत्तु धातुविरोधि भवति न तद्देयं; व्याधितप्रकृत्यविरुद्धं यद् यस्य भवति तत् तस्य देयमित्यर्थः । रसयोनित्वाच्च जलमुष्णमिति जलं यस्माद्रसयोनिः, तेन तदुष्णं सत् सर्वबस्तिगतरसस्य पोषणार्थं सर्वबस्तिषु देयम्; एतच्च जलं बस्तिषु साक्षात् प्रक्षेपादर्शनात् कल्कादिपेषणे विनियोज्यं; किंवा अत्र तद्वचनप्रामाण्यादेव ज्ञेयं; किंवा जलशब्दोऽयं द्रवोपलक्षणः, तेनाम्लादिद्रवदानस्यैवेयमुपपत्तिः । रसयोनित्वं द्रवसंबन्धादेवाम्लादीनामुपपन्नम् । अन्ये तु जलमुष्णं प्रतिनियतमेव, चूर्णबस्तावेवेच्छन्ति, चूर्णबस्तिश्च यः केवलद्रवेण दीयते; तन्त्रान्तरेऽप्युक्तं यथा—"रास्नावचाविल्वशताह्वयैलापूतीककृष्णाफलदारुकुष्ठैः । ससैन्धवाम्लोष्णजलः सतैलः शूलघ्न इष्टः खलु चूर्णबस्तिः" इति ॥१३॥१४॥

**सुरदारुशताह्वैलाकुष्ठमधुकपिप्पलीमधुस्नेहाः ।**
**ऊर्ध्वानुलोमभागाः ससर्षपाः शर्करा लवणम् ॥१५॥**
**आवापा वस्तीनामतः प्रयोज्यानि येषु यानि स्युः ।**
**युक्तानि सह कषायैस्तान्युत्तरतः प्रवक्ष्यामि ॥१६॥**

**चिरजातकठिनबलेषु**
**व्याधिषु तीक्ष्णा विपर्यये मृदवः ।**
**सप्रतिवापकषाया**
**योज्यास्त्वनुवासननिरूहाः ॥ १७ ॥**

सुरदार्वित्यादिना बस्तिषु दोषाद्यपेक्षया व्यस्तसमस्तविधया प्रक्षेप्यानाह । आवापा वस्तीनामिति बस्तिष्वावाप्या इत्यर्थः । यानीति कषाययुक्तानि । चिरजातकठिनबलेषु तीक्ष्णा इति अत्रोक्ततीक्ष्णद्रव्ययोगेन तीक्ष्णाः । विपर्यये चेति अचिरजाते अकठिनबले च । अनुवासननिरूहा इति अनुवासने कषाययोगः स्नेहसाधनार्थमेव, आवापस्त्वनुवासनेऽपि शताह्वादीनां कर्तव्य एव; यदुक्तमन्यत्र—"पिप्पलीं मदनं कुष्ठं शताह्वां मधुकं वचाम् । योजयेन्मात्रया पिष्ट्वा आवापमनुवासने" इति ॥ १५-१७ ॥

**अर्धश्लोकैरतः सिद्धान् नानाव्याधिषु संवेशः ।**
**वस्तीन् वीर्यसमैर्भागैर्यथार्हालोडनाञ्छृणु ॥ १८ ॥**
**बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलिस्तथा ।**
**शालपर्णी पृश्निपर्णी बृहत्यौ वर्धमानकः ॥ १९ ॥**
**यवाः कुलत्थाः कोलानि स्थिरा चेति त्रयोऽनिले ।**
**शस्यन्ते सचतुःस्नेहाः पिशितस्य रसान्विताः ॥२०॥**
**नलवञ्जुलवानीरशतपत्राणि शैवलम् ।**
**मञ्जिष्ठा सारिवाऽनन्ता पयस्या मधुयष्टिका ॥ २१ ॥**
**चन्दनं पद्मकोशीरं तुङ्गं ते पैत्तिके त्रयः ।**
**सशर्कराक्षौद्रघृताः सक्षीरा वस्तयो हिताः ॥ २२ ॥**
**अर्कस्तथैव चालर्क एकाष्ठीला पुनर्नवा ।**
**हरिद्रा त्रिफला मुस्तं पीतदारु कुटन्नटम् ॥ २३ ॥**
**पिप्पल्यश्चित्रकश्चेति त्रयस्ते श्लेष्मरोगिषु ।**
**सक्षारक्षौद्रगोमूत्रा नातिस्नेहान्विता हिताः ॥२४॥**

पूर्वं सिद्धानां बस्तीनामित्यादिना प्रतिज्ञातार्थान् बस्तीनाह—अर्धश्लोकैरित्यादि । व्याधिष्वित्यत्र व्याधिशब्दो दोषेऽपि वर्तनीयः । बहुश इति एकैकस्मिन् व्याधौ दोषे च बहुश इत्यर्थः । वीर्यसमैर्भागैरिति अन्योन्यानुपहतसामर्थ्यैर्द्रव्यभागैः । वर्धमानक एरण्डः । पिशितस्य रसान्विता इति प्रक्षिप्तमांसरसाः । वञ्जुलः वेतसः, वानीरः तद्भेदः । तुङ्गः पुन्नागः । अलर्कः मन्दारः । एकाष्ठीला पाठा । कुटन्नटं कैवर्तमुस्तकम्, अन्ये तगरमाहुः ॥ १८-२४ ॥

**फलजीमूतकेक्ष्वाकुधामार्गववकवत्सकाः ।**
**श्यामा च त्रिफला चैव स्थिरा दन्ती द्रवन्त्यपि २५**
**प्रकीर्या चोदकीर्या च नीलिनी क्षीरिणी तथा ।**
**ससला शङ्खिनी लोध्रं फलं कम्पिल्लकस्य च ॥२६॥**
**चत्वारो मूत्रसिद्धास्ते पक्वाशयविशोधनाः ।**
**(व्यस्तैरपि समस्तैश्च चतुर्योगा उदाहृताः ॥ २७ ॥)**

क्ष्वेडः कृतवेधनः । द्रवन्ती दन्तीभेदः । प्रकीर्या करञ्जः । नीलिनी नीलबुह्वा, 'नीलाञ्जनिका' इत्यन्ये ॥ २५-२७ ॥

१ 'अबलापेक्षिकां मात्रां' इति पा० । २ '°लवणाः कफावृते वाते' इति पा० । ३ 'अम्लादिषु मध्ये' इति पा० । ४ 'आवापे वस्तीनामतः प्रयोज्यानि तेषु तानि स्युः' इति पा० ।

१ 'वर्गशः' इति पा० । २ 'कफरोगिणाम्' इति पा० । ३ 'धामार्गक्ष्वेडवत्सकाः' इति पा० । ४ 'त्रिवृता' इति पा० । ५ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते ।

काकोली क्षीरकाकोली मुद्गपर्णी शतावरी ।
विदारी मधुयष्ट्याह्वा शृङ्गाटककशेरुके ॥ २८ ॥
आत्मगुप्ताफलं माषाः सगोधूमा यवास्तथा ।
जलजानूपजं मांसमित्येते शुक्रमांसलाः ॥ २९ ॥

एते शुक्रमांसला इत्यत्र एते इति चत्वारः पूर्वोक्ताः ॥ २८ ॥ २९ ॥

जीवन्ती चाग्निमन्थश्च धातकीपुष्पवत्सकौ ।
प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः ॥३०॥
प्रियङ्गू रक्तमूली च तरुणी स्वर्णयूथिका ।
वटाद्याः किंशुकं लोध्रमिति सांग्राहिका मताः ३१

पिण्डीतकः मदनः। रक्तमूली समङ्गा । तरुणी आरामतरुणी, नवमालिका वा ॥ ३० ॥ ३१ ॥

परिस्रावे शृतं क्षीरं सवृश्चीरपुनर्नवम् ।
आखुपर्णिकया वाऽपि तण्डुलीयकयुक्तया ॥ ३२ ॥

तण्डुलीयकयुक्तयेत्यन्तेन परिस्रावे द्वावुक्तौ ॥ ३२ ॥

कालङ्कतककाण्डेक्षुदर्भपोटगलेक्षुभिः ।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः ॥ ३३ ॥

काण्डेक्षुः बृहदिक्षुः; पोटगलः होग्गलः । उत्पलादिभिरिति उत्पलादयो नलिनसौगन्धिकादयो जलजाः पुष्पविशेषाः ॥३३॥

कर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः ।
वस्तिः प्रदेयो भिषजा शीतः समधुशर्करः ॥ ३४ ॥
परिकर्तें तथा वृन्तैः श्रीपर्णीकोविदारजैः ।
( देयो वस्तिः सुवैद्यैस्तु यथावद्विदितक्रियैः ॥३५॥ )

कर्बुदारः काञ्चनारः, विदुलो वेतसः । कोविदारजैरित्यन्तेन द्वितीयः परिकर्ते ॥ ३४ ॥ ३५ ॥

वस्तिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः ।
हितः प्रवाहणे तद्वद्वेष्टैः शाल्मलिकस्य च ॥ ३६ ॥

वेष्टैः शाल्मलिकस्य चेत्यन्तेन द्वितीयः प्रवाहणे ॥ ३६ ॥

अश्वावरोहिकाकाकनासाराजकशेरुकैः ।
सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः ३७
न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिना परः ।

अश्वावरोहिका अश्वगन्धा, अश्वकर्णः, इक्षुरको वा; जतू कर्णदर्शनात्तु अश्वावरोहकः अश्वकर्णः । न्यग्रोधाद्याश्चत्वारः न्यग्रोधोदुम्बराश्वत्थप्लक्षाः । तेनैव विधिनेति पूर्वयोगविधिना । एतौ द्वावतियोगे ॥ ३७ ॥—

बृहती क्षीरकाकोली पृश्निपर्णी शतावरी ॥ ३८ ॥
काश्मर्यबदरीदूर्वास्तथोशीरप्रियङ्गवः ।
जीवादाने शृतौ क्षीरे द्वौ घृताञ्जनसंयुतौ ॥ ३९ ॥
वस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ।
गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैस्तथा ॥ ४० ॥
शशैणदक्षमार्जारमहिषाव्यजशोणितैः ।
सद्यस्कैर्मृदितैर्वस्तिर्जीवादाने प्रशस्यते ॥ ४१ ॥
मधूकमधुकद्राक्षादूर्वाकाश्मर्यचन्दनैः ।
तेनैव विधिना वस्तिर्देयः सक्षौद्रशर्करः ॥ ४२ ॥

जीवादाने इति जीवशोणितप्रवृत्तौ । गोऽव्यजेत्यादिना जीवादाने प्रशस्यते इत्यन्तेन जीवादाने तृतीयो वस्तिरुच्यते । अयं च यद्यपि श्लोकार्धाविहितो वस्तिः, तथाऽपि श्लोकार्धैरिति प्रतिज्ञा भूरिप्रयोगाणां श्लोकार्धविहितत्वेन ज्ञेया; किंवा अत्रापि गोऽव्यजेत्यादिनाऽर्धश्लोकविहित एव व्यवस्थितः; पूर्वार्धेन तु तस्येतिकर्तव्यतोच्यते; इतिकर्तव्यताभिधानं च श्लोकार्धादतिरेकेणापि भवतीति योगान्तरेष्वपि दृष्टम् ॥ ३८–४२ ॥

मञ्जिष्ठासारिवानन्तापयस्यामधुकैस्तथा ।
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ।
रक्तपित्ते, प्रमेहे तु कषायः सोमवल्कजः ॥ ४३ ॥

रक्तपित्ते इति च्छेदः । एतौ द्वौ मिलित्वा संग्रहे पठितौ 'द्वौ रक्तपित्ते' इत्यनेन । सोमवल्कः विट्खदिरः ॥ ४३ ॥

गुल्मातिसारोदावर्तस्तम्भसङ्कुचितादिषु ।
सर्वाङ्गैकाङ्गरोगेषु रोगेष्वेवंविधेषु च ॥ ४४ ॥
यथास्वैरौषधैः सिद्धान् वस्तीन् दद्याद्विचक्षणः ।
पूर्वोक्तेन विधानेन कुर्वन् योगान् पृथग्विधान् ॥४५॥

अनुक्तवस्तिकल्पनार्थमाह—गुल्मातिसारेत्यादि । यथास्वैरौषधैरिति यथास्वव्याधिप्रत्यनीकैर्भेषजैः । कुर्याद्योगान् पृथग्विधानिति यथोक्तविधिना द्रव्यावापादिना योगान् यथोचितान् गुल्मादिकल्पनीयान् वस्तिषु कुर्यात् ॥ ४४ ॥ ४५ ॥

तत्र श्लोकाः—

त्रिकास्त्रयोऽनिलादीनां चतुष्काश्चापरे त्रयः ।
पक्वाशयविशुद्ध्यर्थं वृष्याः सांग्राहिकास्तथा ॥ ४६ ॥
परिस्रावे तथा दाहे परिकर्ते प्रवाहणे ।
सातियोगे मतौ द्वौ द्वौ जीवादाने तथा त्रयः ॥४७॥
द्वौ रक्तपित्ते मेहे च एकत्रिंशच्च सप्त ते ।
सुलभाल्पौषधक्लेशा वस्तयो गुणवत्तमाः ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने वस्तिसिद्धिर्नाम दशमोऽध्यायः ॥ १० ॥

१ 'पृष्ठपर्णी' इति पा० । २ 'जाङ्गलानूपजं' इति पा० । ३ 'मांसमिति शुक्रविवर्धनाः' इति पा० । ४ 'पयः शृतं परिस्रावे' इति पा० । ५ '°दर्भपोटेक्षुवालिभिः' इति पा० । ६ अयमर्धश्लोको हस्तलिखितपुस्तके न पठ्यते । ७ 'सुष्टिः' इति पा० ।

त्रिकाश्रय इत्यादिः संग्रहो व्यक्त एव । अल्पौषधक्लेशा इति अल्पौषधा अल्पक्लेशाश्च ॥ ४६-४८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां चरकतात्पर्यटीकाया-मायुर्वेददीपिकायां सिद्धिस्थाने वस्तिसिद्धिर्नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथातः फलमात्रासिद्धिं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

पूर्वसिद्धिषु फलान्याचार्येण प्रयोगेषु विहितानि, तेन तेषां फलानां गुणावधारणार्थं तथाऽनुक्तगजादिवस्तिमानोपदर्शनार्थं च फलमात्रासिद्धिरुच्यते । गजादिवस्तिविधानकथनं यद्यप्य-प्रस्तुतं, तथाऽपि गजादिष्वपि यौगिकतया वस्तेरेव प्रतिपाद्यते मात्राऽत्र; तेन फलादीनां तथा गजादिवस्तिमात्रायाश्च प्रति-पादिका सिद्धिः फलमात्रासिद्धिः ॥ १ ॥ २ ॥

भगवन्तमुदारसत्त्वधी-
श्रुतिविज्ञानसमृद्धमत्रिजम् ।
फलवस्तिवरत्वनिश्चये
सविवादा मुनयोऽभ्युपागमन् ॥ ३ ॥
भृगुकौशिककाप्यशौनकाः
सपुलस्त्यासितगौतमादयः ।
कतमत् प्रवरं फलादिषु
स्मृतमास्थापनयोजनास्विति ॥ ४ ॥
कफपित्तहरं वरं फले-
ष्वथ जीमूतकमाह शौनकः ।
मृदुवीर्यतयाऽभिनत्ति तच्छ-
कृदित्याह नृपोऽथ वामकः ॥ ५ ॥
कटुतुम्बममन्यतोत्तमं
वमने दोषसमीरणं च तत् ।
तद्वृष्यमशैत्यतीक्ष्णता-
कटुरौक्ष्यादिति गौतमोऽब्रवीत् ॥ ६ ॥
कफपित्तनिबर्हणं परं
स च धामार्गवमित्यमन्यत ।
तदमन्यत वातलं पुन-
र्वडिशो ग्लानिकरं बलापहम् ॥ ७ ॥
कुटजं प्रशशंस चोत्तमं
न बलघ्नं कफपित्तहारि च ।
अतिविज्जलमौर्ध्वभागिकं
पवनक्षोभि च काप्य आह तत् ॥ ८ ॥
कृतवेधनमाह वातलं
कफपित्ते प्रबलं हरेदिति ।
तदसाध्विति भद्रशौनकः
कटुकं चातिबलघ्नमित्यपि ॥ ९ ॥
इति तद्वचनानि हेतुभिः
सुविचित्राणि निशम्य बुद्धिमान् ।
प्रशशंस फलेषु निश्चयं
परमं चात्रिसुतोऽब्रवीदिदम् ॥ १० ॥
फलदोषगुणान् सरस्वती
प्रति सर्वैरपि सम्यगीरिता ।
न तु किंचिददोषनिर्गुणं
गुणभूयस्त्वमतो विचिन्त्यते ॥ ११ ॥
इह कुष्ठहिता गरागरी
हितमिक्ष्वाकु तु मेहिने मतम् ।
कुटजस्य फलं हृदामये
प्रवरं कोठफलं च पाण्डुषु ॥ १२ ॥
उदरे कृतवेधनं हितं,
मदनं सर्वगदाविरोधि तु ।
मधुरं सकषायतिक्तकं
तदरूक्षं सकटूष्णविज्जलम् ॥ १३ ॥
कफपित्तहृदाशुकारि चा-
प्यनपायं पवनानुलोमि च ।
फलनाम विशेषतस्त्वतो
लभतेऽन्येषु फलेषु सत्स्वपि ॥ १४ ॥

फलादीनां वस्तियोगेषु गुणान् प्रतिपादयितुं पूर्ववृत्तमितिहा-समाह—भगवन्तमित्यादि । इतिहासश्च संहिताधर्मतया ग्रन्थे पूज्यतोपदर्शनार्थं च क्रियत एव । फलादीनां वस्तौ वरत्वं फल-वस्तिवरत्वं, तस्य निश्चये अवधारणे । फलादिष्विति मदनजी-मूतकादिषु । कल्पे जीमूतके यद्यपि पित्तदोषहरत्वमुक्तं, तथाऽ-पीह वचनात् कफपित्तहरत्वमस्य प्राधान्यादुच्यते । मृदुवीर्य-तयाऽभिनत्तीति नात्यर्थं भिनत्ति । दोषसमीरणमिति वस्तिना दोषहारकम् । कृतवेधनमित्यादौ आशु कफपित्तं हरेदिति योज्यम् । इहर्षिविवादकथनेन जीमूतकादीनां गुणदोषाश्च कथिता भवन्तीति तात्पर्यं ज्ञेयम् । प्रशशंसेत्यादि । फलेषु जीमूतकादिषु । फलदोषगुणान् प्रतीति लक्ष्यीकृत्य । सरस्वतीति वाक् । अदोषनिर्गुणमिति दोषवदेव गुणवदेव वा न किंचिदि-त्यर्थः । तेन सत्यपि स्तोकदोषसंबन्धे यद्गुणभूयिष्ठं तदिह रोग-प्रशमप्रयोगेषु सार्वयौगिकम् । सर्वगदाविरोधीति पदेन मद-नस्य सार्वयौगिकत्वं ब्रूते । आशुकारीति आशुदोषनिर्हरण-कारि । अतो लभत इति फलेषु प्रकर्षत्वादेव मदनफलं फल-मित्युच्यते, न जीमूतकादिफलम् ॥ ३-१४ ॥

---

१ 'महिमाऽत्र' इति पा० । २ 'तदयोग्य°' इति पा० । ३ 'धा-मार्गवमेष्वमन्यत' इति, 'धामार्गवमेव मन्यते' इति च पा० ।

१ 'तुष्टिमान्' इति पा० । २ 'हि विन्त्यते' इति पा० । ३ 'जीमूतकस्य' इति पा० ।

गुरुणेति वचस्युदाहृते
मुनिसङ्घेन च पूजिते तंतः[1]।
प्रणिपत्य मुदा समन्वितः
सहितः शिष्यगणोऽनुपृष्टवान् ॥ १५ ॥
सर्वकर्मगुणकृद्गुरुणोको
वस्तिरूर्ध्वमथ नैति नाभितः।
नाभ्यधो गुदमतः स शरीरात्
सर्वतः कथमपोहति दोषान्[2] ॥ १६ ॥
तद्गुरुरब्रवीदिदं शरीरं
तन्त्रयतेऽनिलः सङ्गविघा[3]तात्।
केवल एव दोषसहितो वा
स्वाशयगः प्रकोपमुपयाति ॥ १७ ॥
तं पवनं सपित्तकफविड्कं
शुद्धिकरोऽनुलोमयति वस्तिः।
सर्वशरीरगश्च गदसंघ-
स्तत्प्रशमात् प्रशान्तिमुपयाति ॥ १८ ॥

सर्वकर्मगुणकृदिति सर्वकर्मणां वमनादीनां गुणं दोषहरणादिकं करोतीति सर्वकर्मगुणकृत्; किंवा सर्वकर्माणि लङ्घनबृंहणादीनि, गुणांश्च बलाग्न्यादीन् करोति। नाभ्यधो गुदमिति व्रजति। तन्त्रयते धारयते। विघातादिति प्रकोपकहेतुनाऽसंबन्धात् (?)। स्वाशयगः स्वाशय एव प्रायः प्रकोपं व्रजति; यस्तु प्रदेशान्तरे वातप्रकोपः स तन्मूल एवेति भावः। तत्प्रशमात् प्रशान्तिमुपयाति पक्वाशयस्थवातमूलप्रशमाद्वस्तिना कृतात्तन्मूलानुबन्धाः शे[4]षस्थानगतविकाराः प्रशाम्यन्ति। एतच्च 'वनस्पतिमूलच्छेदवत्' इत्यादिदृष्टान्तेन प्राक् प्रतिपादितमेव। एतेन बस्तिना मूलविजयाद्देशान्तर्गततन्मूलविकारजयो यः क्रियते स उक्तः। यत्तु वस्तेर्वीर्यमापादमस्तकं प्रसरति तच्च वीर्यं सर्वविकारान् हन्तीति प्रागुक्तमेव ज्ञेयम्। इह तु, वीर्यमपिहितं कृत्वैव शिष्यप्रश्नानुगुणमेवोत्तरं दत्तमिति ज्ञेयम् ॥ १५–१८ ॥

अ[5]र्थाधिगम्यार्थमखण्डितं धिया
ग[6]जोष्ट्रगोश्वाव्यजकर्म रोगनुत्।
अपृच्छदेनं स च वस्तिमब्रवी-
द्विधिं च तस्याह पुनः प्रचोदितः ॥ १९ ॥
आजोरणौ सौम्य गजोष्ट्रयोः कृते
गवाश्वयोर्वस्तिमुशन्ति माहिषम्।
अजाविकानां तु जरद्गवोद्भवं
वदन्ति वस्तिं तदुपायचिन्तकाः ॥ २० ॥

अरत्निमध्यादशषोडशाङ्गुलं
तथैव नेत्रं हि दशाङ्गुलं[1] क्रमात्।
गजोष्ट्रगोश्वाव्यजवस्तिसंधौ
चतुर्थभागोपनयं हितं वदेत्[2] ॥ २१ ॥
प्र[3]स्थस्त्वजाव्योर्हि निरूहमात्रा
गवादिषु द्वित्रिगुणं यथाबलम्।
निरूहमुष्ट्रस्य तथाऽऽढकद्वयं
गजस्य वृद्धिस्त्वनुवासनेऽष्टमः ॥ २२ ॥

अथाभिगम्येत्यादौ गजादीनां कर्मापृच्छदिति योज्यम्। रोगनुदिति कर्मविशेषणं, तेन कर्म रोगनुदिति रोगहरणे श्रेष्ठं चिकित्सितमित्यर्थः। वस्तिमब्रवीदिति गजादीनां रोगहरणे श्रेष्ठं बस्तिमेवाब्रवीत्; तदनन्तरं तस्य वस्तेर्विधिः पुनः शिष्येण पृष्ट आजोरणेत्यादिना प्राहेति योजना। उरणः मेषः। बस्तिमिति पुटकम्। जरद्गवः वृद्धवृषः। तदुपायचिन्तका इति गजादिवस्तिसाधने दत्तचित्तकाः। अरत्निः हस्तः। क्रमादिति यथाक्रमं गजादिषु अरत्न्यादि नेत्रप्रमाणम्। चतुर्थभागोपनयमिति नेत्रचतुर्थभागप्रवेशकम्। गवादिष्विति गोप्रकारेषु; गोमहिषाश्वानां ग्रहणाद्बहुवचनं साधु। गजस्य तु वृद्धिरिति द्व्याढकद्वैगुण्येन द्रोण इत्यर्थः। अनुवासनेऽष्टममिति यथोक्ताजादिनिरूहमानादजादीनामनुवासनेऽष्टमः स्नेहभागो देयः ॥ १९–२२ ॥

कलिङ्गकुष्ठे मधुकं च पिप्पली
वचा शताह्वा मदनं रसाञ्जनम्।
हितानि सर्वेषु गुडः ससैन्धवो
द्विपञ्चमूलं च विकल्पना त्वियम् ॥ २३ ॥
गजेऽधिकाऽश्वत्थवटाश्वकर्णकाः
सखादिरप्रग्रहशालतालजाः।
तथा च पर्ण्यौ धवशिग्रुपाटली-
मधूकसाराः सनिकुम्भचित्रकाः ॥ २४ ॥
पलाशभूतीकसुराह्वरोहिणी-
कषाय उक्तस्त्वधिको गवां हितः।
पलाशदन्तीसुरदारुकत्तृण-
द्रवन्त्य उक्तास्तुरगस्य चाधिकाः ॥ २५ ॥
खरोष्ट्रयोः पीलुकरीरखादिराः
शै[4]म्याकविल्वादिगणस्य च च्छदाः।
अजाविकानां त्रिफलापरूषकं
कपित्थकर्कन्धु सविल्वकोलजम् ॥ २६ ॥

विकल्पना त्वियमिति विशेषकल्पना गजेऽधिका वक्ष्यमाणा। तालजं तालफलम्। तथैवेत्यादिना गवां हितमुच्यते ॥ २३–२६ ॥

---

१ 'तथा' इति पा०। २ 'रोगान्' इति पा०। ३ 'सर्वविधात्वात्' इति पा०। ४ 'शेषविकाराः' इति पा०। ५ 'अथाभिगम्यार्थमखण्डिकाभिधो' इति, 'अथाभिगम्याजमुण्डिकाधिपो' इति च पा०। ६ 'गजोष्ट्रगोश्वाव्यजवस्तिकर्म' इति पा०।

१ 'सदशाङ्गुलं' इति पा०। २ 'चतुर्थभागे कृतकर्णिकं वदेत्' इति पा०। ३ 'अजाविषु प्रस्थमितं निरूहणे खरादिषु द्वित्रिगुणं गवाश्वयोः। निरूह उष्ट्रस्य भवेद्द्विराढको गजस्य तु द्विर्द्रोणोऽनुवासनेऽष्टमः' इति; 'अजाविषु प्रस्थमुशन्ति तद्विदः' इति च पा०। ४ 'शमीश्च विल्वादिगणस्य' इति पा०।

अथाग्निवेशः सततातुरान् नरान्
हितं च पप्रच्छ गुरुस्तदाह च ।
सदाऽऽतुराः श्रोत्रियराजसेवका-
स्तथैव वेश्या सह पण्यजीविभिः ॥ २७ ॥

अथ बस्तिविषयान् सदातुरान् दर्शयन्नाह—अथाग्निवेश इत्यादि । हितं चेति सदातुराणां हितम् । पण्यजीविनः वणिजः ॥ २७ ॥

द्विजो हि वेदाध्ययनव्रताह्निक-
क्रियादिभिर्देहहितं न चेष्टते ।
नृपोपसेवी नृपचित्तरक्षणात्
परानुरोधाद्बहुचिन्तनाद्भयात् ॥ २८ ॥
नृचित्तवर्तिन्युपचारतत्परा
मृजाभि(वि)भूषानिरता पणाङ्गना ।
सदासनादत्यनुबन्धविक्रय-
क्रयादिलोभादपि पण्यजीविनः ॥ २९ ॥
सदैव ते ह्यागतवेगनिग्रहं
समाचरन्ते न च कालभोजनम् ।
अकालनिर्हारविहारसेविनो
भवन्ति येऽन्येऽपि सदाऽऽतुराश्च ते ॥३०॥

यथोक्तानां सदातुरत्वे हेतुमाह—द्विजो हीत्यादि । देहहितं न चेष्टते इति पण्यजीविन इत्यन्तं यावदनुवर्तनीयम् । परानुरोधादिति नृपानुजीविपुरुषान्तरानुरोधात् । उपचारतत्परेति पुरुषोपचारतत्परा । मृजा शरीरमार्जनम् । पणाङ्गना वेश्येत्यर्थः । अत्यनुबन्धविक्रयक्रयादिलोभादिति निरन्तरानुबद्धक्रयविक्रयादेर्लोभात् । अन्यानपि सदातुरानाह—अकालेत्यादि । निर्हारः मलादिनिर्गमः ॥ २८–३० ॥

समीरणं वेगविधारणोद्धतं
विबन्धसर्वाङ्गरुजाकरं भिषक् ।
समीक्ष्य तेषां फलवर्तिमादितः
सुकल्पितां स्नेहवतीं प्रयोजयेत् ॥ ३१ ॥
पुनर्नवैरण्डनिकुम्भचित्रकान्
सदेवदारुत्रिवृतानिदिग्धिकान् ।
महान्ति मूलानि च पञ्च यानि
विपाच्य मूत्रे दधिमस्तुसंयुते ॥ ३२ ॥
सतैलसर्पिर्लवणैश्च पञ्चभि-
र्विमूर्च्छितं बस्तिमथ प्रयोजयेत् ।
निरूहितं धन्वरसेन भोजितं
निकुम्भतैलेन ततोऽनुवासयेत् ॥ ३३ ॥

बलां सरास्नां फलबिल्वचित्रकान्
द्विपञ्चमूलं कृतमालकात् फलम् ।
यवान् कुलत्थांश्च पचेज्जलाढके
रसः स पेष्यैस्तु कलिङ्गकादिभिः ॥ ३४ ॥
सतैलसर्पिर्गुडसैन्धवो हितः
सदातुराणां बलवर्णवर्धनः ।
तथाऽनुवास्ये मधुकेन साधितं
फलेन बिल्वेन शताह्वयाऽपि वा ॥ ३५ ॥
सजीवनीयस्तु रसोऽनुवासने
निरूहणे चालवणः शिशोर्हितः ।
न चान्यदाश्वङ्गबलाभिवर्धनं
निरूहबस्तेः शिशुवृद्धयोः परम् ॥ ३६ ॥

पुनर्नवेत्यादिर्निरूहः । निकुम्भा दन्ती । महान्ति मूलानि पञ्चेति बिल्वादिपञ्चमूलानि । निकुम्भतैलेनेति निकुम्भक्काथकल्कसिद्धेन तैलेन । बलामित्यादौ कलिङ्गकादिभिरिति "कलिङ्गकुष्ठमधुकबिल्व०" इत्यादिनेहोक्तैः । फलेन बिल्वेन शताह्वयाऽपि वेति तैलत्रयमानुवासनिकम् । सजीवनीयस्तु रसोऽनुवासन इति जीवनीयकषायसाधितः स्नेहोऽनुवासने कर्तव्यः । तथा निरूहणे जीवनीयरसोऽलवणः शिशोः कर्तव्यः । अनुवासनमपि जीवनीयसाधितं शिशोरेव । न चान्यदित्यादिना बालवृद्धयौगिकत्वं बस्तेराह । परमिति श्रेष्ठम् ॥ ३१–३६ ॥

तत्र श्लोकः—
फलकर्म बस्तिवरता नेत्रं यद्बस्तयो गवादीनाम् ।
सततातुराश्च दिष्टाः फलमात्रायां हितं चैषाम् ॥३७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने फलमात्रासिद्धिर्नामैकादशोऽध्यायः ॥ ११ ॥

फलकर्मेत्यादिसंग्रहो व्यक्तः ॥ ३७ ॥

इति श्रीचक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां सिद्धिस्थाने फलमात्रासिद्धिर्नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

अथात उत्तरबस्तिसिद्धिं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

पारिशेष्यादेवोत्तरबस्तिसिद्धिरभिधीयते । उत्तराणां श्रेष्ठानां बस्तीनां सिद्धिरुत्तरबस्तिसिद्धिः ॥ १ ॥ २ ॥

१ 'हितैश्च' इति पा० । २ 'शिष्याध्ययन०' इति पा० । ३ 'सेवते' इति पा० । ४ 'गुरोर्निरोधात्' इति पा० । ५ 'समारभन्ते' इति, 'समाश्रयन्ते' इति च पा० ।

१ 'कृतमालकाद्फलम्' इति, 'कृतमालकोत्पले' इति च पा० । २ 'सतैलसर्पिर्मधुसैन्धवः' इति पा० ।

**अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः ।**
**दुर्बलं कृशमल्पाग्निं मुक्तसंधानबन्धनम् ॥ ३ ॥**
**निर्हृतानिलविण्मूत्रकफपित्तं कृशाशयम् ।**
**शून्यदेहं प्रतीकारासहिष्णुं परिपालयेत् ॥ ४ ॥**
**यथाऽण्डं तरुणं पूर्णं तैलपात्रं यथैव च ।**
**गोपाल इव दण्डी गाः सर्वस्मादपचारतः ॥ ५ ॥**

वक्ष्यमाणवस्तीनां विषयं मिथ्योपचारजनितव्याधिसमूहं दर्शयितुं सम्यगुपचारमेव तावदाह—अथ खल्वित्यादि । वमनादिभिरिति वमनविरेचननिरूहशिरोविरेचनैः; किंतु निरूहशिरोविरेचनयोर्न सर्वं वक्ष्यमाणं पेयादि संबध्यते, तेनायं क्रम एतयोर्न भवति । मुक्तसंधानबन्धनमिति मुक्तसंधिबन्धनम् । कृशाशयमिति दोषशून्यामाशयम् । प्रतीकारासहिष्णुमिति उच्चैर्भाष्यादिक्रियाक्षमं; किंवा वमनादिप्रयोगासहिष्णुम् । परिपालयेत् सर्वस्मादपचारत इति संबन्धः । तरुणाण्डादिदृष्टान्तत्रयाभिधानं कस्यचित् किंचित् प्रसिद्धं भविष्यतीत्यभिप्रायेण ॥ ३-५ ॥

**अग्निसंधुक्षणार्थं तु पूर्वं पेयादिना भिषक् ।**
**रसोत्तरेणोपचरेत् क्रमेण क्रमकोविदः ॥ ६ ॥**
**स्निग्धाम्ललवणस्वादुहृद्यानि ततोऽम्ललवणौ रसौ ।**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ ७ ॥**
**अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।**
**व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् ॥ ८ ॥**

रसोत्तरेणोपचरेदित्यत्र रसः मांसरसरूप उत्तरे यस्मिन् तेन पेयादिना रसोत्तरेण क्रमेण; किंवा वमनविरेचनयोरन्तरे पेयादिना क्रमेणोपचरेत्, निरूहे तु रसोत्तरेणेति व्यवस्था । तत्र च निरूहे स्तोकाग्निमान्द्यापेक्षया रसादिरेव क्रमो भवतीति प्रतिपादितमेव प्राक्; किंवा रसाभ्यासक्रम उत्तरकालं यस्मिन् तेन पेयादिना रसोत्तरेण । रसाभ्यासक्रममेवाह—स्निग्धाम्लस्वादुहृद्यानीत्यादि । पेयाक्रमोत्तरकालं यदा विरेचनादिकर्मान्तरं न कर्तव्यं तदा संशोधनमूलशरीरस्य प्रकृतिभोजनार्थं बलाप्यायनार्थं चायं रसाभ्यासक्रमो ज्ञेयः; अन्ये तु पेयादिक्रमे एव रससंस्कारार्थं स्निग्धाम्लसिद्धादिक्रमं वर्णयन्ति । अत्र चाम्लस्वादु प्रथमं पक्वाशयस्थितवातप्रशमनायोपयुज्येते, तथाऽम्ललवणौ तदूर्ध्वस्थिताग्निसंधुक्षणार्थं, ततः पित्तप्रशमनार्थं स्वादुतिक्तौ, ततः पित्तोर्ध्वस्थितकफप्रशमनार्थं कषायकटुकौ, इत्येष क्रमः । अत्रापि च यौ रसौ प्रत्यनीकभूतौ तावेव मिश्रितावुपयुज्येते । एषां चतुर्णां रसयुग्मानामुपयोगः पेयादिक्रमे एव । एवं द्वादशान्नकालैः सर्वरसभोजनप्राप्तिरुत्तमविधया ज्ञेया । अन्योन्येत्यादि । अन्योन्यप्रत्यनीकानामिति परस्परमभिभावकानाम् । व्यत्यासादुपयोजयेदिति एकं युग्ममुपयुज्यापरस्य युग्मस्योपयोगः । प्रकृतिं गमयेदिति प्रकृतिभोजनं गमयेत् । प्रकारान्तरं रसाभ्यासे प्राह—स्निग्धरूक्षयोरिति ।—स्निग्धरसमुपयुज्य रूक्षो योज्यः, रूक्षं वोपयुज्य स्निग्ध इत्यनेन क्रमेण प्रकृतिभोजनं गमयेदित्यर्थः । स्निग्धरूक्षौ चात्रोदाहरणार्थमुपात्तौ, तेन गुरुलघ्वादियुग्मरसव्यत्यासाभ्यासोऽप्यत्र बोद्धव्यः । किंवा कषायकटुकौ तत इत्यनेन युग्मरसाभ्यास उपदर्शितः, अन्योन्यप्रत्यनीकानामित्यादिना तु प्रत्येकं प्रत्यनीकानामन्योन्यव्यत्यासेनाभ्यास उच्यते ॥ ६-८ ॥

**सर्वक्षमो ह्यसंसर्गो रतियुक्तः स्थिरेन्द्रियः ।**
**बलवान् सत्त्वसंपन्नो विज्ञेयः प्रकृतिं गतः ॥ ९ ॥**

पेयादिक्रमरसाभ्यासाभ्यामुपपादितस्वास्थ्यस्य पुंसो लक्षणमाह—सर्वक्षम इत्यादि । सर्वक्षम इति सर्वरसाभ्यासक्षमः । असंसर्ग इति असक्तवेगः; किंवा 'निरासङ्ग' इति पाठः, निरासङ्गः प्रतिनियतविषयापराहतः सर्वचेष्टाक्षमः ॥ ९ ॥

**एतां प्रकृतिमप्राप्तः सर्ववर्ज्यानि वर्जयेत् ।**
**महादोषकराण्यष्टाविमानि तु विशेषतः ॥ १० ॥**
**उच्चैर्भाष्यं रथक्षोभमविचङ्क्रमणासने ।**
**अजीर्णाहितभोज्ये च दिवास्वप्नं समैथुनम् ॥ ११ ॥**
**तज्जा देहोर्ध्वसर्वाधोमध्यपीडामदोषजाः ।**
**श्लेष्मजाः क्षयजाश्चैव व्याधयः स्युर्यथाक्रमम् ॥ १२ ॥**

तज्जा इत्यादि यथाक्रमं उच्चैर्भाष्यादिजा देहोर्ध्वपीडादयो ज्ञेयाः । उच्चैर्भाष्याद‍ूर्ध्वदेहे पीडा, रथक्षोभात् सर्वदेहपीडा, अतिचङ्क्रमणादधः पीडा, अत्यासनाद्देहमध्यपीडा, अजीर्णभोजनेनामजाः, अहितभोजनेन दोषजाः, दिवास्वप्नेन श्लेष्मजाः, मैथुनेन क्षयजा इति ॥ १०-१२ ॥

**तेषां विस्तरतो लिङ्गमेकैकस्य च भेषजम् ।**
**यथावत्संप्रवक्ष्यामि सिद्धान् वस्तींश्च यापनान् ॥ १३ ॥**

**तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापशङ्खकर्णनिस्तोदश्रोत्रोपरोधमुखतालुकण्ठशोषतैमिर्यपिपासाज्वरतमकहनुग्रहमन्यास्तम्भनिष्ठीवनोरःपार्श्वशूलस्वरभेदहिक्काश्वासादयः स्युः ( १ );**

**रथक्षोभात् संधिपर्वशैथिल्यहनुनासाकर्णशिरःशूलतोदकुक्षिक्षोभाटोपान्त्रकूजनाध्मानहृदयेन्द्रियोपरोधस्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनासंधिस्कन्धग्रीवादौर्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः ( २ );**

१ 'तथैव च' इति पा० । २ 'मिथ्योपचारजव्याधिप्रशमं' इति पा० ।

१ 'कृतक्रमः' इति, 'सर्वक्षमो ह्यसंसर्गो' इति, 'बलवान् वर्णवान् सर्वरतिः स्वङ्गः स्थिरेन्द्रियः । प्रसन्नात्मा सर्वसहो विज्ञेयः प्रकृतिङ्गतः' इति च पा० । २ 'सर्वक्षम इति सर्वचेष्टाक्षमः' इति पा० । ३ '०निष्ठीवनशिरःपार्श्वशूल०' इति पा० । ४ '०सक्थिस्कन्धहनुग्रहग्रीवा०' इति पा० ।

अतिचङ्क्रमणात् पादजङ्घोरुजानुवङ्क्षणश्रोणीपृष्ठशूलसक्थिसादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्दांसाभितापसिराधमनीहर्षश्वासकासादयः ( ३ );

अत्यासनाद्रथक्षोभजाः स्फिक्पार्श्ववङ्क्षणवृषणकटीपृष्ठवेदनादयः ( ४ );

अजीर्णाध्यशनाभ्यां तु मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्यतीसारमूर्च्छाज्वरप्रवाहणामविषादयः ( ५ );

विषमाहिताशनाभ्यामनन्नाभिलाषदौर्बल्यवैवर्ण्यकण्डूपामागात्रावसादवातादिप्रकोपजाश्च ग्रहण्यर्शोविकारादयः ( ६ );

दिवास्वप्नादरोचकाविपाकाग्निनाशस्तैमित्यपाण्डुत्वकण्डूपामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाड्यतन्द्रानिद्राप्रसङ्गग्रन्थिजन्मदौर्बल्यरक्तमूत्राक्षिताताल्लुलेपाः ( ७ );

व्यवायादाशुबलनाशोरुसादशिरोवस्तिगुदमेढ्रवंक्षणोरुजानुजङ्घापादशूलहृदयस्पन्दननेत्रपीडाङ्गशैथिल्यशुक्रमार्गशोणितागमनकासश्वासशोणितष्ठीवनस्वरावसादकटीदौर्बल्यैकाङ्ग-सर्वाङ्ग-रोगमुष्कश्वयथुवातवर्चोमूत्रसङ्गशुक्रविसर्गजाड्यवेपथुबाधिर्यविषादादयः स्युः; अवलुप्यत इव गुदः, ताड्यत इव मेढ्रम्, अवसीदतीव मनो, वेपते हृदयं, पीड्यन्ते सन्धयः, तमः प्रवेश्यत इव च ( ८ );

इत्येवमेभिरष्टभिरपचारैरेते प्रादुर्भवन्त्युपद्रवाः ॥ १४ ॥

अत्रोच्चैर्भाष्यादिको ग्रन्थः प्रायो व्यक्त एव। अतिभाषितस्यासूत्रितस्योच्चैर्भाष्येण समानत्वादुदाहरणम्। पिण्डिकोद्वेष्टनं जङ्घापिण्डिकयोरुद्वेष्टनाकारा वेदना। सिराधमनीहर्षः सिराधमन्योरुच्छूल(न)त्वम्। रथक्षोभजा इत्युक्ते सन्धिशैथिल्यादीनामपि प्रसक्तिः स्यादतस्तन्निरासार्थमाह—स्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनादयः स्युरिति। अजीर्णाध्यशनाभ्यामित्यत्र अजीर्णाशनस्यामजविकारकर्तृत्वादध्यशनस्यासूत्रितस्योपादानम्। एवमहिताशनजविकारसमानविकारकारित्वाद्विषमाशनस्याप्यसूत्रितस्योपादानम्। अवलुप्यत इव छिद्यत इव ॥ १३ ॥ १४ ॥

तेषां सिद्धिः—तत्रोच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूमनस्योपरिभक्तस्नेहपानरसक्षीरादिर्वातहरः सर्वो विधिर्मौनं च ( १ );

रथक्षोभातिचङ्क्रमणात्यासनजानां स्नेहस्वेदादि वातहरं कर्म सर्वं निदानवर्जनं च ( २ );

अजीर्णाध्यशनजानां निरवशेषतश्छर्दनं रूक्षः स्वेदो[1] लङ्घनीयपाचनीयदीपनीयौषधावचारणं च ( ३ );

विषमाहिताशनजानां यथास्वं दोषहराः क्रियाः ( ४ );

दिवास्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचनव्यायामरूक्षाशनारिष्टदीपनीयौषधोपयोगः प्रघर्षणोन्मर्दनपरिषेचनादिश्च श्लेष्महरः सर्वो विधिः ( ५ );

मैथुनजानां जीवनीयसिद्धयोः क्षीरसर्पिषोरुपयोगः, तथा वातहराः स्वेदाभ्यङ्गोपनाहा वृष्याश्चाहाराः स्नेहाः[2] स्नेहविधयो यापनावस्तयोऽनुवासनं च; मूत्रवैकृतवस्तिशूलेषु[3] चोत्तरवस्तिर्विदारीगन्धादिगणजीवनीयक्षीरसंसिद्धं तैलं स्यात् ॥ १५ ॥

तेषां सिद्धिरिति तेषामुक्तविकाराणां साधनं भेषजमित्यर्थः। निरवशेषतश्छर्दनमिति अजीर्णाचस्य निरवशेषतश्छर्दनम्। मूत्रवैकृतेत्यादि यदा मैथुनान्मूत्रवैकृतादि भवति तदा विदारिगन्धादिजीवनीयगणाभ्यां क्वाथकल्कीकृताभ्यां सक्षीरं तैलं साधयित्वोत्तरवस्तिर्देयः ॥ १५ ॥

यापनाश्च वस्तयः सर्वकालं देयाः; तानुपदेक्ष्यामः—मुस्तोशीरबलारग्वधरास्नामञ्जिष्ठाकटुरोहिणीत्रायमाणापुनर्नवाविभीतकगुडूचीस्थिरादिपञ्चमूलानि पलिकानि खण्डशः क्लृप्तान्यष्टौ च मदनफलानि प्रक्षाल्य जलाढके परिक्वाथ्य पादशेषो रसः क्षीरद्विप्रस्थसंयुक्तः पुनः शृतः क्षीरावशेषः पादजाङ्गलरसस्तुल्यमधुघृतः शतकुसुमामधुककुटजफलरसाञ्जनप्रियङ्गुकल्कीकृतः ससैन्धवः सुखोष्णो वस्तिः शुक्रमांसबलजननः क्षतक्षीणकासगुल्मशूलविषमज्वरब्रध्न( वर्ध्म )कुण्डलोदावर्तकुक्षिशूलमूत्रकृच्छ्रासृग्रजोविसर्पप्रवाहिकाशिरोरुजाजानूरुजङ्घावस्तिग्रहाश्मर्युन्मादार्शःप्रमेहाध्मानवातरक्तपित्तश्लेष्मव्याधिहरः सद्यो बलजननो रसायनश्चेति ( १ );

एरण्डमूलपलाशात् षट्पलं शालिपर्णीपृश्निपर्णी बृहती कण्टकारिका गोक्षुरको रास्नाऽश्वगन्धा गुडूची वर्षाभूरारग्वधो देवदार्विति पलिकानि खण्डशः क्लृप्तानि फलानि चाष्टौ प्रक्षाल्य जलाढके क्षीरपादे पचेत्। पादशेषं कषायं पूतं शतकुसुमाकुष्ठमुस्तपिप्पलीहपुषाबिल्ववचावत्सकफलरसाञ्जनप्रियङ्गुयवानिप्रक्षेपकल्कितं[4] मधुघृततैलसैन्धवयुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन् वा दद्यात्। सर्वेषां प्रशस्तो विशेषतो ललितसुकुमारस्त्रीविहारक्षीणक्षतस्थविरचिरार्शसामपत्यकामानां च ( २ );[5]

१ '०वंक्षणोरुस्तम्भवृषणजानुजङ्घा०' इति पा०। २ 'ताम्यतीव' इति पा०।

१ 'स्वेदो धूमपानं' इति पा०। २ 'स्नेहाः' इति हस्तलिखितपुस्तके न पठ्यते। ३ 'मूत्रकृच्छ्रवस्तिशूलेषु' इति पा०। ४ 'शतकुसुमादिकल्कितं' इति पा०। ५ चिरार्शोमूत्रकृच्छ्रोदरगुल्मवर्ध्मोदावर्तग्रहणीदोषाश्मरीणां हितोऽपत्यकामानां च' इति पा०।

तद्वत् सहचरबलादर्भमूलसारिवासिद्धेन पयसा ( ३ );

तथा बृहतीकण्टकारीशतावरीच्छिन्नरुहाशृतेन पयसा मधुकमदनपिप्पलीकल्कितेन पूर्ववद्वस्तिः ( ४ );

तथा बलातिबलाविदारीशालिपर्णीपृश्निपर्णीबृहतीकण्टकारिकादर्भमूलपरूषककाश्मर्यबिल्वफलयवसिद्धेन पयसा मधुकमदनकल्कितेन मधुघृतसौवर्चलयुक्तेन कासज्वरगुल्मप्लीहार्दितस्त्रीमद्यक्लिष्टानां सद्योबलजननो रसायनश्च ( ५ );

बलातिबलारास्नारग्वधमदनबिल्वगुडूचीपुनर्नवैरण्डाश्वगन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि यवकोलकुलत्थद्विप्रसृतं शुष्कमूलकानां च जलद्रोणसिद्धं निरूहप्रमाणावशेषं कषायं पूतं मधुकमदनशतपुष्पाकुष्ठपिप्पलीवचावत्सकफलरसाञ्जनप्रियङ्गुयवानीकल्कीकृतं गुडघृततैलक्षौद्रक्षीरमांसरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं वस्तिं दद्याच्छुक्रमूत्रवर्चःसङ्गेऽनिलजे गुल्महृद्रोगाध्मानव्रध्नपार्श्वपृष्ठकटीग्रहसंज्ञानाशबलक्षयेषु च ( ६ );

हपुषार्धकुडवो द्विगुणार्धक्षुण्णयवः क्षीरोदकसिद्धः क्षीरशेषो मधुघृततैललवणयुक्तः सर्वाङ्गविसृतवातरक्तसक्तविण्मूत्रस्त्रीखेदितहितो वातहरो बुद्धिमेधाग्निबलजननश्च ( ७ );

ह्रस्वपञ्चमूलीकषायः क्षीरोदकसिद्धः पिप्पलीमधुकमदनकल्कीकृतः सगुडघृततैललवणः क्षीणविषमज्वरकर्शितस्य वस्तिः ( ८ );

बलातिबलापामार्गात्मगुप्ताष्टपलार्धक्षुण्णयवाञ्जलिकषायः सगुडघृततैललवणयुक्तः पूर्ववद्वस्तिः स्थविरदुर्बलक्षीणशुक्ररुधिराणां पथ्यतमः ( ९ );

बलामधुकविदारीदर्भमूलमृद्वीकायवैः कषायमाजेन पयसा पक्त्वा मधुकमदनकल्कितं समधुघृतसैन्धवं ज्वरार्तेभ्यो वस्तिं दद्यात् ( १० );

शालिपर्णीपृश्निपर्णीगोक्षुरकमूलकाश्मर्यपरूषकखर्जूरफलमधूकपुष्पैरजाक्षीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पलीमधुकोत्पलकल्कितः सघृतसैन्धवः क्षीणेन्द्रियविषमज्वरकर्शितस्य वस्तिः शस्तः (११);

स्थिरादिपञ्चमूलीपञ्चपलेन शालिषष्टिकयवगोधूममाषपञ्चप्रसृतेन छागं पयः शृतं पादशेषं कुक्कुटाण्डरससममधुघृतशर्करासैन्धवसौवर्चलयुक्तो वस्तिर्वृष्यतमो बलवर्णजननश्च । इति यापना वस्तयो द्वादश ॥ १६ ॥

कल्पश्चैष शिखिगोनर्दहंससारसाण्डरसेषु स्यात् ॥ १७ ॥

प्रतिज्ञातान् यापनवस्तीनाह—यापनाश्चेत्यादि । सर्वकालं देया इत्यनेन पूर्वनिरूहाणामसार्वकालिकत्वं दर्शयति; एतेषां च सर्वस्मिन् काले दानमविरुद्धम् । आयुषो यापनं दीर्घकालानुवर्तनं कुर्वन्तीति यापना वस्तयः । मुस्तेत्यादौ खण्डशः कृतानीति खण्डं खण्डं कृतानि । पादजाङ्गलरस इति यथोक्तक्षीरकृतक्राथपादिकजाङ्गलरस इत्यर्थः । तुल्यं मधुना घृतं यस्मिन् स तुल्यमधुघृतः; एतेन पूर्वं वस्तौ यथानियमितस्नेहमानेन यावद् घृतं देयं भवति तावन्मानं मध्वप्यत्र देयम् । अस्मिंश्च वस्तौ पूर्वोक्तवस्तिमानविभागेनैव वस्तिः कल्पयितव्यः । अत्र क्षीरं कषायस्थाने भवति । शतकुसुमा शतपुष्पा । ससैन्धवमिति ईषत्सैन्धवम् । एरण्डमूलेत्यादिर्द्वितीयः । तद्वत् सहचरेत्यादिकस्तृतीयः । तद्वदिति पूर्ववद्वस्तिविधानेन । तथा बृहतीत्यादिकश्चतुर्थः । अत्र च वस्तौ फलश्रुतिर्नास्ति, सामान्येन 'इत्येते वस्तयः स्नेहाश्चोक्ता' इत्यादिना वक्ष्यमाणा फलश्रुतिर्ज्ञेया । बलातिबलाविदारीत्यादिकः पञ्चमः । बलातिबलारास्नेत्यादिकः षष्ठः । शुष्कमूलकाणां चेत्यत्र 'द्विप्रसृतं' इत्यनुवर्तते । निरूहप्रमाणशेषं कषायमिति निरूहपुटकत्रययोग्यप्रमाणं कषायम्; एवं पुटकत्रयदेयाः पञ्चकषायप्रसृताः स्थाप्या भविष्यन्ति । क्राथपरिभाषयैव कर्तव्योऽत्र च क्राथः । निरूहप्रमाणशेषं कषायं मधुकमदनादिना युक्तं सिद्धं वस्तिं दद्यादिति योजनीयम् । हपुषेत्यादिकः सप्तमः । स्तिमिताः शुष्काः पुनः कण्डिताः क्षुण्णा उच्यन्ते । पूर्वपठितं मुस्तादिकमत्र प्रदेशे काश्मीराः पठन्ति । ह्रस्वपञ्चमूलीत्यादिकोऽष्टमः । बलातिबलापामार्गेत्यादिको नवमः । बलामधुकेत्यादिको दशमः । अत्र बलादिकषायस्य पुनराजेन पयसा पाकात् क्षीरशेषः पाकः कर्तव्यः । शालिपर्णीत्यादिक एकादशः । स्थिरेत्यादिको द्वादशः । एरका होगलः । कल्पश्चेत्यादिना आतिदेशिकान्ययोऽभिधीयन्ते ॥ १६ ॥ १७ ॥

सतित्तिरिः समयूरः सराजहंसः पञ्चमूलीपयःसिद्धः शतपुष्पामधुकरास्नाकुटजमदनफलपिप्पलीकल्को घृततैलगुडसैन्धवयुक्तो वस्तिर्बलवर्णशुक्रजननो रसायनश्च ( १ );

द्विपञ्चमूलीकुक्कुटरससिद्धं पयः पादशेषं पिप्पलीमधुकरास्नामदनकल्कं शर्करामधुघृतयुक्तं स्त्रीष्वतिकामानां बलजननो वस्तिः ( २ );

मयूरमपित्तपक्षपादास्यान्त्रं स्थिरादिभिः पलिकैः सजले पयसि पक्त्वा क्षीरशेषं मदनपिप्पलीविदारीशतकुसुमामधुककल्कीकृतं मधुघृतसैन्धवयुक्तं वस्तिं दद्यात् स्त्रीष्वतिप्रसक्तक्षीणेन्द्रियेभ्यो बलवर्णकरम् ( ३ );

१ "सुमना" इति पा० । २ 'शुष्कमूलकानि च पलिकानि' इति पा० । ३ 'बलमांसजननश्च' इति पा० । १ 'सराजहंसः' इति पा० । २ 'मयूरमपक्षतुण्डं' इति पा०

कल्पश्चैष विष्किरप्रतुदप्रसहाम्बुचरेषु स्यात्, अक्षीरो रोहितादिषु च मत्स्येषु ( ४ );

गोधानकुलमार्जारमूषिकशल्लकमांसानां दशपलान् भागान् सपञ्चमूलान् पयसि पक्त्वा तत्पयः पिप्पलीफलकल्कसैन्धवसौवर्चलशर्करामधुघृततैलयुक्तो वस्तिर्बल्यो रसायनः क्षीणक्षतस्य सन्धानकरो मथितोरस्करथगजहयभग्नवातबलासकप्रभृत्युदावर्तवातसक्तमूत्रवर्चःशुक्राणां हिततमश्च (५);

कूर्मादीनामन्यतमपिशितसिद्धं पयो गोवृषनागहयनक्रहंसकुक्कुटाण्डरसमधुघृतशर्करासैन्धवेक्षुरकात्मगुप्ताफलकल्कसंसृष्टो वस्तिर्वृद्धानामपि बलजननः ( ६ );

कर्कटकरसश्चटकाण्डरसयुक्तः समधुघृतशर्करो वस्तिः; इत्येते वस्तयः परमवृष्याः उच्चटकेक्षुरकात्मगुप्ताशृतक्षीरप्रतिभोजनानुपानात् स्त्रीशतगामिनं नरं कुर्युः ( ७ );

गोवृषवस्तवराहवृषणकर्कटचटकसिद्धं क्षीरमुच्चटकेक्षुरकात्मगुप्तामधुघृतसैन्धवयुक्तः किंचिल्लवणितो वस्तिः ( ८ );

दशमूलमयूरहंसकुक्कुटकाथात् पञ्चप्रसृतं तैलघृतवसामज्जचतुष्प्रसृतयुक्तं शतपुष्पामुस्तहपुषाकल्कीकृतः सलवणो वस्तिः पादगुल्फोरुजानुजङ्घात्रिकवङ्क्षणवस्तिवृषणानिलरोगहरः ( ९ );

मृगविष्किरानूपबिलेशयानामेतेनैव कल्पेन वस्तयो देयाः ( १० );

मधुघृतद्विप्रसृतस्तुल्योष्णोदकः शतपुष्पार्धपलः सैन्धवार्धाक्षयुक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तवातहरः ( ११ );

सद्योघृततैलवसामज्जचतुष्प्रस्थं हपुषार्धपलं[1] सैन्धवार्धाक्षयुक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तव्याधिहरो रसायनः ( १२ );

मधुतैलं चतुःप्रसृतं शतपुष्पार्धपलं सैन्धवार्धाक्षयुक्तो वस्तिर्दीपनो बृंहणो बलवर्णकरो निरुपद्रवो वृष्यतमो रसायनः क्रिमिकुष्ठोदावर्तगुल्मार्शोब्रध्नप्लीहमेहहरः ( १३ );

तद्वन्मधुघृताभ्यां पयस्तुल्यो वस्तिः पूर्वकल्केन बलवर्णकरो वृष्यतमो निरुपद्रवो वस्तिमेढ्रपाकपरिकर्तिकामूत्रकृच्छ्रपित्तव्याधिहरो रसायनश्च ( १४ );

तद्वन्मधुघृताभ्यां मांसरसैस्तुल्यो[2] मुस्ताक्षयुक्तः पूर्ववद्वस्तिर्वातबलासपादहर्षगुल्मत्रिकोरुजानूरुनिकुञ्चनवस्तिवृषणमेढ्रत्रिकपृष्ठशूलहरः ( १५ );

सुरासौवीरककुलत्थमांसरसमधुघृततैलसप्तप्रसृतो मुस्तशताह्वाकल्कितः सलवणो वस्तिः सर्ववातरोगहरः ( १६ );

द्विपञ्चमूलत्रिफलाबिल्वमदनफलकषायो गोमूत्रसिद्धः कुटजमदनफलमुस्तपाठाकल्कितः सैन्धवयावशूकक्षौद्रतैलयुक्तो वस्तिः श्लेष्मव्याधिवस्त्याटोपवातशुक्रसङ्ग[1]पाण्डुरोगाजीर्णविसूचिकालसकेषु देय इति ॥ १८ ॥

सतित्तिरिरित्यादिक एकैकयोगेन वक्ष्यमाणानामेकोनत्रिंशतां वस्तीनां मध्ये त्रयोदशः । द्विपञ्चमूलीत्यादिकश्चतुर्दशः । मयूरमपित्तपक्षेत्यादिकः पञ्चदशः । कल्पश्चैष इत्यादिनाऽऽतिदेशिकं पञ्चदशाधिकं शतमाह । तत्र विष्किरैः "लावो वर्तीरकश्चैव" इत्यादिनोक्तैस्तथा "वर्तको वर्तिका" ( सू. अ. २७ ) इत्यादिनोक्तैर्विंशतिर्योगा भवन्ति; मयूरश्चात्र विष्किरपठितोऽपि पूर्वोक्तत्वान्नेह गण्यते; प्रतुदैश्च "शतपत्र०" ( सू. अ. २७ ) इत्यादिनोक्तैस्त्रिंशद्भवन्ति; तथा प्रसहैश्च "गोखराश्वतर०" ( सू. अ. २७ ) इत्यादिनोक्तैरेकोनत्रिंशत्; अम्बुचराश्च हंसादयः सप्तविंशतिरुक्ताः, एतैः सप्तविंशतिर्भवन्ति; रोहितादिभिर्मत्स्यैर्नव; एवं पञ्चदशोत्तरं शतं भवति । अक्षीर इति रोहितादिषु संबध्यते । गोधानकुलेत्यादिभिः प्रत्येकं गणनीयेषु षोडशः । कूर्मादीनामन्यतमेत्यादिकः सप्तदशः । अत्र कूर्मकर्कटादय एकादश पठिताः । तत्र यः प्रायः कूर्मेण क्रियते स प्रत्येकं गणनायां प्रविशति । कर्कटादिभिस्त्वादिग्रहणगृहीतैर्ये दश वस्तयो भवन्ति ते आतिदेशिका ज्ञेयाः । गोवृषवस्तादिरष्टादशः । गोवृषः पुंवृषः । कर्कटादिरेकोनविंशतितमः । इत्येते वस्तय इत्यनेन कूर्मादीनामन्यतममित्यादिग्रन्थोक्ता वस्तयः प्रत्यवमृश्यन्ते । उच्चटकेत्यादि उच्चटा रुनामख्याता, इक्षुरकः कोकिलाक्षः । दशमूलीत्यादिको विंशतितमः । मृगविष्किरेत्यादिना आतिदेशिका ऊनषष्टिर्योगाः । तत्र मृगैः "पृषतः शरभो रामः" ( सू. अ. २७ ) इत्यादिनोक्तैः सप्तदश, सप्तदशभिर्विष्किरैश्च सप्तदश, लावादिभिश्च मयूरकुक्कुटवर्जितैरूनविंशत्या ऊनविंशतिः, आनूपैश्च सृमरादिभिर्नव, बिलेशयैः श्वेतश्यामचतुर्दंष्ट्रादिभिश्चतुर्दश । मधुघृतेत्यादिक एकविंशतितमः । सद्योघृततैलेत्यादिको द्वाविंशतितमः । मधुतैलमित्यादिकस्त्रयोविंशतितमः । तद्वन्मधुघृताभ्यामित्यादिकश्चतुर्विंशतितमः । एतदन्ताः षड् प्रयोगा उक्ता मधुतैलप्रधानत्वान्माधुतैलिका ज्ञेयाः । द्विपञ्चमूलीत्यादिकं केचिन्न पठन्ति, स च संख्यातिरेकाद्वस्तिसूत्रीयसिद्धिपठितत्वाच्चेह न पठनीय इति च वदन्ति ॥ १८ ॥

अत ऊर्ध्वं वृष्यतमान् स्नेहान् वक्ष्यामः ।—

शतावरीगुडूचीक्षुविदार्यामलकद्राक्षाखर्जूराणां

१ 'हपुषार्धपलं' इति पा० । २ 'मांसरसयुक्तः' इति पा० ।

१ '°शुक्रसङ्ग°' इति पा० ।

यन्त्रपीडितानां रसप्रस्थं पृथगेकैकं तद्वद्घृततैलगोमहिष्यजाक्षीराणां द्वौ द्वौ दद्यात्, जीवकर्षभकमेदामहामेदात्वक्क्षीरीशृङ्गाटकमधूलिकामधुकोच्चटापिप्पलीपुष्करबीजनीलोत्पलकदम्बपुष्पपुण्डरीककेशरकल्कान् पृषततरक्षुमांसकुक्कुटचटकचकोरमत्ताक्षवर्हिजीवञ्जीवकुलिङ्गहंसाण्डरसवसामज्जादेश्च प्रस्थं दत्त्वा साधयेत्। ब्रह्मघोषशङ्खपटहभेरीनिनादैः सिद्धं सितच्छत्रकृतच्छायं गजस्कन्धमारोपयेद्भगवन्तं वृषध्वजमभिपूज्य, तं स्नेहं त्रिभागमाक्षिकं मङ्गलाशीःस्तुतिदेवतार्चनैर्वस्तिं गमयेत्। नृणां स्त्रीविहारिणां नष्टरेतसां क्षतक्षीणविषमज्वरार्तानां व्यापन्नयोनीनां वन्ध्यानां रक्तगुल्मिनीनां मृतापत्यानामनार्तवानां च स्त्रीणां क्षीणमांसरुधिराणां पथ्यतमं रसायनमुत्तमं वलीपलितनाशनं विद्यात् ( १ );

स्नेहवस्तित्रयार्थं स्नेहत्रयं दर्शयन्नाह—अत ऊर्ध्वमित्यादि। मत्ताक्षः कोकिलः। जीवञ्जीवः विषदर्शनमृत्युः। पुष्कराक्षः हंसविशेषः। ब्रह्मघोषः वेदध्वनिः। एते च ब्रह्मघोषादयोऽदृष्टद्वारा उपकारका रक्षःप्रभृतिवीर्यापहरणार्थं क्रियन्ते॥ ( १ )॥

वलागोक्षुरकरास्नाश्वगन्धाशतावरीसहचराणां शतं शतमापोथ्य जलद्रोणशते प्रसाध्य, तस्मिन् जलद्रोणावशेषे रसे वस्त्रपूते विदार्यामलकस्वरसयोर्वस्तमहिषवराहवृषकुक्कुटवर्हिहंसकारण्डवसारसाण्डरसानां घृततैलयोश्चैकैकं प्रस्थमष्टौ प्रस्थान् क्षीरस्य दत्त्वा चन्दनमधुकमधूलिकात्वक्क्षीरीविसमृणालनीलोत्पलपटोलात्मगुप्ताप्रपाकितालमस्तकखर्जूरमृद्वीकातामलकीकण्टकारीजीवकर्षभकक्षुद्रसहामहासहाशतावरीमेदापिप्पलीह्रीवेरत्वक्पत्रकल्कांश्च दत्त्वा साधयेत्। ब्रह्मघोषादिना विधिना सिद्धं वस्तिं दद्यात्। तेन स्त्रीशतं गच्छेत्; न चात्रास्ते विहाराहारयन्त्रणा काचित्। एष वृष्यो बल्यो बृंहण आयुष्यो वलीपलितनुत् क्षतक्षीणनष्टशुक्रविषमज्वरार्तानां व्यापन्नयोनीनां च पथ्यतमः ( २ );

बलेत्यादिकं द्वितीयं तैलम्॥ ( २ )॥

सहचरपलशतमुदकद्रोणचतुष्टये पक्त्वा द्रोणशेषे रसे सुपूते विदारीक्षुरसप्रस्थाभ्यामष्टगुणक्षीरं घृततैलप्रस्थं वलामधुकमधूकचन्दनमधूलिकासारिवामेदामहामेदाकाकोलीक्षीरकाकोलीपयस्यागुरुमञ्जिष्ठाव्याघ्रनखशटीसहचरसहस्रवीर्यावराङ्गलोध्राणामक्षमात्रैर्द्विगुणशर्करैः कल्कैः साधयेत्। ब्रह्मघोषादिना विधिना सिद्धं वस्तिं दद्यात्। एष सर्वरोगहरो रसायनो ललितानां श्रेष्ठोऽन्तःपुरचारिणीनां क्षतक्षयवातपित्तवेदनाश्वासकासहरस्त्रिभागमाक्षिको वलीपलितनुद्वर्णरूपबलमांसशुक्रवर्धनः ( ३ );

इत्येते रसायनाः स्नेहवस्तयः सति विभवे शतपाकाः सहस्रपाका वा कार्या वीर्यबलाधानार्थमिति॥ १९॥

सहचरपलशतमित्यादिकः स्नेहस्तृतीयः। सहस्रवीर्या दूर्वा। वराङ्गं गुडत्वक्। शतपाकाः सहस्रपाकाश्चेत्यत्र स्नेहापेक्षया शतगुणेन सहस्रगुणेन वा द्रवेण एकदैव पाकं मन्यन्ते केचित्॥ १९॥

भवन्ति चात्र—

इत्येते वस्तयः स्नेहाश्चोक्ता यापनसंज्ञिताः।
स्वस्थानामातुराणां च वृद्धानां चाविरोधिनः॥२०॥
अतिव्यवायशीलानां शुक्रमांसबलप्रदाः।
सर्वरोगप्रशमनाः सर्वेष्वृतुषु यौगिकाः॥ २१॥
नारीणामप्रजातानां नराणां चाप्यपत्यदाः।
उभयार्थकरा दृष्टाः स्नेहवस्तिनिरूहयोः॥ २२॥

उभयार्थकरा दृष्टा इति स्नेहवस्तिनिरूहयोरपि साध्यमर्थं स्नेहनं शोधनं च कुर्वत इति भावः॥ २०–२२॥

व्यायामो मैथुनं मद्यं मधूनि शिशिराम्बु च।
संभोजनं रथक्षोभो वस्तिष्वेतेषु गर्हितम्॥ २३॥

यापनवस्तिषु वर्जनीयमाह—व्यायाम इत्यादि॥ २३॥

तत्र श्लोकाः[1]—

शिखिगोनर्दहंसाण्डैर्दक्षवद्वस्तयस्त्रयः।
विंशतिर्विष्किरैस्त्रिंशत्प्रतुदैः प्रसहैर्नव[2]॥ २४॥
विंशतिश्च तथा सप्तविंशतिश्चाम्बुचारिभिः।
नव मत्स्यादिभिश्चैव शिखिकल्पेन वस्तयः॥ २५॥
दश कर्कटकाद्यैश्च कूर्मकल्केन वस्तयः।
मृगैः सप्तदशैकोनविंशतिर्विष्किरैर्दश॥ २६॥
आनूपैर्दक्षशिखिवञ्चूशयैश्च चतुर्दश।
एकोनत्रिंशदित्येते सह स्नेहैः समासतः॥ २७॥
प्रोक्ता विस्तरशो भिन्ना द्वे शते षोडशोत्तरे।
एते माक्षिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम्[3]॥ २८॥
नातियोगं न वाऽयोगं स्तम्भितास्ते च कुर्वते।

१ 'रक्तपित्तिनां' इति पा०।

१ 'तत्र श्लोकाः' इति क्वचित्पुस्तके न पठ्यते। २ '०र्नव' इति पा०। ३ 'कुर्वन्त्यतिकृशं' इति पा०।

